THE

# ASTĀNGAHṚIDAYA

## A COMPENDIUM OF THE AYURVEDIC SYSTEM

COMPOSED BY

VĀGBHAṬA

With the Commentaries (Sarvāṅgasundarā) of Arunadatta and (Āyurvedarasāyana) of Hemādri

COLLATED BY


THE LATE DR ANNĀ MOREŚWAR KUNTE, B A M D

DEMONSTRATOR OF ANATOMY, GRANT MEDICAL COLLEGE,

AND

KRISNA RĀMCHANDRA S'ĀSTRĪ NAVRE



Sixth Edition 2000 Copies


EDITED BY


PT BHISAGĀCHĀRYA HARIŚĀSTRĪ PARĀDKAR VAIDYA, AKOLA-BERAR


WITH THE HELP OF OLD MANUSCRIPTS GIVING DIFFERENT READINGS, EXPLANATORY FOOT NOTES, ADDING HEMĀDRI'S COMMENTARY


PUBLISHED BY

PĀNDURAÑG JĀWAJĪ,

PROPRIETOR OF THE "NIRNAYA-SĀGAR" PRESS,

BOMBAY

1939

*Price* 12 *Rupees*

NIRNAYA SAGAR PRESS

श्रीमद्वाग्भटविरचितम्

# अष्टाङ्गहृदयम् ।



श्रीमदरुणदत्तविरचितया सर्वाङ्गसुन्दराख्यया व्याख्यया,

हेमाद्रिप्रणीतया आयुर्वेदरसायनाह्वया टीकया च

समुल्लसितम् ।



कै० डॉ. अण्णा मोरेश्वर कुंटे, बी. ए, एम्. डी,

वे. शा. सं. कृष्णशास्त्री नवरे, इत्येतैश्च पूर्वं संस्कृतम् ।

---

तस्येदं षष्ठं संस्करणम् ।

---

अकोलानिवासिना

पराडकरोपाह्वेन सदाशिवसूनुना हरिशास्त्रिणा भिषगाचार्येण

संशोधितम् ।

बहूनां प्राचीनलिखितपुस्तकानां साहाय्येन हेमाद्रिटीकया पाठान्तरैष्टिप्पण्यादिभिश्च

समलङ्कृतम् ।

तच्च


मुम्बय्याम्

पाण्डुरङ्ग जावजी इत्येतैः,

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रापयित्वा प्रकाशितम् ।

शकाब्दाः १८६० ] [ खाइष्टाब्दाः १९३९.

# अर्पणपत्रिका.

## गुरुवर्य प्राणाचार्य कृष्णशास्त्री देवधर वैद्यराज नाशिक.



आयुर्वेदविदामशेषभिषजा मूर्ध्नि स्थितो विद्यया प्राणाचार्यपदाङ्कितो विजयते कृष्णश्च जानार्दनिः ।
धन्ये देवधरान्वये धृतजनुर्नासीकतीर्थे वसन् शास्त्यज्ञान् सुतनिर्विशेषदयितान् शिष्यान् सदा सत्पथम् ॥ १ ॥

अगण्यगुणगौरवापहृतचेतस सद्गुरो प्रणम्य परमादरेण चरणारविन्दे मुदा ।
समर्पयति सादर स्वकृतिरूपपुष्पाञ्जलि सदाशिवसुत पराडकरवशजातो हरि ॥ २ ॥

श्रीमद्वाग्भटविरचितस्याष्टाङ्गहृदयस्य सटीकस्य

प्रथमद्वितीयावृत्तिसंशोधका. । षष्ठावृत्तिसंशोधका. ।





कै० डॉ० अण्णा मोरेश्वर कुंटे. एम् डी
मुंबई

भिषगाचार्य हरिशास्त्री पराडकर वैद्य,
अकोला, वऱ्हाड



# ग्रन्थालोकः ।







# अष्टाङ्गहृदयस्य षष्ठावृत्तेः प्रस्तावना ।

निर्णयसागराख्यमुद्रणयन्त्रालयाध्यक्षै **अष्टाङ्गहृदय**स्यैतत्संस्करणसंशोधनकर्मणि विज्ञापितैरस्माभि अङ्गीकृतमेतत् संशोधनकार्यम् ।

प्राचीनग्रन्थस्य प्रमाणावृत्तिमापादयितु तद्ग्रन्थस्याधिकतोऽधिक हस्तलिखितपुस्तकापादन प्राधान्यत आवश्यकम् । अत एव **अष्टाङ्गहृदयस्य** प्रस्तुतावृत्तिसम्पादनार्थ अस्माभि तत्तद्धस्तलिखितपुस्तकसङ्ग्रहालयेभ्यस्तथैव तत्तद्विद्वज्जनेभ्यो महता प्रयत्नेन **अष्टाङ्गहृदयसंहितायाः अरुणदत्तव्याख्यायाः हेमाद्रिटीकाया**स्तथा च **चन्द्रनन्दनतोडरमल्लभट्टनरहरि**विरचिताना व्याख्याना त्रयस्त्रिंशन्मितानि (३३) हस्तलिखितपुस्तकानि[1] समाहृत्य तानि च सावहितचेतसा संशोध्य कृतो यत्न , यथा सर्वाङ्गपरिपूर्णा प्रमाणा च ( Standerd edition ) भवेदियमावृत्तिरिति । निर्णयसागरमुद्रणयन्त्रालयाध्यक्षैरपि षष्ठमिद संस्करण यथा सर्वाङ्गसुन्दर भवेत्तथा प्रयतितम् ।

संस्करणस्यास्य **विशेषाः** अध प्रदर्श्यन्ते ।

१ एतत्पूर्वेषु संस्करणेषु **वाग्भटकृतमष्टाङ्गहृदयं** केवलया **अरुणदत्त**कृतया **सर्वाङ्गसुन्दरा**भिधया टीकया समेत मुद्रितमासीत् । अस्मिन् संस्करणे सूत्रनिदानचिकित्सितकल्पसिद्धिस्थानाना **हेमाद्रि**विरचिता **आयुर्वेदरसायना**ख्या टीकाऽपि यावदुपलब्धा अधिक मुद्रिता वर्तते ।

२ **हेमाद्रिणा** आयुर्वेदरसायनव्याख्याया विषयानुसारेण स्वीकृतो अध्यायक्रम **वाग्भटविमर्शे हेमाद्रि**प्रकरणे ३६ तमे पृष्ठे द्रष्टव्य । अत्र तु अध्येतॄणामध्ययनसौकर्य भवेदिति हेतो **अरुणदत्त**व्याख्यया सहैव **हेमाद्रि**व्याख्याऽप्यस्माभि· अष्टाङ्गहृदयस्याध्यायानुक्रमेणैव मुद्रिता वर्तते ।

३ स्थानस्थानेभ्य सङ्गृहीता**न्यष्टाङ्गहृदय**मूलग्रन्थस्य टीकाद्वयस्य च हस्तलिखितानि पुस्तकानि निपुण समवलोक्य तथा **चरकसुश्रुतादीन्** आर्षान् ग्रन्थान् समालोच्य पाठशुद्धि अत्र सुनिश्चिता । तथाच हस्तलिखितग्रन्थेषु समुपलब्धानि शुद्धानि पाठान्तराणि तत्तद्धस्तलिखितपुस्तकसंज्ञोल्लेखपूर्व पादटिप्पणीषु सन्दर्शितानि । क्वचिच्च टीकाकारसम्मतानि पाठान्तराण्यपि प्रदत्तानि ।

४ एवमेवानेकहस्तलिखितपुस्तकान्यवलोक्य एतट्टीकाद्वयमपि संशोधितम् । हस्तलिखितपुस्तकस्था. अन्ये शुद्धा पाठा. तत्तपुस्तकसंज्ञासहिताष्टिप्पणीषु प्रदर्शिता ।

५ **अरुणदत्तहेमाद्रिभ्या**मव्याख्याता किन्तु **चन्द्रनन्दनतोडरमल्लाभ्यां** व्याख्याता हस्तलिखितपुस्तकेषु सम्प्राप्ता. केचन श्लोका. तट्टीका च अस्माभिष्टिप्पणीषु निर्दिष्टा ।

६ पूर्वावृत्तिष्वसङ्गृहीता बहव. श्लोका लिखितपुस्तकेषु अधिक समुपलब्धा । एतेषा सार्धविंशति (२०½) श्लोका टीकाकृद्भिर्व्याख्याता । अतोऽस्माभिस्ते सर्वे अत्र समावेशिता । अन्ये च भूयास व्याख्याकारैरव्याख्याता । तेषु च ये अस्मन्मतेन प्रकरणोचितास्तेऽस्माभि अत्र मूलग्रन्थे अर्धचन्द्रद्वय( )चिन्हमध्ये टिप्पण्या वा सम्मुद्रिता ।

७ पूर्वावृत्तौ वर्तन्ते सार्धपञ्च (५½) श्लोका , येषा व्याख्या टीकाकारैर्न कृता, अस्मिन् संस्करणे सर्वेऽपि तेऽस्माभिरतिचारिताः[2] ।

८ **अष्टाङ्गहृदये** प्रत्यध्याय विचारितस्य विषयस्य **चरकसुश्रुतसङ्ग्रहेषु** ग्रन्थेषु यत्रयत्र कृतो विचारः तत्तत्स्थाननिर्देशो अध्यायारम्भे टिप्पण्या कृत. । अनेन अध्येतॄणा तौलनिकमनुशीलनमयत्नसाध्य भवेत् ।

९ यत्रयत्र टीकाकारै कृत व्याख्यान नास्मत्सम्मत तत्रतत्र अस्मन्मतेन यद्योग्य व्याख्यान तत् प्रमाणपुरस्सर प्रदर्शितमस्माभिष्टिप्पणीषु ।

१० उभाभ्यामपि **अरुणदत्तहेमाद्रिभ्या**मव्याख्याताना पदाना **चन्द्रनन्दनतोडरमल्ला**द्यमुद्रितटीकाकर्तॄणा तथा च **इन्दुजेज्जटडल्हणचक्रपाणिदत्तशिवदासश्रीकण्ठदत्त**त्यादिमुद्रितटीकाकाराणा सम्मतोऽर्थ., टिप्पणीषु प्रकटित । क्वचि**दमरविश्वमेदिन्या**दिकोशग्रन्थोक्तास्तथा **निघण्टू**क्ता अपि अर्था टिप्पणीषु निर्दिष्टा. ।

---

**१ संशोधनार्थमानीतानि हस्तलिखितपुस्तकानि तथा च कुतस्तानि प्राप्तानीत्यादिवृत्त तत्तत्पुस्तकसंज्ञासहित सप्तमे सूचिपत्रे द्रष्टव्यम्। २ प्रत्यध्याय पूर्वावृत्तितो न्यूनाधिकश्लोकसंख्या नवमे सूचिपत्रे द्रष्टव्या ।**

११ **अरुणदत्तहेमाद्रिभ्यां** व्याख्यानावसरे **'चरके' 'सुश्रुते' 'सङ्ग्रहे'** इत्यादि विलिख्य समुद्धृताना श्लोकानामवतरणाना च आरम्भे अस्माभि तत्तच्छ्लोकस्य अवतरणस्य च मूलस्थान अध्यायश्लोकाङ्कादिक अर्धचन्द्रचिन्हद्वय(   )मध्ये प्रदर्शितम् । अनेन सुकर भवेत्तदासादन तत्तद्ग्रन्थमध्ये ।

१२ सूत्रस्थानीययन्त्रविधिशस्त्रविधिनाम्नि अध्यायद्वये वर्णिताना यन्त्रशस्त्राणा चित्राण्यप्यत्र सम्मुद्रितानि ।

१३ यत्रयत्र अस्मन्मते लिखितपुस्तकस्थपदापेक्षया इतरस्य पदस्य वर्तते अपेक्षा तत्रतत्र (   ) इतिप्रकारके चिन्हमध्ये अपेक्षित पदमस्माभि निर्दिष्टम् । यत्र च अधिकस्य कस्यचिद्वर्णस्य पदस्य वा अपेक्षा तत्र तु [   ] इत्याकारके चिन्हे अपेक्षितो वर्ण. पद वा लिखितम् ।

१४ **वाग्भट**सम्बन्धिन. प्राय सर्वे ( काल-धर्म-ग्रन्थकर्तृत्व-तट्टीकाकारादय. ) महत्त्वपूर्णा विषया. यत्रास्माभिर्विचारिता स **'वाग्भटविमर्श'**इत्य प्रबन्धोऽप्यत्रैव सङ्गृहीत' ।

१५ तथाच विविधा उपयुक्ता नव (९) सूचयोऽप्यत्र अन्तर्भाविता' । **अष्टाङ्गहृदय**शब्दसूचि विपयसूचिं च अत्रैव प्रकाशयितु समयाभावाद्यद्यपि न पारयामो वय, तथाऽप्यन्यस्मिन् सस्करणे तत्पूर्व वा, तत् सूचीद्वयमपि अवश्यमेव प्रकाशयिष्याम ।

१६ पुण्यपत्तनस्थभाण्डारकरप्राच्यमशोधनमन्दिरस्य प्रधानाध्यक्षा श्री **पी. के. गोडे** महाभागा अस्मत्प्रार्थिता सन्तः अलिखन् विद्वत्ताप्रचुरमुपोद्घात अस्य ग्रन्थस्य आङ्ग्लभाषायाम्, यस्मिश्च तै**र्वाग्भट**विषयक तट्टीकाकारविपयक च पाश्चात्यपण्डितोपनिबद्धग्रन्थस्थमखिल वृत्त एकत्र समाहृतम् । स उपोद्घातोऽप्यत्रैव समावेशितो वर्तते ।

अस्मिन् सशोधनकर्मणि **आयुर्वेदतीर्थ**स्यास्मत्सूनो**र्गङ्गाधरशर्मणः** प्राधान्येन साहाय्य जातम् ।

स्मरामस्तावदनल्पमुपकार सर्वेषा सज्जनाना यै कृपया हस्तलिखितपुस्तकादीनि दत्त्वा **अष्टाङ्गहृदय**सशोधनकर्मण्यस्माक कृत साहाय्यम् । तथा **वाग्भटविमर्शे**ऽपि नामोल्लेखपूर्व येषा येषा ग्रन्थकर्तॄणा वचनान्यस्माभिरवतारितानि तेषा तेषामप्यधमर्णा वयम् ।

हस्तलिखितपुस्तकाद्यासादने तथा चान्यथा अस्मिन् सशोवनकर्मणि अधोनिर्दिष्टै सज्जनैरस्मत्परमसुहृद्भिश्च प्रदत्तमस्मभ्यमनल्प साहाय्यम् । तेषामपि उपकारभार धारयाम. ।

(१) मुम्बापुरीस्था. आयुर्वेदमार्तण्डा. **श्रीयादवजीत्रिकमजीआचार्याः ।**

(२) पुण्यपत्तनस्था आयुर्वेदाचार्याः **नानलोपाह्वाः पुरुषोत्तमशास्त्रिणः ।**

(३) आकोलानिवासिन एम् ए एल् एल्. बी इत्युपाधिधारिण. प्राचार्याः **जोशीकुलावतंसाः दत्तात्रयसूनवो गणेशशर्माणः ।**

(४) नागपुरस्था. **विनायककृष्णराजवाडे** 'ॲडव्होकेट' महाभागा ।

(५) सागलीनिवासिनोऽस्मत्सतीर्थ्या वैद्यवराः **जोशीत्युपाव्हाः त्र्यम्बकशास्त्रिणः ।**

एव साम्प्रतमस्मत्कुलदैवत**श्रीलक्ष्मीरवळनाथ**कृपाप्रसादात् तथा चास्मत्परमादरणीयानामतिप्रसिद्धाना तत्रभवतामस्मद्गुरुचरणाना जनस्थाननिवासिना **देवधरकुलावतंसानां भिषग्वर श्री. कृष्णशास्त्रिणां** उत्तमाशीर्वच.प्रदानेन सम्पूर्णता गतोऽय **अष्टाङ्गहृदयसंशोधनप्रयत्नः** ।

एव महता यत्नेन सशोधितेऽस्मिन् ग्रन्थे मतिमान्द्यादनवधानाद्वा भ्रम. क्वचित् सञ्जातो भवेत् सशोधयन्तु गुणैकपक्षपातिनो विद्वासः ग्रन्थस्यास्याध्ययनाध्यापनेन सफलयन्तु चेममस्माक यत्नमिति सर्वेभ्यः सज्जनेभ्य. सुधीभ्यश्च सविनयमभ्यर्थयामो वयम् । इति शम् ।

अकोला—विदर्भ ।
प्रमाथीनाम सवत्सरम् ।
आषाढमास गुरुपौर्णिमा ।
शालीवाहनशकाब्दा १८६१
ता १।७।१९३९ इ ।

सद्भिषजा विधेय.—

**पराडकरकुलोत्पन्नः सदाशिवात्मजो हरिशर्मा**

**भिषगाचार्यः अकोलानिवासी ।**

# वाग्भटविमर्शः ।



विदितमेवैतद्विदुषामायुर्वेदपारावारपारीणानामध्येतॄणां च यदायुर्वेदावबोधकतन्त्रसमूहेष्वतिप्रसिद्धमतिभास्वरं चाष्टाङ्गहृदयतन्त्ररत्नं वर्तते, विरचयिता चास्य **वाग्भट** इति । अष्टाङ्गहृदयतन्त्रनिर्माता वाग्भट एवेति विषये यद्यपि विदुषां सर्वेषां वर्तते ऐकमत्यम्, तथाऽप्यष्टाङ्गहृदयनिर्मात्रा **वाग्भटेनै**वाष्टाङ्गसङ्ग्रहो व्यरचि तद्भिन्नेन वाऽपरेण **वाग्भटेन?** किमयं सौगतो जिनो वैदिकधर्मावलम्बी वा ? कः खल्वस्य वाग्भटस्य कालः ? इत्येतस्मिन् विषये महान् विवादो वर्तते । विषयमिममवलम्ब्येतिहासविद्भिरायुर्वेदविद्भिश्च प्रकटितानि मतमतान्तराणि सम्यगालोच्य विविच्य च तत्तन्मतसमर्थनार्थमुपन्यस्तानि प्रमाणानि प्रयतिष्यामहे साम्प्रतं निर्णेतुमिमं विवादविषयम् । तथा च कति ग्रन्था वाग्भटेन निर्मिताः ? कियत् कौशलमस्य ग्रन्थरचनायाम् ? कति तावद्वाग्भटस्य व्याख्यातारः ? के च ते ? अप्येतद्भिन्नो वर्तते कश्चिदायुर्वेदतन्त्रनिर्माता वाग्भटः ? इत्यादयोऽपि विषयाः क्रमेण विचार्यन्ते ।

## ( १ ) हृदयकर्ता वाग्भट एव सङ्ग्रहकर्ता भिन्नो वा ?

प्रथमतस्तु **अष्टाङ्गहृदयकर्ता वाग्भटो**ऽष्टाङ्गसङ्ग्रहनिर्मातुर्वाग्भटाद्भिन्न उताभिन्न इति विषये विद्वद्भिः प्रदर्शितानि मतानि विचारयामो वयम् ।

**डॉ. हॉर्नलेमहोदयानां मतम् ।**

'Medicine of Ancient India' नाम्नो ग्रन्थस्य कर्तारो डॉक्टर **हॉर्नले**महोदया अष्टाङ्गहृदयकर्तुः **वाग्भटः** सङ्ग्रहनिर्मातुर्भिन्न आसीदिति स्वमतं प्रदर्श्य हृदयकर्तारं **वाग्भटं द्वितीय**पदेन सङ्ग्रहकारं **वाग्भटं** च **प्रथम**पदेन निर्दिशन्ति । स्वमतसमर्थकानि प्रमाणानि तु न प्रकटयन्ति । सत्यप्येवं, तन्मतं प्रमाणीकृत्यार्वाचीनैरपि कैश्चिदायुर्वेदपारीणैस्तत्तथैवाङ्गीकृतम् ।

**श्रीहरिप्रपन्नजीनां मतम् ।**

तथाहि—'**रसयोगसागर**' कर्तृभिः स्वर्गीयश्री**हरिप्रपन्नजी**वैद्यराजमहाभागैः रसयोगसागरस्योपोद्घाते ३२ तमे पृष्ठे लिखितम्—"वैद्यशास्त्रे **वाग्भट**विरचितौ द्वौ ग्रन्थौ प्रसिद्धौ, **अष्टाङ्गसङ्ग्रहोऽष्टाङ्गहृदयं च** । अष्टाङ्गसङ्ग्रहकारो वाग्भटः न्यूनतो न्यूनं चतुर्दशशतवर्षपूर्वतनः । **हार्नले**महोदयोऽष्टाङ्गसङ्ग्रहकारस्य सप्तम्यां ख्रिस्तशताब्द्यां **इत्सिग्**नाम्नश्चीनीयस्य भारतीययात्रिणो वचनाद्विद्यमानतां प्रसिद्धिं च दर्शयति । **अष्टाङ्गहृदयकारश्चान्य एव वाग्भटः** ।" इति ।

**कोशकारयोर्मतम् ।**

'**महाराष्ट्रीयज्ञानकोश**' कारास्तथा च '**भारतवर्षीयचरित्रकोश**'कारा अपि **सङ्ग्रहकारो वाग्भटो हृदयकाराद्वाग्भटाद्विभिन्न** इत्येव वदन्ति ।

**कविराजगणनाथसेनमहाभागानां मतम् ।**

श्रीमहामहोपाध्यायकविराज**गणनाथसेन**महाभागास्त्वष्टाङ्गहृदयकारो **वाग्भट एवाष्टाङ्गसङ्ग्रहस्य निर्माता**ऽऽसीदिति निःसंदिग्धं मन्वते । '**प्रत्यक्षशारीर**' नाम्नो ग्रन्थस्योपोद्घाते **५२** तमे पृष्ठे ते लिखन्ति—"यत्तु **अष्टाङ्गसङ्ग्रहकारो वाग्भटः** अष्टाङ्गहृदयकाराद्वाग्भटाद्भिन्न इति कस्यचित्पाश्चात्यविदुषो मतं, तत् सर्वथा निर्मूलमतिविस्मयकरं च नः । ग्रन्थद्वयस्य सर्वत्रैव भाषासादृश्यात्, ग्रन्थकर्त्रोः पितृनामसादृश्यात्, क्वचिदपि मतभेदस्यादर्शनाच्च । **वाग्भटेन** हि महान्तं ग्रन्थम**ष्टाङ्गसङ्ग्रहाख्यं** विरचय्य तत्सङ्क्षेपो "**हृदयमिव हृदयमेतत्**" निरमायीति स्वयमेवाभिहितं तेन सुस्पष्टया गिरा ग्रन्थसमाप्तौ ।" इति ।

---

1 Vide Dr Hoernle's "Medicine of Ancient India" Gt I, Pp. 10-15

मुम्बापुरीस्था आयुर्वेदमार्तण्डाः **श्रीयादवजीत्रिकमजीआचार्याः** चरकसहिताया द्वितीयसंस्करणस्योपो-

**आयुर्वेदमार्तण्डानां यादवजीत्रिकमजी आचार्याणा मतम्।**

द्घाते अष्टाङ्गसङ्ग्रहाष्टाङ्गहृदययोरेककर्तृकत्वमेव स्वीकुर्वन्ति । ते लिखन्ति—"अस्मन्मते तु **अष्टाङ्गसङ्ग्रहकर्ता अष्टाङ्गहृदयकर्ता च वाग्भट एक एव** । स च पूर्वं नानातन्त्रेभ्यो वचनानि सगृह्य अष्टाङ्गसङ्ग्रह निर्ममे । तदनन्तर तत एव सारमादायाष्टाङ्गहृदयं चकार ।" इति ।

एतदेव मतमस्मत्सम्मतम् । **सङ्ग्रहकारो वाग्भट एव हृदयकार** इत्यत्र नास्ति नः स्तोकोऽपि सन्देह' ।

**अस्माकं मतम्।**

**अष्टाङ्गहृदये** मूलग्रन्थे तथा चोपलब्धटीकाग्रन्थेष्वपि समुपलभ्यन्ते कानिचिद्वचनानि, येषु सुविचार्यमाणेषु प्रेक्षावतामेतद्विषयक. सशयस्तिरोहितो भवेदिति मन्यामहे वयम् । अष्टाङ्गहृदये वर्तेते इमौ श्लोकौ—

"विपुलामलविज्ञानमहामुनिमतानुगम् । महासागरगम्भीरसङ्ग्रहार्थोपलक्षणम् ॥
अष्टाङ्गवैद्यकमहोदधिमन्थनेन यो**ऽष्टाङ्गसङ्ग्रह**महामृतराशिराप्तः ।
**तस्माद**नल्पफलमल्पसमुद्यमाना प्रीत्यर्थमेतदुदित पृथगेव तन्त्रम् ॥" इति ।
(हृ. उ. अ. ४०|७९–८०)

अत्र प्रथमत. अष्टाङ्गवैद्यकमहोदधिमन्थनेनाष्टाङ्गसङ्ग्रहरूपोऽमृतराशिः प्राप्तः । साम्प्रतं तु स्वल्पेनैव परिश्रमेण तत्फलमनल्प जना लभेरन्निति बुद्ध्या तस्मादेवैतत् महासागरवद्गभीरस्य सङ्ग्रहार्थस्योपलक्षणभूत पृथक् तन्त्रमष्टाङ्गहृदयाख्यमुदितम् । इति हृदयसङ्ग्रहयोरेककर्तृकत्वमनुमापयति । तथा च—

"एतत्पठन् **सङ्ग्रहबोधशक्तः** स्वभ्यस्तकर्मा भिषगप्रकम्प्यः ।" (हृ. उ. अ. ४०|८३)

इत्यत्राष्टाङ्गहृदय सम्यक्तया पठन्नष्टाङ्गसङ्ग्रहावबोधसमर्थो भवतीत्यनेन एककर्तृकत्वमेवोभयोः सूचित भवति ।

अष्टाङ्गहृदयव्याख्याता **अरुणदत्तः सर्वाङ्गसुन्दरा**भिधाया टीकाया सूत्रस्थानीयपञ्चमाध्यायस्थस्य ५१ तमस्य श्लोकस्य व्याख्यानावसरे लिखति—"**तथा ह्ययमेव तन्त्रकारः सङ्ग्रहे** मधुनो भेदानाख्यत् । यथा—भ्रामरं पौत्तिक क्षौद्र माक्षिकं च यथोत्तरम् ।" इति । तथा च—शारीरस्थानीयप्रथमाध्यायस्थस्य "पूर्णषोडशवर्षा स्त्री" इत्यादे. श्लोकस्य टीकाया "अत **एवायमेव तन्त्रकारो**ऽन्यथा **सङ्ग्रहे** जगाद,—षोडशवर्षाया पञ्चविंशतिवर्षः पुत्रार्थं प्रयतेत ।" इति ।

एवमेवाष्टाङ्गहृदयस्य **वाग्भटखण्डनमण्डना**ख्यायाष्टीकाया विरचिता **भट्टनरहरिः** वाग्भटस्य वैदिकमतानुसारित्व स्थापयन् लिखति—"एतदुक्त**मनेनैव सङ्ग्रहे स्वयमेव**—'न मात्रामात्रमप्यत्र किञ्चिदागमवर्जितम् । तेऽर्थाः स ग्रन्थबन्धश्च सक्षेपाय क्रमोऽन्यथा ॥' इति ।" (वाग्भटखण्डनमण्डनटीका अमुद्रिता)

एवमरुणदत्तो भट्टनरहरिश्च **सङ्ग्रहकर्ता एव हृदयकर्ता** इत्येतमेव पक्ष समर्थयत इति स्पष्टमेव ।

यथा चाष्टाङ्गहृदयस्यैतौ टीकाकारौ एतन्मत प्रतिपादयतस्तथैव इन्दुरपि **अष्टाङ्गसङ्ग्रहव्याख्याता** वाग्भटस्यान्तेवासी **'शशिलेखा'**ख्याया सङ्ग्रहटीकायामेतदेव मत प्रदर्शयति । **अष्टाङ्गसङ्ग्रहस्य** चिकित्सितस्थाने पञ्चमाध्याये "पिप्पली मधुक पिष्ट" इत्यादि व्याकुर्वन्नसौ लिखति—"यवादिचूर्णं प्रत्येकं प्रसृताश—द्विपलमित्यर्थः । आमलकफलरसस्य प्रसृतो—द्वे पले । यद्यपि 'शुष्कमेयेष्विद मान द्विगुण तत् (तु) द्रवार्द्रयोः ।' (सं. क. अ. ८) इत्युक्त सामान्येनैव । तथा **चाचार्येणैव युक्त्या सम्पन्ने हृदये** कथितम्—'कुडवादि तथा द्रवम् ।' (हृ. कल्प. अ. ६|२३) इति । अत्र तेन प्रसृतो न सगृहीत. ।" इति ।

तथा चायमेव टीकाकारोऽष्टाङ्गसङ्ग्रहस्य शारीरस्थाने तृतीयाध्याये 'अथ सूतिका बलातैलेनाभ्यज्यात् ।' इत्यादिसूत्रस्य टीकायां लिखति—"यथा तस्मिन्नेव अहनि जीर्णे स्नेहे यवाग्वाः प्रयोगो नोपरुध्यते । तथा चाचार्य एव हृदये केवलं महत्याः प्रतिषेधं करोति । यतः साऽहोरात्रेण जीर्यते । न तु मात्रान्तरस्य विधानम् । 'सूतिका क्षुद्वती तैलाद् घृताद्वा महतीं पिबेत् ।' ( हृ. शा. अ. १।९४ ) इति ।"

एवमुपर्युद्धृतानि मुद्रितामुद्रितासु टीकासु विद्यमानानि अष्टाङ्गहृदयाष्टाङ्गसङ्ग्रहटीकाकाराणां वचनानि हृदयनिर्माता वाग्भट एव सङ्ग्रहकर्तेत्येतदेव मतं पुष्णन्तीति स्फुटीभविष्यति सुधियाम् ।

## ( २ ) किंधर्मीयो वाग्भटः ?

अथासौ वाग्भटाचार्यः किं वैदिकोऽथ जिनधर्मीय उत सौगतः ? इत्येतस्मिन् विषयेऽपि विदुषां नैकमत्यम् । तत्र प्राचीनपण्डितास्तु वैदिकमेव मन्यन्ते ।

अस्मदादरणीयपरमगुरवः स्वर्गीया नासिकवासिनस्तर्टेकुलावतंसा भिषग्वरा गणेशशास्त्रिणः अष्टाङ्गसङ्ग्रहसंहितामूलग्रन्थस्योपोद्घाते वाग्भटाचार्यस्य वैदिकमतानुसारित्वं ससाधयितुं प्रमाणानि प्रदर्शयन्ति । ते

**तर्टेइत्युपाह्वगणेशशास्त्रिणां मतम् ।**

लिखन्ति—"बुद्धाय तस्मै नमः इत्याद्युक्तत्वात् वाग्भटो बौद्धमतानुयायी आसीदिति केषाचिन्मतम् । तत्तु न सम्यक् । यतः—'अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन् । अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम् । मातरं पितरं देवान् वैद्यान् विप्रान् हरं हरिम् । पूजयेच्छीलयेद्दानदमसत्यदयार्जवान् ।' इत्यादिवाग्भटवचनानुरोधात् बुद्धशब्दस्य 'ज्ञानवान्' इत्यर्थपरत्वाच्च वाग्भटो वैदिकधर्मानुयायी ब्राह्मण आसीत्, न बौद्धमतानुयायीत्यधिगम्यते ।" इति ।

वाग्भटखण्डनमण्डनकारो भट्टनरहरिरप्येतदेव मतं प्रतिपादयति । स रागादिरोगानिति आद्यं पद्यं व्याकुर्वन् ब्रूते—"तेनैवविधविशेषणविशिष्टो नेश्वरमन्तरेणापरो वैद्यो विद्यत इति । अनेन श्लोकेन जगदीश्वर एव

**भट्टनरहरेर्मतम् ।**

नमस्क्रियते । इत्यनवद्यमेव पद्यम् । अथ वाग्भटस्य सुगतमन्त्रलेखनेन सौगतत्वे सिद्धे तत्प्रणीतशास्त्रादिपद्ये सुगत एव नमस्कार्यो भवितुमर्हतीति चेत् तन्न, अथर्ववेदोपवेदायुर्वेदप्रवृत्तपरमवैदिकात्रेयादिमहर्षितन्त्रसङ्ग्रहमात्रप्रवृत्तस्य कथं परमकुशलस्य वाग्भटस्य अन्यमतानुसारि शास्त्रप्रणयनमेतद्घटते ? किं च यदेव नाभिप्रैष्यदाचार्यः कथं प्रतिप्रकरणं स्वशास्त्रस्य वेदैकमूलत्वादन्यथा स्वकपोलकल्पितत्वादप्रामाण्यं स्वशास्त्रस्य प्रतिकारणमिति 'इति ह स्माहुरात्रेयादयो महर्षयः ।' इत्यत्र कथयता•••" इति ।

आनन्दाश्रममुद्रणालये मुद्रितस्य रसरत्नसमुच्चयस्य भूमिकायां कृष्णरावशर्माणो वाग्भटः श्रौतस्मार्तधर्मपरो द्विज आसीत् इति प्रस्थापयितुं लिखन्ति—

"सङ्ग्रहादौ—'तमेकवैद्यं शिरसा नमामि वैद्यागमज्ञांश्च पितामहादीन् ।' इत्यादिना सकलवेदोपवेदादीनामुत्पत्तिस्थानभूतं सम्पूर्णदेवर्षिप्रजापत्यादीनां कर्तारं चतुराननं श्रीब्रह्मदेवं यः प्रणमति,

**कृष्णरावशर्मणां मतम् ।**

स वाग्भटो वैदिकमार्गपूजक आसीदिति व्यक्तमेव । तथाऽनुभूयते च तद्ग्रन्थानुशीलनेन शतशः प्रमाणैः । अत एव 'बुद्धाय तस्मै नमः' इत्यस्मिन्निकटवर्तिपद्ये बुद्धाय नाम ज्ञातं सर्वं येन तस्मै प्रजानते त्रिकालज्ञानिने परमपुरुषायेति सरलार्थः ।

तथा च—

'न मात्रामात्रमप्यत्र किञ्चिदागमवर्जितम् ।' इति वृद्धवाग्भटापरपर्यायाष्टाङ्गसङ्ग्रहस्य प्रतिज्ञया श्रीमद्वाग्भटः प्रमाणपरतन्त्र आसीदिति ज्ञायते । तत्पारतन्त्र्यं वैदिकमार्गावलम्बिन्येव । बौद्धास्तु स्वतन्त्रा युक्तिवादकर्तारश्च । मन्वादिभिः स्मृतिकारैर्ब्रह्मचर्यव्रतादेशनं कृतोपनयनस्यैवाऽऽदिष्टम् । आयुर्वेदोपदेशयोग्यशिष्यगुणान् वक्तुकामो वाग्भटः सङ्ग्रहापरपर्यायाष्टाङ्गसङ्ग्रहस्थे शिष्योपनयनीयाध्याये त्वेतद्वदति ।

तद्यथा—'ब्रह्मचारी जितद्वन्द्वो धीरः सुचरितः स्थिर ।
शिष्योऽध्याप्यो गतो यावदन्तं तन्त्रार्थकर्मणाम् ॥
नाकालविद्युत्स्तनिते भूकम्पे राहुदर्शने ।
पञ्चदश्यामचन्द्राया परोक्षे वा गुरो पठेत् ॥'

इत्यादिश्लोकेषु ब्रह्मचारीत्यनेन विशेषणेन कृतोपनयनो द्विजस्तद्व्रताधिकारीत्यर्थः । एतदुपनयन द्विजस्यैवाभिहित धर्मशास्त्रे । एतत्प्रमाणै **श्रीमद्वाग्भटः श्रौतस्मार्तधर्मपरो द्विज आसीदि**त्यवगम्यते । परमपूज्येन हेमाद्रिणाऽपि वाग्भटमुद्दिश्येत्थमभ्यधायि लघुवाग्भटटीकोपक्रमे । तद्यथा-'आयुर्वेद व्याचिख्यासु **श्रीमद्वाग्भटाचार्यः** प्रथमश्लोकेनेष्टदेवता नमस्करोति-रागादिरोगानिति ।' एव धर्माधिकरणमहापण्डितश्रीहेमाद्रिमुखादप्याचार्यपदवी गतः **श्रीमद्वाग्भटो** धन्वन्तरिरिवापर कलियुगे भूदेवरूपेणेन्द्रप्रस्थपश्चिमदिग्वर्तिमरुदेशनिकटवर्तिनि सिन्धुसञ्ज्ञके धृतराष्ट्रजामातृजयद्रथदेशे प्रादुरासीदिति श्रुत परम्परयाऽस्माभिः । हन्त ! वर्णधर्मद्वेषिभिर्यवनै पादाक्रान्तेषु सिन्धुष्वनेकविद्वज्जनमण्डितब्राह्मणस्थलानि विलय गतानीति श्रूयते । अनेन कारणेन किञ्चिदप्याचार्यस्य जीवनवृत्त न ज्ञायते । तथाप्यत्रेय किवदन्ती-एतद्ग्रन्थकर्ता **श्रीमद्वाग्भटाचार्यो** युधिष्ठिरस्य परिषदि भिषगग्रगण्यो बभूव ।" इति ।

**पं रामचन्द्रविनायकपटवर्धनमहोदयानां मतम् ।**

सुश्रुतसहितोपोद्घाते पुण्यपत्तनवासिन' बी ए एल् एल् बी इत्युपाध्यलङ्कृताः **पण्डितरामचन्द्रविनायकपटवर्धनमहोदया** लिखन्ति-"**वाग्भटो** बौद्धमतानुयायी आसीदिति केषाचिन्मतम् । किन्तु तद्ग्रन्थपद्धतिः सर्वथा **चरकसुश्रुता**दिवत् वैदिक्येव । **वाग्भटेन** स्वीकृता चिकित्सापद्धतिरपि स्थाने स्थाने तस्य वैदिकमतानुसारित्व द्योतयति । स्थाने स्थाने तेन प्रदर्शितो विप्रविषयक आदरः **स वैदिक एवासीदि**त्यनुमापयति । विशेषस्तु मद्यमासादीना सेवनस्य प्रतिषेधस्तेन क्वापि न कृत इत्यवलोक्य **न स बुद्धधर्मानुयायी**त्येव मतिरुदेति । **यद्यप्यष्टाङ्गसङ्ग्रहे** मङ्गलाचरणार्थप्रयुक्तस्य श्लोकस्य सुगतपरोऽप्यर्थो भवितु शक्यते, तथा च **यद्यप्यष्टाङ्गहृदये** ताराख्याया देवताया उल्लेखो वर्तते, तथाऽपि ग्रन्थकर्तुः सौगतत्व साधयितु नैतत् पर्याप्तम् । यतो मङ्गलाचरणश्लोकविषये शक्यत एतद्वक्तु, यत्सौगतवैदिकानामुभयेषामपि सन्तोषाय ग्रन्थकर्त्रा हेतुत एवोपनिबद्धं द्व्यर्थि पद्यम् । तारादेवताविषयेऽपि कथयितु शक्यते यद्वैदिकधर्मानुयायिना **वराहमिहिरेणापि** स्वग्रन्थेषु ताराजिनबुद्धादीना मूर्तयो वर्णिता दृश्यन्ते । अपरं च ताराख्या देवता सौगतानामेव, न शाक्तादीनामपीति निर्णेतु प्रमाणानि नोपलभ्यन्ते । अहिसापरस्य बौद्धधर्मस्य मासपरिहारो मुख्याङ्गम् । एव सति सौगतधर्मानुयायिना ग्रन्थकर्त्रा मासभक्षणस्य नि.सदिग्धो निषेध आवश्यकः । स चानेन न कृतः । सर्वमेतत् स्ववलोक्य पूर्वग्रहरहितया दृष्ट्या निभाल्यते चेदय विषय एष एव विचारः समुदेति—यदेतद्ग्रन्थकर्ता **वाग्भटः** सुगतविषये पूज्यामुदारा च बुद्धिमावहन्नपि **वैदिकधर्मावलम्ब्येवासीत्** ।" इति ।

**व्ही. श्रीनिवासाचारियर् महाशयानां मतम् ।**

तञ्जावरस्थमहाराजासरफोजीसरस्वतीमहालग्रन्थालयाधिकारिणा श्री. व्ही. **श्रीनिवासाचारियर**महाशयाना मते **वाग्भटो** जिनधर्मीय आसीत् । स्वमतसमर्थनार्थं तैरुपन्यस्तानि प्रमाणानि त्वेतानि—

"अष्टाङ्गनिघण्टोरवसाने ईदृशी प्रशस्तिर्वर्तते । 'इत्याममानुसारेण । भिषग्वण (भिषग्गणि) प्रणीताना पर्यायाणा पठन्ति च । यदत्र किञ्चिन्नाप्रोक्ता आयुर्वेदानुसारिभिः ॥ श्रीवाहटाचार्यविरचितायामष्टाङ्गहृदयसहितायामष्टाङ्गनिघण्टुः समाप्तः ।' इति । अत्र **वाग्भटो** भिषग्गणिरिति निर्दिष्टः । गणिगुप्तात्मक नाम जिनधर्मीयाणामेव । तेन च **स जैन एव, न सौगतः** । अपर चायमेव **वाग्भटः 'पूज्यपादवाग्भटस्वामिन्'** इत्यपि ख्यातो

वर्तते। दाक्षिणात्येषु जनपदेषु जिनधर्मावलम्बिन पूज्यपादवाग्भटस्वाम्यनुस्मरणपूर्वकमेवागदसेवनविधिमाचरन्ति । तथाच 'मलबार' देशे एकादश्या तिथौ जिनमतानुयायिना अवैदिकेन विरचितमष्टाङ्गहृदय व्रतभङ्गभीत्या प्रायशो न पाठयन्ति । एव **जैन एव वाग्भटो, न बौद्धः** इति सिध्यति ।"

वाग्भटचरितवर्णनावसर एत एव श्रीनिवासाचारियर्महाशया लिखन्ति—"यदष्टाङ्गहृदयकर्ता **वाग्भट एवामरसिंहापरनामधेयोऽमरकोशनिर्माता** इति दाक्षिणात्या मन्यन्ते ।" इति। अग्रतश्च ते कथयन्ति—"यत्पूर्व वैदिकमतानुसारी **ब्राह्मणोऽयं वाग्भटो** जैनसौगतमत चिखण्डयिषुस्तन्मततत्त्वमात्मसात्कर्तुमेकस्य जिनमुनेरन्तेवासित्वमङ्गीचकार । किन्तु जिनमतमध्येत्य प्रतिनिवृत्तस्यास्य वैदिकमते मन्दौत्सुक्यमवलोक्य पाषण्डस्त्वमिति निर्भर्त्सितः प्रकटमेव नास्तिकमतमवलम्बस्वेति प्रबोध्य पूर्वगुरुणाऽसौ प्रतिप्रेषितः । अमरकोशस्य च मुद्रितपुस्तकेषु 'यस्य ज्ञानदयासिन्धोरगाधस्यानघा गुणाः । सेव्यतामक्षयो धीरा' स श्रिये चामृताय च ॥' इत्यस्य श्लोकस्य पूर्वगामिनौ द्वौ श्लोकौ[१] तथाच जिननामापरपर्यायवाचिनो द्विसप्ततिः श्लोकाश्चातिचारिता[२] वर्तन्ते ।" इति ।

**रुद्रपारशवानां मतम् ।**

सटीकाष्टाङ्गसङ्ग्रहस्योपोद्घाते **रुद्रपारशवा** लिखन्ति—"अत्र केचित् **श्रीमद्वाग्भटो ब्राह्मण एव** । यतः परमपूज्येन **हेमाद्रिणा** हृदयव्याख्यानोपक्रमे 'आयुर्वेद व्याचिख्यासुः **श्रीमद्वाग्भटाचार्यः** प्रथमश्लोकेनेष्टदेवता नमस्करोति—रागादिरोगानिति ।' इत्येव मूलमवतारितम् । एवं धर्माधिकरणमहापण्डित**श्रीहेमाद्रिमुखाद्**ध्याचार्यपदवी गतोऽय भूदेव एव भवेदिति । अन्ये तु 'पुरा किल वर्णधर्मविद्वेषिभिर्यवनैराक्रान्तेषु सिन्धुषु अनेकविद्वज्जनमण्डितब्राह्मणस्थलानि विलय गतानि । तदानीमस्मदाचार्योऽपि गत्यन्तरविरहात् परित्यक्तब्रह्मवर्चसो बुद्धमतावलम्बी आसीत् ।' इति किवदन्ती प्रमाणयन्ति। अपरे तु 'यत एकादशीदिने व्रतविघातभीता आचार्यग्रन्थान्न पठन्ति पाठयन्ति च तद्बौद्धेनैव भाव्यमाचार्येण ।' इति वदन्ति । इत्यादि । तस्माद**यं सर्वथा बुद्धमतावलम्ब्येव** । तथापि न च वैदिकधर्मविद्वेष स्वल्पोऽप्यमुष्य । यतो वैदिका मन्त्रा धर्माश्च भूयिष्ठ प्रतिपादिताः । यथा पूर्वोक्तमन्त्राभिमन्त्रणे ब्रह्मदक्षेत्यादिर्वेदवादी मन्त्रः, एव तत्र तत्र दृश्यते । 'अर्चयेदेवगोविप्रवृद्धवैद्यनृपातिथीन् ।' इत्यादौ बहुत्र वैदिका धर्माश्चेति ।" इति ।

**आचार्य प ल. वैद्य-महाभागानां मतम् ।**

अस्मदायुर्वेदसहाध्यायिनः पुण्यपत्तनस्थ'वाडियाकॉलेजाख्य'महाविद्यालये संस्कृतादिप्राच्यभाषानामध्यापने नियुक्ताः एम्. ए डी. लिट्ट् इत्युपाधिविभूषिताः आचार्या. **परशुरामलक्ष्मणवैद्यमहाभागाः** अपि **सौगतत्वमेव स्वीकुर्वन्ति वाग्भटस्य** । वैद्यसम्मेलनपत्रिकाया (भागः ५ सङ्ख्या १) **'वाग्भटाचार्यः कि वैदिक उत सौगतः ?'** इति शीर्षक प्रदाय प्रथितस्तैः पाण्डित्यपूर्णे प्रदीर्घः प्रबन्धः । तत्र ते लिखन्ति—"आसेतुहिमाचल सर्वेऽप्यायुर्वेदाभिमानिनः सिंहगुप्तसूनोर्भिषग्वरस्य **वाग्भटाचार्यस्य** अष्टाङ्गसङ्ग्रहाख्यमष्टाङ्गहृदयाख्य चायुर्वेदोदधे. सारभूत रत्नद्वयमधीयते निदधते चैतन्मनोमञ्जूषिकायाम् । अयं हि **वाग्भटाचार्यः** चरकसुश्रुतादीन् सहिताग्रन्थानुपजीव्यैव ग्रन्थद्वयमेतत् प्रणिनायेति ग्रन्थद्वयस्यालोचनेनैव सर्वेषा स्फुटीभवेत् सुधियाम्। तथापि चरकसहिताया सुश्रुतसहिताया वाऽनुपलभ्यमानान् विषयान् कुतः

---

१ "ज्ञातस्तेन समस्तशास्त्रविषयस्तस्याप्यनल्पा मति. शब्दज्ञानमहोदधेरुपतट तेनापि दृष्ट पुन ।
काव्य कर्तुमल मनोहरमसौ शक्त्या जनानां प्रिय येनैवामरकोश एष पठित शास्त्राब्धिपार गत. ॥ ५ ॥
जिनस्य लोकत्रयवन्दितस्य प्रक्षालयेत् पादसरोजयुग्मम् ।
नवप्रभादिव्यसरित्प्रवाहै स एव पङ्क मयि गाढलग्नम् ॥ २ ॥" इति द्वौ ।

२ "सर्वज्ञो वीतरागोऽर्हत् सार्व स्यात्कारलाञ्छन । परमात्मा पञ्चमहा कल्याणेश पुनर्भवः ॥ १ ॥
वृषभाग्रसुतश्चादिराजः प्रथमचक्रभृत् । भावनाद्या सिद्धिकान्ता' शब्दा जैनमतोचिता ॥ २ ॥ " इत्यादि

सजग्राहेति प्रादुरासीत् केषाञ्चन पण्डितानां विषयः। भेडादिसंहिताभ्योऽपि संगृहीता भवेयुरनेन केचन विषया इत्यपि सुशकमवगन्तुम्। एवमपि सन्ति **अष्टाङ्गसङ्ग्रहे अष्टाङ्गहृदये** च केचन विषया, ये न चरकसुश्रुतादिसंहितास्वधिगन्तुं शक्या इति वयं वदामः। कुतश्च तेषामागमः? कथं चामीषामत्र सङ्ग्रहः? इति विमर्शोऽयं भिषजामतीवोपकुर्यादिति प्रवृत्तोऽस्मि तद्विचारणे। सर्वेऽप्येते विषया अनेन बौद्धदर्शनेभ्यः संगृहीता भवेयुरिति वयं मन्यामहे। सौगतागमेभ्यो विषयाणामेतेषां सङ्ग्रहेण **वाग्भटाचार्यः सुगतानुयायी बौद्ध आसीदि**त्यपि वयमग्रे प्रपञ्चयिष्यामः। यद्यपि अष्टाङ्गसङ्ग्रहग्रन्थारम्भे मङ्गलश्लोके

'तृष्णादीर्घमसद्विकल्पशिरसं प्रद्वेषचञ्चत्फणं कामक्रोधविषं वितर्कदशनं रागप्रचण्डेक्षणम्।
मोहास्यं स्वशरीरकोटरशयं चित्तोरगं दारुणं प्रज्ञामन्त्रबलेन यः शमितवान् **बुद्धाय** तस्मै नमः॥'

इत्यनेन बुद्धस्य प्रणामक्रिया विहिता, तथापि बुद्धस्य ज्ञानवानित्यर्थपरत्वेन शक्योऽयं बुद्धशब्दो व्याख्यातुमिति प्राचीनपण्डिता ब्रुवते। अभिदधते च यत् 'अर्चयेद्देवगोविप्र' इत्यादिभिर्ग्रन्थकृद्वचनकदम्बकैरस्य ग्रन्थकर्तुर्वैदिकमतानुसारिता सुशका संसाधयितुमिति।''' ' तत्र बुद्धशब्दस्य ज्ञानवानित्यर्थपरत्वं उक्तं, तत्तु वयं न सहामहे। असति मुख्यार्थबाधके गौणार्थकल्पनाया अन्याय्यत्वात्। न च बुद्धशब्दस्य 'ज्ञानवान्' इत्यर्थकः कुत्रापि वैदिकदर्शनेषु दृष्टः प्रयोगः। अतो बुद्धशब्दस्य तथागतपरत्वमेव न्याय्यमवगन्तुम्। यच्च 'अर्चयेद्देवगोविप्र' इत्यादिषु पद्येषु देवब्राह्मणविषयिणी परमा प्रीतिर्वाग्भटस्य संदृश्यते तत्रैव वयमभिदध्महे। **यद्वाग्भटाचार्येणाष्टाङ्गसङ्ग्रहो** वा **अष्टाङ्गहृदयं** वा प्रणीतं तन्न केवलं बौद्धानामेवोपयोगाय, किन्तु विप्रादीनां सर्वेषाम्। अतो ग्रन्थद्वयस्य विप्रादिभिरपि सङ्ग्राह्यतयाऽभीप्सितत्वात् तदुपयुक्तानर्थान् सञ्जिघृक्षुर्ग्रन्थकृद् 'अथर्वविहिता शान्तिः' इत्यादीनि वैदिकानि बलिकर्मादीनि ग्रन्थद्वये समुपन्यास्थत्। युक्त्या च तत्रापि क्वचित्सौगतागमप्रसिद्धान् मन्त्रान् आचारविशेषान् तत्त्वज्ञानविषयिणीश्च कथा स्वाभिमतत्वेन प्रास्तौत्। अपि च खिस्तजन्मनः पश्चात् सौगतागमेष्वपि देवतादीनां भूयान् प्रपञ्चः प्रादुरासीत्। समुल्लिखिताश्च तद्ग्रन्थे **इन्द्रादयो** वेदप्रसिद्धा देवास्**तारादयो** देवतागणाश्च। तदेतानेव मनसि निधाय प्रयुक्तः स्याद्देवशब्दो वाग्भटेनेत्यभिप्रेमः। विप्रादिशब्दप्रयोजनं तूपरिष्टान्निर्दिष्टमेव।''''' खिस्तजननात्प्राक् तृतीयस्यां शताब्द्यां **अशोकनृपति**रार्यावर्तधुरमङ्गीचकार। समनन्तरमेव नृपतिरयं सुगतमतं स्वीचकार। ततः प्रभृति शिलालिखितशासनादिभिरयं सौगतं मतं सर्वत्र प्रसारयामास, अस्थापयच्चिकित्सागृहाणि, प्रावर्तयत्सर्वजनोपकाराय विविधा भिषक्क्रियाः, न्यषेधयच्च हिंसाप्रायां प्रवृत्तिम्। तदेवंगते सौगतेन मतेन सार्धं चिकित्साप्रधानस्य शास्त्रस्य समजनि सर्वत्र भारते निरर्गलः प्रचारः। पालिभाषानिबद्धस्य **महावंशस्य** द्वादशे परिच्छेदे सिंहलद्वीपं प्रति प्रेषितानां पञ्चानां स्थविराणां नामधेयान्यद्याप्युपलभ्यन्ते।

आसंश्च सौगतेष्वपि चिकित्सापारावारपारीणाः स्वतन्त्रप्रतिभाः कौमारभृत्यतन्त्रस्य प्रणेतारो जीवकादयः पण्डितप्रकाण्डा भवेयुरन्ये केचन ग्रन्थप्रणेतारः, येषां नामान्यप्यधुना न श्रूयन्ते। भवेयुर्वा सौगतानामपि नानाविधानि चिकित्सातन्त्राणि। येभ्यो **वाग्भटाचार्येण** समुद्धृता बहवश्चिकित्साप्रयोगाः। तदेतेषामेव सौगतचिकित्सकानामन्यतमोऽयं **वाग्भटाचार्यः** इत्यत्र वयं संसाधयितुमभिलष्यामः।

श्रूयते खल्वस्माभिर्यद् यत्र यत्र बौद्धधर्मप्रचारः आसीत् तत्र तत्राष्टाङ्गहृदयस्य सङ्ग्रहस्य च प्रचार इति। सिंहलद्वीपे हि त्रयोदश्यां शताब्द्यां कलिकालसर्वज्ञ**पराक्रमबाहु**नामधेयो नृपतिश्चत्वारिंशदधिकद्वादशशततमे वर्षे राज्यपदमारुरोहेति पालिभाषानिबद्धान्महावंशाज्ज्ञायते। तस्य राज्ये **अनोमदस्सिनामा** बौद्धभिक्षुः सङ्घराज आसीत्। तस्याज्ञया लिखिते **हत्थवनगल्लविहारवंसाख्ये** ग्रन्थे **अष्टाङ्गहृदय**स्यास्य

'सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः। सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत्॥'

इत्येतस्य पद्यस्यानुवादकः पालिभाषानिबद्धः श्लोकोऽयमुपलभ्यते—

'व्यापारा सब्बभूतान सुखत्थाय विधीयरे । सुख च न विना धम्म तस्मा धम्मपरो भव ॥'
(ह. वि. व. २-१४)

अविज्ञातनामधेयो ग्रन्थस्यास्य प्रणेता सम्यगधीतायुर्वेद आसीदिति ग्रन्थस्यैतस्य समालोचनेन ज्ञातुं पार्यते। अतश्च शक्यमिदमनुमातुं यत् त्रयोदश्या शताब्द्या **अष्टाङ्गसङ्ग्रहस्य हृदयस्य** चासीर्त्सिंहलद्वीपे सुलभः प्रचारः। पठ्यते च सबहुमान सिंहले च केरलेषु चान्येष्वपि दक्षिणापथप्रदेशेषु ग्रन्थद्वयमधुनापि भिषग्वरैः। समुपलभ्यन्ते च महाराष्ट्रीयै. अश्रुतनामधेया ग्रन्थद्वयस्य काश्चन व्याख्याः केरलेषु। **अष्टाङ्गसङ्ग्रहस्य** काचन व्याख्यापि मङ्गलोदयम् जनतया त्रिचूरनगरे न चिरादेव सम्मुद्रिता समुपलभ्यते। सिन्धुदेशजन्मनो वाग्भटस्यैतावान् ख्यातिप्रसरो निखिलेऽपि भारतवर्षे समजनीत्यस्य वयमेकमेव निदानमुत्पश्यामः,—**वाग्भटाचार्यः सौगतं मतमनुससार**। यत्र यत्र चास्य प्रसारः समजनि तत्र तत्रैव ग्रन्थद्वयस्येति। बौद्धेभ्य एव च निर्मत्सरैर्द्विजातिभि· समासादितोऽस्य पठनपाठनप्रचार इति। यथायथा ग्रन्थकृदय द्विजेभ्यः सम्मानमलब्ध, तथातथाऽस्य तथागतानुयायित्व विस्मृतिपथमगमत्। अत एव **चतुर्वर्गचिन्तामणिकारो हेमाद्रिरपि** 'अनुयायात्प्रतिपद सर्वधर्मेषु मध्यमाम्।' इत्यस्य व्याख्यानावसरे 'सर्वधर्मेषु मध्यस्थो भूत्वा' इति व्याचष्टे, नाज्ञासीच्च पद्यस्यास्य भूतार्थम्।

एवं वाग्भटाचार्यस्य सौगतानुयायित्वसंसाधकानि गमकान्युदाहृत्य ग्रन्थान्तर्गतानि गमकान्युदाहरिष्याम.। तत्र यद्यपि **अष्टाङ्गहृदयस्थ**मङ्गलश्लोके—

'रागादिरोगान् सततानुषक्तानशेषकायप्रसृतानशेषान्।
औत्सुक्यमोहारतिदाञ्जघान योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥'

इत्यत्र अपूर्ववैद्यायेति सन्दिग्ध एव शब्दप्रयोग., तथाऽपि अष्टाङ्गसङ्ग्रहस्य मङ्गलश्लोके **वाग्भटः** सुस्पष्टमेव बुद्ध प्रणतवान् इति प्राङ्निवेदितमेव। अष्टाङ्गहृदये कुष्ठचिकित्साया पापकर्मजकुष्ठप्रस्तावे—

'व्रतदमयमसेवा त्यागशीलाभियोगो द्विजसुरगुरुपूजा सर्वसत्त्वेषु मैत्री।
शिवशिवसुततताराभास्कराराधनानि प्रकटितमलपाप कुष्ठमुन्मूलयन्ति ॥' (चि. १९-९८)

इति श्लोको दृश्यते। अत्रोल्लिखितः शीलाभियोगो बौद्धागमेषु प्रसिद्धः पञ्चशीलोद्ग्रहणात्मको विहितः। तानि च शीलानि 'अदिन्नादाना वेरमणी सिक्सापद समादियामि' इत्येतानि पञ्चाष्टौ दश वा तत्र प्रसिद्धानि। न चेदृशः शीलाभियोगः अस्मत्स्मृत्यादौ विहितत्वेन दृष्टः। सर्वभूतेषु मैत्री 'मैत्रीभावना' इत्याख्यया सौगतागमे प्रसिद्धा। यद्यपि पद्यद्वयमन्यथा व्याख्यातुं शक्यं, तथाऽपि ताराराधनं वैदिकागमेषु कुत्राप्यदृष्टचरमिति **वाग्भटाचार्यस्य सौगतत्त्वं साधयती**ति निर्भय ब्रूम.। तारा हि बौद्धाना देवता इति 'तारात्व सुगतागमे' इत्यादिभि पद्यैः सुस्पष्टमेव सुधियाम्। एवमेव—

'ईश्वरं द्वादशभुज नाथमार्यावलोकितम्। सर्वव्याधिचिकित्सन्तं जपन् सर्वग्रहाञ्जयेत् ॥' (उ.५-५०)
'साय भुक्त्वा लघु हित समाहितमनाः शुचिः। शास्तारमनुसंस्मृत्य खशय्या चाथ सविशेत् ॥'
(अ. स. सू. ३)

इत्यत्र आर्यावलोकितशास्तृप्रभृतीनामुल्लेखोऽपि ग्रन्थकृतः सुगतानुयायित्वमनुमापयति। तथा चानेनौषधग्रहणमन्त्रोऽपि सुगतागमेभ्य एवोदाहृत। स च यथा—'ॐ नमो भगवते भैषज्यगुरवे वैडूर्यप्रभराजाय तथागताय र्हते सम्यक् सबुद्धाय।' इति। अत्रोल्लिखितास्तथागतार्हतादिशब्दा वैदिकागमे न कुत्रापि प्रसिद्धाः। न च **अष्टाङ्गहृदये** एकोऽपि वैदिको मन्त्र उदाहृतः।

'पञ्चपिण्डाननुद्धृत्य न स्नायात्······। ·········नाद्यादस्तमिते रवौ ॥ (अ. स, सू. ३)

इत्यत्र च जलचरहिंसाप्रायश्चित्ततया पञ्चपिण्डप्रदानविधानम्, रात्रिभोजननिषेधः, इति सौगताचारा अनुष्ठेयत्वेनोदाहृताः। न चैतादृशं विधानं कुत्रापि स्मृत्यादिषु दृश्यते। अष्टाङ्गहृदये वृश्चिकविषचिकित्सायाम्—

'शिरीषपुष्पं सकरञ्जबीजं काश्मीरजं कुष्ठमनःशिले च।
एषोऽगदो रात्रिकवृश्चिकानां सङ्क्रान्तिकारी कथितो जिनेन॥'

अत्र जिनशब्दो बुद्धवाची। जिनशब्देन कोऽभिप्रेत इति यद्यपि चिन्तनीयमत्र, तथाप्यगदतन्त्रप्रणेता कोऽपि सौगतो भवेदिति नात्र संशयस्यावसरः। दिनचर्याध्याये वाग्भटाचार्येण ये नियमा अनुष्ठेयत्वेनोक्तास्तत्र केचिन्मन्वादिस्मृतिभ्यः केचन च सौगतागमेभ्य उद्धृता दृश्यन्ते। एवमेव तस्मिन्नध्याये—

'नक्तंदिनानि मे यान्ति कथंभूतस्य सम्प्रति। दुःखभाङ् न भवत्येव नित्यं सन्निहितस्मृतिः॥'

इत्यस्य पद्यस्यार्थः पालिभाषानिबद्धेभ्यः सौगततन्त्रप्रसिद्धेभ्यो नित्यप्रत्यवेक्षणीयेभ्यो धर्मेभ्य उद्धृतः। ते च नित्यप्रत्यवेक्षणीया धर्माः—

'जराधम्मोऽम्हि जरं अनतीतो, व्याधिधम्मोऽम्हि व्याधिमनतीतो, मरणधम्मोऽम्हि मरणमनतीतो, सब्बेहि मे पियेहि मनापिहि नानाभावो विनाभावो कम्मस्सकोऽम्हि कम्मदायादो कम्मयोनि कम्मबन्धु कम्मपरिसरणो यं कम्मं करिस्सामि कल्याणं वा पापकं वा तस्स दायादो भविस्सामि ( Baudha Edahılla Ceylon 1904 P P. 68. ) इत्यादयः। तानेव मनसि निधाय नक्तंदिनानीत्यादिपद्यं लिखितं स्यादिति द्रढीयान्नो विश्वासः।

तत्रैव पापकर्मप्रविभागनिरूपणे—

'हिंसास्तेयान्यथाकामं पैशून्यं परुषानृते। सम्भिन्नालापव्यापादमभिध्या दृग्विपर्ययम्॥
पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत्।' (सू. अ. २।२२-२३)

इति पद्यमुपलभ्यते। तद्बिम्बभूतं च पद्यद्वयं सौगतागमेषु दशानामकुशलधर्माणां निरूपणावसरे समुपलभ्यते। तद्यथा—

'कायकम्मं तिधा वुत्तं वाचाकम्मं चतुब्बिधं। मनसा तिविधं चेति दसकम्मं पथा इमे॥ १॥
पाणघातपरद्दब्ब परदारं च कायतो। मुसापेसुञ्ञफरुस सम्फप्पलापि वाचतो।
अभिज्झा चेव व्यापादो मिच्छादिट्ठि च मानसो॥ २॥' ( Baudha Edahılla 109 )

न चैतादृशः पापकर्मणां दशधा संविभागः कस्यामपि स्मृतावस्माभिर्दृष्टचरः। यद्यपि मानवधर्मशास्त्रे दशधा कर्मविभागो दृष्टस्तथापि वर्तत एव तत्र कियानपि विशेषः। न तु तथाऽष्टाङ्गहृदये सौगतागमे चेत्यस्माद्गमकादेव वयं ब्रूमः यद्वाग्भटाचार्येण बौद्धागमेभ्य एवायमुद्धृतोऽंश इति।

इदं त्वधोनिर्दिश्यमानं सर्वेषामपि बलीयस्तमं गमकं **वाग्भटाचार्यस्य सौगतानुयायित्वं साधयती**ति मनुमहे। अष्टाङ्गहृदयस्य दिनचर्याध्याये—

'न पीडयेदिन्द्रियाणि न चैतान्यति लालयेत्। अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम्॥'

इति पद्यमुपलभ्यते। एतत्पद्यव्याख्याने सर्वेऽपि टीकाकृतः सर्वेऽपि चानुवादकाः प्रमादमकुर्वन् न चास्यार्थं याथार्थ्येनावागच्छन् इति प्राङ्निर्दिष्टमेव। अत्र हि **वाग्भटाचार्यः** सर्वधर्मेषु तथागतप्रतिपादितायाः मध्यमायाः प्रतिपदोऽनुसरणमेव श्रेयः इति प्रतिपादयति। आविष्करोति चात्मनः परमादरं तथागतागमेषु। 'मध्यमा प्रतिपद्' इति शब्दप्रयोगो वैदिकागमेष्वस्माभिर्न कुत्रापि दृष्टपूर्वः। नाप्येतादृशीमन्यमतसहिष्णुतामार्यधर्मे। यत्तु 'पदे पदे सर्वधर्मेषु मध्यमां गतिमनुयायात्' इति क्वचिद्दृष्टं व्याख्यानं तत्तु गतिशब्दाध्याहारस्वीकारेण गौणमेवेति वदामः। इयं हि मध्यमा प्रतिपद् तथागतेन बुद्धत्वाभिगमानन्तरं प्रथममेव पञ्चवर्गीयेभ्यो भिक्षुभ्य इदंप्रथम-

तयोपदिष्टा । सा हि त्रिपिटकान्तर्गतस्य महावर्गस्य धर्मचक्रप्रवर्तनाख्य उपदेशे समुपलभ्यते । सा च यथा—

'द्वे मे भिक्खवे अन्ता पब्बजितेन न सेवितव्वा । कतमे द्वे ? यो चाय कामेसु कामसुखल्लिकानुयोगो हीनो गम्मो पोथुज्जनिको अनरियो अनत्थसहितो, यो चाय अत्तकिलमथानुयोगो दुक्खो अनरियो अनत्थसहितो । एते खो भिक्खवे उभे अन्ते अनूपगम्म **मज्झिमा पटिपदा** तथागतेन अभिसम्बुद्धा चक्खुकरणी ञाणकरणी उपसमाय अभिञ्ञाय सम्बोधाय निब्बानाय सवत्तति । कतमा सा **मज्झिमा पटिपदा** तथागतेन अभिसम्बुद्धा ••• •••• निब्बानाय सवत्ततिश. अयमेव अरियो अट्ठङ्गिको मग्गो सेय्यथीद—सम्मदिट्ठि, सम्मासकपो, सम्मावाचा, सम्माकम्मन्तो, सम्माजीवो, सम्मावायायो, सम्मासति, सम्मासमाधि ।'

( महावग्ग—धम्मचक्कपवत्तन । )

इममेव मध्यमा प्रतिपदमनुसरणीयत्वेनोपदिष्टवान् **वाग्भटाचार्य** इत्यनेन सन्दर्भेण स्फुटीभवेत् सुधियाम् । तदनुसरण चोपदिशन् **अयं ग्रन्थकारः सौगत एवे**ति सुशकमवगन्तुमिति निर्णीतो राद्धान्तः ।" इति ।

अस्मन्मतेऽपि **वाग्भटाचार्यः सौगतधर्मावलम्ब्येव** । सस्कृतपाल्यर्धमागध्यादिप्राच्यभाषापारङ्गैस्तथा च सौगतधर्माध्ययनकृतपरिश्रमैरस्मत्सुहृद्भि श्रीमद्भिः **प. ल. वैद्य**महाभागै**र्वाग्भट-**

**अस्माकं मतम् ।** ग्रन्थद्वयात् सौगतधर्मग्रन्थेभ्यश्च प्रदर्शितानि प्रमाणानि सम्यगवलोक्य **'वाग्भटः सौगत एव'** इति विदुषा प्रत्ययो भवेदिति मन्यामहे वयम् । वाग्भटग्रन्थे अन्यान्यपि कानिचित् समुपलभ्यन्ते प्रमाणानि, यान्यध. प्रदर्श्यन्तेऽस्माभि । **अष्टाङ्गसङ्ग्रहे** सूत्रस्थाने नवमेऽध्याये—

'एकोत्तरं मृत्युशत ब्रुवते वेदवादिन । तत्रैक. कालसयुक्त शेषास्त्वागन्तवः स्मृता. ॥'

इति कालाकालविभेदेन मृत्योर्द्वैविध्य प्रतिपाद्य,

'तथा मरणमुद्दिष्ट **सौगतानां** चतुर्विधम् ।'

इति मरणचातुर्विध्यात्मकः सौगतसिद्धान्तो **वाग्भटेन** सगृहीतः ।

तथा च—

'आर्यावलोकितं पर्णशबरीमपराजिताम् । प्रणमेदार्यतारां च सर्वज्वरनिवृत्तये ॥

जपस्तथागतोष्णीष सर्वव्याधिचिकित्सितम् ।' ( स चि. अ. २ ) इति ।

'जिनजिनसुततारा भास्कराराधनानि प्रकटितमलपाप कुष्ठमुन्मूलयन्ति ।' (स चि.अ.२१) इति ।

'नमश्चक्षु परिशोधनराजाय तथागतायार्हते सम्यक् सम्बुद्धाय । तद्यथा

ॐचक्षु.प्रज्ञाश्चक्षुर्ज्ञानचक्षुर्विज्ञानचक्षुर्विशोधय स्वाहा ।' (स. सू. अ ८) इति ।

'महाविद्या च मायूरी शुचिं त श्रावयेत्सदा ।' (स. उ. अ ८) इति ।

एतेषु पद्येषु वर्णिता आर्यावलोकितापराजितार्यतारातथागतोष्णीषजिनजिनसुततारातथागतार्हत्सम्बुद्धमहाविद्यादयो बुद्धदेवता बौद्धागममन्त्राश्च **वाग्भटस्य** सुगतानुयायित्वं दृढीकुर्वन्ति ।

अत्र निर्दिष्टा तारानाम्नी देवता बौद्धानामेव, न वैदिकानाम् । यतः जैनाना पद्मावतीपूजास्तोत्रे—

'**तारा त्वं सुगतागमे** भगवती गौरीति शैवागमे वज्रा कौलिकशासने जिनमते पद्मावती विश्रुता ।

गायत्री श्रुतिशालिनां प्रकृतिरित्युक्तासि साख्यागमे मातर्भारति कि प्रभूतभणितैर्व्याप्तं समस्तं त्वया ॥'

इत्यत्र 'तारा' बौद्धानामेव देवता इति स्पष्ट निर्दिष्टा ।

---

१ "तथागतोष्णीष नाम मन्त्रविशेषम् । जिनो–बुद्ध । जिनसुता –अवलोकितेशादयः ।" इतीन्दु ।

२ "महाविद्यां–बुद्धदेवताख्याम् । मायूरी–त्वरिताम् ।" इति कैरली ।

तथा **चाष्टाङ्गसङ्ग्रहे** शारीरस्थाने गर्भस्य सत्वविशेषकरा' भावा उक्ताः । तद्यथा—

'सत्वविशेषकराणि पुनर्मातापितृसत्त्वादयोऽन्तर्वत्न्या श्रुतयश्चाभीक्ष्ण स्वोपचित च कर्म भवति ।'

( सं. शा. अ. १ ) ।

इत्यस्य सूत्रस्य व्याख्यानावसरे शशिलेखायाम्—

"अभीक्ष्ण—पुनःपुनर्विहिताः, श्रुतयो गर्भस्य सत्त्वविशेषकराः । तेन **सुसत्त्वादीनां बुद्धादीनां सम्बन्धिन्यः श्रुतयो** गर्भिण्या अभीक्ष्ण श्रुताः सुसत्त्वमेव गर्भ जनयन्ति ।" इति व्याकुर्वन् **इन्दुरपि** स्वगुरोर्**वाग्भटाचार्यस्य** बुद्धधर्मानुयायित्व ससूचयति ।

अस्मन्मते **वाग्भटस्य सौगतत्वे** बलीयस्तम प्रमाण त्वेतत्,—

'समधिगम्य **गुरोरवलोकितात्** गुरुतराच्च पितु प्रतिभा मया ।
सुबहुभेषजशास्त्रविलोचनात् सुविहितोऽङ्गविभागविनिर्णय' ॥' (स उ. अ. ५०) ।

इत्येतस्मिन् पद्ये **'अवलोकितस्य'** गुरुत्वेन कृतो निर्देश' **वाग्भटस्य** बुद्धानुयायित्वमेव स्थापयति ।

तथा च—

'किमुत निरामिषेण मनसा करुणा मृदुना कृपणविशिष्टयोः सदृशमादरमुद्वहता ।
**अतिगुरुबोधिसत्त्वचरितं सततं विदध**च्छमयति रोगजालमपि योऽतिविरोधि मिथ ॥' (स.उ.अ ५०) ।

इत्यस्मिन् पद्ये भिजषामुपकारिणो गुणान् सकीर्तयन् **वाग्भटाचार्यः** 'अतिगुरुबोधिसत्त्वचरितं सतत विदधत् रोगजालं शमयति' इति विलिख्य बुद्धचरितानुसरणे भिषजा यत्नो विधेय इति सूचयति । न च कश्चिद्वैदिकधर्मावलम्बी वेदविरोधिनः पाखण्डमतप्रवर्तकस्य बुद्धस्य चरितमनुसर्तुमुपदिशेदिति दृढमस्माकं मतम् ।

## ( ३ ) वाग्भटः कस्मिन् काले सम्बभूव ? ।

कदा खलु अयमायुर्वेदतन्त्रप्रणेता **वाग्भटो** भारतभुवमलञ्चकार ? इत्येतस्मिन् विषयेऽपि इतिहासज्ञैरायुर्वेदविद्भिश्च भिन्नभिन्नान्येव मतानि प्रदर्शितानि समुपलभ्यन्ते । आदौ तानि निर्दिश्य, अन्ततः प्रमाणोपन्यासपुरःसरमस्मन्मतमपि प्रदर्शयामो वयम् ।

**डॉ हॉर्न्लेमहोदयानां मतम् ।**

डॉक्टरहॉर्न्लेमहोदयाः **अष्टाङ्गहृदय**कारो **वाग्भटः अष्टाङ्गसङ्ग्रह**निर्मातुर्वाग्भटात् भिन्न आसीदिति कथयित्वा **सङ्ग्रहकारं वाग्भटं प्रथम**पदेन **हृदयकारं** च **वाग्भटं द्वितीय**पदेन निर्दिशन्ति इति पूर्वं प्रदर्शितमेव । **प्रथमवाग्भटः** ख्रिस्तीय ६२५ तमे वर्षे सम्भूतो **द्वितीयवाग्भट**स्तु ख्रिस्तीयाष्टमशताब्द्या समजायत इति तेषा मतम् ।

**पं. रामचन्द्रविनायकपटवर्धनमहोदयानां मतम् ।**

**पं. रा. वि. पटवर्धन**महोदयाः सार्थसुश्रुतसंहिताया उपोद्घाते 'ख्रिस्तीयद्वितीयशताब्द्या अवसाने तृतीयशताब्द्याः प्रारम्भे वा **वाग्भटसमयः**' इति ससाधयितुं लिखन्ति—

"**वाग्भटः** सिन्धुदेशनिवासी आसीत् । स सिन्धुदेश एव साम्प्रतं 'सिन्ध' इति ख्यातो वर्तते । यवनकृतात् सिन्धुदेशाक्रमणात् पूर्वमेव वाग्भटेन भाव्यम् । **अष्टाङ्गसङ्ग्रहस्य** उत्तरस्थाने शकनृपतयो **वाग्भटेन** सविशेषमुल्लिखिता दृश्यन्ते । तेनाय शकनृपतीनामवरज इत्यनुमीयते । ख्रिस्तीय ७१४ सविधौ सिन्धुदेशो यवनैराक्रान्तः स्वायत्तीकृतश्च । **चोमा डि कोरस** (Csoma-De-Koras) नाम्ना सुविख्यातेन प्राच्यसंशोधनपण्डितेन तिबेटीयग्रन्थसशोधनपरेण **'ताञ्जूर'**नाम्ना विश्रुत एकः प्राचीनो ग्रन्थः सशोधितो वर्तते । तस्मिन् **चरकसुश्रुतवाग्भटानां** त्रयाणामपि आयुर्वेदतन्त्रनिर्मातॄणामुल्लेखो दृश्यते । न चायं **'ताञ्जूर'** नामा ग्रन्थः ख्रिस्तीयाष्टमशताब्द्या उत्तरकालीनो भवितुं शक्यते इति **जार्जहूट**महाभागेन निर्णीत वर्तते । अस्यापि प्राक्कालीनो निर्देशश्चीनयात्रिणो **इत्सिङ्गाख्यस्य** समुपलभ्यते । तेन च लिखितम्—**यत् पूर्वमष्टसु ग्रन्थेषु वि-**

वृतान्यासन् एतानि अष्टसङ्ख्याकान्यङ्गानि, किन्तु पश्चात् सर्वेषामेतेषामष्टाङ्गाना एकस्मिन्नेव तन्त्रे सङ्ग्रहः कृतः केनचिदिति । यद्यपि **वाग्भटस्य** नाम स्पष्टमत्र न निर्दिष्ट तथापि **अष्टाङ्गसङ्ग्रहकारो वाग्भट** एव अत्र लक्षितो वर्तते इत्यत्र नास्ति सन्देहलेशोऽपि । अविद्यमानत्वात् तद्भिन्नस्य सुविख्यातस्य परकीयैरपि उल्लेखनार्हस्यापरस्य तन्त्रनिर्मातुः । अथ **इत्सिङ्गाख्यो** यात्री **'ह्यु एन् त्साङ्ग'** नाम्ना विख्यातात् चीनीययात्रिणोऽनन्तरमेव भारतवर्षमाजगाम । **वाग्भट**चिकित्साया रसाधिष्ठिता चिकित्सा नोपलभ्यते । इय रसचिकित्सा खिस्तीयषष्ठशताब्द्या. समनन्तरमेव भारतवर्षे प्राधान्येन प्रसृता इति मन्यामहे वयम् । **वाग्भटेन** पारदस्योल्लेखः कृतः, तदुपयोगित्वमपि चिकित्साया प्रदर्शित तेन । **अष्टाङ्गहृदयस्य** उत्तरस्थाने रसायनाध्याये **वाग्भटेन** लिखितम्—

'शिलाजतुक्षौद्रविडङ्गसर्पिर्लोहाभया**पारद**ताप्यभक्ष ।
आपूर्यते दुर्बलदेहधातुस्त्रिपञ्चरात्रेण यथा शशाङ्क' ॥' ( हृ. उ. अ ३९।१६१ ) इति ।

अयमेव श्लोको **वराहमिहिरेण** बृहत्सहिताया रूपान्तरितो दृश्यते । बृहत्सहिताया **वराहमिहिरेण** लिखितम्—

'माक्षीकधातुमधुपारदलोहचूर्णपथ्याशिलाजतुविडङ्गघृतानि योऽद्यात् ।
सैकानि विशतिरहानि जरान्वितोऽपि सोऽशीतिकोऽपि रमयत्यबला युवेव ॥' इति ।

श्लोकयोरेतयोः सादृश्यमवलोक्य **वराहमिहिरेण वाग्भट**वचनाधारेणैवोपनिबद्धो 'माक्षीकधातु' इत्यादिः श्लोक इति निश्चेतु शक्यते । **वराहमिहिरस्य** जन्मकालस्तु खिस्तीय **५०५** तम वर्षम् । अतः **वाग्भटो** वर्षशतेन सार्धवर्षशतेन वा तत्पूर्वतन इति पर्यवस्यति । एव **वाग्भटो** नैव खिस्तीयचतुर्थशतकादर्वाचीनो भवितु शक्यते । तेन च **द्वितीयशतकावसानभागः तृतीयशतकपूर्वभागो वा वाग्भटसमय** इति विनिर्णये न काऽपि विप्रतिपत्तिः ।" इति ।

स्वोपनिबद्धस्य प्रत्यक्षशारीराख्यस्य ग्रन्थस्योपोद्घाते **महामहोपाध्याया गणनाथसेन** एल्. एम्. ॲण्ड् एस्. महाभागाः **वाग्भटकालं** खिस्तीयपञ्चमशतकारम्भे स्थापयन्ति । ते लिखन्ति—

**कविराजगणनाथसेनमहाभागानां मतम् ।**

"अथ **वाग्भट**कालनिर्णये त्रयो हेतव उपलभ्यन्ते । तत्र **इत्सिङ्गाख्येन** चैनिकपरिव्राजकेन 'अष्टाङ्गवैद्यकसङ्ग्राहको नवीनाचार्य्यः' इत्यादि निर्देशो दर्शितपूर्व. प्रथमो हेतुः । तेन **खिस्तीयपञ्चमशतकारम्भे वाग्भटकालो**ऽस्माभि स्थापितः । अथ **चक्रपाणिडल्लना**दिभिः प्रायो वर्षसहस्रपुराणैराचार्यै**र्वाग्भट**पाठोद्धारो द्वितीयो हेतु, येन तत्कालादपि बहुपुराण. ( अन्यूनपञ्चशतवर्षप्राक्तन ) सम्भाव्यते **वाग्भटसमयः ।** महम्मद–बिन–कासिम कृत ( खिस्तीयाष्टमशतकारम्भे ) सिन्धुदेशाक्रमणं तृतीयो हेतुः, येन तत्पूर्वतन एव स्यात् सिन्धुदेशजो **वाग्भट** इति प्रतीति', न हि तदारभ्य प्रवृत्ते सिन्धुराज्यविप्लवे कथमपि अष्टाङ्गसङ्ग्रहाष्टाङ्गहृदयाख्ययोर्महाग्रन्थयोर्निर्माण सम्भवति नाम ।" इति ।

आयुर्वेदमार्तण्डाः **श्रीयादवजीत्रिकमजीआचार्याः** चरकसंहिताया उपोद्घाते **वाग्भटकाल**मधिकृत्य लिखन्ति—

"अतः परं **वाग्भटस्य** समयविषयेऽपि किञ्चिद्विचारः क्रियते । **अष्टाङ्गसङ्ग्रहे** उत्तरतन्त्रस्य **४९** तमे अध्याये पलाण्डुरसायनप्रकरणे अधोलिखितं पद्यद्वय दृश्यते—

**आयुर्वेदमार्तण्डानां यादवजीत्रिकमजीआचार्याणां मतम् ।**

'रसोनानन्तरं वायोः पलाण्डुः परमौषधम् ।
साक्षादिव स्थितं यत्र शकाधिपतिजीवितम् ॥ १ ॥
यस्योपयोगेन शकाङ्गनाना लावण्यसारादिव निर्मितानाम् ।
कपोलकान्त्या विजितः शशाङ्को रसातलं गच्छति निर्विदेव ॥ २ ॥' इति ।

एतच्च वर्णन **वाग्भटस्य** भारतवर्षे शकराज्यशासनकालभवत्व तत. किञ्चिदनन्तरवर्तित्व वा सूचयति। भारतवर्षे शकाना राज्यकालस्तु ख्रिस्टस्य द्वितीयशताब्दीमारभ्य चतुर्थशताब्दीपर्यन्तमासीत्। ख्रिस्टस्य पञ्चमशताब्द्या सम्भूतात् **भट्टारहरिचन्द्रात् वाग्भटस्य** परकालभवत्वात्, ख्रिस्टस्य सप्तमशताब्द्या समायातेन **इत्सिङ्ग**नाम्ना चीनदेशीयपरिव्राजकेन स्वीयभारतभ्रमणवृत्तान्ते **अष्टाङ्गसङ्ग्रहस्य** स्वसमये भारतवर्षे सर्वत्र पठनपाठनप्रचारस्योक्तत्वात्, ख्रिस्टस्य सप्तमशताब्द्या सम्भूतेन **माधवकरेण वाग्भट**पाठोद्धाराच्च ततोऽय वर्षशत प्राचीनः **ख्रिस्टस्य षष्ठ्यां शताब्द्यां बभूवे**त्यनुमीयते।" इति।

महाराष्ट्रीयज्ञानकोशकारा विज्ञानेतिहासाख्ये पञ्चमे विभागे नवमे प्रकरणे ३७८ तमे पृष्ठे **वाग्भटकाल**विषये लिखन्ति—

**महाराष्ट्रीयज्ञानकोशकाराणां मतम्।**

"यद्यपि तिबेटाख्ये देशे समुपलभ्यमान वृत्तं प्रमाणीकृत्य **'हूथ'** महाभागेन निर्णीत यत् **वाग्भटकालः** ख्रिस्तीयाष्टमशतकादर्वाचीनो भवितु नार्हति इति, तथापि अस्मिन् विषये वर्तत अद्यापि भिन्नमतत्वम्। आरबीयाना ग्रन्थेषु निर्दिष्टः 'अष्टाङ्कर' नामा ग्रन्थ एवाष्टाङ्गहृदयतन्त्रमिति स्वीकृतेऽपि ग्रन्थस्यास्य काल **ख्रिस्तीयनवमशतकमेवा**याति। यस्य **वाग्भट**विरचितस्य **अष्टाङ्गसङ्ग्रहस्योल्ले**खो टीकाग्रन्थेषु दरीदृश्यते, यस्मिश्च **अष्टाङ्गहृदये** सूत्ररूपेण ग्रथिताना विषयाणां सविस्तर विवरण वर्तते स **अष्टाङ्गसङ्ग्रहः** ख्रिस्तीयाष्टमशताब्द्या. प्राचीन एव भवेत्।" इति।

चरित्रकोशकारा मध्ययुगीनचरित्रकोशे ७२७ तमे पृष्ठे **वाग्भटसमय**मधिकृत्य लिखन्ति—

**चरित्रकोशकाराणां मतम्।**

"**वाग्भटः** ख्रिस्तीय १५० वर्षसविधौ अभवत्। अयमायुर्वेदतन्त्रप्रणेता सौगततन्त्रकार'। एतत्समकालमेव शकनृपा भुव शासति स्म। पलाण्डुप्रिया शकनृपतय इति **वाग्भट** एव कथयति (अष्टाङ्गसङ्ग्रहे अ ४९)। **वाग्भटोऽ**य सिंहगुप्तसूनु.। **अष्टाङ्गहृदये सङ्ग्रह** उल्लिखित उद्धृतश्च वर्तते।" इति।

वादविषयस्यास्य कीदृशी खलु वास्तविकी भूमिका? इति सर्वेऽवगच्छेयुरिति बुद्ध्या विषयमिममवलम्ब्य विद्वद्भिः प्रदर्शितानि भिन्नभिन्नानि मतानि उद्धृत्य अस्मन्मतमपि प्रमाणपुरस्सरमुपन्यस्यामो वयं साम्प्रतम्। महद्दुर्भाग्यमेतदस्माक यत् विद्वन्मतल्लिकैर्भारतीयप्राचीनग्रन्थकर्तृभि प्रायः स्वनामधेयमन्तरा नान्यत्किञ्चिदात्मवृत्तावबोधक ग्रन्थरचनाकालनिर्देशक वा स्वग्रन्थमध्ये सग्रथितम्। कविकुलगुरु**कालिदासा**दिभिस्तु स्वनामापि न प्रकटित **रघुवंशा**दिमहाकाव्येषु। भारतीयसभ्यताया विशेष इति यद्यपि स्तोत्रार्हा तेषामिय प्रसिद्धिपराङ्मुखता, तथापि इय बहोः कालादनन्तरं तेषा ग्रन्थरचनाकाल निर्णेतुकामाना परं काठिन्यमापादयति।

**अस्माकं मतम्।**

अत्र विद्वद्भिरङ्गीकृता कालनिर्णयपद्धतिस्त्वीदृशी। यस्य खलु कालो निर्णेयः तद्विरचिते ग्रन्थे केषां केषां पूर्वाचार्याणा राज्ञा ग्रन्थकर्तॄणा वा नामानि निर्दिष्टानीति प्रथमतो द्रष्टव्यम्। अनन्तरं च कैः कैरन्यैर्ग्रन्थनिर्मातृभि' तन्नाम तद्ग्रन्थनाम वा निर्दिष्टमित्यवलोकितव्यम्। एतामेव पद्धतिमवलम्ब्य प्रस्तूयते साम्प्रतमस्माभि**र्वाग्भटकाल**निर्णयविषयः। **वाग्भटेन** स्वग्रन्थयोः **चरकसुश्रुतौ** उल्लिखितौ। तेन च **वाग्भटश्च**रकसुश्रुतयोरर्वाचीन इति सशयरहितः सर्वसम्मतश्च विषयः। किन्तु टीकाकारान् विहाय नान्येन केनापि तन्त्रकारेण **वाग्भटस्तद्ग्र**न्थौ वा नाम्ना निर्दिष्टौ इति महदाश्चर्यकरम्। **अष्टाङ्गसङ्ग्रहाष्टाङ्गहृदययोः** सर्वस्मिन् भारतवर्षे सत्यपि पठनपाठनप्रचारे केन खलु हेतुना केनापि तन्त्रकारेण **वाग्भटो** नाम्ना न निर्दिष्टः? इत्याशङ्कायां वयं ब्रूमो यन्मात्सर्यबुद्धिरेवात्र

निदानम् । **वाग्भटो** बुद्धमतानुयायी आचार्य आसीदिति निर्दिष्टपूर्वमेव । तेनैव हेतुना वेदिकधर्मावलम्बिभिस्तदवरजैस्तन्त्रकारैः मात्सर्यभावदुष्टैः हेतुपुर सरमेव वर्जित तन्नामग्रहणम् । **वाग्भट**पाठमुद्धरता **माधवकरेणा**पि तन्नाम तु नोल्लिखितमित्यत्र तस्यावैदिकत्वमेव कारणमित्यत्र नास्ति सन्देहलेशोऽप्यस्माकम् । **अष्टाङ्गसङ्ग्रहो वाग्भटेन** पूर्वं विरचित. । अनन्तरमतीतेषु कतिपयेषु वत्सरेषु ते**नाष्टाङ्गहृदयं** व्यरचि । अन्तरा **वाग्भटेना**पि वैदिकैः प्रकटितस्यास्य मात्सर्यस्य कृत प्रत्यय इति तेनैव लिखितेभ्यो हृदयस्थपद्येभ्यः समुन्नीयते । तानि पद्यानि तु यथा—

'अभिनिवेशवशादभियुज्यते सुभणितेऽपि न यो दृढमूढकः ।
पठतु यत्नपरः पुरुषायुप स खलु वैद्यकमाद्यमनिर्विद' ॥
वाते पित्ते श्लेष्मशान्तौ च पथ्य तैल सर्पिर्माक्षिक च क्रमेण ।
एतद् ब्रह्मा भाषता ब्रह्मजो वा का निर्मन्त्रे वक्तृभेदोक्तिशक्तिः ॥
अभिधातृवशात् किंवा द्रव्यशक्तिर्विशिष्यते ।
अतो मत्सरमुत्सृज्य माध्यस्थ्यमवलम्ब्यताम् ॥
ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ ।
भेडाद्या. किं न पठ्यन्ते तस्माद् ग्राह्य सुभाषितम् ॥' इति ।

( हृ. उ अ. ४०।८५–८८ )

एवं **वाग्भट** इतरैस्तन्त्रकारैरनुल्लिखितः, तस्मात्तदवरज एव स इति नैव वक्तु शक्यते । तदनुल्लेखने उपरि प्रदर्शितस्य हेतोः सत्त्वात् । **वाग्भटो** माधवकरात् प्राचीनः, वाग्भटपद्यादीना माधवकरेण ग्रहणात् । माधवकरेण वाग्भटोक्त' (हृ नि अ १।२)—'निदान पूर्वरूपाणि' इत्यादि. 'तत्प्रकोपस्य तु प्रोक्त विविधाहितसेवनम् ।' इत्यन्तः समग्रः पाठो यथाशब्दं गृहीत । **माधवकर**श्च[1] खिस्तीयसप्तमशतके किञ्चित्पूर्वं वा प्रादुर्बभूवेति श्रीमहामहोपाध्याय**गणनाथसेन**महाभागैः प्रत्यक्षशारीरग्रन्थस्योपोद्घाते ५३ तमे पृष्ठे साधितम् । **चरकश्च** खिस्तीयप्रथमशतकस्यावसाने सम्बभूवेति परमविद्वद्भिः श्रीमद्भिः **यादवजीत्रिकमजीआचार्यैः**[2] सुनिश्चितम् । एव **चरक**परकालवर्तित्वात् तथा च **माधवकर**पूर्वकालवर्तित्वात् **वाग्भटकालः** खिस्तीयप्रथमशताब्द्या अनन्तरं सप्तमशतकाच्च प्राक् इति सिद्धम् ।

किन्तु षड्वर्षशतावधिदीर्घेऽस्मिन् काले **वाग्भटः** कदा सम्बभूवेति विचार्यमाणे एतदावेदकानि **वाग्भट**ग्रन्थान्तर्वर्तीनि कानिचित् प्रमाणानि समुपलभ्यन्ते ।

---

१ "अथ माधवकरो नाम प्रसिद्धवैद्याचार्यो निदानकार इन्दुकरात्मजो वङ्गेषु प्रादुरासीदिति सुप्रथिता किंवदन्ती । कर इत्युपाधिश्चास्य वङ्गीयता स्फुट व्यनक्ति । स च वाग्भटादवरज , निदाने 'निदान पूर्वरूपाणि' इत्यादि 'तत्प्रकोपस्य तु प्रोक्त विविधाहितसेवनम् ।' इत्यन्तस्य समग्रसन्दर्भस्यान्येषा च वाग्भटपद्याना बहुधा ग्रहणात् । वृन्दचक्रपाण्योः पूर्वजश्च स , ताभ्यां स्वस्वचिकित्सासङ्ग्रहयो 'गदविनिश्चयो'क्तक्रमेण चिकित्सोपदेशात् । चक्रपाणिश्च खिस्तीयैकादशशतकमध्यभागे वङ्गभूमिमलञ्चकारेति सहेतुकमवोचाम । स च वृन्दकृत 'सिद्धयोगा'ख्यग्रन्थमुपजीव्य स्वकीयं चिकित्सासङ्ग्रह रचयाम्बभूवेति तदुक्त्या चक्रपाणेरन्यूनवर्षशतद्वयेन प्राक्तन' स्याद् वृन्द । तेनासौ वृन्दाचार्यो नवमशतकेऽभूदिति उन्नीयते । माधवश्च तत्पूर्वजः खीस्तीयसप्तमशतके सम्बभूवेति सम्भाव्यते । इतश्च अष्टमशतके 'हरूण उल् रसीद्' समये माधवीयनिदानस्य पारस्यभाषानुवादोऽभूदित्यैतिहासिकवार्तयाऽपि तत्पूर्वज एव माधवः पर्यवस्यति । तस्मात् वाग्भटपरवर्तित्वाच्च सप्तमशतके किञ्चित् पूर्व वा माधवप्रादुर्भावः सिध्यति । माधवकरश्चासौ रुग्विनिश्चयाख्यनिदानग्रन्थप्रणेता रत्नमालाख्यद्रव्यगुणकारश्चेति प्रसिद्धि । डल्लनादिनिर्दिष्ट. सुश्रुतटिप्पणकारः श्रीमाधवस्तु भिन्न एवास्मात् प्रतिभाति, तस्य कुत्रापि माधवकर इति निर्देशादर्शनात् ।" इति प्रत्यक्षशारीरे ।

२ चरकसंहिताया द्वितीयावृत्तेरुपोद्घाते ९–१० तमयो. पृष्ठयोः ।

**अष्टाङ्गसङ्ग्रहे** उत्तरस्थानीय ४९ तमे अध्याये—

"रसोनानन्तर वायोः पलाण्डुः परमौषधम् ।
साक्षादिव स्थित यत्र शकाधिपतिजीवितम् ॥"

इत्येतस्मिन् पद्ये शकाधिपानामुल्लेखो वर्तते । तथा च—

"यस्योपयोगेन शकाङ्गनाना लावण्यसारादिव निर्मितानाम् ।
कपोलकान्त्या विजितः शशाङ्को रसातल गच्छति निर्विदेव ॥"

इत्यत्र पलाण्डुसेवनेन शकसुन्दरीणां कपोलकान्तिरेव चीयते यत्तया निर्जितश्चन्द्रो निर्विण्णो भूत्वा पाताल गच्छतीति वर्णितम् । अत्रस्थ. शकनृपतीना शकाङ्गनाना च निर्देशो **वाग्भटस्य** शकराजशासनसमकालवर्तित्वं द्योतयति । शकनृपतयस्तु भारतवर्षे ख्रिस्तीयप्रथमशतकादारभ्य चतुर्थशतकावसानपर्यन्त भुव शासति स्मेति इतिवृत्तविद्भि सुनिर्णीतम् । एतेन **वाग्भटकालो**ऽपि अन्तरा द्वितीय पञ्चम च ख्रिस्तीयशतकमिति पर्यवस्यति ।

अथ चरकव्याख्याकर्तुः **भट्टारहरिचन्द्रस्य** उल्लेखो वाग्भटान्तेवासिभ्या**मिन्दुजेज्जटाभ्यां** कृतः । तस्मादय **भट्टारहरिचन्द्रः** इन्दुजेज्जटसमकालीनो वा प्राक्तनो वा इति सुस्पष्टमेव । **इन्दुजेज्जटौ** वाग्भटसमकालीनौ, तदन्तेवासिनौ तट्टीकाकारौ चेत्यग्रे दर्शयिष्यामो वयम् । तस्मादय **भट्टारहरिचन्द्रो** वाग्भटसमकालीनः तदीषत्पूर्वतनो वा । किन्तु **न स वाग्भटात्** पूर्वतन , चरकव्याख्याकर्तुस्तस्य **हरिचन्द्रस्य** वाग्भटेन अनिर्देशात् । तस्मात् **भट्टारहरिचन्द्रो वाग्भटसमकालीन** एवेति सिद्धम् । वाग्भटान्तेवासिना जेज्जटेन चरकसहिताटीका व्यरचि । तदीषत्पूर्वकालमेव **भट्टारहरिचन्द्रेण** विरचिता चरकव्याख्या । अत एव [1]चरकव्याख्याकार इति भट्टारहरिचन्द्रस्य जेज्जटेन कृत उल्लेख इति मन्यामहे वयम् । असौ **हरिचन्द्रः** साहसाङ्कस्य नृपते राजवैद्य आसीदिति **विश्वप्रकाशकोशे** कान्तवर्गे पञ्चमे श्लोके भट्टारहरिचन्द्रान्वयसम्भूतेन **महेश्वरेण** लिखितम् । तद्यथा—

"श्री**साहसाङ्क**नृपतेरनवद्यवैद्यविद्यातरङ्गपदमद्वयमेव बिभ्रत् ।
यश्चन्द्रचारुचरितो **हरिचन्द्र**नामा स्वव्याख्यया चरकतन्त्रमलञ्चकार ॥" इति ।

अस्मिन् पद्ये य **साहसाङ्क**नाम्ना निर्दिष्टो नृपति स एव विक्रमादित्याख्यो **द्वितीयश्चन्द्रगुप्त** इति पुरावृत्तविद्भिर्निर्णीतम् । मॉनियरविल्यम्स्विरचिते सस्कृतकोशग्रन्थे **'साहसाङ्क'** एव विक्रमादित्य इति लिखित्वा 'पञ्चदण्डच्छत्रप्रबन्धाख्यो' ग्रन्थः प्रमाणत्वेन निर्दिष्टो वर्तते । नागपुरस्थमॉरिसमहाविद्यालये सस्कृतभाषाया अध्यापने नियुक्ताः विद्वासः प्राचार्याः श्रीमन्तो **वासुदेवविष्णुमिराशी**महाभागा अपि 'साहसाङ्को' विक्रमादित्याख्यो **द्वितीयश्चन्द्रगुप्त** एवेत्येव मन्यन्ते । राष्ट्रकूटवशसम्भवस्य चतुर्थगोविन्दस्य 'सांगली' 'खबायत' इत्यादिषु स्थानेषु समुपलब्धेषु ताम्रपटेषु [2]एकस्मिन् श्लोके वर्तमान. 'साहसाङ्क' शब्द' विक्रमादित्यमेवाभिधत्ते इति तैरेव भारतीयेतिहासत्रैमासिकपत्रिकाया (vol X, 1934) 'चन्द्रगुप्तविक्रमादित्यश्चतुर्थो गोविन्दश्च' इति शीर्षकमादाय प्रदर्शितम् । अय साहसाङ्काख्यो द्वितीयश्चन्द्रगुप्तोऽपि शकनृपतिसमकालीन

१ "जेज्जटेन निरन्तरपदव्याख्याख्याया चरकटीकाया मदात्ययचिकित्सितारम्भे 'आचार्यप्रणीतश्चायमध्यायो भट्टारहरिचन्द्रेणैव सुविवृत ।' इत्युक्तत्वात् ।" इति चरकोपोद्घाते यादवजीमहाभागा. ।

२ ताम्रपटस्थोऽय श्लोक —

"सामर्थ्ये सति निन्दिता प्रविहिता नैवाग्रजे क्रूरता बन्धुस्त्रीगमनादिभि कुचरितैरावर्जित नायशः ।
शौचाशौचपराङ्मुख न च भिया पैशाच्यमङ्गीकृत त्यागेनासमसाहसैश्च भुवने यः साहसाङ्कोऽभवत् ॥" इति ।

एवासीत् । शकैः सार्धमनिशं युध्यमानेनानेनैव **द्वितीयचन्द्रगुप्तेन** खिस्तीयपञ्चनवत्यधिकत्रिशततमे (३९५) अब्दे शकाः पराजिग्यिरे निरवासिष्यन्त च । तेनैवायं द्वितीयश्चन्द्रगुप्तः **'शकारि'**संज्ञां लेभे इति पुरावृत्तविदो विदुः । **द्वितीयश्चन्द्रगुप्तः** खिस्तीय ३७५ तमाद्वर्षादारभ्य ४१३ तमवत्सरपर्यन्तं राज्यधुरमुवाह । तेन च **भट्टारहरिचन्द्रस्या**प्ययमेव कालं इति फलितम् । भट्टारहरिचन्द्रो वाग्भटशिष्याज्जेज्जटादीषत्पूर्वतन इत्युपरि प्रदर्शितमेव । तेन **वाग्भटः** खिस्तीयचतुर्थशतकस्योत्तरार्धे सम्बभूवेत्यनुमीयते । **न च** द्वितीयचन्द्रगुप्तकृताच्छकराजनिर्वासनात् अर्वाचीनो **वाग्भटकाल** इति ग्रहीतुं शक्यते, **वाग्भट**कृतस्य शकोल्लेखस्य प्रत्यक्षदर्शनपूर्वकत्वात् । **वाग्भटः** सिन्धुदेशजः । शका अपि कच्छसौवीरादिषु सिन्धुदेशलग्नेष्वेव देशेषु कृतवसतय आसन् । तेन च समक्षमीक्षितानां शकसुन्दरीणां पलाण्डुसेवनजनितं **वाग्भट**वर्णितं लावण्यातिशयवत्त्वं साम्प्रतमेव । "खिस्तीय ५०५ तमे वर्षे सञ्जातेन **वराहमिहिरेण** 'माक्षीकधातुमधुपारदलोहचूर्ण' इत्यादिश्लोको **वाग्भट**विरचितस्य 'शिलाजतुक्षौद्रविडङ्गसर्पिः' इत्यस्य श्लोकस्याधारेणैव विरचितः । तस्मात् वराहमिहिरात् पूर्वतन एव **वाग्भटः**" इति यत् पटवर्धनमहोदयैर्लिखितं तत्तथैव । "वराहमिहिराद्वर्षशतेन सार्धवर्षशतेन वा प्राक्तनो **वाग्भटः**" इति श्रीपटवर्धनमतं स्वीकृत्यापि **वाग्भटकालः** खिस्तीयचतुर्थशताब्द्या उत्तरार्धे समायाति । एवं **खिस्तीयचतुर्थशतकस्योत्तरार्धे वाग्भटाचार्यः सम्बभूवे**त्यस्माकं मतम् ।

## ( ४ ) वाग्भटस्य वंशवृत्तं गुरुः शिष्यवर्गादिश्च ।

**वाग्भट**स्य पितामहो वाग्भटनामा एव भिषक्श्रेष्ठ आसीत् । पिताऽप्यस्य **सिंहगुप्ता**ख्यो महाविद्वानायुर्वेदप्रवीणो वैद्यपतिरिति बिरुदालङ्कृत आसीत् । स्वयं **वाग्भटो**ऽप्यायुर्वेदविषयकाष्टाङ्गसङ्ग्रहाष्टाङ्गहृदयाभिधसर्वप्रसिद्धतन्त्रद्वयनिर्माता चिकित्साशास्त्रपारावारपारीणो भिषगाचार्य आसीत् । एवं च तदन्वयसम्भूताः सन्ततक्रमागताश्चय. पुरुषा आयुर्वेदविद्यानदीष्णा आसन्निति स्फुटं भवति । जन्म चास्य सिन्धुदेशे सम्भूतम् ।

**अवलोकिता**भिधः सौगतेश्वरस्तस्य गुरुरभवत्, वैद्यविद्यागुरुस्तु तज्जनकः **सिंहगुप्त** एव । एतस्य गुरुद्वयस्य सकाशात् ग्रन्थनिर्माणायात्यावश्यकीं प्रतिभां समासाद्य वैद्यशास्त्रविषयकानेकतन्त्राण्यध्येत्य नानाविधभैषज्यप्रयोगांश्च विधाय **अष्टाङ्गसङ्ग्रहो** विरचित इति **वाग्भटः** स्वयमेव—

'समधिगम्य गुरोरवलोकितात् गुरुतराच्च पितुः प्रतिभा मया ।
सुबहुभेषजशास्त्रविलोचनात् सुविहितोऽङ्गविभागविनिर्णयः ॥' (सं. उ. अ. ५०) ।

इति श्लोके आह ।

इन्दुजेज्जटादयश्च **वाग्भटस्य** शिष्या इति—

'लम्बश्मश्रुकलापमम्बुजनिभच्छायाद्युतिं वैद्यकानन्तेवासिन **इन्दुजेज्जट**मुखानध्यापयन्तं सदा ।
आगुल्फामलकञ्चुकाञ्चितदरालक्ष्योपवीतोज्ज्वलत् कण्ठस्थागरुसारमञ्जितदृशं ध्याये दृढं **वाग्भटम्** ॥'

इत्यस्मात् पद्यात् ज्ञायते । अनेनैव तदन्तेवासिना इन्दुना **वाग्भट**विरचितयोरुभयोरप्यष्टाङ्गसङ्ग्रहहृदययोः शशिलेखाख्या सुविस्तृता व्याख्या कृता वर्तते । जेज्जटेनापि चरकसुश्रुतसंहिताष्टाङ्गसङ्ग्रहाष्टाङ्गहृदयतन्त्राणां व्याख्या विरचिताः । एतेनोभावपि एतौ **इन्दुजेज्जटौ** परमविद्वांसौ आयुर्वेदपारङ्गतौ आस्तामिति स्पष्टं भवति ।

यथा च **वाग्भटस्य** पितृपितामहादीनां शिष्याणां वा विषये तदावेदकं वृत्तमुपलभ्यते, न तत्तथा तस्य पुत्रपौत्रादिविषये शिष्यपरम्पराविषये वा प्राप्यते । भाण्डारकरप्राच्यसंशोधनमन्दिरे **चिकित्साकलिकाख्यस्य** ग्र-

---

१ History of India By Vincent Smith

२ "भिषग्वरो वाग्भट इत्यभून्मे पितामहो नामधरोऽस्मि यस्य ।
सुतोऽभवत्तस्य च सिंहगुप्तस्तस्याप्यहं सिन्धुषु लब्धजन्मा ॥" (सं. उ. अ. ५०) ।

न्थस्य हस्तलिखित ($\frac{२१४}{१८८३-८४}$ इत्यङ्कित) एक पुस्तक सगृहीत वर्तते। ग्रन्थस्यास्यावसाने—'इति वाग्भटसूनुना तीसटदेवेन रचित चिकित्साशास्त्र' इति लिखित अस्ति। एतदाधारेणैव "**वाग्भटस्य तीसटो** नाम पुत्र आसीत्, तेन च '**चिकित्साकलिका**'ख्यो ग्रन्थो निर्ममे।" इति डॉक्टरऑफ्रेच्मद्दोदयैर्ग्रन्थकारसूच्यां लिखितम्।

किन्तु कियान् खलु सत्याशोऽत्र भवेदिति विषये महान् संशयो वर्ततेऽस्माकम्। मन्यामहे वय यद्यदि नाम **वाग्भट**स्तीसटस्य पिता अभविष्यत्, तीसटो निजग्रन्थे पितु**र्वाग्भट**स्य स्पष्टतया नाम निरदेक्ष्यत्। तत्तु तेन कृत नावलोक्यते। स्वोपनिबद्धाया**श्चिकित्साकलिका**या आरम्भे **तीसटो** लिखति—

'सूर्याश्विधन्वन्तरिसुश्रुतादीन् भक्त्या नमस्कृत्य पितुश्च पादान्।
कृता चिकित्साकलिकेति योगैर्माला सरोजैरिव तीसटेन॥' ( श्लो १ ) इति।

अस्याश्चिकित्साकलिकायास्तीसटसूनुना चन्द्रटेन व्याख्या कृता वर्तते। तस्या व्याख्याया अस्यैव श्लोकस्य व्याख्यानावसरे "**पितुश्च पादान्**" इत्यश व्याकुर्व**श्चन्द्रटो** लिखति,—"तदनु आयुर्वेदाब्धिप्रतरणपोतपात्राणा पितु पादाना नमस्कृतिरित्यनेन क्रमेण नमस्कार कृत्वा" इति। एव न चाय चन्द्रटोऽपि तीसटसूनुः **वाग्भटं** नाम्ना निर्दिशति। तथा च **चिकित्साकलिकायाम्**—

'हारीतसुश्रुतपराशरभोजभेलभृग्वग्निवेशचरकादिचिकित्सकोक्तै।
एभिर्गणैश्च गुणवद्भिरतिप्रसिद्धैर्धान्वन्तरीयरचनारुचिरप्रपञ्चै॥' (श्लो २)।

इति श्लोके **सुप्रसिद्धभिषगाचार्याणा** हारीतसुश्रुतादीनां नामानि सकीर्तयन् नासौ **तीसटो वाग्भटमुल्लेखयति**। **चन्द्रटो**ऽपि पद्येऽस्मिन् विद्यमानस्य '**आदि**'पदस्य व्याख्याने "आदिग्रहणात् वैतरणौरभ्रपुष्कलावतक्षारपाणिजतूकर्णचक्षुष्येणविदेहनिमिप्रभृतयो गृह्यन्ते।" इति वैतरणौरभ्रादीन् सगृह्णन्नपि **वाग्भट**मतिचारयति।

अष्टाङ्गसङ्ग्रहाष्टाङ्गहृदयव्याख्यातृभ्या वाग्भटशिष्याभ्यामिन्दुजेज्जटाभ्यामपि वाग्भटपुत्रस्तीसटो न कुत्रापि निर्दिष्टो दृश्यते।

तस्मात् प्रत्ययजनकप्रमाणाभावान्नैतन्निर्णेतु सुशक **तीसटो वाग्भटपुत्रो वा न वेति**।

## ( ५ ) वाग्भटप्रणीता ग्रन्थाः ग्रन्थरचनाकौशलं च।

अष्टस्वङ्गेषु विभक्तो वर्तते आयुर्वेदः। यथाऽऽह **सुश्रुतः**—"इह खल्वायुर्वेदं नामोपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजा. श्लोकशतसहस्रमध्यायसहस्र च कृतवान् **स्वयम्भूः**। ततोऽल्पायुष्ट्वमल्पमेधस्त्व चालोक्य नराणा भूयोऽष्टधा प्रणीतवान्। तद्यथा—शल्यम्, शालाक्यम्, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रम्, रसायनतन्त्रम्, वाजीकरणतन्त्रमिति।" इति।

अष्टस्वेतेष्वङ्गेषु प्रत्यङ्ग [१]बहुभिराचार्यैः पृथक् पृथक् तन्त्राणि विरचितानि। तद्यथा—

**१ शल्ये—**

| | |
|---|---|
| (१) औपधेनवतन्त्रम्। | (८) भोजतन्त्रम्। |
| (२) औरभ्रतन्त्रम्। | (९) कृतवीर्यतन्त्रम्। |
| (३) वृद्धसुश्रुततन्त्रम्। | (१०) करवीर्यतन्त्रम्। |
| (४) सुश्रुततन्त्रम्। | (११) गोपुररक्षिततन्त्रम्। |
| (५) पौष्कलावततन्त्रम्। | (१२) भालुकितन्त्रम्। |
| (६) वैतरणतन्त्रम्। | (१३) कपिलबलतन्त्रम्। |
| (७) वृद्धभोजतन्त्रम्। | (१४) सुभूतिगौतमतन्त्रम्। |

१ "आयुर्वेद श्लोकलक्षेण पूर्व ब्रह्माऽऽस्नासीदग्निवेशादयस्तु।
कृत्स्नाश्रेयप्राप्तसारा स्वतन्त्रास्तस्यैकैक नैकधाऽङ्ग वितेनु॥" इत्यष्टाङ्गसङ्ग्रहेऽपि ( उ अ. ५० )।

**२ शालाक्ये—**

(१) विदेहतन्त्रम् ।
(२) निमितन्त्रम् ।
(३) काङ्कायनतन्त्रम् ।
(४) गार्ग्यतन्त्रम् ।
(५) गालवतन्त्रम् ।
(६) सात्यकितन्त्रम् ।
(७) भद्रशौनकतन्त्रम् ।
(८) शौनकतन्त्रम् ।
(९) करालतन्त्रम् ।
(१०) चक्षुष्यतन्त्रम् ।
(११) कृष्णात्रेयतन्त्रम् ।
(१२) कात्यायनतन्त्रम् ।

**३ कायचिकित्सायाम्—**

(१) अग्निवेशसंहिता ।
(२) भेडसंहिता ।
(३) जतूकर्णसंहिता ।
(४) पाराशरसंहिता ।
(५) हारीतसंहिता ।
(६) क्षारपाणिसंहिता ।
(७) खरनादसंहिता ।
(८) विश्वामित्रसंहिता ।
(९) अरिन्द्रसंहिता ।
(१०) अत्रिसंहिता ।
(११) मार्कण्डेयसंहिता ।
(१२) आश्विनसंहिता ।
(१३) भारद्वाजसंहिता ।
(१४) भानुपुत्रसंहिता ।

**४ भूतविद्यायाम्—**

(१) अथर्वतन्त्रम् ।

**५ कौमारभृत्ये—**

(१) वृद्धकश्यपसंहिता[1] ।
(२) कश्यपसंहिता[1]
वृद्धजीवकतन्त्रम् वा ।
(३) जीवकतन्त्रम् ।
(४) पार्वतकतन्त्रम् ।
(५) बन्धकतन्त्रम् ।
(६) हिरण्याक्षतन्त्रम् ।
(७) रावणीयं कुमारतन्त्रम् ।

**६ अगदतन्त्रे—**

(१) वृद्धकाश्यपसंहिता[1] ।
(२) काश्यपसंहिता[1] ।
(५) सनकसंहिता ।
(६) लाट्यायनसंहिता ।

---

१ काश्यपसंहिताया उपोद्धाते प हेमराजशर्मभि कौमारभृत्याचार्यौ वृद्धकाश्यपकाश्यपौ, अगदतन्त्राचार्यौ च वृद्ध-काश्यपकाश्यपौ, इति चत्वार. काश्यपाचार्या उक्ता. । तद्यथा—

'प्राचीने रावणीये बालतन्त्रे काश्यपस्य वृद्धकाश्यपस्य च नामोल्लेखोऽस्ति । कौमारतन्त्रेऽस्मिन् आचार्यभावेन वृद्धका-श्यपेन सह निर्दिष्ट काश्यपोऽप्ययमेव कौमारभृत्याचार्य कश्यप इति ज्ञायते ।' इति ( पृ ३९ ) । तथा— 'डल्लनेन सुश्रुतव्याख्याया काश्यपनाम्ना, माधवनिदानव्याख्याया मधुकोशे वृद्धकाश्यपनाम्ना श्लोकावुद्धृतौ दृश्येते । तयो. श्लोकयोरगदतन्त्रीयविषयावबोधेन तावेतौ काश्यपवृद्धकाश्यपौ अगदतन्त्राचार्यौ भिन्नौ प्रतिभातः ।' ( पृ. ३५ ) इति च ।

चरकाष्टाङ्गसङ्ग्रहयोस्तु कश्यपकाश्यपौ इति द्वावेवाचार्यौ निर्दिष्टौ । तद्यथा चरके—

"अङ्गिरा जमदग्निश्च वसिष्ठ कश्यपो भृगु. । काङ्कायन कैकशेयो धौम्यो मारीचिकाश्यपौ ॥" इति (सू अ.१) ।

अष्टाङ्गसङ्ग्रहे च—

"धन्वन्तरिभरद्वाजनिमिकाश्यपकश्यपाः ।" इति ( सू. अ. १ ) ।

(३) अलम्बायनसंहिता । (७) बृहस्पतिसंहिता ।
(४) उशनःसंहिता ।

**७ रसायनतन्त्रे—**

(१) पातञ्जलतन्त्रम् । (५) नागार्जुनतन्त्रम् ।
(२) व्याडितन्त्रम् । (६) अगस्त्यतन्त्रम् ।
(३) वसिष्ठतन्त्रम् । (७) भृगुतन्त्रम् ।
(४) माण्डव्यतन्त्रम् । (८) कपिञ्जलतन्त्रम् ।

**८ वाजीकरणतन्त्रे—**

(१) कुचुमारतन्त्रम् ।

इत्यादीनि ।

एवं सत्स्वपि प्रायेण प्रत्यङ्गमनेकेषु तन्त्रेषु, समस्तव्याधिसाधनार्थं तेषामेकैकस्य असामर्थ्यमवलोक्य अथ च सर्वेषामेव तेषामध्ययनाय पुरुषायुषमपर्याप्तमित्यपि विचार्य सर्वतन्त्रसाररूपस्य **अष्टा-**

**१ अष्टाङ्गसङ्ग्रहः ।** **ङ्गसङ्ग्रहस्य** विरचनाया प्रवृत्तो **वाग्भटाचार्यः** । यद्यपि चरकसुश्रुतादीनायुर्वेदग्रन्थानुपजीव्यैव निर्मितोऽ**ष्टाङ्गसङ्ग्रहो वाग्भटेन,** तथापि मूलग्रन्थान्तर्गता विषयविभागक्रमदोषा पुनरुक्तिदोषाश्च **वाग्भटेन** स्वग्रन्थान्निरस्ता[१] । तथाच चरकसुश्रुतादिग्रन्थेषु वर्तमाना विनिगूढार्थतत्त्वा. केचन विषया अपि विशदीकृता **वाग्भटेन** अष्टाङ्गसङ्ग्रहे । अष्टाङ्गसङ्ग्रहस्य प्रारम्भे स्वयमेवाह **वाग्भटः—**

"तेषामेकैकमव्यापि समस्तव्याधिसाधने । प्रतितन्त्राभियोगे तु पुरुषायुषसंक्षय ॥
भवत्यध्ययनेनैव यस्मात्प्रोक्त' पुन पुन. । तन्त्रकारैः स एवार्थं क्वचित्कश्चिद्विशेषतः ॥
तेऽर्थप्रत्यायनपरा वचने यत्त्व नादृताः । सर्वतन्त्राण्यतः प्रायः संहृत्याष्टाङ्गसङ्ग्रहः ॥
अस्थानविस्तराक्षेपपुनरुक्तादिवर्जितः । हेतुलिङ्गौषधस्कन्धत्रयमात्रनिबन्धन. ॥
विनिगूढार्थतत्त्वाना प्रदेशाना प्रकाशक । स्वान्यतन्त्रविरोधाना भूयिष्ठ विनिवर्तक' ॥
युगानुरूपसन्दर्भो विभागेन करिष्यते ।" इति (अष्टाङ्गसङ्ग्रहे सूत्रस्थाने अ. १) ।

अनेनैव हेतुना **वाग्भटप्रणीतोऽयमष्टाङ्गसङ्ग्रहो** विदुषा बहुमत सञ्जातः ।

एव सत्यपि, सुविस्तृतो गद्यपद्यात्मकश्चाय ग्रन्थो न पठनपाठनसुलभः इत्यवलोक्य तथा च विशालत्वात् दुर्गृहीतस्यास्य[१] ग्रन्थस्य विनाशसम्भवमाशङ्क्य साररूपः पद्यमयश्च **अष्टाङ्गहृदयाख्यो**

**२ अष्टाङ्गहृदयम् ।** ग्रन्थो **वाग्भटेन** पश्चाद्विरचित. । यद्यपि **अष्टाङ्गसङ्ग्रहे** सार्धशतेष्वध्यायेषु विभक्ता आसन्नत्रयोदशसहस्रसम्मिता ग्रन्थसङ्ख्या **वाग्भटेन अष्टाङ्गहृदये** विंशत्यधिकशताध्यायविभक्तया आसन्नाष्टसहस्रसम्मितया ग्रन्थसङ्ख्यया संक्षिप्ता, तथापि **अष्टाङ्गसङ्ग्रहान्**तर्गता केचिदपि प्रधाना विषयाः **हृदये** नातिचारिताः । आदौ सुविस्तृत**मष्टाङ्गसङ्ग्रहं** विरचय्य पश्चात् साररूपस्य **अष्टाङ्गह-**

---

१ "धात्रीरसक्षौद्रसिताघृतानि हिताशनाना लिहता नराणाम् ।
**प्रणाशमायान्ति** जराविकारा **ग्रन्था विशाला इव दुर्गृहीताः** ॥" इति ( हृदये उ अ ३९।१४८ ) ।

२ "भक्तस्यादौ जल पीतमग्निसाद कृशाङ्गताम् । अन्ते करोति स्थूलत्वमूर्ध्व चामाशयात्कफम् ॥ मध्ये मध्याङ्गता साम्य धातूना जरण सुखम् ।" इत्यष्टाङ्गसङ्ग्रहे सार्धश्लोकेन वर्णित एव अर्थ **वाग्भटेन** अष्टाङ्गहृदये "समस्थूलकृशा भुक्तमध्यान्तप्रथमाम्बुपा ।" ( हृ सू अ ५।१५ ) इत्येतस्मिन् पद्यार्धे सङ्क्षिप्त । एषैव सङ्क्षेपपद्धति' अष्टाङ्गहृदये प्रायश. सर्वत्र स्वीकृता **वाग्भटेनेति** दिक् ।

दयस्य विरचनायामपरेणाप्येकेन हेतुना भाव्यमिति सम्भाव्यते । **वाग्भटात्**पूर्वतनै कैश्चिदाचार्यैरपि प्रथमं विस्तृत ग्रन्थ निर्माय पश्चात्तस्यैव साररूपो लब्धाकारः स्वतन्त्रो ग्रन्थो निर्ममे । वृद्धसुश्रुतसुश्रुतौ, वृद्धभोज-भोजौ, इत्यादीनामेककर्तृकाणा ग्रन्थद्वयाना उल्लेखाः सुश्रुतटीकाकारस्य डल्हणस्य निबन्धसङ्ग्रहव्याख्याया तथाच माधवनिदानटीकाकारस्य मधुकोशव्याख्याया समुपलभ्यन्ते । प्रथितयशसामेतेषा पूर्वसूरीणा पदमनु-विधेयमिति बुद्ध्या जात्ववलम्बिता भवेत् **वाग्भटेन** तेषामिय पद्धतिरिति मन्यामहे वयम् । अष्टाङ्गसङ्ग्रहस्य **वृद्धवाग्भट**पदेन, अष्टाङ्गहृदयस्य च **वाग्भट**पदेन व्यवहारो डल्हणप्रभृतीना टीकाग्रन्थेषु समुपलभ्यत एव । एतदप्यस्मदनुमान समर्थयत एव ।

आयुर्वेदतत्त्वरत्नभूतोऽय**मष्टाङ्गहृदयाख्यो** ग्रन्थः सत्वरमेव सर्वस्मिन् भारते प्रसिद्धिमाप । अल्पीयसैव कालेन सुविशालेऽस्मिन् भारतवर्षेऽप्यमान्ती ग्रन्थस्यास्य कीर्तिस्तीर्त्वा महासागर सिंहलद्वीपे, समुल्लङ्घ्य च नगाधिराज हिमगिरि 'तिबेट''मङ्गोला'दिषु प्रदेशेषु च विचचार । 'इत्सिङ्गा'ख्यचैनिकपरिव्राजकप्रभृ-तिभि. पुरावृत्तलेखकैर्निर्दिष्टमेव यत्सर्वस्मिन् भारतवर्षे **अष्टाङ्गहृदयस्य** पठनपाठनप्रचार आसीदिति । यत्रयत्र आयुर्वेदविद्यायाः प्रसारस्तत्रतत्र ग्रन्थस्यास्य प्राधान्येन अध्ययनाध्यापन अद्ययावद्दरीदृश्यते । बह्वीषु भाषासु समुपनिबद्धा ग्रन्थस्यास्य व्याख्याः इत्येतदेव बलीयस्तम गमक अलौकिकत्वस्यास्य ग्रन्थस्य । शर्मण्यदेशीयै-रप्यनेकैर्विद्वद्भि पाश्चात्यभाषासु विपरिणामितोऽय ग्रन्थ इति ज्ञायते । कियद्दूरं ग्रन्थस्यास्य प्रसार, समज-नीति काश्यपसहिताया उपोद्घाते नेपालराजगुरवः पण्डित**हेमराजशर्मा**महोदया २५ तमे पृष्ठे प्रदर्शयन्ति । ते लिखन्ति—

"अशोकनृपपौत्रसमये बौद्धधर्मेण सार्कं भारतीय आयुर्वेद. सिंहलमप्यनुप्राविशत् । भारतीयायुर्वेदो विशेषरूपेण बह्वीभिष्टीकाभिर्युतो **वाग्भटः** तिब्बतप्रदेशे स्वप्रभाव प्रकाश्य ततो मङ्गोलपर्यन्तमपि प्रचचार । भारते विप्लुता अप्यनेका **वाग्भटस्य** टीका अद्यापि तिब्बतप्रदेशेऽनूदिता लभ्यन्ते ।" इति ।

**वाग्भटाचार्य**मुद्दिश्य रसरत्नसमुच्चयाख्यस्य ग्रन्थस्य भूमिकाया श्री**कृष्णराव**शर्माणो लिखन्ति—

"येन **वृद्धवाग्भटो** निर्मित, तेन कलियुगेऽस्मिन् धरणीतले धन्वन्तरे· पुनरवतरणद्योतनार्थमिव तथा अमृतपूर्णकुम्भाद्भुतशक्तिप्रदर्शनार्थमिव तस्य ( वृद्धवाग्भटस्य ) प्राणहरण विना हृदयमपि सजीवं पृथक्कृत दर्शित विद्वज्जनेषु । एतद्धृदय नाम **अष्टाङ्गहृदयं 'वाग्भट'** इति नाम्ना व्यवह्रियते । यत आत्रेयचरक-सुश्रुतसहितापेक्षया लघीयस्त्वाद्वाचि स्थापयितु योग्यो भटो ग्रन्थो वैद्यकग्रन्थ । अत एव **वाग्भट** इत्यष्टा-ङ्गहृदयस्य नाम सूपपन्नम् । यस्य वाच्येव भटा ग्रन्था विद्यन्ते स्म नाम मुखोद्गताः सार्थायुर्वेदशास्त्रग्रन्था यस्य । किंवा वाग्देवताया. प्राप्ता भटा यस्य नाम प्रसन्नसरस्वत्याः वरेणेव अधीतशास्त्रो य इत्यर्थ । अनया व्युत्पत्त्या स्वनाम्नः सार्थकता दर्शिता ।" इति ।

**वाग्भटो** यथा सम्यगधीतायुर्वेदविद्यो **भिषग्वरः** तथा **सुकविः** साहित्यशास्त्रोदधिपारङ्गतश्चेति काव्य-गुणालङ्कारसहितायाः तद्विरचितसत्काव्यसम्पदः ज्ञायते ।

"सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम् । काव्य कल्पान्तरस्थायि जायेत सदलङ्कृति ॥"

इति 'काव्यादर्श'कारेण साहित्याचार्येण **दण्डिना** आवश्यकत्वेन प्रयुक्त महाकाव्यलक्षण स्मरता

**रचनाकौशलम् ।**

**वाग्भटेना**पि लोकरञ्जनार्थं बहुत्र प्रयुक्तानि श्रुतिमधुराणि भिन्नभिन्नानि वृत्तानि । कचिच्च स्वागतापुष्पिताग्राप्रथ्वीशार्दूलविक्रीडितद्रुतविलम्बितादिवृत्तनामान्यपि श्लेषाल-ङ्कारमाश्रित्य तत्तद्वृत्तोपनिबद्धेषु पद्येषु भङ्ग्या सङ्ग्रथितानि तेन ।

१ Translated in German by Luise Hilenburg and Wilibald Kirfel.

यथा हि—

"बीजकस्य रसमङ्गुलिहार्यं शर्करा मधु घृत त्रिफलां च ।
शीलयत्सु पुरुषेषु जरत्ता **स्वागता**ऽपि विनिवर्तत एव ॥" (हृ. उ. अ. ३९।१५३) ।

इत्यस्मिन् 'स्वागता'वृत्तोपनिबद्धे पद्ये वृत्तनाम ।

तथाच—

"मधु मुखमिव सोत्पल प्रियायाः कलरणना परिवादिनी प्रियेव ।
कुसुमचयमनोरमा च शय्या किसलयिनी लतिकेव **पुष्पिताग्रा** ॥" (हृ. उ. अ. ४०।४६ ) ।

इत्यत्र 'पुष्पिताग्रा'वृत्तनिबद्धे पद्ये वृत्तनाम ।

तथाच—

"नवामलकशुक्तयो मधु घृत रजश्चायस चतुष्टयमयोघटस्थमिति चूर्णित वत्सरम् ।
क्रमेण लिहतः पयोऽनु पिबतश्च पथ्याशिनश्चिर भवति जीवित क्षयमुपैति **पृथ्वी** जरा ॥" (स.उ.अ ४९)।

इत्यत्र 'पृथ्वी'वृत्तप्रणीते पद्ये वृत्तनाम ।

तथाच—

"हिङ्गूग्राबिडशुण्ठ्यजाजिविजयावाख्याभिधानामयै-
श्चूर्ण· कुम्भनिकुम्भमूलसहितैर्भागोत्तर वर्धितैः ।
पीतः कोष्णजलेन कोष्ठजरुजो गुल्मोदरादीनय
**शार्दूलः** प्रसभ प्रमथ्य हरति व्याधीन् मृगौघानिव ॥" ( हृ. चि. अ. १४।३६ ) ।

इत्येतस्मिन् 'शार्दूलविक्रीडित'वृत्तरचिते पद्ये शार्दूलनाम ।

तथाच—

"सहचर सुरदारु सनागरं क्वथितमम्भसि तैलविमिश्रितम् ।
पवनपीडितदेहगतिः पिबेत् **द्रुतविलम्बित**गो भवतीच्छया ॥" ( हृ. चि. अ. २१।५५ ) ।

इत्यत्र 'द्रुतविलम्बित' वृत्तविरचिते पद्ये वृत्तनाम, इत्यादि ।

**वृत्तिच्छेकानुप्रासयमकादयः** शब्दालङ्कारास्तु **वाग्भट**ग्रन्थेषु भूयिष्ठमासाद्यन्ते ।

तथाहि—

"कदलीदलकल्हारमृणालकमलोत्पलैः ।
कल्पिते कोमलैस्तल्पे हसत्कुसुमपल्लवे ॥" ( हृ सू. अ. ३।३५ ) ।
"तप्त तप्तांशुकिरणैः शीत शीतांशुरश्मिभिः ।" ( हृ सू अ. ३।५१) ।
"मासादमास मासेन सम्भृतत्वाद्विशेषतः ।" ( हृ.सू अ. १४।३५ ) ।
"पद्मेन्द्रगोपहेमाविशशलोहितलोहितम् ।
लोहित प्रभव शुद्धम्"········( हृ. सू अ २७।१ ) ।
"क्लमाङ्गभङ्गवमथुक्षवथुश्वयथुज्वरैः ।" ( हृ नि. अ. ७।२५ ) ।
"शनैः शनैः शनैर्मेही मन्द मन्द प्रमेहति ।" ( हृ नि अ १०।१३ ) ।
"आभिः क्रियाभिः सिद्धाभिर्विविधाभिर्बले स्थित. ।" ( हृ. चि. अ. १८।३२ ) ।
"भगन्दरमपस्मारमुदरं प्रदरं गरम् ।" ( हृ. चि अ. १९।७) ।

"मुक्तरक्तविरिक्तस्य रिक्तकोष्ठस्य कुष्ठिन ।
प्रभञ्जनस्तथा ह्यस्य न स्याद्देहप्रभञ्जन ॥" ( हृ चि अ १९।१७ ) ।
"सिद्धं योग प्राह यक्षो मुमुक्षोर्भिक्षो. प्राणान् माणिभद्रः किलेमम् ।" (हृ चि अ. १९।३२) ।
"लावत्तित्तिरिवल्लूररजः पुष्परसद्रुतम् ।
द्रुत करोति बालाना दन्तकेसरवन्मुखम् ॥" ( हृ उ अ २।३६ ) ।
"ज्वरापस्मारजठरभगन्दरहरं परम् ।" ( हृ उ अ ७।२३ ) ।
"बव्ह्यो घनाः स्रावयुतास्तास्तालुपिटिका. स्मृताः ।" ( हृ. उ अ. २१।३६ ) ।
"वपुष्करमरुष्कर परममेध्यमायुष्करम् ।" ( हृ. उ. अ ३९।८० ) ।
"पित्तरक्तविनिर्मुक्तसमस्तावरणावृते ।" ( हृ उ अ. ३९।१२७ ) । इत्यादयः ।

**वाग्भटेन** प्रसङ्गतो विरचितानि अथ. प्रदर्शयिष्यमाणानि **पद्यरत्नानि** प्रसादसुकुमारमाधुर्यादिकाव्यगुणवत्त्वेन श्रवणकोमलवर्णराज्यलङ्कृतत्त्वेन च सम्यक् प्रकाशयिष्यन्ति भूयिष्ठ सत्काव्यनिर्माणपाटवं **वाग्भटस्य** ।

तद्यथा—

मद्यपानसेवनविधिमादिशन् **वाग्भटः** आह—

**"स्नातः प्रणम्य सुरविप्रगुरून् यथास्वं वृत्तिं विधाय च समस्तपरिग्रहस्य ।**
**आपानभूमिमथ गन्धजलाभिषिक्तामाहारमण्डपसमीपगतां श्रयेत ॥ १ ॥**
**स्वास्तृतेऽथ शयने कमनीये मित्रभृत्यरमणीसमवेतः ।**
**स्वं यशः कथकचारणसङ्घैरुद्धतं निशमयन्नतिलोकम् ॥ २ ॥**
**विलासिनीनां च विलासशोभि गीतं सनृत्यं कलतूर्यघोषैः ।**
**काञ्चीकलापैश्चलकिङ्किणीकैः क्रीडाविहङ्गैश्च कृतानुनादम् ॥ ३ ॥**
**मणिकनकसमुत्थैराजनेयैर्विचित्रैः सजलविविधलेखक्षौमवस्त्रावृताङ्गैः ।**
**अपि मुनिजनचित्तक्षोभसम्पादिनीभिश्चकितहरिणलोलप्रेक्षणीभिः प्रियाभिः ॥ ४ ॥**
**स्तननितम्बकृतादतिगौरवादलसमाकुलमीश्वरसम्भ्रमात् ।**
**इति गतं दधतीभिरसंस्थितं तरुणचित्तविलोभनकार्मणम् ॥ ५ ॥**
**यौवनासवमत्ताभिर्विलासाधिष्ठितात्मभिः ।**
**सञ्चार्यमाणं युगपत्तन्वङ्गीभिरितस्ततः ॥ ६ ॥**
**तालवृन्तनलिनीदलानिलैः शीतलीकृतमतीव शीतलैः ।**
**दर्शनेऽपि विदधद्दशानुगं स्वादितं किमुत चित्तजन्मनः ॥ ७ ॥**
**चूतरसेन्दुमृगैः कृतवासं मल्लिकयोज्ज्वलया च सनाथम् ।**
**स्फाटिकशुक्तिगतं सतरङ्गं कान्तमनङ्गमिवोद्वहदङ्गम् ॥ ८ ॥**
**तालीसाद्यं चूर्णमेलादिकं वा हृद्यं प्राश्य प्राग्वयःस्थापनं वा ।**
**तत्प्रार्थिभ्यो भूमिभागे सुमृष्टे तोयोन्मिश्रं दापयित्वा ततश्च ॥ ९ ॥**
**धृतिमान् स्मृतिमान्नित्यमनूनाधिकमाचरन् ।**
**उचितेनोपचारेण सर्वमेवोपपादयन् ॥ १० ॥**
**जितविकसितासितसरोजनयनसङ्क्रान्तिवर्धितश्रीकम् ।**
**कान्तामुखमिव सौरभहृतमधुपगणं पिबेन्मद्यम् ॥ ११ ॥**

पीत्वैवं चषकद्वयं परिजनं सन्मान्य सर्वं ततो
गत्वाऽऽहारभुवं पुरः सुभिषजो भुञ्जीत भूयोऽत्र च ।
मांसापूपघृतार्द्रकादिहरितैर्युक्तं ससौवर्चलै-
र्द्विस्त्रिर्वा निशि चाल्पमेव वनितासंवल्गनार्थं पिबेत् ॥ १२ ॥

रहसि दयितामङ्के कृत्वा भुजान्तरपीडनात् पुलकिततनुं जातस्वेदां सकम्पपयोधराम् ।
यदि सरभसं शीधोर्वारं न पाययते कृती किमनुभवति क्लेशप्रायं ततो गृहतन्त्रताम् ॥ १३ ॥
वरतनुवक्त्रसङ्गतिसुगन्धितरं सरकं द्रुतमिव पद्मरागमणिमासवरूपधरम् ।
भवति रतिश्रमेण च मदः पिबतोऽल्पमपि क्षयमत ओजसः परिहरन् स शयीत परम् ॥१४॥
इत्थं युक्त्या पिबन्मद्यं न त्रिवर्गाद्विहीयते ।
असारसंसारसुखं परमं चाधिगच्छति ॥ १५ ॥
ऐश्वर्यस्योपभोगोऽयं स्पृहणीयः सुरैरपि ।" इति ( हृ चि अ ७।७५-९० ) ।

तथाच—

हृदये वाजीकरणविधौ हर्षप्रीतिजनकान् अर्थान् वर्णयन् वाग्भटो लिखति—

"नामापि यस्या हृदयोत्सवाय यां पश्यतां तृप्तिरनाप्तपूर्वा ।
सर्वेन्द्रियाकर्षणपाशभूता कान्तानुवृत्तिव्रतदीक्षिता या ॥ १ ॥
कलाविलासाङ्गवयोविभूषा शुचिः सलज्जा रहसि प्रगल्भा ।
प्रियंवदा तुल्यमनःशया या सा स्त्री वृषत्वाय परं नरस्य ॥ २ ॥
दीर्घिका स्वभवनान्तनिविष्टा पद्मरेणुमधुमत्तविहङ्गा ।
नीलसानुगिरिकूटनितम्बे काननानि पुरकण्ठगतानि ॥ ३ ॥
दृष्टिसुखा विविधा तरुजातिः श्रोत्रसुखः कलकोकिलनादः ।
अङ्गसुखर्तुवशेन विभूषा चित्रसुखः सकलः परिवारः ॥ ४ ॥
ताम्बूलमच्छमदिरा कान्ता कान्ता निशा शशाङ्काङ्का ।
यद्यच्च किञ्चिदिष्टं मनसो वाजीकर तत्तत् ॥ ५ ॥
मधु मुखमिव सोत्पलं प्रियायाः कलरणना परिवादिनी प्रियेव ।
कुसुमचयमनोरमा च शय्या किसलयिनी लतिकेव पुष्पिताग्रा ॥ ६ ॥
देशे शरीरे च न काचिदर्तिरर्थेषु नाल्पोऽपि मनोविघातः ।
वाजीकराः सन्निहिताश्च योगाः कामस्य कामं परिपूरयन्ति ॥ ७ ॥" इति ।

तथाच—

अष्टाङ्गहृदयस्योत्तरस्थानीये चत्वारिंशत्तमेऽध्याये सर्वातिशायिसुखहेतुभूतस्यापत्यस्य अनुपमत्वं प्रकटयता यद् वाग्भटेन लिखितं—

"स्खलद्गमनमव्यक्तवचनं धूलिधूसरम् ।
अपि लालाविलमुखं हृदयाल्हादकारकम् ॥
अपत्यं तुल्यतां केन" ..........इति ।

तत्तु प्रथितयशसः कविश्रेष्ठस्य **कालिदासस्य**—

**"आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।**
**अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥"**

( शा. अ ७ श्लो. १७ ) ।

इति **अभिज्ञानशाकुन्तल**स्य वचन स्मारयति ।

**अष्टाङ्गसङ्ग्रहे** विचारिताना केषाञ्चन विषयाणा **अष्टाङ्गहृदये** सूक्ष्मतरं विवेचन कृत **वाग्भटेन** ।

तथाहि—

**अष्टाङ्गसङ्ग्रहे** शारीरस्थाने पुत्रकामाना स्त्रीपुरुषाणा योग्या वयोमर्यादामादिशन् **वाग्भटो** लिखति—

"तस्या षोडशवर्षाया पञ्चविंशतिवर्षः पुरुषः पुत्रार्थ प्रयतेत ।" इति ।

अत्र सुश्रुतादीना पूर्वाचार्याणा मत सगृहीतम् । किन्तु एतदनन्तरं पूर्णविशतिवर्ष. पुरुषोऽपि साधुगर्भ जनयति इति लोके प्रत्यक्षीकृत्य **वाग्भटेन अष्टाङ्गहृदये** लिखितम्—

"पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥
वीर्यवन्त सुत सूते" इति ( शा अ १।८ ) ।

एतद्व्याकुर्वन्नरुणदत्तोऽपि लिखति—'प्रायिक चैतत्, अर्वाक् अपि साधुगर्भदर्शनात् ।' इति ।

तथा च—

**सङ्ग्रहे** मनोनुकूलस्य सुतस्य जननायोपकारित्वेन

"यादृश च पुत्रमाशासीत तद्रूपवर्णचरितान् जनपदाननुचिन्तयेति स्त्री वाच्या ।
तज्जनपदाहारविहारोपचारपरिच्छदाश्चानु विदधीत ।" ( स. शा अ. १ ) ।

इत्यत्र स्त्रिया एव आचारविशेषो विहितत्वेन उपदिष्टः । अत्र–

"या या येषा येषा जनपदाना मनुष्याणामनुरूप पुत्रमाशासीत सा सा तेषा तेषा जनपदानां
मनुष्याणामाहारविहारोपचारपरिच्छदाननुविधत्स्वेति वाच्या स्यात् ।" ( च शा. अ. ८।१४ ) ।

इति **चरकसंहिता**स्थस्यैव वचनस्य **वाग्भटेना**ष्टाङ्गसङ्ग्रहे कृतोऽनुवाद इति स्पष्टमेव । किन्तु पश्चात् **सुश्रुतसंहिता**न्तर्गत—

"आहाराचारचेष्टाभिर्यादृशीभि' समन्वितौ ।
स्त्रीपुसौ समुपेयाता तयोः पुत्रोऽपि तादृशः ॥" ( सु. शा अ. २।४३ ) ।

इत्येतद्वचनं तन्त्रान्तरवचनानि च समवलोक्य सुविमृश्य च **सुश्रुत**वचनमेव साधीयस्तया अङ्गीकृतम् । तेनैव **हृदये**—

"इच्छेता यादृशं पुत्र तद्रूपचरिताश्च तौ ।
चिन्तयेता जनपदास्तदाचारपरिच्छदौ ॥" ( हृ शा अ. १।३१ ) ।

इत्येव लिखन् **वाग्भटाचार्यः** मनोवाञ्छितस्य पुत्रस्य प्राप्त्यै उभयोरपि स्त्रीपुसयोः विशिष्टाचारसेवनमुपदिशति । न च **सङ्ग्रह**वत् केवलायाः स्त्रिया एव ।

तथाच—

प्रथमतः सुश्रुतादीननुसृत्य **सङ्ग्रहे** शारीरस्थाने (१) मासमर्माणि, (२) सिरामर्माणि, (३) स्नायुमर्माणि, (४) अस्थिमर्माणि, (५) सन्धिमर्माणि, इति पञ्चविधानि मर्माणि दर्शितानि । किन्तु तत्पश्चाद्विरचिते **अष्टाङ्गहृदये** अन्यतन्त्राणि समालोच्य सूक्ष्म विचार्य च मर्माणि षोढा समादिष्टानि धमनीस्थमर्माख्यस्य षष्ठस्य विभा-

गस्य स्वीकारेण । **हृदये** प्रदर्शितेन षड्धा विभागेन यद्यपि मर्मणा सङ्ख्या अविचलितैव पूर्वोक्ता, तथापि विभजनसौक्ष्म्यमत्र प्रकटितम् ।

**सङ्ग्रहादिभिन्ना** ये औषधियोगा हृदये निर्दिष्टास्ते अथ प्रदर्श्यन्ते । यथा—

"चामीकरवचाब्राह्मीताप्यपथ्यारजीकृता । लिह्यान्मधुघृतोपेता हेमधात्रीरजोऽथवा ॥"

( हृ. उ. अ. १।९ ) इति ।

"लाक्षारससमं तैलप्रस्थं मस्तु चतुर्गुणम् । अश्वगन्धानिशादारुकौन्तीकुष्ठाब्दचन्दनैः ॥
समूर्वारोहिणीरास्नाशताह्वामधुकैः समैः । सिद्धं लाक्षादिकं नाम तैलमभ्यञ्जनादिदम् ॥
बल्यं ज्वरक्षयोन्मादश्वासापस्मारवातनुत् । यक्षराक्षसभूतघ्नं गर्भिणीनां च शस्यते ॥"

( हृ उ. अ. २।५४–५६ ) इति ।

"गोश्रृङ्गचर्मवालाहिनिर्मोकं वृषदंशविट् । निम्बपत्राज्यकटुकामदनं बृहतीद्वयम् ॥
कार्पासास्थियवच्छागरोमदेवाह्वसर्षपम् । मयूरपत्रश्रीवासतुषकेशं सरामठम् ॥
मृद्भाण्डे बस्तमूत्रेण भावितं श्लक्ष्णचूर्णितम् । धूपनं च हितं सर्वभूतेषु विषमज्वरे ॥"

( हृ उ अ. ३।५५–५७ ) इति ।

"सुरादन्तार्णवमलैः शिरीषकुसुमान्वितैः । धात्रीफणिज्जकरसे क्षारो लाङ्गलिकोद्भवः ॥
उषितः शोषितश्चूर्णः शुक्रहर्षणमञ्जनम् ।" ( हृ. उ. अ ११।४५ ) इति ।

"मूत्रस्रुतं हठक्षारं पक्त्वा कोद्रवभुक् पिबेत् ।" ( हृ. उ अ २२।७० ) इति ।

"फलत्रयद्वीपिकिराततिक्तयष्ट्याह्वसिद्धार्थकटुत्रिकाणि ।
मुस्ताहरिद्राद्वययावशूकवृक्षाम्लकाम्लाग्निमवेतसाश्च ॥
अश्वत्थजम्ब्वाम्रधनञ्जयत्वक् त्वक् चाहिमारात् खदिरस्य सारः ।
क्वाथेन तेषां घनतां गतेन तच्चूर्णयुक्ता गुटिका विधेयाः ॥
ता धारिता घ्नन्ति मुखेन नित्यं कण्ठौष्ठताल्वादिगदान् सुकृच्छ्रान् ।
विशेषतो रोहिणिकास्यशोषगन्धान् विदेहाधिपतिप्रणीताः ॥
खदिरतुलाम्बुघटे पक्त्वा तोयेन तेन पिष्टैश्च । चन्दनजोङ्गककुङ्कुमपरिपेलववालकोशीरैः ॥
सुरतरुरोध्रद्राक्षामञ्जिष्ठाचोचपद्मकविडङ्गैः । स्पृक्कानतनखकट्फलसूक्ष्मैलाध्यामकैः सपत्त्रङ्गैः ॥
तैलप्रस्थं विपचेत् कर्षांशैः पाननस्यगण्डूषैस्तत् ।
हत्वाऽऽस्ये सर्वगदान् जनयति गार्ध्रीं दृशं श्रुतिं च वाराहीम् ॥
उद्वर्तितं च प्रपुनाटरोध्रदार्वीभिरभ्यक्तमनेन वक्त्रम् ।
निर्व्यङ्गनीलीमुखदूषिकादि सञ्जायते चन्द्रसमानकान्ति ॥
पलशतं बाणात्तोयघटे पक्त्वा रसेऽस्मिंश्च पलार्धिकैः ।
खदिरजम्बूयष्ट्यानन्ताम्रैरहिमारनीलोत्पलान्वितैः ॥
तैलप्रस्थं पाचयेच्छ्लक्ष्णपिष्टैरेभिर्द्रव्यैर्धारितं तन्मुखेन ।
रोगान् सर्वान् हन्ति वक्त्रे विशेषात्स्थैर्यं धत्ते दन्तपङ्क्तेश्चलायाः ॥"

( हृ उ. अ. २२।८१–८९ ) इति ।

"क्षुद्रागुडूचीसुमनःप्रवालदार्वीयवासत्रिफलाकषायः ।
क्षौद्रेण युक्तः कवलग्रहोऽयं सर्वामयान् वक्त्रगतान्निहन्ति ॥

पाठादार्वीत्वक्कुष्ठमुस्तासमङ्गातिक्तापीताङ्गीरोध्रतेजोवतीनाम् ।
चूर्णः सक्षौद्रो दन्तमासार्तिकण्डूपाकस्रावाणां नाशनो घर्षणेन ॥
गृहधूमताक्ष्र्यपाठाव्योषक्षाराग्न्ययोवरातेजोह्वैः ।
मुखदन्तगलविकारे सक्षौद्रः कालको विधार्यश्चूर्णः ॥
दार्वीत्वक्सिन्धूद्भवमनःशिलायावशूकहरितालैः ।
धार्यः पीतकचूर्णो दन्तास्यगलामये समध्वाज्यः ॥
द्विक्षारधूमकवरापञ्चपटुव्योषवेल्लगिरिताक्ष्यैः ।
गोमूत्रेण विपक्वा गलामयघ्नी रसक्रिया एषा ॥
गोमूत्रक्वथनविलीनविग्रहाणां पथ्यानां जलमिशिकुष्ठभावितानाम् ।
अत्तारं नरमणवोऽपि वक्त्ररोगाः श्रोतारं नृपमिव न स्पृशन्त्यनर्थाः ॥
सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत्पाकहरं मुखस्य ॥
पटोलशुण्ठीत्रिफलाविशालात्रायन्तितिक्ताद्विनिशामृतानाम् ।
पीतः कषायो मधुना निहन्ति मुखे स्थितश्चास्यगदानशेषान् ॥"

( हृ. उ अ. २२।९७–१०४ ) इति ।

"खदिरायोवरापार्थमदयन्त्यहिमारकैः ।
गण्डूषोऽम्बुशृतैर्धार्यो दुर्बलद्विजशान्तये ॥" ( हृ उ अ. २२।१०७ ) इति ।

"अश्वगन्धा रुहा रोध्रं कट्फलं मधुयष्टिका । समङ्गा धातकीपुष्पं परमं व्रणरोपणम् ॥"
"काच्छीरोध्राभयासर्जसिन्दूराञ्जनतुत्थकम् । चूर्णितं तैलमदनैर्युक्तं रोपणमुत्तमम् ॥"

( हृ. उ अ २५।५२, ५८ ) इति ।

"लिम्पेत्सर्षपवार्ताकिमूलाभ्यां धन्वयाऽथवा ।" ( हृ. उ. अ ३०।१२ ) इति ।

"फलिनीद्विनिशाक्षौद्रसर्पिर्भिः पद्मकाह्वयः । अशेषलूताकीटानामगदः सार्वकार्मिकः ॥
हरिद्राद्वयपत्तङ्गमञ्जिष्ठानतकेसरैः । सक्षौद्रसर्पिः पूर्वस्मादधिकश्चम्पकाह्वयः ॥
अपामार्गमनोह्वालदार्वीध्यामकगैरिकैः । नतैलाकुष्ठमरिचयष्ट्याह्वघृतमाक्षिकैः ॥
अगदो मन्दरो नाम तथाऽन्यो गन्धमादनः । नतरोध्रवचाकट्वीपाठैलापत्रकुङ्कुमैः ॥"

( हृ. उ. अ. ३७।७०–७४ ) इत्यादयः ।

**वाग्भट**काले ऋषिप्रणीताश्चरकसुश्रुतादयो बहवः संहिताग्रन्था आसन् । किन्तु प्रायः सर्वेषां तेषामेकदेशित्वात् सर्वास्ताः संहिता अनधीत्य आयुर्वेदविद्याधिगमो दुरासद एव । तद्यथा—**चरके** कायचिकित्सा वर्तते किन्तु तत्र शल्यचिकित्सा तथाच नेत्ररोगचिकित्सा न । **सुश्रुते** शल्यचिकित्सायां नेत्ररोगचिकित्सायाश्च सत्त्वेऽपि कायचिकित्सा सम्यक् न वर्तते । तेन च द्वयोरप्यनयोरध्ययनमन्तरेण कथमायुर्वेदीयविज्ञानमविकलं भवेत् ? आयुर्वेदविद्यामधिजिगमिषूणामध्येतॄणामियं दुरवस्था **वाग्भटे**नैव अष्टाङ्गहृदये—

"यदि चरकमधीते तद्ध्रुवं सुश्रुतादिप्रणिगदितगदानां नाममात्रेऽपि बाह्यः ।
अथ चरकविहीनः प्रक्रियायामखिन्नः किमिव खलु करोतु व्याधितानां वराकः ॥" (उ.अ. ४०।८४) ।

इत्येतस्मिन् श्लोके वर्णिता। एतामेव दुरवस्था दूरीकर्तुं चरकोक्तप्रक्रिया सुश्रुतोक्तशल्यशालाक्य ब्रह्माश्विव-सिष्ठभार्गवागस्त्यभेडहारीतवृद्धकाश्यपकाश्यपाग्निवेशात्रेयपुनर्वसुधन्वन्तरिशौनकनिमिविदेहपतिजिनमाणिभद्रादि-भिरुक्तान् भेषजयोगाश्च **वाग्भटः** एकस्मिन् तन्त्रे सञ्जग्राह। एव तन्त्रान्तरनिगदितविषयसङ्ग्रहप्रायेऽप्यस्मिन् ग्रन्थे **वाग्भटेन** खलु तादृशी प्रदर्शिता विरचनाचातुरी या ग्रन्थान्तरेषु नितरा दुरधिगमा। **चरकादि**-संहितासु अध्यायादिवाक्यप्रतीकमादाय प्रयुक्तानि कियन्त.शिरसीय-आत्रेयभद्रकाप्यीय-चिकित्साप्राभृतीय-तस्याशितीयादीनि अध्यायनामानि अकिञ्चिद्बोधकानि। **वाग्भटे** तु न तथा। ये ये खलु विषयाः, यस्मिन् यस्मिन्नध्याये विचारितास्तत्तत्स्वरूपावबोधकान्येव दोषादिविज्ञानीय रसभेदीय-वमनविरेचनविधि-ऋतुचर्यादीनि नामानि **वाग्भटेन** प्रयुक्तानि।

विषयविरचनाचातुर्ये **वाग्भटः** चरकात् तथा च सुश्रुतादप्यतिशेते। विशेषतो **वाग्भटस्य सूत्रस्थानं** इतरेभ्य अतिरिच्यते। ग्रन्थे प्रतिपाद्यानां सम्पूर्णविषयाणा स्थूलस्वरूप **वाग्भटेन सूत्रस्थाने** सूत्ररूपेण प्रदर्शितम्। तेनैव—

"निदाने माधवः श्रेष्ठः **सूत्रस्थाने** तु **वाग्भटः**।
शारीरे सुश्रुत. प्रोक्तश्चरकस्तु चिकित्सिते॥" इति।

तथाच—

"अत्रिः कृतयुगे वैद्यो द्वापरे सुश्रुतो मतः।
कलौ **वाग्भटनामा** च"......

इति लोके **वाग्भटस्य** प्रसिद्धिः वर्तते।

वाग्भटेन **अष्टाङ्गनिघण्टुरष्टाङ्गावताराख्य**श्चेति अपरौ द्वौ ग्रन्थौ विरचितौ इत्यावेदकानि प्रमाणानि समुपलभ्यन्ते।

अथ वाग्भटनिर्मितः **अष्टाङ्गनिघण्टुः** अष्टाङ्गहृदयसंहितायाः परिशिष्टरूप एव। किन्तु अष्टाङ्गहृदयस्य मुद्रितामुद्रितेषु पुस्तकेषु क्वापि **अष्टाङ्गनिघण्टु**र्नाम प्रकरण न विद्यते। तेन भिन्न

**३ अष्टाङ्गनिघण्टुः।** एवाय ग्रन्थ इति कैश्चिदनुमीयते। न चारुणदत्तेन हेमाद्रिणा वा अस्य कुत्रापि कृत उल्लेख। तेन च हृदयकारेण वाग्भटेन विरचितोऽय **अष्टाङ्गनिघण्टुः** अन्येन वा केनचिद्वाग्भटेन? इति विषये विद्वद्भिः क्वचित् प्रकटित. सन्देह.। किन्तु हृदयकारेण वाग्भटेनैव निर्मितः स इत्यत्र नास्ति सन्देह.। **अष्टाङ्गनिघण्टो**र्हस्तलिखितानि पुस्तकानि मद्रासनगरस्थ 'ओरिएण्टललॉयब्ररी' नाम्नि ग्रन्थालये तथाच तञ्जावरस्थ'महाराजासरफोजीसरस्वतीमहालाख्य'ग्रन्थसङ्ग्रहालये विद्यन्ते। तेष्वेकतमस्य हस्तलिखितपुस्तकस्य ग्रन्थावसानप्रशस्त्याम्—

'श्रीमद्वाहटाचार्यविरचिताया अष्टाङ्गहृदयसंहिताया **अष्टाङ्गनिघण्टुः** समाप्तः।'

इति लिखितमुपलभ्यते। तेन च विदुषामेतद्विषयक सशयस्तिरोहितः स्यादित्याशास्महे।

सुश्रुतसहिताया अपि उत्तरस्थानस्यान्ते **सुश्रुतनिघण्टुः** विरचितो वर्तते इति नेपालराजगुरुभिः पण्डित-**हेमराजशर्मभिः** सुश्रुतसहिताया' पुन' प्रतिसंस्करणविषये काश्यपसहिताया उपोद्घाते ११२ तमे पृष्ठे प्रद-र्शितम्। ते लिखन्ति—

"परमेतदीये सस्करणे चरकसंहितायामिव न पौनरुक्त्यात्मकं संस्करणं प्रायः समीक्ष्यते। संस्कर्ता च उत्त-

रतन्त्रभागयोजकश्च अयमिति स्पष्ट तु न ज्ञायते, पर मत्सकाशस्थे ६३३ नेवारसवल्लिखिते ताडपत्रीये सुश्रुत-पुस्तके पुष्पिकाया पूर्वभागे 'सुश्रुते शल्यतन्त्रे' इति, उत्तरतन्त्रान्ते 'इति सौश्रुते महोत्तरतन्त्रे चतु'षष्टितमोऽध्याय , अतो निघण्टुर्भविष्यति' इति, तदुत्तरगते निघण्टुभागे समाप्ते 'सौश्रुत्या सहिताया महोत्तराया निघण्टु समाप्त' ।' इति लेखो दृश्यते । इदमर्थप्रत्ययान्तेन सौश्रुतशब्देन सुश्रुतग्रन्थस्यापि ग्रहण सम्भवति, पर पूर्वापरभागयोरेकनिबन्धृभावे एकेनैव रूपेणोल्लेखस्य समुचिततया पूर्वभागे सुश्रुतशब्देन, उत्तरभागे सौश्रुतशब्देन विभिन्नतया निर्देशः पूर्वभाग सुश्रुताचार्यस्य, उत्तरभागस्तद्वश्यस्य सौश्रुताचार्यस्येति बुद्धावारोहयति । निघण्टुभागे उपक्रमे दिवोदासोपदेशसम्बन्धस्योल्लेखदर्शनेऽपि मूलाचार्यस्यैकतया ग्रन्थस्य समूलत्वेन प्रामाण्यविशेषमावातु तथा निर्देशनस्य सम्भवितया, एतदीयलेखस्य किञ्चिदवतीर्णतया, तस्मिन्निघण्टुभागे उत्तरभागीयशब्दविशेषाणामपि प्रविष्टतया च स निघण्टुभागोऽपि सौश्रुतस्यैव भवितुमर्हति । उत्तरतन्त्र सयोज्यापूर्णांशपूरकेण सौश्रुताचार्येण पूर्वभागेऽपि क्वचन सस्करणविशेषोऽपि विहित' स्यात् । महाभाष्यकृत सौश्रुतशब्दघटितनिदर्शनस्य दर्शनेन सौश्रुतानामपि पूर्व प्रसिद्धि , सुश्रुतवश्याना सौश्रुताना शल्यविद्याविदा पार्थिवैः सह सम्बन्धमादाय सौश्रुतपार्थिवा इति पूर्वत प्रसिद्धिरिति पूर्व दर्शितमेव । तेन सुश्रुतस्य वश्येन साम्प्रदायिकेन वा सौश्रुताचार्येण सुश्रुतस्य पूर्वतन्त्र सस्कृतमुत्तरतन्त्र निघण्टुभागश्च योजिते इत्यनुमीयते ।'' इति ।

एतेन च सहिताग्रन्थावसाने निघण्टुरचनापद्धति. प्राचीनाचार्याणा आसीदिति स्पष्ट भवति ।

**४ अष्टाङ्गावतारः ।** वाग्भटविरचितः **अष्टाङ्गावताराख्य**स्तु ग्रन्थ नैव मुद्रित । हस्तलिखितपुस्तकमप्यस्य कृतप्रयत्नैरप्यस्माभिर्न समासादितम् । ऑफ्रेच्महोदयाना 'कॅटलोगस् कॅटलोगोरम्' नाम्नि ग्रन्थकारसूचिग्रन्थेऽपि अस्योल्लेखो नोपलभ्यते । किन्तु वाग्भटेनैव विरचितोऽय **अष्टाङ्गावताराख्यो**ऽपि ग्रन्थः इति ''**अयमेव तन्त्रकृत् अष्टाङ्गावतारे**ऽध्यगीष्ट ।'' इति ( हृ चि अ. १७ श्लो १८ टीकाया ) अरुणदत्तवचनात् ज्ञायते ।

''क्रियतेऽष्टाङ्गहृदय नातिसक्षेपविस्तरम् ।'' ( हृ. सू अ १।५ ) इत्येतत्पद्यगत 'अतिसक्षेपविस्तरम्'इति पद व्याकुर्वन् अरुणदत्तो लिखति—

'अतिसक्षेप किञ्चित्तन्त्र यथा सिद्धसारादि, किञ्चिच्चातिविस्तरं यथा सङ्ग्रहादि ।' इति । ततश्च **सङ्ग्रहवत् 'सिद्धसारा'**ख्योऽपि ग्रन्थो **वाग्भटेन** निर्मित' इति केचित् मन्यन्ते । किन्तु तन्न । सिद्धसाराख्यो हि ग्रन्थो **रविगुप्तेन** विरचित इति वाग्भटटीकायामरुणदत्तेनैव ( हृ सू अ. ५।२३)—'रविगुप्तः सिद्धसारेऽध्यगीष्ट ।' इत्यत्र स्पष्टं प्रकाशितम् ।

**वाग्भट**विषये **वाग्भटग्रन्थरचना**विषये च वर्तत एका **किंवदन्ती** भूय श्रुतपूर्वाऽस्माभिः स्थविरेभ्यो वैद्यवरेभ्य. । सा तु यथा—

**किंवदन्ती ।** ''पुरा किल **भगवान् आदिदेवो धन्वन्तरिः** कलिकालमालिन्यमलिनेऽस्मिन् भारतवर्षे कियन्निरामयत्वमुपभुज्यते जनै ? कैः खल्पायै क्रियते विविधामयप्रतीकारो लोके ? तथा च व्याधिपरिहरणक्षमाश्चिकित्साशास्त्रपारङ्गता कति तावद्वर्तन्ते सद्वैद्याः ? इति कुतूहलाकुलितमानस अतिमनोहर विहगरूपमाधाय स्थानस्थाने तत्कालविख्याताना भिषक्श्रेष्ठाना गृहाभ्याशे समागत्य प्रत्येक

**''कोऽरुक् ? कोऽरुक् ? कोऽरुक् ?''**

इति त्रीन् प्रश्नानन्वयुङ्क्त । किन्तु प्रश्नानामेतेषामुत्तरमलभमानः सः ग्रामाद्ग्राममाहिण्डमानो यदृच्छया सिन्धुदेशं सम्प्राप्य **भिषग्वरवाग्भट**सदनप्राङ्गणवर्तिनि विकचकुसुमपरिपूर्णे पुष्पवृक्षके समुपविष्टो उच्चैः **"कोऽरुक् ? कोऽरुक् ? कोऽरुक् ?"** इति वाचमुदचरत् । आकर्ण्य चातिस्पष्टवर्णोच्चारयुतां श्रुतिमधुरां तां वाचं रुग्णचिकित्साकर्मव्यापृतो **वाग्भटः** कस्य खलु महाभागस्य भवेदेषा वाणी ? इति कौतुकाकृष्टचेतास्तत्क्षणमेव प्राङ्गणमागतस्तामेव दिशं चक्षुः प्राहिणोत् । अभिमुखमापतितश्च तस्य वृक्षशाखावस्थितः स विहगः । तं च सुनिपुणं निरूप्य अलौकिकया तद्रूपसम्पदा मधुरस्वरेण विनिगूढार्थयुक्तेन प्रश्नत्रयेण च परं विस्मयमापन्नो **वाग्भटः** नासौ लौकिको विहगः, विहगरूपधारिणाऽनेन केनचिद्देवताविशेषेण भाव्यमिति मनसा सम्प्रधार्य पक्वफलजलादिकं तस्मै समुपाहरत् । किन्तु तदगृहीत्वैव स विहगः पुनरपि तानेवानुयोगान् पर्यपृच्छत्— **"कोऽरुक् ? कोऽरुक् ? कोऽरुक् ?"** इति । तच्छ्रुत्वा यावदसौ प्रश्नानामुत्तराणि न लभते तावदशनपानादिके नासौ मतिं कुर्यादिति मनसि कृत्वा तत्क्षणमेव **वाग्भटो** गुर्वर्थगर्भाणि सूत्ररूपाण्युत्तराणि प्रादात्—

**"हितभुक् मितभुक् अशाकभुक् ।"** इति ।

तदाकर्ण्य परं प्रीतः स तदर्पितं सलिलफलादिकमुपभुज्य सद्वैद्यपरीक्षार्थं विहगरूपेणास्मिन् भारतवर्षे परिभ्रमन् **साक्षाद्धन्वन्तरिरहं** परं प्रीतोऽस्मि तवानेनायुर्वेदविज्ञानेन । **आयुर्वेदाष्टाङ्गविचारसारभूतं** त्वयाऽवश्यमेव लोकोपकारि **तन्त्रं** विरचयितव्यमित्यादिश्य आशिषं च प्रोच्य तिरोबभूव ।

एवं साक्षाद्धन्वन्तरेरनुग्रहं सम्पाद्य तदाज्ञयैव **वाग्भटेन** विरचितानि **आयुर्वेदतन्त्राणि**, यानि निखिलेऽस्मिन् भारतवर्षे परां प्रसिद्धिमापुः ।" इति ।

## (६) वाग्भटस्य व्याख्याः व्याख्यातारश्च ।

**वाग्भट**विरचितेषु ग्रन्थेषु **अष्टाङ्गहृदयं अष्टाङ्गसङ्ग्रह**श्चेति ग्रन्थद्वयं अतिप्रसिद्धमिति प्राङ्निर्दिष्टमेव । तत्र **अष्टाङ्गहृदयस्य** व्याख्याव्याख्यातृविषयकं वृत्तमादौ लिखित्वा अन्ततः **सङ्ग्रह**टीकाटीकाकारविषयेऽपि किञ्चित् लिख्यते ।

**अष्टाङ्गहृदय**स्यानेकैर्विद्वद्भिर्विरचिताः अनेकाष्टीका वर्तन्ते । **चरकसुश्रुतटीकाकृद्भि**र्भट्टारहरिचन्द्रचन्द्रनन्दनजेज्जटारुणदत्तप्रभृतिभिरपि **अष्टाङ्गहृदयस्य** व्याख्याः कृताः इति ज्ञायते ।

**अष्टाङ्गहृदयस्य** संशोधनकर्मणि लग्नैरस्माभिः **पुण्यपत्तन**स्थो आनन्दाश्रमः भाण्डारकरप्राच्यसंशोधनमन्दिरं च, **मुम्बापुरी**स्था रॉयलएशियाटिकसोसायटीशाखा, **बडोदानगर**स्था ओरिएण्टलरिसर्चसंस्था, **काशीक्षेत्र**स्था सरस्वतीभुवनलॉयब्ररी, **तञ्जावर**स्थो महाराजासरफोजीसरस्वतीमहालग्रन्थालयः, **मद्रासनगर**स्था गव्हर्नमेण्टओरिएण्टललॉयब्ररी, **अड्यारनगर**स्थो ब्रह्मविद्यामन्दिरग्रन्थालयः, इत्यादयो ग्रन्थालयास्तत्र तत्र गत्वा समीक्षमीक्षिताः तदन्तर्गतानि आयुर्वेदविषयकाणां ग्रन्थानां हस्तलिखितानि पुस्तकानि च प्रत्यक्षमवलोकितानि । एवमेव **म्हैसूर**स्था गव्हर्नमेण्टओरिएण्टललॉयब्ररी, **कालिकता**स्था रॉयलएशियाटिकसोसायटीशाखा, इत्यादिभ्यः पुराणग्रन्थसङ्ग्रहसंस्थाभ्यः तथाच बहुभ्यो आयुर्वेदपारङ्गतेभ्यो विद्वद्भ्यश्च पत्रव्यवहारद्वारा समासादितं उपयुक्तं वृत्तजातम् । तदा संस्कृतभाषाया विरचिताः बहूनां टीकाकाराणां **अष्टाङ्गहृदयव्याख्याः** तेलगू, आन्ध्र, तामिळ, देवनागरी, कर्नाटकी, मल्याळी, बङ्गाली, इत्यादिषु लिपिषु लिखिताः दृष्टाः । एतेन च ग्रन्थोऽयम**ष्टाङ्गहृदयाख्यः** कियतीं खलु प्रसिद्धिं भारतवर्षे आपदिति सुस्पष्टं भवति ।

**वाग्भटादन्यः** न कोऽपि भवेदायुर्वेदग्रन्थनिर्माता, यस्य ग्रन्थस्य एतावत्यः वर्तन्ते विविधासु लिपिषु

लिखिताः व्याख्याः इति मन्यामहे वयम् । एतासां व्याख्यानां व्याख्यातॄणां च नामानि अधः प्रदर्श्यन्ते । तद्यथा—

| | |
|---|---|
| १ श्रीमदरुणदत्तकृता | सर्वाङ्गसुन्दरा[1] टीका । |
| २ श्रीहेमाद्रिकृता | आयुर्वेदरसायनटीका । |
| ३ श्रीचन्द्रनन्दनकृता | पदार्थचन्द्रिका टीका । |
| ४ इन्दुकृता | शशिलेखा इन्दुमती वा । |
| ५ आशाधरकृता | अष्टाङ्गहृदयोद्योतनाम्नी । |
| ६ वैद्यतोडरमल्लकान्हप्रभुकृता | मनोज्ञा, चिन्तामणिर्वा । |
| ७ रामनाथकृता | [2]अष्टाङ्गहृदयटीका । |
| ८ हाटकाङ्ककृता | अष्टाङ्गहृदयदीपिका । |
| ९ शङ्करकृता | ललिता । |
| १० परमेश्वरकृता | वाक्यप्रदीपिका । |
| ११ विश्वेश्वरपण्डितकृता | विज्ञेयार्थप्रकाशिका । |
| १२ दासपण्डितकृता | हृदयबोधिका । |
| १३ श्रीकृष्णसेनमलिककृता | वाग्भटार्थकौमुदी । |
| १४ दामोदरकृता | सङ्केतमञ्जरी । |
| १५ यशोदानन्दनसरकारकृता | प्रदीपाख्या । |
| १६ भट्टनरहरिकृता | वाग्भटखण्डनमण्डननाम्नी । |
| १७ रामानुजाचार्यकृता | [2]आन्ध्रटीका । |
| १८ जेज्जटकृता | [2]अष्टाङ्गहृदयटीका । |
| १९ भट्टारहरिचन्द्रकृता | ,, |
| २० वाचस्पतिमिश्रकृता | ,, |
| २१ मनोदयादित्यभट्टकृता | मनोदयादित्यभट्टीया । |
| २२ भट्टश्रीवर्धमानकृता | सारोद्धारनाम्नी । |
| २३ ............ ... | [2]बालप्रबोधिका । |
| २४ ............... | [2]बालबोधिनी । |
| २५ ............... | [2]कर्णाटी टीका । |
| २६ ............... | [2]द्राविडी टीका । |
| २७ ......... .. ... | [2]सुगतटीका । |
| २८ ............... | [2]केरळी टीका । |
| २९ ...... ........ | [2]पाठ्या । |
| ३० ............... | [2]बृहत्पाठ्या । |
| ३१ ............... | [2]व्याख्यासारः । |

१ 'सर्वाङ्गसुन्दरी' इति क्वचित् । २ एतासां व्याख्यानां व्याख्याकर्तॄणां च नामानि नोपलभ्यन्ते ।

| | |
|---|---|
| ३२ .................. | हृद्या हृद्यार्था वा । |
| ३३ .. .. .. .. ... | अष्टाङ्गहृदयव्याख्या । |
| ३४ पं० शिवशर्मकृता | शिवदीपिका । |

एतेषा चतुस्त्रिंशत्सङ्ख्याकाना **अष्टाङ्गहृदय**व्याख्याकाराणा मध्ये **अरुणदत्तहेमाद्रिभ्यां** विरचिते द्वे टीके अस्माभिरस्मिन् ग्रन्थे प्रकाशिते वर्तेते । तेन च एतयोर्द्वयोर्व्याख्याकारयोरेव विषये किञ्चिल्लिखामो वयम् । यद्यपि अपरेषामपि केषाञ्चन टीकाकाराणा समुपलभ्यते वृत्तम्, तथाऽपि विस्तरभिया तदत्र न लिख्यते ।

## अरुणदत्तः ।

मृगाङ्कदत्तसूनुः श्रीमान् **अरुणदत्तः सर्वाङ्गसुन्दरा**भिधा अष्टाङ्गहृदयव्याख्या रचयाम्बभूवेति अष्टाङ्गहृदयव्याख्यारम्भे निर्दिष्टात्—

"श्रीमन्मृगाङ्कतनयष्टीकामष्टाङ्गहृदयस्य । श्रीमा**नरुणः** कुरुते सम्यग्द्रष्टुः पदार्थबोधाय ॥"

इति श्लोकात् ज्ञायते। बहो कालात्पूर्वं मुद्रिता इय **सर्वाङ्गसुन्दरा** टीका सम्पूर्णा वर्तते। **अरुणदत्ता**दर्वाचीनाना केषा केषा व्याख्यातॄणा सम्पूर्णा व्याख्याः अद्य नोपलभ्यन्ते । **अरुणदत्त**स्येय टीका सर्वाङ्गविमर्शिनी वर्तते । अस्या च व्याख्यात्रा पदपदार्थ. शङ्कास्थलानि शङ्कासमाधानपद्धतिः छन्दसां लक्षणानि च प्रदर्शितानि । स्थाने स्थाने प्रथितयशसा आयुर्वेदतन्त्रनिर्मातॄणा वचनानि उद्धृतानि आधारत्वेन च प्रदत्तानि । छन्दोव्याकरणालङ्कारादीनामपि व्याख्यान कृत तेन । तेन चाय**मरुणदत्तो** वैय्याकरणः साहित्यशास्त्रकोविदश्चासीदित्यवगम्यते । अध्येतॄणा स्मरणसौकर्यार्थं अनेनानेकानि पद्यान्यपि समुपनिबद्धानि ।

तद्यथा—

सूत्रस्थाने दशमेऽध्याये ४२ तमस्य श्लोकस्य टीकायाम्—

"पद्येन च सुखस्मृत्यै रसभेदान् शृणुष्व मे । मधुरोऽम्लेन पटुना तिक्तेन कटुकेन च ॥"

इत्यादयस्त्रिंशत् श्लोका. ।

तथाच—शारीरस्थाने तृतीयेऽध्याये त्वक्सम्बन्धिनः सप्तश्लोकाः, कलाना दशश्लोकाः, कोष्ठाङ्गाना सार्धषट्श्लोकाः, जालादीना सार्धैकोनविंशतिः श्लोकाः, सन्धीना सार्धदश श्लोकाः, चिकित्सितस्थाने सप्तमेऽध्याये दशविधसन्निपाताना सार्धपञ्च श्लोका., इत्यादयः ।

तेन च **सर्वाङ्गसुन्दरे**ति यथार्थमेव नाम टीकाया अस्याः ।

'कॅटॅलोगस् कॅटॅलोगोरम्' नाम्नि पुस्तके डॉक्टर**ऑफ्रेच्**महोदयास्त्रयो**ऽरुणदत्ताः** अभवन्निति लिखन्ति ।

तद्यथा—

"(१) एकः कोशकारो वैय्याकरणश्च, उज्ज्वलदत्तरायमुकुटाभ्यामुल्लिखितः ।

(२) अपर. मनुष्यालयचन्द्रिकाकर्ता ।

(३) तृतीयः मृगाङ्कदत्तपुत्रोऽष्टाङ्गहृदयव्याख्याकारः । अष्टाङ्गहृदयस्य सर्वाङ्गसुन्दरानाम्नी टीका अनेन विरचिता । सुश्रुतसहिताया अपि व्याख्या कृता अनेन ।" इति ।

ऑफ्रेच्महोदयैरुल्लिखिताना त्रयाणामरुणदत्ताना कोशग्रन्थनिर्माता वैय्याकरणश्च **अरुणदत्त** एव अष्टाङ्ग-

१ एतद्व्याख्याकर्त्रोर्नामनी नोपलभ्येते ।

हृदयव्याख्याता **अरुणदत्त** इति न प्रतिभाति । यत अष्टाङ्गहृदयस्य सर्वाङ्गसुन्दराभिधाया टीकाया **अरुणदत्तेन** व्याकरणसूत्राणि वार्तिकानि च पदे पदे समुद्धृतानि वर्तन्ते । तथा च अलङ्काराणां वृत्ताना च लक्षणोपन्यासपुरस्सरं विवेचन कृत तेन । क्वचिदन्यग्रन्थान्तर्गता गद्यभागा अनेन पद्यरूपेण विपरिणामिता[1] । तेन च व्युत्पन्नोऽधीतकाव्यशास्त्रश्चाय**मरुणदत्तः** एव कोशकारो वैय्याकरणश्च, इति दृढमस्मन्मतम् ।

मनुष्यालयचन्द्रिकाकर्ता कश्चिदपर एव **अरुणदत्त** इत्याहुः । न चायं मनुष्यालयचन्द्रिकाग्रन्थोऽस्माभिरद्ययावद्दृष्टचरः । ग्रन्थमिममनवलोक्य नैतद्विनिश्चेतु शक्यं यन्मनुष्यालयचन्द्रिकाकर्ता **अरुणदत्त** एव अष्टाङ्गहृदयव्याख्याप्रणेता **अरुणदत्तः** तद्भिन्नो वेति ।

**अष्टाङ्गहृदय**व्याख्याया आरम्भे मङ्गलमाचरन् **अरुणदत्तो** लिखति—

"दीप्त्या यस्येन्द्रनीलोपलशकलरजोनीलया नीलिताभा
लक्ष्मीमुत्तप्तभास्वत्कनकरुचिमपि स्पर्शरोमाञ्चिताङ्गीम् ।
कालीत्याशङ्कमानः स्फुरदधरपुटश्चक्रपाणिः किलाभूत्
भर्ता लोकस्य शश्वत्स भवतु भवता भूतये **पद्मनाभः** ॥" इति ।

तेन चाय वैदिकधर्मावलम्बी आसीदित्यवगम्यते । वङ्गदेशसम्भूतेनानेन भाव्यमिति तर्क्यते ।

**अरुणदत्तसमय**विषये इतिहासविद्भिः प्रकटितानि मतान्यादौ समालोच्य कः कालोऽस्य स्वीकार्यः इति निश्चेयमस्माभिः ।

अरुणदत्तसमये अनेकाना विपश्चितां मतानि ।

डॉक्टरहॉर्न्लेमहोदयाः **अरुणदत्तसमयः** ख्रिस्तीय १२२० तमस्याब्दस्य समीपवर्तीति मन्यन्ते । श्री**गणनाथसेन**महाभागास्तथाच श्री**यादवजी**महाभागा अपि तदेवानुवदन्ति । **'जॉली'**महाशयास्तु Medicine नाम्नि ग्रन्थे **अरुणदत्तः** ख्रिस्तीयपञ्चदशशताब्द्या सम्भूत इत्याहुः । एवमेव **'महाराष्ट्रीयज्ञानकोश'**काराः अपि "**अरुणदत्त**विरचिता सर्वाङ्गसुन्दर्याख्या अष्टाङ्गहृदयटीका ख्रिस्तीयपञ्चदशशताब्द्यां लिखिता वर्तते, **हेमाद्रि**निर्मिता आयुर्वेदरसायनाभिधा टीका तु ख्रिस्तीयद्वादशशताब्द्या नैवार्वाचीना" इति लिखन्ति ।

अस्मन्मतम् ।

'महाराष्ट्रीयज्ञानकोश'काराणामेतन्मत तु सर्वथा प्रामादिकम् । यतः **हेमाद्रिणा** स्वयमेव स्वोपनिबद्धायामष्टाङ्गहृदयव्याख्यायाम**रुणदत्तो** नामग्रहणपूर्वकमुल्लिखितो वर्तते । तेन च **हेमाद्रिः** **अरुणदत्तात्** प्राचीनो नैव भवितु शक्यते, प्रत्युत **अरुणदत्त** एव हेमाद्रे प्राग्भव इति सिध्यति । 'देवगिरि'नृपतिद्वयस्य महादेवस्य रामचन्द्रस्य च अमात्यभूतोऽयं **हेमाद्रि**स्तत्समकालीन एव इति सुस्पष्टम् । महादेवस्य कालस्तु ख्रिस्तीय १२६० तमाद्वर्षादारभ्य १२७१ तमवर्षपर्यन्तं रामचन्द्रस्य च ख्रिस्तीय १२७१ तमाब्दादारभ्य १३०५ तमसवत्सरपर्यन्तं आसीत् । तेन च **हेमाद्रिकालः** अन्तरा ख्रिस्तीयत्रयोदशशतकोत्तरार्धं चतुर्दशशतकपूर्वभागं च आयाति । हेमाद्रेः पूर्वमेव **अरुणदत्तेन** भाव्यमिति पूर्वं प्रदर्शितमेव । तेन च **अरुणदत्तकालः** ख्रिस्तीयत्रयोदशशताब्द्याः प्राग्भव एव । एवं 'महाराष्ट्रीयज्ञानकोश'काराणा तथा च 'जॉली'महाशयानामप्येतद्विषयक मत प्रमादपूर्णमेव इति सुस्पष्टम् ।

---

१ "मध्वादीनां विरोधमाह–मधुमैरेयेति । मधु–क्षौद्रम्, 'मार्द्वीकम्' इत्यरुणदत्तः । मैरेयो–'धान्यासव.' इति चन्द्रनन्दन., 'खर्जूरासवः' इत्यरुणदत्तः । इन्दुश्च ।" इति हेमाद्रिः ( हृ. सू अ ६।४० ) ।

अस्मन्मते तु **अरुणदत्तकालः** खिस्तीयद्वादशशताब्द्याः प्रारम्भे एव । भाण्डारकरप्राच्यसंशोधनमन्दिरस्य ग्रन्थाधिकारिणः श्री. पी. के. गोडे एम्. ए. महाभागाः आङ्ग्लभाषोपनिबद्धायामस्यैव ग्रन्थस्य प्रस्तावनाया अष्टमे पृष्ठे **अरुणदत्त**मधिकृत्य लिखन्तः खिस्तीय ११५९ तमे वर्षे लिखितायां "सर्वानन्दवैद्यघटीयस्य" टीकासर्वस्वाभिधायाममरकोशव्याख्यायां **अरुणदत्तो** नामग्रहणपूर्वमुल्लिखित इति प्रदर्शयन्ति । तेन च **अरुणदत्तः** सर्वानन्दवैद्यघटीयात् प्राचीन एव । कोशकारो वैय्याकरणश्चेति प्रसिद्धः **अरुणदत्तः** एव अष्टाङ्गहृदयव्याख्याता **अरुणदत्तः** इति पूर्वं प्रदर्शितमेव अस्माभिः । तेन **अरुणदत्तो** खिस्तीयद्वादशशताब्द्याः प्रारम्भे समभवत् इति स्पष्टं भविष्यति ।

डॉक्टरहॉर्न्लेमहोदयाः Medicine in Ancieat India नाम्नि ग्रन्थे **वाचस्पतिविजयरक्षितारुणदत्तानां कालं** निर्णयन्तो लिखन्ति—

"प्रमोदाख्यो वाचस्पतेः पिता खिस्तीय ११९३ तमात् वर्षादारभ्य १२०५ तमवर्षपर्यन्तं भुवं परिपालयतो 'महम्मद हमीराख्य'स्य नृपतेः राजवैद्य आसीत् । तेन च **वाचस्पतिकालः** खिस्तीय १२६० तमस्याब्दस्य निकटवर्ती भवेत् । वाचस्पतिना आतङ्कदर्पणस्य प्रास्ताविके पद्ये मधुकोशाभिधायाष्टीकाया आधारेणैव स्वटीका विरचिता इति निर्दिष्टं वर्तते । तेन च **मधुकोशटीका** आतङ्कदर्पणात् पूर्वं खिस्तीय १२४० तमे वत्सरे लिखितेति सम्भाव्यते । नेत्ररोगनिदानस्य विजयरक्षितविरचिताया मधुकोशाख्याया टीकायां अरुणदत्तवर्णिता नेत्ररचनामुद्दिश्य विचारिताः केचन विषयाः । तेन च विजयरक्षितात् **अरुणदत्तस्य** प्राग्भवत्वा**दरुणदत्तकालः** खिस्तीय १२२० तमस्याब्दस्य समीपे आयाति ।" इति ।

एवं हॉर्न्लेमहोदयैस्त्रयाणामेतेषां टीकाकाराणां मध्ये प्रत्येकं विंशतिर्वर्षाण्यतीतानीति स्वीकृत्य **अरुणदत्तकालः** खिस्तीये १२२० तमेऽब्दे स्थापितः । मन्यामहे वयं यत्सर्वथा अपर्याप्तो विंशतिवर्षमितः अल्पीयान् कालः अन्यग्रन्थकर्तृकोल्लेखनयोग्यतामापादयितुं ग्रन्थस्य । टीकाकारेष्वेतेषु मध्ये प्रत्येकं न्यूनतो न्यूनं अर्धशताब्दिमितः कालः समतीत इति स्वीकर्तव्यमेव । तेन च **अरुणदत्तो** वाचस्पतेः शताब्दिसम्मितेन सपादशताब्दिपरिमितेन वा कालेन पूर्वतनः इति सिध्यति । एवं च **ख्रिस्तीयद्वादशशतकारम्भे एव अरुणदत्तकालः** इति पर्यवस्यति ।

**अरुणदत्तेन** यथा अष्टाङ्गहृदयटीका लिखिता तथा सुश्रुतसंहिताटीकाऽपि तेन विरचितेति ज्ञायते । किन्तु न सा अद्ययावन्मुद्रिता ।

## हेमाद्रिः ।

**अष्टाङ्गहृदयस्यायुर्वेदरसायनं** नाम टीका **हेमाद्रिणा** विरचिता इति तट्टीकायाः प्रास्ताविकात् पद्यात् ज्ञायते । तत्र **हेमाद्रिर्लिखति—**

"क्रियतेऽष्टाङ्गहृदयस्यायुर्वेदस्य सुग्रहा ।
टीका चरकहारीतसुश्रुतादिमतानुगा ॥
सेव्या **हेमाद्रिटीकेयमायुर्वेदरसायनम्** ।"

इत्यादि ।

इयं **हेमाद्रिटीका** केवलं सूत्रस्थानकल्पसिद्धिस्थानयोरेव बहोः कालादारभ्य समुपलभ्यते स्म । अवशिष्टाना शारीरनिदानचिकित्सितोत्तरस्थानानामपि सा समुपलभ्येत चेत् तत्प्राप्त्यै अवश्यमेव यत्नो विधेय इति बुद्ध्या बहवो हस्तलिखितग्रन्थसङ्ग्रहालयाः अस्माभिः समक्षं वीक्षिताः । अन्येषां केषाञ्चन ग्रन्थसङ्ग्रहाल-

याना प्रधानाधिकारिवर्गेभ्यो विज्ञप्तिपत्राणि प्रेष्य कृता गवेषणा । तदा निदानचिकित्सितस्थानयोः अग्रिमाणां पञ्चषाणामध्यायानामिय **हेमाद्रिटीका** एकस्मिन् ग्रन्थालयेऽस्माभिः सम्प्राप्ता । "क्लेश फलेन हि पुनर्नवता विधत्ते ।" इतिन्यायेन अशमात्रेणाप्यनेन अस्मल्लब्धेन फलेन प्रोत्साहितैरस्माभिः प्रायः सर्वेष्वेव भारतीयग्रन्थालयेषु विहिता विचारणा । अस्मत्परमसुहृदः भाण्डारकरप्राच्यसशोधनमन्दिराधिकारिणः श्री. गोडे एम्. ए महाभागाः अपि अस्मत्प्रार्थिताः सन्त प्रयतितवन्तः सम्पूर्णामेता टीका आसादयितु शर्मण्यदेशान्तर्गतेभ्यो ग्रन्थालयेभ्यः पुराणसशोधनसस्थाभ्यश्च । किन्तु चेत्विद्यते नश्चेतः एतन्निवेदयितु यच्छारीरोत्तरस्थानयोस्तथा च निदानचिकित्सितस्थानयोरुर्वरिताध्यायाना **हेमाद्रिटीका** अद्ययावन्नोपलब्धाऽस्माभिः । यद्यपि नोपलब्धेयमद्यापि तथाऽपि अवशिष्टभागस्य व्याख्या **हेमाद्रिणा** कृता इत्यावेदक प्रमाणमेक लब्धमस्माभिः ।

ग्रन्थान्तर्गतपाठसंशुध्यै बहूनि हस्तलिखितपुस्तकानि महता प्रयत्नेन सङ्गृहीतान्यस्माभिः । तेषु **अरुणदत्तव्याख्या**सहितस्य मूलग्रन्थस्य 'त' सञ्ज्ञिते हस्तलिखितपुस्तके "गर्भेऽनिलात्सङ्कुचिता शष्कुली कुचिकर्णकः ।' (उ अ. १७ श्लो १६) इति श्लोकार्धगतस्य 'गर्भे' इति पदस्य अर्थावबोधिका 'गर्भे—गर्भावस्थायाम् । इति चन्द्रिका हेमाद्रिरपि' इति टिप्पणी तत्पत्रैकपार्श्वे ग्रन्थलेखकेनैव लिखिता अस्माभिर्दृष्टा । एतेन उत्तरस्थानस्यापि टीका **हेमाद्रिणा** विरचिता, टिप्पणीलेखकेन च सा दृष्टचरा, इत्युभयमप्येतन्निःसन्देहम् । चन्द्रिकाटीकासहित मूलग्रन्थस्य हस्तलिखितपुस्तकं अस्मन्निकटे विद्यते । तत्र 'गर्भे' इतिपदस्य यथा टिप्पणीलेखकेन प्रदर्शित तथैव 'गर्भावस्थायाम्' इत्येव व्याख्यान कृत चन्द्रिकाकारेण इति दृश्यते । तेन च चन्द्रिकाटीकाया तथा च हेमाद्रिटीकाया वर्तमान 'गर्भे' इति पदस्य 'गर्भावस्थायाम्' इति कृत व्याख्यानं प्रत्यक्षीकृत्य अरुणदत्तकृतव्याख्यानात् तत् भिन्न स्पष्टार्थावबोधक चेति हेतुना तेनैव ग्रन्थलेखकेन लिखिता सा टिप्पणीत्यभिप्रेमः । अतो **हेमाद्रिणा** सम्पूर्णग्रन्थस्य टीका विरचिता इत्यत्र नास्ति नः सन्देहः । आशास्महे च यत्तदासादने समधिक. समुद्यम कृतश्चेत् कालेन बहुना अल्पेन वा सम्पूर्णरूपा हेमाद्रिटीका लब्धु शक्या भवेदिति ।

**हेमाद्रि**र्देवगिरीस्थमहाराजाधिराजस्य महादेवाख्यस्य चक्रवर्तिनो नृपस्य तदुत्तरकालवर्तिनो महाराजस्य श्रीरामदेवस्य च प्रधानामात्य· श्रीकरणाधिपः धर्माधिकरणपण्डितश्चासीत् । महाराजाधिराजे महादेवे वसुधा शासति सति धर्मार्थकाममोक्षरूपस्य पुरुषार्थचतुष्टयस्यावाप्त्यै **"चतुर्वर्गचिन्तामणिः"** नाम सुविस्तृतो ग्रन्थो **हेमाद्रिणा** निरमायि । अथ पुरन्दरपुरातिथिभूते महादेवे तदायतिना रामदेवेन चालङ्कृते सिंहासने, **चतुर्वर्गचिन्तामणौ** समादिष्टाना व्रतदानादीना सुखससिध्यै अत्यावश्यकस्य निरामयत्वस्यावाप्त्यै **आयुर्वेदरसायनं नाम** अष्टाङ्गहृदयस्य व्याख्या रचयाबभूव **हेमाद्रिः,** इति तेनैव **आयुर्वेदरसायनटीकायाः** प्रास्ताविकेषु पद्येषु निवेदितम् । तद्यथा—

> "**हेमाद्रिणा** चतुर्वर्गचिन्तामणिविधायिना ।
> तदुक्तव्रतदानादिसिध्यङ्गारोग्यसिद्धये ॥
> क्रियतेऽष्टाङ्गहृदयस्यायुर्वेदस्य सुग्रहा ।

१ अष्टाङ्गहृदयस्यावशिष्टभागस्य **हेमाद्रिकृता टीका** यदि कस्यचित्सकाशे भवेत् तर्हि कृपया तदस्मभ्यमवश्यं निवेदनीयमिति प्रार्थयामो वय सर्वेभ्य सज्जनेभ्य ।

२ "यस्य श्रीकरणाधिप· स्वयमयं **हेमाद्रिसूरिः** पुरः । प्रौढप्रातिभवर्ण्यमानविलसद्वंशो भृश शोभते ॥" इति चतुर्वर्गचिन्तामणौ राजप्रशस्तिप्रकरणे **हेमाद्रिः** ।

टीका चरकहारीतसुश्रुतादिमतानुगा ॥
**हेमाद्रि**र्नाम रामस्य राज्ञः श्रीकरणेष्वधि ।" इति ।

न खलु उपरिनिर्दिष्टौ द्वावेव ग्रन्थौ **हेमाद्रिणा** निर्मितौ, किन्तु अपरेऽप्यनेके ग्रन्थास्तेन विरचिताः। डॉक्टर**ऑफ्रेच्**महोदयाः 'कॅटलोगस् कॅटॅलोगोरम्'नाम्नि ग्रन्थकारसूचिग्रन्थे **हेमाद्रि**विरचितान् चतुरो ग्रन्थान्निर्दिशन्ति । तद्यथा—

**१ चतुर्वर्गचिन्तामणिः ।**
**२ आयुर्वेदरसायनं नाम अष्टाङ्गहृदयटीका ।**
**३ कैवल्यदीपिका मुक्ताफलटीका ।**
**४ शौनककृतप्रणवकल्पस्य टीका ।**

अधोनिर्दिष्टा अपि ग्रन्था: **हेमाद्रि**निर्मिता इति कैश्चित् वर्ण्यते । ते च यथा—

| | |
|---|---|
| **१ श्राद्धपद्धतिः ।** | **९ कालनिर्णयः ।** |
| **२ हेमाद्रिप्रयोगः ।** | **१० कालनिर्णयसङ्क्षेपः ।** |
| **३ नानाशान्तयः ।** | **११ तिथिनिर्णयः ।** |
| **४ हेमाद्रिनिबन्धः ।** | **१२ दानवाक्यावलिः ।** |
| **५ हेमाद्रिदानखण्डसारः ।** | **१३ पर्जन्यप्रयोगः ।** |
| **६ त्रिस्थलीविधिः ।** | **१४ प्रतिष्ठा ।** |
| **७ हेमाद्रिप्रायश्चित्तसङ्ग्रहः ।** | **१५ लक्षणसमुच्चयः ।** |
| **८ अर्थकाण्डम् ।** | **इत्यादयः ।** |

किन्तु महत्तमस्य **चतुर्वर्गचिन्तामणि**ग्रन्थस्यैव प्रकरणान्येतानि, न च स्वतन्त्रा ग्रन्थाः इति मन्यावहे वयम्। ऑफ्रेच्महोदयैरनुल्लिखिता अपि केचन ग्रन्थाः **हेमाद्रिणा** लिखिता इति ज्ञायते । यथा—

१ बोपदेवविरचितस्य हरिलीलाख्यस्य ग्रन्थस्य **हेमाद्रि**कृता **विवेकाख्या टीका** समुपलभ्यते ।

२ कश्यपसंहिताया उपोद्घाते २३ तमे पृष्ठे पण्डित**हेमराजशर्मणः 'लक्षणप्रकाशाख्य'**स्य **हेमाद्रि**-विरचितस्य ग्रन्थस्य हस्तलिखित पुस्तक तन्निकटे विद्यत इति लिखन्ति ।

सम्भाव्यते च यदन्येऽपि केचन ग्रन्था अनेन विरचिता भवेयुरिति ।

महाराष्ट्रभाषायामपि केचिद्ग्रन्थाः कानिचित् 'मेस्तकानि' च **हेमाद्रिणा** विरचितानि इति श्रीमद्भिः **"के० आ० पाध्ये** ॲडव्होकेट्महोदयैः" खिस्तीयैकत्रिंशदधिकैकोनविंशतिशततमेऽब्दे मुम्बापुर्यां सम्मुद्र्य प्रकाशिते महाराष्ट्रभाषायामुपनिबद्धे **हेमाद्रिचरिते** लिखन्ति । **हेमाद्रि**रचिताना मेस्तकाना तत्कालीनमहाराष्ट्रवाङ्मये उल्लेखाः समुपलभ्यन्ते । किन्तु **हेमाद्रिकृता** महाराष्ट्रभाषोपनिबद्धा ग्रन्थास्तु नोपलभ्यन्ते ।

पाध्येमहोदयाः स्वीये हेमाद्रिचरिते **हेमाद्रि**विरचितामायुर्वेदरसायनाख्या टीकामधिकृत्य एव लिखन्ति—

"**वाग्भट**कृतस्याष्टाङ्गहृदयस्य **हेमाद्रिणा** विरचितायामायुर्वेदरसायनाभिधाया टीकायां अस्याष्टीकायाः रचयिता **हेमाद्रि**रेव **चतुर्वर्गचिन्तामणि**कारो महाराजाधिराजस्य रामदेवस्य श्रीकरणाधिप इति लिखितमस्ति । किन्तु अरुणदत्तविरचिताया अष्टाङ्गहृदयटीकाया यतो **हेमाद्रे**रुल्लेखो नोपलभ्यते, ततः **हेमाद्रिणा** प्रेरितेन केनचित् तदाश्रितेन तत्समकालीनेन वैद्यवरेण आयुर्वेदरसायनाभिधा टीका विरचिता भवेत् ।" इति ।

किन्तु पाध्येमहोदयानामेतद्वक्तव्यं प्रामादिकमेव । आयुर्वेदरसायनटीकायाः प्रारम्भे एव **हेमाद्रि**र्लिखति—

"**हेमाद्रिणा** चतुर्वर्गचिन्तामणिविधायिना ।
क्रियतेऽष्टाङ्गहृदयस्यायुर्वेदस्य सुग्रहा ।
टीकाकारैर्न निर्णीतमिह **हेमाद्रिणो**दितम् ।
ऊर्ध्वाधोगति निर्गमय्य मदनैर्दन्त्यादिभिर्विद्विषो
दोपानद्रढि रामराज्यमगदङ्कारेण **हेमाद्रिणा** ॥" इति ।

अस्माच्च चतुर्वर्गचिन्तामणिकर्त्रा एव आयुर्वेदरसायनाभिधा टीका विरचिता इति स्पष्टं भवति ।

अरुणदत्तविरचितायां टीकायां **हेमाद्रे**रुल्लेखो न कृत इति हेतो आयुर्वेदरसायनं **हेमाद्रि**भिन्नेन केनचिन्निर्मितं भवेदिति यत् पाध्येमहोदयैर्लिखितं तदप्यसाम्प्रतम् । अरुणदत्तो हि **हेमाद्रेः** प्राग्भव. । तेन चारुणदत्तविरचितायां सर्वाङ्गसुन्दराभिधायां टीकायां **हेमाद्रे**रुल्लेखो नैव भवितुं शक्यते, न वा समुपलभ्यते । अरुणदत्तो **हेमाद्रेः** प्राग्भव इति हृ सू अ. ७ श्लो ४० टीकायां अरुणदत्तस्य नामग्रहणपूर्वकात् **हेमाद्रि**कृतादुल्लेखात् स्पष्टं भवति ।

"कालिदासप्रणीतस्य रघुवंशस्य टीकाकारेषु चारित्र्यवर्धनो वल्लभः हेमाद्रिः मल्लिनाथश्च अतिप्रसिद्धाः । तेषु **हेमाद्रिणा** दर्पणाख्या रघुवंशस्य टीका विरचिता इति ज्ञायते । इयं दर्पणाख्या **हेमाद्रेः** रघुवंशटीका कव्यभिप्रायप्रकटनकौशले सर्वाभ्य इतराभ्यष्टीकाभ्य अतिरिच्यत इति बहूनां विदुषां मतम् । किन्तु दर्पणाख्यटीकाकारो **हेमाद्रिः** आयुर्वेदरसायनाख्यव्याख्याकर्तु**र्हेमाद्रेः** भिन्नः उत अभिन्नः इति विषयोऽद्यापि संशयावच्छन्न एव । रघुवंशटीकाकर्तु **हेमाद्रेः** पितुर्नाम ईश्वरसूरि. आसीदिति दर्पणटीकासमाप्तौ निर्दिष्टं वर्तते । अथ आयुर्वेदरसायनप्रणेतु **हेमाद्रेः** पितृनाम कामदेव इति पूर्वं प्रदर्शितमेव ।" इति विलिख्य उभावेतावभिन्नौ इति पक्षः पाध्येमहोदयैः **हेमाद्रिचरितग्रन्थे** सप्तमाष्टमयो पृष्ठयोः समर्थितो वर्तते ।

**हेमाद्रि**काले यद्यपि बहूनां लिपीनां आसीच्चिरप्रवृत्तः प्रचारः, तथापि प्रायः सर्वे संस्कृतग्रन्थाः तथा च महाराष्ट्रभाषोपनिबद्धाः ग्रन्था. देवनागर्याख्यायामेव लिप्यां लिख्यन्ते स्म । राजव्यवहारेऽपि प्रायेणास्यामेव लिप्यामक्रियत व्यवहार. । सकललिपिशेखरीभूताया अप्यस्या देवनागर्याः लघुलेखनानुपकारित्वमवलोक्य लघुलेखनसुलभा 'मोडी' लिपिः **हेमाद्रिणा** संशोध्य प्रसारितेति पुरावृत्तविदो वदन्ति ।

**हेमाद्रिणा** आयुर्वेदरसायनाख्यायां टीकायां अष्टाङ्गहृदयनिर्दिष्टानां विषयाणां वाग्विभवसंयुतं अतिसूक्ष्मं

**हेमाद्रेर्व्याख्याकौशलम् ।**

च कृतं विशदीकरणम् । यत्रयत्र अरुणदत्तादीनां व्याख्याकाराणां व्याख्यानं नास्य सम्मतं तत्रतत्र आत्मसम्मतं भिन्नं मतं सुस्पष्टरूपेण प्रकटितमनेन । क्वचिच्च तेभ्यः सुविस्तृतं वर्तते विवरणं **हेमाद्रेः** । सू अ १।१८, सू. अ. ३।१, सू. अ. ५।२३, सू. अ ६।७५, सू. अ. ६।१०५, सू अ. ६।११२, सू अ ६।१५८, सू. अ. ७।४०, सू. अ. ७।४७–४८, सू. अ. ८।३४, सू. अ. ११।२७, इत्यादिषु स्थलेषु **हेमाद्रि**कृतं व्याख्यानकौशलं अवश्यं दर्शनीयम् ।

तथा च **सङ्ग्रहा**न्तर्गता ये विषयाः **हृदये**ऽतिचारितास्ते सर्वे **हेमाद्रिणा** अध्यायावसाने क्वचिच्च अध्यायमध्येऽपि '**सङ्ग्रहे** तु' इति विलिख्योद्धृताः । तेन च **हेमाद्रि**टीकासमेत**मष्टाङ्गहृदय**मधीयानानां पुनः **सङ्ग्रह**ग्रन्थाध्ययनमनवश्यकं भवति । अथ **हेमाद्रिणा** 'सङ्ग्रहे तु' इति विलिख्य यः सङ्ग्रहान्तर्गतो गद्यपद्यात्मको भागः उद्धृत., तदन्तर्वर्तिनः केचन श्लोकाः **अष्टाङ्गसङ्ग्रहस्य** मुद्रितेषु पुस्तकेषु नोपलभ्यन्ते । एवमेव **अरुणदत्तेन** सङ्ग्रहादुद्धृतान्यपि कानिचिद्वचनानि **अष्टाङ्गसङ्ग्रहस्य** मुद्रितपुस्तकेषु **न** प्राप्यन्ते । तेन च अधिकपाठसंयुत**मष्टाङ्गसङ्ग्रह**पुस्तकं **हेमाद्रे**स्तथा **अरुणदत्तस्य** च समये लब्धप्रचारमासीदित्यनुमीयते ।

**हेमाद्रिणा** आयुर्वेदरसायनाख्याया टीकाया **अष्टाङ्गहृदय**स्याध्यायानुक्रमो नैवानुसृतः । किन्तु भिन्नस्थानान्तर्गतानामपि प्रस्तुतप्रकरणानुसम्बद्धानामध्यायाना विषयानुक्रमेण कृत व्याख्यानम् । तद्यथा—

आदौ सूत्रस्थानीया पञ्चदशाध्याया. मूलग्रन्थानुक्रमेण व्याख्याताः । तदनन्तर कल्पसिद्धिस्थानीयः षष्ठोऽध्यायो व्याख्यात. । तत सूत्रस्थानीयः षोडशः सप्तदशः अष्टादशश्चाध्यायाः व्याख्याता. । तत्पश्चात्कल्पसिद्धिस्थानीयो वमनविरेचनव्यापत्सिद्धिनामा तृतीयोऽध्यायो व्याख्यातः । तत ऊर्ध्वं कल्पसिद्धिस्थानीयो वमनकल्पनामा प्रथमोऽध्यायो व्याख्यात. । अन्ततश्च विरेचनकल्पनाम्नो द्वितीयस्याध्यायस्य कृत व्याख्यानम् । एतदनन्तर पुन. सूत्रस्थानीयैकोनविशतितमस्याध्यायस्य, तदनन्तरं कल्पसिद्धिस्थानीयस्य पञ्चमाध्यायस्य, तत ऊर्ध्वं सूत्रस्थानीयानामुर्वरितानामेकादशाध्यायाना कृत व्याख्यानम् ।

या चेय पद्धतिः सूत्रकल्पसिद्धिस्थानव्याख्यानावसरे स्वीकृता सैव निदानचिकित्सितस्थानव्याख्यानावसरेऽपि अवलम्बिता इति लिखितपुस्तकेभ्यो ज्ञायते । किमर्थं विशिष्टेऽय पद्धतिरङ्गीकृता **हेमाद्रिणा?** इत्याशङ्काया सङ्ग्रहणसौकर्यमत्र हेतुरिति कल्पसिद्धिस्थानीयषष्ठस्याध्यायस्य व्याख्यानारम्भे "कल्पस्थानोक्तोऽपि द्रव्यकल्पोऽत्रैव व्याख्यायते । सुखसङ्ग्रहणार्थम् ।" इति विलिख्य **हेमाद्रि**णैव स्वयं प्रदर्शितः ।

**हेमाद्रि**रय असामान्यः सुविख्यातश्च ग्रन्थनिर्मातेति पूर्वं प्रदर्शितमेव । साम्प्रत तु तत्सम्बद्ध ऐतिहासिक किञ्चिद्वृत्त प्रदर्शयामो वयम् । **चतुर्वर्गचिन्तामणौ** ग्रन्थकर्तृप्रशस्त्यां **हेमाद्रिणा** स्वयमेव वर्णित किञ्चिदात्मवृत्तम् । सा प्रशस्तिस्त्वीदृशी—

"पादप्रान्तविनिःसृतद्युसरितो देवस्य लक्ष्मीपते-
 र्वक्त्राम्भोरुहसम्भवास्त्रिजगतीवन्द्या जयन्ति द्विजाः ।
रागद्वेषमदादिदोषविरहादन्त स्फुरज्ज्योतिषा
 तेषामेव शिरोमणिर्विजयते विश्वा(वत्सा)भिधानो मुनिः ॥ १ ॥

**हेमाद्रेः श्रेष्ठत्वम् ।**

गोत्रे तस्य बभूव निर्मलगुणश्रेणीभृतामग्रणी-
 र्विद्याचारविवेकविक्रमनिधिः श्रीवासुदेवः कृती ।
यत्कीर्त्या धवलीकृते त्रिभुवने श्रीकण्ठवैकुण्ठयोः
 कैलासाचलदुग्धसिन्धुविषये नासीन्निवासो गृहे ॥ २ ॥
नानादानप्रीणितप्राणिलोको लोकालोकप्रान्तविश्रान्तकीर्तिः ।
तस्मादासीन्नामतः कामदेव. पुण्याचारैर्मूर्तिमान् धर्म एव ॥ ३ ॥
विमलगुणमणीनामाकरः कामदेवादभवदतुलतेजा नाम **हेमाद्रिसूरिः** ।
सकलकलिकलङ्कातङ्कपङ्कापहारी सुरसरित इवौघः शार्ङ्गपाणेः पदाब्जात् ॥ ४ ॥
पुराऽपि यत्पुण्यमगण्यरूप श्रीकामदेवेन कृत नु विद्मः ।
येनादरिद्रा जगती विधातु **हेमाद्रि**रप्यस्य गृहेऽवतीर्णः ॥ ५ ॥
चरित तस्य **हेमाद्रे**रद्भुत केन वर्ण्यते ।
उपैति प्रार्थितो यस्य सन्तानः कल्पवृक्षताम् ॥ ६ ॥

---

१ एवमेव सूत्रस्थानीयवमनविरेचनविध्यध्यायव्याख्यानानन्तर "कल्पोक्त शोधनोपयोग्यमध्यायत्रयमत्रैव व्याख्यायते । तत्रादौ वमनविरेचनव्यापत्सिद्धि ।" इति विलिख्य कल्पसिद्धिस्थानोक्ता वमनविरेचनव्यापत्सिद्धिवमनकल्पविरेचनकल्पनामानस्त्रयोऽध्याया **हेमाद्रिणा** यत्तत्रैव व्याख्यातास्तत्रापि प्रकरणानुसम्बद्धविषयसुखसङ्ग्रहणसौकर्यमेव हेतुरिति स्पष्टमेव ।

दृष्ट्वैव भावीनि यशासि यस्य जगत्त्रयीमण्डलपण्डितानि ।
तथाविधं शिल्पमनल्पमिन्दोर्धाता विधातु शिथिलादरोऽभूत् ॥ ७ ॥
असौ विसीमा महिमा हिमाद्रि **हेमाद्रिसूरे**रधरीकरोति ।
दूरादगम्य मृगलोचनाना येनाजड मानसमेव धत्ते ॥ ८ ॥
कलाकलाप सकल बिभर्ति गवा सहस्राणि सदा ददाति ।
जगत्प्रसिद्धद्विजराजभावस्तथापि यस्तारकता दधाति ॥ ९ ॥
विध्वस्ताखिलवैरिणः किल महादेवस्य पृथ्वीपते.
राज्यक्षीरसमुद्रवर्धनशशी **हेमाद्रिसूरिः** पर. ।
येन श्रीकरणाधिपत्यपदवीमासाद्य विद्यामपि
न्यस्ता श्रीश्च सरस्वती च विदुषा गेहेषु देहेषु च ॥ १० ॥
जिज्ञासामिह कुर्वते कतिपये धर्मस्य तेभ्योऽपरे
जानन्त्येव समस्तशास्त्ररचनादस्माभिरेव पुनः ।
नि.शेषैरभिधीयते क्षितितले **हेमाद्रिसूरेः** परो
ज्ञातु वा चरितु क्षमो न हि पुरा भूतो न भावी पुरः ॥ ११ ॥
स सम्प्रति निरालोकलोकशङ्कापनुत्तये ।
विदधाति चतुर्वर्गचिन्तामणिमुदारधीः ॥ १२ ॥
यं(यः) पूर्वं चारुचिन्तामणिममितगुण मन्दराद्रि. समुद्रम्
निर्मथ्य प्रायशोऽय वितरति बहुश प्रार्थनादर्थमेव ।
नम्प्रत्यालोच्यसर्वस्मृतिनिगमपुराणेतिहासाम्बुराशीन्
**हेमाद्रिः** स्पर्धयैव प्रकटयति चतुर्वर्गचिन्तामणि स' ॥ १३ ॥
रुन्धानमन्धानि तमासि दूरे विचिन्त्य चिन्तामणिमेतमेव ।
मनोरथाना परिपूरणाय नान्यत्र सन्त श्रममाचरन्तु ॥ १४ ॥
अनन्यमनसा सोऽय चिन्तामणिरुपासित ।
विदधातु सदाऽशेषमनीषितफलानि वः ॥ १५ ॥
खण्डानि चास्मिन् व्रतदानतीर्थमोक्षाभिधानि क्रमशो भवन्ति ।
यत् पञ्चम तत् परिशेषखण्डमखण्डितो यत्र विभाति धर्मः ॥ १६ ॥
धर्मो जयत्यभ्युदयैकहेतुर्यस्य प्रकारान् पडुदाहरन्ति ।
अवान्तरानेकविशेषयोगादन्येऽपि यस्मिन् बहवो भवन्ति ॥ १७ ॥
अमुष्य भेदानखिलान् प्रवक्तुं वाचस्पतेरप्यसमर्थभावः ।
महानुभावा मुनयोऽपि शास्त्रे तदेकदेश प्रतिपादयन्ति ॥ १८ ॥
तेनेह **हेमाद्रिसुधीः** स्वशास्त्रे साधारणं धर्मविशेषमाह ।
फलाभिलाषानभिलाषभेदात् काम्य च नित्य च यमामनन्ति ॥ १९ ॥" इत्यादि ।

तथाच चतुर्वर्गचिन्तामणिग्रन्थस्योपोद्घाते पण्डित**भरतचन्द्रशिरोमणि**महोदयैर्लिखितम्—

**हेमाद्रिस्तु** देवगिरीस्थयादववशमहाराजाधिराजमहादेवचक्रवर्तिनृपतेः प्राड्विवाकापरपर्यायधर्माधिकरण-

पण्डितः आसीत् । सम्भाव्यते स च पक्षवसुन्धरेन्दुमिते ( ११९५ ) शकनृपतिसंवत्सरे द्वित्रादिवत्सरन्यूनाधिक्येन समजनिष्ट । **हेमाद्रि**स्तु तदैव समुदयं लेभे च । अत्राय जनपरम्परासम्वाद –एतद्ग्रन्थकर्ता बोपदेव इति । बोपदेवस्तु महान् पण्डित पदार्थादर्श-महाभारत-भाष्य-कोष-व्याकरण-भागवत काव्य-भाष्य-बहुविध-वैद्यक-ग्रन्थान् स च विरचितवान्, बोपदेवकृतपदार्थाभिधानकग्रन्थकारिकामनल्पस्थाने उत्थाप्य यथातत्त्वं कारिकाव्याख्या समाधाय तत्प्रामाण्यप्रतिपादनार्थं मूल हेमाद्रौ चिन्त्यमित्यादिभिर्निबन्धे. कमलाकरभट्टाद्यभिहितैरेव प्रतीमश्च ।" इत्यादि ।

तथा चैकस्मिन् स्थाने **हेमाद्रेः** वैदग्ध्यदानशौण्डत्वराज्यकार्यधुरन्धरत्वादयो गुणाः एव वर्णिताः—

"शूराणामवधिर्निधिश्च यशसामेकाश्रयः सम्पदाम्
दातॄणा प्रथम. कुलाकुलगृह वैदग्ध्यभाजा गुरु. ।
धौरेयश्च विपश्चिता सुकृतिनामद्वैतवादास्पदम्
नैवासीन्न च वर्तते न भविता **हेमाद्रिसूरेः** पर ॥ १ ॥" इति ।

एवमेव देवालयनिर्माणविषये विशिष्टा शिल्पपद्धति अनेनैव **हेमाद्रिणा** प्रसूता । यया सुधाचूर्णलेपादिक विनैव शिलासश्लेष सुशको भवति । दक्षिणापथे बहूनि खलु देवकुलानि **हेमाद्रिणा** निर्मितानि 'हेमाडपन्ती'ति प्रसिद्धानि अद्ययावत् समुपलभ्यन्ते ।

बोपदेवेन मुक्ताफलनाम्नि ग्रन्थे **हेमाद्रिः** 'गणकाग्रणी' इति पदेन सम्बोधितः । तद्यथा—

"मूर्तिप्रासादपूजाना **हेमाद्रिर्गणकाग्रणीः** ।
विष्णुभक्त्यङ्गभक्ताना गणयत्युक्तसारथी ॥" इति ।

गणकाग्रणी इति पदस्यार्थस्तु सुगणके देशकोशयोरायव्ययौ लिखत्सु अग्रणीः मुख्यः इत्येव ।

देवगिरीस्थयादवराजसमये **हेमाद्रि**· हस्तिपकाध्यक्ष· आसीदिति शालिवाहनशकस्य ११९४ तमे वर्षे लिखितात्ताम्रपटात् ज्ञायते । तद्यथा—

"तयैतत्प्रसादावाप्तनिखिलराज्यधुरीणता वहति समस्तहस्तिपकाध्यक्षे निजगुणसुभगभावुके समस्तकरणाधिपत्यमङ्गीकुर्वाणे च निर्जित'झाडी'मण्डले मन्त्रिचूडामणौ गुणदानरोहणाद्रौ **हेमाद्रौ**"····इत्यादि ।

हस्तिपकाध्यक्ष इत्यनेन हस्तिसेनानायक. द्योत्यते ।

**निर्णयसिन्धु**कारः **कमलाकरभट्टो**ऽपि प्राधान्येन **हेमाद्रि**मत विचार्यैव निर्णय निर्दिशति, इति तेनैव लिखित स्वग्रन्थारम्भे—

"**हेमाद्रि**माधवमते प्रविचार्य सम्यगालोच्य तत्त्वमथ तीर्थकृता परेषाम् ।
श्रीरामकृष्णतनयः **कमलाकराख्यः** काले यथामति विनिर्णयमातनोति ॥" इति ।

( निर्णयसिन्धौ श्लो. ७ पृ. १ )

**हेमाद्रेः** कालनिर्णये न तादृक्काठिन्यं यादृगितरेषा ग्रन्थकर्तॄणा विषये अनुभूयते । **हेमाद्रि**स्तु देवगिरीस्थमहाराजाधिराजस्य महादेवस्य तथा च तदायते· रामदेवस्य च श्रीकरणाधिपः प्रधानामात्यश्चासीदिति उपरि प्रदर्शितमेव । महाराजस्य महादेवस्य काल खिस्तीय १२६० तमाद्वर्षादारभ्य १२७१ तमवर्षपर्यन्तम् । महाराजस्य रामदेवस्य च कालः खि. १२७१ तमाद्वर्षादारभ्य १३०९ तमवर्षपर्यन्तम् । तेन च **हेमाद्रिसमयः** अन्तरा खिस्तीयं १२६० तम १३०९ तम च वर्षमायाति । अयमेव हेमाद्रिकाल. **सर्वैः** स्वीकृतः । न चैतद्विषये प्रायः कस्यापि भिन्नमतत्वमस्माभिर्दृष्टम् ।

**हेमाद्रेः कालः**

**हेमाद्रेः** पितृवंशमधिकृत्य चतुर्वर्गचिन्तामणिग्रन्थान्तर्गतग्रन्थकर्तृप्रशस्त्या अन्येषु च ग्रन्थेषु समुपलभ्यते अधिकृत वृत्तम् । **हेमाद्रेः** पिता कामदेवः, पितामहो वासुदेवः, प्रपितामहश्च वामनः । शुक्लयजुर्वेदी वत्सगोत्रोत्पन्नो महाराष्ट्रीयोऽय ब्राह्मण आसीत् । वैदिकधर्मावलम्बिनाऽप्यनेन जिनमन्दिरनिर्माणे जिनधर्मीयेभ्यो असकृत् प्रदत्त प्रदापितं च द्रव्यम् । तेन च नान्यधर्मद्वेपलेशोऽप्यस्य इति ज्ञायते । एव अन्यमतसहिष्णुरप्यय **हेमाद्रिः** 'महानुभावैः' अद्विष्यतेति इतिहासविदो ब्रुवते ।

**हेमाद्रेः पितृवंशो धर्मश्च**

**अष्टाङ्गसङ्ग्रहस्य इन्दुना** लिखिता **शशिलेखाख्या** सुप्रसिद्धा व्याख्या वर्तते । इयं च टी रुद्रपारशव महाभागेन सशोधिता मङ्गलोदयम्[1] जनतया त्रिचूरनगरे खिस्तीयत्रयोदशाधिकैकोनविंशतिशततमेऽब्दे प्रकाशिता अस्ति । इमामेव **इन्दुविरचितां शशिलेखानाम्नीं** सङ्ग्रहटीका साम्प्रत पुण्यपत्तनस्थाः **किञ्जवडेकरोपाह्वाः पण्डितरामचन्द्रशास्त्रिणः** सम्मुद्र्य प्रकाशयन्ति । **अष्टाङ्गसङ्ग्रहस्य** एतद्भिन्ना जेज्जटादिभिर्विरचिताः द्वित्राष्टीकाः वर्तन्त इति ज्ञायते ।

**सङ्ग्रहस्य टीकाः टीकाकाराश्च ।**

## ( ७ ) कोऽयं रसरत्नसमुच्चयकर्ता वाग्भटः ? ।

**रसरत्नसमुच्चयाख्यो** वर्तते एक सुप्रसिद्ध आयुर्वेदीयरसग्रन्थ· । कर्ताऽप्यस्य **वाग्भट** एव । किन्तु **अष्टाङ्गहृदय**कर्ता **वाग्भट** एव स तद्भिन्नो वा कश्चिदित्यत्र विदुषा नैकमत्यम् । द्वयोरप्येतयोः पितृनाम[2] **सिंहगुप्त** एव । तेन च अभिन्नावेतौ इति केचिन्मन्यन्ते ।

**रसरत्नसमुच्चयस्य** (पुण्यपत्तनीयानन्दाश्रमप्रकाशितस्य) भूमिकाया **पं० कृष्णरावशर्माणः** लिखन्ति—

"**स एव वाग्भटः** सर्वशास्त्रार्थकुशलः कर्ताऽस्य **रसरत्नसमुच्चयस्य** । एतदेव निश्चीयते पूर्वोक्तग्रन्थत्रयपरिशीलनेन । **वृद्धवाग्भटे**ऽपि **श्रीमद्वाग्भटाचार्यैः** स्वनाम प्रत्यक्षतो नोल्लिखितम् । तद्यथा—'सुतोऽभवत्तस्य च **सिंहगुप्त**स्तस्याप्यह सिन्धुषु लब्धजन्मा ।' इति । **अष्टाङ्गहृदया**परपर्याये **लघुवाग्भटे** तु कर्तृनामधामादि किञ्चिदपि न दृश्यते । तथाऽप्यष्टाङ्गहृदयं **श्रीमद्वाग्भटेन** रचितमिति सर्वैः परम्परया श्रुतमस्ति । **हेमाद्रि**रपीत्थमेव वक्ति स्म । तद्यथा—'आयुर्वेद व्याचिख्यासु **श्रीवाग्भटाचार्यः** प्रथमश्लोकेनेष्टदेवता नमस्करोति-रागादिरोगानिति ।'

**पं० कृष्णरावशर्मणां मतम् ।**

तृतीयग्रन्थेऽस्मिन् **रसरत्नसमुच्चयेऽष्टाङ्गसङ्ग्रहवत् श्रीमद्वाग्भटाचार्यैः** स्वनामधेय प्रत्यक्षतो नोच्चारितम् । तद्यथा—रसरूपरत्नान्युच्चीयन्ते सङ्गृह्यन्ते यस्मिन् । एतादृश· सङ्ग्रहो नाम रसचिकित्सासङ्ग्रहोऽष्टाङ्गसङ्ग्रहवन्नानारसतन्त्राण्यालोच्य **सिंहगुप्तस्य** सूनुना क्रियते । अत्र स्वनामप्रकाशने किञ्चिचातुर्य लीनता च दृश्येते । **सिंहगुप्तस्य** सूनुनेत्यस्मिन् पितामहपौत्रयोर्वाग्भटयोर्भ्रान्तिर्न जायते । अपिच, स्वनामापेक्षया पितृचरणाभिधानेन स्वप्रकाशन प्रगल्भतरम् । अपर च । वैद्यकुलतिलकोऽन्य· **सिंहगुप्तो** वैद्यशास्त्रे प्रसिद्ध इति केनापि न श्रूयते । अन्यच्च । कश्चित् **वाग्भटबन्धु**र्वैद्यशास्त्रे प्रसिद्ध इति न श्रूयते । किंबहुना—

'आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयो. ॥'

इति स्मृतेश्च । पितामहपौत्रभ्रमनिरासेन पितृचरणप्रकाशनद्वारा स्वनामाविष्करणायैव **सिंहगुप्तस्य सूनु-**

---

१ Mangalodayam Company Ltd Trichur

२ **'सूनुना सिंहगुप्तस्य रसरत्नसमुच्चय. ।' इति रसरत्नसमुच्चये (अ० १।९) ।**

रिति पद सर्वत्रैवोपयुज्यते । .. पुनश्च, हस्तलिखितजीर्णपुस्तकानुसारेणेत्थमेव ज्ञायते । तद्यथा—'इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चयः सम्पूर्णः ।' इत्यनेन परम्परागतलोकसमाख्यया प्रस्तुतग्रन्थस्थस्वनामप्रकटीकरणेन च, श्रीमद्वाग्भटाचार्य एवास्य रसरत्नसमुच्चयस्य कर्तेति प्रसक्तिरुत्पद्यते । " इति ।

एतदेव श्रीरुद्रपारशवा सटीकाष्टाङ्गसङ्ग्रहप्रस्तावनायां प्रतिपादयन्ति । ते लिखन्ति—

**श्री॰ रुद्रपारशवानां मतम् ।**

"तानि संहितारत्नान्यपि 'भिन्नरुचिर्हि लोकः' इति न्यायेन तत्तदुचितविपयप्रचुरावलम्बीन्यासन्निति एकैकतन्त्रस्य निखिलरुक्प्रतीकारानौपयिकत्वात् तन्त्रान्तराभियोगे पुरुपायुषसङ्ख्ययाच ससीदतामेव लोकाना यातेषु केषुचन कालेषु अतिविप्रकीर्णेभ्यस्तेभ्यः सारतरसङ्ग्रहग्रथनार्थमङ्गीकृतावतार इव साक्षात् स्वयम्भूराविरभूदस्माकमाचार्यवाग्भट इति । द्वादशसाहस्र्यपरपर्यायः श्रीमदष्टाङ्गसङ्ग्रहः ततोऽपि सारतरोऽष्टाङ्गहृदयाख्यग्रन्थः, रसशास्त्रसर्वस्वभूतो रसरत्नसमुच्चयश्च, यदीयविपणाविलासे पर साक्षिणः ।" इति ।

**डॉ रॉयमहाभागानां मतम् ।**

डॉ पी. सी रॉयमहाभागास्तु History of Hindu Chemistry नाम्नि ग्रन्थे **रसरत्नसमुच्चयकारो वाग्भटः** अष्टाङ्गहृदयकर्तुर्वाग्भटाद्भिन्न एव इति प्रतिपादयन्ति ।

अस्मन्मतेऽपि रसरत्नसमुच्चयकारो **वाग्भटः** अष्टाङ्गहृदयनिर्मातुर्**वाग्भटात्** भिन्न एव । अस्मन्मतसमर्थकानि कानिचित्प्रमाणानि अधः प्रदर्श्यन्ते ।

**अस्माकं मतम् ।**

**वाग्भट**विरचितेऽ**ष्टाङ्गसङ्ग्रहे** तथा **चाष्टाङ्गहृदये रसरत्नसमुच्चयो** नोल्लिखितः । **सङ्ग्रहहृदय**व्याख्यातृभिरिन्दुजेज्जटादिभिरपि अस्योल्लेखो न कृत । **अष्टाङ्गहृदयरसरत्नसमुच्चययोः** रचनाविपयेऽपि दृश्यते भूयान् भेद । **अष्टाङ्गहृदये** पौनरुक्त्यापुष्टार्थत्वादितन्त्रदोषाणामभावो अर्थगौरवपदलालित्यादिगुणाना च सत्त्व अवलोक्यते । **रसरत्नसमुच्चये** तु तद्वैपरीत्यम् । **रसरत्नसमुच्चये** समुपलभ्यन्ते केचिदपाणिनीयाः प्रयोगा' न च तत्तथा **अष्टाङ्गहृदये** । एतत्सर्वं भिन्नकर्तृकत्वावेदकमेव ग्रन्थयोरेतयो' ।

खिस्तीयषष्ठशताब्देः पूर्वं रसक्रियायाः भारते नासीत् बहुलः प्रचारः । श्रीम**द्विद्यारण्य**कृते **सर्वदर्शनसङ्ग्रहे रसेश्वरदर्शनं** नाम वर्तत एक दर्शनम् । यदि चैतन्मतमभविष्यत् **श्रीमच्छङ्कराचार्य**काले लब्धप्रसरम्, **भगवद्भिराचार्यै**रप्यवश्यमेव तत्खण्डनमकरिष्यत् । एतेन च **आचार्य**कालपर्यन्त ( खिस्तीयाष्टमशतकपर्यन्त ) नासीदेतन्मत बहु प्रसृतमिति सिध्यति ।

अपरं च **अष्टाङ्गसङ्ग्रहहृदययोः** येषा रोगाणा चिकित्सापद्धति **वाग्भटेन** वर्णिता, तेभ्योऽप्यधिकाना केषाञ्चन रोगाणा रक्तवात-शीतवात-सोमरोगादीना, चिकित्सा **रसरत्नसमुच्चये** प्रदर्शिता । **रसरत्नसमुच्चयः** चिकित्साप्रायः ग्रन्थः । यदि चैन **हृदयकर्ता वाग्भट** एवारचयिष्यत् रोगानुक्रमोऽपि स **हृदयस्थ** एवाग्रहीष्यत् केवलमौषधानि रसतन्त्रेभ्य. समादेक्ष्यत् । किन्तु **रसरत्नसमुच्चये** रोगानुक्रमोऽपि **हृदय**तो भिन्न एव । तेन च **हृदयकर्तुः** भिन्न एव स इति दृश्यते ।

**रसरत्नसमुच्चये** कानिचिद्रोगनामान्यपि अर्वाचीनानि प्रयुक्तानि । यो व्याधिः **वाग्भटेन** पूर्वाचार्यैश्च श्वित्रकिलासादिनामभिर्वर्णितः स श्वेतकुष्ठमिति **रसरत्नसमुच्चये** वर्णितः । **वाग्भटेन** कुष्ठप्रकरणे सप्त महाकुष्ठानि एकादश च क्षुद्रकुष्ठानि वर्णितानि । **रसरत्नसमुच्चये** तु शवगन्ध्यादीनि कानिचित्ततोऽधिकानि प्रदर्शितानि । वातव्याधिषु मुख्यो अपतानकनामा व्याधिः **रसरत्नसमुच्चये** अनुक्तः ।

**अष्टाङ्गसङ्ग्रहे** तथा **चाष्टाङ्गहृदये** गौरीपाषाणाहिफेनयो (Arsenic, opium) उल्लेखो नोपलभ्यते। बहोः कालादनन्तर सशोधितयोरेतयोरौषधिद्रव्ययो **रसरत्नसमुच्चये** वर्णनमुपलभ्यते। खिस्तीयषष्ठशतकाद्युत्तरकालीनेषु ग्रन्थेषु अहिफेनस्योल्लेखो वर्तते। **रसरत्नसमुच्चये** यस्मात् तदुल्लेख तस्मादेव **रसरत्नसमुच्चयकालो** खिस्तीयसप्तमशतकादर्वाचीन इति सिध्यति।

एवं खिस्तीयचतुर्थशतके सम्भूताद्वाग्भटात् भिन्न एव **रसरत्नसमुच्चयकारो वाग्भटः** इति स्पष्टं भवति।

**रसरत्नसमुच्चयकारो वाग्भटः** खिस्तीयाष्टमशतकादनन्तरं समभवदिति निश्चेतु शक्यते। **गोविन्दपूज्यपादकृताद्रसहृदयात्** काश्चन आर्या **रसरत्नसमुच्चये** समुद्धृता इति **रसरत्नसमुच्चयकारः** स्वयमेव प्रथमेऽध्याये निवेदयति। एते **गोविन्दपूज्यपादाः** श्रीमता **शङ्कराचार्याणां** गुरवः। **श्रीमच्छङ्कराचार्य**समयस्तु खिस्तीयमष्टम शतकम्। तेन **रसरत्नसमुच्चयकारस्य वाग्भटस्य** कालः खिस्तीयादष्टमशतकादनन्तर समायाति।

**रसरत्नसमुच्चयकर्तुर्वाग्भटस्य कालः।**

**श्री. त्र्यम्बकगुरुनाथकाळेमहाभागाः रसहृदयतन्त्रे** भूमिकाया लिखन्ति—

"सोऽय **गोविन्दभिक्षुः रसरत्नसमुच्चयकर्तुर्वाग्भटात्** प्राचीनतर एव, यतो **रसरत्नसमुच्चये वाग्भटेन** रसहृदयात् 'मूर्च्छित्वा हरति रुज' इत्यारभ्य 'हरगौरीसृष्टिसयोगात्' इत्यन्तं यावत् सप्तविंशतिरार्या समुद्धृता। **रसरत्नसमुच्चयकर्ता वाग्भट**स्तु खिस्तत्रयोदशशताब्द्या बभूवेति प्रतीयते, तत्कर्तृकेन चर्पटीसिद्दणाद्युल्लेखेन। अय च गोविन्दभिक्षुः **गोविन्दभगवत्पादा** इति प्रसिद्ध **आद्यशङ्कराचार्यगुरु**रेवेत्युपरि प्रतिपादितमेव। **श्रीशङ्कराचार्य**समयस्तु शककालस्य दशोत्तरसप्तशतात् द्विचत्वारिंशत्युत्तरसप्तशतपर्यन्तमितीतिहासविदा सुप्रसिद्धमेव।" इति।

**त्र्यं गु काळेमहाभागानां मतम्।**

**श्री. गणनाथसेनमहाभागाः** अपि एवं लिखन्ति—

"**रसरत्नसमुच्चयकारो वाग्भटस्तु** बहुपरतनः कश्चन भिन्न एवाचार्यस्तुल्यनामा। यतः समुद्रवत् गम्भीरे **अष्टाङ्गसङ्ग्रहे**ऽपि न लभ्यते रसतन्त्रोक्तविषयाणा रससंस्कारादीना गन्धोऽपि, लभ्यन्ते च **समुच्चये** प्राचीनवाग्भटापेक्षया भृशमवरजाना **सोमदेवगोविन्दभगवत्पादादीनां** ग्रन्थेभ्यः पाठोद्धाराः। तत्र **सोमदेव**ग्रन्थात् समग्र रसपरिभाषाप्रकरण गृहीत **रसरत्नसमुच्चये** (र. र स. अ. ९)। **गोविन्दभगवत्पादकृताद्रसहृदयतन्त्रात्तु** गृहीतानि—'सुकृतफल तावदिदम्' इत्यादीनि 'भ्रूयुगमध्यगत यत्' इत्यादीनि च कानिचित् पद्यानि। **गोविन्दभगवत्पादाश्च भगवतः शङ्कराचार्यस्य** गुरव इति प्रसिद्धा एव नान्ये, इति सुप्रतिपादित विद्वद्वरैः **श्रीमत्त्र्यम्बकगुरुनाथकाळे**इत्येतैः रसहृदयोपोद्धाते। न च शक्यं—कथं तर्हि 'सूनुना सिंहगुप्तस्ये'ति **रसरत्नसमुच्चयादौ** परिचयः? इति, यतो बहुषु हस्तलिखितग्रन्थेषु 'सूनुना सद्गुप्तस्ये'त्येव पाठः साधीयान् दृश्यते। तेन 'सिंहगुप्तस्ये'ति पाठः कस्यचित् पण्डितम्मन्यस्य सशोधनप्रसूतो मन्तव्यः। असौ च रसतान्त्रिको **वाग्भटः** खिस्तीयत्रयोदशशतके प्रादुरासीदिति डॉ. प्रफुल्लचन्द्ररायस्य मत युक्तियुक्तमेव।" इति।

**श्री. गणनाथसेनमहाभागानां मतम्।**

अष्टाङ्गहृदयकर्तुर्भिन्नाः **वाग्भट**नामानः अष्टौ ग्रन्थकारास्तन्निर्मिता ग्रन्थाश्च अधः प्रदर्श्यन्ते। सर्वेऽप्येते **हृदयकर्तुर्वाग्भटाद**र्वाचीना एव वर्तन्ते।

**१ वाग्भटः**—मालवेन्द्रस्यामात्यो देवेश्वरस्य पिता, 'कविकल्पलता'कारः।

**२ वाग्भटः**—नेमिकुमारसूनुः, जिनधर्मीयः, 'छन्दोनुशासनकाव्यानुशासना'दीनां ग्रन्थाना कर्ता।

३ **वाग्भटः**—'रसरत्नसमुच्चय'कर्ता ।

४ **वाग्भटः**—'वाग्भटकोश'कर्ता ।

५ **वाग्भटः**—सोमपुत्रः, जिनधर्मीयः, जयसिंहस्यामात्यः, 'वाग्भटालङ्कारशृङ्गारतिलका'दीनां कर्ता ।

६ **वाग्भटः**—'नेमिनिर्वाणकाव्य'कर्ता ।

७ **वाग्भटः**—'लघुजातक'कर्ता ।

८ **वाग्भटः**—'प्राकृतपिङ्गलसूत्र'कर्ता ।

**उपसंहारः ।**

एवमस्मिन् **वाग्भटविमर्शे वाग्भटः**, तस्य कालः, तस्य धर्ममतम्, तेन निर्मिताः ग्रन्थाः, तट्टीकाकाराः, इत्यादिषु विषयेषु यावद्वृत्तमेकत्रीकर्तुमासीत् शक्यं तावदखिलं महता समुद्यमेन स्थानस्थानेभ्यः तत्तद्ग्रन्थेभ्यश्च समाहृत्य सङ्ग्रहीतुं विहितोऽस्माभिर्यत्नः । **वाग्भटविमर्शे** विचारितेषु प्रायः सर्वेषु विषयेषु तेषां तेषां विदुषां मतानि प्रथमं प्रदर्श्य अन्ततः अस्मत्सम्मतं मतमपि यावदुपलब्धप्रमाणप्रदर्शनपुरस्सरं प्रकटितमस्माभिः ।

एवं यद्यपि निपुणं विचार्यैवास्माभिर्लिखितोऽयं **वाग्भटविमर्शः** तथापि 'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः' इत्युक्तया रीत्या क्वचिदस्मत्प्रमादाद्भ्रमश्चेत् संशोधयन्तु विद्वांसः इति सविनयं प्रार्थयामो वयम् । इति शम् ।

अकोला-वऱ्हाड.
ज्येष्ठपौर्णिमा गुरुवासर
शालीवाहनशके १८६१
ता १ जून १९३९ इ

सुधियां विधेयः
**भिषगाचार्यः**
**हरिशास्त्री पराडकर वैद्य.**

**समाप्तोऽयं वाग्भटविमर्शः ।**

# सूचिपत्रं प्रथमम् ।



## अष्टाङ्गहृदये वाग्भटेन निर्दिष्टानां ग्रन्थानां ग्रन्थकाराणां मुनीनां चाकारादिक्रमेण सूचिपत्रम् ।

नामानि । स्थाननामान्यध्यायश्लोकाङ्काश्च ।





# सूचिपत्रं द्वितीयम् ।

## अष्टाङ्गहृदयसंहितायां वाग्भटेनोपनिबद्धानां वृत्तानामकारादिक्रमेण सूचिपत्रम् ।

# सूचिपत्रं तृतीयम् ।



## सर्वाङ्गसुन्दरायामरुणदत्तेन समुल्लिखितानां ग्रन्थानां ग्रन्थकाराणां चाकारादिक्रमेण सूचिपत्रम् ।

नामानि । पृष्ठाङ्का ।

# सूचिपत्रं चतुर्थम् ।

## आयुर्वेदरसायने हेमाद्रिणा समुल्लिखितानां ग्रन्थानां ग्रन्थकाराणां चाकारादिक्रमेण सूचिपत्रम् ।

# सूचिपत्रं पञ्चमम् ।

## टिप्पणीषु समुल्लिखितानां ग्रन्थानां ग्रन्थकाराणां चाकारादिक्रमेण सूचिपत्रम् ।

# सूचिपत्रं षष्ठम् ।



## टीकाटिप्पणीषूपयोजितानां संक्षिप्तचिन्हानां तज्ज्ञेयानां नाम्नां चाकारादिक्रमेण सूचिपत्रम् ।

अ.—अध्यायः ।
अ.—हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
अमरः—अमरकोशः ।
अरुण —अरुणदत्तः ।
आ —हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
आ० र०—आयुर्वेदरसायनम् ।
इ —इन्द्रियस्थानम् ।
इ —हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
ई —हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
उ.—हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
उ.—उत्तरस्थानम् ।
ऊ —हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
क —कल्पस्थानम् ।
क —हस्तलिखितपुस्तकसंज्ञा[1] ।
ख —हस्तलिखितपुस्तकसंज्ञा[1] ।
ग —हस्तलिखितपुस्तकसंज्ञा[1] ।
गदनि —गदनिग्रहः ।
घ.—हस्तलिखितपुस्तकसंज्ञा[1] ।
ङ.—हस्तलिखितपुस्तकसंज्ञा[1] ।
च —हस्तलिखितपुस्तकसंज्ञा[1] ।
च.—चरकः ।
चक्र —चक्रपाणिदत्तः ।
चं. / चन्द्र. / चन्द्रः —चन्द्रनन्दनः ।
च. द्व.—चरकद्वयम् ।
च. मू.—चरकमूलम् ।
चि —चिकित्सितस्थानम् ।
छ —हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
ज —हस्तलिखितपुस्तकसंज्ञा[1] ।
झ.—हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
ञ.—हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
ट.—हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
ठ —हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
ड.—हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
ढ.—हस्तलिखितपुस्तकसंज्ञा[1] ।
ण.—हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
त —हस्तलिखितपुस्तकसंज्ञा[1] ।
तो / तोडरः —तोडरमल्लः ।
थ.—हस्तलिखितपुस्तकसंज्ञा[1] ।
द —हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
ध.—हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
ध नि.—धन्वन्तरीयनिघण्टुः ।
न —हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
नि.—निदानस्थानम् ।
नि र.—निघण्टरत्नाकरः ।
प.—हस्तलिखितपुस्तकसञ्ज्ञा[1] ।
प० चं०—पदार्थचन्द्रिका ।
पात यो सू —पातञ्जलयोगसूत्रम् ।
फ.—हस्तलिखितपुस्तकसंज्ञा[1] ।
बृ स.—बृहत्संहिता ।
भा. प्र.—भावप्रकाशः ।
भे. सं.—भेडसंहिता ।
म —मध्यमखण्डम् ।
मदन नि.—मदनपालनिघण्टुः ।
मा. नि —माधवनिदानम् ।
य.—हस्तलिखितपुस्तकसंज्ञा[1] ।

१ कृपया सप्तम सूचीपत्रमवलोकनीयम् ।

योग. } —योगरत्नाकरः ।
यो. र. }

रा नि —राजनिघण्टुः ।

वङ्ग.—वङ्गसेनः ।

वा. कौ —वाग्भटार्थकौमुदी ।

वाच.— वाचस्पतिः ।

वि.—विमानस्थानम् ।

वृं.—वृन्दः ।

वृत्त. र.—वृत्तरत्नाकरः ।

शा.—शारीरस्थानम् ।

शा. } —शार्ङ्गधरसंहिता ।
शा. स. }

स०—सर्वाङ्गसुन्दरा ।

स. च.—सटीकचरकः ।

स. चि. क.—सटीकचिकित्साकलिका ।

स. सं.—सटीकसङ्ग्रहः ।

स सु.—सटीकसुश्रुतः ।

स —सङ्ग्रहः, अष्टाङ्गसङ्ग्रहः ।

सं. द्व } —सङ्ग्रहद्वयम् ।
स. २ }

स. मू —सङ्ग्रहमूलम् ।

सां. का.—साङ्ख्यकारिका ।

सि.—सिद्धिस्थानम् ।

सि. कौ —सिद्धान्तकौमुदी ।

सि. यो.—सिद्धयोगः ।

सि सा.—सिद्धसारः ।

सु —सुश्रुतसंहिता ।

सु टी.—सुश्रुतटीका ।

सू.—सूत्रस्थानम् ।

हृ.—हृदयम्, अष्टाङ्गहृदयम् ।

हे —हेमाद्रिः ।



# सूचिपत्रं सप्तमम्।

## अष्टाङ्गहृदयस्य तथा तट्टीकाद्वयस्य संशोधनार्थं समानीतानां हस्तलिखितपुस्तकानां अकारादिसंज्ञादर्शकं संक्षिप्तवृत्तदर्शकं च सूचिपत्रम्।

| क्रमाङ्क। | संज्ञा। | हस्तलिखितपुस्तकविषयक संक्षिप्त वृत्तम्। |
|---|---|---|
| १ | अ. | **मूलमात्रम्**। सूत्रस्थानशारीरस्थानचिकित्सितस्थानकल्पसिद्धिस्थानात्मकम्। सूत्रस्थानस्य पृष्ठानि १–१४०, शारीरस्थानस्य पृ १–२६, चिकित्सितस्थानस्य पृ १–९८, कल्पसिद्धिस्थानस्य पृ. १–१५। नासिकवासिना **कै० भिषग्वर 'गणेशशास्त्री तर्टे'** महाभागानामिदं पुस्तक तन्नप्तृणा **'गोपाळशास्त्री तर्टे वैद्य'** महोदयाना सकाशात् उपलब्धम्। चिकित्सितस्थानस्यान्ते अय लेखः—"इति श्रीवैद्यपतिसिंहगुप्तसूनोर्वाग्भटविरचिताया अष्टाङ्गहृदयसहिताया चिकित्सास्थाने वातशोणितचिकित्सित नाम द्वाविंशतितमोऽध्यायः। **शके १७७१** सौम्यनामसवत्सरे लिखितम्।" इति। |
| २ | आ. | **मूलमात्रम्**। सूत्रस्थानकल्पसिद्धिस्थानात्मकम्। सूत्रस्थानस्य पृष्ठानि १–४६, कल्पसिद्धिस्थानस्य पृ १–१२। नासिकवासिना **'गणेश वासुदेव निरन्तर वैद्य'** महाभागानामिदं पुस्तकम्। सूत्रस्थानस्यान्ते अय लेखः—"इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गहृदयसहिताया सूत्रस्थान प्रथम समाप्तम्। **शके १५९२** साधारणनामसवत्सरान्तर्गताश्विनकृष्णप्रतिपदि समाप्तमिद स्थान बापूदेवेन लिखित स्वार्थं परार्थं च। बापूदेवस्येदं पुस्तकम्।" इति। |
| ३ | इ. | **मूलमात्रम्**। सूत्रस्थानस्य पञ्चदशमध्यायमारभ्य उत्तरस्थानान्तम्। पृष्ठानि ३८–३१०। बागलकोटनिवासिना **'वैद्य मध्वाचार्य बुर्लि'** महाभागानामिद पुस्तकम्। पुस्तकस्यान्ते अयं लेख —"इति श्रीवैद्यपतिसिहगुप्तसूनोर्वाग्भटस्य कृतायामष्टाङ्गहृदयसहिताया षष्ठमुत्तरस्थानं समाप्तम्। **संवत् १९१५** ना **शा. १७८०** ना भाद्रपद शुक्ल ६ भृगुवासरे। लि० व्यास सोमेश्वर शीवलाल खभातवास्तव्य ली० बडोदरामध्ये ठे० लिमडीचौकमा कमानपोलमध्ये। श्रीरस्तु।" इति। |
| ४ | ई. | **मूलमात्रम्**। सम्पूर्ण षट्स्थानात्मकम्। पृष्ठानि १–२३६। पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येद पुस्तकम्। पुस्तकक्रमाङ्कः ११९/१८९१-९५। उत्तरस्थानस्यान्ते अयं लेख·—"इति श्रीवैद्यपतिसिहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गहृदयसहिताया उत्तरस्थान सम्पूर्णम्। वाग्भटः सम्पूर्णः। शुभमस्तु। **संवत् १५६९** समये फाल्गुन" इति। |
| ५ | उ. | **मूलमात्रम्**। उत्तरस्थानात्मकम्। नासिकवासिना **कै० 'गणेशशास्त्री तर्टे'** महाभागानामिद पुस्तकम्। पृष्ठानि १–१६६। पुस्तकस्यान्ते अय लेखः—"इत्युत्तरे चत्वारिंशोऽध्यायः। श्रीवाग्भटग्रन्थसम्पूर्णः। अन्तापुरग्रामे श्रीकोटेश्वरसन्निधौ श्रावणमासे शुक्लपक्षे याम्यायने 'वर्षा- |

| क्रमाङ्कः। | संज्ञा। | हस्तलिखितपुस्तकविषयकं संक्षिप्तं वृत्तम्। |
|---|---|---|
| | | ऋतौ बुधवासरे अनुराधानक्षत्रे तद्दिने श्लेषेणा(?)त्मपठनार्थं लिखितं। श्रीमद्भार्गव वंश······ ब्राजीवैद्यस्याय ग्रन्थ। शुभमस्तु सर्वजगतः। शुभमस्तु। श्रीराक्षसनामसंवत्सरे या पुस्तक लिखित।" इति। अत्र संवत्सरदर्शकः संवदङ्कः शकाङ्को वा न दृश्यते। |
| ६ | ऊ. | **मूलमात्रम्।** शारीरस्थानस्य द्वितीयाध्यायादारभ्य किञ्चिदूनषष्ठाध्यायपर्यन्तम्। पृष्ठानि १००–१२२। तथा उत्तरस्थानस्यैकादशाध्यायादारभ्य त्रयोविंशत्यध्यायपर्यन्तम्। पृष्ठानि २७१–३०५। पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येदं पुस्तकम्। पुस्तकक्रमाङ्कः $\frac{३६३}{१८८२-८३}$। अस्य पुस्तकस्यान्तिमपृष्ठानामभावात् लेखनकालदर्शको लेखो न दृश्यते। |
| ७ | क. | **मूलं हेमाद्रिटीकासहितम्।** सूत्रस्थानकल्पसिद्धिस्थानात्मकम्। पृष्ठानि १–२१७। नासिकवासिना **कै० 'गणेशशास्त्री तर्टे'** महाभागानामिदं पुस्तकम्। पुस्तकस्यान्ते अयं लेखः— "इति हेमाद्रिटीकायामायुर्वेदरसायने। क्षाराग्निकर्मजाध्याय सामस्त्येन निरूपितः॥ इति सूत्रस्थानं समाप्तं। ६२५॥" इति। अस्य पुस्तकस्यान्ते लेखनकालसूचको लेखो न दृश्यते। |
| ८ | ख. | **मूलं हेमाद्रिटीकासंयुतम्।** सूत्रस्थानस्य आदितः एकोनविंशतितमाध्यायपर्यन्तम्। पृष्ठानि १–६१८। तथा कल्पसिद्धिस्थानस्य केवलं पष्ठोऽध्यायः। पृ १–१४। मुम्बापुरीस्थाना **'वैद्यवर्य गोपाळशास्त्री गोडबोले'** महाभागाना पुस्तकमिदम्। अस्य पुस्तकस्यापूर्णत्वात् लेखनकालो न दृश्यते। |
| ९ | ग. | **मूलं हेमाद्रिटीकायुतम्।** सूत्रस्थानकल्पसिद्धिस्थानात्मकम्। पृष्ठानि १–२३७। मुम्बापुरीस्थाना आयुर्वेदमार्तण्डाना **'यादवजी त्रिकमजी आचार्य'** महोदयानामिदं पुस्तकम्। ग्रन्थस्यान्ते अयं लेखः—**"संवत् १७९०** माघ शुक्ल १ गुरौ लिखितं खेन। ग्रन्थसंख्या ८०००। हेमाद्रिटीकापुस्तकं हृदयरामेण लिखितं स्वार्थं परार्थं च।" इति। |
| १० | घ. | **मूलं हेमाद्रिटीकासहितम्।** सूत्रस्थानकल्पसिद्धिस्थानात्मकम्। अस्मत्सङ्ग्रहालयस्थमिदं पुस्तकम्। बहुजीर्णपत्रकं पुरातनं च। अस्य पुस्तकस्यान्ते लेखनकालो न दृश्यते। |
| ११ | ङ. | **मूलं हेमाद्रिटीकासहितम्।** सूत्रस्थानस्य मूलसहितायाः सर्वे अध्यायाः। आदितस्तृतीयाध्यायपर्यन्तमेव हेमाद्रिटीका। पृष्ठानि १–१६०। पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येदं पुस्तकम्। पुस्तकक्रमाङ्कः $\frac{२१९}{A१८८३-८४}$। अस्मिन् पुस्तके यत्रयत्र खकारो भवितुं युक्तस्तत्रतत्र षकारः, यत्रयत्र च षकारोऽपेक्षितस्तत्रतत्र च खकारो लिखितो दृश्यते। पुस्तकस्यापूर्णत्वात् लेखनकालो न दृश्यते, किन्तु बहुपुरातनमिदं पुस्तकम्। |
| १२ | च. | **मूलं हेमाद्रिटीकासहितम्।** कल्पसिद्धिस्थानस्य तृतीयाध्यायादारभ्य सूत्रस्थानस्य २६ तमाध्यायपर्यन्तम्। पृष्ठानि २३२–२७८। पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येदं पुस्तकम्। पुस्तकक्रमाङ्कः $\frac{३६६}{१८८२-८३}$। अस्मिन् पुस्तकेऽपि यत्रयत्र खकारो भवितुं युक्तस्तत्रतत्र षकारः, यत्रयत्र च षकारोऽपेक्षितस्तत्रतत्र च खकारो लिखितो दृश्यते। तथा च यत्रयत्र यकारोऽपेक्षितस्तत्रतत्र जकारो लिखितो दृश्यते। पुस्तकस्यास्य पृष्ठमात्रालिपिः। पुस्तकस्यापूर्णत्वात् लेखनकालो न दृश्यते। |

| क्रमाङ्क । | संज्ञा । | हस्तलिखितपुस्तकविषयकं संक्षिप्त वृत्तम् । |
|---|---|---|
| १३ | छ. | **हेमाद्रिटीका** । सूत्रस्थानस्य एकादशद्वादशाध्यायात्मका । पृष्ठानि १–१४ । पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येदं पुस्तकम् । पुस्तकक्रमाङ्क. २२०/A १८८३-८४ । पुस्तकान्ते लेखनकालो न विद्यते । |
| १४ | ज. | **मूलं हेमाद्रिटीकायुतम्** । सूत्रस्थानस्य आदितः पञ्चमाध्यायपर्यन्तम् । पृष्ठानि १–८७ । पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येद पुस्तकम् । पुस्तकक्रमाङ्कः २१८/१८८३-८४ । अस्य पुस्तकस्यापूर्णत्वात् ग्रन्थलेखनकालो नोपलभ्यते । |
| १५ | झ. | **मूलं हेमाद्रिटीकासहितम्** । सूत्रस्थानस्यादित· पञ्चदशाध्यायपर्यन्तम् । करवीरनिवासिनां **'वैद्यवर्य हणमन्तशास्त्री पाध्ये'**महोदयानामिद पुस्तक आकोलावासि **आयुर्वेदतीर्थ माधवशास्त्री पण्डित**द्वारा प्राप्तम् । पुस्तकस्यापूर्णत्वात् लेखनकालो न दृश्यते । |
| १६ | ञ. | **मूलं हेमाद्रिटीकासहितम्** । सूत्रस्थानकल्पसिद्धिस्थानात्मकम् । पृष्ठानि १–२०५ । पुण्यपत्तनस्थस्य **'आनन्दाश्रम'**स्येद पुस्तकम् । पुस्तकक्रमाङ्क. ८२३० । पुस्तकस्यान्ते अय लेखः—"**शके १७६१** विकारीनामसवत्सरे उदगयने फाल्गुने मासे कृष्णपक्षे सप्तम्या तिथौ सौम्यवासरे मूलनक्षत्रे तद्दिने इद पुस्तक जोगळेकरोपनामगणेशभट्टात्मजकाशीनाथेन लिखित स्वार्थ परोपकारार्थ च । श्रीवाईक्षेत्रे पुस्तक समाप्तम् । श्रीकृष्णाभागीरथ्यै नमः । 'भग्नपृष्ठकटिग्रीव. स्तब्धदृष्टिरधोमुखम् । कष्टेन लिखित ग्रन्थं यत्नेन परिपालयेत् ॥' श्रीयोगेश्वर्यै नमः । 'तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात् । मूर्खहस्ते न दातव्य एव वदति पुस्तकम् ॥" इति । |
| १७ | ट. | **अरुणदत्तटीका** । सम्पूर्णा षट्स्थानात्मका । सूत्रस्थानस्य पृष्ठानि १–१९९, शारीरस्थानस्य पृ १–६९, निदानस्थानस्य पृ १–८१; चिकित्सास्थानस्य पृ १–१०४, कल्पसिद्धिस्थानस्य पृ १–१६; उत्तरस्थानस्य पृ १–१०९, सागलीनिवासिना **'श्रीपाददत्तात्रयशास्त्रीदेवधर'** महोदयानामिदं पुस्तकम् । सूत्रस्थानस्यान्ते अय लेखः—"यतः नवात्सहस्रनवशताधिक च मिति सूत्रित । ९९०० । **संवत् १८५५** कार्तिकमासे शुभे शुक्के पक्षे सप्तम्याया बुधवासरान्यु(ग्यु)ताया समाप्तम् । श्री **शके १७२०** समाप्तिमगमत् ।" इति । |
| १८ | ठ. | **अरुणदत्तटीका** । सूत्रस्थानात्मका । पृष्ठानि २–३४१ । पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येद पुस्तकम् । पुस्तकक्रमाङ्कः ४२५/१८८४-८६ । पुस्तकस्यान्ते अयं लेख.—"सूत्रस्थान समाप्तमिति । श्रीरस्तु कल्याणमस्तु । भट्टवेणीमाधवस्येद पुस्तकम् । पुसतक मीश्रजी नारायणकीच्छा मोललीई मथुराजीमे । ग्रथ ८००० ।" इति । अत्र लेखनकालो न वर्तते । |
| १९ | ड. | **अरुणदत्तटीका** । षट्स्थानात्मका । पृष्ठानि १–५६६ । पुण्यपत्तनस्थस्य **'आनन्दाश्रम'**स्येद पुस्तक खण्डितबहुपत्रम् । पुस्तकक्रमाङ्कः **१३०५** । सूत्रस्थानस्यान्ते—"ग्रन्थाग्र ६१२५" इति, शारीरस्थानस्यान्ते—"ग्रन्थः ३५०० श्री." इति, निदानस्थानस्यान्ते—"ग्रन्थः ३०००" इति, चिकित्सितस्थानस्यान्ते—"श्रीः । 'यादृश पुस्तके दृष्ट तादृश लिखित मया । यदि शुद्धमशुद्ध वा मम दोषो न दीयताम् ॥' **संवत् १५०२** वर्षे फागुणमासे शुक्लपक्षे चतुर्थ्या |

| क्रमाङ्क। | संज्ञा। | हस्तलिखितपुस्तकविषयकं सङ्क्षिप्तं वृत्तम्। |
|---|---|---|
| | | तिथौ सोमवासरे श्रीस्तम्भतीर्थमध्ये पुस्तकं लिखितम्। वायडज्ञातीयमन्त्रीश्वरदेवराज्य(ज)गृहे उपविष्टः सन् आचार्यवेदासुतमाधवेन लिखितम्। ग्रन्थः कृतः ४०००" इति च लेखो दृश्यते। अस्मिन् पुस्तके कल्पसिद्धिस्थानोत्तरस्थानयोरन्तिमपृष्ठानामभावात् तत्रत्यौ लेखौ नोपलभ्येते। |
| २० | ढ. | **मूलं अरुणदत्तटीकायुतम्।** शारीरस्थानस्य आदितस्तृतीयाध्यायस्य ७० तमश्लोकपर्यन्तम्। पृष्ठानि १–६३। नासिकवासिना **'कै. गणेशशास्त्री तर्टे'** महाभागानामिदं पुस्तकम्। पुस्तकस्यापूर्णत्वात् लेखनकालो नोपलभ्यते। |
| २१ | ण. | **मूलं अरुणदत्तटीकायुतम्।** शारीरनिदानोत्तरस्थानात्मकम्। शारीरस्थानस्य पृष्ठानि १–१००, निदानस्थानस्य पृ १–१०६, उत्तरस्थानस्य पृ १–२०२। मुम्बापुरीस्थानां **आयुर्वेदमार्तण्डानां यादवजीमहोदयाना**मिद पुस्तकम्। शारीरस्थानस्यान्ते अय लेख·— "इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया द्वितीय शारीरस्थान समाप्तम्। शारीरेषु षष्ठोऽ याय·। **संवत् १८४० शके १७०६** प्र. उत्तरायणे श्रीसूर्ये माघमासे शुद्धपक्षे ५ ग्रन्थः समाप्तः। श्रीरस्तु कल्याणमस्तु। शुभ भवतु।" इति। |
| २२ | त. | **मूलं अरुणदत्तटीकायुतम्।** शारीरस्थानस्य द्वितीयाध्यादारभ्य षष्ठाध्यायपर्यन्त तथा उत्तरस्थानस्य एकादशाध्यायादारभ्य उत्तरस्थानस्यान्तपर्यन्तम्। शारीरस्थानस्य पृष्ठानि २६–१०५; उत्तरस्थानस्य पृ २७–१८४। पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येद पुस्तकम्। पुस्तकक्रमाङ्कः $\frac{३५०}{१८७९-८०}$। पुस्तकस्यान्तेऽय लेखः—"इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्यायामुत्तरस्थाने वाजीकरणाध्यायश्चत्वारिंशत्तमः। इति षष्ठमुत्तरतन्त्र समाप्तम्। समाप्तोऽय अरुणदत्तः। शिवमस्तु सर्वजगतः।" इति। अत्र लेखनकालो न दृश्यते। अस्मिन् पुस्तके पृष्ठमात्रालिपिः दृश्यते। |
| २३ | थ. | **अरुणदत्तटीका।** निदानस्थानात्मका। पृष्ठानि १–६९। मुम्बापुरीस्थानां **आयुर्वेदमार्तण्डानां यादवजीमहोदयाना**मिद पुस्तकम्। पुस्तकस्यान्ते अय लेख —"इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया निदानस्थाने षोडशोऽध्यायः ॥१६॥ इति निदानस्थान समाप्तम्।······'यादृश पुस्तक दृष्ट तादृश लिखित मया। यदि शुद्धमशुद्ध वा मम दोषो न दीयते॥' शिवमस्तु कल्याणमस्तु श्रीरस्तु। एव ग्रन्थसङ्ख्या २७००। छई।"इति कालदर्शको लेखोऽत्र न दृश्यते। अस्मिन् पुस्तके पृष्ठमात्रा लिपिः विद्यते। |
| २४ | द. | **मूलं अरुणदत्तटीकासहितम्।** निदानस्थानात्मकम्। पृष्ठानि १–९२। मुम्बापुरीस्थ **'रॉयलएशिएटिकसोसायटी'**स्थमिदं पुस्तकम्। पुस्तकक्रमाङ्कः $\frac{१२५}{२}$। अस्य पुस्तकस्यान्ते अय लेखः—"स्वस्ति श्री**संवत् १८११** वर्षे कार्तिकसुदि प्रतिपदाया बुधवासरे। शुभमस्तु। ग्रन्थ···· दरपत्र ३८ कुल श्लोक ३४९६ ग्रंथ ३४९६।" इति। |
| २५ | ध. | **अरुणदत्तटीका।** चिकित्सितस्थानस्य आद्याश्चत्वार एवाध्यायाः। पृष्ठानि १–४१। मुम्बापुरीस्थानामायुर्वेदमार्तण्डानां **यादवजीमहोदयाना**मिद पुस्तकम्। पुस्तकस्यापूर्णत्वात् लेखनकालदर्शको लेखो न दृश्यते। |

| क्रमाङ्क | संज्ञा | हस्तलिखितपुस्तकविषयकं संक्षिप्तं वृत्तम् । |
|---|---|---|
| २६ | न. | **मूलं अरुणदत्तटीकायुतम्** । कल्पसिद्धिस्थानात्मकम् । पृष्ठानि १–१९ । मुम्बापुरीस्थानामायुर्वेदमार्तण्डाना **यादवजीमहोदयाना**मिदं पुस्तकम् । पुस्तकस्यान्ते अयं लेखः—"इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायां अष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां कल्पस्थाने द्रव्यकल्पो नाम षष्ठोऽध्यायः । पञ्चमं स्थानं समाप्तम् । शुभं भवतु । कल्याणं भवतु ।" इति । अस्मिन् पुस्तके लेखनकालो न वर्तते । |
| २७ | प. | **मूलं हेमाद्रिटीकायुतम्** । सूत्रस्थानकल्पसिद्धिस्थानात्मकम् । बागलकोटवासिना **'वैद्य मध्वाचार्य बुर्लि'** महाभागानामिदं पुस्तकम् । पृष्ठानि १–४८० । पुस्तकस्यान्ते अयं लेखः—"ग्रन्थसंख्या ८००० अष्टौ सहस्राणि । हेमाद्रिभाष्ये सूत्रस्थानकल्पयोः सन्ति । 'अदृष्टभावान्मनसो भ्रमत्वात् पदार्थहीनं लिखितं मया यत् । तत्सर्वमार्यैः परिशोधनीयं दोषं न दद्यात् खलु लेखकस्य' ।" इति । लेखनकालदर्शको लेखोऽत्र न वर्तते । |
| २८ | फ. | **मूलं हेमाद्रिटीकायुतम्** । निदानस्थानस्य आदितः षडध्यायाः, चिकित्सितस्थानस्य च सप्ताध्यायाः । पृष्ठानि १–३७२ । अस्मत्सङ्ग्रहस्थमिदं पुस्तकम् । **'म्हैसूरप्राच्यसंशोधनमन्दिर'**स्थादादर्शपुस्तकाल्लिपिकारहस्तेन प्रतिलिपिं कारयित्वा आनीतमेतदस्माभिः । पुस्तकस्यान्तेऽयं लेखः—"इति हेमाद्रिटीकायामायुर्वेदरसायने । मदमूर्च्छायसंन्यासाः सामस्त्येन निरूपिताः ॥ ७ ॥ अथार्शःप्रकरणम् ।" इति । पुस्तकस्यापूर्णत्वात् अस्यादर्शपुस्तकेऽपि लेखनकालो नोपलभ्यते । |
| २९ | य. | **मूलं अरुणदत्तटीकायुतम्** । उत्तरस्थानस्य आदितः षष्ठाध्यायपर्यन्तम् । पृष्ठानि १–२४ । मुम्बापुरीनिवासिना आयुर्वेदमार्तण्डाना **यादवजीमहोदयाना**मिदं पुस्तकम् । पुस्तकस्यापूर्णत्वात् लेखनकालो नोपलभ्यते । |
| ३० | चन्द्र. | **मूलं चन्द्रनन्दनटीकायुतम्** । सूत्रस्थानस्य त्रयोदशाध्यायादारभ्य उत्तरस्थानीयचत्वारिंशदध्यायस्य ६४ तमश्लोकपर्यन्तम् । पृष्ठानि—१३७–७८१ । पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येदं पुस्तकम् । पुस्तकक्रमाङ्कः $\frac{५}{A१८८२-८३}$ । अस्मिन् पुस्तके प्रत्यध्यायान्ते—"इति श्रीचन्द्रनन्दनविरचितायां पदार्थचन्द्रिकाभिधानटीकायां अष्टाङ्गहृदयविवृतौ…… स्थाने ……अध्यायः ।" इति लेखः । अत्र पृष्ठमात्रालिपिः । अस्य पुस्तकस्यान्तिमानां केषाञ्चित् पृष्ठानां खण्डितत्वात् लेखनकालो नोपलभ्यते । |
| ३१ | चन्द्र. | **मूलं चन्द्रनन्दनटीकासहितम्** । सूत्रस्थानस्य आदितः षोडशाध्यायपर्यन्तम् । पृष्ठानि १–१६१ । बडोदानगरस्थस्य **'प्राच्यसंशोधनमन्दिर'**स्येदं पुस्तकम् । पुस्तकक्रमाङ्कः—न. ११३५ । पुस्तकस्यापूर्णत्वात् लेखनकालदर्शको लेखो नोपलभ्यते । |
| ३२ | तोड. | **मूलं तोडरमल्लटीकायुतम्** । निदानस्थानात्मकम् । पृष्ठानि ११७–१५६ । पुण्यपत्तनस्थस्य **'भाण्डारकरप्राच्यसंशोधनमन्दिर'**स्येदं पुस्तकम् । पुस्तकक्रमाङ्कः $\frac{१०३७}{१८८६-९२}$ । प्रत्यध्यायान्ते अयं लेखः—"इति श्रीवैद्यबेइदेवप्रभुसुतवैद्यकान्हप्रभुविरचितायां निदानचिन्तामणिटीकायां निदा- |

| क्रमाङ्क । | संज्ञा । | हस्तलिखितपुस्तकविषयक सक्षिप्त वृत्तम् । |
|---|---|---|
| | | नस्थाने ' ''' अध्यायः ।" तथाच निदानस्थानान्ते अय लेखः—"इति श्रीवातशोणितनिदाने षोडशमोऽध्यायः ॥ १६ ॥ इति श्रीमहावैद्यपतिश्रीसिहगुप्तस्य सूनोर्वाग्भटस्य कृतावष्टाङ्गहृदयसहिताया निदानस्थान तृतीय समाप्त सम्पूर्णमेतत् । इति श्रीमहावैद्यबेईदेवप्रभुसुतवैद्यतोडरमल्लवैद्यकान्हप्रभुः अमु ग्रन्थ शुद्धं कृतवान् । 'सामाबिकाख्या सुषुवे सुत यं बेईददेवश्च भिषक् श्रुतज्ञ. । टीका मनोज्ञा लघुवाग्भटस्य काह्नप्रभु. सोऽकृत कीर्तिहेतो ' ॥" इति। पुस्तकस्यापूर्णत्वादत्र कालदर्शको लेखो न दृश्यते, किन्तु बहुपुरातनमिद पुस्तकम्। अस्मिन् पुस्तके पृष्ठमात्रालिपिः विद्यते । |
| ३३ | वा.मं. | **वाग्भटखण्डनमण्डनम्** । भट्टनरहरिकृत सम्पूर्णम्। पृष्ठानि १–१८३ । अस्मत्सङ्ग्रहस्थमिदं पुस्तकम् । **'म्हैसूरप्राच्यसंशोधनमन्दिर'**स्थादादर्शपुस्तकात् लिपिकारहस्तेन प्रतिलिपिं कारयित्वा आनीतमेतदस्माभिः । पुस्तकस्यान्तेऽय लेख.—"इति श्रीतार्किकतान्त्रिकचक्रचूडामणिरामकवीश्वरशिष्य–भट्टसुदेवतनय–पण्डितभट्टनरहरिविरचित वाग्भटमण्डन समाप्तम् । श्रीः ।" इति । अस्यादर्शपुस्तकेऽपि नोपलभ्यते लेखनकालः । |



# सूचिपत्रं अष्टमम् ।

## अष्टाङ्गहृदयस्य तट्टीकाद्वयस्य च संशोधनार्थं तथा वाग्भटविमर्शार्थमुपयोजितानां मुद्रितपुस्तकानां अकारादिक्रमेण सूचिपत्रम् ।

| क्रमाङ्क | पुस्तकनाम । | प्रकाशकनाम कालश्च । |
|---|---|---|
| १ | अमरकोशः सटीकः । | डिपार्टमेन्ट ऑफ पब्लिकइन्स्ट्रक्शन मुबई इ. स. १८८६ |
| २ | अष्टाङ्गसङ्ग्रहः मूलम् । | कै गणेशशास्त्री तर्टे नाशिक शके १८१० |
| ३ | अष्टाङ्गसङ्ग्रहः सटीकः । | मङ्गलोदयम् कपनी त्रिचूर. इ स. १९२६ |
| ४ | आयुर्वेदप्रकाशः । | आयुर्वेदमार्तण्ड यादवजीत्रिकमजीआचार्य मुंबई. इ. स. १९२४ |
| ५ | काव्यानुशासनं सटीकम् । | निर्णयसागरमुद्रणालय मुंबई. इ. स. १९१५ |
| ६ | काव्यालङ्कारः ( रुद्रटकृतः ) । | निर्णयसागरमुद्रणालय मुंबई. इ. स. १९२८ |
| ७ | काव्यालङ्कारसङ्ग्रहः ( उद्भटकृतः ) । | निर्णयसागरमुद्रणालय मुबई इ स. १९१५ |
| ८ | काश्यपसंहिता । | श्री यादवजी त्रिकमजी आचार्य मुबई. इ स. १९३८ |
| ९ | क्षेमकुतूहलम् । | ,, ,, ,, ,, ,, १९२० |
| १० | गदनिग्रहः । | ,, ,, ,, ,, ,, १९१५ |
| ११ | चतुर्वर्गचिन्तामणिः । | पण्डित भरतचन्द्र शिरोमणि कलकत्ता सवत् १९३४ |
| १२ | चरकसंहिता मूलम् । | निर्णयसागरमुद्रणालय मुबई. प्रथमावृत्ति । |
| १३ | चरकसंहिता सटीका । | निर्णयसागरमुद्रणालय मुबई प्रथमावृत्तिर्द्वितीयावृत्तिश्च । |
| १४ | चक्रदत्तः सटीकः । | मेहेरचन्द्र लक्ष्मणदास लाहोर इ स १९२८ |
| १५ | चिकित्साकलिका सटीका । | मित्र आयुर्वेदफार्मसी लाहोर. सवत् १९८३ |
| १६ | त्रिकाण्डशेषः । | ज्ञानदर्पणमुद्रणालय मुबई इ. स. १७७६ |
| १७ | द्रव्यगुणसङ्ग्रहः सटीकः । | निर्णयसागरमुद्रणालय मुंबई इ स १९०५ |
| १८ | धन्वन्तरीयनिघण्टुः । | आनन्दाश्रमसस्था पुणे. इ स. १८९६ |
| १९ | नागानन्दनाटकं सटीकम् । | स्टॅण्डर्ड पब्लिशिग कपनी गिरगाव मुबई इ स. १९१९ |
| २० | निघण्टरत्नाकरः । | विष्णु वासुदेव गोडबोले मुबई. इ स १८६७ |
| २१ | निर्णयसिन्धुः । | निर्णयसागरमुद्रणालय मुंबई इ. स. १९३५ |
| २२ | प्रत्यक्षशारीरम् । | महामहोपाध्याय गणनाथसेन कलकत्ता. इ. स. १९१३ |
| २३ | प्राकृतपिङ्गलसूत्राणि सटीकानि । | निर्णयसागरमुद्रणालय मुबई. इ स. १८९४ |
| २४ | बृहत्संहिता । | रॉयलएशिॲटीक सोसायटी ऑफ् बगाल कलकत्ता. इ.स. १८६५ |
| २५ | भारतवर्षीय चरित्रकोश । | श्री. सिद्धेश्वरशास्त्री चित्राव पुणे. इ स. १९३७ |
| २६ | भावप्रकाशः सटीकः । | जगदीश्वरमुद्रणालय मुबई शके १८०९ |
| २७ | भेडसंहिता । | कलकत्तायुनिव्हर्सिटीमुद्रणालय. इ. स. १९२१ |

| क्रमांक | पुस्तकनाम । | प्रकाशकनाम कालश्च । |
|---|---|---|
| २८ | मदनपालनिघण्टुः । | पण्डितश्रीनित्यबोधविद्यारत्नभट्टाचार्य कलकत्ता. इ. स. १९०२ |
| २९ | मनुस्मृतिः । | जनार्दन महादेव गुर्जर इ स १८७७ |
| ३० | महाराष्ट्रीय ज्ञानकोश (पञ्चमविभाग) । | महाराष्ट्रीय ज्ञानकोश मडळ पुणे इ स १९२२ |
| ३१ | माधवनिदानं टीकाद्वयोपेतम् । | निर्णयसागरमुद्रणालय मुबई. इ स १९२८ |
| ३२ | मेदिनीकोशः । | ज्ञानदर्पणमुद्रणालय मुबई इ स. १७७६ |
| ३३ | योगरत्नाकरः । | निर्णयसागरमुद्रणालय मुबई. इ. स १९२६ |
| ३४ | रघुवंशः सटीकः । (नदुर्गीकर) | राधाबाई आत्माराम सगुण मुबई इ स. १८९७ |
| ३५ | रसयोगसागरः । | वैद्यपण्डित हरिप्रपन्नजी मुबई. इ स. १९२७ |
| ३६ | रसरत्नसमुच्चयः । | आनन्दाश्रमसस्था पुणे शके १८१२ |
| ३७ | रसहृदयतत्रं सटीकम् । | श्री यादवजी त्रिकमजी आचार्य मुबई. सवत् १९६७ |
| ३८ | राजनिघण्टुः । | आनन्दाश्रमसस्था पुणे इ स १८९६ |
| ३९ | वङ्गसेनः । | वेकटेश्वरमुद्रणालय मुबई सवत् १९८१ |
| ४० | वाग्भटालङ्कारः सटीकः । | निर्णयसागरमुद्रणालय मुबई. इ स. १९२८ |
| ४१ | विश्वप्रकाशः । | ( लेखीपुस्तक ) कै गणेशशास्त्री तर्टे नाशिक. सवत् १७४१ |
| ४२ | वृत्तरत्नाकरः सटीकः । | निर्णयसागरमुद्रणालय मुबई इ. स १९१३ |
| ४३ | वृन्दः (सिद्धयोगः) सटीकः । | आनन्दाश्रमसस्था पुणे इ स १८९४ |
| ४४ | वैद्यकशब्दसिन्धुः । | कविराज नगेन्द्रनाथसेन कलकत्ता. इ स १९१४ |
| ४५ | शार्ङ्गधरसंहिता टीकाद्वयोपेता । | निर्णयसागरमुद्रणालय मुबई इ स १९२० |
| ४६ | शिशुपालवधः ( माघः ) सटीकः । | निर्णयसागरमुद्रणालय मुबई इ स १८८८ |
| ४७ | सर्वदर्शनसङ्ग्रहः सटीकः । | भाण्डारकरप्राच्यसशोधनमन्दिर पुणे इ. स. १९२४ |
| ४८ | सांख्यकारिका । | कै. विष्णुशास्त्री बापट. पुणे इ स १९०९ |
| ४९ | सिद्धान्तकौमुदी सटीका । | निर्णयसागरमुद्रणालय मुबई. इ स. १९२९ |
| ५० | सुश्रुतसंहिता सटीका । | निर्णयसागरमुद्रणालय मुबई. प्रथमावृत्तिर्द्वितीयावृत्तिश्च |
| ५१ | सुश्रुतसंहिता ( सार्थ ) । | श्री यज्ञेश्वर गोपाळ दीक्षित पुणे. इ स. १९३४ |
| ५२ | हस्त्यायुर्वेदः । | आनन्दाश्रमसस्था पुणे इ. स. १८९४ |
| ५३ | हेमाद्रिचरितम् । | श्री. केशव आप्पा पाध्ये ॲडव्होकेट मुबई. इ. स. १९३१ |
| ५४ | Catalogus Catalogorum | Theodor Aufrecht |
| ५५ | Studies in the Medicine of Ancient India | A. F Rudolf Hoernle C. I E Oxford 1907 A. D. |



# सूचिपत्रं नवमम् ।

अष्टाङ्गहृदयस्यास्यां षष्ठावृत्तौ प्रत्यध्यायं श्लोकसंख्यायास्तथा पूर्वावृत्तितो न्यूनाधिकश्लोकसंख्यायाश्च दर्शकं सूचिपत्रम् ।

| अध्यायाः । | श्लोकसंख्या | पूर्वावृत्तितः | |
|---|---|---|---|
| | | न्यून-श्लोकाः | अधिकश्लोकाः |
| **सूत्रस्थानस्य—** | | | |
| प्रथमोऽध्यायः । | ४८½ | ० | ० |
| द्वितीयोऽध्यायः । | ४८ | ० | ½ |
| तृतीयोऽध्यायः । | ५८½ | ० | ० |
| चतुर्थोऽध्यायः । | ३६ | १ | १ |
| पञ्चमोऽध्यायः । | ८४ | ० | २ |
| षष्ठोऽध्यायः । | १७२ | ० | २ |
| सप्तमोऽध्यायः । | ७७ | ० | ½ |
| अष्टमोऽध्यायः । | ५५½ | ० | ½ |
| नवमोऽध्यायः । | २८½ | ० | ० |
| दशमोऽध्यायः । | ४४ | ० | ० |
| एकादशोऽध्यायः । | ४५ | ० | ० |
| द्वादशोऽध्यायः । | ७८½ | ० | ½ |
| त्रयोदशोऽध्यायः । | ४१ | ० | ० |
| चतुर्दशोऽध्यायः । | ३७ | ० | ० |
| पञ्चदशोऽध्यायः । | ४७ | ० | ० |
| षोडशोऽध्यायः । | ४६ | ० | ½ |
| सप्तदशोऽध्यायः । | २९½ | ० | ० |
| अष्टादशोऽध्यायः । | ६०½ | ० | ० |
| एकोनविंशोऽध्यायः । | ८७ | ० | ० |
| विंशोऽध्यायः । | ३९ | ० | ० |
| एकविंशोऽध्यायः । | २२½ | ० | ० |
| द्वाविंशोऽध्यायः । | ३४ | ० | ० |
| त्रयोविंशोऽध्यायः । | ३०½ | ० | १ |
| चतुर्विंशोऽध्यायः । | २२½ | ० | ० |
| पञ्चविंशोऽध्यायः । | ४२½ | ० | ० |
| षड्विंशोऽध्यायः । | ५५½ | ० | ० |
| सप्तविंशोऽध्यायः । | ५३ | ० | ० |
| अष्टाविंशोऽध्यायः । | ४७½ | ½ | ० |
| एकोनत्रिंशोऽध्यायः । | ८० | ० | ० |
| त्रिंशोऽध्यायः । | ५३ | ० | ० |
| सम्पूर्णं सूत्रस्थानम् । | १६०३½ | १½ | ८½ |

| अध्यायाः । | श्लोकसंख्या | पूर्वावृत्तितः | |
|---|---|---|---|
| | | न्यून-श्लोकाः | अधिक-श्लोकाः |
| **शारीरस्थानस्य—** | | | |
| प्रथमोऽध्यायः । | १००½ | १ | ० |
| द्वितीयोऽध्यायः । | ६२ | ० | ० |
| तृतीयोऽध्यायः । | १२० | ० | ० |
| चतुर्थोऽध्यायः । | ७० | ० | ० |
| पञ्चमोऽध्यायः । | १३२ | ० | ० |
| षष्ठोऽध्यायः । | ७३½ | ० | ½ |
| सम्पूर्णं शारीरस्थानम् । | ५५८ | १ | ½ |
| **निदानस्थानस्य—** | | | |
| प्रथमोऽध्यायः । | २३½ | ० | ० |
| द्वितीयोऽध्यायः । | ७९ | ० | ० |
| तृतीयोऽध्यायः । | ३८ | ० | ० |
| चतुर्थोऽध्यायः । | ३१ | ० | ० |
| पञ्चमोऽध्यायः । | ५७½ | ० | ० |
| षष्ठोऽध्यायः । | ४१ | ० | ० |
| सप्तमोऽध्यायः । | ५९ | ० | ० |
| अष्टमोऽध्यायः । | ३०½ | ० | ० |
| नवमोऽध्यायः । | ४० | ० | ० |
| दशमोऽध्यायः । | ४१ | ० | ० |
| एकादशोऽध्यायः । | ६३ | ० | ० |
| द्वादशोऽध्यायः । | ४६ | ० | ० |
| त्रयोदशोऽध्यायः । | ६७½ | ० | ० |
| चतुर्दशोऽध्यायः । | ५६ | ० | ० |
| पञ्चदशोऽध्यायः । | ५६½ | ० | ० |
| षोडशोऽध्यायः । | ५८½ | ० | ० |
| सम्पूर्णं निदानस्थानम् । | ७८८ | ० | ० |

| अध्याया । | श्लोकसंख्या | पूर्वावृत्तित न्यून-श्लोका | पूर्वावृत्तित अधिक श्लोका |
|---|---|---|---|
| **चिकित्सितस्थानस्य—** | | | |
| प्रथमोऽध्याय. । | १७७ | ० | १ |
| द्वितीयोऽध्यायः । | ५० | ० | १½ |
| तृतीयोऽध्यायः । | १८० | ० | १½ |
| चतुर्थोऽध्यायः । | ५९½ | ० | ३½ |
| पञ्चमोऽध्याय. । | ८३½ | ० | ० |
| षष्ठोऽध्यायः । | ८५ | ० | १½ |
| सप्तमोऽध्यायः । | ११५ | ० | ० |
| अष्टमोऽध्यायः । | १६४½ | ० | ० |
| नवमोऽध्यायः । | १२४ | ० | ० |
| दशमोऽध्यायः । | ९३ | ० | ० |
| एकादशोऽध्यायः । | ६३ | ० | ० |
| द्वादशोऽध्यायः । | ४३½ | ० | ० |
| त्रयोदशोऽध्यायः । | ५१ | ० | ० |
| चतुर्दशोऽध्यायः । | १२९½ | ० | ० |
| पञ्चदशोऽध्याय. । | १३१½ | ० | ० |
| षोडशोऽध्यायः । | ५७ | ० | ० |
| सप्तदशोऽध्यायः । | ४२ | ० | ० |
| अष्टादशोऽध्यायः । | ३८ | ० | ० |
| एकोनविंशोऽध्यायः । | ९८ | ० | ० |
| विंशोऽध्यायः । | ३५ | ० | ० |
| एकविंशोऽध्यायः । | ८३ | ० | ० |
| द्वाविंशोऽध्यायः । | ७४ | ० | ० |
| सम्पूर्ण चिकित्सितस्थानम् । | १९७७ | ० | ९ |
| **कल्पसिद्धिस्थानस्य—** | | | |
| प्रथमोऽध्यायः । | ४७ | ० | ० |
| द्वितीयोऽध्यायः । | ६२½ | ० | ½ |
| तृतीयोऽध्यायः । | ३९ | ० | ० |
| चतुर्थोऽध्यायः । | ७३ | ० | ½ |
| पञ्चमोऽध्यायः । | ५४ | ० | ० |
| षष्ठोऽध्यायः । | २९½ | ० | ½ |
| सम्पूर्ण कल्पसिद्धिस्थानम् । | ३०५ | ० | १½ |
| **उत्तरस्थानस्य—** | | | |
| प्रथमोऽध्यायः । | ४९½ | १ | ० |
| द्वितीयोऽध्यायः । | ७७½ | ० | ० |
| तृतीयोऽध्यायः । | ६०½ | १ | ० |
| चतुर्थोऽध्यायः । | ४४ | ० | ० |
| पञ्चमोऽध्यायः । | ५३ | ० | ० |
| षष्ठोऽध्याय. । | ६० | ० | ० |
| सप्तमोऽध्यायः । | ३७ | ० | ० |
| अष्टमोऽध्यायः । | २७½ | ० | ० |
| नवमोऽध्यायः । | ४१ | ० | ० |

| अध्याया । | श्लोकसंख्या | पूर्वावृत्तित न्यून-श्लोका | पूर्वावृत्तित अधिक श्लोका |
|---|---|---|---|
| **उत्तरस्थानस्य—** | | | |
| दशमोऽध्यायः । | ३१½ | ० | ० |
| एकादशोऽध्यायः । | ५८½ | ० | ० |
| द्वादशोऽध्यायः । | ३३½ | ० | ० |
| त्रयोदशोऽध्यायः । | १०० | ० | ० |
| चतुर्दशोऽध्यायः । | ३२ | ० | ० |
| पञ्चदशोऽध्यायः । | २४ | ० | ० |
| षोडशोऽध्यायः । | ६७ | ० | ० |
| सप्तदशोऽध्यायः । | २६ | ० | ० |
| अष्टादशोऽध्यायः । | ६६ | ० | ० |
| एकोनविंशोऽध्यायः । | २७ | ० | ० |
| विंशोऽध्याय. । | २५ | ० | ० |
| एकविंशोऽध्यायः । | ६९ | ० | ० |
| द्वाविंशोऽध्यायः । | १११½ | ० | ० |
| त्रयोविंशोऽध्यायः । | ३२ | ० | ० |
| चतुर्विंशोऽध्यायः । | ५९ | ० | ० |
| पञ्चविंशोऽध्यायः । | ६७ | ० | ० |
| षड्विंशोऽध्यायः । | ५७½ | ० | ० |
| सप्तविंशोऽध्याय' । | ४१½ | ० | ० |
| अष्टाविंशोऽध्यायः । | ४४ | ० | ० |
| एकोनत्रिंशोऽध्यायः । | ३१½ | ० | ० |
| त्रिंशोऽध्यायः । | ४० | ० | ० |
| एकत्रिंशोऽध्यायः । | ३३ | ० | ० |
| द्वात्रिंशोऽध्यायः । | ३३½ | ० | ० |
| त्रयस्त्रिंशोऽध्यायः । | ५२½ | ० | ० |
| चतुस्त्रिंशोऽध्यायः । | ६७ | ० | ० |
| पञ्चत्रिंशोऽध्यायः । | ७०½ | ० | ० |
| षट्त्रिंशोऽध्याय. । | ९३ | ० | ० |
| सप्तत्रिंशोऽध्यायः । | ८६½ | ० | ० |
| अष्टत्रिंशोऽध्याय. । | ४० | ० | १ |
| एकोनचत्वारिंशोऽध्यायः । | १८१ | १ | ० |
| चत्वारिंशोऽध्यायः । | ८९ | ० | ० |
| सम्पूर्ण उत्तरस्थानम् । | २२३९½ | ३ | १ |

| क्रमाङ्क | स्थाननामानि । | अध्याय सख्या | श्लोकसंख्या | न्यून-श्लोका | अधिक श्लोका |
|---|---|---|---|---|---|
| १ | सूत्रस्थानम् । | ३० | १६०३½ | १½ | ८½ |
| २ | शारीरस्थानम् । | ६ | ५५८ | १ | ½ |
| ३ | निदानस्थानम् । | १६ | ७८८ | ० | ० |
| ४ | चिकित्सितस्थानम् | २२ | १९७७ | ० | ९ |
| ५ | कल्पसिद्धिस्थानम् । | ६ | ३०५ | ० | १½ |
| ६ | उत्तरस्थानम् । | ४० | २२३९½ | ३ | १ |
| | सम्पूर्णमष्टाङ्गहृदयम् । | १२० | ७४७१ | ५½ | २०½ |

समुल्लसति चेदमष्टाङ्गहृदय श्रीमद्वाग्भटविरचित श्रीमदरुणदत्तविरचितया सर्वाङ्गसुन्दराख्यया सवलित कै वासिभि बी ए एम् डी इत्युपपदधारिभि कुण्टे इत्युपाह्वै अनन्तशर्मभि सशोधित निर्णयसागरमुद्रणालयाधिपतिभि मुद्रित चेति। तानि च पुस्तकानि समाप्तानीति ज्ञात्वा निर्णयसागरमुद्रणालयाधिपतिभि **रा रा तुकाराम जावजी** इति प्रसिद्धै पुनर्मुद्रणसमये शोधनार्थमह पृष्ट । तदानी पूर्वमुद्रणसमये अवशिष्टाना दोषाणा यथामति निष्कासनेन शोधनमङ्गीकृत मया। तदनन्तरं तृतीयावृत्तिर्लोकोपयोगार्थ मुद्रितेय वरीवर्ति । आयुर्वेदस्य उपोद्घात–स्वरूपकथनादिक प्रथमावृत्ति–द्वितीयावृत्ति–प्रस्तावनासमये कैलासवासिभि कुण्टे इत्युपाह्वैर्विरचितमासीत्। किन्तु तदन्त पात्येव यत्किञ्चिदुच्यते,–आयुर्वेदश्च इतरवेदवत् अपौरुषेय एव अष्टाङ्गहृदयादवगम्यते । तथाच अष्टाङ्गहृदये प्रथमाध्याये वाग्भट ,–"ब्रह्मा स्मृत्वाऽऽयुषो वेदं प्रजापतिमजिग्रहत् । सोऽश्विनौ तौ सहस्राक्ष सोऽत्रिपुत्रादिकान् मुनीन् ॥ तेऽग्निवेशादिकास्ते तु पृथक् तन्त्राणि तेनिरे।" अस्मात् वचनात् ब्रह्मण सकाशात् शिष्यप्रशिष्यपरपरया अग्निवेशादिमुनिपर्यन्तमायुर्वेद समायात इति स्पष्टमेव प्रतीयते, तेन यथा श्रुतिवचनानुसारेण मन्वादिभि स्मृतिशास्त्राण्युपनिबद्धानि तथैव अग्निवेशादिभि पृथक् तन्त्राणि विरचितानि । अर्थात् अग्निवेशादिविरचिततन्त्रेषु आयुर्वेदशब्द औपचारिक इति सिध्यति । तदेव द्वितीयावृत्तिप्रस्तावनाया प्रकटीकृतमस्ति ।

स्वस्थाना स्वास्थ्यरक्षणमातुराणा व्याधिनिवृत्तिश्च यया जायते सा विद्या आयुर्वेद इति आयुर्वेदस्वरूपनिर्वचन च कृतम्। तस्या मूलतत्त्वानि अस्मिन् ग्रन्थे प्रतिपादितानि सन्ति ।

आधुनिकजनाना स्वल्पायुष्ट्वस्य बहूनि कारणानि भवन्ति । तेषु मध्ये जनपदोद्ध्वसकररोगविशेष मुख्य सर्वसाधारण कारणम्, इतराणि च तत्तद्व्यक्तिविशेषापचारकृतानि । तत्र प्रथममाह चरकसहिताया विमानस्थाने भगवानात्रेय —

"वैगुण्यमुपपन्नाना देशकालानिलाम्भसाम् ।
गरीयस्त्व विशेषेण हेतुमत्सप्रवक्ष्यते ॥
वाताजल जलाद्देशं देशात्कालं स्वभावत ।
विद्यादपरिहार्यत्वाद्गरीयस्तरमर्थव(वि)त् ॥ इत्यादि,

इति जनपदोद्ध्वसने कारणानि श्रुत्वा अग्निवेश उवाच–अथ खलु भगवन् कुतो मूलमेषा वाय्वादीना वैगुण्यमुत्पद्यते ? येनोपपन्ना जनपदमुद्ध्वसयन्तीति । तमुवाच भगवानात्रेय –सर्वेषाम[प्य]ग्निवेश वाय्वादीना यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्म , तन्मूल चा(वाऽ)सत्कर्म पूर्वकृत, तयोर्योनि· प्रज्ञापराध एव । तद्यथा–यदा देशनगरनिगमजनपदप्रधाना धर्ममुत्क्रम्य अधर्मेण प्रजा वर्तयन्ति तदाऽऽश्रितोपाश्रिता पौरजानपदा व्यवहारोपजीविनश्च तमधर्ममभिवर्धयन्ति, तत सोऽधर्म प्रसभ धर्ममन्तर्धत्ते, ततस्तेऽन्तर्हितधर्माणो देवताभिरपि त्यज्यन्ते, तेषा तथाऽन्तर्हितधर्माणामधर्मप्रधानानामपक्रान्तदेवताना ऋतवो व्यापद्यन्ते, तेन नापो यथाकाल देवो वर्षति, न वा वर्षति, विकृत वा वर्षति, वाता न सम्यगभिवान्ति, क्षितिर्व्यापद्यते, सलिलान्युपशुष्यन्ति, ओषधय स्वभाव परिहाय आपद्यन्ते विकृतिम् । तत उद्ध्वसन्ते जनपदा ।" इत्यादि उक्त्वा पुनराह—

"इहाग्निवेश भूतानामायुर्युक्तिमपेक्षते ।
दैवे पुरुषकारे च स्थित ह्यस्य बलाबलम् ॥
दैवमात्मकृत विद्यात् कर्म यत्पू(त्पौ)र्वदैहिकम् ।
स्मृत पुरुषकारस्तु क्रियते यदिहापरम् ॥
बलाबलविशेषोऽस्ति तयोरपि च कर्मणो ।"

तथा—

"दैव पुरुषकारेण दुर्बल ह्युपहन्यते ।
दैवेन चेतरत्कर्म विशिष्टेनोपहन्यते ॥
दृष्ट्वा यदेके मन्यन्ते नियत मानमायुष ।
कर्म किञ्चित् क्वचित् काले विपाके नियत महत् ॥
किञ्चित्त्व(त्व)कालनियत प्रत्ययै प्रतिबोध्यते ।
तस्मादुभयदृष्टत्वादेकान्तग्रहणमसाधु ।"

अर्थात् दैव पुरुषकारश्चेत्युभयमपि आयुष स्थितिहेतुरिति सिद्धम् ।

व्यक्तिविशेषापचारकृतेषु कारणेषु सप्रति बाल्यादारभ्य स्वजीविकाविषये चिन्तादारिद्र्यादिक शरीरे प्रादुर्भूतानां सामव्याधीना बलाग्निर्हरणादिकं चेत्युभयमपि अधुना दृग्विषयमवतिष्ठते ।

यद्यपि आमय शीघ्र चिकित्स्य , यथाऽऽह कुष्ठनिदाने चरक –"यथा स्वल्पेन यत्नेन छिद्यते तरुणस्तरु । स एवातिप्रवृद्धस्तु न सुच्छेदतमो भवेत् ( छिद्यतेऽतिप्रयत्नत ) ॥ एवमेव विकारोऽपि तरुण साध्यते सुखम् । विवृद्ध साध्यते कृच्छ्रादसाध्यो वाऽपि जायते ॥" तथाऽपि पाचनादिक्रिययैव अनुक्रमेण व्याधिनिर्हरणे यत्न कर्तव्य, न तु यथातथा व्याधिर्निर्हरणीय ।

यथाह दोषोपक्रमणीयाध्याये वाग्भट —अपस्मारनिदाने चरकश्च—

"प्रायस्तिर्यग्गता दोषा क्लेशयन्त्यातुराश्चिरम् ।
कुर्यान्न तेषु त्वरया देहाग्निबलवित् क्रियाम् ॥

शमयेत्तान् प्रयोगेण सुखं वा कोष्ठमानयेत् ।
ज्ञात्वा कोष्ठप्रपन्नांश्च यथासन्नं विनिर्हरेत् ॥"

तथा वाग्भट—

"सर्वदेहप्रविसृतान् सामान् दोषान्न निर्हरेत् ।
लीनान् धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव ॥
आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वत ।"

इत्यादि शास्त्रसिद्धान्तो वर्तते, तमज्ञात्वा आधुनिका विपरीतमाचरन्तो दृश्यन्ते । एतच्च सर्वं स्वकीयशास्त्राज्ञानमूलकं पारतन्त्र्याधीनं चेति भाति । अपिच ये प्रयोगा शीघ्रगुणदायका दृश्यन्ते ते व्यापत्करा अस्थायिगुणाश्च भवन्ति । ये तु चिराद्गुणकरास्ते अव्यापत्करा स्थायिगुणाश्च जायन्ते । यथाऽऽह अन्नरक्षाध्याये वाग्भट—"क्रमेणापचिता दोषा क्रमेणोपचिता गुणा । नाप्नुवन्ति (सन्तो यान्त्य) पुनर्भावमप्रकम्प्या भवन्ति च ॥" इत्यादि सर्वमार्यवैद्यकचिकित्सातत्त्वमवलोक्य विचार्य च तदनुरोधेन आचरित चेच्छुभमेव भवेदिति शम् ।

**नवरे इत्युपाभिधः कृष्णशर्मा.**



# अष्टाङ्गहृदयस्य विषयानुक्रमणिका ।

**अन्नरक्षाध्याय सप्तम ॥७॥**



**मात्राशितीयाध्यायो ऽष्टम ॥ ८ ॥**

**द्रव्यादिविज्ञानीयाध्यायो नवम ॥ ९ ॥**



**रसभेदीयाध्याय ॥१०॥**



**दोषादिविज्ञानीयाध्याय. ॥ ११ ॥**

## शोधनादिगणसङ्ग्रहोऽध्याय. ॥ १५ ॥



## स्नेहविधिरध्याय ॥ १६ ॥



## स्वेदविधिरध्याय. ॥ १७ ॥



## वमनविरेचनविधिरध्याय. ॥ १८ ॥

**बस्तिविधिरध्याय ॥ १९ ॥**



**नस्यविधिरध्याय. ॥ २० ॥**

### धूमपानविधिरध्यायः॥२१॥



### गण्डूषादिविधिरध्याय ॥२२॥



### आश्चोतनाञ्जनविधिरध्याय ॥ २३ ॥



### तर्पणपुटपाकविधिरध्यायः ॥ २४ ॥

शल्याहरणविधिरध्याय ॥२८॥



शस्त्रकर्मविधिरध्याय ॥२९॥

## मर्मविभागशारीरोऽध्याय ॥ ४ ॥



## विकृतिविज्ञानीयोऽध्यायः ५

**दूतादिविज्ञानीयोऽध्याय ॥ ६ ॥**



7

## इति निदानस्थानम् ।

## अथ चिकित्सितस्थानम्

### ज्वरचिकित्सिताध्याय ॥ १ ॥

**अतीसारचिकित्सिताध्याय. ॥ ९ ॥**

## ग्रहणीदोषचिकित्सिताध्याय. ॥ १० ॥

**मूत्राघातचिकित्सिताध्याय ॥ ११ ॥**



**प्रमेहचिकित्सिताध्याय ॥ १२ ॥**

उदरचिकित्सिताध्यायः ॥ १५ ॥

**पाण्डुरोगचिकित्सिताध्यायः ॥ १६ ॥**



**श्वयथुचिकित्सिताध्याय. ॥१७॥**

विसर्पचिकित्सिताध्याय. ॥ १८ ॥



कुष्ठचिकित्सिताध्याय ॥ १९ ॥

## श्वित्रकृमिचिकित्सिताध्याय. ॥ २० ॥



## वातव्याधिचिकित्सिताध्याय. ॥ २१ ॥

**इति चिकित्सितस्थानम् ।**

## कल्पसिद्धिस्थानम् ।

### वमनकल्पाध्याय ॥ १ ॥

**मदनकल्प ।**



### विरेचनकल्पाध्याय ॥ २ ॥

**त्रिवृच्छ्यामयो कल्प ।**

## सन्धिसितासितरोगविज्ञानीयाध्याय ॥ १० ॥

### सन्धिरोगा नव ।



### सितरोगास्त्रयोदश ।



### कृष्णरोगा. पञ्च ।



## सन्धिसितासितरोगप्रतिषेधाध्याय· ॥ ११ ॥



## दृष्टिरोगविज्ञानीयाध्याय. ॥ १२ ॥



## तिमिरप्रतिषेधाध्याय. ॥ १३ ॥

## लिङ्गनाशप्रतिषेधाध्याय ॥ १४ ॥



## सर्वाक्षिरोगविज्ञानीयाध्याय ॥ १५ ॥



## सर्वाक्षिरोगप्रतिषेधाध्याय ॥ १६ ॥

## नासारोगविज्ञानीयाध्याय ॥ १९ ॥



## नासारोगप्रतिषेधाध्याय ॥ २० ॥



## मुखरोगविज्ञानीयाध्याय ॥ २१ ॥

विषया. पृष्ठम्



**शिरोरोगविज्ञानीयाध्याय ॥ २३ ॥**

**शिरोगता दश रोगा ।**



**शिर कपाले नव रोगा ।**



**शिरोरोगप्रतिषेधाध्याय. ॥ २४ ॥**

भङ्गप्रतिषेधाध्याय॰ ॥ २७ ॥



भगन्दरप्रतिषेधाध्याय ॥ २८ ॥



चिकित्सा ।



ग्रन्थ्यर्बुदश्लीपदापचीनाडीविज्ञानीयाध्याय ॥ २९ ॥

ग्रन्थ्यर्बुदश्लीपदापचीनाडीप्रतिषेधाध्याय ॥ ३० ॥



क्षुद्ररोगविज्ञानीयाध्यायः ॥ ३१ ॥



क्षुद्ररोगप्रतिषेधाध्याय. ॥ ३२ ॥

विषया पृष्ठम्



गुह्यरोगविज्ञानीया-ध्याय. ॥ ३३ ॥



गुह्यरोगप्रतिषेधा-ध्याय. ॥ ३४ ॥

विषया पृष्ठम्



**योनिव्यापच्चिकित्सा ।**



**विषप्रतिषेधाध्याय ॥३५॥**



**सर्पविषप्रतिषेधाध्याय ॥ ३६ ॥**

## कीटलूतादिविषप्रतिषेधाध्याय. ॥ ३७ ॥

मूषिकालर्कविषप्रतिषेधाध्याय ॥ ३८ ॥



रसायनविधिरध्याय ॥ ३९ ॥

वाजीकरणविधिरध्यायः ॥ ४० ॥

**इति उत्तरस्थान समाप्तम्**

## सूत्रस्थानान्तर्गतपञ्चविंशत्यध्यायोक्त-यन्त्रचित्राणि ।

३१२ पृष्ठस्याग्रे



इति ४८ यन्त्रचित्राणि ।

## सूत्रस्थानान्तर्गतषड्विंशत्यध्यायोक्त-शस्त्रचित्राणि ।

३१२ पृष्ठस्याग्रे



इति शस्त्रचित्राणि ।

इति चित्रानुक्रमणिका ।

इत्यष्टाङ्गहृदयस्य विषयानुक्रमणिका समाप्ता ।



श्रीमद्वाग्भटविरचिते

# अष्टाङ्गहृदये सूत्रस्थानम् ।



## श्रीमदरुणदत्तविरचितया सर्वाङ्गसुन्दराख्यव्याख्यया, श्रीहेमाद्रिप्रणीतया आयुर्वेदरसायनाह्वया टीकया च समुल्लसितम् ।

### प्रथमोऽध्यायः ।

स०-श्रीमहागणपतये नम । श्रीआनन्दिनीमठाय नम । दीप्त्या यस्येन्द्रनीलोपलशकलरजोनीलया नीलिताभा लक्ष्मीमुत्तप्तभास्वत्कनकरुचिमपि स्पर्शरोमाञ्चिताङ्गीम् । कालीत्याशङ्कमान स्फुरदधरपुटश्चक्रपाणि किलाभूद्भर्ता लोकस्य शश्वत्स भवतु भवता भूतये पद्मनाभ ॥ १ ॥ को मत्सरिणि लोकेऽस्मिन्विद्वान्किञ्चिच्चिकीर्षति । किन्तु कश्चिद्भवेत्साधुस्ततोऽयं मत्परिश्रम ॥ २ ॥ श्रीमन्मृगाङ्कतनयष्टीकामष्टाङ्गहृदयस्य । श्रीमानरुण कुरुते सम्यग्द्रष्टु पदार्थबोधाय ॥ ३ ॥

इह हि शास्त्रारम्भे शास्त्रपरिसमाप्तये सर्वे एव सभाभूषणभूता निखिलजनजनितप्रमोदसन्दोहा रुचिररुचिरचितवचनचन्दनचर्चितप्रबन्धा प्रबन्धविरचनप्रवरा इष्टदेवतानमस्कार तन्त्रकारा विदधु । तदयमपि तन्त्रकारोऽभीष्टदेवतानमस्कारपुर सर तन्त्रमारिरिप्सुरिदमाह—

**रागादिरोगान् सततानुषक्ता-**
**नशेषकायप्रसृतानशेषान् ।**
**औत्सुक्यमोहारतिदाञ्जघान**
**योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥ १ ॥**

रोग आदिर्येषा ते रागादय । आदिशब्देन द्वेषलोभादिपरिग्रह । रुजन्तीति रोगा । देहमनसी सन्तापयन्तीत्यर्थ । ननु मन स्थितत्वान्मन एव ते रुजन्तीति वक्तु युक्तम् । मैवम् । देहमनोलक्षणयोर्वस्तुनोराधाराधेयभावेन स्थितत्वाद्द्वयोरपि सन्तापो युक्त । यथा आधेयेनायोगोलकेन सन्तप्तेन तदाधारस्य कटाहादे सन्ताप । आधारेण च कटाहादिना सन्तप्तेनाधेयस्य घृतादे सन्ताप । तदेव रागादयो द्वय रुजन्तीति न्याय्यमेतत् । तथा सततानुषक्ता सर्वकाल प्रसृता, सहजा इत्यर्थ । अशेषकायप्रसृता । अशेषश्चासौ कायश्चाशेषकाय । तत्र प्रसृता अनुगता । यद्वा, अशेषाश्च ते कायाश्चाशेषकाया । सर्वाणि शरीराणि गजतुरगोरगादिसम्बन्धीनि, तानि प्रकर्षेण सृता गता । तथा अशेषा न विद्यते शेषो येषा तेऽशेषा सर्वे समूला । सबीजा इत्यर्थ । तथौत्सुक्यमोहारतिदा । औत्सुक्य विषयोत्कण्ठागतोऽभिलाष । मोह कार्याकार्यानभिज्ञत्वम् । अरतिरनवस्थिति स्थानासनादिषु । औत्सुक्य च मोहश्चारतिश्च ता ददति ये रागादयस्त एवम् । तानेवंविधान् यो भगवान् जघान, तस्मै तथाभूतायापूर्ववैद्याय नमोऽस्तु । त पूजयामीत्यर्थ । अत एवासावपूर्व आश्चर्यभूतो वैद्य । अन्यो हि यो वैद्य स ज्वरादीनप्यचिरोत्थितान् रोगानेतद्विशेषणैरपरामृष्टान्न तथा हर्तु समर्थ । किमुत रागादीनसाध्यलक्षणलक्षितान् । तथा चासाध्यलक्षणम् ( अस्मिन्नेवाध्याये श्लो ३२ )—"अनुपक्रम एव स्यात् स्थितोऽत्यन्तविपर्यये । औत्सुक्यमोहारतिकृत्" इति । यद्वा न विद्यते पूर्वो यस्मादसावपूर्व । पूर्वेभ्य प्रथम इत्यर्थ । अपूर्वश्चासौ वैद्योऽपूर्ववैद्य इत्यर्थ । एवविध चाभिमतनमस्कारश्लोक विरचयन् ग्रन्थकृत् ग्रन्थस्य रोगोपशान्ति प्रयोजनमिति प्रतिपादयति । तथा चाह चरकमुनि ( सू अ १।५२ ) "धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ।" इति । एवं च धातुसाम्येन प्रयोजनेन प्रयोजनवदिद तन्त्रम् । तथा तत्पाठात्तदर्थावबोधात्तदुक्तविध्यनुष्ठानाच्च आरोग्याख्यस्योपेयस्य तथाभिमतस्यायुष परस्य पुरुषार्थस्य मोक्षाख्यस्य च परमार्थत इदमेव तन्त्रमुपाय । अस्माच्चोपायोपेयलक्षणसम्बन्धात् सम्बन्धवदिद तन्त्रम् । तथा हेतुलिङ्गौषध्याख्यस्कन्धत्रयमस्याभिधेयम्, तेनाभिधेयेनाभिधेयवत्तन्त्रम् । एव च ग्रन्थकृतात्र प्रयोजनसम्बन्धाभिधेया युक्त्यैवोक्ता । इन्द्रवज्रोपेन्द्रवज्राविरचितत्वादुपजातिवृत्तम् । यथा, "अनन्तरापादितलक्ष्मभाजौ पादौ भवेता विविधैर्विकल्पै । यासामिमावन्ययतिप्रपञ्चौ स्मृता स्मृतिज्ञैरुपजातयस्ता ॥" इति । सर्वत्रैव चात्र तन्त्रेऽनुष्टुभा समानीप्रमाणीवितानादिभेदभिन्नतया विरचनम् । यत्पुनरवसरान्तरे वृत्तान्तरविरचनमिह तत्सलक्षण व्यञ्जयिष्याम ।

१ उपलो रत्नम् । 'उपल प्रस्तरे रत्ने शर्करायां स्मृतोपला' इति मेदिनीकोश । २ रागो विषयासक्ति । 'रागस्तु मात्सर्ये लोहितादिषु । क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च' इति मेदिनी ।

आ० र०-श्रीगणेशाय नम । पृष्ठे कूर्मतया चतुर्भुजतया दोर्मण्डले मन्दर रुद्ध्वा क्षीरसमुद्रमोषधिभृत निर्मथ्य निष्पादितै. । आनीतैरमृतैर्भिषक्कमतया योषित्तया पायितैर्देवानामजरामरत्वमकरोत्तस्मै नमो विष्णवे ॥ १ ॥ हेमाद्रिणा चतुर्वर्गचिन्तामणिविधायिना । तदुक्तव्रतदाना दिसिद्ध्यङ्गारोग्यसिद्धये ॥ २ ॥ क्रियतेऽष्टाङ्गहृदयस्यायुर्वेदस्य सुग्रहा । टीका चरकहारीतसुश्रुतादिमतानुगा ॥ ३ ॥ चरके हरिचन्द्राद्यै सुश्रुते जैज्जटादिभि । टीकाकारैर्न निर्णीतमिह हेमाद्रिणोदितम् ॥ ४ ॥ देशभ्रशभयाद्धिचाल्य लधिन स्नेहै प्रतापै पैर प्रद्राव्य प्रसृतान् प्रवेश्य परितो दुर्गोदर द्राक्कत । ऊर्ध्वाधोगति निर्गमय्य मदनैर्दन्त्यादिभिर्विद्विषो दोषानद्रढि रामराज्यमगदङ्कारेण हेमाद्रिणा ॥ ५ ॥ हेमाद्रिर्नाम रामस्य राज्ञ श्रीकरणेष्वधि । ननूभौ भगवन्निष्षाड्गुण्यकरणेष्वधि ॥ ६ ॥ सर्वेषा द्वीपवर्षाणा मेरुरुत्तरत स्थित. । तदस्तु सर्वोत्तरता हेमाद्रौ दृश्यते यत ॥ ७ ॥ सेव्या हेमाद्रिटीकेयमायुर्वेदरसायनम् । आयुर्वेदात्मना पुसा निर्दोषत्व हि नान्यथा ॥ ८ ॥ अष्टाङ्गहृदय मुख्यमनुकेऽष्टाङ्गसङ्ग्रह । तन्त्रान्तराणि चोक्तानि वैषम्ये विवृतानि च ॥ ९ ॥

आयुर्वेद व्याचिख्यासु श्रीवाग्भटाचार्य प्रथमश्लोके नेष्टदेवता नमस्करोति-रागादिरोगानिति । स चापूर्ववैद्य । अपूर्वत्व च अद्भुतशक्तित्वम् । तच्च ज्वरादिविलक्षणानां रोगाणा घातेन । ते च रागादय । शुद्धस्य चेतसो रजस्तमोभ्या रञ्जन राग । तदादयस्तन्मूला कामक्रोधादय । ज्वरादिविलक्षणत्वमेवाह-सततानुषक्तान्, सर्वकालमात्मना सम्बद्धान् । ननु, ज्वरादयोऽपि कुलोद्भवा एवमित्यत आह-अशेषकायप्रसृतान्, यावन्त्यात्मन शरीराणि तानि सर्वाण्यभिव्याप्य स्थितान् । ननु, कुलोद्भवा अपि कुष्ठार्शोमेहाद्या अनन्तव्यक्तिभेदेनैवमित्यत आह-अशेषान्, सर्वानेव युगपत्प्रतिदेह स्थितान् । ननु, सत्कार्यवादिना मते ज्वरादयोऽपि सूक्ष्मरूपेणैवमित्यत आह-औत्सुक्यमोहारतिदान्, औत्सुक्यम् अविचार्यैककार्यप्रवृत्ति, मोहो विचाराशक्ति, अरति असन्तोष, ता ददत्यात्मन समर्पयन्तीति तथा। औत्सुक्यादीनि स्वकार्याण्यद्भुतानि समर्पयन्त सर्वे सर्वदेहेषु सर्वदा आत्मान क्लेशयन्तीति ज्वरादिविलक्षणा एव रागादिरोगा. । जघानेति मोक्षशास्त्रप्रणयनेन वधोपाय दर्शितवान् । न तु स्वय हतवान् । तथा ह्यधुना कामाद्यदर्शन स्यात् ॥

१ 'रैर्विनिर्णीत' क ज । २ 'णोच्यते' ग । ३ 'परान्' क ग । ४ 'विद्राव्य' ख घ । ५ 'गतिभिर्गमय्य' ख घ । ६ 'ननु यो' ज । ७ 'तदस्ति' क ग । ८ 'णि वैषम्ये सर्वाणि विवृतानि' ख ग. घ । ९ 'अपूर्ववैद्यत्व हि अद्भुतशक्तिमत्त्वम्' ज । १० 'एतच्च' ख ग घ । ११ 'अविचार्यप्रवृत्ति.' ग ङ ज । १२ 'स्वकार्याण्युद्भूतानि' ख घ ।

इदानीमिष्टदेवता नमस्कृत्य शास्त्रकारस्तन्त्रमारिरिप्सुरिदमाह-

**अथात आयुष्कामीयमध्यायं व्याख्यास्यामः ।**

( गद्यसूत्रम् ॥ १ ॥ )

स०-अथेति । अथशब्दोऽस्मिन्मङ्गलाधिकारानन्तर्येषु द्रष्टव्य । मङ्गलादीना हि शास्त्राणा तदध्येतॄणा च निष्प्रतिबन्धा प्रवृत्तिरभिप्रेतार्थसाधनाय जायते । अथशब्दश्चाय मङ्गलार्थ । तथा चोक्तम्-"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मण पुरा । कण्ठ भित्त्वा विनिर्यातौ तेनेमौ मङ्गलौ स्मृतौ ॥" इति । अतोऽधिकारे । आयुष्कामीय शास्त्रमधिक्रियते यावदत ऊर्ध्व प्रतन्यते आतन्त्रपरिसमाप्तेस्तत्सर्वमायुष्कामीय वेदितव्यम् । अत आनन्तर्ये च । नमस्कारादनन्तरमायुष्कामहित व्याख्यास्याम इति । कथ पुनरेकस्यैव तन्त्रकारस्य व्याख्यास्याम इति बहुवचन युज्यते । ब्रूम । "अस्मदो द्वयोश्च" इत्येकत्वेऽपि बहुवचनविधानादभिलषन्तीति युक्तमेवात्रैकस्मिन्नपि बहुवचनम् । आयु शरीरेन्द्रियसत्त्वात्मसयोग । तथा च मुनि ( च सू अ १।४१ )-"शरीरेन्द्रियसत्त्वात्मसयोगो धारि जीवितम् । नित्यग चानुबद्ध च पर्यायैरायुरुच्यते ॥" इति । एतीत्यायु । सन्तत यातीत्यर्थ । एवविध गत्वरस्वभावमपि हिताहारविहारसेवादिभिरहितवर्जनेन च कथमेतत् स्थिरीभवेदित्येव कामयन्ते ये, ते आयुष्कामा । तेभ्यो हित आयुष्कामीय । स पुनरायुर्वेदागमादिप्रकरणसमुदाय आयुष्कामयमानेनेत्यादिक । आयुष्कामीय इति "इसुसो सामर्थ्ये" इति षादेश । "तस्मै हितम्" इति छ । आयुष्कामीयशब्दोऽध्यायविशेषणार्थो नीलोत्पलदलवत् । बहुष्वध्यायेषु सत्सु कतममध्याय व्याख्यास्याम आयुष्कामीयमिति । अधिकृतोऽध्ययनायेत्यध्याय, त व्याख्यास्याम विविधप्रकारेण विशेषेण वा कथयिष्याम । आयुष्कामे पूर्वं दृष्टत्वादस्याध्यायस्यायुष्काम इति सज्ञा । अर्थगतिमधिकृत्याध्याय इति नाम । तथा चोक्तम् ( च सू अ ३०।६५ )-"अधिकृत्येयमध्यायनामसज्ञा प्रतिष्ठिता" इति । तत्र पदसमुदायो वाक्य, वाक्यसमुदाय प्रकरण, प्रकरणसमुदायो य, सोऽध्याय, अध्यायसमुदाय स्थान, स्थानसमुदायस्तन्त्रमिति । विशब्दो नानार्थ । आङभिविधौ । उत्तराख्यश्चायमलङ्कार । तस्य हि लक्षणम् ( काव्यालङ्कारे अ. ७।९३ )-"उत्तरवचनश्रवणादुन्नयनं यत्र पूर्ववचनानाम् । क्रियते तदुत्तरं स्यात्" इत्यादि । ततोऽनेन वाक्येन शिष्यवचनमीदृशमुन्नीयते । ससारेऽस्मिन्नमी प्राणिनो नानारोगानीकाभि-

१ 'अथो अथ समुच्चये । मङ्गले सशयारम्भाधिकारानन्तरेषु च । अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि' इति हैम । २ 'गण्डौ भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ' इति पाठान्तरम् । ३ 'नित्यगश्चानुबन्धश्च' इति पाठान्तरम् । ४ 'अधिकृत्यार्थमध्याय' इति पाठान्तरम् ।

भूतास्त्रातारमलभमानाश्चतुर्वर्गाद् भ्रश्यन्ते । तत्को नु भगवन्नत्रोपाय स्यादिति कृतप्रश्नो गुरु प्रतिजज्ञे, अथात आयुष्कामीयमध्याय व्याख्यास्याम इति । अथ शिष्यवचनानन्तरम् । अतो हेतोर्यस्मादय शिष्य श्रुतकुलशीलादिसम्पन्नो धीमेधागुणभूषणभूतश्च । वि विविधै प्रकारै । आ शिष्यबोधोत्पत्ते । आयुष्कामीयमध्याय ख्यास्यामो वर्णयिष्याम । ननु कीदृश तद्विविधप्रकारमाख्यानम् । ब्रूम । पदत , तदर्थत , प्रयोजनत , चोद्यत , परिहारत , सम्बन्धाभिधेयतश्च । पदतो यथा, आयुरितीद पदम् । तदर्थतो यथा, एतीत्यायु । प्रयोजनतो यथा, अत्रैव धर्मार्थसुखसाधनम् । चोद्यतो यथा, ननु कथमेतत्केवल धर्मार्थसुखसाधनमिति वक्तु पार्यते । यतोऽस्यायुष कर्मैव केवल धर्मसाधनमिति वक्तु नो पार्यते । यतोऽस्यायुष परिपालनार्थ विशस्ता काकगृध्रभासादयो राजयक्ष्मचिकित्सिते भोज्या इत्युक्तम् । अभक्ष्याश्चैते । श्रुतिस्मृत्योरभक्ष्यत्वेनोक्तत्वात् । एवमभक्ष्यभक्षणाद्धिंसया च पापयोग । तद्योगाच्चाधर्मसाधनं न धर्मसाधनमिति । परिहारतो यथा, अत्रैव परिहारो यज्ञाधिकारिशरीरनिमित्त काकादीना विशसन भक्षण विधीयमान नाधर्माय । इतरथा क्रीडार्थं क्रियमाणमधर्मायैव । तथा च काकादयोऽपि तत्साधनोपयोगाद्धर्मेण तत्फलेन सम्बध्यन्ते यज्ञिया इव पशव । तदेवमायुषो धर्मसाधनत्व स्थितम् । सम्बन्धाभिधेयौ तूक्तावेव । ननु सन्त्येवान्यान्यपि महर्षिप्रणीतान्यायुर्वेदतन्त्राणि, किमनेन तन्त्रेण कृतेनेति । अत्र ब्रूम । अपरतन्त्राणा सावद्यत्वादिदमुच्यते । अन्यानि हि तन्त्राणि सदोषाणि । तथा हि । यदेतत्तावद्भगवता चरकमुनिना प्रणीतं तन्त्र रत्नाकर इव गाम्भीर्यातिशययोगाद्दुर्बोधम् । तस्यापि सदोषता प्रकटयन्ति वाचाटा । तथा ह्यादौ तत्सूत्रम् । अथातो दीर्घञ्जीवितीयमध्याय व्याख्यास्याम इति । अत्र दीर्घञ्जीवितीय इति शास्त्रादावयुक्तम् । यतो ( च सू अ १ श्लो ३ ) दीर्घ जीवितमन्विच्छन्नित्यस्यानुकरण दीर्घञ्जीवितमिति । सोऽस्मिन्नध्यायेऽस्तीति छ । तस्याध्यायानुवाकयोर्लुकि सति दीर्घञ्जीवितमिति प्राप्नोति । तदिदमविदितपरमार्थशब्दस्वरूपाणा वचनम् । तथाहि । अध्यायानुवाकयोरित्यादौ सूत्रे विकल्पेन चाय लुगिष्यत इति जगाद जयादित्य । तेन लुक् पाक्षिकत्वादत्र लुक् न भवतीत्येवं युक्तमुक्तमिदम् । तथा दीर्घशब्देन गुणोऽभिधीयते जीवितशब्देनापि गुण एव । तस्माद्द्वयोरपि गुणत्वादाधाराधेयभावो न युक्त , यतो गुणाश्रयो गुणो नोक्त इति । तथा च वैशेषिका । निर्गुणा गुणा इति । अथ कालशब्द लुप्तस्वरूप निर्दिश्य दीर्घजीवितीयशब्दो निर्दिश्यते तदा युक्तमेवैतत् । तथा इन्द्रियोपक्रमणीयेऽध्याये छ्रप्रत्ययोत्पत्ति कथमेव विधीयता यतोऽस्मिन्नध्याय इन्द्रियोपक्रमणशब्दो नास्त्येव । एवमपामार्गतण्डुलीयेऽपामार्गतण्डुलशब्दस्याभावाच्छप्रत्ययोत्पत्तिर्दुर्लभा । तथा दिव्याम्भसो गाङ्गसमुद्रभेद परीक्षा च नोक्ता । प्रत्युत तत्र पठ्यते । ( च सू अ २७।१९१ )–"जलमेकविध सर्व पतत्यैन्द्र नभस्तलात् । तत्पतत्पतित चैव देशकालावपेक्षते ॥" इति । तथा नालिकेरोदकस्य गुणा नोक्ता । तथा, अपक्वक्वथितक्षीरस्य स्वरूपविशेषो नोक्त । तथा कषाये कियदौषध किमवशेष कथनीयमित्यादि च नोक्तम् । मिश्रके स्नेह एवमभ्यधादसौ । "त्रिवृता त्रिफला दन्ती दशमूल पलोन्मितम् । चतुर्गुण जल दत्वा" इत्यादि । तदेषामौषधाना कियन्मानमपि सलिलेनैतावता कीदृश किमुत क्वाथनिर्यासाविति । तथा क्वथितशीततोयमपि कियता पाकेन पथ्य भवतीति नोक्तम् । मुद्गो ग्राहीति च नोक्तम् । तथा च तत्पाठ ( च सू अ २७।२२ )–"कषायमधुरो रूक्ष शीत पाके कटुर्लघु । विशद श्लेष्मपित्तघ्नो मुद्ग सूप्योत्तमो मत ॥' इति । तथा वास्तुकादीना लघुत्व नोक्तम् । तथा च तत्पाठ ( च सू अ २७।८५ )–"पाठाशुषासठीशाक वास्तुक सुनिषण्णकम् । विद्याद् ग्राहि त्रिदोषघ्न भिन्नवर्चस्तु वास्तुकम् ॥" इति । तथा इक्षुवर्गे, ( च सू अ २७।२३४ )–"शैत्यात्प्रसादान्माधुर्यात्पौण्ड्रकाद्वाशिको वर " इत्यसावभ्यधात् । पौण्ड्रकश्च वाशिकाद्वर इति सुप्रसिद्धमेतत् । अत्र मतिवैभवाद्भट्टारकहरिश्चन्द्रौ व्याख्याविशेषमवोचताम् । यथा पौण्ड्रकाद्वाशिकोऽवर इति । एव चैतदुपपन्नमेव । तदेवमात्रेयस्यापि तन्त्रे यतो बहवो दोषा उद्भाव्यन्ते, तत का गणना तन्त्रान्तराणाम् । तथा वेदोत्पत्तिरिति सज्ञा तन्त्रेऽस्मिन्सदोषत्वाच्च कृता । तथा हि । आयुषो वेद आयुर्वेद , तस्योत्पत्तिरायुर्वेदोत्पत्तिरिति भवितव्यम् । अत्र केचिदाहु , आयु शब्दलोप कृत्वेह निर्देश कृत । एवमपि सति लोपस्तावदमङ्गल । सोऽप्यायुष । स च शास्त्रादौ । इत्यन्याय्यैवैषा सज्ञा । किञ्च वेदोत्पत्तिरित्येतदपि तावद्वक्तु न युज्यते, नित्यत्वादस्य वेदस्य । नित्यो ह्ययमायुर्वेद , आयु सन्तानादिनित्यत्वात् । तथा ह्यायु सन्तान सर्वप्राणिसवेद्यशरीरापरशरीरगो मन प्रबन्धनित्यतया नित्य । अस्य नित्यत्वादायुर्वेदोऽपि नित्य । नित्यत्वाच्चास्योत्पत्तिमत्त्वं वक्तुमयुक्तम् । नन्ववबोधोपदेशाभ्यामुत्पत्तिरस्योपलभ्यते । यत प्रागुपदेशान्नासावुपलभ्यते । अत उपदेशानन्तरमुपदेशद्वारेणोपलभ्यते । तस्मादवबोधोपदेशावस्योत्पत्तिकारणत्वेन कल्पयित्वोत्पत्तिमत्त्वमस्योच्यत इति कैश्चिदूचे । नैतद्युक्तम् । यत सतो बोधोपदेशौ स्तो नासत । तथा चाचष्टे लोक । अमुना गुरुणा छात्रायोपदिष्ट शास्त्रमिदमिति । सत एवोपदेशावबोधौ

---

१ 'त्रिवर्गात्' इति पाठान्तरम् । २ 'नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयो ' इति हैम. ।

१ सज्ञेय सुश्रुतस्य । तथा ह्यादौ तत्सूत्रम् । 'अथातो वेदोत्पत्तिमध्याय व्याख्यास्याम ' इति । २ तथाच मुनि ( च सू अ. ३०।२४ )–"सोऽयमायुर्वेद शाश्वतो निर्दिश्यते, अनादित्वात्स्वभावससिद्धलक्षणत्वाद्भावस्वभावनित्यत्वाच्च । न हि नाभूत्कदाचिदायुष सन्तानो बुद्धिसन्तानो वा, शाश्वतश्चायुषो वेदिता" इति । ३ आयु सन्तान. आयुष. पारम्पर्ययोग. ।

स्त । तस्मान्नावबोधोपदेशावस्थोत्पत्तिकारणमित्यतोऽपि हेतोर्वेदोत्पत्तिसञ्ज्ञेत्ययुक्ता। इति सञ्ज्ञाना सावद्यत्व निरूप्य निरवद्या आयुष्कामीयसञ्ज्ञेह तन्त्रे कृता । ययोच्चारितमात्रयैवाशेषस्तन्त्रार्थ प्रकाश्यते। प्रतिस्थान च योऽध्याय प्रथमस्तत्सञ्ज्ञया स्थानार्थ । अन्ये च येऽध्यायास्तन्त्रेऽस्मिंस्तत्सञ्ज्ञाभिर्यथास्वतन्त्रमर्थजात प्रकाशयन्त इति ।

**आ० र०-आयुष्कामीयमध्याय व्याख्यातु प्रतिजानीते-अथेति । अथ स्वेष्टदेवतानमस्कारानन्तरम् । अतो हेतोर्व्याख्येय । यतोऽयमायुर्वेदो व्याधिप्रतीकारव्याख्यानम् । आयुर्वैरिणो हि व्याधय । व्याख्या च सामान्यविशेषाभ्या सङ्क्षेपविस्तराभ्या च कृता सुग्रहा भवति। तत्रादौ व्याधिप्रतीकारस्य सामान्यसक्षेपव्याख्यार्थमयमध्याय, आयुष्कामहितत्वाच्च आयुष्कामीय । नन्वेव चेत्सर्वेऽपि आयुष्कामीयाः। सत्य; किन्तु प्रथमोऽयमध्यायो मङ्गलार्था चेय सञ्ज्ञा। मङ्गलादीनि च शास्त्राणि प्रथन्त इत्यस्येय सञ्ज्ञा कृता। अन्येषा तु व्याख्येयार्थानुरूपा दिनचर्यादिसञ्ज्ञा करिष्यति ।**

इदमिदानीं पृच्छ्यते तन्त्रकार । यदस्मिंस्तन्त्रे किञ्चिदुच्यते स्म भवद्भिस्तत्स्वबुद्धिपरिकल्पितमुत नेत्याह—

**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रम् ॥ २ ॥ )

**स०**-इतिशब्द एवमर्थे । यथा इति ह स्म, तानाह । हशब्दोऽनुकम्पायाम् । ब्रूधातो स्म उपपदे भूतानद्यतनपरोक्षे 'लट् स्मे' इति लट आहादेश । अत्रेरपत्यमात्रेय । 'इतश्चानिञ' इति ढक्। आत्रेय आदिर्येषा धन्वन्तरिप्रभृतीना त एवम्। महान्तश्च ते ऋषयश्च महर्षय । महत्त्व तज्ज्ञानातिशययोगात्। तेनायमर्थोऽनेन कारणेनानुकम्पया, न तु फलाकाङ्क्षया, भगवन्त आत्रेयादयो महर्षयोऽब्रुवन्। नास्माभि स्वमतिपरिकल्पित किञ्चिदप्यत्रोक्तम्। केवल दूतसन्देशवचनन्यायेन युगानुरूप क्रममात्रोऽन्यथा कृत इत्यर्थ । तथा चास्यैव सङ्ग्रहे-( सू अ १ ) 'न मात्रामात्रमप्यत्र किञ्चिदागमवर्जितम्। तेऽर्था स ग्रन्थसन्दर्भ सक्षेपाय क्रमोऽन्यथा" इति। तदेवमागमप्रामाण्यमस्य तन्त्रस्येत्युक्त भवति ।

**आ० र०-आत्मकृति प्रमाणयति-इति हेति। प्रामाण्य चाप्तवाक्यत्वात्। आप्ताश्चात्रेयादयो महर्षय । ते च, इति ह एवमेव, आहु स्म उक्तवन्त, यथा वय वक्ष्याम । तेन वयमप्याप्ता. ।**

**आयुः कामयमानेन धर्मार्थसुखसाधनम्।**
**आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ २ ॥**

**स०**-आयुर्वेदयति ज्ञापयति प्रकृतिज्ञानरसायनदूतारिष्टाद्युपदेशादित्यायुर्वेद । तस्योपदेशा आयुर्वेदोपदेशा । उपदिश्यन्त आयुर्वेदार्था उपपत्तिभिरित्युपदेशा आयुर्वेदतन्त्राणि। तेषु पर मादर पाठावबोधानुष्ठानरूप उत्कृष्टो यत्न कार्य । आयुर्वेदोपदेशेष्विति बहुवचननिर्देशादयमर्थो बोध्यते । बहुष्वायुर्वेदतन्त्रेषु यत्न कार्य । अनेकायुर्वेदावलोकनाद्धि चिकित्साया वैद्यस्य न मनागपि सन्देहो जायते। कि कुर्वता पुरुषेण-आयु कामयमानेन जीवितमभिलषता। किम्भूतमायु, धर्मार्थसुखसाधनम्। ध्रियते लोकोऽनेनेति धर्म । अर्थ्यते याच्यत इत्यर्थ । सुख द्विविधम्, तादात्त्विकमात्यन्तिक च। तादात्विक कियत्कालान्तरास्थायित्वात्सुखावभास, न परमार्थत सुखम्। तथा चोक्तम्-( च सू अ २८।३७ ) 'तादात्वसुखसञ्ज्ञेषु भावेष्वज्ञोऽनुरज्यते।' इति। तदेतत्सञ्ज्ञामात्रेण सुख, न त्वत्यन्तमिति प्रदर्शयितु सुखसञ्ज्ञेष्विति मुनिनोक्तम् । आत्यन्तिक सुख मोक्षाख्य, यत्र न दु खाना श्लेष । तेषा साधनमुपायो धर्मार्थसुखसाधनम् ।

**आ० र०-प्रेक्षावत्प्रवृत्त्यर्थ प्रयोजनाधिकारिणौ दर्शयति—आयुरिति। प्रयोजन चायु । तस्य च प्रयोजनत्व धर्मार्थसुखसाधनत्वात्। सुख कामो मोक्षश्च। अत एव य आयु कामयते सोऽत्र अधिकारी। तेन च, आयुर्वेदोपदेशेष्वसद्वाक्येषु, परमत्यर्थम्, आदरो विधेय पाठावबोधानुष्ठानैर्यतितव्यम्।**

अथास्यायुर्वेदस्य गौरवोत्पादनायागमशुद्धिं दर्शयति—

**ब्रह्मा स्मृत्वाऽऽयुषो वेदं प्रजापतिमजिग्रहत्।**
**सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान्मुनीन् ३**
**तेऽग्निवेशादिकांस्ते तु पृथक् तन्त्राणि तेनिरे।**

**स०**-ब्रह्मेत्यादि । ब्रह्मा आयुषो वेद स्मृत्वा प्रजापतिं दक्षमजिग्रहद् अवाबोधयत् । स्मृत्वेत्यनेनैतद्गमयति ब्रह्मण स्मर्तृत्वमेवात्र न कर्तृत्वम्। नित्यत्वादायुर्वेदस्य । नित्यत्वं चास्य प्राक् प्रत्यपादि। ग्रहेर्ण्यन्तस्यात्र बुद्ध्यर्थत्वात् प्रजापतिशब्दस्य गतिबुद्धीत्यादिना कर्मसञ्ज्ञा। स प्रजापतिरश्विनावजिग्रहत्। तौ सहस्राक्षमिन्द्रमजिग्रहतामिति वचनविपरिणामेन सम्बन्ध । स शक्रोऽत्रिपुत्रादिकान् मुनीन् बोधयामास । अत्रिपुत्र आत्रेय आदिर्येषा धन्वन्तरिनिमिकाश्यपादीना त एवम्। ते चात्रेयादयोऽग्निवेशादिकानजिग्रहन् । ते त्वग्निवेशादय षट् पृथक् प्रत्येक तन्त्राणि शास्त्राण्यग्निवेशभेडजातूकर्णपराशरहारीतक्षारपाणिनामाभिधेयानि तन्त्राणि तेनिरे विस्तारितवन्तश्चक्रु । तन्त्र्यन्ते धार्यन्त आयुर्वेदार्था एभिरिति तन्त्राणि।

**आ० र०-आयुर्वेदस्य शब्दान्तरानभिधेयत्वशङ्कां निराकर्तुं पुरावृत्त दर्शयति-ब्रह्मा स्मृत्वेति। ब्रह्मा आयुर्वेद स्मृत्वा प्रजापति दक्षमजिग्रहत् ग्राहितवान्, अध्यापितवा-**

१ 'कारसामान्य' क ग । २ "आयु हिताहितत, सुखासुखत, प्रमाणाप्रमाणतश्च वेदयतीत्यायुर्वेद । तथा चागम ( च सू अ १।४० )-'हिताहित सुख दु खमायुस्तस्य हिताहितम्। मान तच्च यत्रोक्तमायुर्वेद स उच्यते' इति । अथवा आयु. येन यस्मिन् वा विद्यते, ज्ञायते, लभ्यते, विचार्यते वा, स आयुर्वेद " इति चन्द्र ।

नित्यर्थ । आयुषो वेदमित्यसमासकरणमायुर्वेदलक्षणप्रति-पादनार्थम्। आयुष सम्बन्धी वेद आयुर्वेद इति । सम्बन्धश्च पाल्यपालकलक्षण । उक्त हि सङ्ग्रहे ( सू० अ० १)-“आयुष पालक वेदमुपवेदमथर्वण ” इति । स प्रजापतिरश्विनावायुर्वेदमजिग्रहत्। तावश्विनौ सहस्राक्षमजिग्रहताम्। स इन्द्रोऽत्रिपुत्रादिकान् मुनीनजिग्रहत्। तेऽत्रिपुत्रादयोऽग्निवेशादिकान् मुनीनजिग्रहन्। ते पुनरग्निवेशादय , पृथक् प्रत्येक, तन्त्राणि शास्त्राणि, तेनिरे विरचयाञ्चक्रुः। सक्षेपार्थमायुर्वेद शब्दान्तरैरभिदधुरित्यर्थ ।

ननु यदि तैस्तन्त्राणि पुनर्युगानुरूपसन्दर्भै सङ्गृहीतानि । तत्किमिदानीमनेन शास्त्रेण कृतेनेत्याह–

**तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः ॥ ४ ॥**
**क्रियतेऽष्टाङ्गहृदयं नातिसंक्षेपविस्तरम्।**

स०–तेभ्य इति । तेभ्यो ग्रन्थेभ्योऽतिविप्रकीर्णेभ्यो विक्षिप्तेभ्य उच्चावचोक्तार्थतयैवेतश्चेतश्च गतेभ्य । अत एव कश्चिदेवार्थ कस्मादेव तन्त्रान्तराज्ज्ञायते । यथा शल्यचिकित्सा सुश्रुतप्रणीतात्तन्त्रादेवावगम्यते न तथाग्निवेशादिकात्। ऊर्ध्वाङ्गचिकित्सा च जनकप्रणीतात्तन्त्राद्यथावगम्यते न तथा सुश्रुत प्रणीतात् । अत प्रायो बाहुल्येन सारतरोच्चय क्रियते । उच्चीयन्ते सङ्गृह्यन्ते विक्षिप्ता पदार्था अनेनेत्युच्चय । यथा वा यवादीना बहुक्षेत्रजातानामेकस्मिन् स्थाने उच्चयो राशीकृत्य स्थापन विधीयते तथेह सारतराणामुच्चय । सारतरग्रहणेनैतद् द्योतयति, सङ्ग्रहेणैव साराणामुच्चय कृत । अनेन तथा सारतराणा प्रदेशानामुच्चय क्रियत इति । किं नाम अष्टाङ्ग हृदयम् । एतच्च सान्वयार्थमस्य नाम । यथा शरीरस्य सर्वावयवेभ्य प्रधानदेशो हि हृदयम्, तथेदमष्टाङ्गायुर्वेदस्य प्रधानभूतत्वाद्धृदयमिव हृदयम् । तथा च तन्त्रान्ते वक्ष्यति ( उ अ ४०।८८ )–हृदयमिव हृदयमेतदित्यादि । अष्टौ च तान्यङ्गान्यष्टाङ्गानि, तेषा प्रत्येकं हृदय, सारतरसङ्ग्रहणात्। कीदृशमष्टाङ्गहृदयम्। नातिसक्षेपविस्तरम्। सक्षेपश्च विस्तरश्च सक्षेपविस्तरौ, अतिशयेन सक्षेपविस्तरौ यत्र न, तन्नातिसक्षेप विस्तरम् । अतिशब्दस्यात्र प्रत्येक सम्बन्ध. । अतिसक्षेप किञ्चित्तन्त्र यथा सिद्धसारादि, किञ्चिच्चातिविस्तर यथा सङ्ग्रहादि। इदं तु तन्त्र नातिसक्षेपविस्तरम् । अतिसक्षेपोक्त स्वल्पधिया नोपकृतये। तेषा हि यथोक्तागममात्र श्रेय , न तु वाक्यार्थपर्यालोचनादधिक परामर्श । अतिविस्तीर्ण तु पाठावबोधानुष्ठानैस्तेषा दु शक्य स्यात् । तस्मादल्पमध्योत्कृष्टबुद्धिशिष्यहितार्थ तन्त्रमेतदुद्दिष्टम् ।

१ ‘लक्षणज्ञापनार्थम्’ ख घ. । २ ‘पालनलक्षण ’ ख घ । ३ ‘पालन’ ख घ. । ४ ‘नातिसक्षिप्तविस्तृतम्’ इति हेमाद्रिसम्मत पाठ । ५ रविगुप्तविरचितमिद सिद्धसारतन्त्र नाद्यापि क्कुत्रचिदस्ति मुद्रितम्।

आ० र०–अग्निवेशादिशास्त्रेषु सत्स्वपि स्वशास्त्रस्योपयोग दर्शयति–तेभ्य इति । सारतरोच्चय क्रियते, मयेति शेष । सारतराणां बहूपयोगानामर्थानामुच्चय । उच्चीयन्ते एकत्र क्रियन्ते व्यस्ता अर्था अस्मिन्नित्युच्चय । ननु पूर्वशास्त्राण्यपि महाकषायसङ्ग्रहादिषु प्रदेशेष्वेवमित्यत आह—अष्टाङ्ग हृदयम् । अष्टाङ्गस्यायुर्वेदस्य हृदय सर्वार्थाधिष्ठानम्। सञ्ज्ञा चेयमस्य शास्त्रस्य । वक्ष्यति हि (उ० अ० ४०।८८)–“हृदयमिव हृदयमेतत्सर्वायुर्वेदवाङ्मयपयोधे ” इति । सर्वेषु प्रदेशेषु सारतरोच्चय इत्यर्थ । ननु पूर्वशास्त्राण्यपि क्वचिल्लेशेन क्वचित्कार्त्स्न्येनेति सर्वत्र सारतरोच्चयरूपाणीत्यत आह—नातिसक्षिप्तविस्तृतम्, अतिसक्षेपातिविस्तररहित सर्वत्र सपूर्णम्। ननु न्यूनपूरणस्य निर्मूलत्वादप्रामाण्यमित्यत आह—तेभ्य , अग्निवेशादिशास्त्रेभ्य एवोच्चय क्रियते । नन्वेव चेत्किमनेनेत्यत आह–अतिविप्रकीर्णेभ्य , यत्र प्रकरणार्था विच्छिद्य विच्छिद्य सर्वत्र कीर्यन्ते तानि विप्रकीर्णानि, यत्र वाक्यार्थाश्च तान्यतिविप्रकीर्णानि इति । एतदुक्त भवति। सन्ति पर पूर्वशास्त्रेषु सर्वे एवार्था , किन्तु अतिविप्रकीर्णत्वात् दुर्ग्रहा । इह तु रचनाविशेषेण सुग्रहा इत्यस्योपयोग । उक्त च सङ्ग्रहे ( सू० अ० १ )–“न मात्रामात्रमप्यत्र किञ्चिदागमवर्जितम्। तेऽर्था स ग्रन्थबन्धश्च सक्षेपाय क्रमोऽन्यथा ॥” इति ।

कानि पुनस्तान्यष्टाङ्गानीत्याह—

**कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषान् ॥ ५ ॥**
**अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता ।**

स०–कायेति । कायश्च बालश्च ग्रहश्चोर्ध्वाङ्ग च शल्यं च दंष्ट्रा च जरा च वृषश्चेतीतरेतरद्वन्द्व । ननु सर्वस्याश्चिकित्साया कायाश्रितत्वात् कायशब्दोऽर्थादाक्षिप्त एव । तत्किमर्थ कायशब्द उपादीयते। ब्रूम । प्रकर्षार्थम्। यथा पुरुषाय अभिरूपाय कन्या देयेत्यत्राभिरूपग्रहणादभिरूपतमायेति प्रतिपाद्यते, तथेहापि प्रकृष्टो य काय सम्पूर्णधातु प्रकृष्टा च यावस्था, तया युक्त । तत्सङ्ग्रहार्थ कायशब्द उपात्त । तथा ‘चिञ् चयने’ इत्यस्माद्धातोर्व्युत्पादित कायशब्द । चीयते प्रशस्तदोषधातुमलैरिति काय । तदेव सर्वशरीरोपतापकानामामपक्वाशयस्थानोद्भवाना ज्वररक्तपित्तातिसारादीना रोगाणा यत्रोपशमयोगो निगद्यते, तत्कायचिकित्सानामाङ्गम्। बलसत्त्वसम्पूर्णधातुत्वाद् यौवनावस्थकायस्य प्रथमनिर्देश । बालदेहेऽसम्पूर्णबलधातुत्वादप्रकृष्टवयोवस्थाप्रभावात् तच्चिकित्साङ्ग पृथङ्निर्दिष्टम्। तथा बालौपयिकभेषज धात्रीदुग्धलक्षणं दुग्धोद्भवव्याधिप्रशमादिनिर्देशाच्च । नन्वेव वृद्धस्य प्रकृष्टवयोवस्थाया अभावात्तद्देहे कायचिकित्सेति कथ व्यपदेश स्यात्। अत्र ब्रूम । भूतपूर्वगत्या वृद्धदेहेन हि प्रकृष्टवयोवस्था पूर्वमनुभूता । अतो भूतपूर्वगत्या तत्र कायचिकित्सोपदेशो युक्त ।

१ ‘न्यूनपूर्णस्य’ क ।

एव ग्रहचिकित्सा नाम, यत्र देवादिग्रहगृहीताना प्राणिना शान्तिकर्म विधीयते । यत्रोर्ध्वजत्रुगताना रोगाणा नेत्रकर्णघ्राणादिसश्रितानामाश्चोतनशलाकादिनोपशमो वर्ण्यते तदूर्ध्वाङ्गचिकित्सानामाङ्गम् । अत्र च जन्मन प्रभृति विचारोपदेशाद्बालचिकित्सैव प्रागवक्तु युक्ता । किन्तु कायचिकित्सा प्राधान्यात्प्रागुपन्यस्ता । ततोऽनन्तरं बालचिकित्सा । बालस्य च ग्रहसम्बन्धाद् ग्रहचिकित्सा । तत शरीरस्य मूलरक्षार्थमूर्ध्वाङ्गचिकित्सा शालाक्य नाम । तत शस्त्रसाधनसामान्येन शल्यचिकित्सा । पीडाकरणसमानत्वात् दंष्ट्राचिकित्सा । दंष्ट्रा विषात्मिका । विषेणाशु च मरणे सम्भाव्यमाने रसायनोपयोगो युक्त इति रसायनचिकित्सा । अथवा विषस्य रसायन जेयत्वाद्रसायनकथनप्रस्ताव । ततोऽनन्तर वाजीकरणस्य भरणेन प्रस्ताव । तथा चाधीते ग्रन्थकृत् ( उ अ. ४०।१ )–"वाजीकरणमन्विच्छेत्सतत विषयी पुमान्" इति । रसायनस्य पश्चादित्यर्थ । यत्राल्पदुष्टरेतसा तदाप्यायनप्रसादोपजननरूपा चिकित्सा क्रियते तद्वाजीकरणम् । एवमेतानि कायादीनि, तस्यायुर्वेदस्य, अष्टावङ्गान्याहुर्वदन्ति । ब्रह्माऽऽत्रेयादय इति शेष । येषु कायादिषु चिकित्सा सश्रिता व्यवस्थिता । ( च सू अ ९।५ )–"चतुर्णा भिषगादीना शस्ताना धातुवैकृते । प्रवृत्तिर्धातुसाम्यार्था चिकित्सेत्यभिधीयते ।" इति मुनिप्रोक्त लक्षण नेह तन्त्रकृद्बधत्त[1] । चिकित्साशब्दादेवास्यार्थस्य लब्ध त्वात् । तथा च निर्देष्टुमाह । निन्दाक्षमाव्याधिप्रतीकारविचारणासु सा निष्पद्यत इति । कितेर्धातोर्व्याधिप्रतीकार एवास्य व्युत्पादितत्वात् ।

**आ० र०–आयुर्वेदाङ्गान्याह–कायेति । तानि च कायादीनि अष्टावाहु । तत्र कायशब्देन सर्वावस्थ सर्वावयव च शरीर गृह्यते, बालादिशब्दै[2]स्तस्यैवावस्थाविशेषा लक्ष्यन्ते । ऊर्ध्वाङ्ग त्ववयवविशेष । बाल प्रथम वय , ग्रहो ग्रहार्तत्वम्, ऊर्ध्वाङ्ग शिर , शल्यं व्रणार्तत्वम्, दंष्ट्रा विषार्तत्वम्, शल्यदंष्ट्राशब्दौ व्रणविषमात्रोपलक्षणौ । जरा पश्चिम वय , वृष स्त्रीप्रसङ्गित्वम् । एषा च कायादीना चिकित्साश्रितानामेवाङ्गत्वमित्यत आह—चिकित्सा येषु सश्रिता इति । चिकित्सा व्याधिप्रतीकार. । अत एव कायचिकित्सा, बालचिकित्सेत्यादयोऽङ्गाना सज्ञा । विवक्षितविवेकाच्च चिकित्साया एव ह्यङ्गत्वम् । अङ्गान्यवयवा । तत्रावस्थामात्राश्रयाणां बालादिव्यतिरिक्तावस्थाविशेषाश्रयाणामवयवमात्राश्रयाणामूर्ध्वाङ्ग व्यतिरिक्तावयवविशेषाश्रयाणा च व्याधीना कायचिकित्सिते प्रतीकार । बालचिकित्सादिषु तु तत्तद्विशेषैकनिष्ठानाम् । इति शास्त्रा[3]र्थेतिकर्तव्यता ।**

कायस्य दोषधातुमलसमुदायत्वात्तानेव दोषादीन् निर्दिदिक्षुराह–

**वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ॥ ६ ॥**

**स०**–वायुरिति । च समुच्चये । कफो दोषमध्ये समुच्चीयते । इत्यनेन प्रकारेण, समासत सक्षेपात्, त्रयो दोषा । ननु प्रस्तुतत्वादिह धातुसज्ञया वातादयो निर्देष्टु न्याय्या , न दोषसज्ञया । अस्त्येवैतत् । किन्तु रसादिदूषणपूर्वकमेषा विकारकरणे सामर्थ्यमिति प्रदर्शनार्थं दोषसज्ञया ते निर्दिष्टा , न धातुसज्ञया । न ह्येते धातुरूपा जातु विरुद्धत्व कुर्वते देहधारणवर्धकत्वात् । एते मुनिनापि चरकेण पूर्व दोषसज्ञयैव निर्दिष्टा । तथा च तद्ग्रन्थ ( सू अ १।५६ )–"वायु पित्त कफश्चोक्त शारीरो दोषसङ्ग्रह " इति । 'वातपित्तकफा दोषास्त्रय एव समासत ' इत्येव निर्देशे कर्तव्ये यदेषा पृथग्विभक्त्या निर्देश कृत , स प्रधान त्वख्यापनार्थं । बहुवचनादेव त्रित्वे लब्धे त्रिग्रहणं नियमार्थम् । त्रय एव दोषा , न चतुर्थोऽस्तीति । तन्त्रान्तरीया हि चतुर्थं दोषमीहन्ते । तेषा ह्ययमभिप्राय । यथा दोषाणा स्थानलक्षणकार्यविकारचिकित्साद्युपदेशस्तथा रक्तस्यापि । तत्र स्थान, सर्वदेहव्यापित्वेऽपि प्लीहयकृती । लक्षण च, पद्मेन्द्रगोपहेमादीत्यादि । कार्य, देहस्योत्पत्तिस्थिती । विकार , विसर्पप्लीहादि । चिकित्सा, सिराव्यधादिक कर्मेति । तदेतदसारम् । वातादयो ह्यस्य दूष्यस्य सत कथ दोषत्व कर्तु पारयन्ति । यत प्राधान्यादन्वर्थनामत्वाच्च वातादीनामेव दोषत्व, न रसादीनाम् । वातादयो हि स्वातन्त्र्यात्प्रधाना । दूषयन्तीति दोषा इति तेषामेव चानुगतार्था सज्ञा प्रवृत्ता । रसाद्यास्तु पारतन्त्र्यादप्रधाना । ते च वातादिभिर्दूष्यन्त इति दूष्या । तस्माद्रक्तस्य दूष्यत्वम्, न दोषत्वम् । यथैव वातादीनामन्योन्यदूषणाद् दूष्यत्व स्यात् । पित्तेन हि श्लेष्मा दूष्यत इति दृश्यते । यथा पाण्डुरोगनिदाने ( नि अ १३ ) पित्तप्रधाना इत्यारभ्य यावत् श्लेष्मत्वग्रक्तमासानि प्रदूष्येत्यादि । तदत्र श्लेष्मा पित्तेन दूष्यते । तथा श्लेष्मवद्रक्तस्यापि दोषत्वप्रसङ्ग इति यो मन्येत, त प्रति ब्रूम । विषम उपन्यास । वातादयो हि सर्वदैव रसादीन् दूषयन्ति, न तु रसादय कदाचिदपि वातादीन् दूषयन्ति । वातादीना तु मध्याद्यदि कश्चिद्दूष्यते, स तेषामन्यतमेन । तथा च प्रकृतिलक्षणे वातप्रकृते पित्तप्रकृते श्लेष्मप्रकृतेश्च यथा लक्षण दृश्यते, नैव रक्तप्रकृते । तथा च तन्त्रकारेण ज्वरादयो वातादिविशेषणविशिष्टा एवोक्ता । यथा वातज्वरोऽय पित्तज्वरोऽय श्लेष्मज्वरोऽयम्, न तु रक्तज्वरोऽयमिति निर्दिष्ट । येऽपि रक्तजा विकारा विसर्पादयस्तेष्वपि घृतदग्धन्यायेन व्यपदेशो बोध्य । यथा घृतस्यान्तर्हितेनाग्निना दग्धो घृतदग्ध इत्युच्यते, तद्वद्रक्तस्थैर्वातादिभिर्दोषैर्जातो रक्तजोऽयमित्युच्यते । यत्र क्वचिद्रक्तस्य दोषसज्ञा कुष्ठचिकित्सितादौ दृश्यते, सा सज्ञामात्रेणैव, नासावनुगतार्था । तस्य दूष्यत्वेनैव प्रवृत्ते । तथा चैव पुरीषादीनामपि सज्ञामात्रेण व्यवहारो दृश्यते । यथा ( हृ चि अ. १८।३८ )–"न घृत बहुदोषाय देयं यन्न विरे-

१ मुनिप्रोक्तमन्यदप्यस्तीद लक्षण चिकित्सायाः । तथा ( च सू अ १६।३४ )–"याभि क्रियाभिर्जायन्ते शरीरे धातव. समा । सा चिकित्सा विकाराणा कर्म तद्भिषजा मतम् ॥" इति ।
२ 'बालादिभि शब्दै ' ख घ । ३ 'शास्त्रारम्भे इतिकर्तव्यता' ज ।

चनम् । तेन दोषो ह्युपस्तब्ध" इत्यादि । अत्र पुरीषस्य दोषत्वमुक्तम् । तथोदरचिकित्सिते चरकस्य, ज्वरचिकित्सिते वा अस्य, ( हृ चि अ १।१० )-"दोषेण भस्मनेवाग्नौ छन्नेऽन्न न विपच्यते । तस्मादादोषपचनाज्ज्वरितानुपवास येत् ॥" इति । अत्र आमस्यापि दोषत्वमुक्तम् । तदेव वातादयस्त्रय एव दोषा, न रक्तमिति स्थितमेतत् समासत । विस्तरतस्तु ससर्गसन्निपातक्षयसमतादिभेदभिन्नास्तारतम्यपरिकल्पनया च कल्प्यमाना आनन्त्य यान्ति ।

**आ० र०-अथ प्रतिज्ञात व्याधिप्रतीकार व्याचष्टे । स तु त्रेधा, हेतुर्लक्षणमौषध चेति । हेतुर्द्विधा, अन्तरङ्गो बहिरङ्गश्चेति । अन्तरङ्गो द्विधा, दोषा दूष्याश्चेति । तत्र दोषानाह-वायुरिति । ते च त्रय, वायु पित्त कफश्चेति । एषा त्रित्व च समासत सक्षेपेण । विस्तरतस्तु प्राणादिपाचकाद्यवलम्बकाद्यवान्तरभेदप्रभेदैरानन्त्यम् । समासत इति अध्यायपरिसमाप्ते प्रतिवाक्य सम्बन्धनीयम् ।**

**विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति च ।**

**स०**-विकृता स्वभावप्रच्युता, देह घ्नन्ति । देहपदमत्र जीवितोपलक्षणार्थम् । जीवितेन विना कुर्वन्तीत्यर्थ । अविकृता पुनर्देह वर्तयन्ति यापयन्ति । विकृताना दोषाणा प्रागुपन्यास, तेषा प्रकृत्यवस्थाने नित्यं भिषजा यत्नवता भाव्यमिति सूचनार्थम् । अन्यथा महान्प्रत्यवाय स्यात् ।

**आ० र०-दोषावस्थाद्वयमाह-विकृताविकृता इति । तच्च विकृतत्वमविकृतत्व चेति । तत्र विकृता देह घ्नन्ति । अविकृता देह वर्तयन्ति । क्रमादिति वक्ष्यमाण पद वाक्यत्रयशेषत्वेन व्याख्यानादिह सम्बन्धनीयम् ।**

इदानीमेषा व्यापिनामपि विशिष्टस्थान विवक्षुराह—

**ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ॥७॥**

**स०**-अधश्च मध्यश्चोर्ध्व चाधोमध्योर्ध्वानि, तानि सश्रय आश्रयो येषा तेऽधोमध्योर्ध्वसश्रया । हृच्च नाभिश्च हृन्नाभी, तयोर्हृन्नाभ्यो । ते वातादयो व्यापिनोऽपि सर्वशरीरचरा अपि हृन्नाभ्योरधोमध्योर्ध्वसश्रया । विशेषेणेति वाक्यशेष । ननु किमिद वाक्यशेषत्व नाम । उच्यते । यस्मिन् खलु पदेऽनुच्चार्यमाणेऽर्थगतिं पश्यन्त्याचार्या, तच्छेषमिति । उच्चारणकाले तेन विनाऽभिधेयसिद्धे । व्याख्याकाले तु मन्दबुद्धिव्युत्पत्तये व्याचक्षते । तत्र नाभेरधो वायो स्थानम् । हृन्नाभ्योर्मध्ये पित्तस्य । हृदयादूर्ध्वं कफस्य । ननु हृन्नाभ्योरिति कथ निर्देशो यावता प्राण्यङ्गत्वादेकवद्भावे सनपुंसकमिति नपुसकत्वे हृन्नाभि इति प्राप्नोति । अत्र ब्रूम । प्राण्यङ्गाना समाहार एव द्वन्द्व इत्यस्य प्रायिकत्वान्नैकवद्भाव । तदभावाच्च तदाश्रय नपुमकत्व न भवति । तथा चोक्तम् । सर्वोऽपि द्वन्द्वो विभाषैकवद्भवतीति । दृश्यते चान्यत्रापि । तथा च रुद्रभट्ट ( रुद्रट काव्यालङ्कारे अ ७।८१ )-"कौटिल्य कचनिचये करचरणाधरदलेषु रागस्ते" इत्यादि । तथा, अस्यैव ग्रन्थकृत ( नि अ ७।१९ ) "शिर-पृष्ठोरसा शूलं" इति । तथा, (नि अ १६।६) "जानुजङ्घोरुक-व्यसहस्तपादाङ्गसन्धिषु" इति । तथा, "वायु सन्ध्यस्थिम-ज्जसु" इत्यादि । तस्माद्धृन्नाभ्योरिति प्रयोगो न्याय्य एव ।

**आ० र०-दोषस्थानान्याह-ते व्यापिन इति । तानि च त्रीणि । हृन्नाभ्योरधो वायो स्थान, मध्ये पित्तस्य, ऊर्ध्वं कफस्य । सर्वदेहव्यापित्वेऽपि यो यस्मिन्नाधिक्येन वर्तते तत्तस्य स्थानम् । हृन्नाभिशब्दाभ्यां तदुभयावधिप्रदेशो लक्ष्यते । अन्यथा हृदोऽप्यधो वायुर्नाभेरप्यूर्ध्वं कफस्तिष्ठेत् ।**

अथैषा सकलकालव्यापिनामपि नियतकालत्व दर्शयन्नाह—

**वयोहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ।**

**स०**-वयश्च अहश्च रात्रिश्च भुक्त च वयोहोरात्रिभुक्तानि तेषा, क्रमाद्यथासख्य, ते वातादय, अन्तमध्यादिगा भवन्ति । अन्तश्च मध्यश्चादिश्चान्तमध्यादयस्तेषु गच्छन्तीत्यन्तमध्यादिगा । अन्यत्रापि दृश्यत इति ड । तेनायमर्थ, वयस मनुष्यायुष, अन्त पश्चिमो भाग, वायो कोपकाल । मध्यो भाग पित्तस्य । आद्यो भाग कफस्य । एवमह्नो रात्रेश्च योज्यम् । भुक्तमाहार, तस्यान्ते जठराग्निसयोगवशाद्रसाना जीर्णप्रायावस्था, वायो कोपकाल । मध्यो विदाहावस्था, पित्तस्य । आद्यावस्था तु यस्या मधुरीभाव आहारस्य, तत्र कफस्य कोपकाल । यद्यपि चाहारस्य जठराग्निसयोगवशाद्बह्व्योऽपि सूक्ष्मा अवस्था सम्भाव्यन्ते, तथाप्येतासामेव सुतरामुपयोगित्वादिह निर्देश । तथा एता एव तिस्रोऽवस्था स्वकर्म दर्शयन्ति । वक्ष्यति हि ( शा अ ३।५७ )-"आदौ षड्रसमप्यन्न मधुरी-भूतमीरयेत् । फेनीभूत कफ, यात विदाहादम्लता तत । पित्तमामाशयात्कुर्याच्च्यवमान, च्युत पुन । अग्निना शोषित पक्व पिण्डित कटु मारुतम्" इति ।

**आ० र०-दोषकालानाह-वय इति । तत्र वय शरीर-परिणाम, तस्यान्त वृद्धत्वावस्था वायो काल । मध्य यौवनावस्था पित्तस्य । आदिर्बाल्यावस्था कफस्य । अह्नो-ऽन्त अपराह्ण वायो । मध्यो मध्याह्न पित्तस्य । आदि पूर्वाह्ण कफस्य । रात्रेरन्तोऽपररात्रो वायो । मध्यो मध्य-रात्र पित्तस्य । आदि पूर्वरात्र कफस्य । भुक्त निगीर्णम-न्नम्, तस्यान्त पक्वावस्था वायो । मध्यो विदग्धावस्था पित्तस्य । आदिरामावस्था कफस्य । व्यापिनोऽपीत्यनुवर्तते । कालविशेषस्तु स्थानविशेषवत् ।**

अधुनाऽग्निस्वरूप प्रस्तौति—

**तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः ॥ ८ ॥**

**स०**-तैश्च वातादिभि पुसो यथाक्रमेणाग्निर्विषमस्तीक्ष्णो

---

१ 'प्रतिज्ञातार्थ' ख घ । २ 'दोषो दूष्यश्चेति । तत्र दोषभे-दानाह' ख घ । ३ 'अनुषञ्जनीयम्' क ग । ४ 'वर्धयन्ति' क ग ज । ५ 'प्रापयन्ति' 'स्थापयन्ति' इति पाठान्तरे । ६ 'सम्बध्यते' ख घ ज ।

१ 'यस्मिन्नितरामाधिक्येन' ख ग घ ज । २ 'तत्र तस्य' ज. । ३ 'हृदोऽधो वायुर्नाभेश्चोर्ध्वं' क. ग. ।

मन्दश्च भवेत्। वातादयश्च समुदिता एव शरीरजनने समर्था, इत्यवश्य सर्वैरेव भवितव्यम्। इह तु य एकस्य व्यपदेशस्त त्रोत्कर्षो द्रष्टव्य। वातोत्कर्षेण विषम, पित्तोत्कर्षेण तीक्ष्ण, कफोत्कर्षेण मन्द इति। समैर्हान्युत्कर्षवर्जितै सम। लक्षण मेषामङ्गविभागे शारीरे वक्ष्यति (शा अ ३।७४)–य पचेत्सम्यगेवान्नमित्यारभ्य यावच्चिरात्पचेदिति। यत्र तु द्वयोर्दोषयोरुत्कर्षत्व, तत्र सद्वैयेन स्वधिया कल्प्यम्। यथा, वात पित्तयोरुत्कर्षे वायोर्योगवाहित्वात्तीक्ष्ण। एव वातकफयोरुत्कर्षे मन्द। कफपित्तयोस्तूत्कर्षे आहारविशेषवशात्कदाचित्तीक्ष्ण कदाचिन्मन्द इति।

आ० र०–अव्यवस्थाविशेषाख्य दोषकार्यमाह–तैरिति। तत्र वातेनाग्निर्विषमो भवेत्। तीक्ष्ण पित्तेन। मन्द कफेन। क्रमादित्यनुवर्तते। समैस्त्रिभि सम। पारिशेष्याद्विषमादयस्त्रयो विषमैर्दोषै[१]। वैषम्य च वृद्धिरेव, क्षीणानामीदृक्कार्यादर्शनात्। अनियतपाको विषम, आशुपाकस्तीक्ष्ण, चिरपाको मन्द। शेष सम। उक्त हि सङ्ग्रहे (सू अ ११)–"यामैश्चतुर्भिर्द्वाभ्या च भोज्यभैषज्ययो समे। पाकोऽग्नौ युक्तयोर्द्राक्तु तीक्ष्णे मन्दे पुनश्चिरात्" इति। युक्तयो रुचितयो। ससर्गसन्निपातजास्ववस्था निदर्शनतन्त्रयुक्त्या[२] ज्वरवदवगन्तव्या। यथा वातकफजे ज्वरे शीत, वातपित्तजे दाह, वायोर्योगवाहित्वात्। पित्तकफजे सन्निपातजे च पर्यायेण[३] दाहशीते। मिथो विरुद्धत्वेन युगपदसम्भवान्न चोभयोरभाव, विरुद्धकार्याणामप्यारम्भकत्वदर्शनात्। उक्त च सङ्ग्रहे (सू अ २१)–"आरम्भक विरोधेऽपि मिथो यद्वद्गुणत्रयम्। विश्वस्य दृष्ट युगपद्व्याधेर्दोषत्रय तथा॥" इति। तद्वदिहापि वातपित्ताभ्या तीक्ष्णत्व, वातकफाभ्या मन्दत्व, पित्तकफाभ्यां सन्निपाताच्च पर्यायेण तीक्ष्णत्वम न्दत्वे। न चैव चतुष्ट्वहानि, अव्यवस्थिततीक्ष्णमन्दत्वस्य[४] वैषम्ये अन्तर्भावात्।

अग्निचातुर्विध्यमुक्त्वा तदाश्रयस्य कोष्ठस्य चातुर्विध्य विवक्षुराह—

**कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि।**

स०–तैर्वातादिभि, यथाक्रम क्रूरमृदुमध्यलक्षण कोष्ठो भवति। वातोत्कर्षेण क्रूर। पित्तोत्कर्षेण मृदु। कफोत्कर्षेण मध्य। समै पुनरेतैर्हान्युत्कर्षवर्जितैर्मध्य एव कोष्ठ। क्रूरादीना तु लक्षण वमनविरेचनविधौ (सू अ १८।३४) वक्ष्यति। ननु समैर्वातादिभि कथ मध्यकोष्ठता स्यादिति। ब्रूम। समाना वातादीना मध्ये द्वयोर्वातपित्तयो स्व स्व क्रूरकोष्ठत्वमृदुकोष्ठत्वलक्षणाख्यं च विरुद्ध कर्म युगपत्कर्तु न घटते। तृतीयस्तु सम एव कफ। सोऽनयोर्मध्ये मध्यमा वृत्तिमाश्रित्य स्थितो नैकेनापि सह विरुध्यते। अत एव तत्कार्यं मध्यकोष्ठतालक्षण ते वातपित्ते निषेद्धु नैव घटेते। एव च तेनावश्यमात्मीय मध्यकोष्ठतालक्षण कर्म कर्तव्यम्, यतो वातकर्मण क्रूरकोष्ठतालक्षणस्य पित्तकर्मणो मृदुकोष्ठतालक्षणस्य च विरुद्धत्वात्। अतो मध्यकोष्ठतैव रामैर्वातादिभिर्न्याय्या। इयास्तु विशेष। पूर्वो यो मध्यकोष्ठ सोऽवश्य प्रमाणाधिकेन कफेन जन्यते। मध्य स्यात्तै समैरपीति समग्रहणलिङ्गात्। इतरस्तु मध्यकोष्ठ समदोषमध्यस्थितेन समेनैव स्वप्रमाणस्थितेन श्लेष्मणा भवतीत्यनया रीत्या हेतुभेदादन्यत्वम्। तथा मध्यकोष्ठयोर्लक्षणभेदोऽपि दृश्यते। यथा (च सि अ. १।८)–"श्लेष्माधिकैश्छर्दयते[१] ह्यदु ख विरिच्यते मन्दकफस्तु सम्यक्" इति। तदयमत्रार्थ। श्लेष्माधिके मध्यकोष्ठे न सम्यग् विरेचित्वं, समकफे तु मध्यकोष्ठे सुविरेचित्वमिति।

आ० र०–कोष्ठावस्थाविशेषाख्यं दोषकार्यमाह–कोष्ठ इति। तत्र वातेन क्रूर. कोष्ठ स्यात्, पित्तेन मृदु, कफेन मध्य, त्रिभि समैरपि मध्य। अत्रापि पारिशेष्य[२] पूर्वव-द्व्याख्येयम्[३]। मध्यमेन शोधनेन हीनयोगी क्रूर, अतियोगी मृदु, सम्यग्योगी मध्य। ससर्गसन्निपातजास्ववस्था[४] पूर्ववत्। योगवाहित्व त्वत्र कफस्य। यदाह खारणादि–"वातोल्बणा स्याद्ग्रहणी क्रूरकोष्ठस्य देहिन। पित्तला मृदुकोष्ठस्य योगवाही तयो कफ॥" इति। तेन वातकफाभ्या क्रूर, वातपित्ताभ्या कफपित्ताभ्या सन्निपाताच्च मृदु। ननु "बहुवातश्लेष्मभ्या[५] क्रूर" इति सुश्रुतेन (चि अ ३३) बहुकफस्य क्रूरत्वमुक्तम्, इह तु मध्यत्वम्, इति विरोध। नैवम्, सुश्रुतवाक्यस्य ससर्गपरत्वात्।

इदानी प्रकृतिस्वरूप प्रस्तौति—

**शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः॥ ९॥**
**तैश्च तिस्रः प्रकृतयो हीन[६]मध्योत्तमाः पृथक्।**
**समधातुः समस्तासु[७] श्रेष्ठा, निन्द्या द्विदोषजाः॥१०॥**

स०–तैश्च वातादिभिस्तिस्र प्रकृतय पृथग्भवेयुर्हीनमध्योत्तमा। प्रकृति शरीरस्वरूपम्। शुक्रार्तवस्थैरिति, शुक्र पितुर्द्वित्रिबिन्दुकावस्थ रेत। ऋतौ भवमार्तवम्, मातुर्द्वित्रिबिन्दुकावस्थं शोणितम्। शुक्र चार्तव च शुक्रार्तवे, तत्र तिष्ठन्तीति शुक्रार्तवस्था, तैस्तथाविधैर्जन्मादौ गर्भाधानकाले जन्मप्रारम्भे गर्भादावित्यर्थ। ननु च यदा वातादयोऽधिका शुक्रार्तवे तिष्ठन्ति, तदा कुत शरीरस्य निष्पत्तिर्भवतीति। यतश्च यो दोषाणाम-

---

१ 'दोषै' इति नास्ति ख. घ ज पुस्तकेषु। २ 'पातजावस्थानिदर्शन तन्त्रयुक्त्या ज्वरवदवगन्तव्यम्' ख घ। ३ 'विपर्ययेण' क. ग। ४ 'तीक्ष्णत्वमन्दत्वस्य' क. ग।

१ 'श्लेष्मोत्तरश्छर्दयति' इति पाठान्तरम्। २ 'पारिशेष्यात् पूर्ववत्' क ग। ३ 'व्याख्येयम्' इत्यनन्तर "यथा, पारिशेष्यात् क्रूरादयस्त्रयो विषमै.। वैषम्य च वृद्धिरेव, क्षीणानामीदृक्कार्यादर्शनात्" इति ख घ पुस्तकयोरधिक पाठो दृश्यते। किन्त्वस्य पूर्ववच्छब्देन गतार्थत्वादन्यलिखितपुस्तकेष्वदृष्टत्वाच्च नावश्यकत्वमिति प्रतिभाति। ४ 'पातजास्तेषामवस्था' ख घ। ५ 'श्लेष्मा क्रूर' इति मुद्रितसुश्रुतपुस्तके पाठ। 'वातकफाभ्यां' क. ग.। ६ हीन इत्यत्र स्त्रिया पुवदित्यादिना पुंवद्भाव। ७ "समैस्तासु" इती दुसम्मत पाठ।

धिको भाव सैव विकृति । तत्कथ दोषा आधिक्य प्राप्ता प्रकृते कारणतामुत्सहन्ते, विकृतत्वात् । न हि विकृति कदाचित्प्रकृते कारणमिति वक्तु युज्यते । कारणसदृशेन च कार्येण भवितव्यमित्याशंक्य सपरिहार दृष्टान्तमाह । विषेणेव विषक्रिमेरिति । यथा विषेण जीवितनाशहेतुनास्य विषक्रिमेर्जन्म प्रकृते सम्भवो दृश्यते । तथा एतैर्दूषणस्वभावैरपि प्रमाणाधिकैर्दोषै शुक्रार्तवस्थैरेव जन्मादौ शरीरस्य निष्पत्तिर्भवतीति । वातोत्कर्षेण हीना । पित्तोत्कर्षेण मध्यमा । कफोत्कर्षेणोत्तमा । सर्वासु प्रकृतिषु मध्ये या समधातु प्रकृति, सा समा श्रेष्ठोत्तमा चतुर्थी । समा धातवो यस्या । धातुशब्दोऽत्र दोषपर्याय, "धारणाद्धातव." इति ( स सू. अ २० ) वचनात् । या वातपित्तजा वातश्लेष्मजा पित्तश्लेष्मजा इति मिश्रदोषजास्तिस्र. प्रकृतयस्ता निन्द्या गर्हणीया, अनारोग्यास्पदत्वात् ।

**आ० र०**—देहजन्माख्य दोषकार्यमाह—शुक्रार्तवस्थैरिति । तच्च जन्म शुक्रार्तवस्थैर्दोषैर्भवेत् । शुक्रेण युक्तमार्तव शुक्रार्तव, तत्र तिष्ठन्तीति तत्स्था[1] । शुक्र पुरेत, स्त्रीरेतसो जन्माहेतुत्वात् । उक्त हि सङ्ग्रहे (शा अ. १)—"योषितोऽपि स्रवन्त्येव[2] शुक्र पुसै[3] समागमे । गर्भस्य तु न तत्किञ्चित्करोतीति न चिन्त्यते ॥" इति । आर्तव स्त्रीरज । कदा, आदौ जीवसङ्क्रमणसमये । उत्तरकालजेस्तु दोषैरविकृतै स्थिति, विकृतैर्नाश । तदुक्त "विकृताविकृता देह घ्नन्ति ते वर्तयन्ति[4] च" इति । ये त्वादौ शुक्रार्तवस्था, तैर्विकृतैरपि जन्म भवति । किन्त्वविकृतैरविकृतशरीरत्व, विकृतैर्विकृतशरीरत्वमिति विशेष । वक्ष्यति हि ( शा. अ १।६)—"वियोनिविकृताकारा जायन्ते विकृतैर्मलै" इति । ननु विकृतैर्नाशहेतुभि कथ जन्मेत्यत आह—विषेणेव विषक्रिमेरिति । विषात्मकस्य क्रिमेर्नाशहेतुनापि विषेण जन्म यथा, तथा दोषात्मकस्य शरीरस्य नाशहेतुभिरपि दोषैरित्यविरोध ।

प्रकृतिविशेषाख्य दोषकार्यमाह—तैश्चेति । तैर्जन्महेतुभिर्दोषै, प्रकृतयश्च स्यु । ताश्च सप्त । तत्र पृथग्भूतैर्दोषैस्तिस्र । वातेन हीना, पित्तेन मध्या, कफेनोत्तमा । समधातुश्चतुर्थी । सा समस्तासु श्रेष्ठा गुणै पूर्णा सत्त्वगुणप्रधाना[5] उत्तमाया अप्युत्तमा । धातवो दोषा । द्विदोषजास्तिस्र, समस्तासु निन्द्या, हीनाया अपि हीना. । तत्रापि पित्तकफजा हीना, ततो वातकफजा, ततोऽपि वातपित्तजेत्यूह्यम् । यद्यपि वातकफयो. परस्परयोगवाहित्वं, तथापि वातकार्यं भवतीति वचनात् । तदुक्तम् ( हृ शा अ ३।८४ )—"बलित्वादाशुकारित्वाद्विभुत्वादन्यकोपनात् । स्वातन्त्र्याद्बहुरोगत्वाद्दोषाणां प्रबलोऽनिल. ॥" इति । ता द्विदोषजा निन्द्या, विरुद्धोपक्रमत्वादुपदेशाच्च । उपदेशस्त्वतिदेशस्य बाधको भवति । ननु, वायोर्योगवाहित्वात् वातपित्तजवातश्लेष्मजप्रकृत्योर्मध्योत्तमत्वे[1] प्राप्ते कथ निन्द्यत्वम् । उच्यते । योगवाहित्वेऽपि प्रकृतौ स्वकार्यकारित्वमुपदेशबलाद्भवति । तथा च सुश्रुत ( शा अ ४ )—"सप्तप्रकृतयो भवन्ति दोषै पृथग्द्विश समस्तैश्च ।" तथा, "द्वयोर्वा तिसृणा वापि प्रकृतीना स्वलक्षणै[2] । ज्ञात्वा ससर्गजा वैद्य प्रकृतीरिति[3] निर्दिशेत्" इति । तथा च वक्ष्यत्यग्रे ( हृ शा अ ३।१०४ )—"प्रकृतीर्द्वयसर्वोत्था[4] द्वन्द्वसर्वगुणोदये । शौचास्तिक्यादिभिश्चैव गुणैर्गुणमयीर्वदेत्" अत्र पारिशेष्यात् एकैकस्याधिकत्वेनारम्भकत्व, त्रयाणा साम्येन, तत्राधिकत्वेनोपक्रमात्[5] । तथा च सुश्रुत ( शा अ ४ )—"शुक्रशोणितसयोगे यो भवेद्दोष उत्कट । प्रकृतिर्जायते तेन तस्या मे लक्षण शृणु" । तथा च वक्ष्यति ( हृ शा अ ३।८३ )—"शुक्रासृग्गर्भिणीभोज्यचेष्टा गर्भाशयर्तुषु । य स्याद्दोषोऽधिकस्तेन प्रकृति सप्तधोदिता" इति । यद्वा, समैर्वा जायते त्रिभि समधातुरिति । ततो वातपित्तजे तुह्ये । तत्र श्रेष्ठा गुणै. पूर्णा । उत्तमादयस्तु क्रमात् न्यूना, दोषवैषम्यात्पारिशेष्याच्च[6] ।

**तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः ।**

**स०**—तत्रेति निर्धारणे । तत्र तेषु दोषेषु मध्ये, अनिलो वायु, रूक्षो, लघु, शीत, खरोऽमृदु, सूक्ष्म स्रोत प्रचारित्वात्, चलो गमनशीलो नैकत्र तिष्ठतीति । नन्ववनुष्णाशीतो वायु काणादे पठित । इहापि योगवाह्यनुज्ञानादनुष्णाशीत एवेष्यत इति । तथा चोक्तम् ( च चि अ ३।३८ )—"योग वाही परं वायु सयोगादुभयार्थकृत् । दाहकृत्तेजसा युक्त शीतकृत्सोमसश्रयात्" इति । तथा ( हृ नि अ २।४८ )—"पवने योगवाहित्वाच्छीत श्लेष्मयुते भवेत् । दाह पित्तयुते" इति । उच्यते । सत्यमेतदनुष्णाशीत एव वायु । तस्य योगवाहित्वेऽपि तावन्मात्राद्दाहोदयाच्छैत्य स्वाभाविक न विनश्यति । शीतगुणव्यावर्णने चेद प्रयोजनमुष्णेनायमुपशाम्यतीति प्रतिपत्त्यर्थम् ।

**आ० र०**—वायोर्गुणानाह—तत्र रूक्ष इति । ते च रूक्षादय षट् ।

**पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ॥ ११ ॥**

**स०**—सस्नेहमीषत्स्निग्धम् । सशब्द ईषदर्थे । यथा (च सू अ २७।२३७)—"सतिक्ता या सशर्करा" । एवमीषत्स्नेहो यस्य तत्सस्नेहम् । तीक्ष्णं शीघ्रकारि मन्दविपरीत सूचीव भिनत्ति । उष्णम् । लघु । विस्र दुर्गन्धि मत्स्यामगन्धि । सर व्याप्तिशील सरणशीलमूर्ध्वाध प्रवर्तते न स्थिरमास्ते, शकृद्विस्रसि वा । द्रव च ।

१ 'तथा' क. ग. ज । २ 'स्रवत्येव' इतीन्दुसम्मत पाठ । ३ 'पुसां' ख घ । ४ 'वर्द्धयन्ति' क ग. ज. । ५ 'गुणै. पूर्णा सत्वगुणप्रधाना' इति नास्ति ज-पुस्तके ।

१ 'मध्यत्वोत्तमत्वे' क ग । २ 'तु लक्षणै' इति सुश्रुतपुस्तके पाठ । ३ 'प्रकृतीस्तु विनिर्दिशेत्' ज । ४ 'प्रकृतिं द्वयसर्वोत्था० गुणमयीं वदेत्' क ग ज । ५ 'तत इत्यारभ्य पारिशेष्याच्चेत्यन्त' क. ग. पुस्तकयोर्नास्ति । ६ 'वैषम्यात् । तच्च पारिशेष्यात्' ख. घ. ज. ।

आ० र०-पित्तगुणानाह—पित्तमिति । ते च सस्नेहादय सप्त । सस्नेहमीषत्स्निग्धम् । सशब्द ईषदर्थे । विस्र दुर्गन्धि ।

**स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ।**

स०-स्निग्धगुणयोगात्स्निग्ध । शीतोऽनुष्ण । गुरुर्लघुर्न भवति । मन्दश्चिरकारी, तीक्ष्णविपरीत । श्लक्ष्णोऽपरुष । मृत्स्नो मृद्यमानोऽङ्गुलिग्राही पिच्छिलगुणयुक्त चकचकायमान । स्थिरोऽव्याप्तिशील । एवं तद्गुणयोगात् गुणगुणिनोरभेदोपचाराद्वातादयो गुणतो निर्दिष्टा ।

आ० र०-कफगुणानाह-स्निग्ध इति । ते च स्निग्धादय सप्त । मृत्स्न पिच्छिल ।

एषा च मिश्रीभूताना तन्त्रव्यवहारार्थ सञ्ज्ञाद्वयमाह—

**संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः ॥ १२ ॥**

स०-एतदुक्तं भवति । द्वयो स्वप्रमाणाविक्रियो क्षीणयोर्वा सयोग ससर्ग । त्रयाणा दोषाणा वृद्धाना क्षीणाना वा सयोग सन्निपात ।

आ० र०-अवस्थाविशिष्टसयोगनिमित्तं दोषसञ्ज्ञाद्वयमाह-ससर्ग इति। तच्च दोषसंज्ञाद्वय ससर्ग सन्निपातश्चेति। तत्र द्वयोर्दोषयो क्षीणयो कुपितयोर्वा य सयोग , स ससर्ग । त्रयाणा सन्निपात । इति द्वित्वत्रित्वयो ससर्गसन्निपाताभ्यां यथासख्य सम्बन्ध , न तु क्षयकोपाभ्याम् । यतो दोषभेदीये ससर्गस्यापि वृद्धिभेदान् सन्निपातस्यापि क्षयभेदान् वक्ष्यति । इति दोषव्याख्या ।

दोषानुक्त्वा धातव उच्यन्ते-[१]

**रसासृङ्मांसमेदोस्थिमज्जशुक्राणि धातवः ।**
**सप्त दूष्याः**

स०-रसादय सप्त धातुसंज्ञा शरीरधारणाद्धातव । ते च दूष्या , वातादिभिर्दूष्यन्त इति दूष्या । यस्माद्वातादीना दूषणस्वभावत्वाद्या दोषसञ्ज्ञा, सान्वर्थसञ्ज्ञा । दूषयन्तीति दोषा । अतोऽवश्य ते दूष्यमपेक्षन्ते । कर्म विना कर्तु क्रियाया असम्भवात् । कर्तार विना कर्मणो न कर्मत्वम् । एव दोषैर्विना रसादीना दूष्यनाम न घटते । तैर्विनाऽपि वातादीना दोषनाम । तस्मात्परस्परापेक्षत्वादनयोर्दूष्यदोषयोर्दूष्यत्वेन दोषत्वेन च सञ्ज्ञालाभ ।

आ० र०-दूष्यापरनामधेयान् धातून् मलांश्चाह-रसासृगिति । रसादयो ये सप्त धातव , ते दूष्या ।

**मला मूत्रशकृत्स्वेदादयोऽपि च ॥ १३ ॥**

स०-मूत्रशकृदादयो मला उच्यन्ते । अपिचेतिशब्दाद् दूष्याश्चेति । न केवल रसादय एव दूष्या , यावन्मलास्तेऽपि वातादिभिर्दूष्यन्त इति दूष्या । एव च रसादीना दूष्यसञ्ज्ञा धातुसञ्ज्ञा च । तथा विण्मूत्रादीना मलसञ्ज्ञा दूष्यसञ्ज्ञा च । इति दोषधातुमलनिर्देशेन देहो व्याख्यात । तथा चोत्तरग्रन्थे ( सू अ ११।१ )-"दोषधातुमला मूल सदा देहस्य" इति ।

आ० र०-मूत्रादयो ये सप्त मलास्तेऽपि च दूष्याः । मूत्रशकृती अन्नमलौ, स्वेदो मेदोमल , आदिशब्दात् मासा स्थिमज्जशुक्रमला । वक्ष्यति हि ( शा अ ३।६३ )-"कफ पित्त मला खेषु प्रस्वेदो नखरोम च । स्नेहोऽक्षित्वग्विशामोजो[१] धातूना क्रमशो मला ॥" इति । कफपित्तयोर्दोषत्वान्न दूष्यत्वम् । सङ्ग्रहे तु ( सू अ १ )-"रसादिस्थेषु दोषेषु व्याधय सम्भवन्ति ये । तज्जा इत्युपचारेण तानाहुर्घृतदाहवत् ॥" इति । इति दूष्यव्याख्या । इत्यन्तरङ्गो हेतु[२] ।

तस्य च देहस्य यथा सन्ततं केनचिदुपायेन परिपालन निष्पद्यते, तमुपायं दर्शयितुमाह—

**वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः ।**

स०-सर्वेषा दोषधातुमलादीना शरीराश्रिताना, समानैस्तुल्यैर्भावै[३] , वृद्धि स्वप्रमाणाधिक्यम् । विपरीतैर्विशिष्टतया व्यवस्थितै , विपर्यय क्षय । अयन अय गति , विपरीता गति र्विपर्ययोऽपचय । सामान्यविशेषैर्द्रव्यगुणकर्मभेदेन त्रिप्रकारोऽधिगच्छति । तथा चाहु -"सर्वेषा सर्वदा वृद्धिस्तुल्यद्रव्यगुणक्रियै । भावैर्भवति भावानां विपरीतैर्विपर्यय " । द्रव्यतो यथोक्तम् (स सू अ १९)-"रक्तमाप्याय्यते रक्तेन, मास मासेन, मेदो मेदसा, अस्थि तरुणास्थ्ना, मज्जा मज्जा, शुक्र शुक्रेण, तथा गर्भश्चामगर्भेण" । तत्र रक्तेन रक्तमित्युभयमप्यौदकम् । मासेन मासमिति पार्थिवम् । तथा, सलिलात्मक पयस्तदात्मकमेव श्लेष्माणमभिवर्धयति । तद्वत्क्षीरजात घृत शुक्रम् । तथा जीवन्तीकाकोल्यादय सोमात्मानो द्रव्यविशेषा सौम्यधात्वेककारणानि स्नेहबलपुस्त्वौजासि । मरीचपञ्चकोलभल्लातकादयो बुद्धिमेधाग्न्यादीन् सवर्धयन्ति । गुणत –चोचमोचखर्जूराणि पार्थिवानि द्रव्यतो निर्दिष्टान्यपि श्लेष्माणमुदकात्मकमभिवर्धयन्ति, स्निग्धगुरुशीतादिगुणसामान्यात् । कर्मापि त्रिविध कायवाङ्मनोव्यापारात्मकम् । तत्र कायिकानि–धावनलङ्घनप्लवनादीनि चलत्वसामान्याद्वायोर्वृद्धये । वाचिकानि–भाष्याध्ययनगेयादीनि, मानसानि–मनोव्यापाराश्चिन्ताकामशोकभयानि, तान्यपि मनस क्षोभणहेतुत्वाद्वायोर्वृद्धिकराणि । तथा सन्तापकृत्त्वसामान्यात्क्रोधेर्ष्यादि पित्तस्य । स्वप्नालस्यशय्यासुखादीनि स्थैर्यसामान्यात्कफस्येति । विपर्ययस्तु क्षयाय । यथाह । द्रव्यत ( स सू अ १४, च सू अ २५ )-"गवेधुकान्न कर्शनीयानाम्" । तत्र वातात्मिकया गवेधुकया पार्थिवाना मासादीना कृशिमा क्रियते । तथा तैजसेन क्षारेण श्लेष्मण । गुणतो यथा–आरनालमौदक श्लेष्माण तद्विपरीतैर्लघुरूक्षोष्णतीक्ष्णविशदगुणै क्षपयति । कर्मत –निद्रालस्यसौमनस्यानि सपरिस्पन्दं

१ 'इति दोषान् व्याख्याय दूष्यानाह-रसासृगिति ।' क. ग. ड. ज ।

१ 'क्षिविट्त्वचामोजो' ज । २ 'रङ्गो रोगहेतु.' ख घ. । ३ 'तुल्यस्वभावैर्वस्तुभि.' इति पाठान्तरम् ।

वातमपरिस्पन्दस्वभावतयाऽपचिन्वन्ति । तथा परिस्पन्दरूपाश्विन्ताव्यवायव्यायामा मन्दपरिस्पन्दवैपरीत्यात्कफमिति ।

**आ० र०-अथ बहिरङ्गं व्याचष्टे-दोषदूष्यविकृत्युत्पादनद्वारेण यो व्याधीना कारण, स बहिरङ्ग । स च द्वेधा, वृद्धिहेतु क्षयहेतुश्च। तत्र वृद्धिहेतुमाह-वृद्धिरिति । सर्वेषा दोषदूष्याणा समानैस्तुल्यधर्मकैर्द्रव्यैर्वृद्धिर्भवेत् । यथा-रूक्षादिगुणस्य वायो, तत्समानगुण श्यामाकादि वर्द्धनम् । सस्नेहादिगुणस्य पित्तस्य तैलादि । स्निग्धादिगुणस्य कफस्य क्षीरादि । दूष्येषु स्वेदरक्तयो पित्तवत् वृद्धिहेतु । शेषाणा श्लेष्मवत् । वक्ष्यति हि ( सू अ ११।२६ )-"तत्रास्थनि स्थितो वायु पित्त तु स्वेदरक्तयो । श्लेष्मा शेषेषु तेनैषामाश्रयाश्रयिणा मिथ ॥ यदेकस्य तदन्यस्य वर्द्धनक्षपणौषधम् । अस्थिमारुतयोर्नैवम् ।" इति ।**

क्षयहेतुमाह—विपरीतैरिति । **सर्वेषां दोषदूष्याणां विपरीतैर्विरुद्धधर्मकैर्द्रव्यैर्वृद्धेर्विपर्यय क्षयो भवेत् । यथा-वायोर्गोधूमादि क्षपणम् । पित्तस्य यवादि । कफस्य कुलत्थादि । दूष्येषु पूर्ववत् ।**

वर्णितमेव वृद्धि समानै, क्षयो विपरीतैरिति । तौ तु वृद्धिक्षयौ यतो वाय्वादीना भवत, तत्प्रख्यापनार्थमाह—

**रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ १४ ॥**
**षड् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ।**

**स०**-स्वाद्वादय षड्रसा, रसनेन्द्रियग्राह्यत्वाद्रसा । ते च रसा द्रव्य पञ्चभूतात्मकमाश्रिता, यथापूर्वं च बलावहा । यो य पूर्वो यथापूर्वं, बलावहा बलप्रापका । बलमावहन्ति प्रापयन्तीति यावत् । तस्मात्सर्वेभ्यो रसेभ्यो मधुरो रस प्रकर्षेण देहिना बलकर । कषायस्तु सर्वेभ्यो जघन्यबलावह । तत्र स्वादुर्मधुरो घृतगुडादि । अम्लोऽम्लिकामातुलुङ्गादि । लवण सैन्धवादि । तिक्तो भूनिम्बादि । ऊषण कटुको मरीचादि । कषायो हरीतक्यादि । स्वादुर्मधुरपर्याय । ऊषण कटुकपर्याय । यथा त्र्यूषण त्रिकटुकमुच्यते । कषाय एव कषायक, यथा कटुरेव कटुक । षडिति षडेव, न न्यूना अधिका वा । यद्यपि ते रसा गुणा स्वाद्वादिभेदतस्तथा ससर्गतस्तथाऽनुरसतस्तारतम्यपरिकल्पनावशतोऽपि भिद्यमानरूपा अपि षट्त्व नातिवर्तन्ते ।

**आ० र०-अथ साधर्म्यवैधर्म्यज्ञानार्थं द्रव्यधर्मानाह-ते च रसप्रभाववीर्यविपाकगुणभेदात्पञ्च । तत्र रसनाग्राह्यो रस । शेषो गुण । कायाग्निपाकजो विशिष्टो रसो विपाक । तथैवोत्पन्नो गुणो वीर्यम् । द्रव्यस्यात्मा प्रभाव । तत्र रसभेदानाह-रसा इति । ते च स्वाद्वादय षट् । स्वादुर्मधुर, ऊषण कटुक । ते च द्रव्यमाश्रिता, द्रव्यधर्मा इत्यर्थ ।**

१ 'बहिरङ्गमाचष्टे' ग. ज । २ 'तद्गुण' ख घ. ज । ३ 'तत्प्रत्यायनार्थं' 'तद्व्यापारार्थं' इति पाठान्तरे । ४ 'जघन्यबलापह.' इति पाठान्तरम् । ५ 'भिद्यमानास्तथापि' इति पाठान्तरम् । ६ 'कायाग्निपाकजो विशिष्टो गुणो' क ग ज. ।

क्षारस्य द्रव्यविशेषवाचित्वाद्रसविशेषवाचित्वेऽपि लवणविशेषवाचित्वान्न सप्तमरसत्वम् ।

बलावहाख्य रसकर्माह-ते चेति । ते च रसा यथापूर्वं बलावहा । यो यस्मात्पूर्वं स तस्मादधिक बलमावहति । कषायो बल्यस्तत ऊषणस्ततस्तिक्त इत्यादि ।

**तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ॥१५॥**
**कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ।**

**स०**-तत्र तेषु रसेषु मध्ये, आद्यास्त्रय स्वाद्वम्ललवणा, मारुत घ्नन्ति शमयन्ति । अन्ये तु तिक्तोषणकषायास्तमेव चानिल कुर्वते कोपयन्ति । तिक्तादयस्त्रयस्तिक्तोषणकषाया कफ घ्नन्ति प्रशमयन्ति । अन्ये तु मधुराम्ललवणास्तमेव कफ कुर्वते । कषायतिक्तमधुरा पित्त घ्नन्ति । अन्ये त्वम्ललवणकटुकास्तदेव पित्त कुर्वते । एतेनेदमुक्त भवति । मधुरो वातपित्तघ्न श्लेष्मकर । अम्लो वातं हन्ति, कफपित्ते तु जनयति । लवणो मारुत हन्ति, कफपित्ते तु कुरुते । तिक्त कफपित्ते नाशयति, वात तु जनयति । ऊषण कफ नाशयति, वातपित्ते तु जनयति । कषाय कफपित्ते हन्ति, वात तु करोतीति ।

**आ० र०-वातादीनां साक्षाद्रसाकथनादस्पष्टे दोषद्रव्यो साधर्म्यवैधर्म्ये स्पष्टयति—तत्राद्या इति । तत्र तेषु रसेषु मध्ये, आद्यास्त्रयो रसा स्वाद्वम्ललवणा, मारुत घ्नन्ति । तिक्तादयस्तिक्तोषणकषाया कफ घ्नन्ति । कषायतिक्तमधुरा पित्त घ्नन्ति । अन्ये तु कुर्वत इति त्रिष्वपि योज्यम् । तेन तिक्तोषणकषाया वायु कुर्वन्ति । स्वाद्वम्ललवणा कफम् । अम्ललवणकटुका पित्तम् । अत एव ते ते रसास्तत्र तत्र सन्तीत्यनुमेयम् । उक्त च कपिलेन-"कट्वम्ललवण पित्त स्वाद्वम्ललवण कफ । कषायतिक्तकटुको वायुर्दृष्टोऽनुमानत ॥" इति ।**

एषा च रसानामाश्रयो द्रव्यम्, तच्च त्रिप्रकारमित्याह—

**शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ॥ १६ ॥**

**स०**-इति अनेन प्रकारेण शमनादिभेदेन, त्रिधा त्रिप्रकारं, द्रव्यम् । अन्येन प्रकारेण द्विधा अथवा अनेकधा । इतिशब्द प्रकारार्थेऽभिहित । यत् कुपितान् वातादीन् दोषान् शमयति, तच्छमनम् । यथा—तैल घृत माक्षिकम् । तत्र तैलं स्नेहौष्ण्यगौरवयोगाद्वात तद्विपरीतगुण शमयति । सर्पिर्माधुर्यशैत्यमान्द्यगुणयोगात्तद्विपरीतगुण पित्तम् । मधु च रौक्ष्यतैक्ष्ण्यकषाययोगात्तद्विपरीतगुण कफम् । यद्वातादीन् दोषान् रसादीन्धातून् मूत्रादीन्मलांश्च कोपयति, तत्कोपनम् । यथा-यवकपाटलमाषमत्स्यामम्लूकसर्षपमन्दकदधिकिलाटविरुद्धमत्स्यपय प्रभृति । दोषादीना मलपर्यन्ताना स्वप्रमाणस्थिताना साम्यानुवृत्तिहेतुर्यद्द्रव्यं तत् स्वस्थेभ्यो हितम् । यच्च स्वास्थ्यानुवृत्तिं करोति, ऋतुचर्याध्याये सेव्यत्वेनोक्तम् । तथा मात्राशितीयाध्याये रक्तशालिषष्टिक-

१ 'मुख्य कर्माह' ख. घ. । २ 'बलवान् तत.' क. ग. ज. । ३ 'वातादीन्' इति नास्ति क्वचित् ।

यवगोधूमजाङ्गलमासजीवन्तीशाकदिव्योदकक्षीरादि । तथा यदूजस्करं रसायनवाजीकरण सर्वदा शीलनीयत्वेन निर्दिष्टम् ।

**आ० र०–प्रभावभेदानाह–शमनमिति ।** प्रभावो रसादिष्वन्तरङ्ग इति द्योतयितु द्रव्यशब्देनोक्त, द्रव्यमिति त्रिधेति । शमन कोपन स्वस्थहित चेति त्रैविध्यम् । यद् द्रव्य समैः[१] समैर्विपरीतैर्वा रसादिभिर्युक्तमपि वातादीन् शमयति[३] तच्छमनम् । तद्यथा–मधुरशीतापि जीवन्ती कफ शमयति । कटुपाकरसो गुरु स्निग्धोऽपि रसोन कफवातौ । यद् द्रव्य विपरीतैः[२] समैर्विपरीतैर्वा[४] रसादिभिर्युक्तमपि वातादीन् कोपयति[५] तत्कोपनम् । यथा–गुरूष्णस्निग्धमधुरमपि फाणित वात कोपयति । तैरेव गुणैर्माषः पित्तकफौ । यद् द्रव्य वातादीना क्षयवृद्ध्योर्हेतुरपि स्वस्थस्य न तथा, तत्स्वस्थहितम् । यथा —गुरुमधुररूक्षशीतोऽपि यव स्वस्थस्य पित्त न क्षपयति । गुरुमधुरस्निग्धशीतमपि क्षीर स्वस्थस्य कफ न कोपयति । एव सर्वत्रापि प्रभाव उदाहरणीय । वक्ष्यति च ( सू अ ९।२६ )—"रसादिसाम्ये यत्कर्म विशिष्ट तत्प्रभावजम् ।" इति । अन्ये[६] तु शमनादीन् द्रव्यभेदानाहु । तत्तु न सम्यक् । द्रव्यभेदत्वे यदेव शमन, तदेव कोपन, तदेव स्वस्थहितमिति सङ्करो न युक्त । धर्मभेदत्वे तु रसादिसङ्करवद्युक्त । किञ्च द्रव्यभेदाश्चेदमी तदा रसादिधर्मभेदाना प्राक्पश्चाद्वा अभिधेयाः स्यु, न मध्ये । तस्मात्प्रभावभेदा एव शमनादय ।

तस्य वीर्यमाह—

**उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ।**

**स०**–तत्र तस्मिन् द्रव्ये, वीर्यं द्विविधम् । विंशतेर्गुणाना मध्याद्द्वावुष्णशीतौ, तदुत्कर्षाद्वीर्यमिति सर्वायुर्वेदप्रसिद्धौ, द्वावेव गुणौ शीतोष्णौ वीर्यकरणहेतू । वीर्यं शक्ति । उष्णगुणोत्कर्ष उष्णगुणातिशय एव कश्चिदुष्णवीर्याख्या लभते । तथा शीतगुणोत्कर्ष शीतगुणातिशय एव शीतवीर्याख्याम् । यद्यपि नानात्मकमपि[७] द्रव्य, तथाप्यग्नीषोमात्मकत्वाज्जगतो द्विधैव वीर्यम् ।

**आ० र०–वीर्यद्वैविध्यमाह–उष्णेति ।** तच्च उष्ण शीत च । ननु गुरुलघुस्निग्धरूक्षमन्दतीक्ष्णानामपि वीर्यत्वात्कथ द्वे एवेत्यत आह–उष्णशीतगुणोत्कर्षात् । यद्यपि कायाग्निपाकादष्टौ गुणा जायन्ते, तथाप्युष्णशीतयोर्गुणयोरुत्कर्षात् द्वैविध्यम् । गुणान्तरतिरस्कारे शक्तिरुत्कर्ष[८] । शक्त्युत्कर्षे वीर्यशब्दो लोकेऽपि प्रसिद्धः । तत्र द्रव्ये । वीर्यमपि द्रव्याश्रयमित्यर्थ ।

१ 'समैर्विपरीतैर्वा' क ग ज । २ समविपरीतै कैश्चित् समैः कैश्चिद्विपरीतैरित्यर्थ । यथा–रसोने कटुपाकरसो वातसम, गुरु स्निग्धश्च वातविपरीत, इत्यादि । ३ 'शमयत्येव' ख घ ङ. । ४ 'समैर्वा' क ग ज. । ५ 'कोपयत्येव' ख घ. ङ. । ६ अन्ये–अरुणदत्तचन्द्रनन्दनाद्यष्टीकाकारा । ७ 'नानागुणकमपि' इति पाठान्तरम् । ८ 'तिरस्कारशक्ति' क ग. ज. ।

द्रव्यविपाकमाह—

**त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ॥१७॥**

**स०**–विपाकस्त्रिविध, सर्वद्रव्याणा परिणामकालभावी कार्यानुमेयो जाठराग्निसम्बन्धाद्रसस्य स्वरूपान्तरप्रादुर्भाव । स त्रिधैव, रसषट्त्वेऽपि न षोढा । तेन किञ्चित्स्वादुपाक, किञ्चिदम्लविपाक, किञ्चित्कटुविपाक, द्रव्यम् । तत्र मधुरलवणयोर्मधुरो विपाक । अम्लस्याम्ल । तिक्तकटुकषायाणा कटुक । स च कार्यानुमेय । तथा च वक्ष्यति ( सू अ ९।२० )–'जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् । रसाना परिणामान्ते स विपाक इति स्मृत ' इति । अत एव सोपसर्ग पाकशब्द उपात्त । विशिष्ट पाको विपाक, न पाकमात्रस्वरूप । तथा च भट्टारकचरकमुनी ( च सू अ २६।६८ )–'रसो निपाते द्रव्याणा विपाक कर्मनिष्ठया । वीर्यं यावदधीवासान्निपाताच्चोपलभ्यते' इति । एव कर्मनिष्ठानुमित एकरूपावस्थो जाठराग्निसयोगाद्यो रसाना रसान्तरोद्भव, स एव विपाक । न तु यो जाठराग्निसयोगमात्राद्रसानामनेकावस्थ, प्राङ्मधुरोऽनन्तर स एव पच्यमानोऽम्लस्ततो विपच्यमान स एव कटुर्विपाक ।

**आ० र०–विपाकभेदानाह—त्रिधेति ।** ते च त्रय, स्वादुरम्ल. कटुकश्चेति ।

द्रव्यस्य गुणानाह—

**गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ।**
**गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः ॥ १८ ॥**

**स०**–तत्र द्रव्ये गुर्वादयो दश गुणा सविपर्यया विंशतिर्ज्ञेया । एषा क्रमाद्विपरीता लघुतीक्ष्णोष्णरूक्षखरद्रवकठिनसरस्थूलपिच्छिला । गुरुस्तद्विपर्ययो लघु । मन्दस्तद्विपर्ययस्तीक्ष्ण । हिमस्तद्विपर्यय उष्ण । स्निग्धस्तद्विपर्ययो रूक्ष । श्लक्ष्णस्तद्विपर्यय खर । सान्द्रस्तद्विपर्ययो द्रव । मृदुस्तद्विपर्यय कठिन । स्थिरस्तद्विपर्यय सर । सूक्ष्मस्तद्विपर्यय स्थूल । विशदस्तद्विपर्यय पिच्छिल ।

**आ० र०–गुणभेदानाह–गुरुमन्देति ।** ते च विंशति. । तत्र गुर्वादयो दश, तद्विपर्ययाश्च लघुतीक्ष्णोष्णरूक्षखरद्रवकठिनचलस्थूलपिच्छिला दश । द्रव्यस्य बृंहणे कर्मणि शक्तिर्गुरु[१], लङ्घने लघु, शमने मन्द, शोधने तीक्ष्ण, स्तम्भने हिम., स्वेदने उष्ण, क्लेदने स्निग्ध, शोषणे रूक्ष, रोपणे श्लक्ष्ण., लेखने खर, प्रसादने सान्द्र, विलोडने द्रव, श्लथने मृदु., दृढने कठिन, धारणे स्थिर, प्रेरणे चल, विवरणे सूक्ष्म, संवरणे स्थूल, क्षालने विशद, लेपने पिच्छिल इति । ननु व्यवायिविकाश्याशुकारिप्रसन्नसुगन्धादय. सविपर्ययाश्चान्येऽपि गुणा दृश्यन्ते । तद्यथा स्वयमेवाह (नि अ.६।१)–"तीक्ष्णोष्णरूक्षसूक्ष्माम्लव्यवाय्याशुकर लघु । विकाशि विशद मद्यमोजसोऽस्माद्विपर्यय ॥" चरक. (सू अ. २७।२१३)–

१ 'यस्य बृंहणे कर्मणि शक्ति स गुरु.' ज. ।

"स्वादु शीत[1] मृदु स्निग्ध बहल श्लक्ष्णपिच्छिलम् । गुरु मन्द प्रसन्न च गव्य दशगुण पय ॥ तदेवङ्गुणमेवौज सामान्यादभिवर्धयेत् ॥" सुश्रुत (सू अ ४६।१८९)–"कषाय कफपित्तघ्न किञ्चित्तिक्त रुचिप्रदम् । हृद्य सुगन्धि विशद लवलीफलमुच्यते ॥" अयमेव (सू अ १।११)–"पित्त सस्नेहतीक्ष्णोष्ण लघु विस्र सर द्रवम् ॥" चरक (सू अ २७।१९३)–"शीत शुचि शिव मृष्ट विमल लघु षड्गुणम् । प्रकृत्या दिव्यमुदक भ्रष्ट पात्रमपेक्षते ॥" इत्यादि । तत्कथ विंशतिर्गुणा इति । अत्रोच्यते । ये[2] एतेऽतिरिक्ता गुणा दर्शिता, ते विंशतावेवान्तर्भूता । तथाहि–व्यवायिविकाश्याशुकारिणस्तावन्मद्ये पठ्यन्ते । प्रसन्न क्षीरे । मद्यगुणविपरीता ओजसि । य एवौजसि त एव क्षीरे । ततश्च तद्गुणपरस्परविपर्ययपर्यालोचनया व्यवायी–द्रवेऽन्तर्भूत । विकाशी–खरे । आशुकारी–चले । प्रसन्न –स्थूले । ते हि पारिशेष्यात् बहलश्लक्ष्णस्थिरसूक्ष्माणा विपर्यया । स्वादुशीतमन्दस्निग्धपिच्छिलगुरूणां ह्यम्लोष्णतीक्ष्णरूक्षविशदलघवो विपर्यया प्रसिद्धा एव । व्यवाय्यादिलक्षण च द्रवादिष्वेव सम्भवति । यदाह सुश्रुत (सू अ ४६।५२१)–"व्यवायी देहमखिल व्याप्य पाकाय कल्पते । विकाशी विकषन्[3] धातून् सन्धिबन्धान् विमुञ्चति ॥ आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत्" इति । प्रसन्नत्व स्फुटत्वम् । तच्च स्थूल एव, तस्य स्फुटप्रत्यक्षत्वात् । सुगन्धदुर्गन्धौ तु मन्दतीक्ष्णविशेषौ, इन्द्रियप्रसादनोद्वेजनद्वारा शमनशोधनरूपत्वात् । यदाह सुश्रुत (सू अ ४६।५२०)–"सुगन्धो[4] रोचनो मृदु । दुर्गन्धो विपरीतोऽस्मात्" इति । शुचिविमलौ तु विशदविशेषौ । अदृष्टाना[5] हि मलानां क्षालने शक्ति शुचित्वम् । दृष्टाना विमलत्वम् । शिव परिणामे हितम् । मृष्ट जिह्वाप्रियम् । ते च गुणकार्ये । गुणशब्दस्तूपचारात् । यथा–"क्षुद्बोधनो बस्तिविशोधनश्च प्राणप्रद शोणितवर्धनश्च । ज्वरापहारी कफपित्तहन्ता वायु जयेदष्टगुणो हि मण्ड ॥" इत्यादौ । यत्तु व्यवायिविकाशिनौ प्रस्तुत्योक्त सङ्ग्रहे (सू अ. १)–"सरतीक्ष्णप्रकर्षौ तु कैश्चित्तौ परिकल्पितौ" इति । तदेकीयमतत्वादनादरणीयम् । तदादरणे यत्तैले व्यवायिबद्धविक्वयोरभिधान तद्विरुद्ध स्यात् । यच्च मद्ये तीक्ष्णविकाशिनोस्तत्पुनरुक्त स्यात् । यत्तु पित्ते तीक्ष्णविस्रयोरभिधान, तदिन्द्रियोद्वेजकत्वे सत्यपि घ्राणेन्द्रियस्योद्वेजनातिशयार्थम् । सङ्ग्रहे तु (सू. अ १)–"इन्द्रियार्थो व्यवायी च विकाशी चापरे गुणा । सत्त्व रजस्तमश्चेति त्रय प्रोक्ता महागुणा ॥" इति ।

१ 'शीत स्थिर स्निग्ध' क. ग ज । २ 'यदेते' क. । ३ 'विकशन्' ख घ । 'विकसन्नेव धातुबन्धान् विमोक्षयेत्' इति मुद्रितसुश्रुते पाठ· । ४ 'सुगन्धी' ख. घ. । ५ 'प्रदिग्धाना' ख. घ ।

रोगकारणमाह—

**कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ।**
**सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥ १९ ॥**

स०–काल शीतोष्णवर्षलक्षणस्त्रिविध । अर्था शब्दस्पर्शरूपरसगन्धा महाभूतगुणा । तथा चागम (च शा अ. १।२९)–"अर्था शब्दादयो ज्ञेया गोचरा विषया गुणा" इति । कर्म क्रिया, कायवाङ्मनश्चेष्टा । कालश्चार्थश्च कर्म च तानि कालार्थकर्माणि, तेषा योग सम्बन्ध, कालार्थकर्मणा योग । किम्भूत, हीनमिथ्यातिमात्रकस्तथा सम्यग्योगश्चेति । ये कालादीना योगा हीनमिथ्यातिमात्रका, ते रोगैककारणम् । तेषामेव य सम्यग्योग, स आरोग्यैककारणं प्रधानकारणमिति । एकशब्द प्रधानवचन । यथा–'एक पार्थो धनुर्धर' इति । कालस्य हीनयोग स्वरूपहानि । मिथ्यायोग स्वरूपाद्वैपरीत्यम् । अतियोग स्वरूपातिशय । यथा–हीनशीतता हीनोष्णता हीनवर्षता हीनयोगे । शीतकालावसरेऽत्यौष्ण्यमुष्णकालावसरे शीत वर्षाकालेऽवृष्टिर्मिथ्यायोगे । अतिशैत्यमत्यौष्ण्यमतिवर्षणमतियोगे । एतद्योगत्रय रोगकारणम् । सम्यग्योगो यथास्वरूपस्थितिरारोग्यकारणम् । अर्थाना पुन स्वेन स्वेनार्थेनेन्द्रियस्य हीन सयोगो हीनयोग । पुरुषानभिमतादिनार्थजातेनेन्द्रियस्य योगो मिथ्यायोग । अत्यन्तसयोगोऽतियोग । एते त्रयो रोगकारणम् । यथास्वं सम्यग्योग आरोग्यकारणम् । कायादिकर्मणो हीनप्रवृत्तिर्हीनयोग । वेगोदीरणादिकं सामिभुक्तभाषणादिक रागद्वेषादिक च यथास्वमुत्तरत्र (सू अ १२।४०) वक्ष्यमाण मिथ्यायोग । अतिप्रवृत्तिरतियोग । सर्वेषा समा प्रवृत्ति समयोग । तेन हीनादयो योगास्त्रयो रोगकारणम् । सम्यग्योगस्त्वारोग्यकारणम् ।

आ० र०–उक्तधर्मकाणां द्रव्याणां सदोपयोगात्सदैव दोषवैषम्ये प्राप्ते विशेषमाह–कालार्थेति । द्रव्याणि चरकोक्तानि (सू अ. १।४७)–"खादीन्यात्मा मन कालो दिशश्च द्रव्यसङ्ग्रह ।" इति । तत्र काल साक्षादुपयुज्यते । महाभूतानि त्वर्थद्वारेण । दिगात्ममनांसि कर्मद्वारेण । कालो वर्षाशीतोष्णभेदात् त्रिधा । शब्दस्पर्शरूपरसगन्धभेदादर्थः पञ्चधा । कायिकवाचिकमानसिकभेदात्कर्म त्रिधा । तेषामसम्यग्योगो रोगकारण, सम्यग्योगस्त्वारोग्यकारणम् । तत्रासम्यग्योगस्त्रिधा, हीनयोगो मिथ्यायोगोऽतियोगश्चेति । शीतादीना काललक्षणानामल्पत्वं कालस्य हीनयोग, विपरीत[1]स्वलक्षणो मिथ्यायोग, आधिक्यमतियोग । इन्द्रियैरिन्द्रियार्थानां[2] योऽल्प. सम्बन्ध, सोऽर्थस्य हीनयोग., अनुचितो[3] मिथ्यायोग, अधिकोऽतियोग. । अल्पा चेष्टा कर्मणां हीनयोग, अनुचितो मिथ्यायोग., अधिकोऽतियोग । असम्यग्योगाद्विपरीत सर्वेषां सम्यग्योग । एतदुक्त भव-

१ 'विपर्ययो मिथ्यायोग' ज । २ 'र्थानामल्प सम्बन्धोऽर्थस्य' क. ग. । ३ 'अनुचितो योगो मिथ्या' क ग. ।

ति । यद्यपि सर्वदा द्रव्यैर्योगस्तथाप्यसम्यग्योगो यदा, तदा दोषवैषम्यम् । यदा सम्यग्योगस्तदा दोषसाम्यम् । इति बहिरङ्गो हेतु ।

रोगारोग्ये के उच्येते इत्याह—

**रोगस्तु दोषवैषम्यं, दोषसाम्यमरोगता ।**

**स०**–दोषाणा वातादीना, वैषम्य स्वप्रमाणादेकस्य द्वयोस्त्रयाणा वा वृद्धि क्षयो वा, रुजाकरत्वाद्रोग एव । वैषम्य विषमता स्वरूपाच्च्याव । तत कार्यकारणयोरभेदेन पठितो रोग इति । दोषाणा साम्यं स्वरूपादप्रच्युति समभावोऽरोगता आरोग्य, स्वास्थ्यमिति यावत् ।

**आ० र०–अथ लक्षण व्याचष्टे । रोग लक्षयति–रोग स्त्विति । दोषदूष्याणा यद्वैषम्य विकृतत्व तद्रोग । दोषशब्दोऽन्तरङ्गहेतुमात्रोपलक्षण ।**

प्रसङ्गादारोग्य लक्षयति–दोषसाम्यमिति । दोषदूष्याणा यत्साम्यमविकृतत्व तदारोग्यम् ।

**निजागन्तुविभागेन तत्र रोगा द्विधा स्मृताः ॥२०॥**

**स०**–तत्र तयो रोगारोग्ययो , रोगा द्विवा निजागन्तुभेदेन । निजा वातादिदोषजन्मान । आगन्तवो बाह्यहेतव । तथा चाचार्यवचनम् (स. सू अ २२)–"निजास्त्रिदोषोत्था[३] । बाह्यहेतुजास्त्वागन्तव" । अनयोरियान्विशेष । निजे रोगे वातादय पूर्व वैषम्य गत्वा पश्चाद्व्यथामभिनिर्वर्तयन्ति । आग न्तव पुन व्यथापूर्वमेवोत्पद्यन्ते[४], अनन्तरं तत्र वातादय कुप्यन्तीति । अनेनोभयस्य निजागन्तुभेदभिन्नस्य व्याधेश्चेत सन्तापकत्व बोद्धव्यम् ।

**आ० र०–रोगभेदानाह–निजेति । द्विविधो रोग, निज आगन्तुश्चेति । तत्र यद्दोषवैषम्य स्वयमुत्पाद्य व्यथां निर्वर्तयति[५], स निजो रोग. । यस्तु शस्त्रादिना हेत्वन्तरेणोत्पन्न[६], स आगन्तु. ।**

यत एव देहमनसी रोगाधिष्ठानत्वेन स्थिते, न केवलो देहो नापि केवल मन । तस्मादतोऽनन्तरमिदमाह—

**तेषां कायमनोभेदादधिष्ठानमपि द्विधा ।**

**स०**–तेषा निजागन्तुकाना विकाराणा रोगाणा, कायमनोभेदेन द्विविधमधिष्ठान स्थानम् । ज्वरास्रपित्तकासादीना काय । मदमूर्छासन्न्यासग्रहभूतोन्मादापस्माररागद्वेषादीना मन । अधितिष्ठन्त्यस्मिन्नित्यधिष्ठानम् । काय शरीरम् । मनश्चेत ।

**आ० र०–रोगाधिष्ठानमाह—तेषामिति । तच्च द्विधा, शरीर मनश्च ।**

नतु कायिकाना रोगाणामुत्पत्तौ हेतवो वातादयो दोषा प्रकुपिता उक्ता । मानसाना च रोगाणा को हेतु, तदर्थमाह–

**रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ[१] ॥ २१ ॥**

**स०**–मनश्चेत, तस्य रजस्तमसी दोषौ, उपप्लवावविद्यासम्भवौ । अत्र च प्राधान्यादादौ रजो निक्षिप्तम् । चशब्द पवनादीनामप्युपसङ्ग्रहार्थं । यस्मात्तेऽपि मन सश्रित्य विकुर्वते । सङ्ग्रहे ह्युक्तम् ( उ अ ९ )–"षडुन्मादा भवन्ति वातपित्तकफसन्निपाताऽऽधिविषनिमित्ता" इत्यादि । उदाहृतौ इत्युदाहरणमात्रमुद्देशमात्र वचनमात्रम् । अत्रायुर्वेदशास्त्रे, रजस्तमसोर्न साकल्येन व्याकरणमनिलादीनामिव । ते खल्वत्र स्वभावस्थानादिभि प्रकारैरशेषमुक्ता, न तु रजस्तमसी ।

**आ० र०–दुष्टस्य मनसो रोगाधिष्ठानत्वाद्दुष्टिहेतुमाह–रज इति । स च द्विधा, रजस्तमश्च । द्वौ दोषौ द्वे दुष्टिकारणे इत्यर्थ । न त्वनयोर्वातादिवद्दोषत्वम्, ततोऽनन्तरमनुक्तेर्दोषविज्ञानीयादिषु चाग्रहणात् । कायोऽपि दुष्ट एव रोगाधिष्ठानम् । तस्य तु दोषा एव दुष्टिकारणम् ।**

रोगोपहतशरीरज्ञानोपायमाह—

**दर्शनस्पर्शनप्रश्नैः परीक्षेत[२] च रोगिणम् ।**

**स०**–रोगोऽस्यास्तीति रोगी व्याधित, त दर्शनादिभि परीक्षेत । दर्शनेन दृष्ट्या, कासमेहाद्यार्तेषु पीतशुक्लवर्णसस्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्दितादिकम् । स्पर्शनेन हस्तकायस्पर्शेन, ज्वरगुल्मविद्रध्याद्यार्तम्, तथा शीतोष्णस्तब्धस्पन्दश्लक्ष्णखरस्पर्शादिक च । प्रश्नेन पृच्छया, शूलारोचकच्छर्दिहृद्दत्व सुच्छन्ददुश्छन्दत्व मृदुक्रूरकोष्ठता स्वप्रदर्शनमभिप्रायं जन्मामयप्रवृत्तिनक्षत्रद्विष्टेष्टसुखदु खानि च, इत्यातुरमुखात्परीक्षेत ।

**आ० र०–रोगित्वज्ञानोपायमाह—दर्शनेति । स च त्रिधा, दर्शन स्पर्शन प्रश्नश्चेति । तत्र दर्शनेन वैवर्ण्यादिक, स्पर्शनेन शैत्यादिक, प्रश्नेन शूलादिक, निर्धार्य रोग्ययमिति निश्चयः ।**

रोगविशेषाधिगमोपायमाह—

**रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ॥ २२ ॥**

**स०**–रोग निदानादिभि पञ्चभि परीक्षेत । निदान कारण हेतुरित्यनर्थान्तरम् । तच्चासन्नविप्रकृष्टभेदेन द्विधा । आसन्नमपि द्विविधम्, आसन्नात्यासन्नभेदेन । आसन्न रूक्षलघुशीतादिद्रव्योपयोग । अत्यासन्न तु यत समनन्तरमेव रोगोत्पत्ति । यथा वातादयो दोषा क्रुद्धा । विप्रकृष्ट यत् आदिकाले रुद्रकोपादि ज्वरादीनाम् । तथा हवि प्राशादि मेहकुष्ठादीनाम् । तेनैवविधमर्थजातमेवंविधस्य रोगस्य हेतुत्वेनोपदिष्टम्, एवविधश्चोत्पन्नोऽतो निदानाज्ज्ञायते रोग । प्राग्रूप पूर्वरूप भविष्यतो व्याधेरप्रकाशितदोषविशेषाधिष्ठितस्य लक्षणम्,

१ 'द्रव्योपयोग' क ज । २ 'बहिरङ्गो रोगहेतु' ख घ । ३ 'निजास्तु दोषोत्था.' इति पाठान्तरम् । ४ 'व्यथा' इति नास्ति क्वचित् । ५ 'निर्वहति' क. ग. ज. । ६ 'यति हन्ति च स' ख घ ।

१ 'मनसोऽत्र द्वौ दोषा' इति पाठोऽरुणदत्तसम्मत इति प्रतिभाति । २ 'सम्परीक्षेत' 'परीक्षेताथ' इति पाठान्तरे ।

उद्भूभूषुर्ज्वरादिरामयो वातादिदोषविशेषेणालिङ्गितरूपाभासो येनावभास्यते, यथायथमल्पत्वाद्व्यक्तमस्फुटं लिङ्गं तत्प्राग्रूपम् । लक्षणं पुनस्तदेव प्राग्रूपाद्विलक्षणम्, येन सकलदोषविशेषालिङ्गित स्फुटलिङ्गो व्याधिर्दृश्यते लक्ष्यते । उपशय सुखानुबन्ध्याहाराद्युपयोग । एवंविधेनाहारादिकेन हि तस्य पीडा नाभूत्, एवंविधेन चाभूत्, अत उपशयाज्ज्ञायतेऽय रोग इति । स व्याधिसात्म्य स्वास्थ्यहेतु सुखावह । आप्तिर्निर्वृत्ति सम्प्राप्तिरागतिर्जातिरित्यनर्थान्तरम् । एव दुष्टेनैव स्थानस्थितेनैवमनुगतेनानया कल्पनयैवंमार्गेण दोषेणेति परिकल्पनम्, अत आप्त्या ज्ञायतेऽय रोग इति ।

**आ० र०-रोगित्वे हि ज्ञाते कोऽसौ रोग इति विशेषज्ञानोपायमाह-रोगमिति । स च पञ्चधा, निदान प्राग्रूप लक्षणम् उपशय आप्तिश्च । आप्ति सम्प्राप्ति । निदान बहिरङ्गो हेतु । प्राग्रूप पूर्वजो रोग । रोगस्य हि राजवत् प्रकाशमानस्य परिवारभूता रोगा केचित्पूर्वं प्रकाशन्ते, केचित्सह, केचित्पश्चात् । तत्र ये पूर्वं, ते पूर्वरूपम् । ये सह, ते रूपम् । ये पश्चात्ते उपद्रवा । ते चोभयेऽपि लक्षणपदेन सङ्गृहीता । उपशय. व्याधिसात्म्यम् । आप्तिरन्तरङ्गो हेतु । इति रोगलक्षणम् ।**

उपशयादिप्रसङ्गे च देशकालावप्युपयुज्येते । अतस्तावपि पठति—

**भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ।**

**स०**-इहास्मिन्नायुर्वेदशास्त्रे, आचार्या द्विधा द्विप्रकार, देशमाहु कथयन्ति । भूमिभेदेन देहभेदेन च ।

**आ० र०-अथौषध व्याचष्टे । तच्च देशकालावपेक्षते इति प्रथम तावद्देश । तत्र देशे भेदद्वयमाह-भूमिदेहेति । तच्च भूमिर्देहश्च । इहेत्यायुर्वेदशास्त्रे । शास्त्रान्तरेषु देहस्य देशव्यवहाराभावात् ।**

देहदेश शिर पाण्यादिलक्षण प्रसिद्ध । भूमिदेश उच्यते-

**जाङ्गलं वातभूयिष्ठमनूपं तु कफोल्बणम् ॥ २३ ॥**
**साधारणं सममलं त्रिधा भूदेशमादिशेत् ।**

**स०**-भूदेश पुनस्त्रिधा त्रिप्रकारम्, आदिशेत् वदेत् । तत्र जाङ्गलो देशोऽल्पोदकतरुपर्वतत्वेन वक्ष्यमाणलक्षण, वातभूयिष्ठो वातप्रचुर । तत्र जाता ओषधिखगपुरुषमृगादयो वातप्रधाना भवन्ति । प्रचुरोदकवृक्षो यो निर्वातो दुर्लभातप सोऽनूप इति । स च कफप्रधान । तज्जाश्चौषध्यादय स्निग्धा भवन्ति । साधारण पुनरुभयलक्षणो मध्यपतितो व्यामिश्ररूप । स च सममलो वातादिसमदोष । अत्र दोषा एव मलशब्देनोक्ता । वक्ष्यति हि ( सङ्ग्रहे सू अ २० ) । "देहस्य मलिनीकरणादाहारमलत्वाच्च मला ।"

**आ० र०-भूदेशभेदानाह—जाङ्गलमिति । ते च त्रय, जाङ्गलोऽनूप साधारणश्च । तत्र यो वातभूयिष्ठो वातरोग बहुलस्त जाङ्गल, य कफोल्बण कफरोगबहुलस्तमनूप, य सममल समदोषत्वादारोग्यबहुलस्त साधारणमादिशेत् । देहभेदास्तु प्रकृतिभेदैरुक्ता ।**

भेषजस्य सम्यग्योगहेतु कालमाह—

**क्षणादिर्व्याध्यवस्था च कालो भेषजयोगकृत् ॥२४॥**

**स०**-कालो द्विविध, क्षणादिलक्षणो व्याध्यवस्थालक्षणश्च । भेषजस्यौषधस्य, योग करोति । तदर्थसम्पादनसामर्थ्य करोतीत्यर्थ । भेषजस्य योगो भेषजयोग, त करोति । क्षणादि प्रसिद्ध । आदिग्रहणाल्लवत्रुटिमुहूर्तयामाहोरात्रपक्षमासर्त्वयनसवत्सराणा परिग्रह । क्षणादिकालस्योदाहरणम् । यथा-"पूर्वाह्णे वमन देय मध्याह्ने तु विरेचनम् । मध्याह्ने किञ्चिदावृत्ते बस्तिं दद्याद्विचक्षण ॥" व्याध्यवस्था सामनिराममृदुमध्यतीक्ष्णत्वात्तत्तद्योग्यौषधविसृष्टि । यथा ( च चि अ ३।१४०, हृ चि अ. १।२१ )-"लङ्घन स्वेदनं कालो यवाग्वस्तिक्तको रस । मलाना पाचनानि स्युर्यथावस्थ क्रमेण वा ॥" यथा ( च चि अ ३०।२८७ )-"ज्वरे पेया कषायाश्च सर्पि क्षीर विरेचनम् । त्र्यहे वा षडहे युञ्ज्याद्वीक्ष्य दोषबलाबलम् ॥" यथा ( हृ चि अ १।४४ )-"मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा । अचिरज्वरितस्यापि भेषज योजयेत्तदा ॥" अस्यामवस्थाया दत्तमौषधमारोग्याय भवति ।

**आ० र०**-कालभेदद्वयमाह-क्षणादिरिति । तच्च क्षणादिरूपो व्याध्यवस्थारूपश्च । क्षणो मात्रा, आदिशब्दात्काष्ठाकलानाडिकामुहूर्तयामाहोरात्रपक्षमासर्त्वयनवर्षाणि । तत्राक्षिनिमेषो मात्रा, ता पञ्चदश काष्ठा, तास्त्रिंशत्कला, ता सदशभागा विंशतिर्नाडिका, ते द्वे मुहूर्तं, ते तुल्यरात्रिदिवे राशिभागे चत्वार पादोना याम, तैश्चतुर्भिरहो रात्रिश्च, पञ्चदशाहोरात्रा पक्ष, तौ द्वौ मास, तौ द्वावृतु, ते त्रयोऽयन, ते द्वे वर्षम् । व्याध्यवस्था आमपच्यमानपक्वनवपुराणतीक्ष्णमृदुत्वादय ।

देशकालयोरुपयोगमाह—भेषजयोगकृदिति । देशकालवाक्ययो शेषभूतोऽय ग्रन्थ । योऽयमुक्तो देश कालश्च । तदुभय भेषजस्य योग योग्यता करोति । उक्त हि सङ्ग्रहे ( सू अ. २३ )-"भेषजमवचारयन् प्रागेव तावदातुर[१] परीक्षेत । कस्मिन्नय देशे जात इत्यादि । तस्मिंश्च देशे मनुष्याणामिदमाहारजातमिद विहारजातमेतावद्बलमेवविध सत्त्वमेवविध सात्म्यमिय भक्तिरिमे व्याधयो हितमिदमहितमिदमिति । तथा, अतिस्थूलोऽतिकृशो दुर्बलो दुष्टमांस[२]शोणितास्थ्यङ्गावयवोऽल्पाग्निरल्पाहारोऽसात्म्याहारोऽपचित साररहितो वा व्याधिबलमेव तावदसमर्थ. सोढुम् । किं पुनस्तथाविधो भेषजैर्वेगमिति[३] । तथा, कालश्च भेषजस्य योग्यतामापादयतीत्युपक्रम्य, शीतोष्णवर्षालक्षणा ऋतव इत्याद्युपक्रम्य,

१ 'राजवद्राजमानस्य' क. ग. । २ उभये-रूपमुपद्रवाश्च ।

१ 'तावदेवमातुर' इति पाठान्तरम् । २ 'दुर्बद्धमास' इतीन्दुसम्मत. पाठः । ३ 'भेषजमेव वेग' इति पाठान्तरम् ।

औषधग्राममस्त्वित्यादि । तथा, तस्मात्साधारणेष्वेव तदन्तरालेषु वमनादीनि योजयेदिति । तथा, आतुरावस्थासु तु[1] कालाकालसञ्ज्ञा । यथाऽस्यामवस्थायामस्यौषधस्य कालोऽकालो वा । न ह्यप्राप्तातीतकालमौषध यौगिक भवति" इति ।

तच्चौषधं द्विप्रकारमाह—

**शोधनं शमनं चेति समासादौषधं द्विधा ।**

**स०**–समासात्सक्षेपत, यत्किञ्चिज्जगत्यौषध सम्भवति, तदनेकप्रकार सम्भवदपि द्वैरूप्यानतिक्रमाच्छोधनशमनलक्षणात् द्विधेत्युक्तम् । एक शोधनरूपमपरं शमनरूपमिति । शोधन यत् कुपितान् दोषान् बहिर्निसार्य रोगोपशमन करोति । शमन यत्स्वस्थानस्थितानामेव साम्यहेतु ।

**आ० र०–औषधभेदद्वयमाह–शोधनमिति । तच्च शोधन शमनं च । समासत इत्यनुवर्तमानेऽपि पुन. समासग्रहणमतिसक्षेपाय । सामान्योक्त्या विशेषसङ्ग्रह सक्षेप. । लङ्घनबृंहणे सामान्ये विहाय लङ्घनविशेषयो शोधनशमनयोरुक्तिरित्यतिसक्षेप । स च बृहणस्य शमनेऽन्तर्भाव मत्वा कृत । वक्ष्यति हि ( सू अ. १४।७ )–"बृहण शमन त्वेव वायो पित्तानिलस्य च ।" इति । शोधन अधिकबहिर्निरसनेन दोषसाम्यकरम् । शमन त्वधिकक्षपणक्षीणवर्धनाभ्याम् । अतएवाल्यधिके[2] दोषे शोधनम्, अधिकक्षीणयो. शमनमिति विभाग सिद्ध. ।**

औषधमुक्तम् । तस्य विषयमाह—

**शरीरजानां दोषाणां क्रमेण परमौषधम् ॥ २५ ॥**
**बस्तिर्विरेको वमनं तथा तैलं घृतं मधु ।**

**स०**–शरीरजाना वातादीना, क्रमेण यथासख्येन परिपाठ्योद्देशनिर्देशेन, परमौषध प्रधानौषध, बस्त्यादिवमनान्त शोधनरूप, तैलादिमध्वन्त शमनरूपम् । तेन वातस्य बस्तिर्गुदप्रणिधेयस्नेहक्काथादि परमौषधम् । पित्तस्य विरेको मुखपीत गुदमार्गेणान्त स्थितस्य दोषस्य नि सारण परमौषधम् । कफस्य वमन मुखेन पीत तेनेव दोषस्य नि सारण परमौषधम् । इति शोधनरूपेण दोषाणामौषधम् । तैलादि तु शमनस्वरूपेणौषधम् । तथेति क्रमेणैव । वातस्य तैल, पित्तस्य घृत, कफस्य माक्षिकं परमौषधम् । प्रधानमौषधमिति यावत् ।

**आ०र०–शोधनशमनविशेषाणां विषयविभागमाह–शरीरजानामिति । तत्र शोधनविशेषा बस्त्यादय. क्रमेण दोषाणामौषधम् । वातस्य बस्ति, पित्तस्य विरेक., कफस्य वमनम् । तथा शमनविशेषास्तैलादयः । वातस्य तैल, पित्तस्य घृत, कफस्य मधु । किं सर्वेषां, नेत्याह–शरीरजानां, शरीरे जाताः द्वितीय रोगाख्य जन्म प्राप्ताः शरीरजाः शरीराश्रितास्तेषाम् । कथ, परमतिशयेन । एतदुक्त भवति । सर्वेषा दोषाणां** बस्तिरौषध विशेषाद्वातस्य[1] । सर्वाणि शोधनानि वातस्यौषध विशेषाद्बस्ति । तथा मन शरीराश्रयाणां दोषाणा बस्तिरौषध विशेषाच्छरीराश्रयाणाम्[2] । एव विरेकादिषु वाच्यम् ।

कायादिदेशमाश्रित्य सर्वत्र सर्वमेव शरीरजाताना दोषाणा क्रमेण परमौषधमुक्तम् । अथ मानसयोर्दोषयो किं तत्परमौषध स्यादिति, तदर्थमाह—

**धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ॥ २६ ॥**

**स०**–मनोदोषयो रजस्तमसो, रोगविघ्नकारि धीधैर्यादिक, परमौषधम् । धीश्च धैर्य चात्मादिविज्ञान च तत्तथाविधम् । तत्र धीर्बुद्धिर्बाह्याध्यात्मिकानां भावाना हिताहितपरिच्छेदविभागकारिणी । धैर्य धृतिश्चेतस स्थिरत्वमचापलम्, येन प्रतिषिद्धेषु न प्रवर्तते, हितेषु च न सीदति । आत्मविज्ञान योगाभ्याससमाधिना परमात्मस्वरूपविज्ञानम् । आदिग्रहणा ज्ज्ञानविज्ञानस्मृतिदेशकालादीना परिग्रह । मनोदोषसमुत्थ कामादिजरोगार्थ परशब्दो विशेषणत्वेन निर्दिष्ट ।

**आ० र०–अमूर्तस्य शमनस्य विषयमाह–धीति । तच्च धीप्रभृति । धीर्बुद्धि, यया हिताहितविवेक । धैर्यं दु ख सहत्व, येन हितसेवनमहितत्याग । आत्मादिविज्ञान आत्मादय आत्मदेशकालास्तेषा विज्ञानमीदृशोऽहमीदृशे देशे ईदृशे काले व्यवहरामीति ज्ञान, येन हितसेवनस्याविच्छेद । एतत्सर्वं मनोदोषौषध हृदयाश्रयाणा वातादीनामौषध पर, सर्वमेव मनोदोषाणामौषध[3] विशेषाद्धीप्रभृति । तथा मन शरीराधिष्ठिताना[3] दोषाणा धीप्रभृत्यौषध विशेषान्मनोधिष्ठितानामित्यर्थ । इति रोगौषधम् ।**

एव तावदनेन सकलचिकित्सितमुक्तम् । तच्च पादचतुष्टययुक्त कार्यकरं, तदर्थमाह—

**भिषक् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।**
**चिकित्सितस्य निर्दिष्टं, प्रत्येकं तच्चतुर्गुणम् ॥ २७ ॥**

**स०**–चिकित्सितस्य रोगोपशमलक्षणस्य, पादचतुष्टयमङ्गचतुष्टयमुक्तम् । प्रत्येक तच्चतुर्गुणमेवं षोडशगुण चिकित्सितं भेषज भिषजो भाषन्ते । भिषग्वैद्य, तस्य प्राधान्यादग्रे निर्देश । तथा चागम ( चरके सू अ ९।१० )–"योक्ता[4] प्रयोक्ता शास्ता च प्रधानो भिषगत्र तु ॥" तथा सङ्ग्रहेऽपि ( सू. अ २ )–"यद्वैद्ये विगुणे पादा गुणवन्तोऽप्यनर्थका । स पादहीनानप्यार्तान् गुणवान् यच्च यापयेत् ॥ चिकित्सायास्तमेवात प्रधानं कारण विदु ।" द्रव्याण्यौषधानि । उपस्थाता परिचारक । रोगी आतुर । एतत्पादचतुष्टयं निर्दिष्टमाचार्येण ।

**आ० र०–औषधपादानाह–भिषगिति । ते च चत्वार, भिषग्द्रव्यमुपस्थाता रोगी चेति । उपस्थाता परिचारक । चिकित्सितस्यौषधस्य । पादत्व चैषा क्रियानिष्पादकावयवत्वात् ।**

---

१ 'तु कला. कालसंज्ञा. । तद्यथा' इतीन्दुसम्मत पाठ. । 'तु कालसंज्ञा' ज. । २ 'एवाभ्यधिके' ख घ. ।

१ 'विशेषाद्वातस्य' क ग ज. । २ 'विशेषमाह' ख घ. । ३ 'धिष्ठानाना' ख. घ. । ४ 'विज्ञाता शासिता योक्ता प्रधान भिषगत्र तु' इति पाठान्तरम् ।

पादान्विशिनष्टि-प्रत्येकमिति । तत्पादचतुष्टय, प्रत्येक चतुर्गुण ज्ञेयम् । तत्तद्गुणवतामेवैषां पादत्वमित्यर्थ ।

उद्देशक्रमेण तेषा गुणानाह—

**दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक् ।**

**स०**—दक्ष –कर्मणि चतुर । तीर्थादुपाध्यायाद्विदितागमादात्तो गृहीत शास्त्रार्थो येन स तीर्थात्तशास्त्रार्थ, "अनेकमन्यपदार्थे" इति तृतीयार्थे बहुव्रीहि, आगमप्राप्तशास्त्रस्वरूप । बहुशो दृष्ट कर्म येन चिकित्सालक्षण स दृष्टकर्मा–अभ्यस्तकर्मा शतशश्चिकित्सितरोग । शुचि –कायवाङ्मनोव्यापारैर्मलीमसैरपरामृष्ट, अलिप्सावान् अर्थोपजीविकाहेतोर्न करोति परं धर्मोपार्जनेनेति शुचि ।

**आ० र०**—तत्र भिषग्गुणानाह–दक्ष इति । दक्ष –शीघ्रकारी । तीर्थात्तशास्त्रार्थो–गुरोर्गृहीतायुर्वेदार्थ । तीर्थ–गुरु । दृष्टकर्मा–बहुधाऽनुष्ठितशास्त्रार्थ । शुचिर्मनोवाक्काये[1] शुद्ध । सङ्ग्रहे तु ( सू अ २ )–"अभेद्योऽनुद्धतोऽस्तब्ध[2] सूरत. प्रियदर्शन । सूरत.-कारुणिक । बहुश्रुत कालवेदी ज्ञातग्रन्थो[3]ऽर्थकर्मवित्[4] ॥ अनाथान् रोगिणो यश्च पुत्रवत्समुपाचरेत् । गुरुणा समनुज्ञात स भिषक्शब्दमश्नुते ॥ यस्तु केवलशास्त्रज्ञ कर्मस्वपरिनिष्ठित । स मुह्यत्यातुर प्राप्य प्राप्य भीरुरिवाहवम् ॥ य पुन कुरुते कर्म धाष्टर्याच्छास्त्रार्थवर्जित[5] । स सत्सु गर्हामाप्नोति वध[6] चेच्छति राजत ॥ हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे । ज्ञान चतुर्विध यस्य स राजार्हो भिषग्वर[7]. ॥ शास्त्र शस्त्राणि सलिल गुणदोषप्रवृत्तये । पात्रापेक्षीण्यत[8] प्रज्ञां बाहुश्रुत्येन बृहयेत् ॥ प्रदीपभूतं शास्त्र हि दर्शन विपुला मति । ताभ्यामत सुयुक्ताभ्यां चिकित्सन्नापराध्यति ॥ आहूत एव यो याति सुवेष सुनिमित्ततः । गत्वाऽऽतुरार्थादन्यत्र न निधत्ते मन क्वचित् ॥ व्याधिं परीक्षते सम्यङ्निदानादिविशेषत । ह्रेपणीया[9] च तद्वार्ता न प्रकाशयते बहि[10]. ॥ सहसा न च तस्यापि क्रियाकालमहापयन् । जानाति चोपचरितु स वैद्य सिद्धिमश्नुते[11] ॥ नाददीतामिष स्त्रीभ्यस्तदध्यक्षे पराङ्मुखे । ताभिश्च रहसि स्थान परिहास च वर्जयेत् ॥ जिजीविषुर्व्याधितोऽपि पूर्वोक्तगुणवर्जितान् । क्रियाविक्रयिणो वैद्यान् मृत्योरग्रेसरा हि ते ॥ यद्वैद्ये विगुणे पादा गुणवन्तोऽप्यनर्थका । स पादहीनानप्यार्तान् गुणवान् वैद्य यापयेत्[12] ॥ चिकित्सायास्तमेवात प्रधान कारण विदु । व्याधि पुरा परीक्ष्यैवमारभेत तत. क्रियाम् ॥ स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात् । साध्ययोरपि सयोगो बलिनोर्यात्यसाध्यताम् ॥ विद्यादसाध्यमेवात साध्यासाध्यसमागमम् । नासाध्यः साध्यतां याति, साध्यो याति त्वसाध्यताम् ॥ पादापचाराद्दैवाद्वा[1] यात्यवस्थान्तर गद । वरमाशीविषविष दीप्तमग्निमयोऽपि वा ॥ उपयुञ्जीत न त्वार्तादामिष कृपणाजनात् । परो[2] भूतदया धर्म इत्यार्तेषु भिषग्वर ॥ वर्तेते[3] यः सुसिद्धार्थः स सर्वमतिवर्तते" इति ।

औषधमपि चतुर्विधम्—

**बहुकल्पं बहुगुणं सम्पन्नं योग्यमौषधम् ॥ २८ ॥**

**स०**—बहव कल्पा यस्मिन् सम्भवन्ति स्वरसक्काथचूर्णाद्यास्तद्बहुकल्प–व्याधीना निवारणक्षम न तु लवणवदेककल्पम् । तद्धि सुखमुपयुज्यते । नानाशक्तयो हि सत्त्वा । बहवो गुणा यस्य गुरुमन्दादयस्तद्बहुगुणम्, अथवा यदनेकरोगविनाशनसमर्थम् । सम्पन्न–सम्पत्तियुक्तं, न विपन्नम्, प्रशस्तभूमिदेशजातादिगुणयुक्तम् । तथा च ग्रन्थ ( हृदये क अ १।१ )–"धन्वे साधारणे देशे समे सन्मृत्तिके शुचौ । श्मशानचैत्यायतनश्वभ्रवल्मीकवर्जिते ।" इति । अथवा पाकसस्कारादियुक्तम् । योग्यं[4]–दातु यद्यत्रार्हति तच्च तत्र योग्यम् । व्याधिदेशकालदोषदूष्यदेहवयोबलादीन् ज्ञात्वा, युज्यते दीयत इति तद्योग्यं, रोगस्य रोगिणश्च ।

**आ० र०**—द्रव्यगुणानाह–बहुकल्पमिति । बहव कल्पा· स्वरसादयो यस्य तद्बहुकल्पम् । बहवो गुणा गुरुमन्दादयो यस्य तद्बहुगुणम् । रसादिसम्पत्त्या यद्युक्त तत्सम्पन्नम् । देशकालाद्युचित योग्यम् । औषधमत्र द्रव्य, चिकित्सितरूपस्यौषधस्याङ्गत्वायोगात् ।

उपस्थातापि चतुर्विध —

**अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिचारकः ।**

**स०**—अनुरक्तो–दृढभक्त आतुरस्य । शुचि –कायवाङ्मनोव्यापारैर्दुष्टैरपरामृष्ट[5] । दक्ष –सर्वचेष्टासु चतुर । बुद्धिमान्[6]–विशिष्टया बुद्ध्या युक्त, प्रवीण इति यावत् ।

**आ० र०**—परिचारकगुणानाह–अनुरक्त इति । अनुरक्त. –स्नेहल । शुचिदक्षौ वैद्यवत् । बुद्धिमान्–प्राज्ञ ।

रोग्यपि चतुर्विध —

**आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि ॥२९॥**

**स०**—आढ्यो–धनवान् । भिषग्वश्यो -वैद्यायत्त[7], तदुक्तकारी । ज्ञापको–निदानावस्थादीनामावेदक, वैद्य रोगाहारविहारादीनामन्वयव्यतिरेक बोधयितु समर्थ । सत्त्ववान्[8]–धैर्ययुतो मोहवर्जित, धैर्येण प्रायश्चित्तवच्चिकित्सा करोति । अपि समुच्चये ।

१ 'कायशुद्ध' क ग. ज । २ 'द्धत स्तब्ध सूनृत' इतीन्दुसम्मत. पाठ । ३ 'जितग्रन्थो' ख. घ झ । ४ 'धेशास्त्रवित्' स २। ५ 'दुर्मेधा शास्त्रवर्जित' क ग । ६ 'वधमाप्नोति' क ग ज.। 'वधं चर्च्छति' स २। ७ 'भिषक्तम' स. २। ८ 'ताभ्यां भिषक् सु' घ । ९ 'गोपनीयां' क. ख घ झ । १० 'भिषक्' क. ज.। ११ 'फलमश्नुते' क । १२ 'परिपालयेत्' क. ग झ ।

१ 'दैवाच्च यान्त्यवस्थान्तर गदा' क ग ज । २ 'वरो' इतीन्दुसम्मत. पाठ । ३ 'यस्तु सिद्धार्थ' ख घ झ । ४ 'योग्यं देशकाला ( द्य ) नुरोधेन योगाय प्रभवति । "योगायच" इति यत् ।' ट.। ५ 'व्यापारैर्मलीमसैरसस्पृष्ट' ट.। ६ 'बुद्धिमानभिज्ञ.' ट.। ७ 'वैद्यविधेय.' ट.। ८ 'सत्त्ववानभीरु' ट.।

आ० र०—रोगिगुणानाह—आढ्य इति। आढ्यो—धनवान्। भिषग्वश्यो—वैद्याधीनः। ज्ञापकः—स्वानुभूयमानरोगावस्थानिरूपणसमर्थः। सत्त्ववान्—रोगौषधक्लेशसहः। इति भिषगादिपादचतुष्टयम्।

सुखसाध्यादिकस्य व्याधिचतुष्टयस्य लक्षणमुच्यते—

**(साध्योऽसाध्य इति व्याधिर्द्विधा, तौ तु पुनर्द्विधा।**
**सुसाध्यः कृच्छ्रसाध्यश्च, याप्यो यश्चानुपक्रमः॥१॥)**
**सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः।**
**अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः॥ ३० ॥**
**अतुल्यदूष्यदेशर्तुप्रकृतिः पादसम्पदि।**
**ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः॥ ३१ ॥**

स०—सर्वौषधक्षमे देहे उत्पन्नो व्याधिः सुखसाध्यः सुखोपायः, तथा कालेनाल्पेन साध्यते। सर्वाण्यौषधानि यः क्षमते सहते तीक्ष्णमध्यमृदुरूपाणि नानादेशजानि शमनानि तथा शोधनरूपाणि तथा विषक्षारादीनि। यूनः—वयस्थस्य, तरुणस्येत्यर्थः। पुंसो—न स्त्रियाः। पुंग्रहणं स्त्रीनिवृत्त्यर्थम्। यतस्तस्याः सर्वदा भीरुत्वमबुद्धिमत्त्वं च, अतो यथोक्तानुरूपगुणाभावः। सा तु यस्मात्तीक्ष्णोष्णौषधानि न सहते, सौकुमार्यादियोगात्। जितात्मनोऽलोलुपस्य, जित आत्मा येन, विषयाभिलाषपरिहरतः। अमर्मगो—न मर्मस्थः, मर्माणि—शिरोहृदयबस्तिप्रभृतीनि, तेषु गच्छतीति मर्मगः, न मर्मगोऽमर्मगः, हृत्कण्ठादिपीडाकरणासमर्थः। अल्पहेत्वग्ररूपरूप इति। हेतुश्चाग्ररूपं च रूपं च तानि हेत्वग्ररूपरूपाणि, अल्पानि हेत्वग्ररूपरूपाणि यस्य स तथाविधः। हेतुर्निदानम्, अग्ररूपम्—पूर्वरूपम्, रूपम्—लक्षणम्, एतान्यल्पानि यस्य। अनुपद्रव इति। न विद्यते उपद्रवो यस्य, उत्पन्नस्य व्याधेरनन्तरं जायते योऽन्यो व्याधिः, न तल्लक्षणभूतोऽप्रधानः, न यथास्वलक्षणः, तदुपक्रमनिरोधकः, स उपद्रवः। तथा चागमः—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः। उपक्रमविघाती च स ह्युपद्रव उच्यते॥" इति। अतुल्यदूष्यदेशर्तुप्रकृतिरिति। दूष्यश्च देशश्च ऋतुश्च प्रकृतिश्च ता दूष्यदेशर्तुप्रकृतयः, अतुल्या दूष्यदेशर्तुप्रकृतयो यस्य। अतुल्या—न सदृशा। यथा—दूष्ये मेदोमज्जादौ, अनूपदेशे, शीतर्तौ, आतुरो वातप्रकृतिः, तस्य कुपितं पित्तं सुखसाध्यमिति। अतुल्यदूष्यो यथा—श्लेष्मणा शीतेन रक्तमुष्णं दूषितम्। अतुल्यदेशो व्याधिर्यथा—अनूपदेशे पित्तसम्भूतः। अतुल्यर्तुर्यथा—शरदि कफोद्भवः। अतुल्यप्रकृतिर्यथा—पित्तप्रकृतेः श्लेष्मोद्भवो व्याधिः। नन्वतुल्यदूष्यदेशर्तुप्रकृतित्वादसौ कृच्छ्रसाध्यो याप्यो वा प्राप्तः, न सुखसाध्यः, अनेकसुखोपक्रमसाध्यत्वात्। यतो दूष्यादीनामतुल्यत्वात्परस्परमन्य एवोपक्रमः। एकसुखोपक्रमः सुखसाध्यो व्याधिः। अत एव साध्ययाप्यपरित्याज्या मेहा' श्लेष्मपित्तवातोत्था (हृ. नि. अ. १०।६)—"समासमक्रियतया महात्ययतयापि च" इत्येवं निर्दिशति। अत्रोच्यते। तथाप्रभावत्वात्प्रमेहाख्यस्य व्याधेः, यदुत श्लेष्मप्रमेहः समक्रियत्वात्साध्यः, पित्तप्रमेहो विषमक्रियत्वाद्याप्यः, महात्ययत्वाच्च वातप्रमेहः प्रत्याख्येयः। किञ्च तुल्यदूष्यदेशर्तुप्रकृतित्वान्महारम्भो निष्प्रत्यनीको व्याधिर्जायते, अतोऽसौ न सुखसाध्यः। क्वचिद्व्याधौ तुल्यदूष्यादिरपि सुखसाध्यत्वेन ज्यायान्। तथा च ग्रन्थः—"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः॥" पादसम्पदीति। भिषगादीनां चतुर्णां पादानां सम्पत्समृद्धिः, तस्यां सत्याम्, अङ्गचतुष्टये परिपूर्णे सति। ग्रहेष्वनुगुणेष्विति। ग्रहाः—सूर्यादयः, तेष्वनुगुणेष्वनुकूलराशिस्थितेषु शोभनस्थानगतेषु सत्सु। एकदोषमार्ग इति। दोषश्च मार्गश्च दोषमार्गम्, एकं दोषमार्गं यस्य स तथोक्तः। दोषो—वातादिः। मार्गस्त्रिविधः शाखादिर्वक्ष्यमाणो बाह्याभ्यन्तरमध्यभेदेन। तेनैकेन वातादीनामन्यतमेन दोषेण यो जातो न द्वाभ्यां त्रिभिर्वा, तथैकेनापि मार्गेण बाह्येन मध्येनाभ्यन्तरेण वा जातः। नवो—न जरठः, अचिरोत्पन्न इत्यर्थः। यस्माद्वत्सरातीता व्याधयोऽसाध्याः। स तथाविधो व्याधिः सुखः—सुखेन साध्यते। तथा च ग्रन्थः (सु. सू. अ. २, च. नि. अ. ८)—"सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते" इति।

१ 'अथ रोगस्य सुखसाधनभेदानाह' ट। २ इममष्टाङ्गसङ्ग्रहस्य श्लोकं केचिदत्र पठन्ति। ३ 'सहते' इत्यस्याग्रे "यो देहः, तस्मिन् सर्वौषधक्षमे देहे यो गदः स सुखसाध्य इत्यर्थः" इति ट पुस्तकेऽधिकः पाठः। ४ अस्याग्रे "क्लीबस्तु योषितोऽप्यल्पतरसत्त्व इत्यर्थः। इदं तु लोके एव सिद्धम्" इत्यधिकष्ट पुस्तके। ५ अस्याग्रे "स सुखः। कारणे ह्यपरिपूर्णे कार्यस्याप्यपरिपूर्णतेति सुखसाध्यत्वम्। नन्वल्पहेतुरित्येतावदेव वक्तुं युक्तम्, यतोऽल्पहेतोर्गदस्यावश्यं पूर्वरूपरूपेऽल्पे एव भवतः। स्वल्पाधिकरणात् कार्यं स्वल्पं दृश्यते महतो महत्। अस्त्येवैतत्। किन्त्वल्पेनैव हेतुना प्राकृताशुभकर्मणैव कश्चिद्व्याधिर्महान् दृश्यते, तत्राग्ररूपरूपे महती एव भवतः, तयोर्व्याध्यायत्तत्वात्। तथाच वक्ष्यति (सू. अ. १२।५६)—"दृष्टापचारजः" इत्यादि। तस्मादल्पहेत्वग्ररूपरूप इति युक्तमुक्तम्।" इति ट पुस्तकेऽधिकः पाठः। ६ अस्याग्रे "यथा—तिक्तकषायादिर्वायोः। अग्ररूपं—ज्वरस्य आलस्यादिरूपम्। रूपमुत्पन्नस्पष्टलक्षणम्। यथा—वातज्वरे (हृ. नि. अ. २।१०)—"आगमापगम" इत्यादि" इति ट. पुस्तकेऽधिक. पाठः।

१ अस्याग्रे "अथवा नञ् ईषदर्थे। अनुपद्रवोऽल्पोपद्रवः। यथा—अनुदरा कन्या।" इत्यधिकष्ट. पुस्तके। २ अस्याग्रे "प्रमेहस्य तु तुल्यदूष्यस्य यत् सुखसाध्यत्वं वक्ष्यति तत् तथाप्रभावत्वादिति वेद्यम्।" इत्यधिकष्ट पुस्तके। ३ अस्याग्रे "यथोक्तगुणवैद्यौषधोपस्थातृरोगिसद्भावः। तस्यां सत्यां यथोक्तसुखसाध्यलक्षणो गदः सुखसाध्यः। सुखसाध्यलक्षणोऽपि हीनाङ्गः पादसम्पदमन्तरेण कृच्छ्रसाध्यतामसाध्यतां वा याति। तथा चागमः (स. सू. अ. २)—"नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्। पादापचारात्" इति।" इति ट. पुस्तकेऽधिक. पाठः।

आ० र०—उक्तमौषधमसाध्ये व्याधौ निषेद्धु साध्यया-प्यासाध्यविवेक करोति । तत्र साध्यो द्विविध, सुख कृच्छ्रश्च । तत्र सुखसाध्य लक्षयति—सर्वौषधेति । सर्वौषध क्षमदेहत्वाद्येकोनविंशतिलक्षणो रोग सुख—सुखसाध्य । तानि च लक्षणानि विपर्ययात्यन्तविपर्ययाभ्या सह लिख्यन्ते, कृच्छ्रादिषूपयोगात् । सर्वौषधक्षमदेहजत्व, कतिपयौषधक्षमदेहजत्व, औषधमात्राक्षमदेहजत्वम् ।१। युवजत्व, बालवृद्धजत्व, अतिबालातिवृद्धजत्वम् ।२। पुंजत्व, स्त्रीनपुंसकजत्व, गर्भिणीसूतिकास्त्रीलक्षणनपुंसकजत्वम् ।३। विषयानासक्तेन्द्रियजत्व, विषयासक्तेन्द्रियजत्व, असद्विषयासक्तेन्द्रियजत्वम् ।४। अमर्मगत्व, मर्मगत्व, प्राणहरमर्मगत्वम् ।५। अल्पनिदानत्व, बहुनिदानत्व, यावदुक्तनिदानत्वम् ।६। अल्पसम्प्राप्तित्व,बहुसम्प्राप्तित्व, यावदुक्तसम्प्राप्तित्वम् ।७। हेतुर्निदान सम्प्राप्तिश्च । अल्पपूर्वरूपत्व, बहुपूर्वरूपत्व,यावदुक्तपूर्वरूपत्वम् ।८। अल्परूपत्व, बहुरूपत्व, यावदुक्तरूपत्वम् ।९। अनुपद्रवत्व, सोपद्रवत्व, यावदुक्तोपद्रवत्वम् ।१०। उत्पादकदोषापेक्षया विपरीतदूष्यत्व, यथा—पित्तजे रसगत्वम् । तुल्यदूष्यत्व, यथा—पित्तजे रक्तगत्वम् । तुल्यानेकदूष्यत्व, यथा—पित्तजे रक्तस्वेदगत्वम् ।११। विपरीतदेशत्व, यथा—कफजे जागलत्वम् । तुल्यदेशत्व, यथा-कफजेऽनूपगत्वम् । तुल्यदेशजन्मगत्व, यथा-कफजे जन्मप्रभृतिसेवितानूपगत्वम् ।१२। अतुल्यर्तुत्व, यथा-वातजे शारदत्वम् । तुल्यर्तुत्व, यथा-वातजे ग्रीष्मत्वम् । तुल्यप्रकोपर्तुत्व, यथा-वातजे वार्षिकत्वम् ।१३। विपरीतप्रकृतित्व, यथा-पित्तजे कफप्रकृतित्वम् । तुल्यप्रकृतित्व, यथा-पित्तजे पित्तप्रकृतित्वम् । तुल्यनिन्द्यप्रकृतित्व, यथा-पित्तजे वातपित्तप्रकृतित्वम् । वातस्य योगवाहित्वात् ।१४। पादसम्पद्भावत्व, पादविकृतत्व, सर्वपादविकृतत्वम् ।१५। अनुकूलग्रहत्व, प्रतिकूलग्रहत्व, प्रतिकूलसर्वग्रहत्वम् ।१६। एकदोषत्व, द्विदोषत्व, सर्वदोषत्वम् ।१७। एकमार्गत्व, अनेकमार्गत्व, सर्वमार्गत्वम् ।१८। अनतिक्रान्तवत्सरत्व, अतिक्रान्तवत्सरत्व, बह्वतिक्रान्तवत्सरत्वम् ।१९।

कृच्छ्रसाध्य व्याधिमाह—

**शस्त्रादिसाधनः कृच्छ्रः सङ्करे च ततो गदः ।**

स०—यो गदो रोग, शस्त्रादिसाधन शस्त्रादिभि साध्यते, स कृच्छ्रसाध्य कृच्छ्रप्रतीकारो महद्भिरुपायै साध्यते तथा चिरेण । तथा च ग्रन्थ (स. सू. अ. २)—"कृच्छ्रैरुपायै कृच्छ्रस्तु महद्भिश्च चिरेण च ।" आदिग्रहणेन क्षाराग्निकर्मविषलेपादयो गृह्यन्ते । तथा, सङ्करे च—तत पूर्वोक्तात्साध्यलिङ्गात्सङ्कीर्णत्वे सति—यो गद उत्पन्न, सोऽपि कृच्छ्रसाध्य । चशब्द समुच्चये । ततस्तस्मादुक्तसाध्यलक्षणाद्य सङ्करे द्वित्रिविपर्यये सति स्थित । तथा च—युवा आतुर किन्तु न विजितात्मा । विजितात्मा वा किन्तु रोगो मर्मस्थानग । सर्वौषधक्षमे देहे जात किन्तु वृद्ध । कदाचिद्युवा न सर्वौषधक्षमो देह । एवमनया दिशा सर्वमप्यूह्यम् ।

आ० र०—कृच्छ्रसाध्य लक्षयति-शस्त्रादीति । यो गद शस्त्रादिसाधन, स कृच्छ्र —कृच्छ्रसाध्य । यश्च गदस्ततस्तेभ्य सुखसाध्यलक्षणेभ्यो जाते सङ्करे स्थित, सोऽपि कृच्छ्र । सुखसाध्यलक्षणस्य तद्विपर्ययेण सहैकत्रावस्थान सङ्कर । यथा-युवजत्वस्य स्त्रीजत्वेन । बालजत्वस्य वृद्धजत्वेन तु सहानवस्थानान्न सङ्कर । एव सर्वत्र । अस्य च सङ्करस्त्रैविध्यात्त्रैविध्यम् । अल्पविपर्यये सङ्करे कृच्छ्र, तुल्यविपर्यये कृच्छ्रतर, बहुविपर्यये कृच्छ्रतम । तथा, शस्त्रक्षाराग्निसाधनत्वात्त्रैविध्यम् । एतेषा षण्णा सङ्करे तारतम्य स्वयमूह्यम् ।

याप्योऽत उच्यते—

**शेषत्वादायुषो याप्यः पथ्याभ्यासाद्विपर्यये ॥ ३२ ॥**

स०—बाहुल्येन विपर्यये साध्यलक्षणविपरीतत्वे सत्यायुषो जीवितस्य शेषत्वादक्षीणत्वान्मारयितुमसमर्थ, पथ्यैराहारविहारैर्याप्यो यापनीय, नासौ प्रत्याख्येय । एतावानेवास्य प्रत्याख्येयाद्व्याधेर्विशेषो यदायु शेषत्व, याप्यस्य व्याधेरायु शेषमात्र वर्जयित्वा यदन्यत्तत्सर्व समान प्रायेणास्य च प्रत्याख्येयस्य व्याधे । कस्य विपर्यये सति? प्रकृतत्वात्सुखसाध्यस्य । पथ्यैराहारविहारैरभ्यसनमभ्यास पुन पुन करणम्, तस्माद्धिताहारविहारसेवनाद्याप्य । स च चिकित्सायामल्प सुख दत्त्वा पुन सोऽल्पेनैव हेतुना प्रतन्यते । तथा च ग्रन्थ (स सू अ २)—"दत्त्वाल्प सुखमल्पेन हेतुना स प्रतन्यते । याति नाशेषता रोग. कर्मजो नियतायुष । प्रपतन्निव विष्कम्भैर्वार्यतेऽत्रातुरो हितै "।

१ 'कथयति' क. ग. । २ 'पुरुषजत्व' क ग. झ । ३ 'तुल्यानेकप्रकोपर्तुत्व, यथा—वातकफजे वार्षिकत्वम्' क ४ 'सम्पद्भवत्व' क ग । ५ 'पादविपद्भवत्व, सर्वपादविपद्भवत्वम्' क ङ. । 'पादविकृवत्व, सर्वपादविकृवत्वम्' ग. ज । 'पादविकलत्व, सर्वपादविकलत्वम्' ख. झ. ।

१ 'एव सुखसाध्यलक्षणस्य एकेन द्वित्रैर्वा विपर्यये सङ्कर शेषो योज्यः । तथाच मुनि. ( च. सू. अ १०।१४ )—"निमित्तपूर्वरूपाणां रूपाणां मध्यमे बले । कालप्रकृतिदूष्याणां सामान्येऽन्यतमस्य च ॥ गर्भिणीवृद्धबालाना नात्युपद्रवपीडितम् । शस्त्रक्षाराग्निकृत्यानामनव देहकृत्स्नजम् ॥ विद्यादेकपथ रोग नातिपूर्णचतुष्पदम् । द्विपद ( थ ) वा ( ना ) तिकाल वा कृच्छ्रसाध्य द्विदोषजम् ॥" इति' । इति ट. पुस्तकेऽधिक पाठ. । २ "साध्यस्य सुखसाध्यकृच्छ्रसाध्यभेदेन लक्षणमुक्त्वा, असाध्यस्य याप्यप्रत्याख्येयभेदेन द्वैविध्य वक्तुमाह—" ट. । ३ अस्याग्रे "नन्वनन्तरस्य विधिर्वा प्रतिषेधो वेत्यनन्तरस्य कृच्छ्रसाध्यस्यैव विपर्ययो युक्तो न तु व्यवहितस्य सुखसाध्यलक्षणस्य । नैवम् । एव हि—कृच्छ्रसाध्यलक्षणविपर्यये सुखसाध्यलक्षणम्, तदेव च याप्यलक्षण प्राप्नुयात् । तस्मात्सुखसाध्यलक्षणविपर्ययो याप्यव्याधिलक्षणत्वेन ग्रहीतुं युक्त ।" इत्यधिक पाठष्ट पुस्तके । ४ अस्याग्रे "पथ्यस्य हिताहारस्याभ्यास पथ्याभ्यास, तस्मात् । अभ्यासशब्देन कादाचित्कानुष्ठानमात्रं निषेधति" इति ट. पुस्तकेऽधिक पाठ ।

**आ० र०**-याप्य लक्षयति-शेषत्वादिति। तत इत्यनुवर्तते। यो गद सुखसाध्यलक्षणविपर्यये स्थित, स याप्य। मन्वौषधैर्निवर्तते चेत्[1]साध्यत्व, नो चेदसाध्यत्व, किमिद तृतीय याप्यत्व नामेत्यत आह-पथ्याभ्यासात् शेषत्वात्, पथ्यस्यौषधस्याभ्यासो नित्यसेवन, तस्माद्यच्छेषत्व ततो याप्य। शिष्यते निवर्तमानोऽपि कार्त्स्न्येन न निवर्तत इति शेष। स[2] च नि शेषानिवर्तनान्न साध्य एव, किञ्चिन्निवर्तनान्नासाध्य एव, किन्तु साध्यासाध्यो याप्याख्य। स च कियन्त काल याप्य इत्याह-आ आयुष, यावदायुरस्ति तावद्याप्य। उक्त हि सङ्ग्रहे (सू अ २)-"दत्त्वाल्प सुखमल्पेन हेतुना स[3] प्रतन्यते। याति ना[4]शेषता रोग कर्मजो नियतायुष॥ प्रपतन्निव विष्कम्भैर्धार्यतेऽन्नातुरो हितै" इति।

प्र[5]त्याख्येय उच्यते—

**अनुपक्रम एव स्यात्स्थितोऽत्यन्तविपर्यये।**
**औत्सुक्यमोहारतिकृद् दृष्टरिष्टोऽक्षनाशनः॥ ३३॥**

**स०**-न विद्यत उपक्रम प्रतीकारो यस्य सोऽनुपक्रमोऽचिकित्स्य, प्रत्याख्येय इति यावत्। कोऽसावनुपक्रम? योऽत्यन्तविपर्यये स्थित। यो गदोऽर्था[6]द्याप्यलक्षणादवशिष्टायु शेषरूपादत्यन्तविपर्यये स्थित, सर्वक्रियापथातिक्रान्त, मज्जशुक्रादिगम्भीरधातुगत, मर्मसन्धिसमाश्रित, सोऽनुपक्रम एवाचिकित्स्य, साधयितुमशक्यत्वात्। तथौत्सुक्यादिकृ[7]दिति। औत्सुक्य च मोहश्चारतिश्च ता करोतीत्यौत्सुक्यमोहारतिकृत्। औत्सुक्य-विषयोत्कण्ठा, मोहो-वैचित्य चित्तनाशोऽज्ञानम्, अरतिरसुख न कुत्रचिदवस्थिति स्थानासनादिष्वनिर्वृतिश्चेतस, एतावतो य करोति सोऽनुपक्रम। तथा दृष्टरिष्ट इति। दृष्टं रिष्ट मरणख्यापक चिह्नं यस्मिन् स दृष्टरिष्ट, दृष्टमरणख्यापकलक्षणोऽनुपक्रम एव। तथाऽक्षनाशन इति। अक्षाणीन्द्रियाण्युच्यन्ते। चक्षुरादीन्यपि नाशयति सोऽक्षनाशन, इन्द्रियोपरोधी रोगोऽनुपक्रमो य शीघ्रमिन्द्रियविघातकृत्। एव पुरा परीक्ष्य व्याधिचिकित्सामारभेत। अन्यथाऽवश्य स्वार्थादिहानिमवाप्नुयाद्वैद्य। तथा च ग्रन्थ (स सू. अ २)-"व्याधि पुरा परीक्ष्यैवमारभेत तत क्रियाम्। स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात्" इति।

**आ० र०**-असाध्य लक्षयति-अनुपक्रम इति। यो गद सुखसाध्यलक्षणात्यन्तविपर्यये स्थित, यश्च औत्सुक्यमोहारतिकृत्, यश्च दृष्टरिष्ट-दृष्टमरणचिह्न, यश्च अक्षनाशन-सर्वेन्द्रियविघाती, स चतुर्विधोऽनुपक्रम एव स्यात्। नास्त्युपक्रम प्रतीकारो यस्येत्यनुपक्रम। एवशब्दो याप्यव्युदासार्थं। याप्योऽपि नि शेषानि[1]वर्तनादनुपक्रम, किन्तु किञ्चिन्निवर्तनात्सोपक्रमोऽपि। अय त्वनुपक्रम एव। तस्मा[2]त्त[3]त्रौषध कुर्यादित्यर्थादुक्तम्।

साध्यलक्षणयुक्तोऽप्यातुरो नोपक्रमणीय इति दर्शयति—

**त्यजेदार्त भिषग्भूपैर्द्विष्टं तेषा द्विषं द्विषम्।**
**हीनोपकरण व्यग्रमविधेय गतायुषम्॥ ३४॥**
**चण्डं शोकातुर भीरुं कृतघ्नं वैद्यमानिनम्।**

**स०**-एवविधमार्तमातुरमुपक्रम्यमपि त्य[4]जेत्परिहरेत्। भिषग्भूपैर्द्विष्ट-भिषग्भिस्तथा भूपै राजभिर्द्विष्टम्, वैद्या राजानश्च य द्विषन्ति। तथा, तेषा द्विष-शत्रु, भिषग्भूपान्यो द्वेष्टि, तमपि त्यजेत्। द्विष-शत्रुं चात्मन। हीनोपकर[5]णमिति उपकरण-

[1] 'चेत्तर्हि साध्यत्व' क ग। [2] 'स चाशेषा' क ग। [3] 'सम्प्रपद्यते' क ग.। [4] 'नाशेषतो' घ.। [5] "अधुना प्रत्याख्येय लक्षयति-अनुपक्रम इत्यादि। यत्रायुष शेषोऽपि नास्ति सुखसाध्यव्याधिलक्षणविपर्यये, सोऽत्यन्तेनातिशयेन विपर्ययो न विपरीमात्रोऽत्यन्तविपर्यय। तस्मिन् स्थितो गदोऽनुपक्रमोऽचिकित्स्य. स्यात्। किमेतावदेवानुपक्रमलक्षणमुतान्यदपि? इत्यत आह-औत्सुक्येत्यादि। औत्सुक्य च मोहश्च अरतिश्च ता करोतीत्यौत्सुक्यमोहारतिकृत्। सोऽनुपक्रम प्रथम.। दृष्टमुत्पन्न रिष्ट यस्य, सोऽपि मतोऽनुपक्रमो द्वितीय। तथाऽक्ष चक्षुरादीन्द्रिय नाशय तीत्यक्षनाशन इति तृतीय। एवमेते त्रयो गदा प्रत्याख्येया। सुखसाध्यकृच्छ्रसाध्ययाप्यानामपि कदाचित्पादापचारात् औत्सुक्यमोहारतिकृत्त्वं तथा दृष्टरिष्टत्व तथाऽक्षनाशित्व भवति, एतैश्च प्रकारैर्नैव भेदा प्रत्याख्येयस्य व्याधे। तथा स्थितोऽत्यन्तविपर्यये इति दशम प्रत्याख्येयस्य भेदो ज्ञेय।" इति ट. पुस्तकेऽन्य. पाठ। [6] 'अर्थात्' इति नास्ति ठ पुस्तके। [7] 'दिकृदपि' ठ.।

[1] 'निवर्तमानोऽनुपक्रम' ख.घ ज। [2] तत्र-याप्ये। [3] '°पथ न कुर्या' क ग ज। [4] 'त्यजेन्न चिकित्सेत्। त्यजेदित्येतत्पद सर्वेषु योज्यम्' ट। [5] "हीन विकलमुपकरण चिकित्साङ्ग यस्य। तथा, व्यग्र-कार्यव्याकुलम्। तथा, अविधेय-अवैद्यवश्यम्। तथा, गतायुष-दूतरिष्टनिमित्तै. सम्यग् ज्ञातायु.क्षयम्। तथा, चण्ड-क्रूरकर्माण सहसाऽपकाररतम्। तथा, शोकातुर-कान्तादिवियोगजेन शोकेनार्तम्। यतोऽसौ तद्गतचित्तत्वात्कार्याकार्य न वेत्ति, अत साध्योऽपि व्याधिस्तस्यासाध्यता याति। व्याधिनिमित्तशोकार्तस्तु चिकित्स्य एव। तथा, भीरु-शस्त्रक्षारादिसाध्यामयो ह्यसौ न तत्कर्म सोढु क्षमते। तथा, कृतघ्न-उपकारिणोऽपकारिण पापीयास त्यजेत्। तथोक्तम्—"ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा। निष्कृतिर्विहिता राजन् कृतघ्ने नास्ति निष्कृति।" इति। तथा, वैद्यमानिन त्यजेत्, वैद्यमिवात्मान मन्यते, न त्वसौ परमार्थतो वैद्य। स हि सम्यगपि निर्दिष्ट न करोति, वैद्याभिमानित्वेन मूढत्वात्। अत्र चोदयति। ननु, दिनचर्याध्याये वक्ष्यति-"आर्द्रसन्तानता" इत्यादि। तस्मात् करुणाप्रधानेन वैद्येन भवितव्यम्। करुणावाश्च सदैवास्य प्राणैरप्युपकुरुते, कि पुनश्चिकित्साकरणमात्रेण? तस्मात्तेन सर्वस्यैव चिकित्सित प्राप्त, युज्यते चैतत्। तथाच तद्ग्रन्थ -"पुण्यवान्नियतायुश्च न कथञ्चि ••वति। तस्मादातुरमाश्वासेच्चिकित्सेदेव यत्नत।" इति। तत्कथमुच्यते? त्यजेदार्तमित्यादि। ब्रूम। प्रत्यपायभयात् भूपद्विष्टो न चिकित्स्य। तस्य हि चिकित्सनात् राजा क्रुद्धो वैद्यस्य दण्ड पातयेत्। एवभूय शत्रुरपि (?)। एवमन्येष्वप्यचिकित्सनहेतवश्चिन्त्या।" इति ट. पुस्तकेऽन्य. पाठ.।

विकल हीनचिकित्साङ्गम् । व्यग्र-कार्यबहुलमन्यकार्यापेक्षिण कार्यान्तरासक्तचेतसम् । अविधेय-भिषज, तदाज्ञा यो न करोति, तमपि त्यजेत्। गतायुष-परिक्षीणजीवितम्। चण्ड-सहसापकारकरणबुद्धि क्रूरकर्माणम्। शोकातुर-स्त्र्यादिविरहोत्थेन शोकेन शुचार्तम्। भीरु-सभयम्। कृतघ्नं-य कृतोपकारोऽप्यपकारं करोति। वैद्यमानिन-अवैद्योऽपि यो वैद्यमिवात्मान मन्यते स्वमतेनैवौषधं करोति मूढ, तमपि त्यजेत्।

आ० र०-आतुरविशेषेऽप्यौषध निषेधति-त्यजेदिति । भिषग्भूपैर्द्विष्टमार्त रोगिण त्यजेत्। भिषजश्च भूपाश्च भिषग्भूपा, तैर्द्विष्ट-ते य द्विषन्ति। तेषा द्विष-भिषग्भूपान् यो द्वेष्टि। द्विषमात्मान यो द्वेष्टि। हीनोपकरण-औषधसामग्रीरहितम्। व्यग्र-कार्यान्तरव्याकुलम्। अविधेय-वैद्यस्यानधीनम्। गतायुषमुत्पन्नस्थायिरिष्टम्। चण्ड-कोपनम्। शोकातुरमिष्टवियोगजनितशोकपीडितम्। भीरु-व्यापद्भयात् त्यक्तौषधम्। कृतघ्नमुपकारेऽप्यपकारिणम्। वैद्यमानिन-अवैद्योऽपि य आत्मान वैद्य मन्यते। एषा साध्यानामप्यौषध न कार्यमित्यर्थ। इति सुखसाध्यादिलक्षणम्।

एव च प्रथमेऽध्याये सकलतन्त्रार्णवस्य तात्पर्य व्याख्यातम्। अनन्तरं सुखस्मरणार्थमध्यायसङ्ग्रहं विवक्षुरिदमाह—

**तन्त्रस्यास्य पर चातो वक्ष्यतेऽध्यायसङ्ग्रहः॥ ३५॥**

स०-अस्य-अष्टाङ्गहृदयाख्यस्य, तन्त्रस्य-तन्त्र्यन्ते धार्यन्तेऽनेनायुर्वेदार्था इति तन्त्रम् तस्य, अध्यायसङ्ग्रह-अध्यायाना सङ्ग्रह सक्षेप एकत्र राशीकरणम्, अतं पर-अस्मादूर्ध्वम्, सुखस्मरणाय मया वक्ष्यते।

आ० र०-इत्येष व्याधिप्रतीकार सामान्यसक्षेपाभ्यां व्याख्यात, एतावानेवार्थोऽस्मिन् शास्त्रे व्याख्येय इति ज्ञापनार्थम्। एव हि ज्ञाते शास्त्रतात्पर्यं ज्ञायते। शास्त्रे हि केचिदर्था विधीयन्ते, केचिदनूद्यन्ते, केचित्प्रस्तुतसिध्यर्थं अप्रस्तुता अप्युच्यन्ते। शास्त्रतात्पर्यज्ञस्तु विधेयादीन्विविच्य शास्त्रार्थं सुखेन गृह्णाति। अध्यायसङ्ग्रहोऽपि सुखग्रहणोपाय। तेनाध्यायसङ्ग्रह व्याख्यातु प्रतिजानीते-तन्त्रस्येति। अत पर-सङ्ग्रहानन्तरम्।

**आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः।**
**अन्नज्ञानान्नसंरक्षामात्राद्रव्यरसाश्रयाः॥ ३६॥**
**दोषादिज्ञानतद्भेदतच्चिकित्साद्युपक्रमाः।**
**शुद्ध्यादिस्नेहनस्वेदरेकास्थापननावनम्॥ ३७॥**
**धूमगण्डूषदृक्सेकतृप्तियन्त्रकशस्त्रकम्।**
**शिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मिकौ॥३८॥**
**सूत्रस्थानमिमेऽध्यायास्त्रिंशत्**

१ 'स्वमते' इति नास्ति क्वचित्। २ 'कर्मान्तर' क ग। ३ 'वैद्यानधीनम्' ग.। ४ 'मिष्टजनवियोग' ख घ ज झ। ५ 'अतोऽनन्तरम्' ठ। ६ 'ज्ञानार्थम्' क ग। ७ 'अभिधीयन्ते' ज.। ८ 'सङ्ग्रहव्याख्यां प्रति' ख ग.घ.ज झ। ९ 'शिराव्यध.' ड. ज।

स०-इमे पूर्वोक्तास्त्रिंशदध्याया, सूत्रस्थानमुक्तम्। आयुष्कामश्च दिनर्त्वीहे च रोगानुत्पादन च द्रवश्चेति द्वन्द्व। ईहा चर्या चेष्टेत्येकोऽर्थ। तेन आयुष्कामीयो दिनचर्या ऋतुचर्या रोगानुत्पादनीयो द्रवद्रव्यविज्ञानीयोऽन्नस्वरूपविज्ञानीयोऽन्नसरक्षा मात्राशितीयो द्रव्यादिविज्ञानीयो रसभेदीयो दोषादिविज्ञानीयो दोषभेदीयो दोषोपक्रमणीयो द्विविधोपक्रमणीय शोधनादिगणसङ्ग्रह स्नेहविधि स्वेदविधिर्वमनविरेचनविधिर्बस्तिविधिर्नस्यविधिर्धूमविधिर्गण्डूषादिविधिराश्चोतनाञ्जनविधिस्तर्पणपुटपाकविधिर्यन्त्रविधि शस्त्रविधि शिराव्यधविधि शल्याहरणविधि शस्त्रकर्मविधि क्षाराग्निकर्मविधि। सूचनात्सूत्रम्, सूच्यतेऽनेन सकलतन्त्रार्थं इति सूत्रस्थान, सकलस्य तन्त्रस्य शिर स्थानीयम्।

आ० र०-अध्यायान् सङ्गृह्णाति-आयुष्कामेति। तत्र आयुष्कामादयस्त्रिंशदध्याया, सूत्रस्थानम्।

अधुना शारीरमुच्यते—

**शारीरमुच्यते।**

१ "के ते अध्याया इत्याह-आयुष्कामेत्यादि। ईहा-चर्येत्यर्थ.। दिन च ऋतुश्च दिनर्तू, तयोरीहे दिनर्त्वीहे। आयुष्कामश्च दिनर्त्वीहे च रोगानुत्पादनश्च द्रवश्च आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवा। तेन आयुष्कामीयो दिनचर्या ऋतुचर्या रोगानुत्पादनीयो द्रवद्रव्यविज्ञानीयश्चेति पञ्चाध्याया। अन्नज्ञानेत्यादि। अन्नस्य ज्ञान अन्नज्ञानम्। अन्नस्य सरक्षा अन्नसरक्षा। मात्रा च द्रव्य च रसाश्च तेषामाश्रयो येष्वध्यायेषु त एवम्, अथैषा द्वन्द्व.। एतेषा पञ्चाध्याया, अन्नस्वरूपविज्ञानीयोऽन्नरक्षा मात्राशितीयो द्रव्यादिविज्ञानीयो रसभेदीयश्चेति। दोषादीत्यादि। दोषादीना ज्ञान दोषादिज्ञानम्, तेषा दोषाणा पृथग्भेद तद्भेद, तेषा चिकित्सा तच्चिकित्सा, तेषा द्विप्रकार उपक्रमो द्व्युपक्रम, एतेषा द्वन्द्व। तेन दोषादिविज्ञानीयो दोषभेदीयो दोषोपक्रमणीयो द्विविधोपक्रमणीयश्चेति चत्वारोऽध्याया। शुद्ध्यादीत्यादि। शुद्धि.-शोधनम्, शुद्धिरादिर्यस्य स एवम्। अनेन चैकदेशेन शोधनादिगणसङ्ग्रहाध्याय उपलक्ष्यते। एवमन्यत्रापि योज्यम्। स्नेहन-स्नेह, रेको-विरेचनम्, आस्थापन-बस्ति, नावन-नस्यम्, एतेषा द्वन्द्व। तत्र शोधनादिगणसङ्ग्रह. स्नेहविधि स्वेदविधि वमनविरेचनविधिर्बस्तिविधिर्नस्यविधिश्चेति षट्। धूमेत्यादि। धूमादीना द्वन्द्व। दृशि सेको दृक्सेक.,-आश्चोतनम्। तृप्तिस्तर्पणम्। यन्त्रमेव यन्त्रकम्। एव शस्त्रकम्। सञ्ज्ञाया कन्। धूमपानविधिर्गण्डूषादिविधिराश्चोतनाञ्जनविधिस्तर्पणपुटपाकविधिर्यन्त्रविधि शस्त्रविधिश्चेति षट्। शिराविधिरिति मध्यमपदलोपाख्य, शिराव्यधविधिरित्येक। एव शल्याहरणविधिरेक। शस्त्रशब्देन शस्त्रकर्मविधिरुपलक्ष्यते, क्षारश्चाग्निश्च क्षाराग्नी, तयो कर्म क्षाराग्निकर्म, तत्र भवोऽध्याय क्षाराग्निकर्मिक, क्षाराग्निकर्मविधिरेव द्वौ। सूत्रेत्यादि। सूच्यतेऽनेन सकलतन्त्रार्थ इति सूत्र, हेतुलिङ्गौषधरूपम्। तत्तिष्ठत्यस्मिन्निति सूत्रस्थानम्। इमे पूर्वोक्तास्त्रिंशदध्याया. सूत्रस्थानम्।" इति ट. पुस्तके युक्ततम पाठ।

**गर्भावक्रान्तितद्व्यापदङ्गमर्मविभागिकम् ॥ ३९ ॥**
**विकृतिर्दूतज षष्ठम्**

स०-शारीर शारीरस्थानमुच्यते । किंस्थानमध्यायसङ्ग्रह । के पुनस्ते[१] तानाह । तत्र गर्भावक्रान्तिशारीरम् । तस्य व्यापत् तद्व्यापत्, तस्येति गर्भपरामर्श, गर्भव्यापच्छारीरम् । अङ्गविभाग शारीरम् । मर्मविभाग शारीरम् । विकृतिविज्ञानीय शारीरम् । दूतादिविज्ञानीय शारीरम् । एवमेते षडध्याया, शारीरस्थानम् ।

**आ० र०-गर्भावक्रान्त्यादय षट्, शारीरम् ।**

निदानमुच्यते—

**निदानं सार्वरोगिकम् ।**
**ज्वरासृक्श्वासयक्ष्मादिमदाद्यर्शोतिसारिणाम् ४०**
**मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ।**
**पाण्डुकुष्ठानिलार्तानां वातास्रस्य च षोडश ॥ ४१ ॥**

स०-सर्वरोगनिदानम्[२] । ज्वरनिदानम् । रक्तपित्तकासनिदानम् । श्वासहिक्कानिदानम् । राजयक्ष्मादिनिदानम् । मदात्ययादिनिदानम् । अर्शोनिदानम् । अतीसारग्रहणीदोषनिदानम् । मूत्राघातनिदानम् । प्रमेहनिदानम् । विद्रधिवृद्धिगुल्मनिदानम् । उदरनिदानम् । पाण्डुशोफविसर्पनिदानम् । कुष्ठश्वित्रकृमिनिदानम् । वातव्याधिनिदानम् । वातशोणितनिदानम् । इत्येव षोडशाध्याया, निदानस्थानम् ।

**आ० र०-सर्वरोगनिदानादय षोडश, निदानम् ।**

चिकित्सितमुच्यते[३]—

**चिकित्सितं ज्वरे रक्ते कासे श्वासे च यक्ष्मणि ।**
**वमौ मदात्ययेऽर्शःसु, विशि द्वौ, द्वौ च मूत्रिते ४२**
**विद्रधौ गुल्मजठरपाण्डुशोफविसर्पिषु ।**
**कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम् ॥ ४३**
**द्वाविंशतिरिमेऽध्यायाः**

स०-चिकित्सितस्थान द्वाविंशतिरध्याया । ज्वरचिकित्सितम् । रक्तपित्तचिकित्सितम् । कासचिकित्सितम् । श्वासहिक्काचिकित्सितम् । राजयक्ष्मचिकित्सितम् । छर्दिहृद्रोगतृष्णाचिकित्सितम् । मदात्ययचिकित्सितम् । अर्शश्चिकित्सितम् । अतीसारचिकित्सितम् । ग्रहणीदोषचिकित्सितम् । मूत्राघातचिकित्सितम् । प्रमेहचिकित्सितम् । विद्रधिवृद्धिचिकित्सितम् । गुल्मचिकित्सितम् । उदरचिकित्सितम् । पाण्डुरोगचिकित्सितम् । श्वयथुचिकित्सितम् । विसर्पचिकित्सितम् । कुष्ठचिकित्सितम् । श्वित्रकृमिचिकित्सितम् । वातव्याधिचिकित्सितम् । वातशोणितचिकित्सितम् । इमे द्वाविंशतिरध्यायाश्चिकित्सितस्थानम् ।

**आ० र०-ज्वरचिकित्सादयो द्वाविंशतिश्चिकित्सितम् ।**

**कल्पसिद्धिरतः परम् ।**
**कल्पो वमेर्विरेकस्य तत्सिद्धिर्बस्तिकल्पना ॥४४॥**
**सिद्धिर्बस्त्यापदां षष्ठो द्रव्यकल्पः**

स०-अत[१] ऊर्ध्वं कल्पस्थानम् । अत्र कल्पे वमनकल्प । विरेचनकल्प । वमनविरेचनव्यापत्सिद्धि । बस्तिकल्प । बस्तिव्यापत्सिद्धि । षष्ठो भेषजकल्प । इत्येव षडध्याया, कल्पसिद्धिस्थानम् ।

**आ० र०-वमनकल्पादय. षट्, कल्पस्थानम् ।**

**अत उत्तरम् ।**
**बालोपचारे तद्व्याधौ तद्ग्रहे, द्वौ च भूतगे ॥ ४५ ॥**
**उन्मादेऽथ स्मृतिभ्रंशे, द्वौ द्वौ वर्त्मसु सन्धिषु ।**
**दृक्तमोलिङ्गनाशेषु त्रयो, द्वौ द्वौ च सर्वगे ॥ ४६ ॥**
**कर्णनासामुखशिरोव्रणे, भङ्गे भगन्दरे ।**
**ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम् ॥ ४७ ॥**
**विषे भुजङ्गे कीटेषु मूषकेषु रसायने ।**
**चत्वारिंशोऽनपत्यानामध्यायो बीजपोषणः[२] ॥ ४८ ॥**

स०-अत[३] उत्तर, अतोऽस्मात्कल्पसिद्धिस्थानादूर्ध्वमुत्तर-

---

१ "शरीरस्येद शारीरम् । तच्छारीरस्थानमुच्यते । अध्यायसङ्ग्रह इति शेष । किं तदित्याह—गर्भावक्रान्तीत्यादि । गर्भस्यावक्रान्तिरवक्रमण गर्भावक्रान्ति । तस्य गर्भस्य व्यापत् तद्व्यापत् । अङ्ग च मर्म च अङ्गमर्मणी, तयोर्विभागौ अङ्गमर्मविभागौ, तौ विधेते ययोस्तावङ्गमर्मविभागिकौ । गर्भावक्रान्तिश्च तद्व्यापच्च अङ्गमर्मविभागिकौ च तदेवम् । विकृतिशब्देन विकृतिविज्ञानीयमिति । दूतविषये जात दूतजम्, दूतादिविज्ञानीयम् । षष्ठ षण्णा पूरणम् । षट् शब्दात् डट् थुगागमश्च ।" इति ट पुस्तके युक्त पाठ । २ "निदानमिति निदानस्थानम् । सार्वरोगिक सर्वे च ते रोगाश्च सर्वरोगा, तेषु भव, पूर्ववत् ठक्, सर्वरोगनिदानमित्यर्थ । इदमेकं निदानम् । ज्वरासृगादीना सम्बन्धीनि निदानानि चतुर्दश । यक्ष्मादीति आदिशब्देन स्वरभेदादीना ग्रहणम् । मदादीति आदिशब्देन मदमूर्च्छायादीनां ग्रहणम् । विद्रध्यादीति आदिशब्देन वृध्यादीना ग्रहणम् । वातास्रस्य—वातशोणितस्य चैकम् । इति षोडश निदानम् । षोडशाना पूरणम् ।" इति ट. पुस्तकेऽधिको युक्ततमश्च पाठ । ३ "अधुना चिकित्सितस्थान वक्ति—चिकित्सितमित्यादि । ज्वरे—ज्वरविषये चिकित्सितमित्यर्थ । एवमन्येष्वपि सम्बन्ध । वमि —छर्दि । विट्—विष्ठा । इत्थ चिकित्सित—चिकित्सितस्य स्थानम् । द्वाभ्यामधिका विंशतिर्द्वाविंशति । 'द्व्यष्टन सख्या' इत्यादिना द्विशब्दस्याकारादेश. ।" इति ट. पुस्तकेऽधिको युक्तश्च पाठ. ।

१ "अत पर—चिकित्सितस्थानादनन्तर, कल्पसिद्धिस्थानम् । वमेर्वमनस्य कल्प । तथा, विरेकस्य—विरेचनस्य । तयोर्वमिविरेकयो सिद्धिस्तत्सिद्धि । बस्तिकल्पना—बस्तिकल्प । बस्तेरापदस्तासां सिद्धि । षण्णा पूरण षष्ठ । षडध्यायक कल्पस्थानमित्यर्थ ।" इति ट पुस्तकेऽधिको युक्तश्च पाठ. । २ 'बीजपोषणे' ड ठ. । ३ "अतोऽस्मादूर्ध्वमुत्तराख्य स्थानम् । बालोपचार इत्यादि । उपचार —उपचरणम् । तस्य बालस्य व्याधिस्तद्व्याधि । तथा, तस्य ग्रहस्तद्ग्रह । भूत गतो भूतगस्तस्मिन् द्वावध्यायौ । उन्मादे एक । अथेत्यानन्तर्ये । स्मृतिभ्रंशोऽपस्मारस्तस्मिन्नेक । वर्त्मसु-वर्त्मरोगेषु, तथा सन्धिषु द्वौ द्वौ । दृक्तमोलिङ्गनाशेषु-दृष्टिगतिमिरपटलेषु, त्रिष्वे-

तन्त्रम् । बालोपचरणीय । बालामयप्रतिषेध । बालग्रहप्रतिषेध । भूतविज्ञानीय । भूतप्रतिषेध । उन्मादप्रतिषेध । अपस्मारप्रतिषेध । वर्त्मरोगविज्ञानीय । वर्त्मरोगप्रतिषेध । सन्धिसितासितरोगविज्ञानीय । सन्धिसितासितरोगप्रतिषेध । दृष्टिरोगविज्ञानीय । तिमिरप्रतिषेध । लिङ्गनाशप्रतिषेध । सर्वाक्षिरोगविज्ञानीय । सर्वाक्षिरोगप्रतिषेध । कर्णरोगविज्ञानीय । कर्णरोगप्रतिषेध । नासारोगवि० । नासारोगप्र० । मुखरोगवि० । मुखरोगप्र० । शिरोरोगविज्ञा० । शिरोरोगप्र० । व्रणविज्ञानीयप्रति० । सद्योव्रणप्रति० । भङ्गप्रति० । भगन्दरप्रति० । ग्रन्थ्यर्बुदश्लीपदादिवि० । ग्रन्थ्यर्बुदादिप्रति० । क्षुद्ररोगवि० । क्षुद्ररोगप्र० । गुह्यरोगवि० । गुह्यरोगप्रति० । विषप्रति० । सर्पविषप्र० । कीटलूतादिविषप्र० । मूषिकालर्कविषप्र० । रसायनाध्याय । वाजीकरणाध्याय इति । एवमेते चत्वारिंशदध्याया उत्तरतन्त्रम् । तदिति बालस्य परामर्श । द्वौ द्वाविति वर्त्मनि द्वौ, सन्धौ द्वौ, यथासख्येन । त्रय इति दृक्तमोलिङ्गनाशेषु प्रत्येकमेकैक । ग्रन्थ्यादिक्षुद्ररोगगुह्यरोगेषु पृथग्द्वय प्रत्येकं द्वौ द्वौ । अनपत्यानामप्रजाना पुसा चत्वारिंशोऽध्यायो बीजपोषण शुक्रवृद्धिहेतुरिति ।

**आ० र०-बालोपचरणीयादयश्चत्वारिंशत्, उत्तरम् ।**

**इत्यध्यायशतं विंशं षड्भिः स्थानैरुदीरितम् ॥४८॥[१]**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुवाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने आयुष्कामीयो नाम प्रथमोऽध्यायः ॥ १ ॥**

स०-इत्येवमनेन प्रकारेण, सविंशमध्यायशत षड्भि स्थानै सूत्रशारीरनिदानचिकित्साकल्पसिद्ध्युत्तरतन्त्रैरुदीरितमिति भद्रम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थान आयुष्कामीयोऽध्याय प्रथम ॥ १ ॥

**आ० र०-इति षड्भि स्थानैर्विंशमध्यायशतमस्मिन् शास्त्रे उक्तम् । अत्रायुष्कामरोगानुत्पादनद्रवादिशब्दा आयुष्कामीयरोगानुत्पादनीयद्रवद्रव्यविज्ञानीयादिसंज्ञाना लक्षका । दिनर्त्वीहादिशब्दा दिनचर्यर्तुचर्यादिसंज्ञाना वाचका । शुद्ध्यादय -शोधनादिद्रव्यगणा । दृक्सेक -आश्चोतनम् । क्षाराग्निकर्मिक एकोऽध्याय । मदादयो-मदात्ययादय । विशि-विड्रोगयोरतीसारग्रहण्यो । मूत्रिते-मूत्ररोगयो मूत्रकृच्छ्र( मूत्राघात )प्रमेहयो । भूतगे-भूतविज्ञानीयतत्प्रतिषेधयो । वर्त्मसु-वर्त्मरोगविज्ञानप्रतिषेधयो. । सन्धिषु-सन्धिगतरोगविज्ञानप्रतिषेधयो । दृगादिषु त्रय , न तु प्रत्येकम् । सर्वगादिषु षट्सु प्रत्येक द्वौ, विज्ञानप्रतिषेधभेदात्[२], व्रणे तु व्रणसद्योव्रणभेदात् । सर्वगे-सर्वाक्षिरोगे । भङ्गे-अस्थिभङ्गे । ग्रन्थ्यादिप्रभृतिषु त्रिषु पृथक् द्वय, विज्ञानप्रतिषेधभेदात्[३] । अनपत्याना बीजपोषणो-वाजीकरणम् । विंश-विंशत्युत्तरम् । इत्यध्यायसङ्ग्रह ।**

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
अध्याय आयुष्कामीय सामस्त्येन निरूपित. ॥ १ ॥

## द्वितीयोऽध्यायः ।

**अथातो दिनचर्याध्यायं व्याख्यास्यामः ।[४]**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

स०-अथेति सर्वेष्वध्यायेषु मङ्गलार्थ । तथा अत इत्यानन्तर्ये प्रस्तुताभिसम्बन्धे वा । अथेत्यादिशब्दाना पूर्वाध्याये वर्णित एवार्थ । माङ्गलिको ह्याचार्य प्रत्यध्यायारम्भे मङ्गलार्थमथशब्द प्रयुङ्क्ते । दिने दिने चर्या दिनचर्या, दिनस्य वा

---

क एक इति त्रय । सर्वगे-सर्वाक्षिरोगे । कर्णादिषु द्वौ द्वौ । भङ्गे भगन्दरे चैक एक. । ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे चेति त्रितयेऽप्यस्मिन् पृथग् द्वय प्रत्येक द्वौ द्वौ । विषादिष्वेक एक । अनपत्यानामप्रसूतानामध्यायश्चत्वारिंशतां पूरणश्चत्वारिंश. । किम्भूत ? बीज पोषयतीति बीजपोषण । तदेवमेतेऽध्यायाश्चत्वारिंशदुत्तरस्थानम् ।" इति ट. पुस्तकेऽधिको युक्ततमश्च पाठ । १ अस्याग्रे "अध्यायाना शत विंशतिरधिकाऽस्मिन्निति अध्यायशतम् । विंशतेर्डटिति टिलोपे । षड्भि सूत्रादिभि. स्थानैरुदीरित प्रोक्तमिति ।" इति ट पुस्तकेऽन्य. पाठ ।

१ 'कृच्छ्रमेहयो' ख घ झ । २ 'त् द्वौ व्रणे व्रण' क ख ग ङ ज झ । ३ अस्यानन्तर 'कीटेषु कीटलूतादिविषप्रतिषेध' इत्यधिक ख घ पुस्तकयो । ४ इय दिनचर्या चरके सू ५।७।८ अध्यायेषु, सुश्रुते चि०२४ अध्याये, अष्टाङ्गसङ्ग्रहे सू ३ अध्याये च वर्णितास्ति । ५ "आयुष्कामीयाध्यायानन्तर दिनचर्याध्याय उच्यते । यत आयु कामयमानेनेत्यादिना आयुष्य सेव्यमिति प्रत्यपादि । आयुष्याणा च प्रधानमाचार । तथा भगवान् व्यास -"आचाराल्लभते ह्यायुराचारी हन्त्यलक्षणम्" इति । सदाचार प्रत्यहमनुष्ठीयमान आयुषो वृद्धिहेतु । तस्मादाचारज्ञापनाय दिनचर्याध्यायो वक्तु युक्त । अथात इत्यादि । पूर्ववदत्र व्याख्या कार्या । दिने चरणमाचरणमुभयलोकहित दिनचर्या, तस्याध्याय बहुकरणीयतया प्राधान्याच्च दिनचर्याध्यायोऽयमुच्यते । तथा रात्रिचर्याप्यत्रोपदिष्टा 'निशि चात्ययिके कार्ये' इत्यादिना । उपलक्षणमात्र वा रात्रिंदिवस्य दिनशब्दात्, तथेह क्वचिद्रात्रिशब्देन रात्रिंदिवमपि गृह्यते, "जीर्णतामविपर्यासात्सप्तरात्र च लङ्घनात्" इति । ब्राह्म इत्यादि" इति ट. पुस्तकेऽन्य पाठ ।

चर्या दिनचर्या । चरण चर्या । उभयलोकहितमाहारविहारचेष्टितमिति यावत्, प्रतिदिने यत्कर्तव्यम् । दिनचर्या यस्मिन्नध्यायेऽस्तीति पूर्ववत् छप्रत्ययमुत्पाद्य तल्लोपे प्रकृतिभावत्व च प्रतिपाद्य दिनचर्येति निष्पाद्यते, तमध्याय व्याख्यास्याम । ननु, प्रस्तुतादायुष्कामीयादध्यायादनन्तर कोऽस्य सम्बन्ध ? । उच्यते। यस्मादायुष्कामेण पुरुषेण यत्प्रधानमायुष्य तदासेव्य प्रथमत , तदन्वन्यानि यान्यायुष्याणि । अत प्रथम तावदाचारप्रधानेन भवितव्यम् । यत , "आचारादायुर्लभ्यते" इत्याचार्या । यद्यप्यत्र रात्रिचर्याऽपि विहिता, तथापि प्राधान्याद्दिनचर्या अस्मिन्नध्याये निर्दिष्टा । अतो दिनचर्याध्यायोऽयमुच्यते ।

**आ० र०-दिनचर्याध्याय व्याख्यातु प्रतिजानीते-अथात इति । यत पूर्वाध्याये व्याधिप्रतीकार सामान्यसक्षेपाभ्यां[1] व्याख्यातः । स एवेदानीं विशेषविस्तराभ्या व्याख्येय । स च हेत्वादिक्रमेण । तत्रादौ बहुवक्तव्यत्वाद्वहिरङ्गो हेतु । स द्वेधा-विहार आहारश्च । विहारो द्वेधा-नियतकालोऽनियतकालश्च । नियतकालो द्वेधा-दैनन्दिन आर्तवश्च । तत्र दैनन्दिनोऽस्मिन्नध्याये । अत एवाय दिनचर्याख्य । स च प्रबोधादिः ।**

अस्मिस्तन्त्रे आयु पालन प्रकृतम् । तद्द्विविधम्, स्वस्थवृत्तमातुरवृत्त च । तत्र मङ्गल्यत्वात् स्वल्पवक्तव्यत्वादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवादावुच्यते—

**ब्राह्मे मुहूर्त उत्तिष्ठेत्स्वस्थो रक्षार्थमायुषः ।**

**स०**-रात्रेश्चतुर्दशो मुहूर्तो ब्राह्मो मुहूर्त , विषुवति समरात्रिंदिवे काले द्विघटिकोपलक्षण । मुहूर्तस्य चेह द्विघटिकोपलक्षणार्थत्वात्सर्वस्मिन् काले रात्रेश्चतुर्घटिकावशेषे समुत्थान कार्यमिति स्थितम् । ([2]स्वस्थो-नीरोग[3] कल्य । स आयुषो यथोपचरितस्य जीवितस्य रक्षार्थ ब्राह्मे मुहूर्त उत्तिष्ठेदभ्युत्थान कुर्यात् । मुहूर्तो-नाडिकाद्वयम् । ब्रह्म-ज्ञान, तदर्थमध्ययनाद्यपि ब्रह्म, तस्य योग्यो मुहूर्तो [4]ब्राह्म , पश्चिमयामस्य नाडिकाद्वयम् ।) तस्मिन् ब्राह्मे मुहूर्त उत्तिष्ठेत् । किम्भूत ? स्वस्थोऽनातुर । (सुश्रुते सू अ १५।४८)-"समदोष समाग्निश्च समधातुमलक्रिय । प्रसन्नात्मेन्द्रियमना स्वस्थ इत्यभिधीयते" इति स्वस्थलक्षणम् । किमर्थमुत्तिष्ठेत् ? रक्षार्थमायुषो जीवितस्य । तदा ह्युत्तिष्ठतो व्याध्यलक्ष्म्याद्यभाव एवायुषो रक्षा भवति । आतुरेण धातुसाम्यार्थ स्वप्तव्यमेव ।

**आ० र०-तत्र प्रबोधं विधत्ते-ब्राह्मे मुहूर्त इति । रात्रेरुपान्त्यो मुहूर्तो ब्राह्म । तत्र उत्तिष्ठेत्-प्रबुध्येत् । स्वस्थो-नीरोग. । रोगिणस्त्वनियम ।**

**शरीरचिन्ता निर्वर्त्य कृतशौचविधिस्ततः ॥ १ ॥**
**अर्कन्यग्रोधखदिरकरञ्जककुभादिजम् ।**
**प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ॥ २ ॥**
**[1]कनीन्यग्रसमस्थौल्यं प्रगुणं द्वादशाङ्गुलम् ।**
**भक्षयेद्दन्तप[2]वनं दन्तमांसान्यबाधयन् ॥ ३ ॥**

**स०**-शरीरस्य चिन्ता शरीरचिन्ता-जीर्णाजीर्णनिरूपणादिका, ता निर्वर्त्य, ततो मूत्रपुरीषादे कृतशौचविधान , ततोऽनन्तर द[3]न्तपवनमर्कादिक भक्षयेत् । सङ्ग्रहेऽप्युक्तम् (सू अ ३)-"ब्राह्मे मुहूर्त उत्तिष्ठेज्जीर्णाजीर्ण निरूपयन्" इत्यादि । अर्क -सूर्याह्व । न्यग्रोधो-यक्षावास । खदिरो-गायत्री । करञ्जश्चिरिबिल्व । ककुभोऽर्जुन । आदिशब्देन मालतीकरवीरादि परिग्रह । कथ भक्षयेत् ? दन्तानां मासान्यबाधयन्नपीडयन् । प्रात -प्रत्युषसि, भुक्त्वा च-आहारं भक्षयित्वा च । मृद्वग्र-कूर्चिताग्रम् । तथा कषायकटुतिक्तकम्, रसत्रयेण ह्यनेन मुखवै[4]रस्यारोचकश्लेष्माद्यपनयो सम्यक् सम्पद्यन्ते । अर्काद्युपादानादेव कषायादित्वे लब्धे, कषायादिग्रहण स[5]ङ्ग्रहादिगृहीतस्य सङ्ग्रहार्थं स्पष्टार्थं च । अर्कादिग्रहणमुदाहरणार्थं ज्ञेयम् । अत्र सक्षेपविवक्षया न द[3]न्तपवनस्य [6]गणसङ्ग्रह । द्वादशाद्यङ्गुलप्रमाणत्वं श्लेष्मातकाद्यनिष्टद[3]न्तपवननिषेधश्च तन्त्रान्तरोक्त (सङ्ग्रहोक्त) मपि नेहोक्तम् । सुश्रुतेनोक्तम् (?)"अजरधमनुपक्लिष्ट षडष्टद्वादशाङ्गुलम् । प्रदेशनीमुखसम मृदु स्याद्दन्तधावनम् । कूर्चिताग्र" इत्यादि ।

**आ० र०-शौच विधत्ते-शरीरचिन्तामिति । तत -प्रबोधानन्तरम् । कृतशौचविधिर्भवेत्-स्मृत्युक्तविधिना मलोत्सर्गाद्याचमनपर्यन्त कुर्यात् । कि कृत्वा, शरीरचिन्ता निर्वर्त्य-निष्पाद्य । कीदृश मे शरीर, किञ्च मया [7]अस्य हितमनुष्ठित, किंवा अद्यानुष्ठेयमित्यादि विमर्श शरीरचिन्ता । वक्ष्यति हि ( सू अ २।४७ )-"नक्तदिनानि मे यान्ति कथम्भूतस्य सम्प्रति । दु खभाङ्ग भवत्येव नित्य सन्निहित. स्मृति ॥" धर्मशास्त्रेऽपि-"ब्राह्मे मुहूर्ते उत्थाय चिन्तयेदात्मनो हितम्" इति । तदा हि कृतो विमर्शो यथार्थो भवति, मनस प्रसन्नत्वात् ।**

दन्तधावन विधत्ते—**अर्केति । प्रातर्भुक्त्वा चेति द्विकाल दन्तपवन भक्षयेत् । दन्ता पूयन्ते शोध्यन्तेऽनेनेति दन्तपवन-दन्तकाष्ठम् । तच्चार्कादिजम् । ककुभोऽर्जुन । आदिशब्दादसनादय । तच्च मूलम् । उक्त हि सङ्ग्रहे (सू अ ३)-"वटासनार्कखदि[8]रकरञ्जकरवीरजम् । सर्जारिमे[9]दापामार्गमालतीककुभोद्भवम् ॥ कषायतिक्तकटुक मूलमन्यदपीदृशम् ।**

१ 'सामान्यविस्तराभ्या' ख घ ङ ज । २ ( ) एतच्चिह्नान्तर्गत पाठ , ट पुस्तके नोपलभ्यते । ३ 'नीरोगकल्प' इति पाठान्तरम् । ४ निशाया पश्चिमो यामोऽपि ब्राह्ममुहूर्त एव । "रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते" इति पितामहवचनात् ।

१ कनीन्यग्रेति श्लोकार्धं हेमाद्रिसम्मतम् । २ 'दन्तधवन' इति ठ पुस्तके पाठ । ३ 'दन्तधावन' ट ठ । ४ 'वैशद्यारो' ठ. । ५ 'सङ्ग्रहोक्ताना सङ्ग्रहार्थं' ट । ६ 'गुणसङ्ग्रह' ट ठ. । ७ 'अद्य' ग । ८ 'खदिरकरीरकरवीरजम्' क ग । ९ 'मेदोपमार्ग' क ख ग घ ङ ।

विज्ञातवृक्ष क्षुण्णाग्रमृज्वग्रन्थि[1] सुभूमिजम् ॥" इति । कनीन्यग्रसमस्थौल्य–कनिष्ठिकाङ्गुल्यग्रभागवत्स्थूलम् । प्रगुण–ऋजु । कषायादिरसमर्कादिभ्योऽन्यदपि ग्राह्यम्[2], अर्काद्यैन-[3]भिव्यक्तकषायादिरसमपि[4] ग्राह्यमित्युभयोर्ग्रहणम् । भक्षणेन भक्षणपूर्वक दन्तघर्षण लक्ष्यते, दन्तमासबाधननिषेधान्यथानुपपत्ते । न हि भक्षणमात्रेण दन्तमासाना पीडा । उक्त च सङ्ग्रहे ( सू अ ३ )–"प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम् । वाप्यत्रिवर्गत्रितयक्षौद्राक्तेन च घर्षयेत्[5] । वाप्य–कुष्ठम् । त्रिवर्गत्रितय–त्रिफला, त्रिकटुक, त्रिजातक च । शनैस्तेन ततो दन्तान् दन्तमासान्यबाधयन्" इति । घर्षण चाधोदन्तपूर्वकम् । उक्त हि सङ्ग्रहे ( सू अ ३ )–"दन्तान् पूर्वमधो घर्षेत्प्रात सिञ्चेच लोचने । तोयपूर्णमुखो ग्रीष्मशरदो शीतवारिणा" इति । ऋत्वन्तरे[6] कोष्णवारिणेत्यर्थ ।

**नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ।**
**तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥ ४ ॥**

स०–अजीर्णादीना द्वन्द्व । एतानि विद्यन्ते यस्येति 'अत इनिठनौ' इति इनि । एव तृष्णास्येत्यादौ द्वन्द्वादिनिश्च । तद्दन्तपवनमजीर्णी[7] न भक्षयेत् । एव वमथ्वादीना कर्णामय्यन्ताना[8] सम्बन्धो योज्य ।

आ० र०–रोगविशेषे दन्तधावन निषेधति–नाद्यादिति । अजीर्णादिरोगी[9], तद्दन्तपवन, नाद्यान्न भक्षयेत् । अर्दित–एकायाम । सङ्ग्रहे तु ( सू अ ३ )–"नैव श्लेष्मातकारिष्टबिभीतधवधन्वजान्[10] । बिल्व[11]बब्बूलनिर्गुण्डीशिग्रुतिन्दुकतिल्वकान् ॥ कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलून् । पारिभद्रकमम्लीकामोचक्यौ[12] शाल्मली शणम् ॥ स्वाद्वम्ललवण शुष्क सुषिर[13] पूति पिच्छिलम् । पालाशमासन दन्तधावन पादुके[14] त्यजेत् ॥" इति ।

**सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत्[15] ।**

स०–ततो–दन्तपवनभक्षणानन्तर, सौवीराख्यमञ्जन भजेत् । कस्मात्? यतो हितमक्ष्णो ।

१ 'क्षुण्णाग्र मृद्वग्रन्थि' ख घ ञ । २ 'भ्योऽन्यत्र ग्राह्यम्' क ग । 'भ्योऽन्यत्र न ग्राह्यम्' ख घ । 'भ्योऽन्यन्न ग्राह्यम्' ज झ । ३ 'अकाद्यव्यन' क ग ड ज झ ञ । ४ 'रस न ग्राह्य' क ग ड ज झ ञ । ५ 'घर्षयन्' क ग । ६ 'अन्यत्र कोष्णवारिणा' क ग ञ । ७ 'दन्तधावन' ट । ८ 'मत्वर्थीयान्ताना' ठ । ९ 'अजीर्ण्यादिरोगी' घ । १० 'धन्वनात्' क ख घ । 'धन्वनान्' झ ञ । ११ 'बिल्ववञ्जुल' स स । १२ 'मोरक्यौ' ख घ ज । १३ 'स्निग्ध सुषिरपिच्छिलम्' क । १४ 'पाण्डुके' क ञ । १५ अस्याग्रे 'भुक्तवाश्च शिर स्नात श्रान्त च्छर्दननावनै । रात्रौ जागरितश्चापि नाञ्ज्याज्ज्वरित एव च ॥ अञ्जनस्य निषेधमाह–भुक्तवाश्चेति ।' इति ञ पुस्तकेऽधिक सटीक श्लोक ।



आ० र०–अञ्जन विधत्ते–सौवीरमिति । ततो–दन्तधावनानन्तर, सौवीराख्यमञ्जन भजेत् । यस्मादक्ष्णोर्नेत्रयो , नित्य–सर्वदा, हित–पथ्यम् । अस्य च मृदुचूर्णाञ्जनत्वात्तिस्र शलाका मानम् । सङ्ग्रहे तु फलमुक्तम् ( सू अ ३ )–' लोचने तेन भवतो मनोज्ञे सूक्ष्मदर्शने । व्यक्तत्रिवर्णे विमले सुस्निग्धघनपक्ष्मणी ॥" इति । सुश्रुतस्तु ( चि अ २४।१८ ) स्रोतोञ्जनमाह–"मत स्रोतोञ्जन श्रेष्ठ विशुद्ध सिन्धुसम्भवम् । दाहकण्डूमलघ्न च दृष्टे[1] क्लेदरुजापहम् ॥" इति । उभयो प्रामाण्याद्विकल्प ।

**चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मतो[2] भयम् ॥ ५ ॥**
**योजयेत्सप्तरात्रेऽस्मात्स्रावणार्थं[3] रसाञ्जनम् ।**

स०–अस्मात्कारणात्, स्रावणार्थ सप्तरात्रे सति, रसाञ्जन–दार्वीक्वाथसमुद्भवाख्य, योजयेत् । यस्माच्चक्षुस्तेजोमयमाग्नेयम् । यद्यपि पञ्चमहाभूतात्मक सर्वमपि, तथापि बाहुल्येन व्यपदेशात्तेजोमयमुच्यते । अत एव तद्रूपाण्यालोचयति । तथा च लोके कश्चिदाह–"नरपतिरेति" इति । न चासौ नराणामेव पति किन्तर्हि नारीणामपीति । तस्य हि चक्षुषो वातपित्ताभ्यामपि भयमस्ति, विशेषेण तु कफाद्भयम्, ततो रसाञ्जन योजयेत् ।

आ० र०–सौवीरापवादेन रसाञ्जन विधत्ते–चक्षुरिति । सप्तरात्रे रसाञ्जन योजयेत् । अन्तरार्थे सप्तमी, सप्तरात्रमन्तर कृत्वेत्यर्थ । किमर्थ? स्रावणार्थ,–श्लेष्मनिर्हरणार्थम्[4] । यस्माच्चक्षुस्तेजोमयम्,ततस्तस्य श्लेष्मत –कफाज्जलात्मकात्, विशेषाद्भयम् । वातपित्तयोस्तु विशेषभयाभावान्नित्याञ्जनेन च प्रसादनेनोपशमात् पृथक् प्रतीकाराभाव । अस्य च तीक्ष्णपिण्डाञ्जनत्वाद्धरेणुमात्रत्वम् । पिण्डत्व च दार्वीक्वाथजत्वात् । उक्त हि–"दार्वीक्वाथमजाक्षीरपाद[5] पक्त्वा यदा घनम् । तदा रसाञ्जनाख्य[6] तन्नेत्रयोश्च प्रयोजयेत् ॥" इति । ननु "पञ्चस[7]प्ताष्टरात्रे वा स्रावणार्थ रसाञ्जनम् ।" इति (सू अ ५।१२) चरकवचनम् । इह तु सप्तरात्र इति विरोध । मैवम् । पञ्चसप्ताष्टरात्राणा बहुमध्याल्पकफविषयत्वात् । ननु "निशाया तु ध्रुवमञ्जनमिष्यते" इति (सू अ ५।१४) चरकेणाञ्जनस्य रात्रि. काल उक्त । इह तु दन्तधावनानन्तरमिति विरोध । मैवम् । चरकवाक्यस्य ह्ययमर्थ. । यदा नित्याञ्जन बाधित्वा पूर्वाह्णे रसाञ्जन प्रयुज्यते तदा ध्रुव नित्यसेव्यमञ्जन निशायामिष्यते, अन्यदा तु प्रातरेवेत्यविरोध. । तथा च मनु ( अ ४।१५२ )–"मैत्र प्रसाधन स्नानं दन्तधावनमञ्जनम् । पूर्वाह्ण एव कुर्वीत देवताना च पूजनम् ।" इति । मैत्र–सूर्याराधनम् ।

**ततो नावनगण्डूषधूमताम्बूलभाग्भवेत् ॥ ६ ॥**

१ 'दृष्टिक्लेद' स सु । २ 'श्लेष्मणो' ज । ३ 'स्रावणार्थे' ख घ ड ज झ ट ठ । ४ 'निर्हरणार्थम्' क ग ड ज ञ । ५ 'पादपक्व यदा' ज । ६ 'रसाञ्जन ख्यात नेत्र' ज ञ । ७ 'पञ्चरात्रेऽष्टरात्रे वा' इति मुद्रितचरकपुस्तके पाठ. ।

स०—नावनादीनां गुणाः, नस्यादिविधिषु वक्ष्यमाणा विधानं च। ताम्बूलस्य तु वैशद्यारुचिहरत्वसौगन्ध्यादिगुणाः प्रसिद्धा एव। नावनादीनां ताम्बूलान्तानां द्वन्द्वः। ततोऽञ्जनादनन्तरं, नावनगण्डूषधूमताम्बूलानि भजते यः स एवंविधो भवेत्। 'भजो ण्विः' इति ण्विः।

आ० र०—नस्यादीन् विधत्ते—तत इति। ततोऽञ्जनादनन्तरं, क्रमेण नावनादीन् भजेत्। उक्तं हि सङ्ग्रहे (सू अ ३)—"अणुतैलं ततो नस्यं ततो गण्डूषधारणम्। घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवाऽऽस्यवक्षसः॥ सुगन्धिवदना स्निग्धनिस्वना विमलेन्द्रियाः। निर्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः" इति। गण्डूषश्च स्नेहकषायोष्णोदकैः क्रमात् कार्यः। उक्तं हि सङ्ग्रहे (सू अ ३)—"ओष्ठस्फुटनपारुष्यमुखशोषद्विजामयाः। न स्युः स्वरोपघाताश्च स्नेहगण्डूषधारणात्॥ खदिरक्षीरवृक्षारिमेदाम्बुकवलग्रहः। अरोचकास्यवैरस्यमलपूतिप्रसेकजित्॥ सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम्। प्रायोगिकं ततो धूमं गन्धमाल्यादि चाचरेत्। धूमपस्योर्ध्वजत्रूत्था न स्युर्वातकफामयाः॥ अञ्जनोत्क्लेशितं नस्यैः कवलैर्नावनेरितम्। धूमेन कवलोत्क्लिष्टं क्रमाद्वातकफं जयेत्" इति। ताम्बूलं तु जातीफलादियुक्तम्। उक्तं हि सङ्ग्रहे (सू अ ३)—"रुचिवैशद्यसौगन्ध्यमिच्छन्वक्त्रेण धारयेत्। जातीलवङ्गकर्पूरकङ्कोलकटुकैः सह॥ कटुक-लताकस्तूरिकाफलम्। ताम्बूलीनां किसलयं हृद्यं पूगफलान्वितम्" इति।

येषां तु ताम्बूलमपथ्यं, तानाह—

**ताम्बूलं क्षतपित्तास्ररूक्षोत्कुपितचक्षुषाम्।**
**विषमूर्च्छामदार्तानामपथ्यं शोषिणामपि॥ ७॥**

स०—क्षतं विद्यते येषां ते क्षताः। अर्शआदित्वादच्। एवं पित्तास्रा रूक्षाश्च। उत्कुपितमभिष्यन्नं चक्षुरेकं द्वे वा येषां त एवम्। क्षताश्च पित्तास्राश्च रूक्षाश्चोत्कुपितचक्षुषश्च, तेषामपथ्यमहितम्। तथा विषार्तानां मूर्च्छार्तानां मदार्तानां शोषिणां च, इत्यपिशब्दस्यार्थः। शोषिणो—राजयक्ष्मिणः।

आ०र०—क्षतादौ ताम्बूलं निषेधति—ताम्बूलमिति। क्षत—क्षतकासः। पित्तास्र—रक्तपित्तम्। रूक्षो—निःस्नेहाङ्गः। उत्कुपितचक्षुः—अभिष्यन्दाख्योऽक्षिरोगः। शोषो—मुखशोषो राजयक्ष्मा च। उक्तं हि सुश्रुते (चि अ २४।२४)—"रक्तपित्तक्षतक्षीणतृष्णामूर्च्छापरीतिनाम्। रूक्षदुर्बलमत्तानां न हितं मुखशोषिणाम्॥" इति। ताम्बूलं सुप्तोत्थितादौ तु पथ्यम्। उक्तं हि सङ्ग्रहे (सू अ ३)—"पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे। द्विपत्रमेकं पूगं च सचूर्णखदिरं च तत्" इति।

१ 'प्रसन्नत्व स्कन्ध' ख.घ। २ 'धारिण' घ झ। ३ 'धूमादस्यो' क। ४ 'कवलोत्थ च' ख घ झ। ५ 'च्छा ज्वरार्तिनाम्' ञ। ६ 'चास्यशोषिणाम्' स. सु.। ७ 'श्रान्ते' घ.।

तदेतत्सर्वं विधाय, भोजनासन्ने कालेऽभ्यङ्ग आचरणीय इत्याह—

**अभ्यङ्गमाचरेन्नित्यं, स जराश्रमवातहा।**
**दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्त्वदार्ढ्यकृत्॥ ८॥**

स०—अभ्यङ्गं नित्यं सततमाचरेत्। नित्यग्रहणं चोपलक्षणार्थम्। एकद्वित्रिदिनान्तरमपि यथोदितमाचरतो न दोषः। सोऽभ्यङ्गः, आचर्यमाणो जरां च श्रमश्च वातश्च तान् हन्तीति क्विप्। तथा दृष्टीत्यादि। दृष्टेः प्रसादो—वैमल्यं दृष्टिप्रसादः। शोभना चासौ त्वक् च सुत्वक्, तस्या भावः सुत्वक्त्वम्। दृढस्य भावो दार्ढ्यम्। "वर्णदृढादिभ्यः ष्यञ्च" इति ष्यञ्। दृष्टिप्रसादादीनां द्वन्द्वः। तानि करोति योऽभ्यङ्गः, स एवम्।

आ० र०—अभ्यङ्गं विधत्ते—अभ्यङ्गमिति। स चोत्पन्नायां क्षुधि विधेयः। तदा हि शुद्धस्रोतस्तया रोमकूपैः स्नेहो देहं व्याप्नोति, तं चोष्मा पचति। उक्तं च सङ्ग्रहे (सू अ ३)—"अथ जातान्नपानेच्छो मारुतघ्नैः सुगन्धिभिः। यथर्तुसस्पर्शसुखैस्तैलैरभ्यङ्गमाचरेत्॥" इति।

अभ्यङ्गफलमाह—स इति। सोऽभ्यङ्गः, जरादीन् हन्ति, दृष्टिप्रसादादींश्च करोति। सुत्वक्त्व—निर्मलनिर्वलीकत्वं त्वचः। सङ्ग्रहे तु (सू अ ३)—"रथाक्षचर्मघटवद्भवन्त्यभ्यङ्गतो गुणाः। स्पर्शनेऽभ्यधिको वायुः स्पर्शनं च त्वगाश्रितम्॥ त्वच्यश्च परमभ्यङ्गो यस्मात्तं शीलयेदतः"। इति।

**शिरःश्रवणपादेषु तं विशेषेण शीलयेत्।**

स०—तमभ्यङ्गम्, शिरःश्रवणपादेषु, विशेषेणातिशयेन, शीलयेदभ्यसेत्, इति वचनाच्चावश्यं न तथा सर्वशरीरेऽभ्यङ्गः कार्यः, यथैतेषु शिरःश्रवणपादेषु। अत्र च पूर्ववदेकत्वाभावः।

आ० र०—अभ्यङ्गाभ्यासं विधत्ते—शिर इति। तमभ्यङ्गं, शीलयेदभ्यसेत् सर्वेष्वङ्गेषु, विशेषान्मूर्धकर्णाङ्घ्रिषु। एकस्मिन्नेव प्रयोगे पुनः पुनः योजनमभ्यासः। प्रत्यहं प्रयोगाभ्यासस्तु नित्यमित्यनेनैवोक्तः। सङ्ग्रहे (सू अ ३) तु—"स केश्यः शीलितो मूर्ध्नि कपालेन्द्रियतर्पणः। हनुमन्याशिरःकर्णशूलघ्नः कर्णपूरणम्॥ पादाभ्यङ्गस्तु तत्स्थैर्यनिद्रादृष्टिप्रसादकृत्। पादसुप्तिश्रमस्तम्भसङ्कोचस्फुटनप्रणुत्॥" इति।

अथैतदपवादमाह—

**वर्ज्योऽभ्यङ्गः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः॥ ९॥**

स०—अभ्यङ्गो वर्ज्यो—वर्जनीयः। कफग्रस्तेन कृतसंशुद्धिना अजीर्णिना च। ग्रस्तग्रहणमतिशयप्रतिपादनार्थम्।

१ यथोचितमाचरतोऽपि' ठ। २ 'तथा हि' ख घ झ ञ। ३'सुखैः स्नेहैर' ज ञ। ४ 'निर्मलवलीकत्व' क ग। 'निर्मलीकत्व' ख घ। ५ 'त्वगाश्रयम्' ख घ झ। ६ 'परमोऽभ्यङ्गो' क ख ग ज ञ। ७ 'येऽतत.' क ग ज। ८ 'सेवन' ख घ.झ। ९ 'नित्यत्वेनोक्त' ख. घ झ ञ। १० 'भ्यङ्गश्च' क ग.। ११ 'पादहर्षश्रम' ङ.। १२ 'शयोपलक्षणार्थम्' ट.।

आ० र०—अभ्यङ्गं कफग्रस्तादौ निषेधति—वर्ज्य इति। कफग्रस्त—अतिवृद्धश्लेष्मा, कृतसंशुद्धि—कृतवमनविरेक, अजीर्णी च, अभ्यङ्गं वर्जयेत्। कृतसंशुद्धेस्तदहरेव निषिद्ध। उक्तं हि सुश्रुते (चि अ २४।३६)—"तरुणज्वर्यजीर्णी च नाभ्यक्तव्य कथञ्चन। तथा वान्तो विरिक्तश्च निरूढो यश्च मानव॥ पूर्वयो कृच्छ्रता व्याध्योरसाध्यत्वमथापि वा॥ शेषाणां तदह प्रोक्ता अग्निसादादयो गदा॥" इति।

**लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः।**
**विभक्तघनगात्रत्वं व्यायामादुपजायते॥ १०॥**

स०—शरीरायासजननं कर्म व्यायाम उच्यते। तस्मात्पञ्चगुणा लाघवादयो निष्पद्यन्ते। विभक्तानि—विभागेन स्थितानि, घनानि—दृढानि, गात्राणि यस्य स विभक्तघनगात्र, तस्य भावस्तत्त्वमिति।

आ० र०—इष्टसाधनत्वकथनद्वारा व्यायाम विधत्ते—लाघवमिति। व्यायामात् लाघवाद्युपजायते। तस्मात् कुर्यादित्यर्थसिद्धम्। विभक्तघनगात्रत्व—सुसन्निविष्टनिविडावयवत्वम्। आयासमात्रफल शारीर कर्म व्यायाम। उक्तं हि सङ्ग्रहे (सू अ ३)—"शरीरायासजनकं कर्म व्यायाम उच्यते" इति। तच्च नियुद्धादि। तच्चाभ्यक्तगात्रैः क्रियते, इत्यभ्यङ्गानन्तरमुक्तम्। वक्ष्यति हि (सू अ ३।१०)—"वातघ्नतैलैरभ्यङ्गं मूर्धतैल विमर्दनम्। नियुद्धं कुशलैः सार्धं पादाघात च युक्तित" इति।

इदानीं येनासौ न कार्यस्तं दर्शयति—

**वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत्।**

स०—वातपित्तामयी, बाल—आषोडशाद्वर्षात्, वृद्ध—सप्ततेरूर्ध्वम्, अजीर्णी च, त जह्यात्।

आ० र०—वातरोगादौ व्यायाम निषेधति—वातपित्तामयीति। त-व्यायामम्।

**अर्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः ११**
**शीतकाले वसन्ते च, मन्दमेव ततोऽन्यदा।**

स०—तुरवधारणे। बलवद्भि पुरुषै स्निग्धभोजिभिरर्धशक्त्यैव निषेव्यो व्यायाम। प्राक् श्रमाद्व्यायामवर्जन कार्यमित्यर्थ। कदासौ विधातव्य? इत्याह—शीतकाल इति। हेमन्ते शिशिरे वसन्ते च सेव्य। शीतर्तुवसन्ताभ्यामन्यदा मन्दमेव सेव्य। मन्दमिति क्रियाविशेषणम्। क्रियाविशेषणाना च कर्मत्वमेकत्वं नपुंसकत्व च वक्तव्यमिति।

आ०र०—व्यायाममात्रामाह—अर्धशक्त्येति। अर्धशक्त्या व्यायामो निषेव्य। किं सर्वैः? नेत्याह—बलिभिरिति। बलिभि स्निग्धभोजिभिरिति मिलित विशेषणम्। किं सर्वदा? नेत्याह—शीतकाल इति। शीतकाले—हेमन्तशिशिरयो। अन्यदा तु ततोऽर्धशक्तेर्मन्दमल्पमात्र निषेव्य। अन्यदेत्यन्यस्यामवस्थाया अन्यस्मिंश्च ऋतौ। अन्यावस्था—बलित्वस्निग्धभोजित्वविपर्यय। अन्यर्तु—ग्रीष्मादित्रयम्। एवशब्देन मन्दत्वविषये अर्धशक्तेर्न प्रवेश, अर्धशक्तिविषये तु मन्दत्वप्रवेशोऽस्तीति द्योत्यते। अर्धशक्तिलक्षण सुश्रुतेनोक्तम् (चि अ २४।४७)—"हृदि स्थानस्थितो वायुर्यदा वक्त्र प्रपद्यते। व्यायाम कुर्वतो जन्तोस्तद्बलार्धस्य लक्षणम्" इति।

**तं कृत्वाऽनुसुखं देहं मर्दयेच्च समन्ततः॥ १२॥**

स०—त-व्यायाम, कृत्वा, अनुसुख—यथा शरीरे बाधा न स्यात्तथा, देह मर्दयेत्। समन्तत—परित।

आ०र०—मर्दन विधत्ते—त कृत्वेति। अनुसुख—सुखानतिक्रमेण। समन्तत—सर्वाङ्गेषु। अतिव्यायामदोषकथनात्पूर्वं मर्दनविधान मर्दनस्य व्यायामाङ्गत्वख्यापनार्थम्। अङ्गत्व चोक्तमेव, त कृत्वेति वचनात्। अत एवोक्त सुश्रुतव्याख्याया जैज्जटेन—"मर्दनमपि व्यायामान्त पातेव" इति। तच्च विशेषात्पद्भ्याम्। उक्तं हि सुश्रुतेन (चि अ २४।४३)—"व्यायामस्विन्नगात्रस्य पद्भ्यामुद्वर्तितस्य च॥ व्याधयो नोपसर्पन्ति सिंह क्षुद्रमृगा इव॥" इति।

**तृष्णा क्षय प्रतमको रक्तपित्तं श्रमः क्लमः।**
**अतिव्यायामत कासो ज्वरश्छर्दिश्च जायते॥१३॥**

स०—अतिव्यायामात्तृष्णादयो भवन्ति। तृष्णेति पृथक् पदम्। (तेन तृष्णादीना पदानामकृतसमासाना निर्देशो दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणा बहुतराणा सर्वेषा चातिव्यायामव्यापत्त्वद्योतनार्थं।)

आ० र०—व्यायामप्रमाणातिक्रमे दोषमाह—तृष्णेति। क्षयो—राजयक्ष्मा। प्रतमक—तमकश्वासभेद। श्रम—कर्मेन्द्रियाणा स्वव्यापाराक्षमत्वम्, क्लमो—बुद्धीन्द्रियाणाम्।

अतिव्यायामप्रसङ्गेनातिजागरादीनामपि व्यापदो दर्शयति—

**व्यायामजागराध्वस्त्रीहास्यभाष्यादि साहसम्।**
**गजं सिंह इवाकर्षन् भजन्नति विनश्यति॥ १४॥**

स०—व्यायामादीना भाष्यान्ताना द्वन्द्व। तान्यादिर्यस्य साहसस्य धनुराकर्षणादेस्तदेवम्। अयथाबलमारम्भ साहसम्, तद्भजन्सेवमानो विनश्यति। क इव? सिंह इव, सिंहो विक्रमवानप्यतिबल गजपति महावर्ष्माणमाकर्षन्नाक्रामन् यथा विन-

१ 'व्याधेरसाध्य' ख. ग घ झ ञ। २ 'जनन' इति पाठ सङ्ग्रहद्वये ग. पुस्तके च। ३ 'मूर्ध्नि तैल' क. ञ.।

१ बलार्धलक्षण केचिदन्यथा पठन्ति। "कक्षाललाटनासासु हस्तपादादिसन्धिषु। प्रस्वेदात् मुखशोषाच्च बलार्धं तद्धि निर्दिशेत्" इति, "ललाटदेशे नासाया गात्रसन्धिषु कक्षयो। स्वेद सञ्जायते यस्य बलार्धं तद्विनिर्दिशेत्" इति च। २ 'तच्छक्त्यर्धस्य' क। ३ 'अङ्ग चोत्तरमेव' क ग ञ। ४ 'व्यायामाङ्गमेव' ञ। ५ 'नैव सर्पन्ति' ज.। ६ ( ) एतच्चिह्नान्तर्गत पाठष्ठ ठ पुस्तकयोर्नोपलभ्यते। ७ 'भजन् यतोऽति नश्यति' इति पाठो हेमाद्रिसम्मत इति प्रतिभाति। ८ 'पतिमतिमहा' ठ.। ९ वर्ष्म—शरीरम्।

श्यति, तथाऽयथाबलमारब्धेन व्यायामादिना नरो म्रियते इति।

आ० र०–व्यायामप्रसङ्गाज्जागरादीनां यथोक्तप्रमाणातिक्रमे दोषमाह–व्यायामेति। गजमाकर्षन् सिंह इव। यतःसाहसतः। अयथाबलमारम्भः साहसम्। न हि व्यायामाद्यतिभजनपर्याप्तं पुंसां बलमस्ति। अध्वस्त्रीशब्दाभ्यां गमनसम्भोगौ लक्ष्येते। आदिशब्देन धनुराकर्षणादि।

**उद्वर्तनं कफहरं मेदसः प्रविलायनम्।**
**स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम्॥ १५॥**

स०–उद्वर्तनस्य कफहरादयश्चत्वारो गुणाः।

आ० र०–इष्टसाधनत्वकथनद्वारोद्वर्तनं विधत्ते–उद्वर्तनमिति। उद्वर्तनं कफहरणादिगुणम्। अतः कुर्यादित्यर्थसिद्धम्। प्रविलायनं–द्रवीकरणम्। द्रवीकृत्य मेदसः शोषणमित्यर्थः। उद्वर्तनं–कषायादिचूर्णैर्गात्रोद्धर्षणम्।

**दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम्।**
**कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित्॥ १६॥**

स०–स्नानं दीपनं वृष्यमायुष्यं च भवति। ऊर्जा–उत्साहः, बलं–प्राणः, एते प्रददाति–करोति यत्तदेवम्। कण्ड्वित्यादि। कण्ड्वादीनां द्वन्द्वः। एतान् जयति। स्नानस्य प्रभावादायुष्यत्ववृष्यत्वदीपनत्वानि बोद्धव्यानि। अथवा स्नानेन प्रहर्षो भवति, प्रहर्षणत्वाच्च वृष्यत्वम्। तथा च वक्ष्यति (उ. अ. ४०।३५)–"यत्किञ्चिन्मधुरं स्निग्धं बृंहणं बलवर्धनम्। मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते" इति। तथा, स्नानं जाठराग्नेर्बहिर्निर्गतानि रोमकूपाश्रितान्यर्चींषि रुद्ध्वाऽन्तर्नयति, ततश्चाग्नेः प्रबलत्वं कुर्वद् दीपनं सम्पद्यते। यथा–शीतकाले शीतानिलस्पर्शसंरुद्धस्य जाठराग्नेः प्रबलत्वम्। बालादित्यस्तु व्याचक्षिष्ट–"स्नानेन भ्राजकाख्यं त्वगाश्रितं पित्तमन्तः प्रविशदूष्माणं संवर्धयति, तेन तद्दीपनम्"। अत एव परिषेके जलमुष्णमिष्यते। यस्माच्छीतं निर्वापयति तेजो न देहस्यान्तः प्रवेशयति। शीतकाले तु यच्छीतानिलस्पर्शसंरुद्धस्याग्नेः प्रबलत्वं तत्कालस्यैव तस्मिन्, कालस्वाभाव्यादिति बोद्धव्यम्। तथा चान्यत्र शीते सति मन्दाग्नित्वमेव दृश्यते। यथा–वर्षासु। अग्निमान्द्यादेवात्र हि वह्निमन्धुक्षणं भोजनं समुपदिष्टम्। तथा च मुनिः (च. सू. अ. ६।३६)–"व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि। विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये" इति।

आ० र०–इष्टसाधनत्वकथनद्वारा स्नानं विधत्ते–दीपनमिति। स्नानं दीपनत्वादिगुणम्। अतः कुर्यादित्यर्थसिद्धम्। दीपनं प्रभावात्। केचिदत्र युक्तिमाहुः–"बाह्योऽङ्गसेकशीताद्यैरूष्माऽन्तर्याति पीडितः। नरस्य स्नातमात्रस्य दीप्यते तेन पावकः॥" इति। वृष्यं–वृषाय स्त्रीप्रसङ्गिने हितं, शुक्रवर्धनमित्यर्थः। ऊर्जोत्साहः। मलस्त्वगुपलेपः। मनःकर्मेन्द्रियव्यापारे सति बुद्धीन्द्रियोपरमस्तन्द्रा। दह्यमानवत् दुःखं दाहः। पाप्मा–पापम्।

**उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः।**
**तेनैव तूत्तमाङ्गस्य बलहृत्केशचक्षुषाम्॥ १७॥**

स०–उष्णाम्बुना अधःकायस्य परिषेको बलावहः–प्राणकृत्। तेनैवोष्णोदकेनैव, उत्तमाङ्गस्य–शिरसः, परिषेको विधीयमानः केशचक्षुषां बलहृत्। प्राण्यङ्गानां समाहार एव द्वन्द्व इत्यस्य प्रायिकत्वात्केशचक्षुषामित्युपपन्नमेव।

आ० र०–उष्णशीतभेदभिन्नस्य स्नानस्य विषयमाह–उष्णाम्बुनेति। उष्णाम्बुना यः परिषेकः, सोऽधःकायस्य बलावहः। स एवोत्तमाङ्गस्योर्ध्वकायस्य केशानां चक्षुषोश्च बलहृत्। तस्मात्केशचक्षुर्बलार्थिभिः शीतेन वारिणा स्नातव्यम्, इतरैरुष्णेन, इत्यर्थसिद्धम्। न त्वेकस्मिन् स्नाने शीतोष्णयोः प्रयोगः, क्रियासङ्करदोषापत्तेः। सङ्ग्रहे (सू. अ. ३) तु–"नानाप्लुत्य शिरः स्नायान्न जलेऽल्पे न शीतले।" इति।

स्नानं येषामपथ्यम्, तान् दर्शयितुमाह–

**स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु।**
**आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम्॥ १८॥**

स०–नेत्रे चास्यं च कर्णौ च तत्र रोगाः। अर्दितं च नेत्रास्यकर्णरोगाश्चातिसारश्च ते विद्यन्ते येषां त एवम्। तेषु गर्हितमहितम्। एवं शेषेषु योज्यम्। आध्मानादीनां द्वन्द्वस्ततो मतुप्। तेन आध्मानवत्सु गर्हितमिति योज्यम्। एवं शेषेष्वपि।

आ० र०–अर्दितादौ स्नानं निषेधति–स्नानमिति। अर्दितः–एकायामः। आध्मानमुदरापूरणम्। भुक्तवान्–कृतभोजनः। गर्हितं–निषिद्धम्।

**जीर्णे हितं मितं चाद्यान्न वेगानीरयेद्बलात्।**
**न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्यमामयम्॥ १९॥**

स०–जीर्णे–सम्यक्परिणते पूर्वे आहारे, अद्यात्–भुञ्जीत। किमद्यात्? हितं,–पथ्यम्। मितं–मात्रया युक्तम्। पथ्यमपि ह्यतिमात्रं हीनमात्रं वा भुक्तं दोषाय स्यात्, अतो मितम्। न वेगानित्यादि। वातविण्मूत्रादीनां सम्बन्धिनो वेगानतुन्मुखी-

१ 'क्रमे मृत्युमाह' ख ज झ। २ 'साहसं ततः' क ख घ झ। ३ 'शब्दात्तरगधनु' क। ४ 'उद्वर्तनं वातहरं कफमेदोविलायनम्' इति सौश्रुतः पाठः। ५ 'शोधनमित्यर्थः' ज। ६ 'स्नानमोजोबल' अ क ग ङ ञ ठ। ७ 'ततश्चाग्नेः प्रबलत्वं कुर्वद्भिर्दीपनत्वं सम्पद्यते' ट। ८ 'व्याचष्टे' ठ। ९ 'एवं कालस्वभावादिति' ट। १० 'वात्र बहिर्वेन्हि' ठ.।

१ 'बाह्याङ्गसेकैः' क ग। 'बाह्यैश्च सेकैः' ज ञ। २ 'ओजः–उत्साहः' क ग ङ। ३ 'दह्यमानस्येव दुःखं' क ग. ज ञ। ४ 'स एव तूत्तमाङ्गस्य' इति हेमाद्रिसम्मतः पाठः। 'स एव चोत्त' ङ ञ। 'तेनैव चोत्त' क। ५ 'सङ्करे दोषा' ख. घ झ। ६ 'ते ह्यस्तनेऽन्ने अ' ट.। ७ 'मितग्रहणम्' ट.।

भूतान् बलान्नैरयेन्न प्रवर्तयेत् । न वेगित इत्यादि । सञ्जातवातविण्मूत्रवेगस्तमकृत्वा नान्यकार्यं स्यात् । नान्यत्कार्यं कुर्यादित्यर्थः । नाजित्वेत्यादि । साधयितुं शक्यं साध्यं, तं रोगमजित्वा नान्यकार्यं स्यादिति योज्यम् । स ह्युपेक्षितो दु साध्योऽसाध्यो वा स्यात् । साध्यशब्दोपादानादसाध्यामयं प्रति यत्नो न कार्य, चिकित्सानैष्फल्यादिति द्योतयति ।

आ० र०–भोजनं विधत्ते–जीर्ण इति । ह्यस्तने जीर्णेऽन्ने सति, अद्यात्–भुञ्जीत । किम्? हितं,–देशकालाद्युचितम्, मितं—यथोक्तमात्रम् । ननु, विहारेष्वाहारस्योक्तिरप्रस्तुता । मैवम् । क्रियाप्राधान्याद्विहारत्वमाहारस्य । क्रियाप्रधानो हि विहार, क्रियाद्रव्यप्रधान आहार, अयमेव विहाराहारयोर्भेद, क्रियाद्रव्ययोरुभयत्र भावात् । सङ्ग्रहे ( सू अ ३ ) तु–"अन्नपानविधानेन भुञ्जीतान्न विनाऽत्ययात् । अभिनन्द्य प्रसन्नात्मा हुत्वा दत्त्वा च शक्तित ॥ पाक सजलमेकान्ते यथासुखमिति ब्रुवन् । प्रयच्छेत्सर्वमुद्दिश्य पाचयेन्नान्नमात्मने । नान्नमद्यान्मुमूर्षूणा मृताना दु खजीविनाम् । क्लीजित क्लीबपतितक्रूरदुष्कर्मकारिणाम् ॥ गणारिगणिकासत्रधूर्तानां पणिना न च । नोत्सङ्गे भक्षयेद्भक्ष्यान् जल नाञ्जलिना पिबेत् ॥ सर्वं च तिलसम्बद्धं नाद्यादस्तमिते रवौ ॥ न भुक्तमात्र आर्यस्येन्न निषिद्धं भजेत्सुखम् ॥" इति । एव प्रबोधादयो भोजनान्ता बद्धक्रमा विहारा उक्ता ।

ताश्चावश्यकर्तव्यान्मन्यमानेषु नरेषु वेगोदीरणवेगधारणव्याध्युपेक्षा सम्भाव्येरन् । अतस्तत्प्रतिषेधं करोति । तत्र वेगोदीरणं निषेधति–न वेगानिति । वेगा –वातविण्मूत्रादय । किं प्रवर्तमानानपि न प्रवर्तयेत्? नेत्याह–बलात्, अप्रवृत्तान्न प्रवर्तयेदित्यर्थः ।

वेगधारणं निषेधति–न वेगित इति । वेगित –सञ्जातवेग सन्, अन्यकार्यो न स्याद्वेगानेवोत्सृजेदित्यर्थः ।

व्याध्युपेक्षा निषेधति–नाजित्वेति । आमयमजित्वाऽन्यकार्यो न स्यात्, आमयमेव जयेदित्यर्थः । किं सर्वम्? नेत्यत आह–साध्यम्, असाध्यस्तु प्रयत्नवैयर्थ्यादुपेक्ष्य एव । इति बद्धक्रमविहारा व्याख्याता ।

**सुखार्थाः सर्वभूताना मताः सर्वाः प्रवृत्तयः ।**
**सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ॥ २० ॥**

स०–सर्वभूतानामशेषप्राणिना, यस्मात्सुखार्था प्रवृत्तय –कर्माणि, मता –अभिप्रेता । सुख च शर्माख्य, धर्माद्विना न भवति, तस्मात्कारणात्, धर्मपरो–धर्मप्रधान, स्यात् । धर्मादिति "पृथग्विना" इति पञ्चमी ।

आ० र०–अथाबद्धक्रमान् विहारान् व्याचष्टे, ते च प्रायेण धर्मरूपा । तत्र धर्मस्यायुर्वेदाङ्गत्वे हेतुमाह–सुखार्था इति । सुखमारोग्यम् । उक्त हि चरके ( सू अ ९।४)–"सुखसञ्ज्ञकमारोग्य, विकारो दु खमेव च" इति । यद्यपि षोडशात्मकाच्चिकित्सितादारोग्य, तथापि धर्मसहकृतादेव । इति धर्मस्यायुर्वेदाङ्गत्वम् ।

**भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ।**

स०–कल्याणे–शुभकर्मणि, मित्राणि–सहाया, उपदेशादिना कल्याणमित्राणि, तानि भक्त्या–अदम्भमति सन्, भजेत् । इतराणि–कल्याणमित्रापेक्षयेतराणि पापमित्राणि, तेभ्यो दूरगस्तद्वर्जनपर । तत्सङ्गो हि दृष्टादृष्टानर्थकर । दूरग इत्यत्र "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड" इति ड ।

आ० र०–सन्मित्रसेवा विधत्ते–भक्त्येति । कल्याणानि कल्याणहेतुत्वात् । इतराण्यकल्याणानि, तेभ्यो दूरग सन्, कल्याणानि मित्राणि, सेवेत । कया? भक्त्या । यद्यपि भक्ति सेवैव, तथापि फलानुसन्धाननिवृत्त्यर्थमेवमुक्तम् । एव हि कृत कर्म महाफल भवति । अत एव वक्ष्यमाणान्यपि कर्माणि अवश्यकर्तव्यबुद्ध्या कर्तव्यानि, न तु फलानुसन्धानेन ।

**हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते ॥ २१ ॥**
**सम्भिन्नालापं व्यापादमभिध्या दृग्विपर्ययम् ।**
**पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥२२॥**

स०–हिंसा–प्राण्युपघात, स्तेय–चौर्यम्, अन्यथाकामो–निषिद्धकामसेवा पशुस्त्रीगुरुदारगमनादि, एतत्त्रिविध कायिक पाप कर्म । पैशुन्य–परेषा भेदकृद्वचनम्, परुषममृदुवचनम्, अनृतमसत्यवचनम्, सम्भिन्नालापोऽसम्बद्धप्रलपनम्, चतुर्विधमेतद्वाचिकम् । व्यापाद –प्राण्युपघातचिन्ता, अभिध्या–परगुणाद्यसहिष्णुता, विषयस्पृहा वा, दृग्विपर्यय–शास्त्रदृष्टिवैपरीत्य नास्तिकत्वादि, त्रिविधमेतन्मानसम् । तदेतद्धिंसादि दशधा पाप कर्म कायवाङ्मानसैस्त्यजेन्न कुर्यादित्यर्थः ।

आ०र०–पाप निषेधति–हिंसेति । तच्च दशविधम् । तत्र हिंसा–प्राणिवध । स्तेय–चौर्यम् । अन्यथाकामोऽगम्यागमनम् । पैशुन्य–परस्याऽप्रत्यक्ष तद्दोषकीर्तनम् । प्रत्यक्ष तु परुषम् । अनृतमसत्यम् । सम्भिन्नालापोऽसत्प्रलाप । व्यापाद –परानिष्टचिन्तनम् । अभिध्या–परस्वापहरणेच्छा । दृग्विपर्यय –आप्तवाक्येष्वप्रमाणबुद्धि । दृक्शब्देनात्रादृष्टोऽर्थ उच्यते ।

**अवृत्तिव्याधिशोकार्तानुवर्तेत शक्तितः ।**

१ 'क्रिया' इति नास्ति ख घ ङ. ज झ ञ पुस्तकेषु । २ 'पक' ख घ झ । ३ 'सुखमविब्रुवन्' क ज । ४ 'दुष्कृतकर्मणाम्' क ग ञ । 'दुष्कृतकारिणाम्' झ स २ । ५ 'पापिना न च' क । 'पणिकान्न च' ग । 'पाणिक न च' स. मू । 'धूर्तान्नापणिक च न' स स । ६ 'आयासेन्न' क ग. ञ. । ७ 'वैफल्याद्' क ग ।

१ 'कित्सनादारोग्य' ख घ झ । 'कित्सितादेवारोग्य' क ग ञ । २ 'कल्याणमित्राणि–यानि ज्ञानादिकमुपदिशन्ति लोकद्वयहितैषीणि वृद्धगुरुब्राह्मणादीनि' इति चन्द्रनन्दन । ३ 'कर्तव्यत्वबुद्ध्या' क ग । ४ 'पशुस्त्री' इति नास्ति ट पुस्तके । ५ 'परस्वस्यान्यायेन स्पृहाऽभिध्या' इतीन्दु । ६ 'विषयस्पृहा वा' इति नास्ति क्वचित् । ७ 'स्वप्रामाण्यबुद्धि' ख. घ झ. ञ ।

स०-न विद्यते वृत्तिर्येषां तानवृत्तीन्। शक्तित -यथासामर्थ्यम्, अनुवर्तेत-अनुकूलं गच्छेत्। तथा, व्याधिना शोकेन चार्ताश्च।

आ० र०-आर्तानुवृत्तिं विधत्ते-अवृत्तीति। अवृत्ति -जीवनोपायाभाव। शोक -इष्टवियोगज दु खम्। अनुवर्तेत-आर्तिनिवारणे प्रयतेत।

**आत्मवत्सततं पश्येदपि कीटपिपीलिकम्॥ २३॥**

स०-कीटान् पिपीलिकाश्चात्मवत्पश्येत्। स्वशरीरतुल्यानित्यर्थ। किमुत साधूनसाधूंश्च। कीटपिपीलिकमप्यात्मवत्पश्येदित्यपिशब्दस्यार्थ। कीटपिपीलिकमिति "क्षुद्रजन्तव "इत्येकत्वम्।

**आ० र०-भूतदया विधत्ते-आत्मवदिति। कीटपिपीलिकमप्यात्मवत्पश्येत्, किं पुनर्ब्राह्मणादिकम्। "आत्मन प्रतिकूलानि परेषां न समाचरेत्" इत्यर्थ।**

**अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन्।**

स०-देवादीनां द्वन्द्व। देवादीनर्चयेत्। वृद्धा -ज्ञानवृद्धा शीलतपोवृद्धाश्च। नृपो-राजा। अतिथि -असमानग्रामी वैश्वदेवान्ते समुपस्थित।

**आ० र०-पूज्यपूजा विधत्ते-अर्चयेदिति। पूज्याश्च देवादय। वृद्ध -श्रुतादिभिरात्मनोऽधिक।**

**विमुखान्नार्थिनः कुर्यान्नावमन्येत नाक्षिपेत्॥ २४॥**

स०-अर्थिनो-याचकान्, प्रत्याख्यानेन विमुखान्न कुर्यात्। नावमन्येत-नावमानयेत्। न च परुषवचनादिना आक्षिपेत् -परिभवेत्।

**आ० र०-याचकद्वेष निषेधति-विमुखानिति। स त्रेधा, विमुखीकरणम् अवज्ञा परुषभाषणं चेति।**

**उपकारप्रधानः स्यादपकारपरेऽप्यरौ।**

स०-अरौ शत्रावपकारपरेऽपि सत्युपकारप्रधान स्यात्। ननु, रिपुरपकारक एव, तत्किमपकारपर इति विशेषणेन। तथा च माघ (सर्ग २।३७)-"उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा। उपकारापकारौ हि लक्ष्यं लक्षणमेतयो" इति। उच्यते। न हि सर्वदैवारिरपकार कर्तुं शक्य स्यात्, किं तर्हि कदाचिदेव। हेत्वाद्यधीनत्वादपकारकारित्वस्य। वातादिदोषवत्। यथा-वातादयो दोषा दूषणस्वभावा अपि सन्त कदाचिद्विकारकारित्वे समर्था भवन्ति कदाचिन्नैव। दोषत्वं तु सर्वदैव तेषाम्। तस्मादपकारपर इति युक्तं विशेषणम्। अपकारिण्युपकारकृत्स्यात् किं पुनरुपकारक इत्यपिशब्दार्थ।

**आ० र०-परोपकारं विधत्ते-उपकारेति। अपकारपरेऽप्यरौ उपकारप्रधान स्यात्, किं पुनरुपकारपरे मित्रादौ। अपकारासमर्थोऽप्यरिरस्तीति न पौनरुक्त्यम्।**

**सम्पद्विपत्स्वेकमना, हेतावीर्ष्येत्फले न तु॥ २५॥**

स०-सम्पत्सु विपत्सु चैकमना -समचित्त। सम्पत्सु हर्षेण, विपत्सु विषादादिना, न भाव्यमित्यर्थ। हेताविल्यादि। हेतौ-कारणे, ईर्ष्येत्। यथा-अयमेव श्रुतत्यागादिगुणवान् कस्मात्, कस्मादहमप्येवं न भवेयम्। फले न तु-परकीये शोभने फले वस्त्रालङ्कारादिके नेर्ष्येत्।

आ० र०-निर्विकारत्वं विधत्ते-सम्पद्विपत्स्विति। हर्षहेतुषु सम्पत्सु, विषादहेतुषु विपत्सु, एकमना -हर्षविषादरहितचित्तो, भवेत्।

ईर्ष्यां निषेधति-हेताविति। परोत्कर्षासहनमीर्ष्या। तां न कुर्यात्। यो हि बुद्धिमान्, स हेतौ-फलसाधने, ईर्ष्येत्, न तु फले। एतदुक्तं भवति, एकं फलमुद्दिश्य, तत्साधनमनुतिष्ठद्भि परस्परेर्ष्ययाऽनुष्ठेयम्। तथा ह्यनुष्ठितं कर्म सम्यगाशु निष्पद्यते। अथ दैवानुकूल्यादेकस्य फले सिद्धे, तत्रेतरैरीर्ष्या न कर्तव्या। सा हि न फलस्य साधनम्, प्रत्युत पापपरितापयोरिति।

**काले हितं मितं ब्रूयादविसंवादि पेशलम्।**

स०-काले-प्रस्तावे, हित-पथ्यम्, मित-न बहु, अविसंवादि-सत्यम्, पेशल-मनोज्ञं, ब्रूयात्।

**आ० र०-भाषण विधत्ते-काल इति। काले-प्रस्तावे, ब्रूयात्। तच्च हित-पथ्यम्। मित-विवक्षितार्थप्रकाशनमात्रम्। अविसंवादि-सत्यम्। पेशल-मधुरम्।**

**पूर्वाभिभाषी, सुमुख, सुशीलः करुणामृदुः॥ २६॥**
**नैकः सुखी, न सर्वत्र विश्रब्धो, न च शङ्कितः।**

स०-पूर्वाभिभाषी-पूर्वालापी, स्यात्। सुमुखो-गतभ्रुकुटि। सुशील -शोभनस्वभाव[1]। तथा, करुणया मृदुरार्द्रसन्तानो मातेव पुत्रे। एकोऽद्वितीय सन्सुखी न स्यात्। तथा, सर्वत्र-सर्वस्मिन् जने, विश्रब्धो-विश्वस्तो, न स्यात्। तथा च भगवान् व्यास -"मायाचारे मायया वर्तितव्यम्" इति। तथा, सर्वत्र-मित्रस्वजनादिष्वपि, शङ्कितोऽविश्वस्तो, न स्यात्, तेषां वैमुख्यदोषप्रसङ्गभयात्।

**आ०र०-पूर्वाभिभाषित्वादिकं विधत्ते-पूर्वाभिभाषीति। पूर्वाभिभाषी-यदृच्छया सङ्गते सुहृदि तद्वचनात्पूर्वं कुशलप्रश्नादिकारी, भवेत्। तथा, सुमुख -प्रसन्नवदन। सुशील -शिष्टानुमतव्यवहारवान्[2]। करुणामृदु -सत्यपि सामर्थ्ये कृपालुत्वात्परापकारसहिष्णु[3]।**

**एकसुखित्वादिकं निषेधति-नैक इति। एक सुखी न भवेत्-ज्ञातिभृत्यादिभ्यो[4] यथायथमविभज्य सुखसाधनं नोपयुञ्जीत। तथा सर्वत्र न विश्रब्धो न च शङ्कितो भवेत्-अविश्वसनीयेषु विश्वासमशङ्कनीयेषु च शङ्कां न कुर्यात्।**

**न कञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम्॥ २७॥**
**प्रकाशयेन्नापमानं[5] न च निःस्नेहतां प्रभोः।**

स०-आत्मन शत्रुं कञ्चिदपि न प्रकाशयेत्। तत्प्रकाशनाद्धि भेद स्यात्। नात्मानं कस्यचिद्रिपुं प्रकाशयेत्। पूर्वोक्ता-

---

१ 'शोभनप्रकृति' ट.। २ 'व्यवहार' ख घ ज झ। ३ 'कृपालुत्वपरोऽपकारसहिष्णु' क। ४ 'ज्ञातिप्रभृत्या' ज.। ५ 'न्नावमान' इति पाठ सङ्ग्रहहृदये अ ञ पुस्तकयोश्च।

देव हेतो । अपमान–असत्कार, कस्यचिन्न प्रकाशयेत् । प्रभो स्वामिन सम्बन्धिनीं नि स्नेहता न प्रकाशयेत् । तत्प्रकाशनादसौ प्रभुर्जातावसरैर्भेदकै सुतरा नि स्नेहीक्रियते ।

**आ० र०–आत्मन शत्रुत्वादिप्रकाशन निषेधति–न कश्चिदिति । आत्मन शत्रु न कञ्चित्प्रकाशयेत्–ममाय वैरीति न द्योतयेत् । तथा, आत्मानमपि कस्यचिद्रिपु न प्रकाशयेत्–अहमस्य वैरीति न द्योतयेत् । तथा, अपमान–कुतोऽपि जात तिरस्कार, न प्रकाशयेत् । तथा, प्रभोर्नि स्नेहता न प्रकाशयेत्–मा प्रति स्वामी सम्प्रति नि स्नेह इति न द्योतयेत् ।**

**जनस्याशयमालक्ष्य यो यथा परितुष्यति ॥ २८ ॥**
**तं तथैवानुवर्तेत पराराधनपण्डितः ।**

स०–जनस्याशयमालक्ष्य–लोकस्य अभिप्राय बुद्ध्वा परिच्छिद्य, यो जनो यथा परितुष्यति तथा तेनैव प्रकारेण दान प्रियवचनादिना तमनुवर्तेताराधयेत् । कीदृशो भूत्वा ? पराराधने पण्डितस्तज्ज्ञ ।

**आ० र०–लोकरञ्जन विधत्ते–जनस्येति । लोकस्याभिप्राय ज्ञात्वा, यो यथा परितुष्यति त तथैवानुवर्तेत । कीदृश ? पराराधनपण्डित –परसन्तोषोत्पादनप्रकारेषु सुनिष्ठितो भूत्वा ।**

**न पीडयेदिन्द्रियाणि न चैतान्यति लालयेत् ॥२९॥**

स०–इन्द्रियाणि–रसनादीनि, कदन्नाशनादिना न पीडयेन्न निगृह्णीयात् । न चैतानीन्द्रियाण्यति लालयेदतिशयेन विलासयेत् ।

**आ० र०–इन्द्रियपीडा इन्द्रियातिलालन च निषेधति–न पीडयेदिति । स्पष्टम् ।**

**त्रिवर्गशून्यं नारम्भं भजेत्तं चाविरोधयन् ।**

स०–त्रयाणा धर्मार्थकामाना वर्गस्त्रिवर्ग, तेन शून्य–रहित, आरम्भमुद्यम, न भजेत्–न कुर्यात् । कथ भजेत् ? त च त्रिवर्गमविरोधयन्–परस्परमबाधयन् ।

**आ० र०–त्रिवर्गशून्यमारम्भ निषेधति–त्रिवर्गशून्यमिति । त्रिवर्गो–धर्मार्थकामा, तै शून्य–तेषामन्यतम यो न फलति त, न सेवेत ।**

**त्रिवर्गपरस्परविरोधयुक्तमारम्भ निषेधति–त चाविरोधयन्निति । त त्रिवर्ग परस्परं विरोधयन्नारम्भं न भजेत् । यत्रारम्भे धर्मादिष्वेको नश्यत्येक उत्पद्यते, त त्यजेदित्यर्थ ।**

**अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम् ॥ ३० ॥**

स०–सर्वधर्मेषु मध्यमा प्रतिपद प्रतिपत्तिमनुयायात्–सर्वेष्वाचारेषु मध्यम मार्गमनुवर्तेत । नैकत्रासक्ति कुर्यादित्यर्थ ।

**आ०र०–सर्वधर्मानुसरण विधत्ते–अनुयायादिति । सर्वधर्मेषु मध्यमां प्रतिपदमनुयायात्–सर्वेष्वात्मकृत्येषु रागद्वेषरहिता बुद्धिमनुसरेत् । मध्यस्थ सर्वान् धर्माननुतिष्ठेदित्यर्थ ।**

१ 'अवमान' क ग ज ट । २ 'प्रकृति' ट । ३ 'त्रिवर्गो–धर्मार्थकामाख्य, मोक्षस्य धर्मेऽन्तर्भाव.' इति चन्द्रनन्दन । ४ 'तेष्वन्यतम' क. ग ञ. ।

**नीचरोमनखश्मश्रुर्निर्मलाङ्घ्रिमलायनः ।**
**स्नानशील. सुसुरभिः सुवेषोऽनुल्बणोज्वलः ॥३१॥**

स०–नीचान्यदीर्घाणि रोमनखश्मश्रूणि यस्य स एवभूतो भवेत् । रोमाणि–बाहूरुप्रभृतिषु रोमाणि केशाश्चोच्यन्ते । तथा च "हृषेलोमसु" इत्यत्र सूत्रे विवृतम्–'लोमानि मूर्धजान्यङ्गजानि चेह गृह्यन्ते' इति । नीचलोमादिकफल च मुनिनोक्तम् ( च सू अ ५।९६ )–"पौष्टिक धन्यमायुष्य शुचि रूपविराजनम् । केशलोमनखादीना कृन्तन सम्प्रसाधनम्' इति । तयाङ्घ्री–पादौ । मलायनानि–घ्राणकर्णादीनि । निर्मलान्यङ्घ्रिमलायनानि यस्य स एवम् । अस्य च फलम् ( च सू अ ५।९५ )–"मेध्य पवित्रमायुष्यमलक्ष्मीकलिनाशनम् । पादयोर्मलमार्गाणा शौचाधानमभीक्ष्णश " इति । स्नान शीलयतीति स्नानशीलो–नित्यस्नायी स्यात् । तथा, सुसुरभि –सुगन्धि । शोभनो जीर्णमलिनवस्त्रादिविवर्जितो वेषो यस्य स सुवेष । अनुल्बणोऽनुद्धत, स चासावुज्ज्वलश्चानुल्बणोज्वल । अनुद्धतवेष उज्ज्वलश्च स्यादित्यर्थ ।

**आ० र०–नीचरोमत्वादिक विधत्ते–नीचेति । नीचत्व छेदेन कार्यम् । रोमशब्देन केशा अपि गृह्यन्ते । उक्त हि चरके ( सू अ ८।१८ )–"त्रि पक्षस्य केशश्मश्रुरोमनखान्सहारयेत्" इति । तथा, निर्मलाङ्घ्रिमलायन । मलायन–श्रोत्रादि । स्नानशील –कालद्वयेऽपि स्नाननिष्ठ, प्रत्यह स्नानस्य प्राग्विहितत्वात् । उक्त च चरकेण ( सू अ ८।१८ )–'द्वौ कालावुपस्पृशेत्' इति । सुसुरभिर्गन्धमाल्यादिधारणेन । सुवेषो वस्त्रालङ्कारादिधारणेन । अनुल्बणोज्वलोऽनुद्धतशृङ्गार । उज्ज्वल –शृङ्गाररस ।**

**धारयेत्सततं रत्नसिद्धमन्त्रमहौषधीः ।**

स०–धारयेदित्यादि । रत्नानि–मणयो वज्रपद्मरागादय । सिद्धमन्त्रोऽपराजितादि । महौषधि –सहदेव्यादिका । रत्नादीना द्वन्द्व । रत्नादीर्बाहुग्रीवादिषु, सतत–सदैव, धारयेत् ।

**आ० र०–रत्नादिधारण विधत्ते–धारयेदिति ।**

**सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ॥ ३२ ॥**

स०–युगमात्रदृग्विचरेद्भ्रमेत् । युगं–हस्तचतुष्टयम्, तत्पश्यति य स एवम् । एव कुर्वन्सम्मुखमागच्छद्भिर्गवाश्वादिभिर्नोपद्रूयते । तथा, सहातपत्रेण–छत्रेण, पदत्राणेन–पदाधारपर्यायेण, यो वर्तते स एवम् । पादत्रच्छत्रयोश्च गुणा उक्ता –"मारुतस्यानुलोम्याय खुडस्तम्भश्रमापहम् । अन्वर्थसज्ञ पादत्र बलदृक्शुक्ररक्षणम् । वर्ण्य नेत्रहित छत्र वातवर्षातपापहम्" इति ।

**आ० र०–पर्यटन नियच्छति–सातपत्रेति । आतपत्र–**

१ 'ससुरभि' क ग । २ 'वृष्यमायुष्य' स च । ३ 'केशश्मश्रुनखादीना कल्पन' स च । ४ 'कचश्मश्रु' ख घ ज झ । ५ 'सहरेत्' क ख ग घ ज झ ञ । ६ 'द्वौ कालौ स्नानशीलो भवेत्, प्रत्यह' क ग ञ । ७ उपस्पर्श –स्नानम् । 'उपस्पर्श स्पर्शमात्रे स्नानाचमनयोरपि' इति मेदिनी । 'कालावप स्पृशेत्' क ग. । ८ 'शृङ्गार शुचिरुज्ज्वल ' इत्यमर ।

छत्रम् । पदत्राणे—उपानहौ । युग—हस्तचतुष्टयम्, तन्मात्रं पुरः पश्यन्विचरेत् ।

**निशि चात्ययिके कार्ये दण्डी मौली सहायवान् ।**

स०—रात्रौ चात्ययिके कार्ये दण्डी सन् विचरेत् । दण्डेन सर्पादीनामुत्त्रासनमपि चोक्तम् । तथा (सुश्रुते चि अ २४।७६)—"शुन सरीसृपव्यालविषाणिभ्यो भयापहम् । श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते । सत्वोत्साहबलस्थैर्यधैर्यवीर्यविवर्धनम् । अवष्टम्भकरं चापि भयघ्नं दण्डधारणम् ॥" इति । तथा च (चरके सू अ ५।९९)—"स्खलत सम्प्रतिष्ठान शत्रूणा च निषूदनम् । अवष्टम्भनमायुष्य भयघ्न दण्डधारणम्" इति । मौली—शिरोवेष्टनयुक्त । अनेनोपरिष्टात् पतता पतङ्गकीटादिमूत्रपुरीषादीना रक्षा । तथा, सहायवान् । अनेनापि चित्तावष्टम्भ । दण्डशब्दात् "अत इनिठनौ" इति इनि, मौलिशब्दाच्च व्रीह्यादित्वात्, तस्य ह्याकृतिगणत्वमिति केचित् । आत्ययिक इति । अत्यय —कृच्छ्रम् । तस्मिन् भवमित्यध्यात्मादित्वाट्ठञ् ।

आ० र०—रात्रिपर्यटन नियच्छति—निशीति । यत्कार्य कालप्रतीक्षा न सहते तदात्ययिकम् । तस्मिन्सति दण्डादियुक्त सन् रात्रौ विचरेत् । मौलि —शिरोवेष्टनम् ।

**चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन् ॥ ३३ ॥**
**नाक्रामेच्छर्करालोष्टबलिस्नानभुवो न च ।**

स०—चैत्यो—विशिष्टदेवताधिष्ठितो लोकप्रसिद्धो वृक्षविशेष, बुद्धालय इत्यन्ये । पूज्यो—गुरुपित्रादि । ध्वजश्चिह्नम् । अशस्ताश्चण्डालादय, अशस्तममङ्गल्य वस्तु इत्यन्ये । एषा छायाम् । तथा, भस्म—भूति । तुषो—धान्यादित्वक् । अशुचिर्विट्, यद्वा उच्छिष्ट वस्तु । तदेतन्नाक्रामेत् । शर्करा—सूक्ष्मपाषाणाकृतिमृत्खण्डिका । तथा, लोष्ट—मृत्पिण्डादिखण्ड । बलिर्देवताद्यर्चनम् । स्नान प्रसिद्धम् । बलिश्च स्नान च बलिस्नाने, तयोर्भुवौ बलिस्नानभुवौ । शर्करा च लोष्ट च बलिस्नानभुवौ च ता नाक्रामेत् ।

आ० र०—चैत्यादिच्छायाद्याक्रमण निषेधति—चैत्येति । चैत्यो—ग्रहाधिष्ठितो वृक्ष, पूज्यो—देवादि, ध्वजो—यूपादि, अशस्तश्चण्डालादि, तेषा छाया नाक्रमेत् । तथा, भस्म—भूतिम् । तुष—धान्यत्वचम् । अशुचीन्—विण्मूत्रोच्छिष्टानि । शर्करादिव्याप्तान् भूप्रदेशान् । शर्करा—वालुका, लोष्ट—मृत्पिण्ड, बलि —पूजोपहार । स्नान—स्नानोदकम् ।

**नदीं तरेन्न बाहुभ्यां, नाग्निस्कन्धमभिव्रजेत् ॥३४॥**
**सन्दिग्धनावं वृक्षं च नारोहेदुष्टयानवत् ।**

स०—नदी—तरङ्गिणी, दोर्भ्या न तरेत् । अग्निस्कन्धमभि—अग्निराशेरभिमुख, न व्रजेत् । सन्दिग्धा चासौ नौश्च ता, नारोहेन्नोच्चलेत् । सन्दिग्धाया शिथिलबन्धनत्वाज्जर्जरत्वादतिभाराक्रान्तत्वात्पारगमन प्रति सन्देह । चेति समुच्चये । वृक्ष च नारोहेत् । कथम् ? दुष्टयानवत् । यथा दुष्टयानमश्वादिकं नारोहेत् तथेति । दुष्टयानारोहणमपि चोक्त्याऽनया निषिद्धम् ।

आ० र०—बाहुभ्या नदीतरण निषेधति—नदीमिति ।

अग्निस्कन्धाभिमुख गमन निषेधति—नाग्निस्कन्धमिति । अग्निस्कन्धो—महानग्निराशि ।

सन्दिग्धनावाद्यारोहण निषेधति—सन्दिग्धनावमिति । सन्दिग्धा—शङ्क्यमानमज्जना । दुष्ट यान—शङ्क्यमानपतनमश्वादि । तस्य च दृष्टान्तत्वेनोपादान तदारोहणस्य निषेधविषयत्वख्यापनार्थम् ।

**नासंवृतमुखः कुर्यात्क्षुतिहास्यविजृम्भणम् ॥ ३५ ॥**

स०—नासवृतास्य क्षुत्यादीन् कुर्यात् । हस्तादिना मुख पिधाय कुर्यादित्यर्थ । क्षुति —छिक्का, हास्य—हसनम्, विजृम्भण—जृम्भिका, एषा समाहारद्वन्द्व ।

आ० र०—अनाच्छादितमुखस्य क्षवथ्वादिकं निषेधति—नासवृतमुख इति ।

**नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद्भुवम् ।**
**नाङ्गैश्चेष्टेत विगुणं, नासीतोत्कटकश्चिरम् ॥ ३६ ॥**

स०—नासा न विकर्षेत् । मलोत्सारणमात्र तु कार्यमेव, इति विशब्देन द्योतयति । अकस्मात्—कारण विना, भुव—पृथ्वी, न विलिखेत्—नोत्कर्षेत् । अङ्गैर्हस्तपादादिभि, विगुण—अननुगुण यथा भवति तथा, न चेष्टेत—न व्याप्रियेत । उत्कटक स्थितमवस्थान यस्य स एवम्भूतो नासीत । चिर न तिष्ठेदित्यर्थ, अर्शोरोगाद्युत्पत्ते ।

आ० र०—नासिकानिष्कोषण निषेधति—नासिकामिति । नासिका छिद्रोपलक्षणम् । तेन गलकर्णनासिकास्रोतोदशनाक्षिविवराणि । उक्त हि सुश्रुते (चि अ २४।९५)—"न गलकर्णनासास्रोतोदशनाक्षिविवराण्यभिनिष्कुष्णीयात्" इति ।

निष्कारण भूमिविलेखन निषेधति—नाकस्मादिति ।

विगुणामङ्गचेष्टा निषेधति—नाङ्गैरिति । विगुण—अनार्जवम् ।

चिरकालमुत्कटकासन निषेधति—नासीतेति ।

**देहवाक्चेतसां चेष्टाः प्राक् श्रमाद्विनिवर्तयेत् ।**
**नोर्ध्वजानुश्चिरं तिष्ठेत्**

स०—देहादीना द्वन्द्व । एषा सम्बन्धिनीश्चेष्टा क्रिया श्रमात्खेदात् पूर्व विनिवर्तयेत् । तावद्धनुराकर्षादि कुर्याद्यावज्ञातीव श्रम स्यादित्यर्थ । तथा, ऊर्ध्वे जानुनी यस्य स ऊर्ध्वजानुश्चिर नासीत ।

---

१ 'निषेधनम्' ट. । २ 'भयघ्न सर्पादिभ्य' इति चक्रपाणिदत्त । ३ 'अशुचि-विण्मूत्रोच्छिष्टादि' ख घ । ४ 'पूजा' ख. घ ड. ज । ५ अस्याग्रे 'पतद्याप्ता भुवम्' इत्यधिक क. ग. पुस्तकयो । ६ 'शेराभिमुख्येन न' ट. ।

१ 'क्षुत् हास्य च विजृम्भणम्' ज. । 'क्षुतिं हास्य' झ. । २ 'तवदनस्य क्षुत्यादि नि' क ग झ ञ । ३ 'लिखेन्महीम्' ड । ४ 'नासीतोत्कटकस्थित' इत्यरुणदत्तसम्मत पाठ । ५ 'निष्कर्षण' ख घ ज झ ञ । ६ 'वालकर्ण' ख घ. । ७ 'स्रोतांसि मूत्रपुरीषादीनाम्, तेषा विवराणि छिद्राणि' इति डल्हण. ।

आ० र०-श्रमोत्पत्ते प्रागेव सर्वचेष्टोपरम विधत्ते-देहेति। व्यायामस्य श्रमैकफलत्वान्निवृत्तिकालाभिधानाच्च तद्व्यतिरिक्ताऽत्र देहचेष्टा ग्राह्या।

चिरकालमूर्ध्वजानुस्थिति निषेधति-नोर्ध्वजानुरिति। यो जङ्घे सङ्कोच्योत्तान शेते,यश्चोर्ध्वं तिष्ठति, स ऊर्ध्वजानु।

**नक्तं सेवेत न द्रुमम्॥ ३७॥**
**तथा चत्वरचैत्यान्तश्चतुष्पथसुरालयान्।**
**सूनाटवीशून्यगृहश्मशानानि दिवाऽपि न॥ ३८॥**

स०-नक्त-रात्रौ, द्रुम-तरु, न सेवेत। तदाश्रितकीटमूत्रशकृदादिपातरक्षार्थम्। चत्वर-त्रिपथम्। अन्ये त्वाहु -'यत्र प्रदेशे नगरनिवासिनो ग्राम्या वा समेत्य नानाविधा कथा कुर्वन्ति, स चत्वर उच्यते"। चैत्यान्त -चैत्यसमीपम्, चतुष्पथ-मार्गचतुष्टयसङ्गम, सुरालयो-देवगृहम्, एताश्च नक्त न सेवेत। सूना-वधस्थानम्, अटवी-निर्जनो देश, शून्यगृह-उज्जट भवनम्, श्मशान-पितृवनम्, एतानि दिवाऽपि न सेवेत। अपिशब्देन रात्रौ नितरामसेवनमाह।

आ०र०-रात्रौ द्रुमादिसेवा निषेधति-नक्तमिति। ग्रामाद्बहिर्यत्रोपविश्य ग्राम्या सर्वे कथा कुर्वते, यश्च त्रयाणा पथा सङ्गम, स चत्वर। चैत्यान्त -चैत्यसमीपम्। चतुष्पथ-चतुर्णां पथा सङ्गम। सुरालयो-देवकुलम्।

सूनादिसेवा निषेधति-सूनेति। सूना-वधस्थानम्। अटवी-अरण्यम्। अपिशब्दाद्रात्रावपि न।

**सर्वथेक्षेत नादित्यं, न भारं शिरसा वहेत्।**
**नेक्षेत प्रततं सूक्ष्मं दीप्तामेध्याप्रियाणि च॥ ३९॥**

स०-आदित्य सर्वथा-उद्यन्तमस्त यान्त प्रतिमागतमुपरक्त वा, नेक्षेत। तथा, भारं शिरसा न च वहेन्न नयेत्। प्रतत-अनवरत, सूक्ष्म वस्तु नेक्षेत। दीप्त चामेध्य चाप्रिय च तानि प्रतत नेक्षेत। ननु, तर्हि सर्वथा नेक्षेतेत्यनेन कोऽथ? यतो रविरपि दीप्त, दीप्तग्रहणेनैवास्य दर्शननिषेध सिद्ध। अस्त्वेवतत्। किन्तु सर्वप्रकारमादित्य नेक्षेत। दीप्त त्वनवरत नेक्षेततति।

आ० र०-आदित्यदर्शन निषेधति-सर्वथेति। ननु "नोद्यन्तमस्तमायान्त तपन्त प्रतिमागतम्। उपरक्त च भास्वन्त वाससा वा तिरोहितम्॥" इति सङ्ग्रहे (सू अ. ३)। इह तु सर्वथा, इति विरोध। नैवम्। यो ह्यदृष्टमेव दोष जिहासु, त प्रत्युदयादिनिषेध। यस्तु दृष्टमपि, त प्रति सर्वप्रकारेणेत्यविरोध। पुरस्ताद्दीप्तनिषेधादेव निषेधे सिद्धेऽप्युदयाद्यदीप्तावस्थासु निषेधार्थमिदम्।

शिरसा भारवहन निषेधति-न भारमिति।

प्रततादिदर्शन निषेधति-नेक्षेतेति। प्रतत-विस्फारिताक्षम्, क्रियाविशेषणमिदम्। सूक्ष्म-अणु। दीप्त-तेजस्वि। अमेध्य-अशुचि। अप्रिय-द्विष्टम्।

**मद्यविक्रयसन्धानदानादानानि नाचरेत्।**

स०-विक्रयो-विनिमय, इयत्प्रमाणमधुनेद दीयत इति। सन्धीयते येन तत्सन्धानम्-अनेकद्रव्यसम्भारो येन तत्-मद्य यथावत्प्रमाणेन सन्धीयते। दान-यथाशास्त्र स्वत्वनिवृत्ति परस्वत्वापादानम्। आदान-यथाशास्त्रमेव परस्माद् ग्रहणम्। एतेषा द्वन्द्व। ततो मद्यशब्देन षष्ठीसमास। मद्यविक्रयादीनि नाचरेत्। द्विजविषय चैतद्वाक्यमिति बोध्यम्। सर्वस्य तु निषेधात् क्रयादिव्यवहारोच्छेद स्यात्।

आ० र०-मद्यविक्रयादीनि निषेधति-मद्यविक्रयेति। विक्रयो-मूल्येन दानम्। सन्धान-उत्पादनम्। आदान-प्रतिग्रह। मद्यस्यौषधेषु विधानात् क्रयपानयोरनिषेध।

**पुरोवातातपरजस्तुषारपरुषानिलान्॥ ४०॥**
**अनृजु क्षवथूद्गारकासस्वप्नान्नमैथुनम्।**
**कूलच्छाया नृपद्विष्ट व्यालदंष्ट्रिविषाणिनः॥ ४१॥**
**हीनानार्यातिनिपुणसेवा विग्रहमुत्तमैः।**
**सन्ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम्॥ ४२॥**
**शत्रुसत्रगणाकीर्णगणिकापणिकाशनम्।**
**गात्रवक्त्रनखैर्वाद्यं हस्तकेशावधूननम्॥ ४३॥**
**तोयाग्निपूज्यमध्येन यान धूमं शवाश्रयम्।**
**मद्यातिसक्तिं विश्रम्भस्वातन्त्र्ये स्त्रीषु च त्यजेत्॥ ४४॥**

स०-त्यजेदिति क्रिया वक्ष्यमाणा। पुर शब्दस्य वातातपाभ्या प्रत्येक सम्बन्ध। पुरोवात -पूर्वदिगागतो वात। पुर आतप -पूर्वातप। पुरोवातादीन् पञ्च त्यजेत्। अनृजु-विषमस्थितशरीर, क्षवथ्वादीन् षट् त्यजेत्। अनृज्विति क्रियाविशेषणमिति केचिद्व्याचक्षते। अन्नमत्र शाल्यादि। कूल-वप्र, तच्छाया त्यजेत्। तत्र हि तिष्ठतस्तत्पाताद्भयं स्यात्। नृपद्विष्ट-राज्ञोऽप्रिय, त्यजेत्। व्यालो-दुष्टहस्त्यादि, दंष्ट्रिण -सर्पाद्या, विषाणिनो-गवाद्या, तांस्त्यजेत्। हीना-कुलशीलवित्तादिभिर्न्यूना, अनार्या -असाधव, अतिनिपुणा-अतिगणनापरा, तेषा सेवा त्यजेत्। उत्तमैरिति सहार्थे गम्यमाने तृतीया। उत्तमै सह विग्रह त्यजेत्। सन्ध्यास्वभ्यवहारादीन् पञ्च त्यजेत्। शत्रुसत्रेत्यादि। शत्र्वशन त्यजेत्। सत्र-यज्ञ, तस्याशन त्यजेत्। ऋत्विजादीन् वर्जयित्वा, अन्यस्य हि तदशन निषेधति। तथा हि-"यज्ञान्ते तदुद्भूतपापोपशमनीय प्रायश्चित्त श्रूयते"। गणा -कथकचारणादय, तैराकीर्ण-व्याप्त-

१ 'श्रमात्प्रागेव सर्वचेष्टावर्जन विधत्ते' क ग। २ अस्याग्रे 'असम्मार्जितमादर्शमनुपस्कृतकामिनीम्। रजस्वला च नेक्षेत सदा प्रातरमङ्गलम्' इति, आ पुस्तकेऽधिक श्लोक। ३ 'वध्यस्थानम्' ठ ख.घ। ४ 'यत्र ग्राम्या' क ख ग घ। ५ 'चैत्यान्त' क ग। ६ 'कुल जनपदे गृहे' इति विश्वप्रकाश। ७ 'जलादर्शादिषु प्रतिबिम्बित राहुग्रस्त' इत्यधिक क्वचित्।

१ क्रयो-मूल्येन ग्रहणम्। २ 'कूलच्छाया सुरापान व्याल' इति सङ्ग्रहपाठ। ३ हीनानार्येति श्लोकार्धमरुणदत्तसम्मतम्। ४ विग्रह-कलहम्। 'अस्त्रियां समरानीकरणा कलहविग्रहौ' इत्यमर.। ५ 'तदशननिषेध' ट.। ६ 'शमनाय' ठ.।

मशन त्यजेत् । गणिका-वेश्या, तस्या सम्बन्ध्यशन त्यजेत् । तदशनाद्धि तत्पापसङ्क्रमण स्यात् । पणिक -पणोपजीवी, इतरवणिगित्यर्थ । ( तथा हि ( सङ्ग्रहे सू अ ३ )-"गणारिगणिकासत्रधूर्तानां पणिना न च" इति । ) पणिक इति "नौद्व्यचष्ठन्" इति ठन् । पणिको हि पापीयान्निन्दितपण्यादिविक्रीणान प्रशसतीत्यादिहेतो । गात्रेत्यादि । गात्राणि-अङ्गानि, तैस्तथा वक्रेण नखैश्च वाद्य त्यजेत् । तथा, हस्तावधूनन केशावधूनन च त्यजेत् । ( अवधूनन-कम्पनम् । ) तोयेत्यादि । मध्यशब्द प्रत्येक सम्बध्यते । तोययोर्द्वयोर्मध्येन यान त्यजेत् । न यायादित्यर्थ । एवमग्न्योर्मध्येन । तथा, पूज्ययोर्मध्येन । समासकरणात्तोयाग्न्योस्तोयपूज्ययोरग्निपूज्ययोरपि मध्येन न यायादिति बोद्धव्यम् । तथा धूम, शवाश्रय-शवोद्भूत, त्यजेत् । मद्येत्यादि । मद्येऽतिसक्ति -अतिसेवा,ता त्यजेत् । स्त्रीषु-योषासु, विश्रम्भ-विश्वास, स्वातन्त्र्य च त्यजेत् ।

आ० र०-पुरोवातादीन् निषेधति—पुरोवातेत्यादि । पुरोवात -पूर्वदिग्वायु । आतपो-घर्म । रजो-धूलि । तुषारो-अवश्याय । परुषानिल -चण्डवात । अनृजुरिति क्षवथ्वादिषट्कविषय कर्तृविशेषणम् । अन्न-भोजनम् । कूल-रोध, तस्य छाया । नृपद्विष्टो-राजद्वेष्य । व्यालो-दुष्टगजादि । दंष्ट्री-सर्पादि । विषाणी-महिषादि । सन्ध्यास्वित्यभ्यवहारादिपञ्चकविषयम् । अभ्यवहारो-भोजनम् । स्त्रीशब्देन सम्भोगो लक्ष्यते । चिन्तन- अधीतपरामर्श । शत्र्वादीनामशनम् । शत्रु -वैरी । सत्र-यज्ञ । गणा -बहवो मिलित्वा दातार । आकीर्णो-योग्यायोग्यमविचिन्त्य अन्नदाता । गणिका-वेश्या । आपणिको-वणिक् । गात्रादिभिर्वाद्यम् । वाद्य-शब्दानुकारि । वक्रेण वक्त्रादेर्नखेन वीणादेर्वादन निषेद्धु पृथग्ग्रहणम् । अवधूनन—कम्पनम् । तोययो , अग्न्यो , पूज्ययो., तोयाग्न्यो , तोयपूज्ययो , अग्निपूज्ययोश्च मध्येन यानम् । शवाश्रयो धूमः-प्रेतधूम । मद्यातिसक्ति -मद्यपानरति । स्त्रीष्विति विश्रम्भस्वातन्त्र्यविषयम् । विश्रम्भो-विश्वास ।

**आचार्यः सर्वचेष्टासु लोक एव हि धीमतः ।**
**अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः ॥ ४५ ॥**

स०-हि-यस्मात्, धीमतो-बुद्धियुक्तस्य, सर्वचेष्टासु-निःशेषव्यापारेषु, लोक एवाचार्य -उपदेष्टा, अत -अस्माद्धेतो, तमेव-लोकमेव, लौकिकेऽर्थे परीक्षक पुरुषोऽनुकुर्यात् । यथा लोको व्यवहरति तथा व्यवह्रियादित्यर्थ ।

आ० र०-लोकादेवाचारशिक्षा विधत्ते-आचार्य इति । हि-यस्मात्, धीमत पुरुषस्य सर्वस्य सर्वत्र लोक एवाचार्य -शिक्षक । अतोऽस्मात्तमेवानुकुर्यात् । यथा लोक आचरति तथा आचरेदित्यर्थ । कथम्भूत ? लौकिकेऽर्थे परीक्षक ,-लोके क, किमर्थं, किमाचरतीति परीक्षा कुर्वन् ।

**आर्द्रसन्तानता त्याग कायवाक्चेतसां दमः ।**
**स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ॥ ४६ ॥**

स०-आर्द्रसन्तानता-सर्वसत्त्वेषु कृपालुत्वम् । त्यागो-दानम् । कायवाक्चेतसा त्रयाणा दम -उपशम । परार्थेषु-परप्रयोजनेषु, स्वार्थबुद्धि -यथा अयमेव स्वार्थो य परार्थ, इत्युभयलोकहितत्वम् । इति-एवप्रकार, सद्व्रत पर्याप्तम् । समाप्तमित्यर्थ । सत् शोभन च तद्व्रत च सद्व्रतम् ।

आ०र०-उक्तेषु विहारेषु धर्म विवेचयति-आर्द्रसन्तानतेति । आर्द्र -करुणरसभावितत्वात् त्यक्तकाठिन्य, सन्तान -चित्तवृत्तिपरम्परा, यस्येति आर्द्रसन्तान । तस्य भाव, आर्द्रसन्तानता, परमकारुणिकत्वम् । त्यागो —दानम् । कायादीना दम -तच्चापलनिग्रह । परार्थेषु-परकार्येषु, स्वार्थबुद्धि -स्वार्थवत्तात्पर्यम् । इति-एतच्चतुष्टयम् । पर्याप्त-सम्पूर्णो धर्म । सद्व्रत-सता व्रतमवश्यकर्तव्योऽर्थ ।

**नक्तंदिनानि मे यान्ति कथम्भूतस्य सम्प्रति ।**
**दुःखभाङ्न भवत्येव नित्यं सन्निहितस्मृतिः ॥ ४७ ॥**

स०-नक्तदिनानि-रात्रिदिनानि, सम्प्रति-इदानीं, कथम्भूतस्य-कीदृशस्य सत, मे-मम, यान्ति । एव नित्य सन्निहितस्मृति सन् पुमान् दुःखभाक् न भवति ।

आ० र०-इष्टसाधनत्वकथनद्वारेणाचारावहितत्व विधत्ते-नक्तदिनानीति । किंदेशस्य, किंकालस्य, किंवयस, किंमनस, किंकार्यस्य मम, सम्प्रति नक्तदिनानि यान्तीत्येव सन्निहितस्मृति सन् दुःखभाक् न भवति । अत सर्वदैवावहितेन भवितव्यमित्यर्थ ।

**इत्याचार समासेन यं प्राप्नोति समाचरन् ।**
**आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान् ॥४८॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने दिनचर्या नाम द्वितीयोऽध्यायः ॥ २ ॥**

स०-इति-समाप्तौ । समासेन-सक्षेपेण, तावदयमाचार पूर्वोक्त । य समाचरन्ननुतिष्ठन् ( पुरुष ) आयुरादीन् प्राप्नोति । तथा, लोकान्-भूर्भुव स्व प्रभृतीन्, शाश्वतान्-नित्यान् । ननु, शाश्वतशब्दो न युक्त । यत शश्वच्छब्दस्य कालवाचित्वात् "कालाट्ठञ्" इति ठञ् प्राप्नोति । तथा, "अव्ययाना च

---

१ ( ) एतच्चिह्नान्तर्गत पाठष्ठ पुस्तके नोपलभ्यते । २ 'विचार्यान्न' क ग ञ । 'विविच्यान्न' ज । ३ 'नुकार.' क.ख ग घ झ ञ. । ४ 'लोको-विशिष्टलोक ' इति चन्द्रनन्दन. । ५ 'सर्वस्य' इति क.ग.ञ पुस्तकेषु नोपलभ्यते ।

१ 'को लोक किमर्थ' ख घ झ ञ । 'मर्थं कथमाच' ञ । २ 'व्यवहारेषु' ख घ ज झ । ३ अस्याग्रे 'एव कृत्स्नदिन नीत्वा रात्रौ यामे गृहे गते ( रात्रेर्यामे गते सति । ञ ) । देवानृषीन् गुरून् स्मृत्वा तत शयनमाचरेत् ॥' इति आ ञ पुस्तकयोरधिक श्लोक । ४ 'द्वाराऽवहितत्व' 'द्वारा विचारावहितत्व' क. । ५ 'त्यर्थसिद्धम्' ख.घ.ज.झ.ञ ।

सायम्प्रातिकाद्यर्थमुपसङ्ख्यानम्" इति टिलोपश्च प्राप्नोति। नैतदस्ति। "नस्तद्धिते" इत्यत्र सूत्रे ह्युक्तम्—"शाश्वत इत्यादौ तु टिलोपो नेष्यते। कालादिति योगविभागाच्चाण्" इति। तस्माच्छाश्वतशब्दो न्याय्य एवेति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्ग-
हृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने
द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

आ० र०—अध्यायार्थमुपसंहरति—इतीति। आचारः—शिष्टानुमतो व्यवहारः। समासेनेति धर्मशास्त्रापेक्षया, न त्वायुर्वेदान्तरापेक्षया, न्यूनत्वदोषापत्तेः, विस्तरत्वप्रतिज्ञाभङ्गापत्तेश्च।

आचारफलमाह—यमिति। ऐश्वर्यं—अप्रतिहतशक्तित्वम्। शाश्वतान् लोकान्—विष्णुलोकादीन्। सङ्ग्रहे तु (सू. अ. ३)—"ब्राह्मे मुहूर्ते उत्तिष्ठेत् जीर्णाजीर्णे निरूपयन्। रक्षार्थमायुषः स्वस्थो जातवेगः समुत्सृजेत्॥ उदङ्मुखो मूत्रशकृद्दक्षिणाभिमुखो निशि। वाचं नियम्य प्रयतः सवीताङ्गोऽवगुण्ठितः॥ प्रवर्तयेत्प्रचलितं न तु यत्नादुदीरयेत्। नामेध्यमार्गमृद्भस्मगोस्थानाकीर्णगोमये॥ पुरान्तिकाग्निवल्मीकरथ्योत्कृष्टचितिद्रुमे। न नारीपूज्यगोऽर्केन्दुवाय्वप्नाग्निजलं प्रति॥ न चातिरस्कृत्य महीं, भयाशक्त्योस्तु कामतः। निःशल्यादुष्टमृत्पिण्डीपरिमृष्टमलायनः॥ अभ्युद्धृताभिः शुचिभिर्मृद्भिरद्भिश्च योजयेत्॥ लेपगन्धापहं शौचमनुत्पाततबिन्दुभिः। स्पृष्ट्वा धातून्मलानश्रु वसांकेशनखाश्रयुतान्॥ स्नात्वा भोक्तुमना भुक्त्वा सुप्त्वा क्षुत्त्वा सुरार्चने। रथ्यामाक्रम्य चाचामेदुपविष्ट उदङ्मुखः॥ प्राङ्मुखो वा विविक्तस्थो न बहिर्जानु नान्यदृक्। अजल्पन्नुत्तरासङ्गी स्वच्छैरङ्गुष्ठमूलगैः॥ नोद्धृतैर्नानतो नोर्ध्वैर्नाग्निपक्वैर्न पूतिभिः। न फेनबुद्बुदक्षारैर्नैकहस्तार्पितैर्जलैः॥ नार्द्रैकपाणिर्नामेध्यहस्तपादो न शब्दवत्। लिखेद्दन्तमुखं जिह्वां जिह्वानिर्लेखनेन च। तथाऽस्य मलवैरस्यगन्धा जिह्वास्यदन्तजाः। रुचिवैशद्यलघुता न भवन्ति भवन्ति च॥ प्रणम्य देवान् वृद्धांश्च मङ्गलाष्टशतं शुभम्। शृण्वन् काञ्चनविन्यस्तं सर्पिः पश्येदनन्तरम्॥" (सङ्ग्रहे शा. अ. १२)—"दधिघृतमधुलाजपुष्पाक्षतोदुम्बराश्वत्थमुक्तामणिच्छत्रदूर्वाकुशादर्शकन्याध्वजस्यन्दनाष्टापदाक्षाः, नृपश्रीतरुभद्रपीठानि, सस्यानि, मत्स्याः, हयाः, हंसचाषाः, वृषः, केसरी, दक्षिणावर्तशङ्खाञ्जसिद्धार्थकाः, रोचना, स्वस्तिकस्तोरणं, कीचकाः वैणवः, वरुणमधु, मदासिक्तगण्डो गजः, तोयलम्बोऽम्बुदः, पूर्णकुम्भो, हरिद्राद्रिरिन्द्रः, फलान्याममांस, सितचामरं, गौः सवत्सा, अङ्गना पुत्रिणी, मानुषः वर्धमानः, सहस्रं नराणां, प्रयुक्तानि यानानि, धन्वन्तरिर्वामनो, ब्राह्मणो, भूमिरभ्युद्धृता, सिद्धमन्नं, वराहश्च तोयात्स्थितः, त्रिनयनमधुसूदनस्कन्दपद्मासनाः, लोकपालाः, सुराः, खं, दिशोऽग्निः, सरांसि, स्वयम्भूः, समुद्राः, मखाः, मारुतो, ज्योतिषं, धर्मशास्त्राणि, तीर्थानि, काव्यं, धर्मार्थकामामृतं, वालखिल्यादयो, वेदवाक्यं, निधिः, कौस्तुभः, काञ्चनं, माणिभद्रः, सुमेरुः, प्रियङ्गुः, प्रदीपो, वचा, मोदको, दितिरदितिररुन्धती, बुद्धिः, सावित्र्युमाऽऽकाशगङ्गा, शची, देवसेना, सुधा, शान्तिर्लक्ष्मी, सरस्वत्यपत्यं, क्षमा, स्वस्तिशब्दो, वषट्कारः, ओंकारपुण्याहधर्मक्रियाश्चेतदष्टोत्तरं मङ्गलानां शतं दर्शनात्स्पर्शनात्कीर्तनाच्चाशुभानि व्यपोह्यार्थसिद्धिं दिशन्त्युत्तमाम्"। अष्टापदः—शारिफलम्। अक्षः—पाशकः। वरुणमधु—वारुणी सुरा। (सङ्ग्रहे सू. अ. ३)—"गन्धमाल्यादिकं वृष्यमलक्ष्मीघ्नं प्रसाधनम्। वासो न धारयेज्जीर्णं मलिनं रक्तमुल्बणम्॥ माल्यं न लम्बं न बहिर्न रक्तं जलजादृते। नैव चान्येन विधृतं वस्त्रं पुष्पमुपानहौ॥ उत्तिष्ठेत ततोऽत्यर्थमर्थेष्वर्थानुबन्धिषु। निन्दितं दीर्घमप्यायुरसन्निहितसाधनम्। कृषिं वणिज्यां गोरक्षामुपायैर्गुणिनं नृपम्। लोकद्वयाविरुद्धां च धर्मार्थी संश्रयेत्क्रियाम्॥ मुक्तवेगस्तु गमनस्वप्नाहारसभास्त्रियः। पाणिनाऽऽलभ्य निष्क्रामेद्गृहात्पूज्यान्यमङ्गलम्॥ प्रावृत्य पर्यटेद्रात्रौ न प्रावृत्य शिरोऽहनि। मध्याह्ने सन्ध्ययो रात्रावर्धरात्रे चतुष्पथम्॥ न सेवेत, न

१ 'न्यूनत्वे' क ग। २ 'विस्तरत्व' क ग। 'विस्तरदोषापत्तेश्च' घ। ३ 'जीर्णाजीर्ण' स स। ४ 'प्रयत—अनन्यकार्यः' इतीन्दुः। ५ अवगुण्ठित—आच्छादितशिराः। ६ 'रथ्याकृष्ट' क ग ज ञ। ७ 'उत्कृष्टं—हललिखितं। चिता—कृताग्निचयः।' इतीन्दुः। ८ 'नदीपूज्य' ख घ ङ। ९ 'चापरिष्कृत्य' क ग। १० 'दृशाकेश' ख घ ङ। 'दृश केश' स मू। ११ 'नोऽन्यदृक्' ज। १२ उत्तरासङ्गी—गृहीतोत्तरीयः। १३ 'नोर्ध्वो' क.ग.ज। १४ 'दन्तमुखं' ख घ.।

१ 'दूर्वाङ्कुशा' क ग ङ ज। 'दूर्वाङ्कुरा' ख घ स स। २ 'श्रीतरुः—बिल्ववृक्षः। भद्रपीठं—देवासनं चतुष्कोणम्।' इतीन्दुः। ३ 'दक्षिणावर्तशङ्खस्तु यस्य सद्मनि तिष्ठति। मङ्गलानि प्रवर्तन्ते तस्य लक्ष्मीः स्वयंवरा' इत्यनूपावनेके। ४ 'स्वस्तिकं तोरणं' क ग। ५ 'वरवधूर्मदमिक्त' स स। 'वरवधूः—उत्तमा स्त्री' इतीन्दुः। ६ 'हरिद्राग्निरिन्द्रः' स स। 'हरिद्रा फलान्याम' क.ग। 'हरिद्रा' इति नास्ति ख घ ङ ञ पुस्तकेषु। ७ 'न्याद्रमांस' स र। ८ 'वर्धमानं—अलङ्कारविशेषः' इतीन्दुः। ९ 'काव्यं' इति नास्ति क ख ग घ ङ.झ ञ पुस्तकेषु। १० 'कामाश्रित' स.मू। ११ 'विधिः' ग। १२ 'ऋद्धिः' स.स.। १३ 'स्वधा' स स ज ञ। 'स्वधा पितॄणाम्' इतीन्दुः। १४ 'सरस्वतक्षमाला स्वस्ति' क.ग.ज ञ। 'सरस्वत्यपत्यक्षमा' ख.घ.ङ स.मू। 'अपत्यं स्वस्य। क्षमा धर्मस्य' इतीन्दुः। १५ प्रसाधनं—अलङ्करणम्। १६ अर्थानुबन्धिषु—वित्तहेतुषु कार्येषु। १७ 'असन्निहितसाधनं—दारिद्र्ययुक्तम्' इतीन्दुः। १८ 'धर्मार्थी' ग.।

शर्वर्यां वृक्षचैत्यान्तश्चत्वरम् । न हुङ्कुर्याच्छवं[1], पूज्य प्रशस्ता न्मङ्गलानि च ॥ नापसव्यं परिक्रामेन्नेतराण्यनुदक्षिणम्[2] । चतुष्पथं[3] नमस्कुर्यादविज्ञाताश्च[4] वनस्पतीन् ॥ न व्यालव्याधि[5] ताशस्तैर्नादान्तक्षुत्पिपासितैः[6] । न छिन्नपुच्छैर्नैकाक्षैर्गोपृष्ठेन च न व्रजेत् ॥ नातिप्रगेऽतिसायं[7] वा, न नभोमध्यगे रवौ । नासन्निहितपानीयो नातितूर्णं न सन्ततम् ॥ न शत्रुणा नाविदितैर्नैको नाधार्मिकैः सह । दद्याद्वर्त्मार्तवृद्धस्त्रीभारि चक्रिद्विजन्मने ॥ चक्री-रथी । स्नानभोजनपानानि बाह्येभ्यो[8] नाचरेत्पुर । (*निपातयेन्न लोष्टेन न फलेन फलं द्रुमात् ॥ न वार्यमाणः प्रविशेन्नाद्वारेण न चासने । स्वयं तिष्ठेत् परगृहे, युक्तनिद्रं न बोधयेत् ॥ नाचरेत् पाणिवाक्पाददण्डोद्वोदरचापलम् । त्रि पक्षस्य कचश्मश्रुनखरोमाणि कर्तयेत् ॥ न स्वहस्तेन दन्तैर्वा, स्नानं चानु समाचरेत् । ) स्नानोदकावतरणे[10] स्वप्नं नग्नो न चाचरेत् ॥ पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिणि । नात्मानमीक्षेत जले न तटस्थो जलाशयम् ॥ न प्रतिस्फालयेदम्बु पाणिना चरणेन वा । स्नात्वा न मृज्याद्गात्राणि[11] धुनुयान्न शिरोरुहान् ॥ निवसीतार्द्र[12] एवाशु स्रोष्णीषे धौतवाससी । न त्वम्बरं पूर्वधृतं न च तैलवसे स्पृशेत् ॥ वासोऽन्यदन्यच्छयने निर्गमे देवतार्चने । धर्मोत्तराभिरर्थ्याभिः[13] कथाभिस्त्रिगुणात्मभिः ॥ मध्यं दिनस्य गमयेदिष्टशिष्टसहायवान् । न लोकभूपविद्विष्टैः[14] सङ्गच्छेत न नास्तिकैः ॥ कलिर्वैरुरुचिर्न स्याद्धीर सम्पद्विपत्तिषु । श्रुताद‌न्यत्र सन्तुष्टस्तत्रैव[15] च कुतूहली ॥ क्षान्तिमान् दक्षिणो दक्षः सुसमीक्षितकार्यकृत्[16] । ह्रीमान् धीमान् महोत्साहः सविभागी प्रियातिथिः[17] ॥ अक्षुद्रवृत्तिर्गम्भीरः साधुराश्रितवत्सलः । (*दाता पितृभ्यः पिण्डस्य यष्टा होता कृपात्मकः ॥ अनुज्ञाता[18] सुवार्तानां दीनानामनुकम्पकः । आश्वासकारी भीतानां क्रुद्धानामनुनायकः ॥ ) वित्तबन्धुवयोविद्यावृत्तैः पूज्या यथोत्तरम् । आत्मद्रुहममर्याद मूढमुज्झितसत्पथम् । सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम् ॥ परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत् । अन्यत्र पुत्राच्छिष्याद्वा शासनार्थं द्विता-शय ॥ नृत्यवादित्रगीतादिषूल्वणा नाचरेत्क्रियाम्[3] । (*प्रसिद्धकेशवाग्वेषशमसान्त्वपरायणः । ) ऊर्ध्वं नाभेः शरीरस्य स्पृशेन्नावरवाससा ॥ न कुर्यान्मिथुनीभूय शौचं प्रति विलम्बनम् । पाणिद्वयेन युगपत्कण्डूयेन्नात्मनः शिरः ॥ (*वहेन्न भारं शिरसा युगपच्चाग्निवारिणी । ) पादं पादेन नाक्रामेन्न कण्डूयेन्न शोधयेत्[4] । न कांस्यभाजने तौ च नोपविष्टः प्रसारयेत्[5] ॥ नासमिद्धमुपासीत[6] हुताशं नैव चाशुचिः । नानुद्रान्तो[7] न विवृतो न क्लान्तो नान्यमानसः ॥ धर्मेणास्येन न स्कन्देन्नाध कुर्यान्न पादतः । न स्कन्देत्–न विकिरेत् । सततं न निरीक्षेत चलसूक्ष्माप्रियाणि च ॥ नाप्रशस्तं न विण्मूत्रं न दर्पणममार्जितम् । नान्यदप्यतितेजस्वि न क्रुद्धस्य गुरोर्मुखम् ॥ स्त्रीं न स्रवन्तीं[8] नोदक्यां न नग्नां नान्यसङ्गताम् । न पत्नीं भोजनस्वप्नक्षुतजृम्भासुखासने[9] ॥ शयीत नैकशयने न चाश्नीयात्तया[10] सह । तामनीर्ष्यश्च गोपायेत् स्वैरिणीं नाधिवासयेत् ॥ नोच्छिष्टस्ताडकाराहुतुहिनांशुदिवाकरान् । पश्येन्न यायान्न पठेन्न स्वप्यान्न स्पृशेच्छिर ॥ पाययन्तीं चरन्तीं वा नान्यस्मै गां निवेदयेत् । अर्केन्दुपरिवेषोल्काशतक्रतुधनूंषि च ॥ नान्यदेवार्चने कुर्यात्कर्म, धावेन्न वर्षति । तिथिं पक्षस्य न ब्रूयान्नक्षत्राणि न निर्दिशेत् ॥ नात्मनो जन्मलग्नर्क्षधनसारं गृहे[12] मलम् । सशब्दमनिलं हस्तभ्रूनेत्रोत्क्षेपणं[13] त्यजेत् ॥ हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः । आरोग्यजीवितैश्वर्यविद्यासुस्थितिमानिताम्[14] ॥ नैकाहमप्यधिवसेद्वास्तु तच्छास्त्रगर्हितम् । न देशं व्याधिबहुलं नावैद्यं नाप्यनायकम् ॥ नाधर्मिजनभूयिष्ठं नोपसृष्टं न पर्वतम् । वसेत् प्राज्याम्बुभैषज्यसमित्पुष्पतृणेन्धने ॥ सुभिक्षक्षेमतारोग्यपण्डितैर्मण्डिते[15] पुरे । नामराणां न सिद्धानां शास्त्राणां[16] वा जुगुप्सकः[17] ॥ आराधकस्त्रिवर्गस्य यथायोग्यं[18] जनस्य च ।

---

१ 'र्याच्छिव' क ख ग घ ज ञ । २ 'ण्यपि दक्षिणम्' क ग ज ञ । ३ चतुष्पथ–ब्राह्मणम् । 'चतुष्पथं चतुर्मार्गसङ्गमे ब्राह्मणेऽपि ना' इति मेदिनी । ४ 'र्याद्विज्ञाता' क ग ञ । ५ व्याल –शठ । ६ 'र्नादान्तैः क्षु' क ग । ७ 'नातिप्रातर्निशायां च' ग ञ । 'गे निशाया च' क ज । ८ 'वाह्येभ्यो' इतीन्दु सम्मत पाठ । तट्टीका च 'वाह्येभ्य पुर स्नानादिक नाचरेत् । पूर्वं स्ववाहानश्वादीन् स्नपयेत् भोजयेत् पाययेच्च पश्चात्स्वयं स्नायात् भुञ्जीत चेत्यर्थ ' इति । एतद्द्वयमपि बुधैश्चिन्त्यम् । *९ ( ) एतच्चिह्नान्तर्गताः सङ्ग्रहश्लोका लिखितमुद्रितेषु केषुचिदपि हेमाद्रिटीकापुस्तकेषु नोपलभ्यन्ते । १० 'तरणस्वप्नमज्ञा' क ग झ ञ । ११ 'मृज्याद्वा' ख घ झ । १२ 'न वसीता' क स मू । निवसीत–परिदध्यात् । १३ 'रर्च्याभि.' क ग । १४ 'भूपतिद्विष्टैः' क ग. । १५ 'स्तथैव' ख घ झ । १६ 'कार्यवान्' क ग ज । १७ 'प्रियादिभि ' क । १८ 'अनुयाता शुचार्तानां' इति पाठान्तरम् ।

१ 'मप्युपेक्षेत' ख घ झ । 'मभ्युपेक्षेत' क । २ 'ताद्यत.' ज । 'ताय स ' स मू । ३ 'दिनोल्वणा' क ख घ झ । 'दिनोल्वणामाचरे' स स ञ । ४ 'शोधयेत्' क.ग ज । ५ 'प्रमाधयेत्' ज । ६ 'नि समिधमु' ख घ झ । ७ 'नानुद्गान्तो न उद्धृत्तो न' ख घ । ८ स्रवन्ती–मूत्रयमाणाम् । ९ 'भोजने स्वप्ने क्षुतजृम्भासुखासने' ख घ झ । 'क्षुतजृम्भा' क ग । 'जृम्भादुरासने'म स । 'न पानभोजन' स मू । १० 'यात्स्त्रिया' क ग ज ञ । ११ 'रिणीं नाशयेद्गृहम्' ख घ ज झ । 'रिणीं वामयेद्गृहे' क ग ज । १२ गृहे मल–गृहच्छिद्रम् । १३ 'त्क्षेपवादिताम्' स २ । १४ 'स्थिरमा' स म । १५ 'क्षेमरम्यान्ते पण्डि' ख घ ज झ । १६ 'नरामराणां सिद्धानां शास्त्राणां चाजुगुप्सकः ' ख घ ज झ ञ स २ । १७ जुगुप्सक –निन्दक । १८ 'योग धनस्य' क.ख.ग झ । 'योग ज' घ,ज ञ. ।

देश[1] कर्मपथान् रक्षन् जयेदाभ्यन्तरानरीन् ॥ परोपघातक्रियया वर्जयेदर्जन[2] श्रिय । अर्थाना[3] बहूनर्थानामदाताऽपि ह्यसम्भवात् ॥ स्वर्गापवर्गविभवानयत्नेनाधितिष्ठति । साय भुक्त्वा लघु हित समाहितमना शुचि ॥ शास्तारमनुस्मृत्य शर्वर्या[4] चात्र सविशेत् । देशे शुचावनाकीर्णे द्वित्रासपरिचारक ॥ युक्तोपधान स्वास्तीर्णं विस्तीर्णाविषम सुखम् । जानुतुल्य मृदु शुभ सेवेत शयनासनम् ॥ प्राग्दक्षिणशिरा पादावकुर्वाणो गुरून् प्रति[5] । पूर्वापरनिशाभागे धर्ममेवानुचिन्तयन्[6] ॥ आददीत सदा देहादित्थ सारमसारत । बिभ्यत्प्रतिक्षण मृत्योरयथातथचेष्टितात् ॥ आरोग्यविभवप्रज्ञावयोधर्मक्रियावत । सुखमायुर्हित चोक्त विपरीत विपर्यये ॥ सर्वतेजोनिधान हि नृप इत्युच्यते भुवि । अदूषयन्मनस्तस्मा द्भक्तिमास्तमुपाचरेत्[7] ॥ पर्यस्तिको[8]पाश्रयकोपहासविवादनिष्ठीवनजृम्भणानि । सर्वा प्रकृत्यभ्यधिकाश्च चेष्टास्तत्सन्निधाने परिवर्जयेच्च[9] ॥ सर्वावस्था[10] विविधाश्च तास्ता सम्यक् समीक्ष्यात्महित विदध्यात् । अन्योऽपि य कश्चिदिहास्ति मार्गो हितोपदेशेषु भजेत त च ॥" इति । इत्यबद्धक्रमा विहारा ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
दिनचर्याप्रकरण सामस्त्येन निरूपितम् ॥ २ ॥



## तृतीयोऽध्यायः ।

**स०**–दिनचर्याध्यायानन्तरमृतुचर्याध्यायस्य उपोद्घात । पूर्वाध्याये सामान्येन दिन[11]चर्योपदिष्टा । ऋतुविशेषवशाच्चाहारविहारसेवनप्रतिपादनार्थमृतुचर्याया आरम्भ इत्याह—

**अथात ऋतुचर्या[12]ध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

(गद्यसूत्रे ॥ २ ॥)

**स०**–पूर्ववद्व्याख्येयम् ।

**आ० र०**–ऋतुचर्याध्याय व्याख्यातु प्रतिजानीते–अथेति । यत पूर्वाध्याये दैनन्दिनो विहार[1] उक्त । आर्तवो वक्तव्य । स चास्मिन्नध्याये । अत एवायमृतुचर्याख्य ।

अथ क ऋतव ? इत्याह—

**मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः ।**
**शिशिरोऽथ[2] वसन्तश्च ग्रीष्मो वर्षाशरद्धिमाः ॥१॥**
**शिशिराद्यास्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।**
**आदानं च, तदादत्ते नृणां प्रतिदिनं बलम् ॥ २ ॥**

**स०**–मासैरित्यादिना कालोपवर्णनमाह । ननु, कालोपवर्णन दिनचर्याया कस्मान्न कृतम् ? उच्यते । ऋतुगौरवो[3]द्भावनार्थम् । ऋतवो हि विशेषेणोपयोगिन, विप्रतिपत्तेश्च[4] । यथा–एके चातुर्मासिकमृतु कृत्वा शीतोष्णवृष्टिलक्षणान् हेमन्तग्रीष्मवर्षाख्यास्त्रीनृतूनिच्छन्ति । अपरे तु द्विमासिकान् शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्तलक्षणान षडतूनिति । द्वे सख्ये येषा ते द्विसख्या, तैर्द्विसख्यै । माघ आद्यो येषा फाल्गुनादीना त एवम् । तैर्द्विसख्यैर्माघाद्यैर्मासै क्रमात्–परिपाट्या षडृतव स्मृता । के ते ? इत्याह–शिशिराद्या,–शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ता । उपचारादेव[5] षट्त्वे लब्धे षड्ग्रहण परमतक्षेपार्थम् । तथा हि–केचित् त्रय एव ऋतव इति मन्यन्ते । तत्तु ऋतुभिस्त्रिभि शिशिरादिभिरुत्तरायण विद्यात्–जानीयात् । अयनमुत्तरं–सवितुरुत्तरमार्गप्रतिपत्ति, उत्तरायणम् आदान जानीयात् । आदानमिति चान्वर्थ[6] नाम इति प्रतिपादयति । तदा–तस्मिन् काले, नृणा प्रतिदिन–अन्वह, बलमादत्ते–सार गृह्णाति । कोऽसौ ? प्रकृतत्वादादित्य ।

**आ० र०**–तत्र ऋतविशेषान् लक्षयति–मासैरिति । द्विसख्यैरिति षट्कृत्वा आवर्त्यैकशेष कर्तव्य । तत्र माघफाल्गुनौ–शिशिर, चैत्रवैशाखौ–वसन्त, ज्येष्ठाषाढौ–ग्रीष्म, श्रावणभाद्रपदौ–वर्षा, आश्विनकार्तिकौ–शरत्, मार्गशीर्षपौषौ–हेमन्त । ननु, सुश्रुतेन भाद्रपदाद्यैर्वर्षादय ऋतव उक्ता । तद्यथा (सु सू अ ६।१०)–"भाद्रपदाश्वयुजौ–वर्षा, कार्तिकमार्गशीर्षौ–शरत्, पौषमाघौ–हेमन्त, फाल्गुनचैत्रौ–वसन्त, वैशाखज्येष्ठौ–ग्रीष्म, आषाढश्रावणौ–प्रावृट्" इति । इह त्वन्यथेति विरोध । मैवम् । न हि फाल्गुनचैत्रौ–वसन्त, नापि चैत्रवैशाखौ । किन्तु मीनमेषौ । यदा फाल्गुनादौ मीनसङ्क्रान्तिस्तदा फाल्गुनचैत्रौ–वसन्त, यदा तु फाल्गुनान्ते तदा चैत्रवैशाखौ । एव वृषमिथुनौ–ग्रीष्म, कर्कटसिंहौ–वर्षा, कन्यातुले–शरत्, वृश्चिकधनुषी–हेमन्त, मकरकुम्भौ–शिशिर, इति । उक्त

१ 'देशधर्म' घ । 'रक्षेत् जयलाभ्य' ख घ ङ । 'जयन्नभ्य' स स । २ अर्जन–सम्पादनम् । ३ 'धर्मलब्धानाम' स स । ४ 'स्वशय्या' क ग ज । 'स्वचर्या' ङ स म । ५ 'परदिशो भागे' स.स । ६ 'चिन्तयेत्' क ग ञ । ७ 'मान्नमुपा' क ग ञ । ८ 'पर्यङ्किको' क ग ज ञ । ९ 'परिवर्जयीत' क ग । १० 'सर्वा ह्यवस्था' क ज ञ । ११ 'दिन' इति नास्ति ट पुस्तके । १२ इयमृतुचर्या चरके सू ६ अध्याये वि० ८ अध्याये च, सुश्रुते सू ६ अध्याये चि २४ अध्याये उ ६४ अध्याये च, अष्टाङ्गसङ्ग्रहे सू ४ अध्याये च वर्णिताऽस्ति ।

१ 'विहार । इह त्वार्तव । अत' ख घ ङ. । २ 'शिशिरोऽथ' इत श्लोकार्ध प्रक्षिप्त प्रतिभाति, तस्य सर्वैरपि टीकाकारैरव्याख्यातत्वात् 'शिशिराद्या' इति पदेन पुनरुक्तत्वात् प्राचीनलिखितठ पुस्तकेऽनुपलब्धत्वाच्च । ३ 'गौरवोत्पादनार्थम्' ट । ४ 'विप्रतिपत्तिश्च' ट. । ५ 'उपादानादेव' ट. । ६ 'चान्वर्थतामिति' ठ. ।

च ज्योतिःशास्त्रे–"मृगादिराशिद्वयभानुभोगात् षडर्तवः स्युः शिशिरो वसन्तः। ग्रीष्मश्च वर्षाश्च शरच्च तद्वद्धेमन्तनामा कथितोऽत्र षष्ठः ॥" वर्षायनर्तुयुगपूर्वकमत्र सौरादिति च। सौरश्च मासस्तत्रैवोक्तः–"दर्शावधिं मासमुशन्ति चान्द्रं, सौरं तथा भास्करराशिभोगात्। त्रिंशद्दिनं सावनसञ्ज्ञमार्या, नाक्षत्रमिन्दोर्भगणभ्रमाच्च ।" इति। अवश्यं चैवमङ्गीकर्तव्यम्, अन्यथा अधिमासनिपाते मासत्रयमृतुः स्यात्। सङ्ग्रहे तु (सू. अ. ४)–"मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयम्। यथोत्तरं भजेच्चर्यां तत्र तस्य बलादिति" इति। मासलक्षणाद्राशिलक्षणं बलवत्, अतो राशिलक्षणमेवाङ्गीकृतम्, स्वरूपलक्षणस्य ऋतुविपर्ययपर्यवसानात्। उक्तं हि तत्रैव (सङ्ग्रहे सू. अ. ४)–"ऋतुष्वेव विधेष्वेव विधिः स्वास्थ्याय देहिनाम्। निर्दिश्यतेऽन्यरूपेषु विरुद्धज्ञानिको विधिः ॥" इति। तस्माच्छिशिरषट्कप्रावृट्षट्कयोः सञ्ज्ञामात्रेणैव भेदः। सञ्ज्ञाभेदं च देशभेदेनाह काश्यपः–"भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे तटे। अतः प्रावृट् च वर्षाश्च ऋतू तत्र प्रकल्पितौ ॥ तस्या एवोत्तरे देशे हिमवद्विन्ध्यसङ्कुले। भूयः शीतमतस्तत्र हेमन्तशिशिरावुभौ ॥" इति। दक्षिणदेशीयैर्वृष्टिसम्बन्धिनोर्द्वयोः प्रावृड्वर्षाख्यत्वं कृत्वा, पारिशेष्याच्छीतसम्बन्धिनोर्द्वयोः शरद्धेमन्ताख्यत्वं कृतम्। उत्तरदेशीयैस्तु शीतसम्बन्धिनोर्द्वयोर्हेमन्तशिशिराख्यत्वं कृत्वा, पारिशेष्याद्वृष्टिसम्बन्धिनोर्द्वयोः वर्षाशरत्सञ्ज्ञत्वं कृतमित्यर्थः। वृष्टिशीतबाहुल्योपन्यासस्त्वान्वर्थसञ्ज्ञार्थं, न च सञ्ज्ञासङ्करे लक्षणसङ्करः, दोषाणां दोषधातुमलसञ्ज्ञावत्। अन्ये पुनर्भेदं मन्वाना अन्नरसान् बलं चाधिकृत्य शिशिरषट्कम्, चयादीन् शोधनं चाधिकृत्य प्रावृट्षट्कम्, इति व्यवस्थापयन्ति। तदसत्। चरकखारणादिप्रभृतिभिः शिशिरषट्कमेवाधिकृत्य चयादीनामुक्तत्वात्। शोधनस्य तु चैत्रश्रावणकार्तिकेषु विधानान्न ऋत्वपेक्षा। ऋत्वपेक्षायामपि साधारणर्तूनां शिशिरषट्केऽपि विद्यमानत्वान्न प्रावृट्षट्कापेक्षा। अन्ये तु गङ्गाया दक्षिणे वृष्टिबाहुल्यात् प्रावृट्षट्कम्, उत्तरे शीतबाहुल्यात् शिशिरषट्कम्, इति व्यवस्थापयन्ति। तदप्यसत्। उभयत्रापि चातुर्मासिकवृष्टिशीतोपलम्भात्, आश्विने दिव्योदकग्रहणस्योभयदेशविषयत्वाच्च। भेदपक्षे ह्युत्तरदेशे तदनार्तवं स्यात्। यत्तु सुश्रुतस्य (उ. अ. ६४।४५)–"तापात्यये हिता नित्यम्" इत्यादि, वर्षाचर्यायाः पृथक् प्रावृट्चर्याभिधानं, तदतिदुर्दिनविषयम्। तथा च चरकः (सू. अ. ६।३६)–"व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि। विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये ॥" इति। अत एव सुश्रुतेन तापात्ययशब्दः प्रयुक्तः। तापस्य–अर्कप्रकाशस्य, अत्ययः–अत्यन्तापगमः, स चातिदुर्दिन एव, इति सर्वं समञ्जसम्। तस्माद्वाग्भटाचार्याभिमतमभेदपक्षमेवाश्रयध्वमिति।

प्रथमर्तुत्रयस्य सञ्ज्ञाद्वयमाह–त्रिभिरिति। तैः–शिशिराद्यैस्त्रिभिः, उत्तरायणमादानं च विद्यात्।

आदानसञ्ज्ञां निर्वक्ति–तदादत्त इति। तत्–शिशिरादित्रयं, नृणां प्रतिदिनं बलमादत्ते, इति आदानम्। बलविसर्गं प्रति सौम्यत्वस्य हेतुत्वेनोपादानात् बलादानं प्रति आग्नेयत्वस्य हेतुत्वं ज्ञेयम्।

कया युक्त्या बलमादत्ते? इत्याह–

**तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा मार्गस्वभावतः। आदित्यपवनाः सौम्यान् क्षपयन्ति गुणान् भुवः॥३॥ तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात्। तस्मादादानमाग्नेयम्**

**स०**–आदित्यश्च पवनाश्चादित्यपवनाः, ते तस्मिन् काले यस्मात्सौम्यान्गुणान्भुवः सम्बन्धिनः क्षपयन्ति–विनाशयन्ति। कीदृशास्ते? अत्यर्थ–अतिशयेन तीक्ष्णाश्चोष्णाश्च रूक्षाश्चात्यर्थतीक्ष्णोष्णरूक्षाः। कस्मादेवंविधास्ते? इत्याह–मार्गस्वभावतः,–वर्त्मस्वाभाव्यात्। न च स्वभावः पर्यनुयोगमर्हति। मार्गः–उष्णांशोरुत्तरदिग्गमनम्। यतश्चादित्यपवना रूक्षास्ततस्तिक्तादयो रसा बलिनो भवन्ति। क्रमादित्यनेन यथासङ्ख्यमत्र बोधयति। तेन तिक्तः शिशिरे, वसन्ते कषायो, ग्रीष्मे कटुकः, बलीत्यवतिष्ठते, न सर्वे तिक्तादयः एकैकस्मिन्नृताविति। तिक्त इत्याद्यसमासकरणं ज्ञापनार्थम्। तिक्तादिरेकको बली भवति। द्वौ तु स्वप्रमाणावस्थितौ। नैवतौ पृथग्भूय तिक्तादेर्बलवत्त्वमित्यर्थः। यत एव भूमेः सौम्यगुणहानिर्वर्धनं च रूक्षाणां रसानाम्, तस्मात्कारणादादानमाग्नेयम्।

**आ० र०**–आग्नेयत्वे हेतुमाह–तस्मिन्निति। हि–यस्मात्, तस्मिन्काले, भुवः सौम्यान् गुणानादित्यपवनाः क्षपयन्ति। नन्वादित्यपवनाः सर्वदा सन्तोऽपि तदैव कुतः क्षपयन्ति? इत्यत आह–अत्यर्थतीक्ष्णोष्णरूक्षाः, मन्दादिसौम्यगुणविपरीततीक्ष्णादिगुणोद्रेकादित्यर्थः। तदैवैवं कुतः? इत्याह–मार्गस्वभावतः,–मार्गस्वभावाभ्याम्। स्वभावः प्रकृतत्वात्कालस्य। उक्तं हि सङ्ग्रहे (सू. अ. ४)–"कालस्वभावमार्गपरिगृहीतः" इति। मार्गो–मकरादिराशिपरिच्छिन्न आकाशभागः। यतश्चात्र–अस्मिन्काले, तिक्तादयो रसा बलिनः, क्रमादिति यथासङ्ख्येनोत्तरोत्तराश्च। तेन शिशिरे तिक्तो बली, ततोऽपि वसन्ते कषायः, ततोऽपि ग्रीष्मे कटुकः इति। तस्मादिति आग्नेयगुणैर्विपरीतानां सौम्यगुणानां हानेस्तुल्यगुणानां तिक्तादीनां वृद्धेश्चादानमाग्नेयम्।

---

१ 'षड्चर्तवः' क ख घ झ ञ। २ 'राशिचारात्' क ख ग ङ ज झ ञ। ३ 'मासपक्षे' क ग ज ञ। ४ 'स्वास्थ्ये च' स. २। ५ 'अन्न' इति क.ग.ञ.पुस्तकेषु नोपलभ्यते।

१ 'इति तदादानम्' क ग ञ। 'इत्यतः' ख घ झ। २ पर्यनुयोगः–परिपृच्छा। ३ 'कटुको व्यवतिष्ठते' ठ.। ४ 'गुणविप' ज.।

ऋतवो दक्षिणायनम् ॥ ४ ॥
वर्षादयो विसर्गश्च

स०–त्रयो वर्षादय ऋतवो दक्षिणायन भगवतो दिवाकरस्य दक्षिणदिग्गमनम्। स च कालो विसर्गाख्य ।

आ० र०–द्वितीयर्तुत्रयस्य सञ्ज्ञाद्वयमाह–ऋतव इति । वर्षादयस्त्रय ऋतवो दक्षिणायन विसर्गश्चोच्यते ।

यद्बल विसृजत्ययम्।
सौम्यत्वादत्र सोमो हि बलवान् हीयते रवि· ॥५॥
मेघवृष्ट्यनिलै· शीतै· शान्ततापे महीतले ।
स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसा· ॥ ६ ॥

स०–यत्–यस्मात्, बलमय कालो विसृजति–ददाति दक्षिणायनाख्य, तस्माद्विसर्गोऽन्वर्थसञ्ज्ञ काल । हि–यस्मात्, अत्र–विसर्गाख्ये काले, सौम्यत्वात् सोमभूयिष्ठत्वात्, सोमो बलवान्, तदाश्रितरात्रिवृद्धिदर्शनात्। हीयते रवि –तदाश्रितदिनहान्युपलब्धेर्हीनशक्ति सम्पद्यते। कदा? महीतले–भूपृष्ठे, शान्ततापे सति। कै ?मेघवृष्ट्यनिलै शीतै । शीतैरित्युपलक्षणार्थम्, विसर्गकालत्वान्मृदुभि स्निग्धैरपीति। अत एव स्निग्धा रसा अम्ललवणमधुरा बलिनो भवन्ति। अत्रापि क्रमादित्यनुवर्तते। पूर्ववच्च व्याख्येयम्।

आ० र०–विसर्गसञ्ज्ञा निर्वक्ति–यद्बलमिति । यत्–यस्मात्, अय काल सौम्यत्वाद्धेतोर्बल विसृजति–ददाति, अतो विसर्गाख्य ।

सौम्यत्वे हेतुमाह–अत्र सोम इति। हि–यस्मात्, अत्र–अस्मिन् काले मार्गे च, तद्वशात्सोमो बलवान् भवति। रविश्च हीयते–त्यज्यते, प्रकृतत्वाद्बलेन। न केवल कालमार्गवशात्, किन्तु शीतैर्मेघवृष्ट्यनिलैश्च । वृष्ट्या विनाऽपि छायाया एव कारणत्वान्मेघाना पृथग्ग्रहणम्। तथा, इह–अस्मिन् काले, अम्लाद्या स्निग्धा रसा बलिनो भवन्ति। कस्मिन्सति? तैरेव मेघाद्यै शान्ततापे महीतले सति। आदाने ह्यादित्यपवनतापितायां भुवि सौम्यगुणक्षयाद्रूक्षा रसा बलिन आसन्। विसर्गे पुन शान्ततापाया भुवि सौम्यगुणलाभात् स्निग्धा रसा बलिन इत्यर्थ । चकारेण क्रमादित्यनुकृष्यते। तेन वर्षास्वम्लो बली, ततोऽपि शरदि लवण, ततोऽपि हेमन्ते मधुर इति सिद्धम्। सोमवृद्ध्या, सूर्यहान्या, स्निग्धरसबलित्वेन च विसर्गस्य सौम्यत्वमिति वाक्यार्थ । कालमार्गयो कारणत्व सङ्ग्रहेऽप्युक्तम् ( सू अ ४ )–"कालमार्गमेघवातवर्षाभिहतप्रतापे दक्षिणायनगेऽर्के शशिनि चाव्याहतबले" इति। मार्गोऽत्र कर्कटादिराशिषट्कपरिच्छिन्न आकाशभाग ।

शीतेऽग्र्यं वृष्टिघर्मेऽल्प बलं मध्यं तु शेषयोः।

स०–शीतस्वभावे काले हेमन्तशिशिराख्ये नृणामग्र्य बलं भवति। वृष्टिश्च घर्मश्च तस्मिन्वृष्टिघर्मे,– वर्षाग्रीष्माख्ये कालेऽल्पम् । तुरवधारणे। शेषयो –शरद्वसन्तयोर्ऋत्वोर्मध्यमेव बलम्। ननु, वसन्ते आदानकालत्वादत्यर्थतीक्ष्णोष्णरूक्षैरादित्यपवनै शोष्यमाणेषु बलवृद्धिहेतुषु भुव सौम्येषु गुणेषु, कथ मध्यबलत्वमिति? अत्र ब्रूम । वर्षादिषु त्रिष्वृतुषु बलमुपचित क्रमेणैवापचीयते। यथा–कृष्णपक्षे चन्द्र । तस्माद्दीर्घकालानुवृत्त बलमुपचित वसन्ते क्रमेणैवापचीयते, इति मध्यबलत्व युक्तम्। अननैव हेतुना शिशिरेऽग्र्यबलत्वम्। यत सकलेन विसर्गिणा कालेन यदुपचितमतिशयेन बल तत् शिशिरे प्रारम्भमात्रादानकालेऽपचीयमानमपि बल न हीन[1] लक्ष्यते। यथा–कृष्णपक्षादौ चन्द्र क्षीयमाण, इति युक्तमुक्त शीतेऽग्र्य बल वसन्ते च मध्य बलमिति।

आ० र०–येनैव क्रमेण बलमुपचीयते, तेनैव चापचीयत इत्याह–शीतेऽग्र्यमिति। शीते–हेमन्तशिशिरयो, अग्र्य–भागत्रयपूर्णं बलम्। वृष्टिघर्मे–प्रावृड्ग्रीष्मयो, अल्प–भागद्वयोनम् । शेषयो –शरद्वसन्तयो, मध्य–एकभागोनम्। ( ये तु शिशिरे चतुर्भागपूर्णस्य बलस्य वसन्ते भागद्वयोनत्व विधाय मध्य बल कल्पयन्ति । तदसत्। क्रमेणापचितौ वसन्ते भागद्वयोनतानुपपत्ते । उत्कृष्टमध्याल्पतया अत्र मध्यत्व वेद्यम्। एकभागोन मध्य, द्विभागोनमल्पमिति। ) यावद्बल विसर्गस्यान्त्ये दिने तावदादानस्याद्ये, यावद्विसर्गस्योपान्त्ये तावदादानस्य द्वितीये । एवं यावद्विसर्गस्याद्ये तावदादानस्यान्त्ये, इति हेमन्तपर्यन्त वाच्यम्। इति ऋतुनिर्णय ।

अत एवाह शास्त्रकृत्—

बलिन· शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ॥ ७ ॥
भवत्यल्पन्धनो धातून् स पचेद्वायुनेरितः।
अतो हिमेऽस्मिन्सेवेत स्वाद्वम्ललवणान्रसान् ॥८॥

स०–किल विसर्गाभिवर्धितबलत्वात्पुमान् बली भवति। तस्य बलिन पुसो हेमन्ते काले शीतसरोधाद्धेतोरनलोऽग्निर्बली भवति। यत सर्वत स्रोतोरोधाज्जाठरोऽग्निरान्तरैरेव खेरर्चिर्भिरभिवर्धते। वर्धितश्चासौ युक्तमाहार सम्यक्पचति। पक्काच्चाहाराद्बलमभ्यधिक जायते । हेमन्ते इत्यनेन एतत् द्योतयति, अस्मिन्नेव काले शीतसरोधात् प्रबलोऽग्निर्भवति, न तु कालन्तरापजनितशीतसरोधात् । तथा हि–अन्यर्तुजेन शीतेनाग्निसादो भवति, यथा–वर्षासु। तत्र हि वृष्टिवाताभ्या भवति शीतम्, न चाग्निदीप्ति । तथा चाष्टाङ्गसङ्ग्रहे ( सू० अ० ४)–"वृष्टिवाताकुले त्वह्नि भोजन क्लेदवातजित्। परिशुष्क लघु

१ 'यतोऽग्र्य' क ग ञ । २ 'मार्गे च सोमो' ग । 'मार्गवशात्सोमो' क. ज.। ३ 'केवल मार्गवशात्' क ग. । ४ 'नुवर्तते' ख.घ.। 'नुषज्यते' झ.। ५ 'प्रभावे' स. २।

१ 'हीन' इति नास्ति ट ठ पुस्तकयो. । २ 'अग्र्य–चतुर्भागपूर्णं' ख घ झ । ३ ( ) एतच्चिह्नान्तर्गत पाठ ख घ.झ. पुस्तकेषु नोपलभ्यते। ४ 'इति पर्यन्त' क.ख ग घ.ङ.झ.। 'इत्येतत्पर्यन्त' ञ.। ५ 'विसर्गादभिनवबलत्वात्' ढ.।

स्निग्धमुष्णाम्ललवण भजेत्" इति । इह पुनरनेकरूप गोरव युक्त भोजन शस्यते । वक्ष्यति हि-"अतो हिमेऽस्मिन्" इत्यारभ्य यावत् "रसान् स्निग्धान्पल पुष्टम्" इत्यादि । तथोक्तम्-"ऊष्मा बहि प्रतिहतो हिमशीतवातैरन्त शरीरविवरं प्रति पद्यमान । स्वस्थानपिण्डितवपुर्भवति प्रचण्ड शीतेऽनिलानलहरो विविरिष्यतेऽत" इति । तथा, यद्यपि "तत्र सत्त्वशरीरोत्थ" इत्यारभ्य यावत् 'तथोर्जस्करयोगजम्" इत्यादिना (हृ शा अ ३।७८) ग्रन्थेनाहारो युक्तजस्यैकस्यैव बलस्य हेतुरित्युक्तो ग्रन्थकृता । तथाऽपि युक्त्या निरूप्यमाण सहजकालजयोरपि बलयोराहार एव हेतु, अनुवृत्तिहेतुत्वात् । तथा ह्याहार विना शरीरमेव न स्यात् । तदनया युक्त्या त्रिविधमपि बलमाहारजमिति बोद्धव्यम् । ननु, यदि प्रबलोऽनलो भवति, तत किम्? इत्याह-अल्पेन्धन इत्यादि । अल्पमिन्धनमाहाराख्यं यस्य सोऽल्पेन्धन सन्, सोऽनलो, धातून्-रसादीन् पचेत् । कीदृश ? वायुनेरित -वातोद्दीपित । अत -अस्मादनन्तरोक्ताद्धेतोरल्पेन्धनत्वे सति धातुपाकाख्यात् । अस्मिन् हिमे शीते स्वाद्वम्ललवणाख्यान् रसान् सेवेत । नान्यर्तुसम्भवे हिम इत्यस्यार्थस्य द्योतनाय (अस्मिन्) हिम इत्युक्तम् ।

आ० र०-अथ ऋतुचर्यामाह। ता च शिशिराद्युद्देशेऽपि हेमन्तादिक्रमेण, शिशिरचर्याया हेमन्तचर्यामूलत्वात् । तत्र सोपपत्तिका मधुरादिसेवा विधत्ते-बलिन इति । यतो हेमन्ते अनल प्रबलो भवति । स चाल्पेन्धन सन् धातून् पचेत् । अतो मधुरादीन् सेवेत । प्राबल्ये हेतुमाह-शीतसरोधात्, रोमकूपानावृण्वता शीतेनार्चिषा बहि प्रचारे वारिते पिण्डितोष्मत्वात् प्रबल । नन्वेव वर्षास्वप्यापद्येत इत्यत आह-बलिन, बलित्वे सति शीतसरोधात् । वर्षासु पुनर्बलहानि । ननु, प्रबलश्चेत्तत्किं स्निग्धोष्णवीर्याम्ललवणान् सेवेत? इत्यत आह—वायुनेरित,-शीतजनितवायुना सन्धुक्षित, स धातून् पचेत् । अम्ललवणौ च स्निग्धोष्णवीयत्वाच्छीतस्य तज्जनितवायोश्च विपरीतौ । अथ विधि किं हेमन्तमात्रे? नेत्याह-हिमे,-शीतयुक्ते । हेमन्ते विशेष्ये सत्यप्यस्मिन्निति पद हेमन्त एव हिमे एव, अथ विधिर्नान्यदेति नियमार्थम् । इद चोपलक्षणम् । तेन यस्यर्तोर्यल्लक्षण, तद्युक्त एव तस्मिन्नेव तद्विधिरिति । सुश्रुतस्तु (उ अ ६४।२२) तिक्तकटुकसेवामप्याह-"हेमन्ते लवणक्षारतिक्ताम्लकटुकोत्कटम् । ससर्पिस्तैलमहिममशन हितमुच्यते ॥" इति । साप्युचिता, चीयमानकफप्रत्यनीकत्वात् । हेमन्ते हि वातकफौ चीयेते । यदाह खारणादि -"पित्त शाम्यति, तच्छैत्याद्वायु श्लेष्मा च चीयते" इति ।

**दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ।**
**अवश्यकार्यं सम्भाव्य यथोक्तं शीलयेदनु ॥ ९ ॥**
**वातघ्नतैलैरभ्यङ्गं मूर्ध्नि तैलं विमर्दनम् ।**
**नियुद्धं कुशलैः सार्धं पादाघातं च युक्तितः ॥१०॥**

स०-एतर्हि-एतस्मिन्काले, बुभुक्षित प्रातरेव-प्रत्यूषसि, नान्यकाले यत्किञ्चिद्दिनातिक्रान्तौ सत्याम्, अवश्यकार्य-मूत्रोत्सर्गादिक दिनचर्योक्त, सम्भाव्य-सम्पाद्य, यथोक्त-यथानिर्दिष्टम्, अनु-पश्चात्, वातघ्नतैलाभ्यङ्गादिक शीलयेत् । यद्यपि "बुभुक्षित, अवश्यकार्यं सम्भाव्य यथोक्त शीलयेदनु" इत्युक्तम्, तथापि बुभुक्षितेन न तथान्यत्कार्यं कार्यम्, यथा भोजनम् । तथा चोक्तम्-"आहारकाले सम्प्राप्ते यो न भुङ्क्ते बुभुक्षित । तस्य सीदति कायाग्निर्निरिन्धन इवानल ॥" इति । तस्मादाचित्याद्बुभुक्षितेनाहार कार्य इति वेद्यम् । नन्वन्यस्मिन्नपि काले बुभुक्षितस्यवाहारानुष्ठानादिह बुभुक्षितग्रहण न कार्यम् । युक्तमाह भवान् । किन्त्वस्मिन्काले जाठराग्निरत्यग्निच्छायानुकारी भवति। ततोऽस्य जाठराग्नेरत्यग्नेरेवोपचारो युक्त । यथा (चरके चि. अ १५।२१९, हृदये चि अ १०।८४)-"मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् । निरिन्धनोऽन्तर लब्ध्वा यथैन न विपादयेत् ॥" इति । अबुभुक्षितस्यव भोजनाधिकारित्वमिति भ्रान्तिनिरासायेह बुभुक्षितग्रहणम् । निशाना दैर्घ्यादिति विशिष्टकालोपलक्षणार्थं कृतम् । यदाऽत्र हेमन्ते शर्वर्यो दीर्घा जायन्ते, तदैष विधि सर्वोऽनुष्ठेयो न प्रारब्धमात्र एवास्मिन्निति । नन्वत्र सेवेत शीलयेद्भजेदित्येकार्थाभिधायीनि बहूनि क्रियापदानि किं निर्दिष्टानि? एकेनैवार्थाधिगते । अत्र ब्रूम । कार्यान्तरसूचनार्थमेतत्पदत्रय कृतम् । तथा हि-"अतो हिमेऽस्मिन्सेवेत" इत्यत्र य सेवेतशब्द स इद द्योतयति-स्वाद्वम्ललवणरसा पवनविजयार्थमस्मिन् काले नितरामुपयोक्तव्या । न कादाचित्क एषामस्मिन्नृतावुपयोगो विधेय इति । अत एव वातघ्नतैलाभ्यङ्गादे पृथगेषा रसानामुपन्यास । तथा, "यथोक्त शीलयेत्" इत्यत्र य शीलयेदित्येष शब्द. स वातघ्नतैलादे सर्वस्य तुल्यकक्षता द्योतयति । तथा, "प्रावाराजिन" इत्यादौ यो भजेच्छब्द स सकलस्याहारविहारशीलनस्य शयनविधेश्च तुल्यता प्रथयति । तथा च वक्ष्यति (सू अ ७।५१)-"आहारशयनाब्रह्मचर्यैर्युक्त्या प्रयोजितै । शरीर धार्यते नित्यमागारमिव धारणै ॥" इति । वातघ्नतैलैरभ्यङ्ग शीलयेत् । तैलस्य सर्वस्यैव वातघ्नत्वाद्वातघ्नेति विशेषणमतिशयप्रतिपादनार्थम्, तेन बलातैलादिभिरिति बोध्यम् । मूर्ध्नि तैलं-शिरोभ्यङ्गादि । विमर्दन-शरीरसवाहनम्, एतदौचित्यादभ्यक्त सन् शीलयेत् । कुशलै -तद्विद्भि सार्धं, नियुद्ध-बाहुयुद्ध, शीलयेत् । पादाघात-पादेन विमर्दनम् । युक्तित इत्यनेनाधशक्त्यैव शीलन द्योतयति । बाहुयुद्धपादाघातयोश्चानभ्यक्तस्यैव शीलन युक्तम् ।

आ० र०-दिनचर्याविहितस्याभ्यङ्गादेर्विशेषमाह-दैर्घ्या-

१ 'हेम ते पुन' ट । २ 'रूपगौरवयुक्त' ठ । ३ 'सन् धातून्' क ग ञ । ४ 'एव' इति नास्ति क ख.घ झ ञ पुस्तकेषु। ५ 'चितोपचीय' क.ग.ञ. ।

१ 'मूर्द्धतैल' इति हेमाद्रिसम्मत पाठ. । २'र्थावगते' ट. । ३ 'बलादिभि' ट. । ४ 'क्तयोरेव' ट.ठ. ।

दिति । एतर्हि–एतस्मिन्काले, अभ्यङ्गादीन् शीलयेत् । कदा? प्रात । किमवश्यकार्यं बाधित्वा? नेत्याह–यथोक्तमवश्यकार्य–शौचादिक, सम्भाव्य–सम्यक् कृत्वा । किमजातान्नपानेच्छ एव? नेत्याह–बुभुक्षित एव । ननु प्रात कथ बुभुक्षित? इत्यत आह–निशाना दैर्घ्यात् । सम्भाव्येत्यनेन पश्चादर्थे सिद्धे नैरन्तर्यार्थमनुग्रहणम् । अभ्यङ्गसेकपिचवो बस्तिश्चेति चतुर्विध मूर्धतैलम् । अभ्यङ्गस्य पृथगुपादानमितरावयवार्थम् । विमर्दन–कराभ्या पीडनम् । अभ्यङ्ग मूर्धतैलविमर्दनानि वातघ्नतैलैर्बलातैलादिभि शीलयेत् । नियुद्ध–बाहुयुद्धम् । कुशलै–मल्लै । पादाघात–पादाभ्या मर्दनम् । युक्तित –मात्राद्यनतिक्रमेण ।

**कषायापहृतस्नेहस्ततः स्नातो यथाविधि ।**
**कुङ्कुमेन सदर्पेण प्रदिग्धोऽगुरुधूपितः ॥ ११ ॥**
**रसान् स्निग्धान् पलं पुष्टं गौडमच्छसुरां सुराम् ।**
**गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः ॥ १२ ॥**
**नवमन्नं वसां तैलं, शौचकार्ये सुखोदकम् ।**
**प्रावाराजिनकौशेयप्रवेणीकौचवास्तृतम् ॥ १३ ॥**
**उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ।**
**युक्त्याऽर्ककिरणान् स्वेदं पादत्राणं च सर्वदा ॥१४॥**

**स०**–कषायेण–रोध्रादिना, अपहृत –अपनीत , स्नेहो यस्य स एवम् । तत –अनन्तर, यथाविधि–शास्त्रोदितेन विधानेन, स्नात । कुङ्कुमेन–काश्मीरेण, प्रदिग्ध –अनुलिप्त । दर्प–कस्तूरिका, तेन सह वर्तते यत्कुङ्कुम तदेवम् । तथा, अगुरुणा–जोङ्गकेन धूपित । रसान्–मासरसान्, स्निग्धान् भजेत् । मासरसाना स्निग्धत्वेऽपि स्निग्धानिति विशेषणमतिशयद्योतनार्थम् । स्निग्धतमान् रसानित्यर्थं । पल–मास, पुष्ट–मेदुर, भजेत् । तथा,गुडस्येद गौड तन्मद्यम् । तथा, अच्छसुरा–सुरामण्ड, सुरा–मदिरा, च भजेत् । अम्लेनान्नेन कषायद्रव्यैश्च या क्रियते सा सुरा भण्यते । ननु, द्विधैव सुरा सेव्यत्वेनेहाभीष्टा, तत्सुराशब्द एव निर्देष्टु न्याय्य । तस्मिन्हि सामान्यपदे निर्दिष्टे द्विधैव सुरा निर्दिष्टा भवति । सत्यमेतत् । किन्त्वच्छसुरा नितरा भजेत्, न तथा सुरामिति ज्ञापनार्थं द्वयोरुपादानम् । अत एवाच्छसुरामिति पूर्वं निर्दिष्टम् । गोधूमेत्यादि । गोधूमश्च पिष्ट च माषश्च इक्षुश्च क्षीर च तान्येवम् । गोधूमपिष्टमाषेक्षुक्षीरेभ्य उत्थान यासा विकृतीना ता एवम् । उत्पूर्वात्तिष्ठते सुपीति योगविभागाद्भावे क । "उद स्थास्तम्भो पूर्वस्य" इति सस्य तकार । गोधूमपिष्टमाषेक्षुक्षीरोत्थाश्च ता विकृतयश्च, ता शुभा –रम्या , भजेत् । तथा, नवं–अपुराणमन्न, तथा वसा–भजेत् । "शुद्धमासस्य य स्नेह सा वसा परिकीर्तिता" । तथा, तैल भजेत्–भक्षयेत् । अभ्यङ्गस्तु प्रागनुज्ञात एव । शौचकार्ये –शौचक्रियाया, सुखोदक–उष्णोदक, भजेत् । प्रावार –कार्पासो रोमवान् घन पट , तूलपटकादि । अजिन–सुखस्पर्शरोमचर्म । कौशेय–पट्टवसनम् । प्रवेणी–सूचीवाणाख्यो वस्त्रविशेष । कौचव–राङ्कववस्त्रभेद , तवरक इत्यन्ये । एतैरास्तृत–दत्तप्रच्छदपट, शयन भजेत् । कीदृक् शयन भजेत्? उष्णस्वभावै –रोमशिकारल्लिकाप्रायै , प्रावृत –प्रकर्षेणाच्छादित । तथा, अर्ककिरणान्भजेत् । कथम्? युक्त्या,–सम्यग्योगलक्षणया । अतिसेविता हि ग्लान्यादीन् कुर्यु । तथा, स्वेद भजेत् । युक्त्यैवेत्यत्रापि योज्यम् । अतिसेवितो हि स्वेदो ग्लान्यादीन् जनयेत् । पादत्राण च–पादुकादिक, सर्वदा भजेत् ।

**आ० र०**–उद्वर्तनादेर्विशेषमाह–कषायेति । कषायापहृतस्नेहादिको भूत्वा रसादीन् भजेत् । कषायेणापहृत स्नेह –स्नेहापहरणमात्रमुद्वर्तित , न त्वन्यकालवदुत्पादितरौक्ष्य । यथाविधि स्नात , विधिश्चात्र शीतकालोचितत्वात् सर्वाङ्गानामुष्णोदकेन स्नानम् । उक्त च चरकेण (सू अ ६।१४)–"अभ्यङ्गोत्सादने मूर्धतैल जेन्ताकमातपम्" इति । जेन्ताक–सर्वाङ्गोष्णोदकस्नानमिति वाप्यचन्द्र । सदर्पेण–सकस्तूरिकेण । प्रदिग्धो–अनुलिप्त । रसान्–मासरसान् । स्निग्धान्–घृतादिसंस्कृतान् । पल–मासम् । पुष्ट–मेदुरम् । गौड–गुडकृत मद्यम् । अच्छसुरा–सुरामण्डम् । सुरा–घनसुराम् । अच्छसुराया पृथग्ग्रहणमतिशयभजनार्थम् । गोधूमाद्युत्था –गोधूमादिकृता मोदकाद्या । पिष्ट–शालिपिष्टम् । शुभा –हृद्या । नव–अनतिक्रान्तवत्सरम् । अन्न–धान्यम् । वसा–मांसस्नेहम् । रसादितैलान्त भोजनोपयोगि । सुखोदक–कवोष्णमुदकम्, तच्च शौचकार्ये । पाने तु शीतमेव । प्रावार –कार्पासरोमवान् घन पट । अजिन–चर्म । कौशेय–कृमिकोशोत्थम् । प्रवेणी–सूचीबाणाख्य वस्त्रम् । कुथक –कम्बल । उष्णस्वभावैर्लघुभिर्वस्त्रै प्रावृत । अर्ककिरणान् स्वेद च युक्त्या–सम्यग्योगेन भजेत् । पादत्राण सर्वदा–बहिश्चरण विनापि, बहिश्चरणे तु दिनचर्यायामुक्तमेव ।

**पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ।**
**हरन्ति शीतमुष्णाङ्ग्यो धूपकुङ्कुमयौवनैः ॥ १५ ॥**

**स०**–ऊरू च स्तनौ च श्रोणिश्च ऊरुस्तनश्रोणि । पीवर–पीन, ऊरुस्तनश्रोणि यासा ता एवम्भूता , प्रमदा –विलासिन्य , शीत हरन्ति–नुदन्ति । पीनत्वेनातिकार्श्यमत्र निषिध्यते । तथा चाह ग्राम्यधर्माधिकारे ( हृ सू अ ७।६९ )–"त्यजेदतिकृशाम्" इति । किम्भूता? सह मदेन–यौवनोद्भूतेन सुरादिपानजेन कामोद्रेककारिणा वा, वर्तन्ते ता समदा । तथा, प्रिया –व-

१ 'अस्मिन्' क ग ञ । २ 'ननु कथ पुन प्रातर्बुभुक्षोत्पद्यते? इत्याह' ज ञ । ३ 'बलादिभि ' क ग । ४ 'प्रवेणीकुथकास्तृतम्' इति हेमाद्रिसम्मत पाठ । ५ 'शास्त्रविहितेन' ट । ६ "रस इत्यविशेषोक्तौ योज्यो मासभवो रस ।" इति । ७ 'अम्लेन' इति नास्ति ठ. पुस्तके ।

१ 'तूलपटकादि.' ठ । २ 'प्रतिच्छदपट' ठ । ३ 'मूर्ध्नि तैल' स च । ४ 'वाप्यचन्द्र ' ग । ५ 'अनुलेपित ' क ग ज ञ । ६ 'सूचीदामाख्य' ज.ञ. । ७ 'हरन्ति–मुष्णन्ति' ट. ।

ङ्गभा , शीत हरन्ति । किम्भूता ? उष्णाङ्ग्यो धूपकुङ्कुमयौवने – अगुर्वादिधूपेनोष्णाङ्ग्य , तथा कुङ्कुमानुलेपनेनोष्णाङ्ग्य , तथा यौवनोष्मणा, सहजेनोष्णाङ्ग्य इति योज्यम् ।

**आ० र०**–शीतापहन्तृत्वकथनद्वारा स्त्रीसेवा विधत्ते–पीवरेति । प्रमदा –स्त्रिय । समदा –यौवनोत्थ मद्यज च मद बिभ्राणा ।

**अङ्गारतापसन्तप्तगर्भभूवेश्मचारिणः ।**
**शीतपारुष्यजनितो न दोषो जातु जायते ॥ १६ ॥**

**स०**–अङ्गाराणा तापोऽङ्गारताप , तेन सन्तप्त च तद्गर्भेऽभ्यन्तरे भूवेश्म च तत्तस्मिंश्चरति–तिष्ठति[2] नित्य यस्तस्याङ्गारतापसन्तप्तगर्भभूवेश्मचारिण पुसो यत शीतपारुष्यजनितो दोषो–दु ख, न जातु–कदाचिज्जायते, ततोऽङ्गारतापसन्तप्तगर्भभूवेश्मचारी स्यादिति भाव ।

**आ० र०**–शीतापहन्तृत्वकथनद्वारा निवातोष्णगृहसेवा विधत्ते–अङ्गारेति । अङ्गाराणा तापेन सन्तप्त यद्वेश्म, यच्च गर्भवेश्म–गृहान्तर्वर्तिगृह, यच्च भूवेश्म–भूम्यन्तर्वर्तिगृह, तेषु यश्चरति स तथा । शीतेन यत्पारुष्य तज्जनितो दोषो जातु–कदाचित्, तस्य न जायते । तस्मात्तानि भजेदित्यर्थसिद्धम् ।

**अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः ।**
**तदा हि शीतमधिकं रौक्ष्यं चादानकालजम् ॥ १७ ॥**

**स०**–अयमेव–हैमन्त , विधि –पूर्वोक्त , शिशिरे च विशेषत –अतिशयेन कार्य । कुत ? इत्याह–यस्मात्तस्मिन् काले शीतमधिक भवति, कालस्वाभाव्यात् । तथा, आदानकालाज्जातमादानकालज च रौक्ष्य भवति । ततो हेतुद्वयाद्विशेषेण हैमन्तिको विधि सेव्य । हेमन्ते "रसान् स्निग्धान् शीलयेत्" इत्युक्तम् । शिशिरे तानतिशयेन शीलयेत् । एव सर्वोऽपि[4] हैमन्तिको विधिर्योजनीय । आदानकालजमित्यनेनैतद्द्योतयति । आदानकाल एव रौक्ष्यस्य कारणम्, नान्यत् । अत एव हेमन्ते शीतेऽपि रौक्ष्य नास्त्येवेति । आदानस्य च प्रारम्भमात्रत्वे एव शिशिरस्य सम्भव इति शिशिरे किञ्चिदेव रौक्ष्य वेद्यम् । ननु, यथा रौक्ष्यमादानकालज तथौष्ण्यमपि । तथा चोक्तम्–"तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा " इति । एव चौष्ण्यसद्भावाच्छीतस्य हेमन्ततो हानि प्राप्ता, न त्वाधिक्यम् । तत्कथमुक्त "तदा हि शीतमधिकम्" इति ? ब्रूम । रौक्ष्यस्य द्वौ हेतू । एकस्तावद्भगवद्दिवाकरकरैर्जगत्स्नेहादानम्[5] । द्वितीयस्त्वाग्नेय काल । तदेव रौक्ष्येणोभयहेतुजेन शिशिरे काले वाता शीतस्वभावा आहिताधिकशक्तयो जायन्ते हैमन्तेभ्यो मारुतेभ्य । तथाविधाश्चौष्ण्येनादानकालजेनादानकालप्राथम्यादप्राप्तबलेन शिशिरे नाभिभूयन्ते । अनभिभूताश्च शीतस्वभावत्वाच्च शीतमेव वर्धयन्ति । अतो युक्त शीताधिक्य शिशिर इति ।

१ 'शीतापहत्व' क ग ज । २ 'तिष्ठति' इति ठ पुस्तके नोपलभ्यते । ३ 'सन्तप्त यत् गर्भवेश्म' क ग । ४ 'सर्वेष्वपि' ठ । ५ 'जगत. स्ने' ठ. ।

**आ० र०**–शिशिरचर्यामाह–अयमेवेति । अय–हेमन्तोक्त । स्वयुक्त्या न्यूनाधिकप्रयोगनिषेधार्थमेवशब्द । विशेषत –अत्यभ्यासेन । हि–यस्मात्, तदा–तस्मिन्काले, अधिक शीतम्, आदानकालज रौक्ष्य च । चकाराद्वातकोपबलक्षयौ च । यथोक्त कारणादिना–"स्वभावशैत्याद्रौक्ष्याच्च वातकोपाद्बलक्षयात् । विधिर्विशेषात्स्निग्धोष्ण शिशिरे हैमनो मत ॥" इति । वातकोपश्च तेनैवोक्त –"स वायु शिशिरे कोप यात्येवोपचय कफ ।" इति ।

सम्प्रति वसन्तचर्या विवक्षुरिदमाह—

**कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः ।**
**हत्वाऽग्निं कुरुते रोगानतस्तं त्वरया जयेत् ॥ १८ ॥**
**तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः ।**
**व्यायामोद्वर्तनाघातैर्जित्वा श्लेष्माणमुल्बणम् ॥ १९ ॥**
**स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुङ्कुमैः ।**
**पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक् ॥ २० ॥**
**सहकाररसोन्मिश्रानास्वाद्य प्रिययाऽर्पितान् ।**
**प्रियास्यसङ्गसुरभीन् प्रियानेत्रोत्पलाङ्कितान् ॥ २१ ॥**
**सौमनस्यकृतो हृद्यान्वयस्यैः सहितः पिबेत् ।**
**निर्गदानासवारिष्टसीधुमार्द्वीकमाधवान् ॥ २२ ॥**
**शृङ्गबेराम्बु साराम्बु मध्वम्बु जलदाम्बु च ।**

**स०**–शिशिरे मधुरस्निग्धादिना आहारेण कालस्वाभाव्याच्च श्लेष्मा सञ्चितोऽतिशयेन स्त्यानत्वादतिकुपितो वसन्ते ऋतावर्कांशुतापित –सूर्यप्रभाभिर्विलायितो, द्रवस्वरूपत्वाज्जलमिव विपरीत जाठराग्निं हत्वा, हि–यस्मात्, रोगान्–विकारान्, कुरुते–जनयति । अत –अस्मात्कारणात्, त–कफ, त्वरया–शीघ्रमेव, जयेत् । दोषानिति केचित्पठन्ति । अर्कतापित इत्यनेनैव सिद्धे अंशुशब्दोऽत्र रश्मीना पटिमान सूचयति, न तथा शीते । तत्र हि ( स सू अ ४ )–"धूमधूम्ररजोमन्दस्तुषाराविलमण्डला । दिगादित्या " इत्यधिजगे । कैर्जयेत् ? तीक्ष्णैर्वमननस्यविरेकादिभिरुपक्रमेत् । तथा, लघूनि रूक्षाणि च यानि भोजनानि, तैश्च । तथा, व्यायामश्चोद्वर्तन च आघातश्च तैश्च कफ जयेदिति । चशब्दो लुप्तनिर्दिष्ट । तत कफमुल्बण–उद्धत, जित्वाऽनन्तर स्नातोऽनुलिप्त –समालिप्त कर्पूरचन्दनागुरुकुङ्कुमै । तथा, पुराण च तद्यवगोधूम च, तथा, क्षौद्र–माक्षिक, तथा जाङ्गल च तच्छूल्य च–'शूलेन सस्कृत मास शूल्यम्' भटित्र च, तत्तानि भुङ्क्ते पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक् । शूल्य इति "शूलोखायत्" इति यत् । एवविध सन् वयस्यै –मित्रै सहित आसवादीन् पिबेत् । किम्भूतान् ? निर्गदान्,–निवृत्तगदान्निर्दोषान्, पिबेदिति वक्ष्यमाणेन(?)सम्बन्धोऽत्र दीपकत्वात् । आसवो–यो द्रव्याण्यासुत्य क्रियते । उक्त च–"मद्याकराधिकद्रव्यैर्मदि-

१ 'निगदाश्चासवा' इति सङ्ग्रहपाठ । 'निगदान्–देशकालाद्यनुपहतान्' इतीन्दु । २ 'जलदाम्बु वा' इति क्वचित्पाठ । ३ 'यस्माच्छीते' ट । ४ 'कठिनत्वात्कुपितो' ट. । ५ 'न्–निर्दोषान्' ट. । ६ 'द्रव्यै. खदि' ट. ।

राद्यै कृतस्तु य । सोऽरिष्ट स्वादासवस्तु द्रव्याण्यासुत्य य कृत ॥" इति । सीधु –इक्षुरसोद्भव । मार्द्वीक–मृद्वीकारसोद्भवम् । माधवो–मधुना संस्कृत । किम्भूतानासवादीन्? सहकाररसोन्मिश्रान्,–अधिवासितान् । तथा, प्रियया–दयितया, आस्वाद्य–किञ्चित्पीत्वा, अर्पितान्–ढौकितान् । तथा, प्रियास्यसङ्गेन सुरभीन्,–सुगन्धीन् । तथा, प्रियानेत्राण्येवोत्पलानि तैरङ्कितान्–सञ्जातशोभान् । तथा, सौमनस्यकृत –चित्तप्रसादकृत । तथा, हृद्यान्–हृदयाय हितान् । तथा, शृङ्गबेराम्बु–शुण्ठीक्वथितजल पिबेत् । तथा, सार –असनचन्दनादिज , तेन क्वथितमम्बु पिबेत् । तथा, मधुना युक्तमम्बु मध्वम्बु । जलदेन–मुस्तया च क्वथितमम्बु पिबेत् । चेति समुच्चये ।

आ० र०–अथ वसन्तचर्या । सा च द्विविधा, शोधनी शमनी च । तत्र चयपूर्वके प्रकोपे शोधनी, अचयपूर्वके शमनी । तत्राकृताया पूर्वर्तुचर्याया पूर्वर्तुना चितस्य दोषस्योत्तरेण य प्रकोप स चयपूर्वक । स एवापथ्यज , पूर्वर्तुसेवितापथ्यजातत्वात् । यस्तु कृताया तस्या पूर्वेणाचितस्योत्तरेण य प्रकोप सोऽचयपूर्वक । स एव पथ्यज , पूर्वर्तुसेवितपथ्यजातत्वात् । उक्त च–"दोषप्रकोपो द्विविध पथ्यापथ्यनिमित्तज । तत्रापथ्यनिमित्तो य स संशोधनमर्हति ॥ पथ्यज. शमनीयश्च प्राय आगन्तुजश्च य ।" इति । तत्र संशोधनी विधत्ते–कफश्चित इति । यस्माच्छिशिरे चित कफो, वसन्ते सूर्यरश्मिभिर्द्रवीकृत सन्, जलमिव प्रत्यनीकत्वात् वह्निं हत्वा, रोगान् करोति । अतस्त–चितं अकुपित कफ, वसन्तारम्भ एव तीक्ष्णद्रव्यकृतैर्वमननस्यधूमगण्डूषाद्यै शोधनैर्जयेत् । तथा, लघुरूक्षैस्तिक्तकटुकप्रायै ससर्जनक्रमेण भोजनैश्च । शिशिरशब्देन शीतपर्यायेण शिशिरहेमन्तयोर्ग्रहणम्, द्वयोरपि कफचयात् । यदाह खारणादि –"हेमन्ते निचितः श्लेष्मा शिशिरेऽपि न कुप्यति । आहारैश्च गुरुस्निग्धैर्भृशमेवोपचीयते ॥" इति ।

शमनी विधत्ते–व्यायामोद्वर्तनाघातैरिति । उल्बणं श्लेष्माण व्यायामाद्यैर्जित्वा स्नातस्तत कर्पूराद्यैरनुलिप्त , पुराणयवादीन् भुञ्जान , आसवादीन् पिबेत् । प्रकोपे प्रकृतेऽप्युल्बणग्रहणमचयपूर्वकप्रकोपार्थम् । आघात –पद्भ्या मर्दनम् । कफग्रस्तस्याभ्यङ्गनिषेधाद्रूक्षा एव व्यायामादय । स्नानशील इति वचनात्प्राप्तेऽपि स्नाने, स्नात इति श्लेष्मकालीनप्रात स्नाननिषेधार्थम् । व्यायामादीन्कृत्वैव स्नायान्न पूर्वमित्यर्थ. । पुराणत्व यवगोधूमक्षौद्राणाम् । जाङ्गल–मृगादिमांसम्, तस्य शूल्य–भटित्रम् । सहकार –अतिसुरभिराम्र , तस्य रस –तत्फलवृन्तनिर्यास , तेन उन्मिश्रान्–अधिवासितान् । प्रियया रसविशेषज्ञानार्थं स्वयमास्वाद्यार्पितान् । गन्धविशेषज्ञानार्थं सङ्गतेन सहजसुरभिणा प्रियामुखेन सुरभीकृतान् । वैमल्यादिज्ञानार्थमवलोकयन्त्या प्रियाया प्रतिबिम्बिताभ्या नेत्राभ्यामुत्पलैश्च साक्षान्निक्षिप्तैरङ्कितान् । सौमनस्यकृत –परिणामेन मन प्रशान्तिकरान् । हृद्यानास्वादे । निर्गदान्–निर्दोषान् । अक्वथितैरौषधै कृत मद्यमासव । क्वथितैररिष्ट । इक्षुरसेन सीधु । द्राक्षारसेन मार्द्वीकम्, मधुना माधव । शृङ्गबेराम्बु–शुण्ठ्या क्वथित जलम् । असनादिसारै साराम्बु । मुस्ताभिर्जलदाम्बु । मधुमिश्र जल मध्वम्बु । अनेकद्रवविधान यस्य यत्सात्म्य तत्तेन सेवनार्थमित्यर्थ ।

**दक्षिणानिलशीतेषु परितो जलवाहिषु ॥ २३ ॥**
**अदृष्टनष्टसूर्येषु मणिकुट्टिमकान्तिषु ।**
**परपुष्टविघुष्टेषु कामकर्मान्तभूमिषु ॥ २४ ॥**
**विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु ।**
**गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥ २५ ॥**

स०–काननेषु–उपवनेषु, स्थितो मध्याह्न गमयेत्–अतिवाहयेत् । अह्नो मध्यो मध्याह्न । "सख्याविसा" इत्यादिज्ञापकात्पूर्वापरेत्यादिना एकदेशिसमास । "अह्नोऽह्न एतेभ्य " इत्यह्नादेश । कथम्? गोष्ठ्या–क्रीडाया कथा गोष्ठीकथास्ताभि , चित्राभि –कमनीयाभि , न त्वर्थव्यवहारसम्बन्धिनीभि । कीदृश सन्? सुखी,–रागद्वेषादिरहित । किम्भूतेषु काननेषु? दक्षिणदिक्प्रवृत्तैरनिलै शीतानि, तेषु दक्षिणानिलशीतेषु । तथा, परित –समन्ताज्जल नित्य वहन्ति यानि तेषु । आभीक्ष्ण्ये णिनि । तथा, क्वचित्प्रदेशे अदृष्ट –ईषद्दृष्ट , क्वचिदतिघनत्वात् नष्ट –न दृश्यते, सूर्यो येषूपवनेषु तान्येव तेषु । तथा, मणीना–वज्रमरकतादीना, कुट्टिमानि–विशिष्टा भुव , ताभि कान्ति –शोभा, येषा तान्येव तेषु । तथा, परपुष्टै –कोकिलै , विघुष्टेषु–कृतशब्देषु । तथा, कामस्य कर्मान्ता कामकर्मान्ता –मदनव्यापारा । अन्तशब्दोऽत्र प्रशसावचने । यथोद्भटस्य ( काव्यालङ्कारसङ्ग्रहे प्रथमवर्गे ) वचनम्–"वनान्तदेवतावेण्य " इति । कामकर्मान्तनिमित्त भूमयो येषा वनाना तान्येव तेषु । विचित्राणि–नानारूपाणि, पुष्पाणि येषा ते, तथाविधा वृक्षा येषा तान्येव तेषु । सुष्ठु गन्धो येषा तेषु । "गन्धस्येत्" इतीत्समासान्त ।

आ० र०–भोजनानन्तरमुद्यानसेवा विधत्ते–दक्षिणानिलशीतेष्विति । काननेषु मध्याह्न गमयेत्–अतिवाहयेत् । सुखी–अव्याकुल सन् । गोष्ठ्यो–लोकवार्ता । कथा –शास्त्रवार्ता । जलवाहिषु–जलाशययुक्तेषु । अदृष्टसूर्येषु–घनच्छा

१ 'सीधुस्त्वारुकम्' ट.ठ । २ 'वितैरपथ्यैर्जात' क ग ज ञ । ३ 'वितै पथ्यैर्जात' क.ग ज ञ. । ४ 'न्तेऽर्कांशुभिर्द्रवी' क ग ञ । ५ 'अग्निं' क.ग ञ. । ६ 'कटुकषायै ' ख घ झ । ७ 'तयो' क ग ञ. । ८ 'रैश्चापि सुस्नि' ख घ झ । ९ 'ग्रस्तेऽभ्यङ्ग' क.ग. । १० 'शूलाकृत भटित्र स्याच्छूल्यम्' इत्यमर. ।

१ 'सङ्ग गतेन' ख घ झ । २ अस्याग्रे 'चेति समुच्चये' इत्यधिक क पुस्तके । ३ 'सेव्यमित्यर्थ ' क ख ग ड ज झ.ञ. । ४ 'अदृष्टानष्टसूर्येषु' इति हेमाद्रिसम्मत. पाठ. । ५ 'गतो' ढ. ।

येषु । अनष्टसूर्येषु-प्रकाशवत्सु । मणिमयै -बद्धभूमिकै कान्तिमत्सु । परपुष्टे -कोकिलैर्नादितेषु । कामकर्म-मदन व्यापार, अन्तन्ति-बध्नन्ति स्वसौन्दर्येणोत्तरोत्तर वर्धय न्तीति कामकर्मान्ता । "अति बन्धने" इत्यस्मात्कर्मण्यण् ।

**गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ।**

स०-अस्मिन्काले कफोपचयदोषभयात् गुरुशीतादींस्त्यजेत् । ननु, लवणमपि श्लेष्माण करोति, तत्कस्मादिह न निषिद्धम्? अतो ब्रूम । लवण पूर्व कफमम्लमधुराविव न करोति। कि तर्हि? निधने चिरन्तनसञ्चित स्रुतिरूप श्लेष्माण विधत्ते, विष्य न्दित्वात् । न च लवणस्य मधुरादेरिव बहुतरस्य प्रयोग प्रसिद्ध, कि तर्हि? अल्पस्यैव । तस्माल्लवणस्यात्रानिषेध एव न्याय्य ।

आ० र०-गुर्वादीन्निषेधति-गुरुशीतेति ।

अधुना ग्रीष्मचर्यामुपदिदिक्षुराह-

**तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ॥२६॥**
**प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्धते ।**
**अतोऽस्मिन्पटुकट्वम्लव्यायामार्ककरांस्त्यजेत् ॥२७॥**

स०-यत्-यस्मात्, तीक्ष्णांशु -भास्कर , अतितीक्ष्णा अंशव -करा , यस्य स एवभूत सन्, ग्रीष्मे सक्षिपतीव जगत्स्नेहमि त्यत्रानुक्तमप्यर्थाल्लभ्यते । केचित्तु "स्नेहमर्कोऽतितीक्ष्णांशु" इति पठन्ति । स्नेहस्तेजो बल सारमित्येकोऽर्थ । त स्नेहमर्क संक्षिपतीव-यत्सम्बन्धात् सहरतीव पिबतीव । इवशब्देनैतत्सू चयति-हेतुप्रत्ययपरतन्त्रेषु सर्वभावेषु न कश्चित्कचित् तद्बुद्धि पूर्वक सहरति । अत -अस्मात्कारणात्, अस्मिन्-ग्रीष्मकाले, पट्वादींस्त्यजेत् । परमार्थतो बलहानिकृत्त्वादेषाम् ।

आ० र०-अथ ग्रीष्मचर्या । तत्र सोपपत्तिक पट्वादीन् निषेधति-तीक्ष्णांशुरिति । यत्-यस्मात्, तीक्ष्णांशु -सूर्य, ग्रीष्मेऽतितीक्ष्णांशु सन्, सक्षिपतीव-सहारप्रवृत्त इवाऽऽ भाति । अत पट्वादींस्त्यजेत् । अस्मिन्-अतिक्रमविह्वलल्लोके ग्रीष्मे, पट्वादीना क्लमहेतुत्वात् ।

किमत्र सेव्यम्? इत्याह-

**भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् ।**

स०-मधुरमेवान्न भजेत्-बाहुल्येन मधुरमन्न सेव्यम्, न तथाऽन्यरसाघ्रातम्, इत्येवकाराल्लभ्यते । तथा, लघु स्निग्ध हिम द्रव चेति । चशब्दो लुप्तनिर्दिष्टो द्रष्टव्य ।

आ० र०-मधुरादिसेवा विधत्ते-भजेदिति । अन्न मधुरमेव-मधुरैकरसम् । पान तु मधुराम्लादिरसमपि, "नित्य सर्वरसाभ्यास" इति वचनाद्रसालादिविधानाच्च ।

सामान्येन भोजनमुक्त्वा विशेषेणाह-

**सुशीततोयसिक्ताङ्गो लिह्यात्सक्तून् सशर्करान् ॥२८॥**

स०-सक्तून् सशर्करान् लिह्यात् । सुष्ठु शीत सुशीतं च तत्तोय च, तेन सिक्त-आप्लुत, अङ्ग-कायो, यस्य स एवभूत सन् ।

आ० र०-लोकस्य तीव्रतापश्रान्तत्वाच्छ्रान्तस्य च भोजननिषेधात्पूर्वं श्रमहर विधत्ते-सुशीतेति । स्नान सक्तवश्च श्रमहरा ।

**मद्यं न पेयं, पेयं वा स्वल्पं, सुबहुवारि वा ।**

स०-अस्मिन्काले मद्य न पेयम् । पेय वा स्वल्पमिति वातश्लेष्मप्रकृतिना श्लेष्मवातक्षयार्थमन्यर्तुवद्बहु न पेयम्, कि-तर्हि? स्वल्पमेव पातव्यम् । सुबहुवारि वेति पित्तश्लेष्मप्रकृतिना मद्योचितेन श्लेष्मक्षयार्थ पित्तप्रतीकारमपीच्छता सुबहुवारि तन्मद्यं पेयम् । इत्यत्रानुक्तोऽप्येवमर्थाद्विषयविभागो बोध्य । अन्यथा निषेधविध्योर्विरोध स्यात् ।

आ० र०-मद्यस्य श्रमहरेष्वग्र्यत्वात्कामत. प्रसक्तं पानं निषेधति-मद्यमिति । अन्यत श्रमापनुत्तौ सत्या मद्य न पेयम्, तीक्ष्णादिगुणत्वात् । असत्या पेय वा, किन्तु स्वल्पम् । स्वल्पेनाप्यसत्या पूर्णमात्र न पेयम्, किन्तु सुबहुवारि-बहुतरोदककृत वा । पानानुग्रहश्च मद्यसात्म्यानामेव ।

उक्तविध्यतिक्रमे दोषमाह-

**अन्यथा शोषशैथिल्यदाहमोहान् करोति तत् ॥२९॥**

स०-तत्-मद्यम्, अन्येन प्रकारेण पीत सत् शोफादीन् करोति । शोफ -श्वयथु । शैथिल्य-अङ्गानामनैष्ठुर्यम् । दाह -सर्वाङ्गीणस्ताप । मोह -अज्ञानं जन्तो ।

आ० र०-उक्तविध्यतिक्रमे दोषमाह-अन्यथेति । शोषो -मुखशोष । तत्-मद्यम् ।

**कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः पलैः ।**

स०-कुन्द -पुष्पविशेष, इन्दु -चन्द्र, तयोर्द्वन्द्व । कुन्देन्दुवद्धवल-शुक्ल शालिं जाङ्गलै पलै -मासै सहाश्नीयात्-अद्यात् । "क्षुण्ण सित स्मृत शाली रक्तो व्रीहिरुदाहृत " ।

आ० र०-अन्न विधत्ते-कुन्देन्द्विति । कुन्द-पुष्पविशेष । कुन्देन्दुग्रहण लघुस्निग्धशीतगुणविशिष्टधवलत्वार्थम् । पलै -मासै सह ।

---

१ 'लवणमपूर्वं कफ साम्लमधुरादिवन्न करोति । कि तर्हि? चिरन्तन सञ्चित' ट । २ 'चरके त्वेतत्स्पष्टतयोक्तम्' (सू. अ ६। २७)-"मयूखैर्जगत. स्नेह ग्रीष्मे पेपीयते रवि " इति । ३ 'यत्सम्बन्ध सहरतीव । इवशब्दे' ट । ४ 'अस्मिन्नित्यनेन प्रतद्गमयति-न हीनातिमिथ्यायोगलक्षणे ग्रीष्मे पट्वादीन् परिहरेत्, किं तर्हि? यथास्वलक्षणे' इति चन्द्रनन्दन । ५ पटु-लवणम् । 'छत्रालवणयो पटु' इति विश्वप्रकाश । ६ 'हानिकरत्वात्तेषाम्' ट । ७ आघ्रात-आक्रान्तम् । 'आघ्रात शिङ्घिते क्रान्ते' इति मेदिनी । 'रसजातम्' इति पाठान्तर कचित् ।

१ 'योज्य.' ट । २ 'प्राप्त पान' ज । ३ 'पानाग्रहश्च' क.ग.ङ । ४ 'शोफशैथिल्य' इत्यरुणदत्तसम्मत पाठो दृश्यते, किन्त्वस्य हेमाद्रिचन्द्रनन्दनादिभिष्टीकाकारैरनङ्गीकृतत्वात् मद्यस्य शोफकारणत्वेन कुत्राप्यनुक्तत्वाच्च सोऽयुक्त पाठ इति प्रतिभाति । ५ 'धवलान् शालीनश्नी' अ क ञ. । ६ 'कुन्दो माध्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना' इति मेदिनी । ७ 'धवलत्वात्' ख.ग.घ.झ.ञ. ।

**पिबेद्रस नातिघनं रसालां रागखाण्डवौ ॥ ३० ॥**
**पानकं पञ्चसारं वा नवमृद्भाजने स्थितम्।**
**मोचचोचदलैर्युक्तं साम्लं मृन्मयशुक्तिभिः ॥ ३१ ॥**
**पाटलावासितं चाम्भः सकर्पूरं सुशीतलम्।**

**स०**–रस नातिघन पिबेत् । रसशब्देनादिलोपाख्यया तन्त्रयुक्त्या मासरस उच्यते । तथा, रसाला–मार्जिकाख्या पिबेत् । तथा, रागखाण्डवौ पानक च पञ्चसाराख्यम्। एतेषा च लक्षण तन्त्रान्तरे उक्तम्। यथा–"सितामध्वादिमधुरा रागास्तत्राच्छकान्तय । ते साम्ला खाण्डवा लेह्या पेयाश्चाशुकगालिता ॥ स्वाद्वम्लपटुकट्वाद्या प्रलेहास्तत्र खाण्डवा । गुडदाडिममासाद्या रागा अंशुकगालिता ॥ हृद्या वृष्या रुचिकरा ग्राहिणो रागखाण्डवा " इति । तथा–"द्राक्षामधूकखर्जूर काश्मर्यै सपरूषकै । तुल्याशै कल्पित पूत शीतं कर्पूरवासितम् ॥ पानक पञ्चसाराख्य दाहतृष्णानिवर्तकम् ।" अन्यत्र चोक्तम्। यथा–"गुडदाडिमादियुक्ता विज्ञेया रागखाण्डवा । त्रिजातमरिचाद्यैस्तु सस्कृता पानकास्तथा ।" इति । कीदृश पानक पिबेत्? इत्याह–नव यन्मृद्भाजन तत्र स्थितम्। तथा, मोच–कदलीफल, चोच–पनसफल, तयोर्दलानि, तैर्युक्तम्। तथा, साम्लम्, तिन्तिडीकादियोगात् खाण्डवरसानुगतम्। केचित्तु क्षीर घृतपिप्पलीशशिमाक्षिकशर्करोपेत पञ्चसार पानकमित्याहु । केन पिबेत्? इत्याह–मृन्मयशुक्तिभि । पाटलया वासित–सुरभीकृत, तथा सकर्पूर सुशीतल चाम्भ पिबेत् । मृन्मयशुक्तिभिरित्यत्रापि योज्यम्। सुश्रुते (?) चोक्तम्–"परिपेलवया तुल्या गुडगुग्गुलुमुस्तका । चूर्णिता शशिनोपेता नवभाजनधूपनम् ॥ कुष्ठमुस्तकसयुक्तै पेलवोशीरवालकै । मृदिता मृत्सु पिष्टैस्तै खदिराङ्गारपाचिता ॥ सहकाररसाभ्यक्ताश्चम्पकोत्पल वालकै । पद्मकुब्जककुन्दैश्च यथालाभाधिवासिता ॥ श्रेष्ठ सलिलवासोऽय स्मृत सर्वर्तुको बुधै " । इति ।

**आ० र०–पान विधत्ते–पिबेदिति । रस–मासरसम्। नातिघन–ईषत्सान्द्रम्। रसाला–करमथित मरिचशर्करादियुक्त दधि। मधुराम्ललवणकृत पानक–राग । मधुराम्ललवणकटुकषायज–खाण्डव । पञ्चसार पानक–मध्वादिभि पञ्चभि कृतम्। वक्ष्यति हि (हृ चि अ २।१३)–"मधुखर्जूरमृद्वीकापरूषकसिताम्भसा । मन्थो वा पञ्चसारेण सघृतैर्लाजसक्तुभि ॥" इति । तच्च नवे मृन्मये पात्रे स्थितम्। मोच–कदलीफल, चोच–नारिकेल, तयोर्दलै –शकलैर्युक्तम् । साम्ल–दाडिमाद्यैरम्लीकृतम् । मृन्मयीभि शुक्तिभि पिबेत्। तथा, अम्भ पिबेत्। तच्च पाटलापुष्पैरधिवासित सकर्पूर सुशीतल च ।**

**शशाङ्ककिरणान् भक्ष्यान् रजन्यां भक्षयन् पिबेत् ३२**
**ससितं माहिषं क्षीरं चन्द्रनक्षत्रशीतलम्।**

**स०**–माहिष क्षीर ससित–सशर्कर, रजन्या–रात्रौ, पिबेत्। किम्भूतम्? चन्द्रेण नक्षत्रैश्च शीतलम्। रात्रावाकाशे शैत्यार्थ स्थापितमित्यर्थ । किकुर्वन् पिबेत्? भक्ष्यान् भक्षयन्–भुञ्जन्। कीदृशान्? शशाङ्ककिरणान्,–कर्पूरनाडिकाख्यान्। [(हृ चि. अ ५।४९)–"तालीसचूर्णवटका सकर्पूरसितोपला । शशाङ्ककिरणाख्यास्तु भक्ष्या रुचिकरा. परम् ॥"]

**आ० र०–रात्रिभोजन विधत्ते–शशाङ्ककिरणानिति । रजन्या पुन शशाङ्ककिरणान् भक्ष्यान् भक्षयन् चन्द्रनक्षत्रशीतल सशर्कर माहिष क्षीर पिबेत्। शशाङ्क–कर्पूर, कीर्यते–विक्षिप्यते, येषु ते शशाङ्ककिरणा,–कर्पूरनालिकादय । चन्द्रेण तस्याभावे नक्षत्रैर्वा शीतलीकृत चन्द्रनक्षत्रशीतलम्।**

**अभ्रङ्कषमहाशालतालरुद्धोष्णरश्मिषु ॥ ३३ ॥**
**वनेषु माधवीश्लिष्टद्राक्षास्तबकशालिषु।**

**स०**–अभ्र–आकाश, कषन्ति–उल्लिखन्ति, अत्युच्चतयाऽभ्रङ्कषा । महान्तश्च ते शालाश्च तालाश्च महाशालताला । अभ्रङ्कषाश्च ते महाशालतालाश्च, तै रुद्ध –स्थगित, उष्णरश्मि –दिनकरो येषु वनेषु तेषु, मध्यन्दिने–मध्याह्ने, अर्कतापार्त सन् स्वप्यात्–शयीत । माधव्यो–लताविशेषा अतिमुक्तकाख्या, तासु श्लिष्टा माधवीश्लिष्टा द्राक्षायास्तबका–गुच्छका द्राक्षास्तबका । माधवीश्लिष्टाश्च ते द्राक्षास्तबकाश्च, तै शालितु–श्लाघितु शील येषा वनाना तानि माधवीश्लिष्टद्राक्षास्तबकशालीनि, तेषु वनेषु ।

**आ० र०–स्थानविशेषे निद्रा विधत्ते–अभ्रङ्कषेति । अभ्रङ्कषा –अत्युच्चा । महान्त –स्थूला. । माधवीषु–वासन्तीषु, श्लिष्टा –लग्ना., द्राक्षास्तबका यासु शालासु–लतागृहेषु, तद्वन्ति यानि वनानि ।**

---

१ 'खाड' ट । 'षाड' ठ । २ 'जनस्थितम्' ठ । 'रसाला शिखरा प्रोक्ता मार्जिका माजिका बुधै ' इति मदनपाल । ४ 'गुडादिमथमांसाद्या' ट । ५ 'वारिभाजन' ट । ६ रसालाविधान सूपशास्त्रे उक्तम्–"अर्धाढक सुचिरपर्युषितस्य दध्न खण्डस्य षोडश पलानि शशिप्रभस्य । सर्पिष्पल मधु पल मरिच द्विकर्ष शुण्ठ्या पलार्धमपि चार्धपल चतुर्णाम्। सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसस्था । एषा वृकोदरकृता सरसा रसाला याऽऽस्वादिता भगवता मधुसूदनेन ॥" इति । चतुर्णां–चन्दनागुरुकस्तूरीकुङ्कुमानाम्। 'रसाला–शिखरिणी' ख घ.ङ । ७ खाण्डवकल्पनालक्षणे तन्त्रान्तरे उक्ते–"युतमिक्षुविकारेण कथित चूतज फलम्। घृतशुण्ठीतिलयुत विज्ञेयो घनखाण्डव ॥" इति । "स्पष्टाम्लमधुरोऽस्पष्टकषायलवणोषण । अतिक्त. खाण्डवः कोलकपित्थाद्युपबृहित ॥" इति च ।

१ 'नक्षत्रैर्वा' ट । २ 'भुञ्जान ' ट ठ । ३ [ ] एतच्चिह्नान्तर्गत पाठष्ट. पुस्तके नोपलभ्यते । ४ 'तस्यासम्भवे' ख घ. ङ । ५ 'खरकरी' ट ।

कस्मिन् स्वप्यात्? इत्याह—

**सुगन्धिहिमपानीयसिच्यमानपटालिके ॥ ३४ ॥**
**कायमाने चिते चूतप्रवालफललुम्बिभिः ।**

**स०**–कायमाने–वेण्वादिनिष्पादिते गृहविशेषे । कीदृशे? सुगन्धि च तद्धिम च तत्पानीय च तत्सुगन्धिहिमपानीयम् । पटाना–वस्त्राणा, आलि –पङ्क्ति, पटालि । सुगन्धिहिमपानीयेन सिच्यमाना पटालिर्यस्मिन्नसौ सुगन्धिहिमपानीयसिच्यमानपटालिक, तस्मिन् तथाविधे कायमाने । तथा, प्रवाला –किसलयानि । फलाना लुम्बय –स्तबका । प्रवालाश्च फललुम्बयश्च प्रवालफललुम्बय । चूताना प्रवालफललुम्बयस्ताभि, चिते–परितो व्याप्ते ।

**आ०र०**–पटालिका –पङ्क्तिमत्यो नवास्तृणादिरचिता भित्तय । कायमाने–शिबिरे । प्रवाला –पल्लवा । फललुम्बय –फलस्तबका ।

ईदृशे कायमाने स्थितो यादृशे शयने शयीत तन्निरूपयन्नाह—

**कदलीदलकह्लारमृणालकमलोत्पलैः ॥ ३५ ॥**
**कोमलैः कल्पिते तल्पे हसत्कुसुमपल्लवे ।**
**मध्यंदिनेऽर्कतापार्त्तः स्वप्याद्धारागृहेऽथवा ॥ ३६ ॥**
**पुस्तस्त्रीस्तनहस्तास्यप्रवृत्तोशीरवारिणि ।**

**स०**–कदलीत्यादि । तल्पे–शयने, कल्पिते । कै? कदलीदलादिभि । कदल्या –रम्भाया, दलानि–पत्राणि, कह्लार–सौगन्धिकम्, मृणाल–बिसम्, कमल–पद्मम्, उत्पल–कुमुदम्, एतेषा द्वन्द्व । तै कदलीदलादिभि, कोमलै –सुकुमारस्पर्शै, कल्पिते–रचिते । किम्भूते? कुसुमानि च पल्लवाश्च कुसुमपल्लवा । हसन्त इव कुसुमपल्लवा यत्र तस्मिन् । धारागृहेऽथवा स्वप्यादिति वर्तते । धारागृह–अविरत यतो जलधारा पतन्ति । किम्भूते? पुस्तस्त्रीस्तनहस्तास्यै प्रवृत्तमुशीरवारि यत्र तस्मिन् । पुस्तो–दार्वादिमय्या स्त्र्याद्याकृतेरुपादानकारण यद्वस्तु तदुच्यते ।

**आ० र०–कल्हार–सन्ध्याविकाशि पद्मिनीपुष्पम् । कमल–दिनविकाशि । उत्पल–रात्रिविकाशि । मृणालानि–बिसानि । तल्पे–शयने । हसत्कुसुमा –विकसन्मल्लिकादिपुष्पा, पल्लवा –पर्यन्ता, यस्य तत्तथा । अथवा धारागृहे स्वप्यात् । यत्रे यन्त्ररचनाविशेषेण रचिता जलसीकरा प्रसरन्ति, तद्धारागृहम् । पुस्तस्त्रियो–दार्वादिमय्य पुत्रिका, तासां स्तनादिभ्य प्रवृत्तमुशीरवारि–सेव्योदक यत्र तत्तथा ।**

**निशाकरकराकीर्णे सौधपृष्ठे निशासु च ॥ ३७ ॥**
**आसना**

**स०**–निशासु–रात्रिषु, सौधपृष्ठे–हर्म्यतले, आसना–स्थिति । कार्यैत्यध्याहार्यम् । तत्रासीतेत्यर्थ । किम्भूते सौधपृष्ठे? निशाकर –शीतांशु, तस्य करा –गभस्तय, तैराकीर्णे–व्याप्ते ।

**आ० र०–निशासु पुनश्चन्द्ररश्मिव्याप्ते हर्म्यमस्तके स्वप्यात् ।**

**स्वस्थचित्तस्य चन्दनार्द्रस्य मालिनः ।**
**निवृत्तकामतन्त्रस्य सुसूक्ष्मतनुवाससः ॥ ३८ ॥**
**जलार्द्रास्तालवृन्तानि विस्तृताः पद्मिनीपुटाः ।**
**उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः ॥ ३९ ॥**
**कर्पूरमल्लिकामाला हाराः सहरिचन्दनाः ।**
**मनोहरकलालापाः शिशवः सारिकाः शुकाः ॥४०॥**
**मृणालवलयाः कान्ताः प्रोत्फुल्लकमलोज्ज्वलाः ।**
**जङ्गमा इव पद्मिन्यो हरन्ति दयिताः क्लमम् ॥ ४१ ॥**

**स०**–स्वस्थचित्तस्य–रागाद्यनुपहतमनस, जलार्द्रा क्लम हरन्ति । एव तालवृन्तादयो योज्या । अन्तर्दीपकत्वादस्य । तथा च कीदृशस्य? चन्दनार्द्रस्य,–चन्दनेनानुलिप्तस्य । तथा, मालिन –स्रग्विण । तथा, निवृत्त कामतन्त्र–पुष्पधन्वपरिच्छदो यस्य । तथा, सुष्ठु सूक्ष्मे तनुनी स्वच्छे वाससी यस्य स एवम् । जलार्द्रा – पानीयप्लुता शाटिका । तालवृन्तानि–मयूरपिच्छादिकृतानि तालवृन्ताकृतीनि व्यजनानि । तथा, विस्तृता –महान्त, पद्मिनीपुटा –नलिनीपत्राणि, वीजनार्थम् । तथा, उत्क्षेपा –मयूरपिच्छादिकृता व्यजनविशेषा । ते च किम्भूता? मृदुरुत्क्षेपो येषु ते मृदूत्क्षेपा । जलवर्षी हिमोऽनिलो येषु उत्क्षेपेषु ते जलवर्षिहिमानिला । शीतजलाभ्युक्षितैरेतैर्वात कार्य इत्यर्थ । कर्पूरेत्यादि । मालाशब्द प्रत्येक युज्यते । स्फटिककर्पूरग्रथिता माला मल्लिकामालाश्चेत्यर्थ । तथा, हारा –मुक्ताफलदामानि । किम्भूता? सह हरिचन्दनेन वर्तन्त इति सहरिचन्दना । यत् छेदे लोहितमतिसुगन्धि सुष्ठु शीतवीर्यं च, तद्धरिचन्दनमुच्यते । मनोहरेत्यादि । मनोहरो–रम्य, कलो–मधुर, आलापो येषा ते मनोहरकलालापा । शिशवो–बालका । तथा, सारिका –शरारय । शुका –कीरा । मृणालेत्यादि । मृणालानि–अतिकोमलानि बिसानि, वलया –कटकानि, यासा ता । दयिता –योषित । किम्भूता? कान्ता,–रम्या । तथा, प्रोत्फुल्लै –विकसितै, कमलैरुज्वला.–शोभिता । एवम्भूताश्चोत्प्रेक्ष्यन्ते, जङ्गमा –सञ्चारिण्य इव पद्मिन्य । क्लम हरन्तीति योज्यम् । स्वस्थचित्तस्येति प्राधान्यख्यापनार्थं प्रागुपात्तम् । स्वस्थचित्तस्यैवैते जलार्द्रादय क्लम हरन्ति, न तथोपतप्तमनस । [तथा हि–चन्दनार्द्रादिसकलविशेषेण विशेषितस्याप्युपतप्तमनसो न तथा क्लमं हरन्ति ।] चित्तायत्ता हि सर्वभावाना शुभाशुभप्रवृत्तय । तथा च स्निग्ध-

१ 'पङ्क्तिवत्तनुवस्त्रतृणा' घ । 'पङ्क्तिवत्तनवस्तृ' झ । २ 'कायमान तृणकुटी' इति त्रिकाण्डशेष । 'कायमान तृणगृह, तृणभित्ति पटालिका । इति कोष ।' ग । ३ 'सप्परे' क । 'छप्परे' ग । 'सन्धुरे' ङ । 'साधुरे' ज । ४ 'विकासिमल्लि' क ग ज । ५ 'यत्र रचना' ख घ ङ ज झ । 'यन्त्रविशेषेण' ञ ।

१ 'कर्पूरेणाधिवासिता मल्लिका, तस्या माला' इति चन्द्रनन्दन । २ 'मुक्तादामानि' ठ । ३ 'प्रफुल्लै' ठ । ४ 'चित्तस्यैते' ट. । ५ [ ] एतच्चिह्नान्तर्गत पाठष्ठ. पुस्तके नोपलभ्यते ।

मधुरोऽप्याहार उपयुक्त, सुखशय्यादिरपि विहार सेवित, शोकाविष्टचेतसो न तथा शरीरस्य पुष्टिमादधाति । अत एव "शोक शोषणानाम्" इत्यग्र्यसङ्ग्रहे (चरके सू अ २५।३९, सङ्ग्रहे सू अ १३) प्रोक्तम् । तथा, रूक्षोऽप्याहारस्तथाविधो विहारश्च सेवितो निर्वृत्तमनस पुष्टिमेवादधाति, न कार्श्यम् । तथा चोक्तम् (च सू अ २५।३९, स सू अ. १३)– "निर्वृति पुष्टिहेतूनाम्" इति । सुश्रुते च क्लमस्य लक्षणमुक्तम् (शा अ ४।५१)–"योनायास श्रमो देहे प्रवृद्ध श्वासवर्जित । क्लम स इति विज्ञेय इन्द्रियार्थप्रबाधक" इति ।

**आ० र०–क्लमहरत्वकथनद्वारेणासनादीनि विधत्ते–आसनेति । स्वस्थचित्तत्वादिविशिष्टस्य या आसना–आस्या, सा क्लम हरति । स्वस्थचित्तस्य–निर्वृत्तमनस । चन्दनार्द्रस्य–कर्पूरयुक्तचन्दनार्द्रस्य । तदुक्तम्–"कर्पूरचन्दनार्द्राङ्गो मृदु[1]धर्मोत्तरच्छद" इति । मालिन –मालाभूषितस्य । निवृत्तकामतन्त्रस्य–सुरतविमुखस्य । तनु–विरल, वासो यस्य । जलार्द्रादयो व्यजनविशेषा क्लम हरन्ति । जलार्द्रा –वस्त्रमयानि व्यजनानि । तालवृन्तानि–तालवृन्तमयानि[3] । विस्तृता –ये व्यजनकाले विस्तीर्यन्ते । पद्मिनीपुटा –पद्मिनीपुटमयानि[4] । उत्क्षेपा –नलिकाप्रविष्टदण्डत्वादूर्ध्वमधश्चाम्भ क्षिपन्ति[5] । ते च सर्वे जलार्द्रादयो मृदूत्क्षेपा –मन्दान्दोलना[6] । जलवर्षी हिमानिलो येषां ते तथा । कर्पूरमालादय क्लम हरन्ति । कर्पूरग्रथिता मल्लिकाग्रथिताश्च माला. । सहरिचन्दना –पीतचन्दनमणिमिश्रिता., हारा –मुक्तावलय. । मनोहरा –सुन्दराकारा, कलालापा.–मधुरालापाश्च, शिशव शुका सारिकाश्च । मृणालादिधारणाजङ्गमा. पद्मिन्य इव याश्च स्त्रिय, ताश्च क्लम हरन्ति ।**

इदानीं वर्षाचर्या निर्दिदिक्षुरिदमाह—

**आदानग्लानवपुषामग्निः सन्नोऽपि सीदति ।**
**वर्षासु दोषैर्दुष्यन्ति तेऽम्बुलम्बाम्बुदेऽम्बरे ॥ ४२ ॥**
**सतुषारेण मरुता सहसा शीतलेन च ।**
**भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा ॥ ४३ ॥**
**वह्निनैव च मन्देन, तेष्वित्यन्योन्यदूषिषु ।**
**भजेत्साधारणं सर्वमूष्मणस्तेजनं च यत् ॥ ४४ ॥**

**स०**–आदानमुक्तम्, तेनादानाख्येन कालेन ग्लान–सक्लम, वपु –शरीर, येषा पुरुषाणा ते आदानग्लानवपुष, तेषामपचितवातूनामग्निरप्यपचित[7] सन्नो–मन्द सन्, पुनर्वर्षासु सीदति–हानिं याति । अपिशब्द पुनरर्थे, अनेकार्थत्वान्निपातानाम् । वर्षास्विति नित्यबहुत्वाद्बहुवचनम् । केन सीदति? इत्याह–कालस्वभावाद्दोषै,–वातपित्तश्लेष्मभि, दुष्टैरित्यनुक्तमप्यर्थाद्गम्यते । यतोऽग्निसादहेतुत्वमदुष्टाना तेषा न सम्भवति । तस्माद्दुष्टैर्दोषैरग्नि सीदतीत्यर्थाल्लभ्यते । ननु, कथ वर्षासु दोषाणा दुष्टत्व स्यात्? इत्याह–दुष्यन्तीत्यादि । ते दोषा दुष्यन्ति । कदा? अम्बरे–वियति, अम्बुलम्बाम्बुदे–अम्बुना लम्बा अतिनिर्भरत्वादम्बुलम्बा ईदृशा अम्बुदा –मेघा, यस्मिन्नेवविधे[2] सति । अनेन च विशेषणेनास्य कालस्य स्वरूपमुपलक्षयन्त्याचार्या । यदैवविधो वर्षाकाल सम्पद्यते, तदैवैते दोषा दुष्यन्ति–स्वकर्मण्ययोग्या सम्पद्यन्ते, न वर्षाकालमात्रेऽनासादितस्वरूपे । तथा, सतुषारेण मरुता–सजलकणेन पवनेन, तथा, सहसा–ग्रीष्मतापसन्तापादनन्तरमेव, शीतलेनाभ्यन्तरो वायुर्दुष्यति । तथा, भुवो बाष्प –ऊष्मा भूबाष्पस्तेन । तथा, कालस्वाभाव्याच्चाम्लपाकेन[3] वारिणा पित्त दुष्यति । तथा, मलिनेन वारिणा–लूतादितन्तुविण्मूत्रेत्यादिकलुषेण वर्षाजलेन, कालस्वाभाव्याच्चातिशयेन[4] मन्दत्व गतेनाग्निना श्लेष्मा दुष्यति । तदेवमस्मिन्काले वातपित्तश्लेष्माणो युगपत्कालस्वाभाव्याद्दुष्यन्ति । नन्विह त्रयाणामपि दोषाणा कोपोऽनुज्ञायते । वक्ष्यति तु (हृ सू अ १२।२४)–"चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु" इति । तदिमे वचसी परस्परं व्याहते । अत्रोच्यते । नानयोर्वाक्ययोर्मिथो विरोध सम्भाव्यते । यस्मादिह दुष्यन्तीत्युक्त्या स्वस्थानस्था एव दुष्टि प्राप्ता विषादिस्पृष्टद्रव्यवत्कार्यकरणेऽसमर्था जायन्त इत्युक्तम् । चयप्रकोपप्रशमा इत्यत्र प्रकर्षेण कोप स्थानान्तरगतिलक्षणो गदित । तदेवमस्मिन् काले वायो कदाचिद्दुष्टत्व स्यात्, कदाचित्कोपश्च, इति वचनाभ्यामेताभ्या प्रत्यपादि । पित्तश्लेष्मणोस्तु दुष्टत्वमात्रमेव । इति न किंचिदत्रासमञ्जसम् । तेष्वित्यादि । इति–प्रकारे । अन्योन्य दूषयितु शील येषा वातादीना त एवम्, तेषु–अनेन प्रकारेण परस्पर दूषणस्वभावेषु सत्सु, भजेत्साधारण सर्व–यत्किञ्चिद्वातादीना युगपत् प्रशमन तत्सर्व सेवेत । यच्चोष्मणो–जाठराग्ने, तेजन–उद्दीपन, तद्भजेत् । ऊष्मणस्तेजनस्यात्र चशब्दप्रयुक्तस्योपादान प्राधान्यख्यापनार्थम् । अग्निर्हि सर्वभावाना प्रधानम् । तथा च वक्ष्यति (सङ्ग्रहे शा अ. ६)–"शान्तेऽग्नौ म्रियते, युक्ते चिर जीवत्यनामय । रोगी स्याद्विकृते, मूलमग्निस्तस्मान्निरुच्यते[5]" इति । तस्मादग्न्युत्तेजनार्थं यत्न कार्य इति भाव । भजेदिति क्रियापद[6] आदिदीपकत्वात् "भोजन त्वतिदुर्दिने" इति यावत्सर्वेषु योज्यम् ।

**आ० र०–अथ वर्षाचर्या । सा च चयपूर्वके प्रकोपे शोधनी, अचयपूर्वके शमनी । तत्र सोपपत्तिकमुभयचर्या-**

१ 'पुष्टिकराणाम्' स च, स २ । २ 'मृदुचर्मो' ग । ३ 'तालपत्रमयानि' ख घ झ । ४ 'पुटपत्रमयानि' क ५ 'मधश्चोत्क्षिप्यन्ते । मृदू' ख घ झ । ६ 'मृदुदोलना.' ग । 'मन्ददोलना' ञ. । ७ 'नम्लान' ञ. ।

१ 'ग्निमान्द्यहे' ठ । २ 'यस्मिन् तदेवम् । अ' ट ठ । ३ 'कालस्वभावादम्ल' ट । ४ 'लस्वभावाच्चा' ट । ५ 'तस्मात्त प्रयत्नेन पालयेत्' इति सङ्ग्रहद्वये पाठ । किन्तु 'मूलमग्निस्तस्मान्निरुच्यते' इति पाठो युक्ततर इति प्रतिभाति । अस्यैव चरके (चि अ १५।२) पठितत्वात् प्राचीनानेकलिखितपुस्तकोपलब्धत्वाच्च । ६ 'क्रिया आदि' ट,ठ ।

साधारण विधत्ते-आदानग्लानवपुषामिति । यत्साधारण-सर्वदोषहर, यच्चोष्मणस्तेजन-अग्निदीप्तिकर, तत्सर्वं वर्षासु भजेत्। केषु सत्सु? तेषु-अग्निदोषेषु, अन्योन्यदूषिषु-कृतपरस्परदूषणेषु सत्सु। सर्वेषा दुष्टत्वात्सर्वसाधारण भजेदित्यर्थ । कथमन्योन्यदूषणम्? इति,-अनेन प्रकारेण। आदानेनावसन्नदेहानामग्निरपि देहावयवत्वादवसन्नोऽपि पुनर्दोषै सीदति-मन्दत्वलक्षणा दुष्टि याति । ते च दोषा आदानमन्देन वह्निना दुष्यन्ति-दुष्टि यान्ति । वह्ने सहकारिण्याह-अम्बुलम्बाम्बुदेऽम्बरे,-जलभरलम्बमानमेघे नभसि सति, सतुषारेण-सजलकणेन, सहसा प्रवृत्तेन शीतलेन च वायुना दुष्यन्ति, भूवाष्पेण च दुष्यन्ति, अम्लपाकेन मलिनेन च वारिणा दुष्यन्ति । दुष्टिश्चात्र वायोश्चयपूर्वक प्रकोप, "चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु" इति ( हृ सू अ १२।२४ ) वचनात् । पित्तस्य चयलक्षणा दुष्टि, "वर्षादिषु तु पित्तस्य" इति ( हृ सू अ १२।२४ ) वचनात् । कफस्य त्वचयपूर्वक प्रकोप । उक्त हि चरकेण ( सू अ ६।३३ )-"भूवाष्पान्मेघनिष्यन्दात्पाकादम्लाजलस्य च । वर्षास्वग्निबले [3]हीने कुप्यन्ति पवनादय ॥" इति । चरकवचनेऽपि पित्तप्रकोपशब्देन [4]चयमात्र लक्ष्यम्, "चयप्रकोपप्रशमा पित्तादीना यथाक्रमम् । भवन्त्येकैकश षट्सु कालेष्वभ्रागमादिषु ॥" इति (च सू अ १७।११२) स्ववचनविरोधभयात् ।

किं तत्साधारणमिति? तदुदाहरणार्थमाह—

**आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान् ।**
**जाङ्गलं पिशितं यूषान् मध्वरिष्टं चिरन्तनम् ॥४५॥**
**मस्तु सौवर्चलाढ्यं वा पञ्चकोलावचूर्णितम् ।**
**दिव्यं कौपं शृतं चाम्भो भोजनं त्वतिदुर्दिने ॥४६॥**
**व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ।**

**स०**-शुद्धा तनुर्यस्य स एवम्भूत -कृतविरेकादि सन्, आस्थापन-निरूह, भजेत् । तथा, जीर्ण धान्य-पुराणयवगोधूमादिकम् । तथा, रसान्-मासरसान् । किम्भूतान्? कृतान्,-स्नेहशुण्ठ्यादियुतान् । तथा, जाङ्गल पिशितं-हरिणैणादिक मासम् । तथा, यूषान्-मुद्गदाडिमादिकृतान् । तथा, मधु-मार्द्वीकम्, अरिष्टम्, द्वयमप्येतत् चिरन्तन-पुराणम्, न तु नवम्, अग्निमान्द्यभयात् । मस्तु सौवर्चलाढ्य-अक्षलवणसयुक्तम् । वेति समुच्चये । किम्भूत मस्तु? पिप्पलीपिप्पलीमूलचव्यचित्रकनागरा पञ्चकोलम्, तेनावचूर्णितम् । तथा, दिव्य-आकाशज, तथा कौप, तथा शृत-क्वथित, चाम्भ पिबेत् । च समुच्चये । दिवि भव दिव्यम्, दिगादित्वाद्यत् । कूपे भवं कौपम्, प्राग्दीव्यतोऽण् । अतिदुर्दिने-वातवर्षाकुलेऽहनि, व्यक्ता -प्रधाना, अम्ललवणस्नेहा यत्र तद्भोजन भजेत् । तथा, सशुष्क-शुष्कप्रायम् । तथा, क्षौद्रवत्-समाक्षिकम् । तथा, लघु । ननु, "वातल मधु" इति ( हृ सू अ ५।५२ ) वक्ष्यति । पवनश्चात्र कुप्यतीत्युक्तम् । अतो माक्षिकस्यात्रोपयोगो न युक्त । अत्रोच्यते । देहवातवोऽस्मिन् काले क्लेदमुपयान्ति । ततश्च क्लेदसरक्षणे एवोपक्षीणप्रभावत्वात् मधु मरुत्कोप विधातुमसमर्थम् । तस्मान्मधूपयोगो न्याय्य एव ।

**आ० र०**-शोधनी विधत्ते-आस्थापनमिति । शुद्धतनु -कृतविरेचन सन्, आस्थापन-बस्तिकर्म, भजेत् ।

शमनीं विधत्ते-जीर्णं धान्यमिति । जीर्णं-पुराणम् । रसान्-मासरसान् । कृतान्-पटुकटुम्लस्नेहयुतान् । पिशित-मासम् । यूषान्-धान्यक्वाथान्, तानपि कृतान् । मधु-मार्द्वीकम्, अरिष्ट-क्वथितौषधमद्यम्, द्वयमपि चिरन्तनम् । पञ्चकोलावचूर्णित सौवर्चललवणाढ्य च मस्तु,-दधिमण्डम् । दिव्य-आन्तरिक्षम् । तच्चातीताश्विनगृहीत काचादिपात्रस्थम्, वर्षासु ग्रहणनिषेधात् । तदभावे कौपम्, तच्च शृतम् । उक्त हि सङ्ग्रहे ( सू अ ४ )-"दिव्य क्वथितकूपोत्थ चौण्[3]ड्य सारसमेव च ।" इति ।

वर्[5]षाविशेषे भोजनविशेषमाह-भोजन त्विति । अतिदुर्दिने-वातवर्षाकुलेऽहनि । सशुष्क-कुल्माषादि । क्षौद्रवत्-समाक्षिकम् । वातलमपि मधु क्लेदघ्नत्वात्कालसामर्[6]थ्येन वा अवातलत्वाद्विहितम् । उक्त हि सङ्ग्रहे ( सू. अ. ७ )-"वातल वातकोपेऽपि वर्षासु मधु शस्यते" इति ।

अथाऽत्र काले यादृश पुरुष स्यात्त दर्शयति—

**अपादचारी सुरभिः सततं धूपिताम्बरः ॥ ४७ ॥**
**हर्म्यपृष्ठे वसेद्बाष्पशीतशीकरवर्जिते ।**

**स०**-पादाभ्या चरति नित्य पादचारी, नैव य सोऽपादचारी,-यानयायी स्यात् । तथा, सुरभि -शोभनगन्धयोगात् । "स्नानशील सु[7]सुरभि" ( हृ सू अ २।३१ ) इत्यनेनैवास्यार्थस्योक्तत्वात् सुरभिग्रहणमतिशयार्थम् । तथा, सतत-अविरत, धूपितेऽम्बरे यस्य स एवम् । तथा, हर्म्यपृष्ठे-धवलगृहतले, वसेत्-तिष्ठेत् । कीदृशे? बाष्पश्च शीत च शीकरश्च तैर्वर्जिते ।

**आ० र०**-अपादचारित्वादि विधत्ते-अपादचारीति । अपादचारी-सतत हस्त्यादिर्वाहनगामी । धूपिताम्बर.-अगुर्वादिधूपितवस्त्र । सततमिति त्रिष्वपि सम्बन्धनीयम् । अत एव "स्नानशील. सुसुरभि" इत्यस्यापौनरुक्त्यम् ।

१ 'नम्लान' ञ । २ 'सर्वं साधा' ख घ झ । ३ 'क्षीणे' स च । ४ 'वृद्धिमात्र' क ख ग घ झ । ५ 'च' अ । ६ 'चेति' ट. ।

१ 'अत्रेद सम्प्रचक्ष्महे' ट । २ 'माध्वीकम्' ञ । ३ 'चौढ्य' ख घ ञ । 'चौण्ड' स स । 'चौण्ड-यत् पवते शिलाकूपिकाभवम्' इतीन्दु । ४ 'वा' स २ । ५ 'वर्षातिशये' क ग । ६ 'थ्येनावातल' ग. । 'सात्म्येन वातघ्नत्वा' ञ । 'सात्म्येन न वातलत्वाच्च विहितम्' झ । ७ 'ससुरभि' ठ । ८ 'दियानगामी' क ग.ज. ञ. । ९ 'योजनीयम्' क.ग.ज. ।

स्थानविशेषे वास विधत्ते—हर्म्यपृष्ठ इति । हर्म्यपृष्ठे—हर्म्यमस्तके ।

**नदीजलोदमन्थाह·स्वप्नायासातपांस्त्यजेत् ॥ ४८ ॥**

स०—तथा, नदीजलादीन् पञ्च त्यजेत् । उदकालोडिता सक्तव ससर्पिष्का उदमन्थवाच्या जलावक्षीरीसञ्ज्ञा । तदत्र काले साम्यत्वात्सक्तवस्तक्रादिसयोगाच्चात्यन्तमनिष्टा । पानीयसयोगात्तु वातला, प्रकृष्टवीतले काले नात्यभीष्टा एव । मुनिना त्वेवमुक्तम् (च सू अ ६।३४)—"उदमन्थ दिवास्वप्नमवश्याय नदीजलम् । व्यायाममातप चैव व्यवाय चात्र वर्जयेत्" इति ।

आ० र०—नदीजलादीन् निषेधति—नदीजलेति । द्रवालोडिता सक्तवो मन्थ, स एवोदके द्रवे उदमन्थ । आयासो—व्यायाम ।

अधुना शरच्चर्या विवक्षुरिदमाह—

**वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।**
**तप्तानां सञ्चितं वृष्टौ पित्तं शरदि कुप्यति ॥ ४९ ॥**
**तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ।**

स०—वर्षासु शीत वर्षाशीत, तदुचित—सात्म्य यस्य, तदेवविधमङ्ग—वपुर्येषा ते वर्षाशीतोचिताङ्गा नरा, तेपा सहसैव—झटित्येव, शरदि जाताया, अर्करश्मिभि—भानुभाभिस्तप्ताना सता पित्त कुप्यति । किम्भूतम्? वृष्टौ सञ्चित,—वर्षासु वृद्धिं गतम् । यतश्चैव ततश्च तज्जयाय तिक्त घृत—कुष्ठचिकित्सितोक्त, योज्यमिति वाक्यशेष । यदि वा, तिक्तैर्द्रव्यै सावितम् । तथा, विरेको योज्य । तथा, रक्तमोक्षण च । सर्वोपक्रमेभ्य पित्ते विरेकस्य ज्यायस्त्वादिह पूर्वमुपन्यास । तथा ह्याह (चरके सू अ २५।३९)—"विरेचन पित्तहराणाम्" इति । ततो रक्तमोक्षण, पित्ताधारत्वाद्रक्तस्य । विरेचनाङ्गत्वाच्च तज्जयाय घृत तिक्तमिति घृतस्य पूर्वमुपन्यास । न ह्यस्निग्धस्य विरेचनप्राप्तिरस्ति । तथा च वक्ष्यति (हृ सू अ १८।५९)—"स्नेहस्वेदावनभ्यस्य कुर्यात्सशोधन तु य । दारु शुष्कमिवानामे शरीर तस्य दीर्यते" इति । तथा, विरिक्तस्य स्रुतरक्तस्य च पवन प्रकोपभयम् । कालस्वाभाव्याच्च पित्तकोपभयम् । तदेतत्परिहर्तुं तथा देहपुष्ट्यर्थमग्निसन्धुक्षणार्थं च तिक्तघृतोपयोग कार्य । इत्यनेककार्यकरणत्वेन प्राधान्याच्च तिक्तघृतस्य पूर्वमुपन्यास । असमासकरण च ज्ञापनार्थम् । नैतानि सर्वाण्यवश्य तिक्तघृतादीनि तदा कार्याणि । कि तर्हि? देशाद्यनुरोधात् कदाचित्पित्तविजयाय तिक्त घृत, कदाचिद्विरेक, कदाचिद्रक्तमोक्ष, कदाचिद्द्वयं, कदाचित्सकलान्येवेति । विरेकस्तु पित्तविजयार्थमवश्यं शरदि कार्य । यथा—वसन्ते श्लेष्मविजयाय वमनम्, वर्षासु च पवनविजयाय बस्ति । अत एव प्राङ्निर्दिष्ट वसन्ते वमन, वर्षासु चास्थापन, शरदि विरेक इति ।

आ० र०—अथ शरच्चर्या । सा च चयपूर्वके शोधनी, अचयपूर्वके शमनी । तत्र सोत्पत्तिका शोधनी विधत्ते—वर्षाशीतोचिताङ्गानामिति । वर्षासु सञ्चित पित्त वार्षिक शीतसात्म्यशरीराणा नृणा शरद्यर्करश्मिभि सहसैव तप्तानामसात्म्यतापसम्बन्धात्कुप्यति । अतस्तस्य—पित्तस्य, जयाय तिक्त—तिक्तसञ्ज्ञ कुष्ठचिकित्सितोक्त, घृत स्नेहनार्थं योज्यम् । ततो विरेकस्ततो रक्तमोक्षणम् ।

**तिक्तं स्वादु कषायं च क्षुधितोऽन्नं भजेल्लघु ॥ ५० ॥**
**शालिमुद्गसिताधात्रीपटोलमधुजाङ्गलम् ।**

स०—क्षुधितोऽन्न—भोजन, तिक्तादिगुणयुक्त भजेत् । क्षुधितग्रहणमतिबुभुक्षितप्रतिपादनार्थम्, अक्षुधितस्य भोजनाविकाराभावात् । कि तत्तिक्तादिगुणयुक्तम्? इत्याह—शालीत्यादि । शाल्यादीन् सप्त भजेत् ।

आ० र०—शमनी विधत्ते—तिक्तमिति । क्षुधित सन् तिक्तादिरस लघु शाल्यादिकमन्न भजेत् । क्षुधितग्रहणमतिक्षुधितस्य भोजनार्थम् । तदा हि पित्ताधिक्यादसम्यक्क्षुध्यपि क्षुधितत्वबुद्धि । उक्त च चरकेण (सू अ ६।४१)—"पित्तप्रशमन सेव्य मात्रया सुप्रकाङ्क्षितै ।" इति । शाल्यादिग्रहण तत्तुल्यानामेव तिक्तादीना ग्राह्यर्थम् । सिता—शर्करा । धात्री—आमलकी ।

**तप्तं तप्तांशुकिरणै· शीतं शीतांशुरश्मिभिः ॥ ५१ ॥**
**समन्तादप्यहोरात्रमगस्त्योदयनिर्विषम् ।**
**शुचि हंसोदकं नाम निर्मलं मलजिज्जलम् ॥ ५२ ॥**
**नाभिष्यन्दि न वा रूक्षं पानादिष्वमृतोपमम् ।**

स०—समन्तात्—सर्वत, सूर्यप्रभाभिरहनि तप्त—क्वथितम्, चन्द्रकिरणैर्निशि शीतीकृतम् । तथा, अगस्त्योदयेन निर्विषीकृतम् । तथा, शुचि—पवित्रम् । वर्षासु ह्यशुचीत्युक्तम् । तच्च हंसोपभोग्यतया हंसवदतिनैर्मल्याद्धंसोदक नाम तन्त्रकारैरायुर्वेदशास्त्रे सञ्ज्ञितम् । तथा, निर्मल—अकलुषम् । तथा, मलान्—वातपित्तश्लेष्मणो, जयतीति मलजित् । अगस्त्योदयनिर्विष शब्देन विशेषणेनैतत् प्रतिपादयति, यथा—यदन्तरिक्षप्रभव सरस्तडागादिस्थ जल, तदेव प्रायेण शरद्येवगुण वेद्यम् । न कूपादिप्रभवम्, तस्य सदा निर्विषत्वात् । तथा चान्तरिक्षप्रभवमेव पठ्यते (हृ सू अ ५।८)—"लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम्" इति । तच्च नाभिष्यन्दि—न स्रुतिरूपश्लेष्मकारि, न वा रूक्ष—न वातप्रकोपकारि । वाशब्दश्चशब्दस्यार्थेऽत्र । यतस्तप्तांशुकिरणैस्तप्तम्, यतश्च शीतांशुकरै शीत—प्रह्लादितम्, इत्य स्नेहरौक्ष्ययोरन्तरे वर्तमान पानादिष्वमृतोप-

१ 'वातकालेऽनिष्टा एव' ट । २ 'तप्ताना सञ्चित पूर्वं तदा पित्त प्रकुप्यति' इति सङ्ग्रहपाठ । ३ 'वपाया' ट ठ । ४ 'इत्यनेन कार्यं' ठ । 'कार्यकारण' इति क्वचित् ।

१ 'सुप्रकाङ्क्षितै —सुबुभुक्षितै ' इति चक्रपाणिदत्त । २ 'हसशब्देन सूर्याचन्द्रमसावभिधीयेते, ताभ्या शोधितमुदक हसोदकम् । यदि वा हससेवायोग्यमुदकम् । हसा. किल विशुद्धमेवोदक भजन्ते ।' इति चरके चक्रपाणिदत्त । ३ 'त्वकफान्' ट । ४ 'मेव' ठ । ५ 'ब्दश्चार्थेऽत्र' ट. । ६ 'शुतारककरै ' ठ ।

मम् । आदिशब्देन स्नानावगाहयोर्ग्रह । कुपितदोषशमनादकुपितदोषसाम्यानुवृत्तिहेतुत्वाच्चामृततुल्यमेतज्जल भजेदिति योज्यम् । अत्रोष्णांशुग्रहणमग्नितापनिवृत्त्यै । किरणग्रहण साक्षात्तत्स्पर्शसम्भावनार्थम् । तृणदवपलाशादिभिरास्तृतमपि रविस्तापयति न तु तत्तया गुणवत् । अत किरणग्रहणेन तद्व्यवधानव्युदास करोति । ननु च, सर्व दिन सूर्यकिरणैस्तप सम्भवति । चन्द्रकरैस्तु सर्वा रात्रि कथमिव स्यात्? यत सकलस्य चन्द्रमस पौर्णमास्यामेव सर्वस्या रात्र्या सम्भवो नान्यत्र । तस्माच्छीत चन्द्रकिरणै रात्र्यामिति नैतद्युक्तम् । अत्रोच्यते । विमले व्योमनि यथैव रविचन्द्रौ यथाकालम व्याहतस्वरूप प्राप्तौ पश्यता चलस्यापादयतस्तद्वन्नक्षत्राण्यपि । तस्मान्नक्षत्रैरपि शीत चन्द्रेणेव श्रेष्ठमेव भवत्युदकम् । एव चैतदवगच्छेत्, अन्यथैतद्वाक्यमयुक्तमिव स्यात् । चरकमुनिनाप्यनेनैवाऽभिप्रायेण नक्षत्रग्रहण नाकारि । यथा (च सू अ ६।४५)—"दिवा सूर्यांशुसन्तप्त निशि चन्द्रांशुशीतलम् ।" इति । अष्टाङ्गसङ्ग्रहेऽप्युक्तम् (सू अ ४)—"दिवा दिवाकरकरैर्निशाकरकरैर्निशि" इति । अत्र हि सकलस्याहोरात्रस्य रविशशियोगाय दिवानिशाग्रहणम्, अन्यथैतदनर्थक स्यात्, व्यभिचाराभावात् ।

**आ० र०—हसोदक विधत्ते—तप्तमिति । किरणरश्मिग्रहण साक्षात्सम्बन्धार्थम् । समन्तादपि—सर्वेष्वपि प्रदेशेषु । अहोरात्रग्रहण सर्वदा सम्बन्धार्थम् । सर्व दिन सूर्येण तापित, सर्वा च रात्रि शीतांशुना शीतलीकृतम् । शीतांशुशब्देन रात्रिदृश्य ज्योतिश्चक्रमुपलक्ष्यते, योगिकत्वादुच्यते वा । अगस्त्यो—ज्योतिर्विशेष । शुचि—स्वत एव निर्मलम्, तच्च शरदि । यदाह सुश्रुत (सू अ ४५।८)—"शरदि सर्व प्रसन्नत्वात्" इति । तस्माच्छारदमेव हसोदकम् । तथाऽऽह चरक (सू अ ६।४६)—"हसोदकमिति ख्यात शारद विमल शुचि" इति । निर्मल—सूर्यतापादिना अपगतदोषम् । मलजित्—दोषत्रयहरम् । नाभिष्यन्दि—न स्रोत स्रावि । न वा रूक्ष—न स्रोत शोषि । पानादिषु—पानस्नानावगाहेषु । अमृतोपम—यथा देवानाममृत तथेद मनुष्याणाम् । सङ्ग्रहे तु (सू अ ४)—"हसौघपक्षविक्षेपभ्रमद्भ्रमरपङ्क्तिषु । सुसरोरुहसेव्यासु सरसीषु प्लवेत च ॥" इति ।**

**चन्दनोशीरकर्पूरमुक्तास्रग्वसनोज्ज्वल ॥ ५३ ॥**
**सौधेषु सौधधवला चन्द्रिका रजनीमुखे ।**

स०—चन्दन चोशीर च कर्पूरश्च मुक्ताश्च स्रजश्च वसनानि च, तैरुज्ज्वल —शोभन सन्, सौधेषु—धवलगृहपृष्ठेषु, चन्द्रिका—ज्योत्स्ना, भजेत् । कदा? रजनीमुखे,—प्रदोषे । परतस्तु निदाघ इव न सेव्या, अवश्यायभयात् । अवश्यायो ह्यत्र परिहार्य ।

**आ० र०—प्रदोषे कौमुदीभजन विधत्ते—चन्दनोशीरेति । चन्दनादिभिरुज्ज्वल सन्, सौधेष्ववस्थित सौधधवला चन्द्रिका रजनीमुखे भजेत् । उशीर—सुगन्धिवालकम् । स्रज —कुमुदादिमाला । सौधेषु—सुधाधवलगृहेषु ।**

तथा चाह—

**तुषारक्षारसौहित्यदधितैलवसातपान् ॥ ५४ ॥**
**तीक्ष्णमद्यदिवास्वप्नपुरोवातान् परित्यजेत् ।**

स०—तुषारादीन् दश परित्यजेत् । तुषारो—अवश्याय । क्षारो—यवक्षारादि । सौहित्य—तृप्ति । तीक्ष्ण च तन्मद्य च तीक्ष्णमद्यम् । पुरोवात —पूर्वदिगागतो वात ।

**आ० र०—तुषारादीन्निषेधति—तुषारक्षारेति । तुषारो—अवश्याय । क्षारो—यवक्षारादि । सौहित्य—तृप्तिभोजनम् । तीक्ष्णमद्य—तीव्रमदमद्यम् । पुरोवात —पूर्वदिग्वायु ।**

व्यासेन ऋतुचर्यामुक्त्वा समासेनाह—

**शीते वर्षासु चाद्यास्त्रीन् वसन्तेऽन्त्यान् रसान्भजेत् ।**
**स्वादुं निदाघे, शरदि स्वादुतिक्तकषायकान् ।**
**शरद्वसन्तयो रूक्षं शीत घर्मघनान्तयोः ॥ ५६ ॥**
**अन्नपान समासेन विपरीतमतोऽन्यदा ।**

स०—शीते—हेमन्तशिशिरयो , वर्षासु चाद्यास्त्रीन्—स्वाद्वम्ललवणाख्यान्, रसान् भजेत् । वसन्ते चान्त्यास्त्रीन्—तिक्तकटुकषायान् भजेत् । स्वादु निदाघे—ग्रीष्मे मधुर, भजेत् । शरदि स्वादुतिक्तकषायान् भजेत् । शरद्वसन्तयो रूक्षमन्नपान समासेन भजेत् । अतो विपरीत—स्निग्धम् , अन्यदा—हेमन्तशिशिरग्रीष्मवर्षासु । शीतमन्नपान घर्मघनान्तयोर्भजेत् । अतो विपरीत—उष्णमन्नपानम्, अन्यदा—हेमन्तशिशिरवसन्तवर्षाख्ये काले, भजेत् ।

**आ० र०—व्यासेनोक्तामृतुचर्या सुखग्रहणार्थं समासेनाह—शीते वर्षासु चेति । हेमन्तशिशिरवर्षासु स्वाद्वम्ललवणस्निग्धोष्णमन्नपान भजेत् । वसन्ते तिक्तकटुकषायरूक्षोष्णम् । ग्रीष्मे स्वादुशीतस्निग्धम् । शरदि स्वादुतिक्तकषायरूक्षशीतम् । इति मथितार्थ ।**

सम्प्रति सेव्यत्वेनोपदिष्टस्याहारस्यापवादमाह—

**नित्यं सर्वरसाभ्यास स्वस्वाधिक्यमृतावृतौ ॥५७॥**

स०—नित्य—सर्वदा, सर्वेषा—षण्णामपि रसाना, अभ्यास —शीलन, कार्यमिति वाक्यशेष । "सर्वरसाभ्यासो बलकराणाम्" इति (स सू अ १३) वचनात् । नन्वेव सति यथर्तुसेव्यत्वेन रसनियमो य पूर्व कृत स विरुद्ध ? नेत्याह—स्वस्वेत्यादि । ऋतावृताविति वीप्साया द्वित्वम् । स्व च स्व च स्वस्व, तस्याधिक्य—भूयस्त्व, कार्यमिति शेष । यथा—शीते वर्षासु चाद्यास्त्रीनित्युक्तम् । तदेतेषु ऋतुष्वेते रसा भूयसोपयोक्तव्या , न

१ 'नुवर्तित्वाच्चा' ठ । २ 'तुल्यमेव तज्जल भवेदिति' ट । ३ दव —वनम् । पलाशानि—पर्णानि । ४ 'स्तापित' ट । ५ 'न युक्तम्' ट । ६ 'स्वरूपप्राप्तौ' ठ । ७ अत्र—चरकसङ्ग्रहवचनयो । ८ 'शुभि शीत' क ग ञ । 'शुनिर्वापितम्' ख घ ङ । ९ 'श्चक्र लक्ष्यते' क ग । १० 'तच्छारद' क ग ञ । ११ 'विक्षिप्तभ्र' क ग ञ ।

१ 'कुसुमादि' क ग ज । २ 'तृप्तिपर्यन्त भोजनम्' ख घ ङ ञ ।

त्वेत एवेत्यर्थ । तथा, समधातु प्रति समे देशे चेष नियमो वेद्य । अन्यत्र तु जाङ्गलेऽनूपे वा देशे विषमधातोश्च धातुसाम्योत्पादनार्थं देशदेहानुगुणमन्यर्तुविहितविधानमन्यस्मिन्नृतावनुष्ठेयमेव ।

**आ० र०–स्वाद्वादिनियमान्निवारितस्य रसान्तरस्य प्रतिप्रसव करोति–नित्यमिति । नित्य–सर्वेषु ऋतुषु, सर्वेषा रसानामभ्यास कर्तव्य । नन्वेव चेत्तर्हि स्वाद्वादिविधिर्व्यर्थ स्यादित्यत आह–स्वस्वाधिक्यमिति । यथास्व विहिताना स्वाद्वादीनामितरेभ्योऽधिकोऽभ्यास· कर्तव्य ।**

किमन्यस्मिन्नृतौ प्राप्ते, पूर्वर्तुचर्या सहसैव त्याज्याऽन्या च सेव्या? नेत्याह—

**ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृत ।**
**तत्र पूर्वो विधिस्त्याज्य· सेवनीयोऽपर· क्रमात् ५८**
**असात्म्यजा हि रोगा· स्यु· सहसा त्यागशीलनात्**
**॥ ५ १/२ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचिताया मष्टाङ्गहृदयसंहिताया सूत्रस्थाने ऋतुचर्या नाम तृतीयोऽध्यायः॥ ३ ॥**

**स०**–ऋत्वो –शिशिरवसन्तयोर्ग्रीष्मप्रावृषोरित्यादिकयो , अन्त्यश्चादिश्च यौ सप्ताहौ तावृतुसन्धिरिति स्मृत –इत्युच्यते । तत्र–सप्ताहद्वयलक्षणे ऋतुसन्धौ, पूर्व –पूर्वर्तुसम्बन्धी, विधि त्याज्य । अपर –एष्यदृतुसम्बन्धी, सेवनीय । कथम्? क्रमात्,–क्रमेण, "पादेनापथ्यमभ्यस्तम्" (हृ सू अ ७। ४७) इत्यादिना । सप्तानामह्ना समाहार सप्ताह । सप्ताहश्च सप्ताहश्च सप्ताहौ। "राजाह सखिभ्यष्टच्" इति टच् समासान्त । "न सख्यादे समाहारे" इत्यह्नादेशनिषेध । ननु,किमेव त्याग सेवन च क्रियते? इत्याह–असात्म्यजा इत्यादि । यस्मात् सहसा त्यागशीलनात् असात्म्यात्–अनुचिताज्जाता असात्म्यजा रोगा स्यु । तत सहसा त्यागशीलन न कार्यमिति भाव ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने तृतीयोऽध्याय समाप्त ॥ ३ ॥

**आ० र०–पूर्वोत्तरयोर्ऋतुचर्ययो क्रमेण त्यजनभजने विधत्ते–ऋत्वोरिति । पूर्वस्यर्तोरन्त्य सप्ताह , उत्तरस्य च आद्य सप्ताह , एव चतुर्दशाहात् ऋतुसन्धि स्मृत । तस्मिन् ऋतुसन्धौ पूर्वर्तुसम्बन्धी विधि क्रमात् त्याज्य , उत्तरर्तुसम्बन्धी क्रमात्सेव्य ।** सहसा हि त्यागशीलने च क्रियमाणे असात्म्यजा रोगा स्यु । क्रमो यथा–ऋतुस धे प्रथमे दिने पूर्वस्याहारस्य त्रय पादा , उत्तरस्यैक । द्वितीये पूर्व एवाहार । तृतीये प्रथमवत्। चतुर्थे पूर्वस्य द्वौ पादौ, उत्तरस्य द्वौ । पञ्चमषष्ठयो प्रथमवत् । सप्तमे चतुर्थवत् । अष्टमे पूर्वस्यैक , उत्तरस्य त्रय । नवमदशमैकादशेषु चतुर्थवत्। द्वादशेऽष्टमवत्। त्रयोदशे उत्तर एव आहार । चतुर्दशेऽष्टमवत् । अत पर तूत्तर एवाहार । अमु च क्रम "पादेनापथ्यम्" (हृ सू अ ७।४७) इत्यत्रोपपादयिष्याम । सुश्रुतस्त्वहोरात्रेऽपि षड्ऋतूनाह (सू अ ६।१५)–"तत्र पूर्वाह्णे वसन्तस्य लिङ्गम्, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृष , प्रदोषे वार्षिकम्, शारदमर्धरात्रे, प्रत्युषसि हैमन्तमुपलक्षयेत् । एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षदोषोपचयप्रकोपोपशमैर्जानीयात्" इति । ननु, ततश्चैकस्य दोषस्यैकस्मिन् काले चयप्रकोपोपशमैर्विरुद्धत्व चापद्यते, वार्षिकाणामाहोरात्रिकाणा च चयादीना तथा समावेशात् । यथा–वसन्तस्य पूर्वाह्णे कफस्य लिङ्गम्, मध्याह्ने ग्रीष्मस्य । मैवम् । आहोरात्रिकैश्चयादिभिरनवकाशै सावकाशा वार्षिकाश्चयादयो बाध्यन्ते। आहोरात्रिक कफस्य हि प्रशमो माध्याह्निक , त स्यावकाशो मध्याह्न एव। प्रकोपस्तु वासन्तिक ,तस्यावकाशा साण्ह्नादयोऽपि, तेषामपि वसन्तत्वात् । न ग्रीष्मादिमध्याह्नो माध्याह्निकस्य प्रशमस्यावकाश इति वाच्यम्, ग्रीष्मे तावद्ग्रीष्मत्वादेव प्रशमे सिद्धे वैयर्थ्यात् । वर्षासु दोषत्रयदुष्टि, शरद्यपि किञ्चित्कफप्रकोप इष्ट । "कुर्यात्पित्त च शरदि तस्य चानुबल (ल) कफ" इति (हृ नि अ २।५१) वचनात् । हेमन्तशिशिरयो सञ्चय स्पष्ट एव । एव चयप्रशमयोरपि वाच्यम् । चयप्रकोपयोरविरोध , द्वयोर्वृद्धिरूपत्वात् । यच्च प्रचलितत्व प्रकोपे विशेष , त प्रति चयहेतोरुदासीनत्वम् । एव वातपित्तयोरपि वाच्यम्। ननु, "वयोहोरात्रिभुक्ताना तेऽन्तमध्यादिगा क्रमात्।" इति (हृ सू अ १।८) वाक्ये पित्तकफवाताना मध्याह्नपूर्वरात्रापररात्रेषु प्रकोप उक्त । सुश्रुतवाक्ये तु वातचयवातप्रकोपकफचया उक्ता , इति विरोध । मैवम् । दोषभेदेनाविरोधात् । अथर्तुलक्षण सङ्ग्रहे (सू अ ४)–"धूमधूम्रा रजोमन्दास्तुषाराविलमण्डला । दिगादित्या मरुच्छैत्यादुत्तरो रोमहर्षण ॥ रोध्रप्रियङ्गुपुन्नागलवलय कुसुमो-

१ 'तमृतुविधान' ट । 'तमन्यविधान' ठ । २ 'चेत्स्वाद्वा' ख घ झ । ३ 'भ्योऽभ्यधिको' ख घ झ ञ । ४ 'हाद्दतुस' इति पाठो अ आ क ख घ ङ ज झ ञ पुस्तकेषु दृश्यते, हेमाद्रिसम्मतश्च । ५ 'पूर्वापरयो' ख घ झ । ६ 'शाहानि' क ग ।

१ 'शीतोष्णवर्षलक्षण दोषो' इति मुद्रितसुश्रुतपुस्तके पाठ , किन्तु न तट्टीकाकारसम्मत स । 'वर्षादोषो' क ख ग घ ङ ञ । २ 'प्रकोपप्रशमै' क ग ज । ३ 'कफस्य लिङ्गम्' इति ख घ झ ञ पुस्तकेषु नोपलभ्यते । ४ 'वैयर्थ्यम्' क ख ग घ झ ञ । ५ 'धूम्ररजो' स स ।

ज्वला"। दृप्ता गजोजमहिषवाजिवायसशूकराः ॥ हिमानीपटलच्छन्ना लीनमीनविहङ्गमा । नद्यः सबाष्पाः सोष्माणः कूपापश्च हिमागमे ॥ देहोष्माणो विशन्तोऽन्तः शीते शीतानिलाहताः । जठरे पिण्डितोष्माणः प्रबलं कुर्वतेऽनलम् ॥ विसर्गे बलिनः प्रायः स्वभावादिगुरु क्षमम् । बृहणान्यन्नपानानि योजयेत्तस्य युक्तये ॥ वसन्ते दक्षिणो वायुः राताम्रकिरणो रविः । नवप्रवालत्वक्पत्राः पादपाः ककुभोऽमलाः ॥ किंशुकाशोकचूतादिवनराजिविराजिताः । कोकिलालिकुलालापकलकोलाहलाकुलाः ॥ ग्रीष्मेऽतसीपुष्पनिभस्तीक्ष्णांशुर्दवदीपिताः । दिशो ज्वलन्ति भूमिश्च मारुतो नैर्ऋतोऽसुखः ॥ पवनातपसंस्वेदैर्जन्तवो ज्वरिता इव । तापार्तेतुङ्गमातङ्गमहिषैः कलुषीकृताः ॥ दिवाकरकराङ्गारनिकरैः क्षपिताम्भसः । प्रवृद्धरोधसो नद्यश्छायाहीना महीरुहाः ॥ विशीर्णजीर्णपर्णाश्च शुष्कवल्कलताङ्किताः । वर्षासु वारुणो वायुः सर्वसस्यसमुद्भवः ॥ भिन्नेन्द्रनीलनीलाभ्रवृन्दैर्मन्दाविलं नभः । दीर्घिका नववार्योघमग्नसोपानपङ्क्तयः ॥ वारिधाराभृशाघातविकासितसरोरुहाः । सरितः सागराकारा भूरव्यक्तजलस्थला ॥ मन्द्रस्तनितजीमूतशिखिदर्दुरनादिता । इन्द्रगोपधनुः खण्डविद्युदुद्योतदीपिताः ॥ परितः श्यामलतृणा शिलीन्ध्रकुटजोज्ज्वला । शरदि व्योम शुभ्राभ्रं किञ्चित्पङ्काङ्किता मही ॥ प्रकाशकाशसप्ताह्वकुमुदाशालिशालिनी । विक्षिप्ततीक्ष्णकिरणो मेघौघविगमाद्रविः ॥ बभ्रुवर्णोऽतिविमलाः क्रौञ्चमालाकुला दिशः । कमलान्तरसलीनमीनहंसासघट्टनैः ॥ तरङ्गभङ्गतुङ्गानि सरांसि विमलानि च ।" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
ऋतुचर्याप्रकरणं सामस्त्येन निरूपितम् ॥ ३ ॥



१ 'गजाविम' ञ । २ 'देहोष्माण' इत्यादिश्लोकद्वयस्थाने 'शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः । शेषं हेमन्तवत्सर्वं विज्ञेयं लक्षणं बुधैः ॥' इति श्लोकः क ग ज ञ पुस्तकेषु दृश्यते, किन्तु सोऽत्रायुक्तः । तस्य सुश्रुतपठितत्वादष्टाङ्गसङ्ग्रहे कुत्राप्यनुपलब्धत्वाच्च । ३ 'शुर्दीप्तदीधितिः । दिशो ज्वलन्त्यो भूमि' ञ । ४ 'नैर्ऋतः सुखः' इति सङ्ग्रहहृदये पाठः, किन्त्वयुक्तः । तस्य सुश्रुता (सू. अ ६।३०) दिविरुद्धत्वात् सर्वेष्वपि लिखितहेमाद्रिटीकापुस्तकेष्वनुपलब्धत्वाच्च । ५ 'मारुतातप' क ग ज ञ । ६ 'मुद्गम' स ढ । ७ 'न्दमालावि' क ग ज । ८ 'नवतोयौघैर्मग्न' क ग ज । ९ 'शिलन्ध्रकटुकोज्ज्वला' ख घ ङ । १० बभ्रु–कपिलपिङ्गल । ११ अस्याग्रे 'स्वैर्भृङ्गशकुन्तानां स्थावराणां च वृत्तिभिः । छायादिपरिहारैश्च ऋतुधामानि (ऋतुचिह्नानि, क) लक्षयेत्' इति क ग ज ञ पुस्तकेष्वधिकः श्लोकः ।



## चतुर्थोऽध्यायः ।

स्वस्थवृत्तेऽप्रवृत्तस्य वेगवारणशीलस्य च स्वास्थ्यासम्भवः । अतो वेगवारणप्रतिषेधेन या रोगानुत्पत्तिस्तामधिकृत्याध्याय आरभ्यते—

**अथातो रोगानुत्पादनीयाध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
(गद्यसूत्रे ॥ २ ॥)

**स०**–व्याख्याऽत्र प्रथमाध्यायवद्बोद्धव्या । रोगाणामनुत्पादः–अनुत्पादनम्, तस्मै हितो रोगानुत्पादनीयः । उपदर्शनं चेदम् । निदर्शनाख्यया तन्त्रयुक्त्या चोत्पन्नरोगोपशमनीयोऽपि, वातादिरोगोत्थानां रोगाणामुपशमस्याभ्युपदेशात् । तथा च वक्ष्यति (अस्मिन्नेवाध्याये श्लो ३४)–"अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः । निजागन्तुविकाराणामुत्पन्नानां च शान्तये ॥" इति ।

**आ० र०**–रोगानुत्पादनीयमध्यायं व्याख्यातुं प्रतिजानीते–अथेति । यतः पूर्वयोरध्याययोर्नियतकालो विहारो व्याख्यातः । इहानियतकालः । स च पञ्चधा,–वेगधारण, वेगोदीरण, शोधन, बृंहण, भूताद्यस्पर्शनं चेति । तेषां च हानोपादानाभ्यां रोगाणामनुत्पादनम्, प्रागभावप्रध्वंसहेतुत्वात् । तत्र धारणोदीरणयोर्हानात् प्रागभावः, शोधनाद्युपादानादुभयम् । अत एवायं रोगानुत्पादनहेतुत्वाद्रोगानुत्पादनीयः । ननु, रोगानुत्पादनीयो यद्ययमध्यायस्तर्ह्यौषधस्कन्धे प्रणिधीयताम् । सत्यम् । य एव हि हेतवः, तान्येवौषधानि । असम्यग्योगसम्यग्योगावेवात्र भेदकौ । किन्त्वनुत्पन्नेषु व्याधिषु ये विहाराहारा रागतो विधितो वा प्राप्ताः प्रायः सेव्यन्ते, ते हेतुस्कन्धे विधीयन्ते । तेषामेव हि प्रमादात्प्रतिकूलदैवाद्वा सत्यसम्यग्योगे हेतुत्वम् । य उत्पन्नेषु, ते भेषजस्कन्धे । तेषामेव ह्यप्रमादादनुकूलदैवाद्वा सति सम्यग्योगे भेषजत्वम् । पूर्वयोरुत्तरेषां च षण्णामध्यायानामनेनैवाभिप्रायेण हेतुस्कन्धे प्रणिधानमिति सकलमनाकुलम् । रोगानुत्पादनीयत्वं च यद्यपि सर्वेषामेवाध्यायानाम्, तथाप्यस्यैव सञ्ज्ञाकरणमतिशयद्योतनार्थम् ।

**वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् ।**
**निद्राकासश्रमश्वासजृम्भाश्रुच्छर्दिरेतसाम् ॥ १ ॥**

**स०**–वातादीनां वेगान्न धारयेत् । सर्वत्र द्वन्द्वसमासः । क्षवः–छिक्का । श्रमो–व्यायामायासः, तेन श्वासः श्रमश्वासः ।

१ अयं रोगानुत्पादनीयश्चरके सू. ७ अध्याये चि. २६ अध्याये च, सुश्रुते उ. ५५ अध्याये, अष्टाङ्गसङ्ग्रहे सू. ५ अध्याये च वर्णितोऽस्ति । २ हान–त्याग । उपादान–ग्रहणम् । ३ 'यदयं' ञ । ४ 'स्तदौष' ख घ ङ ञ । ५ पूर्वयोः–दिनचर्यर्तुचर्ययोः । उत्तरेषां–द्रवद्रव्यविज्ञानीयादीनाम् । ६ 'श्रमेण श्वासः श्रमश्वासः' ठ ।

**आ० र०-तत्र वेगधारणं निषेधति-वेगान्नेति। प्रवृत्युन्मुखत्वं वेगः। वातशब्देनाधोवातः ऊर्ध्ववातश्च। क्षवः-क्षवथुः। श्रमेण श्वासः श्रमश्वासः। अश्रु-आनन्दजं शोकजं वा नेत्रोदकम्।**

वातस्य प्राधान्यात्तद्रोधजान् रोगान् पूर्वं निर्दर्शयन्नाह—

**अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः।**
**वातमूत्रशकृत्सङ्गदृष्ट्यग्निवधहृद्गदाः॥ २॥**

**स०**-अधोवातस्य रोधेन गुल्मादयो जायन्ते। ऊर्ध्ववातस्य-उद्गाररूपस्य रोधात् मुखसाध्या अरुच्यादयः। अत एवाधोवातरोधाद्ये रोगा अतिप्रत्यपायरूपा गुल्मादयः, तेऽत्र पूर्वं निर्दिष्टाः। उदावर्तः-अर्शोनिदाने वक्ष्यते। रुक्-पीडा। क्लमो-ग्लानिः। वातमूत्रशकृत्सङ्गो-वातादीनामप्रवृत्तिः। दृष्टेरग्नेश्च वधो-नाशः। हृद्गदो-हृद्रोगः।

**आ० र०-तत्र निषेधातिक्रमे दोषं दर्शयन् वेगधारणजान् रोगानाह। तत्राधोवातरोधजान् रोगानाह-अधोवातस्येति। रुक्-कोष्ठशूलम्। वातादीनां सङ्गः-स्वाभाविकप्रवृत्तिरोधः। दृष्टिवधः-तिमिरम्। अग्निवधः-अग्निमान्द्यम्। हृद्गदो-हृद्रोगः।**

**शकृतः पिण्डिकोद्वेष्टप्रतिश्यायशिरोरुजः।**
**ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम्॥ ३॥**
**मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः।**

**स०**-शकृतो रोधेन पिण्डिकोद्वेष्टादयो जायन्ते। उद्वेष्टनमिवोद्वेष्टः। पिण्डिकयोरुद्वेष्टः पिण्डिकोद्वेष्टः। पिण्डिका-जङ्घाकाण्डस्य पश्चिमे भागे पिण्डाकृति कठिनं मांसम्। तत्रोद्वेष्टनेनेव रुग्भवतीत्यर्थः। प्रतिश्यायः-पीनसः। च समुच्चये। न केवलमेत एव, यावत्पूर्वोक्ताः-गुल्मादयश्च, स्मृताः।

**आ० र०-अधोवातरोधजानन्तरमूर्ध्ववातरोधजेषु वाच्येषु शकृन्मूत्ररोधजानां वचनमधोवातरोधजतुल्यरोगयोगत्वात्[1]। तत्र विड्रोधजानाह-शकृत इति। जङ्घाया पश्चिमे भागे पिण्डिकाकृतिमांसं पिण्डिका, तस्या उद्वेष्टनं-उद्वेष्टमानायामिव[2] दुःखम्। पूर्वोक्ताः-अधोवातरोधजाः।**

**अङ्गभङ्गाश्मरीबस्तिमेढ्रवंक्षणवेदनाः॥ ४॥**
**मूत्रस्य रोधात्पूर्वे च प्रायो[3] रोगाः**

**स०**-मूत्रस्य रोधादङ्गभङ्गादयो जायन्ते। अङ्गानां भङ्गः स्फोटनमिवाङ्गभङ्गः। बस्त्यादीनां वेदनया सम्बन्धः। मेढ्रं-शिश्नम्। पूर्वे च प्रायो रोगाः-अधोवातशकृद्रोधजाः, तेऽपि मूत्रस्य रोधाज्जायन्ते। प्रायोग्रहणात् वातादिरोधजाः केचिदेवोत्पद्यन्ते केचिन्नेति बोधयति।

**आ० र०-मूत्ररोधजानाह-अङ्गभङ्गेति। अङ्गभङ्गो-भज्यमानेष्विवाङ्गेषु दुःखम्। बस्त्यादीनां च वेदना। पूर्वे रोगाः-अधोवातविड्रोधजाः। ते च प्रायोग्रहणान्न सर्वे।**

**तदौषधम्।**

**वर्त्यभ्यङ्गावगाहाश्च स्वेदनं बस्तिकर्म च॥ ५॥**

**स०**-तदौषधं-तेषां वातादिरोधजानां रोगाणामौषधं चिकित्सितं भवति। किं तत्? इत्याह-वर्त्यादि। वर्तिः-मदनफलादिकृता फलवर्तिसंज्ञा। अभ्यङ्गः-अभ्यञ्जनम्। अवगाहो-वातहरद्रव्यसाधिते द्रवे द्रोण्यां निहिते पायुदेशस्यावस्थापनम्। स्वेदनं-स्वेदः। बस्तिकर्म-मलप्रवृत्तये बस्तिविधौ वक्ष्यमाणम्।

**आ० र०-उक्तानां वातादिरोधजानां रोगाणामौषधमाह-तदौषधमिति। कर्म चेत्यन्तेन। तेषां-अधोवातविण्मूत्ररोधजानामौषधम्। वर्तिः-गुदे प्रणिधेया फलवर्तिसंज्ञा। अवगाहः-तैलादिपूर्णद्रोण्यां निमज्जनम्।**

पुरीषरोधोत्थेष्वन्यमप्यसाधारणमुपक्रममाह—

**अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु।**

**स०**-पुरीषवेगधारणजेषु यक्ष्मसु-रोगेषु, विशः-पुरीषस्य, भेदि-भेदकमन्नपानं यावकमस्तुवास्तुकादिकमौषधम्। चशब्दात्पूर्वोक्तं वर्त्यादि च।

**आ० र०-विड्रोधजानां विशेषमाह-अन्नपानं चेति। विड्भेदि-यवमस्त्वादिकम्। यक्ष्मसु-रोगेषु। चकारः सामान्यानुप्रवेशार्थः[4]। अन्यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इतिवत् सामान्यबाधः स्यात्।**

**मूत्रजेषु तु पाने च प्राग्भक्तं शस्यते घृतम्[5]॥ ६॥**

१ 'निर्दिशन्नाह' ट। २ अस्याग्रे "**स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च। पानानि बस्तयश्चैव शस्तं वातानुलोमनम्॥** तत्र वातोत्थे विकारे स्नेहः कर्तव्यः, स्वेदः कर्तव्यः। फलवर्तयः कार्याः। वातहराणि भोजनानि कार्याणि। पानानि-सुखोष्णोदकपानानि कार्याणि। बस्तयश्च कार्याः। यत्किञ्चिद्वातानुलोमनं तच्छस्तम्" इति सटीकः सार्धो वा श्लोकः पूर्वेषु सर्वेषु हृदयपुस्तकेषु मुद्रितो वर्तते। किन्त्वयं न ग्रन्थकारप्रणीतः, अतः प्रक्षिप्त एवेति प्रतिभाति। तस्य प्राचीनलिखितारुणदत्तटीकापुस्तकेष्वनेकेष्वनुपलब्धत्वात्, हेमाद्रिचन्द्रनन्दनेन्द्वादिभिरपि टीकाकारैरस्वीकृतत्वात्, '**तदौषधम्। वर्त्यभ्यङ्गावगाहाश्च स्वेदनं बस्तिकर्म च।**' इत्यनेन पुनरुक्तत्वात्, **निर्दिष्टं साधनं तत्र**' इत्यस्मिन् श्लोके 'वर्त्यभ्यङ्गेत्यादिना साधनं निर्दिष्टम्' इत्यरुणदत्तेन टीकायामुक्तत्वात्, सटीकाष्टाङ्गसङ्ग्रहेऽप्यनुपलब्धत्वाच्च। श्लोकस्त्वयं चरके (सू. अ. ७।१३) पठितः। ३ 'ऊर्ध्वं वायुः' ठ ञ। 'ऊर्ध्ववायुः' इति श्लोकार्धं अ क झ पुस्तकेषु नोपलभ्यते, सर्वैरपि हृदयटीकाकारैरस्वीकृतं च, अतः प्रक्षिप्तमिव प्रतिभाति।

१ 'तुल्ययोगक्षेमत्वात्' ख घ ज झ। २ 'उद्वेष्ट्यमानाया इव' क। ३ 'प्रायोग्रहणं किञ्चिन्न्यूनतामाचष्टे। तथा चागमः—"प्रायःशब्दो विशेषार्थे किञ्चिन्न्यूने च दृश्यते" इति' इति चन्द्रनन्दनः। ४ सामान्य-वर्त्यभ्यङ्गादि, तस्य अनुप्रवेशो-ग्रहणम्। ५ 'मूत्रजेषु तु' इत्यरुणदत्तसम्मतसार्धश्लोकस्थाने, हेमाद्यादयो '**मूत्रजेषु प्रयुञ्जीत सर्पिषश्चावपीडकम्**' इति श्लोकार्धमेव पठन्ति, युक्ततरं च। '**मूत्रजेषु च पानं तु**' आ।

**जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम्।**
**अवपीडकमेतच्च संज्ञितं**

**स०**-मूत्ररोधजेषु पुन प्राग्भक्त-भोजनात्पूर्व, घृत पाने शस्यते । जीर्णान्तिक घृत च शस्यते । कथम्? उत्तमया मात्रया-अहोरात्रजरणलक्षणया । योजनाद्वयमेतच्चावपीडकसंज्ञित-अवपीडकमुच्यते । योजनयोर्द्वय योजनाद्वय,-प्राग्भक्तस्नेहयोजना जीर्णान्तिकस्नेहयोजना च । तत्र, प्राग्भक्त-यत्र घृतपानसमनन्तर भक्त भुज्यते, जीर्णान्तिक-यत् ह्यस्तनेऽन्ने जीर्णे घृत प्रयुज्यते । प्रदेशान्तरेष्ववपीडकशब्देन योजनाद्वयमेतदस्मिंस्तन्त्रे वेद्यम् । तथा च वक्ष्यति ( हृ चि अ ८। १२४)-"रसै कोष्णैश्च सर्पिर्भिरवपीडकयोजितै" इति । तथाऽष्टाङ्गावतारे सूत्रोदावर्तचिकित्सायाम्-"अवपीडकमपिश्च विशेषान्मूत्रजे गदे" इति । ननु, वेगवारणेन बाहुल्येन मरुत एव कोप । तथा च वक्ष्यति ( अस्मिन्नेवाध्याये श्लो २३ )-"ततश्चानेकधा प्राय पवनो यत्प्रकुप्यति" इति । पवनविजये च तैल यथा वर न तथा घृतम् । अतस्तैलस्यैवावपीडकयोजनमत्रोचितम्, न सर्पिष । अत्रोच्यते । तैलस्य वातजितोऽपि बद्धविड्काल्पमूत्रस्वभावत्वादत्रायोग्य पानम् । तथा च वक्ष्यति ( हृ सू अ ५।५५ )-"तैल स्वयोनिवत्" इत्यारभ्य यावत् "बद्धविड्कम्" इति । स्वयोनिवदित्युक्तेश्चाल्पमूत्रत्वम् । तथा च वक्ष्यति (हृ सू अ ६।२१)-"उष्णस्त्वच्यो हिमैं स्पर्शे केश्यो बल्यस्तिलो गुरु । अल्पमूत्र " इति । तदेव तैलस्य बद्धविड्काल्पमूत्रस्वभावतया तदीयोऽवपीडको मूत्ररोधोत्थेषु रोगेष्वौषधत्वेर्नं न युक्त, अपि तु सर्पिष एव युक्त ।

**आ० र०-मूत्ररोधजाना विशेषमाह-मूत्रजेष्विति । अवपीडको द्विविध,-ह्रस्वया मात्रया प्राग्भक्तप्रयोग, उत्तमया अनन्नप्रयोगश्च । उक्त हि सङ्ग्रहे ( सू अ ५ )-"मूत्रजेषु तु पाने च प्राग्भक्त शस्यते घृतम् । जीर्णान्तिक चोत्तमया मात्रया योजनाद्वयम् । अवपीडकमेतच्च संज्ञित" इति । चकार. सामान्यानुप्रवेशार्थं ।**

**धारणात्पुनः ॥ ७ ॥**
**उद्गारस्यारुचिः कम्पो विबन्धो हृदयोरसोः।**
**आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम् ॥ ८ ॥**

**स०**-पुँनरिति व्यतिरेके । उद्गारस्य धारणादरुच्यादयो भवन्ति । उरो-वक्ष, तस्यावो हृदयम्, तयोर्विबन्ध -अन्तस्तम्भ इव । तत्र-तेषु रोगेषु, हिध्मावद्भेषजम्-श्वासहिध्माचिकित्सिते हिध्मायाश्चिकित्सित वक्ष्यति ।

**आ० र०-ऊर्ध्ववातरोधजानाह-उद्गारस्येति । रोधेनेति प्रकृतत्वाल्लभ्यते । कम्प सर्वाङ्गानाम् । हृदयोरसोर्विबन्ध -** रज्ज्वादिभिर्बध्यमानयोरिव दु खम् । आध्मान-उँदरापूरणम् । उद्गाररोधजानामौषधमाह-हिध्मावदिति । हिध्मायामिव हिध्मावत् ।

**शिरोर्तीन्द्रियदौर्बल्यमन्यास्तम्भार्दितं क्षुतेः।**

**स०**-क्षुते -क्षवथो , धारणाच्छिरोर्त्यादय स्यु । दुर्बलस्य भावो दौर्बल्यम्, गुणवचनेत्यादिना ष्यञ् । इन्द्रियाणा-दर्शनादीना, दौर्बल्य-विषयग्रहणाशक्तिवम्, इन्द्रियदार्बल्यम् । ननु च, पूरणगुणेत्यादिना समासप्रतिषेधेन भवितव्यम् । अत्रोच्यते । य एव गुणशब्दा गुणिनावच्छिन्ना गुणमात्रे वर्तन्ते कदाचिद् गुणिन्यपि, त एव प्रतिषेधस्य विषया । यथा-पटस्य शुक्लो, गुडस्य मधुर , इत्यादय । ये तु गुणमात्र एव वर्तन्ते न गुणिनि, ते समासस्य । यथा-पटहशब्द , पुत्रस्पर्श , कन्यारूपम्, द्राक्षारस , चन्दनगन्ध इत्यादय । तथेन्द्रियदौर्बल्यमित्यादावपि भावप्रत्ययान्तस्य सदा व्यतिरेककारणत्वाद्गुणाभिधायित्वमेव । तस्मादेवमादौ "तत्स्थैश्च गुणै षष्ठी समस्यते" इति समास । तस्यायमर्थ -तेषु गुणेष्वेव तिष्ठन्तीति तत्स्था । एतदुक्त भवति-गुण एव ये गुणा वर्तन्ते नै द्रव्यात्मनि, तै सह षष्ठी समस्यत इति । शुक्लादिशब्दाना तु कदाचिद्द्रव्यवृत्तित्वात् सामानाधिकरण्येनापि वृत्तिर्दृष्टा । यथा-शुक्ल पट इति । गुणवृत्तित्वाच्च वैयधिकरण्यनापि । यथा-पटस्य शुक्ल इति । तदेषा प्रतिषेधविषयत्वम् । पटहशब्दादीना तु तत्स्थत्वात् समासविषयत्वमिति स्थितम् । नन्वेव सति बलाकाया शौक्ल्यमित्यत्रापि पूर्वोक्तान्न्यायात्समास प्राप्नुयात् । अत्रोच्यते । भाष्यकारवचनान्न भविष्यति । स हि "गुणवचनग्रहणमेव कस्मान्न क्रियते" इत्युक्त्वाऽभ्यधात्-"बलाकाया शौक्ल्यमित्यत्रापि यथा स्यात्" इति समासस्यात्राभाव । अर्दित-वातव्याधिनिदाने वक्ष्यते ।

**आ० र०-क्षवथुरोधजानाह-शिरोर्तीति । शिरोर्ति -शिरोव्यथा । इन्द्रियाणा दौर्बल्य-विषयग्रहणाशक्ति. । अर्दित-एकायाम । क्षुते -क्षवथो ।**

**तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः ॥ ९ ॥**
**प्रवर्तयेत्क्षुतिं सक्तां स्नेहस्वेदौ च शीलयेत्।**

**स०**-क्षुति सक्ता-अप्रवर्तमाना, तीक्ष्णधूमादिभि प्रवर्तयेत् । तीक्ष्णधूमो-धूमपानविधा वक्ष्यते । तीक्ष्ण चाञ्जन-अक्षिरोगेषु । तीक्ष्णाघ्राण-यन्नासया मरीचादिग्रहणम् । तीक्ष्ण नावन-नस्यविधौ वक्ष्यति । स्नेहश्च स्वेदश्च तौ च शीलयेत्-अभ्यसेत् । क्षुति क्षुतम् । सुश्रुते चोक्तम् ( शा अ ४।५० टीकायाम् )-"प्राणोदानौ समौ स्याता मूर्ध्नि स्रोत पथे स्थितौ । नस्त प्रवर्तते शब्द क्षुँत तच्च विनिर्दिशेत् ॥" इति ।

**आ० र०-क्षवथुरोधजानामौषधमाह-तीक्ष्णधूमेति । क्षु**

१ भक्त-अन्नम् । 'भि सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिवि' इत्यमर । २ 'भोजनपूर्व' ट ठ । ३ 'हिमस्पर्श' ट ठ । ४ 'त्वेन युक्तोऽपि न सर्पिष इव युक्त' ठ । ५ 'पुनरतिव्यति' ठ ।

१ 'उदरापूर' ख ग घ ङ । २ 'ग्रहणेऽशक्तत्वम्' ट । ३ 'न गुणिनि' ट । ४ 'क्षुत तदमिनि' ट । 'क्षवथु त वि' स सु ।

त्यवरोधजेष्ववरुद्धा क्षुति तीक्ष्णैर्धूमादिभि सूर्यविलोकनेन च प्रवर्तयेत् । तथा स्नेहस्वेदा च शीलयेत् । सङ्ग्रहे तु (सू अ ५) "योज्य वातघ्नमन्न च घृत चोत्तरभक्तकम् ।" इति ।

**शोषाङ्गसादबाधिर्यसम्मोहभ्रमहृद्ग्रहाः ॥ १० ॥**
**तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः ।**

स०—तृष्णाया निग्रहात्—निरोधात्, शोषादयो भवन्ति । तत्र—तृष्णाया रोधजेषु विकारेषु, सर्व शीतो विधि —स्नानान्नपानादिको हित ।

आ० र०—तृड्रोधजानाह—शोषाङ्गसादेति । शोषो—मुखशोष । अङ्गसाद —अङ्गवैक्लव्यम् । सम्मोहो—ज्ञानाभाव । भ्रम —चक्रारूढस्येव भ्रमणम् । हृद्ग्रहो—हृद्रोग ।

तृड्रोधजानामौषधमाह तत्र शीत इति । तत्र—तृड्रोधजेषु ।

**अङ्गभङ्गारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ॥ ११ ॥**
**तत्र योज्य लघु स्निग्धमुष्णमल्पं च भोजनम् ।**

स०—क्षुध इति—निग्रहादित्यनुवृत्ति , निग्रहापेक्षया षष्ठी । एव निद्राया इत्यत्रापि योज्यम् । क्षुधो—बुभुक्षाया , निग्रहादङ्गभङ्गादय षट् भवन्ति । सामान्येनापि शूलशब्दनिर्देशे पक्वाशयगत शूलो गृह्यते । क्षुद्वेगनिग्रहेण निरावरण प्रभञ्जन कुप्यति । तस्य च स्थान पक्वाशय । वक्ष्यति हि (हृ सू अ १२।१)—"पक्वाशयकटी' इत्यारभ्य यावत् "पक्वाधान विशेषत " इति । तत्र—क्षुन्निग्रहे, भोजन लघु स्निग्धमुष्णमल्प च योज्यम् ।

आ० र०—क्षुद्रोधजानाह—अङ्गभङ्गारुचीति । ग्लानि —क्लम । शूल—कोष्ठशूलम् ।

क्षुद्रोधजानामौषधमाह—तत्रेति । तत्र—क्षुद्रोधजेषु ।

**निद्राया मोहमूर्धाक्षिगौरवालस्यजृम्भिकाः ॥ १२ ॥**
**अङ्गमर्दश्च, तत्रेष्टः स्वप्नः संवाहनानि च ।**

स०—निद्राया निग्रहान्मोहादयो भवन्ति । तत्र—निद्रावेगरोधोत्थे विकारे, स्वप्न इष्ट । सवाहनानि—स्वल्पानि मर्दनानि च ।

आ० र०—निद्रारोधजानाह—निद्राया इति । मूर्ध्नोऽक्ष्णोश्च गौरवम् । आलस्य—अनुत्साह । अङ्गमर्द —अङ्गभङ्ग ।

निद्रारोधजानामौषधमाह—तत्रेष्ट इति । स्वप्न —शयनम् । सवाहन—सुखस्पर्शमर्दनम् ।

**कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ॥ १३ ॥**
**शोषो हिध्मा च, कार्योऽत्र कासहा सुतरा विधिः ।**

स०—कासस्य—कासवेगस्य, रोधात्तद्वृद्धि तस्य—कासस्य वृद्धि —आधिक्य स्यात् । तथा, श्वासादय । तत्र कासहा—कासचिकित्सितोक्त , सुतरा—अतिशयेन, विधि कार्य ।

आ० र०—कासरोधजानाह—कासस्येति । तद्वृद्धि —कासवृद्धि । शोषो—राजयक्ष्मा ।

कासरोधजानामौषधमाह—कार्योऽत्रेति । अत्र—कासरोधजेषु ।

**गुल्महृद्रोगसम्मोहाः श्रमश्वासाद्विधारितात् ॥१४॥**
**हितं विश्रमण तत्र वातघ्नश्च क्रियाक्रमः ।**

स०—श्रमेण—अध्वव्यायामादिना साहसेन, सद्यो जात श्वास श्रमश्वास । तस्माद्विधारितात्—तद्वेगरोधात्, गुल्मादय स्यु । तत्र विश्रमण हितम् । वातघ्नश्च क्रियाक्रमो हित ।

आ० र०—श्रमश्वासरोधजानाह—गुल्महृद्रोगेति ।

श्रमश्वासरोधजानामौषधमाह—हित विश्रमणमिति ।

**जृम्भायाः क्षववद्रोगाः, सर्वश्चानिलजिद्विधिः ॥१५॥**

स०—जृम्भाया रोधात् क्षुतिवद्रोगा । तत्र सर्वा च वातघ्नी क्रिया, हितेति शेष । जृम्भा—मुखविकासो गात्रविनाम ।

आ० र०—जृम्भारोधजानाह—जृम्भाया इति । क्षववत्—क्षवथोरिव शिरोर्त्यादय ।

जृम्भारोधजानामौषधमाह—सर्वश्चेति । प्रकृतत्वाज्जृम्भारोधजानाम् ।

**पीनसाक्षिशिरोहृद्रुङ्मन्यास्तम्भारुचिभ्रमाः ।**
**सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः ॥१६॥**

स०—बाष्पत —अश्रुणो विधारितात्, पीनसादयो भवन्ति । पीनसो—नासास्राव । अक्षिशिरोहृदा रुजा सम्बन्ध । सगुल्मा इति सशब्दश्चार्थे, गुल्माश्चेत्यर्थ । तत्र स्वप्नादिका चिकित्सा ।

आ० र०—बाष्परोधजानाह—पीनसाक्षीति । अक्षिरोग शिरोरोगो हृद्रोगश्च । बाष्प —अश्रु ।

बाष्परोधजानामौषधमाह—तत्र स्वप्न इति । तत्र—बाष्परोधजेषु । प्रिया —मनोहरा ।

**विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ।**
**सकासश्वासहृल्लासव्यङ्गश्वयथवो वमेः ॥ १७ ॥**

स०—वमे —छर्दिषो विधारिताया, विसर्पादय स्यु । कोठो—लोहित कठिन च मण्डलम् । अक्षिकण्डूपाण्डूनामामयेन सम्बन्ध । व्यङ्गानि—मुखे श्यामानि मण्डलानि ।

आ० र०—वमिरोधजानाह—विसर्पेति । कोठ —क्षुद्ररोगविशेष । अक्ष्यामय कण्ड्वामय पाण्ड्वामयश्च । हृल्लास —

१ 'रुद्धाया क्षुतेस्तीक्ष्णै० प्रवर्तनम्' ख ग झ । २ अस्मिन्न-र्धे दत्तसम्मतपाठस्थाने **'शूलश्रमभ्रमा ॥ वैवर्ण्य च क्षुधस्तत्र स्निग्धोष्ण लघु भोजनम् ।'** इति युक्ततरश्चरकसम्मतश्च पाठो अ आ क ठ पुस्तकेषु दृश्यते । ३ 'क्षुधो निग्रह' ठ । ४ आलस्यलक्षण सुश्रुतेनोक्तम् (शा अ ४ । ५२)—"सुखस्पर्शप्रसङ्गित्व दु खद्वेषणलोलता । शक्तस्य चाप्यनुत्साह कर्मस्वालस्यमुच्यते ॥" इति ।

१ 'श्वासविधारणात्' आ क । 'श्रमनि श्वासधारणात्' स च । २ 'तेषामेवौषधमाह' क ग ज । ३ जृम्भालक्षण सुश्रुतेनोक्तम् (शा अ ४।५०)—"पीत्वैकमनिलोच्छ्वासमुद्वेष्टन् विवृतानन । यन्मुञ्चति सनेत्रास्र स जृम्भ इति सज्ञित ॥" इति । ४ 'विधारणात्' ठ । ५ 'बाष्प' घ । ६ 'छर्दिरोधात्' ट । ७ 'कण्ड्वादीना' ठ ।

हृदयादीपव्यथासहितात्लवणपानीयोद्गिरणम्। व्यङ्ग-क्षुद्ररोगविशेष ।

**गण्डूषधूमानाहारा रूक्षं भुक्त्वा तदुद्गमः ।**
**व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम् ॥१८॥**
**सक्षारलवणं तैलमभ्यङ्गार्थं च शस्यते ।**

स०-तत्र गण्डूषादय शस्ता । अनाहार -अभोजनम् । एतेषा द्वन्द्व । तथा रूक्ष भुक्त्वा, तस्य-रूक्षस्य, उद्गम -छर्दनम्। एव प्राणो वायु स्वमार्ग प्रत्येति । ततो व्यायामादयत्र शस्तम् । तथा, क्षारलवणाभ्या युक्त तैलमभ्यङ्गार्थं शस्यते-हित भवति ।

**आ० र०-छर्दिरोधजानामौषधमाह-गण्डूषेति । अनाहार -उपवास । रूक्षमन्न भुक्त्वा, तस्यैवान्नस्य उद्गम -वमनम् । अस्रस्य स्रुति -रक्तस्राव ।**

**शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुज्वराः ॥ १९ ॥**
**हृद्व्यथामूत्रसङ्गाङ्गभङ्गवृद्ध्यश्मषण्ढताः ।**

स०-शुक्राद्विधारितात् तस्य-शुक्रस्य स्रवणम् । तथा, गुह्यवेदना-पायुवृषणमेहनाना शूलम् । तथा, श्वयथु प्रकृतत्वाद्गुह्य एवेति योज्यम् । वृद्धि -वर्ध्म । अश्मशब्देनाश्मरी कथ्यते । षण्ढता-स्त्रीगमनाशक्तित्वम् ।

**आ० र०-शुक्ररोधजानाह-शुक्रादिति । तत्स्रवण-शुक्रस्राव । गुह्यस्य-मेढ्रस्य वेदना श्वयथुश्च । वृद्धि -मुष्कवृद्धि । अश्म-अश्मरी । षण्ढता-अपत्यजननासामर्थ्यम् ।**

**ताम्रचूडसुराशालिबस्त्यभ्यङ्गावगाहनम् ॥ २० ॥**
**बस्तिशुद्धिकरैः सिद्धं भजेत्क्षीरं प्रियाः स्त्रियः ।**

स०-तत्र ताम्रचूडादिकं भजेत् । तथा, बस्तिशुद्धिकरै -कूष्माण्डादिभि , सिद्ध क्षीरं भजेत् । प्रियाश्च कान्ता । प्रियत्वेन हि तद्विशेष निरनुबन्ध रभसेन प्रवर्तते शुक्रम् ।

**आ० र०-शुक्ररोधजानामौषधमाह-ताम्रचूडेति । ताम्रचूड -कुक्कुट । बस्ति -बस्तिकर्म । बस्तिशुद्धिकरै -मूत्राशयशोधनैर्यवक्षारादिभि , सिद्ध (?) क्षीर भजेत् । एव वेगरोधजा रोगा उक्ता ।**

वेगरोधिनो ये न चिकित्स्या , तान्दर्शयन्नाह—

**तृट्शूलार्तं त्यजेत् क्षीणं विड्वमं वेगरोधिनम् ॥२१॥**

स०-तृट् च शूल च ताभ्यामार्त-पीडितम् , तथा, क्षीण-क्षीणदेहम् , वेगरोधिन त्यजेत्-न चिकित्सेत् । तथा, विश यो वमति, त च वेगरोधिन त्यजेत् ।

**आ० र०-तृडाद्युपद्रुतस्य वेगरोधिन उपक्रम निषेधति-तृट्शूलार्तमिति। क्षीण-क्षीणधातुम्। विड्वम-पुरीष वमन्तम्।**

अथ किमेत एव रोगा वेगोदीरणधारणाद्भवन्ति ? नेत्याह—

**रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ।**

स०-सर्वेऽपि रोगा जायन्ते न केवल पूर्वोक्ता एव । वेगाना-पुरीषादिसम्बन्धिना, यान्युदीरणानि-अनागताना प्रवर्तनानि, तै । तथा, तेषामेवागताना यानि विधारणानि-अनुत्सर्गलक्षणानि, तै । अत्रेय युक्ति -वेगोदीरणधारण नाम वायो कर्म, तस्य क्रियावत्त्वात् । तेन च वेगोदीरणधारणलक्षणेन स्वकर्मणा स एव वायु कोप्यते । स कुपित सर्वानेव विकारान् जनयति । तथा चोक्तम् ( हृ सू अ १९।८५ )-
"शाखागता कोष्ठगताश्च रोगा मर्मोर्ध्वसर्वावयवाङ्गजाश्च । ये सन्ति तेषा न तु कश्चिदन्यो वायो परं जन्मनि हेतुरस्ति ॥ विट्श्लेष्मपित्तादिमलोच्चयाना विक्षेपसहारकर स यस्मात्" इति ।

**आ० र०-वेगधारणवत्सर्वरोगहेतुत्वकथनद्वारा वेगोदीरण निषेधति-रोगा इति । उक्ताना वेगानामुदीरणैर्धारणैश्च सर्वेऽपि रोगा जायन्ते, न पुन पूर्वोक्ता एव । प्रवृत्तावनुन्मुखस्य ( वेगस्य ) बलादुन्मुखीकरण-उदीरणम् । वेगधारणवत्सर्वरोगहेतुत्वाद्वेगोदीरणमपि त्यजेदित्यर्थसिद्धम् ।**

**निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥२२॥**
**ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति ।**
**अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम् ॥ २३ ॥**

स०-तत्र-तेषु वेगोदीरणधारणोत्थेषु सर्वेषु मध्ये, ये तु भूयिष्ठ-बाहुल्येन भवन्ति गुल्मोदावर्तादय , तान् प्रति "वर्त्यभ्यङ्ग" इत्यादिना, साधन निर्दिष्ट-चिकित्सोक्ता । ततश्च-वेगोदीरणधारणात्, अनेकधा वायुर्यस्मात्कुप्यति । अत -अस्माद्धेतो , तस्यानुलोमन-मार्गयोजक, अन्नपानौषध युञ्जीत । यद्यपि वेगोदीरणधारणात् "सर्वे रोगा जायन्ते" इत्युक्तम् । तथापि, यथा वेगधारणाच्चिरकालभाविन सप्रत्यपाया रोगा भवन्ति, न तथोदीरणात् । अत एव तन्त्रकारोऽधोवातस्य रोधेनामी रोगा भवन्ति, शकृतो रोधादमी भवन्तीत्युवाच । न तु तदुदीरणादमी रोगा भवन्तीति । प्रायोग्रहण क्वचित् कफादेरपि प्रकोप इति समापादयति । तथा च वमिनिग्रहे उक्तम्-"विसर्पकोठकुष्ठाक्षि" इत्यादि । तत्र "गण्डूषधूमानाहारा" इत्यादिचिकित्सा । न चैवरूपो विधिर्वायावुपदिश्यते । तस्मात्प्रायोग्रहणम् ।

**आ० र०-सर्वेषा साधनानुक्तौ हेतुमाह-निर्दिष्टमिति । सर्वेषा साधने वक्तव्ये, यत्केषाञ्चिद्गुल्मोदावर्तादीना साधनमुक्तम्, तत्राय हेतु -यद्गुल्मादयो बहुलमुत्पद्यन्ते । इतरे तु विरलम् ।**

**अनुक्तसाधनानां सामान्येन साधनमाह-ततश्चानेकधेति । यत्-यस्मात्, तत -ताभ्या वेगोदीरणधारणाभ्या,**

१ 'हित सलवण' ख घ ज । २ 'हारान् रूक्षान्' अ । 'हार रूक्ष' आ स ड । ३ 'तदुद्गमेत्' अ आ क ठ । ४ 'भ्यङ्गार्थे' अ ञ ठ म स । ५ 'नुबन्धेन रभ' ठ. । ६ 'सेन स्वय प्रव' ट । ७ 'पुरीषवमनम्' क ख ग घ झ ञ ।

१ 'न हि' ट । २ 'वेगोदीरणम्' झ । ३ अस्याग्रे 'अनागताना वेगाना बलात्प्रवर्तनमुदीरण वा' इत्यधिक पाठ क पुस्तके । ४ 'धारणजेषु' ट । ५ 'मध्याद्ये तु' ठ । ६ 'णादचिरकालमानप्रत्यपाया' ट । ७ 'वेदयति' ट । ८ 'सादाभ्या वेगो' क ज ञ । 'सात्ताभ्या'ग घ झ ।

पवन प्रकुप्यति । अनेकधा—अनेकव्याधिरूपेण । प्रायोग्रहणात् पित्तकफावपि । अत –अस्मात्कारणात्, तस्य–वायो, अनुलोमनमन्नपानौषध प्रयुञ्जीत ।

यदि वेगरोधाद्रोगा जायन्ते, तर्हि लोभादीनामपि नरकादिहेतूना वेगा न धार्या इति प्राप्ते सतीदमाह—

**धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ।**
**लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ॥ २४ ॥**

**स०**–तुशब्दोऽवधारणे । सदा–सर्वकालम्, लोभेर्ष्यादीना वेगान् धारयेदेव । हितैषी–य पुरुष स्वहितमिच्छन् । क? प्रेत्य चेह च,–परलोके तथेहलोके च । किम्भूत सन्? जितानि–दान्तानि, इन्द्रियाणि–मन षष्ठानि चक्षुरादीनि, विषयाणामनभिलाषुकतया येन, स जितेन्द्रिय । जितेन्द्रियशब्देन लोभादिवेगविधारणे उपाय दर्शयति । जितेन्द्रिय एवैतान् धारयितु शक्तो नान्य इत्यर्थ । लोभ[1] –गृहतृष्णेत्यादि । ईर्ष्या–असूया । द्वेषो–वैरम् । मात्सर्य–परगुणासहिष्णुत्वम् । राग –प्रीति. । आदिशब्देन भिध्यादिपरिग्रह । प्रेत्येह चेति कर्तव्ये द्विश्चकारकरण लोभादीना वेगविधारणेन प्रेत्य[3] तथाऽस्मिन् लोके तुल्यकक्षत्वज्ञापनार्थम् । अन्यथा प्रेत्येत्यस्य पूर्वनिर्देशाद्भूयसेषा लोभादीना विधारण प्रेत्य हितम्, न तथेह लोके । पश्चान्निर्दिष्टत्वात् ।

**आ० र०**–लोभादिवेगधारण विधत्ते–धारयेदिति । प्रेत्य–परलोके । इह–इहलोके । लोभो–लोलुपत्वम् । ईर्ष्या–परोत्कर्षासहनम् । द्वेष –परापकारेच्छा । मात्सर्य–क्रोध । रागो–विषयासक्ति । आदिशब्दाच्छोकादय. । जितेन्द्रिय. सन्–इन्द्रियजयवान्[4] धारयेत्, न तु भयादिना । भयादिधृताना रोगहेतुत्वात् । इति वेगोदीरणधारणप्रकरणम् ।

अन्यच हितैषी कि कुर्यात्? इत्याह—

**यतेत च यथाकालं मलानां शोधनं प्रति ।**
**अत्यर्थसञ्चितास्ते हि क्रुद्धा स्युर्जीवितच्छिदः ॥२५॥**

**स०**–मलाना–वातपित्तश्लेष्मपुरीषादीनाम्, यथाकाल शोधन प्रति यतेत–यत्न कुर्यात् । यो यस्य मलस्य शोधनकाल, स तस्मिन्काले शोधनीय इत्यर्थ । किमर्थ मलाना शोधन कार्यम्? इत्याह–अत्यर्थेत्यादि । हि–यस्मात्, ते–मला, अत्यर्थसञ्चिता –अतिशयेन स्वस्थाने वृद्धि गता, कुतोऽप्याहारविहाररूपात् कोपहेतो क्रुद्धा –कुपिता सन्त, कदाचिज्जीवितच्छिद स्यु –भवेयु । तस्मात्ते शोधनीया । अत्यर्थसञ्चितग्रहणेनैतद्द्योतयति । यद्येते मला अत्यर्थसञ्चिता स्यु, तदैव तेषामन्योपक्रमेभ्य शोधनाख्य उपक्रमो ज्यायान् । लङ्घनपाचने तूपक्रममात्रे ।

१ 'जितेन्द्रियमित्यनेन च रोगहेतुप्रज्ञापराधासात्म्येन्द्रियार्थवर्जनम्' इति चक्रपाणिदत्त । २ 'लोभ –विषयेऽनुचितप्रार्थना' इति चक्रपाणिदत्त, 'अन्यस्वे स्पृहा' इति चन्द्रनन्दन । ३ 'प्रेत्येह वाऽस्मिन्' ठ । ४ 'जयेन धा' क ग ।



**आ० र०**–शोधन विधत्ते–यतेत चेति । मलाना–वातपित्तकफाना, शोधनार्थं प्रयत्न कुर्यात् । हि–यस्मात्, ते शोधन विना, अत्यर्थं सञ्चिता स्यु, तत क्रुद्धा स्यु, ततो जीवितच्छिद स्यु । यथाकाल–यस्य यस्य दोषस्य यस्य यस्य शोधनस्य च यो य काल, तदा तदा तस्य तस्य दोषस्य तत्तच्छोधन कुर्यात्, अत्यर्थसञ्चयाद्यथा जीवितच्छित्त्व न स्यात् । यथोक्त सङ्ग्रहे (सू अ ५)–"चयकाष्ठामुपारुह्य कुर्वते ते ह्युपेक्षिता । प्रायश सुचिरेणापि भेषजद्वेषिणो गदान् ॥ अतिस्थौल्याग्निसदनकुष्ठमेहहृतौजस[2] । स्रोतोरोधाक्षविभ्रंशश्वासश्वयथुपाण्डुता[3] ॥ आमोरुस्तम्भजठरकृच्छ्रालसकदण्डकान् । तृषिप्रमीलकालस्यग्रहण्यर्शोभगन्दरान् ॥ प्लीहविद्रधिवीसर्पमदसन्यासपीनसान् । छर्दिगण्डकृमिग्रन्थितन्द्राद्यु स्वप्नदर्शनम्[4] ॥ कण्ठामयान् मूर्धरुजं[5] प्रणाश बुद्धिनिद्रयो । तेजोवर्णबलाना च तृप्यत्तो बृहणैरपि ॥ उचितैरपि[6] चाहारैर्यस्मादस्य वहन्ति न । दोषोपलिप्तवदना[7] रस रसवहा शिरा ॥ वमनादीनतो[8] युञ्ज्यात्स्वस्थस्यैव यथाविधि ॥" इति । ननु, "भिषज शोधन प्राहुर्वर्ज्यं स्वस्थेन सर्वदा । प न्नगस्येव घोरस्य दोषस्य समुदीरणम् ॥" इति सुश्रुतादिभिः स्वस्थस्य शोधन निषिद्धम्, इह तु विहितमिति विरोध । मैवम् । विषयभेदात् । द्विविधो हि स्वस्थ, सञ्चितदोषोऽसञ्चितदोषश्च । तत्राद्यो विधेर्विषयोऽपर[9] प्रतिषेधस्येति । ननु, सञ्चयो–वैषम्यम्, वैषम्य च–रोग, निरोगश्च–स्वस्थ, इति सञ्चितदोषस्य न स्वास्थ्यम् । मैवम् । (हृ सू अ १२।२२)–"चयो वृद्धि स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु । विपरीतगुणेच्छा च कोपस्तून्मार्गगामिता ॥ लिङ्गाना दर्शन स्वेषामस्वास्थ्य रोगसम्भव. ।" इति कोप[10]लक्षणेष्वस्वास्थ्य रोगसम्भवश्च पठताऽऽचार्येण चयलक्षणेषु स्वास्थ्य रोगासम्भवश्चेति ज्ञापितम्, अतः सञ्चितदोषोऽपि स्वस्थ इति ।

तदेवैतच्चेतसि कृत्वा, "दोषा" इत्यादि, ग्रन्थकृदुवाच—

**दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ।**
**ये तु संशोधनैः शुद्धा[11] न तेषां पुनरुद्भवः ॥ २६ ॥**

**स०**–दोषा –वातादय, लङ्घनपाचनैर्जिता –प्रकृतिं प्रा-

१ 'अत्यन्तस' क ग. । २ 'मेहहतौजस' क ख ग घ झ ञ । हृतौजा –सन्निपातापरनामा ज्वर । ३ 'धाक्षिवि' क ग । 'क्षविस्रसश्वा' ज. । अक्षविभ्रंश –इन्द्रियनाश । ४ 'दर्शनान्' ग । ५ 'रुज' स ढ । ६ 'तैरुचिताचारै' ख घ झ । 'रपि वा क्षीरै' ग । 'रपि चाचारै' ञ । ७ 'दोषेण लिप्त' ख घ झ । ८ 'नादितत्तो' झ ञ । ९ 'विधिविषय पर' ख घ झ । १० 'न चयलक्षणेष्वस्वास्थ्य रोगसम्भवश्चेति । अत एव कोपलक्षणेष्वस्वास्थ्य ('चयलक्षणेष्वस्वास्थ्य रोगसम्भवश्चेत्यपठता कोपलक्षणेषु' ज) पठताऽऽचार्येण सञ्चितदोषोऽपि स्वस्थ इति ज्ञापितम् ।'क ग.ज ञ । ११ 'शुद्धास्तेषा न पुन' ठ ।

पिता सन्त, कदाचित्–कस्मिन्नपि काले, कुप्यन्ति । ये पुन सशोधनै शुद्धास्तेषा न पुनरुद्भव –उत्थान न भवति ।

**आ० र०**–शमनाच्छोधनस्य प्राधान्यमाह–दोषा कदाचिदिति । लङ्घनमत्रोपवास, पाचनस्य पृथगुपादानात् । सप्तसु शमनेषु द्वयोर्ग्रहण प्रधानत्वात् प्रधानाद्धि प्राधान्यमुक्तमप्रधानात्सुतरा लभ्यते । इति शोधनमुक्तम् ।

**यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत् ।**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥२७॥**

**स०**–कालवित्–वैद्य, अत –सशोधनादूर्ध्व रसायनानि प्रयोजयेत् । कालशब्दो देशबलशरीराहारसात्म्यसत्त्वप्रकृतीना मुपलक्षणार्थं । न हि कालमात्रवित् रसायनप्रयोग सम्यग्विधापयितु शक्त । किम्भूतानि रसायनानि ? सिद्धानि,–बहुशो दृष्टप्रत्ययानि ब्राह्मरसिष्ठादीनि । कथ योजयेत् ? इत्याह–यथाक्रममिति । यथाक्रम यथायोगमित्यनेन रसायनवाजीकरणोक्त स्मारयति । तत्रैष रसायनक्रम (हृ उ अ ३९।११)–"हरीतकीमामलक सैन्धव नागर वचाम् ।" इत्यारभ्य यावत् "इत्थ सस्कृतकोष्ठस्य रसायनमुपाहरेत् ।" इति । एतदुक्त भवति । यद्यप्येव वमनविरेचनास्थापनानुवासननावन पञ्चभिरपि कर्मभि सस्कृतोर्ध्वाध सकलकाय, तथाप्येष रसायनिको भूय शरीरसस्कार करणीय । तस्य तत्पूर्वकत्वात् । अत एव सशुद्धदेहोऽयमिति कृत्वा त्रिवृद्दन्त्यादीनतिविरेचनात्मकानत्रोपदिशति । तथा वाजीकरणेऽप्याह (हृ उ अ ४०।७)–"अथ स्निग्धविशुद्धाना निरूहान् सानुवासनान् । घृततैलरसक्षीरशर्कराक्षौद्रसयुतान् ॥ योगविद्योजयेत्पूर्व क्षीरमासरसाशिनाम् । ततो वाजीकरान् योगान्" इति । तथा, यथायोग–यो यस्य युज्यते, दातुमित्यर्थ । यथा–इद रसायन वातप्रकृतेर्योग्यमिद पित्तप्रकृतेरिद श्लेष्मप्रकृतेरित्यादि । तथाऽमुष्मिन् देशेऽमुष्मिन् काले वाऽमुष्मिन् वयस्यमुष्मिन् देहे रसायनं योग्यमिदमिति यथायोगार्थ । एव वृष्ययोगेऽपि योज्यम् । अत्र च रसायनानि वातातपिकानि योजयेत्, न कुटीप्रावेशिकानि । स्वस्थवृत्ताधिकारत्वात् तद्विधानस्य ।

**आ० र०–अथ बृहणम् । तन्निविधम्,–रसायन वाजीकरणमाहारादिप्रयोगश्च । तत्र शुद्धस्य रसायनवाजीकरणे विधत्ते–यथाक्रममिति । यथाक्रम–स्वस्वविध्युक्तक्रमानतिक्रमेण । यथायोग–प्रकृत्यादियोग्यतानतिक्रमेण । सिद्धानि–बहुशो दृष्टफलानि । कालवित्–अवस्थाविज्ञाता । रसायनानन्तर वृष्ययोगांश्च–वाजीकरणोक्तान् योजयेत् ।**

**भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ।**
**शालिषष्टिकगोधूममुद्गमांसघृतादिभिः ॥ २८ ॥**
**हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः ।**
**साभ्यङ्गोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ॥ २९ ॥**

**स०**–भेषजेन क्षपिते–नरे शोधनकर्षिते सति, आहारै–भोज्यैर्बृंहण पथ्य–हित, क्रमात्–न सहसैव । कैराहारै ? इत्याह–शाल्यादिभि । किम्भूतै ? हृद्यानि च तानि दीपनानि भैषज्यानि–औषधानि च शुण्ठीपिप्पल्यार्द्रकत्वगेलादीनि, तै सयोगो–मिश्रता, तस्मात् हृद्यदीपनभैषज्यसयोगात्, रुचिपक्ती ददति–अभिलाषपाकावुत्पादयन्ति ये शाल्यादयस्तै रुचिपक्तिदैराहारैर्बृंहण भेषजक्षपिते पथ्यम् । किम्भूतैराहारै ? साभ्यङ्गेत्यादि । सहाभ्यङ्गादिभिर्वर्तन्त इति साभ्यङ्गादय आहारास्तै, आहारैरभ्यङ्गादिभिश्चेत्यर्थ । स्नेहबस्ति –अनुवासनम् ।

**आ० र०–शोधनक्षीणस्य बृहण विधत्ते–भेषजक्षपित इति । भेषजेन–प्रकृतत्वाच्छोधनेन, अतिसचयनिर्हरणादतियोगाद्वा क्षपित –कर्शित, तस्मिन्, आहारै –भोज्यै, बृहण पथ्य–हितम् । यस्तु शोधनेनाक्षपित, तस्य रसायनाद्यैर्बृंहण कर्तव्यमित्यर्थ । क्रमात्–बलानलाद्यनुसारेण । हृद्याना भैषज्याना सयोगाद्रुचिदै, दीपनाना पक्तिदै । स्नेहबस्ति –अनुवासनम् । निरूहानुवासनावत्र बृहणौ ग्राह्यौ । शोधनेऽतिवाच्ये भेषजग्रहण सर्वत्र लङ्घनपाचनादिभेषजक्षपितस्याप्येतद्बृहणप्राप्त्यर्थम् ।**

एव कृते पुरुष किं प्राप्नोति ? इत्याह—

**तथा स लभते शर्म सर्वपावकपाटवम् ।**
**धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः ॥ ३० ॥**

**स०**–तथा–तेन प्रकारेण पूर्वं शोधन ततो बृहण ततो रसायनप्रयोग इत्येवरूपेण, स –शोधनादिसेवी पुरुष, शर्म–स्वास्थ्य, लभते । तथा सर्वेत्यादि । सर्वे च ते पावकाश्च सर्वपावका, तेषा पाटव–शक्तिं लभते । तत्र (हृ शा अ ३।५९)–"भौमाप्याग्नेयवायव्या पञ्चोष्माण सनाभसा" इति पञ्च महाभूताग्नय, सप्त धात्वग्नय, त्रयोदशो जाठराग्निरिति । धीवर्णेत्यादि । धीवर्णयोश्चक्षुरादीन्द्रियाणा च वैमल्य लभते । तथा, वृषता–स्त्रीगमनसामर्थ्य लभते । तथा, दैर्घ्यमायुष –जीवितस्याधिक्य लभते ।

**आ० र०–शोधनादिप्रयोगस्य फलमाह–तथा स इति । शर्म–सुखम् । सर्वपावका –जाठराग्निभूताग्निधात्वग्नय । वृषता–सम्भोगक्षमत्वम् । इति बृहणप्रकरणम् ।**

अधुनाऽऽगन्तुरोगान् सोपक्रमान्निर्दिशति—

**ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवाः ।**
**रागद्वेषभयाद्याश्च ते स्युरागन्तवो गदाः ॥ ३१ ॥**

१ 'प्राधान्यात्' ख घ । २ 'योग्यमत' ड ज ञ । ३ 'कालविद्यो वैद्य सोऽत' ठ । ४ 'मुपाचरेत्' ट ठ । ५ 'देशे काले वा' ट ठ । ६ 'अस्य विधानस्य' ट । ७ 'यथायोग्य' ज ञ । ८ 'समांसक्षीरघृ' स स. । 'मांसरसादिभि' आ ड ज. ।

१ 'निबर्हणा' ख घ झ । २ 'दीपनीयाना' ख घ झ ञ । ३ 'सर्वेलब्ध' ग । ४ सर्वपावकशब्देन पञ्च पित्ताग्नय, पञ्च भूताग्नय, सप्त धात्वग्नय, इति सप्तदशाग्नयो ग्राह्या । डल्हणेनापि हि सौश्रुते गर्भव्याकरणशारीरे अग्निशब्दस्यैतादृशमेवास्ति कृत व्याख्यानम् । ५ 'सशोधना' ठ. । ६ 'कामक्रोधभ' अ क ठ. ।

स०-भूतानि च विष च वायुश्चाग्निश्च क्षत च भङ्गश्चेति द्वन्द्व । त आदिर्येषामागन्तुकरोगहेतूना त एवम्, तेभ्य सम्भवो येषामागन्तुकगदाना ज्वरादीना ते भूतादिसम्भवा आगन्तवो रोगा स्यु । आगन्तुहेतुप्रभवत्वादागन्तवो गदा उच्यन्त इत्यर्थ । न केवलमेत एव गदा, किन्तु रागद्वेषभयाद्याश्चागन्तवो गदा स्यु ।

आ० र०-अथ भूताद्यस्पर्शनम् । तत्र भूतादीना रोगहेतुत्वमाह-ये भूतेति । भूतो-ग्रह । वायु-झञ्झामारुतादि । क्षत-शस्त्रक्षतम् । भङ्ग-स्खलनादिहेतुको गात्रभङ्ग । आदिशब्दात् श्रमादय । आद्यशब्दात् शोकादय ।

अधुनैषा चिकित्सा निर्दिशति—

**त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ।**
**देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥ ३२ ॥**
**अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम् ।**
**भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक् ॥ ३३ ॥**
**अनुत्पत्त्यै समासेन विधिरेषः प्रदर्शितः ।**
**निजागन्तुविकाराणामुत्पन्नाना च शान्तये ॥ ३४ ॥**

स०-प्रज्ञाया अपराधा -असाध्वाचरणानि, तेषा त्याग । तथा, इन्द्रियाणा-चक्षुरादीनामुपशमो-रूपादिविषयेऽतिप्रवृत्ताना सयमनम्, अशुभरूपे वा विषये प्रवृत्ताना सयमनम्, अलोलुपतेत्यर्थ । तथा, स्मृति -अतीतार्थादिस्मरणम् । देशेत्यादि । तथा, देशादीना विज्ञानम् । देशो-जाङ्गलादि, काल -शीतादि, आत्मा च-वातप्रकृत्यादि, एषा विज्ञान-अवबोध । तथा च, सता वृत्त-चरित सद्वृत्तम्, तस्यानुवर्तन-अनुष्ठानम् । निजानामागन्तूना च विकाराणामनुत्पत्त्यै-रोगाणामनुत्पादनाय, समासेन-सङ्क्षेपेण, विधिरेष-त्याग प्रज्ञापराधानामित्यादि सद्वृत्तस्यानुवर्तनमित्येवमन्त, प्रदर्शित -सम्यगुक्त । उत्पन्नानामित्यादि । च समुच्चये । न केवल निजागन्तूना रोगाणामनुत्पत्त्यै विधिरेष प्रोक्त, यावदुत्पन्नाना-जाताना च, शान्तये विधि प्रोक्त ।

आ० र०-भूताद्यस्पर्शनोपायमाह-त्याग इति, देशेति, अथर्वविहितेति । "कायवाङ्मनोभेदेन त्रिविधमप्यहित कर्म प्रज्ञापराध" इत्युक्त सङ्ग्रहे ( सू अ २२ ) । तेषा त्यागो-वर्जनम् । स्मृति -नक्तदिनानि मे यान्तीत्युक्ता । ग्रहा -सूर्यादय. । प्रज्ञापराधत्यागादिर्भूतादीना-आगन्तूना हेतूनाम्, अस्पर्शने-असम्बन्धे, उपाय । तथा, पृथक् पृथक् भूतप्रतिषेधादौ यो निर्दिष्ट सोऽप्युपाय । "अथर्वविहिता शान्ति" इत्याद्यमुं श्लोक केचिदत्र न पठन्ति । तदसत्, पूर्वश्लोकस्यानन्वितत्वापत्ते ।

१ 'शस्त्रकृतम्' क ञ । २ श्लोकोऽय हेमाद्रिसम्मत । ३ 'अनुत्पत्तौ' ग ञ । ४'तार्थस्मरणम्' ट । ५ 'भेदैस्त्रि ( 'भेदेन त्रि' ख.घ झ ) विधस्य कर्मणोऽसम्यग्योग प्रज्ञापराध ' क ख ग घ ङ ज झ ञ । ६ 'प्रज्ञापराधभूत' ग । 'भूततत्रप्रति' ञ । ७ केचित्-अरुणदत्तचन्द्रनन्दनादय । ८ 'स्यानुचितत्वा' ञ ।

अध्यायार्थमुपसहरति-अनुत्पत्त्या इति । एष -वेगधारणनिषेधादि । समासेनेति रोगाणामनुत्पत्तिहेतुत्वेन उत्पन्नशान्तित्वेन च कार्त्स्न्येन वक्तुमशक्यत्वात् इत्येवपरम् । न त्वत्र समास उत्तरत्र तन्त्रान्तरे वा व्यास इत्येवपरम्, विस्तरप्रस्तावात् । नन्वेव चेत् पूर्वयोरध्याययोरनारम्भ, न हि निजागन्तुभ्योऽन्ये रोगा सन्ति, यदर्थं तदारम्भ । मैवम् । विषयभेदात् । कालार्थकर्मणा हि रोगहेतुत्वम् । तत्र कर्महेतवो रोगानुत्पादनीयस्य विषय, कालहेतव ऋतुचर्याया, अर्थहेतवो दिनचर्याया. ।

अथ मलाना शोधनकालानाह—

**शीतोद्भवं दोषचयं वसन्ते**
**विशोधयन् ग्रीष्मजमभ्रकाले ।**
**घनात्यये वार्षिकमाशु सम्यक्**
**प्राप्नोति रोगानृतुजान्न जातु ॥ ३५ ॥**

स०-शीतशब्देन हेमन्तशिशिराख्यावृतू द्वावपि गृह्येते । तत्रोद्भवो-जन्म यस्य दोषचयस्यासौ शीतोद्भवो दोषचय । त वसन्ते विशोधयन्-निर्हरन्, ग्रीष्मजमभ्रकाले-वर्षाकाले दोषचय विशोधयन्, तथा वार्षिक घनात्यये-शरदि दोषचयं विशोधयन्, आशु-यथोक्त कालमनुल्लङ्घयन्, सम्यक्-यथावत्, त्रिविधमपि दोषचय विशोधयन्नृतुजान् रोगान् न जातु-कदाचित्, प्राप्नोति-आसादयति । वसन्ते विशोधयन्नित्यत्र वसन्तप्रारम्भ एव चैत्रे मासि विशोधयन्निति बोध्यम्, प्रत्यवायभयात् । तथा हि ऋतुद्वयसञ्चितस्य दोषचयस्य चैत्रे विशोधनमक्रियमाण रोगानीक कुर्यात् । घनात्यये वार्षिकमित्यत्रात्यन्तघनविनाशे शरत्पश्चिमे भागे विशोधयेदिति बोध्यम् । वार्षिको हि दोषचय एकर्तुज एव । तस्माद्विश्रब्ध कृत्वा साधारणे कार्तिके मासि स विशोधयितु युक्त । अपि चाग्रे हेमन्तशिशिरकालजो दोषचयो वसन्ते शोधयितव्य । तस्मादाश्वयुजे मासि वार्षिको दोषचयो यदि विशोध्येत तदानीमतितरा बहुरग्रे दोषचय स्यात्, कालस्य बहुलात् । ग्रीष्मजमभ्रकाल इत्यत्र कालग्रहणेन वर्षाप्रारम्भमात्र एवेति बोध्यम् । तथा च शास्त्रकारो वक्ष्यति ( हृ सू अ १३।३३ )-"श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् । ग्रीष्मवर्षाहिमचितान्वाय्वादीनाशु निर्हरेत् ॥" इति ।

आ० र०-तत्र ऋतुचर्याया. कालहेतुविषयत्व दर्शयति-शीतोद्भवमिति । वसन्ताभ्रकालघनात्ययशब्दैस्तदवयवाश्चैत्रश्रावणकार्तिका लक्ष्यन्ते । वक्ष्यति हि (हृ सू अ १३।३३)-"श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् । ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ॥" इति ।

**नित्यं हिताहारविहारसेवी**
**समीक्ष्यकारी विषयेष्वसक्तः ।**

१ 'अनुत्पत्ताविति' क ग ञ । २ 'नन्वत्रैव' ञ. । ३ 'कालमाह' ट. ठ. । ४ 'लभ्यन्ते' ख घ.झ. ।

दाता समः सत्यपरः क्षमावा-
नाप्तोपसेवी च भवत्यरोगः ॥ ३६ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने रोगानुत्पादनीयो नाम चतुर्थोऽध्यायः ॥ ४ ॥

स०–नित्य–सदैव, हिताहारविहारौ सेवते तच्छीलो यः स एवम्भूतो नरः । तथा, समीक्ष्यकारी–विमृश्यविधायी, इदं कृत्वेदं सम्पद्यते, एवं च कृत्वैतत्सम्पद्यते, एवं बुद्ध्वा शुभं करोत्यशुभं वर्जयति । तथा, विषयेषु–शब्दादिषु, असक्तः–अलोलुपः । तथा, दाता–त्यागवान् । तथा, समः–सर्वेषु भूतेषु समचित्तः । तथा, सत्यपरः–अवितथवाक् । तथा, क्षमावान्–यः शक्तोऽपि कृतापराधं दण्डेनानुरूपेण न योजयति। तथा, आप्तानुपसेवते तच्छीलो यः स आप्तोपसेवी चारोगो भवति । न केवलं प्राक्तनविध्यनुष्ठानेनारोगः सम्पद्यते, यावदाप्तोपसेवी चेति चशब्दार्थः । "येषां त्रिकालममलं ज्ञानमव्याहतं सदा । आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम् ॥" इति (चरके सू. अ. ११।१८) आप्तलक्षणमिति । उपजातिर्वृत्ते।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

**आ० र०–दिनचर्यायां अर्थहेतुविषयत्वं दर्शयति–नित्यमिति । विषयेष्वसक्तः पुमानरोगो भवति–असात्म्येन्द्रियार्थसंयोगजान् रोगान्न प्राप्नोति, यो हि नित्यं हितावेवाहारविहारौ सेवते, समीक्ष्य कार्यं करोति, पात्रेभ्यो ददाति, सर्वेषु साम्येन वर्तते, सत्यं भाषते, क्रोधहेतावपि न क्रुध्यति, आप्तांश्च गुर्वादीनुपसेवत इति । उक्तं च दिनचर्यायाम् ( हृ. सू. अ. २।२९ )–"न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत्" इत्यादि । सङ्ग्रहे तु ( सू. अ. ५ )–"अर्थेष्वलभ्येष्वकृतप्रयत्नं कृतादरं नित्यमुपायवत्सु । जितेन्द्रियं नानुपतन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम् ॥ कालोऽनुकूलो विषया मनोज्ञा धर्म्याः क्रियाः कर्म सुखानुबन्धि । सत्त्वं विधेयं विशदा च बुद्धिर्भवन्ति धीरस्य सदा सुखाय ॥" इति ।**

**इति हेमाद्रिटीकायामायुर्वेदरसायने । रोगानुत्पादनाध्यायः सामस्त्येन निरूपितः ॥ ४ ॥**



१ 'इदं' ठ । २ 'ता–त्यागी त्यागः ठ । ३ 'राधे दण्डमनुरूपं न' ट । ४ 'शिष्टाश्च विबुधास्तेषां' इति पाठान्तरम् । ५ 'रोगाभावप्रकरणं सामस्त्येन निरूपितम्' क.ज. । 'त्पादनीयश्च' झ. ।



## पञ्चमोऽध्यायः ।

स०–अथ द्रवद्रव्यविज्ञानीयः । तस्यायं सम्बन्धः "नित्यं हिताहारविहारसेवी" इत्युक्तम् । तौ चाहारविहारौ दिनचर्यर्तुचर्ययोर्यद्यपि नियमितौ, तथापि न भवत्यलं हिताहितस्वरूपविज्ञानम् । एवं हि तत्रावादीत् ( हृ. सू. अ. ३।२६ )–"गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत्" । तथा, ( हृ. सू. अ. ३।४७ )–"व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु" । तथा, अनन्तरातीतेऽप्यध्याये जगाद ( सू. अ. ४।६ )–"अन्नपानं च विड्भेदि" इति । तदियता वाक्येन न ज्ञायते किं पुनस्तत् गुरुशीतम्? किं लघु? किं स्निग्धाम्लम्? किं शकृद्भेदनम्? इति । तस्मादाहारद्रव्यस्वरूपमतः परं प्रतन्यते । तत्रापि पञ्चवर्गस्वभावत्वेनाल्पवक्तव्यत्वात् प्राग्द्रवद्रव्यविज्ञानीयस्वरूपं निर्देष्टुं युक्तम्, अन्नस्य सप्तवर्गस्वभावत्वेन भूयस्त्वादित्याह—

**अथातो द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥**

( गद्यसूत्रे ॥ २ ॥ )

स०–अपामेवायं स्वाभाविको गुणो यत् द्रवत्वम् । अतो यानि कानिचित् द्रवरूपाणि द्रव्याणि तानि सर्वाणि आप्यान्येव क्षीरदध्यादीनि । तदर्थं द्रवद्रव्यशब्दः सामान्येन सर्वद्रवव्यक्तिपरिग्रहार्थं शास्त्रकृता प्रयुक्तः । द्रवाणि च तानि द्रव्याणि च द्रवद्रव्याणि, तेषां विज्ञानं–अवबोधः, तस्मै हितो द्रवद्रव्यविज्ञानीयोऽध्यायः, तं व्याख्यास्यामः–प्रथयिष्यामः ।

**आ० र०–द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यातुं प्रतिजानीते–अथेति । यतः पूर्वैस्त्रिभिरध्यायैर्विहार उक्तः । आहारो वक्तव्यः । स च द्विविधः,–द्रवोऽद्रवश्च । तत्र द्रवोऽस्मिन्नध्याये । अत एवायं द्रवद्रव्यविज्ञानीयः । तत्र च पञ्च वर्गाः । वक्ष्यति हि ( हृ. सू. अ. ५।८३ )–"तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात्" इति ।**

प्राधान्याच्च पानीयस्य प्रागुपदेशः । तथा चाष्टाङ्गसङ्ग्रहेऽन्नपानप्रकरणेऽध्यगीष्ट ( सू. अ. १० )–"अनुपाने तु सलिलमेव श्रेष्ठम्, सर्वरसयोनित्वात्सर्वभूतसात्म्याज्जीवनादिगुणयोगाच्च" । तथा, तत्रैवाध्यैष्ट ( स. सू. अ. ६ )–"पानीयं

१ 'न तज्ज्ञायते' ठ । २ 'लघुशीतम्' ट । ३ 'स्निग्धोष्णम्' ट ठ । ४ 'हारद्रवद्रव्य' ठ । ५ 'अन्नस्याद्रवस्वभाव' ठ । ६ इदं द्रवद्रव्यविज्ञानं चरके सू. २७ अध्याये, सुश्रुते सू. ४५ अध्याये, अष्टाङ्गसङ्ग्रहे सू. ६ अध्याये चास्ति वर्णितम् । ७ 'अन्यान्येव' ठ. । ८ 'अन्नपाने' ट ठ । ९ 'सात्म्यत्वाज्जी' स ढ ।

प्राणिना प्राणा विश्वमेव च तन्मयम्" इत्यादि । तथा, चात्रैवाग्र्यसङ्ग्रहेऽपि तदेव प्रागुपनीतम् ( स सू अ १३ )–"श्रेष्ठमुदकमाश्वासनस्तम्भनक्लेदनानाम्" इति । बहुगुणत्वाच्चान्तरिक्षस्य जलस्य प्रागुपन्यासो युक्त इत्याह—

**अथ तोयवर्गः ।**

**जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम् ।**
**तन्वव्यक्तरसं मृष्ट शीतं लघ्वमृतोपमम् ॥ १ ॥**
**गङ्गाम्बु नभसो भ्रष्टं स्पृष्ट त्वर्केन्दुमारुतैः ।**
**हिताहितत्वे तद्भूयो देशकालावपेक्षते ॥ २ ॥**

**स०**–जीवन–ओजोविवृद्धिकरम्, सौम्यधातुवर्धनमित्यन्ये। तर्पण–क्लमहृत्, [ तृप्तिकृदित्यन्ये ] । हृद्य–हृदयाय हितम्, न तु हृदयस्य प्रिय हृद्यमिति व्याख्येयम् । एव हि व्याख्यायमाने, "अम्ल हृद्यानाम्" ( च सू अ २५।३९ ) इत्यग्र्याणा मध्ये तत्पाठ मुनिर्नैवाकरिष्यत् । यस्मात्किञ्चित् द्रव्य कस्यचित्प्रियं भवति, न सर्वं सर्वस्य । तस्माद्धृदयाय हित हृद्यमिति बोद्धव्यम् । तथा, ह्लादि–आह्लादकरम् । तथा, बुद्धे प्रबोधनम्, यावन्मात्रा यस्य शेमुषी सा तस्य स्फुटप्रतिभासा तद्योगाद्भवतीत्यर्थ । तनु–स्वच्छम् । अव्यक्तरस–अनभिव्यक्तषड्रसमित्यर्थ । मृष्ट–अत्यास्वादसुखम् । सन्ति हि भूरिरसक्काथचूर्णवटकादीन्यप्यव्यक्तरसानि, न तु कार्त्स्न्येन तानीन्द्रियप्रसादास्वादप्रीतिकराणि । तथा, अनुरसबाहुल्यात्पृथगपि द्रव्याण्यभयामलकादीन्यव्यक्तरसानि, न तु पुनस्तानि तथा मन प्रीणनानि । पानीयस्य चाव्यक्तरसस्याप्याश्रयवशात् कषायत्वस्वादुत्वादि भवत्येव । तथा चाष्टाङ्गसङ्ग्रहेऽपठत् ( सू अ ६ )–"श्वेते कषाय, तत्स्वादु कृष्णे, तिक्त च पाण्डुरे' इत्यादि । मृष्ट–शुद्धमिति न व्याख्येयम् । तथा च मुने ( च सू अ २७।१९३ )–"शीत शुचि शिव मृष्ट विमल लघु षड्गुणम् । प्रकृत्या दिव्यमुदकम्" इति । अत्र हि मृष्टविमलयोर्द्वयोरुपादाने पौनरुक्त्य स्यात् । तस्मान्मृष्टशब्दोऽत्र मन प्रीणनार्थ । तथा, शीत–वीर्येण च स्पर्शेन च । तथा, लघु–लघुगुणयुक्तम् । तथा, अमृतोपम–यथा किलामृत त्रिदोषघ्नत्वधातुसाम्यकृत्त्वविषार्तिजित्त्वादिगुणैरशेषैर्युक्त तथैवैत जलमपीत्यर्थ । तथा चोक्त सङ्ग्रहे ( सू अ ६ )–"सूर्योद्धृतप्रमुक्तत्वाल्लघु वातकफापहम् । शैत्यजीवनसौम्यत्वै पित्तरक्तविषार्तिजित् ॥" इति । तथा, नभसो भ्रष्ट–अन्तरिक्षात्पतितमात्र, वस्त्रादिगृहीत गाङ्ग जलमीदृग्गुण भवति । तुशब्द पुनरर्थे । अर्केन्दुमारुतै – रविचन्द्रानिलै, स्पृष्ट–सम्बद्ध सत्, पुन हिताहितत्वे–पथ्यापथ्यत्वे, देशकालावपेक्षते–देशकालावनुवर्तते । देशो विषय पात्रमाश्रय इति पर्याया । तत्र किमनूपदेशे जाङ्गले वा तत्पतितम्? तथा, किमसितश्वेताद्यन्यतमे वा? इति देशानुवर्तनम् । तथा, शीते किमुतोष्णेऽथवा वर्षाख्ये पतितम्? इति कालानुवर्तनम् । रविचन्द्रानिलरिति समस्तनिर्देशो यदा समस्तैरेतै स्पृष्ट न तु व्यस्तै, तदा हिताहितत्वे देशाद्यपेक्षत इति द्योतयति । सद्यो वस्त्रादिगृहीतस्य जलस्य तु न सर्वैरेतैर्योग सम्भवतीति तत्प्रायेण हितमेव ।

**आ० र०**–तत्रादौ तोयवर्ग । तत्तोय द्वेधा,–दिव्य भौम च । दिव्य चतुर्धा,–धार कार तौषार हैम च । धार द्वेधा,–गाङ्ग सामुद्र च । तत्र गाङ्गगुणानाह–जीवनमिति । जीवन–प्राणधारणम् । तर्पण–तृप्तिजननम् । हृद्य–हृदयस्य प्रियम्, तत्प्रसादकरत्वात् । ह्लादि–सुखजनकम् । बुद्धिप्रबोधन–प्रज्ञाविकाशजनकम् । तनु–सर्वेभ्योऽपि विरलम् । अव्यक्तरस–रसवदप्यनभिव्यक्तमधुरादिरसविशेषम् । मृष्ट–जिह्वेन्द्रियप्रियम् । शीत–स्पर्शवीर्याभ्याम् । लघु–शीघ्रपाकम् । अमृतोपम–देवानाममृतमिवेद मनुष्याणाम् । गङ्गाम्बु–आकाशगङ्गातोय मेघैरानीतम् । नभसो भ्रष्ट–आकाशात्पतितम्, दिव्यमित्यर्थ । गङ्गाम्बिवति सामुद्रस्य व्यावृत्त्यर्थम् । नभसो भ्रष्टमिति भौमस्य ।

दिव्यस्य भौमाद्विशेषमाह–स्पृष्टमिति । दिव्यमेव भूसम्बन्धाद्भौममुच्यते । तच्चार्कादिभि स्पृश्यते । स्पृष्ट च व्यक्तरसत्वादिदोषसम्बन्धाद्धिताहितत्वे भूयो देशकालावपेक्षते । भूयोग्रहणं दिव्यस्यापि किञ्चिद्देशकालापेक्षत्व द्योतयति । देशापेक्षा यथा–सुपात्रस्थ हितम्, अहित दुष्पात्रस्थम् । वक्ष्यति हि–"ऐन्द्रमम्बु सुपात्रस्थमविपन्न सदा पिबेत् ।" इति । कालापेक्षा यथा–आर्तव हितम्, अनार्तवमहितम् । वक्ष्यति हि–"अनार्तव च यद्दिव्यमार्तव प्रथम च यत्" इति । भौम तु भूयस्ततोऽप्यधिकमपेक्षते । तत्र देशापेक्षा यथा–जाङ्गले हितम्, अहितमनूपे । तत्रापि शुच्यादौ हितम्, अहितमशुच्यादौ । तत्रापि कूपादौ हितम्, अहित पल्वलादौ । तत्रापि सुपात्रे हितम्, अहित दुष्पात्रे । तत्रापि क्वचिद्देहे हितम्, अहित क्वचित् इत्यादि । कालापेक्षा यथा–शरद्ग्रीष्मयोर्हितम्, अहितमन्यदा । तत्रापि दिवा हितम्, अहित रात्रौ । तत्रापि भुक्तस्य मध्ये हितम्, अहितमन्ताद्यो, इत्यादि । दिव्य सर्वदा सर्वत्र सर्वेषा हितम् ।

नन्वाकाशात्पतत् लक्षणमन्तरेण गाङ्गमिदमिति न ज्ञायेत इत्याह—

**येनाभिवृष्टममलं शाल्यन्नं राजते स्थितम् ।**

१ अन्ये–इन्द्रादय । २ [ ] इति नास्ति ठ पुस्तके । ३ 'प्रियमिति हृद्यमिति' ठ । ४ 'बोद्धव्यम्' ट । ५ 'मृष्टमित्यास्वाद' ठ । ६ 'रसशर्कराकाथ' ठ । ७ 'न्यव्यक्त' ठ । ८ 'प्रीणयन्ति' ठ. । ९ 'शुद्ध' ठ. । १० 'तथैतज्जल' ठ. । ११ 'प्रयुक्त' ठ. ।

१ 'वा पतितम्' ट ठ । २ 'किमुतासित' ठ. । ३ 'तत्र तोय' ख घ झ ञ । ४ 'भ्यो विरलम्' ख घ झ ञ । ५ 'स्य विशेषाद्भौममाह' ख घ झ । ६ 'ग्रहणादिव्य' क.ग । ७ 'पेक्षितत्व' क ग. ज । 'पेक्षित्व' ञ. । ८ 'त्पतित' ट । ९ 'यते कतमद्गाङ्ग कतमत्सामुद्रमित्याह' ट. । १० 'जतस्थितम्' अ.ख.घ.झ.ठ.स.द्व. ।

**अक्लिन्नमविवर्णं च तत्पेयं गाङ्गम्**

स०–येन–अम्बुना, अभिवृष्ट–आभिमुख्येन सिक्त, शाल्यन्न राजतस्थितमक्लिन्न–अक्लेदयुत, अविवर्ण च भवति, तद्गाङ्ग जल पेयम्। पेयमित्युपलक्षणार्थम्, स्नानावगाहयोरपि तत्पथ्यमेव। रजतस्य रूप्यस्य विकारो राजतम्। प्राणिरजतादिभ्योऽञ्।

आ० र०–गाङ्ग लक्षयति–येनाभिवृष्टमिति। अभिवृष्ट–धारासम्पातेन सिक्तम्। राजते–रौप्यपात्रे। अक्लिन्न–सिक्थप्रक्लेदरहितम्। अविवर्ण–वर्णान्तररहितम्। परीक्षा च मुहूर्तमात्रम्। उक्त हि सुश्रुते ( सू अ ४५।७ )–"स यदि मुहूर्तमात्र स्थितस्तादृश एव भवति, तदा गाङ्ग पततीत्यव गन्तव्यम्" इति। पेय–पानार्हम्।

**अन्यथा ॥ ३ ॥**

**सामुद्रं, तन्न पातव्यं मासादाश्वयुजाद्विना।**

स०–अन्यथा सामुद्रमिति। एतल्लक्षणविपर्ययेण येनाम्बुना सिक्त शाल्यन्न विवर्ण मलिन क्लिन्न भवेत्, तत्सामुद्रम्। तच्च न पातव्यम्। अत्रापि पाननिषेध उपलक्षणार्थः। स्नानावगाहावपि हि नानेन कार्यौ। सामुद्रस्य क्षारान्वयत्वात् क्लेदनादियोग। ननु, सामुद्रमित्ययुक्तम्। यत समुद्रशब्दस्य धूमादिपाठात् धूमादिभ्यश्चेति वुञा भवितव्यमिति केचित्। मैवम्। धूमादिभ्यश्चेत्यत्रैव गणे पठ्यते, समुद्रान्नावि मनुष्ये च वुञ्। सामुद्रिकी नौ सामुद्रिको मनुष्य। अन्यत्र त्वणेव, सामुद्र जलमिति। तस्माद्याग्यमेवैतत्। एव सामुद्रो मणिरित्यादयो वेद्या। अथ किं सदैवैतन्न पातव्यम्? नेत्याह–मासादित्यादि। आश्वयुजमन्तरेणैतन्न पातव्यम्। आश्वयुजे तु मासि कालस्वाभाव्यात् पथ्यमेवेति भाव। सुश्रुतस्त्वधीते ( सू अ ४५।७ )–"गाङ्गमाश्वयुजे मासि प्रायो वर्षति माधव। तदुपाददीत" इत्यादि।

आ० र०–सामुद्र लक्षयति–अन्यथा सामुद्रमिति। अन्यथा–क्लेदवैवर्ण्योत्पत्तौ।

सामुद्रपान निषेधति–तन्नेति। तत्–सामुद्रम्, मासादाश्वयुजाद्विना, गृहीतमिति शेष। उक्त हि सुश्रुते ( सू अ ४५।७ )–"सामुद्रमप्याश्वयुजे मासि गृहीत गाङ्गवद्भवति" इति।

**ऐन्द्रमम्बु सुपात्रस्थमविपन्नं सदा पिबेत् ॥ ४ ॥**
**तदभावे च भूमिष्ठमान्तरिक्षानुकारि यत्।**
**शुचिपृथ्वसितश्वेते देशेऽर्कपवनाहतम् ॥ ५ ॥**

स०–ऐन्द्र–आन्तरिक्षम्, अम्बु–जल गाङ्गम्, सुपात्रस्थ–शोभने भाजने राजतादौ स्थितम्, अविपन्न–अदूषितमविनष्ट, पिबेत्। न मलिनाशुचिजुगुप्सितपात्रस्थम्। तदभावे–तस्यैन्द्रस्याभावे सति, भूयिष्ठ–बाहुल्येन, आन्तरिक्षानुकारि–आन्तरिक्षमैन्द्र जल यदनुकरोति स्वच्छादिगुणै सदृश, तत्पिबेत्। तदेवाह–शुचीत्यादि। शुचिश्चासौ पृथ्वसितश्वेतश्च शुचिपृथ्वसितश्वेत, तस्मिन् देशे यज्जल स्थितम्। तथा, अर्कपवनाभ्यामाहत–आसमन्तात् क्रान्तम्। ईदृशमान्तरिक्षानुकारि स्यादिति भाव।

आ० र०–दिव्यपान विधत्ते–ऐन्द्रमिति। ऐन्द्रं–दिव्यम्। सुपात्रस्थ–शुद्धसौवर्णादिपात्रस्थम्। उक्त हि सङ्ग्रहे (सू अ ६)–"खातधौतशिलापृष्ठवस्त्रादिभ्य स्रुत जलम्। हैममृन्मयपात्रस्थमविपन्न सदा पिबेत् ॥" इति। अविपन्न–स्पर्शरसादिविकृतिरहितम्। सदा–सर्वेषु ऋतुषु।

भौमपान विधत्ते–तदभाव इति। तदभावे–दिव्याभावे। भूमिष्ठ–भौमम्। आन्तरिक्षानुकारि–दिव्यसदृशगुणम्। शुच्यादौ देशे स्थितम्। शुचि–निर्मल। पृथु–विस्तीर्ण। असित–कृष्ण। श्वेतो–धवल।

इदानीं यादृश जल न पेयम्, तद्दर्शयति—

**न पिबेत्पङ्कशैवालतृणपर्णाविलास्तृतम्।**
**सूर्येन्दुपवनादृष्टमभिवृष्टं घनं गुरु ॥ ६ ॥**
**फेनिलं जन्तुमत्तप्तं दन्तग्राह्यतिशैत्यतः।**
**अनार्तवं च यद्दिव्यमार्तवं प्रथमं च यत् ॥ ७ ॥**
**लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम्।**

स०–पङ्क–कर्दम। शैवाल–शेवलम्। तृण–खट। पर्ण–पत्रम्। आविलं चास्तृत चाविलास्तृतम्, पङ्कादिभिराविलास्तृत पङ्काद्याविलास्तृतम्। यथासम्भवमत्र सम्बन्ध, तेन पङ्केनाविल–कलुष, शैवालादिभिरास्तृत–सञ्छादितमिति बोध्यम्। तथा, सूर्येन्दुपवनैरदृष्ट–अनासेवित, न पिबेत्। तथा, अभिवृष्ट–तत्कालपतितान्यवर्षमिश्रीभूत कालान्तराश्रितम्। खरनादे त्वेवमुक्तम्–"वार्षिक तदहर्वृष्ट भूमिष्ठमहित जलम्। व्युष्ट त्रिरात्र तच्चैव प्रसन्नममृतोपमम् ॥" इति। तथा, घन–अस्वच्छम्। तथा, गुरु–गुरुगुणम्। तथा, फेनिल–फेनवत्। तथा, जन्तुमत्–कीटयुक्तम्। तथा, तप्त–उष्णम्। तथा, अतिशैत्यत–अतिजाड्यात्, दन्तग्राहि–दन्तान् गृह्णाति कार्याक्षमान् करोति, तच्छीलम्। न पिबेदिति प्रतिपद योज्यम्। इत्यय प्रायो भूमिष्ठतोयस्य निषेध। अधुना आन्तरिक्ष यन्न पेय तदाह–अनार्तवमित्यादि। यद्दिव्य जलमार्तव न भवति, तच्च न पिबेत्। ननु, सर्वमेव दिव्य जलमार्तवम्, कालस्य ऋतुरूपत्वात्। ऋतौ च भवमार्तवम्। एव च न किञ्चिदनार्तव सम्भवति। उच्यते। अनार्तव न पिबेत्। अर्थादार्तव पिबेदित्युक्त भवति। तदत्र सामान्योक्तावपि विशिष्टो दिव्यस्य

---

१ 'वा' अ आ ख घ झ ठ स द्व। 'स्यात्' ड ज। २ 'तत्तोय' अ आ ड ज ठ स मू। ३ 'वर्णान्यत्वरहि' न्न। ४ स –शाल्योदन पिण्ड। ५ अस्याग्रे 'शरत्पयो विनिर्मुक्त महावैडूर्यसन्निभम्।' इत्यधिक आ पुस्तके। ६ 'न तेन' ट। ७ 'प्रायशो' स सु। ८ 'माधव' इति सुश्रुते नोपलभ्यते। ९ 'वे पिबेद्भौममा' न्न। १० 'भूयिष्ठ' इत्यरुणदत्तपठितपाठो न मनोरम, सङ्ग्रहसुश्रुताद्यसम्मतत्वात्।

१ 'श्वेतधौत' न्न। 'खातो–जलग्रहणार्था भूकुण्डिका' इतीन्दु। २ 'भ्यश्च्युत' क ग स स। ३ 'रविशिश्रान्तम्' ठ। ४ 'त्रिरात्रतश्चैव' ट।

जलस्यं काल ऋतुरूपो बोध्यो वर्षाख्य , यस्मिन् काले दिव्य जल पेयत्वेनाभ्यनुज्ञायते । यथा–"वर्षासु दिव्यनादेये" इत्यादि । अन्यर्तुभव त्वनार्तवत्वान्न पेयम् । अत्र च वर्षाख्य ऋतुश्चातुर्मासिकोऽभिप्रेत । अत एवाश्वयुजे मासि दिव्य जल पेयत्वेनानुजज्ञे । अन्यथा ह्यनार्तवत्वात्तदपेयमेव स्यात् । आर्तव प्रथम च यत्–न केवलमनार्तवं न पिबेत् यावदार्तवमपि प्रथम न पिबेत् । कुतो हेतो ? इत्याह–लूतादीत्यादि । लूता आदिर्येषा ते लूतादय ,–क्षुद्रजन्तव प्राणिविशेषा , तेषा तन्तुविण्मूत्रविषाणि । तन्तु –सूत्राकारविशेषो, लालेत्यन्ये । तेषा लूतादितन्तुविण्मूत्रविषाणा सश्लेष – सम्पर्क , तेन दूषित यत्[2] , ततस्तदार्तवमपि न पेयम् । केचित्त्वेव व्याख्यानयन्ति–आर्तव प्रथम च यत्तन्न पेयम्, लूतादितन्त्वादिदूषित च न पेयमिति । सङ्ग्रहे चाध्यगीष्ट ( सू अ ६ )–"तत्कुर्यात्स्नानपानाभ्या तृष्णाध्मानोदरज्वरान् । कासाग्निसादाभिष्यन्दकण्डूगण्डादिकानत ॥ तद्वर्जयेदभावे वा तोयस्यान्यस्य शस्यते । घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम् ॥ व्यापन्नस्यास्य तपनमभ्यर्कायसपिण्डकै । पर्णीमूलबिसग्रन्थिमुक्ताकतकशैवलै ॥ वस्त्रगोमेदकाभ्या वा कारयेत्तत्प्रसादनम् । पाटलाकरवीरादिकुसुमैर्गन्धनाशनम् ॥" इति ।

**आ० र०–पङ्काविलादे पान निषेधति–न पिबेदिति । पङ्कादिभिर्यथासम्भवमाविलमास्तृत च । आविल–मलिनम् । आस्तृत–आच्छादितम् । अभिवृष्ट–अभिनववृष्टम् । कालमान तूक्त खारणादिना–"वार्षिक तदहर्वृष्ट भूमिष्ठमहित जलम् । व्युष्ट द्विरात्र[3] तत्रैव प्रसन्नममृतोपमम् ॥" इति । घन–सान्द्रम् । जन्तुमत्–कृमिजुष्टम् । तत्–भूमिष्ठमेव सूर्याशुभि । अतिशैत्याद्दन्तग्राहि–दन्तपीडकम् । अनृतु –वृष्टेरकाल । स चोक्तो ज्योति शास्त्रे–"अनुराधर्क्षमारभ्य षोडशर्क्षेषु भास्कर । यावत्प्रवर्तते तावदकाल परिकीर्तित ॥" इति । प्रथम–अगस्त्योदयात्प्राक् वृष्टम् । स[4] च सिंहेराश्यर्के इति ज्योतिर्विद । आर्तवमपि कुतो न पिबेत्[7] यतो लूतादीना–खेचराणा विषप्राणिना, तन्त्वादिभिर्य संश्लेष , तेन दूषितम् । तन्तव –तन्निर्मितानि सूत्राणि । उक्त च काश्यपेन–"बलाहकाद्या समदा कीटा लूताश्च खेचरा । तद्विषोत्सर्गसंसर्गादग्राह्यं तत्तदा जलम् ॥" इति । अय च दोषोऽगस्त्योदयादपैति । उक्त च ज्योति शास्त्रे ( बृ स अ. १२।१२ )–"सलिलममरपाज्ञयोज्झित यद्ध नपरिवेष्टितमूर्तिभिर्भुजङ्गै । फणजनितविषाग्निसम्प्रदुष्ट भवति शिवं तदगस्त्यदर्शनेन ॥" इति ।**

१ 'स्य ऋतुर्बोध्यो' ठ । २ 'यतस्तदार्तव' ठ । ३ 'द्विरात्रतत्रैव' क ग झ । 'त्रिरात्र तत्रैव' ज ञ । ४ स –अगस्त्योदय । ५ 'सिंहेऽर्के' ख घ । ६ 'गौक्रियावन्न तदा' ख घ झ । ७ जतूकर्णेनाप्येवमुक्तम्–"वर्षासु चरन्ति घन सहोरगा वियति कीटलूताश्च । तद्विषजुष्टमपेय खजलमगस्त्योदयात्पूर्वम् ॥" इति ।

इदानी नदीर्निरूपयन्नाह—

**पश्चिमोदधिगा[1] शीघ्रवहा याश्चामलोदका[2] ॥ ८ ॥**
**पथ्या समासात्ता नद्यो विपरीतास्त्वतोऽन्यथा ।**

**स०**–नद्य समासात्–सक्षेपत , पथ्या –हिता । का ? इत्याह–या पश्चिममुदधि–समुद्र गच्छन्तीति पश्चिमोदधिगा । अन्येभ्योऽपि दृश्यत इति ड । तथा, शीघ्रवहा –वेगवत्य । तथा, अमलोदका –निर्मलसलिला । एव त्रिविशेषणविशिष्टा पथ्या । अत –आभ्यो, या पुनरन्यथा–विपरीतलक्षणा , ता विपरीता –अपथ्या ।

**आ० र०–दिव्याभावे भौम पेयमित्युक्तम् । तस्य चाष्टौ भेदा । यथोक्त सङ्ग्रहे ( सू अ ६ )–"कौपसारसताडागचाण्ड्य[3]प्रास्रवणोद्भिदम् । वापीनदीतोयमिति तत्पुनः स्मृतमष्टधा ॥" इति । गम्भीर सङ्कीर्ण[3] इष्टकादिबद्ध पुरुषकृतो जलाशय –कूप । तद्विपरीत–सर । पुरुषकृत सर –तडाग । स्वय विशीर्णशिलाश्वभ्र–चौण्डि । पर्वतनिर्झर–प्रस्रवणम् । भूमिमुद्भिद्योद्गमज्जलस्थान–उद्भिदम् । इष्टकादिबद्धो विस्तीर्ण ससोपान कूपो–वापी । नदी–प्रसिद्धा । तत्र नदीविशेषगुणानाह–पश्चिमोदधिगा इति । अतोऽन्यथा–पूर्वसमुद्रगा मन्दवहा मलिनोदकाश्च । विपरीता –अपथ्या ।**

**उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥ ९ ॥**
**हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः ।**
**कृमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते ॥ १० ॥**

**स०**–हिमवाश्च मलयश्च हिमवन्मलयौ, ताभ्यामुद्भूता –सञ्जाता पथ्या । किं सर्वा एव ? नेत्याह–उपलेत्यादि । उपलानामास्फालन–उल्लालन, तेनाक्षेप –क्षोभ , तेन विच्छेदा –विश्लेषा , उपलास्फालनाक्षेपविच्छेदा , तै । खेदित–जातक्षोभमुदक यासा ता खेदितोदका , या हिमवन्मलयोद्भूतास्ता एव पथ्या । यास्त्वेवभूता न भवन्ति ता अपथ्या । स्थिरा इति । ता एवाऽवहन्त्य सत्य कृम्यादीन् कुर्वते । हृच्च कण्ठश्च शिरश्च तेषा रोगा , कृमयश्च श्लीपद च हृत्कण्ठशिरोरोगाश्चेति द्वन्द्व । मुनिरपि हिमवत्प्रभवाना पथ्यत्वमाह । कृष्णात्रेयसुश्रुतौ त्वपथ्यत्वमाहतु । अत एवाय ग्रन्थकारो युक्त्या मतद्वयमपि सञ्जिरमाणो विशेषणमुपन्यस्तवान्–'उपलास्फालनाक्षेपविच्छेदै खेदितोदका ' इति । तेन या एवंविधा[6] न भवन्ति, ता न पथ्या इति ।

**आ० र०–हिमवन्मलयनदीगुणानाह–उपलास्फालनेति । उपला –पाषाणा , तेष्वास्फालनं–अभिघातादुच्छलनम् । आक्षेप –स्खलनादितस्ततो गमनम् । विच्छेदो–द्वैधीभाव । खेदित–खेदादवाप्तलाघवम् । ता एव स्थिराश्चेत् कृम्यादीन्**

१ **'समासतो नद्यो'** अ क ख घ ज झ ञ । २ 'चौण्ड्य' ख घ ज । 'चौण्ड' स स । ३ सङ्कीर्ण –आकुञ्चित , अविस्तृत इत्यर्थ । ४ 'लास्य चुण्डि ' ख घ ञ । 'लास्य चुण्डि ' ज.झ । ५ 'स्थिता ' म स । ६ 'एवभूता' ट ।

कुर्वते । हृत्कण्ठशिरसा रोगान् । अय च विषयविभाग पर स्परविरुद्धसुश्रुतचरकवाक्यतात्पर्यमूल. । तत्र चरकवाक्यम् ( सू अ २७।२०५ )-"नद्य पाषाणविच्छिन्नविक्षुब्धाभिहतोदका । हिमवत्प्रभवा पथ्या पुण्या देवर्षिसेविता ॥ नद्य पाषाणसिकतावाहिन्यो विमलोदका । मलयप्रभवा याश्च जल तास्वमृतोपमम् ॥" इति । सुश्रुतवाक्य तु ( सू अ ४५।२१ )-"मलयप्रभवा कृमीन्, हिमवत्प्रभवा हृद्रोगश्वयथुशिरोरोगश्लीपदगलगण्डान् कुर्वते" इति ।

**प्राच्यावन्त्यपरान्तोत्था दुर्नामानि, महेन्द्रजाः । उदरश्लीपदातङ्कान्, सह्यविन्ध्योद्भवा. पुन. ॥ ११ ॥ कुष्ठपाण्डुशिरोरोगान्, दोषघ्न्यः पारियात्रजा. । बलं पौरुषकारिण्य., सागराम्भस्त्रिदोषकृत् ॥ १२ ॥**

स०-प्राच्यादिजा नद्यो दुर्नामानि-अर्शासि कुर्वते । प्राच्या -गौडा । अवन्तयो-मालवा । अपरान्ता -कौङ्कणा । महेन्द्रजा नद्य उदरादीन् कुर्वते । सह्यविन्ध्यपर्वतोत्थाश्च पुन कुष्ठादीन् कुर्वते । पारियात्रात् सञ्जाता दोषघ्न्यो भवन्ति । सागराम्भ -समुद्रोदक, दोषत्रयकारि ।

आ० र०-अवन्तिनदीगुणानाह-प्राच्यावन्त्यपरान्तोत्था इति । उज्जयिन्युपलक्षिता देशा -अवन्तय । प्राच्याश्च ते अवन्तयश्च प्राच्यावन्तय., अपरे-पश्चिमावन्तय , तेषामन्ता'-मर्यादापर्वता , तेषु तिष्ठन्तीति तत्स्था । न तु प्राच्या -गौडा , अवन्तयो-मालवा , अपरान्ता -कौङ्कणा , इति । उक्त हि सुश्रुते ( सू अ ४५।२१ )-"प्राच्यावन्त्या अपरावन्त्याश्चार्शांस्युर्पनिर्वर्तयन्ति" इति । दुर्नामानि-अर्शांसि ।

महेन्द्रपर्वतनदीगुणानाह-महेन्द्रजा इति । उदराणि-वातोदरादीनि । श्लीपदातङ्क -श्लीपदव्याधि ।

सह्यविन्ध्यनदीगुणानाह-सह्यविन्ध्यभवा इति ।

पारियात्रनदीगुणानाह-दोषघ्न्य इति । पौरुष-वीर्यम् । ननु, "पारियात्रोद्भवा याश्च याश्च विन्ध्यभवास्तथा । शिरोहृद्रोगकुष्ठाना ता हेतु श्लीपदस्य च ॥" इति ( सू अ २७।२०८ ) चरकेण पारियात्रजाना शिरोरोगादिकर्तृत्वमुक्तम् । इह तु दोषत्रयहरत्वमिति विरोध । मैवम् । द्विधा हि पारियात्रजा.,-तडागजा दरीजाश्च । तत्राद्या दोषघ्न्य , अपरा शिरोरोगादिकर्त्र्य । उक्त हि विश्वामित्रेण-"तडागज दरीज च तडागाद्यत्सरिज्जलम् । बलारोग्यकर तत्स्याद्दरीज दोषल मतम् ॥" इति ।

समुद्रोदकगुणानाह-सागराम्बु त्रिदोषकृदिति ।

**विद्यात्कूपतडागादीन् जाङ्गलानूपशैलतः ।**

स०-आदिशब्देन सङ्ग्रहोक्ता ( सू अ ६ ) गृह्यन्ते । यथा-"कापसारसताडागचौण्ड्यप्रास्रवणौद्भिदम् । वापीनदीतोयमिति तत्पुन स्मृतमष्टधा ॥ [ कौप स्वादु त्रिदोषघ्न लघु पथ्य च सर्वदा । क्षार तु कफवातघ्न दीपन पित्तकृत्परम् ॥ कषायबहुल श्लेष्मपित्तघ्न वातकृच्च तत् । तृष्णाघ्न सारस बल्य कषायमधुर लघु ॥ वातल लघु ताडाग, चौण्ड्य पित्तकर स्मृतम् । लघुशीतामल स्वादु प्रोक्त प्रास्रवण जलम् ॥ औद्भिद स्वादु पित्तघ्न दीपन गुरु किञ्चन । सक्षार कटु वाप्यम्बु पित्तल कफवातजित् ॥ लब्धत्पदोष सुस्वादु नववापीष्ववार्षिकम् । अनभिष्यन्दि नादेय कटुक कफपित्तजित् ॥ विशदं वातलं रूक्षमनवस्थितलाघवम् ।" ] इति । सुश्रुते (?) चैषा लक्षणमुक्तम् । यथा-"भूम्युत्खातसमुद्भूतमिन्द्रनीलसमप्रभम् । विमल मधुरास्वाद कौप जलमुदाहृतम् ॥ नद्या शैलवराद्वापि स्रुतमेकान्तसस्थितम् । कुमुदाम्भोजसञ्छन्न वारि सारसमुच्यते ॥ प्रशस्तभूमिभागस्थ नैकसवत्सरोषितम् । कषायमधुरास्वादं ताडाग सलिलं स्मृतम् ॥ स्वयशीर्णशिलाश्वभ्रे नीलोत्पलनिभं जलम् । लतावितानसञ्छन्न बुधैश्चाण्डेयमुच्यते ॥ शैलसानुसमुद्भूत स्पृष्ट वातहिमातपै । लघु शीतामल स्वादु स्मृतं प्रास्रवण जलम् ॥ विदार्य भूमिमुद्भूत महत्या धारया स्रवेत् । यज्जल वेदितव्य तदौद्भिद स्वादु शीतलम् ॥ पाषाणैरिष्टकाभिर्वा बद्धा स्याद्या तु कूपवत् । वापी सा खलु विज्ञेया कृतसोपानपङ्क्तिका ॥ नद्या शैलप्रसूताया गोमेदकमणिप्रभम् । प्रशस्तभूमिभागस्थं जलं नादेयमुच्यते ॥" इति । "पौषादिद्वितये श्विष्ट विशेषेण क्रमाज्जलम् । सरस्तडागयो कूपचुण्ड्यो प्रस्रवणोद्भिदो ॥ कूपेन्द्रयो कूपचुण्ड्यो सर्वं पथ्यं तत परम् ।" तदेतान् कूपादीन् जाङ्गलानूपशैलान् समाश्रित्य जातान् विद्यात् । जाङ्गलादिदेशजान् यथायोग लघून् गुरूंश्च जानीयादित्यर्थ । तत्र जाङ्गलदेशे कूपादीना सप्ताना बहूदकसम्बन्धाभावाल्लघुत्व वेद्यम् । आनूपे तु बहूदकसम्बन्धाद्गुरुत्व वेद्यम् । शैले तूदकाल्पतया लघुतरत्वं वेद्यम् । तथा च सङ्ग्रहे ( सू अ ६ )-"धन्वानूपमहीध्राणा सामीप्याद्गुरुलाघवम् ।" इति ।

आ० र०-कूपादिगुणानाह-विद्यादिति । जाङ्गलो-निर्जला भूमि । अनूप -सजला । शैल -पर्वत । जाङ्गलस्य समीपा. कूपादयो लघूदका । अनूपस्य गुरूदका । शैलस्य लघुतरा. । उक्त हि सङ्ग्रहे (सू अ ६)-"धन्वानूपमहीध्राणा सामीप्या-

---

१ 'विन्ध्यभवा' इति पाठ, अ आ पुस्तकयो सङ्ग्रहहृदये च वर्तते, हेमाद्रिसम्मतश्च । २ 'राम्बु त्रिदोष' इति हेमाद्रिसम्मत पाठ । ३ अस्याग्रे "आविल समल नील घन पीतमथापि च । सक्षार पिच्छिल चैव सामुद्र तन्निगद्यते ॥ इति हारीत" इति आ पुस्तकेऽधिक पाठ । ४ 'यात्रे जाता' ठ । ५ 'तथा' ज । त्स्था । अथवा प्राच्यावन्त्यपरा भागा । तत्र प्राच्या ' ख घ झ.ञ. । ६ 'प्राच्या -गौडा' इत्यादीद मतमरुणदत्ते द्वादीनाम् । ७ 'वन्त्यपरावन्त्यश्चा' क ग ज ञ । ८ 'पजनयन्ति' स ह्य । ९ 'श्च विन्ध्यसह्यभवाश्च या ' स च. ।

१ 'स्मृतम्' ख घ झ । २ [ ] एतच्चिन्हान्तर्गता श्लोका सङ्ग्रहोक्ता इत्यत्रोक्ता अपि सङ्ग्रहहृदये नोपलभ्यन्ते, तत्र त्वसिस्थाने "सक्षार पित्तकृत्कौप" इत्यादि सार्धौ द्वौ श्लोकौ विद्येते । ३ 'दीपन कफवातनुत्' ट. ।

द्गुरुलाघवम् ।" इति । खारणादिना च—"नदीकूपतडागो-द्भिद्वाप्यादिषु विशिष्यते । अनूपे गौरवादम्बु शैले धन्वनि लाघवात् ॥" इति ।

इदानीं केषाञ्चिज्जलपाननिषेधमाह—

**नाम्बु पेयमशक्त्या वा स्वल्पमल्पाग्निगुल्मिभिः॥१३॥**
**पाण्डूदरातिसारार्शोग्रहणीशोषशोथिभिः ।**
**ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि चात्यशः १४**

**स०**—अल्पाग्न्यादिभिरम्बु न पेयम् । सर्वथैषां जलपाननिषेधप्रत्यपायमाशङ्कमान इदमाह—अशक्त्या वा,—पिपासामसहिष्णुभिः, स्वल्प—अत्यल्पं पेयम् । यावन्मात्रेण प्रत्यपायो न भवति तावदेव पेयमित्यर्थः । अल्पाग्नयश्च गुल्मिनश्चेति द्वन्द्वः । पाण्ड्वादीनां सप्तानां द्वन्द्वः, ततो मत्वर्थीय इनिः । शरन्निदाघाभ्यामन्तरेण स्वस्थोऽप्यत्यशः पिबेत् । किं पुनरातुरः । सङ्ग्रहे त्वेवमुवाच (सू. अ. ६)—"काममल्पमशक्तौ तु पेयमौषधसंस्कृतम् । पाषाणरूप्यमृद्धेमजतुतापार्कतापितम् ॥ पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडर्तिजित् ।" इति ।

**आ० र०**—**अल्पाग्न्यादीनामम्बुपानं निषेधति—नाम्बु पेयमिति । अशक्त्या—उदकं विना स्थातुमशक्त्या, स्वल्पं पेयम् । शोथः—श्वयथुः ।**

**ऋतुविशेषेण पानं नियच्छति—ऋते शरन्निदाघाभ्यामिति । ऋते—विना । स्वस्थोऽपि—किं पुनरातुरः । अत्यशः—अल्पमल्पम् । शरद्ग्रीष्मयोस्तु कामतः पिबेदित्यर्थसिद्धम् ।**

**समस्थूलकृशा भुक्तमध्यान्तप्रथमाम्बुपाः ।**

**स०**—समाश्च स्थूलाश्च कृशाश्च समस्थूलकृशाः । मध्यश्च अन्तश्च प्रथमश्च मध्यान्तप्रथमाः । भक्तस्य मध्यान्तप्रथमा भक्तमध्यान्तप्रथमाः । तेषु कालेषु येऽम्बु पिबन्ति, ते भक्तमध्यान्तप्रथमाम्बुपाः, यथाक्रमं समाः स्थूलाः कृशाश्च भवन्तीत्यर्थः । भक्तमध्येऽम्बु पीतं धातुसाम्यं समानतां करोति । भक्तान्ते तु पीतमामाशये कफवृद्धिं विदधत्स्थौल्यमावहति । भक्तादौ च पीतं निरिन्धनमग्निं तेजःप्रतिपक्षतयाऽत्यर्थमवसादयति, मन्दोऽग्निश्च सम्यगाहारं पक्तुमशक्तो भवति, आहारस्य चासम्यग्विपाकान्न तथा पुष्टिः, इति कृशत्वे युक्तिः । तथा च सङ्ग्रहे (सू. अ. ६)—"भक्तस्यादौ जलं पीतमग्निसादं कृशाङ्गताम् । अन्ते करोति स्थूलत्वमूर्ध्वं चामाशयात्कफम् ॥ मध्ये मध्याङ्गतां साम्यं धातूनां जरणं सुखम् ।" इति ।

**आ० र०**—**अवस्थाविशेषेण फलकथनद्वारा पानं नियच्छति—समस्थूलकृशा इति । भुक्तस्य मध्ये—अर्धाहारे भुक्ते, योऽम्बु पिबति, स समशरीरो भवति । योऽन्ते—भोजनानन्तर, स स्थूलः । यः प्रथमं—भोजनात्पूर्वं, स कृशः । अतोऽम्बु भुक्तमध्ये पेयमित्यर्थसिद्धम् ।**

**शीतं मदात्ययग्लानिमूर्च्छाच्छर्दिश्रमभ्रमान् ॥ १५॥**
**तृष्णोष्णदाहपित्तास्रविषाण्यम्बु नियच्छति ।**

**स०**—शीतमम्बु मदात्ययादीन् नियच्छति—पराकरोति । मदात्ययो—मद्योत्थो रोगः । ग्लानिः—क्लान्तिः । मूर्च्छा—मोहः । छर्दिः वमिः । श्रमः—खेदः । भ्रमः—अनवस्थितिः । तथा, तृष्णादीनि नियच्छति । एवंगुणमप्याम क्वचिन्नेष्यते । तथा चोक्तं सङ्ग्रहे (सू. अ. ६)—"अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च । नाल्पमप्याममुदकं हितं, तद्धि त्रिदोषकृत् ।" इति ।

**आ० र०**—**शीतोदकगुणानाह—शीतमिति । ग्लानिः—क्लमः । श्रमः—खेदः । उष्णं—सूर्यादितापः । दाहः—पित्तादिकृतः । अस्रं—रक्तम् । नियच्छति—हन्ति । एते एव सामान्योदकगुणाः, शीतस्वभावत्वादुदकस्य ।**

अथ्युनोष्णाम्बुगुणानाह—

**दीपनं पाचनं कण्ठ्यं लघूष्णं बस्तिशोधनम् ॥ १६ ॥**
**हिध्माध्मानानिलश्लेष्मसद्यःशुद्धिनवज्वरे ।**
**कासामपीनसश्वासपार्श्वरुक्षु च शस्यते ॥ १७ ॥**

**स०**—दीपनादिगुणयुक्तमुष्णमम्बु भवति । बस्तिशब्देन तात्स्थ्यान्मूत्रं गृह्यते । तेन मूत्रशोधनमित्यत्रार्थो बोध्यः । हिध्माध्मानादिषु च शस्यते । कासश्च आमश्च पीनसश्च श्वासश्च पार्श्वरुक् च, तासु च शस्यते । आमो—अपक्व, आहार इत्यर्थः । केचित्त्वामपीनस इति पीनसविशेषणमामशब्दमाहुः । तैरजीर्णे उष्णाम्बु नोक्तं स्यात् । अजीर्णे चालसकादिरूपे जलमुष्णमिष्यत एव ।

**आ० र०**—**उष्णोदकगुणानाह—दीपनमिति । कण्ठ्यं—स्वर्यम् । बस्तिः—मूत्राशयः । सद्यःशुद्धिः—तदहः कृतवमनादिः । नवज्वरः—सामज्वरः । आमः—आमाजीर्णम् । पार्श्वरुक्—पार्श्वशूलम् । उष्णं—क्वथनोष्णम्, सूर्यादितप्तनिषेधात् (?) । क्वथनविधिश्चोक्तः सङ्ग्रहे (सू. अ. ६)—"क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात् । क्वथितं फेनरहितमवेगममलं हितम् ॥" तथा,—"पाषाणरूप्यमृद्धेमजतुपाकार्कतापितम् । पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडर्तिजित् ॥" इति ।**

१ 'टागोत्थवाप्या' ग ज ञ । 'डागादिवाप्या' ख घ झ । २ 'शैलधन्वनि' क ख ग घ झ ञ । ३ **'ग्रहणीदोष'** अ आ ख घ झ ञ ठ । ४ 'प्रत्यवा' ठ । ५ 'त्यर्थाल्लभ्यम्' ख घ झ ञ । ६ **'भक्त'** इत्यरुणदत्तसम्मतः पाठः । ७ 'पाकतया न' ट । ८ 'मूर्ध्वमामा' ठ । ९ 'पिबेत्' ख घ झ ।

१ **'तृष्णोष्मदाह'** स घ झ स मू । २ 'ऊष्मा' ख घ झ । 'उष्णेन कालेन उष्णेनाहारादिना च दाहः—उष्णदाहः' इतीन्दु-चन्द्रनन्दनौ । ३ 'एक एवोदकं सामान्यगुणः' ख घ झ । ४ 'भावादु' ख घ । ५ **'शुद्धे न'** अ आ क ज ञ ठ । ६ 'तत्स्थमूत्र' ट । ७ 'त्वामेति पी' ट ठ । ८ 'शुद्ध' ज । ९ **'क्वथितम्'** क ग । १० 'जतुतापार्क' क ञ स द्र । 'जतुपात्रार्क' ख घ. । जतुपाकः—द्रवीकृता लाक्षा ।

अधुना क्वथितशीतलं निर्दिदिक्षुराह—

**[1]अनभिष्यन्दि लघु च तोयं क्वथितशीतलम् ।
पित्तयुक्ते हितं दोषे, [2]व्युषितं तत्त्रिदोषकृत् ॥ १८ ॥**

स०—अनभिष्यन्दि—न श्लेष्मकारि । लघुगुणयोगोऽम्भसोऽस्त्येव, पुनर्लघुत्वकथनमग्निसंस्कारवशाल्लघुतरत्वप्रतिपत्त्यर्थम् । अथवा, आ[3]धारादिवशादक्वथितमम्भो लघ्वपि यद्गुरु सम्पन्नम्, तदपि क्वथितशीतलं लघु भवति । शीतलत्वादभिष्यन्दित्वं यत्तोयस्य प्राप्तम्, तत्क्वथितशीतलत्वे[4]नास्य निषिद्धम् । मदात्ययादिहन्तृत्वं तु यच्छीतलत्वसामान्यात्तदस्यास्त्येव, न केनचिन्निषेद्धुं सम्भाव्यते । पित्तयुक्त इत्येकवचनमविवक्षितम्, तेन वातपित्ते पित्तश्लेष्मणि सन्निपाते च यत्र पित्तयोगः—पित्ताधिकत्वं दृश्यते, तत्रै[5]तत् क्वथितशीतलं जलं हितम् । सङ्ग्रहोक्तं (सू. अ. ६) तत्क्वथनलक्षणं सङ्क्षेपाभिप्रायेणेह नोक्तम् । यथा—"क्षीणपादत्रिभागा[6]र्धं देशर्तुगुरुलाघवात् । क्वथितं फेनरहितमवे[7]गममलं हितम् ॥" इति । अस्यार्थं शिष्यव्युत्पत्त्यै दर्श्यते—धन्वसाधारणानूपेषु देशेषु क्रमशः क्षपितचतुर्भागत्रिभागार्धं सलिलमभिश्रपेत् । जाङ्गलो हि देशोऽनिलानलाभ्यां भूयिष्ठमधिष्ठितः, तेनात्र तोयं लाघवादाशु विशुद्धिं प्राप्नोति । आनूपस्तु भूमिसोमगुणबहुलः, तत्र गुरुत्वादिगुणयोगाच्चिरेण विशुद्धिमश्नुते । एवं साधारणो देशश्चिन्त्यः । तथा, ऋतुष्वपि यथायोगमयमेव क्रमो बोध्यः । सुश्रुते तूक्तम् (सू. अ. ४५।४०)—"यत्क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु । चतुर्भागावशिष्टं तु तत्तोयं कफरोगनुत् ॥ तत्पादहीनं पित्तघ्नं, हीनमर्धेन वातनुत् ।" इति । सङ्ग्रहोक्तमेव (सू. अ. ६) ग्रन्थमिमं केचिदत्रापि पठन्ति । यथा—"**पानीयं न तु पानीयं पानीयेऽन्यप्रदेशजे । अजीर्णे क्वथितं चामे पक्वे जीर्णेऽपि नेतरत् ॥ शीते विधिरयं, तप्ते त्वजीर्णे शिशिरं त्यजेत् । अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम् ॥ प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः ।**" इति । अन्यप्रदेशजे पीते पानीये अजीर्णे पानीयम्—जलं, न पानीयम्—न पेयम् । एतदुक्तं भवति—पानीये पीते तज्जरणान्तं यावत् विजातीयं जलं न पेयमिति । अन्यप्रदेशज इति कोऽर्थः ? कौपे पीते ताडागं न पेयम्, ताडागे पीते कौपं न पेयम्, एवं सर्वत्र चिन्त्यम् । तथा, आमे—अपक्वे जले, अजीर्णे क्वथितं च जलं न पेयम् । पक्वे—क्वथिते, पीते जीर्णेऽपि, इ[10]तरत्—आमं जलं न पेयम्, यावन्न भुङ्क्ते तावत्सजातीयमपि न पेयमित्यर्थः । शीते विधिरयं—क्वथितशीतं एतद्विधानमित्यर्थः । तुरवधारणे । तप्तेऽजीर्णे एव शिशिरं त्यजेत्, जीर्णे तु शीतं पिबेदित्यर्थः । अतियोगेन—अतिबाहुल्येन, तृष्यतः—तृष्णावतोऽपि प्रयोजितम्—उपयुक्तं, सर्वस्यापि नरस्य श्लेष्मपित्ततां याति । ज्वरितस्य विशेषतः—यत आमेनाग्नौ बहिष्कृते ज्वरस्योत्पत्तिः, आमस्य च पानीयं वर्धकमिति । सङ्क्षेपतयाऽल्पोपयोगित्वाच्च अवश्याया[1]दिगुणा ग्रन्थकृता नोक्ताः । तांश्चात्र शिष्यहिताय ब्रूमः—"रूक्षस्तनुर्वैशद्याय[2] शीतो वातास्रकोपनः । पानतृड्दाहपित्तास्रकुष्ठोरुस्तम्भमेहजित् ॥ ग्रीष्मे तु सर्वजन्तूनां स्पर्शनादपि शस्यते । पद्मिन्यम्बु[3] च पित्तघ्नं कफकृद्विरसं गुरु ॥ हिमं तु शीतलं रूक्षं दारुणं सूक्ष्ममेव च । कफं न सन्दूषयति न पित्तं न च मारुतम् ॥ तथाऽश्मवर्ष[4] प्रालेयं हिमाद[5]ल्पान्तरं गुणैः । चराचराणामहितं, तुषा[6]रं त्वग्निनाशनम् ॥ (सुश्रुते सू. अ. ४५।३५)—'वैकिरं[7] लघु सक्षारं श्लेष्मघ्नं वह्निदीपनम् । कैदारं[10] मधुरं प्रोक्तं विपाके गुरु[8] दोषलम् ॥ तद्वत्पाल्वलमुद्दिष्टं[11] विपाके[12] दोषलं तु तत् । अनेकदोषमानूपं वार्यभिष्यन्दि गर्हितम् ॥ एभिर्दोषैरसंयुक्तं निरवद्यं तु जाङ्गलम् । पाकेऽविदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्धनम् ॥ दीपनं स्वादु शीतं च तोयं साधारणं लघु ।' चन्द्रकान्तभवं रक्षोविषपित्तज्वरापहम् ॥ रत्नाकरसमुत्थं च सर्वदोषकरं मतम् ॥" इति ।

**आ० र०—शृतशीतगुणानाह—अनभिष्यन्दीति । अनभिष्यन्दि—स्रोतसामस्रावि । दोषे—वायौ श्लेष्मणि च । उष्णमेव शीतीकृतं[13]—क्वथितशीतलम् ।**

**पर्युषितशृतशीतगुणानाह—व्युषितमि[14]ति । तत्—क्वथितशीतलम् ।**

**नारिकेलोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ॥ १९ ॥**

स०—नारिकेलान्तःस्थितमुदकं स्निग्धं स्वादु वृष्यं हिमं च भवति । एवम्भूतमपि प्रभावाल्लघु भवति । तथा, तृष्णादिहरं दीपनं मूत्रशोधनं च भवति ।

**आ० र०—नारिकेलोदकगुणानाह—नारिकेलोदकमिति ।**

---

१ **'अरूक्षमनभिष्यन्दि लघु क्वथितशीतलम्'** इति अ. आ. ड. ज. ञ. पुस्तकेषूपलब्धः पाठः सर्वैरपि टीकाकारैरस्वीकृतोऽपि सङ्ग्रहोक्तारूक्षगुणयुक्तत्वाद्युक्ततरः प्रतिभाति । २ **'ऽयुषितं'** आ. ञ. । ३ 'धारवशा' ठ. । ४ 'त्वे चास्य' ठ. । ५ 'तत्रैव' ठ. । ६ 'र्द्धं लघु विधाद्यथोत्तरम्' आ. । ७ 'मनिन्द्यममलं ध्रुवम्' ट. । ८ 'तत्स्मृतं गुणवज्जलम्' ठ. । ९ 'जे पानीये' ठ. । १० 'नेतरत्—नाम जलम्, याव' ठ. ।

१ अवश्याय—असंहतीभूतं हिमम् । २ 'तृट्कफापि' ठ. । ३ 'म्बु घनं पीतं कफवृद्धिकरं गुरु । हैमं तु' ट. । ४ अश्मवर्ष—वर्षोपल । ५ 'हैमा' ट. । ६ 'तुषारो हिमभेदे च शीकरे च हिमेऽपि च' इति विश्वप्रकाशः । ७ वैकिर—वालुकादीन् विकीर्य तद्भवं जलम् । 'वैकरं' ट. ठ. । ८ 'कटु' सु. । ९ 'लघु' सु. । १० कैदार—क्षेत्रभवम् । ११ पाल्वल—तृणाद्याच्छन्नमन्दसरःस्थम् । १२ 'विशेषाद्दोषलं' सु. । १३ 'शीतं कृतं' क. ग. ञ. । १४ 'व्युषितं—विगताहोरात्रं यत्, तत् त्रिदोषकरं,—त्रीन् दोषान् करोति, कालस्वभावाद्धिगुणभ्रंशादम्लविपाकित्वाच्च' इति चन्द्रनन्दनः । चक्रपाणिना तूक्तम्—"शृतं तोयं दिवा रात्रौ गुरु रात्रिशृतं दिवा ।" इति ।

ईषत्पक्का[1]र्द्रनारिकेलफ[2]लान्तर्वर्त्तिजल–नारिकेलोदकम् । के[3]चित् सुश्रुताध्यायिनो गुर्विति पठन्ति, गुरुपाकत्वात्। इह तु गुरुलघुपाकद्वैविध्याभावाल्लघ्वित्येव पठनीयम्, ल[4]घुगुणत्वात्।

इदानी युक्त्याऽप्यसङ्ग्रह निर्दिशति—

**वर्षासु दिव्यनादेये परं तोये वरावरे ।**

**इति तोयवर्गः ।**

**स०**–प्रावृष्यान्तरिक्ष जल पर वर–अत्यन्तं पथ्यम् । नदीसम्भव त्वपथ्यम् । इति तोयवर्ग ।

**आ० र०**–उदकाना तारतम्यमाह–वर्षासु दिव्यनादेय इति । वर्षाशब्दो नादेयेनै[5]व सम्बध्यते । उक्त हि चरकेण ( सू अ २५।३७ )–"आन्तरिक्षमुदकानाम्" इ[6]ति पथ्यत्वेन प्रकृष्ट[7]तममुदकेषु । "व[8]र्षा[9]नादेयमुदकानाम्" इति, अपथ्य[10]त्वेन । ना[11]देयशब्देनैक[12]पदगतस्यापि दिव्यशब्दस्यायोग्यत्वान्न वर्षासम्बन्ध । न हि दिव्य वर्षाभव वरिष्टम्, तस्य ग्रहणनिषेधात्। नापि वर्षास्वेव वरम्, सर्वदा वरिष्ठत्वात्। खारणादिस्तु पाल्वलमवरमाह–"पाल्वल जलमम्भसाम्" इति । उभय प्रमाणम् । सङ्ग्रहे तु ( सू अ ६ )–"सूर्योद्धृतप्रमुक्तत्वाल्लघु वातकफापहम्। शै[13]त्यजीवनसौम्यत्वै पित्तरक्तविषार्तिजित् ॥ श्वेते कषाय, तत्स्वादु कृष्णे, तिक्त तु पाण्डुरे । नीले कषायमधुर, देशे लवणमूषरे ॥ सक्षार कपिले, मिश्र मिश्रे,ऽथा[14]म्बुगुणाधिके । मधुर, लवणाम्ल तु भवेद्भूमिगुणाधिके ॥ तेजोऽधिके तिक्तकटु, कषाय पवनाधिके । दिव्यानुकारित्वव्यक्तरसत्वात् खगुणाधिके ॥ [ *[15]सक्षार पित्तकृत् कौप, दीपन नातिवातलम् । सारस स्वादु लघु च, ताडाग गुरु वातलम् ॥ चौण्ड्य तु पित्तल, दोषहर प्रस्रवणोदकम् । औद्भिद स्वादु पितघ्न, स्वादु वापीजल लघु ॥ नादेय वातल रूक्ष कटुक च तदादिशेत् । ] कीटाहिमूत्रविड्कोथतृणजालोत्कराविलम् ॥ पङ्कपङ्कजशैवाल[16]हठपर्णादिसं[17]स्तृतम् । तत्कुर्यात् स्नानपानाभ्या तृष्णाध्मानोदरज्वरान् ॥ कासाग्निसादाभिष्यन्दकण्डूगण्डादिकानत । तद्वर्जयेदभावे वा तोयस्यान्यस्य शस्यते ॥ घनवस्त्रपरिस्रावै क्षुद्रजन्त्वभिरक्षणम् । व्यापन्नस्यास्य तपनमम्यर्कायसपिण्डकै ॥ पर्णीमूलबिसग्रन्थिमुक्ताकतकशैवलै । व[1]ज्रगोमेदकाभ्या वा कारयेत्तत्प्रसादनम् ॥ पाटलाकरवीरादिकुसुमैर्गन्धनाशनम् । पानीय न च पानीय पानीयेऽन्यप्रदेशजे ॥ अजीर्णे क्वथित चामे पक्वे जीर्णेऽपि नेतरत् । शीते विधिरय, तप्ते त्वजीर्णे शिशिर त्यजेत् ॥ पानीयं प्राणिना प्रा[2]णा विश्वमेव हि तन्मयम् । अतोऽत्यन्तनिषे[3]धेऽपि न क्वचिद्वारि वार्यते ॥ त[4]त्र शोषाङ्गसादाद्या मृत्युर्वा स्या[5]दलाभत । न हि तोयाद्विना वृत्ति स्वस्थस्य[6] व्याधितस्य वा ॥ केवल सौपध पक्वामामसुष्ण हित च तत् । समीक्ष्य मात्रया युक्तमममृत विषमन्यथा ॥ अतियोगेन सलिल तृष्यतोऽपि प्रयोजितम् । प्रयाति पित्तश्लेष्मत्व ज्व[7]रितस्य विशेषत ॥ वर्द्धयत्यामतृ[8]ण्निद्रातन्द्राध्मानाङ्गगौरवम् । कासाग्निसादहृल्लासप्रसेकश्वासपीनसान् ॥ पाके स्वादु हिम वीर्ये तदुष्णमपि योजितम् । तस्मादयोगपानेन ला[9]घवान्न वियोजयेत् ॥ आमविष्टब्धयो कोष्णा निष्पिपासोऽप्यप पिबेत् । यावन्त्य क्लेदयन्त्यन्नमतिक्लेदोऽग्निनाशन ॥ विबद्ध कफवाताभ्या मु[10]क्त्वामाशय बन्धन । पच्यते क्षिप्रमाहार कोष्णतोयद्रवीकृत ॥ अन वस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च । नाल्पमप्याममुदक हित, तद्धि त्रिदोषकृत् ॥ तेजस प्रतिपक्षत्वान्मन्दाग्निर्वर्जयेज्जलम् । तोय वह्निगुणभ्रष्ट पाकेऽम्ल सर्वदोषकृत् ॥ भवेत्पर्युषित त[11]च्च तोय तु[12] करकोद्भवम् । अतिशैत्यगुरुस्थैर्यसङ्घातै कफवातकृत् ॥ चन्द्रकान्तभव रक्षोविषपित्तज्वरापहम् । [ *[15]दृष्टिमेधावपु स्थैर्यंकर स्वादु हिम लघु ॥ ]" इति । इति तोयवर्ग. ।

परिशेषेभ्यो वर्गेभ्य प्राज्यजनोपयोगितयोपकारित्वेनाजन्मसात्म्येन प्राधान्यात् पय सञ्ज्ञासामान्यात् पयस इव जीवनादिगुणयोगाच्च तोयव[13]र्गादनु क्षीरवर्ग प्रक्रम्यते । तत्रापि दध्यादीना मूलकारणत्वात् क्षीरस्य प्रागुपादानम् । तथा, जीवनीयाना रसायनाना चाग्रेसरत्वात् । तथा चाष्टाङ्गसङ्ग्रहे ( सू अ १३ )–"क्षीरं जीवनीयानाम्। क्षीरघृताभ्यासो रसायनानाम्।" इत्यादि ।

**अथ क्षीरवर्गः ।**

**स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ॥ २० ॥**
**वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ।**
**प्रायः पयः**

**स०**–पय –क्षीरं, प्राय स्वादुपाकरसादियुक्त भवति ।

---

१ 'कार्द्र ना' क ग । २ 'फल तदन्तर्वर्ति' क ख ग ज झ ञ । ३ केचित्–डल्हणादय । ४ 'लघोगुण' क ग ञ । ५ 'नादेयमिति' क ग ञ । ६ 'व सह स' क । ७ 'अतिपथ्य' क ग ज ञ । ८ 'तमेषु ।' ख घ झ । ९ 'र्षासु ना' क ख घ ज झ ञ । १० 'अत्यपथ्य' क ज । 'अपथ्य' ग ञ । ११ 'नादेयेनेव वर्षागतस्यापि दिव्यस्यायौगिकत्वान्न' ख घ झ । १२ 'पद्यगत' क ग.ज ञ । १३ 'शीतजीव' क ग ञ । १४ 'त्वम्बु' क ग ञ । 'चाम्बु' ख घ झ । *१५ [ ] एतच्चिह्नान्तर्गता सङ्ग्रहश्लोका केषुचिदपि हेमाद्रिटीकापुस्तकेषु नोपलभ्यन्ते । १६ 'हतपणा' क ग ज ञ । हट –निर्मूलोद्भवस्तृणविशेषो जलौषधिविशेषो वा हठालु इति ख्यात । १७ 'सयुतम्' ख घ झ ।

१ 'कुष्टगो' ग । 'वस्त्रगो' स स । २ 'प्राणो' क ञ । ३ 'षेधेन न' ज स स । ४ 'तस्य शो' ख घ झ स मू । 'आस्यशो' स स । ५ 'तदला' स स । ६ 'हिम च यत्' क ग ज ञ । ७ 'त्वरित' ख घ । ८ 'तृट्छर्दितन्द्रा' क ग ञ । ९ 'लाघव तन्नियच्छति' क ग । १० 'मुक्त्वाऽऽमाशयबन्धनम्' ज । ११ 'तद्वत्तोय' स मू । १२ 'हिमकरोद्भवम्' स.स. । १३ 'वर्गानन्तर' ट

पाकश्च रसश्च पाकरसौ, स्वादू पाकरसौ यस्य तदेवम्। ओजसे हित-ओजस्यम्। धातून् वर्धयतीति धातुवर्धनम्। वृष्य-शुक्रकरमतिशयेनेति बोध्यम्। धातुवर्धनत्वादेव शुक्रकरत्वमात्रस्य सिद्धे प्रायोग्रहणात् क्वचित्क्षीरं नैव भवति। तथा चोष्ट्रीक्षीरमीषद्रूक्षोष्णलवणं पठ्यते, अजाक्षीरं च लघु, आविकमुष्णम्, ऐकशफमुष्णं साम्ललवणं चेति। तस्मात्प्रायोग्रहणं कृतम्। स्वादुपाकरसत्वादेव क्षीरस्य स्निग्धवृष्यादयो गुणा लब्धा एव। किं पुनरेतैरुद्दिष्टैः? इति केचित्। तान् ब्रूमहे। मधुररसाश्रितेभ्यः स्निग्धवृष्यादिभ्योऽपरे स्निग्धवृष्यादयो गुणा बहुतरा क्षीरस्य विद्यन्त इति ज्ञापनार्थमेते स्निग्धादयो गुणा पुनरुद्दिष्टाः। महाभूतानां हि संयोगादिविशेषात् क्वचिद्रससहचरिता एव गुणा द्रव्यमभिनिविशन्ते। ये रसे समारोप्य वर्ण्यन्ते। यथा-मधुरं आयुष्यादिगुणम्, अम्लेऽग्निदीप्तिकृदादयः। केचिच्च रसमनपेक्ष्यैव द्रव्ये निविशन्ते। यथा-मधुररसद्रव्ये मकुष्टतण्डुलीयादौ रूक्षादयो गुणाः। तथा हि स्निग्धादीनां तत्रोपलम्भः प्राप्तो मधुररसाश्लिष्टत्वात्। तस्मान्मकुष्टादिद्रव्यं मधुररससहचरोक्तेन गुणौघेन संयुक्तं वक्तुं युक्तम्। अन्यथा तु, कृतं षड्रसगुणस्वरूपवर्णनमनर्थकमेव स्यात्। तस्मादयमत्र विषयविभागो ज्ञेयः। केचिद्गुणा रससहचरिता द्रव्ये निविशन्ते, यद्वशात्तद्द्रव्यं रसगुणाननुवर्तते। ईदृशं च विषयमुद्दिश्य तन्त्रकृद्भिर्मधुरादिरसानां स्निग्धादिगुणा वर्णिता वेद्याः। केचित्तु रसनिरपेक्षा एव द्रव्ये निविशन्ते। अत एव तद्द्रव्यं रसगुणान्नानुवर्तते। अस्मिंस्तु विषये रसगुणवर्णनं नोक्तमेव वेद्यम्। तस्मात्क्षीरस्य स्निग्धादियोगात्स्वादुपाकरसत्वे सत्यपि स्निग्धादिगुणवर्णनम्। एवं चोभयथा क्षीरस्य स्निग्धादिगुणयोगादधिका स्निग्धादयो ये गुणास्तेऽस्य सन्तीत्यवगच्छ। अयमेव च व्यवहारोऽन्यत्राप्येवंविधे शाल्यादौ द्रव्ये विज्ञेयः। ननु, "स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः।" इति (हृ. सू. अ. ९।२१) वक्ष्यते। ततश्च स्वादुरसत्वादेव स्वादुपाकत्वं लब्धम्, तत्किं पाकग्रहणेन? भणाम। "शालिपिष्टमयं सर्वं गुरुभावाद्विदह्यते" इत्युक्तम्। तदेतत्क्षीरं गुरुगुणयुक्तमपि विदाहावस्थायां चिरं न तिष्ठति, प्रागेव स्वादुपाकतां याति। इतीममर्थं ज्ञापयितुं पाकग्रहणम्। स्त्रीणां चाहाररस एवापत्यस्नेहात् क्षीराय सम्पद्यते। तथा च दारुवाहिः-"स्त्रीणामपत्यजाद्धर्षाद्रसः क्षीराय कल्पते। स्नेहाद्रसः क्षरत्येव हृदयात्क्षीरमेत्यतः॥" इति। गव्यस्य च पूर्वं तरमुपादानं सर्वक्षीरेभ्यो ज्यायस्त्वात्, तथा माहिषमपि तक्रादिगोरसशब्देन प्रथितमिति।

आ० र०-अथ क्षीरवर्गः। "गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम्। ऐभमैकशफं चेति क्षीरमष्टविधं स्मृतम्॥" इति। तत्र सामान्यक्षीरगुणानाह-स्वादुपाकरसमिति। ओजस्य-ओजोवर्धनम्। स्वादुरसत्वात्स्वादुपाकादिषु सिद्धेषु तेषां ग्रहणमन्येभ्यः स्वादुरसेभ्योऽतिशयार्थम्। धातुवर्धनत्वाच्छुक्रवर्धनत्वे सिद्धे वृष्यग्रहणमपि। प्रायोग्रहणादुष्ट्रीक्षीरादावीषल्लवणत्वाद्यपि।

**अत्र गव्यं तु जीवनीयं रसायनम्॥ २१॥**
**क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम्।**
**श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः॥ २२॥**
**जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत्।**

स०-अत्र-एषु क्षीरेषु मध्ये, गव्यं पुनः क्षीरं जीवनीयमतिशयेनेति बोद्धव्यम्, जीवनीयमात्रस्यौजस्यमित्यनेनैव क्षीरसामान्यलक्षणेनोक्तत्वात्। ओजस्यं हि जीवनीयमुच्यते। तथा ह्योजःक्षये जीवनीयानामौषधानामुपयोगो निर्दिष्टः। यथा (हृ. सू. अ. ११।३९)-"ओजः क्षीयेत कोपादिभिः" इत्युक्त्वाऽनन्तरमुवाच-"जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम्।" इति। अत्र च क्षीरं जीवनीयत्वेन गृहीतमपि पुनरुक्तं प्राधान्यख्यापनार्थम्। तथा च मुनिः (च. सू. अ. २७।२१४)-"प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम्।" इति। रसायन-रसरक्तादीनां श्रेष्ठानां लाभोपायः। तथा चोक्तम् (हृ. उ. अ. ३९।२)-"लाभोपायो हि शस्तानां रसादीनां रसायनम्।" इति। तथा, क्षतक्षीणहित-उरःक्षताय हितं क्षीणाय च हितम्। क्षीण-क्षीणधातुः। तथा, मेधा-धारणाशक्तिः, तस्यै हित-मेध्यम्। "उगवादिभ्यो यत्" इति यत्। एवं बल्यम्। तथा, स्तन्यकरम्। कृञो हेतुताच्छील्येति हेतौ टः, स्त्रीणां स्तन्यकरणे हेतुरित्यर्थः। तथा, सरम्। श्रमादींश्चैकादश नाशयेत्।

१ गोदुग्धे विशेष उक्तो भावप्रकाशे-"कृष्णाया गोर्भवेद्दुग्धं वातहारि गुणाधिकम्। पीतायाः हरते पित्तं तथा वातहरं भवेत्॥ श्लेष्मलं गुरु शुक्लाया रक्तचित्रा च वातहृत्। विवत्सावालवत्साया पयो दोषलमीरितम्॥ बष्कयिण्यास्त्रिदोषघ्नं तर्पणं बलकृत्पयः। स्वल्पान्नभक्षणाज्जातं क्षीरं गुरु कफप्रदम्॥ तत्तु वर्ण्यं परं वृष्यं सुस्थानां गुणदायकम्। पलालतृणकार्पासबीजजातं गुणैर्हितम्॥" इति। निघण्टुरत्नाकरेऽपि-"तरुणीनां गवां दुग्धं मधुरं च रसायनम्। त्रिदोषनाशनं चैव वृद्धायां दुर्बलं मतम्॥ सगर्भायाः समुद्दिष्टं त्रिमासोर्ध्वं च पित्तलम्। क्षारं च मधुरं चैव मतं वै शोषकारकम्॥ प्रथमं च प्रसूतायां निःसारं गुणहीनकम्। नूतनप्रसूतगोर्दुग्धं रूक्षं दाहकरं मतम्॥ रक्तदोषस्य जनकं पित्तलं च मतं बुधैः। चिरप्रसूतादुग्धं तु मधुरं दाहकं पटु॥" इति। रोगविशेषे दुग्धनिषेध उक्तो रत्नाकरे-"नवज्वरे च मन्दाग्नौ ह्यामदोषेषु कुष्ठिनाम्। शूलिनां कफदोषेषु कासिनामतिसारिणाम्॥ पयःपानं न कुर्वीत विशेषात्कृमिदोषदम्।" इति। २ 'सातितृ' आ। 'साधितृ' इति हेमाद्रिचन्द्रनन्दनसम्मतः पाठः। ३ 'बोध्यम्' ट। ४ 'रसमांसादीनां' ट। 'रसवीर्यविपाकानां' ठ.।

१ 'संयोगविशे' ठ। २ 'ये विशेषमारोप्य' ठ। ३ 'रससाहचर्योक्तेन' ट। ४ 'था तत्रकृता तु' ट। ५ 'निवसन्ति' ठ। ६ 'विशेषमु' ठ। ७ 'वदाम' ट। ८ 'पत्यात्स्ने' ठ। ९ 'प्रायेणापत्य' ठ।

आ० र०-गव्यगुणानाह-अत्र गव्यमिति । जीवनीय-प्राणधारणम् । रसायन-वय स्थापनम् । क्षत-क्षतकास , क्षीण -क्षयरोगी, तयोर्हितम् । मेध्य-मेधाजननम् । बल्य-बलकरम् । स्तन्यकर-नार्या क्षीरप्रदम् । अलक्ष्मी -लक्ष्मी-नाशहेतु । आधि -मन.पीडा । क्षुत्-अतिक्षुधा, तस्या एव रोगत्वात् ।

**हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिष हिमम् ॥ २३ ॥**

स०-महिष्या इद-माहिष क्षीरम्, अत्यग्निभ्योऽनिद्रेभ्यश्च हितम् । तथा, गरीयो-गुरुतरम् । तथा, हिम-शीतवीर्यम् । मुनिरप्याह ( च सू अ २७।२१५ )-"महिषीणा गुरुतर गव्याच्छीततर पय । स्नेहादूनमनिद्राणामत्यग्नीना हित च तत् ॥" इति । [ स्नेहात् अदून-आपूर्ण, स्नेहादूनमिति व्याख्येयम् । न तु स्नेहोनमिति, प्रत्यक्षविरोधात् । तथा च गोक्षीरात् माहिषक्षीरे बहु स्नेह उपलभ्यते । हरिश्चन्द्रोऽप्येवमेव व्याचष्टे । तस्मात्स्नेहाधिकमिति व्याख्येयम् ।] खरनादे चोक्तम्-"गव्य स्नेहोत्तमं क्षीर गव्याच्च पयस पय । यथोत्तरं स्नेहहीनमौरभ्रच्छागमाहिषम् ॥ जाङ्गलानूपशैलेषु चरन्तीना यथोत्तरम् । पयो गुरुतर वत्सो यथा तासा प्रवर्धते ॥ गुरु शीततर गव्यान्माहिष स्वप्नल पय । चतुर्थभागस्नेहोन पित्तघ्न च विशेषत ॥" इति । यत्तु रविगुप्त सिद्धसारेऽभ्यगीष्ट-"गव्यात् स्निग्ध गुरुतर माहिष स्वप्नकृत्पय ।" इति । तद्बुधैश्चिन्त्यम्, सर्वमतविरुद्धत्वात् ।

आ० र०-माहिषगुणानाह-हितमिति । अत्यग्नय -तीक्ष्णाग्नय । अनिद्रा -नष्टनिद्रा । गरीय -गव्याद्गुरु । सामान्यवचनात्सिद्धेऽपि हिमत्वे हिमग्रहणमतिशयार्थम् । नन्वेव चेद्गुरुशब्दादीयसुन् न कर्तव्य , गुरुशब्दादेवातिशयसिद्धे । नैवम् । शीतत्वादपि गुरुत्वातिशयार्थमीयसुन् कृत । अत्र चरकसुश्रुतयोर्विरोध । तत्र चरक ( सू अ २७।२१५ )-"महिषीणा गुरुतर गव्याच्छीततर पय । स्नेहादूनमनिद्राणामत्यग्नीना हित च तत् ॥" इति । सुश्रुत ( सू अ. ४५।५५ )-"महाभिष्यन्दि मधुर माहिष वह्निनाशनम् । निद्राकर शीततर गव्यात्स्निग्धतर गुरु ॥" इति । तत्र चरकोक्त गव्यान्माहिषस्य स्नेहोनत्व हृद्यादिगुणविषयम्, माहिषक्षीरजात्स्नेहात् गव्यक्षीरज स्नेहो हृद्यादिभिर्गुणैरधिक इत्यर्थ । सुश्रुतोक्त स्नेहाधिकत्व मात्राविषयम्, यावतो गव्यात् क्षीराद्यावान् स्नेहस्तावतो माहिषात्ततोऽधिक इत्यर्थ. । अत एव खरनादिनोत्तमशब्द प्रयुक्त -"गव्य स्नेहोत्तम क्षीर गव्याच्च पयस पय । यथोत्तर स्नेहहीनमौरभ्रच्छागमाहिषम् ॥" इति । उदश्रादीना यथोत्तरस्नेहहीनत्वमुद्देशवाक्यक्रमापेक्षया-"क्षीराकरा गौर्महिषी अजावी करभी गजी । हयी स्त्री चाष्टमी तेषा पृथक्कर्मगुणान् शृणु ॥" इति । गव्य स्नेहोत्तमम्, ततो जघन्य माहिषम्, तत आजम्, तत आविकमिति । जघन्यत्वमान चोक्त तेनैव-"गुरु शीततर गव्यात्स्वप्नल माहिष पय । चतुर्थभागस्नेहोन पित्तघ्न च विशेषत ॥" इति । निदर्शन चेदम् । तेन माहिषात् छाग चतुर्थभागस्नेहोनम्, छागादौरभ्रमिति ।

**अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु ।**
**आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ॥ २४ ॥**

स०-आज-छागल क्षीर, लघु भवति, अल्पाम्बुपानादिभिर्हेतुभूतै । अल्पाम्बुपानादित्व चाजाना स्वभाव , अन्यासा तु देशसात्म्यापेक्षया । ननु, यद्येव स्वभावादेवाल्पाम्बुपानादेर्गम्यमानत्वादेतदुपन्यासो व्यर्थ एव । अत्रोच्यते । ज्ञापनार्थम् । इद ज्ञापयति,-यदा अजा अल्पव्यायामगुर्वशनादि कुर्यु , तदा तासामप्यन्यथा क्षीर भवेत् । एव च गवादीनामप्याहारादिवशाद्गुरुलघुत्व चिन्त्यमिति । तेन प्रादोषमपराह्ने यद्गृहीत पय , तदपेक्षयौषस प्रभाते यद्गृहीत तद्गुरु, चेष्टारहितत्वात् । रात्रौ हि प्राणिना न कदाचिच्चेष्टा भवति, अत औषस गुरु । दिवा च धावनप्लवनादिकया चेष्टया प्रादोष लघु । अनया च दिशा सर्वमपि चिन्त्यम् । अत एव सङ्ग्रहे यदुक्तम् ( सू अ ६ )-"पिण्याकाम्लाशिनीना तु गुर्वभिष्यन्दि तद्भृशम् ।" इति । तदेतेनैवोक्तप्रायत्वान्नोक्तम् । शोषेत्यादि । शोषादीना द्वन्द्व । तान् जयतीति क्विप् । शोषजित् । एव ज्वरजिदित्यादि ।

आ० र०-आजगुणानाह-अल्पाम्बुपानेति । शोषो-राजयक्ष्मा । अल्पाम्बुपानादिहेतूपन्यासो निदर्शनार्थ । अजाना तत्स्वभावत्वात् । अल्पाम्बुपानादिषु सत्सु गवादीनामपि पयो लघु विज्ञेयम्, यथाऽजानामित्यर्थ । अर्थाद्विपर्यये गुरु । उक्त हि सङ्ग्रहे ( सू अ ६ )-"पिण्याकाम्लाशिनीना तु गुर्वभिष्यन्दि तद्भृशम् । अचेष्टया च प्रादोषाद्गुरीय स्मृतमौषसम् ॥ व्याख्यातोऽनेन लघिमा चेष्टावत्प्रकृतिष्वपि । ह्रस्वेषु वातिदेहेभ्यो मांसेष्वप्येवमादिशेत् ॥" इति ।

**ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।**
**शस्तं वातकफानाहकृमिशोफोदरार्शसाम् ॥ २५ ॥**

स०-औष्ट्रक-उष्ट्रीणा क्षीर, लघु तथा ईषत्-मनाग्रूक्षोष्णलवण तथा दीपन भवति । तथा, वातादीना शस्तं-वातादिषु

१ 'स्तन्य-नार्या क्षीरम् ।' ग ञ. । २ 'अतिबुभुक्षा' ख घ झ । ३ 'स्नेहान्यून' स च । ४ 'प्राय हितमत्यग्नये च तत्' ठ स च । ५ [ ] एतच्चिह्नान्तर्गत पाठष्ठ पुस्तके नोपलभ्यते । ६ 'रेऽप्यध्य' ठ । ७ 'वह्निसादनम् । निद्राकर स्निग्धतर गव्याच्छीततर' क ग ।

१ 'ना स्नेहहीन' ग ञ । २ 'त्तरत्वमु' ख घ ज झ । 'त्तरं स्ने' क । ३ 'क्रमानुसारेण' क ग । ४ 'न्यत्वे मान' ख घ झ । ५ अस्याग्रे "गव्याद्गुरु स्नेहमात्रात्तृतीयाशाधिक हिमम् । स्नेहहृद्यत्वादिगुणैस्ततोन तुर्यभागत ॥" इति ञ पुस्तकेऽधिक श्लोक । ६ 'यामा गुर्व' ठ । ७ 'प्रदोषेऽपरा' ट ठ. । ८ 'स्त्यातस्तेन' स.द. ।

पथ्यमित्यर्थः । औष्ट्रकमिति "उष्ट्राद्वुञ्" इति वुञ् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्युष्ट्रीशब्दादपि ।

आ० र०–कारभगुणानाह–ईषद्रूक्षेति । शस्त–औषधम् । वातकफघ्नत्वेन हेतुविपरीतत्वादानाहादिघ्नत्वे सिद्धेऽप्यानाहादिग्रहणं व्याधिविपरीतत्वख्यापनार्थम् ।

**मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ।**
**तर्पणाश्च्योतनैर्नस्यैः**

स०–मानुषीणां क्षीरं वातपित्तासृगभिघाताक्षिरोगजिद्भवति । वातश्च पित्तं चासृक् चाभिघातश्चेति द्वन्द्वः, तैरक्षिरोगः, तं जयति यत्तदेवम् । केन प्रयोगेण? इत्याह–तर्पणाश्च्योतनैर्नस्यैः । न त्वभ्यवहारादिना । तर्पणादीनि–खे खेऽध्याये वक्ष्यमाणानि ।

आ० र०–स्त्रैणगुणानाह–मानुषमिति । तर्पणं–नेत्रपूरणम्, आश्च्योतनं–नेत्रसेचनम्, ताभ्यामक्षिरोगान् जयति । नस्येन शिरोगतांश्च वातादीन् । उक्तं हि चरकेण ( सू. अ. २७।२२० )–"जीवनं बृंहणं सात्म्यं स्नेहनं मानुषं पयः । नावनं रक्तपित्तस्य तर्पणं चाक्षिरोगिणाम् ॥" इति ।

**अहृद्यं तूष्णमाविकम् ॥ २६ ॥**
**वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ।**

स०–आविकं क्षीरमुष्णवीर्यं भवति । तथा, अहृद्यं–हृदयायाहितं भवति । तथा, वातव्याधिहरम् । तथा, हिक्कादिप्रदम् । आविकमित्यविशब्दात् स्वार्थे कप्रत्ययान्तात् "तस्येदम्" इत्यण् ।

आ० र०–आविकगुणानाह–अहृद्यमिति । खरणादिस्त्वाह–"स्वाद्वम्लपाकं स्निग्धोष्णं गुरु पित्तकफोल्बणम् । आविकं बृंहणं क्षीरं हिक्काश्वासानिलापहम् ॥" इति । तत्र हिक्काश्वासौ कफपित्तजौ करोति, वातजौ हरतीत्यविरोधः । उक्तं हि सुश्रुतेन ( सू. अ. ४५।५४ )–"आविकं मधुरं स्निग्धं गुरु पित्तकफावहम् । पथ्यं केवलवातेषु श्वासे चानिलसम्भवे ॥" इति ।

**हस्तिन्याः स्थैर्यकृत्**

स०–हस्तिन्या क्षीरं स्थैर्यकृद्भवति ।

आ० र०–ऐभगुणानाह–हस्तिन्या इति । स्थैर्यकृत्–देहदार्ढ्यकृत् । बाढं–अत्यर्थम् ।

**बाढमुष्णं त्वैकशफं लघु ॥ २७ ॥**
**शाखावातहरं साम्ललवणं जडताकरम् ।**

स०–एकः शफो–नखो, यासां वडवादीनां ता एकशफाः, तासामिदं–ऐकशफं क्षीरं, बाढं–अतिशयेनोष्णं भवति । तथा, शाखासु–बाहूरुप्रभृतिषु यो वातः, तं हरतीति शाखावातहरम् । "हरतेरनुद्यमनेऽच्" इत्यच् । तथा, साम्ललवणं–ईषदम्लमीषल्लवणं च । तथा, जडताकरं–अङ्गजाड्यकरणहेतुः । "कृञो हेतु" इत्यादिना हेतौ टः ।

आ० र०–ऐकशफगुणानाह–उष्णमिति । एकशफा–अविभागखुरा वडवागर्दभ्यादयः । शाखा–बाह्यो रोगमार्गः । साम्ललवणं–ईषदम्लमीषल्लवणम् । जडता–प्रज्ञाहीनत्वम् ।

**पयोऽभिष्यन्दि गुर्वामं, युक्त्या शृतमतोऽन्यथा ॥ २८ ॥**

स०–आमं–अक्वथितं, पयोऽभिष्यन्दि–श्लेष्मप्रकोपि, तथा गुरु भवति । अतः–आमात्, अन्यथा–विपरीतं, युक्त्या शृतं भवति । अनभिष्यन्दि लघु च । लघिमा तु पूर्वावस्थामपेक्ष्योच्यते । युक्तिः–योग उपायः । खरनादेन क्षीरस्य श्रपणे युक्तिं स्पष्टं कृत्वा दर्शिता–"अर्धोदकं क्षीरशिष्टमामाल्लघुतरं शृतम् ।" इति ।

आ० र०–अपक्वक्षीरगुणानाह–पय इति । अभिष्यन्दि–स्रोतःस्रावि । स्त्रैणं त्वपक्वमेव गुणवत् । उक्तं हि सुश्रुतेन ( सू. अ. ४५।६२ )–"तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम् । वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ॥" इति ।

पक्वक्षीरगुणानाह–युक्त्येति । अतोऽन्यथा–अनभिष्यन्दि लघु च । युक्तिरुक्ता खरणादिना–"अर्धोदकं क्षीरशिष्टमामाल्लघुतरं शृतम् । स्यान्निर्जलं शृतं द्वित्रिचतुरष्टांशशेषितम् ॥ यथाशृततमं सारं गुरु बल्यतमं पयः ।" इति ।

**भवेद्गरीयोऽतिशृतं, धारोष्णममृतोपमम् ।**

स०–अतिशयेन क्वथितं कवलभोज्यमिव सञ्जातं, गरीयो–गुरुतरं भवेत् । खरनादेनोक्तम्–"स्यान्निर्जलं शृतं द्वित्रिचतुरष्टांशशेषितम् । यथाशृततमं सारं गुरु बल्यतमं पयः ॥" इति । सुश्रुते (?) चोक्तम्–"शृतशीतं तु पित्तघ्नं शृतोष्णं कफवातजित् । त्यजेद्विवर्णं ग्रथितं विगन्धं विरसं पटु ॥ रक्तपित्तप्रशमनी वृष्या सन्तानिका गुरुः ।" इति । खरनादेनोक्तम्–"धारोष्णात्सर्वशः क्षीराच्छीतं गुरुतरं भवेत् ।" इति । धारोष्णममृतोपमम्, निर्दोषत्वात् ।

आ० र०–अतिपक्वक्षीरगुणानाह–भवेदिति । गरीयः–अपक्वाद्गुरु ।

धारोष्णगुणानाह–धारोष्णमिति । धारायामुष्णं–धारोष्णम्, यस्य मुखमेव पात्रम् । इति क्षीरम् ।

अधुना दधिगुणान्निरूपयति—

**अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ॥ २९ ॥**
**मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत् ।**
**रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥ ३० ॥**
**पीनसे मूत्रकृच्छ्रे च, रूक्षं तु ग्रहणीगदे ।**
**नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न ॥ ३१ ॥**
**नामुद्गसूपं नाक्षौद्रं तन्नाघृतसितोपलम् ।**
**न चानामलकं नापि नित्यं नो मन्दमन्यथा ॥ ३२ ॥**

१ 'नाशन' ज. । २ 'क्षिशूलिनाम्' स.च. । ३ 'कफप्रदम्' क ग ञ । ४ 'कासे' म सु ।

१–२ अस्याग्रे "विना तु वनितास्तन्यमाममेव हितं हि तत् ।" इत्यधिकः पाठः क्रमेण अ ठ पुस्तकयोः । ३ 'पयः शिष्टं' क ग ञ । ४ 'यथोत्तरं गुरुतमं सारं बल्य' क । ५ 'धारया उष्णं' ञ । ६ नैवाद्यादित्यत्र "शरद्ग्रीष्मवसन्तेषु नाद्यान्नोष्णं न रात्रिषु ।" इत्यभिन्नार्थकः पाठः अ आ ठ पुस्तकेषु दृश्यते ।

ज्वरासृक्पित्तवीसर्पकुष्ठपाण्डुभ्रमप्रदम् ।

स०–अम्लौ पाकरसौ यस्य तदेवंभूत दधि भवति । तथा, ग्राहि–स्तम्भनम् । तथा चोक्तम्–"भेदि तत्पिण्डितान् भावान् शकृदादीन् भिनत्ति यत् । विपरीतमतो ग्राहि तच्च स्तम्भन-मुच्यते ॥" इति । तथा, गुरु उष्ण वातजिच्च । मेदआदीना द्वन्द्व , तान् करोति यत्तदेवम् । रोचत इति रोचिष्णु । न रोचत एव केवलम्, अरोचकमपि व्यावर्तयतीति शस्तमरुचौ । रोचैन हि घृतपूरादि न त्वरुचि जयति । अरुचिन्न पटोलपत्र तैत्र रोचते । तथा ह्यत्रैव पठिष्यति (हृ सू अ १०।१४)–"तिक्त स्वयमरोचिष्णुररुचिम्" इत्यादि । रोचिष्णुत्वादेव चोचावचव्यञ्जनपरिवृतैर्मासैमण्डकादिभिरपि सुहितस्यापि दध्न्यभिलाष उत्पद्यत एव । अत एव चैतदाहारान्तेऽभ्यवहरन्ति । शीतक इति विषमज्वरविशेषणम् । शीतकारित्व तु वाते श्लेष्मणि तत्संसर्गे वा यद्यपि त्रितये सम्भवति, तथाऽपि वातजिद्वातज एव विषमज्वरे दधि प्रयोज्यम्, संसर्गे वा वातोल्बणे । तथा हि शीतज्वर एवोक्तम् (हृ चि अ १।१४२)–"अभ्यनभिक्रतान् स्वेदान् स्वेदि भेषजभोजनम् ।" इति । ननु, पीनसे शस्तमिति कथमविशेषेणोक्तम्? यतश्चत्वार पीनसा वातपित्तकफसन्निपातजा इति वक्ष्यन्ते । तत्र दध्नो वाताधिक एव युक्तत्व, न शेषेषु । अत्र सञ्चक्ष्महे । परिपाकात् पीनसस्योपशान्ति । परिपाककर च दधि, उष्णत्वात् । अथवा पूर्ववत्सामान्योक्तावपि यत्र योग्यताऽस्य वातिके, तैत्रैव तदुपकल्प्यताम् । अनुक्तेष्वपि हि सामान्योपक्रमो वस्तुवशाद्विशेषेष्वेव विपरिणमति । तथा ह्यत्रैवोपरिष्टाद्दुग्ध-कर्मसु व्यतीतम्–"श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुध । जीर्णज्वर मूत्रकृच्छ्र रक्तपित्त च नाशयेत् ॥" इति । न चं सर्वेष्वेव कासश्वासकृच्छ्रास्रपित्तेषु पय वार्मुकमिति । तथा, ग्रहणीरोगे तु तद्रूक्ष शस्तम् । अनेन च हेतुना दध्न प्रकृतिस्थस्य स्निग्धत्व युक्त्यैवोक्तम् । यतो ग्रहण्या रूक्ष–उद्धृतसार-मुद्दिष्टम् । निशि नैवं–न किञ्चिद्यात् । नैवाद्यान्निशि नैवोष्ण मित्येवकारा आत्यन्तिकनिषेधाय । रात्रौ निषेधाद्दिवा भुञ्जीते-त्यर्थादवगम्यते । नैवोष्णं–अग्न्यादितापात्तप्तम् । तथा, वसन्त-ग्रीष्मशरत्सु न भोज्यम् । अन्यर्तावपि मुद्गसूपादीनामन्यतमेन रहित न भोज्यम् । तत्र घृतसितोपलयो समाशिकतयोरेव योगेन पथ्यत्वमिच्छन्ति । मुद्गसूपादीना तु मिश्रीभावो दध्ना जन्यमानस्य दोषस्य प्रतिबन्धार्थं कल्प्यते, रक्तपित्तवत् । यथा–समीरणोल्बणेऽस्रपित्ते तित्तिर्यादीनामौष्ण्यमुदुम्बरादिरसेन प्रतिबध्नाति । नित्यमिति । यद्यपशेते शरीरस्य तथाप्युदर्के रोगावहत्वान्न शीलनीयम् । अत एवं मात्राशितीयेऽप्यतिदोषलत्वादस्य निषेध करोति । तथा च वक्ष्यति (हृ सू अ ८।४०)–"किलाटदधिकूचीका" इत्यादि । नो मन्दमिति । दुग्धावस्था व्यतीत्य दध्यवस्थामसम्प्राप्तमन्तरालवर्ति–मन्दकमित्युच्यते । तस्मिन् सत्यपि स्नेहे परिणतिविशेषेण कालात्मना स्रोत-सामत्यन्तोपलेपकृतो दोषत्रयकोपोऽपि भवतीत्यतीव वर्जनीय-मेव । मन्दकनिषेधश्चोपलक्षणार्थ , तेन मद्यादीनप्यप्राप्तरसा-न्नोपयुञ्जीतेत्यवगन्तव्यम् । अन्यथेत्यादि । प्रशब्द एव द्योतयति–विविभ्रष्ट दधि निषेव्यमाण प्रकर्षेण ज्वरासृक्पित्तादीन् ददाति । ननु, शुक्रकृत्त्वबलवर्धनत्वाद्दीपनत्वमनुपपन्नम् । शुक्र-कृद्बलवर्धनानि हि द्रव्याणि प्रायेण गुरूणि भवन्ति । अतो दध्येवगुण सत्कथ नामाग्निकृत्स्यात्? अत्राचक्ष्महे । अम्लत्वा-दुष्णवीर्यत्वाच्च युक्तमेव । यतो रसविपाकाभ्यामम्ल वीर्येणोष्ण च दधि, अतोऽग्निकृत्त्वमस्मिन्नुपपन्नमिति । ननु, शुक्रकरत्व दध्नो न युक्तम् । यतोऽम्लपाकरस दधीत्यधीतमाचार्येण, अम्लश्च शुक्रनाशन , तस्माच्छुक्रकृत्त्वमयुक्तम् । अत्राचक्ष्महे । स्निग्धत्वबृंहणत्ववातघ्नत्वबल्यत्वै शुक्रकृत्त्वमुपपन्नमेव । तथा च वक्ष्यति (हृ सू अ ९।२२)–"किञ्चिद्रसेन कुरुते कर्म पाकेन चापरम् । गुणान्तरेण वीर्येण प्रभावेणैव किञ्चन ॥" इति । ननु, वातजिदित्यनेन नार्थ । यानि खलु द्रव्याणि बल्य-स्निग्धगुरूष्णयुक्तानि, तानि वातघ्नान्येव दृष्टानि । तस्माद्वात-जिदिति न वाच्यम् । नैवम् । सक्तुमद्यसूर्यतापमन्दकादिषु व्यभिचारात् । तथा हि–सक्तवो वातला वृष्या रूक्षा बलकराश्च । माद्वाकादिमद्य हर्षणत्वाद्वृष्य वातल च । तथा च वक्ष्यति (हृ उ अ ४०।३५)–"मनसो हर्षण यच्च तत्सर्वं वृष्य-मुच्यते ।" इति । मद्य च मात्रा पीत हर्षण भवति । तथा च मुनि (च चि अ २४।५९)–"हर्षमूर्जंप्रद पुष्टिमारोग्य पौरुष परम् । युक्त्या पीत करोत्याशु मद्यम्" इति । सूर्यताप-श्चोष्णोऽपि सन्मारुतस्य वृद्धये । तथा च मुनि (च चि अ १४।१३)–"कषायकटुतिक्तानि रूक्षशीतलघूनि च ।" इत्यारभ्य यावत् "वातातपौ भय शोको हेतुर्वातार्शसामिति ॥" इति । मन्दक च स्निग्धाम्लगुरुगुणयुक्तमपि त्रिदोषकरम् । तथा च मुनि (च सू अ. २७।२२४)–"त्रिदोष मन्द-कम्" इति । त्रिषु च दोषेष्वन्तर्भूत पवन इति चैव व्यभिचा-रदर्शनाद्वातजिदित्युक्तम् । क्षीरस्य च दध्यात्मना परिणमतोऽन-भिव्यक्ताम्लाभिव्यक्ताम्लात्यम्ललक्षणास्तिस्रोऽवस्था सम्पद्यन्ते । तत्र मन्दजात–अनभिव्यक्ताम्लम् । सम्यग्जात–अभिव्यक्ता-म्लम् । अतिजात–अत्यम्लम् । तत्र मन्दजात त्रिदोषकृत्त्वान्निषि-द्धम् । सम्यग्जातस्यैते पूर्वोक्ता गुणा । किञ्चिद्धीनाश्चात्यम्लस्य । तथा, सुजातेऽत्यम्ले च दध्नि सरमण्डौ स्त । तत्र दध्न उपरि-भाग सर , अधो मण्ड । एतद्गुणास्तु लाघविकत्वान्नेहोक्ता । मुनिना च दर्शिता (च सू अ २७।२२४)–"त्रिदोष मन्दक जात वातघ्न दधि शुक्रलम् । सर श्लेष्मानिलघ्नस्तु मण्ड स्रोतोविशोधन ॥" इति । श्लेष्मपित्तरक्तकृत्त्व चाम्ल-

१ 'रोचते' ठ । २ 'घृतापूपवन्न' ट । ३ 'न तु' ट । ४ 'समो दका' ट । ५ 'तेनैतद्' ठ । ६ 'च सर्वमर्वे' ठ । ७ रोगे रूक्ष' ट । ८ 'नैतत्कदाचिद्' ठ । ९ 'समासेनैतयो' ठ । १० 'यद्यप्यति-सुखकर श' ट । ११ 'दर्के रो' ठ. । १२ 'एवान्नपानविधावप्य' ठ. ।

१ 'त्यतो वर्ज' ट । २ 'मूर्जो मुद पु' स च. । ३ 'शोको वातातपस्पर्शो हे' स च. । ४ 'शुक्रल ' स च ।

पाकरसोष्णवीर्यत्वादेवावगम्यते । यत्तु साक्षादेतेषामुपादानं तत् प्रकर्षार्थम् । अन्येभ्योऽम्लद्रव्येभ्यो दध्येतान्यतिशयेन करोतीति । नैवाद्यान्निशीत्यादौ ग्रन्थे चैकस्मिन्नेव[1] नकारे कर्तव्ये यदनेकनकारकरणं तच्छास्त्रनिषिद्धदधिभक्षणादतिप्रत्यवायज्ञापनार्थम् । चरकोक्तश्च मङ्गल्यगुणो नेहोक्तः, चिकित्सायामनुपयोगित्वात् । अत एव सर्पिरादीनां मङ्गल्यानामपि चरकेऽपि मङ्गलत्वं नोवादीदिति[2] । सुश्रुते तु (सू अ ४५।६८) दध्नो विशेषगुणा उक्ताः । यथा—"दध्याजं कफपित्तघ्नं लघु[3] वातक्षयापहम् । दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ॥ विपाके मधुरं वृष्यं रक्तपित्तप्रणाशनम्[4] । बलासवर्धनं स्निग्धं विशेषाद्दधि माहिषम् ॥ विपाके कटु सक्षारमम्लं[5] मेध्यौष्ट्रकं दधि । वातमर्शांसि कुष्ठानि कृमीन् हन्त्युदराणि च ॥ वातघ्नं कफकृत्स्निग्धं विशेषान्न च पित्तकृत्[6] । कुर्याद्भक्ताभिलाषं च दधि यत् सुपरिस्रुतम्[7] ॥ शृतक्षीराच्च[8] यज्जातं गुणवद्दधि तत्स्मृतम् । वातपित्तहरं रुच्यं धात्वग्निबलवर्धनम् ॥ दधि त्वसारं रूक्षं च[9][10] ग्राहि विष्टम्भि वातलम् । दीपनीयं विशेषेण[11] सकषायं रुचिप्रदम् ॥" इति । केवलमपि स्वल्पं कदाचिद्दधि भुञ्जीतेत्यर्थादवगम्यते । अन्यथा केवलस्य गुणकथनं निष्फलमेव स्यादिति केचिदाहुः ।

**आ० र०**-दधिगुणानाह-अम्लपाकरसमिति । ग्राहि-स्तम्भनम् । रोचिष्णु-स्वयं रोचते । अरुचौ शस्तं-अन्यान्यपि रोचयति । शीतके-शीतज्वरे । विषमज्वरे तु-अशीतेऽपि ।

रूक्षदधिगुणानाह-रूक्षं त्विति । रूक्षं-उद्धृतस्नेहम्, ग्रहणीदोषे शस्तम् ।

दधिभोजनं नियमयति-नैवेति । उष्णं-अग्न्यादितप्तम् । उष्णो-ग्रीष्मः । सितोपला-शर्करा । नित्यं-प्रत्यहम् । मन्दं-असम्यग्निष्पन्नम् । वसन्तादिभ्योऽन्यदा दिवा घृताद्यन्यतमोपेतं शीतं सुजातमेकाहाद्यन्तरं[12] दधि भुञ्जीतेति मथितार्थः ।

नियमातिक्रमे दोषमाह-अन्यथेति ।

**तक्रं[13] लघु कषायाम्लं दीपनं कफवातजित् ॥ ३३ ॥**
**शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ।**
**प्लीहगुल्मघृतव्यापद्गरपाण्ड्वामयान् जयेत् ॥ ३४ ॥**

**स०**-तक्रं लघु कषायाम्लं दीपनं कफवातजिच्च भवति । तथा, शोफादीनेकादश जयेत् । घृतस्यातिपानात् व्यापत्-रोगो घृतव्यापत् । गर-कृत्रिमो विषविशेषः । सुश्रुते चोक्तम् (सू अ ४५।८६)-"नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले । न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च । मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥" इति । तथोक्तम् (सङ्ग्रहे सू. अ. ७)-"तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति तु । पीनसश्वासकासादौ सिद्धमेवोपयोजयेत् ॥" इति । "मन्दजातं मरुत्कोपि रूक्षाभिष्यन्दि दुर्जरम् । अतिजातं भृशाम्लौष्ण्यतैक्ष्ण्यात्पित्तकरं परम्[2] ॥ दोषघ्नमुद्धृतस्नेहं सस्नेहमपि शोफजित् । (सु सू अ ४५।८९)-'वातेऽम्लं सैन्धवोपेतं, स्वादु पित्ते सशर्करम् ॥ हितं तक्रं कफे साम्लं व्योषसौवर्चलान्वितम् । तक्राल्लघुतरो मण्डो[3] दुर्जरा तक्रकूर्चिका' ॥" इति ।

**आ० र०**-तक्रगुणानाह-तक्रमिति । मथितं दधि-तक्रम् । तद्द्विविधं,-सजलं निर्जलं च । सजलं द्विविधं,-सस्नेहमस्नेहं च । तत्रास्नेहस्यैते गुणाः । सस्नेहस्य गौरवात्किञ्चिदूनाः[4] । निर्जलस्य ततोऽप्यूनाः[5] । तथा चोक्तम् (सुश्रुते सू अ ४५।८५)-"मन्थनादिपृथग्भूतस्नेहमर्धोदकं च यत्[6] । नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे ॥" इति । तथा (सङ्ग्रहे सू अ ७)-"दण्डाभिमथनाद्दध्नो गुरुणश्चातिशोफदात् । अनुद्धृतस्नेहमपि तक्रं शोफहरं लघु ॥" इति । कफघ्नत्वे विशेष उक्तः सङ्ग्रहे (सू अ ७)-"तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति तु[1] ।" इति । मूत्रग्रहो-मूत्रकृच्छ्रम् । घृतस्यातिपानादुत्पन्नो रोगो-घृतव्यापत् । गर-कृत्रिमं विषम् ।

**तद्वन्मस्तु सरं स्रोतःशोधि विष्टम्भजिल्लघु ।**

**स०**-मस्तु तद्वत्-तक्रवद्गुणैर्वेद्यम् । तथा, सरम् । तथा, स्रोतःशोधि । तथा, विष्टम्भजित् । सुश्रुते चोक्तम् (सू अ ४५।८१)-"तृष्णाक्लमहरं मस्तु लघु स्रोतोविशोधनम्[7] । अम्लं कषायानुरसमवृष्यं[8] कफवातजित्[9] ॥ आह्लादनं प्रीणनं च भिनत्त्याशु मलं च तत् । बलमावहति क्षिप्रं तथा[10] भक्तस्य रोचकम् ॥" इति ।

**आ० र०**-मस्तुगुणानाह-तद्वदिति । सुजातस्य दध्नो द्रवभागो-मस्तु । दोषपूर्णानि स्रोतांसि शोधयतीति-स्रोतःशोधि । सर-मलानुलोमनम् । विष्टम्भजित्-वातानुलोमनम् । भेदिनोऽपि कूष्माण्डादेर्विष्टम्भित्वदर्शनात्[11] ग्राहिणोऽपि नागरस्य विबन्धनुत्त्वदर्शनादुभयोर्ग्रहणम्[12] । तद्वदिति लघुत्वे सिद्धे लघ्वित्यतिशयार्थम् ।

---

१ 'सिन्नकारे' ट । २ 'नावादि ।' ट । ३ 'क्षयरोगविनाशनम्' ट । लघु पाके विषापहम्' ठ । ४ 'वातपित्तप्रसादनम्' स सु । ५ 'र गुरु' स सु । ६ 'बृंहणं नातिपित्तकृत्' स सु । ७ सुपरिस्रुतं-सुष्ठु गलितद्रवभागम् । ८ 'शृताक्षी' ट ठ । ९ 'रात्र' स सु । १० 'तु' ट ठ । ११ 'लघुतरं' म सु । १२ 'हान्तर' ग ञ । १३ तक्रविशेषानाह चक्रपाणिदत्तः—"ससरं निर्जलं घोलं, तक्रं पादजलान्वितम् । अर्धोदकमुदश्वित्स्यान्मथितं सरवर्जितम् ॥ घोलं पित्तानिलहरं, तक्रं दोषत्रयापहम् । उदश्वित्श्लेष्मलं चैव मथितं कफपित्तनुत् ॥" इति । क्षेमशर्मा चाह—"शशिकुन्दसमुज्ज्वलशङ्खनिभं युवतीकरनिर्मितनिर्मथितम् । घृतसैन्धवहिङ्गुयुतं मधुरं पिब तक्रमहो नृप रोगहरम् ॥" इति ।

१ 'च' ट ठ, क ख ग घ ज झ ञ । २ 'मनम्' ट । ३ 'ण्ड कूर्चिकादधितक्रज' स सु । ४ 'स्निग्धूना' क ग । ५ 'तो न्यूना' क ग । ६ 'नादिष्ट' स सु । ७ 'तत्' ख घ झ । ८ 'कषाय मधुरमत्रं' स सु । ९ 'वातपित्तनुत्' ट । १० 'मस्तु' ट । 'भक्तच्छन्दं करोति च' स सु । ११ 'ष्टम्भकारित्व' क ग । १२ 'विबन्धघ्नत्वद' क ग ।

**नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत् ॥ ३५ ॥**
**सङ्ग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासजित् ।**

स०-नवनीतं नवं-नवोद्धृतं, लघु वृष्यं च । तथा, शीतं-शीतवीर्यं, बलवर्णाग्निकरं च । तथा, सङ्ग्राहि वातादिजिच्च । सङ्ग्रहे चोक्तम् ( सू अ ६ )-"शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतम् ।" इत्यादि ।

**आ० र०-नवनीतगुणानाह-नवनीतमिति । नव-सद्यस्कम् । असृक्-रक्तम् । क्षयो-राजयक्ष्मा । अर्दितं-एकायामः ।**

**क्षीरोद्भवं तु सङ्ग्राहि रक्तपित्ताक्षिरोगजित् ॥ ३६ ॥**

स०-क्षीरोद्भवं तु-क्षीरादेव जातं मथित्वोत्पादितं, नवनीतं सङ्ग्राहि रक्तपित्ताक्षिरोगजिच्च भवति ।

**आ० र०-क्षीरनवनीतगुणानाह-क्षीरोद्भवमिति । क्षीरोद्भवं-क्षीरमथनोद्भवम् । सर्पिरप्येवं[2] द्विविधं[3] ज्ञेयम् ।**

**शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम् ।**
**बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम् ॥ ३७ ॥**
**क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ।**
**वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥ ३८ ॥**
**स्नेहानामुत्तमं शीतं वयसः स्थापनं परम् ।**
**सहस्रवीर्यं विधिभिर्घृतं[4] कर्मसहस्रकृत् ॥ ३९ ॥**

स०-घृतं[5] धीप्रभृतीनामग्निग्लपितात्मान्तानां शस्तं-हितम् । धीः-बुद्धिः, वस्तुग्रहणशक्तिः । स्मृतिः-अतीतविचारशक्तिः । प्रजार्थिनां शस्तम् । प्रजा-अपत्यम्, तदर्थिनाम् । शुक्रस्य सफलताकरमित्यर्थः । तथा, वातादिघ्नम् । तथा, स्नेहानां-तैलादीनां, उत्तमं-श्रेष्ठम् । तथा, शीतम् । वयसः स्थापनं-जरया विना वयसः स्थापनमित्यर्थः । सहस्रवीर्यमिति । सहस्रशब्दोऽनेकार्थः, अनेकशक्तीत्यर्थः । कथम्? विधिभिः,-योगसंस्कारादिभिर्घृतमनेकशक्तिः सम्पद्यते । येन द्रव्येण प्रयुज्यते संस्क्रियते वा, तच्छक्तिमेवाऽनुरुध्यते । अथवा तत्संयोगाच्छक्त्यन्तरमन्यदारोहति । अतो[6] हेतोः सहस्रशब्दोऽनेकार्थः । अन्यथा द्रव्याणामानन्त्यात्कथं दशशतवाची सहस्रशब्द उपपद्यते । अन्ये त्वेवं व्याचक्षते-सहस्रशब्दो दशशतसंख्यावाच्येव । सहस्रपाक्यं हि सर्पिरुक्तम्, न सहस्रपाक्यात्परेण । तत्र चेद् सहस्रपाक्यत्वे प्रयोजनम्[7]-पाकसहस्रं यावदस्य संस्कारोऽनुवर्तते, नातः परम् । अन्यथा सहस्रपाकात्परेण किमिति पाको नोक्तः? तस्मादासहस्रं पाकानां शक्त्यन्तराण्यारोहन्ति पाकाः, न ततः परेणेति । तथा, कर्मसहस्रकृत्-अनेककार्यकृत् ।

**आ० र०-घृतगुणानाह-शस्तमिति । उपदिष्टग्रहणे शक्तिः-धीः । गृहीतस्य विच्छेदेन धारयितुं शक्तिः-स्मृतिः । अविच्छेदेन-मेधा । प्रजादिभिरर्थिशब्दः सम्बध्यते । प्रजा-अपत्यम् । क्षतक्षीणः-क्षतकासपीडितः । परीसर्पो-विसर्पः, शस्त्रं-शस्त्रघातः, अग्निः-अग्निदाहः, तैस्त्रिभिर्ग्लपितः-पीडितः, आत्मा-शरीरं, येषां ते तथा । शोषो-राजयक्ष्मा । ज्वरो-जीर्णज्वरः, नवस्य स्नेहानर्हत्वात् । स्नेहानां-तैलादीनाम् । वयसः-यौवनस्य । योजनया कर्मसहस्रकृत्-बहुतरकार्यकृत् । यतः सहस्रवीर्यं-बहुतरशक्तियुक्तम् । कैः? विधिभिः,-योगसंस्कारपानाभ्यञ्जनानुवासनादिभिः ।**

**मदापस्मारमूर्च्छायशिरःकर्णाक्षियोनिजान् ।**
**पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ॥ ४० ॥**

स०-पुराणं-अतीतबहुकालं, पञ्चदशादिवर्षस्थितं, घृतं मदादीन् व्याधीन् जयति । व्रणानां पैच्छिल्यादीन् शोधयति । तथा, व्रणान् रोपयति । सङ्ग्रहे चैवमभ्यधायि ( सू अ ६ )-'व्रणशोधनरोपणम् । पूर्वोक्ताश्चाधिकान्कुर्याद्गुणांस्तदमृतोपमम् ॥ तद्वच्च घृतमण्डोऽपि[1] रूक्षस्तीक्ष्णस्तनुस्तु सः ।" इति ।

**आ०र०-पुराणघृतगुणानाह-मदापस्मारेति । मूर्च्छायो-मूर्च्छा । शोधनं-दुष्टव्रणानाम्, रोपणं-शुद्धानाम् । दशवर्षोषितं-पुराणम् । उक्तं च-"उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् । लाक्षारससनिभं शीतं प्रपुराणमतः[2] परम् ॥" इति ।**

**बल्याः किलाटपीयूषकूर्चिका[3]मोरणादयः ।**
**शुक्रनिद्राकफकरा विष्टम्भिगुरुदोषलाः ॥ ४१ ॥**

स०-किलाटादयो बल्याः । तथा, शुक्रादिकराः । तथा, विष्टम्भिनो गुरवो दोषलाश्च स्युः । आदिग्रहणात्तक्रपिण्डक्षीरशाकयोर्ग्रहणम् । वह्निनाशकत्वं चैषां बल्यत्वेन शुक्रकृत्त्वेन विष्टम्भिदोषलत्वेनावगतमेवेति 'वह्निसादनाः'[4] इति ग्रन्थकृता नेह कृतम् । सङ्ग्रहे तु स्पष्टार्थं कृतमेव । तत्र, किलाटः-अल्पक्षीरो बहुना तक्रेण कृतः । पीयूषः-सद्यः प्रसूताक्षीरकृतः[5] । कूर्चिका-दधितक्रघना किलाटिका । मोरणं-क्षीरसदृशं किलाटिकः[6] । पिण्डनं-उत्तरापथे प्रसिद्धम्[7] । क्षीरशाकः-प्रसिद्धः ।

**आ० र०-किलाटादीनां गुणानाह-बल्या इति । दध्ना तक्रेण वा सह पाकात्पृथग्भूतं घनद्रवभागं क्षीरं-कूर्चिका[8] ।**

---

१ अस्याग्रे **"चक्षुष्यं बालवृद्धानां प्रशस्तं सौकुमार्यकृत् ।"** इति अ आ पुस्तकयोरधिकः पाठः । **२** 'प्येवंविधं ज्ञेयम्' ख घ ज झ । **३** द्विविधं-तक्रोद्भवं क्षीरोद्भवं च । **४ 'विधिवद्धृतं'** घ ञ । **५** 'द्धि मेधा वस्तु' ट । **६** 'अत एव हेतोः' ठ । **७** 'भू-पाकसहस्रेण यावच्छक्त्यन्तरारोपणमस्य सम्भाव्यते, पाकः' ड ।

१ मण्डः विलीनघृतस्योपरितनो घनीभूतभागः । **२** प्रपुराणघृतस्य गुणोत्कर्ष उक्तो हारीतेन-"यथा यथा जरां याति गुणवत्स्यात्तथा तथा ।" इति । रोगविशेषे घृतनिषेध उक्तो रत्नाकरे-"राजयक्ष्मणि बाले च वृद्धे श्लेष्माश्रये गदे । रोगे सोमे विषूच्यां च विबन्धे च मदात्यये ॥ ज्वरे मन्दानले मेहे न सर्पिर्बहु मन्यते ।" इति । **३ 'कूर्चिका'** क ड ज । **४** 'नाशनाः' ठ । **५** पीयूषमोरणयोर्लक्षणमुक्तं तन्त्रान्तरे-"क्षीरं सद्यःप्रसूतायाः पीयूषमिति संज्ञितम् । सप्तरात्रात्परं क्षीरमप्रसन्नं च मोरणम् ॥" इति । **६** 'तायाः क्षी' ठ । **७** 'टिकापिण्टनं' ट । **८** 'कूचीका' क ग ज ।

सेव पाकाद्विना-क्षीरशाक । तयोर्घनभाग पृथगुद्धृत -किलाट , द्रवभागो-मोरण । प्रसूतिदिनादारभ्य यावन्मलिनघन क्षीर तावत्-पीयूष । आदिशब्दात् क्षीरशाकतक्रपिण्डकौ । उक्त हि सङ्ग्रहे (सू अ ६)-"वल्या किलाटकूर्चिकातक्रपिण्डकमोरणा । सक्षीरशाकपीयूषा रोचना वह्निसादना ॥" इति । घनवस्त्रबद्ध स्वय स्रुतद्रवभाग तक्र-तक्रपिण्डक । विष्टम्भिन -अधोवातावरोधिन । दोषला -आमसञ्चयकारिण । दोषशब्देनात्र आमो ग्राह्य , "सदोषशब्द च शकृत् द्रव सृजति वेगवत् ।" (हृ नि अ २।७८) इत्यादिवत् । न तु वातादय , कफस्य पृथग्ग्रहणात्तत्रान्तरे वातघ्नत्वाच्च । यदाह सुश्रुत (सू अ ४५।९१)-"बल्य किलाटोऽनिलहृत् पुस्त्वनिद्राप्रद स्मृत । मधुरो बृहणो वृष्यो तद्वत्पीयूषमोरणौ ॥" इति । कूर्चिकामोरणावत्र दधिभवौ ग्राह्यौ । तक्रकूर्चिकायास्तन्त्रान्तरे वातलत्वात् तन्मोरणस्य च लघुत्वात् । यदाह सुश्रुत (सू अ ४५।९०)-"ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका । तक्राल्लघुतरो मण्डो दधिकूचिकतक्रज ॥" इति । कूर्चीकृत तक्र-तक्रकूर्चिका ।

**गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाविसम्भवे ।**

**इति क्षीरवर्गः ।**

**स०**-गोसम्भवे क्षीरघृते श्रेष्ठे । आविके च निन्दिते-गर्हिते । घृतस्य च क्षीरविकारोपलक्षणार्थत्वाद्दधितक्रमस्त्वादीनामपि गव्याना श्रेष्ठत्वमेव वेद्यम् । अत एवाविसम्भवाना दधितक्रादीनामधमत्वमेव वेद्यम्, न क्षीरघृतयोरेव । अत एव सङ्ग्रहे सुस्पष्ट कृत्वोक्तम् (सू अ ६)-"विद्याद्दधिघृतादीना गुणदोषान् यथापय ।" इति । अस्य ह्ययमर्थ -घृतादीना पयोगुणानतिक्रमेण गुणान् विद्यात् । यथाशब्दस्य पदार्थानतिवृत्त्यर्थेऽव्ययीभाव । तेनैतदुक्त भवति । यथा-"स्वादुपाकरसम्" इत्यादिना सामान्येन क्षीरगुणा उक्ता । तद्वद्दध्यादीनामपि सामान्येनैव गुणा उक्ता । विशेषाभिलाषे तु दध्यादीना सत्स्वपि सामान्यगुणेषु प्रकृतिभूत यत्क्षीर तद्गुणोचयोऽपि ग्राह्य इति । खरनादे तूक्तम्-"दध्यादीना तु तज्जाना सामान्ये गुणकर्मणी । तथा स्वात् स्वादपि क्षीराद्दध्यादीना विशेषणम् ॥" इति । गव्यमिति "गोपयसोर्यत्" इति यत् । बाहुल्येन क्षीरनिर्देशात्क्षीरवर्गोऽयम् । दधिनवनीतादीना तु तद्विकारभूतत्वात् । इति क्षीरवर्ग ।

**आ० र०-क्षीराणां घृताना च तारतम्यमाह-गव्ये क्षीरघृत इति । गव्याविकयोरुत्तमाधमत्वादितरेषा मध्यमत्व ज्ञेयम् । सङ्ग्रहे तु (सू अ ६)-"विद्याद्दधिघृतादीना गुणदोषान् यथापय ।" इति । इति क्षीरवर्ग ।**

१ 'दिनमारभ्य' ख घ । २ 'कूर्चीका' क ग ज ३ 'वातादिरो' क ग ञ । ४ 'गुरु किलाटोऽनिलहा' स सु । ५ 'कूर्चिकादधितक्रज' स सु । ६ 'त्ययस्याव्ययीभावस्तेनेतदुक्त' ट । ७ 'तद्गुणमुदायो' ट ।

क्षीरवर्गादनन्तरमिक्षुवर्ग आरभ्यते, गुणक्रियातुल्यत्वात् । तथा हि-इक्षुरपि क्षीरवत्सरगुरुस्निग्धबृहणादिगुणकर्मा—

**अथेक्षुवर्गः ।**

**इक्षोः सरो गुरुः स्निग्धो बृंहणः कफमूत्रकृत् ॥४२॥**
**वृष्यः शीतोऽस्रपित्तघ्नः स्वादुपाकरसो रसः ।**

**स०**-इक्षो रस सर वादिगुणयुक्त । तथा, कफमूत्रकृत् । सर -शकृद्भेदीति कथ्यते । तथा, (हृ सू अ ६।८४)-"गुर्वी सरा तु पालक्या" इत्युक्त्वानन्तरमुक्तवान्-"पालक्यावत्स्मृतश्चञ्चु स तु सङ्ग्रहणात्मक ।" इति चञ्चुशाकस्य सङ्ग्रहणेन गुणेन सरत्व बाधितमिति । अत्र स्निग्धबृहणवृष्यमधुरादिगुणेन युक्त च द्रव्य प्राय पवनहन्तृ दृष्टम् । अतोऽस्यापीक्षुरसस्य मारुतजित्त्व वेद्यम् । ग्रन्थकृता तु स्पष्ट कृत्वा नोक्तम् । भुक्ते हि समीरणकृत्त्वमस्य दृष्टम् । तथा च सङ्ग्रहे (सू अ ६)-"वृष्य शीत पवनजिद्भुक्ते वातप्रकोपन ।" इति । खरनादेऽप्युक्तम्-"मारुताऽऽमानजननश्चक्षुष्यो बृहणो रस ।" इति ।

**आ० र०-अथेक्षुवर्ग । इक्षुरसगुणानाह-इक्षो सर इति । गुर्वादिगुणत्वाद्वातघ्नत्वमर्थसिद्धम् । उक्त च सङ्ग्रहे (सू अ ६)-"वृष्य शीत पवनजिद्भुक्ते वातप्रकोपन ।" इति । "मारुताध्मानजननश्चेक्षूणा भक्षितो रस ।" इति खारणादिनाप्युक्त वातलत्व भुक्तमात्रपीतेक्षुरसविषयम् ।**

**सोऽग्रे सलवणो, दन्तपीडितः शर्करासमः ॥ ४३ ॥**

**स०**-स च-रस , अग्रे-इक्षुप्रान्ते जात , सलवण -ईषल्लवण । सुश्रुते चोक्तम् (सू अ ४५।१५६)-"अतीव मधुरो मूले, मध्ये मधुर एव च । अग्रे त्वक्षिषु विज्ञेय इक्षूणा लवणो रस ॥" इति । पाषाणादिसङ्क्षुण्णस्येक्षो सद्य एव यो रस उत्पद्यते, तस्यैते यथोक्ता गुणा वेद्या , नान्यथा पीडितस्येक्षुरसस्य । यन्त्रदन्तादिपीडितस्यान्यथा शास्त्रकृता गुणो निर्दिश्यते । दन्तपीडितो य , स शर्करासम इति ।

**आ० र०-इक्ष्वग्रभागरसगुणानाह-सोऽग्र इति । सलवण -ईषल्लवण । अग्रशब्देनेक्षोस्तत्पर्वणा चाद्यन्तौ भागौ । उक्त हि खारणादिना-"मध्यकाण्डे सुमाधुर्यमिक्षोर्मूलाग्रपर्वसु । माधुर्य साम्ललवण विदाही तेन यान्त्रिक ॥" इति । यत्तूक्त सुश्रुतेन (सू अ ४५।१५६)-"अतीव मधुरो मूले, मध्ये मधुर एव च । अग्रेऽक्षिषु च विज्ञेय इक्षूणा लवणो रस ॥" इति । तत्र मूलशब्देन मध्यमकाण्डाना प्रथम काण्डम् । अक्षिषु-सन्धिषु ।**

**दन्तपीडितेक्षुगुणानाह-दन्तपीडित इति । शर्करासम इति दाहघ्नत्वादिभिर्गुणै ।**

यान्त्रिकस्त्वन्यगुण एवेत्याह—

**मूलाग्रजन्तुजग्धादिपीडनान्मलसङ्करात् ।**

१ 'च' ट ठ । २ 'भक्षिते' क । ३ 'णाद्युक्त' ख घ झ । ४ 'तु । अग्रेष्वक्षिपु' स सु । ५ 'चक्षुपु' ट । ६ 'णादिना स' ट. । ७ 'काण्डषु माधु' क ग ञ

**किञ्चित्कालं[1] विधृत्या च विकृतिं याति यान्त्रिकः ॥ ४४ ॥**
**विदाही[2] गुरुविष्टम्भी तेनासौ**

स०–मूलं चाग्रं च जन्तुजग्धादयश्च मूलाग्रजन्तुजग्धादयः, तेषां तथाविधानामिक्षूणां पीडनं, तस्मान्मूलाग्रजन्तुजग्धादिपीडनात् । तथा, मलसङ्करात्–मलमिश्रणात् । तथा, किञ्चित्कालं विधृत्या च–यान्त्रिके रसे स्वल्पकालं विधृतिः–विलम्बश्च दृष्टः । तदेतैः कारणैर्यान्त्रिको रसो विकृतिं याति–स्वभावान्यथात्वं प्राप्नोति । तथा–गुरुरधिकं गुरुः सम्पद्यते, अविदाही विदाही, अविष्टम्भी विष्टम्भी, इत्येवंविधाऽस्य विकृतिः । यान्त्रिकस्य च रसस्य बाहुल्येन[3] लोके मूलादिसहितस्य पीडनात्कालविलम्बोपलब्धेश्च ग्रन्थकृदेव समवोचत् । अत एव हेतुनिर्देशोऽत्र कृतः, हेत्वभावात्कार्याभावप्रतिपादनाय[4] । तेन यदाऽतिनिपुण[5]धीभि[6]र्मूलादिरहितं पीड्यते, कालविलम्बितं च नोपयुज्यते, तदा विकृतिं न यातीत्यर्थः[7] । विदाहीत्यादि । यतो विकृतिं याति, तेन–हेतुना, असौ–यान्त्रिको, विदाह्यादिगुणः सम्पद्यते । विदाही–जठराग्निसंयोगाद्यः पाकं गच्छन्मध्यमायामेवावस्थायां विदह्यमानः पित्तं कुर्वंश्चिरकालमवतिष्ठते, न द्रागेव जरां याति गुरुत्वाद्यथवा वस्तुस्वभावात्, स विदाहगुणयुक्तो भावो भण्यते। तस्मात् गुरु[8]स्वाभाव्याद्विदाही कथितः । तथा चोक्तं धान्वन्तरे[9]–"शालिपिष्टमयं सर्वं गुरुभावाद्विदह्यते ।" इति ।

आ० र०–यन्त्रपीडितगुणानाह–मूलाग्रेति । जन्तुजग्धः–कृमिभक्षितावयवः । आदिशब्दात् त्वगादयः । मलो–यन्त्रादिलग्नः । किञ्चित्कालं विधृत्या–पीडनग्रहणादिकालविलम्बेन, विकृतिं–माधुर्यादिन्यूनत्वं, याति । यद्यपि सर्वमन्नपानं विदाहि, विदग्धावस्थायां अवश्यभावात्, तथापि यच्चिरकालं विदग्धावस्थामनुभवति, तद्विदाहीत्युच्यते । तेन–विकृतिं गमनेन, असौ–यान्त्रिकः । हेतूपन्यासाद्धेत्वल्पत्वेन दोषाल्पत्वं ज्ञेयम् ।

**तत्र पौण्ड्रकः ।**
**शैत्यप्रसादमाधुर्यैर्वरस्तमनु वांशिकः ॥ ४५ ॥**

स०–तत्र–तेषु इक्षुरसेषु मध्ये, पौण्ड्रको रसो वरः–सर्वेक्षुरसेभ्यः श्रेष्ठः । कथम्? शैत्यादिभिर्हेतुभूतैः । शीतस्य भावः–शैत्यम् । "गुणवचन" इत्यादिना ष्यञ् । प्रसादः–प्रसन्नत्वम् । माधुर्यं–स्वादुता । तमनु वांशिकः–हीनार्थेऽनुशब्दस्य "कर्मप्रवचनीययुक्त" इति द्वितीया, शैत्यादिभिः पौण्ड्रकाद्धीनो वांशिक इत्यर्थः ।

आ० र०–अथेक्षुविशेषगुणाः । तत्र पौण्ड्रकगुणानाह–तत्र पौण्ड्रक इति । पौण्ड्रकः–श्वेतेक्षुः । प्रसादो–नैर्मल्यम् । वांशिकगुणानाह–तमन्विति । तमनु–तस्मात्पौण्ड्रकाद्धीनः । हीनार्थस्यानोः कर्मप्रवचनीयत्वात् द्वितीया । वांशिको–नीलेक्षुः ।

**शतपर्वककान्तारनैपालाद्यास्ततः क्रमात् ।**
**सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः ॥ ४६ ॥**

स०–शतपर्वकादयः, ततः–वांशिकात्, क्रमात्–उत्तरोत्तरं, शैत्यादिभिर्हीनाः । ते च शतपर्वकादयः ईषत्क्षारत्वेन युक्ता ईषत्कषायरसा ईषदुष्णाः किञ्चिद्विदाहिनश्च ।

आ० र०–शतपर्वादिगुणानाह–शतपर्वकेति । शतपर्वकः–ह्रस्वबहुपर्वा । कान्तारनैपालौ–स्वनामप्रसिद्धौ । आद्यशब्दाद्दीर्घपत्रादयः । ततः–वांशिकात्, क्रमात्–उत्तरोत्तरं हीनाः । सक्षाराः–ईषल्लवणाः ।

**फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।**

स०–फाणितं–क्षुद्रगुडीभूत इक्षुरसः, गुरु–अतिशयेनेत्यर्थाद्द्देयम्, गुरुत्वमात्रस्येक्षुरसेऽप्युक्तत्वात् । अभिष्यन्दि । तथा, चयकृत्–त्रिदोषकरम् । मूत्रशोधनं–मूत्रमतिवाहयति । तन्त्रान्तरे चोक्तम्–"रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत् । कफघ्नं मधुरं पाके कषायं बस्तिदूषणम् ॥" इति ।

आ० र०–अथेक्षुरसविकाराः । ते च पञ्च,–"इक्षो रसस्य समलस्य गाढाद्विमला मलाः । विकाराः फाणितगुडमत्स्यण्डीखण्डशर्कराः ॥" इति । तत्र फाणितगुणानाह–फाणितमिति । चयकृत्–विशेषाग्रहणात् त्रयाणां दोषाणाम् ।

**नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद्गुडः ॥ ४७ ॥**
**प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः ।**

स०–गुडो धौतः–संस्कारवशान्निर्मलो, नातिश्लेष्मकरः–किञ्चित्कफकर इत्यर्थः । मूत्रं च शकृच्च मूत्रशकृत्, सृष्टं–बहिः क्षिप्तं, मूत्रशकृद्येन स एवम् । प्रभूत इति । अपर इतो धौतात्–विशुद्धादन्यः, समल इति यावत् । प्रभूता कृमिमज्जासृङ्मेदोमांसकफा यस्य स एवम् । कारणे कार्योपचाराद्गुडोऽप्येवमुक्तः । यथा–आनूपोदकं पादरोग इति । प्रभूतकृम्यादीन् करोतीत्यर्थः ।

आ० र०–गुडश्चतुर्धा,–धौताधौतपुराणनवभेदैः । तत्र धौतगुडगुणानाह–नातिश्लेष्मकर इति । सृष्टमूत्रशकृत्–मलानुलोमनः ।

अधौतगुडगुणानाह–प्रभूतकृमिमज्जेति ।

**हृद्यः पुराणः पथ्यश्च, नवः श्लेष्माग्निसादकृत् ॥ ४८ ॥**

स०–गुड इत्यनुवर्तते । पुराणो गुडो हृदयाय हितः । तथा, पथ्यः–अन्तर्मध्यबहिर्मार्गाय हितः । नवो गुडः श्लेष्माणमग्निसादं च करोति ।

आ० र०–पुराणगुडगुणानाह–हृद्य इति । पथ्यः–स्वस्थहितः ।

नवगुडगुणानाह–नव इति । अग्निसादः–अग्निमान्द्यम् ।

---

१ 'कालविधृ' अ ठ स ढ । २ 'गुरुर्विदाही विष्टम्भी' आ । ३ 'ल्येन मूला' ट । ४ 'प्रतिपत्तिज्ञापनार्थमिति ।' ठ । ५ 'यदि निपु' ठ । ६ 'धिया मूला' ट । ७ 'युक्तोक्त्या वितन्यते' ठ । ८ 'गुरुस्वादुस्वाभा' ट. । ९ 'मन्यात्' 'ट ।

१ 'शात' अ, ठ, ख घ झ, स म । २ 'नेपा' अ आ, ख ग घ झ ञ, ठ । ३ 'पर्वक' ग ञ । ४ 'रसस्याप्यु' ट । ५ 'त्यफाणि' ट ठ । ६ 'भेदात्' क ग ञ ।

**वृष्या क्षीणक्षतहिता रक्तपित्तानिलापहाः ।**
**मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमा· ॥४९॥**

स०–मत्स्यण्टिकादयस्त्रयो वृष्या । तथा, क्षीणक्षतहिता रक्तपित्तानिलापहाश्च । तथा, क्रमेण गुणवत्तमा –वानगुडादपि मत्स्यण्टिका गुणकारी निर्मलतर वात्, ततोऽपि खण्डो गुणवत्तर, खण्डादपि शर्करा गुणवत्तमा निर्मलतमत्वात्, गुणवत्तमेति गुणवतीशब्दस्य तमप्प्रत्यये पुवद्भावोऽत्र पक्षे च वक्तव्य इति पुवद्भाव ।

आ० र०–मत्स्यण्ड्यादीना गुणानाह–वृष्या इति । क्षतक्षीणयोर्हिता । क्रमेणेति मत्स्यण्डिकाया खण्डो गुणवान्, खण्डात्सिता । उक्त च सुश्रुतेन (सू अ ४५।१६३)–"यथा यथैषा[2] वैमल्य मधुरत्व तथा तथा । स्नेहगौरवशैत्यानि सरत्व च तथा तथा ॥' इति ।

**तद्गुणा तिक्तमधुरा कषाया यासशर्करा ।**

स०–तद्गुणेति शर्करासमा । यासशर्करा–यवासशर्करेति या लोके प्रसिद्धा, तिक्तमधुरकषायरसा च । केचित्त्वाचक्षते–दुरालभारसेन सा क्रियत इति ।

आ०र०–यासशर्करा[1]गुणानाह–तद्गुणेति । तद्गुणा–मत्स्यण्डिकादिसामान्यसदृशगुणा । यासशर्करा–दुरालभारसेनेक्षुरसवत्क्रियते ॥

**दाहतृट्छर्दिमूर्च्छासृक्पित्तघ्न्य· सर्वशर्करा· ५०**

स०–सर्वशर्करा इत्येताश्चान्याश्च दाहादिनाशना । ग्रन्यान्तरे चोक्तम् ( सुश्रुते सू अ ४५।१६३ )–"यथा यथा[2]ऽऽसा वैमल्य मधुरत्व तथा[3] तथा । स्नेह[4]लाघवशैत्यादि सारत्व च तथा तथा ॥" इति ।

आ०र०–सामान्यशर्करागुणानाह–दाहतृड्डीति । सर्वा–उक्ता मत्स्यण्डिकादय, अनुक्ताश्च मधुशर्करादय· । मत्स्यण्डिकादौ रक्तपित्तग्रहणमतिशयार्थम् ।

अधुना वरावरत्व निर्धारयति—

**शर्करेक्षुविकाराणां फाणितं च वरावरे ।**

स०–इक्षुविकाराणा मध्ये शर्करा फाणितं च क्रमेण वरावरे भवत । शर्करा श्रेष्ठा, फाणितमश्रेष्ठम् ।

आ० र०–इक्षुविकाराणा तारतम्यमाह–शर्करेति । इक्षुविकाराणा मध्ये शर्करा–सिताख्या वरा । फाणितमवरम् । इतरे मध्यमा ।

शर्करायोनिप्रसङ्गेन मधुनोऽपि गुणानाह—

**चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत् ॥५१॥**
**मेहकुष्ठकृमिच्छर्दिश्वासकासातिसारजित् ।**
**व्रणशोधनसन्धानरोपणं वातलं मधु ॥ ५२ ॥**
**रूक्षं कषायमधुर, तत्तुल्या मधुशर्करा[5] ।**

स०–मधु चक्षुषे हितम् । तथा, छेदि–उभयथाऽऽश्चोतनव्रणलेपादावुपयुक्तम्, तथाऽभ्यवहारविषयेऽपि । तैक्ष्ण्याद्यो देहे पिण्डितान् भावान् छिनत्ति–विभजति, स छेदीति कथ्यते । तथा, तृडादिनुत् मेहादिजिदिति च प्रायेणाऽभ्यवहारविषय एव । व्रणाना शोधन सन्धान रोपण च । शोधन–यत् पूयपैच्छिल्यादिप्रेरकम् । सन्धान–यद् द्वौ व्रणौ चैकीकरोति । रोपण–सुप्रसिद्धम् । एतच्च कार्य बाह्यविषयमेवास्य वेद्यम् । तथा, वातलमेतच्चास्य बाह्योपयोगेनाऽभ्यन्तरोपयोगेन च, अन्ते व्यस्तश्रुतत्वात् । "चक्षुष्य छेदि" इत्यादिनाऽस्य मधुन कर्मनिर्देश । "रूक्षं कषायमधुर" इत्यनेनास्य स्वरूपनिर्देश । लाघवाच्चात्र ग्रन्थकारेणतद्भेदादि नोक्तम् । तथा ह्ययमेव तन्त्रकार सङ्ग्रहे ( सू अ ६ ) मधुनो भेदानाख्यत् । यथा–"भ्रामर पौत्तिक क्षौद्र माक्षिक वै यथोत्तरम् । [ तत्र[*] स्याद्भ्रामर शुक्ल, घृतवर्ण तु पौत्तिकम् ॥ क्षौद्र तु कपिल प्रोक्त तैलाभ[3] माक्षिक स्मृतम् । भ्रामर तर्पण स्वादु, त्रिदोष पौत्तिक विदु ॥ वर च गुर्वभिष्यन्दि क्षौद्र रूक्ष मनाग्गुरु । माक्षिक लघ्व[6]पवन मधुर शस्यते व्रणे ॥ गरीय स्वाद्वभिष्यन्दि नव, जीर्णमतोऽन्यथा । मण्ड पुराणो[7] मधुरस्तीक्ष्णो रूक्षो लघुस्तनु ॥' ] इति । तथा सङ्ग्रहे कटुपाकित्वगुरुत्वशैत्यविषान्वयत्वविरुद्धोपक्रमत्वयोगवाहित्वादीन् गुणानवोचत् । योगवाहित्वे च विवदन्ते बहुविद । तत्र केचिदेव समगिरन्त,–यद्द्रव्यं द्रव्यान्तरेण संयुज्यात्मीय स्वभाव हित्वा संयुक्तद्रव्यस्वभावमेवानुवर्तते, तद्योगवाहीति । न चैतद्युक्तम् । यतो यदैव योगवाहिता निश्चीयते तदानी योगवाहिद्रव्योपयोगो निरर्थक स्यात् । तथा हि–योगवाहिद्रव्यमन्तरेणापि यत्स्वभाव द्रव्य प्रागासीत् तत्स्वभावमेव योगवाहिद्रव्ययुक्तमपि । तस्मादसदेतद्योगवाहिलक्षणमिति । केचित्त्वेव प्रतिजानते,–यद्द्रव्य द्रव्यान्तरेण युक्त सत् तस्य द्रव्यस्य शक्त्युत्कर्षमुत्पादयति, तद्योगवाहीति । तदप्यसम्यक् । यस्मादेवमभ्युपगम्यमाने बहूनि द्रव्याणि योगवाहीनि स्यु । तथा च मध्वादेरपि द्रव्यस्य किञ्चिद्द्रव्य समानगुण शक्त्युत्कर्ष कुर्वदेव दृष्टम् । तत्कथ मध्वादेरेव योगवाहित्वमुच्यते नापरस्येति । तदेतदपि लक्षणमसंच्छुतत्वादलक्षणम् । अपरे त्वेवमाहु,–यद्द्रव्य द्रव्यान्तरेणाननुगुणेनापि युक्त सत्तद्गुणाननुवर्तते स्व च कार्य तदविरुद्ध किञ्चित्करोति, तद्योगवाहि द्रव्य भृत्यवत् । यथा भृत्य स्वामिकार्यमत्यजन् स्वकार्यमपि शरीरयात्रादिकं स्वाम्यविरुद्ध करोति, तथैव मधु मदनफलसंयुक्त वमनकार्य करोति, न तु वमननिवारण मधुकार्यम् । एवं मधु हरीतकीसंयोगाद्विरेचनकार्यमेव करोति, न मधुकार्य स्तम्भनरूपमिति । ये त्वत्रैव प्रतिपन्ना,–मदनफलादे शक्त्युत्कर्षस्तथाविधोऽस्ति येन मधुसम्बन्धिकार्यमवधूय,

१ 'न्यगुणा' ग ञ । २ 'यथैषा' स सु । ३ 'यथा यथा' ठ । ४ 'स्नेहगौरवशैत्यानि सरत्व' स सु । ५ अस्याग्रे "यक्ष्मार्शोर्दितपित्तासृङ्नाशन ग्राहि दीपनम् ।" इति आ पुस्तकेऽधिक पाठ ।

१ 'तद्यथो' ठ । *[ ] एतच्चिह्नान्तर्गता श्लोका सङ्ग्रहहृदये नोपलभ्यन्ते । २ 'पर' ठ । ३ 'विद्यात्तैला' ठ । ४ 'मतम्' ठ । ५ 'तत्र' ट । ६ 'लघ्वलवण' ठ । ७ 'पुराणान्मधु' ट ठ । ८ 'ण मह स' ट । ९ 'युक्तम यस्य' ठ । १० 'सन्मतत्वा' ट ।

स्व कार्य करोतीति[1], ते चैव चोदयन्तो भवन्तीति वचनीया। यत स्तम्भनद्रव्येणान्येन येन केनचित्संयुक्तस्य सुगम्भीरस्यापि शक्ति किञ्चिदपहीयमाना दृष्टा, मधुना तु स्तम्भनस्वभावेनाप्यस्य नापहीयते मनागपि। अतो मध्वादेरेव योगवाहित्व नान्यस्य। अपि चान्यदा योगवाहि द्रव्य त्रिवृतादिमदनफलेन युक्त सद्विरेचन वमन चोभयकार्य कुर्वद्दृष्टम्, न केवल वमनमेव विरेचनमेव वा। तस्मान्मध्वादेरेव योगवाहित्वमिति स्थितमेतत्। तत्तुल्येति मधुसमा गुणर्गेशुर्शर्करा।

आ० र०-मधुगुणानाह-चक्षुष्यमिति। यत्सहतान् कफादीन् विश्लेषयति तत्-छेदि। शोधन-दुष्टपूयादिनिर्हरणम्। सन्धान-विच्छिन्नास्थ्यादिसश्लेषकम्। रोपण-क्षीणमांसादिवर्धनम्। ननु, इह वातल सुश्रुतवाक्ये त्रिदोषशमनमिति विरोध। नैवम्। विषयभेदात्। यत्र शुद्धो वायु शुद्ध मधु, तत्र वातलत्वम्। यत्र वातघातिभिर्मिश्र मधु पित्ताद्यैर्वामिश्रो वायु, तत्र वातघ्नत्वम्। उभयोर्योगवाहित्वात्। सुश्रुतेन हि पित्तश्लेष्मघ्नत्व पठित्वा त्रिदोषशमनत्व पठता पित्तश्लेष्माणौ शुद्धौ वातमिश्रा वा, वायु तु मिश्रमेव मधु हन्तीति द्योतितम्। यच्च चरकेण मधुनो गुरुत्वमुक्त सुश्रुतेन लघुत्वमुक्तम्, तत्र गुरुत्व गुणेन, लघुत्व पाकेनेत्यविरोध। चरका हि गुरुलघुगुणावेवेच्छति। सुश्रुतस्तु पाकावपि। तत्र यच्चिरेण पच्यते तद्गुरुगुणम्, यच्छीघ्र तल्लघुगुणम्, यत्पक्व विण्मूत्रे सृजति श्लेष्माण करोति तद्गुरुपाकम्, यद्विण्मूत्रे गृह्णाति वायु करोति तल्लघुपाकम्।

मधुशर्करागुणानाह-तत्तुल्येति। तत्तुल्या-मधुसदृशगुणा। वह्निपाकात्कालपाकाद्वा शर्करारूपता गत मधु-मधुशर्करा।

**उष्णमुष्णार्तमुष्णे च युक्त चोष्णैर्निहन्ति तत् ५३**

**स०**-तत्-मधु, उष्णमुपयुक्त सन्निहन्ति-मारयति। तथा, उष्णार्त-प्रतप्त पुरुष निहन्ति। उष्णे च काले देशे चोपयुक्त तथा, उष्णैराहारादिभिश्च युक्त सन्निहन्ति।

**आ० र०**-उष्णेन मधुनो विरोधमाह-उष्णमुष्णार्तमिति। उष्ण मधु-अग्न्यादितापितम्। उष्णार्त-उष्णैरातपादिभि पीडित नरम्। उष्णे-उष्णदेशे काले वा प्रयुक्त मधु। उष्णै-उष्णस्पर्शैर्द्रव्यै सहोपयुक्त मधु।

**प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते।**
**अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते॥ ५४॥**

**इतीक्षुवर्गः।**

**स०**-तच्च मधु प्रच्छर्दने-वमने, तथा निरूहे च उष्ण न निवार्यते-न निषिध्यते। यस्मात्कारणात्, तयो-वमिनिरूहयो, अलब्धपाक-अपक्वमेवाशु निवर्तते-पुनरागच्छति। इतीक्षुवर्ग।

**आ० र०**-उष्णविरोधस्यापवादमाह-प्रच्छर्दन इति। अलब्धपाकमपि चिरकालस्थित विरुद्धोपक्रमैरजीर्णादिविकारैर्म्रु हन्तीत्याश्वेवोक्तम्। सङ्ग्रहे तु (सू अ ६)-"विषान्वयत्वेन विषपुष्पेभ्योऽपि यतो मधु। कुर्वते ते स्वय यच्च सविषा भ्रमरादय॥ गुरुरूक्षकषायत्वाच्छैत्याच्चाल्प हित मधु। न हि कष्टतम किञ्चित्तदजीर्णाद्यतो नरम्॥ उपक्रमविरोधित्वात्सद्यो हन्याद्यथा विषम्। नानाद्रव्यात्मकत्वाच्च योगवाहि पर मधु॥ वृष्ययोगैरतो युक्त वृष्यतामनुवर्तते। भ्रामर पौत्तिक क्षौद्र माक्षिक च यथोत्तरम्॥ [ वर स्याद्भ्रामर शुक्ल, घृतवर्ण तु पौत्तिकम्। क्षौद्र तु कपिल प्रोक्त तैलाभ माक्षिक स्मृतम्॥ विशेषाद्गुर्वभिष्यन्दि भ्रामर स्वादु तर्पणम्। क्षौद्र सतिक्तमधुर लघु रूक्ष विशोधनम्॥ पौत्तिक बृहण रूक्ष कफव्रणहित लघु। मण्ड पुराणो मधुरस्तीक्ष्णो रूक्षो लघुस्तनु॥] वर जीर्ण च तेष्वन्त्ये द्वे एव विनियोजयेत्।" इति। इतीक्षुवर्ग।

सर्पिषोऽनन्तर स्नेहसामान्यात्तैलवर्गे वक्तव्ये गुडस्य समानरसवीर्यविपाककर्मत्वात् प्रायेण चाहारद्रव्येषु भक्ष्यभोज्येष्वस्यैव तैलेऽप्ये सुतरा भोजनोपयोगित्वादिक्षुवर्गोऽन्तरा निर्दिष्ट। भूरिभोजनोपयोगितया च मद्यात्प्राक् तैलवर्गो वक्तव्य इत्याह-

## अथ तैलवर्गः।

**तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च।**
**त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च॥ ५५॥**
**कृशानां बृंहणायालं स्थूलानां कर्शनाय च।**
**बद्धविट्कं कृमिघ्नं च संस्कारात्सर्वरोगजित्॥ ५६॥**

**स०**-सर्व तैल स्वकारणसमगुण भवति। यतो यदभिनिर्वृत्त तत्स्वरूपमेव तदित्यर्थ। तत्र-तैलेषु मध्ये, मुख्य-तिलोद्भव, यत्तैल तत्तीक्ष्ण-मन्दविपरीतम्। तथा, व्यवायि-व्याप्तिशीलम्, यद्देह व्याप्य पाक याति। तथा, त्वग्दोषकृत्-पानाभ्यासेन त्वच दूषयति[13]। अचक्षुष्य-चक्षुषे हित न भवति। सूक्ष्म-सूक्ष्मस्रोतोगामि। उष्ण-उष्णवीर्यम्। स्वयोनिवदित्यतिदेशात्कफकृत्त्व प्राप्तमित्याह-कफकृन्न च,-कफ न करोति।

१ 'तिये वैवमवोचत त इति वच' ट। 'ति केचिदेव वाचयन्ति ते एव भव' ठ। २ 'चान्यदपि यो'ट। 'चान्यदुभययो' ठ। ३ 'सन्धानकृद्विच्छि' क ख ग घ। ४ 'वातघ्नादिभि' क ग। ५ 'य' ख घ ङ। ६ 'ण च करोति' क ग। ७ 'द्रव्यैर्वा स' ञ। ८ 'कमेवाशु त' ख.घ.ङ।

१ 'पाकमचिर' क ग ञ। २ 'र्णादिभिर्मधु' क ग। ३ 'वृष्यैर्योगै' ख घ ङ। ४ 'तु' क ग ञ। ५ [ ] एतच्चिह्नान्तर्गता श्लोका सङ्ग्रहद्वये ख घ ङ पुस्तकेषु च नोपलभ्यन्ते। ६ 'मधु' ग। ७ 'विशदस्ती' क ग। ८ 'कथ्यमाने' ट। ९ 'न्य सारभोजनादिक्षु' ठ। १० 'भूरिजनो' ट। ११ 'स्वग्दोषहृदचक्षुष्य' इति शिवदासो द्रव्यगुणसङ्ग्रहटीकायाम्। १२ 'स्सर्वदोषजित्' आ ख घ ङ ठ। १३ 'अथवा त्वग्दोषान् कृन्तति-छिनत्ति, "कृती छेदने" इत्यस्य धातोरय प्रयोग' इतीन्दुचन्द्रनन्दनौ।

सङ्ग्रहेऽप्युक्तम् ( सू अ ७ )-"मेध्यस्तिल स्वशमीतो, मेध्य तैल, खलो हिम । तस्यैव श्लेष्मकर्तृत्व, न तैलस्य खलस्य वां ॥" इति । पौनकस्त्वायुर्वेदावतारेऽविजगे-"विपाके कटुक तैल वातघ्न कफपित्तकृत् ।" इति। ननु च, तैलमिति कथमस्य मुख्य नाम ? यतो यथा तिलस्य विकार स्नेहस्तैलमित्युच्यते, तथैरण्डादीनामपि यो विकार स्नेह सोऽपि तैलमित्युच्यते । मुनिरप्याह ( च वि अ ८।२१ )-"अतैलमपि तैलमेव कृत्वोपदेक्ष्यते, तैलप्राधान्यात् ।" स्नेहप्राधान्यादिति यावत् । सामानाधिकरण्यप्रयोगोऽत एवोपपन्न । यथा-कौसुम्भ तैल मैरण्ड तैलमिति । अत्रोच्यते । तिलस्येद वस्तु तैलमित्यन्वर्थता तिलोद्भवस्यैव तैलस्य सम्भवति, न कौसुम्भादीनाम् । अपि च, कौसुम्भ तैलमित्यादौ तैलशब्द काण्डादिव्यवच्छेदपर सम्भाव्यते । यथा-कौसुम्भ तैल, न पत्र काण्ड वेति । इद तैल तैलमित्यत्र तु सामानाधिकरण्येन यदि तैलशब्दो निर्दिश्यते, तत पूर्वस्मात्तैलशब्दात्स्नेहाभिधायिनोऽविशेषमर्थान्तर न वक्ति । ननु, अत्रापि तैलशब्द कस्मात्काण्डादिव्यवच्छेदपरो न भवति ? इति चेत् ब्रूम । रूढिरूपत्वात्तैलशब्दस्य । स्नेहविषय एव तैलशब्दो रूढ , न काण्डपत्रादिविषये । तिलस्य हि काण्ड पत्र वा न तैलमित्युच्यते, कि तर्हि ? तिलपत्र तिलकाण्डमिति । अत एव तैलशब्दोच्चारणस्य समनन्तर स्नेहविषयैव धीर्जायते, न पत्रकाण्डादिविषया । तस्मादस्यैवेतन्मुख्यं नामेति युक्तमुक्तम् । संस्कारानुवर्तित्वेन सर्वरोगजित्त्वाच्चास्य मुख्यत्वम् । तथा चोक्तम्-"संस्कारात्सर्वरोगजित्" इति । कुसुम्भादीना तिलशब्दस्य च स्नेहनार्थे वाच्ये विकारे स्नेहे तैलच्प्रत्यये सति कुसुम्भतैलमेरण्डतैल तिलतैलमिति रूप भवति । कृशाना पुसा बृहणाय-बृहत्त्वाय, अल-पर्याप्तम् । स्थूलाना च कर्शनायालम् । ननु, कथमेकस्माद्वस्तुनो विरुद्ध कार्यद्वय कर्शनत्वबृहणत्वरूप स्यादिति ? ब्रूम । कृशाना तावत्स्रोतासि सङ्कोचमायान्ति । सङ्कुचितस्रोतसा च नराणा तैलमन्तरेणान्यानि द्रव्याणि बृहणगुणयुक्तान्यपि न तथा प्रवेष्टु समर्थानि भवन्ति । तैल पुन सङ्कुचितानि स्रोतासि तीक्ष्णादिभिर्गुणैर्झटित्येव प्रविश्य शोधयति । स्रोत शुद्ध्या च शरीरपुष्टि । तथा च वक्ष्यति ( हृ चि अ ८।४३ )-"स्रोत सु तक्रशुद्धेषु रसो धातूनुपैति य । तेन तुष्टि र्बल वर्ण पर पुष्टिश्च जायते ॥" इति । तस्मात्कृशाना बृहणायालमित्युपपन्नम् । तथा, स्थूलाना सूक्ष्मस्रोतोगामित्वात्सर्वस्रोत सु तैल प्रविश्य तीक्ष्णोष्णादिगुणयोगान्मेद क्षपयति । तत्क्षपणाच्च कर्शन सम्पद्यते, इति स्थूलाना कर्शनाय चेत्यप्युपपन्नम् । स्नेहादिगुणयोगात्तैलस्य बृहणत्वकर्शनत्वे सिद्धे सति 'कृशाना बृहणायाल स्थूलाना कर्शनाय च ।' इत्युक्त ज्ञापनार्थम् । यदित्थभूत तीक्ष्णादिगुणयुक्तमन्यदपि, तत् कृशाना बृहणायाल स्थूलाना कर्शनाय चेति । बद्धेत्यादि । बद्धा विट् येन तद्बद्धविट्कम् । कम्समासान्त । ग्रथितपुरीषमित्यर्थ । तथा, कृमिघ्नम् । संस्कारादित्यादि । विशिष्टद्रव्यकृत संस्कारमाश्रित्याशेषरोगजित् ।

आ० र०-अथ तैलवर्ग । तत्र तैलसामान्यगुणानाह-तैलमिति । स्वयोनिवत्-स्वकारणवत् । यथा-तिलतैल तिलगुणम्, सर्षपतैल सर्षपगुणमिति ।

तत्र यानि तैलानि स्वयोनेर्विशिष्टानि तेषा गुणा । तत्र तिलतैलगुणानाह-तत्र मुख्यमिति । मुख्य-तिलतैलम् । मुख्यमिति वदता तैलशब्दप्रयोगे तिलतैल ग्राह्यमिति द्योतयति, 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय ' इति न्यायात् । यदादौ देह व्याप्नोति पश्चाज्जीर्यति तत्-व्यवायि । उष्ण-उष्णस्पर्शम् । उष्णवीर्यत्व च स्वयोनिवदित्यनेन लब्धम् । अल-समर्थम् । ननु, एकस्य बृहणसमर्थत्वकर्शनसमर्थत्वे अनुपपन्ने । मैवम् । कृशस्य हि स्रोतासि सङ्कुचितत्वात्सम्यग्रस न वहन्ति, स्थूलस्य तु पूर्णत्वात् । तैल तु सूक्ष्मव्यवायितीक्ष्णोष्णत्वात् स्रोतासि शोधयति । शुद्धेषु स्रोत सु रस सम्यग्वहन् कृशस्य धातुपुष्टि विधत्ते, स्थूलस्य धातुसाम्यम् । बद्धविट्-बद्धपुरीषम् । द्रव्यान्तरसयोगजनित गुणान्तर-सस्कार । ननु, अत्र "त्वग्दोषकृदचक्षुष्य कफकृन्न च" इति । सुश्रुते तु ( सू अ ४५।११२ )-"त्वक्प्रसादन चक्षुष्य अनिलबलासक्षयकरम् ।" इति विरोध । मैवम् । त्वग्दोषकरत्वमचक्षुष्यत्व चाभ्यवहारे । त्वक्प्रसादनत्व चक्षुष्यत्व चाभ्यङ्गे । उक्त हि (हृ सू अ २।८)-'दृष्टिप्रसादपुष्ट्यायु स्वप्नसुत्वक्त्वदार्ढ्यकृत् ।" इति । अनिलबलासक्षयकरत्व ससर्गविषयम् । उक्त हि सङ्ग्रहे (सू अ १३) अग्र्येषु समुदायनिर्धार्येषु-"तैल वातश्लेष्मप्रशमनानाम्" इति ।

**सतिक्तोषणमैरण्ड तैलं स्वादु सर गुरु ।**
**वर्ध्मगुल्मानिलकफानुदर विषमज्वरम् ॥ ५७ ॥**
**रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ।**
**तीक्ष्णोष्ण पिच्छिल विस्र, रक्तैरण्डोद्भवं त्वति ५८**

स०-एरण्डतैलमीषत्तिक्तकटुक भवति । तथा, स्वादु-मधुरम् । तथा, सर गुरु च । वर्ध्मेत्यादि । वर्ध्मादीन् जयेत् । कटीगुह्यकोष्ठपृष्ठस्थितौ रुक्शोफौ जयेत् । तच्च तीक्ष्णोष्ण पिच्छिल विस्र च भवति । लोहितैरण्डतैल त्वतिशयेन तीक्ष्णादिगुणयुक्तम् ।

आ० र०-एरण्डतैलगुणानाह-सतिक्तोषणमिति । सतिक्तोषण-ईषत्तिक्तमीषत्कटुक च । ऐरण्ड-एरण्डफलोद्भवम् ।

---

१ 'ष्मकारित्व' स द्र । २ 'च' ट । ३ 'दारकस्त्वा' ट । ४ 'तद्वय' स च । ५ 'रे तैलमिति तै' ट । 'स्नेहने तैलजिदिति तै' ठ । ६ 'कृशत्व' ठ । ७ 'नायेत्युपपन्नम्' ट । ८ 'त्वक्षामत्वे' ठ ।

१ 'कृतस' ट । २ 'तैलमेव ग्राह्य' ञ । ३ 'बृहणकर्षणत्वे' क ग ञ । ४ 'ष्णमिति कृत्वा' ग । ५ 'स तु धातु' ञ । ६ 'माकरत्व' क ग ञ । ७ 'दियुक्त' ठ. ।

सर–विरेचनम् । वर्ध्म–मुष्कवृद्धि । रुक्शोफौ–शूलश्वयथू । तौ च कट्यादिगतौ ।

रक्तैरण्डतलगुणानाह–तीक्ष्णोष्णमिति । अतिग्रहणाच्छुक्लैरण्डोद्भवमपि तीक्ष्णादिगुणम् ।

**कटूष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम् ।**
**लघु पित्तास्रकृत् कोठकुष्ठार्शोव्रणजन्तुजित् ॥५९॥**

स०–सर्षपाणामिद सार्षप तल कटूष्ण च भवति । तथा, तीक्ष्ण कफशुक्रानिलापह च । अपपूर्वाद्धन्तेरन्येष्वपि दृश्यत इति ड । तथा च, लघु पित्तास्र च करोति । तथा, कोठादीन् जयति ।

आ० र०–सर्षपतैलगुणानाह–कटूष्णमिति । पित्तास्रकृत्–रक्तपित्तकोपनम् । कोठ –क्षुद्ररोगविशेष । जन्तवो–बाह्याभ्यन्तरा कृमय ।

**आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ।**

स०–अक्षाणा–बिभीतकानामिदमाक्ष तैल मधुरादिगुणयुक्त पित्तानिलहृच्च ।

आ० र०–बिभीतकतैलगुणानाह–आक्षमिति । केश्य–केशहितम् ।

**नात्युष्णं निम्बजं तिक्तं कृमिकुष्ठकफप्रणुत् ॥ ६० ॥**

स०–निम्बोद्भव तैलमतिशयेनोष्ण न भवति । तथा, तिक्तम् । तथा, कृमिकुष्ठकफनाशनमतिशयेन ।

आ० र०–निम्बतैलगुणानाह–नात्युष्णमिति । नात्युष्ण–ईषदुष्णम् ।

**उमाकुसुम्भजं चोष्णं त्वग्दोषकफपित्तकृत् ।**

स०–अतसीज कुसुम्भज च तैलमुष्णवीर्य भवति । तथा, त्वग्दोषकफपित्तानि करोति ।

आ० र०–अतसीतैलकुसुम्भतैलगुणानाह–उमाकुसुम्भजमिति । यत्तूक्त सुश्रुतेन (सू अ ४५।११९)–"विपाके कटु सक्षार कौसुम्भ सर्वदोषकृत् ।" इति, तन्मिलितसर्वदोषविषयम् । पृथग्भूत तु वायु हन्त्येव । यदाह खारणादि–"कौसुम्भ कटु सक्षार वातघ्न कफपित्तलम् ।" इति ।

स्नेहप्रसङ्गादिदमप्याह—

**वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ॥ ६१ ॥**
**मांसानुगस्वरूपौ च, विद्यान्मेदोऽपि ताविव ।**

**इति तैलवर्गः ।**

स०–वसा–तनुरूपेण शुद्धमांसस्य स्नेह । मज्जा–धातु । तौ वातनाशनौ । तथा, मांसानुगस्वरूपौ–यस्य प्राणिन सम्बन्धि मांस तत्सदृशरूपौ । मेदोऽपि ताविव–वसामज्ज्ञो सदृशस्वरूप विद्यात् । सङ्क्षेपतया चाय तैलवर्ग इहोक्त । तथा च सङ्ग्रहेऽधिकमप्युक्तम् (सू अ ६)–"दन्तीमूलकरक्षोघ्नकरञ्जारिष्टशिग्रुजम् । सुवर्चलेङ्गुदीपीलुशङ्खिनीनीपसम्भवम् ॥ सरलागुरुदेवाह्वशिंशपासारजन्म च । तुवरारुष्करोत्थ च तीक्ष्ण कट्वस्रपित्तकृत् ॥ अर्श कुष्ठकृमिश्लेष्मशुक्रमेदोऽनिलापहम् । करञ्जनिम्बजे तिक्ते नात्युष्णे तत्र निर्दिशेत् ॥ कषायतिक्तकटुक सारल व्रणशोधनम् । भृशोष्णतीक्ष्णकटुके तुवरारुष्करोद्भवे ॥ विशेषात्कृमिकुष्ठघ्ने तथोर्ध्वाधोविरेचने । अक्षातिमुक्तकाक्षोडनालिकेरमधूकजम् ॥ त्रपुसर्वारुकूष्माण्डश्लेष्मातकप्रियालजम् । वातपित्तहर केश्य श्लेष्मल गुरु शीतलम् ॥ पित्तश्लेष्मप्रशमन श्रीपर्णीकिंशुकोद्भवम् । तिलतैल वर तेषु कौसुम्भमवरं परम् ॥ वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ । मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव ॥ चौलूकी शौकरी पाकहंसजा कुक्कुटोद्भवा । वसा श्रेष्ठा स्ववर्गेषु कुम्भीरमहिषोद्भवा ॥ काकमद्गुवसा तद्वत्कारण्डोत्था च निन्दिता । शाखादमेदसा छाग हास्तिन च वरावरम् ॥" इति । इति तैलवर्ग ।

आ० र०–वसामज्जगुणानाह–वसा मज्जा चेति । वसा–मांसस्नेह । मज्जा–षष्ठो धातु । मांसानुगस्वरूपौ–यस्य प्राणिनो यौ वसामज्जानौ, तस्य मांसेन तौ सदृशगुणौ ।

मेदोगुणानाह–विद्यादिति । मेद –चतुर्थो धातु । ताविव–वसामज्जवद्वातघ्नादिगुणम् । तैलवर्गे स्नेहत्वसाम्याद्वसादीनामुक्ति । सङ्ग्रहे तु (सू अ ६)–"तैलप्रयोगादजरा निर्विकारा जितश्रमा । आसन्नतिबला युद्धे दैत्याधिपतय पुरा ॥ दन्तीमूलकरक्षोघ्नकरञ्जारिष्टशिग्रुजम् । सुवर्चलेङ्गुदीपीलुशङ्खिनीनीपसम्भवम् ॥ सरलागुरुदेवाह्वशिंशपासारजन्म च । तुवरारुष्करोत्थ च तीक्ष्ण कटूस्रपित्तकृत् ॥ अर्श-कुष्ठकृमिश्लेष्मशुक्रमेदोऽनिलापहम् । करञ्जनिम्बजे तिक्ते नात्युष्णे तत्र निर्दिशेत् ॥ कषायतिक्तकटुक सारल व्रणशोधनम् । भृशोष्णतीक्ष्णकटुके तुवरारुष्करोद्भवे ॥ विशेषात्कृमिकुष्ठघ्ने तथोर्ध्वाधोविरेचने । अक्षातिमुक्तकाक्षोडनालिकेरमधूकजम् ॥ त्रपुसैर्वारुकूष्माण्डश्लेष्मातकपियालजम् । वातपित्तहर केश्य श्लेष्मल गुरु शीतलम् ॥ पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम् । तिलतैल वर तेषु कौसुम्भमवर परम् ॥ चौलूकी सौकरी पाकहसजा कुक्कुटोद्भवा । वसा श्रेष्ठा स्ववर्गेषु कुम्भीरमहिषोद्भवा ॥ काकमद्गुवसा तद्वत् कारण्डोत्था च निन्दिता । शाखादमेदसा छाग हास्तिन च वरावरम् ॥" इति । इति तैलवर्ग ।

१ 'नादेरण्डो' स ग घ झ । २ अस्याग्रे "कषायतिक्तकटुक कारञ्ज व्रणशोधनम् ।" इति श्लोकार्ध अ आ क ञ पुस्तकेष्वधिकम्, 'करञ्जतैलगुणानाह-कारञ्जमिति ।' इति तट्टीका च क ग पुस्तकयो । ३ 'कटुक तैल कौ' स सु । ४ 'यन्मास' ट ।

१ 'कटुनी' ट । २ 'केश्य' स द । ३ 'औलुकी' स मू । ४ 'मज्ज्ञोर्गुणा' क ञ । ५ 'पाशरज' ग । ६ 'तु' ख घ झ । ७ 'टूम्लपित्त' ख घ झ । ८ 'भृशोष्णे ती' ख घ झ । ९ 'कटुनी' ख ग घ झ । १० अक्षादिमुष्ककाक्षोटना' क ञ । ११ 'प्रिया' क ञ । 'लुज' ख घ झ । १२ 'चौलुकी' क ग. ञ । 'बौलुकी' स स. ।

तीक्ष्णोष्णसूक्ष्मादिगुणसामान्यात्तलवर्गादनन्तरं मद्यवर्ग आरभ्यते—

### अथ मद्यवर्गः ।

**दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ॥ ६२ ॥**
**सस्वादुतिक्तकटुकमम्लपाकरसं सरम् ।**
**सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ॥ ६३ ॥**
**नष्टनिद्राऽतिनिद्रेभ्यो हितं पित्तास्रदूषणम् ।**
**कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ॥ ६४ ॥**
**वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ।**

**स०**–सर्वं मद्यं दीपनादिगुणयुक्तम् । तुष्टिः–चित्तपरितोषः, पुष्टिः–शरीरपोषः, ते ददाति–जनयति, यत्तत्तुष्टिपुष्टिदम् । आतोऽनुपसर्गे कः । तथा, ईषन्मधुरतिक्तकटुकम् । तथा, अम्लौ पाकरसौ यस्य तदेवम् । तथा, सरम् । तथा, सकषायम् । तथा, स्वरश्चारोग्यं च प्रतिभा च वर्णश्च तान् करोति । ननु, सर्वाण्येव द्रव्याण्यारोग्यार्थमुपदिश्यन्ते । तस्मादारोग्यकृत्त्वं सर्वेषामेव द्रव्याणां प्राप्तम् । किमिति मद्यस्यैवारोग्यकृत्त्वमुच्यते ? युक्तमाह भवान् । किन्त्वतिशयख्यापनार्थमेतत् । मद्यमतिशयेनारोग्यकृदित्यर्थः । तथा, लघु । तथा, नष्टनिद्रेभ्यो नरेभ्योऽतिनिद्रेभ्यश्च हितम् । सर्वमेव मद्यं प्रभावादिति केचित् । अन्ये त्वेवं मन्यन्ते, यथा–सुरादि यन्मद्यं श्लेष्मादिवर्धनं, तन्नष्टनिद्रेभ्यो हितम् । यच्च माधवादि मद्यं श्लेष्मादिहन्तृ, तच्चातिनिद्रेभ्यो हितमिति । तथा, पित्तास्रदूषणम् । तथा, कृशेभ्यः स्थूलेभ्यश्च हितम्, इति सामान्येऽपि निर्देशेऽत्राय विशेषो बोध्यः,–किञ्चिन्मद्यं कृशाय हितं किञ्चित्स्थूलायेति । अथवा, तैलोक्तन्यायेन कृशस्थूलहितत्वं बोध्यम् । तथा, रूक्षम् । तथा, सूक्ष्मं–स्रोतोगामि । तथा, स्रोतो विशोधयति । तथा, वातश्लेष्महरम् । युक्त्या पीतं सदेवंगुणं मद्यं भवति । युक्तिस्तु–मदात्ययनिदाने चिकित्सिते च वक्ष्यमाणा । अन्यथा–अयुक्त्या पीतं सत्, विषतुल्यं भवति ।

**आ०र०–अथ मद्यवर्गः । द्राक्षादिसन्धानं मद्यमुच्यते । उक्तं हि सङ्ग्रहे (सू. अ. ६)–"द्राक्षेक्षुमाक्षिकं शालिस्तमा व्रीहिपञ्चमा । मद्याकरा यदेभ्योऽन्यत्तन्मद्यप्रतिरूपकम् ॥" इति । तत्र सामान्यमद्यगुणानाह–दीपनं रोचनमिति । तुष्टिः–सन्तोषः । पुष्टिः–बलवृद्धिः, शरीरवृद्धेः कृशहितत्वेन लब्धत्वात् । सशब्दस्त्रिभिः सम्बध्यते । प्रतिभा–प्रज्ञा । ननु, एकमेव निद्रां करोति हन्ति चेति विरुद्धम् । नैवम् । प्रवृद्धवातो हि नष्टनिद्रो भवति, तस्यामवस्थायां वातघ्नत्वान्निद्रां करोति । प्रवृद्धश्लेष्मा चातिनिद्रः, तस्यामवस्थायां श्लेष्मघ्नत्वान्निद्रां हन्ति । कृशस्थूलहितं तैलोक्तन्यायेन । युक्त्या** पीतमेवंविधम् । वक्ष्यति हि (हृ. नि. अ. ६।४१)–"बलकालदेशसात्म्यप्रकृतिसहायामयवयांसि । प्रविभज्य तदनुरूपं यदि पिबति ततः पिबत्यमृतम् ॥" इति ।

**गुरु तद्दोषजननं नवं, जीर्णमतोऽन्यथा ॥ ६५ ॥**

**स०**–नवं–किञ्चित्कालातिक्रान्तम्, तत्–मद्यं, गुरु त्रिदोषकरं च भवति । नवम्–अनतीतसंवत्सरमित्येके[1] । जीर्णं–पुराणं बहुकालातिक्रान्तम् । अतः–नवात्, अन्यथा–लघु दोषहरं चेत्यर्थः ।

**आ० र०–नवमद्यगुणानाह–गुरु तदिति । तत्–मद्यम् । नवं–तत्कालनिष्पन्नम् । गुरुत्वदोषजननत्वाभ्यां लघुत्ववातश्लेष्महरत्वे बाध्येते । पुराणमद्यगुणानाह–जीर्णमिति । जीर्णं–चिरकालनिष्पन्नम् । अतोऽन्यथा–नवाद्विपरीतम्, लघु वातकफहरं चेत्यर्थः । उक्तं च सुश्रुतेन (सू. अ. ४५।१९४)–"स्फुटस्रोतःकरं जीर्णं लघु वातकफापहम् ।" इति ।**

**पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ।**
**नात्यर्थतीक्ष्णमृद्वल्पसम्भारं कलुषं न च ॥ ६६ ॥**

**स०**–तच्च मद्यमुष्णोपचारेण न पेयम् । उष्णो–विहाराहारादिक उपचारो यस्य स एवम्, तेन । न विरिक्तेत्यादि । कृतविरेचनेन न पेयम्, दोषासाम्यादिति भावः । तथा, क्षुधार्तेन न पेयम् । तथा, अतितीक्ष्णमतिमृदु च मद्यं न पेयम् । अल्पसम्भारमिति । यथावता सम्भारेण लोकप्रसिद्धेन सन्धीयते सुरादि, तत्र तदपेक्षया चाल्पसम्भारं न पेयम् । तथा, कलुषम्–अस्वच्छं पांसुशर्करादिभिर्युक्तं, च न पेयम् ।

**आ० र०–मद्यपानं नियच्छति–पेयं नोष्णोपचारेणेति । उष्णोपचारेण–उष्णमाहारं सूर्यसन्तापादिकं वा सेवमानेन । विरिक्तैः–कृतविरेचनैः । क्षुधातुरैः–अतिक्षुधितैः । अत्यर्थं तीक्ष्णम्–अतितीव्रमदम् । अत्यर्थं मृदु–मदानुत्पादकम् । अल्पसम्भारम्–असम्पूर्णकारणसामग्रीकम् । कलुषं–मलिनम् ।**

अधुना मद्यविशेषानाह—

**गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः ।**
**सुराऽनिलघ्नी मेदोऽसृक्स्तन्यमूत्रकफावहा ॥ ६७ ॥**

**स०**–सुरा गुल्मादिहृद्भवति । तथा, स्नेहयतीति स्नेहनी । तथा, गुर्वी वातनाशिनी च । तथा, मेदश्चासृक् च स्तन्यं च मूत्रं च कफश्च तानावहति ।

**आ० र०–सुरागुणानाह–गुल्मेति । शालिपिष्टकृतं मद्यं–सुरा । स्नेहनी–देहस्निग्धत्वकृत् । मेदःप्रभृतीनावहति–करोतीति तथा ।**

**तद्गुणा वारुणी हृद्या लघुस्तीक्ष्णा निहन्ति च ।**
**शूलकासवमिश्वासविबन्धाध्मानपीनसान् ॥ ६८ ॥**

१ अस्याग्रे "द्राक्षेक्षवः सखर्जूरा शालि (ले) पिष्टयवस्य च । पञ्च मद्याकराः श्रेष्ठा द्राक्षा तेषां विशिष्यते ॥" इत्यधिकः श्लोकः आ. ञ. ठ. पुस्तकेषु ।

१ एके–इन्द्रादयः । २ 'संवत्सरातिका' ट । ३ 'कृतवमनविरे' क ञ । ४ 'श्वासं च' ट ठ ।

स०–एव वारुणी–प्रसन्ना । त एव सुरोक्ता गुणा यस्या सा तद्गुणा, सुरासमगुणेत्यर्थ । तथा, हृदयाय हिता–हृद्या । तथा, लघुस्तीक्ष्णा च । शूलादीन्निहन्ति च । विबन्ध –स्रोत सामुपलेपेन दोषादीनामवहनम् । जगलमेदकबक्कसाना सुतरा मनुपयोगित्वाद्गुणा नेहोक्ता । सङ्ग्रहे (सू अ ६) तूक्ता एव । यथा–"जगल पाचनो ग्राही रूक्षस्तद्वच्च मेदक । बक्कसो हृतसारत्वाद्विष्टम्भी दोषकोपन ॥" इति । वारुण्या अधोभागो घनो–जगल । जगलस्याधोभागो–मेदक । पानीयेन मद्यर्क- ल्कपीड(ने)नोत्पन्नो–बक्कस ।

आ० र०–वारुणीगुणानाह–तद्गुणेति । वारुणी–श्वेत- सुरा । सा च श्वेतपुनर्नवादिमूलयुक्तेन शालिपिष्टेन क्रियते । तद्गुणा–सुरातुल्या । विबन्ध –वातरोध । आध्मान–उदरा- पूर । वारुणी–अच्छसुरेति केचित् । तन्न । तस्या कफघ्न त्वात् । उक्त हि सुश्रुतेन (सू अ ४५।१७८)–"प्रसन्ना कफवातार्शोविबन्धानाहनाशिनी ।" इति ।

**नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा ।**
**व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते ॥ ६९ ॥**
**विष्टम्भिनी यवसुरा गुर्वी रूक्षा त्रिदोषला ।**

स०–बिभीतकानामिय बैभीतकी । नातितीव्रो मदो यस्या सैवम् । तीव्रमद न जनयतीत्यर्थ । तथा, लघ्वी । तथा, पथ्या । तथा, व्रणादिषु चात्यर्थमन्यमद्यवन्न विरुध्यते ।

आ० र०–बैभीतकीगुणानाह–नातितीव्रमदेति । बिभी- तकवल्कलयुक्तशालिपिष्टकृता–बैभीतकी सुरा । नातितीव्र- मदा–मध्यममदा । पथ्या–स्वस्थहिता ।

यवसुरागुणानाह–विष्टम्भिनीति । यवपिष्टकृत मद्य–यव सुरा ।

**यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिक ॥ ७० ॥**
**ग्रहणीपाण्डुकुष्ठार्शःशोफशोषोदरज्वरान् ।**
**हन्ति गुल्मकृमिप्लीहः कषायकटुवातलः ॥ ७१ ॥**

स०–अरिष्टो यो यैर्द्रव्यै सिद्ध , स तद्गुणाननुगच्छति । सर्वैश्च दीपनत्वादिभिर्मद्यगुणैरधिक । तन्त्रान्तरे चोक्तम्–"म- द्याकराधिकर्द्रव्य मदिराद्यात्मक त्वत । यथाद्रव्यगुणोऽरिष्ट सर्वमद्यगुणाधिक ॥" इति । ग्रहण्यादिकाश्च रोगान् हन्ति । तथा, कषायकटुश्चासौ वातलश्च स एवम् । लक्षण चास्य प्रागुक्तम् ( अ ३।२२ ) ।

आ० र०–अरिष्टगुणानाह–यथाद्रव्यगुण इति । औषध- युक्तैर्मद्याकरै कृत मद्य–आसव । स एव क्वथितौषधे –अ- रिष्ट । यथाद्रव्यगुण –स्वौषधानुरूपगुण । औषधगर्भत्वात् सर्वेषु मद्येष्वधिकगुण । शोषो–राजयक्ष्मा । कषायकटुश्चासौ वातलश्च, कषायकटु सन् वातल इत्यर्थ । अम्लादिरसस्तु वातघ्न । यथोक्त सुश्रुतेन (सू अ ४५।१९४)–"अरिष्टो द्रव्यसयोगसस्कारादधिको गुणै । दीपन कफवातघ्न सर पित्ताविरोधन ॥" इति ।

**मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ।**
**अल्पपित्तानिलं पाण्डुमेहार्शःकृमिनाशनम् ॥ ७२ ॥**

स०–मार्द्वीक–द्राक्षारसोद्भव, लेखनत्वादियुक्तम् । तथा, अल्पौ पित्तानिलौ यस्य तदेवम् । अन्यमद्यापेक्षयाऽल्पतरौ करोतीत्यर्थ । तथा, पाण्ड्वादिनाशनम् । "विलिखत्यतितैक्ष्ण्या- द्यद्धातूस्तल्लेखन मतम् ।"

आ० र०–मार्द्वीकगुणानाह–मार्द्वीकमिति । मार्द्वीक– द्राक्षाकृत मद्यम् । लेखन–लीनमलोत्खननम् । अल्पपित्ता- निलकर–अन्यमद्यापेक्षया ।

**अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ।**
**शार्करः सुरभिः स्वादुहृद्यो नातिमदो लघुः ॥ ७३ ॥**

स०–खार्जूर मद्यमस्मात्–मार्द्वीकादल्पान्तरगुणम् । अल्पा- न्तरा –किञ्चिद्विशेषा गुणा यस्य तदेवम् । तथा, वातल गुरु च । द्राक्षासवश्चान्यत्रोक्त । यथा–"शुष्कद्राक्षाम्बुसम्भूतो विशदो रोचनो हिम । द्राक्षासवो मधुसमो बृहणो भृशदी- पन ॥" इति । शार्कर –शर्करासम्बन्धी मद्यविशेष , सुरभि – सुगन्धिर्भवति । तथा, स्वादुश्च (श्चासौ) हृद्यश्च स्वादुहृद्य । तथा, नातिमदो लघुश्च भवति ।

**सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ।**

स०–गुडसम्बन्धी–गौड , सृष्टमूत्रत्वादिभिर्गुणैर्युक्त । तथा, तर्पणश्चासौ दीपनश्च तर्पणदीपन ।

आ० र०–गौडगुणानाह–सृष्टमूत्रेति । गुडकृत मद्य– गौड । सृष्टा –प्रवर्तिता , मूत्रादयो येन स तथा । तर्पण– तृप्तिजनन ।

**वातपित्तकरः सीधुः स्नेहश्लेष्मविकारहा ॥ ७४ ॥**
**मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ।**

स०–सीधु वातपित्तकर । तथा, स्नेहविकारान् श्लेष्मविका- राश्च हन्ति । ब्रह्मभ्रूणवृत्रेष्विवत्यत्र चतुर्विधस्य नियमस्य प्रायि- कत्वात् क्विप् । सीधु –अपक्वेक्षुरसकृत पक्वेक्षुरसकृतश्च । तत्र– सीध्वोर्मध्ये, पक्वरसो मेद शोफोदरार्शासि हन्ति, श्रेष्ठश्च भ- वति । मेद शोफोदरार्शोघ्न इति "अमनुष्यकर्तृके च" इति ठक् ।

आ० र०–सीधुगुणानाह–वातपित्तकर इति । इक्षुरस- कृत मद्य–सीधु । स्नेहविकारान्–स्नेहव्यापद , श्लेष्मविका-

१ 'सुराया अच्छ उपरिष्टान्मण्डो वारुणी प्रसन्नेत्युच्यते । तथा चा- गमं –"प्रसन्ना वारुणी ज्ञेया परिसुन्मदिरा यथा । कादम्बरी घनसुरा, तदधो जगल स्मृतं ॥" इति ।' इति चन्द्रनन्दन । शार्ङ्गधरस्तु (म अ १०।७)–"यत्तालखर्जूररसै सन्धिता सा हि वारुणी ।' इति । २ 'कल्कोत्पीड' ट । ३ 'उदरपूर ' क ञ । ४ केचित्–अरुण- दत्तचन्द्रनन्दनादय । ५ विष्टम्भिनीति श्लोकार्ध हेमाद्रिसम्मतम् । ६ 'य कटु' आ ख.घ झ ञ । ७ 'कृत ' ट । ८ 'द्रव्यखदिरा द्यात्मकत्वता' ट ।

१ श्लोकोऽयमरुणदत्तसम्मत । २ 'शार्कर सुरभि स्वादु हृद्य नातिमद लघु ।' ञ । ३'स्वादुर्हृद्यो' स ढ । ४'सीधुमध्ये ट ।

रांश्च हन्तीति तथा। स च सीधुर्द्विविधः,-शीतरसः पक्करसश्च। अपक्केनेक्षुरसेन कृतः-शीतरसः, पक्केन-पक्करसः। तयोर्मध्ये पक्करसः श्रेष्ठः।

**छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित् ॥ ७५॥**

**स०**-मध्वासवो-माक्षिकेण सन्धीयते माधवाख्यो मद्यविशेषः, छेदी तीक्ष्णो मेहादिनाशनश्च। अष्टाङ्गसङ्ग्रहे तु (सू. अ. ६) सुरासवादयो गदिताः। तथा चापठत्-"सुरासवस्तीव्रमदः स्वादुस्तीक्ष्णोऽनिलापहः। मैरेयो मधुरो वृष्यः सरः सन्तर्पणो गुरुः॥" इत्यादि। तत्र मधुनैव सुरासन्धानेन या क्रियते, तां सुरां सुरासवमाहुः। मैरेयः-कोद्रवैर्जायते।

**आ० र०**-मध्वासवगुणानाह-छेदीति। मधुकृतं मद्यं-मध्वासवः। आसवशब्दो मद्यमात्रवचनः। छेदी-सहतकफादिविश्लेषी।

**रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम्।**
**भृशोष्णतीक्ष्णरूक्षाम्लं हृद्यं रुचिकरं सरम् ॥ ७६॥**
**दीपनं शिशिरस्पर्शं पाण्डुदृक्क्रिमिनाशनम्।**

**स०**-शुक्तं रक्तपित्तकफानुत्क्लेदयति। तथा, वातमनुलोमयति-मार्गान्तरेभ्यस्तमानीय स्वमार्गप्रतिपन्नं करोति, तद्वातानुलोमनम्। अतिशयेनोष्णतीक्ष्णरूक्षाम्लम्। तथा, हृद्यम्। तथा, परं-अतिशयेन रुचिकरम्। तथा, दीपनम्। तथा, शिशिरः स्पर्शो यस्य तदेवम्। तथा, पाण्ड्वादिघ्नम्।

**आ० र०**-मद्यवर्गे सन्धानसामान्यात् शुक्तादीन्याह। तत्र शुक्तगुणानाह-रक्तपित्तकफोत्क्लेदीति। शुक्तं-कन्दादिसन्धानम्। उक्तं हि (शार्ङ्गधरे म. अ. १०।७)-"कन्दमूलफलादीनि सस्नेहलवणानि च। यत्रैकत्राभिषूयन्ते तच्छुक्तमभिधीयते॥ गुडस्त्विक्षुरसो मद्यं मार्द्वीकं च द्रवं यदा। गुडेक्षुमद्यमार्द्वीकशुक्तानि स्युस्तदा क्रमात्॥" इति। यच्चोक्तं वृन्देन-"यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम्। धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते॥" इति। तच्छुक्तविशेषलक्षणम्। रक्तादीन् क्लेदयति-अतिद्रवीकरोतीति तत्तथा। शिशिरस्पर्शं-स्पर्शे शीतम्। दृक्-दर्शनशक्तिः।

**गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ॥ ७७॥**

**स०**-गुडादिभवं शुक्तं यथोत्तरं लघु-यद्यदुत्तरं तत्तल्लघु, गुडकृताच्छुक्तादिक्षुशुक्तं लघु, इक्षुशुक्तान्मद्यशुक्तं लघु, मद्यशुक्तान्मार्द्वीकं शुक्तं लघु भवति।

**आ० र०**-गुडशुक्तादीनां लघुत्वे तारतम्यमाह-गुडेक्ष्विति। यथोत्तरं लघु-गुडशुक्तादिक्षुशुक्तं लघु, ततो मद्यशुक्तम्, ततो *मार्द्वीकशुक्तमिति। मद्य-मार्द्वीकादन्यत्।

**कन्दमूलफलाद्यं च तद्वद्विद्यात्तदासुतम्।**

**स०**-कन्दादिकं च तदासुतं-गुडशुक्ताद्यासुतं, तद्वद्विद्यात्-तच्छुक्तसमानगुणं जानीयात्। शुक्तेनात्युत्कृष्टशक्तिना परित्याज्य निजं स्वभावं, वशीकृत्याऽऽत्मरूपतां नीयत इत्यर्थः। आद्यग्रहणात्काण्डत्वक्पत्रादिपरिग्रहः। तेन काण्डाद्यपि तथैव वेद्यम्।

**आ०र०**-शुक्तगतकन्दादिगुणानाह-कन्दमूलेति। आद्यशब्दाच्च काण्डादीनि। तद्वत्-शुक्ततुल्यगुणम्। तदासुतं-तस्मिन्-शुक्ते, आसुतं-चिरकालस्थितम्। उक्तं च-"कन्दमूलफलाद्यं च लवणोदकसंयुतम्। सन्धानाच्चिरकालाम्लमासुतं परिकीर्तितम्॥" इति। कन्दादीनां पृथक्प्रयोगादद्रवत्वेऽपि प्रासङ्गिकमत्र कथनम्।

अम्लत्वरोचनादिगुणतुल्यत्वादन्यदपि शाण्डाक्यादिकमाह-

**शाण्डाकी चासुतं चान्यत्कालाम्लं रोचनं लघु ७८**

**स०**-मूलकसर्षपशाकानि क्वथितासुतानि कालजीरकराजिकाचूर्णभावितान्यम्लतीक्ष्णानि शाण्डाकीशब्देनोच्यन्ते। सा टक्कविषये प्रसिद्धा। सा चान्यच्चानुक्तमप्यासुतं कालेनाम्लं-अम्लीभूतम्, न तु स्वयमाम्ल्यमापाद्यम्। अनेनैव हेतुना सुतरां तत्संस्कारतामधिकरोतीति। तच्च रोचनं लघु भवति।

**आ० र०**-शुक्तेतरसन्धानगुणानाह-शाण्डाकी चासुतमिति। शाकमुद्गादिवटकसन्धानं-शाण्डाकी। उक्तं च-"शाण्डाकी कन्दमूलादिमुद्गादिवटकैः कृता॥" तथा, "मूलकच्छेदसन्धानं शाण्डाकी स्याद्बहुद्रवा॥" इति। अन्यत्-शुक्तशाण्डाकीभ्यामितरत्। तच्च पिण्याकादिकृतम्, कालाम्लं-कालेन चिरकालावस्थेनाम्लम्, तदुभयं रोचनं लघु च।

**धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्शशीतलम्।**
**श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ॥ ७९॥**
**शस्तमास्थापने हृद्यं लघु वातकफापहम्।**
**एभिरेव गुणैर्युक्ते सौवीरकतुषोदके ॥ ८०॥**
**क्रिमिहृद्रोगगुल्मार्शःपाण्डुरोगनिबर्हणे।**
**ते क्रमाद्वितुषैर्विद्यात्सतुषैश्च यवैः कृते ॥ ८१॥**

**स०**-धान्याम्लं-काञ्जिकं, भेदि तीक्ष्णम्। तथा, उष्णवीर्यम्। तथा, पित्तकृत्। स्वभावाच्च स्पर्शशीतलम्। व्यायामा-

---

१ 'स्तीक्ष्णमदं 'स द्र। २ **'परम्'** इत्यरुणदत्तसम्मतः पाठ इति प्रतिभाति। ३ **'पाण्डुहृत्क्रिमि'** इति चन्द्रनन्दनसम्मतः पाठः। ४ 'यत्र द्रवेऽभि' क ख घ झ। ५ 'भिषूर्यन्ते' ञ। ६ 'क्तमिति कथ्यते' ख घ झ। ७ गुडमद्यमधुशुक्तानां लक्षणानि क्रमेण यथा-"गुडाम्बुना सतैलेन सन्धानं काञ्जिकं च यत्। कन्दशाकफलैर्युक्तं गुडशुक्तं तदुच्यते॥ सर्वं मद्यं पञ्चरसं कालान्तरवशाद्यदा। त्यक्त्वाऽन्यरसमम्लत्वं याति शुक्तं तदुच्यते॥ जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम्। मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत्॥ त्र्यहेण तज्जातरसं मधुशुक्तमुदाहृतम्।" इति। *८ **'माध्वीक'** ख घ ञ ठ।

१ 'आसवशुक्त' ट। २ 'क्तवल्क दा' ख घ झ। ३ 'वशकाण्डा' क। ४ 'कासुभावि' ठ। ५ 'द्रव्यवि' इति क्वचित्। ६ 'तथा मूलकसन्धान' ग ञ। ७ 'त्, यत् आसुतं सन्धितं, तच्च' ग। ८ अस्याग्रे **"गण्डूषधारणाद्वक्त्रमलदौर्गन्ध्यशोषजित्।"** इति आ क ञ पुस्तकेष्वधिकः पाठः। ९ एभिरेवेति सार्धं श्लोकोऽरुणदत्तसम्मतः। **१०'त्मार्शोग्रहणीपाण्डुनाशने'ञ.**

दिना श्रान्तत्व–श्रम, निर्व्यायामादेरेवोपश्रान्तत्व–क्लम, तौ हरति। तथा, रुच्य दीपन च। बस्तिशूल च जयति। तथा, आस्थापने–निरूहे शस्तम्। तथा, लघु वातकफापह च। हन्ते "अन्येष्वपि दृश्यते" इति ड। धान्याम्ल–तण्डुलकण्डनादिकृतम्। सौवीरकतुषोदके तु वितुषै सतुषैश्च यवै क्रमात्कृते तद्वद्वियात्।

आ० र०–काञ्जिकगुणानाह–धान्याम्लमिति। धान्याम्ल–काञ्जिकम्। भेदि–सरम्। आस्थापने–निरूहे।

मद्यवत्तीक्ष्णोष्णादियुक्तत्वात् गोमूत्रादिगुणानप्याह—

**मूत्रं गोऽजाविमहिषीगजाश्वोष्ट्रखरोद्भवम्।**
**पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥ ८२ ॥**
**कृमिशोफोदरानाहशूलपाण्डुकफानिलान्।**
**गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥ ८३ ॥**

स०–मूत्र गोऽजादिभव पित्तलादिगुणयुक्तम्। तथा, लवणोऽनुरस स्वल्पो यस्य तदेवम्। तथा, कृम्यादीन् जयेत्। लघु च। गोमूत्रस्य च पूर्वमुपन्यासात् प्राधान्य ज्ञेयम्। सङ्ग्रहे तु विशेषान्तरमप्युक्तम् ( सू अ ६ )–"श्वासकासहर छाग पूरणात्कर्णशूलजित्। दद्यात्क्षारे किलासे च गजवाजिसमुद्भवम् ॥ हन्त्युन्मादमपस्मार कृमीन्मेह च रासभम्। कषायतिक्तमेतेषा हिध्माश्वासहर शकृत् ॥ पित्त तिक्त कृमिहर, रोचनं कफवातजित्। तिक्ता पामाहरा, मूत्र मानुष तु विषापहम् ॥" इति।

आ० र०–मूत्रगुणानाह–मूत्रमिति। महिषीति स्त्रीलिङ्गनिर्देशो महिष्यन्ताना स्त्रीणा गजादीना पुसा मूत्र ग्राह्यमिति ज्ञापनार्थम्। मूत्रस्य तीक्ष्णोष्णत्वादिसाधर्म्यात् मद्यवर्गे निर्देश। सङ्ग्रहे तु (सू अ ६)–[*शूलप्रवाहिकाटोपतृष्णाशोफार्शसा हित।] जगल पाचनो ग्राही रूक्षस्तद्वच भेदक ॥ बक्कसो हृतसारत्वाद्विष्टम्भी दोषकोपन। कौहली बृहणी गुर्वी, श्लेष्मलस्तु मधूलक ॥ मार्द्वीकालपान्तरगुण खार्जूर वातल गुरु। शार्कर सुरभि स्वादुर्हृद्यो नातिमदो लघु ॥ सुरासवस्तीव्रमद स्वादुस्तीक्ष्णोऽनिलापह। मैरेयो मधुरो वृष्य सर सन्तर्पणो गुरु ॥ धातक्यभिषुतो जीर्णो रूक्षो रोचनदीपन। द्राक्षासवो मधुसम परम स तु दीपन ॥ मार्द्वीकसदृश प्रोक्तो मृद्वीकेक्षुरसासव। समासादासवो हृद्यो वातल. स्वौषधानुग ॥ [*एभिरेव गुणैर्युक्ते सोवीरकतुषोदके। कृमिहृद्रोगगुल्मार्शःपाण्डुरोगनिबर्हणे ॥ ते क्रमाद्वितुषैर्विद्यात्सतुषैश्च यवै कृते। विरेकास्थापनालेपस्वेदादिषु च पूजितम् ॥] दीपन पाचन भेदि तेषु गोमूत्रमुत्तमम्। श्वासकासहर छाग पूरणात्कर्णशूलजित् ॥ दद्यात् क्षारे किलासे च गजवाजिसमुद्भवम् ॥ हन्त्युन्मादमपस्मार कृमीन्मेह च रासभम् ॥ कषायतिक्तमेतेषा हिध्माश्वासहर शकृत्। [*मार्गमोज क्षयहर वह्निकर वातरोगनुत् ॥ प्रसहानामपस्मारमुन्माद च नियच्छति। महामृगसमुद्भूत कुष्ठहृज्जलचारिणाम् ॥ नेत्ररोगहर पित्त प्रवृद्ध च नियच्छति।] पित्त तिक्त कृमिहर, रोचनं कफवातजित् ॥ तिक्ता पामाहरा, मूत्र मानुष तु विषापहम्।" इति। इति मद्यवर्ग।

**तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात्।**
**इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥ ८४ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने द्रवद्रव्यविज्ञानीयो नाम पञ्चमोऽध्यायः ॥ ५ ॥**

स०–इति–अनन्तरोक्तेन प्रकारेण, तोयादीना वर्गै क्रमानतिक्रमेण द्रवाणामेकदेशो यथास्थूलमयमुदाहृत–उक्त।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने पञ्चमोऽध्याय समाप्त ॥ ५ ॥

आ० र०–अध्यायार्थमुपसहरति–तोयेति। एकदेशग्रहण द्रवद्रव्यव्यक्तीनामानन्त्येन कात्स्न्र्येन वक्तुमशक्यत्वात्। यथास्थूलमिति साकल्येऽव्ययीभाव। यावत्य स्थूला प्रसिद्धा व्यक्तय, तावत्य सर्वा उक्ता इत्यर्थ।

इति हेमाद्रिटीकायामायुर्वेदरसायने। द्रवद्रव्यप्रकरण सामस्त्येन निरूपितम् ॥ ५ ॥



## षष्ठोऽध्यायः।

अन्नविधौ प्रकृतेऽल्पवक्तव्यत्वात्पूर्व द्रवद्रव्यमभिधायान्न वक्ति–

**अथातोऽन्नस्वरूपविज्ञानीयमध्यायं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

( गद्यसूत्रे ॥ २ ॥ )

स०–अन्नस्य स्वरूपं–स्वभावो रसवीर्यविपाकप्रभावगुणक

१ 'कफामयान्' आ ञ। २ 'रोचन' ट। ३ 'तिक्त पामाहर' ट। ४ 'निर्देशात्० ज्ञापितम्' क ग ञ। ५ एतत्स्पष्टतयोक्त मदनपालेन–"गोजाविमहिषीणा च स्त्रीणा मूत्र प्रशस्यते। खरोष्ट्रेभनराश्वाना पुसा मूत्र हित मतम् ॥" इति। ६ 'साम्यात्' ख घ झ ञ। *[ ] एतच्चिन्हान्तर्गता सङ्ग्रहश्लोका केषुचिदपि हेमाद्रिटीकापुस्तकेषु नोपलभ्यन्ते। ७ 'अस्मादल्पा' स ह्र। ८ 'स्तीक्ष्णमद' क.ग.ञ.स.ह्र.। ९ 'क्याभि' ञ।

१ मार्ग–मृगस्य शकृत्। २ 'रोचन' क ग। ३ 'तिक्त पामाहर' क ख ग घ.झ.। ४ इदमन्नस्वरूपविज्ञान चरके सू २७ अध्याये, सुश्रुते सू. ४६ अध्याये, अष्टाङ्गसङ्ग्रहे सू ७।१२ अध्याययोश्चास्ति वर्णितम्।

मादि, तस्य विज्ञान–अवगम , तस्मै हितोऽध्याय -अन्नरूपविज्ञानीय , त व्याख्यास्याम'। शेष पूर्ववद्व्याख्येयम्। द्रव्यशब्दश्चाप्रयुक्तोऽप्यर्थस्य गमक इत्यन्नद्रव्यस्वरूपविज्ञानीय इति द्रष्टव्यम्। तथा हि पूर्वस्मिन्नध्याये मन्दमतिप्रबोधनाय प्रयुक्तो द्रव्यशब्द । आचार्या हि वैचित्र्येण ग्रन्थरचना विदधति। तत्र प्राक् स्वरूपशब्दो न निदिष्ट , इह च द्रव्यशब्द । अथवोभयमप्रयुक्तमपि गम्यते मध्यलोपाख्यया तत्प्रयुक्त्याऽन्तलोपाख्यया च । अद्यते यत्तत्–अन्न धान्यमासादि ।

**आ० र०–अन्नस्वरूपविज्ञानीयमध्याय व्याख्यातु प्रतिजानीते–अथेति । यत पूर्वाध्याये द्रव आहार उक्त , इह स्वद्रव । स चान्नशब्दवाच्य । अत एवायमन्नस्वरूपविज्ञानीय । तत्र सप्तवर्गा । वक्ष्यति हि (हृ सू अ ६।१७२)– "शूकशिम्बिजपक्वान्नमासशाकफलौषधे । वर्गितैरन्नलेशोऽयमुक्तो नित्यौपयोगिक ॥" इति ।**

धान्य च द्विधा,–शूकशिम्बीधान्यभेदेन। तत्र प्राधान्याच्छूकधान्यस्य पूर्वमुपन्यास । प्राधान्य चास्य भूयस्त्वोपयोगित्वात्। शिम्बीधान्यस्य तु तद्व्यञ्जनत्वेन स्वल्पोपयोगित्वात् प्रायेणापथ्यत्वाच्चाप्राधान्यम्, इत्याह—

## अथ शूकधान्यवर्गः ।

**रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः ।**
**सारामुखो दीर्घशूको रोध्रशूकः सुगन्धिकः ॥ १ ॥**
**पुण्ड्र. पाण्डुः पुण्डरीक. प्रमोदो गौरसारिवौ ।**
**काञ्चनो महिषः शूको दूषकः कुसुमाण्डकः ॥ २ ॥**
**लाङ्गला लोहवालाख्या. कर्दमा. शीतभीरुकाः ।**
**पतङ्गास्तपनीयाश्च ये चान्ये शालय. शुभा. ॥ ३ ॥**
**स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ।**
**कषायानुरसा. पथ्या लघवो मूत्रला हिमाः ॥ ४ ॥**

**स०**–तत्र रक्तशालिमहाशाली—सुप्रथितावेव । कलमो–मगधादिषु प्रसिद्ध । स एव महातण्डुल इति काश्मीरेषु। तूर्णकश्च–तत्रैव आजव इति प्रसिद्ध । शकुनाहृतो–यो मगधेषु बुद्धोत्पादकाल उत्तरकुरुभ्यो हसैरानीतो भृङ्गारपात्रे विशाखाख्यया वापितो विस्तर गत । अत एव शकुनिनाऽऽहृत शकुनाहृत इत्यन्वर्थोऽस्य सज्ञा। सारामुख –कृष्णशूक । शुक्लाकारो–दीर्घशूक । रोध्रशूको–रोध्रपुष्पाकारशूक । सुगन्धिको–गन्धशालिसज्ञया जालन्धरमगधादिषु ख्यात , देवशालिरित्यपरनामा मालवदेशे गौडे चातिप्रसिद्ध । एव पतङ्गादयो नानादेशेषु कार्षकादिभ्योऽवधार्या । शूके जाता शूकजा , तेषु मध्ये

रक्ताद्यास्तपनीयान्ता अन्ये च ये शालय शुभा –रक्तादिसदृशा , ते सर्वे स्वादुपाकरसत्वादियुक्ता । बद्ध–ग्रथितमल्प च वर्चं –पुरीष कुर्वन्तीति बद्धाल्पवर्चस , ते एव कारणे कार्योपचारादुक्ता । कषायोऽनुरसो येषा त एवम्। पथ्या –स्वभावेनैव हिता । तथा, लघवो मूत्रकारिण शीतवीर्याश्च।

**आ० र०–तत्रादौ शूकधान्यवर्ग । तत्रादौ शालय । तत्र रक्तशाल्यादिगुणानाह–रक्तो महानिति। रक्तादयो–देशभेदेन स्वनामप्रसिद्धा । शुभा –निर्दोषा । बद्धाल्पवर्चस ,–बद्ध–पिण्डीकृत, अल्प–स्तोक, वर्च –पुरीष, येभ्यस्ते तथा। ननु, इह शालयो मधुरपाका उक्ता , सुश्रुतेन (सू अ ४६।५)–"मधुरा वीर्यत शीता लघुपाका बलावहा ।" इति विरोध , लघुपाकत्वमेव हि कटुपाकत्वम्। मैवम्। रसवदविरोध । पाको–रसविशेष । रसास्त्वेकस्मिन् द्रव्ये बहवोऽनुभूयन्ते।**

**शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ।**

**स०**–तत्र–तेषु महाशालिकलमादिषु मध्ये, रक्तो–रक्तशालिसज्ञो वर , तृष्णा वातादींश्च त्रिदोषान्निहन्ति । अस्य च प्रागुपादानेनैव वरत्वे लब्धे वरग्रहण युक्त्याऽग्र्यादिसङ्ग्रहार्थम्। तथा च,–"वर्षासु दिव्यनादेये पर तोये वरावरे।" इति । तथा,–"गव्ये क्षीरघृते श्रेष्ठे" तथा,–"शर्करेक्षुविकाराणा फाणित च वरावरे" तथा,–"वरोऽत्र मुद्गोऽल्पचल " "माषोऽत्र सर्वेष्ववरो यवक शूकजेषु च ।" इत्यादीनि वाक्यानि प्रदेशान्तरेष्वयमेवावोचदाचार्य ।

**आ० र०–रक्तशालिगुणानाह–शूकजेष्विति। तत्र–तेषु शालिषु मध्ये, रक्तो–रक्तशालि , शूकजेषु वर । तथा च खारणादि –"पथ्यत्वे शूकधान्याना प्रवरा रक्तशालय ।" इति । अत एव 'शूकजेषु शालयो वरा , तेषु शालिषु रक्तो वर.' इति व्याख्यानमसत्। तृष्णात्रिदोषहा–तृष्णाघ्नस्त्रिदोषघ्नश्च।**

**महांस्तमनु कलमस्तं चाप्यनु ततः परे ॥ ५ ॥**

**स०**–तस्यानु–रक्तशाले पश्चात्, महान् शालिर्वर । त च–महान्तमनु कलम , महत्सज्ञात् कलम किञ्चिदून इत्यर्थ । तत –अनन्तरम्, परे–अन्ये शालयोऽवरा ज्ञेया ।

**आ० र०–महाशाल्यादीना गुणानाह–महांस्तमन्विति। तमनु–रक्तशालेर्हीनो महान् । त चाप्यनु–कलमो महतो हीनगुण । परे–तूर्णकादय , तेनैव न्यायेन हीना । तेन यो यस्मादुत्तर स तस्माद्धीन । ननु, रक्तशाल्यादीना यथोत्तरमपकर्ष उच्यते, स च पाठक्रममपेक्षते, स तु प्रतितन्त्र भिद्यते। तद्यथा– "लोहितशालिकलमकर्दमबकपाण्डुकसुगन्धिकशकुनाहृतपुष्पाण्डकपुण्डरीकमहाशालिशीतभीरुरोध्रपुष्पकदीर्घ-**

१ 'भूयसोपयो' ट । २ '**पौण्ड्रक पुण्डरीकश्च**' आ । '**पाण्डुक पुण्डरीकश्च**' ठ । ३ '**रशालिक**' आ । ४ '**जाङ्गला**' आ ठ । '**लाङ्गलो० ख्य ० म ० क**' ञ । ५ '**लाश्च**' ख घ झ । ६ 'मृगारिमात्रा विशा' ठ । ७ 'विशाखया' ट । ८ 'द्वीपान्तरात्समानीतो गरुडेन महात्मना। शकुनाहृत स शालि स्याद्गरुडापरनामक ॥' इति वृद्धवैद्या ।

१ 'ण्डीभूत' क ञ । २ 'रसा पुनरेक' ख घ झ । ३ '**स्तस्यानु**' इत्यरुणदत्तसम्मत पाठ । '**स्त चानु**' स स । ४ 'कदर्मक' स सु ।

शूककाञ्चनमहिषशूकहायनदूषकमहादूपकप्रभृतय शालय । मधुरा वीर्यत शीता लघुपाका बलावहा । पित्तघ्नाल्पा निलकफा स्निग्धा बद्धाल्पवर्चसः॥ तेषा लोहितक श्रेष्ठो दोषघ्न शुक्रमूत्रल । चक्षुष्यो वर्णकृत्स्वर्यो हृद्यो बल्यस्तृषापह ॥ व्रण्यो ज्वरहरश्चैव सर्वदोषविषापह । तस्मादल्पान्तरगुणा क्रमश शालयोऽपरा ॥" इति सुश्रुत (सू अ ४६।४)। "रक्तशालिर्महाशालि कलम शकुनाहृत । तूर्णको दीर्घशूकश्च गौर पाण्डुकलाङ्गलौ ॥ सुगन्धिका लोहवाला सारिवाख्या प्रमोदका । पतङ्गास्तपनीयाश्च ये चान्ये शालय शुभा ॥ शीता रसे विपाके च मधुरा स्वल्पमारुता । बद्धाल्पवर्चसा स्निग्धा बृंहणा मूत्रशुक्रला ॥ रक्तशालिर्वरस्तेषा तृष्णाघ्नस्त्रिमलापह । महास्तमनु कलमस्त चाप्यनु तत परे ॥" इति चरक (सू अ २७।७)। "रक्त श्येनाहृतो गौर सुगन्ध काञ्चनो महान्। पतङ्ग कलम पाण्डुर्लोहवाल प्रमोदक ॥ दीर्घनाल शीतभीरु सारिव शङ्खमौक्तिक । तूर्णको दीर्घशूकाख्यो लाङ्गलाद्याश्च शालय ॥ शीतला मधुरा स्निग्धा ग्राहिणो मांसशुक्रला । वातपित्तहरा बल्या सृष्टमूत्रा सहायना. ॥ स्निग्ध शीतो लघुर्ग्राही तृष्णाघ्न शुक्रमूत्रल । रक्तशालिस्त्रिदोषघ्न कलमोऽनु महास्तत ॥" इति खारणादि । "रक्तो महान् सकलम" इत्याद्यर्थम्। एवमेव सङ्ग्रहे (सू अ ७)। तस्मात्कोऽत्र क्रम ? उच्यते। इह रक्तशालिशब्देन मृदुमधुरस्निग्धसुरभिशुक्लविशदस्थूलायतत्वादीना लोकप्रसिद्धाना स्वगुणानामुत्कर्ष उपलक्ष्यते। तेषु यथा यथा समुत्कर्षस्ते उत्तमा । यथा यथा अपकर्षस्ते हीना । उपलक्षणानि पुनर्वक्तुर्विवक्षाभेदाद्भिन्नानि । यानेव गुणान् सुश्रुतखारणादी कलमशब्देनोपलक्षयत, तानेव चरकवाग्भटौ महाशालिशब्देन। ननु, सम्बन्ध विना नोपलक्षणत्वम्, न च कलमस्य महाशालिगुणैर्महाशालेर्वा कलमगुणै कदाचित्सम्बन्ध । नैवम् । यदा कलमो महाशालिक्षेत्रे निष्पद्यते, तदा तयोस्तुल्यगुणत्वात् । स्वक्षेत्रजादेव महा शाले स्वक्षेत्रज एव कलमो हीन । एवमितरेष्वपि वाच्यम्। तस्मात्सर्वमेव प्रमाणम्, उक्तप्रकारेणाविरोधात्।

**यवका हायनाः पांसुबाष्पनैषधकादयः ।**
**स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तला.**
**सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिता. ।**

स०–यवकादय शालिविशेषा स्वादव । तथा, उष्णादिगुणयुक्ता । तथा, सृष्टे मूत्रपुरीषे यैस्ते सृष्टमूत्रपुरीषा । पूर्वं पूर्वं च निन्दिता –तेन यवका सर्वेभ्योऽपि गर्हिता , तदन्वन्ये किञ्चितिकिञ्चित्क्रमेण गर्हिता इति विज्ञेयम्। नैषधकादय इत्यत्राऽऽदिशब्देन चम्पकपत्रिकादय शालिविशेषा गृह्यन्ते ।

आ०र०–यवकादिशालिगुणानाह–यवका इति । *पांशुंबाष्प –कोरक । पूर्वं पूर्वं च निन्दिता –यो यस्मात्पूर्वं स तस्माद्धीनगुण, मृद्वादिविपरीतगुणानामुत्कर्षात् ।

**स्निग्धो ग्राही लघु. स्वादुस्त्रिदोषघ्न. स्थिरो हिमः ७**
**षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ।**

स०–व्रीहिषु मध्ये षष्टिक श्रेष्ठ, रक्तशालिरिव शालिषु । तथा, स्निग्धादिगुणयुक्त । स्थिरो हिम इति शरीरस्थैर्यकरो ज्वरश्रमक्लमग्लानिहर । अत एव रसायनप्रयोगे ज्वरादौ च तत्र तत्र क्षामवपुषामुपदिष्ट । यवस्तु स्थैर्यकरोऽपि नाम्नातो गुरुवातलत्वादिति वेद्यम्। षष्टिकश्च द्विविध,–गौर कृष्णगौरश्च । अत्रासितगौरतो गौर षष्टिक श्रेष्ठ । [ तथा च सुश्रुते (सू अ ४६।९)–"रसे पाके च मधुरा पित्तानिलहरास्तथा । शालीना च गुणैस्तुल्या विज्ञेया कफशुक्रला ॥ षष्टिक प्रवरस्तेषा कषायानुरसो लघु ।" कृष्णात्रेय –"षष्टिक सुरकव्रीहिपाटलोटकनालका । कृष्णव्रीहि शीतभीरु प्रमोदो हायनस्तथा ॥ अनभिष्यन्दिन स्निग्धा कषायमधुरा हिमा । लघव कटुपाकाश्च षष्टिकोऽत्रापि पूजित ॥" खारणादि – "कपायमधुरो ग्राही दोषघ्न षष्टिको लघु ।" पराशरेऽप्युक्तम्– "रक्तो महाच्छकुनाहृत षष्टिककलमप्रमोदपतङ्गा शीतगौरदीर्घशूकसुगन्धिकपाण्डुतपनीया शालय एवभूता । मधुरबहला स्थिरा स्निग्धा पित्तानिलप्रशमना लघव सङ्ग्राहिका शीता ।" इति । चरके त्वेव पठ्यते ( सू अ ५।३ )–"तत्र शालिषष्टिकमुद्गलावकपिञ्जलैणशशशरभशम्बराहादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ति ।" तथा च चरको ज्वरे पठति ( चि अ ३।१७६ )–"रक्तशाल्यादय शस्ता पुराणा षष्टिकै सह । यवाग्वोदनलाजार्थे ज्वरिताना ज्वरापहा ॥" इति । ]

आ० र०–षष्टिकगुणानाह–स्निग्ध इति । ग्राही–स्तम्भन । स्थिर –स्थिरगुण, कार्यरूपेण शरीरे चिरकाल तिष्ठतीत्यर्थ । यो व्रीहि षष्टिरात्रेण पच्यते स षष्टिक । स चान्येभ्यो व्रीहिभ्य उत्तम । स च त्रिविध,–गौर कृष्ण कृष्णगौरश्च । तत्रासितगौराद्गौर श्रेष्ठ । पारिशेष्यादसितो हीन ।

**ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ॥ ८ ॥**
**कुक्कुटाण्डकलावाख्यपारावतकशूकराः ।**
**वरकोद्दालकोज्ज्वालचीनशारददर्दुराः ॥ ९ ॥**
**गन्धना. कुरुविन्दाश्च गुणैरल्पान्तरा. स्मृताः ।**

स०–तत –षष्टिकात्, महाव्रीह्यादय क्रमाद्गुणैरल्पान्तरा –गुणैर्हीना ।

१ 'ऽवरा' स सु । २ 'स्तस्यानु कलमस्तस्याप्यनु' स च । ३ अय–अष्टाङ्गहृदयकार । ४ 'शुभ्र' ख घ झ । ५ 'यतादीना' ञ । ६ 'स्वादुगुणा' क ग ञ । ७ 'स्ते तथा तथा उ' ञ । ८ 'स्ते तथा तथा हीना' ख घ झ ञ. । ९ 'उक्तेन प्र' ख घ झ । *१० 'पांसुवाप्य' आ ञ ।

१ 'रीताना गु' ख घ झ । २ [ ] एतच्चिन्हान्तर्गत पाठ, ठ पुस्तके नोपलभ्यते । ३ 'शमना वातपित्तयो ।' स सु । ४ 'बृहणा' स सु । ५ 'भशम्बरादी' स च । ६ 'कपालाख्य' अ । 'कपालाक्ष' ठ । 'कलावाक्ष' ञ स स । ७ 'दुर्दुरा.' ठ ।

आ० र०-महाव्रीह्यादीना गुणानाह-तत क्रमादिति । तत -कृष्णषष्टिकात्, महाव्रीह्यादय क्रमेण गुणैरल्पान्तरा । षष्टिकस्य सर्वश्रेष्ठत्वाद्धीनत्वेनाल्पान्तरत्वम् । कृष्णषष्टिकाद्धीनगुणो महाव्रीहि, तत कृष्णव्रीहि, इत्यादि । अत्रापि क्रमभेदपरिहार पूर्ववत् ।

**स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरु॰ ॥१०॥**
**बहुमूत्रपुरीषोष्मा, त्रिदोषस्त्वेव पाटलः ।**

स०-एभ्य षष्टिकादिभ्योऽन्य -अनुक्तो, व्रीहि स्वादु - मधुररस, अम्लविपाक पित्तकरो गुरुर्बहुमूत्रपुरीषोष्मा च । पाटल -पाटलाकुसुमाकार । त्रिदोष -त्रिदोषकोपन । त्रिदोषस्त्वेवे त्यत्रैवशब्दोऽतिशयख्यापनाय । अतिशयेन त्रिदोषल इत्यर्थ । अतित्रिदोषलत्वेनास्याऽभ्यवहारनिषेध करोति । अत एव च रसादिमत्त्व न व्यवादस्य शास्त्रकार ।

आ० र०-अथावशिष्टव्रीहिगुणानाह-स्वादुरिति । अन्य - उक्तेभ्य इतर । ऊष्मा-औष्ण्यम् ।

पाटलगुणानाह-त्रिदोषस्त्विवति । त्रयो दोषा यस्मात्स - त्रिदोष । एवग्रहणात्सर्वास्ववस्थासु दोषलत्वम् । अत एवान्येषा द्रव्याणामवस्थातो गुणान्यत्व ज्ञेयम् । तथा ( सङ्ग्रहे सू अ ७ )-"सर्वथा दोषजित्तक्र ग्रहण्या, दोषकृद्घ्नणे । शालि पिष्टो गरीयस्त्व गोधूमादपि गच्छति ॥" इत्यादि ।

**कङ्गुकोद्रवनीवारश्यामाकादि हिमं लघु ॥ ११ ॥**
**तृणधान्यं पवनकृल्लेखनं कफपित्तहृत् ।**

स०-कङ्ग्वादि तृणधान्य हिम लघु च । तथा, मारुतकृल्लेखन च । लेखन-विकर्षणम् । "विलिखत्यतितैक्ष्ण्याद्यत् धातूस्तल्लेखन मतम् ।" इति । तथा, कफपित्तहृत् । कषायमधुरत्वं पित्तश्लेष्महृत्त्वेनैतेषामवगतम्, तद्वद्बद्धविण्मूत्रत्व च वातकृत्त्वात् । तथा चोक्तम् ( हृ सू अ ४।२३ )-"ततश्चाऽनेकधा प्राय पवनो यत्प्रकुप्यति । अन्नपानौषध तस्य युञ्जीताऽतोऽनुलोमनम् ॥" इति । सङ्ग्रहे तु ( सू अ ७ ) स्पष्टं कृत्वैते गुणा एषामुक्ता । यथा-"कफपित्तहरा रूक्षा कषाया मधुरा हिमा । वातला बद्धविण्मूत्रा लघवो लेखनात्मका ॥" इति । श्यामाकादीत्यत्राऽऽदिशब्देन तोयश्यामाकहस्तिश्यामाकशिबिरप्रशान्तिकामधूलिकागवेधुकाण्डलोहित्यादीना ग्रहणम् ।

आ० र०-तृणधान्यगुणानाह-कङ्गुकोद्रवेति । तृणधान्य-तुच्छधान्यम् । अत एव सुश्रुते (सू अ ४६।२१)-"कुधान्यम्" इत्युक्तम् । कङ्गु -प्रियङ्गु । कोद्रव -कोरदूषक । नीवार - प्रसाविका । श्यामाकस्त्रिविध ,-तोयश्यामाको हस्तिश्यामाक उष्ट्रश्यामाकश्चेति । आदिशब्दाद्वरकादय । ननु, "कोरदूषकनीवारश्यामाकसन्तनुवरकोद्दालकप्रियङ्गुमधूलिकानन्दीमुखीकुरुविन्दकगवेधुकातोयपर्णीमुकुन्दकवेणुयवप्रभृतय कुधान्यविशेषा । उष्णा कषायमधुरा रूक्षा कटुविपाकिन । श्लेष्मघ्ना बद्धनिष्यन्दा वातपित्तप्रकोपणा ॥" इति वचनात् सुश्रुतेन ( सू अ ४६।२१ ) उष्णत्वपित्तलत्वे उक्ते, इह तु शीतपित्तघ्ना इति विरोध । मैवम् । विषयभेदात् । उष्णत्व वीर्येण, कटुपाककफघ्नबद्धनिष्यन्दलघुलेखनत्वादीनामुष्णवीर्येषु दर्शनात् । शीतत्व स्पर्शेन । पित्तलत्व वातसंसृष्टपित्तविषयम्, "वातपित्तप्रकोपणा" इति वचनात् । पित्तघ्नत्व कफसंसृष्टपित्तविषयम्, "कफपित्तहृत्" इति वचनात् ।

**भग्नसन्धानकृत्तत्र प्रियङ्गुर्बृंहणी गुरुः ॥ १२ ॥**

स०-तत्र-तेषु तृणधान्येषु मध्ये, प्रियङ्गु -कङ्गु , भग्नस्याङ्गस्य सन्धान करोति । तथा, गुरु । सुश्रुते तूक्तम् ( सू अ ४६।२४ )-"रक्ता पीताश्च कृष्णाश्च श्वेताश्चैव प्रियङ्गव । यथोत्तर प्रधाना स्यू रूक्षा कफहरा स्मृता ॥" इति ।

आ० र०-कङ्गुगुणानाह-भग्नसन्धानेति । भग्नसन्धानकृत्-भग्नस्याङ्गस्य सन्धान करोति ।

**कोरदूष॰ परं ग्राही स्पर्शे शीतो विषापहः ।**

स०-कोरदूष -कोद्रव, अत्यर्थ सङ्ग्राही । तथा, स्पर्शशीतो विषापहश्च ।

आ० र०-कोद्रवगुणानाह-कोरदूष इति । पर-अतिशयेन ग्राही, स्पर्शे शीतश्च । अतिशयवचनात् कङ्ग्वादीनामपि ग्राहित्व हिमस्पर्शत्व च ज्ञेयम् ।

**रूक्षः शीतो गुरु॰ स्वादुः सरो विड्वातकृद्यवः ॥१३॥**
**वृष्य॰ स्थैर्यकरो मूत्रमेद॰पित्तकफान् जयेत् ।**
**पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान् ॥ १४ ॥**

स०-यवो रूक्षादिगुणैर्युक्तो विड्वातकरो वृष्य स्थैर्यकृच्च । तथा, मूत्रादीन् जयेत् ।

आ० र०-यवगुणानाह-रूक्ष शीत इति । कण्ठामया - गलगण्डादय । त्वगामया -कुष्ठादय ।

**न्यूनो यवादनुयव॰**

स०-अनुयवो नाम शूकधान्यविशेषो लोकप्रसिद्ध । स यवान्न्यून -स्वल्पैर्यवगुणैर्युक्त ।

आ० र०-अनुयवगुणानाह-न्यून इति । नि.शूको यवो-अनुयव. ।

**रूक्षोष्णो वंशजो यवः ।**

स०-वंशोद्भवो-वेणुजो यवो रूक्षोष्णो भवति ।

आ० र०-वेणुयवगुणानाह-रूक्षोष्ण इति । सङ्ग्रहे तु

१ 'व्रीहिषु गौरषष्टिकस्य सर्वश्रेष्ठत्वादसितस्य हीनत्वेना' ग । २ 'वस्याया' क । 'वस्यया' ग । 'वस्याया' ख घ झ । ३ 'सवत्र' ख.घ झ । 'सर्वदा' क ग ञ । ४ 'प्रसादिका' ख घ झ । 'प्रसाधिका' ग । 'प्रशान्तिका' सु टी । ५ 'शन्तनु' ञ । 'शान्तनु' स.सु. । ६ 'नान्दी' स.सु ।

१ 'तोदपर्णी' क स सु । 'तोयदपर्णी' ग । २ 'कुमुदक' क. ग ञ । ३ 'पित्तघ्नत्वे' ख घ झ । ४ 'स्पर्शशीतो' ख घ झ ट ठ । ५ 'गरापह' ङ । ६ 'दीना ग्रा' ख ग घ झ । ७ 'स्पर्शविषय-(घ्न) त्व' ख.घ.झ । ८ 'दन्ययव.' अ ठ । ९ 'वैणवो' ट ।

( सू अ ७ )–"उष्णा सरा वेणुयवा कषाया वातपित्तला ।" इति ।

**वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा १५**
**सन्धानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ।**

स०–गोधूमो वृष्यादिगुणयुक्तः । जीवन –ओजोभिवर्धन । तथा, वातपित्तहर । सन्धानकारी—ऊरुप्रभृतेर्भग्नस्य सन्धान करोति । तथा, स्थैर्यकृत्सरश्च । चरके ( सू अ २७।२० ) त्वन्यथैव गुणा उक्ता । यथा–"स्थैर्यकृत्सकषायश्च बल्य श्लेष्मविकारहा । सन्धानकृद्वातहरो गोधूम स्वादुशीतल ॥"इति।

आ० र०–गोधूमगुणानाह–वृष्य शीत इति । सर — अनुलोमन ।

**पथ्या नन्दीमुखी शीता कषायमधुरा लघुः ॥ १६॥**
**इति शूकधान्यवर्गः ।**

स०–नन्दीमुखी–[ कुशदीर्घा गोधूमजाति । ] पथ्या–शरीराय हिता, शीता कषायमधुरा लघुश्च । इति शूकधान्यवर्ग ।

आ० र०–नन्दीमुखीगुणानाह–पथ्या नन्दीमुखीति । दीर्घसूक्ष्मो गोधूमो–नन्दीमुखी । सङ्ग्रहे तु ( सू अ ७ )–"उद्दालकस्तु वीर्योष्णो नीवार श्लेष्मवर्धन । शीतवीर्या विशेषेण स्निग्धा वृष्या मधूलिका ॥" इति। इति शूकधान्यवर्ग ।

अस्मादनन्तर शिम्बीधान्यवर्गस्य सम्बन्धप्रयोजन प्रागुक्तमेव।

## अथ शिम्बीधान्यवर्गः ।

**मुद्गाढकीमसूरादि शिम्बीधान्यं विबन्धकृत् ।**
**कषायं स्वादु सङ्ग्राहि कटुपाकं हिमं लघु ॥ १७ ॥**
**मेदःश्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः ।**

स०–शिम्ब्या –कोश्या , धान्य–मुद्गादिक, यत् शिम्बीधान्य तद्विबन्धकृत् । केषा विबन्ध करोति ? सामर्थ्यात् स्रोतसाम्, न तु पुरीषादीनाम् । तथा च सङ्ग्राहीत्यत्रैव पठति शास्त्रकृत् । सङ्ग्राहिलक्षण च तन्त्रान्तरे । यथा–"भेदि तत्पिण्डितान् भावान् शकृदादीन्भिनत्ति यत् । विपरीतमतो ग्राहि" इति । तस्माद्विबन्ध स्रोतसामेवेत्यवेहि । तथा, कषाय स्वादु कटुपाक शीतवीर्य लघु च । मसूरादीत्यत्राऽऽदिशब्देन मकुष्ठचणकादीना ग्रहणम् । तथा, मेदआदिषु हितम्, प्रकृतत्वादभ्यवहारे तथा लेप उपसेके चेति । चशब्दोऽत्र लुप्तनिर्दिष्टो बोध्य । लेप –प्रदेह । उपसेक –परिषेक । कषायशीतरूक्षत्वेन कटुपाकित्वेन च वातकृत्त्व शिम्बीधान्यस्य शास्त्रकृतोक्तम् । अत एवेदमुपपन्नम्–"मुद्गोऽल्पचल" इति । यदि हि शिम्बीधान्यस्य मारुतकृत्त्व समेयात्, तदैतद्वक्तु युज्यते । तस्मात् वातकृत्त्वमस्यास्तीति स्थितम् । तस्मिश्च सत्याध्मानकारित्वमप्युपपन्नमेव । अत एव सङ्ग्रहेऽस्याध्मानकारित्वमुक्तम् । मुद्गादीना च विशेषास्तत्रैवोक्ता (स सू अ ७)। यथा–"हरितास्तेष्वपि वरा मकुष्ठा कृमिकारिण । वर्ण्या पर प्रलेपाद्यैर्मसूरा ग्राहिणो भृशम् ॥" इति ।

आ०र०–अथ शिम्बिधान्यवर्ग । तत्र मुद्गादिगुणानाह–मुद्गाढकीति । मुद्गो द्विविध ,–क्षेत्रमुद्गो वनमुद्गश्च । आढकी–तुवरी । मसूरो द्विविध ,–कृष्ण पाण्डुश्च । तत्र पाण्डु –मङ्गल्याख्य । आदिशब्दात्सङ्ग्रहोक्ता ( सू अ. ७ )–"शिम्बिजा मुद्गमाङ्गल्यवनमुद्गमकुष्ठका । मसूरचवलाढक्यश्चणकाश्च पृथग्विधा ॥" इति । शिम्बिभव धान्य–शिम्बिधान्यम् । विबन्धकृत्–वातावरोधकम् । सङ्ग्राहि–मलावरोधकम् । लेपोपसेकयो प्रयुक्त मेद प्रभृतिषु हितम् । उपसेको–व्यञ्जनम्, येन मिश्रीकृत्यौदनादि भुज्यते । स चात्र योग्यत्वात्सूप । उक्त च चरकेण ( सू अ २७।२७ )–"पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च ।" इति ।

**वरोऽत्र मुद्गोऽल्पचलः, कलायस्त्वतिवातलः॥१८॥**
**राजमाषोऽनिलकरो रूक्षो बहुशकृद्गुरुः ।**

स०–अत्र–एषु शिम्बीधान्येषु मध्ये, मुद्ग उत्तम । तथा, अल्प चल–पवन करोतीत्यल्पचल । तुर्व्यतिरेके । कलाय पुनरतिशयेन वातलो भवति । राजमाषो रूक्षो बहु शकृत्करोतीति बहुशकृत् । तथा, गुरु । तथा, अनिलकर –"कृञो हेतु" इति ताच्छील्ये ट, कलायवन्नातिवातल , अन्यशिम्बीधान्याच्चातिवातलोऽयमिति वेद्यम्, अनिलकरग्रहणात् । अन्यथा शिम्बीधान्यसामान्यलक्षणेन वातमात्रकरणस्य लब्धत्वादनिलकरग्रहण न कुर्यात् ।

आ० र०–मुद्गस्य विशेषमाह–वरोऽत्रेति । अत्र–शिम्बिधान्येषु मध्ये, मुद्गो वर । मुद्गेष्वपि हरितो वर , "हरितास्तेष्वपि वरा" इति सङ्ग्रहवचनात् ( सू अ ७ )। अल्पश्चलो–वायुर्यस्मात्स तथा । मुद्गस्य किञ्चिद्वातलत्ववचनादाढक्यादीना वातलत्व ज्ञेयम् ।

कलायगुणानाह–कलायस्त्विति । कलायो द्विविध ,–त्रिपुटो वर्तुलश्च । अतिवातलत्व–आढक्यादिभ्य ।

राजमाषगुणानाह–राजमाष इति । राजमाष –चवल ।

**उष्णाःकुलत्थाःपाकेऽम्लाः शुक्राश्मश्वासपीनसान् कासार्शःकफवातांश्च घ्नन्ति पित्तास्रदाः परम् ।**

स०–कुलत्था उष्णवीर्या पाकेऽम्ला । तथा, शुक्रादीन् घ्नन्ति । अश्म–अश्मरी वक्ष्यमाणलक्षणा । तथा, पित्तास्रदा पर–अतिशयेन रक्तपित्तकरा । कषायस्वादुसङ्ग्राहित्व शिम्बीधान्यसामान्यलक्षणेनैषा वेद्यम्, दृष्टिनाशनत्व चोष्णवीर्यत्वेन

---

१ 'जीवनो बृहणो वृष्य स्निग्ध स्थैर्यकरो गुरु ।' स च । २ अस्याग्रे "नि सारा वातला रूक्षा जूर्णाऽऽध्मानकरा सरा ।" इत्यधिक पाठ , आ ञ पुस्तकयो । ३ [ ] इत्यन्तर्गत पाठष्ट पुस्तके नोपलभ्यते । ४ अस्याग्रे "असृक्पित्तहरो रूक्षो वातलश्लेष्मणक स्मृत ।" इत्यधिक पाठ ,अ पुस्तके । ५'शिम्ब्या–कोश्या' ठ. ।

१ 'सम्भाव्यते' ट । २ 'मङ्गल्य' स द्व । ३ 'त्रिकोणो' ञ.। ४ 'वातल.' ख घ झ ।

रक्तपित्तकरत्वेन च । सङ्ग्रहे तु स्पष्ट कृत्वोक्तम् ( सू अ ७)–"कषायस्वादुरूक्षोष्णा कुलत्था रक्तपित्तला । पीनसश्वासकासार्शोहिक्काऽऽनाहकफानिलान् ॥ घ्नन्ति शुक्राश्मरी शुक्र दृष्टि शोफ तथोदरम् । ग्राहिणो लघवस्तीक्ष्णा विपाकेऽम्ला विदाहिन ॥" इति ।

**आ० र०–कुलत्थगुणानाह–उष्णा इति । शुक्रादीन् घ्नन्ति । अश्म–अश्मरी । ननु, "उष्ण कुलत्थो रसत कषाय कटुर्विपाके कफमारुतघ्न ।" इति सुश्रुतेन ( सू अ ४६।३७ ) विपाके कटुत्वमुक्तम्, इह त्वम्लत्वमिति विरोध । मैवम् । अनेकरसवदविरोध ।**

**निष्पावो वातपित्तास्रस्तन्यमूत्रकरो गुरु ॥ २० ॥**
**सरो विदाही दृक्शुक्रकफशोफविषापह ।**

**स०**–निष्पावो–राजशिम्बीसञ्ज्ञो, वातादिकर । तथा, गुरु सरो विदाही च । तथा, दृगादीनपहन्ति । सङ्ग्रहोक्त चाम्लपाकत्व कषायमधुरत्व चेह नोक्तम् । यतोऽम्लविपाकित्व ताव द्विदाहित्वादेवास्योक्तम्, कषायस्वादुत्व च शिम्बीधान्यसामान्यगुणकथनेनैव । कृष्णात्रेयस्त्वाह–"निष्पावा मधुरा रूक्षा सकषाया विदाहिन । उदावर्ते प्रशस्यन्ते गुरवो वातपित्तला ॥"इति ।

**आ० र०–निष्पावगुणानाह–निष्पाव इति । निष्पावो–वल्लः ।**

**माषः स्निग्धो बलश्लेष्ममलपित्तकर[१] सरः ॥ २१ ॥**
**गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ।**

**स०**–माष स्निग्धो बलादिकर । तथा, सरो गुरुरुष्णश्च । तथा, वातहा स्वादुश्च । तथा, शुक्रस्य वृद्धि, शुक्रस्यैव विरेक–बहि प्रेरण, करोति ।

**आ० र०–माषगुणानाह–माष स्निग्ध इति । शुक्रस्यैव वृद्धि, शुक्रस्यैव विरेक–शीघ्रप्रवृत्ति, करोति[२] स तथा ।**

**फलानि माषवद्विद्यात्काकाण्डोलात्मगुप्तयो ॥२२॥**

**स०**–काकाण्डोला चात्मगुप्ता च, तयो फलानि माषवद्विद्यात्–माषसमगुणानि विजानीयात् । काकाण्डोला–कटभी । आत्मगुप्ता–कपिकच्छु ।

**आ० र०–काकाण्डोलात्मगुप्ताफलगुणानाह–फलानीति । एतयो फलानि माषवद्विद्यात् । काकाण्डोला–नि शूका कपिकच्छू । आत्मगुप्ता–कपिकच्छू ।**

**उष्णस्त्वच्यो हिमः[३] स्पर्शे केश्यो बल्यस्तिलो गुरुः ।**
**अल्पमूत्रः कटुः पाके मेधाऽग्निकफपित्तकृत् ॥२३॥**

**स०**–तिल उष्णवीर्य । तथा, त्वच्य । तथा, स्पर्शे शीत । केश्यो बल्यो गुरुश्च । तथा, अल्पमूत्र –अल्पमूत्रकर । पाके कटु । तथा, मेधादीन् करोति । त्वच्यकेश्यबल्या हितार्था यत्प्रत्ययान्ता । स्निग्धत्वमनिलघ्नत्व कषायकटुतिक्तरसत्व नानाजातित्व चेहास्य ग्रन्थकृता लाघवान्नोक्तम् । सङ्ग्रहे तूक्तमेव ( सू अ ७ ) । यथा–"स्निग्धोष्णतिक्तकटुकं[४]कषायमधुरस्तिल । त्वच्य केश्यो गुरुर्बृंष्य स्पर्शशीतोऽनिलापह ॥ अल्पमूत्र कटु पाके मेधाऽग्निकफपित्तकृत् । कृष्ण प्रशस्तस्तमनु शुक्लस्तमनु चारुण ॥" इति । अन्ये त्वनया युक्त्या सङ्ग्रहोक्तमर्थं सङ्गृह्णते । स्निग्धत्व तावत्तिलस्य तैलेषु मुख्यस्य स्नेहस्य योनिभूतत्वात्सिद्धम्, कफपित्तकृदिति वचनात्स्निग्धत्वाच्च सामर्थ्याल्लब्ध वातघ्नत्वम्, कषायस्वादिति शिम्बीधान्यसामान्यगुणकथनेन कषायस्वादुत्व लब्धमिति । एतदेवोररीकृत्य व्रणप्रतिषेधे वक्ष्यति ( हृ उ अ २५।५४ )–कल्क सरोहण कुर्यात्तिलाना मधुकान्वितम् । स्निग्धोष्णतिक्तमधुरकषायत्वे स सर्वजित् ॥" इति ।

**आ० र०–तिलगुणानाह–उष्ण इति । उष्ण –उष्णवीर्य । त्वच्य –त्वग्दोषहर , बहि प्रयोगात् । "कुष्ठ तत्कार्यपि तिलो हन्ति भल्लातकै सह ।" इति सङ्ग्रहे ( सू अ ७ ) कुष्ठकर्तृत्वश्रवणात् । ननु, "तिलो विपाके मधुरोऽतिबल्य स्निग्धो व्रणे लेपन[५] एव पथ्य ।" इति सुश्रुतेन ( सू अ ४६।३९ ) विपाके मधुरत्वमुक्तम्, इह तु कटुकत्वमिति विरोध । मैवम् । रसवदविरोध । एकस्मिन् द्रव्ये हि बहवो रसा अनुभूयन्त इति । भिन्नतिलयोर्भिन्नरसयोर्वा विपाक । स च कृष्ण श्रेष्ठ । उक्त च सङ्ग्रहे ( सू अ. ७ )–"कृष्ण प्रशस्तस्तमनु शुक्लस्तमनु चारुण ।" इति ।**

**स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरु ।**
**दृक्शुक्रहृत्कटु पाके, तद्वद्वीजं कुसुम्भजम् ॥२४॥**

**स०**–उमा–अतसी, स्निग्धा स्वाद्वादिगुणयुक्तोष्णवीर्या च । सा श्लेष्मपित्तयो कर्त्री च । तथा, दृष्टिं शुक्र च हरति । कटुपाका च । तथा–उमया तुल्य वर्तते–तद्वत्, उमासमा नगुण कुसुम्भबीजमित्यर्थ ।

**आ० र०–अतसीगुणानाह–स्निग्धोमेति । उमा–अतसी । ननु, "स्निग्धोष्णा कफवातघ्नी सतिक्ता मधुराऽतसी ।" इति खारणादिना श्लेष्मघ्नत्वमुक्तम्, इह तु श्लेष्मलत्वमिति विरोध । मैवम् । विषयभेदात् । श्लेष्मघ्नत्व वातससृष्टविषयम् । श्लेष्मलत्व पित्तससृष्टविषयम् । अत एव सुश्रुतेन कफघ्नत्व नोक्तम् ( सू अ ४६।४९)–"उष्णाऽतसी स्वादुरसाऽनिलघ्नी पित्तोल्बणा स्यात्कटुका विपाके ।" इति ।**

कुसुम्भबीजगुणानाह–तद्वदिति । तद्वत्–उमावत् । तत्पुन कफघ्नम् । "कटुर्विपाके कटुक कफघ्नो विदाहिभावादहित कुसुम्भ ।" इति सुश्रुतोपदेशात् ( सू अ ४६।४८ ) । अतिदेशादुपदेशो हि बलवान्[६] ।

**माषोऽत्र सर्वेष्ववरो, यवकः शूकजेषुँ[७] च ।**

---

१ 'त्तास्रकृत्त' क.ञ । २ 'तीति स' ग. । ३ 'हिमस्पर्श' आ.क ।

१ 'टुक कषा' ठ स ह्र । २ 'मेध्य केश्यो गुरुवर्ण्य ' स ह्र । ३ 'सङ्गृह्णन्ति' ट । ४ 'रो बलिष्ट ' ख घ ङ स सु । ५ 'रोपण' क ञ । 'व्रणारोपण' ग । 'व्रणालेपन' स सु । ६ 'बली' क ग । ७ 'जेष्वपि' आ ।

**स०**–अत्र–शिम्बीधान्येषु, माषोऽश्रेष्ठ । शूकजेषु–शूकधान्येषु, यवकोऽश्रेष्ठ ।

**आ० र०**–माषस्य सर्वधान्यावरत्वमाह–माषोऽश्रेति । यवकस्य शूकधान्येष्ववरत्वमाह–यवक शूकजेष्विति । चकारोऽवरत्वाकर्षणार्थ ।

**नवं धान्यमभिष्यन्दि, लघु संवत्सरोषितम् ॥२५॥**
**शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम् ।**

**इति शिम्बीधान्यवर्गः ।**

**स०**–नव–प्रत्यग्र, धान्यमभिष्यन्दि–आभिमुख्येन स्यन्दयति । ताच्छील्ये णिनि । मालिन्यात्स्रोतसा स्रुतिरूप श्लेष्माण करोतीत्यर्थ । अर्थात्पुराणमनभिष्यन्दि । सवत्सरोषित–वर्षातीत, लघु भवति । नव चार्थाद्गुर्वित्यनुक्तमप्युक्त भवति । तन्त्रान्तरेऽप्युक्तम्–"वर्षस्थित सर्वमन्न परित्यजति गौरवम् । न तु त्यजति तद्वीर्य, वीर्य मुञ्चत्यत क्रमात् ॥" इति । शीघ्रेत्यादि । लघ्वित्यनुवर्तते । सूप्य–मुद्गादि यच्छीघ्रजन्म, तल्लघु भवति । तथा, विगततुष युक्त्या भर्जित–भृष्ट लघु भवति । सङ्ग्रहे त्वेवमुक्तम् ( सू अ ७ )–"नव धान्यमभिष्यन्दि सेव्य केदारज च यत् । लघु वर्षोषित दग्धभूमिज स्थलसम्भवम् ॥" इति । इति शिम्बीधान्यवर्ग ।

**आ० र०**–नवधान्यगुणानाह–नव धान्यमिति । अभिष्यन्दि–स्रोत स्रावि ।

पुराणधान्यगुणानाह–लघु सवत्सरोषितमिति । सवत्सरोषित–सवत्सरमेवोषितम्, सवत्सरद्वयाद्युषितस्य निर्वीर्यत्वात् । यदाह खारणादि –"वर्षस्थित सर्वधान्य परित्यजति गौरवम् । न तु त्यजति तद्वीर्य, वीर्य मुञ्चत्यत क्रमात् ॥" इति ।

शीघ्रजन्मादिसूप्यगुणानाह–शीघ्रजन्मेति । सूपे हित–सूप्य शिम्बीधान्यम्, तथा–तद्वत्, लघु इत्यर्थ । शीघ्र–अल्पेन कालेन, जन्म–निष्पत्तिर्यस्य तत्तथा । निस्तुष–अपनीतत्वक् । युक्त्या–सम्यग्योगेन, भर्जित–द्रव विना स्वेदितम् । नवस्याभिष्यन्दित्वात् पुराणस्यानभिष्यन्दित्वम् । पुराणादीना लघुत्वात्तद्विपरीताना गुरुत्वमर्थसिद्धम् । सङ्ग्रहे तु ( सू अ ७ )–"हरितास्तेष्वपि वरा, मकुष्ठा. कृमिकारिण । वर्ण्या पर प्रलेपाद्यैर्मसूरा ग्राहिणो भृशम् ॥ कुशाम्रशिम्बी मधुरा वातपित्तहरा हिमा । मधुरा शीतला गुर्व्यो बलघ्न्यो रूक्षणात्मिका ॥ स्नेहाढ्या बलिभिर्भोज्या विविधा शिम्बीजातय ।" इति । इति शिम्बीधान्यवर्ग ।

निर्दिष्टे शूकशिम्बीधान्ये । तयोश्च सस्कृतयोरुपयोग इति कृतान्नवर्ग प्रारभ्यते—

**अथ कृतान्न( पक्वान्न )वर्गः ।**

**मण्डपेयाविलेपीनामोदनस्य च लाघवम् ॥ २६ ॥**
**यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः ।**
**तृड्ग्लानिदोषशेषघ्न पाचनो धातुसाम्यकृत् ॥२७॥**
**स्रोतोमार्दवकृत्स्वेदी सन्धुक्षयति चानलम् ।**

**स०**–मण्डादीना यथापूर्वं लाघवम् । तेनौदनमपेक्ष्य लघ्वी विलेपी, ततोऽपि पेया, पेयातो मण्डो लघुतर इत्यर्थोऽवतिष्ठते । मण्डपेयाविलेप्योदनाना यथापूर्व लाघवमित्येव वक्तव्ये यदत्रौदनस्य पृथक्पाठ, स इद ज्ञापयति,–मण्डादयो लाजोपादाना वेद्या, न तु तण्डुलोपादाना, यथा–ओदन, इति । तथा च मुनि ( च सू अ २७।२५२ )–"शृत पिप्पलिशुण्ठीभ्या युक्तो लाजाम्बुदाडिमै । मण्ड सन्दीपयत्यग्निं वात चाप्यनुलोमयेत् ॥" इति । तदुक्तम्–"द्रव्यस्यार्धपल दत्त्वा तोयस्य प्रस्थमावपेत् । अर्धशेष गृहीत्वा तत्कर्षौ द्वौ दाडिमस्य च ॥ युक्त सैन्धवविश्वाह्वधान्यकै शाणमात्रकै । द्विकर्षमात्रैर्लाजैश्च भूय सक्वथित च तत् ॥ पिप्पलीजीरकाभ्या च शाणैकेनावचूर्णितम् । पेयास्वेष विधि कल्प्यो दाडिमादिकृतास्वपि ॥" इति । तथा ( सुश्रुते सू अ ४६।३४५ )–"सिक्थैर्विरहितो मण्ड पेया सिक्थसमन्विता । घनसिक्था विलेपी स्याद्यवागूर्विरलद्रवा ॥" इति । अन्ये तु मण्डलक्षण पेयालक्षण चान्यथैवेच्छन्ति । तथा तल्लक्षणम्–"लाजाम्बुसैन्धवकणाधान्यनागरदाडिमै । युक्तो विमृदित पूतो मण्ड सस्कृत उच्यते ॥ निर्द्रव्या प्राकृता पेया तक्रदाडिमतण्डुलै ।" इति । सामान्यपेयायाश्च तक्रदाडिमलाजादिसाधिताया गुणनिर्देशोऽयम्, न तु विशिष्टाया ज्वरचिकित्सादिविहिताया इति द्रष्टव्यम् । तस्यास्तु तत्रैवेत्यर्थ, विशेषग्रहणात्कर्मान्तरनिर्देशाच्च । तत्र–तेषु मण्डादिषु मध्ये, मण्ड शिव । तथा, वातानुलोमन । तथा, तृष ग्लानि दोषशेष च हन्तीति तृड्ग्लानिदोषशेषघ्न । "अमनुष्यकर्तृके च" इत्यत्र ठक् । दोषस्य शेषो दोषशेष । एष एव हि विहितवमनस्य विहितविरेचनस्य वा किञ्चिच्छेषो यो दोष, तस्य । दोषशेषेति वचनज्ञापकात् कृतवमनविरेचनस्य दोषशेषकरणम् । तेन च वमनकर्मणि विरेचनकर्मणि वा कर्तव्येऽतियोगभयात् दोषशेष कार्य, इत्ययमर्थो युक्त्या प्रतिपादित । तथा, मण्ड पाचनो धातुसाम्यकरश्च । तथा, स्रोतसा मार्दव करोति । तथा, स्वेदयतीति स्वेदी, वह्नि च दीपयति ।

**आ० र०**–अथ कृतान्नवर्ग । तत्र मण्डादीनां लघुत्वे तारतम्यमाह–मण्डपेयेति । असिक्थो द्रवो–मण्ड, ससिक्थो–यवागू । सा द्विविधा,–अल्पसिक्था–पेया, बहुसि-

१ 'वर्षोषित च यत्' आ । २ अस्याग्रे "यवगोधूममाषाश्च तिलाश्चाभिनवा हिता । पुराणा विरसा सूक्ष्मा न तथार्थकरा मता ॥" इत्यधिको नवधान्यदोषापवादभूतोऽयश्लोक, आ पुस्तके । ३ 'वर्षोषित' आ । 'वर्षातीत' इति क्वचित् । ४ 'याद्युषित' क ग । ५ 'नव धान्य' क ग । ६ 'ततो' ख घ ङ । ७ 'त परम्' क ग ञ । 'त्यनुक्रमात्' ख घ ङ । ८ 'वर्ण्या' क ख ग घ ङ. । ९ 'कोशा' क.ग.ञ. ।

१ 'जाम्लदा' स च. । २ 'बहुसिक्था' स सु ।

क्था-विलेपी । अद्रवाणि सिक्थानि-ओदन । यथापूर्व-ओदनाद्विलेपी लघु , तत पेया, ततो मण्ड इति ।

मण्डगुणानाह-शिवस्तत्रेति । शिव -आरोग्यप्रद । वमनलङ्घनाद्यवशिष्टो दोषो-दोषशेष । धातुसाम्यकृत्-लङ्घनादिकृतधातुवैषम्यशमनात् । स्रोतोमार्दवकृत्-लङ्घनादिकृत स्रोत काठिन्यशमनात् । स्वेदी-स्वेदवहस्रोतोरोधशमनात् ।

**क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ॥ २८ ॥**
**मलानुलोमनी पथ्या पेया दीपनपाचनी ।**

**स०**-क्षुच्च तृष्णा च, ताभ्या ग्लानि , सा च दौर्बल्यं च कुक्षिरोगश्च ज्वरश्च, तानपहन्ति या सैवभूता पेया । दौर्बल्यं-कार्श्यम् । तथा, मलान्-वातादीन्, अनुलोमयति-स्वमार्गस्थान् करोति । तथा, पथ्या-शरीरस्य हिता । तथा, दीपनी चासौ पाचनी चेति "पुवत्कर्मधारय" इति पुवद्भाव ।

**आ० र०**-पेयागुणानाह-क्षुत्तृष्णेति । कुक्षिरोग -अतीसार । पथ्या-औषधरूपत्वात् ।

**विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ॥२९॥**
**व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ।**

**स०**-विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता च । व्रणश्चाक्षिरोगश्च सशुद्धश्च दुर्बलश्च स्नेहपायी च, तेषा हिता । व्रणाक्षिरोगशब्दौ मत्वथायाकारान्तौ ।

**आ० र०**-विलेपीगुणानाह-विलेपीति । व्रणादीना हिता । सशुद्ध -सम्यक्कृतवमनादि । य स्नेहनार्थं प्रत्यह स्नेह पिबति स -स्नेहपायी ।

**सुधौतः प्रस्रुतः स्विन्नोऽत्यक्तोष्मा चौदनो लघुः ३०**
**यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः ।**
**विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ॥ ३१ ॥**

**स०**-ओदन सुष्ठु धौतस्तथा प्रस्रुतो-निश्चोतित स्विन्नोऽत्यक्तबाष्पश्च लघुर्भवति । यश्चौदन आग्नेयौषधाना-मरीचचित्रकादीना क्वाथेन साधित , सोऽतिलघु । तथा, भृष्टास्तण्डुला यस्मिन्नोदने सोऽतिलघुतम । यथोक्तलक्षणादोदनाद्विपरीतो-योऽधौतादि , स गुरु । क्षीरमांसादिभि -मधुरैर्यश्च साधित , सोऽतिगुरु ।

**आ० र०**-ओदनगुणानाह-सुधौत इति । सुधौतादिविशिष्ट ओदनो लघु । तद्विपरीत क्षीरादिसाधितश्च गुरु । सुधौत -सम्यक्प्रक्षालिततण्डुल । प्रस्रुत -सम्यक्प्रस्रावित मण्ड । स्विन्न -सम्यक्पक्व । अत्यक्तोष्मा-शीतत्वमप्राप्त । आग्नेयौषधक्वाथसाधित -चित्रकादिक्वाथ द्रवस्थाने दत्वा साधित । भृष्टतण्डुल -भृष्टैस्तण्डुलै साधित । विपरीत -अधौततण्डुलादि । यश्च क्षीरादीनि द्रवस्थाने दत्वा साधित । मासशब्देनात्र मासरस । आद्यशब्दात्स्नेहादय । क्षीरादिसाधने उदकप्रक्षेप्यमेव । उक्त च सङ्ग्रहे (क अ ८)-"क्षीरादिसाधित द्रव्य न सम्यङ्मुक्तरस भवतीति वारिक्वाथपूर्वक क्षीराद्यैस्तदुपदेशेऽनुपदग्ध क्वाथयेत् ।" इति ।

**इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ।**

**स०**-इति-अनया दिशा, सर्व-पेयादिक पूर्वोक्त वक्ष्यमाण च भक्ष्यादिक, द्रव्येण क्रियया सयोगेन मानेन चादिशेत् । तत्र द्रव्यतो यथा-ओदनस्य रक्तशाल्यादिजस्य लाघवम् , यवकादिजस्य तु गौरवम् । क्रियातो यथा-साक्षादग्निपाकादिसस्काराच्छूल्यस्य मासस्य लघ्वादिगुणयोग , अपरस्य त्वन्यथात्व दृश्यते । तथा चोक्त तन्त्रान्तरे-"वृष्य वातहर बल्य पथ्य शूल्यामिष लघु । अपथ्य गुरु विष्टम्भि मास यच्च रसोद्धृतम् ॥" इति । तन्त्रान्तरे चोक्तम्-"स्विन्न मास गुरु स्तम्भि शूलपक्व त्रिदोषजित् ।" इति । क्रिया-सस्कार इत्यर्थ । योग -सयोग , तेन यथा-आग्नेयचित्रकाद्यौषधक्वाथै साधितस्य लाघवम् । मानतो यथा—बहुभिर्लघुभिरल्पैश्च गुरुभिर्युक्तैर्लघुरेव, विपरीतैस्तु विपरीत एव । आद्यग्रहणेन देशादिपरिग्रह । जाङ्गलदेशप्रभवतण्डुलकृतो लघु , आनूपदेशतण्डुलकृतो गुरुरित्यादि बोध्यम् ।

**आ० र०**-ओदनप्रसङ्गादोदनोदाहरणा परिभाषामाह-इति द्रव्येति । इति-एवमोदनवत् । द्रव्यादीना कारणाना स्वरूप शास्त्रेण बुद्ध्वा कार्याणा स्वरूपमकथितमपि स्वबुद्ध्या निर्धार्य मन्दबुद्धीना कथयेदित्यर्थ । तत्र, कार्यत्वेन परिणत कारण-द्रव्यम् । तत्परिणामहेतु कर्तृव्यापार -क्रिया । प्रधानद्रव्ये द्रव्यान्तरसम्पर्को-योग । सयोगिनां न्यूनाधिकसमत्वं-मानम् । आद्यशब्दाद्देशकालौ । तत्र, द्रव्यस्योत्पत्तिस्थितिपरिणामस्थान-देश । उत्पत्त्यादिसमय आमाद्यवस्थाश्च-काल । तत्र, द्रव्येणादेशो यथा-रक्तशालीनामोदन पथ्यो, यवकानामपथ्य । क्रियया यथा-भृष्टविदलितनिस्तुषीकृताना सूप्याना सूपो लघु , इतरेषा गुरु । योगेन यथा-मरीचादियुक्ता मांसभक्ष्या लघव , मरीचाद्ययुक्ता गुरव । मानेन यथा-मिश्रकौदने मुद्गाद्यल्पत्वबहुत्वाभ्यां लघुत्वगुरुत्वे । उत्पत्तिदेशेन यथा-दग्धावनिजाताना शालीनामन्न लघु, इतरेषा गुरु । उक्त हि सुश्रुतेन (सू अ ४६।१५)-"दग्धायामवनौ जाताः शालयो लघुपाकिन ।" इति । स्थितिदेशेन यथा-दुर्भा-

१ 'स्विन्नस्त्यक्तोष्मा' इतीन्दुसम्मत सङ्ग्रहपाठ । तट्टीका च 'स्विन्न त्यक्तबाष्पश्च लघु । ऊष्मा-बाष्पो जलभागो गुरुत्व हेतु । अत्युष्णातिशीतयो प्रमाणान्तरान्निषेध ' इति । तदुभयमपि चिन्त्यम्, चरकसुश्रुतादिविरुद्धत्वात् । तथा च चरक (सू अ २७।२५३ )-"सुधौत प्रस्रुत स्विन्न सन्तप्तश्चौदनो लघु ।" इति । सुश्रुत (सू अ ४६।३४७)-"स्विन्न सुप्रस्रुतस्तूष्णो विशदस्त्वोदनो लघु ।" इति । २ 'स्त्वोदनो' झ ञ. । ३ 'क्वाथे' आ । ४ 'तण्डुलै ' आ । ५ 'सोऽपि ल' ट. । ६ 'सुधौतत्वादि' ञ. । ७ 'प्रसारित' क.ख घ झ.ञ ।

१ 'दिसहित च द्रव्य' स द्व । २ 'शूले' ट । ३ आद्यशब्देन देशकालोपयोगसस्थोपयोक्तृणा चरकोक्ताना ( वि अ १।२५ ) ग्रहणम् । ४ 'सञ्ज्ञादुदाहरण परिभाष्याह' ख ग घ झ ।

जनस्थाभिर्द्राक्षाभि कृत पानक दोषलम्, इतराभिरदोषलम्। उक्त हि (सङ्ग्रहे सू अ ७)-"दुर्भाजनस्था द्राक्षाऽम्ला दोषला च प्रजायते।" इति। परिणामदेशेन यथा-मृन्मये पात्रे सिद्धाना तन्दुलानामोदनो गुरु, ताम्रमये लघु। उत्पत्तिकालेन यथा-आर्तवेन दिव्योदकेन सिद्धमन्न पथ्यम्, अनार्तवेनापथ्यम्। स्थितिकालेन यथा-रात्रिमुषितेन श्रुतशीतेनालोडितमपथ्यम्, इतरेण पथ्यम्। परिणामकालेन यथा-शीघ्रजन्मना सूप्येन कृत सूपो लघु, चिरजन्मना गुरु। आमाद्यवस्थाकालेन यथा-आमेन शुष्केण वा मूलकेन कृतो यूष पथ्य, जीर्णेनार्द्रेण वा कृतोऽपथ्य। इत्यादि स्वबुद्ध्या सर्वमूह्यम्[1]।

**बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः॥ ३२॥**

स०-रस इति मांसरस, आदिशब्दलोपात्। स बृंहणादिगुणयुक्त। कृताकृतस्य च रसस्याय गुणनिर्देशो बोध्य। रसो हि स्नेहशुण्ठ्यादियुत-कृत इत्युच्यते, विपरीतस्तु-अकृत। तत्र कृतस्य तन्त्रान्तरे विधानमुक्त गुणाश्च। यथा-"छागल सक्थिज मास निरस्थि तैत्तिर तथा। चतुष्पलोन्मित[2] सूक्ष्म कल्पित क्षालित जले॥ पिप्पलीपिप्पलीमूलशुण्ठीचित्रकधान्यकै। द्विशाणै सयुते तोये क्वाथ्य सार्धाढकोन्मिते॥ मासेऽस्मिन् द्विपल तत्र दाडिमांत्कुट्टितान्[3] क्षिपेत्। त रस मर्दित पूत हिङ्गुसैन्धवजीरकै॥ युक्त सुधूपित[4] पथ्य शुद्धाना शुद्धिकाङ्क्षिणाम्। शुष्यता व्याधिमुक्ताना व्रणिना वातरोगिणाम्॥ भग्नविश्लिष्टसन्धीना क्षीणधात्विन्द्रियौजसाम्।" इति। तन्त्रान्तरे चोक्तम्-"रसस्तत्र[6] वरोऽनम्ल शाकुनो बृंहण सर। तक्रसिद्धस्तु विष्टम्भी लघुर्वातकफापह॥ फलाम्लगोरसोदार सविश्वाजाजिधान्यकम्। स्निग्ध मास हितं बल्य बृहण रोचन गुरु॥ कासमर्दकधान्याम्लदाडिमादिरज कृता। लेहास्तक्रादिजाश्चान्ये योनिवद्गुरुरोचना॥ मालुधानीयवासादिपुष्पैर्योऽतिगुण खल। फलमूलैर्घनादान व्यञ्जन पाकतो घनम्॥ लेहवत्खल इत्यन्ये दोषल स्वस्वयोनिवत्। तद्वच्च तिलकल्काम्लप्राय काम्बलिको मत॥ कट्वर कफजिद्ग्राही पित्तलो रोचको लघु। मांसादजाजिशुण्ठ्यादिगलित सट्टको लघु॥" इति।

**आ० र०-मासरसगुणानाह-बृहण इति। प्रीणन-तृप्तिजनन। रसो-मासरस। उक्त हि सङ्ग्रहे (सू अ ७)-"पिशितेन रसस्तत्र, यूषो धान्यै, खल फलै। मूलैश्च तिलकल्काम्लप्राय काम्बलिक स्मृत॥" इति। स च कृताकृतदकलावणिकभेदात्त्रिधा। उक्त हि सङ्ग्रहे (सू अ ७)-"ज्ञेया कृताकृतास्ते तु स्नेहादियुतवर्जिता। अल्पमांसादय स्वच्छा दकलावणिका स्मृता॥" इति।**

१ 'सर्व स्वयम्' ग। २ 'ष्पलान्वित' ठ। ३ 'मान्कुट्टितान्' ठ। ४ 'प्रधूपित' ठ। ५ 'कृशाना' ठ.। ६ 'रसो गुरुतरोऽनम्ल शुक्लो बृहण परम्।' ट। ७ 'रसादान' ट। ८ 'सोऽपि साजाजि' ट.। ९ 'मासोदकस्वच्छा' अ.। 'मासपट्वस्नेहा' क।

तथा, तनुसान्द्रभेदादम्लस्वादुभेदाच्च द्विधा। उक्त हि सङ्ग्रहे (सू अ ७)-"विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम्। गौरव तनुसान्द्राम्लस्वादुष्वेषु पृथक् पृथक्[1]॥" इति। सङ्ग्रहे तु (सू अ ७)-"शुष्यता व्याधिमुक्ताना[2] नराणा शुद्धिकाङ्क्षिणाम्। कृशक्षामक्षतोरस्कक्षीणधात्विन्द्रियौजसाम्॥ दृष्टिश्रवणवन्ध्यायुर्बलवर्णस्वरार्थिनाम्[3]। भग्नविश्लिष्टसन्धीना व्रणिना वातरोगिणाम्[4]॥ हृद्य पथ्य पर वृष्यो बृहण प्रीणनो रस।" इति। शुष्यता-वृद्धि त्यजताम्। कृशाना-स्थूलत्व त्यजताम्। क्षामाणा-बल त्यजताम्।

**मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम्।**

स०-मौद्गो रसो-यूषो, व्रणिना कण्ठरोगिणा अक्षिरोगिणा च पथ्य। अस्य च सस्कृतस्य विधानमुक्तम्-"मुद्गाना द्विपल तोये श्रुतमर्धाढकोन्मिते। पादस्थ मर्दित पूत दाडिमस्य पलेन तु। युक्त सैन्धवविश्वाह्वधान्यकै पादकार्षिकै। कणाजीरकयोश्चूर्णाच्छाणेकेनावचूर्णितम्। सस्कृतो मुद्गयूषोऽय पित्तश्लेष्म[5]हरो मत।" तथा-"पटोलपत्राच्छाणे[6] द्वे मुद्गाना द्विपल जले। द्व्यध्याद्वात्रिंशद्गुणिते अर्धस्थे[8] दाडिमात्पलम्॥ कर्षमामलकाना च क्षिप्त्वा पुनरधिश्रयेत्। पूर्व तत्सैन्धवाद्यैश्च युक्तमाज्येन [9]योजितम्[10]॥ पटोलपत्रकाख्योऽय यूष पित्तोत्थरोगजित्। निम्बपत्रैर्निम्बयूषमेवमेव प्रकल्पयेत्॥ मूलकाच्छुण्ठिका खिन्ना घृतभृष्टा[12] सधान्यका। हिङ्गुजीरकसयुक्तौ[13] ततो मथितदाडिमे॥ ससैन्धवे विनिक्षिप्य पुनरग्नावधिश्रयेत्। तावद्यावन्मृदूभूत ततत्र्यूषणसयुतम्॥ सुधूपित हिङ्गुघृतैश्चातुर्जातावचूर्णितम्। शुण्ठीरस दीपनीय वातश्लेष्मामयापहम्॥ अकृताकृतयूषाच्च रसाच्च जलसावितात्। स्नेहाम्लपटुयुक्ताच्च पूर्व पूर्वो लघुर्मत॥ (सङ्ग्रहे सू अ ७)-विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम्। गौरव तनुसान्द्राम्लस्वादुष्वेषु पृथक् तथा[14]॥" तथोक्तम् (सङ्ग्रहे सू. अ. ७)-"खलकाम्बलिकौ हृद्यौ छेदिनौ[15] स्रोषधातुगौ। पिशितेन रसस्तत्र, यूषो धान्यै, खल फलै॥ मूलैश्च तिलकल्काम्लप्राय काम्बलिक स्मृत। ज्ञेया कृताकृतास्ते तु स्नेहादियुतवर्जिता॥ अल्पमासादय स्वच्छा दकलावणिका स्मृता।" इति। स्वल्पेन मासेन शुण्ठ्यादिभि स्वल्पै स्वच्छा ये क्रियन्ते, ते दकलावणिका बोध्या। एव यूषे यत्र धान्यमल्प, खलादौ वा मूलादीन्यल्पानि, तत्रापि[16]

१ 'तथा' स द्व। २ 'व्याधियुक्ताना' ख घ झ स सू। ३ 'णपुष्ट्यायु' क। 'णवृद्ध्यायु' झ। ४ 'भग्नाविशिष्ट' स स। ५ 'श्चूर्णशा' ट ड। ६ श्लेष्मोत्थरोगनुत्' ट। ७ 'च्छाणार्धे' इति क्वचित्। ८ 'क्वाथ्य द्वात्रिंशगुणिते' ट। ९ 'अतश्च' ठ। 'प्रदद्यादाडि' ड। १० 'भर्जितम्' ट। 'भोजितम्' ड। ११ 'पटोलामलका' ट। 'पटोलफलका' ठ। 'यूष पटोलकाख्योऽय वातपि' ड। १२ 'ष्टा-त्सधान्यकात्' ट। १३ 'क्तात्ततो' ट। १४ 'पृथक्' ट। १५ 'साधितौ' ठ। १६ 'तस्यापि' ठ।

दकलावणिकत्व बोध्यम् । तन्त्रान्तरे चोक्तम् ( सुश्रुते सू अ ४६।३८० )–' अथ गोरसधान्याम्लफलाम्लैरन्वित च यत् । यथोत्तर लघु हित सस्कृतासस्कृत तथा ॥ प्रभूतास्त्वमलो यूष सूपाल्घुतर स्मृत । सूपस्तु रसयूषाभ्या स्थैर्याद्गुरुतरो मत ॥ त सरोगो न चाश्नीयान्न चाल्पाशी कथञ्चन ।'' इति ।

**आ० र०–मुद्गयूषगुणानाह–मौद्ग इति । रस इत्यनुवर्तते । मौद्गो रसो–मुद्गयूष , "यूषो धान्यै " ( स सू अ ७ ) इत्युक्तत्वात् । सशुद्धादीना पथ्यो–हित । कण्ठाक्षिभ्यां रोगशब्द सम्बध्यते ।**

**वातानुलोमी कौलत्थो गुल्मतूनीप्रतूनिजित् ॥३३॥**

**स०**–कौलत्थो यूषो वातमनुलोमयति । गुल्मादीश्च जयति । तूनीप्रतूनीरोगौ–गुल्मनिदाने वक्ष्यमाणलक्षणौ ।

**आ० र०–कुलत्थयूषगुणानाह–वातानुलोमीति । तूनीप्रतून्यौ–गुल्मनिदाने ( हृ नि अ ११।६१ ) वक्ष्येते ।**

**तिलपिण्याकविकृति· शुष्कशाक विरूढकम् ।**
**शाण्डाकीवटकं दृग्घ्न दोषल ग्लपन गुरु ॥ ३४ ॥**

**स०**–तिलस्य विकृति पिण्याकस्य च । तथा शुष्कशाकादि दृष्टिघ्न त्रिदोषकर ग्लानिकर गुरु च । अङ्कुरित सस्य–विरूढकम् । शाण्डाक्या सह सयुत माषादिवटक–शाण्डाकीवटकम् ।

**आ० र०–तिलविकृत्यादीना गुणानाह–तिलपिण्याकविकृतिरिति । तिलविकृति –मयूराण्डकादि । उद्धृततैलस्तिलादिपिण्ड –पिण्याक , तद्विकृति –पिण्डवटकादिदेशीया । शुष्कशाक–शुष्कवार्ताककचरिकादि । विरूढक–अङ्कुरित धान्यम् । कृतान्नप्रस्तावादङ्कुरितधान्यकृतमन्न ग्राह्यम् । येन वटकेन शाण्डाकी क्रियते तत्–शाण्डाकीवटकम् । दृग्घ्न–दृष्टिनाशनम् । दोषल–त्रिदोषकरम् । ग्लपन–ग्लानिकरम् ।**

**रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ।**

**स०**–रसाला–करमथितेन मरीचशर्करादियुक्तेन दध्ना कृता उल्लेखिकासञ्ज्ञा, बृहणी–देहस्य बृहत्त्वकरी, वृष्यादिगुणयुक्ता च ।

**आ० र०–रसालागुणानाह–रसालेति । मरीचशर्करादियुक्त करमथित दधि–रसाला ।**

**श्रमक्षुत्तृट्क्लमहर पानकं प्रीणन गुरु ॥ ३५ ॥**
**विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ।**

**स०**–पानक श्रमादिहर प्रीणनादिगुणयुक्तम् । प्रीणन–मन-प्रीतिकरम् । यथाद्रव्यगुण च–स्वस्वद्रव्यगुणेन च युक्तम् । पर्पटादीना लाघवादिह गुणा नोक्ता । यथा ( सङ्ग्रहे सू अ ७ )– "पर्पटा लघवो रुच्या लघीयान् क्षारपर्पट । हृद्या वृष्या रुचिकरा गुरवो रागखाण्डवा. ॥ प्रीणना श्रमतृट्छर्दिमदमूर्च्छाश्रमच्छिद ।" इति ।

**आ० र०–पानकगुणानाह–श्रमक्षुत्तृडिति । गुडाम्लिकादिसस्कृतमुदकादि द्रव–पानकम् । यथाद्रव्यगुण–यैर्द्रव्यै क्रियते तद्गुणाननुवर्तते । एतेन सुश्रुतादिभिरुक्ताना द्राक्षादिपानकाना गुणा उक्ता ।**

**लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः ॥ ३६ ॥**
**कासपित्तोपशमना दीपना लघवो हिमाः ।**

**स०**–लाजास्तृडादीश्छिन्दन्ति । कासपित्ते चोपशमयन्ति । तथा, दीपना लघव शीतवीर्याश्च ।

**आ० र०–लाजाना गुणानाह–लाजा इति । भृष्टाना शालीना तण्डुला –लाजा ।**

**पृथुका गुरवो बल्याः कफविष्टम्भकारिणः ॥ ३७ ॥**

**स०**–हरितधान्यानि निस्तुषभृष्टमुशलहतानि–पृथुकाश्चिपिटसञ्ज्ञा गुरुत्वादियुक्ता ।

**आ० र०–पृथुकगुणानाह–पृथुका इति । अशुष्कधान्याना भृष्टास्तण्डुला –पृथुका ।**

**धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः ।**

**स०**–धाना–भृष्टयवादि, विष्टम्भिनी रूक्षादिगुणयुक्ता च ।

**आ० र०–धानागुणानाह–धाना विष्टम्भिनीति । भृष्टयवादिधान्य–धाना । अन्ये तु यवानेव भृष्टान् धानाशब्देनाहु । उलुम्बादीश्च पृथक् पठन्ति । यदाह सुश्रुत ( सू अ ४६।४१० )–"धानोलुम्बास्तु लघव कफमेदोविशोषणा ।" इति । लघव पाके, गुरवो गुणे, स्वमतेन गुरोर्गुणत्वात् ।**

**सक्तवो लघव· क्षुत्तृट्श्रमनेत्रामयव्रणान् ॥ ३८ ॥**
**घ्नन्ति सन्तर्पणाः पानात्सद्य एव बलप्रदाः ।**
**नोदकान्तरितान्न द्विर्न निशायां न केवलान् ॥३९॥**
**न भुक्त्वा न द्विजैश्छित्त्वा सक्तूनद्यान्न वा बहून् ।**

**स०**–सक्तवो लघव , क्षुधादीश्च घ्नन्ति । तथा, उदक-

---

१ 'रम्लित' इति पाठान्तरम् । २ 'ताश्च ये । ०ता ० तास्तथा' ट । ३ 'रसम्' स छ । ४ 'प्रकृतिस्थापनो' ट । ५ 'मौद्गयूष' क ग ञ । ६ 'रोगिशब्द ' ख घ झ । ७ अस्याग्रे "अकृत कृतयूष च तनु सस्कारित रसम् । सूपमम्लमनम्ल च गुरु विद्याद्यथोत्तरम् ॥ रसस्य गुरुत्वागुरुत्वमाह–अकृतमिति ।" इति ञ पुस्तकेऽधिक सटीक श्लोक । ८ 'साण्डाक्ययितत्रादिका–शा' ठ । 'साण्डाक्या स्थापित वटक' ड । ९ 'पिण्डीवटिकादिदेशीय ' ख घ झ । 'पिण्डो वटकादि ' ञ । १० 'धान्यान्न गृह्यते' क ग ञ । ११ 'निकारकम्' क ञ । १२ रसालाया बहव प्रकारा क्षेमशर्मणा क्षेमकुतूहले वर्णिता । तत्र बहुलप्रचाराया पीताया [ आम्ररसाकृते ] रसालाया विधान लिख्यते । तद्यथा–"किञ्चित्कुङ्कुमसम्मिश्र विमस्तु दधि गालितम् । सशर्कर भवेत्पीता पक्काम्ररससन्निभा ॥" इति । अन्यासा विधानानि कुतूहले द्रष्टव्यानि, ४५ पृष्ठे टिप्पण्या च । १३'उल्लिनीसञ्ज्ञा' ट.।

१ 'सयुत' क ग ञ । २ 'भृष्ट सुपुष्पित धान्य लाजेति परिकीर्तितम् ।' आ । ३ 'आर्द्रशालिधान्य मृदुभृष्ट मुसलाघातचिप्पटीभूतावयव पृथुका इत्युच्यते' इति डल्हण । ४'भृष्ट चापुष्पित धान्य धानेति परिकीर्तितम् ।' आ । ५ 'नेत्रगलामयान् ।' अ.क ख घ झ । ६ 'कमिश्रिता ' ठ ।

पीता सन्तर्पणा, सद्य एव बल कुर्वन्ति । ताश्च जलेनान्तरितान्–व्यवहितान्, नाश्नीयात् । अन्यभोजनेषु ह्यन्तरापान विहितम्, न तथा सक्तुषु कार्यमिति बोधयति । [ अपरे त्वेवमाहु –आदौ पिण्डी मध्ये जलमन्ते च पिण्डीत्युदकान्तरिता इति । ] तथा, न द्वि –द्वौ वारौ नाद्यात् । न निशायाम्–रात्र्याम् । न केवलान्–उदकादिरहितान् । न भुक्त्वा–अन्यद्भोजनादि । न द्विजैश्छित्त्वा–दन्तै करस्था पिण्डी छित्त्वेत्यर्थ । बहूश्च सक्तून्नाद्यात् । तन्त्रान्तरे चोक्त रूक्षवातलत्व सक्तूनामिह नोक्तम्, लघुत्वादिनैवावगतत्वात् । ननु, रूक्षवातलत्व चेदभ्युपगम्यते सक्तूनाम्, तत सन्तर्पणा इत्यनुपपन्नम् । सद्य एव बलप्रदा इत्येतदप्ययुक्तम् । भुक्तो ह्याहार परिणमन् रसधातुगतो धातुपुष्ट्ये, नान्यथा । अत्राचक्ष्महे । प्रभावादुभयमप्येतदुक्तम् । सक्तूना ह्ययमचिन्त्य प्रत्यक्षवेद्य प्रभाव, यत्पीता सन्त सद्य सन्तर्पयन्ति । सद्य एव च बल प्रयच्छन्ति । वाजीकरण हि–अपरिणतमेव स्वकार्य जनयति । तथा च मद्य,–अपरिणतमेव मद जनयति । तस्मात्सन्तर्पणत्व बलप्रदत्व चैषामुपपन्नमेव । तन्त्रान्तरे चोक्तम्–"तुल्याज्य सक्तुप्राशस्तु वृष्यो मेदी रसायनम् । ( स सू अ ७ )–'तृट्छर्दिश्रमनुन्मन्थ शीतस्तृष्णानिवर्तक ॥ प्रमेहक्षयकुष्ठानि न च स्युर्मन्थपायिनाम् । निचयात्कठिना गुर्वी पिण्डी प्रोक्ता मृदुर्लघु ॥ सक्तूना द्रवतायोगाल्लघीयस्त्ववलेहिका ।' लाजसक्तुकृताऽपि स्याद्विलेपी तु गरीयसी ॥" इति ।

**आ० र०–सक्तुगुणानाह–सक्तव इति । भृष्टाना निस्तुष यवानां चूर्णं–सक्तव । पीता एव बलप्रदा, न तु भक्षिता लीढा वा । सद्य एव, न तूत्तरकालमित्येवशब्दार्थ । सङ्ग्रहे तु ( सू अ ७ )–"निचयात्कठिना गुर्वी प्रोक्ता पिण्डी लघुर्मृदु । सक्तूना द्रवतायोगाल्लघीयस्त्ववलेहिका ॥ शष्कुलीमोदकादीनां व्याख्यातैव च कल्पना । कर्कन्धुबदरादीना श्रमक्षुत्तृट्क्लमच्छिद ॥ सक्तवोऽम्लरसा हृद्या यथाद्रव्यगुणाश्च ते ।" इति ।**

**सक्तुभक्षण नियमयति–नोदकान्तरितानिति । येषा भोजनमध्ये उदक पीयते ते–उदकान्तरिता । द्वौ वारौ–द्वि । केवलान्–उदकादिरहितान् । द्विजैश्छित्त्वा–करस्था पिण्डी दन्तैर्विच्छिद्य भक्षितान् । बहून्–अतिमात्रान् । उदकान्तरितादीना प्रत्येक निषेधकरणत्वात् पृथक् नकारकरणम् ।**

१ 'पु हि अनुपान हितम्' ट । 'पु हितम्' ड । २ [ ] इति पाठ, ठ ड पुस्तकयोनोपलभ्यते । अपरे–इन्द्रादय । ३ 'करस्थ पिण्ड' ठ ड । ४ 'सद्य एव' ट । ५ 'न्मद्यपीतत्' ठ । 'नुत्सद्य पीत' ड । ६ 'त सद्यो बलप्रद ' स ह्र । ७ 'चूर्ण ' क ञ । ८ 'दीनामाख्या' ख घ झ । ९ 'तैव' क । १० 'विकल्पना' क ग ञ । ११ 'कारण' क ख ग.झ ञ । 'करणात्' ग ।

**पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः ॥४०॥**

**स०**–पिण्याकाख्यो–यस्तिलादीना निष्पीडिततैल कल्को, ग्लपनो–ग्लानिकर । ग्लपन इति ग्लायतेर्णिजन्तात् "ग्लाह्ना–वनुवमा च" इति मित्त्वाद्ध्रस्व, बाहुलकात्कर्तरि ल्युट् । तथा, विष्टम्भी दृष्टिविकारकृच्च ।

**आ० र०–पिण्याकगुणानाह–पिण्याक इति । उद्धृततैलस्तिलादिपिण्ड –पिण्याक । ग्लपनो–ग्लानिकर । दृष्टिदूषण –दृष्टिरोगप्रद ।**

**वेसवारो गुरुः स्निग्धो बलोपचयवर्धनः ।**

**स०**–वेसवारो–नागरधान्यकाजाजिहिङ्गुघृतादिसस्कृत कुट्टित मासम् । स गुरु स्निग्धो बलवर्धन शरीरोपचयवर्धनश्च ।

**आ० र०–वेसवारगुणानाह–वेसवार इति । स्विन्नं पिष्ट गुडजीरकादिविमिश्रित मास–वेसवार । उपचय–वपुष्पुष्टि ।**

**मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ॥ ४१ ॥**

**स०**–मुद्गादिजास्तु वेसवारा ये इण्डरिकादिभिर्द्रव्यै सूक्ष्मच्छिन्नै क्रियन्ते लोके पूरणशब्देन प्रसिद्धा, ते गुरव प्रकृतिद्रव्यगुणाश्च । आदिशब्देन माषादयो गृह्यन्ते । [ अन्ये त्वादिशब्दात् वार्ताकसूरणालुकादीन् गृह्यन्ते । ] तन्त्रान्तरे चोक्तम्–"सपिस्तैलगुडक्षीरैर्यवगोधूमपैष्टिका । पूपा विष्टम्भिन शीता पैष्टिका वातला खरा ॥ वृष्या बल्या सरा माषैर्वातघ्ना मृदुपिच्छिला । यैर्याश्च गुरवो बल्या स्थूलाश्च कठिनाश्च ये ॥ तैलपक्वास्तु त्वग्दृग्घ्ना गरीयासो विदाहिन । कासारसारा लघवो लाजैर्लघुतरा स्मृता ॥ वातपित्तहरो वृष्यो घृतपूर कफप्रद । सद्य प्राणकरो रुच्यो मासलो रक्तलो गुरु ॥ लघीयान् मण्डककृतो गरीयान् फलपूरित । मधुरोत्कारिका वृष्या, कासार पिच्छिलो गुरु ॥ गुडमत्स्यण्डिकाखण्डक्षीरेक्षुरसमाक्षिकै । पूपा शुक्रबलश्लेष्मरुचिदास्तर्पणा क्षणात् ॥ नानाद्रव्यै समायुक्ता पक्वामक्लिन्नभर्जितै । निमर्दको गुरु स्निग्धो वृष्यो बलवता हित ॥ घारिकेण्डरिकापूरवटिकावटकादय । विशदा रोचना बल्या गुरव स्यु स्वयोनिवत् ॥ यावक पिच्छिल स्निग्ध प्लीहोदावर्तहा गुरु । भृष्टखिन्नतया वाऽऽद्यो लघु कण्ठ्योऽतिकासिनाम् ॥ ज्वरोदावर्तमेहाना पथ्यो वातानुलोमन । ओलक हरितावस्थशिम्बिजत्वात्खर गुरु ॥ मन्दजयों यवादित्वादन्योषो बृहण

१ अस्याग्रे "**रौक्ष्याद्विष्टम्भते कोष्ठे विष्टम्भित्वाद्विदह्यते । विदाहात्कुरुते ग्लानि पिण्याको निशि सेवित ॥**" इत्यधिक श्लोक, आ पुस्तके । २ 'डित कल्को' ठ ड । ३ 'हिङ्गुजीरका' ख घ झ । ४ वेसवारलक्षण सुश्रुते ( सू अ ४६।३६५ )–"मास निरस्थि सुस्विन्न पुनर्दृषदि चूर्णितम् । पिप्पलीशुण्ठिमरिचगुडसर्पि समन्वितम् ॥ ऐकध्य पाचयेत्सम्यक् वेसवार इति स्मृत ।" इति । ५ [ ] इति ठ पुस्तके नोपलभ्यते । ६ 'यथास्व' ट. । ७ 'पूप ' ट । ८ 'मन्दजातो' ट. । 'मञ्जर्यास्तयवा' ट ।

सर ॥" इति । सिद्धसारे चोक्तम्–"अत्युष्णा मण्डका पथ्या शीतला गुरवो मता ।" इति ।

**आ० र०–मुद्गादिवेसवारगुणानाह–मुद्गादिजा इति । येषु मासस्थानेषु मुद्गचणकादयो गृह्यन्ते ते–मुद्गादिजा । यथाद्रव्यगुणमनुगच्छन्तीति–यथाद्रव्यगुणानुगा, यावन्त प्रकृतिद्रव्यगुणास्तावन्तस्तेषा भवन्तीत्यर्थ । साकल्येऽव्ययीभाव ।**

**कुकूलकर्परभ्राष्ट्रकन्द्वङ्गारविपाचितान् ।**
**एकयोनील्लघून्विद्यादपूपानुत्तरोत्तरम् ॥ ४२ ॥**

**इति कृतान्न (पक्वान्न) वर्गः ।**

**स०**–अपूपान् कुकूलादिसिद्धान् एकयोनीन्–एककारणान् यथोत्तर लघून्विद्यात् । तेन कुकूलपक्वात् सजातीयादपूपात्कर्परपक्वो लघु । कर्परपक्वाच्च भ्राष्ट्रपक्व । भ्राष्ट्रपक्वात्कन्दुपक्व । कन्दुपक्वाच्चाङ्गारपक्व । कुकूल –अपा बाष्पस्वेद, गोशकृदादिचूर्णसन्तापं इत्यन्ये । कर्परो–ज्वालासन्तप्त कपालम् । भ्राष्ट्रकन्दू प्रसिद्धावेव । अङ्गारा –बृहन्त काष्ठसम्भूता इति । इति कृतान्नवर्ग ।

**आ० र०–पचनपात्रविशेषाद्गुणविशेषानाह–कुकूलेति । कुकूल–श्वभ्रम्, "कुकूल शङ्कुभि कीर्णे श्वभ्रे ना तु तुषानले ।" इति (विश्वप्रकाशमेदिनीकोशयो) वचनात् । तेन च मृन्मयमुत्तानमपूपपचनपात्र लक्ष्यते श्वभ्राकारम् । तदेव न्युब्ज–खर्परम् । तदेव सच्छिद्र–भ्राष्ट्रम् । लोहमय न्युब्ज–कन्दु । अङ्गारशब्देन अङ्गारपूर्णं पात्रम्, हसन्तीत्यादि । पिष्टकृतास्तनवो विस्तृता –अपूपा । एकयोनिग्रहण प्रकृतिद्रव्याद्यविशेषेऽपि पात्रकृतमेवोत्तरोत्तर लाघवमिति ज्ञापनार्थम्, यथा यथाऽग्निसन्निकर्षस्तथा तथा लाघवमित्यर्थ । सङ्ग्रहे तु (सू अ ७)–"प्रभूताभ्यन्तरमलो माषसूप पर स्मृत । खलकाम्बलिकौ हृद्यौ छेदनौ स्रोषधातुगौ ॥ पर्पटा लघवो रूक्षा लघीयान् क्षारपर्पट । हृद्या वृष्या रुचिकरा गुरवो रागखाण्डवा ॥ प्रीणना भ्रमतृट्छर्दिमदमूर्च्छाश्रमच्छिद । तृट्छर्दिश्रमनुन्मन्थ शीत सद्यो बलप्रद ॥ प्रमेहक्षयकुष्ठाद्या न च स्युर्मन्थपायिनाम् ।" इति । इति कृतान्नवर्ग ।**

कृतान्नवर्गादनन्तर मासशाकवर्गयोस्तद्व्यञ्जनभूतयोर्निर्देश । तत्रापि प्राधान्यान्मासवर्गस्य पूर्व निर्देश । प्राधान्यं चास्य भक्तेन सह प्रचुरोपयोगेऽप्यदोषात् । शाकस्य तु बहूपयोगे दोष वक्ष्यति (हृ सू अ ८।३९)–"शाकावरान्नभूयिष्ठ मत्युष्णलवण त्यजेत् ।" इत्यनेन ।—

१ 'खर्पर' इति हेमाद्रिसम्मत पाठ । २ 'कटुङ्गा' अ क ञ. । ३ 'पूपास्तु यथोत्तरम्' ङ । ४ 'कुकूल–गोअरम्, गो' ठ ड । ५ 'न्ताप । क' ठ । ६ 'स्याच्च' ख घ झ ञ । ७ 'कद' क ञ । 'कद्रू' ख घ झ. । ८ 'रुच्या' स द्व । ९ 'कुष्ठानि' स द्व ।

**अथ मांसवर्गः ।**

**हरिणैणकुरङ्गर्क्षगोकर्णमृगमातृका. ।**
**शशशम्बरचारुष्कशरभाद्या मृगाः स्मृताः ॥ ४३ ॥**

**स०**–हरिणादयो दश–मृगा स्मृता । आदिशब्देन कालपुच्छकपृषतादय सङ्ग्रहोक्ता गृह्यन्ते (सू अ ७)–["कालपुच्छकचारुष्कवरपोतशशोरणा । श्वदंष्ट्रारामशरभकोहकारकशम्बरा । करालकृतमालौ च पृषतश्च मृगा स्मृता ॥" इति ।]

**आ० र०–अथ मासवर्ग । मासमष्टधा,–मृगविष्किरप्रतुदबिलेशयप्रसहमहामृगजलचरमत्स्यभेदेन । तत्र मृगानाह–हरिणैणेति । हरिणादयो–मृगा । तेषु हरिण –ताम्रवर्ण । ऐण –कृष्णवर्ण । कुरङ्गो–लघुचतुरगति । ऋक्षो–नीलाण्ड । गोकर्णो–गोसदृशकर्णो रासभाकार । मृगमातृका–लघुपृथूदरा शशाभा । शशो–बिलेशय । शम्बर –विकटबहुविषाण । चारुष्क –चारुतनु । शरभ –अष्टचरण । आद्यशब्दात् पृषतकरालादय । उक्त हि सङ्ग्रहे (सू अ ७)–"कालपुच्छकचारुष्कवरपोतशशोरणा । श्वदंष्ट्रारामशरभकोहुकारकशम्बरा ॥ करालकृतमालौ च पृषतश्च मृगा स्मृता ।" इति ।**

**लाववार्तीकवर्तीररक्तवर्त्मककुक्कुभाः ।**
**कपिञ्जलोपचक्राख्यचकोरकुरुबाहवः ॥ ४४ ॥**
**वर्तको वर्तिका चैव तित्तिरिः क्रकरः शिखी ।**
**ताम्रचूडाख्यबकरगोनर्दगिरिवर्तिकाः ॥ ४५ ॥**
**तथा शारपदेन्द्राभवरटाद्याश्च विष्किरा. ।**

**स०**–तत्र लावादयो वरटान्ता एकविंशति, विकीर्य भक्षणाद्विष्किरा । रक्ते वर्त्मनी यस्यात्यर्थ स रक्तवर्त्मक । वर्तको वर्तिकेति जात्यन्तरम्, न तु वर्तकस्य स्त्री वर्तिका । यथा च बलाका सारिकेति । पुंस्यपि स्त्रीलिङ्गत्वावेशात् । शिखी–मयूर, व्रीह्यादित्वादिनि ।

**आ० र०–विष्किरानाह–लाववार्तीकेति । पक्षिमध्ये ये विकीर्य भक्षयन्ति ते विष्किरा । तत्र लाव –चित्रयोधी । वार्तीको–वनचटक स्वल्पसङ्घातचारी । वर्तीर –अल्पकपिञ्जलसदृश । कुक्कुभो द्विविध,–स्थलजो जलजश्च, रक्तवर्त्मकविशेषणात्स्थलजो गृह्यते । उक्त हि–"नीलच्छवि कृष्णगल स्याद्ग्रामचटकाकृति । कुक्कुभ कुक्कुभाराव स्थलजो**

१ [ ] इति पाठ, ट ठ ड पुस्तकेषु नोपलभ्यते । २ 'ताम्रमृग' क ख घ झ ञ । ३ 'एण कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते । यो न कृष्णो न ताम्रश्च कुरङ्ग सोऽभिधीयते ॥' इति सुश्रुत (सू अ ४६।५७) । ४ 'ऋष्यो' क ग ञ । ५ 'शरभ –अष्टापद उष्ट्रप्रमाणो महाशृङ्ग पृष्ठगतचतुष्पाद काश्मीरे प्रसिद्ध ।' इति डल्हणचक्रौ । ६ 'भकोहकार' स द्व । ७ 'कुर्कु' अ आ ख घ झ ठ । ८ 'कुकुटो बकर कङ्कगो' अ क ञ ठ । ९ 'ख्यव रकगो' आ स द्व । १० 'सार' अ हे स मू । ११ 'वार' आ ठ स.स. । १२ 'द्याश्चेति' अ.ठ.स.द्व. चन्द्र. । १३ 'पुंसोऽपि' द. ।

रक्तवर्त्मक ॥” इति । कपिञ्जलो–गौरतित्तिरि । उपचक्र[1]–श्वभ्रचर कृशचञ्चुर्मेदाविल । चकोरो–रक्ताक्ष[2] । कुरुबाहु[3]–नीलग्रीवो रक्तशिख श्वेतपक्ष । वर्तको–वर्तीरादल्प । तत्सदृशा–वर्तिका, ततोऽप्यल्पा । तित्तिरि –चित्रपक्ष । क्रकर[4]–क्रकचशब्दकारी[5] पीतकृष्णगल कृष्णचञ्चुचरणो रक्तपृष्ठ । शिखी–मयूर । ताम्रचूडाख्य –कुक्कुट । बकरो[6]–बकसदृश । गोनर्दो[7]–गोक्ष्वेड । गिरिवर्तिका–गिरिकाख्या वर्तिकाभेद, पर्वतचारी । सारपद –कङ्कसदृशश्चारुगति । इन्द्राभ –कङ्कसदृशो विविधवर्ण । वरट[8] –हससदृश । आद्यशब्दात्तित्तिरीटादय ।

**जीवञ्जीवकदात्यूहभृङ्गाह्वशुकसारिकाः ॥ ४६ ॥**
**लट्वाकोकिलहारीतकपोतचटकादयः ।**
**प्रतुदाः**

स०–जीवञ्जीवकादय प्रतुदा दश स्मृता । प्रतुद्य–तुण्डेनाहत्य शाल्यादेर्भक्षणात् प्रतुदा. । आदिशब्देन सङ्ग्रहोक्ता खञ्जरीटकपारावतादयो गृह्यन्ते ।

आ० र०–प्रतुदानाह–जीवञ्जीवकेति । प्रतुद्य भक्षयन्तीति प्रतुदा । तत्र जीवञ्जीवक[9]–एकोदरो द्विशिरा । दात्यूह –अन्धकाक । भृङ्गाह्वो[10]–भृङ्गराज कृष्णवर्णचटकसदृश शिखावान् गोप्रेरक । शुक –कीर । सारिका–मेधाविनी । लट्वा–रक्तपुच्छाधोभाग । कोकिल –परपुष्ट । हारीतो–हरितपीत । कपोत –पाण्डुक । चटक[11]–कलविङ्क । आदिशब्दात्खञ्जरीटादय । उक्त हि सङ्ग्रहे ( सू अ ७ )–“शतपत्रो भृङ्गराज कोयष्टिर्जीवजीवक । खञ्जरीटकहारीतदुर्नामा[12]गिरिशा गृहा ॥ लट्वा लडूषो वटहा गोक्ष्वेडो डिण्डिमा[13]णव । जटीदुन्दुभिपा[14]र्काररलोहपृष्ठकुलिङ्गका[15] ॥ सारिकाशुकशाङ्गाख्यचिरीटीककुयष्टिका । मञ्जुलीयकदात्यूहगोपा[16]पुत्रप्रियात्मजा ॥ कलविङ्क परभृत

१ ‘उपचक्र –क्रकरभेद कृष्णचञ्चु [ कृशचञ्चु ] मेदाविल, इति डल्हण । चकोरभेद, इति त्रिविक्रम ’ इति शिवदास । २ ‘चकोरो–रक्ताक्षो विषसूचक स्वनाम्ना ख्यात ’ इति डल्हण । ३ ‘कुरुवाहक –कुरुकुरुक ’ इति डल्हण । ४ ‘क्रकर –लावान्तक कपिञ्जलात्स्थूल, कय इति लोके’ इति डल्हण । ५ ‘कुचशब्द’ ख घ झ । ६ ‘वरको’ क ग ञ । ७ ‘गोनर्द –चित्रगति ’ ञ । ‘गोनर्दो–घोडाकङ्क इति ख्यात ’ इति चक्र । ८ ‘वार’ ग । ९ ‘जीवञ्जीवक –विषदर्शनमृत्यु ’ इति चक्रडल्हणौ । ‘जीव जीवयतीति जीवञ्जीव, तद्दर्शनेन विषनाशनात्’ इति महेश्वर, अ टी । १० ‘भृङ्गराज –भ्रमरको धूम्याटसदृश “पक्षिराज ” इति लोके’ इति डल्हण । ‘कलिङ्गभृङ्गधूम्याटा’ इत्यमर । ११ ‘चटक –देवकुलचटक स्वल्पप्रमाण ’ इति चक्र । १२ ‘नामदुरशा’ ख घ । ‘मारिकृशा’ स ह्व. । १३ ‘मानक ’ क ग झ ञ. । १४ ‘भिफेत्कार’ क ग झ । १५ ‘लिङ्गका ’ ख घ । १६ ‘गोधा’ स स ।

कपोतोऽङ्गारचूडक । पारावत पाणविक इत्युक्ता प्रतुदा द्विजा. ॥” इति ।

**भेकगोधाहिश्वाविदाद्या बिलेशयाः ॥ ४७ ॥**

स०–भेकादयश्चत्वारो बिलेशया । बिले बाहुल्येन शेरते[1] इति बिलेशया । आदिशब्देन श्वेतश्यामशल्यकादयो गृह्यन्ते ।

आ० र०–बिलेशयानाह–भेकगोधेति । बिले–विवरे, शेरते–निवसन्तीति[2] बिलेशया । तत्र भेको–मण्डूक । गोधा–पञ्चनखग्राहिणी । अहि –सर्प । श्वावित्–शलाकासदृशरोमा । आद्यशब्दान्नकुलादय । सङ्ग्रहे तु ( सू अ ७ )–“श्वेत श्यामश्चित्रपृष्ठ कालक काकुली मृग । भेकचिल्लि[3]ककूचीका गोधाशल्यकशाण्डका[4] ॥ वृषाहिकदलीश्वाविन्नकुलाद्या बिलेशया ।” इति ।

**गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ।**
**मार्जारमूषकव्याघ्रवृकबभ्रुतरक्षवः ॥ ४८ ॥**
**लोपाकजम्बुकश्येनचाषवान्तादवायसाः ।**
**शशघ्नी[6]भासकुररगृध्रोलूककुलिङ्गकाः ॥ ४९ ॥**
**धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ।**

स०–गवादय प्रसहा । प्रसह्य–आहत्य भक्षणात् प्रसहा । मृगाश्च पक्षिणश्च मृगपक्षिण, केचिन्मृगा केचित्पक्षिण इत्यर्थ । अश्वतरो–वेगसर । अश्व –तुरग । बभ्रु –जाहको, नकुल इत्यन्ये । लोपाको–लोमश । जम्बुक –शृगाल । श्येनो–गरुडाकृति । चाष –किकीदिवि । वान्ताद –श्वा । वायस –काक । उलूक –काकारि । कुलिङ्गक –कृष्णचटक ।

आ० र०–प्रसहानाह–गोखरेति । मृगाणा पक्षिणां मध्ये प्रसह्य–हत्वा भक्षयन्तीति प्रसहा । तत्र गौ –प्रसिद्धा । खरो–गर्दभ । अश्वतर –अश्वाया गर्दभाज्जातः । उष्ट्र –करभ । अश्वो–घोटक । द्वीपी–चित्रव्याघ्र । सिंह –केसरी । ऋक्षो[7]–लोमशो मर्कटसदृश । वानरो–मर्कट । मार्जारो–बिडाल । मूषक –उन्दुरु । व्याघ्रो–महाव्याघ्र । वृको[8]–वत्सभक्ष । बभ्रु[9]–अच्छभल्ल । तरक्षु –मृगादन । लोपाको[10]–लोमशो जम्बुकसदृश । जम्बुक.–शृगाल । श्येन.–शशानक । चाष –प्रसिद्ध । वान्ताद –श्वा । वायस.–काक । शशघ्नी[11]–शशारि । भास –श्वेतशिखावान् गृध्रसदृशो गोष्ठचारी । कुरर[12]–अरुण श्वेतमस्तको मत्स्यग्राही । गृध्र[13]–कृष्णो महान् दूरदर्शी । उलूको–घूक । कुलिङ्गो–

१ ‘शयनाद्बिले’ ठ ड । २ ‘सन्ति ते बि’ क ग ज । ३ ‘चिल्लट’ स ह्व । ४ ‘शल्लक’ ग स मू । ५ ‘शण्ट’ ख घ झ स मू । ६ ‘शशारिभा’ झ । ७–८ ‘ऋक्षो–भल्लूक । वृक –कुकुरानुकारी पशुशत्रु ।’ इति चक्रडल्हणौ । ९ ‘बभ्रु –अतिलोमश कुकुर पर्वतकण्ठे भवति, केचिद्बृहन्नकुलमाहु ।’ इति चक्र । ‘विशाले नकुले विष्णौ बभ्रुर्ना’ इत्यमर । १० ‘लोपाक –स्वल्पशृगालो महालाङ्गूल ’ इति चक्र । ११ ‘शशारि –शशघ्नी’ ख घ झ ञ । १२–१३ ‘कुरर –चीरल्लयाकारो नादोत्थापितमत्स्यो हस्तमत्स्यग्राही । गृध्र –मासाशी योजनदृष्टि ’ इति डल्हण. ।

गृहचटक । धूमिका–धूम्याट । मधुहा–मधुघातक । इति-शब्दादेवप्रकारा अन्येऽपि । मृगाश्च पक्षिणश्च मृगपक्षिण । तत्र जम्बुकान्ता वान्तादसहिता मृगा, इतरे पक्षिण ।

**वराहमहिषन्यङ्कुरुरुरोहितवारणाः ॥ ५० ॥**
**सृमरश्चमरः खड्गो गवयश्च महामृगाः ।**

स०–वराहादयो दश महामृगसञ्ज्ञा । वारणो–हस्ती ।

आ० र०–महामृगानाह–वराहमहिषेति । महान्तो मृगा –महामृगा । तत्र वराह –शूकर । महिष –अश्वशत्रु । न्यङ्कु –कुरङ्गसदृशो विकटबहुविषाण । रुरु –बहुविषाण शरदि शृङ्गत्यागी । रोहितो–लोहितवर्ण । वारणो–हस्ती । सृमरो–वनतुरग । चमरो–वन्यो गौ । खड्गो–गण्डक । गवय –सास्नाककुदरहितो गोसदृश । चकारोऽनुक्तसमुच्चयार्थ ।

**हंससारसकादम्बबककारण्डवप्लवाः ॥ ५१ ॥**
**बलाकोत्क्रोशचक्राह्वमद्गुक्रौञ्चादयोऽप्चराः ।**

स०–हसादय क्रौञ्चान्ता अप्सु चरणादप्चरसञ्ज्ञा । आदिशब्देन रक्तशीर्षकादयो गृह्यन्ते ।

आ० र०–जलचरानाह–हम्ससारसेति । येऽप्सु–जले चरन्ति ते अप्चरा । तत्र हसो–मानसौका । सारसो–लक्ष्मण । कादम्ब –कलहस । बक –पाण्डुरपक्ष प्रसिद्ध । कारण्डव –शुक्लो हससदृश । प्लवो–महान् प्रसेवकगल । बलाका–बिसकण्ठिका । उत्क्रोश –कुररसदृश । चक्राह्व –चक्रवाक । मद्गु –जलकाक । क्रौञ्च –कुङ् । आदिशब्दाच्चात कादय । उक्त च सङ्ग्रहे ( सू अ ७ )–"काकतुण्डधर्नारा वमद्गुक्रौञ्चाम्बुकुक्कुटा । मृणालकण्ठचक्राह्वबलाकारक्तशीर्षका ॥ उत्क्रोश पुण्डरीकाक्षशरारीमणितुण्डिका । नन्दश्च मल्लिकाद्याश्च पक्षिणो जलचारिण ॥" इति ।

**मत्स्या रोहितपाठीनकूर्मकुम्भीरकर्कटाः ॥ ५२ ॥**
**शुक्तिशङ्खोद्रशम्बूकशफरीवर्मिचन्द्रिकाः ।**
**चुलूकीनक्रमकरशिशुमारतिमिङ्गिलाः ॥ ५३ ॥**
**राजीचिलिचिमाद्याश्च**

स०–रोहितकादय एकोनविंशतिर्जलोद्भवा मत्स्यसञ्ज्ञा । चशब्दोऽनुक्तकदलकपर्दकादिसमुच्चयार्थ ।

आ० र०–मत्स्यानाह–मत्स्या इति । जलान्तर्वासिनो–मत्स्या । तत्र रोहितो–रक्ताङ्ग कृष्णपृष्ठो मत्स्यशैवलभोजन । पाठीनो–रूप्योदर कृष्णवर्णक कण्टकमञ्जरि । कूर्म –कच्छप । कुम्भीरो–महानक्रसदृश । कर्कट –कुलीर । शुक्ति –मुक्तास्फोट । शङ्ख –कम्बु । उद्रो–जलबिडाल । शम्बूक –क्षुद्रशङ्ख । शफरी–क्षुद्रमत्स्य । वर्मि –सर्पाकार । चन्द्रिका–पार्श्वेषु कण्टकवलयितो वर्तुल । चुलूकी–दन्त्याकारोऽन्तर्वक्त्रो बहिर्निश्वासभुक् । नक्रो–रज्ज्वाकार । मकर –सिंहदष्ट्र । शिशुमार –शिशुघ्न । तिमि –शतयोजनविस्तृत, त गिलतीति–तिमिङ्गिल । राजी–राजीवो वज्राभ । चिलिचिम –शकली लोहितनयन सर्वतो लोहितराजि प्रायो भूमिचारी । आद्यशब्दाद्गोमत्स्यादय ।

**मांसमित्याहुरष्टधा ।**
**( मृग्यं वैष्किरिकं किञ्च प्रातुदं च बिलेशयम् ।**
**प्रासह च महामृग्यमप्चरं मात्स्यमष्टधा ॥ १ ॥)**

स०–इत्यष्टभि प्रकारैस्तत्प्रकारा मासमाहु ।

आ० र०–उक्ताना वर्गाणा मासत्वमाह–मासमित्याहुरिति । इति–उक्तप्रकारेण, अष्टधा–अष्टप्रकार, मासमाहु ।

**योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ॥ ५४ ॥**

स०–योनिषु–पूर्वोक्तास्वष्टासु मध्ये, व्यामिश्रगोचरत्वात्–व्यामिश्रविषयत्वात्, अजावी–व्यामिश्रे । अजावी–छागोरभ्रौ, ते अनिश्चिते, ते हि जाङ्गलेऽपि देशे वर्तेते अनूपेऽपि । अजावी इति स्त्रीलिङ्गनिर्देशोऽत्र विवक्षित एव । केचित्तु 'अनिश्चितौ' इति निजगदु । ननु, तित्तिरिरपि वन्वानूपचारी प्रथित । तत्कथमसाविह जाङ्गल कीर्तित ? ब्रूम । तत्स्वभावत्वात् । यद्यप्युभयचरोऽय, तथाऽपि जाङ्गलस्वभावत्वाज्जाङ्गलेयम् । विकीर्य भक्षणाच्च विष्किरत्व तित्तिरेर्निश्चित निमित्तमस्ति । तस्मादय जाङ्गल एव वक्तु युक्त । हरिणादीना च किरातकैवर्तादिभ्यो नानादेशप्रसिद्धा सञ्ज्ञा वेद्या ।

आ० र०–अजाव्योरनुक्तौ हेतुमाह–योनिष्वजावीति ।

---

१ 'म्याक 'क ग । २ रुरुलक्षण यथा–'विकटबहुविषाण शम्बराकारदेह सलिलतटचरत्वाच्छम्बरेभ्यो विचित्र । त्यजति शरदि शृङ्ग रौत्यतोऽसौ रुरु स्यात् पृथुलमृगविशेष प्रायशश्चेदिदेशे ॥' इति डल्हण । ३–४ 'सृमरो–महाशूकर । चमर –केश मृत्यु गोसदृश ।' इति चक्रडल्हणौ । ५ 'कारण्डव –शुक्लहसभेदोऽल्प, अन्ये करहव [काकवक्र] माहु । उक्त च–"कारण्डव काकवक्त्रो दीर्घाङ्घ्रि कृष्णवर्णभाक् ।" इति' इति डल्हण । ६ 'सेचक' ग झ । ७ 'वाकसदृश ' क झ ञ । ८ घनाराव –चातक । ९ 'तुण्डका ' क ग स स । १० 'नद्यास्यो' म स । 'नन्द्यास्यम' म मू । ११ 'शङ्खोद्र' अ आ ठ स स । १२ 'वर्मि' स स । १३ 'चुलुकी' आ क ग ञ स.मू ।

१–२ 'रोहितो–वनशल्कल प्रसिद्ध । पाठीन –अशल्कल एव दीर्घो निर्मल ' इति डल्हण । ३ 'मत्स्य शै' क ख घ ञ । ४ 'कुम्भीरो–घडियालगोधादिभेदेन नानाभेद ' 'घटिकावान्' इति क्रमेण डल्हणचक्रौ । ५ 'शुक्ति –मुक्ताप्रभवो जन्तु ' इति चक्र । ६ 'शम्बूक –आवर्तकोश, साखुला इति लोके' इति डल्हण । ७ 'वर्मी–शकलम्, तदस्यास्तीति वर्मा,–रोहित । ब्रह्मदेवोऽपि वर्मा–महाशकलो रोहितभेद, न तु सर्पाकारमत्स्य, इत्याह' इति शिवदास । ८ 'चुलुकी–शुशु इति ख्यात ' इति चक्र । ९ 'मकर –हिस्रदष्ट्रक ' इति डल्हण । १० 'असिदष्ट्र ' ग झ ञ । ११ 'शिशुमार –दृत्याकारोऽन्तवक्त्रो बहिर्निश्वासभुक् दीर्घफाणित इति लोका प्राहु ' इति डल्हण । 'गोतुण्डनक्र ' इति चक्र । १२ 'विस्तार ' ञ । १३ 'तिमि' क ग ञ । १४ 'राजीव –बह्वायत स्वनामप्रसिद्ध ' इति डल्हण । १५ 'रै शास्त्रकारा' ठ ।

अजावी-मृगविशेषौ । योनिषु-मृगप्रसहमहामृगाख्यासु योनिषु । अनिश्चिते-अनिर्धारिते । श्यामिश्रगोचरत्वात्-योनित्रयविषयत्वात् । अजाव्योर्मांसत्वेऽपि मृगादिविशेषो नास्तीत्यर्थः ।

**आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ।**

स०-आदौ भवा-आद्या,-मृगविष्किरप्रतुदाख्या, जाङ्गलचारित्वाज्जाङ्गलशब्दवाच्या । एवमन्त्या-महामृगाप्चरमत्स्याख्या,-आनूपा । मध्यौ-द्वौ बिलेशयप्रसहाख्यौ,-साधारणौ, जाङ्गलानूपचारिणावित्यर्थः । मध्याविति द्विवचननिर्देशसामर्थ्यादाद्यन्तानां वर्गाणां प्रत्येकं त्रित्वमनुमीयते त्रिग्रहणमन्तरेणापि ।

आ० र०-मांसस्य त्रैविध्यमाह-आद्यान्त्या इति । आद्यास्त्रयो मृगविष्किरप्रतुदा-जाङ्गला । अन्त्यास्त्रयो महामृगजलचरमत्स्या-आनूपा । मध्यौ द्वौ बिलेशयप्रसहौ-साधारणौ ।

**तत्र बद्धमलाः शीता लघवो जाङ्गला हिताः ॥५५॥**
**पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ।**

स०-तत्र-तेषु जाङ्गलानूपसाधारणेषु मध्ये, जाङ्गला बद्धमला-ग्रथितं पुरीषं कुर्वन्ति । शीतवीर्या लघवश्च । सन्निपाते हिता । किम्भूते? पित्तोत्तरे,-पित्ताधिके । तथा, वातो मध्यो यस्मिंस्तस्मिन् मध्यममरुति । तथा कफानुगे,-कफोऽनुगो-अबलो हीनो, यस्मिंस्तस्मिन् स्वल्पश्लेष्मणि ।

आ० र०-जाङ्गलगुणानाह-तत्र बद्धमला इति । बद्धमला-बद्धपुरीषा । सन्निपाते-दोषत्रयप्रकोपे हिता । कफानुगे-हीनकफे ।

**दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः ॥५६॥**

स०-शशोऽग्निदीपनः, पाके कटुकः, ग्राही, रूक्षः, शीतश्च । ग्राहिशीतत्वं चास्य जाङ्गलत्वादेव लब्धमप्यतिशयार्थं पुनरिहोपात्तम् । स्वादुकषायत्वादिकमेषामिह युक्त्योक्तम् । सङ्ग्रहे तु (सू अ ७) स्पष्टं कृत्वोक्तम् । यथा-"तत्र बद्धमला रुच्या मांसानामुत्तमा हिमाः । कषायस्वादुविशदा लघवो जाङ्गला हिताः ॥ ताम्रोऽत्र हरिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषजित् । लघीयान् षड्रसश्चासौ, ग्राही रूक्षो हिमः शशः ॥ कटुपाकोऽग्निकृत्पथ्यः सन्निपातेऽनिलावरे ।" इति ।

आ० र०-अत्र केषांचिद्विशेषः । तत्र शशगुणानाह-दीपन इति ।

**ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकादयः ।**
**तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ॥ ५७ ॥**
**ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ।**

स०-वर्तकादारभ्य यावज्जाङ्गलसमाप्तिस्तावत्सर्वे औष्ण्यगौरवस्निग्धत्वैरल्पैर्युक्ताः । तेष्वपि मध्ये तित्तिरिः श्रेष्ठो मेधादिकरश्च । तथा, सङ्ग्राही । तथा, वर्ण्यो वाताधिकसन्निपातहरश्च । स च तित्तिरिर्धन्वन्यानूपे च देशे विचरति, अतः स्निग्ध उष्णो गुरुर्बृंहणश्च । तथा च सङ्ग्रहे (सू अ ७)-"धन्वानूपविचारित्वात् स्निग्धोष्णगुरुबृंहणः ।" इति ।

आ० र०-वर्तकादिगुणानाह-ईषदिति । वर्तकादयो-"वर्तको वर्तिका" इत्यादयो जाङ्गलाः ।

तित्तिरिगुणानाह-तित्तिरिरिति । तेषु-वर्तकादिषु । अनिलोद्रिक्त-वाताधिक, सन्निपात-दोषत्रयप्रकोप, हरते । सङ्ग्रहे तु (सू अ ७)-"धन्वानूपविचारित्वात्स्निग्धोष्णगुरुबृंहणः ।" इति ।

**नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ५८**

स०-शिखी-बर्हा, नातिपथ्यः । श्रोत्रादीनां पथ्यः । वयसः स्तम्भनकारित्वेन पथ्यः ।

आ० र०-मयूरगुणानाह-नातिपथ्य इति । नातिपथ्यः-नातिस्वस्थहितः, दोषचयकारित्वात् । श्रोत्रादीनां तु पथ्यः, तद्दार्ढ्यकारित्वात् ।

**तद्वच्च कुक्कुटो वृष्यः**

स०-तद्वच्च कुक्कुटो-मयूरतुल्यगुणो वृष्यश्च ।

आ० र०-कुक्कुटगुणानाह-तद्वच्चेति । तद्वत्-मयूरतुल्यगुणः ।

**ग्राम्यस्तु श्लेष्मलो गुरुः ।**

स०-ग्राम्यः पुनः कुक्कुटः श्लेष्मलो गुरुश्च ।

आ० र०-ग्राम्यकुक्कुटगुणानाह-ग्राम्यस्त्विति । ग्रामे भवो-ग्राम्यः ।

**मेधाऽनलकरा हृद्याः क्रकराः सोपचक्रकाः ॥५९॥**

स०-क्रकरा उपचक्रकाश्च मेधामग्निं च कुर्वन्ति हृद्याश्च ।

आ० र०-क्रकरोपचक्रयोर्गुणानाह-मेधानलकरा इति । अनलो-वह्निः ।

**गुरुः सलवणः काणकपोतः सर्वदोषकृत् ।**

स०-काणकपोतो गुरुरीषल्लवणस्त्रिदोषकृच्च ।

आ० र०-काणकपोतगुणानाह-गुरुः सलवण इति । काणकपोत[1]-अल्पारुणकपोतभेदः ।

**चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ६०**

स०-चटकाः श्लेष्मलत्वादिगुणयुक्ता अतिशयेन शुक्रकृतश्च ।

आ० र०-चटकगुणानाह-चटका इति । चरकस्त्वाह (सू अ २७।७२)-"चटका मधुराः स्निग्धाः कफशुक्रविवर्द्धनाः । सन्निपातहराश्चैव शमना मारुतस्य च ॥" इति । तत्र सन्निपातस्य सम्पृक्तदोषत्रयवाचित्वात् सम्पृक्तानेवं त्रीन् दोषान् घ्नन्ति, न त्वसम्पृक्तान् । अत एव 'शमना मारुतस्य च' इत्युक्तम् । तस्मात् श्लेष्मलत्वं न संसृष्टविषयम् ।

---

१ 'य' ठ । २ 'र्णश्चैणो' ट ।

१ 'काणकपोतो-वनवासी पाण्डुकपोतः, अन्ये अरुणवर्णकमपि कपोतमाहुः' इति डल्हणः । २ 'अन्योऽरुणः' ख घ झ । ३ 'भृशम्' च द । ४ 'श्लेष्मलादियुक्ता' ठ । ५ 'व दोषान्' क ग ञ ।

**गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ।**
**मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ॥ ६१ ॥**

**स०**–अत –अनन्तरम् , बिलेशयाद्या वर्गा यथोत्तर गुरुत्वेन उष्णत्वेन स्निग्धत्वेन मधुरत्वेन चाधिका । यो यस्मादुत्तरो वर्ग , स तस्माद्गुरुत्वादिभिरधिक इत्यर्थ । तथा, यथोत्तरमेव मूत्रशुक्रकृतो बल्या वातघ्ना श्लेष्मपित्तलाश्च ।

**आ० र०–बिलेशयादिवर्गाणा गुणानाह–गुरूष्णस्निग्धमधुरा इति । अत –एभ्यो जाङ्गलेभ्य परे । वर्गा –बिलेशयादय । यथोत्तर–बिलेशयेभ्य प्रसहा गुर्वादिगुणयुक्ता , ततो महामृगा , ततो जलचरा , ततो मत्स्या इति ।**

एव वर्गपञ्चकस्य सामान्यगुणानुक्त्वा, अपवादमाह—

**शीता महामृगास्तेषु, क्रव्यादप्रसहाः पुनः ।**
**लवणानुरसाः पाके कटुका मांसवर्धनाः ॥ ६२ ॥**
**जीर्णार्शोग्रहणीदोषशोषार्तानां पर हिता. ।**

**स०**–तेषु वर्गेषु मध्ये महामृगा शीतवीर्या । क्रव्य–आममास भुञ्जते ये, ते क्रव्यादा । क्रव्यादास्तु ये प्रसहा –मार्जारगृध्रोलूकादय , ते लवणानुरसा पाके कटुका मासवर्धनाश्चातितराम् । जीर्णार्श प्रभृत्यामयानामतिशयेन हिता ।

**आ० र०–अत्र केषाचिद्विशेष । तत्र महामृगगुणानाह–शीता महामृगा इति ।**

**क्रव्यादप्रसहगुणानाह–क्रव्यादप्रसहा इति । वानरमूषककुलिङ्गमधुहाव्यतिरिक्ता द्वीप्यादयो मासाहारत्वात्–क्रव्यादप्रसहा । जीर्णे –कालेन पक्वदोषे , अर्श प्रभृतिभिरार्तानां हिता । शोषो–राजयक्ष्मा । सङ्ग्रहे तु ( सू अ ७ )–"चक्षुष्या सृष्टविण्मूत्रा मासला कटुपाकिन ।" इति ।**

**नातिशीतंगुरुस्निग्धं मांसमाजमदोषलम् ॥ ६३ ॥**
**शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ।**

**स०**–नातिशब्दोऽत्रेषदर्थे । यदि तु प्रतिषेधनमात्रमभीष्टमभविष्यदाचार्यस्य, ततो नञ एव केवलस्योपादानमकरिष्यत् । तस्मादीषदर्थ एव विवक्षित । अत एव व्याख्यानयन्ति, यथा–अनतिदग्धो ग्राम इति । अदोषलमिति अल्पदोषलम्, [ पथ्यमित्यर्थ । तथा च हारीत –"त्रिदोषघ्नदेहधातुसामान्याच्छागल लघु ।" इति । अन्ये तु चरकमतमनुसरन्त एवं व्याख्यानयन्ति,–अदोषलमिति नञ् ईषदर्थे, किञ्चिच्छीतगुरुत्वादल्पदोषलम् । यथा–अवृक्षो ग्राम इति । ] शरीरस्य धातु –शरीरधातु ,–प्रकृतत्वात्पुरुषशरीरस्य मासाख्यो धातु , तस्य सामान्यात्–तुल्यत्वात्, आजं मासमनभिष्यन्दि बृहण च । गुणकृत चात्र सामान्यं गृह्यते, न द्रव्यकृतम् । द्रव्यकृते हि सामान्ये गृह्यमाणे तुरगोरगादिमासमपि पुरुषशरीरधातोर्मासाख्यस्य मासत्वेन समान भवतीति तदप्यनभिष्यन्दि बृहण च स्यात् , न केवलमाज मासम् । गुणकृते तु सामान्ये गृहीते शरीरधातुसामान्यादाजमेव मासमनभिष्यन्दि बृहण चेति वक्तु युज्यते । मासग्रहणं चात्रोपलक्षणार्थम् । न केवलमाज मास पुरुषशरीरधातुना मासाख्येन तुल्यम् , यावदन्येऽपि ये छागशरीरगता धातवस्तेऽपि मनुष्यशरीरधातुना तुल्यगुणा , तेऽप्यनभिष्यन्दिनो बृहणाश्च । अनया भङ्ग्या पुरुषमासस्याप्याचार्येणात्र गुणा उक्ता । ननु, बृहण यद्द्रव्य तद्भौमाप्यमभिष्यन्दि च । अपामेवाऽसाधारणो धर्म स्रवणरूप । तत्कथमनभिष्यन्दीत्युक्तम् ? ब्रूम । द्रव्यप्रभावात् । ईदृशोऽय द्रव्यप्रभावो यद्बृंहणमपि द्रव्यमनभिष्यन्दीति ।

**आ० र०–आजमासगुणानाह–नातिशीतेति । अदोषल–दोषैस्त्रयविरुद्धम्, त्रिदोषघ्नमित्यर्थ । नञत्र विरुद्धार्थ । उक्त हि खारणादिना–"अविदाह्यनतिस्निग्ध नातिशीतलमासिषम् । छाग लघु त्रिदोषघ्नमनभिष्यन्दि बृहणम् ॥" इति । हारीतेन च–"त्रिदोषघ्न देहधातुसामान्याच्छागल लघु ।" इति । गुरुत्वलघुत्वयोर्गुणत्वपाकत्वाभ्यामविरोध । त्रिदोषघ्नत्व वातोत्तरत्रिदोषविषयम्, किञ्चित्पित्तकफकरत्वात् । उक्त च सुश्रुते ( सू अ ४६।८७ )–"नातिशीतगुरुस्निग्धो मन्दपित्तकफ स्मृत । छागलस्त्वनभिष्यन्दी तेषा पीनसनाशन ॥" इति । ननु, बृहणस्य दध्यादेरभिष्यन्दित्वदर्शनात् कथ बृहणमनभिष्यन्दि ? इत्यत आह–शरीरधातुसामान्यात् ,–शरीर–अर्थान्मनुष्यस्य, तस्य धातवो–रसादय , तै सामान्य–सदृशगुणत्वम्, यद्गुणा मनुष्यस्य धातवस्तद्गुणा एवाजस्य । अतोऽत्यन्तसामान्याद्बृहणमप्यनभिष्यन्दि । यद्धि कैश्चिद्गुणै सम कैश्चिद्विपरीत तत् बृंहण चाभिष्यन्दि च । यथा–स्त्यान घृत स्त्यानघृतप्रक्षेपाद्वर्धते न चाभिष्यन्दते । तदेवोष्णघृतप्रक्षेपाद्वर्धतेऽभिष्यन्दते च ।**

**विपरीतमतो ज्ञेयमाविकं बृहणं तु तत् ॥ ६४ ॥**

**स०**–अत –आजमासात् , विपरीतमाविक मास–अत्युष्णस्निग्धगुरु सदोषलमभिष्यन्दि चेति । बृहणत्वस्यापि विपर्यये प्राप्ते तदपवादमाह–बृहण तु तदिति । तुशब्दोऽवधारणे । बृहणमेव तदित्यर्थ ।

**आ० र०–आविकमांसगुणानाह–विपरीतमिति । अत –आजमासात्, विपरीत–अतिशीतगुरुस्निग्ध त्रिदोषकरमभिष्यन्दि च । विपरीतत्वात्कर्शनत्वे प्राप्त आह–बृहण तु तदिति । अजाव्यो प्रसहप्रस्तावे गुणकथनमनिश्चितत्वेऽपि प्राय प्रसहत्वज्ञापनार्थम् । अत एव सुश्रुतेन ग्राम्येषु पठितौ (सू अ ४६।८५)–"अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेद पुच्छप्रभृतयो ग्राम्या ।" इति । ग्राम्याश्चात्र प्रसहेपूक्ता ।**

---

१ 'व्यादा प्रसहा ' अ आ ट स ढ । २ 'प्रभृतीना' ट । ३ 'शीत गुरु' अ आ ख घ झ ञ । ४ [ ] इति पाठष्ठ पुस्तके नोपलभ्यते ।

१ 'सत्यम्' ड । २ 'दोषविरुद्धम्' ख घ झ । ३ नञर्थो यथा–"तत्सादृश्यमभावश्च तद यत्व तदल्पता । अप्राशस्त्य विरोधश्च नञर्था षट् प्रकल्पिता ॥" इति । ४ 'एवास्य' क ज । ५ 'साम्याद्बृ' ख घ झ । ६ 'हणमभि' ञ । ७ 'दोषमभि' ठ ड । ८ वस्त –अज , उरभ्र –अवि ।

**शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ।**
**कार्श्यं केवलवाताश्च गोमांसं सन्नियच्छति ॥ ६५ ॥**

स०–गोमास शुष्ककासादीन्नियच्छति ।

आ० र०–गोमासगुणानाह–शुष्ककासेति । शुष्ककास – कफादिनिष्ठीवनरहित । केवलवातान्–शुद्धवातजान् व्याधीन् । बहुवचनाद्वातशब्देन वातव्याधयो गृह्यन्ते ।

**उष्णो गरीयान्महिषः स्वप्नदार्ढ्यबृहत्त्वकृत् ।**

स०–महिष उष्णो गुरुतर स्वप्नादींश्च करोति । गुरुशब्दादीयसुनि "प्रियस्थिर" इत्यादिना गरादेश । दार्ढ्यमिति "वर्णदृढ" इत्यादिना ष्यञ् ।

आ० र०–महिषगुणानाह–उष्णो गरीयानिति । गरीयान्–अन्येभ्यो मासेभ्यो गुरु । स्वप्नो–निद्रा ।

**तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ॥ ६६ ॥**

स०–वराह –सूकर , तद्वत्–महिषगुणो, ज्ञेय इत्यर्थ । तथा, श्रमहा रुच्यादिप्रदश्च ।

आ० र०–वराहगुणानाह–तद्वद्वराह इति । तद्वत्–महिषवत् । ननु, "स्वेदन बृहण वृष्य तर्पण शीतल गुरु । श्रमानिलहर स्निग्ध वाराह बलवर्धनम् ॥" इति सुश्रुतेन ( सू. ४६।१०२ ) शीतत्वमुक्तम्, इह तु तद्वद्वचनादुष्णत्वमिति विरोध । न चातिदेशिकमुष्णत्वमौपदेशिकेन शीतत्वेन बाध्यत इति वाच्यम्, "स्वाद्वम्लपाक स्निग्धोष्ण वातघ्न बृहण गुरु । स्वेदन तर्पण हृद्य बल्य शौकरमामिषम् ॥" इति खारणादिवचनादुष्णत्वस्याप्यौपदेशिकत्वात् । सैवम् । उष्णत्वस्य स्पर्शविषयत्वात् । स्पर्शोष्ण शीतवीर्यमप्युष्णोदकादि स्वेदन दृष्टम् । न तूष्णवीर्यमपि स्पर्शशीत काञ्जिकादि हिम च स्वेदनम् । अतो युक्त्यैवेय विषयव्यवस्था ।

**मत्स्याः परं कफकराः**

स०–"गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ।" इत्यनेन ग्रन्थेनातिगुरूष्णस्निग्धमधुरत्वमतिमूत्रशुक्रकृत्त्वमतिबल्यत्वमतिवातघ्नत्वमतिकफपित्तलत्व च मत्स्यानामुक्तम् । "पर कफकरा" इत्यनेनाऽन कफकृत्तमा मत्स्या इति बोधयति । सङ्ग्रहे स्पष्टार्थमेवमुक्तम् ( सू अ ७ )–"कफपित्तकरा मत्स्या पर पवननाशना ।" इति ।

आ० र०–मत्स्यगुणानाह–मत्स्या परमिति ।

**चिलिचीमस्त्रिदोषकृत् ।**

स०–चिलिचीमसज्ञो मत्स्यस्त्रिदोषकर ।

आ० र०–चिलिचीमगुणाह–चिलिचीम इति ।

**लावरोहितगोधैणाः स्वे स्वे वर्गे वराः परम् ॥ ६७ ॥**

स०–लावादय स्वस्ववर्गेपु वरतरा । तत्र लावो–विष्किरेष्वतिश्रेष्ठ , रोहितो–मत्स्येषु । स हि प्रतिस्रोतोविचारी आकाशप्लवनश्च । तथा चोक्तम् ( सङ्ग्रहे सू अ ७ )–"प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च । रोहित प्रवरस्तेषाम्" इति । गोधा च–विलेशयेषु वरा । एणो–मृगेष्विति ।

आ० र०–मासेषु वर निर्द्धारयति–लावरोहितेति । लावो–विष्किरेपु वर । रोहितो–मत्स्येषु वर । गोधा–विलेशयेषु वरा । एणो–मृगेषु वर । परमिति वरेभ्योऽपि वरा । वरास्तु सङ्ग्रहे उक्ता ( सू अ ७ )–"एण कुरङ्गो हरिण शशो लाव कपिञ्जल । तित्तिरि क्रकरो गोधा श्वाविद्भ्रो मृगाधिप ॥ बर्हिण सारिका न्यङ्कुर्हंसो रोहितकच्छपौ । वर्मी चाग्र्या स्ववर्गेषु, प्रवरास्तेष्वपि स्मृता ॥ लावैणगोधासिहाश्च, निन्दितो गौ सदर्दुर । ऋष्य काणकपोतश्च शेषमुक्त यथायथम् ॥" इति ।

**मासं सद्योहतं शुद्धं वयःस्थं च भजेत्**

स०–मास सद्योहत भजेत्, सद्योहतस्य मास भजेदित्यर्थ । तथा, शुद्ध–स्नाय्वस्थ्यादिरहितम् । तथा, वयसि तिष्ठतीति वय स्थम्,– यद्यपि सर्व मास वय स्थमेव, तथाऽपीह वय स्थमित्युक्त्वा शोभन तरुण वय इति गम्यते । तस्माद्यून प्राणिनो मास भजेत्, न बालवृद्धयोरिति ।

आ० र०–मासभजन नियच्छति–मांसमिति । सद्योहत–तत्कालव्यापादितमृगादिजम् । शुद्ध–अस्थ्यादिरहितम् । वय.स्थ–तरुणमृगादिजम् । एभ्योऽन्यन्न सेव्यमित्यर्थ ।

**त्यजेत् ।**
**मृतं कृशं भृशं मेद्यं व्याधिवारिविषैर्हतम् ॥ ६८ ॥**

स०–मृत–स्वय मृत न भजेत्, अविज्ञातस्वरूपेण व्याधिना मृतस्य प्राणिनो यन्मास तत्त्यजेदित्यर्थ । कृश–दुर्बलं न भजेत् । तथा, भृश मेद्य–अतिमेदुर मास त्यजेत् । तथा, व्याधिना–विज्ञातस्वरूपेण हतस्य, वारिणा विषेण च हतस्य,–निर्जीवीकृतस्य, यन्मास तत्त्यजेत् । सङ्ग्रहे तु ( सू अ ७ ) हसादीना विशेषा उक्ता । यथा–"हस स्वरकर पित्तरक्तजिन्मेधुरो हिम । कुलीर परम वृष्यो बृहण प्रीणनो गुरु ॥ गोधा नियच्छति विष मूषक शुक्रवर्धन । गुरूण्यण्डानि बालाना कषायमधुर पलम् ॥ वृद्धाना स्नायुभूयिष्ठमबल्य गुरु दोषलम् ।" इति ।

आ० र०–सेव्येष्वपि मृतादीन्यपवदति–त्यजेदिति । यत् सद्योहतमपि केन हतमिति न ज्ञायते तत्–मृतम् ।

---

१ 'घवद्गुणैर्ज्ञेय' ट. । २ 'लक्षणेना' ठ । ३ अस्याग्रे "मत्स्यादिपक्षिणा चैव गुरूण्यण्डानि चा ( न्यतो, आ ) दिशेत् । तानि स्निग्धानि वृष्याणि स्वादुपाकरसानि च ॥" इति, आ ञ. पुस्तकयोरधिक श्लोक. ।

१ 'पर वरा ' ट । २ 'तथैव' स स । ३ 'वर्मी' स स । ४ 'धा सिंहश्च' ख व स द्व । ५ 'ऋक्ष.' ख घ झ । ६ 'भोजन' ग ञ । ७ 'दित मृ' क ख घ ञ । ८ 'तरुणम् ।' ख घ झ । ९ 'निर्ज्ञात' ठ. । 'अनिष्कृतिस्व' ड. । १० 'जिन्मेदुरो' स स. । ११ 'मूष शुक्रविवर्धन.' ड ।

कृश-अपुष्टम् । भृश मेद्य-अत्यन्तपुष्टम् । व्याधिहत-ज्वरादिना हतम् । वारिहत-जलमज्जनादिना । विषहत-विषदिग्धशंस्त्रहत सर्पादिना वा ।

**पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी, गर्भिणी गुरुः ।**
**लघुर्योषिच्चतुष्पात्सु, विहङ्गेषु पुनः पुमान् ॥ ६९ ॥**
**शिरःस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम् ।**
**तथाऽऽमपक्वाशययोर्यथापूर्वं विनिर्दिशेत् ॥ ७० ॥**
**शोणितप्रभृतीना च धातूनामुत्तरोत्तरम् ।**
**मासाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ॥ ७१ ॥**

इति मासवर्गः ।

**स०**-पुन्स्त्रियो पूर्वपश्चार्धे यथासख्य गुरुणी । पूर्व च पश्च च पूर्वपश्चे, तयोरर्धे । पुस पूर्वार्धे गुरु, स्त्रिय पश्चार्धे गुर्वित्यर्थ । गर्भिणी गुरु -गर्भिणीमास गुरु । चत्वार पादा येषा ते चतुष्पाद , तेषु चतुष्पात्सु-गवादिषु मध्ये, स्त्री लघु । चतुष्पादिति "सख्यासु पूर्वस्य"इत्यन्तलोप । विहङ्गेषु-द्विजेषु तु, पुमान् लघु । शिर प्रभृतीना मासाना यथापूर्व गुरुत्व निर्दिशेत् । एव सक्थ्यादिमासेभ्य शिरोमास गुरुतममित्यवतिष्ठते । आमपक्वाशययोश्च यथापूर्व गुरुत्वनिर्देश । तेन पक्वाशयादामाशयो गुरु । रक्तादीना धातूना यथोत्तर गुरुत्व निर्दिशेत् । तेन लोहितान्मास गुरु, मासान्मेद इत्यादि । "मासाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ।" इत्यत्राऽप्युत्तरोत्तरमित्यनुवर्तते । तेन मासाद्गुरुतरो वृषण , तस्मान्मेढ्र , यावत्सर्वगरिष्ठ गुद निर्दिशेदिति । इति मासवर्ग ।

**आ० र०**-अवयवादिविशेषेण गौरवलाघवे आह-पुंस्त्रियोरिति । पुस -पुल्लिङ्गस्य मृगादे शरीरस्य, पूर्वार्द्ध-नाभ्यादिशिरोन्त गुरु । स्त्रीणा तु पश्चार्द्ध-नाभेरधोभाग गुरु । गर्भिणी तु सर्वैव गुरु । चतुष्पात्सु मध्ये योषित्-स्त्री लघु । विहङ्गेषु-पक्षिषु मध्ये, पुमान् लघु । शिरस्कन्धोर्विति यथावयवेषु मध्ये पृष्ठस्य कट्या सक्थ्नोरिति पृष्ठादित्रयस्य यथापूर्व गौरव निर्दिशेत् । सक्थिभ्या कटी गुरु, कट्या पृष्ठ गुरु । सक्थिशब्देन जङ्घे ग्राह्ये, ऊर्वो पृथग्ग्रहणात् । "शिरोवत्पादगौरवम्"इति खारणादिना पादयो शिरस्तुल्यत्ववचनात् चकारात् पादयोश्च गौरव विद्यात् । शिर स्कन्धोरुणश्च गौरव विद्यात् । ऊरुभ्यां स्कन्धौ गुरू, ताभ्या शिरो गुरु । ऊरुस्कन्धशिर सक्थिकटीपृष्ठाना यथोत्तर गौरवमित्यर्थ । उक्त च सुश्रुतेन ( सू अ ४६।१३० )-"तथा सक्थिस्कन्धक्रोडशिर पादकरकटीपृष्ठचर्मकालेयकयकृद्ग्राणि ।" इति । कालेयकं-वृक्क । तथाऽऽमपक्वाशययो -पक्वाशयादामाशयो गुरुरित्यर्थ । शोणितप्रभृतीनामुत्तरोत्तर-शोणितादिभि शब्दै शोणितसारादयो गृह्यन्ते, तेन शोणितसारस्य प्राणिनो मासात् माससारस्य मास गुरु, ततो मेद सारस्य, ततोऽस्थिसारस्य, ततो मज्जसारस्य, तत शुक्र सारस्येति । ननु, एव चेत् त्वक्सत्त्वेऽपि ग्राह्ये । वक्ष्यति हि ( हृ शा अ ३।११७ )-"त्वग्रक्तादीनि सत्त्वान्तान्यष्टौ यथोत्तरम् । बलप्रमाणज्ञानार्थं साराण्युक्तानि देहिनाम् ॥" इति । सत्यम् । किन्तु त्वक्सारस्य मासत्वेनानुपयोगात् सत्त्वसारस्य तिर्यक्ष्वसम्भवादग्रहणम् । रक्तादिधातूनामेव यथोत्तर गौरवे व्याख्यायमाने को दोष ? इति चेत् न । मासप्रस्तावे तेषामप्रस्तुतत्वात् । सुश्रुतेनापि ( सू अ ४६।१३० )-"स्थानादिकृत मासस्य गुरुलाघवमुपदेक्ष्याम । तद्यथा-रक्तादिषु शुक्रान्तेषु धातुषूत्तरोत्तरा गुरव ।" इत्युक्तम् । तथा च चरक ( सू अ २७।३२८ )-"चर शरीरावयवा स्वभावो धातव क्रिया । लिङ्ग प्रमाण सस्कारो मात्रा चास्मिन् परीक्ष्यते ॥" इति शरीरावयवादिवद्धातूना गुरुलाघवत्वेनोपादानात् । किञ्च धातवश्चेद्विवक्षिता स्यु , तदा रसादीनामिति ब्रूयादिति । मासाद्वृषणादि यथोत्तर गरीय , वृषणान्मेढ्रम्, मेढ्राद्वृक्कौ, वृक्काभ्या यकृत्, यकृत्-कालखण्डम्, ततो गुदम्, मासादिति शिरोमासात् । यदाह खारणादि -"सक्थिस्कन्धा उर शीर्षं मुष्कौ त्वङ्मेहन कटि । वृक्कौ यकृद्गुदे वंक्षश्चामिषान्मध्यमेव च ॥ गुरूत्तरोत्तर विद्याच्छिरोवत्पादगौरवम् ।" इति । ननु, खारणादिस्त्वचोऽधिक कट्या गौरवमाह, शिर पादयोस्तुल्यम् । सुश्रुतस्तु शिरसोऽधिक पादयो , कट्या अधिक त्वच । तत्किमत्र प्रमाणम् ? उच्यते । त्वक्चर्मणोरर्थभेदादविरोध । न हि त्वगेव चर्म । किन्तर्हि ? बाह्या-त्वक्, सहति -चर्म । शिर पादमिति द्वन्द्वैकत्वे कृत्वा क्रोडाच्छिर पाद गुर्विति व्याख्येयम्, न तु क्रोडाच्छिरस्तत पादाविति । सङ्ग्रहे तु ( सू अ ७ )-"तात्रोऽत्र हरिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषजित् । लघीयान् षड्रसश्चासौ, ग्राही रूक्षो हिम शश ॥ कटुपाकोऽग्निकृत्पथ्य सन्निपातेऽनिलावरे । तद्वल्लावोऽप्यरूक्षश्च किञ्चिद्रूक्ष कपिञ्जल ॥ पारावता कपोताश्च तद्वद्वन्या सुपूजिता । गोधा नियच्छति विष, मूषक शुक्रवर्द्धन ॥ हस स्वरकर पित्तरक्तजिन्मेदुरो हिम । प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च ॥ रोहित प्रवरस्तेषा, पर चिलिचिमोऽवर । अगोचरविचारित्वात्सर्वदोषकरो हि स ॥ कुलीर परम वृष्यो बृहण प्रीणनो गुरु । गुरूण्यण्डानि बालाना कषायमधुर पलम् ॥ वृद्धाना स्नायुभूयिष्ठमबल्य गुरु दोषलम् ।" इति । इति मासवर्ग ।

१ 'शस्त्रेण स' ख घ । 'शस्त्रादिना स' झ । २ 'भागज' क ग झ ञ । ३ 'गुर्विति' ख घ झ । ४ तथा-यथोत्तर गुरूणि । ५ क्रोड-वक्ष । ६ 'वृक्का' क.ग.ञ. । ७ 'लक्ष्यन्ते' ख.घ.झ. ।

१ 'रस्यामास' ख घ झ । २ 'गुरुत्वे ख घ झ । ३ 'तन्न' ख घ झ । ४ 'शरीरावयवाश्चैव स्व' क ग ञ । चरो-देशो भक्ष्यश्च । ५ 'वहेतुत्वे' ख घ झ । ६ 'न्धाबुर ' ख ग घ झ ञ । ७ 'च स्यादामिषान्मेचमेव' ख घ झ । ८ 'बाह्यत्वक्सहतिश्चर्म' क ग ञ । ९ 'क्षस्तु' स द्व । १० 'जिन्मधुरो' आ स.मू । ११ 'कट्वभूयिष्ठ' क.ञ. । 'कफभूयिष्ठ' ग. ।

मांसवर्गादनन्तरं शाकवर्गो निगद्यते—

अथ शाकवर्गः ।

**शाकं पाठाशठीसूषासुनिषण्णसतीनजम् ।**
**त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ॥ ७२ ॥**

स०—पाठादिजं शाकं त्रिदोषहरं लघु ग्राहि च । तद्वत् राजक्षवकवास्तुके ।

**आ० र०—अथ शाकवर्ग । स्नेहादिसंस्कृतं उद्भिदवयव —शाकम् । तत्र पाठादिगुणानाह—शाकं पाठेति । पाठा—अम्बष्ठा । शठी—कर्चूरं । सूषा—कासमर्दिका कासमर्दसदृशी । सुनिषण्णं —चतुर्दलश्चाङ्गेरीसदृशपर्णं । सतीनो—विष्णुक्रान्ता । राजक्षवो—दुग्धिका । वास्तुकं —कङ्कवास्तुकं ।**

**सुनिषण्णोऽग्निकृद्वृष्यस्तेषु**

स०—तेषु मध्ये, सुनिषण्णं—स्वस्तिकाख्यो, जलमध्ये भवति । पत्रैश्चाङ्गेरीतुल्योऽग्निकरो वृष्यः ।

**आ० र०—अत्र केषाचिद्विशेष । तत्र सुनिषण्णगुणानाह—सुनिषण्ण इति ।**

**राजक्षवः परम् ।**
**ग्रहण्यर्शोविकारघ्नः**

स०—राजक्षवः—क्षुद्रिबोवनो राजशाकाख्यः, परं—अत्यर्थं, ग्रहण्यर्शोविकारघ्नः ।

**आ० र०—राजक्षवगुणानाह—राजक्षव इति ।**

**वर्चोभेदि तु वास्तुकम् ॥ ७३ ॥**

स०—वास्तुकं तु—पुनः रक्तवास्तुकाख्यं, वर्चोभेदि—पुरीषस्य भेदनम् ।

**आ० र०—वास्तुकगुणानाह—वर्चोभेदीति । वर्चोभेदि—सरम् ।**

**हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी ।**
**काकमाची सरा स्वर्या**

स०—काकमाची त्रिदोषघ्नी, कुष्ठनाशिनी, वृष्या, किञ्चिदुष्णा, सरा—भेदिनी, स्वरहिता च । स्वास्थ्यसंवाहकत्वेन च रसायनसदृशी ।

**आ० र०—काकमाचीगुणानाह—हन्ति दोषत्रयमिति । रसायनी—वयःस्थापनी । काकमाची—कामाता । यत्तु सुश्रुतेनोक्तं ( सू अ ४०।५ )—"तिक्ता काकमाची पित्तं वर्द्धयति, उष्णवीर्यत्वात् ।" इति । तदन्यार्थम् । केवलं पित्तं करोत्येव ।**

१ 'सटीशूषा' अ झ ठ । २ 'तमौद्भिदावयव—'ख घ । ३ 'कचोर ' ञ । ४ 'वर्तुलचाङ्गे' ख घ झ । ५ 'टक्कवा' ख घ झ । ६ अस्याग्रे 'काश्मीरेषु शुकेति प्रसिद्ध ' इति ट पुस्तकेऽधिकम् । ७ अस्याग्रे 'सतीनशाक वर्तुलशाक काश्मीरेषु वराजुशाक इति प्रसिद्धम्' इति ट पुस्तकेऽधिकम् । ८ 'पुन शुक्लवास्तु' ट । 'पुनर्वास्तु' ड । 'पुन टक्कवास्तु' इति क्वचित् । ९ **'रसायनम्'** ख घ झ ठ । १० 'नसाद्वयाद्रसायनम्' ट ठ । ११ 'तदत्यर्थ केवलपित्तकरा च ।' ख घ झ ।

**चाङ्गेर्यम्लाऽग्निदीपनी ॥ ७४ ॥**
**ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ।**

स०—चाङ्गेरी—क्षुद्राम्लिका, अम्ला, अग्निदीपनी, ग्रहण्यादिषु हिता, उष्णवीर्या, सङ्ग्राहिणी, लघ्वी च ।

**आ० र०—चाङ्गेरीगुणानाह—चाङ्गेरीति । चाङ्गेरी—अम्लपत्रिका ।**

**पटोलसप्तलारिष्टशार्ङ्गेष्टावल्गुजाऽमृताः ॥ ७५ ॥**
**वेत्राग्रबृहतीवासाकुन्तिलीतिलपर्णिकाः ।**
**मण्डूकपर्णीकर्कोटकारवेल्लकपर्पटाः ॥ ७६ ॥**
**नाडीकलायगोजिह्वावार्ताकं वनतिक्तकम् ।**
**करीरं कुलकं नन्दी कुचैला शकुलादनी ॥ ७७ ॥**
**कटिल्लं केम्बुकं शीतं सकोशातककर्कशम् ।**
**तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ॥ ७८ ॥**

स०—पटोलादीनि कर्कशान्तान्यष्टाविंशति शीतवीर्याणि तिक्तानि पाके कटूनि ग्राहीणि वातलानि कफपित्तघ्नानि च । सप्तला—सातला । अरिष्टो—निम्ब । शार्ङ्गेष्टा—अङ्गारवल्लिका । अवल्गुजो—बाकुची । अमृता—गुडूची । वेत्रो—वंशसदृश , तस्याग्रम् । वासा—वृष । कुन्तिली—सूक्ष्मतिलजाति । तिलपर्णी—बदरक । मण्डूकपर्णी—मण्डूकी, आदित्यवल्ली । कर्कोटकारवेल्लके—पुनः प्रथिते एव । पर्पट —शीतप्रियाख्य । नाडीकलाय—सङ्कुलाक्षकं सुवर्चलाभेद । गोजिह्वा—गोधूमिका, "गोधूमिका तु गोजिह्वा गोजी क्रोष्टुकमूलिका ।" वनतिक्तक—वत्सक । कुलक—काकतिन्दुक । नन्दी—जयवृक्षश्चशब्दित । कुचैला—पाठा । शकुलादनी—कटुका । कटिल्ल—दीर्घपत्रा वर्षाभू । कोशातको—घण्टोलि । कर्कश —कम्पिल्लक ।

**आ० र०—पटोलादिगुणानाह—पटोलेति । पटोल—राजीफलम् । सप्तला—सातला । अरिष्टो—निम्ब । शार्ङ्गेष्टा—अङ्गारवल्ली । अवल्गुजो—बाकुची । अमृता—गुडूची । वेत्रो—वंशसदृश , तस्याग्र—अग्रभाग । बृहती द्विधा,—सिंही व्याघ्री च । वासा—आटरूषक । कुन्तिली—चञ्चुसदृशी दीर्घपत्रा । तिलपर्णिका—बदरक । मण्डूकपर्णी—ब्राह्मी । कर्कोट—कर्कोटीफलम् । कारवेल्लक—सुषवीफलम् । पर्पटो—ज्वरघ्न । नाडीकलायो—मत्स्याक्ष । गोजिह्वा—दार्विपत्रिका । वार्ताक—वृन्ताकम् । वनतिक्तक—किराततिक्तम् । करीर—गूढपत्रम् । कुलक—**

१ **'पटोल स'** आ । २ **'वेत्राग्र'** ख घ झ । ३ **'कुन्तिली'** आ क ञ । **'कुन्तली'** ख ग घ झ ठ स मू । ४ **'कठिल्ल'** ख ग झ स स । ५ **'ह्लकेम्बुक'** अ आ झ । ६ 'शङ्कुला' ट । 'सुकु' ड । ७ 'सप्तला—सेहुण्ड , जेज्जटस्तु यवतिक्ताभेदमाह' इति डल्हण । ८ 'शार्ङ्गेष्टा—काकतिक्ता' इति चक्र । ९ 'वनतिक्तक —पथ्यसुन्दरम्' इति चक्र , हरीतकीत्यर्थ । १० 'कुलक —कारवेल्लक , केचित्तु पटोलभेदमाहु ' इति चक्र ।

कारुतिक्तकम्। नन्दी-मेषशृङ्गी। कुचेला-कृष्णपाठा। गुडूचीलादनी-कटुरोहिणी। कठिल्ल-रक्तपुनर्नवा। केम्बुक-मरिचम्। कोशातक-कृतवेधनम्। कर्कश-काम्पिल्लम्। पटोलादिक शीततिक्तादिगुणम्। अत्र पटोलनिम्बावल्गुजामृतावेत्राग्रकर्कोटककारवेल्लेषु विवाद। तत्र पटोलफलं प्रति सुश्रुत (सू अ ४६।२६८)-"कफपित्तहर व्रण्यमुष्ण तिक्तमवातलम्। पटोल कटुक पाके वृष्य रोचनदीपनम् ॥" खारणादि -"सस्नेहोष्ण लघु स्वादु पाके दोषानुलोमनम्। उक्त तिक्त त्रिदोषघ्न शाक निम्बपटोलयो ॥ तथा,-पटोलनिम्ब वातघ्न तिक्तमन्यत्तु वातलम्।" इति। तत्र खारणाद्युक्त त्रिदोषघ्नत्वमेव ग्राह्यम्, अन्यथाऽन्वयानुपपत्ते। वाग्भटोक्तस्य हि "वातलम्" इत्यस्य सस्नलादिभिरन्वयत्वेन सार्थक्यात्, पटोलस्य कफपित्तहरत्वादिभि। अत एव हरिश्चन्द्रजैज्जटादयष्टीकाकारा अप्युद्धृतव्यक्तिव्यतिरेकेण गणगुणा इत्याहु। सुश्रुतोक्तस्य तु "अवातलम्' इति शब्दस्य वातघ्नत्वमेवार्थ, विरुद्धार्थत्वान्नञ। यद्यपि वातोदासीनत्ववातघ्नत्वयो सहानवस्थानलक्षणो विरोधोऽस्ति, तथाप्यवातलशब्देन वातोदासीनत्व न ग्राह्यम्, तन्त्रान्तरविरोधस्य तदवस्थत्वात्। अथवा, अवातलशब्देन वातकरणाभाव उच्यते, स च वातघ्नत्वेऽप्यस्ति, इत्यविरोध। अत एव रसभेदीये वक्ष्यति (हृ सू अ १०।३५)-"तिक्त कटु च भूयिष्ठमवृष्य वातकोपनम्। ऋतेऽमृतापटोलीभ्या शुण्ठीकृष्णारसोनत ॥" इति। माधवकरोऽप्याह-"पटोलपत्र पित्तघ्न वल्ली चास्य कफापहा। फल त्रिदोपशमन मूल तस्य विरेचनम् ॥" इति। उष्णत्वशीतत्वयोरुष्णत्व ग्राह्यम्, अनवकाशत्वात्। शीतलत्व वातलत्ववत् सावकाशम्। निम्बे तु खारणाद्युक्त त्रिदोषघ्नत्व फलविषयम्, सस्नेहत्वादीनां फल एव सम्भवात् पटोलसाहचर्याच्च। चरकसुश्रुताद्युक्त वातलत्व पत्रविषयम्। अवल्गुजस्य पित्तकरत्ववातघ्नत्वे आह खारणादि -"अवल्गुज सैडगज पित्तकृत्कफवातजित्।" इति। तत्फलविषयम्, धान्यवर्गे पाठात्। अत एवोक्त सङ्ग्रहे (सू अ १२)-"अवल्गुजडगंजयोर्बीज वातकफप्रणुत्।" इति। पित्तघ्नत्व वातलत्व च पत्रविषयम्। सुश्रुतोऽप्याह (सू अ ४६।२६५)-"अवल्गुज कटु पाके तिक्त पित्तकफापह।" इति। गुडूच्यास्त्रिदोषघ्नत्वमुष्णत्व चोक्त सङ्ग्रहे (सू अ १२)-"तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी। दीपनी ज्वरतृड्दाहकामलावातरक्तनुत् ॥" इति।

१-२ 'कुचेला-अकर्णविद्धिकाभेद, कर्कश -स्वल्पकर्कोटक' इति चक्र। ३ 'अन्वयान्यथानुपपत्ते' क झ ञ। 'अन्यथानुपपत्ते' ग.। ४ 'न्वयेन सार्थकत्वात्' ख घ झ। ५ 'हरादिभि' ख घ। ६ 'अपहृतव्यक्ति' ग। ७ 'वातग्रहणा' ख घ झ। ८ 'वातलत्व च' ख घ झ। ९ 'गजज बीज' स मू। 'अवल्गुजैडगज बीज कटिवात' स स.। 'अवल्गुज सैडगज फल वात' ख घ झ.।

तत्र त्रिदोषघ्नत्वोष्णत्वे ग्राह्ये, अनवकाशत्वात्। वातलत्वशीतत्वे तु पटोलवत्सावकाशे। तथा, वेत्राग्रस्य खारणादिना त्रिदोषघ्नत्वमुक्तम्-"चतुर्भुमेरिका पाठा वेत्राग्र सुनिषण्णकम्। शठीशाक च सङ्ग्राहि दोषत्रयहित लघु ॥" इति। तत्र त्रिदोषघ्नत्व ग्राह्यम्, हारीतेन वातलस्यापोहितत्वात्,-"सर्व तिक्त वातलमवृष्य चान्यत्र वेत्राग्रपटोलात्।" इति। सुश्रुतेन चानुक्तत्वाच्च, (सू अ ४६।२७०)-"आटरूपकवेत्राग्रगुडूचीनिम्बपर्पटा। किराततिक्तसहितास्तिक्ता पित्तकफापहा ॥" इति। कर्कोटककारवेल्लयो सुश्रुतेन वातघ्नत्वमुक्तम् (सू अ ४६।२६९)-"कफवातहर तिक्त रोचन कटुक लघु। वार्ताक दीपन प्रोक्त जीर्ण सक्षारपित्तलम् ॥ तद्वत्कर्कोटक विद्यात्कारवेल्लकमेव च।" इति। तत्र वातलत्व ग्राह्यम्, आतिदेशिकादौपदेशिकस्य बलीयस्त्वात् सादृश्यस्य च कतिपयैरपि गुणैश्चरितार्थत्वाच्च। उपमानादुपमेयस्य हीनगुणत्वात्। किञ्च चरकादिविरुद्ध सुश्रुतपाठो न प्रमाणमित्युक्त जेज्जटेन। विगीतश्चायमतिदेशपाठ।

सामान्यगुणानुक्त्वा केषाञ्चिद्गुणकर्मविशेषमाह—

**हृद्यं पटोलं कृमिनुत्स्वादुपाकं रुचिप्रदम्।**

स०-पटोल हृद्यादिगुणयुक्तम्। मुनिना (?) तु त्रिदोषशमनत्वमुक्तम्-"पटोलपत्र पित्तघ्न वल्ली चास्य कफापहा। फल त्रिदोषशमन मूल चास्य विरेचनम् ॥" इति।

आ० र०-अत्र केषाञ्चिद्विशेष। तत्र पटोलगुणानाह-हृद्यमिति।

**पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ॥ ७९ ॥**

स०-बृहतीद्वय,-स्थूलबृहती-महोटिकाख्या, क्षुद्रबृहती-कण्टकारिकाख्या। तदेतदुभय पित्तकरमग्निदीपन शकृदादीना भेदन वातघ्न च।

आ० र०-बृहतीद्वयगुणानाह-पित्तलमिति।

**वृषं तु वमिकासघ्नं रक्तपित्तहरं परम्।**

स०-वृष छर्दिकासौ हन्ति। रक्तपित्त चात्यर्थ जयति।

आ० र०-वासागुणानाह-वृषमिति।

**कारवेल्लं सकटुकं दीपनं कफजित्परम् ॥ ८० ॥**

स०-कारवेल्लमीषद्रसे कटुकमग्निदीप्तिकरमतिश्लेष्मघ्नम्।

आ० र०-कारवेल्लगुणानाह-कारवेल्लमिति।

**वार्ताकं कटु तिक्तोष्णं मधुरं कफवातजित्।**
**सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम् ॥ ८१ ॥**

स०-वार्ताक रसे कटु तिक्तमुष्णवीर्य मधुर वातश्लेष्मघ्नम्। सह क्षारेण वर्तते सक्षार,-किञ्चित्क्षारत्वयुक्तम्। अग्निजननम्। हृद्य-हृदयाय हितम्। रुच्य-रुचिकृत्। अपित्तल-नञीषदर्थे, किञ्चित्पित्तकरमित्यर्थ। ननु, सह क्षारेण

१ 'ष्णवीर्यत्वे' क ग ञ। २ 'वेत्राग्र० घ्नमुक्त' क ग ञ। ३ 'श्यस्यापि च' ख.घ। ४ 'कफपित्तजित्' इतीन्दुसम्मत सङ्ग्रहपाठ।

वर्तते इत्यत्र सक्षारमित्येव कथमुक्तम्? यावता क्षारो द्रव्यम्। तथा च प्रागुक्त क्षरणादित्यादि । न द्रव्यं द्रव्येण सह वर्तते । तथा च गुणानामेवाय धर्मो यद्द्रव्याश्रितत्व नाम । तस्मात् स क्षारमित्ययुक्तमिव मन्यामहे । अत्राऽऽचक्ष्महे । क्षारशब्देनात्र क्षारधर्मं उपलक्ष्यते विस्रावणाद्यात्मक । यद्वशात् रादारमिति द्रव्य व्यपदिश्यते । तस्मात्सक्षारमित्युपपन्नम् ।

**आ० र०-**वार्ताकगुणानाह-वार्ताकमिति । अपित्तलत्व-बालपक्वव्यतिरेकेण । यदाह माधवकार -"तद्बाल कफपित्तघ्न पक्व सक्षारपित्तलम् ।" इति । सुश्रुतोऽप्याह (सू अ ४६।२६९)-"जीर्णं[१] सक्षारपित्तलम् ।" इति ।

**करीरमाध्मानकर कषायं स्वादु तिक्तकम् ।**

**स०-**करीर-गूढपत्राख्यम्, आध्मानकर रसे कषायमधुरतिक्तकम् ।

**आ० र०-**करीरगुणानाह-करीरमिति ।

**कोशातकावल्गुजकौ भेदिनावग्निदीपनौ ॥ ८२ ॥**

**स०-**कोशातकावल्गुजकौ भेदिनावग्निदीपनौ च । अनयोश्च पित्तकारित्व वातकफघ्नत्व च वेद्यम् । तथा हि-प्रायेण यदुष्ण गुडूच्यादिद्रव्य, तत्पित्तल वातकफहर च दृष्टम् । तथा चाह मुनि (?)-"कफवातनुदवल्गुज" इति । तदेवमन्यत्राप्यौचित्येन दोषकर्तृत्वादि कल्प्यम् । सङ्ग्रहे (सू अ ७) चान्येऽप्युक्ता । यथा-"सतरूढ कदम्ब च रूक्ष ग्राहि हिम गुरु । कुमारजीवलोणिका नलिनी चुंचुपर्णिका ॥ स्वादु रूक्ष सलवण वात श्लेष्मकर गुरु । श्यामाशाल्मलिकाश्मर्यफञ्जीकर्णिकयूथिका ॥ वृक्षादनीक्षीरवृक्षबिम्बीतनिकवृक्षका । रोध्र शण कर्बुदार सशेलुर्विषमूषिका ॥ भल्लातक कोविदार कमलोत्पलकिंशुकम् । पटोलादिगुण स्वादु कषाय पित्तजित्परम् ॥ वातपित्तहरा भण्डी पर्विणी पर्वपुष्पिका । लघुरुष्णा सरा तिक्ता सोरुबूका च लाङ्गली । वातलौ कटुतिक्ताम्लपेदिना तिलवेतसौ । विश्वरास्नाबलाशाक वातघ्नमतिसारनुत् ॥ वात वत्सादनी हन्यात्कफ काण्डीरचित्रकौ ।" इति । मुनिना चान्येऽप्युक्ता (च सू अ २८।१०२)-"न्यग्रोधोदुम्बराश्वत्थप्लक्षपद्मादिपल्लवा । कषाया स्तम्भना शीता हिता पित्तातिसारिणाम् ॥" इति । तथा, सुश्रुते गदितम् (सू अ ४६।२८२)-"करीरकुसुम ज्ञेय कफपित्तहर लघु । आगरत्य नातिशीतोष्ण नक्तान्धाना प्रशस्यते ॥ चातुर्थकज्वरहर नस्ययोगेन शीलितम् । राजिवृक्षस्य निम्बस्य शिग्रो सिहमुखस्य न ॥ कफपित्तहर पुष्प कुष्ठघ्न कुटजस्य च । श्रेयसी निर्लेपणा च सितवत्र च वातनुत् ॥" इति ।

**आ० र०-**कोशातकावल्गुजकयोर्गुणानाह-कोशातकेति ।

**तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः । मदपित्तविषास्रघ्नः**

**स०-**तण्डुलीयो-मण्डीरकाख्य, शीतवीर्यो रूक्ष स्वादुपाकरसो लघुर्मदादिनाशनश्च ।

**आ० र०-**तण्डुलीयगुणानाह-तण्डुलीय इति । तण्डुलीय.-अल्पमारिष ।

**मुञ्जातं वातपित्तजित् ॥ ८३ ॥**
**स्निग्धं शीत गुरु स्वादु बृंहणं शुक्रकृत्परम् ।**

**स०-**मुञ्जात वातपित्तहृत् स्निग्धादिगुणयुतमतिशुक्रकृच ।

**आ० र०-**मुञ्जातगुणानाह-मुञ्जातमिति । मुञ्जात-कन्दविशेष, काश्मीरे प्रसिद्ध ।

**गुर्वी सरा तु पालङ्क्या**

**स०-**पालङ्क्या गुर्वी । तथा, सरा-शकृदादिभेदिनी । तुशब्द पिच्छिलश्लेष्मलहिमादीना सङ्ग्रहोक्ताना समुच्चयार्थ । तथा चोक्त सङ्ग्रहे (सू अ ७)-"पालङ्क्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमा ।" इति ।

**आ० र०-**पालङ्क्यागुणानाह-गुर्वीति । ईषल्लोहितचीरितपत्रा वास्तुकसदृशा-पालङ्क्या । "वास्तुकेन समा ज्ञेया ईष ल्लोहितपत्रिका । तथा चीरितपत्रा च पालङ्क्या सा प्रकीर्तिता ॥" ननु, "चिल्ली वास्तुकवत् ज्ञेया पालङ्क्या तण्डुलीयवत् । वातकृद्बद्धविण्मूत्रा रूक्षा पित्तकफे हिता ॥" इति सुश्रुतेन (सू अ ४६।२६१) बद्धविण्मूत्रोक्ता, इह तु सरेति विरोध । नैवम् । आमा बद्धविण्मूत्रा, पक्वा तु सरेति विषयभेदात् । यदाह चरक -"सर्वाणि सूप्यकानि" इत्यादौ पालङ्क्या पठित्वा, (च सू अ २७।९९)-"शाक गुरु च रूक्ष च प्रायो विष्टभ्य जीर्यति । मधुर शीतवीर्यं च पुरीषस्य च भेदनम् ॥" इति । सुश्रुतोक्त च पित्तकफहितत्व पित्तावृतकफविषयमिति । "पालङ्क्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमा ॥" इति सङ्ग्रहे (सू अ. ७) श्लेष्मलत्ववचनात् ।

**मदघ्नी चाप्युपोदका ॥ ८४ ॥**

**स०-**उपोदका मदनाशिनी । अपिशब्दात् गुर्वी सरा च । उपोदका-मयाली, खण्डपालङ्क्येति प्रथिता ।

**आ० र०-**उपोदकागुणानाह-मदघ्नीति । उपोदका-पोतकी । चकारात् पूर्ववत् । उक्त च सङ्ग्रहे (सू अ. ७)-"मदघ्न्युपोदका चञ्चुर्ग्राही तौ पूर्ववत्तथा ॥" इति ।

१ जीर्ण-पक्वम् । २ 'यकट्टतिक्तक' ट । ३ 'भेदना' अ आ क ख घ ङ ञ । ४ 'कतृत्वादि' ट । ५ 'कायवशाकसुवर्चला' स ह । ६ 'चुम्बप' ड । ७ 'भजीकर्णक' स स । ८ 'विषमुष्टिका' ट स मू । 'विषमूषिका' इन्दु । ९ 'मुण्डी' ट । १० 'क्ताम्लौ' स ह । ११ 'बिल्वरास्ना' स ह । १२ 'गण्डीर' 'कजीर' स ह । १३ 'गुरु' ड । १४ 'रक्तवृक्षस्य निम्बस्य मुष्ककार्कासनस्य च ।' स सु ।

१ 'बिल्वपर्णी' ठ । २ 'तन्दुली' अ आ क ख घ ग ञ ट । ३ 'पालक्या' अ क ञ ठ म स । ४ 'उपोदका मयाली च सुरुङ्गा पोतकी स्मृता ।' इति कोश । ५ 'उपोदकी' क ग ज ।

**पालङ्क्यावत्स्मृतश्चञ्चुः स तु सङ्ग्रहणात्मकः ।**

स०-चञ्चु पालङ्क्यासदृशो गुणै स्मृत । स पुनश्चञ्चु सङ्ग्रहणात्मको-न भेदी ।

**आ० र०-चञ्चुगुणानाह-पालङ्क्यावदिति । गुरुरिति सिद्धे पालङ्क्यावद्वचनमुक्तानुक्तपालङ्क्यागुणग्राह्यर्थम् । ननु, "लघु पाके तु जन्तुघ्न पिच्छिलो व्रणिना हित । कषायमधुरो ग्राही चञ्चुस्तेषा त्रिदोषहा ॥" इति सुश्रुतेन ( सू अ ४६।२५१ ) लघुत्व त्रिदोषहरत्व चोक्तम् । इह तु गुरुत्व श्लेष्मलत्व चेति विरोध । मैवम् । त्रिदोषहरत्वलघुत्वे एव ग्राह्ये, आतिदेशिकस्यौपदेशिकेन बाधात् । अत एवोक्त खारणादिना-"चञ्चुर्मर्मरिका पाठा वेत्राग्र सुनिषण्णकम् । शठी शाक च सङ्ग्राहि दोषत्रयहित लघु ॥" इत्यादि ।**

**विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ॥ ८५ ॥**
**जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनम् ।**

स०-विदारी-शृगालिका, वातपित्तहरा मूत्रलादिगुणयुक्ता रसायन च । कन्दस्यैवाय गुणनिर्देशो बोध्य । तथा च मुनि ( च सू अ २७।११७ )-"जीवनो बृहणो वृष्यो बल्य शस्तो रसायनम् । विदारिकन्दः कण्ठ्यश्च मूत्रल स्वादुशीतल ॥" इति ।

**आ० र०-विदारीगुणानाह-विदारीति । विदारी-भूकूष्माण्डी, तस्या कन्दोऽत्र ग्राह्य । उक्त च ( चरकेण सू अ २७।११७ )-"विदारिकन्दो बल्यश्च मूत्रल. स्वादुशीतल ।" इति ।**

**चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ॥ ८६ ॥**

स०-जीवन्ती चक्षुष्यादिगुणयुक्ता । या मधुरा सा शीतवीर्या च । या त्वमधुरा सा एभिर्गुणै किञ्चिदूना । तथा चोक्त सङ्ग्रहे ( सू अ ७ )-"चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा । शाकाना प्रवरा, न्यूना द्वितीया किञ्चिदेव तु ॥" इति । मुनिना तु जीवन्त्या शतावर्याद्याश्च वातपित्तहरत्वमगादि । तत्पाठो हि ( च सू अ २७।१०४ )-"भण्डीशतावरीशाकबलाजीवन्तिज च यत् । पर्वण्या पर्वपुष्प्याश्च वातपित्तहर मतम् ॥" इति ।

**आ० र०-जीवन्तीगुणानाह-चक्षुष्येति । जीवन्ती-स्वर्णवर्णमूलनालादिका । सङ्ग्रहे तु ( सू अ ७ )-"शाकाना प्रवरा, न्यूना द्वितीया किञ्चिदेव तु ।" इति ।**

१ 'तश्चुचु ' अ आ ख घ झ ठ । 'तश्चञ्चु ' ट । २ 'चुचु' ख घ झ स सु । ३ 'उच्यते' क ञ । ४ '-द्राक्षालिका' ट ठ । ५ 'यनी च' ड । ६ 'यने' स च । ७ 'न्दो वर्ण्यश्च' ट । ८ अस्याग्रे 'सुश्रुतेन' इत्यधिक सर्वेष्वपि हेमाद्रिटीकापुस्तकेपु । किन्तु तदयुक्तम्, सुश्रुते पाठान्तरस्य दृष्टत्वात् पाठस्यास्य चरकोक्तवाच । ९ 'मूलजाला' ख घ झ ।

**कूष्माण्डतुम्बकालिङ्गकर्कार्वेर्वारुतिण्डिशम् ।**
**तथा त्रपुसचीनाकचिर्भटं कफवातकृत् ॥ ८७ ॥**
**भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ।**

स०-कूष्माण्डादिक कफवातकृत् भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरस गुरु च ।

**आ० र०-कूष्माण्डादिगुणानाह-कूष्माण्डेति । कूष्माण्ड-पुष्पफलम् । तुम्ब-अलाबु । कालिङ्ग-कैलिङ्गडम् । कर्कारु-खर्बुज । एर्वारु-कर्कटी । तिण्डिश-छाटकम् । त्रपुस-वालुकम् । चीनाक-चीर्णकम् । चिर्भट-डङ्गरम् । भेदि-मलानाम् । विष्टम्भि-वायो । गुरुत्वे च क्रम उक्त खारणादिना-"त्रपुसैर्वारुकर्कारुकूष्माण्डालाबुचिर्भटा । मधुरा रूक्षणा शीता गौरव तूत्तरोत्तरम् ॥" इति ।**

अत्र विशेषमाह—

**वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित् ॥ ८८ ॥**
**बस्तिशुद्धिकरं वृष्यम्**

स०-वल्लीफलाना मध्ये कूष्माण्ड-पुष्पफलसज्ञ वरम् । तथा, वातपित्तहर बस्तिशुद्धिकर वृष्य च ।

**आ० र०-अत्र केषाचिद्विशेष. । तत्र कूष्माण्डगुणानाह-वल्लीफलानामिति ।**

**त्रपुसं त्वतिमूत्रलम् ।**

स०-त्रपुस पुनरतिशयेन मूत्रलम् ।

**आ० र०-त्रपुसगुणमाह-त्रपुसमिति । अतिग्रहणात् कूष्माण्डादीनामीषन्मूत्रलत्वम् ।**

**तुम्बं रूक्षतरं ग्राहि कालिङ्गैर्वारुचिर्भटम् ॥ ८९ ॥**
**बालं पित्तहरं शीतं विद्यात्पक्वमतोऽन्यथा ।**

स०-तुम्ब-अलाबुसज्ञ रूक्षतरम् । एर्वारुकाद्यपि रूक्षम्, तुम्ब त्वतिशयेनेत्यर्थ । तथा, ग्राहि । पूर्वाणि तु सामान्यगुणोक्त्या भेदीन्येव । चरकमुनिमतानुसारिणस्त्वेव व्याचक्षते,-तुम्ब रूक्षतरम्, कालिङ्गैर्वारुचिर्भट ग्राहीति । कालिङ्ग-कर्चरम् । एर्वारु-कर्कटिका । चिर्भट-डङ्गरम्, मालवेषु प्रसिद्धम्, अतिप्रसिद्ध जालन्धरादिषु । एतच्च बाल-असम्पूर्णरसादि, पित्तहर शीतवीर्य च । अतो-बालाद्विपरीतम्, पक्व पित्तकरमुष्णवीर्य चेत्यर्थ । सुश्रुतेनोक्तम् ( सू अ. ४६।२१८ )-"नील यत्त्रपुस बाल तृष्य पित्तहर मतम् । तत्पाण्डु कफकृज्जीर्णमम्ल पित्तकर स्मृतम् ॥" इति ।

१ 'कालिन्द ' ख घ । २ 'खर्वारु ' ख घ । ३ 'छागडम्' क ग ञ । ४ 'चीणकम्' ख घ । 'चीरणम्' ग । ५ 'रूक्षशीताश्च गौ' क ग ञ । ६ 'अन्ये त्वेव' ड । ७ 'बाल सुनील त्रपुस तेषा पि' स सु । ८ 'कफजि' ट. । ९ 'मस्रपित्त' ठ । 'मम्ल वातकफापहम् ।' स सु ।

आ० र०—तुम्बगुणानाह—तुम्ब रूक्षतरमिति । तरग्रहणात् कूष्माण्डादीनामीषद्रूक्षत्वम् ।

कालिङ्गादीना गुणानाह—ग्राहि कालिङ्गेति । ग्राहीति केचित्तुम्बेन सम्बध्नन्ति । तदसत् । "अलाबु भेदन तेषा त्रपुस त्वतिमूत्रलम् । एर्वारुक सृष्टमूत्र, ग्राहि कर्कारुचिर्भटम् ॥" इति खारणादिवचनात् ।

बालकूष्माण्डादेर्गुणानाह—बालमिति । केचित्कालिङ्गादिविषयत्वमेवास्य वाक्यस्याहु । तदसत् । "पित्तघ्नेषु कूष्माण्ड बालम्" इति, "बाल सुनील त्रपुस तेषा पित्तहर स्मृतम् ।" इति च सुश्रुतवचनात् ( सू अ ४६।२१३ ) ।

पक्कस्य कूष्माण्डादेर्गुणानाह—पक्कमिति । अतोऽन्यथा—पित्तकरमुष्ण च । पक्क—ईषत्पक्वम्, सम्यक्पक्वस्य वक्ष्यमाणत्वात् ।

**शीर्णवृन्त तु सक्षारं पित्तलं कफवातजित् ॥ ९० ॥**
**रोचनं दीपन हृद्यमष्ठीलाऽऽनाहनुल्लघु ।**

स०—शीर्णवृन्त—कर्चरम्, ईषत्क्षार पित्तल कफवातघ्न च । रुचिकरमग्निदीप्तिकृत् हृद्यम्, अष्ठीलामानाह च हन्ति, लघु च । "घनोऽष्ठीलोपमो ग्रन्थिरष्ठीलोर्ध्वं समुन्नत ।" इति ( हृ नि अ ११।६० ) अष्ठीलालक्षणम् । "साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् । ऊर्ध्वाधोवातरोधेन तमानाह प्रचक्षते ॥" इति ( हृ नि अ ११।५९ ) आनाहलक्षणम् ।

आ० र०—शीर्णवृन्तस्य कूष्माण्डादेर्गुणानाह—शीर्णवृन्तमिति । अष्ठीलानाहौ—गुल्मनिदाने वक्ष्येते । पित्तलत्व—कूष्माण्ड विना, "शुक्क[2] लघूष्ण सक्षार दीपन बस्तिशोधनम् । सर्वदोषहर हृद्य पथ्य चेतोविकारिणाम् ॥" इति ( सू अ ४६।२१३ ) सुश्रुतवचनात् । शीर्णवृन्तशब्देन सम्यक्पक्क लक्ष्यते । सम्यक्पक्वस्य हि वृन्त शीर्यते ।

**मृणालबिसशालूककुमुदोत्पलकन्दकम् ॥ ९१ ॥**
**नन्दीमाषककेलूटशृङ्गाटककसेरुकम् ।**
**क्रौञ्चादनं कलोड्यं च रूक्षं ग्राहि हिमं गुरु ॥ ९२ ॥**

स०—मृणालादि रूक्ष सङ्ग्रहण शीतवीर्यं गुरु च । मृणाल द्विविध,—सूक्ष्म स्थूल च । तत्र सूक्ष्म—मृणालम्, इतरत्—बिसम् । शालूक—पद्ममूलम् । कुमुदकन्दम् । कुमुद—शशिप्रियम् । उत्पलकन्दक—रक्तोत्पलकन्दम् । नन्दी—तुण्डेरिका । माषको—वास्तुल । केलूट—किसकसज्ञमुदुम्बरभेद । शृङ्गाटक—त्रिकोणाकृति जलोद्भव कन्दम् । कसेरुक—मौगवम्[3] । कौञ्चादन—तैमेदम्[4] । कलोड्य—पद्मबीजम् ।

आ० र०—मृणालादिगुणानाह—मृणालेति । मृणाल—सूक्ष्म कमलमूलम्, बिस—स्थूलम्, शालूक—पद्मकन्द, कुमुदोत्पलयो कन्दस्य पृथग्ग्रहणात् । रक्त—पद्मम्, श्वेत कुमुदम्, नील—उत्पलम् । नन्दीमापको—वानीरक[1] । केलूट—जलोदुम्बर । शृङ्गाटक—त्रिकोणो जलकन्द । कसेरुक—लोमशकृष्णवर्तुलसूक्ष्मस्तडागकन्द । क्रौञ्चादन—थेम्बुलिका[2] । कलोड्य—पद्मबीजम् ।

**कलम्ब[3]नालिकामार्ष[4]कुटिञ्जरकुतुम्ब[5]कम् ।**
**चिल्लीलट्वाकलोणीकाकुरूटक[6]गवेधु[7]कम् ॥ ९३ ॥**
**जीवन्तझुञ्झ्वेडगजयवशाकसुवर्चला[8]ः ।**
**आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणम्[9] ॥ ९४ ॥**
**स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ।**
**शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ॥ ९५ ॥**
**स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम् ।**

स०—कलम्बादिक मधुर रूक्ष किञ्चिल्लवण वातश्लेष्मकरं गुरु च । शीतवीर्य सृष्टमूत्रपुरीष च । मूत्रपुरीषे सृजति—बहिक्षिपति । विष्टभ्य—उदरप्रदेशे पिण्डीभूय, जीर्यति—परिणमति । प्रायोग्रहण किञ्चिदेषा मध्ये नैवस्वरूपमिति ज्ञापनार्थम् । कलम्ब—कदम्ब । नालिका—दीर्घनालरूपा[10] कलम्बुसज्ञा । मार्षो—गन्धारिका । कुटिञ्जर—तीव्रमूलकम् । कुतुम्बको—द्रोणपुष्पी । चिल्ली—पृथुपत्र यवशाक[11] कुनामसज्ञम् । लट्वाको—गुग्गुलुशाकम् । लोणीका—लोणार । कुरूटक—स्थितिवारक । गवेधुक—तृणधान्यविशेष । जीवन्तो—बृहद्गान्धारम् । झुञ्झु—झुञ्झुरुक । एडगज—प्रपुन्नाट । यवशाक—ह्रस्वपत्रा चिल्ली । सुवर्चला—रविभक्ता । आलुकानि च सर्वाणि—नानाविधानि रक्तालुकमधुकालुकादिभेदेन । सूप्यानि—मुद्गराजमाषादिपत्राणि । लक्ष्मण—मधुयष्टिका । एतच्च सर्व स्विन्न निष्पीडितरसमतिबहुस्नेह च नात्यपथ्यम् । सुश्रुते(?)चोक्तम्—"सस्कृतं वेसवारेण सस्नेह शाकमिष्यते । राजिकासक्तुभक्तादिसस्कार चानुवर्तते ॥" इति ।

आ० र०—कलम्बादिगुणानाह—कलम्बनालिकेति । कलम्बो[13]—नाड्याकार सूक्ष्मसुषिरो बहुतोयज । नालिका—तस्मादल्पा श्लक्ष्णा[14] च । मार्ष—मण्टक । कुटिञ्जर—प्रसिद्ध । कुतुम्बको—द्रोणपुष्पी । चिल्ली—प्रसिद्धा । लट्वाक—गुग्गुलुशाकम् । लोणीका—घोलिका । कुरूटक—शितिवारक । गवेधु-

१ केचित्—सुगतादय । "तेषा कालिङ्गैर्वारुचिर्भटाना बाल पक्वशीर्णवृन्ताख्या अवस्थास्तिस्र, तासु विशेष दर्शयन्नाह—बालमित्यादि । बाल कालिङ्गैर्वारुचिर्भटम्, पक्व कालिङ्गैर्वारुचिर्भटम्, शीर्णवृन्त कालिङ्गैर्वारुचिर्भटम्, इति योज्यम्" इति सुगतटीकायाम् । २ 'शुष्क' क ग ज । 'पक्व' क । शुक्क—कार्पासवर्णम्, परिपक्वमित्यर्थ । ३ 'लोमशवम्' ट । ४ 'मेदम्' ठ । 'मागध देशान्तरे प्रवरमिति ।' ट ।

१ 'वानीरिका' क ग ञ । २ 'थेञ्चुलिका' ख घ 'येम्बुभिका' ग । ३ 'कलम्बु' क ख घ झ ञ स स । ४ 'कुलिञ्जर' क ञ । ५ 'कुरुम्ब' क ग ञ ट । ६ 'कुरण्टक' अ क चन्द्र । 'कुरूढक' ख घ झ स मू । ७ 'धुका' अ ख घ झ स द्व । ८ 'सुवर्चलम्' आ । ९ 'लाक्ष्मणम्' अ आ हे । 'लक्ष्मणा' ट स स । १० 'कलम्बनालिका—दीर्घ' ट । ११ 'तन्दुलकम्' ट । १२ 'शाक क्षारपत्रक' ट । १३ 'कलम्बु —नाडिकाकार शुषिरो' ख घ झ । १४ 'सूक्ष्मा' ख घ ।

का–कंसिका। जीवन्तो–रक्तनालो मार्षः । झुञ्झु –झुञ्झुरूकः। एडगज –प्रपुन्नाट । यवशाक–चिल्लीसदृश लघुपत्रम् । सुवर्चला–रविभक्ता । सर्वाण्यालुकानि–पिण्डालुकमध्वालुरुह स्त्यालुकादीनि । सूप्यानि–मुद्गादीनां शिम्ब्य पत्राणि च । लक्ष्मणा–रक्तबिन्दुच्छदा, तस्या इद लाक्ष्मणम् । लक्ष्मण–यष्टीमधु, तस्येद लाक्ष्मणमित्येके । प्रायोग्रहण प्रपुन्नाटादिषु व्यभिचारार्थम् । यदाह सुश्रुत (सू अ ४६।२७१)–"कफापह शाकमुक्त वरुणप्रपुनाटयो । रूक्ष लघु च शीत च वातपित्तप्रकोपणम् ॥" इति । विष्टभ्य जीर्यति–पच्यमान विष्टम्भ करोतीत्यर्थ । अत एव पक्क सत् सृष्टविण्मूत्रम् । सङ्ग्रहे तु (सू अ ७)–चिल्लीनिष्पावलट्वाककुरूटकगवेधुका । यातुका[1] शालकल्याणी त्रिपर्णी पीलुपर्णिका ॥ कुमा[4]रजीवलोणीकायवशाकसुवर्चला[5] । कुकुण्डनलिनीझुंझुस्रुग्[6]धूमकलाक्ष्मणम्[7] ॥ आलुकानि च सर्वाणि तथा सूप्यानि रालक[8] । जीवन्तकश्चञ्चुपर्णी प्रपुन्नाट कुठेरकम्[10] ॥" इति ।

कलम्बादीना[11] सस्कारादिवशाद्विशेषमाह[12]–स्विन्न निष्पीडितरसमिति । पूर्वं स्विन्नम्, ततो निष्पीडितरसम्, ततो बहुना स्नेहेन साधितम्[13], न तु स्नेहाक्तम्, नातिदोषलमिति । अतिदोषलग्रहणात् कलम्बादीना[11] किञ्चित्पित्तकरत्वमपि ज्ञेयम् । वातश्लेष्मकरत्वोक्तिस्त्वतिशयार्था[14] । उक्त च सुश्रुतेन (सू अ ४६।२७५)–"स्वादुपाकरसा शीता श्लेष्मला[15] नातिपित्तला । लवणानुरसा रूक्षा सक्षारा वातला सरा ॥" इति ।

**लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता ॥९६॥**

स०–लघुपत्रा या चिल्ली–यवशाकविशेष , सा तु वास्तुकसमा गुणैर्मता ।

आ० र०–चिल्लीविशेषस्य गुणानाह–लघुपत्रेति ।

**तर्कारीवरुणं[16] स्वादु सतिक्तं कफवातजित् ।**

स०–तर्कारी–अरणिका, वरुण –तमाल[17] , समाहारेण तयोर्द्वन्द्व । एतत्स्वादु किञ्चित्तिक्त कफवातघ्न च ।

आ० र०–तर्कारीवरुणयोर्गुणानाह–तर्कारीति । तर्कारी–अग्निमन्थ । वरुण –सेतुवृक्ष । यत्तु सुश्रुतेन वरुणस्य वातपित्तप्रकोपणत्वमुक्तम्, तत्ससृष्टविषयम् ।

**वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकम् ॥९७॥**
**दीपनं भेदनं हन्ति गरशोफकफानिलान् ।**

स०–वर्षाभ्वौ–पुनर्नवे, तथा कालशाक, किञ्चित्क्षार रसे च कटुतिक्त वह्निदीपन भेदन गरादीश्च हरति । कठिल्लोऽपि वर्षाभू , स च प्रागुक्तगुण । तथा च निघण्टु (धन्वन्तरीय , वर्ग १।२७८)–"पुनर्नवा विशाखश्च कठिल्ल शशिवाटिका । वृश्चीर[3] क्षुद्रवर्षाभूर्दीर्घपत्र कठिल्लक ॥ पुनर्नवोऽपर क्रूर सद्यो मण्डलपत्रक । श्वेतमूलो वर्षकेतुर्महावर्षाभुरुच्यते ॥" इति ।

आ० र०–वर्षाभूद्वयस्य कालशाकस्य च गुणानाह–वर्षाभ्वाविति । वर्षाभ्वौ–ह्रस्वमहत्यौ रक्तश्वेतपुनर्नवे । कालशाक–कालिकाशाकम् । अनिलघ्नत्व तु कालशाक विना, तस्य वातलत्वात् । यदाह खारणादि –"कालशाक सकारञ्ज कटुक वातकोपनम् । दीपनीय प्रशस्त च विषशोफोदरार्शसाम् ॥" इति । चरकोऽपि (सू अ २७।८८)–"लघूष्ण वातल रूक्ष कालाख्य शाकमुच्यते ।" इति । अत एव माधवकारो वर्षाभूभ्या पृथगाह–"कालशाक गरश्लेष्मशोफघ्न दीपन लघु ।" इति, "वर्षाभ्वौ कफवातघ्नौ हितौ शोफोदरार्शसाम् ।" इति च ।

**दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः ॥९८॥**

स०–चिरिबिल्व –पूतिकरञ्ज , तस्याङ्कुरा वह्निदीपना कफवातघ्ना सराश्च ।

आ० र०–चिरिबिल्वाङ्कुरगुणानाह–दीपना इति । चिरिबिल्व –करञ्ज ।

**शतावर्यङ्कुरास्तिक्ता वृष्या दोषत्रयापहाः ।**

स०–शतावर्या अङ्कुरा –प्ररोहा , तिक्तरसा वृष्या शुक्रकृतस्त्रिदोषघ्नाश्च ।

आ० र०–शतावर्यङ्कुरगुणानाह–शतावर्यङ्कुरा इति ।

**रूक्षो वंशकरीरस्तु विदाही वातपित्तलः ॥ ९९ ॥**

स०–वंशकरीरो–वंशाङ्कुरो, रूक्षो विदाही वातपित्तकृत् ।

आ० र०–वशाङ्कुरगुणानाह–रूक्ष इति । वशो–वेणु , तस्य करीर –अङ्कुर । ननु, दोषल इत्युच्यताम्, सुश्रुतेन कफकरत्वस्योक्तत्वात्–"वेणो करीरा कफला मधुरा रसपाकत । विदाहिनो वातकरा सकषाया विरूक्षणा ॥" इति । मैवम् । अनार्षोऽय पाठ , जैज्जटोपेक्षितत्वात् । आर्षस्तु–"वेणो करीरा श्लेष्मघ्ना." इत्यादि । उक्त हि सङ्ग्रहे

१ 'कसिता' क ग ञ । २ 'कुरुण्टक' क ग ञ । ३ 'धातुकी' क ञ । ४ 'कुमार्या' स स । ५ 'शाक सुवर्चला' क ग ञ स मू । ६ 'कूश्माण्डनीलिनी स्वर्चा वृकधूमकलक्ष्मणा ।' स स । ७ 'नीमुष्टवृकधूमकलक्ष्मणम्' स मू । ८ 'धूम सलक्ष्म' ख घ । ९ 'नालक ' क ग ञ । १० 'कुबेरकम्' क ञ स स । ११ 'कलम्ब्वादीना' ख घ ङ । १२ 'सस्करणादि' ख घ । १३ 'साधित सन्नातिदोषलमिति' ख घ ङ । १४ 'यार्थम्' क ग ञ । १५ 'कफघ्ना' इति मुद्रितसुश्रुतपुस्तकस्थपाठोऽशुद्ध एवेति प्रतिभाति । १६ 'वरण' ठ स स । १७ 'उरुमाल ' ट । 'रुमाल ' ठ ।

१ अस्याग्रे "सङ्ग्राहि शाल्मलीपुष्प पित्तास्रघ्न विशेषत ।" इति अ आ क ञ पुस्तकेष्वधिकम्, 'शाल्मलीपुष्पशाकगुणानाह–सङ्ग्राहीति ।' इति तट्टीका च क ञ पुस्तकयो । २ 'सासिनाडिका' ठ । ३ 'वृश्चीव ' ट ठ । ४ 'क्षुद्र ' ट ठ । ५ 'ह्रस्वमहत्यौ' इति क ञ पुस्तकयोर्नास्ति । ६ 'शोषघ्न' ख घ ङ । ७ 'कटु' ख घ ङ । ८ 'शतावरी–शतमूली' इति डल्हण । ९ 'टोक्षिप्तत्वात्' क ञ । 'टोज्झितत्वात्' ग ।

( सू अ ७ )–"वंशकरीरास्तु विदाहिन । वातपित्तकरा रूक्षा कटुपाका कफापहा ॥" इति । माधवकारेणाप्युक्तम्–"वातपित्तकरा रूक्षा कटुका रसपाकत । वेणो करीरा श्लेष्मघ्ना सकषाया विदाहिन ॥" इति । यत्तु कन्दवर्गे सौश्रुतीया पठन्ति ( सू अ ४६।३०५ )–"वेणो करीरा गुरव कफमारुतकोपना ।" इति । तदप्यनार्षम्, पुनरुक्तत्वात् । वंशमूलाङ्कुरविषय वा ।

**पत्तूरो दीपनस्तिक्त प्लीहार्शःकफवातजित् ।**

**स०**–पत्तूरो दीपनस्तिक्तरस प्लीहादिजित् । पत्तूरो–मत्स्याक्षक ।

**आ० र०**–पत्तूरगुणानाह–पत्तूर इति । पत्तूरो–लोहमार ।

**कृमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः ॥१००॥**

स०–कासमर्द सर कृम्यादीश्च नाशयति । उत्क्लेद –स्रोतसा मालिन्येनार्द्रत्वम् ।

**आ० र०**–कासमर्दगुणानाह–कृमीति । उत्क्लेद –क्लेदाधिक्यम् ।

**रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम् ।**

**स०**–कुसुम्भशाकं रूक्षमुष्णवीर्यमम्ल गुरु पित्तकृत्सरं च ।

**आ० र०**–कौसुम्भगुणानाह–रूक्षोष्णमिति । कौसुम्भ–कुसुम्भशाकम् ।

**गुरूष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत् ॥ १०१ ॥**

**स०**–सार्षप शाक गुरूष्णवीर्यम् । तथा, विशं–शकृत्, मूत्र च बध्नाति । त्रिदोषकृच्च । सङ्ग्रहे तु ( सू अ ७ ) सक्षारत्वमस्योक्तम् । तत्पाठो हि–"सक्षारमधुरं स्निग्धमुष्ण च गुरु सार्षपम् ।" इति । सुश्रुतेन चोक्तम् ( सू अ ४६।२३८ टीका )–"कफघ्न सार्षप शाकमासुर शाकमेव च ।" इति ।

**आ० र०**–सार्षपगुणानाह–गुरूष्णमिति । सार्षप–सर्षपशाकम् । सङ्ग्रहे तु ( सू अ ७ )–"सक्षारमधुर स्निग्धमुष्ण गुरु च सार्षपम् । शाकानामवर बद्धविण्मूत्र सर्वदोषकृत् ॥" इति ।

**यद्बालमव्यक्तरसं किञ्चित्क्षारं सतिक्तकम् ।**
**तन्मूलक दोषहर लघु सोष्णं नियच्छति ॥ १०२ ॥**
**गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ।**
**स्वराग्निसादोदावर्तपीनसांश्च**

**स०**–यन्मूलक बाल, अव्यक्तरस–अस्फुटास्वादम्, तथा किञ्चित्क्षार–ईषत्क्षारगुणयुक्त कार्यतोऽनुमीयमानम्, तथा सतिक्त–ईषत्तिक्तक रसनेन्द्रियस्य किञ्चिदुद्वेजकम्, तन्मूलक दोषाणा हर–दोषहरम्, नान्यावस्थम् । बाल मूलक दोषहरमित्यनेनास्य विशिष्टा बालावस्था दोषहरत्वेन नियम्यते । न सर्व बालावस्थं दोषहरम्, अपि त्वीदृग्रूपमित्यर्थ । अन्ये तु दोषयो र्हर-दोषहरम्, इत्यत्र समास कृत्वा वातश्लेष्मघ्नत्वमेवास्य प्रतिजानते । यत किञ्चिदुष्णवीर्यत्वात् पित्तकरत्वमस्यास्त्येव । किञ्चित्तिक्तरसोपेतत्वेन पित्तकर्तृत्वमस्य व्याहर्तुं न युक्तम् । वक्ष्यति हि ( हृ सू अ ९।२५ )–"रस विपाकस्तौ वीर्य प्रभावस्तान्व्यपोहति ।" इति । एव चैतन्मूलक वातश्लेष्मघ्नमेव युक्तम्, न तु पित्तहृच्च, इति तेषामभिप्राय । एतच्च मूलक गुल्मादींश्च नियच्छति । पीनसांश्चेति चशब्द समुच्चये । अन्यानप्येवप्रायान् रोगान्नियच्छतीति । सुश्रुतस्तु ( सू अ ४६। २४० )–"सर्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका ।" इति यद्भेदान्तरमूचे, तदप्यत्रैव बालमूलकलक्षणेऽन्तर्भूतमिति तन्त्रकृतेह पृथङ्नोक्तम् ।

**आ० र०**–अथ मूलकगुणानाह । तत्र बालमूलकगुणानाह–यद्बालमिति । बाल–कोमलम् । तस्य तिस्रोऽवस्था ,– प्रथममव्यक्तरसम्, तत ईषल्लवणम्, तत ईषत्तिक्तम् । तदवस्थात्रयेऽपि दोषहरत्वादिगुणम् । स्वराद्यो साद. ।

**महत्पुनः ॥ १०३ ॥**
**रसे पाके च कटुकमुष्णवीर्यं त्रिदोषकृत् ।**
**गुर्वभिष्यन्दि च**

**स०**–अव्यक्तरसादिलक्षणावस्था विहाय यावद्व्यक्तरसाद्यवस्थं तत्सम्पद्यते । ततोऽनन्तर क्रमेण रसविपाकयो कटुकमुष्णवीर्य तन्मूलक महत्–वृद्ध त्रिदोषकृद् गुर्वभिष्यन्दि च भवति । वृद्धस्य च मूलकस्यानेका अवस्था सम्भवन्ति । तत्र चाद्यावस्थाया किञ्चित्त्रिदोषकृत्त्वम्, अन्त्यावस्थाया त्वतिशयेन त्रिदोषकृत्त्व वेद्यम् । सङ्ग्रहे ( सू अ ७ ) त्वस्य स्वादुविपाकित्वमुक्तम् । तत्पाठे–"महत्पुन । रूक्षोष्ण कटुक स्वादु विपाके सर्वदोषकृत् ॥" इति । तच्चामविषयम् ।

**आ० र०**–महद्गुणानाह–महत्पुनरिति । महत्–जरठम् । सङ्ग्रहे तु स्वादुपाकमुक्तम् ( सू अ ७ )–"महत्पुन । रूक्षोष्ण कटुक स्वादु विपाके सर्वदोषकृत् ॥" इति । तच्चामविषयम् । तथा च खारणादि –"रूक्ष विदाहि तीक्ष्णोष्ण कटुक स्वादु पच्यते । उत्क्लेदि स्तम्भि गुर्वाम मूलक त्रिमलोल्बणम् ॥" इति । अग्निपक्व तु कटुपाकमेव ।

**स्निग्धसिद्धं तदपि वातजित् ॥ १०४ ॥**

**स०**–अपिशब्द एवार्थे । तदेव–महन्मूलक स्निग्धस्विन्नं वातजित् । स्निग्ध च तत्स्विन्न च स्निग्धस्विन्नम् । न त्वस्निग्धस्विन्नमात्रमित्यर्थ ।

१ अस्मात्प्राक् "कषायाश्चाहिता" इति पाठ क ग ञ पुस्तकेषु दृश्यते । सङ्ग्रहद्वये त्वत्र 'तद्वत् पञ्चाङ्गुलो' इति पाठ । २ 'पत्तूर –शालिञ्च ' इति चक्र , 'शिरवालिकाभेदो महापत्र ' इति डल्हण । ३ 'क्षार म' ख ध.स स. ।

१ 'इत्येव' ट । २ 'रसत्वेन' ट । ३ 'स्तान्व्यपो' ठ । ४ 'एवविध सूक्ष्म मूलकमेवगुणयुक्तम् । अय जातिविशेष । तथा च बालमूलकस्य कन्दमूलकाद्बीजदेशकालसंस्थानपरिणतिविशेषाद्भिन्नजातीयत्व प्रसिद्धमेव काश्मीरेषु' इतीन्दुटीका ट पुस्तकेऽप्यत्र दृश्यते । ५ 'त्रये दोष' क ग ञ । ६ 'तथा हि' ट । ७ 'गुरूष्ण' ट ठ. स स । ८ 'स्निग्धस्विन्न' इत्यरुणदत्तचन्द्रनन्दनसम्मत पाठ । ९ 'स्विन्नमित्यर्थ.' ट. ।

आ० र०-स्निग्धसिद्धगुणानाह-स्निग्धसिद्धमिति। स्निग्धै र्घृतमासरसादिभि साधित-स्निग्धसिद्धम्। यद्दोषल महदपि स्निग्धसिद्ध वातघ्नम्। किंपुनर्यद्दोषघ्न बालम्? इत्यपिश ब्दार्थ।

**वातश्लेष्महरं शुष्कं सर्वम्**

स०-सर्व-बाल वृद्ध च मूलक, शुष्क सत् वातश्लेष्महरम्।

आ० र०-शुष्कगुणानाह-वातश्लेष्महरमिति। तदपी-त्यनुवर्तते। पूर्ववदपिशब्दार्थ।

**आमं तु दोषलम्।**

स०-आमं पुनर्मूलक हरितकत्वेन यद्वक्ष्यते तद्दोषलम्। सर्वमित्यत्रैायत्नकृतेन सम्बन्धेन सम्बध्यते। तेनादोषलस्य बालस्याप्यामस्य दोषलत्वम्, न तु वृद्धस्यैवेत्यर्थ। मूलक-नीलकण्ठापरसञ्ज्ञम्।

आ० र०-आमगुणानाह-सर्वमिति। सर्व-बाल मह-च्छुष्कमार्द्र च। आमं-अनग्निपक्वम्।

**कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः॥ १०५॥**

स०-पिण्डालु कटुको रसे, वीर्ये चोष्णो, वातकफघ्न पित्तकरश्च।

आ० र०-पिण्डालुगुणानाह-कटूष्ण इति। पिण्डालु-वाराहीकन्द। स हि वक्त्रालुरुच्यते। उक्त ह्यायुर्वेदप्रकाशे पण्डितकेशवेन-"वाराहीकन्द पिण्डालुस्तथा शबरकन्दक। प्रोक्तो मूलकमूलाभो वक्त्रालुस्त्वक्छदस्तथा॥" इति। पिण्डशब्देन च ग्रासवाचिना ग्रसन-वक्त्र लक्ष्यते। ननु, 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय' इति न्यायात्पिण्डालु-शब्दस्य मुख्यमर्थ पिण्डालुक विहाय गौणोऽर्थो वाराही कन्द कथ ग्राह्य? इति चेन्न। 'गङ्गाया घोष' इत्यादौ मुख्यार्थबाधे गौणार्थग्रहणात्। अत्र च मुख्यार्थस्य बाध कट्वादिगुणायोगात्। अत एवाह सुश्रुत (सू अ ४६।३०४)-"पिण्डालुक कफकर गुरु विष्टम्भि शीतलम्।" इति। गौणस्य तु कट्वादिगुणयोग। उक्त ह्यायुर्वेदप्रकाशे-"किटिकन्द कटु स्वादुस्तिक्तोष्ण कटुपाक्यपि। स्वर्यो रसायन वृष्यो बल्य पित्तविवर्धन॥ हन्ति श्लेष्ममरुत्कुष्ठमेहमूत्राम यकृमीन्।" इति। सुश्रुतोऽप्याह (सू अ ४६।३०९)-"व राहकन्द श्लेष्मघ्न कटुको रसपाकत। मेहकुष्ठकृमिहरो वृष्यो बल्यो रसायनम्॥" इति। किञ्च पिण्डालुक चेद्विवक्षितम्, तदा "आलुकानि च सर्वाणि" इत्यत्र प्रस्तावे ब्रूयात्। पिण्डालुकमिति च प्रयुञ्जीत। नापि पिण्डालुके पिण्डा लुरिति शब्दो मुख्य, गौणत्वे तु तुल्य। ननु, वक्त्रालुश्चेद्विवक्षितस्तर्हि वक्त्रालुरित्येव स्पष्टमुच्यताम्। सत्यम्। किन्त्वेवविधैरपि लाक्षणिकै शब्दैर्द्रव्याण्युच्यन्ते, इति द्योतयितु पिण्डालुरित्युक्तवान्। यथा-रोध्रादौ कदम्बे वाच्ये कुत्सिताम्ब इति, कुत्सितशब्देन हि कुशब्दसमानार्थेन कदादेशो लक्ष्यते। असनादावर्जुने वाच्ये श्वेतवाह इत्यादि। "बहुभि पठ्यमानस्य पाठस्यैय समर्थना। हेमाद्रिणा कृता किन्तु तुण्डालुरिति पठ्यताम्॥" इति।

**कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणम्।**
**फणिज्झार्जकजम्बीरप्रभृति ग्राहि शालनम्॥ १०६॥**
**विदाहि कटु रूक्षोष्णं हृद्यं दीपनरोचनम्।**
**दृक्शुक्रकृमिहृत्तीक्ष्णं दोषोत्क्लेशकरं लघु॥ १०७॥**

स०-कुठेरादि शालन ग्राहि विदाहि कटुक रसपाकयो रूक्षमुष्णवीर्य हृद्यमग्निदीपन च। तथा, दृगादिहृत्तीक्ष्णम्। तथा, दोषान्-वातादीन्, उत्क्लेशयति-कोपयन् स्थानाच्चालयति, इति दोषोत्क्लेशकरम्, लघु च। शालन-अवदश, येन सहान्न भोक्तु युज्यते। कुठेरो-वैकुण्ठक। शिग्रु-फलपत्रक। सुरस-कृष्णतुलसी। सुमुख-कटुपत्रक। आसुरी-राजिका। भूस्तृण-गुह्यबीजकम्। 'फणिजको-मरिचकस्तीक्ष्णगन्ध प्रकीर्तित।' आर्जक-खरपत्रक। जम्बीर-करपत्रक। प्रभृतिशब्देन सङ्ग्रहोक्ता गृह्यन्ते (सू अ. ७)-"धान्यतुम्बरुसालेययवानीशृङ्गबेरका। पर्णाशो गृञ्जनोऽजाजी कण्डीर गजपिप्पली॥ फणिज्झार्जकजम्बीरखराश्वाकालमालिका। दीप्यक क्षवको द्वीपी बस्तगन्धादि बद्धविट्॥" इति। तन्त्रान्तरे चोक्तम्-"कटुतिक्तरसा शीता कफपित्तविनाशिनी। विपाके मधुरा लघ्वी तस्करा डुलिका स्मृता॥" इति।

आ० र०-कुठेरादिहरितकगुणानाह-कुठेरेति। कुठेर-कालमाला। शिग्रु-शोभाञ्जन। सुरस-तुलसी। सुमुख-कुठेरसदृशोऽल्प। आसुरी-राजिका। भूस्तृण-मालातृणम्। फणिज्ज-मरिचक। अर्जक-पर्णास। जम्बीर-जम्बीरसदृश. किञ्चित्तीक्ष्ण। प्रभृतिशब्दात् कुस्तुम्बर्यादय। उक्त हि सङ्ग्रहे (सू अ ७)-"धान्यतुम्बरुशैलेययवानीशृङ्गबेरिका। पर्णाशो गृञ्जनोऽजाजी गण्डीरो गजपिप्पली॥ फणिज्झार्जकजम्बीरखराश्वाकालमालिका। दीप्यक क्षवको द्वीपी बस्तगन्धादि बद्धविट्॥" इति। शालनं-हरितकम्, यदुपदंशेषु युज्यते येन च व्यञ्जन वास्यते। उक्त हि सङ्ग्रहे (सू अ ७)-"वर्गो हरितकाख्योऽयमुपदंशेषु युज्यते। वासनो व्यञ्जनाना च हृद्यो रोचनदीपन॥" इति। दोषोत्क्लेशकरत्व चैषामार्द्रावस्थायामेव, फलव्यतिरेकेण च। यदाह चरक (सू अ २७।१७२)-"शुष्काणि कफवातघ्नान्येतान्येषा फलानि च।" इति।

१ 'पक्वमपि वा' क ग ञ। २ 'त्रानुवृत्तिकृतेन सम्बध्यते' ट। 'त्रापात्रकृ' ठ। 'त्रापि सम्बध्यते' ड। ३ 'वातप्रकोपणम्।' स.सु.। ४ 'न हि' ख.घ.झ.। ५ 'प्रयोगो' ख.घ.झ.।

१ 'कोपाय' ट। २ 'तत्' ट। ३ 'गण्डीर' ट। 'जीरक' स स। ४ 'जलपि' ठ। ५ 'गन्धाऽतिबद्ध' ट। 'गन्धोऽतिबद्ध' ड। ६-७-८-९ 'सुमुख-वनबर्बरिका' 'भूस्तृण-रोहिष, तुम्बाक-मन्ये।' 'अर्जक-श्वेतकुठेरक।' 'जम्बीर-हरितशाकमुत्तरापथे, जम्बीरगन्धि किञ्चिदम्लम्।' इति डल्हण। १० 'तिग्रहणात्' ख. घ.झ.। ११ 'द जलपिप्पली' ख.घ.झ.। १२ 'खराह्वाका' स.स.।

**हिध्माकासविषश्वासपार्श्वरुक्पूतिगन्धहा ।**
**सुरसः**

स०—सुरसो हिध्मादिघ्न । पूतिगन्ध–दौर्गन्ध्य, सौरभ्योत्पादनाद्धन्ति ।

आ० र०—अत्र केषांचिद्विशेष । तत्र सुरसगुणानाह–हिध्माकासेति । पूतिगन्धो–दौर्गन्ध्यम् ।

**सुमुखो नातिविदाही गरशोफहा ॥ १०८ ॥**

स०—सुमुख –कटुपत्राख्य , किञ्चिद्विदाही गरशोफौ च हन्ति ।

आ० र०—सुमुखगुणानाह–सुमुख इति । गर–कृत्रिमविषम् ।

**आर्द्रिका तिक्तमधुरा मूत्रला न च पित्तकृत् ।**

स०—आर्द्रिका–आर्द्रधानिका, तिक्तमधुरा मूत्रकरी पित्त च न करोति ।

आ० र०—आर्द्रिकागुणमाह–आर्द्रिकेति । आर्द्रिका–कुस्तुम्बरी । न च पित्तकृदिति हरीतकत्वात्प्राप्त पित्तोत्क्लेशनत्व निषेधति ।

**लशुनो भृशतीक्ष्णोष्णः कटुपाकरसः सरः ॥ १०९ ॥**
**हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः ।**
**भग्नसन्धानकृद्बल्यो रक्तपित्तप्रदूषण. ॥ ११० ॥**
**किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान् ।**
**सहिध्मापीनसश्वासकासान् हन्ति रसायनम् १११**

स०—लशुनोऽतितीक्ष्णोऽत्युष्णवीर्य , कटुपाकरस , सर –भेदी, हृद्यादिगुणयुक्तश्च । किलासादीन् हन्ति, रक्तपित्त च करोति । किलास–श्वित्रम् । कन्दस्यैवाय गुणवीर्यनिर्देशो बोध्य । पत्रमध्ययोर्मधुरत्वात् भृशोष्णत्वानुपपत्ति । तथा चोक्त सङ्ग्रहे ( सू अ ७ )–“पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिल । तीक्ष्णोष्णो लशुन कन्दे” इति ।

आ० र०—लशुनगुणानाह–लशुन इति । किलास–श्वित्रम् । कन्दस्यैवैते गुणा । उक्त हि सङ्ग्रहे ( सू अ ७ )–“पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिल. । तीक्ष्णोष्णो लशुन. कन्दे” इत्यादि ।

**पलाण्डुस्तद्गुणन्यून. श्लेष्मलो नातिपित्तलः ।**

स०—पलाण्डु –धवलाक्षकाख्य , तद्गुणन्यून ,–तस्य–रसोनस्य गुणास्तद्गुणा , तैर्हीन । लशुनात्किञ्चिद्धीनगुण इत्यर्थ । तथा श्लेष्मलो नातिपित्त च करोति । न तु लशुनवत्कफघ्नोऽतिपित्तकृच्च । कफवातार्शसा स्वेदे भक्षणे च प्रभावात्पथ्य । तन्त्रान्तरेऽन्योऽप्युक्त , यथा ( सुश्रुते सू अ ४६।२४७ )–“स्निग्धो रुचिष्य स्थिरधातुकारी बल्योऽथ मेधाकफपुष्टिदश्च । स्वादुर्गुरु शोणितपित्तशस्त सपिच्छिल क्षीरपलाण्डुरुक्त ॥” इति ।

आ० र०—पलाण्डुगुणानाह–पलाण्डुरिति । तद्गुणै –लशुनगुणैस्तीक्ष्णोष्णत्वादिभि , न्यून –हीनशक्तिभिर्युक्त । सङ्ग्रहे तु ( सू अ ७ )–“विपाके मधुरस्तु स । कफ करोति पित्त च, केवलानिलनाशन ॥” इति ।

**कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा ॥११२॥**
**तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हितकृन्न सः ।**

स०—गृञ्जनकस्तीक्ष्णो ग्राही पित्तिनामहितश्च ।

आ० र०—गृञ्जनकगुणानाह–कफवातार्शसामिति । गृञ्जनक –पलाण्डुभेद । उक्त च बाष्पचन्द्रेण–“गन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना । सूक्ष्मनालाग्रपत्रत्वाद्भिद्यतेऽसौ पलाण्डुत ॥” इति । स च स्वेदने भोजने च प्रयुक्त कफवातजान्यर्शांसि हन्ति, पित्तवता नराणामपथ्य ।

**दीपनः सूरणो रुच्य. कफघ्नो विशदो लघुः ॥११३॥**
**विशेषादर्शसां पथ्यः**

स०—सूरणो नाम कन्दविशेषो दीपनो रुच्य श्लेष्मघ्नो विशदो लघुरर्शसामतिपथ्यश्च ।

आ० र०—सूरणगुणानाह–दीपन. सूरण इति । विशदो–विशदगुण ।

**भूकन्दस्त्वतिदोषलः ।**

स०—भूकन्द –भूस्फोटाख्य प्रावृड्भव प्रसिद्ध एव । स चात्यर्थ दोषल ।

आ० र०—भूकन्दगुणानाह–भूकन्द इति । भूकन्दो–भूस्फोट ।

**पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ॥११४॥**

स०—पत्रादीना यथोत्तर क्रमाद्गुरुत्वम् । तेन पत्रशाकमपेक्ष्य पुष्पशाक गुरु, तत फलशाकम्, ततो नालशाकम्, ततोऽपि कन्दशाकमिति । एव हरितकेष्वपि गुरुत्व वेद्यम् । बाहुल्येन चैतदुक्तम् । मूलके हि वैपरीत्य दृश्यते । तथा हि–मूलकस्य हि कन्दे लघुत्वम् । अत एव मुनिरप्याह (?)–“मूलके तु विपर्यय ।” इति । शाकाना हरितकाना च येषामिह पर्याया नोक्तास्तेषा सद्वैद्येभ्योऽवगन्तव्या ।

आ० र०—पुष्पादिशाकाना गौरवतारतम्यमाह–पुष्पे पत्र इति । उत्सर्गोऽयम् । अपवादस्तु यथायथम् । यथा–मूलके सुश्रुतेनोक्तम् ( सू अ ४६।२४३ )–“पुष्प च पत्र च फल तथैव यथोत्तर ते लघव प्रदिष्टा ।” इति ।

---

१ ‘कासवमिश्वास’ अ आ । ‘कासश्रमश्वास’ ठ । २ ‘आर्द्रेकुस्तुम्बरी’ ट । ‘आर्द्रिदाडिना’ ड । ३ ‘दीपनपाचन ।’ आ । ४ ‘प्रदूषक ’ क ञ ठ । ५ ‘हन्त्यस्रपित्तकृत्’ ठ । ६ ‘स्वेदेन भक्षणेन कफवातार्शसा पथ्य , प्रभावात् ।’ ड. । ७ ‘धातुकर्ता’ स ङ ।

१ ‘ति नो पित्त के’ ख घ ङ स द इन्दु । २ ‘कफवातार्शसा पथ्य ’ इत्यादि गुणा ‘पलाण्डो ’ इत्यरुणदत्तचन्द्रनन्दनौ व्याख्यानयत , हेमाद्रिस्तु ‘गृञ्जनकस्य’ इति । “ग्राही गृञ्जनकस्तीक्ष्णो वातश्लेष्मार्शसा हित । स्वेदनेऽभ्यवहार्ये च योजयेत्तमपित्तिनाम् ॥” इति चरकोक्त्या ( सू अ २७।१६९ ) हेमाद्रेरेव व्याख्यान युक्तम्, अयुक्त चारुणदत्तचन्द्रनन्दनयो । ३ ‘वाप्य’ ग. । ४ ‘गन्धाकाररसै’ क ग ञ । ५ ‘पुष्पे पत्रे’ अ स मू. हेमाद्रिसम्मतश्च ।

अथ वरावरत्वं निर्धारयति—

**वरा शाकेषु जीवन्ती सार्षपं त्ववरं परम् ।**

**इति शाकवर्गः ।**

**स०**–शाकेषु मध्ये जीवन्ती वरा । सार्षपं पुनरवरम् । इति शाकवर्गः ।

**आ० र०**–शाकानां तारतम्यमाह–वरा शाकेष्विति । परमिति–अन्यान्यपि प्रशस्तानि, जीवन्ती तु प्रशस्ततरा । यदाह सुश्रुतः ( सू अ ४६।३३५ )–"सतीनो वास्तुकश्चुच्चुश्चिल्ली मूलकपोतिका । मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥" इति । सङ्ग्रहे तु ( सू अ ७ )–"श्यामाशाल्मलिकाश्मर्यफञ्जीबाष्पिकयूथिका । वृक्षादनीक्षीरवृक्षबिम्बीतुन्दिकवृक्षका ॥ रोध्रं शणं कर्बुदारं सशेलुवृषमूषिका । भल्लातकं कोविदारं कमलोत्पलकिंशुकम् ॥ पटोलादिगुणं स्वादु कषायं पित्तजित्परम् । बद्धमूत्रा सरा फञ्जी करीरं स्वादभीरुजम् ॥ सतिक्तं लघु चक्षुष्यं वृष्यं दोषत्रयप्रणुत् । वातपित्तहरा भण्डी पर्वणी पर्वपुष्पिका ॥ [*सतरूढं कदम्बं च रूक्षं ग्राहि हिमं गुरु । लघुरुष्णा सरा तिक्ता सोरुबूका च लाङ्गली ॥ वातलौ कटुतिक्ताम्लौ भेदिनौ तिलवेतसौ । तद्वत् पञ्चाङ्गुलो, वंशकरीरास्तु विदाहिनः ॥ बिल्वरास्नाबलाशाकं वातघ्नमतिसारजित् । वायुं वत्सादनी हन्यात्कफं गण्डीरचित्रकौ ॥ ] इति । इति शाकवर्गः ।

फलानामाहारकाले शाकेभ्योऽल्पोपयोगित्वाच्छाकवर्गादनन्तरं फलवर्ग उच्यते । खरनादेऽप्युक्तम्–"भुक्तावसाने फलं भुज्यते, इति फलवर्गोऽभिधीयते" इत्याह–

**अथ फलवर्गः ।**

**द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट् ॥ ११५ ॥**
**स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः ।**
**निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ॥ ११६ ॥**
**तृष्णाकासश्रमश्वासस्वरभेदक्षतक्षयान् ।**

**स०**–फलेषूत्तमा–फलोत्तमा गोस्तनीपर्याया द्राक्षा । सा वृष्यादिगुणयुक्ता । सकषाया–ईषत्कषाया । अनिलादीन् क्षयान्तान् हन्ति । उदावर्तहरत्वं चरकमुनिनाऽस्या उक्तम् । तच्च स्निग्धत्ववृष्यत्वसृष्टविण्मूत्रत्वेनेहोक्तप्रायम् । अन्यासां च द्राक्षाणां गुणहीनत्वं देशाद्यनुरोधात् कल्प्यम् ।

**आ० र०–अथ फलवर्गः । तत्र द्राक्षागुणानाह–द्राक्षेति । उत्तमेति सिद्धे फलग्रहणमुत्तमेभ्योऽप्युत्तमार्थम् । उत्त**मान्युक्तानि सुश्रुतेन ( सू अ ४६।३३४ )–"दाडिमामलकं द्राक्षा खर्जूरं सपरूषकम् । राजादनं मातुलुङ्गं फलवर्गे प्रशस्यते ॥" इति । तिक्तास्यत्व–मुखस्य तिक्तरसत्वम् । वातघ्नत्वं च–कोष्ठवातव्यतिरेकेण, "वातहृत्त्वेऽपि मृद्वीकाखर्जूरं कोष्ठवातकृत् ।" इति सङ्ग्रहवचनात् ( सू अ ७ ) ।

**उद्रिक्तपित्ताञ्जयति त्रीन्दोषान्स्वादु दाडिमम् ११७**
**पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ।**
**सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ॥ ११८ ॥**

**स०**–उद्रिक्त–अतिरिक्तं, पित्तं येषां तांस्तथाविधान् त्रीन् दोषान् मधुरं दाडिमं जयति । मधुरस्य पूर्वकथनं प्राधान्यख्यापनार्थम् । पित्तेत्यादि । अम्लदाडिमं पित्ताविरोधि–न पित्तं कुरुते न च पित्तं शमयति । अत एवैतद्वातकफापहमुक्तम् । सर्वं–मधुरमम्लं च, यद्दाडिमं तत् हृद्यादिगुणसंयुक्तम् । मुनिना तूक्तम् ( च सू अ २७।१४६ )–"रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनम् ।" इति ।

**आ० र०**–अथ दाडिमगुणाः । तत्र स्वादुदाडिमगुणानाह–उद्रिक्तपित्तानिति ।

अम्लदाडिमगुणानाह–पित्ताविरोधीति । पित्ताविरोधि–पित्तोदासीनम् । स्निग्धाम्लस्यैवैते गुणाः, "रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनम् ।" इति खारणादि ( चरक )-वचनात् ।

स्वाद्वम्लसाधारणगुणानाह–सर्वं हृद्यमिति ।

**मोचखर्जूरपनसनारिकेलपरूषकम् ।**
**आम्राततालकाश्मर्यराजादनमधूकजम् ॥ ११९ ॥**
**सौवीरबदराङ्कोल्लफल्गुश्लेष्मातकोद्भवम् ।**
**वातामाभिषुकाक्षोडमुकूलकनिकोचकम् ॥ १२० ॥**
**उरुमाणं प्रियालं च बृंहणं गुरु शीतलम् ।**
**दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ॥ १२१ ॥**
**स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् ।**

**स०**–मोचादिप्रियालान्तं बृंहणत्वादियुक्तम् । मोचं–कदलीफलम् । नारिकेलं–रोमफलाख्यम् । परूषको–मृदुफलः । आम्रातः–कपिचूडः । तालः–तलः । काश्मर्यं–काश्मरीफलम् । राजादनं–क्षीरशुक्ला । सौवीरं–बदरम् । बदरं–कर्णिकाबदरम् । अङ्कोल्ल इति बिल्वः । फल्गु–काकोदुम्बरिका । श्लेष्मातकं–शेलुः । अभिषुकः–सौराटम् । आक्षोडः–स्नेहफलाख्यम् । मुकूलकः–दन्तीफलम् । निकोचकः–सरलफलम् । उरुमाणं–स्निग्धफलम् । प्रियालं–सन्नतरुः ।

**आ० र०–मोचादिगुणानाह–मोचखर्जूरेति । मोच–कदलीफलम् । खर्जूर–खर्जूरीफलम् । पनस–कण्टकिफलम् । नारिकेल–त्र्यक्षम् । परूषक–धन्वनसदृशं मृद्वल्पास्थिफ-**

१ 'सार्षपस्त्ववर' अ आ क ञ । 'सर्षपास्त्ववरा.' ख घ झ ठ । २ 'क्षीकर्णक' स ह । ३ 'म्बीतिन्दुक' क ग ञ । 'म्बीत नि' स ह । ४ 'विषमुष्टिका' स मू । 'वृषमुष्टिका' स स । 'विषमूषिका' इन्दु । *[ ] इमे सङ्ग्रहश्लोका केषुचिदपि हेमाद्रिटीकापुस्तकेषु नोपलभ्यन्ते । ५ 'कञ्जीर' स मू । ६ 'तास्क्रृति' क ञ । ७ 'त्तमेव' ड । ८ 'रोधेन' ट. । ९ 'भ्योऽतिशयार्थम्' क ग.ञ. । 'त्तमत्वार्थम्' झ. ।

१ 'ङ्कोलफ' ख घ झ स स । २ 'पियाल' आ ख घ झ ठ. । ३ 'श्लेष्मलं वातपित्तजित्' क ञ । ४ 'श्याकटम्' ड । ५ 'फलसदृशम्' ट. ।

लम् । आम्रात —कपीतन । ताल –तालद्रुम । काश्मर्य–श्रीपर्णी । राजादन–कपिप्रियम् । मधूकी–मधुद्रुम । मधूकज द्विविध,–फल पुष्प च । यदाह सुश्रुत ( सू अ ४६।१८६ )–"बृंहणीयमहृद्य तु मधूककुसुम गुरु । वातपित्तोपशमन फल तस्योपदिश्यते ॥" इति । द्विविधमप्यत्र ग्राह्यम्, गुणाभेदात् । तेभ्यो जात फलम् । सौवीरबदरे–बदरभेदौ । उक्त हि–"कर्कन्धु कोल बदर सौवीर सिञ्चतीफलम् । यथोत्तर महत्स्वादु पञ्चधा बदरीफलम् ॥" इति । तत्र कोलकर्कन्धुनी स्वादुत्वाभावान्नात्र पठिते । वक्ष्यति हि ( अ ६।१३७ )–"तथाऽम्ल कोलकर्कन्धु" इत्यादि । सिञ्चतीफल तिक्तकषायत्वान्नोक्तम् । अत एव सङ्ग्रहे तिन्दुकादौ पठित्वा विशेषगुणा उक्ता ( सू अ ७ )–"बृंहण वात पित्तघ्नं स्निग्ध सिञ्चतिकाफलम् ।" इति । ननु, "कर्कन्धु कोलबदरमाम पित्तकफावहम् । पक्क पित्तानिलहर स्निग्ध समधुर सरम् ॥ पुरातन तृड्शमन श्रमघ्न दीपन लघु ।" इति सुश्रुतेन ( सू अ ४६।१४५ ) कोलतुल्य बदरमुक्तम्, इह तु सौवीरतुल्यमिति विरोध । मैवम् । सुश्रुतेनापि सौवीरतुल्यमुक्तम् ( सू अ ४६।१४६ )–"सौवीरबदर स्निग्ध मधुर वातपित्तजित् ।" इति । सौवीर च बदर चेति द्वन्द्वैकत्वम् । पूर्वत्र तु कोल च तद्बदर चेति कर्मधारयात् । विपरीत कुतो न स्यात्? इति चेन्न । सङ्ग्रहे विशेषगुणोक्तौ ( सू अ ७ )–"बदर सरणात्मकम् ।" इति बदरग्रहणात् । न च बदरशब्देन सौवीरम्, सौवीरमित्यकरणात् सरत्वाभावाच्चेति । अङ्कोल्ल –अङ्कोठ । फल्गु –काकोदुम्बरिका । श्लेष्मातक –शेलु । वाताभाद्युरुमाणान्त–उत्तरापथे प्रसिद्धम् । वाताम –स्निग्धमधुरमज्ज फलम् । आक्षोड–मदनफलसदृश मध्ये किञ्चिदुन्नतरेखम् । मुकूलक–दन्तीफलसदृशम् । निकोचक–अङ्कोल्लफलसदृशम् । प्रियाल–चारफलम् । रक्तपित्तप्रसादन–रक्तपित्तयोर्निर्मलीकरणम् ।

**फलं तु पित्तलं तालं सरं काश्मर्यजं हिमम् ॥१२२॥**
**शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ।**
**वाताभाद्युष्णवीर्यं तु कफपित्तकरं सरम् ॥ १२३ ॥**
**परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ।**
**प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥ १२४ ॥**
**कोलमज्जा गुणैस्तद्वत्तृट्छर्दिःकासजिच्च सः ।**

**स०**–तालस्येद ताल फल पित्तकारि । काश्मर्यज फल सर शीतवीर्यादिगुणयुक्तम् । मधूकबदरयोरपि विशेषान्तरमुक्त सङ्ग्रहे ( सू अ ७ )–"मधूकजमहृद्य तु बदर सरणात्मकम् ।" इति । वाताभादीना गुणविशेषप्रदर्शनार्थ निर्धारितम् । तु,–विशेषे । वाताभादिकमुष्णवीर्य कफपित्तकर सरमतिशयेन वातघ्न स्निग्ध च । आदिशब्देनाऽभिषुकादीना ग्रहणम् । प्रियालजात–प्रियालज फलमनुष्णवीर्यम् । तुर्विशेषे, विशेषस्तु शीतवीर्यत्वमेव । शेष बृंहणादि सर्व समानम् । प्रियालस्य मज्जा–अस्थ्यभ्यन्तर, मधुरादिगुणयुक्तम् । बदरमज्जा गुणैस्तद्वत्–प्रियालमज्जावत्, तृडादिजिच्च । तन्त्रान्तरे चोक्तम् ( सुश्रुते सू अ ४६।२०५ )–"बैभीतको मदकर कोलाना पित्तनाशन ।" तथा, "तालखर्जूरादीना मस्तकमज्जान स्वादुपाका वृष्या शीतवीर्याश्च ।" इति सुश्रुतोऽपठत् (?) ।

**आ० र०**–अत्र केषाञ्चिद्विशेष । तत्र तालफलगुणानाह–फल त्विति । यत्तु, "फल स्वादुरस तेषा तालज गुरुपित्तहृत् ॥" इति सुश्रुतेन ( सू अ ४६।१७९ ) पित्तहरत्वमुक्तम्, तत् पक्कविषयम् । अत एव चरकेण सिद्धानीति विशेषितम् (सू अ २७।१२६)–"तालसस्यानि सिद्धानि नारिकेलफलानि च । बृंहणस्निग्धशीतानि बल्यानि मधुराणि च ॥" इति । व्याख्यात च चक्रपाणिचन्द्रेण,–"तालसस्यानि–तालफलानि, सिद्धानि–पक्वानि, मधुरस्निग्धशीतत्वेन वातपित्तहरत्व कफकरत्व च वेद्यम् ।" इति ।

काश्मर्यजगुणानाह–काश्मर्यजमिति ।

वाताभादिगुणानाह–वाताभादीति । वाताभादिप्रियालान्तम् ।

प्रियालगुणानाह–अनुष्ण तु प्रियालजमिति । नजत्र विरुद्धार्थे । उष्णशब्देन वीर्य पित्त च, तेन शीतल पित्तघ्न च प्रियालजम् । उक्त च सुश्रुतेन ( सू अ ४६।१५६ )–"वातपित्तहर वृष्य प्रियाल गुरु शीतलम् ।" इति ।

प्रियालमज्जगुणानाह–प्रियालमज्जेति । मज्जा–अस्थ्यन्तवर्ति बीजम् ।

कोलमज्जगुणानाह–कोलमज्जेति । कोल–बदरम् ।

**पक्कं सुदुर्जरं बिल्वं दोषलं पूतिमारुतम् ॥ १२५ ॥**
**दीपनं कफवातघ्नं बालं, ग्राह्युभयं च तत् ।**

**स०**–बिल्व पक्क सुदुर्जर पूतिमारुत च–दुर्गन्धयपानवातकृत् भवति । बाल–असम्पूर्णमनुपचित बिल्व, दीपन कफवातघ्नम् । उभय–आम पक्क च, ग्राहि–मूत्रपुरीषादे सङ्ग्रहणम् ।

**आ० र०**–अथ बिल्वम् । तत्र पक्कबिल्वगुणानाह–पक्कमिति । पूतिमारुत–दुर्गन्धयधोवातप्रवर्तकम् । सङ्ग्रहे तु ( सू अ ७ )–"गुर्वग्निसादकृद्बिल्वम्" इति ।

१ 'ताल–तलम्' ख घ । 'ताल –ताडी' इति डल्हण । २–३ 'काश्मर्य–गाम्भारीफलम् ।' 'सौवीर–महत्तम आमपक्कावस्थासु मधुर मरुदेशजम् ।' इति डल्हण । ४ 'अस्वादुत्वान्न प' क ग ञ । ५ 'रमम्ल' ख घ झ । ६ 'फापहम्' क ख घ झ ज । ७ 'तु मधुर' क ग ञ । ८ 'तुल्य बदरमिति' क ग ञ. । ९ 'अक्षोट' क ग ञ । १० 'पियाल' अ.आ झ.ठ. ।

१ 'प्रियालाज्जात' ट । २ 'कोलज' ट । 'कफमारुतनाशन ।' स सु । ३ 'वाप्य' ग । ४ 'तु' आ । 'हि' ठ । ५ 'पूति –सुगन्धिर्मारुतो यस्येति तत् पूतिमारुत । पूतिशब्दोऽय सुगन्धिवाची । यथा–पूति खट्वाश , वनजा मधुकर्कटी पूतिपुष्पेति सुगन्धिपुष्पेत्यर्थ ।' इति डल्हण । ६ 'षयो' ट ।

बालबिल्वगुणानाह–दीपनमिति ।

पक्वबालसाधारणगुणानाह–ग्राहीति ।

**कपित्थमामं कण्ठघ्नं दोषलं, दोषघाति तु ॥ १२६ ॥**
**पक्वं हिध्मावमथुजित्, सर्वं ग्राहि विषापहम् ।**

स०–आमं कपित्थं कण्ठं हन्ति, दोषलं–त्रिदोषकृत् । पक्वं कपित्थं दोषघ्नं हिक्काच्छर्दिहृच्च । सर्वं–आमं पक्वं च कपित्थं, ग्राहि विषापहं च । आमकपित्थस्य कषायत्वं कण्ठघ्नत्वेनैवोदितम्, अम्लत्वं चाम्लवर्गमध्ये पाठादवगतम् । पक्वस्य च मधुरत्वं सुप्रसिद्धमितीहैतन्नोक्तम् । तथा, आमकपित्थगुणकथनेन च तथाविधानि कषायाम्लस्वभावानि विविधानि कपित्थानि सदैवामकपित्थगुणानि वेद्यानि । पक्वकपित्थगुणकथनेन च तथाविधानि माधुर्यानुविद्धानि सदा पक्वगुणानि वेद्यानि ।

आ० र०–अथ कपित्थम् । तत्र आमकपित्थगुणानाह–कपित्थमिति । आम–बालम् । कण्ठघ्नं–स्वरसादकृत् । दोषलं–दोषत्रयकरम् । तत्र पित्तानिलौ कफेन ससृष्टौ, असंसृष्टौ च करोति । कफं तु ताभ्यां संसृष्टमेव । "आमं कपित्थमस्वर्यं कफघ्नं ग्राहि वातलम् ।" इति सुश्रुतेन ( सू. अ. ४६।१४७ ) कफघ्नत्वस्योक्तत्वात् । ननु, एवं चेत् दोषशब्देन पित्तानिलावेव गृह्येताम् । नैवम् । "कपित्थमामं कण्ठघ्नं कषायाम्लं त्रिदोषकृत् ।" इति सङ्ग्रहे ( सू. अ. ७ ) त्रिग्रहणात् ।

पक्वगुणानाह–दोषघातीति । वमथुः–छर्दिः । सङ्ग्रहे तु ( सू. अ. ७ )–"पक्वं रुच्यं कषायाम्लं स्वादु हिध्मावमिप्रणुत् । दोषघ्नं खाण्डवारिष्टरागयुक्तिषु पूजितम् ॥" इति ।

आमपक्वसाधारणगुणानाह–सर्वं ग्राहीति ।

**जाम्बवं गुरु विष्टम्भि शीतलं भृशवातलम् ॥१२७॥**
**सङ्ग्राहि मूत्रशकृतोरकण्ठ्यं कफपित्तजित् ।**

स०–जाम्बवं गुर्वादिगुणयुक्तम्, मूत्रशकृतोश्च सङ्ग्रहणम् । कण्ठाय न हितम्, कफपित्तजिच्च । जाम्बवमिति फलार्थे "जम्ब्वा वा" इत्यण् ।

आ० र०–जाम्बवगुणानाह–जाम्बवमिति । जाम्बवं–जम्बूफलम् ।

आम्रस्य त्र्यवस्थस्याप्युपयोगदर्शनात्तथैव गुणानाह–

**वातपित्तास्रकृद्बालं, बद्धास्थि कफपित्तकृत् ॥१२८॥**
**गुर्वाम्रं वातजित्पक्वं स्वाद्वम्लं कफशुक्रकृत् ।**

स०–वातेत्यादि । आम्रमिति वक्ष्यमाणेन सम्बन्धः । आम्र–चूताख्यं, बालं सद्वातपित्तास्रकृत् । बद्धास्थि–सञ्जातास्थि, कफपित्तकृत् । पक्वमाम्रं गुरु वातजित् मधुराम्लं कफशुक्रकृच्च । सङ्ग्रहे ( सू. अ. ७ ) सहकाररसस्यापि गुणा उक्ताः । यथा–"सहकाररसो हृद्यः सुरभिः स्निग्धरोचनः ।" इति ।

आ० र०–अथाम्रम् । तत्र बालाम्रगुणानाह–वातपित्तास्रेति । सङ्ग्रहे तु ( सू. अ. ७ )–"बालं कषायकट्वम्लं रूक्षं वातास्रपित्तकृत् ।" इति ।

बद्धास्थिगुणानाह–बद्धास्थीति । बद्धास्थि–सहतावयवास्थि, मध्यावस्थमित्यर्थः । सङ्ग्रहे तु ( सू. अ. ७ )–"सम्पूर्णमाम्रमम्लं च रक्तपित्तकफप्रदम् ।" इति ।

पक्वगुणानाह–गुर्वाम्रमिति । सङ्ग्रहे तु ( सू. अ. ७ )–"स्वादु साम्लं गुरु स्निग्धं मारुतघ्नमपित्तलम् । हृद्यं पर्यागतं श्लेष्ममांसशुक्रबलप्रदम् ॥ सहकाररसो हृद्यः सुरभिः स्निग्धरोचनः । [ *दीपनः पित्तवातघ्नः शुक्रशोणितशुद्धिकृत् ॥ ]" इति । "त्वङ्मूलपल्लवं ग्राहि कषायं पित्तनाशनम् ।" इति ( धन्वन्तरीयनिघण्टौ वर्गे ५।७ ) ।

**वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्महरं लघु ॥ १२९ ॥**

स०–वृक्षाम्लं ग्राह्यादिगुणैर्युक्तम् । वातश्लेष्महृल्लघु च । कोशाम्रं च किञ्चिदेतस्माद्न्यूनगुणं ज्ञेयम् । तथा च सङ्ग्रहे ( सू. अ. ७ )–"वृक्षाम्लं ग्राहि रूक्षोष्णं लघु रोचनदीपनम् । वातश्लेष्महरं किञ्चिदूनं कोशाम्रजं ततः ॥" इति ।

आ० र०–वृक्षाम्लगुणानाह–वृक्षाम्लमिति । वृक्षाम्लं–तिन्तिडीकम् । पक्वस्यैवैते गुणाः । "वातापहं तिन्तिडीकमामं पित्तबलासकृत् ।" इति सुश्रुतेन ( सू. अ. ४६।१५२ ) तु बालस्य बलासकरत्वमुक्तम् । सङ्ग्रहे तु ( सू. अ. ७ )–"रोचनदीपनम् । वातश्लेष्महरं किञ्चिदूनं कोशाम्रजं ततः ॥" इति ।

**शम्या गुरूष्णं केशघ्नं रूक्षम्**

स०–फलापेक्षया षष्ठी । शम्याः फलं गुरु उष्णवीर्यं केशघ्नं रूक्षं च ।

आ० र०–शमीफलगुणानाह–शम्या इति । शम्याः फलम् । "फलं तु पित्तलं" इत्यतः फलमनुवर्तते ।

**पीलु तु पित्तलम् ।**
**कफवातहरं भेदि प्लीहार्शःकृमिगुल्मनुत् ॥ १३० ॥**
**सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित् ।**

स०–पीलुफलं च पित्तलं यावद्गुल्मनुत् । सतिक्तं–ईषत्तिक्तं मधुरं च यत्पीलु तन्नात्युष्णं त्रिदोषजिच्च ।

आ० र०–अथ पीलुफलम् । तत्र कटुकगुणानाह–पीलु त्विति । अत्र कटुकं पीलु ग्राह्यम्, तिक्तमधुरस्य वक्ष्यमाणत्वात्, "कटुपाकरसं भेदि तीक्ष्णोष्णं पीलु पित्तलम् ।" इति सङ्ग्रहवचनाच्च ( सू. अ. ७ ) ।

तिक्तमधुरगुणानाह–सतिक्तमिति ।

---

१ 'पाठादेवाव' ट. । २ 'नुविधायीनि' ट । ३ 'त्तनुत्' ठ ।

१ 'तु' स ङ । २ 'सङ्ग्राहि वर्ण्यं हृद्यं च शुक्रमांसबलप्रदम् ।' क ग ञ । ३ पर्यागतं–सपक्वम् । इन्दुस्तु 'पर्यागतं–अतिक्रान्तपाकम्' इत्याह । तन्न युक्तम् । सङ्ग्रहे एतद्व्यतिरिक्तस्य सम्यक्पक्वस्य गुणान्तराभावात् । *[ ] इदं सङ्ग्रहश्लोकार्धं हेमाद्रिटीकापुस्तकेषु नोपलभ्यते । ४ इदं श्लोकार्धं ख घ झ पुस्तकेषु नोपलभ्यते । ५ 'कफपित्तजित्' ध नि । ६ अस्मात्प्राक् "तृष्णाघ्नमुष्णमम्लाया फलं पित्तकरं सरम् ।" इत्यधिकः पाठः, अ आ क ञ ठ पुस्तकेषु । "वृक्षाम्लस्य शुष्कफलगुणानाह–तृष्णाघ्नमिति । स्पष्टम् ।" इति तट्टीका च क ञ पुस्तकयोः । ७ 'किञ्चिन्न्यून' ट, क ग ञ. ।

मातुलुङ्गस्य त्वङ्मांसकेसराणां पृथगुपयोगदर्शनात् पृथगेव गुणानाह-

**त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित्॥१३१॥**
**बृंहणं मधुरं मांसं वातपित्तहरं गुरु।**
**लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ॥१३२॥**
**आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान्**
**गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत्॥१३३॥**

**स०**-बीजपूरकस्य त्वक् तिक्तकटुका रसे, स्निग्धा वातघ्नी च । खरनादस्त्वाह-"त्वङ्मातुलुङ्गात्कटुका गुर्वी वातप्रकोपनी ।" इति । चरकेऽप्युक्तम् (?)-"गुवा त्वगस्य कटुका मारुतस्य प्रकोपनी ।" इति । एतन्मतानुसारिणस्त्वत्रैव पाठं पठन्ति,-"त्वक्तिक्तकटुकाऽस्निग्धा मातुलुङ्गस्य वातकृत् ।" इत्यकारप्रश्लेषात् । मांस-केसरादर्वाक्, बृंहणं मधुरं वातपित्तहृत् गुरु च । तस्य-मातुलुङ्गस्य केसरं,-तत्केसरं लघु । तथा, कासादीन् मन्दाग्नित्वान्तान्नाशयेत् ।

**आ० र०-अथ मातुलुङ्गम् । तत्र त्वग्गुणानाह-त्वगिति । ननु, "त्वङ्मातुलुङ्गात्कटुका गुर्वी वातप्रकोपणी ।" इति खारणादिवचनेन विरोधः । नैवम् । सामं वायुं हन्ति, निरामं तु करोतीति विषयभेदात् । विपरीतं कुतो न स्यात्? इति चेत् न । "त्वक्तिक्ता दुर्जरा तस्य वातकृमिकफापहा ॥" इति सुश्रुतेन ( सू अ ४६।१४९ ) श्लेष्मघ्नत्वस्योक्तत्वात् । श्लेष्मघ्नं चामघ्नं दृष्टमेव ।**

तन्मांसगुणानाह-बृंहणमिति । त्वक्केसरव्यतिरिक्तोऽवयवो-मांसम् ।

केसरगुणानाह-लघ्विति ।

**भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् ।**
**तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥ १३४ ॥**

**स०**-त्वक् च मांसं च त्वङ्मांसं भल्लातकसम्बन्धि, बृंहणं मधुरं शीतलं च । तस्य-भल्लातकस्यास्थि,-तदस्थि, अग्निसमतीक्ष्णत्वात् अग्निवत्स्फोटककर्तृत्वात् (च) । अथवा, अग्नि-चित्रकः, तस्य गुणदोषकर्तृतया तुल्यं भल्लातकास्थीति । तथा, मेधायै हितम् । अतिकफवातघ्नम् ।

**आ० र०-अथ भल्लातकम् । तत्र त्वङ्मांसगुणानाह-भल्लातकस्येति । अस्थिव्यतिरिक्तोऽवयवः पुष्पाख्यः-त्वङ्मांसम् ।**

**अस्थिगुणानाह-तदस्थीति । अग्निसम-अग्निवद्दाहपाकादिकरम् ।**

**स्वाद्वम्लं शीतमुष्णं च द्विधा पालेवतं गुरु ।**
**रुच्यमत्यग्निशमनम्**

१ अस्याग्रे "**मधुरं किञ्चिदम्लं च हृद्यं भक्तप्ररोचकम् । गुरु वातप्रशमनं विद्यान्नारङ्गजं फलम् ॥**" इति, अ आ क ञ पुस्तकेष्वधिकः श्लोकः । "नारङ्गफलगुणानाह-मधुरमिति ।" इति तट्टीका च क ञ पुस्तकयोः ।



**स०**-पालेवतं-रैवतकाख्यं द्विधा । कथं द्विप्रकारम्? इत्याह-स्वादु अम्लं च, तत्तु यथाक्रमेण शीतमुष्णं च । तथा, द्वयमपि गुरु रुच्यमत्यग्निशमनं च । अथवा यथासम्भवं सम्बन्धः,-मधुरं गुरु अत्यग्निशमनं च, अम्लं रुच्यमिति ।

**आ० र०-पालेवतगुणानाह-स्वाद्वम्लमिति । पालेवत-तिन्दुकाकारम् । तद्विविधं,-स्वादु अम्लं च । यन्मधुरं तच्छीतम्, यदम्लं तदुष्णम्, उभयमपि गुर्वादिगुणम् ।**

**रुच्यं मधुरमारुकम् ॥ १३५ ॥**
**पक्वमाशु जरां याति नात्युष्णगुरुदोषलम् ।**

**स०**-मधुरमारुकं रुच्यं भवति । अपक्वस्यैवैते गुणा वेद्याः । यस्मादाह-पक्वमित्यादि । पक्वं सत्तदाशु-द्रागेव परिणामं याति । किञ्चिदुष्णवीर्यम्, किञ्चिद्गुरु, किञ्चिद्दोषलं-अपथ्यम् । निघण्टावुक्तम् ( धन्वन्तरीये व ५।३८ )-"आरुकं वीरसेनं च वीरा वीरारुकं तथा । विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम् ॥" इति ।

**आ० र०-पक्वारुकगुणानाह-रुच्यमिति । आरुक-वीरसेनम् । आशु जरां याति-शीघ्रं पच्यते । नात्युष्णगुरुदोषलत्वं-अम्लापेक्षया । अत एव दोषशब्देन पित्तश्लेष्माणौ ग्राह्यौ । अम्लस्य हि पित्तश्लेष्मलत्वं वक्ष्यति । तथा च खारणादिः - "नात्युष्णं गुरु वातघ्नं बृंहणं नातिपित्तलम् । आरुकं मधुरप्रायमम्लं तु कफपित्तलम् ॥" इति । आरुक-भव्यमित्येके । तन्न । "भव्यं स्वादुकषायाम्लं रूक्षं गुर्वास्यशोधनम् । शीतं ग्राह्यरुचिच्छर्दिरक्तपित्तकफापहम् ॥" इति खारणादिना पृथग्गुणकथनात् ।**

**द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥ १३६ ॥**
**गुरूष्णवीर्यं वातघ्नं सरं सकरमर्दकम् ।**

**स०**-द्राक्षापरूषकं सकरमर्दकं चार्द्रं-अशुष्कम्, अम्लं सत् पित्तश्लेष्मकरं गुरूष्णवीर्यं वातघ्नं सरं चेति । करमर्दक-सुषेणम् ।

**आ० र०-अथ द्राक्षादीनामम्लानां गुणाः । तत्र द्राक्षादित्रयस्यार्द्रस्य गुणानाह-द्राक्षापरूषकमिति । अम्लानि यानि द्राक्षापरूषककरमर्दकानि तान्यार्द्राणि चेत्तदा पित्तप्रदत्वादिगुणानि ।**

**तथाऽम्लं कोलकर्कन्धुलकुचाम्रातकारुकम् ॥१३७॥**
**ऐरावतं दन्तशठं सतूदं मृगलिण्डिकम् ।**
**नातिपित्तकरं पक्वं शुष्कं च करमर्दकम् ॥ १३८ ॥**

**स०**-अम्लकोलादिकं मृगलिण्डिकान्तं तद्वच्चेति अम्लद्राक्षादिवत्, गुणैर्ज्ञेयमित्यर्थः । कर्कन्धु-ह्रस्वबदरी । लकुच-लिकुचम् । आरुकस्याम्लस्यैवैते गुणा ज्ञेयाः । मधुरस्य हि विशेषेण

१ 'सम्बन्धात्' ट । २ 'नाशन' ठ । ३ '**हृद्य**' क ञ । ४ '**ष्ण गुरु दो**' अ आ ख घ झ ञ ठ । ५ 'हृद्य' ट । 'पक्वं हृद्य' ठ । ६ 'तु वीरं वीरानकं' ध नि । ७ 'वीरामकं' ट ठ । ८ 'त्रयस्य गुणानाह' ग ञ । ९ '**तद्वच्च कोल**' अ ठ अरुणचन्द्र । १० '**तमारुकम्**' ख घ झ । ११ '**सलवामृग**' क ञ । १२ 'तथेत्यम्ल' ड, ।

पूर्वमुक्ता एव गुणा । तथा, ऐरावतादि नात्यर्थं पित्तं करोति । ऐरावत–नागरङ्गम् । दन्तशठ–जम्बीरम् । तथा, तूदं मृगलिण्डिकं च । तथा, करमर्दकं पक्वं शुष्कं च नात्यर्थं पित्तकरम् ।

आ० र०–कोलादीनां गुणानाह–तथाऽम्लमिति । अम्लानुवृत्तावप्यम्लग्रहणमार्द्रनिवृत्त्यर्थम् । अम्लं यत्कोलादिकं तदार्द्रं शुष्कं वा, तथा–तद्वत्, पित्तप्रदत्वादिगुणमित्यर्थः । कोल कर्कन्धुनी–बदरभेदौ । लकुच–ग्रन्थिफलम् । ऐरावत–नारङ्ग एलानं च । दन्तशठं–जम्बीरं फलाम्लिकाख्यं च । तूद–तोदनं आम्रातकं ( कोशाम्रं ) च । उक्तं च खारणादिना–"फलाम्लिकैरावतककोशाम्रकरमर्दकम् । आम्रातकं दन्तशठमम्लोष्णं रक्तपित्तलम् ॥" इति । मृगलिण्डिक–मृगविट्सदृशं कर्कटाख्यम् ।

द्राक्षादेर्मृगलिण्डिकान्तस्य पक्वस्य विशेषगुणमाह–नातिपित्तकरमिति । पक्वं द्राक्षादिकमम्लमपि नातिपित्तकरम्, स्वादुपाकत्वात् । तथाऽऽह माधवकारः–"द्राक्षाकरीरकर्कन्धुबदराण्यारुकाणि च । परूषकाणि चाम्लानि कफपित्तकराणि च ॥ स्वादुपाकानि यान्येषां नातिपित्तकराणि च ॥" इति । यत्तूक्तं सुश्रुतेन ( सू अ ४६।१७२ )–"अत्यम्लं पित्तजननमामं विद्यात्परूषकम् । तदेव पक्वं मधुरं वातपित्तनिबर्हणम् ॥" इति । तत्पक्वावस्थायां मधुरपरूषकविषयम् । यत्तु पक्वमप्यम्लत्वं न जहाति, तत्किञ्चित्पित्तकरमेव । एवं द्राक्षादिष्वपि बोध्यम् ।

शुष्कस्य करमर्दस्य विशेषगुणमाह–शुष्कमिति । नातिपित्तकरमिति चकारेणानुकृष्यते । शुष्कस्य करमर्दस्य विपर्ययतन्त्रयुक्त्या पित्तघ्नत्वे प्राप्ते किञ्चित्पित्तकरत्वं विधीयते ।

**दीपनं भेदनं शुष्कमम्लीकाकोलयोः फलम् ।**
**तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः ॥ १३९ ॥**

स०–अम्लीकाफलं कोलफलं च शुष्कं सद्दीपनं भेदनं तृष्णादिनाशनं लघु कफवातयोश्च पथ्यम् ।

आ० र०–शुष्काणामम्लिकादीनां गुणानाह–दीपनमिति । अम्लिका–चिञ्चाफलम् । कोलयोरिति द्विवचनात् कोलकर्कन्धुनोर्ग्रहणम् । सुश्रुतेन ( सू अ ४६।१४५ ) हि द्वयोरपि तुल्यगुणत्वमुक्तम्, दर्शितं च बदरव्याख्याने । कफवातयोरिष्ट–कफवातघ्नमित्यर्थः । सरमिति सामान्योक्त्या भेदनत्वे सिद्धे भेदनमिति नियमार्थम्, शुष्काण्येवाम्लिकादीनि भेदनानि । अत एव खारणादिना–"ग्राह्यम्लं बदरं रुच्यं लघूष्णं मारुतापहम् । मधुरं तद्गुरु स्निग्धं शीतं पित्तानिलापहम् ॥" इत्युक्तं ग्राहित्वमशुष्कविषयम् ।

१ 'नातिपित्तकृत्' ट ड । २ 'चिञ्चाफलं च' ख घ झ । ३ 'फलाम्लिकाख्यम्' ख घ झ । ४ 'मृगलेण्डि' क ग ञ । ५ 'कर्पटा' ख घ झ । ६ 'वातघ्नं पित्त' स सु । ७ 'पक्वमधुर' क ग ञ । ८ 'काङ्कोलयो' स स । 'म्लीका कोलयो' इत्यत्र हेमाद्रिमतेन परिच्छेदः । ९ अस्याग्रे "स्वाद्वम्लं लघु कोलं तु शुष्कं जीर्णं च दीपनम् ।" इत्यधिकः पाठः, अ आ क ञ ठ पुस्तकेषु । १० 'तुल्यग्रहणत्व' ख घ झ ।

**फलानामवरं तत्र लकुचं सर्वदोषकृत् ।**

स०–फलानां सर्वेषां मध्ये लकुचमवरं–अप्रधानं, त्रिदोषकरं च । चरकमुनिस्त्वस्य पित्तश्लेष्मकृत्त्वमेवानुजज्ञे । तत्पाठो हि ( सू अ २७।१२८ )–"अम्लं परूषकं द्राक्षा बदराण्यारुकाणि च । पित्तश्लेष्मप्रकोपीणि कर्कन्धुलकुचानि च ॥" इति । सङ्ग्रहे त्वतोऽप्यधिकमुक्तम् ( सू अ ७ )–"तिन्दुकाश्मन्तकासीसफलिनीबिम्बतोदनम् । टङ्काश्वकर्णबकुलगाङ्गेरुकधन्वनम् ॥ श्वेतपाकं कपित्थानि सिञ्चतीभव्यजाम्बवम् । क्षीरिवृक्षफलं बीजं पौष्करं कफपित्तजित् ॥ कषायमधुरं रूक्षं शीतलं गुरु लेखनम् । विबन्धाध्मानजननं स्तम्भनं वातकोपनम् ॥ बृंहणं वातपित्तघ्नं स्निग्धं सिञ्चतिकाफलम् । भव्यं विशदमम्लं च, जाम्बवं त्वतिवातलम् ॥ विष्टम्भकृद्दुर्जरं च साम्लं तु क्षीरिवृक्षजम् । पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षकीफलम् ॥ नीपं शताक्षिकं प्राचीनामलं तृणशूल्यजम् । अस्मादल्पान्तरगुणं सेङ्गुदं सविकङ्कतम् ॥ फलं करञ्जं विष्टम्भि पित्तश्लेष्माविरोधि च ।" इति । मुनिना त्वतोऽपि किञ्चिदधिकमुक्तम् । यथा ( च सू अ २७।१५० )–"रोचनो दीपनो हृद्यः सुगन्धिस्त्वग्विवर्जितः । कर्चूरः कफवातघ्नः श्वासहिक्कार्शसां हितः ॥ वातलं कफपित्तघ्नं विद्यात्कर्कटकीफलम् । मधुराण्यतिपाकानि वातपित्तहराणि च ॥ अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां फलानि तु । प्राचीनामलकं चैव दोषघ्नं गरघाति च ॥ इङ्गुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित् ।" इति । सुश्रुते चोक्तम् ( सू अ ४६।१८९, १६० )–"सुगन्धि मधुरं स्निग्धं लवलीफलमुच्यते । वृक्षाम्लाल्पान्तरगुणं कोशाम्रफलमुच्यते ॥" इति ।

आ० र०–लकुचगुणानाह–फलानामिति । एतच्च सर्वदोषकरत्वमनम्लस्य, अम्लस्य वातघ्नेषु कोलादिषु पठितत्वात् । सङ्ग्रहे तु ( सू अ ७ )–[ *"नारिकेलं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् । बलमांसकरं हृद्यं बृंहणं बस्तिशोधनम् ॥ मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम् । रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥ स्निग्धं स्वादुकषायं च राजादनफलं गुरु । ] मधूकजमहृद्यं तु बदरं सरणात्मकम् ॥

१ अस्याग्रे "वातघ्नं दुर्जरं प्रोक्तं नारङ्गं कफकृद्गुरु । तृष्णाशूलकफोत्क्लेदछर्दिश्वासनिवारणम् ॥ नारिकेलं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् । बलमांसकरं हृद्यं बृंहणं बस्तिशोधनम् ॥" इति आ क ञ पुस्तकेष्वधिकः पाठः, "नारङ्गगुणानाह–वातघ्नमिति । स्पष्टम् । नारिकेलगुणानाह–तृष्णेति । स्पष्टम् ।" इति तट्टीका च क ञ पुस्तकयोः । २ 'चन्द्रिका' ड । ३ 'ज्ञेयं गरुध' ट । 'रु च सध' ट । ४ 'पाककपि' ट । ५ 'भूरि वा' ट । ६ 'दपकं च' ट । ७ 'तु' ट । ८ 'सतीक्ष्णक' ट । ९ 'त्कर्कटकी' ट । 'त्पर्पटकी स च । १० 'गरहारि' स च । ११ 'हृद्यं सुगन्धि विशदं लवं' स सु । १२ 'तस्मादल्पान्त' स सु । * [ ] एतच्चिह्नान्तर्गताः सङ्ग्रहश्लोकाः केषुचिदपि हेमाद्रिटीकापुस्तकेषु नोपलभ्यन्ते ।

तिन्दुकाश्मन्तकाशीतिफलिनीबिम्बितोदनम्[1] । टङ्काश्वकर्णबकुलगाङ्गेरुधवधन्वनम् ॥ श्वेतपाक कपित्थानि सिञ्चनीभ व्यजाम्बवम् । क्षीरिवृक्षफल बीज पौष्कर कफपित्तजित् ॥ कषायमधुर रूक्ष शीतल गुरु लेखनम् । विबन्धाध्मानजनन स्तम्भन वातकोपनम् ॥ बृहण वातपित्तघ्न स्निग्ध सिञ्चतिकाफलम् । भव्य विशदमम्ल च, [ "जाम्बव त्वतिवात लम् ॥ विष्टम्भकृदकण्ठ्य च ] साम्ल तु क्षीरिवृक्षजम् । पित्तश्लेष्मघ्नमम्ल च वातल चाक्षकीफलम् ॥ कषाय रोचन हृद्य वातल लवलीफलम् । फल करञ्ज विष्टम्भि पित्तश्लेष्माविरोधि च ॥ नीप शताक्षिक प्राचीनामल तृणशूल्यजम् । पीलुनोऽल्पान्तरगुण सेङ्गुद सविकङ्कतम् ॥" इति ।

सम्प्रति यादृश फल शाक च त्याज्यम्, तदुपदिशन्नाह–

**हिमानलोष्णदुर्वातव्याललालादिदूषितम्[11] ॥ १४० ॥**
**जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ।**
**अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽति च[12] ॥ १४१ ॥**
**धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ।**
**असञ्जातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ॥ १४२ ॥**
**प्रायेण फलमप्येवं तथाऽऽमं बिल्ववर्जितम् ।**

## इति फलवर्गः ।

**स०**–दूषितशब्द प्रत्येक सम्बध्यते । धान्य केदारस्थ हिमेन दूषित त्यजेत् । तथा, अनलेन[13] प्रवृद्धेन दूषित, उष्णेन–आतपादिना, दुर्वातेन–पुरोवातादिना, तथा व्यालाना–सर्पादीना लालया दूषित त्यजेत् । आदिग्रहणेन शवकोथमूत्रपुरीषादीना ग्रहणम् । तथा, जन्तुभि –कृम्यादिभि , जुष्ट–सेवितम्[14] । जले मग्न–आशिख बुडितम्[15] । अभूमौ–विपरीतभुवि जात–अभूमिजम्, या यस्योचिता[16] भूमिस्ततोऽन्या–विपरीता । अनार्तव–अप्राप्तसमयम्, यस्मिन्नृतौ यस्योत्पत्ति प्रसिद्धा ततोऽन्यस्मिन् जातमित्यर्थ । तल्लक्षण च रसादीनामपरिपूर्णत्वेन विज्ञेयम् । अन्येन–विजातीयेन धान्येन सयुत केदारगतम्[17] । [ यथा[18],–रक्तशालिर्यवकेन सह विरुध्यते । तथा, मुद्गो माषेण । ] ( एव शूकधान्य विजातीयेन शूकधान्येन । तथा, शिम्बीधान्य शिम्बीधान्येन विजातीयेन[19] सह विरुद्ध त्यजेत् ) [ केचिच्छूक-धान्येन सह विरुद्धमिति वर्णयन्ति । अन्ये तु जीर्ण नवेन मिश्रितमन्यधान्ययुतमिति ब्रुवते । ] जीर्णतया–अतिपुराणत्वेन, हीनवीर्य–नष्टशक्ति । एवविध धान्य त्यजेत् । तथा, शाकमपि त्यजेत् । कीदृशम्? रूक्षसिद्ध,–नि स्नेहसिद्धमित्यर्थ । अथवा, रूक्षेण–काञ्जिकादिना सिद्ध–रूक्षसिद्धम् । अकोमल–जरठम् । असञ्जातरस–अपरिपूर्णस्वरूपमित्यर्थ[1] । तद्वच्छुष्क–तथैव शुष्कशाकमप्यसञ्जातरसवत् त्यजेत्, अन्यत्र मूलकात् । शुष्कमूलक भजेदेव । प्रायेण फलमप्येवविध त्यजेत् । प्रायोग्रहण द्राक्षापरूषकादीना शुष्काणामपि पथ्यत्वादत्याज्यत्वज्ञापनार्थम् । तथा, आम–असम्प्राप्तपाक फल, त्यजेदिति वर्तते । किं सर्वम्? नेत्याह–बिल्ववर्जितम् । बिल्व त्वाममपि पथ्यत्वाद्भजेदेवेत्यर्थ[2] । इति फलवर्ग ।

**आ० र०**–एव धान्यादीना गुणानुक्त्वा यादृक् त्याज्यं तादृगाह । तत्र धान्यमाह–हिमानलेति । हिम–तुहिनम्, अनलो–दावानलादि, उष्ण–आतप, दुर्वात –पुरोवातादि, व्यालाना–सर्पादिविषप्राणिना लालादय, [ आदिशब्देन[3] कोथमूत्रपुरीषादय, ] तैर्दूषित–उपहतम् । जन्तुजुष्ट–कृमिसेवितम् । जले मग्न–पानीयमग्नमञ्जरीकम्[4] । अभूमिज–अनुचितक्षेत्रजम् । अनार्तव–अनुचितकालजम् । अन्यधान्ययुत–विजातीयेन धान्येन सहैकक्षेत्रजम् । अतिजीर्णतया–बहुवर्षोषितत्वेन । हीनवीर्य–नष्टशक्ति । यत्स्वभावतो हीनवीर्यम्, अतिजीर्णमप्यहीनवीर्यम्[5], तन्न त्याज्यम् ।

शाकमाह–तथेति । तथा–हिमदूषितादिकम् । अन्यधान्ययुतमित्यत्र धान्यस्थाने शाकशब्द ऊहनीय । रूक्षसिद्ध–स्नेह विना पक्कम् । अकोमल–जरठम् । असञ्जातरस–अत्यन्तकोमलम् । मूलकादन्यच्छुष्क त्यजेत्, मूलकस्य शुष्कस्यैव गुणवत्त्वात् ।

फलमाह–प्रायेणेति । एवमिति धान्यवत् । अन्यफलयुतत्व तु–एककालबालजत्वेन[6] । बिल्ववर्जितमाम फल त्यजेत्, बिल्वस्यामस्यैव गुणवत्त्वात् । अपिशब्द प्रायेणेत्यस्य धान्यशाकाभ्यामपि सम्बन्धार्थ. । जन्तुजुष्टस्याप्युदुम्बरादे फलस्य, जलमग्नस्यापि पद्मनालादे. शाकस्य, अन्यधान्ययुतस्यापि कुसुम्भगोधूमादेर्धान्यस्य, सेव्यत्वदर्शनात्[7] प्रायेणेत्युक्तम् । इति फलवर्ग ।

फलवर्गादनन्तर विविधौषधवर्गारम्भ, प्रायेणास्याऽऽहारोपयोगित्वात् । तत्रापि लवणाना पूर्वमुपन्यासो युक्त, सुतरामुपयोगित्वात् । इत्याह–

## अथौषधवर्गः ।

**विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं मृदु[8] ॥ १४३ ॥**

---

1 'काशीतफ' ख घ झ । 'कासीनफ' स ढ । २ 'बिम्बतो' क ग ज स मू । ३ 'पाककपि' स स । ४ 'त्वाभिसि' क ज । ५ 'वृक्षभव' स स । ६ 'चाक्षिकी' क ग ज । 'चाक्षुकी' ख घ । ७ 'करञ्जाद्विष्ट' क ग ञ । ८ 'सतीक्ष्णक' क ग ञ । ९ 'नागर' स स । १० 'असादल्पान्तरगुणभैङ्गुद' स ढ । ११ 'हिमानिलो' ठ स स । १२ 'तयाऽपि च' ज आ ठ । १३ 'अनिलेन' ठ । १४ 'चुम्बितम्' ड । १५ 'अम्भसि बु' ट । १६ 'यस्योदिता' ठ ड । १७ 'केदारागतम्' ठ ड । १८ [ ] एतच्चिह्नान्तर्गत पाठस्त्रिष्वपि ट ठ ड पुस्तकेषु नोपलभ्यते । १९ ( ) एतच्चिह्नान्तर्गत पाठ, ठ.ड. पुस्तकयोर्नोपलभ्यते । २० 'धेन रुद्धम् ।' ट ।

१ 'पूर्णरसस्वरू' ट । २ 'त्वान्न त्यजेदित्यर्थ' ठ । ३ [ ] एतच्चिह्नान्तर्गत पाठ क ग ञ पुस्तकेषु नोपलभ्यते । ४ 'पानीये मग्नम् ।' क ग ञ । ५ 'अहीनवीर्यम्' इति क ग ञ पुस्तकेषु नोपलभ्यते । ६ 'एककालजत्वेन' क ग ञ । ७ 'सेवितत्व' ख घ. । 'सेवित्व' झ. । ८ 'विदु' अरुण, चन्द्र, स.स. ।

**वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ।**

स०-सर्वं लवणं विष्यन्द्यादिगुणयुक्तं विदुः-जानन्ति, सद्वैद्या इति शेषः । विष्यन्दयति तच्छील-विष्यन्दि, स्त्यानस्य कफादिसङ्घातस्य विलीनविश्लिष्टतामुत्पादयतीत्यर्थः । सूक्ष्मं-सूक्ष्मस्रोतोगामि । सृष्टं मलं-मूत्रपुरीषादि येन तत्सृष्टमलम् । तथा, वातापहम् । पाकि-अन्नव्रणादीनां पाककारि । तीक्ष्णं-अमृदु, मरीचादिवत् । उष्णं-उष्णवीर्यम् । रोचनं-रुचिकृत् । तथा, कफपित्तकृत् ।

**आ० र०-अथौषधवर्गः । औषधस्यापि संस्कारकत्वेनाहारोपयोगात् । तत्रादौ लवणम् । तच्चाष्टधा,-सैन्धवं सौवर्चलं बिडं सामुद्रं औद्भिदं कृष्णं रोमकं पांसुजं चेति । तत्र लवणसामान्यगुणानाह-विष्यन्दीति । विष्यन्दि-अभिष्यन्दि । सृदु-सृदुगुणम् । पाकि-पाचनम् ।**

इति सामान्यलक्षणमुक्त्वा, विशेषमाह-

**सैन्धवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत् ॥ १४४ ॥**
**लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ।**

स०-तत्र-तेषु लवणेषु मध्ये, सैन्धवं सस्वादु-ईषन्मधुरं, वृष्यं हृद्यं त्रिदोषघ्नं लघु तथा किञ्चिदुष्णं दृष्टेः पथ्यं किञ्चिद्विदाहि अग्निदीपनं च । सामान्यगुणाश्च विष्यन्दिसूक्ष्मसृष्टमलत्वरोचनान्यस्य सन्त्येव ।

**आ० र०-अथ विशेषगुणाः । तत्र सैन्धवगुणानाह-सैन्धवमिति । सस्वादु-ईषन्मधुरम् । अनुष्णं-ईषदुष्णम् । ननु, "सस्नेहं मधुरं पाके वर्ण्यं रोचनदीपनम् । दोषत्रयघ्नं चक्षुष्यं शीतं सस्वादु सैन्धवम् ॥" इति खारणादिना शीतमुक्तम् । तत्कथमनुष्णम्? अत्र ब्रूमः । शीतमिव शीतम्, चक्षुष्यत्वपित्तघ्नत्वादिकार्यकरत्वात् । अवश्यं चैवमङ्गीकर्तव्यम्, "सैन्धवं सारसं पाक्यं सौवर्चलमथौद्भिदम् । पूर्वं पूर्वं गुणोत्कृष्टमुष्णं तेषां यथोत्तरम् ॥" इति खारणादिनैवोष्णत्वस्योक्तत्वात् । सुश्रुतोऽप्याह ( सू अ ४६।३१३ )- "सैन्धवसामुद्रबिडसौवर्चलरोमकौद्भिदप्रभृतीनि लवणानि यथोत्तरमुष्णानि वातहराणि कफपित्तकराणि च । यथापूर्वं स्निग्धानि स्वादूनि सृष्टमूत्रपुरीषाणि च ।" इति । दृशः पथ्य-चक्षुष्यम् ।**

**लघु सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम् ॥ १४५ ॥**
**कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम् ।**

स०-सौवर्चलं लघु हृदयाय हितं सुगन्धि उद्गारं शोधयति-दुष्टं स्वच्छुद्धं करोति । कटुपाकं च । तथा, विबन्धं स्रोतसां हन्ति-विबन्धघ्नम् । अग्निदीप्तिरुचिकृत् ।

**आ० र०-सौवर्चलगुणानाह-लघु सौवर्चलमिति । उद्गारशोधनं-दुष्टोद्गारप्रशमनम् ।**

**ऊर्ध्वाधःकफवातानुलोमनं दीपनं बिडम् ॥ १४६ ॥**

१ 'स्त्यानकफादे स' ट । २ 'पाक्ये' अ । ३ 'सुशुद्ध' ट । ४ 'विबन्धिस्रोतसां हितं-वि' ठ ।

**विबन्धानाहविष्टम्भशूलगौरवनाशनम् ।**

स०-बिडं ऊर्ध्वमधश्च कफवातावनुलोमयति । तथा, दीपनं विबन्धादिघ्नं च ।

**आ० र०-बिडगुणानाह-ऊर्ध्वाध इति । ऊर्ध्वाध शब्दौ कफवाताभ्यां प्रत्येकं सम्बध्येते न तु यथासंख्येन, "ऊर्ध्वानुलोम्यकृद्वायोः शूलघ्नं दीपनं बिडम् ।" इति खारणादिवचनात्, "ऊर्ध्वं चाधश्च वातानामानुलोम्यकरं बिडम् ।" इति चरकवचनाच्च ( सू अ २७।२९९ ) । विबन्धो-मलावरोधः । आनाहो-बद्धोदरता । विष्टम्भो-वातावरोधः ।**

**विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम् ॥ १४७ ॥**

स०-सामुद्रं विपाके मधुरं गुरु कफवर्धनं च ।

**आ० र०-सामुद्रगुणानाह-विपाक इति ।**

**सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।**

स०-भूमिमुद्भिद्य यद्भवति तदौद्भिदम्, ईषत्तिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि च,-दोषोत्क्लिष्टकरम् ।

**आ० र०-औद्भिदगुणानाह-सतिक्तेति । भूमिमुद्भिद्योत्पन्नस्य क्षारोदकस्य सूर्यरश्मिभिर्वह्निना वा क्वथनाद्यल्लवणं तत्-औद्भिदम् । उत्क्लेदि-क्लेदाभिवृद्धिकरम् ।**

**कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः ॥ १४८ ॥**

स०-कृष्णे लवणे सौवर्चलगुणाः-लघुत्वादयो, गन्धेन वर्जिताः-सौगन्ध्यरहिताः, सन्तीति शेषः ।

**आ० र०-कृष्णलवणगुणानाह-कृष्ण इति । अत एव निर्गन्धं सौवर्चलमित्याचक्षते ।**

**रोमकं लघु, पांसूत्थं सक्षारं श्लेष्मलं गुरु ।**

स०-रोमकं लवणं लघु । पांसूत्थं-शिलालवणम्, ईषत्क्षारं श्लेष्मलं गुरु च ।

**आ० र०-रोमकगुणानाह-रोमकमिति । रोमकं-शाकम्भरीदेशोत्थम् ।**

**पांसुजगुणानाह-पांसूत्थमिति । पांसूत्थं-क्षारमृत्तिकोद्भवम् ।**

**लवणानां प्रयोगे तु सैन्धवादि प्रयोजयेत् ॥ १४९ ॥**

स०-लवणानां प्रयोगे सैन्धवमादि कृत्वा प्रयोजयेत्-अन्यत्र प्रदेशे लवणानि द्वित्राणि त्रिचतुराणि वा यत्र प्रयुज्यन्ते तत्र सैन्धवमादि कृत्वा प्रयोज्यानि । यथा-हिङ्ग्वादिचूर्णे "द्विपटु" इत्युक्तम् । तत्र सैन्धवसौवर्चले प्रयोज्ये । [ यत्र त्रयाणां

१ 'तादीननु' ट ठ । २ 'परम्' क ग ञ । ३ 'परम्' क ख ग घ झ ञ । ४ 'आनद्धोदरता' ख घ झ । ५ 'दोषोत्क्लेदकरम्' ट । ६ 'ते गन्धर' ट । ७ 'लमाच' ख घ झ । ८ 'गिराल' ट ठ । ९ 'पांसुज' क ख ग घ । १० 'वादीन् प्र' अ ट स स । ११ 'राण्येव यत्र यु' ठ । १२ 'टग्वाद्ये चूर्णे' ट । 'ङ्ग्वाद्येव-चूर्णे' ठ ड । १३ [ ] अस्मिस्थाने "एवमन्यत्रापि" "एवं सर्वत्र" इत्येव पाठ. क्रमेण ट.ठ. पुस्तकयो ,ड. पुस्तके च ।

प्रयोग, तत्र सैन्धवसावर्चलबिडानि । एवमौद्भिदादीना लवणवर्गे पठितानामन्यत्राऽपि ] वेद्यम् । खरनादे चोक्तम्–"सैन्धव सारस पाक्य सौवर्चलमथौद्भिदम् । पूर्व पूर्व गुणोत्कृष्टमौष्ण्य तेषा यथोत्तरम् ॥" इति ।

**आ० र०–प्रसङ्गाच्चिकित्सितोपयोगिनीं परिभाषामाह–लवणानामिति । यत्र लवणानामेकद्व्यादीना सैन्धवादिशब्दैर्विना प्रयोग उक्त, तत्र सैन्धवादि प्रयोजयेत् । सैन्धवमादि यत्र तद्यथा भवतीति क्रियाविशेषणम् । यथा,–यत्रैक लवणम्, तत्र सैन्धवम् । यत्र द्वे, तत्र सैन्धवसौवर्चले । यत्र त्रीणि, तत्र सैन्धवसौवर्चलबिडानीत्यादि । यत्र संख्या विना बहुवचनम्, तत्र पञ्चेव ग्राह्याणि । "सौवर्चल सैन्धव च बिडमौद्भिदमेव च । सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ॥" इति चरक(?)वचनात् । यथा ( हृ चि० अ १०।६ )–"चतुर्णां प्रस्थमम्लाना त्र्यूषणाच्च पलत्रयम् । लवणाना च चत्वारि शर्कराया पलाष्टकम् ॥ तच्चूर्णं शाकसूपान्नरागादिष्ववचारयेत् । कासाजीर्णारुचिश्वासहृत्पाण्ड्वामयशूलनुत् ॥" इत्यत्र । एतदेव स्पष्टीकृत सङ्ग्रहे ( चि अ १२ )–"दाडिमकपित्थवृक्षाम्लाम्लीकाना पृथक् पृथक् कुडव लवणपञ्चककुडव त्र्यूषणत्रिपल शर्करापलाष्टक चैकत्र चूर्णितमन्नपाने प्रणीतमजीर्णारुचिश्वासकासगुल्मप्लीहग्रहणीहृत्पाण्डुरोगघ्नम् ।" इति ।**

**गुल्महृद्ग्रहणीपाण्डुप्लीहानाहगलामयान् ।**
**श्वासार्शःकफकासांश्च शमयेद्यवशूकजः ॥ १५० ॥**

**स०**–यवशूकजो–यवक्षारो, गुल्मादीन् शमयति ।

**आ० र०–अथ क्षार । तत्र यवक्षारगुणानाह–गुल्मेति ।**

सम्प्रति स्वर्जिकाक्षारादीनामपि गुणानाह–

**क्षारः सर्वश्च परमं तीक्ष्णोष्ण. कृमिजिल्लघुः ।**
**पित्तासृग्दूषणः पाकी छेद्यहृद्यो विदारण. ॥ १५१ ॥**
**अपथ्यः कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ।**

**स०**–क्षार सर्वश्च परम–अतिशयेन, तीक्ष्णोष्ण कृमिजित् लघुश्च । पित्तासृजी दूषयति । पाकी–पाककारी । छेदी–मेद श्लेष्मादिग्रन्थिघ्न । अहृद्यो–हृदयाय न हित । विदारण–पक्वगण्डादीनाम् । कटुलावण्याच्छुक्रादीनामपथ्य ।

**आ० र०–क्षारसामान्यगुणानाह–क्षार इति । परम–अतिशयेन तीक्ष्णोष्ण । पाकी–पाचन । छेदी–छेदन । विदारण–शोफादिपाटन । कटुलवणरसत्वाच्छुक्रादीनामपथ्य ।**

१ 'योज्यम्' ट । २ 'सारक' ठ । ३ 'पाच्य' ट । ४ 'त्वेषा' ठ । ५ 'कित्सोप' ख घ झ । ६ 'त्यत्रैतत् स्पष्टी' क ग ञ । ७ 'चैकध्य' स द्व । ८ **'कफवात.श्च'** इति आ क ख घ ठ म स पुस्तकेषु पाठ, किन्तु **'कफकासांश्च'** इत्येव युक्त, चरके ( सू अ २७.३०२ )–"कास कफजमर्शांसि यावशूको व्यपोहति ।" इत्युक्तत्वात् । ९ **'द्याव'** अ आ ख घ झ. । १० 'हन्ति' ट.ठ. ।

**हिङ्गु वातकफानाहशूलघ्नं पित्तकोपनम् ॥ १५२ ॥**
**कटुपाकरसं रुच्यं दीपनं पाचनं लघु ।**

**स०**–हिङ्गु वातादिघ्न पित्तकोपन कट्वादिगुणयुक्त च ।

**आ० र०–तत्र हिङ्गुगुणानाह–हिङ्ग्विति ।**

**कषाया मधुरा पाके रूक्षा विलवणा लघुः ॥ १५३ ॥**
**दीपनी पाचनी मेध्या वयसः स्थापनी परम् ।**
**उष्णवीर्या सराऽऽयुष्या बुद्धीन्द्रियबलप्रदा ॥ १५४ ॥**
**कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ।**
**शिरोऽक्षिपाण्डुहृद्रोगकामलाग्रहणीगदान् ॥ १५५ ॥**
**सशोषशोफातीसारमेदमोहवमिक्रिमीन् ।**
**श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम् ॥ १५६ ॥**
**विबन्धं स्रोतसां गुल्ममूरुस्तम्भमरोचकम् ।**
**हरीतकी जयेद्व्याधींस्तांस्तांश्च कफवातजान् ॥ १५७ ॥**

**स०**–हरीतकी कषाया–कषायरसा । कषायरसत्वात्कटुविपाकित्व प्राप्तमित्याह–मधुरा पाक इति । तथा, रूक्षा । विलवणेति वचन लवण वर्जयित्वा शेषा पञ्चरसा अस्या सन्तीति वेदयति । ननु, एवं कषायेत्यनर्थकम्, यत पञ्चसु रसेषु लवणहीनेषु मध्ये कषायोऽनुप्रविष्ट एव । अस्त्येवैतत् । कषायेत्येतदतिशयख्यापनाय, कषायो रसोऽस्या बाहुल्येनास्तीत्यर्थ । तथा च मुनि ( च चि अ १।२९ )–"हरीतकी पञ्चरसामुष्णां विलवणा शिवाम् ।" इति । तथा, लघु । दीपनी–अग्ने । पाचनी–आमादे । मेध्या–मेधायै हिता । वयस इत्यादि,–कालकृता शरीरावस्था यौवनादिर्वयस्तस्य, पर–अतिशयेन, स्थापनी–स्थिरीकरणी । उष्णेत्येतावतैवोष्णवीर्यत्वस्यार्थस्य लब्धत्वात् वीर्यग्रहणमतिशयोष्णवीर्यत्वख्यापनार्थम् । सरा–भेदनी । तथा, आयुषे हिता । बुद्धि–वर्तमानार्थग्राहिणी प्रज्ञा, इन्द्रियाणि–चक्षुरादीनि, तेषा बल प्रददाति या सैवम् । कुष्ठादीन् रोगान् जयति । खरनादे त्वेवमप्यधायि–"स्वाद्वम्लभावात्पवन, कटुतिक्ततया कफम् । कषायमधुरत्वाच्च पित्त हन्ति हरीतकी ॥" इति ।

**आ० र०–हरीतकीगुणानाह–कषायेति । कषायेति पञ्चरसत्वेऽप्यतिशयार्थम् । विलवणा–स्वाद्वम्लकटुकषायतिक्तरसेत्यर्थ । बुद्धेरिन्द्रियाणा च बलप्रदा । पुराणज्वरो–जीर्णज्वर । शोषो–राजयक्ष्मा । मोहो–मूर्छा । स्रोतसा विबन्ध–स्रोतोरोध । कफवातजानिति कुष्ठादीना विशेषणम् । तांस्तांश्चेति–अन्येषामप्येवंप्रकाराणामानुलोम्यादिसाध्याना ग्रहणार्थम् । ननु, "स्वाद्वम्लभावात्पवन, कटुतिक्ततया कफम् । कषायमधुरत्वाच्च पित्त हन्ति हरीतकी ॥" इति खरणादिना पित्तघ्नत्वमप्युक्तम् । तत्किमिति कफवातयोर्ग्रहणम् । सत्यम् ।**

१ **'मेदमोह'** अ आ ख घ झ स द्व । २ 'अस्त्वेतत्' ट । ३ 'ष्णामलवणा' स च । ४ 'कायाग्ने' ट. । ५ 'बुद्धि–प्रज्ञा' ट.ठ. । ६ 'णामनुलोमादि' ख.घ.झ. ।

पित्तजानपि व्याधीन् जयेत्, कफवातजांस्त्वतिशयेन, उष्णवीर्यत्वात्। खारणादिना हरीतकीलक्षणमप्युक्तम्–"क्षिप्ताऽम्भसि निमज्जेद्या गुणकृत्सा प्रकीर्तिता।" इति।

**तद्वदामलकं शीतमम्लं पित्तकफापहम्।**

स०–तया–हरीतक्या, तुल्यं वर्तत इति तृतीयान्ताद्वति। हरीतकीसमानगुणमामलकमित्यर्थः। विशेषं त्वस्याह–अभयोष्णा इदं शीत,–शीतवीर्यम्। तथा, अम्लं–अम्लरसं, पित्तकफघ्नं चेति। कृष्णात्रेयस्त्वामलकं त्रिदोषघ्नमाख्यत्। यथा–"अम्लभावाज्जयेद्वातं पित्तं माधुर्यशैत्यतः। कफं रूक्षकषायत्वादेवमेतत् त्रिदोषनुत्॥" सुश्रुतेऽपि ( सू० अ० ४६।१४३ ) त्रिदोषघ्नत्वमुक्तम्। तद्ग्रन्थो हि–"चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम्। हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः॥ कफं रूक्षकषायत्वात् फलेभ्योऽभ्यधिकं तु तत्।" इति।

**आ० र०–आमलकगुणानाह–तद्वदिति। तद्वत्–हरीतकीवत्। सा तूष्णा कषायोत्कटा, अतिशयेन कफवातघ्नी। इदं तु शीतमम्लोत्कटमतिशयेन पित्तकफघ्नमिति व्यतिरेकः।**

**कटु पाँके हिमं केश्यमक्षमीषच्च तद्गुणम्॥ १५८॥**

स०–अक्षं–बिभीतकं, पाके कटुकं शीतवीर्यं केशेभ्यो हितम्। तथा, ईषत्तद्गुणं,–ताभ्यां–हरीतकीधात्रीभ्यां, समाना गुणा यस्य तत्तद्गुणं किञ्चिदक्षम्। ननु, हरीतक्यादीनां स्थूलसूक्ष्मादिभेदेनानियतस्वरूपत्वात्कथमिवोपयोगः क्रियताम्? इति केचित्। तान् ब्रूमहे। अक्षं तावदत्र कर्षप्रमाणं ग्राह्यम्। तथा च धन्वन्तरिराख्यत् ( ध० निघण्टौ व० १।२१२ )–"बिभीतकः कर्षफलो" इत्यादि। अन्वर्था हीयं संज्ञा। कर्षः–कर्षप्रमाणं, फलं यस्य स कर्षफल इति। तदेवं बिभीतकस्य फलं यत्कर्षप्रमाणं तद्ग्राह्यमित्यवतिष्ठते। हरीतक्या अपि प्रमाणं नियतमेव। तन्त्रान्तरेऽप्युक्तम्–"नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता तथाऽम्भसि। निमज्जेद्या प्रशस्तत्वात् गुणकृत्सा प्रकीर्तिता॥ नवादिगुणयुक्तत्वं तथैकत्वं द्विकर्षता। हरीतक्याः फले येन तेनैतच्छ्रेष्ठमुच्यते॥" इति। तदेवं द्विकर्षप्रमाणत्वं हरीतक्याः स्थितम्। धात्रीफलस्यापि युक्त्या नियतप्रमाणत्वमेव। तथा चोक्तं तन्त्रान्तरे–"अभयैका प्रदातव्या द्वावेव तु बिभीतकौ। धात्रीफलानि चत्वारि त्रिफलेयं प्रकीर्तिता॥" इति। तदेवमामलकानामर्धकर्षप्रमाणत्वमवतिष्ठते। तस्मान्नियतप्रमाणत्वं त्रिफलायाः स्थितम्।

**आ० र०–बिभीतकगुणानाह–कटु पाक इति। अक्षं–बिभीतकम्। तद्गुणं–आमलकगुणम्। कटु पाके इति स्वादुपाकत्वापवादः। अहिममिति शीतवीर्यस्य निषेधादुष्णवीर्यत्वस्यैव प्रतिप्रसवः। ईषदित्यतिशयो निषिध्यते। स चाम्लत्वस्येव, न पित्तकफापहत्वस्य। तस्य तन्त्रान्तरे विधानात्। यदाह सुश्रुतः ( सू० अ० ४६।२०० )–"भेदनं लघु रूक्षोष्णं वैस्वर्यं कृमिनाशनम्। चक्षुष्यं स्वादुपाक्यक्षं कषायं कफपित्तजित्॥" इति। खारणादिरपि–"कषायमधुरं शीतं लघु पित्तकफापहम्। बिभीतकफलं तस्मात्त्रिफला सार्वयौगिकी॥" इति। स्वादुपाकीति,–स्वादु–मधुररसम्, पाकि–पाचनम्। अत एव खारणादिना कषायमधुरमुक्तम्। शीतमिति शीतस्पर्शम्, सुश्रुतेनोष्णत्वस्योक्तत्वात्, "उष्णवीर्या" इति वीर्यग्रहणाच्च।**

**इयं रसायनवरा त्रिफलाऽक्ष्यामयापहा।**
**रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित्॥ १५९॥**

स०–इयं–ईदृशी, त्रिफला रसायनवरा। चक्षूरोगघ्नी। रोपणी–व्रणानाम्। त्वग्गदाः–कुष्ठादयः, क्लेदो–व्रणादीनां स्रावः, मेदः–चतुर्थो धातुः, मेहः–प्रमेहः, कफः–श्लेष्मा, अस्रं–रक्तम्, तानि जयति या सेयम्।

**आ० र०–हरीतक्यादित्रयस्य मिलितस्य संज्ञां कुर्वन् गुणानाह–इयमिति। इयं–हरीतक्यामलकबिभीतकाख्या फलत्रयी, त्रिफलेति ख्याता रसायनवरत्वादिगुणा च। अक्ष्यामयो–नेत्ररोगः। त्वग्गदाः–कुष्ठादयः।**

**सकेसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम्।**
**पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं रोचनदीपनम्॥१६०॥**

स०–दीपनरोचनमित्येतत्पर्यन्तम्। त्वक् च पत्रं चैला चेति द्वन्द्वैकवद्भावः। एतस्य नाम त्रिजातकं त्रिसुगन्धमिति। एतत्त्रिजातकं केसरयुक्तं चतुर्जातकमित्युच्यते। तच्च पित्तप्रकोपित्वादिगुणम्। पित्तप्रकोपि तीक्ष्णादिगुणयुक्तम्।

१ 'कफघ्नमि' ट.। २ 'माख्यातवान्' ट। ३ 'पाकेऽहिम' इति हेमाद्रिसम्मतः पाठो युक्तः। किन्त्वक्षस्य हिमत्वोष्णत्वयोर्विवादः। तत्र सङ्ग्रहः (सू० अ० १०)–"आक्षं तु तद्गुणन्यूनं कषायमधुरं हिमम्।" इति। सुश्रुतः ( सू० अ० ४४।६९ )–"बिभीतकमनुष्णं तु कफपित्तनिबर्हणम्।" इति। धन्वन्तरिनिघण्टुः ( व० १।२१४ )–"चक्षुष्यं कटु रूक्षोष्णं पाके स्वादु कफास्रजित्।" इति। राजनिघण्टुः ( व० ११।३२४ )–"बिभीतकः कटुस्तिक्तः कषायोष्णः कफापहः।" इति। तत्र सङ्ग्रहसुश्रुतोक्तं हिमत्वं स्पर्शविषयं ज्ञेयम्, निघण्टुद्वयोक्तं चोष्णत्वं वीर्यविषयम्। मदनपालेनापि–"उष्णवीर्यो हिमस्पर्शो भेदनः कासनाशनः।" इत्येतदेव स्पष्टीकृतम्। अरुणदत्तेन तु 'शीतवीर्यम्' इति यदुक्तं तदयुक्तमिति नतिभाति। ४ 'इति चेत् तान्' ट। ५ 'निमज्जत्याशु शस्ता' ट.। ६ 'कत्वद्वि' ट.। 'कत्र' इति क्वचित्। ७ 'यत्र' ट.।

१ 'योगनाया' ट। २ 'एतेनामल' ट। ३ 'वीर्यतनि' ख घ ञ। ४ 'त्वस्य प्र' ख घ ञ। ५ प्रतिप्रसवो–निषेधस्य पुनर्विधिः। ६ अस्याग्रे "सुगन्धि सर्वपेयानां व्यञ्जनानां च वासनम्। लेहानां खाद्यपाकानां चूर्णानां च प्रयोजयेत्॥" इत्यधिकश्लोकः, अ आ पुस्तकयोः। ७ अत्र 'सहकेसरेण–नागकिञ्जल्केन सकेसरं चतुर्जातम्। किम्? त्वक्पत्रैलं,–त्वक् च पत्रं एला च। त्वक्पत्रैलकस्य किंनाम? इत्याह–त्रिजातकम्। तदेव त्वक्पत्रैलानां त्रिजातकसंज्ञा। त्वक्पत्रैलाकेसराणां चतुर्जातसंज्ञा। तद्द्वयमप्येतत् पित्तप्रकोपि तीक्ष्णादिगुणयुक्तम्।' इति ट ठ पुस्तकयोः पाठः। ठ. पुस्तके तु 'सकेसर' इति श्लोकार्धं तट्टीका च नोपलभ्यते।

आ० र०–त्वगादेस्त्रयस्य चतुष्टयस्य च सञ्ज्ञां कुर्वन् गुणानाह–सकेसरमिति । त्वक्पत्रैल–त्रिजातकम् । तदेव सकेसर–चतुर्जातसञ्ज्ञम् । द्वयमपि पित्तप्रकोपित्वादिगुणम् । केचित्पूर्वार्द्धमपठित्वोत्तरार्द्धं मरिचेन योजयन्ति । तदसत् । त्रिफलावत् त्रिजातकचतुर्जातकाभ्यामपि व्यवहारात् पित्तप्रकोपित्वादिगुणयोगशङ्कायां निर्बीजत्वाच्च । न हि तन्त्रान्तरे एतत्प्रतिकूला गुणा उक्ता, किन्त्वनुकूला । यथा चिकित्साकलिकायाम् (श्लो ६०)–"त्वक्पत्रकैल त्रिसुगन्धमेतत् प्रकीर्तितं वातकफापहारि । वर्ण्यं विषघ्नं च सनागपुष्पं ज्ञेयं चतुर्जातकमेतदेव ॥" इति ।

**रसे पाके च कटुकं कफघ्नं मरिचं लघु ।**

स०–रसे पाके च कटुकं मरिचं कफघ्नं लघु च । कटुरसत्वेन कटुपाकत्वे लब्धे पाकग्रहणमतिशयार्थम् ।

आ० र०–मरिचगुणानाह–रसे पाक इति । यत्तु "रोचनं दीपनं छेदि सुगन्धि कफवातजित् । नात्युष्णं कटुकं तीक्ष्णं मरिचं नातिपित्तलम् ॥" इति खारणादिना नात्युष्णत्वं नातिपित्तलत्वं चोक्तम् । तदार्द्रावस्थाविषयम्, तस्य स्वादुपाकित्वात् । उक्तं च सुश्रुतेन (सू अ ४६।२२४)–"स्वादुपाक्यार्द्रमरिचं गुरु श्लेष्मप्रसेकि च ।" इति ।

**श्लेष्मला स्वादुशीताऽऽर्द्रा गुर्वी स्निग्धा च पिप्पली॥**
**सा शुष्का विपरीताऽतः स्निग्धा वृष्या रसे कटुः ।**
**स्वादुपाकाऽनिलश्लेष्मश्वासकासापहा सरा॥१६२॥**
**न तामत्युपयुञ्जीत रसायनविधिं विना ।**

स०–आर्द्रा–अशुष्का, पिप्पली श्लेष्मला स्वादुरसा शीतवीर्या गुरु स्निग्धा च । सा–पिप्पली, शुष्का अत –आर्द्राया पिप्पल्याः सकाशात, विपरीता–शीतविपर्ययेणोष्णा, गुरुविपर्ययेण लघु, स्निग्धविपर्ययस्त्वत्र नास्ति स्निग्धेत्युक्तत्वात् । तथा, वृष्या रसे कटुश्च । कटुरसत्वाच्च कटुपाकत्वं प्राप्तमित्याह–स्वादुपाका । तथा, अनिलादीन् हन्ति, सरा च । एवंविधामपि ता–पिप्पली, नात्यर्थं युञ्जीत, रसायनविधिं विना । पिप्पली वर्धमानादिरसायनविधान एवातिशयेनोपयुञ्जीत ।

आ० र०–आर्द्रपिप्पलीगुणानाह–श्लेष्मलेति ।

शुष्कपिप्पलीगुणानाह–सा शुष्केति । अत –आर्द्राया, विपरीता–श्लेष्मघ्नी उष्णा लघुश्च । विपरीताद्रूक्षत्वे प्राप्ते स्निग्धेति वचनम्, तिक्तादिकेषु प्राप्तेषु रसे कटुरिति, वैपरीत्यादेव श्लेष्मघ्नत्वे सिद्धे पुन श्लेष्मग्रहणं च नियमार्थम्, अनिलश्लेष्मघ्न्येव, न पित्तघ्नी । ननु, पित्तघ्नत्वशङ्कैव कुत ? इति चेत्, "कटुका पिप्पली पित्तं शमयति, शीतवीर्यत्वात्" इति सुश्रुतवचनात् (सू अ ४०।५) । सुश्रुतवचनस्य का गति ? इति चेत्, आर्द्रा पिप्पली । तस्याः कटुकत्वं कुत ? इति चेत्, प्रत्यक्षसिद्धत्वात् । स्वादुत्वोक्तिस्त्वतिशयार्था । सुश्रुतस्याप्यार्द्राविषयत्वमभिप्रेतम् । यत आह (सु सू अ ४६।२२३)–"तेषु गुर्वी स्वादुशीता पिप्पल्यार्द्रा कफावहा । शुष्का कफानिलघ्नी सा वृष्या पित्तप्रकोपिणी ॥" इति । उक्तं च माधवकारेण–"सा पित्तशमनी पूर्वं दर्शिता वीर्यवादिना । शास्त्रकारेण निर्दिष्टा सा सत्य पित्तकोपिनी । यद्वाऽऽर्द्रा पित्तशमनी शुष्का पित्तप्रकोपिणी ॥" इति ।

पिप्पल्या अतिसेवां निषेधति–न तामिति । चरकाचार्येण त्वत्रोपपत्तिरुक्ता (वि अ १।१८)–"अथ खलु त्रीणि द्रव्याणि नात्युपयुञ्जीताधिकमन्येभ्यो द्रव्येभ्य । तद्यथा–पिप्पली क्षारो लवणमिति । पिप्पल्यो हि–कटुका सत्यो मधुरविपाका गुर्व्यो नात्यर्थं स्निग्धोष्णा प्रक्लेदिन्यो भेषजाभिमताश्च सत्य शुभाशुभकारिण्यो भवन्ति । आपातभद्रा प्रयोगसमसाद्गुण्याद्दोषसञ्चयानुबन्धा । सततमुपयुज्यमाना हि गुरुप्रक्लेदित्वात् श्लेष्माणमुत्क्लेशयन्ति, औष्ण्यात्पित्तम् । न च वातप्रशमायोपकल्पन्ते, अल्पस्नेहोष्णभावात् । योगवाहिन्यस्तु खलु ता भवन्ति । तस्मात्पिप्पलीर्नात्युपयुञ्जीत ॥" इति ।

**नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् ॥ १६३ ॥**
**रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ।**

स०–नागर–शृङ्गवेर, दीपनादिगुणयुक्तम् । ग्राहि–विड्विबन्धकृत् । तथा, हृद्यम् । विबन्धनुत्–स्रोत शुद्धिकृत् ।

आ० र०–शुण्ठीगुणानाह–नागरमिति । नागर–शुण्ठी । ग्राहि–मलानाम् । विबन्धनुत्–वायो ।

**तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत् ॥ १६४ ॥**
**स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ।**

स०–आर्द्रकं शुण्ठीसमानगुणमेव । एतच्च त्रयं–मरिचपिप्पलीशुण्ठ्याख्यं, त्रिकटुकसञ्ज्ञं स्थौल्यादीन् जयेत् ।

आ० र०–आर्द्रकगुणानाह–तद्वदिति । तद्वत्–नागरवत् । सङ्ग्रहे त्वनयोर्विशेष उक्त (सू अ ७)–"आर्द्रकाज्जायते शुण्ठी सस्कारेण लघीयसी ।" इति, "आमं ग्राहितरं तक्रं नागरीकृतमार्द्रकम् ।" इति च ।

मरिचादित्रयस्य सञ्ज्ञां कुर्वन् गुणानाह–एतच्चेति । एतत्त्रयं–मरिचपिप्पलीनागराख्यं त्रिकटुकसञ्ज्ञम् । तच्च स्थौल्यादीञ्जयेत् । आर्द्रकस्य नागरादभिन्नत्वान्मरिचादित्रयं गृह्यते ।

**चविकापिप्पलीमूलं मरिचाल्पान्तरं गुणैः ॥ १६५ ॥**

---

१ 'या अपि नि' ख घ । 'शङ्कानिबी' झ । २ 'गन्धि चैतत्' चि क । ३ 'ष्णं नातिपित्तल' ख. घ झ । ४ 'नात्युपयु' ट । ५ 'मृदुशीत' स सु ।

१ 'यात्मेम्' क ग न । २ 'तेषा' म सु । ३ 'पित्ताविरोधिनी' स सु । ४ 'तमन्येभ्यो' क ग ञ । ५ 'कटुरसा' क ग ञ । ६ 'सन्त्यो' क ग । ७ 'गुर्व्योऽत्यर्थं' क ग ञ । ८ 'भिषजामभि' क ग ज । ९ 'श्च । ता सद्य शुभा' स च । १० 'समसाद्गु' ग स च । ११ 'बन्धा' स च । १२ 'न्यस्तु खलु भ' स च ।

स०–चविकापिप्पलीमूल मरिचात् स्तोकविशेष गुणैर्भवति–कटुरसविपाक कफघ्न लघूष्णवीर्य चेत्यर्थ । गुणशब्देन रसविपाकादयोऽपि पारतन्त्र्याद्गृह्यन्ते, न तु पारिभाषिका एव गुरुलघ्वादय, व्याप्तेर्न्यायात् ।

आ० र०–चव्यपिप्पलीमूलयोर्गुणानाह–चविकेति ।

**चित्रकोऽग्निसमः पाके शोफार्शःक्रिमिकुष्ठहा ।**

स०–चित्रको–दहनसज्ञ, अग्निसम पाके–अत्यन्तोष्ण इत्यर्थ । तथा, शोफादीन् हन्ति ।

आ० र०–चित्रकगुणानाह–चित्रक इति । पाके–पाचनक्रियायाम्, अग्निसम –अग्निवत्, आमादीन् पचतीत्यर्थ ।

**पञ्चकोलकमेतैच्च मरिचेन विना स्मृतम् ॥ १६६ ॥**
**गुल्मप्लीहोदरानाहशूलघ्नं दीपन परम् ।**

स०–एतच्च–पूर्वोक्त, मरिचरहित–पिप्पलीपिप्पलीमूलचव्यचित्रकशुण्ठ्याख्य, पञ्चकोलसज्ञ स्मृत वैद्यके तन्त्रे । तथा, गुल्मादिघ्नमतिदीपन च ।

आ० र०–पिप्पल्यादिपञ्चकस्य संज्ञां कुर्वन् गुणानाह–पञ्चकोलकमिति । एतत्–त्रिकटुक चविकादित्रय च, मरिचरहित पञ्चकोलकसज्ञम् । गुल्मादिघ्न चात्यन्तमग्नेर्दीपन च ।

**बिल्वकाश्मर्यतर्कारीपाटलाटिण्टुकैर्महत् ॥ १६७ ॥**
**जयेत्कषायतिक्तोष्णं पञ्चमूलं कफानिलौ ।**

स०–बिल्वादीनामुपलक्षणार्थे तृतीया । बिल्वादिभिरुपलक्षित महत्पञ्चमूल कफानिलौ जयेत् । तच्च कषायतिक्तरसमुष्णवीर्य च । बिल्व–श्रीफलम् । काश्मर्य–गम्भारी । तर्कारी–अरणिका । पाटला–ताम्रपुष्पा । टिण्टुक –स्योनाक । महत् गुरु बृहत् अनल्पमिति पर्याया ।

आ० र०–बिल्वादिपञ्चकस्य सज्ञा कुर्वन् गुणानाह–बिल्वेति । बिल्वादिपञ्चक–महापञ्चमूलाख्य, कषायादिगुण च । बिल्वः–श्रीफल । काश्मर्य –श्रीपर्णी । तर्कारी–अग्निमन्थ । पाटला–वसन्तदूती । टिण्टुक –स्योनाक ।

**ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥ १६८ ॥**
**स्वादुपाकरसं नातिशीतोष्ण सर्वदोषजित् ।**

स०–पञ्चमूलमिति वर्तते । ह्रस्व कनीयो लघु अल्पमिति पर्याया । बृहतीद्वय–क्षुद्रबृहती महाबृहती च । अंशुमतीद्वय–शालिपर्णी *पृश्निपर्णी च । गोक्षुरको–भक्षटक । इद ह्रस्व पञ्चमूल स्वादुपाकरस नातिशीत नात्युष्ण सर्वदोषजिच्च । [ गोक्षुरादिभि पञ्चभिर्लघु द्वितीय पञ्चमूलम् ।]

आ० र०–बृहत्यादिपञ्चकस्य सज्ञा कुर्वन् गुणानाह–ह्रस्वमिति । बृहत्यादिपञ्चक–ह्रस्वपञ्चमूलसज्ञ, स्वादुपाकादिगुण च । बृहतीद्वय–व्याघ्री सिंही च । अंशुमतीद्वय–शालिपर्णी *पृश्निपर्णी च । गोक्षुरक –त्रिकण्टक । नातिशब्दोऽत्र निषेधे, न त्वीषदर्थे, शीतोष्णयोरेकत्रानवस्थानात्, अनुष्णाशीतमित्यर्थ । सुश्रुतेन तु गोक्षुरस्थाने एरण्ड पठित ।

**बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन तु ॥ १६९ ॥**
**मध्यम कफवातघ्नं नातिपित्तकर सरम् ।**

स०–बलादिभि पञ्चभिर्मध्यम पञ्चमूलम् । एतच्च कफवातघ्न नातिपित्तकर सर च । [ बलादिभि पञ्चभिस्तृतीय पञ्चमूलम् ।]

आ० र०–बलादिपञ्चकस्य सज्ञां कुर्वन् गुणानाह–बलेति । बलादिपञ्चक–मध्यमपञ्चमूलाख्य, कफघ्नादिगुण च । बला–वाट्यालक । पुनर्नवा–वर्षाभू । एरण्ड –पञ्चाङ्गुल । शूर्पपर्णीद्वय–मुद्गपर्णी माषपर्णी च ।

अधुना चतुर्थ पञ्चमूलमाह–

**अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ॥ १७० ॥**
**जीवनाख्यं तु चक्षुष्यं वृष्यं पित्तानिलापहम् ।**

स०–अभीरुवीरादिभि पञ्चभिर्जीवनाख्य पञ्चमूल चक्षुष्यादिगुणयुक्तम् ।

आ० र०–अभीर्वादिपञ्चकस्य संज्ञां कुर्वन् गुणानाह–अभीर्विति । अभीर्वादिपञ्चक–जीवनपञ्चमूलसज्ञ, चक्षुष्यादिगुण च । अभीरु–शतावरी । वीरा–काकोली । जीवन्ती–शाकप्रवरा । जीवकर्षभकौ–स्वनामप्रसिद्धौ ।

पञ्चम पञ्चमूलमाह–

**तृणाख्यं पित्तजिद्दर्भकासेक्षुशरशालिभिः ॥ १७१ ॥**

**इत्यौषधवर्गः ।**

स०–तृणसज्ञ पञ्चमूल दर्भकासेक्षुशरशालिभि । तच्च पित्तजित् । सङ्ग्रहे त्वविकमुक्तम् ( सू अ १२ ) । यथा–"सुवर्णं बृंहण स्निग्ध मधुर रसपाकयो । विषदोषहर शीतं सकषाय रसायनम् ॥ रूप्य स्निग्ध कषायाम्ल विपाके मधुर सरम् । वयस्स्थापन शीत लेखन वातपित्तजित् ॥ ताम्र सतिक्तमधुर कषाय लेखन लघु । कटुपाकरस शीत रोपण कफपित्तजित् ॥ कांस्यं कषायानुरस विशद लेखन सरम् । दृष्टिप्रसादन रूक्ष तिक्त पित्तकफापहम् ॥ सतिक्तलवण भेदि पाण्डुत्वक्रिमिवातनुत् । लेखन पित्तल किञ्चित् त्रपु, सीस च तद्गुणम् ॥ चक्षुष्य कृष्णलोह तु कषाय स्वादु तिक्तकम् । लेखनं वातल शीत क्रिमिपित्तकफप्रणुत् ॥ (*गात्रशैथिल्यपालित्यपाण्डुघ्न शोषशोफजित् । तद्वत्तीक्ष्ण विशेषेण तद्विकाशि सुदुर्जरम् ॥ पद्मरागमहानीलपुष्परागविदूरका ।) मुक्ताविद्रुमवज्रेन्द्रवैदूर्यस्फटिकादिकम् ॥ मणिरत्न सर शीत

१ 'विशेषगुण गु' ठ । २ 'मेतत्तु' क ञ । ३ 'लघु' आ । ४ 'टुण्टु' ठ । ५ 'तीक्ष्णोष्ण' क ञ । ६ 'लक्षणे' ठ । *७ 'पृष्टिपर्णी' ठ ड ञ । 'पृष्ठपर्णी' ख घ झ । ८ 'भक्षकण्टक' ठ । 'त्रिकण्टक' ट । ९ [ ] इ ड पुस्तक एव । *१० 'पञ्चमूल' क ग ञ ।

१ 'रण्डै' ख घ झ स मू । २ 'सूर्प्य' अ आ । 'सूर्प' क ग ञ । ३ 'च' अ आ ख घ झ स ढ । ४ 'लघु' स ढ । ५ 'च' ठ । ६ इमे सङ्ग्रहश्लोका ट पुस्तके न वर्तन्ते । ७ 'वय स्स्था' ट । *८ ( ) इति पाठ, ट ठ पुस्तकयोर्नोपलभ्यते ।

कषाय स्वादु लेखनम् । चक्षुष्य धारणात्तु[1] पाप्माऽलक्ष्मीविषापहम् ॥ सक्षार उष्णवीर्यश्च काचो दृष्टिकृदञ्जनात् । शङ्खोदधिमलौ शीतौ कषायावतिलेखनौ ॥ तुत्थक कटु[2] सक्षार कषाय विशद लघु । लेखन भेदि चक्षुष्य कण्डूकृमिविषापहम् ॥ विशदो गैरिक स्निग्ध कषायमधुरो हिम । कफघ्नी[3] तिक्तकटुका मनोह्वा लेखनी सरा ॥ स्निग्ध कषायकटुक हरिताल विषप्रणुत् । कषायमधुर शीत लेखन स्निग्धमञ्जनम् ॥ रक्तपित्तविषच्छर्दिहिध्माघ्न दृक्प्रसादनम् । स्रोतोऽञ्जन वर तत्र तत सौवीरकाञ्जनम् ॥ कफघ्न तिक्तकटुक छेदि सोष्ण रसाञ्जनम् । ( *सर्वदोषप्रशमन कासमेहक्षयापहम् ॥ ) कफघ्नमुष्ण कटुक शिलाजतु रसायनम् । (*तिक्त च छेदन योगवाहित्वात्सर्वरोगजित् ॥) कषाया मधुरा रूक्षा कासघ्नी वशरोचना । तुगाक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा ॥ कार्व्यौ[4] कुञ्चिकाऽजाजी कबरी धान्यतुम्बरु । अजगन्धहर रुच्य दीपन कफवातजित् ॥ बाष्पिका कटुतिक्तोष्णा[5] कृमिश्लेष्महरा परम् । तद्वच्च राजिका ( विड्सादनी दीपनी परम् ॥ शूलाटोपहरा ) रुच्या, दीप्यक कोष्ठशूलजित् । अहृद्या सर्षपा स्निग्धा बाष्पिकावत्प्रकीर्तिता ॥ शताह्वाकुष्ठतगरसुरदारुहरेणव । एलैलवालुसरलत्वग्व्याघ्रनखचोरका ॥ लघूष्णा कटुका पाके कफवातनिबर्हणा । सैर्यकस्तिक्तमधुर स्निग्धोष्ण कफवातजित् ॥ बस्तिमूत्रविबन्धघ्नो वृष्यो गोक्षुरको हिम । पाचन कफपित्तघ्न तिक्त शीत विषाद्वयम् ॥ कफघ्न तिक्तकटुक मुस्त सङ्ग्राहि पाचनम् । तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी ॥ दीपनी ज्वरतृड्दाह[8]कामलावातरक्तनुत् । तिक्तशीतौ ज्वरहरौ लघू भूनिम्बपर्पटौ ॥ निम्बस्तिक्तो हिम कुष्ठकृमिपित्तकफापह । महानिम्ब पर ग्राही कषायो रूक्षशीतल ॥ गुग्गुलु पिच्छिल स्पर्शे विशदोऽभ्यवहारत । सस्वादु सकटुस्तिक्त सकषायो रसायनम् ॥ व्रण्य स्वर्य कटु पाके रूक्ष सूक्ष्मोऽग्नि दीपन । क्लेदमेदोनिलश्लेष्मगण्डमेहापचीकृमीन् ॥ पिटिकाग्रन्थिशोफांश्च हन्त्युष्ण ससनो लघु । शङ्खपुष्पी सरा तिक्ता मेध्या कृमिविषापहा ॥ कटुतिक्तोष्णमगुरु[9] स्निग्ध वातकफापहम्[10] । पित्तास्रविषतृड्दाहक्लेद[11]घ्न गुरु रूक्षणम् ॥ सर्व सतिक्तमधुर चन्दन शिशिर परम् । लघु रक्त, तथोशीर वातल[12] पाचन च तत् ॥ ज्वरातिसारवमथुरक्तपित्तकफापहम् । मधुक रक्तपित्तघ्न व्रणशोधनरोपणम् ॥ गुरु स्वादु हिमं वृष्यं चक्षुष्य स्वरवर्णकृत् । कटुतिक्ते निशे कुष्ठमेहपित्तकफापहे ॥ प्रलेपाजयत कण्डू शोफ दुष्टव्रण विषम् । प्रपौण्डरीक चक्षुष्यं शिशिर व्रणरोपणम् ॥ कषायमधुर तिक्त रक्तपित्तप्रसादनम् । बलात्रयं स्वादु वृष्य स्निग्ध शीत बलप्रदम् ॥ तत्र नागाऽधिक[13] बल्या क्षतक्षीणहिता

१ 'धारयेत्पाणौ' ठ । २ 'कटुक क्षार' ठ । ३ 'कफघ्नी' ठ । ४ 'कार्व्य ' ठ । ५ 'टुतीक्ष्णोष्णा' ठ । ६ ( ) इति पाठ , ट पुस्तके नोपलभ्यते । ७ 'साधनी' ठ । ८ 'रहृदाह' ठ । ९ 'मगरु' ट । १० 'स्वादु क' ठ । ११ 'क्लेदघ्न' ट । १२ 'वालक' ठ स द्व । १३ 'नागबला' ट.स द्व ।



गुरु । ताम्बूल कटु सक्षार रुच्यमुष्ण कफप्रणुत् ॥ भेदि सम्मोहकृत्पूग कषाय स्वादु रोचनम् । जातिपत्री[1] कटुफल कङ्कोलकलवङ्गकम् ॥ लघु तृष्णापह हृद्य वक्त्रदौर्गन्ध्यनाशनम् । सस्वादुतिक्तस्तृष्णाघ्न कर्पूरश्छेदनो हिम ॥ लताकस्तूरिका तद्वन्मुखशोषहरा परम् । कषायमधुर शीत पद्म पित्तकफास्रजित् ॥ तद्वद्बकुलपुन्नागकुमुदोत्पलपाटलम् । सचम्पक ततो न्यून गुणै कोरण्टकिंशुकम् ॥ मालतीमल्लिकापुष्प तिक्त जयति मारुतम् । विष[2]पित्तकफानाग सिन्दुवार च तद्गुणम् ॥ कफघ्न कैतक तिक्त शैरीष विषहारि च । वातल पुष्पमागस्त्य कषाय कफपित्तजित् ॥ बन्धूक श्लेष्मल ग्राहि तद्वदेव च यूथिका । कफघ्नमुष्णवीर्य च कुङ्कुम व्रणशोधनम् ॥ अवल्गुजैडगजज बीज वातकफप्रणुत् । आस्था वर्ण[3]श्लेष्ममेद सौकुमार्यकृदन्यथा ॥ अतोऽध्वाऽग्निबलायूंषि कुर्याच्चङ्क्रमण सुखम् । मारुतस्यानुलोम्य च खुडस्तम्भश्रमापहम् ॥ अन्वर्थसञ्ज्ञ पादत्र वल्कच्छुकल तथा । वर्ण्य नेत्रहित छत्र वातवर्षातपापहम् ॥ प्रवात[4] रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहतृड्भ्रमान् । श्रमाग्निमूर्च्छाश्च जयेदप्रवातमतोऽन्यथा ॥ प्राग्वायुरुष्णोऽभिष्यन्दी त्वग्दोषार्शोविषकृमीन् । सन्निपातज्वरश्वासामवायुं च कोपयेत् ॥ याम्योऽस्रवातकफकृच्छीतस्वादु[7]कषायक । कषाय पश्चिमो रूक्षो लघुर्नातिविदह्यते ॥ वातकृत् कफपित्तघ्नो मूर्च्छादाहभ्रमापह । स्निग्ध शीतो लघु सात्म्य उत्तर षड्रसोऽनिल ॥ ऐशान कटु[8]रूक्षोष्ण आग्नेयश्चैव मारुत । अम्लो विदाही नैर्ऋत्यो वायव्यस्तिक्त उच्यते ॥ आतपो भ्रमतृट्स्वेददाहमूर्च्छाविवर्णता । कुर्यात्पित्तास्रवह्नीश्च, छाया त्वेतान्व्यपोहति ॥ तमः कषायकटुक, ज्योत्स्ना मधुरशीतला ॥" इति ।

**आ० ८०—दर्भादिपञ्चकस्य सञ्ज्ञां कुर्वन् गुणानाह—तृणाख्यमिति । दर्भादिपञ्चक तृणपञ्चमूलसंज्ञ पित्तजिच्च । दर्भ – कुश । काश–काशेक्षु । इक्षु –गुडदण्ड । शरो–मुञ्ज । शालय –स्वनामप्रसिद्धा । सङ्ग्रहे तु ( सू अ १२ )–"अजश्रृङ्गी हरिद्रा च विदारी सारिवाऽमृता । बृहत्याख्य[9] कण्टकाख्य तु श्वदंष्ट्राभीरुसैर्यकै ॥ सहिंस्राकरमर्दीकै सर्वदोषहरे च ते । सुवर्ण बृंहण स्निग्ध मधुर रसपाकयो' ॥ विषदोषहर शीत सकषाय रसायनम् । रूप्यं स्निग्ध कषायाम्ल विपाके मधुर सरम् ॥ वयस स्थापन शीत लेखन वातपित्तजित् । ताम्र सतिक्तमधुर कषाय लेखन लघु ॥ कटुपाकरस शीत रोपणं कफपित्तजित् । कांस्य कषायानुरस विशद लेखन सैरम्[10] ॥ दृष्टिप्रसादन रूक्ष तिक्त पित्तकफापहम् । सतिक्तलवण भेदि पाण्डुत्वकृमिवातनुत् ॥ लेखन पित्तल किञ्चित् त्रपु, सीस च तद्गुणम् । चक्षुष्य**

१ 'नैस्तद्वच्च कि' ट । २ 'छिन्द्यात्पित्तकफानाह सि' ट । ३ 'वर्णबलश्लेष्मसौ' ट । ४ 'प्रवातो' ट स द्व । ५ 'तस्ततो' ट स मू । ६ 'सकास वा' ट. । ७ 'स्वादु ' ठ । ८ 'टुतिक्तोष्ण' ठ. । ९ 'बलाख्य' क ख ग.घ ञ. । १० 'लघु' स द्व ।

कृष्णलोह च कषाय स्वादु तिक्तकम् ॥ लेखन वातल शीत [१]कृमिपित्तकफप्रणुत् । कृष्णलोह–लोहम् । [ *गात्रशैथिल्यपालित्यपाण्डुघ्न शोषशोफजित् ॥ तद्वत्तीक्ष्ण विशेषेण तद्विकापि सुदुर्जरम् । पद्मरागमहानीलपुष्परागविदूरका ॥ ] मुक्ताविद्रुमवज्रेन्द्रवैडूर्यस्फटिकादिकम् । मणिरत्न सर शीत कषाय स्वादु लेखनम् ॥ चक्षुष्य धारणात्तु पाप्मालक्ष्मीविषापहम् । [ *धन्यमायुष्यमोजस्य हर्षोत्साहकर शिवम् ॥ ] सक्षार उष्णवीर्यश्च काचो दृष्टिकृदञ्जनात् । शङ्खो[२]दधिमलौ शीतौ कषायावतिलेखनौ ॥ तुत्थक कटु सक्षार कषाय विशद लघु । लेखन भेदि चक्षुष्य कण्डूकृमिविषापहम् ॥ विशदो गैरिक स्निग्ध क[३]षायमधुरो हिम । कफघ्नी ति[४]क्तकटुका मनोह्वा लेखनी सरा ॥ स्निग्ध कषायकटुक हरिताल विषप्रणुत् । कषाय मधुर शीत लेखन स्निग्धमञ्जनम् ॥ रक्तपित्तविषच्छर्दिहिध्माघ्न दृक्प्रसादनम् । स्रोतोऽञ्जन वर तत्र तत सौवीरकाञ्जनम् ॥ कफघ्न तिक्तकटुक छेदि सोष्ण रसाञ्जनम् । स[५]र्वदोषप्रशमन कासमेहक्षयापहम् ॥ कफघ्न[६]मुष्ण कटुक शिलाजतु रसायनम् । तिक्त च छेदन योगवाहित्वात्सर्वरोगजित् ॥ [ *विशेषात् कृच्छ्रमेहार्श पाण्डुशोफकफापहम् । ] कषायमधुरा रूक्षा कासघ्नी वशरोचना ॥ तु[७]गाक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा । कार[८]व्यौ कुञ्चिकाजाजी कबरीधान्यतुम्बरु ॥ अन्नगन्धहर रुच्य दीपन कफवातजित् । कारव्यौ–शतपुष्पाद्वयम् । कुञ्चिका–कृष्णजीरकम् । बाष्पिका कटुतिक्तोष्णा कृमिश्लेष्महरा परम् ॥ तद्वच्च राजिका [*विघ्नसा[९]दनी दीपनी परम् । शूलाटोपहरा] रुच्या, दीप्यक कोष्ठशूलजित् ॥ अहृद्या सर्षपा. स्निग्धा बाष्पिकावच्च कीर्तिता । शताह्वाकुष्ठतगरसुरदारुहरेणव ॥ एलैल[१०]वालसरलत्वग्व्याघ्रनखचोरका । लघूष्णाः कटुका पाके कफवातनिबर्हणा ॥ सैर्यकस्तिक्तमधुर स्निग्धोष्ण कफवातजित् । बस्तिमूत्रविबन्धघ्नो वृष्यो गोक्षुरको हिम. ॥ पाचन कफपित्तघ्न तिक्त शीत विषा[११]द्वयम् । कफघ्न तिक्तकटुक मुस्त सङ्ग्राहि पाचनम् ॥ तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी । दीपनी ज्वरतृड्दाहकामलावातरक्तनुत् ॥ तिक्तशीतौ ज्वरहरौ लघू भूनिम्बपर्पटौ । निम्ब स्तिक्तो हिम [१२]कुष्ठकृमिपित्तकफापह. ॥ महानिम्ब पर ग्राही कषायो रूक्षशीतल । गुग्गुलु पिच्छिल[१३]. स्पर्शे विशदोऽभ्यवहारत ॥ सस्वादु सकटुस्तिक्त. सकषायो रसायनम् ।

१ 'कृमिकुष्ठक' स द्व । *[ ] एतच्चिह्नान्तर्गता सङ्ग्रहश्लोका केषुचिदपि हेमाद्रिटीकापुस्तकेषु नोपलभ्यन्ते । २ उदधिमल –समुद्रफेन । ३–४ 'षायो मधु' । 'कटुका तिक्ता म' क ख ग.घ झ ञ । ५ 'स्वादु हिध्माप्रशमन का' स द्व । ६ 'मुक्त' क ग ञ । ७ 'तुङ्गा' ञ । 'तवक्षीरी' स मू । ८ 'कारवी' स द्व । ९ 'साधनी' स स । १० 'वालुस' स द्व । ११ 'षाव्हयम्' ग । विषाद्वय–अतिविषा प्रतिविषा च । १२ 'पित्तकृमिकुष्ठविषापह. ।' क ग ञ । १३ लस्पशो' क ग ञ स मू ।

व्रण्य स्वयं कटु पाके रूक्ष सूक्ष्मोऽग्निदीपन ॥ क्लेदमेदोनिलश्लेष्मगण्डमेहापचीकृमीन् । पिटिकाग्रन्थिशोफांश्च हन्त्युष्ण स्रसनो लघु ॥ शङ्खपुष्पी सरा तिक्ता मेध्या कृमिविषापहा । कटुतिक्तोष्ण[१]मगुरु स्निग्ध वातकफापहम् ॥ पित्तास्रविषतृड्दाहकुमघ्न गुरु रूक्षणम् । सर्व सतिक्तमधुर चन्दन शिशिर परम् ॥ लघु रक्त, तथोशीर [२]वातल पाचन च तत् । ज्वरातीसारवमथुरक्तपित्तकफापहम् ॥ मधुक रक्तपित्तघ्न व्रणशोधनरोपणम् । गुरु स्वादु हिम वृष्य चक्षुष्य स्वरवर्णकृत् ॥ कटुतिक्ते निशे कुष्ठमेहपित्तकफापहे । प्रले[३]पाज्जयत कण्डू शोफ दुष्टव्रण विषम् ॥ प्रपौण्डरीक चक्षुष्य शिशिर व्रणरोपणम् । कषा[४]यमधुर तिक्त रक्तपित्तप्रसादनम् ॥ बलात्रय स्वादु वृष्य स्निग्ध शीत बलप्रदम् । तत्र [५]नागाऽधिक बल्या क्षतक्षीणहिता गुरु ॥ ताम्बूल कटु सक्षार रुच्यमुष्ण कफप्रणुत् । भेदि सम्मोहकृत्पूग कषाय स्वादु रोचनम् ॥ जातिपत्री कटुफल कङ्कोलकलवङ्गकम् । लघु तृष्णापह हृद्य वक्त्रदौर्गन्ध्यनाशनम् ॥ सस्वादुतिक्तस्तृष्णाघ्न. कर्पूरश्छेदनो हिम । लताकस्तूरिका तद्वन्मुखशोषहरा परम् ॥ कषायमधुर शीत पद्म पित्तकफास्रजित् । तद्वद्बकुलपुन्नागकुमुदोत्पलपाटलम् ॥ सचम्पक ततो न्यून गुणै. कोरण्टकिंशुकम् । मालतीमल्लिकापुष्प तिक्त जयति मारुतम् ॥ विषपित्तकफान्नाग सिन्दुवार च तद्गुणम् । कफघ्न कैतक तिक्त शैरीष विष[६]हारि च ॥ वातल पुष्पमागस्त्य कषाय कफपित्तजित् । [ *चातुर्थिकज्वरहर नावनेनोपयोजितम् ॥ ] बन्धूक श्लेष्मल ग्राहि तद्वदेव च यूथिका । कफघ्नमुष्णवीर्य च कुङ्कुम व्रणशोधनम् ॥ [७]अवल्गुजैडगजज बीज वातकफप्रणुत् । आस्या वर्णश्लेष्ममेद सौकुमार्यकृदन्यथा ॥ अतोऽध्वाऽग्निबलायूषि कुर्याच्चङ्क्रमण सुखम् । मारुतस्यानुलोम्य च खुडस्तम्भश्रमापहम् ॥ अन्वर्थसञ्ज्ञ पादत्र बलदृक्[८]शुक्रवर्धनम् । वर्ण्य नेत्रहित छत्र वातवर्षातपापहम् ॥ [९]प्रवात रौक्ष्य वैवर्ण्यस्तम्भकृद्दाहतृड्भ्रमान् । श्रमाग्निमूर्च्छांश्च जयेदप्रवा[१०]त-मतोऽन्यथा ॥ प्राग्वायुरुष्णोऽभिष्यन्दी त्वग्दोषार्शोविषकृमीन् । सन्निपात[११]ज्वरश्वा[१२]सामवायु च कोपयेत् ॥ [१३]याम्योऽ-

१ 'मगरु' ञ स स । अगुरु–कृष्णागुरु । २ 'वालक' स द्व । ३ 'पाच्च हत ' क ग ञ । ४ 'यतिक्तमधुर र' स द्व । ५ 'नागबला' क ञ स द्व । ६ 'कफहारि' क ञ । ७ 'अवल्गवेडकज बीज कटिवात' स स । ८ 'ऋकृत्तथा' ख घ झ । 'ऋरक्षणम्' स मू । ९ 'प्रवातो' सं द्व । प्रवात–प्रभूतवातस्थलम् । १० 'तस्ततो'स मू । 'तस्त्वतो' स स । ११'ज्वर श्वासमाम' स स । १२ 'श्वासानाम' क ग ञ । १३ सङ्ग्रहहृदये तु हेमाद्रिचन्द्रनन्दनारुणदत्तादिपठितदक्षिणपश्चिमोत्तरमारुतगुणश्लोकाभ्या भिन्नौ सार्धद्वौ श्लोकौ दृश्येते । तौ यथा–"पश्चिम शिशिरो हन्ति मूर्च्छा दाह तृष विषम् । दक्षिणो मारुत श्रेष्ठो नेत्र्योऽङ्गबलवर्द्धन ॥ रक्तपित्तप्रशमनो न च वातप्रकोपन । उत्तरो मारुत स्निग्धो मृदुर्मधुर एव च ॥ कषायानुरसः शीतो दोषाणामप्रकोपन ।" इति ।

सृग्वातकफकृच्छीत स्वादुकषायक । कषाय पश्चिमो रूक्षो लघुर्नाति विदह्यते ॥ वातकृत् कफपित्तघ्नो मूर्च्छादाहभ्रमापह । स्निग्ध शीतो लघु सात्म्य उत्तर षड्सो मरुत् ॥ ऐशान कटुरूक्षोष्ण आग्नेयश्चैव मारुत । अम्लो विदाही नैर्ऋत्यो वायव्यस्तिक्त उच्यते ॥ आतपो भ्रमतृट्स्वेददाहमूर्च्छाविवर्णता । कुर्यात्पित्तास्रवह्नींश्च, छाया त्वेतानपोहति ॥ तम कषायकटुक, ज्योत्स्ना मधुरशीतला । भवति चात्र । रसादिभेदैरिति भेषजाना दिङ्मात्रमुक्त न यतोऽस्ति किञ्चित् । अनौषध द्रव्यमिहावबोधो रूपस्य तेषा वनगोचरेभ्य ॥" इति । इत्यौषधवर्ग । अथ मात्रादिप्रकरणम् ( सङ्ग्रहे सू अ ७ )–"शूकशिम्बिजपक्वान्नमासशाकफलाश्रयै । वर्गैरन्नैकदेशोऽय भूयिष्ठमुपयोगवान् ॥ निर्दिष्टो रसवीर्याद्यैर्यथास्व कर्मसाधने । न शक्य विस्तरेणापि वक्तु सर्व तु सर्वथा ॥ हिताहितत्वेऽप्येकान्तनियमोऽस्मादलिश्चित । मात्रायोगक्रियादेशकालावस्थादिभेदत ॥ ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा । मात्रया सेवित मद्य हन्ति रोगास्तदुद्भवान् ॥ निषेव्यमाण तिलशो विषमप्यमृतायते । हीनातिमात्रमशन मरुन्निचयकोपनम् ॥ भजेते विषरूपत्व तुल्याशे मधुसर्पिषी । क्षारोऽम्लरससयोगे मधुरीभवति क्षणात् ॥ उत्तुण्डुक्यास्तिन्दुकेन तिक्तता मधुरायते । हिङ्गुगैरिकसिन्धूत्थ गन्धवर्णरसाधिकम् ॥ पूगताम्बूलशङ्खेभ्यो वर्णगन्धरसोद्भव । कोद्रवो हन्त्यसृक्पित्त करोत्येव विदाहिभि ॥ कुष्ठ तत्कार्यपि तिलो हन्ति भल्लातकै सह । गुड. कर्ताऽग्निसादस्य स हिनस्त्यभयादिभि ॥ तृष्य्लग्नौ समदन सर्पिरप्युपदिश्यते । जीवनीयमपि क्षीर विषलेशेन मृत्यवे ॥ तुल्ये अपि हतोऽन्योन्य विषे स्थावरजङ्गमे । सक्तवो वातला रूक्षा पीतास्ते तर्पयन्ति तु ॥ विनाऽपि चोपयोगेन मणिमन्त्रादि कार्यकृत् । आर्द्रकाज्जायते शुण्ठी सस्कारेण लघीयसी ॥ लघुभ्योऽपि हि सक्तुभ्यो गुरव सिद्धपिण्डिका । भृष्ट क्षुण्णोऽपि पृथुको रक्तशालेर्लघोर्गुरु. ॥ शालि पिष्टो गरीयस्त्व गोधूमादपि गच्छति । लघुपित्तहरा लाजा व्रीहितो गुरुपित्तलात् ॥ सङ्ग्राहिणो लघोर्मुद्गात् कुल्माषो भेदनो गुरु । आम ग्राहितर तक्र नागरीकृतमार्द्रकम् ॥ गुडात्तोयाच्च सुतरा मूत्रल गुरु पानकम् । गरीयो गुडदध्युक्त रसाला चातिशुक्रला ॥ दण्डाभिमथनाद्धृतो गुरुणश्चातिशोफदात् । अनुद्धृतस्नेहमपि तक्र शोफहर लघु ॥ सर्पि स्निग्धतर हन्ति नार्दित नवनीतवत् । चक्षुष्योऽपि हि गोधूमस्तैलपक्वस्तु दृष्टिहा ॥ मूलक दोषजनन सिद्ध तु तद्दोषलम् । उष्ण विषीभवत्येव विषघ्नमपि माक्षिकम् ॥ दुर्भाजनस्था द्राक्षाम्ला दोषला च प्रजायते । श्लक्ष्णशुष्कघनो लेपश्चन्दनस्यापि दाहकृत् ॥ त्वग्गतस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरो । मेध्यस्तिल स्पर्शशीतोऽमेध्य तैल खलोऽहिम ॥ तस्यैव श्लेष्मकारित्व न तैलस्य खलस्य वा । देश्व श्वयथुकारित्व न तक्रनवनीतयो ॥ भूमिसात्म्य दधिक्षीरकरीर मरुवासिषु । क्षार प्राच्येषु, मत्स्यास्तु सैन्धवेष्वश्मकेषु तु ॥ तैलाम्ल, कन्दमूलादि मलये, कौङ्कणे पुन । पेया, मन्थ उदीच्येषु, गोधूमोऽवन्तिभूमिषु । बाह्लीका बाह्लवाश्चीना शूलीका यवना शका । मासगोधूममार्द्वीकशस्त्रवैश्वानरोचिता ॥ देहसात्म्य घृत क्षीर मद्य मास च कस्यचित् । पेया यूषो रसोऽन्यस्य गोधूमोऽन्यस्य शालय ॥ अहितैरपि तेषा च तैरेवोपहित हितम् । अन्नपानौषध दोषमात्राकालाद्यपेक्षया ॥ सात्म्य ह्याशु बल धत्ते नातिदोष च बह्वपि । स्वसन सत् पयो गव्य भवति ग्राहि कस्यचित् ॥ मन्दाग्निर्भवति प्राय कफवातोत्तरो हिमे । विषघ्नेनापि पयसा देहेऽहेर्वर्द्धते विषम् ॥ स्थूलस्थविरबालादौ वमनादि निषिध्यते । तक्रमाम कफ कोष्ठे हन्ति कण्ठे करोति तु ॥ वातहृत्त्वेऽपि मृद्वीकाखर्जूर कोष्ठवातकृत् । नातिपथ्य शिखी पथ्य श्रोत्रस्वरवयोदृशाम् ॥ दृष्टे स्पर्शहिम द्रव्य श्रोत्रस्योष्ण तु पूजितम् । पय स्वादु सर शीत, विपरीत ततो दधि ॥ कालेन जायते तस्मात् क्षीरवच्च पुनर्घृतम् । पयो दधि च वातघ्नमजात वातल तु तत् ॥ तक्र ग्राहि कषायाम्लमम्लमेव तु भेदनम् । धातकीगुडतोयानि कारण मद्यशुक्तयो ॥ शीते न तु तदाद्यन्ते स्निग्धाम्ललवणा हिता । उदमन्थदिवास्वप्नौ ग्रीष्मादन्यत्र गर्हितौ ॥ समयोगेऽपि घर्माद्या वातादिचयहेतव । ऋतुष्वन्यो रसेष्वन्यो रौक्ष्यस्नेहबलक्रम ॥ रसायन काकमाची सद्य, पर्युषिता विषम् । मूलक दोषजिद्बाल, विपरीत तु कन्दवत् ॥ ज्वरे पेया कषायाश्च सर्पि क्षीर विरेचनम् । षडह षडह युञ्ज्याद्वीक्ष्य दोषबलाबलम् ॥ छर्दिहृद्रोगगुल्मार्ते वमन च चिकित्सिते । निषिद्धमपि निर्दिष्ट बस्तिरर्शसकुष्ठिनो ॥ ज्वरे तुल्यर्तुदोषत्व प्रमेहे तु-

१ 'हृश्रमा' ख घ ङ । २ ऐशानाग्नेयनैर्ऋत्यवायव्यमारुतगुणश्लोकस्तु सङ्ग्रहद्वये नैवोपलभ्यते । ३ 'दिलक्षणम्' ख घ ङ । ४ 'फलौषधै इति क ख ग घ ङ ञ पुस्तकेष्वुपलब्धोऽप्युक्त पाठ, औषधाना सङ्ग्रहे द्वादशाध्याये पठितत्वात् । ५ 'रप्येकदे' ग । 'रन्नेकलेशो' क ञ । ६ 'साधनै' क ग ञ.। ७ 'भजतो' ख घ ङ स मू । ८ 'मधुरो भ' क.ख ग घ ङ ञ । ९ 'ण्डक्या' स द्व । १० 'स्तिण्डुकेन' ख घ ङ । ११ 'हृष्य' स मू । १२ 'लग्ने स' स स.। १३ 'समयन' ग ञ । समदन–समधूच्छिष्टम् । १४ 'पिण्डिका.' स.द्व । १५ 'तत्खलीकृतमन्यथा' क.ञ स.मू ।

१ 'स्निग्धसिद्ध त्वदोषलम् ।' क ग ञ स मू । २ 'च' ख घ ङ । ३ 'दश्नि' स स । ४ सैन्धवेषु–सिन्धुदेशजेषु । ५ पह्लवा' क ग ञ । ६ 'च' क ग ञ. । ७ 'मन्दोऽग्नि' स द्व । ८ 'त्तरे' ख ग घ ङ स द्व । ९ 'तत्' क ञ । १० 'स्पर्शे' ख घ ङ । ११ 'शुक्तयो' क ग ञ । १२ 'शमयोगे' क ग ञ । १३ 'रूक्षस्नेह' ख घ ङ स मू । 'रौक्ष्ये स्नेहे बले क्रम.' स स । १४ 'रसायनी' ख घ ङ स मू । १५ 'पेया' ख घ ङ. स मू । १६ 'षडहे षडहे' क ग ञ. । १७ 'रोगबला' स.मू. । १८ 'स्ने' क.ग.ञ. ।

ल्यदूष्यता । रक्तगुल्मे पुराणत्व सुखसाध्यत्वहेतव ॥ आश्चोतनमभिष्यन्दे युञ्जीतोर्ध्वं दिनत्रयात् । अञ्जन पक्कदोषस्य प्रतिश्याये च नावनम् ॥ नातिप्रवृद्धे तिमिरे शिरामोक्षो विधीयते । दुष्टास्रसम्भवेऽपीष्टो नास्रपित्ते शिराव्यध ॥ अपथ्य पथ्यमप्यन्न निशाया नेत्ररोगिणाम् । अहिता सक्तव शुष्का हितास्ते तु प्रमेहिणे ॥ गुल्मिन क्षीरदध्यादि हपुषादियुत हितम् । वातल वातकोपेऽपि वर्षासु मधु शस्यते ॥ तदेव मद्य मद्यस्य विषस्य तु विषान्तरम् । घृतमानूपदेशोत्थ हेमन्ते च बलाधिकम् ॥ आलस्यगौरवे रूप वातजेऽपि ज्वरे पुर । स्वेदैर्याति शम दाह प्रायो लशुनपानज ॥ दिवास्वप्नाजरा याति भुक्तमन्येद्युरद्य न । कोष्ठे रुद्धोऽग्निकृद्वायुर्मेदसाऽर्शोभिरग्निहृत् ॥ दुष्पान दुर्जर सर्पिर्दीपन च पयोऽन्यथा । सर्पादिशवकोथेभ्यो वृश्चिकाना समुद्भव ॥ ते तैरेव पुनर्दष्टा सद्यो जहति जीवितम् । स्वयमेव विष तीव्र तान् पुनर्नातिबाधते ॥ सर्वाङ्गव्यापि तेषा च शुक्रवत् सस्मृत विषम् । तन्मासमुपयोगाय मासवर्गे च पठ्यते ॥ छर्दिघ्नी मक्षिकाविट् च मक्षिकैव तु वामयेत् । कफे लङ्घनसाध्येऽपि कर्तरि ज्वरगुल्मयो ॥ तुल्येऽपि देशकालादौ लङ्घन न सम मतम् । सर्वथा दोषजित्तक्र ग्रहण्या, दोषकृद्व्रणे ॥ पीनसश्वासकासादौ सिद्धमेव प्रशस्यते । इत्येतेऽन्ये च बहव सूक्ष्मा दुर्लभहेतुका ॥ धर्मा विचित्रा भावेषु किञ्चित्तेषा निर्दर्शितम् । दिशाऽनया शेषमपि स्वयमूहेत बुद्धिमान् ॥ न शास्त्रमात्रशरणो न चानालोचितागम ।" इति ।

सम्प्रति सुखग्रहणधारणार्थं सङ्ग्रहश्लोकमाह–

**शूकशिम्बीजपक्वान्नमांसशाकफलौषधैः ।**
**वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः ॥१७२॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थानेऽन्नस्वरूपविज्ञानीयो नाम षष्ठोऽध्यायः ॥ ६ ॥**

**स०**–शूकधान्यादिभिर्वर्गितै –वर्गीकृतै , अयमन्नस्य लेश –एकदेश स्तोकमात्रो, निर्दिष्ट । किम्भूत ? नित्योपयोगो विद्यते यस्य स नित्योपयोगिक, सदोपयोगवानित्यर्थ । मात्रायोगक्रियादेशकालावस्थादिविशेषाचोक्तानामपि द्रव्याणामन्यथात्वं दृष्टम् । यथा–"तिलशो निषेव्यमाण विषमपि सञ्जायतेऽमृतसमानम् । भल्लातक सह तिलैस्तत्कार्येपि कुष्ठमुपहन्ति ॥ सस्कारेण लघुभ्य सक्तुभ्य सिद्धपिण्डिका गुरव । मरुवासिषु तु सात्म्य दधिपीलुशमीकरीराणाम् ॥ घृतदुग्धैर्हेमन्ते मन्दाग्नि कफोत्तरो भवेत्प्राय । दधिदुग्ध वातघ्न तदजात वातकृद्भवति ॥ रेचनमपि च क्षीर गव्यं सङ्ग्राहि कस्यचिद्भवति ।" इति । तस्मादेवमादि स्वबुद्ध्यैवोह्यम् । शास्त्रकृता तु ग्रन्थगौरवभयात्स्पष्ट कृत्वा नोक्तम्, प्रदेशान्तरेषु युक्त्यैव प्रतिपादितमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थानेऽन्नस्वरूपादिविज्ञानीयोऽध्याय षष्ठ ॥ ६ ॥

**आ०र०**–अध्यायार्थमुपसहरति–शूकशिम्बिजेति । अन्नशब्देनाहारोपयोगीनि द्रव्याणि, तेषा लेश –एकदेश । उपयोगमर्हति–औपयौगिक । नित्य–सर्वकालमौपयोगिको नित्यौपयोगिक । यस्य तु कादाचित्क उपयोग स नोक्त, ग्रन्थविस्तरभयात् । वर्गितै –वर्गीकृतै , शूकजादिभि प्रकरणभेदैरित्यर्थ ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
अन्नस्वरूपविज्ञान सामस्त्येन निरूपितम् ॥ ६ ॥



## सप्तमोऽध्यायः ।

अन्नपानस्वरूप शरीरसन्धारणार्थं प्रागुक्तम् । पथ्यमपि चान्नपान विषाद्युपहत रोगाय मृत्यवे वा सम्पद्यते, अतस्तद्रक्षार्थमध्यायोऽयमारभ्यते—

**अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
(गद्यसूत्रे ॥ २ ॥)

**स०**–अन्नस्य रक्षा–अन्नरक्षा । सोपदिष्टा यत्राध्याये, सोऽप्युपचारादन्नरक्षेत्युच्यते । यथा,–शिशुपालवध काव्यमिति । शेष व्याख्यानमत्र पूर्ववत्कार्यम् ।

---

१ 'दोषे च प्र' क ग ञ । २ 'नातिवृद्धेऽपि' क ग ञ । ३ 'हिणाम्' क ग ञ । ४ 'ग्निजित्' ख घ झ । ५ 'दापनीय प' क ग ञ । ६ 'मुञ्चन्ति' स मू. । ७ 'सश्रित' ख घ झ । 'ससृत' स इ । ८ 'वर्गेषु' क ग ञ । ९ 'विष्ठा वामयेन्मक्षिकैव तु' क ग ज । १०'साध्ये तु' क ग ञ । ११ 'समञ्जसम्' क ञ स मू. । १२ 'सर्वदा' क ग ञ । १३ 'हेतव ' क ञ । १४ 'निदर्शनम्' ख घ झ. । १५'वाऽना' ख घ झ । १६ 'नित्यौपयोगिक.' अ. हेमाद्रि. ।१७ 'कालवयोवस्थाविशे' ट.। 'कालादि'ठ।

१ 'पिण्डका' ट । २ 'सिष्वतिसात्म्य' इति क्वचित् । ३ 'घृतदुग्धे हे' ठ. । 'घृतदुग्ध हेमन्ते मन्दाग्निकफोत्तर भ' इति क्वचित् । ४ 'दीप्तोऽग्नि ' ट । 'मन्दाग्नि समीरणकफोत्तरो भ' ठ ड । ५ 'सक्षीर' ट. । ६ 'बुध्योह्यम् ' ट । 'बुध्यैवाभ्यूह्यम्' ठ. । ७ 'वर्गिकै ' ग । ८ 'अन्नज्ञानप्रकरण' ख घ झ । ९ 'भवति' ङ । १० 'द्रक्षणाध्या' ट ठ । ११ अयमन्नरक्षाध्यायश्चरके सू० ११।२१।२६ अध्यायेषु शा० ८ अध्याये सि० १२ अध्याये च, सुश्रुते सू० २०।३४ अध्याययो शा० ४ अध्याये चि० २४ अध्याये क० १ अध्याये च, अष्टाङ्गसङ्ग्रहे सू० ८।९ अध्याययोश्चास्ति वर्णित । १२ 'सोपदेश्या' ठ.।

आ० र०—अन्नरक्षाध्याय[१] व्याख्यातु प्रतिजानीते—अथेति । यत पूर्वयोरध्याययोराहार उक्त । स चारक्षितो रोगहेतु, अतो[२] रक्षा वक्तव्या । सा चास्मिन्नध्याये, अत एवायमन्नरक्षाख्य ।

**राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत् ।**
**सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः ॥ १ ॥**

स०—राजा—नृप, प्राणाचार्य—वैद्य, राजगृहासन्ने निवेशयेत्—आवासयेत् । एव सति यो गुण स्यात्तमाह—सर्वदेत्यादि । सर्वदा—सर्वकाल रात्रिदिवसमेव, नृपभवनसमीपस्थित स.—वैद्य, सर्वत्र—अन्नपानशयनमाल्यादौ, प्रतिजागृवि—दत्तावधानो भवति ।

आ० र०—अन्नरक्षा च विषविरुद्धाविधिसेवनशयनसम्भोगेभ्य । ते च राज्ञ प्रायेण सम्भवन्ति, तेभ्यश्च रक्षा वैद्याधीना । तस्माद्राज्ञो वैद्यसन्निधि विधत्ते—राजेति । प्राणाचार्य—वैद्यम्, एव—सन्निधौ सत्याम्, स—वैद्य, सर्वदा—सर्वेषु कालेषु, सर्वत्र—सर्वेषु कार्येषु, प्रतिजागृवि—प्रतिपदार्थं जागरूक सम्यगवहितो भवति ।

ननु, किमेवं क्रियते ? इत्याह—

**अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः ।**
**योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः ॥ २ ॥**

स०—महीपते सम्बन्ध्यन्नपान विषात्—विषसस्पर्शात्, विशेषेण—अतिशयेन रक्षेत् । अन्नपानमित्युपलक्षणम् । शयनवस्त्रगन्धरत्नमाल्यादीनामपि परिरक्ष्यत्वात् । ननु, किमिति नृपान्नपानादि विशेषेण रक्षेत् ? इत्याह—योगेत्यादि । योग—अन्नवस्त्रादिभि सम्बन्ध । क्षेम—तेषामन्नादीना चौराद्युपद्रवरक्षणात् । द्वावप्येतौ तदायत्तौ—नृपायत्तौ स्याताम् । क्षेमशब्दोऽर्थचादि । धर्माद्या इति धर्मार्थकाममोक्षा । यन्निबन्धना—योगक्षेमनिबन्धना ।

आ० र०—अथ विषरक्षा । वैद्यस्य विषादन्नपानरक्षा विधत्ते—अन्नपानमिति । स इत्यनुवर्तते । विशेषेण—अन्यपदार्थेभ्य, अन्यनररक्षातो विशेषतो राज्ञ, अन्नपान रक्षेत् । कुत ? यत. योगक्षेमौ तदायत्तौ,—तस्य—राज्ञोऽधीनौ । अलब्धलाभो—योग । लब्धपरिपालन—क्षेम । कीदृशौ तौ ? यन्निबन्धना धर्माद्या,—धर्मार्थकाममोक्षाणां यस्माद्योगक्षेमौ साधनम्, तयोश्च राजा, तत सोऽतिशयेन विषादिभ्यो रक्षणीय ।

सम्प्रति विषदुष्टस्य भक्तस्य लक्षणमाह—

**ओदनो विषवान् सान्द्रो यात्यविस्राव्यतामिव ।**
**चिरेण पच्यते पक्वो भवेत्पर्युषितोपमः ॥ ३ ॥**

१ 'सरक्षा' क.ग.ञ । २ 'इति रक्षा' ख घ झ । ३ 'अहोरात्रमेव' ड । ४ 'विरोध्यवि' ख घ झ । ५ 'सति' क ग.ञ । ६ 'सर्वकालम्' ख घ झ. । ७ 'द्यास्तन्नि' ठ । ८ 'वस्त्रमाल्या' ट ठ । 'वस्त्राद्यपि' ट । ९ 'किमर्थं' ट । १० 'रक्ष्यम्' ट । 'सरक्षेत्' ट । ११ 'वस्त्रादीना' ड । १२ 'तन्नि' ठ । १३ 'वैद्यश्च' ख.घ झ.। १४ 'राज्ञ । कुत ' ख घ.झ । १५ 'लब्धस्य प' ख घ झ ।

**मयूरकण्ठतुल्योष्मा मोहमूर्च्छाप्रसेककृत् ।**
**हीयते वर्णगन्धाद्यैः क्लिद्यते चन्द्रिकाचितः ॥४॥**

स०—विषवानोदन सान्द्रो—विलेप्याकार । तथा, विस्रावयितुं शक्यो—विस्राव्य, नैव योऽसौ—अविस्राव्य, तस्य भाव, अविस्राव्यतामिव याति । चिरेण कालेन पच्यते । पक्वश्च पर्युषितभक्तमुपमा यस्य स पर्युषितोपमो भवेत्, निरूष्मा स्तब्धश्च सद्योऽवतारितोऽपि स्यादित्यथ । तस्य च भक्तस्य सम्बन्धी मयूरकण्ठतुल्योष्मा मोहादीन् करोति । मयूरकण्ठेन तुल्यो नानावर्णो मयूरकण्ठतुल्य, स चासावूष्मा चेति । ऊष्मा—बाष्प । तथा, असावोदनो वर्णगन्धाद्यैर्हीयते । आदि (द्य) शब्देन रसादीना ग्रहणम् । क्लिद्यते—प्रक्लिन्नो भवति । तथा, जलमध्यक्षिप्ततैलबिन्दुसदृशैश्चन्द्रिकैराचितो भवति । इति चक्षुरादिभि परीक्षा ।

आ० र०—अथ सविषान्नपानलक्षणम् । तत्र ओदन लक्षयति—ओदन इति । सान्द्र इवाविस्राव्यता याति—सद्रवोऽप्यद्रव इव स्रावयितु न शक्यते । पक्व पर्युषितोपमो भवेत्—सद्यस्कोऽप्यहोरात्रोषितवन्निरूष्मा स्तब्धश्च स्यात् । मयूरकण्ठतुल्योष्मा—नीलबाष्प । मोहादिकर्तृत्वमूष्मसम्बन्धात्, साक्षात्सम्बन्धे दोषाणां वक्ष्यमाणत्वात् । मोहो—विचाराशक्ति, मूर्च्छान्तर्भूतस्यापि तस्य मूर्च्छावसानेऽप्यनुवृत्त्यर्थं पृथग्ग्रहणम् । आद्यशब्दाद्रसादय । क्लिद्यते—सम्यक् स्रावितोऽपि क्लेद वत्ते । चन्द्रिकान्वित—चन्द्रिकैरन्वितो भवति,—मयूरपिच्छतुल्यो जलक्षिप्ततैलबिन्दुसदृशो भवति ।

व्यञ्जनाना परीक्षामाह—

**व्यञ्जनान्याशु शुष्यन्ति ध्यामक्वाथानि तत्र च ।**
**हीनाऽतिरिक्ता विकृता छाया दृश्येत नैव वा ॥५॥**
**फेनोर्ध्वराजीसीमन्ततन्तुबुद्बुदसम्भवः ।**
**विच्छिन्नविरसा रागाः खाण्डवाः शाकमांसिषम् ६**

१ 'चन्द्रका' इति क्वचित् । २ 'कान्वित ' क घ ञ । ३ 'न च विस्रावयितु शक्यते, यत पृथक्सिक्थो न भवेत् । तथा, चिरेण पच्यते—बहुना कालेन पाक याति । स च पक्वो—निष्पन्नपाक सद्य एव पर्युषितोपमो—दिवसान्तरितोऽतिक्रान्ताहोरात्र । मयूरकण्ठेन तुल्य ऊष्मा—बाष्पराजिर्नानावर्णो यस्य स तथोक्त । पर्युषितोपम इति । यथा पर्युषित भक्त निरूष्म स्तब्ध च भवति, तथा विषदूषित सद्योऽवतारितमपि तादृशमेव भवति । स चोपयुक्तो मोहमूर्च्छाप्रसेकान् करोति । मोहो—वैचित्त्यम् । मूर्च्छा—सज्ञाभ्रश । प्रसेक—श्लेष्मनिष्ठीवनम् । हीयते वर्णगन्धाद्यैरित्यादिशब्देन रसस्पर्शादिपरिग्रह । प्रक्लिन्नो भवति । सलिलमध्यक्षिप्ततैलबिन्दुसदृशैश्चन्द्रकैश्च पूर्णो भवति ।' इति क्वचित् पाठान्तरम् । ४ 'निरूष्मस्तब्ध स' ड । ५ 'स ओदनो' ढ । ६ 'मध्ये' ट ठ ढ । ७ 'प्रक्षिप्त' ड । ८ 'श्चन्द्रकै' ठ ड. । ९ 'म्बन्धदोषा' क ख ग घ ञ । १०'सादीना ग्रहणम् ।' ख घ झ । ११ 'ते—क्लिन्नो निष्पद्यते सम्य' ख घ झ. । १२ 'चन्द्रिका—जलक्षिप्ततैलबिन्दुसदृशी ।' ग । 'चन्द्रिकाचित ' झ । १३ 'वा न वा' ठ । १४ 'विच्छिन्ना' आ ठ. । १५ 'रागखाण्डवा.' ख घ ।

स०-व्यञ्जनानि-वार्ताकादीनि दधितकदाडिमादिसंस्कृतानि, आशु-क्षिप्रं शुष्यन्ति। तथा, ध्यामो-मलिनः क्वाथो येषां तान्येवम्। तत्र च-तेषु व्यञ्जनवस्तु क्वाथेषु, हीना-भुजादिहीना, अधिका, विकृता-शिरोविरहादिलक्षणविकारोपेता, चात्मीया छाया-प्रतिबिम्बं, दृश्यते। नैव वा-कीदृश्यपि छाया न दृश्यते। न चेदमरिष्टम्, सनिमित्तत्वात्। तेष्वेव व्यञ्जनेषु फेनादीनां सम्भवः। तत्रेति प्रकृतव्यञ्जनोपलक्षितेषु सर्वद्रवेष्वेव। विशेषेण पुनर्लवणोल्बणद्रवे फेनमाला। ऊर्ध्वराजीसम्भवं तु रसकादिषु स्वयं दर्शयिष्यति। विच्छिन्नविरसा रागा इति। रागा -द्राक्षादिकृता, ऋतुचर्योक्तलक्षणा, विच्छिन्ना विरसाश्च भवन्ति। क्वचिद्रागो दृश्यते क्वचिन्नेति विच्छिन्नत्वम्। क्वचिद्रसो दृश्यते क्वचिन्नेति विरसत्वम्। एवं खाण्डवोऽपि। शाकमामिषं च विच्छिन्न-स्थाने स्थाने त्रुटितम्, विरसं च।

**आ० र०-व्यञ्जनानि लक्षयति-व्यञ्जनानीति। व्यञ्जनानि-सूप्यादीनि, आर्द्राण्यप्याशु विषवन्ति शुष्यन्ति-शोषं यान्ति। ध्यामक्वाथानि-मलिनद्रवाणि भवन्ति। तत्र-तेषु क्वाथवत्सु व्यञ्जनेषु, हीनादिका छाया-प्रतिबिम्बं, दृश्यते नैव वा दृश्यते। हीना-बिम्बप्रमाणन्यूना। अतिरिक्ता-अधिका। विकृता-तुल्यप्रमाणाप्यन्यजातीया। फेनादीनां च सम्भवः। ऊर्ध्वराजी-उपरिभागे रेखा। सीमन्तो-विच्छेदः। तन्तुः-पिच्छा।**

**अथ व्यञ्जनविशेषाः। तत्र रागादीन् लक्षयति। विच्छिन्नेति। विच्छिन्ना-नष्टक्षीरवत् पृथग्भूतघनद्रवभागाः। विरसा-विकृतरसाः। रागाः खाण्डवाश्च-पानकभेदाः। एवं शाक-पाठादि। आमिष-मांसम्। तानि सर्वाणि रागखाण्डवादीनि सविषाणि विच्छिन्नविरसानि भवन्ति।**

यत्र द्रवे यादृशी राजी सम्भवति, तां विशेषतो दर्शयन्नाह-

**नीला राजी रसे, ताम्रा क्षीरे, दधनि दृश्यते।**
**श्यावा, ऽऽपीतासिता तक्रे, घृते पानीयसन्निभा ७**
**मस्तुनि स्यात्कपोताभा, राजी कृष्णा तुषोदके।**
**काली मद्याम्भसोः, क्षौद्रे हरित्तैलेऽरुणोपमा ॥ ८॥**
**पाकः फलानामामानां पक्वानां परिकोथनम्।**
**द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ॥९॥**

**मृदूनां कठिनानां च भवेत्स्पर्शविपर्ययः।**
**माल्यस्य स्फुटिताग्रत्वं म्लानिर्गन्धान्तरोद्भवः १०**
**ध्याममण्डलता वस्त्रे, शदनं तन्तुपक्ष्मणाम्।**
**धातुमौक्तिककाष्ठाश्मरत्नादिषु मलाक्तता ॥ ११ ॥**
**स्नेहस्पर्शप्रभाहानिः, सप्रभत्वं तु मृण्मये।**

स०-रसे-मांसरसे विषवति, नीला-नीलवर्णा, राजी दृश्यत इति प्रकृतेन सम्बन्धः। एवं चाग्रेऽपि राजी दृश्यत इति योज्यम्। क्षीरे-क्षीरमध्ये, ताम्रा-ताम्रवर्णा। दधनि-दध्नि श्यावा। तक्रे आपीतासिता-आनीलपीता। घृते सलिलनिभा। मस्तुनि कपोताभा। तुषोदके-काञ्जिके, राजी कृष्णा। मद्येऽम्भसि च काली। माक्षिके हरिद्वर्णा। तैलेऽरुणोपमा-ईषल्लोहितवर्णा। उदाहरणमात्रं त्वेतत्, तेन वसागन्धस्य च तैले सम्भवः, द्रवौषधस्य कपिला, इति। तथा, आमानां फलानां पाकः। पक्वानां परिकोथन-शातनं भवति। आर्द्रशुष्काणां यथासङ्ख्यं म्लानता-शुष्काभासत्वम्, तथा विवर्णता-श्यावत्वादिलक्षणा। मृदूनां कठिनत्वम्, कठिनानां मृदुत्वम्, अयं स्पर्शविपर्ययः। माल्यस्य-पुष्पस्य, स्फुटित-विशीर्णं, अग्र-प्रान्तो यस्य तत्स्फुटिताग्रम्, तस्य भावस्तत्त्वम्। तथा, म्लान्युद्भवो-म्लानता, गन्धान्तरोद्भवः-स्वगन्धनाशोऽन्यगन्धसम्भवश्च। ध्यामानि-मलिनानि, मण्डलानि-वृत्तानि, तेषां भावो ध्याममण्डलता, वस्त्रे-आस्तरणप्रावरणादिरूपे स्यात्। शदन-शातं पातः स्यात्। केषाम्? तन्तुपक्ष्मणाम्,-तन्तूनां-सूत्राणां पक्ष्मणां च पार्श्ववर्तिनां, वस्त्रसम्बन्धिनामेव। धातु-सुवर्णादि, मौक्तिक-मुक्ता, काष्ठ-दारु, अश्मा-पाषाण, रत्नानि-वज्रमरकतादीनि, आदिशब्देन शङ्खशुक्त्यादिपरिग्रहः, तेषु मलाक्तता-पङ्कमलोपदिग्धता। स्नेहहानि-तेषामेव धात्वादीनां स्नेहस्य व्यपगमः। एवं स्पर्शप्रभाहानि। मृण्मये तु भाण्डे सविषे निष्प्रभेऽपि सप्रभत्वम्।

**आ० र०-मांसरसादीन् राजीविशेषेण लक्षयति-नीलेति। रसे-मांसरसे, नीलवर्णा राजी-रेखा। क्षीरे ताम्रा। दध्नि श्यावा-कपिशा। तक्रे पीताऽसिता-गौरश्यामा। घृते**

---

१ 'सूप्यादीनि' ट ठ। २ 'शीघ्रं शुष्काणि भवन्ति। क्वाथश्च तेषां ध्यामो-मलिनो भवति। तत्र' ठ। ३ 'व्यञ्जनेषु, हीना' ट ठ। ४ 'विच्छिन्ना इति' ड। ५ 'इति। विच्छिन्नो रक्तो वर्णः क्वचित्क्वचित्प्रदेशे द्राक्षापानादौ रागो भवति। क्वचिद्रागो दृश्यते क्वचिन्नेति। विरस-विगतरसं तद्भवति। यथा राग एव' ठ। ६ 'भवति' ड। ७ 'त्रुट्यत्' ठ। 'न्युट्यते' ड। ८ 'द्रव्याणि' ख घ झ। ९ 'राज्य-०रेखा' ख घ झ। १० 'पिच्छिलता' ख घ। ११ 'विच्छिन्ना इति' क ग ञ। १२ 'दध्नि च द' अ आ क ञ। १३ श्लोकार्धमिदं हेमाद्रिटीकापुस्तकेष्वपि क झ.ञ सञ्ज्ञेष्वुपलब्धमपि हेमाद्रिकृता तट्टीका न कुत्रचिदुपलभ्यते।

१ 'माल्यानां' आ। २ 'म्लानि' अ आ ठ। 'म्लानिगन्धान्तरोद्भव' इत्यरुणदत्तसम्मतः पाठः। ३ 'शातन' अ क ञ ठ। ४ 'वर्णिका' ठ। ५ 'राजिर्दृ' ट ड। ६ 'श्यामा' ट ड। ७ 'जलसमा' ट ड। ८ 'राजि' ड। ९ 'मधुनि' ड। १० 'हिताकारा' ठ। ११ 'सन्न' ट। 'शाटितत्व' इति क्वचित्। १२ 'इति' ट। १३ 'माल्यानां-पुष्पाणां' ट। १४ 'पुष्पादे' ठ। १५ 'भावः स्फुटिताग्रत्वम्' ट। १६ 'सुगन्ध' ठ। 'सौगन्ध्य' ट। १७ 'न्यसम्भ' ठ। १८ 'त्वानि यस्य वस्त्रस्य तद्भावस्तत्त्वम्' ठ.। १९ 'प्रावरणादिके' ट ट। २० 'रोम्णा' ठ। २१ 'लोहादि' ठ। २२ 'तेषु धात्वादिषु म' ठ। २३ 'मलोपदिग्धत्वम्' ट ड.। २४ 'स्निग्धत्वव्यपगम इत्यर्थ.' ठ.। २५ 'विषदूषिते' ठ.।

पानीयसन्निभा–उदकवर्णा । मद्येऽम्भसि च काली–कृष्णा । क्षौद्रे हरित्–मरकतवर्णा । तैले अरुणोपमा ।

फलानि लक्षयति–पाक इति । अपक्वाना फलानां विषदुष्टाना पाक उपजायते, पक्वानां परिकोथन–पूतीभाव ।

आर्द्रशुष्काणि लक्षयति–द्रव्याणामिति । आर्द्राणा द्रव्याणां म्लानि –किञ्चिच्छुष्कत्वम्, शुष्काना विवर्णता–विकृतवर्णत्वम् ।

मृदुकठिनानि लक्षयति–मृदूनामिति । स्पर्शविपर्यय –मृदूना काठिन्य कठिनाना मृदुत्वम् ।

माल्य लक्षयति–माल्यस्येति । माल्यस्य–पुष्पस्य, अग्रभागेषु शीर्णत्वम् ।

वस्त्र लक्षयति–ध्याममण्डलतेति । ध्याममण्डलता–मलिनमण्डलोत्पत्ति । तन्तूना पक्ष्माणि–सूक्ष्मावयवा., तेषा र्शदन–शात ।

धात्वादीन् लक्षयति–धातुमौक्तिकेति । धातव –सुवर्णादय । रत्न–माणिक्यादि । आदिशब्देन शङ्खशुक्त्यादय । मलाक्तता–मलिनछवित्वम् । स्नेहादीनां च हानि ,–स्निग्धाना स्नेहस्य, शीतादीना स्पर्शस्य, तेजस्विना प्रभाया ।

मृण्मय लक्षयति–सप्रभत्वमिति । सप्रभत्व–निष्प्रभस्यापि प्रभोत्पत्ति ।

इदानी यो विष ददाति, तस्य लक्षणमाह–

**विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः १२**
**स्वेदवेपथुमांस्त्रस्तो भीत. स्खलति जृम्भते ।**

**स०**–विष ददातीति–विषदो नर , श्याव–श्याम शुष्कमास्य –मुख, यस्यासौ श्यावशुष्कास्य ,–श्यामशुष्कवदन । किं करोति? विलक्षो वीक्षते दिश ,–दिश इति समन्तादित्यर्थ , विलक्ष इति लज्जावान् , वीक्षते–अवलोकयति । किञ्च, स्वदोषशङ्कया स्वेदवान्, वेपथुमान्, त्रस्त –शरीरेण जातकम्पत्वात्, भीत –चित्तेन सोद्वेगतयोपलक्ष्यमाणत्वात् । स्तम्भकुड्यादिभिरात्मानमन्तर्धापयितुमिच्छन्नितस्ततो गच्छंश्च स्खलितगतिर्भवति, तत आह–स्खलति । पुन पुनश्च जृम्भा करोति, तेनाह–जृम्भते । उपलक्षण चेदं तत्तत्कालभाविनीना क्रियाणाम् । तद्यथा ( सङ्ग्रहे सू अ ८ )–"अस्थानहासी, पृष्टोऽसम्बद्धमुत्तर ददाति नैव वा ददाति, विवक्षुर्मुह्यति, अङ्गुली स्फोटयति, शिर कण्डूयते, ओष्ठौ लेढि, भुव विलिखति, क्रियासु त्वरते, विपरीतमाचरति, स्वभूमौ च नावतिष्ठते ।" इति ।

**आ० र०–विषप्रयोक्तार लक्षयति–विषद इति । विलक्ष –चलदृष्टि । दिशो वीक्षते–इतस्ततोऽवलोकयति । त्रस्त –उद्विग्न । भीत.–चकित । विषदलक्षण तत्प्रयुक्तविषविशेषप्रश्नार्थम् ।**

१ 'कठिनत्व' ग । २ 'माल्यानि' 'माल्यानामिति' 'माल्यानां–पुष्पाणाम्' क ग ञ । ३ 'नबिम्बोत्प' ख घ झ । ४ 'सदन–शात , पात इत्यर्थ ।' क ञ. । ५ 'मलिनत्वम्' ख घ झ । ६ 'शीताना' क.ग.ञ. । ७ 'यति' स द्व । ८ 'परिलेढि' स द्व ।

इदानी सविषस्याग्निप्रक्षेपणादिकमुपदिशन्नाह–

**प्राप्यान्नं सविषं त्वग्निरेकावर्तः स्फुटत्यति ॥ १३ ॥**
**शिखिकण्ठाभधूमार्चिरनर्चिर्वोग्रगन्धवान् ।**

**स०**–सविषमन्न प्राप्याऽग्नि स्फुटत्यति–चटचटायते, अतिशयेनेत्यर्थ । एकावर्त इति एक एवावर्तो यस्य, सहतसर्वज्वालत्वादसावेकावर्त । शिखिकण्ठाभधूमार्चि ,–शिखी–मयूर , तस्य कण्ठ –इन्द्रायुधवदनेकवर्ण , तस्येवाभा ययोर्धूमार्चिषोस्ते शिखिकण्ठाभे, ते तादृशे धूमार्चिषी यस्याग्नेरसौ शिखिकण्ठाभधूमार्चि , इन्द्रायुधवदनेकवर्णधूमज्वाल इति यावत् । अनर्चिर्वा–अज्वाल इति वा । उग्रगन्धवानिति कुणपगन्धवान् । निदर्शन चेदम् । धूमोऽप्यस्य प्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलता अप्युत्पादयति ।

**आ० र०–अथाग्निक्षेपादिना सविषान्नलक्षणम् । तत्राग्निप्रक्षेपेणाह–प्राप्यान्नमिति । एकावर्त –वामत एव दक्षिणत एव वा चलितज्वाल । स्फुटत्यति–भृश चटचटायते । शिखिकण्ठाभधूमार्चि –नीलधूमो नीलज्वालश्च । अनर्चिर्वा–अनुत्पन्नज्वालो वा ।**

स्नेहलवणयोगादप्यग्निरेव स्यात्, अत पक्षिमृगैरपि परीक्षाप्रकारान्तर दर्शयन्नाह–

**म्रियन्ते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत् १४**
**उत्क्रोशन्ति च दृष्ट्वैतच्छुकदात्यूहसारिकाः ।**
**हंस. प्रस्खलति, ग्लानिर्जीवञ्जीवस्य जायते ॥ १५ ॥**
**चकोरस्याऽक्षिवैराग्यं, क्रौञ्चस्य स्यान्मदोदयः ।**
**कपोतपरभृद्दक्षचक्रवाका जहत्यसून् ॥ १६ ॥**
**उद्वेगं याति मार्जार., शकृन्मुञ्चति वानरः ।**
**हृष्येन्मयूरस्तद्दृष्ट्वा मन्दतेजो भवेद्विषम् ॥ १७ ॥**
**इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः ।**
**यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः ॥ १८ ॥**

**स०**–सविषमन्नमित्यनुवर्तते । मक्षिका सविषमन्नं प्राश्य म्रियन्ते–मक्षिका सविषेऽन्ने न निलीयन्ते, निलीनास्तु सद्यो विपद्यन्ते । विषदुष्टाहारात् काक क्षामस्वरो भवेत् । उत्क्रोशन्ति–उच्चै कूजन्ति, दर्शनादेव शुकदात्यूहसारिका । विषदर्शनमात्रादेव च हसगति स्खलति । ग्लानिर्जीवञ्जीवस्य जायते । उपलक्षण चेदम् । मरणमपि कस्यचिन्न ग्लानिरेव, एव जीवञ्जीवकस्य । चकोरस्य अक्षिविरक्तता । 'दृष्ट्वैतत्' इति सर्वत्र योजनीयम् । क्रौञ्चस्य मदोदयो–मदोत्पत्ति स्यात् । कपोतपर-

१ 'त्यपि' आ ठ । २ 'सहतज्वालो मुशलाकृतिज्वलति' ड । ३ 'ज्वलित' क ञ । 'ऽवस्थित' ग । ४ 'उद्वेजयति' क ञ । अस्य श्लोकार्धस्य हेमाद्रिटीका केषुचिदपि पुस्तकेषु नोपलभ्यते, मूल तु वर्तत एव । ५ 'स्तद्दृष्ट्वा' इत्यरुणदत्तपाठापेक्षया 'स्तद्दृष्ट्या' इति हेमाद्रिपठितपाठो युक्ततर इति प्रतिभाति । ६ 'सविष ज्ञात्वा त्यजेदेव' आ । ७ 'ग्लानि , एव' ट ठ. । ८ 'स नेत्रे विरज्येते' ट । ९ 'कपोतादय प्राणान् त्यजन्ति ।' ट ड. ।

भृङ्गदक्षचक्रवाकास्त्यजन्त्यसून्-प्राणान्विमुञ्चन्ति, चात्यर्थ मरण-दु खाभ्याहता । उद्विजतेऽत्यर्थ मार्जार । वानरस्तु शकृत्-पुरीष मुञ्चति । उपलक्षण चेदम् । पृष्ठतोमुखो रोदिति च । तथा, हृष्येन्मयूरस्तद्दृष्ट्वा । तदिति सविषान्नपरामर्श । दृष्ट्वेत्यनुवर्तमानेऽपि पुनर्दृष्ट्वेति वचन सर्वत्र मध्ये सम्प्रत्ययार्थम्, आद्यन्ताभ्या गृहीतत्वात् । विष चास्य दर्शनादेव मन्दतेजस्क भवति । इति-एव पूर्वोक्ताभि परीक्षाभि , अन्न-भक्तादि, विषवत्-विषसंसृष्ट, ज्ञात्वा त्यजेदेतत् । कथम्? प्रयत्नत -प्रयत्नेन । तमेव प्रयत्न दर्शयन्नाह-यथा-येन प्रकारेण त्यज्यमानेन, क्षुद्रजन्तवो-मक्षिकादयोऽपि, तेन-विषेण, न विपद्येरन्-न नश्येयु , तथा त्यजेत् । क्षुद्रजन्तवोऽपि किं पुनर्महान्त , इत्यपि शब्दार्थं ।

आ० र०-मक्षिकादिप्राशनेन सविष सूचयति-म्रियन्त इति । प्राश्य-सविषमन्न भुक्त्वा, काक क्षामस्वर-कृशस्वरो भवेत् ।

शुकादिदर्शनेन लक्षयति-उत्क्रोशन्तीति । शुकादयो सविषान्नदर्शनेन उत्क्रोशन्ति-उच्चै शब्द कुर्वन्ति । दात्यूह -अन्धकाक । एतत्-सविषमन्नम् । अक्षिवैराग्य-नेत्ररागापगम । कपोतादय प्राणास्त्यजन्ति । परभृत्-कोकिलः । दक्ष -कुक्कुट । मयूरो हृष्येत्-हर्ष प्राप्नोति ।

मयूरस्य विषघ्नत्व दर्शयति-तद्दृष्ट्येति । तद्दृष्ट्या-मयूरावलोकनेन । मन्दतेज -अल्पप्रभावम् ।

सविषान्नस्य त्यागप्रकार दर्शयति-इत्यन्नमिति । यथा तेन-सविषान्नेन, क्षुद्रजन्तवोऽपि न विपद्येरन्-न म्रियेरन्, एव त्यजेत् ।

**स्पृष्टे तु कण्डूदाहोषाज्वरार्तिस्फोटसुप्तयः ।**
**नखरोमच्युतिः शोफः, सेकाद्या विषनाशनाः १९**
**शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ।**
**ससोमवल्कतालीसपत्रकुष्ठामृतानतैः ॥ २० ॥**

स०-सविषेऽन्ने मुखहस्तादिभिस्तु स्पृष्टे सति कण्ड्वादय शोफान्ता स्यु । ऊषा-प्रादेशिको दाह । सर्वदाहस्तु-दाह । अर्ति -शूलम् । सुप्ति -अङ्गस्याचैतन्यम् । नखरोमच्युति -नखशातो रोमशात । ननु, नखशात केवलं वातरोगेषु पठित । विषे च सन्निपातकोप उक्त । तत्कथमेतत्? उच्यते । जात्यन्तरभूत एवाय विषनिमित्त इत्यदोष । तत्र-तेषु विषसर्शजेषु कण्ड्वादिरोगेषु, सेकाद्या शस्ता , यतो विषनाशना । प्रलेपाश्च हिता । के ? इत्याह-सेव्यादिभि ।

आ० र०-सविषान्नस्पर्शजान् रोगानाह-स्पृष्टे त्विति । अग्निना दह्यमानस्येव दु ख-दाह , क्षारेणेव-ऊषा । अर्तिः-शूलम् । स्फोटा -पिटिका । सुप्तिः-स्पर्शाज्ञानम् ।

कण्ड्वादीनामौषधमाह-सेकाद्या इति । सेक -परिषेकः । आद्यशब्दादभ्यङ्गावगाहादय । विषनाशना -विषघ्ना, विषतन्त्रे वक्ष्यमाणा । सेव्यादिभि प्रलेपा । सेव्य-उशीरम् । पद्मक -पद्मकाष्ठम् । सोमवल्क -कट्फल । तालीसपत्र-प्रसिद्धम् । अमृता-गुडूची । नत-तगरम् ।

**लाला जिह्वोष्ठयोर्जाड्यमूषा चिमिचिमायनम् ।**
**दन्तहर्षो रसाज्ञत्वं हनुस्तम्भश्च वक्त्रगे ॥ २१ ॥**
**सेव्याद्यैस्तत्र गण्डूषाः सर्वं च विषजिद्धितम् ।**

स०-वक्त्रगे-मुखप्राप्ते, लाला भवति । जिह्वौष्ठयोर्जाड्य भवति, ऊषादयश्च स्यु । रसाज्ञत्व-जिह्वा रस न चेतयत इत्यर्थ । हन्वो स्तम्भश्च स्यात् । तत्र सेव्याद्यै -पूर्वोक्ते ,गण्डूषा हिता । सर्व च-अन्यदपि, यद्विष जयति तद्धितम् ।

आ० र०-सविषान्नभक्षणजान् रोगानाह-लालेति । लाला-श्लेष्मतन्तुस्राव । जिह्वौष्ठयोर्जाड्य-स्तम्भ. । मुखे चिमिचिमायन-सर्वत्र मुखे सर्षपलिप्तस्येव दु खम् । दन्तहर्षो-दन्तरोगविशेष ।

लालादीनामौषधमाह-सेव्याद्यैरिति । सेव्याद्यै -पूर्वोक्तै । सर्वं विषजित्-विषतन्त्रोक्त प्रतिसारणप्रलेपादिकम् ।

**आमाशयगते स्वेदमूर्च्छाध्मानमदभ्रमाः ॥ २२ ॥**
**रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ।**
**बिन्दुभिश्चाचयोऽङ्गानां, पक्वाशयगते पुनः ॥ २३ ॥**
**अनेकवर्णं वमति मूत्रयत्यतिसार्यते ।**
**तन्द्रा कृशत्वं पाण्डुत्वमुदरं बलसङ्क्षयः ॥ २४ ॥**
**तयोर्वान्तविरिक्तस्य हरिद्रे कटभीं गुडम् ।**
**सिन्दुवारितनिष्पावबाष्पिकाशतपर्विकाः ॥ २५ ॥**
**तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ।**
**नावनाञ्जनपानेषु योजयेद्विषशान्तये ॥ २६ ॥**

स०-विषान्ने आमाशय प्राप्ते स्वेदादय स्यु । अक्षिहृदययो रोधन-स्तम्भ । बिन्दुभि -नानावर्णैः, अङ्गानामाचय -समन्ताच्चयनम् । पक्वाशयगते तु विषेऽनेकवर्णं वमति, मूत्रयति, अतिसार्यते, तन्द्रादयश्च भवन्ति । तयो -आमपक्वाशयगतयोर्विषयो , वर्तमानस्य पुसो यथायोग वान्तविरिक्तस्य हरिद्रे कटभीत्यादिकमौषधं नावनादिषु योजयेत् । तत्र मदनफलालाबुकुम्भीकोशातकीफलैर्मधुयुक्तैर्निष्पावाम्बुयुक्तैर्वमनम् । वान्तस्य स्नेहयित्वा विरेचनम् । पक्वाशयगते त्ववमितस्यैव नीलिनीफलयुक्तेन घृतेन विरेचनमेव ।

१ 'मयूरस्तद्विष दृष्ट्वा हृष्येत्-सहर्षो भवेत् । मयूरदृष्ट्या च तद्विष मन्दतेजो-हीनवीर्यं भवेत् । इति' ट । २ 'अनेन प्रकारेण' ट । 'एव प्रकारेण' ड । ३ 'सविष' ट ट । ४ 'सविषान्नलक्षणम्-'ख घ झ । ५ 'प्राश्यैतत्-स'ख घ झ । ६ 'यो दर्श' ग । ७ 'विषेण च' ट. । ८ 'षु रोगेषु' ट.ठ ड । ९ 'द्या विष' ट ।

१ 'क्षारेण-' ख घ झ । २ 'ना चिकित्सामाह' क ग ञ. । ३ 'जाड्य मुखे चिमि' अ ग टीका । ४ 'न वेत्ति ।' ड । ५ 'म्भ । ऊषा चिमि' क ख घ झ ञ । ६ 'यने' झ । ७ 'सर्व-विषतन्त्रोक्त' क ग ञ । ८ 'हृदयस्य' ठ ड । ९ 'फलैर्दधिमधु' ट । १० 'तस्य' ठ ड ।

आ० १०—सविषान्नामाशयप्राप्तिजान्[1] रोगानाह—आमाशयगत इति । चक्षुर्हृदयरोधन—नेत्रयोर्मनसश्च क्रियाप्रतिबन्ध । बिन्दुभिरङ्गानामाचय —जलबिन्द्वाकारस्फोटव्याप्ताङ्गत्वम् ।

सविषान्नेपक्वाशयप्राप्तिजान् रोगानाह—पक्वाशयगत इति । पाण्डुत्व—शुक्लत्वम् । उदर—उदराख्यो रोग ।

आमपक्वाशयविकारयोरौषधमाह—तयोरिति । वान्तविरिक्तस्येति क्रमाद्योज्यम् । आमाशयविकारेषु वान्तस्य । पक्वाशयविकारेषु विरिक्तस्य । हरिद्रादीनि नावनादिषु योजयेत् । हरिद्रे—हरिद्राद्वय निशा दार्वी च । कटभी—गिरिकर्णिका । सिन्दुवारितो—निर्गुण्डी । निष्पावो—वल्ल । बाष्पिका—हिङ्गुपत्री । शतपर्विका—वचा । कुक्कुटस्य पक्षिणोऽण्डम् । अवल्गुजो—बाकुची । आहार विनापि प्रयुक्तस्य विषस्य शान्त्यर्थमय योग स्यादिति "विषशान्तये" इत्युक्तम् । सङ्ग्रहे तु ( सू अ ८ )—"ईश्वराणा वसुमता विशेषेण तु भूभुजा प्रायेण मित्रेभ्योऽप्यमित्रा भूयासो भवन्ति । तत स्तत्प्रयुक्ता. समासन्नवर्तिनोऽन्नपानादिषु विष प्रयच्छन्ति, स्त्रियश्च तत्प्रणिधिप्रयुक्ता सौभाग्यलोभेन । तस्माद्राजा कुलीन स्निग्धमाप्तमास्तिकमार्यमार्यपरिग्रहं दक्ष दक्षिण निभृत शुचिमनुद्धतमनलसमव्यसनमनहङ्कृतमकोपनमसाहसिक वाक्यार्थावबोधकुशल निष्णातमष्टाङ्गे यथाम्नायमायुर्वेदे सुविहितयोगक्षेम सन्निहितागदादियोग सात्म्यज्ञ च प्राणाचार्य परिगृह्णीत । तमर्थमानाभ्या यथाम्नाय सम्प्रदायानतिक्रमेण कालेऽनुकाल गुरुमिव शिष्य पितरमिव पुत्र पूजयेत् । प्रतिकूलमपि च तद्वच साम्प्रतमिति मन्येत । न हि भद्रोऽपि गजपतिर्निरङ्कुश श्लाघनीयो जनस्य । तस्मात्तदायत्तमाहारविहार प्रति चात्मन कुर्यात् । उपात्तमपि खलु जीवितमुपायबलेन स्वसमयमधितिष्ठति । अपि च बहुपरिग्रहा नरपतय । सन्ति चाशुकारिण शूलसङ्ख्यासादय । प्रतिक्षण प्रत्यवेक्षणीयावस्थाश्च रोगिणो, विशेषेण राजान । ते हि प्रमादपरिगता दु खासहिष्णव स्वयमप्यपथ्यरुचय सन्निहितहितप्रियवचनप्रायपरिवाराश्च । तस्माद्भिषजो राजा राजगृहासन्ने सन्निवेशन कारयेत् । तथा हि स सर्वोपकरणेषु नृपतिशरीरोपयोगिष्वपरोक्षवृत्तिर्भवति । स सम्यक्सम्पन्नमन्न सुपरीक्षित विशुद्धमग्न्यादिषु प्रागुपनीत शिखिना दृष्टमभिप्रोक्षित प्रोक्षणै पुर स्थितो राजान हस्तबद्धौषधिरत्न भोजयेत् । भुञ्जानस्य चास्य दुन्दुभीनगदप्रलिप्तान् वादयेत् । दन्तकाष्ठप्रयुक्ते तु विषे कूर्चकविशरणमौषधगन्धो रूक्षता जिह्वादन्तौष्ठमासशोफश्च । तत्र प्रच्छाय धातकीपुष्पजाम्बवास्थिहरीतकीचूर्णै सक्षौद्रै सप्तच्छदकल्केन वा प्रतिसारण कुर्यात् । दाडिमकरमर्दकभव्याम्रातककोलबदररसक्षौद्रयुक्त गण्डूषम् । अनेन जिह्वानिर्लेखनकवलगण्डूषा व्याख्याता । अञ्जनप्रयुक्तेऽश्रूपदेहदाहरागवेदना दृष्टिविभ्रमा भवन्त्यान्ध्य च । तत्र सर्पिष्पान योज्यम् । श्वेतेन पयसा सप्तकृत्व पिप्पलीर्भावयेत् । ततस्तत्कल्केन सर्पिर्विपक्व नेत्रतर्पणम् । कपित्थमेषशृङ्गीभल्लातकाना पुष्पैर्वरुणनिर्यासेन चाञ्जनम् । बृहतीशिरीषबीजप्रपौण्डरीकनागबलाचूर्ण सप्तकृत्वो मधुना भावयेत् । तच्च स्रोतोञ्जनसुवर्णचूर्णयुक्तमञ्जनम् । नस्यधूमप्रयुक्ते शिरोरुक्कफास्राव खेभ्यो रुधिरागमनमिन्द्रियवैकृत च । तत्रातिविषाश्वेताकाकमाचीमदयन्तिकाकल्कक्षीरसिद्ध सर्पिर्नस्ये पाने च विदध्यात् । मदयन्तिका—मल्लिका । अभ्यङ्गप्रयुक्ते त्वग्दाहस्वेदपाकस्फोटावदरणानि । तत्र शीताम्बुपरिषिक्तस्य चन्दनतगरोशीरकुष्ठवेणुपत्रिकाऽमृतासोमवल्लीश्वेतापद्मकालीयकैरनुलेपनम् । वेणुपत्रिका—बाष्पिका । एतान्येव च सकपित्थरसगोमूत्राणि पानम् । गिरिकर्णिकाश्वेतामूलप्रियङ्गुसारिवामधुकसर्पसुगन्धाभृङ्गैर्वारुमूलानि शैलुक्वाथपिष्टानि प्रलेप । अनेनोद्वर्तनोद्घर्षणपरिषेकानुलेपनभूषणयानशय्यास्तरणवस्त्रकवचपादुकोपानत्पादपीठा व्याख्याता । विशेषतस्त्वाभरणकृते विकारेऽश्वगन्धापामार्गकिणिहीखदिरशिरीषकल्कै. गोपित्तसयुक्तै प्रदेह । पादपीठकृते श्लेष्मातकसर्पसुगन्धाकल्को मधुयुक्त । छत्रप्रयुक्ते स्फोटाना क्षिप्रपाकाना पक्वजाम्बवप्रकाशाना प्रादुर्भाव । तत्र मधुकपाटलाकसेरुकरोध्राञ्जनकुष्ठसर्पसुगन्धाखदिरशिरीषकल्कैर्गोपित्तप्रयुक्तै सर्वगात्रप्रदेह । अनेन चामरव्यजने व्याख्याते । शिरोऽभ्यङ्गप्रयुक्ते वेदनाग्रन्थिजन्म केशच्यवन च । तत्र श्यामापालि-

१ 'शयजान्' क ञ । २ 'स्फोटेन व्या' ख घ ङ । ३ 'न्नस्य प' क ग ञ । ४ 'षेणेह भू' ग । ५ 'भूमिभुजा' क ञ । ६ 'भ्योऽमित्रा' ख घ ङ । ७ 'त्प्रयोगात्' ख घ ङ इन्दु । ८ 'यस्तु' क ग ञ । ९ 'कुलीनो हि—अदुष्टबीजक्षेत्रतया नाकार्येषु प्रवर्तते । कुलमत्रायुर्वेदाव्यापि कुलम् ।' 'स्निग्ध —स्नेहेन मित्रभावेन राज्ञा सह व्यवस्थित ' इति डल्हण । १० 'परिग्रह परिजने पत्न्या स्वीकारमूलयो ।' इति मेदिनी । ११ 'गृह्णीयात्' स स । १२ 'भ्या यथाकाल गुरु' स द्व । १३ 'काले गुरु' क ग ञ । १४ साम्प्रत—युक्तम् । १५ 'तमित्येव' क ग ञ । 'त मतमिति प्रतिमन्येत' स द्व. । १६ 'मतङ्गजो नि' क ग ञ । १७ 'हार विहार चात्म' क ग ञ । १८ 'चात्मान' स द्व । १९ 'स्वयमधि' स.स । २० 'ष्णवश्च' ख घ ङ स द्व ।

१ 'हितहित'स स । २ 'सन्न एव स' ख घ । ३ 'स्थित' क ञ । ४ 'नस्यास्य च दु' क ग ञ स मू । ५ 'आम्रात' ग.स. मू । ६ उपदेहो—दूषिका । ७ 'वरुण' ग । ८ 'कफस्राव ' क ग ञ । ९ 'कालेय' स द्व । कालीयक—पीतचन्दनम् । १० 'भृङ्गोवारुकतकमूलानि' स स । ११ यान—रथादि । १२ 'चरथपा' ख घ ङ स मू । १३ 'तश्चाभ' क ग ञ । १४ 'सर्पगन्धा' क ञ । १५ 'न्धाम्रकल्को' स स । १६ 'वसदृशाना' क ग. ञ । १७ 'शिरोवेद' स स ।

न्दीतन्दुलीयकचूर्णघृतक्षेपित्ते सुभाविता[1] कृष्णा मृत्प्रलेप । गोमयमालतीमूषिकपर्ण्यन्यतमरस कल्को वाऽगारधूमो[2] वा । श्लेष्मातकत्वक्पाटलाशिरीषमधूकहरिद्राद्वयैरजाक्षीरालोडितै परिषेक । अनेन शिर स्नान[3]स्नपनोदककङ्कत[4]कस्रगुष्णीपा व्याख्याता । कर्णपूरणप्रयुक्ते शोफशूलपाका श्रोत्रवैगुण्य च । तत्र बहुपत्रा[5]स्वरसो घृतक्षौद्र[6]युक्त कर्णपूरणम्[7], सोमवल्कलरसो वा सुशीत । मुखालेपप्रयुक्ते मुखस्य श्यावता पद्मकण्टकाश्च भवन्त्यभ्यङ्गजाश्च विकारा । तत्र मधुकपयस्याबन्धुजीवफञ्जीपुनर्नवाचन्दनै सघृतैर्लेपो मधुसर्पिषो[8] पान च । सविषपुष्पाघ्राणात् शिरोनासाव्यथा साश्रुनेत्रता गन्धाज्ञान च । तत्रानन्तरोक्तो विधिर्बाष्पोदितश्चेति । भवति चात्र । 'फलमूलच्छदादीना दद्यात्प्रक्षालनोदकम् । भाजन व्यञ्जनाना च तथा कुर्यादतन्द्रित ॥ घ्रेयाणि घ्रापयित्वा तु स्पृश्यान् सस्पृश्य तानपि । प्रतीवाप ततो दत्वा प्रती[9]क्ष्यैवैकनाडिकाम् ॥ ततो विज्ञाय शुद्धि च भाजनस्योदकस्य च । आहारमुपयुञ्जीत यथावद्वसुधाधिप ॥ मन्द तीक्ष्णविषाभ्यासे[10] विषमुत्तीर्यते[11] भृशम् । तस्मात्तीक्ष्णविष हस्ते बध्नीयात्कुशलो भिषक् ॥ विषसन्धारण धन्य रक्षोघ्न प्रीतिवर्द्धनम् । अपि च । सापिधानघटीमूट[12]फलकस्थापितौषधम् । प्रागुदीच्योर्दिशोर्गुप्त भैषज्यागार[13]मिष्यते ॥ घट्यादीनि[14]–मृत्तृणकाष्ठमयानि । उच्चै प्रशस्तदिग्देश बहुवातायन महत् । महानस सुसमृष्ट विश्वास्यजनसेवितम् ॥ सद्भा स्याधिष्ठितद्वार कक्ष्या[15]वत्सवितानकम् । सुधौतदृढकुम्भादि परिशुद्धजलेन्धनम् ॥ स्वकर्मकुशला दक्षा सूदास्तत्राप्रमादिन । क्लृप्त[16]केशनखा पिच्या राज्ञ कृत्यरसङ्गता ॥ तेषामधिपतिर्विप्र कुलज सुपरीक्षित । सविभक्तश्च भक्तश्च शुचिर्वैद्यवशानुग ॥ सविभक्त –उदासीन । सर्वेऽपि भूभृदासन्ना शस्ता सततमी[17]दृशा । मिथो विग्रहसङ्घात[18]रहिता भूभृते हिता ॥ तान् वैद्यो गुणवानेको मनसा प्रतिजागृयात् । भूभृद्देहोपकरणसरक्षणसमुद्यत ॥ अथाभ्यमित्र[19] व्रजतो जिगीषोर्वैद्य सुसज्जौषधशस्त्रयत्र । तुङ्गध्वजारयातनिवासभूमिर्युद्धागत योधजन चिकित्सेत् ॥ पन्थानमुदक छाया भक्त यवसमिन्धनम् । दूषयन्त्यरयो यस्मा[1]त्तद्विद्याच्छोधयेत च । प्रस्थान वा निवेश वा नाविज्ञाय प्रयोजयेत् । भूवारितृणकाष्ठाश्म[2]मार्गान् मार्गवनस्पतीन् ॥ विषेणोपहता भूमि क्वचिद्दग्धेव लक्ष्यते । प्रम्लानतृणगुल्मादिर्मृत[3]कीटसरीसृपा ॥ विशीर्यन्ते खुरनखा दाहकण्डूरुजान्विता । छर्दिर्मूर्च्छा ज्वरो मोह शिरोदु ख च जायते ॥ तत्र सोभाञ्जनान्मूल वल्ली[4] सोममुशीरकम् । मातुलुङ्गरस हिङ्गु पाययेद्द्विमात्रया ॥ वल्ली–प्रियङ्गु । मूत्राण्यजाविहस्तिभ्यो मासानि रुधिराणि च । सर्वगन्धै समायोज्य पचेत्पक्के च निक्षिपेत् ॥ सोमराजी सुनन्दाख्या सरला गन्धनाकुलीम् । चारटी त्रायमाणा च प्रोक्षयेत्तेन ता भुवम् ॥ सुनन्दाख्या[5]–गोरोचना । चारटी–पद्मचारिणी । सविप विरस तोय कवोष्ण राजिभिश्चितम् । फेनिल गुरु विच्छिन्न खगैरनभिनन्दितम् ॥ मृताकुलितमत्स्य च स्पर्शा[6]त्तच्छोफकण्डुमत् । ओदन साधितस्तेन भुक्तमात्रो विदह्यते ॥ विदग्ध पच्यते कृच्छ्रात्पक्वो मूर्च्छाज्वरप्रद । दर्शयेत्सर्वतो नीलपीतकर्बुरलोहितम् ॥ तत्र शिग्र्वादिमगद भूमिदोषोदित पिबेत् । अजश्रृङ्गी विशालाख्या विषघ्नीमुत्तमारणीम् ॥ फणिज्जक प्रतिविषा दग्ध्वा तद्भस्म गालयेत् । बहुशो गालित तच्च पाचयेत्तत्र च क्षिपेत् ॥ कल्कयित्वा प्रतीवाप सरला[7] रजनीद्वयम् । एलामुदीच्य मञ्जिष्ठां सुनन्दा बाकुचीमपि ॥ पात्यन्ते बिन्दवस्तस्माद्यत्र तन्निर्विषी[8]भवेत् । पाटलापारिभद्राश्वकर्णश्याम[9]ाकशिग्रु[10]कान् ॥ कलशान्तर्गतान् दग्ध्वा प्रक्षिपेत्सविषेऽम्भसि । शीते घर्मो हिमश्चोष्णे मारुतो विषसयुत ॥ श्रममूर्च्छादिकारी च शिग्र्वादिस्तत्र चेष्यते । देवदारुनतानन्तामधुकाञ्जनगैरिकम् ॥ वज्रकन्द[11] लता रोध्र विकिरेत् श्लक्ष्णचूर्णितम् । वृक्षाग्रेषु पताकासु दूष्येषु[12] सुमहत्सु[13] च ॥ सर्वतश्चूर्णसम्पर्कान्निर्विषो जायतेऽनिल । विकृता भवति च्छाया पादपे विषदूषिते ॥ निर्गन्ध[14]मतिगन्ध वा तत्पुष्प हृच्छिरोरुजम् । कुर्यात्, फलपलाशादि कण्डूपाकातिसारकृत् ॥ भूमिमुद्दिश्य यत्प्रोक्त तत्सर्व तत्र शस्यते[15] । न च कन्यामविदिता सस्पृशेदपरीक्षिताम् ॥ विविधान् कुर्वते योगान् कुशला खलु मानवा । आजन्मविषसयोगात्कन्या विषमयी कृता ॥ स्पर्शोच्छ्वासादिभिर्हन्ति तस्यास्त्वेतत्परीक्षणम् । तद्धस्त[16]केश-

---

१ 'वितकृष्णमृ' ख घ झ म मू । 'वितया कृष्णमृदा प्र' स स । २ 'रसो वाऽगा' स स । ३ 'स्नानोदक' स स । ४ कङ्कत–गजदन्तादिकृत बहुदन्त केशमार्जनम् । ५ 'बहुपुत्रा' ग ञ । ६ 'द्रगुडयुक्त' ग । ७ 'प्रतिपू' स द्व । ८ 'सर्पिषी' क ग ञ स स । ९ 'प्रतीक्षेतैक' ग । १० 'भ्यासाद्विष' स स । 'षाभ्याशाद्विष' स मू । ११ 'मुत्क्षीयते' स द्व । १२ 'मूषाफ' क ग ञ स मू । १३ 'भेषजागा' क ग ञ स स । १४ 'नि पुनर्मृद्दत्तृण' क ग ञ । १५ 'कक्षाव' ख घ झ । 'कक्ष्या प्रकोष्ठे हर्म्यादे' इत्यमर । १६ 'कृत्तके' स मू । १७ 'शतश ईदृशा' क ग ञ । १८ 'मन्वानर' क ञ । १९ 'मिन्य' स मू ।

१ 'स्मात्तान् विद्या' स स । २ 'श्मछायामार्ग' झ । 'श्ममार्गोन्मार्ग' स स । ३ 'दिमृत' ख घ स द्व । ४ 'वल्लीसोम' ख घ झ । 'सोमवल्लीमु' स द्व । ५ 'सुनन्दा–राज्ञा' इतीन्दु । ६ 'स्पर्शाद्गुरु शोफ' स द्व । ७ 'सरल' ख ग घ झ स स । ८ 'न्निविष' क ग ञ । ९ 'श्म्याक' स द्व । १० 'शिग्रुजान्' ग । 'सित्रकान्' स स । ११ 'कन्दलतारोध्र' क ग ञ । १२ दूष्य–वस्त्रगृहम् । १३ 'च महत्सु च' क ग ञ । १४ 'निर्गन्धे रतिगन्धैर्वा पुष्पै कुर्याच्छिरोरुजम्' क ञ । १५ 'चेष्यते' स स । १६ 'तद्वस्त्रके' क ग ञ । 'तन्मस्तकस्य सस्पर्शान्म्लायेते पुष्पपल्लवौ' म मू ।

संस्पर्शान्म्लायते पुष्पपल्लवे ॥ शय्याया मत्कुणैर्वस्त्रे[1] यूकाभि स्नानवारिणि[2] । जन्तुभिर्म्रियते ज्ञात्वा तामेव दूरतस्त्यजेत् ॥ नाप्रोक्षित नाविदित भिषजा नानवेक्षितम् । नाप्राशित च सूदाद्यै किञ्चिदाहारयेन्नृप[3][4] ॥ वन्य सर्वार्थसिद्धाख्य पाप्म[5]रक्षोविषापहम् । पर चक्षुष्यमायुष्य शत्रुघ्न वक्ष्यतेऽञ्जनम् ॥ अथ शुक्लपक्षे पुण्येऽहनि पुष्यपुनर्वसुहस्तचित्रामृगशिर श्रवणरेवतीशतभिषक्प्राजापत्योत्तराणामन्यतमेन नक्षत्रेण योगमुपगते भगवत्योषधिपतौ प्रशस्ते मुहूर्ते सिन्धुस्रोत समुत्थ स्निग्ध सप्रभ गन्धवर्णच्छेदै[6]र्नीलोत्पलाभमञ्जनमाहरेत् । तस्याष्टौ भागा , कनकरजतोदुम्बराणामेकैको भाग , तत्सर्व मूषाया प्रक्षिप्य, बलिमङ्गलपूर्वकमग्निमुपसमाधाय,खदिरकदर[7]धवस्यन्दनान्यतमदारुभिर्गोमयैर्वा प्रज्वालयेत् । ततश्चार्यावलोकितेश्वरमार्यतारा[8] ब्रह्मदक्षाश्विरुद्रेन्द्रादित्यसोमवरुणवैश्वानरवायुविष्णुजनकभरद्वाज[9]धन्वन्तरिसुश्रुतभव्यसुकन्यास्कन्द[10]च्यवनवैनतेयानन्यांश्च[11] यथाविधि[12]युक्तदेवता सुमनोऽक्षतलाजास्वस्तिकसंयावनिस्तुषयवसस्कृतगुडघृतमिश्रपायसैरर्चयित्वा, वृद्धवैद्यब्राह्मणांश्च[13] शुक्लवाससो महतीभिर्दक्षिणाभि पूजयित्वा, तस्मिन्नग्नौ[14] तदञ्जन ध्मात ध्मातमावर्त्य पृथक्पृथग्भि षेचयेत् । गोशकृद्रसमूत्रघृतदधिक्षौद्रवसामज्जतैलमद्यसर्वगन्धाम्बुशर्करोदकेक्षुरसेषु, तथा हरीतक्यामलकबिभीतककाश्मर्यमृद्वीकाशृङ्गाटककसेरुकोत्पलनलिनसौगन्धिकमृणालिकाक्काथेषु, तथा लावकपिञ्जलैणशशहरिणकुलीररसेषु, तथा मधुकचन्दनकालानुसार्यनलदपद्मकोशीरमञ्जिष्ठानन्तागैरिककुङ्कुमोदकेषु । कालानुसार्य–शैलेयम् । तत शुक्ले वाससि बद्ध्वा द्वादशरात्रमान्तरिक्षेऽम्भसि वासयेत् । ततश्छायाया विशोष्य स्फटिकमुक्ताप्रवालकालानुसार्यप्रतीवाप पुनरपि बलिमङ्गलपूर्वक[15]महतवाससा कन्यया दृषदि पेषयित्वा सुवर्णरजतताम्रशङ्खशैलद्विरद[16]दनगवलवैडूर्यस्फटिकमेष[17]शृङ्गायसनसारान्यतमघटितायामञ्जनिकायां निधापयेत् । गवल–माहिष शृङ्गम् । अथ पुनरपि पूर्ववत्कृतस्वस्त्ययन सावित्रेण कर्मणाऽथर्वविद्भिर्जन्मना विधिवत् तदभिसस्कुर्यात् । ततो गजस्कन्धमारोप्य पाण्डुरच्छत्रचामरवालव्यजनैरनुगत तथा शङ्खदुन्दुभिस्वनैर्द्विजातिवरप्रयुक्तैश्च वेदवादमिश्रै पुण्याहघोषै कृतपुष्पोपहार वैद्यगृहान्नायकगृहमनुप्रवेशयेत् । अनन्तर च तेन विदेहाधिपोपदिष्टेन सर्वार्थेषु सिद्धेनाञ्जनेन[1] यथोक्तानामेवाञ्जनभाजनद्रव्याणामन्यतमया[2] शलाकया गोब्राह्मणपूजापूर्वक शुचि सनियमो भूत्वा धारिणीमिमा[3] विद्यामधीयान[4] पूर्वमक्षि दक्षिणमञ्जयेत्[5] । नमश्चक्षु परिशोधनराजाय तथागतायार्हते सम्यक्सम्बुद्धाय । तद्यथा ॐचक्षु प्रज्ञाचक्षुर्ज्ञानचक्षुर्विज्ञानचक्षुर्विशोधय स्वाहा । तत[6] पर तामेव धारिणीमनुस्मरन्[7] सायप्रात प्रत्यहमेतत्परम[8] पवित्रमारोग्यकरमूर्जस्कर[9] सर्वविघ्नहरमञ्जनमश्विभ्यामिन्द्रस्य वृत्रवधाभ्युद्यतस्य प्राक्प्रकल्पितम् । तस्मादेतद्राज्ञा राजमहामात्राणा च महीं विजिगीषमाणाना ब्राह्मणाना च वेदाध्ययनमभ्यद्वा महच्छास्त्रमवगाहमानाना प्रसन्नमना भिषक् प्रकल्पयेदिति । भवन्ति चात्र । अथ [10]योगा प्रवक्ष्यन्ते बृहस्पतिकृता शिवा । यान् सेवमानो नृपति शत्रुभ्यो नैति[11] वञ्चनम् ॥ बिल्वाढकीयवक्षारपाटला[12]बाह्लिकोषणा । श्रीपर्णी[13]शल्लकी[14]युक्ता निष्काथ प्रोक्षण परम् ॥ आढकी[15]–सौराष्ट्री । सविष प्रोक्षित तेन सद्यो भवति निर्विषम् । यवसेन्धनपानीयवस्त्रशय्यासनौदनम् ॥ कवचाभरणच्छत्रवालव्यजनवेश्म च । शेलुपाटल्यतिविषाशिग्रुगोपीपुनर्नवम् ॥ समङ्गावृक्ष[16]मूलत्वक्कपित्थ[17]वृषशोणितम् । सहदन्तशठ तद्वत्प्रोक्षण विषनाशनम् ॥ शोणित–कुङ्कुमम् । लाक्षाप्रियङ्गुमञ्जिष्ठासमङ्गालहरेणुका । सयष्ट्याह्वा मधुयुता बभ्रुपित्तेन[18] कल्किता ॥ निखनेद्गो[19]विषाणस्था सप्तरात्र महीतले । तत कृत्वा मणि हेम्ना बद्ध हस्तेन धारयेत् ॥ ससृष्ट सविष तेन सद्यो भवति निर्विषम् । बभ्रु –नकुल । मनोह्वालशमीपुष्पत्वङ्निशाश्वेतसर्षपा ॥ कपित्थकुष्ठमञ्जिष्ठा पित्तेन श्लक्ष्णकल्किता । शुनो गो कपिलायाश्च सौम्याख्योऽय वरोऽगद ॥ विषजित्परम कार्यो मणिरत्र[20] च पूर्ववत् । मूषिकाऽजरुहा[21] वापि हस्ते बद्धा विषापहा ॥ हरेणु-

१ 'वस्त्रैर्यूका' क ख ग घ झ ञ । २ 'वारिभि ' क ञ । 'वारिणा' ग स मू । ३ 'दप्याहरेन्नृप ' स स । ४ 'नृपम्' स मू । ५ 'पापर' स द्व । ६ 'च्छदै' स स । ७ 'कदम्बर' क ञ । ८ 'कितेश्वर्यताराब्रह्म' क ग ञ. । ९ 'भारद्वाज' ख घ झ । १० 'स्कन्धच्य' ख घ झ । ११ 'न्यांश्च' ख घ झ स द्व । १२ 'विधमुक्तादेवता ' क ग ञ । १३ 'श्च वासोभिर्महती' क ग ञ । १४ 'तदाऽञ्जन' ख घ झ । १५ 'क महद्वाससा' क ग ञ,स,मू । १६ 'ददन्तग' क,ग,ञ । १७ 'शृङ्गास' ग,स,मू ।

१ 'सिद्धाञ्जनेन' क ञ । २ 'नामञ्ज' क ग ञ । ३ 'धारणामिमामादधीत । पूर्वं' ग । ४ अस्याग्रे 'पूत ' इत्यधिक सङ्ग्रहद्वये । किन्तु 'शुचि ' इत्यनेन गतार्थत्वात् तद्विरुक्तम् । ५ 'पूर्वमञ्जयेद्दक्षिण चक्षुस्ततो वामम् । तद्यथा । ॐचक्षु प्रज्ञाचक्षुर्ज्ञानचक्षु विज्ञानचक्षुर्विशोधय ( न 'ग' ) चक्षु परिशोधनराजाय तथा गतायार्हते सम्यक् सम्बुद्धाय स्वाहा । तत ' क ग ञ । ६ 'त् । अत्र मत्र । नम' स स । ७ 'धारणाम' क ख ग घ ञ । ८ 'त्पर प' क ग ञ । ९ 'रमोजस्कर' क ग ञ । १० 'प्रयोगा वक्ष्य' क ग ञ । ११ 'वञ्चनाम्' झ ञ स मू । 'पञ्चताम्' स स । १२ 'टलीवाह्लिको' स द्व । 'ला वासिको गण ।' ग । १३ 'शाल्मलीयु' स मू । १४ 'युक्तो' ग झ । १५ 'आढकी–तुवरी' इतीन्दु । १६ 'विश्वमूल' ग । 'विषमूल' स मू । १७ 'पित्थ' क ग ञ । १८ 'कपिपिता ' ख ग घ झ । १९ 'नेखाता गोवि' ग । २० 'रत्न च' क ग ञ स म । २१ 'अजरुहा मूषिकयोर्लक्षणमुशनसा प्रोक्तम्–"कन्द श्वेत सपिटिको भेदे चाञ्जनसन्निभ । गन्धलेपनपानैस्तु विष जरयते नृणाम् ॥ दष्टाना विषपीताना ये चान्ये विषमोहिता । विष जरयते तेषा तस्मादजरुहा स्मृता ॥ मूषिका लोमशा कृष्णा भवेत्साऽपि च तद्गुणा ।" इति । इति गूढपदभङ्गडल्हणौ ।

मासीमञ्जिष्ठारजनीमधुक मधु । अक्षत्वक् सुरस लाक्षा श्वपित्त पूर्ववन्मणि ॥ वादित्राणि पताकाश्च पिष्टैरेभिश्च लेपिता । श्रुत्वा दृष्ट्वा तमाघ्राय सद्यो भवति निर्विषं[1] ॥ व्यूषण पञ्चलवण मञ्जिष्ठा रजनीद्वयम् । सूक्ष्मैला त्रिवृता पत्र विडङ्गानीन्द्रवारुणीम् ॥ मधुक चेति सक्षौद्र गोविषाणे निधापयेत् । तस्मादुष्णाम्बुना मात्रा प्राग्भक्ता[2] योजयेत्तथा ॥ विष भुक्त जरा याति निर्विषेऽपि न दोषकृत् । जतुसर्जरसोशीरसर्षपापत्रवालकै ॥ सैवेल्लारुष्करपुरै[3] कुसुमैरर्जुनस्य च । धूपो वासगृहे हन्ति विष स्थावरजङ्गमम् ॥ न तत्र कीटा सविषा नोन्दुरा न सरीसृपा । न कृत्या[4] कार्मणा याश्च धूपोऽय यत्र दह्यते ॥ शिखिपिच्छ बलाकास्थि सर्पे पाश्वन्दन घृतम् । धूपो विपन्न शयनवसनासनगेहग ॥ विशालाव्योषमञ्जिष्ठायष्टीलवणपञ्चकम् । द्विनिशापत्रवेल्लैला-त्रिवृच्चूर्ण समाक्षिकम्[5] ॥ पूर्वोक्त व्यूषणादि च स्नानीयेऽम्भसि योजयेत् । क्वाथोऽथवाऽर्क[6]कुसुमश्वेतापामार्गसर्षपै ॥ सद्यध्याज्य कृतो युक्तै कामातानाकुलीयकै[7] । कल्को वा चन्दनक्षीरिपलाशद्रुमवल्कलै ॥ मूर्वैलवालुसुरसानाकुली-तन्दुलीयकै[8] । क्वाथ सर्वोदकार्येषु[9] काकमाचीयुतैर्हित ॥ रोचनापत्रनेपालीकुङ्कुमैस्तिलकै[10] वहन् । विषैर्न बाध्यते स्याच्च नारीनरनृपप्रिय ॥ चूर्णैर्हरिद्रामञ्जिष्ठाकिणिही[11]कैण-निम्बजै । दिग्ध निर्विषतामेति गात्रमित्याह गौतम ॥ नस्यपानाञ्जनालेपैर्युञ्ज्यात्सञ्जीवनादिकान्[12] । अगदान् विष जुष्टस्य[13] तीक्ष्णानि वमनानि च ॥ अगदान्–विषतन्त्रोक्तान् । पिप्पलीमधुकक्षौद्रशर्करेक्षुरसै सह[14] । विरेचन शिरामोक्ष प्राश्च विस्रावण यदि ॥ हृदयावरण कार्यं प्रागेवा[15]मित्रमध्य[16]ग । पिबेद्धृतमजेयाख्यममृत वाऽप्य[17]भुक्तवान् ॥ अजेयामृते–विषतन्त्रोक्ते । सर्पि क्षौद्र दधि क्षीरमन्तत शीतल जलम् ॥ अन्तर्तत[18] –अन्ते सर्वाभावे, अत एव पूर्वेषु[19] पूर्वाभावे परमिति लभ्यते[20] । सितामधुकपालिन्दीकल्कवन्मा समिष्यते ॥ गोधाहरिणबभ्रूणा सकणाशुण्ठि पार्षतम्[21] ।

सनागर मातिविष शिखिन[1] ससितोपलम् ॥ सुशीता सघृताश्चैषा[2] यथास्व कल्पिता रसा । इत्थ विषगरादिभ्यो रक्षेद्वैद्यो नरेश्वरम्[3] । स्यात्तदुच्छेद उच्छेद प्रजाना सर्वक-र्मणाम् ॥ आज्ञावैर्यक्षमात्यागो[4] मानुषत्वेऽप्यमानुषा[5] । यद्राज्ञ कर्मभिस्तस्मादाराध्योऽसावतीन्द्रियै[6] ॥ यत्र साक्षा-न्नृपस्तत्र विज्ञात प्रविशेद्भिषक् । न सम्मतोऽप्यनुचित[7] यानस्थानासन भजेत् ॥ उचित पुरतो राज्ञस्तिष्ठेद्वाक्य च नाक्षिपेत् । अहीनकाल राजार्थ, स्वार्थ प्रियहितै सह ॥ देशे काले परार्थ च वदेद्धर्मार्थसहितम् । नानुशिष्यादपृ-च्छन्त महदेतद्धि साहसम् ॥ नाचरेदहितेनैन मूलोच्छेदकर हि तत् । अनुकूल हित वाच्यमहिताद्वारयेन्मिथ ॥ उदारै सान्त्वयन्वाक्यैर्दोषश्चेत्तदुपेक्षया । तूष्णी वा प्रतिवाक्ये स्याद्वर्जयेद्वेष्यसङ्कथाम् ॥ विपश्चिदप्यचित्तज्ञो बालेशोऽपि तु भाववित्[8] । अतिप्रियोऽपि द्वेष्योऽपि यात्याशु विपरी-तताम् ॥ निवेद्य राज्ञे कुर्वीत कार्याणि सुलघून्यपि । न यायान्न चिर तिष्ठेत्कोशस्थानावरोधयो ॥ स्वल्पेऽपि दर्शये-त्तुष्टि लाभेऽनुद्धतमानस । मिथ कथनमन्येन कौलीन द्वन्द्व-वादिताम् ॥ वस्त्रादि राज्ञ[9] सदृश राजलीला च वर्जयेत् । दत्त यत्तु नृपेणैव तद्धार्य तुष्टिवृद्धये ॥ हसितव्ये स्मित कुर्यात्प्र भोरेवानुवृत्तित । उच्यमानेऽवलम्बेत परमर्मणि मूकताम् ॥ स्वमर्मणि तु बाधिर्य धैर्यमाधुर्यसौष्ठवम्[10] । अल्पायासेन नात्मान कुर्यादतिसमुच्छ्रितम् ॥ पातो यथा हि दु खाय नोच्छ्राय सुखकृत्तथा । आसन्नसेवा नृपते क्रीडा शस्त्राहि-पावकै ॥ कौशलेनातिमहता[11] विनीतै सा निरुध्यते[12] । प्राप्य दुष्प्रापमैश्वर्य बहुमान च भूपते ॥ यथोपयुञ्जीत[13] चिर तथा स्यादप्रमादवान् । विदध्यात्परित शङ्कया रक्षामन्त्राभिमन्त्रि[14]-तान्[15] ॥ रात्रौ सिद्धार्थकान् भूतिम[16]क्षतैरन्वितान्[17] शुचिम्[18] । रक्षा-शक्ति तथोच्छीर्षे सयवाङ्कुरयावकाम् ॥ सदूर्व पूर्णकलश सपुष्पफलपल्लवम् । उपहार च सन्ध्याया भुक्त्वा चान्ते निशासु च ॥ एतत्स्वस्त्ययन कर्म कर्तव्य शुचिना शुचे । आयुष्य पौष्टिक भूतविषकार्मणपाप्मजित् ॥ सङ्क्षेप एष विषपालनसाधनाय प्रोक्तस्तु विस्तरविधि पुनरुत्तरेषु[19] । आलोच्य[20] सम्यगखिल मतिपूर्वकारी युञ्जीत तत्परिकल्प्य[21] विकारचिह्नम् ॥ इति विषगररक्षोरक्षणायोपदेश भजति

१ 'विषम्' क ञ.म स. । २ 'भक्त' क स द्व । ३ 'मबिल्वा रुष्करयवै' क ग ञ । ४ 'कृत्याका' क ग झ ञ म स । ५ अस्याग्रे 'गोशृङ्गे निहित योज्य स्नानीयेऽम्भसि भूपते ।' इत्यधिक सटीकसङ्ग्रहे । ६ 'यो ववार्क' इतीन्दुसम्मत पाठ । 'यो वचार्क' ग । ७ 'ममाचीना' स मू । 'कतकाना' स स । ८ 'लीयवे' ख घ झ । 'लीद्वयै' ञ स स । ९ 'कार्येषु' स स । १० 'लकान् बहून्' स द्व । ११ 'किण' क ग ञ । १२ 'नात्मवान्' स स । १३ 'भुक्तस्य' स स । १४ अस्याग्रे 'द्विनिशापत्रवेल्लैलात्रिवृच्चूर्ण समाक्षिकम् ।' इति श्लोकार्ध पूर्वोक्तमप्यत्र सङ्ग्रहहृदयेऽधिकम् । १५ 'प्रागेव हितमिच्छता' क ग ञ स मू । १६ 'ध्यत' स.स । १७ 'चाप्य' ख घ झ स मू । १८ 'त–पूर्वाभावे' ख घ झ । १९ 'पूर्वपूर्वा' क । २० 'लभ्यम्' क ग ञ । २१ 'पावतम्' क ञ ।

१ 'खिन' क ग ञ । २ 'श्चैव' क.ग । ३ 'जनेश्वरम्' क.ग.ञ । ४ 'गान्मातु' क ख ग घ ञ । ५ 'नुष । यद्राजाक' क ग ञ । ६ 'वतद्रितै' क ञ. । ७ 'चिते' स स । ८ 'सुभाव' क ञ । 'स्वभाव' ग । ९ 'राज्ञा' स म । १० 'ष्ठवान्' स स । ११ 'कौलीनेना' क ग । १२ 'निरुह्यते' ख घ झ स मू । 'ऽवरुध्यते' ञ । १३ 'भुञ्जीत' स द्व । १४ 'मिरक्षिताम्' ख घ झ । १५ 'ताम्' क ग । १६ 'भूमिम' क ग ञ । १७ 'तान् शुचीन्' ञ । १८ 'शुचि' क ग । १९ 'रे तु' स स । २० 'लोक्य' क ञ.स मू । २१ 'रिविकल्प्य' स स ।

नरपतिर्यो नित्यमेवाप्रमत्त । निजपररिपुवृन्दैरप्रधृष्यो महात्मा स जनयति जनाना क्षेमयोगौ चिराय ॥" इति ।

**विषभुक्ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ।**
**सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ॥२७॥**
**शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ।**

स०-विषभुक्ताय पुंसे ऊर्ध्वमधश्च शुद्धाय काले सूक्ष्मअतिश्लक्ष्ण ताम्रचूर्ण समाक्षिक दद्यात् । किम्भूतम्? हृद्विशोधन,-हृदयशुद्धये इत्यर्थ । विषभुक्तायेति 'आहिताग्न्यादित्वात्' परनिपात । काल इत्युपलक्षणम् । देशसात्म्याग्न्यादीन् व्यपेक्षेतेत्यर्थ । शुद्धे हृदि-स्वलिङ्गे ज्ञाते, तत -अनन्तर, हेमचूर्णस्य शाण-कर्षचतुर्थांश, दापयेत् ।

आ० र०-कृतपूर्वोक्तोपचारस्य विषशेषशङ्कानिवृत्त्यर्थमुपचारमाह-विषभुक्तायेति । शुद्धायेति पुनरपि कृतवमन विरेचनाय । काले-औषधकाले, ससर्जनक्रमानन्तरमित्यर्थ । हृद्विशोधन-हृदयस्थितविषनिर्हरण, ताम्रचूर्णं प्रयोजयेत् । तत शुद्धे हृदि-ताम्रचूर्णप्रयोगात् हृदयशुद्धौ सत्याम्, शाण-कर्षचतुर्थांशम्, हेमचूर्णमद्यात् ।

हेम्नि दत्ते सति, यो गुण स्यात्तमाह—

**न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम् ॥ २८ ॥**
**जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ।**

स०-हेम पिबतीति-हेमप, तस्याङ्गे विष न सज्जते । कथम्? पद्मपत्रे जलमिव । तस्य च हेमपस्य विस्तीर्णमायुर्जायते । एष विधिर्गरेऽपि स्मृत, यो विष उक्त । सज्जत इत्यत्रात्मनेपदं चिन्त्यम् ।

आ० र०-सुवर्णप्रयोगफलमाह-न सजत इति । हेम पिबतीति-हेमप, तस्याङ्गे विष न सजते-सङ्ग न गच्छति, विपुल चायुर्जायते । सज्जत इति पाठे सङ्गार्थकषञ्जेरात्मनेपदत्व चिन्त्यम् ।

विषोक्तविधि गरेऽप्यतिदिशति-गरेऽप्येष इति । गरकृत्रिम विषम् । "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय" इति न्यायात् गरे विषविधेरप्राप्तत्वादतिदेश ।

**विरुद्धमपि चाहारं विद्याद्विषगरोपमम् ॥ २९ ॥**

स०-विरुद्धं चाहार विषगरोपम विद्यात् । विषगरवद्विरुद्धाहारा अपि व्याधिमृत्युहेतव इत्यर्थ । तथा चोक्त सङ्ग्रहे (सू. अ ९)-"विस्फोटगुल्ममदविद्रधिमेहयक्ष्मतेजोबलस्मृतिमतीन्द्रियचित्तनाशम् । कुर्याद्विरुद्धमशन ज्वरमस्रपित्तमष्टौ गदाश्च महतो विषवच्च मृत्युम् ॥" इति ।

आ० र०-अथ विरोधादन्नपानरक्षा । विरुद्धान्नस्य दोषहेतुत्वमाह-विरुद्धमपीति । विरुद्ध-संयोगादिविरोधवत् । कस्यचिद्विरुद्धाहारस्य विषवत्सद्यो नाशकत्वात् कस्यचिद्गरवत्कालान्तरनाशकत्वाद्रोगजनकत्वाच्चोपमानद्वयमुक्तम् । उक्त च सङ्ग्रहे (सू अ ९)-"विस्फोटगुल्ममदविद्रधिशोफयक्ष्मतेजोबलस्मृतिमतीन्द्रियचित्तनाशान् । कुर्याद्विरुद्धमशन ज्वरमस्रपित्तमष्टौ गदाश्च महतो विषवच्च मृत्युम् ॥" इति । विरोधश्च सप्तधा,-सयोगसस्कारमात्रादेशकालावस्थास्वभावभेदात् । सयोगस्त्रिधा,-बलवद्गुणाना साम्यात् वैषम्यात् साम्यवैषम्याभ्यां च । एव नव भेदा । ते च सोदाहरणा सङ्ग्रहे दर्शिता (सू अ ९)-"बलिना मिथो गुणाना विषमतया समतयाऽप्युभयथाऽपि । सस्कारादिवशादपि भवति निसर्गादपि विरोध ॥ क्षीर कुलत्थै पनसेन मत्स्यैस्तस दधि क्षौद्रघृते समाशे । वार्यूपरे रात्रिपु सक्तवश्च तोयान्तरास्ते यवकास्तथा च ॥" इति । ते च वक्ष्यमाणेषु स्वबुद्ध्या विवेचनीया ।

तदेव विरुद्धभोजनमाह—

**आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ।**
**विरुध्यते सह बिसैर्मूलकेन गुडेन वा ॥ ३० ॥**
**विशेषात्पयसा मत्स्या मत्स्येष्वपि चिलीचिमः ।**

स०-आमिप-मास, आनूपं-महामृगवारिचरवारिशयाख्य, माषादिभि सप्तभि सह विरुध्यते । आनूपेष्वपि मध्ये विशेषात्-अतिशयेन, पयसा सह मत्स्या विरुध्यन्ते । यतो मत्स्यक्षीरे स्वादुरसविपाकित्वान्महाभिष्यन्दिनी, शीतोष्णयोगाच्च परस्परविरुद्धे । मत्स्येष्वपि चिलीचिमाख्यो मत्स्य पयसा सहात्यन्तविरुद्ध । स पुन शकली लोहिताक्ष सर्वतो लोहितराजि प्रायो भूमौ चरति, सोऽत्यभिष्यन्दितमत्वात्सुतरा विरुद्ध । एष चाहारोऽनिर्दिष्टविकारकारी यथोक्तान् विस्फोटादीन् करोति । कालान्तरेण च चिकित्सा विना प्राणानपि हरति । कश्चिच्च विरुद्धाहारो निर्दिष्टविकारकारी । यथा-"उपोदकाऽतिसाराय" इति ।

आ० र०-तत्रानूपमासस्य माषादिभिर्विरोधमाह-आनूपमामिषमिति । विरूढक-अङ्कुरित धान्यम् । माषादिष्वेकेनापि विरोधो ज्ञेय । यदाह खारणादि -"गुडमाषतिलक्षीरविरूढबिसमूलकै । ग्राम्यानूपौदमासानि त्वेकेनापि विरुध्यते ॥" इति । विरोधश्चैकध्यमभ्यवहारे, न तु क्रमेण ।

---

१ 'त्मा जनयति जनताया क्षे' स स । २ 'ऊर्ध्वाधश्च' ठ. । 'ऊर्ध्वाध शु' ड । ३ 'काले-पूर्वाह्णे सू' ट । ४ 'समधु' ड । ५ 'हृदय शोधयेदित्यर्थ' ठ । ६ 'जल यथा न सज्जते' ट । ७ 'द्याद्गरविषोपमम्' अ आ । ८ 'गरविषोपम' ट । ९ 'टशोफमदविद्रधिगुल्मयक्ष्म' स ड । १० 'नाशान्' स द. ।

१ 'विरुद्धम् ।' क ञ । २ 'शनत्वा' ख घ झ । ३ 'मुपात्तम्' क ग ञ । ४ 'योगात् पर' ड । ५ 'त्यन्त' ट । ६ 'सकुलीरो' ठ । 'सुकुली' ड । ७ 'विना हन्ति ।' ट । ८ 'नपहरति' ट । ९ 'तथाऽऽनूपस्य' ख घ. । 'तथाऽऽमिषस्य' झ. । १० 'सानामेके' ख घ.झ ।

यदाह सुश्रुत (यदुक्तं सङ्ग्रहे सू अ ९, चरके च सू अ २६।८६ )–"ग्राम्यानूपौदकपिशितानि मधुगुडतिलपयोमाषमूलकबिसविरूढकैश्च नैकध्यमद्यात् ।" इति । उक्तेष्वपि मत्स्यपयसोर्विशेषाद्विरोध । ततोऽपि पयश्चिलीचिमयो ।

**विरुद्धमम्लं पयसा सह सर्वं फलं तथा ॥ ३१ ॥**
**तद्वत्कुलत्थवरककङ्गुवल्लमकुष्ठकाः ।**

स०–अम्ल द्रव्य पयसा सह सर्व विरुद्धम् । सर्वग्रहण द्रवाद्रवग्रहणार्थम् । द्रव–काञ्जिकादि, अद्रव–चुक्रिकादिकमित्यर्थ । अन्यथा पयसो द्रवसमानजातीयत्वात् काञ्जिकाद्येव द्रवद्रव्य विरुध्येत, न चुक्रिकादिकमपि । ननु, तृतीययैव सहार्थो लब्ध एव । यथा–"वाराह श्वाविधा नाद्यात्" इत्यत्र । तत कि सहशब्देन । सत्यमेतत् । सहग्रहण तु नियमार्थम् । सहैकध्यमम्लेनोपयुज्यमान विरुद्धम् । यदा त्वम्लेन गोरसादिना क्षीरशाकसज्ञव्यञ्जनकरणार्थ पय सस्क्रियते तदा तस्य द्रव्यान्तरत्वापत्तेर्विरोधो नास्ति । तथा, दधिक्षीरादिना घृत पच्यते तत्राऽप्यविरोध एव, द्रव्यान्तरत्वात् । पूर्वस्याऽपि सहशब्दस्यैवप्रायमेव प्रयोजनमभ्यूह्यमिति । अपि च, क्षीरे भुक्ते उत्तर कालमप्यम्ल न भोज्यमिति प्रतिपादनार्थ च सहग्रहणम् । तथा चोक्त सङ्ग्रहे (सू अ )–"सर्व चाम्ल *पयसा सहैकध्य तदुत्तर वा विरुद्धम्" इति । फल तथेति । फल–अक्षोडादि च, पयसा सह विरुद्धम् । सर्वशब्द सर्वत्र न सम्बन्धनीय, यतो न सर्व फल पयसा सहाभ्यवहर्तु विरुद्धम् । अपि तु किञ्चिदेव । तथा च मुनि परिसख्ययैवाऽपठत् ( च सू अ २६।८६ )–"तथाऽऽम्राम्रातकलकुचकरमर्दमोचदन्तशठबदरकोशाम्रभव्यजाम्बवकपित्थतिन्तिडीकपालेवताक्षोडपनसनारिकेरदाडिमामलकान्येव प्रकाराणि चान्यानि" इति । तस्मान्न सर्व फल पयसा सहाभ्यवहर्तु विरुद्धम्, किन्तु मुन्युक्तमेव । तद्वदिति फलवत्, कुलत्थादय पयसा सह विरुद्धा । वरको–व्रीहिभेद, "वरकोद्दालक" इति प्रागुक्ते (हृ सू अ ६।९) । वल्लमकुष्ठौ–शिम्बीधान्यविशेषौ । उपलक्षण चेदम् । 'माषनिष्पावावपि' हि विरुद्धौ पयसा सहेति सङ्ग्रहे ( सू अ ९ ) कथितम् ।

आ० र०–अम्लादिभि पयसो विरोधमाह–विरुद्धमम्लमिति । सर्वमम्ल–द्रवमद्रव च, पयसा सह विरुद्धम् । सहभावोऽत्र पयस उत्तरमपि सेवितेनाम्लेन ज्ञेय । उक्त हि सङ्ग्रहे ( सू अ ९ )–"सर्व चाम्ल ×पयसैकध्य तत उत्तर वा विरुद्धम् ।" इति । तथा, सर्व फल–अम्लमनम्ल च । तद्वत्कुलत्थादय । वरको–व्रीहिभेद । कङ्गु–प्रियङ्गु । वल्ल–निष्पाव । मकुष्ट–कलायभेद । सुश्रुतस्त्वाह ( सू अ २०।८ )–"वल्लीफलकवककरीराम्लफललवणकुलत्थपिण्याकदधितैलानूपौदकविरोहिशुष्कशाकाजाविकमासमद्यजाम्बवचिलीचिममत्स्यगोधवराहमापाश्च नैकध्यमश्नीयात् पयसोऽन्ते वा ।" इति ।

**भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् ॥ ३२ ॥**

स०–भक्षयित्वेति । हरितक मूलककुठेरादि भुक्त्वा पयस्त्यजेत्, न पुन शाक मूलकादि स्निग्वस्विन्न शाकसाधनेन साधित भुक्त्वा क्षीर न भक्षयेत् । एतस्मादेव च ज्ञापकात् मूलकादीनामुभयरूपत्व वेद्यम्, हरितकत्व शाकत्व च । तथा च मूलकादीना यदि शाकत्वप्रसिद्धिरेवाऽभविष्यत्, ततो "हरितक मूलकादि भक्षयित्वा" इति तन्त्रकृन्नावक्ष्यत् । तस्मान्मूलकस्य हरितकत्व शाकत्व च ज्ञेयम् । लशुनेन सह क्षीरस्य प्रयोगो य उक्त ( हृ चि अ १४।४५ )–"साधयेच्छुद्धशुष्कस्य लशुनस्य चतु पलम् ।" इति । स न विरुद्ध, अग्न्यादिसम्पर्काद्द्रव्यान्तरत्वापत्ते ।

आ० र०–पयोहरितकयोर्विरोधमाह–भक्षयित्वेति । हरितकाख्य शाक भक्षयित्वा पयो न पेयम् । कस्य शाकस्य हरितकसंज्ञा? इत्यपेक्षायामाह–मूलकादि,–मूलकादारभ्य शाकवर्गोक्त हरितकसज्ञमित्यर्थ ।

***वाराहं श्वाविधा नाद्याद्‌द्या पृषतकुक्कुटौ ।**
**आममासानि पित्तेन, माषसूपेन मूलकम् ॥ ३३ ॥**
**अविं कुसुम्भशाकेन, बिसैः सह विरूढकम् ।**
**माषसूपगुडक्षीरदध्याज्यैर्लाकुचं फलम् ॥ ३४ ॥**
**फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ।**
**कणोषणाभ्यां मधुना काकमाची गुडेन वा ॥ ३५ ॥**
**सिद्धां वा मत्स्यपचने पचने नागरस्य वा ।**
**सिद्धामन्यत्र वा पात्रे कामात्तामुषितां निशाम् ३६**

१ अत्र 'यदाह सुश्रुत' इति पाठ सर्वेषु हेमाद्रिटीकापुस्तकेषूपलब्धोऽप्ययुक्त एव, "ग्राम्यानूपौदकादे" सुश्रुतेऽदृष्टत्वात् सङ्ग्रहचरकयोर्दृष्टत्वाच्च । सुश्रुतपाठस्तु ( सू अ २०।१३ )–"न विरूढधान्यैर्वसामधुपयोगुडमाषैर्वा ग्राम्यानूपौदकपिशितादीन्यभ्यवहरेत् ।" इति । २ 'बिसैर्विरूढधान्यैश्च' स द्व स च । ३ 'नैकधाऽद्यात्' स च । ४ 'स्थचणक' आ । ५ 'दिकम् ।' ट । ६ 'तत् किं' ट । ७ 'नोपयुक्त' ट । ८ 'शाकव्य' ट । 'कसज्ञ' ठ ड । ९ आपत्ति–प्राप्ति । १० 'त् । सवत्र सहशब्दस्यैव प्रयोजन ज्ञेयम् ।' ट । ११ 'नमूह्यम् ।' ट । १२ 'उत्तरे कालेऽप्य' इति क्वचित् । *१३ 'पयसैकध्य विरुद्धम् । तत उत्तर' स द्व । १४ 'सवशब्दो न फले सम्बन्ध्य । यत सवमेव फल न विरुद्धम् । किन्तु किञ्चिदेव' ड । १५ 'तथाऽम्लाम्रातकमातुलुङ्गनिकुच' स च । १६ 'तितिडीक' ट ठ । १७ 'पारावता' स च ।

१ 'सङ्ग्रहे "माषनिष्पावा" अप्युक्ता ।' ठ । २ 'पयोविरो' क ञ । ३ 'लछत्राककवक' क ख घ झ । 'लछत्राककेमुक' ञ । 'कवक–छत्रकम्' इति टह्वण । ४ 'हिपिष्टशुष्क' स सु । ५ 'हरितकन्दमूल' क ञ । ६ 'लक कु' ठ ट । ७ 'मूलफलादि' ट.ट । ८ 'हि' ट । ९ 'न्तरोत्पत्ते' ट । 'न्तरत्वोत्पत्ते' ठ । *१० 'वरा' क ञ । ११ 'च' आ ख प झ । १२ 'कपोतामु' अ ठ । 'नाद्यात्ता' क ञ । 'कामातामु' आ हे । कामात्–लोभात् । ता–काकमाचीम् । १३ 'निशि' ख घ.झ ।

स०—श्वाविधा–सेग्रामासेन सह, वाराह मास नाद्यात् । अग्रेऽपि नाद्यादिति क्रियायोगो यावत्त्यजेदिति क्रियान्तरम् । पृषतकुक्कुटौ दध्ना सह नाद्यात् । आमानि–अपक्कानि मासानि पित्तेन सह । माषसूपेन सह मूलकम् । अवि–मेष, कुसुम्भशाकेन सह । विरूढक–अङ्कुरितधान्य, बिसै सह । माषसूपादीनामन्यतमेन सह लकुचफलम् । कदल्या फल तक्रेण सह, दध्ना वा, तालफलेन वा । कणोषणाभ्या सह काकमाचीम्, केवलेन माक्षिकेण सह काकमाचीम्, गुडेन वा सह काकमाचीम्, मत्स्या पच्यन्ते यस्मिन् भाण्डे तत्र वा सिद्धा काकमाचीम्, नाद्यात् । नागरस्य वा पचने–शुंण्ठीपाकभाण्डे सिद्धा काकमाचीम्, तथाऽन्यत्र वा भाजने यथारुचिसिद्धा कामात्ता–काकमाचीं, रात्रिमुषिता–पर्युषिता, नाद्यात् ।

आ० र०–[1]वाराहश्वाविधोर्विरोधमाह–[2]वाराहमिति । श्वावित्–सूचीसदृशरोमा ।

दधिपृषतयोर्दधिकुक्कुटयोश्च विरोधमाह–दध्नेति ।

पित्तामममासयोर्विरोधमाह–आममासानीति । आममांसानि–अपक्कमासानि ।

माषसूपमूलकयोर्विरोधमाह–माषसूपेनेति ।

अविकुसुम्भशाकयोर्विरोधमाह–अविमिति ।

बिसाङ्कुरितधान्ययोर्विरोधमाह–बिसैरिति ।

[4]लकुचफलस्य माषसूपादिभिर्विरोधमाह–माषसूपेत्यादि । आज्य–घृतम् । "फल तथा" इति क्षीरेण सह विरोधे सिद्धे पुन क्षीरग्रहण प्राक्पश्चाद्वा विरोधार्थम् । तथा च सुश्रुत (सू अ २०।१३)–"लकुचफलं दध्ना पयसा माषसूपेन प्राक्पश्चा[6]द्वा पयसा सह वा विरुद्धम् ।" इति ।

कदलीफलस्य तक्रादिभिर्विरोधमाह–फल कदल्या इति ।

काकमाच्या कणादिभिर्विरोधमाह–कणोषणाभ्यामिति । पिप्पलीमरिचाभ्या मिलिताभ्याम्, कणोषणाभ्यामिति समासकरणात् । छन्दोनुरोधात्समास इति चेत् न । "पिप्पलीमरिचाभ्या मधुना गुडेन वा काकमाचीम् ।" इति सङ्ग्रहेऽपि (सु अ. ९) । गुडमधुभ्या पृथक्, समासाकरणात् ।

पात्रविशेषसस्कारात्काकमाच्या विरोधमाह–सिद्धा वेति । मत्स्या पच्यन्ते यस्मिन् पात्रे तत्–मत्स्यपचनम् । नागरस्य पचने–शुण्ठीपचने ।

काकमाच्या पर्युषितत्वाद्विरोधमाह–सिद्धामन्यत्र वेति । कामाता–काकमाची । अन्यत्र वा पात्र इति पात्रविशेषनिवृत्त्यर्थम्, यत्र क्वापि पात्रे सिद्धा सती पर्युषिता विरुद्धेत्यर्थ ।

१ 'शुण्ठीभाण्डे' ठ ड । २ 'कामाची' ट । 'कपोता' ठ । ३ 'बिसविरूढकयो' ख घ झ । ४ 'माषादिलकुचयोर्विरोधमाह' क ग ञ । ५ 'न वा प्राक्पयस पयसोऽन्ते वा ।' स सु । ६ 'श्चात् पय' क.ग.ञ ।

**मत्स्यनिस्तलनस्नेहे साधिता[1] पिप्पलीस्त्यजेत् । कांस्ये दशाहमुषितं सर्पिरुष्णं त्वरुष्करे[2] ॥ ३७ ॥**

स०–मत्स्या निस्तल्यन्ते–भृज्यन्ते, येन स्नेहेन स –मत्स्यनिस्तलनस्नेह, तत्र साधिता पिप्पलीस्त्यजेत्, विरुद्धत्वात् । नाद्यादिति प्रकृतेऽपि त्यजेदिति वचन न केवल नाद्यात्, लेपादिकमपि न कुर्यादिति प्रतिपादनार्थम् । उत्तरत्रापि त्यजेदित्यस्यानुवृत्तावेतदेव तात्पर्यम् । कास्यपात्रे दशरात्रमुषितं सर्पिस्त्यजेत् । दशाहादर्वागविरुद्धमेव । अरुष्करे–भल्लातकविषये, उष्ण–अन्नपानादिक त्यजेत् । तथा, "पेय नोष्णोपचारेण" इत्यनेन मद्यस्योष्ण निषिद्धम् । तथा, "उष्णमुष्णार्तमुष्णे च युक्त चोष्णै" इति माक्षिकस्य । तथा, दध्नो–"नैवाद्यान्निशि नैवोष्ण वसन्तोष्ण" इत्यादिभि । तस्मान्मधुमद्यदधिभल्लातकेष्वप्युष्ण विरुद्धमित्यत्राचार्यो युक्त्या प्रत्यपादयत् । सङ्ग्रहे तु स्पष्ट कृत्वोक्तम् (सू अ ९)–"मद्यमधुदधिभल्लातकेषु चोष्णम् ।" इति ।

आ० र०–स्नेहविशेषसंस्कारात्पिप्पल्या विरोधमाह–मत्स्यनिस्तलनेति । मत्स्या निस्तल्यन्ते–[4]भृज्यन्ते, येन स्नेहेन स –मत्स्यनिस्तलन ।

पात्रकालविशेषसस्कारात्सर्पिषो विरोधमाह–कास्ये दशाहमिति । कास्ये–कास्यपात्रे । दशाह–दशाहोरात्रान् ।

उष्णारुष्करयोर्विरोधमाह–उष्ण त्विति । उष्णस्पर्शं द्रव्य [5]भल्लातके प्रयुज्यमान विरुद्धम् ।

**भासो विरुध्यते शूल्य[6] कम्पिल्लस्तक्रसाधित[7] ।**

स०–भास –पक्षिविशेष [8]शूल्यो विरुध्यते, शूले सस्कृतो भास कृतपक्तिर्विरुध्यत इत्यर्थ । शूल्य इति "[9]शूलोखाद्यत्" इति यत् । कम्पिल्लस्तक्रसाधितो विरुध्यते । सङ्ग्रहे चातोऽधिकमप्युक्तम् । यथा (सू अ ९)–"सौवीरेण तिलशष्कुली । क्षीरेण लवणम् । नवनीतेन शाकम् । नवपुराणमामपक्क चैकध्यम् । तथा सलिलावगाह सहसोष्णाभितप्तस्य त्वग्द[10]ष्ट्युपघाताय तृष्णा[11]तिवृद्धये च । तथैव पय पान रक्तपित्ताय । शरीरेणाऽऽयस्तस्य सहसाऽभ्यवहारश्छर्दिषे गुल्माय वा । वाचा त्वायस्तस्य स्वरसादाय ।" इति ।

आ० र०–भासस्य शूलस[12]स्कारा‍द्विरोधमाह–भास इति । भास –प्रसहपक्षिविशेष । शूल्य –शूलप्रोतो[13]ऽङ्गारेषु पक्व ।

१ 'स्नेहसाधिता' अ आ स घ झ. । २ 'त्वरुष्करे' अ क घ ड ञ ठ । ३ 'दधिष्वप्युष्ण' ठ । ४ 'भर्ज्यन्ते' क ग घ झ ञ । ५ 'भल्लातकै' क ञ । ६ शूल्यविधान यथा–"हिङ्गुदके परिक्षिप्त शूले निष्पीडित तत । सिक्त्वा सिक्त्वाऽम्बुधाराभिर्विधूमेऽग्नौ प्रतापयेत् ॥ फलाम्लेनापि यत् पक्व शूल्य तत् सौरभान्वितम् ।" इति सु टी टल्हण । ७ "शूलात्पाके" ट ठ । ८ 'न मूलशा' स मू । ९ 'क च नेकमैकध्यमद्यात् ।' स द्व । १० 'ग्दृष्ट्योरुप' स द्व । ११ 'ष्णाभिप्रवृ' स स. । १२ 'सस्करणाद्वि' ख घ.झ. । १३ 'ङ्गारविपक्व' क ग ।

कम्पिल्लस्य तक्रसंस्काराद्विरोधमाह–कम्पिल्ल इति । कम्पिल्लो–विरेचनद्रव्यविशेषो रोचनिकाख्य ।

**ऐकध्यं पायससुराकृशराः परिवर्जयेत् ॥ ३८ ॥**

**स०**–ऐकध्य–एकत्र, पायससुराकृशरास्त्यजेत् । ऐकध्यमिति "एकाद्धो ध्यमुञ्" इति ध्यमुञ् ।

**आ० र०**–पायसादीनां मिथ सयोगाद्विरोधमाह–ऐकध्यमिति । ऐकध्य–एकत्र सयोज्य । पायस –क्षैरेयी[1] । कृशरा-तिलतन्दुलमाषकृता पेया ।

**मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ।**
**एकत्र वा समांशानि विरुध्यन्ते परस्परम् ॥ ३९ ॥**

**स०**–मध्वादीनि समाशानि–तुल्यप्रमाणानि, मिथो विरुध्यन्ते । कथम् ? द्वे वा, त्रीणि वा, एकत्र वा सर्वाणि । यथा–मधुसर्पिषी, मधुवसे, मधुतैले, मधुसर्पिर्वसा, मधुसर्पिर्वसातैलानि, इत्येवमादीनि[2] । ननु, यद्येवविधो विरोध उच्यते तत्कथमगस्त्यलेहे (हृ चि अ ३।१२८)–"कुडव च पृथग्घृतात्[3] । तैलात्सपिप्पलीचूर्णात्सिद्धशीते च माक्षिकात् ॥" इति तैल घृतमधूना तुल्याशाना प्रयोग ? ब्रूम । केवलाना मध्वादीना समाशानामुपयोगो विरुद्ध , न तु द्रव्यान्तरसयुक्तानाम्[4] । अपि तु द्रव्यान्तरसयुक्ताना तेषा सयोगसस्कारादिवशाद्विशिष्टगुणान्तरोत्पत्तिर्दृष्टा[5] । तस्मादगस्त्यलेहादौ द्रव्यान्तरसयोगादिवशादविरुद्ध एव[6] ।

**आ० र०**–मध्वादीना मिथ संयुक्तानां मानतो विरोधमाह[7]–मधुसर्पिरिति । द्विशस्त्रिश इत्युपलक्षणम्, तेन चतुष्पञ्चशोऽपि ज्ञयम् । उक्त ह्यन्यत्र–"मधुसर्पिर्वसातैलपानीयाना मानविरुद्धाना द्वित्रिचतु पञ्चधामिलिताना षड्विंशतिर्विरुद्धप्रकारा भवन्ति ।" इति[8] ।

**भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः ।**
**मधुपुष्करबीजं च, मधुमैरेयशार्करम्[9] ॥ ४० ॥**
**मन्थानुपानः क्षैरेयो, हारिद्रः कटुतैलवान् ।**

**स०**–भिन्नाशे अपि मध्वाज्ये दिव्यवार्यनुपानेन विरुध्येते । तृतीयार्थे तसिप्रत्यय[1] । अपिशब्दान्न केवल समाश इत्यर्थ । मधु–माक्षिक, पुष्करबीज चैकध्य विरुध्यते । तथा, मधु–माद्वींकं[2], मैरेयं–खर्जूरासव, शार्करं–शर्करया कृत मद्य, एतदेकत्रोपयुक्त विरुध्यते । क्षैरेय –पायसो, मन्थानुपानो विरुद्ध । मन्थोऽनुपान यस्य स एवम् । क्षैरेय इति "क्षीराड्ढञ्" इति ढञ् । हारिद्र –कुप्रसव शाकविशेष. सर्पच्छत्राकारी पीताभास , कटुतैलवान्–सर्षपतैलभृष्टो, विरुद्ध ।

**आ० र०**–मध्वाज्ययोर्दिव्यानुपानाद्विरोधमाह–भिन्नाशे इति । अपिशब्दात्समाशे च ।

मधुपुष्करबीजयोर्विरोधमाह–मध्विति । मधु–माक्षिकम् । पुष्करबीज–पद्मबीजम् ।

मध्वादीना विरोधमाह–मधुमैरेयेति । मधु–क्षौद्रम्, 'माद्वींकम्' इत्यरुणदत्त । मैरेयो–'धान्यासव ' इति चन्द्रनन्दन , 'खर्जूरासव ' इत्यरुणदत्त इन्दुश्च । 'मैरेयो–धातुकीपुष्पगुडधान्यक्षसहित ' इति माधवकार । 'आसवस्य सुरायाश्च द्वयोरप्येकभाजने । सन्धान तद्विजानीयान्मैरेयमुभयात्मकम् ॥' इति जेज्जटो ब्रह्मदेवश्च । 'पैष्टीगुडासवमधुभि पैष्टीमध्वासवगुडैर्वा त्रियोनि –मैरेयं[3] ' इति डल्हण । सर्वमेतत्प्रमाणम्, सर्वेषामाप्तत्वात् शङ्कमानस्यापि[4] विरोधस्य परिहरणीयत्वाच्च[5] । शार्कर –शर्कराकृत[6] मद्यम् । अत्र चकारमनुवर्त्य पद्मोत्तरिकाशाकमनुक्तमपि समुच्चेयम्, चतुर्णा सयोगस्य विरुद्धत्वात् । तथा च चरक ( सू अ २६।८६ )–"पद्मोत्तरिकाशाक शार्करो मैरेयो मधु च सहोपयुक्त विरुद्ध वात चातिकोपयति[7] ।" इति । सङ्ग्रहेऽप्येवमेवोक्तम् । पद्मोत्तरिकाशाक–कुसुम्भशाकम् ।

क्षैरेयस्य मन्थानुपानाद्विरोधमाह–मन्थानुपान इति । द्रवालोडिता सक्तवो–मन्था. । क्षैरेय.–पायस. ।

हारिद्रकटुतैलयोर्विरोधमाह–हारिद्र इति । हारिद्र –पीतवर्णश्छत्राकविशेष. कन्द । कटुतैलवान्–सर्षपतैलभृष्ट ।

**उपोदकाऽतिसाराय तिलकल्केन साधिता ॥ ४१ ॥**

**स०**–उपोदका तिलकल्केन साधिताऽतिसाराय । तादर्थ्ये चतुर्थ्यत्र । अर्थो–निमित्तम्, तस्मै इद–तदर्थम्, तदर्थमेव–तादर्थ्यम् । तेनातीसारकारणमित्ययमर्थो जायते ।

**आ० र०**–उपोदकायास्तिलकल्कसस्कारेण विरोधमाह–उपोदकेति ।

**बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ।**
**भृष्टा वराहवसया सैव सद्यो निहन्त्यसून् ॥ ४२ ॥**

१ 'क्षैरेयम्' क ग । २ 'मादि ।' ठ । ३ 'पचेद्घृतात्' ठ । ४ 'सयोगेन । तेषा' ठ । ५ 'त्तिर्निर्दिष्टा' ट । ६ 'विरोध एव' ठ । ७ 'मानाद्विरो' झ । ८ षड्विंशति प्रकारा यथा–मधुसर्पिषी ।१। मधुवसे ।२। मधुतैले ।३। मधुपानीये ।४। सर्पिर्वसे ।५। सर्पिस्तैले ।६। सर्पिष्पानीये ।७। वसातैले ।८। वसापानीये ।९। तैलपानीये ।१०। इति द्वाभ्या दश । मधुसर्पिर्वसा ।१। मधुसर्पिस्तैलानि ।२। मधुसर्पि पानीयानि ।३। मधुवसातैलानि ।४। मधुवसापानीयानि ।५। मधुतैलपानीयानि ।६। सर्पिर्वसातैलानि ।७। सर्पिर्वसापानीयानि ।८। सर्पिस्तैलपानीयानि ।९। वसातैलपानीयानि ।१०। इति त्रिभिर्दश । मधुसर्पिर्वसातैलानि ।१। मधुसर्पिर्वसापानीयानि ।२। मधुसर्पिस्तैलपानीयानि ।३। मधुवसातैलपानीयानि ।४। सर्पिर्वसातैलपानीयानि ।५। इति चतुर्भि पञ्च । मधुसर्पिर्वसातैलपानीयानि ।१। इति पञ्चभिरेक । एव च षड्विंशति । ९ 'शार्करा ' अ आ क.ग.ञ ठ. ।

१ 'तसि ।' ट । २ 'माक्षीकम्' ख घ झ । ३ 'मैरेय–सुरासवयोरेकस्मिन् भाजने सन्धानम्' इति डल्हण ( सु सू अ १९।१८ टी ) । ४ 'नस्य विरोधस्यापि प' ञ. । ५ 'धस्यापरि' क । ६ 'शर्करोद्धत' ग. । ७ 'चातिप्रकोप' ख.घ झ ।

स०—बलाका—पक्षिजाति, वारुण्या—प्रसन्नया युक्ता, विरुद्धा । कुल्माषै—नातिखिन्नमुद्गादिभिश्च सह विरुध्यते । सैव—बलाका, वराहवसया भृष्टा सद्य—तत्क्षणादेव, प्राणान् मारयति ।

आ० र०—बलाकाया वारुणीयोगात् कुल्माषयोगाच्च विरोधमाह—बलाकेति । अर्द्धस्विन्ना मुद्गादय—कुल्माषा । बलाकाया वराहवसया भर्जनाद्विरोधमाह—भृष्टेति ।

**तद्वत्तित्तिरिपत्राढ्यगोधालावकपिञ्जलाः ।**
**ऐरण्डेनाग्निना सिद्धास्तत्तैलेन विमूर्च्छिताः ॥ ४३ ॥**

स०—तित्तिर्यादय ऐरण्डेनाग्निना सिद्धा, तत्तैलेन—एरण्डतैलेन, विमूर्च्छिता—बहुशो भृष्टा, तद्वत्—बलाकावत् सद्यो जीवितहरा[1] । पत्राढ्यो—मयूर ।

आ० र०—तित्तिर्यादीना संस्कारविशेषाद्विरोधमाह—तद्वदिति । पत्राढ्यो—मयूर । कपिञ्जलो—गौरतित्तिरि । ऐरण्डेन—एरण्डकाष्ठोत्थेन । तत्तैलेन—एरण्डतैलेन । विमूर्च्छिता—भृष्टा । तद्वत्—बलाकावत्, सद्यो घ्नन्ति ।

**हारीतमांसं हारिद्रशूलकप्रोतपाचितम् ।**
**हरिद्रावह्निना सद्यो व्यापादयति जीवितम् ॥ ४४ ॥**

स०—हारीतस्य-पक्षिविशेषस्य, मास हारिद्रशूलके[2] प्रोत—आसक्त, च तत्पाचित च हारिद्राग्निना[3] सद्यो जीवित हन्ति ।

आ० र०—हारीतस्य सस्कारविशेषाद्विरोधमाह—हारीत मासमिति । हारीत—प्रतुदपक्षिविशेष । हारिद्रशूलक—दारुहरिकाष्ठकृत शूलम् । हरिद्रावह्निना—दारुहरिद्राकाष्ठाग्निना ।

**भस्मपांशुपरिध्वस्तं तदेव च समाक्षिकम् ।**

स०—तदेव—हारीतमास, भस्मपाशुपरिध्वस्त समाक्षिक विरुद्धम् । भस्म च पाशुश्च भस्मपाशू,—भूतिरेणू, ताभ्या परिध्वस्त—धूसरितम् । सिद्धसारे चोक्तम्—"न जातु कटुतैलेन भृष्टामयाद्युपोदकाम्[4] । प्रियङ्गुकल्कदिग्धाङ्ग पायस न समाचरेत् ॥" इति ।

आ० र०—हारीतमांसस्य भस्मादिसयोगाद्विरोधमाह—भस्मेति । भस्मना पांशुना वा परिध्वस्त—सद्यो विलुलितम्, मधुयुक्त[5] तदेव—हारीतमास, सद्यो जीवित व्यापादयतीत्यर्थ[6] ।

द्रव्याणामानन्त्यात् प्रतिपदोक्त्याऽशेषविरुद्धसङ्ग्रह कर्तुमशक्य, इति तत्सङ्ग्रहार्थं व्यापि लक्षणमाह—

**यत्किञ्चिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ॥ ४५ ॥**
**विरुद्धम्**

स०—यत्किञ्चित्—अन्नपानमौषध वा, दोषमुत्क्लेश्य—स्वस्थानात्सञ्चलय्य, न हरेत्—बहिर्न निष्कासयेत्, तत् समासत—सक्षेपतो विरुद्धम् ।

आ० र०—अनुक्तविरोधसङ्ग्रहार्थं विरोधसामान्यलक्षणमाह—यत्किञ्चिदिति । यत्किञ्चिद्द्रव्य दोषमुत्क्लेशयति न तु निर्हरति, तत्सर्वं विरुद्धम् । समासत—सङ्क्षेपात् । विस्तरस्तु[1] संयोगादिभेदैरनन्त[2] । शोधनमप्युत्क्लेशयति पर निर्हरति, शमनमपि न निर्हरति पर नोत्क्लेशयति, इति न तयोर्विरुद्धत्वम् ।

**शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ।**

स०—शुद्धिरत्रेष्टा । अत्र—विरुद्धाहारकृते विकारे, शुद्धि—वमनविरेकादिरूपा, इष्टा—श्रेष्ठा । कुपितदोषसमूहस्य वमनादिभिर्निर्हरणात्तन्निर्हारे चारोग्योत्पत्ति[3] । शमो वेति । न केवल शुद्धिरिष्टा, शमश्चेष्ट । कै? तेषा वैरोधिककोपितदोषाणा[4] तत्कृताना वा विस्फोटादीना विकाराणा, विरोधिभि—प्रतिपक्षभूतैरोषधै[5] ।

आ०र०—अथ विरुद्धान्नपानजानां व्याधीना प्रतीकार । तत्र उत्पन्नाना प्रतीकारमाह—शुद्धिरिति । शुद्धि—वमनविरेचनादिका । अत्र—विरुद्धान्नजेषु व्याधिषु । ये तु शुद्धिं नार्हन्ति तेषा शम—शमन, प्रतीकार इष्ट । कै.? तद्विरोधिभि,—तस्य—विरुद्धान्नस्य, विरोधिभि—प्रतिपक्षभूतैराहारविहारौषधै ।

न च शोधनशमनरूप एवोपक्रमोऽत्रेत्याह—

**द्रव्यैस्तैरेव वा पूर्वं शरीरस्याभिसंस्कृतिः ॥ ४६ ॥**

स०—तैरेव—वैरोधिककुपितदोषप्रतिपक्षभूतैर्द्रव्यै, पूर्वं—प्रथम, या शरीरस्याभिसस्कृति, सा च विरुद्धाहारकृते[6] विकारे प्रशस्तेति । यथा,—माक्षिकहरीतक्यादिना पित्तश्लेष्महरणौषधेन सन्ततशीलनादभिसस्कृते देहे पित्तश्लेष्मकर विरुद्धमुपयुक्तं सद्विकर्तुमशक्तम्[7] । एतदुक्त भवति,—विरुद्धप्रतिपक्षगुणवता द्रव्येण देहस्तथा दार्ढ्य माहितो यथा विरुद्धमपि द्रव्य विकारं कर्तु नालम् ।

आ० र०—अनुत्पन्नानामुत्पत्तिप्रतिबन्धहेतु प्रतीकारमाह—द्रव्यैस्तैरेवेति । तैरेव—विरुद्धान्नविरोधिभिरेव । पूर्वं—विरुद्धान्नसेवनात्प्राक् । अभिसंस्कृति—तद्गुणभावितत्वम् । तै—विरुद्धान्नैरेव शरीरस्याभिसस्कृतिरिति व्याख्याने "सात्म्यमल्प च भोजनम्" इति वक्ष्यमाणेन सात्म्येन पौनरुक्त्यम् ।

**व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम्[8] ।**
**विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ४७**

स०—व्यायामो विद्यते येषामिति "अर्शआदित्वात्" अच् । वयःस्था—तरुणा । बलेन शालितु—श्लाघितुं शील येषा ते—बलशालिन । स्निग्धा—स्निग्धरूक्ष्याहारसात्म्या । व्यायामिनां विरोध्यपि भोजन न पीडायै—न रोगोत्पत्तये । एव स्निग्धादीनां

---

१ 'सद्योजीवितहरा ।' ङ । २ 'हारिद्रव' ख घ । ३ 'ना सिद्ध स' ट । ४ 'भृष्टमद्याल्कपोतकम्' ट. । ५ 'मध्वक्त' ख घ. झ । ६ 'दयति ।' ख घ झ ।

१ 'विस्तरतस्तु' ग घ । २ 'सयोगभेदै' क ञ । ३ 'निर्हरणाच्चारोग्यानुवृत्ति ।' ट । ४ 'विरोधिकुपितदो' ट । ५ 'विरुद्धप्रतिपक्ष' ङ । ६ 'हारे प्रश' ङ । ७ 'विरुद्ध मुक्त स' ङ. । ८ 'व्यायामिस्निग्ध' हेमाद्रि ।

प्रत्येकं सम्बन्धः कार्यः । केचित् "व्यायामि" इति पठन्ति । तथा, विरुद्धमप्यन्नं यदभ्यासात् सात्म्यं-सात्मीभूतं, तथा, अल्पं-अल्पमात्रया च यद्भोजनं, तच्च विरुद्धमपि न पीडायै इति योज्यम् ।

आ० र०-व्यायामादीनामनुत्पत्तिहेतुत्वमाह-व्यायामीति । व्यायामिनो-व्यायामनित्याः । स्निग्धाः-स्नेहभावितशरीराः । वयःस्थाः-तरुणाः । बलशालिनः-सहजबलयुक्ताः । सहात्मना भूतं-सात्म्यम्, आत्मनः सहायभूतमनुकूलं सुखावहमित्यर्थः । तच्च द्विविधं,-कृत्रिममकृत्रिमं च । तत्र यदभ्यासेन क्रियते तत्-कृत्रिमम् । उक्तं च सङ्ग्रहे ( सू. अ. ९ )-"अहितान्यपि चान्येषामभ्यासादुपशेरते ।" इति । अकृत्रिमं तु द्विविधं,-निरुपाधिकं सोपाधिकं च । तत्र दोषादिनिरपेक्षं-निरुपाधिकम्, तद्दोषसात्म्याख्यम् । यदाह चरकः-"उपशेते यदौचित्यादोकसात्म्यं तदुच्यते ।" इति । दोषादिसापेक्षं-सोपाधिकम् । तत्र दोषादिविपरीतगुणत्वमुपाधिः । यदाह खारणादिः-"दोषप्रकृतिदेशर्तुव्याधीनां स्वगुणैः पृथक् । विपरीतगुणैः सात्म्यं तुल्यं चासात्म्यमुच्यते ॥" इति । असात्म्यं तु-यथायथं सात्म्यविपरीतम् । तत्तु कृत्रिमं चिरपरित्यागेन क्रियते । सोपाधिके दोषादितुल्यगुणत्वमुपाधिः । सात्म्यासात्म्ये एव निरुपाधिके पथ्यापथ्ये उच्येते । सोपाधिके त्वौषधानौषधे । तत्र विरुद्धभोजनस्य निरुपाधिकासात्म्यस्य कृत्रिमत्वेन सोपाधिकत्वेन वा सात्म्यत्वे सति न पीडाकरत्वम् । निरुपाधिकसोपाधिककृत्रिमाणामुत्तरोत्तरं बलवत्त्वात् । किमत्र प्रमाणम् ? इति चेत्, निरुपाधिकात्सोपाधिकं बलीय इत्यत्र तावत्सङ्ग्रहवचनं प्रमाणम् ( सू. अ. ९ )-"दोषादिवैपरीत्येन हरते रोगिणां रुजम् । ऐकध्यं दधिदुग्धादियोजना न विरुध्यते ॥" इति । ताभ्यामपि कृत्रिमं बलीय इत्यत्र ऋतुचर्योक्तऋतुसन्धिक्रमः । तत्र हि पूर्वर्तुचर्याया उत्तरर्तुसम्बन्धात्सोपाधिकमसात्म्यत्वम् । पूर्वर्तुशीलनाच्च कृत्रिमं सात्म्यत्वम् । उत्तरर्तुचर्यायास्तु तत्सम्बन्धात्सोपाधिकं सात्म्यत्वम् । पूर्वर्तावशीलनाच्च कृत्रिममसात्म्यत्वम् । तत्र कृत्रिमाभ्यां सात्म्यासात्म्याभ्यां सोपाधिकयोरसात्म्यसात्म्ययोर्बाधं मत्वा तन्निवृत्त्यर्थमृतुसन्धिक्रम उक्तः । देशकालप्रकृतिदोषव्याधिसात्म्यानामुत्तरोत्तरं बलवत्, उत्तरोत्तरमेवान्तरङ्गत्वात् । अल्पं-हीनमात्रम् । ननु, अल्पमप्यल्पां पीडां करोत्येव । तत्कथं न पीडायै ? सत्यम् । करोत्येव । किन्त्वसावल्पत्वेनानभिव्यक्तत्वादसद्वदुपचर्यते, अनुदरा कन्येतिवत् । असकृदुपयुज्यमाने तु तस्मिन्नभिव्यज्यत एव ।

अथ यद्यपथ्यमपि सात्म्यतां प्राप्तं तत्किं त्याज्यं न वा ? कथं च त्याज्यम् ? कथं च पथ्यं भोज्यम् ? इत्याह—

**पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ।**
**निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम् ॥ ४८ ॥**

स०-अपथ्यं-अहितमन्नं पानं वा यल्लङ्घनप्लवनजागरणस्वप्नादिकं वा चेष्टितमहितमभ्यस्तं तत् पादेन-चतुर्थांशेन त्यजेत्, अहितफलत्वात् । तद्धि शरीरोचितमप्यपथ्यत्वादुदर्के दोषाय सम्पद्यते, न गुणाय । यदि तु तदपथ्यमभ्यस्तं तथा

१ असौ-पीडा । २ 'अथ पथ्यापथ्ययोः सेवने त्यागे च विधिमाह' ट । ३ 'योज्यम्' ट । ४ 'स्त-शीलितं सत् पा' ट । ५ 'दर्कदोषा' ठ । उदर्के-परिणामे । ६ अस्याग्रे 'यदि तु तदपथ्यं अभ्यस्तं तथा सात्म्यीभूतं यस्मिंश्चतुर्थांशेनापि त्यक्तुं न शक्यते, तदा पादपादेन त्यजेत् । केचिदन्यथा व्याख्यानयन्ति,-किमपथ्यमभ्यस्तं पादेन त्यजेदथवा पादपादेन ? केवलं भिन्नमन्यनिरपेक्षम् ? आहोस्विदन्यापेक्षम् ? अत आह-एकद्वित्र्यन्तरीकृतम् । एकद्वित्रिभिरहोभिः समस्तापथ्यनिवर्तनोपचिह्नितैरन्तरीकृत्य-व्यवधानमुत्पाद्य, तदपथ्यं पादेन त्यजेत् पादपादेन वा,-अथवा । पथ्यमप्येकद्वित्रिभिरहोभिः समस्तपथ्योपयोगिनिवर्तनोपचिह्नितैरन्तरीकृत्य पादेन पादपादेन वा क्रमेण निषेवेत-शीलयेत् । अयमर्थः,-अहितस्य सात्म्यस्यैकं भागं त्यक्त्वा त्रिषु शेषेष्वहितभागेषु एकमनुचितस्य हितस्य भागं प्रक्षिपेत् । ततो द्वितीयेऽह्नि सर्वमेवापथ्यं भुञ्जीत । एवमपथ्यमेकान्तरितं भवति । तृतीयचतुर्थयोः पुनरह्नोरपथ्यभागत्रयं पथ्यैकभागसम्मिश्रं भुञ्जीत । पञ्चमेऽह्नि सर्वमपथ्यम् । एवं द्व्यन्तरमपथ्यं भवति । षष्ठसप्तमाष्टमेषु दिनेषु अपथ्यभागत्रयं पथ्यभागसम्मिश्रं सेव्यम् । नवमेऽह्नि सर्वमपथ्यम् । एवं त्र्यन्तरीकृतमपथ्यं भवति । तथा, अपथ्यस्य भाग एकोऽपचितः स एव पथ्यस्य प्रक्षिप्तः, एवमेवापथ्यस्य द्वितीयो भागस्त्याज्यो नवभिर्दिनैः, पथ्यस्यापि द्वितीयो भागः सेव्यः । तथा, अन्यैर्नवभिर्दिनैः पूर्ववदपथ्यस्य त्रयो भागास्त्याज्याः पथ्यस्य चाहार्याः । तथा, चतुर्थो भागोऽपथ्यस्यान्यैर्नवभिर्दिनैस्त्याज्यः पथ्यभागाश्चत्वारः सेव्याः । एवं षट्त्रिंशतिदिनैस्त्यागोपादाने भवतः । द्वितीयपक्षस्तु-अन्येऽन्यथा व्याख्यानं कुर्वन्ति,-प्रथमेऽह्नि पादमेकमपथ्यात् त्यक्त्वा पथ्यात्तमेव पादं दत्वा तदेकमहरास्ते । ततो द्वितीयमहः सर्वमपथ्यमुपयोज्यम् । एवमेकान्तरितं भवति । ततस्तृतीयेऽह्नि पादद्वयमपथ्यात् पादद्वयं पथ्यान्निषेव्यम् । ततश्चतुर्थमहः पञ्चमं च सर्वमपथ्यं भुक्त्वा गमनीयम् । एवं द्व्यन्तरितं भवति । पुनः षष्ठेऽह्नि पादमेकमपथ्यात् त्रीन् पादान् पथ्याद्भुञ्जीत । ततः सप्तमाष्टमनवमसङ्ख्यातानि सर्वमपथ्यम् । एवं त्र्यन्तरितं भवति । ततो दशममहः सर्वं पथ्यम् । तृतीयः पक्षः-केचिदेवं व्याख्यानं कुर्वन्ति,-अहितस्य सात्म्यस्यैकं भागं त्यक्त्वा त्रिषु वै शे-

१ 'भव' ख घ झ । २ 'तदेकसा' ग । ३ 'त्यादेकसात्म्य' ग । ४ 'त्वनुपाधि'ञ । ५ 'गुणः सा'ख ग घ झ । ६ 'वाऽसात्म्य' ख घ झ । ७ 'यथाकथं' ख घ झ । ८ 'तत्र' ख घ झ । ९ 'हरन्ती' क झ ञ स मू. । १० 'ग्धादेर्योजना' क ग ञ । ११ 'र्त्र स' ख घ झ । 'र्तुचर्यास' ञ । १२ 'सात्म्यरूपत्वम्' क ग ञ । १३ 'भ्यां सोपाधिकयोर्बाध' ख घ झ । १४ 'अल्पमिति हीन' क ग ञ । १५ 'अल्पमात्रमल्पा'क ञ । 'अल्पमात्रमप्य' ग ।

सात्म्यीभूत यस्मिंश्चतुर्थांशेनाऽपि त्यज्यमानेन शरीरबाधा शङ्क्यते वह्निमान्द्याद्वा, तदा पादपादेन–षोडशांशेन वा त्यजेत् । इति वाशब्दार्थः । तेन तुल्य वर्तते–तद्वत्,–तेनैव क्रमेण पादेन पादपादेन वा, हित निषेवेत–शीलयेत् । कथमेतद्द्वयमप्यपथ्यपथ्यरूप त्याज्य निषेव्य च ? इत्याह–एकेत्यादि। एकश्च द्वौ च त्रयश्च तैरन्तरीकृतम् । एकद्वित्रिभिरन्नकालैर्व्यवधान कृत्वा [ यथा भवति तथा ] अपथ्य पादेन पादपादेन वा त्यजेत् । तद्वत् हित सेवेत । एकद्वित्र्यन्तरीकृतमिति क्रियाविशेषणत्वादत्र नपुसकलिङ्गत्वम् । अधुनैतदेव स्पष्टीकृत्योच्यते । अपथ्यात्पाटलव्रीह्यादेरभ्यस्तात्पादमेक त्यक्त्वाऽनुचितात्पथ्याद्रक्तशाल्यादेस्तमेव पाद दत्त्वा चतुष्पात्त्व सम्पाद्य योज्यम् । एवमन्नकालमेकमतिवाहयेत् । एव पादेनापथ्यमभ्यस्त त्यक्त भवति । पथ्य चानुचित निषेवित भवति । ततो द्वितीयेऽन्नकाले सर्वमपथ्य योजनीयम् । एवमेकेनान्नकालेनापथ्यपादोऽन्तरीकृत । ततस्तृतीयेऽप्युचितादपथ्यात् पादद्वयमपास्यानुचितात्पथ्यात् पादद्वयमुपयुज्य, ततश्चतुर्थे सर्वमपथ्य भोज्य पञ्चमे च । एवमन्नकालद्वयेन पथ्यपादद्वयसहितमपथ्यपादद्वयमन्तरीकृतम् । तत षष्ठेऽन्नकाले पादमुचितादपथ्यात् पादत्रयमनुचितात्पथ्याद्भुक्त्वा, सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्य भोज्यम् । एवमन्नकालत्रयेणापथ्यमन्तरीकृतम् । ततो दशमेऽन्नकाले सर्व पथ्य सेवनीयम् । एव पादपादेनाप्ययमेव क्रम । स्पष्टार्थ च दिक्प्रदर्श्यते । यथा–यवकादे षोडशाश त्यक्त्वाऽनुचिताच्छाल्यादे पथ्यात्षोडशाशमेव दत्त्वा चतुष्पात्त्व सम्पाद्य भोज्यम् । एवमपथ्यमभ्यस्त पादपादेन त्यक्त भवति पथ्यं चानुचित निषेवितं भवति । द्वितीयेऽन्नकाले सर्वमपथ्य सेव्यम्। एवमेके(नान्नकाले)नापथ्यषोडशाशोऽन्तरीकृत । ततस्तृतीयेऽप्युचितादपथ्यात् पादपादद्वयमपास्यानुचितात्पथ्यात् पादपादद्वय दत्त्वा चतुष्पात्त्व सम्पाद्य सेव्यम् । ततश्चतुर्थे पञ्चमे चान्नकाले सर्वमपथ्य भोज्यम् । एव कालद्वयेन पादपादद्वयमपथ्यस्यान्तरीकृतम् । तत षष्ठेऽन्नकालेऽनुचितात्पथ्यात् पादपादत्रयमुचितादपथ्यात् पादपादास्त्रयोदशेति भोज्यम् । तत सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्य भोज्यम् । एव कालत्रयेणान्तरीकृतम् । ततो दशमेऽन्नकाले पथ्यादनुचितात् पादपादाश्चत्वार , अपथ्यपादपादा द्वादशेति भोज्यम् । तत एकादशेऽन्नकाले सर्वमपथ्य भोज्यम् । तत एकेनान्नकालेनान्तरीकृतम् । एवमन्नकालद्वयत्रयान्तरित च तावद्योज्यम्, यावत्पथ्यस्य षोडशपादा सेव्यतया सम्पद्यन्ते ।

आ० र०–विरुद्धमपि सात्म्य न बाध्यते, किं पुनरविरुद्धम् ? अत सात्म्यीकरणमाह । तत्र सात्म्यीकरणे क्रममाह–पादेनेति । अभ्यस्त–अभ्यासात्सात्म्यता यात, यदपथ्य तत् पादेन–चतुर्थांशेन, पादपादेन–षोडशांशेन वा त्यजेत् । तद्वत्–अपथ्यवत्, हित–पथ्य, निषेवेत–यावताऽशेनापथ्य त्यक्त तावतांऽशेन पथ्य भजेत्, नित्यसेव्यस्याहारराशेर्यदपथ्येन न्यूनत्व तत्पथ्येन पूरयेदित्यर्थ । कथ त्यजेत् ? एकद्वित्र्यन्तरीकृतमिति,–एकद्वित्रिभिर्दिवसैरन्तरीकृत–विजातीयभोजनेन व्यवहितम् । एतदुक्त भवति,–यदा पादेन त्यागः क्रियते तदा प्रथमेऽह्न्यपथ्यस्य पादास्त्रय , पथ्यस्यैक । द्वितीयेऽहनि चत्वारोऽप्यपथ्यस्य । तृतीये प्रथमवत् । इत्येकान्तरीकरणम् । चतुर्थेऽहनि द्वौ पादावपथ्यस्य, द्वौ पथ्यस्य । पञ्चमषष्ठयोस्तृतीयवत् । सप्तमे चतुर्थवत् । इति द्व्यन्तरीकरणम् । अष्टमे त्वपथ्यस्यैक , पथ्यस्य त्रय । नवमदशमैकादशेषु सप्तमवत् । द्वादशेऽष्टमवत् । इति त्र्यन्तरीकरणम् । त्रयोदशे चत्वारोऽपि पथ्यस्य । चतुर्दशे द्वादशवत् । पञ्चदशे त्रयोदशवत् । इति पुनरेकान्तरीकरणम् । द्व्यन्तरत्र्यन्तरीकरण पुनर्नास्ति, चतुर्णामपि पादाना पूर्णत्वात् । षोडशाशपक्षे त्वेकद्वित्र्यन्तरीकरणस्य पञ्चकृत्व आवृत्ति । तत एकमेकान्तरीकरणम् । एव त्रिषष्ट्या दिवसै षोडशांशा पूर्यन्ते । अत्र यद्यपि व्यवधायकविशेषो नोक्त , तथाऽपि पूर्वस्मिन्नन्तरे यद्व्यवधेय, तदेवोत्तरस्मिन् व्यवधायक ज्ञेयम् । एवमपथ्यत्यागे पथ्यसेवायां च क्रम आदृतो भवेत् । यदि त्वपथ्यमेव वा सर्वत्र व्यवधायक क्रियते, तदा न क्रम आदृतो भवेत् । क्रमश्चात्र प्रधानम् । अन्तर च दिनैरेव, न भोजनकालै । उक्त च तन्त्रान्तरे–"अपथ्य सात्म्यमप्यन्न चेष्टां वा पादशस्त्यजेत् । भजेच्च पादश पथ्यमेकद्वित्रिदिनान्तरम् ॥" इति । चतुर्भागषोडशभागयोरधरोत्तरकल्पनानिषेधपरत्वात् पञ्चषट्सप्तभागादिकल्पनाना न निषेध । अतस्ता अप्यवस्थानुसारत स्वयमूह्या । यद्यप्यत्र वाक्ये भट्टारकहरिश्च-

षेष्वहितभागेषु मध्ये एकमनुचितस्य पथ्यस्य भाग प्रक्षिपेत् । स तावदभ्यसनीयो यावत्सात्म्यीभूत । एवमहितस्यैकान्तरत्व हितस्य च त्र्यन्तरत्व भवति । यस्मादहितपादोऽप्येकस्त्यज्यते हितस्यापि त्रीन् भागास्त्यक्त्वैक पाद प्रक्षिप्यते । एव द्व्यन्तरे द्वौ द्वौ भागावहितहितयोस्त्यक्त्वा द्वौ द्वौ मिश्रयितव्यौ । तौ तावदभ्यस्यौ यावत्सात्म्यीभूतौ । एव त्र्यन्तरे त्रीन् भागानहितस्योचितस्य त्यक्त्वा हितस्य त्रयोऽनुचितस्य भागा एकस्मिन्नहितभागे प्रक्षेप्या । ते तावदभ्यस्या यावत्सात्म्यीभूता । अनन्तर हितमेव चतुर्भागै सेव्यम्। मुनिनाऽप्युक्तम्–"तस्मादहितमभ्यस्त क्रमेण परिहारयेत् । पथ्य चानुचित वाऽपि क्रमेणाभिप्रवर्धयेत् ॥ अपथ्यपाद क्षपयन् पथ्यपादमपि क्षिपेत् । पक्षाद्विंशतिरात्राद्वा पादपादमत परम् ॥" इति ।' इति ट पुस्तकेऽधिको विचारार्हश्च पाठ ।

१ 'वा' ट । २ [ ] इति ड पुस्तक एव । ३ 'ति क्रियाविशेषण क्रियाविशेषणत्वाच्च नपु' ट. । ४ 'कृत्वो' ट.ठ. । ५ 'योज्य' ट ड. । ६ 'सेव्यम्' ड ।

१ 'गत' ख घ ङ । २ 'कृत यथा भवति' ख घ ङ. । ३ 'थ्यपादा' क ञ । ४ 'एकान्त' क ञ । ५ 'शाशेन' क. । ६ 'एव ह्यप' ङ । ७ 'मेव पथ्यमेव वा' ग । ८ 'चतुर्थभाग' क.ञ. । ९ 'स्यां अनु' क ग ञ. । १० 'यदप्य' क.ग.ञ. ।

न्द्रादिभिर्बहव पक्षा दर्शिता , तथाप्ययमेव पक्षो ज्याया नित्यस्माभिर्दर्शित । ज्यायस्त्व त्वस्य वाक्यस्यार्जवेनैव प्रतीयमानत्वात् चतुर्दशाहर्तुसन्धिकरणेनाचार्यस्याभिप्रेतत्वाच्च ।

एवमनेन क्रमेणापथ्यदोषास्त्यक्ता पीडायै न भवन्ति, पथ्यगुणाश्च सवर्धिता स्थिरता प्राप्नुवन्ति । इत्यत आह—

**अपथ्यमपि हि त्यक्त शीलितं पथ्यमेव वा ।**
**सात्म्यासात्म्यविकाराय जायते सहसाऽन्यथा ४९**

**स०**–हि–यस्मात्, सहसा–क्रममिममनालोच्य, अन्यथा उक्तविध्यतिक्रमेण, अपथ्यमपि त्यक्त सात्म्यविकाराय जायते । पथ्यमेव वा सहसा शीलितमसात्म्यविकाराय जायते । सात्म्यासात्म्याभ्या विकार–सात्म्यासात्म्यविकार, तस्मै "क्लृपि सम्पद्यमाने" इति चतुर्थी ।

**आ० र०–अक्रमेण सात्म्यीकरणे दोषमाह–अपथ्यमपीति । हि–यस्मात्, अन्यथा–उक्तक्रमादन्येन प्रकारेण, त्यक्तमपथ्यमपि, शीलितं पथ्यमपि, सहसा विकाराय–विकारकारणाय जायते । कुत ? सात्म्यासात्म्यम् ,—यत अपथ्य हि सात्म्यम्, पथ्य ह्यसात्म्यम्, अतस्तयोरक्रमेण त्यजनभजने रोगाय भवत इत्यर्थ ।**

क्रमेण त्वपथ्यत्यागपथ्यशीलने विधीयमाने गुणाय स्यातामिति दर्शयति—

**क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ।**
**सन्तो यान्त्यपुनर्भावमप्रकम्प्या भवन्ति च ॥ ५० ॥**

**स०**–दोषा –अपथ्याभ्यासजा , क्रमेण–पूर्वोक्तेन, अपचिता –क्षयं नीता , गुणाश्च–पथ्योपयोगजा , क्रमेण–पूर्वोक्तेनैव, उपचिता –वृद्धिं नीता सन्त , पुरुषाणा यथासङ्ख्यमपुनर्भावं यान्ति दोषा । गुणाश्चाप्रकम्प्या –स्थिरा भवन्ति ।

**आ० र०–क्रमेण सात्म्यीकरणे गुणमाह–क्रमेणेति । सन्तो यान्त्यपुनर्भावमिति । गुणो द्विविध ,–दोषापचयो गुणोपचयश्च । तत्र क्रमेण–सात्म्यीकरणक्रमेण, दोषा अपचीयन्ते गुणाश्चोपचीयन्ते । तत्र दोषा क्रमापचिता सन्तोऽपुनर्भाव यान्ति,–यथा पुनर्नोत्पद्यन्ते तथा नश्यन्तीत्यर्थ । गुणास्तु क्रमेणोपचिता सन्तोऽप्रकम्प्या भवन्ति,–यथा पुनर्न क्षीयन्ते तथा वर्द्धन्त इत्यर्थ ।**

साम्प्रतमहिताहारसेवन सदा त्याज्यमिति सयुक्तिं दर्शयति–

**अत्यन्तसन्निधानानां दोषाणां दूषणात्मनाम् ।**
**अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति ॥ ५१ ॥**

**स०**–दोषाणामहितै –आहारादिभि , दूषणं कर्तुं विद्वान्–पण्डितो, नार्हति–न युज्यते । किम्भूतानाम् ? अत्यन्त–अतिशयेन, सन्निधान–निकटत्व, येषा दोषाणा त एव तेषाम् । तथा, दूषणात्मना–दूषणस्वभावानाम् ।

**आ० र०–अपथ्यस्य सात्म्यीकरण निषेधति–अत्यन्तेति । यद्यपि सात्म्यीभूतमपथ्य दोषान्न दूषयति, तथापि यावता कालेन तत्सात्म्यीभवति तावन्त काल दूषयत्येव । दूषण च दोषाणामल्पमपि विद्वान्–आत्महितज्ञ पुमान्, अहितै.–विरुद्धै. कारणभूतै , कर्तुं नार्हति । कथम्? भूय.–पुन , ते हि दोषा प्रागेव दूषणात्मानो–दूषकत्वस्वभावा अत्यन्तसन्निधानाश्च,–दूष्यस्य–शरीरस्यात्यन्त सन्निहिता. । तस्माच्छरीर रक्षता विरुद्ध न सात्म्यीकर्तव्यम् ।**

एतत्प्रसङ्गेन चेदमाह—

**आहारशयनाब्रह्मचर्यैर्युक्त्या प्रयोजितैः ।**
**शरीर धार्यते नित्यमागारमिव धारणैः ॥ ५२ ॥**

**स०**–आहार –अन्नपानसेवा । शयन–स्वप्न । अब्रह्मचर्य–स्त्रीणा सेवा । आहारादीना द्वन्द्व । एतैर्युक्त्या प्रयोजितै शरीरं सतत धार्यते । किमिव कै ? आगारं–गृहमिव, धारणै –स्तम्भैर्यथा ।

**आ० र०–अविधिसेवनादिभ्योऽन्नपान रक्षेदित्याह–आहारेति । आहार –अन्नपानसेवा, शयन–निद्रा, अब्रह्मचर्य–सम्भोग , तैर्नित्य युक्त्या प्रयोजितै. शरीर धार्यते । धारणै.–स्तम्भैरागारमिव । युक्ति.–शास्त्रोक्तप्रकार । धारण च–अन्नपानसुखपरिणामद्वारेण ।**

**आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते ।**

**स०**–तत्र–तेषु त्रिषु मध्यात्, आहारो वर्णित –ऋतुचर्याया द्रवान्नस्वरूपविज्ञानीययोश्च । तत्र तत्र च–शास्त्रभागे ज्वरचिकित्सादौ च, वक्ष्यते ।

**आ०र०–तत्राहारमतिदेशेनाह–आहार इति । तत्राहार , तत्र तत्र–ऋतुचर्यादौ वर्णित.। वक्ष्यते च–मात्राशितीयादौ ।**

शयनाब्रह्मचर्ययोस्त्विहैव विधिं वक्तुकाम आह—

**निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ॥५३॥**
**वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ।**

**स०**–निद्रायत्त–निद्राधीनम् । सुख–आरोग्यम् । दु खं–रोगं । तथा, पुष्ट्यादि च । जीवित न च जीवितमिति सम्बन्ध । अजीवितेन–मरणेन योगो भवतीत्यर्थ ।

**आ० र०–अथाविधिशयनादन्नपानरक्षा । तत्र निद्रां स्तौति–निद्रायत्तमिति । निद्रायत्त–निद्राधीनम् । वृषता–शुक्रवृद्धि । क्लीबता–शुक्रक्षय । न चेति नञो जीवितेन सम्बन्ध , अजीवित मरणमित्यर्थ. ।**

१ 'क्षा सद' क ञ । २ 'सात्म्य विका' अ हेमाद्रि. । ३ 'अन्यथैव' ट ठ । ४ 'यथोक्तक्र' ग । ५ 'कारण' क । 'करण' ग । ६ 'पथ्यमसात्म्यम्' क ग ञ । ७ 'नाप्नुवन्ति पुन' आ क ञ ठ । ८ 'ते' ठ । ९ 'क्रमेणेति' ख.घ.झ । १० 'क्रमेणैव' ख घ.झ । ११ 'युक्ति' ड. ।

१ 'दोष न दू' क ग ञ । २ 'निषेवितै ' ख घ ड झ । ३ 'नादेभ्यो' ग । ४ 'पाने' घ । ५ 'लक्ष्यते' क ञ । ६ 'तत्र–आहारशयनाब्रह्मचर्यमध्ये तत्र–द्रवान्न' ड । ७ 'शास्त्रकारो० वक्ष्यति' ठ । ८ 'र्यादावुपवर्णित ' क.ग ञ. । ९ 'रोगजातम्' ट. ।

साम्प्रत दुष्टनिद्रा निर्दिशति—

**अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ॥ ५४ ॥**
**सुखायुषी पराकुर्यात् कालरात्रिरिवापरा ।**

**स०**–अकाले निषेविताऽति च निषेविता न च निषेविता निद्रा सुख–आरोग्यलक्षणम्, आयुश्च–जीवितम्, ते सुखायुषी पराकुर्यात्–नाशयेत् । केव ? अपरा कालरात्रिरिव ।

**आ० र०**–एकस्या निद्राया परस्परविरुद्धसुखदु खादिहेतुत्वायोगादौपाधिकभेदमाश्रित्य विभागमाह–अकाल इति । अकाले सेविता–मिथ्यायोगरूपा, अतिप्रसङ्गात्सेविता–अतियोगरूपा, न च सेविता–हीनयोगरूपा, निषेविता–नियतत्वेन सेविता सम्यग्योगरूपा चेति चतुर्धा निद्रा । तत्र परा–चतुर्थी निद्रा, सुखायुषी कुर्यात् । अपरा–त्रिविधा असम्यग्योगरूपा,कालरात्रिरिव–सहारप्रवृत्तमहाकालीव,सुखायुषी हन्यादित्यर्थ । सुखायुषोराद्यन्तयोर्ग्रहणात् पाणिनिप्रत्याहारवत् सुखपुष्टिबलवृषताज्ञानजीवितानि गृह्यन्ते । “कालस्वभावामयचित्तदेहखेदै कफागन्तुतमोभवा च । निद्रा बिभर्ति प्रथमा शरीर पाप्माऽन्तगा व्याधिनिमित्तमन्या ॥” इति सङ्ग्रहोक्तानां ( सू अ ९ ) सप्तानां चतसृष्वेवान्तर्भाव ।

अथ निद्रागुणप्रसङ्गेन तत्प्रतिपक्षभूतस्य जागरणस्यापि गुणमाह—

**रात्रौ जागरणं रूक्षं, स्निग्धं प्रस्वपनं दिवा ॥ ५५ ॥**
**अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ।**

**स०**–अपिशब्दावत्र सामर्थ्यलब्धौ बोद्धव्यौ । तेन रात्रावपि जागरण रूक्षम्, दिवा त्वाग्नेयमत्यर्थं रूक्ष कालेनाहितबलत्वात् । तथा, प्रस्वपन दिवाऽपि स्निग्धम्, रात्रौ तु सौम्ये कालेऽतिशयेन स्निग्धमित्यवतिष्ठते । अपिशब्दाभ्यामन्तरेण तु रात्रावेव जागरण रूक्षम्, दिवा तु स्निग्धमित्यर्थो जायते । व्यवच्छेद्यफलत्वाद्वाक्यानाम् । एव दिवस एव स्निग्ध प्रस्वपनम्, रात्रौ तु रूक्षमिति । न चैतद्युज्यते । यदि जागरण सदा रूक्ष नाभविष्यत्, तत्कथमिदमुपपत्स्यते ? “बहुमेद कफा स्वप्युः स्नेहनित्याश्च नाहनि । विषार्त कण्ठरोगी च नैव जातु निशास्वपि ॥” इति । एषा ह्यपतर्पणमेव हितम् । यच्चापतर्पण तदवश्य रूक्षम् । तस्मादेतैरपतर्पणस्वभाव जागरणमेव सेव्यम् । तथा, “ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावत । दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि स ॥ मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः । क्रोधशोकभयै क्लान्तान् श्वासहिध्मातिसारिण ॥ वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान् । अजीर्ण्यभिहितोन्मत्तान् दिवा स्वप्नोचितानपि ॥” तदेतेषा सन्तर्पणात्वात्सन्तर्पणमेव हितम् । यच्च सन्तर्पण तदवश्य स्निग्धम् । तस्मादेते सन्तर्पणस्वभावमेव सदा प्रस्वपन सेव्यम् । एव च पूर्वमेव व्याख्यान युक्तम् । प्रस्वप्नजागरणक्रिययोरद्रव्ययोरपि रूक्षस्निग्धत्वमुपचारादुपपन्नम् । यथा,–रूक्ष द्रव्य गुग्गुल्वादि कफमेद प्रभृतीन् सौम्यान् भावान् क्षपयति, तथैव यदा जागरणमपि तत्क्षपयद्दृष्ट तदा तद्रूक्षकार्यकरणाद्रूक्षमपि रूक्षमित्युपचर्यते । तथा, प्रस्वपनादर्वाक् कफमेद प्रभृतीनां सौम्याना भावाना स्वहेतोरुत्पादस्तथा नोपलभ्यते, यथा प्रस्वपनादनन्तरम् । तस्मात्प्रस्वपनमस्निग्धमपि स्निग्धमित्युपचर्यते । प्रचल इवाचरतीति क्यङन्तान्निष्ठा । आसीनस्य–उपविष्टस्य, प्रचलायित–अवघूर्णित,–आसीनप्रचलायितम्, न तु प्रस्वपन सर्वसर्विकया । येन स्नेहनहेतु स्यात् । रूक्षकार्याकरणादरूक्षम् । अनभिष्यन्दि तु विशेषेण । आसीनप्रचलायितं पुनरीदृग्रूपमित्यर्थ ।

**आ० र०**–चतुर्विधाया स्वरूपमाह–रात्राविति । रात्रौ जागरण–कालेऽप्यशयन,हीनयोगाख्यम् । तद्रूक्ष–वातव्याधिहेतु । दिवा प्रस्वपन–अकाले शयनम् । तच्च कालेऽतिसुप्तस्यातियोगाख्यम्, अकाले सुप्तस्य मिथ्यायोगाख्यम्,तदुभयमपि स्निग्ध–कफपित्तव्याधिहेतु । आसीनप्रचलायित–काले शयन, सम्यग्योगाख्यम् । तद्ध्यासीनप्रचलायितस्य भवति । स हि सुखोपविष्ट शयन यदैव चल इवाचरितुमारभते, तदैव स्वपिति । न त्वनुदीर्णा निद्रामुदीरयति, नाप्युदीर्णा धारयति । तच्च न रूक्षम्, नापि स्निग्धम् । उक्त च खारणादिना–“इन्द्रियातिश्रमाद्रूक्षो वातलो जागरो निशि । तदालस्याद्दिवास्वप्न स्निग्ध पित्तकफोल्बण ॥ आसीनप्रचलं स्वप्नो निरभिष्यन्दिबृहण ।” इति । प्रचलायित इति प्रच लप्रातिपदिकात्कण्ड्वादियगन्तादादिकर्मणि निष्ठायां रूपम् । अन्ये त्वासीनप्रचलायितशब्देनोपविष्टस्यैव शयनमाहु । ते च दिवेत्यनुवर्त्य दिवैव तत्कार्यमित्याहु । यदाह भेड – “स्वप्नकामो दिवा काममुपविष्ट शयीत वा । प्रस्तीर्णाङ्गस्य जन्तोर्हि श्लेष्मा कोष्ठे प्रवर्तते ॥” इति ।

यदि स्निग्धत्वादभिष्यन्दी दिवास्वप्न, तत्किं कदाचिदपि न कार्य ? इत्याह—

**ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः ॥ ५६ ॥**
**दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः ।**
**मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः ॥५७॥**

१ ‘परा कुर्या’ इति हेमाद्रिमतेनात्र परिच्छेद. । २ ‘धाऽपि’ ग । ३ ‘प्रवृत्ता’ क.ग.ञ. । ४ ‘पाप्मात्मिका’ क ग झ स मू । ‘पाप्मात्मकव्या’ ञ । ५ ‘अपिशब्दमध्याहार्य व्याख्यातव्यम्’ ङ. । ६ ‘अपिशब्द विना रा’ ङ । ७ ‘मित्यथ स्यात्’ ङ । ८ ‘नायमर्थो युक्त ’ ङ । ९ ‘मुपादेक्ष्यत्’ ट. । १० ‘वातच’ ठ. । ११ ‘कर्शितान्’ ङ ।

१ ‘णक्षुत्तृट्शूलनिपीडि’ ट । २ ‘एतेषा’ ङ. । ३ ‘तथैवैतत्’ ट. । ४ ‘तु स्वप्न सर्वम्’ ङ । ५ ‘तच्चाकाले’ ख.घ झ । ‘तच्च काले सुप्तस्यातियोगाख्यम्, असुप्त’ क ग ञ । ६ ‘ष्ट सन् यदैव’ ख घ झ । ७ ‘लस्वप्नो’ क ख.घ.झ. । ८ ‘वातच’ठ. । ९ ‘मुक्त्वाऽतिभाष्य’ स स. इन्दु ।

**क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः ।**
**वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान् ॥ ५८ ॥**
**अजीर्ण्यभिहतोन्मत्तान् दिवास्वप्नोचितानपि ।**
**धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति ५९**

स०-ग्रीष्मकाले दिवास्वप्नो हित । यतस्तस्मिन् काले पवनचयो भवति । आदानस्य च परिपुष्टत्वादतिरौक्ष्य भवति । रात्रयश्च निद्रासमाप्त्ययोग्या अल्पा भवन्ति । दिवास्वप्नश्च सन्तर्पक । ग्रीष्मादपरस्मिन् काले कफपित्तकर । सोऽचिन्त्यत्वाद्धेतुप्रभावस्य । भाष्यादिक्लान्तादीन् मुक्त्वा-वर्जयित्वा । तेनैतदुक्त भवति,-ग्रीष्मादपरस्मिन्नपि काले स्वप्न एषा हित एव । यान-अश्वादि । क्षत -खड्गादिच्छिन्न । अभिहतो-लगुडादिना । दिवास्वप्नोचिता -शीलितदिवास्वप्ना । तत्र भाष्यादिक्लान्ताना पवनकोपात् स्वप्नोऽनुज्ञात । श्वासहिध्मादीना वेगविस्मरणार्थम् । वृद्धादीना यथायथ सन्तर्पणार्थं वेगविस्मरणार्थं च । अजीर्णिना दिवास्वप्नोचिताना च धातुवैषम्यपरिहारार्थं दिवास्वप्नोऽनुमतस्तन्त्रकृता । तथा चोक्तम्-"उचितो हि दिवास्वप्नो येषा नित्य शरीरिणाम् । वातादय प्रकुप्यन्ति तेषामस्वपता दिवा ॥" इति । ननु, अजीर्णिना दिवास्वप्नो न युक्त , दिवास्वप्नस्य कफवृद्धिकरत्वात् । कफवृद्ध्या चाग्निमान्द्यम् । अग्निमान्द्यादजीर्णान्नस्यापाक इत्ययुक्तस्तेषा दिवास्वप्न । अत्रोच्यते । दिवास्वप्नेनाजीर्णिना धातुसाम्य भवति । धातुसाम्ये च सति स्वस्थानस्थितैर्दोषैरनुपहतो वह्नि पचनक्षमो भवति । कफस्तु वृद्धोऽपि नैतेषामग्निमान्द्य विधत्ते । अपि त्वङ्गाना पुष्टिमादधाति । अत एवानन्तरमेवोवाच शास्त्रकार -"धातुसाम्य तथा ह्येषा श्लेष्मा चाङ्गानि पुष्यति ।" इति ।

**आ०र०-दिवास्वप्नस्यासम्यग्योगत्वमपवदति-ग्रीष्म इति। ग्रीष्मे वायुचयादीना सद्भावात् दिवास्वप्नो हित । आदानग्रहण शिशिरदिनादारभ्य प्रतिदिनवृद्ध्याऽतिशयितस्य रौक्ष्यस्य रात्र्यल्पभावस्य च प्राप्त्यर्थम् । अन्यथा वायुचयवत्तयोरपि ग्रीष्ममात्रहेतुकयो प्राप्ति । तत्र दिवास्वप्न स्निग्धत्वाद्वायुचय रौक्ष्य च हन्ति, मात्रापूरणाद्रात्र्यल्पत्व कृत हीनयोग च । ननु, वातघ्नोऽपि दिवास्वप्न कफपित्तकरत्वादहित । वक्ष्यति हि ( हृ सू अ १३।१६ )-"प्रयोग शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत् । नासौ विशुद्ध , शुद्धस्तु शमयेद्यो न कोपयेत् ॥" इति । अत आह—अन्यस्मिन्नित्यादि । हि-यस्मात्, स-दिवास्वप्नो, ग्रीष्मादन्यस्मिन्नृतौ भाष्यक्लान्तादीन् मुक्त्वा कफपित्तकर । न च ग्रीष्मे, न च भाष्यक्लान्तादीनाम् । तत्र ग्रीष्मे कालस्वभावात् । उक्त च चरकेण ( सू अ २१।४४ )-"ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नात्प्रकुप्यत । श्लेष्मपित्ते दिवास्वप्नस्तस्मात्तेषु न शस्य**ते ॥" इति । भाष्यक्लान्तादीना तु कुत ? इत्याह-धात्वित्यादि । हि-यस्मात्, एषा-भाष्यक्लान्तादीनाम्, तथा-तेन प्रकारेण, धातुसाम्य भवति । समीभूत श्लेष्मा शिर करचरणादीन्यङ्गानि पुष्णाति । धातवो-वातादयो रसादयश्च । धातुसाम्यहेतुत्वान्न कफपित्तकरत्वम् । कफपित्तवृद्धे साम्यार्थत्वान्न विकारारम्भकदोषहेतुत्वम् । भाष्य-वाग्व्यापार । यान-अश्वादिना गमनम् । अध्वा-पद्भ्या गमनम् । मद्य-मद्यपानम् । स्त्री-सम्भोग । भार -शिर स्कन्धादिभिर्गुरुवस्तुवहनम् । कर्म-कायव्यापार । क्षत -क्षतकासी । अभिहत -शस्त्रप्रहारादिपीडित । दिवास्वप्नोचित -सात्म्यीभूतदिवास्वप्न । अय च दिवास्वप्नो मुहूर्तमेव कर्तव्य । यदाह सुश्रुत ( शा अ ४।३८ )-"प्रतिषिद्धेष्वपि बालवृद्ध" इत्यादि यावत् "मुहूर्तमात्र स्वपनम्" इति ।

**बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि ।**
**विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ॥ ६० ॥**

स०-तथा, बहुमेद श्लेष्माण स्निग्धाहारादिशीलिनश्च ग्रीष्मेऽप्यहनि न स्वप्यु । विषार्त कण्ठरोगी च रात्रिष्वपि कदाचिदपि न स्वप्यात् ।

**आ० र०-दिवास्वप्नस्यासम्यग्योगत्व प्रतिप्रसवति-बहुमेद इति । बहुमेद प्रभृतयो ग्रीष्मेऽपि भाष्यक्लान्तादित्वेऽपि न दिवा स्वप्यु ।**

रात्रिस्वप्नस्य सम्यग्योगत्वमपवदति-विषार्त इति । जातु-कदाचित् ।

**अकालशयनान्मोहज्वरस्तैमित्यपीनसाः ।**
**शिरोरुक्शोफहृल्लासस्रोतोरोधाग्निमन्दताः ॥ ६१ ॥**

स०-अकाले शयन-स्वप्न ,-अकालशयनम्, तस्मादकालशयनात् मोहादय स्यु । स्तैमित्य-गात्राणा निरुत्साहत्वम् ।

**आ० र०-अथासम्यग्योगजा रोगा । तत्र मिथ्यायोगातियोगजान् रोगानाह-अकालशयनादिति । अकालशयनात्-द्विविधात्प्रागुक्तात् । स्तैमित्य-आर्द्रपटावनद्धाङ्गत्वम् । सङ्ग्रहे ( सू अ ९ )-"कण्डूसकोठपिटिका कासतन्द्रागलामया । हलीमकार्धावभेदशोफारोचकगौरवम् ॥ विषवेगप्रवृत्तिश्च भवेदहितनिद्रया ॥" इति ।**

अत्र च का चिकित्सा ? इत्याह—

**तत्रोपवासवमनस्वेदनावनमौषधम् ।**

१ 'क्षीणक्षुत्तृट्शूलनिपीडितान्' अ आ ट स मू । २ 'अजीर्णाभि' ख घ ञ । ३ 'स्मिन् काले' ट ड । ४ 'दिवास्वप्नशीलिन ' ट. । ५ 'करत्वादहित । न तु ग्रीष्मे' ख.घ झ. ।

१ 'न कुप्यत इ' क ञ । 'न कुत ' ग. । २ 'पद्भ्याम् ।' ख घ झ । ३ 'स च' क ग ञ । ४ 'मुहूर्तं दिवास' स सु । मुहूर्त -घटिकाद्वयम् । ५ 'स्वप्नम्' ख ग घ । ६ 'पि सात्म्यत्वेऽपि न' ख घ झ । ७ 'यन-द्विविधमुक्त प्राक् ।' ख घ झ । ८ 'चर्मावं' ख घ झ । ९ 'कण्डूरु को' ख घ झ । 'कण्डूरुकोठ' स ह्र । १० 'हलीमकशिरोजाड्यस्तैमित्यगुरुगात्रता । ज्वरभ्रममतिभ्रंशस्रोतोरोधाग्निमन्दता ॥ शोफारोचकहृल्लासपीनसार्धावभेदका ।' इति सङ्ग्रहहृदये पाठ । ११ 'दहनि नि' ख घ झ. ।

**योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ॥ ६२ ॥**
**नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः ।**
**एभिरेव च निद्राया नाशः श्लेष्मातिसङ्क्षयात् ६३**

स०–तत्र–तेष्वकालस्वप्रजेषु रोगेषु, उपवासाद्यौषध योजयेत् । निद्रायाश्च बाहुल्येन रात्रि काल । तथा चोक्तम् ( सङ्ग्रहे सू अ ९ )–"लोकादिसर्गप्रभवा तमोमूला तमोमयी । बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते ॥" इति । अतिनिद्राया सत्या तीक्ष्णानि वमनाञ्जननस्यानि योजयेत्, लङ्घनादि च । एभिरेव च–तीक्ष्णवमनादिभिर्निद्राया नाशो भवति । श्लेष्माख्यस्य धातोरतिशयेनापचयात् ।

आ० र०–अकालशयनजानामौषधमाह–तत्रेति ।

अतियोगस्यौषधमाह–योजयेदिति । स द्विविध ,–वेगोदीरणजो निद्राधिक्यजश्च । तत्राद्य उक्तो रोगानुत्पादनीये, इह द्वितीय । तस्य हेतुरुक्त सङ्ग्रहे ( सू अ ९ )–"अपच्यमानो बाहुल्यात्स्रोतास्यावृणुते कफ । तत स्रोत सु रुद्धेषु जायते गात्रगौरवम् ॥ गुरुगात्रस्य चालस्यमालस्याद-तिनिद्रता ।" इति । लङ्घन–द्वादशविधम् । वमननावनयोस्तु ग्रहणमतिशयार्थम् । व्यवाय–सम्भोगम् ।

हीनयोगस्य हेतुमाह–एभिरेवेति । स द्विविध ,–निद्राविधारणजो निद्राविनाशजश्च । तत्राद्य उक्तो रोगानुत्पादनीये, इह द्वितीय । एभि.–अतिनिद्रौषधै । श्लेष्मातिसक्षयादिति हेतुकथनमन्येषामपि श्लेष्मक्षपणाना निद्रानाशहेतुत्वख्यापनार्थम् ।

सम्प्रति निद्रानाशजान् विकारानाचष्टे—

**निद्रानाशादङ्गमर्दशिरोगौरवजृम्भिकाः ।**
**जाड्यग्लानिभ्रमापक्तितन्द्रा रोगाश्च वातजाः ६४**

स०–निद्रानाशादङ्गमर्दादयो वातोत्थाश्च रोगा स्यु ।

आ० र०–निद्रानाशजान् रोगानाह–निद्रानाशादिति । जाड्य–ज्ञानभ्रश । अपक्ति –आहारस्याविपाकः । वातजा रोगा –आक्षेपकादय ।

**यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ।**
**असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान् ॥६५॥**

स०–यतश्च सम्यक् सेविताया निद्राया असम्यक् सेविताया-श्चाऽनन्तरोक्ता गुणदोषा । अत –अस्माद्धेतो , कालानतिक्रमेण सात्म्यतो–यामद्वय त्रय वा, निशि निद्रा भजेत् । असात्म्याज्जागरादर्द्धेन प्रात स्वप्यात् । अभुक्तवान्–अभुक्ते सति । असात्म्यग्रहणेनैतत् द्योतयति,–न सर्वस्य रात्रावसुप्तस्य जागरणकालादर्धेन दिवास्वप्न इष्यते, किं तर्हि ? यो यावन्त कालमुचित स्वपिति तस्मात्कालाद्यावन्त काल निशि जागृयात्तावतोऽर्धेनासौ प्रात स्वप्यात् । केचिद्धि स्वल्पनिद्रा स्वभावतो भवन्ति ।

आ० र०–असम्यग्योग निषिध्य सम्यग्योग विधत्ते–यथाकालमिति । निद्रा रात्रौ सेवेत, न दिवा । रात्रावपि यथाकाल–प्रवृत्तिकालानतिक्रमेण, यस्य यस्मिन् रात्रिविभागे निद्रा प्रवर्तते स तस्मिन्नेव सेवेतेत्यर्थ. । सात्म्यत.–यामद्वययामत्रयादिसात्म्यानुरोधेन ।

रात्रावनिद्रितस्य दिवा स्वप्न विधत्ते–असात्म्येति । प्रात –पूर्वाह्णे स्वप्यात् । अभुक्तवान्–अकृतभोजन । असात्म्यरात्रिजागरणकालार्द्धकालम् । सात्म्यश्चेद्रात्रिजागरस्तदा प्रातर्नैव स्वप्यात् । अर्द्धमित्यसात्म्यजागरजनितदोषनिवर्तकनिद्रापर्याप्तकालोपलक्षणम् । अत एवाह खारणादि –"असुप्ताना तथा रात्रौ तन्मात्र स्वपन दिवा ।" इति । भेडोऽपि–"रात्रौ स्वप्यान्न यामांस्त्रीस्तान्स्वप्याद्विर्दिवा नर । एतदप्याहुरारोग्य नात्र दोषोऽस्ति कश्चन ॥" इति ।

**शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ।**
**अभ्यङ्गोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम् ॥ ६६ ॥**
**कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ।**
**मनोऽनुकूला विषयाः कामं निद्रासुखप्रदाः ॥ ६७ ॥**
**ब्रह्मचर्यरतेर्ग्राम्यसुखनिःस्पृहचेतसः ।**
**निद्रा सन्तोषतृप्तस्य स्वं कालं नातिवर्तते ॥ ६८ ॥**

स०–यो मन्दनिद्र स क्षीरादीन् शीलयेत् । कान्ताबाहुलताश्लेषादयो निद्रासुखहेतव । कान्ताबाहुलताश्लेषग्रहणमाश्लेषमात्रमेव निद्रासुखहेतु , न तु ग्राम्यधर्मसेवेति दर्शनार्थम् । अत एवानन्तरमाह–"ब्रह्मचर्यरतेर्निद्रा स्व काल नातिवर्तते ।" इति । ब्रह्मचर्यरतस्याप्यनुरागतो मैथुनाभिलाषो निद्रा नाशयेदित्याह–ग्राम्यसुखे नि स्पृह चेतो यस्य स तस्य । तथा, सन्तोषतृप्तस्य ।

आ० र०–अथ सम्यग्योगहेतु । स त्रिविध ,–जघन्यमध्यमोत्तमभेदात् । तत्र जघन्यमाह–शीलयेदिति । मन्दा–मूढा स्वकालानभिज्ञा, निद्रा यस्य स.–मन्दनिद्र । रसान्–मासरसान् । मूर्द्धतर्पण–मूर्द्धतैलम् । कर्णतर्पण–कर्णपूरणम् । अक्षितर्पण–प्रसिद्धम् ।

१ 'निद्रावेगधारणजो निद्राहानिजश्च' क ग ञ । २ 'एभिरेव–अ' क ञ । ३ 'जाड्य' क ख घ झ ठ । ४ अस्याग्रे "कफोऽल्पो वायुनोद्धूतो धमनी सन्निरुध्य तु । कुर्यात्सञ्ज्ञापहा तन्द्रा दारुणा मोहकारिणीम् ॥ उन्मीलितविनिर्भुग्ने परिवर्तिततारके । भवतस्तत्र नयने स्रुते लुलितपक्ष्मणी ॥ अर्धत्रिरात्रात्सा साध्या न सा साध्या तत. परम् ।" 'तन्द्रालक्षणमाह–कफोऽल्प इत्यादि' इति सटीक क ञ पुस्तकयोरधिक पाठ । ५ 'असात्म्यजागरा' अ.आ ठ. हेमाद्रि । ६ 'असात्पूर्वोक्तगुणदोषाद्धेतो ' ड ।

१ 'निशि' 'प्रात ' इति द्वौ शब्दौ ट ठ ड पुस्तकेषु नोपलभ्येते । २ 'असात्म्याद्रात्रि' ख घ झ । ३ 'दर्धम् ।' क ञ । ४ 'न्मात्रस्व' ख घ झ । ५ 'त्र यो मात्रा ता स्वप्याद्धि दिवा' ख घ झ । ६ 'ग्रहण श्लेष' ट ठ. । ७ 'प्यनुगतो' ठ । 'प्यन्तरा मै' ट ।

मध्यममाह–कान्तेति । निर्वृतिः–सुखम् । कृतकृत्यता–पूर्णमनोरथत्वम् । विषयाः–शब्दादयः । कामम्–अत्यन्तम् ।

उत्तममाह–ब्रह्मचर्यरतेरिति । ब्रह्मचर्यरतेः–ब्रह्मचर्यासक्तस्य । ग्राम्यसुखं–सम्भोगः, तत्र निःस्पृहं–ततो निवृत्तं, चेतो यस्य । सन्तोषतृप्तस्य–यथालाभतुष्टस्य । स्वः कालः नातिवर्तते–उचित एव काले आयातीत्यर्थः ।

यदा तु ग्राम्यधर्मेण विना न रतिः, अपत्यार्थिता वा, तदा तदधिकारार्थमुच्यते—

**ग्राम्यधर्मे त्यजेन्नारीमनुत्तानां रजस्वलाम् ।**
**अप्रियामप्रियाचारां दुष्टसङ्कीर्णमेहनाम् ॥ ६९ ॥**
**अतिस्थूलकृशां सूतां गर्भिणीमन्ययोषितम् ।**
**वर्णिनीमन्ययोनिं च गुरुदेवनृपालयम् ॥ ७० ॥**
**चैत्यश्मशानाऽऽयतनचत्वराम्बुचतुष्पथम् ।**
**पर्वाण्यनङ्गं दिवसं शिरोहृदयताडनम् ॥ ७१ ॥**
**अत्याशितोऽधृतिः क्षुद्वान् दुःस्थिताङ्गः पिपासितः ।**
**बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् ॥ ७२ ॥**

स०–ग्राम्यधर्मे–स्त्रीपुंसयोगविषये, अनुत्तानां स्त्रियं त्यजेत्, उत्ताना भजेदित्यर्थः । तथा, रजस्वलत्वादियुतां त्यजेत् । दुष्टं–व्याधिमलादिभिः, सङ्कीर्णं–सङ्कटं च, मेहनं–योनिर्यस्यास्ताम् । तथा, वर्णिनी–ब्रह्मचारिणीम् । अन्ययोनिम्–अजामहिष्यादिं च त्यजेत् । गुर्वित्यादि । ग्राम्यधर्मे निर्वर्तने सति गुरुदेवनृपालयांस्त्यजेत् । तथा, चैत्यादींस्त्यजेत् । तेषु स्त्रियं न सङ्गच्छेदित्यर्थः । चैत्यादीनां पर्याया दिनचर्यायामुक्ताः । आयतनं–दुष्टानां निग्रहस्थानम् । पर्वाणि–रविसङ्क्रान्त्यादीनि त्यजेत्, तेषु कामं न सेवेतेत्यर्थः । तथा, अनङ्गं,–अङ्गं–जघनम्, नाङ्गं–अनङ्गमङ्गसदृशं जघनकार्यनिर्वर्तनयोग्यं मुखादिकमुच्यते । दाक्षिणात्या हि मुखेन तत् कुर्वन्ति, तन्निषिध्यते । दिवसं च त्यजेत्, दिने रतं न कुर्वीतेत्यर्थः । मूर्धवक्षोऽभिघातं च त्यजेत् । तथा, अत्याशितादयः सुरतं त्यजेयुः । अत्याशितः–अतिसुहितः । अधृतिः–दुर्मनाः । अन्यवेगार्तः–पुरीषादिवेगातुरः । ननु, क्षुद्वान् क्षुद्वेगार्त उच्यते । ततोऽन्यवेगार्त इत्यनेनैवास्यार्थस्य लब्धत्वात् किं क्षुद्वानित्यनेन? सत्यमेतत् । अतिशयार्थं त्वेतत् । यथा क्षुद्वेगार्तः स्त्रियं गच्छन्नतिशयेन पीडया बाध्यते, न तथाऽन्यवेगार्त इति ।

आ० र०–अथाविधिसम्भोगादाहाररक्षा । तत्र सम्भोगनिषिद्धान्याह–ग्राम्येत्यादि । ग्राम्यधर्मे–सम्भोगे, अनुत्तानत्वादिविशिष्टां नारीं त्यजेत् । अप्रियां–अनभीष्टाम् । अप्रियाचारां–अनिष्टाचरणाम् । दुष्टमेहनां–दोषदूषितयोनिम् । सङ्कीर्णमेहनां–सङ्कुचितयोनिम् । अतिस्थूलामतिकृशां च । सूतां–असम्पूर्णाध्यर्द्धमासप्रसूतिम् । अन्ययोषितं–परस्त्रियम् । वर्णिनीं–ब्रह्मचारिणीम् । अन्ययोनिं–विजातीयामजामहिष्यादिम् । गुर्वालयादींश्च त्यजेत् । चैत्यादयो दिनचर्यायां व्याख्याताः । अम्बु–जलाशयः । आयतनं–वधस्थानम् । पर्वाणि–पुण्यकालाः । अनङ्गं–हस्तमुखादि । दिवसम्–अपर्वण्यपि । शिरस्ताडनं हृदयताडनं च–मुष्ट्यादिना । दिनचर्यायां सामान्यतो निषिद्धस्यापि देवालयादेः पुनर्निषेधः सम्भोगे दोषभूयस्त्वख्यापनार्थः ।

अत्याशितादेः सम्भोगं निषेधति–अत्याशित इति । अत्याशितः–अतितृप्तः । अधृतिः–अहृष्टः । क्षुद्वान्–क्षुधितः । दुःस्थिताङ्गः–विषमस्थितगात्रः । पिपासितः–तृषितः । अन्यवेगार्तः–शुक्रेतरवेगपीडितः । क्षुत्तृषोर्वेगत्वेऽपि पृथग्ग्रहणमल्पयोरपि तयोर्निषेधार्थम् ।

सम्प्रति ऋतुविशेषेषु निधुवनं नियमयति—

**सेवेत कामतः कामं तृप्तो वाजीकृतो हिमे ।**
**त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षानिदाघयोः ॥ ७३ ॥**

स०–तृप्तः–वाजीकरणैः सञ्जातसन्तर्पणः सन्, कामतः–यथेच्छया, हिमे–हेमन्ततौं शिशिरे च, कामं–यथेच्छं, सेवेत । वाजीकृतामिति सम्पदादित्वात्क्विप् । तृप्त इति क्तोऽधिकरणे च ध्रौव्येत्यादिनाऽधिकरणे क्तः । अधिकरणवाचिनश्चेति षष्ठी । वसन्ते शरदि च त्र्यहात्–त्र्यहमतिक्रम्य, मैथुनं निषेवेत । वर्षाग्रीष्मयोः पक्षात् कामं भजेत् ।

आ० र०–ऋतुवशात्सम्भोगं विधत्ते–सेवेतेति । हिमे–हेमन्तशिशिरयोः । कामं–सम्भोगम् । कामतः–स्वेच्छया । वसन्ते शरदि च त्र्यहात्–त्र्यहमन्तरं कृत्वा । वृष्टिनिदाघयोः पक्षात्–पक्षमन्तरं कृत्वा । "सप्तमीपञ्चम्यौ कारकमध्ये" इति पञ्चमी । वाजीकृतः तृप्त इति सर्वत्र सम्बध्यते । वाजीकृताः–वाजीकरणानाम् । "करणे सुहितार्थानाम्" इति षष्ठी । अयं च विधिरुत्तमबलापेक्षः । हीनबलानां तूक्तो भेडेन ( सू अ ७ )–"ऋतावृतौ यथाकालं मैथुनं तु समाचरेत् । वर्षासु नवरात्रात्तु दशरात्राच्छरद्यपि ॥ पञ्चाहाच्छीतसमये सप्ताहाच्छिशिरे तथा । पक्षाद्वसन्ते, ग्रीष्मे तु मासि मासि समाचरेत् ॥ निदाघे पश्चिमे मासि मैथुनं न समाचरेत् ।" इति ।

**भ्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयाः ।**
**अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ॥ ७४ ॥**

स०–अन्यथा–उक्ताद्विधेरन्येन प्रकारेण, स्त्रियं गच्छतो भ्रमादयः स्युः । अपर्वणि–अकाले मरणम्–अपर्वमरणम् ।

आ० र०–उक्तविध्यतिक्रमे दोषमाह–भ्रमेति । ऊरु-

१ 'षिताम्' आ क ञ ठ । २ सङ्कटं–सङ्कुचितम् । ३ 'शून्नानिग्रह' ट । ४ 'दीन्' ठ । ५ 'मुखे रतिं कु' ट । ६ 'तृप्त' ड । 'अतिभुक्त' इति क्वचित् । ७ सुहितः–तृप्तः । ८ 'गात्रक्षा' क ञ । 'गादन्नरक्षा' ग. । ९ अध्यर्द्धमासः–सार्द्धमास. ।

१ 'अतृप्त' झ । २ 'कैर्हिमे' क । 'कृतैर्हिमे' ठ । ३ 'त्र्यहा' हेमाद्रि, स द्द । ४ 'पक्षाद्वृष्टिनि' अ आ हे । ५ 'ततर्पण' ट ड । ६ 'च' क ग ञ । ७ 'निदाघपश्चिमे' ञ । ८ 'चैव वर्जयेत्' मे स । ९ 'बल्य० क्षय' इति क ग ञ पुस्तकेष्वन्यस्मिन् स्थले पाठः । १० 'स्याद्विशेषेणातिमैथुनात्' स द्द । ११ 'उक्ताद्विधानादन्यत्र' ट. । 'उक्तविधेरतिक्रमेण' ड. ।

दौर्बल्य–सक्थिशैथिल्यम् । बलादीनां क्षयः । अपर्वमरण–अकालमृत्युः । अन्यथा स्त्रियं गच्छतः–उक्तप्रकारादन्येन प्रकारेण सम्भोगं भजतः । उक्तं च रसायुर्वेदे–"विपरीतरतग्राह्या लिङ्गे दाहः प्रजायते । कार्श्यं च सर्वगात्रेषु, तत्प्रतीकार उच्यते ॥ प्रलम्बबस्तिं निबध्यैव लिङ्गाचूषणमाचरेत् । क्षरणे तस्य सञ्जाते स्नापयेच्छीतलाम्बुना ॥ कोलनिर्यासमादाय पाययेत्तं सशर्करम् । शाल्मलीदूर्वयोर्मूलरसं पायसमाशयेत् ॥" इति ।

**स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः ।**
**अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ॥ ७५ ॥**

स०–स्त्रीषु संयताः–स्त्रीः सम्यक् सेवमानाः, स्मृत्यादिभिरधिका अल्पजराश्च भवन्ति ।

**आ० र०–विध्याचरणे फलमाह–स्मृतीति । स्त्रीषु संयताः–विधिना स्त्रीः सेवमानाः, स्मृत्यादिभिरधिका मन्दजरसश्च भवन्ति । इन्द्रियं–शुक्रम् । मन्दजरसः–चिरस्थायियौवनाः ।**

**स्नानानुलेपनहिमानिलखण्डखाद्य-**
**शीताम्बुदुग्धरसयूषसुराप्रसन्नाः ।**
**सेवेत चानु शयनं विरतौ रतस्य**
**तस्यैवमाशु वपुषः पुनरेति धाम ॥ ७६ ॥**

स०–रतान्ते यथोचितेन स्नानादीन् सेवेत । खण्डखाद्यं–खण्डकृतं कणिकेत्यादि(?) । रसो–मांसरसः । चानुशयनमिति । अनु–पश्चाच्च, स्वप्नं सेवेत । तस्य–स्नानादिसेविनः शरीरस्य, एवं–अस्मिन्कृते, धाम–तेजो, भूयः आगच्छति । रमौ जौ वसन्ततिलकं गुरुकद्वयं च । सङ्ग्रहे चोक्तम् (सू. अ. ९)–"स्नानाङ्गरागव्यजनेन्दुपादयूषासवक्षीररसान् रसालाम् । भक्ष्यान् सिताढ्यान् सलिलं सुशीतं सेवेत निद्रां च रतान्ततान्तः ॥" इति ।

**आ० र०–सम्भोगावसाने सेव्यानाह–स्नानेति । हिमानिलः–शिशिरमारुतः । खण्डखाद्यं–शर्कराप्रचुरं भक्ष्यम् । शीताम्बु–शीतोदकम् । रसो–मांसरसः । प्रसन्ना–अच्छसुरा । शयनं–निद्रा । एतानि रतस्य विरतौ, अनु–समनन्तरमेव सेवेत । एवं कृते, तस्य–रतक्षीणतेजसः, वपुषो धाम–शरीरं तेजः, पुनरप्याशु–शीघ्रम्, एति–प्राप्नोति ।**

१ 'सक्थिदौर्बल्यम्' क ग ञ । २ 'प्रलम्बस्तं निबध्यैनं लिङ्गचूषणमानयेत्' ञ. । ३ 'लिङ्गचू' ग । ४ 'मावहेत् ।' ख घ झ । ५ 'रसपायस' क झ । ६ 'संयुताः' क ख घ झ ञ । ७ 'स्त्रियमुक्तविधिना सेव' ङ । ८ 'संयुता' ख घ झ । ९ 'स्त्रियं' क ग ञ. । १० 'खण्डाढ्यताकरणेत्यादि' ट । 'खण्डाच्छभकेणिके' ठ. । 'खण्डात् स्मृतम्' ङ । ११ 'अनुशयन–पश्चाच्छयनम्' ङ । १२ 'स्नानादिभि. श' ट । १३ 'दमासासव' स द्व । १४ 'सेव्यमाह' क ञ. । १५ 'न्तरं से' क.ग ञ । १६ अस्माग्रे 'ननु, अस्य विधेरसम्भव एव । तथा हि–रात्रावेव रतमुक्तम् । रात्रौ च स्नानभोजनादिभिरजीर्णादिदोषः स्यात् । सत्यम् । अधिकशुक्रधातूनां दिवारतिकृतामयं विधिरुक्तः । अथवा ग्रीष्मे सायं स्नानभोजनं सम्भाव्यत एव, इति न दोषः ।' इति क.ञ. पुस्तकयोरधिकः पाठः ।



एतच्च सर्वं पूर्वोक्तं हिताहितं वैद्य एव वेत्ति । तस्माद्वैद्यस्य सर्वथा शरीरं राज्ञा निवेद्यमिति दर्शयन्नाह—

**श्रुतचरितसमृद्धे कर्मदक्षे दयालौ**
**भिषजि निरनुबन्धं देहरक्षां निवेश्य ।**
**भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः**
**स्वकुशलफलभोगी भूमिपालश्चिरायुः ॥ ७७ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थानेऽन्नरक्षा नाम सप्तमोऽध्यायः ॥ ७ ॥**

स०–भिषजि शरीररक्षणं निरनुबन्धं–निर्विकल्पमाधाय, पृथ्वीशो बहुकालमात्मीयश्रेष्ठफलभोगवान् भवति । तथा, तेजश्च स्वास्थ्यं च कीर्तिश्च प्रभावश्च, त एवम्, विपुला–विस्तीर्णाः, तेजःस्वास्थ्यकीर्तिप्रभावा यस्य स एवंविधः । कीदृशे भिषजि? श्रुतं–शास्त्रावबोधः, चरितं–आचारः, ताभ्यां समृद्धे–सम्पूर्णे । तथा, क्रियाचतुरे । तथा, कृपालौ । वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थानेऽन्नरक्षाध्यायः सप्तमः समाप्तः ॥ ७ ॥

**आ० र०–अध्यायार्थमुपसंहरति–श्रुतेति । उक्तप्रकारान्नरक्षाद्वारेण देहरक्षां भिषजि निवेश्य, भूमिपालश्चिरायुर्भवति । कीदृशे भिषजि? श्रुतचरितसमृद्धे–शास्त्रशास्त्रोक्तानुष्ठानसम्पन्ने, कर्मदक्षे–उपचारकुशले, दयालौ–कारुणिके । निरनुबन्धं–निःशङ्कम् । तेजः–कान्तिः । स्वास्थ्यं–आरोग्यम् । कीर्तिः–यशः । प्रभावः–प्रतापः । स्वकुशलफलभोगी–स्वोपार्जितपुण्यफलोपभोगक्षमः । चिरायुः–दीर्घायुः । सङ्ग्रहे तु (सू. अ. ९)–"मनःशरीरस्थितिमात्रमेवं व्यवायं सेवेत । न तु तत्परः स्यादिति । भवति चात्र । विश्रब्धहृष्टो रहसि तत्कामस्तरुणः पुमान् । समस्थिताङ्गः सुरभिर्मुक्तमूत्रादिरव्यथः ॥ नानाशितो नात्यशितो वृष्याणां तर्पितस्त्र्यहम् । नारीं नारीगुणैर्युक्तां सहपूर्वगुणां व्रजेत् ॥ [ स्त्रीसंसर्गाद्धि सद्यः स्यात् क्लीबता बलिनामपि । एवं चाप्याय्यते शीघ्रं तेषां शुक्रं च धाम च ॥ ] दृष्ट्यायुरोजःशुक्राणां क्षयं मेढ्राश्रयान् गदान् । वायोः कोपमधर्मं च मूढः प्राप्नोत्यतोऽन्यथा ॥ उत्तानो वेगरोधी च वृद्धिमेहाश्मशर्कराः । तिमिरा-**

१ 'शास्त्रावगम' ट ङ । २ 'शास्त्रानुष्ठान' ख घ झ । ३ 'वं सेवेद्व्यवायं न' क ग ञ स.मू. । ४ 'च' ख घ झ स.मू. । ५ 'विशुद्धहृ' घ. । ६ 'सम्यक्कुक्षि' क ग ञ । ७ [ ] एतच्चिह्नान्तर्गतः सङ्ग्रहश्लोको हेमाद्रिटीकापुस्तकेषु नोपलभ्यते । ८ 'वा' सं.द्व. ।

दिगदोत्पत्तिर्मूर्द्धाद्याहननाद्धुवम् ॥ न[1] चार्वाक् षोडशाद्वर्षात् सप्तते परतो न च । आयुष्कामो नर स्त्रीभि सयोग कर्तुमर्हति ॥ अतिबालो ह्यसम्पूर्णसर्वधातु स्त्रिय व्रजन् । उपतप्येत सहसा तडागमिव काजलम्[6] ॥ शुष्क रूक्ष यथा काष्ठ जन्तुजग्ध विजजरम् । स्पृष्टमाशु विशीर्येत तथा वृद्ध स्त्रिय व्रजन् ॥ कायस्य तेज परम हि शुक्रमाहारसारादपि सारभूतम् । जितात्मना तत्परिरक्षणीय ततो वपु सन्ततिरप्युदारा ॥ अप्रमत्तो भजेद्भावास्तदात्वसुखसञ्ज्ञकान् । सुखोदर्केषु सज्जेत देहस्यैतदल हितम् ॥ प्रज्ञापराधोऽसात्म्यार्थसयोग कालवैकृतम् । हितेऽपि रतमाहारे योजयन्त्यामयैर्नरम् ॥ नापथ्यसेविन सद्य प्रबाधन्ते तदा मला । प्रकोप[11] प्रतिघ्नन्ति भिन्नैर्दूष्यादिभिर्यदा[12] ॥ न च सर्वो[13]ऽपचारोऽपि सर्वदा सर्वदोषकृत् । न हि सर्वाण्यपथ्यानि तुल्यदोषाणि नेव च ॥ सर्वे तुल्यबला दोषा न सर्वाणि वपूषि च । व्याधिक्षमत्वे शक्तानि यतोऽपथ्य तदेव तु ॥ गच्छत्यपथ्यतमता तुल्यदूष्यादिवर्द्धितम् । त एव च पुनर्दोषा हेतुभिर्बहुभिश्चिता ॥ मिथो विरुद्धा बलिनो दीर्घकालानुवर्तिन[14] । सर्वे सम प्रकुपिता[15] प्राप्याल्पमपि कारणम् ॥ प्राणायतनमाश्रित्य गम्भीरा सर्वमार्गगा । देहे हितोचिते ते स्युश्चिरादप्याशुकारिण. ॥ अहितान्यपि चान्येषामभ्यासादुपशेरते । दोषाश्चैषा क्षय यान्ति कर्मवातातपादिभि ॥ अथ बहूनामेकरोगोत्पत्ति[16] । भिन्नाहारवय सात्म्यप्रकृतीना सम भवेत् । एको विकृतवाय्वादियुगपत्सेवनाद्ध्रुव ॥ वातादीना तु विकृतिर्विकृताद्ग्रहचारत । भौमान्तरिक्षदिव्येभ्य उत्पातेभ्यश्च जायते ॥ सम्भव पुनरेतेषा कर्मण सामुदायिकात् । दुष्टो वायुरभिष्यन्दी स्तिमितोऽत्युष्णशीतल ॥ कुण्डली भैरवरव परुषोऽनार्तवो बली । अन्योन्यव्याहतगति पांशुबाष्पविषान्वित ॥ रसवर्णादिविकृतमपक्रान्तविहङ्गमम् । निन्दितप्रभव तोयमुपक्षीणजलेशयम्[18] ॥ मक्षिकामूषिकव्यालबहूत्पातप्रदूषित । देशोऽपथ्यान्नबहुलो नष्टधर्ममहौषधि ॥ कालश्च विपरीतातिहीनलिङ्गो यथायथम् । एते दुष्परिहारत्वादहिताया[19] उत्तरोत्तरम् ॥ येषामनियत कर्म तस्मिन् काले सुदारुणे ।

कर्म पञ्चविध तेषा योऽय तद्वद्रसायनम् ॥ शस्यते देहवृत्तिश्च[1] भेषजै पूर्वमुद्धृतै । ब्रह्मचर्य दया दान सदाचाररति शम ॥ सद्धर्मे सत्कथा पूजा देवर्षीणा जितात्मनाम् । देशानामविपन्नाना साधूना च निषेवणम् ॥ दैवव्यपाश्रय चेष्ट कर्म जीवितरक्षणम् । हेमन्तादिषु कुर्वीत स्व स्व चाकालिकेष्वपि ॥ विधि तच्छीलन यस्माच्छीतादिद्वन्द्वकारितम् । ऋतुचर्या हि शीतोष्णवृष्टिदोषप्रतिक्रिया ॥ अत एव[2] च चर्याया हेमन्तशिशिरौ[3] समौ । अथाकालमृत्यु[4] । सर्वप्राणभृता नित्यमायुर्युक्तिमपेक्षते । दैवे पुरुषकारे च स्थित ह्यस्य बलाबलम् ॥ अन्यजन्मकृत कर्म दैव पौरुषमैहिकम् । विद्यात्ते कर्मणी त्रेधा[6] श्रेष्ठमध्यावरत्वत ॥ तयोरुदारयोर्युक्तिर्दीर्घस्य सुसुखस्य च । नियतस्यायुषो हेतुर्विपरीतस्य चावरा ॥ मध्या मध्यस्य, मिश्रस्य सङ्कीर्णा, शृणु चापरम् । दैव पुरुषकारेण दुर्बल ह्युपहन्यते ॥ तथा दैवेन बलिना पौरुष कर्म दुर्बलम् । दृष्ट्वा यदेके मन्यन्ते नियत मानमायुष ॥ कर्म किञ्चित् क्वचित्काले विपाकनियत महत् । किञ्चित्त्वकालनियत[11] प्रत्ययै प्रतिबोध्यते ॥ एव च द्विविधो मृत्यु कालाकालविभेदत । उपदिष्टस्ततश्चैष हिताहितविधिक्रम ॥ एकोत्तर मृत्युशत ब्रुवते वेदवादिन । तत्रैक कालसयुक्त शेषास्त्वागन्तव स्मृता ॥ श्येनाजिरादियागेन[12] भ्रातृव्यस्य तथा च तै । दैर्घ्यश्रवससोमाद्यैर्विहितैस्त्वात्मनो[14] वध ॥ आयुष्कामस्य तत्प्राप्तिस्तत्रेष्ट्या[15] मित्रविन्दया । सर्वस्मादेव चात्मान गोपायेदीदृशी स्मृति[16] ॥ तथा मरणमुद्दिष्ट सौगताना[17] चतुर्विधम् । विषमापरिहारेण जायते नियतायुषाम् ॥ ध्रुव रोगित्वमन्येषा[18] मृत्युरेव[19] स्वपर्वणि । अकाण्डे शस्त्रघाताद्यै प्रत्यक्षो मृत्युरन्यथा ॥ उद्भ्रान्तचण्डमातङ्गतुरङ्गादिसमागमम् । अरातिदुष्टवाता[21]दिसाहसाहितभोजनम् ॥ वर्जयेदिति[22] न ब्रूयुर्मुनयो दिव्यचक्षुषः । दैवव्यपाश्रयाद्यै[23]श्च रसायनविधि विना[24] ॥ न वा तेऽपि यथा काममायुष स्थितिमाप्नुयु । अहिसिंहगजादिभ्यो विदुषा न

१ 'त्पत्ति मू' ग घ स मू । २ 'नाद्भुतम्' ग । ३ 'न चोन षो' क.ग ञ स स । 'न चर्ते षो' स मू । ४ 'गन्तुम' घ म सं । ५ 'स्त्रियो' ख घ ङ इन्दु । ६ काजल—स्वल्पपानीयम् । ७ 'शुष्करूक्ष' क.ग ञ । ८ 'वृद्धा स्त्रिय' इति क ग ञ पुस्तकेष्वुपलब्धोऽप्ययुक्त पाठ, "वयोवर्णवृद्धा" इत्यनेन पुनरुक्तत्वात् । ९ 'अप्रसक्तो' क ग ञ. । १० 'तथा' ञ । ११ 'प्रतिबध्नन्ति' क ग ञ.स मू । १२ 'यथा' ख घ ङ । १३ 'सर्वोपचारो० दोषहृत्' क ग ञ स मू । 'सर्वापचारो' इदु. । १४ 'नुबन्धिन' स द्व । १५ 'प्रकुप्यन्ति' क ग ञ स मू । १६ 'त्पत्तिमाह' ञ.स मू । १७ 'कृतग्रहचा' क.ग ञ । १८ 'जलाशयम्' क ग ञ.स.द्व । १९ 'ताश्चोत्त' ञ इन्दु ।

१ 'वृद्धिश्च' स स । २ 'एवर्तुचर्या' क ग ञ स मू । ३ 'शिशिरे समे' ख घ ङ स स । ४ 'मृत्युमाह' स मू । ५ 'यस्य' क ख ञ । 'तस्य' ग स स । ६ 'त्रेधोत्तममध्या' क ग ञ । ७ 'र्घस्यास्य सुख' क ग ञ । ८ 'चापरा' स.द्व । ९ 'व्यप' क ग.ञ । १० 'पाके' क स मू । ११ 'किञ्चिच्च का' स द्व । १२ 'नाचिरा' ग । 'नादिना च या' स.स. । १३ भ्रातृव्यस्य–रिपो । १४ 'त स्वात्मनो' ञ स.मू । 'तश्चात्मनो' स स । १५ 'स्तथेष्टया' स द्व. । १६ 'श्रुति' क ञ । १७ सौगताना–बौद्धदर्शनस्थितानाम् । १८ अन्येषा–अनियतायुषाम् । १९ 'व च पव' घ । अपर्वणि–अकाले । २० 'अकाले श' क ग ञ । २१ 'वाय्वादि' स.द्व । 'वातादिः सा' क ग ञ । २२ 'ते' ञ । २३ 'यादेश्च' क.ग.ञ. । २४ 'विधीस्तथा' ञ.स स. । 'धि न वा' स.मू ।

भय भवेत् ॥ मिथ्या प्राकारदुर्गाणि मिथ्या मारणरक्षणम् । आयुष्कामस्य मिथ्यैव परदारादिवर्जनम् ॥ मन्त्रदेवतयाऽऽहूता नाचक्षीरन् महाहय । विषसुप्तप्रबुद्धस्था भावाभावौ तदायुष । सन्यासरोहिणीकादिग्रस्तस्य सहसा भवेत् । उपेक्षया न मरण जीवित वा चिकित्सया ॥ प्रत्यह नृसहस्रस्य युद्धेऽन्योन्यमभिघ्नत । साधुवृत्तस्य चौतुल्या न भवेदायुष स्थिति ॥ नायुर्धेर्द्विषमिन्द्राद्या नौषधैरार्तमश्विनौ । उपक्रमेरन्न भवेदकालमरण यदि ॥ घटानामामपक्वाना पालनापरिपालनै । चिराल्पकालवर्तित्व चित्रस्थाना च दृश्यते । इत्यत्यन्तप्रसिद्धेऽपि सिद्धे सर्वागमैरपि । दृष्टेऽप्यकालमरणे विचिकित्सेत् कथ बुध ॥ गुणवद्धिपगादीना सम्भवे सम्भवेत्तु य । मृत्युस्त कालज प्राहुरितर तद्विपर्यये ॥ यथा रथो वाह्यमानो न्यायेन क्रमश क्षयम् । यायादात्मवतामायुस्तथाऽन्येषा विपर्यय ॥ शुचितैलदशो दीप. कीटवाताद्यपीडित । दीप्तिमान् वर्तते सम्यक् यथैव स्नेहसङ्क्षयात् ॥ स एवातो यथा च स्याद्विपरीतो विपर्यये । हिताहितोपचारेण तथैव पुरुषो ध्रुवम् ॥ सर्वमन्यत् परित्यज्य शरीर पालयेद्वत । तदभावे हि भावाना सर्वाभाव शरीरिणाम् ॥ नगरी नगरस्येव रथस्येव रथी सदा । स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥ आहारकल्पनाहेतून् स्वभावादीन् विशेषत । समीक्ष्य हितमश्नीयाद्देहो ह्याहारसम्भव ॥ भीलज्जायन्त्रणालोभहर्षशोकवशगत । न जातु धारयेद्वेगास्तद्धि सर्वापदा पदम् ॥ हितमभ्यस्यत पुसो नाकाले कालदष्ट्रया । सञ्जायते परामर्शो बलोत्साहेन्द्रियौयुषाम् ॥ अहितानि च सन्त्यज्य दोषमप्याप्नुयाद्यदि । तथाऽप्यानृण्यमायाति साधूनामात्मवानिति ॥ यच्च रोगसमुत्थान न शक्यमिह केनचित् । परिहर्तुं न तत्प्राप्य शोचितव्य मनीषिणा ॥ हिताहारविहाराणा सदाचारनिपेविणाम् । लोकद्वयव्यपेक्षाणा जीवित ह्यमृतायते ॥ गृध्नुर्ग्राम्यसुखे वश्य क्लेशाना हतसत्पथ । मूढो जीवत्यनर्थाय दुर्गति परिबृहयन् ॥ विदुषाऽन्त शरीरस्थान्नित्य सन्निहितानरीन् । जित्वा वर्ज्यानि वर्ज्यानि चिर जीवितुमिच्छता ॥ तदात्वे चानुबन्धे वा तस्मात् कर्माशुभोदयम् । स्मरन्नात्रेयवचसो न धीमान् कर्तुमर्हति ॥" इति ।

**इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**अन्नरक्षाप्रकरण सामस्त्येन निरूपितम् ॥ ७ ॥**



१ 'द्धस्य भा' क ग ञ. । २ 'वाऽतुल्या' ख ग घ झ । 'वाहुल्यान्न भ' क ञ । ३ 'इत्यन्यत्र प्र' क ग ञ । ४ 'पुन ' घ । ५ 'मृत्यु त' स स । ६ 'येद्यत.' घ । ७ 'यथा' ञ । 'तथा' स स । ८ 'न्द्रियौजसाम्' क ग.ञ । ९ 'तान्यपि स' स स । १० 'रिवर्तुं' स स । ११ 'यमपे' ञ. ।



# अष्टमोऽध्यायः ।

अन्नरक्षाध्यायादनन्तरं मात्राशितीयाध्यायारम्भो युक्त । यतो विषादिभ्यो रक्षितमन्नपान हीनमात्रातिमात्रमभ्यवहृत जीवितोपघाताय सम्पद्यते । मात्राभ्यवहृत प्राणिना प्राणाय ।—

**अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

(गद्यसूत्रे ॥ २ ॥)

**स०**–अथेत्यानन्तर्ये । यथा,–"अथाऽतो धर्मजिज्ञासा ।" इत्यत्र मीमासाया वेदाध्ययनादनन्तर धर्मो जिज्ञासितव्य इत्यर्थ । अत इति प्रस्तुताभिसम्बन्धे । अशन–अशितम् । भावे निष्ठा । मात्रयाऽशित–मात्राशितम्, तस्मै हितो मात्राशितीय । शेष पूर्ववद्व्याख्येयम् ।

**आ० र०**–मात्राशितीयमध्याय व्याख्यातु प्रतिजानीते–अथेति । यत पूर्वेऽध्याये "आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते ।" इत्युक्तम् (हृ सू अ ७।५३)। स चासाधारणो यथास्व वक्तव्य । असाधारणार्थमयमध्याय । अत एव मात्राशितीय । मात्राशब्देन सम्यग्योगो लक्ष्यते । स चासम्यग्योगस्य त्यागात्सम्भवति । स पुन सप्तधा,–सङ्कीर्णाशन, विरुद्धाशन, अमात्राशन, अजीर्णाशन, समशन, अध्यशन, विषमाशन चेति । तत्र निषिद्धाना गृहे निषिद्धैर्वा सह निषिद्ध चान्न यत्र भुज्यते तत्–सङ्कीर्णाशनम् । तच्च "शत्रुसत्रगणाकीर्णगणिकापणिकाशनम् ।" इत्याद्युक्तम् (हृ सू अ २।४३)। विरुद्धाशनम्–अहिताशनम् । तच्च "विरुद्धमपि चाहार" इत्याद्युक्तम् (हृ सू अ ७।२९)। अमात्राशनादीन्यत्रोच्यन्ते । मात्रावदपि यन्न जीर्यति तत्–अजीर्णाशनम् । समशनादीन्यत्रैव लक्षयिष्यति ।

**मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ।**
**मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि ॥ १ ॥**

**स०**–सर्वकाल–स्वस्थ आतुरो वा, मात्राशी स्यात्–परिमिताशी भवेत् । कुतो हेतो ? हि–यस्मात्, मात्राऽग्ने. प्रवर्तिका स्वव्यापारे । अग्निप्रवृत्तिश्च देहस्थितिहेतु । तथा चोक्तम्–

१ 'तीयो युक्त ' ठ । २ 'त्राभुक्त मरणाय । मात्राभुक्त तु प्राणत्राणाय ।' ड । ३ 'तोच्छेदाय' ट । ४ अय मात्राशितीयाध्यायश्चरके सू० ५।२७ अध्याययो वि० २ अध्याये चि० १५ अध्याये सि० १२ अध्याये च, सुश्रुते सू० ४६ अध्याये उ० ५६।६४ अध्याययोश्च, अष्टाङ्गसङ्ग्रहे सू० १०।११ अध्याययोश्चास्ति वर्णित । ५ 'इति वेदा' ट ठ. । ६ 'इत्यानन्तर्ये ।' ड । ७ 'सम्बन्धि' ट ठ । ८ 'एवाय मा' झ. । ९ 'त्यागे स' क ग ञ. । १० 'वाऽन्न' क.ग.ञ. । ११ 'यत्' ग. ।

"अग्निमूलं बलं पुंसां बलमूलं हि जीवितम् ।" इति । तस्मान्मात्राया प्राधान्यम् । अस्माच्च कारणान्मात्राया प्राधान्यं यतो मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघूनि च । तत्र गुरूणि–पिष्टक्षीरद्राक्षाक्षोडेक्षुमाषानूपमांसादीनि । लघूनि–दिव्योदकरक्तशालिषष्टिकमुद्गलावकपिञ्जलैणशशशम्बरादीनि ।

**आ० र०**–तत्र मात्रां विधत्ते–मात्राशीति । मात्रामश्नातीति मात्राशी । यद्यपि मात्राविशिष्टान्नपानस्यैव कर्मत्वम्, तथापि प्राधान्यार्थं मात्रायाः कर्मत्वव्यपदेशः । किमर्थं मात्राशी स्यात्? हि–यस्मात्, मात्रा अग्नेः प्रवर्तिका–पचन्तमग्निं प्रवर्तयति, पाचयतीत्यर्थः ।

ननु, द्रव्याण्यग्निमिन्धनत्वात्प्रवर्तयन्ति, न मात्रेत्यत आह–मात्रामिति ।

ननु, गुरूणि द्रव्याणि दुर्जरत्वान्मात्रामपेक्षन्ताम्, न पुनर्लघूनीत्यत आह–गुरूण्यपीति ।

तत्र गुरूणां का मात्रा? का(च) लघूनाम्? इत्याह—

**गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ।**
**मात्राप्रमाणं निर्दिष्टं सुखं यावद्विजीर्यति ॥ २ ॥**

**स०**–गुरूणां द्रव्याणामर्धसौहित्यम्–अर्धतृप्तिः । लघूनां नातितृप्तता–नातितृप्तिः, किं तर्हि? सौहित्यमात्रम् । एतन्मात्राप्रमाणं निर्दिष्टम् । मात्रा–ह्रस्वा मध्या बृहती च, तस्याः प्रमाणं–मात्राप्रमाणम् । तत्र मात्रा–परिमाणं मानम्, तस्यास्तु प्रमाणम्–उन्मानम् । एवं चात्र मात्राशब्दस्यापौनरुक्त्यम् । हि–यस्मात्[3], यावत् परिमाणमभ्यवहृतं सुखम्–अविकृतिं कृत्वा, जीर्यति–परिणमति ।

**आ० र०–ननु, गुरुभिर्लघुभिर्वा तृप्तिरेवोत्पद्यते, न तेषां विशेष इत्यत आह–गुरूणामिति । यावताऽऽहारराशिना तृप्तिरुत्पद्यते तावतोऽर्धं भुज्यत इति–अर्धसौहित्यम् । तावन्मात्रमेव–नातितृप्तता ।**

**ननु, एवं चेन्मात्राया अव्यवस्थितत्वं प्राप्नोतीत्यत आह–मात्रेत्यादि । मात्राप्रमाणं–मात्रालक्षणम्, यावत्सुखं जीर्यति तावन्मात्राशब्दवाच्यमित्यर्थः । उक्तं च खारणादिना–"यदभ्यवहृतं सम्यग्यथाकालं जरां व्रजेत् । प्रकृत्यविकृतिं कृत्वा तन्मात्रालक्षणं विदुः ॥" इति । तस्माद्गुरूणामर्धसौहित्यं सुखं जीर्यति, लघूनां नातितृप्ततेति नाव्यवस्था ।**

एतद्विपर्ययेण हीनमात्रमतिमात्रं च भोजनं वर्ज्यम्, दोषदर्शनात् । तथा चाह—

**भोजनं हीनमात्रं तु न बलोपचयौजसे ।**
**सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते ॥ ३ ॥**

**स०**–हीनमात्रं पुनरशनं न बलाय, नोपचयाय, न चौजसे । सर्वेषां वातरोगाणां हेतुतां–कारणतां याति ।

**आ० र०–अथ अमात्राशने दोषाः । तच्च द्विविधम्,–हीनमात्रमतिमात्रं च । तत्र हीनमात्रजान् दोषानाह–भोजनमिति ।** बलं–शक्तिः । उपचयः–पुष्टिः । ओजः–कान्तिः ।

**अतिमात्रं पुनः सर्वानाशु दोषान् प्रकोपयेत् ।**

**स०**–अतिमात्रं त्वशनं त्रीनपि दोषान् शीघ्रमेव प्रकोपयति ।

**आ० र०**–अतिमात्रजान् दोषानाह–अतिमात्रमिति ।

प्रकुपिताश्च त्रयो दोषा अलसकाख्यं विसूचिकाख्यं वा व्याधिं यथा कुर्वन्ति, तथा दर्शयति—

**पीड्यमाना[1] हि वाताद्या युगपत्तेन कोपिताः ॥ ४ ॥**
**आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ।**
**विष्टम्भयन्तोऽलसकं च्यावयन्तो विसूचिकाम् ॥५॥**
**अधरोत्तरमार्गाभ्यां सहसैवाजितात्मनः ।**

**स०**–तेनापक्वेनान्नेन–आहारेण, दुष्टेन वाताद्या हि–यस्मात्, पीड्यमानाः–विबध्यमानाः रुद्धमार्गत्वात्, अत एव युगपत्–एककालं सर्व एव, कोपितास्तदेव–दुष्टमन्नमाविश्य–आश्रित्यालसकं कुर्वते । किं कुर्वन्तः? विष्टम्भयन्तः,–तदेव दुष्टमन्नस्रोतःसु रुन्धानाः । तथा, अधरोत्तरमार्गाभ्यां सहसैव–अनुचिते देशे काले (च), च्यावयन्तः–ऊर्ध्वमधश्च निष्काशयन्तः । अजितात्मनः–असंयतचेतसः पुंसो विसूचिकां कुर्वते ।

**आ० र०–अथ प्रसङ्गादतिमात्रप्रकुपितदोषजानां रोगाणां निदानचिकित्सिते कथयति । तत्र विसूचिकालसकयोः सम्प्राप्तिमाह–पीड्यमाना इति ।** पीड्यमानाः[3] सन्तो युगपत्कोपिताः–स्रोतोरोधात् **परस्परसङ्घट्टनेन त्रयोऽप्येकदैव कोपं नीताः । केन? तेन,–अतिमात्रेणान्नेन । अतिमात्रत्वादेवामेन–पाककालातिक्रमेऽप्यपक्वेन, अत एव दुष्टेन–विकृतेन, तदेवाविश्य–तथाविधमेवान्नमधिष्ठाय, एवंभूतास्तदेवान्नं[4] विष्टम्भयन्तोऽलसकं कुर्वते । च्यावयन्तः पुनर्विसूचिकाम् । काभ्यां च्यावयन्तः? अधरोत्तरमार्गाभ्याम् । सहसैव–वेगेन । अजितात्मग्रहणमन्नलोलुपस्यैवालसकाद्युत्पत्तिरिति ज्ञापनार्थम् । उक्तं च सुश्रुतेन ( उ अ ५६।५ )–"न तां परिमिताहारा लभन्ते विदितागमाः । मूढास्तामजितात्मानो लभन्ते[5] कलुषाशयाः ॥" इति ॥**

एतदेव सविस्तरमाह—

**प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ॥ ६ ॥**
**आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ।**

**स०**–ऊर्ध्वं–मुखेनाहारो न प्रयाति, न चाधस्तात्–गुदेन प्रयाति, न चाहारः पच्यते, आमाशये–"नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः ।" तस्मिन्, अलसीभूत इवालसीभूतः । यथा,–अकर्मशीलः पुरुषोऽलस इत्युच्यते, तथाऽयमाहारोऽलसीभूतस्तिष्ठति । तेन हेतुना स रोगोऽलसकः स्मृतः ।

१ 'यावद्धि जीर्यति' इत्यरुणदत्तसम्मतः पाठः । २ 'त्यमेव' ट. । ३ 'त् तत्परि' ट ड । 'त् तावत्' ठ । ४ 'माणमेवमभ्य' ट । ५ 'विकृतिमकृत्वा' ड. । ६ 'परिणाममेति' ड. । ७ 'गच्छति' ट. ।

१ 'सम्पीड्यमाना वाताद्या' ख घ.झ । २ 'मात्राकुपि' ख घ झ । ३ 'सम्पीड्य' ख घ झ. । ४ 'स्तदन्नं' ख.घ झ. । ५ 'न्तेऽशनलोलुपाः' क.ग.ज. ।

**आ० र०**–अलसकं निर्वक्ति–प्रयातीति । यस्मादस्मिन् व्याधावाहार आमाशयेऽलसीभूत, तस्मादसावलसयतीत्यलसक. । अलसत्व–निष्क्रियत्वम् । तदेव प्रयातीत्यादिना स्पष्टीकृतम् ।

विसूचिकायां निर्वचनमाह—

**विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ॥ ७ ॥**
**सूचीभिरिव गात्राणि विध्यतीति विसूचिका ।**

**स०**–वाय्वादीना त्रयाणामत्यन्तप्रकोपात् नानाप्रकारैर्वेदनोद्भेदै–पीडोत्पादै, यस्माद्गात्राणि सूचीभिरिव विध्यति, तस्माद्विसूचिकेत्युच्यते । विविधाना विकाराणा सूचिका–विसूचिकेत्युच्यते ।

**आ० र०**–विसूचिकां निर्वक्ति–विविधैरिति । विविधसूचीतुल्यत्वाद्विसूचिका । तदेव "विविधै" इत्यादिना स्पष्टीकृतम् ।

**तत्र शूलभ्रमानाहकम्पस्तम्भादयोऽनिलात् ॥ ८ ॥**
**पित्ताज्ज्वरातिसारान्तर्दाहतृट्प्रलयादयः ।**
**कफाच्छर्द्यङ्गगुरुतावाक्सङ्गष्ठीवनादयः ॥ ९ ॥**

**स०**–वातादधिकात् शूलादयो भवन्ति । आदिशब्देनाङ्गोद्वेष्टनमुखशोषादिपरिग्रह । पित्ताद्धात् ज्वराद्या स्यु । प्रलयो–मूर्च्छाप्राय । आदिशब्देन मदादिपरिग्रह । कफादधिकात् छर्द्यादयो भवन्ति । आदिशब्देन क्षवथ्वादीना ग्रहणम् ।

**आ० र०**–विसूचिकालक्षणमाह–तत्रेति । तत्र–विसूचिकायाम् । अनिलात् शूलादयो भवन्ति । पित्तात् ज्वरादय । कफात् छर्द्यादय. । अन्तर्दाह–कोष्ठदाह । प्रलयो–मूर्च्छा । अङ्गग्रहण सर्वाङ्गगौरवार्थम् । वाक्सङ्गो–वाँच स्खलनम् । ष्ठीवन–श्लेष्मनिःसरणम् । अनिलादिग्रहणमनिलादिकृतसमस्तविकारग्राहयर्थम् । अत एवादिशब्द प्रयुक्त । शूलादिग्रहण तु मन्दबुद्धिप्रबोधनार्थम् । एतेन त्रैविध्यशङ्काऽप्यपास्ता । सुश्रुतोऽपि मूर्च्छादीन्यभेदेनाह (उ अ ५६।६)–"मूर्च्छातिसारौ वमथु पिपासा शूलभ्रमोद्वेष्टनजृम्भदाहाः । वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्या शिरसश्च भेद. ॥" इति ।

**विशेषाद्दुर्बलस्याल्पवह्नेर्वेगविधारिणः ।**
**पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा ॥ १० ॥**
**अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम् ।**
**शूलादीन् कुरुते तीव्रांश्छर्द्यतीसारवर्जितान् ॥ ११ ॥**
**सोऽलसः**

**स०**–दुर्बलत्वादियुक्तस्य यन्मारुतेन विशेषादन्न पीडितम्, अन्तरा–आमाशयमध्य एव, श्लेष्मणा रुद्ध–अलसीभूतम्, तथा दोषै क्षोभित–आकुलितम्, अत एवातिपीडाकारित्वाच्छल्यरूपतयैव स्थितम्, तीव्रान्–दु सहान्, शूलादीन् छर्द्यादिवर्जितान् कुरुते । छर्द्यतीसाराभ्यां हि विसूचिकोक्ता । सोऽलससञ्ज्ञो रोग । दुर्बलो ह्यनुपचितधातु, स न कदाचिदाहार सोढु शक्त । अल्पाग्निश्चाहार न सम्यक् जरयति । यतो वेगधारणशीलस्य प्रतिहतो वायुर्विमार्गग पित्तकफावपि विमार्गगौ कुरुते, इत्येतद्विशेषेण निर्देश ।

**आ० र०**–अलसकलक्षणमाह–विशेषादिति । यत्रान्न छर्द्यतीसारवर्जितान् शूलादीन् विसूचिकोक्तान् कुरुते, स व्याधिरलसक । कीदृशमन्नम्? मारुतेन पीडितम्,–अलब्धसञ्चारेण वायुनाऽऽक्रान्तम्, आक्रान्तत्वादूर्ध्वमधो वा अनिर्गच्छदेव अन्तरा–मध्य एव, श्लेष्मणा रुद्ध–निषिद्धनिर्गमम्, अत एवालसं–निष्क्रियतां गतम्, ततो दोषै–वातपित्तकफै, क्षोभित–सञ्चालितम्, अत एव शल्यत्वेनेव संस्थित–शल्यमिव बाधमानम् । किं सर्वेषामविशेषेण? नेत्याह–विशेषादित्यादि । दुर्बलत्वादिविशिष्टस्य विशेषेणालस इत्यर्थ. ।

दण्डकालसकं लिलक्षयिषुराह—

**अत्यर्थदुष्टास्तु दोषा दुष्टामबद्धखाः ।**
**यान्तस्तिर्यक्तनुं सर्वां दण्डवत्स्तम्भयन्ति चेत् ॥१२॥**
**दण्डकालसकं नाम तं त्यजेदाशुकारिणम् ।**

**स०**–चेद्यद्यर्थे । अतिशयेन दुष्टा दोषा, तथा दुष्टामेन बद्धानि–पूर्णानि, खानि–स्रोतांसि, यैस्ते दुष्टामबद्धखा, तथा तिर्यग्गच्छन्त, तनु सर्वां–शरीरं सकल, दण्डवद्यदि स्तम्भयन्ति–प्रसारणाकुञ्चनरहित कुर्वन्ति, तदा दण्डकालसको नाम रोगो भवति । त–दण्डकालसक, त्यजेत्–नोपक्रमेत् । यत आशुकारिणम्,–आशु–शीघ्र स्वकर्म मारण करोतीत्याशुकारी, क्षिप्र हन्तीत्यर्थ ।

**आ० र०**–दण्डकालसकं लक्षयति–अत्यर्थेति । यत्रालसके दोषा सर्वां तनु दण्डवत्स्तम्भयन्ति, तमलसकं दण्डकालसकसंज्ञमाशुकारिणं त्यजेत् । कीदृशा दोषा? अत्यर्थदुष्टा,–अतिमात्रासेवनेन अतिदुष्टा । दुष्टामबद्धखा,–चिरसञ्चयात् दुष्टेनामेन–कारणभूतेन, बद्धानि–पूरितानि, खानि–स्रोतांसि, यैस्ते तथा । तिर्यग्गच्छन्त.–मार्गावरोधात्तिर्यङ्मार्गेण प्रसरन्त ।

१ 'विषूचि' अ क.ख घ झ ञ.ट. । 'विशूचि' आ ठ ड । २ 'यास्तु नि' ठ । ३ 'प्रकाराणा' ड. । ४ 'सूचिकातु' ख घ झ । ५ 'तुल्यविद्धत्वा' ञ । ६ 'क्षवश्वासादीना' ट । ७ 'वाचा' ग. । 'वाक्स्ख' घ । ८ 'निरसनम्' ख घ झ । ९ 'स्तरोगप्रा' क ञ । १० 'मूर्च्छाऽङ्गसादो च' क ग ञ । ११ 'रुजा च' ख घ झ । १२ 'स प्रभेद' ख घ.झ । १३ 'शल्यत्वेनेव' हेमाद्रि ।

१ 'तया व्यवस्थित' ट । 'त एव' ठ. । २ 'भ्या युक्ता विषूचिका । उक्तछर्द्यतीसारवर्जित सोऽलसरोग' ट । ३ 'दाबाधा' ट । ४ 'द्धमार्गम्' क.ग ञ । ५ 'ष्टविशेषणानामित्यर्थ' ख.घ । 'ष्टविशेषाणामित्यर्थ' झ । ६ 'चेत्–यदि ।' ड । ७ 'गता' ट । ८ 'श्चनादिर्' ट । ९ 'स्व कर्म मरण' ट । १० 'यत्रालसके' ग ञ । ११ 'त्रशीलनेन' ख घ झ. । १२ 'चिर' ख घ । १३ 'श्चयदु' क.ग ञ । १४ 'करण' क.ग । १५ 'निर्गच्छन्त' ग । अत्र 'तिर्यग्यान्त.' इति पदमावश्यकम्, किन्त्वेकस्मिन्नपि पुस्तके नोपलब्धम् । १६ 'मार्गरो' क.ग.ञ. ।

सम्प्रत्यामविष निर्दिशति—

**विरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणम् ॥ १३ ॥**
**आमदोषं महाघोरं वर्जयेद्विषसंज्ञकम् ।**
**विषरूपाशुकारित्वाद्विरुद्धोपक्रमत्वतः ॥ १४ ॥**

**स०**–विरुद्ध–प्रागुक्तम्, "विरुद्धमम्ल" (हृ सू अ ७।३१) इत्यादिना। "विद्यादध्यशन" (हृ सू अ ८।३४) इत्यादिना–अध्यशनम्। अजीर्णं च–त्रिविध वक्ष्यति। एतानि शीलितु शील यस्य तस्य पुसो य, आमदोषो विषलक्षण –लालादि[1]लक्षणयुक्तो, महाघोरो–अतिकष्टो विषाख्यो यो भवति, त न चिकित्सेत्। कुत ? विषरूपत्वादाशुकारित्वाद्विरुद्धोपक्रमत्वाच्च। विषसदृशस्वरूपत्वाद्विषे शीतोपक्रमो युक्त, आमे चोष्णोपक्रमो युक्त, इति विरुद्धोपक्रमत्वम्।

**आ० र०**–आमविष लक्षयति–विरुद्धेति। विरुद्धाशनादिशीलिन पुरुषस्योत्पन्नमामदोष–अजीर्णज व्याधि वर्जयेत्। विरुद्ध–पयोमत्स्यादि। अध्यशन–वक्ष्यमाणम्। अजीर्ण–अजीर्णाशनम्। कीदृशमामदोषम् ? विषलक्षण,–देहव्यापिवि[3]षतुल्यलक्षणम्। महाघोर–तीव्रपीडाकरम्। विषसञ्ज्ञक–विषाख्यम्। आमोपप[4]दैवेय सञ्ज्ञा। उक्त च चरकेण (वि. अ २।१५)–"विरुद्धाध्यशनाजीर्णाशनशीलिन पुनरामदोषमामविषमाचक्षते" इति। कुतो वर्जयेत् ? विषरूपाशुकारित्वात्,–विषरूपत्वाच्छीघ्रकारित्वाच्च। ननु, विषमपि साध्य दृष्टम्। तत्कुतोऽस्य विषरूपत्वादसाध्यत्वम् ? इत्यत आह–विरुद्धोपक्रमत्वत,–हेतुविपरीतव्याधिविपरीतयोरुपचारयोर्विरोधात्। हेतुर्ह्य[5]त्रामस[6]ञ्चय, तत्राग्नेय उपचार। व्याधिस्तु विषरूप, तत्र सौम्य उपचार इति विरोध।

अलसकोपक्रम निर्दिदिक्षुरिदमाह—

**अथाममलसीभूत साध्यं त्वरितमुल्लिखेत् ।**
**पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥ १५ ॥**
**स्वेदनं फलवर्तिं च [7]मलवातानुलोमनीम् ।**
**नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत् ॥१६॥**

**स०**–अथेत्यानन्तर्ये। पूर्वोक्त साध्यासाध्यमवगम्यानन्तरमाम साध्यमदुष्ट सन्त त्वरित–द्राक्, आतुर उल्लिखेत्–उद्वमेदित्यर्थ। किंविधमामम् ? अलसीभूतम्,–अलसलक्षणतां गतम्। कथमुल्लिखेत् ? इत्याह–पीत्वेत्यादि। जलमुष्ण पीत्वा व[11]चालवणमदनफलयुक्त, वमेदित्यर्थ। ततोऽनन्तरं स्वेदन योजयेत्। तथा–"विपाच्य मूत्राम्लमधूनि दन्तीपिण्डीतकृष्णा-

बिडधूमकुष्ठै। वर्ति कराङ्गुष्ठनिभा घृताक्ता गुदे [1]रुजानाहहरी वि[2]दध्यात् ॥" इत्यादि फलवर्ति च मलवातानुलोमनी योजयेत्। तत्रामदोषे दोषवशादङ्गानि च नाम्यमानानि–सङ्कोच्यमानानि सन्ति, अत्यर्थ स्विन्नानि वस्त्रादिना वेष्टयेत्।

**आ० र०**–उक्तानामामदोषाणा चिकित्सामाह–अथेति। अथशब्दश्चिकित्सारम्भे मङ्गलार्थं। आम–आमदोषम्, उल्लिखेत्–वमेत्, अलसीभूतम्। [3]यं स्वय न प्रवर्तते बलात्प्रवर्तमानोऽपि मन्द [4]मन्द वा प्रवर्तते, सोऽलस। आमदो(वि)षोऽपि तथाभूत। स ह्यलसकेनैव(नेव) प्रवर्तते। विसूच्या तु मन्द मन्द प्रवर्तते। स द्विविधोऽप्युल्लेखनीय। उक्त हि खारणादिना–"विसूच्यलसकौ वाम्यो पिप्पलीलवणाम्भसा।" इति। साध्यग्र[5]हणमिह नियमार्थम्, साध्यमेव न त्वसा[6]ध्यमपि। दृश्यते हि निदानेऽसाध्यत्वेनोक्ताना मासग्रन्थ्यादीना चिकित्सिते चिकित्सोपदेश। आमदोषस्त्व[7]साध्य, असाध्य एवेत्यर्थ। किं कृत्वोल्लिखेत् ? सोग्रापटुफलमुष्ण वारि पीत्वा। उग्रा–वचा। पटु–सैन्धवम्। फल–मदनफलम्। ततो–वमनानन्तर, स्वेदन योजयेत् फलवर्ति च। कस्या वर्ते फलवर्तिसञ्ज्ञा ? इत्यपेक्षायामाह–मलवातानुलोमनीम्। विण्मूत्राधोवाताना प्रवर्तिनी वर्ति–फलवर्तिरित्यर्थ। स्वेदफलवर्तिद्रव्याण्युक्तानि खारणादिना–"शूले तु स्तिमिते सामे स्वेद शस्तो मुहुर्मुहु। रूक्षोष्णै कटुकै पांशुकरीषसिकतादिभि ॥ पिप्पल्योऽगारधूमश्च मदन सर्षपास्त्रिवृत्। हेमक्षीरी वचा किण्व कुष्ठ दन्ती यवाग्रज ॥ समूत्रलवणाभ्यक्ता फलवर्तिरिय हि[8]ता। संस्वेद्यालसके शूलविबन्धाना[9]हनाशिनी ॥" इति। यदामदोषेणाङ्गानि नाम्यन्ते–सङ्कोच्यन्ते, तदा तान्यतिस्विन्नानि कृत्वा वस्त्रादिभिर्वेष्टयेत्।

**वि[10]सूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ।**
**तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ॥ १७ ॥**

**स०**–वि[10]सूच्या–पूर्वोक्तलक्षणायाम्, अतिवृद्धाया सत्यां पार्ष्ण्यो –खुरिकयो, अय शलाकादिना दाह प्रशस्यते। तदह –वि[11]सूचिकारम्भदिवस एव, एन–विसूचि[12]कावन्त, उपवास्य–लङ्घयित्वा, विरिक्तवत्–पेयादिक्रमेणोपाचरेत्। सुश्रुते (?) चोक्तम् (सङ्ग्रहे सू अ ११)–"[13]सुच्छर्दितविरिक्तस्य गात्रायामेऽतिदारुणे। भल्लातकमधूच्छि[14]ष्टजीर्णपिण्याकनागरै ॥ घृततैल पचेत् साम्लै[15]स्तच्च खल्लीप्रमुत्तमम् ॥ त्वक्पत्रारास्नागुरुशिग्रुकुष्ठैरम्लप्रपिष्टै स-

१ 'दिश्यावक्रेत्यादिल' ट। २ 'र्णान्नज' ख घ झ। ३ 'विषल' ख घ झ। ४ 'पदा चेय' ख घ झ। ५ 'हेतुरत्रा' क.ग ञ। ६ 'सश्रय' ख घ झ। ७ 'मलदोषानु' अ। ८ अस्याग्रे "मदन पिप्पली कुष्ठ वचा गौराश्च सर्षपा। गुडक्षारसमायुक्ता फलवर्ति प्रशस्यते ॥" इति आ पुस्तके ऽधिक श्लोक। ९ 'तुरमुल्लि' ठ ड। १० 'णमुपगतम्' ट। ११ 'वचासैन्धवलवण' ट।

१ 'रुजादाह' ड। २ 'निदध्यात्' ट ड। ३ 'यत्स्वतो न' क ञ। 'य स्वतो न' ग। य –आमदोष। ४ 'मन्द यो प्र' ग। 'मन्द प्र' ख झ.। ५ 'हण नि' ख घ झ। ६ 'ध्यम्' क ग.ञ। ७ 'स्वसाध्य एवे' क ञ.। ८ 'मता' क ग ञ। ९ 'हमोक्षिणी' ख घ झ। १० 'विषूच्या' अ.क ख. घ झ ञ ट। 'विशूच्या' आ ग ठ ड.। ११ 'विशूचिकादिवसं च' ठ ड। १२ 'कार्त' ट। १३ 'प्रच्छ' ट.ठ ड। १४ 'ष्टशिग्रुपि' ट.। १५ 'रम्लै सुपिष्टै' ट.ठ ड।

वचाशताह्वै । उद्वर्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वं च तदर्थकारि ॥ शिरीषनक्ताह्वफणिज्जबीजत्रायन्त्यपामार्गफलानि वर्ति । बस्तस्य मूत्रेण विसूचिकाघ्नी प्रलेपनस्याञ्जनधूमयोगैः ॥" इति ।

आ० र०–विसूच्या विशेषमाह–विसूच्यामिति । अतिवृद्धाया–पूर्वोक्तेन प्रकारेण अशान्ताया, विसूच्यां पार्ष्ण्योर्दाह प्रशस्यते । प्रशब्द प्रकर्षार्थं । सर्वेष्वामदोषेषु पार्ष्ण्योर्दाह शस्यते, विसूच्या तु प्रकर्षेण । यदाह सुश्रुत (उ अ ५६।१२)–"साध्यासु पार्ष्ण्योर्दहनं प्रशस्तमग्निप्रतापो वमनं च तीक्ष्णम् ।" इति । साध्यास्विति बहुवचनात् विसूचिकालसकविलम्बिकाना ग्रहणम् । उक्तं च वङ्गसेनेन–"विलम्बिकालसकयोर्विसूच्युक्तः क्रियाक्रमः ।" इति । पार्ष्णिदाहश्च पिप्पल्यादिभिः । यदाह भेड –"विसूच्यामतिवृद्धाया पार्ष्णिदेशे च दाहयेत् । पिप्पल्या वाऽप्यरण्या वा शस्त्रेणातापितेन वा ॥" इति ।

निवृत्तामदोषस्य चिकित्सामाह–तदहश्चेति । यस्मिन्नहनि आमदोषो निवृत्त, तदहरेनमुपवास्य विरिक्तवत्–पेयादिक्रमेणोपाचरेत् । चकारात् पूर्वाण्यप्यहान्युपवास्य । तथा च खारणादि –"आमाशयविशुध्यर्थमथैनमुपवासयेत् । जीर्णे विरिक्तवृत्ति स्याद्या प्रोक्ता मण्डपूर्विका ॥" इति । वमनाद्युपक्रमान्ते पठ्यमानेन प्रकृतपरामर्शिना तच्छब्देन आमदोषनिवृत्तिदिनमेव परामृष्टं युक्तम्, न पुनरुत्पत्तिदिनम् ।

अजीर्णिनो भेषजं निषेधति—

**तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।**
**आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ १८ ॥**
**निहन्यादपि चैतेषां विभ्रमः सहसाऽऽतुरम् ।**

स०–अजीर्णी–अजीर्णवान्, तीव्रशूलोऽपि सन् शूलहरमौषधं न पिबेत् । वमनकरमुष्णोदकं च प्रागुपदिष्टमेव पिबेदित्यर्थ । शूलघ्नमित्युपलक्षणार्थम् । छर्द्यतीसारघ्नमपि विसूचिकाया न पिबेत् । यत आमेन सन्नो–मन्दीभूतोऽग्निर्दोषौषधाशनं पक्तुं न समर्थः । एतेषां च–दोषौषधाशनानां, त्रयाणां सम्बन्धी यो विभ्रमो–व्यापत्ति, सहसा–कालमनपेक्ष्यैव, आतुरं हन्यात् । न केवलमिदं गुणाय सम्पद्यते, प्रत्युत दोषं करोतीति सूचनार्थमपि चेति कृतम् ।

आ० र०–आमदोषिणः शमनौषधं निषेधति–तीव्रार्तिरिति । अपिशब्द उभयत्र सम्बध्यते । तीव्रार्तिरपि–किंपुनर्मन्दार्तिरनर्तिर्वा । शूलघ्नमपि–किंपुनर्दीपनपाचनादिकम् । कुतः ? यत आमेनाग्नेन सन्नो–मन्दीभूतो, अग्निर्दोषादीनि पक्तुं नाल–न समर्थः । दोषः –आमान्नक्षोभित कफादि । औषधं–तन्निवृत्त्यर्थं प्रयुक्तं पाचनादि । अशनं–तद्धेतुभूतमामान्नम् ।

न केवलमौषधादर्थानवाप्ति, अपि तु अनर्थावाप्तिरपीत्याह–निहन्यादिति । एतेषां–दोषादीनाम्, व्यापत्तिः–पाकाभावजनितसङ्क्षोभ, आतुरं सहसा हन्यात् । अपि चेति प्रत्युतार्थे, रोगशमनार्थमौषधं रोगं न शमयति प्रत्युत वर्धयतीत्यर्थः ।

कदा औषधं युञ्जीत ? इत्याह—

**जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे ॥ १९ ॥**
**दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च ।**

स०–जीर्णमशनं यस्य तस्मिन्नौषधं युञ्ज्याद्वैद्यः । कीदृशि ? स्तब्ध–अचल, गुरूदरे–कोष्ठो, यस्य तस्मिन् । किमर्थमौषधं युञ्ज्यात् ? इत्याह–दोषेत्यादि । गतार्थम् ।

आ० र०–अवस्थाविशेषे औषधमाह–जीर्णाशन इति । आमदोषिणो यदा जीर्णमन्नं तदा दीपनपाचनमौषधं देयम् । सङ्ग्रहे तु (सू अ ११)–"सद्यः संस्यग्विशुद्धस्य शाम्यन्ति तदुपद्रवा । शूले निरन्नकोष्ठोऽग्नि कोष्णाभिश्चूर्णिता पिबेत् ॥ हिङ्गुप्रतिविषाव्योषसौवर्चलवचाभया । अथवा पिप्पलीमूलत्रिवृतादारुसैन्धवम् ॥ शुण्ठीसूक्ष्मकुक्षीरलवणपिप्पलीमरिचानि च । पाठाम्लवेतसक्षारयवानीपौष्कराणि च ॥ द्विरुत्तरं हिङ्गुवचाग्निकुष्ठसुवर्चिकाक्षारबिडाजमोदम् । शूलोदरानाहविसूचिकार्शोहृद्रोगगुल्मोर्ध्वसमीरणघ्नम् ॥ मुस्ताजमोदपूतीकवचाशुण्ठ्यग्निधान्यकै । सवालकशठीबिल्वै क्वाथं तृट्शूलवान् पिबेत् ॥ रास्नाकट्फलषड्ग्रन्थाबृहतीद्वयजोङ्गकै । गुग्गुल्वतिविषाकुष्ठपत्रव्याघ्रनखाम्बुदै ॥ कुर्याच्छुष्कै समूत्रैर्वा लेपोद्वर्तनधूपनम् । सरुगानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ॥ दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवै । यवचूर्णश्च सक्षारतक्रः कोष्ठार्तिजित्परम् ॥ योजयेत्सैन्धवान्तैश्च वातविण्मूत्रसङ्ग्रहे । द्विक्षारजीर्णपिण्याककुष्ठारुष्करचित्रकै ॥ सशुक्तसैन्धवैस्तैल पक्वमभ्यञ्जने हितम् । सुच्छर्दितविरिक्तस्य गात्रायामे सुदारुणे ॥ भल्लातकमधूच्छिष्टजीर्णपिण्याकनागरै । शूतंतैलं पचेत्साम्लैस्तच्च खल्लीघ्नमुत्तमम् ॥ त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः । उद्वर्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वं च तदर्थकारि ॥ यश्चावदन्तौष्ठनखोऽल्पसञ्ज्ञ छर्द्यर्दितोऽन्तर्गतताम्रनेत्रः । क्षामस्वरः स्रस्तसमस्तसन्धिर्यायान्नरोऽसौ पुनरागमाय ॥ व्योष कर-

१ 'चिकासु' ट ड. । २ 'विपाच्य' ट । ३ 'वृद्धत्वात्पूर्वो' ख ग घ झ । ४ 'पार्ष्णिदाह ' ख ग झ. । ५ 'दोषनिवृत्ति ' क ग ञ । ६ 'ण्यपि दिनान्यु' झ । ७ अस्याग्रे 'विरिक्तस्य क्रिया साम्या मण्डपेयादिपूर्विका ।' इति ग पुस्तकेऽधिक पाठ । ८ 'मर्षिणा' क ञ । ९ 'युज्यते' क ग ञ. । १० 'व्यापत्ति ' इति हेमाद्रिसम्मत पाठ इति प्रतिभाति । ११ 'आमेन सन्नो' ख.घ.झ. ।

१ 'आमक्षो' क ग ञ । २ 'भूतमन्नम्' क ग ञ । ३ 'ति, अनर्था' ख घ झ । ४ 'तक्षोभ ' क ग ञ । ५ 'नाशयति' क ग ञ । ६ 'औषध विधत्ते' ख घ झ । ७ 'जीर्णाहारत्व तदा' ख घ झ । ८ 'सामस्य शु' क ग ञ । ९ 'कोष्ठेऽग्नि ' स द्व । १० 'मूल' क ख घ झ ञ स स । ११ 'ठीत्वक्' झ । १२ 'वा' स स । १३ 'वर्तिविण्मूत्र' क ख.घ झ ञ. । 'तत्र वि' स मू । १४ 'मेऽतिदारुणे' सं द्व. । १५ 'घृत' क ग ञ । १६ 'तोऽभ्यन्तरयातनेत्र ' ञ.स.मू. । १७ 'सर्वविमुक्तसन्धि' क.ग.ञ.स.मू. ।

अस्य फल हरिद्रा[1] मूल समावाप्य च मातुलुङ्ग्या । छाया-विशुष्का गुटिका कृतास्ता हन्युर्विसूची नयनाञ्जनेन ॥ शिरी-षनक्ताह्वफणिज्जबीजत्र्यायन्त्यपामार्गफलानि[2] वर्ति । बस्तस्य मूत्रेण विसूचिकाघ्नी प्रलेपधूमाञ्जननस्ययोगे ॥ यामैश्चतु-र्भिर्द्विभ्या च भोज्यभैषज्ययो समे । पाकोऽग्नौ युक्तयो-र्ज्ञेय तु[3] तीक्ष्णे, मन्दे पुनश्चिरात् ॥ सभक्तमौषध तस्मा-न्मन्दाग्नेरवचारयेत् । पूर्वाह्णे भोजन सात्म्य लघु दीपन-बृहणम् ॥ प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति । अजीर्णे सायमाशे तु प्रातराशो हि दुष्यति ॥ दिवा प्रबु-ध्यतेऽर्केण हृदय पुण्डरीकवत् । तस्मिन्विबुद्धे स्रोतासि स्फुटत्व यान्ति सर्वश ॥ व्यायामाच्च विहाराच्च[4] विक्षिप्त त्वाच्च चेतस । न क्लेदमुपगच्छन्ति दिवा तेनास्य धातव ॥ अक्लिन्नेष्वन्नमासिक्तमन्यत्तेषु[5] न दुष्यति । अविदग्धेष्विव पय स्वन्यत् सम्मिश्रित पय ॥ रात्रौ तु हृदये म्लाने सवृ-तेष्वयनेषु[6] च । यान्ति कोष्ठे परिक्लेद सवृते देहधातव[7] ॥ क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्त प्रदुष्यति । विदग्धेषु पय स्व-न्यत् पर्यस्तेष्विवार्पितम्[8] ॥ नैशे तस्मादजीर्णेऽन्ने नान्य-द्भुञ्जीत भोजनम् । उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथो-चित ॥ लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् । प्राय प्रज्ञापराधेन रोगग्राम प्रजायते ॥ नृणामशनलुब्धाना विशेषेण विसूचिका ॥ दोषोपनद्ध यदि लीनमाम[9] पित्तो-ल्बणस्यावृणुयात्[10] वह्निम् । जायेत दुष्टा तु ततो बुभुक्षा सा[11] मन्दबुद्धीन्[12] विषवन्निहन्ति ॥" इति ।

कीदृशमौषव योज्यमित्याह—

**शान्तिरामविकाराणा भवति त्वपतर्पणात् ॥ २० ॥**
**त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत्[13] ।**

**स०**–तुरवधारणे । यस्मादपतर्पणादेवामजाना विकाराणा–आलस्यजाड्याभिमान्द्यादीनाम्, शान्ति –उपशमो, भवति । तस्मादपतर्पण योजयेत् । वक्ष्यति हि ( हृ सू अ १४।१० )–"मेहामदोषातिस्निग्ध" इत्यारभ्य यावत् "लङ्घयेत्सदा" इति । तस्मादपतर्पण समीक्ष्य–देशकालाग्न्यादीन् पर्यालोच्य, त्रिप्रकारं त्रिप्रकारे दोषे वैद्य प्रयोजयेत् ।

**आ० र०–उक्तानुक्तामदोषसङ्ग्रहार्थ[14] सामान्यचिकित्सा-माह–शान्तिरिति । आमविकाराणा–सर्वेषामजीर्णान्नजाना व्याधीनाम् । अपतर्पणात्–लङ्घनात् ।**

१ 'हरिद्रा' क ग ञ । 'हरिद्रे' स द्व । २ 'मक्तला हि' ञ । 'फलैश्च' स स । ३ 'च' सं द्व । ४ 'विचाराच्च' स द्व । ५ 'मल-न्तेन न' स स. । ६ 'नेष्वथ । परिक्लेद यान्ति कोष्ठे स'ख घ झ । ७ 'सर्वधातव.' स द्व । ८ 'पयोऽतप्तमिवा' ग । 'स्वतप्तमिवा' ञ । ९ 'मन्नेषु लु' क ग ञ । १० 'लीनमन्न' स द्व । ११ 'लवण स्या-द्वृणु' क ग ञ. । १२ 'या' स.द्व । १३ 'बुद्धि विष' क ग ञ । १४ 'प्रकल्पयेत्' अ । १५ 'ट्णार्थ' क.ञ. ।

अपतर्पण विभजति–त्रिविधमिति । समीक्ष्य–बलादिक सम्यग्ज्ञात्वा ।

सम्प्रत्येतदेव यथायोग्यमाह—

**तत्राल्पे लङ्घनं पथ्यं, मध्ये लङ्घनपाचनम् ॥ २१ ॥**
**प्रभूते शोधनं, तद्धि मूलादुन्मूलयेन्मलान् ।**

**स०**–तत्र–तेषु त्रिषु मध्ये, अल्पे दोषे, लङ्घनं–उपवासाख्य, पथ्यम् । तेन ह्यनलानिलवृद्ध्याऽल्पो दोष शीघ्र सशोष्य जीयते । मध्ये दोषे लङ्घन पाचन च पथ्यम् । अग्नि पचति, तस्य पचतो ये विबन्धहेतव[1], ताक्षिषिध्य पाटव पक्तुरादधत पचेति[2] प्रयुङ्क्त[3] इव तत् पाचयतीति पाचनमुच्यते । हेतुमण्णि-जन्तात्पचेर्बाहुलकात्कर्तरि ल्युट् । यदुपयुक्तमन्नपानौषधम पक्वाना सामाना धातूना पाचने समर्थ तत् पाचनमित्यर्थ । प्रभूते शोधन पथ्यम् । शोधन तु कायाद्बहिर्दोषानीरयति । वक्ष्यति हि ( हृ सू अ १४।५ )–"यदीरयेद्बहिर्दोषान् पञ्चधा शोधन तु तत् ।" इत्यादि । कुत प्रभूत आमदोषे शोधन हितम्? इत्याह–तद्धीत्यादि । हि–यस्मात्, तत्–शोधनम्, मूला-न्मलानाशयेत् । सङ्ग्रहेऽप्युक्तम् ( सू अ ११ )–बहुदोषाणां पुनर्दोषावसेचनमेव[4] कार्यम् । न ह्यस्राविते पल्वलोदकोघे शाल्यादिपुष्टिर्भवति ।" इति ।

**आ० र०**–विभागं स्पष्टीकरोति–तत्रेति । लङ्घनमत्रो-पवास । लङ्घनपाचन–उपवासयुक्त पाचनौषधपानम् । प्रभूते–बहुतरे । शोधन–वमनादि । हि–यस्मात्, तत्–शोधनम्, मलान्मूलादुन्मूलयेत्–समूलानुच्छिन्द्यात्[5] । मल-बलमूल च विकारे प्रभूतत्वम् ।

**एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् ॥ २२ ॥**
**चिकित्सेदनुबन्धे तु सति हेतुविपर्ययम् ।**
**त्यक्त्वा यथायथं वैद्यो युञ्ज्याद्व्याधिविपर्ययम् २३**

**स०**–यथा सन्तर्पणोत्थ आमदोषो निदानविपर्ययाच्चिकि-त्स्यते, एवमन्यानपि ज्वरादीन् विकारान् स्वनिदानविपर्यया-च्चिकित्सेत् । सन्तर्पणोत्थोऽपतर्पणेन, शीतोत्थ उष्णेन, इत्यादि । यदि त्वेवमुपक्रम्यमाणो व्याधिरनुबध्येत[6]–तेनोपशम न गच्छेत्, ततो हेतुविपर्यय त्यक्त्वा व्याधिविपर्यय युञ्ज्यात् । किम्भूतम्? यथायथ,–यद्यस्य ज्वरादिव्याधेर्भैषज्य वक्ष्यमाण तत्प्रयुञ्जी-तेत्यर्थ । यथा, ( सङ्ग्रहे सू अ १२ )–"मुस्तापर्पटकं ज्वरे, रजनी[7] यवान्नं प्रमेहे" इति ।

**आ० र०–तुल्यन्यायप्रसङ्गादन्येषामपि व्याधीना चिकि-त्सामाह–एवमिति । एव–आमविकारवत् । अन्यान्–ज्वरा-**

१ 'विबन्धादयो भवन्ति' इति क्वचित् । २ 'टवमादधान ' ठ । ३ 'पचति' ट ठ ड । ४ 'प्रयुक्त' ठ ड । ५ 'पुनरपसेचन' ट ठ ड । ६ 'समूलमुच्छि' क.ग.ञ. । ७ 'बध्यते' ट. । ८ 'रजनी प्र' ट.ठ ।

दीन् । यथा, आमविकारा सन्तर्पणोत्थास्तद्विपरीतेनापतर्पणेन चिकित्स्यन्ते, तथा, अन्येऽपि विकारा स्वनिदानविपर्ययाच्चिकित्स्या ।

आमविकाराणामन्येषां च स्वनिदानविपर्ययादनुपशमे चिकित्सामाह–अनुबन्धे त्विति । यदि हेतुविपर्यये क्रियमाणेऽप्यनुबन्धो–अनुवर्तन व्याधे, तदा हेतुविपर्यय त्यक्त्वा भिषक् व्याधिविपर्यय भैषज्य यथायथ युञ्ज्यात् । हेतुविपरीतादिस्वरूपमुक्त सङ्ग्रहे ( सू अ १२ "तत्र हेतुविपरीत" इत्यारभ्य यावत् "विपरीतमर्थ करोति" इति । ) ।

न च हेतुव्याधिविपर्यययोरेव चिकित्सायामुपयोग इति दर्शयन्नाह—

**तदर्थकारि वा, पक्के दोषे त्विद्धे च पावके ।**
**हितमभ्यञ्जनस्नेहपानबस्त्यादि युक्तितः ॥ २४ ॥**

**स०**–तत्–निदानव्याधिविपर्ययैसाध्य, अर्थ–रोगोपशम लक्षण, कर्तु शील यस्य तत्–तदर्थकारि । तद्वा युञ्ज्यात् । यथा (सङ्ग्रहे सू अ १२)–"मदात्यये मद्यपानम्, अतिसारे विरेचनम्" इति । वाशब्द समुच्चयार्थ । इति त्रिविधमौषध निर्दिश्याऽऽमचिकित्सामेवानुसरन्नाह–पक्व इति । पक्के दोषे–निरामे, दीप्ते पावके च । निरामत्वे दीप्ताग्नित्वे च समुचितमेव हितमभ्यञ्जादिकम् । युक्तितो–मात्रया, यथाऽग्निसादादि न भवतीति ।

**आ० र०**–पक्वदोषाणामामविकाराणा चिकित्सामाह–पक्के दोषे इति । उक्तेनोपक्रमेण पक्के दोषे दीप्ते चाग्नौ सत्यामदोषिणामभ्यञ्जनादि हितम् । आदिशब्दाद्रसायनवाजीकरणादि ।

अजीर्ण लक्षयितुमाह—

**अजीर्णं च कफादामं तत्र शोफोऽक्षिगण्डयोः ।**
**सद्योभुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम् ॥ २५ ॥**

**स०**–अग्निप्रतिपक्षत्वेन कफस्याजीर्णकरणप्राधान्यादग्रे निर्देश । कफात्सकाशादजीर्णमामसञ्ज्ञक भवति । तत्र–आमाख्येऽजीर्णे, अक्षिकूपयोर्गण्डयोश्च शोफो भवति । सद्योभुक्तवदप्राप्तविदाहावस्थ उद्गार । प्रसेक–प्रसक्त निष्ठीवनम् । उत्क्लेशो–दोषाणा स्थानाच्चलनम् । गौरव–गात्राणाम् ।

**आ० र०–महान्तमामदोषमुक्त्वा क्षुद्रमाह । तत्र कफजमाह–अजीर्णमिति । आमं–आमसञ्ज्ञम् । तत्र–आमे, अक्षिण गण्डे च शोफ. । जात्यपेक्षमेकवचनम् । सद्यो**भुक्त इवोद्गार –चिरभुक्तस्यापि सद्योभुक्तवदप्राप्तविदाहावस्थ उद्गार । उत्क्लेशो–वमनोन्मुखत्वमिव ।

**विष्टब्धमनिलाच्छूलविबन्धाध्मानसादकृत् ।**

**स०**–अनिलाद्विष्टब्ध नामाजीर्ण भवति । तच्च शूलादिकृत् ।

**आ० र०**–अनिलजमाह–विष्टब्धमिति । विष्टब्ध–विष्टब्धसञ्ज्ञम् । साद –कार्याक्षमत्वम् ।

**पित्ताद्विदग्धं तृण्मोहभ्रमाम्लोद्गारदाहवत् ॥ २६ ॥**

**स०**–पित्ताद्विदग्ध नामाजीर्णमुत्पद्यते । तच्च तृडादियुक्तम् ।

**आ० र०**–पित्तजमाह–पित्ताद्विदग्धमिति । विदग्ध–विदग्धाख्यम् ।

त्रिविधस्यैवास्य चिकित्सामाह—

**लङ्घनं कार्यमामे तु, विष्टब्धे स्वेदनं भृशम् ।**
**विदग्धे वमनं, यद्वा यथावस्थ हित भवेत् ॥ २७ ॥**

**स०**–तुरवधारणे । आमाख्येऽजीर्णे लङ्घनमेव कार्यम्, न वमनविरेचनादि । विष्टब्धे स्वेदन भृश कार्यम् । भृशशब्देनैतत् द्योतयति,–पूर्वत्रापि स्वेदन कार्यमत्र त्वत्यर्थमिति । विदग्धे–विदग्धनाम्न्यजीर्णे, वमन कार्यम् । यद्वा लङ्घनस्वेदनवमनाना यथावस्थ–यथादोषोद्रेक, हित भवेत्तदेव कार्यम् । आमाजीर्णेऽपि स्वेदनवमने, विदग्धेऽपि लङ्घनस्वेदने, इति ।

**आ० र०**–आमादीना चिकित्सामाह–लङ्घनमित्यादि । भृशमिति त्रिष्वपि योज्यम् । लङ्घनादिविभागस्त्वतिशयार्थ । यदाह खारणादि –"विष्टब्धे स्वेदन वर्त्यो लवणोष्णाम्बु शस्यते । विदग्धे वमन शस्तमुपवासो विरेचनम् ॥" इति । यद्वा–अथवा । यथावस्थ हित–यस्याजीर्णस्य यस्यामवस्थायां यद्धित, तस्य तस्यामवस्थाया तत्कार्यमित्यर्थ । विभागनियमस्तु बाहुल्याभिप्रायेण ।

**गरीयसो भवेल्लीनादामादेव विलम्बिका ।**
**कफवातानुबद्धाऽऽमलिङ्गा तत्समसाधना ॥ २८ ॥**

**स०**–गरीयस –प्रभूतात्, अजीर्णादेव विलम्बिका स्यात् । कीदृशात्? लीनात्–अत्यर्थ स्रोत सु श्लिष्टत्वात् । लीनादिति लीङ् श्लेषण इत्यस्य क्तप्रत्यये स्वादय ओदित इत्योदितश्चेति निष्ठानत्वम् । सा च श्लेष्मवायुभ्यामनुबद्धा–युक्ता भवति । आम नाम यदजीर्णं तत्सदृशलक्षणा । यथा–"शोफोऽक्षिगण्डयो । सद्यो भुक्त इवोद्गार प्रसेकोत्क्लेशगौरवम् ॥" इति । तेन–आमेन, सम–तुल्य, साधन–चिकित्सा, यस्या. सैवम् । "लङ्घनं कार्यमामे" इति ।

**आ० र०–विलम्बिकालक्षणमाह–गरीयस इति । विलम्बिकानामाजीर्ण भवेत् । कस्मात्? लीनादामादेव,–आ-**

१ 'र्पणे कृतास्त' ख घ झ । २ 'यदि तु हे' ख घ झ । ३ 'अनिवर्तन' ख घ झ । ४ 'वृद्धे च' अ आ । 'त्वृद्धे तु पा' क ञ । ५ 'यैयासाध्य' ठ. । ६ 'मेवाह' ड । ७ 'दीप्ते चाग्नौ । दीप्ता' ड । ८ 'समुदित' ट । ९ 'यथाऽग्र्यवसा' ट ड । १० 'वृद्धे' क.ग.ञ । ११ 'षिणोऽभ्य' क ग ञ. । १२ 'र्णलक्षणमाह' ड. । १३ 'कफाद्यदजीर्ण तदाम' ड. । १४ 'वस्थावत्' ट ।



१ 'स्वशङ्का' क ग ञ । २ 'दाहकृत्' अ आ क ख.घ झ. ञ । ३ 'भजेत्' अ आ क ख ड ञ । ४ 'तु एवार्थे' ड. । ५ 'आमेऽपि' ड । ६ 'भागोऽतिशयार्थम्' क.ग.ञ. । ७ 'नुविद्धा' सं ह ।

मशब्द आमाद्यजीर्णसामान्यवचन , तस्योत्पन्नस्य नि शेषमनिवर्तनाल्लीनत्वम् । एव पुन पुनर्लीनत्वाद्गरीयस्त्वम् । पुन पुनरुत्पादो दुष्टबुभुक्षाया भोजनात् । सा तूक्ता सङ्ग्रहे ( सू अ ११ )[1]–“दोपोपनद्ध” इत्यादि ( श्लो १९ टी ) । एवकारेणैव द्योतयति,–विसूच्यलसकावप्यजीर्णाद्भवत , किन्तु तावन्यतोऽपि सद्योऽतिमात्रभोजनादे । विलम्बिका त्वजीर्णादेवेति । यदाह सुश्रुत ( उ अ ५६।३ )–“अजीर्णमाम विष्टब्ध विदग्ध च यदीरितम् । विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥” इति । सा च कफवातानुबद्धा । तदनुबन्धेन दीर्घ[2]कालविलम्बनात् विलम्बिकेत्युच्यते । गरीयस्त्वात् पत[3]नयोग्यमप्याम कफवातानुब[4]द्धत्वान्नोर्ध्व नाप्यध पतति, लीनमेव चिरमवतिष्ठते इत्यर्थ । तथा च सुश्रुत ( उ अ ५६।९ )–“दुष्ट हि भुक्त कफमारुताभ्या प्रवर्तते नोर्ध्वमधश्च य[5]स्य । विलम्बिका ता[6] च विवर्जनीयामाचक्षते शास्त्रविद पुराणा ॥” इति । कफवातानुबद्धत्वादेव[7]मितरेष्वपि पित्तारब्धत्व विदग्ध[8]त्व च लक्ष्यते । अन्येन ह्यारब्धमन्येनानुबध्यते । पित्त च विदग्धादेव प्रवर्तते । तथा च भेड ( चि अ ११ )–“य[9]दा भुक्त विदग्ध च नोर्ध्व नाध प्रवर्तते ॥ ता विलम्बीं विगर्हन्ति विषकल्पा विसूचिकाम् ॥” इति । विपकल्पामिति पित्तोल्बणत्व द्योत्यते । विसूचिकामिति विसूचिकाविशेष्यत्वेन सान्निपातिकत्वम् । आमलिङ्गा–अजीर्णतुल्यलक्षणा, विशेषानुपादानात् त्रयाणा[10]मप्यामादीना लिङ्गैर्युक्ता । तथा च खारणादि –“एतान्युक्तानि लिङ्गानि त्वामाजीर्णे विनिर्दिशेत् ।” इति । एतानि–अजीर्णत्रयसम्बन्धीनि । आमात्–अजीर्णादन्नात् जातमजीर्ण–आमाजीर्णम्,–विलम्बिका, न तु कफजमामम् । “यथाक्रमेण वातादि सन्निपातात्मक वदेत् ।” इति तेनैव सान्निपाति[11]कस्योक्तत्वात् । तत्समसाधना,–तेषा–त्रयाणामजीर्णाना, सम–साधारण, साधन–चिकित्सित, यस्या सा तथा । तथा च खारणादि–“आमे त्वामप्रशमन विमाने द्विविध मतम् ।” इति । विमाने–विमानस्थाने, द्विविध–विसूच्यलसकभेदेन । वङ्गसेनोऽपि–“विलम्बिकालसकयोर्विसूच्युक्त क्रियाक्रम ।” इति । यत्तु सुश्रुतेन विवर्जनीयत्वमुक्त तत्प्रत्याख्यायोपचरणीयत्व ( त्वात् ) न त्वनुपक्रमत्वात् । अत एव “विलम्बिका ता भृशदुश्चिकित्स्याम्” इति माधवकर ( मा नि अग्निमान्द्यादौ श्लो २१ ) पठति । इय च विलम्बिका चरकाचार्येणान्नविषसञ्ज्ञयोक्ता ( चि अ १५।३९ )–“अभोजनादजीर्णातिभोजनाद्विषमाशनात् । असात्म्यगुरुशीतातिरूक्षसदुष्टभोजनात् ॥ विरेकवमनस्नेहविभ्रमाद्व्याधिक[1]र्षणात् । देशकालर्तुवैषम्याद्वेगाना च विधारणात् ॥ दुष्यत्यग्नि स दुष्टोऽन्न न तत् पचति लघ्वपि । अपच्यमान शु[2]क्तत्व यात्यन्न विषता च तत् ॥ तस्य लिङ्गमजीर्णस्य विष्टम्भ[3] सदन क्लम । शिरो रुक्शोषमूर्च्छाश्च भ्रम पृष्ठकटिग्रह ॥ जृम्भाऽङ्गमर्दस्तृष्णा च ज्वर च्छर्दि प्रवाहणम् । अरोचकाविपाकौ च घोरमन्नविष च तत् ॥ पि[5]त्तेन सह ससृष्ट दाहतृष्णामुखामयान् । जनयत्य[6]स्लपित्त च पित्तजाश्चापरान् गदान् ॥ यक्ष्मपीनसमेहादीन् कफजान् कफस[7]ङ्गतम् । करोति वातससृष्ट वातजाश्चामयान् बहून् ॥ मूत्ररोगाश्च मूत्रस्थ कुक्षिरोगान् शकृद्गतम् । रसादिभिश्च ससृष्ट कुर्याद्रोगान् रसादिजान् ॥” इति । यत्तूक्त जेज्जटेन ‘इय विलम्बिका तन्त्रान्तरे दण्डकालसकसञ्ज्ञयोक्ता’ इति । तदसत् । भेडादिर्वचनपर्या[8]लोचनया विलम्बिकाया विदग्धमूलत्वात् । दण्डकालसकस्यालसकभेदत्वेन विष्टब्धमूलत्वात् । आमाद्यजीर्णलक्षणाधीनलक्षणत्वाद्विलम्बिकाया इहाभिधानम् ।

जीर्णेऽप्याहारे कदाचिदाहारसारो रसोऽजीर्ण स्यात् । तल्ल[9]क्षणार्थमाह—

**अश्रद्धा हृद्व्यथा शुद्धेऽप्युद्गारे रसशेषतः ।**
**शयीत किञ्चिदेवात्र सर्वश्चा[10]नाशितो दिवा ॥ २९ ॥**
**स्वप्यादजीर्णी, सञ्जातबुभुक्षोऽद्यान्मित लघु ।**

स०–रसशेषे अश्रद्धा–अ[11]न्नानभिलाष । हृद्व्यथा–हृदयशूलं गौरव च । शुद्धेऽप्युद्गारे–अन्नसम्बन्धिनि । तेनाजीर्णादर्था[12]न्तरभूत एवाय रसशेप । अ[13]तश्च र[14]सस्य रुधिरादिहेतोरसम्यक्परिपाक इत्यर्थ । तच्चिकित्सामाह–शयीतेत्यादि । अत्र–रसशेषे, किञ्चिदेव–स्तोकमात्रमेव स्वप्यात्, नाजीर्ण इव प्रभूतम् । सर्वश्चाजीर्णी, अ[15]नाशितो दिवा शयीत, आलाघवात् । यदा चोत्पन्नक्षुत् स्यात्तदा स्तोक लघु चाद्यात् । आश कृतो येन स –आशित । न आशितो–अनाशित ,अभुक्तवानित्यर्थ । ननु, “अजीर्ण्यभिहतोन्मत्तान्” इत्यनेनैव वाक्येनाजीर्णिना दिवास्वप्नोऽनुज्ञात एव । तत्कि पुनरुक्तेन ? ब्रूम । विशेषार्थ वाक्यमिदम्,–“अभुक्तो दिवा स्वप्यादजीर्णी” इति । तत्र तु सा[16]मान्यम्, अशितानाशितचिन्ता न कृतेति युक्ता पुनरिहोक्ति ।

१ ‘णैतत्’ ख घ झ । २ ‘कालानुवर्तनात्’ क ग ञ । ३ ‘पतने योग्य’ ख घ झ । ४ ‘बन्धत्वा’ ख घ झ । ५ ‘यस्याम्’ ग ञ । ६ ‘ता भृशदुश्चिकित्स्यामा’ स सु । ७ ‘देव पित्ता’ क ग ञ । ८ ‘ग्धजत्व’ क ञ । ९ ‘यथा भुक्त विदग्ध च नाधो नोर्ध्व प्र’ क ग ञ । १० ‘णामामादीना’ क ग ञ । ११ ‘कत्वस्यो’ ग । ‘कस्यैवोक्त’ क ञ ।

१ ‘कर्शनात्’ ख घ झ । २ ‘शुष्कत्व’ क ग ञ । ‘दुष्टत्व’ ख घ झ । ३ ‘म्भोऽङ्ग च सीदति । शिरसो रुक् च मूर्च्छा च’ स च । ४ ‘शोषमू’ ग ञ । ५ ‘ससृज्यमान पित्तेन दा’ स च । ६ ‘त्यस्रपित्त’ क ञ । ७ ‘सङ्गत ’ स च । ८ ‘दिपर्यालोचनेन’ क ग ञ । ९ ‘क्षणमाह’ ड । १० **‘श्चानशितो’** अ.आ.ख घ झ । ११ ‘अन्नद्वेष ’ ट । ‘अनभि’ ड । १२ ‘न्तर एवा’ ड । १३ ‘अन्नरसस्य’ ट । १४ ‘रसाद्रुधि’ ड. । १५ ‘अनशितो’ ट । १६ ‘न्यमुदितम्’ ट ।

आ० र०-रसशेषं लक्षयति-अश्रद्धेति। अश्रद्धा-भोजनानभिलाषः। ननु, एतदामादिष्वप्यस्ति, तत आह-शुद्धेऽप्युद्गारे इति। तेषु पुनर्दुष्ट उद्गारः। रसस्य शेषो-रसशेषः। रसशब्देन रसहेतुभूताहारराशिर्लक्ष्यते। न हि रसधातोरपक्वस्याजीर्णत्वम्। स ह्यपक्व एव रसशब्देनोच्यते, पक्वस्तु रुधिरशब्देन। दुष्टत्वादजीर्णत्वमिति चेत् न, तस्यामत्वात्। वक्ष्यति हि (हृ सू अ १३।२५)-"ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम्। दुष्टमामाशयगतं रसमामं प्रचक्षते॥" इति।

रसशेषस्यौषधमाह-शयीतेति। किञ्चिदेव-मुहूर्तमेव। ननु, मुहूर्तमनुमानत सिद्धमेव। नैवम्। अजीर्णिनामधिकं दिवास्वप्नं विधास्यति। स्वप्नविधिश्चाय प्राधान्यात्। उष्णाम्बुपानाद्यपि कार्यम्। यदाह खारणादि-"रसशेषे हितः स्वप्नो घर्माम्बु लघुभोजनम्।" इति।

अजीर्णिनो दिवास्वप्नं विधत्ते-सर्वश्चेति। अनाशितो-अभुक्तवान्। सर्वग्रहणं प्रकृतविसूचिकाद्यजीर्णसङ्ग्रहार्थम्। "भुक्त्वा तु भाष्य" इत्यादिना प्राप्ते दिवास्वप्ने पुनर्विधानं यथेष्टस्वपनार्थम्।

अजीर्णिनो भोजनं विधत्ते-सञ्जातबुभुक्ष इति। सञ्जातबुभुक्षो-अभ्युदीर्णान्नाभिलाषः। मितग्रहणं लघूनामपि गुरूक्तार्धसौहित्यप्राप्त्यर्थम्।

साम्प्रतमजीर्णलक्षणं सामान्येन ब्रूते—

**विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता॥ ३०॥**
**अजीर्णलिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः।**

स०-विबन्धो-मूत्रपुरीषयोरप्रवृत्तिलक्षणः। अतिप्रवृत्तिः-तयोरेव। ग्लानिः-शरीरस्य म्लानता। मारुतमूढता-वातस्य प्रतिलोमता। विष्टम्भः-कुक्षेराध्मानम्। गौरवं-गुरुगात्रत्वम्। भ्रमो-मोहः। एतत्सामान्यमजीर्णलक्षणम्। उक्तं च-"सीदत्यङ्गं भ्रमो मोहः कोष्ठे मुह्यति मारुतः। सर्वेषामप्यजीर्णानामविसंवादि लक्षणम्॥" इति।

आ० र०-उक्तानुक्ताजीर्णविशेषसङ्ग्रहार्थमजीर्णसामान्यलक्षणमाह-विबन्ध इति। विबन्धो-मलानामप्रवृत्तिः। मारुतमूढता-वायोर्विमार्गगतिः। विष्टम्भो-विशेषेण स्तम्भो गात्राणाम्।

साम्प्रतमजीर्णस्यान्यान्यपि कारणान्याह—

**न चातिमात्रमेवान्नमामदोषाय केवलम्॥ ३१॥**
**द्विष्टविष्टम्भिदग्धामगुरुरूक्षहिमाशुचि।**
**विदाहि शुष्कमत्यम्बुप्लुतं चान्नं न जीर्यति॥ ३२॥**
**उपतप्तेन भुक्तं च शोकक्रोधक्षुदादिभिः।**

स०-अतिमात्रमेव भुक्तमन्नं न केवलमामदोषाय, किं तर्हि? द्विष्टादि चान्नं न जीर्यति। द्विष्टं-अप्रियम्। विष्टम्भि-कुक्ष्याध्मानकारि। हिमं-अतिशीतम्। अशुचि-उच्छिष्टं केशादिदूषितं च, एतच्चाचिन्त्यप्रभावत्वादामदोषहेतुः। विदाहि-प्रागुक्तम्। शुष्कं-अद्रवप्रायम्। अत्यम्बुप्लुतं-अतिजलेन प्लावितम्। च समुच्चये। न केवलं द्विष्टाद्यन्नं भुक्तं न जीर्यति, यावत् शोकादिभिश्चोपतप्तेन भुक्तं न जीर्यति। शोकः-इष्टविपत्त्यादिना मनोदौस्थ्यम्। क्रोधो-रोषः। क्षुत्-बुभुक्षा। आदिशब्देन लोभभयादिपरिग्रहः।

आ० र०-अजीर्णाशनं लक्षयति-न चेति। न केवलमतिमात्रमेवान्नमामदोषाय। किं तर्हि? द्विष्टादिकमप्यन्नं न जीर्यति,-आमदोषाय भवति। द्विष्टं-अप्रियम्। विष्टम्भि-वातावरोधकारि। दग्धं-अतिपक्वम्। आमं-अपक्वम्। अशुचि-मलिनम्। शुष्कं-नीरसम्। अत्यम्बुप्लुतं-अत्यम्बुपानात्। शोकादिभिरुपतप्तेन भुक्तम्। क्षुत्-बुभुक्षा, तदुपतप्तत्वं-कालातिक्रमात्। आदिशब्दादुद्वेगादयः।

सम्प्रत्यपरमप्यन्नमामक्षोभकरमाह—

**मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम्॥ ३३॥**
**विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम्।**
**अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम्॥३४॥**
**त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन्सृजन्ति वा।**

स०-पथ्यं-शाल्यादि। अपथ्यं-यवकादि। तन्मिश्रं-एकीकृत्य, भुक्तं समशनं मतम्, अस्मिन्वैद्यकतन्त्रे। विद्यादित्यादि। भुक्तस्य-अभ्यवहृतस्योपरि यदन्यद्भोजनं तदध्यशनं जानीयात्। ननु, एवं प्रातराशे कृते यः सायमाशः, तस्याध्यशनत्वं प्रसज्येत। अध्यशनं च विवर्ज्यमेव। यतोऽनन्तरमेव पठिष्यति-"त्रीण्यप्येतानि मृत्युं वा" इत्यादि। वैद्यकतन्त्रेषु च नराणां द्विराहार उपदिष्टः। भगवान् व्यासोऽप्यवोचत्-"सायंप्रातर्मनुष्याणां भोजनं विधिनिर्मितम्।" इति। तस्मादध्यशनस्यैव तदसमीचीनं लक्षणम्। अत्र सञ्चक्ष्महे। प्राग्भुक्तस्योपरि समनन्तरमेव वह्नावविभक्ते यदशनं तदेवाध्यशनम्, नान्यत्। अत एव सुश्रुतो ब्रूते (सू अ ४६।४९१)-"प्राग्भुक्ते त्वविभक्तेऽग्नौ द्विरन्नं न समाचरेत्।" इति। तस्मात् प्रातराशे कृते सत्यग्नौ विभक्ते यः सायमाशः स न परिहार्य, अपि तु कार्य एव, गुणावहत्वात्। एतदेव प्रतिपादयितुं सङ्ग्रहेऽध्यगीष्ट (सू अ ११)-"प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति। अजीर्णे सायमाशे तु प्रातराशो हि दुष्यति॥ दिवा प्रबोध्यतेऽर्केण हृदयं पुण्डरीकवत्। तस्मिन्विबुद्धे स्रोतांसि

१ 'तत्राह' क ग ञ। २ 'भूत आहा' ग ञ। ३ 'जीर्णमिति' क ख घ झ ञ। ४ 'र्तं मानत' क ग ञ। ५ 'अनशितो' क ख ग झ ञ। ६ 'अप्रकृत' क। 'प्रक्रान्तवि' ग ञ। ७ 'उदीर्णा' क.ग.ञ.। ८ 'सामान्यम' ठ। ९ 'तन्मूलता' आ।

१ 'च क्रोधशोकभयादिभिः।' अ.। २ 'क्षुधादिभिः।' आ ख घ झ ञ ठ। ३ 'एतत्प्रभावादाम' ड.। ४ 'यावता शो' ठ। ५ 'शनमाह' ख.घ झ। ६ 'त्वविविक्ते' स.सु।

स्फुटल यान्ति सर्वश ॥ व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतस । न क्लेदमुपगच्छन्ति दिवा तेनास्य धातव ॥ अक्लिन्नेष्वन्नमासक्तमन्यत्तेषु न दुष्यति । अविदग्धेष्विव पय स्वन्यत्सम्मिश्रित पय ॥ रात्रौ तु हृदये म्लाने सवृतेष्वयनेषु च । परिक्लेद यान्ति कोष्ठे सवृते देहधातव ॥ क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्त प्रदुष्यति । विदग्धेषु पय स्वन्यत् पयस्तेष्विवापितम् ॥ नैशे तस्मादजीर्णेऽन्ने नान्यद्भुञ्जीत भोजनम् ।" इति । अधिशब्दोऽत्रोपरिशब्दार्थ । यथा–'प्रासादमधिरोहति ।' इति । अकाले बहु चाल्प वा भुक्त त्वशन विषमाशनसञ्ज्ञ विद्यात् । क पुनरकालो भोजनस्य ? इति चेत्, ब्रूम । "प्रसृष्टे विण्मूत्रे" ( श्लो ५५ ) इत्यादिनाऽऽहारकाल वक्ष्यति । तद्वैपरीत्येनाकालो वेद्य । त्रीण्यप्येतानि–समशनाध्यशनविषमाशनानि, मृत्यु वा सृजन्ति–जनयन्ति, घोरान् व्याधीन्–गुल्मादीन् वा ।

**आ० र०–समशन लक्षयति–मिश्रमिति । पथ्य–शाल्यादि, अपथ्य–यवकादि, तद्द्वय मिश्रीकृत्य भुक्त–समशनाख्यम् । यत्तु केवलमपथ्य तद्विरुद्धाख्यम् ।**

**अध्यशन लक्षयति–विद्यादिति । भुक्तस्योपरि पुनर्भोजन–अध्यशनाख्यम् । भुक्तस्य–प्रागभ्यवहृतस्यान्नस्य पाकाभावादामाशय एव स्थितस्य, उपरि–ऊर्ध्वमन्यदन्नमाधीयते यत्तत्–भुक्तस्योपरि भोजनम्, पूर्वान्नशेषे भुक्तमित्यर्थ । तथा च चरक ( चि अ १५।२३३ )–"पूर्वान्नशेषे तु पुनर्भुक्तमध्यशन मतम् ।" इति । सुश्रुतोऽपि ( सू अ ४६।५०८ )–"अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते ।" इति । कथम् ? भूयो–बाहुल्येन । अनेन क्वचिदन्नशेषे भुक्तमपि नाध्यशनम् । यथा ( सङ्ग्रहे सू अ ११ )–"प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति ।" इति । तथा, अस्मिन्नौ ( हृदये चि अ १०।८४ )–"मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपकल्पयेत् ।" इति । ननु, एतदप्राप्तकालाशनत्वाद्विषमाशनादभिन्नम् । मैवम् । जीर्णे पूर्वान्ने यदप्राप्तकाल तद्विषमाशनम्, अध्यशन त्वजीर्णे इति भेद । ननु, "प्रसृष्टे विण्मूत्रे" ( श्लो. ५५ ) इत्यादिना जीर्णान्नत्वस्यैव कालत्व वक्ष्यति । तत्कथमप्राप्तकालत्वम् ? मैवम् । यो हि यदा प्रत्यह भुङ्क्ते स तस्य भोजनकाल । प्रसृष्टविण्मूत्रत्वादिक तु तस्यैव विशेषणम् । तद्विशिष्टस्यैव तस्य कालत्वार्थम् । तस्मात् प्रसृष्टविण्मूत्रत्वादिविशिष्टे स्वकाले भोजन–कालभोजनम् । प्राप्तेऽपि स्वकाले पूर्वान्नस्याजीर्णत्वादनुत्पन्नेषु प्रसृष्टविण्मूत्रत्वादिषु भोजन–अध्यशनम् । पूर्वान्नस्य जीर्णत्वादुत्पन्नेष्वपि तेष्वप्राप्ते स्वकाले भोजन–विषमाशनम् । अवश्य चैतदभ्युपगन्तव्यम् । अन्यथा हि ( हृ सू अ १६।१८ )–"ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छ शुद्धये बहु । शमन क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥" इति कालभेदो न स्यात् ।**

विषमाशन लक्षयति–अकाल इति । अकाले भुक्त विषमाशनम् । तद्विविधम्,–अप्राप्तकालमतीतकाल च । अमात्राशनमप्यकाले भुक्त विषमाशनमेवेत्याह–बहु चाल्प वेति । तस्मात् काले यदमात्रया भुज्यते तदमात्राशनम् । यच्चाकाले मात्रया अमात्रया वा तद्विषमाशनम् ।

समशनादीनां दोषमाह–त्रीणीति । एतानि–समशनविषमाशनाध्यशनानि, अनियतायुषा मृत्यु, नियतायुषा घोरान् व्याधीन् सृजन्ति ।

**काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः ३५**
**षड्रसं मधुरप्राय नातिद्रुतविलम्बितम् ।**
**स्नात. क्षुद्वान् विविक्तस्थो धौतपादकराननः ॥३६॥**
**तर्पयित्वा पितॄन् देवानतिथीन् बालकान् गुरून् ।**
**प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान् ॥ ३७ ॥**
**समीक्ष्य सम्यगात्मानमनिन्दन्नब्रुवन् द्रवम् ।**
**इष्टमिष्टैः सहाश्नीयाच्छुचिभक्तजनाहृतम् ॥ ३८ ॥**

स०–काले–वक्ष्यमाणे । तन्मना –भोजनगतचित्त । क्षुद्वान्–बुभुक्षित । विविक्तस्थ –एकान्तस्थित । तथा, प्रक्षालितचरणहस्तमुख । अनिन्दन्–भोजनमगर्हमाण । अब्रुवन्–अभाषमाण । इष्ट–मनोरुचित भोजनम् । तथा, द्रव–द्रवप्रायम् । इष्टै –प्रियै, सहाश्नीयात् । 'क्षुद्वान्' इत्यत्र प्रशसाया मतुप्, उत्पन्नप्रशस्तबुभुक्ष । तेन किञ्चिदपि यदा दुष्टबुभुक्षा स्यात्तदा नाद्यादित्यर्थ । दुष्टबुभुक्षाया लक्षणम् ( सङ्ग्रहे सू अ ११ )–"दोषोपनद्धं यदि लीनमन्न पित्तोद्धतस्यात्रणुयाच्च वह्निम् । जायेत दुष्टा तु तदा बुभुक्षा या मन्दबुद्धीन् विषवन्निहन्ति ॥" इति । किम्भूतं भोजनम् ? सात्म्यम् । तच्च सात्म्य द्विधा,–एक स्वल्पकालाभ्यस्तं सुखावहम्, अन्यच्च जन्मन प्रभृति सहात्मनाऽभ्यस्त सुखावहं च । एतदेवैक सात्म्यमुच्यते । तथा, शुचि–अनुच्छिष्ट केशाद्यनुपहत च । हित–पथ्यम् । स्निग्ध च तदुष्ण च–स्निग्धोष्णम् । तथा, लघु–लघुप्रायम्, न तु लघ्वेव । अत एवेदमुपपन्नम् "षड्रस मधुरप्रायम्" इति । मधुररसो हि गुरु । तथा च वक्ष्यति ( हृ सू अ १०।३८ )–"पटो कषायस्तस्माच्च मधुर परम गुरु ।" इति । तद्यदि लघ्वेव स्यात् ( तर्हि ) मधुरप्रायमिति न घटते । तस्माल्लघुप्रायमिति व्याख्येयम् । कथमद्यात् ? तदाह–नातिद्रुतविलम्बितम् । कि कृत्वा ? पित्रादीस्तर्पयित्वा । तथा, तिरश्चोऽपि–अश्ववृषादीन्, प्रतिपन्नपरिग्रहान्–कृतस्वीकारान्, प्रत्यवेक्ष्य–तदाहारचिन्ता कृत्वेत्यर्थ । तथा, आत्मान समीक्ष्य–यथा ममेद सात्म्यमिदमसात्म्यमिति नित्यमप्रमत्त. सन् पर्यालोच्य । खरनादेनोक्तम्–"अतिद्रुताशी त्वाहारगुणदोषान्न

१ 'विकासाच्च' ट. । २ 'शब्द उपरिपर्याय ' ट । ३ 'भुक्त पूर्वान्नशेषे तु पुनरध्य' स च । ४ 'तेन' ख घ ङ । ५ 'भोज्यतस्यो' क ग ञ. । ६ 'पहारयेत्' स ह । ७ 'शन विषमाशना' ख घ ङ । ८ 'स्यैतस्य का' क ग.ञ । ९ 'स्वकाल' ख । १० 'न्नेष्वपि तेषु प्रसृ' क.ग ञ ।

१ 'रुचियुत' ट. । २ 'बुद्धि वि' ट ।

विन्दति । उन्मुह्यत्यल्पमश्नाति च्छर्दयेच्चाऽनवस्थित ॥ विलम्बित तु भुञ्जानो न तृप्तिमविगच्छति । खादन् बह्वपि शीतं त्वायाति भोज्यमह्वयताम् ॥ जल्पतो हसतश्चापि भुञ्जानस्यान्यचेतस । त एव दोषा मन्तव्या ये विलम्बितभोजने ॥" इत्यादि ।

**आ० र०–** अथ भोजनसम्यग्योग । तत्र सम्यग्योगप्रकारमाह–काले सात्म्यमिति । काले–"प्रसृष्टे विण्मूत्रे" (श्लो ५५) इत्यादिना वक्ष्यमाणे । शुचि–निर्मलम् । सात्म्यमिति हितस्याप्यनभ्यासासात्म्यस्य निवृत्त्यर्थम्, हितमित्यहितस्याभ्याससात्म्यस्य । तन्मना –भोजनैकदत्तचित्त । मधुरप्राय–षड्रसत्वेऽप्यधिकमधुररसम् । नातिद्रुतविलम्बितमिति क्रियाविशेषणम् । विविक्तस्थो–विजनस्थ । पित्रादीस्तर्पयित्वा । प्रतिपन्नपरिग्रहान्–पाल्यत्वेन स्वीकृतान् । तिरश्चोऽपि–कि पुनर्मनुष्यान् । प्रत्यवेक्ष्य–तेषामाहारचिन्ता विधाय । आत्मान समीक्ष्य–प्रकृति विचार्य । अनिन्दन्–भोज्यमकुत्सयन् । अब्रुवन्–कृतमौन । द्रव–द्रवबहुलम् । इष्ट–प्रियम् । इष्टै सह–प्रियजनै सह । शुचिभक्तजनाहृत–शुचयो–बाह्याभ्यन्तरशौचयुक्ता, भक्ता –अनुरक्ता, ये जनास्तैराहृत–आनीतम् ।

**भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ।**
**शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ॥ ३९ ॥**

**स०–** तृणादिजुष्ट भोजन त्यजेत् । आदिशब्देन मक्षिकादिपरिग्रह । तथा, भूय उष्णीकृतम् । तथा, शाकबहुलम् । तथा, अवरान्न–माषादि, तद्भूयिष्ठम् । तथा, अत्युष्णमतिलवण च त्यजेत् ।

**आ० र०–** तृणजुष्टादिभोजनमपवदति–भोजनमिति । तत्रानिन्दन्निति ग्रहणात् तृणकेशमक्षिकादिजुष्टस्य निन्दितस्यापि प्राप्ति, उष्णग्रहणात् पुनरुष्णीकृतात्युष्णयो, इष्टग्रहणात् शाकसूपबहुलस्य, षड्रसग्रहणात् अतिलवणस्य ।

**किलाटदधिकूचीकाक्षारशुक्तामकमूलकम् ।**
**कृशशुष्कवराहाविगोमत्स्यमहिषामिषम् ॥ ४० ॥**
**माषनिष्पावशालूकबिसपिष्टविरूढकम् ।**
**शुष्कशाकानि यवकान् फाणितं च न शीलयेत् ४१**

**स०–** तथा, किलाटादीन्न शीलयेत्–नाभ्यसेत्, न कादाचित्कोऽभ्यवहार एषा निषिध्यते । मुनिना तु (च सू अ. ५।७)–"नाभ्यसेद्गौरवात्" इति यथा हेतुरुपन्यस्त, तथेह नोक्त, अयुक्तत्वात् । तथा हि–एषामनभ्यवहारे यदि गुरुत्वमेव हेतु स्यात् । ततो गुडयवादीनामपि बहुतराणा द्रव्याणां शीलनमयुक्तं स्यात् । तस्मादेषामशीलनेऽन्यदपि कारणं चिन्त्यम्, न तु गुरुत्वमात्रमेव । यथा–किलाटकूचीकयोर्दोषलत्व, दध्नस्तु ज्वरादिकर्तृत्व तथा स्रोतोलेप, स्रोतोलेपत्वाच्चानेकरोगहेतुत्वम्, क्षारस्य पुंस्त्वहानिकृत्त्वम्, शुक्तस्य दृष्टिहन्तृत्वादि । तस्मा देषामपथ्यत्वाच्छीलननिषेधो बोध्य ।

**आ० र०–** सात्म्यत्वादिप्रसक्त किलाटाद्यभ्यासमपवदति–किलाटेति । आममिति मूलकस्य विशेषणम्, कृशादीन्यामिषस्य । न शीलयेत्–न नित्य भजेत् । यदा तत्सेवन विना स्यातुमशक्ति, यदा वा तत्साध्यरोगोत्पत्ति, तदा भजेदित्यर्थ ।

**शीलयेच्छालिगोधूमयवषष्टिकजाङ्गलम् ।**
**सुनिषण्णकजीवन्तीबालमूलकवास्तुकम् ॥ ४२ ॥**
**पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः ।**
**घृतदिव्योदकक्षीरक्षौद्रदाडिमसैन्धवम् ॥ ४३ ॥**

**स०–** शाल्यादीन् शीलयेत् ।

**आ० र०–** सात्म्यादीन्युदाहरति–शीलयेदिति । जाङ्गल–हरिणादिमासम् । पथ्या–हरीतकी । मृद्वीका–द्राक्षा ।

**त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ।**
**स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकर च यत् ॥ ४४ ॥**

**स०–** मधुसर्पिर्भ्यां सह त्रिफला च रात्रौ नेत्रबलाय शीलयेत् । न केवल शाल्यादीनेव शीलयेत् । यच्च द्रव्य स्वास्थ्यानुवृत्ति करोत्यृतुचर्याविध्याद्युक्तमन्नपानादिकम् । तथा, रोगोच्छेदकर यत्–किराततिक्तादिद्रव्यम्, तच्च शीलयेत् ।

**आ० र०–** प्रसङ्गान्नित्यसेव्यमौषधमाह–त्रिफलामिति । निशि–स्वप्नकाले । नेत्रबलाय–चक्षुरिन्द्रियदार्ढ्याय । यच्च–औषध रसायनादिक, स्वास्थ्यमनुवर्तयति रोगोत्पत्तिबीज चोच्छिनत्ति तदपि यथाकाल भजेत् । उक्त च चरकेण (सू अ ५।१०)–"तच्च नित्य प्रयुञ्जीत स्वास्थ्य येनानुवर्तते । अजाताना विकाराणामनुत्पत्तिकर च यत् ॥" इति ।

**बिसेक्षुमोचचोचाम्रमोदकोत्कारिकादिकम् ।**
**अद्याद्द्रव्यं गुरु स्निग्धं स्वादु मन्दं स्थिर पुरः ॥ ४५ ॥**
**विपरीतमतश्चान्ते मध्येऽम्ललवणोत्कटम् ।**

**स०–** बिसादिद्रव्य गुर्वादिगुणयुक्त पुर –पूर्वमद्यात् । मोदको–लड्डुक । उत्कारिका–लप्सिका । अत –अस्माच्च, विपरीत–लघुरूक्षकटुतीक्ष्णसरप्रायम्, अन्ते भोजनस्य सेवेत । मध्ये चाम्ललवणोत्कटम् । खरनादे चोक्तम्–"कटुं लवणमम्लं वा पूर्वमाहारमाहरेत् । आहारो मधुरोऽग्रे हि गुरुर्विष्टभ्य जीर्यति ॥" इति । तदेतदुक्तमुभयमपि देशसात्म्यादिवशात् प्रमाणयितव्यम् ।

**आ० र०–** भोज्यक्रममाह–बिसेति । गुर्वादिगुणं बिसादिभोज्यद्रव्य पुर –पूर्वमद्यात् । मोच–कदलीफलम् । चोच–नारिकेलफल पनसं वा । मोदको–लड्डुक । उत्का-

---

१ 'तत्व याति' ट । २ 'भक्तम' ठ । ३ 'पाल्यमानत्वेन' क ग ञ । ४ 'हार वि' क ञ । ५ 'धृत' क ग ञ । ६ 'बाह्यान्त शौ' ख घ ङ । ७ 'शाकबहुलस्य सूपबहुलस्य च, ष' ख.घ ङ । ८ 'रसुक्ताम्लमू' अ । 'रसुक्ताम' आ क । ९ 'कतिलपिष्ट' आ । १० 'न तु का' ट. ।

१ 'हननत्वादि' ठ । २ 'षामेवापथ्य' ट । ३ 'यदा तु सेवन' क ग ञ । ४ 'र्याद्यु' ट । 'र्याविध्यादिषु तु युक्त' ठ । ५ 'दे तु–' ड. । ६ 'रो ह्यग्रे गु' ठ । ७ 'तदेश' ठ.ड ।

रिका-पूपलिका । आदिशब्दादिण्डरिकादय । अतो विपरीत-लघ्वादिगुण पैष्टिकौदनादिकम्, अन्ते अद्यात् । अम्ल लवणोत्कट-शुक्तादिक, मध्येऽद्यात् । यत्तूक्त खारणादिना-"कटु लवणमम्ल वा पूर्वमाहारमाहरेत् । आहारो मधुरोऽग्रे हि गुरुर्विष्टभ्य जीर्यति ॥" इति । तन्मन्दाग्निविषयम् । तद्भोजनस्य दीपनपूर्वकत्वात् । तथा चोक्त सङ्ग्रहे ( सू अ १० )-"यथाग्निसात्म्य तु प्राग्द्रवमुष्णमुष्क वाऽश्नीयात् । प्रागेव तु गुरु स्वादु स्निग्ध च । मध्येऽम्ललवणम् । अन्ते रूक्षद्रवमितररसयुक्त च । तत्र मन्दाग्ने द्रवोष्णेन समुत्तेजितोष्मणोऽन्यदप्युपयुक्त सम्यक् पाकमुपैति ।" इति ।

**अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ॥ ४६ ॥**
**आश्रयं पवनादीनां चतुर्थमवशेषयेत् ।**

**स०**-कुक्षे -जठरस्य, अन्नेन द्वौ भागौ प्रपूरयेत् । पानेन-जलादिना, एकमश प्रपूरयेत् । चतुर्थमश पवनादीनामाश्रयमवशेषयेत्-न त्वन्नेन पानेन वा प्रपूरयेत् । अत्र त्वशकल्पना परिकल्पनेनैव युज्यते, न त्वङ्गुलमानादिना । सुश्रुते चाभिहितम् ( सू अ ४६।४७८ )-"प्रक्षालयेदद्भिरास्य भुञ्जानश्च मुहुर्मुहु । विशुद्धे रसने ह्यस्मिन् रोचतेऽन्नमपूर्ववत् ॥" इति । [रसना विद्यते यस्य मुखस्य तद्रसनम्, तस्मिन् रसने विशुद्धे रोचतेऽन्नमपूर्ववत् ॥]

**आ० र०**-अन्नपानयोर्विभागमाह-अन्नेनेति । कुक्षि -उदरम्, चतुर्धा विभज्य द्वावशावन्नेन-अद्रवेण पूरयेत् । तृतीयमश पानेन-द्रवेण पूरयेत् । चतुर्थमश पवनादिसुखसञ्चारार्थमवशेषयेत्-न केनापि पूरयेत् । एतदेव च सौहित्यमानम् । अत एवार्धसौहित्य नातितृप्तता च ज्ञेया ।

**अनुपानं हिमं वारि यवगोधूमयोर्हितम् ॥ ४७ ॥**
**दध्नि मद्ये विषे क्षौद्रे, कोष्णं पिष्टमयेषु तु ।**
**शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम् ॥४८॥**
**सुरा कृशानां पुष्ट्यर्थं, स्थूलानां तु मधूदकम् ।**
**शोषे मांसरसो, मद्यं मांसे स्वल्पे च पावके ॥ ४९ ॥**

१ 'दिण्डुरीका' ग । २ 'कपित्थादिकाकोदुम्बरादिकम्' ख घ झ । ३ 'कटुक लवण चाम्ल पू' क ग ञ । ४ 'रो ह्यग्रे गु' ख घ झ । ५ 'वमुष्णमु' ग ञ । ६ 'चाश्नी' ख ग घ झ ञ । ७ 'रूक्ष द्र' स द्व । ८ 'न्यदुप' स द्व । 'न्यदभ्युप' ख घ झ । ९ 'कमुपयाति' क ग ञ. । 'कमेति' स द्व । १० चन्द्रनन्दनस्तु 'न सवविषयोऽय नियम । कि तर्हि ? केषुचित् । तथा च ग्रन्थ -'मन्दाग्निबलयोग्येषु नृपेश्वरसुखात्मसु । योज्य क्रमोऽय सतत न वाऽनलबलेषु च ॥' इत्याह । ११ 'कलने' ट ठ । 'कल्पनयैव' ड । १२ 'विशदे' ड । 'विशुद्धरसेन तस्मै रो' इति मुद्रितसुश्रुतस्य पाठोऽशुद्ध एव । १३ [ ] इति पाठ ट ड पुस्तकयोर्नोपलभ्यते । १४ 'कुक्षि' ख घ झ । १५ 'खप्रचा' क ग ञ । १६ 'हित्यमति' ख घ झ । १७ 'ताऽपि ज्ञे' ग ञ । १८ 'च' अ क.ख घ झ ञ । १९ 'च' अ । २० 'मांसेष्वल्पे' अ ख घ झ.चन्द्र. ।

**व्याध्यौषधाध्वभाष्यस्त्रीलङ्घनातपकर्मभिः ।**
**क्षीणे वृद्धे च बाले च पयः पथ्यं यथाऽमृतम् ॥५०॥**

**स०**-यवगोधूमयोर्भुक्तयोरनु-पश्चात्, पान शीत जल हितम् । तथा, दध्नि मद्ये विषे क्षौद्रे च हिम जलमनुपाने हितम् । पिष्टमयेषु कोष्ण जल हितम् । शाकमुद्गादिविकृतौ च मस्त्वादिकमनुपान हितम् । कृशाना पुसा सुरा पुष्ट्यर्थं हिता । स्थूलाना पुन कर्शनाय मधूदक हितम् । शोषे-क्षये, मासरसो हित, पुष्टिकारित्वात् । मासे भुक्ते मद्यमनुपान हितम् । स्वल्पे च पावके मद्यमेवानुपान हितम् । व्याध्यादिभि क्षीणे-क्षपिते, पयो-दुग्ध, पथ्य-हितम् । इष्ट ( हितमिति ) प्रकृतेऽपि पथ्यग्रहण पथ्यतरत्वज्ञापनार्थम् । यथाऽमृतमित्यनेनैतत् प्रतिपादयति,-यथाऽमृत बलवर्णौज कान्त्यायुरादि जनक तथेदमपीत्यर्थ ।

**आ० र०**-अथानुपानम् । तेन ह्यसम्यग्योगोऽपि सम्यग्योगता याति । यदाह खारणादि -"काम दोषवदप्यन्नममात्र वा निषेवितम् । अल्पदोषमदोष वाऽप्यनुपानेन जीर्यति ॥" इति । अनु-पश्चात्पीयत इत्यनुपानम् । एतच्च बाहुल्याभिप्रायेण । तद्धि मध्येऽप्यादावपि पीयते । यदाह सुश्रुत ( सू अ ४६।४३७ )-"तदादौ कर्शयेत् पीत स्थापयेन्मध्यसेवितम् । पश्चात्पीत बृहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥" इति । तथा, ( सु सू अ ४६।४२८ )-"निरामयाना चैतत्तु भुक्तमध्ये प्रशस्यते ।" इति च । कस्तर्हि पानानुपानयोर्भेद ? उच्यते । यदनियतकाल रुचिवशात्पीयते तत्-पानम्, यन्नियतकाल विधिवशात्पीयते तत्-अनुपानम् । तत्रादावनुपानविभाग । तत्र यवादिषु शीतोदकमाह-अनुपान हिममिति ।

पिष्टमयेषु ईषदुष्णोदकमाह-कोष्णमिति । यत्तु सुश्रुतेनोक्तम् ( सू अ ४६।४२३ )"शीतोदक माक्षिकस्य पिष्टान्नस्य च सर्वश । दधिपायसमद्यार्तिविषजुष्टे तथैव च ॥" इति । तद्विदाहिपिष्टान्नविषयम् । उक्त च सङ्ग्रहे ( सू अ. १० )-"तच्छीत दधिमधुयवगोधूममद्यविषेषु सर्वेषु च विदाहिषु शरद्ग्रीष्मयोश्च ।" इति ।

शाकादिषु मस्त्वाद्याह-शाकेति । शाक-पाठादि, मुद्गादि-सूप्यम्, तस्य ( तयो ) विकृति -वटकादिका । विकृतिग्रहण रसाद्यन्यत्व एव मस्त्वादिग्राह्यर्थम् । अविकृते तु सूपादौ सुश्रुतेनोक्तम् ( सू अ. ४६।४२५ )-"पयो मासरसो वाऽपि शाकमुद्गादिभोजने ।" इति । मस्त्वादिषु यस्य यत्सात्म्यमिष्ट वा तस्य तद्योज्यमिति । एकस्यैव तत्कार्यक-

१ 'भारस्त्री' क ञ । २ 'तेनासम्यग्योगो हि स' क ग ञ । ३ 'मध्ये आदावन्तेऽपि' क ग ञ । ४ 'कर्षयेत्' क ग घ ञ । ५-६ 'चित्र तु' 'प्रकीर्तितम्' स सु । ७ 'मद्येषु' ख घ झ । 'मद्यविशेषेषु' स द्व । ८ 'शालिमुद्गादिभोजिनाम्' स सु. । ९ 'ज्यम् ।' ख घ झ ।

रत्वात् न मिश्रीकृत्यप्रयोग । अत एव पृथगुक्त सङ्ग्रहे (सू अ १०)–"धान्याम्ल मस्तु तक्र वा शाकावरान्नेषु ।" इति ।

कृशाना सुरामाह–सुरेति । कृशाना शीतोदकाद्युचितेष्वन्नेषु सुरैवानुपानम्, अनवकाशत्वात् । पुष्ट्यर्थं–न तु रोगनिवृत्यर्थम् । यस्तु कृशो रोगार्त, तस्य रोगानुरूपमनुपान प्रयोज्यम् ।

स्थूलानां मधूदकमाह–स्थूलानां त्विति । मधुमिश्रमुदक–मधूदकम् । शेष पूर्ववत् ।

शोषे मासरसमाह–शोष इति । शोषे-शुष्यति देहे । यदाह खारणादि–"कृशक्षीणामयोन्मुक्तपुष्टिवर्णबलार्थिनाम् । मद्यस्त्रीश्रमनित्याना शुष्यता च रसो हित ॥" इति ।

मासाशिना मन्दाग्नीना च मद्यमाह–मद्यमिति । तच्च मद्योचितानामेव । यदाह सुश्रुत (सू अ ४६।४२६)–"मद्य मद्योचिताना तु सर्वमासेषु पूजितम् । अमद्यपानामुदक फलाम्ल वा प्रशस्यते ॥" इति ।

व्याध्यादिक्षीणादीना क्षीरमाह–व्याध्यौषधेति । लङ्घन–उपवास । कर्म–चेष्टा ।

**विपरीतं यदन्नस्य गुणैः स्यादविरोधि च ।**
**अनुपानं समासेन, सर्वदा तत्प्रशस्यते ॥ ५१ ॥**

स०–अन्नस्य–भक्तवटकादे, यद्विपरीत गुणैस्तदनुपान सदा प्रशस्यते । यथा,–स्निग्धस्य रूक्षम्, रूक्षस्य स्निग्धम्, शीतस्योष्णम्, उष्णस्य शीतम्, मधुरस्याम्लम्, अम्लस्य मधुरमित्यादि । ननु, एवमुररीक्रियमाणे क्षीरस्य क्षैरेयादेर्वा तक्रचुक्रादीनामम्लानामनुपानत्व प्राप्तमित्याह–गुणैरित्यादि । विपरीतगुणमपि यदविरोधि तदेवानुपान सदा हितम् ।

आ० र०–अनुक्तानुपानविभागोपायमाह–विपरीतमिति । यत्–द्रव्य, यस्यान्नस्य गुणै कृत्वा विपरीत न च तेन सह विरुद्धम्, तत्तदन्नस्यानुपानम् । समासेन–सामान्येन, विशेषतस्तु सात्म्यादिपर्यालोचनया स्वयमूह्यम् ।

अनुपानस्य नित्यसेव्यत्वमाह–सर्वदेति । तत्–अनुपानम् ।

अनुपानस्य किं कर्म? इत्याह—

**अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढाङ्गताम् ।**
**अन्नसङ्घातशैथिल्यविक्लित्तिजरणानि च ॥ ५२ ॥**

स०–अनुपानमूर्जादीन् करोति । ऊर्जा–मन प्रहर्ष । तृप्ति–प्रीणन शरीरेन्द्रियस्य, क्षामताविपरीतोऽन्नगुण । तथा, व्याप्ति–द्रवस्य हि गमनम्, न कठिनस्य । दृढाङ्गता–स्थिरशरीरत्वम् । तथा, अन्नसङ्घातस्य शैथिल्यम् । विक्लित्ति–विक्लेदनम् । जरण–परिणाम । एतानि च करोति ।

१ 'मिश्रितकृतप्र' ख घ झ । २ 'स्पष्टमुक्त' ख घ झ । ३ 'वरान्नभोजनेषु' क ग ञ । ४ 'पानप्राप्तिरित्याह' ड । ५ 'विरुध्येत्, तत्तस्यानु' ख घ झ । ६ 'क्षामताविपरीतगुण' ट । ७ 'हि तत्र ग' ट ।

आ० र०–अनुपानस्य फलमाह–अनुपानमिति । ऊर्जा–बलम् । तृप्ति–सौहित्यम् । व्याप्ति–अन्नस्य सर्वस्रोतोनुसरणम् । अन्नसङ्घातशैथिल्यादीनि च । शैथिल्य–काठिन्यनिवृत्ति । विक्लित्ति–शुष्कत्वनिवृत्ति । जरण–पाक ।

एवगुणमप्यूर्ध्वजत्र्वादिषु न हितमित्याह—

**नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ।**
**गीतभाष्यप्रसङ्गे च स्वरभेदे च तद्धितम् ॥ ५३ ॥**

स०–ऊर्ध्वं जत्रुण–ऊर्ध्वजत्रु, तस्मिन् ये गदास्तेषु तत्–अनुपान, न हितम । तथा, श्वासादिषु न हितम् । गीतभाष्ययो प्रकर्षेण सङ्ग–सातत्येन सम्बन्ध, तस्मिन् । तथा, स्वरभेदे–स्वरसादे न तद्धितम् । ऊर्ध्वजत्रुगदादीना ह्यनुपान प्रदूष्यामाशयमुर कण्ठस्थितमाहारज स्नेहमासाद्याभिष्यन्दाग्निसादच्छर्द्यादीनामयान् विदध्यात् ।

आ० र०–ऊर्ध्वजत्रुगदादावनुपान निषेधति–नोर्ध्वेत्यादि । वक्ष स्कन्धयो सन्धी–जत्रुणी, तयोरूर्ध्व–ऊर्ध्वजत्रु,–कण्ठादिकपालान्तम्, तत्र ये गदास्ते–ऊर्ध्वजत्रुगदा । कासोरःक्षते प्रागपि निषेधार्थमुर क्षतग्रहणम् । गीतभाष्ययो प्रसङ्गो–गायनाध्ययनाद्यभ्यास ।

सम्प्रति येषा पानमेव न शस्यते, तानाह—

**प्रक्लिन्नदेहमेहाक्षिगलरोगव्रणातुराः ।**
**पानं त्यजेयुः**

स०–प्रक्लिन्नो देहो येषा आमविसर्पाद्यार्ताना ते पान त्यजेयु । मेहादीनामातुरशब्देन प्रत्येक सम्बन्ध । मेहरोगाद्यातुरा पान–द्रवरूपं त्यजेयु, न केवलमन्नस्योपरि यदनुपानम् । खरनादे चोक्तम्–"मेही क्लीही व्रणी कुष्ठी पाण्डुर्जठरपीनसी । शोषातिसारी मन्दाग्नि पानीय मन्दमाचरेत् ॥ नोर्ध्वाङ्गपवनाविष्टे वाग्व्यायामरते न च । क्षतोरसि श्वासकासहिक्कावम्यर्दिते न च ॥ निरन्ने चोर्ध्वरोगे च न पेय वारि शीतलम् ।" इति ।

आ० र०–प्रक्लिन्नदेहादीनां पानमात्र निषेधति–प्रक्लिन्नेति । प्रक्लिन्नदेह–क्लेदबहुलशरीर । मेहादिभिरातुरा ।

**सर्वश्च भाष्याध्वशयनं त्यजेत् ॥ ५४ ॥**
**पीत्वा, भुक्त्वाऽऽतपं वह्निं यानं प्लवनवाहनम् ।**

स०–चशब्दो लुप्तनिर्दिष्टोऽत्र । सर्वोऽपि पुरुष–स्वस्थो रोगी च, पीत्वा भुक्त्वा च भाष्यादींस्त्यजेत् । तथा, आत-

१ 'स्रोत स्वनु' क ग ञ । २ 'ऊर्ध्वजत्रुणि ये' ड । ३ 'त्रुविकारादीना' ट । ४ 'कक्षस्क' क ग ञ । ५ 'गीताध्यय' क ग ञ । ६ 'कर्दमवि' ट । ७ 'दीना रोगातुर' ठ । ८ 'कावान्त्यर्दितार्दिते ।' ट । ९ 'देय' ट । १० इदमरुणदत्तव्याख्यानमयुक्तमेव, सङ्ग्रहविरुद्धत्वात् । तथा च सङ्ग्रहे (सू अ १०)–"पीत्वा च भाष्यगेयाध्वस्वप्नान्न शीलयेत् यान्प्लवनवाहनान्यातपाश्च भुक्तवान् वर्जयेत् ।" इति ।

पादीन् पञ्च त्यजेत् । त्यजेदित्यत्राप्यनुवृत्त्या योज्यम् । यान–रथादि । प्लवन–तरणम् । वाहन–अश्वादि ।

आ० र०–पानानन्तर भाष्यादि निषेधति–सर्वश्चेति । सर्व –निषिद्धपानोऽनिषिद्धपानो वा, निषिद्धपानस्यापि प्रमादादवस्थादिवशाद्वा पानप्रसक्ति ।

भोजनानन्तरमातपादि निषेधति–भुक्त्वाऽऽतपमिति । यान–पद्भ्या गमनम् । वाहन–अश्वादिभि । प्लवन–प्रतरणम् । गमन तु पदशतादूर्ध्वं निषिद्धम् । यदाह सुश्रुत ( सू अ ४६।४८६ )–"तत पदशत गत्वा वामपार्श्वेन सविशेत् ।" इति ।

"काले सात्म्यम्" ( श्लो ३५ ) इत्युक्तम् । भोजनस्य तु क काल ? इत्याह—

**प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे**
**विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।**
**तथाऽग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ**
**प्रयुञ्जीताहार विधिनियमितं, काल स हि मतः ५५**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने मात्राशितीयो नाम अष्टमोऽध्यायः ॥ ८ ॥**

स०–आहार विधिना–पूर्वोक्तेन "काले सात्म्य शुचि हितम्" इत्यादिना नियमित प्रयुञ्जीत,–अश्नीयादित्यर्थ । कदा? मूत्रपुरीषे प्रकर्षेण सृष्टे सति । न तु किञ्चिदेव त्यक्त इति प्रशब्देन द्योतयति । तथा, हृदये सुष्ठु विमले–रसशेषकृतगौरवादिरहिते । तथा, दोषे–वातादौ, स्वपथगे–स्वमार्गगे, अजीर्णे ह्याहारेऽन्नशेषेण रुद्धगतयो वातादय स्वस्थान न लभेरन्, सुजीर्णे तु स्वस्थानस्था स्यु । उद्गारे च विशुद्धे–चशब्दोऽनुक्तसमुच्चयार्थ, स्रोतोमुखेषु च विशुद्धेष्वित्यर्थ । क्षुदुपगमने–उपगताया क्षुधि । वातेऽनुसरति–अनुलोम गच्छति । तथा, अग्नौ–कायाग्नौ, उद्रिक्ते–पाकक्षमे । तथा, देहे पैट्विन्द्रिये सुष्ठु लघौ च । काल स हि मत । हिशब्द एवार्थे। स एव कालो भोजनस्य दृष्ट, न ततोऽप्यूर्ध्वम् । स ह्यतिकाल, तत्र भुक्तमन्न वातविष्टब्ध कृच्छ्राद्विपच्यते । तथा चोक्त तन्त्रान्तरे–"अतीतकाले भुञ्जानो वायुनोपहतेऽनले । कृच्छ्राद्विपच्यते भुक्त द्वितीय न च काङ्क्षति ॥ कुक्षावाध्मानमाटोपसादाश्च कुरुतेऽविकम् ।" इति । तस्मात्पूर्वोक्ते काले भोजनमद्यादिति । यमौ न्सौ त सस्याद्रसरविविरामा धीरललिता ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने मात्राशितीयाध्यायोऽष्टम समाप्त ॥ ८ ॥

१ 'शतपद'क ग ञ । २ 'मित' ख घ झ । ३ 'बुद्धीन्द्रिये' ड । ४ 'हित' ड । ५ 'तस्मादुक्त एव काले भोजन वरम् ।' ड. । ६ 'न्दर्याख्या' ट ।

आ० र०–भोजनकालमाह–प्रसृष्टे विण्मूत्र इति । प्रसृष्टे–प्रवृत्ते । सुविमले–अतिप्रसन्ने । स्वपथगे–स्वमार्गगामिनि । विशुद्धे–माधुर्यादिरहिते । क्षुदुपगमने–बुभुक्षोत्पत्तौ । अनुसरति–अनुकूल प्रवर्तमाने । 'दोषे स्वपथगे' इत्यनेनैव वातानुलोम्ये लब्धे 'वातेऽनुसरति' इति वातानुलोम्यस्य प्राधान्यार्थम् । उद्रिक्ते–अतिदीप्ते । विशदकरणे–निर्मलेन्द्रिये । सुलघौ–लघीयसि । विधि –शास्त्रोक्तो नियम, तेन नियमित–निषिद्धकामचारम् । ननु, यो यदा भुङ्क्ते स तस्य भोजनकाल । किमनेन? इत्यत आह–काल इत्यादि । हि–यस्मात्, स –तथाविध प्रसृष्टविण्मूत्रत्वादिविशिष्टो, भोजनकालो मत आचार्याणाम्, न केवल । तस्मात् प्रसृष्टविण्मूत्रत्वादिविशिष्टे स्वकाले भुञ्जीत । इति भोजनप्रक्रिया । सङ्ग्रहे तु ( सू अ १० )–"विधिविहितमन्नपानमिष्टेन्द्रियार्थमायतनमायुषो ब्रुवते । तदायत्तानि ह्योजस्तेजोधात्विन्द्रियबलपुष्टितुष्टिप्रतिभारोग्यादीनि । तदिन्धना चान्तरग्ने स्थिति, अग्निमूल च देहधारणमिति । अथात्मवान् स्वभावसयोगसस्कारमात्रादेशकालोपयोगव्यवस्था सप्ताहारकल्पनाविशेषाणा स्वास्थ्यास्वास्थ्यफलाना हेतुभूता समीक्ष्य हितमेवानुरुध्येत । तत्र स्वभावतो–दिव्योदकरक्तशालिषष्टिकमुद्गैणलावादयो लघव, क्षीरेक्षुव्रीहिमाषानूपामिषादयो गुरव इति । ते खल्वपि सयोगादिविशेषैरन्यथात्व प्रतिपद्यन्ते । तत्र संयोगो नाम–द्वयोर्बहूना वा सहतीभाव । स विशेषमारभते यन्नैकैकशो द्रव्याणि । सस्कारस्तु–तोयाग्निसन्निकर्षशौचमन्थनदेशकालभावनाभाजनादिभिरुपजन्यते । मात्रा पुन –पिण्डपरिमाणत. समुदायेन प्रतिद्रव्यापेक्षया चाहारराशि । देशो–द्रव्यस्योपयोक्तुश्चोत्पत्त्यवस्थाने । तत्र पुनरुपयोक्ता स्वस्थातुरत्वत प्रकृतिभेदतश्च परीक्ष्य । कालस्तु–ऋतुव्याध्यपेक्षो जीर्णाजीर्णलक्षणश्च । अजीर्णे हि पूर्वस्याहारस्यापरिणतो रस उत्तरेणोपसृज्यमान सर्वान् दोषान् प्रकोपयत्याशु । जीर्णे तु स्वस्थानस्थेषु दोषेषु वातानुलोम्ये सृष्टेषु वातमूत्रपुरीषवेगेषु विशुद्धेषूद्गारहृदयस्रोतोमुखेषु विशदकरणे लघुनि शरीरेऽग्नावुदीर्णे जाताया बुभुक्षायामभ्यवहृतमन्नमप्रदूषयद्दोषानायुर्बलवर्णानभिवर्धयति। केवलमयमेव कालो भोजनस्य । अतीतकाल पुनस्तद्वातविष्टब्ध कृच्छ्राद्विपच्यते । कर्शयत्यन्नरुचिं

१ 'मार्गगे' क ग ञ । २ 'इत्येतावतैव०सिद्धे' क ग ञ । ३ 'यत्तदा' स मू । 'यदा' स स । ४ 'चाग्ने' क ग ञ । 'चान्तराग्ने' झ स स । ५ 'वा द्रव्याणा स' स स । ६ 'यन्नैकशो नैक दोषाणि द्र' क ग ञ स मू । ७ 'अजीर्ण' ग स मू । 'अजीर्णेऽपि पू' स स । ८ 'णतौ र' क ग ञ । ९ 'णोपयुज्य' क ञ । 'णोपसस' स स । 'रेण सस' स मू । १० 'लोम्यात्सृष्टेषु' क.ग ञ स मू । 'लोम्यादुत्स' स स । ११ 'क्षुध्यभ्य' क ञ । १२ 'काले' ख.घ झ । १३ 'च्छ्रादिव प' क ग ञ । १४ 'कर्षय' क ग.ञ. ।

चं पुनरपहन्ति । उपयोगव्यवस्था–नास्नातो न दिग्वासा नैकवस्त्रधृङ् न मलिनवसनो नाहुत्वा नाजपित्वा नानिरूप्य देवताभ्यो न पितृभ्यो नादत्त्वाऽग्रमन्नमग्नये न गुरुभ्यो नातिथिभ्यो नाभ्यागतेभ्यो न श्वभ्यः श्वपचेभ्यः । प्रत्यवेक्ष्य चाश्रितोपाश्रितानपि तिरश्चः परिगृहीतान् प्रशस्तदेशकालोपकरणयुक्तः स्रग्वी विभूषितः सुगन्धिरार्द्रपाणिपादः सुविशुद्धवदनोऽभिमतसहायः केशमक्षिकाद्यदुष्टमनिन्द्यमनिन्दन्ननिन्दितः पुनर्नोष्णीकृतं नात्युष्णमनुपदग्धं सुसिद्धमलोलो नासात्म्यं नाविदितं नाविदितागमं नातिप्रगे नातिसायं नाकाशे नातपे नान्धकारे नाधो वृक्षस्य न शय्यास्थो नोद्धृत्य प्रदेशिनीं न पात्रे भिन्ने नासंवृते न मलिने न भावदूषिते न चासनस्थिते न हस्तस्थे न हस्ते । प्राङ्मुखः सुमनाः शुचिभक्ताक्षुधितानुकूलजनोपहितं हितमन्नमश्नीयात् । न पर्युषितमन्यत्र मांसोपदंशशुष्कशाकफलभक्ष्येभ्यः । नाशेषमन्यत्र दधिमधुघृतसलिलसक्तुशुक्तपायसेभ्यः । अपि च । स्निग्धं लघूष्णमविलम्बितमनतिद्रुतमजल्पन्नहसंस्तन्मना समीक्ष्य सम्यगात्मानम् । स्निग्धलघूष्णानि हि वह्निमौदर्यमुदीरयन्ति कोष्ठं परिशोधयन्ति धातूंश्च विकुर्वते, क्षिप्रं जीर्यन्त्यनिलमनुलोमयन्ति । तथा, स्निग्धं दृढीकरोतीन्द्रियाण्युपचिनोति शरीरमपचिनोति जरसं, बलमभिवर्धयति, वर्णप्रसादमभिनिर्वर्तयति । लघु च पुनः स्वभावादिभिरन्नमप्रतिपीडयन्दोषानव्यथं परिणाममेति, विपन्नमपि चाल्पदोषं भवति । उष्णं च पुनर्जनयति रुचिमुपशोषयति श्लेष्माणम् । विलम्बितं तु भुञ्जानो न तृप्तिमभिगच्छति बहु च भुङ्क्ते शीतीभवति चान्नजातं विषमपाकं च भवति । अतिद्रुतं तु भुञ्जानस्य जल्पतो हसतोऽन्यमनसो वा भवेदुत्स्नेहनमवसादनं भोजनस्याप्रतिष्ठानं गुणदोषाविभावनं च । समीक्ष्य सम्यगात्मानमिति ममेदं सात्म्यमिदमसात्म्यमिति वा नित्यमप्रमत्तः प्रत्यवेक्षेत । तत्र सात्म्यं नाम सहात्मना भवति, अतस्तदौचित्यादुपशेते इत्येके । सात्म्यविपरीतमनुपशयादसात्म्यम् । अन्ये पुनः प्रकृतिवयोदेशर्तुदोषव्याधिवशेन सात्म्यं बहुविधमिच्छन्ति । ते ह्युपशयमात्रमङ्गीकृत्य विपरीतगुणमप्युपचारेण सात्म्यमाचक्षते । तुल्यगुणं चानुपशयादसात्म्यम् । सात्म्यं तु प्रवरावरमध्यविभागेन त्रिविधम् । तत्र सर्वरसं प्रवरम्, एकरसमवरम्, मध्यमं तु मध्यमेव । तेषु प्रवरं समदोषस्योपदिशन्ति । इतरेषामपि क्रमेण सात्म्यमपि चाहितं पादेन पादपादेन वा विवर्जयेदित्युक्तं प्राक् । तत्र यदाहारजातं समान् धातूननुवर्तयति, विषमांश्च समीकरोति, तत्समासतो हितम् । विपरीतमहितम् । तत्पुनर्मात्रायोगादिवैचित्र्यादनियतमपि यथोपदेशं यथाभूयिष्ठं च शीलयेत् परिहरेच्च । भुञ्जानस्तु पेयायूषरसाम्लव्यञ्जनानि राजतेषु पात्रेषु निदध्यात् । परिशुष्कप्रदिग्धान्युष्णं च पयः सौवर्णेषु । खलकद्वरकाम्बलिकान् कांस्येषु । रागखाण्डवसट्टकान् वज्रवैडूर्यविचित्रेषु । घृतमायसे । पयः सुशीतं ताम्रमये । पानीयं पानकानि च मृद्धेमस्फटिककाचमयेषु । ओदनं च विस्तीर्णे मनोरमे विमलेऽन्यतमे स्थाले । अन्यथा हि वर्णगन्धरसान्यत्वादहितं स्यात् । अपि च । दक्षिणपार्श्वे भक्ष्यं स्थापयेत्, सव्ये पेयं लेह्यं मुखोद्धर्षणपिण्डीं च, मध्ये भोज्यमिति । यथाग्निसात्म्यं तु प्रागद्रवमुपशुष्कं वाऽश्नीयात् । प्रागेव तु गुरु स्वादु स्निग्धं च, मध्येऽम्ललवणम्, अन्ते रूक्षं द्रवमितररसयुक्तं च । तत्र मन्दाग्नेर्द्रवोष्णेन समुत्तेजितोष्मणोऽन्यदप्युपयुक्तं सम्यक्पाकमेति । अनुपानं तु सलिलमेव श्रेष्ठम्, सर्वरसयोनित्वात्सर्वभूतसात्म्यत्वाज्जीवनादिगुणयोगाच्च । तच्छीतं दधिमधुगोधूमयवपिष्टमयेषु सर्वेषु च विदाहिषु शरद्ग्रीष्मयोश्च । उष्णं पिष्टमयेष्वन्येषु च दुर्जरेषु हेमन्तशिशिरयोश्च, द्रवद्रव्यविज्ञानीयं चेक्षेत । क्षीरं शालिषष्टिकयोस्तथोपवासाध्वभाष्यस्त्रीव्यायामक्लिन्नबालवृद्धेषु । मांसरसं शोषादिषु । वाते त्वम्लानि च । पित्ते शर्करोदकम् । त्रिफलोदकं तु सक्षौद्रं श्लेष्मणि, प्रायशश्चाक्षिगलरोगेषु । मस्त्वेव वा दध्नि कूर्चिकाकिलाटयोश्च । मद्यं मांसेषु फलाम्लमम्बु वा, आसवांश्च विविधान् विभज्य प्रयोजयेत् । विशेषतस्तु मध्वासवान् ग्राम्येषु, तीक्ष्णान् फलासवान्

१ 'न' ग । २ 'नैकवासा न मलिनवासा' क ग ञ । ३ 'धृगरन्नमलिन' ख झ । ४ 'त्वान्नम' ग । 'त्वाग्रमन्नम' स स । ५ वयासि–पक्षिण । ६ 'तिरश्चोऽपि स्वपरि' स स । ७ 'स्रग्विभू' क घ ञ । 'स्रग्वी भू' ग । ८ 'शुचि शुद्ध' क ग ञ । ९ 'द्यनुपजु' स स । १० 'मनिन्दन्ननिन्दित' क ग ञ । 'मनिन्द्यमनिन्दित' ख घ झ । ११ 'विहिता' क ग ञ । १२ 'म नातिकाले ना' क ग ञ । १३ 'नोन्नमय्य तर्जनी न' क ग ञ । १४ 'ने भावदूषिते वा न' स द्व । १५ 'पहृत' क ग ञ । १६ 'दशभक्ष्येभ्य' स द्व । १७ 'अन्तर्धातू' क ग ञ । १८ 'न्नाविकु' क ञ । 'न्नवीकु' ख घ झ । १९ 'जरयन्त्य' स स । 'यैन्ति मलमनु' ग । २० 'दनम' ग । २१ 'व्यथमान' स द्व । 'नत्यर्थं प' ग. । २२ 'शीत' ग ञ । २३ 'पाचक' ख घ झ । २४ 'वसदन' ख घ झ । २५ 'त्म्यमसा' क.घ. । २६ 'भवत्यभ्यस्त तदौ' स.स. ।

१ 'मध्यरस मध्यम् । तत्र प्र' क ग ञ । २ 'शन्तीति' स द्व । ३ 'पादशो विव' ख घ झ । ४ 'पादांशेन' स द्व । ५ 'वा त्यजेदि' क ग ज । ६ 'यथारुचिभू' क ग ञ । ७ 'रसालाव्य' ख घ झ. । 'रसान् व्य' स द्व । ८ 'ग्धात्युष्ण' ग ञ । 'ग्धानत्युष्ण' स द्व । ९ 'सट्टशान्' ग घ झ ञ । १० 'यैचि' क ग घ ञ । ११ 'रमे स्था' घ स द्व । १२ स्थाले–भोजनपात्रविशेषे, 'ताट' 'थाली' इति च ख्याते । 'स्थाने' ग स द्व । १३ 'न्यदुप' स द्व । १४ 'कमुपैति' क ग ञ । १५ 'पाने तु' स स । १६ 'ममयविशेषेषु' स द्व. । १७ 'हेमन्ते च' घ.स.द्व. । १८ 'मक्लान्तबा' स द्व. ।

वन्येषु, न्यग्रोधादिफलासवान् विष्किरेषु, अर्कशेलुशिरीषक पित्थासवान् बिलेशयेषु दिग्धहतेषु च, अम्लफलासवान् प्रसहेषु, कासेक्षुपद्मबीजशृङ्गाटककसेरुकमृद्वीकामदिरासवान् क्षौद्रयुक्तं वा शीतमुदकमुदश्विद्वा महामृगेष्वौदकेषु च, सुरां प्रतुदेषु । वर्ज्यं तूर्ध्वजत्रुगदश्वासकासप्रसेकहिध्मा स्वरभेदोरःक्षतिभिर्गीतभाष्यप्रसक्तैश्च । तेषां हि प्रदूष्या-माशयमुरःकण्ठस्थितमाहारजं स्नेहमासाद्य तदभिष्यन्दाग्निसादच्छर्द्यादीनामयान् विदध्यात्। तेषां-निषिद्धानुपाना-नाम् । ततः पाणिगतमन्नमन्येनापनीय दन्तान्तरस्थं च शनैः शोधनेनै लेपगन्धस्नेहापनोदमाचान्तोऽङ्गुल्यग्रगलिताम्बुपरिषिक्तनेत्रस्ताम्बूलादिकृतवदनवैशद्यो धूमपानादिहृतोर्ध्वकफवेगः पदशतमात्रं गत्वा वामपार्श्वेन संविशेत्। द्रवोत्तरभोजनस्तु सुखशय्या नातिसेवेत । आहारपरिणामकरा पुनरिमे भावाः । तद्यथा,-ऊष्मा वायुः क्लेदः स्नेहः कालः समयोगश्च । तत्रोष्मा पचति, वायुरपकर्षति, क्लेदः शैथिल्यमापादयति, स्नेहो मार्दवं जनयति, कालः सर्वव-पुर्व्याप्तिमभिनिर्वर्तयति, समयोगस्त्वेषां परिणामधातुसाम्य-करः सम्पद्यते । समयोगस्य पुनः कारणान्युचितो हितश्च देहसंस्कारोऽभ्यवहारश्रेष्ठा शयनं सौमनस्यं च । परिणामत-स्त्वाहारगुणा शरीरजगुणभावमापद्यन्ते यथास्वमविरुद्धा । विरुद्धास्तु विहिताश्च विरोधिभिर्विहन्यु शरीरमिति । भवन्ति चात्र । औकूलाभ्योषपृथुकान् सुपिष्टकृततन्दुलान् । न जातु भुक्तवान्द्यान्मात्रयाऽद्यात्सुकाङ्क्षितः ॥ शाकावराननकद्व-म्लकषायलवणोत्कटम्। त्यजेदेकरसासात्म्यं गुरु शुष्कं च भोजनम् ॥ वक्ष्यते यन्निदानादौ सर्वदोषप्रकोपणम् । अत्यभि-ष्यन्दि विष्टम्भि विदाहि हिमरूक्षणम् ॥ त्यागाद्विषमहेतूनां समानां चोपसेवनात्। विषमा नानुबध्नन्ति जायन्ते धातवः समाः ॥ मन्दानलबलारोग्यनृपेश्वरसुखात्मसु । योऽयं क्रमोऽयं सततं नावश्यमितरेषु तु ॥ करोति रूक्षं बलवर्ण-नाशं त्वग्रूक्षतां वातशकृन्निरोधम् । स्निग्धं त्वतिश्लेष्मचय-प्रसेकहृद्गौरवालस्यरुचिप्रणाशान् ॥ अत्युष्णमन्नं मददाहतृ-ष्णाबलप्रणाशभ्रमरक्तपित्तम् । शीतं तु कासारुचिवह्निनाश-हृल्लासविष्टम्भनरोमहर्षान् । अतिस्थिरं मूत्रशकृद्विबन्धमतृ-प्तिमव्याप्तिमशीघ्रपक्तिम् । अतिद्रवं पीनसमेहकासस्यन्दा-न् करोत्यग्निबलं च हन्ति ॥ अतिमधुरमनलंशमनं भुक्तम-सात्म्यं न पुष्टये वपुषः । अतिलवणमचक्षुष्यं तीक्ष्णात्यम्लं जरां साक्षात् ॥ इति विधिमवलम्ब्य योऽन्नपानं बलमिव विग्रहवत्सदोपयुङ्क्ते । तनुमपि तनुजा रुजामनाप्य व्रजति नरः स समाशतस्य पारम् ॥" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
मात्राशीतिप्रकरणं सामस्त्येन निरूपितम् ॥ ८ ॥





## नवमोऽध्यायः ।

पूर्वमन्नपानादिद्रव्यैकदेशः प्रायोपयोगवान्निर्दिष्टः, तस्य चाहारविधेर्मात्रा चोपदिष्टा । सम्प्रति द्रव्यरसवीर्यविपाकादयो वाच्याः । अन्नपानं हि रसवीर्यविपाकादीन् परीक्ष्योपयोक्तव्यम्, नान्यथा । तस्मान्मात्राशितीयाध्यायादनन्तरं द्रव्यादिविज्ञानीयं आरभ्यते—

**अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**स०**-द्रव्यमादिर्येषां ते द्रव्यादयः । आदिशब्देन रसवीर्यादि-परिग्रहः । द्रव्यादीनां विज्ञानम्-अवगमः, तस्मै हितः । शेषं पूर्ववत् ।

**आ० र०**-द्रव्यादिविज्ञानीयमध्यायं व्याख्यातुं प्रतिजा-नीते-अथेति । यतः पूर्वैश्चतुर्भिरध्यायैराहार उक्तः । स चानन्तविशेषत्वात् तावता ज्ञातुमशक्यः, अतोऽशेषसङ्ग्रहार्थं द्रव्यरसगुणवीर्यविपाकप्रभावाः सामान्यतो वाच्याः । ते चास्मिन्नध्याये । अत एवायं द्रव्यादिविज्ञानीयः ।

तत्र द्रव्यस्य रसादिभ्यः प्राङ्निर्देशः, प्राधान्यात् । प्राधान्यं च स्वयमेव ग्रन्थकृत् प्रतिपादयन्नाह—

**द्रव्यमेव रसादीनां श्रेष्ठं, ते हि तदाश्रयाः ।**

**स०**-रसादीनामिति निर्धारणे षष्ठी । रसवीर्यादीनां मध्ये द्रव्यमेव प्रधानम् । कुतः? ते-रसादयो, हि-यस्मात्, तदाश्रयाः-तदेव द्रव्यमाश्रयो येषां त एवम् । अत एव केवला रसादयो नोपलभ्यन्ते । तस्मात् द्रव्यं प्रधानम् ।

**आ० र०**-तत्र द्रव्यस्य प्राधान्यमाह-द्रव्यमेवेति । रसादिभ्यो द्रव्यमेव प्रधानम् । हि-यस्मात्, ते-रसादयः, तदा-

---

१ 'काखदि' स स । २ 'नैः शनैः शोधनेन विशोध्य ले' स स । ३ 'न विशोध्य विधाय ले' स मू । ४ 'लितोदबिन्दुपरि' क.ग ञ । ५ 'क्तनयनस्ता' क ग ञ । ६ 'सु शय्या' स ह्व । ७ 'पुनरूष्मा' क ख ग घ झ ञ स मू । ८ 'पाचयति' स मू । ९ 'योगश्च तेषां' क ग ञ । १० 'धामन्नप' स स । ११ 'कुकूलभ्राष्टपृ' क ञ । 'कुकूलभृष्टपृ' ख घ झ । 'कुकूलभृष्टपृ' स मू । 'अनाकुलात्मा पृ' ग । १२ 'गुरु रू' स स । १३ 'सादारु' ख घ झ स ह्व । १४ 'हिसादह्' स स । १५ 'कृन्निरोधम्' क ञ ।

१ 'लसदन' क ञ । २ 'पभुङ्क्ते' क ञ । ३ अनाप्य-अलब्ध्वा । ४ 'कादि प' ठ । ५ इदं द्रव्यादिविज्ञानं चरके सू० २६ अध्याये, सुश्रुते सू० ४०।४१ अध्यायोः, अष्टाङ्गसङ्ग्रहे सू० १७ अध्याये चास्ति वर्णितम् । ६ 'एवैष द्र' क ग ञ । ७ 'केवल' ट ठ ।

श्रया–द्रव्याधिष्ठाना । एतेनैव रसाद्याश्रयो द्रव्यमित्युक्त भवति । प्राधान्यकथन द्रव्यज्ञाने तात्पर्यार्थम् । उक्त च सङ्ग्रहे (सू अ १७)–"यस्माद् दृष्टो यव स्वादुर्गुरुरप्यनिलप्रद । दीपन शीतमप्याज्य वसोर्ष्णाऽप्यग्निसादिनी ॥ कटुपाकोऽपि पित्तघ्नो मुद्गो, माषस्तु पित्तल । स्वादुपाकोऽपि, चैयकूस्निग्धोष्ण गुरु फाणितम् ॥ रसे स्वादौ यथा चैतत्तथाऽन्येष्वपि दृश्यते । वातल कफपित्तघ्नमम्लमप्याक्षकीफलम् ॥ कुरुते दधि गुर्वेव वह्नि पारेवत न तु । कपित्थ दाडिम चाम्ल ग्राहि, नामलकीफलम् ॥ कषाया ग्राहिणी शीता धातकी, न हरीतकी । अप्रधाना पृथक् तस्माद्रसाद्या सश्रितास्तु ते ॥ प्रभावश्च यतो द्रव्ये, द्रव्य श्रेष्ठमतो मतम् ।" इति ।

## पञ्चभूतात्मकं तत्तु

स०–तुरवधारणे । यत्तदोश्च नित्याभिसम्बन्धात् यदित्येतदनुक्तमप्यर्थाल्लभ्यते । तेनायमर्थ,–यत् रसादीनामाश्रयभूत कार्य द्रव्य–हरीतक्यादि स्थावर, छागादि वा जङ्गम, तत् पञ्चभूतात्मकम्, न तु यत्कारण द्रव्यमाकाशादि । तस्य हि पञ्चभूतात्मकत्वे सत्याकाशादीना पृथक्त्वेनात्मलाभो न स्यात् । ततश्चेदमाकाश नाम महाभूतम्, इद पृथ्वी नाम महाभूतमिति गदितु न पार्येत, सर्वस्य पञ्चमहाभूतात्मकत्वात् । न च यत्कारण तत्कदाचित् कार्य स्यात् । तस्मात् कार्यद्रव्यस्यैव पञ्च महाभूतात्मकत्वम्, न कारणद्रव्यस्याऽऽकाशादे । मुनिस्तु (च सू अ १।४७)–"खादीन्यात्मा मन कालो दिशश्च द्रव्यसङ्ग्रह ।" इति नवधा द्रव्यमुक्त्वा तल्लक्षण व्यधीत । यथा (चरके सू अ १।५०)–"यत्राश्रिता कर्मगुणा कारण समवायि यत् । तद्द्रव्यम्" इति । अस्यार्थ,–यत्र कर्म–परिस्पन्दलक्षण सयोगविभागकारणम्, समवेतश्च गुण–यत्र शब्दादयो गुर्वादयो वा बुद्धिर्वा परादयो वा समवेता, यच्च कारण समवायि, तद्द्रव्यमुच्यते । समवायीति । यत्कारणमपृथग्भवति तत्समवायिकारणम् । यथा,–तन्तव पटस्य । एतानि कर्मगुणाश्रयित्वसमवायिकारणत्वानि यद्यपि सर्वाणि सर्वस्मिन् द्रव्ये न विद्यन्ते, तथाऽपि यद्यत्र सम्भवति तत्र तेन तस्य द्रव्यस्य द्रव्यत्वं कल्प्यम् । तद्यथा,–मनस कर्मगुणाश्रयित्वेन, वाय्वादीना तु कर्मगुणाश्रयित्वेन समवायिकारणत्वेन च । ननु, आकाशादीनि कारणद्रव्याणीति कथमुक्तम्? यावताऽऽकाशस्य द्रव्यत्वमेव नास्तीति केचित् । तान्ब्रूमहे । जलधेरिव प्रत्यक्षेणैवास्य नीलरूपतोपलब्धेरस्तित्व सिद्धम् । तथा, कवयोऽपि नीलत्वमेवास्य वर्णयन्ति । यथा कर्णाटस्य–"विपुलपुलिना हृद्या नद्यो वहन्त्यतिनिर्मला कमलसुभगो वायुर्घ्राण विलम्बति मासल । नवजलधरच्छायावासादिवाचिरनिर्गतो वहति शशभृन्नीलस्निग्धे नभस्यवदातताम् ॥" इति । तथा च बाणस्य–"धौताशनि नभसि" इति । तदेतद्दूषयन्ति । तथा हि,–दूरात् भ्रान्तिमात्रेणैव नीलरूपत्वमस्योपलभ्यते । यथा–गिरेर्विविधवर्णस्यापि दूरान्नीलत्वप्रतीति । यत्कवीना वर्णन तत्सादृश्यलेशेन निष्प्रमाणमेव सम्भाव्यते । तथा च तेजस शुक्लत्व वर्णयन्ति । न च शुक्लत्वमेतस्योपपद्यते, निराकारत्वात् । तस्मान्नीलरूपत्वमाकाशस्यानुपपन्नम् । अपि च, यद्याकाशस्य नीलरूपता स्यात्, तदा नीलरूप भवेन्नभ । न च स्यास्निग्धवनीलरूपत्व नभस । ननु, दर्शनवैचित्र्यादस्य रूपवत्त्वमुपपन्नम् । यथा,–पुरुष शरादेर्ऋजुता दिदृक्षुरेक चक्षुर्निमील्यापर चोन्मील्य तामुपलभते, न तु नयनयुगलेन । तद्वत्सन्निकृष्टे गगनरूपस्यानादानम्, विप्रकृष्टे तु ग्रहण स्यादिति । न चैतद्युक्तम् । यतो रूपवत्त्वेऽभ्युपगम्यमाने स्पर्शवत्त्वमस्य प्रसज्येत, रूपस्य स्पर्शेन नित्यसम्बन्धात् । स्पर्शवत्त्वे च सत्याकाशत्वमेव न स्यात् । अतो न रूपवद्व्योम । अन्ये त्वेव मन्यन्ते । पवनवदाकाशस्यावस्थाऽस्तु । यथा किल पवन स्पर्शवान्, न च तस्मिन् रूप सम्भवति । तथैवाकाशो रूपवान्, न च स्पर्शवानिति । तदिदमनवगतपदार्थस्वरूपाणा विलपनम् । ततो यत्र रूप तत्रावश्य स्पर्श, न तु यत्र स्पर्शस्तत्रावश्य रूपम् । तस्मान्न नभो रूपवन्न च सत् (स्पर्शवत्) । अत्रोच्यते । परमार्थदर्शिभिर्यदुपादायोत्पत्ति कथ्यते, तदस्ति । यथा,–पृथिव्यादि । उक्त च–"अक्षरात् ख ततो वायुस्तस्मात्तेजस्ततो जलम् । उदकात् पृथिवी जाता भूतानामेष सम्भव ॥" इति । तस्मादाकाशं द्रव्यमस्ति । अपि च, आकाशमुपादाय गतिवृद्धिप्रसवादिविशेषोपलब्धेराकाशस्यास्तित्वम् । यथा,–रूपोपलब्धिविशेषसम्भवानुमित चक्षु । अपि च, आकाशाभावे ह्येकघनत्व जगत स्यात् । तथा, शब्दाख्यस्य गुणस्यान्यथाऽनुपपत्त्याऽस्त्याकाशमिति । ननु, वायोर्द्रव्यत्व नास्ति, तत्स्वरूपग्राहकप्रमाणाभावात् । स्पर्शोपलब्धेर्वायोरस्तित्वमुच्यत इति चेत् तदपि न, यतोऽस्तुनैवोक्त खाद्वायुरिति । गगनस्य च स्पर्शाभावात् वायोरप्यस्पर्शवत्त्वम्, कारणगुणपूर्वकत्वात्कार्यस्य । नैतदस्ति । कार्यस्योभयात्मकत्वदर्शनात् । कारणगुणपूर्वक कार्य दृष्टमकारणगुणपूर्वक च दृष्टम् । तत्र कारणगुणपूर्वक तावद्यथा,–तन्तुश्वेतत्वपूर्वक पटे श्वेतत्व दृष्टम् । अकारणगुणपूर्वक च दृष्टम्, यथा–हरिद्राक्षारसयोगाद्रक्तता । तस्मादस्पर्शादाकाशादुत्पन्नो वायु स्यादेव स्पर्शवान् । ननु, एवमप्यग्निजलपृथिवी-

१ 'ष्णा वाऽप्यदीपनी' ख घ झ । २ 'चलक्' ग स द । ३ 'रस स्वादुर्यथा' म्र द । ४ 'मप्यक्ष' ख घ झ । ५ 'पारेवत' क.ग.ञ । 'पारावत' स स । ६ 'साम्ल' स स । ७ 'तज्जातु क्वचित्' ठ. । ८ 'विभाग' ट. । ९ 'एवमेतानि च क' इति क्वचित् ।

१ 'धौतासितामे न' ट । २ 'तदसत्' ट । ३ 'तथाऽद्रेर्वि' ट. । ४ 'विवर्ण' ठ । ५ 'यत्तु कवीना च व' ट । ६ 'तस्मान्न नीलरूपत्व नभस । ननु' ठ । ७ अनादान–अग्रहणम् । ८ 'वा तु पुस्याकाशविहायसी' इत्यमर । ९ 'पादेयो' ठ. । १० 'ह्येकाद्यनेकत्व जगतो न स्यात् ।' ट । ११ 'वायुर्नास्त्येव,' ठ । १२ 'न युज्यते, अधु' ठ । १३ 'भयथादर्श' ट. । १४ 'तपूवकत्व कार्ये पटे' ट. ।

च्वपि स्पर्शविशेषसम्भवात् अग्न्यादिसमवाय एव वायुर्व्यवह्रियते न तु तद्व्यतिरिक्तो वायुरस्ति। अत्रोच्यते। सत्यमनलादीनामपि स्पर्शोऽस्ति, किन्तु विलक्षण एवासौ। तथा हि,–तेजस स्पर्शो रूपैकार्थसमवायी। अपा स्पर्शो रूपरसाभ्या समवेत। पृथिव्या स्पर्शो रूपरसगन्धसमवेत। यस्तु वायो स्पर्श, स पत्रचलनशाखाभञ्जनादिकर्मसमवायी। स नैषा मग्न्यादीना दृष्टाना नाप्यदृष्टानामात्मदिक्कालादीनाम्। गुणाश्च सर्वे द्रव्याश्रया दृष्टा, रूपादय इव पटादिषु। तस्माद्वायोर्विशिष्टस्पर्शवत्त्वादस्तित्वमनुमीयते। तथा, पवनस्य तत्कर्मोपदेशादस्तित्वम्। यस्य तत्त्वदर्शिभि कर्मोपदिश्यते, तदस्ति। यथा,–कफादिवद्वातस्य च कर्मोपदिष्टम् ( हृ सू अ ११।४९ )–"स्रसव्यासव्यधस्वाप" इत्यादि। तस्मादस्ति वायुर्द्रव्यमिति। अग्निर्द्रव्य नास्ति, इन्धनव्यतिरेकेणानुपलब्धे। अत्रोच्यते। तत्त्वदर्शिभिरग्नेर्द्रव्योत्पत्तिहेतुत्वेनोपदेशादस्तित्वम्। तथा चेहैव वक्ष्यति ( श्लो ८ )–"आग्नेय दाहभावर्णप्रकाशपचनात्मकम्।" इति। ननु, युक्तश्चतुर्णां पृथिव्यापतेजोवायूना भूताना सावयवत्वात् द्रव्येषूत्कर्षापकर्षसन्निवेश, क्वचिद्द्रव्ये कस्यचिद्भूतस्य प्रमाणत प्रभावतश्चावयवानामुत्कर्षापकर्षसद्भावात्। आकाशस्य तु निरवयवत्वात्सूक्ष्मत्वादेकत्वाच्चोत्कर्षापकर्षसन्निवेशो न युक्त। युक्तमाह भवान्। किन्तु सावयवानामेव द्रव्याणां येऽवयवा क्वचित्पाषाणादौ सहताास्तथाऽवतिष्ठन्ते। यथा तत्र द्रव्ये काठिन्यस्य प्रकर्षो भवति। तत्र चाकाशमपकृष्यते। अनिबिडावयवे तु सन्निवेशे आकाश प्रकृष्यते। तदेवमनया युक्त्याऽऽकाशस्यापि न्यूनाधिकभाव उपपन्न।

**आ० र०–द्रव्यभेदानाह–पञ्चभूतात्मकमिति। पञ्च सङ्ख्याकानि भूतान्येव आत्मानो यस्य तत्तथा, पार्थिवादिभेदात् पञ्चधेत्यर्थ। कार्यकारणयोरभेदोपचारात् भूतशब्देन भौतिकमुच्यते। द्रव्यमित्यनुवर्तते।**

अथ केन महाभूतेन कथ कृत्वाऽऽरब्ध तद्द्रव्यमित्याह—

**क्ष्मामधिष्ठाय जायते ॥ १ ॥**

**स०**–पृथ्वीमाधारीकृत्वोत्पद्यते। एव पृथिव्याख्येन भूतेनाऽऽधारत्वेनोपकृत्य तेन तदारब्ध द्रव्यमित्युच्यते।

**आ० र०–द्रव्योत्पत्तिमाह–तदिति। तत्–द्रव्यम्, क्ष्मा–पृथिवीम्, अधिष्ठाय जायते, मृदमिव घट, उपादानकारण पृथ्वीत्यर्थ.।**

**अम्बुयोन्यग्निपवननभसां समवायतः।**
**तन्निर्वृत्तिर्विशेषश्च**

**स०**–तथा, अम्बु–सलिल, योनि–कारण, यस्य तदम्बुयोनि द्रव्यम्। एव जल नाम महाभूत रसवत्त्वाद्योनितयोपकृत्य तेन तदारब्धमित्युच्यते। [ मुनिनाऽप्युक्तम् ( च सू अ १।६३ )–"रसनार्थो रसस्तस्य द्रव्यमाप क्षितिस्तथा। निर्वृत्तौ च विशेषे च प्रत्यया खादयस्त्रय ॥" इति। अमीषा द्रव्यादीनामाश्रयकर्मणोर्भेदश्चिन्त्य।] तथा, अग्निपवननभसा समवायात्–अपृथग्भावात्, तस्य–द्रव्यस्य, निर्वृत्ति–निष्पत्ति। तथा, तस्य द्रव्यस्य यो विशेष–इदमन्यदिदमन्यद्द्रव्यमित्येवरूपो नानास्वभाव, सोऽप्यग्निपवननभसा समवायात्। एवमग्निपवननभोभि समवायिकारणत्वेनोपकृत्य तैरेतैद्र्व्यमारब्धमित्युच्यते। एवं च सर्व कार्यद्रव्य पञ्चमहाभूतात्मकम्, पञ्चभिर्महाभूतैरारब्धत्वात्।

**आ० र०–अम्बु–उदक, योनि–विपरिणामकारण यस्य तदम्बुयोनि। यथा,–घटे निष्पाद्ये मृद पिण्डीभावादौ। अग्न्यादीना सम्बन्धात् तन्निर्वृत्ति–सम्पूर्णावयवत्वम्, काठिन्यक्रियावकाशादिदानेन। विशेष–परस्परम्, सोऽपि तत एव। यथा,–पिण्डीभूताया मृदो मणिककरकशरावादिभेद।**

ननु, यदि पञ्चमहाभूतात्मक द्रव्य तत्कथमुच्यते पार्थिवमिद द्रव्यमिदमाप्यमित्याह—

**व्यपदेशस्तु भूयसा ॥ २ ॥**

**स०**–यत्र द्रव्ये यद्भूत भूयिष्ठमधिकृतम्, तेन तस्य व्यपदेश–सज्ञा भवति। यथा,–पृथिव्याऽधिकयोत्पादितं द्रव्य पार्थिवम्। एवमाप्य तैजस च वेद्यम्। तदेव सर्व द्रव्यं पञ्चभूतात्मक स्थितम्।

**आ० र०–सर्वेषां पञ्चभूतात्मकत्वादभेदे प्राप्ते भेदहेतुमाह–व्यपदेश इति। व्यपदेश–इद पार्थिवमिदमाप्यमित्यादि भेदेन व्यवहार। स भूयसा–अधिकेन भूतेन, यत्र यस्याधिक्य तस्य तेन व्यपदेश।**

**तस्मान्नैकरसं द्रव्यं भूतसङ्घातसम्भवात्।**

**स०**–तस्माद्भूतसङ्घातसम्भवात् कारणाद्द्रव्य नैकरस–अपि त्वनेकरसम्। एव द्रव्यवद्रसस्यापि भूतसङ्घातसम्भवत्वम्। अत एव प्रतिद्रव्य मधुरादिरसस्य नानास्वादोपलम्भ। तथा च, द्राक्षाऽक्षोडक्षीरेक्षुक्षौद्रगोक्षुरादौ द्रव्ये सत्यपि माधुर्येऽपरोऽपर आस्वाद उपलभ्यते। एवमम्लानामपि मातुलुङ्गधान्याम्लादीना द्रव्याणा नानास्वादोपलम्भ। एव लवणादीनामपि वेद्यम्। अपि चैषा द्राक्षादीनामनेकरसत्वमास्वादविशेषादनुमीयमान भूयसा रसेनान्यरसाभिभव कृत्वा व्यपदिश्यते इदं मधुरमिदमम्लमित्यन्यतमम्, महाभूतवत्। यथा,–सर्व द्रव्य पञ्चमहाभूतात्मक भूयसा महाभूतेनान्यमहाभूताभिभव कृत्वा

१ 'वात् तस्मादग्न्या' ठ। २ 'रूपे कार्यसमवायी। अपा स्पर्शरूपरसा कार्यसमवाया। पृथिव्या स्पर्शरूपरसगन्धा कार्यसमवेता•। यस्तु' ट। ३ 'णांभूताना' ट ठ। ४ 'सत्यम्।' ड। ५ 'णामवयवा' ड। ६ 'दौ तथा सहता, यथा तत्र काठि' ड। ७ 'हत्याऽवति' ठ। ८ 'येन' ट ठ। ९ 'तद्द्रव्ये' ट। १० 'भावो युक्त।' ड। ११ 'भूतान्यात्मानो' क.ग.ञ.। १२ 'पञ्चत्वमित्यर्थ' क ग ञ.।

१ 'द्रव्यवत्त्वा' ट। २ [ ] इति पाठ, ट ड पुस्तकयोर्नोपलभ्यते। ३ 'रेव द्रव्य' ट। ४ 'ण्डीकृता' क ग ञ.। ५ मणिक–कुम्भ। करक–कमण्डलु। ६ 'देशश्च' आ.क.ञ.। ७ 'तन्नैकभूतज द्रव्य' आ।

यथा तेन व्यपदिश्यते पार्थिवमिदमाप्यमिदमिति । ननु, द्रव्यनिर्णये प्रकृते पाञ्चभौतिक यदेव द्रव्य प्रतिज्ञात तदेव "तस्मात्" इत्यादिना निगमग्रन्थेनातिवाहयितु युक्तम्, न पुनरप्रस्तुतमनेकरसत्वम् । तस्मादत्रैव ग्रन्थ कर्तु न्याय्य –"तस्मान्नैकभूतज द्रव्य भूतसङ्घातसम्भवात् ।" इति । अत्रोच्यते । षण्णामपि रसाना योनिरुदकम् । ततश्चैकस्यैव महाभूतस्योदकसञ्ज्ञस्य रसकारणत्व प्राप्त नान्येषाम्, नीरसत्वात् । इति कृत्वा न भूतसङ्घातसम्भवत्व रसस्य । इत्येवविधामाशङ्कामपनिनीषुर्भूतसङ्घातसम्भवत्व रसस्य चैकेनैव प्रयत्नेन "तस्मान्नैकरस द्रव्य भूतसङ्घातसम्भवात् ।" इति जगाद । मुनिश्चात एव रसस्य भूतसङ्घातसम्भवत्व स्पष्ट कृत्वोवाच । यथा ( च सू अ १।६३)—"रसनार्थो रसस्तस्य द्रव्यमाप क्षितिस्तथा । निर्वृत्तौ च विशेषे च प्रत्यया. खादयस्त्रय ॥" इति । एव भूतसङ्घातो रसाना द्रव्याश्रितानामपि सम्भवैककारणम् । एतच्च रसभेदीये सविस्तरं कथयिष्याम ।

**आ० र०–सर्वेषा द्रव्याणा सर्वधर्मत्वमाह–तस्मादिति । तस्मात्–सर्वभूतारब्धत्वात् सर्वमपि द्रव्य नेकरस–अनेकरसम्, सर्वधर्ममित्यर्थ । रसशब्दोऽत्र धर्ममात्रोपलक्षण । सर्वभूतारब्धत्वेऽप्येकरसत्वे को दोष ? इत्याशङ्क्याह–भूत सङ्घातसम्भवादिति । रसानामपि भूतसमुदायादुत्पत्ते । वक्ष्यति हि ( हृ सू अ १०।१ )–"द्वयोल्बणै क्रमाद्भूतैर्मधुरादिरसोद्भव ।" इति । सति च कारणे कार्येणावश्य भाव्यम् ।**

**नैकदोषास्ततो रोगास्तत्र व्यक्तो रसः स्मृतः ॥ ३ ॥**
**अव्यक्तोऽनुरसः किञ्चिदन्ते व्यक्तोऽपि चेष्यते ।**

**स०**–यत सर्व द्रव्यमनेकरसम् । तत –तस्मात्कारणात्, एक दोषा रोगा ज्वरादयो न भवन्ति, अपि त्वनेकदोषा, त्रिदोषा इत्यर्थ । अत्रापि "व्यपदेशस्तु भूयसा" इत्यध्याहार्यम् । तेन त्रिदोषात्मकेऽपि ज्वरे वाताधिके वातज्वर एव पित्तज्वर श्लेष्मज्वर इत्येवरूपो व्यपदेश उपपन्न । ननु, यदि सर्वो ज्वर सन्निपातज, तत्किमिति वक्ष्यति ? अय सन्निपातज्वर इति । ब्रूमहे । समविषमरूप शक्त्युत्कर्षमाश्रित्य यत्र दोषा वर्तन्ते स सन्निपातज्वर इति तन्त्रकृता पुरस्ताद्विस्तरेण प्रतिपादयिष्यते ।

अथ को रसोऽनुरसो वेत्याह–तत्रेत्यादि । तत्र–तस्मिन् द्रव्ये, यो व्यक्त–स्फुट उपलभ्यते, स रस स्मृतस्तन्त्रकृद्भि । यश्चाव्यक्तो–अस्फुटप्रतिभासो रसनेन्द्रियेणोपलभ्यते, सोऽनुरस । हीनार्थोऽत्रानुशब्द, अल्पो रस इत्यर्थ । न चैतावदेवानुरसलक्षणमित्याह–किञ्चिदित्यादि । मुखक्षिप्तस्य हरीतक्यादेर्द्रव्यस्य रसनेन्द्रियेण किञ्चिदन्ते व्यक्तोऽप्युपलभ्यते य सोऽप्यनुरस इष्यते, मुनिभिरिति वाक्यशेष । अन्ते इत्यनेनैतद्द्योतयति,–अन्ते–अवसाने, न त्वादावापातमात्रे न च मध्ये । तयोर्हि रसस्यैवोपलम्भ । अनुशब्दस्यात्र पश्चादर्थत्वात् पश्चात् स्फुटोऽपि किञ्चिद उपलभ्यते सोऽप्यनुरस इत्यर्थ ।

**आ० र०**–तुल्यन्यायत्वप्रसङ्गात् सर्वेषा रोगाणा सर्वदोषजत्वमाह–नैकदोषा इति । रोगा नैकदोषा –सर्वेऽपि रोगा सर्वदोषोद्भवा । कुत ? तत एव हेतो ,–रोगाणामपि भूतसङ्घातसम्भवात् । भूतसङ्घातस्य तु त्रिषु दोषेषु विभक्तत्वात् । यथोक्त सङ्ग्रहे ( सू अ २० )–"वाय्वाकाशधातुभ्या वायु , आग्नेय पित्तम्, अम्भ पृथिवीभ्या श्लेष्मा ।" इति । भूतसङ्घात विना न दोषसङ्घात , त विना न रोगोत्पत्तिरिति, अत सर्वे रोगास्त्रिदोषजा । केचित्तु सर्वद्रव्याणा सर्वरसत्वेन सर्वदोषसामान्यात् सर्वदोषकोपनत्वम्, ततो रोगा नैकदोषा इति व्याचक्षते । तदसत् । सामान्यवद्वैपरीत्यस्यापि सत्त्वात् । सामान्य प्रयोजकमिति चेत् न, दोषघ्नद्रव्यभेदाभावप्रसङ्गात् । वैपरीत्यमपि क्वचित् प्रयोजकमिति चेत् न, सर्वदोषकोपनत्वनियमव्याघातात् । सर्वदोषकोपनाना नियम इति चेत् न, ह्येकदोषकोपनद्रव्याभावप्रसङ्गात् । बाहुल्येनैव व्यपदेश इति चेत् न, द्विदोषकोपनैकशमनद्विशमनैककोपनद्रव्याभावप्रसङ्गात् । सिद्धान्तेऽपि सर्वेषा सर्वधर्मत्वस्वीकारान्न दोषघ्नादिविभाग इति चेत् न, तस्य तस्य धर्मस्य तत्र तत्र प्रयोजकत्वात् । तथा च वक्ष्यति ( श्लो २२ )–"किञ्चिद्रसेन कुरुते कर्म पाकेन चापरम् । गुणान्तरेण वीर्येण प्रभावेणैव किञ्चन ॥" इत्यादि । तस्मात्पूर्वमेव व्याख्यान युक्तम् ।

सर्वेषा सर्वधर्मत्वादविशेषे प्राप्ते तन्निरासार्थं धर्मतारतम्यमाह–तत्र व्यक्त इति । तत्र–द्रव्ये, कश्चिद्धर्म सद्यो व्यक्त कश्चिदव्यक्त. कश्चिदीषद्व्यक्त. कश्चिदन्ते व्यक्त. । तेष्वाद्यो रसाख्य, इतरे त्रयोऽनुरसाख्या ।

ननु, मधुरादयो रसा गुर्वादिगुणयुक्ता कथ वक्तु पार्यन्ते । यतो मधुरादयो रसा गुणा गुर्वादयश्च गुणा । न च गुणाना मधुरादीना गुर्वादिगुणाधारत्वमुपपन्नम् । तथा च वैशेषिका –"निर्गुणा गुणा" इति । तस्मिन् पर्यनुयोग इदमाह—

**गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये ॥ ४ ॥**
**रसेषु व्यपदिश्यन्ते साहचर्योपचारत. ।**

**स०**–पृथिव्यादौ–पृथिव्यादिमहाभूतारब्धे द्रव्ये, रसाश्रये

१ 'न्थेन वक्तु यु' ड । २ 'म्भवे का' ट. । ३ 'प्रपञ्चयिष्याम' ट. । 'व्याख्यास्याम' ठ । ४ 'रम्भकत्वात्' ख घ झ । ५ 'वात्' ख झ. । ६ 'भवितव्यम्' क ग ज । ७ 'दोषा इत्यर्थ.' ठ ड । ८ 'वातज्वरोऽय पित्ताधिके पित्तज्वरोऽय श्लेष्माधिके श्लेष्मज्वरोऽय इत्येव' ट. । ९ 'देशो युक्त' ड. । १० 'सत्यम्' ड. ।

१ 'मुखे क्षि' ट । २ 'नैव त' ठ । ३ 'र्थत्वम् । प' ठ । ४ 'काशाभ्या' क ग ज । ५ 'नैष व्य' ख घ. । ६ 'द्विकोप' क ग ज । ७ 'विशेषप्राप्तौ त' ख घ झ. । ८ 'तत्राद्यो' ख घ झ. । ९ 'क्ता इति कथ वक्तु पार्यते' ट । १० 'यो गुणा' ट. । ११ 'प्रश्ने' ड. । पर्यनुयोगे–खण्डनार्थप्रश्ने ।

गुर्वादयो गुणा परमार्थत आश्रिता, न तु रसेषु मधुरादिषु। यत्तु रसेषु व्यपदिश्यन्ते तत् साहचर्योपचारत। सह चरतीति सहचर, तस्य भाव साहचर्यम्। यस्मिन्नेव गुडादौ द्रव्ये मधुरो रस आश्रितस्तस्मिन्नपि गुरुगुण आश्रित, इति मधुररसगुरुगुणयो सहचरभाव। साहचर्येण–तुल्याश्रयत्वेनोपचार साहचर्योपचार, तस्मात्साहचर्योपचारतो, गुर्वादयो गुणा रसेषु–मधुरादिषु व्यपदिश्यन्ते। यथा,–गुरुर्मधुरो रसो लघुरम्ल इत्यादि। न पुन परमार्थतो रसेषु गुर्वादय सन्ति। अस्ति च साहचर्येण व्यपदेश। यथा–घृतसहचरेण घृतस्नेनाग्निना दग्धो घृतदग्ध इत्युच्यते।

आ० र०–गुर्वादीना रसाश्रयत्वाद्द्रव्यस्यासर्वधर्मत्वे प्राप्ते परिहारमाह–गुर्वादय इति। गुर्वादयो गुणा द्रव्य एव, न रसेषु। यस्तु मधुरो गुरु, अम्लो लघुरित्यादि व्यपदेश, स साहचर्योपचारत। एकस्मिन्नाश्रये द्वयोरवस्थान–साहचर्यम्। साहचर्यमेव कुत? इत्याह–रसाश्रय इति। द्रव्य हि गुर्वादीनामिव रसानामप्याश्रय। अत एकाश्रयत्वात्साहचर्यम्, तेन उपचार–अविद्यमानस्याप्याश्रयाश्रयीभावस्यारोप। ननु, किमेतत् रसाद्यतिरिक्त द्रव्य नाम? इत्यत आह–पृथिव्यादाविति। पृथिव्यादिशब्दाभिलप्य द्रव्यमित्यर्थ।

**तत्र द्रव्यं गुरुस्थूलस्थिरगन्धगुणोल्वणम्॥ ५॥**
**पार्थिवं गौरवस्थैर्यसङ्घातोपचयावहम्।**

स०–तत्र–तेषु पार्थिवादिषु पञ्चसु द्रव्येषु मध्ये, पार्थिव द्रव्य गुर्वादिगुणोत्कटम्। उल्वणशब्देनैतत् द्योतयति,–पार्थिवे द्रव्येऽन्येऽपि गुणा सन्ति, सर्वद्रव्याणा पाञ्चभौतिकत्वात्। गुर्वादयस्तत्रोत्कटा। एवमाप्यादिषु सर्व योज्यम्। तथा, गौरवाद्यावह–गुरुत्वादिकृदित्यर्थ।

आ० र०–अथ द्रव्यभेदान् लक्षयति। तत्र पार्थिव लक्षयति–तत्र द्रव्यमिति। गुर्वादिगुणोत्कट गौरवादिकर च पार्थिव द्रव्यम्। सङ्घात–काठिन्यम्। उपचय–स्थौल्यम्। गुणशब्दोऽत्र धर्मवाची। उल्वणग्रहण सर्वेषा सर्वधर्मत्वात्।

**द्रवशीतगुरुस्निग्धमन्दसान्द्ररसोल्बणम्॥ ६॥**
**आप्यं स्नेहनविष्यन्दक्लेदप्रह्लादबन्धकृत्।**

स०–आप्य द्रव्य द्रवादिगुणोल्बण स्नेहनादिकृत्।

आ० र०–आप्य लक्षयति–द्रवशीतेति। द्रवादिगुणोत्कट स्नेहनादिकर च द्रव्यमाप्यम्। द्रवसान्द्रयो परस्परविपरीतयोरप्यार्द्रत्वसामान्यादाप्यत्वम्। विष्यन्द–स्रोत स्राव। प्रह्लाद–तृप्ति।

**रूक्षतीक्ष्णोष्णविशदसूक्ष्मरूपगुणोल्बणम्॥ ७॥**
**आग्नेयं दाहभावर्णप्रकाशपचनात्मकम्।**

स०–आग्नेय द्रव्य रूक्षादिगुणोत्कट दाहादिकरम्।

आ० र०–आग्नेय लक्षयति–रूक्षतीक्ष्णेति। रूक्षादिगुणोत्कट दाहादिकर च द्रव्यमाग्नेयम्। भा–कान्ति। वर्णो–गौरादि। प्रकाश–आलोक। पचन–पाक। तदात्मकत्व कार्यकारणयोरभेदोपचारात्।

**वायव्यं रूक्षविशदलघुस्पर्शगुणोल्वणम्॥ ८॥**
**रौक्ष्यलाघववैशद्यविचारग्लानिकारकम्।**

स०–वायव्य द्रव्य रूक्षादिगुणोल्बण रौक्ष्यलाघवादिकरम्।

आ० र०–वायव्य लक्षयति–वायव्यमिति। रूक्षादिगुणोत्कट रौक्ष्यादिकर च द्रव्य वायव्यम्। विचारो–विविधा चेष्टा।

**नाभसं सूक्ष्मविशदलघुशब्दगुणोल्बणम्॥ ९॥**
**सौषिर्यलाघवकरम्**

स०–नाभस द्रव्य सूक्ष्मादिगुणोल्बण सौषिर्यादिकरम्।

आ० र०–नाभस लक्षयति–नाभसमिति। सूक्ष्मादिगुणोत्कट सौषिर्यादिकर च द्रव्य नाभसम्। सौषिर्य–सरन्ध्रत्वम्।

**जगत्येवमनौषधम्।**
**न किञ्चिद्विद्यते द्रव्यं वशान्नानार्थयोगयोः॥ १०॥**

स०–एव–अनेन पञ्चमहाभूतारब्धेन गुर्वादिगुणयोगेन द्रव्याणा, जगति–भुवनेऽस्मिन्, अनौषधभूत न किञ्चिद् द्रव्य नास्ति,–अपि तु सर्वमेव द्रव्य यत्किञ्चित्कृतापाद्यादिक तदौषध,–चिकित्सितम्। वशान्नानार्थयोगयो,–अर्थश्च योगश्च–अर्थयोगौ, अर्थ–प्रयोजनम्, योगो–युक्ति, यथा,–अनया युक्त्यौषधमिद योजितमस्य रोगस्य विजयाय स्यादनया चास्य रोगस्येति, नानाविधौ यावर्थयोगौ तयोर्वशात्–सामर्थ्यात्, सर्वमपि द्रव्य मौषधम्, रोगप्रतीकारहेतुत्वात्।

आ० र०–द्रव्यमात्रस्यौषधत्वमाह–जगतीति। एव–उक्तेन प्रकारेण, तस्य तस्य द्रव्यस्य तत्तद्गुणयोगित्वात् जगति न किञ्चिद्द्रव्यमनौषध विद्यते–सर्वमेव द्रव्यमौषधम्। कुत? नानार्थयोगयोर्वशात्,–अर्थ–प्रयोजनम्, योगो–योजना, नानाविधावर्थयोगौ–नानार्थयोगौ, तयो। एतदुक्त भवति,–यदेकस्मिन्नर्थे नोपयुज्यते तदेवान्यस्मिन्नुपयुज्यते। यदेकेन योगेन नोपयुज्यते तदेवान्येनोपयुज्यते। यथा,–अत्यन्तानुपयुक्तोऽपि खरमेषादिविड्रसो बिन्दुश श्वासकासादौ, अत्यन्तापथ्योऽपि माष इण्डुरीकृत सनवनीतोऽर्दितादौ।

अथ किं द्रव्य किम्भूतोत्कट भवति? इत्याह–

**द्रव्यमूर्ध्वगमं तत्र प्रायोऽग्निपवनोत्कटम्।**
**अधोगामि च भूयिष्ठं भूमितोयगुणाधिकम्॥ ११॥**

१ 'पृथिव्यादौ' ट। २ 'स्मिन्नेव' ट। ३ 'चर्योपचारेण' ट। ४ 'हचारिणा' ट। ५ 'शब्दो धर्म' ख घ झ। ६ 'न्द्रगुणोल्ब' अ क ञ।

१ 'त्मक का' क ग ञ। २ 'भेदात्' झ। ३ 'रङ्गलपनात्मकम्' अ। ४ 'वायवीय' ख घ झ। ५ 'शौषिर्यं' अ ञ ठ। ६ 'उत्कप्र' ख घ झ। ७ 'योगात्' ख ग व झ। ८ 'वर्तते' क ग ञ। ९ 'युक्ता आपश्च बि' ख घ झ। १० 'पाजवि' ग। ११ 'टस श्वास' क ग ञ.। १२ 'ईड्डुरी' क ञ.। 'इण्डरा' ख झ।

स०-ऊर्ध्वं गच्छतीति-ऊर्ध्वगमम् । खप्रकरणे "गमेरप्युपसङ्ख्यानम्" इति ख । प्रायो-बाहुल्येन, ऊर्ध्वगम द्रव्यमग्निपवनाधिक भवति । यथा,-मदनफलादि । बाहुल्य (प्रायो) ग्रहणात् अग्निसमीरणोत्कटस्याप्यधोगामित्व दृष्टम् । यथा,-हरीतक्यादे, अचिन्त्यप्रभावत्वात् । यथा,-सर्पस्य विषमयत्वेऽपि तत्फणामणेर्विषघ्नत्वम् । भूयिष्ठ-प्रायेण, भूमितोयोल्बण द्रव्यमधोगामि भवति । यथा,-त्रिवृतादि । यत्तु व्यामिश्रात्मक तुल्यकालमूर्ध्वाधोदोषहरण तदिह ग्रन्थगौरवभयान्नोक्तमपि व्यामिश्रभूतोत्कट द्रव्य व्यामिश्रात्मकमिति सामर्थ्यलब्ध एवायमर्थ ।

आ० र०-औषधद्वैविध्य पञ्चविधे द्रव्ये विभजति । द्रव्यमूर्ध्वगममिति । द्विविधमौषधम्,-शोधन शमन च । शोधन द्विविधम्,-ऊर्ध्वगममधोगम च । तत्राग्निपवनोत्कटमूर्ध्वगमम्, भूमितोयगुणमधोगमम् । पारिशेष्यादाकाशोत्कट शमनम् । तथा च सुश्रुत (सू अ ४१.६)-"आकाशगुणभूयिष्ठ सशमनम्" इति । गमन-गम । ऊर्ध्वं गमोऽस्यास्तीति ऊर्ध्वगमम् । प्राय इति भूयिष्ठमिति च व्यभिचारार्थम् । यथा,-चित्रकवदग्निपवनोत्कटाया अपि दन्त्या विरेचनत्वम्, मृद्वीकावद्भूमितोयगुणाधिकस्यापि मधुकस्य वमनत्वम् । सङ्ग्रहे तु (सू अ १७)-"व्यामिश्रात्मकमुभयतोभागम् । शमन तु दोषविपरीतगुणमुक्त प्राक् । तत्सङ्करे च यतो बाहुल्येन । तत्सङ्करे-गुणसङ्करे, यतो बाहुल्येन-येषा गुणाना बाहुल्य तैर्निर्णय । तथा, अनिलात्मक ग्राहि । अनलात्मक दीपनपाचनम् । उभयात्मक लेखनम् । भूम्युदकात्मक बृहणम् ।" इति ।

**इति द्रव्यम्**

स०-इति-परिसमाप्तौ, द्रव्य प्रति यद्वक्तव्य तन्निष्पन्नमित्यर्थ ।

आ० र०-प्रकरणार्थमुपसहरति-इति द्रव्यमिति । इति-परिसमाप्तौ ।

एव द्रव्ये निर्दिष्टे रसा निर्देष्टु युक्ता इत्याह—

**रसान् भेदैरुत्तरत्रोपदेक्ष्यते ।**

स०-बहुवक्तव्यत्वादुत्तरत्र-अनन्तरेऽध्याये, रसान् भेदै -त्रिषष्टिसङ्ख्यावच्छिन्नै, उपदेक्ष्यते तन्त्रकृत् ।

आ० र०-क्रमप्राप्तस्य रसस्यानभिधाने हेतुमाह-रसो भेदैरिति । उत्तरत्र-उत्तरस्मिन्नध्याये, उपदेक्ष्यते-वक्ष्यते, यतोऽसौ बहुभिर्भेदैर्विशिष्ट, बहुभेदत्वेन बहुवक्तव्यत्वात् पृथगध्यायकरणमित्यर्थ ।

अथ वीर्यस्य विपाकादिभ्य प्राधान्यात्तच्चर्चा प्रस्तौति—

**वीर्यं पुनर्वदन्त्येके गुरु स्निग्धं हिमं मृदु ॥ १२ ॥**
**लघु रूक्षोष्णतीक्ष्णं च तदेवं मतमष्टधा ।**

स०-द्रव्यमुक्तम् । वीर्यं पुनर्गुर्वादीनष्टौ गुणान् द्रव्याश्रितानिति समाचक्षते । तत्-तस्मात्, एव-अनेन प्रकारेण, वीर्यमष्टधा-अष्टप्रकारं, गुर्वादिर्वादिना मतम् ।

आ० र०-अथ वीर्यम् । तत्र परमत दर्शयति-वीर्यं पुनरिति । एके-खारणादिप्रभृतय, गुर्वादीन् गुणान् वीर्यं च वदन्ति । एव च तदष्टधा सम्मतम् । सुश्रुतस्तु गुरुलघू विहाय विशदपिच्छिलौ पठति (सू अ ४०।५)-"केचिदष्टविधमाहु,-उष्ण शीत स्निग्ध रूक्ष विशद पिच्छिल मृदु तीक्ष्ण चेति ।" इति ।

चरकाचार्य पुनरेव वक्ति—

**चरकस्त्वाह वीर्यं तत् क्रियते येन या क्रिया ॥१३॥**
**नावीर्यं कुरुते किञ्चित्सर्वा वीर्यकृता हि सा ।**

स०-येन-स्वभावेन, या क्रिया क्रियते-यत्कर्म निष्पाद्यते, तद्वीर्यम् । तदेव यावत् किञ्चिद्गुणजात द्रव्ये स्थित तत्सर्व वीर्यमेव । सर्व वीर्य करोतीत्यत एवाह-नावीर्यमित्यादि । यत्र वीर्यं तत्र किञ्चित्करोति-न काञ्चिदप्यर्थक्रिया निष्पादयति, प्रतिनियतशक्तिपरिर्ष्वक्तत्वात् सर्वभावानाम् । अत एवाह-सर्वेत्यादि । हिशब्दो यस्मादर्थे । यस्मात्सर्वा क्रिया वीर्यकृता-वीर्येण जनिता । ततो यत्र वीर्य तत्र किञ्चित्कुरुते ।

आ० र०-चरकमत दर्शयति-चरकस्त्वाहेति । येन क्रियते तत्-वीर्यम्, द्रव्यकर्तृके कर्मणि करणभूतमित्यर्थ । कतिविध तत्? इत्यपेक्षायामाह-या क्रियेति । या क्रिया येन क्रियते तस्या तद्वीर्यम्, यावत्य क्रियास्तावन्त्येव वीर्याणीत्यर्थ । कुत ? इत्याह-नावीर्यमिति । अवीर्य द्रव्य न किञ्चित्कुरुते-वीर्य विना कर्तृत्व नास्तीत्यर्थ । कुत ? इत्याह-सर्वा वीर्यकृता हि सा । हि-यस्मात्, सा-क्रिया, सर्वाऽपि वीर्यकृता ।

**गुर्वादिष्वेव वीर्याख्या तेनान्वर्थेति वर्ण्यते ॥ १४ ॥**
**समग्रगुणसारेषु शक्त्युत्कर्षविवर्तिषु ।**
**व्यवहाराय मुख्यत्वाद्बह्वग्रग्रहणादपि ॥ १५ ॥**

स०-यतो वीर्यस्यैव करणसामर्थ्य तेन कारणेन गुर्वादिष्वे-

१ सङ्ग्रहे त्वस्योपपत्तिरप्युक्ता (सू अ १७)-"तत्राग्निमारुतात्मक प्रायेणोर्ध्वभागिकम् । तयोर्हि लाघवात्, ऊर्ध्वगतित्वाच्चाग्ने, प्लवनत्वाच्च मारुतस्य । भूम्यौदकात्मक तु प्रायेणाधोभागिकम् । तयोर्हि गौरवात्, निम्नगत्वाच्च तोयस्य ।" इति । २ 'तथा क्वचिदग्नि' ट । 'तथा चाग्नि' ठ । ३ 'टमप्य' 'मि दृ' 'क्यादि' ड । ४ 'भावादित्वात्' ड । ५ 'सर्पे वि' ठ । ६ 'पि च व्या' ट । 'पि मिश्रीभू' ठ । ७ 'भागम्' ख घ झ । ८ 'तोगमम्' क ग ञ । ९ 'ल्येन व्यपदेश । तथा' स मू । 'ल्येन कार्यकर्तृत्व भवति यदेवाधिक तदेव तत्कार्यकरमिति व्यपदेश । तथा' स स । १० 'काकाशात्मक' क ग ञ । ११ 'वक्तु' ड. । १२ 'रसो भेदै' हेमाद्रि ।

१ 'त्तदाह' ट । २ 'दिना म' ठ ड । ३ 'वीर्यं व' क ग. ञ । ४ 'वीर्यं तु क्रि' आ चरक । 'तद्येन या क्रियते क्रिया' ठ । ५ 'न तत्' ट ट । ६ 'ष्वक्तात्' ठ ड । ७ 'वन्ति वी' क ख घ झ । ८ 'इत्यत आह' क ग ञ । ९ 'सारत्वाच्छक्त्युत्कर्षविवर्तनात्' अ हेमाद्रि ।

वाष्टासु वीर्याख्या अन्वर्थेति–अनुगतार्थेति, भण्यते। एवकारोऽवधारणार्थं । गुर्वादिष्वेव वीर्यसञ्ज्ञा न तु रसविपाकप्रभावेषु [ मन्दसान्द्रादिषु वा ] । किम्भूतेषु गुर्वादिषु? समग्रेत्यादि। समग्राश्च ते गुणाश्च, तेषु सारा –चिरकालावस्थितयो गुर्वादय एव। तथा च, जाठराग्निसयोगेनापि न मधुरादिरसवत् स्वभावमेते जहति। सर्ते सुस्थिर इति घञि सारशब्द । तथा, अन्येभ्यो मन्दसान्द्रादिभ्यो गुणेभ्यो रसादिभ्यो वा गुर्वादय शक्त्युत्कर्षविवर्तिन । शक्ते –सामर्थ्यस्य, उत्कर्ष –आधिक्यम्, विशेषेण वर्तो–विवर्त ,–विशेषेण भवनम्, शक्त्युत्कर्षस्य विवर्त , स विद्यते येषा त एवम् । किञ्च, गुर्वादीना गुणाना व्यवहाराय–व्यवहारार्थम्, मुख्यत्वात्–अन्येभ्यो गुणेभ्यो गुर्वादय प्रधानभूता इत्यर्थ । तथा च, (श्लो० ४)– "गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये ।" इत्युक्तम्, न मधुरादयो गुणा इति । तस्मात् गुर्वादीना गुणाना व्यवहारमुख्यत्व रसादिभ्य । तथा, बह्वग्रग्रहणात्–बहुग्रहणादग्रग्रहणाच्च, बहवो द्रव्यरसादयो गुर्वादिभिर्गृहीता भवन्ति । तथा चायुर्वेदशास्त्रेषु रसादिभ्यो गुर्वादीनामग्रे ग्रहण दृष्टम्। यथा,– वातादिदोषगुणनिरूपणाया गुर्वादीनामेव पूर्वं ग्रहणम्, न रसादीनाम् । तथा च, "तत्र रूक्षो लघु" इत्याचार्योऽपठद्वाग्वादिलक्षणे ( हृ सू अ १।११) । एव गुर्वादीनामेवाग्रग्रहणात् गुर्वादिष्वेव वीर्याख्याऽन्वर्था–अनुगतार्थेति भण्यते।

**आ० र०–ननु, एव रसादीनामपि वीर्यत्वप्रसङ्ग इत्याह–गुर्वादिष्विति । तेन–चरकेण, गुर्वादिष्वेव वीर्याख्या वर्ण्यते। कुत? अन्वर्थेति कृत्वा । इतिशब्दो हेतौ। यतस्तेषु क्रियमाणा वीर्यसञ्ज्ञाऽन्वर्था स्यात्।**

**अन्वर्थत्वमेव दर्शयति–समग्रेत्यादि। करण हि वीर्यम्। करण च साधकतमम् । साधकतमत्व च गुर्वादीनामेव। कुत? समग्रगुणसारत्वात् । समग्रेषु गुणेषु मध्ये स्थिर ( सार )त्वात्–चिरस्थायित्वात्, शक्त्युत्कर्षविवर्तनात्–उत्कृष्टशक्तित्वात्, व्यवहाराय मुख्यत्वात्–लोके शास्त्रे च मुख्यत्वेन व्यवह्रियमाणत्वात्, बह्वग्रग्रहणात्–बहुगुणगणनाया प्रथमग्रहणात्। विपाकेऽपि स्थिरत्वस्य, प्रभावेऽपि शक्त्युत्कर्षस्य, मृदुकठिनादावपि व्यवहारमुख्यत्वस्य, रसेष्वपि बह्वग्रग्रहणस्य दर्शनात् चतुर्णामुपादानम्।**

**अतश्च विपरीतत्वात्सम्भवत्यपि नैव सा।**
**विवक्ष्यते रसाद्येषु, वीर्यं गुर्वादयो ह्यतः॥ १६॥**

**स०**–अत –अस्माच्च कारणकदम्बकात्, विपरीतत्वात्–वैपरीत्येन स्थितत्वात्, न रसादयो वीर्यम्। तथा हि,–रसस्य सारत्व नास्ति, जाठरानलसयोगवशेन रसान्तरोत्पत्ते । गुर्वादीना तु जाठराग्निसयोगवशेनापि नान्यथाभाव । तथा च न रसस्य शक्त्युत्कर्षविवर्तित्वम्,–यतो रसस्य गुर्वाद्याहितशक्तेरेव स्वकर्मणि सामर्थ्यम्। व्यवहाराय यथा गुर्वादेर्मुख्यत्व यथा च बह्वग्रग्रहण तथा प्रागदर्शितम् । प्रभाव –सर्वातिशायी द्रव्यस्वभाव , तस्य च क्रियानिर्वर्तनसामान्ये सत्यपि वीर्यसञ्ज्ञा पूर्वोक्ताद्धेतोर्न प्रवर्तते। एव विपाककर्मणोरपि चिन्त्यम्। तस्मात् रसाद्येषु सम्भवत्यपि–विद्यमानाऽपि, असद्रूपेव सा वीर्यसञ्ज्ञा न विवक्ष्यते–नोररीक्रियते। आदौ भव –आद्य । दिगादित्वाद्यत्। रस आद्यो येषा–प्रभावादीना, त एव तेषु । वीर्यमित्यादि। हिशब्दो यस्मादर्थे। यत एव सा–वीर्यसञ्ज्ञा, सम्भवत्यपि रसादिषु वैपरीत्यान्न विवक्ष्यते, अतो गुर्वादय एव वीर्यम्, न रसादय ।

**आ० र०–एतच्च रसादिषु नास्तीति दर्शयति–अतश्चेति। सा–वीर्याख्या, रसादिषु सम्भवत्यपि–विद्यमानापि, न विवक्ष्यते, अनुदरा कन्येतिवत् । क्रियानिर्वर्तनसामान्यात्सत्यपि वीर्यत्वे रसादयो वीर्यत्वेन न व्यवह्रियन्त इत्यर्थ । कुत? अतो–हेतुचतुष्टयात्, विपरीतत्वात्।**

**सिद्धमर्थमपनुदति–वीर्यमिति। हि–स्फुटम्, अत.–कारणात्, गुर्वादय एव वीर्यम्। गुर्वादीनामष्टाना योगरूढा वीर्यसञ्ज्ञेति भाव ।**

**उष्णं शीतं द्विधैवान्ये वीर्यमाचक्षते**

**स०**–अन्य आचार्या उष्ण शीतमिति द्विप्रकार वीर्यमाचक्षते। एवकारोऽवधारणार्थं । द्विधैव वीर्यम्, नाष्टधेति ।

**आ० र०–पूर्वमतापरितोषान्मतान्तर दर्शयति–उष्ण शीतमिति। अन्ये–सुश्रुतादय, उष्ण शीत चेति द्विविधमेव वीर्यमाचक्षते–वदन्ति।**

**अपि च।**

**नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ॥ १७॥**
**व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित्।**

**स०**–अपि चेति निपातसमुदायो युक्तिसमुच्चये । तेऽपि सयुक्तिकमेवाहुरित्यर्थ । तामेव युक्तिं दर्शयन्नाह–नानात्मकमपीत्यादि। नानास्वभावमपि द्रव्य–स्थावरजङ्गमाद्य चेतनाचेतनम्, अग्नीषोमौ महाबलौ–उत्कृष्टशक्ती, न जातु कदाचिदतिक्रामति–नोल्लङ्घ्य वर्तते। अवश्य हि द्रव्य किञ्चिदाग्नेय किञ्चित्सौम्यम्, अत किञ्चिद्द्रव्यमुष्णवीर्यं किञ्चिच्छीतवीर्यम्। तथा च मुनि ( च. सू अ २६।८४)–"न मत्स्यान् पयसा सहाभ्यवहियात् । उभय ह्येतन्मधुर मधुरविपाक शीतोष्णत्वात् विरुद्धवीर्यम्, विरुद्धवीर्यत्वाच्छोणितप्रदूषणाय।" इति। अत्र दृष्टान्तमाह–व्यक्ताव्यक्तमित्यादि। व्यक्त चाव्यक्त च व्यक्ताव्यक्तम्, नानात्मकमपि जगत्–त्रैलोक्य कर्तृ यथा व्यक्त चाव्यक्त

१ 'ततया गु' ट । २ 'मे वज' ठ ड । ३ 'भ्यो रसादिभ्यो वा गुणेभ्यो गुर्वा' ठ ड । ४ 'वतन' ट । ५ 'मग्रम' ट । ६ 'सारो बले स्थिराशे च मज्ज्ञि पुसि जले धने। न्याय्ये क्लीब त्रिषु वरे' इति मेदिनी। ७ 'णत्वस्य' क ग ञ.।

१ सारत्व–स्थिराशत्वम्। २ 'जठ' ट ड । ३ '**यथा विश्वना**' हेमाद्रि । '**जगदिद**' आ क ञ । ४ 'युक्तिमाह' ड । ५–६ 'मत्स्या ० वहार्या' ठ । ६ 'वहरेत्' स च ।

च नातिक्रामति, तथा द्रव्यमग्नीषोमावित्यर्थः । व्यक्त-स्थूलम्, दृश्यमित्यर्थः । साङ्ख्याना तु महदादि-व्यक्तम्, अव्यक्त-प्रधान पुरुषश्च ।

**आ० र०**-उक्तमतस्योपपत्तिमाह-अपि चेति, नानात्मकमिति । न केवल मतमात्रमिदम्, युक्त चेद् पूर्वस्मान्मतात्, इत्यपि चेत्यस्यार्थः । नानात्मकमपि-पृथिव्याद्यनेककारणमपि, द्रव्यमग्नीषोमौ जातुचित्-कदाचिदपि, नातिक्रामति-तयोर्वशे वर्तते, किञ्चिदाग्नेयत्वादुष्ण किञ्चित्सौम्यत्वाच्छीतमिति द्विधैव गतिरित्यर्थः । कुत ? यतस्तौ महाबलौ । अत एव सर्वान् गुणान् गुर्वादयोऽभिभवन्ति । गुर्वादीनप्युष्णशीतौ । अत्र दृष्टान्तमाह-यथा विश्व कर्तृ व्यक्ताव्यक्ताख्यभेदद्वय नातिक्रामति ।

**तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकिताः ॥ १८ ॥**
**शमं च वातकफयोः करोति, शिशिरः पुनः ।**
**ह्लादनं जीवनं स्तम्भं प्रसादं रक्तपित्तयोः ॥ १९ ॥**

**स०**-तत्र-तयोरुष्णशीतयोर्मध्ये, उष्ण-उष्णवीर्य, भ्रमादीन् करोति । आशुपाकिता-शीघ्रपाकित्वम् । शिशिर पुन - शीतवीर्य तु, ह्लादनादीन् करोति ।

**आ० र०**-उष्ण लक्षयति-तत्रेति । यद्भ्रमादिक करोति तदुष्णवीर्यम् । आशुपाकिता-शीघ्रपाक ।

शीत लक्षयति-शिशिरमिति, ह्लादनमिति । यत् ह्लादनादीन् करोति तच्छीतवीर्यम् । ह्लादन-निर्वृत्ति । जीवन-मूर्च्छापनयनादिभि प्राणधारणम् । स्तम्भ -स्वेदापनयनम् । रक्तपित्तयो प्रसाद-निर्मलत्वम् ।

वीर्यादनन्तर विपाकं लक्षयति—

**जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् ।**
**रसानां परिणामान्ते स विपाक इति स्मृतः ॥ २० ॥**

**स०**-जाठरेण-औदर्येण, अग्निना योगात्-सश्लेषात्, यत् रसाना परिणामान्ते-जरणनिष्ठाकाले, रसान्तर-रसविशेष, उदेति-उत्पद्यते, स विपाक इति स्मृतो-मुनिभि कथित ।

**आ० र०**-अथ विपाक । तत्र विपाक लक्षयति-जाठरेणेति । रसाना-रसवता द्रव्याणा, जाठराग्निना सयोगात् यद्रसान्तरमुत्पद्यते स विपाक । "आदौ षड्रसमप्यन्न मधुरीभूतमीरयेत् ।" ( हृ शा अ ३।५७ ) इत्याद्युक्ताना मधुराम्लकटुपाकाना व्यावृत्त्यर्थमाह-परिणामान्ते,-आहारपरिणामान्ते । ते तु परिणामात्प्रागेव उत्पद्यन्ते, इति तेषा रसत्वमेव ।

**स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।**
**तिक्तोषणकषायाणां विपाकः प्रायशः कटुः ॥ २१ ॥**

**स०**-स्वादु -मधुरो गुडादि, पटु -लवण सैन्धवादि, मधुर [ यथा भवति तथा ] कृत्वा पच्यते रस इति सम्बन्ध । मधुरमिति क्रियाविशेषणत्वान्नपुंसकलिङ्गम् । स्वादु स्वादुविपाको, लवणोऽपि स्वादुविपाक इत्यर्थः । अम्लो रसो-दधिकाञ्जिकादि, अम्ल पच्यते-अम्लविपाको भवति । तिक्तोषणकषायाणा प्रायश कटुर्विपाको भवति । प्रायशोग्रहण पूर्वत्रापि योजनीयम् । तेन व्रीहिस्थो मधुरो रसोऽम्ल पच्यत इत्युपपन्नम् । तथा चोक्तम् ( हृ सू अ ६।१० )-"स्वादुरम्लविपाकोऽन्यो व्रीहिः" इति । तथा, हरीतक्या भूयस्त्वेन य कषायो रस, स मधुरमेव पच्यते । तथा, कटुको रस शुण्ठ्यार्द्रकपिप्पल्यादिस्थो मधुर पच्यते । तथा चोक्तम् ( हृ सू अ ६।१५३ )-"कषाया मधुरा पाके" इति । तथा ( हृ सू अ ६।१६३ )-"नागर दीपन वृष्य ग्राहि हृद्य विबन्धनुत् । रुच्य लघु स्वादुपाकम्" इति, "तद्वदार्द्रकम्" इति । तथा ( हृ सू अ ६।१६१ )- "श्लेष्मला स्वादुशीतार्द्रा" इत्यारभ्य यावत् "स्वादुपाका" इति । अत्र केचिदाहु,-तिक्तकषाययोरेव कटुविपाकतया पित्तकर्तृत्वमापद्यत इति । तदेतदसत् । शीतवीर्यत्वेनैतयो पित्तहर्तृत्वात् । वीर्य हि रसविपाकौ विजयते । वक्ष्यति हि ( श्लो २५ )-"रस विपाकस्तौ वीर्यम्" इति ।

**आ० र०**-विपाकत्रैविध्यमाह-स्वादुरिति । स्वादु पटुश्च-मधुरो लवणश्च, मधुर पच्यते,-पक्वो मधुरत्व यातीत्यर्थः । मधुरमिति क्रियाविशेषणम् । पच्यत इति कर्मकर्तर्यात्मनेपदम् । एवमम्लो रसोऽम्ल पच्यते । तिक्तादीना त्रयाणा कटुको विपाक । मधुररसस्यापि व्रीहेर्विपाकेऽम्लत्वात्, लवणस्यापि सौवर्चलस्य कटुविपाकत्वात्, अम्लतिक्तोषणानामपि दाडिमपटोलपिप्पलीना मधुरत्वात्, कषायस्यापि कुलत्थस्याम्लविपाकत्वात्, प्रायश इत्युक्तम्, मतान्तर सङ्ग्रहार्थं च । तत्र द्वौ विपाकाविति सुश्रुत ( सू अ ४०।११ )-"द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणा । निवर्तन्तेऽधिकास्तत्र पाको मधुर इष्यते ॥ तेजोऽनिलाकाशगुणा पच्यमानेषु येषु तु । निवर्तन्तेऽधिकास्तत्र पाक कटुक इष्यते ॥" इति । पराशरस्तु तिक्तकषाययोर्मधुरविपाकमाह ( स सू अ १७ )-"पाकास्त्रयो रसानामम्लोऽम्ल पच्यते कटु कटुकम् । चत्वारोऽन्ये मधुर, ससृष्टरसास्तु ससृष्टम् ॥ कटुतिक्तकषायाणा कटुको येषा विपाक इति पक्ष । तेषा पित्तविघाते तिक्तकषायौ कथ भवत ॥" इति । षोढा पाकस्तु सङ्ग्रहे निरस्त ( सू अ १७ )-"यथारस जगु पाकान् षट् केचित्तदसाम्प्रतम् । यत्स्वादुर्व्रीहिरम्लत्व न चाम्लमपि दाडिमम् ॥ याति तैल च कटुता कटुकाऽपि न पिप्पली । यथारसत्वे पाकाना न स्यादेव विपर्यय ॥" इति ।

१ 'द्रव्येव' क ग ञ । २ 'मूर्च्छाद्यपनयनात्' क ग ञ । ३ 'सद्यतत्वात्' ड । ४ [ ] इति पाठो ड. पुस्तक एव ।

१ 'सर्व' ठ । २ 'त्तकर्तृत्वायोगात्' ट । ३ 'याति ।' ख घ ङ । ४ 'मधुरस्यापि' क ग ञ । ५ 'उच्यते' स सु । ६ 'ससृष्टा रसा' क ग ज । 'सङ्कीर्णरसास्तु सङ्कीर्णम्' स स । ७ 'विपाक' ग ञ । ८ 'देष वि' क.ग.ञ. ।

**रसैरसौ तुल्यफलस्तत्र द्रव्यं शुभाशुभम् ।**
**किञ्चिद्रसेन कुरुते कर्म पाकेन चापरम् ॥ २२ ॥**
**गुणान्तरेण वीर्येण प्रभावेणैव किञ्चन ।**

स०–रसै –जिह्वाविषयिकैर्मधुराम्लकटुकै , विपाककालोपलभ्यो मधुराम्लकटुकफलक्षणो यो रसो भवति–असौ, तुल्यफल ,–तुल्यं–सदृश, फल यस्य स तुल्यफल । एतदुक्त भवति,–अभ्यवहृतस्य मधुररसस्य जाठराग्निसयोगवशात् यत् रसान्तर फलतया निष्पन्न तत् रसै सदृशफलम् । फलग्रहणेनैतत्प्रतिपादयति,–फलोपममेव वृष्यादिलक्षण कार्यसदृशम्, न तु कुसुमोपम देहाह्लादनादिलक्षण कार्यमिति । एवमम्लादीनामपि व्याख्येयम् । तत्रेत्यादि । तत्र–तेषु रसवीर्यविपाकादिपु मध्ये, द्रव्य किञ्चिच्छुभाशुभ–सदसत्कर्म, रसेन कुरुते । यथा,–मधु मधुरकषायरसत्वेन पित्त शमयति । किञ्चिद्विपाकेन । यथा,– तदेव मधु कटुविपाकतया कफ हन्ति । किञ्चन द्रव्य गुणान्तरेण,–अन्योन्यगुणविकृतत्वात् रसविपाकतो य स गुणान्तरो गुर्वादि , तेन । यथा,–अम्ल काञ्जिक कफ शमयति रौक्ष्यात् । किञ्चन वीर्येण । यथा ( सङ्ग्रहे सू अ १७ )–"कषायतिक्त महत्पञ्चमूल वात जयति, न तु पित्तमुष्णवीर्यत्वात् ।" किञ्चन द्रव्य प्रभावेणैव शुभाशुभ कर्म कुरुते । यथा,–अम्लोष्णा सुरा क्षीर वर्धयति ।

**आ० र०–त्रयाणा पाकाना लक्षणमाह–रसैरिति । असौ–त्रिविधो विपाक , यथास्व रसै –मधुराम्लकटुकै , तुल्यफल –तुल्यकार्यो ज्ञेय । मधुरस्य रसस्य कार्य दृष्ट्वा मधुर पाको लक्षणीय । एवमम्लस्याम्ल , कटुकस्य कटुक ।**

**द्रव्यादीना पृथक् प्रयोजकत्वमाह–तत्र द्रव्यमिति । गुणान्तरेण–रसाद्यतिरिक्तेन गुर्वादिना गुणेन । एतदेव रसादीनामपि गुणत्व ज्ञापयति । तेन "पलाण्डुस्तद्गुणैर्न्यून" ( हृ सू अ ६।११२ ) इत्यादिप्रयोगा उपपन्ना । प्रभावेण–आत्मनैव । द्रव्यस्यात्मा–प्रभाव । तथा च सुश्रुत ( सू अ ४०।१४ )–"तद्द्रव्यमात्मना किञ्चित्किञ्चिद्वीर्येण सेवितम् । किञ्चिद्रसविपाकाभ्या दोष हन्ति करोति च ॥" इति । शुभ–दोषशमन कर्म, अशुभ–दोषकोपनम् । किञ्चिदपर किञ्चनेति त्रय कर्तृकर्मविशेषणम् । यदा बहूनि द्रव्याणि एकमेव कर्म कुर्वन्ति तदा–कर्तृविशेषणम्, यदैकमेव द्रव्य बहूनि कर्माणि तदा–कर्मविशेषणम् । एतच्चोदाहृत सङ्ग्रहे ( सू अ १७ )–"तत्र यन्मधुर रसविपाकयो शीतवीर्यं च द्रव्य, यच्चाम्ल तयोरुष्णवीर्य च, यद्वा कटुक, तेषा यथास्व रसादिभ्य प्रायो गुणान् दोषकोपनशमनत्व च विद्यात् । तद्यथा–क्षीरमदिरामरिचादीनाम् । रसादिसङ्करेण त्वन्यथात्वम् । यथा–मधु मधुर श्लेष्माण शमयति कटुविपाकितया, सकषायत्वाद्रौक्ष्याच्च वात जनयति शीतवीर्यत्वाच्च । तथा, यवोऽपि । आनूपौदकपिशित शीतमपि पित्त करोति, उष्णवीर्यत्वात् । तथा तैल कटुविपाकितया च विपाकत एव बद्धविण्मूत्रम् । अम्ल काञ्जिक कफ जयति, तीक्ष्णोष्णत्वात् । कपित्थ तु रौक्ष्यात्कफ, पित्त च शीतवीर्यत्वात् । आमलक पित्त शीतवीर्यत्वात् स्वादुपाकितया च, कफ रौक्ष्याल्लाघवाच्च, शैत्यरौक्ष्यलाघवैस्तु न वातम् । लवण सैन्धव स्वादुपाकतया पित्त जयति, लाघवात् कफम् । कटुकाऽपि शुण्ठी स्नेहौष्ण्यस्वादुपाकतया वात जयति, पिप्पली च, लशुनोऽपि स्नेहौष्ण्यगौरवै , पलाण्डुश्च । स तु स्नेहगौरवाभ्या जनयति श्लेष्माणम्, वृद्ध च मूलक स्वादुपाकतया । तिक्ता पित्त जयति । तिक्ता अपि व्याघ्रीविशालार्कवारुण्य उष्णवीर्यत्वात् पित्त जनयन्ति । कषायतिक्त महत् पञ्चमूल वात जयति, न तु पित्तम्, उष्णवीर्यत्वात् । कषाया कुलत्थाश्चाम्लपाकतया च । इत्येतन्निदर्शनमात्रमुक्तम् ।" इति ।**

ननु, यत्र द्रव्याश्रिताना रसादीना विरोध , तत्रैषा कार्यनिष्पत्तौ समशक्तित्व न वा? इत्याशङ्कानिवृत्त्यर्थमाह—

**यद्द्रव्ये रसादीना बलवत्त्वेन वर्तते ॥ २३ ॥**
**अभिभूयेतरास्तत्तत्कारणत्व प्रपद्यते ।**
**विरुद्धगुणसंयोगे भूयसाऽल्प हि जीयते ॥ २४ ॥**

स०–रसादीना–रसवीर्यविपाकप्रभावाना मध्ये, यत्–रसादिवस्तु,–रसो वा वीर्य वा विपाको वा प्रभावो वा, बलवत्त्वेन –बलिष्ठतया, द्रव्ये वर्तते–अवतिष्ठते, तत्–वस्तुजातम्, इतरान्–अबलिष्ठान्, अभिभूय–विफलीकृत्य, कारणत्व प्रपद्यते,–कर्मकरणे कारणतामासादयतीत्यर्थ । अत इदमाह–विरुद्धेत्यादि । हि–यस्मात्, विरुद्धगुणसयोगे–सहनीभावे सति, यदल्प वस्तु तत् भूयसा–बलवता, जीयते–अभिभूयते । गुणशब्देन चात्र रसादयो गृह्यन्ते, न पारिभाषिका गुर्वादयोऽप्रकृतत्वात् । विरुद्धगुणसयोग इत्यत्र विरुद्धगुणसमवेतद्रव्यसयोग इति वाच्यम्, न विरुद्धगुणसयोग इति । न हि गुणाना सयोगो वक्तु युज्यते, किं तर्हि? द्रव्याणाम् । तथा च मुनि ( च वि अ १।२८ )–"सयोगस्तु द्वयोर्बहूना वा द्रव्याणा सहतीभाव ।" इति । विरोधश्च द्विविध ,–स्वरूपत कार्यतश्च । स्वरूपविरोधो यथा,–गुरुलघ्वो शीतोष्णयोश्च । कार्यतो यथा,–वायौ जेतव्ये रूक्षोष्णद्रव्यसयोगोपयोग । अत्र हि यो गुणाना विरोध ,

१ 'ह्वाविषयकै'ट । २ 'अयमथ ' ड । ३ 'सदृशम्'ठ ड । ४ 'क्षणका'ट ठ । ५ 'क्षणका' ठ । ६ 'अन्यो गुणो विकृ' ड । ७ 'धोऽपि वि' क ग ञ । ८ 'द्गुणान्यून ' ग ञ । ९ 'इति प्र' क ग झ ञ । १० 'दोषान्' क ग ञ । ११ 'वा' स सु । १२'रसेभ्य ' स स । १३'पनतश' ख घ झ । 'पनोपश' ग ञ ।

१ 'सङ्करे त्व' ख घ झ । २ 'रूक्षोष्ण' ख घ झ स द्व । ३ 'तु' क ग ञ स स । ४ 'ष्यात्त्वा' क ग ञ । ५ 'पाकैर्वात क्षपयति' स द्व । ६ या । ( 'स्त्रिग्धानि' स स ) तिक्तानि व्याघ्री० कांगुरूण्युष्ण' ख घ झ स द्व । ७ 'विशालार्का' ख घ । ८ 'नु गुरूष्णाम्लमधुरादिगुणाना रसा' ठ ड. । ९ 'न्नेयम्' ड. ।

स कार्येण । तत्र यदल्प वस्तुजात तत् भूयसा वस्तुजातेना भिभूयते । तत्र यथा,—क्षीर शीतवीर्यमपि मधुररसहेतुकस्नेह-गौरवादिभि सहायबाहुल्याद्वातशमनाख्यं कार्यं करोति, न पुन स्वकार्यं वातप्रकोपाख्यम् ।

**आ० र०–सत्स्वपि सर्वेष्वेकस्यैव प्रयोजकत्वे हेतुमाह–यद्यदिति । बलवत्त्वेन–बलाधिक्येन । बल च द्विविध,–कृत्रिममकृत्रिम च । मात्राधिक्येन सहायसम्पत्त्या च कृत–कृत्रिमम्, स्वाभाविक–अकृत्रिमम् ।**

यत्र तु द्रव्ये रसादीनामुत्कर्षासम्भव परस्पर साम्यम्, तत्र कस्य कार्यकारणत्वम् ? इत्याह—

**रसं विपाकस्तौ वीर्यं प्रभावस्तान्यपोहति[1] ।**
**बलसाम्ये रसादीनामिति नैसर्गिक बलम् ॥ २५ ॥**

**स०**–रस–मधुरादिषड्विधम्, विपाक कर्ता अपोहति–कार्यकरणे कुण्ठयति । यथा,—मधुरो मधुनि रस कटुना विपाकेनाभिभूयते, अत एव पवनशमनाख्य कार्यं मधुररसहेतुक न करोति, अपि तु वातप्रकोपनाख्य कटुविपाकहेतुकमेव करोति । तौ–रसविपाकौ, वीर्यं कर्तृभूतमपोहति । यथा,—महिषामिषे[2] स्थितौ मधुररसविपाकावुष्णवीर्याख्य कर्तृ अभिभवति, अत एव तन्मास पित्तादिदूषणम्, अन्यथा स्वादुरसविपाकित्वात् पित्तशमकमेव स्यात् । प्रभावस्तु त्रीण्यपि रसादीनि विजयते । यथा,—अम्लरसविपाकोष्णवीर्या सुरा क्षीरं जनयति । बलसाम्ये इति–ईदृशम्, रसादीना नैसर्गिक बल,–स्वाभाविकी शक्ति । एतदुक्त भवति,—रस समबलमपि विपाकोऽपोहति, रसविपाकौ च समबलावपि वीर्यं स्वभावादपोहति, एतानि च समबलान्यपि प्रभावोऽपोहतीति ।

**आ० र०–तत्र स्वाभाविक बलमाह–रसमिति । तौ–रसविपाकौ । तानि–रसविपाकवीर्याणि । अपोहति–जयति । बलसाम्ये–कृत्रिमबलतुल्यत्वे, यत्र रसविपाकयोस्तुल्यमात्रत्व तुल्यसहायत्व च तत्र रसाद्विपाको बली[3], मात्रासहायवैषम्ये तु यो मात्राधिक सहायाधिको वा स बलीत्यर्थ । एव वीर्यादिष्वपि वाच्यम्[4] । सङ्ग्रहे तु ( सू अ १७ )–विरुद्धा अपि चान्योन्य रसाद्या कार्यसाधने । नावश्यं स्युर्विघाताय गुणदोषा मिथो यथा ॥ रसवीर्यप्रभृतयो भूतोत्कर्षापकर्षत । एकरूपा विरूपा वा द्रव्य समधिशेरते ॥ माधुर्यशैत्यपैच्छिल्यस्नेहगौरवमन्दता । सह वृत्त्या स्थिता क्षीरे न त्वानूपौदकामिषे ॥ गुणा द्रव्येषु ये चोक्तास्त एव तनुदोषयो । स्थितिवृद्धिक्षयास्तस्मात्तेषा हि द्रव्यहेतुका ॥ रस विद्यान्निपातेन तेनाविवसनेन च । वीर्यं विपाक द्रव्याणा कर्मण परिनिष्ठया ॥ मधुरस्कन्धनिर्दिष्टघृततैलगुडादिषु । गुणा[5]ऽऽस्वाद्वादिभेदेन रसषट्क न युज्यते ॥ अस्तु भेदादस्तु[?] त्वमक्य वाऽऽस्वादलक्षणात् । भूतोत्कर्षापकर्षण भेदो योऽ[?]नेन कल्प्यते ॥ सङ्कीर्णत्वात् फले चासा तुल्यत्वान्न विवक्ष्यते । गुर्वादीनां विशेषेऽपि स्वजातेरनतिक्रमात् ॥ सङ्ख्याभेदो यथा नास्ति रसानामपि स क्रम । दृष्ट सुखोपलेपादि यत्सर्वेषु घृतादिषु ॥ न च तद्दाडिमाद्येषु षडेवातो रसा स्मृता । आनन्त्यैकत्वयोश्च स्यान्न विचित्रार्थतन्त्रणम् ॥ गुर्वाद्या वीर्यमुच्यन्ते शक्तिमन्तोऽन्यथा गुणा । पटुसामर्थ्यहीनत्वाद्गुणा[6] द्वादश ते गुणा ॥” इति ।**

ननु, द्रव्यरसविपाकवीर्याणि कर्मानुमानेन यथास्वरूपाण्येवावगच्छाम । प्रभावस्य तु न ज्ञायते कीदृश कर्म ? इत्यत आह[8]—

**रसादिसाम्ये यत् कर्म विशिष्ट तत् प्रभावजम् ।**

**स०**–द्वयोर्द्रव्यो रसादीना–रसवीर्यविपाकाना साम्ये सति, यदेक द्रव्यमन्यत्कर्म कुरुते, अन्यत्पुनरन्यद्विशिष्ट कर्म, तत् प्रभावज–प्रभावाज्जातमिति ज्ञेयम् । अयमस्य द्रव्यस्य प्रभाव इति विशिष्टकर्मकरणान्निश्चीयत इत्यर्थ । ननु, प्रभाव क उच्यते ? इति चेत् ब्रूम । रसवीर्यविपाकादिगुणातिशायी द्रव्यस्य स्वभावो य, स प्रभाव । उक्त च–“रसवीर्यविपाकादिगुणातिशयवानलम् । द्रव्यस्वभावो निर्दिष्टो य प्रभाव स कीर्तित[9] ॥” इति ।

**आ० र०–अथ प्रभाव । प्रभाव लक्षयति–रसादिसाम्य इति । द्वयोर्द्रव्यो रसादिसाम्ये सत्यप्येकस्य[10] यद्विशिष्ट कर्म दृश्यते, तत्प्रभावजम् । तत्र यो द्रव्यधर्मो हेतु, स प्रभाव इत्यर्थ ।**

अत्र निदर्शनार्थमाह—

**दन्ती रसाद्यैस्तुल्याऽपि चित्रकस्य विरेचनी ॥२६॥**
**मधुकस्य च मृद्वीका, घृतं क्षीरस्य दीपनम् ।**

**स०**–चित्रकस्य रसवीर्यविपाकैस्तुल्याऽपि दन्ती रसादिभ्योऽतिशायिद्रव्यस्वभावयोगाद्विरेचनी, न[11] चित्रक, चित्रकत्वात् । मधुकस्य च मृद्वीका तुल्याऽपि रसादिभ्योऽतिशायिद्रव्यस्वभावयोगात् मृद्वीका विरेचनी, न मधुकम् । घृत क्षीरस्य रसादिभिस्तुल्यमपि घृत दीपनम्, न पुन क्षीरम् । अन्ये[12] प्रभावलक्षणमन्यथाऽऽह–प्रतिवस्तु[13] स्वसञ्ज्ञाप्रवृत्तिनिमित्तलक्षणो यो धर्मैस्त्वतलादि[14]प्रत्ययप्रतीतिसमधिगम्य स प्रभाव ।

१ ‘स्तान् व्यपो’ इत्यशुद्ध पाठ । २ ‘मिषेोस्थितौ’ ठ । ३ ‘बलीयान्’ क ग ञ । ४ ‘द्रष्टव्यम्’ क ग ञ । ५ ‘गुणास्वा’ क. ख ग घ ङ. स मू ।

१ ‘स्तु स्वल्पाद’ क ञ । २ ‘वा स्वादुल’ क ख ग घ ङ ञ स मू । ३ ‘योऽल्प प्रक’ ग ञ । ४ ‘कथ्यते’ ख घ ङ । ५ ‘लेनासौ’ क ग ञ । ६ ‘परसा’स द्व । पटुसामर्थ्य–उत्कृष्टशक्ति । ७ ‘णा एवेतरे गु’ ख ग घ ङ म द्व । ८ ‘वस्वरूप तु न ज्ञायते, तस्य कीदृश’ ट । ‘वस्य यादृश कर्म तदाह’ ड । ९ ‘कीर्त्यते’ इति क्वचित् । १० ‘सत्येकस्य’ क ग ञ । ११ ‘न तु चित्रक । मधु’ ट । १२ ‘अन्ये त्वेव प्रभावलक्षण प्रतिपन्ना प्रति’ ट ठ । १३ ‘स्तुसज्ञा’ ट । १४ ‘धर्मैस्त्वनल्पप्रत्यय’ ट. । ‘धर्मैस्तत्वलादि’ ड. ।

तन्त्रान्तरे चोक्तम्—"वस्तूना ये[1] स्वसञ्ज्ञाया प्रवृत्तौ कारणे स्मृते[2] । तैलादिप्रबोध्यश्च[3] प्रभाव इति स स्मृत ॥" इति । एव च दन्तीत्वाद्दन्त्या विरेचनकारित्व प्रभाव, चित्रकस्य चित्रकत्वादविरेचनकारित्व प्रभाव, एव[4] मृद्वीकात्वान्मृद्वीकाया विरेचनकारित्व प्रभाव, इत्यादि सकलपदार्थेषु बोध्यम् ।

**आ० र०**—प्रभावमुदाहरति—दन्तीति । **रसाद्य उक्ताश्चरकेण ( सू अ २६।७० )—"कटुक कटुक पाके वीर्योष्णश्चित्रको मत । तद्वद्दन्ती प्रभावात्तु विरेचयति[5] सा नरम् ॥" इति । मधुकमृद्वीकयो क्षीरघृतयोश्च मधुररसपाकत्वेन शीतवीर्यत्वेन च साम्येऽपि मृद्वीकैव विरेचनी न मधुकम्, घृतमेव दीपन न क्षीरम् । सङ्ग्रहे त्वन्यदप्युदाहृतम् ( सू अ १७ )—"कटुपाकरसस्निग्धगुरुत्वै कफवातजित् । लशुनो वातकफकृन्न तु तैरेव यद्गुणै ॥ मिथो विरुद्धान् वातादीन् लोहिताद्या जयन्ति यत् । कुर्वन्ति यवकाद्याश्च तत्प्रभावविजृम्भितम् ॥ शिरीषादि[6] विष[7] हन्ति स्वस्थाद्य तद्विवृद्धये । मणिमन्त्रौषधीना[8] च यत्कर्म विविधात्मकम् ॥ शल्याकर्षणपुजन्मरक्षायुर्धव[9]शादिकम् । दर्शनाद्यैरपि विष यन्नियच्छति चागद[10] ॥ विरेचयति यद्वृष्यमाशु[11] शुक्र करोति वा । ऊर्ध्वाधोभागिक यच्च द्रव्य येच्छमनादिकम् ॥ मात्रादि[12] प्राप्य तच्च[13] यत्प्रपञ्चेन वर्णितम् । तच्च[14] प्रभावज सर्वमतोऽचिन्त्य स उच्यते ॥ रसेन वीर्येण गुणैश्च कर्म द्रव्य विपाकेन च यद्विदध्यात् । सद्योऽन्यथा तत् कुरुते प्रभावाद्धेतोरतस्तस्य[15] न गोचरोऽस्ति ॥" इति ।**

सामान्यविशेषाभ्या यत सकल व्याप्तम्, अतो ग्रन्थकार इदमाह—

**इति सामान्यतः कर्म द्रव्यादीना, पुनश्च तत् ॥२७॥**
**विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते ।**

**स०**—इति—प्रकारे, अनेन प्रकारेण द्रव्यरसवीर्यादीना सामान्येन कर्म व्याख्यातम्, न विशेषेण । यैरेव महाभूतै रसवीर्यादयो द्रव्याश्रिता आरब्धा, तैरेव तथाभूतैस्तदाश्रयमपि द्रव्यम्[16] । अत सामान्यत कर्म द्रव्यादीनामुक्तम् ।

साम्प्रत विशिष्ट कर्म प्रतिद्रव्य वक्तुमिदमाह—पुनश्च तदिति । तत्—सामान्योक्त कर्म द्रव्यरसादीना सम्बन्धि, पुनर्भिद्यते—विशिष्यते । केन? इत्याह—विचित्रेत्यादि । विचित्राश्च ते प्रत्ययाश्च विचित्रप्रत्यया,—नानाकारसन्निवेशविशेषयुक्तानि महाभूतानि, प्रतिसत्त्व प्राक्तनशुभाशुभकर्मप्रेरितो विचित्रो महाभूतपरिणाम इत्यर्थ । विचित्रप्रत्ययारब्ध च तद्द्रव्य च, तस्य भेदो—विशेष, तेन विचित्रप्रत्ययारब्धद्रव्यभेदेन, तत्—सामान्योक्त कर्म द्रव्यादीना, भिद्यते—नानात्वेन सम्पद्यते । द्रव्याश्रितत्वाद्रसादीनामपि यत्कर्म तदपि द्रव्यभेदेन भिद्यते । ननु, सर्वमपि देशकालादिवशाद्विचित्रप्रत्ययारब्धम्, परस्परवैलक्षण्याद्द्रव्याणाम् । परस्परवैलक्षण्ये चैषा विचित्रप्रत्ययारब्धत्वमेव कारणम् । यद्वशादन्यदिद द्रव्यमिति रूपरसवीर्यविपाकादिभिन्नमुत्पद्यते, तथा प्रतिभासते च । तत्किन्नु[1]? "विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते ।" इति । अत्राचक्ष्महे । सत्यमेतत्, किन्तु विशिष्टद्रव्यस्य सङ्ग्रहार्थ विचित्रप्रत्ययारब्धमिति विशेषण शास्त्रकृता कृतम् । यस्य भेदेन द्रव्ये रसवीर्यादीना यत्सामान्योक्त कर्म तद्भिद्यते । यस्मिन् द्रव्ये रसादीनामन्यानि महाभूतान्यारम्भकाणि द्रव्यस्य चारम्भकाण्यपराणि, तद्द्रव्य विचित्रप्रत्ययारब्धम् । तदेव द्रव्याणा द्वैविध्यम् । यत कानिचिद्द्रव्याणि यैरेव महाभूतैर्यथाविधै रसादय आरब्धा, तैरेव तथाविधैर्महाभूतैस्तदाश्रयाण्यपि द्रव्याण्यारब्धानि । तानि रसादिसमानप्रत्ययारब्धान्युच्यन्ते । तानि च यथायथ[2] तत्कर्म रसाद्यनुगुण सामान्यात् कुर्वते । यथा,—क्षीरेक्षुशर्करादीनि । कानिचित्पुनस्तदाश्रितरसादिसमारम्भकमहाभूतान्यन्यानि तदाश्रयद्रव्यारम्भकाण्यन्यानि च महाभूतानि, तैरारब्धानि तानि विचित्रप्रत्ययारब्धानि द्रव्याणि । एतदुक्त भवति,—रसादीनामारम्भकाण्यन्यानि द्रव्यस्य चारम्भकाण्यन्यथाभूतानि महाभूतानि, नोभयत्रैकरूपाणीति । तानि च यथायथ रसाद्यनुगुण कर्म न कुर्वन्ति, भिन्नत्वाद्धेतुभावस्य । तथा हि,—रसादीनामारम्भेऽन्यो हेतुरन्यश्च तदाश्रयद्रव्यारम्भ इति । यथा,—मकुष्ठयवमत्स्यसिंहादीनि । एतानि हि यथारस न वीर्यविपाककर्म कुर्वन्ति, विचित्रप्रत्ययारब्धत्वात् । इत्थ यानि रसादिसमानप्रत्ययारब्धानि द्रव्याणि बहून्यपि तेषा रसोपदेशेन[3] कर्म निर्देष्टु शक्यते । अत एव हेतो षण्णा[4] रसाना यो[5] गुणनिर्देश, तस्य सार्थकत्वम् । रसोपदेशमन्तरेण हि बहुतराणा द्रव्याणा समानरूपाणा क्षीरेक्ष्वादीना कर्म वक्तु सुखेन[6] शक्यते । यानि तु विचित्रप्रत्ययारब्धानि द्रव्याणि तेषा प्रतिद्रव्य कर्मोपदेश विना यथायथ कर्म वक्तु न शक्यते ।

**आ० र०—अध्यायार्थमुपसहरति—इति सामान्यत इति । द्रव्यादीना प्रभावान्तानाम् ।**

**सामान्योक्त कर्मापवदति—पुनश्च तदिति । तत्—सामान्योक्त कर्म, भिद्यते—विशिष्यते, अन्यथा क्रियत इत्यर्थ । केन? विचित्रप्रत्ययारब्धद्रव्यभेदेन, विचित्रा—परस्परविलक्षणा[7], प्रत्यया—कारणभूता महाभूतसङ्घाता, तैरारब्ध**

१ 'यच्च सञ्ज्ञाया प्र' ट । २ 'स्मृतम्' ट ड । ३ 'तत्तुल्याद्यधबोध्य' ट । 'तत्वलाद्यर्थबोध्य' ड । ४ 'एव सवत्र । सामान्य' ड । ५ 'ति मानवम्' स च । ६ 'षाद्य' क ञ । ७ 'विषादिघ्न स्व' क ख ग घ झ ञ स मू । ८ 'षधादीना य' क ग ञ । ९ 'युध्यव' ग । 'युधीव' स द्व । १० 'दम्' क ग ञ । ११ 'यद्रम' स द्व । १२ 'त्रादीन्प्रा' क ग ञ । १३ 'तद्वच' क ञ । १४ 'तत्त प्र' क ग ञ । १५ 'स्तत्र न' क ग ञ स द्व । १६ 'द्रव्यमारब्धम्' ट ।

१ 'तत्किमुक्तम्?' ट । २ 'थ तत्कर्म रसाद्यनुगुण न' ट । ३ 'देशे रसकर्म' ठ ड । ४ 'षण्णामपि र' ड । ५ 'योऽनुगुण' ठ । ६ 'मुखेन न शक्यते' ड । ७ 'स्पर वि' क ग ञ ।

यद्द्रव्य तस्य भेदो-द्रव्यान्तरविशिष्टत्वम्, तेन । पार्थिवाद्यवान्तरसामान्यभेदस्य पूर्वमुक्तत्वात् पुनस्तदित्युक्तम् । एतदुक्त भवति,-कचिद्द्रव्ये यादृगेव भूतसङ्घातो द्रव्यस्यारम्भक, तादृगेव रसादीनाम् । तत्समानप्रत्ययारब्धम्, तत्सामान्य गुणान्नातिक्रामति । क्वचिदन्यादृग्भूतसङ्घातो द्रव्यस्यारम्भकोऽन्यादृग्रसस्यान्यादृक् गुणस्येत्यादि, तद्विचित्रप्रत्ययारब्धम्, तत्सामान्यगुणानतिक्रामति । तदर्थ द्रवद्रव्यान्नस्वरूपविज्ञानीयाद्यारम्भ ।

एतदुदाहरणार्थ ग्रन्थकृदाह—

**स्वादुर्गुरुश्च गोधूमो वातजिद्वातकृद्यवः ॥ २८ ॥**
**उष्णा मत्स्याः पय· शीतं कटु· सिंहो न शूकरः २८½**
**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया सूत्रस्थाने द्रव्यादिविज्ञानीयो नाम नवमोऽध्यायः ॥ ९ ॥**

---

**स०**-स्वादुरसोपेतो गुरुगुणयुक्तश्च गोधूमो मधुररसोपदिष्ट वातजित्त्व यत् कर्म तत् करोति, समानप्रत्ययारब्धत्वात् । यवस्तु स्वादुरसोपेतो गुरुगुणयुक्तश्च मधुररसोपदिष्ट यद्वातजित्त्व कर्म तन्न करोति, अपि तु वातकृत्त्वमेव करोति, विचित्रप्रत्ययारब्धत्वात् । मत्स्य स्वादुरसोपेतो गुरुगुणोपेतश्च न मधुररसोपदिष्ट शीतवीर्य, किं तर्हि? उष्णवीर्य, विचित्रप्रत्ययारब्धत्वात् । क्षीर च स्वादुरसोपेत गुरुगुणयुक्त च मधुररसोपदिष्ट शीतवीर्यम्, समानप्रत्ययारब्धत्वात् । स्वादुरसयुक्तो गुरुगुणयुक्तश्च सिंहो न यथारस मधुरविपाक, किं तर्हि? कटुको विपाके, विचित्रप्रत्ययारब्धत्वात् । शूकरो मधुररसयुक्तो गुरुगुणोपेतश्च यथारस मधुरविपाक एव, समानप्रत्ययारब्धत्वात् । एव यानि समानप्रत्ययारब्धानि द्रव्याणि तेपा रसोपदेशेनैव गुणा निर्दिष्टा भवन्ति । तथा च मुनि (च सू अ २६।४८)-"शीत वीर्येण यद्द्रव्य मधुर रसपाकयो । तयोरम्ल यदुष्ण च यच्चोक्त कटुक तयो ॥ तेषा रसोपदेशेन निर्दिष्टो गुणसङ्ग्रह । वीर्यतोऽविपरीताना पाकतश्चोपदेक्ष्यते ॥ यथा पयो यथा सर्पिर्यथा वा चव्यचित्रकौ । एवमादीनि चान्यानि निर्दिशेद्रसतो भिषक् ॥" इति । बाहुल्येन च रसादिसमानप्रत्ययारब्धान्येव द्रव्याणीति चेतसि कृत्वाऽऽचार्योऽवोचत् । यथा (श्लो ४)-"गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये । रसेषु व्यपदिश्यन्ते साहचर्योपचारत ॥" इति । अत एव च बहुतराणि द्रव्याणि रसादिसमानप्रत्ययारब्धानि, अतो रसोपदेशव्याप्त्या तानि निर्देष्टु शक्यन्ते, नान्यथा । विचित्रप्रत्ययारब्धानि पुन कतिपयान्येव द्रव्याणि, तानि नातिदुर्गमेवोपदिश्यन्ते । मुनिनाऽप्ययमर्थो युक्त्यवोक्त । यथा (च सू अ २६।५१)-"मधुर किञ्चिदुष्ण स्यात्कषाय तिक्तमेव च । यथा महत्पञ्चमूल यथाऽब्जानूपमामिषम् ॥ लवण सैन्धव नोष्णमम्लमामलक यथा । अर्कागुरुगुडूचीना तिक्ताना चोष्णमुच्यते ॥ किञ्चिदम्लरस ग्राहि किञ्चिदम्ल भिनत्ति च । यथा कपित्थ सङ्ग्राहि भेदि चामलक यथा ॥ पिप्पलीनागर वृष्य कटु चावृष्यमुच्यते । कषाय स्तम्भन शीत सोऽभयाया मतोऽन्यथा ॥ तस्माद्रसोपदेशेन न सर्व द्रव्यमादिशेत् ।" इति । ये च रससयोगा वक्ष्यमाणास्ते रसादिसमानप्रत्ययारब्धैर्मधुराम्ललवणतिक्तकटुकषायरूपैर्मिथ कल्पनीया, न तु विचित्रप्रत्ययारब्धैर्मधुराम्ललवणतिक्तकटुकषायरूपै । यस्मात्तेषा न यथाशास्त्रनिरूपिता रसवीर्यविपाकादयो विद्यन्ते, विचित्रप्रत्ययारब्धत्वात् । [अतो रसोपदेशव्याप्त्या तैर्द्रव्यैस्ते रससयोगा कल्पयितु न युज्यन्ते ।] अथ रससयोगभेद एव गुणोऽयमेवगुण, एवगुणत्वाच्चामुष्मिन्विषये योज्य एतस्मिन्विषये चायमिति निर्देष्टु न शक्यते, अनिर्ज्ञातस्वरूपत्वात् । न हि विचित्रप्रत्ययारब्धैर्ये रससयोगा क्रियन्ते, तेषा स्वरूप कथमप्यवधारयितु शक्यते । अपि च, समानप्रत्ययारब्धैर्ये सयोगा कल्प्यन्ते, तेपा सयोगिना वीर्यतो यो विरोध शीतोष्णलक्षण, स न दोषाय । ये तु विचित्रप्रत्ययारब्धै सयोगा कल्प्यन्ते, तेषा सयोगिना य शीतोष्णलक्षणो विरोध, स दोषायेति वेद्यम् । अन्यथा रसालापानकादीनामनेकद्रव्यकृतानामनभ्यवहार एव प्राप्नुयात् । तथा, त्रयस्त्रिंशद्वर्गा ये वक्ष्यमाणास्तेपु यदयौगिक तज्जह्यात् यौगिक त्वनुक्तमपि युञ्ज्यादिति यद्वक्ष्यते तत्र रसादिसमानप्रत्ययारब्धमेव योज्यम्, न विचित्रप्रत्ययारब्धम् । तस्य रसवीर्यविपाकाना निश्चयस्य कर्तुमशक्यत्वात् । तस्मादित्यादि । यत एव विचित्रप्रत्ययारब्ध विचित्ररूपम्, तस्माद्रसोपदेशेन न तत्सर्व द्रव्यमादिशेत्, अपि तु रसादिसमानप्रत्ययारब्धमेव द्रव्य रसोपदशेन निर्दिशेदिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने द्रव्यादिविज्ञानीयाध्यायो नवम समाप्त ॥ ९ ॥



**आ० र०**-द्रव्यभेदमुदाहरति-स्वादुरिति । यवगोधूमयोर्मत्स्यपयसो सिंहशूकरयोश्च स्वादुत्वगुरुत्वाभ्या तुल्यत्वेऽपि यवमत्स्यसिंहाना विचित्रप्रत्ययारब्धत्वात् वातलप्रभावत्वोष्णवीर्यत्वकटुविपाकित्वानि स्वादुत्वगुरुत्वविपरी-

---

१ 'न्तरादिशि' क ग ञ । २ 'भेदाना' क ग ञ । ३ 'रब्धत्वात्सामा' इति ग पुस्तकेऽन्यश्च पाठ । ४ 'ग्रसादिष्वप्यन्या' ख घ ङ । ५ 'रब्धत्वात्सामा' ग ञ । ६ 'यारम्भ' ख घ ङ । ७ 'दिष्टशीत' ट ठ । ८ 'यद्द्रव्य क' स च । ९ 'निर्देश्यो' स.च. । १० 'पदेशत' ड । ११ 'तन्निर्देष्टु' ट ।

१ 'थाऽब्जानूप' स च । २ 'चौष्ण्यमु' ठ । ३ 'दम्ल हि सङ्ग्राहि' स च । ४ 'यास्त्वन्यथा मत' ट । ५ [ ] इति पाठ ठ ड पुस्तकयोर्नोपलभ्यते । ६ 'मेवगुणत्वा' ट ड । ७ 'त्वाद्वाऽमु' ठ । ८ 'यमवधा' ठ.ड. । ९ 'कल्प्यास्तेषा' ट. । १० 'पाकत्वा' क ग ञ. ।

तानि । गोधूमयवशूकराणां तु समानप्रत्ययारब्धत्वात् वातघ्नप्रभावत्वशीतवीर्ये वा मधुरविपाकित्वानि स्वादुत्वगुरुत्वयोरविपरीतानि । वातजित्त्ववातकृत्त्वाभ्यां तत्कारणभूतौ प्रभावौ लक्ष्येते ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
द्रव्यादीनां प्रकरणं सामस्त्येन निरूपितम् ॥ ९ ॥





## दशमोऽध्यायः ।

पूर्वस्मिन्नध्याये ( श्लो १२ )–"रसान् भेदैरुत्तरत्रोपदेक्ष्यते" इत्युक्तम्, अतस्तान् रसभेदान् वक्तुं रसभेदीयाध्याय ब्रूते—

**अथातो रसभेदीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**स०**–रसानां भेदो रसभेदः, तस्मै हितो रसभेदीयः, तमध्यायं व्याख्यास्याम–कथयिष्यामः । 'रसनार्थो रसः" इति मुनिः ( च सू अ १।६३ ) । तथा, अब्योनिः, अपामेव रसवत्त्वात् । तथा च मुनिः ( च सू अ २५।१३ )–"आपो हि रसवत्यः" इति । अपां चाव्यक्तरसत्वात् प्रतिव्यक्त्यन्यादृशः ऽन्यादृशो रसानां महाभूतवैलक्षण्यज आस्वाद आस्वाद्यते । तथा च, मधुररसाविष्ठितानां क्षीरद्राक्षेक्षुशर्करादीनां प्रतिव्यक्त्यन्य दृशोऽन्यादृशो मधुररसास्वाद उपलभ्यते, न त्वेकरूपः । एवमम्लानामारनालकोलाम्लीकादीनामपि प्रतिद्रव्यमनेकरूप आस्वादविशेष उपलभ्यते, न त्वेक एव ।

**आ० र०**–**रसभेदीयमध्यायं व्याख्यातुं प्रतिजानीते**–अथेति । यत पूर्वऽध्याये ( श्लो १२ )–"रसो भेदैरुत्तरत्रोपदेक्ष्यते" इत्युक्तम् । अत एवायं रसभेदीयः ।

पूर्वं च प्रत्यपादि 'षडेव रसाः' इति । तानेव लक्षयति—

**क्ष्माम्भोऽग्निक्ष्माम्बुतेजःखवाय्वग्न्यनिलगोनिलैः ।**
**द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ॥ १ ॥**

**स०**–पृथिव्यादिभिर्महाभूतैर्द्वयोल्बणै–व्यधिकैः, क्रमात्–परिपाट्या, यथासङ्ख्यमित्यर्थः, मधुरादीनां षण्णां रसानामुद्भवो–अभिनिर्वृत्तिर्भवति । द्वयमुल्बणं येषु भूतेषु तानि द्वयोल्बणानि, तैः द्वयोल्बणैः । द्वयोल्बणशब्दोपादानाच्च द्रव्यवद्रसस्यापि पाञ्चभौतिकत्वमिति प्रतिपादयति । कतमत् पुनर्भूतद्वयं कतमस्मिन् रसेऽधिकमारम्भकं स्यादिति यथासङ्ख्येन दर्शयन्नाह–क्ष्माम्भ इत्यादि । भूमिजलाभ्यामधिकाभ्यां मधुरः, क्ष्माग्निभ्यामम्लः, अम्ब्वग्निभ्यां लवणः, खवायुभ्यां तिक्तकः, अग्निवायुभ्यां कटुकः, क्ष्मानिलाभ्यां कषायः । ननु, यथा भूमितोयाधिक्यान्मधुरः, एवमम्बुवाय्वाधिक्यादन्यो भूम्याकाशाधिक्यादन्य इत्येवमादिविकल्पैरसङ्ख्येयरसप्रसङ्गः प्राप्नोति । अत्रोच्यते । स्वभावाददोषः । एषां भूम्याकाशादीनामीदृशः स्वभावो यत्केनचिदेव भूताधिक्येन व्यवस्थितानि भूम्यादीनि रसान्तरोत्पादनसमर्थानि भवन्ति, न सर्वेणेति ।

**आ० र०**–**तत्र रसानामुत्पत्तिमाह–क्ष्माम्भोऽग्नीति । पृथिव्युदकाभ्यामुल्बणाभ्यां मधुररसस्योत्पत्तिः, तेजःपृथिवीभ्यामम्लस्य, उदकतेजोभ्यां लवणस्य, वाय्वाकाशाभ्यां तिक्तस्य, तेजोवायुभ्यां कटुकस्य, वायुपृथिवीभ्यां कषायस्य ।**

ननु, स्वलक्षणं विनाऽनुक्तो रसविशेषः कथं ज्ञायताम्? इति तल्लक्षणार्थमाह—

**तेषां विद्याद्रसं स्वादुं यो वक्त्रमनुलिम्पति ।**
**आस्वाद्यमानो देहस्य ह्लादनोऽक्षप्रसादनः ॥ २ ॥**
**प्रियः पिपीलिकादीनाम्**

**स०**–तेषां–रसानां मध्ये, य आस्वाद्यमानो वक्त्रमनुलिम्पति–मुखोपदेहं जनयति, तथा देहस्य ह्लादनः–आश्वासकः, तथाऽक्षाणां–इन्द्रियाणां, प्रसादनः–प्रसन्नत्वकृत्, तथा पिपीलिकादीनां प्रियः, तं मधुरं जानीयात् । पिपीलिकादीनां प्रिय एतन्नैतद्दर्शयति,–प्रमेहादिषु मूत्रत्वगादौ पिपीलिकोपसर्पणात् माधुर्यानुमानं कृत्वा मधुमेहत्वादि ज्ञायते । आस्वाद्यमान इत्युत्तरत्रापि योज्यम् ।

**आ० र०**–**अथ रसलक्षणम् । तत्र मधुरं लक्षयति–तेषामिति । उपलिम्पति–पिच्छिलादिगुणसाहचर्यात् । देहस्य ह्लादनः–प्रियतमत्वात्सर्वशरीराप्यायनः । अक्षप्रसादनः–इन्द्रियवैमल्यकरः । आदिशब्दान्मक्षिकादयः ।**

**अम्लः क्षालयते मुखम् ।**
**हर्षणो रोमदन्तानामक्षिभ्रुवनिकोचनः ॥ ३ ॥**

**स०**–अम्लो रस आस्वाद्यमानो मुखं क्षालयते–स्रावयति । तथा, रोमदन्तानां हर्षणः–"हृषु अलीके" अलीककारी, उद्वेजक इत्यर्थः । तथा, अक्षिभ्रुवनिकोचनः, अक्षिणी च भ्रुवौ चाक्षिभ्रुवम्, अचतुरादिसूत्रे निपातितम् ।

**आ० र०**–**अम्लं लक्षयति–अम्ल इति । क्षालयते–प्रक्षालयते । रोमहर्षणः–रोमाञ्चकृत् । दन्तहर्षणो–दन्तकार्याक्षमत्वकृत् । अक्षिभ्रुवनिकोचनः–अक्ष्णोर्भ्रुवोश्च सङ्कोचकः ।**

**लवणः स्यन्दयत्यास्यं कपोलगलदाहकृत् ।**

**स०**–लवणो रसो मुखं स्यन्दयति । तथा, कपोलयोर्गले

१ 'पाकत्वा' क ग ज । २ 'तस द्रस' ट । ३ अयं रसभेदीयश्चरके सू० २६ अध्याये वि० ८ अध्याये च, सुश्रुते सू० ४२ अध्याये उ० ६३ अध्याये च, अष्टाङ्गसङ्ग्रहे सू० १७।१८ अध्याययोश्चास्ति वर्णितः । ४ 'शो रसानां' ट । ५ 'शो मधुर' ट ठ. ।

१ 'वक्त्रमुपलिम्पति' अ आ हेमाद्रि ट । २ 'मूत्रगन्धोदयेऽपि' ठ । 'मूत्रत्वगादयो यदा पिपीलिकादिव्याप्तास्तदा माधुर्यानुमानेन मधुमेहत्वं ज्ञेयम्' ठ । ३ 'इति सर्वत्र यो' ड । ४ 'लगुणादिसा' ख घ झ । ५ 'रीराप्या' ख घ झ । ६ 'ब्दात्षट्पदादयः' ख घ झ. । ७ 'स्रावयते' अ ।

च दाह करोति । अन्नस्य रोचन इतीहातिप्रसिद्धत्वान्नोक्तम् । सङ्ग्रहे तु स्पष्टार्थमुक्तम् । यथा (सू अ १८)–"कण्ठकपोल विदहति, अन्न प्ररोचयति ।" इति ।

**आ० र०–लवण लक्षयति–लवण इति ।**

**तिक्तो विशदयत्यास्य रसनं प्रतिहन्ति च ॥ ४ ॥**

**स०**–तिक्तो मुखं विशदयति–अपैच्छिल्ययुक्त करोति । रसनेन्द्रिय च प्रतिहन्ति–अन्यरसग्रहणशक्ति नाशयतीत्यर्थ ।

**आ० र०–तिक्त लक्षयति–तिक्त इति । विशदयति–अपैच्छिल्य करोति । रसना प्रतिहन्ति–जिह्वा कुण्ठति ।**

**उद्वेजयति जिह्वाग्र कुर्वश्चिमिचिमां कटु. ।**
**स्रावयत्यक्षिनासास्य कपोलौ दहतीव च ॥ ५ ॥**

**स०**–कटुरास्वाद्यमानो जिह्वाग्रमुद्वेजयति–सोद्वेग करोति । चिमिचिमा कुर्वन्–दहनज्वालासस्पर्शादिवाक्ष्यादि स्रावयति । गण्डौ च दहतीव ।

**आ० र०–कटुक लक्षयति–उद्वेजयतीति । अग्रग्रहण सम्बन्धमात्र एवोद्वेजकत्वात् । चिमिचिमा–सर्षपलिप्त इव दु खानुभवम् ।**

**कषायो जडयेज्जिह्वां कण्ठस्रोतोविबन्धकृत् ।**

**स०**–कषायो जिह्वा जडयति–रसादिक्रियाया मन्दी करोति । तथा, कण्ठस्य स्रोतासि–शिराविशेषा , तेषा विबन्ध करोति । श्वासादीनामयथाप्रवृत्तिमिव कुरुत इत्यर्थः ।

**आ० र०–कषाय लक्षयति–कषायो जडयेदिति । जडयेत्–स्तम्भयेत् । कण्ठसम्बन्धिना स्रोतसा विबन्ध–अवरोध करोति ।**

**रसानामिति रूपाणि**

**स०**–इति–परिसमाप्तौ । रसाना मधुरादीना रूपाणि–लक्षणानि समाप्तानि ।

**आ० र०–प्रकरणार्थमुपसहरति–रसानामिति ।**

सम्प्रति तेषां कर्म यथास्व प्रदर्शयन्नाह—

**कर्माणि**

**स०**–कर्माणीति । वक्ष्यमाणानीति वाक्यशेष ।

**आ० र०–रसलक्षणप्रकरणानन्तर रसकर्मप्रकरणमुपक्रमते–कर्माणीति ।**

अथ को रस कि कर्म करोति ? इत्याह—

**मधुरो रसः ॥ ६ ॥**

**आजन्मसात्म्यात्कुरुते धातूना प्रबल बलम् ।**
**बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् ॥ ७ ॥**
**प्रशस्तो बृंहण. कण्ठ्य स्तन्यसन्धानकृद्गुरुः ।**
**आयुष्यो जीवन. स्निग्ध पित्तानिलविषापहः ॥ ८ ॥**
**कुरुतेऽत्युपयोगेन स मेदःश्लेष्मजान् गदान् ।**
**स्थौल्याग्निसादसन्न्यासमेहगण्डार्बुदादिकान् ॥ ९ ॥**

**स०**–मधुरो रसो धातूना बल प्रबल कुरुते–प्रकृष्टतया शक्त्या युक्त बल जनयेत्, निज बल यत् तत्प्रकृष्ट जनयतीत्यर्थ । कुत ? आजन्मसात्म्यात्,–जन्मप्रभृति देहस्य सात्म्यादित्यर्थ । बालभाव एव हि क्षीरादिना पुरुषस्य वृत्ति । तथा, बालादीना प्रशस्तो–हित । ओजसोऽपि कफघनत्वात् प्रशस्त । "आजस्तु तेजो धातूना शुक्रान्ताना पर स्मृतम् ।" इत्योजोलक्षण (हृ सू अ ११।३७) वक्ष्यति । तथा, बृंहण कण्ठ्यश्च । स्तन्य–क्षीरम्, सन्धान–श्लेष , ते करोतीति स्तन्यसन्धानकृत् गुरुश्च । तथा, आयुष्यादिगुण । ननु, आयुष्यजीवनयोरेकार्थत्वादेकतरोपादानमेव युक्तम् । नैवम् । एनयोर्भिन्नार्थत्वात् । तथा हि,–आयुष्य स उच्यते योऽपरिमितायुषो हित , आधेकायुषो हेतुत्वात् । तथा च मुनि –(च सू अ १।२५)–"तेनायुरमित लेभे" इति । यस्त्वायुषो नियतरूपस्य तामेव मयादामनुबध्नाति, स जीवयतीति जीवन उच्यते । तदनयो स्पष्ट एव भेद । तथा, जीवनमोजस्यमित्यभिन्नार्थौ, कि त्वेतयोरिह यदुपादान तदोजसो द्विविधाया अपि वृद्ध कारकोऽयमिति प्रतिपादयितुम् । तथा च,–मधुरो रसो रुधिरादिक्रमेणौजसो वृद्धिकर सामान्याद्विशेषाच्च । यथा,–क्षीर धातुवर्धनमुक्त वृष्यं च । तत्र धातुवर्धनत्वेनैव वृष्यत्वस्योक्तत्वाद्वृष्यशब्दोपादान यान्यन्यानि वृष्याणि द्रव्याण्यात्मगुप्तादीनि, तेभ्य सकाशाद्विशेषेणास्यैव वृद्धिकरत्वमिति द्योतयितु कृतमिति । कुरुत इत्यादि । स –मधुरो रस , अत्युपयोगेन–अतिसेवया, मेद श्लेष्मोत्थान् रोगान् करोति । कास्तान् ? इत्याह–स्थौल्यादिकान् ।

**आ० र०–मधुररसस्य कर्माण्याह–मधुरो रस इति । आजन्मसात्म्यात्–निरुपाधिकसात्म्यादित्यर्थ । प्रबल–इतररसकृतेभ्यो बलेभ्य । बल–देहधारणसामर्थ्यम् । बालादीना प्रशस्तो–हित । स्तन्य–स्त्रीक्षीरम् । सन्धान भग्नाना श्लेष । आयुष्य –आयुर्वृद्धिकर । जीवन –मूर्च्छादिहर ।**

अतिमात्रशीलितस्य मधुरस्य कर्माण्याह–कुरुतेऽत्युपयोगेनेति । स्थौल्यादयो मेद श्लेष्मजानामुदाहरणम् । सन्न्यासो–मदात्ययनिदाने वक्ष्यमाण ।

**अम्लोऽग्निदीप्तिकृत्स्निग्धो हृद्यः पाचनरोचनः ।**
**उष्णवीर्यो हिमस्पर्श. प्रीणनः क्लेदनो लघुः ॥ १० ॥**

---

१ 'इति सुप्रसि' ट । २ 'रसना' हेमाद्रि , चन्द्र । ३ 'यतीति तच्चापैच्छि' ठ । ४ 'न तु पैच्छि' ड । ५ कण्ठश्च स्रोतासि च, तेषा विबन्धकृत् इति समासो युक्त , चरकसम्मतत्वात् । तथा च चरक (सू अ २६।४६) "वाच निगृह्णाति स्रोतास्यवबध्नाति" इति । अरुणदत्तहेमाद्रिव्याख्यान तु नातिसमञ्जसम् । ६ 'रसनादिक्रिया' ट । ७ 'वृत्तिरिव' ट । 'वृत्तमि' ड. । ८ 'तेषा स्वस्वकर्माण्याह' ड । ९ 'मुच्यते' घ ।

१ 'मेद कफजान्' इति कश्चित् । २ 'जन्मन प्र' ट । ३ 'हितत्वात्' ठ । ४ 'रपि युगपदुपा' ट । ५ 'यदन्यानि' ठ । ६ 'सश्लेष' ग । ७ 'मूर्च्छाहर' ख घ झ । ८ 'हिम स्पर्शो' क ञ । ९ 'प्रीणनो भेदनो' इति क्वचित् ।

**करोति कफपित्तास्रं मूढवातानुलोमनः ।**
**सोऽत्यभ्यस्तस्तनोः कुर्याच्छैथिल्यं तिमिरं भ्रमम् ११**
**कण्डुपाण्डुत्ववीसर्पशोफविस्फोटतृड्ज्वरान् ।**

स०—अम्लो रसोऽग्निदीप्तिकृत्त्वादियुत । तथा, कफपित्तास्र करोति । मूढ—अननुलोमग, वातमनुलोमयतीति—मूढवातानुलोमन । स —अम्लो रसो, अतिसेवितो देहशैथिल्य तिमिरादीश्च कुर्यात् ।

आ० र०—अम्लस्य कर्माण्याह—अम्ल इति । हृद्यो—हृदयप्रिय । रोचनो—जिह्वाया ।

अत्युपयुक्तस्याम्लस्य कर्माण्याह—सोऽत्यभ्यस्त इति । पाण्डुत्व—पाण्डुरोग ।

**लवणः स्तम्भसङ्घातबन्धविध्मापनोऽग्निकृत् ॥ १२ ॥**
**स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ।**
**सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम् ॥१३॥**
**तृट्कुष्ठविषवीसर्पान् जनयेत्क्षपयेद्बलम् ।**

स०—लवणो रस स्तम्भादिविध्मापनो वह्निकृत्त्वादियुतश्च । सोऽत्यभ्यस्तो वातरक्तादीन् जनयेत् । बल—प्राण क्षपयेत् ।

आ० र०—लवणस्य कर्माण्याह—लवण इति । स्तम्भादीना विध्मापनो—नाशन । स्तम्भो—निष्क्रियत्वम् । सङ्घात—काठिन्यम् । बन्ध —स्रोतोरोध । छेदो—विलम्बिमासादे । भेद —पक्वशोफादे ।

अत्युपयुक्तस्य लवणस्य कर्माण्याह—सोऽतियुक्त इति । अस्रपवन—वातशोणितम् । खलतिपलिते—कपालरोगौ । वलि —शैथिल्यकृतत्वक्सङ्कोच । विषजनन—विषातिवृद्धिजननम् ।

**तिक्तः स्वयमरोचिष्णुररुचिं कृमितृड्विषम् ॥१४॥**
**कुष्ठमूर्च्छाज्वरोत्क्लेशदाहपित्तकफान् जयेत् ।**
**क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः ॥ १५ ॥**
**लघुर्मेध्यो हिमो रूक्षः स्तन्यकण्ठविशोधनः ।**
**धातुक्षयानिलव्याधीनतियोगात्करोति सः ॥ १६ ॥**

स०—तिक्तो रस स्वय मुखस्यारोचनशील अरुच्यादीन् जयेत् । अरुचि —आहारद्रव्यविषयेऽनभिलाष । स च क्लेदादीनामुपशोषण । तथा, लघ्वादिगुणयुक्त । सोऽतिसेवितो धातुक्षयादीन् करोति ।

आ० र०—तिक्तस्य कर्माण्याह—तिक्त स्वयमिति । स्वयमरोचिष्णु—स्वय न रोचते । अन्यस्य त्वरुचि जयेत्, कृम्यादीश्च । क्लेदादीनामुपशोषण । स्तन्यविशोधनः—स्तन्यदुष्टिहर । कण्ठविशोधनः—कण्ठरोधहर ।

अत्युपयुक्तस्य तिक्तस्य कर्माण्याह—धातुक्षयमिति । चलव्याधीन्—वातव्याधीन् ।

१ 'लोमनम्' ख घ ङ ञ ठ । २ 'अतिप्रयु' ख घ ङ । ३ 'वलयमा' ख घ ङ । ४ 'वृद्धि ।' ख घ ङ । ५ 'धातुक्षय चलव्याधी' हेमाद्रि । ६ 'पुरुषस्या' ट ड ।

**कटुर्गलामयोदर्दकुष्ठालसकशोफजित् ।**
**व्रणावसादनः स्नेहमेदःक्लेदोपशोषणः ॥ १७ ॥**
**दीपनः पाचनो रुच्यः शोधनोऽन्नस्य शोषणः ।**
**छिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः १८**
**कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ।**
**मूर्च्छामाकुञ्चनं कम्पं कटिपृष्ठादिषु व्यथाम् ॥१९॥**

स०—कटुर्गलामयादीन् जयति । व्रणस्यावसादनो—रोहण । स्नेहादिविशोषणो दीपनत्वादिगुणयुक्तश्च । अन्न शोषयति—विदहति । अन्नशोषणत्वाच्छिनत्ति बन्धान् । स्रोतासि विवृणोति—प्रसारयति । कफघ्नश्च । सोऽतिनिषेवितस्तृष्णादीन् करोति ।

आ० र०—कटुकस्य कर्माण्याह—कटुरिति । उदर्दस्त्रिधा । स चोक्त आयुर्वेदप्रकाशे—"उदर्द उक्तो वक्षोऽभिष्यन्दोऽन्यै शीतवेपथु ।शीताम्बुस्पर्शज शोफो रागकण्डूयुत परै ॥" इति । अलसक —आमविकार । व्रणावसादन —व्रणोत्सेधहर । स्नेहादीनामुपशोषण । शोषण—नाशन , अन्नस्यादनीयस्य नाशयतीत्यर्थ । छिनत्ति बन्धान्—सन्धीन् । स्रोतासि विवृणोति—प्रसारयति ।

अत्युपयुक्तस्य कटुकस्य कर्माण्याह—कुरुते सोऽतियोगेनेति । शुक्रबलयो क्षय । आकुञ्चन—शिरादिसङ्कोच ।

**कषायः पित्तकफहा गुरुरस्रविशोधनः ।**
**पीडनो रोपणः शीतः क्लेदमेदोविशोषणः ॥ २० ॥**
**आमसंस्तम्भनो ग्राही रूक्षोऽतित्वक्प्रसादनः ।**
**करोति शीलितः सोऽति विष्टम्भाध्मानहृद्रुजः २१**
**तृट्कार्श्यपौरुषभ्रंशस्रोतोरोधमलग्रहान् ।**

स०—कषाय पित्तकफघ्नो गुरुत्वादियुतोऽतिशयेन त्वक्प्रसादनश्च । सोऽत्युपयुक्तो विष्टम्भादीन् करोति ।

आ० र०—कषायस्य कर्माण्याह—कषाय इति । अस्रविशोधनो—रक्तदुष्टिहर । पीडनो—व्रणानामाचूषण । आमसस्तम्भन —आमदोषाणा पाकप्रतिबन्धकर । ग्राही—स्तम्भन । अतित्वक्प्रसादन —त्वचमतिनिर्मला करोति ।

अत्युपयुक्तस्य कषायस्य कर्माण्याह—करोतीति । पौरुषभ्रश —शुक्रहानि ।

अथ मधुरादिस्कन्धान्निर्दिशति—

**घृतहेमगुडाक्षोडमोचचोचपरूषकम् ॥ २२ ॥**

१ 'हाषण ' ख घ ङ । २ 'ति वेगेन' आ । ३ 'रोपण ' ट । ४ 'षण बन्धान् छिनत्ति' ट । 'षण पश्चाच्छि' ट । ५ 'व्रणोत्क्लेशहर ' क । ६ 'यति ।' क ख ग ङ ञ । ७ 'रादेस' क ग ञ । ८ अतिशब्दो रूक्षेण सम्बन्धनीय , अतिशयेन रूक्ष इत्यर्थ , सङ्ग्रहे ( सू अ १८ )—"बध्नाति वर्चोऽतिरूक्ष ।" इत्युक्तत्वात् "तिक्त कटु कषायश्च रूक्षा बद्धमलास्तथा ।" इत्याचार्येणाप्यत्रैव ( श्लो ३७ ) वक्ष्यमाणत्वाच्च । अत एवास्यारुणदत्तस्य हेमाद्रेश्च व्याख्यानमयुक्तम् । ९ 'तोबन्धम' अ । १० 'धगलग्र' क ञ ।

**अभीरुवीरापनसराजादनबलात्रयम् ।**
**मेदे चतस्रः पर्णिन्यो जीवन्ती जीवकर्षभौ ॥ २३ ॥**
**मधूकं मधुकं बिम्वी विदारी श्रावणीयुगम् ।**
**क्षीरशुक्ला तुंगाक्षीरी क्षीरिण्यौ काश्मरी सहे ॥२४॥**
**क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्मधुरो गणः ।**

**सु०**–हेम–काञ्चनम् । राजादन –चारप्रियम् । बलात्रय–बलाऽतिबला नागबलेति । मेदा महामेदेति–मेदाद्वयम् । चतस्र पर्णिन्य इति शालिपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी च । मधूक–मधूकपुष्पम् । मधुक–मधुयष्टी । बिम्बी–गोल्हा । श्रावणीयुग–श्रावणी महाश्रावणी च । क्षीरिणी–काञ्चनक्षीरी । काश्मरी–गम्भारी । सहे–महासहा, क्षुद्रसहा च । आदिशब्देन तृणपञ्चमूलमेदोमज्जतैलमधुरदाडिमपुष्करबीजश्रृङ्गाटकाश्वगन्धाश्वदंष्ट्रामृणालकशेरुकसिञ्चतिकाखर्जूरीतालमस्तकादीनि गृह्यन्ते ।

**आ० र०**–अथ रसस्कन्धा । तत्र मधुरस्कन्धमाह–घृतहेमगुडेति । हेम–सुवर्णम् । अभीरु –शतावरी । वीरा–काकोली । राजादन –चार ।बलात्रय–बलाऽतिबला नागबला च । मेदे–महामेदाऽरिमेदा च । चतस्र पर्णिन्य –शालिपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी च । श्रावणीयुग–श्रावणी महाश्रावणी च । श्रावणी–मुण्डी । क्षीरशुक्ला–क्षीरविदारी । तुंगाक्षीरी–वशरोचना । क्षीरिण्यौ–क्षीरकाकोली दुग्धिका च । काश्मरी–गम्भारी । सहे–तरणीद्वयम् । आदिशब्दात् "खर्जूरतैलमेदोमज्जसिञ्चतिकापियालखर्जूरीतालमस्तकतामलकीमधूलिकाऽऽत्मगुप्ताच्छत्रातिच्छत्रर्ष्यप्रोक्तर्ष्यगन्धाश्वगन्धाश्वदंष्ट्रामृणालिकापुष्करबीजश्रृङ्गाटककसेरुकप्रपौण्डरीककतकानि तृणपञ्चमूल च" सङ्ग्रहोक्तानि ( सू अ १८ ) ।

इदानीमम्लस्कन्धमाह–

**अम्लो धात्रीफलाम्लीकामातुलुङ्गाम्लवेतसम् ॥२५॥**
**दाडिमं रजतं तक्रं चुक्रं पालेवतं दधि ।**
**आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम् ॥ २६ ॥**

**सु०**–धात्रीफलं–आमलकम् । रजत–रौप्यम् । चुक्र–शुक्तम् । उपलक्षण चेदम् । सङ्ग्रहोक्तान्यन्यान्यपि कोशाम्रलकुचकुवलकोलबदरैरावतप्राचीनामलकमस्तुधान्याम्लादीनीहैव बोध्यानि ।

**आ० र०**–अम्लस्कन्धमाह–अम्ल इति । अम्लिका–चिञ्चा । रजत–रूप्यम् । चुक्र–शुक्तम् । सङ्ग्रहे तु ( सू अ १८ )–"कोशाम्रवृक्षाम्लकुवललकुचपालेवतदन्तशठधववन्वनकोलबदरैरावतप्राचीनामलकतिलकण्टकमस्तुधान्याम्लमद्यानि ।" इति ।

लवणस्कन्धमाह–

**वरं सौवर्चलं कृष्णं बिडं सामुद्रमौद्भिदम् ।**
**रोमकं पांसुजं शीसं क्षारश्च लवणो गणः ॥ २७ ॥**

**सु०**–वर–सैन्धवम् , लवणश्रेष्ठत्वात् । क्षार –स्वर्जिकादि ।

**आ० र०**–लवणस्कन्धमाह–वर सौवर्चलमिति । वर–सैन्धवम् । कृष्ण–कृष्णलवणम् । सीस–धातुभेद ।

तिक्तस्कन्धमाह–

**तिक्तः पटोली त्रायन्ती वालकोशीरचन्दनम् ।**
**भूनिम्बनिम्बकटुकातगरागुरुवत्सकम् ॥ २८ ॥**
**नक्तमालद्विरजनीमुस्तमूर्वाटरूषकम् ।**
**पाठापामार्गकास्यायोगुडूचीधन्वयासकम् ॥ २९ ॥**
**पञ्चमूलं महद्व्याघ्र्यौ विशालाऽतिविषा वचा ।**

**सु०**–नक्तमाल –करञ्ज । कास्य–लोहभेद । अयो–लोहम् ।

**आ० र०**–तिक्तस्कन्धमाह–तिक्त पटोलीति । वत्सक –कुटज । नक्तमाल –करञ्ज । द्विरजनी–हरिद्राद्वयम् । कास्यायसी–धातुविशेषौ । धन्वयासको–दुरालभा । महत्पञ्चमूल–बिल्वादि । व्याघ्र्यौ–क्षुद्रा बृहती च । विशाला–इन्द्रवारुणी । सङ्ग्रहे तु ( सू अ १८ )–"नलदकृतमालसुपवीज्योतिष्मतीवरुणाजश्रृङ्गीत्रायमाणाकटुकाकिराततिक्तकरवीरविकङ्कतार्ककाकमाचीवैजयन्तीवेतससप्तपर्णसुमनसोमवल्कमदनफलानि पटोलादिश्च शाकवर्ग ।" इति ।

कटुस्कन्धमाह–

**कटुको हिङ्गुमरिचकृमिजित्पञ्चकोलकम् ॥ ३० ॥**
**कुठेराद्या हरितकाः पित्तं मूत्रमरुष्करम् ।**

**सु०**–पित्त मूत्र छागादीनाम् । उपलक्षण चेदम् । अन्यानि च सङ्ग्रहोक्तानि मन शिलासर्षपकुष्ठादीनि बोध्यानि ।

**आ० र०**–कटुकस्कन्धमाह–कटुको हिङ्ग्विति । कृमिजित्–विडङ्गम् । "कुठेरशिग्रुसुरस" ( हृ सू अ ६।१०६ ) इत्यादिवर्गोक्ता –कुठेराद्या हरितका । मासाशिना प्रसिद्धो मृगाद्यवयवभेद –पित्तम् । अरुष्करो–भल्लातक । सङ्ग्रहे तु ( सू अ १८ )–"तेजोवतीहस्तिपिप्पलीमूलकसर्षपलशुनपलाण्डुकरञ्जमन शिलाऽऽलदेवदारुकुष्ठैलासुरसचोरकरेणुका ॥" इति ।

कषायस्कन्धमाह–

**वर्ग. कषायः पथ्याऽक्षं शिरीषः खदिरो मधु ॥३१॥**

---

१ 'तवक्षीरी' आ ठ । २ 'कपिप्रियम्' ट । ३ 'कपिप्रिय' क ञ । ४ 'मेदा महामेदा च ।' ख घ झ । ५ 'तवक्षीरी' क ग.ञ । ६ 'रीनारिकेलता' क ग ञ । ७ 'त्रार्षप्रोक्त' ख घ झ । 'त्राकृष्यगन्धा' क ग ञ । ८ अस्याग्रे "**वृक्षाम्लकोललकुचकोशाम्लातकधन्वनम् । मस्तुधान्याम्लमद्यानि जम्बीर तिलकण्टकम् ॥**" इति आ.क. पुस्तकयोरधिक श्लोक ।

१ 'कोशाम्लवृ' क ग ञ । २ '**क्षाराश्च**' अ आ क ख घ ङ झ ञ चन्द्र । ३ 'तुभेदौ' क ग ञ । ४ '**मरिच**' आ क. ख झ ञ । ५ '**ष्कर**' आ । ६ 'यव –पि' क ग ञ । ७ '**पथ्याऽक्ष.**' आ घ झ. ।

**कदम्बोदुम्बर मुक्ताप्रवालाञ्जनगैरिकम् ।**
**बाल कपित्थ खर्जूर बिसपद्मोत्पलादि च ॥ ३२ ॥**

स०-आदिशब्देन प्रियङ्गुरोध्रकट्वङ्गादीनि गृह्यन्ते ।

आ० र०-कषायस्कन्धमाह-वर्ग कषाय इति । पथ्या-हरीतकी । अक्षो-बिभीतक । मुक्ता-मुक्ताफलम् । प्रवाल-विद्रुमम् । बालमिति कपित्थखर्जूरयोर्विशेषणम् । सङ्ग्रहे तु ( सू अ १८ )-"प्रियङ्ग्वनन्तारोध्रकट्वङ्गकट्फलधवधन्वन-धात्रीफलधातकीपुष्पपद्मापद्मकनागकेसरकुमुदतुङ्गतिन्दुकज-म्ब्वाम्रप्लक्षवटविकङ्कतजम्ब्वाम्रास्थ्यश्वत्थमोचरससमङ्गासो-मवल्कसैसपर्णस्यन्दनासनसल्लकीशालतालपियालैलवालुक परिपेलवजिङ्गिणीबदरीकदरारिमेदकाशकसेरुवशाश्मन्तका-शोकशिशपापलाशशमीशणशङ्खनाभिमेषशृङ्गीवरुणस्फूर्जक-सर्जभूर्जार्जुनाजकर्णवरणकमृणालप्रभृतीनि ।" इति । मधुर-स्कन्धोक्त आदिशब्दोऽम्लादिस्कन्धेऽप्यनुवर्तते, तेनानुक्ता-न्यपि स्वयमूह्यानि ।

इदानीमेषा गुणनिरूपण करोति-

**मधुर श्लेष्मलं प्रायो जीर्णाच्छालियवादृते ।**
**मुद्गाद्गोधूमतः क्षौद्रात्सिताया जाङ्गलामिषात् ॥ ३३ ॥**

स०-प्रायेण मधुर द्रव्य कफकृद्भवति, शाल्यादीन् पुराणान् वर्जयित्वा । प्रायोग्रहण तैलमकुष्ठादौ व्यभिचारदर्शनात् । एव-मुत्तरत्रापि प्रायोग्रहणस्य प्रयोजन वेद्यम् ।

आ० र०-अथ सामान्योक्तरसकर्मापवाद । तत्र मधु-रसस्याह-मधुर श्लेष्मलमिति । जीर्णशाल्यादिभ्य ऋते-विना, मधुर श्लेष्मलम् । जीर्णादिति शाल्यादीना चतुर्णां विशेषणम् । जीर्णात्-सवँत्सरोषितात् । सिता-शर्करा । प्रायोग्रहणात् जीर्णशाल्यादीना व्यभिचारोदाहरणत्वम् । तैलादीनामप्यश्लेष्मलत्वात् । एवमम्लादिष्वपि वाच्यम् ।

**प्रायोऽम्लं पित्तजननं दाडिमामलकादृते ।**

स०-अम्ल द्रव्य प्राय पित्तकृत्, दाडिमामलके हित्वा ।

आ० र०-अम्लस्यापवादमाह-प्रायोऽम्लमिति ।

**अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैन्धवात् ॥ ३४ ॥**

स०-लवण द्रव्य प्रायश्चक्षुषोऽपथ्यम्, सैन्धव वर्जयित्वा ।

आ० र०-लवणस्यापवादमाह-अपथ्य लवणमिति ।

**तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।**
**ऋतेऽमृतापटोलीभ्यां शुण्ठीकृष्णारसोनतः ॥ ३५ ॥**

स०-तिक्त द्रव्य कटु च प्रायेणावृष्य वातकृच्च, गुडूच्या-दीन् हित्वा ।

आ० र०-तिक्तकटुकयोरपवादमाह-तिक्त कटु चेति । अमृतापटोलीभ्या विना तिक्तमवृष्य वातल च । तद्वत् शुण्ठ्यादीन् विना कटुकम् । अमृता-गुडूची । कृष्णा-पिप्पली । रसोनो-लशुन ।

**कषायं प्रायशः शीत स्तम्भनं चाभयां विना ।**

स०-कषाय द्रव्य प्रायेण शीतवीर्य स्तम्भन च भवति, हरीतकी वर्जयित्वा ।

आ० र०-कषायस्यापवादमाह-कषायमिति । अभया-हरीतकी ।

**रसाः कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ॥ ३६ ॥**
**तिक्तः कषायो मधुरस्तद्वदेव च शीतलाः ।**
**तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा ॥ ३७ ॥**
**पट्वम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारुताः ।**
**पटोः कषायस्तस्माच्च मधुरः परमं गुरुः ॥ ३८ ॥**
**लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः ।**

स०-कट्वम्ललवणा रसा यथोत्तरमुष्णवीर्या । कटुरुष्ण , अम्ल उष्णतर , लवण उष्णतम । एवमुत्तरत्रापि यथोत्तरत्व योज्यम् । तिक्तादयश्च तद्वदेव यथोत्तर शीतवीर्या । तेन तिक्त शीत-वीर्य ,कषाय शीतवीर्यतर ,मधुर शीतवीर्यतम इति स्थितम् । तिक्तकटुकषाया रूक्षा विष्टम्भकृतश्च । तथेति यथोत्तरमि त्यर्थ । पट्वादय स्निग्धा नि सारितविण्मूत्रवाताश्च । तथेत्यत्रापि वर्तते । अर्थात् लवणात्कषायो गुरुतर , कषायान्मधुर परम गुरु ,-अतिशयेन गुरुरित्यर्थ । अम्लो लघु , तस्मात्-अम्ला-त्, कटुर्लघुतर , तस्माच्च-कटो , तिक्तो लघुतम ।

आ० र०-अथ रसानां गुणतारतम्यम् । तत्र वीर्यता-रतम्यमाह-रसा इति । कटुको रस उष्णवीर्य , ततोऽम्ल , ततोऽपि लवण । तिक्तो रस शीतवीर्य., तत कषाय , ततोऽपि मधुर । तद्वदेवेति वीर्येण यथोत्तर च । तिक्तो रूक्षो बद्धमलश्च, तत कटु, ततोऽपि कषाय । लवण. स्निग्ध सृष्टमलश्च, ततोऽम्ल, ततोऽपि मधुर । लवणो गुरु, तत कषाय, ततोऽपि मधुर । अम्लो लघु, तत कटु, ततोऽपि तिक्तक । अत्रापि प्राय इत्यनुवर्तते । तेना-म्लस्याप्यामलकस्य शीतवीर्यत्वमित्यादि स्वयमूह्यम् । अत एव 'मधुराम्ललवणा स्निग्धा गुरवश्च, कटुतिक्तकषाया रूक्षा लघवश्च ।" इति ( सू अ ४२।६ ) सुश्रुतोक्तम-म्लस्य गुरुत्व कषायस्य लघुत्वमप्युपपन्नम् ।

---

१ 'लानि च' आ ख घ झ । २ 'सदापर्ण' क ञ । ३ 'नाज-करेणुवारुणक' क ग ञ । ४ 'ष्टादीना' ठ. । ५ 'एव प्रायोग्रहण सर्वत्र व्याख्येयम्' ट । ६ 'रस्याह' ख घ झ । ७ 'वर्षोषि' क ञ ।

१ 'चाभयामृते' ठ । २ 'विना ।' ट । ३ अस्याग्रे "ल-वणादम्लमधुरौ कार्यौ स्याता यथाक्रमम् । वायोर्निरनुब-न्धस्य पाकशान्तिप्रवृत्तये ( 'प्रसक्तये' अ ) ॥ प्राक्तिक्तो मधुर पश्चात् कषायोऽन्ते विधीयते । तै पित्त शममभ्येति पक्वाच्छीकृतपिण्डितम् ॥ कटु प्राक् तिक्तक पश्चात् ('कटुक प्राक् ततस्तिक्त ' आ ) कषायोऽन्ते विधीयते । तै. श्लेष्मा शममभ्येति पक्वा ( 'क्वोऽ'आ ) च्छीकृतपिण्डित. ॥" इति अ आ पुस्तकयोरधिक पाठ । ४ 'तर व्याख्येयम्' ड । ५ 'तथा इति यथोत्तरम्' ट । ६ 'रसा इत्यादिश्लोकत्रयेण ।' क ञ । ७ 'स्याम क ञ ।

इदानी रसानामाधारद्वारेण सयोगान् कल्पना च विभजन्नाह–

**संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा ॥ ३९ ॥**
**रसानां यौगिकत्वेन यथास्थूलं विभज्यते ।**

**स०**–वक्ष्यमाणया रीत्या रसाना सयोगा सप्तपञ्चाशद्विभज्यन्त इति वचनविपरिणामेन सम्बन्ध । कल्पना पुनरेषा त्रिषष्टिधा विभज्यते । कथ कृत्वा कल्पना विभज्यते? यथास्थूलम्,–स्थूलानतिक्रमेण व्यक्तरसास्वादानुरूपतया, न पुनर्यथासूक्ष्मम् । तथा हि,–रसानुरसकल्पनया तरतमयोगतश्चाच्च रसाना कल्पना क्रियमाणाऽऽनन्त्यमुपैति । तस्माद्यथास्थूल रसाना कल्पना त्रिषष्टिधा विभज्यते । तथा, यौगिकत्वेन–शरीरोपयोग्यत्वेन ।

**आ० र०**–रसाना[१] सयोगकल्पनयोर्विभागं प्रतिजानीते–सयोगा इति । रसाना सयोगा सप्तपञ्चाशद्भवन्ति, कल्पना तु त्रिषष्टिधा भवति, तदुभयमपि[३] विभज्यते–विभागेन कथ्यते । कथम्? यथास्थूलम्, सूक्ष्माणा सयोगानां रसानुरसभेदेनानन्तत्वात् । केन हेतुना विभज्यते? यौगिकत्वेन । यतस्तदुभय यौगिकम्,–स्नेहविचारणादिषूपयोगि, अतो विभज्यते ।

इदानी रससयोगाना सङ्ख्यान विभक्तुकाम आह—

**एकैकहीनास्तान्[४] पञ्चदश[५] यान्ति रसा द्विके[६] ॥४०॥**
**त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त एककम् ।**
**चतुष्केषु[७] दश स्वादुश्चतुरोऽम्लः पटुः सकृत् ॥४१॥**
**पञ्चकेष्वेकमेवाम्लो मधुर. पञ्च सेवते ।**
**द्रव्यमेकं षडास्वादमसंयुक्ताश्च षड्रसाः ॥ ४२ ॥**

**स०**–द्विके[८]–द्विपरिमाणे[९] रसाधारद्रव्यसम्बन्धिनि सयोगे, पञ्च रसा –मधुराम्ललवणतिक्तकटुका , तान्–रसान् , पञ्च–अम्ललवणतिक्तकटुकषायाख्यान्, यान्ति–सयुज्यन्ते । किम्भूतान्? एकैकहीनान्,–एकैकेन हीना –विनाकृता , एकैकहीना , तान् । येनैकेन[१०] युक्तास्तद्वियुक्तानित्यर्थ[११] । अत्र च पञ्चाना रसाना पर्यायेण प्रत्येकमेकैकहीनतावशात्[१२] कर्मत्वेन कर्तृत्वेन च सम्बन्धो वेद्य । अत एव "चतुर्द्विकौ पञ्चदशप्रकारौ" इति

१ 'धारेण' ठ. । २ 'रससयोगरसकल्प' क ञ । 'रससङ्ख्याना' ग । ३ 'एतदु'क ञ । ४ **'एकैकहीनास्तान् पञ्च पञ्च यान्ति'** इत्यरुणदत्तसम्मत पाठ, अस्माभोपरिनिर्दिष्टो हेमाद्रिपठितपाठ सुष्टुतर । ५ **'हीनास्ते प'** अ क ञ । ६ अस्याग्रे **"स्वादुर्द्विकेषु पञ्चाम्लश्चतुरो लवणस्त्रयम् । द्वौ तिक्त , कटुकश्चैक याति पञ्चदशेति तु ॥"** इति ख घ झ पुस्तकेष्वधिक श्लोक । ७ **'चतुष्के तु दश'** अ आ हेमाद्रि । ८ 'द्वाभ्या द्वाभ्या रसाभ्या सयोग – द्विक ' इति चन्द्र । ९ 'द्वे परि' ड । १० 'आनन्तर्येणैकैकेन' ट । ११ 'युक्तास्त' ड । १२ 'हीनानां तावद्यावत् कर्म' ट । 'हीनाना च शक्तिमत्त्वेनैककर्तृ' ठ. ।

यद्वक्ष्यति तदुपपन्नम् । एव मधुरोऽम्लादीन्, अम्लो लवणादीन्, लवणस्तिक्तादीन्, तिक्त कटुकषायौ, कटु कषाय यातीति स्थितम् । द्विक इति द्वौ परिमाणमस्य सयोगस्य । सङ्ख्याया सञ्ज्ञेत्यादिपरिमाणानुवृत्तेः परिमाणार्थे सङ्ख्याया अतिशदन्ताया कनिति कन् । एव त्रिकादिष्वपि वक्ष्यमाणेषु लक्षण योज्यम् । द्विरसद्रव्यसयोगे पञ्चदश भेदा भवन्ति । यथा,–मधुरोऽम्ल याति । १ । मधुरो लवणम् । २ । मधुरस्तिक्तम् । ३ । मधुर कटुकम् । ४ । मधुर कषायम् । ५ । अम्लो लवण याति । ६ । अम्लस्तिक्तम् । ७ । अम्ल कटुकम् । ८ । अम्ल कषायम् । ९ । लवणस्तिक्तम् । १० । लवण कटुकम् । ११ । लवण कषायम् । १२ । तिक्त कटुकम् । १३ । तिक्त कषायम् । १४ । कटु कषायमिति । १५ । अत्र च मधुरस्य गन्तृत्वमेव, न गम्यत्वम्, आदौ स्थितत्वात् । कषायस्य गम्यत्वमेव, न गन्तृत्वम्, अन्त्यत्वात् । एवं द्विरससयोगे पञ्चदश । त्रिके–त्रिरसाधारद्रव्यसम्बन्धिनि सयोगे, स्वादु –मधुरो, दश सयोगान् याति । यथा,–मधुराम्ललवणा । १ । मधुराम्लतिक्तका । २ । मधुराम्लकटुका । ३ । मधुराम्लकषाया । ४ । स एव मधुरोऽम्लत्यागेन तत्स्थाने लवणयुक्तस्तिक्तादिभिस्त्रिभि क्रमेणान्वितस्त्रीन् सयोगान् याति । मधुरलवणतिक्तका । ५ । मधुरलवणकटुका । ६ । मधुरलवणकषाया । ७ । स एव लवणत्यागेन तत्स्थाने तिक्तयुक्त कटुकषायाभ्या क्रमेणान्वितो द्वौ सयोगौ याति । मधुरतिक्तकटुका । ८ । मधुरतिक्तकषाया । ९ । स एव तिक्तत्यागेन तत्स्थाने कटुकान्वित एक सयोग याति । मधुरकटुकषाया । १० । एव मधुरो दश सयोगान् याति । अम्ल इत्यादि । त्रिक इति वर्तते । अम्ल षट् सयोगान् याति । यथा,–अम्ललवणतिक्तका । १ । अम्ललवणकटुका । २ । अम्ललवणकषाया । ३ । स एवाम्लो लवणत्यागेन तत्स्थाने तिक्तान्वित कटुकषायाभ्या क्रमेण युक्तो द्वौ सयोगौ याति । अम्लतिक्तकटुका । ४ । अम्लतिक्तकषाया । ५ । एव तिक्तत्यागेनैक सयोग याति । अम्लकटुकषाया । ६ । इत्यम्ल षट् । त्रीन् पटुरिति । लवणस्तिक्तयुक्त कटुकषायाभ्या क्रमेणान्वितो द्वौ सयोगौ याति । लवणतिक्तकटुका । १ । लवणतिक्तकषाया । २ । स एव तिक्तत्यागेनैकं याति । लवणकटुकषाया । ३ । एव लवणस्त्रीन् सयोगान् याति । तिक्त एकमेव सयोगं याति । तिक्तकटुकषाया । १ । एव त्रिकसयोगे विंशति[५] । चतुष्केष्वित्यादि । चतुष्करससयोगेषु स्वादुर्दश सयोगान् याति । तत्र मधुर साम्लो लवणादिभि षट् सयोगान् याति । यथा,–मधुराम्ललवणतिक्ता । १ । मधुराम्ललवणकटुका । २ । मधुराम्ललवणकषाया । ३ । मधुराम्लतिक्तकटुका । ४ । मधुराम्लतिक्तकषाया । ५ । मधुराम्लकटुकषाया । ६ । स एव मधुरोऽ-

१ 'द्विपरि' ट । २ 'एव त्रिकादिसमास ' ड । ३ 'दिषु व' ठ । ४ 'म्, हीनत्वयोगाभावात् ।' ठ.ड. । ५ 'तिभेदा ' ट. ।

म्लत्यागेन तत्स्थाने लवणान्वितस्त्रीन् सयोगान् याति । मधुर-लवणतिक्तकटुका । ७ । मधुरलवणतिक्तकषाया । ८ । मधु रलवणकटुकषाया । ९ । स एव लवणत्यागेन तत्स्थाने तिक्ता न्वित एक सयोग याति । मधुरतिक्तकटुकषाया । १० । एव चतुष्केषु मधुरो दश सयोगान् याति । चतुरोऽम्ल इत्यादि । चतुष्क इति वर्तते । अम्ल सलवणस्तिक्तादिभिस्त्रीन् सयोगान् याति । यथा,-अम्ललवणतिक्तकटुका । १ । अम्ललवणतिक्त-कषाया । २ । अम्ललवणकटुककषाया । ३ । स एव लवण-त्यागेन तत्स्थाने तिक्तान्वित एक सयोग याति । अम्लतिक्त-कटुककषाया । ४ । एव चतुष्केष्वम्लश्चतुर सयोगान् याति । पटु सकृदिति पटु -लवण , सकृत्-एक भेद, याति । यथा,-लवणतिक्तकटुकषाया । १ । एव चतुष्केषु पञ्चदश सयोग भेदा । पञ्चकेष्वेकमेवाम्ल इति । पञ्चकेष्वम्लो रस एकमेव सयोग सेवते । यथा,-अम्ललवणतिक्तकटुकषाया । १ । मधुर पञ्च सेवत इति । मधुरो रस पञ्च सयोगान् सेवते । यथा,-अम्लत्यागात् मधुरलवणतिक्तकटुकषाया । १ । लव णत्यागात् मधुराम्लतिक्तकटुकषाया । २ । तिक्तत्यागात् मधु-राम्ललवणकटुकषाया । ३ । कटुकत्यागात् मधुराम्ललवण-तिक्तकषाया । ४ । कषायत्यागात् मधुराम्ललवणतिक्तकटुका । ५ । एवमेकीकृता षट्पञ्चाशत् सयोगा भवन्ति । द्रव्यमि-त्यादि । एक षड्रस द्रव्यमिति सप्तपञ्चाशत् । षड्रसा पृथ ग्भूता मधुराम्ललवणतिक्तकटुकषाया इति । शर्कराकाञ्जिक-सौवर्चलकिराततिक्तमरीचखदिरादीना यथाक्रम मधुरादयो रसा आस्वाद्यन्ते । एवमेते त्रिषष्टिसङ्ख्या । पद्येन च सुखस्मृत्यै रसभेदान् शृणुष्व मे । मधुरोऽम्लेन पटुना तिक्तेन कटुकेन च ॥ १ ॥ कषायेण पृथक् सार्धमम्लस्तु लवणेन च । तिक्तेन कटुना सार्ध कषायेण पृथक् सह ॥ २ ॥ पटुस्तिक्तेन कटुना कषायेण पृथक् सह । तिक्तस्तु कटुना सार्ध कषायेण पृथक् तथा ॥ ३ ॥ कटुकस्तु कषायेण द्विसयोग इति स्मृता । दश पञ्च च भेदास्ते सङ्ख्याता, विंशतिस्त्रिके ॥ ४ ॥ मधुराम्लौ तु पटुना तिक्तेन कटुना तथा । कषायेण तथा सार्ध तथा स्वादु-पटू पृथक् ॥ ५ ॥ तिक्तेन कटुकेनापि कषायेण तथा सह । स्वादुतिक्तौ तु कटुना कषायेण पृथक् सह ॥ ६ ॥ स्वादूषणौ कषायेण स्वादोरेव दश त्रिके । भेदा स्युरम्ललवणौ तिक्तेन कटुना पृथक् ॥ ७ ॥ कषायेण तथा सार्धमम्लतिक्तौ पृथक् सह । कटुकेन कषायेण तथाऽम्लकटुकौ सह ॥ ८ ॥ कषाये-णेति षट् प्रोक्ता भेदा अम्लस्य तु त्रिके । पटुतिक्तौ तु कटुना कषायेण पृथक् सह ॥ ९ ॥ पटूषणौ कषायेण भेदा इति पटो स्त्रय । तिक्तोषणौ कषायेण तिक्तस्यैव सकृत्स्मृतः ॥ १० ॥ त्रिके भेदा इति प्रोक्ताश्चतुष्के दश पञ्च च । स्वाद्वम्ललवणा सार्ध तिक्तेन कटुकेन च ॥ ११ ॥ पृथक्कषायेण तथा मधुराम्लौ सतिक्तकौ । कटुकेन तु सम्पृक्तौ कषायेण पृथक् तथा ॥ १२ ॥ स्वाद्वम्लकटुका सार्ध कषायेणेति षट् स्मृता । सप्तमश्चात्र मधुरलवणोषणतिक्तकै ॥ १३ ॥ भेदोऽष्टमो मत स्वादुकटु तिक्तकषायकै । नवमस्त्वत्र मधुरपटूषणकषायकै ॥ १४ ॥ दशमोऽत्र भवेत्स्वादुतिक्तोषणकषायकै । दश भेदा भवन्त्येव मधुरेण चतुष्कके ॥ १५ ॥ कटुतिक्ताम्ललवणैर्भेद एकश्चतु ष्कके । द्वितीयस्त्वम्ललवणकषायकटुकै स्मृत. ॥ १६ ॥ तृती योऽत्र भवेदम्लपटुतिक्तकषायकै । चतुर्थोऽत्र भवेदम्लतिक्तो-षणकषायकै ॥ १७ ॥ एवमम्लेन भेदा स्युश्चत्वारोऽत्र चतु-ष्कके । पटुनैकोऽत्र लवणतिक्तोषणकषायकै ॥ १८ ॥ एव पञ्चदश ख्याताश्चतुष्करससङ्ख्यया । षड् भेदान् पञ्चके प्राहुस्ता न् वक्ष्यामि विभागश ॥ १९ ॥ एको भेदोऽम्ललवणतिक्तोप णकषायकै । द्वितीय स्वादुलवणतिक्तोषणकषायकै ॥ २० ॥ तृतीयस्त्वम्लमधुरतिक्तोषणकषायकै । चतुर्थस्त्वम्लमधुरपटूष-णकषायकै ॥ २१ ॥ पञ्चमस्त्वम्लमधुरपटुतिक्तकषायकै । षष्ठो भेदोऽम्लमधुरलवणोषणतिक्तकै ॥ २२ ॥ षड् भेदा इति निर्दिष्टा पञ्चके प्रविभागश । भेद स्वाद्वम्ललवणतिक्तोषणक-षायकै ॥ २३ ॥ एक एव षड्रसेन, पृथक्त्वेन तु षट् स्मृता । स्वादुरम्लोऽथ लवणस्तिक्तश्च कटुकस्तथा ॥ २४ ॥ कषाय इति भेदा स्यु सर्वतोऽत्र त्रिषष्टिधा । क्षीर सुरा बिड निम्बश्चव्य पद्म रसाश्रयम् ॥ २५ ॥ द्रव्य स्वादुरसादीना षण्णा विद्धि यथाक्रमम् । द्रव्य द्रव्यान्तरेणैव योजयेद्द्विरसादिषु ॥ २६ ॥ धात्रीफल शर्करया लवणेनार्द्रक तथा । एवमादीनि द्रव्याणि योजयेद्भिषगुत्तम ॥ २७ ॥ कानिचित् द्विरसादीनि द्रव्याणि स्यु स्वभावत । यथैण षड्रस कृष्णो, यथा पञ्चरसाऽभया ॥ २८ ॥ मद्य पञ्चरस यद्वत्तिलो यद्वच्चतू रस । एरण्डतैल त्रिरस, माक्षिक द्विरस यथा ॥ २९ ॥ घृतमेक स्वादुरस मधु रादिविभागत । दिङ्मात्रादुदितादेव शेषमूह्य मनीषिणा ॥ ३० ॥

**आ० र०-सयोगान् विभजति-एकैकहीना इति । द्विके क्रियमाणे रसा एकैकहीना कार्या । ते च तान्-सयोगान्, पञ्चदश यान्ति । त्रिके क्रियमाणे स्वादुर्दश सयोगान् याति, अम्ल षट्, लवणस्त्रीन्, तिक्त एकम् । चतुष्के क्रियमाणे स्वादुर्दश, अम्लश्चतुर , लवण एकम् । पञ्चके क्रियमाणे अम्ल एक संयोग सेवते-भजति, मधुर पञ्च । षट्के क्रियमाणे षडास्वाद द्रव्यमेक भेद सेवते । तद्यथा,-मधुराम्लौ ।१। मधुरलवणौ ।२। मधुरतिक्तौ ।३। मधुरकटुकौ ।४। मधुरक-षायौ ।५। अम्ललवणौ ।६। अम्लतिक्तौ ।७। अम्लकटुकौ ।८। अम्लकषायौ ।९। लवणतिक्तौ ।१०। लवणकटुकौ ।११। लवण-कषायौ ।१२। तिक्तकटुकौ ।१३। तिक्तकषायौ ।१४। कटु-**

---

१ 'इत्यनुव' ट । २ 'व भेद याति । अ' ठ । ३ 'तिक्तश्च' ट. । ४ 'दास्तु' ठ । ५ 'स्वादु पटु पृ' ट. । ६ 'कटुना वाऽपि' ट. । ७ 'वण सा' ड. ।

१ 'धुरो ल' ठ । २ 'दु क' ठ । ३ 'धुर प' ठ । ४ 'योऽपि' ट । 'यस्तु' ड. । ५ 'म्ब चव्य' ट. । 'म्बश्चव्या' ठ. । 'म्ब चव्या' ड ।

कषायौ ।१५। मधुराम्ललवणा ।१६। मधुराम्लतिक्ता ।१७। मधुराम्लकटुका ।१८। मधुराम्लकषाया ।१९। मधुरलवणतिक्ता ।२०। मधुरलवणकटुका ।२१। मधुरलवणकषाया ।२२। मधुरतिक्तकटुका ।२३। मधुरतिक्तकषाया ।२४। मधुरकटुकषाया ।२५। अम्ललवणतिक्ता ।२६। अम्ललवणकटुका ।२७। अम्ललवणकषाया ।२८। अम्लतिक्तकटुका ।२९। अम्लतिक्तकषाया ।३०। अम्लकटुकषाया ।३१। लवणतिक्तकटुका ।३२। लवणतिक्तकषाया ।३३। लवणकटुकषाया ।३४। तिक्तकटुकषाया ।३५। मधुराम्ललवणतिक्ता ।३६। मधुराम्ललवणकटुका ।३७। मधुराम्ललवणकषाया ।३८। मधुराम्लतिक्तकटुका ।३९। मधुराम्लतिक्तकषाया ।४०। मधुराम्लकटुकषाया ।४१। मधुरलवणतिक्तकटुका ।४२। मधुरलवणतिक्तकषाया ।४३। मधुरलवणकटुकषाया ।४४। मधुरतिक्तकटुकषाया ।४५। अम्ललवणतिक्तकटुका ।४६। अम्ललवण तिक्तकषाया ।४७। अम्ललवणकटुकषाया ।४८। अम्लतिक्तकटुकषाया ।४९। लवणतिक्तकटुकषाया ।५०। अम्ललवणतिक्तोषणकषाया ।५१। मधुराम्ललवणतिक्तकटुका ।५२। मधुराम्ललवणतिक्तकषाया ।५३। मधुराम्ललवणकटुकषाया ।५४। मधुराम्लतिक्तकटुकषाया ।५५। मधुरलवणतिक्तकटुकषाया ।५६। एक द्रव्य षडास्वाद-मधुराम्ललवणतिक्तकटुकषाया ।५७।

**ननु, एतावन्तश्चेद्रसभेदा, तत्कथमुक्तम्? "षड्रसा" इति, अत आह-असयुक्ताश्चेति । मिश्रास्तु सप्तपञ्चाशत् ।**

सम्प्रति "एकैकहीनान्" इत्यादिना ग्रन्थेन ये रसाना भेदा शास्त्रकृतोक्ता, तानेव सक्षेपेण[2] प्रकटयितुमाह—

**षट् पञ्चकाः, षट् च पृथग्रसाः स्यु-**
**श्चतुर्द्विकौ पञ्चदशप्रकारौ ।**
**भेदास्त्रिका विंशतिरेकमेव**
**द्रव्यं षडास्वादमिति त्रिषष्टिः ॥ ४३ ॥**

**स॰**-पञ्चकरसाना सयोगा षट्सङ्ख्या, "पञ्चकेष्वेकमेवाम्लो मधुर पञ्च सेवते" इति । षट् च पृथग्रसा, "असयुक्ताश्च षड्रसा" इति । चतुरित्यादि । चतुष्कै[3]भेद पञ्चदशप्रकार, द्विकभेदश्च पञ्चदशप्रकार । "चतुष्केषु दश स्वादुश्चतुरोऽम्ल पटु सकृत् ।" एव पञ्चदश प्रकारा । "एकैकहीनास्तान् पञ्च पञ्च यान्ति रसा द्विके ।" इति वचनात् [च] । भेदा इत्यादि । त्रिका -त्रिभेदभिन्ना भेदा विंशति । "त्रिके स्वादुर्दशाम्ल षट् त्रीन् पटुस्तिक्त एककम् ।" इति विंशति । एकमेव द्रव्य षडास्वादम् । इति-[4]इत्थम्, रसाना भेदास्त्रिषष्टि,-यथास्थूल चैषा त्रिषष्टिधा कल्पना व्याख्याता । उपजातिवृत्तम् ।

आ॰ र॰-सङ्ख्यया कल्पना विभजति-षट् पञ्चका इति । पञ्चका -पञ्चरससयोग[1]भेदा षट्, पृथग्रसभेदा षट्, चतुष्का पञ्चदश, द्विकाश्च पञ्चदश, त्रिका विंशति, षडास्वाद द्रव्यमेको भेद, इत्येव त्रिषष्टि कल्पनाभेदा ।

सम्प्रति यथासूक्ष्म प्रदर्शयितुमाह—

**ते रसानुरसतो रसभेदा-**
**स्तारतम्यपरिकल्पनया च ।**
**सम्भवन्ति गणना समतीता**
**दोषभेषजवशादुपयोज्याः ॥ ४४ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने रसभेदीयो नाम दशमोऽध्यायः ॥ १० ॥**

**स॰**-ते रसभेदा -त्रिषष्टिरूपा, रसतो-रसवशेन, तथाऽनुरसतो-अनुरसवशेन, तथा तारतम्यपरिकल्पनया-अय मधुरोऽय मधुरतरोऽय मधुरतम इत्येवरूपा या तया च, गणना समतीता -सङ्ख्यामतिक्रान्ता सम्भवन्ति । दोषेत्यादि । दोषा -वातादयो, भेषजानि-हरीतक्यादीनि, दोषाश्च भेषजानि च दोषभेषजानि, तेषा वशो-अनुरोध सामर्थ्य वा, तस्माद्धेतुभूताद्रसभेदा उपयोज्या, न दोषमनपेक्ष्य भेषज वाऽनपेक्ष्य । एवमेवोपयोज्या इत्यर्थ । तथा च मुनि (च सू अ २६। २३)-"क्वचिदेको रस कल्प्य सयुक्ताश्च रसा क्वचित् । दोषौषधादीन् सञ्चिन्त्य भिषजा सिद्धिमिच्छता ॥" इति । दोषभेषजवशादित्युपलक्षणार्थम् । देशादिवशादपि दोषादीन् वीक्ष्य रसभेदा उपयोज्या । यथा,-पवने जेतव्ये मधुराम्लौ[2] मधुराम्ललवणा वेति । स्वागता रनभगैर्गुरुकान्ता इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने रसभेदीयाध्यायो दशम समाप्त ॥ १० ॥

**आ॰ र॰**-उक्तभेदानामवान्तरभे[3]दैरानन्त्य दर्शयति-ते रसानुरसत इति । ते-रसभेदा, रसानुरसकल्पनया तारतम्यकल्पनया च गणना समतीता. सम्भवन्ति । यथा,-मधुराम्लस्य द्रव्यस्य मधुरस्य रसत्वे, अम्लस्यानुरसत्वे, क्वचिदम्लस्य रसत्वे, मधुरस्यानुरसत्वे बहुभेदत्वमित्यादि । तथा, मधुरस्य मधुरतरत्व मधुरतमत्व चेत्यादि तारतम्यम् ।

सर्वेषा रसभेदाना यौगिकत्व दर्शयति-दोषभेषजवशादिति । दोषवशाद्भेषजवशाद्वा सर्वेऽपि रसा उपयोज्या -औपयोगिका भवन्ति । दोषवशाद्यथा,-केवलवायावम्ल, पित्तयुक्ते अम्लतिक्तौ, श्लेष्मयुक्ते अम्लकटुकावित्यादि ।

१ 'पेणाह' ट । २ 'कर्षयि' ड । ३ 'ष्को मे' द ठ ड । ४ 'इयम्' ठ ड ।

१ 'गजभेदा' घ झ । २ 'मधुरोऽम्लोलवणो वा मधु' द । ३ 'भेदेनान' ख घ झ ।

भेषजवशाद्यथा,-विरेचनमौषधमेकरसत्वादहृद्य द्विरसत्रिरसादि कार्यम् । सङ्ग्रहे तु ( सू अ १८ )-"रस खल्वाप्य प्रागव्यक्तश्च । स षडृतुकत्वात्कालस्य महाभूतगुणानामूनातिरिक्तविशेषेण ससृष्टो विषम विदग्ध षोढा पृथग्विपरिणमते मधुरादिभेदेन । अथ य शिशिरपवनधरणिधरविविधवनगहननदीतडागपल्वलोदपानकमलकुमुदकुवलयाकीर्णो रम्य स्थिरस्निग्धभूमिर्भूरिहरिततृणोऽतिदूरविस्तृतप्रतानप्रवालोपसञ्छन्नपादप सस्यसरीसृपखगबहुल श्लेष्मपित्तप्रायो गुर्वौषधिसलिल श्लीपदगलरोगापचीज्वराद्याम योपद्रुतजनपद , सोऽनूपो मधुररसयोनि । यस्तु विषमविपुलसिकतास्थलबहुलोऽतिदूरावगाढविरससलिल कठिनक्लेशसहारोगशरीरदीर्घायु प्रायो जनपदोऽनूपविपरीतश्च, स जाङ्गल कटुकरसयोनि । उभयलक्षणमिश्रीभावात्साधारण , अत एव चानूपसाधारणो जाङ्गलसाधारणश्चेति विकल्प । तयोराद्यो लवणाम्लयोर्योनि., इतरश्चेतरयो ।" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
रसभेदप्रकरण सामस्त्येन निरूपितम् ॥ १० ॥



रसभेदीयादनन्तर दोषादिविज्ञानीय आरभ्यते । यतो "दोषभेषजवशादुपयोज्या" इत्युक्तम्, अत ईदृक्स्वरूपास्ते दोषा इति ज्ञापनार्थमध्यायोऽयमुच्यते—

**अथातो दोषादिविज्ञानीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**स०**–दोषा आदयो येषा ते–दोषादय , तेषा विज्ञान–प्राकृतेन वैकृतेन च स्वरूपेणावगम , तस्मै हितो य , तमध्याय व्याख्यास्याम । आदिशब्देन धातवो मलाश्च सङ्गृह्यन्ते । तत्स्वरूपावगमेन च त एव दोषा सम्यग्ज्ञाता भवन्ति । धातूनां मलानां च दोषाधारभूतत्वात् ।

१ 'गुणैरूनातिरिक्तै सस' स स । 'गुणाना न्यूनाधिकवि' क ग ञ । २ 'ससृष्टविषमविदग्ध' क ग ञ । ३ 'मत्स्यसरी' क ग ञ । ४ 'पहत' ख घ ङ । ५ 'नि । अत एव' ख घ ङ स ढ । 'नि । अत एवोभय ( 'या' क ञ ) साधारण्यादनूप' क ग ञ । ६ 'विकल्प्य' स स । ७ इतर –जाङ्गलसाधारण , इतरयो –तिक्तकषाययो । ८ अय दोषादिविज्ञानीयश्चरके सू० १२।१७।१८।२८ अध्यायेषु, सुश्रुते सू० १५ अध्याये, अष्टाङ्गसङ्ग्रहे सू० १९ अध्याये चास्ति वर्णित । ९ 'पेणोपगम' ठ. । १० 'रूपोपग' ठ ।

**आ० र०**–हेतुस्कन्धानन्तर लक्षणस्कन्धमारभते । तत्र दोषादिविज्ञानीयमध्याय व्याख्यातु प्रतिजानीते–अथेति । दोषादिविज्ञानाधीनत्वाल्लक्षणस्य । दोषदूष्यवैषम्य च रोगलक्षणम् । वैषम्यज्ञान च साम्यज्ञानाधीनम् । अत एवादौ साम्यज्ञानम् ।

**दोषधातुमला मूलं सदा देहस्य**

**स०**–दोषा –वातादय , धातवो–रसादय , मला –मूत्रादय , ते देहस्य मूलमिव मूलम् । यथा,–वृक्षस्य स्कन्धशाखादियुक्तस्य मूल प्रधानम्, तदारब्धत्वात् । तथा,–देहस्य दोष धातुमला ।

**आ० र०**–तत्र साम्यफलमाह–दोषधातुमला इति । दोषा–वातादय । धातवो–रसादय । मला –पुरीषादय । मूल–कारणम् । सदा–सर्वासु जन्माद्यवस्थासु । समा इति प्रकरणाल्लभ्यते ।

**त चलः ।**
**उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्तनैः ॥ १ ॥**
**सम्यग्गत्या च धातूनामक्षाणां पाटवेन च ।**
**अनुगृह्णात्यविकृतः, पित्तं पक्त्यूष्मदर्शनैः ॥ २ ॥**
**क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः ।**
**श्लेष्मा स्थिरत्वस्निग्धत्वसन्धिबन्धक्षमादिभिः ॥३॥**

**स०**–त च–देह, चलो–वायु , उत्साहादिभिरनुगृह्णाति–उपकुरुते । उत्साह –सर्वचेष्टासूद्योग , उच्छ्वास –ऊर्ध्व श्वसन श्वासमुक्ति , निश्वास –श्वासस्य शरीरान्त प्रवेशनम्, चेष्टन–चेष्टा वाक्कायमनोव्यापार , वेगाना प्रवर्तन–वातविण्मूत्रादीना बहिर्निस्सनम् , एतैश्च मारुतो देहमनुगृह्णाति । पित्त पक्त्यादिभि रनुगृह्णाति । पक्ति –पाक । ऊष्मा–औष्ण्यम् । दर्शन–दृष्टि । मेधा–बुद्धिविशेष । धी –प्रज्ञा । शौर्य–पौरुषम् । तनुमार्दव–शरीरमृदुत्वम् । श्लेष्मा स्थिरत्वादिभिरनुगृह्णाति । क्षमा–क्षान्ति ।

**आ० र०**–वायो साम्य लक्षयति–त चल इति । तं–देहम् । चलो–वायु । उत्साह –अध्यवसाय । उच्छ्वास –श्वासनिर्गम । निश्वास –श्वासप्रवेश । चेष्टा–गमनादिक्रिया । वेगप्रवर्तन–विण्मूत्रादिप्रवृत्ति । धातूना सम्यग्गति –मार्गेणाद्रुतविलम्बितसञ्चार । अक्षाणा पाटव–इन्द्रियाणा विषयग्रहणसामर्थ्यम् । अनुगृह्णाति–उपकरोति । अविकृत –सम ।

पित्तस्य साम्य लक्षयति–पित्तमिति । पक्ति –पाक । ऊष्मा–औष्ण्यम् । दर्शन–चाक्षुषज्ञानम् । क्षुत्–बुभुक्षा । तृट्–पिपासा । रुचि –प्रीति । प्रभा–कान्ति । मेधा–ज्ञानधारणम् । धी –ज्ञानम् । शौर्य–बलम् । तनुत्व–अस्थूलत्वम् । मार्दव–सौकुमार्यम् ।

१ 'दिज्ञाना' क ग ञ । २ 'उच्छ्वसन' ट । ३ 'नि सारणम्' ड । ४ 'शरीरस्थिर' ट । ५ 'चक्षुर्ज्ञानम्' क ञ । 'चक्षुषा ज्ञानम्' ग.छ. ।

श्लेष्मण साम्य लक्षयति–श्लेष्मेति । स्थिरत्व–दृढाङ्गत्वम्। स्निग्धत्व–स्नेहाक्तत्वमिव । सन्धिबन्ध –सुश्लिष्टसन्धित्वम्। क्षमा–सहिष्णुत्वम्। आदिशब्दादलौल्यादय । "तमनुगृह्णात्यविकृत." इति वाक्यद्वयेऽनुवर्तते ।

इदानी धातूना कर्माण्याह—

**प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ।**
**गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात्स्मृतम् ॥ ४ ॥**

स०–प्रीणनादीनि कर्माणि रसादीना क्रमात्–क्रमेण श्रेष्ठानि स्मृतानि, मुनिभिरिति शेष । सङ्ग्रहोक्तानि मध्यमान्यपराणि कर्माण्येषा सन्त्येव । यथा,–रसस्य तुष्टिरक्तपुष्ट्यादिक कर्म, रक्तस्य च वर्णप्रसादो मासपोषणम्, मासस्य बल मेद पुष्टी च, मेदस स्वेददार्ढ्यास्थिपुष्टयश्च, अस्थ्नो मज्जपोषणम्, मज्ज्ञो बलमस्थिपूरण शुक्रपुष्टिश्च, शुक्रस्य हर्षौ बल च, एतैर्वातवो देहमनुगृह्णन्तीत्यर्थ । प्रीणनं–आप्यायनम्। रसो हि सम्यगभ्यवहरत स्रोतासि प्रविश्येन्द्रियप्रसादमभिनिर्वर्तयन् मनस प्रीतिमादधाति । जीवन–ओजोवृद्धिकरम्, रक्तकर्म। लेप – उपदेहो, मासस्य कर्म । तदुपलिप्तान्यस्थीनि चेष्टा क्षमन्ते। स्नेहो–नेत्रादिषु स्निग्धता, मेदस कर्म । धारणं–ऊर्ध्वधारणम्, अस्थिकर्म । पूरण–स्नेहेनास्थ्नाम्, मज्ज्ञ कर्म । शुक्रस्य गर्भोत्पत्ति, श्रेष्ठ कर्मेति योज्यम् ।

आ० र०–धातूना साम्य लक्षयति–प्रीणनमिति । प्रीणनं–तृप्ति, अविकृतस्य रसस्य श्रेष्ठ कर्म । जीवन–प्राणधारणम्, रक्तस्य । लेपो–भित्तेर्मृत्तिकयेव, मासस्य । स्नेह – स्निग्धत्वम्, मेदस । धारण–अवलम्बनम्, अस्थ्न । पूरण– अस्थिपूरणम्, मज्ज्ञ । गर्भोत्पाद शुक्रस्य । श्रेष्ठग्रहणादन्यान्यप्युत्तरधातुपुष्ट्यादीनि सन्तीति ज्ञापयति ।

इदानी मलाना कर्माण्याह—

**अवष्टम्भः पुरीषस्य, मूत्रस्य क्लेदवाहनम् ।**
**स्वेदस्य क्लेदविधृतिः**

स०–अवष्टम्भो–देहधारणशक्ति, श्रेष्ठ कर्म पुरीषस्य स्मृतम्। मूत्रस्य क्लेदवाहन श्रेष्ठ कर्म, मूत्र क्लेद निर्वाहयति। स्वेदस्य क्लेदविधारण श्रेष्ठ कर्म, क्लेदाभावे हि शोष स्यात्, मध्यमलक्स्नेहकचरोमधारणमपि ।

आ० र०–पुरीषस्य साम्य लक्षयति–अवष्टम्भ इति । अवष्टम्भो–धारणम् ।

मूत्रस्य साम्य लक्षयति–मूत्रस्येति । क्लेदवाहन–क्लेदस्य बहिर्निर्गमनम् ।

स्वेदस्य साम्यं लक्षयति–स्वेदस्येति । केशविधृति –रोम्णामवलम्बनम् । "श्रेष्ठ कर्म" इति वाक्यत्रयेऽनुवर्तते । तेन अनिलानलधारणबस्तिपूरणक्लेदधारणादीन्यन्यान्यपि कर्माणि ज्ञेयानि ।

**वृद्धस्तु कुरुतेऽनिलः ॥ ५ ॥**
**कार्श्यकार्ष्ण्योष्णकामत्वकम्पानाहशकृद्ग्रहान् ।**
**बलनिद्रेन्द्रियभ्रंशप्रलापभ्रमदीनताः ॥ ६ ॥**

स०–वृद्ध पुनर्वायु कार्श्यादीन् करोति । बलादीना भ्रंशेन सम्बन्ध । बलस्य प्राणोपघातो भ्रंश । निद्रायास्तु नाशो भ्रंश ।

आ० र०–अथ वैषम्यज्ञानम्। तत्तु पञ्चधा । वक्ष्यति–हि (हृ नि अ १।२)–"निदान पूर्वरूपाणि रूपाण्युपशयस्तथा । सम्प्राप्तिश्चेति विज्ञान रोगाणा पञ्चधा स्मृतम् ॥" इति । तत्रादौ रूपम्, तस्यान्तरङ्गत्वात्। पूर्वरूप तु रूपमेवाव्यक्तम्। वक्ष्यति हि (हृ नि अ १।४)–"लिङ्गमव्यक्तमल्पत्वाद्व्याधीना तद्यथायथम् । तदेव व्यक्तता यात रूपमित्यभिधीयते ॥" इति । वैषम्य च द्विधा,–वृद्धिक्षयभेदात् । तत्रादौ वृद्धिलक्षणम् । तत्र वायोराह–वृद्ध इति । कार्श्य–कृशत्वम् । कार्ष्ण्य–कृष्णवर्णत्वम् । उष्णकामत्व–उष्णाभिलाष । कम्पो–वेपथु । आनाह –बद्धोदरता । शकृद्ग्रह –पुरीषरोध । बलादीनां भ्रंशो–नाश । प्रलाप.–असम्बद्धप्रलाप । भ्रम –चक्रारूढस्येव । दीनता– ग्लानत्वम् ।

**पीतविण्मूत्रनेत्रत्वक्क्षुत्तृड्दाहाल्पनिद्रताः ।**
**पित्तम्**

स०–पीतस्य विडादिभिस्त्वगन्तै सम्बन्ध, तत क्षुदादिभिर्द्वन्द्व, ततस्तलप्रत्यय । पित्त वृद्ध पीतविण्मूत्रादीन् करोति ।

आ० र०–पित्तस्याह–पीतविण्मूत्रेति । विण्मूत्रनेत्रत्वचां पीतत्वम् । क्षुत्तृषाविह तीव्रे ज्ञेये, समयो साम्यलक्षणत्वात्। दाह –सन्ताप । अल्पनिद्रता–निद्राल्पत्वम् ।

**श्लेष्माऽग्निसदनप्रसेकालस्यगौरवम् ॥ ७ ॥**
**श्वैत्यशैत्यश्लथाङ्गत्वं श्वासकासातिनिद्रताः ।**

स०–श्लेष्मा वृद्धोऽग्निसादादीन् करोति । श्वैत्यं–गात्रशुक्लता । शैत्यं–अङ्गाना शिशिरत्वम् ।

आ० र०–श्लेष्मण आह–श्लेष्मेति । अग्निसदन–अग्निमान्द्यम् । प्रसेको–लालास्राव । आलस्य–अनुत्साह । गौरव–दुर्वहाङ्गत्वम्। श्वैत्य–शुक्लत्वम् । शैत्य–शीतस्पर्शत्वम् । श्लथाङ्गत्व–अवयवशैथिल्यम् । श्वासकासौ–रोगौ । अतिनिद्रता–निद्राधिक्यम् ।

**रसोऽपि श्लेष्मवत्**

स०–रसश्च श्लेष्मवत्, रसोऽपि वृद्धोऽग्निसादादीन् विदधातीत्यर्थ ।

१ 'रसोऽन्नादिपरिणामत स्रो' ट । २ 'सम्प्रवि' ठ । ३ 'णादुत्तरधातुपुष्ट्यादीन्यपराण्यपि स' ख घ झ । ४ 'केशविधृति' आ हेमाद्रि, चन्द्र । ५ 'हि नैव देह स्या' ड । 'हि नेव देहस्य मध्य' ठ. । ६ 'ध्यम त्व' ट. ड । ७ 'तद्वहि' क ग छ.ञ. ।

१ 'वृद्धश्च' आ. । २ 'कामित्व' अ आ क ञ ठ । ३ 'लस्येति प्रा' ट ठ । ४ 'तच्च' ख घ झ । ५ 'आनद्धो' ख घ झ । ६ 'ग्लानि' ख घ झ. । ७ 'शीतत्वम्' ड । ८ 'करोति ।' ठ.ड. ।

**आ० र०**–रसस्याह–रसोऽपीति । श्लेष्मवदग्निसादादीन् करोति । अपिशब्दोऽन्यानप्यतिदेशान् सूचयति । तेन रक्त पित्तवत्, मांसमेदसी श्लेष्मवत् ।

**रक्तं विसर्पप्लीहविद्रधीन् ॥८॥**
**कुष्ठवातास्रपित्तास्रगुल्मोपकुशकामलाः ।**
**व्यङ्गाग्निनाशसम्मोहरक्तत्वङ्नेत्रमूत्रताः ॥ ९ ॥**

**स०**–रक्त वृद्ध विसर्पादीन् करोति । उपकुशो नाम दन्तरोग जाति, उत्तरतन्त्रे ( अ २१।२१ ) वक्ष्यमाणलक्षणा ।

**आ० र०**–रक्तस्याह–रक्तमिति । वीसर्पादयो व्यङ्गान्ता-रोगा । तत्रोपकुशो–दन्तमासजरोग । व्यङ्ग–क्षुद्ररोगविशेष. । सम्मोहो–मूर्च्छा । त्वङ्नेत्रमूत्राणा रक्तत्वम् ।

**मांसं गण्डार्बुदग्रन्थिगण्डोरूदरवृद्धिताः ।**
**कण्ठादिष्वधिमांसं च**

**स०**–मास वृद्ध गण्डादीन् रोगान् करोति । गण्डशब्देन गण्डमाला गलगण्डश्च गृहीतौ, आद्यन्तलोपात् । इतरश्च गण्डो गण्डमांसाव्यात् । गण्डश्चार्बुद च ग्रन्थिश्च गण्डार्बुदग्रन्थय । गण्डौ च ऊरू चोदर च तेषा वृद्धिता । ततो द्वन्द्व । ता करोति । वृद्धिता–वृद्धित्वम् । कण्ठादिष्वधिक मास च कुरुते । आदिशब्देन तालुजिह्वादिपरिग्रह ।

**आ० र०**–मासस्याह–मासमिति । गण्डादयो रोगा । गण्डो–गलगण्डादि । गण्डयोरूर्वोरुदरे च वृद्धता–स्थौल्यम् । कण्ठादिषु–कण्ठतालुजिह्वादिषु । अधिमास–मासस्योपरि मासम् ।

**तद्वन्मेदस्तथा श्रमम् ॥ १० ॥**
**अल्पेऽपि चेष्टिते श्वासं स्फिक्स्तनोदरलम्बनम् ।**

**स०**–मेदोऽपि वृद्ध गण्डादीन् कुरुते । तथाल्पेऽपि चेष्टिते श्रम कुरुते, श्वास च । तथा, स्फिजो स्तनयोरुदरस्य च लम्बन कुरुते ।

**आ० र०**–मेदस आह–तद्वदिति । तद्वत्–मासवत् । तथा, अल्पेऽपि चेष्टिते श्रमश्वासौ । स्फिगादीना लम्बनम् । स्फिजौ–कटिप्रोथौ ।

**अस्थ्यध्यस्थ्यधिदन्तांश्च**

**स०**–अस्थि वृद्धमध्यस्थ्यधिदन्ताश्च कुरुते ।

**आ० र०**–अस्थ्न आह–अस्थीति । अध्यस्थि–अधिकमस्थि । अधिदन्ता.–अधिका दन्ता ।

**मज्जा नेत्राङ्गगौरवम् ॥ ११ ॥**
**पर्वसु स्थूलमूलानि कुर्यात्कृच्छ्राण्यरूंषि च ।**

**स०**–मज्जा वृद्धो नेत्रयोरङ्गाना च गौरव कुर्यात् । कुरुत इति प्रकृते कुर्यादित्युक्त स्पष्टार्थम् । पर्वसु–अङ्गुल्यादिसन्धिषु, अरूषि–पिटिकाविशेषान्, कुर्यात् । कीदृशानि ? स्थूलमूलानि,–स्थूलानि मूलानि येषा तानि । तथा, कृच्छ्राणि–कृच्छ्रसाध्यानि ।

**आ० र०**–मज्ज आह–मज्जेति । अङ्गगौरवेणैवाक्ते नेत्र गौरवे नेत्रग्रहणमतिशयार्थम् । पर्वसु–सन्धिषु । स्थूलमूलानि–मूलप्रदेशे स्थूलानि । कृच्छ्राणि–कष्टसाध्यानि । अरूषि–व्रणान् ।

**अतिस्त्रीकामतां वृद्धं शुक्रं शुक्राश्मरीमपि ॥ १२ ॥**

**स०**–शुक्र वृद्धमतिस्त्रीकामता कुर्यात्, शुक्राश्मरी च । अपिशब्दाद्बलस्नेहाद्यपि ।

**आ० र०**–शुक्रस्याह–अतीति । अतिस्त्रीकामता–पुन पुन स्त्रीसङ्गेच्छा । शुक्राश्मरी–रोग ।

**कुक्षावाध्मानमाटोपं गौरवं वेदनां शकृत् ।**

**स०**–शकृत्–पुरीष, वृद्ध कुक्षावाध्मानादीन् कुर्यात् । कुर्यादिति सम्भावनाया लिङ् । आध्मान–आनाह । आटोप –अन्त्रकूजनादि । [ गौरव–गुरुत्वम्, वेदना च कुक्षौ । ]

**आ० र०**–शकृत आह–कुक्षाविति । कुक्षौ–उदरे, आध्मानादीनि । आध्मान–वातेनोदरपूरणम् । आटोपो–गुडगुडाशब्द । गौरव–दुर्वहत्वम् । वेदना–शूलम् । शकृत्–पुरीषम् ।

**मूत्रं तु बस्तिनिस्तोदं कृतेऽप्यकृतसंज्ञताम् ॥ १३ ॥**

**स०**–मूत्र वृद्ध बस्तेर्निस्तोद–अतिव्यथा कुर्यात् । तथा कृतेऽपि मूत्रेऽकृतसज्ञता–अकृताभासत्वमिव कुर्यात् ।

**आ० र०**–मूत्रस्याह–मूत्रमिति । बस्तिनिस्तोदो–बस्तिदेशे व्यथा । कृतमपि मूत्रोत्सर्गमकृतमिव मन्यते ।

**स्वेदोऽतिस्वेददौर्गन्ध्यकण्डूः**

**स०**–स्वेदो वृद्धोऽतिस्वेदादीन् कुर्यात् ।

**आ० र०**–स्वेदस्याह–स्वेद इति । अतिस्वेद.–स्वेदाधिक्यम् । दौर्गन्ध्य–दुर्गन्धता । कण्डू –कच्छू ।

**एवं च लक्षयेत् ।**
**दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः ॥ १४ ॥**

**स०**–एव–अनेन प्रकारेण, दूषिकादीनपि मलान् लक्षयेत्–अनुमिनुयात् । दूषिका–अक्षिमल. । आदिशब्दात् घ्राणकर्णनासामलादीना ग्रहणम् । कथ लक्षयेत् ? इत्याह–बाहुल्येत्यादि । मलबाहुल्येन तत्स्थानगौरवेण च । आदिग्रहणात्कण्डूक्लेदादयो गृह्यन्ते ।

**आ० र०**–दूषिकादीनाह–एवं चेति । दूषिका–नेत्रमल । आदिशब्दात् कर्णमलादय । एवमिति यथा । स्वाधिक्यस्वाशयगौरवादिभि. पुरीषादयो वृद्धा लक्ष्यन्ते । आदिशब्दात् स्वाशयव्यथादय. ।

१ 'शब्दादन्यान' क ग छ ञ । २ 'ग्निसादस' अ आ ख घ ड झ । ३ 'दन्तरुजा, वक्ष्य' ठ । ४ 'वृद्धता' ख झ । ५ 'गण्डसामान्यात्' ट । ६ 'मासम् ।' इति क्वचित् । ७ 'वृद्धता-वृद्धत्वम्' ट. । ८ 'श्रम श्वास च करोति।' क ख.ग ठ.ञ. ।

१ 'कीदृशि'' ठ ड । २ 'कृच्छ्रसा' क ख ग छ ञ । ३ 'न सम्भोगेच्छा' ग । ४ [ ] इति ट पुस्तकेऽधिक पाठ । ५ 'नि करोति ।' क ख ग छ ञ । ६ 'बस्तेर्निस्तोद' आ ठ । ७ 'कण्डूयनम्' ग । ८ 'मियात्' ट ठ.ड. । ९ 'शब्देन' ट. ।

वृद्धाना वातादीना लिङ्गान्यभिधाय, क्षीणाना वातादीना लिङ्गान्याह—

**लिङ्गं क्षीणेऽनिलेऽङ्गस्य सादोऽल्पं भाषितेहितम् ।**
**संज्ञामोहस्तथा श्लेष्मवृद्ध्युक्तामयसम्भवः ॥ १५ ॥**

स०—अनिले क्षीणे—स्वप्रमाणापचिते, वक्ष्यमाणानि लिङ्गानि । वायोस्तु सर्वक्षये देह एव न स्यात्, कस्य तल्लिङ्ग स्यात् । कि पुनस्तल्लिङ्गम्? इत्याह—अङ्गस्येत्यादि । अङ्गस्य साद —क्रिया स्वसामर्थ्यम् । ईहित—चेष्टितम्, कायिक कर्म । भाषित चेहित च भाषितेहितम्,—अल्पवचनताऽल्पचेष्टितत्व च स्यात् । तथा, सज्ञामोह —सविदोऽभाव । तथा, श्लेष्मवृद्धौ य उक्ता —अग्निसादप्रसेकादय, तेषामामयाना सम्भवो भवति ।

आ० र०—अथ क्षयलक्षणम् । तत्र वायोराह—लिङ्गमिति । अङ्गस्य साद —श्रान्तत्वमिव । भाषितेहितमल्पम् । भाषित—वाचिक कर्म । ईहित—कायिकम् । सज्ञा—बुद्धि, तस्या मोहो—विवेचनाक्षमत्वम् । श्लेष्मवृद्ध्युक्तामया —अग्निसदनादय ।

**पित्ते मन्दोऽनलः शीतं प्रभाहानिः**

स०—लिङ्ग क्षीणे इत्यनुवर्तते । पित्ते क्षीणे लिङ्गमेतत् । अग्निर्मन्द शीत कान्तिहानिश्च स्यात् ।

आ० र०—पित्तस्याह—पित्त इति । मन्दोऽनल —अग्निमान्द्यम् । शीत—हिमस्पर्शेनेव दु खम् । प्रभाहानि —कान्तिनाश ।

**कफे भ्रम ।**
**श्लेष्माशयानां शून्यत्वं हृद्द्रवः श्लथसन्धिता ॥१६॥**

स०—कफे क्षीणे भ्रमो भवति । तथा, श्लेष्माशयाना शून्यत्व भवति । श्लेष्माशया —उर शिर सन्ध्यादा । [तथा, हृद्द्रवादय स्यु । हृद्द्रव —हृदि कम्प इत्यर्थ ।]

आ० र०—कफस्याह—कफ इति । भ्रम —चक्रारूढस्येव । श्लेष्माशयाना—उर प्रभृतीनाम् । शून्यत्व—रिक्तत्वम् । हृद्द्रव —अनुकम्पयेव पीडा हृदयस्य । श्लथसन्धिता—सन्धिशैथिल्यम् ।

**रसे रौक्ष्यं श्रमः शोषो ग्लानिः शब्दासहिष्णुता ।**

स०—रसे क्षीणे रौक्ष्यादय स्यु ।

आ० र०—रसस्याह—रस इति । रौक्ष्य—स्नेहाभाव । श्रम —श्रान्तत्वम् । शोषो—मुखादीनाम् । ग्लानि —क्लम । शब्दासहिष्णुता—शब्दश्रवणद्वेष ।

**रक्तेऽम्लशिशिरप्रीतिशिराशैथिल्यरूक्षताः ॥ १७ ॥**

स०—रक्ते क्षीणेऽम्लाद्यभिलाषादय स्यु ।

आ० र०—रक्तस्याह—रक्त इति । अम्लशीतयोरभिलाष । शिराणा शैथिल्यम् । रूक्षता—शरीरस्य ।

१ 'अनिलस्य तु सर्वनाशे देहस्यैव नाश स्यात्' ट । २ 'कस्य नु लिङ्ग' ठ । ३ 'सविदभाव' ड । ४ 'भाषित चेहित च भाषि' क ग छ ञ । ५ 'णेऽग्निर्मे' ट । ६ 'हृद्रद' ठ । ७ [ ] इति ट पुस्तकेऽधिक पाठ । ८ 'ता—श्रवण' क ख ग छ ञ ।



**मांसेऽक्षग्लानिगण्डस्फिक्शुष्कतासन्धिवेदनाः ।**

स०—मासे क्षीणेऽक्षग्लानि, गल्लयो स्फिजोश्च शुष्कत्वम्, सन्धीना वेदना स्यु, स्फुटन्तीव सन्धय इत्यर्थ ।

आ० र०—मासस्याह—मास इति । अक्षग्लानि —इन्द्रियदौर्बल्यम् । गण्डयो स्फिजोश्च शुष्कता । सन्धीना व्यथा ।

**मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशाङ्गता ॥१८॥**

स०—मेदसि क्षीणे कट्या स्वाप प्लीहवृद्धि कृशाङ्गत्व च ।

आ० र०—मेदस आह—मेदसीति । कट्या स्वपन—स्पर्शाज्ञत्वम् । प्लीह्नो वृद्धि । इतरेषामङ्गाना कार्श्यम् ।

**अस्थ्न्यस्थितोद शदन दन्तकेशनखादिषु ।**

स०—अस्थ्नि क्षीणेऽस्थ्ना तोदो भवति । शदन—शात, पात इत्यर्थ । केषाम्? दन्तादीनाम् ।

आ० र०—अस्थ्न आह—अस्थ्नीति । अस्थितोद —अस्थ्ना व्यथा । दन्तादीना शदन—शात । आदिशब्दाद्रोमादय ।

**अस्थ्नां मज्जनि सौषिर्यं भ्रमस्तिमिरदर्शनम् ॥१९॥**

स०—मज्जनि क्षीणेऽस्थ्ना सौषिर्यं भ्रमादिश्च ।

आ० र०—मज्ज्ञ आह—अस्थ्नामिति । अस्थ्ना सौषिर्यं—सरन्ध्रत्वम् । भ्रम —चक्रारूढस्येव । तिमिरदर्शन—सर्वस्यैव वस्तुनस्तमोरूपत्वेनावभास ।

**शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा ।**
**तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥ २० ॥**

स०—शुक्रे क्षीणे शुक्र चिरात् प्रसिच्येत, रक्त वा । प्रसिच्येतेति कर्मकर्तरि । वृषणयोरातशयेन तोदो—व्यथा स्यात् । मेढ्र—शिश्न, धूमायतीव च । धूमायतीति लोहितादेराकृतिगणत्वात् क्यप्, अकृत्सार्वधातुकेत्यादिना दीर्घ ।

आ० र०—शुक्रस्याह—शुक्र इति । शुक्र सम्भोगे चिरात् प्रसिच्येत, शोणितमेव वा । प्रसिच्येत—स्रवेत् । वृषणयोरत्यर्थ वेदना । मेढ्र धूमायति । लोहितादिक्यषन्तात् परस्मैपदम् ।

**पुरीषे वायुरन्त्राणि सशब्दो वेष्टयन्निव ।**
**कुक्षौ भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीडयन् भृशम् २१**

स०—पुरीषे क्षीणे वायु कुक्षौ भ्रमति । अन्त्राणि वेष्टयन्निव शब्द जनयन् यात्यूर्ध्वम् । कि कुर्वन्? हृत्पार्श्वे भृश पीडयन् ।

आ० र०—पुरीषस्याह—पुरीष इति । अन्त्राणि वेष्टयन्निव सशब्दो वायु कुक्षौ भ्रमति, कदाचित् हृदयपार्श्वे पीडयन्नूर्ध्व याति ।

१ 'सदन' आ क ख ञ ठ । २ 'सदन' ट ठ ड, क ग ञ । ३ 'शौषिर्यं' ठ ट । ४ 'क्राविरूढ' घ झ । ५ 'त्वेन भास' घ झ । ६ 'भवति' ट । ७ 'सयोगे' क ग ञ । ८ 'नि सरेत्' छ । ९ 'व्यथा ।' घ झ । १० 'कुक्षि' अ क ख घ झ ञ ठ । ११ 'कुक्षि' ठ ड, घ झ ।

**मूत्रेऽल्पं मूत्रयेत्कृच्छ्राद्विवर्णं सास्रमेव वा ।**

स०–मूत्रे क्षीणेऽल्प मूत्रयेत्, कृच्छ्राद्विवर्ण सरक्तमेव वा ।

आ० र०–मूत्रस्याह–मूत्र इति । अल्प मूत्र कृच्छ्रान्मूत्रयेत् । तच्च विवर्ण–रक्तमिश्रवर्णाभ, रक्तमिश्रमेव वा । एवकारेण रक्तवर्णाभासत्व व्यावर्त्यते । अत एव विवर्णशब्देन तल्लभ्यते ।

**स्वेदे रोमच्युतिः स्तब्धरोमता स्फुटनं त्वचः ॥२२॥**

स०–स्वेदे क्षीणे रोम्णा च्युति –शात , रोम्णा च स्तब्धत्वम् । त्वच –चर्मण , स्फुटन–दरणम् ।

आ० र०–स्वेदस्याह–स्वेद इति । केषाचिद्रोम्णा च्युति , केषाचित् स्तब्धता । त्वच स्फुटन–विदारणम् ।

इदानीं घ्राणादिमलानामपि सामान्येन क्षयलिङ्गमाह—

**मलानामतिसूक्ष्माणां दुर्लक्ष्यं लक्षयेत् क्षयम् ।**
**स्वमलायनसंशोषतोदशून्यत्वलाघवैः ॥ २३ ॥**

स०–मलानामतिसूक्ष्माणा–सुस्वल्पाना[1] दूषिकादीनाम्, दुःखेन बोद्धु शक्य–दुर्लक्ष्यम्, क्षय लक्षयेत्–जानीयात् । के ? मलाना स्थानानि–मलायनानि, स्वानि च तानि मलायनानि च–स्वमलायनानि, तेषा सशोषतोदशून्यत्वलाघवानि–स्वमलायनसशोषतोदशून्यत्वलाघवानि, तै ।

आ० र०–दूषिकादीनामाह–मलानामिति । अतिसूक्ष्माणा–अल्पल्पानाम्[2] । अतिसूक्ष्मत्वादेव दुर्लक्ष्यम् । मलायन–मलमार्गो नेत्रादि , तस्य सशोषादय ।

एव व्यासेन दोषधातुमलाना वृद्धिक्षयौ[3]अभिधाय समासतोऽभिधातुमिदमाह—

**दोषादीनां यथास्वं च विद्याद्वृद्धिक्षयौ भिषक् ।**
**क्षयेण विपरीतानां गुणानां वर्धनेन च ॥ २४ ॥**
**वृद्धिं मलानां सङ्गाच्च क्षयं चातिविसर्गतः ।**

स०–दोषधातुमलाना वृद्धिक्षयौ जानीयात् । कथम् ? यथास्व दोषादीना गुणेभ्यो विपरीता ये गुणास्तेषा गुणाना क्षयेण वर्धनेन च देहगतेन दोषादीना यथाक्रम वृद्धि क्षय च विद्यात् । यथा,–वायोर्गुणा रूक्षलघुशीतादय , तेषा विपरीता –स्निग्धगुरूष्णादय , तेषा स्निग्धादीना देहे यदा क्षयो दृश्यते तदा वायोर्वृद्धि[4] विद्यात् । यदा तु तेषा स्निग्धादीना देहे वृद्धिर्दृश्यते तदा वायो क्षयो ज्ञेय । एव स्वबुद्ध्या विकल्प्य मलाना धातूना च वाच्यम् । वृद्धि मलानामित्यादि । न केवल मलाना पूर्वोक्तेन प्रकारेण वृद्धिक्षयौ ज्ञेयौ, यावदमुनाऽपि वक्ष्यमाणेन लक्षणेन तेषा वृद्धिक्षयौ ज्ञेयौ, [इति चशब्देन द्योतयति] । एव स्वबुद्ध्या विकल्प्य, मलाना सङ्गात्–बहिरनि सरणलक्षणाच्च वृद्धि विद्यात् । तेषामेव मलानामतिविसर्गात्–अतिप्रवर्तनात् क्षय विद्यात्[5] ।

१ 'शुष्काल्पाना' ठ ड । २ 'अल्पानाम् । सूक्ष्म' क ख ग ठ ञ । ३ 'धातुक्त्वा स' ड. । ४ 'द्धिमुपलक्षयेत्' ट । ५ 'क्षय विद्यात्' ट. ।

आ० र०–निदानमाह–दोषादीनामिति । यथास्व विपरीताना गुणाना क्षयेण निदानेन दोषादीना वृद्धि, वर्धनेन क्षय, जानीयात् । तौ च रूक्षादीना गुणाना बहुत्वाल्पत्वाभ्या क्रमाद्भवत । तत्र क्षयेणोत्पन्न विकार वायोर्वृद्धिरिति व्यवस्येत्, वर्धनेनोत्पन्न क्षय इति । एव पित्तादिष्वपि । तथा, मलानामप्यतिसङ्गान्निदानाद्दोषादीना वृद्धि विद्यात्, अतिविसर्गात् क्षयम् । तत्रातिसङ्गो–यथाकालमशोधनाद्वेगविधारणाद्विष्टम्भकाहारविहारशीलनाच्च । अतिविसर्गो–अतिशोधनाद्वेगोदीरणात्स्रंसनाहारविहार[2]सेवनाच्च ।

**मलोचितत्वाद्देहस्य क्षयो वृद्धेस्तु पीडनः ॥ २५ ॥**

स०–द्वावपि मलाना वृद्धिक्षयौ पीडाकरौ देहस्य । तत्रापि य एषा क्षय स वृद्धितोऽप्यतिशयेन पीडाकर , अनौचित्यात् । देहिना हि प्रायेण मलक्षयोऽनुचितो–अनभ्यस्त , वृद्धिस्तूचितैवेति न तथा पीडा करोति ।

आ० र०–क्षयवृद्ध्यो पीडाकरत्वे तारतम्यमाह–मलोचितत्वादिति । दोषादीना वृद्धिर्देहपीडनी । क्षयस्तु ततोऽपि देहपीडन । कुत ? मलोचितत्वात् । देहो हि मलसात्म्य । सात्म्य च बह्वपि नातिबाधते । वक्ष्यति(?)–"सात्म्य ह्याशु बल धत्ते नातिदोष च बह्वपि ।" इति । मलशब्देन दोषधातुमलाना ग्रहणम् । वक्ष्यति हि (हृ सू अ ११।८६)–"विट्श्लेष्मपित्तादिमलोच्चयाना[3] विक्षेपसहारकर स यस्मात् ।" इति ।

अथ दोषादीनामाश्रयाश्रयिभाव दर्शयति—

**तत्रास्थनि स्थितो वायुः, पित्तं तु स्वेदरक्तयोः ।**
**श्लेष्मा शेषेषु, तेनैषामाश्रयाश्रयिणां मिथः ॥ २६ ॥**
**यदेकस्य तदन्यस्य वर्धनक्षपणौषधम् ।**
**अस्थिमारुतयोर्नैवं, प्रायो वृद्धिर्हि तर्पणात् ॥ २७ ॥**
**श्लेष्मणाऽनुगता तस्मात् सङ्क्षयस्तद्विपर्ययात् ।**
**वायुनाऽनुगतोऽस्माच्च वृद्धिक्षयसमुद्भवान् ॥ २८ ॥**
**विकारान् साधयेच्छीघ्रं क्रमाल्लङ्घनबृंहणैः ।**

स०–तत्र–तेषु वातादिषु मध्ये, अस्थ्नि वायु स्थित –आश्रित । पित्त तु स्वेदरक्तयो स्थितम् । श्लेष्मा शेषेषु–रसमांसमेदोमज्जशुक्रमूत्रपुरीषादिषु स्थित । यतश्चैवमाश्रयाश्रयिभावो दोषधातूनाम्, तेन हेतुना, आश्रयाश्रयिणा मिथ –परस्पर, यदेकस्य–आश्रयस्य वर्धन, तदन्यस्य–आश्रयिणोऽपि वर्धनम्, यदाश्रयस्य क्षपण तदाश्रयिणोऽपि क्षपणम्[4] । ननु, एवमस्थ्नो वाताश्रयस्य यद्वर्धन तदस्याश्रयिणो वातस्यापि वर्धन[5], यदस्य क्षपण तदपि वातस्य क्षपण प्राप्नोतीत्यत आह–अस्थीत्यादि । अस्थिमारुतयोर्नैव वर्धनक्षपणौषधम्, सम्भवतीत्यध्याहार्यम् । हि–यस्मात्, प्रायो–बाहुल्येन, या वृद्धि –वर्धन दोषधातूनाम्,

१ 'मति' घ झ । २ 'रशीलनाच्च' घ झ । ३ 'मलाशयाना' घ झ । ४ 'तदाश्रयि' ट ठ. । ५ 'तद्वातस्य वर्ध' ट. । 'तदप्याश्रयिणोऽपि व' ठ. ।

सा नेर्पणात्–बृहणाद्भवति । प्रायोग्रहण वायुपरिहारार्थम् । सा च श्लेष्मणाऽनुगता–अनुबद्धा । यत एव या वृद्धि सा सन्तर्पणात्, तस्माद्धतोय एषा दोषादीना क्षय स प्रायो–भूयिष्ठम्, अपतर्पणात्–लङ्घनरूपाद्भवति । स च सङ्क्षयो वायुनाऽनुगत । एव यदस्थ्नो वर्धनमाषधम्, तत् स्निग्धमधुरादि बृहणरूप वातस्य क्षपणम् । यच्च वातस्य वर्धनमौपधम्, तत् रूक्षतिक्ताद्यपतर्पण लङ्घनरूपमस्थ्न क्षपणम् । तदर्थमेतदुक्तम्–अस्माच्चेत्यादि । यत एव वृद्धे सन्तर्पणरूपत्व क्षयस्यापतर्पणरूपत्वम्, अतो वृद्धिक्षयसम्भवान् विकारान् दोषधातूना सम्बन्धिन क्रमाल्लङ्घनबृहगै सावयेत्–उपक्रमेत् । कथम्? शीघ्रम्, चिरोत्थिता हि ते दुश्चिकित्स्या स्यु । वृद्ध्युत्थान् विकारान् लङ्घनै, क्षयोत्थान् बृहणैरिति क्रमार्थ ।

**आ० र०–दूष्याणां वृद्धिक्षयहेत्वादिविज्ञानार्थं दोषदूष्ययोराश्रयाश्रयिभावमाह–तत्रेति । तत्र–तेषु दोषादिषु मध्ये । शेषेषु–रसमासमेदोमज्जशुक्रमूत्रपुरीषादिषु ।**

**आश्रयाश्रयिभावस्य फलमाह तेनेति । तेन–आश्रयाश्रयिभावेन हेतुना । एषा–दोषादीनाम् । आश्रयाश्रयिणा–आधाराधेयभावेन स्थितानाम् । यदेकस्य वर्धनक्षपणौषध तदेवान्यस्य । कथम्? मिथ,–परस्परम् । यदाश्रयस्य तदाश्रयिण, यदाश्रयिणस्तदाश्रयस्येत्यर्थ । वर्धन–वृद्धिहेतु । क्षपण–क्षयहेतु । औषध–वैषम्यनिवर्तकम्, साम्यहेतुरित्यर्थ ।**

**अपवादमाह–अस्थिमारुतयोरिति । अस्थिमारुतयोराश्रयाश्रयिभावेऽप्येव न ज्ञेयम् । यद्धि वायोर्वर्धन रूक्षादि, तदस्थ्न क्षपणम् । यदस्थ्नो वर्धन स्निग्धादि, तद्वायो क्षपणम् । अस्थ्नो वृद्धौ लङ्घनमौषधम् । वायोर्वृद्धौ बृहणम् । अस्थिक्षये बृहणमौषधम्, वातक्षये लङ्घनमिति ।**

**अथोपशय विवक्षुश्चिकित्सामाह । चिकित्सैव हि प्रयुज्यमाना उपशय उच्यते । वक्ष्यति हि ( हृ नि. अ १।६ )–“हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् । औषधान्नविहाराणामुपयोग सुखावहम् ॥ विद्यादुपशय व्याधे स हि सात्म्यमिति स्मृत. ।” इति । चिकित्सा च द्विविधा,–बृहणलङ्घनभेदात् । तत्र बृहणलङ्घने विभजति–प्रायो वृद्धिरिति । वृद्धिजान् विकारान् लङ्घनेन साधयेत्, क्षयजान् बृहणेन । कुतोऽय विभाग? हि–यस्मात्, वृद्धिस्तर्पणात्–बृहणाद्भवति । सा च श्लेष्मणाऽनुगता,–यत्र यत्र वृद्धिस्तत्र तत्र श्लेष्मा, पित्तादिवृद्धावपि श्लेष्मानुगमोऽस्तीत्यर्थ । तस्मात्सर्वेषु वृद्धिविकारेषु लङ्घनमोषधम्, हेतुविपरीतत्वात् श्लेष्मानुगमेन व्याधिविपरीतत्वाच्च । तथा, सङ्क्षयस्तद्विपर्ययात्–तर्पणविपर्ययाल्लङ्घनाद्भवति । स च वायुनाऽनुगत,–यत्र यत्र क्षयस्तत्र तत्र वायु, कफादिक्षयेऽपि वायोरनुगमोऽस्तीत्यर्थ । तस्मात्सर्वेषु क्षयविकारेषु बृहणमौषधम्, हेतुविपरीतत्वाद्वातानुगमेन व्याधिविपरीतत्वाच्च ।**

ननु, एव वातवृद्ध्युत्थान् विकारान् लङ्घनैस्तत्क्षयोत्थान् बृहणरिति स्यात् । अत इदमाह—

**वायोरन्यत्र, तज्जांस्तु तैरेवोत्क्रमयोजितैः ॥ २९ ॥**

**स०**–वायु हित्वा वृद्ध्युत्थान् विकारान् लङ्घने, क्षयोत्थान् बृहणै सावयेत् । तज्जान्–वायुसम्भवान् विकारान्, पुनस्तैरेव–लङ्घनबृहणैरुत्क्रमयोजितैरुपक्रमेत् । यथानिर्दिष्टक्रमाद्विपरीत क्रम–उत्क्रम । यथा,–वातवृद्ध्युत्थान् विकारान् बृहणै, तत्क्षयोत्थाश्च लङ्घनैरिति ।

**आ० र०–एतच्च सर्वं वायोरन्यत्र । वायुवृद्धौ तर्पण न हेतु, न वा लङ्घनमौषधमित्यर्थ । तर्हि तत्र किम्? इत्यत आह–तज्जानिति । तज्जान्–वायुवृद्धिक्षयजान् । वृद्धिजान् बृहणेन साधयेत्, क्षयजान् लङ्घनेन, इत्युत्क्रमयोजना । वायुवृद्धिर्लङ्घनात्, क्षयो बृहणादित्यत एव ज्ञेयम् । प्रायोग्रहणाद्व्यभिचारोऽपि । यथा ( सङ्ग्रहे सू अ ७ )–“कफे लङ्घनसाध्येऽपि कर्तरि ज्वरगुल्मयो । तुल्येऽपि देशकालादौ लङ्घन न समं मतम् ॥” इति ।**

दोषाणा विशेषचिकित्सेह नोक्ता, दोषोपक्रमणीये वक्ष्यमाणत्वात् । रसचिकित्सा च “रसोऽपि श्लेष्मवत्” इत्युक्तेर्नेह पुनर्निर्दिष्टा । अतो रक्तादीना चिकित्सामाह—

**विशेषाद्रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैः ।**
**मांसवृद्धिभवान् रोगान् शस्त्रक्षाराग्निकर्मभिः ॥ ३० ॥**
**स्थौल्यकार्श्योपचारेण मेदोजानस्थिसङ्क्षयात् ।**
**जातान् क्षीरघृतैस्तिक्तसंयुतबस्तिभिस्तथा ॥ ३१ ॥**
**विड्वृद्धिजानतीसारक्रियया, विट्क्षयोद्भवान् ।**
**मेषाजमध्यकुल्माषयवमाषद्वयादिभिः ॥ ३२ ॥**
**मूत्रवृद्धिक्षयोत्थांश्च मेहकृच्छ्रचिकित्सया ।**
**व्यायामाभ्यञ्जनस्वेदमद्यैः स्वेदक्षयोद्भवान् ॥ ३३ ॥**

**स०**–वृद्धिक्षयोपक्रमे एव स्थितेऽपि विशेषेण रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैरुपक्रमेत । मासवृद्धिजान् शस्त्रक्षाराग्निकर्मभि । मेदोवृद्धिक्षयाभ्या जातान्–मेदोजानिति मध्यमप-

१ ‘सन्तर्प’ ट ठ ड । २ ‘सङ्क्षय’ ट । ३ ‘वातुस’ ट । ४ ‘वृद्धिहे’ क ख घ छ झ ञ । ५ ‘हेतुत्वा’ ख । ‘हेतुत्वादिज्ञा’ घ । ‘हेत्वादिज्ञा’ झ । ६ ‘एतयोरा’ क ग ठ । ७ ‘अस्थिवृद्धौ’ घ झ । ८ ‘वायुवृद्धौ’ घ झ । ९ ‘नमौषधमिति’ छ । १० ‘वृद्धिर्बृहणेन भवति’ क ग छ ञ ।

१ ‘एव’ क घ झ ञ । २ ‘देशे काले च ल’ ग छ । ३ ‘समजसम्’ क ग ञ स मू । ४ ‘सयुक्तैर्बै’ अ आ । ५ अस्याग्रे “**मज्जशुक्रोद्भवान् रोगान् भोजनै. स्वादुतिक्तकै । वृद्ध शुक्र व्यवायाद्यैर्यच्चान्यच्छुक्रशोषिकम् ॥**” इति छ. पुस्तकेऽधिक पाठ । अ आ क पुस्तकेषु तु “**प्रत्यनीकौषध मज्जशुक्रवृद्धिक्षये हितम् ।**” इत्यधिक । ६ ‘त्थास्तु’ आ क ख घ झ ञ ।

द्लोपोऽत्र द्रष्टव्य । मेदोवृद्धिजान् विकारान् स्थौल्योपचारेण द्विविधोपक्रमणीयोक्तया स्थौल्यचिकित्सया, मेद क्षयजान् कार्श्योपचारेणोपाचरेत् । अस्थिक्षयजान् क्षीरघृतैस्तिक्तसयुतै, बस्तिभिस्तथा–तथारूपैस्तिक्तमयुतैरित्यर्थ । ननु, यानि वात घ्नन्ति द्रव्याणि तान्यस्थिक्षयोद्भवविकाराणा वृद्धिकरणानीति तद्द्रव्योपयोगोऽत्र न युक्त, तिक्तस्य वातकृतत्वात् । अत्रोच्यते । यद्द्रव्य स्निग्ध शोषण खरत्वमुत्पादयति तदस्थो वर्धन युक्तम्, खरस्वभावत्वादस्थ्नाम् । न चैवविधमेक द्रव्यमस्ति, यत् स्निग्ध शोषण च । तस्मात् क्षीरघृतैस्तिक्तसयुतैर्बस्तिभिश्च तिक्तसयुतै श्चेत्युपदिष्टम् । क्षीरघृतस्य तिक्तयुक्तस्य खरस्वभावत्वात् । विड्वृद्धिजान्–पुरीषवृद्धिजान्, अतीसारचिकित्सया साधयेत् । विट्क्षयोद्भवान् मेषाजमध्यादिभि साधयेत् । मेष –उरभ्र, अज –च्छाग, तयोर्मध्य–अन्तराधि । कुल्माष –अर्धस्विन्नो माषादिहिङ्गुघृतादिसस्कृत । माषद्वय–माषो राजमाषश्च । आदिशब्देन काकाण्डोलात्मगुप्तादीना ग्रहणम् । मूत्रवृद्धयुत्थान् मेहचिकित्सया, मूत्रक्षयोत्थान् मूत्रकृच्छ्रचिकित्सया, स्वेदक्षयजान् व्याधीन् व्यायामादिभि, साधयेत् ।

आ० र०–अथ केषाचिद्विशेष । तत्र रक्तवृद्धिजानाह–विशेषादिति । रक्तस्रुति –शिराव्यधादि ।

मासवृद्धिजानाह–मासवृद्धिभवानिति ।

मेदोजानाह–स्थौल्येति । मेदोवृद्धिजान् स्थौल्योपचारेण–द्विविधोपक्रमणीयाध्यायोक्तेन । मेद क्षयजान् कार्श्योपचारेण ।

अस्थिक्षयजानाह–अस्थिसङ्क्षयादिति । तयेति तिक्तसयुतै । तथा च खारणादि –"पञ्चकर्माणि सर्पींषि सतिक्ता बस्तयस्तथा । पय" इति । न चैव तिक्तसयुतैरिति बस्तीनामेव विशेषण वक्तु युक्तम्, "बस्तय क्षीरसर्पींषि तिक्तकोपहितानि च ये ।" इति चरकवचनात् ( सू अ २८।२४ ) ।

विड्वृद्धिजानाह–विड्वृद्धिजानिति । अतीसारक्रियया–अतीसारचिकित्सितेन ।

विट्क्षयजानाह–विट्क्षयोद्भवानिति । मेषाजयोर्मध्य–अन्तराधि । माषद्वय–माषो राजमाषश्च । आदिशब्दान्मत्स्यमासादय ।

मूत्रवृद्धिक्षयजानाह–मूत्रेति । मूत्रवृद्धिजान् प्रमेहचिकित्सया । मूत्रक्षयजान् कृच्छ्रचिकित्सया ।

स्वेदक्षयजानाह–व्यायामेति ।

**स्वस्थानस्थस्य कायाग्नेरशा धातुषु संश्रिताः ।**
**तेषा सादातिदीप्तिभ्या धातुवृद्धिक्षयोद्भव. ॥ ३४ ॥**
**पूर्वो धातुः पर कुर्याद्वृद्धः क्षीणश्च तद्विधम् ।**

स०–स्वस्थान कायाग्ने –पक्वामाशययोर्मध्यम् । यथा च वक्ष्यति ( हृ सू अ १२।१० )–"पित्त पञ्चात्मक तत्र पक्वामाशयमध्यगम् ।" इत्यादि यावत् "पाचक नाम तत् स्मृतम् ।" इति । तत्र पक्वामाशयमध्ये तिष्ठतीति स्वस्थानस्थ, तस्यैवविधस्य कायाग्ने –जाठरानलस्य, अशा –भागा, धातुषु–रसादिपु सश्रिता । तेषा–अग्न्यशानाम्, सादेन–मान्द्येन, धातूना वृद्ध्युद्भव । तथा तेषामशानामतिदीप्त्या–अतितैक्ष्ण्यात्, धातुक्षयोद्भव । पूर्वो–रसाख्यो, धातुर्वृद्धो भूत्वा पर–रक्ताख्य, धातु वृद्ध कुर्यात् । पूर्वश्च क्षीणो धातु पर धातु तद्विध–क्षीणमेव कुर्यात् ।

**आ० र०–धातुजानामुपक्रमान्तरमाह–स्वस्थानस्थस्येति । स्वस्थानस्थस्य–ग्रहणीस्थस्य । कायाग्ने –अन्नपक्तु । अशा –क्षुद्राणि रूपान्तराणि । धातुषु–धात्वाशयेषु, सर्वधात्वग्नय इत्यर्थ । तेषा सादेन–मान्द्येन धातुर्वृद्ध्युद्भव, अतिदीप्त्या धातुक्षयश्च । धातुवृद्धो मान्द्योपक्रम, धातुक्षये तैक्ष्ण्योपक्रम कार्य इत्यर्थ । तथा, पूर्वो धातुर्वृद्ध पर वृद्ध कुर्यात्, क्षीण क्षीणम् । परधातोर्वृद्धौ पूर्वस्य क्षय कार्य, क्षये वृद्धिरित्यर्थ । इत्युपशयप्रकरणम् ।**

**दोषा दुष्टा रसैर्धातून् दूषयन्त्युभये मलान् ॥ ३५ ॥**
**अधो द्वे, सप्त शिरसि, खानि स्वेदवहानि च ।**
**मला मलायनानि स्युर्यथास्वं तेष्वतो गदाः ॥ ३६ ॥**

स०–दोषा दुष्टा रसै –मधुरादिभिर्मिथ्यायोगातियोगसेवितै कुपिता, धातून् दूषयन्ति । उभये–दोषा धातवश्च, मलान् दूषयन्ति । मला मलायनानि दूषयन्तीति सम्बन्ध । तथा च मुनि ( च सू अ ७।४२ )–"मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलै ।" इति । कानि मलायनानि? इत्याह–अधो द्वे इत्यादि । अधो द्वे–गुदमेढ्राख्ये, सप्त शिरसि खानि–द्वे अक्षिणी द्वौ कर्णौ द्वौ नासापुटावास्य चेति, तथा स्वेदवहानि–रोमकूपाख्यानि छिद्राणि सर्वशरीरगतानि, मलायनानि स्यु । अतो–दूषणात्कारणात्, तेषु–मलायनेषु दुष्टेषु, यथास्व गदा –रोगा स्यु । यो यस्य स्वो–यथास्वम् ।

आ० र०–वृद्धिक्षयविकारसम्प्राप्तिमाह–दोषा दुष्टा इति । रसै –मधुरादिभि, दुष्टा दोषा –वातादयो, धातून्–रसादीन्, दूषयन्ति । रसग्रहण वीर्यादीनामुपलक्षणम् । उभये–दोषा धातवश्च, मलान्–पुरीषादीन्, दूषयन्ति । ते मला मलायनानि–स्रोतासि, दूषयन्ति । कानि पुनस्तानि? अधो द्वे–गुह्य गुदश्च । सप्त शिरसि–कर्णौ नेत्रे नासिके मुख च । स्वेदवहानि खानि–रोमकूपा, तेषामसङ्ख्यत्वात्सङ्ख्यानुक्ति । अतो–दुष्टेरनन्तरम्, तेषु–दुष्टेषु दोषधातुमलमलायनेपु, गदा स्यु । कथम्? यथास्वम्,–स्वस्थानानतिक्रमेण । स्थानविभाग उक्त सङ्ग्रहे ( सू अ १९ )–"वक्ष्यन्ते वातजास्तत्र निदाने वातरोगिके । पित्त त्वचि स्थित कुर्याद्वि-

१ 'सयुक्तै' ट । २ 'भावाद' ठ ड । ३ 'किञ्चित्स्विन्नो' ट । ४ 'तानि च ।' स च ।

१ 'तत्तु' ट ठ । २ 'चन' ड । ३ 'धातूना क्ष' ट । ४ 'वृद्धेरुद्भव' क ख ग छ ञ ।

स्फोटकमसूरिका ॥ रक्ते विसर्पं दाह च मासे मांसपाककोथनम्। सदाहान् मेदसि ग्रन्थीन् स्वेदोत्युद्गमन तृषम् ॥ अस्थ्नि दाह भृश मज्ज्ञि हारिद्रनखनेत्रताम्। पूति पीतावभास च शुक्र शुक्रसमाश्रितम्॥ शिरागत क्रोधनता प्रलाप स्नायुग तृषम्। कोष्ठग मदतृड्दाहान् व्यापिनोऽन्याश्च यक्ष्मण.। श्लेष्मा त्वचि स्थित कुर्यात्स्तम्भ श्वेतावभासताम्। पाण्डामय शोणितगो मासस्थोऽर्बुदापची ॥ आर्द्रचर्मावनद्धाभगात्रता चातिगौरवम्। मेदोग स्थूलता मेहमस्था स्तब्धत्वमस्थिग ॥ मज्जग शुक्लनेत्रत्व शुक्रस्थ शुक्रसञ्चयम्। विबन्ध गौरव चाति शिरास्थ स्तब्धगात्रताम्॥ स्नायुग सन्धिशून्यत्व कोष्ठगो जठरोन्नतिम्। अरोचकाविपाकौ च तास्ताश्च कफजान् गदान् ॥ विण्मूत्रयो साश्रययोस्तत्र तत्रोपदेक्ष्यते। उपतापोपघातौ च स्वाश्रयेन्द्रियगैर्मलै ॥" इति।

दोषधातुमलाना समविषमावस्था गदिता। ओजसस्तु निरूपयन्नाह—

**ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम्।**
**हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ॥ ३७ ॥**
**स्निग्धं सोमात्मकं शुद्धमीषल्लोहितपीतकम्।**
**यन्नाशे नियत नाशो यस्मिंस्तिष्ठति तिष्ठति ॥ ३८ ॥**
**निष्पद्यन्ते यतो भावा विविधा देहसंश्रयाः।**

स०—रसादीना धातूना शुक्रान्ताना यत्पर—उत्कृष्ट, तेजस्तदोज स्मृतम्, [न तु शुक्रस्यैव मल।] तथा, हृदयस्थमपि व्यापि। सकलशरीरव्यापिनस्तस्य षड्बिन्दुकस्य विशेषेण हृदय स्थानम्। तथा, देहस्य स्थितिर्देहस्थितिस्तस्या निबन्धन—जीविताधिष्ठानमित्यर्थ। अन्ये त्वाहु, परशब्देनैतत् द्योतयति,—अन्यदप्योजोऽस्ति न तद्धातूना शुक्रान्ताना तेज, श्लेष्माख्यमिति। तथा चोक्त सङ्ग्रहे (सू अ १९)—"तेजो यत्सर्वधातूनामोजस्तत् परमुच्यते। मृदु सोमात्मक शुद्ध रक्तमीषत्सपीतकम् ॥" इत्यादि। यन्नाशे—यस्योजसोऽभावे, नियत—निश्चित, प्राणिनो नाश—अभाव। यस्मिन्नोजसि तिष्ठति—विद्यमाने, तिष्ठति—प्राणिति, देहीति शेष। यतो—यस्मात्, भावा—पदार्था, निष्पद्यन्ते—जायन्ते। किम्भूता? विविधा,—अनेकप्रकारा। तथा, देह सश्रयो येषा ते देहसश्रया। लक्षणमोजसो मुनिनाऽभ्यधायि (च सू अ १७।७४)—"हृदि तिष्ठति यच्छुद्ध स्निग्धमीषत्सपीतकम्। ओज शरीरे सङ्ख्यातं तन्नाशे ना विनश्यति ॥" इत्यादि।

आ० र०—अथौजोविज्ञानम्, तस्यापि मलत्वात्। वक्ष्यति हि (हृ शा अ ३।६३)—"कफ पित्त मला खेषु प्रस्वेदो नखरोम च। स्नेहोऽक्षित्वग्विशामोजो धातूना क्रमशो मला ॥" इति। यत्तूक्त सङ्ग्रहे (शा अ ६)—"शुक्रस्य सार ओज। अत्यन्तशुद्धतया चास्मिन् मलत्वाभाव। अन्ये पुनरत एव तस्य नेच्छन्ति पाकम्।" इति। तत्तरशरीरचरशुक्रविषयम्। यत्तु सम्भोगादङ्गनागर्भाशयगतमार्तवेनैकत्र लोलीभूत जीवाधिष्ठित शुक्र, तस्य पाकाद्रसादिवन्मलसारौ स्त। तत्र मल ओज, सारो गर्भ। वक्ष्यति हि (हृ शा अ ३।६२)—"रसाद्रक्त ततो मास मासान्मेदस्ततोऽस्थि च। अस्थ्नो मज्जा तत शुक्र शुक्राद्गर्भ प्रजायते ॥" इति। मलत्व च गर्भापेक्षया, रसाद्यपेक्षया तु सारत्वमेवेति। अत एवाह चरक (सू अ ३०।९, सङ्ग्रहे च सू अ १९)—"यत्सारमादौ गर्भस्य यच्च गर्भरसाद्रस। सवर्तमान हृदय समाविशति यत्पुरा ॥ यच्छरीररसस्नेह. प्राणा यत्र प्रतिष्ठिता।" इति। न चैवमोजोनेकत्वं वाच्यम्। यदेव हि शुक्रमलरूपमोज, तदेव गर्भहृदयमनुप्रविष्टमष्टबिन्दुप्रमाणमार्तवानुविद्धत्वादीषद्रक्तपीत जीवानुविद्ध जीवशोणितमुच्यते। उक्त च तन्त्रान्तरे—"प्राणा श्रयस्यौजसोऽष्टौ बिन्दवो हृदयाश्रिता।" इति। तथा चरकोऽपि (सू अ १७।७४)—"हृदि तिष्ठति यच्छुद्ध रक्तमीषत्सपीतकम्। ओज शरीरे व्याख्यात तन्नाशान्निम्रियते नर ॥" इति। तदेवाहाररसेन समानगुणत्वादाप्यायितमर्धाञ्जलिपरिमाण सर्वदेहव्यापि रसात्मकमुच्यते। यद्वक्ष्यति (हृ शा अ ३।१८)—"दशमूलशिरा हृत्स्थास्ता सर्व सर्वतो वपु। रसात्मक वहन्त्योजस्तन्निबद्ध हि चेष्टितम् ॥" इति। खारणादिरप्याह—"रसधातो पर धाम पच्यमानात्प्रसीदति। सौम्यस्वभाव रक्ताग्रे यत्तदोज प्रकीर्तितम् ॥" इति। तदेव सर्वान् धातूननुप्रविष्ट तेषा प्रभावातिशयमादधान तत्तेज उच्यते। यदाह सुश्रुत (सू, अ १५।२३)—"रसादीना शुक्रान्ताना धातूना यत्पर

१ 'मासावको' ग स मू। 'मासस्य को' क। २ 'स्वेदतृट्वमन भृशम्' क ख ग छ ञ स मू। ३ 'पची' क ग छ ञ स द्व। ४ 'शूनत्व' घ झ। 'शूलत्व' स स। ५ 'स्ताश्च' क ख ग ञ। ६ 'यगा मला' स स। ७ [ ] इति पाठ, ट पुस्तक एवोपलभ्यते। ८ 'व्यापि, तस्य' ठ। ९ 'द्धमीषल्लोहितपी' ट। 'द्ध रक्तमी' स च। १० 'न्नाशान्नाशमृच्छति' ट। 'शे नाशमृच्छति' ड.। 'न्नाशान्ना' स च।

१ 'सारमोज' ग छ स द्व। २ 'च नास्मिन् मलभाव' क ख. ग छ ञ। ३ 'मलाभाव' स द्व। ४ अस्याग्रे "स्वाग्निभि पच्यमानेषु मल षट्सु रसादिषु। न शुक्रे पच्यमानेऽपि हेमन्तीवाक्षये मला ॥ इति तन्त्रान्तरे।" इत्यधिक पाठो घ झ पुस्तकयो। ५ 'कलोली' घ झ। 'कत्र कललीभूत' ग छ। ६ 'यत्तद्गर्भ' स. च। ७ 'माश्रयति' स द्व। ८ 'देहिन' क ख ग छ ञ। ९ 'य शरी' क ख घ छ झ ञ। 'य शरीरे' ग। १० 'रस स्ने' क ग घ छ झ स स। ११ 'प्राणो यत्र प्रतिष्ठित' स स। १२ 'शङ्क्यम्' घ झ। १३ 'सङ्ख्यात तन्नाशान्ना विनश्यति' स च। १४ 'नाशमेति च तद्विना' क ख ग छ ञ। १५ 'लिप्रमाण' क ख ग छ ञ। १६ रक्ताग्रे—रक्तोत्पत्ते प्राक्। १७ 'ग्रे तदोज. परिकी' क ख छ ञ.। १८ 'सर्वधातू' क ख ग छ.ञ.।

तेज , तदोजस्तद्बलमित्युच्यते ।" इति । तदेव पुनः पाका चामीकरमिवापेतोपाधिमलमत्यन्त शुक्रसार उच्यते । तस्माच्छुक्रमलरूप मूलभूतमेवोज इति स्थितम् । यत्तूक्त चरकेण ( सू अ १७।११५ )–"प्राकृतस्तु बल श्लेष्मा विकृतो मल उच्यते । स चैवोज स्मृत काये" इति । तदोजोहेतुत्वात् श्लेष्मण ओजस्त्वम्, आयुर्घृतमितिवत् । एतेनैतदुपपन्नम्, "धातूना तेजसि रसे तथा जीवितशोणिते । श्लेष्मणि प्राकृते वैद्यैरोज शब्द प्रकीर्तित ॥" इति । ओजसो मलत्वेऽपि पृथक्कथन प्राधान्यख्यापनार्थम् । प्राधान्ये हेतुमाह–ओजस्त्विति । ओज पुनः पर–प्रधान स्मृतम् । तद्धि शुक्रान्ताना धातूना पर तेज । शुक्रान्ताना ग्रहण सर्वधातुंग्राह्यर्थम् । तथा, हृदयस्थम् । न केवल तत्स्थ व्याप्यपि । देहस्थितिनिबन्धनम्,–देहस्य स्थितयो–नानावस्था , तासा निबन्धन–कारणम् ।

कारणत्वमेव विवृणोति–यन्नाश इति ।

**ओज क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ॥३९॥**
**बिभेति दुर्बलोऽभीक्ष्ण ध्यायति व्यथितेन्द्रियः ।**
**दुश्छायो दुर्मना रूक्षो भवेत्क्षामश्च तत्क्षये ॥४०॥**
**जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम् ।**

स०–ओज कोपादिभि क्षीयेत । तत्क्षये–तस्यौजस क्षये, बिभेति दुर्बल इत्यादिलक्षणम् । जीवनीयौषधाद्यास्तत्र भेषजम् । जीवनीयौषधानि–जीवन्त्यादीनि दश जीवनसज्ञानि (हृ सू अ १५।८) तथाऽन्यानि यानि मधुराणि क्षीरादीनि द्रव्याणि । क्षीरस्य जीवनीयत्वेनैव ग्रहणे सिद्धे पृथक्पाठोऽतिशयार्थं, अतिशयेनात्र क्षीरमौषधमिति । रसो–मासरस । आदि (द्य)-ग्रहणेन काकाण्डोलात्मगुप्ताघृतादिपरिग्रह ।

आ० र०–क्षयहेतूनाह–ओज क्षीयेतेति । क्षुत्–बुभुक्षा । ध्यान–चिन्ता । आदिशब्दात्–श्रमोन्नासकटुरूक्षभोजनादय ।

ओज क्षय लक्षयति–बिभेतीति । बिभेति–त्रसति । दुर्बलो–हीनबलो भवति । अभीक्ष्ण–पुन पुनरकस्मात् । ध्यायति–चिन्तयति । व्यथितेन्द्रिय –हृदयादिस्थानेषु व्यथावान् । दु च्छायो–मलिनकान्ति । दुर्मना–गतोत्साह । रूक्षो–निस्नेहाङ्ग । क्षाम –कृशाङ्ग ।

क्षयौषधभङ्ग्या वृद्धिहेतूनाह–जीवनीयेति । जीवनीया –जीवन्त्यादय । रसो–मासरस । आदि(द्य)शब्देन शर्करादय ।

**ओजोवृद्धौ हि देहस्य तुष्टिपुष्टिबलोदयः ॥ ४१ ॥**

स०–ओजोविवृद्धौ सत्या देहस्य तुष्टि –प्रहर्ष , पुष्टि –वृद्धि , बल–सामर्थ्यम् , एषामुदय –सम्यग्वृद्धिर्भवति ।

आ० र०–ओजोवृद्धि लक्षयति–ओजोवृद्धाविति । तुष्टि –सन्तोष । पुष्टि –स्थाल्यम् । बलोदय –शक्त्युत्कर्ष । ओजोवृद्धेस्तुष्ट्यादिहेतुत्वाच्च वातादिवृद्धिवद्विकारकारित्वम् । वृद्धमपि यदा त्वोजो व्यापद्यते स्वस्थानाद्विस्रसते वा, तदा वातादिवद्विकारकारित्वम् । तथा च सुश्रुत ( सू अ १५।३० )–"त्रयो दोषा बलस्योक्ता व्यापद्विस्रसनक्षया ।" इति । बल–ओज ।

इदानी सक्षेपेण वृद्धिक्षयभेषज कथयन्नाह—

**यदन्न द्वेष्टि यदपि प्रार्थयेताविरोधि तु ।**
**तत्तत्त्यजन् समश्नंश्च तौ तौ वृद्धिक्षयौ जयेत् ॥४२॥**

स०–यदन्न पुरुषो द्वेष्टि–नाभिनन्दति, यदप्यन्न प्रार्थयेत, तत्तदन्न द्विष्ट त्यजन्–परिहरन्, इष्टमन्न समश्नन्–भक्षयन्, दोषाणा सम्बन्धिनौ वृद्धिक्षयौ तौ तौ–यौ यस्य दोषस्यात्मीयौ वृद्धिक्षयौ, तौ तौ जयेत् । ननु किमविशेषेणैतत् प्रार्थितमश्नन् दोषक्षय जयेत् ? नेत्याह–अविरोधि तु । तुरवधारणे । अविरोध्येव । तत्तथाविधमन्नमश्नन् दोषाणा क्षय जयेत्, न तु विरोध्यन्नमश्नन् ।

आ० र०–वृद्धिक्षयौ ज्ञात्वा यदनुष्ठेय तत्सक्षेपेणाह–यदन्नमिति । यद्यदन्न द्वेष्टि तत्तत्त्यजन् तथा यद्यत्प्रार्थयेत तत्तत्समश्नन् तौ तौ वृद्धिक्षयौ जयेत् । किं तत्सर्वम् ? नेत्याह–अविरोधि त्विति । यत्प्रार्थयेत तच्चेदविरोधि–अपथ्य न भवति, तत्समश्नीयादित्यर्थ । तच्छब्देऽपि वीप्साकरणात् यच्छब्देऽपि वीप्सा ज्ञेया ।

ननु, द्वेष्यान्नत्यागेनेष्टान्नभक्षणेन [ च ] कुतो हेतोर्दोषाणा वृद्धिक्षयौ जयेत् ? इत्याह—

**कुर्वते हि रुचि दोषा विपरीतसमानयोः ।**
**वृद्धाः क्षीणाश्च भूयिष्ठ लक्षयन्त्यबुधास्तु न ॥४३॥**

स०–हि–यस्मात्, दोषा –वातादयो, विपरीतसमानयो रुचि कुर्वन्ति । किम्भूता. सन्त ? वृद्धा क्षीणाश्च, यथाक्रमम् । वृद्धा –प्रमाणाधिका सन्त, स्वगुणेभ्यो यद्विपरीतगुणमन्न तेषा क्षपणहेतु , तद्विषया रुचिं–प्रीतिमुत्पादयन्ति । भूयिष्ठ–बाहुल्येन । क्षीणा –स्वप्रमाणापचिता सन्तो, यत्स्वसमानगुण-

---

१ 'तत्खल्वोजस्तदेव बल' स सु । २ 'पुन पुन पा' घ झ । ३ 'इत्युच्यते' घ झ । ४ 'मलभूत' क ख ग ञ । ५ 'त्वादोजस्त्वम्' ख ग घ झ ञ । ६ 'नैतदप्युप' ग छ । 'नैव तदु' घ.झ । ७ 'तुल्यावृत्त्यर्थम्' क ख ञ । 'तुल्याप्त्यथम्' ग । ८ 'कारणमित्यर्थ ' क ख ग ञ. । ९ 'विच्छायो' ठ । १० 'तत्क्षयात्' ड । ११ 'पृथग्भावोऽ' ठ ड । १२ 'आदिशब्देन' ड । १३ 'निरुत्साह ' घ झ । १४ भङ्ग्या–मिषेण ।

१ 'तु' अ आ ठ । 'च' क ञ । २ 'दया.' हेमाद्रि , स सू । ३ 'जोवृद्धौ' ट । ४ 'प्राण ' ट । ५ 'दा व्याप' क ख ग छ ञ । ६ 'समश्नन्वा' क ञ । ७ 'यौ, जयेत्' ट । ८ 'षेण यत्प्रार्थित तदश्नन् दोषाणा क्षय' ट । ९ 'न्न सम' ट । १० 'ननु, यदन्न द्वेष्यसौ रोगी तत्त्यजन्, अन्यच्चाभिलषति तद्भक्षयन् कुतो' ट ठ । ११ 'कुर्वन्ति हि' ठ अरुण । १२ 'बुधा न तत्' स स । १३ 'यत्तत्समा' ठ ।

माहारजात तेषा वर्धनहेतु, तद्विषया प्रीतिमुत्पादयन्ति । यथा,–वातो वृद्ध स्निग्धाम्लमधुरमन्नमभिलषति । पित्त वृद्ध शीतमधुररूक्षतिक्तकषायमन्नमभिलषति । श्लेष्मा वृद्धो रूक्षोष्ण-कटुतिक्तकषायमन्नमभिलषति । वात क्षीणो रूक्षकषायाद्यन्न-मभिलषति । पित्त क्षीणमम्ललवणकटुकमन्नमभिलषति । श्लेष्मा क्षीण स्निग्धमधुराम्ललवणमन्नमभिलषति । भूयिष्ठमि त्यनेन प्रायिकत्वमस्या व्यवस्थाया दर्शयति । तेन दोषगतिवै-चित्र्यादन्यथाऽपि क्वचिद्भवति । यथा,–कस्यचिन्नरस्य वातोऽपि क्षीण स्निग्धमधुराद्यन्नमभिलषति, पित्तमपि वृद्धमम्ललवणा-द्यन्नमभिलषति, श्लेष्माऽपि वृद्धो मधुराम्लाद्यन्नमभिलषतीति[1] व्यभिचारात् । अत एवाबुधा –अपण्डिता, न लक्षयन्ति–न विदन्ति, यथा–किमय दोष क्षीण उत वृद्ध इति ।

आ० र०–न च यथारुच्युपचारस्यानुचितत्वमाशङ्कनी-यमित्याह–कुर्वते हीति । हि–यस्मात्, वृद्धा दोषा विपरीते रुचि कुर्वते, क्षीणा समाने । चकाराद्वृद्धा दोषा समाने द्वेष कुर्वते, क्षीणास्तु विपरीते, इत्यपि ज्ञेयम् । अयमर्थ,–यदा वायोर्वृद्धिस्तदा तद्विपरीताना स्निग्धादिगुणाना रुचिस्तत्स-मानानां रूक्षादिगुणानां द्वेष उत्पद्यते, अत इष्टसेवनाद्[3]द्विष्ट-त्यागाद्वायोर्वृद्धि जयेत् । यदा तु वायो[4] क्षयस्तदा तत्समा-नाना रूक्षादिगुणाना रुचिस्तद्विपरीताना स्निग्धादिगुणाना द्वेष उत्पद्यते, अत इष्टसेवनाद्विष्टत्यागाद्वायो क्षय जयेत् । एव पित्तादिष्वपि[6] । दोषशब्दो दोषधातुमलानामुपलक्ष-णम् । भूयिष्ठ–प्रायेण, कदाचिदन्यथाऽपि रुचिद्वेषौ भवत । यथा वक्ष्यति ( ह नि अ १६।३० ) सामे वायौ–"कटु-रूक्षाभिलाषेण तद्विधोपशयेन च ।" इति । एव सत्यप्ये तादृशीं स्थितिमबुधा न लक्षयन्ति । एतेन बुद्धिमता भिषजा परीक्ष्यायमुपचार कार्य[7] । मन्दबुद्धीना[8] तु यथो-पदेशमित्युक्त भवति । उक्त च सङ्ग्रहे ( सू अ १५ )–"य-थोक्तानुसरणमेव तु श्रेयो मन्दबुद्धे ।" इति ।

न चानेनैव लक्षणेन वृद्धा क्षीणाश्च दोषा लक्षणीया । कि तर्हि ? अन्यदपि लक्षणमस्तीत्य ह—

**यथाबलं यथास्व च दोषा वृद्धा वितन्वते ।**
**रूपाणि, जहति क्षीणाः, समाः स्वं कर्म कुर्वते ४४**

स०–यथाबल–बलानतिक्रमेण, यथास्व च–यद्यदात्मीय यथा, रूपाणि–गुणकर्मलक्षणानि, दोषा वृद्धा वितन्वते–विस्ता-रयन्ति । क्षीणाश्च बलानतिक्रमेण[10] यथास्व[11] रूपाणि जहति–त्य-जन्ति । यथा,–वायुर्वृद्धो रौक्ष्यशैत्यपारुष्यस्रसव्यासादीनि विस्ता-रयति । क्षीणस्तु वायु पूर्वोक्तानि रौक्ष्यादीनि जहाति, अत एव न व्यञ्जयति[1] ।

अथ समा दोषा किं विदधति ? इत्याह–समा इत्यादि । यदा न वृद्धा न च क्षीणा –समा दोषा,–स्वप्रमाणस्था, तदा स्व कर्म–उत्साहोच्छ्वासादिक यथोक्त कुर्वते । तल्लक्षणास्ते लक्ष-णीया । तदेव वृद्धक्षीणसमा दोषा वेद्या ।

आ० र०–उक्तयो रुचिद्वेषयोरुपपत्तिमाह–यथाबल-मिति । वृद्धा दोषा रूपाणि–रौक्ष्यादीनि, वितन्वते–विशेषेण प्रकटयन्ति । तान्येव क्षीणा जहति–न्यूनानि दर्शयन्ती-त्यर्थ । यथाबल–वृद्धा अधिकानि, वृद्धतरा अधिकतराणि, वृद्धतमा अधिकतमानीत्यर्थ । एव क्षीणेष्वपि । यथास्व–वायू राक्ष्यादीनि, पित्तमौष्ण्यादीनि, श्लेष्मा स्नेहादीनी-त्यर्थ । एतदुक्त भवति,–शरीरे यो यो गुणोऽधिको भवति तस्य तस्य द्वेष उत्पद्यते, यो यो[3] हीनस्तस्य तस्य रुचि । वायौ वृद्धे रूक्षादय शरीरे अधिका भवन्ति, ततस्तेषा द्वेष उत्पद्यते, क्षीणेऽत एव हीना, अतस्तेषा[4] रुचि । एव पित्तादिष्वपि ।

समेषु पुनर्दोषेष्वपूर्वौ रुचिद्वेषौ नोत्पद्येते इत्याह–समा स्वमिति । स्वशब्देन जातिवयोदेशकालानुरूप शारीर कर्मो-च्यते, न दोषकर्म । तस्य यथास्वमित्यनेनैव[5] लब्धत्वात् । तस्माज्जात्यादिवशाद्यस्य यथा रुचिद्वेषौ तस्य तथैवानुवर्त-यन्ति समा दोषा, नान्यथा कुर्वन्तीत्यर्थ ।

क्षीणा दोषा क्षीणत्वादेवाकिञ्चित्करत्वात् कदाचित्पीडां नो-त्पादयन्त्येव, इति विचिन्त्याल्पमतयो वैद्या क्षीणदोषवर्धनार्थं कदाचिदनादर कुर्युरित्याह–

**य एव देहस्य समा विवृद्ध्यै**
**त एव दोषा विषमा वधाय ।**
**यस्मादतस्ते हितचर्ययैव**
**क्षयाद्विवृद्धेरिव[6] रक्षणीयाः ॥ ४५ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचिता-यामष्टाङ्गहृदयसंहितायां सूत्रस्थाने दोषादि-विज्ञानीयो नामैकादशोऽध्यायः ॥११॥**

स०–य एव दोषा समा सन्तो देहस्य विवृद्ध्यै–वर्धनाय भवन्ति, त एव दोषा विषमा –स्वप्रमाणादधिका हीना वा

१ 'ति । तस्माद्भूयिष्ठग्रहण कृतम् । अत' ट ठ । २ 'यम् । हि–य' क ख ग छ झ ञ । ३ 'नादनिष्ट' क झ । ४ 'वायुक्ष' छ । ५ 'नादनिष्ट' क ग घ झ । ६ 'पि वाच्यम् । दो' घ झ । ७ 'कर्तव्य' घ झ । ८ 'बुद्धिना तु' ग घ झ । ९ 'हीना प्रोज्झ-न्ति' समा' स मू । १० 'ण तथा यथा' ट.ठ ड. । ११ 'स्वरूपा' ठ ड ।

१ 'न निर्व्यञ्जयति' ठ ड । २ 'यथाबल वृद्धा –अधिका अ-धिकतरा अधिकतमा, वृद्धानि वृद्धतराणि, वृद्धतमानि । एव' क ख छ ञ । ३ 'यो न्यूनो भवति तत्र तत्र रुचिरुत्पद्यते । वायौ' ख ग ञ । ४ 'तस्तत्र तेषा' घ झ. । ५ 'स्वशब्देनैव' घ झ. । ६ 'वृद्धेरपि' आ क. ।

सन्तो, वधाय-देहविघाताय स्युः। यस्मादेव ततस्ते दोषा हितचर्ययैव क्षयात्-हीनत्वाद्रक्षणीया। कुत इव? विवृद्धेरिव। यथा विवृद्धे-विशेषेण वर्धनात्ते रक्ष्यन्ते, तथा क्षयादपि रक्षणीया इति। उपजातिर्वृत्तम्।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने दोषादिविज्ञानीयाध्याय एकादशः समाप्तः ॥ ११ ॥

**आ० र०-दोषवैषम्यानुत्पादने यत्नं विधत्ते-य एव देहस्येति। हितचर्यया-पथ्याभ्यामाहारविहाराभ्याम्, चरतेर्गतिभक्षणार्थत्वात्। एवशब्देन हितचर्याया अयोग, अहितचर्यायाश्च योगो व्यवच्छिद्यते।**

**इति हेमाद्रिटीकायामायुर्वेदरसायने। दोषादीना प्रकरणं सामस्त्येन निरूपितम् ॥ ११ ॥**



द्वादशोऽध्यायः।

दोषादिविज्ञानीयादनन्तरं दोषभेदीयाध्यायारम्भः। यतो दोषभेदमन्तरेण दोषविज्ञानं सम्यङ्नोक्तं स्यात्। पूर्वस्मिन्नध्याये बहुवक्तव्यत्वाद्दोषभेदो नोक्त इत्याह—

**अथातो दोषभेदीयाध्यायं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

(गद्यसूत्रे ॥ २ ॥)

**स०**-दोषाणां भेदो-दोषभेदः, स्थाननामविभागादिभिः। तस्मै हितो दोषभेदीयः। शेषं पूर्ववत्।

**आ० र०-दोषभेदीयमध्यायं व्याख्यातुं प्रतिजानीते-अथेति। यतः पूर्वाध्याये दोषवैषम्यमुक्तम्। तच्च दोषभेदाद्बहुधा भिद्यते। दोषभेदज्ञानार्थमयमध्यायः। अत एवायं दोषभेदीयः। तद्भेदश्च स्थानकर्मावस्थाहेत्वाकृतिसाधनसयोगभेदाद्भवति। तत्र स्थानतो यथा,-पक्वाशयस्थोऽयं वायुः कटिस्थोऽयम्। कर्मतो यथा,-श्वासोच्छ्वासप्रवर्तकोऽयं विण्मूत्रप्रवर्तकोऽयम्। अवस्थातो यथा,-चितोऽयं प्रकुपितोऽयम्। हेतुतो यथा,-मिथ्यायोगप्रकुपितोऽयम्, अतियोगप्रकुपितोऽयम्। आकृतितो यथा,-स्वसलक्षणोऽयं व्यासलक्षणोऽयम्। साधनतो यथा,-स्निग्धोपशयोऽयम्, उष्णोपशयोऽयम्। सयोगतो यथा,-पित्तयुक्तोऽयं श्लेष्मयुक्तोऽयमिति। एवं पित्तादिष्वपि।**

**पक्वाशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम्।**
**स्थानं वातस्य, तत्रापि पक्वाधानं विशेषतः॥ १ ॥**

**स०**-पक्वाशयादि वातस्य स्थानम्। तत्रापि षड्विधे स्थाने विशेषेण पक्वाधानं[1] स्यात्। अन्नं पक्वमाधीयते-स्थाप्यतेऽस्मिन्निति पक्वाधानं,-पक्वाशयः। अत एव वाते बस्तिरुपक्रमः प्रधान उक्तः, मूलापकर्षणात्। सकलशरीरव्यापित्वेऽप्येषामिदं विशेषेणोक्तम्। तथा च प्रागभ्यधीष्ट (हृ. सू. अ. ११७)- "ते व्यापिनोऽपि हृन्नाभ्यो" इति। विचित्रगतित्वाच्चैषां वक्ष्यमाणप्राणादिभेदेन पृथक् स्थानकर्मनिर्देशः।

**आ० र०-तत्रादौ स्थानतो भेदः। स्थानं द्विधा,-सामान्यं विशिष्टं च। तत्रादौ सामान्यम्। तत्र वायोः स्थानमाह-पक्वाशयेति। पक्वाशयो-नाभेरधः पक्वान्नस्थानम्। कटी-श्रोणिः। सक्थि-वङ्क्षणाद्यङ्गुष्ठान्तम्। श्रोत्रं-कर्णः। स्पर्शनेन्द्रियं-त्वक्। तत्र-तेषु स्थानेषु मध्ये, पक्वाधानं-पक्वाशयो, विशेषतः स्थानम्।**

**नाभिरामाशयः स्वेदो लसीका रुधिरं रसः।**
**दृक् स्पर्शनं च पित्तस्य, नाभिरत्र विशेषतः॥ २ ॥**

**स०**-पित्तस्य नाभ्यादीनि स्थानानि। लसीका-जलसदृशी। दृक्-चक्षुः। स्पर्शनं-त्वक्। ननु, स्पर्शनेन्द्रियं वायोः स्थानमुद्दिष्टम्। तदेव कथं पित्तस्यापि स्यात्। ब्रूमः। वातसखित्वादग्नेः। वातसखो ह्यग्निः, पित्तं च वह्निरिति वचनात्। तस्मादुभयोरप्येतद्युक्तं स्थानम्। विशेषत इति। अत्र-एषु स्थानेषु मध्ये, पित्तस्य विशेषेण नाभिः स्थानम्।

**आ० र०-पित्तस्याह-नाभिरिति। आमाशयो-नाभेरूर्ध्वमपक्वान्नस्थानम्। "लसीका-स्याद्रसमलो जलप्रायस्त्वगाश्रयः।" दृक्-चक्षुः। स्पर्शनं-त्वक्। अत्र-एषु स्थानेषु मध्ये, नाभिर्विशेषतः स्थानम्।**

**उरःकण्ठशिरःक्लोमपर्वाण्यामाशयो रसः।**
**मेदो घ्राणं च जिह्वा च कफस्य, सुतरामुरः॥ ३ ॥**

**स०**-कफस्योर प्रभृतीनि जिह्वान्तानि स्थानानि। सुतरां-सुष्ठु स्थानमुरो-वक्षः।

**आ० र०-कफस्याह-उर इति। उरो-वक्षः। क्लोम-उदकवाहिस्रोतोमूलम्, हृद्दक्षिणतो मांसग्रन्थिः। पर्वाणि-सन्धयः। घ्राणं-नासा। एषु मध्ये उरो विशेषतः स्थानम्।**

अथ प्रत्येकमेतेषां दोषाणां विशिष्टस्थानाश्रयेण क्रियाभेदात् पञ्च पञ्च भेदानाह—

**प्राणादिभेदात्पञ्चात्मा वायुः**

१ 'सिश्राध्याये' ट। २ 'भेदा नोक्ता इ' ट। ३ अयं दोषभेदीयश्चरके सू० ११।१७।१९।२०।२८ अध्यायेषु, शा० १ अध्याये, चि० २८ अध्याये च, सुश्रुते सू० २१।२४ अध्याययोः, नि० १ अध्याये, उ० ६६ अध्याये च, अष्टाङ्गसङ्ग्रहे सू० २०।२२ अध्याययोश्चास्ति वर्णितः।

१ 'न, पक्व' ठ। २ 'प्रागुक्तम्' ड। ३ 'सखोऽग्नि' ट.। ४ 'पञ्चधा भेदमाह' ट।

स०–वायुरेक एव चलनस्वभाव सन् प्राणादिभि –प्राणोदानव्यानसमानापानै, भेदात्–विशेषात्, पञ्चात्मा–पञ्चस्वभाव । यथैकोऽपि देवदत्तो या या क्रिया करोति तदनुरूपामेव सञ्ज्ञा लावकपाचकादिका लभते, तद्वद्वातादय ।

आ० र०–अथ विशिष्टस्थान कर्म च, सामान्यकर्मण उत्साहादे पूर्वाध्याये निर्दिष्टत्वात्। तत्र वायोर्विशेषमाह–प्राणादिभेदादिति। प्राणादय –प्राणोदानव्यानसमानापाना । पञ्चात्मा–पञ्चविशेष ।

**प्राणोऽत्र मूर्धगः।**
**उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक् ॥ ४ ॥**
**ष्ठीवनक्षवथूद्गारनिःश्वासान्नप्रवेशकृत् ।**

स०–अत्र–एषु मध्ये, प्राणो वायुर्मूर्धग –शिरसि स्थित, उर कण्ठ च चरति। तथा, बुद्ध्यादीना धारक । तथा, ष्ठीवनादिक्रिय । ष्ठीवन–मुखस्रावोद्गार । ष्ठीवनमिति "ष्ठिवेर्ल्युटि ष्ठिविसिव्योर्दीर्घश्च" इति पृषोदरादिपाठाद्दीर्घ ।

आ० र०–प्राणस्य स्थानकर्माण्याह–प्राणोऽत्रेति। प्राणस्य मूर्धाऽवस्थितिस्थानम् । उर कण्ठश्च विचरणस्थानम्। बुद्ध्यादिधारण ष्ठीवनादिकरण च कर्म । हृदय–मनोऽधिष्ठानम्। चित्त–मन । इन्द्रियाणि–चक्षुरादीनि ।

**उरः स्थानमुदानस्य नासानाभिगलांश्चरेत् ॥ ५ ॥**
**वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ।**

स०–उदानस्य प्रधानमुर स्थानम्, नासादीश्च चरति। वाक्प्रवृत्त्यादिक्रिय । प्रयत्न –कार्येषु पदार्थग्रहणादिषूद्यम ।

आ० र०–उदानस्य स्थानकर्माण्याह–उर स्थानमिति। उदानस्योरोऽवस्थितिस्थानम् । नासादि विचरणस्थानम् । वाक्प्रवृत्त्यादिक कर्म। प्रयत्न –उत्साह । ऊर्जा–प्रीणनम्।

**व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः ॥ ६ ॥**
**गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ।**
**प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ७**

स०–व्यानो हृदये स्थित प्राधान्येन कृत्स्ने–सर्वस्मिन्, शरीरे चरति । तथा, महाजव –शीघ्रगति, प्राणाद्यपेक्षया। तथा, गत्यादिका क्रिया प्राय सर्वदेहिना तस्मिन्–व्याने, प्रतिबद्धा –तदायत्ता । गति –चङ्क्रमणम्। अपक्षेपण–अङ्गस्याधोनयनम्। उत्क्षेप –अङ्गस्योर्ध्वनयनम्। निमेष –अक्ष्णोर्निमीलनम्। उन्मेष –तयोर्विकास । आदिग्रहणेन जृम्भणान्नास्वादनविशोधनादिपरिग्रह ।

आ० र०–व्यानस्याह–व्यान इति । व्यानस्य हृदयमवस्थितिस्थानम् । सर्वशरीर विचरणस्थानम्। गत्यादय सकला क्रिया कर्म । अपक्षेपण–अङ्गस्याधोनयनम्। उत्क्षेपण–ऊर्ध्वनयनम्। तस्मिन्प्रतिबद्धा –तदेकनिष्पाद्या । महाजव –प्राणादिभ्यो वेगवान्।

**समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ।**
**अन्नं गृह्णाति पचति विवेचयति मुञ्चति ॥ ८ ॥**

स०–समानो वायुरग्निसमीपस्थ । सामान्योक्तावपि प्राधान्यात्पाचकोऽग्निर्गृह्यते। अत एवाह–कोष्ठे चरति सर्वत इत्यादि । सर्वस्मिन् कोष्ठे चरति। स चान्न गृह्णाति–अपक्वमामाशये धारयतीत्यर्थ । पचति–अग्निसन्धुक्षणाद्भक्तकार इव । विवेचयति–सहतमन्न पाकाय विभजते । मुञ्चति–शकृन्मूत्रादिरूपमध ।

आ० र०–समानस्याह–समान इति । समानस्याग्निसमीपमवस्थितिस्थानम् । सर्वकोष्ठो विचरणस्थानम् । अन्नस्य ग्रहण, गृहीत्वा पाचन, पक्त्वा सारकिट्टविवेचन, विविच्य किट्टावमोचन च कर्म। अग्निसमीप–अग्निस्थानस्य ग्रहण्याख्यस्य अदूयनवरुद्धोऽवकाश. ।

**अपानोऽपानगः श्रोणिबस्तिमेढ्रोरुगोचरः ।**
**शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रमणक्रियः ॥ ९ ॥**

स०–अपानो वायुरपान प्राधान्येनाश्रित, श्रोण्यादिचर, शुक्रादिनिष्क्रमणक्रिय । इति वातभेदा पञ्च ।

आ० र०–अपानस्याह–अपान इति । अपानस्यापानं–गुदमवस्थितिस्थानम् । श्रोण्यादि विचरणस्थानम् । शुक्रादिनिष्क्रमण कर्म । बस्ति –मूत्राशय । मेढ्र–मूत्रमार्ग । गोचरो–विचरणविषय ।

पञ्च पित्तभेदानाह—

**पित्तं पञ्चात्मकम्**

स०–पाचकरञ्जकसाधकालोचकभ्राजकभेदा पञ्च पित्तस्य ।

आ० र०–पित्तविशेषानाह–पित्तमिति । पाचकरञ्जकसाधकालोचकभ्राजकभेदात् पञ्चधा पित्तम्।

**तत्र पक्वामाशयमध्यगम् ।**
**पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥ १० ॥**
**त्यक्तद्रवत्वं पाकादिकर्मणाऽनलशब्दितम् ।**
**पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा ॥ ११ ॥**
**तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् ।**
**करोति बलदानेन पाचकं नाम तत्स्मृतम् ॥ १२ ॥**

स०–तत्र–तेषु पञ्चसु मध्ये, पक्वामाशययोर्मध्यस्थं यत्पित्त तथा पञ्चभूतात्मकत्वेऽपि सति यत्तैजसगुणोदयात्–आग्नेयगुणोत्कर्षात्, क्षपितसोमगुणत्वेन त्यक्तद्रवत्व–सञ्जातकाठिन्यम्, तथा सहकारिकारणै पाचनक्रिया प्रति सव्यापारैर्वाय्वादिभिरनुग्रहादुपकारात् यत पाकदाहादिक्रिययाऽनलशब्दित–अग्नि-

१ 'रूपा तामेव' ट । २ लावक –कर्तक । ३ 'स्थित्वा' ट । ४ 'र्द्धा व्यवस्थिति' क ञ । ५ 'श्चरन्' ठ । ६ 'रो वसतिस्था' क ख ग छ ञ । ७ 'प्रीणनम्' क ग छ ।

१ 'तेनैव नि' घ ङ । २ 'किट्टमोचन' क ख ग छ ञ. । ३ 'सम्प्रति पित्त' ट । ४ 'कत्वभे' ट । ५ 'किट्टे' घ ङ झ. । ६ 'त् पाक' ट । ७ 'दाहक्रि' ट ।

शब्दवाच्य यत्पित्त तत्पाचकमुच्यते । तच्चान्न पचति । सारकिट्टौ पृथग् विभजते–विभागीकरोति । किट्टशब्दस्य लोकाश्रयत्वाल्लिङ्गस्येति पुस्त्वम् । तत्रस्थमेव–पक्वामाशयमध्यगमेव, शेषाणा–रञ्जकादीना धातुस्थाना च, अनुग्रह–उपकार करोति । बलदानेन–सामर्थ्याधानेन, स्वस्थानस्थमेव तेषूपकुरुत इत्यर्थ ।

**आ० र०–पाचकस्य स्थानकर्माण्याह–तत्रेति । पाचकस्य पक्वामाशयमध्य–ग्रहण्याख्य स्थानम् । अन्नस्य पचन, पक्त्वा सारकिट्टविभागो, रञ्जकादिचतुष्टयानुग्रहश्च कर्म । कीदृश तत्? यत्पञ्चभूतात्मकत्वे सत्यपि तेजोभूतगुणाधिक्यात्त्यक्तद्रवत्वम् । तथा, पाकादीनामग्निकार्याणा करणादनलसञ्ज्ञयोक्तम् । एतेन पाचकापेक्षया अग्निपित्तयोरभेद, रञ्जकाद्यपेक्षया भेद इति मतद्वय व्यवस्थापितम् । तत्रस्थ–स्वस्थानस्थम् ।**

**आमाशयाश्रयं पित्तं रञ्जकं रसरञ्जनात् ।**

**स०**–यत्त्वामाशयस्थ पित्त तद्रसाख्यधातो रञ्जनात्–रागनिष्पादनात्, रञ्जकमुच्यते ।

**आ० र०–रञ्जकस्याह–आमाशयाश्रयमिति । रञ्जकस्यामाशयः स्थानम् । रसरञ्जन कर्म ।**

**बुद्धिमेधाभिमानाद्यैरभिप्रेतार्थसाधनात् ॥ १३ ॥**
**साधकं हृद्गतं पित्तं**

**स०**–यत्तु हृद्गतं–हृदयस्थ पित्त तद्बुद्ध्यादिभि करणभूतैरभिप्रेतस्यार्थस्य बाह्यग्रहणस्मरणादिरूपेण साधनात् साधकमुच्यते । वर्तमानकाले या मनोर्थसशयस्य निश्चय कर्तुं तदर्थाध्यवसायोपारूढा सा–बुद्धि । बुद्धिविशेषो–मेधा ।

**आ० र०–साधकस्याह–बुद्धीति । साधकस्य हृदय स्थानम् । बुद्ध्यादिद्वारेणाभीष्टार्थसाधन कर्म । अभिमान –अहङ्कार ।**

**रूपालोचनतः स्मृतम् ।**
**दृक्स्थमालोचकं**

**स०**–दृष्टिस्थ पित्त रूपालोचनात्(नत )–अन्तस्तारकयो स्थित तदायत्तरूपग्रहणशक्तित्वात्, आलोचकमुच्यते ।

**आ० र०–आलोचकस्याह–रूपालोचनत इति । आलोचकस्य दृक्–दृष्टि स्थानम् । रूपालोचन कर्म ।**

**त्वकस्थं भ्राजकं भ्राजनात्त्वचः ॥ १४ ॥**

**स०**–त्वचो भ्राजनात्–दीपनात्, भ्राजक नाम पित्तम् । एतच्च पित्तमभ्यङ्गलेपपरिषेकादीन् पाचयति ।

**आ० र०–भ्राजकस्याह–त्वक्स्थमिति । भ्राजकस्य त्वक् स्थानम् । त्वचो भ्राजन–प्रकाशन, कर्म । सङ्ग्रहे तु ( सू अ २० )–"तदभ्यङ्गपरिषेकालेपादीन् पाचयति" इत्युक्तम् ।**

**श्लेष्मा तु पञ्चधा**

**स०**–श्लेष्मा तु पञ्चधा,–पञ्चप्रकार ।

**आ० र०–श्लेष्मविशेषानाह–श्लेष्मेति । अवलम्बकक्लेदकबोधकतर्पकश्लेषकभेदात् पञ्चधा श्लेष्मा ।**

तदेव पञ्चप्रकारत्वमाह—

**उरःस्थः स त्रिकस्य स्ववीर्यतः ।**
**हृदयस्यान्नवीर्याच्च तत्स्थ एवाम्बुकर्मणा ॥ १५ ॥**
**कफधाम्नां च शेषाणां यत्करोत्यवलम्बनम् ।**
**अतोऽवलम्बकः श्लेष्मा**

**स०**–स –श्लेष्मा, उरसि तिष्ठतीत्युर स्थ , त्रिकस्य–पृष्ठाधा(ध)राख्यस्य, स्ववीर्यत –स्वप्रभावात्, यत्–यस्मात्, अवलम्बन करोति–स्वकर्मणि तस्य सामर्थ्यमुत्पादयति । हृदयस्यान्नवीर्यात्–अन्नवीर्येणाभ्यवहृतादन्नाद्रसरूपतापरिणतात् तद्वीर्येण–तद्बलेनावलम्बन करोति । चशब्दात् स्ववीर्येणापि हृदयस्यावलम्बन करोति । किन्त्वन्नवीर्यादतिशयेन यथाऽवलम्बन हृदयस्य करोति न तथा स्ववीर्यत । यतोऽन्नरस पूर्व हृदि स्थितिं कृत्वा ततो व्यानविक्षिप्त सर्व शरीर याति, तस्माद्विशेषेण हृदयस्यान्नवीर्यादवलम्बन युक्तम् । आगमोऽपि–"हृदय मनस स्थानमोजसश्चिन्तितस्य च । मासपेशीचयो रक्तपद्माकारमधोमुखम् ॥ योगिनो यत्र पश्यन्ति सम्यग् ज्योति समाहिता । रसो य स्वच्छता यात स तत्रैवावतिष्ठते ॥ ततो व्यानेन विक्षिप्त कृत्स्न देहं प्रपद्यते ।" इति । तथा, तत्स्थ एव–उर स्थ एव, एष श्लेष्मा शेषाणा कफस्थानानामम्बुकर्मणा–क्लेदसश्लेषादिलक्षणेन जलव्यापारेण, अवलम्बन करोति । अत –अस्माद्यथोक्ताद्धेतो , अवलम्बक. श्लेष्मेत्युच्यते ।

**आ० र०–अवलम्बकस्य स्थानकर्माण्याह–उर स्थ इति । अवलम्बकस्य उर स्थानम् । त्रिकाद्यवलम्बन कर्म । त्रिकस्य–पृष्ठाधा(ध)रस्य, स्ववीर्यत –आत्मप्रभावेण, अवलम्बनं करोति । हृदयस्यान्नवीर्यात्, चकारात्स्ववीर्याच्च । हृदयावलम्बनेऽन्नवीर्यं सहकारि, "आत्मवीर्येण अन्नरससहितेन" इति सुश्रुतवचनात् ( सू अ २१।१४ ) । तत्स्थ एव शेषाणा–कण्ठादीनाम्, कफधाम्नां–कफस्थानानाम्, अम्बुकर्मणा–जलव्यापारेण क्लेदनतर्पणपूरणादिना, अवलम्बन करोति । केचित्तु बाहुग्रीवास्थित्रयसङ्घात त्रिकमाहु । तदसत् । त्रिकशब्दस्य पृष्ठवंशाधर एव रूढत्वात् । रूढिस्तु योगाद्बलीयसी । आसन्नत्व चाप्रयोजकम्, दवीयसामपि कफधाम्नामवलम्बनोक्ते ।**

**यस्त्वामाशयसंस्थितः ॥ १६ ॥**
**क्लेदकः सोऽन्नसङ्घातक्लेदनात्**

**स०**–य पुन श्लेष्मा आमाशये स्थित , स क्लेदक इत्युच्यते । कुत ? अन्नसङ्घातक्लेदनात्कारणात् ।

१ 'कमित्युच्यते' ट । २ 'स्येत्यत्र' ट । ३ 'गतिद्वय' घ झ । ४ 'बाह्यस्य ग्र' ट । ५ 'तदध्यवसायारूढा' ट । ६ 'पित्तमुच्यते' ट. । ७ 'श्लेष्माऽपि प' क ख ञ. ।

१ 'त्रिक पृष्ठाधरे त्रये' 'पृष्ठवशाधरे त्रिकम्' इति मेदिनीविश्वप्रकाशौ, अमरश्च । २ 'च समुच्चये,स्व' ट । ३ 'श्चित्तजस्य' ट. । ४ 'वशाधार' क ख घ छ झ ञ । ५ दवीयसा–सुदूराणाम् । 'दवीयश्च दविष्ठ च सुदूरम्' इत्यमर । ६ 'सश्रित.' क ख ञ. ।

आ० र०-क्लेदकस्याह-यस्त्विति । क्लेदकस्यामाशय स्थानम् । अन्नसङ्घातक्लेदन कर्म ।

**रसबोधनात् ।**
**बोधको रसनास्थायी**

स०-रसनास्थायी-जिह्वास्थो, बोधक इत्युच्यते, रसबोधनात् कारणात् ।

आ० र०-बोधकस्याह-रसबोधनादिति । बोधकस्य रसना-जिह्वेन्द्रिय स्थानम् । रसबोधन कर्म ।

**शिरःसंस्थोऽक्षतर्पणात् ॥ १७ ॥**
**तर्पकः**

स०-शिर स्थस्तर्पक इत्युच्यते, अक्षतर्पणाद्धेतो ।

आ० र०-तर्पकस्याह-शिर सस्थ इति । तर्पकस्य शिर स्थानम् । इन्द्रियतर्पण कर्म ।

**सन्धिसंश्लेषाच्छ्लेषकः सन्धिषु स्थितः ।**

स०-सन्धिषु[1] स्थित श्लेष्मा श्लेषक इत्युच्यते, सन्धिसश्लेषात् कारणात् ।

आ० र०-श्लेषकस्याह-सन्धिसश्लेषादिति । श्लेषकस्य सन्धय स्थानम् । सन्धिसश्लेषण कर्म ।

एव दोषाणा स्थानान्युक्त्वोपसहरन्नाह[3]—

**इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम् ॥१८॥**
**[4]व्यापिनामपि जानीयात्कर्माणि च पृथक्पृथक् ।**

स०-प्रायेण-बाहुल्येन, दोषाणामविकृतात्मना-अप्रच्युतस्वभावानाम्, इति-उक्तप्रकाराणि, स्थानानि व्यापिनामपि-सकलशरीरचराणामपि, जानीयात् । वैद्य इति शेष । तथा, कर्माणि पृथक्पृथक्-प्रत्येक कृत्वा, जानीयात् ।

आ० र०-प्रकरणार्थमुपसहरति-इति प्रायेणेति । प्रायेण-बाहुल्येन, यद्यपि सर्वशरीरव्यापिनस्तथाऽप्येषु स्थानेष्वतिशयेन तिष्ठन्तीत्यर्थ । अविकृतात्मना-अप्रच्युतस्वभावानाम्, विकृतात्मनां तु न स्थाननियम । इति स्थानकर्मप्रकरणम् ।

विकृतिरेषा वृद्धि क्षयश्च । वृद्धिरपि द्विविधा,-चयप्रकोपभेदेन । दोषादिविज्ञानीये सामान्येन वृद्धिक्षयलक्षणमुक्तम् । सम्प्रति चयप्रकोपरूपं वृद्धिनिदान सङ्क्षेपेण सूचयन्नाह—

**उष्णेन युक्ता रूक्षाद्या वायोः कुर्वन्ति सञ्चयम् १९**
**शीतेन कोपमुष्णेन शमं स्निग्धादयो गुणाः ।**

स०-उष्णेन गुणेन विरुद्धेनोपहिता रूक्षादय -प्रथमाध्यायोक्ता ( श्लो ११ ) षड्वातगुणा, वायोश्चय कुर्वन्ति, न कोपमुष्णस्य विरुद्धत्वात् । त एव च रूक्षादय शीतगुणोपहितास्तत्सदृशत्वाद्वायो कोप कुर्वन्ति । उष्णेन युक्ता स्निग्धादयो गुणा वायो शम कुर्वन्ति, विपरीतत्वात् ।

आ० र०-अथावस्था । सा च द्वेधा,-साम्य वैषम्य च । वैषम्य द्वेधा,-क्षयो वृद्धिश्च । वृद्धिर्द्वेधा,-चयप्रकोपभेदेन । चयप्रकोपक्षयसाम्यभेदाच्चतस्रोऽवस्था । तत्र क्षयसाम्ये प्रशमशब्देनोपात्ते[2], निष्पाद्यमानस्य प्रशमस्य क्षयरूपत्वात् निष्पन्नस्य साम्यरूपत्वात् प्रशमहेतूना प्रमादातियोगे पुन क्षयरूपत्वात्, क्षयहेतूनामपि प्रशम[3]शब्दत्वाच्च । तत्र चयादिनिदानम् । तत्र वायोराह-उष्णेनेति । उष्णेन गुणेन युक्ता रूक्षादयो वायो सञ्चय कुर्वन्ति, त एव शीतेन युक्ता. कोपम् । उष्णेन युक्ता स्निग्धादय शम कुर्वते ।

**शीतेन युक्तास्तीक्ष्णाद्याश्चयं पित्तस्य कुर्वते ॥ २० ॥**
**उष्णेन कोपं, मन्दाद्याः शमं शीतोपसंहिताः ।**

स०-एव पित्तस्य शीतेन गुणेन युक्तास्तीक्ष्णादयो गुणाश्चय कुर्वन्ति । त एव तीक्ष्णादयो गुणा उष्णेन सहिता कोप कुर्वन्ति । मन्दादयो गुणा शीतगुणयुक्ता शर्म कुर्वन्ति, विपरीतत्वात् ।

आ० र०-पित्तस्याह-शीतेनेति । शीतेन गुणेन युक्तास्तीक्ष्णाद्या पित्तस्य चय कुर्वते, त एव उष्णेन युक्ता. कोपम् । शीतेन युक्ता मन्दाद्या शम कुर्वते ।

**शीतेन युक्ताः स्निग्धाद्याः कुर्वते श्लेष्मणश्चयम् २१**
**उष्णेन कोपं, तेनैव गुणा रूक्षादयः शमम् ।**

स०-शीतगुणोपहिता स्निग्धादय कफस्य चय कुर्वते । उष्णेन युक्तास्त एव स्निग्धादय कफस्य कोपं कुर्वते । तेनैव-उष्णेन, युक्ता रूक्षादय कफस्य च शम कुर्वन्ति । कफस्य हि शीतगुणेन सदृशेनापि स्निग्धादिगुणयुक्तेन स्त्यानत्वाच्चय. स्यात् । विपरीतेनोष्णेन विलयनात् कोप । स एवोष्णो यदा रूक्षादियुक्तो भवति तदा विपरीतत्वात् शमो भवति ।

अ० र०-कफस्याह-शीतेनेति । शीतेन युक्ता स्निग्धाद्याः कफस्य चय कुर्वते[4], त एवोष्णेन युक्ता. कोपम् । तेन-उष्णेन सहिता रूक्षाद[5]यो गुणा शम कुर्वते ।

इदानी चयादीना लक्षणान्याह—

**चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु ॥ २२ ॥**
**विपरीतगुणेच्छा च**

[6]स०-स्वधाम्नी[7]ये स्थाने दोषस्य या वृद्धि स चय उच्यते । चितस्य दोषस्य लिङ्गमाह-प्रद्वेष इत्यादि । यदा हि वातश्चितो भवति तदा रूक्षादिषु तद्गुणसामान्येषु प्रद्वेष[8] स्यात् । तद्विपरीतगुणेषु स्निग्धादिष्वभिलाषे स्यात् । एव कफपित्तयोश्चितयोर्व्याख्येयम्[9] । ननु, "प्रद्वेषो वृद्धिहेतुषु" इत्येकमेव

१ 'सन्धिसस्थित' आ ठ. । २ 'सन्धिस्थित' ठ ड । ३ 'नान्यभिधायोप' ट । ४ इद श्लोकार्धमरुणदत्तसम्मतम् । ५ 'थाऽप्यतिशयेनैषु तिष्ठ' क.ख.छ.ञ. ।

१ 'ता सदृ' ठ ड । २ 'नोक्ते' घ झ । ३ 'महेतुत्वा' ग घ छ झ । ४ 'ते, उष्णेन कोपम्' घ झ । ५ 'दय शम' क ख छ ञ । ६ 'इदानीं चित० यल्लिङ्ग तदाह' ट । ७ 'णस-मानेषु' ट. । ८ 'षो जायते' ठ. । ९ 'र्व्याख्या' ठ.ड. ।

लक्षण दोषचयसत्तानुमापक कर्तुं न्याय्यम् । यदि वा "विपरीतगुणेच्छा च" इत्येतत् । किं द्वयोरुपादानेन? अत्रोच्यते । कदाचिदचितोऽपि दोषो वाताख्य स्वप्रमाणस्थ क्षीणो वा यस्य स वातवृद्धिहेतून् रूक्षादींश्च द्वेष्टि, अपि तु तानिच्छति, सात्म्यवशात् । यथा,–गर्भिणी स्त्री दोहदवशात् । तदेव व्यभिचारदर्शनात् "प्रद्वेषो वृद्धिहेतुषु" "विपरीतगुणेच्छा च" इति द्वयमपि कर्तव्यम् । तेन यदा तुल्यकाल पुरुषस्य वातसमानगुणेषु तद्वृद्धिहेतुषु प्रद्वेषो जायते, वातगुणप्रतिपक्षेषु तत्क्षपणहेतुषु चाभिलाष, तदा सम्यक् निश्चीयते वातस्योपचिति, इति द्वयमप्येतदुक्तम् ।

**आ० र०–अथ चयादिलक्षणम् । तत्र चय लक्षयति–चयो वृद्धिरिति । दोषस्य वृद्धि -चय । सा च प्रथम स्वधाम्न्येव भवति । यावानेवाशय सञ्चारवता दोषेण व्याप्तस्तावानेव ति सञ्चारेण व्याप्यते, स च सहतिरूपत्वात् सञ्चयाख्य । यदा सर्व एवाशयो व्याप्यते तदा वृद्धिहेतुषु–समानगुणेषु प्रद्वेष उत्पद्यते, स प्रकोपप्रारम्भरूपत्वात् प्रकोपाख्य । तत परस्याशय प्रविशति तदा विपरीतगुणेच्छा, चकारात्समानगुणेषु द्वेषश्च । स प्रसररूपत्वात् प्रसराख्य ।**

**कोपस्तून्मार्गगामिता ।**
**लिङ्गानां दर्शनं स्वेषामस्वास्थ्यं रोगसम्भवः ॥ २३ ॥**
**स्वस्थानस्थस्य समता विकारासम्भवः शमः ।**

**स०**–उन्मार्गगामिता–स्वस्थान त्यक्त्वा दोषस्य यत् पुनर्मार्गान्तरगमनम्, स कोपं इत्युच्यते । कोपस्य तु लिङ्गमाह–लिङ्गाना स्वेषा यथायथ दर्शन–उद्भव । वातादीना कुपिताना यानि लिङ्गानि दोषादिविज्ञानीयेऽभिहितानि वातव्याधिनिदाने च वक्ष्यन्ते, तेषा लक्षणानामुपलब्धि, [ वैद्यनातुरेण च । यत्तत् कोपस्य लिङ्गम् । तथा, अस्वास्थ्य–उत्पित्सुरोगेच्छया सामान्येन देहमनोभिभूतत्वम् । तथा, रोगस्य–ज्वरादे, सम्भवो–जन्म । ननु, "लिङ्गाना दर्शन स्वेषाम्" "अस्वास्थ्यम्" "रोगसम्भव" इति किं त्रितयमुद्दिष्टम्? एकेनैव दोषकोपावगमादेकमेवोपदेष्टुं युक्तम् । नैवम् । व्यभिचारदर्शनात् । तथा हि वक्ष्यति पाण्डुरोगचिकित्सिते ( श्लो ४६)– "रूक्षशीतगुरुस्वादुव्यायामबलनिग्रहै । कफसम्मूर्च्छितो वायुर्यदा पित्तं बहि क्षिपेत् ॥" इत्यारभ्य यावत् "पित्ते शाखा समाश्रिते ।" इति । तदेवमेष कामलाख्यो रोग पित्तलिङ्गदर्शनादपि न पित्तस्य कोपमनुपयाति । अत एव पित्तप्रकोपकर भृशाम्लतीक्ष्णकटुकादि चिकित्सितमत्र निर्दिष्टम् । अस्वास्थ्यमित्येतदपि न दोषकोपस्य निश्चित लिङ्गम् । तथा हि–मानसेनापि भयशोकादिनाऽस्वास्थ्यं दृश्यते । तथा, आगन्तवोऽपि रोगा दोषकोपमन्तरेणैवोत्पद्यमाना दृश्यन्ते । तस्माद्रोगसम्भवादपि दोषकोपोऽयमनिश्चित । तदेव लक्षणत्रितयेनैवानेन दोषकोपो निश्चेतु शक्यत इति त्रितयमप्येतद्वक्तव्यम् ।

स्वस्थानस्थस्येत्यादि । स्वस्थान–यथोद्दिष्ट पक्वाशयादि । स्वस्थानावस्थितस्यैव वातादिदोषस्य या समता–स्वप्रमाणत्वम्, विकारस्य–रोगस्य, असम्भव –अनुत्पत्ति, स शम उच्यते । ]

**आ० र०–कोप लक्षयति–कोपस्त्विति । उन्मार्गगामिता–स्वमार्गादन्येन मार्गेण गमनम्,–कोप । तत्र यदा प्रथम स्थानिनमभिभूय अन्यस्थानव्याप्तिस्तदा स्वेषा लिङ्गाना–रौक्ष्यादीना दर्शनम्, स समन्तादन्यस्थानाश्रयणात् स्थानसश्रयाख्य । ततो विकुर्वाणो ज्वरादिरूपेणाभिव्यज्यते तदा अस्वास्थ्य–प्रकृत्यन्यथात्वम्, स रोगरूपेणाभिव्यक्तत्वात् व्यक्त्याख्य । ततस्तमेव रोगमवस्थान्तराण्यनुभवन्ननुबध्नाति तदा रोगसम्भव । सम्भव–दीर्घकालानुवर्तनमिति यावत् । सोऽवस्थाभेदरूपत्वात् भेदाख्य । एताश्च षडवस्था सुश्रुतेन स्पष्टमुक्ता ( सू अ. २१।३६ )–"सञ्चय च प्रकोप च प्रसर स्थानसश्रयम् । व्यक्ति भेद च यो वेत्ति दोषाणा स भवेद्भिषक् ॥" तत्प्रयोजन च "सञ्चयेऽपहृता दोषा लभन्ते नोत्तरा गती । ते तूत्तरासु गतिषु भवन्ति बलवत्तरा ॥" इति ।**

प्रशम लक्षयति–स्वस्थानस्थस्येति । स्वस्थानस्थत्व समत्वमविकृतत्व चेति मिलित प्रशमलक्षणम् । रसवर्णस्पर्शाद्यन्यत्व–विकार ।

[ इदानी वातादीना चयप्रकोपप्रशमा यस्मिन् काले जायन्ते त दर्शयन्नाह— ]

**चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ॥ २४ ॥**
**वर्षादिषु तु पित्तस्य, श्लेष्मण· शिशिरादिषु ।**

**स०**–वातस्य ग्रीष्मादिषु त्रिषु यथासङ्ख्य चयप्रकोपप्रशमा जायन्ते । ग्रीष्मे वायोश्चयः, वर्षासु प्रकोप, शरदि प्रशम इति । एवमग्रेऽपि योज्यम् । वर्षादिष्वित्यादि । अत्रापि त्रिष्विति वर्तते । वर्षाशरद्धेमन्तेषु त्रिषु पित्तस्य चयप्रकोपप्रशमा भवन्ति । तथा, शिशिरादिषु त्रिषु–शिशिरवसन्तग्रीष्मेषु, श्लेष्मणश्चयप्रकोपप्रशमा भवन्ति ।

**आ० र०–चयादीना कालमाह–चयप्रकोपप्रशमा इति । वायोर्ग्रीष्मे चय, वर्षासु प्रकोप, शरदि प्रशम । पित्तस्य तु वर्षासु चय, शरदि प्रकोप, हेमन्ते प्रशम । श्लेष्मण शिशिरे चय., वसन्ते प्रकोप, ग्रीष्मे प्रशम ।**

१ 'गुणे द्वे' ग घ झ । २ 'कोप ।' ठ.ड. । ३ [ ] इति ट. पुस्तक एव पाठ ।

१ 'सम्भवन–दी' क ख ग ञ । 'सततभवन–दी' घ झ । २ 'त्ति स भवेद्भिषगुत्तम' ग ञ झ । ३ [ ] इति ट पुस्तक एव पाठ । ४ 'च' अ । ५ 'त्रिषु कालेषु ग्रीष्मवर्षाशरत्सु चयप्रकोपप्रशमा भवन्ति । तथा वर्षादिषु वर्षाशर' इति क्वचित् । ६ 'कफस्य' घ झ ।

ननु, मरुतो ग्रीष्मे चयो न युक्त, यतस्तस्मिन्काले लघु रूक्षा ओषधयो भवन्ति । तथा, वर्षासु पित्तचयो न युक्त, जलानामोषधीना चाम्लपाकत्वात् । तथा, श्लेष्मण शिशिरे चयो न युक्त, तदा ह्यपि ओषधयश्च स्निग्धा भवन्ति कालश्च शीत । इति कोप एवोपपन्न ।इत्यस्मिन् पर्यनुयोग इदमाह—

**चीयते लघुरूक्षाभिरोषधीभिः समीरणः ॥ २५ ॥**
**तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ।**
**अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम् ॥ २६ ॥**
**पित्तं याति चय कोपं न तु कालस्य शैत्यतः ।**
**चीयते स्निग्धशीताभिरुदकौषधिभिः कफः ॥ २७ ॥**
**तुल्येऽपि काले देहे च स्कन्नत्वान्न प्रकुप्यति ।**

स०–ग्रीष्मकाले वातो लघुरूक्षाभिरोषधीभिर्देहे चादानकालेनाभावात्तद्विधे–लघुरूक्षे, तद्विधो–लघुरूक्ष, समीरण इति समानगुणत्वात् पवनस्य कोप प्राप्त, स निषिध्यते "कालस्यौष्ण्यात्" इत्यनेन । एव पित्तस्य वर्षासु कोप, "न तु कालस्य शैत्यत" इत्यनेन निषिध्यते ।

आ० र०–कालनियमे युक्तिमाह–चीयत इति । ग्रीष्म आहारस्य देहस्य च लघुरूक्षत्वे करोति । ताभ्या लघुरूक्षो वायुश्चीयते, न तु कुप्यति, उष्णेन प्रतिबद्धत्वात् । वर्षाकाल आहारस्याम्लविपाकत्व करोति । तेनाम्लविपाक पित्त चीयते, न तु कुप्यति, शीतेन प्रतिबद्धत्वात् । शिशिर आहारस्य देहस्य च स्निग्धशीतत्वे करोति । ताभ्यां स्निग्धशीत कफश्चीयते, न तु कुप्यति, शीतेन घृतवद्धनीभूतत्वात् ।

**इति कालस्वभावोऽयमाहारादिवशात्पुनः ॥ २८ ॥**
**चयादीन्यान्ति सद्योऽपि दोषा· कालेऽपि वा न तु ।**

स०–इति–पूर्वोक्त, अय–वाय्वादिचयादि, कालस्य स्वभाव । आहारादिवशात्–अन्नपानसामर्थ्यात्, पुनर्दोषा स द्योऽपि–तत्क्षणादेव कालमनपेक्ष्यैव, चयादीन्–चयप्रकोपप्रशमान् यान्ति । तस्मादेव चाहारादिवशात् यथास्व चयादिकालेऽपि वा दोषा न तु चयादीन् यान्ति । तस्मात् कालादाहारादीना प्राधान्यमित्यर्थ । आहारादीत्यत्रादिशब्देन रसायनवाजीकरणवमनविरेचनादयो गृह्यन्ते ।

आ० र०–कालादाहारादीना बलवत्त्वमाह–इतीति । आदिशब्देन विहारो देशश्च । सद्योऽपि–स्वकाल विनाऽपि, यान्ति । स्वकालेऽपि न यान्ति ।

एव दोषाणा चयादीन् प्रदर्श्य, व्याप्तिनिवृत्तिवैचित्र्य कोपज दर्शयितुमाह—

**व्याप्नोति सहसा देहमापादतलमस्तकम् ॥ २९ ॥**
**निवर्तते तु कुपितो मलोऽल्पाल्पं जलौघवत् ।**

१ 'विकुप्यति' झ. । २ 'लस्याभावात' ट । ३ 'बलत्व' ख ञ । 'बलवत्तामा' घ झ । 'बलित्व' छ. ।

स०–मल कुपित सहसा–शीघ्रमेव, आपादतलमस्तक व्याप्नोति,–पादतलादारभ्य यावन्मस्तकमित्यर्थ । आङ्मर्यादाभिविध्योर्विभक्त्यर्थेऽव्ययीभाव । निवर्तते पुनरल्पाल्प–स्तोक स्तोकमिति । जलौघवत्–यथा गिरिनद्यादीना जलपूर समविषम सहसैव व्याप्नोति, निवर्तते तु स्तोक स्तोकमिति ।

आ० र०–प्रकोपप्रशमयो· क्षिप्रचिरनिष्पाद्यत्वमाह–व्याप्नोतीति । सहसा–वेगेन । मलो–दोष । अल्पाल्प–चिरेण । जलौघवत्–नदीपूरवत् । स हि वेगेन वर्धते चिरेण ह्रसते ।

ननु, प्रतिरोग निदानलक्षणचिकित्सितमानन्त्याद्वक्तुमशक्यम् । तच्चाविदित्वा कश्चिदत्र तथा यत्न कुर्यादित्याशङ्क्याह—

**नानारूपैरसङ्ख्येयैर्विकारै· कुपिता मलाः ॥ ३० ॥**
**तापयन्ति तनुं तस्मात्तद्धेत्वाकृतिसाधनम् ।**
**शक्यं नैकैकशो वक्तुमतः सामान्यमुच्यते ॥ ३१ ॥**

स०–यत्तदोर्नित्यसम्बन्धात् यस्मादिति लभ्यते । यस्मान्नानारूपै –अनेकप्रकारै, असङ्ख्येयै –गणना समतीतै, विकारै –ज्वरादिभि, मला –वातपित्तश्लेष्माण, कुपितास्तनु–देह, तापयन्ति–दु खयन्ति । तस्मात्तद्धेत्वाकृतिसाधन शक्य नैकैकशो वक्तु–अयमस्य विकारस्य हेतुरियमाकृतिरिद लक्षणमिदमस्य साधन–चिकित्सितमिति । अत सामान्यमुच्यते ।

आ० र०–अथ हेतु । तद्विशेषाणा नि शेष निरूपयितुमशक्यत्वात्सामान्य वाच्यम् । तदेवाह–नानारूपैरिति । विकाराणामसङ्ख्यत्व प्रतिविकार च रूपाणाम् । अतस्तद्धेत्वादि प्रकृतिविकार वक्तुमशक्यम्, साधारण तूच्यते ।

अत्रैव हेत्वन्तरमाह—

**दोषा एव हि सर्वेषा रोगाणामेककारणम् ।**
**यथा पक्षी परिपतन् सर्वत· सर्वमप्यहः ॥ ३२ ॥**
**छायामत्येति नात्मीया यथा वा कृत्स्नमप्यद· ।**
**विकारजातं विविधं त्रीन् गुणान्नातिवर्तते ॥ ३३ ॥**
**तथा स्वधातुवैषम्यनिमित्तमपि सर्वदा ।**
**विकारजात त्रीन्दोषान्**

स०–सर्वेषा रोगाणा यस्माद्दोषा एवैककारणम् । एक–प्रधान च तत्कारण–निमित्तमेककारणम् । यदि वा सर्वेषा रोगाणा दोषा एक–तुल्य कारणम्, समान कारणमित्यर्थ । एवशब्दोऽवधारणार्थ । दोषा एव कारणम्, नापर किञ्चिद्वस्तुजातम् । अत्र दृष्टान्तमाह–यथेत्यादि । पक्षी–प्राचिकादि, यथा सर्वत –समन्तात्, परिपतन्–भ्रमन्, सर्वमप्यह –सकलमपि दिवसम्, आत्मीया छाया नात्येति–नातिक्रामति, तया विना क्षणमप्यसौ नोपलभ्यत इत्यर्थ । तथा, अन्यदपि निदर्शनमाह–यथा वेत्यादि ।

१ 'चतामाह' क ख ग ञ । २ 'दन् कश्चिदत्र कथ यत्न' ट । ३ 'नित्याभिम' ट । ४ 'ज्वरै' ठ ड । ५ 'ख्यापयितु' क ग ञ । ६ 'ति । करणत्वे तृतीया । वि' ग. । ७ 'रणे' ठ ड. । ८ प्राचिका–श्येनस्त्री ।

यथा वा कृत्स्न–निरवशेषम्, एतद्विकारजात–स्थावरजङ्गमादिभेदभिन्न जरायुजाण्डजादिभेदभिन्न वा, विविध–नानाप्रकार, त्रीन् गुणान्–सत्त्वरजस्तम सञ्ज्ञान्, नातिवर्तते–नात्येति, त्रिभिरेतैर्विरहित न जातुचिद्भवतीत्यर्थ । तथा स्वधातवित्यादि । धातवो–दोषधातुमला शरीरधारणसामान्यात्, तेषा वैषम्य–स्वलक्षणतोऽन्यथात्वम्, स्वधातुवैषम्य निमित्त यस्य तद्विकारजात त्रीन् दोषानातिक्रामति, त्रिदोषरहित न सम्भवतीत्यर्थ । धातुवैषम्य च प्रतिरोगमन्यादृशत्वान्नानाविधम् । यत्तु येन धातुवैषम्येण जन्यते, तत्तस्य स्व–स्वीय भवति। येषा तु रोगाणा देवग्रहादि निमित्त न तेषु तथा दोषानुबन्ध, आगन्तुकत्वात्। आगन्तुकनिजयोर्ह्ययमेव भेद,–यदागन्तुकेषु प्रथम रोगोद्भूति पश्चाद्दोषानुबन्ध, निजेषु प्राग्दोषानुबन्ध इति। ये तु व्याचक्षते,–स्वे च ते धातवश्च तेषा वैषम्यमिति । तेषा नायमर्थ प्रतिपादित स्यात् । स्वग्रहण चातिरिच्यते। यत शरीरान्तरावस्थायिनो दोषा वातादय शरीरान्तरे रोग जनयितु नालम्। तस्मात्पूर्वमेव व्याख्यान श्रेय ।

**आ० र०**–तत्र दोषहेतुरेव साधारणो रोगहेतु । तत्र युक्तिमाह–दोषा एवेति । दोषा एव कारणम्, दोषा कारणमेवेत्येवैकशब्दाभ्यामुच्यते । अत्रार्थे दृष्टान्तद्वयम्,–यथा पक्षी देशभेदेऽपि छायासम्बन्ध न त्यजति, तथा विकारो दोषसम्बन्धम्। यथा च महदादिपृथिव्यन्त कार्य गुणसम्बन्ध न त्यजति ।

कि दोषजमेव दोषसम्बन्ध न त्यजति? नेत्याह–तथेति । स्वधातुवैषम्यनिमित्तमिति यो धातुर्यस्य रोगस्याधिष्ठानत्वेनोक्त स तस्य स्वधातु, तस्य वैषम्य–क्षयो वृद्धिर्विकृतत्वमुन्मार्गत्व वा, तन्निमित्त यस्य तत्तथा । रसजादीनामपि दोषैर्विना नोत्पत्ति ।

**तेषां कोपे तु कारणम् ॥ ३४ ॥**
**अर्थैरसात्म्यैः संयोगः कालः कर्म च दुष्कृतम् ।**
**हीनातिमिथ्यायोगेन भिद्यते तत्पुनस्त्रिधा ॥ ३५ ॥**

**स०**–तेषा–वातादीना, कोपे कारणम्,–असात्म्यै –अनुचिते, अर्थै –शब्दस्पर्शरूपरसगन्धाख्यै, श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानामिन्द्रियाणा य सयोग, तथा काल –शीतोष्णवर्षालक्षणो दुष्ट, तथा कर्म–चैहिकमन्यजन्मज च, यद् दुष्कृत–अशुभम्, एतत्त्रय तेषा दोषाणा कोपे हेतु । तुशब्द समुच्चये । न केवल रूक्षादयो वातादीना कोपे कारणम्, यावदसात्म्येन्द्रियार्थसयोगादिरपि । एतच्च (तत्)–पूर्वोक्तं दोषकोपकारणमसात्म्येन्द्रियार्थसयोगादिभेदेन त्रिधा भिन्नमपि, पुन –भूय, त्रिधा–त्रिप्रकार, भिद्यते। कथम्? हीनातिमिथ्यायोगभेदेन ।

१ 'घु दोषा' ठ । २ यथा दोषवैषम्येण जाता व्याधयो दोषसम्बन्ध न त्यजन्ति, तथा धातुवैषम्यजा अपि दोषसम्बन्ध न त्यजन्तीत्यर्थ. । ३ 'त्तमपि यो' क.ग.घ.ङ्ञ.ञ. । ४ 'कोपका' ङ. ।

**आ० र०**–दोषकोपहेतुमाह–तेषामिति । स च त्रिविध,–असात्म्यविषयसेवा दुष्कालो दुष्कर्म चेति । सोऽपि प्रत्येक त्रिविध,–हीनयोगोऽतियोगो मिथ्यायोगश्चेति ।

तानेव हीनातिमिथ्यायोगान् दर्शयन्नाह—

**हीनोऽर्थेनेन्द्रियस्याल्पः संयोगः स्वेन नैव वा ।**
**अतियोगोऽतिसंसर्गः, सूक्ष्मभासुरभैरवम् ॥ ३६ ॥**
**अत्यासन्नातिदूरस्थं विप्रियं विकृतादि च ।**
**यदक्ष्णा वीक्ष्यते रूप मिथ्यायोगः स दारुणः ॥ ३७ ॥**
**एवमत्युच्चपूत्यादीनिन्द्रियार्थान् यथायथम् ।**
**विद्यात्**

**स०**–अर्थेन–शब्दादिना, स्वेनेन्द्रियस्य–श्रोत्रादे, अल्पो य सयोग स हीन – हीनयोग । नैव वेति । अथवा सर्वसर्विकया तेनार्थेन न सयोग, सोऽपि हीनयोग । तस्यैवेन्द्रियस्य स्वेनार्थेन योऽतिससर्ग –अतिसेवालक्षण, स तस्य स्वेनार्थेनातियोग । तथा, सूक्ष्मभासुरभैरवमित्यादि यदक्ष्णा वीक्ष्यते–नयनेनालोक्यते, स तस्य चक्षुरिन्द्रियस्य स्वेनार्थेन मिथ्यायोग । एवमनया दिशा सूक्ष्मभासुरभैरवम्, तथा अत्यासन्नातिदूरस्थ विप्रिय विकृतादि च यदक्ष्णा रूप वीक्ष्यते, स दारुणो मिथ्यायोग, तिमिरादिहेतुत्वात्। एव–अनया चक्षुषो रीत्या, अन्यानपीन्द्रियार्थान् यथास्वमिन्द्रियाणामत्युच्चपूत्यादीन् मिथ्यायोगरूपान् विद्यात् । यदाऽत्युच्चपरुषेष्टविनाशभीषणाद्यनिष्ट शब्द श्रोत्रेन्द्रियेण गृह्यते, तदा श्रोत्रेन्द्रियस्य स्वेनार्थेन शब्दाख्येन मिथ्यायोग । यदा पूतिविष्ठाद्यनिष्टो गन्धो घ्राणेन्द्रियेण गृह्यते, तदा घ्राणेन्द्रियस्य स्वेनार्थेन गन्धाख्येन मिथ्यायोग । यदा स्नानानुलेपनादीना शीतोष्णादीना च स्पृश्यानामक्रमसेवनेन स्पर्श स्पर्शनेन्द्रियेण गृह्यते, तदा स्पर्शनेन्द्रियस्य स्वेनार्थेन स्पर्शाख्येन मिथ्यायोग । तथा, रसनेन्द्रियेण यो रसोऽपरिपाट्या युज्यते, तथाऽपथ्यद्रव्यनिविष्टोऽपि यो रसो रसनेन्द्रियेण गृह्यते, स तस्य रसनेन्द्रियस्य स्वेन रसाख्येनार्थेन मिथ्यायोग ।

**आ० र०**–तत्रासात्म्यविषयसेवायास्त्रैविध्य लक्षयति–हीनोऽर्थेनेति । इन्द्रियस्य–चक्षुरादे, स्वेनार्थेन–रूपादिना, अल्प सयोगो नैव वा योगो–हीनयोग, विषयोत्कण्ठाया अनिवृत्तिर्हीनत्वमित्यर्थ । उत्कण्ठानिवृत्तावपि सेवन–अतियोग । सूक्ष्मादिरूपसेवा, अत्युच्चादिशब्दसेवा, पूत्यादिगन्धसेवा, अत्यम्लादिरससेवा, अतिशीतादिस्पर्शसेवा च,–मिथ्यायोग । भासुर–अतिदीप्तम् । भैरव–भयङ्करम् । विप्रिय–द्विष्टम् ।

**कालस्तु शीतोष्णवर्षाभेदात्त्रिधा मतः ॥ ३८ ॥**

१ 'नानाह' ठ । २ 'सुदारुण' अ क घ । ३ 'हीनो योग' ठ ट । ४ 'एवमिति स्वेन निर्दिष्टया रीत्या' ट. । ५ 'वर्षभेदा' ख घ.ङ्ञ.ञ.स.ढ. ।

**स हीनो हीनशीतादिरतियोगोऽतिलक्षणः।**
**मिथ्यायोगस्तु निर्दिष्टो विपरीतस्वलक्षणः॥ ३९॥**

स०–काल पुन शीतोष्णवर्षाभेदेन त्रिधा–त्रिप्रकारो[1] मतो मुनीनाम्। तत्र हेमन्तशिशिरलक्षण –शीत । उष्णो–वसन्त ग्रीष्मलक्षण । प्रावृट्शरल्लक्षणो[2]–वर्षाख्य । स च कालो हीनशीतादिर्हीनयोगलक्षण । अतियोगोऽतिमात्रयोगलक्षण । विपरीत स्व–शीतोष्णवर्षाख्य, लक्षण यस्य–कालस्य, स विपरीतस्वलक्षणो मिथ्यायोग । गुणगुणिनोरभेदोपचारात् काल एवमुच्यते। तत्र यथा,–हेमन्ते शीतस्याल्पत्व हीनो योग, तस्मिन्नेव हेमन्तेऽतिशैत्यमतियोग, तस्मिन्नेव हेमन्त औष्ण्य[3] मिथ्यायोग । उपलक्षण चेदम्। एव शरद्वसन्तयोरपि यन्मन्दवर्षोष्णत्व स्वलक्षण तद्यदा हीनतर स्यात्, सोऽपि हीनयोग । एवमतियोगा(गमिथ्या)योगयोरपि योज्यम्।

आ० स०–दुष्कालस्य त्रैविध्य लक्षयति–कालस्तु शीतोष्णवर्षाभेदादिति[4]। शीतोष्णवर्षाभेदात्त्रिविधस्य कालस्य शीतादीनामल्पत्व–हीनयोग, आधिक्य–अतियोग, वैपरीत्य–मिथ्यायोग ।

**कायवाक्चित्तभेदेन कर्मापि विभजेत्त्रिधा।**
**कायादिकर्मणो[5] हीना प्रवृत्तिर्हीनसञ्ज्ञकः[6]॥ ४०॥**
**अतियोगोऽतिवृत्तिस्तु[7], वेगोदीरणधारणम्।**
**विषमाङ्गक्रियारम्भपतनस्खलनादिकम्॥ ४१॥**
**भाषणं सामिभुक्तस्य रागद्वेषभयादि च।**
**कर्म प्राणातिपातादि दशधा यच्च निन्दितम्॥४२॥**
**मिथ्यायोग· समस्तोऽसाविह वाऽमुत्र[8] वा कृतम्।**

स०–यथा कालस्त्रिधा निरूपित, तथा कर्मापि कायवाक्चित्तभेदेन त्रिप्रकार विभजेत्[9]। तत्र कायकर्मणस्तथा वाक्कर्मणस्तथा चित्तकर्मणो हीना या प्रवृत्ति स हीनसञ्ज्ञको योग । अतिप्रवृत्तिस्त्वतियोग । कायादिकर्मणो मिथ्यायोगमभिकृत्याह–वेगोदीरणेत्यादि । "वेगोदीरणधारणम्" इत्यारभ्य यावत् "पतनस्खलनादिकम्" यदेतत् कायिक कर्म, तस्य कर्मण एवरूपस्य या प्रवृत्ति स कायकर्मणो मिथ्यायोग । विषमाङ्गे क्रिया–कर्म, विषम आरम्भ –उभयलोकविरुद्ध, तथा, विषमपतनम्, विषमस्खलनम्, आदिशब्देन विषमगमनादीना ग्रहणम् । सामिभुक्तस्य–अर्धभुक्तस्य, यद्भाषण–जल्पनम्, एवरूपा या प्रवृत्ति स वाक्कर्मणो मिथ्यायोग । रागद्वेषभयादि यदेतन्मानस कर्म, तस्य कर्मण एवरूपा या प्रवृत्ति स चित्तकर्मणो मिथ्यायोग । तथा, दिनचर्याध्यायोक्तयत्प्राणातिपातादि दशधा–दशप्रकार, कर्म निन्दित–अशुभ निर्दिष्ट "हिंसास्तेय" इत्यादिना ग्रन्थेन, तच्च यथायथ कायवाक्चित्ताना[10] कर्मणा मिथ्यायोग । समस्तोऽसाविह वाऽमुत्र वा कृत–अस्मिन् लोके कृतमन्यत्र वा लोके कृत–आचरित, सर्वमेव मिथ्यायोग ।

१ 'कार । तत्र' ट ड । २ 'वृड्लक्ष' ट । ३ 'ऊष्मा मि' ड । ४ 'वर्षभेदा' ख घ झ ञ. । ५ 'कर्मणा' आ । ६ 'सञ्ज्ञिका' ठ । ७ 'वृत्तिश्च' ठ । ८ 'चामुत्र' अ क ख घ झ ञ । ९ 'विभज्यते' ट । १० 'चित्तकर्म' ठ.।

आ० स०–दुष्कर्मणस्त्रैविध्य लक्षयति–कायवाक्चित्तभेदेनेति । कायिकवाचिकमानसभेदात्त्रिविधस्य कर्मण प्रवृत्तेरल्पत्व–हीनयोग, आधिक्य–अतियोग, वेगोदीरणादिरूपत्व–मिथ्यायोग । धारण–वेगधारणम्। विषमै –दुःस्थितैरङ्गै, क्रियाया –चेष्टाया आरम्भ । सामिभुक्तस्य भाषण–अर्द्धभोजने मौनत्याग । प्राणातिपातादि–हिंसादि, "हिंसास्तेयान्यथाकामम्" इत्यादिना दिनचर्यायामुक्तम् (श्लो २१)। इह–अस्मिन् जन्मनि । अमुत्र–प्राग्जन्मनि । सङ्ग्रहे तु (सू अ २२)–"त एतेऽतियोगादय सामान्यतोऽनुपशयलक्षणा । सर्वो वा प्रज्ञापराध एवाय यदेषामविवर्जनम्[1]। अथ कर्मकाला पुन सम्यग्योगेनोपशयाद्भूयिष्ठ स्वास्थ्यहेतव । तत्रापि रसवर्ज्या विषया यथायथमिन्द्रिय बाधन्तेऽनुगृह्णन्ति च। शेषा[2] रसकर्मकालास्तु सर्व देहम्। अपि च। सर्वभावाना भावाभावौ नान्तरेण योगातियोगादीन् व्यवस्येत्। सर्वेषा पुनर्विकाराणा निदानदोषदूष्यविशेषेभ्यो भावाभावविशेषा भवन्ति । यदा ह्येते त्रयो निदानादिविशेषा[3] नान्योन्यमनुबध्नन्तीषद्वाऽनुबध्नन्त्यबला वा, न तदाऽभिनिर्वर्तन्ते[4] व्याधयश्चिराद्वाऽभिनिर्वर्तन्ते तनवो वा भवन्त्यसम्पूर्णलिङ्गा वा । विपर्ययेण तु विपरीता । तथाऽन्य प्रधान एव रोगोऽन्यस्य प्रधानस्य हेतुर्भवति । यथा,–ज्वरो रक्तपित्तस्य, रक्तपित्त वा ज्वरस्य, तौ श्वासस्य, प्लीहा जठरस्य, ते[5] श्वयथो, अर्शांसि गुल्मोदरातीसारग्रहणीनाम्[6], प्रतिश्याय कासज्वरयो, तौ क्षयस्य, क्षय शोषस्य । एकश्चापचारो निमित्तमेकस्य व्याधे, बहूना च तथा बहव । तद्वदेक लिङ्गम्। एवमेव[7] प्रशमेऽभ्युपाय । तथा स एवान्यस्य प्रकोपे । तस्मात्तानवहित सम्यगागमादिभि परीक्षेत । तत्रागमतो रोगमेकैकमेवप्रकोपणमेवयोनिमेवमात्मानमेवमधिष्ठानमेववेदनमेवशब्दरूपगन्धस्पर्शरसमेवपूर्वरूपमेवमुपद्रवमेववृद्धिस्थानक्षयान्वितमेवमुदर्कमेवनामानम्। तस्मिन्निय प्रतीकारस्य प्रवृत्तिरथवा[8] निवृत्ति.। प्रत्यक्षतस्त्वातुरस्य यथास्वमिन्द्रियैर्वर्णसंस्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्दिता[9]दिकमन्त्रकूजनमङ्गुल्यादिसन्धिस्फुटन[10] देहे[11] शकृद्व्रणादिर्गन्ध[12] शीतोष्णस्तम्भ[13]स्पन्दनश्लक्ष्णखरस्पर्श[14]

१ 'विसर्जे' क ख ग ञ । २ 'शेषास्तु सर्वदेहम्' ग घ । ३ 'षात् ना' स ढ । ४ 'न्ते न वा भ' क ख ग घ झ ञ । ५ 'तत्' स ढ । ते–प्लीहाजठरे। ६ 'णीदोषाणाम्' क ख ग ञ । ७ 'एवमेक प्र' क ख ग ञ । 'एकमेव' घ झ । ८ 'रन्यथा' स ढ । ९ 'ताधिक्यम' स ढ । १० 'दिषु सन्धिषु स्फु' स स । ११ 'देहश' घ झ स ढ । १२ 'न्ध सुखशी' स ढ । १३ 'स्तम्भास्पन्द' क ख ञ । 'स्तब्धत्वमस्पन्द' घ झ । 'स्तम्भसस्पन्दश्ल' स ढ । १४ 'रसस्प' घ झ ।

च प्रकृतिविकृतियुक्तम् । आस्यरसं तु प्रश्नेन, तथा सुच्छर्देदु च्छर्दत्व मृदुक्रूरकोष्ठता स्वप्नदर्शनमभिप्राय जन्माम यप्रवृत्तिर्नक्षत्र द्विष्टेष्टसुखदु खानि च । तथा वय प्रत्यक्षेण च । अनुमानतस्तु यूकापसर्पणेन शरीरवैरस्यम्, मक्षिकोपसर्पणेन माधुर्यम्, तथाऽग्नि जरणशक्त्या, बल व्यायामशक्त्या, गूढलिङ्ग व्याधिमुपशयानुपशयत , दोषप्रमाणमपचारविशेषेण, आयुष क्षय रिष्टै , प्रकृतिसत्त्वसारसात्म्यबलान्यनुशीलनेनेति । भवन्ति चात्र । ज्ञानबुद्धिप्रदीपेन यो नाविशति योगवित् । आतुरस्यान्तरात्मान न स रोगाश्चिकित्सति ॥ द्वाविमौ व्याधितौ व्याधिस्वरूपस्याप्रकाशकौ । तद्यथैको गुरुर्व्याधि सत्त्वदेहबलाश्रयात् ॥ लघुर्व्याधिवदाभाति लघुर्व्याधिस्त्वतोऽन्यथा । बाह्यार्वयवमात्रेण तयोर्मुह्यति बालिश ॥ ततोऽल्पमल्पवीर्यं वा विप रीतमतोऽथवा । पथ्य विपर्यये युञ्जन् प्राणान् मुष्णाति रोगिणाम् ॥ ज्ञानाशेन न हि ज्ञान कृत्स्ने ज्ञेये प्रवर्तते । बुभुत्सेत भिषक् तस्मात्तत्त्व तत्रानुशीलनात् ॥ अभियुक्तस्तु सतत सर्वमालोच्य सर्वथा । न जातु स्खलति प्राज्ञो विष मेऽपि क्रियापथे ॥ आगन्तुरन्वेति निज विकार निजस्तथाऽऽगन्तुमतिप्रवृद्धं । तत्रानुबन्ध प्रकृति च सम्यक् ज्ञात्वा ततः कर्म समारभेत ॥" इति ।

**निदानमेतद्दोषाणां, कुपितास्तेन नैकधा ॥ ४३ ॥**
**कुर्वन्ति विविधान् व्याधीन् शाखाकोष्ठास्थिसन्धिषु**

**स०**–निदानमेतद्दोषाणा 'कोपे' इति वाक्यशेष । कुपितास्तेन–निदानेन, नैकधा । किं तर्हि ? अनेकप्रकारेण, व्याधीन् विविधान्–नानाप्रकारान् कुर्वन्ति । कुपिता दोषा इति वचन-( विभक्ति ) विपरिणामेन सम्बन्ध । क्व व्याधीन् कुर्वन्ति ? इत्याह–शाखेत्यादि । शाखाश्च कोष्ठश्चास्थीनि च सन्धयश्च तेषु ।

**आ० र०–दोषहेतुमुपसहरति–निदानमेतदिति ।**

दोषहेतो रोगहेतुत्वमाह–कुपितास्तेनेति । तेन–निदानेन । नैकधा विविधानिति हेत्वानन्त्यात् कोपानन्त्यम् । तस्माद्रोगानन्त्यम् ।

दोषा एव कारणमित्युक्तम् । तन्निर्वाहार्थमाह–शाखाकोष्ठास्थिसन्धिष्विति । शाखादीनामाधारत्वम्, न कारणत्वम् ।

शाखेति किमुच्यते ? इत्याह—

**शाखा रक्तादयस्त्वक् च बाह्यरोगायनं हि सा तत् ४४**

१ 'तिलक्षण द्वि' ख ञ । २ 'क्षत्रद्वि' स द्व । ३ 'मानेन तु' क ख ग ञ । ४ 'रस्य वै' स मू । ५ 'न शरीरमाधु' स. स । ६ 'रुर्व्या' ख ञ. । ७ 'धिस्ततो' ख घ झ ञ स मू । 'धिरतो' स स । ८ 'वगममा' क ख ग ञ । ९ 'तमथापि वा' ख ञ । 'त ततोऽन्यथा' घ झ । १० 'द्धम्' घ स मू । ११ 'निन्दितेन' ड । १२ 'नेकेन प्र' ट । १३ 'अनेकधा' क ख झ ञ । १४ 'हि सा' हेमाद्रि ।

**तदाश्रया मषव्यङ्गगण्डालज्यर्बुदादयः ।**
**बहिर्भागाश्च दुर्नामगुल्मशोफादयो गदाः ॥ ४५ ॥**

**स०**–शाखा रक्तादय षड्धातवस्त्वक् च । तद्बाह्यरोगायन,–बाह्याना रोगाणामयन–स्थानम् । हिशब्दो यस्मादर्थे । यस्माद्बाह्याना रोगाणामयनम्, अतस्तदाश्रया मषव्यङ्गादयो रोगा बहिर्भागा उच्यन्ते । आदिशब्देन विसर्पविद्रध्यादीना परिग्रह । दुर्नामेत्यादि । बहिर्भागाश्चेत्यत्र चशब्दो भिन्नक्रम , शोफादय इत्यस्मादनन्तर द्रष्टव्य । दुर्नामगुल्मशोफादयश्च बहिर्भागा इत्यर्थ ।

**आ० र०–तत्र शाखां व्याचष्टे–शाखेति । रक्तादयो धातवस्त्वक् च–शाखा । सा च बाह्यरोगायन,–बहिर्मार्गो रोगाणाम् । ते च रोगा मषादय । मषव्यङ्गौ–क्षुद्ररोगेषु । गण्डालजी–मुखरोगेषु । बहिर्भागा इति दुर्नामादीना विशेषणमन्तर्भागनिवृत्त्यर्थम् ।**

**अन्तःकोष्ठो महास्रोत आमपक्वाशयाश्रयः ।**
**तत्स्थाना॰ च्छर्द्यतीसारकासश्वासोदरज्वराः ॥४६॥**
**अन्तर्भागं च शोफार्शोगुल्मवीसर्पविद्रधि ।**

**स०**–कोष्ठ कथ्यते अन्त , तथा महास्रोत , तथा आमपक्वाशयाश्रय । तत्स्थाना –अन्तर्भागाश्रया च्छर्द्यादयो रोगा । न केवलमेते एव छर्द्यादयोऽन्तर्भागाश्रया यावच्छोफार्शोगुल्मवीसर्पविद्रध्यादीना अन्तर्भागत्व च । शोफादीना विद्रध्यन्ताना समाहारद्वन्द्वनिर्देशेनैव सम्बन्ध ।

**आ० र०–कोष्ठ व्याचष्टे–अन्त कोष्ठ इति । अन्त –अन्तर्मार्गो रोगाणाम् । महास्रोतो–महाविवरम् । आमाशयो–यत्राममन्न तिष्ठति । पक्वाशयो–यत्र पक्वम् । तत्स्थाना –कोष्ठाश्रिता । अन्तर्भागमिति शोफादीना विशेषण बहिर्भागनिवृत्त्यर्थम् । समाहारद्वन्द्वादेकत्वनपुसकत्वे ।**

इदानीं मध्यम रोगमार्ग वक्ति—

**शिरोहृदयवस्त्यादिमर्माण्यस्थ्नां च सन्धयः ॥४७॥**
**तन्निबद्धाः शिरास्नायुकण्डराद्याश्च मध्यमः ।**
**रोगमार्ग॰ स्थितास्तत्र यक्ष्मपक्षवधार्दिताः ॥ ४८ ॥**
**मूर्धादिरोगाः सन्ध्यस्थित्रिकशूलग्रहादय॰ ।**

**स०**–शिरोहृदयादीनि मध्यमो रोगमार्ग । अस्थ्ना च सन्धय इत्येव निर्देशेनेद बोधयति,–नात्र द्वयं विवक्षितमस्थीनि च सन्धयश्चेति, किं तर्हि ? अस्थ्ना सम्बन्धिन सन्धय इति । सन्धयो ह्यन्येऽपि सन्ति । तथा च वक्ष्यति ( हृ शा अ ४।३८ )–"मासास्थिस्नायुधमनीसिरासन्धिसमागम ।" इति । तन्निबद्धा,–तेषु–अस्थिसन्धिषु, निबद्धा,–सलग्ना इत्यर्थ ।

१ 'मशव्य' आ ख घ झ ञ । २ 'क्रमे' ड । ३ 'मशादय । मशव्यङ्गे' घ झ । 'मसादय । मसव्य' ग । 'माषादय । माष' ख ञ । ४ 'द्रव्यपि अन्तर्भाग च' इति क्वचित् । ५ 'तु' अ आ हेमाद्रि । ६ 'अस्थिषु' ठ ड ।

शिरा स्नायव कण्डराश्च आदयो ( आद्या ) येषा धमनीकूर्चादीना ते । चशब्दात् पूर्वोक्ताश्च । तत्र–मध्यमे रोगमार्गे, यक्ष्मादयो गदास्त्रिकशूलग्रहाद्यन्ता । मूर्धादीत्यत्रादिशब्देन हृदयबस्त्यादिपरिग्रह । सन्ध्यस्थित्रिके शूलानि, सन्ध्यस्थित्रिके ग्रहा इति योज्यम् । आदिशब्देन पक्षग्रहादयो वातविकारा गृह्यन्ते । यक्ष्मणोऽत्र मर्मास्थिसन्ध्यधिष्ठानत्वात्पूर्वं निर्देश । वक्ष्यति हि ( हृ नि अ ५।५ )–"तैरुदीर्णोऽनिल पित्त कफं चोदीर्य सर्वत । शरीरसन्धीनाविश्य तान् शिराश्च प्रपीडयन् ॥" इत्यादि ।

**आ० र०–अस्थिसन्धीन् व्याचष्टे–शिरोहृदयेति । मर्माणि मर्मनिबद्धा शिरादयश्च, अस्थिसन्धय । ते च मध्यमो रोगमार्ग । तदाश्रिता यक्ष्मादय । यक्ष्मा–राजयक्ष्मा । पक्षवध –एकाङ्गरोग । अर्दित –एकायाम, ग्रह –स्तब्धत्वम्, सन्ध्यस्थित्रिकेष्वेव ।**

इदानीं वायो कर्माण्याह—

**स्रंसव्यासव्यधस्वापसादरुक्तोदभेदनम् ॥ ४९ ॥**
**सङ्गाङ्गभङ्गसङ्कोचवर्तहर्षणतर्षणम् ।**
**कम्पपारुष्यसौषिर्यशोषस्पन्दनवेष्टनम् ॥ ५० ॥**
**स्तम्भ· कषायरसता वर्ण· श्यावोऽरुणोऽपि वा ।**
**कर्माणि वायोः**

**स०**–स्रंसो–हन्वादिसन्धेर्भ्रंश । व्यसनं–व्यासो, विक्षेपण मङ्गप्रत्यङ्गादेर्यथाऽऽक्षेपकादिषु । व्यध –ताडनमिव मुद्गरादिना । स्वाप –सुप्ति , कर्मण्यचैतन्यम् । सदन–साद , अङ्गाना क्रियास्वसामर्थ्यम् । रुक्–सतत शूलम् । तोदो–विच्छिन्न शूलम् । भेदन–भेदो, विदारणमिवाङ्गस्य । सङ्गो–मूत्रपुरीषादे स्वाशयेभ्योऽनि सारो वाक्सङ्गादयश्च । अङ्गाना–जङ्घोरुप्रभृतीना, भङ्ग इव भङ्ग –चूर्णनमिव,–अङ्गभङ्ग । सङ्कोचन–सङ्कोच , शिरादीनाम् । वर्तन–वर्त , पुरीषादीना पिण्डीकरणम् । हर्षण–रोम्णामूर्ध्वीभाव । तर्षण–तर्ष , तृट् । कम्प –अतिवेपनम् । स्पन्दन हि–किञ्चिच्चलनम् । पारुष्य–परुषत्वम् । सौषिर्य–अस्थ्नाम् । शोष –शोषणम् । वेष्टन–ग्रथनमिवाङ्गस्य । स्तम्भो–बाहूरुजङ्घादीना सङ्कुचनाद्यभाव । कषायरसता–कषायरसास्वादत्वम् । वर्ण श्यावोऽरुणोऽपि वा–श्यावारुणौ वर्णावित्यर्थ । एतानि वायो कर्माणि ।

**आ० र०–अथाकृति । तत्र वातरोगाणां लक्षणमाह–स्रंसव्यासेति । स्रंस –शैथिल्यम् । व्यास –असङ्कोचत्वम् । व्यध –सूचीविद्धस्येव व्यथा । स्वाप –स्पर्शाज्ञानम् । साद –स्वकार्याक्षमत्वम् । रुक्–शूलम् । तोद –तोत्रेणेव व्यथा । भेदन–भिद्यमानस्येव व्यथा । सङ्ग –अवरोध । अङ्ग –उन्मार्गगमनम्, अङ्गेर्गत्यर्थत्वात् । भङ्गो–**

१ 'ग्रहादय इ' ट । २ 'त्रिकशूलादय ।' क ख ग ञ । ३ 'ङ्गादिश्च' ठ । ४ तोत्र–अङ्कुश ।



**वक्रता । सङ्कोच –अप्रसार्यत्वम् । वर्त –पिण्डितत्वम् । हर्षण–कण्टकितत्वम् । तर्षण–पिपासा । कम्प –चलनम् । पारुष्य–रूक्षत्वम् । सौषिर्य–सरन्ध्रत्वम् । शोष –शुष्कत्वम् । स्पन्दन–स्फुरणम् । वेष्टन–वलनम् । स्तम्भ –निष्क्रियत्वम् ।** कषायरसता–रसान्तरेऽपि कषायग्रहणम् । श्याव –कपिशः । अरुण –ईषद्रक्त । स्रसादीनि कुपितवायो कर्माणि ।

अथ पित्तस्याह—

**पित्तस्य दाहरागोष्मपाकिताः ॥ ५१ ॥**
**स्वेदः क्लेदः स्रुतिः कोथः सदनं मूर्च्छनं मदः ।**
**कटुकाम्लौ रसौ वर्णः पाण्डुरारुणवर्जितः ॥ ५२ ॥**

**स०**–दाहादीनि पित्तस्य कर्माणि । सर्वाङ्गीणस्तापो–दाह । रागो–लौहित्यम् । ऊष्मा–औष्ण्यम् । पाकिता–पाककर्तृत्वम्, अजीर्णेषु व्रणेष्वन्ने च । स्वेदन–स्वेद । क्लेद –शोणितादिविकार । स्रुति –स्राव । कोथ –क्लेदस्यातिशय·, अविच्छिन्नत्वम् । सदन–साद । मूर्च्छन–भ्रम । मदो–वक्ष्यमाणो रोगविशेष । रसौ–आस्वादौ, कटुकाम्लौ । वर्ण पाण्डुरारुणाभ्यामन्य –शुक्ललोहितवर्णनिषेधेन तच्छेषनानावर्णसम्भव सूच्यते ।

**आ० र०–पित्तरोगाणां लक्षणमाह–पित्तस्येति । दाह –सन्ताप । रागो–रञ्जनम्, वर्णान्तरोपमर्देन स्ववर्णापादनम् । ऊष्मा–उष्णत्वम् । पाकिता–पाचकत्वम् । स्वेदो–घर्म । क्लेदो–मलार्द्रत्वम् । स्रुति –स्राव । कोथ –पूतीभाव । सदन–साद । मूर्च्छन–मोह । मदो–मद्यादिभिरिव मत्तता । कटुक –तिक्तो रस , "कषायतिक्तमधुर वातादिषु मुख क्रमात् ।" इति वचनात् ।**

श्लेष्मकर्माण्याह—

**श्लेष्मण· स्नेहकाठिन्यकण्डूशीतत्वगौरवम् ।**
**बन्धोपलेपस्तैमित्यशोफापक्त्यतिनिद्रताः ॥ ५३ ॥**
**वर्णः श्वेतो रसौ स्वादुलवणौ चिरकारिता ।**

**स०**–कफस्य स्नेहादीनि कर्माणि । स्नेह –स्निग्धम् । काठिन्य–अमृदुत्वम् । कण्डू –खर्जू· । शीतत्व–शीतसद्भाव । गौरव–गुरुत्वम् । बन्ध –स्रोतसाम् । अस्थ्यादीनामुपलेप । स्तैमित्य–गात्राणामपटुत्वम् । कायेवर्ण शुक्ल । रसौ च मधुरपटू । चिरकारिता–कार्यादौ विश्रब्धत्वम् । ननु, वायोरमूर्तत्वाद्वर्णरसत्वोपलब्धिरनुपपन्ना । अमूर्तस्य हि वर्णरसौ दूरोत्सारितौ । नैतदस्ति । न हि सर्वाणि कार्याणि कारणसदृशान्येव भवन्ति । तथा चेन्द्रियेभ्यो जडेभ्यो बुद्धेरजडाया उत्पत्तिर्दृष्टा । तस्मात् कारण-

१ 'रसौ द्वौ कटुकश्चाम्लश्च मुखस्थौ भवेताम् । वर्ण· शरीरे पाण्डुरारुणवर्जितोऽन्य सर्वो नीलपीतभेदभिन्न उपलभ्यते ।" इति चन्द्र । २ 'पक्तवम्' घ ङ । ३ 'कुथितत्वम्' घ ङ । ४ 'मदादि' ख घ ञ । ५ 'तिक्त , कषा' घ ङ । ६ चरकेऽपि ( चि० अ० ८।५९ )—"कषायतिक्तमधुरैर्विद्यान्मुखरसै क्रमात् । वाताद्यै" इति वचनम् । ७ 'स्निग्धत्वम्' ट । ८ 'रसानामुप' ट, ।

सदृशानि कार्याणीति प्रायिकमेतत्, अचिन्त्यत्वाच्च द्रव्यप्रभावस्य। वायोः सकाशात् कषायरसता श्यावारुणवर्णोत्पत्तिश्चान्वयव्यतिरेकसिद्धा कथमिव निवार्यताम्। इत्येवं दोषाणां कर्माण्युपदिष्टानि। तद्विकाराश्च सङ्ग्रहे उक्ताः। तथा च तद्ग्रन्थः [1](सू. अ. २०)—"अशीतिर्वातजा रोगाश्चत्वारिंशच्च[2] पित्तजाः। विंशतिः श्लेष्मजाश्चैव स्थूला नानात्मजा मताः॥१॥ नखभेदः पादशूलं सुप्तिर्भ्रंशो विपादिका। खुडो गुल्फग्रहो जानुविश्लेषो जानुकुञ्चनम्॥२॥ पिण्डिकोद्वेष्टनं सादश्चोर्वोः स्तम्भश्च गृध्रसी। पाङ्गुल्यं भ्रंशशूलं च गुदे स्तम्भस्तु मेहने॥३॥ मुष्काक्षेपः श्रोणिभेदो वङ्क्षणानाह एव च। उदावर्तोऽथ विड्भेदः पार्श्वपृष्ठत्रिकग्रहाः[4]॥४॥ खञ्जवामनकुब्जत्वं हृद्द्रवोदरवेष्टकौ[5]। हृन्मोहो वक्षनिस्तोदः[6] शोषोद्घातौ[7] तथोरसः॥५॥ बाहुशोषो हनुग्रीवामन्यास्तम्भौष्ठभेदनम्। दन्तभेदोऽथ शैथिल्यं कण्ठोध्वसोऽथ[8] वाग्ग्रहः॥६॥ कषायास्यत्वमूकत्वे मुखशोषो रसाज्ञता। घ्राणानाहोऽज्ञता गन्धेऽशब्दोच्चैःश्रवणं तथा॥७॥ बाधिर्यं कर्णशूलं च वर्त्मस्तम्भनकुञ्चनम्। तिमिरं चाक्षिशूलं च भ्रूव्युदासोऽथ नेत्रयोः॥८॥ ललाटशङ्खभेदौ च केशभूस्फुटनं[9] तथा। शिरोरुजाऽर्दितं जृम्भा प्रलापो वेपथुर्भ्रमः॥९॥ एकाङ्गव्याधिरायामः पक्षाघातोऽपतन्त्रकः[10]। दण्डकः स्वप्ननाशश्च ग्लानिः पारुष्यरूक्षते[11][12]॥१०॥ विषादोऽ[13]स्थानवस्थानमरुणश्यामवर्णता। इत्यशीतिः समाख्याता रोगा वातसमुद्भवाः॥११॥ अन्तर्दाहो विदाहश्च प्लोषौषौ दवथुर्दवः। अत्यूष्मा चासदाहश्च स्वेदोऽस्यम्लकधूमकौ॥१२॥ रक्तक्लेदोऽङ्गगन्धश्च गात्रावयवशातनम्। त्वङ्मासदरणं[14] मासक्लेदश्[15]चर्मदलं तथा॥१३॥ रक्तविस्फोटकः कोठः पित्तासृग्रक्तमण्डले। नीलिका कामला कक्ष्या[16] गात्रे हरितपीतता॥१४॥ पूतितिक्तास्यता तृष्णा लोहगन्धास्यता तथा। जीवादानमतृप्तिश्च प्रवेशस्तमसस्तथा॥१५॥ गलास्यगुदमेढ्राक्षिपाको हारिद्रताऽपि च। नखाक्षिमूत्रशकृतां, चत्वारिंशत्तु पित्तजाः॥१६॥ स्तैमित्यं गौरवं तृप्तिरालस्यमतिनिद्रता। तन्द्राऽऽस्यस्रावमाधुर्ये प्रलेपो हृदयस्य च॥१७॥ सादः कण्ठप्रलेपश्च श्लेष्मोद्गिरणमेव च। मलाधिक्यमतिस्थौल्यं धमनी[17] प्रतिसञ्चयम्॥१८॥ उदर्दो गलगण्डश्च शैत्यं श्वेतावभासता। विण्मूत्रनखनेत्राणां शुक्लता च कफामयाः॥१९॥ यथास्थूलं विकाराणां चत्वारिंशमिदं शतम्[1]। हृदादौ शूलवद्दाहो योऽन्तर्दाहः स कीर्तितः॥२०॥ पाणिपादासमूलेषु[2] सन्तापो विविधस्तु यः[3]। स विदाह इति प्रोक्तो, दाहः प्रादेशिकस्तु यः॥२१॥ अग्न्यर्चिषेव निःखेदः स प्लोषः परिकीर्तितः। ओषः[4] सर्वाङ्गिकस्तीव्रो दाहः खेदारतिप्रदः॥२२॥ दवथुश्चक्षुरादिभ्यस्तीव्र ऊष्मा प्रवर्तते। मुखौष्ठताल्वुषु दवश्चाम्लोद्गिरणमम्लकः[5]॥२३॥ धूमायनं शिरोघ्राणकण्ठताल्वुषु धूमकः। प्रमीलकस्तु स्तैमित्यं गुरुताऽङ्गस्य गौरवम्॥२४॥ आहारानभिलाषस्तु तृप्तिः स्याद्विषयाग्रहः। निद्रार्तस्येव तन्द्रा स्याच्छेषाः प्रथितनामकाः॥२५॥

**आ० र०—श्लेष्मरोगाणां लक्षणमाह—श्लेष्मण इति। स्नेहः—स्निग्धत्वम्। बन्धः—सश्लेषः। उपलेपो—लिप्तत्वम्। स्तैमित्य—आलस्यम्। शोफः—श्वयथुः। अपक्तिः—अपाकः। चिरकारिता—चिरेण रोगवृद्धिः। सङ्ग्रहे तु (सू. अ. २०)—"अथ कुपिता वातादयो नानाविधैर्विकारैः शरीरमुपतापयन्ति[6]। आविष्कृततमास्तु वायोरशीतिर्विकाराः, चत्वारिंशत् पित्तस्य, विंशतिः श्लेष्मणः। तत्र वातविकाराः, तद्यथा,—नखभेदो।१। विपादिका।२। पादशूलम्।३। पादभ्रंशः।४। सुप्तपादता[7]।५। वातखुडता।६। गुल्फग्रहः।७। पिण्डिकोद्वेष्टनम्।८। गृध्रसी।९। जानुभेदो।१०। जानुविश्लेषः।११। ऊरुसादः।१२। ऊरुस्तम्भः।१३। पाङ्गुल्यम्।१४। गुदभ्रंशो।१५। गुदार्तिः[8]।१६। वृषणाक्षेपो[9]।१७। मेढ्रस्तम्भो[10]।१८। वङ्क्षणानाहः।१९। श्रोणिभेदो।२०। विड्भेदः।२१। उदावर्तः।२२। खञ्जत्वम्।२३। कुब्जत्वम्।२४। वामनत्वम्।२५। त्रिकग्रहः।२६। पृष्ठग्रहः।२७। पार्श्वावमर्दनम्[11]।२८। उदरावेष्टो।२९। हृन्मोहो।३०। हृद्द्रवो।३१। वक्षउद्धर्षो[12]।३२। वक्षउपरोधः।३३। वक्षस्तोदो।३४। बाहुशोषो।३५। ग्रीवास्तम्भो।३६। मन्यास्तम्भः।३७। कण्ठोध्वसो[13]।३८। हनुस्तम्भः[14]।३९। तोल्वोष्ठभेदो[15]।४०। दन्तभेदो[16]।४१। दन्तहर्षो।४२। दन्तशैथिल्यम्।४३। मूकत्वम्।४४। वाक्सङ्गः।४५। प्रलापः।४६। कषायास्यता।४७।**

---

१ सङ्ग्रहे वातजादिविकारा गद्यमयेन ग्रन्थेन वर्णिताः। इह तु पद्यमयेन वर्णिता ये वर्तन्ते, सा सर्वाङ्गसुन्दराकारस्यारुणदत्तस्य कृतिरिति प्रतिभाति, "पद्येन च सुखस्मृत्यै रसभेदान् शृणुध्व मे।" इति तेनैव रसभेदीये (श्लो ४२ टी) स्पष्टमुक्तत्वात्। २ 'शत्तु पि' ट। ३ 'नात्वजा' ट ड। ४ 'पार्श्वभेदत्रिकग्रह' ट। ५ 'हृद्रोगोदरवेष्टनम्' ड। ६ 'वक्षोनिर्भेदनिस्तोदौ शो' ट ड। ७ 'शोषाघातौ' ट। 'वातोद्घातौ' ड। ८ 'कण्ठध्वसो' ट ड। ९ 'शभूस्फु' ट। १० 'घातापतन्त्रकौ' ट। ११ 'पारुष्यरू' ट ठ। १२ 'ता' ठ। १३ 'पादश्वान' इति क्वचित्। १४ 'त्वग्ग्राहदरणे मासदरणं त्वग्दाहकस्तथा।' ड। १५ 'दस्त्वग्दाहकस्तथा' ट। १६ 'कक्षा' ट ड। १७ 'वमन प्रति' ट. ड।

१ 'शदिद' ड। 'द शतमिति।' ट ठ ड। २ 'मूलादौ' ट ठ ड। ३ 'य। अग्न्यर्चिषेव निःखेदो विदाहः स निगद्यते। ओषः' ठ ड। ४ 'ऊष' ट ड। ५ 'दव अम्लो' ट ठ ड। ६ 'पतपन्ति' घ. झ स स। ७ 'पादसुप्तता' क ख ग. ञ। ८ 'गुदावर्तिः' ख ञ। ९ 'वृषणोत्क्षेप' स च। १० 'स्तम्भनो' ख ञ। ११ 'मर्दः' स ह्र। १२ 'उद्धर्षो' ख ञ, स च। १३ 'कण्ठध्वसो' ख ञ स मू। १४ 'हनुतोद' ग। 'हनुताडनम्' घ। 'हनुजाड्यम्' छ। 'हनुस्ताड.' स च। १५ 'ओष्ठभेदो' क ग घ छ. झ, स च। १६ 'दो। दन्तशैथि' क. ख ग घ झ ञ. स. ह्र.।

मुखशोषो ।४८। रसाज्ञत्वम्[1] ।४९। घ्राणनाश ।५०। कर्णशूलम्[2] ।५१। अशब्दश्रुति ।५२। उच्चैःश्रुति ।५३। बाधिर्यम् ।५४। वर्त्मस्तम्भो ।५५। वर्त्मसङ्कोच ।५६। तिमिरम् ।५७। अक्षिशूलम् ।५८। अक्षिव्युदासो ।५९। भ्रूव्युदास ।६०। शङ्खभेदो ।६१। ललाटभेद ।६२। शिरोरुक्[3] ।६३। केशभूमिस्फुटनम् ।६४। अर्दितम् ।६५। एकाङ्गरोग ।६६। सर्वाङ्गरोग[4] ।६७। आक्षेपको ।६८। दण्डक ।६९। श्रमो ।७०। भ्रमो[5] ।७१। वेपथु ।७२। जृम्भा ।७३। ग्लानि ।७४। विषादो ।७५। रौक्ष्यम् ।७६। पारुष्यम् ।७७। श्यावारुणावभासत्वम्[6] ।७८। स्वप्न ।७९। अनवस्थितचित्तता[7] च ।८०। पित्तविकारा[8] पुन –ओष ।१। प्लोषो ।२। दवो ।३। दवथु ।४। विदाह ।५। अंसदाह ।६। त्वग्दाह ।७। अन्तर्दाह ।८। धूमक ।९। अम्लक ।१०। ऊष्माधिक्यम् ।११। अतिस्वेद १२। अङ्गगन्ध[9] ।१३। अङ्गावयवसदनम्[10] ।१४। शोणितक्लेदो ।१५। मांसक्लेद ।१६। त्वङ्मांसदरणम् ।१७। चर्मदरणम्[11] ।१८। रक्तकोठो ।१९। रक्तविस्फोटो ।२०। रक्तमण्डलानि ।२१। रक्तपित्तम् ।२२। हरितत्वम् ।२३। हारिद्रत्वम् ।२४। नीलिका ।२५। कक्ष्या[12] ।२६। कामला ।२७। तिक्तास्यता ।२८। लोहितगन्धास्यता ।२९। पूतिमुखत्वम् ।३०। तृषाधिक्यम् ।३१। अतृप्ति ।३२। आस्यपाको ।३३। गलपाक ।३४। अक्षिपाक ।३५। पायुपाको ।३६। मेढ्रपाको ।३७। जीवादानम् ।३८। तम प्रवेशो ।३९। हरितहारिद्रनेत्रमूत्रशकृत्त्व च ।४०। श्लेष्मविकारास्तु–तृप्ति ।१। तन्द्रा ।२। निद्राधिक्यम् ।३। स्तैमित्यम् ।४। गुरुगात्रता ।५। आलस्यम् ।६। मुखमाधुर्यम् ।७। प्रसेक ।८। श्लेष्मोद्गिरणम् ।९। मलाधिक्यम् ।१०। बलासो ।११। हृदयोपलेप ।१२। कण्ठलेपो[13] ।१३। धमनीप्रतिचयो[14] ।१४। गलगण्ड ।१५। अतिस्थौल्यम् ।१६। शीताग्नित्वम् ।१७। उदर्द ।१८। श्वेतावभासता ।१९। श्वेतनेत्रमूत्रशकृत्त्व च ।२०। तत्र सर्वाङ्गीणस्तीव्रो–दाह । स्वेदारतिमान्–ओष । प्रादेशिक स्वेदरहितोऽग्न्यर्चिषेव दाह –प्लोष । मुखौष्ठतालुषु दाहो–दव । चक्षुरादीन्द्रियेषु[1] दाहो–दवथु । पाणिपादांसमूलेषु विविध सन्तापो–विदाह । कोष्ठेदाह[2] –अन्तर्दाह, कोष्ठस्यान्तर्मांगसङ्घात्[3] । शिरोग्रीवाघ्राणकण्ठतालुषु धूमायन–धूमक । सान्तर्दाहहृदयशूलोऽम्लोद्गार[4] –अम्लक । शोणितस्य कृष्णतादौर्गन्ध्यतनुत्वानि–क्लेद[5] । मांसस्य तु कृष्णता दौर्गन्ध्य च । बाह्यत्वक्सहति –चर्म[6] । कोष्ठगौरवादाहारास्पृहा–तृप्ति । अन्ये पुनराहु,–अन्नानभिनन्दनात्तृप्तिरिव[7] तृप्ति –अरोचक । निद्रार्तस्येव विषयाग्रहण–तन्द्रा । स्तैमित्य तु–प्रमीलक, इत्यन्यै[8] पठितम् । उपलेप इव–उपलेप । तदतिशय –प्रतिचय[9],–अतिपूरणम् । अग्नेरतिमन्दता–शैत्यम् । उरोऽभिष्यन्द[10] –उदर्द । केषाञ्चिच्छीतवेपथु –उदर्द । अन्ये पुनराहु –'शीतपानीयसस्पर्शाच्छीतकाले विशेषत । सरागकण्डू शोफ स्यादुदर्द स कफोद्भव ॥' इति । महाविकारास्तु यथास्वमेवोपदेक्ष्यन्ते[11] । क्षुद्रविकारा पुनर्यदेवाङ्गमाविशन्ति तदुपपदमेव नाम लभन्ते । यथा,–नखशङ्खललाटभेदा स्वान्तर्दाहकण्ठहृदयोपलेपादयः । तेषा हि तथैव स्वरूपमुपदिष्ट[12] भवति ।" इति ।

दोषाणा कर्माण्युपदिश्य निर्देशप्रयोजनमाह[13]—

**इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम् ॥ ५४ ॥**
**दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेत् ।**
**व्याध्यवस्थाविभागज्ञः पश्यन्नार्तान् प्रतिक्षणम् ५५**

**स०**–इति–प्रकारे । दोषाणा लक्षण दोषलक्षण,–यथास्व लिङ्गम् । इति–पूर्वोक्तेन प्रकारेण,यद्दोषलक्षणमुक्तम्,तद्दर्शनाद्यै सम्यगुपलक्षयेत्–जानीयात् । वैद्य इति शेष । दर्शनाद्यैरित्यादि(द्य)शब्देन स्पर्शनप्रश्नौ[14] गृह्येते । किम्भूतं दोषलक्षण तत्? अशेषामयव्यापि,–अशेषाश्च त आमयाश्चाशेषामयास्तान्,–सर्वामयान्, साधु व्याप्नोतीति । किम्भूतो वैद्य ? अवहितो,–दत्तावधान । तथा, व्याध्यवस्थाविभागज्ञ,–व्याधेरवस्था–कालकृता दशा, तासा विभाग–पृथक्त्वम्, यथा,–इयमस्य व्याधेरवस्थेयमन्यावस्थेति । अवस्थाभेदाच्चोपक्रमभेद । तथा हि,–एकस्यैव ज्वरस्य नवस्यान्य उपक्रमो जीर्णस्यान्य । तदेव विभागं यो जानाति स व्याध्यवस्थाविभागज्ञ । तथा, आर्तान्–व्याधितान्, प्रतिक्षण–मुहूर्ते मुहूर्ते, पश्यन्–आलोकयन् ।

**आ०र०**–लक्षणज्ञाने सावधानेन भवितव्यमित्याह–इत्य-

---

१ 'म् । गन्धाज्ञत्वम् । घ्रा' ग घ झ । २ 'म् । उच्चै ' छ । ३ 'शिरोभेद ' क ख ग छ ञ । ४ 'ग । पक्षवध । आक्षे' क. ख ग घ छ झ ञ ,स च । ५ 'दोऽतिप्रलापो । रौ' क ख ग घ झ ञ. । ६ 'णाभास' क ख ग छ ञ स स । ७ 'स्थितता' घ झ । 'स्थितत्व च' छ ,स च । ८ अत्राशीतिवातविकारेषु मध्ये केषुचित्पुस्तकेषु 'गन्धाज्ञत्वघ्राणनाशौ' 'एकाङ्गरोगपक्षवधौ' 'प्रलापातिप्रलापौ' इति प्राय एकार्थाभिधायिनौ द्वौ द्वौ शब्दौ दृश्येते । तयोरेकैक मुक्त्वा लिखितानेकपुस्तकसहायेन निश्चिता अशीतिर्वातविकारा । दर्शिताश्च क्रमाङ्कैस्ते सर्वे । एव पित्तकफविकारेष्वपि । ९ 'दौर्गन्ध्यम्' छ । १० 'अवयवस' स द्व. । 'अङ्गावदरणम्' स च. । ११ 'दलनम्' क ग छ । १२ 'कक्षा' घ झ । 'कुक्षि' छ. । १३ 'कण्ठोपलेपो' स द्व., स च । १४ 'नीचयो' ख.ञ

१ 'रादिष्विन्द्रि' घ छ झ । २ 'कोष्ठे दाह –अन्तर्दाह । शिरो' स द्व । ३ 'गैत्वस' ख झ ञ । ४ 'लोद्गा' स द्व । ५ 'त्वादि–' क ख ग छ ञ । ६ 'चर्मकोथ ' स स. । ७ 'न्दता तृ' ख छ.ञ स स. । 'न्दना तृ' घ झ स मू । ८ 'इत्यन्येऽपि पठन्ति ।' क ग छ ञ । 'इत्यन्ये न पठन्ति ।' ख । ९ 'निचय ' ख.ञ । १० 'उरसोऽभि' स स. । ११ 'स्वमुपदे' क ख ग छ ञ । १२ 'मुद्दिष्ट' क ख ञ. । १३ 'नमभिक्लृत्साह'ठ. । १४ 'प्रश्नै । कि' ट ।

शेषामयव्यापीति । दर्शनाद्यै –दर्शनस्पर्शनप्रश्नै । अवस्था विभागो यथा,–आमज्वरो जीर्णज्वर पच्यमानज्वर इति ।

किमिति पुन पुनर्व्याधितदर्शन क्रियते ? इत्याह—

**अभ्यासात्प्राप्यते दृष्टिः कर्मसिद्धिप्रकाशिनी ।**
**रत्नादिसदसज्ज्ञानं न शास्त्रादेव जायते ॥ ५६ ॥**

स०–अभ्यासात्–मुहुर्मुहुश्चिकित्सितकर्मणि प्रवर्तनात्, दृष्टि–दर्शन चिकित्साविज्ञान जायते, न केवल–केवलचिकित्साशास्त्रावगमात् । किम्भूता दृष्टि ? कर्मणि सिद्धिस्ता प्रकाशयितु शील यस्या सा कर्मसिद्धिप्रकाशिनी । अत्र दृष्टान्तमाह–रत्नादीत्यादि । आदिशब्देन सुवर्णरूप्यादीना ग्रहणम् । तेषा यत्सदसज्ज्ञान–इद शोभनमिद न शोभनमित्यवगम, तन्न शास्त्रादेव जायते । कि तर्हि ? अभ्यासाच्च । एवकारोऽवधारणार्थ । न शास्त्रावबोधान्न च केवलादभ्यासादित्येवकारेण बोधयति । किल यथा रत्नपरीक्षा तच्छास्त्रावबोधदर्शनाभ्यासाभ्या सम्यग्जायते, तथैव चिकित्सा शास्त्रावबोधान्नित्यमातुरदर्शनाच्चावगम्यत इत्यर्थ ।

आ० र०–लक्षणदर्शनाभ्यासो लक्षणज्ञानसहकारीत्याह–अभ्यासादिति ।

**दृष्टापचारजः कश्चित्कश्चित्पूर्वापराधजः ।**
**तत्सङ्कराद्भवत्यन्यो व्याधिरेवं त्रिधा स्मृतः ॥५७॥**

स०–दृष्टश्चासावपचारश्च, तस्माज्जातो दृष्टापचारज । अपचारो–व्याधिहेतु । ऐहिकलौकिकाद्व्याधिकारणाज्जातो दृष्टापचारज । कश्चिदात्मकृतात्पूर्वापराधात्–अशुभकर्माख्याज्जात पूर्वापराधज । अपर कश्चित्तत्सङ्कराद्भवति । तयो सङ्करस्तत्सङ्करो–मिश्रत्व, तस्मात् । न केवलात्पूर्वापराधान्न च केवलादृष्टापराधात्, अपि तु द्वयो ससर्गाज्जात इत्यर्थ । एव–अनेन प्रकारेण, व्याधिस्त्रिधा–त्रिप्रकार, स्मृत ।

आ० र०–व्याधेस्त्रैविध्यमाह–दृष्टापचारज इति । अपचारो–निदानम् । दृष्टकर्मज, अदृष्टकर्मज, दृष्टादृष्टकर्मज, इति त्रिविधो व्याधि ।

अथ त्रिप्रकारव्याधिलक्षणार्थमाह—

**यथानिदानं दोषोत्थः कर्मजो हेतुभिर्विना ।**
**महारम्भोऽल्पके हेतावातङ्को दोषकर्मजः ॥ ५८ ॥**

स०–यथानिदान दोषोत्थ इति । यद्यस्य दोषस्य वातादेर्लघुरूक्षादि निदान, तेन कुपिताद्दोषात् य उत्थितो व्याधि स दोषोत्थो ज्ञेय । यो दृष्टापचारज उक्त इत्यर्थ । हेतुभि–वातादिनिदानैर्लघुरूक्षादिभिर्विना यो भवति स कर्मज । यस्त्वल्पे निदाने सेविते महारम्भ स्यात्, स दोषकर्मजो रोगो ज्ञेय । महानारम्भो यस्य स, पूर्वरूपरूपैर्बलवद्भिर्युक्त इत्यर्थ ।

आ० र०–त्रयाणा लक्षणमाह–यथानिदानमिति । यथानिदान–स्वहेत्वनतिक्रमेण, दोषोत्थो–दृष्टज । हेतुभिर्विना जात कर्मज–अदृष्टज, पूर्वापराधज । अल्पे हेतौ महारम्भ–तीव्रसरम्भो, दोषकर्मज । दोषक्षोभपूर्वकत्वात् दृष्टजस्य दोषजत्वम् । तद्विपरीतत्वाददृष्टजस्य कर्मजत्वम् । वक्ष्यति हि (हृ सू अ १।१७०)–"ते ज्वरा केवला पूर्व व्याप्यन्तेऽनन्तर मलै ।" इति ।

अथ त्रिविधस्यापि व्याधेश्चिकित्सामाह—

**विपक्षशीलनात्पूर्वः कर्मजः कर्मसङ्क्षयात् ।**
**गच्छत्युभयजन्मा तु दोषकर्मक्षयात्क्षयम् ॥ ५९ ॥**

स०–विपक्षशीलनात्पूर्व इति । पूर्व–पूर्वमुक्तो य केवल दोषजो व्याधि स, विपक्षशीलनात्–यथोक्तविपक्षादिसेवनात्, क्षय याति । कर्मजो रोग कर्मसङ्क्षयात् क्षय याति । उभयजन्मा–दोषकर्मोत्थो, दोषकर्मणोरुभयोरपि क्षयात् क्षय याति ।

आ० र०–विपक्षशीलनात्–हेतुविपरीतशीलनात् । पूर्वो–दोषोत्थ । कर्मसङ्क्षयात्–भोगेन प्रायश्चित्तेन वा पापक्षयात् । विपक्षशीलनाद्युपशयाख्य लक्षणम् ।

व्याधीनां त्रैविध्यमुक्त्वा द्वैविध्यमाह—

**द्विधा स्वपरतन्त्रत्वाद्व्याधयोऽन्त्याः पुनर्द्विधा ।**

स०–स्वतन्त्रश्च परतन्त्रश्च स्वतन्त्रपरतन्त्रौ, तयोर्भाव स्वतन्त्रपरतन्त्रत्वम्, तस्माद्धेतोर्द्विधा व्याधय । एके स्वतन्त्रा अन्ये परतन्त्रा इत्यर्थ । अन्ते भवा अन्त्या,–परतन्त्रा । ते पुन–भूयो, द्विधा ।

आ० र०–त्रयाणां पृथक् द्वैविध्यमाह–द्विधा स्वपरतन्त्रत्वादिति । तत् स्वतन्त्र. परतन्त्रश्चेति । अन्त्या इति परतन्त्रस्य द्वैविध्यम् । तच्च पूर्वरूपमुपद्रवाश्चेति ।

तदेव द्वैविध्यं दर्शयितुमाह—

**पूर्वजाः पूर्वरूपाख्या, जाताः पश्चादुपद्रवाः ॥ ६० ॥**

स०–पूर्व जाता पूर्वजा । "अन्येष्वपि दृश्यते" इति ड । पूर्वजा–पूर्वरूपसज्ञा रोगा । ये च पश्चाज्जाता गदास्ते व्याधीनामुपद्रवा । इत्यन्त्या द्विधा ।

आ० र०–तौ च स्वतन्त्रात्पूर्वं पश्चात् क्रमेण जायेते ।

अथ स्वतन्त्रान् लक्षयति—

**यथास्वजन्मोपशयाः स्वतन्त्राः स्पष्टलक्षणाः ।**

स०–जन्म चोपशयश्च जन्मोपशयौ । जन्म–उत्पत्ति ।

१ 'भागशो' घ झ । २ 'सात्जायते' आ क । 'सात्केवलं दृष्टि' इत्यरुणदत्तसम्मत पाठ इति प्रतिभाति । युक्तश्चाय पाठ, 'प्राप्यते' 'जायते' इति द्वयो समानार्थकयो क्रियापदयोरन्यतरस्य वृथात्वात् । ३ 'र्णहिरण्यादीना' ट । ४ 'त्रित्य नित्यमा' इति क्वचित् । ५ 'ज्ञाने स' घ झ. । ६ 'पचारज' आ । ७ 'मत.' अ । ८ 'इहैव लौ' ट । ९ 'व्याधिभेदानाह' घ झ. । १० 'षाडुत्थि' ट. ।

१ 'न–हेत्व' क ख ग छ ञ । २ 'दृष्टकर्मज.' क ख ञ । ३ 'पूर्वापचारज' क ग छ । ४ 'अल्पहेतौ' क घ झ. । ५ 'क्षयमेति' ट ठ । ६ 'थ स्वपरतन्त्रत्वादिकमाह' ट. । ७ 'तत्र' ख.ग.छ.ञ. ।

उपशय –सुखानुबन्ध । यो य स्व स्व–यथास्वम् । यस्य ज्वरादेर्यावात्मीयौ शास्त्रनिर्दिष्टौ तौ यथास्वशब्देन सूच्येते[1] । यथास्व जन्मोपशयौ येषा ते यथास्वजन्मोपशया व्याधय स्वतन्त्रा उच्यन्ते । चिकित्सागुरुलाघवप्रतिपत्त्यर्थं च स्वतन्त्रादिसञ्ज्ञाकरणम् । स्वग्रहणाद्येऽन्यजन्मनि जायन्तेऽन्यस्य च व्याधेर्यत[2] उपशय –सुखानुबन्धस्तत्[3] एतत्परिवारस्यापि, ते तु न स्वतन्त्रा । तथा चोक्तम्–"पूर्वरूपरूपादिक्रमेण ज्वरादावुत्पन्ने तत्परिवारा ये श्वासादय उत्पद्यन्ते तदुपशये चोपशेरते न ते स्वतन्त्रा । ज्वरादय एव तु मूलव्याधिरूपत्वात्स्वतन्त्रा उच्यन्ते ।" इति ।

आ० र०–यस्य स्वेन हेतुना जन्म, स्वौषधेनोपशम[4], स्पष्ट च[5] लक्षण, स स्वतन्त्र ।

**विपरीतास्ततोऽन्ये तु**

स०–तत –स्वतन्त्रेभ्यो रोगेभ्यो[6], येऽन्ये–परतन्त्रा पूर्वरूपाख्यास्तथोपद्रवसञ्ज्ञाश्च, ते विपरीता ,–विपरीतस्वरूपा , न यथास्वजन्मोपशया न च स्पष्टलक्षणा. ।

आ० र०–विपरीत –परतन्त्र ।

एव व्याधीना स्वतन्त्रपरतन्त्रत्व प्रतिपाद्य, दोषाणा प्रतिपादयन्नाह—

**विद्यादेवं मलानपि ॥ ६१ ॥**

स०–न केवल रोगान् स्वतन्त्रपरतन्त्रभेदैर्विद्याद्वैद्य , यावन्मलान्–दोषानपि वातादीन्, एव–स्वतन्त्रपरतन्त्रभेदैर्जानीयात्।

आ० र०–व्याधिवद्दोषानपि स्वतन्त्रपरतन्त्रान्विद्यात् ।

**तांल्लक्षयेदवहितो विकुर्वाणान् प्रतिज्वरम् ।**

स०–तान्–वातपित्तकफान् यथास्वजन्मोपशयलक्षणावच्छिन्नस्वरूपान्, प्रतिज्वरं–प्रतिविकार, विकुर्वाणान्–विकृतिं–कोप गच्छतो, जानीयात् । वैद्य[7] इति शेष । कीदृक् ? अवहितो–दत्तचित्त ।

आ० र०–ताश्च प्रतिरोग लक्षयेत् । कोऽत्र स्वतन्त्र क परतन्त्र इति ।

एव स्वतन्त्राणा व्याधीना यथास्वोपशय[8] एव भेषजमुक्तम् । परतन्त्राणा तु व्याधीना क प्रशमोपाय ? इत्याह—

**तेषां प्रधानप्रशमे प्रशमोऽशाम्यतस्तथा ॥ ६२ ॥**
**पश्चाच्चिकित्सेत्तूर्णं[9] वा बलवन्तमुपद्रवम् ।**

स०–तेषा–परतन्त्राणा रोगाणामप्रधानानाम्, प्रधानप्रशमे–स्वतन्त्रव्याधिप्रशमे, प्रशमो भवति,–न तु तेषा पृथगुपक्रमो विधेय इत्यर्थ । अशाम्यत –तथा शममगच्छत परतन्त्रान् व्याधीन् दोषान् वा, तथा–तेन प्रकारेण प्रधानचिकित्सा-

१ 'ब्देनोच्येते' ट । २ 'धेर्यं उत्पादकास्तेषा यत' ट । ३ 'तस्तत्परि' ट । ४ 'स्वेनोप' घ झ । ५ 'च लिङ्ग स' घ झ । ६ 'भ्योऽन्ये' ट ड । ७ 'वैद्य । कीदृ' ट ड. । ८ 'यथोपशयमेव' ट. । 'यथास्वजन्मोपशय' ड. । ९ 'त्सेत्पूर्वं वा' घ. ।

लक्षणेन, पश्चात्–प्रधानचिकित्सात उत्तरकाल, चिकित्सेत् । अचिकित्स्यमानो ह्यसाध्यता यायात् । तूर्ण वेति । उपद्रवश्चेद्बलवान् स्यात्तदा तमेवोपद्रव तूर्णमेव चिकित्सेत्–, न पश्चात् ।

आ० र०–तेषा–परतन्त्राणा,स्वतन्त्रप्रशमे प्रशम. । तथा–स्वतन्त्रौषधेन, ये न शाम्यन्ति तान् पश्चात्स्वौषधेन चिकित्सेत् । यस्तु बलवानुपद्रवस्त तूर्णं–प्रागेव, चिकित्सेत् ।

ननु, कुतोऽप्रधान शीघ्र चिकित्सेत् ? इत्याह—

**व्याधिक्लिष्टशरीरस्य पीडाकरतरो हि सः ॥ ६३ ॥**

स०–हि–यस्मात्, व्याधिक्लिष्टशरीरस्य पुस सोऽतिशयेन पीडाकर । प्रागुत्पन्नोऽपि[1] रोग पीडाकर । उपद्रवस्तु पश्चाज्जायमानो व्याधिक्लिष्टशरीरोत्पन्नत्वात्पीडाकरतर । तदयमत्रार्थ ,–परतन्त्रो व्याधिर्हीनबल प्रधानोपक्रमेणैवोपशाम्यति । यस्तु परतन्त्र पश्चादुत्पद्यमानोऽपि स्वतन्त्रव्याध्युपक्रमेण शम न याति त पश्चादुपक्रमेत् । यस्तु बलवान् परतन्त्रस्तमादावेव चिकित्सेत्, अतिपीडाकरत्वात् ।

आ० र०–स हि स्वतन्त्रेण[2] पीडितस्य[3] नरस्य स्वतन्त्रादतिपीडक । सङ्ग्रहे तु ( सू अ २२ )–"सप्तविधा. खलु रोगा भवन्ति । सहगर्भजातपीडाकालप्रभावस्वभावजा. । ते तु पृथग्[4]द्विविधा । तत्र सहजा शुक्रार्तवदोषान्वया कुष्ठाऽर्शोमेहादय , पितृजा मातृजाश्च । गर्भजा जनन्यपचारात्[5]कौब्ज्यपाङ्गुल्यपैङ्ग्यकिलासादयो[6], अन्नरसजाँ मातृदौहृदवि[7]मानजाश्च । जातजा स्वापचारात् सन्तर्पणजा अपतर्पणजाश्च । पीडाजा[8] क्षतभङ्गप्रहारक्रोधशोकभयादयः, शारीरा मानसाश्च । कालजा शीतादिकृता ज्वरादयो, व्यापन्नजा[9] असरक्षणजाश्च । प्रभावजा देवगुरुलङ्घनशापाथर्वणादिकृता , ज्वरादय पिशाचादयश्च । स्वभावजा क्षुत्पिपासाजरादय[10] , कालजा अकालजाश्च । तत्र कालजा रक्षणकृता , अरक्षणजा अकालजा[11] । त एते समासत. पुनर्द्विविधा भवन्ति, प्रत्युत्पन्नकर्मजा. पूर्वकर्मजाश्च । तत्र रोगोत्पत्ति[12] प्रत्युत्पन्न कर्म यदनेनैव शरीरेण दृष्टमदृष्ट वोद्दिश्या[13]प्तोपदिष्टप्रतिषिद्धानाम[14]नुष्ठानमनुष्ठान[15] वा । जन्मान्तरातीतेन तु पूर्वम् । तत्पु[16]नर्दैवाख्यम्, उक्त च नियतानियतभेदेन प्राक् । तस्मात्[17] दृष्टहेतव. प्रत्युत्पन्नकर्मजा । विपरीता दैवजन्मान. । अल्प-

१ 'रीरस्योत्प' ठ । २ 'पीडकस्य' ख.ञ. । ३ 'स्य स्वतन्त्रादपि पी' क ख ग छ ञ । ४ 'पृथक् पृथग्द्वि' ख ञ. । ५ 'न्यपमिचा' स.स । ६ 'कौब्जपैङ्ग' क ख ग छ ञ स.स. । ७ 'जा दौहृ' स द्व । ८ 'पीडाकृता ' घ झ स द्व । ९ 'व्यापन्नर्तुजा अव्यापन्नर्तुजाश्च ।' ग । १० 'साज्वरा' घ छ स.स । ११ 'लकृता ।' ख ग ञ । १२ 'त्ति प्रति प्रत्यु' स स । १३ 'चोद्दिश्या' क छ स.द्व. । १४ 'दिष्टविहितप्रति' ग । 'दिष्टाना विहिताना प्रति' स.द्व. । १५ 'ष्ठानेनानुष्ठानेन वा' क. । १६ 'तत्तु पुन' स द्व. । १७ 'तत्र दृष्ट' क ग ।

निदाना महारुजश्चोभयात्मका । तत्र यथास्व प्रतिपक्षशीलनात् पूर्वेषा[1] रोगाणामुपशम । सत्येव विपक्षशीलने निर्दिष्टकर्मक्षयाद्दैविकानाम् । दोषकर्मक्षयादन्येषाम् । अन्ये पुन. प्रत्युत्पन्न कर्म परकृतमपि वर्णयन्ति । तच्च पराभिसस्कारमाचक्षते । एव चाहु ,–यदि स्वय कृतादेव कर्मण कार्यनिर्वृत्ति स्यात्, न दृष्टपुरुषान्तरकृतात् । किमिति विद्वानपि पराचरितयोरुपकारापकारयो सुखदु खानुरोधातोषरोषौ प्रतिकर्तव्यचिन्ता[4] वा प्रतिपद्यते । एवमेते व्याधयो द्विविधा सन्तस्त्रिविधा[6] जायन्ते । ततश्च दोषवन्तो भूय सप्तविधा । सकलोऽपि चाय रोगसमूह प्रतीकारवान् आयुर्वेदविहितमुपदेशमपेक्षते । यस्मान्नियतहेतुकोऽप्यामय सम्यग्भिषगादेशानुष्ठानादुपात्तायु सस्कारापरिक्षये[9] सद्यवेदनता प्रतिपद्यते । अनुपक्रम्यमाणस्तु सर्व एव प्रायशो भिनत्त्यकाण्डे । स्वयमपि च दैवान्निदानाल्प[11] तया वा निवर्तमान षोडशगुणसमुदितक्रियोपालम्भादाशुतरमपरिक्लिष्टस्य[12] वाऽपगच्छति[13] । अनियतफलदायिनि तु दैवे हिताभ्यासरतस्यावकाशमेव न लभते व्याधि । तस्मात्कस्याञ्चिदवस्थायामात्मवान् हिताहितयोस्तुल्यदर्शी[14] स्यात् । त्रिविधाश्च पुनर्व्याधयो मृदुमध्यातिमात्रभेदेन[15] । तत्राल्पलक्षणा मृदवो, मध्यलक्षणा मध्या , सम्पूर्णलक्षणास्त्वतिमात्रा । ते पुन सुखसाध्यादिविशेषेण चतुर्धा[16] प्रागुपदिष्टा. । सुबहुशोऽपि च भिद्यमाना व्याधयो निजागन्तुता न व्यभिचरन्ति । तत्र निजास्त्रिदोषोत्था[17] । तेषु पूर्व वातादयो वैषम्यमापद्यन्ते, ततो व्यथाऽभिनिर्वर्तते । बाह्यहेतुजास्त्वागन्तव. । तेषु व्यथा पूर्वमुपजायते, ततो दोषवैषम्यम् । दोषवैषम्येणैव च बहुरूपा रुगनुबध्यते प्रवर्द्धते च । एव च कृत्वा न दोषव्यतिरेकेण रोगानुबन्ध , केवल पौर्वापर्यविशेष.[18] । तस्मादेकाकारा एव रोगा[19] , तथा रुक्सामान्यात्[20] । असङ्ख्यभेदा वा प्रत्येक समुत्थान[21]स्थान[22]संस्थानवर्णनामवेदनाप्रभावोपक्रमविशेषात्[1] । ते यथास्थूल यथास्वमेवोपदेक्ष्यन्ते । असङ्ख्येयत्वाच्च दोषलिङ्गैरेव रोगानुपक्रम च विभजेत् ।” इति ।

1 'सर्वेषा' क ख ग.ञ. । 2 'नेऽनिष्टक' स स । 3 'दुष्ट' ग । 'दृष्ट पु' घ झ स मू । 4 'चित्त वा' घ स स । 5 'पद्येत' क छ । 6 'त्रिधा' ख ग ञ । 7 'दोषविशेषतो भू' क ख ञ स मू । 8 'शुष सस्कारपरि' ग. । 9 'ये जातोऽपि वा सद्य' स स । 10 'भनकत्यका' घ झ.स मू. । 11 'नाल्प' घ झ । 12 'क्लिश्य नाशमुपग' क.ख. । 'क्लिश्यन्नाशमुपग' छ ञ । 'क्लिश्य ना' घ । 13 'नाप' स.द्र । 14 'दर्शन.' क ख ग छ ञ । 15 'थिमा' स मू । 16 'चतुर्विधा ' स मू इन्दु । 17 'निजास्तु दोषोत्था ' इति सङ्ग्रहहृदयस्थ. पाठोऽयुक्त एव, इन्दुरुणदत्तहेमाद्रिभि 'निजास्त्रिदोषोद्भवा.' इत्यस्याङ्गीकृतत्वात् तुशब्दस्य स्वारस्याभावाच्च । 18 'पर्यैविशेष ' क ख ग छ ञ । 'पर्ये वि' घ स.द्र । 19 'ष्वेते रो' ख.छ.ञ । 20 'रोगा रुक्' स.स. । 21 'न-सस्था' ग घ झ ञ । 22 'नवर्ण' ख.छ. ।

ननु, येषा विकाराणा नामग्राह[2] चिकित्सा [च] नोक्ता । तेषां नामाकुशलो वैद्य कि चिकित्सेत्र ? इत्याशङ्क्याह—

**विकारनामाकुशलो न जिह्रीयात् कदाचन ।**
**न हि सर्वविकाराणा नामतोऽस्ति ध्रुवा स्थितिः ६४**

स०–विकारा –रोगा , तेषा नामानि, तेष्वकुशलो वैद्यो न जातुचिज्जिह्रीयात्–रोगसञ्ज्ञानभिज्ञोऽहमिति लज्जा न कुर्यात्, चिकित्सामेव विदध्यादित्यर्थ । कुतो हेतो ? इत्याह–न हीत्यादि । यस्मात्सर्वविकाराणा नामत –सञ्ज्ञातो, ध्रुवा–निश्चिता, स्थिति –अवस्थान, नास्ति ।

आ० र०–शास्त्रेऽनुक्त स्वयमूहनीयमित्याह–विकारनामेति । यो विकारस्य वातजादित्व जानाति, नाम न जानाति, शास्त्रेऽनुक्तत्वात्सङ्कीर्णत्वाद्वा, स न जिह्रीयात्–लज्जा न कुर्यात् । न हि नामाधीना सर्वत्र चिकित्सा । वातजादिज्ञान हि चिकित्सायाः प्रधान कारणम् ।

ननु, कुतोऽशेषरोगाणा नामतो नास्ति स्थिति ? इत्याशङ्क्याह—

**स एव कुपितो दोषः समुत्थानविशेषतः ।**
**स्थानान्तराणि च प्राप्य विकारान् कुरुते बहून् ६५**
**तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च ।**
**बुद्ध्वा हेतुविशेषांश्च शीघ्रं कुर्यादुपक्रमम् ॥ ६६ ॥**

स०–यस्मात्स –एक एव, दोषो–वाताद्यन्यतम , समुत्थानविशेषतो–हेतुभेदात्, तथा स्थानान्तराणि–स्वस्थान हित्वा पराणि स्थानानि, प्राप्य–गत्वा, बहून्–अनन्तान्, विकारान् कुरुते । तथा चोक्त तन्त्रान्तरे–“यो दोष शरीरसन्धीनाविशति, तेन जृम्भा ज्वरश्चोपजायते । यस्त्वामाशयमभ्युपैति, तेन रोगा भवन्त्युरसि, अरोचकश्च । य कण्ठमभिप्रपद्यते कण्ठस्ततो ध्वसते स्वरश्चावसीदति । य प्राणवहानि स्रोतास्यास्यादीनि उपैति, श्वास प्रतिश्यायश्च तेनोपजायते ।” इति । विकारस्य–ज्वरादे , प्रकृतय –उपादानकारणानि वातादिदोषा , ता विकारप्रकृती –रोगहेतुविशेषान्, बुद्ध्वा–ज्ञात्वा, तथाऽधिष्ठानान्तराणि–स्थानविशेषाश्च, बुद्ध्वा, तथा हेतुविशेषान्–निदानभेदांश्च, बुद्ध्वा–यथा किमय कुपित पवनो रूक्षेण हेतुना लघुना शीतेन वेत्यादि ज्ञात्वा, शीघ्रमेवोपक्रमेत्[4]–चिकित्सेत् । न तु विकारानभिज्ञ इति न चिकित्सेत् ।

आ० र०–अथ साधनम् । साधनज्ञान च लक्षणज्ञानाधीनम् । तत्र लक्षणस्य दुर्बोधत्वमाह–स एवेति । स एव–

1 'नधर्मेना' स मू । 2 'त् । यथा' क.ग.छ.झ. । 3 'मग्रहण' ट. । 4 'क्रम–चिकित्सा कुर्यात् । न' इति क्वचित् ।

योऽन्यत्र लक्षितो, बहून् विकारान् कुरुते,–ये[1]ऽन्यत्र न दृष्टा । तत्र द्वौ हेतू–समुत्थानविशेषात्कुपितत्व स्थानान्तरप्राप्तिश्च । समुत्थानविशेष –अ[2]न्यत्राहृष्ट समुत्थानम् । तस्माद्विकारादित्रितयज्ञानपूर्वक उपक्रम कार्यं । स च शीघ्रम्, अवस्थान्तरोत्पत्तिभयात् । प्रकृति –स्वभावोऽसाधारण चिन्हम् ।

ननु, बुद्ध्वाऽपि विकारप्रकृत्यादिकं[3]मुपक्रम कुर्वन्त कदाचित्सिद्धिमाप्नुवन्तो दृश्यन्ते भिषज कदाचिन्नेति । तदत्र[4] "सशयस्खलिते कर्मणि कथ नियुज्यते वैद्य इति कथमुक्तम् ? "शीघ्र कुर्यादुपक्रमम्" इत्याशङ्क्याह—

**दूष्यं देशं बलं कालमनलं प्रकृतिं वयः ।**
**सत्त्वं सात्म्यं तथाऽऽहारमवस्थाश्च पृथग्विधाः ६७**
**सूक्ष्मसूक्ष्माः समीक्ष्यैषां दोषौषधनिरूपणे ।**
**यो वर्तते चिकित्सायां न स स्खलति जातुचित् ६८**

स०–दोषौषधनिरूपणे सति दूष्यादीन्[6] दश समीक्ष्य–सम्यग्विलोक्य, यश्चिकित्साया वर्तते–यत्न करोति, स–वैद्यो, न कदाचित् स्खलति[7]–नापराधी स्यात् । दोषो–वातादि, औषध–हरीतक्यादि, तयोर्निरूपण–पर्यालोचनम्, तस्मिन् दोषौषधनिरूपणे । दूष्यादीना समस्तानामुपादान सर्वेषामेवावगमे चिकित्साकरण प्रति यत्नातिशयद्योतनार्थम्, न पुनरेषा द्वौ वा त्रीन् वा चतुरो[8] वा पञ्च वा समीक्ष्य । किं तर्हि ? सर्वानेतान्[9] समीक्ष्य,– सम्यगवबुध्येति । अथ दूष्यादीनेव समीक्ष्य ? नेत्याह–अवस्थाश्च पृथग्विधा । एषामेव दूष्यादीनामवस्था सूक्ष्मसूक्ष्मा –अतिशयेन सूक्ष्मा, ताश्च स[10]मीक्ष्य–यथावद्बुद्ध्वेति ।

**आ० र०–दूष्याद्येकादशज्ञाने सत्यव्यभिचार्युपक्रम इत्याह–दूष्यमिति । दूष्यो–धातुर्मलश्च । देशो–भूमिर्देहश्च । बल–सामर्थ्यम् । काल–पूर्वाह्णादि । अनलो–विषमादि । प्रकृति –वातप्रकृत्यादि । वयो–बाल्यादि । सत्त्व–मन । सात्म्य–देशसात्म्यादि । आहारो–मधुरादि । अवस्था –रूपेष्ववान्तर रूपम् । सूक्ष्मसूक्ष्मा –अतिसूक्ष्मा । एषा–रोगाणाम् । दोषौषधनिरूपणे–दोषस्यौषधस्य च विचारणे ।**

न च दूष्याद्येव परीक्ष्यम् । किं तर्हि ? व्याधिरपि गुरुलघुत्वेन एव परीक्ष्य एवेत्याह—

**गुर्वल्पव्याधिसंस्थानं सत्त्वदेहबलाबलात् ।**
**दृश्यतेऽप्यन्यथाकारं तस्मिन्नवहितो भवेत् ॥ ६९ ॥**

स०–गुरुश्चाल्पश्च गुर्वल्पौ, गुर्वल्पौ च तौ व्याधी च गुर्वल्पव्याधी, तयो सस्थान–आकृति । अपिशब्दो भिन्नक्रमे । तद्गुर्वल्पव्याधिसस्थानमन्यथाकारमपि दृश्यते–विपरीतमपि लक्ष्यते । अपिशब्दात्क्वचित् गुर्वल्पव्याधिसस्थानं य[11]थातत्त्व दृश्यते क्वचिन्नेति व्याधिलक्षणस्य गमकत्वाभाव प्रसज्येत । तत्तश्च "रोग निदानप्राग्रूपलक्षणोपशयाप्तिभि ।" (हृ.सू.अ १।२२) इति दूष्येत । तस्मादपिशब्दोऽत्र गुर्वल्पसस्थानस्य यथातत्त्व दर्शन क्वचिद्भवत्येवेति सूचनार्थं कृत । कुतो हेतो ? इत्याह–सत्त्वेत्यादि । सत्त्व–धैर्यम् । देहो–महदल्पस्थूलकृशादि । सत्त्व च देहश्च सत्त्वदेहौ । बल चाबल च बलाबले । तस्मात्सत्त्वदेहबलाबलाद्धेतोर्गुर्वल्पव्याधिसस्थानेऽवहितो भवेत् । अधिकसत्त्वे तथोत्कृष्टदेहबले च गुरु –महानपि व्याधिरुत्पन्नोऽल्पसस्थानो–हीनबल इव लक्ष्यते, सत्त्वदेहबलयोरुत्कृष्टत्वात् । तथा, हीनसत्त्वे हीनदेहबले चोत्पन्नो लघुरपि महानिव लक्ष्यते, हीनसत्त्वदेहबलत्वात् । तस्माद(त्त)स्मिन्–व्याधिसस्थानेऽथ, दत्तावधानेन भाव्यम् ।

**आ० र०–तत्रापि सत्त्वदेहयोर्बल तात्पर्येण परीक्ष्यमित्याह–गुर्वल्पव्याधिसस्थानमिति । संस्थान–लक्षणम् । अन्यथाकार–गुरोरल्पत्वम्, अल्पस्यापि गुरुत्वम् ।**

**गुरुं लघुमिति व्याधिं क[2]ल्पयस्तु भिषग्ब्रुवः ।**
**अल्पदोषाकलनया पथ्ये विप्रतिपद्यते ॥ ७० ॥**

स०–गुरु लघुमित्यादि । यश्च भिषग्ब्रुव[3] –कुत्सितो वैद्य, स[4] व्याधिसस्थानमात्रावलोकनात् गुरुं व्याधिं लघुमिति कल्पयन्–निश्चिन्वन्[5], अल्पदोषाकलनया–हीनमात्रदोषनिश्चयेन, पथ्ये विप्रतिपद्यते–चिकित्सिते मोह गच्छति, गुरुव्याधावल्पव्याधियोग्य भेषज ददाति । एव लघुव्याधिं गुरुमिति कल्पयन् बहुदोषाकलनया पथ्ये विप्रतिपद्यते, भिषग्ब्रुवत्त्वात् । अन्यत्रापि ब्रुवान्तस्य कुत्सितत्वमेव[6] प्रसिद्धम् । यथाऽऽह मनु (अ ८। २०)–"जातिमात्रोपजीवी वा काम स्याद्ब्राह्मणब्रुव । धर्मप्रवक्ता नृपतेर्न तु शूद्र कथञ्चन ॥" इति । केचित् "भिषग्ध्रुवम्" इति पेठु । भिषक्–वैद्यो, गुरु लघुमिति व्याधिं क[7]ल्पयन् ध्रुव–निश्चित, पथ्ये विप्रतिपद्यत इति च व्याचक्षते ।

**आ० र०–अनवहितत्वे दोषमाह–गुरु लघुमिति । अल्पोऽय दोष इत्यगणनया विप्रतिपद्यते–विपरीत जानाति ।**

यस्मा[8]च्चैवम्—

**ततोऽल्पमल्पवीर्यं वा गुरुव्याधौ प्रयोजितम् ।**
**उदीरयेत्तरां रोगान् संशोधनमयोगतः ॥ ७१ ॥**
**शोधनं त्वतियोगेन विपरीतं विपर्यये ।**
**क्षिणुयान्न मलानेव केवलं व[9]पुरस्यति ॥ ७२ ॥**

स०–ततोऽल्प–अल्पमात्रम्, अल्पवीर्यं वा–अनुत्कृष्टशक्तिक वा, भेषज गुरुव्याधौ प्रयोजित–दत्त, सशोधन रोगानुदीरयेत्तरा–अतिशयेनोत्क्लेशयेत् । कुत ? अयोगत,–हीनयोगात् ।

१ 'येवाऽन्यत्र' ग । २ 'न्यत्र दृ' क ख छ । ३ 'कत्रयमु' ट । ४ 'तदेव' ट । ५ 'सम्भवस्ख' ड । ६ 'नू समी' ठ ड । ७ 'ति–स्ववर्त्मनि ना' ट. । ८ 'चतुष्पञ्च वा' ट.ड. । ९ 'नू वीक्ष्य' ट.ठ.ड । १० 'वीक्ष्य' ट.ड । ११ 'यथात्व' ठ. ।

१ 'ततोऽपि' घ झ । २ 'कलयस्तु' आ. । ३ 'वो–वैद्याधम', स' ड । ४ 'सकृद्व्याधि' ट । ५ 'निश्चित्य' ट । ६ 'वी तु कथ्यते ब्राह्म' ट । 'वी स्यात्कथ्यते ब्राह्म' ठ. । ७ 'कलयन्' ट । ८ 'सादेवम्' ट. । ९ 'वपुरप्यति' अ हेमादि ।

अयोगो हि- हीनयोग उच्यते । यथा,-'पुत्रकार्याकरणादपुत्र इत्युच्यते । विपर्यये च-लघुव्याधौ, विपरीत शोधन तु प्रयोजितम्, कस्माद्विपरीतम्? अल्पवीर्यात्सशोधनात्, अतिमात्र मुत्कृष्टवीर्यं च बहुदोषाकलनया, अतियोगेन प्रयोजित न केवल मलान् क्षिणुयात्-क्षपयेत्, यावद्वपुरस्यति-शरीरमपि हि स्यात् । अत्र च सशोधन यत् दृष्टान्तत्वेनोपन्यस्त तदयोगातियोगाभ्या रोगोत्क्लेश शरीरक्षपण [च] झटिति निर्वर्तयतीति[2] । खरनादेनाप्युक्त च-"अल्पमुत्क्लेशयेद्दोष बहु प्राणान्निहन्ति च । तस्मान्निरूप्य भिषजा देय युक्त विरेचनम् ॥" इति । तथा, ज्वरगुल्मादीना च तत्प्रतीकारार्थ यद्दीयते भेषज तत्रापि महारम्भेऽल्पमल्पवीर्य चौषध न देयम्, इत्यस्मादेव दृष्टान्तीभूतादर्थादवगन्तव्यम् ।

आ० र०-विपर्ययज्ञाने दोषमाह-ततोऽल्पमिति । अयोगत -हीनयोगेन । विपरीत-अतिमात्रमतिवीर्यं वा । विपर्यये-लघुव्याधौ । वपुरप्यतिशयेन क्षय नयेत्, न दोषानेव ।

**अतोऽभियुक्तः सततं सर्वमालोच्य सर्वथा ।**
**तथा युञ्जीत भैषज्यमारोग्याय यथा ध्रुवम् ॥ ७३ ॥**

स०-यस्माच्चैव रोगाणा दुर्विज्ञेया गति, अत -अस्माद्धेतो, सततमभियुक्त -सदाऽऽयुर्वेदपाठावबोधानुष्ठानपरो वैद्य, सर्वं-दूष्यादिवस्तुजातम्, आलोच्य सर्वथा-सर्वेण प्रकारेणाऽऽयुर्वेदानुसारिण्या स्वबुद्ध्या तद्विद्यसम्भाषासम्भवया च तथा कर्माभ्यासतोऽपि निपुणं निरूप्य, तथा-तेन प्रकारेण दोषदूष्यदेशाद्यनुगुणेन, भैषज्य युञ्जीत-भेषज युञ्ज्यात् । यथाऽऽरोग्याय ध्रुव-येन प्रकारेणाऽऽरोग्यार्थमवश्य स्यात् ।

आ० र०-अशेषविशेषपरीक्षायामत्यादर कार्य इत्याह-अतोऽभियुक्त इति ।

पूर्वमुक्तम् (श्लो ३२)-"दोषा एव हि सर्वेषा रोगाणामेककारणम् ।" अतस्तानेव दोषान् वृद्धिक्षयविभेदेनाह—

**वक्ष्यन्तेऽतःपरं दोषा वृद्धिक्षयविभेदत ।**

स०-वृद्धिश्च क्षयश्च वृद्धिक्षयौ, वृद्धिक्षययोर्विभेदो वृद्धिक्षयविभेद-, विविधो विशिष्टो भेदो-विभेद, तस्माद्वृद्धिक्षयविभेदत । अत.परं-अतोऽनन्तरम्, दोषा -वातादयो, वक्ष्यन्ते-भणिष्यन्ते ।

आ० र०-अथ सयोग । तस्य त्रिषष्टिर्भेदा । तानाह-वक्ष्यन्तेऽत परमिति । दोषा -दोषभेदा । विभेदे -तारतम्यम्, तत्साम्ये[10] नास्ति वृद्धौ क्षये चास्ति, वृद्धिक्षययैवतारतम्य च[11] भेदे[12] कारणम् ।

१ 'पुत्र का' ट ठ । २ 'ति । उक्त च' ट ड । ३ 'भवेत्' ठ । ४ 'चैतेषा रो' ट । ५ 'षात् सम्भवनया' ट । 'षात् सम्भावनया' ठ । 'षात् सम्भवतया' ड । ६ 'योज्यम्' ट ड । ७ 'थोऽवभेदो' ठ । ८ 'भेदानाह' ख ञ । ९ 'द -साम्यम्' ख घ छ झ ञ । 'द -असाम्यम्' क । १० 'म्ये चास्ति वृद्धौ क्षये नास्ति' छ । ११ 'वत्साम्य च' क ख ग छ झ ञ । १२ 'भेदत्वका' ख । 'भेदवत्का' ञ ।

**पृथक् त्रीन् विद्धि**

स०-पृथक्-व्यस्तान् स्वप्रमाणाधिकान्, त्रीन् दोषान्-रोगहेतून्, विद्धि-अवेहि । वातो वृद्ध ।१। पित्त वृद्धम् ।२। श्लेष्मा वृद्ध ।३। एव त्रयो दोषा ।

आ० र०-तत्र वृद्धिसाम्याभ्या द्वादश । तत्र पृथक् त्रीन् विद्धि । पृथक्-प्रत्येक वृद्ध्या, "पञ्चविंशतिरित्येव वृद्धे" इत्युपसहारात् । पारिशेष्यात् द्विश साम्येन । यथा,-वायुर्वृद्ध पित्तकफौ समौ ।१। पित्त वृद्ध वायुकफौ समौ ।२। कफो वृद्धो वायुपित्ते समे ।३।

ससर्गभेदानधुना वक्ति—

**संसर्गस्त्रिधा, तत्र तु तान्नव ॥ ७४ ॥**

स०-समर्गस्त्रिधा-त्रिप्रकार । तत्र-ससर्गे, नव दोषभेदान् स्वप्रमाणाधिकान्, "विद्धि" इत्येतदनुवृत्तिकृतेन सम्बन्धेन सर्वत्र योज्यम् ।

आ० र०-ससर्ग त्रिधा विद्धि, वायुपित्ते वायुकफौ पित्तकफौ इति । तत्र तान्-संयोगान्, नव विद्धि ।

कथ नव भेदान्? इत्याह—

**त्रीनेव समया वृद्ध्या, षडेकस्यातिशायने ।**

स०-समया वृद्ध्या-तुल्यया वृद्ध्या, त्रीनेव-अन्यूनाधिकान्, ससर्गदोषभेदान् विद्धि । एको वातपित्ताभ्यामधिकाभ्याम्, द्वितीयो वातकफाभ्यामधिकाभ्याम्, तृतीय पित्तश्लेष्मभ्यामधिकाभ्याम्, इति । ससर्गस्थयोर्दोषयोरेकस्य दोषस्यातिशायने-अधिकतरया वृद्ध्या, षट् ससर्गदोषभेदान् विद्धि । अतिशयो-अतिशायनम् । अतिशायने "तमविष्ठनौ" इति निपातनाद्दीर्घ । दोषद्वयवृद्धेश्चिन्त्यमानत्वादपरदोषचिन्ता नास्त्यत्र । वातो वृद्ध पित्त वृद्धतरम् ।१। पित्त वृद्ध वातो वृद्धतर ।२। कफो वृद्ध पित्त वृद्धतरम् ।३। पित्त वृद्ध कफो वृद्धतर ।४। कफो वृद्धो वातो वृद्धतर ।५। वातो वृद्ध कफो वृद्धतर. ।६। एवं षट् ससर्गदोषभेदान् विद्धि ।

आ० र०-तत्र त्रीन् समया वृद्ध्या । यथा,-वायुपित्ते वृद्धे कफ सम ।१। वायुकफौ वृद्धौ पित्त समम् ।२। पित्तकफौ वृद्धौ वायु सम ।३। एकस्यातिशयने षट् । यथा,-वायो. पित्त वृद्ध कफ सम. ।१। पित्ताद्वायुर्वृद्ध. कफ. सम ।२। कफाद्वायुर्वृद्ध पित्त समम् ।३। वायो. कफो वृद्ध पित्त समम् ।४। पित्तात्कफो वृद्धो वायु सम ।५। कफात्पित्त वृद्ध वायु. सम ।६। एव द्वादश ।

**त्रयोदश समस्तेषु**

स०-समस्तेषु-सन्निपतितेषु त्रिष्वपि दोषेषु वृद्धेषु, त्रयोदश दोषभेदान् विद्धि ।

आ० र०-वृद्धेष्वेव समस्तेषु त्रयोदश सयोगान् विद्धि ।

१ 'प्रतिदोष वृद्धिभेदानभिधाय सस' ट । २ 'ससर्ग त्रिधा' अ हेमाद्रि । ३ 'न न्यूना' ट । ४ 'सर्गयो' ड । ५ 'दोषान्' ट ठ. ।

कथम्? इत्याह—

**षड् द्व्येकातिशयेन तु ॥ ७५ ॥**

**स०—**द्वौ चैकश्च द्व्येके, तेषा द्व्येकेषामतिशयो—अधिकत्वम्, तेन द्व्येकातिशयेन । ततो द्व्यातिशयेन त्रयो भेदा, तथा दोषैकस्यातिशयेन त्रय, इति षट् भेदा । यथा,—कफो वृद्धो वातपित्तेऽधिक वृद्धे । १ । पित्त वृद्ध वातकफावतिवृद्धौ । २ । वातो वृद्ध पित्तकफावतिवृद्धौ।३। पित्तकफौ वृद्धौ वातोऽतिवृद्ध।४। वातकफौ वृद्धौ पित्तमतिवृद्धम्।५। वातपित्ते वृद्धे कफोऽतिवृद्ध।६। इति षड्भेदान् द्व्येकातिशयेन सन्निपाते विद्धि ।

**आ० र०—तत्रैकस्मात् द्वयोर्वृद्धयोस्त्रीन् । यथा,—वायो. पित्तकफौ वृद्धौ ।१। पित्तात्कफवायू ।२। कफाद्वायुपित्ते ।३। द्वाभ्यामेकस्मिन् वृद्धे त्रीन् । यथा,—वायुपित्ताभ्या कफो वृद्ध ।१। वायुकफाभ्या पित्त वृद्धम् ।२। पित्तकफाभ्या वायुर्वृद्ध ।३।**

**एकं तुल्याधिकैः**

**स०—**तुल्य कृत्वा—समं कृत्वा, वृद्धैर्दोषैरेकं सन्निपातदोषभेद विद्धि ।

**आ० र०—तुल्याधिकैरेकम् । यथा,—वायुपित्तकफा वृद्धा ।१।**

**षट् च तारतम्यविकल्पनात् ।**

**स०—**तरतमयोर्भावस्तारतम्यम् । कस्य तारतम्यम्? प्रकृतत्वात्सन्निपातस्थदोषाणाम् । तारतम्यस्य विकल्पन—भेद, तारतम्यविकल्पनम्, तस्मात् । सन्निपातस्थदोषाणा वृद्धिरूपाणा षड्भेदान् विद्धि । यथा,—वातो वृद्ध पित्त वृद्धतर कफो वृद्धतम । १ । वातो वृद्ध कफो वृद्धतर पित्त वृद्धतमम् । २ । पित्त वृद्ध कफो वृद्धतरो वातो वृद्धतम । ३ । पित्त वृद्ध वातो वृद्धतर. कफो वृद्धतम । ४ । कफो वृद्धो वातो वृद्धतर पित्त वृद्धतमम् । ५ । कफो वृद्ध पित्त वृद्धतर वातो वृद्धतम । ६ । एतेषा च लक्षण मुनिरध्यगीष्ट[1] । तथा च तद्ग्रन्थ (च चि अ ३।८८)—"सन्निपातज्वरस्योर्ध्वं त्रयोदशविधस्य हि[2] । प्राक् सूत्रितस्य वक्ष्यामि लक्षण वै[3] पृथक् पृथक् ॥ भ्रम पिपासा दाहश्च गौरव शिरसोऽतिरुक् । वातपित्तोल्बणे विद्याल्लिङ्ग मन्दकफे ज्वरे ॥ शैत्य कासोऽरुचिस्तन्द्रा पिपासा दाहरुग्व्यथा । वातश्लेष्मोल्बणे व्याधौ लिङ्ग पित्तावरे विदु ॥ छर्दि शैत्य मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना । मन्दवाते व्यवस्यन्ति लिङ्ग पित्तकफोल्बणे ॥ सन्ध्यस्थिशिरस. शूल प्रलापो गौरव भ्रम. । वातोल्बणे स्याद् द्व्यनुगे तृष्णा कण्ठास्यशुष्कता[4] ॥ रक्तविण्मूत्रता दाह स्वेदस्तृड्बलसङ्क्षय । मूर्च्छा चेति त्रिदोषे स्याल्लिङ्ग पित्तगरीयसि ॥ आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमै । कफोल्बण सन्निपात तन्द्राकासेन चादिशेत् ॥ सम[5] दोषैस्त्रिभिर्वृद्धै सन्निपातस्य लक्षणम् । मुहुर्दाहो मुहु शीत कर्णक्ष्वेडनपार्श्वरुक् ॥ मोह च्छर्दिर्दिवा निद्रा रात्रौ जागरण तथा । प्रतिश्या छर्दिरालस्य तन्द्रारुच्यग्निमार्दवम् ॥ हीनवाते पित्तमध्ये चिह्न श्लेष्माधिके मतम् । हारिद्रमूत्रनेत्रत्वग्दाहस्तृष्णा भ्रमोऽरुचि ॥ हीनवाते मध्यकफे लिङ्ग पित्ताधिके मतम् । शिरोरुग्वेपथु श्वास प्रलाप च्छर्द्यरोचकौ ॥ हीनपित्ते मध्यकफे लिङ्ग वाताधिके मतम् । शीतक गौरव तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् ॥ हीनपित्ते वातमध्ये लिङ्ग श्लेष्माधिके विदु । वर्चोभेदोऽग्निदौर्बल्य तृष्णा दाहोऽरुचिर्भ्रम ॥ कफहीने वातमध्ये लिङ्ग पित्ताधिके मतम् । श्वास कास प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् ॥ कफहीने पित्तमध्ये लिङ्ग वाताधिके स्मृतम्[6] ।" इति ।

**आ० र०—तारतम्यविकल्पनात् षट् । यथा,—वायुपित्तकफा वृद्धा वृद्धतरा वृद्धतमा ।१। एव वायुकफपित्तानि ।२। पित्तकफवायव ।३। पित्तवायुकफा ।४। कफवायुपित्तानि ।५। कफपित्तवायव ।६। एव त्रयोदश ।**

**पञ्चविंशतिमित्येवं वृद्धैः**

**स०—**एवं—पूर्वोक्तेन प्रकारेण, पञ्चविंशतिसङ्ख्यापरिमाणान् वृद्धान् दोषभेदान् वृद्धैर्दोषैर्विद्धि ।

**आ० र०—एव वृद्धौ पञ्चविंशति विद्धि ।**

**क्षीणैश्च तावतः ॥ ७६ ॥**

**स०—**क्षीणै—क्षयावस्थैर्दोषै, तावत—तत्परिमाणान् पञ्चविंशतिसङ्ख्याकान् दोषभेदान् विद्धि । यथा,—वृद्धै पृथक् त्रीन् दोषभेदान्, तथा क्षीणै । "पृथक् त्रीन्" इत्यादिग्रन्थे वृद्धिशब्दस्थाने क्षीणशब्दो निपात्य । तद्यथा,—वात क्षीण । १ । पित्त क्षीणम् । २ । कफ क्षीण । ३ । तदेव ससर्गे नव दोषभेदान् विद्धि । कथम्? त्रीनेव समक्षीणत्वेन,—क्षीणवातपित्तससर्ग । १ । क्षीणपित्तकफससर्ग । २ । क्षीणवातकफससर्ग । ३ । षडेकस्यातिशायने[7] । अतिशायने—अन्यदोषापेक्षया क्षीणत्वातिरेके,—वात क्षीण पित्त क्षीणतरम् । १ । पित्त क्षीण वात क्षीणतर । २ । वात क्षीण कफ क्षीणतर । ३ । कफ क्षीणो वात क्षीणतर । ४ । कफ क्षीण पित्त क्षीणतरम् । ५ । पित्त क्षीण कफ क्षीणतर । ६ । एव षट् दोषभेदान् विद्धि । त्रयोदश समस्तेषु—सन्निपतितेषु क्षीणेषु दोषेषु दोषभेदास्त्रयोदश विद्धि । कथम्? षड् द्व्येकातिशयेन तु । दोषद्वयस्यातिशयेन—अतिक्षीणत्वेन, तथा दोषैकस्यातिक्षीणत्वेन, पर्यायत षट् क्षीणसन्निपातदोषभेदान्[8] विद्धि ।

---

१ 'च' अ ठ. । २ 'मुनिराह—स' ट ड । ३ 'च' ट ठ ड । ४ 'स्यशोषता' स च । ५ सममित्यादि सार्द्ध. श्लोको मुद्रितसटीकचरकपुस्तके नोपलभ्यते ।

१ अस्याग्रे "वातपित्तावरे लिङ्ग वेदितव्य कफाधिके ।" इति ट पुस्तकेऽधिक पाठ । २ 'त्व दाह' स च । ३ 'मध्यवाते' ट ठ ड. । ४ 'विदु' स च । ५ 'मतम्' स च । ६ अस्याग्रे "रात्रौ जागरण शीत दाह स्वेदोऽरतिर्भ्रम । प्रतिश्यायोऽरुचि कासो निद्रा दुपलिप्तता ॥ त्रिभिर्दोषै प्रवृद्धैश्च सन्निपातास्त्रयोदश।" इति ट पुस्तकेऽधिक पाठ । ७ 'तिरिव्येव' अ क ख ग झ ञ ठ.स द्द । ८ 'दोषान्' ट. ।

यथा,—वात क्षीण पित्तकफावतिक्षीणौ । १ । पित्त क्षीण वातकफावतिक्षीणो । २ । कफ क्षीण पित्तवातावतिक्षीणौ । ३ । वातपित्ते क्षीणे कफोऽतिक्षीण । ४ । पित्तकफौ क्षीणौ वातोऽतिक्षीण । ५ । वातकफो क्षीणौ पित्तमतिक्षीणम् । ६ । एक तुल्यक्षीणैर्भेद विद्धि । १ । षट् च तारतम्यविकल्पनात्,— कफ क्षीण पित्त क्षीणतर वात क्षीणतम । १ । वात क्षीण कफ क्षीणतर पित्त क्षीणतमम् । २ । पित्त क्षीण कफ क्षीण तरो वात क्षीणतम । ३ । कफ क्षीणो वात क्षीणतर पित्त क्षीणतमम् । ४ । वात क्षीण पित्त क्षीणतर कफ क्षीणतम । ५ । पित्त क्षीण वात क्षीणतर कफ क्षीणतम । ६ । एव पञ्चविंशतिदोषभेदान् क्षीणैर्दोषैर्विद्धि ।

**आ० र०–क्षीणैश्च तावतो विद्धि । वृद्धशब्दस्थाने क्षीणशब्दप्रयोगात्ते ज्ञेया. ।**

**एकैकवृद्धिसमताक्षयैः षट् ते**

**स०**–ते–सन्निपातस्थदोषास्त्रय, षोढा भवन्ति । कथम्? इत्याह–एकैकेत्यादि । वृद्धिश्च समता च क्षयश्च वृद्धिसमता क्षया । एकैकस्य–वाताद्यन्यतमस्य, वृद्धिसमताक्षया एकैक वृद्धिसमताक्षया, तैरेकैकवृद्धिसमताक्षयै षट् । यथा,–वातो वृद्ध पित्त सम कफ क्षीण । १ । पित्त वृद्ध वात सम कफ क्षीण । २ । कफो वृद्ध पित्त सम वात क्षीण । ३ । कफो वृद्धो वात सम पित्त क्षीणम् । ४ । वातो वृद्ध कफ सम पित्त क्षीणम् । ५ । पित्त वृद्ध कफ समो वात क्षीण । ६ । एवमेकैकवृद्धिसमताक्षयै षट् ।

**आ० र०–वृद्धिक्षयसाम्यै (वृद्धिसाम्यक्षयै) षट् । वृद्धवृद्धतरवृद्धतमस्थाने वृद्धक्षीणसम(वृद्धसमक्षीण)प्रयोगात्ते ज्ञेया । तेषा लक्षणमुक्त सङ्ग्रहे (सू अ २०)– "रोगावस्थासु युगपद्वृद्धिसाम्यक्षयानुगम् । षट्क हि दुर्बोधतर विकारैरिति दृश्यते ॥ प्रकृतिस्थ यदा पित्त वृद्धो वायु कफक्षये । स्थानादादाय गात्रेषु यत्र यत्र विसर्पति ॥ तदा भेदश्च दाहश्च तत्र तत्रानवस्थितौ । गात्रदेशे तथा स्याता बलहानि परिश्रमौ ॥ प्रकृतिस्थ कफ क्षीणे पित्ते वायुर्यदा बली । कर्षेत् कुर्यात्तदा शूल सशैत्यस्तम्भगौरवम् ॥ प्रकृतिस्थ यदा वात पित्त वृद्ध कफक्षये । सरुणद्धि तदा दाह शूल चास्योपजायते ॥ प्रकृतिस्थ कफ वृद्ध पित्त वायुक्षये यदा । सन्निरुध्यात्तदा कुर्यात्सतन्द्रागौरव ज्वरम् ॥ प्रकृतिस्थ यदा वायु क्षीणे पित्ते कफोऽधिक । सन्निरुध्यात्तदा कुर्याच्छीतक गौरव रुजम् ॥ शीतक–शीतपूर्वज्वरम् । प्रकृतिस्थ यदा पित्त वृद्ध श्लेष्माऽनिलक्षये । सन्निरुध्यात्तदा कुर्यान्मन्दाग्नित्व शिरोग्रहम् ॥ निद्रातन्द्रोपलेपाश्च हृद्रोग गात्रगौरवम् ।** ष्ठीवन पित्तकफयोर्नखादीना च पीतताम् ॥ ये दोषवृद्धिक्षययोर्विकारा कीर्तिता पृथक् । शेषेष्वपि तु तानेव कल्पयेत्तद्यथायथम् ॥" इति ।

**पुनश्च षट् ।**

**एकक्षयद्वन्द्ववृद्ध्या सविपर्ययाऽपि ते ॥ ७७ ॥**

**स०**–एकस्य क्षय एकक्षय, द्वन्द्वस्य वृद्धिर्द्वन्द्ववृद्धि, एकक्षयसहिता द्वन्द्ववृद्धिरेकक्षयद्वन्द्ववृद्धि, तया । किम्भूतया? सविपर्ययया,–सह विपर्ययेण–वैपरीत्येन वर्तते या सैवम्, तया । एकक्षयद्वन्द्ववृद्ध्या पुनरेव षट् दोषभेदा । वात क्षीण पित्तकफौ वृद्धौ । १ । पित्त क्षीण वातकफौ वृद्धौ । २ । कफ क्षीणो वातपित्ते वृद्धे । ३ । एवमेकक्षयद्वन्द्ववृद्ध्या त्रयो भेदा । सविपर्ययया च वृद्ध्या त्रयो दोषभेदा । द्वन्द्वक्षयैकदोषवृद्ध्या–द्वन्द्वक्षयसहितैकदोषवृद्धि, तया । यथा,–वातपित्ते क्षीणे श्लेष्मा वृद्ध । १ । वातकफौ क्षीणौ पित्त वृद्धम् । २ । पित्तकफौ क्षीणौ वातो वृद्ध । ३ । इति सविपर्ययया वृद्ध्या त्रयो दोषभेदा । एव सन्निपातभेदा द्विरूपया वृद्ध्या षडेते ज्ञेया ।

**आ० र०–एकक्षयद्वन्द्ववृद्धिभ्या त्रय । यथा,–वायु क्षीण पित्तकफौ वृद्धौ ।१। पित्त क्षीण कफवायू वृद्धौ ।२। कफ. क्षीणो वायुपित्ते वृद्धे ।३। द्विक्षयैकवृद्धिभ्या त्रय. । यथा,–वायुपित्ते क्षीणे कफो वृद्ध ।१। पित्तकफौ क्षीणौ वायुर्वृद्ध ।२। कफवायू क्षीणौ पित्त वृद्धम् ।३।**

**भेदा द्विषष्टिर्निर्दिष्टा.**

**स०**–एव भेदगणनया दोषाणा भेदा द्विषष्टिर्निर्दिष्टा –उक्ता ।

**आ० र०–एव द्विषष्टिर्भेदा ।**

**त्रिषष्टः स्वास्थ्यकारणम् ।**

**स०**–त्रिषष्टीना पूरणो यो दोषभेद, स स्वास्थ्यकारण–आरोग्यहेतु, धातुसाम्यात् । अत्र हि स्वप्रमाणस्था वातपित्तकफा । ये च दोषभेदा द्विषष्टि, ते च रोगकारणमित्यर्थादुक्त भवति । अत्र च रोगहेतुत्वे दोषवैषम्य कारणम् । त्रिषष्ट इति "तस्य पूरणे डट्" इति डट् ।

**आ० र०–वायुपित्तकफा. समा इति त्रिषष्टो भेद. स्वास्थ्यकारणम् ।**

अधुना रसादिभेदादानन्त्य दोषभेदाना दर्शयन्नाह—

**संसर्गाद्रसरुधिरादिभिस्तथैषा**
**दोषास्तु क्षयसमताविवृद्धिभेदैः ।**
**आनन्त्यं तरतमयोगतश्च यातान्**
**जानीयादवहितमानसो यथास्वम् ॥ ७८½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने दोषभेदीयो नाम द्वादशोऽध्यायः ॥ १२ ॥**

१ 'दोषभेदैर्वि'ट ठ । २ 'रोग्यवस्था'क ख ग ञ । ३ 'रैरुपदेक्ष्यते' स सं । 'रिति दृश्यते' स मू । ४ 'यत्रापसर्पति' क ख ग छ ञ । ५ 'त्राव्यव' ग । ६ 'गात्रोद्देशे' स द्व । ७ 'रिक्षयौ' ख छ झ ञ । ८ 'कुक्षौ कु' ख ग घ छ झ ञ । ९ 'यु वृद्ध पित्तक्षये कफ ।' झ स द्व । १० 'पूर्व ज्व' घ ठ झ । 'पूर्वक ज्व' ग ।

१ 'येत यथा' क ग. । 'येच्च यथा' छ । २ 'फौ समवृद्धौ' ट । ३ 'त्ते समवृद्धे' ट । ४ 'त्ते समक्षीणे' ट । ५ 'फौ समौ क्षीणौ' ट । ६ 'यद्विवृ' घ झ । ७ 'वृद्ध्या त्र' क ख ग छ ञ । ८ 'स्तथैतान्' अ आ ठ इन्दु । ९ 'दोषाणां क्ष' आ क ख ञ स स ।

स०-न केवल द्विषष्टिभेदभिन्नान् दोषान् जानीयात् । आनन्त्य च गतान् विद्यात् । कथमानन्त्यम् ? इत्याह-एषा-दोषभेदाना, यथास्व-रसैरक्तादिभिर्धातुभि सयोगात्, तथैषा मेव क्षयादिभेदैस्तरतमयोगाच्चानन्त्य गतान् विद्यात् । तत्र दिङ्मात्र शिष्यव्युत्पत्तये प्रदर्श्यते । तत्र रसे वातपित्तकफाना पृथक् त्रयो भेदा भवन्ति, "पृथक् त्रीन् विद्धि" इत्यनुसारेण । ससर्गस्त्रिधा । "तत्र तु तान्" रसमेवाधिकृत्य नव विद्धि । कथम् ? पूर्ववत् "त्रीनेव समया वृद्ध्या षडेकस्यातिशायने ।" एव पूर्वोक्तन्यायेन रसमधिकृत्य ससर्ग योजयित्वा सन्निपातो योजनीय । यथा,-त्रयोदश समस्तेषु । कथम् ? "षड्द्व्येकातिशयेन तु । एक तुल्याधिकै षट्च च तारतम्यविकल्पनात् ॥" इति समान पूर्वेण, रसाख्य स्थान केवलमधिकम् । "पञ्चविंशतिमित्येव वृद्धै क्षीणैश्च तावत ।" रसमधिकृत्य भेदान् विद्धि । इत्येव रुधिरमासादिभिर्योज्यम् । एकैकोपक्रमेणैत्येव द्विषष्टिभेदभिन्नाना दोषाणा रसादिभि सप्तभि सयोगात् चत्वारि शतान्येकचत्वारिंशदधिकानि स्यु । शकृदादिससर्गात् क्षीणतरक्षीणतमादिभेदैर्वृद्धतरवृद्धतमादिभेदैश्च चिन्त्यमाना दोषा आनन्त्य यान्तीति । रसभेदे दोषभेदे चावगते वैद्यस्य हेतुलक्षणोपक्रमेषु मोहो न भवति । तथा च मुनि (च सू अ २६।२५)- "य स्याद्रसविकल्पज्ञ स्याच्च दोषविकल्पवित् । न स मुह्येद्विकाराणा हेतुलिङ्गोपपत्तिषु ॥" इति । श्रीत्रीणगस्त्रिदशभवा प्रहर्षिणी स्यात् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने दोषभेदीयाध्यायो द्वादश समाप्त ॥ १२ ॥

**आ० र०-एते भेदा रसादिभिर्दूष्यै प्रत्येक ससर्गाद्बहवो भवन्ति । तथा, एषा-दूष्याणा क्षयादिभेदै ससर्गास्ततोऽपि बहव । तेषामेव तारतम्यजैर्भेदै ससर्गास्ततोऽपि बहव । एवमानन्त्य यातान् दोषानवहितमानसो जानीयात् । यथास्व-स्वेन लक्षणेन ।**

**इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**दोषभेदप्रकरण सामस्त्येन निरूपितम् ॥ १२ ॥**



१ 'दोषभेदान्' ट । २ 'न्त्य स्यात् ?' इ' ट । ३ 'रसादिभि स' ठ । ४ 'स्तथा तारतम्ययोगा' ट । ५ 'र्गश्च त्रिधा' ट । ६ 'इत्याद्यधि' ड । ७ 'क्तेन न्या' ठ । ८ 'पाते यो' ठ । 'पातैर्यो' ड । ९ 'त् क्षीणतमादिभेदैश्च चि' ट । १० 'न स्यात्' ड । ११ 'पशान्तिपु' स च । १२ 'भेदनै सयोगै स' क ख ग घ ङ ञ ।



## त्रयोदशोऽध्यायः ।

पूर्वेऽध्याये विकृतान् दोषानाश्रित्वोपक्रमेदिरत्युक्तम् । अतस्तमेवोपक्रम दर्शयितु दोषोपक्रमणीयमारिरिप्सुरिदमाह—

**अथातो दोषोपक्रमणीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

(गद्यसूत्रे ॥ २ ॥)

स०-दोषाणामुपक्रमण-चिकित्सा, दोषोपक्रमणम् । तस्मै हितो दोषोपक्रमणीय । शेष पूर्ववद्योज्यम् ।

**आ० र०-लक्षणस्कन्धानन्तरमौषधस्कन्धमारभते । तत्र दोषोपक्रमणीयमध्याय व्याख्यातु प्रतिजानीते-अथेति । दोषोपक्रमणस्यैव सर्वरोगौषधत्वात् । उपक्रमण-औषधम् ।**

सर्वदोषेभ्यश्च प्रधानो वात इति तदुपक्रम पूर्वमाह—

**वातस्योपक्रमः स्नेहः स्वेदः संशोधनं मृदु ।**
**स्वाद्वम्ललवणोष्णानि भोज्यान्यभ्यङ्गमर्दनम् ॥ १ ॥**
**वेष्टन त्रासनं सेको मद्यं पैष्टिकगौडिकम् ।**
**स्निग्धोष्णा बस्तयो बस्तिनियमः सुखशीलता ॥२॥**
**दीपनैः पाचनैः सिद्धाः स्नेहाश्चानेकयोनयः ।**
**विशेषान्मेद्यपिशितरसतैलानुवासनम् ॥ ३ ॥**

स०-वातस्योपक्रम स्नेह, श्रेष्ठत्वाच्च प्रागुपादान स्नेहस्य । तत स्वेद । कृतस्नेहस्वेदस्य च सशोधनम् । तच्च मृदु-न तीक्ष्णम्, तीक्ष्णस्य वातकोपहेतुत्वात् । तथा, स्वाद्वादीनि भोज्यानि-भक्ष्याणि । अभ्यङ्गश्च मर्दन चाभ्यङ्गमर्दनम् । मर्दन-पाण्यादिना । वेष्टन-शाटकादिना । त्रासन-खड्गव्यग्रग्रहस्तराजपुरुषदर्शनादिना । ननु, भीशोकादिभिर्मारुतस्य कोप उक्त । वक्ष्यति हि (हृ नि अ १।१५)-"क्रियातियोगभीशोक" इत्यादि । तत् कथ त्रासन वायोरुपक्रम ? उच्यते । भय वातप्रकोपहेतु, न तु त्रासनम् । त्रासन हि सर्ववातविजयि । तस्माद्वातोपशान्त्यर्थ त्रासन युक्तम् । यथा,-उन्मादादिषु । तथा च वक्ष्यति वातोन्मादे (हृ उ अ ६।२१)-"हर्षणाश्वासनोत्रासभयताडनतर्जनम् ।" इत्यादि । तथा, सेकादिरुपक्रम । सेको-दशमूलक्वाथादिना । तथा, मद्य पैष्टिक गौडिक च वातस्योपक्रम । तथा, स्निग्धोष्णा बस्तयो वातस्योपक्रम । स्निग्धोष्णा इत्युक्त्या रूक्षशीत बस्तिमत्र निराकरोति । तथा,

१ 'क्तत्वात्तमेवो' ड । २ 'अय दोषोपक्रमणीयश्चरके चि० ३० अध्याये, सुश्रुते उ० ६४ अध्याये, अष्टाङ्गसङ्ग्रहे सू० २१।२३ अध्याययोश्चास्ति वर्णित । ३ 'दोषाणामुपक्रमाय हित । वातस्य प्रधानत्वात्पूर्व ग्रहणम् । कृतस्नेहस्वेदस्य' ड । ४ 'नास्य सर्वे'घ ङ । ५ 'तप्रको' ट । ६ 'भक्षणीयानि' ट,ड, । ७ 'जयनम्' ठ, ।

बस्तिनियमो–यथाविधि बस्तिदानम्, वातस्योपक्रम । अथवा बस्तिनियम –कर्मकालयोगाख्यत्रिपञ्चाशद्बस्तिसङ्ख्य "प्राक् स्नेह एक पञ्चान्ते" ( हृ सू अ १९।६३ ) इत्येवमादिना ग्रन्थेन यो दर्शित, स वातस्योपक्रम । तथा सुख शीलयतीति सुखशील । शीलिकामिभिक्ष्याचरिभ्यो ण. । तस्य भाव सुखशीलता,–सौख्यवृत्तित्वम् । तिलप्रियालाक्षोडादयोऽनेका योनयो येषा तेऽनेकयोनय स्नेहा, ते च वातस्योपक्रम इति योज्यम् । किम्भूता ? दीपनपाचनैर्द्रव्यै सिद्धा । विशेषेण पुष्टमासरसस्तैलमनुवासन च वातस्योपक्रम ।

**आ० र०–तत्र वातौषधमाह–वातस्योपक्रम इति । स्नेह –शोधनादि ( तैलादि ) । स्वेद –तापादि । शोधन–वमनादि, तच्च मृदु–हीनयोगेन कृतम् । वेष्टन–वलितवस्त्रादिना समन्ताद्बन्धनम् । त्रासन–अकस्माद्भयोत्पादनम् । सेक –सेचनम् । बस्तयो–निरूहा । बस्तिनियम –अनुवासनम्, तस्य बस्तिना नियतत्वात् । सुखशीलता–सुखाभ्यास । स्नेहा –तैलादय । तिलतैलातसीतैलगोघृतमहिषीघृतादिभेदात्–अनेकयोनय । दीपनै –चित्रकादिभि । पाचनै –मुस्तादिभि । सिद्धा –पक्वा । स्नेहाना पुनर्वचन यथाकथञ्चिदपि वातघ्नत्वज्ञापनार्थम् । मेद्य–मेदुरम्, यत् पिशित–मासम्, तस्य रसस्तिलतैलमनुवासन चेत्येतत्त्रय विशेषेणौषधम् ।**

पित्तस्योपक्रम वक्ति—

**पित्तस्य सर्पिषः पानं स्वादुशीतैर्विरेचनम् ।**
**स्वादुतिक्तकषायाणि भोजनान्यौषधानि च ॥ ४ ॥**
**सुगन्धिशीतहृद्यानां गन्धानामुपसेवनम् ।**
**कण्ठेगुणानां हाराणां मणीनामुरसा धृतिः ॥ ५ ॥**
**कर्पूरचन्दनोशीरैरनुलेपः क्षणे क्षणे ।**
**प्रदोषश्चन्द्रमाः सौधं हारि गीतं हिमोऽनिलः ॥ ६ ॥**
**अयन्त्रणसुखं मित्रं पुत्रः सन्दिग्धमुग्धवाक् ।**
**छन्दानुवर्तिनो दारा· प्रियाः शीलविभूषिताः ॥ ७ ॥**
**शीताम्बुधारागर्भाणि गृहाण्युद्यानदीर्घिकाः ।**
**सुतीर्थविपुलस्वच्छसलिलाशयसैकते ॥ ८ ॥**
**साम्भोजजलतीरान्ते कायमाने द्रुमाकुले ।**
**सौम्या भावा· पयः सर्पिर्विरेकश्च विशेषतः ॥ ९ ॥**

स०–उपक्रम इत्यनुवर्तते । सर्पिष पानमित्यादि पित्तस्योपक्रम । तथा, हाराणा–मुक्तादाम्ना कण्ठेगुणसञ्ज्ञाना वक्षसा धृति –धारणम् । तथा, मणीना–मरकतचन्द्रकान्तपद्मरागादीनाम् । तथा, कर्पूरादिभि प्रतिक्षणमनुलेपनम् । तथा, प्रदोषादि पित्तस्योपक्रम इति वर्तते । प्रदोषो–रात्रिमुखम् । सुधाया इद सौध,–धवलगृहम् । हारि–रम्यम्, गीत–गानम् । तथा, मित्रमयन्त्रणसुख–न विद्यते यन्त्रणा यस्मिंस्तथाविध सुख यस्मिंस्तथाविध मित्रम् । तथा, सन्दिग्धा–अव्यक्ता, मुग्धा–अप्रौढा, वाग्–वाणी, यस्य स एवविध पुत्र । दारा –कलत्राणि, वल्लभा –सुशीलाश्च । तथा, छन्दानुवर्तिन –चित्तानुगुणकारिण । शीताम्बुधारा गर्भे–अभ्यन्तरे, येषा तथाविधानि गृहाणि । तथा, उद्यान–उपवनम् । तथा, दीर्घिका –गृहपुष्करिण्य । तथा, सौम्या भावा पित्तस्योपक्रम । क्व स्थितस्य ? सुतीर्थविपुलस्वच्छसलिलाशयसैकते यत् कायमान–तृणगृहम्, तस्मिन् । शोभन तीर्थ यस्य स एवम् । सुतीर्थश्चासौ विततविमलजलाशयश्च सुतीर्थविपुलस्वच्छसलिलाशय, तस्य समीपे सैकतम्, तस्मिन् । सिकता अस्मिन्देशे सन्तीति सैकतम्, "सिकताशर्कराभ्या च" इत्यण् । समूहार्थे ठग्दुर्निवार स्यात् । कीदृशे कायमाने ? साम्भोज–सपद्म, जल यस्मिंस्तीरान्ते स एव साम्भोजजलस्तीरान्तो यस्मिन् कायमाने तस्मिन् । तथा, द्रुमै –वृक्षै, आकुले–व्याप्ते । विशेषेण तु पयो घृत विरेकश्चोपक्रम ।

**आ० र०–पित्तस्यौषधमाह–पित्तस्य सर्पिष पानमिति । सुगन्धिशीतहृद्यानां द्रव्याणा–चन्दनादीना ये गन्धास्तेषामुपसेवनम् । कण्ठेगुणाना–कण्ठावलम्बिना, हाराणा–मुक्तावलीना, ये मणयस्तेषामुरसा धृति । उशीर–वीरणम् । प्रदोष –चन्द्र विनाऽपि । अयन्त्रणसुख–यत् सुखेन नियन्त्रण न करोति बुद्ध्या तु करोति । मुग्धा–मृदुला । उद्यानदीर्घिका –क्रीडावनवाप्य । सुतीर्थ –शोभनावतरणमार्ग, विपुल स्वच्छश्च य सलिलाशय, तस्य सैकते–सिकतामयप्रदेशे । साम्भोजजलतीरयोरन्त –सन्धि, यस्मिन्सैकते तत्तथा । कायमान–तृणादिरचितागारम् । सौम्या भावा –मन प्रसादना पदार्था, पय सर्पिर्विरेकश्चेति चतुष्टय विशेषादौषधम् ।**

अधुना श्लेष्मण उपक्रममाह—

**श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम् ।**
**अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ॥ १० ॥**
**दीर्घकालस्थितं मद्यं रतिप्रीतिः प्रजागरः ।**
**अनेकरूपो व्यायामश्चिन्ता रूक्षं विमर्दनम् ॥ ११ ॥**

---

१ 'बस्त्यनुष्ठानम्' ट. । २ 'चनद्रव्यै' ट । ३ 'तत्रितय' घ झ । ४ 'नमुख' हेमाद्रि । ५ 'कायमान' इति हेमाद्रिपठितपाठ । युक्तश्चाय सङ्ग्रहसम्मतत्वात् । ६ 'इति व' ठ ड । ७ 'कतपद्म' ट.ठ ड । ८ 'रजनीमु' ट ।

१ "अयन्त्रणै समानविषयवेषचरितैरुत्सवोत्सवतरान्योन्यदर्शनै सुहृद्भि सहासनम् ।" इत्युक्त सङ्ग्रहे । २ 'अविद्यमानयन्त्रणमन एव सुख मित्रम् ।' ड । ३ यन्त्रणा–मर्यादा । ४ 'णकार्यका' ट । ५ मुखेन–तत्स्थया वाचा । ६ नियन्त्रण–मार्गदर्शन रक्षण वा । "यन्त्रण स्यान्नियमने बन्धने रक्षणेऽपि च ।" इति विश्वप्रकाश । 'नियन्त्रणा' घ झ । ७ 'श –सुगमप्रवेशमार्गे' घ । "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरज सु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ॥" इति मेदिनी । ८ 'साम्भोजो ज' क ख ग झ ञ । ९ 'तीरान्त –तीरजलाशययो सन्धि' घ झ ।

**विशेषाद्वमनं यूषः क्षौद्रं मेदोघ्नमौषधम् ।**
**धूमोपवासगण्डूषा निःसुखत्वं सुखाय च ॥ १२ ॥**

**स०**–विधिना–शास्त्रोक्तेन, युक्त तीक्ष्ण वमनविरेचन कफस्योपक्रम [१]। तथा, अन्न रूक्षादिगुणयुक्तम् । तथा, मद्य पुराणम् । रतिप्रीति प्रजागर,–रमण–रति, तस्या प्रीति–सुखम् । [२]तथा, प्रजागर –अतिजागरणम् । तथा, अनेकरूपो व्यायामो–नियुद्धधनुराकर्षणादिक । विशेषेण तु वमन यूषो माक्षिक तथा मेदोघ्न यदौषध तच्च धूमादयश्च । तथा, नि सुखत्व–सुखाभावो दु खरूपत्वम्, वाग्देहमन कर्मणो दु स-दस्यानुष्ठानाद्यैदसुखमुत्पद्यते, तच्च श्लेष्मणो वृद्धस्य विकार-करणहेतोरुपशमात् सुखाय जायते ।

**आ० र०–श्लेष्मण औषधमाह–श्लेष्मणो विधिना युक्त-मिति । विधिना युक्त तीक्ष्ण शोधनम्, तीक्ष्णेन शोधनेन व्यापदोऽसम्भवात् । अत एव [४]मृदुमध्य वातपित्तयो शोधनमुक्तम् । रतिप्रीति –सम्भोगे प्रीति, न तु रति । वमनाद्यष्टक विशेषादौषधम् । सुखाय–सुखसाधनाय । धर्माय यन्नि सुखत्व–दु खानुभव [६]नाधर्माय, तस्यँ रोगहेतुत्वात् ।**

इदानी ससर्गोपक्रम वक्ति—

**उपक्रमः पृथग्दोषान् योऽयमुद्दिश्य कीर्तितः ।**
**संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥ १३ ॥**

**स०**–पृथक्–प्रत्येक, दोषान्–वातादीन्, उद्दिश्य–आश्रित्य, य उपक्रम कीर्तित –उक्त, ससर्गे सन्निपाते च त–उपक्रम, यथास्व विकल्पयेत्–प्रवृद्धदोषानुसारेण निरूप्य प्रयुञ्जीत[१०] । यथा,–वातपित्तससर्गे वातपित्तोपक्रमौ मिश्रौ, वातकफससर्गे वातकफोपक्रमौ, इत्यादि । एव सन्निपातेऽपि निरूप्योपक्रम. प्रयोज्य ।

**आ० र०–ससर्गसन्निपातभेदानामौषधमाह–उपक्रम इति । यथास्व–स्वमात्मीय विशेषमनतिक्रम्य, विकल्पयेत् । यथा,–वातपित्तससर्गे वातपित्तौपधमेलनमविरोधेन । तस्मि-न्नेव वाताधिके वातौ[११]षधमाधिक्येन, पित्ताधिक्ये पित्तौ-षधम्, एवमन्यत्रापि ।**

ससर्गे भूयोऽप्युपक्रममाह—

**ग्रैष्मः प्रायो मरुत्पित्ते वासन्तः कफमारुते ।**
**मरुतो योगवाहित्वात्, कफपित्ते तु शारदः ॥१४॥**

**स०**–उपक्रम इ[१२]त्यनुवर्तते । वातपित्तससर्गे ग्रीष्मर्तुचर्या-विहित उपक्रम प्रायेण योज्य । यथा ( हृ सू अ ३।२७ )–"अतोऽस्मिन् पटुकट्वम्लव्यायामार्ककरास्त्यजेत् । भजेन्मधुर-मेवान्नम्" इत्यादि सर्वं त्याज्य सेव्य च । कफमारुतससर्गे वसन्तर्तुभव "तीक्ष्णैर्वमननस्याद्यै" ( हृ सू अ. ३।१९ ) इत्यादिरुपक्रमो योज्य । प्रायेणेत्यत्रापि योज्यम् । ननु, ग्रीष्मे-ऽत्यन्तशीतसेवोक्ता, वसन्ते च तीक्ष्ण वमननस्याद्युक्तम् । एतच्च द्वयमप्येकान्तेन [१]पवनहेतु । तत्कथमुक्तम् ? "ग्रैष्म प्रायो मरुत्पित्ते वासन्त कफमारुते ।" इत्याशङ्क्याह–मरुतो योगवाहित्वात् । अत्राय भाव,–यदा किल वायु पित्तेन युज्यते तदा दाहादिकृत्, न च पित्ते समे सति दाहादिक कर्तु मरुत्समर्थ । अपि च ग्रीष्मे शीतमेव सेव्यत इति नाय नियम [२]। कि तर्हि ? स्निग्धाद्यपि । तस्मान्मरुत्पित्ते ग्रीष्म-[३]विधिर्युक्त । वसन्ते च कफयोगात् कफविकारकार्येव भवति पवन, योगवाहित्वात् । [४]अतस्तीक्ष्णो वमननस्यादिर्न्याय्य एव । पित्तेन सह स्थितस्य वायो पित्तचिकित्सा, कफेन सह स्थितस्य वायो कफचिकित्सा, स्वभाववशादिति भाव । तथा च ग्रन्थ –"योगवाही" ( पृ ९।२३ ) इत्यादि । कफपित्तससर्गे तु शारद –शरदृतुचर्याविहित उपक्रम । ननु, सन्निपाते क उपक्रम ? ब्रूम । वर्षर्तुचर्याविहित । प्रावृषि हि दोषत्रयकोप उक्त । अत एव तत्राह ( हृ सू अ ३।४४ )–"भजेत्साधा-रण सर्वम्" इत्यादि ।

**आ० र०–ससर्गभेदानामौषधान्तरमाह–ग्रैष्म इति । मरुत्पित्ते ससृष्टे ग्रैष्म उपचार कार्य । कफमारुते वासन्त । कफपित्ते शारद । तत्र शारदस्य कफपित्तघ्नत्वाद्युक्तो नि-[६]र्देश । ग्रैष्मस्य पित्तघ्नत्वाद्वासन्तस्य कफपित्तघ्नत्वादयुक्त, तत्राह–मरुतो योगवाहित्वादिति । योग–सम्बन्ध, वहति–निर्वहति, द्वितीयस्यानुसरणेनेति–योगवाही । तेन पित्त-युक्तस्य वायो पित्तघ्नेनोपशान्ति, कफयुक्तस्य कफघ्नेन । प्रायोग्रहणादनुचितांशस्य त्यागोऽपि ।**

सम्प्रत्युपक्रमस्य काल वक्ति—

**चय एव जयेद्दोषं कुपितं त्वविरोधयन् ।**
**सर्वकोपे बलीयांसं शेषदोषाविरोधतः ॥ १५ ॥**

**स०**–चयकाल एव दोष–वातादिं, जयेत् । [९]यथा छिन्न-मूलत्वान्न विकुर्वीत । न कोपकाल प्रतीक्षेतेति सूचना[१०]र्थं एव-शब्द । कथ जयेत् ? इत्याह–कुपित दोषमविरोधयन् । सर्व-दोषकोपे तु बलवत्तर दोष जयेत् । कथम् ? शेषदोषाविरोधेन ।

**आ० र०–औषधकालमाह–चय एवेति । चय एव दोषं जयेत्, न कोप प्रतीक्षेत । अथ कथञ्चिच्चयाति[११]क्रमे कुपित दोष जयेत् । त पुनरविरोधयन् जयेत् । कुपितोऽपि**

१ 'तिप्र' ठ. । २ 'तया प्र' ठ ङ । ३ 'यन्नि सुख' ट । ४ 'मृदुमध्ययोर्वातपित्तशोधनयोरुक्ति ।' घ झ । ५ 'ति रत्यां स' ख ग घ झ ञ । ६ 'न धर्माय' ख ञ । ७ 'स्य दु खरो' ख ञ । 'स्य रोगे हे' ग । ८ 'प्रकल्पयेत्' अ घ ठ । ९ 'रूप्योपक्रमो योज्य ।' ट । १० 'ञ्जीतेत्यर्थ ।' ठ । ११ 'षधाधिक्यम्, पित्ताधिक्ये पित्तौषधाधिक्यम्, ए' घ झ । १२ 'इति व' ठ ।

१ 'वायुहेतु ' ढ । २ 'विरुक्त ' ट । ३ 'ति, योग' ठ ढ । ४'अतो वासन्तस्ती' इति क्वचित् । ५'क्षणवम' ट.ढ । ६ 'क्तोऽति-देश ' घ झ । ७ 'नुसारेणेति' क ख ग ञ । ८ 'शल्या' घ झ । ९ 'तथा' ट । १० 'नार्थमेव' ट ढ । ११ 'क्रमकु' घ झ ।

द्विविध,-प्रकृतिसमसमवेतो विकृतिविषमसमवेतश्च। तत्र प्रथमे दोषस्वरूपतुल्य रोगस्वरूपम्, द्वितीये विपरीतम्। यथा,-कफज्वरे कफविपरीतमुष्णत्वम्। तत्र ज्वरस्वरूपस्य कफप्रकोपविरोधित्वादत्युष्णमौषध न कार्यम्। वक्ष्यति हि (हृ चि अ १।१६)-"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकम्॥" इति। सर्वेषा युगपत्कोपे यो बलीयान् त जयेत्, शेषदोषमविरोधयन्। सङ्ग्रहकारस्त्वाह (सू अ २१)-"क्रमान्मरुत्पित्तकफान् सर्वत्र सदृशे बले। वातादीना यथापूर्व यत स्वाभाविक बलम्॥ ऊचे पराशरोऽप्यर्थमसुमेव प्रमाणयन्। यथोपन्यासत प्रासमादौ दोषे भिषग्जितम्॥ नेतृभङ्गेन दृष्टो हि सम सैन्यपराजय। स्थानत केचिदिच्छन्ति प्राक् तावत् श्लेष्मणो वधम्॥ शिरस्युरसि कण्ठे च प्रलिप्तेऽन्नरुचि कुत। तदभावे कथ भोज्यपानद्रव्यावचारणम्॥ असत्यभ्यवहारे च कुतो दोषस्य निग्रह। तस्मादादौ कफो जेय कायद्वारार्गलो हि स॥ मध्यस्थायि यत पित्तमाशुकारि च चिन्त्यते। अतो वातसखस्यास्य कुर्यात्तदनु निग्रहम्॥ अध स्थायी च तदनु निग्राह्य स्यात्समीरण। अत एव च पित्तादि कफान्तोऽन्यै क्रम स्मृत॥ सुश्रुतश्च न सर्वत्र मतमेतद्ब्रवीति तु। जयेज्ज्वरेऽतिसारे च क्रमात् पित्तकफानिलान्॥ प्रायेण तापात्मतया ज्वरे पित्त विशिष्यते। विशेश्च सरता पित्तात्तथा च मृदुकोष्ठता॥ तस्य चानुबल श्लेष्मा गौरवापक्तिजाड्यकृत्। वायुश्च वर्धतेऽवश्य यस्त्वह.सु तयो क्षये॥ ज्वरातिसारयोस्तस्मादेष दोषजये क्रम। कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि॥ यस्मादामाशयोत्क्लेशाद्भूयिष्ठ तत्समुद्भव। क्रमेणाद्येन तत्रापि प्रवृद्धान् स्वाशये स्थितान्॥ स्वाशयेषु प्रदुष्टाना स्थितैव ह्याशुकारिता। विज्ञाय कर्मभि स्वै स्वैर्दोषोद्रेक यथाबलम्॥ भेषज योजयेत्तत्र तन्त्री कुर्यान्न तु क्रमम्।" इति।

१ 'त्वात्तन्नात्युष्णमौषध का' घ झ। २ 'बली त' ख ञ। ३ 'शेष दो' घ झ। ४ 'दोषभि' स द्द। ५ 'षविनिग्रह' क ख ग झ.ञ स द्द। ६ 'कारीति चि' ख ञ। ७ 'अध स्थायी' इति श्लोकार्ध घ झ पुस्तकयो सङ्ग्रहृदये च नोपलभ्यते। किन्त्वेतत् हेमाद्रिणेवारुणदत्तेनाप्यन्यत्र (सन्निपातज्वरचिकित्साटीकाया) सङ्गृहीत दृश्यते। ८ 'रे तेजो वि' स द्द। ९ 'विशेषात्सार्यते पित्ता' क ग। १० 'सरण पि' स स। ११ 'य स्नेहस्य' ग। 'यात्स्वह' स म। 'येष्वह' सर्वाङ्गसुन्दरायाम् (हृ चि अ १।१४६)। १२ 'जयक्रम' क ख ग ञ। १३ 'स्वाश्रये' ख ञ स स। १४ 'स्वाश्रयेषु' क ख ञ स स। 'स्वाशये तु' स मू। १५ 'तत्तत्' स स.। 'तत्तु स्वीकुर्यान्न क्रम भिषक्' सर्वाङ्ग०। १६ तन्त्री-तन्त्रवित्, भिषगित्यर्थ।

कुतो हेतोरित्याह—

**प्रयोगः शमयेद्व्याधिमेकं योऽन्यमुदीरयेत्।**
**नाऽसौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत्॥१६॥**

स०-य प्रयोगो व्याधि शमयेदन्यमन्य व्याधिमुदीरयेत्-प्रकोपयेत्, नासौ विशुद्धो-न श्रेष्ठ इत्यर्थ। स तु विशुद्ध प्रयोगो, य शमयेद्व्याधि न कोपयेत्। तस्मादन्य व्याधिमविरोधयन् व्याधिं जयेत्।

आ० र०-तत्राशुद्धप्रयोगो हेय शुद्ध उपादेय। तस्मात्तयोर्लक्षणमाह-प्रयोग इति। दोषाणा परस्पर न शम, इत्युक्त सङ्ग्रहे (सू अ २१)-"क्रुद्ध मलमल्ल जेतु नाल्पभावादुभावपि। दोषा दोषात्मकत्वाच्च न साम्येऽपि परस्परम्॥ शीतद्रवाम्ललवणकट्वादिगुणतुल्यता। दृष्टा मिथश्च दोषेषु नातोऽन्योन्य जयन्ति ते॥ आरम्भक विरोधेऽपि मिथो यद्वद्गुणत्रयम्। विश्वस्य दृष्ट युगपद्व्याधेर्दोषत्रय तथा॥" इति।

अथ कथ दोषा कोष्ठाच्छाखास्थिमर्मसु यान्ति? इत्याह—

**व्यायामादूष्मणस्तैक्ष्ण्यादहिताचरणादपि।**
**कोष्ठाच्छाखास्थिमर्माणि द्रुतत्वान्मारुतस्य च॥१७॥**
**दोषा यान्ति**

स०-कोष्ठात्-उदरात्, शाखास्थिमर्माणि दोषा यान्ति। कुत? इति हेतुचतुष्टयमाह-व्यायामादिभि शाखास्थिमर्माणि दोषा यान्ति। तत्र व्यायामोपजातश्रमस्योर्ध्व प्रपन्न पवनो व्यायामकृतक्षोभश्रमोष्मादिभि प्रशिथिल चल च दोषं स्वासदात् च्यावयित्वा पर्याकुल शाखादिषु क्षिपति। तथा, अग्न्यातपादिसम्बन्धिन ऊष्मणस्तैक्ष्ण्यात्,-तीक्ष्णेन ह्यूष्मणा विलायिता दोषास्तेनैव चोष्मणा विवृतेषु स्रोतोमुखेषु सत्सु शाखादीनि यान्ति। अहितेत्यादि। अहितेन च सेवितेन दोषा स्वप्रमाणादतिरिच्यमाना कोष्ठमापूर्य वार्षिका इव जलौघा निम्नोन्नतानीव शाखास्थिमर्माणि प्रपद्यन्ते। अपि समुच्चये। द्रुतत्वादित्यादि। द्रुतत्वात्-शीघ्रवाहित्वात्, मारुतस्य च, कोष्ठाच्छाखास्थिमर्माणि दोषा यान्ति।

आ० र०-अथ स्थानभेदोपक्रम उच्यते। तत्र दोषाणा स्थानान्तरप्राप्तिप्रकारमाह-व्यायामादिति। व्यायामादिभिश्चतुर्भि. कोष्ठस्था दोषा शाखाख्य बहिर्मार्गं यान्ति, मध्य वा अस्थिमर्माख्यम्।

शाखादिभ्य कथ दोषा कोष्ठं यान्ति? इत्याह—

**तथा तेभ्यः स्रोतोमुखविशोधनात्।**
**वृद्ध्याऽभिष्यन्दनात्पाकात्कोष्ठं वायोश्च निग्रहात्॥१८**

१ 'व्याधि योऽन्यमन्यमुदी' अ आ ख घ ड झ ञ ठ स द्द। २ 'न शाम्यन्ति प' क ख ग ञ। 'न समेऽपि' स स। ३ 'तस्निग्धाम्ल' ख ग घ झ। ४ 'स्थिसन्धिषु या' ट ठ ट। ५ 'स्वात् स्थानात्' ड। ६ 'ग्न्यादितापादि' ट ठ.। ७ 'ऊष्म. ण -अग्ने, तैक्ष्ण्यात्-प्रबलत्वात्' इति च द्द।

स०-स्रोतसा मुखानि, तेषा विशोधन-विवरणम्, तस्मा द्दोषा कोष्ठ यान्ति। तथा, वृद्ध्यादिभि । वृद्धि-स्वप्रमाणातिरेक । वृद्धा हि दोषा स्वानि स्रोतास्यापूर्य कोष्ठ यान्ति। अभिष्यन्दन च नाम्नितापादितीक्ष्णोष्णादिसश्लेषादेव, अपि तु क्षीरदध्याद्यभिष्यन्दिभोजनादपि। एव पाकात्,-पाचनादिभि पक्वा दोषा क्वचिदनासजन्त कोष्ठ यान्ति। किञ्च [1] वायोश्च निग्रहात्,-चशब्दान्न केवल पूर्वेभ्यो हेतुभ्यो यावद्वाय्वप्रेरणाच्च, इति चार्थ ।

**आ० र०-तथा शाखास्था अस्थिमर्मस्था वा स्रोतोमुखविशुद्ध्यादिभि पञ्चभिर्हेतुभि कोष्ठ यान्ति । अभिष्यन्दन-द्रवीभाव ।**

कोष्ठस्था दोषा कि कुर्यु ? इत्याह—

**तत्रस्थाश्च विलम्बेरन् भूयो हेतुप्रतीक्षिणः।**

स०-तत्रस्था-कोष्ठस्थाश्च दोषा विलम्बेरन्-न रोगानुत्पादयेयु । यस्मात्ते भूयो हेतुप्रतीक्षिण, निमित्तकारणहेतुषु सर्वासा प्रायोदर्शनाद्धेतौ प्रथमा, भूयो हेतुप्रतीक्षित्वादित्यर्थ । वृद्धोऽपि हि दोष कोष्ठे शाखादौ वा मार्गान्तरेण गतो हीनशक्तित्वान्न रोगोत्पादनसमर्थो भवति।

**आ० र०-एव दोषा कोष्ठस्था किं कुर्यु ? इत्याह-तत्रस्थाश्चेति । यत्स्थान प्राप्तास्तत्र विलम्बन्ते, यावत्स्थानान्तरगमने हेतु न लभन्ते । लब्धे तु हेतौ पुन. स्थानान्तर यान्तीत्यर्थ ।**

यद्येव कि कदाचिदप्यन्यस्थानगता दोषा हीनशक्तित्वान्न रोगान् कुर्यु ? इत्याह—

**ते कालादिबलं लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपि॥१९॥**

स०-ते-दोषा, कालदेशापथ्यादे [5] समानगुणाद्बल लब्ध्वा कुप्यन्ति [6],-विकारमुत्पादयन्तीत्यर्थ । कुत्र स्थाने ? इत्याह-अन्याश्रयेष्वपि,-कोष्ठाश्रया शाखास्थिमर्मस्वपि, शाखामर्माश्रिता कोष्ठेष्वपीत्यर्थ । न केवल स्वस्थानस्था एव कुप्यन्तीति सूचनार्थोऽपि शब्द [7] ।

**आ० र०-स्वस्थाने परस्थाने वा विलम्बमाना दोषा. स्वे स्वे प्रकोपणे प्रकुप्यन्तीत्याह-ते कालादिबलमिति ।**

इदानी परस्थानगताना दोषाणा विकल्पेन चिकित्सामुपदिशन्नाह—

**तत्रान्यस्थानसंस्थेषु तदीयामबलेषु तु।**
**कुर्याच्चिकित्साम्**

स०-तत्र-तेषु वातादिषु, अन्यस्थानसस्थेषु-अन्यस्य स्थानमन्यस्थान तत्र सन्तिष्ठन्तेऽन्यस्थानसस्थास्तेषु,-परस्थानगतेषु, तदीया-स्थानिदोषसम्बन्धिनीमेव, चिकित्सा कुर्यात्, न स्वकीयाम् । तस्य-परस्थानदोषस्येय-तदीया, ताम् । किम्भूतेषु दोषेषु ? अबलेषु तु। तुरवधारणे, अबलेष्वेव न बलवत्सु । बलवत्सु हि स्वामेव चिकित्सा वक्ष्यति।

**आ० र०-आगन्तोर्दोषस्य हीनबलस्य स्थानिचिकित्सा [2] कार्येत्याह-तत्रेति । तदीया-यस्य स्थाने कुपितस्तस्य चिकित्साम्।**

अत एवाह—

**स्वामेव बलेनान्याभिभाविषु॥२०॥**

स०-बलेन-आत्मीयया शक्त्या, अन्याभिभाविषु-अन्यस्थानिदोषमभिभवितु शील येषा तेऽन्याभिभाविन, स्थानिदोष पराभूय तत्र ये सन्तिष्ठन्ते इत्यर्थ । तेषु स्वामेव चिकित्सा कुर्यात्।

**आ० र०-आगन्तोरपि प्रबलस्य स्वचिकित्सैव कार्येत्याह-स्वामेवेति ।**

किमेष एव नियम ? यदन्यस्थानगतेष्वबलेष्वागन्तुषु स्थानिदोषसम्बन्धिनी चिकित्सा कुर्यात्। बलवत्सु पुनरागन्तुसम्बन्धिनीं चिकित्सा कुर्यात् । अथ पक्षान्तरोऽपि कुत्रचित् [4] कश्चिदस्ति ? इत्याह—

**आगन्तुं शमयेद्दोषं स्थानिन प्रतिकृत्य वा।**

स०-स्थानिन दोष प्रतिकृत्य-यथास्व स्थानिदोष आगन्तुदोषचिकित्सानिर्वर्तनान्न विकार कुर्यात्तथा तस्य प्रतीकारं कृत्वा, स्वैरेवोपक्रमैरबलवन्तमागन्तु दोष शमयेत्-चिकित्सेत्। न केवलमन्यस्थानसस्थेष्वागन्तुष्वबलेषु स्थानिदोषचिकित्सां कुर्यात्, यावदागन्तुदोषचिकित्सामपि कुर्यादित्यर्थ । अथासौ स्थानिदोष आगन्तुदोषेण बलवत्त्वादभिभूयेत, ततोऽस्य विकारकरण प्रत्यसमर्थत्वात्तत्प्रतीकारमकृत्वैवागन्तु शमयेदिति वाशब्दार्थ । अन्यस्थानसस्थेष्विति बहुवचननिर्देश पर्यायेण दोषाणा स्थितत्वात्। अन्यथा द्वयोरेकस्य वाऽन्यस्थानस्थितत्व सम्भवति, न त्रयाणाम्।

**आ० र०-आगन्तुस्थानिनोस्तुल्यबलयो क्रमेण चिकित्सा कार्येत्याह-आगन्तुमिति । स्थानिन प्रतिकृत्यागन्तु शमयेत् । अथवा, आगन्तु प्रतिकृत्य स्थानिन शमयेत्। प्रतिकृत्य-प्रतीकार कृत्वा ।**

तिर्यग्गतेषु दोषेषु यत्कार्यं तदाह—

**प्रायस्तिर्यग्गता दोषाः क्लेशयन्त्यातुरांश्चिरम्॥२१॥**
**कुर्यान्न तेषु त्वरया देहाग्निबलवित् क्रियाम्।**

स०-तिर्यग्गता दोषा प्रायो-बाहुल्येन, आतुराश्चिर

१ 'वायो-विक्षेपसहारकस्य, निग्रहात्-प्रशमात्' इति चन्द्र । २ 'णाचेत्यर्थ' ठ ड । ३ 'श्चभि को' क ख ग ञ । ४ 'न्तरगतो' ठ ड। ५ 'देशदूष्यप्रकृत्यपथ्या' इति क्वचित्। ६ 'न्ति-कोपमुत्पादयन्ति। कुत्र' ठ ड । ७ 'नार्थमपि' ठ ड । ८ 'नगाना' ट ।

१ 'त्सामाह-' ट । २ 'निनश्चिकि' घ झ । ३ 'र्थादित्यर्थ ।' ट ठ । ४ 'नी, बल' ड । ५ 'अथापरोऽपि पक्ष कुत्र' ट । ६ 'त् क्वचिद्विद्यत इत्यत आह' इति क्वचित्। ७ अस्याग्रे "साधारण वा कुर्वीत क्रियामुभययोगिनीम्।" इति झ पुस्तकेऽधिक पाठ । ८ 'यथाऽसौ स्था' इति क्वचित्। ९ 'स्य पूर्वं प्रतीकार कृत्वा पश्चात् स्वै' इति क्वचित्। १० 'त्वा पूर्वं स्वै' ट । ११ 'रबलिनमप्याग' ट. । 'रविलम्बितमा' ठ. । १२ 'त्वैव वाऽऽग' ड. ।

क्लेशयन्ति–पीडयन्ति । तेषु–तिर्यग्गतेषु दोषेषु, त्वरया–शीघ्रमेव, क्रिया–चिकित्सा, न कुर्यात् । वैद्य इति शेष । कीदृशो वैद्य ? देहाग्निबलाभिज्ञ ।

**आ० र०–प्राय इति, ज्ञात्वा कोष्ठप्रपन्नाश्चेति । तिर्यग्गता–शोधनमार्गं परित्यज्य स्थिता, अन्तर्बहिर्वा शोधयितुमशक्यत्वाच्चिरं क्लेशयन्ति । अतस्तेषु त्वरया न चिकित्सा कुर्यात्,–देहमग्निं बल च विचार्य शनै शनै कुर्यादित्यर्थ ।**

कथं तेषामुपक्रम कार्य ? इत्याह—

**शमयेत्तान् प्रयोगेण सुखं वा कोष्ठमानयेत् ॥२२॥**
**ज्ञात्वा कोष्ठप्रपन्नाश्च यथासन्नं विनिर्हरेत् ।**

**स०**–तान्–तिर्यग्गतान् दोषान्, प्रयोगेण–शास्त्रविहितेन, शमयेत । सुख वेति यथा वा देहपीडा न भवति तथा क्रमेण कोष्ठमानयेत्, "वृद्ध्याऽभिष्यन्दनात्" इत्यादिना । ज्ञात्वेत्यादि । कोष्ठगताश्चावगत्य यथासन्न विनिर्हरेत्,–यो यै आसन्नो मार्गो गुद मुख घ्राण वा, तेनैव यथासन्न–वमनविरेचनादिना निष्कासयेदित्यर्थ ।

**आ०र०–तान्–तिर्यग्गतान् शमयेत् । अथवा सुख–अक्लेशेन, स्नेहस्वेदादिना–प्रयोगेण, कोष्ठमानयेत् । तत ऊर्ध्वमधो वा निर्हरेत् । अल्पत्वबहुत्वाभ्या विकल्पव्यवस्था विचार्य ।**

सम्प्रति साममललिङ्गमाह—

**स्रोतोरोधबलभ्रंशगौरवानिलमूढताः ॥ २३ ॥**
**आलस्यापक्तिनिष्ठीवमलसङ्गारुचिक्लमाः ।**
**लिङ्गं मलानां सामाना, निरामाणा विपर्ययः ॥२४॥**

**स०**–स्रोतसा रोध–स्रोतोरोध । बलस्य भ्रंशो–हानि ,–बलभ्रंश । गौरव–गुरुत्वम् । अनिलस्य–वायो , मूढता–सम्यगसञ्चार । आलस्य–तन्द्रा । अपक्ति –आहारस्यापाक । निष्ठीवो–मुखस्राव । मलस्य–पुरीषादे , सङ्ग –अप्रवृत्ति । अरुचि –अन्नानभिलाष । क्लमो–ग्लानि । इत्येतत्सामानां मलाना–दोषाणाम्, लिङ्ग–लक्षणम् । निरामाणा विपर्यय –अस्माद्वैपरीत्यम् ।

**आ० र०–अथ सामदोषोपक्रम । तत्र सामलक्षण माह–स्रोतोरोधेति ।**

**निरामलक्षणमाह–निरामाणामिति । विपर्यय –स्रोत शुद्ध्यादिरूप ।**

१ 'यस्यासन्नो' इति क्वचित् । २ 'रेकादि' ट । ३ 'ना वाप्र' ख ञ । ४ 'अल्पबहुत्वादिविक' घ झ । ५ 'कल्पाव' ग । ६ 'स्या वि' क ग घ झ । ७ 'ललक्षणमाह' ट । ८ 'मूढता' अ आ क ख ञ ठ । ९ अस्याग्रे "**विण्मूत्रनखदन्तत्वक्चक्षुषा पीतता भवेत् । रक्तत्वमथ कृष्णत्व पृष्ठास्थिकटिसन्धिरुक्** ( 'सन्धिषु' आ ख झ ञ । ) ॥ **शिरोरुक् जायते तीव्रा, निद्रा विरसता मुखे । क्वचिच्च श्वयथुर्गात्रे ज्वरातीसारहर्षणम् ॥**" इति अ आ ख झ ञ पुस्तकेष्वधिकौ श्लोकौ । १० 'निरामाणा ल' क ख ग ञ. ।

सम्प्रत्यामलिङ्गमाह—

**ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ।**
**दुष्टमामाशयगतं रसमाम प्रचक्षते ॥ २५ ॥**

**स०**–ऊष्मण –अग्ने , अल्पबलत्वेन–दौर्बल्येन, आद्य–प्रथम, धातु रस–रसाख्यम्, अपाचितमाम प्रचक्षते–वदन्ति । आचार्या इति शेष । किम्भूत रसम् ? आमाशयगतम् । तथा, दुष्ट–वाताद्यनुशयितम् । रसग्रहणमनिलस्य निरासार्थम् । अन्यथा आद्यो धातुर्वाताख्य इत्याशङ्क्येत । वातादीनामपि हि धारणाद्धातुसञ्ज्ञाऽस्त्येव ।

**आ० र०–आमलक्षणमाह–ऊष्मण इति । ऊष्मणो–रसाग्ने । धातु–न दोष मल वा । आद्य–न रक्तादिकम् । रस–न रसत्वात्प्रच्युत रक्तत्वमप्राप्तम् ।**

**अन्ये दोषेभ्य एवातिदुष्टेभ्योऽन्योन्यमूर्च्छनात् ।**
**कोद्रवेभ्यो विषस्येव वदन्त्यामस्य सम्भवम् ॥ २६ ॥**

**स०**–अन्ये–अपरे आचार्या , दोषेभ्य एव–वातादिभ्यो, अतिदुष्टेभ्योऽन्योन्यमूर्च्छनात्–परस्परमिश्रीभावात्, आमस्य सम्भव कथयन्ति । केभ्य कस्येव ? यथा कोद्रवेभ्यो विषस्य सम्भव कथयन्ति । [ तैथा दोषेभ्य आमस्य सम्भवम् । ]

**आ० र०–मतान्तरेणामलक्षणमाह–अन्य इति । अन्योन्यमूर्च्छनात्–परस्परमेकलोलीभावात् ।**

**आमेन तेन सम्पृक्ता दोषा दूष्याश्च दूषिताः ।**
**सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ॥२७॥**

**स०**–तेन–पूर्वोक्तलक्षणेन, आमेन सम्पृक्ता –सयुक्ता , दोषा दूष्याश्च–रसादय । कीदृशा ? दूषिता ,–तैरेव वातादिभि । सहामेन सामा , इत्युपदिश्यन्ते–तत्र तत्रं प्रदेशे तन्त्रे भण्यन्ते । ये च रोगा –ज्वरादय , तदुद्भवा –वातादिदोषसमुत्था , तेना-

१ 'ण पवनस्य' ठ । २ 'ताख्योऽप्याश' ट । ३ [ ] इति पाठ ठ ड पुस्तकयोर्नोपलभ्यते । ४ 'मेकीभा' क ख ञ । ५ अस्याग्रे "**वायु सामो विबन्धाग्निसादस्तम्भान्त्रकूजनैः । वेदनाशोफनिस्तोदैः क्रमशोऽङ्गानि पीडयन् ॥ १ ॥ विचरेद्युगपच्चापि गृह्णाति कुपितो भृशम् । स्नेहाद्यैर्वृद्धिमायाति सूर्यमेघोदये निशि ॥ २ ॥ निरामो विशदो रूक्षो निर्विबन्धोऽल्पवेदन । विपरीतगुणै शान्ति स्निग्धैर्याति विशेषत ॥ ३ ॥ दुर्गन्धि हरित श्याव पित्तमम्ल घन गुरु । अम्लीकाकण्ठहृद्दाहकर साम विनिर्दिशेत् ॥ ४ ॥ आताम्रपीतमत्युष्ण रसे कटुकमस्थिरम् । पक्व विगन्धि विज्ञेय रुचिपक्ति ( 'वह्नि' घ झ ) बलप्रदम् ॥ ५ ॥ आविलस्तन्तुल स्त्यान कण्ठदेशेऽवतिष्ठते । सामो बलासो दुर्गन्धि क्षुदुद्गारविघातकृत् ॥ ६ ॥ फेनवान् पिण्डित पाण्डुर्नि सारोऽगन्ध एव च । पक्व स एव विज्ञेयश्छेदवान् वक्त्रशुद्धिद ॥** इति अ आ ख घ झ ञ पुस्तकेष्वधिका सप्त श्लोका. । ६ 'तैर्वाता' ट,ड । ७ 'त्र देशे भ' ड. ।

मेन युक्ता सामा इत्युच्यन्ते । यथैहैव ( द्व चि अ १।१८ )- "अजीर्ण इव शूलघ्न सामे तीव्ररुजि ज्वरे ।" इत्यादि वक्ष्यति। आमलक्षण चैव पठन्ति-"द्रव गुर्वनेकवर्ण हेतु सर्वरोगाणा स्निग्ध पिच्छिलमाम तन्तुमदनुबद्धशूल दुर्गन्धि" इत्यादि । सामाना च वातादीना सङ्ग्रहे पृथग्लक्षणमुक्तम् । ते सङ्ग्रहश्लोका यथा ( सू अ २१ )-"वायुरामान्वय सार्तिराध्मान कृदसञ्चर । दुर्गन्धमसित पित्त कटुक बहल गुरु ॥ आविलस्तन्तुमास्त्यान प्रलेपी पिच्छिल कफ । विपर्यये तु पक्वत्व तथा ताम्र समेचकम् ॥ पीत च पित्तमच्छ च श्लेष्माऽच्छ पिण्डितोऽथवा । विशदश्च सफेनश्च धवलो मधुरो रसे ॥" इति।

**आ० र०-सामत्व व्याचष्टे-आमेनेति । सामैर्दोषैर्धातुभिर्मलैश्च जनिता रोगा अपि सामा उच्यन्ते ।**

सामा अपि दोषा यादृशा न निर्हार्यास्तादृशान् दर्शयति—

**सर्वदेहप्रविसृतान् सामान् दोषान् न निर्हरेत् ।**
**लीनान् धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव २८**
**आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः ।**

स०-सामान् दोषान्-वातादीन्, सर्वस्मिन् देहे प्रविसृतान्-व्याप्ताशेषकायान्, धातुषु-रसादिषु, लीनान्-श्लिष्टान्, अनुत्क्लिष्टान्-स्वस्थानादचलितान्, न निर्हरेत्-वमनादिभिर्न शोधयेत् । कुत ? दुर्निर्हरत्वत -दु खेन निर्हर्तुं शक्यत्वात् । ते हि निर्ह्रियमाणा आश्रयस्य-शरीराख्यस्य, नाशाय स्यु । यावत्तु सर्वदेहप्रविसृता न स्यु । यथा भुक्तानन्तर ज्वरोत्पत्तौ नवातिसारे च तदा वमनेन हरीतक्या च यथायोग निर्हारोऽनुज्ञात एव ग्रन्थकृता । अत्र दृष्टान्तमाह-फलादित्यादि । आमात्-अपक्वात्, फलात्-आम्रादे, रसो निर्ह्रियमाणो दुर्निर्हरत्वात् आश्रयस्य-फलस्य, यथा नाशाय भवति, एव दोषा अपि ।

**आ० र०-सामेषु दोषेष्ववस्थाविशेषेण शोधन निषेधति-सर्वदेहप्रविसृतानिति । व्याप्तदेहान् धातुलीनान् अनुत्क्लिष्टान् सामान् न शोधयेत् । ते हि दुर्निर्हरत्वादाश्रयस्य नाशाय स्यु ।**

तर्हीदृशे दोषे किं कार्यम् ? इत्याह—

**पाचनैर्दीपनैः स्नेहैस्तान् स्वेदैश्च परिष्कृतान् ॥ २९ ॥**
**शोधयेच्छोधनैः काले यथासन्नं यथाबलम् ।**

स०-तान्-तथाविधान् दोषान्, पाचनै-ज्वराद्यध्यायोक्तै । दीपनैरिति पाचनाना स्नेहाना च विशेषणम्, मध्यदीपकत्वात् । अग्निदीप्तिकृद्भि पाचनै स्नेहैश्च तथा स्वेदै परिष्कृतान्-परिकल्पितान् कृतसंस्कारान्, यथासन्न यथाबल च कृत्वा यथोक्ते काले शोधनैर्द्रव्यै शोधयेत् । यथासन्नमिति यस्य दोषस्य य आसन्नो मार्गस्तेनैव [1]त निर्हरेत् । यथाबलमिति यस्य यावद्बलमातुरस्योत्तम मध्यममवम वा, तज्ज्ञात्वा तीक्ष्णेन मध्येन मृदुना वा शोधनेन शोधयेदित्यर्थं ।

**आ० र०-तानेव शोधनयोग्यान् कृत्वा शोधयेदित्याह-पाचनैरिति । परिष्कृतान्-शोधनयोग्यता नीतान् । तत्र पाचनै पक्वत्वम् । दीपनैर्धातुभ्य पृथक्त्वम् । स्नेहैरुत्क्लिष्टत्वम् । स्वेदै कोष्ठगतत्वम् ।**

कस्य को मार्ग आसन्न ? इत्याह—

**हन्त्याशु युक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ॥ ३० ॥**
**घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानाद्गुदेन च ।**

स०-वक्त्रेण द्रव्य युक्त-पीत, आमाशयात् मलानाशु हन्ति । घ्राणेन तु पीतमूर्ध्वजत्रूत्थान् मलानाशु हन्ति । गुदेन युक्त पक्वाधानात्-पक्वाशयात्, आशु मलान् हन्ति ।

**आ० र०-यथासन्नत्व व्याचष्टे-हन्त्याशु युक्तमिति । आमाशयात्-आमाशयमभिव्याप्य, पक्वाधानात्-पक्वाशयमभिव्याप्य,'ल्यब्लोपे पञ्चमी' । ऊर्ध्वजत्रूत्थान् जत्रु-स्कन्धसन्धि, तस्योर्ध्व,-ऊर्ध्वजत्रु ।**

इदानी यादृशा आमा न धार्यास्तादृशान् दर्शयति—

**उत्क्लिष्टानध ऊर्ध्वं वा न चामान् वहतः स्वयम् ३१**
**धारयेदौषधैर्दोषान् विधृतास्ते हि रोगदाः ।**

स०-अध ऊर्ध्व वोत्क्लिष्टानामान् स्वय वहतो-यत्न विनैव प्रवृत्तान्, औषधै -स्तम्भनै, न धारयेत् । कुत ? इत्याह-हि-यस्मात्, ते-दोषा, विधृता रोगदा -ज्वरादिकारिण ।

**आ० र०-स्वय प्रवृत्तान् सामान् न स्तम्भयेदित्याह-उत्क्लिष्टानिति, धारयेदिति ।**

तेषु तु यत्कार्यं तदाह—

**प्रवृत्तान् प्रागतो दोषानुपेक्षेत हिताशिनः ॥ ३२ ॥**
**विबद्धान् पाचनैस्तैस्तैः पाचयेन्निर्हरेत वा ।**

स०-अत -अस्माद्धेतो, प्रवृत्तान् प्राक्-प्रारम्भकाले, दोषान् हितभोजिन उपेक्षेत-सङ्ग्रहणेन न धारयेत् । विबद्धान्-ईषत्प्रवृत्तान्, तैस्तै -यथोक्तै, पाचनै पाचयेत्-पाकं नयेत् । निर्हरेद्वा ।

**आ० र०-स्वय प्रवृत्तेषु सामेषूपेक्षैव भेषजमित्याह-प्रवृत्तानिति । प्राक्-प्रथमम्, यावन्न बलहानिः ।**

**स्वय प्रवृत्तेषु सविबन्धेषु पाचनं निर्हरण वा कार्यमित्याह-विबद्धानिति । पूर्ववद्विकल्पव्यवस्था ।**

१ 'इह एव पु' ट. । २ अस्याग्रे 'वातादीना सामनिरामाणामष्टौ (सप्त) श्लोका "वायु सामो" इत्यादयो ज्ञेया । "वायु सामो" इत्यादयो मूलप्रतौ सन्ति ।' इति ठ पुस्तके, 'वायु साम इत्यादयो मूलप्रतौ सन्ति ।' इति ड पुस्तके चाधिक. पाठ. । ३ 'न भवन्ति ।' ट । ४ 'तथा' ट ।

१ 'तान्' ठ ड । २ 'स्नेहै क्लिन्नत्वम्' घ.ज्ञ । ३ 'दिदानयोग्या. ।' ड । ४ 'पाचयन्निर्हरेत वा ।' स.ढ । ५ 'रेचतथा ।' क ठ । ६ 'भोजनेन' ट । 'भोजनस्य' ड । ७ 'पाचयन् निर्हरेत् ।' ड. । ८ 'त् । ततो निर्हरेत्तथा ।' ट. ।

अथ क शोधनकाल ? इत्याह—

**श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात्॥३३॥**
**ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत्।**

**स०**–क्रमात्–यथाक्रमम्। ग्रीष्मचित वायु श्रावणे निर्हरेत्। वर्षाचित पित्त कार्तिके निर्हरेत्। हेमन्तशिशिरचित कफ चैत्रे निर्हरेत्। एते हि साधारणा काला। अत एतेषु शोधन युक्तम्।

**आ० र०–अथौषधकाला। तत्रौषध द्विविध,–शोधन शमन च। तत्र स्वस्थस्य शोधनकालमाह–श्रावण इति। साधारणे–वृष्टिशीतोष्णातिशयरहिते, हेतुगर्भं चेद विशेषणम्।**

नतु, ग्रीष्मादिष्वेव कस्माद्वातादयो न शोध्यन्ते ? इत्याह—

**अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः॥ ३४॥**
**सन्धौ साधारणे तेषां दुष्टान् दोषान् विशोधयेत्।**

**स०**–यतो ग्रीष्मादयोऽत्युष्णादियुक्ता। [तेषां–अत्युष्णवर्षशीताना ग्रीष्मवर्षाहिमागमाना, साधारणे सन्धौ शीतोष्णवर्षसमभावे काले दोषान्–वातादीन्, दुष्टान्–विकृतान्, विशोधयेत्–विनिर्हरेत्। सन्धौ हि साम्यम्।] तत शोधन प्रति न ते काला। तथा हि–ग्रीष्मे तावदादानग्लानं खरतररविकिरणतप्त पिपासाक्लमाद्याकुलमतिप्रविलीनदोषमतिशिथिल शरीरं भवति। औषध पुनरतिखरदिवाकरकरनिर्भरतापादुष्णतीक्ष्णता यातमतियोगायैव सम्पद्यते। प्रावृषि घनघनौघसङ्घट्टसादिते सर्वतो जगत्यवसन्नोऽग्निर्भवति। आदानदुर्बल च शरीरं भवति। ओषधयश्च जलदजलप्लावितमूला अल्पवीर्या सम्पद्यन्ते। भूबाष्पसयोगाच्चौषधीना विदग्धत्वम्। अतोऽपथ्यता गता अयोगायैव। शीतकाले चातिशीतोपहतत्वाच्छरीरमतिवातविष्टब्धमतिस्तब्धगुरुदोष भवति। शीतोपहतत्वाच्चोष्णस्वभावमप्यौषध सशोधनायोपयुक्त मन्दवीर्यतां प्राप्तमयोगायैव कल्पते इति। तस्माद्युक्तमुक्तमत्युष्णवर्षशीतत्वात् ग्रीष्मादिषु स्वस्थस्य शोधनमयुक्तम्, न त्वातुरस्य, इति।

**आ० र०–सन्धिनियमेनासन्धौ शोधन निषेधति–अत्युष्णवर्षशीता इति, सन्धाविति, स्वस्थवृत्तमिति। उष्णवृष्ट्योर्वृष्टिशीतयो शीतोष्णयोश्चापगमोद्गमावस्था–सन्धि.।**

सशोधनसाध्यस्यायमेव सशोधनकाल ? नेत्याह—

**स्वस्थवृत्तमभिप्रेत्य, व्याधौ व्याधिवशेन तु॥ ३५॥**

**स०**–स्वस्थावस्थमधिकृत्याय सशोधनकाल उक्त.। व्याधौ त्वात्ययिके व्याध्यनुरोधेन संशोधनकाल।

**आ० र०–स्वस्थवृत्तमभिप्रेत्य–स्वस्थोपचाराभिप्रायेण। स्वस्थस्यापि रोगानुत्पत्तये शोधनमुचितम्।**

यदि हेमन्तादावतिशीतोष्णादौ काले व्याधि सशोधन साध्य सम्भवेत्, तदा कथ सशोधन कार्यम् ? इत्याह—

**कृत्वा शीतोष्णवृष्टीना प्रतीकारं यथायथम्।**
**प्रयोजयेत्क्रिया प्राप्तां क्रियाकालं न हापयेत्॥ ३६॥**

**स०**–शीतोष्णवृष्टीना प्रतीकार कृत्वा–कृत्रिम ऋतुगुण यथायथ सम्पाद्य सशोधनादिलक्षणा क्रिया प्रयोजयेत्। कृत्रिमगुणोपधान च यथा,–हेमन्ते गर्भगृहादि, ग्रीष्मे धारागृहादीनि। क्रियाकाल न हापयेत्–नातिक्रामयेत्, आत्ययिकस्य व्याधे प्राणहारित्वात्।

**आ० र०–व्याधितस्य शोधनकालमाह–व्याधाविति, कृत्वेति, प्रयोजयेदिति। व्याधिवशेन–यदैव व्याधिरुत्पद्यते तदैव। प्राप्ता–अवस्थावशात् प्राप्तावसराम्।**

सम्प्रत्यौषधकालान् दर्शयन्नाह—

**युञ्ज्यादनन्नमन्नादौ मध्येऽन्ते कवलान्तरे।**
**ग्रासे ग्रासे मुहुः सान्नं सामुद्गं निशि चौषधम्॥३७॥**

**स०**–दशैते औषधस्य काला। अनन्नमौषधं तदुच्यते यदुपयुज्य परिणते तस्मिन् भुञ्जीत। अन्नादौ तदुच्यते यदुपयुज्य समनन्तरमाहारोपयोगो विधीयते। मध्य इति अन्नस्य–आहारस्य मध्ये यदौषध भुज्यते। अन्ते–अवसाने। कवलान्तर इति कवलयो–ग्रासयो, अन्तरे–मध्ये, न तु ग्रासमिश्रित कृत्वेत्यर्थ। ग्रासे ग्रास इति यद्ग्राससम्पृक्त भुज्यते। मुहुरिति पुन पुनर्भुक्तेऽभुक्ते वा यदौषध भुज्यते। सान्नमिति सहान्नेन–आहारेण यदौषध भुज्यते। सामुद्ग तदुच्यते यदाहारस्य प्राक् पश्चाच्च प्रयुज्यते, तेन हि समुद्गपुटयुगलसमेनौपधद्वयेनाहारो मध्यीक्रियते। समुद्ग–सम्पुटक। निशि तदुच्यते यच्छयनवेलाया भुज्यते।

**आ० र०–शमनौषधकालानाह–युञ्ज्यादिति, ग्रासे ग्रास इति। यत्राहारे जीर्णे भेषज भेषजे जीर्णे आहारस्तत्–अनन्नम्, अभक्त नाम। यत्र गृहीते एवौषधे आहारस्तत्–अन्नादौ, प्राग्भक्त नाम। यत्रार्धाहारे भेषज पश्चाच्छेष आहारस्तत्–**

१ अस्याग्रे "**प्रावृट्शरद्वसन्तेषु मासेष्वेतेषु शोधयेत्। साधारणेषु विधिना त्रिमासान्तरितान् मलान्॥**" इति आ पुस्तकेऽधिक श्लोक। २ 'शरदि' ठ। ३ 'हिमचित' ट। ४ 'वसन्ते' ठ ड। ५ 'कालमाह।' क ञ। 'कालावाह।' ग.। ६ अस्याग्रे "**त्रय साधारणास्तेषामन्तरे प्रावृषादय। प्रावृट् शुचिनभौ तेषु शरदूर्जसहौ स्मृतौ॥ तपस्यो मधुमासश्च वसन्त शोधन प्रति। एतानृतून् विकल्प्यैव दद्यात्सशोधन भिषक्॥**" इति आ क ख ञ. पुस्तकेष्वधिकौ श्लोकौ। ७ [ ] एतच्चिह्नान्तर्गत पाठ ट ठ ड पुस्तकेषु नोपलभ्यते। ८ 'खरतरदि' ट। ९ 'करनिरन्तरता' ट। १० 'गायैव स्यात्।' ड। ११ 'ग्नि स्यात्।' ठ। १२ 'तमूला रूक्षा अ' ट। 'तबला अ' ड। १३ 'लेऽप्यति' ट। १४ 'तिस्निग्धगु' ड। १५ 'ठोषल' ट.। १६ 'स्य सशोधनमयुक्तम्।' ठ।

१ 'स्ववृत्तम' ट। 'स्थावस्थाम' ठ ड.। २ 'समुत्पाद्य' ट। ३ 'युञ्ज्यानन्तर भोजनम्।' ड। ४ 'हाराख्यस्य' ट ठ। ५ 'गलेनौष' ट.। 'गलोपमेनौ' ठ.। ६ 'लमाह' ख.ग.झ.ञ.।

मध्ये, मध्येभक्त नाम। यत्र गृहीत एवाहारे भेषज तत्–अन्ते, अधोभक्त नाम। यत्र प्रतिग्रास ग्रासासम्पृक्तमौषध तत्–कवलान्तरे, ग्रासान्तर नाम। यत्र प्रतिग्रास ग्रासस-म्पृक्तमौषध तत्–ग्रासे ग्रासे, सग्रास नाम। यत्र भुक्तस्या-भुक्तस्य वा पुन पुनरौषध तत्–मुहुर्नाम। यत्र आहारेण सह साधित मिश्रीकृत चौषध तत्–सान्न नाम। यत्रादौ भेषजं ततोऽनन्तरमेवाहार ततोऽनन्तरमेव पुनर्भेषजं तत्–सामुद्ग नाम। सामुद्ग–सम्पुट। यत्र रात्रौ स्वप्नकाले भेषज तत्–निशि, नैश नाम। एवं दशौषधकाला।

अधुना विषयविभागेन यस्मिन् व्याधौ यदुपयुज्यते तद्दर्श-यति—

**कफोद्रेके गदेऽनन्नं बलिनो रोगरोगिणोः।**
**अन्नादौ विगुणेऽपाने, समाने मध्य इष्यते॥ ३८॥**
**व्यानेऽन्ते प्रातराशस्य, सायमाशस्य तूत्तरे।**
**ग्रासग्रासान्तयोः प्राणे प्रदुष्टे मातरिश्वनि॥ ३९॥**
**मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु।**
**योज्यं सभोज्यं भैषज्यं भोज्यैश्चित्रैररोचके॥ ४०॥**
**कम्पाक्षेपकहिध्मासु सामुद्गं लघुभोजिनाम्।**
**ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते॥ ४१॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने दोषोपक्रमणीयो नाम त्रयोदशोऽध्यायः॥ १३॥**

स०–कफोद्रेके रोगे निरन्नमौषध योज्यम्। कयो? इत्याह–बलिनोरित्यादि। बलवति रोगे रोगिणि च तत्केवल-मन्नादिरहितमौषध योज्यम्। तद्धि निरन्नमतिवीर्य भवति। बलवांश्च यदि रोगी तदोपयुञ्जीत, न तु दुर्बले। दुर्बलस्य त्वन्नसहित न ग्लानिकर भवति। अन्नादाविति। अपाने वायौ विगुणे–कुपिते सति, औषधं भुक्त्वा समनन्तरमेवाहार इष्यत इत्यर्थ। समाने वायौ विगुणे मध्ये भक्तस्यौषधमिष्यते। व्याने वायौ विगुणे प्रातराशस्य–पूर्वाह्णभुक्तस्य, अन्ते–अवसाने, भेषजमिष्यते। सायमित्यादि। उत्तरे–व्यानापेक्षया उदाने मरुति, विगुणे सायमाशस्य–अपराह्णभुक्तस्य त्वन्ते भेषज-मिष्यते। प्राणे मातरिश्वनि–वाते, प्रदुष्टे–विकृते, ग्रासग्रासा-न्तरयोर्भेषजमिष्यते। ग्रासस्य ग्रासान्तश्च तयो, तेन ग्रास-सम्पृक्तमौषध ग्रासयोर्मध्ये भेषजमिति चावतिष्ठते। मुहुर्मुहु–भुक्ते यदभुक्ते वा भेषज, तत्तु विषादिषु योज्यम्। अरोचके–अरुचौ, सह भोज्यैर्भैषज्य योज्यम्। कीदृशैर्भोज्यै? चित्रै–अनेकविधै। सामुद्ग नाम यदादावन्ते चाहारस्य भुज्यते तत्क-म्पादिषु 'प्रशस्यते' इति वक्ष्यमाणेन सम्बन्ध। केषाम्? लघ्वन्नाशिनाम्। ऊर्ध्वजत्रुविकारेषु शयनवेलायामौषध प्रश-स्यत इति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदय-टीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने दोषोपक्रम-णीयाध्यायस्त्रयोदश समाप्त॥ १३॥

आ० र०–अनन्नस्य विषयमाह–कफोद्रेके गत इति। अह्नस्तृतीयो भाग–श्लेष्मकाल, तदर्धं–कफोद्रेक, तस्मिन् गते–तदनन्तरमेव।

प्राग्भक्तस्य विषयमाह–अन्नादाविति।

मध्येभक्तस्य विषयमाह–समान इति।

अधोभक्तस्य विषयमाह–व्यानेऽन्त इति। व्याने विगुणे प्रातर्भोजनस्यान्ते भेषजम्। उत्तरे–उदाने, विगुणे साय भोजनस्यान्ते।

ग्रासग्रासान्तयोर्विषयमाह–ग्रासग्रासान्तयोरिति।

मुहुरौषधस्य विषयमाह–मुहुर्मुहुरिति। [मुहुर्मुहुरिति वीप्सया क्रियासङ्करस्विष्ट, "न क्रियासङ्करो हित।" (सङ्ग्रहे सू अ २३) इत्यस्य बाध।]

सान्नस्य विषयमाह–योज्यमिति।

सामुद्गस्य विषयमाह–कम्पाक्षेपकहिध्मास्विति।

नैशौषधस्य विषयमाह–ऊर्ध्वजत्रुविकारेष्विति। सङ्ग्रहे तु एकादशौषधकाला उक्ता (सू अ २३)–"अन्तर्भक्तं यत्पूर्वाह्णभुक्ते जीर्णे मध्याह्ने भेषजमुपयुज्यते, तस्मिंश्च जीर्णे पुनरपराह्णे भोजनम्। एतेन रात्रिर्व्याख्याता। तद्दीप्ताग्ने-र्व्यानजेष्वामयेषु।" इति। तथा–"तत्राद्ये काले तृषित. पीताम्बुरजीर्णी क्षुधित क्षामश्च भेषज वर्जयेत्। शेषेषु चाहृद्यमसात्म्यमतितीक्ष्णोष्णोग्रगन्ध भूरिमात्र चेति। भवन्ति चात्र। रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्। तत कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत्॥ निवृत्तोऽपि

१ 'यत्' क ग घ झ। २ 'यत्' क ख ग ञ। ३ 'यत्' क ख ग झ ञ। ४ 'कफोद्रिक्ते' आ। 'कफोद्रेके गतेऽनन्न' अ हेमाद्रि। ५ 'तन्निरन्न' ट। ६ 'अपानाख्ये' ट। ७ 'व्यानाख्ये' ट। ८ 'साय भोजनस्यान्ते व्यानादुत्तरे उदाने वायौ विगुणे भेष' ट। 'साय भुक्तस्यान्नस्यान्ते उत्तरे उदानाख्ये विकृते वायौ भेष' ड। ९ 'प्राणाख्ये' ट ठ.।

१ 'विधियुक्तै।' ट। 'विधैर्युक्तम्।' ठ। २ 'दिष्वेव। के' ट। 'पु। के' ड। ३ 'यो योंऽश–'क ग ञ। 'तीयाश–' ख। ४ [ ] इति पाठ क ख ग ञ पुस्तकेषु नोपलभ्यते। ५ 'निश्यौष' क ख ग ञ। ६ 'अन्तरभक्त' स मू। 'अन्त-राभक्त' स स। ७ 'ण्हे भु' क ख घ झ। 'ण्हभक्ते' स मू। 'ण्हे भक्ते' स स। ८ 'न्नाद्यका' क ख ग घ झ ञ। ९ 'पीतशीताम्बु' स स.। १० 'ति चात्र श्लोक।' स स। ११ 'तदनन्त' स द्व.।

पुनर्व्या[1]धि स्वल्पेनायाति हेतुना। [2]देहे मार्गी[3]कृते दोषै शेष सूक्ष्म इवानल ॥ तस्मात्तमनुबध्नीयात् प्रयोगेणानपायिना। सिद्धानामपि योगानां पूर्वेषा दार्ढ्यमावहन् ॥ सातत्यात्स्वाद्वभावाच्च पथ्य द्वेष्यत्वमागतम्। कल्पनाविधिभिस्तैस्तै प्रियत्व गमयेत्पुन ॥ मनसोऽर्थानु[4]कूल्येन तुष्टिरूर्जा रुचिर्बलम्। सुखोप[5]भोगता च स्याद्व्याधेश्चात परिक्षय ॥ लौल्याद्दोषक्षयाद्व्या[6]धेर्वैषम्येण च या रुचि । तासु पथ्योप[7]चारज्ञो योगैर्नाना प्रक[8]ल्पयेत् ॥ सप्ताहेन गुणालाभे क्रि[9]यामन्यां प्रयोजयेत्। पूर्वस्या शान्तवेगाया न क्रियासङ्करो हित ॥ गु[10]णे त्वल्पेऽपि तामेव विशेषोत्कर्षलब्धये । भेषज नृपतेर्हृद्यमल्पमल्पा[11]त्यय [12]शुचि ॥ शुद्धागम बहुगुण बहुकृत्व प्रयोजितम् । अनन्यका[13]र्योऽन्व हितस्त[14]न्मन्त्रिगुरुसम्म[15]तं ॥ आस्वादित परिचरै स्वय चानु प्रयोजयेत्। उचितो यस्य यो देशस्तज्ज तस्यौषध हितम् ॥ देशेऽन्यत्रापि वसतस्तत्तुल्यगुणजन्म [16]वा । वीर्यवद्भावित सम्यक् स्वरसैरसकृल्लघु ॥ रसगन्धादिसम्पन्न काले जीर्णे च मात्रया। एकाग्रम[17]नसा युक्त भै[18]षज्यममृतायते ॥ भेषजमवचारयन् [प्राय ] प्रागेव ता[19]वदेवमातुरं परीक्षेत। कस्मिन्नय देशे जात सवृद्धो व्याधितो वा । तस्मिंश्च देशे मनुष्याणामिदमाहारजा[20]तमेव विहारजातमेतावद्ब[21]लमेवविध स[22]त्त्वमेवविध सात्म्यमिय [23]भक्तिरिमे व्याधयो हितमिदमहितमिदमिति। [24]प्रायोग्रहणेन केन वा निदानविशेषेणास्य कुपितो दोष । दो[25]षस्य ह्येकस्यापि बहव प्रकोपहेतव । तस्माद्यथास्वलक्षणै कर्मभिश्च [26]बुद्ध्वाऽपि दोषमेवमवगमयेत्। तद्यथा,–किमाहारेण कुपितो वायु किं विहारेण, तथा रूक्षेण लघुना शिशिरेण वा, साहसेन वेगरोधेन वा, भयेन शोकेन वेति। ततश्च तत्प्रतिप[27]क्षमेवौषध [28]प्रयुज्यमानमाशु सिद्धये सम्पद्यते । तत्र मधुराम्ललवणा रसा कटुतिक्तकषायाश्चेतरेतरप्रतिपक्षा । तदनन्तर चोपलभेत मृदुमध्यातिमात्रविकल्पनया कथ निदानमासेवितम् । एकरूपस्यापि हि हेतोर्मृद्वादिविभागेन पृथक् समवेताना च दोषाणामशांशबलविकल्पविशेषात् व्याधेर्बलाबलविशेष. । तत्रानेकदोषात्मकेषु व्याधिषु, अनेकरसेषु च भेषजेषु, दोषरसप्रभावमेकैकशोऽभिसमीक्ष्य व्याधिभेषजप्रभावतत्त्व व्यवस्येत्। न त्वेव सर्वत्र। न [1]हि विकृतिविषमसमवेताना[2]ं नानात्मकाना परस्परेणोपगृहीतानामुपहताना [3]चान्यैश्च विक[4]ल्पनैर्विकल्पितानामवयवप्रभावानुमानेन समुदायप्रभावतत्त्वमध्यवसितु शक्यम्। तथाविधे हि समुदाये समुदायप्रभावमेवोपलभ्य व्याध्यौषधप्रभावतत्त्वमवगच्छेत्। तथा, कस्य धामाधिष्ठाय व्याधिरयमवस्थित इति निरूपयेत्। प्रविसृतो हि दोष [5]स्वकीयमेव स्थानमातङ्कायाधितिष्ठन् मूर्द्धादीन् वा दुस्तरो भवति । तत स्थानविशेषेण भेषजविशेष पर्येषितव्य । ततश्चैवमालोचयेत्। कस्यायमौषधस्य व्याधिरातुरो वा योग्य कियतो वा। दोषानुरूपो हि भैषज्यवीर्यप्रमाणविकल्पो व्याधिव्याधितबलापेक्षो भवति। सहसाऽतिबलानि संशो[6]धनौषधान्याग्नेयवायव्यान्यतिसौम्यान्यतिमात्राणि वा । तथाऽग्निक्षारशस्त्रकर्माण्यल्पसत्त्वमातुरमल्पबल [7]वा निपातयेयु । सशमनानि तु व्याधिबलादधिकानि तमुपशमय्य व्याधि व्याधिक्षपितदेहे शीघ्रमन्यमावहन्ति, शरीरबलादधिकानि ग्लानिमूर्च्छामदमोहबलक्ष[8]यान्, अग्निबलादधिकानि ग्लानिमग्निसादं च। अपि च। अतिस्थूलोऽतिकृ[9]शोऽतिदुर्बलो [10]दुष्टमांसशोणितास्थ्यङ्गावयवोऽल्पाग्निरल्पाहारोऽसात्म्याहारोऽपचित साररहितो वा व्याधिबलमेव तावदसमर्थ सोढुम्, किं पुनस्तथाविधो भेष[11]जवेगम्। त[12]स्मात्तादृशमविषादकरैर्मृदुसुखैरु[13]त्तरोत्तर गुरुभिरविभ्रमैश्चोपाचरेदौषधै, विशेषादबला । ता ह्यनवस्थितमृदुविक्लवहृदया प्राय सुकुमारा. [14]परं संस्तम्भ्याश्च। [15]ततोऽपि विशेषेण शिशव.। तथा बलवति[16] बलवद्व्याध्यातुरेऽल्पबलमल्प वा भेषजमकिञ्चित्कर भूय एव [17]दोषमुत्क्लेश्य व्याधिमुदीरयेत्। योग्यमपि चौषधमेव परीक्षेत। इदमेवरसवीर्यविपाकमेवगुणमेवद्रव्यमेवकर्मैवप्रभावमस्मिन् देशे जातमस्मिन्[18]नृतौ चैवगृहीतमेव[19]निहितमेवविहितमेव[20]निषिद्धमेवमुपसंस्कृतमेवसंयुक्तमेवयुक्तमनया मात्रयैवंविधस्य पुरुषस्यैवविधे काले एतावन्त दोषमपकर्षत्युपशमयति वा। अन्यदपि वा चैवविध

१ 'धिरल्पे' स द्व । २ 'दहेदाविष्कृतैर्दोषै' ग । ३ 'कृतैर्दोषै' क ख ञ । ४ 'नुकल्पेन' ग घ । ५ 'पयोगता' क ख ञ. । 'पयोगिता' घ झ । ६ 'ध्याधिवैष' स द्व । ७ 'चारेण यो' क । ८ 'नाद्य विक' स स । ९ 'युक्तिमन्या' घ । १० 'णे स्वल्पे' ख ञ । 'णे चाल्पे तु ता' घ झ । 'णेऽल्पेऽपि तु ता' सं द्व । ११ 'ल्पान्वय' क ख ञ । १२ 'शुचि' क ग झ स मू । १३ 'कार्यै विहित त' ख ञ । १४ 'स्तथा तन्मन्त्रिस' स स । १५ 'म्मतम्' क ख ग ञ स मू । १६ 'च' क ख स द्व । १७ 'मनसो' क ख ञ. । १८ 'भेषज त्वमृ' क ख ग.ञ. । १९ 'वदातुर' क घ झ. । २० 'तमिद वि' घ.झ स द्व । २१ 'व सत्व' क ख ग ञ. । २२ 'त्वमिद सात्म्य' घ झ । २३ 'शक्ति' क ख ग घ झ ञ । २४ 'प्राग्ग्रहणेन' स स । २५ 'षस्यैकस्या' क ख ग ञ । २६ 'बुध्याऽपि' ख ग ञ स मू । 'ध्वा भिषग्दोष' स स । २७ 'क्षमौषधं' स सं । २८ 'प्रयुक्तमाशु' क ।

१ 'हि विषमविकृतिसम' स द्व । २ 'ना पर' क ख ग घ झ. ञ । ३ 'वाऽन्यै' ख घ झ. । ४ 'कल्पैर्वि' क ग ञ. । ५ 'स्वमेव' स द्व । ६ 'धन्यान्याग्ने'क । 'धनान्यौष' घ झ । ७ 'वाऽतिपात' स द्व । ८ 'यमयान्' घ झ । ९ 'शो दुर्ब' स.द्व । १० 'दुर्बद्धमास' स द्व । ११ 'जमेववे' स द्व । १२ 'स्मादीदृ' क ग । १३ 'त्तरगु' क स.द्व । १४ 'परायताश्च ।' स.सं. । १५ 'ततो बलोनशिशव' ख ञ । 'ततो वि' घ झ. । १६ 'ति व्याध्या' स स। १७ 'दोषानुत्क्ले' क ख ग.ञ. । १८ 'नृतावेव' घ झ सं द्व । १९ 'वविहि' ख.घ झ ञ. । २० 'मेवस' घ झ. ।

भेषजमभूत्, त[1]च्चानेनान्येन वा विशेषेण प्रयुक्तमिदमकरोत्। सूक्ष्माणि हि दोषौषधदूष्यदेशकालबलानला[2]हारसारसात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराणि । यान्यनालोचितानि निहन्युरातुरम् । आलोच्यमानान्यपि तु विपुलबुद्धिमपि चिकित्सकमाकुलीकुर्युं , किंपुनरल्पबुद्धिम्। तस्मादभीक्ष्णश शास्त्रार्थकर्मानुशीलनेन सस्कुर्वीत प्रज्ञाम् । अपि च। सन्ति व्याधयो ये शास्त्रे उत्सर्गापवादैरुपक्रमं प्रति निर्दिष्टा । तत्र प्र[3]ज्ञयैव दोषादिगुरुलाघवेन स[4]म्यग्व्यवस्येदन्यतरनिष्ठायाम् । कालश्च भे[5]षजस्य योग्यता[6]मापादयति । स तु क्षणलवमुहूर्तादिभेदेनातुरावस्थया च द्विधोक्त प्राक् । त[7]त्र शीतोष्णवर्षलक्षणा ऋतवस्त्रयो हेमन्तग्रीष्मवर्षाख्या । तेषामन्तरे शोधनार्थं साधारणा वसन्तप्रावृट्शरदाख्यास्त्रयो विकल्पन्ते । तत्र शोधन प्रति फाल्गुनचैत्रौ वसन्त । आषाढश्रावणौ प्रावृट् । कार्तिकमार्गशीर्षौ श[7]रत् । अपि च । शीतोष्णवर्षलक्षणस्त्रिविध काल । तत्र शीतोष्णयोर्वृष्टिशीतयोश्चान्तरेण साधारणौ वसन्तजलदात्ययौ । ग्रीष्मवर्षाकालयोस्तु प्रारम्भो वृष्टे प्रावृडिति[8] विकल्प्यते । तेषु साधारणेष्वह सु वमनादीना प्रवृत्ति , निवृत्तिरितरेष्वयोगातियोगभयात् । साधारणा हि मन्दशीतोष्णवर्षतया सुखत्वात् भवन्त्यविकल्पका. शरीरौषधानाम् । विपरीतास्त्वितरे । तथा हि–शीतकालेऽतिमात्रशीतोपहतत्वाच्छरीरम[9]त्यर्थं शीतवातविष्ट[10]ब्धमति[11]स्तब्धगुरुदोष भवति । तद[12]नुप्राप्त च भेषज सशोधनार्थमुष्णस्वभावमपि शीतोपहतत्वान्मन्दवीर्यता गतमयोगाय जायते । शरीर च वात प्रायोपद्रवाय । तद्वद्वर्षास्वपि समन्तादतिघनेन घनसङ्घातेनावतते नभस्युपरुद्धतेज प्रसरेषु दिनक[13]रकरेषु ज[14]लदपटल[15]प्लावनो[16]द्दामकर्दमायां भूमावत्यर्थोपक्लिन्नमवसन्नानलबलमुद्रिक्तमलबलमादानदुर्बल शरीर भवति । औषधग्रामस्तु जलदोदरप्रततप्रमुक्तधारावपातसम्भृताम्बुनिवहोपप्लावितमूलजालसारविटपो बहलकोमलपल्लवोपचितस्कन्धशाख पुनरिव बा[17]लतामुपगतोऽल्पवीर्यो भवति । अपरिसंस्थिततया च क्षितिमलप्रायाभिरम्लविपाकाभि खगमृगसरीसृपादिशवधातुमूत्रपुरीषसंसृष्टाभिरद्भिः सलिलसीकरानुविद्धशिशिरपवनसम्पृक्तेन च धा[1]राधरधारोष्मणा कोमलत्वादपरिणतस्यास्य सुतरा विदाहो जन्यते । ते[2]नासावपथ्यतामुपगतो ध्रुवमयोगाय । प्रथमसङ्गृहीतमपि चौषध तो[3]यदतोयानुगतमारुतोपहते जगतीति । ग्रीष्मे पुनरादानोपहतत्वात् शरीरमुष्णरूक्षवातातपा[4]ध्मातमतिस्विन्नमतिशिथिलमतिप्रविलीनदोष भवति । भेषज पुनरनुष्णमपि त[5]पनतरुणतरकरनिपाताद[6]ुष्णतीक्ष्णतामुपगतमतियोगा[7]योपकल्पते । शरीर च पिपासाश्रमक्लमोपद्रवाय । तस्मात्साधारणेष्वेव तदन्तरालेषु वमनादीनि योजयेत्, न चेदात्ययिको व्याधि । आत्ययिके तु कृत्रिमगुणोपधानेन यथर्तुगुणविपरीतेन सयोगसस्कारप्रमाणविकल्पैश्चोपपाद्यौषधम[8]वहितोऽवचारयेत् । आतुरावस्थासु तु[9] कालाकालसंज्ञा । तद्यथा,–अस्यामवस्थायामस्यौषधस्य कालोऽकालो वा । न ह्यप्राप्तातीतकालमौषध यौगिकं भवति ।” इति । औषधभेदाश्च सङ्ग्रहे दर्शिता. ( सू अ १२ )–“द्विविधमौषधम्,–ऊर्जस्कर रोगघ्न च । उभयमपि चोभयात्मकम्, बाहुल्येन तु निर्देश । तत्रोर्जस्कर द्विविध,–रसायन वाजीकरण च । रोगघ्नमपि द्विविध,–रोग[10]स्य प्रशमनमपुनर्भवकर च । पुनश्च द्विविध,–द्रव्यमद्रव्य च । तत्र द्रव्य त्रिविध,–भौममौद्भिदं जङ्गमं चेति । तेषु वक्ष्यमाण हेमादिलवणान्तं प्रायेण भौमम् । औद्भिद पुनर्वनस्पतिवानस्पत्यवीरुदोषधिभेदेन चतुर्विधं भवति । तत्र फलिनो वनस्प[11]ति[12] । पुष्पफलवान् वानस्पत्य. । व[13]ल्ली गुल्म च वीरुत्[12] । फलपाकान्ता[14] ओषधिरिति । जङ्गमोद्भव तु मधुघृतादि जङ्ग[15]मं द्रव्यमाहु । अद्रव्य पुनरुपवासानिलातपच्छायाम[16]न्त्रसत्त्वदानभयोत्रासक्षोभणहर्षणभर्त्सनस्वप्नजागरणसवाहनादि । तथा त्रिविधमौषधम्,–दैवव्यपाश्रय युक्तिव्यपाश्रय सत्त्वावजयश्च । तत्र दैवव्यपाश्रय–मन्त्रौषधिमणिमङ्गलबल्युपहार[17]होमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादि । युक्तिव्यपाश्रय–आहारौष-

१ ‘तथा तेनानेन वा’ स.मू । ‘तन्मानेन वा’ स स । २ ‘हारसात्म्य’ घ झ । ‘हाररससा’ स स. । ३ ‘प्राज्ञ एव’ स.द्व । ४ ‘म्यगध्यवस्ये’ क.स द्व । ५ ‘भेषजयो’ क । ‘चिकित्सायो’ घ झ । ६ ‘मादधाति’ स द्व । ७ “तत्र” इत्यारभ्य “शरत्” इत्यन्त पाठ सटीकसङ्ग्रहे नोपलभ्यते । ८ ‘ति कल्प्य’ क ख ञ । ‘विकल्पयेत्’ ग ९ ‘त्यर्थशीत’ स द्व । १० ‘ष्टब्धबद्धगुरु’ स.मू. । ११ ‘स्तब्धबद्धगुरु’ क ग । १२ ‘नुप्रयुक्त च’ क. । १३ ‘करकिरणेषु’ क.ख ग ञ. । १४ ‘जलपटलोत्प्ला’ स.स. । १५ ‘ल्प्लवनो’ क । १६ ‘नोदारकर्द’ ख ग ञ । १७ ‘बालता’ ख घ.झ ञ ।

१ ‘धराधरोष्म’ ग.स मू । ‘धाराधरोष्म’ स स । २ ‘ततश्चाप’ घ झ । ‘ततश्चासा’ स द्व । ३ ‘ध तोयानु’ क ख ग ञ । ४ ‘ध्मानम’ ख ग घ झ ञ । ५ ‘जघनतपनतरु’ ख ञ । ‘तपनतरतपनकर’ स मू । ‘तपनकरनि’ स स । ६ ‘ष्णवीर्यता’ घ झ । ७ ‘गाय कल्प’ क ख ग ञ । ८ ‘धमेवावहि’ स स । ९ ‘तु कालाकालसञ्ज्ञा’ स स । १० ‘रोगप्रश’ क ख ग घ झ ञ । ११ ‘स्पतय ’ ख ग घ झ ञ । अमरेणाप्युक्तान्येतासा लक्षणानि । यथा–“वानस्पत्य फलै पुष्पात्तैरपुष्पाद्वनस्पति । ओषध्य फलपाकान्ता ० ॥ लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ।” इति । १२ अस्याग्रे ‘फलवन्तोऽपुष्पा न्यग्रोधोदुम्बराश्वत्थप्लक्षादय ।’ इति घ झ पुस्तकयो ‘फलिन ’ इति शब्दस्यार्थदर्शकोऽधिक. पाठ । ‘वीरुत्’ इत्यस्याग्रे ‘शालिपर्णी पृश्निपर्णी विदारी चेति वीरुध ।’ इति चाधिक पाठो घ. झ पुस्तकयोरेव । १३ ‘वल्लीगुल्म वी’ घ झ स द्व । १४ ‘न्ता त्वौष’ स मू । ‘न्ताश्चौषध्य इति ।’ स.स. । १५ ‘ङ्गममित्याहु ’ घ झ । १६ ‘त्रसान्त्वदान’ स द्व । १७ ‘रयमने’ घ झ ।

धयोजना । सत्त्वावजय पुन -अहितार्थमनोनिग्रह । पुनरपि च त्रिविधम्,-अपकर्षण प्रकृतिविघान निदानत्यागश्च । ते पुनरपकर्षणादयो द्विविधा,-बाह्याभ्यन्तरभेदेन[4] । तत्र बाह्यमपकर्षण-ग्रन्थ्यर्बुदोपपक्ष्मकृमिशल्यादिषु शस्त्रहस्तयन्त्रादिभि, आभ्यन्तर-वमनविरेचनादिभि[5] । प्रकृतिविघान-सशमनम् । तत्र[8] बाह्य-अभ्यङ्गस्वेदप्रदेहपरिषेकोन्मर्दनाद्यम्, आभ्यन्तर-यदन्तरमनुप्रविश्याविक्षोभयन् दोषान् शमयति। निदानत्यागो-यथादोष शीतोष्णाशनव्यायामादीना वर्जन स्निग्धरूक्षाद्यनभ्यवहारश्च[10] । तत्र शस्त्रादिसाध्ये भेषजमनुक्त[11] मते, न तु भेषजसाध्ये शस्त्रादि । पुनरपि च त्रिविध,-हेतुविपरीत व्याधिविपरीतमुभयार्थकारि च । तत्र हेतुविपरीत-गुरुस्निग्धशीतादिजे व्याधौ लघुरूक्षोष्णादि, तथेतरस्मिन्नितरत् । व्याधिविपरीत-द्वौ मूलोपक्रमौ[12] । [13]तौ च-लङ्घनबृंहणे [14]स्नेहस्वेदौ पञ्चकर्माणि वमनादीनि धूमाञ्जनादीनि[15] च, तथा विम्लापनोपनाहपाटनादीनि[16] । यच्च दोषशमनहेतुत्वे सत्यपि ज्वरे विशेषतो हित मुस्तपर्पटक[17] यवागूश्च । प्रमेहे रजनी यवान्न[18] च[19] । रक्तपित्ते चोर्ध्वगे विरेचनमधोगे वमनम् । उभयार्थकारि पुनर्दैवव्यपाश्रयमौषधम्[20] । [21]तद्यथा,-छर्द्या छर्दनम्, अतीसा-[22]रेऽनुलोमनम्, मदात्यये मद्यपानम्, तुच्छदग्धेऽग्निप्रतपनम्, पित्तेऽन्त[23]र्निगूढे विमार्गगे वा स्वेद ,कट्वम्ललवणतीक्ष्णोष्णाभ्यवहारश्च बहि प्रवर्तनाय स्वमार्गापादनाय च । श्लेष्मणि चा[24]न्तर्निगूढे स्तब्धे बहि शीतोपचार तत्पीडितस्योष्मणोऽन्त प्रवेशेन कफविलापनायेति[25][26] । एवविध ह्यविपरीतमेव सङ्क्षेपज हेतुव्याधिविपरीतार्थं[27] करोति । अनौषध पुनर्द्विविध,-बाधनमनुबाधन च । तत्र सद्य प्राणहर बाधनम् । कालान्तरेणानुबाधनमिति ।" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
दोषोपक्रमणीयस्तु सामस्त्येन निरूपित ॥ १३ ॥



१ 'नादि' क स द्व । २ 'तादात्मनो' घ झ । 'तात्मनो' ख ग ञ । ३ 'विघातो नि' स स । ४ 'भेदात्' क ख ग ञ । ५ 'र पुनर्वम' स द्व । ६ 'विघात -' स स । ७ 'तद्बाह्य' स द्व । ८ 'न्त प्रवि' घ झ । ९ 'सशम' क ख ग ञ । १० 'क्षाशनाद्यव' ख ञ । 'क्षाद्यभ्य' घ झ । ११ 'जमुपक्र' क ख ग ञ । १२ 'मौ लङ्घ' घ झ स स । १३ तौ-एको लङ्घनादिद्वितीयो विम्लापनादिरिति द्वौ । १४ 'स्नेहस्वेदौ' इति घ झ पुस्तकयो सटीकसङ्ग्रहे च नोपलभ्यते । १५ 'नि सधूपधूमा' स मू । 'नि सधूम धूपाञ्ज' स स । १६ 'नि च ।' क ख ग ञ । १७ 'तोऽभिहित' स मू । १८ 'स्ताप' स द्व । १९ 'यवाग्वश्च' स द्व । २० 'चेति' घ झ । 'चेत्यादि' स द्व । २१ 'तथा' ख ग ञ स द्व । 'यथा' घ झ । २२ 'रे विरेचन' म स । २३ 'न्तर्गूढे' क ख ग घ झ ञ. स मू । २४ 'न्तर्गूढे' घ झ । २५ 'कफ विलापयति ।' घ झ. । 'कफो विलयतामुपयाति ।' स म । २६ 'विलयना' स मू । २७ 'गीतमर्थं' स द्व ।



## चतुर्दशोऽध्यायः ।

दोषोपक्रमणीयादनन्तर द्विविधोपक्रमणीयारम्भेऽस्य[1] सम्बन्ध । पूर्वं[2] सामान्येनोपक्रमो दोषोपक्रमणीयेऽभिहित । अत्र तूपक्रमस्य[3] विशेष उच्यत इत्याह—

**अथातो द्विविधोपक्रमणीयमध्यायं[4] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥)

**स०**-द्विविध-द्विप्रकार च तदुपक्रमण च द्विविधोपक्रमणम्, तस्मै हितो द्विविधोपक्रमणीय । शेष पूर्ववत् ।

**आ० र०**-द्विविधोपक्रमणीयमध्याय व्याख्यातुं प्रतिजानीते-अथेति । यत पूर्वाध्याये दोषाणामुपक्रम उक्त । तस्येदानी भेदा वाच्या । तत्र द्वौ भेदौ मुख्यो । अत एवाय द्विविधोपक्रमणीय ।

उपक्रमश्च समासतो द्विविध, तन्त्रान्तरपठिताना चतुर्णामुपक्रमाणामत्रैवान्तर्भावात् । अत एव सहेतुकमुपदिशन्नाह—

**उपक्रम्यस्य हि द्वित्वाद्द्विधैवोपक्रमो मतः ।**

**स०**-हि-यस्मात्, उपक्रम्यस्य-चिकित्स्यस्य, द्वित्वाद्धेतोरुपक्रमो द्विधैव[5] मत -इष्ट । एवशब्दोऽवधारण कुर्वन् परमतं क्षिपति ।

**आ० र०-उपक्रमभेदानाह-उपक्रम्यस्येति । उपक्रम्यस्य-रोगस्य । द्वित्वात्-सामनिरामभेदेन ।**

कथ द्विधा ? इत्याह—

**एकः सन्तर्पणस्तत्र द्वितीयश्चापतर्पणः ॥ १ ॥**
**बृंहणो लङ्घनश्चेति तत्पर्यायावुदाहृतौ ।**
**बृंहणं यद्बृहत्त्वाय लङ्घनं लाघवाय यत् ॥ २ ॥**
**देहस्य**

**स०**-तत्र-तयोर्द्वयोरुपक्रमयो, एक सन्तर्पणरूप उपक्रमो, द्वितीयश्चापतर्पणरूप उपक्रम । बृंहणो लङ्घनश्च तयो -सन्तर्पणापतर्पणयो, पर्यायौ तत्पर्यायावुदाहृतौ । बृंहण तदुच्यते यद्देहस्य बृहत्त्वार्थं भवति । लङ्घन तदुच्यते यद्देहस्य लाघवाय-लाघवोत्पादनार्थं, भवति ।

**आ० र०-बृंहणलङ्घनयोर्लक्षणमाह-बृंहणमिति । यद्देहस्य बृहत्त्वाय-स्थौल्याय, तद्बृंहणम् । यल्लाघवाय-कार्श्याय, तल्लङ्घनम् ।**

१ 'णीयेऽय' ट । २ 'पूर्वं उपक्रम सामान्येनोक्त । अत्र' ठ ड. । ३ 'मस्यो वि' ठ । ४ अथ द्विविधोपक्रमणीयश्चरके सू० २१।२२।२३ अध्यायेषु, सुश्रुते सू० १५ अध्याये, चि० १ अध्याये (श्लो. ११-१३), उ० ३९ अध्याये (श्लो १०२-१०५) च, अष्टाङ्गसङ्ग्रहे सू० २४ अध्याये चास्ति वर्णित । ५ **'द्विविधोपक्रमो'** अ ठ. । ६ 'य स्मात् ।' ठ ड ।

**भवतः प्रायो भौमापमितरञ्च ते ।**

स०-तञ्च तञ्च ते,-सन्तर्पणापतर्पणे, भौमापमितरञ्च भवत । भूमेरिद भौमम् । अपामिदमापम् । भौमयुक्तमाप सन्तर्पणम् । इतरत्-भौमापादन्यदग्निवाय्वाकाशात्मकमपतर्पणम् । प्रायोग्रहणात्किञ्चिद्भौमापमप्यपतर्पणम् । यथा,-यवकमसूरमकुष्ठतण्डुलीयादि । तथा, अग्निपवनोत्कटस्य कटुकस्यापि शुण्ठीपिप्पल्यादे सन्तर्पणत्वम्, वृष्यत्वेन सन्तर्पणकार्यदर्शनात् ।

आ० र०-लङ्घनबृंहणे उदाहरति-भवत इति । भौममाप्य च द्रव्य बृंहणम् । इतरत्-आग्नेय वायव्य नाभस च लङ्घनम् । इति विभागेन ते-द्वे भवत ।

अधुना स्नेहनादेश्चतुर्विधस्योपक्रमस्य सन्तर्पणापतर्पणयोरेवान्तर्भाव दर्शयन्नाह—

**स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भन च यत् ॥ ३ ॥**
**भूतानां तदपि द्वैध्याद्द्वितयं नातिवर्तते ।**

स०-स्नेहनादि यच्चतुर्विध कर्म, तदपि द्वितय-सन्तर्पणापतर्पणरूप, नातिवर्तते-नातिक्रामति । कुतो हेतो ? इत्याह-भूताना सन्तर्पणापतर्पणरूपात् द्वैध्यात्-द्विप्रकारकत्वात् ।

आ० र०-स्नेहादीनामुपक्रमाणा बृंहणे, रूक्षादीना च लङ्घनेऽन्तर्भावमाह-स्नेहन रूक्षणमिति । भूताना द्वैध्यात्-स्नेहनरूक्षणादिकद्रव्यकारणाना पृथिव्यादीना बृंहणलङ्घनरूपद्वैविध्याव्यभिचारात् ।

इदानी प्रत्येक तयोर्भेदानाह—

**शोधनं शमनं चेति द्विधा तत्रापि लङ्घनम् ॥ ४ ॥**

स०-तत्र-तयो सन्तर्पणापतर्पणयोर्बृंहणलङ्घनापरपर्याययोर्मध्ये, यल्लङ्घन-अपतर्पणम्, तत् द्विधा । कथम् ? इत्याह-शोधन शमन चेति । इति हेत्वर्थे, यत शोधन शमन च ततो द्विधेत्यर्थ ।

आ० र०-लङ्घनभेदानाह-शोधनमिति ।

इदानी शोधनस्य लक्षण प्रभेद चाधिकृत्याह—

**यदीरयेद्बहिर्दोषान् पञ्चधा शोधनं च तत् ।**
**निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः ॥ ५ ॥**

स०-यदौषव दोषान्-वातादीनन्त स्थितान्, बहिरीरयेत्-क्षिपेत्, तच्छोधनम् । तच्च पञ्चधा,-पञ्चविधम् । तदेव पञ्चविधत्वमाह-निरूह इत्यादि । निरूहो-बस्ति, तथा वमनम्, तथा कायविरेक शिरोविरेकश्च, तथाऽस्रविस्रुति -रक्तस्रावश्च, इति पञ्चधा शोधनम् । सर्वशरीरस्य शिर प्रभृतेरधोमलनिर्हरण यत् स कायविरेकशब्देनोच्यते । यत्त केवल शिर सञ्ज्ञकस्य शरीरावयवस्य घ्राणेनोर्ध्वमलनिर्हरण स शिरोविरेक ।

आ० र०-शोधनस्य लक्षण भेदांश्चाह-यदीरयेदिति, निरूह इति । यद्दोषान् बहिर्निष्कासयेत्तच्छोधनम् । तत्तु निरूहादिभेदात् पञ्चधा । कायरेको-विरेचनम् । शिरोरेको-नस्यम् ।

सम्प्रति शमनाख्यस्य लक्षण प्रभेद चाधिकृत्याह—

**न शोधयति यद्दोषान् समान्नोदीरयत्यपि ।**
**समीकरोति विषमान् शमनं तच्च सप्तधा ॥ ६ ॥**
**पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः ।**

स०-यदौषव दोषान्-वातादीन्, न शोधयति-नान्त स्थितान् बहिर्निष्कासयति, तथा समान्-स्वप्रमाणस्थान्, नोदीरयति-न चोत्क्लेशयति, विषमांश्च-स्वप्रमाणाद्धीनाधिकभावावस्थितान्, समीकरोति-स्वप्रमाणस्थान् विद धाति, तच्छमनमुच्यते । तच्च सप्तधा,-सप्तप्रकारम्, पाचनादिभेदेन । पाचयतीति पाचनम् । पचतोऽग्ने पक्तु शक्तिमधिका यदुत्पादयति तद्द्रव्य क्रिया वा पाचनमुच्यते । यथा,-लङ्घन मुस्तादि वा । दीपन यथा,-घृतादि । तन्त्रान्तरे च दीपनपाचनयोर्लक्षणमुक्तम् । यथा,-"यदग्निकृत्पचेन्नाम दीपन तद्यथा घृतम् । पाचनं तद्विपर्यस्त यथा वक्ष्यामि लङ्घनम् ॥" इति । [ क्षारपाणिनाऽप्युक्तम्-"पाचन पाचयेद्दोषान् सामान् शमनमेव तु । दीपनं ह्यग्निकृत्त्वाम कदाचित्पाचयेन्न वा ॥" इति । ] क्षुत्तृट्शब्दाभ्या क्षुत्तृष्णानिग्रहाविह गृहीतौ ।

आ० र०-शमनस्य लक्षण भेदांश्चाह-न शोधयतीति, पाचनमिति । यद्दोषान् न शोधयति-बहिर्न निष्कासयति, समान्-अविकृतान्, नोदीरयति-न विकृति नयति, विषमान्-विकृतान्, समीकरोति-प्रकृति नयति, तच्छमनम् । तच्च पाचनादिभेदात् सप्तधा । क्षुत्-अन्नवर्जनम् । तृट्-उदकवर्जनम् ।

पाचनादीना दोषशमनत्वमुक्तम् । तच्च वाते वातपित्ते च न सम्भवतीत्याह—

**बृंहणं शमनं त्वेव वायोः पित्तानिलस्य च ॥ ७ ॥**

स०-तुशब्दो विशेषे । विशेषतस्तु लङ्घनापेक्षया । शोधन शमन चेति द्विधा लङ्घनमुक्तम् । बृंहणमपि शोधन भवति । यथा,-दुग्धादिद्रव्यम्, शोधनस्वभावद्रव्यत्वात् । तेन तथाविधेन द्रव्येण केवलस्य वातस्य पित्तयुक्तस्य वा कोप आशङ्क्यते । यथा-लङ्घनेन शोधनद्रव्येण हरीतक्यादिना । ततो बृंहणस्य

१ 'भौमाप्यमि'अ हेमाद्रि, ठ स मू । २ 'प्य' ट ठ ड । ३-४ 'प्य' 'प्या' ट ठ ड । ५ 'ग्नौममप्य' ट । ६ 'यवम' ठ ड । ७ 'तन्दुली' ट ट । ८ 'देर्वृष्य' ठ ड । ९ 'नाच' ठ । १० 'यति' ड । ११ 'मैध्यात्' ट । १२ 'तु' अ आ क ड्ड.ठ स मू ।

१ 'यत्तत् का' ट । २ 'शिरस ग्रा' ड । ३ 'स नावनेनो' ठ । ४ 'भेद चाह' क ग । ५ 'ति यत्कुद्दान्' ठ । ६ 'बहि-करोति' ट । ७ 'भावस्थितान्' ठ । 'भावस्थान्' ड । ८ 'लक्षणम्' ठ । ९ [ ] इति पाठ ट ठ ट पुस्तकेषु नोपलभ्यते । १० 'न च द्वि' ठ ड । 'चेति तद्द्विधा' ट । ११ 'लङ्घनशोध' ठ ।

विशेषार्थस्तुशब्द कृत । बृहण यच्छोधन तन्मरुत केवलस्य पित्तसहितस्य वा शमनम्, न तु लङ्घनशोधनवत्कोपनम् । एवकारोऽवधारणार्थ । बृहण शोधनरूप वातस्य पित्तयुक्तस्य वा शमनमेवोक्तम्, न कोपन जातुचिदित्यर्थ । लङ्घन तूभय रूपमपि वातस्य वातपित्तयोर्वा कोपनमेव ।

**आ० र०–शोधनशमनव्यतिरिक्तस्यौषधस्याभावात् तयोश्च लङ्घनभेदत्वात् बृहणस्यानौषधत्वे प्राप्ते, बृहण शमनमेवेत्याह–बृहण शमन त्विति । शुद्धस्य पित्तसंसृष्टस्य च वायोर्विषमस्य समीकरणाच्छमनम् ।**

इदानीं बृह्यानाह—

**बृंहयेद्व्याधिभैषज्यमद्यस्त्रीशोककर्शितान् ।**
**भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान् ॥ ८ ॥**
**गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि ।**

स०–कर्शितशब्दस्य व्याध्यादिभि प्रत्येक सम्बन्ध । व्याधिकर्शितान् बृहयेत् । एवं शेषेष्वपि योज्यम् । भारादिभि क्षीणस्य प्रत्येक सम्बन्ध । भारक्षीणान् बृहयेत् । एवं शेषेषु । रूक्षादीन् बृहयेत् । ग्रीष्मेऽपरानपि–अन्याननुक्तानपि बृहयेत् । [इत्थ च ग्रीष्मे सर्वानपि बृहयेत्,] अतितरां तु व्याधिकर्शितादीन् बृहयेत् ।

**आ० र०–बृंहणस्य विषयमाह–बृहयेदित्यादि । ग्रीष्मेऽपरानपि–स्वस्थानपि ।**

कैर्बृहयेत् ? इत्याह—

**मांसक्षीरसितासर्पिर्मधुरस्निग्धबस्तिभिः ॥ ९ ॥**
**स्वप्नशय्यासुखाभ्यङ्गस्नाननिर्वृतिहर्षणैः ।**

स०–मासादिभिर्बृहयेत् बस्तिभिश्च । कथम्भूतैर्बस्तिभि ? मधुरस्निग्धै, न तु रूक्षतीक्ष्णै, तेषामपतर्पणस्वभावत्वात् । स्वप्नो–निद्रा । शय्यासुख–खट्वाजनितं शर्म । निर्वृति –चित्तस्यानाकुलत्वम् ।

**आ० र०–बृहणान्याह–मांसक्षीरेत्यादि । मधुरस्निग्धैर्बस्तिभि । शय्यासुख–निद्रा विना शयनेऽवस्थानम् । निर्वृति –सन्तोष । हर्षण–आनन्द ।**

लङ्घनीयानाह—

**मेहामदोषातिस्निग्धज्वरोरुस्तम्भकुष्ठिनः ॥ १० ॥**
**विसर्पविद्रधिप्लीहशिरःकण्ठाक्षिरोगिणः ।**
**स्थूलांश्च लङ्घयेन्नित्यं शिशिरे त्वपरानपि ॥ ११ ॥**

स०–मेहादीनामिनिर्मित्वर्थीय । मेहिप्रभृतीन् लङ्घयेत् । शिशिरे पुनरपरानपि–अन्यानपि, इति व्याधिताना ग्रहणम् । स्वस्थाना तु शिशिरे हेमन्तविधिर्विशेषेणोक्त एव । शिशिरशब्द शीतमात्रोपलक्षणार्थ । तेन हेमन्तेऽपि लङ्घयेदित्यर्थ उपलभ्यते ।

**आ० र०–लङ्घनस्य विषयमाह–मेहामदोषेत्यादि । आमदोष.–अजीर्णम् ।**

पूर्वमुक्त लङ्घन द्विधा,–शोधनं शमनं चेति । तत्र शोधनविषय निरूपयन्नाह—

**तत्र संशोधनैः स्थौल्यबलपित्तकफाधिकान् ।**
**आमदोषज्वरच्छर्दिरतीसारहृदामयैः ॥ १२ ॥**
**विबन्धगौरवोद्गारहृल्लासादिभिरातुरान् ।**
**मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः ॥ १३ ॥**
**एभिरेवामयैरार्तान् हीनस्थौल्यबलादिकान् ।**
**क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान् मध्यबलैर्दृढान् ॥ १४ ॥**
**समीरणातपायासैः किमुताल्पबलैर्नरान् ।**

स०–लङ्घयेदिति वर्तते । तत्र–तेषु लङ्घनीयेषु मध्ये, सशोधनाख्यैर्लङ्घनै स्थौल्याद्यधिकान् तथा, आमदोषादिभिरार्तान् लङ्घयेत् । मध्येत्यादि । तथा मध्यस्थौल्यबलपित्तकफानेभिरेव–आमदोषादिभिर्गदैरातुरान् प्राय पूर्वं पाचनदीपनैर्लङ्घनभेदैर्लङ्घयेत् । प्रायोग्रहणं देशकालाद्यपेक्षया नियमस्यासार्वविषयत्वज्ञापनार्थम् । हीनस्थौल्यबलादिकास्तु सत क्षुत्तृष्णानिग्रहै – बुभुक्षापिपासावेगविधारणाख्यैर्लङ्घनविशेषैर्लङ्घयेत् । दोषै – वातपित्तकफैर्मध्यबलैरार्तान्, तथा दृढान्–शक्तान्, समीरणादिभिर्लङ्घयेत् । आयासो–व्यायाम । किमुत–किपुन ?, अल्पबलैर्दोषैरार्तान् समीरणादिभिर्लङ्घयेत् । सुतरा हीनबलैरार्तान् लङ्घयेदेवेत्यर्थ ।

**आ० र०–लङ्घनभेदस्य शोधनस्य विषयमाह–तत्र सशोधनैरिति । अधिकस्थौल्यादीन् लङ्घनीयान् सशोधनैर्लङ्घयेत् ।**

**पाचनदीपनयोर्विषयमाह–आमदोषेति, विबन्धगौरवेति, मध्यस्थौल्यादिकानिति । आमदोषादिभिरार्तान् मध्यस्थौल्यादिकान् पूर्वं पाचनदीपनैर्लङ्घयेत्, पश्चाच्छोधनै ।**

**क्षुत्तृषोर्विषयमाह–एभिरेवेति, क्षुत्तृष्णानिग्रहैरिति । एभि.–आमदोषादिभि. ।**

**व्यायामातपमारुताना विषयमाह–दोषैस्त्वार्तानिति, समीरणेति । मध्यबलैर्दोषैरार्तान् समीरणादिभिर्लङ्घयेत् । किं पुनरल्पबलैर्दोषैरार्तान् ? सुतरा हीनबलैरार्तान् लङ्घयेदेवेत्यर्थ ।**

१ 'शेषणार्थ' ठ ड । २ 'णार्थे' ट । ३ 'नमुक्तमेव, न' ठ । 'नमेव, न' ड । ४ 'कर्षितान्' आ क ख । ५ 'कर्षित' ड । ६ 'कर्षिता' ट ड । ७ 'एव सर्वत्र ।' ड । ८ 'भारादीना क्षीणशब्देनसम्बन्ध ।' ठ ड । ९ [ ] इति पाठ ट ड पुस्तकयो र्नोपलभ्यते । १० 'रा ग्रीष्मे व्याधि' ड.। ११ 'कर्षिता' ट ठ ड । १२ 'त्. कै ? मधुरस्निग्धैर्बस्तिभि , न' ठ ड । १३ 'भावात्' ट ड. । १४ 'शय्यामेव स्थानम्' ख.ञ. । 'शयनमेव स्था' घ. । 'शय्यावस्थानम्' झ. ।

१ 'णोक्तो भवत्येव' ट । २ 'थेम्' ट ठ । ३ 'त्यर्थो लभ्यते' ट.ठ । 'त्यर्थ ।' ड । ४ 'दोषैश्चार्तान्' क ग झ । 'दोषैरार्तान्' ड. । ५ 'लैर्दोषैरा' ट । ६ 'न् समीरणादिभिरेव लङ्घयेदित्यर्थ' इति क्वचित् । ७ 'न् दृढान् नरान् स' झ ।

**न बृंहयेल्लङ्घनीयान्**

**स०**–लङ्घनीयान्–लङ्घनार्हान् मेहामदोषादियुतान्, न बृंहयेत्।

**आ० र०–लङ्घनीयेषु पुरुषेषु बृंहणसाध्यरोगोत्पत्तौ बृंहणे प्राप्ते निषेधमाह–न बृंहयेदिति।**

तर्हि बृंह्यस्य वातलादेर्यदा ज्वरादिव्याधिर्लङ्घनसाध्यो जायते, तदा किं लङ्घनं कार्यमुत बृंहणम्? इत्यत्र संशयं। इत्याह—

**बृंह्यांस्तु मृदु लङ्घयेत् ॥ १५ ॥**
**युक्त्या वा देशकालादिबलतस्तानुपाचरेत्।**

**स०**–ये पुनर्बृंह्यास्तान् लङ्घनसाध्यामयार्तान् मृदु कृत्वा लङ्घयेत्,–मृदुना लङ्घनप्रकारेणापतर्पयेदित्यर्थः। युक्त्या वा–प्रयोगेण सन्तर्पणापतर्पणव्यामिश्रलक्षणेन, देशकालादीनां बलतः–अनुरोधेन, तानुपाचरेत्–उपक्रमेत्, विनैव लङ्घनादित्यर्थः। आदिग्रहणेन सत्त्वसात्म्यादिग्रहणम्।

**आ० र०–बृंहणीयेषु पुरुषेषु लङ्घनसाध्यरोगोत्पत्तौ स्वल्पं लङ्घनं कार्यमित्याह–बृंह्यास्त्विति।**

**देशादिवशेन त्वन्यथाऽप्युपाचरेदित्याह–युक्त्या वेति। तान्–लङ्घ्यान् बृंह्यांश्च।**

बृंहितलङ्घितयोः[3] किं लक्षणम्? इत्याह—

**बृंहिते स्याद्बलं पुष्टिस्तत्साध्यामयसङ्क्षयः ॥ १६ ॥**

**स०**–बृंहिते सति बलं पुष्टिश्च स्यात्। तथा, बृंहणसाध्या ये आमयास्तेषां सङ्क्षयो–विनाशः स्यात्।

**आ० र०** अथ बृंहितलङ्घितलक्षणम्। तत्र बृंहितस्य[*5] लक्षणमाह–बृंहिते स्यादिति।

सम्प्रति लङ्घितलक्षणमाह—

**विमलेन्द्रियता सर्गो मलानां लाघवं रुचिः।**
**क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकण्ठता ॥ १७ ॥**
**व्याधिमार्दवमुत्साहस्तन्द्रानाशश्च लङ्घिते।**

**स०**–विमलेन्द्रियतादिस्तन्द्रानाशश्चेत्यन्तो ग्रन्थो लङ्घितलक्षणम्। विमलेन्द्रियता–करणपाटवम्। क्षुत्तृषोः सह–एककालमुदयः। शुद्धहृदयेति। हृदयं चोद्गारश्च कण्ठश्च हृदयोद्गारकण्ठम्, शुद्धं च तद्धृदयोद्गारकण्ठं च, तस्य भावः शुद्धहृदयोद्गारकण्ठता। विमलेन्द्रियतादीनां पदार्थानामसमस्तानां[6] निर्देशो दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणां बहुतराणां वा सर्वेषां च लङ्घितलक्षणत्वद्योतनार्थः। अन्यथैषामशेषाणामेव लक्षणानामुत्पत्तौ लङ्घितलक्षणत्वं भवेत्, न त्वेकस्य द्वयोर्बहूनां चोत्पत्तौ लङ्घितलक्षणत्वं स्यात्। मुनिरप्यनेनैव हेतुनाऽसमासेनैव लक्षणं व्यधत्त। यथा (च. सू. अ. २२।३४)–"वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे। हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते॥ स्वेदे जाते रुचौ चैव क्षुत्पिपासासहोदये। कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि॥" इति।

**आ० र०–लङ्घितस्य[*5] लक्षणमाह–विमलेन्द्रियतेति, क्षुत्तृडिति, व्याधिमार्दवमिति। सर्गो मलानां–मलप्रवृत्तिः[1]।**

**अनपेक्षितमात्रादिसेविते कुरुतस्तु ते ॥ १८ ॥**
**अतिस्थौल्यातिकार्श्यादीन्, वक्ष्यन्ते ते च सौषधाः।**

**स०**–ते–बृंहणलङ्घने, अनपेक्षितमात्रादिसेविते अतिस्थौल्यातिकार्श्यादीन् कुरुतः। अनपेक्षिताश्च ते मात्रादयश्च–अनपेक्षितमात्रादयः, तैः सेविते। मात्राद्यनपेक्षया कृते इत्यर्थः। ते च–अतिस्थौल्यातिकार्श्यादयः, सौषधाः–सभेषजाः, वक्ष्यन्ते–पुरस्ताद्भणिष्यन्ते।

**आ० र०–अतिबृंहितातिलङ्घितयोर्लक्षणमाह–अनपेक्षितेत्यादि, अतिस्थौल्येति। मात्रादेशकालादीननपेक्ष्यातिसेवितं बृंहणमतिस्थौल्यादीन् कुरुते, लङ्घनं त्वतिकार्श्यादीन्।**

**के तेऽतिस्थौल्यादयोऽतिकार्श्यादयश्च? इत्यत आह–वक्ष्यन्ते ते चेति।**

*अथातिबृंहितलङ्घितयोः किं लक्षणम्?* इत्याह—

**रूपं तैरेव च ज्ञेयमतिबृंहितलङ्घिते ॥ १९ ॥**

**स०**–अतिबृंहितश्चातिलङ्घितश्चेत्येकवद्भावः। अतिबृंहितेऽतिलङ्घिते च तैरेव–अतिस्थौल्यादिभिः, तथाऽतिकार्श्यादिभिश्च, रूपं–बृंहणलङ्घनातियोगलक्षणं वेद्यम्[2]। चशब्दः समुच्चये।

**आ० र०–अतिस्थौल्यादीनां कार्यत्वात् कथं लक्षणत्वम्? इत्यत आह–रूपं तैरेवेति। यत्र कार्यैकसमधिगम्यं कारणम्, तत्र कार्यमेव लक्षणमित्यर्थः।**

तानेवातिस्थौल्यादीनाह—

**अतिस्थौल्यापचीमेहज्वरोदरभगन्दरान्।**
**कासंसन्न्यासकृच्छ्रामकुष्ठादीनतिदारुणान् ॥ २० ॥**

**स०**–अतिबृंहितमतिस्थौल्यादीन् कुरुते। 'अतिबृंहितं कुरुते'[4] इत्यनुपात्तेनापि प्रकृतत्वादत्र कर्तृपदेन क्रियापदेन च सम्बन्धः कार्यः। अत एव तदपेक्षयाऽतिस्थौल्यादीनां द्वितीया। अथवा योग्यतयैवानुपात्तेनापि सम्बन्धः क्रियादिना भवत्येव, सुकविलक्षणस्यैवस्थितत्वात्। तथा च भगवतो व्यासस्य–"यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्येन[6] सर्वस्य कटुरेव सः॥" इति। अत्र हि छेदसेकालङ्करणक्रियापेक्षया निम्बादीनां द्वितीयाऽर्थसम्बन्धश्च।

**आ० र०–अतिस्थौल्यादीनाह–अतिस्थौल्यापचीति, कासंसन्न्यासेति[7]। अतिस्थौल्यादीन् 'अतिबृंहणं कुर्यात्' इत्यध्याहारः।**

---

१ 'तं, नैव लङ्घनेनेत्यर्थः' ठ। 'तं, तेनैव लङ्घनव्यतिरिक्तेन बृंहणेन। आदि' ड। २ 'ग्रहणात्' ठ ट। ३ 'योर्लक्षणमाह' ठ ड। ४ 'बृंहणेन ये साध्या आम' ठ ड। *५ 'तलक्ष' ग झ। ६ 'नामकृतसमासानामेव समस्तानां' ठ। असमस्तानाम्–अकृतसमासानाम्।

१ 'ना प्रवृत्तिः' ख व ञ। २ 'वं विज्ञेयं' अ ख ञ ठ स मू। ३ 'तिशययोग' ट। ४ 'तं कर्तृ कु' ट। ५ 'त्र सम्बध्यते। अत एव' ड। ६ 'माल्याभ्यां म' ट। ७ 'ति। अतिबृं' क ख. ग घ ञ.।

अथैषामतिस्थौल्यादीनामुपक्रममाह—

**तत्र मेदोनिलश्लेष्मनाशनं सर्वमिष्यते ।**

**स०**–तत्र–तेष्वतिस्थौल्यादिषु, मेदोनिलश्लेष्मनाशन सर्व–अन्नपानौषधमिष्यते ।

**आ० र०**–अतिस्थौल्यादीनामौषधमाह–तत्र मेदोनिल श्लेष्मनाशनमिति ।

कि तत् ? इति ब्रूते—

**कुलत्थजूर्णश्यामाकयवमुद्गमधूदकम् ॥ २१ ॥**
**मस्तुदण्डाहतारिष्टचिन्ताशोधनजागरम् ।**
**मधुना त्रिफलां लिह्याद्गुडूचीमभयां घनम् ॥ २२ ॥**
**रसाञ्जनस्य महतः पञ्चमूलस्य गुग्गुलोः ।**
**शिलाजतुप्रयोगश्च साग्निमन्थरसो हितः ॥ २३ ॥**
**विडङ्गं नागरं क्षारः काललोहरजो मधु ।**
**यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् ॥२४॥**

**स०**–कुलत्थादिक स्थूलायेष्यते । जूर्ण –तृणधान्यविशेषो दक्षिणापथे जोन्नलक इति प्रसिद्ध । दण्डाहत–मथितम् । त्रिफलादीनामन्यतम मधुना लिह्यात् । तथा, रसाञ्जनादेश्च प्रयोगोऽग्निमन्थरससहितो हित , अतिस्थूलायेति प्रकृतेन यो-ज्यम् । विडङ्गादियोग सर्वसमभागोऽतिस्थौल्यदोषजित् ।

**आ० र०**–कुलत्थेति, मस्त्विति । जूर्णो–यावनाल । मधूदक–मधुमिश्रमुदकम् । दण्डाहत-तक्रम् ।

त्रिफलादींश्चतुरो योगानाह–मधुना त्रिफलामिति ।

रसाञ्जनादींश्चतुर प्रयोगानाह–रसाञ्जनस्येति, शिला-जतुप्रयोगश्चेति । साग्निमन्थरस इति चतुर्भि सम्बध्यते । अग्निमन्थरस –तर्कारीस्वरस ।

विडङ्गादियोगमाह–विडङ्गमिति, यवामलकचूर्णमिति । क्षारो–यवक्षार । काललोहरजो–लोहचूर्णम् ।

**व्योषकट्वीवराशिग्रुविडङ्गातिविषास्थिराः ।**
**हिङ्गुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥ २५ ॥**
**निशे बृहत्यौ हपुषा पाठा मूलं च केम्बुकात् ।**
**एषां चूर्णं मधु घृतं तैलं च सदृशांशकम् ॥ २६ ॥**
**सक्तुभिः षोडशगुणैर्युक्तं पीतं निहन्ति तत् ।**
**अतिस्थौल्यादिकान् सर्वान् रोगानन्यांश्च तद्विधान् ।**
**हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान् ।**
**बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम् ॥ २८ ॥**

**स०**–व्योषादीनि द्रव्याणि चतुर्विंशति परस्परसमभागानी-त्येको भाग , तत्समो मधुनो द्वितीयो भाग , घृतस्य तृतीय , तैलस्य चतुर्थ , एषा सर्वेषा मिश्रीभूताना षोडशगुणा यवस-क्तव । तदेतत्पीतमतिस्थौल्यादिकान् पूर्वोक्तान् सर्वान् रोगानि-हन्ति । अन्याश्च तथाविधान् रोगान्–बृहणोत्थानित्यर्थ । तथा, हृद्रोगादीन् निहन्ति । तथा, बुद्ध्यादिकर सन्नस्य–मन्दस्या-ग्नेर्दीपन च ।

**आ० र०**–व्योषादियोगमाह–व्योषकट्वीति, हिङ्गुसौ-वर्चलेति, निशे बृहत्याविति, एषामिति, सक्तुभिरिति, अतिस्थौल्यादिकानिति, हृद्रोगकामलेति, बुद्धिमेधास्मृति-करमिति । केम्बुकान्मूलम् । केम्बुक–स्वनामप्रसिद्धम् । षोडशगुणै –चूर्णापेक्षया । पीत–शीतोदकेन । सङ्ग्रहे तु ( सू अ २४ )–"गुर्वादिवृद्धसलीनश्लेष्ममिश्रोऽन्नजो रस । आम एव श्लथीकुर्वन् धातून् स्थौल्यमुपानयेत् ॥ अति-स्थौल्यादतिक्षुत्तृट्स्वेदश्वासातिनिद्रता । आयासाक्षमता जाड्यमल्पायुर्बलवेगता ॥ दौर्गन्ध्यं गद्गदत्व च भवेन्मे-दोऽतिपुष्टिता । स्रोतःसु मेदोरुद्धेषु वायु कोष्ठे विशे-षत ॥ चरन् प्रज्वलयत्यग्नि क्षुत्तृषौ स्वस्ततोऽधिकम् । स्थूल कोटरवद्वृद्धौ दहतोऽग्न्यनिलौ च तौ ॥ स्वेदवाहिशिरामू-लभवाद्विष्यन्दनादपि । मेदस श्लेष्मयोगाच्च भवति स्वेद-भूरिता ॥ कोष्ठ एव विपक्वेऽस्य सरुद्धस्रोतसो रसे । सर्व-त्रालब्धवृत्तित्वात् प्रायो मेद प्रचीयते ॥ तच्छेषोऽपि रसोऽ लपत्वान्नाल रक्तादिपुष्टये । तुल्येऽपि रक्तादिचये प्राक् चित चीयतेतराम् ॥ मेदस्तेनासमत्वेन धातूना विदधाति तत् । श्वासादीनचिराच्चान्यान् ज्वरोदरभगन्दरान् ॥ मेहोरुस्तम्भ-पिटिकाविद्रधिप्रभृतीन् गदान् । अयथोपचयोत्साहश्चलस्फि-गुदरस्तन ॥ अतिस्थूल स्मृतो योज्य तत्रान्न मारुतापहम् । मदन त्रिफलामुस्तासप्ताह्वारिष्टवत्सकम् ॥ सपाठारग्वध पीत-मतिबृहणरोगजित् । तद्वद्वत्सकशम्याकदेवदारुनिशाद्वयम् ॥ समुस्तपाठाखदिरत्रिफलानिम्बगोक्षुरम् । मदनादीनि चालेप-स्नानादिष्वपि योजयेत् ॥ हिङ्गुगोमेदकव्योषकुष्ठक्रौञ्चास्थि गोक्षुरम् । एलावृषकषड्ग्रन्थाखराश्वोपलभेदकम् ॥ तक्रेण दधिमण्डेन पीत कोलरसेन वा । मूत्रकृच्छ्र कृमीन् मेहान् स्थूलता च व्यपोहति ॥ कृमिघ्नत्रिफलातैलसक्तुत्र्यूषणदी-

१ 'अतिबृहितस्थौ' ग । २ 'शिलाह्वस्य प्र' अ क ख ग घ झ ञ स स । 'शिलाजतो प्र' स मू । ३ 'जोह्नलक' ठ । 'जोन्ना-लक' ठ । 'जोर्णालक' ड । ४ 'ति यो' ड । ५ 'भागेन ।' ड । ६ 'तुरो योगा' क ख घ ञ । ७ 'मन्थ –तर्कारी, तत्स्वरस ' क ख घ ञ. । ८ 'शाशिकम्' अ क ।

१ 'दिबद्ध' क । 'वृद्धिस' ग घ । २ 'धातुस्थौ' ख । ३ 'ट्प्रस्वेदश्वासनि' अ ठ स द्व । ४ 'न्ध्यगद्गदत्वे च' घ । 'न्ध्य हृद्गद' ख । ५ 'पुष्टित ' आ क ग झ ठ स द्व । 'पुष्टता' घ । ६ 'चितौ' ग । 'च तम्' स द्व । ७ 'लभावा' क ख घ झ ञ स स । ८ 'दपूतिता' ग । ९ 'पोऽल्परसो' स द्व । १० 'पि चास्रादि' क. ग झ । 'पि वाय्वादि' स द्व । ११ 'तून वि' ख.ञ । १२ 'चिराश्चान्या' क घ ञ । 'रायान्या' ग । १३ 'तच्चान्न' ख घ.ञ । १४ 'प्तमुस्तकम्' ग । 'प्तमस्तुकम्' स मू । १५ 'वा लेप ' ग घ । १६ 'वृषभष' स मू । 'वृक्षक' स स । १७ 'न्था-क्षाराश्चोप' ग झ. । 'खराश्चोप' घ ।

प्यकैः । लोहोदकाप्लुतो मन्थः शस्तो बृंहणरोगिणाम् ॥ योज्य तथा यथाव्याधि स्वेदासृक्स्रावणान्यपि[२] ।" इति ।

साम्प्रतमतिलङ्घनोत्थान् रोगान् सौषधानाह—

**अतिकार्श्यं भ्रमः[३] कासस्तृष्णाधिक्यमरोचकः ।**
**स्नेहाग्निनिद्रादृक्छ्रोत्रशुक्रौजःक्षुत्स्वरक्षयः ॥ २९ ॥**
**बस्तिहृन्मूर्धजङ्घोरुत्रिकपार्श्वरुजा ज्वरः ।**
**प्रलापोर्ध्वानिल[५]ग्लानिच्छर्दिपर्वास्थिभेदनम्[६] ॥३०॥**
**वर्चोमूत्रग्रहाद्याश्च[७] जायन्तेऽतिविलङ्घनात् ।**

**स०**–अतिकार्श्यादयोऽतिलङ्घनाज्जायन्ते । स्नेहादीनां क्षयशब्देन समासः, बस्त्यादीनां च रुजाशब्देन । मूत्रग्रहाद्याश्चेत्याद्यशब्देन नानाविधानां वातरोगाणां ग्रहणम् ।

**आ० र०–अतिकार्श्यादीनाह–अतिकार्श्यमिति, स्नेहेति, बस्तीति, प्रलापेति, वर्चोमूत्रेति । स्नेहादीनां नवानां क्षयः । स्नेहः–स्निग्धत्वम् । बस्त्यादीनां सप्तानां रुजा ।**

यद्यपि कार्श्याख्योऽय महान्[१०] दोषः, तथाऽपि स्थौल्यमपेक्ष्य वरं[११] एवेति प्रतिपादयन्नाह—

**कार्श्यमेव वरं स्थौल्यात्**

**स०**-अत्र चातिकार्श्यमेव वरमतिस्थौल्यादिति वेद्यम्, न कार्श्यमात्रं स्थौल्यमात्रं वा । यस्मादतिस्थूलातिकृशावेव[१२] लङ्घनबृंहणाभ्यामुपक्रम्यावत्र विवक्षितौ, न स्थूलकृशौ सामान्येन ।

**आ० र०–स्थौल्यात् कार्श्यस्य सुखसाध्यत्वमाह–कार्श्यमेवेति ।**

कार्श्यमेव स्थौल्यात्[१३] कुतो वरम्? इत्याह—

**न हि स्थूलस्य[१४] भेषजम् ॥ ३१ ॥**
**बृंहणं लङ्घनं[१५] वाऽलमतिमेदोग्निवातजित् ।**

**स०**–यस्मात् स्थूलस्य भेषजं बृंहणं नाल–न समर्थम्, न च लङ्घनं समर्थम् । यस्मात्स्थूलस्य भेषजमतिमेदोग्निवातजित् । यन्मेदःक्षपणं तदग्निनाशकृद्वातहृच्च[१६] । स्थूलस्य हि बृंहणेन मेदोऽतितरामुपचीयते, लङ्घनेन च मेदःक्षपणं भवति, किन्त्वग्निपवनावस्योपचीयेते । यस्मात्[१७] बृंहणं–मांसक्षीरादि, यच्च लङ्घनं–कोद्रवश्यामाकादि, तत्पूर्वस्माद्धेतोः स्थूलस्य न भेषजम् ।

**आ० र०–स्थौल्यस्य कृच्छ्रसाध्यत्वे हेतुमाह–न हि स्थूलस्येति । बृंहणं लङ्घनं वा[१८] न स्थूलस्य भेषजम् । यतस्त्वस्यातिमेदोग्निवातजिद्भेषजमलं–समर्थम् । लङ्घनमतिमेदोजित् भवति, न त्वत्यग्निवातजित् । बृंहणमत्यग्निवातजिद्भवति, न त्वतिमेदोजित् ।**

**मधुरस्निग्धसौहित्यैर्यत्सौख्येन च नश्यति ॥ ३२ ॥**
**कृशिमा स्थविमाऽत्यन्तविपरीतनिषेवणैः ।**

**स०**–यत्–यस्मात्, कृशिमा मधुरस्निग्धतृप्तिभिः सौख्येन–अनायासेन च, नश्यति–शाम्यति, तस्मात्कार्श्यं स्थौल्याद्वरम् । यतश्च स्थविमा–स्थूलत्वं, अत्यन्तविपरीतनिषेवणैः शाम्यति । अत्यन्तविपरीतानि च तानि निषेवणानि चात्यन्तविपरीतनिषेवणानि तैः,–तिक्तकटुकषायप्रायैः रूक्षैरन्नपानौषधसेवनैरित्यर्थः । स्थूलकृशयोश्च यदि बृंहणसाध्यस्तुल्यो व्याधिः स्यात्, तर्हि स्थूलस्योपक्रमविरोधात्तथा सुखेन न शाम्यति यथा कृशस्य । लङ्घनसाध्योऽपि विसूचिकादिर्यदि चैतयोः स्यात्, सोऽपि कृशस्य[१२] शीघ्रमुपशमं गच्छति । स्थूलस्य तु विरुद्धोपक्रमत्वात् दुःखेन शाम्यति । तथा[१३] हि–अत्र प्रधानोपक्रमः स्वेदः, स च तावन्न घटते । "न स्वेदयेदतिस्थूलम्" ( हृ सू. अ १७।२१ ) इति निषेधात् । अथ न[१४] लङ्घयति तदा ( सङ्ग्रहे सू अ २४ )–"स्रोतःसु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः । चरन् प्रज्वलयत्यग्निं क्षुत्तृषौ स्वस्ततोऽधिकम् । स्थूलः कोटरवद्वृद्धौ दहतोऽग्न्यनिलौ च तौ[१५] ॥" इत्यादि न्यायाद्वातसखेनाग्निना[१६] वनस्येवास्य महती व्यापदुत्पद्यते । अथ बृंहणोपक्रमः क्रियतेऽस्य[१७] तदाऽऽमदोषो वर्धेत । कृशस्य त्वविरुद्धोपक्रमत्वाद्विसूचिकादि सुखेनोपक्रम्य । तस्मात्कार्श्यमेव स्थौल्याद्वरम् । कृशिमेति कृशशब्दात्पृथ्वादिपाठादिमनिच्, रऋतो हलादेरिति रेफादेशः । स्थविमेति दृढादेराकृतिगणत्वादिमनिजिति केचित्[१८] । तस्मिंश्च सति स्थूलदूरेति यणादिपरस्य लोपः, ऋकारस्य च गुणः ।

**आ० र०–कार्श्यस्थौल्ययोर्वरावरत्वे हेत्वन्तरमाह–मधु-**

१ 'कृस्रव' क घ । २ 'णान्यपि' ख ञ स द्व । ३ 'धादीनां' ठ ड । ४ 'भ्रमः श्वासः' अ आ । ५ 'पोर्ध्वानि' ख ञ । ६ 'निश्छर्दि प' स म । 'च्छर्दि प' अ आ घ झ ज । ७ 'विण्मूत्रादिग्रहः' इति क्वचित् । ८ 'तिविल' ट । ९ 'विश्ववात' ठ ड । १० 'महादोष' ठ ड । ११ 'वरमेव' ट ठ । १२ 'यस्मादतिकृशातिस्थूलावेवोपक्रम्यौ । कार्श्यमेव' ट ठ ड । १३ 'ल्यादर कुतः?' ट । १४ 'स्थौल्यस्य' अ स मू । १५ 'न नालं' अ आ घ झ स द्व । १६ 'तकृच्च ।' ट । 'तजिच्च ।' ट । १७ 'तस्मा' ट. । १८ 'वा स्थूल' क घ झ ।

१ 'षज नाल–असमर्थम्' क ख झ ञ । २ 'जिद्भवति ।' क ख घ ञ । ३ 'रस्नेहसौ' अ । ४ 'न विनश्यति' अ क । ५ 'ग्धातितृ' ट । ६ सौख्येनेति हर्षसुखशय्यास्वप्नाचिन्ताप्रियपुत्रमित्रदर्शनादिभिर्मनः शरीरनिर्वृतिकरैर्भावैरित्यर्थः । तथा च चरकः ( सू. अ २१।२९ )–"स्वप्नो हर्षः सुखा शय्या मनसो निर्वृतिः शमः । चिन्ताव्यवायव्यायामविरामः प्रियदर्शनम् ॥" इति । अत एव चारुणदत्तचन्द्रनन्दनाभ्यां "सौख्येन–अनायासेन" इति यद्व्याख्यानं कृतं तन्न युक्तम् । ७ 'न नश्य' ठ । 'न विनश्य' ड । ८ 'अत्यन्तविपरीतानां निषेवणान्यत्यन्त' ट । ९ 'वनैः शाम्यतीत्यर्थः' ठ ड । १० 'ततः स्थू' ट । ११ 'स्य स व्याधिः । ल' ठ । १२ 'स्य सुखेनोपशाम्यति ।' इति क्वचित् । १३ 'यथा' ड. । १४ 'न यदि ल' ट । १५ 'तम्' स द्व । १६ 'खेनेवाग्नि' ट । 'खेन वनवह्निना' इति क्वचित् । १७ 'स्य हि आम' ट । १८ 'केचिदिति पठन्ति । त' ठ ।

रेत्यादि, कृशिमेत्यादि । मधुरस्निग्धानां सौहित्ये, तृप्त्यभ्यासार्थं बहुवचनम् । कृशिमा—कार्श्यम् । स्थविमा—स्थौल्यम् । स चात्यन्तविपरीतनिषेवणैर्नश्यति । अत्यन्तविपरीतानि—अत्यम्लातिरूक्षादीनि, अतिदु ख च ।

अथ कृशे कीदृग् भेषज योज्यम् ? इत्याह—

**योजयेद्बृंहणं तत्र सर्वं पानान्नभेषजम् ॥ ३३ ॥**

**स०**—तत्र—कृशे, बृहण सर्व पानान्नौषध योज्यम् ।

**आ० र०—कार्श्यस्यौषधमाह—योजयेदिति ।**

**अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च ।**
**स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ॥ ३४ ॥**

**स०**—अचिन्तया—चेतस शोककार्याद्यनाकुलत्वेन, तथा हर्षणेन—चित्ततुष्ट्या, तथा सन्तर्पणेन—आहारविशेषादिना बृहणेन, तथा स्वप्नप्रसङ्गात्—अतिनिद्रासेवनेन, कृश पुष्यति—सर्वोपचितधातु सम्पद्यते । क इव ? वराह इव,—शूकरो यथा । अन्येभ्यश्च पुष्टिहेतुभ्य कृशविषये स्वप्न एव प्रधान इति दर्शयितु वराहो दृष्टान्तत्वेनोपन्यस्तो ग्रन्थकृता । तथा हि—वराहस्य स्वप्नमन्तरेण न कश्चित्तथाविधोऽभ्यवहारादिरुपलभ्यते, यया-ऽसौ पुष्टोऽतिमेदुरो दृश्यते । अतिस्थूलातिकृशयोश्च लक्षण मुनिनाऽभ्यधायि ( च सू अ २१।९ )—"मेदोमासातिवृद्ध त्वाच्चलस्फिगुदरस्तन । अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥" तथा ( च सू अ २१।१५ )—"शुष्कस्फिगुदरग्रीवो धमनीजालसन्तत । त्वगस्थिशेषोऽतिकृश स्थूलपर्वा नरो मत ॥" इति ।

**आ० र०—अचिन्तादिचतुष्टय कार्श्यस्य प्रधानमौषधमित्याह—अचिन्तयेति, स्वप्नप्रसङ्गाच्चेति । हर्षणेन—प्रियदर्शनादिना । सन्तर्पणेन—सौहित्येन । स्वप्नप्रसङ्गात्—निद्राभ्यासात् ।**

**न हि मांससमं किञ्चिदन्यद्देहबृहत्त्वकृत् ।**
**मांसादमांसं मांसेन सम्भृतत्वाद्विशेषतः ॥ ३५ ॥**

**स०**—मांसेन सममपर देहबृहत्त्वकर न च विद्यते । सर्वबृहत्त्वकरेभ्यो मांसमतिबृहणमित्यर्थ । विशेषेण मांसादमांस देहबृहत्त्वकृत् । कुत ? इत्याह—मांसेन सम्भृतत्वात्,—पुष्टत्वात् ।

**आ० र०—कार्श्यस्य प्रधानतरमौषधमाह—न हीत्यादि । कार्श्यस्य प्रधानतममौषधमाह—मांसादेत्यादि । मांसादाना—मांससेविना मांसम्, मांसेन सम्भृतत्वात्—पुष्टत्वात्, विशेषतो देहबृहत्त्वकृत् इत्यनुषङ्ग । सङ्ग्रहे तु ( सू अ २४ )—"अतिकार्श्येन नायासवर्षशीतोष्णतृट्क्षुध । तृषिव्याध्यौषधमदान् सहतेऽल्पबलत्वत ॥ श्वासकासक्षयप्लीहगुल्मार्शोवह्निमन्दता । कृश प्रायश्च बाधन्ते रक्तपित्तानिलामया ॥ शुष्कस्फिगुदरग्रीव स्थूलपर्वा शिराततः । उच्यतेऽतिकृशस्तत्र प्रागुक्तो बृहणो विधि ॥ अश्वगन्धा विदार्याद्यो वृष्याश्चौषधयो हिता. । लङ्घनोत्थेषु रोगेषु शेषेष्वप्युपकल्पयेत् ॥ यत्तदात्वे समर्थ स्याद्यच्चाभ्यासेन पुष्टये । सद्य क्षीणो यत सद्योबृहणेनोपचीयते ॥ चिर क्रमेण च क्षीणस्तदभ्यासेन तत्र च । बृहण देहमात्राग्निमलादीन् वीक्ष्य योजयेत् ॥ क्रमान्मांसरसांस्तस्मात्कलावणिकान् लघून् । वेसवारीकृतैस्तद्वज्जाङ्गलैश्च कृताकृतान् ॥ रसास्तथा च क्षीरादीस्तर्पणांस्तर्पणान् पुन । युञ्ज्यात्कृशाना ज्वरिणां कासिना मूत्रकृच्छ्रिणाम् ॥ तृष्यतामूर्ध्ववाताना मूढमारुतवर्चसाम् । समकृष्णासितातैलक्षौद्राज्यो हि सतर्पण ॥ मन्थस्तद्वत्सिताक्षौद्रमदिरासक्तुयोजित । फाणित सक्तव सर्पिर्दधिमण्डोऽम्लकाञ्जिकम् ॥ तर्पण मूत्रकृच्छ्रघ्नमुदावर्तहर परम् । मन्थ खर्जूरमृद्वीकावृक्षाम्लाम्लिकदाडिमै ॥ परूषके सामलकै सद्यस्तृष्णादिरोगजित् । स्वादुरम्लो जलकृत सस्नेहो रूक्ष एव वा ॥ सद्य सन्तर्पणो मन्थ स्थैर्यवर्णबलप्रद ।" इति ।**

एव विस्तरेण स्थूलकृशयोरुपक्रममुक्त्वा समासेनाह—

**गुरु चातर्पणं स्थूले विपरीतं हितं कृशे ।**
**यवगोधूममुभयोस्तद्योग्याहितकल्पनम् ॥ ३६ ॥**

**स०**—यद्गुरु यच्चापतर्पण, तत्समासेन स्थूले हित माक्षिक शाल्वादि । एतद्धि रौक्ष्यान्मेद क्षपयति, गौरवाच्च शीघ्र जरा न गच्छति । यदतो विपरीत—लघु सन्तर्पण च, तदतिकृशे हित शालिषष्टिकैणेयशशलावकपिञ्जलादिकम् । अतिकृशस्य ह्यभिरपि कृशो भवति । तस्माद्यदि तस्य गुर्वन्नपानौषधमुपयुज्यते, ततोऽग्निसादोऽस्य जायते । तथाऽस्य लघु अपतर्पणमुपयुज्यते, तद्भूय कार्श्यायास्य स्यात् । तस्माल्लघु सन्तर्पण च यत्तत्कृशाय हितम् । गुरु चेत्यत्र चशब्दाल्लघु च यदपतर्पणं श्यामाककोरदूषादिक, तथाऽन्यदपि यन्न गुरु न च लघु मेदोघ्न जागरव्य-

१ 'सौहित्य—तृप्ति , अभ्या' ग । २ 'प्रहर्षेण' घ झ । ३ 'च नरो व' ठ ,स च । ४ 'वराहदृष्टान्त । अतिस्थू' ड । ५ 'शलक्ष' ड । ६ 'स परमौ' ख घ ञ । ७ 'धमाह' क । ८ 'त्वाद्बृहत्त्वकृत्' ख । 'त्वाद्विशिष्यते' ठ. । ९ 'देहस्य बृ' ठ. । १० 'कार्श्ये प्र' क ख घ ञ ।

१ 'श्च धावन्ति र' स द्व । २ 'पित्तज्वरामया ' स मू । ३ 'र्याद्या वृ' ख ग झ स द्व । विदार्याद्य —विदार्यादिगण । ४ 'ण चेज्जीर्णस्त' ख ञ । ५ 'स्तत्र दक' ख ञ । 'स्तद्वद्' घ । ६ 'स्तत्र जाङ्ग' झ । ७ 'र्पयन्' ख घ ञ । 'र्पयेत्' झ । तर्पणान्—सक्तून् । ८ 'समै कृष्णासितातैलक्षौद्राद्यै( ज्यै )श्चसतर्पणे ।' स स. । ९ 'द्घृतसितामदिरा' झ । १० 'स्वादुरम्लश्च बलकृत् सस्नेहो रूक्ष एव च ।' क ख ग घ ञ । 'सस्वादुरम्लो बलकृत्° एव च ।' झ । ११ 'स्ततो ग्राहित' ख ञ । 'स्तद्योग्यहित' क ग झ । १२ 'रु तथाऽपत' ड । १३ 'स्थूलाय हि' ट. । १४ 'रूक्षान्मेद कर्शयति' ठ ड । १५ 'कृशाय' ट । १६ 'यमांसला' ठ ड । १७ 'रतिकृ' ट । १८ 'ततो यदि' ठ ड । १९ 'स्यात्' ठ ड । २० 'अथा' ठ. । २१ 'लघु बृहणमुप' ट ठ.ड । २२ 'कार्श्यमेवास्यापद्यते ।' इति क्वचित् ।

वायव्यायामचिन्तादिक, तच्च स्थूले हितमिति गम्यते । उभयो –स्थूलकृशयोर्यवगोधूम हितम् । किम्भूत यवगोधूमम् ? इत्याह–तद्योग्येत्यादि । तयो –स्थूलकृशयो , योग्या–उचिता, आहिता–कृता, कल्पना–सयोगसस्कारादिनोपयोगोऽपायो वा, यस्मिन् यवगोधूमे, तदेवम् । यवा स्थूले हिता , गोधूमा कृशे, इत्यर्थ । 'हितयोगे चतुर्थी वक्तव्या' इत्यस्य प्रायिकत्वात् स्थूले हितमित्यत्र न चतुर्थी । अन्येऽपि ह्येव प्रयोगा दृश्यन्ते । यथा रुद्रटस्य ( काव्यालङ्कारे अ ५।१४ टी )–"सामाजा धीमता हितम् ।" इति । तथाऽस्यैव ( हृ सू अ ६।२९ )–"विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता । व्रणाक्षिरोगसशुद्धदुर्बलस्नेहपायिनाम् ॥" इति ।

आ० र०–स्थौल्यकार्श्ययो सङ्क्षेपादौषधमाह–गुरु चातर्पणमित्यादि, यवगोधूममित्यादि । गुरुत्वे सति यदपतर्पणं तत्स्थूले हितम् । लघुत्वे सति यत्सन्तर्पण तत्कृशे हितम् । यवाश्च गोधूमाश्च यवगोधूमम् । तदुभयो स्थूलकृशयो क्रमेण हितम् । तच्च तदुचितकृतकल्पनम् । यथा,–स्थूले तैलतक्रादिसिद्धा भक्ष्या , कृशे घृतक्षीरादिसिद्धा । सङ्ग्रहे तु ( सू अ २४ )–"स्थौल्यकार्श्ये प्रकृत्याऽपि स्याता तत्राप्यय विधि । सततव्याधिततया सदा योज्यो विभज्य च ॥ मात्रादियुक्ते सेवेत यस्तु लङ्घनबृहणे । समधातुरविघ्नदेहोऽसौ सिंहसहननो भवेत् ॥ दृढेन्द्रियबलत्वाच्च न द्वन्द्वैरभिभूयते ।" इति ।

ननु, अतीसारज्वरगुल्मादीनामनेकरूपत्वादनन्ता एवोपक्रमा प्राप्ता । तत्कथमुक्तम् ? "उपक्रम्यस्य हि द्वित्वाद्द्विधैवोपक्रमो मत ।" इति । अत आह—

**दोषगत्याऽतिरिच्यन्ते ग्राहिभेद्यादिभेदतः ।**
**उपक्रमा न ते द्वित्वाद्भिन्ना अपि गदा इव ॥ ३७ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने द्विविधोपक्रमणीयो नाम चतुर्दशोऽध्यायः ॥ १४ ॥**

स०–दोषाणा–पृथग्रूपाणा ससर्गसन्निपातादितरतमभेदेनाऽनन्त्य याताना या गति , तथा तेषामेव स्थानवृद्धिक्षयलक्षणा या गति , तथा तिर्यगूर्ध्वाधोलक्षणा या गति , तथा शाखाकोष्ठास्थिमर्मसन्धिलक्षणा च या गति , तया । अतिरिच्यन्ते –बहवो भवन्त्युपक्रमा । कथम् ? इत्याह–ग्राहिभेद्यादिभेदत ,–ग्राही च भेदी च ग्राहिभेदिनौ, तावादी येषा–रोगानुरोधान्नाविधानामुपक्रमाणा, ते ग्राहिभेद्यादय , तेषा भेदो–विशेषो, ग्राहिभेद्यादिभेद , तस्मात् । यद्यप्यतिरिच्यन्ते–अनन्ता सम्पद्यन्ते, तथाऽपि द्वित्वात्–सन्तर्पणापतर्पणरूपात् , न तेऽतिरिच्यन्ते । सन्तर्पणरूपत्वमपतर्पणरूपत्व वा वर्जयित्वा न तेषामुपक्रमाणा रूपान्तर सम्भवतीत्यर्थं । कथमिव नातिरिच्यन्ते ? इत्याह–भिन्ना अपि गदा इव । यथा,–वातादिदोषवशान्नानाविधा अपि ज्वरादयो बृहणलङ्घनसाध्यत्व [ सामत्व निरामत्व वा ] नातिवर्तन्ते, तथोपक्रमा अपीति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने द्विविधोपक्रमणीयाध्यायश्चतुर्दश समाप्त ॥ १४ ॥

आ० र०–"स्नेहन रूक्षण कर्म" (श्लो ३) इत्यादिना सर्वोपक्रमाणां पृथक्त्वेऽप्युपक्रमद्वयेऽन्तर्भाव उक्त । इदानीं तेषा पृथक्त्वमेव कुत ? इत्यत आह–दोषगत्येति । दोषगत्या–दोषैश(सं)रणत्वेन, यथा यथा दोषा भिद्यन्ते तथा तथोपक्रमा भिद्यन्ते । यथा,–अतिप्रवृत्ते ग्राही, अप्रवृत्ते भेदी, दाहे शीत , शीते उष्ण , इत्यादि । पृथक्त्वे हेतुश्चेत्पृथक्त्वमेवास्तु, नेत्याह–न ते द्वित्वादिति । द्वित्वान्नातिरिच्यन्ते–बृहणत्वं लङ्घनत्व वा सामान्य न त्यजन्ति । यथा,–नानाविधा अपि गदा सामत्व निरामत्व वा ।

**इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**उपक्रमप्रकरण सामस्त्येन निरूपितम् ॥ १४ ॥**





## पञ्चदशोऽध्यायः ।

द्विविधोपक्रमणीयाध्यायादनन्तरं शोधनादिगणसङ्ग्रहाध्यायारम्भ । यतो दोषोपक्रमणीये द्विविधोपक्रमणीये च नानाविधा उपक्रमा अभिहिता , ते च मदनमधुकादिभेषजाश्रया , अतस्तानि शोधनाद्युपयोगीनि सर्वोपक्रमाधिकारीणि सञ्जिघृक्षुरध्यायमिममारेभे—

**अथातः शोधनादिगणसङ्ग्रहमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**
( गद्यसूत्रे ॥ २ ॥)

१ 'पि त्येव' ट । 'न्येऽप्येव' ठ । २ साम–गीतिविशेषम्, अजति–प्राप्नोति, इति सामाजः, तेन । सामवेदपाठकेन रुद्रटे नेत्यर्थ । ३ 'तत व्या' स द्व । 'तत तु व्याधितते स' क । 'तत तु व्याधिवतो स' ख ञ । 'तत तु व्याधिवते स' झ । ४ 'समनह' क ख झ ञ स द्व । सिंहसहनन –सिंहतुल्यशरीर । ५ 'मनन्तरू' ड । ६ 'न तु द्वि' ग स द्व. । ७ 'तादिभेदे' ड । ८ 'या बहवो' ठ ट ।

१ [ ] इति पाठ ट ठ ड पुस्तकेषु नोपलभ्यते । २ 'षशरण्यत्वेन' ख झ ञ । 'पकारणत्वेन' ग । ३ सरण–गमनम् । ४ 'क्त्वहेतु' ग झ । ५ 'न तु द्वि' ख ग घ झ ञ । ६ 'च' ग झ । ७ 'उपक्रम' क ख घ । ८ 'नादुप' ठ ड । ९ 'मारभते' ट । १० अय शोधनादिगणसङ्ग्रहश्चरके सू० ४ अध्याये, सुश्रुते सू० ३७।३८।३९ अध्यायेषु, अष्टाङ्गसङ्ग्रहे सू० १४।१५।१६ अध्यायेषु चास्ति वर्णित ।

**स०**–शोधन–शोधनरूपो द्रव्यगण, आदिर्येषा त एवम्। आदिशब्देन वातहरादिगणपरिग्रह। तेषा सङ्ग्रहो यस्मिन्नध्याये स शोधनादिगणसङ्ग्रह, त शोधनादिगणसङ्ग्रहसञ्ज्ञमध्याय व्याख्यास्याम। गण–समूह। विक्षिप्ताना पदार्थानामेकत्र राशीकरण–सङ्ग्रह। तत्र शोधनगणस्य सर्वदोषविजयि[1]त्वेन प्राधान्यात् पूर्वमुपन्यास।

**आ० र०**–शोधनादिगणीयमध्याय व्याख्यातु प्रतिजानीते–अथेति।

शोधन चतुर्विधम्,–वमनविरेचनास्थापनशिरोविरेचनद्रव्यभेदेन। तत्रापि वमनस्यौषधगण[2] तावत्पूर्व वक्ति—

**मदनमधुकलम्बानिम्बबिम्बीविशाला-**
**त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम्।**
**विदुलदहनचित्राः कोशवत्यौ करञ्जः**
**कणलवणवचैलासर्षपाश्छर्दनानि ॥ १ ॥**

**स०**–मदन–राठ[3]। मधुक–मधुयष्टिका। लम्बा–तुम्बी दीर्घतिक्ताऽलाबुसञ्ज्ञा। निम्ब–पिचुमन्द। बिम्बी–गोह्ला, ओष्ठोपमफलसञ्ज्ञा। विशाला–इन्द्रवारुणी। त्रपुस–तिक्तत्रपुसबेधम्, तस्य वमनयोग्यत्वात्[4]। कुटज–वत्सकम्। मूर्वा–पीलुपर्णी। देवदाली–गरागरी[5]। कृमिघ्न–विडङ्गम्। विदुलो–जलवेतस। दहन–चित्रक। चित्रा–मूषिकपर्णी। कोशवत्यौ[6]–घण्टालिके[7], एका धामार्गवो द्वितीया राजकोशातकी। करञ्जो–नक्तमाल। कणा[8]–कृष्णा। लवण–सैन्धवम्। वचा–गोलोमी। एला–त्रुटि। सर्षपो–रक्षोघ्न। एतानि मदनादीनि छर्दनानि–छर्दिकराणि। "वसुमुनिविरतिश्चेन्मालिनी नौ मयौ य।" अत्र च मदनविशालात्रपुसकुटजविडङ्गैलासर्षपाणा फलानि वमनकृन्ति। मधुकविदुलचित्र[9]कदन्तीवचाना तु मूलानि। रोध्रसुवर्णक्षीरीकम्पिल्लाना त्वच[10]। शेषाणा फलपत्रपुष्पाणि[11] वेदितव्यानीति।

**आ० र०**–शोधनादिद्रव्यगणा। तत्र वमनगणमाह–मदनमधुकेत्यादि। मदनो–गेल[12]। मधुक–यष्टीमधु। लम्बा[13]–कटुतुम्बी। निम्ब–पिचुमन्द। बिम्बी[14]–कटुतुण्डिकेरी। विशाला–इन्द्रवारुणी। त्रपुस[15]–कटुवालुकम्। कुटजो–वत्सक। मूर्वा–मधुरसा। देवदाली–जीमूतक। कृमिघ्न–विडङ्गम्। विदुलो–वेतस। दहन–चित्रक। चित्रा[16]–चित्राण्डिका कटु[17]पटोलफल पत्रक[17] च। कोशवत्यौ–कटुकोशातकी राजकोशातकी च। करञ्जो–नक्तमाल। कणा–पिप्पली। लवण–सैन्धवम्। वचा–उग्रा। एला–त्रुटि। सर्षपो–रक्षोघ्न[1]। छर्दनानीति[2] वमनानि। बहुवचन गुणबहुत्वार्थम्। तेन वमनादिद्रव्याणा यस्य कस्यचित् त्रिकचतुष्कपञ्चकादे प्रयोजकत्वम्। उक्त च सुश्रुतेन (सू अ ३७।३४)–"समस्त[3] वर्गमर्ध वा यथालाभमथापि वा। प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्मसु ॥" इति। उपलक्षण चेदम्। अत एव सङ्ग्रहकारो[4]ऽधिकमधीते (सू अ १४)–"मदनजीमूतेक्ष्वाकुकोशातकीद्वयफलपुष्पपत्राणि। कुटजकरञ्जत्रपुससर्षपपिप्पलीविडङ्गैलाप्रत्यक्पुष्पीहरेणुपृथ्वीकाकुस्तुम्बरीप्रपुन्नटाना[5] फलानि शारदानि[6] च हस्तिपर्ण्या। कोविदारकर्बुदारारिष्टाश्वगन्धानीपविदुल[7]बिम्बीबन्धुजीवकश्वेताशणपुष्पीसदापुष्पीवचाचित्राचित्रकमृगेर्वा[8]रुकेन्द्र[9]वारुणीसुषवीचतुरङ्गु[10]लस्वादुकण्टकपाठापाटलीशार्ङ्गेष्टा[11]मधुकमूर्वासप्तपर्णसोमवल्कद्वीपिशिग्रुसुमनस्सौमनस्यायवानीवृश्चीवपुनर्नवामहासहाक्षुद्रसहे[12]क्षुकाण्ड[13]कतकपिप्पलीमूल[14]चविकानलदोशीरह्रीवेरमूलानि। शाल्मली[15]शाल्मलुकाभद्रपर्ण्यैरावत[16]ण्युपोद[17]कौद्दालकधन्वनरसाञ्जनराजादनोपचित्रागोपश्ङ्गाटिकापिच्छा। प्रियङ्गुपुष्पम्। तालीसपत्रम्। हरिद्राश्ङ्गवेरकन्दो। मधूकदारुहरिद्रासारौ। तगरगुडूचीमधु[18]फाणितक्षीरक्षारलवणानि चेति वमनोपयोगीनि।" इति।

**निकुम्भकुम्भत्रिफलागवाक्षी-**
**स्नुक्शङ्खिनीनीलिनितिल्वकानि।**
**शम्याककम्पिल्लकहेमदुग्धा**
**दुग्धं च मूत्रं च विरेचनानि ॥ २ ॥**

**स०**–निकुम्भो–दन्ती। कुम्भ–त्रिवृत्। त्रिफला–वरा। गवाक्षी[19]–विशाला, द्वितीयेन्द्रवारुणी। स्नुक्–गुडा। शङ्खिनी–यव[20]तिक्ता। नीलिनी–नील[21]पुष्पा, भारवाहीसञ्ज्ञा। तिल्वको–रोध्र। शम्याक–कर्णिकार। कम्पिल्लको–रञ्जनक[22]। हेमदुग्धा–कनकक्षीरी। दुग्ध–क्षीरम्। मूत्र–प्रसिद्धम्। निकुम्भादीन्येतानि[23] विरेचनानि। उपजातिर्वृत्तम्।

---

१ 'जयत्वे' ठ ड। २ 'ण पूर्व' ट ड। ३ 'गालम्' ट। ४ 'वमने योग्यत्वम्।' ठ। ५ 'घरङ्गरा।' ठ ड। ६ 'वतीद्वय एका घण्टालिकी द्वि' ड। ७ 'घण्टुलुका, ए' ट। ८ 'ण–पिप्पली' ठ। ९ 'चित्राद' ट। १० 'त्वचो वम्या।' ट ठ। 'त्वचो रेचना।' इति क्वचित्। ११ 'ष्पाणीति।' ट। १२ 'गाल' ख ग ञ। 'गोलफल' इति राजनिघण्टु। १३ 'म्बा–तुम्बी ख ग ञ। १४ 'म्बी–तुण्डि' ख ग ञ। १५ 'स–वालु' क ख ग ञ। १६ 'चित्रा–चित्राण्डिका पटोलफलाकारफला, आरण्यकचण्डका इत्यर्थ। अन्ये द्रवन्तीमाहु' इति डल्हण। १७ 'कटु' इति 'पत्रक च' इति च क ख.ग.ञ पुस्तकेषु नोपलभ्यते।

१ 'श्वेतसर्षप' इति डल्हण। २ 'ति बहु' ग घ। ३ 'स्तवर्ग' ख ग घ ञ। ४ 'ङ्ग्रहेऽधिक' ग। ५ 'म्बरुप्र' स द्र। ६ 'नि। हस्तिपर्णा।कोवि' क ख ग ञ स मू। ७ 'लबिल्वबि' स स। ८ 'मृगे द्रवा' स द्र। ९ 'रुइन्द्र' क ख ग ञ। १० 'ङ्गुलीस्वा' क। 'ङ्गुलास्वा' ख ञ.। ११ 'शार्ङ्गष्टा' क घ स द्र। १२ 'क्षुसहाकाण्डेक्षुका' घ ञ। १३ 'ण्डकालवृन्तपि' स मू। 'ण्डकालक्तपि' स स। १४ 'लकलम्बचवि' ख ञ। 'लकदम्बच' घ। १५ 'शाल्मुलका' ख ञ। 'शालुका' ग। 'लीशेलुका' स स। १६ 'वण्यावर्तक्युपो' स स। १७ 'दकोद्दा' स द्र। १८ 'मधूकफा' ख घ ञ। १९ 'क्षी–द्विती' ड। २०-२१-२२ 'यवतिक्ताभेद श्वेतबुध्नीत्येके' इति, 'नीलबुध्ना श्रीफलिकेत्यन्ये' इति, 'रोचनिक स्वनामख्यात' इति च डल्हण। २३ 'दीनि वि' ड.।

आ० र०—विरेचनगणमाह—निकुम्भकुम्भेति । निकुम्भो—दन्ती । कुम्भ —त्रिवृत् । त्रिफला—प्रसिद्धा । गवाक्षी—श्वेतपुष्पेन्द्रवारुणी । स्नुक्—स्नुही । शङ्खिनी—कालाञ्जनीसदृशा श्वेतपुष्पा । नीलिनी—कालाञ्जनिका । तिल्वको—रोध्र । शम्याक —आरग्वध । कम्पिल्लो—रक्ताङ्ग । हेमदुग्धा—हेमावती कङ्कुष्ठप्रकृति । सङ्ग्रहे त्वधिकमुक्तम् ( सू अ १४ ) —"त्रिवृच्छ्यामादन्तीद्रवन्तीशङ्खिनीसप्तलाजगन्धाजश्टङ्गीवचागवाक्षीछगलाश्रीसुवर्णक्षीरीरीचित्रककिणिहीहस्त्वपञ्चमूलवृश्चीवपुनर्नवापलङ्कषावास्तुकशाकसालमूलानि । तिल्वकैरम्यककम्पिल्लकपाटलीत्वच. । त्रिफलापीलुप्रियालबकुलबदरककेन्धुकाश्मर्यपरूषकद्राक्षानीलिनीक्षीतनकक्षीरकोदकीर्यावि-डङ्गपूगपञ्चाङ्गुलफलानि, चतुरङ्गुलफलपत्राणि । पूतीकैस्त्वक्-फलपत्राणि । महावृक्षसप्तपर्णज्योतिष्मतीक्षीराणि । क्षीर-मस्तुमद्यधान्याम्लमूत्राणि चेति विरेचनोपयोगीनि । कोशातकीदेवदालीसप्तलाकारवेल्लिकास्वरसा अर्कक्षीरमुष्णोदक चेत्युभयात्मकानि ।" इति ।

**मदनकुटजकुष्ठदेवदाली-**
**मधुकवचादशमूलदारुरास्नाः ।**
**यवमिशिकृतवेधनं कुलत्था**
**मधु लवणं त्रिवृता निरूहणानि ॥ ३ ॥**

स०—मदन—मदनफलम् । कुटज—वत्सकत्वक् । कुष्ठ—गदनाम । दारु—देवदारु । रास्ना—युक्तरसा । मिशि —शतपुष्पा । कृतवेधन—धामार्गव । कुलत्था —प्रसिद्धा । एतानि निरूहणानि—निरूहणसाधनानि । "भवति जगति नौ तत परौ यौं नजसहितैर्जरगैश्च पुष्पिताग्रा ।"

आ० र०—निरूहगणमाह—मदनेत्यादि । कुष्ठ—पाकलम् । दशमूल—महद्ह्रस्वे पञ्चमूले । दारु—देवदारु । रास्ना—प्रसिद्धा । यव —तीक्ष्णशूक । मिशि —शतपुष्पा । कृतवेधन—कटुकोशातकी । कुलत्थ —शिम्बीधान्यविशेष । मधु—माक्षिकम् । सङ्ग्रहे त्वधिकमुक्तम् ( सू अ १४ )—"बस्तिषु तु तेषु तेष्ववस्थान्तरेषु यान्युपयुज्यन्ते द्रव्याणि, तान्यसङ्ख्येयत्वान्नोपदिश्यन्ते । रसस्कन्धेभ्य एव यथादोष यथावस्थ च विभजेत् । सर्वेषु प्रायो मदनकुटजजीमूतकेक्ष्वाकुकोशातकीद्वयत्रपुससिद्धार्थकशताह्वाफलानि, बलादशमूलैरण्डत्रिवृद्वचायष्ट्याह्वकुष्ठरास्नापुनर्नवार्कद्दतृणमूलानि, सरलदेवदारुहपुषाहिङ्गुरसाञ्जनव्योषपत्रैलामृतायवकोलकुलत्था गुडलवणमस्तुधान्याम्लमूत्रस्नेहक्षीरक्षौद्राणि चेति ।" इति ।

**वेल्लापामार्गव्योषदार्वीसुराला**
**बीजं शैरीषं बार्हतं शैग्रवं च ।**
**सारो माधूकः सैन्धवं तार्क्ष्यशैलं**
**त्रुट्यौ पृथ्वीका शोधयन्त्युत्तमाङ्गम् ॥ ४ ॥**

स०—वेल्ल—विडङ्गम् । अपामार्ग —प्रत्यक्पुष्पी । व्योष—त्रिकटुकम् । दार्वा—पीतद्रु । सुराला—श्रेष्ठसर्जरस । शैरीष—शिरीषबीजम् । बार्हत—बृहतीबीजम् । शैग्रव—शिग्रुबीजम् । सारो माधूको—मधूकपुष्पसार । सैन्धव—सिन्धूत्थम् । तार्क्ष्यशैल—शुष्करसाञ्जनम् । त्रुट्यो—सूक्ष्मैला स्थूलैला च । पृथ्वीका—हिङ्गुपत्री । एता-युत्तमाङ्ग शोधयन्ति,—मूर्धविरेचनानीत्यर्थ । "मौ यौ पञ्चाश्वैर्वैश्वदेवीति नाम्ना ।"

आ० र०—नावनगणमाह—वेल्लापामार्गेति । सुराला—श्रेष्ठ सर्जरस । शिरीषबृहतीशिग्रूणा बीजम् । मधुकस्य सार । तार्क्ष्यशैल—रसाञ्जनम् । त्रुट्यौ—एलाद्वयम् । पृथ्वीका—बाष्पिका । सङ्ग्रहे त्वधिकमुक्तम् ( सू अ १४ )—"अपामार्गविडङ्गमरिचपिप्पलीशिरीषबिल्वाजाज्यजमोदावार्ताकपृथ्वीकैलाहरेणुफलानि । तालीसतमालतर्कारीहरीतकवर्गपत्राणि । सर्षपफलपत्राणि । शिग्रुफलपत्रत्वच । हरिद्रामूलकलशुननागरकन्दपत्राणि । अतिविषाकन्दा । कुष्ठवचाभार्ङ्गीश्वेताकिणिहीनागदन्तीज्योतिष्मतीगवाक्षीवयस्थावृश्चिकालीबिम्बीकरञ्जमूलानि । अर्कालर्कपुष्पमूलानि । रोध्रमदनसप्तपर्णनिम्बपीलुबीजानि । सुरङ्गीमातुलुङ्गीलवङ्गपुष्पाणि । अगुरुसुरदारुसरलशल्लकीजिङ्गिण्यशनरसाञ्जनहिङ्गुलाक्षानिर्यासा । शालतालमधूकदार्वीसारा । तेजस्विनीमेषश्टङ्गीवराङ्गेङ्गुदीबृहतीद्वयत्वच । राजादनमज्जा । क्षौद्रं लवणमद्यानि, गवादिशकृन्मूत्रपित्तानि, एवंविधानि चेन्द्रियोपशमनीयान्यन्यान्यपि । तथा स्नेहो क्षीर रक्त मासरसो धान्यरसस्तोयमिति शिरोविरेचनोपयोगीनि । मधुकपद्मकमञ्जिष्ठासारिवामुस्तापुन्नागनागकेशरैलवालुकसुवर्णत्वक्तमालपत्रपृथ्वीकाहरेणुलाक्षाशतपुष्पाशल्लकीशर्करादमन-

१ 'ग्धा—हिमा' क ख ञ । 'सुवर्णक्षीरी—अनन्तासदृशपत्रा, कङ्कुष्ठमित्यपरे' इति डल्हण । २ 'षाशालमूलानि' क ग । 'षाशाकमूलानि' ख घ ञ. । ३ 'कशम्याक' घ । ४ 'लकुचलबद' स द्व । ५ 'क्षाशङ्खिनीक्षीतक्षीर' क ख घ ञ । 'क्षाशङ्खिनीक्षीर' ग । ६ 'नकोद' स द्व । ७ 'कस्य त्व' स स । ८ 'प्तच्छदज्यो' स स. । ९ 'काश्वदंष्ट्रार्कक्षी' क ख ग प ञ । 'स्वरसमर्क' स म । १० 'मिसि' घ ठ ड । ११ 'कुलत्थो' अ । १२ 'ह्ण गण' ग । १३ 'बृह' व । १४ 'शूलक' घ । १५ 'न्यभेद ।' क ग । १६ 'पु तु प्रायो' स द्व ।

१ 'कत्तृण' ग स द्व । २ 'लत्थ-वग्गुड' घ । 'लत्थगुड' स द्व । ३ 'वेल्लो—विटङ्ग' ठ ड । ४ 'ष्ठरस' ठ । ५ 'पुष्पर' ट ड । ६ 'त्रुटिद्वय स्थूलसूक्ष्मैलाभेदेन ।' ठ ड । ७ 'बृहत्सूक्ष्मैला च' ट । ८ 'सुरङ्गी' स स । ९ 'म' स द्व । १० 'तमालशाल' स द्व । 'साल' ग घ स स । ११ 'यचोचत्व' स स । १२ 'क्षौद्र ल' ख घ ञ । १३ 'वणानि मद्या' क ख घ ज स द्व । १४ 'शमनायान्या' क । 'शमनाय भवन्त्यानि । त' ग । 'शमनान्य' स मू । 'शयान्य' स म । १५ 'स्नेह क्षी' क ख ग घ ञ । १६ 'न्नागकेश' क ग स मू । १७ 'रेलापा' म म । १८ 'सुपण' घ । १९ 'लपृ' स द्व । २० 'रामदन' घ स.द्व ।

कमरुबकन्यग्रोधोदुम्बराश्वत्थप्लक्षरोध्रत्वक्पद्मोत्पलानि सर्वगन्धद्रव्याणि च कुष्ठतगरवर्ज्यानि प्रायोगिकधूमोपयोगीनि । अगुरुगुग्गुलुशल्लकीशैलेयकनलदह्रीबेरहरेणूशीरमुस्तध्यामकवराङ्गश्रीवेष्टकस्थौणेयकपरिपेलवैलवालुककन्दुरुकसर्जरसयष्ट्याह्वफलसारस्नेहमधूच्छिष्टबिल्वफलमज्जतिलयवमाषकुङ्कुमानि मेदोमज्जवसासर्पींषि च स्नैहिकधूमोपयोगीनि । शिरोविरेकद्रव्याणि गन्धद्रव्याणि च तीक्ष्णानि मनोह्वा हरितालं चेति तीक्ष्णधूमोपयोगीनि ।" इति ।

**भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयम्[1] ।**
**वायुं वीरतरादिश्च विदार्यादिश्च नाशयेत्[2] ॥ ५ ॥**

स०-भद्रदारु-किलिमम् । नत-तगरम् । कुष्ठ-गद । दशमूल-द्विपञ्चमूलम् । बलाद्वय-बलाऽतिबला च । एतानि भद्रदार्वादीनि, च-अपर, वक्ष्यमाणो वीरतरादिर्विदार्यादिश्च गणो वायु नाशयति ।

आ० र०-वातघ्नगणमाह-भद्रदारु नतमित्यादि । भद्रदारु-देवदारु । नत-तगरम् । वीरतरादिविदार्यादी-वक्ष्यमाणौ गणौ । तयोर्यानि पुनरुक्तानि तानि द्विगुणं योज्यानि । सङ्ग्रहे तु ( सू अ. १४ )-"भद्रदारुकुष्ठतगरवरुणबलातिबलार्तगलकच्छुरावाह्लीककुबेराक्षिवत्सादन्यकोलकिंशुककतकभार्ङ्गीकार्पासीवृश्चिकालीपत्तूरप्रभृतीनि विदार्यादिर्वक्ष्यमाणगणो वीरतरादिस्तृणाख्यवर्ज्यानि षट् पञ्चमूलानि चेति वातशमनानि ।" इति ।

**दूर्वाऽनन्ता निम्बवासाऽऽत्मगुप्ता**
**गुन्द्राऽभीरुः शीतपाकी प्रियङ्गुः ।**
**न्यग्रोधादिः पद्मकादिः स्थिरे द्वे**
**पद्मं वन्यं सारिवादिश्च पित्तम् ॥ ६ ॥**

स०-दूर्वा-शाद्वलम् । अनन्ता-यवासक । निम्ब-प्रसिद्ध । वासा-आटरूषक । आत्मगुप्ता-कपिकच्छू । गुन्द्रा-पदएरक । अभीरु-शतावरी । शीतपाकी-शिखण्डिका काकणन्तिकाभेद । प्रियङ्गु-श्यामा । एष दूर्वादिर्गण , तथा वक्ष्यमाणो न्यग्रोधादि पद्मकादिश्च गण , तथा शालिपर्णीपृश्निपर्ण्यौ, तथा पद्म-जलजम् , वन्य-कुटन्नटम् , तथा सारिवादिश्च गण , एते पित्त नाशयन्ति । "स्ता तो गौ चेच्छालिनी वेदलोकै ।"

आ० र०-पित्तघ्नगणमाह-दूर्वेत्यादि । अनन्ता-दुरालभा । गुन्द्रा-एरका । शीतपाकी-गुञ्जा । स्थिरे द्वे-शालिपर्णी पृश्निपर्णी च । वन्य-क्षुद्रमुस्ता । न्यग्रोधादिपद्मकादिसारिवादयो-वक्ष्यमाणा गणा । अत्रापि पुनरुक्तानि द्विगुणानि । सङ्ग्रहे तु (सू अ १४)-"दूर्वानन्तामोचरसमञ्जिष्ठापरिपेलवकालाकालीयककदलीकन्दलीपयस्यात्मगुप्तानारिकेलखर्जूरद्राक्षाविदारीबदरीबलानागबलानागपुष्पाशतावरीशीतपाक्योदनपाकीतृणशूल्याशुमतीद्वयारिष्टकाटरूषकेत्कटप्रियङ्गुधातकीधवधन्वनस्यन्दनखदिरकदरप्रियालतालशालसर्जतिनिशाश्वकर्णगुन्द्रावानीरपद्मापद्मकपद्मबीजमृणालकुमुदनलिनसौगन्धिकपुण्डरीकशतपत्रशैवालकह्लारोत्पलकाकोल्युत्पलिकाशालूकशृङ्गाटककसेरुकक्रौञ्चादनप्रभृतीनि शीतवीर्याणि । सारिवादि पद्मकादि पटोलादिर्न्यग्रोधादिर्दाहहरो महाकषायस्तृणपञ्चमूलं चेति पित्तशमनानि ।" इति ।

**आरग्वधादिरर्कादिर्मुष्ककाद्योऽसनादिकः ।**
**सुरसादिः समुस्तादिर्वत्सकादिर्बलासजित् ॥ ७ ॥**

स०-आरग्वधादयो गणा सप्तैते बलास-श्लेष्माण जयति ।

आ० र०-श्लेष्मघ्नगणमाह-आरग्वधादिरिति । एते सप्त गणा वक्ष्यमाणा । अत्रापि पुनरुक्तानि द्विगुणानि । सङ्ग्रहे तु ( सू अ १४ )-"शीतशिवशतपुष्पासरलसुरदारुरास्नेङ्गुदीसातलासुमन काकादनीलाङ्गलिकाहस्तिकर्णमुञ्जातलामज्जकप्रभृतीन्यारग्वधादिरसनादिरर्कादि सुरसादिर्मुष्ककादिर्वत्सकादिर्मुस्तादि शीतघ्नो महाकषायो वल्लीकण्टकपञ्चमूले चेति श्लेष्मप्रशमनानीति ।" इति ।

**जीवन्ती काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च ।**
**ऋषभकजीवकमधुकं चेति गणो जीवनीयाख्यः ८**

स०-जीवन्त्यादिर्गणो जीवनीयसज्ञ । उदाहरणमात्र चेदम् । धीमता स्वादुशीतस्निग्धादीन् जीवन्त्यादिषु साधारणगुणानालोच्य क्षीरेक्षुद्राक्षाक्षोडविदारिकन्दादिषु (ष्वपि ) तद्गुणेषु जीवनायादित्वमवधारयितु युक्तमिति । जीवन्ती-जीववर्द्धनी । काकोल्यौ द्वे-एका काकोली केवडीसज्ञा, अन्या क्षीरकाकोली पयस्विनीसज्ञा । द्वे मेदे-एका मेदा मणिच्छिद्रासज्ञा, अन्या

---

१ 'मुस्ताध्या' स द्व । २ 'लवचैल' घ । 'लवैलावा' स स । ३ 'रुसर्ज' घ ञ । 'रुष्कस' स म । ४ 'वा' क ख ग घ ञ । ५ 'णि च ती' क ख ग । ६ 'बलात्रयम्' ग । ७ 'शोधयेत्' ख ञ । ८ 'रु-द्रुकि' इति क्वचित् । ९ 'बला महाबला च' ठ ड । १० 'नि तथा वक्ष्य' ट । 'नि च-तथाऽपर' ठ । ११ 'गुणानि योजनीयानि' ग घ । १२ 'गरबला' क घ । १३ 'रावृकीकुबे' स.मू । 'राह्लादिनीकु' स स । १४ 'लकैकत' स द्व । १५ 'दिवीरतरादिगणौ वक्ष्यमाणौ तृणा' ग । 'दिगणो' घ स द्व । १६ 'स्तृणव' क ख ञ । 'णादिव' ग । १७ 'न्द्रा-एरका' ट ड । 'न्द्रा-पट्टए' ठ । 'गुन्द्रा-गुलुञ्च' चक्र । 'गुन्द्रा-मृदुदर्भ ' धन्व नि ।

१ 'पर्णीद्वयम् ।' क ख ञ । २ 'भद्र' ख ञ । ३ 'दारीबला' क ग घ । ४ 'णमूल्या' ख ग ञ । ५ 'पत्रोशीरवालकह्रीबेरोत्पल' ग । ६ 'नि, अन्यानि च शीत' स स । ७ 'ते श्लेष्मा' ठ ड । ८ 'तीन्यन्यानि च रुक्षोष्णवीर्याण्यारग्व' स स. । ९ 'तघ्नश्च महा' स द्व । १० 'जीवक -कूर्चशीर्षक स्वनामख्यात ' इति डल्हण । ११ 'दिसावा' ट. । १२ 'दिष्विवावधारयेत् ।' ड. । १३ 'कनडी' ठ. ।

महामेदा वृक्षरुहासञ्ज्ञा । मुद्गपर्ण्यादीना नामानि प्रागुक्तानीति । "अन्तान्तरादिगुरुभि सोदधिलै सप्तभिर्गणैर्गुरुणा । आर्यावे नात्रायुजि ज षष्ठोऽय नलघुकौ वा ।"

आ० ४०—अथ महाकषाया । तत्र जीवनीयगणमाह—जीवन्तीत्यादि । सङ्ग्रहे तु ( सू अ. १५ )—"आनन्त्यादौषधानामामयाना चानन्ता एव कषाया । ये तु सुतरामुपयोगवन्त प्रकर्षवर्तिनो वा ते जीवनीयादिसंज्ञा । प्रत्येक दशकषायसंयोगात् पञ्चचत्वारिशन्महाकषाया वक्ष्यन्ते । तत्प्रतिपत्त्यर्थमेव मन्दबुद्धीनाम् । बुद्धिमता तूदाहरणमात्रंदर्शनार्थम् । शक्य हि बुद्धिमद्भि स्वादुस्निग्धशीतादीन् जीवन्त्यादिषु साधारणान् गुणानालोच्य क्षीरेक्षुक्षौद्रद्राक्षाक्षोडविदारिकन्दादिष्वपि तद्गुणेषु जीवनीयादित्वमवधारयितुम् । यथोक्तानुसरणमेव श्रेयो मन्द बुद्धेरिति । व्यस्ताश्च ते चत्वारि शतानि पञ्चाशदधिकानि तदभिधानान्येव । यद्यपि च तानि तान्येव द्रव्याणीति द्रव्यसङ्कर कषायेषु, तथाऽपि न सञ्ज्ञाविरोध । एकस्यापि बहुकार्यनिर्वर्तनात् । तत्र लवणवर्ज्या पञ्च रसा कल्पनाया कषाया इत्युच्यन्ते, तद्योनित्वात् । लवणे तु निर्यासादिकल्पनानामसम्भव, पृथगुपयोगोपकाररहित त्वाच्च नैरर्थक्यमिति । भवन्ति चात्र । जीवन्ती काकोल्यौ द्वे मेदे मुद्गमाषपर्ण्यौ च । ऋषभकजीवकमधुक चेति गणो जीवनीयाख्य ॥ १ ॥ वाट्या बला पयस्या काकोल्यावृषभवाजिगन्धे च । क्षीरिणिराजक्षवके भारद्वाजी च बृहणीयोऽयम् ॥ २ ॥ वाट्या—अतिबला । पयस्या—ऋष्यगन्धा, विदारी क्षीरविदारी [ वा ] । क्षीरिणी—श्रीपर्णी । राजक्षवक—दुग्धिका । भारद्वाजी—वनकार्पासी । हैमवती चिरिबिल्व मुस्ता कुष्ठं वचा हरिद्रे च । चित्रककटुकातिविषा वर्गोऽय लेखनीयाख्य ॥ ३ ॥ हैमवती—श्वेतवचा । अर्केरण्डौ चित्रा चित्रकचिरिबिल्वशङ्खिनीसरला । हेमक्षीरी कटुका वह्निमुखी भेदनीयानि[10] ॥ ४ ॥ चित्रा—दन्ती । सरला—त्रिवृत् । वह्निमुखी—लाङ्गली । मधुमधुकपृश्निपर्णीकट्फलरोध्रप्रियङ्गुधातक्य । अम्बष्ठकी समङ्गा मोचरसश्चेति सन्धानम्[11] ॥ ५ ॥ अम्बष्ठकी—माचिका । हिङ्गुमरिचाम्लवेतसदीप्यकभल्लातकास्थिसयोगात् । वर्ग सपञ्चकोलो निर्दिष्टो दीपनीयोऽयम् ॥ ६ ॥ ऐन्द्यतिरसा पयस्या ऋष्यप्रोक्ता स्थिरा बलाऽतिबला । इति बल्यो दशकोऽय हयगन्धा रोहिणी ऋषभी[12] ॥ ७ ॥ ऐन्द्री—इन्द्रवारुणी । अतिरसा—मूर्वा । ऋष्यप्रोक्ता—शतावरी । रोहिणी—श्रीपर्णी । ऋषभी—कपिकच्छू । चन्दनतुङ्गपयस्यासितालतामधुकपद्मकोशीरम् । वर्ण्यो गणोऽयमुदितो मञ्जिष्ठासारिवासहित ॥ ८ ॥ तुङ्ग—किञ्जल्कम् । सिता—श्वेतदूर्वा । लता—प्रियङ्गु । हसपदीबृहतीद्वयमृद्वीकासारिवेक्षुमूलानि । कैडर्यमयुक्कृष्णा सविदार्य कण्ठजननानि ॥ ९ ॥ कैडर्य —कट्फल । वृक्षाम्लबदरदाडिमकुवलाम्राम्रातलकुचकरमर्दम् । हृद्य समातुलुङ्ग विद्धि तथा साम्लवेतस वर्गम् ॥ १० ॥ कुवल—कोलम् । नागरचविकाचित्रकविडङ्गमूर्वामृतावचामुस्ता । सहपिप्पलीपटोला स्तृप्तिघ्नोऽय गण प्रथित ॥ ११ ॥ कुटजफलबिल्वचित्रकमहौषधप्रतिविषावचाचविका । धन्वयवास पथ्या दारुहरिद्रा गणोऽर्शोघ्न ॥ १२ ॥ खदिरामलकारुष्करनिशाभयासप्तपर्णकरवीरा । कुष्ठघ्नाश्वतुरङ्गुलविडङ्गजातीप्रवालाश्च ॥ १३ ॥ नलदकृतमालचन्दनसर्षपघननिम्बकुटजमधुकानि । कण्डू दारुहरिद्रा सनक्तमालानि निघ्नन्ति ॥ १४ ॥ नलद—मांसी । कृतमाल—आरग्वध । अक्षीवमरिचकेम्बुकविडङ्ग-काण्डीरकिणिहिनिर्गुण्ड्य । घ्नन्ति कृमीन् श्वदंष्ट्रावृषाखुपर्ण्यस्तथा न चिरात् ॥ १५ ॥ अक्षीव —शिग्रु । काण्डीर —उग्रकाण्ड । मञ्जिष्ठाश्लेष्मातकरजनीसुवहाशिरीषपालिन्द्य । सैलाचन्दनकतका ससिन्दुवारा विष घ्नन्ति ॥ १६ ॥ सुवहा—गन्धनाकुली । पालिन्दी—त्रिवृता । शालिकुशकाशषष्टिकवीरणदर्भेक्षुबालिकेक्षूणाम् । तद्वद्दुन्द्रोत्कटयोर्मूल मल स्तन्यजननाय ॥ १७ ॥ इक्षुबालिका—ह्रस्वेक्षु । पाठानागरसुरतरुघनामृतासारिवेन्द्रयवमूर्वा । कटुकाकिराततिक्त वर्गोऽय स्तन्यशुद्धिकर ॥ १८ ॥ मेदाकाकोलीद्वयवृक्षरुहाजीवकर्षभकुलिङ्गा । शुक्रजननो गणोऽय सहजटिलाशूर्पपर्णीभि ॥ १९ ॥ कुलिङ्गा—कर्कटशृङ्गी । जटिला—उच्चटा । कुष्ठैलवालुककट्फलकाण्डेक्षुसमुद्रफेनकोशीरै । वसुकेक्ष्वक्षुरक शुक शुध्येत्सकदम्बनिर्यासै ॥ २० ॥ काण्डेक्षु—काश । वसुक[12]—बुक[13] । इक्षुरक —कोकिलाक्ष । द्राक्षाकाकोलीद्वयमधुपर्णीमधुकजीवकविदार्य । स्नेहोपगा[14] समेदा-जीवन्तीशालिपर्णीका ॥ २१ ॥ सौभाञ्जनकपुनर्नववृश्चीवकुलत्थमाषबदराणि । स्वेदोपगानि[15] विद्यात्सयवतिलार्कोरुबूकाणि ॥ २२ ॥ लाजाम्लबदरदाडिमयवषष्टिकमातुलुङ्गसे-

१ 'थत्प्रतिबोधाथमेव' स मू । २ 'मताामुदा' क ख ग ञ स द्व. । ३ 'त्रप्रद' स स । ४ 'क्षुद्राक्षा' घ स द्व । ५ 'तेन त्वात्' ग । ६ 'ज्यां रसा.' क ख ग ञ स द्व । ७ 'लवणस्य यतो निर्या' स स । ८ 'ल्याविक्षुवाजि' स द्व । ९ 'विदारी क्षीरविदारी' इति ग पुस्तके नास्ति । १० 'नीयोऽयम्' स स । ११ 'सन्धान' क.ख ञ स द्व. । १२ 'ऋषभ' स द्व ।

१ 'तलिकु' स द्व । २ 'लुङ्गाम्लवेतस विद्धि वर्गमिमम् ॥' स. द्व । ३ 'ण प्रोक्त ॥' क ख ञ । ४ 'ङ्गण्डीर' स स । ५ 'पणा तथा' क ख ञ । 'खुकर्ण्यं' ग । ६ 'न्द्रेत्कट' घ ञ । ७ 'ननीय' क । ८ 'लासूर्पप' क घ । ९ 'लुकट्' ग स मू । १० 'ण्डेक्षिवक्ष्वब्धिफेन' स द्व । ११ 'सवसुकेक्षुरके' ख ञ । 'सवासकेक्षुरके' ग । 'वसुकेक्षुरकै' घ स द्व । १२ 'वासक' ग । १३ 'अम्बुक' क । 'बृष' ख ग ञ । 'छूक' घ । १४ उपगा —उपयोग्या । १५ 'रुपूगानि' स स । १६ 'वृक्षाम्ल' क ख ग ञ. ।

ण्यानि । जम्ब्वाम्रपल्लवानि च वमिनिग्रहणानि मृत्स्ना च ॥ २३ ॥ नागरधन्वयवासकबालकपर्पटकचन्दनगुडूच्य । भूनिम्बघनपटोलीकुस्तुम्बर्यस्तृष घ्नन्ति ॥ २४ ॥ बृहतीद्वयवृक्षरुहापुष्करमूलाभयाकणाश्चक्र्य । हिध्मा निघ्नन्ति शठी दुरालभा बदरबीज च ॥ २५ ॥ श्यामाऽनन्ता पद्मा कट्वङ्ग पद्मकेशर रोध्रम् । धातकिकुसुमसमङ्गा मोचरसाम्राास्थि विड्ग्रहणम् ॥ २६ ॥ श्यामा–प्रियङ्गु । अनन्ता–धन्वयासक । पद्मा–पद्मचारिणी । जम्बूशल्लकिमधुक नीलोत्पल कच्छुरातिलैश्याह्वम् । मृष्टा च मृत् पयस्या सशाल्मली विड्विरजनानि ॥ २७ ॥ कच्छुरा–धन्वयासक । श्याह्व–श्रीवेष्टक । जम्ब्वाम्रोदुम्बरवटकपीतनप्लक्षपिप्पलाश्मन्तम् । भल्लातसोमवल्क मूत्रग्रहणाय निर्दिष्टम् ॥ २८ ॥ कमलनलिनकुमुदमधुकसौगन्धिकधातकीलताकुसुमम् । मूत्र नयति विराग सोत्पलशतपत्रपुण्डरीक च ॥ २९ ॥ मधुकधातकीलताकुसुमेभ्योऽन्यानि पद्मानि । लता–प्रियङ्गु । कमल–त्रिवर्णम्, नलिन–रक्तम्, शतपत्र–नीलम्, पुण्डरीक–श्वेतम्, तानि दिवा विकसन्ति । कुमुद–श्वेतम्, उत्पल–नीलम्, ते च रात्रौ । सौगन्धिक सन्ध्यायाम् । वृक्षादनी श्वदंष्ट्रादर्भोत्कटवसुकवशिरकुशकाशा । मूत्र विरेचयेयुर्गुन्द्रा पाषाणभेदश्च ॥ ३० ॥ वशिर –करिपिप्पली । द्राक्षामलकपुनर्नववृश्चीवदुरालभाभयाकृष्णा । कास घ्नन्ति सशृङ्गी तामलकी कण्टकारी च ॥ ३१ ॥ चण्डाम्लवेतस शठीतामलकीसुरसहिङ्गुजीवन्त्य । पुष्करमूलैलागुरु वर्गोऽय श्वासशमनाय ॥ ३२ ॥ द्राक्षापीलुपरूषकमञ्जिष्ठासारिवामृतापाठा । त्रिफला चेति गणोऽय ज्वरसशमनाय निर्दिष्ट ॥ ३३ ॥ दाडिमफल्गुपरूषकप्रियालयवषष्टिकेक्षुबदराणि । श्रमनाशनानि विद्याद्द्राक्षाखर्जूरसहितानि ॥ ३४ ॥ पद्मकलाजोशीर मधुकोत्पलसारिवासितोदीच्यम् । काश्मर्यफल चन्दनमेष गणो दाहहा प्रोक्त ॥ ३५ ॥ नतनागरागुरुवचाधान्यकभूतीकपिप्पलीव्याघ्र्य । शीत शमयन्त्यचिराच्छ्योनाक साग्निमन्थश्च ॥ ३६ ॥ भूतीक–कत्तृणम् । तिन्दुकपियालबीजकसप्तच्छदखदिरकदरबदराणि । अहिमारवाजिकर्णौ ककुभश्चोदर्दशमनानि ॥ ३७ ॥ काकोल्येला सेव्य निदिग्धिके शालिपृश्निपर्ण्यौ च । घ्नन्त्यङ्गमर्दमचिराच्चन्दनमधुकोरुबूक च ॥ ३८ ॥ [10]दीप्यकमरिचाजाजीगण्डीरसाजगन्धमथ शूलम् । शमयति सपञ्चकोल, शोफ दशमूलमाद्य च ॥ ३९ ॥ ४० ॥ मधुमधुकलाजगैरिकफलिनीमोचरसमृत्कपालानि । सस्थापयन्ति रुधिर रुधिर च सशर्कर रोध्रम् ॥ ४१ ॥ मृत्कपाल–कर्परम् । रुधिर–कुङ्कुमम् । शैलेलवालुकट्फलमोचरसाशोकपद्मकशिरीषम् । स्थापयति वेदनामथ सहैतुङ्गकदम्बविदुल च ॥ ४२ ॥ विदुलो–वेतस । कैडर्यहिङ्गुचोरकपलङ्कषाशोकरोहिणिवय स्था । पूत्यरिमेदो जटिलागोलोमिवचाश्च सज्ञादा ॥ ४३ ॥ पलङ्कषा–गुग्गुलु । अशोकरोहिणी–कटुका । वय स्था–हरीतकी । पूत्यरिमेदो–दुर्गन्धोऽहिमारक । जटिला–मासी । गोलोमी–दूर्वा । ऐन्द्री दूर्वाऽमोघा विष्वक्सेनाऽव्यथा शिवाऽरिष्टा । ब्राह्मी सवाट्यपुष्पी शतवीर्या स्थापयेद्गर्भम् ॥ ४४ ॥ अमोघा–पाटला । विष्वक्सेना–वाराही । अव्यथा–ब्रह्मचारिणी । शिवा–आमलकी । अरिष्टा–नागबला । वाट्यपुष्पी–अतिबला । शतवीर्या–शतावरी । अमृता पथ्या धात्री जीवन्ती श्रेयसी स्थिरा युक्ता । मण्डूकपर्ण्यतिरसा स्थापयति पुनर्नवा च वय ॥ ४५ ॥ श्रेयसी–पाठा । युक्ता–रास्ना । इति नानाविधव्याधिविघातार्थमुदाहृता । योगा रोगातुरवशात् कल्पयेत्तान् यथायथम् ॥” इति ।

> विदारिपञ्चाङ्गुलवृश्चिकाली-
> वृश्चीवदेवाह्वयशूर्पपर्ण्य ।
> कण्डूकरी जीवनह्रस्वसंज्ञे
> द्वे पञ्चके गोपसुता त्रिपादी ॥ ९ ॥
> विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा ।
> शोषगुल्माङ्गमर्दोर्ध्वश्वासकासहरो गण ॥ १० ॥

स०–विदारी–वृष्यकन्दा । पञ्चाङ्गुल –एरण्ड । वृश्चिकाली–उष्ट्रधूमका मेषशृङ्गी वा । वृश्चीव –क्षुद्रवर्षाभू । देवाह्वय –सुरदारु । [देवाह्वयेति पाठे एका सहदेवा द्वितीया विश्वदेवा चेति देवाह्वयम् ।] शूर्पपर्ण्यौ–मुद्गपर्णी माषपर्णी च । कण्डूकरी–कपिकच्छू । जीवनेत्यादि । “अभीरुवीराजीवन्तीजीवकर्षभकै स्मृतम् । जीवनाख्यम्” (हृ सू अ ६।१७०) इति जीवनसज्ञ पञ्चमूलम् । बृहती कण्टकारिका शालिपर्णी पृश्निपर्णी गोक्षुरकमिति ह्रस्वसज्ञ पञ्चमूलम् । गोपसुता–सारिवा । त्रिपादी–हसपादी कीटमारिकाख्या । एष विदार्यादिगणो बृंहणो वातपित्तघ्न शोषादिहरश्च । उपजातिर्वृत्तम् ।

आ० र०–अथ विदार्यादिप्रभृतय । तत्र विदार्यादिग-

---

१ ‘णाय मृ’ घ । २ ‘धातुकि’ ख घ ञ स मू । ३ ‘तिलाश्या’ क ख घ ञ । ४ ‘चाव्ह’ धन्व नि । ५ ‘दर्भेक्ष’ ग घ स द्व । ६ ‘ज्वरस्य श’ स द्व । ७ ‘हा विनिर्दिष्ट’ घ । ८ ‘कत्तृणम्’ ग । ९ ‘अरिमेदवा’ स द्व. । १० अस्मिन् श्लोके शूलशोफनाशकौ द्वौ महाकषायौ । ११ आद्य दशमूल–महल्लघु चेति द्वे पञ्चमूले । ‘माढ्य च’ स मू ।

१ ‘कैरारो’ ग घ । २ ‘खर्प’ क ख ञ । ३ ‘सालेल’ ग । ‘शालैल’ घ । ४ ‘हतुङ्गविडङ्गवि’ ग । ‘हनिम्बक’ घ । ५ ‘देवाह्वय’ अ हे स मू । ६ ‘द्वे पञ्चमूले लघुजीवनाख्ये कण्डूकरी गोप’ क म मू । एतत्पाठानुसारेणैव ड पुस्तके टीकाऽपि दृश्यते । ७ ‘ह्वसादोर्ध्व’ ग । ८ ‘ण्ड, तरुणो वा ।’ ट । ९ ‘मक । वृ’ ट ड । १० [ ] इति पाठ ट ठ ड. पुस्तकेषु नोपलभ्यते ।

णमाह–विदारीति। वृश्चिकाली–वृश्चिकपत्रा। वृश्चीव–पुनर्नवा। देवाह्वय–सहदेवा विश्वदेवा च। शूर्पपर्ण्यौ–मुद्गपर्णी माषपर्णी च। कण्डूकरी–कपिकच्छू। जीवन ह्रस्व च पञ्चमूल–प्रागुक्तम्। गोपसुता–सारिवा। त्रिपादी–हंसपादी। अयं विदार्यादिगणो हृद्यत्वादिगुण। शोषो–राजयक्ष्मा। ऊर्ध्व–उदावर्त।

**सारिवोशीरकाश्मर्यमधूकशिशिरद्वयम्।**
**यष्टी परूषकं हन्ति दाहपित्तास्रतृड्ज्वरान्॥ ११॥**

स०–सारिवा–कृष्णवल्ली। उशीर–वीरतरु(रम्)। काश्मर्य–सर्वतोभद्रा। मधूको–गुडपुष्पक। शिशिरद्वय–एक सितचन्दन मलयजसञ्ज्ञमन्यद्रक्तचन्दनसञ्ज्ञम्। यष्टी–क्लीतकसञ्ज्ञम्। परूषक–मृदुफलम्। सारिवादिरयं दाहादीन् हन्ति।

आ० र०–सारिवादिगणमाह–सारिवेति। शिशिरद्वय–श्वेतपीतचन्दने।

**पद्मकपुण्ड्रौ वृद्धितुगर्द्ध्यः**
**शृङ्ग्यमृता दश जीवनसंज्ञाः।**
**स्तन्यकरा घ्नन्तीरणपित्तं**
**प्रीणनजीवनबृंहणवृष्याः॥ १२॥**

स०–पद्मक–हेमपद्मम्। पुण्ड्र–प्रपौण्डरीकम्। वृद्धि–महाश्रावणी। तुगा–तुगाक्षीरी। ऋद्धि–श्रावणी। शृङ्गी–कुलीरशृङ्गी। अमृता–छिन्नरुहा। दश जीवनसञ्ज्ञा–जीवन्त्यादिगणोक्ता। एते पद्मकादयः स्तन्यहेतवः, तथा वातपित्त घ्नन्ति, तथा प्रीणनादिगुणयुक्ता। "अष्टाभ्यो भाद्गौ योज्यावुपचित्रा।"

आ० र०–पद्मकादिगणमाह–पद्मकपुण्ड्राविति। पुण्ड्र–प्रपौण्डरीकम्। तुगा–वंशरोचना। शृङ्गी–कर्कटशृङ्गी। अमृता–गुडूची। जीवनसञ्ज्ञा दश–जीवनीयो गण। ईरणो–वायु।

**परूषकं वरा द्राक्षा कट्फलं कतकात् फलम्।**
**राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित्॥ १३॥**

स०–परूषको–मृदुफलो धन्वनच्छद। वरा–श्रेष्ठा। द्राक्षा–मधुफला। कट्फल–रोहिणी सोमवल्क। कतकफल–वारिप्रसादनम्। राजाह्व–कर्णिकारम्। दाडिम–शुकेष्टम्। शाक–खरच्छदवृक्षविशेष। परूषकादिरेष तृडामयादिजित्।

आ० र०–परूषादिगणमाह–परूषकमित्यादि। वरा–त्रिफला। राजाह्व–राजादनम्। शाक–शाकवृक्षफलम्।

**अञ्जनं फलिनी मांसी पद्मोत्पलरसाञ्जनम्।**
**सैलामधुकनागाह्वं विषान्तर्दाहपित्तनुत्॥ १४॥**

स०–अञ्जन द्विधा,–एक स्रोतोञ्जन यामुनसञ्ज्ञमपर सौवीर नेत्रभूषणाख्यम्। फलिनी–प्रियङ्गु। मांसी–कृष्णजटा। पद्म–पुष्करम्। उत्पल–शशिप्रियम्। रसाञ्जन–तार्क्ष्यशैलम्। एला–बहुला। मधुक–मधुयष्टी। नागाह्व–नागकेसरम्। एषोऽञ्जनादिर्विषादिजित्।

आ० र०–अञ्जनादिगणमाह–अञ्जनमित्यादि। अञ्जन–स्रोतोञ्जनम्। सैला–सूक्ष्मैला, सशब्द ईषद्वाची। नागाह्व–नागकेसरम्।

**पटोलकटुरोहिणीचन्दनं**
**मधुस्रवगुडूचिपाठान्वितम्।**
**निहन्ति कफपित्तकुष्ठज्वरान्**
**विषं वमिमरोचकं कामलाम्॥ १५॥**

स०–पटोल–पाण्डुफलम्। कटुरोहिणी–कटुका। चन्दन–गन्धसारम्। मधुस्रवो–सुरङ्गी। गुडूची–छिन्नरुहा। पाठा–अम्बष्ठा। एतैर्द्रव्यैर्युक्तमेतत् पटोलादिक कफादीन् निहन्ति। "मात्रासमक नवमो ल्गान्तम् (मो लगोन्ल्य)" (वृत्तरत्नाकरे अ २।३२)।

आ० र०–पटोलादिगणमाह–पटोलेत्यादि। मधुस्रवा–मूर्वा।

**गुडूचीपद्मकारिष्टधानकारक्तचन्दनम्।**
**पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत्॥ १६॥**

स०–गुडूची–छिन्नोद्भवा। पद्मको–मरुद्भव। अरिष्टो–निम्ब। धानका–धान्यकम्। रक्तचन्दन–रक्तकाष्ठम्। एष गुडूच्यादि पित्तादीन् हन्ति, [अग्निकरश्च]।

आ० र०–गुडूच्यादिगणमाह–गुडूचीत्यादि। अरिष्टो–निम्ब।

**आरग्वधेन्द्रयवपाटलिकाकतिक्ता-**
**निम्बामृतामधुरसास्रुववृक्षपाठाः।**
**भूनिम्बसैर्यकपटोलकरञ्जयुग्म-**
**सप्तच्छदाग्निसुषवीफलबाणघोण्टाः॥१७॥**
**आरग्वधादिर्जयति छर्दिकुष्ठविषज्वरान्।**
**कफं कण्डूं प्रमेहं च दुष्टव्रणविशोधन॥ १८॥**

---

१ 'वृश्चिकाली–कण्टकितमेषशृङ्गतुङ्गाकारफला पाठापत्रा ईषद्रोमशा श्वेतपुष्पपुच्छा दक्षिणावर्तवल्ली मेषशृङ्गीभेद, वृश्चिकया कमन्ये' इति डल्हण। २ 'वान्हय' क ख ग ञ। ३ 'ष्णपर्णी।' ड। ४ 'श्मर्यं' ट ठ ड। ५ 'श्वेतचन्दनरक्तचन्दने' ग। ६ 'पुण्ड्र–पुण्डरीकम्' ट.। 'पुण्ड्र–तिलक' धन्व रा नि। ७ 'णनत्वादि' ड। ८ 'रीक' ग घ.। ९ 'ज्ञा–जीवनो गण' क ख ञ। 'ज्ञा–जीवनो दशाङ्गो गण' ग। १० 'बन्धन' ठ ड। ११ 'णी। क' ट ड। १२ 'क–वरदारु।' ड।

१ 'त्तजित्' आ। 'त्तहृत्' क। २ 'स्रवा–मरुद्री सुरङ्गी।' इति क्वचित्। ३ 'धान्यका' अ स मू। 'धान्यक' आ। 'धनिका' क ग ट। ४ 'छिन्नरुहा' ठ ड। ५ 'धान्याक' ठ। ६ 'च मेदोदरविशोधन' इति ठ. पुस्तकानुसारी पाठ।

स०-आरग्वध -शम्याक । इन्द्रयवा -कलिङ्गका । पाटलि -वसन्तदूती । काकतिक्ता-शाङ्गेष्टा । निम्ब -पारिभद्रक । अमृता-गुडूची । मधुरसा-मूर्वा । स्रुवृक्षो-विकङ्कत , [ कण्टकीवृक्ष कण्टकारिकेति प्रसिद्ध ] । पाठा-अम्बष्ठा । भूनिम्ब -कैरात । सैर्यक -सहचर । पटोल-कर्कशच्छदम् । करञ्जयुग्म-एक पूतिककरञ्जश्चिरिबिल्वाख्योऽपरो नक्तमालाख्य । सप्तच्छद -अयुग्मच्छद । अग्नि -चित्रक । सुषवी-कारवी, पानीयवल्लीसंज्ञा । फल-मदनफलम् । बाण -सहचर । घोण्टा-पूगविशेष । अयमारग्ववादिश्छर्द्यादीन्निहन्ति । [ मेदोदरान् विशोधयति-पराकरोति । ] वसन्ततिलकावृत्तम् ।

आ० र०-आरग्वधादिगणमाह-आरग्वधेत्यादि । काकतिक्ता-करञ्जिका । स्रुववृक्षो-विकङ्कत । सैर्यक -सहचर । [ सुषवी-कारवेल्लकम् । फल-मदनफलम् । बाणो-नीलसहचर । ] घोण्टा-बदरी ।

**असनतिनिशभूर्जश्वेतवाहप्रकीर्याः**
**खदिरकदरभण्डीशिंशिपामेषशृङ्ग्यः ।**
**त्रिहिमतलपलाशा जोङ्गकः शाकशालौ**
**क्रमुकधवकलिङ्गच्छागकर्णाश्वकर्णाः ॥१९॥**

**असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन् ।**
**पाण्डुरोग प्रमेहं च मेदोदोषनिवर्हणः ॥ २० ॥**

स०-असन -पीतशालाख्य । तिनिश -स्यन्दनसञ्ज । भूर्जो-बहुपुटाख्य । श्वेतवाह -अर्जुन । प्रकीर्य -पूतिकरञ्ज । खदिरो-गायत्री । कदर -खदिराकृति श्वेतसार । भण्डी-शिरीष । शिंशिपा-मण्डलपत्रिका । मेषशृङ्गी-अजशृङ्गी । त्रिहिम-चन्दनत्रयम्, मलयजरक्तचन्दनदारुहरिद्राभेदेन । तल -ताल । पलाश -किंशुक । जोङ्गक -अगुरुसञ्ज । शाक-वरदारु । शालो-रसनिर्यासाख्य । क्रमुक -पूगम् । धव -शकटाख्य । कलिङ्गा -शक्रयवा । छागकर्णो-बस्तकर्ण । अश्वकर्ण -कुशिक । अयमसनादि श्वित्रादीन् विजयते-शमयति । विजयत इति "विपराभ्या जे" इत्यात्मनेपदम् । तथा, मेदोदोष निबर्हति-पराकरोति । मालिनीवृत्तम् ।

आ० र०-असनादिगणमाह-असनेत्यादि । श्वेतवाह -अर्जुन । प्रकीर्य -पूतिकरञ्ज । कदर -श्वेतखदिर । भण्डी-शिरीष । त्रिहिम-चन्दनत्रयम् । तल -तालवृक्ष । जोङ्गक -अगुरु । क्रमुक -पूग । कलिङ्ग -इन्द्रयव ।

**वरुणसैर्यकयुग्मशतावरी-**
**दहनमोरटबिल्वविषाणिकाः ।**
**द्विबृहतीद्विकरञ्जजयाद्वयं**
**बहलपल्लवदर्भरुजाकराः ॥ २१ ॥**

**वरुणादिः कफं मेदो मन्दाग्नित्वं नियच्छति ।**
**आढ्यवातं शिरःशूलं गुल्मं चान्तः सविद्रधिम् २२**

स०-वरुण -तमाल । सैर्यकयुग्म-सहचरद्वयम्, एको रक्तपुष्प कुरबकाख्योऽन्य पीतपुष्प कुरण्टकाख्य । शतावरी-वरी । दहनो-वह्नि । मोरटो-मूर्वा । बिल्व -पूतिवात । विषाणिका-अजशृङ्गी । द्विबृहत्यौ-कण्टकारिकामहोटिकाख्ये । द्विकरञ्ज -करञ्जद्वयं प्रागुक्तम् । तर्कारी हरीतकी चेति-जयाद्वयम् । बहलपल्लव -शोभाञ्जन । दर्भ -कुश । रुजाकरो-हिन्ताल । वरुणादिरय कफादीन् हन्ति । "द्रुतविलम्बितमाह नभौ भरौ" ( वृत्तरत्नाकरे अ ३।४९ ) ।

आ० र०-वरुणादिगणमाह-वरुणेत्यादि । मोरट -क्षीरमूर्वा । विषाणिका-मेषशृङ्गी । जयाद्वय-तर्कारीद्वयम् । बहलपल्लव -शिग्रु । आढ्यवात-ऊरुस्तम्भम् । आन्तर गुल्म विद्रधि च ।

**ऊषकस्तुत्थकं हिङ्गु कासीसद्वयसैन्धवम् ।**
**सशिलाजतु कृच्छ्राश्मगुल्ममेदःकफापहम् ॥ २३ ॥**

स०-ऊषको-वृषक , कल्लर इति प्रसिद्ध । तुत्थक-खर्परकिट्टिहीपरसञ्ज्ञम् । हिङ्गु-रामठम् । कासीसद्वय-एकं पांशुधातुसञ्ज्ञमपर पुष्पकासीसाख्यम् । सैन्धव-माणिमन्थम् । शिलाजतु-शिलाजम् । ऊषकादिरय मूत्रकृच्छ्रादीन् हन्ति ।

आ० र०-ऊषकादिगणमाह-ऊषक इत्यादि । ऊषक-क्षारमृत्तिका । कृच्छ्र-मूत्रकृच्छ्रम् ।

**वेल्लन्तरारणिकबूकवृषाश्मभेद-**
**गोकण्टकेत्कटसहाचरबाणकाशाः ।**
**वृक्षादनीनलकुशद्वयगुण्ठगुन्द्रा-**
**भल्लूकमोरटकुरण्टकरम्भपार्थाः ॥ २४ ॥**

१ [ ] इति पाठ ट ड पुस्तकयोर्नास्ति । २ 'कङ्काव्ह इति' ठ । ३ 'किरातम्' ठ ड । ४ 'पर । सप्त' ड । ५ 'सप्तपर्ण -शाल्मलीसदृशपर्णो गजमदगन्धपुष्प । शरदि विकसनशील उच्चैर्वृक्ष , "सातवण" इति लोके ।' डल्हण । ६ 'ली । फ' ट । 'ली अजशृङ्गी सञ्ज्ञा ।' ठ । ७ [ ] इति ठ पुस्तक एवाधिक पाठ । ८ [ ] इति पाठ क ख ग ञ पुस्तकेषु नोपलभ्यते । ९ 'शिशपा' ख स स । १० 'मनतप' स स । ११ 'धवकबुककलि' स स । १२ 'छवमिक्रि' ग । १३ 'पीतसाराख्य ' ट । 'प्रियशालक ' धन्व राज नि । १४ 'र्जो-पत्रबहु' ठ ।

१ 'वर' अ आ ग घ स द्व । २ 'अधोवात' इति कचित् । ३ 'गुल्माभ्यन्तरविद्रधीन्' इति सुश्रुतपाठ । ४ 'रुमाल ' ठ । ५'रटा' ट ,क ख ग ञ । ६ 'हती-बृहतीद्वयम् ।' ठ ड । ७ 'ञ-युग्म' ट । ८ 'मेहकफा' ख ग ञ । ९ 'क-कारभर कि' ठ ड । 'क-कर्परिकातुत्थ "खपरिया" इति लोके, अन्ये मयूरग्रीवामाहु ' डल्हण । १० 'टिभापर' ट । ११ 'व-सिन्धूत्थम् ।' ठ ड । १२ 'पटकोत्कट' आ क । १३ 'गुन्थगु' अ क । 'गुञ्छगु' आ । 'गुच्छगु' ग ।

**वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान् ।**
**अश्मरीशर्करामूत्रकृच्छ्राघातरुजाहरः[1] ॥ २५ ॥**

सु०—वेल्लन्तरो—वीरतर उशीराख्य । अरणिक—अग्निमन्थ । बूक—ईश्वरमल्लिका । वृष—आटरूषक । अश्मभेद—पाषाणभेद । गोकण्टको—गोक्षुरक । इत्कटा—सूक्ष्मपत्रिका दीर्घलोहितयष्टिका काण्डविशेष, 'इकडि' इति लोके । सहाचर—सहचर । बाणो—नीलपुष्प सैर्यक । काश—श्वेतचामरक । वृक्षादनी—कामवृक्षक । नलो—मृत्युपुष्पाख्य । कुशद्वय—स्थूलसूक्ष्मभेदेन दर्भद्वयम् । गुंठो—वृत्ततृण, कुदगुण्ठि कापरसञ्ज । गुन्द्रा—पद्मएरक । भल्लूक—श्योनाक । मोरट—क्षीरमोरट । कुरण्ट—सितिवारक । करम्भ—उत्तमारणि । पार्था—सुवर्चला । एष वीरतरादिर्वर्गो—गणो, वातजान् रोगान् हन्ति । तथा, अश्मर्यादिहर । वसन्ततिलकावृत्तम् ।

आ० र०—वीरतरादिगणमाह—वेल्लन्तरेत्यादि । अरणिक—तर्कारी । बूको—बकपुष्प । उत्कट—इक्षु । वृक्षादनी—वन्दाक । भल्लूक—टिण्टुक । करम्भा—उत्तमारणी । पार्था—आदित्यभक्ता ।

**रोध्रशाबरकरोध्रपलाशा**
**जिङ्गिणीसरलकट्फलयुक्ताः ।**
**कुत्सिताम्बकदलीगतशोकाः**
**सैलवालुपरिपेलवमोचाः ॥ २६ ॥**
**एष रोध्रादिको नाम मेदःकफहरो गणः ।**
**योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ २७ ॥**

सु०—रोध्र—तिल्वक । शाबरको—द्वितीयरोध्र, अक्षिभेपजापरसञ्ज । कदम्बपलाशौ—प्रसिद्धौ । जिङ्गिणी—कृष्णशाल्मली । सरल—देवदारु । कट्फल—कुमुदा, रोहिणीभेद । युक्ता—रास्ना, गिरिकर्णिकेत्यन्ये । कुत्सिताम्ब—कदम्ब । कदली—रम्भा । गतशोक—अशोक । एलवालु—ऐलेयम् । परिपेलव—कुटन्नट गोपालदमनकाख्यम् । मोचा—शल्लकी । अथ रोध्रादिको गणो मेद कफापहो योनिदोषघ्नश्च । तथा, स्तम्भी दोषाणा शकृदादेश्च । तथा, वर्णाय हितो विषघ्नश्च । स्वागतावृत्तम् ।

आ० र०—रोध्रादिगणमाह—रोध्रेत्यादि । शाबरकरोध्र—श्वेतरोध्र । जिङ्गिणी—मोदकी । युक्ता—रास्ना । कुत्सिताम्ब—कदम्ब । गतशोक—अशोक । परिपेलव—क्षुद्रमुस्ता । मोचा—सल्लकी ।

**अर्कालर्कौ नागदन्ती विशल्या**
**भार्ङ्गी रास्ना वृश्चिकाली प्रकीर्या ।**
**प्रत्यक्पुष्पी पीततैलोदकीर्या**
**श्वेतायुग्मं तापसाना च वृक्षः ॥ २८ ॥**
**अयमर्कादिको वर्गः कफमेदोविषापहः ।**
**कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ २९ ॥**

सु०—अर्क—सदापुष्पी । अलर्को—मन्दाराकाख्य श्वेतकुसुम । नागदन्ती—पर्वपुष्पिका । विशल्या—लाङ्गली । भार्ङ्गी—फञ्जी । रास्ना—रस्या । वृश्चिकाली—उष्ट्रधूमक । प्रकीर्या—करञ्ज । प्रत्यक्पुष्पी—अपामार्ग । पीततला—काकादनी । उदकीर्या—करञ्ज । श्वेतायुग्म—एका किणिहीसञ्ज्ञाऽन्या महाश्वेता पालिन्दीसञ्ज्ञा । तापसाना वृक्ष—इङ्गुदी । एषोऽर्कादिर्वर्ग कफादिघ्नोऽतिशयेन व्रणशोधन । शालिनीवृत्तम् ।

आ० र०—अर्कादिगणमाह—अर्केत्यादि । अलर्को—मन्दार । नागदन्ती—पर्वपुष्पी । विशल्या—लाङ्गली । प्रत्यक्पुष्पी—अपामार्ग । पीततैला—ज्योतिष्मती । उदकीर्या—पूतिकरञ्ज । श्वेतायुग्म—किणिही कटभी च । तापसाना वृक्ष—इङ्गुदी ।

**सुरसयुगफणिज्जं कालमाला विडङ्गं**
**खरबुसवृषकर्णीकट्फलं कासमर्दः ।**
**क्षवकसरसिभार्ङ्गीकार्मुका काकमाची**
**कुलहलविषमुष्टीभूस्तृणो भूतकेशी ॥ ३० ॥**
**सुरसादिर्गणः श्लेष्ममेदःकृमिनिषूदनः ।**
**प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ ३१ ॥**

सु०—सुरसयुग—तुलसीद्वय गौरकृष्णभेदेन । फणिज्जो—मरीचक । कालमाला—कृष्णार्जक, कुठरकभेद । विडङ्ग—वेल्लम् । खरबुसो—मरुबक । वृषकर्णी—मूषिककर्णी । कट्फल—सोमवल्कम् । कासमर्द—कासघ्न । क्षवक—क्षुद्विबोधन । सरसी—तुम्बरप-

1 'रुजापह' आ स स, स सु । 2 'शेदण्ड ।' ठ ड । 3 'नलो—दूर्वाकाराङ्कुरोऽन्त शुषिर स्वनामख्यात' डल्हण । 4 'गुन्थो' ट । 5 'वृन्ततृण' ठ । 'वृत्तगुण' धन्व नि । 6 'एरका' ट ड । 7 'इत्कट' ख ग घ ञ । 'उत्कट' धन्व रा नि । 8 'नी—कामवृक्ष' क ख ञ । 9 'रम्भ' क ख ग ञ । 10 'कदम्बपलाशा' ग अरुण । 11 'झिञ्झिणी' आ स स, ठ ड । 12 'को रोध्रोऽक्षिभेषजसञ्ज । पलाश—शटी । जि' ट । 13—14 'कुमुदा' इति ट ड पुस्तकयो, 'भेद' इति ठ ड पुस्तकयोश्च नोपलभ्यते । 15 'शैलेयम्' ठ ड ।

1 'लव' क । 2 'को नाम कफ' अ ख ञ । 3 'रसा' ट । 'रसना' ठ । 4 प्रकीर्योदकीर्याशब्दाभ्या द्वौ करञ्जभेदौ ग्राह्यौ । 5 'ता कटभीसञ्ज्ञा' ट । 6 'तापसवृक्ष' ठ ड, क ख. ञ । 7 'इङ्गुद' ट ठ ड, ग घ । 8 'पीततैला—तेजस्विना' धन्व रा नि । 'अलवणा—ज्योतिष्मती वर्तुलपकरक्तफला पीततैला "काकमर्दनिका" इति लोके प्रसिद्धा' डल्हण । 9 'बुकवृष' क स मू । 10 'फला कास' आ क ख ग घ ञ । 11 'कसुरसि' अ आ ग सु । 'कस्वरसि' क । 12 'कामुका' अ घ स स । 13 फणिज्जखरबुसौ—मरुबकस्य श्वेतकृष्णौ भेदौ । 14 'मरुबक' ड । मरीचकोऽय मरुबकपर्याय, न तूषणपर्याय मरिचम् । 15 'खरमुखो' ठ ड. । 16 'क्षुद्रो' ट । 'क्षुन्निबो' ड । 17 'तुम्बप' ट ड ।

त्रिका । भाङ्गा–अङ्गारवल्ली । कार्मुका–रक्तमञ्जरी, अतिमुक्तक इत्यन्ये । काकमाची–गुडफला । कुलहलो–भूकदम्बकोऽलम्बुसाख्य । विषमुष्टि–कर्कोटी, महानिम्ब इत्यन्ये । भूस्तृण–गुह्यबीजमतिच्छत्राख्यम् । भूतकेशी–मासी पुत्रजारी । सुरसादिरेष गण श्लेष्मादिघ्न प्रतिश्यायादिहरो व्रणशुद्धिकृत् [च] । मालिनीवृत्तम् ।

आ० र०–सुरसादिगणमाह–सुरसेत्यादि । सुरसयुग–श्वेतकृष्णे तुलस्यौ । फणिज्जो–मरिचक । कालमाला–अर्जक । खरबुसो–मरुबक । वृषकर्णी–आखुकर्णी । क्षवक–क्षुतकारी । सरसी–कपित्थपर्णी । कार्मुक–प्राचीबल । कुलहलो–मुण्डी, । भूस्तृणो–भूतिकतृणम् । भूतकेशी–निर्गुण्डी ।

**मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशिपाः ।**
**गुल्ममेहाश्मरीपाण्डुमेदोर्शःकफशुक्रजित् ॥ ३२ ॥**

स०–मुष्कको–मोक्षक । स्नुक्–गुडा उग्रकाण्ड । वरादीना प्रोक्तानि नामानि । मुष्ककादिरेष गुल्मादिजित् ।

आ० र०–मुष्ककादिगणमाह–मुष्ककेत्यादि । मुष्कको–मोक्षक । द्वीपी–चित्रक ।

**वत्सकमूर्वाभार्ङ्गी-**
**कटुका मरीचं घुणप्रिया च गण्डीरम् ।**
**एला पाठाऽजाजी**
**कट्वङ्गफलाजमोदसिद्धार्थवचाः ॥ ३३ ॥**
**जीरकहिङ्गुविडङ्गं पशुगन्धा पञ्चकोलकं हन्ति ।**
**चलकफमेद·पीनसगुल्मज्वरशूलदुर्नाम्नः ॥ ३४ ॥**

स०–वत्सको–वनतिक्तक । मूर्वा–मधुरसा । मरिच–ऊषणम् । घुणप्रिया–अतिविषा । गण्डीर–स्नुही । एला–बालैला । पाठा–प्राचीना । अजाजी–जीरक । कट्वङ्गफल–अरलुकफलम् । केचित्तु कट्वङ्गफल–तिन्दुकीफलमित्याहु । अजमोदो–दीप्यक । सिद्धार्थो–गौरसर्षप । अन्येषा नामान्युक्तानि । "गुर्वन्ताष्टगणाभागाऽऽर्या पूर्वार्द्धसदृशशकलद्वितया । आर्यैरार्यागीति सङ्गीता सङ्गीतगीतसविध्यै ॥" पशुगन्धा–अजगन्धा मर्करन्तराख्या । पञ्चकोलक–प्रागुक्तम् । वत्सकादिरसौ वातादीन्निहन्ति । आर्या ।

आ० र०–वत्सकादिगणमाह–वत्सकेत्यादि । घुणप्रिया–अतिविषा । गण्डीर–स्नुही । कट्वङ्ग–टुण्टुक । फल–मदनफलम् । पशुगन्धा–अजगन्धा । चलो–वायु ।

**वचाजलददेवाह्वनागरातिविषाभयाः ।**
**हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ ३५ ॥**
**वचाहरिद्रादिगणावामातीसारनाशनौ ।**
**मेद·कफाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ ३६ ॥**

स०–वचा–गोलोमी । जलद–अम्बुधर । देवाह्व–किलिमम् । नागर–विश्वम् । अतिविषा–भङ्गुरा । अभया–अमृता । हरिद्राद्वयं–एका पिण्डा, अपरा पचम्पचा दारुहरिद्रा । यष्ट्याह्व–क्लीतिका । कलशी–पृश्निपर्णी । कुटजोद्भवा–इन्द्रयवा । एतौ वचादिहरिद्रादिगणावामातीसारघ्नो मेद कफादिहरौ च ।

आ० र०–वचाहरिद्रादिगणावाह–वचेत्यादि, हरिद्राद्वयेत्यादि । कलशी–पृश्निपर्णी । कुटजोद्भव–इन्द्रयव । आढ्यपवन–ऊरुस्तम्भ ।

**प्रियङ्गुपुष्पाञ्जनयुग्मपद्माः**
**पद्माद्रजो योजनवल्ल्यनन्ता ।**
**मानद्रुमो मोचरस· समङ्गा**
**पुंनागशीतं मदनीयहेतु· ॥ ३७ ॥**
**अम्बष्ठा मधुकं नमस्करी**
**नन्दीवृक्षपलाशकच्छुराः ।**
**रोध्रं धातकिबिल्वपेशिके**
**कट्वङ्गः कमलोद्भवं रजः ॥ ३८ ॥**
**गणौ प्रियङ्ग्वम्बष्ठादी पक्कातीसारनाशनौ ।**
**सन्धानीयौ हितौ पित्ते व्रणानामपि रोपणौ ॥ ३९ ॥**

स०–प्रियङ्गु–श्यामा । पुष्पाञ्जनं–रीतिपुष्पम् । युग्ममेत्यत्रानुवृत्तिकृतेन सम्बन्धेनाञ्जनमिति सम्बध्यते । तेनाञ्जनयुग्म–एक स्रोतोञ्जनमन्यत्सौवीरमित्यर्थोऽवतिष्ठते । पद्मा–पद्मचारिणी । पद्मात्–कमलात्, रज–केसरम् । योजनवल्ली–मञ्जिष्ठा । अनन्ता–यवासक । मानद्रुम–शाल्मली । मोचरस–शाल्मलीनिर्यास । समङ्गा–नमस्कारी रक्तमूलाख्या । पुन्नाग–तुङ्गो रक्तकेसराख्य । शीत–चन्दनम् । मदनीयहेतु·–धातुकी ।

१ 'कामुका' ठ ड । २ 'विषमुष्टि–केशमुष्टि' राजनि । ३ 'पुत्रञ्जारी' ठ । 'पुत्रञ्जरा' ड । ४ 'मरुबक' ग । ५ 'खरबुको' क ख ग ञ । ६ 'वृक्ष(क) कर्णी' क ख घ ञ । ७ 'क्षुत्कारी' क । ८ 'स्वरसी' क । 'सुरसी' घ । ९ 'कामुक' घ । १० 'सुण्डिकेति प्रसिद्ध' डल्हण । ११ **'शिंशिपम्'** ग । **'शिशपा'** घ स स । १२ 'मोक्षाख्य' ट । 'मोक्ष' क ख ञ । १३ 'क्–खुटी उ'ट । १४ **'घ्नन्ति'** क ग । १५ 'कट्वङ्ग–टिण्टुक, फल–राठमित्याहु' ट । १६ 'वचादीनामुक्तानि नामानि ।' ट । १७ 'गीतिर्गीता सङ्गीतगीतविधौ ।' इति क्वचित् । १८ 'शाकम्भराख्या' ट । 'मकञ्चराख्या' ठ । 'मकतराख्या' ड । १९ 'कायाश्चलादीन् घ्नन्ति' ट ।

१ 'टिण्टुक' क ख ञ । २ **'रपाचनौ'** अ आ क ख घ ञ स मू । ३ 'हरीतकी' इति क्वचित् । ४ 'ण्डा पचम्पचा दार्वी सञ्ज्ञाऽन्या' ट । ५ 'क्लीतकम्' ट । ६ **'सारद्रुमो'** क ख ञ । **'सालद्रुमो'** स स । ७ **'पुन्नामशीत'** घ । ८ 'प्रियङ्गु–गन्धप्रियङ्गु, तस्या पुष्पम । अञ्जनयुग्म–अञ्जनद्वयम्' इति चन्द्र । 'प्रियङ्गु–विश्वक्सेनकान्ता' चक्र । ९ 'ष्पमित्र्या-रव्येयम् ।' ट । १० 'युग्म–अञ्जनयुग्म, श्रोतोज सौवीराञ्जन च । प' ड । ११ 'ञ्जन यामुनसञ्ज्ञमन्यत्सौवीराख्य नेत्रभूषणमञ्जमित्यर्थो' ट । १२ 'ग–रक्त' ट ठ.ड ।

उपजातिर्वृत्तम् । अम्बष्ठा-पाठा मयूरशिखाख्या । मधुक-मधुयष्टिका । नमस्करी-समङ्गा । नन्दीवृक्ष -प्ररोही । पलाश -प्रसिद्ध । कच्छुरा-फणिहारी धन्वयवासकाख्य । बिल्वपेशिका-बिल्वमज्जा । कट्वङ्ग -स्योनाक । कमलोद्भव रज -पद्मरेणु । एतौ प्रियङ्ग्वम्बष्ठादी गणा पक्वातीसारनाशनौ सन्धानीयौ पित्ते हितौ व्रणरोपणौ च । 'म्सा ज्गौ शुद्धविराडित मतम्" ( वृत्तरत्नाकरे अ ३।२१ ) ।

**आ० र०-प्रियङ्ग्वम्बष्ठादिगणावाह-प्रियङ्ग्वित्यादि, अम्बष्ठेत्यादि । पुष्प-पुष्पाञ्जनम् । अञ्जनयुग्म-स्रोतोञ्जन रसाञ्जनं च । पद्मा-भार्ङ्गी । पद्मादृज -पद्मकेशरम् । योजनवल्ली-मञ्जिष्ठा । अनन्ता-दुरालभा । मोचद्रुम -शाल्मलीवृक्ष , मोचरस -तन्निर्यास । समङ्गा-लज्जिका । पुन्नाम-पुन्नागम् । शीत-चन्दनम् । मदनीयहेतु -धातकी । अम्बष्ठा-मयूरशिखा । नमस्करी-लज्जिका । बिल्वपेशिका-शुष्कबिल्वपेशिका । सन्धानीयौ-भग्नसन्धानजननौ ।**

**मुस्तावचाग्निद्विनिशाद्वितिक्ता-**
**भल्लातपाठात्रिफलाविषाख्याः ।**
**कुष्ठं त्रुटी हैमवती च योनि-**
**स्तन्यामयघ्ना मलपाचनाश्च ॥ ४० ॥**

**स०**-मुस्ता-गाङ्गेयी । तिक्ताद्वय-एका कटुकाऽन्या काकतिक्ता । विषाख्या-शुक्लकन्दा । हैमवती-श्वेतवचा । एते योन्यामयघ्ना स्तन्यामयघ्ना मलपाचनाश्च । "तौ जो गुरू चेद्भवतीन्द्रवज्रा ।"

**आ० र०-मुस्तादिगणमाह-मुस्तेत्यादि । द्वितिक्ता-कटुका करञ्जिका च । हैमवती-श्वेतवचा ।**

**न्यग्रोधपिप्पलसदाफलरोध्रयुग्मं**
**जम्बूद्वयार्जुनकपीतनसोमवल्काः ।**
**प्लक्षाम्रवञ्जुलपियालपलाशनन्दी-**
**कोलीकदम्बविरलामधुकं मधूकम् ॥ ४१ ॥**
**न्यग्रोधादिर्गणो व्रण्यः सङ्ग्राही भग्नसाधनः ।**
**मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः ॥ ४२ ॥**

**स०**-न्यग्रोधो-वट । पिप्पल -अश्वत्थ । सदाफल -उदुम्बर । जम्बूद्वय-एका राजजम्बूर्बृहत्फलाऽन्या ह्रस्वफला काकजम्बू । अर्जुन -पार्थ । कपीतन -कपिचूडो वानीराख्य । सोमवल्क -श्वेतसार खदिर । प्लक्ष -शृङ्गी लैवाख्य । आम्र -चूत । वञ्जुलो-वेतस । पियालो-द्राक्षारसप्रिय खरस्कन्धाख्य । नन्दी-जयवृक्ष । कोली-बदरी । विरला-तिन्दुकी । मधुक-यष्टी । मधूक-मधूकपुष्पम् । न्यग्रोधादिरय सङ्ग्रहणादिगुणयुक्त । वसन्ततिलकावृत्तम् ।

**आ० र०-न्यग्रोधादिगणमाह-न्यग्रोधेत्यादि । सदाफल -उदुम्बर । जम्बूद्वय-जम्बू राजजम्बूश्च । कपीतन -आम्रातक । सोमवल्क -कट्फल । पियाल -चार । नन्दी-नन्दीवृक्ष । कोली-बदरी । विरला-तिन्दुकी । भग्नसाधनो-भग्नसन्धानकृत् ।**

**एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकं**
**स्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीरसाः ।**
**शुक्तिर्व्याघ्रनखोऽमराह्वमगुरुः श्रीवासकः कुङ्कुमं**
**चण्डागुग्गुलुदेवधूपखपुराः पुन्नागनागाह्वयम् ॥ ४३ ॥**
**एलादिको वातकफौ विषं च विनियच्छति ।**
**वर्णप्रसादनः कण्डूपिटिकाकोठनाशनः ॥ ४४ ॥**

**स०**-एलायुग्म-सूक्ष्मैला स्थूलैला च । तुरुष्क -कृत्रिमो निर्यासविशेष । कुष्ठ-गद । फलिनी-गन्धप्रियङ्गु । मासी-नलदम् । जल-ह्रीबेरम् । ध्यामक-देवदग्धकम् । स्पृक्का-देवी । चोरको-ग्रन्थिपर्ण । चोच-त्वक् । पत्र-तमालपत्रम् । तगर-वक्रम् । स्थौणेय-तैलपीतकम् । जातिरसो-बोल । शुक्ति -नख । व्याघ्रनख -समुद्रज । अमराह्व-देवदारु । अगुरु -प्रसिद्ध । श्रीवासक -चीडा श्रीवेष्टकाख्य । कुङ्कुम-बाह्लीकम् । चण्डा-कोपना । गुग्गुलु -पुर । देवधूप -सर्जरस । खपुर -कुन्दुरुक । पुन्नागो-रक्तकेसर । नागाह्वय-नागकेसरम् । एलादिरय वातादीन् हन्ति । तथा, वर्णप्रसन्नत्वकृत् कण्ड्वादिहृच्च । "म्सौ ज्सौ तौ गुरुकं च सूर्यतुरगैः शार्दूलविक्रीडितम् ।"

**आ० र०-एलादिगणमाह-एलायुग्मेत्यादि । तुरुष्क -सिह्लक । ध्यामक-रोहिषम् । चोरको-ग्रन्थिपर्ण । चोच-त्वचम् । पत्र-पत्रकम् । जातीरसो-बोल । शुक्ति -नखम् । व्याघ्रनख -तद्भेद । श्रीवासक -सरलनिर्यास । देवधूपो-राल । खपुर -सल्लकीनिर्यास । नागाह्वय-नागकेशरम् ।**

**श्यामादन्तीद्रवन्तीक्रमुककुटरणा-**
**शङ्खिनीचर्मसाह्वा-**
**स्वर्णक्षीरीगवाक्षीशिखरिरजनक-**
**च्छिन्नरोहाकरञ्जाः ।**

१ 'अम्बष्ठा-एकैषिका मयू' ट । अस्मात्प्राक् 'अम्बष्ठा-एकैषिका मसूरविदलाख्या पुस्तकान्तरे' इत्यपि पाठ ठ पुस्तके । २ 'नन्दीवृक्ष -काश्मरी, अन्ये गर्दभाण्डमाहु ' डल्हण. । ३ 'शर ' क ख ग ञ । ४ 'सारद्रुम ' क ख घ ञ । ५ 'रमली ।' क ख घ ञ । ६ 'पुन्नाग-नागकेशरम् ।' ग । ७ 'तौ ज्गौ गुरुश्चेद्व' इति क्वचित् । ८ चरके तु स्तन्यशोधनगणे 'किराततिक्तककटुरोहिणी इति तिक्ताद्वयम् । ९ 'रसजम्बू' अ ग स ढ । १० 'वर्ण्यं ' अ आ क । ११ 'योनिदोषजित्'अ.आ.ख.ग.ञ.स.। १२ 'वटवृक्ष ' ट ।

१ 'कपीतनो-गन्धमुण्ड ' चक्र । २ 'क्ष.-वटी ।' ङ । ३ 'प्लक्षकाख्य पुस्तकान्तरे ।' ठ । ४ 'न -पारीशपिप्पल ' घ । ५ 'मकरपृ' ग स ढ । ६ 'शुक्तिव्याघ्रनखौ सुराह्वम' आ स स । ७ 'श्रीवेष्टक ' आ । 'श्रावासक' घ. । ८ 'वर्ण्यं प्र' आ ख ञ । ९ 'गन्धपत्रम्' ट. । १० 'प्रसिद्ध ' ठ ड. । ११ 'रणीश' अ ख ।

**बस्तान्त्री व्याधिघातो [1]बहलबहुरस-**
**स्तीक्ष्णवृक्षात् फलानि**
**श्यामाद्यो [2]हन्ति गुल्मं विषमरुचिकफौ**
**हृद्रुजं मूत्रकृच्छ्रम् ॥ ४५ ॥**

**स०**–श्यामा–मालविका त्रिवृत् मसूरविदलाख्या । दन्ती–[3]मुकूलकश्चित्राख्य । द्रवन्ती–उन्दुरुकर्णिका । क्रमुक –पट्टिका रोध्र । कुटरणा–शुक्ला त्रिवृत् । शङ्खिनी–यवतिक्ता । चर्मसाह्वा–सातला, ब्राह्मीत्यन्ये । स्वर्णक्षीरी–कङ्कुष्ठम् । गवाक्षी–गवादनी स्थार्[4]णुकणासञ्ज्ञा, इन्द्रवारुणीत्यन्ये । शिखरी–अपामार्ग । रजनक –कम्पिल्लक । छिन्नरोहा–अमृतवल्ली । करञ्ज –कैडर्य । बस्तान्त्री–वृषगन्धा । व्याधिघात –कृतमाल । [5]बहुलो–बहुफल । बहुरस –इक्षु । तीक्ष्णवृक्षात्–पीलो , फलानि । श्यामादिरेष गुल्मादीन् हन्ति । [ [6]अत्र पिप्पल्यादि प्रसिद्धत्वान्नोक्त । ] "श्रौ श्रौ याश्च त्रय स्यु स्वरमुनितुरगै स्रग्धरा स्याद्विरामै ।"

**आ० र०–श्यामादिगणमाह–श्यामेत्यादि । श्यामा–**कृष्णमूला त्रिवृत् । द्रवन्ती–चीरितपत्रा दन्तीभेद । क्रमुक –पूग । कुठरणा–अरुणमूला त्रिवृत् । चर्मसाह्वा–सप्तला । शिखरी–अपामार्ग । रजनक –कम्पिल्ल । छिन्नरोहा–गुडूची । बस्तान्त्री–वृद्धदारुक । व्याधिघात –आरग्वध । बहल –शिग्रु । बहुरस –इक्षु । तीक्ष्णवृक्ष –पीलु , तस्य फलानि ।

**[7]त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः ।**
**युञ्ज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ॥ ४६ ॥**

**स०**–इति–एव प्रकारेण, त्रयस्त्रिंशत्सञ्ज्ञा वर्गा कथिता । अत्र [8]सञ्ज्ञोपादानमेषा प्राधान्यख्यापनार्थम् । अन्येऽप्येव प्रकारा सन्ति, एते तु प्रधाना इत्यर्थ । सुखस्मरणार्थ च [9]सङ्ख्यावचनम् । एषु च त्रयस्त्रिंशत्सु वर्गेष्वलाभत –अलाभे सति, तद्विध–रसवीर्यपाकैस्तुल्य, द्रव्यमन्यत्–अनुक्तमपि युञ्ज्यात् । [10]न केवलमेता[11]वदेव विधेयमित्याह–जह्यादयौगिकम्,–न केवलमेषु वर्गेषु तद्द्रव्यालाभे यथालाभमन्यत्तद्विध द्रव्य युञ्ज्यात्, यावदयौगिकं यत् द्रव्य तच्च त्यजेत् । दोषरोगा[12]द्यपेक्षया पुरुषस्यास्मिन् काले वयसि [13]वा अयमेव गण प्रशस्त, तदा तत्समस्तगणद्रव्यालाभे तद्विधमेक द्रव्य द्वे वा बहूनि वा द्रव्याणि सयोज्य [1]प्रयोज्य एव, न समस्तद्रव्यापेक्षा कार्येति । तथा च सुश्रुत (सु अ ३८।८२)–"समीक्ष्य दोषभेदा[2]श्च गणान् भिन्नान् प्रयोजयेत् । पृथङ्मिश्रान् समस्ता[3]श्च गणान् वा व्यस्त सहतान् ॥" इति । त्रयस्त्रिंशदिति "त्रेस्त्रयश्च" इति त्रयसादेश । अयौगिकमिति अयोगाय प्रभवतीत्यर्थ । योगाद्यच्चेति ठञ् ।

**आ० र०–उपसहरति–त्रयस्त्रिंशदिति ।**

एते गणा न यावदुक्ता ग्राह्या । किं तर्हि ? ऊहापोहयोग्या , इत्याह–तेषु त्वलाभत इति । देशत कालतो वा कस्यचिद्द्रव्यस्यालाभे तत्सदृशगुणमन्यत्–अनुक्तमपि यौगिक युञ्ज्यात् । उक्तमप्यौषधमयौगिक जह्यात् । देशकालावस्थाद्यपेक्षया उचित–यौगिकम्, अनुचित–अयौगिकम् । यथालाभप्रयोगोऽपि सुश्रुतेनोक्त ( सू अ ३७।३४ )–"समस्त वर्गमर्द्ध वा यथालाभमथापि वा । प्रयुञ्जीत भिषक् प्राज्ञो यथोद्दिष्टेषु कर्मसु ॥" इति ।

**एते वर्गा दोषदूष्याद्य[4]पेक्ष्य**
**कल्ककाथस्नेहलेहादियुक्ताः ।**
**पाने नस्येऽन्वास[5]नेऽन्तर्बहिर्वा**
**ले[6]पाभ्यङ्गैर्घ्नन्ति रोगान् सुकृच्छ्रान् ॥ ४७ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने शोधनादिगणसङ्ग्रहो नाम पञ्चदशोऽध्यायः ॥ १५ ॥**

**स०**–एते–पूर्वोक्ता , वर्गा दोषदूष्यवयोबलादीन्यपेक्ष्य–विकल्प्य, कल्कादि[7]युक्ता सुकृच्छ्रान् रोगान्–आमयान् घ्नन्ति । युक्ता इत्यत्रान्तर्भावितण्यर्थो युजि । तत कल्कादिषु [8]वैद्येन योजिता इत्यर्थोऽवतिष्ठते । आदिशब्देन फाण्टशीतकषायादिपरिग्रह । कथमेते घ्नन्ति ? इति प्रकार युक्त्याऽऽह–पान इत्यादि । [9]पाने–पानाद्युपयोगे सति । लेपाभ्यङ्गैरिति बहुवचनेन लेपाभ्यङ्गस्नानादिभिश्चे[10]ति योज्यम् । शालिनीवृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने शोधनादिगणसङ्ग्रहाध्याय पञ्चदश समाप्त ॥ १५ ॥

---

१ 'बहुलबहु' क ग । २ 'हन्ति कुष्ठ' इति सङ्ग्रहमूलस्थ पाठोऽशुद्ध , सर्वेषु हृदयपुस्तकेषु सटीकसङ्ग्रहे चानुपलब्धत्वात् सुश्रुते 'गुल्मविषापह ' इत्युक्तत्वादस्य गणस्य कुष्ठहन्तृत्वगुणोक्त्यभावाच्च । ३ 'प्रसिद्धा ।' ड । ४ 'णुकासञ्ज्ञा' ट । ५ 'बहलबहुरस –' ट । ६ [ ] इति पाठ ट पुस्तके नोपलभ्यते । ७ श्यामादिगणादनन्तरीयोऽय सङ्ग्रहस्थो गण । ८ 'रुणा त्रि' क ख ञ । ९ 'सङ्ख्यावचनमे' ड । १० 'न चेताव' ठ । ११ 'वदत्र वि' ट ठ । १२ 'गातुराद्य' ट ठ । १३ 'वा यो गण समस्त साध्यामयशमनायावचारयितु युक्त । स एकस्य द्रव्यस्यालाभे द्वयोर्बहूना वा, तत्प्रकारमेकमपर द्रव्य' ट ठ ।

१ 'प्रयुज्यतेऽत एव' ट । 'प्रयोज्य । एव न' ठ । २ 'श्च मिश्रान्' स सु । ३ 'स्तास्तु ग' ट । 'स्तान् वा गण वा व्यस्तसहतम् ।' स सु । ४ 'द्यवेक्ष्य' अ । ५ 'सने वा बहि' स स । ६ 'सेकालेपैर्घ्न' अ । 'स्वदाभ्य' आ । ७ 'दिपु गु' ट ठ ड । ८ 'पाने सति–पा' ट । ९ 'सतीत्यर्थ । बहिर्वेत्यादि । ले' ट । १० 'भिघ्नन्तीति' ट ।

आ० ९०—एते वर्गा सर्वकल्प[1]योग्याश्चेत्याह—एते वर्गा इति। दोषाद्यपेक्षया कल्कादीनामन्यतमेन कल्पेन, पानादीनामन्यतमेनान्त प्रयोगेण, लेपादीनामन्यतमेन बहि-प्रयोगेण वा, दु साध्यानपि रोगान् घ्नन्ति। अथाग्र्य[2]सङ्ग्रह सङ्ग्रहे ( सू अ १३ )—"श्रेष्ठमुदकमाश्वासनस्तम्भनक्लेदनानाम्[3] ।१। वायु प्राणसंज्ञाप्रदानहेतूनाम् । २ । अग्निरामस्तम्भशीतशूलोद्वेष्ट[4]कम्पप्रशमनानाम् ।३। स्नान सुरा च श्रमहराणाम् । ४ । क्षीर जीवनीयानाम् । ५ । मांस बृंहणीयानाम् । ६ । रस [ हर्षश्च ] प्रीण[5]नानाम् ।७। लवणमन्नद्रव्यरुचिकराणाम्[6] । ८ । तिन्दुकम[7]नन्नद्रव्यरुचिकराणाम् । ९ । अम्ल हृद्यानाम् ।१०। कुक्कुटो[8] बल्यानाम् ।११। तैल वातश्लेष्मप्रशमनानाम् ।१२। सर्पिर्वातपित्तप्रशमनानाम्[9] ।१३। मधु श्लेष्मपित्तप्रशमनानाम् ।१४। स्वेदो मार्दवकराणाम् ।१५। व्यायाम स्थैर्यकराणाम् ।१६। क्षार पुंस्त्वोपघातिनाम् ।१७। आम कपित्थमकण्ठ्यानाम् ।१८। आविक सर्पिरहृद्यानाम् ।१९। माहिष[10] क्षीर स्वप्नजननानाम् ।२०। मन्दक दधि अभिष्यन्दकराणाम् ।२१। इक्षुर्मूत्रजननानाम् ।२२। यवा पुरीषजननानाम्[11] ।२३। जाम्बव वातजननानाम् ।२४। कुल[12]त्था अम्लपित्तजननानाम् ।२५। माषा शष्कुल्योऽविक्षीर च श्लेष्मपित्तजननानाम् ।२६। दुरालभा पित्तश्लेष्मोप[13]शमनानाम् ।२७। उपवासो ज्वरहराणाम् ।२८। वृषो रक्तपित्तप्रशमनानाम् ।२९। कण्टकारिका कासघ्नानाम् ।३०। लाक्षा सद्य क्षतघ्नानाम् ।३१। नागबलाभ्यास क्षयक्षतघ्नानाम् ।३२। पुष्करमूलं हिक्काश्वासकासपार्श्वशूलारुचिहराणाम् ।३३। अजापय शोषघ्नस्तन्यकररक्तसङ्ग्रहणप्रशमनानाम् । ३४ । मृद्भृष्टलोष्टप्रसादश्छर्दितृष्णातियोगप्रशमनानाम् ।३५। अरुष्करश्चित्रकमूल च शुष्कार्श प्रशमनानाम् ।३६। कुटजो रक्तार्श प्रशमनानाम्[14] ।३७। लाजाश्छर्दिघ्नानाम् ।३८। यावशूक स्रंसनीयपाचनीया[15]र्शोघ्नानाम् ।३९। तक्राभ्यासोऽर्श श्वयथुग्रहणीदोषघृतव्यापत्प्रशमनानाम् । ४० । क्रव्यान्मां[16]साभ्यासोऽर्श शोषग्रहणीदोषघ्नानाम् ।४१। मुस्त सङ्ग्रहणीयदीपनीयपाचनीयानाम् ।४२। अतिविषा[17] पाचनीयसङ्ग्रहणीयसर्वदोष[18]हराणाम् ।४३। बिल्वं सङ्ग्रहणीयदीपनीयवातकफप्रशमनानाम् ।४४। गन्धप्रियङ्गु शोणितपित्ता[1]तिवेगप्रशमनीयानाम् ।४५। उदीच्य निर्वापणदीपनीयच्छर्द्यतीसारहराणाम् ।४६। कट्वङ्ग[2] सङ्ग्रहणीयदीपनीया[3]नाम् ।४७। कुटजत्वक् श्लेष्मपित्त[4]रक्तसङ्ग्रहणीयोपशोषणीयानाम्[5] । ४८ । उत्पल[6]कुमुद[7]किञ्जल्कोऽनन्ता च सङ्ग्रहणीयरक्तपित्तप्रशमनानाम् ।४९। काश्मर्यफलं रक्तसङ्ग्रहणीयरक्तपित्तप्रशमनानाम् ।५०। पृश्निपर्णी रक्तसङ्ग्रहणीयदीपनीयपाचनीयवातहरवृष्याणाम् । ५१ । शालिपर्णी वृष्यसर्वदोषहराणाम् ।५२। बला सङ्ग्रहणीयबल्यवातहराणाम् ।५३। पिप्पलीमूल दीपनीयपाचनीयानाहहराणाम् । ५४ । चित्रकमूल दीपनीय[8]गुदशोफशूलहराणाम् । ५५ । गोक्षुरको मूत्रकृच्छ्रानिलहराणाम् ।५६। हरिद्रा प्रमेहहराणाम् ।५७। रक्तावसेको विद्रधिवीसर्पपिटिकागण्डमा[9]लामयहराणाम् । ५८ । एरण्डतैलाभ्यासो वर्ध्मगुल्म[10]शूलहराणाम् । ५९ । लशुनो गुल्मानिलहराणाम् ।६०। हिङ्गुनिर्यासश्छेदनीयदीपनीयानुलोमिकवातकफप्रशम[11]नीयानाम् ।६१। अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातश्लेष्महराणाम् । ६२ । उष्ट्रीक्षीरमुदरश्वयथुघ्नानाम् । ६३ । अयोरज पाण्डुरोगघ्नानाम् । ६४ । खदिर कुष्ठघ्नानाम् । ६५ । विडङ्ग[12] कृमिघ्नानाम् ।६६। रास्ना वातहराणाम् ।६७। एरण्डमूलं वृष्य[13]वातहराणाम् ।६८। गुग्गुलुर्मेदोनि[14]लहराणाम् ।६९। अमृता सङ्ग्रहणीयदीपनीयवातश्लेष्मशोणितविबन्धप्रशमनानाम्[15] । ७० । मदनफल वमनास्थापनानुवासनोपयोगिनाम् ।७१। त्रिवृत् सुखविरेचनानाम्[16] ।७२। चतुरङ्गुलो मृदुविरेचनानाम्[17] ।७३। स्नुक्पयस्तीक्ष्णविरेचनानाम् ।७४। प्रत्यक्पुष्पी शिरोविरेचनानाम् ।७५। त्रिफला तिमिरघ्नानाम् ।७६। त्रिफलागुग्गुलुर्व्रण्यानाम् ।७७। शिरीषो विषघ्नानाम् ।७८। आमलक वय स्थापनानाम्[20] ।७९। हरीतकी पथ्यानाम् ।८०। क्षीरघृताभ्यासो रसायनानाम् ।८१। समघृतसक्तुप्राशा[21]भ्यासो वृष्योदावर्तहराणाम् ।८२। सङ्कल्पो नक्तरेतश्च वृष्याणाम् ।८३। दौर्मनस्यमवृष्याणाम् ।८४। तैलगण्डूषाभ्यासो दन्तबलरुचिकराणाम् । ८५ । चन्दनोदुम्बर[22] दाहनिर्वाप[23]णालेपनानाम्

१ 'कल्पनायो' क ख ग ञ । २ 'ग्र्याणा स' क ख ञ । ३ 'म् । स्नान' स द्व । ४ 'ष्टकप्रश' घ स द्व । 'लोद्वेपनप्रश' च द्व । ५ 'णनीयानाम्' घ । 'रसस्तर्पणीयानाम्' च द्व । ६ 'म् । अम्ल' घ । ७ 'मन्नद्रव्यारुचि' स स । ८ 'कुर्कुटो' घ । ९ 'म् । स्नेहो मार्दव' घ । १० 'महिषीक्षीर' स द्व च द्व । ११ 'म् । कुलत्थोऽसाम्लपित्त' ग । १२ 'लत्थोऽम्लपित्त' क । 'लत्थोऽम्ल' ख घ ञ स स । १३ 'पशोषणानाम्' ग स द्व च मू । 'श्लेष्मप्रशम' स च । १४ 'म् । तक्राभ्यासो' क । १५ 'यार्श - प्रशमनीयानाम्' ख ञ । १६ 'न्मासरसाभ्या' घ स च । १७ 'षा दीपनीयपाच' च द्व । १८ 'दोषापह' क ख ग ञ ।

१ 'पित्तपित्ताति' क । 'त्तातियोग' स स च द्व । २ 'ट्वङ्ग' क ख ञ । ३ 'नीयपाचनीयानाम्' च द्व । ४ 'त्तसङ्ग्रहणीदोषोपशो' ग । ५ 'षणानाम्' क ख ग ञ स मू च द्व । ६ 'लकमलकि' क ख ग ञ । ७ 'दपद्मकि' च द्व । ८ 'यपाचनीयगुद' स द्व स च । ९ 'लापहरा' क ख ञ स द्व । 'लापचीहरा' ग । 'आमया — अन्ये व्याधयो रक्तनिबर्हणयोग्या' इतीन्दु । १० 'त्मानिलश' स द्व । ११ 'मनानाम्' क ख ग ञ स द्व च द्व । १२ 'विडङ्ग' स स । १३ 'वृषणवात' ख ग ञ । १४ 'लश्लेष्महरा' क ख ञ । १५ 'मनीयानाम्' क ख ञ । १६ 'म् । स्नुक्' क । १७ 'चनीयानाम्' घ । १८ 'म् । स्नुक्' ग घ । १९ 'म् । प्रत्यक्' ख ञ । २० 'पनीयानाम्' क ख ञ । २१ 'प्राशनाभ्या' क ख ग ञ । २२ 'र निर्वा' क ख ग घ ञ स मू । २३ 'पणाले' स स । 'पणानाम्' च द्व ।

।८६। रास्नागुरुणी शीतापनयनप्रलेपनानाम्[1] ।८७। लामज्जकोशीरे दाहत्वग्दोषस्वेदापनयनप्रलेपनानाम् ।८८। कुष्ठ वातहराभ्यङ्गोपनाहोपयोगिनाम् ।८९। मधुक चक्षुष्यवृष्यके[2]श्यकण्ठ्यवर्ण्य[3]बल्यविरजनीयरोपणीयानाम् ।९०। अजीर्णाशन ग्रहणीदूषणानाम् ।९१। विरुद्धवीर्या[4]शन निन्दित[5]व्याधिकराणाम् ।९२। गुरुभोजन दुर्विपाकानाम् ।९३। अतिमात्राशनमामदोषहेतूनाम् ।९४। यथाग्न्यभ्यवहारोऽग्निसन्धुक्षणानाम् ।९५। यथासात्म्यमाहारविहारौ सेव्यानाम् ।९६। एकासनशयनभोजन[6] सुखपरिणामकराणाम् ।९७। विषमाशनमग्निवैषम्यकराणाम् ।९८। काले भोजनमारोग्यकराणाम्[8] ।९९। [9]वेगोदीरणधारणमनारोग्यकराणाम् ।१००। तृप्तिराहारगुणानाम् ।१०१। अनशनमायुषो ह्रासकराणाम् ।१०२। प्रमितो[11]शन गवेधुकान्न च कर्षणीयानाम्[12] ।१०३। उद्दालकान्न रूक्षणीयानाम् ।१०४। मद्य सौमनस्यजननानाम् ।१०५। मद्याक्षेपो धीधृतिस्मृतिहराणाम्[13] ।१०६। स्त्रीष्वतिप्रसङ्ग शोषकराणाम् ।१०७। शुक्रवेगनिग्रह षाण्ढ्यकराणाम् ।१०८। [14]पादाभ्यामुद्वर्तनमन्नश्रद्धाजननानाम्[15] ।१०९। सूनादर्शनमन्नाश्रद्धाजननानाम्[16] ।११०। मिथ्यायोगो व्याधिमुखानाम्[17] ।१११। रजस्वलागमनमलक्ष्मीमुखानाम्[18] ।११२। ब्रह्मचर्यमायुष्याणाम्[19] ।११३। परदारगमनमनायुष्याणाम्[20] ।११४। अयथा[21]प्राणमारम्भ प्राणोपरोधिनाम् ।११५। विषादो रोगवर्द्धनानाम्[22] ।११६। शोक शोषणानाम्[23][24] ।११७। निर्वृति पुष्टिकराणाम्[25] ।११८। स्वप्नस्तन्द्राकराणाम्[26] ।११९। सर्वरसाभ्यासो बलकराणाम् ।१२०। एकरसाभ्यासो दौर्बल्यारोचकान्यतमदोषप्रकोपकराणाम्[27] ।१२१। गर्भ[28]शल्यमाहार्याणाम्[29] ।१२२।

अजीर्णमुद्धार्याणाम्[1] ।१२३। बालो मृदुभेषजाहार्याणाम्[2] ।१२४। वृद्धो याप्यानाम् ।१२५। गर्भिणी तीक्ष्णौषधव्यायाम[3]वर्जनीयानाम्[4] ।१२६। सौमनस्य गर्भधारणानाम्[5] ।१२७। सन्निपातो दुश्चिकित्स्यानाम्[6] ।१२८। आमविषमचिकित्स्यानाम् ।१२९। ज्वरो[7] रोगाणाम् ।१३०। कुष्ठ दीर्घरोगाणाम् ।१३१। राजयक्ष्मा रोगसमूहानाम् ।१३२। प्रमेहो[8]ऽनुषङ्गिणाम् ।१३३। जलौकसोऽनुशस्त्राणाम् ।१३४। बस्तिर्यन्त्राणाम् ।१३५। हिमवानौषधभूमीनाम् ।१३६। सोमं[9][10] ओषधीनाम् ।१३७। मरु[11]भूमिरारोग्यदेशानाम् । १३८ । आनूपभूमिरहितदेशानाम् ।१३९। निर्दे[12]शकारित्वमातुरगुणानाम् ।१४०। अनिर्देशकारित्वं[13] रिष्टानाम् ।१४१। भिषक् चिकित्साङ्गानाम् ।१४२। सिद्धिर्वैद्यगुणानाम् ।१४३। नास्तिको वर्ज्यानाम् ।१४४। लौल्य क्लेशकराणाम् ।१४५। आत्मवत्तोपकारिणाम् ।१४६। शास्त्रसहितस्तर्क साधकानाम् ।१४७। दृष्टकर्मता नि सशयकराणाम्[14] ।१४८। असमर्थता भयकराणाम् ।१४९। [15]तद्विद्यसम्भाषा बुद्धिवर्द्धनानाम् ।१५०। आचार्य शास्त्रा[16]धिगमहेतूनाम् ।१५१। आयुर्वेदोऽमृतानाम् ।१५२। सद्वैद्यद्वेष प्राणत्यागहेतूनाम् ।१५३। सद्वचनमनुष्ठेयानाम्[17] ।१५४। सर्वसन्न्यास सुखानामिति ।१५५। तत्रोदकाग्निमृद्धृष्टलोष्टप्रसादतक्राभ्यासरक्तावसेकैरण्डतैलाभ्यासोष्ट्रीक्षीरमदनफलमद्याक्षेपैकरसाभ्यासगर्भिणीनामेकैकस्मात् समुदायाच्च निर्धारणम् । पुष्करमूलादीनां तु समुदायादेवेति । भवति चात्र । अग्र्याणा शतमुद्दिष्ट पञ्चपञ्चाशदुत्तरम् । [20]अलमेतद्विजानीयाद्धि[21]ताहितविनिश्चये ॥" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
शुध्यादिगणसङ्ग्राह सामस्त्येन निरूपितं[22] ॥ १५ ॥



१ 'लेपानाम्' क ख घ ञ । २ 'क्षुष्यके' ग घ । ३ 'ण्ठ्यवर्णविर' क ग । 'ण्ठ्यविवर्णवि' ख ञ । 'ण्ठ्यवर्ण्यवि' स मू स च । 'ण्ठ्यबल्यवि' घ स स । ४ 'द्धवीर्यसेवन' ग । 'द्धदीर्घाशन' ख ञ । ५ निन्दितव्याधयो–वातव्याध्यादयोऽष्टौ महारोगा । ६ 'जनानि सु' ग । 'एकाशनभोजन' च द्व । ७ 'सुखनाशकरा' स स । ८ 'कालभो' च द्व । ९ 'मू । सुदर्शनमन्न श्रद्धाजननानाम् । वेग' स द्व । 'मू । तृप्ति' क । १० 'वेगधारण' ख घ ञ स द्व । 'वेगसन्धारण' च द्व । ११ 'तान्नाशन' क ख ञ । १२ 'कर्शनीया' घ स द्व । १३ 'षद्वाराणाम्' घ, स मू, चक्र । १४ 'पञ्चामु' ख ञ । १५ 'मू । मिथ्या' घ । १६ 'पराघातनमन्ना' स च । 'परायतनमन्नमश्रद्धा' च मू । १७ 'मू । ब्रह्मचर्य' ख ञ । १८ 'मू । परदार' क । १९ 'युष्यकराणाम्' च द्व । २० 'मन गतायु' ख ञ । २१ 'थाबलमा' क ख ग ञ च द्व । २२ 'मू । हर्ष प्रीणनानाम् । शोक' क ख ग ञ स द्व । २३ 'शोषवर्द्धनानाम्' ग । २४ 'मू । आश्वासो बलकराणाम् । निर्वृ' स द्व । २५ 'मू । पुष्टि स्वप्नकराणाम् । स्वप्न' क ख घ ञ स द्व । २६ 'मू । सौख्य निर्वृतिहेतूनाम् । मर्व' क ख ग घ ञ । २७ 'मू । वृद्धो' क । 'मू । अग्निरामस्तम्भशीतशूलोद्वेष्टकप्रशमनानाम् । गर्भ' स द्व । २८ 'गर्भमहार्या' ग । 'गर्भशल्यमहा' घ । 'गर्भशल्यमनाहा' च द्व । २९ आहार्या –आकर्षणीया ।

१ उद्धार्या –वम्या । २ 'षजाहाराणाम्' ख ञ । 'षजीयानाम्' च द्व । ३ 'धव्यवायव्या' स द्व । ४ 'वर्ज्यानाम्' क ख ञ । ५ 'धारणकराणाम्' ख ञ । 'धारकाणाम्' च द्व । ६ 'मू । असौमनस्य दु खजननानाम् । सन्नि' स स. । ७ 'ज्वर शीघ्ररो' क. ख घ ञ स द्व । ८ 'मू । प्रमेहो' ग । ९ 'मू । सोम' ग ।१० 'सोम – ओषधिराज पञ्चदशपर्वा' इति चक्र । ११ 'मरुद्भूमि' क ग । 'महद्भूमि' ख ञ । १२ 'निदेश' ग. । १३ 'रित्वमरि' स स । १४ 'मू । तद्विद्य' ग । १५ 'सद्वैद्यसलापो बु' क । 'सद्विद्यसलापो बु' ख ञ । 'सद्विद्यसम्भा' घ । १६ 'स्त्राभिमर्षणानाम्' ग । १७ 'मू । सद्वच' क ख ग घ ञ । १८ 'मू । वायु प्राणसञ्ज्ञाप्रदानहेतूनाम् । सर्व' स द्व । १९ लिखितमुद्रितेषु प्राय सर्वेष्वपि पुस्तकेष्वस्या आचार्योक्तसङ्ख्यायाश्चतुष्पञ्चा न्यूनाधिका अग्र्या दृश्यन्ते । अतस्तेऽनेकलिखितपुस्तकसहायेनातिप्रयत्नेन निश्चित्योपरिष्टात् क्रमाङ्कैर्दर्शिता । ये चाधिकास्ते सपुस्तकनामानोऽत्र प्रदर्श्यन्ते,–"१ 'सुदर्शनमन्न श्रद्धाजननानाम्' स द्व । २ 'हर्ष प्रीणनानाम्' क ख. ग ञ स द्व । ३ 'आश्वासो बलकराणाम्' स द्व । ४ 'पुष्टि स्वप्नकराणाम्' क ख घ ञ स द्व । ५ 'सौख्य निर्वृतिहेतूनाम्' क ख ग घ ञ । ६ 'असौमनस्य दु खजननानाम्' स स ।" इति । २० 'अलमे' क ग स मू । २१ 'तविवक्षया' ग । २२ 'गणसङ्ग्रहण नाम सा०तम् ।' ग । 'गणस्य सङ्ग्रह नाम सा०तम् ।' घ. ।



## षोडशोऽध्यायः ।

शोधनादिगणसङ्ग्रहाध्यायादनन्तरं स्नेहाध्यायारम्भः । यतः शोधनं स्नेहस्वेदावन्तरेण न सम्भवति । वक्ष्यति हि ( हृ सू अ १८।५९ )–"स्नेहस्वेदावनभ्यस्य" इत्यादि । तस्मात्स्नेहस्वेदाध्याययोरारम्भो युक्त इत्याह–

**अथातः स्नेहविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**स०**–स्नेहस्य–सर्पिरादेर्विधिं स्नेहविधिं, तं व्याख्यास्यामः । शेषं पूर्ववद्योज्यम् ।

**आ० र०**–स्नेहविधिमध्यायं व्याख्यातुं प्रतिजानीते–अथेति । यतः पूर्वेऽध्याये भेषजान्युक्तानि । तेषां प्रयोगो वक्तव्यः । स च स्नेहनस्वेदनशोधनास्थापनानावनधूमगण्डूषाश्च्योतनतर्पणादिभेदादनेकधा । चिकित्साकलिकायां तु ( श्लो. ६९–७० )–"प्राक् पाचनं स्नेहविधिस्ततश्च स्वेदस्ततः स्याद्वमनं विरेकः । निरूहणान्वासनबस्तिकर्म नस्यं क्रमश्चेति भिषग्वराणाम् ॥ रास्नापटोलपिचुमन्दपयोभिरादौ शुण्ठ्याटरूषकफलत्रयवारिभिर्वा । पक्वामदोषवपुषस्तदनन्तरं हि स्नेहो हितः सुरभिवासकंकटुफलादि ॥" इति । रास्नाक्काथादित्रयं शुण्ठीक्काथादित्रयं वा वातादित्रये क्रमात् पाचनम् । तत्र स्नेहनमस्मिन्नध्याये । अत एवायं स्नेहविधिः ।

**गुरुशीतसरस्निग्धमन्दसूक्ष्ममृदुद्रवम् ।**
**औषधं स्नेहनं प्रायो, विपरीतं विरूक्षणम् ॥ १ ॥**

**स०**–गुर्वादिगुणयुक्तं यद्द्रव्यं तत् स्नेहनं भवति । विपरीतमतो यल्लघूष्णस्थिररूक्षतीक्ष्णस्थूलकठिनसान्द्रगुणोपेतं तद्विरूक्षणम् । प्रायोग्रहणं विरूक्षणे स्नेहने च योज्यम् । तथा च,–लघ्वपि सार्षपं तैलं छागं च दुग्धं तथा विष्किरप्रतुदमृगाख्यं वर्गत्रयं स्नेहनं भवति । तथा, उष्णमपि मत्स्यमहिषमांसं स्नेहनं भवति । एवं रूक्षणेऽपि वेद्यम् । तथा च,–यवो गुरुशीतसरादिगुणयुक्तोऽपि विरूक्षणं, तथा राजमाषोऽपि[4]। स्नेहने प्रकृतेऽपि विरूक्षणोपन्यासोऽन्वयव्यतिरेकेण सुतरां स्नेहस्य सम्यक्प्रतिपादनार्थं ।

**आ० र०**–तत्र स्नेहनं द्रव्यमाह–गुरुशीतेति ।

रूक्षणमाह–विपरीतमिति । तस्य[6] स्नेहनपूर्वाङ्गत्वात् विपरीतं–लघ्वादिगुणम् ।

**सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।**
**तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्तनात् ॥ २ ॥**
**माधुर्यादविदाहित्वाज्जन्माद्येव च शीलनात् ।**

**स०**–स्नेहेषु–क्षीरानूपामिषादिषु मध्ये, सर्पिरादयश्चत्वारः[2] स्नेहाः प्रकर्षेण वराः । तत्रापि च–तेष्वपि[4] चतुर्षु मध्ये, सर्पिरुत्तमम्, संस्कारस्यानुवर्तनात्[6]। ननु, यदि संस्कारमनुवर्तते सर्पिस्तदानीं मरिचचित्रकादिद्रव्याभिसंस्कृतस्य घृतस्य शैत्यादिगुणविपर्यासः प्राप्तः । न चेदं दृष्टम् । यदस्य शैत्यादयो गुणा विनश्यन्त्यौष्ण्यादयश्चोत्पद्यन्ते इति । अत्रोच्यते । अनुशब्दोऽत्र सहार्थे, अनेकार्थत्वान्निपातानाम् । तेनायमर्थः,–सर्पिषो गुणाः संस्कारगुणैः सह वर्तन्ते, न तु तैलादीनाम् । तैलवसामज्जानो हि संस्कारवशात् स्वगुणांस्त्यजन्ति । अत्र चोदाहरणं यथा,–चन्दनाद्यं तैलमिति । अतो द्रव्यगुणान्तरैरनभिभूतगुणत्वात्सर्पिष इतरेषां च तैलादीनां द्रव्यैरभिभूतगुणत्वादुत्तमत्वम् । अत एव च वातपित्तज्वरादिषु विकारेषु घृतसाध्येषु भेषजं तैलं नेष्टम्, अनिष्टसम्पादनात् । तैलसाध्येषु तु विकारेषु तदुपशान्त्यर्थं तथाविधद्रव्यसंस्कृतं घृतमपीष्टम् । तद्धि न तथाऽनिष्टहेतुः । तस्मात् सर्वस्नेहेभ्यः सर्पिरेवोत्तमम्[9], संस्कारस्यानुवर्तनादिति न्यायात् न्याय्यमेव । माधुर्यादिहेतोश्च ।

**आ० र०**–स्नेहनवरमाह–सर्पिरिति ।

स्नेहनोत्तममाह–तत्रापीति । संस्कारस्यानुवर्तनात्–यथा शीतैः संस्कृतं शीततां, उष्णैः संस्कृतमुष्णतां भजते इत्यादि । सङ्ग्रहे तु ( सू अ २५ )–"माधुर्यादविदाहित्वाज्जन्माद्येव च शीलनात् ।" इति ।

**पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम् ॥ ३ ॥**

**स०**–यो यः पूर्वो–यथापूर्वम्, यो य उत्तरो–यथोत्तरम् । "यथासादृश्ये" इत्यव्ययीभावः । उत्तरमपेक्ष्य पूर्वं पूर्वं चापेक्ष्योत्तरं । तेन चतुर्णां स्नेहानां यथानिर्दिष्टानां सर्पिरादीनां त्रय एव स्नेहा वसामज्जसर्पिःसञ्ज्ञका यथापूर्वत्वेन सम्बध्यन्ते, न तु तैलाख्यः[12] स्नेहः, तस्य पूर्वत्वाभावात् । न ह्यन्योऽस्मात् कश्चिदुत्तरोऽस्ति, यदपेक्ष्येष[13] पूर्वत्वमात्मन आसादयेत् । तस्मान्नास्ति पूर्वत्वसम्बन्धस्तैलस्य । [ तथा[14], चतुर्णां स्नेहानां त्रय एव स्नेहा मज्जवसातैलाख्या यथोत्तरत्वेनाभिसम्बध्यन्ते, न सर्पिःसञ्ज्ञकः स्नेहः, उत्तरत्वाभावात् । न ह्यन्यः कश्चिदस्य पूर्वो विद्यते, यदपेक्षयैवोत्तरत्वमात्मन आसादयतीत्युक्तम् । ] तदेव यथापूर्वं

---

१ अथ स्नेहविधिश्चरके सू० १३ अध्याये, सुश्रुते चि० ३१ अध्याये, अष्टाङ्गसङ्ग्रहे सू० २५ अध्याये चास्ति वर्णितः । २ 'मुस्मात' ख ञ । ३ 'कषट्ट' स चि क । ४ 'पि, एव स्ने' ठ ड । ५ 'स्य प्रति' ड । 'स्य तारतम्यप्र' इति क्वचित् । ६ 'तस्मात्स्नेहनाद्गुर्वादिगुणात्' घ ।

१ श्लोकार्धमिदमरुणदत्तसम्मतम् । २ 'रस्तैलान्ता स्ने' ट । ३ अस्याग्रे 'आशु स्वकार्यकरणात्' इत्यधिकं क्वचित् । ४ 'पि च मध्ये' ट । 'पि मध्ये' ठ ड । ५ 'रद्रव्यमनु' ट । ६ 'दिसंस्कृ' ड । ७ 'विनाशं यान्त्यौ' ठ ड । ८ 'ण चन्द' ट । ९ 'म्, माधु' ड । १० 'हवर' ग । 'हनतर' घ ङ । ११ 'स्नेहानामुत्त' ग । 'हनतम' घ ङ । १२ 'ख्योऽपि स्ने' ट । १३ 'पेक्ष्यैष' ट । १४ [ ] इति पाठः ट.ठ.ड. पुस्तकेषु नोपलभ्यते ।

पित्तघ्नत्वं वसामज्जसर्पिषा सामान्येनोक्तम्[1]। विशेषेण च–, वसा पित्तघ्नी, मज्जा पित्तघ्नतर, सर्पि पित्तघ्नतममित्यर्थ । इतरघ्ना इत्यादि । इतरौ–वातकफौ पित्तापेक्षया, तौ घ्नन्ति–पराकुर्वन्तीतीतरघ्ना । यथोत्तरं त्रय स्नेहा मज्जवसातैलाख्या वातश्लेष्मघ्ना । तेन मज्जा वातश्लेष्मघ्नो वसा वातश्लेष्मघ्नतरा तैल वातश्लेष्मघ्नतममि[2]त्यवगन्तव्यम् । अन्ये त्वेव व्याचक्षते–श्लेष्मणि स्नेहनिषेधादितरघ्ना इति सामान्योक्तावपि वातघ्ना इति गम्यते । अथवा द्रव्यान्तरसस्कृतसर्पिराद्यपेक्षया कफस्यापीतरशब्देन ग्रहणमिति ।

**आ० र०–सर्पिरादीना स्नेहप्रयोगे दोषविशेषेण तारतम्यै[3]माह–पित्तघ्ना इति । तैलाद्वसा, ततो मज्जा, तत सर्पि पित्तघ्नम् । सर्पिषो मज्जा, ततो वसा, ततस्तैल वातघ्न कफघ्न च । स्नेहनसाध्ये पित्तरोगेऽपि तैलस्याभ्यनुज्ञार्थं[4] पित्तघ्नत्वमुक्तम् । एवमन्यत्र ।**

**घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ।**

**स०**–घृ[5]ताद्गुरुण सकाशात्तैल गुरु–गुरुतरमित्यर्थ. । वसा तु तैलाद्गुरु[6]र्तमा । ततोऽप्यतिशयेन मज्जा गुरुतम[7] ।

**आ० र०–सर्पिरादीना गुरुत्वे तारतम्यमाह–घृतादिति ।**

इदानीं यमकँ[8] स्नेहस्त्रिवृत स्नेहो महास्नेह इति च तत्र तत्रोच्यन्ते, न च ते ज्ञायन्त इत्याह—

**द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ॥ ४ ॥**

**स०**–द्वाभ्या स्नेहाभ्या–सर्पिर्वसाभ्या सर्पिस्तैलाभ्या सर्पिर्मज्जभ्यामित्यादि, द्वाभ्या द्वाभ्या यमको नाम्ना स्नेह । एव त्रिभि स्नेहैस्त्रिवृत, चतुर्भिर्महास्नेह, 'उच्यते' इति शेष. ।

**आ० र०–यमकादिसञ्ज्ञात्रयमाह–द्वाभ्यामिति । तै.–गुरुत्वोक्तक्रमै । तेन घृततैलाभ्या यमक, घृततैलवसाभिस्त्रिवृत, सर्वैर्महान् । सङ्ग्रहे तु ( सू अ २५ )–"स्नेहा[9]शया दधि क्षीर मासास्थिफलदारु च ।" इति ।**

सम्प्रति स्नेह्यान्निरूपयति—

**स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ।**
**वृद्धबालाबलकृशा रूक्षाः क्षीणास्रेतसः ॥ ५ ॥**
**वातार्तस्यन्दतिमिरदारुणप्रतिबोधिनः ।**
**स्नेह्याः**

**स०**–स्वेद्यादय स्नेह्या–स्नेहार्हा । न ह्यस्नेहि[10]तः स्वेद्य इत्यर्थ । एवं योऽपि शोध्य सोऽपि पूर्वं स्नेह्य । स्वेद्या–स्वेदार्हा । अर्हार्थे कृत्यप्रत्ययोऽत्र ण्यः । एव सशोध्या–शोधनार्हा, मद्यासक्ता स्त्र्यासक्ता व्यायामसक्ताश्च, तथा[1] चिन्तका, तथा वृद्धा बाला अबला–अल्पबलौ[2] कृशा रूक्षा क्षीणरुधिरा क्षीणशुक्राश्च, वातार्ता–वातपीडिता, स्यन्दादिषु प्रत्येकस्मिन् योज्य, स्यन्दिन[3]–अक्षिरोगयुक्ता, तिमिरिणश्च, दारुणप्रतिबोविन[4]–कृच्छ्रोन्मीलिन, एते स्नेहार्हा ।

**आ० र०–स्नेहनीयानाह–स्वेद्येत्यादि । स्वेद्य–कर्तव्यस्वेद । सशोध्य–कर्तव्यशोधन । मद्यादिषु त्रिष्वासक्त । चिन्तक–चिन्तापर । स्यन्दो–नेत्रकोप । दारुणप्रतिबोध–कृच्छ्रोन्[5]मीलन ।**

**न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ॥ ६ ॥**
**ऊरुस्तम्भातिसाराऽऽमगलरोगगरोदरैः ।**
**मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ॥ ७ ॥**
**अपप्रसूता युक्ते च नस्ये बस्तौ विरेचने ।**

**स०**–अतिमन्दाग्न्यादयो न स्नेह्या । अतिशब्दो यावद्दुर्बलेषु प्रत्येक योज्य । तेनातिदुर्बला न स्नेह्या इत्यर्थ. । अत एवाल्पबला स्नेह्या, न त्वतिदुर्बला, इति न पूर्वापरविरोध । अतितीक्ष्णाग्ने स्नेहनादत्यग्निवृद्धि । अतिस्थूलस्य चाग्निमेदसोर्वृद्धि । अतिदुर्बलस्य च जरणाशक्ते स्नेहस्य व्यापत् । ऊरुस्तम्भादिभिर्यावन्म[6]द्यैश्च पीडिता न स्नेह्या । अपप्रसूता–स्रुतगर्भा, न स्नेह्येति लिङ्गवचनविपरिणाम । प्रयुक्ते च नस्यादिकर्मणि सर्व एव न स्नेह्या ।

**आ० र०–अस्नेहनीयानाह–न त्वतिमन्दाग्नीत्यादि । अबलस्य स्नेह्यत्वमतिदुर्बलस्यास्नेह्यत्वमित्यविरोध. । अपप्रसूता–अयथावत्प्रसूता ।**

साम्प्रत चतुर्णा स्नेहाना मध्ये यो येभ्यो हित, तं दर्शयन्नाह–

**तत्र धीस्मृतिमेधादिकाङ्क्षिणां शस्यते घृतम् ॥ ८ ॥**

**स०**–तत्र–तेषु स्नेहेषु मध्ये, धीस्मृत्याद्यभिलाषिणा घृतं शस्यते, यावदग्निकाङ्क्षिणाम् । अन्ये तु "मेधादिकाङ्क्षिणा" इति पठन्ति । आदिशब्देन स्वरायुर्वर्णादिपरिग्रहः ।

**आ० र०–घृतस्य विषयमाह–तत्रेति । आदिशब्दात् घृतगुणोक्ता ( हृ. सू अ. ५।३७ ) अग्न्यादयः ।**

**ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु ।**
**तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु ॥ ९ ॥**

**स०**–तैलं ग्रन्थ्यादिरोगिषु शस्यते । लाघवदार्ढ्यार्थिषु क्रूरकोष्ठेषु प्राणिषु च शस्यते ।

**आ० र०–तैलस्य विषयमाह–ग्रन्थीत्यादि ।**

१ 'म् । तेन पूर्वं पित्तघ्नी वसा मज्जा' ठ ड । २ 'मिति ।' ठ. ड । ३ 'भ्यज्ञानमा' घ झ । ४ 'ज्ञानार्थं' ख.ग ञ. । ५ 'घृतादयो यथोत्तर गुरव ।' ड. । ६ 'तरा ।' ठ । ७ 'कस्नेहस्त्रिवृतस्नेहो' ठ. । ८ 'भ्या यमको नाम्ना स्नेह । यथा,–सर्पिवसाभ्या० त्यादि । एव' ट । ९ 'हाश्रया' ख.ग.ञ । १० 'हिन. स्वेद्यन्त इ' ठ.।

१ 'था ये चि' ठ ड । २ 'ला इत्यर्थ । तथा कृशा' ट । ३ 'स्यन्दोऽभिष्यन्दोऽक्षिरोग' । तथा दारु' ट । ४ 'लितार्धचक्षुष इत्यर्थ, ए' ट । 'न्मीलना इत्यथ, ए' ठ । ५ 'न्मील ।' ग घ । ६ 'न्मद्येन च पी' ट. । ७ अस्याग्रे 'अत्र शोधनप्रसङ्गे तु स्नेहन विना शोधनमिति यावत् ।' इति क्वचिदधिक पाठ. । ८ 'मेधाग्निका' आ अरुण स.द्ध । ९ 'स्यते । आदिशब्देनाग्निकाङ्क्षिणा स्वरायुवर्णादिकाङ्क्षिणा च ।' ड ।

**वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु ।**
**रूक्षक्लेशक्षमात्यग्निवातावृतपथेषु च ॥ १० ॥**
**शेषौ**

**स०**–वातादीना क्षीणधातुना प्रत्येक सम्बन्ध । वात-क्षीणधातुषु[1] एवमातपक्षीणधातुष्वित्यादि, शेषौ–घृततैलाभ्या-मुक्ताभ्यामन्यौ वसामज्जानौ, शस्येते । तथा रूक्षादिष्वपि[2], एव क्लेशसहेषु । अत्यग्निषु–महाग्निषु बलवदग्निष्विति द्रष्टव्यम्, अन्यथाऽल्पाग्निषु[4] स्नेहनिषेधात् पूर्वापरविरोध स्यात् । अथवा, अल्पाग्निष्वपि वसामज्जानावनुजज्ञे, अपवादवाक्यत्वादस्येति व्याख्येयम् । वातेनावृता पन्थान –छिद्राख्या[5], येषा तेषु च शस्येते शेषौ ।

**आ० र०**–वसामज्ज्ञोर्विषयमाह–वातातपेत्यादि । वाता-दिभि षड्भि क्षीणधातुषु । वातावृतपथो[6]–मारुतावरुद्ध-स्रोता । शेषौ–वसामज्जानौ ।

वसायास्त्वन्यदपि विशेषान्तरमाह—

**वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च ।**
**तथा दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि ॥ ११ ॥**

**स०**–तुर्विशेषे । च समुच्चये । रुजाशब्द प्रत्येक सम्बध्यते । सन्धिरुजास्वस्थिरुजास्वित्यादि । तथा दग्धरुज्याहत-रुजि[7] च, तथा भ्रष्टयोनिरुजीत्येव सम्बन्ध कार्य ।

**आ० र०**–वसाया विषयान्तरमाह–वसा त्वित्यादि । दग्ध –अग्निना । आहतो–दण्डादिना । भ्रष्टयोनि –स्थानच्यु-तयोनि. ।

[ईदानी कस्मिन्काले कस्य स्नेहस्योपयोग शस्त इति दर्शयन्नाह—][8]

**तैलं प्रावृषि, वर्षान्ते सर्पिरन्यौ तु माधवे ।**

**स०**–तैल प्रावृषि शस्यत इति सम्बन्ध । एवमुत्तरत्रापि योजनीयम् । स्वस्थस्य[10] स्नेहनार्थं सर्वस्यैव स्नेहस्य प्रसङ्गे नियमोऽय क्रियते–, तैल प्रावृष्येव, वर्षान्ते एव सर्पि., अन्यौ–वसामज्जानौ, माधव एवेति ।

**आ०र०**–स्नेहानां कालविभागमाह–तैलमित्यादि । प्रावृषि तैलम् । वर्षान्ते–शरदि, सर्पि । माधवे–वसन्ते, शेषौ ।

ननु, वर्षासु तैल[11] वर्षान्ते सर्पिर्वसामज्जानौ माधव इति योऽय नियम, स किञ्चिदपेक्ष्य वर्तते आहोस्विदनपेक्ष्य? इत्यस्मिन् पर्यनुयोग इदमाह—

**ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ ॥१२॥**

**स०**–साधारणे ऋतौ–श्रावणादौ, सशोधनात् पूर्व स्नेहनार्थं स्नेह[1]–सर्पिरादिश्चतुष्प्रकारोऽपि शस्त । तथा, अह्नि–वासरे[2], न निशि । तथा, विमले रवौ–जलदनीहारादिनाऽनाच्छादिते[3] खरांशौ । स्नेह इति सामान्यशब्दप्रयोगात् सर्वे स्नेह सर्पि-रादिश्चतुष्प्रकारो गृह्यते ।

**आ० र०**–यो यस्मिन्नृतावुक्त, स तस्मिन्[4] साधारणभागे विमले रवौ–निरभ्रे दिवसे, शस्त. । साधारणे–श्रावणचैत्र-कार्त्तिकेषु ।

**तैलं त्वरायां शीतेऽपि**

**स०**–त्वराया सत्या–व्याधिक्रिया प्रति प्राप्ते काले स्नेह-योग्यताया सत्याम्, शीते–हेमन्तशिशिराख्ये काले, तैल सशोधनात्पूर्वं स्नेहनार्थं शस्तम्, नान्य स्नेह । अपिशब्दान्न केवल वर्षासु, अवर्षासु च शस्तमित्यर्थ ।

**आ० र०**–व्याधिवशादकालेऽपि स्नेहन कार्यमित्याह–तैलमिति । त्वरायां–आत्ययिके कार्ये, शीतेऽपि स्नेहन कार्यम् । तच्च तैलेन ।

सर्वस्य स्नेहस्याह्न्युपयोगाद्रात्रावप्रयोग प्राप्त इत्याह—

**घर्मेऽपि च घृतं निशि ।**

**स०**–न केवल शरदि घृत प्रयुञ्जीत यावद्धर्मेऽपि[6] घृत नि-श्युपयुञ्जीत ।

**आ० र०**–ग्रीष्मेऽपि घृतेन । तच्च निशि ।

**निश्येव पित्ते पवने संसर्गे पित्तवत्यपि ॥ १३ ॥**

**स०**–न च घर्मे एव निश्युपयुञ्जीत, यावत्पित्ते कुपिते तज्जे[7] वा विकारे, तथा पवने कुपिते तज्जे वा विकारे स्नेहसाध्ये, घर्मे घृत निश्युपयुञ्जीत, न दिवा न च तैल वसामज्जानौ वा । तथा, पित्तवति–पित्ताधिके ससर्गे वातपित्ताख्ये श्लेष्मपित्ताख्ये कुपिते तज्जे वा विकारे स्नेहसाध्ये[8], घर्मे घृतमेव निश्युपयुञ्जीत । पित्ते पवन इत्येतत् दोषविकारोभयोपलक्षणार्थं वेद्यम् । पित्तव-तीति भूम्नि मतुप् ।

**आ०र०**–पित्तादिषु दिवास्नेहनस्यापवादमाह–निश्येवेति ।

**निश्यन्यथा वातकफाद्रोगाः स्युः पित्ततो दिवा ।**

**स०**–अन्यथा–उक्तप्रकारादपरेण प्रकारेण । यथा,–शीत-काले निशि घृतोपयोगात् वातकफाद्धेतो रोगा भवेयु । तथा, दिवा[9] घर्मे काले तैलोपयोगात् पित्तत –पित्तात्, रोगा स्यु । वसामज्ज्ञोस्त्वनिश्चितस्वरूपत्वात् न तूष्णकाले नापि[10] शीतकाले त्वराया सत्यामुपयोगस्तन्त्रकारेण दर्शित । तथा चोक्तम्– “यथासत्त्व तु शैत्योष्णे वसामज्ज्ञोस्तु निर्दिशेत् ।” इति ।

**आ० र०**–दिवारात्रिनियमस्य[11] त्यागे दोषमाह–निश्यन्य-थेति । येषा दिवा स्नेहनमुक्त, तेषा निशि करणे वातकफजा

१ ‘धात्वादिषु शेषौ–वसा’ ड । २ ‘रूक्षेषु क्ले’ ट । ३ ‘ष्व-ध्येवम् । वसायास्त्व’ ड । ४ ‘स्नेह्यत्वनि’ ट । ५ ‘स्रोता-ख्या’ ठ । ६ ‘पथेषु–मारुतावृतस्रोत सु ।’ क ख ग ञ । ७ ‘रुज्यादिषु च । तैल’ ड । ८ [ ] इति पाठ ट ठ ड पुस्तकेषु नोपलभ्यते । ९ ‘इत्यर्थ ।’ ट । १० स्नेहार्थं’ ट. । ११ ‘तैलमित्यादि योऽय’ ड. ।

१ ‘ह –तैलादिक श’ ट ठ । २ ‘निशायाम्’ ट । ३ ‘नाऽस्थगिते ख’ ट. । ४ ‘ते सूर्ये च, तेन खरा’ ठ । ‘ते सूर्ये च । त्वराया’ ड । ५ ‘तस्य सा’ घ झ । ६ ‘पि नि’ ट । ७ ‘पित्तजे वा’ ठ ड । ८ ‘ध्ये घृत’ ड. । ९ ‘वा अकाले तै’ ठ.ड. । १० ‘नातिशी’ ड । ११ ‘मत्यागे’ घ झ. ।

रोगा स्यु । येषां निशि स्नेहनमुक्त, तेषा दिवा करणे पित्तरोगा स्यु ।

कथं स्नेह उपयोज्य इत्याह—

**युक्त्याऽवचारयेत्स्नेहं भक्ष्याद्यन्नेन बस्तिभिः ॥१४॥**
**नस्याभ्यञ्जनगण्डूषमूर्द्धकर्णाक्षितर्पणैः ।**

स०–युक्ति –योग उपायलक्षण । युक्त्या–मात्राकालक्रियाभूमिदेहदोषस्वभावया[1], स्नेहं–सर्पिरादिकम्, अवचारयेत्–उपयुञ्जीत । केन सह ? इत्याह–भक्ष्याद्यन्नेन । आदिशब्देन भोज्यलेह्यपेयस्य त्रिविधस्याप्यन्नस्य ग्रहणम् । तथा, बस्तिभिर्नस्येनाभ्यञ्जनेन गण्डूषेण च स्नेहमवचारयेत् । मूर्द्धादीना तर्पणशब्देन प्रत्येक सम्बन्ध । तेन, मूर्द्धतर्पणेन–शिरोबस्त्याख्येन । तथा, कर्णतर्पणेन–कर्णपूरणाख्येन । तथा, अक्षितर्पणेन[2]–तर्पणपुटपाकविध्युक्तेन । भक्ष्य–शशाङ्ककिरणादि, तेन भक्ष्येण सह । आदिग्रहणादोदनादयो मुन्युक्ता गृह्यन्ते । तथा च मुनि (च सू अ. १३।२३)–"ओदनश्च विलेपी च रसो मास पयो दधि । यवागू सूपशाके[3] च यूष काम्बलिक खल ॥ सक्तवस्तिलपिष्टं च मद्य लेहास्तथैव[4] च । भक्ष्यमभ्यञ्जन बस्तिस्तथैवोत्तरबस्तय[5] ॥" इति । बस्तिभिरिति बहुवचनेन[6]निर्देशो बस्तित्रयग्रहणार्थं । तेन निरूहोऽन्वासन बस्तिरुत्तर इति ।

आ० र०–स्नेहदानप्रकारमाह–युक्त्येत्यादि । अवचारयेत्–दद्यात् । भक्ष्यादिभिरन्नै[7] सयोज्य बस्त्यादिप्रयोगेण[8] च ।

**रसभेदैककत्वाभ्यां चतुःषष्टिर्विचारणाः ॥ १५ ॥**
**स्नेहस्यान्याभिभूतत्वादल्पत्वाच्च क्रमात्स्मृताः ।**

स०–रसभेदश्चैककत्व च, ताभ्या रसभेदैककत्वाभ्या स्नेहस्यावचार्यमाणस्य चतु षष्टिर्विचारणा भवन्ति । रसभेदेन–"षट् पञ्चका षट् च पृथक्" (हृ सू अ १०।४३) इत्यादिग्रन्थनिर्दिष्टेन त्रिषष्टिसङ्ख्यावच्छिन्नेन सहोपयुक्तस्य स्नेहस्य, तथैककत्वेन–असहायेन केवलेन स्नेहेन सताऽस्य[9] स्नेहस्य चतु षष्टिर्विचारणा –स्नेहप्रयोगकल्पना । या एता भक्ष्याद्यन्नेन, तथा रसभेदेन मूर्धकर्णाक्षितर्पणेन[10] च । या एता क्रमात्–यथाक्रम निर्दिष्टा, ता कल्पना स्नेहस्यान्याभिभूतत्वात्[11] अन्येन–भक्ष्यादिना बहुना, तथा रसभेदेन सहोपयुक्तस्याभिभूतत्वात्, तथाऽल्पत्वात्–अल्पोपयोगित्वात्, मूर्द्धाक्षितर्पणादौ हि पान इव प्रभूतस्यावचारयितुमशक्यत्वाच्च विचारणा स्मृता । आयुर्वेदकर्तृभिरिति शेष ।

आ० र०–उक्तानां प्रकाराणां सञ्ज्ञामाह–रसभेदैककत्वाभ्यामिति । उक्तप्रकार स्नेहो विचारणासञ्ज । स च चतु षष्टिधा । तत्र भक्ष्याद्यन्नेन युक्तोऽन्नस्य मधुरादिरसभेदैस्त्रिषष्टिभेदत्वात्त्रिषष्टिधा । स चान्यै सयोगद्रव्यैरभिभूतत्वादल्पवीर्य । बस्त्यादिप्रयुक्तस्तु केवलत्वादेकधा । स चाल्पमात्रत्वादल्पवीर्य । अल्पवीर्यत्वाद्द्विविधोऽपि विचारणासञ्ज , तच्छक्तेर्विचारणाविषयत्वात् ।

**यथोक्तहेत्वभावाच्च नाच्छपेयो विचारणा ॥ १६ ॥**

स०–स्नेहस्याच्छस्य विचारणासञ्ज्ञात्वे न यथानिर्दिष्टो हेतु । तस्य यथोक्तस्य हेतोरभावात्–अविद्यमानत्वात्, योऽच्छपेयस्नेह –केवल एवं, न सयुक्त , नासौ विचारणा, केवलोपयोगित्वाद्बहूपयोगित्वाच्चेत्यर्थ । ननु, इह केवल स्नेहो न विचारणेत्युच्यते । प्राक्केवलस्यैव स्नेहस्य बस्त्याद्युपयोगे विचारणेत्यभ्यधायि । तदेतत्पूर्वापरव्याहतमिव मन्यामहे । नैतदस्ति । अच्छपेय इत्यस्य ह्ययमर्थ ,–अच्छ केवलो य स्नेह पीयते सा विचारणा न भवति । मूर्द्धादितर्पणादिना तु केवलस्य स्नेहस्य य उपयोग सा विचारणेति ।

आ० र०–अच्छपेयमाह–यथोक्तेति । यस्तु केवल पीयते स उद्भूतशक्तित्वान्न विचारणासञ्ज । अच्छ –केवल ।

**स्नेहस्य कल्पः स श्रेष्ठ॰ स्नेहकर्माशुसाधनात् ।**

स०–स –अच्छपेयाख्य , कल्प –प्रयोग , स्नेहस्य श्रेष्ठ –प्रशस्ततम । कुत ? इत्याह–स्नेहकर्माशुसाधनात्,–स्नेहकर्मणा–तर्पणमार्दवादीना शीघ्र सम्पादनात् ।

आ० र०–अच्छपेयस्य श्रेष्ठत्वमाह–स्नेहस्येति । कल्प –प्रयोग । स –अच्छपेय ।

अधुना स्नेहस्य त्रिविधमात्रालक्षणमधिकृत्याह—

**द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् १७**
**ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च ह्रसीयसीम् ।**
**कल्पयेद्वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् ॥१८॥**

स०–द्वाभ्यां यामाभ्या–प्रहराभ्या, या स्नेहस्य मात्रा प्रयुक्ता जाठरानलवशाज्जरा याति सा तस्य ह्रस्वा मात्रा, चतुर्भिर्यामैर्या जीर्यति सा तस्य मध्यमा मात्रा, अष्टाभिर्यामैर्या जीर्यति सोत्तमा मात्रा, क्रमात्–यथाक्रम, ता ह्रस्वमध्यमोत्तमा

१ 'भावाख्यया' ट । २ 'न–पुट' ट ठ ड । ३ 'शाकौ च' स च । ४ 'च लाजास्त' ठ । ५ 'स्तथा चोत्त' स च । ६ 'चनेन निरूहो' ड । ७–८ 'भक्तादि' 'दिक्रमेण च' क ख ञ । ९ 'स्याज्ञाभि' स ञ. चन्द्रनन्दन । १० 'सतस्तस्य स्ने' ट । ११ 'न तथा एता ' ड । १२ 'स्यान्नाभि' ठ ड । १३ 'अन्नेन रूक्षादिना ब' ड । १४ 'युक्त्याऽभि' ठ ड । १५ 'णाचै केवलैरवचा' ठ । 'णाचै पानाचै केवलैरवचा' ड. । १६ 'दस्य क' ट. ।

१ 'भक्ताद्य' क ख ञ । २ 'वीर्याख्य ' ख.ञ । ३ 'रणवि' घ ङ । ४ 'छपेये' आ.स स । 'च्छ. पेयो' ठ । ५ 'हस्य वि' ठ.ड । ६ 'त्वे यथा' ठ । 'त्वे यथानिर्दिष्टो हेतुर्नास्ति । तस्य' ड । ७ 'व, नासौ' ठ.ड । ८ 'ह्रस्योप' ट ड. । ९ 'सा च वि' ड । १० 'यलक्षणमा' ख ञ । ११ 'वल पी' ख.ग ञ. । १२ 'क्तिमत्वेन न वि' क ख ञ । १३ 'शस्तत' ट । १४ 'विध मा' ट. । १५ 'भ्या प्रह' ड. । १६ 'ह्रस्वमात्रा स्यात्, चतु' ट. ।

मात्रा । ताभ्यश्च–तिसृभ्यो मात्राभ्यो, ह्रसीयसी–अतिशयेन ह्रस्वा मात्रा कल्पयेत् । वैद्य इति शेष । ह्रस्वमध्योत्तमा इति निर्देशे "ड्याप्पो" इत्यादिना ह्रस्व । ह्रस्वा मात्रा यामद्वयजरणलक्षणा उक्ता, ततोऽप्यर्वाक्कालेन या जरा याति सा ह्रसीयसीति । दोषादीन्–दोषभेषजदेशकालबलशरीराहारसत्त्वसात्म्यप्रकृती, वीक्ष्य–आकलय्य, प्राक्–पूर्वमेव, अज्ञातकोष्ठे पुरुष उत्तममात्राविषये पूर्वं ह्रसीयसीं कल्पयेत् । ततो ह्रस्वां ततो मध्यमा तत उत्तमा च प्रकल्पयेत् । एव मध्यममात्राविषये ह्रसीयसीं, ह्रस्वमात्राविषयेऽपि ह्रसीयसी प्राक्कल्पयेत् । अन्यथा प्रत्यवायभय स्यात् । एवकारोऽवधारणे । तुशब्दो यथोत्तरमिति क्रमनिर्देशार्थं । सङ्ग्रहेऽप्युक्तम् ( सू अ २५ )– "अज्ञातकोष्ठे हि बहु कुर्याज्जीवितसशयम् ।" इति । इय ह्रस्वा इय ह्रस्वा इयमनयोरतिशयेन ह्रस्वा इति ह्रसीयसी । ह्रसीयसीत्यत्र ईयसुनि "स्थूलदूर" इत्यादिना वलोप । अन्यैस्तु पलद्वयपलचतुष्टयपलषट्कसङ्ख्यावच्छिन्ना मात्रा उक्ता । न चैतद्युज्यते । यतो जठरानलशक्तिमनपेक्ष्य स्नेहमात्रा प्रयुज्यमाना अनर्थायैव । अतोऽस्माभि पलद्वयादिसङ्ख्यावच्छिन्ना नोक्ता । मुनेरपि नैतन्मतम् । तद्ग्रन्थो हि ( च सू अ १३।२९ )–"अहोरात्रमह कृत्स्नमर्द्धाह च प्रतीक्षते । प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरा प्रति ॥" इति ।

**आ० र०–अच्छपेयस्य मात्रात्रयमाह–द्वाभ्यामित्यादि ।**

**अच्छपेयस्य चतुर्थीं मात्रामाह–ताभ्य इति । दोषादीन् वीक्ष्य ताभ्योऽपि ह्रसीयसीं–यामपरिणामिनीं मात्रां, परिकल्पयेत् ।**

**ह्रसीयसीमेव प्रथम योजयेदित्याह–प्रागेव तु ह्रसीयसीमिति । तत्र हेतुरुक्त सङ्ग्रहे ( सू अ २५ )–"अज्ञातकोष्ठे हि बहु कुर्याज्जीवितसशयम् ।" इति । मात्राणा विषयश्चोक्तस्तत्रैव ( सं. सू अ २५ )–"तत्र दुर्बलमन्दाग्निबालवृद्धसुखात्मकै । अपथ्यरिक्तकोष्ठैश्च ज्वरातीसारकासिभि ॥ ह्रस्वा पेया सुखा सा हि परिहारेऽनुवर्तते । चिर च बल्या न रुजे व्यापन्नाऽपि प्रकल्पते ॥ मेहारु पिटिकाकुष्ठवातशोणितपीडितै. । मध्यमा मृदुकोष्ठैश्च स्नेहनी स्यात्सुखेन सा ॥ न बलक्षपणी मन्दविभ्रंशा शुद्धयेऽप्यलम् । महादेहानलबलक्षुत्तृट्क्लेशसहिष्णुभि ॥ गुल्मोदावर्तवीसर्पसर्पदंशाभिपीडितै । उन्मत्तै कृच्छ्रमूत्रैश्च महती शीघ्रमेव सा ॥ सर्वमार्गानुसारेण जयेद्व्याधीन् सुयोजिता ।" इति ।**

अधुना शोधनशमनबृंहणभेदात्त्रिविधस्य स्नेहस्य कालमात्रालक्षणमधिकृत्याह—

**ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः ।**

**स०**–ह्यस्तनेऽन्ने–आहारे, जीर्ण एव–जीर्णमात्र एव न त्वन्नाभिलाषे सति, शुद्धये–शोधनार्थं, बहु –उत्तमया मात्रया, स्नेहोऽच्छ –केवल , पेयत्वेन शस्यते । सञ्जातबुभुक्षेण तु पीतो जाठरानलस्य दीप्तत्वाच्छोधनकार्यमकुर्वाणस्तद्योग्यता चानुत्पादयन्नाश्वेव जरामुपैति । वमनमपि बुभुक्षितस्य न सम्पद्यते, कफापचिते पूर्वोक्ताच्च हेतो । तस्माद्युक्तमुक्त 'ह्यस्तने जीर्ण एवान्ने' इति ।

**आ० र०–शोधनस्याच्छपेयस्य कालं मात्रां चाह–ह्यस्तन इति । जीर्ण एवान्ने–जरणसमनन्तरमेव, क्षुधितत्वस्य शमनकालत्वात् । शुद्धये–शुद्ध्यर्थम् । शुद्ध्यर्थत्व च स्नेहनद्वारेण, न साक्षात् । अत एवात्र तादर्थ्ये चतुर्थी । शमनबृंहणौ तु स्वय साधनत्वाच्छमनबृंहणशब्दाभ्यामुक्तौ । स्वय शोधनस्य तु स्नेहस्य विरेचनोक्तैव मात्रा । बहु –उत्तममात्र । सङ्ग्रहे तु ( सू अ २५ )–"वाते सलवण सर्पि पित्ते केवलमिष्यते । वैद्यो दद्याद्बहुकफे क्षारत्रिकटुकान्वितम् ॥" इति ।**

**शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥ १९ ॥**

**स०**–शमनो–यो रोगस्य शमनायोपयुज्यते स्नेह , स क्षुद्वतो–जातबुभुक्षस्य शस्यते, जाताया बुभुक्षाया न जीर्णमात्र एवान्ने शोधन इव । शमनो हि स्नेहो यत्रतत्रस्थ दोषं कुपितं सर्वशरीरव्यापित्वाच्छमनरूपत्वात् [ च ] शमयति । यदि पुनर्जीर्णमात्र एवान्ने स्नेहोऽयमबुभुक्षितस्यैवोपयुज्यते, तदानीं स्रोतसा कफाद्युपलेपानिवर्तनात् तत्सम्पृक्त स स्नेहो न सर्व शरीरं व्याप्नुते, अव्याप्नुवंश्च दोष न शमयेत् । तस्मात् क्षुद्वत एवायं शस्यते । स च मध्यममात्रया, अनन्न –केवल एव भक्ष्यादिनाऽऽहारेण रहित , अच्छ एव पेय इत्यर्थ । अत्र चोत्तमया मात्रया स्नेहपानदिनानन्तरं पथ्यं कार्यम् । पुन स्नेहप्रयोग । पुनरन्यस्मिन्नहनि पथ्य कार्यम् । मध्यममात्रया स्नेहपाने तु लघुभोजिनो याममात्रेऽन्नाकाङ्क्षा भवति । तदा च स्नेहोपयोगे रात्र्यारम्भे रात्रियामार्द्धे गते वा रसौदनप्राय भोजन भोज्यं मात्रयैव । ग्रन्थकारो हि शमने स्वल्पभोजनमेवानुजज्ञे । वक्ष्यति हि (श्लो २९)–"उपचारस्तु शमने कार्य स्नेहे विरिक्तवत् ।"

१ 'त्राभ्यश्च ह्र' ट । २ 'स्वा क' ठ ड । ३ 'णा, ततो' ठ ड । ४ 'गच्छति' ट । ५ 'ये ह्रसीयसी प्राक्कल्पयेत् । ततो ह्रस्वामनन्तर मध्यमामनन्तरमुत्तमाम् । एव' ट । ६ 'सी ह्यह क' ठ । 'सी ततो' ड । ७ 'मध्यामुत्तमा' ड । ८ 'थाऽतिप्र' ट । ९ 'ष्ठेषु व' ड । १० 'ना ह्रसादेश ।' ट. । ११ 'कोष्ठत्वज्व' स स । १२ 'चिराच्च व' घ झ स द्व । १३ 'विभ्रमा शु' क ख ग.ञ. । १४ 'तैर्मूत्रकृच्छ्रैश्च' घ झ. ।

१ 'न्नमात्र' ठ ड । २ 'कुर्वन् तद्यो' ठ । ३ 'नुपपाद' ठ । ४ 'एव–ज' ग घ झ. । ५ 'एव ताद' क ख ग झ ञ । ६ 'प्रायो द' ख ञ । ७ 'रोगशमकारी स्ने' ड । ८ 'ष सर्वशरीरव्यापित्वाच्छमयति' ड । ९ 'वाहारे स्ने' ट । १० 'म्पृक्तौ स' ट । ११ 'प्नुयात्' ट । १२ 'श्च त दो' ट । १३ 'एव । अत्र चो' ड । १४ 'नाविचारणाहारेण' ठ. । १५ 'च्छ पेय' ट । १६ 'पानानन्तर' ड. । १७ 'मात्रास्ने' ट ड । १८ 'नो न याम' ठ । 'नोऽर्द्धयाम' ड. । १९ 'रसौदन' ड. । २० 'रोऽपि श' ट. ।

इति । सुश्रुते चोक्तम् (चि अ ३१।३४)—"परिषिच्याद्भिरुष्णाभिर्जीर्णस्नेहं ततो नरम् । यवागूं पाययेदुष्णां सुक्थिन्नामल्पतण्डुलाम् ॥ पेयो यूषो रसो वा स्यादकृत' सौरभायुत । कृतौ वाऽल्पाल्पसपिष्कौ विलेपी वा विधीयते ॥" इति ।

आ० र०-शमनस्याच्छपेयस्य काल मात्रां चाह-शमन इति । अनन्न -अन्नसम्बन्धरहित , यावद्देप[न]जीर्यति तावन्न भोक्तव्यमित्यर्थ ।

**बृंहणो रसमद्याद्यैः सभक्तोऽल्पः**

स०-बृंहणः स्नेहो रसमद्याद्यै सह शस्यते । "रस इत्यविशेषोक्तौ ज्ञेयो मासभवो रस ।" इति तन्त्रान्तरोक्त्या रसशब्देन मासरसोऽत्र बोद्धव्य । आद्यशब्देन क्षीरखण्डादेर्द्रवरूपस्य ग्रहणम् । तथा, सह भक्तेन-ओदनादिना वर्तते इति सभक्तश्च शस्यते । एष च स्नेहोऽल्पो-हसीयसीतोऽपि मात्रातोऽल्प ।

आ० र०-बृंहणस्य काल मात्रा चाह-बृंहण इति । रसमद्याद्यैर्यथारुचि यथासात्म्य मिश्रित एष विचारणाख्य । सभक्तो-भोजनस्यादौ मध्येऽन्ते वा पीत । अल्प-अल्पमात्र ।

**हितः स च ।**
**बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ॥ २० ॥**
**स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु ।**
**मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ॥ २१ ॥**

स०-स च-स्नेहो, बालादिषु हित । बालादीनामितरेतरद्वन्द्व । पिपासार्ता -तृट्पीडिता । स्नेहद्विषो-ये स्वभावेनैव स्नेह द्विषन्ति । स्त्रीस्नेहयोर्नित्यशब्देन सम्बन्ध , स्त्रीनित्येषु स्नेहनित्येषु चेत्यर्थ । काले चोष्णे-ग्रीष्मादौ, कृशेषु च नरेषु हित ।

आ० र०-बृंहणस्य विषयमाह-हित स चेति । स्नेहद्विट्-स्नेहारोचकी । मद्यशीली-मद्यनित्य । स्नेहनित्यः-स्नेहशीली । सुखित -सुखी ।

स चोपयुक्त किं करोति ? इत्याह—

**प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्ध्वदेहजान् ।**
**व्याधीञ्जयेद्बलं कुर्यादङ्गाना च यथाक्रमम् ॥ २२ ॥**

स०-प्राक् च मध्य चोत्तर च प्राङ्मध्योत्तरम् । प्राङ्मध्योत्तर भक्त यस्मिन्स्नेहे स एवम् । तेनायमर्थ ,-भक्तस्यादावुपयुक्तोऽसौ स्नेहोऽवोदेहजान् व्याधीन् जयेत, मध्य उपयुक्तो मध्यदेहजान्, भक्तस्योपर्युपयुक्त ऊर्ध्वदेहजानिति यथाक्रमम् । तथा, अङ्गाना-शरीरावयवानामधोमध्योर्ध्वसञ्ज्ञकानां, बलं कुर्यात् । इद चोक्तम्-"मारुतेऽभ्यधिके सर्पि सदा सलवणं हितम् । केवल त्वधिके पित्ते, कफे सव्यूषण तथा ॥" इति ।

आ० र०-बृंहणस्यैव प्रागभक्तादिभेदेन विषयमाह-प्राङ्मध्येति ।

**वार्युष्णमच्छेऽनु पिबेत् स्नेहे तत्सुखपक्तये ।**
**आस्योपलेपशुद्ध्यै च, तौवरारुष्करे न तु ॥ २३ ॥**
**जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ।**
**तेनोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिः ॥ २४ ॥**

स०-अच्छे-अच्छपेये, स्नेहे-उत्तममध्यमहस्वमात्रोपयोजिते, अनु-पश्चात्, उष्ण वारि पिबेत् । किमर्थम् ? तत्सुखपक्तये,-तस्य-स्नेहस्य, सुखपक्ति -सुखेन पाक', तदर्थम् । तथा, आस्योपलेपशुद्ध्यै च-स्नेहलिप्तस्य मुखस्य शुद्धिनिमित्त च । तौवरारुष्करे न तु-तुवरतैले भल्लातकतैले चाच्छपेयेऽप्युष्णोदकं न पिबेत्, तयोरत्युष्णवीर्यत्वादिति भाव । तुवरस्याय विकार स्नेहस्तौवर । तस्य विकार इत्यण् । एवमारुष्करे च । चिरपीते च स्नेहे जीर्णाजीर्णे प्रति सशये सति भूयोऽप्युष्ण जल पिबेत् । अनुपानापेक्ष पुनर्ग्रहणम्, न वीप्सार्थम् । तेन-उष्णोदकपानेन, उद्गारस्य विशुद्धिर्भवेत् । ततश्च-जीर्णाजीर्णविशङ्कात , अधिकमङ्गलाघव रुचिश्च स्नेहपायिन स्यात् । सङ्ग्रहेऽन्यदप्युक्तम् (सू अ २५) । यथा-"ततो गुरुप्रावरणो निर्वाते शयने स्थित । जरणान्त प्रतीक्षेत तृष्यन्नुष्णाल्पवारिप ॥ शिरोरुग्भ्रमनिष्ठीवमूर्च्छासादारुचिक्लमै । जानीयाद्भेषजं जीर्यज्जीर्णं तच्छान्तिलाघवात् ॥ अनुलोमानिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभि ।" इति ।

१ 'ष्णामक्थि' ठ । 'ष्णा काम क्थिन्नाल्प' स सु । २ 'देयौ यूषरसौ वाऽपि सुगन्धी स्नेहवर्जितौ ।' स सु । ३ 'कृतो वा० पिष्को'ट । ४ 'वाऽप्यल्प' ठ । 'वाऽल्पल्प' स सु । ५ 'यवागूर्वा' स सु । ६ 'वत्स्नेहो जी' घ झ । ७ 'षोक्तिर्ज्ञेयो' ठ । 'षोक्ति ज्ञे' ड । ८ 'आदिग्रहणाद्भक्ष्यसूपादीना परिग्रह । स च सभक्त -सह भक्तेनान्नेन वर्तते । यद्यपि चात्रादिग्रहणादत्र मध्येऽन्तर्भूत, तथाऽप्युत्तरार्धे पुन सभक्त इति निर्दिष्टम् । यथा यौ स्नेहावेतौ संशोधनशमनसञ्ज्ञकौ प्राङ्निर्दिष्टौ न तौ सभक्तावुभावपि अन्नकालस्याशासितस्यापि कर्तुं नावसर , किमुत दिवा शमनस्यापि स्नेहस्य मध्यमात्रोपयोजनात् । कृत्स्नेन दिवसेन जरणात् सायप्रातर्निरूपितयोरन्नकालयो कर्तुं नावसर । तस्मादन्नत सभक्तो भक्तशब्देनात्रान्नकाल उपलक्षित इत्येषोऽर्थ ।" इति चन्द्र । ९ 'सह भक्तेन श' ठ ड । १० 'तो मात्रातो हसीयसीमात्राप्रमाण ।' ठ ड । ११ 'हितश्च स ।' ठ ड । १२ 'भावात् स्नेहान् द्वि' ड. । १३ 'च नारीनरेषु च हि' ट ।

१ 'क्रम चाङ्गा' ट । २ अस्याग्रे "मूर्च्छा दाहोऽरतिस्तृष्णा जृम्भा मोहभ्रमक्लमा । भवन्ति जीर्यति स्नेहे जीर्णे. स्याच्चैः शम गतै ॥" इति आ पुस्तकेऽधिक श्लोक । ३ 'सुखपाकार्थम् ।' ड । ४ 'प्रस्यास्यशु' ट ठ ड । ५ 'च । तुवर' ट ड । ६ तौवरवर्णन ग्रन्थस्यास्योत्तरतन्त्रे (अ ३९।८४) द्रष्टव्यम् । 'तुवरक -पश्चिमसमुद्रभूमिषु पलाशानुकारी वृक्ष ' इति डल्हण । ७ 'रेऽपि ।' ट । ८ 'भूय उष्ण' ठ ड. । ९ ततश्चेति उद्गारविशुद्धिनन्तरमित्यर्थ । 'ततश्च-जीर्णाजीर्णविशङ्कात ' इत्यरुणदत्तेन्दुव्याख्यान न समीचीनम् । १० 'रणे नि' ट । ११ 'वातशयनस्थित.' स.द. । १२ 'च्छींदाहारु' ट.ठ. । १३ 'दारतिक्लं' ड.स.द. ।

आ० र०—अच्छपेयस्यानुपानमाह—वार्युष्णमिति ।

तुवरभल्लातकस्नेहयोरुष्णोदक[1] निषेधति—तौवरारुष्करे नत्विति । उक्तं हि सङ्ग्रहे ( सू अ २५ )—"तौवरारुष्करे न तु । उष्णोपचार स्नेहे स्यादुष्णो[2] ह्युष्णैर्विरुध्यते ॥" इति ।

यथाकालमजीर्यति स्नेहे पुनरुष्णोदकपानमाह—जीर्णाजीर्णेति ।

तस्य फलमाह—तेनोद्गारविशुद्धिरिति । जीर्णाजीर्णलक्षणमुक्तं सङ्ग्रहे ( सू अ २५ )—"ततो गुरुप्रावरणो निर्वाते[3] शयने स्थित । जरणान्तं प्रतीक्षेत तृष्यन्नुष्णाल्पवारिप ॥ शिरोरुग्भ्रमनिष्ठीवमूर्च्छासादारुचिक्लमै[4] । जानीयाद्भेषज जीर्यज्जीर्णं तच्छान्तिलाघवात् ॥ अनुलोमानिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभि[5] ।" इति ।

मात्रामाह—

**भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि । द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥ २५ ॥**

स०—भोज्यो—भोजयितव्यो नर । किं तत्? अन्नम् । किम्भूतम्? द्रवोष्णम् । अत्र चोभयथा समास,—द्रवेण—मुद्गयूषादिना सहोष्णमन्न द्रवोष्णम्, तथा केवलं द्रव च तदुष्ण च द्रवोष्णं[6] विलेप्यादिक केवलमेव, इति । तथा, अनभिष्यन्दि—नं[7] कफकृत् । तथा, नातिस्निग्ध—ईषत्स्निग्धमित्यर्थ[8] । तथा, असङ्कर—असङ्कीर्णम्, अपथ्येनामिश्रितमित्यर्थ । क पुरुष किं कुर्वन्नीदृशमन्न[9] मात्रया भोज्य? इत्याह—श्व स्नेह पास्यन्—पातुमिच्छन् । तथा, तस्मिन्नेव दिने स्नेह पिबन् । तथा, पीतवानपि य स्नेहम् । अपि समुच्चये । ननु, "मात्राशी सर्वकाल स्यात्" ( हृ सू अ ८।१ ) इति प्रागुक्तमेव । तत्किमिह पुनर्मात्राग्रहणेन? ब्रूम । मात्राशब्दस्तत्र प्रमाणार्थ, इहं[10] त्वल्पार्थ । तेनायमर्थ,—यावदन्नमस्य सम्यग्यथाकाल परिणमति तावतोऽप्यन्नादनेन स्वल्प भोज्यमिति ।

आ० र०—स्नेहनप्रयोगे भोजननियममाह—भोज्योऽन्नमिति । भोज्यो—भोजयितव्य. । मात्रया—अल्पमानेन । श्व पास्यन्—स्नेहपानात्पूर्वदिने । पिबन्—यावन्ति दिनानि स्नेह पिबति[11] तावन्ति । पीतवान्—समाप्ते स्नेहपाने तावन्त्येव दिनानि । असङ्कर—नानाजातीयभक्ष्यादिसङ्कररहितम् ।

**उष्णोदकोपचारी स्याद्ब्रह्मचारी क्षपाशयः । न[12] वेगरोधी व्यायामक्रोधशोकहिमातपान् ॥ २६ ॥**

**प्रवातयानयानाध्वभाष्यात्यासनसंस्थितीः[1] । नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च ॥ २७ ॥ यान्यहानि पिबेत्तानि तावन्त्यन्यान्यपि त्यजेत् ।**

स०—तथा, असौ स्नेहस्य पाता उष्णोदकोपचार्यादि[2]गुणयुक्त स्यात् । उष्णोदकमुपचरितु सेवितु—शीलमस्य स एवम् । तथा, ब्रह्मचारी—ललनासङ्गरहित । क्षपाशय इति "अधिकरणे शेते" इत्यच् । क्षपाशय इत्यनेन दिवास्वप्नस्य रात्रिजागरणस्य च निषेध । स्नेह पिबति यावन्त्यहानि[3], तान्यपर तावत्सङ्ख्यानि[4] स्नेहपानरहितान्यप्यहानि यावत् व्यायामादीस्त्यजेत् ।

आ० र०—स्नेहनप्रयोगे विहारनियममाह—उष्णोदकोपचारी स्यादिति । उपचार—स्नानपानादि । व्यायामादीस्त्यजेत् । यानयान—अश्वादिना गमनम् । संस्थिति—ऊर्ध्वतयाऽवस्थानम् । नीचमत्युच्च वा[5] उपधान—उच्छीर्षकम् ।

**सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः ॥ २८ ॥**

स०—सर्वकर्मसु—वमनविरेचनादिषु, अय—"उष्णोदकोपचारी स्यात्" इत्यादिक, क्रमो—विधिरित्यर्थ । यापनादिष्विह स्वप्नाजीर्णवर्ज्यो नाय विधिरिति प्रदर्शनार्थं प्रायोग्रहणम् । व्याधिक्षीणेषु च प्रायोऽयमेव विधि । अत्राप्यतीसारादिष्विह स्वप्नादीनामनुज्ञानात् प्रायोग्रहणम् ।

आ० र०—स्नेहनोक्तमुष्णोदकोपचारादि[6]नियम स्वेदनादिषु व्याधिक्षीणेषु चातिदिशति—सर्वकर्मस्विति ।

**उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत् ।**

स०—तुर्व्यतिरेके । शमने स्नेहे[7] तूक्तयुक्तं उपचारो—भोजनादिविधि, विरिक्तवत् कार्य,—यथा विरिक्तस्य[8] पेयादिक्रमस्तथा[9] तस्यापीत्यर्थ ।

आ० र०—शमनस्नेहे[10] विरिक्तोपचारमतिदिशति—उपचारस्त्विति । विरिक्तवत्—पेयादिक्रमेण[11] । उपचारो—भोजनादिविधि. । सङ्ग्रहे तु स्नेहपानस्य पूर्वाङ्गमुक्तम् । ( सू अ २५ )—"स्नेहस्य पानात्पूर्वं च[12] दातव्य मृदु भेषजम् । उत्तेजन हुताशस्य कोष्ठ[13]लाघवकारि च ॥" इति ।

**त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ॥ २९ ॥ सम्यक्स्निग्धोऽथवा यावदत. सात्म्यी भवेत्परम् ।**

स०—मृदौ कोष्ठे सति पुरुषस्त्रिदिनमच्छ स्नेहं पिबेत् । क्रूरकोष्ठे सप्ताह पिबेत् । मध्य[14]कोष्ठस्त्वत एव लक्षणाद्[15]विगम्यते ।

१ 'ष्णोपचार नि' घ झ. । २ 'णोऽत्युष्णै' क ख घ ञ । ३ 'वातशयनस्थित' स ह । ४ 'दारतिक्र' स ह । ५ 'तद्धन्ति' ग । ६ 'ष्ण पेयादिक' इति क्वचित् । ७ 'अकफ' ट ड । ८ 'ग्ध—अर्थादीषत्स्निग्धम् ।' ट । ९ 'दृगन्न' ठ । १० 'इहाल्पाल्पार्थ' ट । ११ 'बति । पीत' क ग. । १२ "व्यायामवेगसरोधशोकवर्षहिमातपान् ।" स ह ।

१ 'व्याभ्यासन' ख चन्द्र । 'व्यात्यशन' ङ स मू । 'त्याशन' झ ञ । २ 'चारी स्यात्' ट । ३ 'नि तावन्त्यन्यान्यपि स्नेहपानरहितानि व्या' ट । ४ 'ङ्ख्यान्यन्यानपि स्ने' ठ । ५ 'वा यदुप' क ग घ झ । ६ 'दिसेवन स्ने' क ख ञ । ७ 'हे उप' ट ठ ड । ८ 'रिक्ते पे' ट । ९ 'याऽत्रापी' ट । १० 'मने स्ने' ग घ । ११ 'ण । सङ्ग्र' घ झ । १२ 'च पातव्य' क ख ञ । 'च कर्तव्य' ग । १३ 'कोष्ठे ला' क ख ञ । १४ 'मध्ये कोष्ठे चत्वार्यहानीति । अथवा' ङ. । १५ 'दवगम्य' ट. ।

यथा,–चलार्यहानि पञ्च वा स्नेह पिबेदिति । यदि च [ मृदुकोष्ठे ] त्र्यहेण सम्यक्स्निग्धलक्षण न स्यात् तदा चतुष्पञ्चरात्रमपि स्नेह पिबेत् । मध्यकोष्ठस्तु षड्रात्रमपि पिबेदित्याह–सम्यक्स्निग्धोऽथवा यावदित्यादि । अथवा नैष नियम, सम्यक्स्निग्धलक्षणोत्पत्तिरेव नियम । अत सप्ताहादप्यूर्ध्वमच्छ स्नेह पेयो यावत्स्निग्धलक्षण स्यात् । अत पर स्नेह सात्म्यी भवेत् । सात्म्यीभूते च स्नेहे यो दोष स सङ्ग्रहे कथित । यथा ( सू अ २५ )–"सात्म्यीभूतो हि कुरुते न मलानामुदीरणम् । अतियोगेन वा व्याधीन् यथाऽम्ब्वोघोऽतियोजनात् ॥" इति । यदि तु सप्ताहेनापि स्निग्धलक्षण नोत्पद्यते तदा दिनमेक विश्रम्य पुन स्नेहो योज्य इति सद्वैद्या ।

**आ० र०–अच्छपेयस्य पानावधिमाह–त्र्यहमित्यादि । मृदौ कोष्ठे त्रिदिनम्, क्रूरे सप्तदिनम्, यावद्वा स्निग्धलक्षणोत्पत्तिर्मृदौ क्रूरे च ।**

अवध्यतिक्रमे दोषमाह–अत इति । सात्म्यीभूतस्य दोषत्वमुक्तं सङ्ग्रहे ( सू अ २५ )–"सात्म्यीभूतो हि कुरुते न मलानामुदीरणम् । अतियोगेन वा व्याधीन् यथाऽम्ब्वोघोऽतियोजनात् ॥ निर्हृत्य सेतु मृत्कोष्ठात् स्रवति क्षपयन्मृदम् । स्नेहोऽप्यग्नि तथा हत्वा स्रवति क्षपयस्तनुम् ॥" इति ।

**वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् ॥३०॥**
**स्नेहोद्वेगः क्लमः सम्यक्स्निग्धे, रूक्षे विपर्ययः ।**
**अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः ॥ ३१ ॥**

**स०**–सम्यक्स्निग्धे पुरुषे वातानुलोम्यादि क्लमान्त लक्षण भवति । वर्च –शकृत्, स्निग्ध तथाऽसहत–शिथिलम् । रूक्षे–अस्निग्धे, विपर्ययो–वैपरीत्यम् । अतिस्निग्धे तु–स्नेहस्यातियोजनात्, पाण्डुत्वादयो भवन्ति । स्रवशब्दस्य घ्राणादिभि प्रत्येक सम्बन्ध ।

**आ० र०–सम्यक्स्निग्धलक्षणमाह–वातानुलोम्यमिति । "मृदुस्निग्धाङ्गता लाघव विमलेन्द्रियता च" इत्यधिक सङ्ग्रहे ( सू अ २५ ) ।**

**अस्निग्धलक्षणमाह–रूक्ष इति । विपर्ययो–वातप्रातिलोम्यादि ।**

अतिस्निग्धलक्षणमाह–अतिस्निग्ध इति । पाण्डुत्व–पाण्डुरोग । सङ्ग्रहे तु ( सू अ २५ )–"गुददाहारुचिच्छर्दिमूर्च्छातृष्णाप्रवाहिका । शुक्तोद्गारभ्रमश्वासकासा. स्नेहातिसेवनात् ॥" इति ।

**अमात्रयाऽहितो काले मिथ्याहारविहारतः ।**
**स्नेहः करोति शोफार्शस्तन्द्रास्तम्भविसंज्ञताः ॥३२॥**
**कण्डूकुष्ठज्वरोत्क्लेशशूलानाहभ्रमादिकान् ।**

**स०**–अमात्र पीत स्नेह –सर्पिरादि, शोफादीन् करोति । आदिशब्देन बलक्षयजाड्यवाग्ग्रहादय सङ्ग्रहोक्ता गृह्यन्ते । अहितो–यो यस्य प्रतिषिद्ध स्नेह । तथा, अकाले–ग्रीष्मादौ पूर्व प्रतिषिद्धे । तथा, मिथ्याहारतो–"द्रवोष्ण" इत्यादिविपर्ययेण । तथा, मिथ्याविहारत –"उष्णोदकोपचारी स्यात्" इत्यादिविपर्ययेण ।

**आ० र०–मिथ्यास्निग्धलक्षणमाह–अमात्रयेति । अहित –अनुचित । सङ्ग्रहे तु ( सू अ २५ )–"जठरेन्द्रियदौर्बल्यजाड्यामस्तम्भवाग्ग्रहान् । तास्तान् स्वदोषहेतूत्थान् पाण्ड्वादींश्चातियोगजान् ॥" इति ।**

**क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् ॥ ३३ ॥**
**तक्रारिष्टखलोद्दालयवश्यामाककोद्रवम् ।**
**पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु ॥ ३४ ॥**
**यथास्व प्रतिरोगं च स्नेहव्यापदि साधनम् ।**

**स०**–स्नेहव्यापदि–स्नेहविधिविभ्रंशे सति, क्षुत्तृष्णादि साधन–चिकित्सा । क्षुत्तृष्णानिग्रहा क्षुत्तृष्णाशब्देनोक्तौ । उल्लेखन–वमनम् । रूक्षशब्दस्य पानादिभिस्त्रिभिर्योग । तक्राणि चारिष्टाश्चेत्येव समास । खलो–व्यञ्जनविशेष प्रागुक्त । उद्दाल–शालिविशेष । यथास्व–दोषानुगुण्येन, प्रतिरोग–यद्यस्मिन् रोगे स्वे स्वेऽध्याय उक्त तत्, तदपि साधनम् ।

**आ० र०–अतिस्निग्धमिथ्यास्निग्धयोश्चिकित्सितमाह–क्षुत्तृष्णोल्लेखनेत्यादि । उल्लेखन–वमनम् । रूक्ष पानादित्रयम् । उद्दालो–वनकोद्रव. । प्रतिरोग यथास्व च–यस्मिन् रोगे यदुक्त तदपि, कुर्यात् ।**

स्नेहव्यापत्साधनस्य विरूक्षणस्वभावत्वात् प्रसङ्गेन विरूक्षणस्य सम्यक्कृतातिकृतलक्षणमाह—

**विरूक्षणे लङ्घनवत्कृतातिकृतलक्षणम् ॥ ३५ ॥**

१ 'ह्यादूर्ध्व' ट. । २ 'यथाऽम्भो ह्यति' ट झ स मू । 'थाऽम्भो वाऽति' क ख ञ. । अम्ब्वोघो–जलवेग । ३ 'स्निग्धलक्षणानुत्पत्ते र्दिन' ड । ४ 'म्य तत स्ने' ठ ड । ५ 'भूते दोष उक्त सङ्ग्र' क । 'भूते दोषमाह–सात्म्यीभूतो हीति । सम्यक्स्निग्ध' ग । ६ 'विहत्य' घ झ स द्व. । ७ 'पयेन्मृ' ख ञ । ८ 'मृदुस्निग्धाङ्गता ग्लानि. स्नेहोद्वेगोऽथ ( 'गोऽङ्ग' अ । ) लाघवम् । विमलेन्द्रियता सम्यक्स्निग्धे रूक्षे विपर्यय. ॥' अ आ स द्व । ९ 'ण्डुत्वघ्रा' घ झ. । १० 'समास ।' ठ ड । ११ 'ताऽङ्गला' क । 'ता ग्लानि ला' ग ।

१ 'शुष्कोद्गा' क ग घ झ स मू । 'स्निग्धोद्गा' ख ञ । शुक्तोद्गारो–विदग्धाम्लोद्गार । २ 'हृबलक्षयान्' अ ख ञ. । ३ 'पूर्वप्र' ट । ४ 'त्र्याम्लेहस्य ल' ख ञ. । ५ 'म्भसम्भवान्' आ । 'ड्यस्तम्भभवान् गदान्' अ । 'म्भसङ्ग्रहान्' ख ञ । 'म्भजान् गदान्' ग । ६ 'योजनात्' स द्व । ७ 'खन स्वेदो रूक्ष पा' अ । ८ 'रिष्ट ख' अ । ९ 'द्रवा.' अ आ क स द्व. । १० 'न प्रोक्तौ' ट. । ११ 'तक्र चारिष्टश्चे' ट । १२ 'रोगमिति यस्मि' क ख.ञ ।

स०-विरूक्षणे सम्यगुत्पन्ने तथाऽत्यर्थोत्पन्ने च लङ्घनवत् कृतातिकृतलक्षण ज्ञेयम् । कृत चातिकृत च कृतातिकृते, तयोर्लक्षण कृतातिकृतलक्षणम् । कृतशब्देन सम्यक्कृतमुच्यते । विरूक्षणायोगलक्षण तु स्नेहातियोगलक्षणेनैवोक्तम् । तत्र सम्यक्कृतस्य लङ्घनस्य यल्लक्षण विमलेन्द्रियतादि तदेव सम्यग्विरूक्षणे कृते लक्षण बोध्यम् । तथा, अतिकृते विरूक्षणेऽतिलङ्घितस्य लक्षण कार्श्यादिक वेद्यम् ।

आ० र०-स्नेहव्यापद्युक्तविरूक्षणस्य सम्यग्योगातियोगलक्षणमाह-विरूक्षण इति । लङ्घनवत्-लङ्घनस्य सम्यग्योगे "विमलेन्द्रियता" इत्यादि, अतियोगे "अतिकार्श्य" इत्यादि । कृत-सम्यग्योग । अतिकृत-अतियोग । सङ्ग्रहे तु ( सू. अ २५ )-"स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतरीकृत । स्नेहमाशु जरां नीत्वा पुनरोजोऽभितश्चरन् ॥ उदीरयेत्सोपसर्गां पिपासामस्य चाधिकाम् । सोऽसूस्त्यजेद्यद्युदक न पिबेदाशु शीतलम् ॥ शीतसेकावगाहाश्च तत्तृष्णापीडितो भजेत् । स्नेहाग्निना दह्यमान स्वविषेणेव पन्नग ॥ अजीर्णे बलवत्यां तु शीतैर्दिह्याच्छिरोमुखम् । छर्दयेत्तच्छान्तौ च पीत्वा शीतोदक पुन ॥ रूक्षान्नमुल्लिखेद्भुक्त्वा तादृश्या तु कफानिले । समदोषश्च नि शेष स्नेहमुष्णाम्बुनोद्धरेत् ॥ ततो दोषादिबलत पूर्वोक्त च विधि श्रयेत् । न सर्पि. केवल पित्ते देय सामे विशेषत ॥ सर्वं ह्यनुरुजेद्देह हत्वा सञ्ज्ञां च मारयेत् ।" इति ।

**स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरेत् ।**
**स्निग्धस्त्र्यहं स्थितः कुर्याद्विरेकं, वमनं पुनः ॥ ३६ ॥**
**एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ।**

स०-स्निग्धश्चासौ द्रवोष्णधन्वोत्थरसश्च, त भुङ्क्ते य स स्निग्धद्रवोष्णधन्वोत्थरसभुक् । धन्वोत्थरसो-जाङ्गलदेशमाससमुद्भूतो रस , त भुञ्जान. स्वेदमाचरेत् । मासरसस्य स्वभावत एव स्निग्धद्रवत्वात् स्निग्धद्रवग्रहणमधिकयोगायेति वेद्यम् । उष्ण-उभयथा वीर्यतोऽग्निसंयोगाच्च । एवम्भूत पुरुष पूर्वं स्निग्धोऽनन्तरं स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् दिनत्रय स्थित सन् विरेक कुर्यात् । वमन पुनरिति । यदा तु स्नेहादनन्तर वमनमेवोपयुङ्क्ते तदैकाहमनेनैव प्रकारेण स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् स्थितोऽन्यच्च दिन-द्वितीयमह , कफमुत्क्लेश्य-स्थानात् प्रच्याव्य, स्थितो वमन कुर्यात् । कैरुत्क्लेश्य ? तत्करै ,-कफकरणहेतुभिर्माषक्षीरैर्मत्स्यगुडादिभि । तत्करैरिति कृञो हेत्वादिना हेतौ ट ।

आ० र०-स्निग्धस्य समनन्तरमेव स्वेद कार्य इत्याह-स्निग्धद्रवोष्णेति । स्निग्ध पुरुषोऽनन्तरमेव स्वेदमाचरेत् । स्वेदे च क्रियमाणे स्निग्धद्रवोष्णमन्न जाङ्गलमासरसं च भुञ्जीत ।

स्निग्धस्य त्रिदिन विश्रान्तस्य विरेचन कार्यमित्याह-त्र्यहमिति ।

स्निग्धस्य ह्यह विश्रान्तस्य वमनं कार्यमित्याह-वमनमिति । स्निग्ध एकाह विश्रान्तो द्वितीये दिने कफकरै. कफमुत्क्लेश्य तृतीये वमन कुर्यात् ।

**मांसला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ॥ ३७ ॥**
**स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत्ततः ।**
**संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ॥ ३८ ॥**

स०-मासलत्वादियुक्ता पुरुषा ये शोध्यत्वेन स्नेहयितुमभीष्टा , तान् पूर्वं-प्रथम, रूक्षयेत् । ततो-रूक्षयित्वाऽनन्तरं, सस्नेह्य शोधयेत् । किमेव स्यात् ? इत्याह-एव स्नेहव्यापन्न जायते । मासला -उपचितमासा । मेदुरा -मेदस्विन ।

आ० र०-मासलादीनां विरूक्षणपूर्वक स्नेहन कार्यमित्याह-मासला इति । स्नेहोचिता -स्नेहसात्म्या ।

**अलं मलानीरयितुं स्नेहश्चासात्म्यता गतः ।**

स०-न केवल स्नेहव्यापदेव न स्यात् । यावत् स्नेहोऽसात्म्यता गत सन् मलान्-वातादीन् पुरीषादींश्च, ईरयितुं-प्रेरयितुं, अल-पर्याप्त ।

आ० र०-पूर्वस्नेहापनयने युक्तिमाह-अलमित्यादि । स्नेहोचितस्य स्नेहसात्म्यत्वादनुत्क्लेशनमित्यर्थ । अत एवान्यत्र स्नेहनस्य पाचनपूर्वकत्वमुक्तम् । पाचन हि रूक्षणमेव ।

**बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ॥ ३९ ॥**
**योगानिमाननुद्वेगान् सद्यःस्नेहान् प्रयोजयेत् ।**

स०-बालादिषु तथा य स्नेहविषये परिहार-शीतोदकादि, तमसहिष्णुषु-अक्षमेषु, सद्य स्नेहाख्यानानुद्वेगान्-अनुद्वेजकान्, एता(इमा)न्-वक्ष्यमाणान्, योगान् प्रयोजयेत् ।

१ 'क्षणेऽयोग' ट. । २ 'अतिलङ्घिते यल्लक्षण कार्श्यादि तदेव विरूक्षणेऽतिकृते लक्षण वेद्यम्' ट । ३ 'त-सम्य' क ख घ झ ञ । ४ 'तीव्रत' स ह्र. । ५ 'जोन्वित' घ झ । ६ 'स्य बाधि' स स । ७ 'गाहान् वा त' घ झ स ह्र । ८ 'भवेत्' ख ग ञ. । ९ 'अजीर्णेव' घ स मू । १० 'वत्याशु शी' क.ख झ ञ. । 'वत्यग्नौ शी' ग । अजीर्णे स्नेहे, बलवत्या पिपासायामिति सम्बन्ध । ११ 'शान्ते च' ख ञ । १२ तादृश्या-बलवत्या पिपासायाम् । १३ 'पूर्वोक्ताश्च विधीश्चरेत्' ख.ञ । १४ 'केवले' ग । १५ 'त्ते पेय' स ह्र । १६ 'नुरुज देह' क स मू । 'नुव्रजेद्देह' स स । १७ 'चरन्' क ख । १८ 'स । मास' ट । १९ 'वत्वग्रहणमतियो' ट. । २० 'ष्ण-वीर्य' ड. । २१ 'चरेत् । दि' ट.ठ. ।

१ 'काह-एकमेवेत्यवधारणे । स्नेहद्रवो' ड. । २ 'कैनोत्क्ले' ट. । ३ 'क्षीरेक्षुगुडा' ट । 'क्षीरगुडा' ठ ड । ४ 'स्य एकाह' क । ५ 'पूर्वं स्ने' ख.झ.ञ. । 'स्नेहोचितस्य स्नेहाप' ग. । ६ 'स्निग्धस' ग.घ.झ । ७ 'हपरिहार-शीतोदकादिं, असहि' ड. । ८ 'यय: प' ठ. । ९ परिहार.-त्याग ।

आ० र०-बालादिषु सद्य स्नेहन कार्यमित्याह-बालेत्यादि। इमान्-वक्ष्यमाणान्। अनुद्वेगान्-सुखसेव्यान्।

कास्तान्? इत्याह—

**प्राज्यमांसरसास्तेषु, पेया वा स्नेहभर्जिता॥ ४०॥**
**तिलचूर्णश्च सस्नेहफाणितः, कृशरा तथा।**
**क्षीरपेया घृताढ्योष्णा, दध्नो वा सगुडः सरः॥४१॥**
**पेया च पञ्चप्रसृता स्नेहैस्तण्डुलपञ्चमैः।**
**सप्तैते स्नेहनाः सद्यः, स्नेहाश्च लवणोल्बणाः॥ ४२॥**

स०-तेषु-बालादिषु, प्राज्यमासरसा -प्रभूतमांसानि निष्क्वाथ्य तद्रसा। तथा, स्नेहभर्जिता पेया। तथा, तिलचूर्ण -पललाख्य, सस्नेहफाणित -[स्नेहेन-] सर्पिरादिना युक्त, फाणितेन-क्षौद्रगुडविकारविशेषेण च युक्त। तथा, कृशरा तथेति स्नेहफाणितयुक्तेत्यर्थ। तथा, क्षीरपेया-क्षैरेयी सर्पिष्मत्युष्णा च। [तथा,] दधिसरो वा सगुड। [तथा,] पेया च पञ्चप्रसृता, 'द्वे पले-प्रसृत विदु' पञ्च प्रसृतानि यस्या सा पञ्चप्रसृता। केषा पुनस्तानि पञ्च प्रसृतानि? इति व्याचष्टे-स्नेहैस्तण्डुलपञ्चमैरिति। सर्पिस्तैल वसा मज्जेति चतुर्णा स्नेहाना चत्वारि प्रसृतानि तण्डुलाश्च प्रसृतमेकमित्यर्थ। एते सप्त पूर्वोक्ता सद्य -शीघ्र स्नेहना,-त्रिचतुरैरहोभिर्विनाऽपि स्नेहना, निष्परिहाराश्च। न केवलमेत एव सद्य स्नेहना इत्याह-स्नेहाश्च लवणोल्बणा इति। स्नेहा -सर्पिरादयोऽपक्का एव। किं विशिष्टा? लवणोल्बणा -लवणाढ्या, सद्य स्नेहना इत्यर्थ।

आ० र०-सद्य.स्नेहनान् सप्त योगानाह-प्राज्यमासरसा इति। प्राज्यमासा -प्रभूतमासा, अल्पोदकसिद्धा रसा इत्येक। तेषु-मासरसेषु, सिद्धा स्नेहभृष्टा पेयेति द्वितीय। स्नेहफाणिताभ्यां युक्तस्तिलचूर्ण इति तृतीय। ताभ्यामेव युक्ता कृशरेति चतुर्थ.। उष्णा घृताढ्या क्षीरसिद्धा पेयेति पञ्चम। गुडसहितो दधिसर इति षष्ठ। घृततैलवसामज्जतण्डुलै प्रत्येक प्रसृतप्रमाणै. कृता पेयेति सप्तम।

अष्टम सद्य स्नेहनमाह-स्नेहाश्चेति।

कस्माल्लवणसयोगात् स्नेहा अपक्का अपि सद्य स्नेहना? इत्याह-

**तद्ध्यभिष्यन्द्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च।**

स०-यस्माल्लवणमभिष्यन्दि-स्रोतसा स्रावक, अरूक्षत्वादिगुणयुक्त च। सूक्ष्मं-सूक्ष्मस्रोतोगामि। 'व्यवायि-देहमखिल व्याप्य पाकाय कल्पते'।

आ० र०-लवणसयोगात् कथ सद्य स्नेहनत्वम्? इत्यत आह-तद्धीति। तत्-लवणम्। हि-यस्मात्। विष्यन्दि-स्रोतोलीनमलोत्क्लेशनम्। अरूक्ष-स्नेहाविपरीतम्। सूक्ष्म-सूक्ष्मस्रोत सञ्चारि। उष्ण-स्नेहविलायनम्। व्यवायि-विचरणशीलम्। सङ्ग्रहे तु (सू अ २५)-"प्रभूतमास निष्क्वाथान् जाङ्गलानूपजान् रसान्। स्नेहभृष्टेषु वा तेषु यवागू नातिसहताम्॥ तिलकाम्बलिक भूरिस्नेह सर्पिष्मतीमपि। पेया सुखोष्णा क्षैरेयी पात्रे वाससिताघृते॥ सर्पिर्लवणयुक्त वा सद्योदुग्ध तथा पय। पायस माषमिश्र च बहुस्नेहसमायुतम्॥ तैलशुण्ठीगुडैसुरा जीर्णे मासरसाशिन। स्नेह चैक सुराच्छेन दध्नो वा सगुड सरम्॥ वसा वराहजा सर्पि पिप्पली लवण तिलान्। पिप्पली लवण स्नेहाश्चतुरो दधिमस्तुकम्॥ दध्ना सिद्ध व्योषगर्भ धात्रीद्राक्षारसे घृतम्। यवकोलकुलत्थाम्बुक्षारक्षीरसुरादधि॥ घृत च सिद्ध तुल्याश सद्य स्नेहनमुत्तमम्। सिद्धाश्च चतुर. स्नेहान् बदरत्रिफलारसै॥ योनिशुक्रामयहरान् सद्य स्नेहान् प्रयोजयेत्।" इति।

**गुडानूपामिषक्षीरतिलमाषसुरादधि॥ ४३॥**
**कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत्।**

स०-कुष्ठादिषु स्नेह्योग्यत्वे सति गुडादि स्नेहनार्थं न प्रकल्पयेत्-न योजयेत्।

आ० र०-कुष्ठादिषु गुडादीनि स्नेहनानि निषेधति-गुडानूपेति।

तर्हि ते कथं स्नेह्या? इत्याह—

**त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान्॥४४॥**
**स्नेहान् यथास्वमेतेषा योजयेदविकारिणः।**

स०-एतेषा-कुष्ठादीनाम्, त्रिफलादिभिर्विपाचितान्-साधितान्, अविकारिण -अविकारकरान्, स्नेहान् योजयेत्। यथास्व-यथायोग्यम्। कुष्ठादीना सम्बन्धी यो विकारस्तद्वताम्, तेन कुष्ठिना शोफिना मेहिनामित्यर्थोऽवतिष्ठते।

---

१ 'र्जिता' आ ख। २ 'तिलचूर्णं च सस्नेहफाणित कृ' अ आ स द्व। ३ 'स्नेहश्च०लवण' घ ङ झ। ४ 'मास निष्क्वाथरसा' ट। ५ 'सा स्नेहभर्जिता पेया -पातव्या। तथा' ठ ड। ६ 'फाणित -क्षौद्रगुडकृतो भक्ष्यविशेष। तथा' ठ ड.। ७ 'था सस्नेहा कृशरा। सपिष्मत्युष्णा च क्षीरपेया-क्षैरेयी। दधि' ठ.ड। ८ 'स्या पेयायाः सा' ठ.। ९ 'ति युक्त्याऽऽह-' ट। १० 'सर्पिस्तैल वसा मज्जा स्नेहो दृष्टश्चतुर्विध' इति वचनात् चत्वारि प्रसृतानि चतुर्णा स्नेहानाम्, तण्डुलाना च प्रसृतमेकम्, एव स्नेहैस्तण्डुलपञ्चमै पेया भवति। एते सप्त' ठ ड। ११ 'किमेत एव सप्त? नेत्याह-' ठ। १२ 'क्षीरपेयेति' घ.झ.। १३ 'सगुडो दधि'घ.झ.।

१ 'स्मादित्याह-' ट। २ 'तद्धि विष्यन्द्य' अ ट चन्द्र स द्व। ३ 'स्यात्तु लव' ट। ४ 'गू वाऽति' ख ञ स द्व। 'गू चाति' ग। ५ 'सद्य स्निग्ध त' स मू। सद्योदुग्ध-अचिरादोहितम्। ६ तथा-ससिताघृते पात्रे। ७ 'ऽसुर जी' स मू। 'ङरस जी' स.स। ८ 'वैक' स द्व। ९ 'हमनुत्त' ख ञ. १० 'म्, यथास्वमध्यायेषु पथ्यत्वेनाभिहितैस्त्रिफला' ट ठ.। ११ 'दिद्रव्यपाचि' ड.। १२ 'त्। कुष्ठा' ट.ठ.।

आ० र०-कुष्ठादिपूचितानि स्नेहनान्याह-त्रिफलेत्यादि । एतेषा-कुष्ठशोफप्रमेहाणाम् । अविकारिण इति हेतुगर्भ विशेषणम् ।

**क्षीणानां त्वामयैरग्निदेहसन्धुक्षणक्षमान् ॥ ४५ ॥**

स०-आमयै -व्याधिभि, क्षीणाना पुन पुंसामग्निदेहसन्धुक्षणक्षमान् स्नेहान् योजयेत् । अग्निश्च देहश्चाग्निदेहौ, सन्धुक्षणाश्च क्षमाश्च सन्धुक्षणक्षमा, तान् । यथासङ्ख्येनात्र सम्बन्ध । अग्ने सन्धुक्षणा-उद्दीपका, देहस्य क्षमा-पुष्ट्यावहा । अत्र चाय भाव,-किल व्याधिभि क्षीणाना वह्निरपि क्षीणो भवति । अतस्तेषा न केवल ये पुष्ट्यावहा [ ते उपयोज्या । कुत ? ते ] वह्निमान्द्यमावहन्ति । अथवा वह्निसन्धुक्षणा न पुष्ट्यावहा । न ते स्नेहा उपयोक्तु युक्ता । किं तर्हि ? उभयकारिण एव योक्तु युक्ता इति ।

आ० र०-व्याधिक्षीणानामुचितानि स्नेहनान्याह-क्षीणानामिति । अग्निदेहयो सन्धुक्षणे-संवर्द्धने क्षमान्, दीपनबृंहणत्वात् ।

**दीप्तान्तराग्निः परिशुद्धकोष्ठः**
**प्रत्यग्रधातुर्बलवर्णयुक्तः ।**
**दृढेन्द्रियो मन्दजर शतायुः**
**स्नेहोपसेवी पुरुषः प्रदिष्टः ॥ ४६ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया सूत्रस्थाने स्नेहविधिर्नाम षोडशोऽध्यायः ॥ १६ ॥**

स०-य पुमानाभीक्ष्ण्येन स्नेहमुपसेवते, स दीप्तान्तराग्नित्वादिगुणयुक्तो भवतीति प्रदिष्ट । सद्वैद्यैरिति शेष । उपजातिर्वृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने स्नेहविध्यध्याय षोडश समाप्त ॥ १६ ॥

आ० र०-स्नेहशीलनस्य फलमाह-दीप्तान्तराग्निरिति । प्रत्यग्रधातु-नूतनधातु. ।

**इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**स्नेहनस्य प्रकरण सामस्त्येन निरूपितम् ॥ १६ ॥**

१ 'णानामामयै' क । २ 'यै-कुष्ठादिभि क्षीणानामग्निपुष्टिदान् देहपुष्टिप्रदाश्चाविकारकरान् स्नेहान्' ड । ३ 'ना पुसा' ठ । ४ 'तद्दी' ठ । ५ 'ह्यास्तान् ।' ट । ६ 'क्षीणोचितानि' क ख ञ । ७ 'णे-अतिवर्द्धे' ग । 'णे-अभिवर्द्धे' घ झ । ८ 'हणान् ।' ग घ झ । ९ 'मानभीक्ष्णेन' ठ. । १० 'हविधिप्र' ग. । 'हपानप्र' घ.झ. ।




शोधनप्रसङ्गेन स्नेहोपयोग । स्निग्धे च देहे दोषाणा मार्दवीकरणाय स्वेदस्य प्रसङ्ग । अतस्तत्परिज्ञानार्थोऽयमध्याय आरभ्यते—

**अथातः स्वेदविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**
( गद्यसूत्रे ॥ २ ॥)

स०-अथात इति । स्वेदनं-स्वेद, तस्य विधि-विधान, यत्र त व्याख्यास्याम । शेष पूर्ववत् ।

आ० र०-क्रमप्राप्त स्वेदविधिमध्यायं व्याख्यातु प्रतिजानीते-अथेति ।

स्वेदस्य चातुर्विध्यमाह—

**स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः ।**

स०-स्वेदश्चतुर्विध,-तापादिभेदात् ।

आ० र०-स्वेदभेदानाह-स्वेद इति ।

तत्र तापादीनेव लक्षयितुमाचष्टे—

**तापोऽग्नितप्तवसनफालहस्ततलादिभिः ॥ १ ॥**

स०-ताप-तापस्वेद, अग्नितप्तेन वसनेन, तथा फालेन-अयोमयेनाग्नितप्तेन, तथा [ अग्नितप्तेन ] हस्ततलेनापि । आदिग्रहणाद्दारुवालुकाघटिकाकास्यभाजनादयो गृह्यन्ते ।

आ० र०-तापस्य लक्षणमाह-ताप इति । अग्नितप्तैर्वस्त्रादिभि क्रियते य स्वेद स ताप । आदिशब्दात्कास्यवालुकाघटिकासाक्षाद्ग्रय ।

**उपनाहो वचाकिण्वशताह्वादेवदारुभिः ।**
**धान्यैः समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ॥ २ ॥**
**उद्रिक्तलवणैः स्नेहचुक्रतक्रपयःप्लुतैः ।**
**केवले पवने, श्लेष्मसंसृष्टे सुरसादिभिः ॥ ३ ॥**
**पित्तेन पद्मकाद्यैस्तु साल्वणाख्यैः पुनःपुन ।**

१ 'अथ स्वेदविधिश्चरके सू० १४ अध्याये, सुश्रुते चि० ३२ अध्याये, अष्टाङ्गसङ्ग्रहे सू० २६ अध्याये चास्ति वर्णित । २ 'स्वेदो विधीयते यत्र स तमध्याय व्या' ड । ३ 'स्वेद चतुर्विधमाह-' ड । ४ चरके तु 'सङ्कर प्रस्तरो नाडी परिषेकोऽवगाहनम् । जेन्ताकोऽश्मघन कर्षू कुटी भू कुम्भिकैव च ॥ कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश ।' इति त्रयोदशविध स्वेदोऽभिहित । ५ 'सम्प्रति तापाभिधस्वेदलक्षणमाह-ताप इत्यादि । अग्नितप्तशब्दो वसनादिभि प्रत्येक सम्बध्यते । आदि' ड । ६ **'स्तु शाल्वणा'** आ. । **'साल्वलाख्यै.'** क. । **'श्चैश्च शाल्वलाख्यै.'** ठ. ।

स०-उपनाहो-बन्धनम् । किण्व-सुराप्रकृति । शताह्वा-शतपुष्पा । धान्यैरिति सामान्योक्तावपि तिलातसीमाषादीनि योग्यत्वाद्यान्युष्णवीर्याणि स्निग्धानि वा तानि प्रायेण प्रयोज्यानीति । समस्तग्रहण गन्धैरेव युज्यते । अत एव सङ्ग्रहेऽवदत् (सू अ २६)-"सर्वगन्ध" इति । गन्धै-गन्धद्रव्यै कुष्ठागुर्वगरसुरसादिभि । तथा, रास्नादिभि । किम्भूतै पूर्वोक्तै उद्रिक्तलवणै-लवणाढ्यै । तथा, स्नेहश्च चुक्र च तक्र च पयश्च, तै प्लुतै-आलोडितै । चुक्र-अम्लम् । तक्रस्य चुक्रत्वादेव ग्रहणे सिद्धे तक्रग्रहणमतिशयार्थम्, अतिशयेन माल्वणाख्ये स्वेदे तक्र प्रयोज्यमिति । केवले पवने वचादिभिरुपनाहस्वेद कार्य । श्लेष्मससृष्टे पवने सुरसादिभि-सुरसयुगादिना गणेन (हृ सू अ १५।३०) । पित्तेन ससृष्टे पवने पद्मकाद्यै-"पद्मकपुण्ड्रौ" (हृ सू अ १५।१२) इत्यादिभि । पित्तेन ससृष्टे पवन इत्यत्र किञ्चिदेव पित्तेन ससृष्टे पवने पद्मकादिभिरुपनाह कार्य इत्यवबोध्यम्, नाधिकेन पित्तेन युक्ते पवने, नापि तुल्येन पित्तेन युक्ते पवन इति । एव ह्युक्तम् (हृ सू अ १३।१४)-"ग्रैष्म प्रायो मरुत्पित्ते" विधि कार्य । ग्रैष्मश्च विधि प्रायेण सर्व शीत । तत्र स्वेदो दूरोत्सारित एव । तस्मात् किञ्चित्पित्तेन ससृष्टे पवने पद्मकाद्यैरुपनाह कार्य इति वेद्यम् । एते च त्रय उपनाहा केवले वायौ तथा कफयुक्ते पित्तयुक्ते च क्रमेण योज्या । एते च साल्वणाभिधानाः स्वेदा इत्याह-साल्वणाख्यैरिति । पुन पुनरिति असकृत्तै स्वेदयोजना कार्येत्यर्थ । निरपायो हि यथाऽय साल्वणापरसज्ञ उपनाहाख्य स्वेदो न तथाऽपरे स्वेदा इति । उपनह्यते-बध्यते चर्मपटादिना, इत्यन्वर्थ नामास्योपनाह इति । साल्वण इत्यस्य तन्त्रान्तरप्रसिद्ध नाम । तथा च धन्वन्तरि (सु चि अ ४।१४)-"काकोल्यादि सवातघ्न सर्वाम्लद्रव्यसयुत । सानूपौदकमासस्तु सर्वस्नेहसमन्वित ॥ सुखोष्ण स्पष्टलवण साल्वण परिकीर्तित ।" इति । 'उद्रिक्तलवणै स्नेहचुक्रतक्रपय प्लुतै ।' इति त्रिष्वपि स्वेदेषु योज्यम् ।

**आ० र०-उपनाहस्य लक्षणमाह-उपनाह इत्यादि । वचादिभिर्य स्वेद क्रियते स उपनाह । किण्व-सुराकाञ्जिकाद्यध स्थितद्रव्यम् । गन्धै-कुष्ठादिगन्धद्रव्यै । एरण्डजटा-एरण्डमूलम् । आमिष-मासम् । उद्रिक्तलवणै-सैन्धवाद्युत्कटै । स्नेहादिभि प्लुतै-आलोडितै । चुक्र-शुक्तम् । पय-क्षीरम् । एष स्वेद केवले पवने । एष एव श्लेष्मससृष्टपवने सुरसादिवर्गेण सह कार्य । पित्तेन** ससृष्टे पवने पद्मकादिवर्गेण सह कार्य । साल्वणाख्यै-साल्वण इत्याख्या उपनाहस्य येभ्य पद्मकादिभ्यस्तै । पद्मकादिभिर्युक्त उपनाह-साल्वणाख्य । उक्त च सुश्रुतेन (चि अ ४।१४)-"काकोल्यादि सवातघ्न सर्वाम्लद्रव्यसयुत । सानूपमास सुस्विन्न सर्वस्नेहसमन्वित ॥ सुखोष्ण स्पृष्टलवण साल्वण परिकीर्तित । तेनोपनाह कुर्वीत सर्वदा वातरोगिणाम् ॥" इति । तद्व्याख्यान च,-"काकोल्यादिर्गणो ग्राह्यो नाष्टवर्गकसज्ञित । वातघ्नो भद्रदार्वादिवर्गोऽम्लो दाडिमादिक ॥ सर्वस्नेहश्चतु स्नेहो लवण सैन्धवादिकम् । अम्लादिभिश्च सस्कार्य काकोल्यादित्रय त्रिभि ॥" इति । पद्मकादिरेव तन्मते काकोल्यादि । स चोपनाह पुन पुन कार्य । उपनाहो-बन्धनम् ।

बन्धात्मकश्चाय स्वेद इति बन्धात्मकस्वेदोपायभूतान् चर्मपट्टादीनाह—

**स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभिः ॥ ४ ॥**
**अलाभे वातजित्पत्रकौशेयाविकशाटकैः ।**
**बद्धं रात्रौ दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवाकृतम् ॥ ५ ॥**

स०-चर्मपट्टैर्बद्ध-उपनद्धमङ्ग, रात्रौ दिवा मुञ्चेत् । किम्भूतै स्निग्धोष्णवीर्यै, तथाऽपूतिभि-अदुर्गन्धै, सुपरिकर्मितत्वात् । अलाभे-चर्मपट्टानामभावे, वातजित्पत्रै-एरण्डजादिभि, तथा कौशेयादिभि । कौशेय-राङ्कवादिवस्त्रविशेषम् । आविक-कम्बलम् । [ शाटक-वस्त्रखण्डम् । ] तैर्बद्ध रात्रौ दिवा मुञ्चेत् । दिवा तु बद्ध रात्रौ मोक्तव्यम् ।

**आ० र०-बन्धनविधिमाह-स्निग्धोष्णवीर्यैरिति । अलाभे-चर्मालाभे । वातजित्पत्राणि-एरण्डादिपत्राणि ।**

**ऊष्मा तूत्कारिकालोष्टकपालोपलपांसुभिः ।**
**पत्रभङ्गेन धान्येन करीषसिकतातुषैः ॥ ६ ॥**
**अनेकोपायसन्तप्तैः प्रयोज्यो देशकालतः ।**

स०-ऊष्मा-बाष्प, तदाख्य स्वेद उत्कारिकादिभि प्रयोज्य । तत्र यवमाषैरण्डबीजातसीकुसुम्भबीजादिभि पिष्टस्विन्नैर्लेप्यसिकाकृतिर्य स्वेदनोपाय सा उत्कारिका । लोष्ट-मृत्पिण्ड । कपाल-कर्परम् । उपल-पाषाण । पासु-धूलि । तथा, पत्रभङ्गेन-छदसमूहेन । तथा, धान्येन । करीषो-गवादिशकृच्चूर्ण । सिकता-वालुका । तुषो-धान्यत्वक् । एतैरुत्कारिकादिभिस्तुषान्तै स्वेदो विधातव्य । किम्भूतै अनेकोपाय सन्तप्तैः,-अनेके च त उपायाश्च, तै सन्तप्ता-उष्णीकृता य

१ 'राबीजम् ।' ड । २ 'ति । धान्यै' ट ठ । ३ 'कुष्ठसासीतग' ड । ४ 'रसुर' ठ ड । ५ 'याय ।' ठ । ६ 'ल्वलाख्ये' ट । ७ 'इत्येव बो' ठ । ८ 'शाल्वलाख्यै' ड । ९ 'शाल्वल' ड । १० 'न्तरे प्र' ट । ११ 'नूपोद' आ.ठ.ड. ।

१ 'वर्गसहित कार्य' क ख ज । २ 'शाल्वणा' क । ३ 'नूपौदकमासस्तु सर्व' स सु । ४ 'साल्वल' ग. । 'शाल्वण' स सु. । 'सोल्वण' डल्हण. । ५ 'ग्राह्यश्चाष्ट' ग. । ६ 'स्नेहा ल' क । ७ तन्मते-सुश्रुतमते । ८ 'द्ध रात्रौ' ड. । ९ 'ट्टादीना' ठ ड । १० 'वा' ट । ११ 'ष्मा-उष्णबाष्प' ठ. । १२ 'ऊष्माख्य' ट. । १३ 'लेप्सिका' ट. । १४ 'खर्प' ट. ।

उत्कारिकादय , तै । कथ प्रयोज्य ? इत्याह—देशकालत । ल्यब्लोपे पञ्चमी चेयम् । तेन देशकालावपेक्ष्य । उपलक्षण चेदम् । तेन दोषदूष्यादीन्[१]प्यपेक्ष्य स्वेदोऽय प्रयोज्य । लोष्ट-कपालपाषाणा[२]नग्नि[३]तप्तान् सन्दशेन गृहीत्वा स्वेद्यदोषाद्यपेक्षया-ऽम्भस्यम्ले धान्याम्ले शुक्तादौ वा निमज्जयेत् । तदुद्भूतबाष्पै [४]स्वेद शयनस्थस्य[५] कार्य । अथवा गवादिशकृता[६]ऽऽर्द्रेण पिण्डी-कृतेनोष्णेन स्वेद स च पिण्डस्वेदसज्ञ । स एव सङ्करस्वेद उच्यते । अथवैरण्डादिद्रव्ययुक्तानि यवादीनि धान्यानि साम्ल-कादीनि गृहीत्वा पिहितमुखायामुखाया सम्यगुपस्वेद्य निर्वा[७]ते गृहे शयनस्थे किलिञ्जे प्रस्तीर्याविककौशेयवातहरपत्रान्यतमोत्तर-प्रच्छदे[८] रौरवाजिनप्रावारादि[९]स्ववच्छन्न स्वेदयेत् । अथवा पूर्वव-त्स्वेद्यद्रव्याणि कुम्भ्यामुत्क्वाथ्य तन्निकटोपविष्टो घनवस्त्रप्रावृत ऊष्माण गृह्णीयात् । एष सस्तरस्वेद । एवमनेकोपायसन्तप्तत्व दोषदूष्याद्यपेक्षया निरूप्य स्वेदो योज्य ।

आ० ९०—ऊष्मस्वेदस्य लक्षणमाह—ऊष्मेति । उत्कारि-कादिभि सोष्माभि कम्बलादि[१०]वेष्टितैर्य स्वेद क्रियते, स ऊष्मस्वेद । उत्कारिका—रोटिका । पत्रभङ्गेन—खण्डश कृतै पत्रै । धान्येन—गोधूमादिना । सङ्ग्रहे तु ( सू अ २६ )—“[११]ऊष्मस्वेद पुनरष्टधा भिद्यते,—पिण्ड सस्तरो नाडी घनाश्मा कुम्भी कूप कुटी जेन्ता[१२]के[१३]श्चेति । तत्र[१४] कपालपा-षाणलोष्टलोहपिण्डानग्निवर्णान् सन्दशेन गृहीत्वाऽम्भस्यम्ले वा निमज्जयेत्[१५] । तैरार्द्राविकवस्त्रेण वेष्टितै श्लेष्ममेदोभूयिष्ठ[१६] सरुजमङ्ग ग्रन्थिमद्वा स्वेदयेत् । पाशुसिकतागवादि[१७]करीष-तुषधान्यबुसपुलाक[१८]पललैर्वाऽम्लोत्क्वथितै पूर्ववद्वेष्टितैर्गवा-दिशकृताऽऽर्द्रेण पिण्डीकृतेनोपनाहद्रव्योत्कारिकाकृशरा[१९]पा-यसपिण्डैर्वा वातरोगि[२०]ष्विति पिण्डस्वेद । स एव च[२१] सङ्क-राख्य । यथार्हस्वेदद्रव्याणि पिहितमुखायां[२२]मुखाया[२३] सम्य-गुपस्वेद्य निवातशरणशयने[२४]स्थे किलिञ्जे[२५] प्रस्तार्याविककौशेयवा-तहरपत्रान्यतमोत्तर[२६]प्रच्छदे[२७] रौरवाजिनप्रावारादि[२८]भि स्वव[२९]-च्छन्न स्वेदयेदिति सस्तरस्वेद । पूर्ववदे[१]वोपस्वेद्यो[२]खामुखे[३]ऽ-न्यामुखा [४]नाडीमूलच्छिद्रप्रमाणपार्श्वच्छिद्रामभिसन्धा[५]योप-लिप्य च पार्श्वच्छिद्रस्थया नाड्या शरेषिकावशदलकिलि-ञ्जकरञ्जपत्रान्यतमकृतया गजाग्रहस्तसस्थानया व्याम[६]दीर्घ-याऽध्यर्द्धव्यामदीर्घया वा स्वायामचतुर्भागाष्टभागपरिणाह-मूलाग्रस्रोतसा सर्वतो वातहरपत्रसवृतच्छिद्रया द्विस्त्रिर्वा [७]विनमितया सुखोपविष्टस्य स्वभ्यक्तप्रावृतेऽङ्गे बाष्पमुपहरेत् । बाष्पो ह्यनृजुगामी विहतचण्डवेगस्त्वचमविदहन् सुख स्वेदयतीति नाडीस्वेद । पुरुषायाममात्रमधिक वा घन [८]सम सुख च शिलातल भूप्रदेश वा वातहरदारुदीप्तेनाग्निना सर्वतस्तापयित्वाऽग्निमपोह्योष्णोदकाम्लादिभिरभ्युक्ष्य यथो-क्तप्रच्छदे सस्तरवत्स्वेदयेदिति घनाश्मस्वेद । पूर्ववत्स्वेदद्र-व्याणि कु[९]म्भ्या समुत्क्वाथ्याश्लिष्योपविष्टस्त[१०]दूष्माण गृह्णी-यात् । भूमौ वा तां निखाय तदूर्ध्वमासन शयन वा नाति-घनप्रच्छद परित प्रलम्बमानकु[११]थाकम्बलगो[१२]णिक निधाय तत्र-स्थस्योष्माण गृह्णत कुम्भ्यामग्निवर्णानयोगु[१३]डानुपलाश्च शनै-र्निमज्जयेदिति कुम्भीस्वेद । शयनस्याधो विस्तारद्विगुण-खाते कूपे वातहरदारुकरीषान्यतरपूर्ण[१४]दग्धे विगतधूमे स्वास्तीर्णशयनस्थ स्वेदयेदिति कूपस्वेद । कुटीं नात्युच्चवि-स्तारा वृत्तामच्छिद्रामुपनाहद्रव्यकल्कघनप्रदिग्धकुड्या सर्व-तो विधू[१५]मप्रदीप्तखदिराङ्गारपूर्णहसन्तिकासमूह[१६]परिवृता वि-धाय तन्मध्ये च शय्या तत्रस्थ स्वेदयेदिति कुटीस्वेद. ।” इति । जेन्ता[१७]कस्वेदस्त्ववशक्यत्वान्न[१८] लिख्यते ।

---

१ ‘नपेक्ष्य’ ठ ड । २ ‘णादीन’ ड । ३ ‘ग्निवर्णान्’ ठ ड । ४ ‘त् । अथ तैरुद्भू० स्वेद श० स्य कुर्यात् ।’ ट । ५ ‘वा गोशकृ’ ट । ६ ‘ता पिण्डी’ ठ ड । ७ ‘निर्वाते’ ट । ८ ‘दे कौचवाजि’ ठ ट । ९ ‘दिष्वव’ ट । १० ‘दिभिर्वेष्टि’ क ख ञ । ११ ‘ऊष्मास्वे’ स स । १२ ‘जयन्ता’ ग । १३ ‘कश्च ।’ क ख घ ञ स द्व । १४ ‘त्र मृत्कपा’ स स । १५ ‘त् । एतै’ ख ञ । १६ ‘यिष्ठमङ्ग सरुज ग्र’ ग । १७ ‘दिपुरीष’ क ख ञ स द्व । ‘दिपुरीषकरीष’ ग । १८ ‘कपिण्याकप’ ग । १९ ‘रामासपि’ स स । २० ‘रोगेष्वि’ स द्व । २१ ‘च शङ्क’ क ख घ ञ । २२ ‘यामूषाया’ ग । ‘या कुम्भ्या स’ स मू । २३ उखा—स्थाली । २४ ‘नकिलि’ स मू । २५ किलिञ्ज —कट , ‘चटई, तट्या’ इति लोके । २६ ‘रच्छ’ ग । २७ ‘दे कुथकाविकाजिन’ स मू । २८ ‘दिष्वव’ क.ख ग.घ.ञ.स मू । २९ ‘वच्छिन्न’ क.ख ञ. ।

१ ‘वद्देशे स्वेद्यो मूषामुखेनान्यामूषा ना’ ग । २ ‘द्यो मुखामुखे मुखेनान्यामुखा’ ख ञ । ३ ‘खेनान्या’ क । ‘खेना-धोमुखा’ स मू । ४ ‘नाटी मू’ क ख घ ञ स मू । ५ ‘न्वाया-वलि’ स द्व । ६ ‘व्यामो—बाह्वो सकरयोस्ततयोस्तिर्यगन्तरम्’ इत्यमर । ७ ‘विनिर्मित’ क ख ग ञ । ‘विनामि’ स.मू । ८ ‘सम च शि’ स द्व । ९ ‘कुम्भ्यामु’ स द्व । १० ‘स्तद्दू’ स द्व । ११ ‘कुम्प्यकम्ब’ ख ञ. । ‘कुथकम्ब’ ग । १२ ‘गोण-कान्निधा’ क ख घ ञ । ‘गोणक’ ग । १३ अयोगुडान्—लोहगो-लकान् । ‘गुड स्याद्गोलके हस्तिसन्नाहेक्षुविकारयो ।’ इति मेदिनी। १४ ‘पूर्णे द’ क ख ग ञ । १५ ‘मदीप्त’ क ख ग ञ । १६ ‘परितप्ता वि’ घ । १७ ‘जयन्ता’ ग । १८ हेमाद्रिणाऽलिखित-सङ्ग्रहोक्तश्चरकोक्तश्च जेन्ताकस्वेदो यथा ( स सू अ २६, च सू अ १४।४६ )—“अथ जेन्ताक चिकीर्षुर्भूमिं परीक्षेत,—तत्र पूर्वस्या दिश्युत्तरस्या वा गुणवति प्रशस्तभूमिभागे देशे कृष्णमृत्तिके सुव-र्णवर्णमृत्तिके वा, परीवाप ( ‘वाह’ स मू । ) पुष्करिण्यादीना जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा, सुतीर्थे ( ‘सूपतीर्थे’ स च । ) समसुविभक्तभूमिभागे, सप्ताष्टौ वाऽरत्नीरपक्र( ‘त्नी परिक्र’ स मू । ‘त्नीरुपक्र’ स च । )म्योदकात् प्राङ्मुखमुदङ्मुख वाऽभिमुखतीर्थ कूटागार कारयेत् । उत्सेधविस्तारत परमरत्नय षोडश । समन्तात् सुवृत्त मृत्कर्मसम्पन्नमनेकवातायनम् । अस्य

अथ द्रवस्वेदमाह—

**शिग्रुवारणकैरण्डकरञ्जसुरसार्जकात् ॥ ७ ॥**
**शिरीषवासावंशार्कमालतीदीर्घवृन्ततः ।**
**पत्रभङ्गैर्वचाद्यैश्च मांसैश्चानूपवारिजैः ॥ ८ ॥**
**दशमूलेन च पृथक् सहितैर्वा यथामलम् ।**
**स्नेहवद्भिः सुराशुक्तवारिक्षीरादिसाधितैः ॥ ९ ॥**
**कुम्भीर्गलन्तीर्नाडीर्वा पूरयित्वा रुजार्दितम् ।**
**वाससाऽऽच्छादितं गात्रं स्निग्धं सिञ्चेद्यथासुखम् १०**

**स०**—शिग्र्वादिजैः पत्रसमूहैः, तथा वचाद्यैः-वचादिगणोक्तैः, तथा मांसैरानूपजैर्जलजैश्च, दशमूलेन च पृथक्-व्यस्तैर्द्वित्रादिभिः, सहितैर्वा-समस्तैर्वा, यथामलं स्नेहवद्भिः-दोषहरघृताद्यन्यतमस्नेहयुक्तैर्यथादोषं सुराशुक्तवारिक्षीरादिसाधितैः, कुम्भीः-स्थालीः, पूरयित्वा, अथवा गलन्तीर्नाडीर्वा-अनवरतं धारया जलादिस्रवन्तीर्वारियानिकासञ्ज्ञा वंशादिमयीः पूरयित्वा, रुजार्दितं-पीडार्तं, गात्रं-अङ्गं, वाससाऽऽच्छादितं तथा स्निग्धं सत् यथासुखं-सुखस्पर्शं कदाचिदत्युष्णं कदाचिदीषदुष्णं सिञ्चेत् ।

**आ० र०**—द्रवस्वेदमाह-शिग्रुवारणकेत्यादि । वारणक-कण्टकिकरञ्जः । दीर्घवृन्त-टिण्टुकः । शिग्र्वादीनां पत्रभङ्गैः, वचाद्यैः-उपनाहोक्तैः, आनूपवारिजैर्मांसैः, दशमूलेन च, इति चतुर्भिर्वर्गैः पृथक् सहितैर्वा दोषानुसारेण घृतादियुक्तैः सुरादिसाधितैः, गलन्तीः कुम्भीः-सच्छिद्रा घटिकाः, नाडीः-वंशादिनलिकाः, पूरयित्वा रुजार्दितं गात्रं स्निग्धं वस्त्राच्छादितं च कृत्वा ताभिः सिञ्चेत् । एष परिषेकाख्यो द्रवस्वेदः[3] ।

इति दोषपीडावशात् परिषेकस्वेदमाख्यायावगाहस्वेदं द्रवभेदमाह—

**तैरेव वा द्रवैः पूर्णं कुण्डं सर्वाङ्गगेऽनिले ।**
**अवगाह्यातुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ॥ ११ ॥**

**स०**—तैरेव-पूर्वोक्तैः, स्वेदद्रवैः[4] पूर्णं कुण्डं भृशमवगाह्य-, प्रविश्य, आतुरो-रोगी तिष्ठेत् । कीदृशे दोषे[5] ? इत्याह- सर्वाङ्गगेऽनिले,-सर्वशरीरव्यापिनि वायौ । तथा, अर्शःप्रभृतिरोगकष्टपीडासु । आदिग्रहणेन हस्तपादपीडासु च । कुण्डग्रहणमुपलक्षणार्थम्[6] । तेन कूपकुटीस्वेदौ च वेद्यौ । सङ्ग्रहे चोक्तम् (सू अ २६)-"शयनस्याधोविस्तारद्विगुणखाते कूपे वातहरदारुकरीषान्यतरपूर्णदग्धे विगतधूमे स्वास्तीर्णशयनस्थं स्वेदयेदिति कूपस्वेदः । कुटीं नात्युच्चविस्तारां वृत्तामच्छिद्रामुपनाहद्रव्यकल्कघनप्रदिग्धकुड्यां सर्वतो विधूमप्रदीप्तखदिराङ्गारपूर्णहसन्तिकासमूहपरिवृतां विधाय तन्मध्यस्थितशय्यास्थं स्वेदयेदिति कुटीस्वेदः । पद्मोत्पलादिभिः सक्तुपिण्ड्या वाऽऽच्छाद्य चक्षुषी । शीतैर्मुक्तावलीपद्ममुकुलोत्पलभाजनैः ॥ मुहुः करैश्च सजलैः स्विद्यतो हृदयं स्पृशेत् ।" इति ।

**आ० र०**—द्रवस्वेदो द्विविधः,-परिषेकोऽवगाहश्च । तत्र परिषेकमुक्त्वाऽवगाहमाह-तैरेवेति । [ तैरेव-पूर्वोक्तैः स्वेदद्रवैः पूर्णं कुण्डं भृशमवगाह्य-प्रविश्य, रोगी तिष्ठेत् । कदेत्याह-सर्वशरीरव्यापिनि वायौ, तथाऽर्शःप्रभृतिरोगपीडासु । ][12] कृच्छ्र-मूत्रकृच्छ्रम् । आदिशब्दादश्मर्यानाह[13]-हस्तपादपीडासु च । कुण्डग्रहणमुपलक्षणार्थम् । तेन कूपकुटीस्वेदौ च वेद्यौ ।

कूटागारस्यान्तः समन्ततो भित्तिमरत्निविस्तारोच्छ्रायां ('रोत्सेधां' स च ।) पिण्डिकां कारयेदाकवाटात् । मध्ये चास्य कूटागारस्य किष्कुमात्रं द्विपुरुषं ('चतुष्किष्कुमात्रं पुरुष' स च ।) प्रमाणं मृन्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सापिधानं कारयेत् । तं च खादिराणामाश्वकर्णानां ('र्णादीनां' स च ।) वा काष्ठानां पूरयित्वा दीपयेत् । स यदा जानीयात् साधुदग्धानि काष्ठानि गतधूमान्यवतप्तं सर्वम् ('प्तं च केवलम्' स च ।) अग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति । तत्रैनं ('न पुरुषं वा' स च ।) वातहराभ्यङ्गाभ्यक्तं ('राभ्यक्तं' स च ।) गात्रं वस्त्रावच्छन्नं प्रवेशयेत् । प्रवेशयंश्चैनमनुशिष्यात् ('शयश्चैनमनु' स च ।) ,-सौम्य ! प्रविश कल्याणायारोग्याय चेति । प्रविश्य चैनां पिण्डिकामधिरुह्य ('कामारुह्य' स ढ ।) पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः । न च त्वया ('त्वरया' स ढ ।) स्वेदमूर्च्छापरीतेनापि ('पि सता पि' स च ।) पिण्डिकैषा विमोक्तव्याऽऽप्राणोच्छ्वासात् । भ्रश्यमानो ह्यतः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः । तस्मात् पिण्डिकामेनां न कथञ्चन मुञ्चेथाः । त्वं यदा जानीयाः,-विगताभिष्यन्दमात्मानं सम्यक्प्रस्रुतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघुभूतमपगतविबन्धस्तम्भसुप्तिवेदनागौरवमिति ('दनमिति' स च ।) ततः पिण्डिकानुसारेण ('ततस्तां पिण्डिकामनुसरन्' स च ।) द्वारं प्रपद्येथाः । निष्क्रम्य च चक्षुषोः परिपालनार्थमतिस्विन्नोऽपि ('अतिस्विन्नोऽपि' इति चरके नास्ति ।) न सहसा शीतोदकमनुप्रविशेथाः । सम्यक्स्विन्नस्त्वपगतसन्तापक्लमो ('कमुपस्पृशेथाः । अपगतसन्तापक्लमस्तु मु' स च ।) मुहूर्तात्सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयात् । इति जेन्ताकस्वेदः ।" इति ।

१ 'रासुक्त' अ आ क ख घ ञ ठ । २ 'वस्त्रावच्छा' घ । ३ 'दिभिः प' ड । ४ 'द्भिः-विद्यमानस्नेहैः, अत्रापि यथालाभ-(यथामलं)मिति सम्बध्यते । तेन यो यस्य दोषस्य योग्यः स्नेहो घृताद्यन्यतमः, तेन युक्तैस्तथा यथामलं सुरा' ट । ५ 'रासुक्त' ट ठ ड । ६ 'त्वा तथा गलन्तीर्गर्गरीश्च वंशादिमयीर्नाडीर्वा पूर' ठ, ड ।

१ 'चिदुष्णं' ट । २ 'तं स्निग्धं' क ख ञ । ३ 'दः । अथावगाहाख्यं द्रवस्वेदमाह-' क ख ग ञ । ४ 'वैः कुण्डं पूरितमव' ट । ५ 'अर्शःकृच्छ्रादिरुक्षु चावगाह्य तिष्ठेत् । आदि' ट । ६ 'क्षणम् । कटाहद्रोण्योरपि ग्रहः ।' ट । ७ 'न द्रोणकूप' ठ । ८ 'षाद्यन्यतमपू' ट । 'षाद्यन्यतर' ठ ड । ९ 'स्तारवृत्ता' ट ठ ड । १० 'न्मध्येस्थि' ट ठ । 'न्मध्ये च शय्या तत्रस्थं स्वि' स ढ । ११ 'श्च तोयार्द्रैः स्वि' स ढ । १२ [ ] इति पाठो ग पुस्तके नोपलभ्यते । १३ 'नाहादयः । कु' ग ।

**[1]निवातेऽन्तर्बहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत् ।**

स०—अपगतवाते देशे स्वेदमाचरेत् । किम्भूत ? अन्त स्नेहपानेन बहिश्चाभ्यङ्गादिना स्निग्ध । तथा, जीर्णान्नश्च,—येन (यस्य) ह्यस्तनमन्न जीर्णम्, आमाजीर्णाद्याक्रान्त नर वर्जयित्वा तेन स्वेदार्हेण नरेण स्वेद आचरणीय[2] ।

आ० र०—स्वेदविधिमाह—निवाते इति ।

कीदृश स्वेदमाचरेत् ? इत्याह—

**व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ॥ १२ ॥**

स०—व्याध्यपेक्षया व्याधितापेक्षया देशापेक्षया ऋत्वपेक्षया[3] च यथाविधमेव मध्यममुत्कृष्ट हीन वा स्वेदमाचरेत् ।

आ० र०—व्याध्यादिवशात् मध्यममात्रमुत्तममात्रमधममात्रम् ।

**[5]कफार्तो रूक्षणं रूक्षो, रूक्षः स्निग्धं कफानिले ।**

स०—कफार्त —कफग्रस्तो, रूक्ष सन्—अन्तर्बहिरस्निग्धो, रूक्षण—न च स्निग्ध, स्वेदमाचरेत् । अपर श्लेष्मवाते रूक्षस्निग्ध—केनचिद[6]शेन रूक्ष केनचिद[6]शेन स्निग्ध, पर्यायेण वा रूक्षस्निग्ध, एवविध स्वेदमाचरेत् ।

आ० र०—कफे स्वेदविशेषमाह—कफे तमिति । रूक्षणै — रूक्षद्रव्यै, स्नेहरहितै. । त—स्वेदम् । रूक्ष —पुरुषो नान्तर्बहि स्निग्ध ।

कफानिले विशेषमाह—रूक्ष स्निग्धमिति । रूक्ष —पुरुष । स्निग्ध—स्वेदम् ।

**आमाशयगते वायौ कफे पक्वाशयाश्रिते ॥ १३ ॥**
**रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ।**

स०—आमाशय गत —आमाशयगत, पक्वाशयमाश्रित — पक्वाशयाश्रित, द्वितीया श्रितेति समास । वायावामाशयगते कफे च पक्वाशयाश्रिते यथासङ्ख्येन रूक्षपूर्व स्नेहपूर्व च स्वेदमाचरेत् । आमाशयगते वात आदौ रूक्ष स्वेद कार्य पश्चात्स्निग्ध । तथा, पक्वाशयगते कफ आदौ स्निग्ध स्वेद, पश्चाद्रूक्ष इत्यर्थ । कुत एव नियम ? इत्याह—स्थानानुरोधत ,— स्थानवशात् । वायुर्यत आमाशय आगन्तु, स्थान च तत् श्लेष्मण, तद्वशात्तत्रादौ रूक्ष एव स्वेदो योज्य, पश्चात् स्निग्ध इति । कफश्च पक्वाशय आगन्तु, स्थान च तद्वायो, अत पूर्व स्निग्ध [1]स्वेदो योज्य, पश्चाद्रूक्ष इति पूर्वोक्त एव न्यायो योज्य । तथा चोक्तम् (हृ सू अ १३।२०)—"तत्रान्यस्थानसस्थेषु तदीयाम्" इति । तथा (हृ सू अ १३।२१)— "आगन्तु शमयेद्दोष स्थानिन प्रतिकृत्य वा ।" इति । तस्मात्पूर्वं रूक्षेण स्थानिन कफ प्रतिकृत्य पश्चादागन्तुकस्य वायो शमन स्निग्धस्वेदाख्य प्रयोज्यमिति । ननु, वायोरामाशये कोपोऽनुपपन्न । यतो मरुत् लघ्वादि[2]गुणयुक्त । आमाशयस्तु गुरुमृदुपिच्छिलादियुक्त । अत शम एवोपपन्न इति केचित् । एतच्चायुक्तम् । बलिनो ह्यन्या[3]श्रयस्थस्यापि कोपो युक्त । मार्गरोधाच्च वायोरामाशयेऽपि प्रकोपसम्भव इति । तथा च वक्ष्यति (हृ चि अ ६।५७)—"प्रायोऽनिलो रुद्धगति कुप्यत्यामाशये गत ।" इति । तथा चोक्तम् (हृ सू अ १३।१९)— "ते कालादिबल लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपि ।" इति ।

आ० र०—स्थानभेदेन विशेषमाह—आमेत्यादि, रूक्षपूर्वमिति । रूक्षपूर्व—प्रथम रूक्ष तत स्निग्धम् । स्नेहपूर्व— प्रथम स्निग्ध ततो रूक्षम् । स्थानानुरोधत —स्थानिप्रतीकारपूर्वकमागन्तुप्रतीकारस्योक्तत्वात् ।

**अल्पं वङ्क्षण[4]योः, स्वल्पं दृङ्मुष्कहृदये न वा ॥ १४ ॥**

स०—वङ्क्षणयो[5]रल्पमेवेति योज्यम् । दृशोर्मुष्कयोर्हृदि चाल्[6]पमेवेति । अथवा दृगादिषु स्वेद नाचरेदेव ।

आ० र०—अवयवभेदेन विशेषमाह—अल्पमिति । वङ्क्षणयोरल्प स्वेदमाचरेत् । दृगादिष्वल्पल्पमेव, नैव वा । सङ्ग्रहे तु (सू अ २६)—"पद्मोत्पलादिभि सक्तुपिण्ड्या वाऽऽच्छाद्य चक्षुषी । शीतैर्मुक्तावलीपद्मकुमुदोत्पलभाजनै ॥ मुहु करैश्च[9] सजलै स्विद्यतो हृदय स्पृशेत् ।" इति ।

**शीतशूलक्षये स्विन्नो जातेऽङ्गानां च मार्दवे ।**
**स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत् ॥१५॥**

स०—शीतशूलयो क्षये सञ्जाते सति, अङ्गाना—पाणिपादादीना च, मार्दवे—मृदुत्वे जाते सति, स्विन्नो नर स्यात् । स च स्विन्न शनैर्मृदितो—म[10]न्द मर्दिताङ्ग, स्नात —उष्णोदकेन, [तत —] अनन्तर, स्नेहोक्त(स्नेह)विधि—'उष्णोदकोपचारी स्यात्' इत्यादिक, भजेत् ।

आ० र०—सम्यक्स्विन्नलक्षणमाह—शीतशूलक्षय इति । शीतशूलयोर्निवृत्तावङ्गमार्दवे च स्विन्न स्यात् ।

स्विन्नस्य कृत्यमाह—शनैरिति । शनैर्मृदितो—यथासुख कृत मर्दन । स्नेहविधि—स्नेहनोक्ताहारविहारनियमम् ।

१ 'निर्वाते' अ ञ ठ ड । २ अस्याग्रे "आमाजीर्णाद्याक्रान्तेन तु नरेण पुरुषेणाजीर्णान्नेनैव स्वेद आचरणीय ।" इति ठ पुस्तकेऽधिकम् । ३ 'या धात्वपेक्षया च यथाविध एव' ठ ड । ४ 'मध्य वा, वर—उत्कृष्ट वा, अवर—अल्प वा, स्वेद' ट । ५ 'कफे त रूक्षणै रूक्षो, रूक्ष. स्निग्ध कफानिले ।' इति हेमाद्रिसम्मत पाठ । ६ 'दङ्गेन' ठ । ७ 'स्निग्ध, एव' ठ । ८ 'यो, तद्वशात् प्रथम स्नि' ट ।

१ 'स्वेद पश्चा' ठ ड । २ 'दुत्वादि' ठ । ३ 'न्याशय' ट. । ४ 'यो स्वेद द' ख ञ । ५ 'योस्तोक स्वेदमाचरेत् ।' ट । ६ 'ल्पम् । न वेति । अथ' ट । ७ 'षु स्वल्प (ल्पमपि) स्वे' ठ । ८ 'ष्वल्पमे' क । ९ 'श्च तोयार्द्रै स्वि' स.द्र । १० 'मन्दम' ठ.ड ।

इति स्वेदस्य सम्यग्लक्षणमुक्त्वाऽतियोगलक्षणमाह—

**पित्तास्रकोपतृण्मूर्च्छास्वराङ्गसदनभ्रमाः ।**
**सन्धिपीडा ज्वरः श्यावरक्तमण्डलदर्शनम् ॥ १६ ॥**
**स्वेदातियोगाच्छर्दिश्च, तत्र स्तम्भनमौषधम् ।**
**विषक्षाराग्न्यतीसारच्छर्दिमोहातुरेषु च ॥ १७ ॥**

**स०**—स्वेदस्यातियोगात् रक्तपित्तकोपादयो भवन्ति, छर्दिश्च । मूर्च्छा—मोह । स्वराङ्गयो सदनेन सम्बन्ध । भ्रम—अज्ञानम् । श्यावानि च रक्तानि च श्यावरक्तानि, तान्येवभूतानि यानि मण्डलानि तेषा दर्शन—उपलम्भ । तत्र[१]—स्वेदातियोगे, स्तम्भन—वक्ष्यमाणमौषध[२] कार्यम् । तथा, विषाद्यातुरेष्वपि स्तम्भनमेवौषध न्याय्यमित्यर्थ ।

**आ० र०—अतिस्विन्नलक्षणमाह—पित्तास्रकोपेति ।**

अतिस्विन्नस्यौषधमाह—तत्र स्तम्भनमिति ।

प्रसङ्गाद्विषादिष्वपि स्तम्भनमौषधमाह—विषेत्यादि । क्षाराग्न्यातुर—क्षाराग्निदग्ध । मोहातुरो—मूर्च्छावान् ।

**स्वेदनं गुरु तीक्ष्णोष्णं प्रायः, स्तम्भनमन्यथा ।**
**द्रवस्थिरसरस्निग्धरूक्षसूक्ष्मं च भेषजम् ॥ १८ ॥**[३]
**स्वेदनं, स्तम्भनं श्लक्ष्णं रूक्षसूक्ष्मसरद्रवम्[४] ।**
**प्रायस्तिक्तं कषाय च मधुरं च समासत ॥ १९ ॥**

**स०**—गुरु यद्द्रव्य तीक्ष्णमुष्ण च, तद्बाहुल्येन स्वेदन भवति । प्रायोग्रहणात् भयशोकादिकमगुर्वपि गृह्यते । अन्यथा—अतो वैपरीत्येन, स्तम्भन भवति । द्रवादिगुणयुक्त यत् तत् द्रव्य स्वेदन भवति । तथा, श्लक्ष्णादियुक्त[५] तत् समासत स्तम्भन भवति । अधुना रसत स्तम्भन निर्दिशन्नाह—प्राय इत्यादि । प्राय सङ्क्षेपेण तिक्त कषाय मधुर च स्तम्भन भवति ।

**आ० र०—स्वेदनद्रव्यमाह—स्वेदनमिति ।**

**स्तम्भनद्रव्यमाह—स्तम्भनमिति । अन्यथा—लघुमन्दशीतम्, तिक्तादिरस च ।**

स्तम्भितस्य लक्षणमाह—

**स्तम्भितः स्याद्बले लब्धे यथोक्तामयसङ्क्षयात् ।**

**स०**—बले लब्धे—जाते सति, यथोक्ताना रोगाणा च सङ्क्षयात् स्तम्भितो नर स्यात् ।

**आ० र०—स्तम्भितलक्षणमाह—स्तम्भित इति । यथोक्ता—पित्तास्रकोपादयो विषादयश्च ।**

अतिस्तम्भित[६] सम्प्रति लक्षयति—

**स्तम्भत्वक्स्नायुसङ्कोचकम्पहृद्वाग्घनुग्रहैः ॥ २० ॥**
**पादौष्ठत्वक्करैः श्यावैरतिस्तम्भितमादिशेत् ।**

**स०**—त्वक् च स्नायुश्च, तयो सङ्कोच । हृदयादीना ग्रहेण सम्बन्ध । तत स्तम्भादीना द्वन्द्व । स्तम्भादिभिस्तथा श्यावै पादादिभिरतिस्तम्भित कथयेत् ।

**आ० र०—अतिस्तम्भितलक्षणमाह—स्तम्भत्वगित्यादि ।** हृद्[१]वाग्घनूना ग्रह ।

**न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ॥ २१ ॥**
**स्तम्भनीयक्षतक्षीणक्षाममद्यविकारिणः ।**
**तिमिरोदरवीसर्पकुष्ठशोषा[२]ढ्यरोगिणः ॥ २२ ॥**
**पीतदुग्धदधिस्नेहमधून् कृतविरेचनान् ।**
**भ्रष्टदग्धगुदग्लानिक्रोधशोकभया[४]र्दितान् ॥ २३ ॥**
**क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीडितान् ।**
**गर्भिणी पुष्पिता सूतां, मृदु[५] चात्ययिके गदे ॥ २४ ॥**

**स०**—अतिस्थूलादीन्न स्वेदयेत् । अतिस्थूलस्य स्वेदेन मेदोविलयनादत्यन्त शरीरक्षोभ स्यात् । रूक्षादीनां कार्श्यमतिशयेन भवेत् । 'मद्यविकारिण' इत्यविशेपोक्तावपि पित्ताद्यन्येषा सङ्ग्रह । पित्तमद्यविकारिणस्तु 'पित्तपीडितान्' इत्यनेनैव सङ्गृहीता । आढ्यरोगो—वातरक्तम् । भ्रष्टदग्धगुदा—अतीसारक्षाराग्न्यादिभि । ग्लान्यादीनामर्दितेन सम्बन्ध । क्षुदादीना मेहान्ताना द्वन्द्व, ततो मत्वर्थीय इनि । क्षुद्वत स्वेदादत्यन्त देहग्लानि । कामलापाण्डुमतो स्वेदेन पित्तवृद्ध्या रोगवृद्धि[१०] । यस्माद्वक्ष्यते (हृ नि अ १३।१)—"पित्तप्रधाना कुपिता" इत्यादि । तथा, (हृ नि अ १३।१५)—"य पाण्डुरोगी सेवेत पित्तल तस्य कामलाम् ।" इत्यादि । मेहिनस्तु स्वेदवृद्ध्या रोगवृद्धि । गर्भिण्या स्वेदेन गर्भव्यापत् । पुष्पिताया रक्तातिप्रवृत्ति । सूताया कार्श्यम् । मृदु चेति । यदैषामतिस्थूलादीनामात्ययिको[११] व्याधि—विसूचिकादि स्यात्, तदेते मृदु स्वेदयितव्या[१२] एव ।

**आ० र०—स्थूलादीनां स्वेदन निषेधति—न स्वेदयेदिति । स्तम्भनीया—विषादय । क्षत—उरःक्षती । क्षीण—क्षयरोगी । क्षाम—कृश । शोषो—मुखशोष[१३] । आढ्यरोगो—वातरक्तम् । भ्रष्टगुदो दग्धगुदश्च । पुष्पिता—ऋतुमती ।**

**आत्ययिके गदे अस्वेद्यानपि मृदु स्वेदयेत्[१४], तथाऽप्यनुपशमे तीव्र वा स्वेदयेदित्याह—मृदु[१५] चेति ।**

---

१ 'त्र—तेषु, स्तम्भनमौष' ठ ड । २ 'ध योज्यम् । विषादीनामातुरे सम्बन्ध । विषाद्या' ट । ३ अय द्रवाद्यन्त श्लोकोऽरुणदत्तचन्द्रनन्दनसम्मत । ४ 'रूक्षसूक्ष्मसरद्रवाणा सस्कारादिवशेनोभयरूपत्वम्' इतीन्दु । ५ 'क्त च द्रव्य स' ट । ६ 'त लक्ष' ड.।

१ 'हृदयग्रहो वाग्ग्रहो हनुग्रहश्च ।' क ख ञ । २ 'यवाग्वनू' ग । ३ 'शोफाढ्य' आ क । ४ 'धरक्तक्षयान्वितान्' ख ञ । ५ 'यान्वितान्' घ । ६ 'दु वाऽत्य' क स स । 'दुत्वात्य' चन्द्र । ७ 'ना च कार्श्यमिति । आढ्य' ठ ड । ८ 'न्त शरीरग्ला' ट । ९ 'पित्ताभिवृ' ट । १० 'द्धि । पित्तप्रधानस्य स्वेदाद्रोगवृद्धि । गर्भि' ठ ड । ११ 'त्यन्तिको' ठ ट । १२ 'व्या ।' ठ ड । १३ 'शोषादि ।' ग घ । १४ 'येदित्याह—' क । १५ 'मृदु वाऽत्ययिके गद इति' ग ।

**श्वासकासप्रतिश्यायहिध्माध्मानविबन्धिषु ।**
**स्वरभेदानिलव्याधिश्लेष्मामस्तम्भगौरवे ॥ २५ ॥**
**अङ्गमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे ।**
**महत्त्वे मुष्कयोः खल्यामायामे वातकण्टके ॥ २६ ॥**
**मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते ।**
**स्वेदं यथायथं कुर्यात्तदौषधविभागतः ॥ २७ ॥**

स०–श्वासादीनां विबन्धान्तानां द्वन्द्वः । श्वासादिमत्सु यथास्वं स्वेदं कुर्यात्,–क्वचित्तापं क्वचिदुपनाहं क्वचिदूष्माणं क्वचिद्द्रवमिति । कथम्? तेष्वौषधानि तदौषधानि, तेषां विभागो–यथास्वमुपयोगः, तेन,–तदौषधविभागेन स्वेदं कुर्यात् । "खल्ली तीव्ररुजान्विता ।" इति (हृ. नि. अ. १५।५५) वातव्याधौ वक्ष्यते, आयामवातकण्टकौ च । आढ्यमारुतः–ऊरुस्तम्भः ।

आ० र०–स्वेदसाध्यान् रोगानाह–श्वासकासेत्यादि । मुष्कयोर्महत्त्वे–वृद्धिरोगे । खल्यां–हस्तपादावमोटने । आयामे–बाह्यायामादौ । सङ्ग्रहे तु (सू. अ. २६)–"स्वरभेदानिलव्याधिपक्षाघातापतानके । वेपथुश्वयथुस्वापस्तम्भजृम्भामगौरवे ॥ कर्णमन्याशिरःकोष्ठजङ्घापादोरुरुक्षु च ।" इति । स्विन्नस्य कृत्यमुक्तं सङ्ग्रहे (सू. अ. २६)–"स्विन्नोऽन्नं पथ्यमश्नीयाद्दोषरोगानुरोधतः । तदहः स्विन्नसर्वाङ्गो व्यायामं सुतरां त्यजेत् ॥" इति ।

**स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ।**

स०–मेदःकफाभ्यां पवन आवृते सत्यनाग्नेयः स्वेदो हितः । अनाग्नेय इत्यग्नेर्ढक्, ततो नञ्समासः ।

आ० र०–अनाग्नेयस्वेदस्य विषयमाह–स्वेद इति ।

कोऽसावनाग्नेयः? इत्याह—

**निवातं गृहमायासो गुरुप्रावरणं भयम् ॥ २८ ॥**
**उपनाहाहवक्रोधा भूरिपानं क्षुधाऽऽतपः ॥ २८½ ॥**

स०–निवातगृहादयोऽनाग्नेया स्वेदाः । आयासो–व्यायामः । गुरुप्रावरणं–रल्लकादि । भयं–सिंहव्याघ्रराजपुरुषदर्शनादिना । उपनाहोऽप्यनाग्नेयः स्वेदः, उपनाहस्य द्वैविध्यात् । तत्र "उपनाहो वचाकिण्व" इत्यादिराग्नेयः, तत्र "तापोऽग्नितप्तवसनं" इत्यनुवृत्तेः । अनाग्नेयस्तु–'स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैः' इत्यादिकः । आहवः–समरः । भूरिपानं–बहुमद्यपानम् ।

आ० र०–अनाग्नेयस्वेदस्य भेदानाह–निवातमिति । निवातगृहादयो दश भेदाः । उपनाहो–वचादिभिरनग्नितप्तैः कृतः । आहवो–युद्धम् । भूरिपानं–बहुमद्यपानम् । स्वेदस्य फलमुक्तं सङ्ग्रहे (सू. अ. २६)–"अग्नेर्दीप्तिं मार्दवं त्वक्प्रसादं भक्तश्रद्धां स्रोतसां निर्मलत्वम् । कुर्यात्स्वेदो जाड्यतन्द्रापहारं स्तब्धान् सन्धीश्चेष्टयत्याशु चास्य ॥" इति ।

**स्नेहक्लिन्नाः कोष्ठगा धातुगा वा**
**स्रोतोलीना ये च शाखास्थिसंस्थाः ।**
**दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं**
**नीताः सम्यक् शुद्धिभिर्निर्ह्रियन्ते ॥ २९½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने स्वेदविधिर्नाम सप्तदशोऽध्यायः ॥ १७ ॥**

स०–ते दोषाः सम्यक्–सुष्ठु, शुद्धिभिः–वमनविरेचनलक्षणाभिः, निर्ह्रियन्ते–निष्कास्यन्ते । के दोषाः? इत्याह–स्नेहक्लिन्ना ये, तथा कोष्ठगा धातुस्थाश्च, तथा स्रोतोलीनाः, तथा शाखास्थिषु च स्थिताः । किम्भूताः? स्वेदैर्द्रवीकृत्य कोष्ठं नीताः–उदरं प्रापिताः । शालिनीवृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने स्वेदविध्यध्यायः सप्तदशः समाप्तः ॥ १७ ॥

आ० र०–स्वेदनस्य शोधनाङ्गत्वमाह–स्नेहक्लिन्ना इति । अस्थिशब्देन मध्यममार्गो लक्ष्यते । धातुगानां स्रोतोलीनानां [च] पुनरुपादानं स्वेदैकसाध्यत्वज्ञापनार्थम् । मार्गत्रयकथनेन हि तेऽप्युक्ताः ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
सस्वेदनप्रकरणं सामस्त्येन निरूपितम् ॥ १७ ॥

१ 'साध्यरो' क ख ञ । २ 'बाह्याया' ख ञ । ३ 'म्भाङ्गगौ' आ ग स ह्र । ४ 'यः स्वेदः? तमाह–' ट । ५ 'क्रोधभूरि' ख घ । ६ 'पानक्षुदातपाः' क । ७ अस्याग्रे "स्वेदयन्ति दशैतानि नरमग्निगुणादृते ।" इति ख ङ ञ पुस्तकेष्वधिकः पाठः । ८ 'ग्नेयः स्वेदः ।' ट । ९ 'खड्गव्यग्रोग्रबहुराज' ट । १० 'यः, स्वेदमध्ये उप' ट ।

१ 'पानेन मद्यपानमभिप्रेतम् ।' ट । २ 'वाते गृहमित्यादि ।' ख ग ञ । ३ 'हवः–सङ्ग्रामः ।' घ । ४ 'वचादिभिः' ट । ५ 'ध्यभागो ल' घ । ६ 'नुगतस्रो' क ख ग ञ । ७ स्वेदविधिप्र' ग । 'स्वेदप्रकरणं नाम सा' घ ।




"शुद्धिभिर्निर्ह्रियन्ते" इत्युक्तम् । कास्ता शुद्धय ? इति शुद्ध्यर्थं वमनविरेचनाविकार —

**अथातो वमनविरेचनविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**
( गद्यसूत्रे ॥ २ ॥ )

स०–अथात इत्यादि । वमन च विरेचन च, तयोर्विधि । शेष पूर्ववद्व्याख्येयम् ।

आ० र०–क्रमप्राप्त वमनविरेचनविधिमध्याय व्याख्यातु प्रतिजानीते–अथेति । वमनविरेचनयोर्लक्षणमुक्त सङ्ग्रहे ( सू अ. २७ )–"दोषहरणमूर्ध्वभाग वमनाख्यम्, अधोभाग विरेचनाख्यम्, उभय वा मलविरेचनाद्विरेचनमित्युच्यते । तत्रोष्णतीक्ष्णसूक्ष्मव्यवायिविकाशीन्यौषधानि स्ववीर्येण हृदयमुपेत्य सौक्ष्म्याद्व्यवायित्वाच्च धमनीरनुसृत्य स्नेहेन मृदूकृतेऽन्त शरीरे स्वेदोष्मणाऽऽर्द्रदारुवद्विष्यन्दिते स्थूलाणुस्रोतोभ्य सकलमपि दोषसङ्घातमौष्ण्यात् पुनर्विष्यन्दयन्ति । तैक्ष्ण्याद्विकाशित्वाच्च विच्छिन्दयन्ति । स विष्यन्नविच्छिन्नो दोषसङ्घात परिप्लवन् स्नेहाक्तभाजनस्थ इवोदकाञ्जलिरसज्जन्ननुप्रवणभावादामाशयमागम्योदानप्रणुन्नोऽग्निवाय्वात्मकत्वादूर्ध्वभागप्रभावाच्चौषधस्योर्ध्वं प्रवर्तते । सलिलपृथिव्यात्मकत्वादधोभागप्रभावाच्चौषधस्याध । उभयतश्चोभयगुणत्वादुभयभागप्रभावाच्च ।" इति ।

तत्र यथोद्देशतया निर्देश इति पूर्वं वमनविधिमाचष्टे । अथवा विरेकात्पूर्वं वमनस्योपन्यासो युक्त , हृतकफस्य हि सम्यग्विरेका भवन्ति । तथा चोक्तम् (चरके सि अ १।८)–"विरिच्यते मन्दकफस्तु सम्यक्" इति । अतो वमनविधिमाह—

**कफे विदध्याद्वमनं संयोगे वा कफोल्बणे ।**
**तद्वद्विरेचनं पित्ते**

स०–श्लेष्मणि वमन कुर्यात्, सयोगे च कफाधिके । तत्र च पित्तकफवान् वमन कुर्यात् । यथा,–कफे कफाधिके वा सयोगे वमन कुर्यात् तथैव पित्ते पित्ताधिके वा सयोगे विरेचनं कुर्यादिति तद्वच्छब्दस्यार्थ ।

आ० र०–वमनविरेचनयो. सामान्यतो विषयमाह–कफे विदध्यादिति । तद्वत्–पित्तोल्बणे वा सयोगे ।

**विशेषेण तु वामयेत् ॥ १ ॥**
**नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिण ।**
**कुष्ठमेहापचीग्रन्थिश्लीपदोन्मादकासिनः ॥ २ ॥**
**श्वासहृल्लासवीसर्पस्तन्यदोषोर्ध्वरोगिणः ।**

स०–विशेषेण पुनर्नवज्वरातिसारादीन् ऊर्ध्वरोगपर्यन्तान् वामयेत् । [ नवज्वरादीना यक्ष्मान्ताना द्वन्द्व इति । एवं च कुष्ठादीना कासान्ताना श्वासादीनामूर्ध्वरोगान्ताना च द्वन्द्वे इनी कार्यौ । ]

आ० र०–वमनस्य विशेषतो विषयमाह–विशेषेणेति, नवज्वरेति, कुष्ठमेहेति, श्वासेति । ऊर्ध्वरोगा –जत्रूर्ध्वरोगा. । सङ्ग्रहे तु ( सू अ २७ )–"विषपीतदष्टदिग्धविद्धविरुद्धाजीर्णान्नविषूचिकालसकाविपाकारोचकार्बुदमेदोगदापस्मारपाण्डुरोगा दोषभेदीयोक्ताश्च श्लेष्मव्याधय ।" इत्यधिकाः । युक्तिश्च, ( स सू अ २७ )–"एते हि पर वमनेन नाशमुपयान्ति, सलिलापगमादनिष्पन्नशाल्यादिवत् ।" इति ।

**अवाम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः ॥३॥**
**बालवृद्धकृशस्थूलहृद्रोगिक्षतदुर्बलाः ।**
**प्रसक्तवमथुप्लीहतिमिरक्रिमिकोष्ठिनः ॥ ४ ॥**
**ऊर्ध्वप्रवृत्तवाय्वस्रदत्तबस्तिहतस्वराः ।**
**मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः ॥ ५ ॥**
**उदावर्तभ्रमाष्ठीलापार्श्वरुग्वातरोगिणः ।**
**ऋते विषगराजीर्णविरुद्धाभ्यवहारतः ॥ ६ ॥**

स०–गर्भिण्यादयो वातरोगान्ता अवाम्या । अर्शांसि विद्यन्ते यस्य सोऽर्शस । "अर्शआदिभ्यश्च" इत्यच् । तत्र गर्भिण्या वमनाद्गर्भव्यापद्गर्भभ्रशश्च (शाच) दारुणरोगस्य रक्तपित्तादेरुद्भूति । रूक्षस्य वायु वाग्धनुहस्तादीना व्यापारायतीर्हत्वा हन्वादीना ग्रह कुर्यात् । क्षुधितस्य नित्यदु खितस्य च वायुना क्षपितशरीरत्वाद्बलक्षय स्यात् । बालादीनामौषधबलाक्षमत्वात्

१ 'चनमुच्यते–' ट । २ अय वमनविरेचनविधिश्चरके सू० १५।१६ अध्याययो सि० १।२।६ अध्यायेषु च, सुश्रुते चि० ३३। ३९ अध्याययो , अष्टाङ्गसङ्ग्रहे सू० २७ अध्याये चास्ति वर्णित । ३ 'वत्।' ठ ड । ४ 'काषीण्यौष' ग स द्व । ५ 'त्वाद्वमनी' क ख ग ञ । ६ 'कृत्यान्त ' स मू । ७ 'ष्यन्ने स्थू' स मू । 'ष्यण्णे स्थू' स स । ८ 'काषित्वा' ग स द्व । ९ 'न्दन्ति' क ख ग घ ञ स मू । १० 'ष्यन्दवि' घ । 'ष्यण्णवि' स स । ११ 'परिप्लुवन्' ख ञ । 'पारिप्लव स्ने' स द्व । १२ 'न्नणुस्रव' स मू । 'न्ननुप्रसरण' स स । १३ 'यमनुगम्य' स.स । १४ 'तत्र वमनविधिमाह–' ठ.ड ।

१ 'त्। अत्र पूर्वं वमनकथन "विरिच्यते मन्दकफस्तु सम्यक्।" इति प्रतिपादनार्थम्। सयोगे' ठ ड । 'त्। तद्वदित्यादि । यथा–' ट । २ 'के वमन कुर्यात्। पित्ते विरेचन तद्वत् यथा–' इति क्वचित्। ३ 'धिकसयोगे वा व' ट । ४ 'न्यरोगोर्ध्व' आ । ५ [ ] इति पाठ ठ ड पुस्तकयोर्नोपलभ्यते। ६ 'काविपा'क. ख ग ञ । ७ 'गमेनानि' स मू । 'गमनेनानि' स.स । ८ 'णी रूक्षक्षुधिता नित्यदु खिता.।' ग । ९ 'वातास्र' अ ड. । १० 'वर्तभ्रमा' आ. । ११ 'पत्। क्षुधितस्य च वा' ठ.ड ।

बलोपरोध स्यात्। हृद्रोगादीना[1] हृदयोपरोध । प्रसक्तच्छर्दी नामुदानो वायुरुत्क्षिप्य प्राणानपि हिंस्यात्। एवमन्यत्रापि[2] रोगोद्गमश्चिन्त्य.। [ [3]किं सर्वदैव गर्भिण्यादयोऽवाम्या ? उत कस्याश्चिदवस्थाया वाम्या, इत्याह- ] ऋत इत्यादि। विषाद्य-भ्यवहारमन्तरेण। विषाद्यभ्यवहारे तु वाम्या एवैते।

आ० र०-अवाम्यानाह-अवाम्या इति, बालेति, प्रसक्तेति, ऊर्ध्वेति, मूत्राघातीति, उदावर्तेति, ऋत इति। प्रसक्तवमथु -छर्द्यनु[4]रोधनात्। कृमिकोष्ठी-कृमिबहुलकोष्ठ। ऊर्ध्वं प्रवृत्तो वायुर[5]स्त्र च यस्य। हृतस्वरादय उदावर्ता दयश्च। विषादिभ्य ऋते। विषपानादौ तु गर्भिण्यादयोऽपि वाम्या। विरुद्धाभ्यवहार -"आनूपमामिष माष" (हृ सू अ ७।३०) इत्याद्युक्त। सङ्ग्रहे तु (सू अ २७)-"तत्र गर्भिण्या गर्भव्यापदामगर्भभ्रंशाच्च दारुणरोगप्राप्ति स्यात्। सुकुमारस्य हृदयविकर्षणादूर्ध्वमधो वा रुधिरप्रवृत्ति। अन्यकार्यव्यग्रस्यौषधं न प्रवर्तते, कृच्छ्रेण वा प्रवर्तमानमयोग[6]दोषान् कुर्यात्। रूक्षस्य वायुरङ्गग्रह[7]णम्। रूक्षाशनप्रायस्य वायुना क्षपितदोषत्वाद्बलक्षय स्यात्। तथाऽतिदीप्ताग्नेरग्निबलेन। भाराध्वकर्मनित्य[8]यानक्लान्ताना[9] प्रयासेन। क्षतस्य भूय क्षणनाद्रक्तातिप्रवृत्ति। क्षीणादीनामौषधबलाक्षमत्वाद्देहबलोपरोधोऽन्त क्षतभय च। प्रसक्तच्छर्द्यूर्ध्वरक्तपित्तयोरुदान[10]मुत्क्षिप्य[11] प्राणान् हरेत्, रक्तवाऽतिप्रवर्तयेत्[12]। ऊर्ध्ववातास्थापितानुवासितानामू[13]र्ध्ववातादिप्रवृत्ति। संवृतकोष्ठस्य दुश्छ[14]र्देस्य चातिमात्रप्रवाहणादन्त कोष्ठे समुत्क्लि[15]ष्टैर्दोषैर्विसर्पस्तम्भजाड्यवैचित्यानि मरण वा। हृद्रोगिणो हृदयोपरोध। उदावर्तादिभिरार्तानामर्दितादिभिश्च यथा[16]यथमाम[17]यवृद्धिर्मरण वा। कृ[18]मिकोष्ठस्यास्थापनेनाध पूर्वमनिर्हृते कृमिभिरतिबहु[19]त्वादशेषानि सरणेन हृदयमतिकर्षद्भिश्छर्दिषोऽतिप्रवृत्ति स्यात्।" इति।

**प्रसक्तवमथोः पूर्वं प्रायेणामज्वरोऽपि च।**
**धूमान्तैः कर्मभिर्वर्ज्याः, सर्वैरेव त्वजीर्णिनः॥ ७॥**

स०-प्रसक्तवमथो पूर्वे-पूर्वस्थिता दुर्बलान्ता[20] एकादशातुरा, तथाऽऽमज्वरश्च। ते सर्वे धूमान्तै कर्मभि[1] प्रायेण वर्ज्या, न केवल वमनेनैव। धूमग्रहण गण्डूषादिकर्मण परिहारार्थम्। प्रायोग्रहणमष्टमासाया गर्भिण्या निरूहा न वर्ज्या इति सूचनार्थम्। तथा, सद्योभुक्तस्य ज्वरितस्य सतो वमनानुज्ञानार्थम्। तु-पुन, अजीर्णिन पुरुषा सर्वैरेव-वमनादिभिर्गण्डूषादिभिश्च वर्ज्या[2]। आमदोषभयात्तैर्वमनादयो न सेव्या इत्यर्थ। अत्रापि प्रायोग्रहणमनुवर्तते। सद्योऽजीर्णिना हि वम[3]नमनुज्ञातमेव।

आ० र०-प्रसङ्गाद्गर्भिण्यादिष्वेकादशसु नवज्वरे च विरेचन[4]बस्तिनस्यधूमान्निषेधति-प्रसक्तवमथोरिति।

अजीर्णिना सर्वाणि कर्माणि निषेधति-सर्वैरेवेति। सर्वै -विरेचनाद्यैर्गण्डूषान्तैश्च। वमन तु विशेषतो विधानात् कर्तव्यम्। सङ्ग्रहे तु (सू अ २७)-"अजीर्णी तु सर्वैरेव वमनवर्ज्यैरामदोषभयात्, नवज्वरश्च दोषस्तम्भभयादिति।" इति।

**विरेकसाध्या गुल्मार्शोविस्फोटव्यङ्गकामलाः।**
**जीर्णज्वरोद[5]रगरच्छर्दि[6]प्लीहहलीमकाः॥ ८॥**
**विद्रधिस्तिमिरं काच. स्यन्दः पक्वाशयव्यथा।**
**योनिशु[7]क्राश्रया रोगा' कोष्ठगाः कृमयो व्रणाः॥९॥**
**वातास्र[8]मूर्ध्वगं रक्त मूत्राघातः शकृद्ग्रहः।**
**वाम्याश्च कुष्ठमेहाद्याः**

स०-विरेकेण साध्या -उपक्रम्या, गुल्माद्य[9] शकृद्ग्रहपर्यन्ता। पक्वाशये व्यथा पक्वाशयव्यथा। वाम्याश्चेति च समुच्चये। ये च कुष्ठाद्या[10] ऊर्ध्वरोगपर्यन्ता वमनार्हा उक्तास्ते च विरेच्या।

आ० र०-विरेच[11]नस्य विशेषतो विषयमाह-विरेकसाध्या इति, जीर्णज्वरेति, विद्रधिरिति, योनीति, वातास्रमिति, वाम्याश्चेति। सङ्ग्रहे तु (सू अ. २७)-"भगन्दराक्षिपाकक्षाराग्निदग्धशिर शूलोदावर्ता दोषभेदीयोक्ताश्च पित्तव्याधय।" इत्यधिकम्। युक्तिश्च, (स सू अ २७)-"एते हि पर विरेचनेन नाशमुपयान्त्यग्न्यपनयनेनाग्निगृहतापवत्।" इति।

**न तु रेच्या[12] नवज्वरी॥ १०॥**
**अल्पाग्न्यधोगपित्तास्रक्षतपाय्वतिसारिणः।**
**सशल्या[13]स्थापितक्रूरकोष्ठातिस्निग्धशोषिणः॥११॥**

स०-तुरवधारणे। नवज्वरो नैव रेच्य। तस्य हि विरे-

१ 'द्रोगिप्रभृतीना' ट। २ 'मन्येष्वपि यथायोग रोगोद्भवश्चिन्त्य' ट। ३ [ ] इति पाठ ठ ड पुस्तकयोर्नोपलभ्यते। ४ 'नुरोधात्' क। 'नुबन्धना' घ। ५ 'स्र वा यस्य' ग। ६ 'योगादोषान्' घ स.मू। ७ 'हम्।' क ख घ ञ स मू। ८ 'तदेहत्वा' स स.। ९ 'त्यपान' क घ। 'नित्याना चाया' स मू। १० 'नाचायासेन' ग स.द्व। ११ 'न उत्क्षि' ब स द्व। १२ 'क्त चाति' ख ग घ ञ स स। १३ 'ध्वं वातातिप्र' स स। १४ 'श्छर्दितस्य वाति' स स। १५ 'त्क्लिष्टे दोषे विस' क ख ज। १६ 'थाश्रमा' ग घ। १७ 'यप्रवृ' क सं द्व। १८ 'कृमिणको' स द्व.। १९ 'हुलत्वा' क.। २० 'न्ता, तथाऽऽमज्वरिणश्च।' ठ.ड।

१ 'भिवर्ज्या' ठ ड। २ 'ज्यां। सद्यो' ठ ड। ३ 'मन प्रयोज्यमेव' ड। ४ 'विरेचन' इति क ख ग ञ पुस्तकेषु नोपलभ्यते। ५ 'रस्य दो' सं द्व। ६ 'दरच्छर्दिप्लीहानाहहली'अ। 'दरच्छर्दिप्लीहपाण्डुहली' क। ७ 'शुक्राशया' क ख। 'शुक्रगता रो' ड। ८ 'तासृगूर्ध्व' ग। ९ 'य। पक्वा' ठ ड। १० 'द्या वम' ठ ड.। ११ 'चने वि' ग घ। १२ 'रेच्यो न' अ.आ ख.ग.ञ.ठ.। १३ 'स्याभिहतक्रू' आ.।

चनमपक्वान् दोषाननिर्हरन् वातकोपायैव स्यात्[2]। यक्ष्मादीनां त्ववस्थावशान्मृदुविरेच्यत्वमनुज्ञातमेव । यथा च पठिष्यति (हृ चि अ ५।१)-"बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम्। ऊर्ध्वाधो यक्ष्मिण कुर्यात्सस्नेहं यन्न कर्शनम् ॥" इति[3] [यक्ष्मण ]। तथा (हृ चि अ ९।४)-"अपि चाध्मानगुरुताशूलस्तैमित्यकारिणि । प्राणदा प्राणदा दोषे विबद्धे सम्प्रवर्तिनी ॥" इत्यादिनाऽतीसारस्यापि मृदुविरेचनमनुज्ञातम्। नैव[4] नवज्वरस्य स्वल्पविरेच्यत्वं कदाऽपि[5]। अल्पाग्न्यादय शोष्यन्ता न विरेच्या । तत्राल्पाग्निरबलत्वाद्भेषजवेग न सहते। अधोगरक्तपित्तातिसारिणोरतिप्रवृत्त्या[6] हन्यात्[7] । क्षतपायो प्राणोपरोधकरी रुजा जनयेत्[8] । सशल्यस्य क्षते वायुराश्रितो जीवित हिंस्यात्[9] । आस्थापितस्य भेषजवेगासहत्वाद्[10]बलोपरोध स्यात्। क्रूरकोष्ठस्यौषधोद्धता[11] दोषा ह्यप्रवर्तमाना हृदयशूलपर्वभेदानाहच्छर्दिमूर्च्छाक्लमान्[12] जनयित्वा प्राणान् हन्यु । अति स्निग्धस्यातियोगाय स्यात् । शोषिण क्षीणधातुतया मलबल त्वम्, तदभावाद्देहविनाश स्यादिति ।

**आ० र०-अविरेच्यानाह-न तु रेच्या[13] इति। क्षतपायु -क्षतगुद । सशल्य -अनुद्धृतशल्य । आस्थापित -कृतनिरूह । शोषी-राजयक्ष्मी । सङ्ग्रहे तु ( सू अ. २७)-"तत्र नवज्वरस्याविपक्वान् दोषान् न निर्हरेत्[14], वातमेव च कोपयेत्। अतिसार्यधोगरक्तपित्तयो[15]रतिप्रवृत्त्या[16] हन्यात्। क्षतगुदस्य[17] गुदे प्राणोपरोधकरी रुजा जनयेत्। लङ्घितादयो भेषजवेग न सहेरन् । राजयक्ष्मार्तस्य क्षीणधातुतया मलबलत्वम्[18], तदभावाद्देहनाश स्यात्। मदात्ययार्तस्य मद्यक्षीणे देहे वायु प्राणोपरोधाय । आध्मातस्य पुरीषाशये निचितो वायुर्विसर्पन्[19] सहसा तीव्रतरमाध्मान मरण वा जनयेत् । सशल्याभिहतयो क्षते वायुराश्रितो जीवित हिंस्यात् । अतिस्निग्धस्यातियोगो भवेत् । क्रूरकोष्ठस्यौषधोद्धता दोषा ह्यप्रवर्तमाना हृदयशूलपर्वभेदानाहच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्यु । गर्भिण्यादीनां पूर्वोक्तो[20] दोष स्यात्।" इति। पूर्वोक्तो-वमनोक्त ।**

१ 'पक्वदोषान्न नि' ट । २ 'त्। यथा च' ट । ३ 'ति। तथाऽतीसारस्याप्यभिधास्यते-"अपि' ट । ४ 'दि। नैव' ट । ५ 'दाचिदपि' ट । ६ 'रिणा चाति' ट । 'रिणावति' ठ । ७ 'वृत्ति र्हन्यात्' ट ड । ८ 'प्राणापहारकारिणी रुक् स्यात्। स' ठ । 'प्राणापहारी रुक् स्यात्। स' ड । ९ 'त हन्यात्' ठ ड । १० 'हत्वाद्' ट । ११ 'धोद्भवा दो' ट । १२ 'नाहमूर्च्छा जनयेयु । अति' ड । १३ 'रेच्य इति' ख ञ । १४ 'रेद्वा तानेव तु कोप' स मू । १५ 'धोरक्त' ग घ स ह्व । १६ 'पित्तावति' क ख ग घ ञ । १७ 'दस्या ते गुद प्रा' ख ञ । 'दस्य क्षते गु' ग । १८ 'लवत्त्वात्तद' क । 'लत्त्वात्तद' ख ग.घ ञ.। १९'सप्य स' ञ । २० 'र्वोक्तदो' स ह्व.।

**अथ साधारणे काले स्निग्धस्विन्नं यथाविधि ।**
**श्वोवम्यमुत्क्लिष्टकफं मत्स्यमाषतिलादिभिः[1] ॥ १२ ॥**
**निशां सुप्तं[2] सुजीर्णान्नं पूर्वाह्णे कृतमङ्गलम् ।**
**निरन्नमीषत्स्निग्धं वा पेयया पीतसर्पिषम् ॥ १३ ॥**
**वृद्धबालाबलक्लीबभीरून् रोगानुरोधतः ।**
**आकण्ठं पाययितान्मद्यं[3] क्षीरमिक्षुरसं रसम् ॥ १४ ॥**
**यथाविकारविहितां मधुसैन्धवसंयुताम् ।**
**कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥ १५ ॥**
**"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।**
**ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु वः ॥ १६ ॥**
**रसायनमिवर्षीणाममराणामिवामृतम्[4] ।**
**सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १७ ॥**
**ॐनमो भगवते भैषज्यगुरवे वैडूर्यप्रभराजाय[5] ।**
**तथागतायार्हते सम्यक्सम्बुद्धाय । तद्यथा ।**
**ॐभैषज्ये भैषज्ये[6] महाभैषज्ये[7] समुद्गते स्वाहा ॥"**
**प्राङ्मुखं पाययेत्**

**स०**-एतत् पूर्वोक्त रेच्यारेच्यत्वमवगम्यानन्तर साधारणे-श्रावणादौ काले, यथाविधि-स्नेहस्वेदाध्यायोदितेन क्रमेण, स्निग्धस्विन्न पुरुष भैषज्यमात्रा प्राङ्मुख पाययेदिति वक्ष्यमाणेन सम्बन्ध । कीदृशम्? श्वोवम्य-प्रातर्वमनार्हम्। वम्यमिति "अर्हेकृत्यतृचश्च" इत्यर्हार्थे पोरदुपधादिति यत्। उत्क्लिष्ट -स्थानाच्चलित, कफो यस्य तमुत्क्लिष्टकफम्। कै? मत्स्यादिभि । अन्तर्भावितण्यर्थोऽत्र । उत्क्लेशितकफमित्यर्थ । तथा, निशा सुप्तम् । "कालाध्वनो "इति द्वितीया। अत एव यथोचित सकलनिशास्वापोऽत्रोपलक्ष्यते। तथा, सुष्ठु जीर्णमन्न-आहारो यस्य तम्। कदा पाययेत्? पूर्वाह्णे-प्रात काले। किम्भूतम्? कृत मङ्गल-स्वस्त्ययनादि, यस्य तम् । मङ्गलमित्युपलक्षणार्थम्,-कृतदेवद्विजाग्निगुरुवृद्धार्चनमपीति द्रष्टव्यम्। तथा, निरन्न-अकृताहारम्। आतुरवशाद्वा किञ्चित्स्निग्धम्। कथम्? इत्याह-पेयया पीतसर्पिषम्। वृद्धेत्यादि। तथा,असौ वाम्यो वृद्धो वा बालो वा दुर्बलो वा क्लीब -खेदासहिष्णुर्वा भवति, भीरुर्वा-कातरो भवति। तदा रोगानुरोधादाकण्ठ-अतिमात्र मद्यक्षीरादिक पाययेत्। तदनन्तर भैषज्यमात्रा पाययेत्। सङ्ग्रहेऽप्युक्तम् (सू अ २७)-"भीरुकृशबालवृद्धसुकुमारान्वा दोषानुरोधेनाकण्ठ पीतयूषेक्षुरसक्षीरतक्रमांसरसमद्यतुषोदकयवागूमण्डान्यतमम्" इति । किम्भूता मात्राम्? यथाविकारविहिता,-रोगानुसारेण साधिताम्। तथा,मधुसैन्धवाभ्यां[8] युताम्। कि कृत्वा? कोष्ठ-मृदुमध्यक्रूरत्व

१ **'मत्स्यमासति'** अ ख । **'मासमाषति'** चन्द्र । २ **'सुप्त च जी'** ख ञ । ३ **'पाययेन्मद्य'** आ अरुण । ४ **'णा देवानाममृत यथा।'** आ.। ५ **'वैदूर्य'** स मू । ६ **'ज्ये महा'** ख ग ञ । ७ **'ज्ये भैषज्यसमु'** क स ह्व । ८ 'था रात्रौ सु' ड । ९ 'पीतघृतम्' ट ड । १० 'भ्या सहिताम्' ट ।

क्षण, विभज्य—विचार्य । श्लेष्माधिक्येन मृदुत्व, श्लेष्ममध्यत्वेन मध्यत्व, श्लेष्महीनत्वेन क्रूरत्व वमने कोष्ठस्य बोध्यम् । तथा चोक्तम् चरके (सि अ १।८)—"श्लेष्मोत्तरश्छर्दयते ह्यदु खम्" इति । किम्भूता भैषज्यमात्राम्? मन्त्राभिमन्त्रिताम्[2] । तानेव मन्त्रानाह—ब्रह्मेत्यादिग्रन्थेन[3] ।

आ० र०—वमनविधिमाह—अथेति । कृतस्नेहनादिकमातुर प्राङ्मुख भैषज्यमात्रा पाययेदित्यन्वय । श्वोवम्यमिति वमनदिनात्पूर्वदिने, उत्क्लिष्टकफम् । सम्यक्स्निग्ध चेत्स्निग्धम्[4] । ईषत्स्निग्ध चेत् पेयया पीतसर्पिषम् । यूद्धादिष्वन्यतममश्ने(म चे)द्रोगानुसारेण मद्यादिष्वन्यतममाकण्ठ पायितम्[5] । ब्रह्मेत्यादिस्वाहान्तेन मन्त्रेणाभिमन्त्रिताम् । अथ चौपधपानविधिर्विशेषपरिहारेण सर्वेष्वौषधेषु ज्ञेय । सङ्ग्रहे तु ( सू अ २७ )—"स्नातानुलिप्त स्रग्विणमहतवाससं देवताग्निद्विजगुरुवृद्धवैद्यानर्चिवन्त कृतहोमबलिमङ्गलप्रायश्चित्तस्वस्तिवाचन जानुसमसस्तृतसोपधानोपाश्रयासनोपविष्ट[6] पीततर्कयूषतुषोदकयवागूमण्डान्यतम[7] नक्षत्रतिथिकरणमुहूर्तोदये प्रशस्ते ।" इति (इत्यधिकम्) ।

**पीतो[8] मुहूर्तमनुपालयेत् ।**
**तन्मनाः**

स०—भैषज्यमात्रा पीत[9] सन्नातुर मुहूर्त तन्मना—वमिगतचित्त, अनुपालयेत्—प्रतीक्षेत ।

आ० र०—पानानन्तर विधिमाह—पीते[10] मुहूर्तमिति । तन्मना—वमनैकचित्त ।

**जातहृल्लासप्रसेकश्छर्दयेत्ततः[11] ॥ १८ ॥**
**अङ्गुलिभ्यामनायस्तो नालेन मृदुनाऽथवा ॥**
**गलताल्वरुजन्[12] वेगानप्रवृत्तान् प्रवर्तयेन्[13] ॥ १९ ॥**
**प्रवर्तयन् प्रवृत्ताश्च जानुतुल्यासने स्थितः ।**
**उभे पार्श्वे ललाटं च वमतश्चास्य धारयेत् ॥ २० ॥**
**प्रपीडयेत्तथा नाभि पृष्ठं च प्रतिलोमतः ।**

स०—तत—अनन्तर[14], सञ्जातहृल्लासप्रसेक सन् छर्दयेत् । हृल्लासो—हृदुपरोध । प्रसेको—निष्ठीवनम् । कथ वमेत्? अङ्गुलिभ्या द्वाभ्याम् । यद्वा[15], कोमलेन सुवर्चलैरण्डादिजेन—नालेन मृदुना वमेत् । कीदृग[1]? अनायस्त,—अनायासेनेत्यर्थ । अपर गलताल्वपीडयन्[2] । तथा, अप्रवृत्तान् वेगान् प्रवर्तयन्[3] प्रवृत्ताश्च प्रवर्तयन्[4] । जानुप्रमाणे पीठे[5] स्थित । च—अपर, अस्य—नरस्य, वमन कुर्वतो द्वे पार्श्वे ललाट च धारयेत् । परिचारक इति शेष । नाभि च पीडयेत् । पृष्ठ च प्रतिलोमत[6]—असन्मार्गेण पीडयेत् ।

आ० र०—प्रवृत्तवमनस्य कृत्यमाह—जातहृल्लासेत्यादि । अङ्गुलीभ्या सहताभ्या, मृदुना नालेन[7], प्रवृत्तान् सविबन्धान् प्रवर्तयन्, न त्वप्रवृत्तान्[8] प्रवर्तयन्, छर्दयेदित्यन्वय । अनायस्त—आयासरहित । पृष्ठ च प्रतिलोमत—त्रिकाद्दार भ्योर्ध्व प्रपीडयेत् । सङ्ग्रहे तु ( सू अ २७ )—"स यदा जानीयात् स्वेदप्रादुर्भावेन दोष प्रविलयमापद्यमान, रोमहर्षेण[10] च स्थानेभ्यो[11] विचलित, कुक्ष्याध्मानेन[12] च कुक्षिमनुसृत, क्रमात् हृदयोपमर्दहृल्लासास्यसस्रवणैश्चोर्ध्वमभिमुखीभूतम् । अथ समुपस्थापितानेकप्रतिग्रहो[13][14] विवृतौष्ठताल[15]कण्ठो नातिमहता व्यायामेन वेगानुदीरयन् वमेत् । नात्युन्नतो नात्यवनतो[16] न पार्श्वावृत्तो[17] वा । तत्रात्युन्नतस्य पृष्ठहृदयपीडा भवति । अत्यवनतस्य शिरः[18] कोष्ठपीडा । पार्श्वावृत्तस्य पार्श्वकोष्ठहृदयोर्ध्वजत्रुपीडेति ।" इति ।

**कफे तीक्ष्णोष्णकटुकैः पित्ते स्वादुहिमैरिति ॥ २१ ॥**
**वमेत् स्निग्धाम्ललवणैः संसृष्टे मरुता कफे ।**

स०—कफे तीक्ष्णोष्णकटुकैर्द्रव्यैर्वमेत् । पित्ते स्वादुशीतैर्द्रव्यैर्वमेत् । स्निग्धाम्ललवणैर्वायुना युक्ते कफे वमेत् ।

आ० र०—दोषभेदेन वमनद्रव्यभेदमाह[19]—कफ इत्यादि । इति—उक्तेन प्रकारेण ।

कियन्त काल वमेत्? इत्याह—

**पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत् ॥२२॥**

स०—यावत् पित्तस्य दर्शन स्यात्, कफस्य वा छेद—अन्त[20] स्यात्, तावद्वमेत् ।

आ० र०—वमनावधिमाह—पित्तस्य दर्शनमिति ।

---

१ 'रत्वमिति । भैष' ट । 'रत्वमिति मान कोष्ठ' इति क्वचित् । २ 'मन्त्रैरभि' ट । ३ 'त्यादिना ।' ट । ४ 'स्निग्ध निर' क ख ग ञ । 'स्निग्धश्चेस्नि' घ । ५ 'यितान् ।' ग घ । ६ 'तमहोपधा' म मू । ७ 'ऋतुषो' क ख ञ । ८ 'पीत मु' अ आ ख ञ । 'पीते मु' क ग चन्द्र । ९ 'पीत स तमातुर मु' ट । १० 'पीत मु' ख ञ । 'पीत इति' घ । ११ 'प्रसेक छर्द' ख ग ञ । १२ 'गात्राप्र' अ क ख ग घ ञ । १३ 'र्तयेत् ।' अ आ क ख ग घ ञ । १४ 'र जात' ट । 'सञ्जातहृदुपरोध सञ्जातनिष्ठीवनश्च वमेत् । कथम्? अ' ट. । १५ 'अथवा' ट ।

१ 'कीदृक्?' ट । २ 'थ । कथम्? गलश्च तालु च, तदरुजन्—न पीडयन् । तथा' ट । ३ 'न् अप्रेरयन्' ड । ४ 'न् प्रेरयेत् । प्रवृत्ताश्च वेगानुन्मनीभूतान् प्रव' ट । ५ 'ठे उपविष्ट ।' ट । ६ 'त—विलोममार्गेण' ट । ७ 'लेनाप्रवृत्तानविबन्धान् प्रवर्तयेत्, न' क ख ञ । ८ 'त्वतिप्र' ञ । ९ 'त्तानतिप्र' ग । १० 'ण स्था' क ख ञ । ११ 'नेभ्य प्रवि' स द्व । १२ 'न कु' क ख ग घ ञ । १३ 'पस्थिताने' स द्व । १४ 'तिग्रहो' क ख ग ञ । १५ 'ष्ठकण्ठतालुको ना' क । १६ 'नत पार्श्वा' क ख ग.घ ञ. स मू । १७ 'श्वोपवृ' स द्व । १८ 'र-कण्ठपीडा' क ख ञ । १९ 'व्यमाह' क ख ञ । २० 'न कफान्तो वा ताव' ड ।

**हीनवेगः कणाधात्रीसिद्धार्थलवणोदकैः ।**
**वमेत्पुनःपुनः**

स०–हीनवेगो नर कणाधात्रीसिद्धार्थलवणोदकैरसकृद्वमेत् ।

आ० र०–हीनवेगस्यौषधमाह–हीनवेग इति । पिप्पल्यादिमिश्रमुदक पुन पुन पीत्वा वमेत् । सङ्ग्रहे तु ( सू अ २७ )–"प्रभूतवमनासहिष्णुर्घ्यह त्र्यह वा विश्रम्य, असात्म्यबीभत्सदुर्दर्शदुर्गन्धानि वमनानि विदध्यात् । विपरीतानि[2] विरेचनानि ।" इति ।

**तत्र वेगानामप्रवर्तनम् ॥ २३ ॥**
**प्रवृत्तिः सविबन्धा वा केवलस्यौषधस्य वा ।**
**अयोगस्तेन निष्ठीवकण्डूकोठज्वरादय· ॥ २४ ॥**

स०–तत्र–तेषु सम्यग्योगातियोगायोगेषु मध्यात्, वेगानामप्रवर्तनमसावयोग । सविबन्धा च या प्रवृत्ति सोऽप्ययोग । केवलस्य–दोषादिरहितस्यौषधस्य या प्रवृत्ति सोऽप्ययोग । तेन–अयोगेन, निष्ठीवादय स्यु ।

आ० र०–हीनयोगलक्षणमाह–तत्रेति ।

हीनयोगजान् रोगानाह–तेनेति । आदिशब्दादरोचकगौरवाध्मानस्फोटालस्यशूलप्रतिश्यायरोमहर्षशोफादय ।

**निर्विबन्धं प्रवर्तन्ते कफपित्तानिलाः क्रमात् ।**
**( मनःप्रसादः स्वास्थ्यं चावस्थानं च स्वयं भवेत् ।**
**वैपरीत्यमयोगानां न चातिमहती व्यथा ॥ १ ॥ )**
**सम्यग्योगे**

स०–सम्यग्योगे कफपित्तानिला क्रमेण निर्विबन्ध–नि सङ्ग प्रवर्तन्ते ।

आ० र०–सम्यग्योगलक्षणमाह–निर्विबन्धमिति । सङ्ग्रहे तु ( सू अ २७ )–"**नातिमहती व्यथा स्वयं चावस्थानम् । ततश्च स्वस्थता मन प्रसाद स्वरविशुद्धिररोचकादिवैपरीत्य च ।**" इति ।

**अतियोगे तु फेनचन्द्रकरक्तवत् ॥ २५ ॥**
**वमितं क्षामता दाहः कण्ठशोषस्तमो भ्रमः ।**
**घोरा वाय्वामया मृत्युर्जीवशोणितनिर्गमात् ॥ २६ ॥**

स०–अतियोगे पुन फेनचन्द्रकरक्तवद्वमित–वमन भवति । फेनश्च चन्द्रकश्च रक्त च, तानि विद्यन्ते यस्य वमितस्य तदेवम् । तथा, क्षामतादयो भवन्ति । तम –तिमिरदर्शनं, दारुणाश्च वातरोगा । तथा मृत्युर्भवति, जीवाख्यस्य शोणितस्य निर्गमात्–निष्कासात् ।

आ० र०–अतियोगलक्षणमाह–अतियोगे त्वित्यादि । फेनादियुक्त वमितम् । चन्द्रका –मयूरपिच्छेष्विव । तम –अज्ञानम् । भ्रम –चक्राधिरूढस्येव । जीवशोणित–ओज । सङ्ग्रहे तु (सू अ २७)–"स्वरक्षयमोहोन्मादमूर्च्छाशिर शून्यताहृदयधूमायनगात्रशूलसुप्तितृष्णोर्ध्वानिलप्रकोपकर्णशूलार्दितवाक्सङ्गहनुसहननजिह्वाप्रवेशनिर्गमाक्षिव्यावृत्तिविसज्ञतानिद्राबलाग्निहानयो भवन्ति ।" इति ।

**सम्यग्योगेन वमितं क्षणमाश्वास्य पाययेत् ।**
**धूमत्रयस्यान्यतमं स्नेहाचारमथादिशेत् ॥ २७ ॥**

स०–सम्यग्योगेन वमिते सति मुहूर्तमाश्वास्य–शीतवातादिना, धूमत्रयस्य–स्निग्धमध्यतीक्ष्णाख्यस्य, अन्यतम–एक, पाययेद्वैद्य । अथ–अनन्तर, स्नेहाचार–"उष्णोदकोपचारी स्यात्" इत्यादिक, आदिशेत् ।

आ० र०–सम्यग्वान्तस्योपचारमाह–सम्यग्योगेनेति । धूमत्रयस्य–स्निग्धमध्यतीक्ष्णभेदात् । सङ्ग्रहे तु ( सू अ २७ )–"सुविशोधितपाणिपादमुख धूम पाययित्वा पुनरुपस्पृष्टोदक सम्मानितसुरभिताम्बूल निर्वातागारशय्यास्थितम् ।" इति ।

**ततः सायं प्रभाते वा क्षुद्वान् स्नातः सुखाम्बुना ।**
**भुञ्जानो रक्तशाल्यन्नं भजेत्पेयादिकं क्रमम् ॥ २८ ॥**

स०–तत –ऊर्ध्व,साय–अपराह्णे,प्रभाते–पूर्वाह्णे वा,बुभुक्षित उष्णोदकेन स्नातो रक्तशाल्यन्न भुञ्जान पेयादिक क्रम भजेत् ।

आ० र०–सम्यग्वान्त पेयादिक्रमेण भुञ्जीतेत्याह–तत सायमिति । दीप्ताग्निश्चेत्साय, मन्दाग्निश्चेत्परदिने प्रात, पेयादिक क्रम भजेत्,–पेयादिक्रमेण रक्तशाल्यन्न भुञ्जीत ।

तमेव पेयादिक क्रममाह—

**पेयां विलेपीमकृतं कृतं च**
**यूषं रसं त्रीनुभयं तथैकम् ।**
**क्रमेण सेवेत नरोऽन्नकालान्**
**प्रधानमध्यावरशुद्धिशुद्धः ॥ २९ ॥**

स०–प्रधाना च मध्या चावरा च प्रधानमध्यावरा. । प्रधानमध्यावराश्च ता शुद्धयश्च, ताभि शुद्धो नर क्रमेण–यथा-

१ 'षधान्तरमा' घ । २ 'नि तु वि' स द्व । ३ 'नयोगस्य ल' क । 'नस्य ल' ख ञ । ४ ( ) टीकाकारैरव्याख्यातोऽप्ययं सङ्ग्रहगद्यग्रन्थानुकारी युक्तश्च अ क ख ग ड ञ पुस्तकेष्वुपलभ्यते श्लोक । ५ 'स्थ्य च अवस्थान स्वय' क ख ग ड ञ । ६ 'य वाऽवस्थान' ख ञ । ७ 'स्थत्व म' ग । ८ 'चन्द्रिक' क.ख.घ ञ ।

१ 'चन्द्रिका' क ख घ ञ । २ 'म पीत्वा' क ख ग घ ञ । ३ 'निवाता' क स द्व । ४ 'भुञ्जानो रक्त' इति श्लोकार्द्धस्थाने "**पुराणरक्तशालीनामस्नेहलवणोषणम् । भुञ्जानोऽन्नमपेक्षेत पेयादिकमिम** ( 'कममु' ठ । ) **क्रमम्** ( 'क्रमात्' आ । ) ॥" इति सङ्ग्रहगद्यग्रन्थानुसारी चन्द्रनन्दनसम्मतश्च आ क ड ठ पुस्तकेष्वुपलभ्यते श्लोक । ५ अस्याग्रे 'रक्तशाल्यन्नेन पेयादय कार्या इत्यर्थ । किञ्च कृताकृतयूषरसादिभि पेयाद्यग्रेऽभिहितै सह रक्तशाल्योदनो भोज्य इति नियमार्थं भुञ्जान इत्युक्तम् । अन्यथा मुनिवाक्यविरोधापत्ति ।' इति ट पुस्तकेऽधिक पाठ ।

सङ्ख्य, पेया त्रीनन्नकालान् द्वावन्नकालावेकमन्नकाल भजेदिति। विलेप्यादिष्वप्येव योज्यम्। एतदेव स्पष्टीकृत्योच्यते। यथा,-प्रधानशुद्ध्या शुद्धो नरो द्वावन्नकालावेकस्मिन् दिने पेया भजेत्। द्वितीयेऽह्न्येकमन्नकाल पेया द्वितीयमन्नकाल विलेपीम्। तृतीये वासरे द्वावन्नकालौ विलेपीमेव। चतुर्थे दिवसे अकृत-शुण्ठीलवणाद्यसस्कृत यूष, कृत-शुण्ठीलवणादिसस्कृत यूष च द्वावन्नकालौ भजेत्, पञ्चमेऽह्नि प्रथमेऽन्नकाले च। 'च' समुच्चये। त्रिष्वपि कालेष्वकृत कृत च यूष भजेत्, विभज्य तावद्गम्यते। एव कालत्रय कृताकृत रस विभज्य भोजयेत्। सप्तरात्रेण (सप्ताहात्) प्रकृतिभोजन क्रमेण सेवेत। एव यथास्व मध्यशुद्धिशुद्धस्यावरशुद्धिशुद्धस्य च योजना कार्या। मुनिस्त्वाह (च सू अ १५।१७)-"अथैन सायाह्ने परे वाऽह्नि सुखोदकपरिषिक्त पुराणाना लोहितशालितण्डुलाना स्ववक्लिन्ना मण्डपूर्वा सुखोष्णा यवागू पाययेदग्निबलमभिसमीक्ष्य। एव द्वितीये तृतीये चान्नकाले। चतुर्थे त्वन्नकाले तथाविधानामेव शालीना सुखिन्ना विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणा वा भोजयेत्। एव पञ्चमे षष्ठे चान्नकाले। सप्तमे त्वन्नकाले तथाविधानामेव शालीना द्विप्रसृत सुस्विन्नमोदनमुष्णोदकानुपान तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत्। एवमष्टमे नवमे चान्नकाले। दशमे त्वन्नकाले लावकपिञ्जलादीनामन्यतमस्य मासस्य रसेनौदकलावणिकेन नातिसारवता भोजयेदुष्णोदकानुपानम्। एवमेकादशे द्वादशे चान्नकाले। अत ऊर्ध्वमन्नगुणान् क्रमेणोपभुञ्जान सप्ताहात् प्रकृतिभोजनमागच्छेत्।" इति। त्रीनिति "कालाध्वनोरत्यन्तसयोगे" इति द्वितीया।

आ० र०-पेयादिक्रममाह-पेयामिति। उत्तमशुद्ध्या शुद्ध पेयादिक त्रीस्त्रीन् अन्नकालान् भुञ्जीत। मध्यशुद्ध्या शुद्धो द्वौ द्वौ। अवरशुद्ध्या शुद्ध एकैकम्। अकृत -स्नेहादिभिरसस्कृतो, यूप। कृतः-संस्कृत।

१ अकृतकृतयूपयोर्लक्षण सुश्रुते उक्तम् (सू अ ४६।३७९)-"अस्नेहलवण सर्वमकृत कटुकैर्विना। विज्ञेय लवणस्नेहकटुकै सयुत कृतम्॥" इति। कटुकै -शुण्ठ्यादिभि। २ 'लेऽकृत यूप भजेत्। च आनन्तर्ये। द्वितीयेऽन्नकाले कृत-शुण्ठ्यादिसस्कृत भजेत्। षष्ठे दिवसे द्वावप्यन्नकालौ कृत यूष भजेत्। सप्तमेऽह्नि द्वावप्यन्नकालौ मासरस भजेत्। अष्टमेऽह्नि प्रथममन्नकाल मासरस भजेत्। एव' ट.। ३ 'क्लिन्नाना म' स च। ४ 'क्ष्य च।' स च। ५ 'शालितण्डुलाना' स च। ६ 'द्विप्रसृत' ट, स च। ७ 'स्विन्न चोद' ट.। ८ 'मासरसे' स च। ९ 'सेन दक' ट ठ। १० 'पभुञ्जा' स च। ११ 'सप्तरात्रेण प्र' ट, स च। १२ अस्याग्रे 'केचित् रक्तशालिग्रहणमुपलक्षणम्, अन्यदपि लघुशालित्रीह्यादिक हित भोज्यमेवेत्याहु। प्रधानमध्यावरेति "ड्यापो सज्ञाछन्दसो" इति ह्रस्व।' इति ट पुस्तकेऽधिक पाठ। १३ 'दिकान् त्री' घ। १४ 'अकृत-स्नेहादिरहितम्। कृत-स्नेहादियुतम्।' क.ख ञ.।

अधुना पेयादिक्रमस्य फल वक्ति—

**यथाऽणुरग्निस्तृणगोमयाद्यैः**
**सन्धुक्ष्यमाणो भवति क्रमेण।**
**महान् स्थिरः सर्वपचस्तथैव**
**शुद्धस्य पेयादिभिरन्तराग्निः॥ ३०॥**

स०-यथा बाह्योऽग्निरणु -अल्प, तृणगोमयकाष्ठदलादिभि सन्धुक्ष्यमाण -उद्दीप्यमानो, महान् स्थिर -चिरकालस्थायी, सर्वपच -स्थूलसूक्ष्मगुरुलघुपाचक, क्रमेण भवति। तथैव-तेनैव प्रकारेण, शुद्धस्य नरस्य पेयादिभिरन्तराग्नि -औदर्योऽग्नि, महान् स्थिर सर्वपचश्च भवति। सर्वपच इति पचेरजन्तस्य सर्वशब्देन सह षष्ठीसमास। खरनादेऽप्युक्तम्-"विरेके वमने श्रेष्ठे पेयादीना क्रियाक्रम। त्रिशो, द्विशो मध्यमे स्यादेकशस्तु कनीयसि॥" इति।

आ० र०-पेयादिक्रमस्य फलमाह-यथाऽणुरिति।

**जघन्यमध्यप्रवरे तु वेगा-**
**श्चत्वार इष्टा वमने षडष्टौ।**
**दशैव ते द्वित्रिगुणा विरेके**
**प्रस्थस्तथा स्याद्द्विचतुर्गुणश्च॥ ३१॥**

स०-जघन्य च मध्य च प्रवर च तस्मिन् वमने क्रमेण वेगाश्चत्वार षडष्टेष्टा। तन्त्रकृतामिति शेष। ते वेगा दशैव द्वित्रिगुणा जघन्यमध्यप्रवरे विरेके क्रमेण भवन्ति। तथेति समुच्चये। न केवल वेगा मानम्, प्रस्थश्च द्विचतुर्गुणो मान स्यादिति तथाशब्दस्यार्थ। त्रीण्येतान्युपजातिवृत्तानि।

आ० र०-त्रिविधस्य वमनस्य वेगमानमाह-जघन्येति। त्रिविधस्य विरेकस्य वेगमानमाह-दशैवेति। द्विगुणा.-विंशति। त्रिगुणा -त्रिंशत्।

त्रिविधस्य विरेकस्य तुलामानमाह-प्रस्थ इति। प्रस्थोऽत्र न द्वात्रिंशत्पल.। "वमने च विरेके च तथा शोणितमोक्षणे। सार्द्धत्रयोदशपल प्रस्थमाहुर्मनीषिण॥" इति वचनात्। एक प्रस्थो, द्वौ प्रस्थौ, चत्वार प्रस्था, इति त्रीणि मानानि।

१ 'स्य यत्फल भवति, तत्सदृष्टान्त वक्ति' ट। २ 'रन्तरग्नि.' क ख घ ञ ठ स मू, स च। ३ 'ह्यो वह्निर' ट। ४ 'अल्प' ठ। 'अल्पोऽपि गोमयादिभि' ड। ५ 'काष्ठादि' ट। 'काष्ठीलादि' ठ। ६ 'महत्वादिगुणयुक्तो भवति' ड। ७ 'स्थिर सर्वपचो भवति' ठ। ८ 'ति। तेनेव प्रकारेण पेयादिभि. शुद्धस्यौदर्यो' ठ ड.। ९ 'ना त्रिकक्रम' ठ ड.। १० अस्मात्प्राक् 'ननु, "प्रधानमध्यावरशुद्धिशुद्ध" इत्युक्तम्। अत्र न ज्ञायते का प्रधाना शुद्धि? का मध्या? काऽवरा? इति। अतो द्वयोरपि वमनविरेचनयोर्वेगसङ्ख्यया मानत प्रवृत्तदोषदर्शनतश्च जघन्येत्यादिना शुद्धित्रयस्य लक्षणमुच्यते-' इतीन्दूक्त युक्तमवतरणम्। ११ 'ल विरेके दशैव वेगा द्वित्रिगुणा मान स्यात्, प्रस्थ' ट.। 'ल वेगाना मानम्, प्र' ठ.।

**पित्तावसानं वमनं विरेका-**
**दर्द्धं, कफान्तं च विरेकमाहुः ।**

स०–पित्तान्तं वमनं वदन्ति । विरेकादर्द्धं वमनं कथयन्ति । विरेचनं कफान्तमाहुः ।

आ० र०–त्रिविधस्यापि वमनस्य पित्तावसानत्वमेव सम्यक्त्वमित्याह–पित्तावसानमिति ।

त्रिविधस्य वमनस्य तुलामानमाह–विरेकादर्धमिति । अर्द्धं–अर्धप्रस्थं प्रस्थं प्रस्थद्वयं चेति ।

त्रिविधस्यापि विरेकस्य कफावसानत्वमेव सम्यक्त्वमाह–कफान्तं चेति ।

**द्वित्रान् सविट्कानपनीय वेगान्**
**मेयं विरेके, वमने तु पीतम् ॥ ३२ ॥**

स०–द्वौ वा त्रयो वा द्वित्राः । "सङ्ख्ययाऽव्यया" इति बहुव्रीहिः । "बहुव्रीहौ सङ्ख्येये डच्" इति डच् वा समासान्तः । सह विशा–पुरीषेण वर्तन्त इति सविट्काः । द्वित्रान् वेगान् सविट्कानपनीय–गणनायामनुपारुह्य, विरेके मेयं–मातव्यम् । वमने पुनः पीतं यदौषधं तदपनीय मेयम् । इन्द्रवज्रावृत्तम् ।

आ० र०–वेगमाने तुलामाने चापोह्यमानमाह–द्वित्रानिति । वमने[3] तु वमनार्थं यत्पीतं तदपनीय मेयम् ।

**अथैनं वामितं भूयः स्नेहस्वेदोपपादितम् ।**
**श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत् ॥३३॥**

स०–एनं–नरं वामितं, भूयः–पुनरपि, स्नेहस्वेदाभ्यामुपपादितमनन्तरं सम्यग्विरेचयेत् । कदा? श्लेष्मणः कालः–सत्रिभागः प्रहरः, तस्मिन् गते सति । किं कृत्वा? कोष्ठं–मृदुमध्यक्रूरलक्षणं, ज्ञात्वा–अवगम्य ।

आ० र०–विरेचनविधिमाह–अथैनमिति । स्नेहस्वेदाभ्यां पुनरप्युपपादितं–शोधनयोग्यतां नीतं, विरेचयेत्–विरेचनौषधं दद्यात् । सङ्ग्रहे तु ( सू० अ० २७ )–"न त्वकृतवमनमन्यत्रातिक्रूरकोष्ठात् । अकृतवमनस्य हि श्लेष्मणोपहतमौषधमूर्ध्वं प्रवर्तते । उरसि वा[4] रुद्धमवतिष्ठते । ततो नालं विरेचनाय[5] । सम्यग्विरिक्तस्यापि[6] चाधः स्रस्तः श्लेष्मा ग्रहणीं छादयित्वा गौरवमापादयति प्रवाहिकां वा । न त्वेष दोषोऽतिक्रूरकोष्ठस्य वाय्वात्मकत्वात् । श्लेष्मकालेऽप्यकृतवमनोक्तो[8] दोषः । शूलाध्मानगौरवाणि[9] वा कृत्वा[10] क्षीणे श्लेष्मण्यपराह्णे रात्रौ वा विरेचयेत् । तेनानावृतमपि तुल्यम् । छर्दिं च पुनस्तज्जनयति । अविरिक्तस्य तु श्लेष्मकाले च वमनं[1] योज्यम्, तथोर्ध्वं सुखेन निर्हरणात् ।" इति ।

**बहुपित्तो मृदुः कोष्ठः क्षीरेणापि विरिच्यते ।**

स०–यो बहुपित्तः कोष्ठः स मृदुर्भवति । स च क्षीरेण विरिच्यते[2] । अपिशब्दादारग्वधादिभिरपि ।

आ० र०–मृदुकोष्ठस्य लक्षणमाह–बहुपित्त इति । सङ्ग्रहे तु ( सू० अ० २७ )–"इक्षुरसाम्लतक्रमस्तुगुडकृशरा[3]सर्पि[4]र्नवमद्योष्णोदकपीलुद्राक्षापूगफलादिभिः ।" इति ।

**प्रभूतमारुतः क्रूरः कृच्छ्राच्छ्यामादिकैरपि ॥ ३४ ॥**

स०–प्रभूतमारुतः क्रूरः कोष्ठो भवति । स च कृच्छ्रेण–कथञ्चिदपि, श्यामादिकैर्विरिच्यते । आदिशब्देन कङ्कुष्ठसुधादीनां ग्रहणम् । अपिशब्दादारग्वधादिभिर्न विरिच्यते ।

आ० र०–क्रूरकोष्ठस्य लक्षणमाह–प्रभूतमारुत इति । आदिशब्दात्रिफलातिल्वकनीलिनीफलादयः[5] । सङ्ग्रहे तु ( सू० अ० २७ )–"बहुश्लेष्मा समदोषश्च मध्यः, स साधारणः । ये च स्निह्यन्त्यच्छपानेन प्रायशस्त्रिसप्तपञ्चरात्रै[6]रिति ।" इति ।

**कषायमधुरैः पित्ते विरेकः, कटुकैः कफे ।**
**स्निग्धोष्णलवणैर्वायौ**

स०–कषायमधुरैः–आरग्वधादिभिः, पित्ते विरेकः । कटुकैः[7] कफे विरेकः । स्निग्धोष्णलवणैः–एरण्डतैलादिभिर्वायौ विरेकः कार्यः ।

आ० र०–दोषभेदेन विरेचनभेदमाह–कषायमधुरैरिति । सङ्ग्रहे तु ( सू० अ० २७ )–"पीतमात्र एव चौषधे छर्दिविघाताय शीताम्बुना मुखमस्य सहसा सिञ्चेत् । ततश्चोष्णोदकेन सोऽन्तर्मुखं विशोध्य, आर्द्रसुरभिमृन्मातुलुङ्गजम्बीरसुमनःसौगन्धिकादीनि[8] हृद्यगन्धान्युपजिघ्रेत्[9] । निवातसुखशय्यास्थितश्चाविबन्धार्थमल्पाल्पमुष्णोदकमनुकं[10]ठयस्तन्मना वेगान्न धारयन् ईरयमाणश्च[11] स्वयं शय्यासने(न्ने)षु प्रतिग्राहेष्वशीतस्पृग्विरिच्यते । यथा च वमने स्वेदप्रसेकौषधकफपित्तानिलाः क्रमेण प्रवर्तन्ते । तथा विरेचने वातमूत्रपुरीषपित्तकफाः । पुनश्चान्ते वायुः । दोषाणां हि देहे तथा सन्निवेशान्मार्गवैपरीत्याच्च शोधनयोरिति ।" इति ।

**अप्रवृत्तौ तु पाययेत् ॥ ३५ ॥**
**उष्णाम्बु, स्वेदयेदस्य पाणितापेन चोदरम् ।**

स०–अप्रवृत्तिः–मन्दा प्रवृत्तिः । नञ् ईषदर्थे । विरेका-

---

१ 'म्यग्योगत्वमाह' ख ञ । २ 'पारूढान् कृत्वा वि' ट । ३ 'ने पुनः पीतं यदौषधं तद' ख ञ । ४ 'वाऽवरुद्ध' घ स द्व । ५ 'रेकाय' स द्व । ६ 'पि वाऽध ' क ग । ७ 'ध स्रुत ' ख ञ । ८ 'ले त्वकृतवमनोक्तदोष ' स द्व । ९ 'णि च कृ' क ख.ग.घ.ञ.स मू । १० 'त्वा छर्दिक्षीणे' स.द्व. ।

१ 'न निरत्र यो' स स । २ 'विरेच्यते' ड । ३ 'कृसरस' स स । ४ 'सर्पिस्तैलमधूष्णो' ख ञ । ५ 'कनील्यादय ' क ख. ग ञ । ६ 'स्निपञ्चसप्तरात्रै' क ख ग घ ञ. । ७ 'कादिहृद्य' स द्व । ८ 'नि पुष्पग' ख ञ । ९ 'गन्धीन्यु' ख ग ञ । १० अनुकण्ठयन्–पिबन् । ११ 'श्च शय्यासन्ने प्रतिग्राहेऽशीत'स.द्व. ।

प्रवृत्तावुष्णाम्बु पाययेद्वैद्य । अस्य चातुरस्य पाणितापेन जठर स्वेदयेत् ।

आ० र०-विरेचनाप्रवृत्तौ प्रवर्तनोपायमाह-अप्रवृत्ताविति।

**उत्थानेऽल्पे दिने तस्मिन्भुक्त्वाऽन्येद्युः पुनः पिबेत् ॥**
**अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः ।**
**भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम् ॥ ३७ ॥**
**यौगिकं सम्यगालोच्य स्मरन्पूर्वमतिक्रमम् ।**

स०-तस्मिन्-विरेकस्य दिने, अल्प उत्थाने-स्तोकाया प्रवृत्तौ सत्या, भुक्त्वाऽन्नमन्येद्यु -अन्यस्मिन् दिने पुनर्विरेचनौषध पिबेदातुर । स्नेहन-स्नेह । दृढ स्नेहकोष्ठो यस्य स दृढस्नेहकोष्ठ । न दृढस्नेहकोष्ठोऽदृढस्नेहकोष्ठ । स भूयोऽपि स्नेहस्वेदै सस्कृतशरीरो दशाहादूर्ध्वं यौगिक विरेचन पिबेत् । [ सम्यगालोच्य- ] यथावन्निरूप्य, पूर्वमतुक्रम-"भेषज्यमात्रा मन्त्राभिमन्त्रिताम्'' इत्यादिक, तथा "अप्रवृत्तौ तु पाययेत् । उष्णाम्बु स्वेदयेदस्य पाणितापेन चोदरम् ।" इत्यादिक च, स्मरन् पिबेदिति ।

आ० र०-उपायेनाप्यप्रवृत्तौ किं कृत्यम् ? इत्यत आह-उत्थान इति । उत्थाने-प्रवर्तने अल्पे सति तस्मिन् दिने भुक्त्वा द्वितीयदिने पुनर्विरेचन पिबेत् । यस्तु निवृत्तस्नेहवान्न विरिच्यते स पुन स्निग्धस्विन्नो दशाहादूर्ध्वं विरेचन पिबेत् । पूर्वमतिक्रम-प्रथमविरेचने सामग्रीवैकल्य, स्मरन् सम्यगालोच्य यद्योग्य स्यात्तत्पुनर्देयम्, न प्रथममेव । सङ्ग्रहे तु ( सू अ. २७ )-"ह्रीभयलोभैश्च वेगाघातशीला प्रायशस्त्रियो राजसमीपस्था वणिजश्च भवन्ति । तस्मादेते वेगधारणात् प्रवृद्धवातत्वात् सदाऽऽतुरा दुर्विरेच्याश्च । तान् सुस्निग्धान् शोधयेत्, अन्यानपि चाकालनिर्हारविहाराहारान् । अतश्चैषा सदातुरत्वादल्पोऽप्यामयो दु साध्यो भवति ।" इति ।

**हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः ॥ ३८ ॥**
**कण्डूर्विदाहः पिटिकाः पीनसो वातविड्ग्रहः ।**
**अयोगलक्षणम्**

स०-अयोगलक्षणं हृत्कुक्ष्यशुद्धिरित्यादिकम् ।

आ० र०-विरेचने हीनयोगलक्षणमाह-हृत्कुक्ष्यशुद्धिरिति । सङ्ग्रहे तु (सू अ २७) "आध्मानप्रसेकच्छर्दिश्रमगौरवाग्निसादतन्द्रास्तैमित्यमूत्रसङ्गा ।" इति (इत्यधिकम्) ।

**योगो वैपरीत्ये यथोदितात् ॥ ३९ ॥**

स०-यथोक्ताद्वैपरीत्ये-हृत्कुक्षिशुद्धिरित्यादिको(के), योगो-योगलक्षणम् ।

आ० र०-सम्यग्योगलक्षणमाह-योग इति । वैपरीत्ये-हृत्कुक्षिशुद्धिरुच्यादौ ।

**विट्पित्तकफवातेषु निःसृतेषु क्रमात्स्रवेत् ।**
**निःश्लेष्मपित्तमुदकं श्वेतं कृष्णं सलोहितम् ॥ ४० ॥**
**मांसधावनतुल्यं वा मेदःखण्डाभमेव वा ।**
**गुदनिःसरणं तृष्णा भ्रमो नेत्रप्रवेशनम् ॥ ४१ ॥**
**भवन्त्यतिविरिक्तस्य तथाऽतिवमनामयाः ।**

स०-अतिविरिक्तस्य विट्पित्तकफवातेषु क्रमान्नि सृतेषु जल स्रवेत् । किम्भूतम् ? नि श्लेष्मपित्त, तथा श्वेत किञ्चित्कृष्ण सलोहित-ईषद्रक्त, अथवा मांसप्रक्षालनसदृशमथवा मेद शकलाभ स्रवेत् । तथा गुदनि सरणादयोऽतिवमनामयाश्च-क्षामतादयो भवन्ति ।

आ० र०-अतियोगलक्षणमाह-विट्पित्तकफवातेष्विति । अतिवमनामया -क्षामतादय । सङ्ग्रहे तु ( सू अ. २७ )-"परिकर्तिका हृदयोद्वेष्टन पिपीलिकासञ्चार इवाङ्गे ।" इति ( इत्यधिकम् ) ।

**सम्यग्विरिक्तमेनं च वमनोक्तेन योजयेत् ॥ ४२ ॥**
**धूमवर्ज्येन विधिना**

स०-एन च-नर सम्यग्विरिक्त, वमनविहितेन विधिना विधूमेनोपपादयेत् ।

आ० र०-सम्यग्विरिक्तस्य सम्यग्वान्तविधिमतिदिशति-सम्यग्विरिक्तमिति ।

**ततो वमितवानिव ।**
**क्रमेणान्नानि भुञ्जानो भजेत्प्रकृतिभोजनम् ॥ ४३ ॥**

स०-तत -अनन्तर, क्रमेण-पूर्वोक्तेन, रक्तशाल्यन्नसहित-पेयादीन्यन्नान्यश्नन् प्रकृतिभोजन भजेत् ।

आ० र०-पेयादिक्रमानन्तर प्रकृतिभोजनमपि क्रमेण कुर्यादित्याह-तत इति । क्रमेण-"पादेनापथ्यम्" इत्याद्युक्तेन । वमितवानिवेति दृष्टान्तबलेन वमितेऽप्यय क्रमो ज्ञेय ।

**मन्दवह्निमसंशुद्धमक्षामं दोषदुर्बलम् ।**
**अदृष्टजीर्णलिङ्गं च लङ्घयेत्पीतभेषजम् ॥ ४४ ॥**

स०-पीतभेषजान् मन्दवह्न्यादीन् पञ्च लङ्घयेत् । अदृष्टजीर्णलिङ्ग पीतभेषजस्य यस्येति योज्यम् ।

१ 'वृत्तौ सत्यामुष्णा' ट । २ 'प्रवृत्त्युपाय' क । 'प्रवर्तकोपा' ग. । ३ 'मनुक्रमम्' अ आ. अरुण । ४ 'स्निग्धहनि पु' ट । ५ 'दृढस्नेह को' ठ । ६ 'स एवम् ।' ट । ७ 'पायतोऽप्य' ख ञ. । ८ 'तदाह-' क ख ज । ९ 'यमे वि' घ । १० 'नर्दापयेत्, न' ख ञ । ११ 'णात् सुप्रवृत्तवा' ग. । 'रणप्रवृ' स ढ । १२ 'निर्हरणविहारणान् ।' क । निर्हारो-मलमूत्राद्युत्सर्गं । १३ 'विहारान् ।' क.ख ग घ.ञ । १४ 'तत' स स. । १५ 'दानुचरत्वादल्पादल्पो' ख.ञ. । १६ 'का पी' अ.ख.ग.घ.ञ. ।

१ 'भ्रमो' आ । २ 'त कृष्ण' ठ. । ३ 'सधावन' ड. । ४ 'न्यश्नुवन्' ट. ।

आ० र०–मन्दवह्न्यादिभि शोधनदिने उपवास कार्य इत्याह–मन्दवह्निमिति । असम्शुद्ध–हीनयोगिनम्[1] । अक्षाम–शुद्धिकृतकार्श्यरहितम् । दोषदुर्बल–दोषवृद्ध्या क्षीणबलम् । अदृष्टजीर्णलिङ्ग–जीर्णौषधलक्षणरहितम् । तानि च ( च सि अ ६।२२ )–"अनुलोमोऽनिल स्वास्थ्य क्षुत्तृष्णा[2] सुमन स्कता । लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृति ॥ क्लमो दाहोऽङ्गसदन[3] भ्रमो मूर्च्छा शिरोरुजा[4] । अरतिर्बलहानिश्च[5] सावशेषौषधाकृति ॥" इत्येतो[6] ज्ञेयानि ।

एव लङ्घिते यो गुणो भवति, तमाह—

**स्नेहस्वेदौषधोत्क्लेशसङ्गैरिति न बाध्यते ।**

स०–उत्क्लेशाश्च सङ्गाश्चोत्क्लेशसङ्गा । स्नेहश्च स्वेदश्चौषध चै तानि, तेषामुत्क्लेशसङ्गा[7] स्नेहस्वेदौषधोत्क्लेशसङ्गा, तै । इति–एव लङ्घिते सति, मन्दाग्न्यादिर्न[8] बाध्यते–न पीड्यते ।

आ० र०–लङ्घनस्य फलमाह–स्नेहस्वेदेति । स्नेहस्वेदौषधैर्जाता[9] ये दोषोत्क्लेशास्तेषा[10] निर्हृतशेषाणा ये सङ्गा[11] स्रोतसा स्यु, तै ।

**संशोधनास्रविस्रावस्नेहयोजनलङ्घनैः ॥ ४५ ॥**
**यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ।**

स०–सशोधनादिभिर्यतोऽग्निर्मन्दता याति, अतो हेतो पेयादिक्रममाचरेत् । सशोधन–सम्यक्शुद्धि । अस्रविस्रावो–रक्तस्रुति । स्नेहयोजन–स्नेहोपयोग । ननु, शुद्ध्याऽग्निमान्द्यमिहोच्यते । वक्ष्यति च ( श्लो ६० )–"बुद्धिप्रसाद"[12] इत्यादिना "ज्वलनस्य दीप्तिं सशोधन करोति" इति । तदिमे वचसी परस्पर व्याघ्नाते । अत्रोच्यते । कालभेदाददोष । सशोधने क्रियमाणेऽग्निमान्द्य भवति । कृते च सशोधनेऽथ पेयादिक्रममासेवमानस्याग्निदीप्तिरिति न कश्चिदत्र[13] व्याघात ।

आ० र०–पेयादिक्रमे युक्तिमाह–सशोधनेति । स्नेहयोजनं–शमनस्नेहप्रयोग । लङ्घन–उपवास ।

**स्रुताल्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकम् ॥ ४६ ॥**
**पेयां न पाययेत्तेषां तर्पणादिक्रमो[14] हितः[15] ।**

स०–स्रुतौ–पतितौ, अल्पौ पित्तश्लेष्माणौ यस्य[16] त, तथा मद्यपो यो नरस्त मद्यप, तथा वातपैत्तिकं, एतास्त्रीनपि पेया न पाययेत् । तर्ह्येषां किं कार्यम् ? इत्याह–तेषामित्यादि । प्रथमेऽन्नकाले लाजसक्तवो द्वितीयेऽन्नकाले मासरसौदन(?) मित्येष तर्पणादिक्रमस्तेषा हित ।

आ० र०–स्रुताल्पपित्तादिषु पेया निषेधति–स्रुताल्पपित्तेति ।

निषिद्धपेयाना पेयास्थाने मन्थो योज्य इत्याह–तेषामिति ।

ननु, विरेचनस्येव वमनस्य कस्मात् पाको न प्रतीक्ष्यते ? इत्याह—

**अपक्वं वमनं दोषान् पच्यमानं विरेचनम् ॥ ४७ ॥**
**निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ।**

स०–वमनमपक्व सत् दोषान्निर्हरेत् । विरेचन तु पच्यमानं दोषान्निर्हरेत् । अतो वमनस्य पाको न प्रतिपाल्यते ।

आ० र०–वमनविरेचनयो स्वकार्यप्रतीक्षावधिमाह–अपक्वमिति । अर्थात् विरेचनस्य पाक प्रतिपालयेत् ।

**दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम् ॥ ४८ ॥**
**विरिच्यते भेदनीयैर्भोज्यैस्तमुपपादयेत्[1] ।**

स०–दुर्बलो नरो[2] बहुदोषश्च दोषपाकेन हेतुना स्वयं–औषधमन्तरेण, यो विरिच्यते–भिद्यते, त–नरं, भेदनीयैर्भोज्यै –भक्ष्यैर्योजयेत् ।

आ० र०–दुर्बलत्वादिविशिष्टस्त्वाहारैरेव शोध्य इत्याह–दुर्बल इति । भेदनीयै –यवक्षारादिभि । सङ्ग्रहे तु ( सू. अ २७ )–"ऊर्ध्वाधोरेचन युक्त वैपरीत्येन जायते । यदा, तदा छर्दयत सिञ्चेदुष्णेन वारिणा ॥ पादौ शीतेन चोर्ध्वाङ्ग[3] विपरीत विरेचने ( विरिच्यत )। [ पीते[4] प्रस्कन्दिते[5] दोषान्[6] निर्हृत्य जरा गते ॥ वमिते चौषधे[7] सम्यक् पाययेत न तं पुन[8] । मन्दाग्नि बहुदोष[9] तु दृढस्नेहगुणाशयम् ॥ दु शुद्ध तदहर्भुक्त श्वो भूय पाययेत तम्[10] । ]" इति ।

**दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः ॥ ४९ ॥**
**अपरिज्ञातकोष्ठश्च पिबेन्मृद्वल्पमौषधम् ।**
**वर तदसकृत्पीतमन्यथा[11] सशयावहम् ॥ ५० ॥**
**हरेद्बहूश्चलान् दोषानल्पानल्पान् पुनःपुनः ।**
**दुर्बलस्य मृदुद्रव्यैरल्पान् संशमयेत्तु तान् ॥ ५१ ॥**

स०–दुर्बलादय पञ्च मृद्वल्प विरेचनौषध पिबेयु । किमित्याह–यस्मात् तत्–विरेचनौषध, असकृत्–पुन पुन, पीतं

१ 'नयौगिकम्' क.ख ञ । २ 'तृष्णोर्जो मनस्विता' स च । ३ 'भ्रमदेश्च भ्र' स च । ४ 'रुज ।' क ख ञ । ५ 'अरुचिर्ब' ग.घ. । ६ 'त्यनेन ज्ञे' क.ख ञ । ७ 'च स्नेहस्वेदौषधानि, स्नेहस्वेदौषधानामुत्क्लेश' ट. । ८ 'ग्न्यास्ते तथाभूतास्तै ।' ड । ९ 'षधजाता' क ख ञ । १० 'षा हृत' क.ख ञ । ११ 'संयोगा ' ख घ ञ । १२ 'बुद्धे प्र' ठ ड । १३ 'श्चित्तत्र' ट । १४ 'णादि क्रमो' अ आ । १५ 'मो मत ' आ ग घ । १६ 'स्य, तथा मद्यपो यो नरो वातपैत्तिको वा, एता' ट.ठ. ।

१ 'स्त समुपाचरेत्' ग. । २ 'लो यो नरो' ठ.ढ । ३ 'चनम् ।' स.मू । ४ [ ] एतच्चिह्नान्तर्गतौ श्लोकौ क.ख.घ पुस्तकेषु सङ्ग्रहहृदये च नोपलभ्येते । ५ 'स्कन्दने दो' ग.ड. चक्र । 'प्रस्रसने दो' चरक । ६ 'दोषे न नि' आ । ७ 'धे धीर पाययेदातुर पुन. । दीप्ताग्निं ब' स च । ८ 'च' ग.ङ. । ९ 'गुण नरम् ।' स च । १० 'येत्तु तम्' ग.ञ. । 'येत्पुन.' स च । ११ 'त्पीत नान्यथा' आ.क.ख.ञ. ।

वरम्, न बहु । अन्यथा–बहु तीक्ष्ण चौषध पीत, सशया-वह–प्राणसन्देहकारि । तथा, पुन पुन प्रयुक्तमौषध चलान् बहून् दोषानल्पानल्पान् हरेत् । एव बलहानि विना दोषनिर्हार कृत स्यात् । तुरवधारणे । दुर्बलस्य नरस्य मृदुद्रव्यैरल्पानेव तान दोषान् सम्यक् शमयेत् ।

आ० र०–दुर्बलादीना पञ्चानां मृद्वल्प चौषध देयमित्याह–दुर्बल इति । यद्यपि मृद्वल्प न शोधयेत् तथाऽपि तदेवासकृत्पेयम्, न तु बहुतीक्ष्णम्, जीवितसशयात् ।

बहुप्रचलितदोषस्यापि दुर्बलस्य शोधन मृद्वल्पमेवेत्याह–हरेदिति ।

अल्पप्रचलितदोषस्य दुर्बलस्य शमनमेवेत्याह–अल्पान् सशमयेदिति ।

ननु, बहवो दोषा कस्मान्न शाम्यन्ते ? इत्याह—

**क्लेशयन्ति चिरं ते हि हन्युर्वैनमनिर्हृताः ।**

स०–हि–यस्मात्, ते–बहवो दोषा, अनिर्हृताश्चिरमेन–आतुरं, क्लेशयन्ति । हन्युर्वा–अनिर्हृता मारयेयु ।

आ० र०–बहुप्रचलितदोषस्य शमने बाधकमाह–क्लेशयन्तीति । सङ्ग्रहे तु मृदुतीक्ष्णयोर्लक्षणमुक्तम् (सू अ २७)–"सुख क्षिप्र महावेगमसक्त यत्प्रवर्तते । नातिग्लानिकर नाति हृदि पायौ च रुक्करम् ॥ अन्तराशयग क्लिन्न कृत्स्न दोष निरस्यति । विरेचन निरूहो वा तत्तीक्ष्णमिति निर्दिशेत् ॥ जलाग्निकीटैरस्पृष्ट देशकालगुणान्वितम् । नव मात्राधिक किञ्चित् तुल्यवीर्यैः सुभावितम् ॥ स्नेहस्वेदोपपन्नस्य तीक्ष्णत्व याति भेषजम् । अतो विपर्यये मन्द मन्दता च प्रपद्यते ॥ तीक्ष्णो मध्यो मृदुर्व्याधि सर्वमध्याल्पलक्षण । बलापेक्ष हित तेषु तीक्ष्ण मध्य मृदु क्रमात् ॥ अग्निर्बली मलान् द्रव्य सात्म्यीभूत हि जीर्यति । वमन वा विरेको वा तस्मात्सात्म्य न योजयेत् ॥ विभ्रंशो विषवत्सम्यग्योगो यस्यामृतोपम । कालेऽवश्यं प्रयोज्य च तस्माद्यत्नेन तत्पिबेत् ॥" इति ।

**मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः ॥ ५२ ॥**
**सन्धुक्षिताग्निं विजितकफवात च शोधयेत् ।**

स०–मन्दाग्निं क्रूरकोष्ठ च नर सह क्षारलवणाभ्या वर्तन्ते यानि घृतानि तैर्यथासङ्ख्यमुद्दीपितानल विजितकफवात च शोधयेत् ।

आ० र०–मन्दाग्निक्रूरकोष्ठयो शोधने पूर्वाङ्गमाह–मन्दाग्निमिति ।

**रूक्षबह्वनिलक्रूरकोष्ठव्यायामशीलिनाम् ॥ ५३ ॥**
**दीप्ताग्नीनां च भैषज्यमविरेच्यैव जीर्यति ।**
**तेभ्यो बस्तिं पुरा दद्यात्ततः स्निग्धं विरेचनम् ॥५४॥**
**शकृन्निर्हृत्य वा किञ्चित्तीक्ष्णाभि फलवर्तिभिः ।**
**प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत्सुखम् ॥५५॥**

स०–रूक्षादीना भैषज्यमविरेच्यैव–विरेचनमकृत्वैव, परिणमति । तेभ्यो–रूक्षादिभ्य, पूर्व बस्तिं दद्यात् । अनन्तर स्निग्ध–एरण्डतैलबिन्दुघृतादिक, विरेचन योजयेत् । अथवा फलवर्तिभिस्तीक्ष्णाभि पुरीष किञ्चित्–अल्प, निर्हृत्य–नि सार्य, स्निग्ध विरेचन दद्यात् । किमिति बस्तिना तीक्ष्णाभि फलवर्तिभिश्च किञ्चिच्छकृन्निर्हारः क्रियते ? इत्याह–प्रवृत्त हीत्यादि । यस्मान्मल प्रवृत्त सन्त किञ्चित्पतितं स्निग्धो विरेकः सुखं–अकृच्छ्रेण निर्हरेत् ।

आ० र०–रूक्षादीनां पञ्चानां विरेचनमपि न विरेचयतीत्याह–रूक्षेति ।

ते कथ विरेच्या इत्यत आह–तेभ्य इति । बस्ति–निरूहम् ।

**विषाभिघातपिटिकाकुष्ठशोफविसर्पिणः ।**
**कामलापाण्डुमेहार्तान्नातिस्निग्धान् विशोधयेत् ५६**

स०–नातिशब्दोऽत्रेषदर्थे । "नातिशीतगुरुस्निग्ध" (हृ सू अ ६।६३) इत्यत्र यथा । विषाद्यार्तानीषत्स्निग्धान् विशोधयेत् ।

आ० र०–विषादिषु नवसु ईषत्स्निग्धस्य शोधनमित्याह–विषाभिघातेति । अभिघात–शस्त्रघातादि ।

**सर्वान् स्नेहविरेकैश्च, रूक्षैस्तु स्नेहभावितान् ।**

स०–सर्वान्–ईषत्स्निग्धान् विषार्तादीनीषद्रूक्षान् वा, स्नेहविरेकैः शोधयेत् । स्नेहभाविताश्च पुरुषान् रूक्षविरेकैः शोधयेत् ।

आ० र०–सर्वेषा विरेच्याना स्नेहविरेचन देयमित्याह–सर्वानिति ।

स्नेहभाविताना रूक्षं विरेचनमित्याह–रूक्षैस्त्विति ।

**कर्मणा वमनादीनां पुनरप्यन्तरेऽन्तरे ॥ ५७ ॥**
**स्नेहस्वेदौ प्रयुञ्जीत, स्नेहमन्ते बलाय च ।**

स०–वमनादीनां कर्मणामन्तरेऽन्तरे–मध्ये मध्ये, पुनरपि–भूय, स्नेहस्वेदौ प्रयुञ्जीत । अन्ते च कर्मणा बलाय–शरीरस्य बलाधानार्थं, स्नेह प्रयुञ्जीत । तदयमर्थोऽत्र बोध्य,–आदौ स्नेहस्वेदौ ततो वमन, पुन स्नेहस्वेदौ ततो विरेचनं, पुन स्नेहस्वेदौ ततोऽनुवासन, पुन स्नेहस्वेदौ ततो निरूहणं, पुन. स्नेहस्वेदौ ततोऽनुवासनमिति ।

१ 'रुकरम् ।' ट । २ 'हन्युश्चैन' स.मू. । ३ 'रकालमातुर' ट. । ४ 'तावेत मा' ट. । ५ 'नापि हृ' स द्व । ६ 'रूह वा' क.ञ स द्व । ७ 'ल्यमात्रै. सु' ख ञ । ८ 'तीव्रो म' क ग घ. । ९ 'तीक्ष्णमध्यमृदुक्' क ख ग घ ञ । १० 'प्रवृत्य म' ख ञ. । 'प्रवृत्या म' स स । ११ 'रेक वा' ग.घ.स.द्व. । १२ 'योक्तव्य त' घ. । १३ 'न योजयेत्' क ख.ञ. ।

१ 'पुरो द' ग स स. । २ 'रेकस्तु सु' ठ ड । ३ 'नमविरेच्यैव जरा यातीत्याह–' क.ख ञ. । ४ 'विरेचयेत्' अ.क.घ.ञ । ५ 'रूक्षैश्च स्ने' आ क.ड ञ । ६ 'षायार्ता' ट.ठ । ७ 'रूक्षविरेचनकै ' ट । ८ 'तदेषोऽर्थो' ड. । ९ 'पुन. स्नेहस्वेदौ ततोऽनुवासन' इति ट पुस्तके नास्ति ।

**आ० र०-प्रतिकर्म स्नेहस्वेदौ कार्यावित्याह-कर्मणामिति। सर्वकर्मान्ते पुन स्नेहन कार्यमित्याह-स्नेहमन्त इति।**

किमित्येव विधीयते? इत्याह—

**मलो हि देहादुत्क्लेश्य ह्रियते वाससो यथा ॥ ५८ ॥**
**स्नेहस्वेदैस्तथोत्क्लिष्टः शोध्यते शोधनैर्मलः।**

**स०**-यतो देहादुत्क्लेश्य-पतनोन्मुख कृत्वा मलो विरेचनादिर्भिह्रियते। कथमिव? वाससो-वस्त्राद्यथा,-मर्दनिकाया वस्त्रं मर्दयित्वा जलादिना मलो निह्रियत इति।

**आ० र०-स्नेहस्वेदनाभ्यासे युक्तिमाह-मल इति। स्निग्धस्विन्नाद्वस्त्रादिवोत्क्लिष्टो मलो ह्रियते।**

ननु, स्नेहस्वेदावन्तरेणापि कस्मान्मलं शोधनैर्न शोध्यते? इत्याह—

**स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः ॥ ५९ ॥**
**दारु शुष्कमिवानामे शरीरं तस्य दीर्यते ॥ ५९½ ॥**

**स०**-यो नर स्नेहस्वेदावनभ्यस्य-अशीलयित्वा, सशोधनं कुर्यात्, तस्य शरीर दीर्यते। कथमिव? आनामे-आनमने, काष्ठ शुष्क यथा दीर्यत इति।

**आ० र०-स्नेहस्वेदानभ्यासे दोषमाह-स्नेहस्वेदाविति।**

साम्प्रत सशुद्धे फलमाह—

**बुद्धिप्रसादं बलमिन्द्रियाणां**
**धातुस्थिरत्वं ज्वलनस्य दीप्तिम्।**
**चिराच्च पाकं वयसः करोति**
**संशोधनं सम्यगुपास्यमानम् ॥ ६०½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने वमनविरेचनविधिर्नामाष्टादशोऽध्यायः ॥ १८ ॥**

**स०**-सशोधन सम्यक् क्रियमाण बुद्धिप्रसादादीन् पञ्च करोति। बुद्धिप्रसादो-धीपाटवम्। वयसो-यौवनादे, पाक-परिणाम इति। उपजातिर्वृत्तम्।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने वमनविरेचनविधिर्नामाष्टादशोऽध्याय समाप्त ॥ १८ ॥

**आ० र०-सम्यक् शोधनस्य फलमाह-बुद्धिप्रसादमिति। वयस पाक-जराम्।**

**इति हेमाद्रिटीकायामायुर्वेदरसायने।**
**वान्तिरेकप्रकरण सामस्त्येन निरूपितम् ॥ १८ ॥**

१ 'थोत्क्लेश्य शो' अ आ ञ ठ, स च। 'थोत्क्लेश्य ह्रियते' क। २ 'स्विन्नवस्त्रादिवदुक्लि' क घ ञ। ३ 'ल सशो' ट। ४ 'यथेति।' ठ ड। ५ 'बुद्धे प्र' ड, स सु। ६ 'धातो. स्थि' ड। ७ 'स्नस्शोध' ग घ।



# एकोनविंशोऽध्यायः।

मलहरणार्थं पूर्वाध्याय उक्त। बस्तिनाऽपि मलो निह्रियत इति वमनविरेचनविधेरनन्तर बस्तिविधेरुपदेशो युक्त इत्याह—

**अथातो बस्तिविधिमध्यायं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

( गद्यसूत्रे ॥ २ ॥ )

**स०**-बस्तिना दीयत इति बस्ति., तस्य विधि.। शेष पूर्ववद्व्याख्येयम्।

**आ० र०-क्रमप्राप्त बस्तिविधिमध्याय व्याख्यातुं प्रतिजानीते-अथेति।**

**वातोल्बणेषु दोषेषु वाते वा बस्तिरिष्यते।**
**उपक्रमाणां सर्वेषां सोऽग्रणीस्त्रिविधस्तु सः ॥ १ ॥**
**निरूहोऽन्वासनं बस्तिरुत्तरः**

**स०**-वात उल्बण -अधिको, येषा दोषाणां तेषु बस्तिरिष्यते। आचार्यैरिति शेष। तत्र वातपित्ते वातश्लेष्मण्यथवा केवले वायौ बस्तिरिष्यते। उपक्रमाणां-चिकित्सितानां, सर्वेषां स-बस्ति, अग्रणी-प्रधानतम। स च त्रिप्रकार। तदेव त्रैविध्यमाह-निरूहोऽन्वासन बस्तिरुत्तर इति। गुदादुत्तरेण मार्गेण मेढ्रादिना दीयत इत्युत्तरबस्ति।

**आ० र०-बस्तेर्विषयमाह-वातोल्बणेष्विति। "बस्तिना दीयते बस्ति वा पूर्वमन्वेत्यतो बस्ति।" इत्युक्त सङ्ग्रहे (सू अ २८)।**

**बस्ते. सर्वोपक्रमश्रेष्ठत्वमाह-उपक्रमाणामिति। सङ्ग्रहे तु (सू अ २८)-"शीघ्रंसुखबृंहणादिकारित्वाद्विकृतानिलोच्छेदित्वाच्च। सुखत्वादेव च बस्तिर्बालवृद्धकृशस्थूलक्षीणधात्विन्द्रियेषु च स्त्रीषु चानिलोपसर्गादप्रजासु कृच्छ्रप्रजासु चोपदिश्यते। तथाऽग्निबलवर्णमेधास्वरायु सुखप्रदो वय स्थापन. पङ्गुरुग्णभग्नस्तब्धसङ्कुचितानिलाध्मानशूलारोचकोदावर्तपरिकर्तिकादिषु हित इति।" इति।**

**बस्तिभेदानाह-त्रिविधस्त्विति। सङ्ग्रहे तु ( सू अ. २८ )-"तत्रास्थापन दोषदूष्याद्यनुसारेण नानाद्रव्यसंयोगादिनिर्वृत्तम्। तस्य भेदा,-उत्क्लेशन शोधन शमन लेखन**

१ अथ बस्तिविधिश्चरके सि० १।२।३ अध्यायेषु, सुश्रुते चि० ३५।३७।३८ अध्यायेषु, अष्टाङ्गसङ्ग्रहे सू० २८ अध्याये चास्ति वर्णित। २ 'धश्च स' अ आ क ग च। ३ 'णा-वातचि' ट। ४ 'शीघ्र बृह' स स। ५ 'वा' ञ। ६ 'पङ्गुरुस्तम्भभग्नसङ्कु' क. ञ स स। ७ 'स्तम्भस' घ. स. मू। ८ 'ध्मातशू' ग. घ. च।

बृंहण वाजीकरण पिच्छाबस्तिर्माधुतैलिकमित्यादय । माधुतैलिकस्य पर्याया ,–यापनो युक्तरथो दोषहर सिद्धबस्तिरिति । तेषा नामभिरेव च स्वरूपमाख्यातम् । तद्वय स्थापना[1]द्दोषस्थापनाद्वा आस्थापनमित्युच्यते । शरीर[2]रोह[3]णाद्दोपनिर्हरणादचिन्त्यप्रभावतया[4] वाऽस्मिन्नूहासम्भवान्निरूह इति । अनुवासन यथा[5]हौषवसिद्ध स्नेह[6]नार्थे स्नेह । स्नेहविधौ स चतुर्द्धाऽभिहित । तस्य भेदो मात्राबस्ति । स पेयस्नेहह्रस्वमात्रातुल्य , सेव्य सदा[7]ऽत्र माधुतैलिकवत् । बालवृद्धाध्वभारयानव्यायामचिन्तास्त्रीनित्यस्त्रीनृपेश्वरसुकुमारदुर्बलानिलभग्नाल्पाग्निभिर्निष्परिहारतया सुखो बल्यो वर्ण्य सृष्टमलो दोषघ्नश्च । तथाऽपि तौ नाजीर्णे योज्यौ । न च दिवास्वप्नस्तयो सेव्य । यतश्चासौ[8] अनुवसन्नपि न दुष्यति, अनुवास[9]नमपि वा दीयते, इत्यनुवासनम् । वासन–भोजनम् । उत्तरबस्तिरपि स्नेहो[10]ऽनुवासनवच्छोधनो[11] निरूहवदपि च केचिदाहु । स निरूहादुत्तर[12]मुत्तरेण वा मार्गेण दीयत इत्युत्तरबस्ति. ।” इति ।

**तेन साधयेत् ।**

**गुल्मानाहखुडप्लीहशुद्धातीसारशूलिनः ॥ २ ॥**
**जीर्णज्वरप्रतिश्यायशुक्रानिलमलग्रहान् ।**
**वर्ध्माश्मरीरजोनाशान् दारुणांश्चानिलामयान् ॥३॥**

**स०**–तेनेत्यनेन निरूह परामृश्यते । कथमिति चेत् ? ब्रूम । “अनास्थाप्यास्तु” इत्यवीते । तत्र के निरूह्या इत्यधिगते सति, अनिरूह्या पुनरिमे इति वक्तु युज्यते । अपि च, “आस्थाप्या एव चान्वास्या ” इति पठति । के आस्थाप्या इति ना[13]धिगम्येत यदीह निरूहो न परामृश्येत । तस्मात्तेनेत्यनेन निरूहस्य ग्रहण न्याय्यम् । तेन–निरूहेण, गुल्मा[14]दीस्तथा जीर्णज्वरादीन् कृच्छ्रान् वातरोगाश्च साधयेत्–उपक्रमेत् । गुल्मादीना शूलान्ताना द्वन्द्वेनी कार्यौ । शुक्रादीना ग्रहेण सम्बन्ध । शुक्रग्रहो–रेतोविबन्ध । अनिलग्रहो–वायोरसञ्चार[15] । मलग्रहो–मूत्रविशोर्विबन्ध । रजोनाश –स्त्रिया पु[16]ष्पविनाश ।

**आ० र०**–निरूहस्य विशेषतो विषयमाह–तेन साधयेदिति । तेनेति निरूहादिषु त्रिष्वपि प्रकृतेषु प्रधानत्वान्निरूहस्य परामर्श , “आस्थाप्या एव च” इत्यनुवादाच्च । खुड–वातरक्तम् । शुद्धातीसारो–निरामातीसार । रजोनाश –क्षीणा पुष्पनाश । सङ्ग्रहे तु ( सू अ २८ )–“हृदयकुक्षिपार्श्वग्रहपर्वाभितापपार्श्वयोनिशूलाङ्गसुप्तिशोषकम्पगौरवातिलाघवान्त्रकूजनशर्कराशुक्रार्तवस्तन्यनाशरज क्षयोन्मादरेतोदोषकृमि[1]लकोष्ठविषमाग्निसशब्दानल्पोग्रगन्धोत्थानाद[2]य ।” इति ( इत्यधिकम् ) ।

**अनास्थाप्यास्त्वतिस्निग्ध. क्षतोरस्को भृश कृशः ।**
**आमातिसारी वमिमान् संशुद्धो दत्तनावनः ॥ ४ ॥**
**श्वासकासप्रसेकार्शोहिध्माध्मानाल्पवह्नयः ।**
**शूनपायु. कृताहारो बद्धच्छि[3]द्रोदकोदरी ॥ ५ ॥**
**कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ।**

**स०**–अतिस्निग्धादय सप्तममासगर्भिण्यन्ता अनास्थाप्या –[4]अनिरूह्या । वमिमान्–प्रसक्तच्छर्दि । बद्धादीनामुदरेण सम्बन्ध । तत इनिर्मत्वर्थीय । शुद्धातिसारिण आस्थाप्या इत्यने[5]नैवामातिसारिणोऽनास्थाप्यत्वे लब्धे पुनर्वचन नियमार्थम्, तेनामातिसारिणो न कथञ्चिदास्थाप्या इति । तत्रातिस्निग्धस्य दोषानुत्क्लेश्य निरूह श्वयथुमुदर च जनयेत् । क्षतोरस्ककृशयो क्षोभव्यापन्न शरीरमाशु पीडयेत् । आमातिसारिणो दोषस्य सम्यगनिर्हरणा[6]द्देहस्य क्षोभादतिपीडा कुर्यात् । प्रसक्तच्छर्दिषो दोषोत्क्लेशो निरूहमूर्ध्वं नयेत् । कृतवमनविरेकयोस्तु रिक्त देह क्ष[7]त क्षार इव दहेत् । कृतनस्य[8]स्य विवृ[9]तोर्ध्वस्रोतस्तया वि[10]भ्रश कुर्यात् । श्वासादीना[11]मुत्क्लिष्टदोषत्वान्निरूह ऊर्ध्व व्रजेत् । अर्श प्रभृतीना भृशतरमाध्मान मृत्युर्वा स्यात् । अल्पाग्न्यादीना स्तम्भजाड्यादीनावहेत् । गर्भिण्या. पूर्वोक्ता एव दोषा ।

**आ० र०**–निरूह निषेधति–अनास्थाप्यास्त्विति । बद्धोदरादय –उदरविशेषा । सङ्ग्रहे तु ( सू अ २८ )–“तत्रातिस्निग्धोत्क्लिष्टदोषयोर्दोषानुत्क्लेश्योदर मूर्च्छां श्वयथु वा निरूहो जनयेत् । क्षतोरस्कस्यातिकृशस्य[12] च क्षोभव्यापन्न[13] शरीरमाशु पीडयेत् । अनिरन्नस्य वक्ष्यते । कृतवमनविरेकयोस्तु रिक्त देह क्षत क्षार इव दहेत् । स्नेहबस्तिस्तु सद्योऽग्निमवसाद्य श्लेष्मामयाय स्यात् । कृतनस्य[14]स्यास्यविभ्रश भृ[15]शविवृतोर्ध्वस्रोतस्तया कुर्यात् । अनुवासन तु दोषोत्क्लेश[16]–

१ ‘क इत्या’ ञ । २ ‘द्दोषास्था’ ग घ । ३ ‘ररोगहरणा’ क । ‘रदोषहरणा’ च । ‘रीरारोह’ ञ स स । ४ रोहण–वर्धनम् । ५ ‘या चास्मि’ स मू । ‘या यस्मि’ स स । ६ ‘नार्थे स्ने’ च स स । ७ ‘दा च मा’ स द्व । ८ ‘यश्चा’ क ञ । ‘यतश्च सोऽन्नमनु’ स स । ९ ‘सरमपि’ स द्व । १० ‘स्नेहानु’ क ञ । ‘स्नेहनेऽनुवासनवच्छोधने नि’ स मू । ११ ‘धन नि’ ग स स । ‘धननि’ च । १२ ‘त्तर उत्त’ ग । १३ ‘न गम्यते’ ठ । १४ ‘ल्मादिमतस्तया’ ट. । १५ ‘र । रजो’ ठ ड । १६ ‘पुष्पाघात ’ ट ।

१ ‘मिकोष्ठ’ क ग ञ । ‘मिणकोष्ठ’ च स द्व । २ ‘ब्दाल्पो’ च । ‘ब्दाल्पाल्पो’ स द्व । ३ ‘च्छिद्रदको’ अ क घ । ४ ‘न निरूहार्हा ।’ ट । ५ ‘नेनामा’ ठ.ट । ६ ‘ह्क्षोभा’ ट । ७ ‘क्षते क्षा’ ट ठ ड । ८ ‘स्यस्यास्यविभ्रश वि’ स द्व । ९ ‘वृतस्रो’ ट । ‘वृतश्रोत्रतया’ ठ ड । १० ‘विभ्रम’ ड । ११ ‘मुत्क्षिप्तदो’ ट । १२ ‘स्य बस्तिक्षोभ’ क न. । १३ ‘पन्नश’ क.च. ञ स मू । ‘भमापन्न श’ स स । १४ ‘स्यस्य वि’ ग । १५ ‘श विवृ’ क स.स । १६ ‘शम् ।’ स स ।

नम्। प्रसक्तच्छर्दिनिष्ठीविकाकासश्वासहिध्मार्तानां वायुर्निरूहमूर्ध्वं नयेत्। अर्शसस्यावृतमार्गत्वात्ऽनागच्छन् बस्ति प्राणान् हिंस्यात्। स्नेह पुनरर्शास्यभिष्यन्द्याध्मानाय स्यात्। बद्धोदराद्याध्मातानां भृशतरमाध्मानान्मृत्यु । अलसकविषूचिकामातीसारार्ताना चामदोषात्। अरोचकाल्पाग्निगुद्शोफकुष्ठमधुमेहार्तानां यथास्वमामयवृद्धि । गर्भिण्या पूर्वोक्तो दोष ।" इति। पूर्वोक्तो–वमनोक्त'।

**आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः ॥६॥**
**रूक्षाः केवलवातार्ताः**

स०–य एवास्थाप्यास्त एवानुवास्या । आङ्पूर्वात्तिष्ठतेर्णिजन्तादनुपूर्वाच्च वसतेरर्हार्थे ण्यत् । विशेषेणातिवह्न्यादयोऽनुवास्या ।

आ० र०–अनुवासनस्य विशेषतो विषयमाह–आस्थाप्या इति। आस्थाप्या –गुल्मादय ।

अतिवह्न्यादिषु त्रिषु निरूहादनुवासनस्य प्राधान्यमाह–विशेषादिति।

**नानुवास्यास्त एव च ।**
**येऽनास्थाप्यास्तथा पाण्डुकामलामेहपीनसाः ॥७॥**
**निरन्नप्लीहविड्भेदिगुरुकोष्ठकफोदराः ।**
**अभिष्यन्दिभृशस्थूलकृमिकोष्ठाढ्यमारुताः ॥ ८ ॥**
**पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान् ।**

स०–त एव चेति येऽनास्थाप्या –अनिरूह्या, ते चापि नानुवास्या । तथा, पाण्ड्वादयो नानुवासनार्हा । एतेषा हि दोषानुत्क्लेश्य स्नेहबस्तिरुदर जनयेत् । निरन्नस्यानुवासनात् स्नेहविपत्ति । तथा चोक्त खरनादेन–"अभुक्तदत्तस्य तथा स्नेहबस्तिर्विपद्यते ।" इति। प्लीहादीना स्तम्भजाड्यादीनावहेत्। कृमिकोष्ठस्यानुवासनादय पूर्वमनिर्हृतै कृमिभिरथवाऽतिबहुला द्दोषापनि सरणेन हृदयमतिकर्षद्भिश्छर्दि कुर्यु । आढ्यमारुतस्य सम्यग्दोषानिर्हरणादामयवृद्धि । पीते विषे गरे च नानुवास्या इति योज्यम् । अपची–उत्तरे ( अ २९।२५ ) वक्ष्यमाणा। श्लीपदीतीनि, गलगण्डवानिति मतुप्। अपच्यादयो नानुवास्या इति । सङ्ग्रहे चोक्तम् ( सू अ २८ )–"अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम् । सरदूरगसूक्ष्मत्वै क्षिप्रमूर्ध्वं प्रपद्यते ॥ तेन वायोर्जयो न स्याद्वातधामन्यतिष्ठता । कायाग्नेराशु नाशश्च विशेषादनिवर्तिना ॥ स्नेह सद्योऽशिताहाररुद्धे त्वामाशयेऽनिलम् । पक्कस्थ हन्ति पक्कस्थश्च्यवते चान्नपाकत ॥ निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि । तावन्नमूर्च्छितौ तीक्ष्णावधोऽन्नेन सहागतौ ॥ ऊर्ध्वं वा शकृता सार्द्धं सस्थितौ कोष्ठ एव वा । समलाहारविष्टब्धौ हरेतामाशु जीवितम् ॥ भुक्तवाननुवास्योऽस्मान्न निरूह्योऽत्र भुक्तवान् ।" इति ।

आ० र०–अनास्थाप्यादीना पाण्ड्वादीनां चानुवासन निषेधति–नानुवास्या इति। अनास्थाप्या –अतिस्निग्धादय । निरन्न –अकृताहार। विड्भेदी–शिथिलमल । गुरुकोष्ठ–आहारं विनाऽप्याहारपूर्ण इव कोष्ठो यस्य। अभिष्यन्दी–नेत्रकोपी। सङ्ग्रहे तु ( सू अ २८ )–तत्रातिस्निग्धादीना यथास्वमुक्ता पृथग्दोषा । अपि च। अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम्। सरदूरगसूक्ष्मत्वै क्षिप्रमूर्ध्वं प्रपद्यते ॥ तेन वायोर्जयो न स्याद्वातधामन्यतिष्ठता । कायाग्नेराशु नाशस्तु विशेषादतिवर्तिना ॥ स्नेह सद्योऽसिताहाररुद्धे त्वामाशयेऽनिलम्। पक्वस्थ हन्ति पक्वस्थश्च्यवते चान्नपाकत ॥ निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि । तावन्नमूर्च्छितौ तीक्ष्णावधोऽन्नेन सहागतौ ॥ ऊर्ध्वं वा शकृता सार्द्धं सस्थितौ कोष्ठ एव वा । समलाहारविष्टब्धौ हरेतामाशु जीवितम् ॥ भुक्तवाननुवास्योऽस्मान्न निरूह्योऽत्र भुक्तवान् । पाण्डुरोगार्तादीना दोषानुत्क्लेश्य स्नेहबस्तिरुदर जनयेत् । प्रतिश्यायादिमता भूय एव दोष विवर्धयेत् ।" इति ।

[ निरूहान्वासनयोर्यन्त्रस्य लक्षणमाह— ]

**तयोस्तु नेत्रं हेमादिधातुदार्वस्थिवेणुजम् ॥ ९ ॥**
**गोपुच्छाकारमच्छिद्रं श्लक्ष्णर्जु गुलिकामुखम् ।**

स०–तयो –निरूहान्वासनयोर्नेत्र भवति । नीयते–प्राप्यते स्नेहकल्कायपानमिति नेत्रम् । नेत्रेति "दाम्नीशस" इति णे ष्ट्रन्प्रत्यय । किम्भूत नेत्रम्? हेमादीति। आदिशब्द प्रकारे। तेन रूप्यरीतिकाय कास्यत्रपुसीसादयो गृह्यन्ते । हेमादयश्च ते धातवश्चेति कर्मधारय । दारु–शिंशिपादिकाष्ठम्, अस्थि–गजादे, वेणु –वश, एतेषा द्वन्द्व । एभ्यो जात तयो –निरूहान्वासनयो, नेत्र भवति। किम्भूतम्? गोपुच्छाकारम्, गोपुच्छ इवाकारो यस्य तत् । तथा, अच्छिद्र–निर्विवरम्। तथा, श्लक्ष्ण–कोमलम्। तथा, ऋजु–अवक्रम्। गुलिकासदृशमतीक्ष्णाग्र मुख यस्य तदेवम्।

आ० र०–निरूहान्वासनयन्त्रस्य लक्षणमाह–तयोस्त्विति। गोपुच्छाकार–गोपुच्छवत् क्रमकृश वृत्त च। गुलिका-

१ 'च्छर्दीदीना वा' स ह्व । २ 'त्, अनुवासन च।' स स । ३ 'र्शसावृ' ग च ञ । ४ 'ध्मानान्ताना' स स । ५ 'सकातादीना चा' स ह्व । ६ 'कार्तादीना य' स ह्व । ७ 'कोष्ठ कफोदरी' ग । ८ 'न्दिकृश' ङ ञ । ९ 'रूहार्हा' ट । १० 'क्तवतश्च त' ट । 'क्तदत्तश्च त' ठ । ११ 'दीलत्रेनि' ट । १२ 'कोष्ठे च प्र' ट । *१३ 'क्षमत्वात् क्षि' ठ. । 'क्षम तत् क्षि' ड. । 'क्षमत्वे क्षि' क. । *१४ 'तत्स्थाने ह्यति' स.स. ।

१ 'वर्तनात्' ट ठ ड स स । २ 'क्त एवानु' स मू । ३ 'रूह्यस्तु मु' ट ठ ड स स । ४ 'अभुक्तरि' च । ५ 'शश्च वि' च स ह्व । ६ [ ] इति पाठ ट ठ ड. पुस्तकेषु नोपलभ्यते । ७ 'ततो ह्व' ट. । 'एव ह्व' ठ ड. ।

मुख-गुलिकावद[1]स्रिरहित मुख यस्य । सङ्ग्रहे तु ( सू अ २८ ) मणिशङ्खश्रृङ्गदन्त[2]नलखदिरकदरतिनिशतिन्दुकादिदारुसारमय[3]मृज्वककर्कशम् ।" इति ( इत्यधिकम् ) ।

अथास्य प्रमाणमाह—

**ऊनेऽब्दे पञ्च, पूर्णेऽस्मिन्नासप्तभ्योऽङ्गुलानि षट् १०**
**सप्तमे सप्त, तान्यष्टौ द्वादशे, षोडशे नव ।**
**द्वादशैव परं विंशाद्वीक्ष्य वर्षान्तरेषु च ॥ ११ ॥**
**वयोबलशरीराणि प्रमाणमभिवर्द्धयेत् ।**

**स०**–षण्मासे बालेऽधिके वा अपूर्णवर्षे नेत्रस्य पञ्चाङ्गुलानि । आतुराङ्गुलप्रमाणमिति गम्यते । दैर्घ्येण चेत्येतदप्यनुक्त गम्यते । वक्ष्यति हि ( श्लो १२ )–"स्वाङ्गुष्ठेन सम मूले स्थौल्येन" इति । आसप्तभ्य –सप्तवर्षाणि मर्यादीकृत्य, षडङ्गुलानि प्रमाणम् । आङत्र मर्यादायाम्, नाभिवि[4]धौ । तेन षड्वर्षे बाले षडङ्गुलानि नेत्रम् । अन्यथा सप्तवर्षस्यापि षडेवेति प्राप्नोति । वक्ष्यति तु–"सप्तमे सप्त" इति । एव च पूर्वापर व्याहत स्यात् । तस्मान्मर्यादायामाङित्यवेहि । सप्तमे वर्षे सप्ताङ्गुलानि । द्वादशे वत्सरे तानि–अङ्गुलान्यष्टौ नेत्रम् । द्वादशाना पूरण इति "तस्य पूरणे डट्" इति डट् । एव षोडश इत्यत्र । षोडशे सवत्सरे नवाङ्गुलानि नेत्रम् । विंशाद्वत्सरादूर्ध्वमेकविंशप्रभृतिवर्षेषु द्वादशाङ्गुलानि नेत्रम् । नातोऽप्यधिकानीत्येवशब्दार्थ । विंशतिशब्दात् पू[5]रणे डटि तिविंशतेडितीति तिलोपाद्विंशशब्द । वर्षान्तरेषु–अन्त[6]रालस्थितेषु वर्षेषु नवमदशमादिषु, वीक्ष्य–पर्यालोच्य, नेत्रस्य प्रमाणमभिवर्द्धयेत् । चशब्दो भिन्नक्रम । न केवल वर्षान्तरेषु प्रमाणमभिवर्द्धयेत् । यावद्वयोबलादीनि च निरूप्य प्रमाण वृद्धिं नयेत् ।

**आ० र०–यन्त्रप्रमाणमाह–ऊनेऽब्द इति । प्रथमे वर्षे पञ्चाङ्गुल यन्त्रम् । द्वितीयादिषु पञ्चसु षडङ्गुलम् । सप्तमे सप्ताङ्गुलम् । द्वादशेऽष्टाङ्गुलम् । षोडशे नवाङ्गुलम् । विंशादिषु द्वादशाङ्गुलम् । वर्षान्तरेषु वय प्रभृतीन् वीक्ष्य युक्त्या प्रमाण वर्द्धयेत् । अष्टमे सपादसप्ताङ्गुल, नवमे सार्द्धसप्ताङ्गुलमित्यादि,**

**स्वाङ्गुष्ठेन समं मूले स्थौल्येनाग्रे कनिष्ठया ॥ १२ ॥**

**स०**–स्थौल्येन–परिणाहेन, स्वाङ्गुष्ठेन तुल्य मूले नेत्रम् । तथा, अग्र–प्रान्त , तस्मिन् कनिष्ठयाऽङ्गुल्या सम नेत्र स्यात् । खरनादेऽप्युक्तम्–"बस्तिनेत्रमृजु श्लक्ष्ण सुवृ[10]त्त गुलिकामुखम् । भवेद्गोपुच्छसस्थान सुप्रवाह त्रिकर्णिकम् ॥ यौ[11] त्रिभागप्रणयने मर्यादा कर्णिका भवेत् । द्वे कर्णिके चोपरिष्टाद्बस्त्याधारे यथा[12]न्तरे ॥ स्वाङ्गुष्ठकपरीणाह मूल नेत्रस्य शस्यते । मध्य त्वना[1]मिकातुल्यमग्र तु[2]ल्यकनिष्ठिकम् ॥ स्वेनाङ्गुलिप्रमाणेन दैर्घ्य स्याद्द्वादशाङ्गुलम् । कर्कन्धुप्रवह छिद्र श्रेष्ठमन्यद्यथावय ॥ विंशद्द्वादशपड्वर्षे द्वादशाष्टषडङ्गुलम् । कर्कन्धुकसतीनाग्रमुद्गछिद्रवह स्मृतम् ॥" इत्यादि । मुनिरप्यवोचत् ( च सि अ ३।६ )–"षड्द्वादशाष्टाङ्गुलसम्मितानि षड्विंशतिद्वादशवर्षजानाम् । स्युर्मुद्गकर्कन्धुसतीनवाहिच्छिद्राणि वर्त्या पिहितानि चैव ॥ यथावयोऽङ्गुष्ठकनिष्ठिकाभ्या मूलाग्रयो स्यु परिणाहवन्ति ।" इति ।

**आ० र०–यन्त्रस्थौल्यमाह–स्वाङ्गुष्ठेनेति । स्वाङ्गुष्ठेन–यमुद्दिश्य यन्त्रप्रमाण तस्याङ्गुष्ठेन, तस्यैव कनिष्ठया, मूलेऽग्रे इत्युभयत्र योज्यम् । अङ्गुष्ठमूलवद्यन्त्रमूल कनिष्ठाग्रवद्यन्त्राग्र स्थूलमित्यर्थ । मध्य त्वानुपूर्व्या स्थूलम् ।**

अधुना छिद्रद्वारेण नेत्रस्थौल्यप्रमाणमविकमपि दर्शयन्नाह—

**पूर्णेऽब्देऽङ्गुलमादाय तदर्द्धार्द्धप्रवर्द्धितम् ।**
**त्र्यङ्गुलं परमं छिद्रं मूलेऽग्रे वहते तु यत् ॥ १३ ॥**
**मुद्गं माषं कलायं च क्लिन्नं कर्कन्धुकं क्रमात् ।**

**स०**–वर्षे पूर्णे सत्यङ्गुलमादाय स्वाङ्गुलात्प्रभृति क्रमेण त्र्यङ्गुल छिद्र मूले नेत्रस्य भवति । किम्भूत छिद्रम् ? अर्द्धस्यार्द्धमर्द्धार्द्धम् । तस्य–अङ्गुलस्यार्द्धार्द्ध तदर्द्धार्द्धम् , तेन प्रवर्द्धितम् । तत्र प्रथमे वर्षेऽङ्गुलमात्र छिद्रम्, यावद्वर्षाणि षट् । सप्तमे वर्षे सपादमङ्गुलम्, यावदेकाद[7]श वर्षाणि । द्वादशे वर्षे सार्द्धमङ्गुलम् , यावत्षोडश वर्षाणि । षोडशवर्षस्य तु पादोनमङ्गुलद्वयम् । सप्तदशे व[8]र्षेऽङ्गुलद्वयम् । अष्टादशे वर्षे सपादमङ्गुलद्वयम् । एकोनविंशतिवर्षस्य सार्द्धमङ्गुलद्वयम् । विंशतिवर्षस्य पादोनमङ्गुलत्रयम् । एकविंशतिवर्षस्य त्र्यङ्गुल छिद्रमिति क्रमो वेद्य । परममित्यनेनैतद्गमयति,–परम–उत्कर्षमाश्रित्येद मूलच्छिद्रम् । मध्यम तु[10] मूलच्छिद्र "स्वाङ्गुष्ठेन" इत्यनेनोक्तम् । ऊनवर्षस्य त्वर्द्धाङ्गुल छिद्रमेतदपेक्षया कल्प्यम् । अग्रे तु छिद्र तद्भवति यन्मुद्गादि वहति । तत्र वार्षिकस्य मुद्गवाहि, यावत्षड्वर्षम् । सप्तवर्षस्य माषवा[11]हि, यावदेकादशोऽब्द । द्वादशवर्षस्य कलायवाहि, षोडशवर्षस्य क्लिन्नकलायवाहि, एकविंशतिवर्षस्य कर्कन्धुवाहि, [12]इति क्रमाद्वय प्रमाणम् । ऊनवर्षस्य च[13] न मुद्गवाहि कल्प्यम् । अग्रच्छिद्रप्रमाण चैतत् "अग्रे कनिष्ठया" इत्यत्रापि सङ्गच्छत एव । दैर्घ्यप्रमाण चात्र पक्षे पूर्वमेव योज्यम् । "स्वाङ्गुष्ठेन सम मूले स्थौल्येन" इत्यनेन ( इत्यत्र ) छिद्रप्रमाण स्वमत्या[14] भिषजा प्रकल्प्यम् । तथा, "त्र्यङ्गुल परम छिद्र"

१ अस्रि –कोण । २ 'न्तखदि' क ञ । ३ 'मय मृद्वकर्क' ग । ४ 'धौ । अन्यथा' ठ ड. । ५ 'रणार्थे' ट ठ । ६ 'राला वच्छिन्नेषु' इति क्वचित् । ७ 'नेत्रम्' ग । ८ 'खारणादोऽप्यधिजगे' ट. । ९ 'नेत्र मृदु श्ल' ट । १० 'सद्वृत्त' ठ । ११ 'चतुर्भाग' ट । १२ 'यवान्त' ठ ड ।

१ 'मग्रे तु' ठ ड । २ 'तुल्य कनिष्ठया' ट । ३ 'चापि' स च । ४ 'निष्ठिकया' क घ ञ । ५ 'निष्ठिकाग्र' क ञ । ६ 'त्वनुपूर्वस्य' क ञ. । ७ 'दश । द्वाद' ट ठ ड । ८ 'दशोऽङ्गु' ट ठ ड । ९ 'पंपुरुपस्य' ट । १० 'तु यत् तच्छिद्र' ठ ड । ११ 'वाहि, द्वाद' ठ ड । १२ 'इति यावद्वय' ट । 'इति । ऊन' ठ ड । १३ 'तु' ठ. । १४ 'त्या सद्भिषजा क' ट. ।

इत्यत्र च स्थौल्यप्रमाण स्वधियैव निरूप्यम्। तन्त्रकृता तु ग्रन्थगौरवभयादुक्तप्रायत्वाच्चेह नोक्तम्।

आ० र०–यन्त्रच्छिद्रप्रमाणमाह–पूर्णेऽब्दे इति। षडङ्गुलस्य यन्त्रस्य मूलच्छिद्रमङ्गुलप्रमाणम्। सप्ताङ्गुलस्य सार्द्धाङ्गुलम्। अष्टाङ्गुलस्य द्व्यङ्गुलम्। नवाङ्गुलस्य सार्द्धद्व्यङ्गुलम्। द्वादशाङ्गुलस्य त्र्यङ्गुलम्। षडङ्गुलस्याग्रच्छिद्र मुद्गवाहि। सप्ताङ्गुलस्य माषवाहि। अष्टाङ्गुलस्य कलायवाहि। नवाङ्गुलस्य क्लिन्नकलायवाहि। द्वादशाङ्गुलस्य ह्रस्वबदरवाहि। अङ्गुल मान तु छिद्रस्य वृत्तपरिधौ ज्ञेयम्। "पञ्चाङ्गुलस्य मूलेऽर्द्धाङ्गुलम्, अग्रे वनमुद्गवाहि।" इति सङ्ग्रहोक्त (सू अ २८) ज्ञेयम्।

**मूलच्छिद्रप्रमाणेन प्रान्ते घटितकर्णिकम्॥ १४॥**
**वर्त्याऽग्रे पिहितं, मूले यथास्वं द्व्यङ्गुलान्तरम्।**
**कर्णिकाद्वितयं नेत्रे कुर्यात्**

स०–मूले यच्छिद्रमुक्त तत्प्रमाणेन प्रान्ते घटिता–सम्पादिता, कर्णिका–छत्राकारा गुदाविकान्त प्रवेशरोधिनी, यस्मिंस्तदेवम्। तथा, वर्त्या–दशादिकृतया, प्रान्ते (अग्रे) पिहित–स्थगितम्। यथास्व–ऊनवर्षादिकस्य तदङ्गुलप्रमाणेन, द्व्यङ्गुलान्तर कर्णिकायुगल मूलप्रदेशे नेत्रे विदधीत बस्तिपुटयोजनार्थम्।

आ० र०–यन्त्रस्य प्रान्ते कर्णिकास्थापनमाह–मूलच्छिद्रप्रमाणेनेति। मूलच्छिद्रप्रमाणेन प्रान्ते परिकल्प्य तत्सीमारूपा कर्णिका घटयेत्।

यन्त्राग्रच्छिद्र वर्त्या पिधेयमित्याह–वर्त्येति। सङ्ग्रहे तु (सू अ २८)–"कर्णिकान्त प्रतिबद्धसूत्रान्तर्गृहीताग्रपिधानघनचैलवर्ति।" इत्युक्तम्।

यन्त्रमूलस्थकर्णिकाद्वयमध्ये द्व्यङ्गुलमन्तर कार्यमित्याह–मूले यथास्वमिति। यथास्व–यमुद्दिश्य यन्त्र तदङ्गुले।

अत एवाह—

**तत्र च योजयेत्॥ १५॥**
**अजाविमहिषादीनां बस्ति सुमृदितं दृढम्।**
**कषायरक्तं निश्छिद्रग्रन्थिगन्धशिरं तनुम्॥ १६॥**
**ग्रथितं साधु सूत्रेण सुखसंस्थाप्यभेषजम्।**

स०–तस्मिंश्च कर्णिकाद्वितयेऽजादीना बस्ति योजयेत्। आदिशब्देन गोहरिणवराहाणा ग्रहणम्। अजादीनामित्येव निर्देशेऽप्यविमहिषग्रहणे लब्धे साक्षादेतयोर्ग्रहणमन्येभ्यो बस्तिभ्य एतद्बस्त्योर्योग्यतरत्वप्रतिपादनार्थम्। किम्भूत बस्तिम्? सुमृदित,–सस्नेह मुहु सुष्ठु मर्दितम्। तथा, दृढम्। तथा, कषायेण–हरीतक्यादिना, रक्तम्। तथा, छिद्र च ग्रन्थिश्च गन्धश्च शिराश्च, ता निर्गता–न सन्ति, यस्य तन्निश्छिद्रग्रन्थिगन्धशिरम्। तथा, तनु–न स्थूलम्। तथा, साधु–सम्यक्, सूत्रेण ग्रथित–बद्धम्। तथा, सुखेन–अकृच्छ्रेण, संस्थापनीयमौषध यत्र तदेवम्।

आ० र०–कर्णिकाद्वये बस्तिबन्धनमाह–तत्रेति। आदिशब्देन गोहरिणवराहादय। बस्तिं–मूत्राधारचर्मपेशीम्। सुमृदित–स्नेहमुद्राभ्याम्। कषायरक्त–कषायरसैर्द्रव्यैर्दत्तरागम्। निश्छिद्रग्रन्थिगन्धशिर–छिद्रादिचतुष्टयरहितम्। तनुं–सूक्ष्मम्। सूत्रेण साधु ग्रथित–बद्ध्वा परिवर्त्य पुनर्बद्धम्। सुखसंस्थाप्यभेषज–यथोक्तप्रमाणमौषधमसङ्कोचेन यथा माति तथाप्रमाणम्।

**बस्त्यभावेऽङ्कपादं वा न्यसेद्वासोऽथवा घनम्॥१७॥**

स०–बस्तेरभावे सति, अङ्कपाद वा–चरणावयवविशेषं वा, न्यसेत्–नेत्रे योजयेत्। अथवा, वस्त्र घन न्यसेत्।

आ० र०–[तदलाभे चरितार्थतामाह–बस्त्यभाव इति।] अङ्कपाद–ऊरुचर्म पादचर्म वा। वासो घन–स्वतो मधूच्छिष्टेन वा। सङ्ग्रहे तु (सू अ २८)–"न्युब्ज विवृतानन विनिवेश्य बस्तिं कर्णिकयोर्दृढेन सूत्रेण घन सम च बद्ध्वा परिवर्त्य पुनश्चान्यद्बस्तिमुखबन्धनार्थं सूत्रमुपनिधायानुगुप्त निधापयेत्।" इति।

**निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरे परम्।**
**प्रकुञ्चवृद्धिः प्रत्यब्दं यावत्षट्प्रसृतास्ततः॥ १८॥**
**प्रसृतं वर्द्धयेदूर्ध्वं द्वादशाष्टादशस्य तु।**
**आसप्ततेरिदं मानं, दशैव प्रसृताः परम्॥ १९॥**

स०–निरूहस्य मात्रा प्रथमे वर्षे कषायस्नेहसहितस्य प्रकुञ्च–पलप्रमाणम्। षण्मासादौ त्वेतदनुसारेणार्धपलादि कल्प्यम्। वर्षात्पर प्रकुञ्चेन वृद्धि प्रतिसवत्सरं कार्या, यावत् षट्प्रसृता–द्वादश पलानि। तत ऊर्ध्वं प्रसृत वर्द्धयेत्। प्रत्यब्दमित्यनुवर्तते। ततो द्वादशवर्षस्यैव द्वादश पलानि। अनन्तर त्रयोदशवर्षादिषु प्रतिवर्ष पलद्वय निरूहमात्राया वर्द्धयितव्य क्रमेणैव यावत्सप्तदशवर्षाणि। अष्टादशवर्षस्य तु द्वादश प्रसृता–चतुर्विंशतिपलानि। इद–एतत्, मान–प्रमाण, सप्ततिवर्षाणि यावत्। पर–सप्ततेरूर्ध्वं, दशैव प्रसृता मानम्, नाधिकम्।

आ० र०–निरूहौषधमात्रामाह–निरूहमात्रेति। प्रथमे

१ 'न्तरे' अ ञ। २ 'स्थानमा' घ च। ३ 'कल्पितसीमा' ग। ४ 'तत्समीपानुरूपा' क। ५ 'न्तग्राहिता' क। ६ 'न्त्र प्रयो' आ क। 'न्त्र तु यो' ञ। ७ 'गोजावि' अ ग। ८ 'न्धसिर' आ ग च। ९ 'ग्रन्थित' ञ। १० 'न वृषादीना ग्र' ट.। ११ 'न्यजातिभ्यो' ठ।

१ 'अस्थू' ठ। २ 'तत्तदे' ठ ड। ३ 'द्रैर्वेर्द' क। ४ 'ग्रन्थित' क च ञ। ५ [ ] इति पाठ क घ च ञ. पुस्तकेषु नोपलभ्यते। ६ 'न निवे' ध स द्व। ७ 'स्तिविबन्ध' च। ८ 'परि नि' क ञ.। 'पधाया' स द्व। ९ 'वत्सरात्परम्' अ। १० 'स च' अ। ११ 'सादूर्ध्व तदनुसारेणैव पलादि' ठ.। १२ 'क्रमेण या' ट। १३ 'इदमेव–ए' ठ.ड.।

वर्षे पलम्। तत आद्वादशात् पलवृद्धि । तत आऽष्टादशात् द्विपलवृद्धि । एवमष्टादशे वर्षे चतुर्विंशतिपलानि स्यु । तान्येवासप्ततितमात्। ततो विंशतिपलानि। सङ्ग्रहे तु (सू अ २८)-"अन्ये पुनर्द्वादशप्रसृतस्याप्यष्टाविच्छन्ति।" इति।

एव सावत्सरिकादारभ्य यावद्वर्षशतिकस्तावन्निरूहमात्रामभिधाय, अनुवासनमात्रामविकल्पाह—

**यथायथं निरूहस्य पादो मात्राऽनुवासने।**

**स०**-यथायथ-यथास्व वार्षिकस्यैकविंशतिवत्सरादेर्वा, निरूहस्य पाद -चतुर्भागमात्र ,अनुवासने -अनुवासनविषये, मात्रा। यस्य पल निरूहस्तस्य कर्षप्रमाणमनुवासनमित्यर्थ । एव सर्वत्र कल्प्यम्।

**आ० र०**-अनुवासनौषधमात्रामाह-यथायथमिति । यथायथ-पले कर्ष , पलद्वये कर्षद्वयमित्यादि। सङ्ग्रहे तु (सू अ २८)-"यथास्वमास्थापनमात्रा पादहीना माधुतैलिके प्रयोज्या।" इति।

**आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुन ॥२०॥**
**अन्वासनार्हं विज्ञाय पूर्वमेवानुवासयेत्।**
**शीते वसन्ते च दिवा रात्रौ केचित्ततोऽन्यदा ॥२१॥**
**अभ्यक्तस्नातमुचितात्पादहीनं हितं लघु।**
**अस्निग्धरूक्षमशितं सानुपानं द्रवादि च ॥ २२ ॥**
**कृतचङ्क्रमणं मुक्तविण्मूत्रं शयने सुखे।**
**नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः ॥२३॥**
**सङ्कोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम्।**

**स०**-आस्थाप्य-निरूहणार्ह, स्निग्ध, तथा स्विन्न, तथा शुद्ध-ऊर्ध्वाध , तथा भूयोऽपि लब्धबल, तथाऽनुवासनयोग्य, विदित्वा पूर्वमेव निरूहादनुवासयेत् । शीते-हेमन्तशिशिरयोर्ऋत्वो , तथा वसन्ते, दिवाऽनुवासयेत् । अन्यदा-शीताद्वसन्ताच्चान्यस्मिन् ग्रीष्मप्रावृट्शरदाख्ये ऋतौ, रात्रावनुवासयेत्। केचिदिति भिन्नक्रम , ततोऽन्यदेत्यतोऽनन्तर द्रष्टव्यम् । इति केचित् "आहु" इति वाक्यशेष । धान्वन्तरास्तु सर्वथैव रात्रावनुवासन नेच्छन्ति । धन्वन्तरिमतमेवोरीकृत्य सङ्ग्रहेऽधिजगे (सू अ २८)-"न रात्रौ प्रणयेद्वस्ति दोषोत्क्लेशो हि रात्रिज । स्नेहवीर्ययुत कुर्यादाध्मान गौरव ज्वरम्॥"इति।

तदेतद्देशान्तरादिवशात् प्रमाणयितव्यम् । किम्भूत नरम्? अभ्यक्तस्नात,-पूर्वमभ्यक्त पश्चात्स्नात, तम् । पूर्वकालेति समास । उचितात्पादहीन-येन यद्भोजनमभ्यस्त तस्माच्चतुर्थभागहीनमशितम्। तथा, हित-लघुगुणयुक्तम्। तथा, किञ्चित् स्निग्धरूक्षम् । तथा, सानुपान द्रवादि च। आदिशब्देन द्रवोष्णमनभिष्यन्दीत्यादिविशिष्ट भुक्तवन्तमिति गमयति । उक्त च सङ्ग्रहे (सू अ २८)-'अतिस्निग्धाशिनो ह्युभयमार्गससर्गात् स्नेहो मदमूर्च्छाभिसादह्लासादीन् जनयति । रूक्षाशिनो विष्टम्भ बलवर्णहानि च । अल्पमात्रद्रवाशिनो विसृष्टविण्मूत्रस्य चानावृतो न तदावरणात्पदम्।" इति । किम्भूतम्? कृतचङ्क्रमण-विहितगमनमात्रम् । तथा, त्यक्तमूत्रपुरीषम्। तथा, शयने-शयनाये, सुखावहे संविष्ट-स्थितम्। किम्भूते? नात्युच्छ्रिते,-नात्युन्नते, न चोच्छीर्षे-न चोन्नतशिरोधरे। कथ संविष्टम्? वामपार्श्वत,-वामपार्श्वेन। सङ्कोच्य दक्षिण सक्थि वामसक्थ्न उपरीति वृद्धवैद्या । ततो-दक्षिणसक्थ्न, अपर-वाम सक्थि, प्रसार्य। सङ्ग्रहे चोक्तम् (सू अ २८)-"शयने नात्युच्छ्रिते स्वास्तृत ईषदुन्नतपाददेशे वामपार्श्वेन प्राक्शिरस संवेशयेत्।" इति।

**आ० र०**-निरूहस्यानुवासनमाह-आस्थाप्यमिति। कृतस्नेहनादिकमास्थाप्यमनुवासनयोग्यत्वे सति पूर्वमनुवासयेत्।

अनुवासनकालमाह-शीते वसन्ते चेति। शीते वसन्ते ततोऽन्यदा च दिवाऽनुवासयेत्। केचित् ततोऽन्यदा रात्रौ, इति वदन्ति । सङ्ग्रहे तु (सू अ २८)-"अवेक्ष्य वा दोषादीन्। अन्यथा हि स्नेहोक्तामयप्रादुर्भाव । धन्वन्तरीया पुन प्राहु । न रात्रौ प्रणयेद्वस्ति दोषोत्क्लेशो हि रात्रिज । स्नेहवीर्ययुत कुर्यादाध्मान गौरवं ज्वरम्॥ अह्नि स्थानस्थिते दोषे वह्नौ चान्नरसान्विते। स्फुटस्रोतोमुखे देहे स्नेहो यत्परिसर्पति ॥ अल्पपित्तकफ रूक्ष भृश वातरुजार्दितम्। भुक्त जीर्णाशन काम रात्रावप्यनुवासयेत्॥ केवलानिलातिपीडित स्वयुद्धमप्यनिरूपितवेलमप्यनुवासयेदात्ययिकत्वात्।" इति।

अनुवासनीयस्य पूर्वकर्तव्यमाह-अभ्यक्तस्नातमिति। उचितात्-नित्यभोजनात्, पादहीनम्। अशित-भुक्तवन्तम्। द्रवादि-द्रवपूर्वम्। न चोच्छीर्षे-उच्छीर्षक विना।

१ 'द्वादश प' क ग । २ 'ष्टादश द्वि' क ग ञ । ३ 'न्येव सप्ततिपर्यन्तम्। त' ग । ४ 'भाग, अ' ट । ५ 'सर्व क' ठ ड । ६ 'न्यथा' अ आ घ । ७ 'वा' ग । ८ 'निरूह्य' ट । ९ 'दिवसेऽनु' । १० 'शीतवसन्तादन्यत्र ग्री' ठ । ११ 'न्यद्ग्रीष्म' ट। १२ 'त्, इति केचिदाचार्या । के' ट । १३ 'सवदैव' ड । १४ 'तमधिकृत्य' ट । १५ 'येत्स्नेह दो' ट ठ.ढ. । १६ 'स्ति स्नेहोत्क्ले' स द्व । १७ 'न विषमज्व' ट ठ.ड ।

१ 'तदेत तत्तद्दे' ट । २ 'तात्-येन' ट । 'तात्-यद्भो' ड । ३ 'सान्' स द्व । ४ 'चानावृतो' ठ । ५ 'था, आमने शयनीये' ठ ट । ६ 'मवक्ष्युप' ट ठ ट । ७ 'धान्वन्त' क घ ञ स मू । 'धान्वन्तर्या' च । ८ 'रात्रौ बस्ति न दद्यात्तु दोषो' स सु । ९ 'येत्स्नेह दो' क ग ञ । १० 'स्ति स्नेहोत्क्ले' स द्व । ११ 'मुखे देहे स्ने' क ग स सु । १२ 'स्नहो य परि' ग घ । 'स्नहौज परि' च स सु । १३ 'निलनिपी' स द्व । १४ 'तबल चाप्यनु' स द्व । १५ 'त्वाद्यावे ।' स द्व । १६ 'व्यतामा' च. । १७ 'त द्रवा' घ च ।

**अथास्य नेत्रं प्रणयेत्स्निग्धे स्निग्धमुखं गुदे ॥ २४ ॥**
**उच्छ्वास्य बस्तेर्वदने बद्धे हस्तमकम्पयन् ।**
**पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम् ॥ २५ ॥**
**नातिवेगं न वा मन्दं सकृदेव प्रपीडयेत् ।**
**सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ २६ ॥**

**स०**–अस्य–एवभूतावस्थस्यातुरस्य, गुदे स्निग्धे घृतेन कृते नेत्र [ स्निग्धप्रान्त प्रणयेत् । ] बस्तेर्वदन उच्छ्वास्य–वात निःसार्य, बद्धे सति, नातिशीघ्र, नातिविलम्बित, नातिवेगेन, न च मन्द कृत्वा, तथा पृष्ठवशाभिमुखमेकवारमेव नेत्र प्रपीडयेत् । कथ प्रपीडयेत् ? हस्तमकम्पयन् । अतिद्रुतादिपीडनदोषा बस्तिव्यापत्सिद्धौ (हृ क. अ ५) वक्ष्यमाणा । सावशेष च स्नेह कुर्वीत । कुतो हेतो ? इत्याह–यस्मात् शेषे स्नेहे वायुस्तिष्ठति ।

**आ० र०**–अनुवासने वैद्यकृत्यमाह–अथास्येति । अस्य–आतुरस्य, गुदे बस्तिमुच्छ्वास्य–मृदुकरस्पर्शेन विगतमारुत कृत्वा, पृष्ठवश प्रति–पृष्ठवशाश्रयेण, प्रणयेत् । तत –अनन्तरम्, औषध प्रणयेत् । नातिद्रुतविलम्बितमिति [3]पीडनारम्भविषयम् । नातिवेग न वा मन्दमिति पीडनविषयम् । शेषे–औषधशेषे ।

**दत्ते तूत्तानदेहस्य पाणिना ताडयेत्स्फिजौ ।**
**तत्पार्ष्णिभ्यां तथा शय्या पादतश्च त्रिरुत्क्षिपेत् २७**
**ततः प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ।**
**आहन्यान्मुष्टिनाऽङ्गं च स्नेहेनाभ्यज्य मर्दयेत् ॥२८॥**
**वेदनार्तमिति स्नेहो न हि शीघ्रं निवर्तते ।**
**योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्नकार्यकृत् २९**

**स०**–दत्ते [4]च बस्तिस्नेहे सति, उत्तानगात्रस्य तु तस्य स्फिजौ हस्तेनाहन्यात् । तथा–तेनैव प्रकारेण, तत्पार्ष्णिभ्या स्फिजौ ताडयेत् । शय्या–खट्वा च, पादत –च[5]रणदेशात्, त्रीन् वारानुत्क्षिपेत्, न तु मूर्धत । तत –शय्योत्क्षेपादनन्तर, प्रसारितशरीरस्य दत्तगण्डुकस्य पार्ष्णिके–पार्ष्णौ, मुष्ट्याऽऽहन्यात् । अङ्ग–शरीर च, स्नेहेन–तैलादिना, अभ्यज्य मर्दयेत् । किमेव क्रियते ? इत्याह–अङ्ग वेदनार्तं–पीडातुर, इति–हेतोर्यस्मादाशु स्नेहो न निवर्तते । शीघ्र[6]मपयाते च स्नेहे सत्यपर स्नेहो देय । कस्मादेव विधीयते ? इत्याह–स्नेह शरीराभ्यन्तरेऽतिष्ठन् नैव कार्यकृत्–न स्नेह[7]ने समर्थ इत्यर्थ ।

**आ० र०**–दत्ते त्वौषधे वैद्य स्वपाणिना स्फिजौ ताडयेत्, [8]तत आतुरपार्ष्णिभ्याम् । तत पादत शय्यामुत्क्षिपेत् । तत पार्ष्णौ[1] च मुष्टिनाऽऽहन्यात् । त्रिरिति पाणिताडनादिषु चतुर्ष्वपि योज्यम् । ततो वेदनार्तमङ्ग मर्दयेत् । सङ्ग्रहे तु ( सू अ २८ )–"वमनादविकतर कृतमङ्गलमशनार्द्रहस्तमशङ्कनीयप[2]रिवार निवाते वेश्मनि प्रतते शयने स्वास्तृते ईषदु[3]न्नतपाददेशे प्राक्शिर[4]स सवेशयेत् । अतिस्निग्धाशिनो ह्युभयमार्गससर्गात्स्नेहो मदमूर्च्छाग्निसादहृल्लासान् जनयति । रूक्षाशिनो विष्टम्भ बलवर्णहानि [5]च । अल्पमात्रद्रवाशिनो विसृष्ट[6]विण्मूत्रस्य [7]चानावृ[8]तो न तदा वर्णाद्यापदम् । चिरमशितवतो वि[9]दाहा[10]भिमुखभक्तस्य ज्वर कुर्यात् । यतश्च वामपार्श्वाश्रयाणि वह्निग्रहणीगुदवलीमुखानि । तानि तत्पार्श्वशायिनो निम्नानि भवन्ति । अतस्त[11]दौषधमस्ख[12]लित प्राप्नोति प्रवेशनिर्गमाविति । सविष्ट चैन मृजुस्थितदेह स्वबाहूपधान प्रसारितवामसक्थिमाकुञ्चितेतर त[13]स्योपरि प्रसारितदक्षिणबाहु कारयेत् । पूर्वमेव तु वैद्यो व[14]र्त्या सुपिहिताग्रच्छिद्र नेत्र भाजनस्योपरि कृत्वा दक्षिणपादाङ्गुष्ठाङ्गुलिभ्या कर्णिकाया[15]मुपरिष्टान्निष्पीड्याविबन्धाय शताह्वासैन्धवचूर्णावचूर्णित प्रागेव नेत्रस्पर्शात् पूर्ववदभिमन्त्रित यथार्हं यथार्हौषधविपक्व सुखोष्ण बस्तौ स्नेहमासिच्यावलीकोच्छ्वास निःसारितवातबुद्बुदमौषधान्ते सूत्रेण द्विस्त्रिर्वा बस्तिमुखमावेष्ट्य दक्षिणपाणौ नेत्रमुप[16]धाय तिष्ठेत् । ततो वामहस्तप्रदेशिन्याऽभ्यक्तप्रवेशप्रदेशमपनीतवर्त्युत्तान वामहस्ताङ्गुष्ठोदरपिहिताग्र मध्यमाप्रदेशिन्युपगृहीतकर्णिकमृज्वनुसुखमेकमना लाघवेन नेत्रमाकर्णिक प्रवेशयेत् । आतुरोऽपि तदनुलोम[17]मवलम्बेत । ततश्च वैद्यो बस्तिमुख दक्षिणहस्ताङ्गुष्ठप्रदेशिनीभ्याममुञ्चन्नेत्रमचालयन् हस्तद्वयेनोत्तानेनैकग्रहणेनैव प्रपीडयेत् । अन्यथा हि व्यापदो भवन्ति । अन्ये तु त्रिंशन्मात्रा पीडनकालमाहु । न च बस्तौ दीयमाने क्षवकासहासजृम्भास्पन्दनान्याचरेत् । विण्मूत्रानिलवेगे तु नेत्रमाकृष्य वेगान्ते शेष प्रणयेत् । तथा पार्ष्ण्यङ्गुलिपादतलपिण्डिका सरुज चाङ्ग स्नेहेन प्रतिलोम वाक्शतमात्र शनैर्मृ[18]द्नीयात् ।" इति ।

वैद्यकृत्यस्य फलमाह–इति स्नेह इति । "समनुगच्छति [19]च समन्तात्सिरा. ।" इत्यधिक सङ्ग्रहे ( सू अ २८ ) ।

---

१ 'स्निग्ध स्निग्धमुखे गुदे' अ क ग ड । २ 'ष प्रकुर्वीत' क घ च ञ । ३ 'पीडितार' क ग ञ । ४ 'च स्नेहे' ड । ५ 'रणोद्देशात्' ठ ड । ६ 'प्रमायाते' ट.ठ.ड । ७ 'हनस' ट ठ.ड । ८ 'तत्पार्ष्णिभ्या–आतु' ग. ।

१ 'पार्ष्णिके च' ग । 'ष्णा स्वमु' घ च । २ 'परिचारक नि' स स । ३ 'न्नमित' स स । ४ 'रस निवे' क ग. । ५ 'वा' स द्व । ६ 'ष्टवातविण्मू' क ग ञ । ७ 'चान्नावृतेन तदा' क ञ स मू । 'चान्नावृतो' घ । ८ 'वृतेन तदावृताद्या' स स । ९ 'णात्तद्या' क ञ । १० 'विहाराभि' च । ११ 'स्तौषध' क च ञ स मू । १२ 'लितमाप्नो' च स द्व । १३ 'तस्यैव चोपरि' स द्व । १४ 'र्त्याऽऽशु पि' क च ञ । १५ 'या उप' स द्व । १६ 'पनिधा' स द्व । १७ 'मयन्नवल' स स । १८ 'नैर्मृदु गृह्णीया' ञ । 'नैर्विगृह्णीया' स.मू. । 'नैर्विमृ' स.स । १९ 'चासम' स.द्व

प्रमादाच्छीघ्रनिवृत्तौ पुनस्तदेवानुवासनं कार्यमित्याह—योज्य इति। शीघ्रनिवृत्ति—विना मलेन चेत्।

**दीप्ताग्निं त्वागतस्नेहं सायाह्ने भोजयेल्लघु।**

स०—दीप्ताग्निं तु पुरुषं निवृत्तस्नेहं सन्तं [सायाह्ने] लघुमात्रया स्वभावतश्च, आशयेत्।

आ० र०—मन्दाग्निमनागतस्नेहं च सायं न भोजयेदितीतरनियमेनाह—दीप्ताग्निमिति। सङ्ग्रहे तु (सू अ २८)—"नैव चानागतस्नेहमपि द्वितीयेऽहनि न च तमनुवासयेत्।" इति।

**निवृत्तिकालः परमस्त्रयो यामास्ततः परम्॥ ३०॥**
**अहोरात्रमुपेक्षेत, परतः फलवर्तिभिः।**
**तीक्ष्णैर्वा बस्तिभिः कुर्याद्यत्नं स्नेहनिवृत्तये॥ ३१॥**

स०—स्नेहस्य त्रयः प्रहरा परो निवृत्तिकालः। ततः—प्रहरत्रयात् परतो, रात्रिदिवमुपेक्षेत—न तदाकृष्टौ यत्नं कुर्यात्। परतः—अहोरात्रात्, फलवर्तिभिः—अर्शश्चिकित्सितोक्ताभिः, अथवा तीक्ष्णैर्बस्तिकल्पोक्तैर्बस्तिभिः स्नेहागमनार्थं यतेत।

आ० र०—अनुवासनस्य निवृत्तिकालमाह—निवृत्तिकाल इति।

निवृत्तिकालेऽप्यनिवृत्तौ किञ्चित्कालमुपेक्षामाह—तत इति।

उपेक्षाकालेऽप्यनिवृत्तौ प्रतीकारमाह—परत इति। तीक्ष्णैः—लवणारनालप्रायैः।

**अतिरौक्ष्यादनागच्छन्न चेज्जाड्यादिदोषकृत्।**
**उपेक्षेतैव हि ततोऽध्युषितश्च निशां पिबेत्॥ ३२॥**
**प्रातर्नागरधान्याम्भः कोष्णं, केवलमेव वा।**

स०—अतिरौक्ष्यादनागच्छन् स्नेहो यदि जाड्याग्निसादादिदोषान्न विधत्ते, तत उपेक्षेतैव—न तन्निष्कासने यतेतेत्यर्थः। अध्युषितो रात्रिं यदि स्नेहस्ततः परिणतत्वात् रसादिधातुसमतां गतः प्रातः—प्रभाते, शुण्ठीधान्यकाम्बु कदुष्णं पिबेत्। केवलमेव वा—नागरधान्यकरहितं, कोष्णं जलं पिबेत्।

आ० र०—प्रतीकारस्यापवादमाह—अतिरौक्ष्यादिति।

निवृत्तस्नेहस्यानिवृत्तस्नेहस्य च स्नेहशेषपाकार्थमौषधमाह—अध्युषित इति। केवलमेव वा—कोष्णमम्भः। सङ्ग्रहे तु (सू अ २८)—"सुखोषितं चैनं तथा कृतवमनविरेचनास्थापनान्यतमं प्रातः शुण्ठीधान्यकाथमितरद्वोष्णमुदकं स्नेहशेषजरणाय वातकफोपशान्तये च पाययेत्। ततोऽन्नकाले यथोक्तमन्नमश्नीयात्। न चानुवासितं पेयां पाययेत्। सा हि सस्नेहकोष्ठमेनमभिष्यन्दयति।" इति।

**अन्वासयेत्तृतीयेऽह्नि पञ्चमे वा पुनश्च तम्॥ ३३॥**
**यथा वा स्नेहपक्तिः स्यादतोऽत्युल्बणमारुतान्।**
**व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम्॥ ३४॥**

स०—तमातुरं भूयस्तृतीये दिवसे पञ्चमे वाऽनुवासयेत्। अथवा यथा स्नेहपाको भवेदित्यग्न्यपेक्षया सप्तरात्रेऽधिके न्यूने वा त्रिरात्रे वा यथायोगमनुवासयेत्। अतः—अस्मादेव हेतोः, अधिकपवनान् व्यायामशीलान् पटुतरदहनान् रूक्षांश्च पुरुषान् प्रत्यहमनुवासयेत्।

आ० र०—पुनरनुवासनस्य कालमाह—अन्वासयेदिति। स्नेहपाकानुसारेण सप्तमादिदिनेषु वा।

उल्बणवातादीन् प्रतिदिनमनुवासयेदित्याह—अत इति। अतः—स्नेहपाकप्राधान्यात्।

**इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये।**
**निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः॥ ३५॥**

स०—इति—पूर्वोक्तेन प्रकारेण, स्नेहैस्त्रिभिश्चतुर्भिर्वा स्निग्धे सति स्रोतोविशोधनार्थं निरूहं शोधनं प्रयोजयेत्। अस्निग्धे सति तनोः—शरीरस्य, स्नेहनं प्रयोजयेत्। त्रयो वा चत्वारो वा त्रिचतुराः। सङ्ख्ययाव्ययेति समासः। चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसङ्ख्यानमित्यच् समासान्तः।

आ र०—अनुवासनानन्तरं निरूहमाह—इति स्नेहैरिति। स्नेहैः—अनुवासनैः।

निषिद्धानुवासनस्यानुवासनं विनैव निरूहमाह—अस्निग्ध इति। स्नेहनं सन्, यः शोधनो निरूहस्तं युञ्ज्यात्।

**पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे।**
**मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले॥ ३६॥**
**अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम्।**
**अवेक्ष्य पुरुषं दोषभेषजादीनि चादरात्॥ ३७॥**
**बस्तिं प्रकल्पयेद्वैद्यस्तद्विद्यैर्बहुभिः सह।**

स०—अथ—अनुवासनादनन्तरं, पञ्चमे तृतीये वा वासरे मध्याह्ने किञ्चित्—मनाक्, आवृत्ते—अतिक्रान्ते, तथा बलिमङ्गले विहिते सति, पुरुषं कृताभ्यक्तस्वेदितं त्यक्तमलं किञ्चिद्बुभुक्षितं तथा प्रकृत्यादिभिर्ज्ञात्वा दोषादीनि विदित्वा। आदिशब्देन सात्म्यबलादिपरिग्रहः। इत्येवं सर्वमेवगम्य वैद्यो बस्तिं प्रक-

१ 'स्नेह द्वि' स स। २ 'रात्रिदिवसमु' ट। ३ 'ततस्तदाकृष्टौ' ठ ड। ४ 'दोष न वि' ठ ड। ५ 'तदुपे' ट। ६ 'र्थं। व्युषितो' ड। 'र्थं। ततो निशा—रात्रिं, अध्युषितः सुखोषितः पुमान् यदि' ट। ७ 'रच्चोष्णोदक वा स्नि' स.स।

१ 'अस्याग्रे "आध्मानसङ्कोचपुरीषबन्धक्षीणेन्द्रियत्वारुविभङ्गशूलाः। पाङ्गुल्यशाखाश्रितवातभग्नबन्धाश्च ('वाताश्च' ड।) साध्या ह्यनुवासनेन॥" इति अ ड पुस्तकयोरधिकः श्लोकः। २ 'अवेक्ष्य' हे स मू। ३ 'स्तद्वैद्यै' ठ। 'स्तद्विधैर्ब' घ.च.ञ.। ४ 'दीन् वि' ट.ड.। ५ 'मधिगत्य वै' ट.।

ल्पयेत्। ननु, "दूष्य देश" (हृ सू अ १२।६७) इत्यादिना सर्वमुक्तमेवैतत् । तत्किमनेन? इति। ब्रूम । निरूहमपि सापाय पश्यतैतदाचार्येण पुनरुक्तम् । दूष्यदेशादिमहता यत्नेनालोचनीयमिति प्रतिपादनार्थम्। "निरूहमात्रा प्रथमे" इत्यादि च सर्वमत्रालोच्यम्। कथ प्रकल्पयेत्? इत्याह–तद्विद्यै –वैद्यकशास्त्रज्ञैर्बहुभि सह–सार्द्धम्।

आ० र०–निरूहविधिमाह–पञ्चम इति । अन्वासनदिनात् तृतीये पञ्चमे वा। साधके–ज्योति शास्त्रोक्ते। शुभे–अशौचादिरहिते। अवेत्य–ज्ञात्वा । तद्विद्यै –बस्तिकुशलै । सङ्ग्रहे तु ( सू अ २८ )–"आर्यावलोकित नाथमार्या तारामात्मभुव धातारमश्विनाविन्द्रमात्रेय सप्तर्षीन् काश्यपविदेहपतिप्रभृतीनग्निवेशादींश्च तन्त्रकारान् दीपगन्ध पुष्पफलबलिधूपैर्यज्ञ इव प्रकल्पितभागान् कृत्वा, ओषधीर्वृद्धवैद्यान् द्विजातींश्च सपूज्य तद्विद्यसहितो दोषौषधादिबलेन यथार्हमुपकल्पयेद्बस्तिम्।" इति।

अथ निरूहकल्पनामाह—

**क्वाथयेद्विंशतिपलं द्रव्यस्याष्टौ फलानि च ॥ ३८॥**
**ततः क्वाथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत्।**
**पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफेऽधिके ॥ ३९ ॥**
**सर्वत्र चाष्टमं भागं कल्काद्भवति वा यथा।**
**नात्यच्छसान्द्रता बस्तेः पलमात्रं गुडस्य च ॥ ४०॥**
**मधुपट्वादिशेषं च युक्त्या**

स०–द्रव्यस्य–बस्तिकल्पोक्तस्य, निरूहकल्पनार्थं विंशतिपलानि, तथाऽष्टौ फलानि–मदनफलानि, सामान्यपरिभाषया षोडशगुण जल दत्त्वा क्वाथयेत्। चतुर्भागावशेषश्च ग्राह्य । तत –तस्मादेवकृतात्, क्वाथाच्चतुर्थांश स्नेह वाते प्रकल्पयेत्। द्वादशप्रसृतो हि निरूह । तत्र स्नेह षट्पलिक कल्पयेदित्यर्थ । पित्तेऽधिके स्वस्थे च पुरुषे षष्ठांश स्नेह–चतुष्पलिक, प्रकल्पयेदिति प्रकृतम्। कफेऽधिके अष्टमांश स्नेह–त्रिपलिक, प्रकल्पयेत्। ननु, स्वस्थस्य दोषचालन प्रतिषिद्ध तन्त्रान्तरीयै । तद्ग्रन्थो हि–"यो हि सञ्चालयेत्सुप्त वने सिंह करादिभि । स दोषाश्चालयेत् स्वस्थान् प्रच्छर्दनविरेचनै ॥" इति। तस्मात् स्वस्थवृत्ते निरूहकल्पना न युक्तेति। तदेतदसत्। यस्मात् प्रागभिहितम् (हृ सू अ. ४।३५)–"शीतोद्भव दोषचय वसन्ते विशोधयन् ग्रीष्मजमभ्रकाले। घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्न जातु ॥" इति। तस्मादाचार्यवचनाज्ज्ञायते स्वस्थवृत्तेऽपि शुद्धिविधान सम्मतमिति तन्त्रकृत । तन्त्रान्तरीय मत त्वसदेव, शिष्टव्यवहारविरुद्धत्वात्। सर्वत्र–वाते पित्ते कफे स्वस्थे च, कल्कात्–पेष्यद्रव्यात्, अष्टम भाग–त्रीणि पलानि, कल्पयेत्। भवति वेत्यादि। यथा वा बस्तिरत्यच्छोऽतिसान्द्रो–अतिघनो [वा] न भवति तथा कल्क कल्पयितव्य । पलमात्र गुडस्य चेति पलान्नाधिकोन इति ज्ञापनार्थं मात्रग्रहणम्। मधुपट्वादिशेष च युक्त्या प्रकल्पयेत्। तत्रेय युक्ति ,–माक्षिकस्य पलचतुष्टय सैन्धवस्य च कर्षं, आदिग्रहणात् कश्चिद्यवक्षारस्य कर्ष , तथा मासरससुरासवशुक्तक्षीरकाञ्जिकाना ग्रहणम्।

आ० र०–निरूहद्रव्याणा मात्रामाह–क्वाथयेदिति। यत्र क्वाथ्यस्य विंशतिपलानि तत्राष्टौ मदनफलानि इत्येवपरमेतत्, न क्वाथमानपरम्, प्रकुञ्चादिनिरूहेष्वसम्भवात्। क्वाथात्मकान्निरूहात् द्वादशप्रसृताच्चतुर्थांश–प्रसृतत्रयसम्मित, स्नेह कल्पयेत्। तत क्वाथात्तावन्त क्वाथमपनीय, ल्यब्लोपे पञ्चमी। एव कल्कादष्टम–सार्धप्रसृतम् । गुडस्य पलमात्रम् । युक्त्या मधु प्रसृतद्वयसम्मितम्, पटु–सैन्धव, अक्षसम्मितम् । आदिशब्दान्मासरसक्षीरगोमूत्रकाञ्जिकमदनफलानि । उक्त हि सुश्रुतेन ( चि अ ३८।३० )–"क्षौद्र मूत्र फल क्षीरमम्ल मासरस तथा । युक्त्या प्रदापयेद्धीमान् निरूहे कल्पना त्वियम् ॥" इति।

---

१ 'हमात्रया पश्यतेदमाचार्येण' ठ । २ 'भि साकम्।' ठ ड । ३ 'अवेक्ष्य–' क ग । ४ 'तद्विधै –' च ञ । ५ 'मार्य ता' स मू । 'मार्यता' स स । ६ 'नाबि(वि)न्दुमा' क च ञ । ७ 'सप्तमुनीन् काशिविदे' स मू । ८ 'काश्यपिविदे' घ च । 'काशिराज वि' स स । ९ 'देहाधिपति' क । 'देह्यादिपति' ञ । १० 'धीवृद्धवेद्यद्वि' स ह्व । ११ 'तद्वैद्यस' क ग ञ । 'तद्विधस' घ । १२ 'वातेऽनु कल्प' आ ख ग ड चन्द्र । 'वाते तु कल्प' अ क च घ । १३ 'विंशतिपलानि क्वाथयेत्–श्रपयेत्, द्रव्यस्य–दशमूलादेर्बस्तिकल्पनाय वक्ष्यमाणस्य। तथा, अष्टौ मदनफलानि क्वाथयेत्। अष्टौ मदनफलानि पलमात्र भवति। एवमेकविंशतिपलानि द्रव्यस्य षोडशगुणेनाम्भसाऽभ्यासिच्य तावत्क्वाथयेत्। यावच्चतुर्भागावशिष्टतया स क्वाथ पलाना चतुरशीति. सम्पद्यते। ततस्तस्मात्क्वाथात् स्नेह चतुर्थांश–एकविंशतिपलानि, वाते–वातविषये, अनु–पश्चात्कल्पयेत्। पित्ते–पित्तविषये, तत क्वाथात् प्राङ्निर्दिष्टपरिमाणात् षष्ठांशस्नेह–चतुर्दशपलानि, कल्पयेत्। तथा, स्वस्थे–स्वस्थविषये, षष्ठांशमेव कल्पयेत्। कफे–कफविषये, तत क्वाथादष्टांश स्नेह–सार्धानि दशपलानि, कल्पयेत्। सर्वत्र चाष्टमाश कल्काद्भवति। यथा सर्वत्र–वाते तथा पित्ते स्वस्थवृत्ते कफे च, तत क्वाथादष्टमाश कल्कस्य देय ,–सार्धानि दशपलानि भवन्ति।' इति चन्द्र ।

१ अस्याग्रे 'सर्वत्र च–वातपित्तकफेष्वधिकेषु स्वस्थवृत्ते च, अष्टम भाग–त्रीणि पलानि, कल्कस्य प्रकल्पयेदिति प्रकृतम्।' इति ट ठ ड पुस्तकेषु पूर्वमुद्रितपुस्तके चाधिक पाठो दृश्यते। किन्त्वयुक्त , अस्यैवाग्रे उक्तत्वात् । २ 'तद्यथा–' ट । ३ 'गभ्यधायि' ट । ४ 'तमेव तन्त्रकारस्य।' ट । 'तमिति ।' ड । ५ 'व, सद्यव' ट । ६ 'न्द्रो वा घनो' ठ ड । ७ 'ति पित्ते तदधिकानुज्ञानार्थं मात्र' ठ ड । 'ति पित्ते तदधिक नेति ज्ञा' इति कश्चित्। ८ 'रासुक्त' ठ ड । ९ 'मदनानि' क ख घ च ञ । १० 'प्रकल्पये' स सु ।

तत्र[1] चतुर्णा द्रवाणा प्रसृतद्वयम्, मदन त्वेकम्[2], पारिशेष्यात्क्वाथस्य प्रसृतचतुष्टयम्, एव द्वादशप्रसृतत्वम्। उक्त हि सुश्रुतेन ( चि अ. ३८।३७ )–"दत्त्वाऽऽदौ सैन्धवस्याक्ष मधुन प्रसृतद्वयम्[3]। विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतत्रयम्॥ एकीभूते तत स्नेहे कल्कस्य प्रसृत क्षिपेत्। सम्मूर्च्छिते कषाय तु चतुष्प्रसृतसम्मितम्॥ वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम्। एव प्रकल्पितो बस्तिर्द्वादशप्रसृतो भवेत्॥" इति। यत्त्वत्र कल्कस्य प्रसृतमान तत् 'भवति वा यथा नात्यच्छसान्द्रता बस्ते' इत्यभिप्रायेण। यच्चावापस्य प्रसृतद्वयमान तद्गुडपलकल्क[4]त्रिपलयोगात्। इति वातेऽधिके। पित्ते तु स्नेहन्यूनता मधुदुग्धाभ्यां पूरणीया। कफे तु मधुनैव। उक्त हि वृन्देन ( अ ७६।५ )–"मधुस्नेहनकल्काख्यकषायावाप[5]त क्रमात्। त्रीणि षट्[6] द्वे दश त्रीणि पलान्यनिलरोगिणाम्[7]॥ पित्ते चत्वारि चत्वारि द्वे[8] द्विपञ्च चतुष्टयम्[9]। षट् त्रीणि द्वे दश त्रीणि कफे चापि[10] निरूहणम्॥" इति।

**सर्वं तदेकतः।**
**उष्णाम्बुकुम्भीबाष्पेण तप्तं खजसमाहतम्॥ ४१॥**
**प्रक्षिप्य बस्तौ प्रणयेत्पायौ नात्युष्णशीतलम्।**
**नातिस्निग्धं न वा रूक्षं नातितीक्ष्णं न वा मृदु ४२**
**नात्यच्छसान्द्रं नोनातिमात्रं नापटु नाति च।**
**लवणं तद्वदम्लं च**

स०–तत्–एतत्, सर्वमौषधमेकत –एकस्मिन् कृत्वा, भेषजपाकातिक्रान्ति[11]परिहारार्थमुष्णाम्बुकुम्भीबाष्पेण तप्त, खजेन–दर्व्या[12]हननकाष्ठेन, समाहत–आलोडित, तथा "ब्रह्मदक्ष" इत्यादिना चाभिमन्त्रित, बस्तौ प्रक्षिप्य पायौ–गुदे, प्रणयेत्। नात्युष्ण, नातिशीतल, नातिस्निग्ध, न वा रूक्ष, नातितीक्ष्ण, न वा मृदु, नात्यच्छ, नातिसान्द्र–नातिघन, नोनमात्र, न चातिमात्र, नापटु–नालवण, नातिलवण, तद्वदम्ल चेति नानम्ल, नात्यम्लम्। अतिशब्दप्रयोगादत्र मध्यमावस्थानुगम।

आ० र०–मिलितानां निरूहद्रव्याणां संस्कारमाह–सर्वमिति। खजो–मन्थन[13]दण्ड। तद्वत्–नानम्ल[14] नात्यम्लम्। सङ्ग्रहे तु ( सू अ २८ )–"तत्र बाष्पमात्रा[15]नुतापादौषधस्य विदाहो न भवति। खजप्रमथनात्[16] क्वाथस्नेहादय. सम्यक्संयुक्ता[1] सम्यगेव योगमारभन्ते। अन्यथा पुन क्वाथादीनामुल्बणोऽन्यतमोऽन्यतम यथास्व दोषमीरयेत्। अत्युष्णादीना तु पृथग्व्यापद. साधनानि च सिद्धिषूत्तरकालमुपदेक्ष्यन्ते। अपि च। तिर्यक् प्रणीते हि न याति धारा गुदे व्रण स्याच्चलिते तु नेत्रे। दत्त. शनैर्नाशयमेति बस्ति कण्ठ प्रधावेदतिपीडितस्तु॥ स्तम्भ विधत्तेऽतिमृदुर्हिमश्च तैक्ष्ण्याम्ल[3]तीक्ष्णो भ्रमदाहमोहान्। स्निग्धोऽतिजाड्य, पवन तु रूक्षस्तन्वल्पमात्रा[4]लवणस्त्वयोगम्॥ करोति मात्राभ्यधिकोऽतियोग[5] क्षाम तु सान्द्र सुचिरेण[6] चेति। दाहातिसारौ लवणोऽति कुर्यात्तस्मात्सुयुक्त सममेव दद्यात्॥" इति।

साम्प्रतमन्यमतमभिधत्ते—

**पठन्त्यन्ये[7] तु तद्विदः॥ ४३॥**
**मात्रां त्रिपलिकां कुर्यात्स्नेहमाक्षिकयोः पृथक्।**
**कर्षार्द्धं माणिमन्थस्य स्वस्थे कल्कपलद्वयम्॥ ४४॥**
**सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत्।**

स०–तद्विदो–बस्तिविद, एव पठन्ति। यथा,–"मात्रां त्रिपलिका कुर्यात्" इत्यादि।

आ० र०–मतान्तरेण स्वस्थविषय मानमाह–वदन्त्यन्ये त्विति। अय नवप्रसृतो निरूह.।

सम्प्रति निरूहावयवाना माक्षिकादीना सयोजनविधिमाह–

**माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात्॥ ४५॥**
**आवपेत निरूहाणामेष संयोजने विधिः।**

स०–माक्षिकादि क्रमात् आवपेत–मर्दयित्वा मिश्रयेत्। कुण्डके माक्षिक प्रथम प्रक्षिप्य मर्दयेत्। ततस्तत्रैव लवण क्षिप्त्वा मेलयेत्। एव स्नेह, ततोऽनु कल्क, तत क्वाथ, इति–अनेन, क्रमेण मिश्रयेदित्यर्थ। एव योजितानि[8] द्रव्याणि समरसता यान्ति। समरसभावेन च निरूहस्य सम्यग्योगो भवति। निरूहाणा सयोजने–मिश्रणे, एष विधि –एतद्विधानम्।

आ० र०–निरूहद्रव्याणा मेलनक्रममाह–माक्षिकमिति। अर्थात् क्वाथानन्तर क्षीराद्यावापा.।

**उत्तानो दत्तमात्रे तु निरूहे तन्मना भवेत्॥ ४६॥**
**कृतोपधानः सञ्जातवेगश्चोत्कटकः[9] सृजेत्।**

स०–निरूहे दत्तमात्रे सति उत्तान सन् तन्मना –निरूहवेगे दत्तावधान, तथा कृतोपधान सन् तिष्ठेत्। समुद्भूतवेगश्चोत्कटक[10] सन् त्यजेत् 'वेगं' इति शेष।

---

१ तत्र–सुश्रुतवचने। २ एक मदनफलम्, न त्वेक प्रसृतम्। ३ 'सृति' स सु। ४ 'ल्कपल' क घ च ञ.। ५ 'पन क्र' ञ। ६ 'ट् द्वादश' क ख। ७ 'गिणम्' क ख। ८ 'द्वे द्वे पञ्च' क ख ग च ञ। द्विपञ्च–दश। ९ 'तुस्त्रयम्' क ख। १० 'वाऽपि' क ख ञ वृ। ११ अतिक्रान्ति –उल्लङ्घनम्। १२ 'दर्व्या, समा' ट। १३ 'मथन' क ख च ञ। १४ 'नाम्ल' क ख ञ। १५ 'मात्रादौष' क ख। 'ष्पनात्तदौ' ञ.। १६ 'नात्तु क्वा' स ड.।

१ 'सम्प्रयु' स ड। २ 'च' स ड। ३ 'तत्राम्ल' क ख. ञ। 'तप्तोऽम्लतीक्ष्णौ भ्र' ग। ४ 'मात्रोऽलव' क ख। ५ 'गक्षोभ तु' स ड। ६ 'ण वेति' च। ७ 'वदन्त्यन्ये' हेमाद्रि। ८ 'योजने द्र' ट.। ९ 'श्वोत्कटुक.' अ क ख। 'श्वोत्कुटक.' ग.। 'श्वोत्कुटिक.' स.स.। १० 'श्वोत्कुटुक' ट.ठ.।

आ० र०-दत्ते निरूहे रोगिणि कृत्यमाह-उत्तान इति। उत्तानत्वं निरूहवीर्येण देहव्याप्तये।

**आगतौ परमः कालो मुहूर्तो मृत्यवे[1] परम्॥ ४७॥**
**तत्रानुलोमिकं[2] स्नेहक्षारमूत्राम्लकल्पितम्।**
**त्वरितं स्निग्धतीक्ष्णोष्णं बस्तिमन्यं प्रपीडयेत्॥४८॥**
**विदध्यात्फलवर्तिं वा स्वेदनोत्रासनादि[3] च।**

स०-आगतौ-प्रत्यागमने, कालः परमो मुहूर्तः। अपरः-तस्मान्मुहूर्तादन्यो, विलम्बागमनकालो मृत्यवे-मरणाय। तत्र-तस्मिन् मुहूर्तात्परमनागमने निरूहस्य, त्वरितमपरं बस्ति-निरूहं, प्रपीडयेदिति सम्बन्धः। किम्भूतं निरूहम्? आनुलोमिकं-अनुलोमकरम्। स्नेहः, तथा क्षारो-यवक्षारादिः, तथा मूत्र-गोमूत्रं, अम्लं[6]-काञ्जिकादि, तैः कल्पितं-निरूपितम्। तथा, स्निग्धं तीक्ष्णमुष्णं च। स्नेहयोगादेव[7] स्निग्धत्वे सिद्धे स्निग्धग्रहणं निरूहस्य स्निग्धेतरत्वप्रतिपादनार्थम्। आनुलोमिकमिति "अध्यात्मादित्वात्" ठञ्। अथवा फलवर्तिं विदध्यात्। फलेन-मदनफलेन युक्ता वर्तिः। सा चार्शश्चिकित्सिते (हृ चि अ ८।१३७) वक्ष्यमाणा। स्वेदनोत्रासनादि[9] च। स्वेदनं-स्वेदः। उत्त्रासनं-खड्गहस्तयोधदर्शनादिना कुपितनृपच्छद्मखड्गव्यग्राग्रबाहुदर्शनाकुलकरणादि, कुर्यात्।

आ० र०-निरूह[11]निवृत्तिकालमाह-आगताविति। मुहूर्तो-घटिकाद्वयम्।

अनिवृत्तौ प्रतीकारमाह-तत्रानुलोमिकस्नेहेति। आनुलोमिकस्नेहः-एरण्डतैलादि, श्यामादिसिद्धो वा।

**स्वयमेव निवृत्ते तु द्वितीयो बस्तिरिष्यते॥ ४९॥**
**तृतीयोऽपि चतुर्थोऽपि यावद्वा सुनिरूढता[12]।**

स०-स्वयमेव[13]-फलवर्त्याद्यायासं विनाऽपि, निवृत्ते निरूहे सति द्वितीयो बस्तिः-निरूहः, इष्यते। यत्नविशेषेण तु निरूहे निवृत्ते सति नान्यं बस्तिं प्रपीडयेत्, इत्युक्तं भवति। तृतीयोऽपीत्यपि समुच्चये। एवं चतुर्थोऽपीति। यावद्वेति। पञ्चमादयोऽपि बस्तयो देयाः, यावत् सम्यङ्निरूढत्वं स्यात्।

आ० र०-स्वयं निवृत्तावसम्यग्योगात्पुनः पुनर्दानमाह-स्वयमेवेति।

कानि पुनः सम्यङ्निरूढलिङ्गानि? इत्याह—

**विरिक्तवच्च योगादीन्विद्यात्**

स०-निरूहे विरिक्त इव योगादीन् विद्यात्। तत्र चोक्तम्-(हृ सू अ १८।३८)-"हृत्कुक्ष्यशुद्धि" इत्यारभ्य यावत् "भवन्त्यतिविरिक्तस्य तथाऽतिवमनामयाः।" इति।

आ० र०-सम्यग्योगादिलक्षणमाह-विरिक्तवदिति।

**योगे तु[1] भोजयेत्॥ ५०॥**
**कोष्णेन वारिणा स्नातं[2] तनुधन्वरसौदनम्[3]।**

स०-योगे तु-निरूहस्य सम्यग्योगे सति, सुखोष्णजलस्नातं सन्तं भोजयेत्। किम्? धन्वरसौदनम्, धन्वरसो-जाङ्गलरसस्तेनौदनं च तद्धन्वरसौदनम्। किम्भूतम्? तनुं-अघनम्। ननु, "यूषक्षीररसैः क्रमात्" इति (श्लो ५६) वक्ष्यति। तत्कथमिहेदमुपपद्यते? ब्रूमः। वातविकारशमनार्थो हि निरूहः प्रायेणेष्यते। तस्मिंश्च रसकौदनमेव पथ्यं श्रेयः। अग्रे च दोषापेक्षया पथ्यं विशेषेणोपदेक्ष्यते। अतो नात्र किञ्चिदनुपपन्नम्। ननु, दोषनिर्हरणं वमनविरेकाभ्यामिवानेन क्रियते। तत्र च यथा पेयादिक्रमो युक्तः, तथेहापि युक्तः स्यात्। नैवम्। विरेकवमनाभ्यां हि वह्निस्थानमाच्छाद्यते, तेनाग्निमान्द्यं भवति। निरूहस्तु नाभेरुर्ध्वमगच्छन्नेव दोषनिर्हरणं करोति, तेन[5] तत्र नाग्निमान्द्यापत्तिः। तस्मान्नात्र पेयादिक्रमः। अपि च, वातविकारविषयत्वाच्चात्र रसौदनप्रायमेव पथ्यं युक्तम्।

आ० र०-सम्यग्योगे स्नानं भोजनं चाह-योगे त्विति। तनुना-अच्छेन, धन्वरसेन-जाङ्गलरसेन[7], मिश्रमोदनम्।

**विकारा ये निरूढस्य[8] भवन्ति प्रचलैर्मलैः॥ ५१॥**
**ते सुखोष्णाम्बुसिक्तस्य यान्ति भुक्तवतः शमम्।**

स०-प्रकर्षेण चलैर्दोषैर्ये विकारा भवन्ति, ते कोष्णसलिलैः स्नातस्य कृतभोजनस्य सतः शमं गच्छन्ति। अत एव तत्कार्यमिति भावः।

आ० र०-स्नानभोजनयोः फलमाह-विकारा इति। प्रचलैः-स्वस्थानात्प्रच्युतैः।

**अथ वातार्दितं भूयः सद्य एवानुवासयेत्॥ ५२॥**

स०-अथ-निरूहादनन्तरं, वातपीडितं पुरुषं सद्य एव-तस्मिन्नेव दिने, अनुवासयेत्।

आ० र०-वातार्दितस्य निरूहदिन एवानुवासनमाह-अथेति। सङ्ग्रहे तु (सू अ २८)-"ततः पुनर्वातार्तमातुरं बृंहणीयमन्यं वा तद्विधमशितानन्तरं सायं वा पुनरल्पलघ्वशितं यथास्वमनिलादिषु दशमूलादिसाधितेन तैलेनानुवासयेत्।" इति।

---

१ 'वेऽपर' अरुण। २ 'मिकस्नेह' अ आ हेमाद्रि स मू। ३ 'दि वा।' घ च। ४ 'विद्रुश्रद्धाग' ट। ५ 'गमे नि' ठ। ६ 'म्ल-तक्रका' इति क्वचित्। ७ 'स्निग्धयोगा' ट ठ ड। ८ 'रूहाणां स्नि' ठ ड.। ९ 'स्निग्धत' ड। १० 'नानि च' ठ ड.। ११ 'रूहे नि' ञ.। १२ 'निरूहता' आ.। १३ 'व-आयास' ड।

१ 'तु योजयेत्' क ख.। २ 'स्नान' आ घ ञ। ३ 'नुद्रवम्' ट। ४ 'क्रम उक्त' ठ ड। ५ 'तेनात्राग्निमान्द्यानुपपत्ति' ट। ६ 'ग्निसादाप' ठ ड। ७ 'सेनौदनम्' क ख ञ.। ८ 'निरूहस्य' अ आ ग ड.।

**सम्यग्घीनातियोगाश्च तस्य स्युः स्नेहपीतवत् ।**

स०–तस्य–अनुवासनस्य, स्नेहपीतस्येव सम्यग्योगादय स्यु । स्नेहपीतस्येव स्नेहपीतवत्, षष्ठ्यन्ताद्वति । तत्र ( हृ सू अ १६।३० )–"वातानुलोम्य" इत्यादि "घ्राणवक्त्रगुदस्रवा" इत्यन्तं स्नेहपानस्य सम्यग्योगातियोगलक्षणम् ।

**आ० र०–अनुवासनस्य सम्यग्योगादिलक्षणमाह–सम्यगिति ।**

अन्यदप्यनुवासनस्य सम्यग्योगलक्षणमाह—

**किञ्चित्कालं स्थितो यश्च सपुरीषो निवर्तते ॥ ५३ ॥**
**सानुलोमानिलः स्नेहस्तत्सिद्धमनुवासनम् ।**

स०–चशब्द पूर्वोक्त सम्यग्योगलक्षण समुच्चिनोति । किञ्चित्–अल्पमात्रं, काल कोष्ठाभ्यन्तरे स्थित सन् सविड्क सानुगुणपवनो निवर्तते–नि सरति[3], य स एवभूतश्च स्नेह, तत्सिद्धं–अभिमतकारि, अनुवासनम् । उक्त व्यस्तं समस्त चेद सिद्धानुवासनलक्षणम् ।

**आ० र०–प्रयोगावृत्ति(स्नेहातिदेश)जन्य सम्यग्योगलक्षणमुक्त्वा सम्प्रति [अनुवासिते विशेष सम्यक्] योग[लक्षण]माह–किञ्चित्कालमिति ।**

**एकं त्रीन् वा बलासे तु स्नेहबस्तीन् प्रकल्पयेत् ५४**
**पञ्च वा सप्त वा पित्ते, नवैकादश वाऽनिले ।**
**पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः ॥ ५५ ॥**

स०–स्नेहबस्तीन्–अनुवासनानि, एक त्रीन् वा श्लेष्मविकारे प्रकल्पयेत् । कार्ये कारणोपचारादेवमुक्तम् । एवमग्रेऽपि चिन्त्यम् । पित्ते पञ्च स्नेहबस्तीनथवा सप्त दद्यात् । नव एकादश वा वायौ दद्यात् । तत पुनरप्ययुग्मान्–विषमानेव, स्नेहबस्तीन् दद्यात् । तत पुनरप्यास्थापन दद्यात् । अयुग्मवचन चेद बाहुल्येनाय व्यवहारो युक्त इति प्रतिपादयितुम् । वातोत्तरस्य तु युग्मा अपि देया एव । तथा चाधुनैवाभ्यधायि ( श्लो ३४)–"अतोऽत्युल्बणमारुतान् । व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम् ॥" इति ।

**आ० र०–अनुवासनावृत्तौ दोषभेदेन सङ्ख्यानियममाह–एक त्रीनिति ।**

**पुन पुनरावृत्तावयमेव सङ्ख्यानियम इत्याह–पुनस्तत इति । अयुग्मान्–विषमसङ्ख्यान् ।**

तत्तदावृत्तिपूर्तौ मध्ये मध्ये निरूह कार्य इत्याह–पुनरास्थापनमिति ।

**कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात् ।**

स०–कृतास्थापनस्य च पथ्य श्लेष्मपित्तपवनेषु यथासङ्ख्यं यूषादिभि सहान्नमुपयोक्तव्यम् ।

**आ० र०–आवृत्तौ क्रियमाणायां दोषभेदेन प्रत्यह भोजनमाह–कफपित्तानिलेष्विति ।**

**वातघ्नौषधनिष्क्राथत्रिवृतासैन्धवैर्युतः ॥ ५६ ॥**
**बस्तिरेकोऽनिले स्निग्धः स्वाद्वम्ललोष्णो रसान्वितः ।**

स०–बस्ति –निरूह, [ अनिले–वातविषये, वातघ्नौषधानि–दशमूलादीनि, तेषा निष्क्राथ त्रिवृतासैन्धवैर्युत, तथा ] स्निग्धो मधुराम्ललोष्णरसयुक्त पवने हित ।

**आ० र०–वाते निरूह प्रति विशेषमाह–वातघ्नौषधेति । वातघ्नौषधं–भद्रदार्वादि । एक इति पुटापेक्षया, न तु प्रयोगापेक्षया ।**

**न्यग्रोधादिगणक्वाथपद्मकादिसितायुतौ ॥ ५७ ॥**
**पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ।**

स०–पित्ते मधुरशिशिरौ सघृतदुग्धेक्षुरसमधू द्वौ बस्ती हितौ ।

**आ० र०–पित्ते निरूह प्रति विशेषमाह–न्यग्रोधादीति । द्वित्वं पूर्ववत् ।**

**आरग्वधादिनिष्क्राथवत्सकादियुतास्त्रयः ॥ ५८ ॥**
**रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ।**

स०–तथा, आरग्वधेन्द्रयवेत्यादिकषायवत्सकमूर्वेत्यादिकषायाभ्या ( हृ सू अ १५ श्लो॰ १७ श्लो ३३ ) युक्ता रूक्षा माक्षिकगोमूत्राभ्या सहितास्तीक्ष्णादिगुणयुक्तास्त्रयो बस्तय कफे हिता ।

**आ० र०–कफे निरूह प्रति विशेषमाह–आरग्वधादीति । त्रित्व पूर्ववत् ।**

**त्रयस्ते सन्निपातेऽपि दोषान् घ्नन्ति यतः क्रमात् ५९**

स०–सन्निपातेऽपि त्रय एव बस्तयो हिता । यस्मात्ते दोषान्–त्रीन्, क्रमेण पराकुर्वन्ति ।

**आ० र०–संनिपाते त्रीण्येव पुटानीत्यत आह–त्रयश्चेति । वातपित्ते[10] वातकफे पित्तकफे तु उक्तन्यायादेव द्वौ ।**

---

१ 'नसम्य' ट । २ 'यस्य स' आ ग ञ । ३ 'ति य स एव स्ने' ठ । 'ति स्नेह' ड । ४ 'गादिनिवृ' ञ । ५ 'क्त्वा प्रतियोगमाह–' क ख घ च ञ । ६ 'एव कफे स्नेहबस्तिमेक त्रीन् वा प्रयोजयेत् ।' स द्व । ७ 'प्रयोजयेत्' क ख ञ । ८ 'स विदध्यात् । अनिले नव एकादश वा स्नेहबस्तीन् दद्यात्' ट. । ९ 'वातार्तस्य' ट ड. । १० 'ङ्क्याकान्' ञ ।

१ 'ध्ये पुनर्निरूहण कार्यमित्याह–' क ख ञ. । २ 'म्ललोष्णरसा' आ क ख ग घ च ञ स मू । ३ रसान्वित –मासरसयुक्त । ४ [ ] इति पाठ. ठ ड पुस्तकयोर्नोपलभ्यते । ५ 'राम्ललवणयुक्त' ट ठ ड । ६ 'रूहण प्र' क ख ञ । ७ 'दियुक्ता' ड । ८ 'त्रयश्च स' आ ग घ च ञ स द्व । ९ 'ससर्गे सन्नि' ग घ ञ. । 'समग्रे सन्नि' च । १० 'त्ते तूक्तन्यायादेव द्वौ । वातकफे पित्तकफेऽप्युक्तन्यायादेव ।' क.ख.ञ. ।

**त्रिभ्य[1] परं बस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः ।**
**न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ६० ॥**

स०–अत एव हेतोस्त्रिभ्यो बस्तिभ्य परमपरे भिषजो निरूह नेच्छन्ति । यतस्त्रयो दोषास्त्रिभिर्बस्तिभिर्निवर्तिता[2] इति । चतुर्थो दोषो न विद्यते, य लक्षीकृत्य भूयश्चतुर्थ पुटको दीयते ।

**आ० र०–उक्तनियमस्य मतान्तरत्वमाह–त्रिभ्य परमिति । अत'–यत. क्रमाद्दोषान्[3] घ्नन्ति ।**

नतु, रक्तं चतुर्थो दोषोऽस्तीत्यत आह–न हीति । रक्तस्य दूष्यत्वान्न दोषत्वम् ।

**उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ।**
**त्रिधैवं कल्पयेद्बस्तिमित्यन्येऽपि प्रचक्षते ॥ ६१ ॥**

स०–अन्येऽपि वैद्यास्त्रिधैव बस्ति कल्पयेदिति जगदु । एक बस्तिं दोषाणामुत्क्लेशनम्, अन्य द्वितीय बस्ति दोषाणां शुद्धिकरम्, अन्य तृतीय बस्ति दोषाणा शमनम् । क्रमादिति अनया युक्त्या त्रिविधो बस्तिरिति मन्यन्ते ।

**आ० र०–त्रिभ्यो न्यूनताऽपि न कार्येति मतान्तरमाह–उत्क्लेशनमिति ।**

[ तंत्र किं क्रियताम् ? इत्याह—]

**दोषौषधादिबलतः सर्वमेतत्प्रमाणयेत् ।**

स०–तँदत्र दोषभेषजदेशसात्म्यादिवशात् सर्वमप्येतत् प्रमाणीकार्यम् ।

**आ० र०–मतयोर्विषयव्यवस्थामाह–दोषौषधादीति । दोषाधिक्ये औषधमृदुत्वे बलाधिक्ये च पुटाधिक्यम्, विपर्यये न्यूनत्वमित्यर्थ ।**

अथ सर्वमतानुग्राहि स्वमतमाह—

**सम्यङ्निरूढलिङ्गं तु नासम्भाव्य निवर्तयेत् ॥६२॥**

स०–सम्यङ्निरूढलक्षणमसम्भाव्य–असम्पाद्य, न निवर्तयेत्,–बस्तिदान कारयेदेवं[11] ।

**आ० र०–स्वमतमाह–सम्यगिति । यावद्भिः सम्यग्योगस्तावन्ति पुटानि कुर्यादित्यर्थ ।**

इदानी कर्मकालयोगाँख्यान्[12] बस्तिविशेषानाह—

**प्राक्स्नेह एकः पञ्चान्ते द्वादशास्थापनानि च ।**
**सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ ६३ ॥**

स०–प्राक्–पूर्वं, एक स्नेहबस्ति । अन्ते–अवसाने, पञ्च स्नेहा । तथा, निरूहा द्वादश सहानुवासना । इत्येव त्रिंशद्बस्तय "कर्म" इति गदिता ।

**आ० र०–कर्मबस्त्याख्य प्रयोगमाह–प्राक्स्नेह इति । स्नेह –अनुवासन ।**

**कालः पञ्चदशैकोऽत्र प्राक् स्नेहोऽन्ते त्रयस्तथा ।**
**षट् पञ्चबस्त्यन्तरिताः**

स०–पञ्चदश बस्तय "काल" उच्यते । कथम्? इत्याह–एक पूर्व स्नेह[3] । तथा, अन्ते त्रय स्नेहा । तथा, षट् स्नेहा पञ्चभिर्बस्तिभिरन्तरिता इति ।

**आ० र०–कालबस्त्याख्य प्रयोगमाह–काल इति । पञ्चबस्त्यन्तरिता षट् स्नेहा ।**

**योगोऽष्टौ बस्तयोऽत्र तु ॥६४॥**
**त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ।**

स०–"योग[6]" अष्टौ बस्तय । कथम्? इत्याह–त्रयो निरूहा , त्रीणि चानुवासनानि, तथाऽऽद्यन्तयोर्द्वौ स्नेहबस्ती, इति ।

**आ० र०–योगबस्त्याख्य प्रयोगमाह–योगोऽष्टाविति ।**

**स्नेहबस्तिं निरूहं वा नैकमेवाति शीलयेत् ॥ ६५ ॥**
**उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ।**

स०–स्नेहबस्तिमथवा निरूहमेकमेव केवलमतिशयेन न शीलयेत् । यत स्नेहादतिसेवितात् उत्क्लेशाग्निमान्द्ये जायेते । निरूहादतिसेवितात् पवनाद्भय जायते ।

**आ० र०–प्रयोगनियमे युक्तिमाह–स्नेहबस्तिमिति । प्रयोगातिक्रमे दोषमाह–उत्क्लेशाग्निवधाविति ।**

**तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चानुवासितः ॥ ६६ ॥**

स०–तँस्मात्कारणात् निरूढो नर स्नेहनार्हं स्यात् । अनुवासितश्च पुरुषो निरूहणार्हो भवेत् ।

**आ० र०–प्रयोगान्तरकल्पनार्थं नियमतात्पर्यमाह–तस्मादिति ।**

**स्नेहशोधनयुक्त्यैवं बस्तिकर्म त्रिदोषजित् ।**

स०–एव–पूर्वोक्तया, स्नेहशोधनयुक्त्या बस्तिकर्म सेवितं त्रीन् दोषान् जयति ।

**आ० र०–प्रयोगनियमस्य फलमाह–स्नेहशोधनयुक्त्येति । स्निग्धस्य शोधन, शुद्धस्य स्नेहन, स्निग्धस्य पुनः शोधनमित्यादि–युक्तिः । सङ्ग्रहे तु ( सू. अ. २८ )–"अष्टादशाष्टादशकान् बस्तीनां यो निषेवते । विधिनाँ ना यथोक्तेन स भवेदजरोऽरुज ॥ सहस्रायु श्रुतधरो वीत-**

1 'नाचार्यचरकस्यातो बस्तिस्त्रिभ्य पर मत. । न हि'स ड । २ 'र्तिता । च' ट । ३ 'षादीन्' क ख ञ । ४ 'धैव क' अ घ च । ५ 'ति केचिदनया' ठ ड । ६ [ ] इति पाठ ठ ड पुस्तकयोर्नोपलभ्यते । ७ 'तत्र' ठ । ८ 'सात्म्यव' ठ ड । ९ 'क्ये वौष' क. । 'क्ये चौष' ग ञ । १० 'ढलिङ्ग त्वस' ठ । 'ढलिङ्गमस' ड । ११ 'देवेति ।' ठ.ड. । १२ 'योगान्' ठ.ड. ।

१ 'श सङ्कथया का' ठ ड. । २ 'थमुच्यते ? एक ' ड. । ३ 'स्नेहबस्ति ।' ट । ४ 'योगे चाष्टौ' ठ ड । ५ 'स्निसादो जा' ठ ड । ६ 'अतोऽस्मात्का' ट ठ ड । ७ 'ना वा य' ग ञ । ८ 'दरुजोऽजर ' क.ञ । ९ 'श्रुतिधरो गतपाप्मा' क.ञ. ।

पाद्माऽमरप्रभ. । वाजिस्यदो नागबल. स्थिरबुद्धीन्द्रियानल्लः ॥" इति ।

अधुना मात्राबस्तिं लक्षयति—

**ह्रस्वया स्नेहपानस्य मात्रया योजितः समः ॥ ६७ ॥**
**मात्राबस्तिः स्मृतः स्नेह**

स०—ह्रस्वया—यामद्वयजरणलक्षणया, स्नेहपानमात्रया समः—तुल्यो, योजित स्नेहो मात्राबस्तिसञ्ज स्मृत, सद्वैद्यैरिति शेष. । अन्यैस्त्वन्यथा स्नेहमात्रोक्ता । यथा—"षट्पला तु भवेज्ज्येष्ठा, त्रिपला मध्यमा भवेत् । कनीयस्त्वध्यर्द्धपला त्रिधा मात्राऽनुवासने ॥" इति ।

आ० र०—मात्राबस्त्याख्यमनुवासनमाह—ह्रस्वयेति । ह्रस्वया—यामद्वयपरिणामिन्या ।

**शीलनीयः सदा च सः ।**
**बालवृद्धाध्वभारस्त्रीव्यायामासक्तचिन्तकैः ॥ ६८ ॥**
**वातभग्नाबलाल्पाग्निनृपेश्वरसुखात्मभिः ।**
**दोषघ्नो निष्परीहारो बल्यः सृष्टमलः सुखः ॥ ६९ ॥**

स०—स च—मात्राबस्ति, बालादिभि सततमेव शीलयितव्य· । स च शीलितो दोषापह, तथा निष्परीहार—अनियन्त्रणो, बलाय हितो, निर्गतपुरीषादिक, सुखकारी च ।

आ० र०—मात्राबस्तेर्विषयमाह—शीलनीय इति । अध्वादिष्वासक्त । चिन्तक—चिन्तावान् ।

मात्राबस्ते. फलमाह—दोषघ्न इति । सुखो—व्यापद्रहित ।

**बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ।**
**द्वित्रास्थापनशुद्धेभ्यो विदध्याद्बस्तिमुत्तरम् ॥ ७० ॥**

स०—बस्तिस्थाने रोगेषु नराणामित्यर्थाल्लभ्यते । "नारीणा योनिगर्भाशयेषु च" इत्युक्ते । द्वे वा त्रीणि वा द्वित्राणि, द्वित्राणि च तान्यास्थापनानि च द्वित्रास्थापनानि, तै शुद्धा द्वित्रास्थापनशुद्धा, तेभ्यो नरेभ्य स्त्रीभ्यश्चोत्तरबस्ति दद्यात् । पुमान्स्त्रियेत्येकशेष । गुदादुत्तरेण मार्गेण दीयत इत्युत्तरबस्ति ।

आ० र०—उत्तरबस्तेर्विशेषतो विषयमाह—बस्ताविति । बस्तौ—मूत्राशये, नराणाम् । नारीणा तु बस्तौ योनौ गर्भाशये च ।

अथ नेत्रस्य परिमाणमाह—

**आतुराङ्गुलमानेन तन्नेत्रं द्वादशाङ्गुलम् ।**
**वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम् ॥ ७१ ॥**
**सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसम्भवम् ।**
**कुन्दाश्वमारसुमनःपुष्पवृन्तोपमं दृढम् ॥ ७२ ॥**

स०—तन्नेत्र—उत्तरबस्तियन्त्रक, आतुराङ्गुलप्रमाणेन द्वादशाङ्गुलम्, दैर्घ्येणेत्यर्थादेवं प्रतीयते । पुरुषाणामेवैतदिति वेद्यम् । स्त्रीणा हि वक्ष्यति (श्लो. ७९)—"नेत्र दशाङ्गुल मुद्गप्रवेश" इति । तच्च वृत्त—वर्तुलम् । तथा, गोपुच्छाकृति । तथा, मूले मध्ये चोत्पादितकर्णिकम् । तथा, सिद्धार्थक प्रविशत्यस्मिन्निति सिद्धार्थकप्रवेश, तादृशमग्र—प्रान्तो, यस्य—नेत्रस्य, तत् सिद्धार्थकप्रवेशाग्रम् । तथा, श्लक्ष्ण—अतिकोमलम् । तथा, हेमादिजम् । आदिशब्देन धात्वादय प्रागुक्ता (श्लो ९टी) गृह्यन्ते । तथा, कुन्दकरवीरजातीपुष्पवृन्तसदृश दृढ च । अश्वमार—करवीरः ।

आ० र०—उत्तरबस्तेर्नेत्रमानमाह—आतुराङ्गुलमानेनेति ।

**तस्य बस्तिर्मृदुलघुर्मात्रा शुक्तिर्विकल्प्य वा ।**

स०—तथा, तस्य—नेत्रस्य, बस्तिर्मृदुलघु, 'योज्य.' इति शेषः । मात्रा शुक्ति—कर्षद्वयम्, 'स्नेहस्य' इति शेष । विकल्प्य वा—वयोबलदेहसत्त्वसात्म्यादिवशान्निरूप्य वा, मात्रा कार्येत्यर्थ ।

आ० र०—उत्तरबस्तौ बस्तिमाह—तस्येति ।

उत्तरबस्तेर्मात्रामाह—मात्रा शुक्तिरिति । शुक्ति.—अर्धपलम् । विकल्प्य—दोषाद्यपेक्षया न्यूनमधिक वा ।

**अथ स्नाताशितस्यास्य स्नेहबस्तिविधानतः ॥ ७३ ॥**
**ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ ।**
**हृष्टे मेढ्रे स्थिते चर्जौ शनैः स्रोतोविशुद्धये ॥ ७४ ॥**
**सूक्ष्मां शलाकां प्रणयेत्तया शुद्धेऽनुसेवनि ।**
**आमेहनान्तं नेत्रं च निष्कम्पं गुदवत्ततः ॥ ७५ ॥**
**पीडितेऽन्तर्गते स्नेहे स्नेहबस्तिक्रमो हितः ।**

स०—अथेति मङ्गले । अस्य—रोगिणो निरूहैर्वैकृतमङ्गलस्य । तथा, पूर्व स्नात पश्चादशित, तस्य । कथमशितस्य ? स्नेहबस्तिविधानत । तृतीयार्थे तसि । स्नेहबस्तौ यादृश आहारो विहितस्तेन कृतभोजनस्येत्यर्थ । तथा, ऋजो—स्पष्टं स्थितस्य । तथा, सुखेनासीनस्य । क्व ? पीठे,—आसने । किम्भूते ? जानुतुल्ये । तथा, मृदौ—अकठिने च । तथा, शिश्ने प्रहृष्टे—स्तब्धे, तथा ऋजौ,—स्पष्टं कृत्वा स्थिते सति, शनै—न त्वरया, सूक्ष्मां

१ 'वाजिस्पन्दो' क ग च । 'वाजिस्पर्धो' घ । वाजिस्यदो—अश्ववेग । 'रहस्तरसी तु रय स्यद' इत्यमर. । २ 'स्नेह स मात्रा' ट । ३ 'मात्रासञ्ज्ञो बस्ति स्मृ' ठ ड । ४ 'न्यैश्चान्य' ठ । ५ 'भाष्यस्त्री' घ । ६ 'नृपैश्वर्यसु' ग । ७ 'व्याद्यास' क । ८ 'षु नृणा' ह. । ९ 'ण द्वितीयेन दी' ट. ।

१ 'ल पुरु' ड । २ 'व मीयते' ट ठ । ३ 'मेवेति' ठ.ड । ४ 'तथा वृ' ट । ५ 'कुन्दादिपुष्प' ट. । ६ 'नेत्रमाह—' क. घ च ञ. । ७ 'क्ति प्रकल्प्य' ञ । ८ 'च' ग च । ९ 'तस्य—उत्तरबस्ते' इतीन्दुचन्द्रौ । १० 'प्रकल्प्य' ञ । ११ 'नुसीवनीम्' स स. । 'सेवनीम्' क घ. । १२ 'तेऽनुगते' आ क ग च.ञ. स द्व । १३ 'ह इव कृ' ट ठ ड. । १४ 'स्नातस्य पश्चाद्भुक्तस्य' ठ ड. । १५ 'न हेलया' ठ.ड. ।

शलाका प्रणयेत्–प्रवेशयेत्। स्थूलाया तत्र क्षतकरणात्। प्रवेशयोगात् तया–शलाकया, शुद्धे मेढ्रे सति, अनुसेवनि–सेवेनीमनुलक्षीकृत्य, आमेढ्रान्त नेत्र प्रणयेत्। षडङ्गुल आयेण प्रवेशयेदित्यर्थं। कथम्? गुदवन्निष्कम्पम्। ततो–निष्कम्पस्थापनादनन्तर, पीडिते पुटके, स्नेहे चान्त प्रविष्टे सति, अनुवासनक्रमो हित –"पाणिना ताडयेत् स्फिजौ। तत्पार्ष्णिभ्या" इत्यादिक।

**आ० र०–उत्तरबस्तेर्विधिमाह–अथेति। तया–शलाकया, शुद्धस्रोतसि मेढ्रे सेवन्यनुसारेण नेत्र प्रणयेत्। तत. स्नेहे पीडितेऽनुगते च अनुवासनोक्त क्रम कार्यं। सङ्ग्रहे तु ( सू अ. २८ )–"मालतीपुष्पवृन्ताग्रपरिणाहा घनामृजुम्।" इत्यधिकम्।**

**बस्तीननेन विधिना दद्यात्त्रींश्चतुरोऽपि वा ॥ ७६ ॥**
**अनुवासनवच्छेषं सर्वमेवास्य चिन्तयेत्।**

**स०**–त्रीन् चतुरो वा बस्तीननेन विधानेन दद्यात्। शेष [ सर्वमेव ]–विधिपरिहारादि सम्यग्दत्तव्यापदादिक, अस्य–उत्तरबस्ते, अनुवासनस्येवँ निरूपयेत्। यदुक्त खरनादेन–"यथाशेष प्रवेश्यान्त स्नेहस्यार्द्धपल नयेत्। प्रत्यागते द्वितीय वाँ तृतीय वाँ प्रदापयेत् ॥ स चेर्दनुवसेत्तत्र स्यात्क्रियेय विशेषत। पिप्पल्यागवधागारधूमवत्सकसैन्धवै ॥ मूत्राम्लपिष्टैर्गुलिका सर्षपामाषसन्निभा। छायासु शुष्कास्ता शिश्ने दद्यात्सर्षपसन्निभा ॥ पूर्व, माषोपमा पश्चात्ताभि स्नेह समानयेत्। स्नेहे प्रत्यागते च स्यादानुवासनिको विधि ॥" इति।

**आ० र०–उत्तरबस्त्यावृत्तौ सङ्ख्यामाह–बस्तीनिति। उत्तरबस्तावनुक्तमौषधकल्पनादिकमनुवासनवत्कार्यमित्याह–अनुवासनवदिति।**

एव पुरुषाणामुत्तरबस्तिविधानमुक्त्वा स्त्रीणा वक्ति—

**स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृते. ॥ ७७ ॥**
**विदधीत तदा तस्मादनृतावपि चात्यये।**
**योनिविभ्रंशशूलेषु योनिव्यापद्यसृग्दरे ॥ ७८ ॥**

**स०**–ललनानामृतुकाल एवार्तवकाल –"ऋतुस्तु द्वादश निशा" ( हृ शा अ १।२७ ) इत्यादिनोक्त, तत्र ऋतौ योनि कर्त्री उत्तरबस्तिस्वभाव स्नेह गृह्णाति। कुत? अपावृते,–अपावरणात् कारणात्। अन्यदा तु सवृतत्वात् न स्नेहमादत्ते गर्भवत्। तस्माद्धेतोस्तदा–ऋतुकाले विदधीत, प्रकृतत्वादुत्तरबस्तिम्। अत्यये–आत्ययिके व्याधौ, अनृतावपि विदधीत। तमेवात्यय दर्शयति–योनीत्यादि। योनिविभ्रश –उत्तरे ( अ ३३।४० ) वक्ष्यमाण, योनिशूलो–योनिरुजा, तेषु। तथा, योनिव्यापत्तौ। तथा, असृग्दरे,–रक्तपित्त योनिमुखेनागच्छत स्त्रीणामसृग्दरमुच्यते। एतेषु रोगेषूत्तरबस्तिमात्ययिकत्वादनृतावपि दद्यात्।

**आ० र०**–स्त्रीणामुत्तरबस्तिकालमाह–स्त्रीणामिति। गृह्णात्यौषधमिति शेष। अपावृते –विवृतत्वात्। आत्ययिके तु व्याधावनृतावपि विदधीत।

अथात्र तु नेत्रस्य प्रमाणमाह—

**नेत्रं दशाङ्गुलं मुद्गप्रवेशं चतुरङ्गुलम्।**
**अपत्यमार्गे योज्यं स्याद् द्व्यङ्गुलं मूत्रवर्त्मनि ॥७९॥**
**मूत्रकृच्छ्रविकारेषु, बालाना त्वेकमङ्गुलम्।**

**स०**–दशाङ्गुलप्रमाण दैर्घ्येण। तथा, मुद्ग प्रविशत्यस्मिन्निति मुद्गप्रवेश तदिवाग्र [ मुद्ग ] प्रवेशाग्रमिति वेद्यम्, अन्तलोपाख्यया तन्त्रयुक्त्या। वृत्तगोपुच्छाकारादि शेष पूर्वोक्तमत्र वेद्यम्। पुष्पवृन्तोपमत्व त्वत्र न युज्यते। यतो मूत्रस्रोत परिणाहमेतद्विधातव्यम्। पुरुषे स्त्रिया चैवप्रकारम्। यदुक्त मुनिना (च सि अ ९।५४)–"[ पुष्पनेत्र च हैम स्यात्सूक्ष्ममौत्तरबस्तिकम्। जातीपुष्पस्य वृन्तेन सम गोपुच्छसस्थितम् ॥ रौप्य वा सर्षपच्छिद्र द्विकर्ण द्वादशाङ्गुलम् ।] पुष्पनेत्रप्रमाण तु प्रमदाना दशाङ्गुलम् ॥ मूत्रस्रोत परीणाह" इति। तच्चतुरङ्गुल यावत् प्रवेश्यम्। चतुरङ्गुलाच्चोर्ध्व कर्णिका कार्या। अधिकप्रवेशनिवारणार्थम्, न तु मेहननेत्र इव मध्यकर्णिकेति। अयमर्थोऽत्र साक्षान्नोपात्तो गम्यमानत्वात्। अत एवं तत्प्रवेशप्रमाणमाह–चतुरङ्गुलमपत्यमार्गे योज्य स्यादिति। अपत्यमार्ग इत्यनेन स्त्री गर्भग्रहणप्रसवादिसमर्था सूच्यते। एवविधाया स्त्रियाश्चतुरङ्गुल प्रवेशयितव्यमिति। मूत्रवर्त्मनि द्व्यङ्गुल योज्यम्। या स्त्री सुरतव्यवहारगर्भग्रहणायोग्या, अथवा या बाला–अप्रौढा, तस्या योनि –केवल मूत्रस्येव मार्ग, तस्या नेत्र द्व्यङ्गुल प्रवेश्यम्। अत ऊर्ध्वं तु प्रवेशात्तासा मासक्षति स्यात्। केषु रोगेषु? मूत्रकृच्छ्रविकारेषु। बालाना तु स्त्रीणामेकमङ्गुल प्रवेश्यम्।

**आ० र०–स्त्रीणा रोगभेदेन यन्त्रभेदं मार्गभेदं चाह–योनिविभ्रंशेति। योनिविभ्रंशादिषु दशाङ्गुल मुद्गवाहिच्छिद्रं नेत्र कृत्वा, अपत्यमार्गे चतुरङ्गुल प्रवेशयेत्। मूत्रकृच्छ्रेषु तु मूत्रमार्गे द्व्यङ्गुल प्रवेशयेत्। बालाना तु स्त्रीणामेकाङ्गुल मूत्रमार्गे प्रवेशयेत्। प्रवेशावधौ कर्णिका कार्येत्यर्थसिद्धम्।**

१ 'त्। प्रवेशयोगात्' ठ ड। २ 'सीवनी' ठ ड। ३ 'तेनिवृत्ते च' क घ च। ४ 'विधिना द' ट। ५ 'व दापयेत्' ठ ड। ६ 'स्याध स्ने' ठ ड। ७ 'तु' ट.ठ.ड। ८ 'दन्तवसे' ड.। ९ 'पावृता।' अ क.ञ.स मू, स च। १० 'इत्युक्तत्वात्। तथा ऋतौ' ठ.ड.। ११ 'कत्री' ठ.ड.। १२ 'त्। अ' ठ.ड.।

१ 'शूलरुजासु योज्य। त' ठ ट। २ 'भगरुजा' ट। ३ 'वृता–विवृता।' क ञ। ४ 'अथ तन्नेत्र' ट। ५ 'प्रवेश्य' ठ ड। ६ 'णाह हि तद्वि' ट ड। ७ 'तु वनिताना' ट। ८ 'तत्र चतु' ट। ९ 'मध्ये क' ट। १० 'व नेत्रप्रवे' ट.। ११ 'योनिमात्रस्यैव केवल मार्ग.' ठ,ड.। १२ 'शान्मास' ठ.।

**प्रकुञ्चो मध्यमा मात्रा, बालानां शुक्तिरेव तु ॥ ८० ॥**

स०—स्त्रीणामुत्तरबस्तौ स्नेहस्य प्रकुञ्चो मध्यमा मात्रा,—नोत्तमा कनिष्ठा वा । बालाना तु शुक्तिरेव मध्यमा मात्रा स्नेहस्य ।

आ० र०—स्त्रीणामुत्तरबस्तौ मात्रामाह—प्रकुञ्च इति ।

अधुनोत्तरबस्त्यवस्थान त्रिविधाया अपि स्त्रिया वदति—

**उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी ।**
**ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ॥ ८१ ॥**
**बस्तींस्त्रिरात्रमेवं च स्नेहमात्रां विवर्द्धयन् ।**
**त्र्यहमेव च विश्रम्य प्रणिदध्यात्पुनस्त्र्यहम् ॥ ८२ ॥**

स०—उत्तानाया —न त्ववाङ्मुख्या पार्श्वस्थिताया वा, शयानाया —न त्वासीनाया , तथोर्ध्वजान्वा , बस्तीन् त्रिचतुरानहोरात्रात् योजयेत् । किं कृत्वा ? सक्थिनी सङ्कोच्य । अनुवासने त्वेक एव बस्तिरहोरात्रेण योज्य इत्यस्य भेद । एव त्र्यह बस्तिदान कार्यम्, न त्वत्रानुवासनवत् त्र्यहे पञ्चमे वाऽहनीति । किं कुर्वन् ? स्नेहमात्रा यथास्वमर्धकर्षकर्षादिक्रमेण वर्द्धयन् । त्र्यहमेव च विश्रम्य—त्रीणि दिनानि विलम्ब्य च, पुन —पूर्वोक्तेनैव प्रकारेण, [ त्र्यहं ] प्रणिदध्यात्—कुर्यात् । एष एवं[3] च न्यायो मेढ्रेऽपि योज्य , तज्जातीयत्वादस्यार्थस्य । अत एवान्तेऽयमुपदिष्ट उभयसम्बन्धार्थम् ।

आ० र०—स्त्रीणामुत्तरबस्तिविधिमाह—उत्तानाया इति ।

स्त्रीणामुत्तरबस्तावावृत्तिक्रममाह—त्रिरात्रमिति । एव—प्रथमदिनवत्, बस्तीन् योजयेत् । स्नेहमात्रा च दिने दिने वर्द्धयेत् । ततस्त्रिदिन विश्रम्य पुनस्त्रिदिन योजयेत् ।

युक्त्योक्तमेवामुमर्थं सङ्क्षेपसङ्ग्रहार्थं पुनराह—

**पक्षाद्विरेको वमिते ततः पक्षान्निरूहणम् ।**
**सद्यो निरूढश्चान्वास्यः सप्तरात्राद्विरेचितः ॥ ८३ ॥**

स०—उत्तमशुद्ध्या शुद्धे वमिते पक्षादनन्तर विरेक कार्य । यस्मात् प्रवरया शुद्ध्या शुद्धे सुवमिते पेयादिक्रमेण सप्ताहात् प्रकृतिभोजनापत्ति । तत सप्ताहेनैकान्तरानुवासनदानेन स्निग्धस्य विरेक इति पक्षेणैव युज्यते । तत —अनन्तर, पक्षात्परतो निरूह । यत कृतविरेकस्य[5] सप्ताहात् प्रकृतिभोजनापत्तौ स्नेहनार्थमनुवासनेनैकान्तरितेन स्निग्धस्य निरूहो[6] युज्यत इति पक्षेणैव युक्त । निरूढश्च सद्य एवानुवास्य । तथा च प्रागभ्यधायि ( श्लो ५२ )—"अथ वातार्दित भूय सद्य एवानुवासयेत् ।" इति । विरेचित सप्तरात्रादूर्ध्वमनुवास्य । यत सप्ताहेन प्रकृतिभोजनापत्ति , तत स्नेहनार्थमनुवासन युक्तम् ।

आ० र०—वमनादीनामन्तरमाह—पक्षादिति । निरूहानुवासनयोर्भोजनमेवान्तरम् । अनुवासननिरूहयोस्तु "पञ्चमेऽथ तृतीये वा दिवसे" इति ( श्लो ३६ ) प्रागुक्तम् ।

ननु, दोषाणा धातूना च स्नेहस्वेदाभ्यामेकलोलीभावात् कथं बस्तिर्दोषानेव निर्हरेत् न धातून् ? इत्येतच्चोद्य दृष्टान्तद्वारेण परिजिहीर्षुरिदमाह—

**यथा कुसुम्भादियुतात्तोयाद्रागं हरेत्पटः ।**
**तथा द्रवीकृताद्देहाद्वस्तिर्निर्हरते मलान् ॥ ८४ ॥**

स०—कुसुम्भकुङ्कुमादियुक्ताज्जलाद्यथा पटो—वासो, रागं हरेत्—गृह्णीयात्, न कुसुम्भादिकम् । तथैव द्रवीकृतात् कायाद्दोषधातूनामेकलोलीभावेऽपि बस्तिर्दोषान्निर्हरते, न धातून् ।

आ० र०—शुद्धाशुद्धसम्पर्केऽप्यशुद्धमेव बस्तिर्निर्हरेदित्याह—यथा कुसुम्भादियुतादिति । द्रवीकृतात्—स्नेहादिद्रावितदोषधातुमलात् ।

अधुना वायो स्वरूप प्रथयन् बस्तिं श्लाघयन्नाह—

**शाखागताः कोष्ठगताश्च रोगा**
**मर्मोर्ध्वसर्वावयवाङ्गजाश्च ।**
**ये सन्ति तेषां न तु कश्चिदन्यो**
**वायोः परं जन्मनि हेतुरस्ति ॥ ८५ ॥**
**विट्श्लेष्मपित्तादिमलोच्चयानां**
**विक्षेपसंहारकरः स यस्मात् ।**
**तस्यातिवृद्धस्य शमाय नान्य-**
**द्वस्तेर्विना भेषजमस्ति किञ्चित् ॥ ८६ ॥**
**तस्माच्चिकित्सार्द्ध इति प्रदिष्टः**
**कृत्स्ना चिकित्साऽपि च बस्तिरेकैः ।**

स०—सक्थिनी द्वे द्वौ बाहू इति शाखा , तासु गता —तत उत्पन्ना । एव कोष्ठो—महास्रोत , तत्र गता —कोष्ठगता । तथा, मर्माणि च ऊर्ध्वं च सर्वे चावयवाश्च मर्मोर्ध्वसर्वावयवा , तेषामङ्गं, तत्र जाता मर्मोर्ध्वसर्वावयवाङ्गजा । तत्र मर्माणि—मर्मविभागे (शा अ. ४) वक्ष्यन्ते। ऊर्ध्वशब्देनोर्ध्वजत्रु गृह्यते, तत्र जाता ऊर्ध्वाङ्गजा ,—मुखरोगादय , सर्वाङ्गजा —ज्वरादय , अवयवजा —श्वित्रादयश्च, ये रोगा विद्यन्ते तेषा जन्मनि—उत्पत्तौ, वायोरपर कश्चिदपि हेतुर्नास्ति । कथम् ? पर,—अतिशयेन ।

---

१ 'तु' स स । २ "र्द्धयेत्' अ आ हे स द्व । ३ 'व क्रमो न्याय्यो मे' ट । ४ 'युक्तमेवामुमर्थं सङ्क्षेपेण सङ्ग्राह्य पु' ट. । ५ 'रेचनस्य हि स' ट. । ६ 'हो योज्य इ' ट ।

१ 'इति वक्तुमाह—' ट । २ 'केऽशुद्ध' क ञ । ३ 'न हि क' ग घ च । ४ 'विण्मूत्रपि' आ, स च । ५ 'मलाचयानां' अ क स द्व । 'मलाशयाना' आ ग. घ च ञ, स च । ६—७ 'करो हि वायु ।' 'द्वस्ते सम भेषजमस्ति यस्मात् ।' स द्व । ८ 'त्सार्द्धमिति' अ आ हेमाद्रि चन्द्र । 'त्सार्द्धमिति ब्रुवन्ति सर्वां चिकित्सामपि बस्तिरेके ।' स.द्व., स.च । ९ 'बस्तिरेके ।' अ.आ. हेमाद्रि चन्द्र ।

किञ्चिन्मात्रेणानुबलभावेन पित्तश्लेष्माणावपि हेतू भवत एव । यथा,–पामाकण्ड्वादीनाम् । अवयवग्रहणेनैवोर्ध्वग्रहणे लब्ध ऊर्ध्वग्रहण प्राधान्यख्यापनार्थम् । यथा,–ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति । एतदेवाविकृत्य वक्ष्यमाणा पञ्च विधय सकलमेवोत्तर च तन्त्र प्रधानम् । तस्मात्प्रधाना ऊर्ध्वाङ्गजा । ननु, कुतो हेतोर्मरुत एतेषु कारणत्वमित्याह–विड्त्यादि । विट् च श्लेष्मा च पित्त च विट्श्लेष्मपित्तानि, तान्यादिर्येषाम् । आदिशब्देन मूत्रस्वेदादिपरिग्रह । एतेऽपि हि शरीरमलिनीकरणान्मला, तेषामुच्चया –सञ्चया, तेषा स वायुर्यस्माद्विक्षेपसहारकर –विक्षेपश्च सहारश्च विक्षेपसहारौ, तौ करोतीति । "कृञो हेतुताच्छील्य" इत्यादिना हेतौ ट । विक्षेपसहारकरणहेतुरित्यर्थ । तस्य क्रियावत्त्वात् । वायुश्च शेषदोषाभ्यां न कदाचिद्विक्षिप्यते सह्रियते वा । तयोर्निष्क्रियत्वात् । तस्य च वायो प्रवृद्धस्य शमनार्थं बस्तिमन्तरेणापर भेषज नास्ति । स्नेहस्वेदादिक तु विद्यमानमपि न तथा समर्थम्, इत्यगण्यत्वात्तदविद्यमानमुच्यते । तस्मात्–दोषप्रधानस्य पवनस्य शमनार्थात्कारणात्, बस्तिश्चिकित्सार्द्ध इति कथित । एकैश्चाचार्यैर्निरवशेषाऽपि चिकित्सा बस्ति प्रदिष्ट । ननु, "चतुर्णा भिषजादीना" ( च सू. अ ९।५ ) इत्यादिलक्षणा चिकित्सा । तत्कथ तस्या भागकल्पना कर्तु युज्यते ? न च सर्वा चिकित्सा बस्तिरिति वक्तु शक्यते, शेषचिकित्साशास्त्रविस्तरस्यानर्थक्यप्रसङ्गात् । तस्मादेतदयुक्तमिवाभाति । अत्रोच्यते । वायुविकारा अशीतिरुक्ता । पित्तश्लेष्मविकाराश्च षष्टिरुक्ता । तत्र वातविकाराणा प्रधानोपक्रमो बस्ति, तस्माच्चिकित्सार्धो बस्ति कार्यद्वारेणोक्त । अथवा मारुत पित्तश्लेष्मविट्सहित बस्ति समूलमेवापकर्षतीत्युक्तत्वात् सर्वैव चिकित्सा कार्यद्वारेण बस्तिरेकैरुपदिष्ट । अन्यत्रापि चैवप्रायो निर्देश कृत एवाचार्यै । तथा च मुनि ( च चि. अ. २१।१४० )–"यानीह कर्माण्युक्तानि विसर्पविनिवृत्तये । एकतस्तानि सर्वाणि रक्तमोक्षणमेकत ॥" इति । 'चिकित्सार्द्ध' इत्यय तु पाठो न युक्त एव । अर्द्धशब्दस्य हि समप्रविभाग एव नपुसकत्वम् । न चात्र समप्रविभागो गम्यते । तस्मान्नपुसकत्वमत्रान्याय्यम् ।

आ० र०–बस्ते सर्वोत्तमत्वे युक्तिमाह–शाखागता इति । सर्वेषां रोगाणा वायुरेव कारणम् । यस्मात् पित्तश्लेष्मणोरपि इतरमलवत् स एव क्षोभक । तस्य चातिवृद्धस्य बस्तिरेवौषधम् । तस्मादसौ चिकित्सार्द्धमुक्त, अप्रधानस्यापि पित्तादे पृथक् चिकित्सा मन्वाने । एके तु तथाऽमन्वाना, कृत्स्नाऽपि चिकित्सा बस्तिरित्याहु ।

**तथा निजागन्तुविकारकारि-**
**रक्तौषधत्वेन शिराव्यधोऽपि ॥ ८७ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने बस्तिविधिर्नामैकोनविंशतितमोऽध्यायः ॥ १९ ॥**

स०–न केवल बस्ति, यावच्छिराव्यधोऽपि चिकित्सार्द्ध सर्वा वा चिकित्सेत्युपदिष्ट । कुत ? निजेत्यादिना । निजा –वातादिसमुत्था, आगन्तवो–विषवह्न्यादिसमुत्था, निजाश्चागन्तवश्च ते च ते विकाराश्च निजागन्तुविकारा, तान्कर्तु शील यस्य तन्निजागन्तुविकारकारि, तच्च तद्रक्त च निजागन्तुविकारकारिरक्त, तस्यौषधत्वेन । तत्र विसर्पविद्रधिप्रभृतिरोगविशेषोपशमकरणाच्चिकित्सार्द्ध शिराव्यध उपदिष्ट । तथा, अपरेऽपि ये रोगा शीतोष्णस्निग्धरूक्षाद्यैरप्युपक्रमैरनुपशान्ता, तेऽपि शिराव्यधसाध्या । अत एव सर्वाऽपि चिकित्सा शिराव्यध उक्त इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्याया सूत्रस्थाने बस्तिविधिर्नामैकोनविंशोऽध्याय समाप्त ॥ १९ ॥

**आ० र०–शिराव्यधोऽपि बस्तितुल्य इत्याह–तथेति । निजानामागन्तूना च यत्कारण रक्त तदौषधत्वात् शिराव्यधोऽपि बस्तिवत् ।**

**इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**बस्तिकर्मप्रकरण सामस्त्येन निरूपितम् ॥ १९ ॥**

१ 'मात्रावनु' ठ । २ 'मादर्शनादी' ठ । ३ 'त एव शरी' ट । ४ 'षामाचया' ट । ५ 'कैश्चिदाचार्यै' ट ठ ड । ६ 'स्तिरुक्त । तथाऽपि वायुविकारा अशीति, पित्त' ड । ७ 'थकत्वप्र' ट । ८ 'यानीहोक्तानि कर्माणि वि' स च । ९ 'सर्पाणा नि' ठ स च । १० 'पुस्यर्द्धोऽर्द्ध समेऽशके ।' इत्यमर. । ११ 'त्राप्योग्यम्' ड. । १२ 'ग्वाश्रिता' क. ञ. ।

१ 'मन्वाना' क ञ । 'मत्वा तै' घ च । २ 'तदामयाना कु' क घ च ञ । ३ 'द्रध्यादिरो' ट । ४ 'पक्रमणा' ट । ५ 'पक्रान्ता ।' ठ ड । ६ 'पि तेन शिराव्यधेन ससाध्यन्त इति । अत' ड. । ७ 'उपदिष्ट इ' ढ. । ८ 'सिरा' ग. घ. ।



## विंशोऽध्यायः ।

पञ्चकर्मोक्तिप्रस्तावे वमनविरेकान्वासननिरूहानुक्त्वा नस्यविधिमाह—

**अथातो नस्यविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**ऊर्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते ।**
**नासा हि शिरसो द्वारं तेन तद्व्याप्य हन्ति तान् ॥१॥**

**स०**–जत्रु–वक्षोंसयो सन्धि । जत्रुण ऊर्ध्वमूर्ध्वजत्रु । मयूरव्यसकादित्वात् समासः । तत्र विकारा ऊर्ध्वजत्रुविकारा, तेषूर्ध्वजत्रुविकारेषु–शिरोरोगादिषु विषये, वमनशिराव्यधादयोऽपीष्यन्त एव । विशेषेण तु नस्यमिष्यते । नासायां क्रियत इति नस्यम् । नासिकाया "पद्दन्" इति नसादेश । ननु, किमिति नस्यमेतेषु रोगेषु विशेषेणेष्टम् ? इत्याह–नासा हीत्यादि । यस्मात् घ्राणं शिरोद्वारम् । तेन द्वारेण श्रोत्रशृङ्गाटकप्राप्तमूर्ध्व नेत्रकण्ठादिशिरामुखानुप्रवेशेन, तत्–शिरो, व्याप्य तान्–विकारान् हन्ति ।

**आ० र०–नस्यविधिमध्याय व्याख्यातु प्रतिजानीते–अथेति ।**

**तत्र नस्यविषयमाह–ऊर्ध्वजत्रुविकारेष्विति । विशेषादितिवचनादितरेष्वपि । सङ्ग्रहे तु ( सू. अ. २९ )–"नासया प्रणीयमानमौषधं नस्य नावनं नस्तःकर्मेति च सञ्ज्ञां लभते । नासा हि शिरसो द्वारम् । तत्र निषेचितमौषध स्रोत शृङ्गाटकं प्राप्य, व्याप्य च मूर्द्धानं नेत्रश्रोत्रकण्ठादिशिरामुखानि च, मुञ्जादिषीकामिवासक्तामूर्द्ध्वजत्रुगता वैकारिकीमशेषामाशु दोषसंहतिमुत्तमाङ्गादपकर्षति ।" इति ।**

**विरेचनं बृंहणं च शमनं च त्रिधाऽपि तत् ।**

**स०**–तत्–नस्यं, विरेचनबृंहणशमनाख्यभेदेन त्रिधा स्यात् ।

**आ० र०**–[ नस्यभेदानाह–विरेचनमिति । ] विरेचन बृंहण शमन चेति त्रिविध नस्यम् ।

तत्र पूर्व विरेचनाख्यस्योपयोगमाह–

**विरेचनं शिरःशूलजाड्यस्यन्दगलामये ॥ २ ॥**
**शोफगण्डकृमिग्रन्थिकुष्ठापस्मारपीनसे ।**

**स०**–शिरःशूलादिषु विरेचन नस्यमिष्यते । अपस्मारो यद्यप्यूर्ध्वजत्रुस्थितो न भवति, तथाऽपि विरेचननस्येन शाम्यतीति तदुपादानम् । उपलक्षण चेदम् । कफजेषु प्रसेकास्यवैरस्यगन्धाज्ञानादिष्वपि विरेचनमेव हितम् ।

**आ० र०–तत्र विरेचनस्य विषयमाह–विरेचनमिति ।** जाड्य–शिरस । स्यन्दो–नेत्रकोप । सङ्ग्रहे तु ( सू अ २९ )–"**उपदेहकण्डूस्तम्भस्रावप्रसेकवैरस्यारोचकस्वरभेदगन्धाज्ञानार्बुददद्रुकोठादिषु श्लेष्मजेषु**" इति ।

**बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये ॥ ३ ॥**
**नासास्यशोषे वाक्सङ्गे कृच्छ्रबोधेऽवबाहुके ।**

**स०**–वातोद्भवशूलादिषु बृंहण नस्यं हितम् । सूर्यावर्त–शिरोरोगविशेष । कृच्छ्रबोध–कृच्छ्रोन्मीलनम् । अवबाहुको–वातव्याधिविशेष ।

**आ० र०–बृंहणनस्यस्य विषयमाह–बृंहणमिति । सङ्ग्रहे तु ( सू अ २९ )–"अर्धावभेदककृमिशिरोरोगाक्षिसङ्कोचस्पन्दनतिमिरदन्तकर्णशूलनादमन्यारोगापतानकनिद्रानाशादिष्वनिलोत्थेषु" इति ।**

**शमनं नीलिकाव्यङ्गकेशदोषाक्षिराजिषु ॥ ४ ॥**

**स०**–नीलिकादिषु शमन नस्यं हितम् । नीलिकाव्यङ्गौ–क्षुद्ररोगेषु ( ह्व उ अ ३१।२८ ) वक्ष्यमाणौ । केशदोष–केशशात ।

**आ० र०–शमननस्यस्य विषयमाह–शमनमिति । अक्षिराजय–चक्षुषि रेखाकारा शिरा । सङ्ग्रहे तु ( सू अ २९ )–"अकालवलीपलितखलतिदारुणकरक्तपित्तादिषु" इति ।**

**यथास्वं यौगिकैः स्नेहैर्यथास्वं च प्रसाधितैः ।**
**कल्कक्वाथादिभिश्चापि मधुपद्मासवैरपि ॥ ५ ॥**

**स०**–ये ये स्नेहा यथास्व तै । किम्भूतै ? यौगिकै,–योगार्हैः सर्षपतैलादिभि, न तु घृतादिभि । तथा, यथास्व–मरीचशुण्ठ्यादिभि, प्रसाधितै–सस्कृतै । तथा, कल्कक्वाथस्वरसादि-

---

१ 'नस्य वक्ति–' ट । २ अय नस्यविधिश्चरके सि० १।२।९ अध्यायेषु, सुश्रुते चि० ४० अध्याये, अष्टाङ्गसङ्ग्रहे सू० २९ अध्याये चास्ति वर्णित । ३ 'वक्ष कक्षयो' ट । 'कण्ठोरसो' इति क्वचित् । ४ 'यां भव नस्यम् । "तत्र भव" इति यत् । "ना"' ट । ५ 'षेणैष्टव्यम्' ट. । ६ 'शिरसो द्वा' ट । ७ 'नासाया प्र' स ड । ८ 'नासाकर्मे' क ञ । 'नस्यकर्मे' ग । ९ 'तत्रावसेचि' स.ड । 'निषेवित' क घ च. । १० '**धा भवेत्**' ञ । ११ अस्याग्रे "**मर्शप्रधमानावपीडाख्यैस्त**( 'ख्यात्त' अ आ ड ।)-**त्पुन. षड्विधं स्मृतम् ।**" इति अ.आ.ड ञ.पुस्तकेष्वधिक पाठ. । १२ 'तत्र न' ट.ड. ।

१ अस्याग्रे "**स्नेहेन तीक्ष्णै सिद्धेन कल्कक्वाथादिभिश्च तत् ।**" इति सङ्ग्रहगद्यग्रन्थानुसारी अ ड पुस्तकयोरधिक पाठ । २ 'कफप्रकोपास्' इति क्वचित् । ३ 'ननस्यमे' ट । ४ 'न्धाज्ञाना' क । ५ '**क्षिरोगिषु**' आ क ञ । '**क्षिरोगजित्**' च. । ६ 'रोगोक्तौ।' ठ.ड. । ७ 'तै. । यौ' ठ.ड ।

भिश्च यथास्व–कफघ्नैर्गिरिकर्णिकादिजै[१] साधित, आद्य–विरेचनाख्य नस्य, भवति । न केवलमेतैर्यावन्माक्षिकादिभिश्च । आसवो–मद्यविशेष ।

**आ० र०–विरेचननस्यस्य द्रव्याण्याह–यथास्वमिति । यथास्व–यो यस्योचित. स्नेह , तेन । यथास्व–यद्यस्योचित-मौषध, तेन । साधितै स्नेहै कल्कै क्वाथैश्चूर्णादिभिश्च । आद्य–विरेचनम् । पटु–सैन्धवम् । सङ्ग्रहे तु ( सू अ २९ )–"तत्र भीरुस्त्रीकृशसुकुमारेषु[३] स्नेह । गलरोगसन्निपातज्वरातिनिद्रामनोविकारक्रिमिशिरोरोगाक्षिस्पन्दनतिमिरकृच्छ्रविषाभिपन्नाभिर्ष्यन्नसर्पदष्टविसञ्ज्ञेषु शेषा । तेष्वेव च भूयसि दोषे शीघ्रकारिणि च चूर्ण । स हि[६] नासायामावेगकरतरो भवति ।" इति ।**

**बृंहणं धन्वमांसोत्थरसासृक्खपुरैरपि ।**
**शमनं योजयेत्पूर्वैः क्षीरेण सलिलेन वा ॥ ६ ॥**

**स०**–बृहण नस्य धन्वोत्थमासोद्भवरसै स्यात् । तथा, असृजा–रक्तेन, धन्वोत्थेनैव । तथा, खपुरै –निर्यासविशेषै । अपिशब्दादन्यैरपि पूर्वोक्तै स्नेहैरतीक्ष्णैर्बृंहण भवति । शमन नस्य पूर्वोक्तैरतीक्ष्णै स्नेहैर्घृतादिभिस्तथा मासरसादिभिर्योजयेत् । तथा, क्षीरेण जलेन चेति । सुश्रुतस्तु स्पष्टतरमुवाच ( चि अ ४०।२२ )–"तंत्तु नस्य देय वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुणकर्णशूलकर्णक्ष्वेडतिमिरस्वरोपघात[११][१२] नासारोगमुखशोषेष्वकालजवलीपलितप्रादुर्भावे[१३][१४] दारुणप्रबोधे वातपैत्तिकेषु चान्येषु[१५] मुखरोगेषु वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति[१६] । शिरोविरेचन श्लेष्मणाऽभिव्याप्तताल्लुकण्ठशिरसा[१७] निद्राभिभूताना शिरोगौरवशूलपीनसार्द्धावभेदकक्रिमिप्रतिश्यायापस्मारगन्धाज्ञानेष्वन्येषु[१८][१९][२०] चोर्ध्वजत्रुगतेषु[२१] कफजेषु विकारेषु[२२] शिरोविरेचनद्रव्यैस्तत्सिद्धेन वा स्नेहेनेति ।" तथा–"सम्यग्विशुद्धे[२३] शिरसि सर्पिर्नस्तो[२४] निषेचयेत्[२५] । अवपीडस्तु[२६] शिरोविरेचनवदभिष्यन्दसर्पदष्टविसञ्ज्ञेभ्यो[१] दद्यात्, शिरोविरेचनद्रव्याणामन्यतममवपिष्यावपीड्य च । चेतोविकारक्रिमिविषाभिपन्नाना चूर्ण प्रधमेत् । शर्करेक्षुरसक्षीरघृतमासरसानामन्यतम[२] क्षीणाना शोणितपित्ते च[३] विदध्यात् । कृशदुर्बलभीरूणा सुकुमारस्य योषिताम् । श्वता स्नेहा शिर शुद्ध्यै कल्कस्तेभ्यो यथा हित ॥" इति ।

**आ० र०–बृंहणनस्यस्य[४] द्रव्याण्याह–बृंहणमिति । असृक्–रुधिरम् । खपुरो–निर्यासो मोचरसादि । अपिशब्दात् बृंहणद्रव्यसाधितस्नेहादिभिश्च ।**

**शमननस्यस्य द्रव्याण्याह–शमनमिति । पूर्वै –धन्वमासरसादिभि शमनौषधसाधितस्नेहादिभिश्च ।**

अधुनाऽन्यानपि नस्यविशेषानाह–

**मर्शश्च[६] प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ।**
**कल्काद्यैरवपीडस्तु स तीक्ष्णैर्मूर्द्धरेचनः ॥ ७ ॥**
**ध्मानं विरेचनश्चूर्णो[८]**

**स०**–अत्र–एषु नस्यभेदेषु मध्ये, मर्शाख्य प्रतिमर्शाख्यश्चेति स्नेहो द्विधा–भेदद्वयेन भवति[९] । कथम् ? मात्रया,–मात्राभेदेन, न तु वस्तुभेदेन । कल्काद्यैरित्यादि । तुरवधारणे भिन्नक्रम । कल्काद्यैरेवावपीड , न स्नेहेनापि । स चावपीड , तीक्ष्णै –शुण्ठ्यादिभि कल्कक्वाथरसाद्यै , न मृदुभि । मूर्द्धरेचन –शिरोविरेचनाख्य नामान्तरमस्य । अतीक्ष्णैस्तु शमनसञ्ज्ञमेतद्विरेचन[१०] नस्यम् । पुन प्रकारान्तरमाह–ध्मानमित्यादि । चूर्णो–मरीचादिभि कृतो, नासया प्रणीयमानो विरेचनो–बहिर्दोषनिरसनो, ध्मान–प्रध्मानाख्य नस्य स्यात् ।

**आ० र०–मर्शादीन् पञ्च नस्यभेदानाह–मर्शश्चेति । मर्शप्रतिमर्शौ–स्नेहस्य बहुत्वाल्पत्वकृतौ भेदौ । अवपीडशिरोविरेचनौ[११]–कल्कादिनस्यस्य मृदुत्वतीक्ष्णत्वकृतौ भेदौ । विरेचनचूर्णकृत नस्य ध्मान–प्रधमनाख्यम् । इति पञ्च ।**

कथ पुनरसौ नासाया ध्मापयितव्य[१२] ? इत्याह–

**युञ्ज्यात्तं मुखवायुना ।**
**षडङ्गुलद्विमुखया नाड्या भेषजगर्भया[१३] ॥ ८ ॥**
**स हि भूरितरं दोषं चूर्णत्वादपकर्षति ।**

**स०**–त–चूर्ण, मुखवायुना–फूत्काराख्येन[१४], युञ्ज्यात्–प्रवेशयेत् । कथम् ? नाड्या, कारणभूतया । किम्भूतया ? षडङ्गुल

---

१ 'जै , आ' ट । २ 'न्धवादि' ग घ च । ३ 'भीतक्लीबक्ष' स स । ४ 'ष्यन्दस' क स मू । ५ 'शेषौ ।' स मू । ६ 'हि निहितो नासाग्र आवेग' स स । ७ **'ण च जलेन च'** घ । ८ **'च'** अ आ ग ड च. । ९ 'सोत्थर' ट । १० 'तत्र वाता' ट.ठ ड । ११ 'प्रशात' ट । १२ 'णकर्ण' स सु । १३ 'रोगास्यशोषावबाहुकाकाल' स सु । १४ 'भांवदारुणप्रबोधेषु वा' स सु । १५ 'षु मुखरोगेष्वन्येषु च वा' स सु । १६ 'हेन बृंहणमेव नस्य देयम्। विरेचन तु कफाभि' ट ठ ड । १७ 'सक्त' ट ठ ड । १८ 'रसामरोचककाशिरो' स सु । १९ 'शूलार्द्धा' ट ठ.ड । २० 'रघ्राणाज्ञा' ट ठ ड । २१ 'गदेषु' ट ठ ड । २२ 'रेष्विति । तथा' ट ठ ड । २३ 'ग्विरिक्ते शि' ट ठ.ड । २४ 'र्नस्य नि' स.सु. । २५ 'नियोजयेद्' ठ. । २६ 'पीड तु शिरसो वि' ट ठ ड ।

१ 'तममासाद्य । चेतो' ठ ड । 'तममासाद्यावपीडयेत् । चेतो' ट । २ 'सघृत' ट ठ ड । ३ 'च दद्यात्' ट ठ ड । ४ 'नस्य द्र' क ञ । ५ 'मनस्य द्र' क ग ञ । ६ **'मर्ष'** आ । ७ **'स्तु तीक्ष्णैर्मूर्द्धविरेचन '** अ क घ ञ । ८ **'चनेश्चूर्णै '** क ग ड ज । ९ 'धा–द्वौ भवत ।' ट । १० 'मेव । विरेचननस्यस्य प्रका' ट । ११ 'रोरेच' ञ । १२ 'ध्मातव्य ' ट. । १३ **'भैषज्यग'** आ. । १४ 'त्कारेण' ड ।

द्विमुखया,-षडङ्गुलानि यस्या सा षडङ्गुला, द्वे मुखे यस्या सा द्विमुखा, षडङ्गुला चासौ द्विमुखा च षडङ्गुलद्विमुखा, तया । तथाविधया, तथा भेषजगर्भया-त्रिकटुकादिचूर्णभरितया । स हि-चूर्णो, भूरितर-बहुतर, दोष चूर्णत्वादपकर्षति, न तथा कल्ककायादय । तस्माद्विरेचनाख्योऽयमित्यर्थ ।

**आ० र०-प्रधमनस्य विधिमाह-युञ्ज्यादिति ।**

**प्रधमनस्य बहुदोषहरत्वे युक्तिमाह-स हीति । चूर्ण हि बहुद्रवग्राहित्वात् बहुदोषापकर्षणम् ।**

अधुना मर्शस्नेहस्य परिमाणमविकल्याह-

**प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् ॥ ९ ॥**
**यावत्पतत्यसौ बिन्दुर्दशाष्टौ षट् क्रमेण ते ।**
**मर्शस्योत्कृष्टमध्योना मात्रास्ता एव च क्रमात्॥१०॥**
**बिन्दुद्वयोनाः कल्कादेः**

**स०**-प्रदेशिनी-अङ्गुष्ठसमीपजाऽङ्गुली, तस्या पर्वद्वय, तस्मात् । किम्भूतात् ? पूर्वं मग्न पश्चात्समुद्धृतं, तस्मात् मग्नसमुद्धृतात् तर्जनीपर्वद्वयात् यावत्परिमाण पतति, असौ बिन्दु, 'उच्यते' इति शेष । ते-बिन्दवो, यथासङ्ख्य मर्शस्य दशोत्कृष्टा मात्रा, अष्टौ मध्यमा मात्रा, षट् कनिष्ठा मात्रा । ता एव क्रमान्मात्रा बिन्दुद्वयेनोना कल्कस्वरसादे । तेनाष्टौ बिन्दव उत्तमा मात्रा, षण्मध्यमा, चत्वार कनिष्ठा, इत्यवतिष्ठते । यावदिति यत्परिमाणमस्येति । यत्तदेतेभ्य परिमाणे वतुप्, आ सर्वनाम्न इत्याकारादेश ।

**आ० र०-मर्शादिमानज्ञानार्थं बिन्दुमानमाह-प्रदेशिनीति । यावत्पतति तावान् बिन्दु, न प्रथमपतितं एव ।**

**मर्शस्य मात्रात्रयमाह-दशाष्टाविति । ते-बिन्दव ।**

**अवपीडशिरोविरेचनयोर्मात्रात्रयमाह-ता एवेति । बिन्दुद्वयोना -अष्टषट्चतुर्बिन्दुका ।**

अधुना येषा नस्यमयुक्त तानाह-

**योजयेन्न तु नावनम् ।**
**तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ॥ ११ ॥**
**भुक्तभक्तशिरःस्नातस्नातुकामस्रुतासृजाम् ।**
**नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ॥ १२ ॥**
**शुद्धानां दत्तबस्तीनां तथाऽनार्तवदुर्दिने ।**
**अन्यत्रात्ययिकाद्व्याधेः**

**स०**-तोयादि पीत यैस्तेषाम् । अत्र "आहिताग्न्यादित्वात्" परनिपात । तथा पातुमिच्छता नावन-नस्य, नैव योजयेत् । तोयादिपीताना पातुमिच्छता च योजित नस्य नासास्यस्यन्दो-

१ 'ल्कस्वरसादय' ट । २ 'हि द्रव' ग घ च प । ३ 'मर्षस्यो' आ । ४ 'मग्नात् पश्चात् समुद्धृतात् तर्जं' ट ठ ड । ५ 'ति स बि' ट ठ ड । ६ 'मध्या' ठ ड. । ७ 'ज्ञापना' क ञ । ८ 'तावत् बि' क घ ञ प । ९ 'तमेव' घ च प । १० 'रोरेच' ञ । ११ 'भुक्ताभ्यक्त' अ आ इ । १२ 'त् । एषा हि योजि' ट. । १३ 'सास्यन्दो' ट. ।



पदेहतिमिरशिरोरोगान् कुर्यात् । भुक्तभक्तस्य च दोषा ऊर्ध्वस्रोतास्यावृत्य छर्दिश्वासकासप्रतिश्यायान् जनयेयु । शिरोऽभ्यक्तस्य च शिरोऽक्षिकर्णशूलकण्ठरोगपीनसहनुमन्यास्तम्भार्दितशिर कम्पान् । शिर स्नातस्य स्नातुकामस्य च मूर्ध्नि स्तिमितो दोषो जाड्यारुचिपीनसान् । स्रुतरक्तस्य च क्षामतामरुचिमग्निसाद च । नवप्रतिश्यायस्य स्रोतोरोधात् दुष्टप्रतिश्यायकेशशातकृमिकण्डूविचर्चिकारोगान् । मूत्रितोच्चारितादिवेगार्ताना भृशतर वेगविधारणजान् विकारान् । सूतिकाया स्रुतरक्तदोषान् । श्वासकासिनोर्व्याधिविवृद्धिम् । शुद्धाना कृतवमनविरेचनादीना श्वासकासस्वरेन्द्रियहानिशिरोगौरवकण्डूकृमिदोषान् । दत्तबस्तीना विवृतस्रोतस्तयाऽतिव्याप्त्या श्वासकासादीनेव । तथा, अनार्तवदुर्दिने सहसैव शैत्याच्छिरोरुग्वेपथुस्तैमित्यतालुनेत्रकण्डूपाकमन्यास्तम्भकण्ठरोगप्रतिश्यायारूषिका । एषु च नस्यदोषेषु जातेषु यथास्वमायतन दोषोद्रेक चापेक्ष्य स्नेहस्वेदशिरोविरेकवक्रलेपसेकतीक्ष्णावपीडधूमगण्डूषादीनि यथास्व कुर्यात् । सङ्ग्रहे विशेष (सू अ २९)- "गर्भिण्याश्च भक्तद्वेषज्वरमूर्च्छोर्ध्ववमेदका स्यु । अपत्यं च व्यङ्गं विकलेन्द्रियमुन्मादापस्मारयुक्त वा स्यात् । विशेषेण तु गर्भिणी रूक्षे नस्यकर्मणि वर्षाभूकाकोलीकपिकच्छूभि शृत पय पिबेत् । बलाविदार्यंशुमतीमेदाभिर्वा । एभिरेव च शृत हवि । वार्तंहरसिद्धश्च स्नेह शिरोबस्तौ कर्णपूरणे च योज्य । सर्वं च बृहणमन्नपानम् ।" इति । तोयपीतादिषु सदैव कि नस्यं न योज्यम् ? इत्याह-अन्यत्रेत्यादि । आत्ययिके व्याधौ नस्य योज्यमेव ।

**आ० र०-पीततोयादीना नस्य निषेधति-योजयेदिति । पातुमिच्छता-तोयादीन्येव । भुक्तभक्तो-भुक्तवान् । नवपीनस -अपक्वपीनस । वेगार्त -उत्पन्नविण्मूत्रादिवेग । अनार्तवदुर्दिने-अवार्षिकाभ्रे । आत्ययिकाद्व्याधेरन्यत्र निषेध । सङ्ग्रहे तु ( सू अ २९ )-"तत्र भुक्तभक्तस्य नस्येनेरितो दोष ऊर्ध्वस्रोतास्यावृत्य छर्दिश्वासकासप्रतिश्यायान् जनयेत् । स्नेहादिपीतपातुकामानामक्षिनासास्यस्यन्दोपदेहतिमिरशिरोरोगान् । शिर स्नातस्य शिरोऽक्षिकर्णशूलकण्ठरोगपीनसहनुमन्यास्तम्भार्दितशिर कम्पान् । स्नातुकामस्य मूर्द्धस्तैमित्यजाड्यारुचिपीनसान् । स्रुतरक्तस्य क्षामतामरुचिमग्निसाद च । मूत्रितोच्चारितादिवेगार्तानां भृशतर वेगविधारणजान् विकारान् । अभिहतस्य तीव्रतरा रुजम् । कृतवमनादीना श्वासकासस्वरेन्द्रियहानिशिरोरोगगौरवकण्डूकृमिदोषान् । [ दत्तबस्तीना विवृतस्रोतस्तयाऽतिव्याप्त्या श्वास-**

१ 'ऊर्ध्वं' ट ठ ड. । २ 'शिर स्नातस्य' इति क्वचित् । ३ 'मूर्द्धस्तैमित्यजाड्या' स.द्व । ४ 'दीन् ।' ठ ड । ५ 'अकालदु' ठ ड । ६ 'नेऽपि स' ट । ७ 'चावेक्ष्य' ट । ८ 'च विक' ट ठ ड । ९ 'त् । तत्र गर्भि' ट ठ ड । १० 'तद्गसि' ट । ११ 'ऊर्ध्वानि स्रो' घ प । १२ 'सास्यन्दो' क ग च ञ । १३ 'रोगदान्' घ प । १४ 'लरोग' क ञ. । 'लपीन' ग । १५ 'रितयोर्भृशतर वेगधा' घ च प स द्व । १६ 'शिरोगौ' क ञ स द्व. । १७ [ ] इति पाठो घ.च.प. पुस्तकेषु सङ्ग्रहद्वये च नोपलभ्यते ।

कासादीनेव ।] गर्भिण्या भक्तद्वेषज्वरमूर्च्छा[1]र्वा[2]वभेदका स्युः, अपत्यं च व्यङ्गं विकलेन्द्रियमुन्मादापस्मारयुक्तं वा। सूतिकायाः सुतरक्तोक्तान् दोषान्। नवप्रतिश्यायस्य स्रोतोरोधात् दुष्टप्रतिश्यायकेशशातकृमिकण्डूविचर्चिका । श्वासकासिनोर्वा[1]तव्याधिवृद्धिं । अकालदुर्दिने सहसैव शैत्याच्छिरोरुग्वेपथुस्तैमित्यतालुनेत्रकण्डूपाकमन्यास्त[2]म्भकण्ठरोगप्रतिश्यायारूषिका । तेषु यथास्वमायतनं दोषोद्रेकं चा[3]पेक्ष्य स्नेहस्वेदशिरोवक्त्रलेपसेकतीक्ष्णावपीडधूमगण्डूषादी[4]नाचरेत्। विशेषेण तु गर्भिणी रूक्षे नस्यकर्मणि वर्षाभूकाकोलीकपिकच्छूभिः शृतं पयः पिबेत्। बलाविदार्यंशुमतीमेदाभिर्वा। [6]आभिरेव च शृतं हविः । वातहरसिद्धश्च स्नेहः [8]शिरोबस्तौ कर्णपूरणे च योज्यः । सर्वं च बृंहणमन्नपानम्। भुक्तभक्तादिष्वपि चात्ययिकव्याध्यातुरमपेक्षेत।" इति ।

साम्प्रतं यत्र काले यत्र च दोषे नस्यं प्रयोज्यं तद्दर्शनार्थमाह-

**अथ नस्यं प्रयोजयेत् ॥ १३ ॥**

**प्रातः श्लेष्मणि, मध्याह्ने पित्ते, सायंनिशोश्चले।**
**स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसन्तयोः ॥ १४ ॥**
**शीते मध्यंदिने, ग्रीष्मे सायं वर्षासु सातपे ।**
**वाताभिभूते शिरसि हिध्मायामपतानके ॥ १५ ॥**
**मन्यास्तम्भे स्वरभ्रंशे सायंप्रातर्दिनेदिने ।**
**एकाहान्तरमन्यत्र**

**स०**-कारणे कार्योपचारात्कफरोगः श्लेष्मशब्देनोक्तः । [एवं पित्तादावपि ।] श्लेष्मरोगेषु प्रातर्नस्यं प्रयोजयेत्। पित्तरोगेषु मध्याह्ने । वातरोगेष्वपराह्णे रात्रौ च । सङ्ग्रहे विशेषः (सू. अ. २९)-"लालास्रावसुप्तप्रलापदन्तकटकटायनक्रथनकृच्छ्रोन्मीलनपूतिमुखकर्णनादर्दितृष्णार्दितशिरोरोगश्वासकासोन्निद्रेषु रात्रौ" इति। स्वस्थेत्यादि। तुरवधारणे। स्वस्थवृत्ते शरदि वसन्ते च पूर्वाह्ण एव नस्यं योज्यम् । शीते-हेमन्तशिशिरलक्षणे, मध्याह्ने। ग्रीष्मे सायं-अपराह्णे। वर्षासु सातपे-दृश्यमानरवौ वासरे [11]प्रयोजयेत् । अधुना दोषापेक्षया [12]नस्यकालनियममाह-वातेत्यादि। वाताभिभूतमूर्द्धादिषु स्वरभ्रंशान्तेषु सायंप्रातः-पूर्वाह्णापराह्णयोः, [ दिनेदिने- ] प्रतिदिनं च, नैकाहान्तरितम्। अन्यत्र-वाताभिभूतमूर्द्धादिभ्योऽन्यस्मिन् रोगे, एकाहान्तरम्।

**आ० र०-नस्यकालमाह-अथेति । चले-वायौ । सङ्ग्रहे तु (सू. अ. २९)-"लालास्रावसुप्तप्रलापदन्तकटकटायनक्रथनकृच्छ्रोन्मीलनपूतिमुखकर्णनादतृष्णार्दितशिरोरोगश्वासकासोन्निद्रेषु रात्रौ।"** इति । स्वस्थवृत्ते ऋतुभेदेन पूर्वाह्णादिषु । सातपे-वर्षासु यदैवातपस्तदैव। सङ्ग्रहे तु (सू. अ. २९)-"पञ्चकर्माण्याचरतो बस्तिकर्मोत्तरकालमेव।" इति । वाताभिभूतशिरस्कादिषु पञ्चसु प्रत्यहं प्रातः सायं च। अन्येषु तु रोगेष्वेकाहान्तरं स्वे स्वे दोषकाले।

**सप्ताहं च तदाचरेत् ॥ १६ ॥**

**स०**-सप्ताहं च नस्यमाचरेत्,-सप्ताहादूर्ध्वं नस्यं न वि[3]दध्यात्।

**आ० र०-नस्यावृत्तेरवधिमाह-सप्ताहमिति । तत्-नस्यम्। सङ्ग्रहे तु (सू. अ. २९)-"अनेन विधिना पञ्च सप्त नव वा दिनानि दद्यादासम्यग्योगात्।"** इति ।

इदानीं यादृशस्य पुरुषस्य यथास्थितस्य न[4]स्यं देयं तथाऽऽह-

**स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च ।**
**निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः ॥ १७ ॥**
**अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते ।**
**किञ्चिदुन्नतपादस्य किञ्चिन्मूर्द्धनि नामिते ॥ १८ ॥**
**नासापुटं पिधायैकं पर्यायेण निषेचयेत् ।**
**उष्णाम्बुतप्तं भैषज्यं [6]प्रणाड्या पिचुनाऽथवा ॥१९॥**
**दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत् ।**
**शनै[7]रुच्छिद्य निष्ठीवेत्पार्श्वयोरुभयोस्ततः ॥ २० ॥**
**आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ।**

**स०**-पूर्वं स्निग्धं पश्चात् स्विन्नमुत्तमाङ्गं-शिरो, यस्य तस्य । तथा, प्राक्-पूर्वं, कृतमावश्यकं-अवश्यकरणीयमुच्चारमूत्रोत्सर्गदन्तधावनादिकं, येन स प्राक्कृतावश्यकः, तस्य । तथा, निवातस्थाने शयनं यत्तत्र स्थितस्य सतः, भूयो जत्रूर्ध्वं स्वेदयेत्। अथेत्यादि। अथ-अनन्तरम्, उत्तानस्पष्टस्थितशरीरस्य सतो हस्तचरणे प्रसारिते, तथा किञ्चिदुन्नतचरणस्य किञ्चिच्छिरसि नामिते सति, नासापुटमेकं पिधाय-स्थगयित्वा, पर्यायेण-न तु युगपत्, भैषज्यं निषेचयेत्। कीदृशम् ? उष्णाम्बुतप्तं,-उष्णोदकोष्णीकृतम् । केन परिषेचयेत् ? [8]प्रणाड्या, अथवा पिचुना-कार्पासादिमयेन । दत्ते नस्ये सति पादतलस्कन्धहस्तकर्णादि मर्दयेत्। आदिशब्देन ग्रीवाललाटादिपरिग्रहः । सुश्रुते चाभ्यधायि (चि. अ. ४०।२५)-"वस्त्रावच्छादितनेत्राय वामहस्तप्रदेशि[11]न्यग्रोन्नामितनासिकाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णाम्बु[12]प्रतप्तं र[13]जतसुवर्णताम्रमणिमृत्पात्रशुक्तीनामन्यतम-

१ 'नोरतिवृ' ग । 'र्वातवृ' घ च प । 'नोर्व्याधि' स ढ । २ 'म्भकुष्ठरो' क ञ । ३ 'चावेक्ष्य' क प । 'च वीक्ष्य' ञ । ४ 'दीनि यथास्वं कुर्यात्' क ग ञ । ५ 'नस्तःक' घ च प । ६ 'एभि' ग घ च प स ढ । ७ 'तन्नासि' क ग ञ । ८ 'सिद्धबस्तौ' ञ । ९ 'एव च' स मू । १० 'नादार्दित' ट.ठ.ड । ११ 'योज्यम्' ट.। १२ 'नस्यस्य कालं नियमयति-' ट ।

१ 'यनक्र' क.ञ । २ 'श्वासोन्नि' क ग.घ च प । ३ 'ध्यादिलर्थः ।' ट । ४ 'गाढा ।' स ढ । ५ 'स्य दातव्य तमाह-' ट.। ६ 'प्रनाड्या' क.च घ प ,ट ठ ड.। 'प्रणाल्या पि' ञ चन्द्र.। ७ 'रुच्छिन्द्य' इ क घ च प.। ८ 'रप्रस्रावदन्त' ट । ९ 'त्रस्थस्य' ट । १० 'स भूयो' ड । ११ 'शिन्योन्ना' ट. ड.। १२ 'म्बुना प्र' स.मु । १३ 'जतादिशुक्ती' ट.ठ ड.।

स्थमनवच्छिन्नधारमासिञ्चेत् ।'' इति । शनैरित्यादि । ततो–मर्दनानन्तर, शनैरुच्छिंद्य पार्श्वयोरुभयोर्निष्ठीवेत् । ( सङ्ग्रहे तु सू अ २९ )–"अनभ्यवहरन् । कफसहितमभ्यवहृतमग्निमवसादयेद्दोष च सवर्द्धयेत् । एकपार्श्वनिष्ठीवने न सर्वा शिरा भेषजेन सम्यग्व्याप्यन्ते । पुन पुनश्चैन स्वेदयेत् ।'' एव–अनेन क्रमेण, आमेषजक्षयात् कुर्यात् । ( प्राय सङ्ग्रहोक्तोऽयमग्रिमो ग्रन्थ –) न तु नस्यमात्रा सकृदेव प्रक्षेप्तव्या । हीनमात्र चौषध न देयम् । तद्धि दोषानुत्क्लेश्यानिर्हरन गौरवारुचिकासप्रसेकपीनसच्छर्दिकण्ठरोगान् कुर्यात् । अधिकमतियोगदोषान् कुर्यात् । सकृदेव सर्व दत्तमुर्च्छिन्यमान शिरोरोगप्रतिश्यायघ्राणक्लेदानुच्छ्वासोपरोध च कुर्यात् । अत्युष्ण दाहपाकज्वररक्तागम [ शिरोरुग्दृष्टिदौर्बल्य ] मूर्च्छाभ्रमान् । अतिशीत हीनदोषानेव । अत्युन्नतशिरस सम्यगप्रतिपद्यमानं तानेव हीनदोषान् । अत्यवनतशिरसो दूरगमनान्मूर्च्छाजाड्य [ कण्डूदाह ]-ज्वरान् । सङ्कुचितगात्रस्य सम्यग्धमनीरप्राप्नुवद्दोषोत्क्लेश [ वेदना स्तम्भ वा ] कुर्यात् ।

**आ० र०–नस्यविधिमाह–स्निग्धस्विन्नेति । आवश्यक–दन्तधावनादि । पर्यायेण–न युगपन्नासापुटद्वये । प्रणाड्या–प्रणालिकया । उच्छिंद्य–नासया श्वासमूर्ध्व नीत्वा, उभयो पार्श्वयोर्निष्ठीवेत् यावद्भेषजक्षय. ।**

**नस्ये पुटसङ्ख्यामाह–एवमिति ।**

यदि च नस्ये दीयमाने भेषजवेगादसात्म्येनँ वा मूर्च्छा स्यात् तदा कि कार्यम् ? इत्याह—

## मूर्च्छायां शीततोयेन सिञ्चेत्परिहरन् शिरः ॥२१॥

**स०**–मूर्च्छाया सत्या शीतजलेन मूर्द्धवर्ज सिञ्चेत् । सङ्ग्रहेऽप्युक्तम् ( सू अ २९ )–"न च नस्ये निषिच्यमाने कोपहासव्याहारस्पन्दनोच्छिंन्दनान्याचरेत् । तथा हि शिरोरुक्प्रतिश्यायकासतिमिरखलतिपलितव्यङ्गतिलकालकमुखदूषिकाणा सम्भव ।'' इति ।

**आ० र०–नस्यमूर्च्छायां प्रतीकारमाह–मूर्च्छायामिति ।**

## स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ।

१ 'मप्यच्छिन्न' ठ ड २ 'धार सि' ट ठ ड । ३ 'छिन्द्य' ट ठ क.ग घ प । 'उच्छिद्य–ऊर्ध्व भैषज्य नीत्वा, निष्ठीवेत् । दक्षिणनासापुटप्रणीतौपध वामपार्श्वेण निष्ठीवेत्, वामनासापुटप्रणीतमौषध दक्षिणपार्श्वेण निष्ठीवेत् ।' इति चन्द्र । ४ 'च्छिद्वनशिरो' ठ । 'मुर्त्सिहनशि' ड । 'मुत्स्नेहनशि' स द्व । ५ 'ण नासापुटैक पिधाय पुट' ग । ६ 'नलिकया' क ग ञ । ७ 'न सञ्जातमूर्च्छाया प्रतीकारमाह–' ठ ड । ८ 'मूर्द्धाङ्ग वर्जयित्वा सि' ट । ९ 'स्ये दीयमाने' ट ठ । १० 'च्छिङ्खना' ट स स. । 'छिन्चनाद्याच' ठ । ११ 'था ह्येव शि' ट.ठ.। १२ 'नसे मू' क ग.ञ.। १३ 'ह रेचननस्यान्ते' अ.आ.इ.क ञ. ।

**स०**–विरेचनस्यावसाने देशदोपसात्म्याद्यपेक्षया स्नेहमनुषेचयेत् । तन्त्रान्तरे ( सङ्ग्रहे ) चोक्तम् । ( सू अ २९ )–"अथ नस्यार्ह नरमव्याहतवेग धौतान्तर्बहिर्मुख स्ववस्थितशिरस्कं प्रायोगिकधूमपानविशुद्धस्रोतस स्वास्तीर्णनिवातशयनस्थमुत्तानशीर्षमीषदुन्नतपाद प्रसारितचरण च जत्रूर्ध्व पाणितापेन पुन पुन स्वेदयेत् ।'' इति ।

**आ० र०–विरेचननस्यानन्तर तीक्ष्णत्वदोपपरिहारार्थं स्नेहेन नस्यमङ्गत्वेनाह–स्नेहमिति ।**

## नस्यान्ते वाक्शतं तिष्ठेदुत्तानः

**स०**–नस्यावसाने वाक्शतं–मात्राशतमुत्तानो निद्रामसेवमानस्तिष्ठेत् ।

**आ० र०–निवृत्तनस्यस्योत्तानशयनमाह–नस्यान्त इति । वाक्शत–शतगुर्वक्षरोच्चारणपर्याप्त कालम् ।**

## धारयेत्ततः ॥२२॥
## धूमं पीत्वा कवोष्णाम्बुकवलान् कण्ठशुद्धये ।

**स०**–ततो–वाक्शतावस्थानादनन्तरम्, ईषदुष्णजलकवलान् धारयेत् । किमर्थम् ? कण्ठशुद्धये उत्क्लिष्टदोषशान्तये च । किं कृत्वा ? धूम–विरेचनाद्यन्यतम, यथायोगं पीत्वा, ततोऽस्य स्नेहोक्तमाचारमादिशेत् ।

**आ० र०–उत्तानशयनानन्तर धूमगण्डूषावाह–धारयेदिति । सङ्ग्रहे तु ( सू अ २९ )–"अथ नस्यार्ह नरमव्याहतवेग धौतान्तर्बहिर्मुख नातिक्षुधित प्रायोगिकधूमपानविशुद्धस्रोतसम् । तत कनकरजतताम्राद्यन्यतमशुक्तिस्थित प्रदेयौपधत्रिभाग वामहस्ताङ्गुष्ठकनिष्ठिकाभ्यामाक्रम्य नयनप्रच्छादन चतुर्गुण वासो मध्यमया नासाग्रमुन्नमय्य प्रदेशिन्यनामिकाभ्या चैकैक नासापुट पर्यायेण पिधायेतरस्मिन् नासास्रोतसि दक्षिणहस्तेन प्रणाड्या पिचुना वाऽनवच्छिन्नधारमासिञ्चेत् । न च हीनाधिक सकृदेव सर्वमत्युष्णशीतमत्युन्नतावनतशिरसे सङ्कुचितगात्रावयवाय देयम् । तत्र हीन दोषमुत्क्लेश्यानिर्हरद्गौरवारुचिकासप्रसेकपीनसच्छर्दिकण्ठरोगान् कुर्यात् । अधिकमतियोगदोषान् । सकृदेव सर्वं दत्तमुत्स्नेहनशिरोरोगप्रतिश्यायघ्राणक्लेदानुच्छ्वासोपरोध च । अत्युष्ण दाहपाकज्वररक्तागमशिरोरुग्दृष्टिदौर्बल्यमूर्च्छाभ्रमान् । अतिशीत हीनदोषान् । अत्युन्नतशिरसोऽपि सम्यक्शिरोऽप्रतिपद्यमान तानेव । अत्यवनतशिरसोऽतिदूरगमनात् मूर्च्छाजाड्यकण्डूदाहज्वरान् । सङ्कुचितगात्रस्य सम्यक् धमनीरव्याप्नुवद्दोषोत्क्लेश वेदना स्तम्भ**

१ 'हमुपपेच' ठ ड । २ 'ख स्निग्धस्विन्नशि' स द्व । ३ 'तकरच' स.द्व । ४ 'नसस्या' क । ५ 'हननस' घ.च.प । ६ 'शतमात्रमुत्ता' ट ठ ड । ७ 'रपर्याप्तका' क ग । ८ 'मन्याह' घ च. । ९ 'क्तिस्थ प्र' क ञ । १० 'सिन्नपि' क घ ञ प. । ११ 'प्रणाल्या' स.स । १२ 'श्य न निर्हरेत् । गौर' स.द्व. । १३ 'सर्वमु' घ.च.प. ।

वा । न च नस्ये निषिच्यमाने कोपहास्यव्याहारस्पन्दनो च्छिन्धनान्याचरेत् । तथा हि शिरोरुक्प्रतिश्यायकासतिमिरखलतिपलितव्यङ्गतिलकालकमुखदूषिकाणा सम्भव । अनभ्यवहरश्च वामदक्षिणपार्श्वयोरौपध निष्ठीवेत् । सकफ हि तदभ्यवहृतमग्निमवसादयेद्दोष च सवर्द्धयेत् । एकपार्श्वनिष्ठीवने न सर्वा शिरा भेषजेन सम्यग्व्याप्यन्ते । पुन पुनश्चैन स्वेदयेत् । अथास्य स्नेहोक्तमाचारमादिशेद्धतिद्रवपान च वर्जयेत् ।" इति ।

**सम्यक्स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षपाटवम् २३**

स०-सम्यक्स्निग्धे शिरसि सुखोच्छ्वासादय स्यु । सङ्ग्रहे चोक्तम् ( सू अ २९ )-"सम्यक्स्निग्धे मूर्ध्नि विरिक्ते वा सुखोच्छ्वासनि श्वासक्षवथुस्वप्नप्रबोधशिरोवदनेन्द्रियविशुद्धयो भवन्ति, यथोक्तव्याध्युपशमश्च ।" इति ।

**आ० र०-स्नेहननस्यस्य सम्यग्योगमाह-सम्यक्स्निग्ध इति । स्वप्नबोधौ सुखेन ।**

**रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्द्धशून्यता ।**

स०-रूक्षे तु शिरस्यक्षिस्तब्धता स्यात् । तथा, नासायामास्ये च शोषो मूर्द्धशून्यता च स्यात् ।

**आ० र०-स्नेहननस्य हीनयोगमाह-रूक्ष इति ।**

**स्निग्धेऽति कण्डूगुरुताप्रसेकारुचिपीनसाः ॥ २४ ॥**

स०-अतिस्निग्धे कण्ड्वादय स्यु ।

**आ० र०-स्नेहननस्यातियोगमाह-स्निग्ध इति ।**

**सुविरिक्तेऽक्षिलघुतावक्त्रस्वरविशुद्धय. ।**

स०-सुविरिक्ते-सम्यग्विरिक्ते, अक्षिलघुतादय स्यु ।

**आ० र०-विरेचनननस्यस्य सम्यग्योगमाह-सुविरिक्त इति ।**

**दुर्विरिक्ते गदोद्रेकः, क्षामताऽतिविरेचिते ॥ २५ ॥**

स०-दुर्विरिक्ते गदोद्रेको-रोगस्याधिक्यम् । अतिविरेचिते क्षामता-कृशता स्यात् ।

**आ० र०-विरेचनननस्यस्य हीनयोगमाह-दुर्विरिक्त इति । विरेचनननस्यस्यातियोगमाह-क्षामतेति ।**

अधुना प्रतिमर्शस्य विषय सूचयितुमाह—

**प्रतिमर्शः क्षतक्षामबालवृद्धसुखात्मसु । प्रयोज्योऽकालवर्षेऽपि**

स०-प्रतिमर्श क्षतक्षामादिषु प्रयोज्य । अकालवर्षणेऽपि कार्य ।

**आ० र०-प्रतिमर्शस्य विषयमाह-प्रतिमर्श इति । अकालवर्षेऽपि-अनार्तवदुर्दिनेऽपि । सङ्ग्रहे तु (सू अ २९)-"तृष्णामुखशोपभीरुपु" इत्यधिकम् ।**

**न त्विष्टो दुष्टपीनसे ॥ २६ ॥**
**मद्यपीतेऽबलश्रोत्रे कृमिदूषितमूर्द्धनि ।**
**उत्कृष्टोत्क्लिष्टदोषे च, हीनमात्रतया हि सः ॥ २७ ॥**

स०-दुष्टपीनसे तु न प्रयोज्य । दुष्टपीनसो-नासारोगेषु ( हृ उ अ १९।९ ) वक्ष्यमाण । तथा मद्यपीते, तथाऽबलश्रोत्रे-रुद्धश्रवणमार्गे, तथा कृमिभिर्दूषितो मूर्द्धा यस्य तस्मिन् कृमिपीडितशिरसि, तथोत्कृष्टो-वृद्धि गत , तथोत्क्लिष्ट -प्रचलो, दोषो यस्य तस्मिंश्च, प्रतिमर्शो न योज्य । केन प्रकारेण (कारणेन) न योज्य ? इत्याह-हीनेत्यादि । हि-यस्मात्, एषा स -प्रतिमर्श , हीनमात्रतया,-हीना मात्रा यस्य स हीनमात्र , तस्य भावो हीनमात्रता, तया । य(अ)स्मादसौ न युज्यते । एषां ह्युदीर्णदोषत्वात् तावता दोषोत्क्लेश एव भवति न शम ।

**आ० र०-दुष्टपीनसादौ प्रतिमर्शं निषेधति-न त्विष्ट इति । अबलश्रोत्रे-शब्दश्रवणासमर्थे । उत्कृष्टदोषे उत्क्लिष्टदोषे च, हि-यस्मात्, हीनमानतया युक्त. स दोषनिर्हरणासमर्थत्वादेतेषु न योज्य इत्यर्थ ।**

**निशाहर्भुक्तवान्ताहःस्वप्नाध्वश्रमरेतसाम् ।**
**शिरोभ्यञ्जनगण्डूषप्रस्रावाञ्जनवर्चसाम् ॥ २८ ॥**
**दन्तकाष्ठस्य हासस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ।**

स०-असौ-प्रतिमर्शो, द्विबिन्दुको निशादीना पञ्चदशाना कालानामन्ते प्रयोज्य ।

**आ० र०-प्रतिमर्शस्य पञ्चदश कालानाह-निशाहरिति । अह स्वप्नो-दिवास्वप्न । श्रमो-व्यायाम । प्रस्रावो-मूत्रम् । द्विबिन्दुको-बिन्दुद्वयमात्र । सङ्ग्रहे तु ( सू अ. २९ )-"बिन्दुर्वा येन चोत्क्लेशो नात्युत्क्लिष्टस्य जायते । निष्ठ्यूते यत्र वा स्नेहो न साक्षादुपलक्ष्यते ॥" इति ।**

**पञ्चसु स्रोतसा शुद्धिः, क्लमनाशस्त्रिषु क्रमात् ॥२९॥**
**दृग्बलं पञ्चसु, ततो दन्तदार्ढ्यं मरुच्छमः ।**

स०-तत्र निशाहर्भुक्तवान्ताह स्वप्नाख्येषु पञ्चसु कालेषु प्रतिमर्शो प्रयुक्ते स्रोतसा शुद्धिर्भवति । क्रमात्-क्रमेणैवं पठि-

१ 'से दीयमाने को' क ञ । २ 'च्छिन्धमाना' क.ञ. । 'च्छिदना' घ स मू । 'च्छिङ्कना' स स । ३ 'प्रबोधाक्षपाटवानि स्यु' ।' ट ठ । ४ 'हनस्य स' क.ग ञ । ५ 'मूर्ध्नि शू' ट । ६ 'हनस्य ही' क ग ञ. । ७ 'कण्डूर्गुरुता' अ घ । ८ 'हनस्याति' क ग च.ञ । ९ 'चनस्य स' क. । १० 'चनस्यायोग' ग. । 'चनस्य ही' ञ । ११ 'चनस्याति' ञ. । १२ 'मर्ष' आ. ।

१ 'हीनमानतया' घ च ञ प हे । २ 'ज्य । कुत ? हीनमात्र' ट । ३ 'त् स ' ठ । ४ 'या न योज्य । एषा' ड । ५ 'सौ प्रयुज्यते' इति क्वचित् । ६ 'षा चोदी' ट । ७ 'सादिपु प्रतिमर्शनिषेधमाह-' ग । 'सादीना प्र' घ च प । ८ 'मात्रतया' क. । ९ 'वोत्क्लेशो' क च.ञ. । १० 'णैव प' ठ ।

तेषु । अध्वश्रममैथुनाना त्रयाणामन्ते प्रतिमर्शे दत्ते सति क्लमस्य नाश स्यात् । उपलक्षण चेदम् । मन प्रसादशिरोलाघवेऽपि भवत । एव शिरोभ्यञ्जनादिषु पञ्चस्वन्ते प्रतिमर्शे योजिते सति दृष्टेर्बल स्यात् । तत -अनन्तर, दन्तकाष्ठहासयोरन्ते यथासङ्ख्येन द्विजदृढत्व पवनशमश्च स्यात् ।

आ० र०-उक्तकालानां फलमाह-पञ्चस्विति । पञ्चसु-निशान्तादिषु, स्रोत शुद्धि । त्रिषु-अध्वश्रमरेतोत्सेपु, क्लमनाश. । पञ्चसु-शिरोभ्यञ्जनादिषु, दृग्बलम् । दन्तधावनान्ते दन्तदार्ढ्यम् । हास्यान्ते वातोपशम ।

अधुना नस्यस्य धूमादीना च पुरुषविशेषे नियमं कुर्वन्नाह—

**न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ ३० ॥**
**न चोनाष्टादशे धूमः, कवलो नोनपञ्चमे ।**
**न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ॥ ३१ ॥**

स०-ऊनसप्तवर्षे नस्य न योज्यम् । तथा, अतिक्रान्ताशीतिवर्षे च नस्य न प्रयोज्यम् । अपूर्णाष्टादशवर्षे धूमो न प्रयोज्य । कवलोऽपूर्णपञ्चवत्सरे न प्रयोज्य । ऊनदशमवर्षे शुद्धि -वमनविरेकादिका, न प्रयोज्या । तथा, अतीतसप्ततिवर्षे च शुद्धिर्न योज्या ।

आ० र०-वयोविशेषेण नस्यधूमकवलशोधनानि निषेधति-न नस्यमिति ।

**आजन्ममरणं शस्तः प्रतिमर्शस्तु बस्तिवत् ।**
**मर्शवच्च गुणान् कुर्यात्स हि नित्योपसेवनात् ॥३२॥**
**न चात्र यन्त्रणा नापि व्यापद्भ्यो मर्शवद्भयम् ।**

स०-प्रतिमर्श पुनर्बस्तिरिव शस्तो-हित । कथम्? आजन्ममरण,-जन्ममरणे अवधि कृत्वा, प्रतिमर्शो हित इत्यर्थ । स च-प्रतिमर्शो, नित्योपसेवनात्-सन्ततमभ्यस्यमानो, मर्श इव गुणान्-सुखोच्छ्वासादीन् कुर्यात् । अत्र च-प्रतिमर्शे, यन्त्रणा-"उष्णोदकोपचारी स्यात्" इत्यादिका, नास्ति । न च व्यापद्भ्य -"अक्षिस्तब्धता शोष ' इत्यादिभ्यो, भय मर्श इव-मर्शवत् नास्तीति । मर्श इव मर्शवत्, सप्तम्यन्ताद्वति ।

आ० र०-प्रतिमर्शस्य सुखसेव्यत्वमाह-आजन्मेति ।

**तैलमेव च नस्यार्थे नित्याभ्यासेन शस्यते ॥ ३३ ॥**
**शिरसः श्लेष्मधामत्वात्स्नेहा· स्वस्थस्य नेतरे ।**

स०-तैलमेव नित्याभ्यासेन प्रतिमर्शन्यायेन नस्यार्थे श्रेष्ठ भवति । कुतो हेतो ? मूर्ध्न कफस्थानत्वात् । न त्वपरे स्नेहा । तेषा श्लेष्मलत्वादिति भाव. ।

आ० र०-नित्यनस्ये तैलमेवोचितमित्याह-तैलमेवेति ।

१ 'स्रोतसा शु' क ग.ञ. । २ 'म करोति-' ट । ३ 'लोन्यूनप' च । ४ 'पत्तिभ्य ' ट.ठ.ड । ५ 'नस्यार्थे' घ.च.प. ।

सङ्ग्रहे तु ( सू अ २९ )-"आशुकृच्चिरकारित्व गुणोत्कर्षापकृष्टता । मर्शे च प्रतिमर्शे च विशेषो न भवेद्यदि ॥ को मर्श सपरीहार सापद चे भजेत्तत । अच्छपानविचाराख्यौ कुटीवातातपस्थिती ॥ अन्वासमात्राबस्ती च तद्वदेवे विनिर्दिशेत् ।" इति ।

**आशुकृच्चिरकारित्वं गुणोत्कर्षापकृष्टता ॥ ३४ ॥**
**मर्शे च प्रतिमर्शे च विशेषो न भवेद्यदि ।**
**को मर्श सपरीहार सापदं चे भजेत्तत. ॥ ३५ ॥**
**अच्छपानविचाराख्यौ कुटीवातातपस्थिती ।**
**अन्वासमात्राबस्ती च तद्वदेवे विनिर्दिशेत् ॥ ३६ ॥**

स०-आशुकारिगुणयुक्तो मर्श , चिरकारी तु प्रतिमर्श । गुणोत्कर्षत्वयुक्तो मर्शो गुणापकृष्टतान्वितस्तु प्रतिमर्श इत्यनयोर्भेद । यदि च मर्शे प्रतिमर्शे च विशेषगुणो न स्यात्,ततो मर्श सपरीहार सव्यापद च को भजेत्? न कश्चिद्भजेदित्यर्थ । मर्शप्रतिमर्शविशेषवदच्छपानविचाराख्यौ स्नेहौ शीघ्रकारित्वादिना विशेषेण निर्दिशेत् । तथा, कुटीप्रवेशस्थित्या यद्रसायनमुपयुज्यते, यच्च वातातपाद्यपरिहारस्थित्या रसायन क्रियते, ते च द्वे अपि तथैव सविशेषे निर्दिशेत् । तथा, अन्वास -अनुवासन, तथा मात्राबस्तिश्च, तावप्येव शीघ्रकारिचिरकारित्वादिगुणैर्विनिर्दिशेत् ।

इदानी नस्यमणुतैल निर्दिदिक्षुराह—

**जीवन्तीजलदेवदारुजलदत्वक्सेव्यगोपीहिमं**
**दार्वीत्वङ्मधुकप्लवागुरुवरीपुण्ड्राह्वबिल्वोत्पलम् ।**
**धावन्यौ सुरभि स्थिरे कृमिहर पत्र त्रुटि रेणुकां**
**किञ्जल्कं कमलाद्बलां शतगुणे दिव्येऽम्भसि क्वाथयेत् ।**
**तैलाद्रसं दशगुण परिशेष्य तेन**
**तैलं पँचेत सलिलेन दशैव वारान् ।**
**पाके क्षिपेच्च दशमे सममाजदुग्धं**
**नस्यं महागुणमुशन्त्यणुतैलमेतत् ॥ ३८ ॥**

स०-जीवन्त्यादीनि द्रव्याणि दिव्ये जले क्वाथयेत् । गोपी-सारिवा । प्लव-गोपालदमनाख्यम् । पुण्ड्राह्व-प्रपौण्डरीकम् । धावन्यौ-कण्टकारिकामहोटिकाख्ये । सुरभि -सल्लकी । स्थिरे-शालीपर्णीपृश्निपर्ण्यौ । कृमिहर-विडङ्गम् । अत्र तैलसमानि

१ 'गुणोत्कृष्टापकृष्टता' अ क ग. च । 'गुणोत्कृष्टापकर्षता' घ ज प । 'गुणोत्कृष्टावकृष्टता' स स । 'त्कर्षापकर्षता' आ. । २ 'च वदेत्तत ' च. इन्दु चन्द्र । ३ 'व च नि' क स स. । ४ आशुकृदित्यादि सार्धद्वौ श्लोकावरुणदत्तसम्मतौ । ५ 'शेषो न' ट । ६ अस्मात्प्राक् "पटोलमुद्गवार्ताककटुस्वमूलकजाङ्गलै. । रसै. शालियवान्नाद्यमस्यकर्मणि षड्विधे ॥ १ ॥ उच्चैर्भाषणमायासमजीर्णासात्म्यभोजनम् । दत्तनस्यो नर. क्रोध यानादींश्च विवर्जयेत् ॥२॥" इति ड.ञ पुस्तकयोर्द्वौ श्लोकावधिकावुपलभ्येते । ७ 'पचेच्च स' इति क्वचित् ।

द्रव्याणि ग्राह्याणीति वृद्धवैद्यव्यवहारः । आकाशादेव पटादिभिर्गृहीतं जलं दिव्यमुच्यते । तच्च तैलाच्छतगुणं गृहीत्वा तावत्क्वाथयेत्, यावद्दशगुणो रसस्तैलात्स्यात् । तेन च क्वाथेन तैलं दशैव वारान् पचेत् । दशमे च पाके तैलसममजाक्षीरं क्षिपेत् । ततः पुनः पचेत् । इत्येतत्तैलं महागुणं—सर्वोत्तमगुणं, अणुतैलसंज्ञं कथयन्ति । अणुषु तैलमणुतैलम् । अणूनीन्द्रियस्रोतांसि प्रविशतीत्यर्थः ।

आ० र०—नस्यतैलेषु श्रेष्ठत्वादणुतैलमाह—जीवन्तीति । जीवन्त्यादीनि शतगुणे जले निष्क्वाथ्य, जीवन्त्याद्यपेक्षयैव दशगुणं रसं परिशेष्य, तैलात्तेनेति तैलाद्दशगुणेन सलिलेन—क्वाथेन, दशवारं तैलं पचेत् । अर्थात्प्रतिवारं तैलसमं क्वाथं । दशमे तु पाके तैलसममाजदुग्धं क्वाथं चावशिष्टं क्षिपेत् । सेव्य—उशीरम् । प्लव—क्षुद्रमुस्तम् । धावन्यौ—बृहतीद्वयम् । सुरभि—रास्नाम् । स्थिरे—शालिपर्णीपृश्निपर्ण्यौ । कमलात्किञ्जल्क—पद्मकेसरम् । अत्र जीवन्त्यादीनामेव कल्कः, "यत्र क्वाथस्तत्र कल्कः केवलक्वाथभाषिते ।" इति वचनात् । कल्कं विनैव पाक इत्यपरे । सङ्ग्रहे तु (सू. अ. २९)—"अणुतैलविधानं तु मञ्जिष्ठामधुकप्रपौण्डरीकजीवकर्षभककाकोलीद्वयपयस्यासारिवानन्तानीलोत्पलाञ्जनरास्नाविडङ्गतण्डुलमधुपर्णीश्रावणीमेदाकाकनासासरलसालभद्रदारुचन्दनैः सुपिष्टैरष्टगुणं षड्गुणेन पयसा तैलं विपचेत् । घृतं वा पित्तोल्बणेषु दोषेषु । अथवा चन्दनागुरुपत्रदार्वीत्वङ्मधुकबलैलाद्वयपद्मोत्पलपद्मकेशरप्रपौण्डरीकविडङ्गोशीरह्रीबेरवन्यत्वङ्मुस्तासारिवाबृहतीद्वयांशुमतीद्वयजीवन्तीदेवदारुसुरभिशतावरीः शतगुणे दिव्येऽम्भसि दशभागावशिष्टं क्वाथयेत् । ततस्तस्य क्वाथस्य दशमांशेन समांशं तैलं साधयेत् । दशमे चात्र पाके तैलतुल्यमाजमपि पयो दद्यात् । एतदप्यणुतैलं पूर्वस्माद्विशेषेणेन्द्रियदार्ढ्यकरं केश्यं बल्यं त्वच्यं कण्ठ्यं प्रीणनं बृंहणं दोषत्रयघ्नं च ।" इति । तन्त्रान्तरात्—"नस्यं विदध्याद्गुडनागरं वा ससैन्धवां मागधिकामथो वा । घ्राणास्यमन्याहनुबाहुपृष्ठशिरोक्षिकण्ठश्रवणामयेषु ॥" इति ।

**घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः ।**
**दृढेन्द्रियास्तपलिता भवेयुर्नस्यशीलिनः ॥ ३९ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने नस्यविधिर्नाम विंशोऽध्यायः ॥ २० ॥**

स०—नस्यशीलिनो निबिडोच्चतररमणीयत्वगादयः स्युः । त्वक् च स्कन्धश्च ग्रीवा चास्यं च वक्षश्च एतेषां समाहारः त्वक्स्कन्धग्रीवास्यवक्षः । घनोन्नतप्रसन्नं त्वक्स्कन्धग्रीवास्यवक्षो येषां ते घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः । तथा, पुष्टेन्द्रिया पलितवर्जिताश्च भवेयुः ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने नस्यविधिर्नाम विंशोऽध्यायः समाप्तः ॥ २० ॥

आ० र०—नस्यशीलनस्य फलमाह—घनोन्नतेति । घनत्वच, उन्नतस्कन्धग्रीवावक्षसः, प्रसन्नास्या, इति यथायोगं सम्बन्धः ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
नस्यकर्मप्रकरणं सामस्त्येन निरूपितम् ॥ २० ॥



## एकविंशतितमोऽध्यायः ।

ऊर्ध्वाङ्गचिकित्साप्रसङ्गाद्धूमपानविधिं जिगदिषुराह—

**अथातो धूमपानविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २॥ )

**जत्रूर्ध्वकफवातोत्थविकाराणामजन्मने ।**
**उच्छेदाय च जातानां पिबेद्धूमं सदाऽऽत्मवान् १**

स०—आत्मवान्—सुमतिर्हिताहारविहारो, जत्रुण ऊर्ध्वे श्लेष्मवातोद्भवानां विकाराणां—रोगाणां, अजन्मने—अनुत्पत्त्यै, तथोत्पन्नानामुच्छेदाय—विनाशाय, सदा धूमं पिबेत् ।

आ० र०—धूमपानविधिमध्यायं व्याख्यातुं प्रतिजानीते । अथेति ।

तत्र धूमस्य सामान्यतो विषयमाह—जत्रूर्ध्वेति ।

**स्निग्धो मध्यः स तीक्ष्णश्च, वाते वातकफे कफे ।**
**योज्यः**

स०—स च धूमः स्निग्धमध्यतीक्ष्णभेदेन त्रिधा । यथाक्रमं वाते स्निग्धो, वातकफे मध्यः, कफे तीक्ष्णो, योज्यः ।

आ० र०—धूमभेदानाह—स्निग्ध इति । सङ्ग्रहे तु (सू. अ. ३०)—"तत्र शमनः प्रायोगिको मध्यम इति पर्यायाः,

१ 'ति सद्वैद्य' ठ ड । २ 'दश वा' ट । ३ 'न्ति । अणूनी' ड. । ४ 'तीत्यणुतैलम् ।' ट ठ । ५ 'ष्य तेन तैलाद्' ग । ६ 'न दश' ग घ च प । ७ 'मुस्ता ।' क ञ । ८ 'रलागुरुभद्र' क ञ । 'रलशीतभ' ग घ प । ९ 'ल प' क ग स ह । 'विपाचयेत्' प । १० 'यविल्वोत्प' ग स ह । ११ 'रत्व' क ञ । 'रवलात्व' ग घ.प । १२ 'इयं त्वच्य' घ च प.स ह । १३ 'हुपार्श्वशिरोक्षिदन्तश्र' ग । हुग्रीवाशिरोक्षिदन्तश्र' च. । १४ 'यास्त्वपलिता' आ.ग.घ.च.प. ।

१ 'चरम' ठ ड । २ अयं धूमपानविधिश्चरके सू० ५ अध्याये, सुश्रुते चि० ४० अध्याये, अष्टाङ्गसङ्ग्रहे सू० ३० अध्याये चास्ति वर्णितः । ३ 'जत्रूर्ध्वं क' आ.इ घ.ञ.प. चन्द्र. । ४ 'ना रोगा' ठ ड ।

बृहण स्नेहनो मृदुरिति, शोधनो विरेचनस्तीक्ष्ण इति च ।" इति । "तथा कासघ्नो वामनो व्रणधूपनश्च ।" इत्यन्यद्भेदत्रयम् ।

स्निग्धादीनां विषयमाह-वात इति । क्रमेणेति शेष ।

**न रक्तपित्तार्तिविरिक्तोदरमेहिषु ॥ २ ॥**
**तिमिरोर्ध्वानिलाध्मानरोहिणीदत्तबस्तिषु ।**
**मत्स्यमद्यदधिक्षीरक्षौद्रस्नेहविषाशिषु ॥ ३ ॥**
**शिरस्यभिहते पाण्डुरोगे जागरिते निशि ।**

स०-रक्तपित्तार्त्यादिषु धूमो नावचारणीय । ननु, वाते वातकफे कफे च धूमस्यानुज्ञातत्वात् पित्तार्तौ प्राप्तिरेव नास्ति । तत्किं प्रतिषेधेन ? ब्रूम । वातप्रकृतेर्वातपित्तार्तौ सत्या कश्चिद्भिषक्पाशो भ्रान्त्या प्रकृत्यनुरूपोपक्रमचिकीर्षया धूम योजयेत्, तन्निषेधार्थमिदमुक्तम् । अथवा वातश्लेष्मप्रकृते पित्तार्तौ पित्तप्रकृतेर्वा वातश्लेष्मार्तौ धूमो न योज्य इति प्रतिपादनार्थमिद गदितम् । अशिशब्दो मत्स्यादिषु विषान्तेषु प्रत्येक योज्य । अत्र च यथासम्भव पान मद्यादे, भोजनं च मत्स्यादे, अशनशब्देनोच्यते । चतुर्विधेऽप्याहारे अशनशब्देनास्त्येव व्यवहार । यथा (हृ सू अ ८।१)-"मात्राशी सर्वकाल स्यात्" इति । केचिच्च यवागूपायिन्यपि धूमपान नेच्छन्ति ।

आ० र०-पित्तार्तादीना धूम निषेधति-न पित्तरक्तार्तेति ।

**रक्तपित्तान्ध्यबाधिर्यतृण्मूर्च्छामदमोहकृत् ॥ ४ ॥**
**धूमोऽकालेऽतिपीतो वा**

स०-मूर्च्छा-सञ्ज्ञानाश । मोह -चित्तनाश ,'मुह वैचित्ये' इति पाठात् । आन्ध्यबाधिर्यग्रहणमुत्तमाङ्गरोगोपलक्षणार्थम् । तेन सङ्ग्रहोक्तमर्दितमपि गृह्यते । धूमोऽकाले-पूर्वोक्ते रक्तपित्तार्त्यादौ, पीतो रक्तपित्तादीन् कुर्यात् । अप्रतिषिद्धेऽपि काले-क्षुतादौ, अतिशयेन पीतो वा रक्तादिकृत् ।

आ० र०-धूमस्याकालपानेऽतिपाने च दोषमाह-रक्तपित्तान्ध्येति ।

**तत्र शीतो विधिर्हितः ।**

स०-तत्र-रक्तपित्ताद्यार्तौ, विधि -उपक्रमो यथास्व सर्पि-पाननस्यालेपपरिषेकादि , शीतो हित ।

आ० र०-उक्तदोषस्य प्रतीकारमाह-तत्र शीत इति । सङ्ग्रहे तु ( सू अ ३० )-"एषा हि श्रमज्वरशिरोभितापेन्द्रियोपघाततालुशोषपाकधूमायनच्छर्दिमूर्च्छारक्तपित्तादीनि मृत्यु वा धूमो जनयेत्, अतिमात्रश्चान्येषामपि । तत्र वातकफान्यतरससृष्ट पित्तमुपलक्ष्य यथास्व सर्पिष्कपायपाननस्यास्यलेपाञ्जनपरिषेकान् स्निग्धरूक्षशीतान् प्रयुञ्जीत । एतेन सर्वधूमोपघातप्रतीकारा व्याख्याता । विशेषस्तु सर्वस्रोतोभिगते धूमे तीव्रतरा वेदना भवन्त्यूषाध्मानर्नेत्ररोगश्वासकासपीनसाङ्गस्वरसादाम्लका । तत्र घृतक्षीरेक्षुरसद्राक्षाशर्करोपयोगस्तद्विधैरेव वमनम् । कटुतिक्तैरपि च नस्यगण्डूषा ।" इति ।

इदानी त्रयाणा धूमाना काल पृथक् पृथक् दर्शयन्नाह—

**क्षुतजृम्भितविण्मूत्रस्त्रीसेवाशस्त्रकर्मणाम् ॥ ५ ॥**
**हासस्य दन्तकाष्ठस्य धूममन्ते पिबेन्मृदुम् ।**
**कालेष्वेषु निशाहारनावनान्ते च मध्यमम् ॥ ६ ॥**
**निद्रानस्याञ्जनस्नानच्छर्दितान्ते विरेचनम् ।**

स०-क्षुतादीनामष्टानामन्ते मृदु-स्नेहनाख्य, धूम पिबेत् । एषु-क्षुतादिषु कालेषु, निशाहारनावनान्तेषु च मध्यम धूम पिबेत् । मध्य एव मध्यम, "मध्यान्म" इति मप्रत्यय । विरेचनाख्य धूम निद्रादीनामन्ते पिबेत् । नावननस्यशब्दयोरेकार्थयोरिहोपादानान्नस्यक्रमेण धूम पिबेदिति ग्रन्थकृता प्रतिपादितम् । तेन स्निग्धनस्यान्ते स्निग्ध-मृद्वपरपर्याय, धूम पिबेत । आचार्योपदेशाच्च क्षुताद्यन्तेषु च स्निग्ध धूम पिबेत् । मध्यनस्यान्ते मध्यम धूम पिबेत् । कालेष्विति वचनाच्च क्षुतान्तादिषु च मध्यम धूम पिबेत् । एव तीक्ष्णनस्यान्ते विरेचनं धूम पिबेत् । इति त्रिषु सम्बन्ध । तीक्ष्णशब्दोऽत्र विरेचनपर्याय ।

आ० र०-स्निग्धधूमस्याष्टौ कालानाह-क्षुतजृम्भितेति ।
मध्यधूमस्यैकादश कालानाह-कालेष्विति ।
तीक्ष्णधूमस्य पञ्च कालानाह-निद्रेति ।
साम्प्रतमत्र नेत्रस्वरूपमाह—

**बस्तिनेत्रसमद्रव्यं त्रिकोशं कारयेदृजु ॥ ७ ॥**
**मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम् ।**

स०-बस्तो नेत्र बस्तिनेत्रम्, बस्तिनेत्रेण समं-तुल्यं, द्रव्यं-धातुदार्वस्थिवेणुज, यस्य-धूमनेत्रस्य, तद्बस्तिनेत्रसमद्रव्य धूम-

१ 'न पित्तरक्तार्ति' अ आ क चन्द्र । 'न पित्तरक्तार्तेवि' ग च ध हेमाद्रि । २ 'य । अत्र वाते वातकफे कफे इत्यनेन पित्तप्रतिषेधे सिद्धे पुन पित्तग्रहण वातश्लेष्मप्रकृतेर्वातपित्तार्तौ यद्वा पित्तप्रकृतेर्वातश्लेष्मार्तौ धूमप्रतिषेधार्थमिति । अशिशब्दो' ड. । ३ 'स्योक्तत्वात्' इति क्वचित् । ४ 'किं तर्हि प्र' ठ । ५ 'षक् भ्रान्त्या' ठ । ६ 'श्लेष्मव्याध्युद्भूतौ धू' ट. । ७ 'मद्यादि, भोजन मत्स्यादि, अ' ट । ८ 'त्स्यादिषु, अ' ठ । ९ 'रक्तपित्तार्ता' क ञ. । १० 'ज्ञाननाश.' ठ ड । ११ 'रक्तादिकृत् ।' ठ.ड ।

१ 'नयति, अ' क ञ.स ढ । २ 'नस्याले' क. । 'नस्यले' च. । 'नस्यास्याले' स ढ । ३ 'कानस्नि' घ च प । ४ 'कारो व्याख्यात ' क ञ । ५ 'तोगते धूमे भव' स स । ६ 'वत्यू' क ग. घ ञ प स मू. । ७ 'त्यूष्माध्मापनने' क ञ । ८ 'त्रराग' ग.घ प.स. मू. । ९ 'थगाह-' ड । १० 'कर्मिणाम्' ञ. । ११ 'हास्यस्य' अ इ क ग ञ.प । १२ 'ति बहुवच' ट । १३ 'क्षुतादीनामष्टानामन्ता' ठ । १४'त् । तीक्ष्ण' ठ ड. । १५ 'मूलेऽग्रे' अ.आ.क. ।

नेत्र शिल्पिना कारयेद्भिषक् । किम्भूत नेत्रम् ? त्रय कोशा – पर्वाणि, यस्य तत् त्रिकोशम् । तथा, ऋजु–अवक्रम्[1] । तथा, मूल चाग्र च तस्मिन् यथासङ्ख्यमङ्गुष्ठबदरास्थिप्रवेशम्[2] । मूलेऽङ्गुष्ठप्रवेशमग्रे कोलास्थिप्रवेशमित्यर्थ । अङ्गुष्ठश्च कोलास्थि चेति समाहारद्वन्द्व । तत्प्रविशत्यस्मिन्निति "पदरुजविशन्ति" इति घञ् ।

**आ० र०–धूमनेत्रमाह–बस्तिनेत्रेति । बस्तिनेत्रसम द्रव्य–हेमादिघटितम् । त्रिकोश–यथापूर्व्याऽनुप्रविभज्य[3] त्रिकाण्डम् ।**

इदानी तीक्ष्णादिकस्य त्रिविधस्य धूमस्य दैर्घ्येण नेत्रप्रमाणमाह—

**तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पञ्च च ॥ ८ ॥**
**अङ्गुलानां क्रमात्पातुः प्रमाणेनाष्टकानि तत् ।**

**स०**–यथासङ्ख्य दैर्घ्येण तीक्ष्णस्य त्रीण्यष्टकानि–चतुर्विंशतिरङ्गुलानि[4], स्यु । स्नेहने च धूमे चत्वार्यष्टकानि–द्वात्रिंशदङ्गुलानि, स्यु । मध्यमे च धूमे पञ्चाष्टकानि–चत्वारिंशदङ्गुलानि, स्यु । पर्वानेकत्व सूक्ष्मत्व दैर्घ्य च नेत्रस्येह कृतम् । एव हि नयनकर्णादीना न बाधको धूम स्यादिति । तथा च मुनि ( च सू अ ५।४८ )–"दूराद्विनिर्गत पर्वच्छिन्नो नाडीतनूकृत । नेन्द्रिय बाधते धूम " इति ।

**आ० र०–तीक्ष्णादिभेदेन धूमनेत्रस्य प्रमाणमाह–तीक्ष्णस्नेहनमध्येष्विति । धूमपाङ्गुलानि चतुर्विंशतिस्तीक्ष्णनेत्रम्, द्वात्रिंशत्स्निग्धनेत्रम्, चत्वारिंशन्मध्यनेत्रम् । सङ्ग्रहे तु ( सू अ ३० )–"एव हि धूमो दूरात्प्रवृत्तो नेत्रस्य पर्वच्छेदादूर्ध्वं तनुतया च शनै श्लिष्यन्नबाधको भवति ।" इति । तथा ( स सू अ. ३० )–"कासघ्ने वामने[5] च दशाङ्गुलम् । व्रणधूपनार्थमष्टाङ्गुलम्[6][7] । कलायपरिमण्डल कुलत्थवाहिस्रोत[8] इति । कासघ्नादिषु तु नेत्राभावे नलवंशैरण्डादीनामन्यतमां[9] नाडीं योजयेत् ।" इति ।**

कीदृश सन् धूम पीबेत् ? इत्याह—

**ऋजूपविष्टस्तच्चेता[10] विवृतास्यस्त्रिपर्ययम् ॥ ९ ॥**
**पिधाय च्छिद्रमेकैकं धूमं नासिकया पिबेत् ।**

**स०**–ऋजु–स्पष्ट, उपविष्ट –आसीन । तथा, तच्चेता –धूमपानगतचित्त । तथा, प्रसारितमुख । तथा, नेत्रगतदृष्टिरित्यपि द्रष्टव्यम् । कथ पिबेत् ? त्रिपर्ययम् । आक्षेपविसर्गौ–आपान, त्रिभिरापानै –पर्यय[11] । तथा, छिद्रमेकैकं पिधाय, अकृतत्वान्नासिकाया एव । तदेवविध सन् नासिकया पिबेत् । एकैकमिति "एक बहुव्रीहिवत्" इति द्वित्वसुब्लोपौ । तेनायमर्थ,–एक नासापुट पिधायापरेण नासापुटेनाकृष्य धूम पिबेत्[1] । अपर नासापुट पिधाय तदपरेणाकृष्य तथैव पिबेदित्यर्थ ।

**आ० र०–धूमपानविधिमाह–ऋजूपविष्ट इति । त्रिपर्यय–त्रिपरिवर्तम् । वाम पिधाय दक्षिणेन पिबेत् दक्षिण पिधाय वामेन पिबेदित्येक परिवर्त । सङ्ग्रहे तु (सू अ ३०)– "प्राकृतोच्छ्वासनि श्वासो नेत्राग्रनिविष्टदृष्टि[2] ।" इति ।**

**प्राक् पिबेन्नासयोत्क्लिष्टे दोषे[3] घ्राणशिरोगते ॥१०॥**
**उत्क्लेशनार्थं वक्त्रेण, विपरीतं तु कण्ठगे ।**

**स०**–नासागते शिरोगते वा दोष उत्क्लिष्टे–स्वस्थानाच्चलिते सति, प्राक्–पूर्व, नासिकया पिबेत् । अनुत्क्लिष्टे दोष उत्क्लेशनार्थं वक्त्रेण प्राक् पिबेत्, पश्चान्नासिकया । कण्ठगे तु [4]दोष उत्क्लेशनार्थं प्राङ्नासिकया पिबेत् पश्चाद्वक्त्रेणेति विपरीतत्वम् ।

**आ० र०–दोषस्थानावस्थाभेदेन धूमपाने विशेषमाह–प्राक् पिबेदिति । घ्राणशिरोगते दोषे स्वयमुत्क्लिष्टे शोधनार्थं यो धूमस्त पूर्व नासिकया पिबेत्, पश्चाद्वक्त्रेण । तस्मिन्नेवानुत्क्लिष्टे उत्क्लेशनार्थं यो धूमस्त पूर्वं वक्त्रेण पिबेत्, पश्चान्नासिकया । कण्ठगे तूत्क्लिष्टे प्राग्वक्त्रेण, पश्चान्नासिकया । अनुत्क्लिष्टे प्राङ्नासिकया, पश्चाद्वक्त्रेण ।**

**मुखेनैवोद्वमेद्धूमं**

**स०**–नासयाऽऽस्येन वा पीतं धूमं वक्त्रेणैवोत्सृजेत् ।

**आ० र०–धूमोद्वमने नियममाह– मुखेनैवेति ।**

ननु, घ्राणेनैव कस्मान्न मुच्यते ? इत्याह—

**नासया दृग्विघातकृत् ॥ ११ ॥**

**स०**–घ्राणेनोत्सृज्यमानो धूमो दृष्टिविघात तिमिरादिना करोति । तस्मान्मुखेनैवोत्सृजेत् ।

**आ० र०–नासोद्वमने दोषमाह–नासयेति ।**

**आक्षेपमोक्षैः पातव्यो धूमस्तु त्रिस्त्रिभिस्त्रिभिः[5] ।**

**स०**–आक्षेपमोक्षे –आदानविसर्गै, त्रिभिस्त्रिभिस्त्रीन् वारान् धूम पातव्य । त्रिरिति "द्वित्रिचतुर्भ्य सुच्" इति सुच् ।

**आ० र०–धूमपानावधिमाह–आक्षेपमोक्षैरिति । त्रिभिस्त्रिभिरिति त्रिषु पानेषु प्रत्येक त्रय आक्षेपमोक्षा. ।**

**अह्नः पिबेत्सकृत् स्निग्धं, द्विर्मध्यं, शोधनं परम् ॥**
**त्रिश्चतुर्वा**

**स०**–अह्न सकृत्–एकवार, स्निग्ध धूम पिबेत् । मध्यम धूम द्वौ वारौ पिबेत् । अह्न इत्यत्राप्यनुवर्तते । तीक्ष्ण धूम त्रीन् वारांश्चतुरो वा दिवसस्य पिबेत् । अह्न इति "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे" इति षष्ठी ।

---

१ 'न वक्रम्' ट । २ 'म् । अङ्गु' ट । ३ 'पूर्वानु' क.ग च ञ प । ४ 'शत्यङ्गु' ठ ड. । ५ 'वमने' घ च प स द्व. । ६ 'नार्थेऽष्टा' सं द्व । ७ 'ङ्गुल षडङ्गुल वा । परिम' क.ग ञ । ८ 'त्थस्रोत' ग घ च प । ९ 'वे देवनल' क.ञ स भू । १० 'स्तच्चित्तो वि' अ. । ११ 'सर्गादानै –पर्यय ' ट ।

१ 'य इतरेणाक्षिप्य तथैवोत्सृजेदित्यर्थ ' ट ठ ड । २ 'प्रविनिवि' क.ग । ३ 'षे नासाशिरो' आ । ४ 'दोषे दोषोत्क्ले' ट. । ५ 'मक्षीस्त्रींस्त्रिभि' आ.क.च. ।

आ० र०—स्निग्धादिभेदेनावृत्तिमाह—अह्न इति । अह्न सकृत्—अहोरात्रमध्ये एकवार, स्निग्ध पिबेत् । द्विवार मध्यम् । त्रिवार चतुर्वार वा तीक्ष्णम् ।

**मृदौ तत्र द्रव्याण्यगुरुगुग्गुलु ।**
**मुस्तस्थौणेयशैलेयनलदोशीरवालकम् ॥ १३ ॥**
**वराङ्गकौन्तीमधुकबिल्वमज्जैलवालुकम् ।**
**श्रीवेष्टकं सर्जरसो ध्यामकं मदनं प्लवम् ॥ १४ ॥**
**शल्लकी कुङ्कुमं माषा यवाः कुन्दुरुकस्तिलाः ।**
**स्नेहः फलानां साराणां मेदो मज्जा वसा घृतम् १५**

स०—तत्र—तेषु त्रिषु धूमेषु मध्यात्, मृदौ—प्रायोगिकाख्ये धूमे, द्रव्याण्यगुरुप्रभृतीनि । प्लवो—गोपालमदनक । स्नेह इति। फलाना—आक्षोडनारिकेलादीना स्नेह, तथा साराणा—खदिरासनादीना च स्नेह । मधुमदनयोरेकयोनित्वादुक्तस्योपयोगो मदनस्यात्र विरुद्ध इति केचित् । तच्चायुक्तम् । द्रव्यान्तरत्वान्मदनस्य । पिण्याकादिवत्तिलादे । घृत चात्र गव्यमेव ग्राह्यम्, मुख्यत्वात् । उक्त हि ( ह्व सू. अ. ५।४२ )—"गव्ये क्षीरघृते श्रेष्ठे" इति ।

आ० र०—स्निग्धधूमस्य द्रव्याण्याह—मृदाविति । नलद—मांसी । वराङ्ग—त्वचम् । ध्यामक—कत्तृणम् । मदन—मधूच्छिष्टम् । कुन्दुरुक —शल्लकीनिर्यासः । फलानां स्नेह —एरण्डतैलादिः । साराणां स्नेह —देवदारुतैलादि. ।

**शमने शल्लकी लाक्षा पृथ्वीका कमलोत्पलम् ।**
**न्यग्रोधोदुम्बराश्वत्थप्लक्षरोध्रत्वचः सिता ॥ १६ ॥**
**यष्टीमधु सुवर्णत्वक् पद्मकं रक्तयष्टिका ।**
**गन्धाश्चाकुष्ठतगराः**

स०—शमने धूमे शल्लक्यादीनि गन्धद्रव्याणि कुष्ठतगरवर्ज्यानि ।

आ० र०—मध्यमधूमस्य द्रव्याण्याह—शमन इति । सिता—शर्करा । सुवर्णत्वक्—आरग्वध । रक्तयष्टिका—मञ्जिष्ठा ।

**तीक्ष्णे ज्योतिष्मती निशा ॥ १७ ॥**
**दशमूलमनोह्वालं लाक्षा श्वेता फलत्रयम् ।**
**गन्धद्रव्याणि तीक्ष्णानि गणो मूर्द्धविरेचनः ॥ १८ ॥**

स०—तीक्ष्णे—विरेचनाख्ये धूमे, ज्योतिष्मत्यादीनि, गन्धद्रव्याणि, तीक्ष्णानि—कुष्ठतगरादीनि, गणश्च—शोधनादिगणसङ्ग्रहोक्तो "वेल्लापामार्ग" ( ह्व. सू. अ १५।४ ) इत्यादिको, मूर्द्धविरेचन ।

आ० र०—तीक्ष्णधूमस्य द्रव्याण्याह—तीक्ष्ण इति । अलहरितालम् । श्वेता—किणिही । तीक्ष्णानि गन्धद्रव्याणि—कङ्कोलादीनि । मूर्द्धविरेचनो गण—"वेल्लापामार्ग" इत्यादिः ।

सम्प्रति धूमवर्तिविधानमाह—

**जले स्थितामहोरात्रमिषीकां द्वादशाङ्गुलाम् ।**
**पिष्टैर्धूमौषधैरेवं पञ्चकृत्वः प्रलेपयेत् ॥ १९ ॥**
**वर्तिरङ्गुष्ठकस्थूला यवमध्या यथा भवेत् ।**
**छायाशुष्कां विगर्भां तां स्नेहाभ्यक्तां यथायथम् ॥२०॥**
**धूमनेत्रार्पितां पातुमग्निप्लुष्टां प्रयोजयेत् ।**

स०—रात्रिंदिव सलिले उषिता दैर्घ्येण द्वादशाङ्गुलामिषीका—दर्भतूलीं, पञ्चकृत्व—पञ्चवारान्, धूमोक्तैरौषधै पिष्टै प्रकर्षेण लेपयेत् । यथाऽङ्गुष्ठकस्थूला यवमध्या वर्ति स्यात् । एतदाकृतिविधान च त्रिविधेऽपि नेत्रके वर्ते सुखप्रवेशार्थम् । तामिषीका ( ता वर्ति ) छायाया विशुष्का विगतगर्भा ( विगर्भा )—अपनीतेषीका, तथा स्नेहेन—घृतादिना यथास्वमभ्यक्ता, तथा, धूमनेत्रस्य यदङ्गुष्ठप्रमाण छिद्र तत्रार्पिता, तथाऽग्निप्लुष्टा—अङ्गारप्रदीप्ता, पातु—पानार्थ, प्रयोजयेत् ।

आ० र०—धूमपानार्थं धूमवर्त्तिमाह—जले स्थितामिति । इषीकां—काशशलाकाम् । धूमौषधै —यथोक्तैरगुर्वादिभि ,पञ्चभिर्लेपैरङ्गुष्ठस्थूला यवमध्या यथा भवेत्तथा विशोष्य विशोष्य प्रलेपयेत् ।

धूमवर्त्या धूमपानप्रकारमाह—छायाशुष्कामिति । विगर्भा—अपनीतेषीकाम् । यथायथ—मृदुमध्यतीक्ष्णै. स्नेहैरभ्यक्ताम् । सङ्ग्रहे तु ( सू अ ३० )—"इषीकामभ्य नवाङ्गुलं लेपयेत् । प्रतिलेप चाक्षमात्र लेपद्रव्यम् ।" इत्युक्तम् ।

अधुनाऽपरमपि धूमप्रकारमाह—

**शरावसम्पुटच्छिद्रे नाडीं न्यस्य दशाङ्गुलाम् ॥२१॥**
**अष्टाङ्गुलां वा वक्त्रेण कासवान् धूममापिबेत् ॥२१½॥**

स०—शरावयो सम्पुटो—युग्म, तस्य छिद्रे नाडी दशाङ्गुलामष्टाङ्गुलप्रमाणा वा निक्षिप्य कासी धूममापिबेत् । तदयमत्रार्थ,—अपगतधूमखदिरबदरादिदारुस्थिराङ्गारप्रकरपूर्णशरावे कासहरचूर्ण सस्नेह गुलिका वा न्यस्य मध्यवृत्तच्छिद्रशरावेण पिधाय नाडीमष्टाङ्गुला दशाङ्गुला वा निवेश्य कासवान्—कासी, वक्त्रेण—मुखेन, धूम सपिबेदिति ।

आ० र०—कासिना धूमपाने विशेषमाह—शरावसम्पुटेति । शरावसम्पुट.—सङ्ग्रहोक्त ( सू. अ ३० )—"कासघ्न

१ 'मृदोस्तत्र' अ इ क । २ 'त्वात् दृष्टस्यो' ठ । 'त्वादुष्णस्यो' ट ड. । ३ 'मृदोरिति' क । ४ 'त्वक् ।' क ञ । ५ 'ह्वालला' आ.क.ठ. । ६ 'ष्मतीत्यादीनि गन्धद्रव्याणि च ती' ट. ।

१ 'रेव प' आ ञ । २ 'ष्ठवत्स्थूला' आ ग ड, ट । ३ 'दर्भमूल प' ट । ४ 'के वर्तिसुख' ठ । 'के सुख' ड । ५ 'यत्तदङ्गु' ठ ड । ६ 'का—शला' ग । ७ 'भवेदेव छायाया विशोष्य प्रले' क ञ । ८ 'खदिरबदरदारुनिर्धूमदीप्तस्थिराङ्गारपूर्णे शरावे कासहरचूर्ण सस्नेहा ( 'स्नेह' क । ) गुलिका वा प्रक्षिप्यान्येन मध्यवृत्तच्छिद्रशरावेण' क.ञ. ।

तु चूर्णं गुलिका वा निर्धूमदीप्तस्थिराङ्गारपूर्णे सुसंस्थिते शरावे प्रक्षिप्यान्येन बुध्नवृत्तच्छिद्रेण शरावेण पिधाय" इति ।

कासः श्वासः पीनसो विस्वरत्वं
पूतिर्गन्धः पाण्डुता केशदोषः ।
कर्णास्याक्षिस्रावकण्डूर्तिजाड्य
तन्द्रा हिध्मा धूमपं न स्पृशन्ति ॥२२½ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने धूमपानविधिर्नामैकविंशतितमोऽध्यायः ॥ २१ ॥

स०-कासादयो धूमप न स्पृशन्ति । धूमपातुरेते न सम्भवन्तीति भाव । तत्र पूतिर्गन्ध -आस्यनासयो । पाण्डुता-मुखस्य । केशदोषा -सितपिञ्जरत्वादय । कर्णौ चास्य चाक्षिणी च कर्णास्याक्षि, स्रावश्च कण्डूश्चार्तिश्च जाड्य च स्रावकण्डूर्तिजाड्यम्, कर्णादिषु प्रत्येक स्रावादिचतुष्टय योज्यमिति । शालिनीवृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने धूमपानविधिर्नामैकविंशतितमोऽध्याय समाप्त ॥२१॥

आ० र०-धूमशीलनस्य फलमाह-कास इति । सङ्ग्रहे तु (सू अ.-३०)-"धूमो हि शिरोक्षिकर्णशूलाभिष्यन्दगौरवार्धावभेदकपीनसकासश्वासास्यवैरस्यप्रसेकवैस्वर्यपूतिघ्राणमुखहिध्मागलरोगदन्तशूलदौर्बल्यारुचिहनुमन्याग्रहक्रिमिपक्षवधक्षवथुनाशबाहुल्यातिनिद्राक्रथनादिजत्रूर्ध्वगतवातकफव्याधिषु प्रशमनाय प्रयुज्यते । तथा शिर कपालेन्द्रियमनोबृंहणप्रसादनाय च । शीतद्रव्यनिर्वृत्तोऽपि त्वग्निसयोगादुष्णतया पित्तरक्तविरुद्ध ।" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
धूमपानप्रकरण सामस्त्येन निरूपितम् ॥ २१ ॥

१ 'वा खदिरबदरदारुनिर्धू' ग । २ 'न श्वृत्त' ग च. । 'न मूर्ध्नि प्रवृत्त' स स । ३ बुध्न -तलम् । ४ 'अस्याग्रे "हृत्कण्ठेन्द्रियसशुद्धिर्लाघव शिरस. शम. । यथेरिताना दोषाणां सम्यक्पीतस्य लक्षणम् ॥" इति अ आ इ क ञ पुस्तकेष्वधिक सङ्ग्रहश्लोक । ५ 'दकास्यवै' घ च.ञ प । ६ 'कपूति' ग घ च ञ प । ७ 'खगल' क च ञ । 'खरोग' घ प । ८ 'क्रिमिकण्डूपाण्डुत्वकेशदोषक्षवथु' स ह । ९ 'हुल्यतन्द्राति' स ह । १० 'नातिज' स मू । ११ 'धिप्रशमाय' स ह. । १२ 'त्तोऽप्यग्नि' स.स. । १३ 'रक्ते विरुध्यते । इ' क ञ. ।



## द्वाविंशतितमोऽध्यायः ।

इदानीं धूमपानादनन्तर गण्डूषविधिरेव युक्त । तदर्थमाह-

अथातो गण्डूषादिविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

( गद्यसूत्रे ॥ २ ॥ )

स०-गण्डूषादयो विधीयन्तेऽस्मिन्निति गण्डूषादिविधि । आदिशब्देन कवलादिपरिग्रह ।

आ० र०-गण्डूषादिविधिमध्याय व्याख्यातुं प्रतिजानीते-अथेति । गण्डूषादीनि-गण्डूषकवलप्रतिसारणमुखालेपमूर्धतैलकर्णपूरणानि ।

चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ ।
रोपणश्च

स०-स्निग्धादिभेदेन चत्वार प्रकारा -भेदा, यस्य स चतुष्प्रकारो गण्डूषो भवति ।

आ० र०-गण्डूषभेदानाह-चतुष्प्रकार इति ।

त्रयस्तत्र त्रिषु योज्याश्चलादिषु ॥ १ ॥
अन्त्यो व्रणघ्नः

स०-तत्र-तेषु गण्डूषेषु मध्ये, यथासङ्ख्य पवनपित्तश्लेष्मसु त्रय स्निग्धादयो गण्डूषा योज्या. । तत्र वाते स्निग्धो गण्डूष, पित्ते शमन, कफे शोधन इत्यर्थ । अन्त्यो-रोपणाख्यो, व्रणघ्नो-व्रणसाधन उपयुज्यते ।

आ० र०-गण्डूषाणां भेदेन विषयमाह-त्रयस्तत्रेति । अन्त्यो-रोपण. । व्रणघ्नो-मुखरोगघ्न. ।

इदानीमेषा लक्षणानि वक्तुमाह—

स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ।
स्नेहैः

स०-अत्र-एषु गण्डूषेषु मध्ये, स्निग्धो मधुरादिसाधितै. स्नेहैर्भवति ।

आ० र०-स्निग्धस्य द्रव्याण्याह-स्निग्धोऽत्रेति ।

संशमनस्तिक्तकषायमधुरौषधैः ॥ २ ॥

१ 'नी द्वाविंशाध्यायभणनप्रस्तावो गण्डूषादिविधानप्रदर्शनार्थमित्याह-' ट । २ अय गण्डूषादिविधिश्चरके सू० ५ अध्याये, सुश्रुते चि० ४० अध्याये उ० १८ अध्याये च, अष्टाङ्गसङ्ग्रहे सू० ३१ अध्याये चास्ति वर्णित । ३ 'स्निग्ध, पि' ङ । ४ 'णशोध' ठ ड. । ५ 'णा दोषभे' क.ञ. । ६ 'वक्ति-' ट. ।

स०–शमनस्तिक्तादिभिरौषधैः–पटोलारिष्टजम्ब्वाम्रमधुककाथशर्करोदकक्षौद्रादिभि स्यात् ।

आ० र०–शमनस्य द्रव्याण्याह–सशमन इति ।

**शोधनस्तिक्तकट्वम्लपटूष्णैः**

स०–शोधनो गण्डूषस्तिक्तकट्वम्लादिभिरौषधैर्भवति ।

आ० र०–शोधनस्य द्रव्याण्याह–शोधन इति ।

**रोपणः पुनः ।**
**कषायतिक्तकैः**

स०–रोपणस्तु गण्डूष कषायतिक्तकै स्यात् ।

आ० र०–रोपणस्य द्रव्याण्याह–रोपण पुनरिति ।

ननु, द्रव्याणा[1] शुष्कत्वाद्गण्डूषानुपपत्तिरिति चेत्तत्राह—

**तत्र स्नेहः क्षीरं मधूदकम् ॥ ३ ॥**
**शुक्तं[2] मद्यं रसो मूत्रं धान्याम्लं च यथायथम् ।**
**कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ॥ ४ ॥**

स०–तत्र–तेषु पूर्वोक्तेषु गण्डूषेषु मध्ये, स्नेहादिक कल्कैर्यथास्व युक्त विपक्व वा, यथास्पर्श–शीतमुष्ण वा, प्रयोजयेत् ।

आ० र०–गण्डूषार्थं द्रव्याण्याह–तत्रेति । स्नेहादीनि नव योग्यतानुसारेण यथास्व कल्कै सयोज्य विपाच्य वा शीतान्युष्णानि वा प्रयोजयेत् । उक्त च सङ्ग्रहे (सू अ ३१)–"तत्र स्वाद्वम्ललवणोष्णैरौषधै. सिद्धो युक्तो वा नात्युष्णः स्नेहो मासरसस्तिलकल्कोदक क्षीर वा स्नैहिक । तिक्तकषायमधुरशीतै. पटोलारिष्टजम्ब्वाम्रमालतीपल्लवोत्पलमधुककाथसितोदकक्षौद्रक्षीरेक्षुरसघृतादिभि. शमन । कट्वम्ललवणोष्णै. शिरोविरे[3]चनादिद्रव्यै शुक्तमद्यधान्याम्लमूत्रान्यतमकल्कि[4]तालोडितै शोधन. ।" इति ।

**दन्तहर्षे दन्तचाले मुखरोगे च वातिके ।**
**सुखोष्णमथवा शीतं तिलकल्कोदकं हितम् ॥ ५ ॥**
**गण्डूषधारणे**

स०–दन्तहर्षादौ कवोष्णमथवा शीतं दोषवशात् तिलकल्कोदक हितम् ।

आ० र०–दन्तहर्षादौ गण्डूषमाह–दन्तहर्ष इति ।

**नित्यं तैलं मांसरसोऽथवा ।**

स०–गण्डूषधारणे नित्य तैल मासरसो वा हित ।

आ० र०–स्वस्थे गण्डूषमाह–नित्यमिति ।

**ऊषादाहान्विते पाके क्षते[*5] चागन्तुसम्भवे ॥ ६ ॥**
**विषे[6] क्षाराग्निदग्धे च सर्पिर्धार्यं पयोऽथवा ।**

स०–ऊषादियुक्ते पाके क्षते[*5] चागन्तुजे, तथा विषे क्षाराग्निभ्या दग्धे च, सर्पिर्गण्डूषे हितं क्षीर वा ।

आ० र०–ऊषादाहमुखपाका[1]दौ गण्डूषमाह–ऊषादाहान्वित इति । ऊषा–क्षारेणेव । दाह.–अग्निनेव । पाकादयो मुख एव ।

**वैशद्यं जनयत्या[2]शु सन्दधाति मुखे[3] व्रणान् ॥ ७ ॥**
**दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ।**

स०–माक्षिकगण्डूषधारण मुखे वैशद्य–अपैच्छिल्यं, जनयति, मुखव्रणाश्च सन्दधाति । तथा, दाह तृष्णां च प्रशमयति ।

आ० र०–मुखपैच्छिल्यादौ गण्डूषमाह–वैशद्यमिति ।

**धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम् ॥ ८ ॥**

स०–धान्याम्ल गण्डूष उपयुक्त वदनवैरस्य तथा मलं दौर्गन्ध्य चापनयति ।

आ० र०–मु[4]खवैरस्यादौ गण्डूषमाह–धान्याम्लमिति ।

**तदेवालवणं शीतं मुखशोषहरं परम् ।**

स०–तदेव–काञ्जिक, अलवणं शीत पर–अतिशयेन, आस्यशोषहरम् ।

आ० र०–मुखशोषे गण्डूषमाह–तदेवेति । तत्–धान्याम्लम् । अर्थात् पू[5]र्वं च लवणोष्णम् ।

**आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम् ॥९॥**

स०–क्षारेण–स्वर्जिकादिना, युक्त जल कफस्य चयमाशु भिनत्ति ।

आ० र०–श्लेष्मसञ्चये गण्डूषमाह–आश्विति । क्षाराम्बु–क्षारगा[6]लनोदकम् ।

**सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ।**

स०–कोष्णपानीयगण्डूषैर्वदनलाघव सम्पद्यते ।

आ० र०–मुखगौरवे गण्डूषमाह–सुखोष्णोदकगण्डूषैरिति ।

**निवाते सातपे स्विन्नमृदितस्कन्धकन्धरः ॥ १० ॥**
**गण्डूषमपिबन् किञ्चिदुन्नतास्यो विधारयेत् ।**

स०–वातरहिते रविकि[7]रालोके स्थाने[8] । स्कन्धौ च कन्धरा च स्कन्धकन्धरम् । पूर्वं स्विन्न पश्चान्मृदित स्कन्धकन्धरं यस्य स एवम् । तथा गण्डूषमपिबन्, तथा किञ्चिदुन्नत मुख यस्य स एवंविध सन्, गण्डूष धारयेत् ।

---

१ 'रित्याह–' ट. । २ 'सुक्त' अ.आ.इ.ग.व.प. । ३ 'चनद्र' स.ढ. । ४ 'कल्केनालो' क. । *५ 'ते चाऽऽगन्तु' अ.इ.,ट. । ६ 'तिषक्षारा' अ.घ. ।

१ 'कादिषु ग' क ञ. । २ 'त्यास्ये स' अ.आ.इ.ग.घ ङ.ञ.प स.ढ. । ३ 'मुखव्रणान्' अ इ स.मू. । ४ 'आस्यवै' क.ञ. । ५ 'पूर्वोक्त ल' क. । ६ 'गालितोद' क ञ. । ७ 'कलालोके' ठ.ड. । ८ 'ने । पूर्वं स्विन्ने पश्चान्मृदिते स्कन्धकन्धरे यस्य' ठ.ड. ।

आ० र०–गण्डूषविधिमाह–निवात इति । सङ्ग्रहे तु ( सू अ ३१ )–"सुखोपविष्टस्तन्मना स्विन्नमृदितगलकपोलललाटदेशो वरमध्यावरा क्रमाद्वक्त्रार्धभागत्रिभागचतुर्भागपूरणी द्रवमात्रा कल्क वा कोलप्रमाणम् । कवले तु पर्यायेण कपोलौ कण्ठ च सञ्चारयेत् । अयमेव कवलगण्डूषयोर्विशेष । पुनश्चास्य स्वेदमर्दनान्याचरेत् । एवमुत्क्लिष्टकफो वक्त्र प्रतिपद्यते ।" इति ।

कियन्त कालम् ? इत्याह—

**कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षताऽथवा ॥११॥**

स०–कफेन पूर्ण कफपूर्णमास्य यस्य स कफपूर्णास्य, तस्य भाव कफपूर्णास्यता,–कफपूर्णमुखता, यावद्भवेत्। अथवा स्रवत् घ्राणाक्षि यस्य स स्रवद्घ्राणाक्ष, "बहुव्रीहौ सक्थ्यक्ष्णो" इति षच्। तस्य भाव स्रवद्घ्राणाक्षता यावत्स्यात्, तावद्गण्डूषान् धारयेत्। एव गण्डूषा पञ्च सप्त वा धारयितव्या, यावत्स्वास्थ्य स्यात्।

आ० र०–गण्डूषधारणावधिमाह–कफपूर्णास्यतेति। सङ्ग्रहे तु ( सू अ ३१ )–भेषजस्यानुपहति. कफेन। एवं त्रीन् पञ्च सप्त वा गण्डूषान् धारयेत् । यावद्वा सम्यग्धूमपीतलिङ्गोत्पत्ति । तस्य स्वास्थ्येन योग, जाड्यरसाज्ञानारुचिप्रसेकोपलेपैरयोग, मुखशोषपाकक्लमारुचिहृदयद्रवस्वरसादकर्णनादैरतियोगमुपलक्षयेत् । तेषां यथास्व प्रतिकुर्वीत ।" इति ।

**असञ्चार्यो मुखे पूर्णे गण्डूषः, कवलोऽन्यथा ।**

स०–मुखे पूर्णे सति य सञ्चारयितुमशक्य स्यात् स गण्डूष उच्यते। अन्यथा–मुखेऽपूर्णे सति य सञ्चारयितुं शक्यते, स कवल उच्यते ।

आ० र०–गण्डूषकवलयोर्भेदमाह–असञ्चार्य इति । अपूर्णे–किञ्चिदूने, सङ्ग्रहे तथैवोक्तत्वात् । कवलोऽन्यथा–कपोलौ कण्ठ च सञ्चार्य ।

**मन्याशिरःकर्णमुखाक्षिरोगाः**
**प्रसेककण्ठामयवक्त्रशोषाः।**
**हृल्लासतन्द्रारुचिपीनसाश्च**
**साध्या विशेषात्कवलग्रहेण ॥ १२ ॥**

स०–मन्यादीना रोगेण सम्बन्ध । प्रसेकादीना द्वन्द्व । आमयशब्दस्य कण्ठेन सम्बन्धो विविधकण्ठरोगसूचनार्थ । मन्यारोगादयो विशेषेण कवलधारणेन साध्या –चिकित्स्या ।

आ० र०–कवलस्य विषयमाह–मन्याशिर इति ।

१ 'स एवम्, तस्य' ट । २ 'यस्मिन् स' ढ ठ । ३ 'स्यादिति ।' ठ ड । ४ 'जस्य वाऽनु' स ढ । ५ 'द्वाऽस्य स' ग । ६ 'मुखेऽपूर्णे' हेमाद्रि । ७ 'था–य स' ड. । ८ 'ल इति ।' ड । ९ 'सञ्चारी' क.ञ. । 'सञ्चार्यते' ग ।

**कल्को रसक्रिया चूर्णस्त्रिविधं प्रतिसारणम् ॥१३॥**

स०–कल्कादिभेदेन प्रतिसारण त्रिधा स्यात् । कल्को–जलादिपिष्ट । माक्षिकादिना यद्द्रवीक्रियते द्रव्य सा रसक्रिया । चूर्णं तु–प्रथितमेव ।

आ० र०–प्रतिसारणमाह–कल्क इति । रसक्रिया–अवलेह ।

**युञ्ज्यात्तत् कफरोगेषु गण्डूषविहितौषधैः।**

स०–तत्–प्रतिसारण, श्लेष्मरोगेषु गण्डूषोक्तैरौषधैर्योज्यम्। सामान्योक्तावपि कफरोगविषयत्वात् शोधनगण्डूषोक्तैरौषधैरिति वेद्यम्।

आ० र०–प्रतिसारणस्य विषय द्रव्याणि चाह–युञ्ज्यादिति । गण्डूषविहितै –शोधनगण्डूषोक्तै । प्रतिसारणं–अङ्गुल्या घर्षणम् । सङ्ग्रहे तु ( सू अ ३१ )–"तदभिष्यन्दाधिमन्थगलशुण्डिकादिषु युक्त्या प्रयोज्यम् । अतिप्रसारणादूषाशोषदाहक्लेदशोफादयो भवन्ति ।" इति ।

**मुखालेपस्त्रिधा दोषविषहा वर्णकृच्च**

स०–मुखालेपस्त्रिप्रकार, दोषघ्नो विषघ्नो वर्णकरश्च ।

आ० र०–मुखालेपभेदानाह–मुखालेप इति । दोषघ्नो विषघ्नो वर्ण्यश्चेति त्रिधा ।

**सः ॥ १४ ॥**

**उष्णो वातकफे शस्तः, शेषेष्वत्यर्थशीतलः।**

स०–स च–मुखालेपो, वातश्लेष्मण्युष्णो हित । शेषेषु–पित्ते विषे [ वर्णे ] च, अतिशयेन शिशिरो हित ।

आ० र०–वातघ्नकफघ्नावुष्णौ कार्यावित्याह–स इति । पित्तघ्नविषघ्नवर्ण्या. शीता कार्या इत्याह–शेषेष्विति ।

स च त्रिप्रमाण. । कथम् ? इत्याह—

**त्रिप्रमाणश्चतुर्भागत्रिभागार्धाङ्गुलोन्नतिः ॥ १५ ॥**

स०–चतुर्भागत्रिभागार्धाङ्गुलोन्नति. । उन्नति.–उत्सेध ।

१ 'चूर्णं त्रिविध' अ अरुण । २ 'यत् युक्त द्रव्य' ठ.ड. । ३ 'चूर्ण –शुष्क एव पिष्ट ।' इति चन्द्र. । ४ अस्याग्रे "व्याधेरपचय पुष्टिवैशद्य वक्त्रलाघवम् । इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम् ॥ १ ॥ हीनाजाड्य( 'नात् ध्मान' आ इ ।) कफोत्क्लेशावरसज्ञानमेव च । अतियोगान्मुखे पाक शोषतृष्णारुचिक्लमा. ॥२॥" इति आ इ ड.पुस्तकेष्वधिकौ सुश्रुतश्लोकौ। ५ 'शुण्ठिका' क ञ स स. । ६ 'रणदोषा शोष' च ञ । ७ 'षाप्लोषदाहक्लेदशोषादयो' स स । ८ 'मुखलेप' आ.ञ । ९ दोषघ्नो–वातपित्तकफघ्न । १० 'त्रिविध ।' क ञ । ११ 'वातकफ इति व्यस्ते समस्ते चेति विज्ञेय । तेन वातकफे उष्ण, वाते कफे चाससृष्टेऽप्युष्ण एव ।' इति चन्द्र । १२ 'त्ते वातपित्ते च, अति' ट ठ.ड. । १३ 'न शीतो हि' ठ.ड. ।

आ० र०-हीनमध्योत्तमभेदेन मुखालेपप्रमाणमाह-त्रिप्रमाण इति ।

**अशुष्कस्य स्थितिस्तस्य, शुष्को दूषयति च्छविम् ।**
**तमार्द्रयित्वाऽपनयेत्तदन्तेऽभ्यङ्गमाचरेत् ॥ १६ ॥**

स०-तस्य-मुखालेपस्य, अशुष्कस्य स्थिति । शुष्कस्तु मुखालेपश्छविं-त्वच, दूषयति । त-मुखालेप, आर्द्रयित्वा-तीमयित्वा, अपसारयेत् । तस्यान्ते-तस्मिन्नपनीते, अभ्यङ्ग कुर्यात् ।

आ० र०-मुखालेपावधिमाह-अशुष्कस्येति । मुखालेपापनयनमाह-तमार्द्रयित्वेति ।

**विवर्जयेद्दिवास्वप्नभाष्याग्न्यातपशुक्क्रुधः ।**

स०-मुखालेपी च दिवास्वप्नादि वर्जयेत् । अह स्वप्नादिसेवनात् कण्डूत्वकुशोषपीनसदृष्ट्युपघातादिभय स्यात् ।

आ० र०-मुखालेपवर्ज्यान्याह-विवर्जयेदिति । शुक्-शोक ।

**न योज्यः पीनसेऽजीर्णे दत्तनस्ये हनुग्रहे ॥ १७ ॥**
**अरोचके जागरिते**

स०-पीनसादौ मुखालेपो न योज्य ।

आ० र०-पीनसादौ मुखालेप निषेधति-न योज्य इति ।

**स तु हन्ति सुयोजितः ।**
**अकालपलितव्यङ्गवलीतिमिरनीलिकाः ॥ १८ ॥**

स०-स च-मुखालेप, सुयोजितो-विधिना सेवित, अकालपलितादीन् पराकरोति ।

आ० र०-मुखालेपस्य फलमाह-स त्विति । नीलिका-लिङ्गनाशोपद्रव ।

**कोलमज्जा वृषान्मूलं शाबरं गौरसर्षपाः ।**
**सिंहीमूलं तिलाः कृष्णा दार्वीत्वङ्निस्तुषा यवाः १९**
**दर्भमूलहिमोशीरशिरीषमिशितण्डुलाः ।**
**कुमुदोत्पलकह्लारदूर्वामधुकचन्दनम् ॥ २० ॥**
**कालीयकतिलोशीरमांसीतगरपद्मकम् ।**
**तालीसगुन्द्रापुण्ड्राह्वयष्टीकाशनतागुरु ॥ २१ ॥**
**इत्यर्द्धार्द्धोदिता लेपा हेमन्तादिषु षट् स्मृताः ।**

स०-कोलमज्जादयोऽर्द्धश्लोकोक्ता षट् मुखालेपा षट्सु हेमन्तादिषु ऋतुषु स्मृता । मुनीन्द्रैरिति शेष । तत्र बदरमज्जादयो हेमन्ते, व्याघ्यादय शिशिरे, दर्भमूलादयो वसन्ते, कुमुदादयो ग्रीष्मे, कालीयकादय प्रावृषि, तालीसादय शरदि, इति ।

आ० र०-वर्ण्यस्य मुखालेपस्य तु भेदेन द्रव्याण्याह-कोलमज्जेति । शाबर-लोध्रम् । तन्दुला -शालीनाम् । कालीयक-पीतचन्दनम् ।

**मुखालेपनशीलानां दृढं भवति दर्शनम् ॥ २२ ॥**
**वदनं चापरिम्लानं श्लक्ष्णं तामरसोपमम् ।**

स०-मुखालेपाभ्यासवता नराणा दर्शन-दृष्टि, दृढं स्यात् । मुखं च विकसितमिव तथा कोमल पद्मतुल्य च भवति-जायते ।

आ० र०-वर्ण्यमुखालेपशीलनस्य फलमाह-मुखालेपनशीलानामिति ।

**अभ्यङ्गसेकपिचवो बस्तिश्चेति चतुर्विधम् ॥ २३ ॥**
**मूर्द्धतैलम्**

स०-अभ्यङ्गादिभेदात् चतुर्धा शिरसि तैल स्यात् ।

आ० र०-मूर्द्धतैलभेदानाह-अभ्यङ्गेति ।

**बहुगुणं तद्विद्यादुत्तरोत्तरम् ।**

स०-तच्चोत्तरोत्तरं बहुगुणं विद्यात् । अभ्यङ्गात् सेको बहुगुण, ततोऽपि पिचु, तस्मादपि बस्ति, इति क्रमेण ।

आ० र०-अभ्यङ्गादीना तारतम्यमाह-बहुगुणमिति ।

**तत्राभ्यङ्गः प्रयोक्तव्यो रौक्ष्यकण्डूमलादिषु ॥ २४ ॥**

स०-तत्र-तेषु मध्ये, रौक्ष्यादीष्वभ्यङ्ग प्रयोज्य ।

आ० र०-अभ्यङ्गस्य विषयमाह-तत्राभ्यङ्ग इति ।

**अरूंषिकाशिरस्तोददाहपाकव्रणेषु तु ।**
**परिषेकः**

स०-अरूंषिकादिषु परिषेक ।

आ० र०-सेकस्य विषयमाह-अरूंषिकेति ।

**पिचुः केशशातस्फुटनधूपने ॥ २५ ॥**
**नेत्रस्तम्भे च**

स०-केशशातादिषु पिचु प्रयोक्तव्य. ।

आ० र०-पिचोर्विषयमाह-पिचुरिति । शातः-सदनम् । धूपन-धूमोद्गम इव । पिचु.-स्नेहार्द्रपिचुधारणम् ।

**बस्तिस्तु प्रसुप्त्यर्दितजागरे ।**
**नासास्यशोषे तिमिरे शिरोरोगे च दारुणे ॥ २६ ॥**

स०-बस्ति पुन प्रसुप्त्यादौ योज्य ।

आ० र०-बस्तेर्विषयमाह-बस्तिरिति । प्रसुप्ति.-स्पर्शाज्ञानम् । जागरो-निद्रानाश । दारुणे-तीव्रे ।

१ 'मुखलेप' ञ । २ 'ण्डूपीनस' ठ ड. । ३ 'दत्ते नस्ये' अ.आ. । ४ 'स च ह' घ । ५ 'दीनपाक' ट. । ६ 'मा इत्येव घ' ट. । ७ 'र्ण्यमु' ग घ.च.प ।

१ 'लेपनसेविना न' ट । २ 'मुख रम्य वि' ठ.ड । ३ 'च जाय' ठ ड । ४ 'चतुर्विध मूर्द्धतैलम् ।' ट. । ५ 'रूक्षकण्डू' च ञ । ६ 'मध्यात्' ट ठ ड । ७ 'ङ्ग कार्य ।' ठ ड । ८ 'च' अ.आ. । ९ 'मोद्गार इव' क.ञ. । १० 'तीक्ष्णे' ग.घ.प. ।

**विधिस्तस्य निषण्णस्य पीठे जानुसमे मृदौ ।**
**शुद्धाक्तस्विन्नदेहस्य दिनान्ते गव्यमाहिषम् ॥ २७ ॥**
**द्वादशाङ्गुलविस्तीर्णं चर्मपट्टं शिरःसमम् ।**
**आकर्णबन्धनस्थानं ललाटे वस्त्रवेष्टिते ॥ २८ ॥**
**चैलवेणिकया बद्ध्वा माषकल्केन लेपयेत् ।**
**ततो यथाव्याधि शृतं स्नेहं कोष्णं निषेचयेत् ॥२९॥**
**ऊर्ध्वं केशभुवो यावदङ्गुलम्**

**स०**–तस्य–शिरोबस्तेर्विधानमुच्यते । निषण्णस्य–उपविष्टस्य नरस्य । क्व ? पीठे जानुतुल्ये, तथा मृदौ–अकठिने । किम्भूतस्य नरस्य ? शुद्धो–वमनादिना, अक्त –तैलादिना, स्विन्न –स्वेदेन, देहो यस्य तस्य शुद्धाक्तस्विन्नदेहस्य । कदा ? दिनान्ते,–अपराह्णे विभावर्यां वा । चर्मपट्टं–गव्य माहिष वा, तथा द्वादशाङ्गुलविस्तीर्णं, तथा शिरस्तुल्यं, तथाऽऽकर्ण–कर्ण यावत्, बन्धनस्थान यस्य, तदेवविध चर्मपट्ट चैलवेणिकया सयम्य माषकल्केन लेपयेत् । कदा ? ललाटे वस्त्रवेष्टिते । सङ्ग्रहे तूक्तम् ( सू अ ३१ )–"अथ शुद्धतनो साय रात्रौ वा निवातस्थस्य स्वभ्यक्तस्विन्नस्यै सोपाश्रयासनोपविष्टस्य केशान्ते श्लक्ष्ण त्र्यङ्गुल माषपिष्टेन सुसूक्ष्मेण सद्य सुखाम्बुना मृदितेनोभयत प्रदिग्ध वस्त्रपट्ट बध्नीयात् । ततस्तस्योपरि सन्धार्य बस्तिमाकर्णं बस्तिमूलं च दृढमवलीक सम चैलवेणिकया बद्ध्वा पुनर्माषपिष्टेनापरिस्रावि कृत्वा यथाव्याधि दोषदूष्यहित सिद्धमन्यतम स्नेह सुखोष्णमासेचयेत् ।" इति । तत एव कृते सति व्याधिवशेन पक्क स्नेह कोष्णमुपरिच्छिद्रेणावसेचयेत् । केशभूमेरुपरिष्टादङ्गुल यावत् ।

**आ० र०–शिरोबस्तिविधिमाह–विधिस्तस्येति । ललाटशब्देन केशरहित. प्रदेश, तस्मिन् वस्त्रवेष्टिते । आकर्ण–कर्णादधो न वेष्टयेदित्यर्थ., आबन्धनस्थान–यावति प्रदेशे बस्तेर्बन्धन तावन्त प्रदेश वेष्टयेत् । शिर.सम–शिर.परिधिमित्यर्थ । वेष्टनवस्त्रमप्युभयतो माषकल्केन लेपयेत् । उक्त हि सङ्ग्रहे ( सू. अ. ३१ )–"केशान्ते श्लक्ष्ण त्र्यङ्गुल सुसूक्ष्मेण माषपिष्टेन सद्य सुखाम्बुमृदितेनोभयत. प्रदिग्ध वस्त्रपट्ट बध्नीयात् ।" इति ।**

स च स्नेह. कियत्काल धार्य ? इत्याह–

**धारयेच्च तम् ।**
**आवक्त्रनासिकोत्क्लेदाद्दशाष्टौ षट् चलादिषु ॥३०॥**
**मात्रासहस्राण्यरुजे त्वेकं**

**स०**–त च–स्नेह, यावद्वक्त्रनासिकास्रुति स्यात्तावद्धारयेत् । चल आदिर्येषा ते चलादय, तेषु यथासङ्ख्य दशाष्टौ षट् मात्रासहस्राणि यावत्स्नेह धारयेत् । वाते दश मात्रासहस्राणि, पित्तेऽष्टौ मात्रासहस्राणि, कफे षण्मात्रासहस्राणीत्यर्थ । अरुजे तु–स्वस्थवृत्ते, एक मात्रासहस्र धारयेत् ।

**आ० र०**–बस्तिधारणावधिमाह–धारयेदिति । अरुजे त्वेक मात्रासहस्रम् । मात्रामान क्लेदासम्भवे । क्लेदे त्ववर्णागपि निवर्तते ।

**स्कन्धादि मर्दयेत् ।**
**मुक्तस्नेहस्य**

**स०**–मुक्तस्नेहस्य–अपनीतशिरोबस्ते, स्कन्धशिरोग्रीवादि मर्दयेत् । स्नेहबस्तिर्हि स्नेहशब्देनात्र गृह्यते । तत "उष्णोदकोपचारी स्यात्" इत्यादिकमाचरेत् । तत्र ह्यवोचत् (हृ सू अ. १६।२८)–"सर्वकर्मस्वय प्रायो व्याधिक्षीणेषु च क्रम ।" इति ।

**आ० र०**–बस्त्यन्ते कृत्यमाह–स्कन्धादीति ।

**परमं सप्ताहं तस्य सेवनम् ॥ ३१ ॥**

**स०**–तस्य च–स्नेहबस्ते, परम. सेक सप्त दिनानि । तस्मात्रीणि पञ्च सप्त वाऽहानि कार्य शिरोबस्तिरित्यवतिष्ठते ।

**आ० र०**–बस्त्यावृत्त्यवधिमाह–परममिति । सङ्ग्रहे तु ( सू अ. ३१ )–"उष्णाम्बुना स्नात च यथार्हं भोजयेत् । स्नेहोक्त चास्याचारमादिशेत् । एव त्रीणि पञ्च सप्त वा दिनानि योजयेदिति ।" तथा ( सं सू. अ ३१ )–"सापाश्रय पीठ, साय रात्रिर्वा काल, वेदनोपशमो वाऽवधि ।" इति ।

**धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयन् ।**
**रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ॥ ३२ ॥**

**स०**–कर्णे पूरण धारयेत् । किं कुर्वन् ? कर्णमूल विमर्दयन् । कियन्तं कालम् ? यावत्पीडाया मार्दव भवेत् । स्वस्थवृत्ते तु मात्राशतं यावद्विसृयात् ।

**आ० र०**–कर्णपूरणे विधिं मानं चाह–धारयेदिति ।

अथ मात्राया कि प्रमाणम् ? इत्याह–

**यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ।**
**निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता ॥३३॥**

**स०**–दक्षिण हस्ताग्र कर्तृ यावत् दक्षिण जानुमण्डलं पर्येति–परिवर्तते । दक्षिणशब्दोऽत्र काकाक्षिगोलकन्यायेन द्वयोरपि युज्यते । कियत्कालेन ? इत्याह–निमेषोन्मेषमात्रेण सम,–न तु विश्रम्य । सा मात्रा स्मृतेति । मुनिभिरिति शेष ।

१ 'न कठि' ठ.ड. । २ 'वा स्वभ्य' स.द्व. । ३ 'स्य जानुसमसोपा' स.स. । ४ 'म्बुमृ' स द्व । ५ 'य बस्तिमूल' ट.ठ.ड । 'य बस्तिं बस्तिमू' स.मू । ६ 'ष्टयेत्, आ' क ज. । ७ 'त् । ऊर्ध्व शि' ग घ.प । ८ 'व्यङ्गुल' क ज. । ९ 'म्बुना स्नेदितोभयतः' क.ज. । १० 'सिकाक्लेदात्' आ.च. ।

१ 'दिर्येयो. पित्तकफयोस्ते च' ट । २ 'सेचनम्' आ च अरुण. । ३ 'परम सेवन सप्त' इति क्वचित् । ४ 'सात्रिपञ्च' ठ ड । ५ 'स्नान च' ग घ च प । ६ 'मर्दयेत्' अ.आ.ग च. ज.चन्द्र. । ७ 'षमात्रेण स' ज. अरुण. ।

आ० र०–मात्रालक्षणमाह–यावदिति ।

कचसदनसितत्वपिञ्जरत्वं
परिफुटनं शिरसः समीररोगान् ।
जयति, जनयतीन्द्रियप्रसादं
स्वरहनुमूर्द्धबलं च मूर्द्धतैलम् ॥ ३४ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने गण्डूषादिविधिर्नाम द्वाविंशोऽध्यायः ॥२२॥

स०–कचाना सदनादिभि सम्बन्ध । परिफुटन–कचानामेव, प्रकृतत्वात् । शिरसो मरुदामयाश्च हन्ति । इन्द्रियाणा–चक्षुरादीना, प्रसाद जनयति । तथा, स्वरादिबल च मूर्द्धतैल जनयति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने गण्डूषादिविधिर्नाम द्वाविंशतितमोऽध्याय. समाप्तः ॥ २२ ॥

आ० र०–मूर्द्धतैलशीलनस्य फलमाह–कचसदनेति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
गण्डूषादिप्रकरण सामस्त्येन निरूपितम् ॥ २२ ॥



## त्रयोविंशोऽध्यायः ।

त्रयोविंशाध्यायारम्भो जत्रूर्ध्वरोगप्रस्तावाल्लोचनरोगप्रतिषेधार्थमाह[3]—

अथात आश्चोतनाञ्जनविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
( गद्यसूत्रे ॥ २ )

स०–आश्चोतनं चाञ्जन च, तयोर्विधिर्यस्मिन्नध्याये सं एवम् । शेष पूर्ववत् ।

आ० र०–आश्चोतनाञ्जनविधिमध्याय व्याख्यातु प्रतिजानीते–अथेति ।

सर्वेषामक्षिरोगाणामादावाश्चोतनं हितम् ।
रुक्तोदकण्डूघर्षाश्रुदाहरागनिबर्हणम् ॥ १ ॥

स०–सकलानामपि नयनामयानां प्रथममाश्चोतन–परिषेको, हितम् । यतस्तदाश्चोतनमुपयुक्त रुजादिघ्न स्यात् । सङ्ग्रहे चोक्तम् ( सू अ ३२ )–"अव्यक्तेष्वेव रुजादिषु तुल्यगुण पक्ष्मपरिहारेणाश्चोतनेनैवाक्षिकोशालेपनम् । तच्च बिडालकसञ्ज्ञम् ।" इति ।

आ० र०–आश्चोतनस्य विषयमाह–सर्वेषामिति । सङ्ग्रहे तु ( सू अ ३२ )–"नानाद्रव्यकल्पनया च रागाश्रुघर्षरुग्दाहतोदभेदपाकशोफकण्डूघ्नम् । अव्यक्तेष्वेवंगुणमेव पक्ष्मपरिहारेणाक्षिकोशालेपनम् । तच्च पुनर्बिडालसञ्ज्ञम् । तयोरकालो रात्रि. । कालस्तु सर्वमहर्वेदनोत्पत्तिर्वा ।" इति ।

उष्णं वाते, कफे कोष्णं, तच्छीतं रक्तपित्तयोः ।

स०–तत्–आश्चोतन, मरुत्युष्ण, कफे किञ्चिदुष्ण, रक्ते पित्ते च शीत, हितम् ।

आ० र०–आश्चोतनस्य दोषभेदेनोष्णत्वादि विधत्ते । उष्णमिति ।

सम्प्रत्याश्चोतनस्य विधिमाह[5]–

निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम् ॥ २ ॥
शुक्तौ प्रलम्बयाऽन्येन पिचुवर्त्या कनीनिके ।
दश द्वादश वा बिन्दून् द्व्यङ्गुलादवसेचयेत् ॥ ३ ॥
ततः प्रमृज्य मृदुना चैलेन, कफवातयोः ।
अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ ४ ॥

स०–निवातस्थानस्थितस्यातुरस्य वैद्यो वामेन पाणिनोन्मील्य लोचनमपाङ्गदेशे भाजन निधाय, अन्येन–दक्षिणकरेण[6], पिचुवर्त्या शुक्त्या प्रलम्बया दश द्वादश वा बिन्दून् द्व्यङ्गुलात्–नातिनिकटान्नातिदूरात्, कनीनिकेऽवसेचयेत् । तत इति अनन्तर, कोमलेन वस्त्रखण्डेन प्रमृज्य–शोधयित्वा, अन्येन–शोधनात्, चैलेन कोष्णजलप्लुतेनाक्षि मृदु स्वेदयेत्–नातिशयेन । कयोर्दोषयो ? वातकफयो ,–न तु पित्तरक्तयोरित्यर्थ ।

आ० र०–आश्चोतनविधिमाह–निवातस्थस्येति । अन्येन–दक्षिणेन हस्तेन । शुक्तौ प्रलम्बया–शुक्तिस्थद्रवनिमग्नार्द्धया । कनीनके–नासासन्ननेत्रान्ते[7] । द्व्यङ्गुलात्–नेत्रवर्त्मद्वयोर्द्व्यङ्गुलमन्तर कृत्वा । सङ्ग्रहे तु ( सू. अ ३२ )–"एवमस्य न बिन्दुपातेनाक्षिताडनाद्रागादयो जायन्ते ।" इति ।

आश्चोतनानन्तर कृत्यमाह–तत. प्रमृज्येति । प्रमार्जनं सर्वत्र । कफवातयोस्त्वन्येन चैलेन स्वेदन च ।

---

१ 'कचशदन' घ च प. । 'कचशतन' स द्व. । २ 'रत्वपरि' आ ञ.प. । ३ 'चनाश्चोतनादिविधानप्रदर्शनार्थं' ट । ४ अयमाश्चोतनाञ्जनविधिश्चरके चि० २६ अध्याये, सुश्रुते उ० १८ अध्याये, अष्टाङ्गसङ्ग्रहे सू० ३२ अध्याये चास्ति वर्णित. । ५ 'स तम् ।' ठ.ड. । ६ 'ह्ररोग' ञ. ।

१ 'ष्वेवगुणमेव पक्ष्म' स द्व । २ 'णाक्षिको' स द्व. । ३ 'च पुनर्बिडा' स द्व । ४ 'दशोफ' क.घ च प । ५ 'विधानमा' ठ ड । ६ 'क्षिणेन क' ट. । ७ 'मनासन्नबिन्दु' स मू. । 'मस्य बि' क.ग.ञ. ।

**अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम् ।**
**अतिशीतं तु कुरुते निस्तोदस्तम्भवेदना ॥ ५ ॥**
**कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु ।**
**विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम् ॥ ६ ॥**

स०–अत्यर्थमुष्णमतितीक्ष्ण वाऽऽश्चोतन रुजे–रोगाय, रागाय–लोहितिम्ने, दृग्विनाशाय च स्यात् । अतिशीत त्वक्षिसेचन निस्तोदादीन् विधत्ते । निस्तोद –सूच्येव व्यध । स्तम्भ – अक्ष्ण स्तम्भनमिव । वेदना–शूलम् । कषायवर्त्मत्व कुरुते । घर्षो–वर्त्मनो परस्पर सश्लेष । बहु–अतिमात्र, आश्चोतनं कृच्छ्रेणोन्मेषण विधत्ते । अत्यल्पमक्षिसेचन विकारवृद्धिं कुरुते । अपरिस्रुतमक्षिसेचन सरम्भ–नेत्रक्षोभ, विधत्ते ।

आ० र०–अत्युष्णतीक्ष्णस्याश्चोतनस्य दोषमाह–अत्युष्णतीक्ष्णमिति ।

अतिशीतस्य दोषमाह–अतिशीत त्विति ।

अतिमात्रस्य दोषमाह–कषायवर्त्मतामिति । कषायवर्त्मतां–रूक्षवर्त्मत्वम् ।

अत्यल्पस्य दोषमाह–विकारवृद्धिमिति ।

नेत्रादपरिस्रुतस्य दोषमाह–संरम्भमिति । संरम्भ–शोफादिप्रादुर्भावम् ।

कया युक्त्या [3]नेत्रे प्रयुक्तमौषध दोषानपनयति ? इत्याह—

**गत्वा सन्धिशिरो[4]घ्राणमुखस्रोतांसि भेषजम् ।**
**ऊर्ध्वगान्नयने न्यस्तमपवर्तयते मलान् ॥ ७ ॥**

स०–सन्ध्यादीनां द्वन्द्व । तत स्रोत शब्देन षष्ठीसमास । सन्धिशब्देनेहाक्षिकोशसम्बधिन सन्धयो गृह्यन्ते । तेन–अक्षिकोशसन्धिस्रोतासि शिरास्रोतासि घ्राणस्रोतासि मुखस्रोतासि गत्वा नयने क्षिप्तमौषधमूर्ध्वगान् मलानपवर्तयते ।

आ० र०–आश्चोतनस्य फलमाह–गत्वेति । नेत्रे न्यस्तमौषधं सन्ध्यादीन् गत्वा जत्रूर्ध्वगान् रोगान् हन्ति ।

**अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले ।**
**पक्वलिङ्गेऽल्पशो[6]फातिकण्डूपैच्छिल्यलक्षिते ॥ ८ ॥**
**मन्दघर्षाश्रुरागेऽक्षिण प्रयोज्यं घनदूषिके ।**
**आर्ते पित्तकफास्रग्भिर्मारुतेन विशेषतः ॥ ९ ॥**

स०–अथ–आश्चोतनादनन्तर, अञ्जनं प्रयोक्तव्यम् । कीदृशस्यातुरस्य [2] शुद्धा तनुर्यस्य स , तस्य । मले नेत्रमात्राश्रये–न त्वधिकशरीरव्यापिनि । तथा, पक्वलिङ्गे । पक्वलिङ्गता कथं वेद्या [2] इति विशेषणद्वारेणाह–अल्पशोफेनातिकण्ड्वा पैच्छिल्येन च लक्षिते–अवगते, पक्वलिङ्गे सति । कीदृशेऽक्षिण [2] मन्दा –अल्पा , घर्षाश्रुरागा यस्य तस्मिन् । तथा, घना दूषि[1]का–नेत्रमलो, यस्मिन्नयने तस्मिन् । एतदपि पक्वलिङ्गमेव । पित्तेन कफेन रक्तेन चातुरे, मारुतेन[2] चातुरे विशेषेणाञ्जन प्रयोज्यम् ।

आ० र०–अञ्जनस्य विषयमाह–अथाञ्जनमिति । शो[3]फाल्पत्वाद्युपलक्षिते पक्वलक्षणे सति, तथा घर्षाद्यल्पत्वे दूषिकाघनत्वे च ।

**लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा ।**
**अञ्जनम्**

स०–अञ्जन च लेखनादिभेदेन त्रिधा । लिख्यते–शस्त्रेणेव, शुक्रार्मादीनीति लेखनम् । रोप्यते–सरोह्यते, अभिष्यन्दादीनीति रोपणम् । प्रसाद्यते–निर्मलीक्रियते, अनेनेति प्रसादनम् । दृष्टे प्रसादन दृष्टिप्रसादनम् । सङ्ग्रहे यत् स्नेहनमञ्जन कथित तदिह रोपणदृष्टिप्रसादनयोरेवान्तर्भूतत्वात् पृथङ्नोक्तम् ।

आ० र०–अञ्जनस्य भेदानाह–लेखनमिति । सङ्ग्रहे तु (सू अ. ३२)[5]–"न दोषवेगोदये, न[6] चानिर्हृतदोषे । तत्र हि दोषोत्क्लेशेन रागादिवृद्धि· शुक्रपाकतिमिरोत्पत्तिश्च ।" इति ।

**लेखनं तत्र कषायाम्लपटूषणैः ॥ १० ॥**

स०–तत्र–तेषु त्रिष्वञ्जनेषु मध्यात् , लेखनमञ्जनं कषायादिभिर्द्रव्यै शुक्रार्मादिषु प्रयोज्यम् ।

आ० र०–लेखनस्य द्रव्याण्याह–लेखनमिति ।

**रोपणं तिक्तकैर्द्रव्यैः**

स०–रोपणमञ्जन तिक्तकैर्द्रव्यै स्यात् । तिक्तग्रहणमुपलक्षणार्थ[7]म् । तेन–कषायद्रव्यै सस्नेहै रोपणमञ्जन वेद्यम् ।

आ० र०–रोपणस्य द्रव्याण्याह–रोपणमिति ।

**स्वादुशीतैः प्रसादनम् ।**
**[8]तीक्ष्णाञ्जनाभिसन्तप्ते नयने तत्प्रसादनम् ॥ ११ ॥**
**प्रयुज्यमानं लभते प्रत्यञ्जनसमाह्वयम् ।**

स०–स्वादुशीतैर्द्रव्यै· प्रसादनमञ्जन भवति । प्रसादनमेव स्वादुशीतद्रव्यैश्चूर्ण तीक्ष्णाञ्जनाभिसन्तप्ते चक्षुषि प्रयुज्यमान प्रत्यञ्जनसञ्ज्ञा लभते ।

आ० र०–दृष्टिप्रसादनस्य द्रव्याण्याह–स्वादुशीतैरिति ।

**दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना ॥ १२ ॥**
**प्रशस्ता, लेखने ताम्री, रोपणे काललोहजा ।**
**अङ्गुली च, सुवर्णोत्था रूप्यजा च प्रसादने ॥ १३ ॥**

---

१ 'जे रागाय दृग्वि' ठ ड । २ 'मात्रोत्तर' ठ ड । ३ 'नेत्रप्र' ट ठ । ४ 'शिराघ्रा' च अरुण । ५ 'ध्र्वजान्' क.ञ. । ६ 'फार्तिकण्डू' अ.आ.इ.ग.च.ञ.प. ।

१ 'का यस्मि' ठ.ड । २ 'तेनातुरे' ठ ड । ३ 'फाद्यल्पत्वल' ग घ.च प । ४ 'न वाऽनि' ग ञ । ५ 'क्लेदादिना रा' क.ञ । ६ 'अक्षिपाक' स स । ७ 'र्थं सङ्ग्रहोक्तस्य । ते' ट. । ८ आ. पुस्तके समुपलब्धोऽयं श्लोकोऽरुणदत्तसम्मत. । ९ 'ञ्जनसन्त' ठ.ड. ।

स०—दशाङ्गुला राजमाषस्थूला शलाका प्रशस्ता । मध्ये तनु । तथा, मुकुलाकारे आनने-मुखे द्वेऽपि, यस्या सा मुकुलानना । लेखनाञ्जने ताम्री शलाका प्रशस्ता । रोपणे च काललोहोत्था(लोहजा)-कृष्णशस्त्रोद्भवा । अङ्गुली च-ह्रस्वावयवविशेषो, रोपण एव शस्त । एवं प्रसादनेऽञ्जने सुवर्णोत्था-कनकोद्भवा, रजतोद्भवा च शलाका प्रशस्ता ।

आ० र०—शलाकामाह-दशाङ्गुलेति ।

लेखने शलाकामाह-लेखने ताम्रीति ।

रोपणे शलाकामाह-रोपण इति ।

प्रसादने शलाकामाह-सुवर्णोत्थेति ।

अञ्जनकल्पना त्रिप्रकारा स्यात् । कथम् ? इत्याह—

**पिण्डो रसक्रिया चूर्णस्त्रिधैवाञ्जनकल्पना ।**
**गुरौ मध्ये लघौ दोषे तां क्रमेण प्रयोजयेत् ॥ १४ ॥**

स०—पिण्डादिभेदेन त्रिप्रकाराऽञ्जनकल्पना स्यात् । पिण्डादयो बहुदोषादिषु क्रमेण प्रयोज्या । गुरौ दोषे पिण्ड प्रयोज्यो, मध्ये दोषे रसक्रिया, लघौ दोषे चूर्ण इत्यर्थ ।

आ० र०—अञ्जनकल्पनाभेदानाह-पिण्ड इति । पिण्डो-गुटिका । रसक्रिया-अवलेह ।

कल्पनात्रयस्य विषयत्रयमाह-गुराविति ।

**हरेणुमात्रा पिण्डस्य वेल्लमात्रा रसक्रिया ।**
**तीक्ष्णस्य, द्विगुणं तस्य मृदुनः**

स०—तीक्ष्णद्रव्यकृतस्य पिण्डस्य हरेणुमात्र प्रमाण कथयन्ति । मृदुद्रव्यकृतस्य पिण्डस्य तत् द्विगुण प्रमाण-द्विहरेणुमात्रं, वदन्ति । रसक्रियाया विडङ्गप्रमाणमाहु । [मृदुद्रव्यकृताया रसक्रियाया द्विवेल्लमात्रम् ।]

आ० र०—तीक्ष्णयो पिण्डरसक्रिययोर्मात्रामाह-हरेणुमात्रेति । हरेणु -रेणुका । वेल्ल-विडङ्गम् ।

मृद्वो पिण्डरसक्रिययोर्मात्रामाह-द्विगुणमिति । मृदुन -मृदुद्रव्यकृतस्य । तस्य-पिण्डरसक्रियारूपस्याञ्जनस्य । द्विगुण प्रमाण-पिण्डस्य हरेणुद्वय, रसक्रियाया वेल्लद्वयम् ।

**चूर्णितस्य च ॥ १५ ॥**
**द्वे शलाके तु तीक्ष्णस्य, तिस्रस्तदितरस्य च ।**

स०—चूर्णे तीक्ष्णे द्विगुणा शलाका, मृदौ त्रिगुणा शलाकामभिदधु । तन्त्रान्तरे चोक्तम्-"लेखनमञ्जन ताम्ररजतकास्याद्यन्यतमेषु धार्यम् । रोपण सुवर्णवटशङ्खान्यतमेषु । प्रसादन स्फटिकलक्षचन्दनान्यतमेषु धार्यम् । एव ह्यञ्जनमव्यापन्नगुण भवति । वर्तिवर्षणार्थं शिला निम्नमध्याऽनुद्धारिणी पञ्चाङ्गुलायता त्र्यङ्गुलविस्तारा ।" इति ।

आ० र०—तीक्ष्णस्य चूर्णस्य मात्रामाह-चूर्णितस्येति ।

मृदोश्चूर्णस्य मात्रामाह-तिस्र इति ।

**निशि स्वप्ने न मध्याह्ने म्लाने नोष्णगभस्तिभिः ॥ १६ ॥**
**अक्षिरोगाय दोषाः स्युर्वर्धितोत्पीडितद्रुता ।**
**प्रातः सायं च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत्सदा ॥ १७**

स०—निशि-रात्रौ, अञ्जन न प्रयोज्यम् । तथा, स्वप्ने-स्वप्नकाले, अञ्जनं न प्रयोज्यम् । तथा, मध्यदिनेऽञ्जन न प्रयोज्यम् । न च म्लाने लोचनेऽञ्जन प्रयोज्यम् । केन (काभि ) म्लाने ? उष्णाभिर्दीधितिभि । यस्मादेषु कालेष्वञ्जनेन प्रयुक्तेन दोषा वृद्धि नीता, तथाऽन्यस्थानगतत्वादुत्पीडिता, तथा द्रुता-कालस्योष्णत्वाद्विलय गता, अक्षिरोगाय स्यु । तस्मादेषु कालेष्वञ्जनं न प्रयोज्यम् । प्रातरित्यादि । यत पूर्वोक्तेषु कालेषु पूर्वोक्ता दोषा । तस्मात् पूर्वाह्णेऽपराह्णे च तच्छान्त्यै-तस्याक्षिरोगस्योपशमाय, विगताभ्रे रवौ सदैव नेत्रेऽञ्जयेत् ।

आ० र०—अञ्जनस्य कालद्वयमाह-निशीति । रात्रौ निद्रया वर्द्धिता दोषा अक्षिरोगाय स्यु, अत प्रातरञ्जयेत् । मध्याह्ने पानान्नाभ्यामुत्पीडिता सूर्यरश्मिभिर्द्रवीकृता अक्षिरोगाय स्यु, अत सायमञ्जयेत् ।

**वदन्त्यन्ये तु न दिवा प्रयोज्यं तीक्ष्णमञ्जनम् ।**
**विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति ॥ १८ ॥**

स०—अन्ये त्वाचार्या एव वदन्ति । यत् तीक्ष्णमञ्जन दिवा न प्रयोज्यम् । कुत ? यस्माच्चक्षुरादित्य प्राप्य सीदति । किम्भूत ? विरेकदुर्बलम्, तीक्ष्णाञ्जनेन विरेचितत्वात् । तस्माद्दिवसे तीक्ष्णमञ्जन न प्रयोज्यम् ।

आ० र०—तीक्ष्णाञ्जनस्य दिवा निषेधमाह-वदन्तीति ।

निषेधे युक्तिमाह-विरेकदुर्बलमिति ।

१ 'खने तु ताम्री' ट. । २ 'शस्यते' ट । ३ 'तु' ट । ४ 'ने सुव' ठ ट । ५ 'गुरुमध्यलघौ' ग च ञ प । ६ 'ता' इ । ७ 'नरचना' ठ ड । ८ 'पिण्डादीन् बहु० प्रयोजयेत् ।' ट । ९ अस्मात्प्राक् एतत्पाठान्तरीभूतौ "**पिण्डस्य तीक्ष्णद्रव्यस्य मृदुद्रव्यकृतस्य च । हरेणुमात्र द्विगुण प्रमाण कथयन्त्यपि ॥ १ ॥ रसक्रियायामप्येव विडङ्गफलमात्रकम् । शलाका द्विगुणा तीक्ष्णे चूर्णे च त्रिगुणा मृदौ ॥ २ ॥**" इति आ पुस्तकेऽधिकौ श्लोकौ । १० '**मात्र पि**' घ । '**मात्र पिण्डस्तु वे**' इ । '**पिण्डो हरेणुमात्रस्तु वे**' ञ. । ११ '**वल्ल**' अ आ । १२ '**मृदोश्चूर्णाञ्जनस्य च**' ड । १३ 'ति । तस्य हरेणु' क घ च.प. । 'ति । तस्य पिण्डस्य हरे' ञ. ।

१ '**स. स्युरित**' घ । २ '**तु**' अ ग च प । ३ 'वर्तिघर्ष' ट । ४ 'णार्था शि' ड । ५ '**स्वप्नेन मध्याह्ने पानान्नोष्ण**' अ आ हेमाद्रि चन्द्र । ६ 'रात्रौ स्वप्नकाले मध्यदिने उष्णादिभिर्दीप्तिभिर्म्लाने लोचने चाञ्जन न प्रयोज्यम् । यस्मा' ट. । ७ 'स्वपनका' ट । ८ 'स्युरिति ।' ठ ट । ९ 'लमाह' ग. घ च प । १० 'गायात सा' क.ञ. । ११ 'व मन्यन्ते । ती' ट. । १२ 'कस्मादित्याह-य' ट. ।

अत एवाह—

**स्वप्नेन रात्रौ कालस्य सौम्यत्वेन च तर्पिता ।**
**शीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनः ॥१९॥**

**स०**–यस्मात्स्वप्नेन रात्रौ तर्पिता, तथा कालस्य–रात्र्याख्यस्य, सौम्यत्वेन तर्पिता दृष्टि पुन स्थैर्य प्राप्नोति, तीक्ष्णाञ्जनक्षोभिताऽपि । कीदृग्दृष्टि ? आग्नेयी,–अग्न्युत्कटभूतसम्भवा, तथा शीतसात्म्या । तस्माद्रात्रावञ्जन प्रयोज्यम् । आग्नेयीति "सर्वत्राग्निकलिभ्या ढग्वक्तव्य" इति ढक् । शीत सात्म्य यस्या , पैत्तिकज्वरस्येव ।

**आ० र०–तीक्ष्णस्य रात्रिप्रयोगे युक्तिमाह–स्वप्नेनेति । दृष्टिस्तावदाग्नेयत्वात्सन्तापपीडिता । अत एव शीतसात्म्या । सा च तीक्ष्णाञ्जनेनातिसन्तप्ता[1] रात्रौ[2] स्वप्नेन सौम्येन कालेन च गतसन्तापा पुन. स्थिरता लभते ।**

तदेतदन्यमतमव्यापकं[3]मिति दूषयन्नाह—

**अत्युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे ।**
**काममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत् २०**

**स०**–अत्युं[4]त्कृष्टे कफे, अथवा लेखनार्हे–शुक्रार्मादौ, रोगे दिनेऽपि[5] नात्युष्णे तीक्ष्णमञ्जन प्रयोजयेत् । काम–अनुमतमेतत् । कालस्यात्यौष्ण्यादञ्जनस्य तैक्ष्ण्याच्चातियोगेन दृष्ट्युपघात स्यात् ।

**आ० र०–कफोद्रेके लेखनसाध्ये च रोगे दिवाऽपि तीक्ष्ण योज्यमित्याह–अत्युद्रिक्त इति ।**

अत एवाह—

**अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता ।**
**उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः ॥ २१ ॥**

**स०**–अश्मन –पाषाणात्, शं[6]स्त्रस्योत्पत्ति । तस्मादेव चाश्मन श्लक्ष्णतादियोगात्तीक्ष्णता । उपघातोऽपि–कुण्ठत्वादिक , तेनैव–पाषाणेन, न केवल तैक्ष्ण्यम् । तथा–तेनै[7]वाश्मशस्त्रन्यायेन, नेत्रस्य तेजस –अग्नेरश्मस्थानीयाज्जन्म । रविसज्ञात्तेजस सकाशात्तीक्ष्णता–दर्शनपटुत्वम् । अत्युष्णेन तु तेन तस्योपघात । तस्मात् यदन्ये वं[8]दन्ति सामान्येनैव दिवाऽञ्जन न प्रयोज्यमिति, तदसदेव ।

**आ० र०–तैजसस्य तेज सहकृतस्य च नेत्रस्य कथ तेजसोपघात ? इत्यत आह–अश्मन इति ।**

१ 'तितप्ता' क ञ । २ 'त्रौ स्वापेन' क । ३ 'कमेवेति' ट । ४ 'त्युद्रिक्ते' ट । ५ 'नेऽप्यनत्युष्णे' ठ । 'नेऽप्यनुष्णे' ड । ६ 'शस्त्रोत्प' ट । 'शस्त्रोत्पत्ति । अपर शस्त्रस्य कुण्ठत्वे सति पाषाणेनैव तीक्ष्णता । अपर लोहस्य पाषाणेनैवोपघात । एव नेत्रस्य' ड । ७ 'तेनाश्म' ट । ८ 'गदन्ति' ठ ड. । ९ 'तेजसते' क ञ. ।

अपि च—

**न रात्रावपि शीतेऽति नेत्रे तीक्ष्णाञ्जनं हितम् ।**
**दोषम[1]स्रावये[2]त्स्तब्धं[3] कण्डूजाड्यादिकारि तत् ॥२२॥**

**स०**–रात्रावपि नेत्रे कफाधिक्येनातिशीते–कण्डूपैच्छिल्याद्यनुमिते, तीक्ष्णमञ्जन न प्रयोज्यम् । यतो निशि तीक्ष्णमञ्जनमुपयुक्त कालस्य सौम्यत्वात् दोष–स्रावणयोग्य, अस्रावये[4]त् । अञ्जन स्तब्ध कण्डूजाड्या[5]दिकृत् स्यात्, न तु शमकारि । तस्मात् "शीतसात्म्या दृगाग्नेयी स्थिरता लभते पुन ।" इत्येतदप्यसत् । तस्मात् पूर्वोक्तमेवानवद्यमिति ।

**आ० र०–रात्रावप्यतिशीते तीक्ष्णाञ्जन निषेधति–न रात्राविति ।**

शीतप्रयोगे दोषमाह–दोषमिति ।

**नाञ्जयेद्भीतवमितविरिक्ताशितवेगिते ।**
**क्रुद्धज्वरिततान्ताक्षिशिरोरुक्शोकजागरे ॥ २३ ॥**
**अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः ।**
**अजीर्णेऽग्न्यर्कसन्तप्ते दि[6]वासुप्ते पिपासिते ॥ २४ ॥**

**स०**–भीतादीनामक्षिणी वैद्यो नाञ्जयेत् । अशितोऽत्र सद्योभुक्तो वेद्य । सद्योभुक्तस्य नरस्य नयने नाञ्जयेदित्यर्थ । तान्ते–सूक्ष्मभासुरादिदर्शनादभिघाताद्वा ग्लाने, अक्षिणी यस्य सँ[7] , तस्मिन् । अदृष्टेऽर्के, जलदच्छन्नत्वात् । तथा, शिर स्नातादिषु ।

**आ० र०–भीतादीनामञ्जन निषेधति–नाञ्जयेदिति । सङ्ग्रहे तु ( सू अ ३२ )–"एष्वञ्जनादूष्मोर्ध्वग संरम्भाश्रुवेदनाविलत्वोषारागदूषिकानिस्तोदकृच्छ्रोन्मीलनश्वयथुशुक्रतिमिरादीन् जनयेत् ।" इति । तान्त–उष्णादिना ग्लानमक्षि ।**

साम्प्रत यादृशमञ्जन न प्रयोज्य तादृशं[8] दर्शयति[9]—

**अतितीक्ष्णमृदुस्तोकबहुच्छघनकर्कशम् ।**
**अ[10]त्यर्थ[11]शीतलं तप्तमञ्जनं नावचारयेत् ॥ २५ ॥**

**स०**–अतिशब्दस्य तीक्ष्णादिभिर्घनान्तै सम्बन्ध । अत्यर्थशीतलमित्येतस्मादत्यर्थशब्दस्तप्तमित्यत्रानुवृत्तिकृतेन सम्बन्धेन योज्य । अतितीक्ष्णादिगुणमञ्जन न प्रयोजयेत् । तन्त्रान्तरे चाञ्जनविधिरुक्त –"सुखोपविष्टस्यातुरस्य सुखोपविष्टो वैद्यो वामाङ्गुष्ठेनोत्तरं वर्त्मोत्क्षिप्य कृष्णभागस्याध कनीनिकादपाङ्ग यावदञ्जन नयेत् ।" इति ।

**आ० र०–अतितीक्ष्णादि नवविधमञ्जन निषेधति–अतितीक्ष्णेति ।**

१ 'दोष न स्रा' अ ग । २ 'स्रावयत्स्त' आ इ घ प. । ३ 'स्तम्भकण्डू' अ ग घ । ४ 'वयत्' ट । ५ 'ड्यादीन् कुर्यात्, न' ट । ६ 'दिवास्वप्ने पि' ग घ च प. । ७ 'स एव त' ट । ८ 'एषामञ्ज' क ग ञ । ९ 'नयति' क ञ. । १० 'अप्रतमप्रयोज्यमञ्जनमाह–' ड. । ११ 'अत्यर्थं' च. ।

**अथानुन्मीलयन् दृष्टिमन्तः सञ्चारयेच्छनैः ।**
**अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ॥ २६ ॥**
**तीक्ष्णं व्याप्नोति सहसा, न चोन्मेषनिमेषणम् ।**
**निष्पीडनं च वर्त्मभ्यां क्षालनं वा समाचरेत् ॥२७॥**

स०–अथ–एवमञ्जनस्वरूपमवेत्य, नेत्रेऽञ्जिते सति दृष्टिगोलकमनुन्मीलयन् मध्ये शनै शनै सञ्चारयेत्। किञ्चित् वर्त्मनी चालयेत्। एव तीक्ष्णाञ्जन नेत्र व्याप्नोति–अनुप्रविशति। न च सहसा–विन्यतिक्रमेण, उन्मेषनिमेषणं कुर्यात्। चशब्दोऽवधारणे, नैव समाचरेदित्यर्थ । वर्त्मभ्या च निष्पीडन न समाचरेत्। वाशब्दोऽवधारणे, क्षालन च नैव कुर्यात्।

आ० र०–अञ्जनानन्तर कृत्यमाह–अथेति । अञ्जिते नेत्रे दृष्टिमनुन्मीलयन् अन्तरेवै समन्तत सञ्चारयेत्। वर्त्मनी च किञ्चिच्चालयेत्।

उक्तकृत्यस्य फलमाह–एवमञ्जनमिति । मृदु शनैर्व्याप्नोतीत्यर्थलभ्यम्।

अञ्जितनेत्रस्योन्मेषादि निषेधति–न चेति ।

**अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।**
**व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥ २८ ॥**

स०–अपेत –अपगत , औषधसरम्भो–भेषजक्षोभो, यस्मान्नेत्रात्तदेवम्। यतोऽपेतौषधसरम्भमत एव निर्वृत–अपेतदुःखानुबन्धि, यदा लोचन स्यात्, तदा व्याध्यादियोग्यैर्जलै प्रक्षालयेत् । तत्र व्याधि –अभिष्यन्दादि , दोषो–वातादि , ऋतु –वसन्तादि ।

आ० र०–क्षालनकालमाह–अपेतौषधसंरम्भमिति ।

**दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं सवाससा ।**
**ऊर्ध्ववर्त्मनि सङ्गृह्य शोध्यं वामेन चेतरत् ॥ २९ ॥**

स०–ततो–नयनप्रक्षालनादनन्तर, दक्षिणाङ्गुष्ठेन सवस्त्रेण वाम नयनमूर्ध्ववर्त्मनि सम्यगादाय शोधनीयम्। वामेनाङ्गुष्ठेन सवाससा, इतरत्–दक्षिण, ऊर्ध्ववर्त्मनि सङ्गृह्य शोध्यम्।

आ० र०–क्षालनानन्तर शोधनमाह–दक्षिणाङ्गुष्ठकेनेति । सवस्त्रेण दक्षिणाङ्गुष्ठेन वाम संशोध्यम्, वामेन दक्षिणम्।

किमिति शोध्यम्? इत्याह—

**वर्त्मप्राप्तोऽञ्जनाद्दोषो रोगान् कुर्यादतोऽन्यथा ।**

स०–अतोऽन्यथा–अशोध्यमाने, वर्त्मनि प्राप्त च तदञ्जन च वर्त्मप्राप्ताञ्जन, तस्मात् दोषो रोगान् कुर्यात् । तस्मात्तच्छोध्य नयनम्।

आ० र०–क्षालनशोधनाकरणे दोषमाह–वर्त्मप्राप्त इति।

**कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः ॥३०॥**

स०–कण्डूश्च जाड्य चेति समाहारद्वन्द्व । तस्मिन् सति तीक्ष्णाञ्जन योजयेत्। अथवा तीक्ष्ण धूम योजयेत्।

आ० र०–अञ्जनासम्यग्योगजयो कण्डूजाड्ययो प्रतीकारमाह–कण्डूजाड्य इति ।

**तीक्ष्णाञ्जनाभितप्ते तु चूर्णं प्रत्यञ्जनं हितम् ॥३०½॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थान आश्चोतनाञ्जनविधिर्नाम त्रयोविंशोऽध्यायः ॥ २३ ॥**

स०–पुनस्तीक्ष्णेनाञ्जनेनाभितप्ते लोचने चूर्ण प्रत्यञ्जन–पूर्वोक्त, हितमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदय टीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने आश्चोतनाञ्जनविधिर्नाम त्रयोविंशोऽध्याय ॥२३॥

आ० र०–तीक्ष्णाञ्जनातियोगे प्रतीकारमाह–तीक्ष्णाञ्जनाभितप्ते त्विति। प्रत्यञ्जनमित्यस्याञ्जनस्य संज्ञा।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
सेकाञ्जनप्रकरण सामस्त्येन निरूपितम् ॥ २३ ॥



## चतुर्विंशतितमोऽध्यायः ।

अस्मादनन्तर चतुर्विंशाध्यायारम्भ । आश्चोतनाञ्जनाभ्या हि प्रायो नयनस्य दौर्बल्यम् । अतस्तर्पणादेरुपयोगो युक्त इत्याह—

**अथातस्तर्पणपुटपाकविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

स०–तर्पण च पुटपाकश्च तर्पणपुटपाकौ, तयोर्विधि, तम्। शेष पूर्ववत्।

१ 'मवेक्ष्य' ट । 'मधिकृत्य' ठ ट । २ 'त्। कथम्? वर्त्मनी चालयन्। एवमञ्जन' ठ ड । ३ 'रे च सञ्चा' ग.च । 'रेव सञ्चा' घ प । ४ 'तदा व्याधिरभिष्यन्दादिर्दोषो वातादि ऋतुर्वसन्तादिरेतद्योग्यैर्जलै प्रक्षालयेत्।'ड । ५ 'क्षिणेनाङ्गु' ट । ६ 'प्राप्ताञ्जना' अरुण । ७ 'र्यात्ततो' आ घ । ८ 'मानाञ्जनात्, व' ठ.ट. । ९ 'प्राप्तो दोषो रो' ड ।

१ 'यद्वा' ठ ट । २ 'ञ्जनस्यास' क ज । ३ 'नातियोगे तु' ग । 'नातितप्ते' क प । ४ 'हितम्' अ आ ग घ प अरुण । ५ 'नदौर्ब' ठ ट । ६ अय तर्पणपुटपाकविधि सुश्रुते उ० १८ अध्याये, अष्टाङ्गसङ्ग्रहे सू० ३३ अध्याये चास्ति वर्णित , चरके तु न वर्णित ।

**आ० र०**–तर्पणपुटपाकविधिमध्याय व्याख्यातु प्रतिजानीते–अथेति ।

**नयने ताम्यति स्तब्धे शुष्के रूक्षेऽभिघातिते ।**
**वातपित्तातुरे जिह्मे शीर्णपक्ष्माविलेक्षणे ॥ १ ॥**
**कृच्छ्रोन्मीलशिराहर्षशिरोत्पाततमोर्जुनैः ।**
**स्यन्दमन्थान्यतोवातवातपर्यायशुक्रकैः ॥ २ ॥**
**आतुरे शान्तरागाश्रुशूलसंरम्भदूषिके ।**
**निवाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः ॥ ३ ॥**
**काले साधारणे प्रात. सायं वोत्तानशायिनः ।**

**स०**–चक्षुषि म्लायति सति, तथा स्तब्धादिगुणे तर्पण कार्यम् । तथा, शीर्णे पक्ष्मणी यस्य तदेवम् । आविल–अस्पष्ट, ईक्षण–दर्शन, यस्य तदेवम् । शीर्णपक्ष्म च तदाविलेक्षण च, तत्तस्मिन् । तथा कृच्छ्रोन्मीलादय –अक्षिरोगेषु वक्ष्यन्ते । कृच्छ्रोन्मीलश्च शिराहर्षश्च शिरोत्पातश्च तमश्चार्जुनश्च, तैरातुरे । तथा स्यन्दश्च मन्थश्चान्यतोवातश्च वातपर्यायश्च शुक्रक च, तैरातुरे । [तथा, नस्यानर्हे । यतो वक्ष्यति (श्लो २१)–"तर्पण पुटपाक च नस्यानर्हे न योजयेत् ।" इति ।] तथा, शान्ता –शम गता , रागाश्रुशूलसरम्भदूषिका यस्मिन्नयने तस्मिन् । कीदृशि स्थाने ? निवाते,–विगतानिले । उपलक्षणं चेदम् । विगतातपरजोधूमादिक इत्यपि द्रष्टव्यम् । कीदृशयोर्मस्तकदेहयो ? शुद्धयो ,–यथायोग वमनविरेचननस्यै कृतशुद्ध्योरित्यर्थ । कीदृशि काले ? साधारणे,–वसन्तादिके । कदा ? साय प्रातर्वा, दोषदूष्याद्यपेक्षया । कीदृशस्यातुरस्य ? उत्तानशायिन इति शयनस्थस्योत्तानस्येत्यर्थ ।

**आ० र०**–**तर्पणस्य विषय देश काल चाह–नयन इति । ताम्यति–अवलोकनासमर्थे । जिह्मे–वक्रे । आविलेक्षणे–अस्पृष्टदर्शने । कृच्छ्रोन्मीलादिभिर्दशभिर्व्याधिभिरातुरे निवृत्तरागादिपञ्चके नेत्रे तर्पण योज्यम् । तच्च निवाते देशे नस्यादौ कृते प्रात साय वा योज्यम् ।**

**यवमाषमयीं पालीं नेत्रकोशाद्बहिः समाम् ॥ ४ ॥**
**द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ।**
**सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम् ॥ ५ ॥**
**नक्तान्ध्यवाततिमिरकृच्छ्रबोधादिके वसाम् ।**
**आपक्ष्माग्रात्**

**स०**–यवैर्मिश्रा माषा यवमाषा , तैः कृता या सा यवमाषमयी, ताम् । तादृशी पाली नेत्रकोशाद्बाह्यत उभयपार्श्वयो समा–अनिम्नोन्नता कृत्वा, यथायोग दोषदूष्याद्यनुरोधात् पक्व घृत निमीलिते–अनुन्मिषिते लोचने क्षिपेत् । अथ पाल्या उच्छ्रायमाह–द्व्यङ्गुलोच्चा,–द्व्यङ्गुलोच्छ्रायवतीम् । तथा दृढा–निबिडाम् , यथा स्नेहो न स्रवेत् । कीदृश सर्पि ? तप्तेन जलेन प्रकर्षेण विलायित–द्रवीकृतम् । नक्तान्ध्येत्यादि । रात्र्यन्ध्यादिषु वसा यथास्वौष धसिद्धा तथैव विलायितामावपेत् । कथम् ? आपक्ष्माग्रात् ,–पक्ष्माग्राणि यावन्निमग्नानि तावत्सर्पिरादिमावपेदिति ।

**आ० र०**–**तर्पणविधिमाह–उत्तानशायिन इति । तप्ताम्बुप्रविलायित–उष्णाम्बुकुम्भीबाष्पेण द्रवीकृतम् । नक्तान्ध्यादिषु तु सर्पि स्थाने वसामावपेत् । आपक्ष्माग्रात्–पक्ष्माग्रमज्जन यावत् । सङ्ग्रहे तु ( सू अ ३३ )–"अथ दिवसस्याष्टमे भागे गते शेषे वा निर्वातातपरजोधूमे कृतनीलपीतान्यतरजवनिके वेश्मनि जीर्णभुक्तस्य सुखशयनगतस्योत्तानस्य सुमृदितमाषपिष्टकल्केन नेत्रकोशाद्बहिर्द्व्यङ्गुलोच्छ्रायावाधारौ परिमण्डलावर्सम्बाधौ समावपरिस्राविणौ कृत्वा, तत्रोष्णोदकप्रविलीन निमीलिते नेत्रे यथार्हौषधविपक्व क्षीर सर्पिर्मण्ड वा सेचयेत् । यावन्निमग्नान्यक्षिपक्ष्माणि भ्रूरोमाणि च ।" इति ।**

**अथोन्मेषं शनकैस्तस्य कुर्वतः ॥ ६ ॥**
**मात्रा विगणयेत्तत्र वर्त्मसन्धिसितासिते ।**
**दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च ॥७॥**
**शतानि सप्त चाष्टौ च, दश मन्थे, दशानिले ।**
**पित्ते षट्, स्वस्थवृत्ते च बलासे पञ्च धारयेत् ॥८॥**

**स०**–अथ–घृताद्यावपनादनन्तर, शनै शनैरुन्मीलन विदधतस्तस्य–आतुरस्य, मात्रा –पूर्वोक्ता , विगणयेत् । तत्र–तस्मिन् वर्त्मादिके व्याधौ सर्पिषि क्षिप्ते, शतसङ्ख्यादीर्मात्रा विगणयेत् क्रमेण । तत्र वर्त्मरोगे मात्राशतम् , सन्धिरोगे त्रीणि शतानि, सितरोगे पञ्च शतानि, असितरोगे सप्त शतानि, दृष्टिरोगेऽष्टौ शतानि, धारयेदिति क्रमार्थ । यथासङ्ख्येन मन्याख्ये रोगे

१ 'चोत्तान' अ आ इ ग घ च ञ ठ । २ 'ग्लायति' ट ठ ड । ३ 'कृच्छ्रोन्मीलादिभि शुक्रकान्तै –अक्षिरोगे वक्ष्यमाणैरेतै रोगै पीडिते । तथा शमितरागाश्रुशूलसरम्भदूषिके नयने । कीदृ' ड । ४ [ ] इति पाठ ट ड पुस्तकयोर्नोपलभ्यते । ५ 'दूष्यदेशापे' ट । ६ 'स्य ? शयने उत्तानस्यस्य ।' ठ ड । ७ 'लापितम्' अ ग ञ । ८ 'तैर्यवमिश्रैर्माषै प्रकृता' ठ ड.।

१ 'भयो पार्श्वे' ट । २ 'योग्य' ट । ३ 'स्रवेदित्यर्थ ।' ट । ४ 'तप्तेनाम्बुना प्र' ट । ५ 'त् । अथ–स्नेहप्रक्षेपादनन्तर, आपक्ष्मा' ट ठ ड । ६ 'ण प्रविलीन कृ' क ञ । ७ 'र्णभक्त' ग घ स द्द । ८ 'सम्बन्धौ' क ञ । ९ 'प्रविलापित नि' क ञ । १० 'यास्वौष' स मू । ११ 'वाडवसे' स द्द । १२ 'मात्रा' अ ग घ ङ च ञ । १३ 'मन्थेऽनिले दश' अ आ इ ग घ च ञ प । १४ पित्ते पठितत्र "पित्ते षट् शतानि, स्वस्थवृत्ते कफे च प्रत्येक पञ्च शतानि, धारयेत् ।" इति व्याख्यान युक्तम्, सङ्ग्रहसम्मतत्वात् । तथाच तद्ग्रन्थ (स सू अ ३३)–"पित्ते षट् शतानि, कफे पञ्च स्वस्थकर्मणि च ।"इति । अरुणदत्तहेमाद्रिच द्रनन्दनाना तु व्याख्यान चिन्त्यम् । १५ 'र्थ । मन्या' ड । १६ 'स्थेऽक्षिरोगे' ट ।

दश शतानि, वातरोगे दशैव शतानि, पित्तरोगे षट् शतानि[1], स्वस्थवृत्ते च षट् शतानि, कफे पञ्च शतानि, धारयेत् ।

**आ० र०**–तर्पणधारणावधिमाह–अथेति । वर्त्मरोगे एकशतम्, सन्धिरोगे त्रीणि शतानि, सितरोगे पञ्च, असितरोगे सप्त, दृष्टिरोगेऽष्टौ, तथा मन्थे दश, वाते दश, पित्ते स्वस्थवृत्ते च षट्, बलासे पञ्च, धारयेत् ।

**कृत्वाऽपाङ्गे ततो द्वारं स्नेहं पात्रे निगालयेत् ।**
**पिबेच्च धूमं, नेक्षेत व्योम रूपं च भास्वरम्[2] ॥ ९ ॥**

**स०**–[तत –]यथोक्तमात्राधारणादनन्तर, अपाङ्गदेशे पाल्या द्वार कृत्वा स्नेह भाजने निक्षिपेत् । तत सक्तुपिण्ड्याऽक्षिकोश प्रमृज्य[3] स्नेहेरितकफोपशान्तये धूम च पिबेत्, न केवल तर्पण कुर्यात् । प्रक्षालितनेत्र चैन मात्रयाऽऽमयादिवशेन भोजयेत् । तथा, नभो न पश्येद्भास्वर रूप च । उपलक्षण चेदम् । आर्तपाद्यपि भास्वर न पश्येत् ।

**आ० र०**–तर्पणानन्तर कृत्यमाह–कृत्वाऽपाङ्ग इति ।

**इत्थं प्रतिदिनं वायौ, पित्ते त्वेकान्तरं, कफे ।**
**स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥ १० ॥**

**स०**–इत्थ–अनेन क्रमेण, पवने प्रत्यह तर्पण दद्यात् । पित्ते पुनरेकान्तर तर्पण दद्यात् । कफे स्वस्थे च द्विदिनान्तर योजयेत् । इति–एव, यावन्नयनस्य तृप्ति स्यात्तावत्तर्पण योज्यम् ।

**आ० र०**–वातादिभेदेन तर्पणावृत्तिमाह–इत्थमिति ।
**आवृत्त्यवधिमाह–आतृप्तेरिति ।**

तृप्तस्य किं लक्षणम् ? इत्याह—

**प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ।**
**तृप्ते, विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः ॥ ११ ॥**

**स०**–प्रकाशक्षमत्वादिकं[7] सम्यक्तृप्तस्य लक्षणम् । प्रकाशक्षमता–प्रभाभास्वरादिरूपसहत्वम्[8] । अतृप्ते–अजाताया तृप्तौ, विपर्यय –प्रकाशाक्षमतादिक । अतितृप्ते सति कफोद्भवा कण्डूपैच्छिल्यादिका रुज स्यु ।

**आ० र०**–तृप्तलक्षणमाह–प्रकाशक्षमतेति ।
**अतृप्तलक्षणमाह–विपर्यय इति ।**
**अतितृप्तलक्षणमाह–तृप्तेऽतीति ।**

**स्नेहपीता तनुरिव क्लान्ता दृष्टिर्हि सीदति ।**
**तर्पणानन्तरं तस्माद्दृग्बलाधानकारिणम् ॥ १२ ॥**
**पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव[9] यक्ष्मसु ।**

**स०**–स्नेहपीता दृष्टि क्लान्ता तनुरिव यतोऽवसीदति, तस्मात्कारणात् तर्पणादनन्तर पुटपाक प्रयुञ्जीत । कीदृशम् ? दृशोर्बल दृग्बल, तस्याधान–प्रबन्धेन[1] तृप्ति, तत्करोतीति दृग्बलाधानकारिणम् । हेतौ द्वितीया, दृग्बलाधानकारित्वात् प्रयुञ्जीतेत्यर्थ । पूर्वोक्तेष्वेव[2]–तर्पणोक्तेष्वामयेषु ।

**आ० र०**–पुटपाकस्य विषयमाह–स्नेहपीतेति । स्नेहपीता–पीतस्नेहा । पूर्वोक्तेषु यक्ष्मसु–रोगेषु ।

**स वाते स्नेहनः, श्लेष्मसहिते लेखनो हितः ॥ १३ ॥**
**दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ।**

**स०**–स च–पुटपाको, वाते स्नेहनो हित । कफसहिते मारुते लेखनो हित । दृष्टिदौर्बल्यादिषु प्रसादनो हित ।

**आ० र०**–पुटपाकस्य त्रैविध्य सविषयमाह–स वात इति ।

इदानीमेषा पुटपाकाना कल्पनामाह—

**भूशयप्रसहानूपमेदोमज्जवसामिषैः ॥ १४ ॥**
**स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत् ।**

**स०**–भूशया –बिलेशया भेकगोधाद्या, प्रसहा –गोखरादय, आनूपा –महामृगवारिचरवारिशया, तेषा मेदोमज्जवसामिषाणि, तै । तथा, जीवनीयै –जीवन्तीकाकोल्यादिभिश्च, क्षीरपिष्टै स्नेहन पुटपाक कल्पयेद्वैद्य ।

**आ० र०**–स्नेहनस्य द्रव्याण्याह–भूशयेति । भूशया –बिलेशया ।

**मृगपक्षियकृन्मांसमुक्तायस्ताम्रसैन्धवैः ॥ १५ ॥**
**स्रोतोजशङ्खफेनालैर्लेखनं मस्तुकल्कितैः ।**

**स०**–मृगा –हरिणाद्या, पक्षिणो–लावाद्या, तेषा यकृन्मांसानि, तै । तथा, मुक्तादिभिर्मस्तुकल्कितैर्लेखन पुटपाक कल्पयेद्वैद्य । प्रसहाना मृगपक्षिणा स्नेहने[3] पुटपाक उपयुक्तत्वात् जाङ्गला एव मृगपक्षिणोऽत्र ग्राह्या ।

**आ० र०**–लेखनस्य द्रव्याण्याह–मृगपक्षीति । पक्षिणो–विष्किरप्रतुदा ।

**मृगपक्षियकृन्मज्जवसान्त्रहृदयामिषैः ॥ १६ ॥**
**मधुरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादनम् ।**

**स०**–मृगपक्ष्यादीना यकृन्मज्जवसाहृदयामिषाणि, तै । तथा, मधुरै –मधुरवर्गोक्तै, घृतान्वितै स्तन्यक्षीरपिष्टै प्रसादन पुटपाक कल्पयेद्वैद्य । अत्र स्तन्य स्त्रिया एव ।

**आ० र०**–प्रसादनस्य द्रव्याण्याह–मृगपक्षियकृदिति । मधुरै –जीवनीयै ।

अधुना पुटपाकस्य कल्पनामाह–

**बिल्वमात्रं पृथक् पिण्डं मांसभेषजकल्कयोः ॥ १७ ॥**
**उरुबूकवटाम्भोजपत्रैः[4] स्नेहादिषु क्रमात् ।**
**वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ॥ १८ ॥**

१ 'नि, तथा स्वस्थवृत्ते च, कफे' ठ ड । २ 'भास्करम्' अ च ज । ३ 'प्रामृज्य' ठ ट । ४ 'तपमपि' ट ठ । ५ 'नान्तरित च यो' ठ ट । ६ 'से तृप्तेऽति श्ले' आ इ ग घ च ञ प । ७ 'क तृप्तस्य–सम्यक्तपितस्य ल' ठ ड । ८ 'दिसह' ट,ठ ड । ९ 'क्तेषु च य' अ । 'क्तेष्वेषु य' ठ ।

१ 'न–दृष्टिबलसन्धान, त' ड । २ 'क्तेषु–त' ठ ड । ३ 'ने प्रसादने च पु' ट. । ४ 'त्रै. स्निग्धादिषु' अ.आ.इ.ग.च.ञ.ठ.प. ।

**पचेत्प्रदीप्तैरग्न्याभं पक्वं निष्पीड्य तद्रसम् ।**
**नेत्रे तर्पणवद्युञ्ज्यात्**

स०–मांस च भेषजकल्कश्च तयो पृथक् पलमात्र पिण्डमेरण्डादिपत्रैर्वेष्टयित्वा कृष्णमृत्तिकया लिप्त वृद्धवैद्यव्यवहारात् द्व्यङ्गुलोत्सेध मृत्तिकालेप कृत्वा क्रमेण धवादीन्धनै प्रदीप्तै पचेत् । तत्र स्नेहने पुटपाक एरण्डपत्रैर्वेष्टन ववकाष्ठै प्रदीपनम्, लेखने वटपत्रैर्वेष्टन धन्वनेन्धनेन प्रदीपनम्, प्रसादने जलजपत्रैर्वेष्टन गोमयेन्धनेन प्रदीपनम्, इति क्रमार्थ । अग्न्याभ–अग्निवर्ण सत्, पक्व ज्ञात्वा, अपनीतपत्र विधाय, वाससा निष्पीड्य, तद्रस नयने तर्पणमिव युञ्ज्यात् ।

आ० र०–पुटपाकस्य साधनमाह–बिल्वमात्रमिति । मांसपिण्डमौषधपिण्ड च पृथक् बिल्वमात्रमेकीकृत स्नेहनादिष्वेरण्डादिपत्रै. क्रमाद्वेष्टित कुशमुञ्जसूत्रान्यतमेन बद्ध ततो द्व्यङ्गुलोत्सेधेन मृल्लिप्त धवादीन्धनै पचेत् । सङ्ग्रहे तु ( सू अ ३३ )–“–धवधन्वनमधूकन्यग्रोधकाश्मर्यराजादनार्जुननक्तमालपाटलीनामन्यतमै. काष्ठै शकृता वा गोमहिषयो पचेत् ।” इति ।

पुटपाकविधिमाह–अग्न्याभमिति । त पिण्डमग्निवर्णत्वेन पक्वं ज्ञात्वा निष्पीड्य रस तर्पणवद्युञ्ज्यात् ।

**शतं द्वे त्रीणि धारयेत् ॥१९॥**
**लेखनस्नेहनान्त्येषु**

स०–लेखनादिषु शतादीनि धारयेत् । तत्र लेखने शत मात्राणा धारयेत् । स्नेहने द्वे शते । अन्त्ये–प्रसादने, त्रीणि शतानि धारयेत् ।

आ० र०–पुटपाकधारणावधिमाह–शतमिति । अन्त्य.–प्रसादन ।

**कोष्णौ पूर्वौ, हिमोऽपरः ।**

स०–पूर्वौ–स्नेहनलेखनौ, कोष्णौ योज्यौ । हिमोऽपर–प्रसादनाख्य ।

आ० र०–पुटपाकानामुष्णशीतभेदमाह–कोष्णाविति ।

**धूमपोऽन्ते तयोरेव**

स०–तयो –आद्ययो पुटपाकयो, अन्ते धूमप स्यात् । स्नेहेरितकफोपशान्त्यै, न तु प्रसादनान्ते, इत्येवशब्दार्थ ।

आ० र०–लेखनस्नेहनयोरनन्तरकृत्यमाह–धूमप इति ।

**योगास्तत्र च तृप्तिवत् ॥ २० ॥**

स०–तत्र च–तेषु पुटपाकेषु, योगास्तर्पण इव स्यु । तृप्तिवदिति सप्तम्यन्ताद्वति । योगा इति बहुवचननिर्देशात् सम्यग्योगायोगातियोगा गृह्यन्ते ।

आ०र०–पुटपाकस्य सम्यग्योगादिलक्षणमाह–योगा इति ।

**तर्पणं पुटपाकं च नस्यानर्हे न योजयेत् ।**

स०–तर्पणपुटपाकौ नस्यायोग्ये न योजयेत् । नस्यानर्हा–“योजयेन्न तु नावनम् ।” इत्याद्युक्ता ।

आ०र०–निषिद्धनस्याना तर्पणपुटपाकौ निषेधति–तर्पणमिति ।

**यावन्त्यहानि युञ्जीत द्विस्ततो हितभाग्भवेत् ॥२१॥**
**मालतीमल्लिकापुष्पैर्बद्धाक्षो निवसेन्निशाम् ॥२१½॥**

स०–यावन्त्यहानि–यावन्मात्राणि दिनानि, तर्पणपुटपाकौ कुर्वीत ततो द्विगुणानि दिनानि हितसेवी स्यात् । कृततर्पणपुटपाको मालत्यादिपुष्पैर्बद्धाक्ष सन् विभावरी वसेत् । मालती–सुमना । मल्लिका–गन्धवार्षिका ।

आ०र०–तर्पणपुटपाकयोराचारमाह–यावन्तीति । सङ्ग्रहे तु ( सू अ ३३ )–“तथा पक्वातिसारेऽपि पुटपाकस्यायमेव विधिरिति । भवति चात्र । सेकेऽञ्जने तर्पणे च पुटपाके च ये गदा । जायन्ते विधिविभ्रंशाद्यथास्वं तान् प्रसाधयेत् ॥” इति ।

**सर्वात्मना नेत्रबलाय यत्नं**
**कुर्वीत नस्याञ्जनतर्पणाद्यैः ।**
**दृष्टिश्च नष्टा विविधं जगच्च**
**तमोमयं जायत एकरूपम् ॥ २२½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचिताया मष्टाङ्गहृदयसंहितायां सूत्रस्थाने तर्पणपुटपाकविधिर्नाम चतुर्विंशोऽध्यायः ॥ २४ ॥**

स०–सर्वेण प्रकारेण नेत्रबलाय–चक्षु सामर्थ्याय, नस्यादिभिर्यत्न कुर्यात् । दृष्टिश्चेति च हेतौ । यतो दृष्टिर्यदि न स्यात्ततो जगद्विविधमपि तमोमय–अन्धकाररूप, एकरूप–एकलक्षण, सम्पद्यत इति । उपजातिर्वृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने तर्पणपुटपाकविधिर्नाम चतुर्विंशोऽध्याय समाप्त ॥ २४ ॥

आ० र०–नेत्ररक्षणे यत्न कार्य इत्याह–सर्वात्मनेति । दृष्टिश्चेति चशब्दश्चेदर्थे ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
दृक्तर्पणप्रकरण सामस्त्येन निरूपितम् ॥ २४ ॥

१ ‘क् पृथक् पल’ ट । २ ‘त्वा मृत्ति’ ठ ड । ३ ‘न्वनकाष्ठै प्र’ इति क्वचित् । ४ ‘ग्न्याभमिति अ’ ट । ५ ‘कृत स्ने’ क ञ । ६ ‘बध्वा द्व्य’ क.ञ. । ७ ‘टलान्य’ क.ञ । ८ ‘र ते कृत’ क.ञ. ।

१ ‘न्निशि’ अ इ घ च । २ ‘त तावन्त्यहानि तद्विगुणानि च दि’ ट ठ ड । ३ ‘च यो गद । जायते० स्व त प्रसा’ अ.क ग.ञ. । ४ ‘जायेरन्’ स.द्व. ।




अथेदानी पञ्चविंशाध्यायारम्भो यन्त्रविधानप्रदर्शनार्थं । यतो बस्तिनस्याञ्जनक्षारादीनि यन्त्राश्रयाण्येवेत्याह—

**अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

स०–यन्त्रस्य विधिर्यन्त्रविधि । शेष पूर्ववत् । अर्शोभगन्दरादिषु निरुजेऽङ्गे यम्यते–नियम्यते शस्त्रक्षाराग्निकर्मेति यन्त्रम् ।

आ० र०–यन्त्रविधिमध्याय व्याख्यातु प्रतिजानीते–अथेति ।

एतदेव स्पष्टयन्नाह—

**नानाविधानां शल्यानां नानादेशप्रबाधिनाम् ।**
**आहर्तुमभ्युपायो यस्तद्यन्त्रं यच्च दर्शने ॥ १ ॥**
**अर्शोभगन्दरादीनां शस्त्रक्षाराग्नियोजने ।**
**शेषाङ्गपरिरक्षाया तथा बस्त्यादिकर्मणि ॥ २ ॥**
**घटिकालाबुशृङ्गं च जाम्बवौष्ठादिकानि च ।**

स०–अनेकप्रकाराणि यानि शल्यानि–शस्त्रवेणुपाषाणादिरूपाणि, विविधेषु शरीरप्रदेशेषु निविशन्ते, तेषामाहरणे–आकृष्ट, योऽभ्युपायस्तद्यन्त्रम् । 'उच्यते' इति शेष । तथा, अर्शोभगन्दरनाडीव्रणादीना शस्त्रादियोजने सति शेषस्य–निरुजस्याङ्गस्य, परिरक्षाया–रक्षानिमित्तम्, स्वस्थस्याङ्गस्य शस्त्राद्याबाधानिवृत्त्यर्थमित्यर्थ । तथा, बस्तिनस्यादिकर्मणि य उपायस्तच्च यन्त्रम् । तथा घटिकादि च यन्त्र पवनाकर्षणाय रक्ताद्याकर्षणाय च । जाम्बवौष्ठसन्दंशादीनि च यन्त्राणि ।

आ० र०–यन्त्रलक्षणमाह–नानाविधानामिति । शल्याहरणे य उपाय., यश्चार्श प्रभृतिदर्शने, यश्च शस्त्रादिच्छेद्यसमीपाङ्गरक्षणे, यश्च बस्त्यादिप्रणयने, यश्च घटिकादि राचूषणादौ, तद्यन्त्रम् । एवविध उपायविशेषो यन्त्रमित्यर्थ.।

यन्त्राणा कि रूप कि [च] कार्यं स्यात् ? इत्याह—

**अनेकरूपकार्याणि यन्त्राणि विविधान्यतः ॥ ३ ॥**
**विकल्प्य कल्पयेद्बुद्ध्या**

स०–रूपाणि च कार्याणि च रूपकार्याणि । अनेकानि–विचित्राणि, रूपकार्याणि तेषा तानि[1] यन्त्राणि नानाप्रकाराणि[2] । तत्र रूप–कङ्कमुखस्वस्तिकाद्याकारत्वम् । कार्यं–अस्थ्यादिलग्नशल्यहरणादिकम् । यतश्चैव यन्त्राणा नानाविधत्वम्, अतस्तानि बुद्ध्या विकल्प्य कार्यानुरोधात् कल्पयेत् ।

आ० र०–यन्त्रविशेषाणामनन्तत्वात् बुद्ध्या कल्प्यत्वमाह–अनेकरूपकार्याणीति ।

ननु, यन्त्राणा दिङ्मात्रेऽप्यनभिज्ञ कथमिव कल्पनां कर्तुं पारयेत् ? इत्याह—

**यथास्थूलं तु वक्ष्यते ।**

स०–यानि यानि स्थूलानि यथास्थूलम् । "यथा सादृश्ये" इत्यव्ययीभाव । यथास्थूलयन्त्रकरणेन व्युत्पन्नमति शेषाणामपि यन्त्राणामुत्पादने विकल्प कर्तुं समर्थो भवेदिति भाव ।

आ० र०–निदर्शनार्थं कांश्चिद्यन्त्रविशेषान् वक्तुमाह–यथास्थूलमिति । स्वस्तिकसन्दंशतालनाडीशलाकानुयन्त्रभेदात् षोढा यन्त्राणि ।

अथ यन्त्राण्याह—

**तुल्यानि कङ्कसिंहर्क्षकाकादिमृगपक्षिणाम् ॥ ४ ॥**
**मुखैर्मुखानि यन्त्राणां कुर्यात्तत्संज्ञकानि च ।**
**अष्टादशाङ्गुलायामान्यायसानि च भूरिशः ॥ ५ ॥**
**मसूराकारपर्यन्तै. कण्ठे बद्धानि कीलकैः ।**
**विद्यात्स्वस्तिकयन्त्राणि मूलेऽङ्कुशनतानि च ॥ ६ ॥**
**तैर्दृढैरस्थिसंलग्नशल्याहरणमिष्यते ।**

स०–येन पार्श्वेन शल्यमुद्ध्रियते तद्यन्त्राणां मुखं वेद्यम् । कङ्कादीना पक्षिमृगाणा मुखैस्तुल्यानि यन्त्राणा मुखानि कुर्यात् । आदिशब्देन गृध्रहंसहरिणादिपरिग्रह । तानि तत्सज्ञकानि । च एवार्थे, तानि यन्त्राणि तन्नामान्येव । यथा,–कङ्कमुख सिंहमुखमित्यादि । अष्टादशाङ्गुलेत्यादि, स्वस्तिकाख्यानि यन्त्राणि विद्यात् । कीदृशानि ? अष्टादशाङ्गुलदैर्घ्याणि, भूरिशो–बाहुल्येन, आयसानि–शस्त्रमयानि । दन्तादिमयानामपि क्वचिद्दर्शनात् भूरिश इत्युक्तम् । तथा, कण्ठप्रदेशे कीलकैर्बद्धानि । कीदृशै कीलकै ? मसूराकारा पर्यन्ता येषा तै । यत्र प्रदेशे यन्त्राणा हस्तग्रहस्तत्र तन्मूलम् । तत्राङ्कुशवन्नतानि–परिणतानि । तै–कङ्कमुखादिभि, अस्थिसलग्नशल्यस्य–काण्डफलादे, आहरणं–आकर्षणमिष्यते ।

आ० र०–तत्र स्वस्तिकान्याह–तुल्यानीति । तत्सज्ञकानि–कङ्कमुखसिंहमुखादिनामानि । आयामो–दैर्घ्यम् । भूरिश इति वचनात् दार्वादिकृतान्यपि । कण्ठे–मुखाकारसम्पादकशकलद्वयसन्धानस्थाने । मूले–धारणस्थाने ।

१ अथ यन्त्रविधि. सुश्रुते सू० ७ अध्याये, अष्टाङ्गसङ्ग्रहे सू० ३४ अध्याये चास्ति वर्णित, चरके तु न वर्णित । २ 'षु शस्त्रादिनियोजने निरुजाङ्गरक्षणाय निय' ट । ३ 'कमिति' ठ ड । ४ 'शविबाधि' अ आ । ५ 'आकृष्टौ' ट । ६ 'रुजाङ्ग' ट. । ७ 'सुस्थस्या' ट. । ८ 'च पिचुनाकर्षणाय रक्ता' ठ.ड. ।

१ 'नि यानि ना' ठ । २ 'णि नानाकार्यकराणि । त' ट । ३ 'अस्थिलग्न' ट । ४ 'कल्पनमा' क ग अ. । ५ 'भवत्येवेति' ठ । ६ 'शालिभानि' इ. । ७ 'मुखतुल्या' ड. । ८ 'ग्रहरि' ट. । ९ 'नि । तै' ठ. ।

स्वस्तिकाना कार्यमाह–तैर्दंशैरिति ।

**कीलबद्धविमुक्ताग्रौ सन्दंशौ षोडशाङ्गुलौ ॥ ७ ॥**
**त्वक्शिरास्नायुपिशितलग्नशल्यापकर्षणौ ।**

स०–कीलेन–मसूराकारपर्यन्तेन, बद्ध तथा विमुक्तमग्र–मुख, ययोस्तौ कीलबद्धविमुक्ताग्रौ सन्दशौ भवत । कीदृशौ ? षोडशाङ्गुलप्रमाणौ । क्वोपयोग एतयो स्यात् ? इत्याह–त्वगित्यादि । त्वगादीना द्वन्द्व । त्वक्शिरास्नायुपिशितलग्न च तच्छल्य च, तस्यापकर्षणे–आहरणे, तावुपयुज्येते ।

**आ० र०–सन्दशाश्चत्वार । तत्र कीलबद्धाग्रकील-मुक्ताग्रौ सन्दशावाह–कीलबद्धविमुक्ताग्राविति ।**

**षडङ्गुलोऽन्यो हरणे सूक्ष्मशल्योपपक्ष्मणाम् ॥ ८ ॥**

स०–षोडशाङ्गुलसन्दशद्वयादन्य सन्दश [षडङ्गुलप्रमाण ] सूक्ष्मशल्याना–नासारोमादीना, हरणे–आकर्षणे, तथा, उपपक्ष्मणा वर्त्मादिभवाना हरणे युज्यते ।

**आ० र०–षडङ्गुल सन्दशमाह–षडङ्गुल इति । उपपक्ष्मणा–नेत्रेष्ववान्तरपक्ष्मणाम् ।**

**मुचुण्डी सूक्ष्मदन्तर्जुर्मूले रुचकभूषणा ।**
**गम्भीरव्रणमासानाममर्मणः शोषितस्य च ॥ ९ ॥**

स०–सा च मुचुण्डीसज्ञा । किम्भूता मुचुण्डी ? सूक्ष्मा दन्ता यस्या सा सूक्ष्मदन्ता, तथा, ऋजु –अवक्रा, न च सन्दशवद्वक्रा द्विबाहुरित्यर्थ । तथा, मूले–हस्तग्रहणस्थाने, रुचक–अङ्गुलीयकरूप, भूषण यस्या सा रुचकभूषणा । रुचकपीडनेन सा कर्म करोतीत्यर्थ । गम्भीरश्चासौ व्रणश्च गम्भीरव्रणस्तस्मिन् मांसानि–तस्याविमास, एतद्विषय आहरणे । अमर्मणश्च शेषितस्य च्छिन्नशेषस्याहरणे मुचुण्डी ।

**आ० र०–मुचुण्ड्याख्य सन्दशमाह–मुचुण्डीति । सूक्ष्मदन्ता–सूक्ष्माग्रा । ऋजु –अवक्रा । रुचकभूषणा–मूले मुद्रिकाबद्धा । गम्भीरेषु व्रणेषु यानि मासानि, यानि च नेत्रेषु छिन्नशेषाण्यमांणि, तेषा हरणे ।**

**द्वे द्वादशाङ्गुले मत्स्यतालवत् द्व्येकतालके ।**
**तालयन्त्रे स्मृते कर्णनाडीशल्यापहारिणी ॥ १० ॥**

स०–द्वे तालयन्त्रे भवत । किम्प्रमाणे ? द्वादशाङ्गुले । सस्थानमाह–मत्स्यतालवत् मीनगलतालवत्, द्वितालक–एक द्वयो पार्श्वयोर्मत्स्यमुखसदृशम्, अपरमेकतालक–एकपार्श्वे मत्स्यमुखाकारमेव । ते द्वे तालयन्त्रे भवत । कर्णेत्यादि । कर्णनाडीशल्यमपहरत –कर्णनाडीशल्यापहारिणी ।

**आ० र०–तालयन्त्रद्वयमाह–द्वे द्वादशाङ्गुल इति । मत्स्यतालो–मत्स्यगलताल ।**

**नाडीयन्त्राणि सुषिराण्येकानेकमुखानि च ।**
**स्रोतोगतानां शल्यानामामयाना च दर्शने ॥ ११ ॥**
**क्रियाणां सुकरत्वाय कुर्यादाचूषणाय च ।**
**तद्विस्तारपरीणाहदैर्घ्य स्रोतोनुरोधतः ॥ १२ ॥**

स०–नाडीयन्त्राणि बस्तिनेत्रादिवत् सुषिराणि स्यु । एकं चानेक चैकानेक मुख येषाम् । तानि च कानिचिदेकमुखानि–एकद्वाराणि, कानिचिदनेकमुखानि–अनेकद्वाराणि । एतत्कर्मोच्छे–स्रोत इत्यादि । तानि च कर्णादिस्रोतोगतानां शल्याना दर्शननिमित्त विदधीत । तथा, कण्ठादिस्रोतोगतानां रोगाणा दर्शने–दर्शननिमित्त, विदधीत । तथा, क्रियाणा–शस्त्रक्षाराग्निप्रक्षालनौषधप्रणिधानादीना, सुकरत्वार्थम् । तथा, विषदिग्धाङ्गादीनामाचूषणाय विदधीत । तद्विस्तारेत्यादि । तेषा–नाडीयन्त्राणा, विस्तारश्च परीणाहश्च दैर्घ्य च, तानि स्रोतोवशात् भवन्ति । यथा,–अनुवासनोत्तरबस्तिनस्यनाडिकादिषु निर्दिष्टम् ।

**आ० र०–नाडीयन्त्राण्याह–नाडीयन्त्राणीति । विस्तारो–विवरस्य । परीणाह –स्थौल्य यन्त्रस्य ।**

**दशाङ्गुलाऽर्धनाहाऽन्तःकण्ठशल्यावलोकिनी ।**
**नाडी**

स०–कण्ठे शल्य कण्ठशल्यम् । कण्ठाभ्यन्तरशल्यावलोकनार्थं दशाङ्गुला नाडी । अर्धनाहा–पञ्चाङ्गुलपरिणाहा ।

**आ० र०–कण्ठान्त शल्यावलोकिनी नाडीमाह–दशाङ्गुलेति । अर्धनाहा–पञ्चाङ्गुलस्थौल्या ।**

**पञ्चमुखच्छिद्रा चतुष्कर्णस्य सङ्ग्रहे ॥ १३ ॥**
**वारङ्गस्य, द्विकर्णस्य त्रिच्छिद्रा तत्प्रमाणतः ।**

स०–पञ्चमुखानि छिद्राणि यस्या सा । चतुष्कर्णस्य वारङ्गस्य सङ्ग्रहे–सङ्ग्रहणनिमित्तमिद यन्त्रम् । चत्वार कर्णा यस्य वारङ्गस्येति समास । तत्र शरादिदण्डप्रवेश शिखाकार कीलको वारङ्ग उच्यते । द्विकर्णस्य वारङ्गस्य त्रिच्छिद्रा नाडी स्यात् । त्रीणि छिद्राणि यस्या सा त्रिच्छिद्रा । छिद्रशब्दस्योपलक्षणार्थत्वात् त्रिमुखेत्येतदपि द्रष्टव्यम् । तस्य वारङ्गस्य प्रमाण तत्प्रमाणं तस्माद्वारङ्गप्रमाणत –तदनुसारेण नाडीप्रमाण ज्ञेयम् ।

**आ० र०–चतुष्कर्णवारङ्गसङ्ग्रहणी नाडीमाह–नाडीति । पञ्चमुखच्छिद्रा–मुखे छिद्रपञ्चकयुता ।**

---

१ 'कर्षणे' अरुण । २ अय 'सन्दश षडङ्गुल दीर्घो विमुक्ताग्र एव' इति चन्द्र । ३ 'सूक्ष्माणा श' ठ । ४ 'मुचुटी' क घ प । 'मुचुण्ढी' आ च ठ । 'मुचुण्टी' ग ञ । ५ 'स च मुचुण्डीसज्ञ ' ठ । ६ 'सानि, तथाऽमर्मसन्धिमास' ट । 'सातिस्तस्यामविमास' ठ । ७ 'तालु' अ आ इ ट ठ । ८ 'पकर्षणी' आ. । 'पहारणे' ञ. । ९ 'क–द्वयो.' ठ ।

१ 'गल ।' क ञ । २ 'नु' आ ग घ च ज प । ३ 'ना नाडीरो' ट । ४ 'तोनुरोधात्' ट । ५ 'छिद्रस्' क ञ । ६ 'स्य तद्यन्त्रस्य' क घ । ७ 'वलोकने' इति क्वचित् । ८–९ 'द्वा- नाडी ।' 'सा च पञ्च' ठ. । १० 'स्य सङ्ग्रहार्थे त्रि' इति क्वचित् ।

# अष्टाङ्गहृदये यन्त्रविध्यध्यायोक्तानि ४८ अष्टचत्वारिंशत् यन्त्राणि ।

१ कङ्कमुखम् ।



२ सिंहमुखम् ।



३ ऋक्षमुखम् ।



४ काकमुखम् ।



५ कीलबद्धः संदंशः ।



६ विमुक्ताग्रः संदंशः ।



७ षडङ्गुलः संदंशः ।



८ मुचुण्डी ।



९ एकतालम् ।



१० द्वितालकम् ।



११ कण्ठान्तःशल्यावलोकनी नाडी ।



१२ चतुष्कर्णवारङ्गसङ्ग्रहणी नाडी ।



१३ द्विकर्णवारङ्गसङ्ग्रहणी नाडी ।



१४ शल्यनिर्घातिनी नाडी ।



१५ अर्शोयन्त्रम् ( द्विच्छिद्रम् ) ।



१६ अर्शोयन्त्रम् ( एकच्छिद्रम् ) ।



१७ अर्शोयन्त्रम् ( शम्याख्यम् ) ।



१८ भगन्दरयन्त्रम् ( द्विच्छिद्रम् ) ।



१९ भगन्दरयन्त्रम् ( एकच्छिद्रम् ) ।



२० घ्राणार्शोर्बुदयन्त्रम् ।



२१ अङ्गुलित्राणकम् ।



२२ योनिव्रणेक्षणं यन्त्रम् ।



२३ नाडीव्रणाभ्यञ्जनं यन्त्रम् ।
२४ नाडीव्रणक्षालनं यन्त्रम् ।



२५ जलोदरयन्त्रम् ।



२६ धूमयन्त्रम् ।



२७ धूमयन्त्रम् ( शरावसम्पुटम् ) ।



२८ बस्तियन्त्रम् ।



२९ पुष्पनेत्रम् ।



२० शृङ्गयन्त्रम् ।



२१ अलाबुयन्त्रम् ।



२२ घटीयन्त्रम् ।



२३ एषणी ( गण्डूपदमुखा )



२४ शल्यहारिणी ।



२५ व्यूहनशङ्कुः ।



२६ चालनशङ्कुः ।



२७ आहरणशङ्कुः ।



२८ गर्भशङ्कुः ।



३९ अश्मर्याहरणम् ।



४० दन्तपातनयन्त्रम् ।



४१ प्रमार्जनी शलाका ।



४२ कर्णशोधनम् ।



४३ जाम्बवौष्ठम् ।



४४ अन्त्रवृद्धिदाहार्थं शलाका ।



४५ नासार्शोर्बुददाहार्थ शलाका ।



४६ दर्व्याख्या शलाका ।



४७ उत्तरबस्तिः ।



४८ मुद्गरः ।



इति यन्त्रचित्राणि ४८ अष्टचत्वारिंशत् ।

## अष्टाङ्गहृदये शस्त्रविध्यध्यायोक्तानि २६ षड्विंशतिः शस्त्राणि, शस्त्रकोशश्च ।

१ मण्डलाग्रम् ।



२ वृद्धिपत्रम् (ऋज्वग्रम्) ।



वृद्धिपत्रम् (नताग्रदीर्घवक्रम्) ।



वृद्धिपत्रम् (नताग्रह्रस्ववक्रम्) ।



३ उत्पलपत्रम् ।



४ अध्यर्धधारम् ।



५ सर्पास्यम् ।



६ एषणी ( अन्वेषणार्था ) ।



एषणी ( भेदनार्था ) ।



७ वेतसपत्रम् ।



८ शरारिमुखम् ।



९ त्रिकूर्चकम् ।



१० कुशपत्रम् ।



११ आटामुखम् ।



१२ अन्तर्मुखम् ।



१३ व्रीहिमुखम् ।



१४ कुठारी ।



१५ शलाका ।



१६ अङ्गुलिशस्त्रम् ।



१७ बडिशम् ।



१८ करपत्रम् ।



१९ कर्तरि ।



२० नखशस्त्रम् ।



२१ दन्तलेखनम् ।



२२ सूच्य ।



२३ कूर्चः ।



२४ खजः ।



२५ यूथिका ।
( कर्णव्यधनम् )



२६ आरा ।



कर्णवेधनी ।



शस्त्रकोश ।



इति शस्त्रचित्राणि २६ षड्विंशतिः,
शस्त्रकोशश्च ।

द्विकर्णसङ्ग्रहणी नाडीमाह—द्विकर्णस्येति । तत्प्रमाणत — सङ्ग्राह्यप्रमाणेन । एतच्च नाडीद्वये छिद्रमानम् ।

**वारङ्गकर्णसंस्थानानाहदैर्घ्यानुरोधतः ॥ १४ ॥**
**नाडीरेवंविधाश्चान्या द्रष्टुं शल्यानि कारयेत् ।**

स०—तथा, कर्णश्च संस्थानं चानाहश्च दैर्घ्यं च तान्येवम् । वारङ्गस्य कर्णसंस्थानानाहदैर्घ्याणि, तेषामनुरोधस्तस्मात्, एवंप्रकारा अन्या अपि नाडी शल्यानि शरीरान्तर्गतानि द्रष्टुं कारयेत् ।

आ० र०—अन्यानि नाडीयन्त्राण्याह—वारङ्गकर्णेति । संस्थान—आकृतिः । आनाह —स्थौल्यम् ।

**पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशाङ्गुला ॥ १५ ॥**
**चतुर्थसुषिरा नाडी शल्यनिर्घातिनी मता ।**

स०—मूर्ध्नि—मूर्द्धभागे, पद्मकर्णिकया—जलजकर्णिकया, सदृशी । कियत्प्रमाणा² द्वादशाङ्गुला । तथा, चतुर्थं—चतुर्भागं, सुषिरो यस्या सा, त्र्यङ्गुलसुषिरेति यावत् । सा नाडी शल्यनिर्घातिनी मता । मुनीनामिति शेषः ।

आ० र०—शल्यनिर्घातिनीं नाडीमाह—पद्मकर्णिकयेति । चतुर्थसुषिरा—त्र्यङ्गुलदीर्घविवरा ।

अर्शोयन्त्रं लक्षयितुमाह—

**अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलम् ॥ १६ ॥**
**नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलम् ।**
**द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रं तु कर्मणि ॥ १७ ॥**
**मध्येऽस्य त्र्यङ्गुलं छिद्रमङ्गुष्ठोदरविस्तृतम् ।**
**अर्धाङ्गुलोच्छ्रितोद्वृत्तकर्णिकं च तदूर्ध्वतः ॥ १८ ॥**

स०—अर्शसां सम्बन्धि यन्त्रकं गोस्तनाकृति चतुरङ्गुलं मानतो दैर्घ्येण स्यात् । यन्त्रकमित्याकर्षकं स्यात् । नाहे—परिणाहे, पञ्चाङ्गुलम् । यत्पञ्चाङ्गुलदीर्घेण सूत्रेण वेष्ट्यते, तत्प्रमाणं स्थौल्यमित्यर्थः । एतत् पुंसामेव पञ्चाङ्गुलं नाहे स्यात् । स्त्रीणां तु परिणाहे षडङ्गुलं यन्त्रकं स्यात्, स्वभावत एव तासां गुदस्य महत्त्वात् । व्याधेर्दर्शने द्विच्छिद्रं—उभयपार्श्वच्छिद्रं यन्त्रम् । कर्मणि—शस्त्रक्षाराद्यवचारणे, एकच्छिद्रं यन्त्रम् । अस्य यन्त्रस्य मध्ये त्र्यङ्गुलं छिद्रम् । अङ्गुष्ठमध्यतुल्यविस्तारं, तथा तदूर्ध्वतोऽर्धाङ्गुलोच्छ्रिता उद्वृत्ता कर्णिका यस्य तदेवम् ।

आ० र०—अर्शोयन्त्राख्यां नाडीमाह—अर्शसामिति । चतुरङ्गुलं दैर्घ्ये । परिणाहे तु पुंसां पञ्चाङ्गुलं, स्त्रीणां षडङ्गुलम् । व्याधेर्दर्शने द्विच्छिद्रम्, क्षारादियोजने तु शेषाङ्गपरिरक्षायामेकच्छिद्रम् । द्विच्छिद्रस्य तु द्वयोः पार्श्वयोश्छिद्रम्, एकच्छिद्रस्यैकस्मिन् पार्श्वे । तच्च त्र्यङ्गुलदैर्घ्यमङ्गुष्ठोदरविस्तारं मध्ये कार्यम् । छिद्रादूर्ध्वभागे मूलेऽर्धाङ्गुलोच्छ्राया बहिःकुञ्चिताग्रा कर्णिका कार्या ।

**शम्याख्यं तादृगच्छिद्रं यन्त्रमर्शःप्रपीडनम् ।**

स०—शम्याख्यं—शमीसञ्ज्ञं, तृतीयं यन्त्रकं तादृग्—गोस्तनाकारमित्यादिलक्षणलक्षितयन्त्रसदृशं स्यात् । अत्र विशेषमाह—अच्छिद्रमित्यादि¹ । अच्छिद्रं—छिद्ररहितम्, यन्त्रे छिद्रं न विधेयमित्यर्थः । इदं च यन्त्रमर्शःप्रपीडनं स्यात् ।

आ० र०—तृतीयमर्शःपीडनं शम्याख्यं यन्त्रमाह—शम्याख्यमिति । तादृक्—गोस्तनाकारादिलक्षणम् । अच्छिद्रं—पार्श्वच्छिद्ररहितम् ।

**सर्वथाऽपनयेदोष्ठं छिद्रादूर्ध्वं भगन्दरे ॥ १९ ॥**

स०—सर्वथा भगन्दरे—भगन्दरयन्त्रे, ओष्ठमपनयेत् । कुतः प्रभृति² छिद्रादूर्ध्वम्,—उपरिष्ठादर्धाङ्गुलमपकर्षयेदित्यर्थः । कर्णिका तु कार्यैव (³) ।

आ० र०—भगन्दरयन्त्राख्यां नाडीमाह—सर्वथेति । अर्शोयन्त्रमेवापनीतौष्ठं भगन्दरयन्त्रम् । मुखच्छिद्रस्य पार्श्वभाग ओष्ठः ।

**घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया ।**
**प्रदेशिनीपरीणाहा स्याद्भगन्दरयन्त्रवत् ॥ २० ॥**

स०—घ्राणार्बुदे घ्राणार्शसि चैकच्छिद्रा नाडी दैर्घ्येणाङ्गुलद्वयप्रमाणा । तथा, प्रदेशिनीतुल्यपरीणाहो यस्याः सैवम् । सा च भगन्दरयन्त्रतुल्या स्यात्, अपनीतौष्ठेत्यर्थः ।

आ० र०—घ्राणार्शोर्बुदयन्त्राख्यां नाडीमाह—घ्राणार्बुदेति ।

**अङ्गुलित्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम् ।**
**द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम् ॥ २१ ॥**

स०—अङ्गुलित्राणकाख्यं यन्त्रं दन्तमयं काष्ठमयं वा चतुरङ्गुलप्रमाणमर्शसां यन्त्रसदृशं द्विच्छिद्रं गोस्तनाकृति स्यात् । तच्च वक्त्रस्य विवृतौ—प्रसारणे, सुखम् । यतो वक्त्रप्रसारणे अङ्गुलेर्दन्तेभ्यो रक्षणादन्वर्थमङ्गुलित्राणकमिति नाम ।

आ० र०—अङ्गुलित्राणाख्यं नाडीयन्त्रमाह—अङ्गुलित्राणकमिति । वक्त्रविवृतौ—वक्त्रविकाशनार्थं, प्रवेशितामङ्गुलीं रक्षतीत्यङ्गुलित्राणकम् ।

१ 'ह्यमानत.' क ञ । २ 'तथा, वारङ्गकर्णस्य स०वारङ्गकर्ण' ठ । ३ 'न्यान्यपि ना' ग.घ.च. । ४ 'कर्कटिकया' ट ठ । ५ 'दर्शयि' ट । ६ 'तु' घ ञ. । ७ 'नाकारं कार्यम् । यन्त्रकमिति शल्ये कप्रत्ययः । चतु' ट. । ८ 'पार्श्वे द्विच्छिद्र' ट. ।

१ 'दि । अत्र यन्त्रे' ट. । २ 'एव च' ठ. । ३ 'कर्षेदि' ट. । ४ वृक्षस्येदं वार्क्षम् । ५ 'तच्च वक्त्रविवृतौ—संवृतमुखस्यातुरस्य मुखव्यादाननिमित्तं, सुखं—सुखकरं स्यात्' इति वाग्भटार्थकौमुद्याम् । ६ 'णार्थत्वादङ्गु' ठ ।

**योनिव्रणेक्षणं मध्ये सुषिरं षोडशाङ्गुलम् ।**
**मुद्राबद्धं चतुर्भित्तमम्भोजमुकुलाननम् ॥ २२ ॥**
**चतुःशलाकमाक्रान्तं मूले तद्विकसेन्मुखे ।**

**स०**–योनिव्रणमीक्षतेऽनेनेति तत् योनिव्रणेक्षणं यन्त्रकम् । मध्ये–मध्यभागे, सुषिरम् । तथा, दैर्घ्येण षोडशाङ्गुलम् । तथा मुद्रिकया–ऊर्मिकयाऽसञ्चारिण्या, बद्ध–युक्तम् । तथा, चत्वारो (रि) भित्ता (त्तानि)–पत्राणि, यस्य तच्चतुर्भित्तम् । तथा, जलजमुकुलसदृशमुखम् । तथा, चतस्र शलाका यत्र तत् चतुःशलाकम् । तथा, तत्–यन्त्र, मूल आक्रान्त–मूलशलाकाक्रमणात् मुखे विकसेत्–प्रसरेत् ।

**आ० र०**–योनिव्रणेक्षणाख्यां नाडीमाह–योनिव्रणेक्षणमिति । चतुर्भित्त–चतुःशकलम् ।

**यन्त्रे नाडीव्रणाभ्यङ्गक्षालनाय षडङ्गुले ॥ २३ ॥**
**बस्तियन्त्राकृती मूले मुखेऽङ्गुष्ठकलायखे ।**
**अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी ॥ २४ ॥**

**स०**–यन्त्रे द्वे षडङ्गुले भवत । किमर्थम् ? नाडीव्रणाभ्यङ्गक्षालनाय,–अभ्यङ्गश्च क्षालन चाभ्यङ्गक्षालने तदर्थं, उपयुज्येते । आकरण–आकृत्, सम्पदादित्वात् क्विप् । पूर्वविहितस्य बस्तियन्त्रस्येव आकृत्–आकारो, ययोस्ते बस्तियन्त्राकृती,–वृत्ते गोपुच्छाकारे । तथा, यथासङ्ख्य मूले मुखेऽङ्गुष्ठकलायखे–मूलेऽङ्गुष्ठतुल्यच्छिद्रे, मुखे कलायतुल्यच्छिद्रे । अग्रतोऽकर्णिके–कर्णिकारहिते, इति बस्तियन्त्राद्विशेष । मूले तु कर्णिके द्वेऽपि पुटकयोजनार्थं कार्य एवेत्यग्रग्रहणम् । मूले–मूलदेशे, निबद्ध–योजित, मृदु चर्म–बस्तिपुटकाकार, ययोस्ते निबद्धमृदुचर्मणी ।

**आ० र०**–नाडीव्रणाभ्यञ्जननाडीव्रणक्षालनाख्य नाडीद्वयमाह–यन्त्र इति । मूलेऽङ्गुष्ठप्रवेशच्छिद्रे, अग्रे कलायप्रवेशच्छिद्रे । अग्रतोऽकर्णिके–अग्रे कर्णिकारहिते । बस्तियन्त्राकृतीति नाडीविशेषणम्, यन्त्रविशेषणत्वे तु नुम्प्रसङ्ग. ।

**द्विद्वारा नलिका पिच्छनलिका वोदकोदरे ।**

**स०**–उदकोदरे जलस्रावणार्थं नलिका द्विद्वारा–उभयमुखी, स्यात् । अथवा, पिच्छनलिका–मयूरपिच्छजेत्यर्थ ।

**आ० र०**–जलोदरयन्त्राख्या नाडीमाह–द्विद्वारेति । नलिका–वेण्वादिनाडी । पिच्छनलिका–पक्षिपिच्छनाडी ।

**धूमबस्त्यादियन्त्राणि निर्दिष्टानि यथायथम् ॥ २५ ॥**

**स०**–धूमादियन्त्राणि यथास्व धूमपानाद्यध्यायेषूक्तानि ।

**आ० र०**–धूमयन्त्राद्या नाड्य उक्ता इत्याह–धूमबस्त्यादीति ।

**त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशाङ्गुलम् ।**
**अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति ॥ २६ ॥**

**स०**–शृङ्ग त्र्यङ्गुलमुखम् । दुष्टवातविषरक्ताम्बुदुष्टस्तन्यादेश्चूषणे–चूषणनिमित्त, अष्टादशाङ्गुल स्यात् । अष्टादशेति "घ्यष्टनं" इत्यादिनाऽऽकारादेश । तथा, अग्रे–प्रान्ते, सर्षपप्रमाणच्छिद्रम् । य प्रदेशश्चूषणाय शरीरे योज्यते तदग्रम् । तथा, सुष्ठु नद्ध–सम्यग्बद्धम् । चूचुकस्य–स्त्रीकुचाग्रस्येव, आकृति–आकारो, यस्य तदेवम् ।

**आ० र०**–शृङ्गाख्या नाडीमाह–त्र्यङ्गुलास्यमिति । चूषणे–रक्ताद्याकर्षणे, अष्टादशाङ्गुल–अष्टाङ्गुल दशाङ्गुल वा । सङ्ग्रहे तु द्वादशाङ्गुलमप्युक्तम् (सू अ ३४)–"शृङ्ग तु ह्रस्वमध्यदीर्घमष्टादशद्वादशाङ्गुलायतम्" इति ।

**स्याद्द्वादशाङ्गुलोऽलाबुर्नाहे त्वष्टादशाङ्गुलः ।**
**चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तः श्लेष्मरक्तहृत् ॥ २७ ॥**

**स०**–अलाबु–तुम्ब, द्वादशाङ्गुलो दैर्घ्येण स्यात् । परिणाहेऽष्टादशाङ्गुल । चत्वारि वा त्रीणि वाऽङ्गुलानि यस्य तच्चतुस्त्र्यङ्गुलम्, तत्तादृश वृत्त–वर्तुल, आस्य–मुख, यस्य स एवम् । तथा, अन्त–मध्ये, दीप्तो–ज्वलित, पिचुर्भूर्जादिगर्भ इत्यर्थ. । स ईदृशो दुष्टकफरक्तहर स्यात् ।

**आ० र०**–तुम्बाख्या नाडीमाह–स्याद्द्वादशेति । चतुरङ्गुलास्यस्त्र्यङ्गुलास्यो वा । अन्तर्दीप्त–प्रदीप्ततृणसृष्टपिचुना ।

**तद्वद्घटी हिता गुल्मविलयोन्नमने च सा ।**

**स०**–तद्वत्–तेनालाबुना तुल्यदैर्घ्यानाहादि, तुल्यकार्याकारा च, घटी स्यात् । सा च गुल्मस्य विलये उन्नमने च हिता, न केवल कफरक्तहृदिति चार्थ ।

**आ० र०**–घटिकाख्या नाडीमाह–तद्वद्घटीति । तद्वत्–अलाबुसदृशी । गुल्मविलयने गुल्मोन्नमने च । चकारात् श्लेष्मरक्तावचूषणे च ।

---

१ 'अस्य यन्त्रस्य कल्पनाया चत्वारि खण्डानि तथा कार्याणि यथा मुद्रिकया बद्धानि मिलितानि च पद्ममुकुलाकारमुखा, अन्तरसुषिरा, षडङ्गुलपरिणाहवती च नाडी स्यात् । ततस्तन्मध्ये प्रत्येक खण्डसलग्न चतस्र शलाका आमुखात् सन्निवेश्य शलाकाना मध्यभागे तथा बध्नीयात् यथा शलाकामूलपीडनेन यन्त्रस्य मुख विकसेत् ।' वा. कौ । २ 'तुर्भिन्नम' अ इ च ञ । 'तुष्कोणम' आ । ३ 'नेन त' ठ । ४ 'त्ता –शकलानि य' ट । 'भित्त शकलखण्डे वा' इत्यमर । ५ 'क्षणा ना' क । 'णेक्षिणी ना' ञ । ६ 'भिन्न–' क ञ । ७ 'पू । बस्ति' ठ. । ८ 'कृति –' ट । ९ 'ती–बस्तियन्त्राकारे वृ' ठ । १० 'यसमच्छि' ठ. । ११ 'का वा दको' अ.इ.ग.घ.च.ञ.प. ।

१ 'का–वशनाडी' क । 'का–वशादि' ञ । २ 'का–पिच्छ' क. ञ । ३ 'क्तार्बुदद्' ट । ४ 'न सङ्ख्याया" इ' ठ । ५ 'योज्य, तत्तदग्रम्' ड । ६ 'कुचमुखाकारस्ये' ट । 'चाग्रस्य, आ' ठ । ७ 'क्ताद्यपक' क ञ । ८ 'तुम्बम्' ठ ड । ९ 'हा, तुल्यकार्या च' ट. । १० 'तुल्याकारा' ड । ११ 'लयन' ठ.ड । १२ 'चशब्दार्थ.' ट. ।

**शलाकाख्यानि यन्त्राणि नानाकर्माकृतीनि च ॥२८॥ यथायोगप्रमाणानि**

स०–शलाकासञ्ज्ञानि यन्त्राणि विविधकर्माणि विविधाकाराणि यथायोगप्रमाणानि स्यु ।

आ० र०–शलाकायन्त्राण्याह–शलाकाख्यानीति ।

**तेषामेषणकर्मणी ।**

**उभे गण्डूपदमुखे**

स०–तेषा मध्य उभे गण्डूपदतुल्यास्य एषणकर्मणी ।

आ० र०–एषिण्यौ शलाके आह–तेषामिति । एषणं–अवलोकनम् ।

**स्रोतोभ्यः शल्यहारिणी ॥ २९ ॥**

**मसूरदलवक्रे द्वे स्यातामष्टनवाङ्गुले ।**

स०–तथा स्रोतोभ्य शल्यहारिणी शलाकायन्त्रे भवत । किम्भूते ? मसूरेत्यादि । मसूरदलमिव वक्र ययोस्ते, मसूरदलमुखे द्वे शलाकेऽष्टाङ्गुले नवाङ्गुले वा स्याताम् ।

आ० र०–शल्यहारिण्यौ शलाके आह–स्रोतोभ्य इति ।

**शङ्कवः षट्**

स०–शङ्कव षट् स्यु ।

आ० र०–शङ्क्वाख्या शलाका गणयति–शङ्कव इति ।

**उभौ तेषां षोडशद्वादशाङ्गुलौ ॥ ३० ॥**

**व्यूहनेऽहिफणावक्रौ**

स०–तेषा मध्ये द्वौ षोडशाङ्गुलद्वादशाङ्गुलौ भवत । व्यूहने–व्यूहनकर्मणि, सर्पफणामुखौ ।

आ० र०–व्यूहनौ शङ्कू आह–उभाविति । व्यूहन–प्रसृतमांसादीनां यथास्थान विन्यास ।

**द्वौ दशद्वादशाङ्गुलौ ।**

**चालने शरपुङ्खास्यौ**

स०–द्वौ शङ्कू दशाङ्गुलद्वादशाङ्गुलौ भवत । चालने कार्ण्डवाज इव मुख ययोस्तौ शरपुङ्खास्यौ भवत ।

आ० र०–चालनौ शङ्कू आह–द्वाविति । शरपुङ्खं–शरकर्तरी ।

**आहार्ये बडिशाकृती ॥ ३१ ॥**

स०–आहार्ये–आकर्षणे, बडिशाकारौ ।

आ० र०–आहरणौ शङ्कू आह–आहार्ये बडिशाकृतीति । बडिश–मत्स्यवेधनम् ।

षट्शङ्कूनाख्याय गर्भशङ्कुमाह—

**नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृत ।**
**अष्टाङ्गुलायतस्तेन मूढगर्भं हरेत् स्त्रियाः ॥ ३२ ॥**

स०–नतोऽग्रे–अग्रभागे, तथा शङ्कुना समे –कीलकाकार, अष्टाङ्गुलदीर्घ स गर्भशङ्कुरिति स्मृत, 'मुनिभि' इति शेष । तेन–गर्भशङ्कुना, मूढगर्भ–अनि सरन्त, हरेत् ।

आ० र०–सप्तम गर्भशङ्कुमाह–नतोऽग्र इति । नतो–वक्र । शङ्कुना तुल्य–कीलकाकार ।

**अश्मर्याहरणं सर्पफणावद्वक्रमग्रतः ।**

स०–अश्मर्याकर्षणे सर्पफणावदग्रे वक्र स्यात् । सर्पफणाख्यमेव चैतद्यन्त्रम् ।

आ० र०–अश्मर्याहरणं शलाकायन्त्रमाह–अश्मर्याहरणमिति ।

**शरपुङ्खमुखं दन्तपातनं चतुरङ्गुलम् ॥ ३३ ॥**

स०–शरपुङ्खमुखाख्य यन्त्र चतुरङ्गुल दन्तपातन स्यात् । अनेन हि दन्ताश्चलन्त पात्यन्ते कृम्यादिभक्षिता वा ।

आ० र०–दन्तपातनं शलाकायन्त्रमाह–शरपुङ्खमुखमिति ।

**कार्पासविहितोष्णीषाः शलाकाः षट् प्रमार्जने ।**

स०–प्रमार्जने–क्षालने क्षारक्लेदादे, षट् शलाका स्यु । किम्भूता ? कार्पासेन विहितमुष्णीष–शिरोवेष्टनमिव, यासा तास्तथोक्ता ।

आ० र०–प्रमार्जनी शलाका गणयति–कार्पासविहितोष्णीषा इति । उष्णीष–शिरोवेष्टनम् ।

**पायावासन्नदूरार्थे द्वे दशद्वादशाङ्गुले ॥ ३४ ॥**

स०–पायावासन्नदूरार्थे दशद्वादशाङ्गुले द्वे भवत । आसन्नार्थे दशाङ्गुला, दूरार्थे द्वादशाङ्गुलेत्यर्थ ।

आ० र०–पायुप्रमार्जन्यौ शलाके आह–पायाविति ।

**द्वे षट्सप्ताङ्गुले घ्राणे, द्वे कर्णेऽष्टनवाङ्गुले ।**

स०–घ्राणे षट्सप्ताङ्गुले द्वे भवत । 'आसन्नदूरार्थे' इत्यत्राप्यनुवर्तते । तथैव कर्णेऽष्टनवाङ्गुले भवत ।

---

१ 'तु' अ.आ.ग.च प. । २ 'कर्मणि' अ.आ.घ ञ । ३ 'णी अन्ये द्वे श' ट. । ४ 'ङ्गुलौ द्वादशाङ्गुलौ वा म' ठ.ड. । ५ 'फटासु' ठ. । 'र्पभोगमु' ड. । ६ 'व्यूहन–ऊर्ध्वीकरण छिन्वोत्तुण्डितस्योद्धरणार्थं, वारङ्गेणानुसरणमित्येके' इति डल्हण. । 'चूर्णिताश्मर्यादीना सङ्ग्रहणम्' इति हाराणचन्द्र । 'व्रणौष्ठयो. सन्निहितीकरणम्' इति गणनाथ । ७ 'न–यथा' क घ.च.ञ प । ८ 'ण्डपुङ्खवत् मु' ट. । ९ 'शरपुङ्ख.–शरगुणसन्धानस्थानम्' इति डल्हण. ।

१ 'ग्रतो मा' ठ । २ 'म –अष्टा' ट ठ ड । ३ 'न–शङ्कु' ट ठ. । ४ 'रणे स' अ इ.घ.अरुण । ५ 'द्वक्रम' अ आ इ.ग च.ञ.प, स मू । ६ 'वक्र' ठ. । 'वक्र–कुटिलम्' इति चन्द्र । ७ 'रणश' ग.च प. । ८ 'ताश्च ।' ठ. । ९ 'तनश' ग.घ.च.प. । १० 'ता. कार्पासविहितोष्णीषा. ।' ठ. । ११ 'नीमश' क.ञ. ।

आ० र०-घ्राणप्रमार्जन्यौ शलाके आह-द्वे षडिति ।
कर्णप्रमार्जन्यौ शलाके आह-द्वे कर्ण इति ।

**कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननम् ॥ ३५ ॥**

स०-कर्णशोधनाख्य यन्त्रम् । अश्वत्थपत्रस्येव प्रान्तो यस्य तत्तथा । तथा, स्रुवस्येवानन यस्य तदेवम् ।

आ० र०-कर्णशोधन शलाकायन्त्रमाह-कर्णशोधनमिति । [1]द्रवस्य मलस्यापनयन-मार्जनम्, कठिनस्य-शोधनम् ।

**शलाकाजाम्बवौष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् ।**
**युञ्ज्यात् स्थूलाणुदीर्घाणां**

स०-शलाकाश्च जाम्बवौष्ठानि च तेषा पृथक् त्रय क्षारे-क्षारपातने, [अग्नौ-] अग्निदाहकरणे च, युञ्ज्यात् । [2]किम्भूताना शलाकाजाम्बवौष्ठानाम् ? स्थूलाणुदीर्घाणा,-स्थूलाश्चाणवश्च दीर्घाश्च, तेषाम् । तत्र शलाकास्तिस्रो जाम्बवौष्ठानि च त्रीणि, क्षारे तथा [3]दाहने, एव द्वादशैतानि शलाकाख्यानि यन्त्राणीति ।

आ० र०-क्षाराग्निप्रयोगार्थं तिस्र शलाकास्त्रीणि च जाम्बवौष्ठान्याह-शलाकाजाम्बवौष्ठानामिति । स्थूल च स्थूला च अणुश्च अणु च दीर्घा च दीर्घं च तानि स्थूलाणुदीर्घाणीत्येक[4]शेषेण निर्देशः । अणु-सूक्ष्म ह्रस्व च । तेन स्थूलदीर्घं सूक्ष्मह्रस्व मध्य चेति त्रिविध शलाकायन्त्र जाम्बवौष्ठ च । जम्बूफलवदोष्ठो यस्य तज्जाम्बवौष्ठम्, शलाकाविशेष एव । सङ्ग्रहेऽप्युक्तम् ( सू अ ३४ )-"क्षाराग्निकर्मार्थं जाम्बवौष्ठानि द्वादशदशाष्टाङ्गुलानि क्रमात् [5]त्र्यङ्गुलाङ्गुलार्द्धाङ्गुलफलानि । शलाकाश्च स्थूलसूक्ष्मदीर्घह्रस्वमध्या ।" इति ।

**शलाकामन्त्रवर्ध्मनि ॥३६॥**
**मध्योर्ध्ववृत्तदण्डां च मूले चार्धेन्दुसन्निभाम् ।**

स०-अन्त्रवर्ध्मनि-अन्त्रवृद्धौ, शलाका युञ्ज्यात् । कीदृशीम् ? मध्यादूर्ध्वं वृत्तो दण्डो यस्यास्ताम् । तथा, मूले-मूलभागे, अर्धेन्दुसन्निभा-अर्धचन्द्राकाराम् ।

आ० र०-अन्त्रवृद्धौ दाहार्थं शलाकामाह-शलाकामिति । मूले-ग्रहणस्थाने । मध्योर्ध्ववृत्तदण्डां-अर्धचन्द्राकृति शलाकां विधाय तन्मध्ये ऊर्ध्वो वृत्तो दण्ड कार्यः ।

**कोलास्थिदलतुल्यास्या नासार्शोऽर्बुददाहकृत् ॥३७॥**

स०-बदरास्थिखण्डसम मुख यस्या सा कोलास्थिदलतुल्यास्या । सा नासार्श सु नासार्बुदेषु च दाहं करोति ।

आ० र०-नासार्शोऽर्बुददाहार्थं शलाकामाह-कोलास्थिदलेति ।

**अष्टाङ्गुला निम्नमुखास्तिस्रः क्षारौषधक्रमे ।**
**[6]कनीनीमध्यमानामीनखमानसमैर्मुखैः ॥ ३८ ॥**

स०-क्षारौषधक्रमे तिस्र शलाका निम्नमुखा अष्टाङ्गुला स्यु । कीदृश्य ? कनीनी च मध्यमा चानामी च, तासा नखा, तेषा [1]मान-[2]प्रमाण, [3]तेन समै-तुल्यै, मुखैरुपलक्षिता स्यु ।

आ०र०-दर्व्याख्यास्तिस्र शलाका आह-अष्टाङ्गुला इति ।

**स्वस्वमुक्तानि यन्त्राणि मेढ्रशुद्ध्यञ्जनादिषु ।**

स०-मेढ्रादिषु विषयेषु-उत्तरबस्त्यादिषु, स्वस्व-यथास्व, यन्त्राणि गदितानि । आदिशब्देन नावनादिपरिग्रह ।

आ० र०-मेढ्रशोधनाद्याः शलाकास्तत्र तत्रोक्ता इत्याह-स्वस्वमुक्तानीति ।

**[3]अनुयन्त्राण्ययस्कान्तरज्जुवस्त्राश्ममुद्गराः ॥ ३९ ॥**
**[4]वध्रान्त्रजिह्वाबा[5]लाश्च शाखानखमुखद्विजाः ।**
**कालः पाकः करः पादो भयं हर्षश्च, तत्क्रियाः ४०**
**उपायवित्प्रविभजेदालोच्य निपुणं धिया ॥ ४०½ ॥**

स०-अयस्कान्तादी[6]न्यणुयन्त्रा[7]णि, स्वल्पयन्त्रकार्यकरणात् । तेषा क्रियास्तत्क्रिया -निर्घातनादिका , बुद्ध्या निपुणमालोच्य प्रविभजेत्,-निर्घातनादिकर्माणि प्रविभज्य युञ्ज्यादित्यर्थ ।

आ० र०-अनुयन्त्राण्याह-अनुयन्त्राणीति । [8]अयस्कान्तादीन्येकोनविंशतिरनुयन्त्राणि । सङ्ग्रहे तु ( सू अ. ३४ )-"एतानि देहे सर्वस्मिन् देहस्यावयवेऽपि वा । सन्धौ कोष्ठे धमन्यां च यथायोग प्रयोजयेत् ॥" इति ।

अनुयन्त्रकर्माणि स्वयमूह्यानीत्यत आह-तत्क्रिया इति ।
तान्येव यन्त्राणा कर्माण्याह—

**निर्घातनोन्मथनपूरणमार्गशुद्धि-**
**संव्यूहनाहरणबन्धनपीडनानि ।**
**आचूषणोन्नमननामनचालभङ्ग-**
**व्यावर्तनर्जुकरणानि च यन्त्रकर्म ॥ ४१½ ॥**

स०-निर्घातनादि यन्त्रस्य कर्म । निर्घा[9]तन-ताडन परिपातनम्, उन्मथ[10]न-आलोडन उन्मूलनम् , एवमन्यदपि चिन्त्यम् । च समुच्चये, तेन प्रक्षालनादीनि समुच्चीयन्ते ।

आ० र०-यन्त्रकर्मा[11]ण्याह-निर्घातनेति । सङ्ग्रहे तु (सू. अ ३४)-"विवरणविकर्ष[12]णच्छेदनैषणदारणप्रक्षालनप्रधमनाञ्जनप्रमार्जनानि" इति नवाधिकानीति चतु[13]र्विंशतिः ।

१ 'द्रवमल० नमलस्यापनयन शो' क ञ । २ 'कीदृशा श' ट. । ३ 'दहने' ट.ठ ड । ४ 'शेषति' क ञ. । ५ 'लप्रमाणफ' क ञ । ६ 'कनिष्ठाम' आ. ।

१ 'परिमाण' ड । २ 'न मानेन स' ट । ३ 'अणुय' ठ. अरुण । ४ 'वध्रयन्त्र' आ ञ ठ प । 'वर्धान्त्र' इ घ च । ५ 'लाश्च शाखा' इति चन्द्रनन्दनसम्मत पाठ , सटीकसङ्ग्रहानुमतश्च । ६ 'दीन्येकोनविंशत्यनुय' इति क्वचित् । ७ 'णि कल्पयेत्,स्व' ट. । ८ 'अयस्कान्त -पाषाणविशेष , आकर्षकद्रावकचुम्बकभ्रामकभेदाच्चतुर्विध ।' इति डल्हण । ९-१० 'न-परि' 'न-उन्मू' ठ । ११ 'र्माणि गणयति-' ग घ च प । १२ 'णविच्छिन्नेक्षणदा' क ग घ च प । 'णवच्छन्नक्षेपणदा' ञ । 'णव्यञ्जनैष' स.मू. । १३ 'तिर्भवन्तीति ।' ग.प. ।

विवर्तते साध्ववगाहते च
ग्राह्यं गृहीत्वोद्धरते च यस्मात् ।
यन्त्रेष्वतः कङ्कमुखं प्रधानं
स्थानेषु सर्वेष्वधिकारि यच्च ॥ ४२½ ॥

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने यन्त्रविधिर्नाम पञ्चविंशतितमोऽध्यायः ॥ २५ ॥**

स०–विवर्तनादिभिश्चतुर्भिः कारणैर्यन्त्रेषु मध्ये कङ्कमुख श्रेष्ठमिति । यस्माच्च सर्वेषु प्रदेशेष्वधिकारि–अधिक्रियते इति । वसन्ततिलकोपजाती वृत्ते ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने यन्त्रविधिर्नाम पञ्चविंशोऽध्याय समाप्त ॥ २५ ॥

आ० र०–यन्त्रेषु कङ्कमुखस्य प्राधान्यमाह–विवर्तत इति । सङ्ग्रहे तु (सू अ ३४)–"ह्रस्वदीर्घस्थूलतनुवक्रविषमग्राह्यग्राहिशिथिलतेत्यष्टौ यन्त्रदोषा ।" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
यन्त्रकर्मप्रकरणं सामस्त्येन निरूपितम् ॥ २५ ॥




अथेदानी षड्विंशाध्यायारम्भ शस्त्रस्वरूपविज्ञानार्थं ।

**अथातः शस्त्रविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
(गद्यसूत्रे ॥ २ ॥)

स०–शस्त्रस्य विधि शस्त्रविधि । शेष पूर्ववत् ।
आ०र०–शस्त्रविधिमध्याय व्याख्यातु प्रतिजानीते–अथेति ।

**षड्विंशतिः सुकर्मारैर्घटितानि यथाविधि ।**
**शस्त्राणि रोमवाहीनि बाहुल्येनाङ्गुलानि षट् ॥ १ ॥**

**सुरूपाणि सुधाराणि सुग्रहाणि च कारयेत् ।**
**अकरालानि सुध्मातसुतीक्ष्णावर्तितेऽयसि ॥ २ ॥**
**समाहितमुखाग्राणि नीलाम्भोजच्छवीनि च ।**
**नामानुगतरूपाणि सदा सन्निहितानि च ॥ ३ ॥**
**स्वोन्मानार्धचतुर्थांशफलान्येकैकशोऽपि च ।**
**प्रायो द्वित्राणि, युञ्जीत तानि स्थानविशेषतः ॥ ४ ॥**
**(मण्डलाग्रं वृद्धिपत्रमुत्पलाध्यर्द्धधारके ।**
**सर्पैषण्यौ वेतसाख्यं शरार्यास्यत्रिकूर्चके ॥ १ ॥**
**कुशास्यं साटवदनमन्तर्वक्त्रार्धचन्द्रके(कम्) ।**
**व्रीहिमुखं कुठारी च शलाकाङ्गुलिशस्त्रके ॥ २ ॥**
**बडिशं करपत्राख्यं कर्तरी नखशस्त्रकम् ।**
**दन्तलेखनकं सूच्यः कूर्चो नाम खजाह्वयम् ॥ ३ ॥**
**आरा चतुर्विधाकारा तथा स्यात्कर्णवेधनी(नम्)॥)**

स०–बाहुल्येन शस्त्राणि षडङ्गुलानि भवन्ति । तथा षड्विंशतिसङ्ख्यानि, तथा सुकर्मारै–कर्मकुशलैर्नरै, यथाविधि [ घटितानि ]–सम्यङ्निष्पादितानि, तथा रोमवाहीनि– लोमशातनसमर्थानि, तथा सुरूपाणि–शोभनाकाराणि, तथा सुधाराणि–शोभनधाराणि, तथा सुखेन गृह्यन्ते–सुग्रहाणि च, कारयेत् । क ? अयसि । कीदृशे ? सुष्ठु ध्मात सुध्मात, तथा सुतीक्ष्ण स्वावर्तितं च यदय–शस्त्र, तस्मिन् । कीदृशानि शस्त्राणि ? अकरालानि–सुदर्शनानि । तथा, समाहितं–सुष्ठु कृत, मुखाग्र–फल, येषा तानि समाहितमुखाग्राणि । तथा, नीलोत्पलद्युतीनि । तथा, नाम्नाऽनुगत रूप येषां तानि–अन्वर्थनामानीत्यर्थं । तथा, सर्वकाल सन्निहितानि–समीपस्थानि । तथा, स्व च तदुन्मान च स्वोन्मान–आत्मीयं प्रमाणं, तस्मात्स्वकाशार्दर्धं, तस्य चतुर्थांश –अष्टभागं, फल येषा तान्येवम् । अपि चेति समुच्चये । एवविधानि शस्त्राण्येकैकशः स्थानविशेषात् द्वित्राणि प्रयुञ्जीत । एकैकश इति "एकं बहुव्रीहिवत्" इति द्विस्त्वसुब्लोपौ, तत शस्प्रत्यय ।

---

१ 'निवर्तते' घ. सुश्रुत । २ 'ष्वविकारि' आ इ स मू । ३ 'यन्त्रप्रकरण नाम सा' घ प । ४ अय शस्त्रविधि सुश्रुते सू० ८।१३ अध्याययों, अष्टाङ्गसङ्ग्रहे सू० ३४।३५ अध्याययोश्चास्ति वर्णित, चरके तु न वर्णित । ५ हृदये सङ्ग्रहे च वाग्भटोक्तानि षड्विंशतिशस्त्रान्तर्गतानि सर्पवक्त्रशलाकाकर्तरीकूर्चखजकर्णव्यधनानि षट्शस्त्राणि सुश्रुते नोक्तानि ।

१ 'स्वमानार्ध' इति ठ. पुस्तकानुसारी पाठ । २ ( ) एतच्चिह्नान्तर्गतोऽय पाठ इ ड ञ पुस्तकेषूपलब्ध । ३ 'कुशास्या साटवदना छत्रवक्त्रा' इ ड । ४ 'नि षड्विंशतिसङ्ख्यानि भवन्ति । तथा सु' ठ । ५ 'म्यक्कृतानि' ठ । ६ 'किम्भूते?' ठ. । ७ 'तीक्ष्ण' इति क्वचित् । ८ 'किंलक्षणानि' ठ । ९ 'ग्र येषां' ट.ठ । १० 'तान्येवम् । त' ट । ११ 'तन्मान च स्वमान' ठ. । १२ 'दर्धचतुर्थांशोऽस्याष्ट' ट । १३ अस्याग्रे 'अङ्गुलषट्कस्य सप्तमाशद्वयसहित यवदशकम्, तत्परिमाण' इति क्वचिन्मुद्रितपाठो दृश्यते, किन्तु ट ठ ड सर्वेषु त्रिष्वपि लिखितपुस्तकेष्वस्याभावत्वात् "अष्टभाग" इति स्वोक्तस्यार्थस्य विरोधभावत्वाच्च सोऽयुक्त । १४ 'शेषेण द्वि' ठ. ।

आ० र०-शस्त्राणां सामान्यलक्षणमाह-षड्विंशतिरिति । सुकर्माणि-उत्तमलोहकाणि । रोमवाहीनि-रोमच्छेदीनि । अकरालानि-आर्जववन्ति । अयसि-लोहे घटितानि, तृतीयार्थे सप्तमी । समाहित-सम्यग्घटित, सुखाग्र-फल, येषां तानि । स्वोन्मानस्य-अङ्गुलषट्कस्य, अर्धचतुर्थांशः-अध्युष्टो भाग,-सप्तमांशद्वयसहित यवदशकम्, तत्परिमाण फल येषां तानि । एकैकशो द्वित्राणि-प्रत्येकं द्वे त्रीणि वा, कारयेत् ।

षड्विंशतेरुपयोगमाह-युञ्जीतेति ।

**मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृति ।**
**लेखने छेदने योज्यं पोथकीशुण्डिकादिषु ॥ ५ ॥**

स०-तेषा शस्त्राणा मध्ये मण्डलाग्र नाम शस्त्रम् । कीदृक् ? फलोद्देशे तर्जन्या अन्तर्नखस्तर्जन्यन्तर्नख, तस्येवाकृतिर्यस्य तदेवम् । क्वैतद्योज्यम् ? इत्याह-लेखने छेदने च पोथक्यादिषु योज्यम् । आदिशब्देन वर्त्मरोगादयो गृह्यन्ते ।

आ० र०-मण्डलाग्र शस्त्रमाह-मण्डलाग्रमिति । शुण्डिका-गलशुण्डिका ।

**वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ।**
**ऋज्वग्रमुन्नते शोफे गम्भीरे च तदन्यथा ॥ ६ ॥**
**नताग्रं पृष्ठतो दीर्घह्रस्ववक्त्रं यथाश्रयम् ।**

स०-वृद्धिपत्र नाम शस्त्र क्षुराकार स्यात् । तच्च छेदनादिषु योज्यमिति प्रकृतम् । फलपरिमाण तूक्तमेव । कीदृक् ? ऋजु-स्पष्टमग्र यस्य तदृज्वग्रम्, तदुन्नते शोफे स्यात् । गम्भीरे तु शोफे तत्-वृद्धिपत्रमन्यथा । कथमन्यथा ? इत्याह-नतेत्यादि । पृष्ठत -पृष्ठदेशे, नतमग्र यस्य तन्नताग्रं भवतीति ।

आ० र०-वृद्धिपत्रमाह-वृद्धिपत्रमिति । उन्नते गम्भीरे च शोफे ऋज्वग्रम् । अन्यथाभूते शोफे पृष्ठतो नताग्रम् । स्थानवशेन दीर्घमुख ह्रस्वमुख च ।

**उत्पलाध्यर्धधाराख्ये भेदने छेदने तथा ॥ ७ ॥**

स०-[यथायथ-यथाख, दीर्घवक्त्र ह्रस्ववक्त्र च युञ्ज्यात् ।] उत्पल चाध्यर्धधारं च, ते आख्ये ययोस्त उत्पलाध्यर्धधाराख्ये शस्त्रे यथाक्रम दीर्घह्रस्ववक्त्रे भवत । उत्पलपत्र दीर्घमुखमध्यर्धधारं तु ह्रस्ववक्त्रमित्यर्थ । ते भेदने छेदने च योज्ये । तथेति समुच्चये, पाटने च योज्य इत्यर्थ ।

आ० र०-उत्पलपत्रमध्यर्द्धधार चेति शस्त्रद्वयमाह-उत्पलेति । एते स्वनामानुगतरूपे ।

**सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धाङ्गुलं फले ।**

स०-सर्पवक्त्र नाम शस्त्र नामानुगताकारं घ्राणार्शश्छेदने कर्णार्शश्छेदने च योज्यम् । तच्च फलेऽर्धाङ्गुल भवति ।

आ० र०-सर्पवक्त्रमाह-सर्पास्यमिति ।

**गतेरन्वेषणे श्लक्ष्णा गण्डूपदमुखैषणी ॥ ८ ॥**

स०-एषणी नाम शस्त्र गतेर्व्रणानामन्वेषणे योज्यम् । कीदृशी ? श्लक्ष्णा-कोमलस्पर्शा । तथा, गण्डूपदमुखमिव मुख यस्या. सा गण्डूपदमुखा ।

आ० र०-अन्वेषणार्थमेषणीमाह-गतेरिति । गते.-नाडीव्रणस्य ।

द्वितीयामेषणीमाह—

**भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा ।**

स०-अपरैषणी भेदनार्थे सूचीमुखा स्यात् । तथा, मूले निविष्ट-कृत, ख-छिद्र, यस्या सा मूलनिविष्टखा ।

आ० र०-भेदनार्थमेषणीमाह-भेदनार्थ इति । भेदनत्व क्षारार्क्तसूत्रप्रवेशनेन ।

**वेतसं व्यधने**

स०-वेतस-वेतसपत्राकारं शस्त्रं, षडङ्गुल पूर्वोक्तफलम् । तच्च व्यधने योज्यम् ।

आ० र०-वेतसशस्त्रमाह-वेतसमिति ।

**स्राव्ये *शरार्यास्यत्रिकूर्चके ॥ ९ ॥**

स०-शरारि -आट्याख्यः पक्षिविशेष । शरार्यास्य नाम शस्त्र त्रिकूर्चके च स्राव्ये योज्यम् ।

आ० र०-शरारिमुख त्रिकूर्चक चेति शस्त्रद्वयमाह-स्राव्य इति । स्राव्ये-प्रच्छानेन रक्तस्रुतौ । भावे कृत्यप्रत्यय. । शरारि.-पक्षिविशेष ।

---

१ 'स्वोन्मानात्-आत्मीयादूर्ध्वमानादैर्घ्यात्, अर्धांशफलानि चतुर्थांशफलानि वा' इति चन्द्र । इन्दुस्तु हेमाद्रिवत् 'सार्धत्रिभागफलानि' इति व्याख्यातवान् । २ 'श -शस्त्राध्युष्टो' क ञ । ३ अध्युष्ट -सार्धतृतीय । ४ षड्यवा -एकमङ्गुलम्, एव षडङ्गुलाना षट्त्रिंशतिर्यवा स्यु । तेषा सार्धतृतीयोंऽश. सप्तमांशद्वयसहिता दश यवा एव (१०२/७) भवन्ति । ५ 'फल ते' घ । ६ 'म् । फलो' ठ । ७ 'गादिषु ।' ठ । ८ 'रे तु ततोऽन्यथा' आ. । ९ अरुणदत्तस्तु 'दीर्घह्रस्ववक्त्रे यथायथम्' इति पठित्वा, उत्पलाध्यर्धधाराख्ययोर्योजयति । १० 'यथाशयम्' अ.ड.चन्द्र । 'यथाक्रमम्' आ. । 'यथायथम्' इ । ११ 'वृद्धिनामौषधवृक्षस्य पत्रसदृशफलकत्वात् वृद्धिपत्राख्यम्' इति वाग्भटार्थकौमुद्याम् ।

१ [ ] इति पाठ ट. पुस्तके नोपलभ्यते । २ 'ते नामा' ग घ च.प । ३ 'नार्थामे' घ च । *४ अरुणदत्तस्तु 'शरार्यास्यत्रिकूर्चके' इत्यत्र 'कुशाटावदने' इत्यत्र च क्रमेण 'शरार्यास्य' इति 'कुशाटा' इति च पृथक्पदमेकैक च शस्त्र यन्मन्यते तदसत्, सङ्ग्रहसुश्रुतादिविरुद्धत्वात् । ५ 'शरारा-दीर्घचञ्चु पक्षिविशेष ।' वा.कौ. ।

कुशाटावदने[1] स्राव्ये द्व्यङ्गुलं स्यात्तयोः फलम् ।

स०–कुशाटा नाम शस्त्र वदने स्राव्ये योज्यम् । तयो–शरारिकुशाटयो, फल द्व्यङ्गुलप्रमाण स्यात् ।

आ० र०–कुशपत्रमाटामुख चेति शस्त्रद्वयमाह–कुशाटेति । आटा[2]–पक्षिविशेष ।

तद्वदन्तर्मुखं तस्य फलमध्यर्धमङ्गुलम् ॥ १० ॥
अर्धचन्द्राननं[3] चैतत्

स०–अन्तर्मुख नाम शस्त्र तद्वत्–कुशाटातुल्यम् । तस्य–अन्तर्मुखस्य, फल[4] सार्धमङ्गुल स्यात् । तथा–कुशाटातुल्यमेत[5]दपि, अर्धचन्द्रास्यसज्ञ शस्त्रम् । च समुच्चये भिन्नक्रमे ।

आ० र०–अन्तर्मुखमाह–तद्वदिति । तद्वत्–स्राव्ये ।

तथाऽध्यर्धाङ्गुलं फले ।
व्रीहिवक्त्रं प्रयोज्यं च तच्छिरोदरयोर्व्यधे ॥ ११ ॥

स०–व्रीहिवक्त्रमप्यध्यर्धाङ्गुल फले स्यात् । तच्च शिराव्यध उदरव्यधे च[6] योज्यम् ।

आ० र०–व्रीहिमुखमाह–तथेति ।

पृथुः कुठारी गोदन्तसदृशार्धाङ्गुलानना ।
तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां शिराम् १२

स०–कुठारी नाम शस्त्रं पृथु –विस्तीर्णसस्थानदण्डा । तथा, गोदन्तसदृशमर्धाङ्गुलमानन यस्या सैवम् । तया–कुठारिकया, ऊर्ध्वदण्डया सत्या शिरामस्थ्नामुपरि स्थिता विध्येत् ।

आ० र०–कुठारीमाह–पृथुरिति ।
कुठार्या कार्यमाह–तयेति ।

ताम्री शलाका द्विमुखी[7] मुखे कुरुबकाकृतिः[8] ।
लिङ्गनाशं तया विध्येत्

स०–ताम्रमयी शलाका द्विमुखी स्यात् । सा च मुखे कुरुबकाकृति –रक्तसहचरपुष्पमुकुलाकारा स्यात् । तया–शलाकया, लिङ्गनाश–कफोत्थपटलसज्ञ, विध्येत् ।

आ० र०–शलाकामाह–ताम्रीति । कुरुबक–कुरण्टकमुकुलम् ।

कुर्यादङ्गुलिशस्त्रकम्[9] ॥ १३ ॥
मुद्रिकानिर्गतमुखं फले त्वर्धाङ्गुलायतम् ।
योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ १४ ॥

तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम्[1] ।
सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने ॥ १५ ॥

स०–अङ्गुलिशस्त्रक कुर्यात् । कीदृशम् ? मुद्रिकया–ऊर्मिकया, निर्गत–निष्क्रान्त, मुख यस्य तन्मुद्रिकानिर्गतमुखम् । फले तु–तस्मिन्मुखे, अर्धाङ्गुलदीर्घम् । योगत[2] –सस्थानेन, वृद्धिपत्रेण मण्डलाग्रेण वा तुल्यम् । कियत्प्रमाणाऽस्य मुद्रिका कार्या ? इत्याह–तत्प्रदेशिन्यग्रेत्यादि । तस्य–वैद्यस्य[3], या प्रदेशिनी तस्या यदग्रपर्व तस्य यत्प्रमाण तेनार्प्यत[4] इति तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणी–भिषक्तर्जन्यग्रपर्वप्रवेशाप्रच्छिद्रा, मुद्रिका यस्मिन् तत् तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम् । तथा, सूत्रेण बद्ध–सूत्रबद्धम्, सूत्रेण बद्ध्वा मणिबन्धे योज्यमित्यर्थ[5] । गलस्रोतोरोगाणा छेदने भेदने च[6] तद्योज्यम् ।

आ० र०–अङ्गुलिशस्त्रकमाह–कुर्यादिति । मुद्रिकानिर्गतमुख–कण्ठस्थमुद्रिकम् । योगत.–स्थानरोगयोग्यतानुसारेण विकल्प्य[7] ।

ग्रहणे शुण्डिकार्मादेर्बडिशं[8] सुनताननम् ।

स०–बडिश नाम शस्त्र शुण्डिकार्मादेर्ग्रहणे योज्यम् । आदिशब्देन प्रतिजिह्विकादेर्ग्रहणम् । कीदृश तत् ? सुनत–अङ्कुशवदानत, आनन–मुख, यस्य तदेवम् ।

आ० र०–बडिशमाह–ग्रहण इति ।

छेदेऽस्थ्नां करपत्रं तु खरधारं दशाङ्गुलम् ॥ १६ ॥
विस्तारे[10] द्व्यङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धनम् ।

स०–करपत्र[9] नाम शस्त्रं खरधारं, तथा दशाङ्गुल दैर्घ्येण, द्व्यङ्गुल विस्तारेण, सूक्ष्मा दन्ता यस्य तत्सूक्ष्मदन्तम् । तथा, त्सरु[11] –मुष्टि, बन्धन–ग्रहणम्, शोभने त्सरुबन्धने यस्य तत् सुत्सरुबन्धनम् । अभिधानकोशे यद्यपि 'त्सरु –असिमुष्टि' इत्यभ्यधायि, तथाऽपि मुष्टिमात्रस्येहोपलक्षणार्थत्वात् मुष्टावप्युपपन्नमेव ।

आ० र०–करपत्रमाह–छेदेऽस्थ्नामिति । सुष्ठु त्सरुबे[12]न्धनं ग्रहणार्थं यस्य ।

स्नायुसूत्रकचच्छेदे कर्तरी कर्तरीनिभा ॥ १७ ॥

स०–कर्तरी नाम शास्त्र कर्तरीसदृश स्नाय्वादिच्छेदे योज्यम् ।

१ 'टी' सु । २ 'आटी–जलवर्धनीनाम पक्षिविशेष' इति डल्हण । ३ अरुणदत्तस्त्वत्र 'तथा' इति पदस्य सम्बन्ध कृत्वा, अन्तर्मुखशस्त्रादर्धचन्द्रानन शस्त्र भिन्नमिति यत्प्रतिपादयति तत्सङ्ग्रहादिविरुद्धत्वादयुक्तमेव । ४ 'फलमध्यर्ध' ट । ५ 'ल्यमपि' ट । ६ 'वा' ट । ७ 'द्विमुखा' आ इ घ.च ठ, चन्द्र । ८ 'कुरवका' आ ग ट ठ । ९ अङ्गुलिशस्त्र सङ्ग्रहसुश्रुतयोर्मुद्रिकाशस्त्रमिति नाम्ना पठ्यते ।

१ 'णार्पितमु' अ आ.इ ञ । २ 'योगत –शस्त्रकर्मयोग्यतयाऽऽकृत्या' इति चन्द्र । ३ 'स्य प्रदेशिनी तस्याग्रपर्वप्रमाण' ट । 'स्य प्रदेशिनी तस्याग्र' ठ. । ४ 'नार्पित' ठ । ५ 'दन्तादिषु च' ठ । ६ 'च योज्यम्' ट । ७ 'कल्प ।' ग घ च प । ८ 'डिशः सुनतानन' आ इ घ च प. । 'बडिश मत्स्यवेधनम्' इत्यमर । ९ 'करवत् पत्र यस्य तत् करपत्रम्, अङ्गुलीभिराचितो यथाऽऽकारो भवति तद्वत् यत् कण्टकैराचित तत् करपत्रमुच्यते, करपत्र करात् ख्यातम् ।' वा कौ. । १० 'स्तारे, सू' ठ । ११ 'त्सरु खड्गादिमुष्टौ स्यात्' इत्यमर । १२ 'रुर्मुष्टिब' क.ञ ।

आ० र०—कर्तरीमाह—स्नायुसूत्रकचच्छेद इति ।

**वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम् ।**
**सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने ॥ १८ ॥**

स०—नखशस्त्र—नखच्छेदक, प्रसिद्धम् । तच्च वक्रा ऋजुश्च धारा यस्य तदेवम् । तस्यैक मुख वक्रमन्यदृजु—स्पष्टम् । तथा, नवाङ्गुल—नवाङ्गुलप्रमाणम्, न तु षडङ्गुलम् । एतच्च सूक्ष्मशल्यस्य—कण्टकादेरुद्धरणादौ नखच्छेदने भेदने [ प्रच्छाने लेखने ] च योज्यम् ।

आ० र०—नखशस्त्रमाह—वक्रर्जुधारमिति । नवाङ्गुल—न तु षडङ्गुलम् । नखच्छेदनक—प्रसिद्धम् । वक्रर्जुधार—एकस्मिन्मुखे वक्रा धारा, अन्यस्मिन् ऋजु ।

अधुना दन्तलेखनशस्त्रमाह—

**एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः ।**
**दन्तलेखनकं तेन शोधयेद्दन्तशर्कराम् ॥ १९ ॥**

स०—एकधार—एकस्मिन् प्रदेशे [ धारा यस्य तदेवम् । ] तथा, चतुष्कोणम् । तथा, एकत —एकस्मिन्देशे प्रबद्धा आकृतिर्यस्य तत् । तद्दन्तलेखनक नाम शस्त्रम् । तेन दन्तशर्करा शोधयेत् ।

आ० र०—दन्तलेखनमाह—एकधारमिति । प्रबद्धवत्—वेष्टितवत्, आकृतिर्यस्य तत् प्रबद्धाकृति ।

अधुना सूचीशस्त्रमाह—

**वृत्ता गूढदृढाः पाशे तिस्रः सूच्योऽत्र सीवने ।**

स०—अत्र—एषु शस्त्रेषु मध्ये, सीवने—सीवनविषये, तिस्र सूच्य स्यु । किम्भूता ? वृत्ता—वर्तुला, पाशे गूढास्तथा दृढा, सारत्वात् ।

आ० र०—सूचीत्रयमाह—वृत्ता इति । पाशे—छिद्रस्थाने, गूढा दृढाश्च ।

आसां च प्रत्येक सस्थानविशेषेण विशेषोपयोगमाह—

**मांसलानां प्रदेशानां त्र्यस्रा त्र्यङ्गुलमायता ॥ २० ॥**

स०—मासलानां—बहुमांसाना, शरीरदेशाना त्र्यस्रा मुखे सूची स्यात् । सङ्ग्रहेऽप्यवोचत् ( सू अ ३४ )—"त्र्यस्राग्रा" इति । त्र्यस्रेति चिन्त्यम् । तथा, त्र्यङ्गुलमायता—त्र्यङ्गुलदीर्घा । वृत्तत्वं दृढपाशत्वं चोक्तमेव सामान्यलक्षणेन ।

आ० र०—तत्र त्र्यङ्गुलां सूचीमाह—मांसलानामिति ।

**अल्पमांसास्थिसन्धिस्थव्रणानां द्व्यङ्गुलायता ।**

स०—अल्पमासाना व्रणाना सन्ध्यस्थिसश्रिताना च द्व्यङ्गुलमायता—दीर्घा । वृत्तमुखत्व चास्या सामान्येनोक्तम् ।

आ० र०—द्व्यङ्गुला सूचीमाह—अल्पमांसेति ।

तृतीयामाह—

**व्रीहिवक्त्रा धनुर्वक्रा पक्कामाशयमर्मसु ॥ २१ ॥**
**सा सार्धद्व्यङ्गुला**

स०—व्रीहिमुखा, चापवत् कुटिला, दैर्घ्येण द्वेऽङ्गुले सार्धे स्यात् । सा च पक्वाशय आमाशये मर्मसु च व्रणाना सीवने योज्या ।

आ० र०—सार्द्धद्व्यङ्गुलां सूचीमाह—व्रीहिवक्त्रेति ।

अधुना कूर्चं लिलक्षयिषुराह—

**सर्ववृत्तास्ताश्चतुरङ्गुलाः ।**
**कूर्चो वृत्तैकपीठस्थाः सप्ताष्टौ वा सुबन्धनाः ॥२२॥**
**स योज्यो नीलिकाव्यङ्गकेशशातेषु कुट्टने ।**

स०—ता —सूच्य, सर्वतो वर्तुला दैर्घ्येण चतुरङ्गुला कूर्च इत्युच्यते । किम्भूता ? वृत्त एकस्मिन् पीठे सस्थिता । तथा, सप्तसङ्ख्या अष्टौ वा । तथा, शोभन बन्धन यासा ता सुबन्धना । अत एवेद शस्त्र सूचीकूर्चसज्ञ शसन्ति । तथा चार्शश्चिकित्सिते जगाद ( हृ चि अ ८।२९ )—"अर्शोभ्यो जलजशस्त्रसूचीकूर्चै" इत्यादि । स च—सुबद्धसप्ताष्टसूचीक कूर्चो, नीलिकादिषु च कुट्टनविषये योज्य । उपलक्षणार्थत्वाच्चास्य(सौ) श्वित्रेन्द्रलुप्तादिष्वपि योज्य ।

आ० र०—कूर्चमाह—सर्ववृत्ता इति । सर्ववृत्ता —पाशरहिता, ता.—सूच्य, वृत्त एकस्मिन् पीठे निखाता ।

**अर्धाङ्गुलमुखैर्वृत्तैरष्टाभिः कण्टकैः खजः ॥ २३ ॥**
**पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक् ।**

स०—अष्टाभि कण्टकै खज उच्यते । कीदृशै ? अर्धाङ्गुलप्रमाण मुख येषा तै, तथा वर्तुलै । तेन—खजेन, हस्ताभ्यां विलोड्यमानेन, नासिकातोऽस्र हरेत् ।

आ० र०—खजमाह—अर्द्धाङ्गुलमुखैरिति ।

**व्यधनं कर्णपालीनां यूथिकामुकुलाननम् ॥ २४ ॥**

स०—कर्णपालीना व्यधने यूथिका नाम शस्त्र स्यात् । कीदृशी ? मुकुलानना ।

---

१ 'प्रच्छन्नले' अ आ ग ङ ञ । २ 'तदेव ह्येक मुख वक्रमन्यत्स्पष्टम्' ट । ३ 'प्रवृद्धा' ञ ट.ठ । 'प्रवृद्धा—वर्द्धनशीला' वा कौ । ४ दन्तलेखनक शस्त्र सुश्रुते दन्तशङ्कुरिति नाम्ना पठ्यते । ५ 'शर्करा' ट ठ. । ६ त्र्यस्रा—त्रिकोणा । ७ 'हे चोवाच' ट । ८ 'रु दीर्घेत्यर्थ ।' ट. ।

१ 'सर्वा वृत्ता' अ ञ । २ 'शातनकु' अ । ३ 'सर्वा एव व' ठ. । ४ 'सादावपि' ट । 'दिषु च यो' ठ । ५ 'तै, अर्धाङ्गुलप्रमाणमुखैर्वर्तुलैश्च ।' ठ । ६ 'काया रक्त ह' ट । ७ 'व्यधने० का मुकुलानना' अ इ अरुण. । ८ अत्रारुणदत्तचन्द्रौ तु कर्णव्यधनमिति सङ्ग्रहोक्त नाम लक्त्वा यूथिकेति यन्मन्येते, तच्चिन्त्यम् । 'गणिका यूथिकाऽम्बष्ठा' इत्यमर. । 'जुई' इति प्रसिद्धा ।

आ० र०–कर्णव्यधनमाह–व्यधनमिति ।

**आराऽर्धाङ्गुलवृत्तास्या तत्प्रवेशा तथोर्ध्वतः।**
**चतुरस्रा, तया विध्येच्छोफं पक्कामसंशये ॥ २५ ॥**
**कर्णपालीं च बहलाम्**

स०–अर्धाङ्गुलप्रमाणं वृत्तं आस्य–मुखं, यस्या साऽर्धाङ्गुलवृत्तास्या। तथा, स एव–अर्धाङ्गुलप्रमाणं, प्रवेशो यस्या सा तत्प्रवेशा। तथोर्ध्वतः इति वृत्तार्धाङ्गुलादुपरिष्टात् तथैव–अर्धाङ्गुलप्रमाणैव चतुरस्रा स्यात्। सा आरानाम शस्त्रम्। तया–आरया, शोफं विध्येत्। कदा? पक्कामसंशये,–किमयं पक्वः शोफ उताम इति सन्देहे। बहला च कर्णपाली तया विध्येत्।

आ० र०–आरामाह–आरेति। तत्प्रवेशा–अर्द्धाङ्गुलप्रवेशा। ऊर्ध्वतः–वृत्तान्मुखादूर्ध्वं, चतुरस्रा। पक्कामसंशये–पक्वत्वामत्वसन्देहे। बहला–घनाम्।

**बहलायाश्च शस्यते।**
**सूची त्रिभागसुषिरा त्र्यङ्गुला कर्णवेधनी ॥ २६ ॥**

स०–बहलायाः–अतिमांसलायाः कर्णपाल्याश्च, सूची शस्यते,–न केवलमारा। कीदृशी सूची? त्रिभागः–प्रान्तभागात् सुषिरो यस्याः सैवम्। तथा, त्र्यङ्गुला–दैर्घ्येण। सा च कर्णवेधनी स्यात्।

आ० र०–बहलकर्णपालीव्यधनार्थं सूचीमाह–बहलायाश्चेति।

**जलौकःक्षारदहनकाचोपलनखादयः।**
**अलौहान्यनुशस्त्राणि, तान्येवं च विकल्पयेत् ॥२७॥**
**अपराण्यपि यन्त्रादीन्युपयोगं च यौगिकम्।**

स०–जलौकःप्रभृतयोऽनुशस्त्राणि रक्तस्रावकार्यकारणात्। तानि चालौहानि–लोहवर्जितानि। आदिशब्देनायस्कान्तशाकशेफालिकादिखरपत्रादीनां ग्रहणम्। एवं चोक्तेन न्यायेनान्यान्यपि यन्त्रादीनि विकल्पयेत्। आदिशब्देन शस्त्राणां ग्रहणम्। उपयोगं च यौगिकं–साधुतरं, बुद्ध्या निरूपयेत्।

आ० र०–अनुशस्त्राण्याह–जलौक इति।

उक्तेभ्यः शस्त्रयन्त्रेभ्योऽन्यान्यपि स्वबुद्ध्या कल्प्यानीत्याह–तान्येवमिति। तानि–शस्त्रानुशस्त्राणि, यन्त्रादीनि–यन्त्रानुयन्त्राणि, तेषां योग्यमुपयोगं च, विकल्पयेत्।

**उत्पाट्यपाट्यसीव्यैष्यलेख्यप्रच्छानकुट्टनम् ॥ २८ ॥**
**छेद्यं भेद्यं व्यधो मन्थो ग्रहो दाहश्च तत्क्रिया।**

स०–उत्पाट्यादीनि तत्क्रियाः,–तेषां–षड्विंशतिशस्त्राणां, क्रियाः–कर्माणि, तत्क्रियाः। [ तानि षड्विंशतिशस्त्राणि सङ्ग्रहोक्तानि (सू अ ३४)–"तद्यथा–दन्तलेखनमण्डलाग्रवृद्धिपत्रोत्पलपत्राध्यर्धधारमुद्रिकाकर्तरीसर्पवक्त्रकरपत्रकुशपत्राटामुखान्तर्मुखशरारिमुखत्रिकूर्चकुठारिकाव्रीहिमुखशलाकावेतसपत्रारा-कर्णव्यधनसूचीसूचीकूर्चखजैषणीबडिशनखशस्त्राणि।" इति। ] उत्पाट्यं–उद्धार्यम्, तत्र नखशस्त्रं प्रयोज्यम्। पाटने वृद्धिपत्रादि। सीवने सूच्यः। लेखने मण्डलाग्रादि। प्रच्छाने नखशस्त्रादि। कुट्टने कूर्चः। छेदने उत्पलपत्रादि। भेदने एषणी सूचीमुखा। व्यधने वेतसादि। मन्थने खजः। ग्रहे सन्दंशः। दाहे शलाकादिरिति।

आ० र०–शस्त्रकार्याणि गणयति–उत्पाट्येति। उत्पाट्य–उत्पाटनम्, भावे यत्प्रत्ययः। एवं पाट्यादिषु। सीव्य–सीवनम्।

[ शस्त्रदोषानाह—

**कुण्ठखण्डतनुस्थूलह्रस्वदीर्घत्ववक्रताः ॥ २९ ॥**
**शस्त्राणां खरधारत्वमष्टौ दोषाः प्रकीर्तिताः।**

स०–स्पष्टम्। ]

आ० र०–शस्त्रदोषानाह–कुण्ठखण्डेति। ते च दोषा अन्यत्र करपत्रात्।

अधुना शस्त्राणां ग्रहणविधिं दर्शयति—

**छेदभेदनलेख्यार्थं शस्त्रं वृन्तफलान्तरे ॥ ३० ॥**
**तर्जनीमध्यमाङ्गुष्ठैर्गृह्णीयात्सुसमाहितः।**
**विस्रावणानि वृन्ताग्रे तर्जन्यङ्गुष्ठकेन च ॥ ३१ ॥**
**तलप्रच्छन्नवृन्ताग्रं ग्राह्यं व्रीहिमुखं मुखे।**
**मूलेष्वाहरणार्थानि क्रियासौकर्यतोऽपरम् ॥ ३२ ॥**

स०–छेदभेदनलेख्यार्थं तर्जनीमध्यमाङ्गुष्ठैर्मिलितैः शस्त्रं वृन्तफलान्तरे–वृन्तफलमध्यभागे, गृह्णीयात्। कीदृक्? सुसमाहितः,–तद्गतमनाः। विस्रावणकार्याणि शरार्यास्यादीनि शस्त्राणि वृन्ताग्रे तर्जन्यङ्गुष्ठाभ्यां गृह्णीयात्। गृह्णीयादित्यनुवर्तते। तलशब्देन पाणितलमुच्यते, आदिलोपाख्यया तन्त्रयुक्त्या। तलेन प्रच्छन्नं वृन्ताग्रं यस्य तत् व्रीहिमुखं मुखे गृह्णीयात्। शेषं शस्त्रं क्रियासौकर्यतो गृह्णीयात्। सुकरस्य भावः सौकर्यम्। यथा सुकरा पाटनादिका क्रिया स्यात्तथाऽऽददीतेत्यर्थः।

आ० र०–शस्त्रधारणविधिमाह–छेदभेदनेति। छेदना-

---

१ 'तस्या एव च शस्यते' आ। २ 'ल्या सूची' ठ। ३ 'भृतीन्यनु' ठ। ४ 'अशस्त्राण्येव शस्त्रकार्यं कुर्वन्तीत्यनुशस्त्राणि' इतीन्दुः। 'हीनशस्त्राणि शस्त्रसदृशानि वा' इति डल्हणः। ५ 'स्रावादिका' इति क्वचित्। ६ 'णादेव।' ट। ७ 'तान्यलौ' ठ। ८ 'कल्पनीयानी' क ञ। ९ 'व्यसेव्यै' आ.ग घ च.प। १० 'प्रच्छन्नकु' अ.आ.ञ।

१ [ ] इति पाठः ट ठ ड पुस्तकेषु नोपलभ्यते। २ 'र्ध्वं, ऊर्ध्वनयनम्' ठ.। ३ 'स्त्र न यो' ट। ४ 'प्रच्छने' ट.। ५ 'स्त्रकर्माणि' घ.प। ६ 'सेव्य–' ग घ च ञ प। ७ [ ] इति पाठः ट ठ ड सञ्ज्ञेषु त्रिष्वपि लिखितपुस्तकेषु नोपलभ्यते, अत एव नायं श्लोकोऽप्यरुणदत्तसम्मतः। ८ 'णार्थेषु क्रि' अ.। 'णार्थे तु क्रि' इति क्वचित्। ९ 'ङ्गुष्ठै स्त्र' ट.ठ.। १० 'सुख पाटनादिक्रि' ट.। ११ 'था विदधीते' ठ।

दिकर्मणि वृन्तफलयोर्मध्ये तर्जन्यादिभिर्मिलितै शस्त्र गृह्णीयात् । विस्रावणे तु तर्जन्यङ्गुष्ठाभ्या वृन्ताग्रे गृह्णीयात् । व्रीहिमुख तु पाणितलेन वृन्ताग्र प्रच्छाद्य मुखे ग्राह्यम् । आहरणे तु शस्त्र मूले ग्राह्यम् । पाशस्योपरि मध्ये लघु-सन्दश कर्तरी च । शेषेषु तु कर्मसु यत्र गृहीते क्रिया-सौकर्य तत्र ग्राह्यम् ।

शस्त्रकोशमाचष्टे—

**स्यान्नवाङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः ।**
**क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ ३३ ॥**
**विन्यस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः ।**
**शलाकापिहितास्यश्च शस्त्रकोशः सुसञ्चयः ॥ ३४ ॥**

स०–नवाङ्गुलविस्तार शस्त्रकोश स्यात् । तथा, सुष्ठु घनो-निबिड । तथा, द्वादशाङ्गुलप्रमाणो दैर्घ्येण । तथा, क्षौमादिज । तथा, विन्यस्त-कृत, पाशो यस्य स विन्यस्तपाश । तथा, सुष्ठु स्यूत । तथा, सान्तराणि-सव्यवधानानि, ऊर्णास्थानि शस्त्राणि यस्मिन् स सान्तरोर्णास्थशस्त्रक । तथा, शलाकया पिहित-स्थगित, आस्य यस्य स एवम् । तथा, शोभन सञ्चयो यस्य स सुसञ्चय, नापितभाण्डिकावत् । तन्त्रान्तरे चोक्तम्–"निशानी तु शस्त्राणा श्लक्ष्णा शिलिका माषमुद्गप्रभा" इत्यादि ।

**आ० र०–शस्त्रस्थापनार्थं शस्त्रकोशमाह–स्यादिति । सङ्ग्रहे तु ( सू अ. ३४ )–"हस्त एव चात्र प्रधानतम-स्तदधीनत्वाद्यन्त्रशस्त्राणाम् । तत्र क्षारेण पायित शस्त्र शर-शल्यास्थिच्छेदनेषु, उदकेन मांसच्छेदने, तैलेन पाटनभेदन-शिराव्यधस्नायुच्छेदनेषु च प्रयुञ्जीत । धारा पुनर्भेदनाना मासूरी, लेखनानामर्धमासूरी, व्यधनाना विस्रावणाना च कैशिकी, छेदनानामर्धकैशिकी । निशानी तु तेषां श्लक्ष्णा शिलिका माषमुद्गप्रभा । धारासस्थापन च शाल्मलीफल-कम् । अथ योग्या । न चाधिकृतशास्त्रोऽप्यकृतयोग्य, योग्या-अभ्यास, सुबहुशो वाऽप्यदृष्टकर्मा शस्त्रकर्मणि प्रवर्तेत, शिरास्नायुमर्मादिव्याप्तत्वाद्देहस्य । तस्मात् सरोम-चर्मपुष्पफलालाबुत्रपुसोदकपङ्कपूर्णदृतिबस्तिवध्रमासपेशिको-त्पलनालादिषु यथार्हमाहरणादियोग्या कुर्यात् । तथा घट-पार्श्वस्रोतस्यम्भोभि परिपूर्णेन नेत्रेण बस्तिपीडनयोग्याम् । मृदुमांसखण्डेष्वग्निक्षारावचरणयोग्याम् । पुस्तमयपुरुषाङ्ग-प्रत्यङ्गेषु बन्धनयोग्याम् । अपि च । युक्तकारी भिषग्बुभूषु पुरुष सम्पूर्णगात्रमविषहतमदीर्घव्याधिपीडित निष्कृष्टात्रम-वहन्त्यामापगाया मुञ्जवल्वजवेष्टित पञ्जरस्थमप्रकाशे देशे कोथयेत् । त सम्यक्प्रकुथित चोद्धृत्यायतदेह कृत्वोशीरवेणु-कूर्चादीनामन्यतमेन शनै शनैरवघृष्य त्वगादीन् सर्वानेव बा ह्याभ्यन्तरानङ्गसिरास्नाय्वादीनवयवानाचार्योपदर्शितेनागमेन चक्षुषा च लक्षयेत् । इति शास्त्रेण यद्दृष्ट दृष्ट प्रत्यक्षतश्च यत् । समागत तदुभय भूयो ज्ञान विवर्धयेत् ॥" इति ।**

सुकुमारबालानामस्रविस्रावणार्थं जलौकसो निर्दिदिक्षुराह—

**जलौकसस्तु सुखिनां रक्तस्रावाय योजयेत् ।**

स०–सुखिना-सुखोचिताना, रक्तस्रावणार्थं जलौकसो योजयेत् ।

**आ० र०–जलौकसा विषयमाह–जलौकसस्त्विति ।**

ताश्च द्विप्रकारा,–सविषा निर्विषाश्च । तत्र सविषाणा सापा यत्वात्ता एव तावल्लक्षयति–

**दुष्टाम्बुमत्स्यभेकाहिशवकोथमलोद्भवाः ॥ ३५ ॥**
**रक्ताः श्वेता भृशं कृष्णाश्चपलाः स्थूलपिच्छिलाः ।**
**इन्द्रायुधविचित्रोर्ध्वराजयो रोमशाश्च ताः ॥ ३६ ॥**
**सविषा वर्जयेत्**

स०–दुष्टाम्बूद्भवाश्च जलौकस सविषा इति वर्जयेत् । तथा मत्स्यभेकसर्पादिशवकोथोद्भवा, तथा तेषामेव मत्स्यादीना ये मला-सूत्रपुरीषादय, तदुद्भवाश्च सविषा इति वर्जयेत् । सविषाणा लक्षणमाह–रक्ता इत्यादि । यौवल्लोमशा यास्ता सविषा यत, ततो वर्जयेत्–ता न योजयेत् ।

**आ० र०–वर्ज्या जलौकस आह–दुष्टाम्ब्विति । दुष्टाम्बुनि मत्स्यादिशवकोथमलेषु च जाता. ।**

---

१ 'वणानि तु' क.ञ. । 'वण तु' च । २ निशानी–धारा-तैक्ष्ण्यार्थं घर्षणशिला । ३ 'शिला मा' ट । ४ 'दनेषु तै' स स । ५ 'दनेषु शि' च स द्व । 'भेदेषु शि' घ.प । ६ 'नश्छेद' ग घ च प स द्व. । ७ मासूरी–मसूरदलधारातन्वी । ८ कैशिकी–केशप्रमाणा । ९ 'छेद०की' इति घ.च प पुस्तकेषु सङ्ग्रहहृदये च नोपलभ्यते । १० 'निशातनी' स स । ११ 'सुश्लक्ष्णा' स द्व । १२ 'शिला मा' स.स । १३ 'न वाऽधि' ग घ ञ प । १४ पु-ष्पफल–कूष्माण्ड । १५ 'स्रोतस्यलाबुमुखादिषु च नेत्रप्रणिधान-बस्तिव्रणबस्तिपीडन' इति सुश्रुते पाठ ।

१ 'षक् नूतन पुरु' क ग.ञ । २ 'डितमनि' क ग ञ । ३ 'ष्कृष्टहृष्टात्रमावह' स.स । ४ 'ञ्जवल्कलवे' ग । ५ 'रस्थ सप्र' ग च । ६ 'कृत्वा शरवे' क.ग ञ । ७ 'मारावला' ट । ८ अत्र सुश्रुते विशेष उक्त । यथा ( सू अ १३ )–"जल-मासा आयुरिति जलायुका, जलमासामोक इति जलौकस । तासा यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि, तेषु महाशरीरा बलवत्य शी-घ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति । अथ जलौकोवसे-कसाध्यव्याधितमुपवेश्य सवेश्य वा, विरूक्ष्य चास्य तमवकाश मृद्गोमयचूर्णैर्यद्यरुज स्यात् । गृहीताश्च ता सर्षपरजनीकल्कोद-कप्रदिग्धगात्री सलिलसरकमध्ये मुहूर्तस्थिता विगतक्लमा ज्ञात्वा ताभी रोग ग्राहयेत् ।" इति । सरक–पात्रम् । ९ सुखिनामित्युप-लक्षणत्वेन सुश्रुतोक्ताना सङ्ग्रहोक्ताना च नृपाढ्यबालस्थविरभीरुदु-र्बलनारीसुकुमाराणा ग्रहणम् । १० 'त्कविस्रा' ठ । ११ 'वत्कथ-यति' ट । १२ 'कादिशव' आ क ठ । १३ 'या लोमशास्ता' ट. । १४ 'शान्तास्ता' इति क्वचित् । १५ 'कोथे म' क.ञ. ।

ताभिः कण्डूपाकज्वरभ्रमाः ।
विषपित्तास्रनुत्कार्यं तत्र

स०–ताभिर्हि योजिताभि कण्ड्वादय स्यु । उपलक्षण चेदम् । दाहशोषमूर्च्छादयोऽपि स्यु । [ तत्र– ] तासु मोहायोजितासु, विषादिजित् कार्यम् ।

आ० र०–वर्ज्याप्रयोगे दोषमाह–ताभिरिति ।

वर्ज्यादोषे चिकित्सामाह–विषपित्तास्रनुदिति ।

शुद्धाम्बुजाः पुनः ॥ ३७ ॥
निर्विषाः शैवलश्यावा वृत्ता नीलोर्ध्वराजयः ।
कषायपृष्ठास्तन्वङ्ग्यः किञ्चित्पीतोदराश्च याः ॥३८॥

स०–जलौकस इत्यनुवर्तते । शुद्धजलोद्भवा ( शुद्धाम्बुजा )–सौगन्धिकोत्पलकमलविपुलसलिलशैवालजा जलौकसो, निर्विषा स्यु । आसां च लक्षणमाह–शैवलेत्यादि । शैवलमिव श्यावा , तथा वृत्ता , तथा नीलोर्ध्वराजय , तथा कषाय–न्यग्रोधादिवल्कलसदृशवर्ण, पृष्ठ यासा ता एवम्, तथा तनुशरीरा किञ्चित्पीतवर्णजठराश्च निर्विषा वेद्या ।

आ० र०–ग्राह्या जलौकस आह–शुद्धाम्बुसम्भवा इति ।

ता अप्यसम्यग्वमनात् प्रततं च निपातनात् ।
सीदन्तीः सलिलं प्राप्य रक्तमत्ता इति त्यजेत् ॥३९॥

स०–निर्विषा अपि जलौकसो रक्तमत्ता इति त्यजेत् । न केवल सविषा इति प्रतिपादनार्थोऽपिशब्द । रक्तमत्तत्वे हेतुद्वयमाह–असम्यग्वमनात्, दुष्टरक्तस्येति शेष । प्रतत च लागनात्, दुष्टरक्तवासित्वेन रक्तमत्ता इत्युक्ता । ताश्च कथ लक्ष्यन्ते ? इत्याह–सीदन्तीरित्यादि । जल ( सलिल ) प्राप्य–तोयपूर्णभाण्डमासाद्य, सीदन्ती –न तथा चेष्टमाना , इति ज्ञात्वा त्यजेत् ।

आ० र०–ग्राह्यास्वपि मत्ता वर्ज्या इत्याह–ता इति । प्रतत निपातनात्–अविश्रमय्य प्रयोगात् । सीदन्ती –श्रममत्यजन्ती. । रक्तमत्ता इति–रक्तमत्तत्वाद्धेतो ।

अथेतरा निशाकल्कयुक्तेऽम्भसि परिप्लुताः ।
अवन्तिसोमे तक्रे वा पुनश्चाश्वासिता जले ॥ ४० ॥
लागयेद्घृतमृत्स्तन्यरक्तशस्त्रनिपातनैः ।
पिबन्तीरुन्नतस्कन्धाश्छादयेन्मृदुवाससा ॥ ४१ ॥

स०–अथ–परीक्षातोऽनन्तर, इतरा लागयेत् । किम्भूता ? हरिद्राकल्कयुक्तजले परिप्लुता , काञ्जिके कालशेये वा परिप्लुता , पुनश्च जले समाश्वासिता –सात्म्यभूते जले प्लवनार्हा सोत्साहा सती , योजयेत् । अलगन्ती कथ लागयेत् ? इत्याह–घृतेत्यादि । घृतादिपातनैस्ता योजयेत् । पातनशब्द प्रत्येक योज्य । शस्त्रेणाङ्गे रक्त मोक्षयित्वा वा ता योजयेत् । ताश्च पिबन्ती सूक्ष्मवाससाऽऽच्छादयेत् । एव हि तासा मक्षिकाद्युपद्रवात् सम्यग्योजना स्यात् । अथ किमेता पिबन्त्युत नेति कथ ज्ञायते ? इत्यत्र विशेषणद्वारेण हेतुमाह–उन्नतस्कन्धा इति । उन्नत स्कन्धो यासा ता एवम् । उन्नतस्कन्धत्वेन तासा पान ज्ञायत इत्यर्थ ।

आ० र०–जलौकसां प्रयोगमाह–अथेतरा इति । इतरा –अवर्ज्या. । अवन्तिसोमे–काञ्जिके । घृताद्यन्यतमेन प्रदेशमभ्यज्य शस्त्रेण वा प्रच्छाय लागयेत् ।

ननु, शुद्धरक्तदुष्टरक्तयोरेकलोलीभूतत्वात् शुद्धरक्ताकर्षणाज्जलौका दोषाय स्यादित्याह—

संपृक्ताद्दुष्टशुद्धास्राज्जलौका दुष्टशोणितम् ।
आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव ॥ ४२ ॥
( गुल्मार्शोविद्रधीन् कुष्ठवातरक्तगलामयान् ।
नेत्ररुग्विषवीसर्पान् शमयन्ति जलौकसः ॥ १ ॥ )

स०–दुष्टशुद्धास्रान्मिलितादपि जलौका दुष्टरक्तमेव पूर्वमादत्ते, न शुद्ध देहधातुस्थम्, इति दृष्टान्तेन दर्शयति–हस इत्यादि । हसो यथा क्षीरजलान्मिश्रितात् प्राग्दुग्धमादत्ते न तु जलम्, तथा जलौका प्रागशुद्ध रक्तमादत्ते पश्चादितरदिति न्याय्यमेतत् ।

आ० र०–दुष्टशुद्धसम्पर्के जलौका प्रथमं दुष्टं पिबतीत्याह–सम्पृक्तादिति ।

दंशस्य तोदे कण्ड्वां वा मोक्षयेत्

स०–दशस्य तोदे सति कण्ड्वा सत्या वा मोक्षयेत्, शुद्धरक्तरक्षार्थमतियोगभयाच्च । तामित्येकवचननिर्देशादेकैकां मोक्षयेत्, न तु सर्वा सकृदेवेति गमयति । अथ पानलौल्याद्दश न त्यजेत्ततो हरिद्राचूर्ण लवणचूर्ण वा वदने दत्त्वा मोक्षयेत् ।

आ० र०–जलौकसा मोक्षणकालमाह–दशस्येति ।

वामयेच्च ताम् ।
पटुतैलाक्तवदनां श्लक्ष्णकण्डनरूषिताम् ॥ ४३ ॥

स०–मोक्षिता च जलौकस वामयेत् । वमनविधानमाह–पट्वित्यादि । सैन्धवयुतेन तैलेन रूषितास्यां तथा सूक्ष्मेण तण्डुलकण्डनेन रूषितां–अवकीर्णा, वामयेत् । तण्डुलशब्दस्यात्र लोपो ज्ञेयस्तन्त्रयुक्त्या ।

---

१ 'त्यजित्' ग घ प । २ 'म्बुसम्भवा ' अ इ हेमाद्रि चन्द्र । ३ 'षा ज्ञेया ' ठ । ४ 'सीदन्ति स' अ ञ प । ५ 'ताश्च ता स्यु ।' ठ । ६ 'काञ्जिके कालशेये वा' ठ अरुण । ७ 'गयेत्पलम्' ठ.। ८ कालशेय–तक्रम् । ९ 'र्हा सती ' ट.।

१ योजना–चित्तैकाग्र्यम् । २ 'एव चोन्नत' ट । ३ 'च्छाद्य ला' क ञ प । ४ 'द्रस्याक' ट । 'द्रक्तधात्वाक' ठ । ५ 'संसृष्टाद्दु' ठ ड । ६ ( ) इति अ.इ ङ.ञ पुस्तकेषूपलब्ध श्लोक । ७ 'इति हसो दुग्धमिव ।' ड । ८ 'वा परिमो' ठ ड । ९ 'ता । ०ना ० ता ।' अ आ इ हेमाद्रि । १० 'रूक्षि' अ.घ.ञ. प.,ठ.ड. । रूषितां–चर्चिताम् ।

आ० र०—मोक्षितानां कृत्यमाह—वामयेदिति। कण्डन—तुष।

**रक्षन् रक्तमदाद्भूयः सप्ताहं ता न पातयेत्।**

स०—ता –कृतवमना जलौकसो, रक्तमदाद्रक्षन् पुन सप्ताह न योजयेत्।

आ० र०—सप्ताहादर्वाक् जलौकसां पुनःप्रयोग निषेधति—रक्षन्निति।

**पूर्ववत् पटुता दार्ढ्यं सम्यग्वान्ते जलौकसाम् ॥४४॥**

स०—जलौकसा सम्यग्वान्ते सति पूर्ववत्—अलागितानामिव, पटुतादि भवति।

आ० र०—जलौकसा सम्यग्वमनलक्षणमाह—पूर्ववदिति।

**क्लमोऽतियोगान्मृत्युर्वा**

स०—अतियोगाद्वमनस्य क्लमो मृत्युर्वा स्यात्।

आ० र०—अतिवान्ते लक्षणमाह—क्लम इति।

**दुर्वान्ते स्तब्धता मदः।**

स०—दुर्वान्ते सति स्तब्धता मदश्च स्यात्।

आ० र०—दुर्वान्ते लक्षणमाह—दुर्वान्त इति।

**अन्यत्रान्यत्र ताः स्थाप्या घटे मृत्स्नाम्बुगर्भिणि ४५**
**लालादिकोथनाशार्थं, सविषाः स्युस्तदन्वयात्।**

स०—ताश्चान्यस्मिन्नन्यस्मिन् घटे त्र्यहात् पञ्चाहाद्वा स्थाप्या[३]। किम्भूते? मृत्स्नोपृक्तेन जलेन गर्भिणि, तद्युक्त इत्यर्थ। प्रशस्ता मृत्–मृत्स्ना, "सस्नौ प्रशसायाम्" इति स्नप्रत्यय। अनेकभाजनस्थापने कोऽर्थ? इत्याह—लालादिकोथनाशार्थम्। आदिशब्देन मूत्रपुरीषादीना ग्रहणम्। लालादीना—जलौक सम्बन्धिना, कोथ –कुथितत्व क्लिन्नता, तन्नाशाय। तदन्वयात्—लालादियोगात्, ता सविषा स्यु।

आ० र०—जलौकसा पालनविधिमाह—अन्यत्रान्यत्रेति।

**अशुद्धौ स्रावयेद्दंशान् हरिद्रागुडमाक्षिकैः ॥ ४६ ॥**

स०—अशुद्धौ–अशुद्धलिङ्गानुमिते रक्ते सति, दशान् हरिद्रादिभि स्रावयेत्।

आ० र०—दशापरिस्रावे स्रावणौषधमाह—अशुद्धाविति।

**शतधौताज्यपिचवस्ततो लेपाश्च शीतलाः।**

स०—अनन्तरं[६] शतधौतघृतसम्पृक्ता पिचवो 'योज्या' इति शेष। शतशब्दोऽनेकपर्याय, बहुकृत्वो धौतमित्यर्थ। तथा, शीतला लेपा –यष्टीचन्दनोशीरादिजा, योज्या। दशस्थितचलितरक्तप्रसादनायेति भाव।

आ० र०—दशस्रावानन्तर कृत्यमाह—शतधौतेति।

**दुष्टरक्तापगमनात्सद्यो रागरुजां शमः ॥ ४७ ॥**

स०—दुष्टरक्तस्यापगमनात्—नि सरणात्, सद्यो–द्रागेव, रागपीडाशान्तिर्भवति[१]। उपलक्षण चेदम्। श्वयथुशैथिल्यदाहशमोऽपि हि भवत्येव।

आ० र०—स्रावफलमाह—दुष्टरक्तापगमनादिति।

**अशुद्धं चलितं स्थानात्स्थितं रक्तं व्रणाशये।**
**ऽम्लीभवेत्पर्युषितं तस्मात्तत्स्रावयेत्पुनः ॥ ४८ ॥**

स०—अशुद्ध रक्त स्वाशयाच्चलितं[३] व्रणस्थाने स्थित पर्युषितं[४] सत् व्यम्लीभवेद्यत, तस्मात् तत्–रक्त, भूय स्रावयेत्।

आ० र०—द्वितीयेऽह्नि पुन स्रावमाह—अशुद्धमिति। अम्लीभवेत्—पाकोन्मुख भवेत्।

**युञ्ज्यान्नालाबुघटिका रक्ते पित्तेन दूषिते।**
**तासामनलसंयोगात्**

स०—रक्ते पित्तेन दूषिते सति, अलाबुघटिका न लागयेत्। तासा–अलाबूना घटिकाना च, अग्निसयोगात् पित्तरक्तकोपोपपत्तेरिति भाव।

आ० र०—अलाबुघटिकयोरविषयमाह—युञ्ज्यान्नेति।

**युञ्ज्यात्तु[५] कफवायुना ॥ ४९ ॥**

स०—तास्तु कफवातेन दुष्टेऽसृजि युञ्ज्यात्।

आ० र०—अलाबुघटिकयोर्विषयमाह—युञ्ज्यात्त्विति।

**कफेन दुष्टं रुधिरं न शृङ्गेण विनिर्हरेत्[६]।**
**स्कन्नत्वात्**

स०—कफेन दुष्ट रक्तं सत् शृङ्गेण नाकर्षेत्। स्कन्नत्वात्–स्त्यानत्वाद्धेतो। शृङ्गस्य चाग्निसयोगाभावेन कफविलयने[७] सामर्थ्याभावात्।

आ० र०—शृङ्गस्याविषयमाह—कफेन दुष्टमिति।

**वातपित्ताभ्यां दुष्टं शृङ्गेण निर्हरेत् ॥ ५० ॥**

स०—वातपित्ताभ्या दुष्ट रुधिर शृङ्गेण निर्हरेत्।

आ० र०—शृङ्गस्य विषयमाह—वातपित्ताभ्यामिति।

**गात्रं बद्ध्वोपरि दृढं रज्ज्वा पट्टेन वा समम्।**
**स्नायुसन्ध्यस्थिमर्माणि त्यजन् प्रच्छानमाचरेत् ५१**
**अधोदेशप्रविसृतैः पदैरुपरिगामिभिः।**
**न गाढघनतिर्यग्भिर्न पदे पदमाचरन्[८] ॥ ५२ ॥**

---

१ 'टुत्व म' ट। 'द्रुता म' ठ ड। २ 'त्र्यह पञ्चाह वा स्था' ट.। ३ 'प्या। मृत्स्नापृक्तजलयुक्ते। अनेक' ड। ४ 'त्स्वायुक्ताम्बुगर्भिणि' ठ। ५ 'षादिपरिग्रह।' ट। ६ 'र बहुकृत्वा धौत' ड.। ७ 'धौतेनेत्यथ' ट.।

१ 'रागादिशम स्यात्।' ट.। २ 'अम्ली' अ आ हेमाद्रि। ३ 'त व्यम्लीभूत त्र' ठ। ४ 'त शल्यरूप भवेत्। तस्मात्' ठ ड। ५ 'युञ्ज्याच' अ ग ञ। ६ 'शृङ्गेणाति नि' ग। 'शृङ्गेणाभिनि' प.। ७ 'यनसा' ट। ८ 'चरेत्' अ.आ इ ग. घ ञ.ठ.प.।

**प्रच्छानेनैकदेशस्थं ग्रथितं जलजन्मभिः ।**
**हरेच्छृङ्गादिभिः सुप्तमसृग्व्यापि शिराव्यधैः ॥ ५३ ॥**

स०–गात्र रज्वा पट्टेन वा दृढ सम बद्ध्वोपरि प्रच्छनीय-प्रदेशस्य, तथा स्नाय्वादि परिहरन्, प्रच्छान कुर्यात् । कथम् ? अधोदेशात्प्रविसृतै –प्रवृत्तै , पदैरुपरिगामिभि –ऊर्ध्वप्रसारिभि । किम्भूतै पदै ? न गाढै –न खरै , न घनै –न निरन्तरै , न च तिर्यग्भि –तिरश्चीनै । तथा, पदे पद नाचरन्–पदस्योपरि पदमकुर्वन्नित्यर्थ । एकदेशस्थित रक्त प्रच्छानेनाकर्षेत् । ग्रथित ग्रन्थ्यर्बुदादिषु रक्त जलौकाभिरपहरेत् । सुप्त–निश्चेतन सत् स्थाने प्रसुप्त्यादिविकारि, शृङ्गादिभिर्हरेत् । व्यापि–सर्वशरीरस्थ, लोहित शिराव्यधैराकर्षेत् ।

आ० र०–प्रच्छानविधिमाह–गात्रमिति । पदै –शस्त्रकृतै । अधोदेशप्रविसृतै –अधस्तादाकृष्टशस्त्रैरधोदेशमारभ्योर्ध्वमूर्ध्व क्रियमाणै ।

प्रच्छानस्य विषयमाह–प्रच्छानेनेति ।

जलौकसां विषयमाह–ग्रथितमिति । ग्रथित–ग्रन्थीभूतम् ।

शृङ्गालाबुघटिकानां विषयमाह–शृङ्गादिभिरिति । सुप्त–अज्ञातस्पर्शम् ।

शिराव्यधस्य विषयमाह–व्यापीति । व्यापि–सर्वदेहस्थम् ।

**प्रच्छानं पिण्डिते वा स्यात्**

स०–पिण्डिते रक्ते प्रच्छान वा स्यात् ।

आ० र०–प्रच्छानस्य विषयान्तरमाह–प्रच्छानमिति । पिण्डिते–घने ।

**अवगाढे जलौकसः ।**

स०–अवगाढे रक्ते जलौकस स्यु ।

आ० र०–जलौकसां विषयान्तरमाह–अवगाढ इति । अवगाढे–गम्भीरे ।

**त्वक्स्थेऽलाबुघटीशृङ्गम्**

स०–त्वक्स्थे–उत्ताने रक्ते, अलाबुघटीशृङ्गाणि स्यु ।

आ० र०–अलाब्वादीनां विषयान्तरमाह–त्वक्स्थ इति ।

**शिरैव व्यापकेऽसृजि ॥ ५४ ॥**

स०–सर्वशरीरव्यापके रक्ते शिरैव भवति । शिराया मतविकल्पो नास्त्येवेत्येवशब्दार्थ ।

आ० र०–शिराव्यधस्य नियतत्वमाह–शिरैवेति ।

**वातादिधाम वा शृङ्गजलौकोलाबुभिः क्रमात् ।**

स०–अथवा वातादिस्थानस्थित रक्त यथाक्रम शृङ्गादिभिर्हरेत् ।

आ० र०–शृङ्गादीनां विषयान्तराण्याह–वातादिधामेति ।

**स्रुतासृजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः ॥ ५५ ॥**
**सतोदकण्डूः शोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ५५½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने शस्त्रविधिर्नाम षड्विंशोऽध्यायः ॥ २६ ॥**

स०–स्रुतरक्तस्य नरस्य शीतलै प्रलेपादिभिस्तोदकण्डूयुत शोफो वातकोपात् स्यात् । त–तादृश शोफ, घृतेनोष्णेन सेचयेदिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने शस्त्रविधिर्नाम षड्विंशोऽध्याय समाप्त ॥ २६ ॥

आ० र०–स्रुतरक्तस्य शीतोपचारातिशये दोषमाह–स्रुतासृज इति ।

उक्तदोषे प्रतीकारमाह–तमिति । सङ्ग्रहे तु ( सू अ ३५ )–"सर्वासा च पर प्रमाणमष्टादशाङ्गुलानि । तत्र चतुष्पञ्चषडङ्गुला नृषु योजयेत् । गजवाजिष्वपरा । तासु सुकुमारास्तनुत्वचोऽल्पशिरस्का बृहदधरकायाश्च स्त्रिय । विपरीता पुमासोऽर्द्धचन्द्राकृतिपुरोवृत्ताश्च । तत्र बहुदोषेषु चिरोत्थितेषु चामयेषु पुमांसो योजयितव्या । स्त्रियो विपरीतेषु । जलौकसस्त्वार्द्रचर्माद्युपायैर्गृहीत्वा सुरभिपङ्कगर्भे नवे घटे स्थापयेत् । शृङ्गाटककसेरुकशालूकशैवालमृणालवल्लूरमृत्स्नापुष्करबीजचूर्णं स्वादुशीत स्वच्छ च तोयमन्नपानार्थे ताभ्यो दद्यात् । लालादिकोथपरिहारार्थमेवं च त्र्यहात्त्र्यहात् पूर्वमन्नपानमपनीयान्यद्दद्यात् । पञ्चाहाच्च तद्विध एव घटान्तरे ता. सञ्चारयेत् ।" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
शस्त्रप्रकरण नाम सामस्त्येन निरूपितम् ॥ २६ ॥



१ 'ग्रन्थित' अ ग घ.प । २ 'ऊर्ध्व प्र' ठ । ३ 'प्रच्छनेना' ड. । ४ 'मिर्हरेत्' ट । ५ 'ग्रन्थित' ग घ प । ६ 'प्रच्छन्न' ड. । ७ 'क्रमात्–यथासङ्ख्येन, वातधाम रक्त शृङ्गेण, पित्तधाम जलौकाभि., श्लेष्मधामालाबुना, निर्हरेत् ।' इति चन्द्र ।

१ 'कण्डूशोफ' अ आ इ ग घ.ञ । २ 'सिञ्चेदिति' ट. । ३ 'ता. सुकु' क ग घ ञ.प स मू । ४ 'पुरोविभागाश्च' क । 'पुरोविभागा वृत्ताश्च' ग । ५ 'सश्चार्द्र' घ.प. । ६ 'मेव च०हादूर्ध्व पूर्व' स स. ।



सप्तविंशोऽध्यायः ।

अनन्तरातीतेऽध्याये शृङ्गादीन् लोहितावसेचनोपायानुक्त्वा 'प्रच्छानेनैकदेशस्थ' इत्यादिवाक्येन तेषा विषयो दर्शित । सिराव्यधस्य तु बहुवक्तव्यत्वात् पृथगध्यायो युक्त इत्याह—

**अथातः सिराव्यधविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

स०–सरत्याभी रक्तमिति सिरा, तासा व्यध, तस्य विधि, तमध्यायं व्याख्यास्याम । शेष पूर्ववत् ।

आ० र०–शिराव्यधविधिमध्याय व्याख्यातु प्रतिजानीते–अथेति । सङ्ग्रहे तु ( सू अ ३६ )–"बहवो हि रक्तावसेचनोपायाः प्रागभिहिता । तेषामन्येषां च विरेकादीनामुपक्रमाणां तत्साध्येष्वामयेषु शिराव्यध प्रधानम् । अमुना हि ते समूला शोषमायान्ति केदारसेतुभेदेन शाल्यादय इव । तथा च । शिराव्यधश्चिकित्सार्धं सम्पूर्ण वा चिकित्सितम् । शल्यतन्त्रे स्मृतो यद्वद्बस्ति कायचिकित्सिते ॥ यथा रक्तमधिष्ठान विकाराणा विकारिणाम् । अन्यन्न हि तथा दूष्य कर्मेद प्रथम तत ॥ तत्राम्बु शारीरमाहाररसारभूतं रसाख्यमविकृतमविकृतेन तेजसा रञ्जित रक्तमाहु ।" इति ।

**मधुरं लवणं किञ्चिदशीतोष्णमसंहतम् ।**
**पद्मेन्द्रगोपहेमाविशशलोहितलोहितम् ॥ १ ॥**
**लोहितं प्रभवः शुद्धं, तनोस्तेनैव च स्थितिः ।**

स०–लोहित मधुरगुण( रस ), तथा ईषल्लवण, किञ्चिच्छब्द ईषदर्थे, तथाऽशीतोष्ण–नञीषदर्थे, ईषच्छीतमीष दुष्ण, तथाऽसहत–द्रव, शुद्ध स्यात् । सम्प्रति वर्णत शुद्धलोहितलक्षणमाह–पद्मेत्यादि । इन्द्रगोप –मृगनक्षत्रोत्पन्न कीटकविशेष । हेम–कनकम् । अवि –मेष । अविशशयोर्लोहितशब्देन रक्तवाचिना सम्बन्ध । पद्मादीना द्वन्द्व । पद्मेन्द्रगोपहेमाविशशलोहितमिव लोहित–रक्तवर्ण, यद्रक्तं तच्छुद्ध स्यात् । तच्च तनो –शरीरस्य, प्रभव –उत्पत्तिहेतु । तेनैव–रक्तेन, तनो स्थिति –प्रबन्धाविच्छेदलक्षणा । अनेकदृष्टान्तोपादान च शुद्धरक्तस्यानेकवर्णदर्शनात् ।

आ० र०–शुद्धरक्तस्य लक्षणमाह–मधुरमिति । असहत–द्रवम् । हेमा–मञ्जिष्ठा ।

शुद्धरक्तस्यारोग्यहेतुत्वमाह–तनोरिति । सङ्ग्रहे तु ( सू अ ३६ )–"तथा दूष्यम् । दोषमिति केचित् । उभयात्मकमन्ये । तच्चैवविधमेव विधिवदाहारविहाराभ्यासाद्विशुद्ध बलवर्णसुखायुषा योनि. ।" इति ।

**तत्पित्तश्लेष्मलैः प्रायो दूष्यते**

स०–तच्च–रक्त, बाहुल्येन पित्तश्लेष्मलैर्दूष्यते । पित्तलै –क्षारोष्णतीक्ष्णादिभि । श्लेष्मलै –माषतिलादिभि । तथा पुराकृताद्दैवादपि, शरत्कालस्वभावात् कदाचिद्वातलैरपि दूष्यत इति प्रायोग्रहणम् ।

आ० र०–रक्तस्य दुष्टिकारणमाह–तत्पित्तश्लेष्मलैरिति ।

**कुरुते ततः ॥ २ ॥**
**विसर्पविद्रधिप्लीहगुल्माग्निसदनज्वरान् ।**
**मुखनेत्रशिरोरोगमदतृड्लवणास्यताः ॥ ३ ॥**
**कुष्ठवातास्रपित्तास्रकट्वम्लोद्गिरणभ्रमान् ।**
**शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः ॥ ४ ॥**
**सम्यक्साध्या न सिध्यन्ति ते च रक्तप्रकोपजाः ।**

स०–ततो–दूषणात्कारणात्, विसर्पादीन् भ्रमान्तान् कुरुते । तथा, शीतोष्णादिभि सम्यकुचिकित्सिता साध्या अपि रोगा ये न सिध्यन्ति, ते च रक्तप्रकोपजा । न केवल विसर्पादय, इति चार्थ । आदिशब्देन स्तम्भस्वेदनादिपरिग्रह ।

आ० र०–दुष्टरक्तस्य कार्यमाह–कुरुत इति ।

दुष्टरक्तकार्यस्य सामान्यलक्षणमाह–शीतोष्णेति । चकारद्वयकरणादुक्तेष्वनुक्तेषु चेद लक्षण ज्ञेयम् ।

**तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत्सिराम् ॥ ५ ॥**

स०–तथा, तेषु–विसर्पादिषु रोगेषु, उल्बणं रक्त स्रावयितुं सिरा व्यधयेत् । अदन्तत्वादत्र वृद्धेरभाव ।

आ० र०–दुष्टरक्तकार्यस्य प्रतीकारमाह–तेष्विति ।

**न तूनषोडशातीतसप्तत्यब्दस्रुतासृजाम् ।**
**अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥ ६ ॥**

१ 'चनायोपा' ठ ड. । २ 'प्रच्छन्नेनै' ठ ड । ३ 'अय सिराव्यधविधिश्चरके सू० २४ अध्याये, सुश्रुते सू० १४ अध्याये, अष्टाङ्गसङ्ग्रहे सू० ३६ अध्याये चास्ति वर्णित । ४ 'वोऽपि र' क.ञ । ५ केदारसेतु –जलावष्टम्भिनी क्षेत्रमर्यादा । ६ 'तत्र च' ग घ प. । ७ 'तथा' क ञ. । ८ 'अन्य न हि' घ प । ९ 'हाररसा' क । १० 'प्रवदेच्छुद्धं' अ ग घ प । ११ 'धुरादिगुण' ट ठ.ड. । १२ 'था, ईषच्छीत' ठ.ड । १३ 'वर्णेन शु' ठ. । १४ 'प –कीटवि' ट.ठ.ड. ।

१ 'न शरीरस्य प्रबन्धाविच्छेदलक्षणा स्थिति ।' ठ ड. । २ 'दानेन च० दर्शनम्' ट । ३ 'हेमा–मञ्जिष्ठा' इति पाठो ग घ प पुस्तकेषु नोपलभ्यते । ४ 'था दोषम् । दूष्यमिति' स स. । ५ 'भ्या विशुद्ध' ग । ६ 'त् दूष्य' ट.ठ ड । ७ 'न्ति रक्तजांस्तान् विभावयेत् ।' इति चरके पाठ । ८ 'भिरुपक्रान्ता. स' ट. । ९ 'न न्यून' ग. ।

**गर्भिणीसूतिकाजीर्णपित्तास्रश्वासकासिनाम् ।**
**अतीसारोदरच्छर्दिपाण्डुसर्वाङ्गशोफिनाम् ॥ ७ ॥**
**स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ।**
**नायन्त्रितां सिरां विध्येन्न तिर्यङ्नाप्यनुत्थिताम् ॥८॥**
**नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ।**

स०–ऊनषोडशवर्षादीना तु सिरा न व्यधयेत् । स्नेहपीते–पीतस्नेह इत्यर्थ, आहिताग्न्यादित्वात् परनिपात । तथा, पञ्चसु–वमनादिषु, कर्मसु विहितेषु सत्सु, सिरा न व्यधयेत् । तथा, अयन्त्रिता–अबद्धा, सिरा न व्यधयेत् । तथा, न तिर्यक्, न चानुत्थिता, नातिशीते, नात्युष्णे, नातिवाते, न च मेघोदये, सिरा व्यधयेत् । आत्ययिकात्–रोहिणीविषादिकात्, अन्यत्र न व्यधयेत् । आत्ययिके तु रोगे शीतोष्णवृष्टीना यथायथ प्रतीकार विधाय सिरा मोक्षयेदेव ।

आ० र०–ऊनषोडशाब्दादीनां शिराव्यध निषेधति–न तूनेति । पञ्चसु कर्मसु–वमनविरेचननिरूहानुवासननस्येषु । वमनादौ स्नेहपाने यावत्तत्कृतदोषक्षोभ(भा)निवृत्तिस्ताव-न्निषेध । अयन्त्रितां–अकृतवक्ष्यमाणयन्त्रणाम् । तिर्यक्–तिर्यग्गताम् । अनुत्थितां–अप्रकटाम् । सङ्ग्रहे तु ( सू अ ३६ )–"तत्र स्नेहपीतादिषु सम्यग्विद्धा अपि शिरा न स्रवन्त्यतिस्रवन्ति वा । सम्यक्स्निग्धस्विन्नस्य पुनर्द्रवीभूता दोषा. शोणितमनुप्रविष्टा सम्यक् प्रच्यवन्ते । न त्वेष निषेधो विषसंसृष्टोपसर्गात्ययिकव्याधिषु ।" इति ।

**शिरोनेत्रविकारेषु ललाट्यां मोक्षयेत्सिराम् ॥ ९ ॥**
**अपाङ्ग्यामुपनास्यां वा**

स०–शिरोनयनविकारेषु ललाट्या सिरा मोक्षयेत् । ललाटे भवा–ललाट्या, शरीरावयवात्, एवमग्रेऽपि । अपाङ्गे भवा–अपाङ्ग्या, नासिकासमीपे भवा–उपनास्या, वा ।

आ० र०–शिरोरोगे नेत्ररोगे च वेध्यां शिरा आह–शिरोनेत्रविकारेष्विति । ललाटे भवा ललाट्यां । "शरीरावयवाद्यत्" इति यत् । एवमपाङ्ग्यां उपनास्या. [च] । उपनास्या –कनीनिकाभवा. (?) ।

**कर्णरोगेषु कर्णजाम् ।**

स०–कर्णामयेषु कर्णजा–कर्णसमीपभवा, सिरा विध्येत् ।
आ० र०–कर्णरोगेषु शिरा आह–कर्णरोगेष्विति ।

**नासारोगेषु नासाग्रे स्थिताम्**

स०–नासामयेषु नासाग्रे स्थिता विध्येत् ।
आ० र०–नासारोगेषु शिरा आह–नासारोगेष्विति ।

**नासाललाटयोः ॥ १० ॥**

**पीनसे**

स०–पीनसे–प्रतिश्याये, नासाललाटमध्यस्था सिरा विध्येत् ।
आ० र०–पीनसे शिरा आह–नासाललाटयोरिति ।

**मुखरोगेषु जिह्वौष्ठहनुतालुगाः ।**

स०–मुखरोगेषु जिह्वादिगा सिरा विध्येत् ।
आ० र०–मुखरोगेषु शिरा आह–मुखरोगेष्विति ।

**जत्रूर्ध्वग्रन्थिषु ग्रीवाकर्णशङ्खशिरःश्रिताः ॥ ११ ॥**

स०–जत्रूर्ध्वं–वक्षोसयो सन्ध्यूर्ध्वं, ये ग्रन्थयस्तेषु ग्रीवाद्याश्रिता सिरा विध्येत् ।

आ० र०–जत्रूर्ध्वग्रन्थिषु शिरा आह–जत्रूर्ध्वग्रन्थिष्विति।

**उरोपाङ्गललाटस्था उन्मादे**

स०–उन्मादे उर स्था अपाङ्गस्था ललाटाश्रिताश्च विध्येत् ।
आ० र०–उन्मादे शिरा आह–उरोपाङ्गललाटस्था इति ।

**ऽपस्मृतौ पुनः ।**
**हनुसन्धौ समस्ते वा शिरां भ्रूमध्यगामिनीम् ॥१२॥**

स०–अपस्मारे तु हनुसन्धौ स्थिता सिरा विध्येत् । समस्ते–सर्वस्मिन्, वा हनौ सिरा विध्येत् । भ्रूमध्यगामिनी–भ्रूमध्यस्था, सिरा वाऽपस्मृतौ विध्येदिति वाशब्दोऽत्रानुवर्त्य योज्य ।

आ० र०–अपस्मारे शिरा आह–अपस्मृताविति ।
उक्तेषु शिरोरोगादिषु सामान्यत शिरा आह–समस्ते वेति।

**विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनान्तरे ।**

स०–विद्रधौ पार्श्वशूले च पार्श्वस्था कक्षास्था स्तनान्तरस्थाश्च सिरा विध्येत् ।

आ० र०–विद्रधिपार्श्वशूलयो शिरा आह–विद्रधाविति।

**तृतीयकेंऽसयोर्मध्ये**

स०–तृतीयके ज्वरेंऽसयोर्मध्ये–स्कन्धसन्धौ स्थितां सिरा, विध्येत् ।

आ० र०–तृतीयकज्वरे शिरा आह–तृतीयक इति ।

**स्कन्धस्याधश्चतुर्थके ॥ १३ ॥**

स०–चतुर्थके ज्वरे स्कन्धस्याधोगतां–अन्यतरपार्श्वाश्रया, सिरा विध्येत् ।

आ० र०–चतुर्थकज्वरे शिरा आह–स्कन्धस्याध इति ।

**प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यङ्गुले स्थिताम् ।**

१ 'नुच्छ्रिताम्' ग । २ 'षु लाला' अ घ ञ प । ३ 'ट्या मोक्षयेत्सिरा । अपाङ्ग्या उपनास्या वा' ग घ प । ४ 'वा नासिकासमीपे भवा वा' ठ ड । ५ 'वेध्या शिरामाह' क ग घ. । ६ 'ट्या' क.ञ. । ७ 'ङ्ग्यामुपनास्या वा । उप' क.ञ. ।

१ 'कदाचिन्नासास्था कदाचिल्ललाटस्था कदाचिदुभयस्थामपि' इति चन्द्र । २ 'टयो स्थिता सि' ठ ड. । ३ 'जत्रूर्ध्वं ग्र' आ इ ञ । ४ 'स्थामुन्मादे' अ । ५ 'शिरा० नीः ।' अ इ ग घ ञ प । ६ 'ध्यसस्था' ट । ७ 'श्वेसस्था ' ट । ८ 'रे स्कन्धयोर्मध्ये–असमन्धौ स्थि' ट. । 'रेऽससन्धौ स्थि' ठ.ड । ९ 'तां सिरां' ठ.ड. ।

स०-प्रवाहिकाया शूलयुक्ताया श्रोणित -कट्या, द्व्यङ्गुले स्थिता सिरा विध्येत्।

आ० र०-सशूलप्रवाहिकाया शिरा आह-प्रवाहिकायामिति।

**शुक्रमेढ्रामये मेढ्रे**

स०-शुक्ररोगे मेढ्ररोगे च मेढ्रस्थिता सिरा विध्येत्।

आ० र०-शुक्ररोगे मेढ्ररोगे च शिरा आह-शुक्रमेढ्रामय इति।

**ऊरुगां गलगण्डयोः ॥ १४ ॥**

स०-गलगण्डयोश्चोभयोरूरुस्था सिरा विध्येत्।

आ० र०-गलगण्डमालयो शिरा आह-ऊरुगामिति। द्विवचनसामर्थ्यात् गण्डमालाग्रहणम्।

**गृध्रस्यां जानुनोऽधस्तादूर्ध्वं वा चतुरङ्गुले।**

स०-गृध्रस्या जानुनोऽधस्ताच्चतुरङ्गुल ऊर्ध्व वा जानुनश्चतुरङ्गुले स्थिता सिरा विध्येत्।

आ० र०-गृध्रस्या शिरा आह-गृध्रस्यामिति।

**इन्द्रबस्तेरधोऽपच्यां द्व्यङ्गुले**

स०-अपचीसञ्ज्ञे रोगे इन्द्रबस्तेरधो द्व्यङ्गुले सिरां विध्येत्। इन्द्रबस्ति -जङ्घान्तरे वक्ष्यमाण (हृ शा अ ४।५)।

आ० र०-अपच्या शिरा आह-इन्द्रबस्तेरिति। इन्द्रबस्ति -जङ्घामध्ये मर्म।

**चतुरङ्गुले ॥ १५ ॥**

**ऊर्ध्वं गुल्फस्य सक्थ्यर्तौ, तथा क्रोष्टुकशीर्षके।**

स०-सक्थिपीडाया गुल्फस्योर्ध्व चतुरङ्गुले सिरा विध्येत्। क्रोष्टुकशीर्षाख्ये वातरोगविशेषे गुल्फस्योर्ध्वं चतुरङ्गुले विध्येत्।

आ० र०-सक्थिशूले क्रोष्टुकशीर्षके च शिरा आह-चतुरङ्गुल इति।

**पाददाहे खुडे हर्षे विपाद्यां वातकण्टके ॥ १६ ॥**
**चिप्पे च द्व्यङ्गुले विध्येदुपरि क्षिप्रमर्मणः।**

स०-पाददाहादिषु क्षिप्रमर्मण उपरि द्व्यङ्गुले विध्येत्। खुड-वातरक्तम्।

**आ० र०-पाददाहादिषु षट्सु शिरा आह-पाददाह इति। हर्षे-पादहर्षे। चिप्पे-नखरोगे। क्षिप्र-अङ्गुष्ठाङ्गुलिमध्ये मर्म। सङ्ग्रहे तु ( सू अ ३६ )-"एतेनेतरसक्थिबाहू च व्याख्यातौ। विशेषतस्तु वामबाहावभ्यन्तरतो बाहुमध्ये प्लीहोदरे। एवमेव च दक्षिणबाहौ यकृदाख्ये। तथा कासश्वासयोरप्यादिशन्ति।" इति।**

१ 'रुस्थिता सि' ट। २ 'चीनाम्नि रो' ठ.ड। ३ 'गे जङ्घान्तरे वक्ष्यमाणसेन्द्र' ड। ४ 'सन्ध्यर्तौ' इति क्वचित्। ५ 'सन्धिपी' ठ ड। ६ 'मभागाभ्य' स.स.। 'मबाहाभ्य' स.मू.। ७ 'न्तरे बाहु' क्.ग.ञ.।

**गृध्रस्यामिव विश्वाच्याम्**

स०-विश्वाच्या गृध्रसीप्रोक्ता सिरा विध्येत्। "गृध्रस्या जानुनोऽधस्तात्" इति।

आ० र०-विश्वाच्यां शिरा आह-गृध्रस्यामिवेति। सङ्ग्रहे तु ( सू अ ३६ )-"बाहुशोषावबाहुकयोरप्येके।" इति।

**यथोक्तानामदर्शने ॥ १७ ॥**
**मर्महीने यथासन्ने देशेऽन्यां व्यधयेत् सिराम्।**

स०-यथोक्ताना सिराणामदर्शने सति मर्मवर्जिते यथासन्ने स्थाने व्याधिवशादपरा व्यधयेत्।

आ० र०-यथोक्तशिराणामदर्शने तदासन्ना शिरा वेध्या इत्याह-यथोक्तानामिति।

**अथ स्निग्धतनुः सज्जसर्वोपकरणो बली ॥ १८ ॥**
**कृतस्वस्त्ययनः स्निग्धरसान्नप्रतिभोजितः।**
**अग्नितापातपस्विन्नो जानूच्चासनसंस्थितः ॥ १९ ॥**
**मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः।**
**मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत् ॥२०॥**
**दन्तप्रपीडनोत्कासगण्डाध्मानानि चाचरेत्।**
**पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयन्नरः ॥ २१ ॥**
**कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम्।**
**एषोऽन्तर्मुखवर्ज्यानां सिराणां यन्त्रणे विधिः ॥२२॥**

स०-अथेत्यानन्तर्ये। स्निग्धा तनुर्यस्य स स्निग्धतनु। तथा, सज्जानि-प्रगुणानि, [ सर्वाणि ]उपकरणानि-वस्त्रखण्डपटोदकस्नेहगैरिकादीनि, यस्य स सज्जसर्वोपकरण। तथा, बली-पुष्ट। तथा, कृतं स्वस्त्ययन-बलिमङ्गलहोमादिक, यस्य स कृतस्वस्त्ययन। तथा, स्निग्धरसयुक्तेनान्नेन प्रतिभोजित.। तथा, अग्नितापश्चातपश्च, ताभ्या स्विन्न। तथा, जानुतुल्ये उच्चासने, सस्थित -समुपविष्ट। तथा, मृदुना-सूक्ष्मेण, वस्त्रपट्टेनात्तो-गृहीतो बद्ध, केशान्तो यस्य स एवम्। तथा, जानुनो स्थापितौ कूर्परौ येन स एवम्। तथा, मुष्टिभ्यां वस्त्रगर्भाभ्या मन्येऽतिशयेन पीडयेत्। तथा, दन्तप्रपीडनो

१ 'ध्रस्यामिव सि' ट.। २ 'अदर्शने-अदृश्यत्वे, अतिप्रवृद्धेन व्याधिनाऽऽतुरस्य त्वराया समुपजातायाम्' इत्यधिक पदार्थचन्द्रिकायाम्। सङ्ग्रहेऽपि 'अदृश्यमानासु त्वेतास्वतिवृद्धस्य व्याधेरन्यव्याध्युक्तानामपि यथासन्न व्यध।" इति। ३ 'ने शिरान्तरमाह' घ प। ४ 'ढ प्रपीड' अ आ घ ञ। ५ 'ष्टयेन्नर.' इ ग ञ प। ६ 'प्य तस्या' अ इ ञ। ७ 'वर्जाना' अ ग घ। ८ 'स्त्रखण्डप' ट। ९ 'वमनादीना कर्मणामङ्गत्वेन पूर्व पश्चाद्वा यद्भोजन भुज्यते तत् प्रतिभोजनशब्दवाच्यम्' इति चन्द्र। १० 'तुल्यमुच्चमासन तत्र सं' ट.। ११ 'नाद्याच' ठ.ड.।

दीन्याचरेत् । एन चातुर पृष्ठदेशे वसनमावेष्टयन्नरो यन्त्रयेत । कथम्? ग्रीवाया वस्त्र परिक्षिप्य, तथाऽन्त -म ये, वामतर्जनी न्यस्य । सिराणा यन्त्रण एप विधि -एतद्विधानम् । किम्भूतानाम्? अन्तर्मुखवर्ज्यानाम् ।

**आ० र०–शिराव्यधविधिमाह–अथेति । अल्प स्निग्ध रसान्न–स्निग्धरसान्नप्रति । "सुप्रतिना मात्रार्थे" इत्यव्ययीभाव । सङ्ग्रहे तु ( सू अ ३६ )–"व्याधिबलसात्म्याद्यपेक्ष्य स्निग्ध जाङ्गलरस यवागू वा पाययित्वा मुहूर्तमात्रमाश्वासित पूर्वाह्णेऽपराह्णे वा ।" इति ।**

**कण्ठोर्ध्वशिराणा यन्त्रणमाह–मृदुपट्टात्तकेशान्त इति । पट्टो–वस्त्रखण्डम् । पृष्ठत स्थितो नर वस्त्रमावेष्टयन्–वस्त्रवलन कुर्वन् । कन्धरायां परिक्षिप्य–कन्धरा वेष्टयित्वा । वामतर्जनी–यन्त्रकर्तु । अन्तर्मुखवर्ज्याना–मुखान्तर्गतशिरावर्जितानाम् ।**

**ततो मध्यमयाऽङ्गुल्या वैद्योऽङ्गुष्ठविमुक्तया ।**
**ताडयेत्**

**स०**–ततो–यन्त्रणादनन्तर, वैद्योऽङ्गुष्ठविमुक्तया वामपाणिजया मध्यमयाऽङ्गुल्या ताडयेत् ।

**आ० र०–शिरोत्थापनविधिमाह–तत इति ।**

**उत्थितां ज्ञात्वा स्पर्शाद्वाऽङ्गुष्ठपीडनैः ॥ २३ ॥**
**कुठार्या लक्षयेन्मध्ये वामहस्तगृहीतया ।**
**फलोद्देशे सुनिष्कम्पं सिरां, तद्वच्च मोक्षयेत् ॥२४॥**
**ताडयन् पीडयंश्चैनां**

**स०**–स्पर्शेन तथाऽङ्गुष्ठपीडनैर्वोत्थिता ज्ञात्वा, ऊर्ध्वदण्डसिराया मध्ये न्यस्य फलोद्देशे सुनिष्कम्प वामहस्तगृहीतया कुठार्या सिरा लक्षयेत् । तद्वच्च मोक्षयेत् । यथैव लक्षयेत्तथैवेत्यर्थ । व्रीहिमुखेन पुनस्ताडयन्–व्यथयन्, तथाऽङ्गुष्ठादिना पीडयन्, एना–कुठारिकाविषयजा सिरा, विध्येत् । ननु, कुठारिकाविषये कथ व्रीहिवक्त्रस्य प्रयोग ? यत 'अपवादविषय परिहृत्योत्सर्ग प्रवर्तते' इति न्यायात् व्रीहिवक्त्रस्यैव सामान्येन प्रयोगोऽनुज्ञात । तथा चाह ( हृ सू अ २६।११ )–"व्रीहिवक्त्र प्रयोज्य च तत्सिरोदरयोर्व्यधे ।" इति । कुठार्या पुनर्विशेषोऽभिहित ( हृ सू अ २६।१२ )–"तयोर्ध्वदण्डया विध्येदुपर्यस्था स्थिता शिराम् ।" इति । तस्मादयुक्तमेतत् । अत्रोच्यते ज्ञापकम् । कुठारिकाविषये व्रीहिवक्त्रस्य प्रयोगो न्याय्य एव । यदयमाचार्यो वक्ष्यति ( श्लो ३३ )–"मासले निक्षिपेद्देशे व्रीह्यास्य व्रीहिमात्रकम् ।" इति । अनेन हि वचनेन ग्रन्थकार इद प्रत्यपादयत्,–बहुमासे शरीरावयवे व्रीहिमुखं व्रीहिमात्र निक्षेप्यम्, अन्यत्र त्वाशयानुरोधेन व्रीहिवक्त्रस्य प्रयोग कार्य इति । अनेनैवाभिप्रायेण शास्त्रकृता "प्रमाणपरिमाणाभ्या सङ्ख्यायाश्चापि सशये मात्रच् वक्तव्य" इत्यनेन मात्रच् कृत । अन्यथा तु स्पष्ट कृत्वा "व्रीहिप्रमाण व्रीह्यास्य मासले निक्षिपेद्व्यधे ।" इति पाठ कुर्यात् । तस्माद्युक्तो व्रीहिमुखस्य कुठारिकाविषये प्रयोग इति ।

**आ० र०–शिरालक्षीकरणविधिमाह–उत्थितामिति । उत्थिता–स्पन्दमाना, स्पर्शेन ज्ञात्वा । गम्भीरा त्वङ्गुष्ठपीडनेन ज्ञात्वा । फलोद्देशे वामेन हस्तेन सुनिष्कम्प गृहीतया कुठार्या मध्ये लक्षयेत् ।**

**शिरामोक्षणविधिमाह–तद्वदिति । एनां–कुठारिकां, अङ्गुष्ठगृहीतया मध्यमाङ्गुल्या ताडयन्, अङ्गुष्ठोदरेण वा पीडयन्, शिरां मोक्षयेत् ।**

**विध्येद्व्रीहिमुखेन तु ।**
**अङ्गुष्ठेनोन्नमय्याग्रे नासिकामुपनासिकाम् ॥ २५ ॥**

**स०**–अग्रे–अग्रदेशे, नासिकामङ्गुष्ठेनोन्नमय्य, उपनासिका–नासिकासन्नदेशस्था सिरा, विध्येत् ।

**आ० र०–उपनासिकाया व्यधनमाह–विध्येदिति ।**

**अभ्युन्नतविदष्टाग्रजिह्वस्याधस्तदाश्रयाम् ।**

**स०**–आभिमुख्येनोन्नता–उपरि तालुदेशे नीता, तथा विशेषेण दन्तैर्दष्टा–विदष्टा, अग्रे जिह्वा–अग्रजिह्वा, येनासावभ्युन्नतविदष्टाग्रजिह्व , तस्याव–प्रकृतत्वाज्जिह्वाया एवाधस्तात्, तदाश्रया–जिह्वाध स्था सिरा, विध्येत् । तदित्यनेन जिह्वाव परामृश्यते । जिह्वाव आश्रयो यस्या सिराया , ताम् ।

**आ० र०–जिह्वाध शिराव्यधनमाह–अभ्युन्नतेति ।**

**यन्त्रयेत्स्तनयोरूर्ध्वं ग्रीवाश्रितसिराव्यधे ॥ २६ ॥**

**स०**–ग्रीवाश्रिताना सिराणा व्यधो–ग्रीवाश्रितसिराव्यध , तस्मिन् स्तनयोरूर्ध्व यन्त्रयेत्–वाससा वेष्टयेत् ।

**आ० र०–ग्रीवाशिराणा यन्त्रणमाह–यन्त्रयेदिति ।**

**पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे ।**
**कुक्षेरारभ्य मृदिते विध्येद्बद्धोर्ध्वपट्टके ॥ २७ ॥**

**स०**–पाषाणगर्भौ हस्तौ यस्य, तस्य नरस्य भुजे जानुस्थे–जानुपृष्ठस्थिते, प्रसृते–प्रसारिते । 'भुजे' इत्येकवचनमतन्त्रम्, द्वावपि हि भुजौ गृह्येते । कुक्षेरारभ्य यावद्ग्रीव तावन्मृदिते–

---

१ 'वस्त्रमा' ठ ड । २ 'वर्जानाम्' ठ । ३ 'रावेव' क ज । ४ 'द्यवेक्ष्य' स स । ५ 'वस्त्रादिख' ग घ प । ६ 'वर्जाना' घ प । ७ 'ध्यमाङ्गु' ट ठ ड । ८ 'स्थान' क ज । ९ 'स्पर्शाङ्गुष्ठप्रपीडनै' अ घ । १० 'पीडयन् वैना' हेमाद्रि , चन्द्र । 'पीडयेचैना' अ घ ञ । ११ 'स्पर्शनेन वाऽङ्गु' ट । १२ 'वि-यन्' ठ ड । १३ 'डयेत्' ट । १४ 'त्सर्गा प्रवर्तन्ते' ट । उत्सर्ग –सामान्यो विधि । १५ 'क्त्रस्य च मा' ट ।

१ 'त्वाश्रया' ट । २ 'णमाह' क ञ । ३ 'देश नी' ठ ड । ४ 'नुष्ठेव स्थि' ट ।

मलिते। कस्मिन्? ग्रीवाश्रितसिराव्यधार्हेऽङ्गे। तथा बद्ध ऊर्ध्वं पट्टको यस्मिंस्तस्मिन् विध्येत्। प्रकृतत्वात् सिराम्।

**आ० र०**–भुजशिराणां यन्त्रणमाह–पाषाणगर्भहस्तस्येति।

**विध्येद्धस्तशिरां बाहावनाकुञ्चितकूर्परे।**
**बद्ध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणम्[1] ॥ २८ ॥**
**ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले।**

**स०**–हस्तसिरा विध्येत्। कथम्? बाहावनाकुञ्चितकूर्परे,–अनाकुञ्चित–प्रसारित, कूर्परो यस्य बाहोस्तस्मिन्। तथा, सुखोपविष्टस्य–सुखासीनस्य। तथा, मुष्टिं बद्ध्वा[2]। किम्भूतम्? अङ्गुष्ठेन गर्भिणं–अङ्गुष्ठगर्भिणम्। गूढाङ्गुष्ठ मुष्टिं बद्ध्वेत्यर्थ। तथा, वेध्यस्थानादुपरि चतुरङ्गुलपरिमाणे स्थाने पट्टिका[3] बद्ध्वा विध्येत्।

**आ० र०**–हस्तशिराणां यन्त्रणविधिमाह–विध्येदिति।

**विध्येदालम्बमानस्य बाहुभ्यां पार्श्वयोः सिराम् २९**

**स०**–बाहुभ्यामालम्बमानस्य–अवलम्ब्य[4] वस्तु भुजाभ्यामासजत, पार्श्वयो सिरा विध्येत्।

**आ० र०**–पार्श्वशिराणां यन्त्रणमाह–विध्येदिति।

**प्रहृष्टे मेहने**

**स०**–प्रहृष्टे–स्तब्धे, मेढ्रे[5] तदाश्रिता सिरा विध्येत्।

**आ० र०**–मेढ्रशिराणां यन्त्रणमाह–प्रहृष्ट इति।

**जङ्घासिरां जानुन्यकुञ्चिते।**

**स०**–जानुन्यकुञ्चिते–स्पष्टे स्थिते सति, जङ्घायां[6] सिरा विध्येत्।

**आ० र०**–जङ्घाशिराणां यन्त्रणमाह–जङ्घाशिरामिति।

**पादे तु[7] सुस्थितेऽधस्ताज्जानुसन्धेर्निपीडिते ॥ ३० ॥**
**गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि।**
**द्वितीये कुञ्चिते किञ्चिदारूढे हस्तवत्ततः ॥ ३१ ॥**
**बद्ध्वा विध्येत्सिराम्**

**स०**–सुख कृत्वा भूम्यादिदेशे स्थिते पादे सति पादसिरा विध्येत्। तथा जानुसन्धेरधस्तादागुल्फ–गुल्फ यावत्, कराभ्या गाढ कृत्वा पीडिते सति, तस्य चरणस्योपरि–उपरिष्टात्, द्वितीये चरण ईषत्सङ्कुचिते, तथा आरूढे–तत्कलिते[8] सति, ततो हस्तवत्–वेध्यस्थानादुपरि चतुरङ्गुले पट्टिका, बद्ध्वा सिरा विध्येत्।

**आ० र०**–पादशिराणां यन्त्रणमाह–पादे त्विति। हस्तवद्वेध्यप्रदेशादूर्ध्वं चतुरङ्गुले पट्टिका बद्ध्वा।

**इत्थमनुक्तेष्वपि कल्पयेत्।**
**तेषु तेषु प्रदेशेषु तत्तद्यन्त्रमुपायवित् ॥ ३२ ॥**

**स०**–इत्थ–अनेन प्रकारेण यन्त्रलक्षणोद्देशेन, अनुक्तमपि यन्त्र तत्तद्देशमाहात्म्यात् क्रियासौकर्यार्थं तेषु तेषु शरीरावयवेषु स्वबुद्ध्या तत्तद्यन्त्रं यथायोग कल्पयेत्, उपायज्ञो वैद्य।

**आ० र०**–अनुक्तशिराणां यन्त्रणमाह–इत्थमिति।

**मांसले निक्षिपेद्देशे व्रीह्यास्य व्रीहिमात्रकम्।**
**यवार्धमस्थ्नामुपरि सिरां विध्यन्[1] कुठारिकाम्[2] ॥ ३३ ॥**

**स०**–मासले शरीरावयवे व्रीहिमुख शस्त्र व्रीहिप्रमाण निक्षिपेत्। अस्थ्नामुपरि कुठारिका यवार्धमात्रा निक्षिपेत्। किं कुर्वन्? सिरा विध्यन्।

**आ० र०**–व्रीहिमुखस्य निखननमाह–मासल इति।

कुठारिकाया निखननमाह–यवार्धमिति।

**सम्यग्विद्धा[3] स्रवेद्धारां यन्त्रे मुक्ते तु[4] न स्रवेत्।**

**स०**–सम्यग्विद्धे सति(द्धा सती) धारा[5] स्रवेत्। यन्त्रे च मुक्ते सति न स्रवेत्।

**आ० र०**–सम्यग्विद्धालक्षणमाह–सम्यग्विद्ध इति।

**अल्पकालं वहत्यल्पं, दुर्विद्धा तैलचूर्णनैः[6] ॥ ३४ ॥**
**सशब्दमतिविद्धा तु स्रवेद्दुःखेन धार्यते।**

**स०**–अल्प विद्धा सती सिरा स्तोक काल वहति। दुर्विद्धा–असम्यग्विद्धा सती, सिरा तैलयुक्तैश्चूर्णनै स्रवेत्। अतिविद्धा तु सिरा सशब्द स्रवेत्। दुं[7]खेन–कृच्छ्रेण धार्यते।

**आ० र०**–दुर्विद्धालक्षणमाह–अल्पकालमिति। तैलचूर्णनै–तैलक्षारसेचनै[8]।

अतिविद्धालक्षणमाह–सशब्दमिति।

**भीमूर्च्छायन्त्रशैथिल्यकुण्ठशस्त्रातितृप्तयः ॥ ३५ ॥**
**क्षामत्ववेगिताखेदा रक्तस्यास्रुतिहेतवः।**

**स०**–भीमूर्च्छादयो रक्तस्यास्रवणहेतव। भी–भयम्। मूर्च्छा–मोहस्तमसीव प्रवेश। यन्त्रशैथिल्य–अगाढ कृत्वा यन्त्रपीडनम्। तथा, कुण्ठ–भग्न शस्त्रम्। तथा, अतितृप्ति–अतिसौहित्यम्। क्षामत्व–निर्बलता। वेगिता–सञ्जातवेगत्वम्। अस्वेद–स्वेदायोग। यतश्चैते रुधिरस्या[9]स्रुतिहेतवस्ततो रक्तस्रुतावेते परिहार्या।

**आ० र०**–रक्तावरोधकारणान्याह–भीमूर्च्छेति। वेगिता–मूत्रितत्वादि। अस्वेदो–असम्यक्स्वेद।

---

१ 'गर्भिणीम्' अ ग घ ञ। २ 'म्? बध्वा–यन्त्रयित्वा। तथा, बाहा' ठ ड। ३ 'पट्ट ब' ठ ड। ४ 'आलम्ब्य' ट। ५ 'शिश्ने' ठ। 'लिङ्गे' ड। ६ 'ङ्घाया' ड। ७ 'तु भूस्थिते' अ इ.। ८ 'उच्चलिने' ट.। ९ कलिते–आक्रान्ते।

१ 'विध्येत्' इ ग घ प ञ। २ 'कुठारया' आ ञ। ३ 'सम्यग्विद्धे स्रवेद्धारा' आ इ ग घ प ज.। ४ 'च' ग घ प ज। ५ 'धारा' ट ठ ड। ६ 'चूर्णितै' अ इ चन्द्र। ७ 'दु ख च कृ' ट.ठ ड। ८ 'लतुपारासेचेन।' घ प। ९ 'धिरास्रु' ठ ड।

**असम्यगस्रे स्रवति वेल्लव्योषनिशानतैः ॥ ३६ ॥**
**सागारधूमलवणतैलैर्दिह्याच्छिरामुखम् ।**

स०—असम्यगस्रे स्रवति वेल्लादिभि सिरावदन दिह्यात्—प्रलेपयेत् ।

आ० र०—सम्यक्स्रावार्थमौषधमाह—असम्यगस्र इति ।

**सम्यक्प्रवृत्ते कोष्णेन तैलेन लवणेन च[1] ॥ ३७ ॥**

स०—सम्यक्प्रवृत्ते रक्ते सिरामुख कोष्णाभ्या तैललवणाभ्या दिह्यात् ।

आ० र०—सम्यक्स्रावनिर्वाहार्थमौषधमाह—सम्यक्प्रवृत्त इति । दिह्यादित्यनुषज्यते ।

**अग्रे स्रवति दुष्टास्रं कुसुम्भादिव पीतिका ।**

स०—यथा रागपीतिकामिश्रीभूतात् कुसुम्भादग्रे—पूर्वं, पीतिका स्रवति, एवं दुष्टादुष्टरक्तादेकलोलीभूतात् पूर्वं दुष्टमस्र स्रवति ।

आ० र०—स्वभावाद्दुष्टास्रमेवाग्रे शिरा स्रवन्तीत्याह—अग्र इति ।

अग्रग्रहणात् पश्चाददुष्टमपि रक्तमवश्य स्रवतीत्याशङ्क्येदमाह—

**सम्यक्स्रुत्वा स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥३८॥**

स०—यथावत्प्रस्रुत्य स्वयं—यत्नेन विना, यत् तिष्ठेत्—न स्रवेत्, शुद्ध तदिति नाहरेत्—न स्रावयेत्, जीवितहेतुत्वात् ।

आ० र०—सम्यक्स्रुत्वा यत्स्वय स्थित रक्त तच्छुद्धत्वान्नाहरेदित्याह—सम्यक्स्रुत्वेति ।

**यन्त्रं विमुच्य मूर्च्छायां वीजिते व्यजनैः पुनः ।**
**स्रावयेन्मूर्च्छति पुनस्त्वपरेद्युस्त्र्यहेऽपि वा ॥ ३९ ॥**

स०—मूर्च्छाया सत्या यन्त्र विमुच्य व्यजनैर्वीजिते—समाश्वस्ते नरे सति, पुनरस्र स्रावयेत् । पुनर्मूर्च्छति त्वातुरेऽशुद्धमपि रक्त तस्मिन्नहनि न स्रावयेत् । कदा तर्हि स्रावयेत्[2] इत्याह—अपरेद्यु,—अन्यस्मिन्[3] दिने, त्र्यहेऽपि वा—तृतीये वाऽह्नि, स्रावयेत् ।

आ० र०—मूर्च्छायां प्रतीकारमाह—यन्त्रमिति ।

पुनर्मूर्च्छायामपरदिनादौ स्रावयेदित्याह—स्रावयेदिति ।

**वाताच्छ्यावारुणं रूक्षं वेगस्राव्यच्छफेनिलम् ।**

स०—वातात् श्यावादिलक्षणं रक्त स्यात् ।

आ० र०—वातदुष्टरक्तस्य लक्षणमाह—वातादिति ।

**पित्तात् पीतासितं विस्रमस्कन्द्यौष्ण्यात्सचन्द्रिकम्[*4][5]**

स०—पित्तात् पीतादिलक्षणमस्र स्यात् । अस्कन्दि—अस्त्यानम्, उष्णत्वात् । सचन्द्रिक[4] च ।

आ० र०—पित्तदुष्टरक्तस्य लक्षणमाह—पित्तादिति । औष्ण्यादस्कन्दि—घनीभावरहितम् ।

**कफात् स्निग्धमसृक्पाण्डु तन्तुमत्पिच्छिलं घनम् ।**

स०—कफात् स्निग्धादिलक्षणमसृक् स्यात् ।

आ० र०—कफदुष्टरक्तस्य लक्षणमाह—कफादिति । घनस्रावरहितम् ।

**संसृष्टलिङ्गं संसर्गात्**

स०—संसर्गाद्दोषाणा[1] संसृष्टलिङ्ग रक्तं स्यात् ।

आ० र०—द्वन्द्वदुष्टरक्तस्य लक्षणमाह—संसृष्टलिङ्गमिति ।

**त्रिदोषं मलिनाविलम् ॥ ४१ ॥**

स०—त्रिदोषरक्तं मलिन—कलुष, आविल—घन च । एतच्च दोषत्रयसंसर्गलक्षणादधिक लक्षण मन्तव्यम् । न चैतावदेव त्रिदोषलक्षण मन्तव्यम् ।

आ० र०—त्रिदोषदुष्टरक्तस्य लक्षणमाह—त्रिदोषमिति । मलिन—नीलम् । आविल—कलुषम् । सङ्ग्रहे तु ( सू अ ३६ )—"कषायरसं लोहगन्धि शीत च रक्तं वातात् । गृहधूमाञ्जनोदककृष्ण हरित मत्स्यगन्धि कटुत्वान्मक्षिकानिष्ठ गोमूत्राभ च पित्तात् । कोविदारपुष्पगैरिकोदकपाण्डु शीत स्कन्दि व्रणद्वारा वसादिलवणरसं[4] वसागन्धि च कफात् । कसनील[5] दुर्गन्धि च सन्निपातात् ।" इति ।

**अशुद्धौ[6] बलिनोऽप्यस्रं न प्रस्थात्स्रावयेत्परम् ।**
**अतिस्रुतौ हि मृत्युः स्याद्दारुणा वा चलामयाः ॥४२॥**

स०—अशुद्धमस्र बलिनोऽपि—किं पुनरबलिन[7], प्रस्थात् परं—अधिक, न स्रावयेत् । [किंस्मात्[8] इत्याह—]अतिस्रावे हि[9] रक्तस्य, मृत्युर्भवेत् । अथवा वातरोगाश्च कृच्छ्रा स्यु ।

आ० र०—स्रावप्रमाणमाह—अशुद्धाविति । अशुद्धौ—किं पुन शुद्धौ । बलिनोऽपि—किं पुनरबलस्य । प्रस्थोऽत्र सार्द्धत्रयोदशपलः ।

**तत्राभ्यङ्गरसक्षीररक्तपानानि भेषजम् ।**

स०—तत्र—रक्तातिस्रुतौ, अभ्यङ्गादीनि भेषजम् ।

आ० र०—अतिस्रावे भेषजमाह—तत्रेति ।

**स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना ॥ ४३ ॥**
**प्रक्षाल्य तैलप्लोताक्तं बन्धनीयं सिरामुखम् ।**

---

१ 'वा' इ ग घ प । २ 'दुष्ट रक्त स्र' ट । ३ 'अपरस्मिन्' ठ । *४ 'चन्द्रकम्' इ प ,ड । ५ अस्याग्रे एतत्पाठान्तरीभूतोऽय 'वातिक शोणित शीघ्र भूमि पिबति चावृतम् । मक्षिकाणामकाम्त च रक्त भवति पैत्तिकम् ॥ श्लैष्मिक मक्षिकाक्रान्त शुष्यत्यपि न चेणयत् (?) ।' इति आ पुस्तकेऽधिक सार्धश्लोक ।

१ 'दोषससर्गात् स' ठ ड । २ 'घायानुरस' स स । ३ 'दकापाण्डु' घ प स स । ४ 'दि अम्ललवण' क ञ । ५ 'कसनी' स द्व. । ६ 'अशुद्ध' आ ञ अरुण । ७ 'बलस्य, तदपि प्र' ठ ड । ८ [ ] इति ठ ड पुस्तकयोर्नास्ति । ९ 'रक्तातिस्रावे मरण कृच्छ्रा वातरोगा वा भवन्ति ।' ठ.ड. ।

स०-स्रुते रक्ते सति यन्त्रं शनैर्विमुच्य[1]-मन्दं मन्दमपनीय, सिरामुखं शीतोदकेन प्रक्षाल्य, तैलप्लोतेनाक्तं सद्बन्धनीयम्।

आ० र०-स्रुतरक्तस्यानन्तरं कृत्यमाह-स्रुत इति। प्लोत-वस्त्रखण्डम्।

**अशुद्धं[3] स्रावयेद्भूयः सायमह्न्यपरेऽपि वा ॥ ४४ ॥**
**स्नेहोपस्कृतदेहस्य पक्षाद्वा भृशदूषितम्।**

स०-अशुद्ध-वातादिदुष्टरुधि[4]रलक्षणेन दुष्टं ज्ञात्वा, भूय-पुन[5], स्रावयेत्। कदा? साय-अपराह्णे, तस्मिन्नेव दिने। अथवा, अपरेऽह्नि-द्वितीये दिने। अथवा स्नेहेनोपस्कृतो-भावितो, देहो यस्य तथाविधस्य भृशदूषित-अतिशयेन दुष्टं रक्त, पक्षादूर्ध्वं पुन स्रावयेत्। एवमशुद्धं रक्तं यथायोगं सायमह्न्यपरे पक्षादूर्ध्वं वा प्रस्थपरिमाणमेव स्रावयेन्न ततोऽधिकमिति रक्तस्रुतौ क[6]र्म। प्रस्थपरिमाणं च तन्त्रान्तरे गदितम्-"वमने च विरेके च रक्तातीसारयोरपि। सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिण ॥" इति।

आ० र०-[7प्रथमस्रावेणासम्यक् शुद्धौ] पुन स्रावकालमाह-अशुद्धमिति। भृशदूषितं तु पुन स्नेहयित्वा पक्षात् स्रावयेत्।

किञ्चिच्छेषं दुष्टरक्तं स्थापयेदुत सर्वं स्रावयेत्? इति सशयापनोदार्थमिदमाह—

**किञ्चिद्धि शेषे दुष्टास्रे नैव रोगोऽतिवर्तते ॥ ४५ ॥**
**सशेषमप्यतो धार्यं न चातिस्रुतिमाचरेत्।**

स०-यस्मात् किञ्चिच्छेषे दुष्टरक्ते नैव रोगो-दुष्टरक्तोद्भवो व्याधि, अतिवर्तते-क्रियापथमतिक्रम्य मार्गान्तरमसौ नासादयति। अतो दुष्टमपि रक्तं सशेषं धार्यम्। नास्य दुष्टरक्तस्यातिस्रुतिमाचरेत्, प्राणायतनत्वात्। सुश्रुतोऽप्यध्यगीष्ट (?)-"सशेषं दुष्टरुधिरमपि कुर्याद्विचक्षण। न चातिप्रस्रुतं कुर्याच्छेषं सशमनैर्जयेत् ॥" इति।

आ० र०-दुष्टेऽप्यनेनैव क्रमेण स्रुति कार्या। न त्वतिस्रुतिरित्याह-किञ्चिद्धीति। अतिवर्तते-बाधते।

अथ किञ्चिच्छेषं रक्तमुपेक्षणीयमुत प्रतिक्रिया काचित्तत्र कार्या? इत्याह—

**हरेच्छृङ्गादिभिः शेषम्**

स०-स्रुतशेषं दुष्टरक्तं शृङ्गतुम्बघटिकादिभिर्हरेत्[10], न तु सिरया।

आ० र०-सिराव्यधेऽतिस्रुतिशङ्काया शृङ्गादिभिर्हरेदित्याह-हरेदिति।

**प्रसादमथवा नयेत् ॥ ४६ ॥**
**शीतोपचारपित्तास्रक्रियाशुद्धिविशोषणैः।**
**दुष्टं रक्तमनुद्रिक्तमेवमेव प्रसादयेत् ॥ ४७ ॥**

स०-अथवा शीतोपचारेण, पित्तास्रक्रियया, शुद्ध्या-वमनविरेचनादिरूपया, विशोषणेन-लङ्घनरूपेण, तद्दुष्टं रक्तं प्रसादयेत्-कलुषतां परित्यज्य तस्य प्रसन्नत्वमुपपादयेत्। न तु केवलं स्रुतशेषं रुधिरं शीतोपचारेण (चारादिना) प्रसादयेत्। यावदनुद्रिक्त-अप्रवृद्धं दुष्टं रुधिर, एवमेव-अनेनैव शीतोपचारादिना, प्रसादं नयेत्। न तु तन्निर्हरणे सिराव्यधादिना यतनीयम्, अनुद्रिक्तरक्तनिर्हरणस्य सापायत्वात्।

आ० र०-शृङ्गादिभिरप्यतिस्रुतिशङ्काया शमयेदित्याह-प्रसादमिति। पित्तास्रक्रिया-रक्तपित्तचिकित्सा।

अकृतशिराव्यधस्याप्येतदेव रक्तप्रसादनमित्याह-दुष्टं रक्तमिति। अनुद्रिक्त-उद्रेकाभावात् स्रावायोग्यम्।

**रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत्क्रियाम्।**

स०-रक्ते त्वतिष्ठति-स्थितिमलभमाने, त्व[4]रितमेव स्तम्भनी क्रिया-वक्ष्यमाणा, कुर्यात्, रक्तस्य प्राणायतनत्वात्।

आ० र०-अ[5]तिस्रावे स्तम्भनमाह-रक्ते त्विति।

तदेव स्तम्भनमाह—

**रोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः ॥ ४८ ॥**
**मृत्कपालाञ्जनक्षौममषीक्षीरित्वगङ्कुरैः।**
**विचूर्णयेद्व्रणमुखं पद्मकादिहिमं पिबेत् ॥ ४९ ॥**
**तामेव वा सिरां विध्येद्व्यधात्तस्मादनन्तरम्।**
**सिरामुखं वा त्वरितं दहेत्तप्तशलाकया ॥ ५० ॥**

स०-रोध्रादिभि सिराव्रणमुखं विचूर्णयेत्। पद्मकादिहिम-शीतकषाय, पिबेत्। तामेव-प्राग्विद्धा, सिरा तस्मात्-प्राग्व्यधादनन्तर, अव्यवहितं विध्येत्। अथवा सिराद्वारं क्षिप्रं कृत्वाऽभि[6]नोपतप्तया शलाकया दहेत्।

आ० र०-स्तम्भनविशेषमाह-रोध्रप्रियङ्ग्विति। मृत्कपाल-खर्परम्। क्षौममषी-वस्त्रभस्म। विचूर्णयेत्-चूर्णं विकिरेत्। पद्मकादिहिम-पद्मकादिगणस्य शीतकषायम्। सङ्ग्रहे तु (सू अ ३६)-"अतिष्ठति तु रक्ते शिरामुखं सधातु चूर्णैरवचूर्ण्याङ्गुल्यग्रेण पीडयेत्। शाल्मल्युपोदकापिच्छा वा व्रणमुखे दत्त्वा गाढं बध्नीयात्। मधूच्छिष्टप्रलिप्तं वा पट्टकम्। शीताम्बुना वा सिञ्चेत्। शीतमधुरकषा-

१ 'च्य-न सहसाऽपनीय' ट। २ 'प्लोताक्त' ट। ३ 'अशुद्धौ' चन्द्र। ४ 'धिरं लक्षयित्वा, भू' ड। ५ 'पुन पुन' ट। ६ 'कर्म' ट। क्रम-विधि। ७ [ ] इति पाठ क ञ पुस्तकयोर्नोपलभ्यते। ८ 'स्रावणादस' ग.। ९ 'न च दु' ठ। १० 'भिरपहरेत्' ठ.ड।

१ 'तामपसृज्य' ट ठ। २ 'त्वमापा' ट। ३ 'नेगेन स्त' ठ ड। ४ 'अतिष्ठति स्रावे' ञ। ५ 'च' घ। ६ 'भितापत' ट। ७ 'तु पूर्वोक्तैश्चूर्ण' स ह। ८ 'काषिण्ट पिच्छा' ग। ९ 'त्वाऽवगाढं' ञ.। १० 'नाऽवसि' स स।

यान्नपानसेकप्रदेहप्रवातवेश्मभिर्वा स्कन्दनायोपचरेत् । पद्म-कादिक्वाथं शर्करामधुमधुरं क्षीरमिक्षुरसमेणहरिणाजोरभ्र-महिषवराहाणामन्यतमस्य वा सिरां विद्ध्वा रुधिरमामं घृतभृष्टं वा पानं दद्यात् । तेनैव वा दर्भपादमृदितेनानु-वासयेत् । स्निग्धैश्च यूषरसैर्भोजयेत् । सर्वथा चानवति-ष्ठमाने पाचनाय क्षारं दद्यात् । न च क्षणमप्युपेक्षेत । क्षीणरक्तस्य हि वायुर्मर्माण्युपसंगृह्य मूर्च्छासंज्ञानाशदिर क-म्पभ्रममन्यास्तम्भापतानकहनुग्रहहिध्मापाण्डुत्वबाधिर्यध्मा-तुक्षयाक्षेपकादीन् करोति, मरणं वा । प्राणा प्राणभृतां रक्तं तत्क्षयात्क्षीयतेऽनलः । वर्द्धते चानिलस्तस्माद्युक्त्या बृंह-णमाचरेत् ॥ दुर्व्यधातिव्यधकुट्टिततिर्यग्व्यधादेर्य्ये यदोषा-व्यापदो या स्युस्ता यथास्वं साधयेदिति ।" इति ।

रक्तस्य स्रावणादनन्तरं यद्विधेयं तदाह—

**उन्मार्गगा यन्त्रनिपीडनेन**
**स्वस्थानमायान्ति पुनर्न यावत् ।**
**दोषाः प्रदुष्टा रुधिरं प्रपन्ना-**
**स्तावद्धिताहारविहारभाक् स्यात् ॥ ५१ ॥**

स०—यन्त्रनिपीडनेनोन्मार्गगा—स्वमार्गमुल्लङ्घ्य मार्गान्तर-समाश्रयणेनोत्पथं प्रतिपन्ना । किम्भूता दोषा ? प्रदुष्टाः,—तथाविधं रक्तं प्राप्ता । ते पुनर्यावत्स्वाश्रयं न प्रतिपद्यन्ते तावद्धिताहारविहारभाक् स्यात्—हितावाहारविहारौ भजेत् । "भजो ण्विः" इति ण्वि । इन्द्रवज्रावृत्तम् ।

आ० र०—स्रुतरक्तस्य पथ्यनियमकालावधिमाह—उन्मा-र्गगा इति ।

**नात्युष्णशीतं लघु दीपनीयं**
**रक्तेऽपनीते हितमन्नपानम् ।**
**तदा शरीरं ह्यनवस्थितासृ-**
**गग्निर्विशेषादिति रक्षितव्यः ॥ ५२ ॥**

स०—रक्ते स्राविते अन्नपानं नात्युष्णशीतं हितम् । अत्युष्णं ह्यन्नपानं रक्तं प्रदूषयेत् । अतिशीतं त्वग्निं सादयेत् । तथा, लघु—स्वभावतो मात्रासंस्कारादिना वा, तथा दीपनीयम् । कुत एवमन्नपानं हितम् ? इत्याह—यस्मात्तस्मिन् काले शरीर-मनवस्थित—चलितवृत्ति, रक्तं यस्य शरीरस्य तदेवंभूतं भवति । तच्चासृक् शरीरस्याधारो, रक्तस्य च पित्तं, पित्तं च वह्निः । तथा च वक्ष्यति ( हृ० शा० अ० ३।९० )—"पित्तं वह्निः" इति । तस्माद्विशेषात्—महता यत्नेन, वह्निनात्युष्णशीतादिनाऽऽहार-विहारेण रक्षितव्यः ।

आ० र०—पथ्यमाह—नात्युष्णशीतमिति ।
उक्ते पथ्ये युक्तिमाह—तदा शरीरमिति । इति—अतो हेतोः ।

कृतसिराव्यधस्य पुरुषस्य लक्षणमन्तरेणोन्मार्गगामिनां दोषाणां स्वस्थानप्रतिपत्तौ कालो नावगम्यते, न च निर्हृतदुष्टरक्तः पुरुषो लक्षणं विना ज्ञायते, इति द्वयस्यापि परिज्ञानार्थमाह—

**प्रसन्नवर्णेन्द्रियमिन्द्रियार्था-**
**निच्छन्तमव्याहतपक्तृवेगम् ।**
**सुखान्वितं पुष्टिबलोपपन्नं**
**विशुद्धरक्तं पुरुषं वदन्ति ॥ ५३ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचिता-यामष्टाङ्गहृदयसंहितायां सूत्रस्थाने शिराव्यध-विधिर्नाम सप्तविंशोऽध्यायः ॥ २७ ॥**

स०—वर्णश्चेन्द्रियाणि च वर्णेन्द्रियाणि, प्रसन्नानि वर्णे-न्द्रियाणि यस्य तं प्रसन्नवर्णेन्द्रियम् । तथा, इन्द्रियार्थान्—शब्दादीन् स्वभावाभिप्रेतान्, इच्छन्त—अभिलषन्तम् । तथा, पक्तुर्वेगः—सामर्थ्यम्, अव्याहतः—अनभिभूतः, पक्तृवेगो यस्य तमव्याहतपक्तृवेगम् । तथा, सुखान्वितं—आरोग्ययुक्तं प्रकृति-मापन्नम् । तथा, पुष्टिबलाभ्यां युक्तम् । एवंविधं विशुद्धरक्तं पुरुषं वदन्ति, इति शरीरस्य लक्षणमुक्तम् । "मधुरं लवणं" इत्या-दिना तु रक्तस्यैव विशुद्धलक्षणमभिहितमिति । उपजातिर्वृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटी-
कायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने शिराव्यधविधि-
र्नाम सप्तविंशोऽध्यायः समाप्तः ॥ २७ ॥

आ० र०—विशुद्धरक्तस्य लक्षणमाह—प्रसन्नवर्णेति । पक्ता—अग्निः । वेगो—विण्मूत्रादिप्रवृत्तिः ।

**इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**शिराव्यधप्रकरणं सामस्त्येन निरूपितम् ॥ २७ ॥**

१ 'पानै सेक' क ग घ ज प स मू. । २ 'पगृह्य' ग व प । ३ 'प्राण' क । ४ 'ते नर ।' ग । ५ 'रक्तस्रावाद' ठ ड । ६ 'तास्तमग्निं' अ ग घ । ७ 'शेषेण च र' ज चरक । ८ 'र-क्षणीय' अ घ ट । ९ 'मात्रादिना च, दीपनीय—संस्कारादिना । कुत' ठ.ड । १० तथा—तद्वत्, स्वभावतो मात्रादिना वेत्यर्थ ।

१ अस्याग्रे "रक्तजा व्यङ्गकुष्ठाद्या कण्ठास्याक्षिशिरोगदाः । पलितारूषिकाबाधा शाम्यन्त्येते शिराव्यधात् ॥ १ ॥ निर्व्या-धिनीलोत्पलपत्रनेत्रं सुव्यक्तमूलासितबद्धकेशम् । चन्द्रोपमं पद्मसुगन्धि वक्त्रं भवेल्ललाटे तु शिराव्यधेन ॥ २ ॥" इति इ ड ञ पुस्तकेष्वधिकौ श्लोकौ । २ 'प्रसन्नवर्णं प्रसन्नेन्द्रियं च । इन्द्रि' ड । ३ 'ब्दादिभावानभिप्र' ट. । ४ 'म्, अविनष्टपचन-वेगम्, आरोग्ययुक्तम्, पुष्टि' ड. ।



## अष्टाविंशतितमोऽध्यायः ।

शिराव्यधविधेरनन्तरं शल्याहरणविधिरारभ्यते । यत सिराव्यधविध्यध्याये शल्यरूपस्य रक्तस्य सकलकायव्यापिन सिराव्यधोपायेन निर्हरणमुक्तम् । इदानीं प्रादेशिकस्य लोहादे शल्यस्य प्रतिदेशस्थितस्य लक्षणं निर्हरणोपायादिश्चास्मिन्न ध्याये शल्याहरणविधौ निर्दिश्यत इत्याह—

**अथातः शल्याहरणविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**वक्रर्जुतिर्यगूर्ध्वाधः शल्यानां पञ्चधा गतिः ।**

**स०**–वक्रादिभेदभिन्ना शल्याना पञ्चप्रकारा गति –गमनम् । कदाचिच्छल्यानि वक्रं कृत्वा, तिर्यग्वा, ऊर्ध्वं वा, अधो वा, गच्छन्ति, कदाचिदृजु कृत्वा । एवमुभयथा तिर्यगूर्ध्वाधोभेदगमनाच्छल्याना पञ्चधा गति ।

**आ० र०–शल्याहरणविधिमध्यायं व्याख्यातुं प्रतिजानीते–अथेति ।**

**शल्यगतिभेदानाह–वक्रर्ज्विति । सङ्ग्रहे तु ( सू अ. ३७ )–"त्रिविधा गति शल्यानामूर्ध्वमधस्तिर्यक् च । सा पुन प्रत्येकमृजुवक्रभेदेन द्विविधा ।" इति ।**

सशल्यं कथं वेद्यम् ? इत्याह—

**श्यामं शोफरुजावन्तं स्रवन्तं शोणितं मुहुः ॥ १ ॥**
**अभ्युद्गतं बुद्बुदवत्पिटिकोपचितं व्रणम् ।**
**मृदुमांसं च जानीयादन्तःशल्यं समासतः ॥ २ ॥**

**स०**–एवंविधं व्रणमन्तःशल्यं जानीयात् । समासत –सङ्क्षेपेण । श्याम–श्यामवर्णम् । तथा, शोफरुजावन्तम् । तथा, मुहु शोणितं स्रवन्तम् । तथा, अभ्युद्गत–आभिमुख्येनोच्छ्रितमुन्नतम् । तथा, बुद्बुदेन तुल्यं वर्तते बुद्बुदवत् । तथा, पिटकैरुपचित–व्याप्तम् । तथा, मृदुमास–कोमलमासम् ।

**आ० र०–अन्त शल्यस्य लक्षणमाह–श्याममिति ।**

इति सामान्येनान्तःस्थितस्य शल्यस्य लक्षणमभिधाय, त्वगादिगतस्य विशेषमाह—

**विशेषात्त्वग्गते शल्ये विवर्णः कठिनायतः ।**
**शोफो भवति**

**स०**–विशेषेण पुनस्त्वग्गते शल्ये शोफो विवर्णस्तथा कठिनो दीर्घश्च स्यात् ।

**आ० र०**–त्वग्गतशल्यस्य लक्षणमाह–विशेषादिति । विशेषादिति वचनात् सामान्यलक्षणमप्यत्र ज्ञेयम् ।

**मांसस्थे चोष शोफो विवर्द्धते ॥ ३ ॥**
**पीडनाक्षमता पाकः शल्यमार्गो न रोहति ।**

**स०**–मांसगते शल्ये चोष स्यात् । 'सर्वाङ्गीणस्तीव्रोऽरतिमान् दाहश्चोष उच्यते' इत्याहु । तथा शोफो विवर्द्धते । तथा, पीडनस्याक्षमत्वं पाकश्च, शल्यमार्गश्च रोह न याति ।

**आ० र०–मांसगतस्य लक्षणमाह–मांसस्थ इति ।** चोष –आचूषणेनेव व्यथा ।

**पेश्यन्तरगते मांसप्राप्तवच्छ्वयथुं विना ॥ ४ ॥**

**स०**–पेशीमध्यगते मांसगतेन तुल्यं लक्षणम्, शोथं वर्जयित्वा । मांसावयवविशेषो दीर्घतन्त्वाकृति पेशीत्युच्यते ।

**आ० र०–पेशीगतस्य लक्षणमाह–पेश्यन्तरगत इति ।**

**आक्षेपः स्नायुजालस्य संरम्भस्तम्भवेदनाः ।**
**स्नायुगे दुर्हरं चैतत्**

**स०**–स्नायुगे शल्ये स्नायुजालस्याक्षेपाद्या स्यु । आक्षेप –आकर्षणम् । सरम्भ –क्षोभ । स्तम्भ –स्तब्धता । वेदना–शूलम् । एतच्च–स्नायुगं शल्य, दुःखेन हर्तुं शक्यते ।

**आ० र०–स्नायुगतस्य लक्षणमाह–आक्षेप इति । एतत्–स्नायुगतमन्येभ्यो दुर्हरं च ।**

**सिराध्मानं सिराश्रिते ॥ ५ ॥**

**स०**–सिराश्रिते शल्ये सिराणामानाहः स्यात् ।

**आ० र०–शिरागतस्य लक्षणमाह–शिराध्मानमिति । शिराध्मान–शिराणां वायुपूर्णत्वम् ।**

**स्वकर्मगुणहानिः स्यात्स्रोतसा स्रोतसि स्थिते ।**

**स०**–स्रोतोगते शल्ये स्रोतसा स्वकर्मगुणयोर्हानि स्यात् । यथा,–कण्ठस्रोत स्थिते शल्ये पानाभ्यवहरणस्य निरोधो जायते ।

१ अथ शल्याहरणविधि सुश्रुते सू० २६।२७ अध्याययो, अष्टाङ्गसङ्ग्रहे सू० ३७ अध्याये चास्ति वर्णित, चरके तु न वर्णित । २ 'त्वा गच्छन्ति । कदाचित् सरलं तिर्यक् ऊर्ध्वमधो वा गच्छन्ति । एव पञ्चप्रकारा गति ।' ड । ३ 'गता शल्या' ट । ४ 'अभ्युन्नत' घ ञ प, ट ठ । ५ 'मास विजा' अ ठ । ६ 'ह्य विजा' ट । ७ 'नोत्थित' ट.ड. ।

१ 'णमुक्त्वा त्व' ट । २ 'डनेऽक्षम' आ ग । ३ 'डनेऽस्या' ट । ४ 'यथोर्विना' ग घ ञ प ठ । ५ 'श्वयथु व' ट । ६ 'स्राव' प ट । ७ 'न निर्हर्तुं' ट । ८ 'स्रावग' क घ ञ प । ९ 'रापूर्ण' क ञ । १० 'स्वकर्मगुणहानिरिति रसादिवहाना स्रोतसा रसादिवहनं कर्म, गुणा पुनरेषा वातादिवहानामरुणपीतसितरक्तादयो वर्णा, तेषां हानिरित्यर्थ ।' इति डल्हण । ११ 'कण्ठस्थे श' ठ.ड. । १२ 'धोऽवाक्त्वं चेति योज्यम् । धमनीस्थे' ड. ।

गुणोऽपि यस्तस्याप्रदुष्टत्वादिलक्षण सोऽप्यस्य हीयत इति । एवमन्येषा स्वकर्मगुणहानिर्व्याख्येया ।

**आ० र०**–स्रोतोगतस्य लक्षणमाह–स्वकर्मगुणहानिरिति । स्वकर्म–प्राणादीनां यथावद्वहनम् । स्वगुणो–मार्दवादि. ।

**धमनीस्थेऽनिलो रक्तं फेनयुक्तमुदीरयेत् ॥ ६ ॥**
**निर्याति शब्दवान् स्याच्च हृल्लासः साङ्गवेदनः ।**

**स०**–धमनीस्थे शल्ये वायुर्लोहित सफेन प्रेरयेत् । तथा सशब्दो मरुन्निर्याति, हृल्लासश्चाङ्गपीडायुक्त स्यात् ।

**आ० र०**–धमनीगतस्य लक्षणमाह–धमनीस्थ इति ।

**सद्धर्षो बलवानस्थिसन्धिप्राप्तेऽस्थिपूर्णता ॥ ७ ॥**

**स०**–अस्थिसन्धिप्राप्ते शल्ये बलवान् सद्धर्ष–क्षोभ, स्यात् । तथा, अस्थिपूर्णता च जायते ।

**आ० र०**–अस्थिसन्धिगतस्य लक्षणमाह–सद्धर्ष इति । बलवान् सद्धर्ष–दु सहसङ्घट्टनम् ।

**नैकरूपा रुजोऽस्थिस्थे शोफः**

**स०**–अस्थिस्थे शल्ये, अनेकाकारा (नैकरूपा)–नानाविधा, रुजो–भग्नरुग्णमृदितपीडितावनुन्नप्राया स्यु, शोफश्च ।

**आ० र०**–अस्थिगतस्य लक्षणमाह–नैकरूपा इति ।

**तद्वच्च सन्धिगे ।**
**चेष्टानिवृत्तिश्च भवेत्**

**स०**–सन्धिगते शल्ये तद्वदेव–अस्थिस्थशल्येन तुल्य लक्षणम् । तथा, सन्धिस्थशल्याक्रान्तावयवस्य चेष्टानिवृत्ति–व्यापारोपरमश्च भवति । पूर्वमस्थिसन्धिगतस्य शल्यस्य लक्षणमुक्तम् । अधुना शरीरसन्धिगतशल्यस्य लक्षणम् । अन्यो हि शरीरसन्धि । तथा च राजयक्ष्मनिदाने वक्ष्यति (हृ नि. अ ५।५)–"शरीरसन्धीनाविश्य" इति ।

**आ० र०**–सन्धिगतस्य लक्षणमाह–तद्वदिति ।

**आटोपः कोष्ठसंश्रिते ॥ ८ ॥**
**आनाहोऽन्नशकृन्मूत्रदर्शनं च व्रणानने ।**

**स०**–कोष्ठसश्रिते–उदराश्रिते शल्ये, आटोप–क्षोभ, तथाऽऽनाहो–जठराध्मानम्, तथा व्रणमुखेऽन्नशकृन्मूत्रदर्शन च स्यात् ।

**आ० र०**–कोष्ठगतस्य लक्षणमाह–आटोप इति ।

**विद्यान्मर्मगतं शल्यं मर्मविद्धोपलक्षणैः ॥ ९ ॥**

**स०**–मर्मस्थ शल्य मर्मविद्धोपलक्षणैर्विद्यात्–जानीयात् । मर्मविद्धस्य च लक्षण सङ्ग्रहे कथितम् । यथा (शा अ ७)–"देहप्रसुप्तिर्गुरुता सम्मोह शीतकामिता । स्वेदो मूर्च्छा वमि श्वासो मर्मविद्धस्य लक्षणम् ॥" इति ।

**आ० र०**–मर्मगतस्य लक्षणमाह–विद्यादिति । उपलक्षण–लक्षणम् । तच्च "विद्धेऽजस्रमसृक्स्रावो" इत्यादिना शारीरके (हृ शा. अ ४।४७) वक्ष्यते ।

**यथास्वं च परिस्रावैस्त्वगादिषु विभावयेत् ।**

**स०**–न केवल सामान्यलक्षणेन–श्यामादिना, तथा त्वगादिस्थशल्यविशेषलक्षणेन, त्वगादिस्थ शल्य लक्षयेत् । यावत् यथास्व परिस्रावैस्तथाऽनुरूपैर्विभावयेत् ।

**आ० र०**–त्वग्गतादीना स्रावतो लक्षणमाह–यथास्वमिति । यथास्वमिति यत्र यदाश्रित द्रव तत्र तत्स्रवति । यथा,–त्वग्गते लसीका, शिरादिगते रक्तम्, अस्थिगते मज्जा, इत्यादि ।

**रुह्यते शुद्धदेहानामनुलोमस्थितं तु तत् ॥ १० ॥**

**स०**–तत्–प्राङ्निर्दिष्ट शल्य, रुह्यते–रोह याति । किम्भूताना पुसाम्? वमनविरेचनादिभि शुद्धदेहानाम् । रुह्यत इति कर्मकर्तरीति केचित्, तच्च न युक्तम् । यत कर्मस्थभावकाना कर्मस्थक्रियाणा च कर्ता कर्मवद्भवति । न कर्तृस्थभावकाना न च कर्तृस्थक्रियाणामित्युक्तम् । रुहिश्च कर्तृस्थक्रिय । तस्मात् रोहतीति रुट् । रुडिवाचरतीति क्यङन्तोऽयम् । रूढाभासो ह्ययम्, न तु सम्यग्रूढ । तथा च वक्ष्यति–"दोषकोप" इत्यादि । तस्मादस्य रूढाभासत्वादेवैव व्युत्पत्तिर्युक्ता ।

**आ० र०**–अन्त शल्योऽपि स्वगुणेनैव रूढो व्रणो भवतीत्याह–रुह्यत इति । रुह्यते स्वयमेव । कर्मकर्तर्यात्मनेपदम् । तत्–शल्यम् । शल्येन शल्यक्षत लक्ष्यते, तस्यैव रोपणार्हत्वात् ।

**दोषकोपाभिघातादिक्षोभाद्भूयोऽपि बाधते ।**

**स०**–यतस्तच्छल्यमसम्यग्रूढत्वात् भूयोऽपि बाधते । प्राकृतबाधमपि पुनरपि पीडा जनयति । कुतो हेतो? इत्याह–दोषकोपश्चाभिघातश्च, तावादी येषा धावनलङ्घनादीना ते एवं, ते क्षोभ–सरम्भ, तस्मात् । दोषकोपक्षोभात् अभिघातादिक्षोभात् बाधते ।

---

१ 'रयन्' अ ग ड प । २ 'सहर्षो' अ इ ञ ठ, सु । ३ 'सहर्ष' ट ठ ड, क ञ । 'सद्धर्ष–आकुलत्वम्' इतीन्दु । 'सहर्ष इति मारुतोपद्रवो रोमाञ्चप्रायो वेदनाविशेष । सहर्ष सङ्घट्टनमित्यन्ये ।' इति डल्हण । ४ 'स्थिशून्यतेव जा' ठ ड । ५ 'नानाकारा –' ट । ६ 'ताधोनुन्न' ट । ७ 'यवान्तरस्येव । तथा चेष्टाया–व्यापारस्य, निवृत्ति–उपरम, स्यात् । पू' ट । ८ 'णमधुना तूक्त शरार' ठ । ९ 'कोष्ठमुदरमाश्रिते' ट ।

१ 'कामता' आ ठ ट । २ 'तत्र' क ग ञ । ३ 'यथायथं प' ञ । ४ 'था विशेषलक्षणेन–त्वगादिस्थशल्यलक्षणेन' ट । ५ 'थायथमि' ञ । ६ 'केषाम्? व० हाना पुसामिति । रु' ठ ड । ७ 'तच्चायु' ठ । ८ 'डन्ताया रूढा' ट । ९ 'शल्येऽपि' क । 'शल्येऽप्यस्य गुणेनैव रूढो भव' ञ । १० 'रूढत्र' घ प । ११ 'शल्ये शल्यक्षत' क । 'शल्ये शल्ये क्षत ञ । १२ 'तस्यनारो' ग ।

आ० र०—अन्त शल्य रूढमपि पुनर्बाधत इत्याह—दोषकोपेति ।

त्वगादिनष्टे शल्ये मिथ्यारूढत्वाददृश्यता प्राप्ते सति शल्यपरिज्ञानार्थमिदमाह—

**त्वङ्नष्टे यत्र तत्र स्युरभ्यङ्गस्वेदमर्दनैः ॥ ११ ॥**
**रागरुग्दाहसंरम्भा यत्र चाज्यं विलीयते ।**
**आशु शुष्यति लेपो वा तत्स्थानं शल्यवद्वदेत् ॥१२॥**

स०—तत्र—तेषु त्वङ्नष्टादिषु शल्येषु मध्ये, त्वङ्नष्ट यत्र प्रदेशे स्यात् तत्र—तत्स्थाने, अभ्यङ्गादिभिर्लौहित्यशूलदाहक्षोभा स्यु । यत्र वा स्थाने घृत स्त्यान योजित विलीयते तत्स्थान शल्यवत्—सशल्य वदेत् । यद्वा लेप -चन्दनादिना दत्तो, यत्राश्वेव शुष्यति, तत्स्थान—त्वग्देश, शल्यवज्जानीयात् ।

आ० र०—अथ नष्टशल्यज्ञानोपाय । तत्र त्वङ्नष्टस्योपायमाह—त्वङ्नष्ट इति ।

**मांसप्रणष्टं संशुद्ध्या कर्शनाच्छ्लथता गतम् ।**
**क्षोभाद्रागादिभिः शल्य लक्षयेत्**

स०—मासप्रणष्ट—मासेनादृश्यता प्राप्त, सशुद्ध्या—वमनविरेचनादिकया, यत्कर्शन—कृशत्व कृत, तस्मात् श्लथता शिथिलत्व प्राप्त, क्षोभात्—अनेकप्रकाराद्वेदनारूपात्, तथा रागादिभिर्लक्षयेत् ।

आ० र०—मासनष्टस्योपायमाह—मासप्रणष्टमिति । शोधनेन कर्शने जाते शिथिलस्य शल्यस्य क्षोभाद्यत्र रागाद यस्तत्र शल्यम् ।

**तद्वदेव च ॥ १३ ॥**
**पेश्यस्थिसन्धिकोष्ठेषु नष्टम्**

स०—तद्वदिति तेन—मासप्रणष्टेन, तुल्य वर्तते । यथा,—शुद्ध्या कर्शनात् श्लथता गत क्षोभाद्रागादिभिर्लक्षयेदिति ।

आ० र०—पेश्यादिषु त्रिषु नष्टस्योपायमाह—तद्वदेवेति ।

**अस्थिषु लक्षयेत् ।**
**अस्थ्नामभ्यञ्जनस्वेदबन्धपीडनमर्दनैः ॥ १४ ॥**

स०—अस्थिषु नष्ट शल्यमस्थ्नामभ्यञ्जनादिभिर्लक्षयेत् ।

आ० र०—अस्थिनष्टस्योपायमाह—अस्थिष्विति । 'क्षोभाद्रागादिभि ' इत्यनुवर्तते ।

**प्रसारणाकुञ्चनतः सन्धिनष्टं तथाऽस्थिवत् ।**

स०—सन्धिनष्ट शल्यमस्थिनष्टशल्यवल्लक्षयेत् ।

आ० र०—सन्धिनष्टस्योपायमाह—प्रसारणाकुञ्चनत इति । अस्थिवत्—अभ्यञ्जनादिभिश्च ।

**नष्टे स्नायुशिरास्रोतोधमनीष्वसमे पथि ॥ १५ ॥**
**अश्वयुक्त रथं खण्डचक्रमारोप्य रोगिणम् ।**
**शीघ्रं नयेत्ततस्तस्य संरम्भाच्छल्यमादिशेत् ॥ १६ ॥**

स०—स्नायुशिरास्रोतोधमनीषु नष्टे शल्ये, असमे पथि—विषमे मार्गे, रथमारोप्य रोगिण—शल्यवन्त, शीघ्र नयेत—आश्वेव देशान्तर प्रापयेत् । किम्भूत रथम् ? खण्ड चक्र यस्य स खण्डचक्र, तम् । ततस्तस्य—रथस्य, सरम्भात्—क्षोभात्, शल्यमादिशेत्—लक्षयेत् ।

आ० र०—स्नाय्वादिषु चतुर्षु नष्टस्योपायमाह—नष्ट इति । असमे पथि—उच्चनीचे मार्गे ।

**मर्मनष्टं पृथङ्नोक्तं तेषां मांसादिसंश्रयात् ।**

स०—मर्मनष्ट शल्य पृथक् नाभिहितम् । कुत ? तेषा—मर्मणा, मासादिरेव प्राङ्निर्दिष्टो यत सश्रयो, न तु पृथङ्मर्माणि विद्यन्ते । [ तथा च सङ्ग्रहे ( सू अ ३७ )—"मर्मप्रणष्टेऽप्यन न्यभावान्मासादिभ्यो मर्मणामुक्त परीक्षण भवति ।" इति । ]

आ० र०—मर्मनष्टस्योपायानुक्तौ हेतुमाह—मर्मनष्टमिति । तेषा—मर्मणा, मासादिगतत्वात्—मासादिनष्टकथने नैवोक्तत्वात् ।

एव विशेषेण नष्टशल्यलक्षणमुक्त्वा सामान्येन नष्टशल्य देश लक्षयितुमाह—

**सामान्येन सशल्यं तु क्षोभिण्या क्रियया सरुक् ॥**

स०—सामान्येन—सामान्यलक्षणेन, क्षोभिण्या क्रियया—सरम्भोत्पादकेन कर्मणा श्वसनप्राणायामादिकेन, यत् सरुक् स्थान तत् सशल्य जानीयात् ।

आ० र०—नष्टस्य सामान्यलक्षणमाह—सामान्येनेति ।

**वृत्तं पृथु चतुष्कोणं त्रिपुटं च समासतः ।**
**अदृश्यशल्यसंस्थानं व्रणाकृत्या विभावयेत् ॥ १८ ॥**

स०—वृत्त—वर्तुलम् । पृथु—पार्श्वापरपार्श्वाभ्या यत्परिच्छिद्यते । चतुष्कोण—चतुरस्रम् । त्रिपुट—त्र्यस्रम् । समासत —सङ्क्षेपेण । अदृश्यस्य—अनुपलब्धस्य, शल्यस्य सस्थान—आकृतिं, व्रणाकृत्या—व्रणसस्थानेन, विभावयेत्—विद्यात् ।

आ० र०—अदृश्यस्य शल्यस्याकृतिर्व्रणाकृत्या ज्ञेयेत्याह—वृत्तमिति । वृत्त—कोणरहितम् । पृथु—द्विकोणम् । त्रिपुट—त्रिकोणम् । सस्थान—आकृति ।

---

१ 'यत्र वाऽऽज्य' अ अरुण । २ 'आशुष्यति प्रलेपो वा' ड । ३ 'अथवा' ट । ४ 'ल्यस्य ज्ञा' ग । ५ 'पायमाह । त' क ञ । ६ 'कर्षणाच्छ्ल' अ इ । ७ 'यच्च कर्षण कृत' ठ ट । ८ 'कर्षणे' ग ञ । ९ 'भाद्रागा' थ प । १० 'तु' ड ठ । ११ 'कर्षणात् श्लथता प्राप्त गत' ठ ट । १२ 'अस्थिनष्ट' ट ठ ट ।

१ 'ष्टवल्ल' ड । २ [ ] इति पाठ ट ठ ट पुस्तकेषु नोपलभ्यते । ३ 'ष्टे त्वनन्य' स स । ४ 'णा प्राणा' ट ट । ५ 'पार्श्वाभ्या' ठ ।

अधुनैषामाकर्षणोपाय निरूपयन्नाह—

**तेषामाहरणोपायौ प्रतिलोमानुलोमकौ ।**

**स०**—तेषा—अदृश्याना शल्यानाम् । आकर्षणोपायौ द्वौ प्रतिलोमानुलोमकौ । प्रतिलोम –शरीरान्त प्रवेशविपर्यय । अनुलोम –शरीरान्त प्रवेशानुगत ।

**आ० र०—शल्याहरणोपायभेदाना(वा)ह—तेषामिति । यत्र प्रतिकूलमाहरण स प्रतिलोम , यत्रानुकूल सोऽनुलोमः ।**

प्रतिलोमानुलोमयोर्निर्हरणविषयमाह—

**अर्वाचीनपराचीने निर्हरेत्तद्विपर्ययात् ॥ १९ ॥**

**स०**—तयो –प्रतिलोमानुलोमयोविपर्यय , तस्माद्विपर्ययात् अर्वाचीनपराचीने निर्हरेत्,–प्रतिलोममर्वाचीनमानयेत्, अनुलोम पराचीनमानयेदित्यर्थ ।

**आ० र०—तयोर्विषयमाह—अर्वाचीनपराचीन इति । अर्वाचीन—अधोगतम्, तद्विपर्ययादूर्ध्वं निर्हरेत् । पराचीन—ऊर्ध्वगतम्, तद्विपर्ययादधो निर्हरेत् । ऊर्ध्वं निर्हरण—प्रतिलोमम्, अधः—अनुलोमम् । उक्त च सङ्ग्रहे (सू अ ३७)—"प्रतिलोममर्वाचीनमानयेत्, अनुलोमं पराचीनम् ।" इति ।**

**सुखाहार्यं यतश्छित्त्वा ततस्तिर्यग्गतं हरेत् ।**

**स०**—तिर्यग्गत शल्य यतो—यस्माद्देहदेशात्, छित्त्वा—विलुंप्य, सुखाहार्य सम्पद्यते—सुखेनाहर्तु शक्यते, तत –तस्माद्देहदेशात्, छित्त्वोद्धरेत् । छित्त्वेत्यत्र यद्यपि कर्म किञ्चिन्न निर्दिष्ट, तथाऽपि लज्ज्ञासादीना योग्यत्वात्तेषामेव कर्मत्व बोध्यम् । मांसादीनि छित्त्वोद्धरेदित्यर्थ ।

**आ० र०—तिर्यग्गत त्ववस्थाभेदेनोभयोर्विषय इत्याह—सुखाहार्यमिति । तिर्यग्गत येनोपायेन सुखाहार्यं तेन हरेत् । प्रवेशपार्श्वादन्येन पार्श्वेन यदा सुखाहार्यं तदा छित्वा—शस्त्रेण द्वारं कृत्वा, हरेत् ।**

**शल्यं न निर्घात्यमुरःकक्षावङ्क्षणपार्श्वगम् ॥ २० ॥**
**प्रतिलोममनुत्तुण्डं छेद्यं पृथुमुखं च यत् ।**

**स०**—शल्यमुरोगतमुर स्थं कक्षास्थं वङ्क्षणस्थं पार्श्वस्थ च न निर्घात्य—न निर्घातनीयम् । तथा प्रतिलोम—नानुलोमगतं, तथाऽनुत्तुण्ड वारिबुद्बुदवन्नोन्नत, तथा छेद्यं शल्यं, तथा पृथुमुख—विस्तीर्णानन, च न निर्घात्यम् ।

**आ० र०—उरोगतादिषु शल्येषु निर्घातन निषेधति—शल्यमिति । प्रतिलोम—ऊर्ध्वगतम् । अनुत्तुण्ड—अदृश्यमुखम् । छेद्य—छेदनार्हम् ।**

न च सर्वमेव शल्यमाहरणीयमित्याह—

**नैवाहरेद्विशल्यघ्नं नष्टं वा निरुपद्रवम् ॥ २१ ॥**

**स०**—विशल्य हन्तीति विशल्यघ्नम् । तावज्जीवति यावत्सशल्य । शल्यापाये तु म्रियते तन्नाहरेदेव । विशल्यस्य तस्य प्राणहरणत्वात् । एतत्स्वरूप मर्मविभागे स्पष्ट कृत्वा वक्ष्यते । नष्ट वेति वाशब्दश्चार्थे । नष्ट—अदृश्यता प्राप्त च, यन्निरुपद्रव—तन्निमित्तरोगरहित, नाहरेत्, प्रत्यवायभयात् ।

**आ० र०—अनाहरणीय शल्यमाह—नैवाहरेदिति । विशल्यघ्न—"उत्क्षेपौ स्थपनी त्रीणि विशल्यघ्नानि तत्र हि ।" (सु शा अ ६।५५) इत्युक्तेषु मर्मसु स्थितम् ।**

**अथाहरेत्करप्राप्यं करेणैव**

**स०**—करप्राप्य—हस्तग्राह्य शल्य, करेणैवाहरेत्—नापरेण कङ्कमुखादिना ।

**आ० र०—हस्ताहार्यं शल्यमाह—अथेति ।**

**इतरत्पुनः ।**
**दृश्यं सिंहाहिमकरवर्मिकर्कटकाननैः ॥ २२ ॥**

**स०**—इतरत्—अकरप्राप्य तु शल्य, दृश्य सिंहमुखादिभिर्यन्त्रैराहरेत् ।

**आ० र०—सिंहमुखादिस्वस्तिकयन्त्राहार्यं शल्यमाह—इतरदिति । इतरत्—करेणाप्राप्यम् ।**

**अदृश्यं व्रणसंस्थानाद्ग्रहीतुं शक्यते यतः ।**
**कङ्कभृङ्गाह्वकुररशरारीवायसाननैः ॥ २३ ॥**

**स०**—अदृश्य पुन शल्य व्रणसस्थानादाकलय्य कङ्कमुखादिभिर्ग्रहीतु शक्यते यतस्ततस्तैर्हरेत् । यत्तदोर्नित्याभिसम्बन्धात्तदोपलम्भ ।

**आ० र०—कङ्कमुखादिस्वस्तिकयन्त्राहार्यं शल्यमाह—अदृश्यमिति । 'इतरत्' इत्यनुवर्तते ।**

**सन्दंशाभ्यां त्वगादिस्थम्**

**स०**—त्वगादिस्थ शल्य सन्दंशाभ्या निर्हरेत् । आदिग्रहणान्मांसादीना ग्रहणम् ।

**आ० र०—सन्दंशाहार्यं शल्यमाह—सन्दंशाभ्यामिति । त्वगादीनि—त्वक्शिरास्नायुपिशितानि ।**

**तालाभ्यां सुषिरं हरेत् ।**

**स०**—सुषिरं यच्छल्यं त्वगादिस्थं तत्तालयन्त्राभ्यां हरेत्,—न सन्दंशाभ्याम् ।

१ 'रीरस्यान्त ' ट ठ ड । २ 'नुग ।' ट ठ । ३ 'त्र लोम-प्रति' ग.घ प । ४ 'प्रवेशमार्गेणैवाहरण—प्रतिलोम, तद्विपरीत च—अनुलोमम् ।' इति डल्हण । ५ 'अवाचीन' ग घ प स मू । ६ 'देहात्' ट.ठ ड । ७ लुप् ( लुप्र )–छेदने । ८ 'लोम त' ठ ड । ९ 'बाह्ये बु' ट ठ । १० 'ल्य न निर्घात्य—अहार्यम् । तथा' ठ. । ११ 'र्घातनीयम्' ट. ।

१ 'णहारित्वात्' ट. । २ 'त्यपाय' ट ठ. । ३ 'नित्य सम्बन्धात्ततो लाभ ।' ट. । ४ 'शुषिरं' प. । ५ 'तालय' ड ।

आ० र०–तालयन्त्राहार्यं शल्यमाह–तालाभ्यामिति । सुषिर–सरन्ध्रम् ।

**सुषिरस्थं तु नलकैः**

स०–सुषिरस्थ पुन शल्य नलकै –नाडीयन्त्रै , आकर्षेत् ।

आ० र०–नाडीयन्त्राहार्यं शल्यमाह–सुषिरस्थ त्विति ।

**शेषं शेषैर्यथायथम् ॥ २४ ॥**

स०–शेष शल्य शेषैर्यन्त्रैर्यथायोगमाहरेत् ।

आ० र०–शेषयन्त्राहार्यं शल्यमाह–शेष शेषैरिति ।

**शस्त्रेण वा विशस्यादौ ततो निर्लोहितं व्रणम् ।**
**कृत्वा घृतेन संस्वेद्य बद्ध्वाऽऽचारिकमादिशेत् ॥२५॥**

स०–शस्त्रेण वा पूर्व विशस्य–मासादीन् छित्त्वा, तत – अनन्तर, अपनीतरक्त व्रण विधाय, सर्पिषा स्वेदयित्वा, वस्त्रपट्टादिना सर्पिर्मधु बद्ध्वा, आचारिक–स्नेहविध्युक्त "उष्णोद कोपचारी स्यात्" इत्यादिक, आदिशेत्–कथयेत् ।

आ० र०–यन्त्रेणाहर्तुमशक्यस्य शल्यस्योपायमाह–शस्त्रेण वेति । विशस्य–विदार्य । निर्लोहित–स्रुतरक्तम् । आचारिक–आहारादिनियमम् । [ "भोजन तु यथासात्म्य" ( हृ सू अ २९।३४ ) इत्यादिवक्ष्यमाणोक्तम् । ]

**सिरास्नायुविलग्नं तु चालयित्वा शलाकया ।**

स०–सिरास्नायुविलग्न पुन शल्य शलाकया चालयित्वा–शिथिलीकृत्य, आहरेत् ।

आ० र०–शिरास्नायुविलग्नस्योपायमाह–शिरास्नायुविलग्नमिति ।

**हृदये संस्थितं शल्यं त्रासितस्य हिमाम्बुना ॥२६॥**
**ततः स्थानान्तरं प्राप्तमाहरेत्तद्यथायथम् ।**
**यथामार्गं दुराकर्षम्**

स०–हृदये यदाश्रित शल्य तच्छीतजलेन त्रासितस्य स्थानान्तरगतं ज्ञात्वा, यथायथ–यथास्व विशिष्टयन्त्रै , शल्य निर्हरेत् ।

आ० र०–हृदयलग्नस्य शल्यस्योपायमाह–हृदय इति । यथायथ–स्थानानुरूपेण यन्त्रेण । यथामार्ग–मार्गानुरूपेण शोधनेन । दुराकर्ष–हृदयादाक्रष्टुमशक्यम् ।

**अन्यतोऽप्येवमाहरेत् ॥ २७ ॥**

स०–अन्यतोऽपि–अन्यदेशस्थमपि शल्य, दुराकर्ष–दु खेनाकृष्टु शक्यते, तत् स्वमार्गं नयेत् तदेवमेवाहरेत्, यथा हृदस्थ शल्य स्थानान्तर प्राप्त निर्हार्यम् । तथा, यथामार्ग–मार्गानतिक्रमेण, अन्यदेशस्थमपि शल्यमाकर्षणीयम् ।

आ० र०–हृदयोपायमन्यत्रातिदिशति–अन्यतोऽपीति ।

**अस्थिदष्टे नरं पद्भ्यां पीडयित्वा विनिर्हरेत् ।**

स०–अस्थिदष्टे–अस्थि विदष्टे स्पृष्टे सति शल्ये, नरं बलवन्त पद्भ्या पीडयित्वा–आक्रम्य, तच्छल्य विनिर्हरेत् । 'अस्थिनष्टे' इति वा पाठ ।

आ० र०–अस्थिलग्नस्योपायमाह–अस्थिदष्ट इति ।

**इत्यशक्ये सुबलिभिः सुगृहीतस्य किङ्करैः ॥ २८ ॥**

स०–इत्यशक्ये–अनेनापि प्रकारेणाक्रष्टुमशक्ये शल्ये, किङ्करै –भृत्यै , महाबलै सुगृहीतस्य–सुष्ठ्ववष्टब्धस्य नरस्य, शल्य कङ्कमुखादिना निर्हरेत् ।

आ० र०–पूर्वोपायाशक्यस्योपायान्तरमाह–इत्यशक्य इति । सुगृहीतस्य–सशल्येऽङ्गे सम्यग्धृतस्य ।

**तथाऽप्यशक्ये वारङ्गं वक्रीकृत्य धनुर्ज्यया ।**
**सुबद्धं वक्रकटके बध्नीयात्सुसमाहितः ॥ २९ ॥**
**सुसंयतस्य पञ्चाङ्ग्या वाजिनः कशयाऽथ तम् ।**
**ताडयेदिति मूर्धानं वेगेनोन्नमयन् यथा ॥ ३० ॥**
**उद्धरेच्छल्यम्**

स०–तथाप्यशक्ये–एवमपि शल्य आहर्तुमशक्ये, वारङ्ग–शस्त्रादिमयस्य शल्यस्य शिखाकार, वक्रीकृत्य–कुटिलता प्रापय्य, ततो धनुर्ज्यया–स्नाय्वादिमय्या, सुबद्ध कृत्वा, अनन्तर, वाजिन –अश्वस्य, वक्रकटके बध्नीयाद्वैद्य । किम्भूत ? सुसमाहित ,–तद्गतमना । किम्भूतस्य वाजिन ? सुसयतस्य,–सुष्ठु–शोभन कृत्वा, बद्धस्य। कथ सुसयतस्य ? पञ्चाङ्ग्या, पञ्चानामङ्गाना–चतुर्णा पादाना मुखसहिताना, समाहार पञ्चाङ्गी,–बन्धविशेष , तया पञ्चाङ्ग्या, बद्धस्य । अनन्तर वाजिनं कशया–चर्मयष्ट्या, इति–एव, ताडयेत्, यथा स वाजी मूर्धानमुन्नमयन्–उत्क्षिपन्, वेगेन–बलेनाऽऽक्रान्त्या, शल्यमुद्धरेत् ।

आ० र०–एवमप्यशक्यस्योपायमाह–तथाऽप्यशक्य इति । वारङ्ग–शस्त्र(ल्य)मस्तके शिखाकारोऽवयव । पञ्चाङ्गी–चतुर्षु चरणेषु मुखे च बन्धविशेष । त–वाजिनम् । इति शब्दस्तथार्थे । शिर उत्क्षिप्य वेगेन यथा शल्यमुद्धरेत् तथा ताडयेत् ।

**एवं वा शाखायां कल्पयेत्तरोः ।**

१ 'माचरेत्' इति ङ पुस्तकानुसारी पाठ । २ 'विशस्येति यन्त्रप्रवेशनिरोधक प्रदेश शस्त्रेण छित्त्वा' इति चक्र । ३ 'आचारिकं–शस्त्रकर्मविधौ वक्ष्यमाणम्' इतीन्दु । ४ 'आचरेत्–भजेत्' ङ । ५ 'हारविहारादि' घ प । ६ 'स्नावव' आ प ट । ७ 'च' अ.ङ । ८ 'ते स्वमार्गेण हरेत्' ट ।

१ 'प्राप्तमाहार्यम्' ट । २ 'अस्थिनष्टे' अ । 'अस्थिस्थ न पर' आ । 'अस्थिदष्टे' घ प । 'अस्थिलग्न नर' ञ. । ३ 'अस्थिविदष्ट–अस्थिद्वयमध्यगतम्, विदष्टमिव विदष्टम्, इतीन्दु । 'विदष्टमिति अत्यासक्तम्' इति डल्हण । ४ 'अरश्मा वि' ट । ५ 'इत्यपि पाठ ' ठ । ६ 'स्थिमग्न' घ प । ७ 'मयेद्यथा' अ ग ञ । ८ 'ल्यमाहर्तुं' ठ ङ । ९ 'वारङ्ग–शल्यवृन्तम्' इति चन्द्र । १० 'प्राप्य' ठ ङ । ११ 'य्या, अतिसु' ठ ङ. । १२ 'उत्क्षपयन्' ठ । १३ 'वारङ्ग.–' घ प. । १४ 'थार्थे ।' क.ञ. ।

स०-अथवा एव-अनेन प्रकारेण, वारङ्ग वक्रता नीत्वा धनुर्ज्यया सुबद्ध सम्पाद्य सुसमाहितो भिषक्, वृक्षस्य शाखामानमय्य धनुर्ज्ययैवं तस्या तत् बध्नीयाच्छल्याकर्षणार्थम्। अत्र च या शाखा किङ्करहस्तादिविमुक्तमात्रैवोर्ध्वमुन्नम्यमाना शल्यमुद्धरति तादृशी कल्पनीया।

आ० र०-पूर्वोपायासम्भवे उपायान्तरमाह-एव वेति।

**बद्ध्वा दुर्बलवारङ्गं कुशाभिः शल्यमाहरेत्॥ ३१॥**

स०-दुर्बल-तनु, वारङ्ग यस्य शल्यस्य तच्छल्य कुशाभि-वंशादिकम्बिकाभि, बद्ध्वा शल्यमाकर्षेत्।

आ० र०-दुर्बलवारङ्गस्योपायमाह-बद्ध्वेति। कुशाभि-कम्बिकाभि.।

**श्वयथुग्रस्तवारङ्गं शोफमुत्पीड्य युक्तितः।**

स०-श्वयथुना ग्रस्त-आच्छादित, वारङ्गं यस्य शल्यस्य तच्छल्यमाहरेत्। कथम्? युक्तित,-यथा युज्यते तथा, शोफमुत्पीड्य-ऊर्ध्वं पीडयित्वा।

आ० र०-शोफग्रस्तवारङ्गस्योपायमाह-श्वयथुग्रस्तवारङ्गमिति। शोफोत्पीडनेन वारङ्गमुद्भाव्य।

**मुद्गराहतया नाड्या निर्घात्योत्तुण्डितं हरेत्॥ ३२॥**

स०-उत्तुण्डितं शल्य-बुद्बुदवदभिमुखीभूत, नाड्या निर्घात्य-चालयित्वा, हरेत्। किम्भूतया? मुद्गरेणाहतया। मुद्गरग्रहणमुपलक्षणार्थम्, पाषाणादिभिरप्याहतयोत्तुण्डित हरेदिति वेद्यम्।

आ० र०-उत्तुण्डितस्योपायमाह-मुद्गराहतयेति। तेनैन वा-नाडी विना मुद्गरेणैव, निर्घात्य।

**तैरेव[4] चानयेन्मार्गममार्गोत्तुण्डितं तु यत्।**

स०-तैरेव च-मुद्गरादिभिराहतै, अमार्गैरुत्तुण्डित-अमार्गोत्तुण्डितं, मार्गमानयेत्-मार्ग प्रापयेत्।

आ० र०-अमार्गोत्तुण्डितस्योपायमाह-नयेदिति। तैन्तु शल्य मार्गं नयेत्-मार्गनयनपूर्वकमाहरेत्, निर्घातनेनैव।

**मृदित्वा कर्णिनां कर्णं नाड्यास्येन निगृह्य वा॥३३॥**

स०-कर्ण कर्णौ कर्णा वा विद्यन्ते येषा ते कर्णिन,-भल्लादय, तेषा कर्ण मृदित्वा-भङ्क्त्वा, शल्य निर्हरेत्। अथवा नाड्यास्येन-नाडीमुखेन, निगृह्य निर्हरेत्। "नाडी पञ्चमुखच्छिद्रा" (हृ सू अ २४।१३) इत्येवमादिग्रन्थनिर्दिष्टैर्नाडीयन्त्रैर्निर्हरेदित्यर्थ।

आ० र०-कर्णयुक्तस्योपायमाह-मृदित्वेति। निर्गमप्रतिबन्धक शल्यावयव. कर्णाकारत्वात्-कर्ण., त मृदित्वा-सङ्कोदनेन शिथिलीकृत्य, अथवा नाड्यास्येन-नाडीयन्त्रमुखेन, निगृह्य-निष्पीडनेनैकीकृत्य।

**अयस्कान्तेन निष्कर्णं विवृतास्यमृजुस्थितम्।**

स०-अयस्कान्तेन-लोहाकर्षकमणिविशेषेण, निष्कर्ण शल्य तथा विवृतमुख ऋजु-स्पष्ट कृत्वाऽवस्थित निर्हरेत्।

आ० र०-निष्कर्णस्योपायमाह-अयस्कान्तेनेति। अयस्कान्तो-लोहाकर्षक पाषाण। विवृतास्यमृजुस्थितमिति निष्कर्णस्य विशेषणम्।

**पक्वाशयगतं शल्यं विरेकेण विनिर्हरेत्॥ ३४॥**

स०-पक्वाशयस्थित शल्य विरेचनेन विशेषेण निर्हरेत्।

आ० र०-पक्वाशयगतस्योपायमाह-पक्वाशयगतमिति।

**दुष्टवातविषस्तन्यरक्ततोयादि चूषणैः।**

स०-दुष्टवातादीनि चूषणैर्निर्हरेत्। चूषणैरिति बहुवचननिर्देशाच्छृङ्गादिभिरिति बोध्यम्।

आ० र०-दुष्टवातादीनामुपायमाह-दुष्टवातेति। चूषणै-शृङ्गादिभि।

**कण्ठस्रोतोगते शल्ये सूत्रं कण्ठे प्रवेशयेत्॥ ३५॥**
**बिसेनाप्ते ततः शल्ये बिसं सूत्रं समं हरेत्।**

स०-कण्ठस्रोत स्थे शल्ये सूत्र-कार्पासादिज, बिसेन कण्ठे प्रवेशयेत्-बिससलग्न सूत्र कृत्वा शल्यनिर्हरणाय प्रवेशयेदित्यर्थ। आप्ते-गृहीते, शल्ये बिससलग्ने, अनन्तर शल्य बिससूत्र सम-तुल्यकाल, आहरेत्।

आ० र०-कण्ठगतस्योपायमाह-कण्ठस्रोतोगत इति। बिसेन-मृणालेन, आप्ते-गृहीते।

**नाड्याऽग्नितापितां क्षिप्त्वा शलाकामप्स्थिरीकृताम्।**
**आनयेज्जातुषं कण्ठात्**

स०-जातुषे शल्ये कण्ठस्रोत प्रविष्टे तत् जातुष शल्यं कण्ठादानयेत्। कथम्? इत्याह-शलाका कण्ठे क्षिप्त्वा। कथम्? नाड्या-नाडीयन्त्रेण प्रक्षिप्य कण्ठदाहपरिहारार्थम्। कीदृशी शलाकाम्? अद्भि स्थिरीकृता, निर्वापणद्वारेण। ता तथाविधा शलाका कृत्वा नाड्यैव जातुष शल्य कण्ठादानयेत्-आकर्षयेत्। जातुषमित्यत्र "त्रपुजतुनो षुक्" इत्यण् षुगागमश्च।

आ० र०-जातुषस्योपायमाह-नाड्याऽग्नितापितामिति। अग्नितापिता शलाकां नाड्या कण्ठे क्षिप्त्वा ततोऽप्स्थिरीकृता-अपां पानेन स्थिरीकृता, शल्यसलग्ना कृत्वा जातुष-लाक्षामय शल्य, कण्ठादानयेत्।

**जतुदिग्[5]धामजातुषम्।**

स०-अजातुष-दारुवेण्वादिमय शल्य, कण्ठस्रोतःस्थितं

---

१ 'यद्वा' ठ ड। २ 'व बद्ध त' ठ। 'र्ज्यया बद्ध त' ड। ३ 'ङ्करैर्हस्तादिमु' ट। 'ङ्करविमुक्तमात्रैव समुन्न' ड.। ४ 'तेनैव वा नये' अ आ हेमाद्रि। ५ 'च' अ ग। ६ 'तच्छल्य' क ग.ञ। ७ भल्ल-बाणविशेष, 'भाला' इति वा प्रसिद्ध.।

१ 'न्त-चुम्बकपाषाण' ग। २ 'र्षणपा' घ प। ३ 'ल्यहर' ठ ड। ४ 'तथाभूता श' ठ.ड.। ५ 'दिग्धम' इ ञ चन्द्र'।

जतुदिग्धा-लाक्षालिप्ता, शलाकामग्नितापिता नाड्या क्षिप्त्वा पूर्ववच्छल्यमाहरेत्। जतुदिग्धामित्युपलक्षणार्थम्, सिक्थादिदिग्धामपि। यथा शलाकया हर्तुं युज्यते तथा कृत्वेति बोध्यम्।

आ० र०-अजातुषस्योपायमाह-जतुदिग्धामिति। जतुदिग्धां-लाक्षालिप्तां शलाकां, पूर्ववच्छल्यसलग्नां कृत्वा जातुषादन्यच्छल्यमाहरेत्।

**केशोन्दुकेन पीतेन द्रवैः कण्टकमाक्षिपेत् ॥ ३७ ॥**
**सहसा सूत्रबद्धेन वमतः**

स०-कण्टक-मत्स्यादिज, मांससङ्गेन भुक्त कण्ठस्रोतसि स्थित, द्रवै-पानीयादिभि सह, पीतेन केशोन्दुकेनाक्षिपेत्। केशाना समूह-केशोन्दुकम्, तेन। किम्भूतेन केशोन्दुकेन? सूत्रबद्धेन,-दीर्घसूत्रग्रथितेन। वमत-वमनमाचरत, कण्टकमेकदेशसक्तसूत्र सहसैवाक्षिपेत्। एव च वमनद्रव्यसस्कृतैर्द्रवै केशोन्दुकं पातव्यमित्यवतिष्ठते।

आ० र०-मत्स्यादिकण्टकस्योपायमाह-केशोन्दुकेनेति। सूत्रबद्धेन केशोन्दुकेन-केशपुञ्जेन, द्रवै. सह पीतेन वमत. सहसा कण्टकमाहरेत्।

**तेन चेतरत्।**

स०-तेन-कण्टकेन, इतरत्- केशोन्दुकं, प्रमादपीतमाहरेत्। क्षतकण्ठश्च त्रिफला मधुघृतसितोपेतामनुकण्ठं लिह्यात्। सुश्रुते चोक्तम् (सू अ २७।१९)-"अस्थिशल्यमन्यद्वा तिर्यक्कण्ठासक्तमवेक्ष्य केशोन्दुक दृढैकसूत्रबद्ध द्रवभक्तोपहित पाययेदाकण्ठात् पूर्णकोष्ठ च वामयेत्। वमतश्च शल्यैकदेशसक्त ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्। मृदुना वा दन्तधावनकूर्चकेनापहरेत् प्रणुदेद्वाऽन्त।" इति।

आ० र०-केशोन्दुकस्योपायमाह-तेनेति। तेन-कण्टकेन द्रवै सह पीतेन, इतरत्-केशोन्दुकम्, आहरेत्।

**अशक्यं मुखनासाभ्यामाहर्तुं परतो नुदेत् ॥ ३८ ॥**

स०-मुखनासागत शल्य मुखनासाभ्यामाहर्तुमशक्यं-आकष्टुं यन्न शक्यते, तत्परतो नुदेत्। प्रकृतत्वान्मुखात् परतो नासायाश्च परत। तस्माद्येन केनचिदुपायेन कोष्ठं नयेदिति गम्यते।

आ० र०-ऊर्ध्वमाहर्तुमशक्यस्योपायमाह-अशक्यमिति। परतो नुदेत्-कोष्ठ नयेत्।

**अप्पानस्कन्धघाताभ्यां ग्रासशल्यं प्रवेशयेत्।**

स०-ग्रास शल्यमिव-ग्रासशल्यं, कण्ठासक्तमन्तःकोष्ठाख्यं नयेत्। कथम्? अपा पान-अप्पानं, तेन। तथा स्कन्धघातेन, स्कन्धस्य मुष्ट्यादिना हनन-स्कन्धघात।

आ० र०-ग्रासशल्यस्योपायमाह-अप्पानस्कन्धघाताभ्यामिति। अप्पान-उदकपानम्।

**सूक्ष्माक्षिव्रणशल्यानि क्षौमवालजलैर्हरेत् ॥ ३९ ॥**

स०-अक्षिणी च व्रणश्च, तत्र शल्यानि-अक्षिव्रणशल्यानि, सूक्ष्माणि च तान्यक्षिव्रणशल्यानि च-सूक्ष्माक्षिव्रणशल्यानि, तानि क्षौमादिभिर्निर्हरेत्। योग्यतावशात् कदाचित् क्षौमेन-कौशेयेन, कदाचिद्वालेन, कदाचिज्जलेन च, निर्हरेत्।

आ० र०-सूक्ष्माणामक्षिगतानां व्रणगतानां चोपायमाह-सूक्ष्माक्षिव्रणशल्यानीति।

नदीतडागादिपतितस्याकस्मात् यस्य नरस्य जलमन्तरे प्रविशेत्। तच्च तोय शल्यवदन्तःस्थितं निर्हार्यमिति तदुपाय दर्शयितुमाह—

**अपां पूर्णं विधुनुयादवाक्शिरसमायतम्।**
**वामयेद्वाऽऽमुखं भस्मराशौ वा निखनेन्नरम् ॥ ४० ॥**

स०-अपा पूर्णं नरं विधुनुयात्। किम्भूतम्? अवाक्शिरसम्, अवाक्-अध, शिरो-मूर्धा, यस्य तम्। तथा आयत-दीर्घ कृत्वा, तथा त नर वामयेद्वैव। अथवा, आमुखं-मुख यावत्, भस्मराशौ निखनेत्-न्यसेत्। तथोक्तम्-"उदकपूर्णस्य चक्राद्यारोपणेनोदकनि सार कार्य।" इति।

आ० र०-सर्वाङ्गगतस्योदकशल्यस्योपायमाह-अपा पूर्णमिति। विधुनुयात्-कम्पयेत्, वामयेच्च वमनद्रव्यै.। अथवा मुखपर्यन्त भस्मराशौ निखनेत्।

**कर्णेऽम्बुपूर्णे हस्तेन मथित्वा तैलवारिणी।**
**क्षिपेदधोमुखं कर्णं हन्याद्वाऽऽचूषयेत्तु वा ॥ ४१ ॥**

स०-कर्णेऽम्बुना पूर्णे सति तैलवारिणी क्षिपेत्। कि कृत्वा? हस्तेन मथित्वा-करेण विलोड्य। तथाऽधोमुख कर्णं हन्यात्। वा-अथवा, चूषयेत् नाड्या वा शृङ्गादिभि।

आ० र०-कर्णगतस्योदकशल्यस्योपायमाह-कर्णेऽम्बुपूर्णे इति। आचूषयेत्-शृङ्गादिभि।

१-२ 'रध' 'प्त' ठ ड. । ३ **'केशोण्डुकेन'** आ क ड ञ ठ. । **'केशाण्डुकेन'** ग । **'केशाण्डकेन'** ड.। ४ 'कण्ठस्थ कण्ठस्रो' ठ ड । ५ 'केशोण्डुक' ठ सु क ञ । 'केशाण्डक' ड । 'केशाण्डुक' ग । ६ 'मादात्पीत' ट । ७ 'तिर्यकुत्थितमपेक्ष्य' ट.ठ । ८ 'दृढदीर्घसूत्र' ट.ठ । ९ 'ययेद्वामयेच्च। वम' ट ठ । १० 'श्च कण्टकशल्यै' ट.। 'श्च कण्ठशल्यै' ठ । ११ 'क्त सूत्र' ट.ठ । १२ 'नाहरेत् प्रणुदेद्वा।' ट ठ । १३ 'माक्रष्टुमशक्य-आहर्तुं यन्न' द ठ.ड.। १४ 'शक्य त' ड । १५ 'नासिकाया' ठ.ड ।

१ 'ग्रासाच्छल्य' ठ ड । २ 'कण्ठे सक्त' ठ.। 'कण्ठे चासक्त' ड । ३ 'अम्भ पा' क ञ । ४ वाल-केश । ५ 'रस्यावश्य जल' ट । ६ 'शल्यमन्त' ठ ड । ७ 'र्शयन्नाह' ठ । ८ **'वामयेद्वाऽऽमुखं'** अ आ इ घ सु.। **'वामयेदामुख'** ग । **'वामयेद्वा मुख'** ञ प । ९ 'र धूनयेत्' ठ ड । १० 'थाऽनन्तर वा' ठ.ड.। ११ 'कज्जलपूर्ण' ठ ड । १२ 'स्य च नाड्या वदनेनो' ड । १३ 'गताम्भ श' क ञ । १४ **'येत्तद्वा'** ञ । **'त च'** प । १५ 'त् शृङ्गा' ट.। १६ 'येत वा शृ' ञ.। 'येत् च शृ' प ।

**कीटे स्रोतोगते कर्णं पूरयेल्लवणाम्बुना ।**
**सुक्तेन वा सुखोष्णेन मृते क्लेदहरो विधिः ॥ ४२ ॥**

**स०**–कीटे–पिपीलिकाशतपद्यादौ, स्रोत स्थिते (स्रोतोगते)–तोदगौरवमेदादिभिरनुमिते, कर्णं लवणाम्बुना पूरयेत् । अथवा सुक्तेन पूरयेत् । किम्भूतेन ? सुखोष्णेन । मृते पुनस्तस्मिन् कीटे क्लेदहरो विधि कार्य ।

**आ० र०**–कर्णगतस्य कीटशल्यस्योपायमाह–कीटे स्रोतोगत इति । लवणाम्बुना–लवणयुक्तेनाम्बुना ।

**जातुषं हेमरूप्यादिधातुजं च चिरस्थितम् ।**
**ऊष्मणा प्रायशः शल्यं देहजेन विलीयते ॥ ४३ ॥**

**स०**–जातुषादिशल्य देहजेनोष्मणा चिरस्थित प्रायशो विलीयते ।

**आ० र०**–जातुषादिशल्य देहोष्मणैव विलीयत इत्याह–जातुषमिति । विलीयते–विनश्यति ।

**मृद्वेणुदारुशृङ्गास्थिदन्तवालोपलानि न ।**
**विषाणवेण्वयस्तालदारुशल्यं चिरादपि ॥ ४४ ॥**
**प्रायो निर्भुज्यते तद्धि पचत्याशु पलासृजी ।**

**स०**–मृद्वेणुदार्वादिशल्य देहोष्मणा न विलीयते । उपलशब्दस्य नपुंसकत्व चिन्त्यम् । विषाणादिशल्यं प्रायो देहजेनोष्मणा चिरादपि न विलीयते । अपि तु निर्भुज्यते–पृथग्भवति । चिरादपि न पच्यते कुतः ? इत्याह–तद्धीत्यादि । हि–यस्मात्, तत्–विषाणादिशल्य, शीघ्रमेव पलासृजी पचति । अतो मासरक्तपाकाद्देहजेन चोष्मणा प्रायो निर्भुज्यते ।

**आ० र०**–मृदादिशल्य देहोष्मणा न विलीयत इत्याह–मृद्वेण्विति ।

विषाणादिशल्य चिरादपि न विलीयत इत्याह–विषाणेति । एतेन मृदादिशल्य चिराद्विलीयत इत्युक्त भवति । विषाणवेण्वोरुभयत्रोपादान विलयनाविलयनदर्शनार्थम् ।

विलयनाभावे हेतुमाह–प्राय इति । निर्भुज्यते–वक्रीभवति । तत्–अविलयन शल्यम्, कुटिलीभावकृतेन क्षोभेण यो मासरक्तपाकस्तेन बहिरेव निर्याति, न तु विलीयत इत्यर्थ । प्रायोग्रहणात् सूचित हेतुं विनाऽप्यविलयनं दर्शयति ।

**शल्ये मांसावगाढे चेत्स देशो न विदह्यते ॥ ४५ ॥**
**ततस्तं मर्दनस्वेदशुद्धिकर्षणबृंहणैः ।**
**तीक्ष्णोपनाहपानान्नघनशस्त्रपदाङ्कनैः ॥ ४६ ॥**
**पाचयित्वा हरेच्छल्यं पाटनैषणभेदनैः ।**

**स०**–मासावगाढे–मासान्तर्निगूढे शल्ये सति, यदि स देशो न विदह्यते–न पच्यते, यत्र तत् तिष्ठति शल्यम् । ततस्त मर्दनेन स्वेदनेन वा, कदाचित् शुद्ध्या–वमनादिकया, कदाचित्कर्षणेन, कदाचिद्बृंहणेन, कदाचित्तीक्ष्णोपनाहेन, कदाचित्तीक्ष्णान्नपानेन, तीक्ष्णशब्दस्य हि प्रत्येक सम्बन्ध, कदाचिद्घनशस्त्रपदाङ्कनै, शस्त्रस्य पदानि–शस्त्रपदानि, घनानि–सहितानि, च तानि शस्त्रपदानि च, तेषामङ्कन–लक्षण, तै । मर्दनादिभिरेकेन द्वाभ्या सर्वैर्वा यथाक्रम पूर्व शल्य पाचयित्वा तत पाटनैषणभेदनैर्हरेत् ।

**आ० र०**–विदाहोपायमाह–शल्ये मासावगाढ इति ।

**शल्यप्रदेशयन्त्राणामवेक्ष्य बहुरूपताम् ॥ ४७ ॥**
**तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथाऽऽहरेत् ॥ ४७½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने शल्याहरणविधिर्नामाष्टाविंशोऽध्यायः ॥ २८ ॥**

**स०**–शल्यानि–धातुविषाणवेण्वादिजानि, प्रदेशा –त्वङ्मासादय, यन्त्राणि–स्वस्तिकादीनि, तेषा बहुरूपतामवेक्ष्य–नानाकारता ज्ञात्वा, तैस्तैरुपायै –उक्तानुक्तैर्विज्ञानसाधनकारणै, मतिमान्–भिषक्, शल्य जानीयात् तथाऽऽकर्षेदिति । सङ्ग्रहे चोक्तम् ( सू अ ३७ )–"व्रणे प्रसन्ने प्रान्तेषु नातिस्पर्शासहिष्णुषु । अल्पे शोफे च तापे च नि शल्यमिति निर्दिशेत् ।" इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने शल्याहरणविधिर्नामाष्टाविंशोऽध्याय समाप्त ॥२८॥

**आ० र०**–अनुक्तशल्यसङ्ग्रहार्थमुपायमाह–शल्यप्रदेशयन्त्राणामिति ।

**इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**शल्याहृतिप्रकरण सामस्त्येन निरूपितम् ॥ २८ ॥**

१ 'शुक्तेन' घ । २ 'ववेदनादि' ट ठ । ३ 'तथा लवणाम्बुनाऽपि सुखोष्णेन पूरयेत्' इति चन्द्र । ४ 'लादि न' ठ । ५ 'त ? तत्–' ठ । 'त ? यतो विषा' ड । ६ विषाण–शृङ्गम् । ७ 'ग्रहण सू' घ प । 'ग्रहण सुचिर हे' ग । ८ 'दर्शयेत्' घ प । ९ 'ढे च स' अ ग घ । १० 'कर्शनबृ' प.स ह । १ 'णपीडनै' सं ह । २ 'त्र तु ति' ड । ३ 'स्त मर्दनादिभिरेकेन द्वा' ड । ४ 'दिभि पूर्व' ट । ५ 'र्वा शल्य' ठ । ६ 'म पाच' ड । ७ 'ततो हरेत्' ठ । ८ 'कृ जानीयात् तथा शल्य कर्षेत् ।' ठ ड । ९ 'ष्णुता ।' आ.ट ड. । १० 'न्दर्याख्या' ट । ११ 'शल्येऽनुक्तग्रहार्थं' ग. । 'शल्येऽनुक्तलसङ्ग' घ प । १२ 'शल्योद्धृति' ग घ.प. ।



# एकोनत्रिंशोऽध्यायः।

अस्मादनन्तरं शस्त्रकर्मविध्यध्यायं प्रस्तूयते। यतोऽनन्तरातीतेऽध्याये (श्लो २५)-"शस्त्रेण वा विशस्यादौ" इत्युक्तम्। अतस्तस्यैव शस्त्रकर्मणो विधानं वक्तुं युक्तमित्याह—

**अथातः शस्त्रकर्मविधिमध्यायं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

(गद्यसूत्रे॥ २॥)

स०-शस्त्रस्य कर्म शस्त्रकर्म,-शस्त्रावचारणक्रिया, तस्य विधिः-इतिकर्तव्यता, शस्त्रकर्मविधिः, तम्। शेषं पूर्ववत्।

**आ० र०-शस्त्रकर्मविधिमध्यायं व्याख्यातुं प्रतिजानीते-अथेति।**

ननु, यद्ययं शस्त्रकर्मविधिः, ततः शस्त्रकर्मग्रन्थ एवादौ निर्देष्टुं युक्तः, (श्लो १४)-"प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम्।" इत्यादि। न तु "व्रणः सञ्जायते प्रायः" इत्यादि। अत्रोच्यते। शस्त्रकर्मविधेः पूर्वं विषयो निर्देष्टुं युक्तः। यत शस्त्रकर्मविधेरुपायोऽयम्, इत्यस्यैव पूर्वमुपन्यासो युक्त इत्याह—

**व्रणः सञ्जायते प्रायः पाकाच्छ्वयथुपूर्वकात्।**
**तमेवोपचरेत्तस्माद्रक्षन् पाकं प्रयत्नतः॥ १॥**
**सुशीतलेपसेकास्रमोक्षसंशोधनादिभिः।**

स०-प्रायो व्रणः पाकात् सञ्जायते। किम्भूतात्? श्वयथुः पूर्वो यस्य पाकस्य स श्वयथुपूर्वकः, तस्मात्। श्वयथुपाकमन्तरेणापि शस्त्राद्यभिघातात् व्रणो जायत इति प्रायोग्रहणम्। यस्माच्छ्वयथुपूर्वकात् पाकात् व्रणः सञ्जायते, अतस्तमेव-श्वयथुं, उपचरेत्-उपक्रमेत्। किं कुर्वन्? पाकं प्रयत्नेन रक्षन्। कथम्? सुशीतलेपसेकादिभिः। सुशीताभ्यां-स्पर्शतो वीर्यतश्च, लेपसेकाभ्याम्। तथा, रक्तमोक्षणेन। तथा, संशोधनेन-वमनेन विरेकेण च। आदिग्रहणात् कषायपानघृतपानादीनां ग्रहणम्।

**आ० र०-शस्त्रकर्मविषयस्य व्रणस्योत्पत्तिमाह-व्रण इति।**

**व्रणस्योत्पत्तिप्रतिबन्धमाह-तमेवेति। तमेव-श्वयथुमेव। शस्त्रकर्मणि भेषजविधानं भेषजासाध्ये शस्त्रकर्म विधातव्य**मिति ज्ञापनार्थम्। उक्तं हि सङ्ग्रहे (सू अ ३८)-"द्विविधेऽपि हि व्याधावुपायापेक्षे निज आगन्तौ वा भेषजविषयातीते शस्त्रकर्म प्रयुज्यते।" इति।

तस्य च शोफस्यामपच्यमानपक्काख्यास्तिस्रोऽवस्था भवन्तीत्याह—

**शोफोऽल्पोऽल्पोष्मरुक्सामःसवर्णःकठिनः स्थिरः॥ २**

स०-आमो यः शोफः स प्रमाणतोऽल्पः। तथा, अल्पोष्मा। तथा, अल्परुक्-अल्पशूलः। तथा, सवर्णः-त्वक्समानवर्णः। तथा, कठिनो-न मृदुः, पक्ववत्। तथा, स्थिरो-न पक्ववच्चलः। सः आमः सामः इति "सोऽचि लोपे चेत्पादपूरणम्" इति सुलोपः।

**आ० र०-अपक्कस्य श्वयथोर्लक्षणमाह-शोफ इति। आमः-अपक्कः। ऊष्मा-औष्ण्यम्। रुक्-शूलम्। स्थिरः-शनैर्वर्धमानः।**

**पच्यमानो विवर्णस्तु रागी बस्तिरिवाततः।**
**स्फुटतीव सनिस्तोदः साङ्गमर्दविजृम्भिकः॥ ३॥**
**संरम्भारुचिदाहोषातृड्ज्वरानिद्रतान्वितः।**
**स्त्यानं विष्यन्दयत्याज्यं व्रणवत्स्पर्शनासहः॥ ४॥**

स०-स शोफः पच्यमानो विवर्णो-न त्वक्समानवर्णः। तथा, रागी-लोहितवर्णः। तथा, बस्तिरिवाततः-स्तब्धो वातपूर्णदृतिवत्। छागादीनां तु मूत्राधारो बस्तिरित्युच्यते। तथा, स्फुटतीव। [तथा,] सनिस्तोदः-सह निस्तोदेन वर्तत इति सनिस्तोदः। नियतप्रबन्धप्रवृत्ता रुक्-निस्तोदो, विच्छिन्ना तु-शूलमित्युच्यते। साङ्गेत्यादि। अङ्गानां मर्दः-क्षोभः, सहाङ्गमर्दविजृम्भिकाभ्यां वर्तत इति साङ्गमर्दविजृम्भिकः। तथा, संरम्भादिभिर्युतः। अन्वितशब्देन प्रत्येकं संरम्भादीनां सम्बन्धः। संरम्भो-वाग्विषयातीतानां स्वसंवेद्यानामनेकरूपाणां पीडनविघट्टनच्छेदनभेदनदशनादीनां रुजां प्रादुर्भावः। सर्वाङ्गीणस्तीव्रो-दाहः। अरतिमान् दाहः उषा उच्यते। तथा, सः पच्यमानो घृतं स्त्यानमुपयुक्तं विलीनयति। तथा, स्पर्शनं न सहते व्रणवत्।

**आ० र०-पच्यमानस्य शोफस्य लक्षणमाह-पच्यमान इति। विवर्णः-त्वग्विपरीतवर्णः। रागी-रञ्जनशक्तिमान्, लेपौषधं वर्णान्तरं नयतीत्यर्थः। स्फुटति-विश्लिष्टावयवत्वं व्रजति। संरम्भो-झटिति रुजादिवृद्धिः।**

---

१ अथ शस्त्रकर्मविधिः सुश्रुते सू०५।१७।१८।१९।२५ अध्यायेषु, अष्टाङ्गसङ्ग्रहे सू० ३८ अध्याये चास्ति वर्णितः, चरके तु न वर्णितः। २ 'वधार' ड। ३ 'अत्र ग्रन्थारम्भे निर्देष्टुं युक्तस्यापि शस्त्रविधेः पश्चादुपन्यासो युक्त इत्याह-' ड। ४ 'यः शस्त्रकर्मविधेरुपायः, इ' ठ.। ५ 'कास्रज्मोक्ष' आ। ६ 'अस्रमोक्ष' ट। ७ 'हणेन' ट।

१ 'षयमतीते' ग.घ.प। २ 'नपाकाख्या' ड.। ३ 'रुक् चामः' अ इ ठ हेमाद्रिः। ४ 'स्फुटतीव-ताम्यत इव' इति चन्द्रः। ५ 'ताडनघट्ट' ड। ६ 'अतिदाह' ड। ७ 'सपच्यमाने घृत० विलीयते' ट। ८ 'त्वग्वर्णविप' ग घ ञ.प। ९ 'रञ्जितश' घ प.। १० 'ति वृद्धिः' ग.घ.प।

**पक्केऽल्पवेगता ग्लानिः पाण्डुता वलिसम्भवः ।**
**नामोऽन्तेषून्नतिर्मध्ये कण्डूशोफादिमार्दवम् ॥ ५ ॥**
**स्पृष्टे पूयस्य सञ्चारो भवेद्वस्ताविवाम्भसः ।**

**स०**–पक्के सति, अल्पवेगता भवति, न तु सरम्भ । तथा, ग्लानि –ग्लानत्वम् । तथा, पाण्डुत्व वलीना चोद्भव । तथा, अन्तेषु–पर्यन्तेषु, नामो–निम्नत्वम्, मध्य उन्नति । नामोऽन्तेष्वित्युक्त्यैव मध्य उन्नतित्व लब्धमेव, उन्नतिग्रहण त्वतिशयार्थम्, तेनोत्तुण्डित्व गम्यते । तथा, कण्ड्वादिमृदुत्वं स्यात् । तथा, स्पृष्टे तस्मिन् सति पूयस्य सञ्चारो भवति, बस्तेरन्त स्थितस्य यथाऽम्भस सञ्चार ।

**आ० र०–पक्कस्य शोफस्य लक्षणमाह–पक्क इति ।** अल्पवेगता–उपद्रवाल्पत्वम् । कण्डूशोफादयो लक्षणानि । उपद्रवास्तु–अङ्गमर्दादय ।

**शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् ६**
**रागो रक्ताच्च पाकः स्यादतो दोषैः सशोणितैः ।**

**स०**–वात विना शूल न भवति । पित्तमन्तरेण दाहो न स्यात् । कफोदयाद्विना शोफो न स्यात् । शोफ कफादिति वक्तव्य उदयग्रहण विशेषद्योतनार्थम् । रक्तादृते–रक्त विना, रागस्य लौहित्यस्य सम्भवो न । तेन कफाधिकै सर्वैर्दोषै शोणितसहितै श्वयथुपाक स्यादिति गम्यते ।

**आ० र०–रक्तदोषत्रयकार्यत्व पाकस्याह–शूलमिति ।**

**पाकेऽतिवृत्ते सुषिरस्तनुत्वग्दोषभक्षितः ॥ ७ ॥**
**बलीभिराचितः श्यावः शीर्यमाणतनूरुहः ।**

**स०**–पाके चातिवृत्ते–अतिक्रान्ते, सुषिरोऽन्तर्स्थ शोफदेश सम्पद्यते । तथा, तनु –तन्वी, त्वक् यस्मिन् स तनुत्वक् । तथा, दोषभक्षित –पूयवान्, दोषशब्देनेह पूय उच्यते, तेन भक्षितत्वात् सुषिरत्व तनुत्वक्त्व चास्य । तथा, वलीभिराचितो–व्याप्त । तथा, श्यामवर्ण । तथा,शीर्यमाणतनूरुह –पतद्रोमा ।

**आ० र०–अतिपक्कस्य शोफस्य लक्षणमाह–पाक इति ।** **अतिवृत्ते–प्रमाणमतिक्रान्ते । सुषिर –शून्योदर । तनुत्वक्–विरलत्वक् । दोषभक्षित –पूयभक्षितमांसादि । तनूरुह–रोम ।**

**कफजेषु तु शोफेषु गम्भीरं पाकमेत्यसृक् ॥ ८ ॥**
**पक्कलिङ्गं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ।**
**त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत् ॥९॥**
**रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः ।**

**स०**–यद्यपि त्रिभिरेव दोषै शोणितान्वितै पाको जायते, तथाऽपि कफजेष्वित्युक्तेरधिकतरकफेष्विति गम्यते । कफजेष्विति बहुवचननिर्देशात् देहदेशबहुत्वाद्येषु देहदेशेष्वसौ कफो जायते, तेषु कफजेषु शोफेषु गम्भीर–दुर्लक्ष्यमतिशयेनान्तर्निगूढत्वात्, असृक् पाकमेति । अत एव पक्कलिङ्ग–पक्कलक्षणं, अस्पष्ट–दुर्लक्ष्य, स्यात् । तथा, यत्र शीतगुणयोगात्, शीतश्चासौ शोफश्च शीतशोफ , तस्य भाव शीतशोफता । तथा, त्वक्समानवर्णत्वम् । तथा, रुज स्तोकत्वम् । तथा, घनस्पर्शत्व–निबिडस्पर्शता स्यात् , अश्मवत्–हस्तादिना स्पृष्टे पाषाणतुल्य स्पर्श उपलभ्यते । त–तथाभूत श्वयथुपाक, रक्तपाकमित्येवं प्राज्ञो–धीमान्, ब्रूयात्–न तु शोफ पक्कमिति कथयेत् । कथम् ? मुक्तसशय ,–शोणित पक्क नात्र शोफ इत्येव वदेदित्यर्थ ।

**आ० र०–रक्तपाकस्य लक्षणमाह–कफजेष्विति । गम्भीर यदसृक् तत् पाकमेति, न मांसम् । तत –तस्मात्, उक्त पक्कलिङ्ग स्पष्ट नोत्पद्यते । तेन यत्र शीतशोफत्वादि, त रक्तपाक ब्रूयात् ।**

**अल्पसत्त्वेऽबले बाले पाकाद्वाऽत्यर्थमुद्धते ॥ १० ॥**
**दारणं मर्मसन्ध्यादिस्थिते चान्यत्र पाटनम् ।**

**स०**–स्तोके सत्त्वे सति, तथा दुर्बले, तथा बाले, एतेषु जाते श्वयथौ, तथा पाकाद्वाऽत्यर्थमुद्धते–अतिक्रान्ते च श्वयथौ, दारण कार्यम्, व्रणप्रतिषेधोद्दिष्टैर्दारणद्रव्यै (हृ उ अ २५।३७) । यथा–"गुग्गुलवतसिगोदन्तस्वर्णक्षीरीकपोतविट् । क्षारौषधानि क्षाराश्च पक्कशोफविदारणम् ॥" इति । न केवलमल्पसत्त्व इत्यादिके श्वयथौ दारण कार्यम्, यावत् चशब्दात् मर्मसन्ध्यादिस्थिते च श्वयथौ दारण कार्यम्, न पाटन शस्त्रेण । अन्यत्रेति दारणविषयानिर्दिष्टे स्थाने शस्त्रेण पाटन कार्यम् ।

**आ० र०–अथ पाटनम् । तत्र दारणपाटनयोर्विषय भेदमाह–अल्पसत्त्व इति । सत्त्व–मानसं बलम् । पाके चात्यर्थमुद्धते–अतिपक्के, शोफे मर्मसन्ध्यादिष्वनवचार्यशस्त्रेष्वङ्गेषु स्थिते च, दारणम् । अन्यत्र पाटनम् । दारण–क्षारादिना द्वारकरणम् । पाटन–शस्त्रेण ।**

**आमच्छेदे सिरास्नायुव्यापदोऽसृगतिस्रुतिः ॥ ११ ॥**
**रुजोऽतिवृद्धिर्दरणं विसर्पो वा क्षतोद्भवः ।**

**स०**–आमस्य शोफस्य शस्त्रेण छेदे सति सिरास्नायुव्यापदो भवन्ति । तथा, असृजोऽतिस्राव स्यात् । तथा, रुजाया विवृद्धि । तथा, दरण विसर्पो वा क्षतोत्थ स्यात् ।

**आ० र०–अपक्वस्य दारणपाटने निषेधति–आमच्छेद इति । शिरानाशादिदोषादामो न छेद्य इत्यर्थ ।**

१ 'ल्पवेदना' इ । 'ऽल्पा वेदना' ञ । २ 'ग्लानि' अ इ । ३ 'ल्पवेदना भ' ट । ४ 'न्नतिमत्वम् । तथा,क' ड । ५ 'अनिल वि' ट । ६ 'फादिभि ' ठ ड । ७ 'श्याम.' ञ ठ । ८ 'न्तसुच्छ शो' ट ठ । 'न्तसुच्छ स प्रदेश ' ड । ९ 'त –दोष' ट । १० 'नू, तेन' ड ।

१ 'षु देशे' ट ठ । २ 'र पाक दु' ट ठ ड । ३ 'स्पृष्ट पा' ट ठ ड । ४ 'तुल्यस्पर्शवत् उ' ड । ५ 'तत्तस्मात्' क ग ञ । ६ 'नोदेति' क ञ । ७ 'पाकादत्य' इ. । 'पाके चात्यर्थं' आ. हेमाद्रि । ८ 'रुजोऽतिवृद्धि ' ठ.ड । ९ 'दरण–त्वगादीनामवदारणम्' इति चन्द्र ।

**तिष्ठन्नन्तः पुनः पूयः सिरास्नाय्वसृगामिषम् ॥१२॥**
**विवृद्धो दहति क्षिप्रं तृणोलपमिवानलः ।**

स०-अन्त -अन्तरे, तु पूयस्तिष्ठन् सन् सिरादीनि दहति। क कमिव ? अनलस्तृणोलपमिव ।

आ० र०-पक्वस्याच्छेदने दोषमाह-तिष्ठन्निति । तृणोलप-तृणगुल्मम् ।

**यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ॥ १३ ॥**
**श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ।**

स०-य -पुरुष (वैद्य ), अज्ञानात्-मोहात्, आमं-अपक्व, छिनत्ति । यश्च पक्वमुपेक्षते-न पाटयति । तौ-नरौ, श्वपचतुल्यौ वेद्यौ, आतुरव्यापादनात् । तद्व्यापादन तु कुतो विधत्त ? इत्याह-अनिश्चितकारिणौ,-असमीक्ष्यविधायिनौ यत ।

आ० र०-आमपक्वलक्षणानभिज्ञं निन्दति-यश्छिनत्तीति।

**प्राक् शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम् ॥ १४ ॥**
**पानपं पाययेन्मद्यं तीक्ष्णं यो वेदनाक्षमः ।**
**न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥ १५ ॥**

स०-शस्त्रकर्मण प्राक्-पूर्वं, आतुरमिष्टमन्न-यद्गणेऽपथ्यमपि, तद्बलाधानार्थ भोजयेत् । तथा, यो वेदनाक्षम -शस्त्रव्यथामसहिष्णु, तमातुर मद्योचित तीक्ष्ण-तीव्रमद, मद्य पाययेत् । एव सति यत्स्यात्तदाह-न मूर्च्छत्यन्नसयोगादित्यादि। यतोऽन्नोपयोगान्न मुह्यति । पर तीक्ष्णमद्यपानान्मत्त सन् शस्त्रन्यस्तमङ्गे, न बुध्यते-न चेतयते, तत्कदर्थनया न क्लिश्यत इत्यर्थ ।

आ० र०-शस्त्रकर्मण पूर्वं भोजनमाह-प्राक्शस्त्रकर्मण इति ।

तीक्ष्णमद्यपानमाह-पानपमिति । यो वेदनाक्षम -शस्त्रव्यथां सोढुमशक्तो मद्यप , तस्य मद्यपानम् । इतरस्य भोजनमेव।

**अन्यत्र मूढगर्भाश्ममुखरोगोदरातुरात् ।**

स०-अश्मशब्देनाश्मरी गृह्यते । मूढगर्भादिभिर्य आतुरस्त वर्जयित्वेष्टभोजन मद्यपान च कारयितव्यम् ।

आ० र०-मूढगर्भादौ भोजनमद्यपाने निषेधति-अन्यत्रेति ।

**अथाहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ॥ १६॥**
**सम्मुखो यन्त्रयित्वाऽऽशु न्यस्येन्मर्मादि वर्जयन् ।**
**अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात् ॥ १७ ॥**
**सकृदेवाहरेत्तच्च**

स०-अथशब्देन मङ्गलवाचिना सङ्ग्रहोक्तमर्थं सूचयति । यथा ( सू अ ३८ )-"सुमुहूर्ते च दध्यक्षतान्नपानरुक्मरत्नार्चितविप्र प्रणतेष्टदेवत" इत्यादि । आहृत-ढौकित समीपानीत, उपकरणं-तत्कालयोग्य यन्त्रशस्त्राग्निजाम्बवौष्ठपिचुप्लोतस्नेहमधुकल्कादिक, यस्य तम्, आतुर प्राङ्मुख-पूर्वाभिमुख, वैद्यं सम्मुख -प्रत्यङ्मुखो, यन्त्रयित्वा शस्त्रमाशु-न विलम्बित, न्यस्येत्-निक्षिपेत् । मर्मादि वर्जयन्-मर्मसिरासन्ध्यादीन् परिहरन् । तथा, अनुलोम कृत्वा-न प्रातिलोम्येन । किम्भूत शस्त्रम् ? सुनिशित-अतितीक्ष्णम् । तच्च शस्त्रमापूयदर्शनात् न्यसेत्,-न लधिकम् । तत् किं तत्रैव स्थाप्यम् ? तच्च सकृदेव-न बहून् वारान्, आहरेत्-आकर्षेत् ।

आ० र०-शस्त्रकर्मविधिमाह-अथेति । सङ्ग्रहे तु ( सू अ ३८ )-"अथोपहृतयन्त्रशस्त्रक्षाराग्निजाम्बवौष्ठपिचुप्लोतपत्रसूत्रचर्मपट्टमधुस्नेहकषायलेपकल्कसेकोदकुम्भशीतोष्णोदककटाहव्यजनादिव्रणोपयोगिसर्वोपकरणमास्तृतशयनीयमुपस्थितस्थिरस्नेहबलवदवलम्बकपुरुषमिष्टेऽहनि सुमूहूर्ते च दध्यक्षतान्नपानरुक्मरत्नार्चितविप्र प्रणतेष्टदेवत भुक्तवन्तमातुर प्राङ्मुखमुपवेश्य सवेश्य वा यन्त्रयित्वा प्रत्यङ्मुखो वैद्यो मर्मशिरास्नायुसन्ध्यस्थिधमनी परिहरन् अनुलोम शस्त्र निदध्यात् ।" इति ।

निखातशस्त्रस्याहरणविधिमाह-सकृदेवेति । सकृत्-एकवारमाहरेत्, नान्तराऽन्तरा मुञ्चेदित्यर्थ ।

**पाके तु सुमहत्यपि ।**
**पाटयेत् द्व्यङ्गुलं सम्यग्द्व्यङ्गुलत्र्यङ्गुलान्तरम् ॥ १८॥**
**एषित्वा सम्यगेषिण्या परितः सुनिरूपितम् ।**
**अङ्गुलीनालवालैर्वा यथादेशं यथाशयम् ॥ १९ ॥**
**यतो गतां गतिं विद्यादुत्सङ्गो यत्र यत्र च ।**
**तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम् ॥ २० ॥**
**आयतं च विशालं च यथा दोषो न तिष्ठति ।**

स०-पाके तु सुमहत्यपि पाटयेत् । द्व्यङ्गुल-द्व्यङ्गुलपरिमाण व्रण, सम्यक् कुर्यात्,-नाधिकम् । द्व्यङ्गुलेत्यादि । अङ्गुलद्वयमथवाऽङ्गुलत्रयमन्तरीकृत्य पुनरन्य व्रण कुर्यात्,-न त्वासन्नम् । तथा, एषिण्या सम्यगेषित्वा-गवेषयित्वा, परित -समन्तात्, सुनिरूपित-सुपर्यालोचितम् । न केवलमेषिण्या, यावदङ्गुल्या, नालेन-पद्मोत्पलादिजेन, वालैर्वा-वराहादिसम्बन्धिभि , अन्वेष्य यथादेश यथाशय व्रण कुर्यात् । त च प्रदेश दर्शयितुमाह-यत इत्यादि । यतो यस्मिन् प्रदेशे गता-दूरयाता, गतिं-नाडी, जानीयात् तस्मिन् प्रदेशे व्रण कुर्यात् । यत्र यत्र श्वयथुप्रदेशे, उत्सङ्गं-उन्नतिं, विद्यात् तत्र तत्र प्रदेशे व्रणं कुर्यात् ।

---

१ 'तृणोलुप' अ ट । 'तृणोच्चय' ग । 'तृणोपल' घ ञ ठ । २ 'अथवाऽन्तरे' ठ ड । ३ 'व जानीयात्ताव' ञ । ४ 'द्वाव' इ । ५ 'श्रमति नि' क ञ । ६ 'ण श्रेष्ठ' अ इ ञ. प । ७ 'त्। यतोऽन्नो' ड । ८ 'नाक्रम्यत' ट ठ । ९ 'क्त । मद्यपस्य म' क ञ । १० 'अन्यस्य' घ. । ११ 'रणो वैद्य' आ. ञ ठ । १२ 'सम्मुख' इ ञ ।

१ 'अथेति माङ्गल्ये । समीपा' ड । २ 'द्य पुन स' ठ.ड. । ३ 'तसूत्र' क ञ । 'प्लोषसूत्र' ग । 'तपट्टसू' घ प । ४ 'षायालेप' क प स द्व । ५ 'नि शुभे मु' घ. । ६ 'यतो यतो गतिं' 'यतो दोषगतिं' सुश्रुत । ७ 'दुत्सङ्ग' अरुण । ८ 'लप्रमाण' ट. ।

किम्भूत व्रणम् ? सुष्ठु विभक्तो पार्श्वापरपार्श्वादिविभागौ यस्य त तथाविधम् । तथा, निराशयम्,–न विद्यत आशय –पूयादेर्दोषस्य स्थान, यस्य तथाभूत निराशय कुर्यात् । तथा, आयत–दीर्घम्, तथा विशाल–विस्तीर्ण, कुर्यात् । एव कृते सति दोष –पूयाख्यो, न[१] तिष्ठति–न स्थिति लभते ।

आ० र०–पाटनप्रमाणमाह–पाके त्विति । बहुषु पाटनेषु द्व्यङ्गुल त्र्यङ्गुल वाऽन्तर कार्यम् ।

पाटनस्थानमाह–एषित्वेति । एषिण्यादिविभाग उक्त सङ्ग्रहे ( सू अ ३८ )–"विवृते प्रदेशे वामप्रदेशिन्यैषित्वा नातिविवृते गम्भीरे मांसले चैषिण्या । विपरीते करीरादिनालेन । अतिसंवृते शूकरवालेन ।" इति । देश –शरीरावयव । आशयो–व्रणसस्थानम् । गति –नाडीव्रण । उत्सङ्ग –पूयस्खलनस्थानम् । विभक्तो–मांसादिलेशरहित । आशय –उत्सङ्ग ।

**शौर्यमाशुक्रिया[२] तीक्ष्णं[३] शस्त्रमस्वेदवेपथू ॥ २१ ॥**
**असम्मोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ।**

स०–वैद्यस्य शस्त्रकर्मणि शौर्य–पाटनादौ [४]वीर्य, शस्यते । तथा, आशुक्रिया–चतुरहस्तता । तथा, [५]तीक्ष्णशस्त्रता । तथा, स्वेदश्च वेपथुश्च, न विद्यमानौ तौ यस्य स एवम्, स्वेदाभाव कम्पाभावश्चेत्यर्थ । तथा, असम्मोह –तत्कालोचितकार्यकरणे सम्यक्प्रवृत्ति[६] । ननु, "शौर्य वैद्यस्य शस्यते" इत्युक्त्यैव स्वेदकम्पाभाव प्रत्यपादि । तथा च स्वेदवेपथू भीरोरेव सम्भवत , न शूरस्य । इत्यनर्थक "अस्वेदवेपथू" इति । अत्राचक्ष्महे । सत्यमेवैतौ भीरुगुणौ, किन्तूष्णकालवशात् प्रकृतिवशाद्वा यस्य स्वेदवेपथू भवत , तत्परिहारार्थमेतदुक्तम् । सस्वेदस्य हि वैद्यस्य शस्त्रकर्मकर्तुमुद्यतस्य शस्त्रग्रहणमेव न तथा सम्पद्यते, तद्वत्सकम्पस्यापि । तस्मात्तत्परिहारो युक्त ।

आ० र०–पाटने वैद्यगतसामग्रीमाह–शौर्यमिति ।

**तिर्यक्छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ॥ २२ ॥**
**कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवङ्क्षणे ।**

स०–ललाटादिदेशेषु तिर्यक् छेद कार्य । दन्तवेष्टको–दन्तपिण्डिका दन्ताधार उच्यते ।

आ० र०–ललाटादौ तिर्यक्पाटनमाह–तिर्यगिति ।

**अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम् ॥ २३ ॥**

स०–अन्यत्र प्रदेशे तिर्यक् छेदनात् सिराणा स्नायूना च व्यापत्ति स्यात् ।

आ० र०–प्रदेशान्तरे तिर्यक्पाटन निषेधति–अन्यत्रेति ।

**शस्त्रेऽवचारिते वाग्भिः शीताम्भोभिश्च रोगिणम् ।**
**आश्वास्य परितोऽङ्गुल्या परिपीड्य व्रणं तत ॥२४॥**
**क्षालयित्वा कषायेण प्लोतेनाम्भोऽपनीय च ।**
**गुग्गुल्वगुरुसिद्धार्थहिङ्गुसर्जरसान्वितैः ॥ २५ ॥**
**धूपयेत्पटुषड्ग्रन्थानिम्बपत्रैर्घृतप्लुतैः ।**
**तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ॥ २६ ॥**
**दिग्धां वर्तिं ततो दद्यात्तैरेवाच्छादयेच्च[५] ताम् ।**
**घृताक्तैः सक्तुभिश्चोर्ध्वं घनां कवलिकां ततः ॥२७॥**
**निधाय युक्त्या बध्नीयात्पट्टेन सुसमाहितम् ।**
**पार्श्वे सव्येऽपसव्ये वा नाधस्तान्नैव चोपरि ॥२८॥**

स०–शस्त्रेऽवचारिते–न्यस्ते सति, वाग्भि –तत्कालोचिताभिर्मधुराभि 'स्वस्थो जातोऽसि' इत्येवप्रायाभि , तथा शीताम्भोभि –परिषेकादिभि , आतुरमाश्वास्य, अनन्तर व्रण परित –समन्तात्, अङ्गुल्या परिपीड्य–पूयादिदोष निर्हार्य, अनन्तर कषायेण–मधुयष्ट्यादिसाधितेन, क्षालयित्वा, तत प्लोतेन–कार्पासादिजवस्त्रखण्डेन, जलमपनीय–पानीयार्द्रता निर्हृत्य, अनन्तर व्रण गुग्गुल्वादिभिर्निम्बपत्रान्तैर्धूपयेत्[३] । किम्भूतै ? घृतप्लुतै । प्लुतग्रहणाद्बहुघृतैरिति द्योतयति । सङ्ग्रहे चोक्तम् ( सू अ ३८ )–"गुग्गुल्वादिभिरेव[४] शयनासनादि द्विरह्नो धूपयेत् ।" इति । तत –अनन्तर, वर्तिं–कार्पासादिमयी, व्रणान्तर्दद्यात्–प्रवेशयेत्, वैद्य । किम्भूताम् ? दिग्धाम् । कै ? तिलकल्काज्यमधुभि ,–वातव्रणे तिलपिष्टदिग्धा, पित्तव्रणे घृतदिग्धा, कफव्रणे मधुदिग्धाम् । केचित्तु सर्वैरेव तैर्युगपद्दिग्धामित्याहु । न च केवल तिलादिभि , यावत् यथास्वयत् यस्य दोषस्य स्व भेषज, तेन च दिग्धाम् । तैरेव–तिलकल्कादिभि , व्रणान्त प्रविष्टा ता–वर्तिं, आच्छादयेत्–स्थगयेत् । ऊर्ध्व–तदुपरिष्टात्, घृतयुक्तै सक्तुभिराच्छादयेत् । सङ्ग्रहे चोक्तम् ( सू अ ३८ )–"नातिमृष्टयवसक्तुभिर्घृताक्तैर्भोजनान्तेऽम्भसा दक्षिणाङ्गुलीभि सुमृदितैरवच्छाद्य" इति । ततो–व्रणान्त प्रविष्टवर्तिच्छादनादनन्तर, [६]कवलिका–बहुवस्त्रखण्डपुटनिर्वर्तिता, निधाय–सस्थाप्य, पट्टेन–[७]निबिडवस्त्रखण्डेन, प्रकृतलात् व्रण बध्नीयात् । कथम् ? युक्त्या–दोषकालानुगुणया । अत एव सङ्ग्रहे जगाद ( सू अ ३८ )–"वातश्लेष्मोद्भवास्तत्र द्विस्त्रिर्वा वेष्टयेद्व्रणान् । सकृदेव परिक्षिप्य पित्तरक्ताभिघातजान् ॥ शस्त्रक्षतरुजार्तां तु प्रतताया यष्टीमधुकसर्पिषोष्णेन व्रण सिञ्चेत् । उदकुम्भाच्चापो गृहीत्वा [१०]प्रोक्षयन् परित उपचरेत् ।" इति । कथ बध्नीयात् ? सुसमाहित कृत्वा–नावहेलया, वामपार्श्वे दक्षिणपार्श्वे वा । अधस्तात् न बध्नीयात्, नैव चोपरि–ऊर्ध्वे, बध्नीयात् ।

१ 'न स्थान ल' ठ । २ 'या शस्त्रतैक्ष्ण्यम' सुश्रुत । ३ 'तीक्ष्णशस्त्र' अ इ ञ । ४ 'धैर्य' ठ । ५ 'तीक्ष्ण शस्त्रम् ।' ठ ड । ६ 'ति । शौर्यत्वादेव सिद्धे पुन स्वेदवेपथुग्रहणमुष्णकालवशात्' ड ।

१ 'तम्' अ हेमाद्रि । २ 'हित ' आ ञ । ३ 'त' । एतैश्च द्रव्यैर्बहुघृतै ।' ड । ४ 'रेव शयन धूप' ट ठ । ५ 'च्छादयेत्' ट ठ ड । ६ 'कवलिका–व्रणफलकौषधाच्छादनद्रव्यम्, सा चौषधस्वरसनि सरणनिवारणार्थ भग्नोक्तपलाशोदुम्बरादीना त्वक्पत्रादिकृता' इति डल्हण । ७ 'विशिष्टवस्त्र' ट । ८ 'द्रव० द्रणम् ।० तजम् ॥ तयोक्ताया शस्त्र' ठ.ड. । ९ 'म्भादापो' ट. । १० 'प्रोक्षन्' ड.स.मू. ।

आ० र०–पाटनानन्तर कर्तव्यमाह–शस्त्र इति । सर्ज-रसो–राल । षड्ग्रन्था–वचा । यथास्व [भेषजेन]–यस्मिन् व्रणे यद्भेषजमुक्त तेन । चशब्द समुच्चये । दिग्धा–लिप्ताम् । तै –वर्तिलेपौषधै । त–व्रणम् । ऊर्ध्व–पूर्वलेपस्य, घृताक्तसक्तुलेप । सङ्ग्रहे तु ( सू अ ३८ )–"नातिभृष्टयवसक्तुभिर्घृताक्तैर्भोजनान्तेऽम्भसा दक्षिणाङ्गुलीभि सुमृदितै " इति । कवलिका–वस्त्रखण्डमयी पालीम् । पट्टेन–घनवस्त्रखण्डेन । सुसमाहित–सुष्ठु सन्निविष्ट यथा भवति तथा । पार्श्वे बध्नीयात्–ग्रन्थि दद्यात् । सङ्ग्रहे तु ( सू अ ३८ )–"वातश्लेष्मोद्भवास्तत्र द्विस्त्रिर्वा वेष्टयेद्व्रणान् । सकृदेव परिक्षिप्य पित्तरक्ताभिघातजान् ॥ शस्त्रक्षतरुजाया तु प्रतताया यष्टिमधुकसर्पिषोष्णेन व्रण सिञ्चेत् ।" इति ।

**शुचिसूक्ष्मदृढाः पट्टाः कवल्यः सविकेशिकाः ।**
**धूपिता मृदवः श्लक्ष्णा निर्वलीका व्रणे हिताः ॥२९॥**

स०–तथा शुचय सूक्ष्मसूत्रा दृढाश्च पट्टा , तथा कवलिका सविकेशिकाश्च व्रणे हिता । किम्भूता ? धूपिता , तथा मृदव , तथा श्लक्ष्णा , तथा वलीरहिता ।

आ० र०–पट्टकवलिकाविकेशिकानां विशेषमाह–शुचिसूक्ष्मदृढा इति । विकेशिका–सूत्रवर्ति ।

**कुर्वीतानन्तरं तस्य रक्षां रक्षोनिषिद्धये ।**
**बलिं चोपहरेत्तेभ्यः**

स०–अनन्तर [ तस्य– ] रोगिण कृतशस्त्रकर्मणो, व्रणे रक्षा कुर्यात् । किमर्थम् ? रक्षोनिषिद्धये–पिशिताशनराक्षसादिनिषेधाय । तेभ्यश्च–रक्षोभ्यो, बलिमुपहरेत्–दद्यात् ।

आ० र०–रक्षामाह–कुर्वीतेति । सङ्ग्रहे तु ( सू अ. ३८ )–"उदकुम्भाच्चापो गृहीत्वा प्रोक्षयेत् । परितो यावकार्थपर्णसपर्यादिभिरस्य रक्षा कुर्यात् ।" इति ।

बलिमाह–बलि चेति ।

**सदा मूर्ध्ना च धारयेत् ॥ ३० ॥**
**लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ।**
**वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ ३१ ॥**

स०–सर्वकाल चौषधीर्मूर्ध्ना धारयेत् । ता एवाह–लक्ष्मीमित्यादि । लक्ष्मी–पद्मचारिणीम् । गुहा–पृश्निपर्णीम् । अतिगुहा–शालिपर्णीम् । जटिला–मासीम् । ब्रह्मचारिणी–ब्रह्मयष्टिकाम् । वचा–उग्रगन्धाम् । छत्रा–शतपुष्पाम् । अतिच्छत्रा–विषाणिकाम् ।

आ० र०–औषधीविधारणमाह–सदेति । लक्ष्मी–शमीम् । गुहातिगुहे–शालिपर्णीपृश्निपर्ण्यौ । जटिला–मासीम् । ब्रह्मचारिणी–ब्राह्मीम् । छत्रातिच्छत्रे–शतपुष्पाद्वयम् ।

**ततः स्नेहदिनेहोक्तं तस्याचार समादिशेत् ।**

स०–तत –अनन्तर, तस्य–व्रणिन , आचारमादिशेत् । कतमम् ? स्नेहदिनेहोक्तम् ,–स्नेहस्य दिन स्नेहदिन,–स्नेहपानोपलक्षितमह , तत्रेहा–चेष्टा, तस्यामुक्तं–स्नेहपानविधावुपदिष्ट "उष्णोदकोपचारी स्यात्" इत्यादिकम् ।

आ० र०–आहारविहारनियममाह–तत इति । स्नेहदिनेहोक्त–स्नेहविधिदिनचर्योक्तम् ।

**दिवास्वप्नो व्रणे कण्डूरागरुक्शोफपूयकृत् ॥ ३२ ॥**

स०–दिवास्वप्नो व्रणे कण्ड्वादिकृत् । तस्मात् व्रणिनाऽह स्वप्नो न सेव्य ।

आ० र०–दिवास्वप्न विशेषतो निषेधति–दिवास्वप्न इति ।

**स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैश्चलितस्रुते ।**
**शुक्रे व्यवायजान् दोषानसंसर्गेऽप्यवाप्नुयात् ॥३३॥**
**( व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।**
**तौ च रुक् च दिवास्वापात्ताश्च मृत्युश्च मैथुनात् ? )**

स०–स्त्रीणा तु स्मृतिसस्पर्शदर्शनै पूर्व स्वस्थानाच्चलित पश्चात्स्रुत तस्मिश्चलितस्रुते शुक्रे सत्यससर्गेऽपि–तासामसम्बन्धेऽपि मैथुनमन्तरेणापि, व्यवायजान्–मैथुनोत्थान्, दोषानवाप्नुयात् । तस्मात् स्त्रीस्मरणसस्पर्शदर्शनानि वर्ज्यानीत्यर्थ ।

आ० र०–स्त्रीसङ्ग विशेषतो निषेधति–स्त्रीणामिति ।

**भोजनं च यथासात्म्यं यवगोधूमषष्टिकाः ।**
**मसूरमुद्गतुवरीजीवन्तीसुनिषण्णकाः ॥ ३४ ॥**
**बालमूलकवार्ताकतण्डुलीयकवास्तुकम् ।**
**कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ ३५ ॥**
**सैन्धवं दाडिमं धात्री घृतं तप्तहिमं जलम् ।**
**जीर्णशाल्योदनं स्निग्धमल्पमुष्णोदकोत्तरम् ॥ ३६ ॥**
**भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ।**

स०–भोजन यथासात्म्य–यद्यस्य सात्म्य यवादि, तथा जीवन्त्यादिशाक च, तथा सैन्धवादिक, पुराणशालिभक्त स्निग्ध–सस्नेह, तथाऽल्प, जाङ्गलैर्मांसै सह भुञ्जान उष्णोदकोत्तरं यथाभवति, एव व्रणी शीघ्र व्रणमपोहति ।

आ० र०–भोजनमाह–भोजनमिति । कटुकाफल–कटुरोहिणीफलम् ।

---

१ 'कृत्यमाह' क ञ । २ 'राला' क ग ञ । ३ 'लेपिताम्' क ञ । ४ 'घृताक्तै सक्तुभिर्लिम्पेत्' क ञ । ५ 'सुवि' आ इ. । ६ 'दृढा –बलिन प' ट । ७ 'ढा हिता । त' ठ ड । ८ 'र सम्यग्रक्षा' ग । ९ 'निवृत्तये' इ । १० 'दिविनिवृत्तये।' ट । ११ 'प्रोक्षन् प' स मू । 'प्रोक्षयन् परितो विकीर्य पर्णे' स स । १२ 'याचकार्यपर्णे' क ञ स मू । १३ 'र्णसर्षपादि' क । 'र्णशर्वादि' स.द. । १४ 'र्ध्नाऽवधा' अ इ ।

१–२ 'ब्रह्मचारिणी–मुण्डितिका, पत्तङ्गकाष्ठमित्यपरे' 'छत्रातिच्छत्रे–द्रोणपुष्पीद्वयम्' इति डल्हण । ३ 'स्नेहविधानोक्त' आ.ञ । ४ 'ध्युदिष्ट' ट । 'व्युक्त' ड । ५ 'हपानवि' ग घ प । ६ ( ) अ आ इ ञ पुस्तकेषूपलब्धोऽय श्लोक सुश्रुतेऽपि पठ्यते । ७ 'सरणादि न कार्यम् ।' ठ ड । ८ 'सम्भोग' क.ञ । ९ 'तु' अ आ इ ग.घ.प. । १० 'मुष्ण द्रवोत्तरम्' अ इ.ग.घ.ञ.सु ।

भोजनविशेषमाह—जीर्णशाल्योदनमिति ।

**अशितं मात्रया काले पथ्यं याति जरां सुखम् ॥३७॥**
**अजीर्णात्त्वनिलादीनां विभ्रमो बलवान् भवेत् ।**
**ततः शोफरुजापाकदाहानाहानवाप्नुयात् ॥ ३८ ॥**

स०—मात्रया काले भुक्त पथ्य सुखेन जरा याति । तस्मात् पथ्य मात्रया काले भोक्तव्यम् । अजीर्णे तु न कथञ्चित् कार्यम् । यतोऽजीर्णात् वातादीनां बलवान् विभ्रम—क्षोभ, स्यात् । [ तत — ] तस्मात्क्षोभात्, शोफादीन् प्राप्नुयात् ।

आ० र०—विषमाशन समशन च निषेधति—अशितमिति ।

अध्यशन निषेधति—अजीर्ण इति ।

**नवं धान्यं तिलान् माषान् मद्यं मांसमजाङ्गलम् ।**
**क्षीरेक्षुविकृतीरम्लं लवणं कटुकं त्यजेत् ॥ ३९ ॥**
**यच्चान्यदपि विष्टम्भि विदाहि गुरु शीतलम् ।**
**वर्गोऽयं नवधान्यादिर्व्रणिनः सर्वदोषकृत् ॥ ४० ॥**

स०—नवधान्यादि त्यजेत् । यतोऽय नवधान्यादिवर्गो व्रणिन सर्वान् दोषान् करोति । सङ्ग्रहे चोक्तम् ( सू अ ३८ )—"नवधान्यैमाषकलायकुलत्थनिष्पावशिम्बीशीताम्बुमद्येक्षुक्षीरपिष्टतिलविकृतिशुष्कशाकपिशितहरितकाम्ललवणकटुकक्षारानूपामिषाणि वर्जयेत् ।" इति । शीतल—शीताम्ब्वादि ।

आ० र०—नवधान्यादिवर्गमाह—नव धान्यमिति । सङ्ग्रहे तु ( सू अ ३८ )—"नवधान्यमाषकलायकुलत्थनिष्पावशिम्बीशीताम्बुमद्येक्षुक्षीरपिष्टतिलविकृतिशुष्कशाकपिशितहरितकाम्ललवणकटुकक्षारानूपामिषाणि वर्जयेत् ।" इति ।

नवधान्यादेरत्यपथ्यत्वमाह—वर्ग इति ।

**मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद्व्रणम् ।**

स०—मद्य तीक्ष्णोष्णादिगुण द्राक् व्रण व्यापादयेत् । तस्मात् मद्यमीदृश वर्ज्यम्, नापरम् । तथा च तन्त्रान्तरे—"सस्नेह मधुरप्रायं नातितीक्ष्णमकर्कशम् । तनु यत्सुखपेय च मार्द्वीकेषु तदुत्तमम् ॥" इत्युक्तम् । तस्मात् मार्द्वीकादिप्राय रोध्रासवादिक वा यन्मद्य तत्सात्म्यत्वात्किञ्चित् पेयमेव ।

आ० र०—मद्यस्य ततोऽपथ्यत्वमाह—मद्यमिति ।

**वालोशीरैश्च वीज्येत न चैनं परिघट्टयेत् ॥ ४१ ॥**
**न तुदेन्न च कण्डूयेच्चेष्टमानश्च पालयेत् ।**
**स्निग्धवृद्धद्विजातीनां कथाः शृण्वन्मनःप्रियाः ॥४२॥**
**आशावान् व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ।**

स०—वालोशीरैश्चैन व्रण वीजयेत् । न चैन परिघट्टयेत् । तथा न व्यथयेत् । नापि कण्डूयेत् । [चेष्टमान —क्रियासु] व्यापार कुर्वन्, व्रण पालयेत्—रक्षेत् । तथा स्निग्धादीना कथाश्चित्तप्रिया आकर्णयन् रोगमुक्तये विहिताशोऽह्नाय व्रणमपोहति ।

आ० र०—व्रणशुश्रूषणमाह—वालोशीरैश्चेति । वालैः—चामरैः । उशीरैः—वीरणव्यजनैः ।

**तृतीयेऽह्नि पुनः कुर्याद्व्रणकर्म च पूर्ववत् ॥ ४३ ॥**
**प्रक्षालनादि, दिवसे द्वितीये नाचरेत्तथा ।**
**तीव्रव्यथो विग्रथितश्चिरात्संरोहति व्रणः ॥ ४४ ॥**

स०—तृतीये च दिवसे पुनरपि प्रक्षालनादि कर्म पूर्ववत्—पूर्वैर्व्रणकर्मणा तुल्य, कुर्यात् । द्वितीये तु दिवसे प्रक्षालनादि नाचरेत् । किमित्याह—तथेत्यादि । तथा—तेन प्रकारेण, व्रणस्तीव्रव्यथ सम्पद्यते । तथा, विग्रथित —स प्रदेशो बहुभिर्ग्रन्थिभिर्युक्त स्यात् । तथा, व्रणश्चिरात्—चिरेण कालेन, सरोहति—सरोह याति रूढ सम्पद्यते ।

आ० र०—तृतीये दिवसे प्रक्षालनादिकमाह—तृतीयेऽह्नीति ।

द्वितीये दिवसे प्रक्षालनादिक निषेधति—दिवस इति ।

निषेधातिक्रमे दोषमाह—तथेति । विग्रथितो—विषमसस्थान ।

**स्निग्धां रूक्षां श्लथां गाढां दुर्न्यस्तां च विकेशिकाम् ।**
**व्रणे न दद्यात्कल्कं वा**

स०—व्रणे—व्रणाख्ये आधारे, स्निग्धादिगुणयुक्ता विकेशिका—व्रणान्त प्रवेशयोग्या वर्ति, न दद्यात् । श्लथा—शिथिलाम्, गाढा—निबिडाम्, दुर्न्यस्ता—विषमन्यस्ताम् । अत्र चातिशब्दोऽर्थवशाद्गम्यमानो बोध्य । अत एव सङ्ग्रहे स्पष्ट कृत्वोवाच ( सू अ ३८ )—[ "अतिस्निग्धरूक्षमतिश्लथमतिगाढम् । ] अतिस्नेहात्क्लेद ।" इति । कल्क वा—कल्कमप्यतिस्निग्धादिगुणयुक्त व्रणे न योजयेत् । पिष्टमौषध द्रवाप्लुत कल्क इत्युच्यते (हृ क अ ६।१०) ।

आ० र०—स्निग्धादिविकेशिका कल्क च निषेधति—स्निग्धामिति ।

किमिति स्निग्धादिगुणयुक्ता विकेशिका कल्कं वा न दद्यात्? इत्याह—

**स्नेहात्क्लेदो विवर्द्धते ॥ ४५ ॥**
**मांसच्छेदोऽतिरुग्रौक्ष्याद्दरणं शोणितागमः ।**
**श्लथातिगाढदुर्न्यासैर्व्रणवर्त्मावघर्षणम् ॥ ४६ ॥**

स०—यतोऽतिस्नेहात् क्लेदवृद्धि । अतिरूक्षत्वाच्च मासच्छेदोऽतिव्यथा च, तथा विदारण रक्तस्रावश्च । श्लथादिगुणयुक्तेन च व्रणमार्गस्यावघर्षण स्यात् ।

१ 'अजीर्णे त्व' आ क ग घ प । 'र्णादनि' स ढ । 'र्णात् पवनादीना' सुश्रुत । २ 'जास्रावदा' सुश्रुत । ३ 'मांस त्वजा' अ घ. । ४ 'णिनां स' इ ग ड ञ प । ५ 'न्यविष्टम्भिमाष' ठ ड । ६ 'कपिण्याकह' ट.ठ ,ग. । ७ 'तशाकाम्ल' स स. । ८ 'तदेव तु सुख पेय' ठ.ड । ९ 'बालो' इ प स स । १० 'येच्चेष्टमान. परिपाल' ग.ड.प, सु. । ११ 'स्निद्धवृद्ध' अ.ञ. ।

१ 'व्रणिन' ट ठ. । २ 'शो वेगेन व्र' ठ । ३ 'स्राक् झटित्यञ्जसाऽह्नाय द्राग्मङ्क्षु सपदि द्रुते' इत्यमर । ४ 'ण कर्म' ट. । ५ 'श्चिरकालेन सरोह या' ठ ड. । ६ 'दिविधिमाह' क ञ. । ७ 'च'अ आ इ.ग घ प. । ८ 'दुर्न्यस्तैर्व्र' ग । ९ 'यत स्ने' ठ ड । १० 'धा दरण रक्तस्य प्रवृत्ति स्यात् ।' ट. । ११ 'युक्तया च' ठ.ड. ।

आ० र०—निषेधातिक्रमे दोषमाह—स्नेहादिति । रौक्ष्या च्चत्वारो दोषा ।

विकेशिका व्रणे कस्माद्दीयते ? इत्याह—

**सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम् ।**
**व्रणं विशोधयेच्छीघ्रं स्थिता ह्यन्तर्विकेशिका ॥४७॥**

स०—विकेशिका व्रणान्तरे स्थिता पूत्यादियुक्त व्रण विशोधयेत् । अतोऽसौ योज्या । कीदृग्व्रणम् ? पूतियुक्तमासम्, सोत्सङ्ग—उन्नतम्, पूयादिभक्षितमासादिप्रदेश शून्यो देहस्य गतिरुच्यते, [सगतिं—] गतियुक्तम्, पूयश्चासौ गर्भश्च, स विद्यते यस्य स पूयगर्भी त च ।

आ० र०—विकेशिकाया गुणमाह—सपूतिमासमिति ।

**व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत् ।**
**भोजनैरुपनाहैश्च नातिव्रणविरोधिभि ॥ ४८ ॥**

स०—व्यम्ल—विदग्ध पक्वापक्व व्रण, पक्वमित्यज्ञानात् पाटितम् । तथाविध श्वयथु पाचनैरन्नपानैस्तथाविधैश्चोपनाहै —सौवणकिण्वादिकल्पितै , उपाचरेत् । न च सर्वैरेवाविशेषेण पाचनैरुपाचरेदित्याह—नातीत्यादि । व्रणातिविरोधीनि यानि श्वयथुपाचनानि—अम्लकटुकतीक्ष्णोष्णलवणप्रायाणि द्रव्याणि तथैवप्रायाणि भोजनानि, न तैरुपाचरेत् । अपि तु किञ्चिदेव व्रणविरोधीनि यानि तैरुचितैरुपक्रमेदिति बोध्यम्, नातिशब्दप्रयोगात् ।

आ० र०—अपक्वपाटने चिकित्सामाह—व्यम्ल त्विति । व्यम्ल—विदग्धम्, तत्र हि रक्त विगताम्लरस भवति । इति पाटनविधि ।

**सद्यः सद्योव्रणान् सीव्येद्विवृतानभिघातजान् ।**
**मेदोजाल्लिखितान् ग्रन्थीन् ह्रस्वा पालीश्च कर्णयोः॥**
**शिरोक्षिकूटनासौष्ठगण्डकर्णोरुबाहुषु ।**
**ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु ॥ ५० ॥**
**गम्भीरेषु प्रदेशेषु मांसलेष्वचलेषु च ।**

स०—सद्योव्रणानभिघातजान् विवृतान्—विस्तीर्णमुखान्, सद्य —तत्क्षणादेव, सीव्येत् । सङ्कुचितवदनास्तु ते न सीव्या । अभिघाताज्जन्म येषा तानेवम् । सद्योव्रणानिति सद्योग्रहणमभिघातजेष्वपि चिरकालस्थितेषु नाय विधिरिति द्योतयति । मेदोजान् ग्रन्थीन् लिखितान्—शस्त्रलिखितान्, सूच्या सीव्येत् । कर्णयोश्च ह्रस्वा पालीर्लिखिता सीव्येत् । शिरोक्षिप्रभृतिषु प्रदेशेषु प्रभूतमासेष्वचलेषु च स्थितान् व्रणान् सीव्येत् ।

आ० र०—अथ सीवनविधि । तत्र सीवनस्य विषयमाह—सद्य इति । सद्य —व्रणोत्पत्तिदिने । सद्योव्रणान्—शोफपाकादिपूर्वरूपरहितान् । तेषामभिघातजत्वात् व्यभिचारेऽपि तदुपादान दोषससर्गव्युदासार्थम् । लिखितान्—लेखनोद्धृतमेदस । कर्णपालीश्च लिखिता —लेखनोद्धृतह्रस्वत्वहेतुदुष्टावयवा । शिर प्रभृतयो ये गम्भीरा मासला अचलाश्च प्रदेशास्तेषु स्थितान् व्रणान् ।

**न तु वङ्क्षणकक्षादावल्पमांसे चले व्रणान् ॥ ५१ ॥**
**वायुनिर्वाहिणः शल्यगर्भान् क्षारविषाग्निजान् ।**

स०—वङ्क्षणादिस्थितानां व्रणाना गम्भीरादिप्रदेशत्वात्सीवन प्राप्त तन्निषिध्यते । मासलेषु स्थिरेषु च व्रणान् सीव्येदित्युक्त्यैवाल्पमासे चले स्थाने व्रणान्न सीव्येदित्यर्थे लब्धे, अल्पमांसाश्चलाश्च व्रणान् न सीव्येदिति वचनमतिशयार्थम् । जातुचिदभिघातजान् विवृतानप्येवविधान् व्रणान् न सीव्येदिति गमयति । तथा, वायु निर्वहन्ति—नि श्वसन्ति, तान् वायुनिर्वाहिणो न सीव्येत् । तथा शल्य गर्भे येषा तान् शल्यगर्भान्, तथा क्षारविषाग्निभ्यो जातान् व्रणान् न सीव्येत् ।

आ० र०—सीवनाविषयमाह—न त्विति । वायुनिर्वाहिण —वायुनिर्गमद्वारभूतान् ।

सीवनात्पूर्वं यत्क्रियते तद्दर्शयति—

**सीव्येच्चलास्थिशुष्कास्रतृणरोमापनीय तु ॥ ५२ ॥**
**प्रलम्बि मांसं विच्छिन्नं निवेश्य स्वनिवेशने ।**
**सन्ध्यस्थि च स्थिते रक्ते स्नाय्वा सूत्रेण वल्कलैः ५३**
**सीव्येन्न दूरे नासन्ने गृह्णन्नाल्पं न वा बहु ।**

स०—स्थानाच्चलितमस्थ्यपनीय—निरस्य, तथा शुष्करक्तं तृणानि रोमाणि चापास्य, तथा शस्त्रादिना प्रकर्षेण लम्बि व्रणे यद्विद्यते मास तत् स्वनिवेशने—आत्मीये स्थाने, निवेश्य—सस्थाप्य, तथा सन्ध्यस्थि स्वे स्थाने सस्थाप्य, स्थिते रक्ते—अस्रवद्रूपत्व प्राप्ते सति, व्रण सीव्येत् । केन ? स्नाय्वादिना, तथा वल्कलै । वल्कलानि—शणाश्मन्तकादिलगुद्भवानि, तै । कथ सीव्येत् ? न दूरे—न विप्रकृष्टे, न चासन्ने—नातिनिकटे, नाल्प व्रणाश न च बहु गृह्णन् ।

आ० र०—सीवनस्य विधिमाह—सीव्येदिति । चल यदस्थि शुष्क च यदसृक् तदपनीय, तृणानि रोमाणि च । सन्धिगतमस्थि च स्वनिवेशने निवेश्य । स्थिते—स्रावानिवृत्ते । वल्कले विशेष उक्त. सङ्ग्रहे ( सू अ ३८ )—"स्रा-

१ 'व्रण शोधयते शीघ्र' स द्व । २ 'न्तरस्थि' ट । 'न्तस्थि' ठ । ३ 'यतस्तस्माद्व्रणेऽसौ' ट । ४ 'पूयो गर्भे यस्यास्त्यसौ पूयगर्भी' इति चन्द्र । ५ 'विशोधिभि ' आ इ ञ । ६ 'व्यम्लमपक्व व्र' ट । ७ 'साल्वणाख्यैर्वचाकि' ट । 'शाल्वलकि' ड । ८ 'शेषात्तैरु' इति क्वचित् । ९ 'तैरुपक्र' ट । १० 'आमपा' क ञ । ११ 'न्थीनालिख्य सू' ड. । १२ 'स्थिरेषु तान् व्र' ठ. । स्थानेषु व्र' ड. ।

१ 'न् । सद्योव्रणानामभि' क ञ । २ 'घाताव्यभि' क । ३ 'मासचले' अ ञ । 'मासचलान् व्र' इ । ४ 'निर्वामिण ' स स । ५ 'मासस्थाश्च' ट । ६ 'वायुनिश्वासिन शल्यगर्भान् तथा क्षार' ड । ७ 'च' आ घ ञ । ८ 'सन्ध्यस्थ्यवस्थिते' इ घ । ९ 'स्नाय्वा' अ. । १० 'गृह्णन् स्वल्प' इ । ११ 'ण विलम्बि व्रणात् य' ट. । १२ 'शाल्मल्यश्म' ड. । १३ 'टे गृण्हन्नाल्प' ट. । १४ 'ल्कलवि' क,घ,ञ,प. ।

णाइमन्तकमूर्वातसीना वा वल्कलै ।" इति। तथा ( स सू अ ३८ )—"सीवनविकल्पास्तु समासेन चत्वार । गोष्फणिका तुन्नसेवनी वेल्लितक राजग्रन्थिबन्धनमिति। तेषा नामभिरेवाकृतिविभाग, प्रहारवशाच्चोपयोग ।" इति।

**सान्त्वयित्वा ततश्चार्तं व्रणे मधुघृतद्रुतैः ॥ ५४ ॥**
**अञ्जनक्षौमजमषीफलिनीशल्लकीफलैः।**
**सरोध्रमधुकैर्दिग्धे युञ्ज्याद्बन्धादि पूर्ववत् ॥ ५५ ॥**

स०—तत—तस्मात्सीवनादनन्तरं, आतुर सान्त्वयित्वा—समाश्वास्य शीताम्बुसर्शव्यजनादिभि, अनन्तरमुक्तैर्लिप्ते व्रणे सति। कै ? अञ्जनादिभि । किम्भूतै ? मधुघृताभ्यां द्रुतै—आलोडितै । पूर्ववद्बन्धादि युञ्ज्यात्,—तृतीयान्ताद्वति, पूर्वोद्दिष्टेन कर्मणा तुल्य कषायक्षालनादि कवलिकादिक च योज्यमित्यर्थ ।

आ० र०—सीवनानन्तर कर्तव्यमाह—सान्त्वयित्वेति। अञ्जन—स्रोतोञ्जनम्। फलिनी—प्रियङ्गु.। पूर्ववत्—पाटनवत्।

**व्रणो निःशोणितौष्ठो यः किञ्चिदेवावलिख्य तम्।**
**सञ्जातरुधिरं सीव्येत्सन्धानं ह्यस्य शोणितम् ॥५६॥**

स०—अविद्यमानशोणितौ ओष्ठौ—पार्श्वौ, यस्य तमेवभूत व्रण किञ्चिदेव—ईषन्मात्रमेव शस्त्रेणावलिख्य, त सञ्जातरुधिरं सन्त सीव्येत्, न त्वेवमेव। यस्मादस्य—व्रणस्य, सन्धान शोणितमेव।

आ० र०—शुष्कं व्रणमार्द्रं कृत्वा सीव्येदित्याह—व्रण इति। नि शोणितौ ओष्ठौ—व्यधनीयप्रदेशौ, यस्य स तथा। इति सीवनविधि ।

**बन्धनानि तु देशादीन् वीक्ष्य युञ्जीत तेषु च।**
**आविकाजिनकौशेयमुष्णं, क्षौमं तु शीतलम् ॥५७॥**
**शीतोष्णं तूलसन्तानकार्पासस्नायुवल्कजम्।**
**ताम्रायस्त्रपुसीसानि व्रणे मेद:कफाधिके ॥ ५८ ॥**
**भङ्गे च युञ्ज्यात्फलकं चर्मवल्ककुशादि च।**

स०—बध्यत व्रण एभिरिति बन्धनानि,—आविकाजिनादीनि, तेषु—व्रणेषु, देशकालसात्म्यादीन् वीक्ष्य—निरूप्य, यथायोगमाविकाद्यन्यतम युञ्ज्यात्। तेषा च बन्धनाना स्वरूपमाह—आविकेत्यादि। अविरेवाविक, तस्येदमाविकम्। "अवे क" इति क, "तस्येदम्" इत्यण्। अजिन—चर्म। कोशात्सम्भूत—कौशेयम्। "कोशाड्ढञ्" इति ढञ्। आविकादिक बन्धनत्रयमुष्ण—उष्णवीर्यम्। क्षौम तु बन्धन शीतल—शीतवीर्यम्। तूलसन्तानादिजं शीतोष्ण—उभयस्वभावम्। तूलं—शाल्मल्यादिज, तस्य सन्तान—सन्तति सूत्ररूपता, तेन निष्पादितम्। मेद कफाधिके व्रणे ताम्रादीनि बन्धनार्थं युञ्ज्यात्। भङ्गे—अस्थिभङ्गे । न केवल ताम्रादीनि मेद कफाधिके व्रणे युञ्ज्यात्, यावच्चशब्दात्तानि भङ्गेऽपि युञ्ज्यात्। न च केवलं भङ्गे ताम्रादीनि युञ्ज्यात्, यावत्फलकादि च युञ्ज्यात्। कुशाशब्देन वशादिकम्बिकोच्यते।

आ० र०—अथ बन्धनविधि । तत्र बन्धनस्य साधनान्याह—बन्धनानीति। सन्तान—तन्तु । फलक—काष्ठपट्टिका। कुशा—वेणुदलम्।

अधुना बन्धप्रकारान्निर्दिशति—

**स्वनामानुगताकारा बन्धास्तु दश पञ्च च ॥ ५९ ॥**
**कोशस्वस्तिकमुत्तोलीचीनदामानुवेल्लितम्।**
**खट्वाविबन्धस्थगिकावितानोत्सङ्गगोष्फणाः ॥ ६० ॥**
**यमकं मण्डलाख्यं च पञ्चाङ्गी चेति योजयेत्।**
**( विद्ध्यात्तेषु तेष्वेव कोशमङ्गुलिपर्वसु।**
**स्वस्तिकं कर्णकक्षादिस्तनेषूक्तं च सन्धिषु ॥ १ ॥**
**मुत्तोलीं मेढ्रग्रीवादौ युञ्ज्याच्चीनमपाङ्गयोः।**
**सम्बाधेऽङ्गे तथा दाम, शाखास्वेवानुवेल्लितम् ॥२॥**
**खट्वां गण्डे हनौ शङ्खे, विबन्धं पृष्ठकोदरे।**
**अङ्गुष्ठाङ्गुलिमेढ्राग्रे स्थगिकामन्त्रवृद्धिषु ॥ ३ ॥**
**वितानं पृथुलाङ्गादौ तथा शिरसि चेरयेत्।**
**विलम्बिनि तथोत्सङ्गं, नासौष्ठचिबुकादिषु ॥ ४ ॥**
**गोष्फणं सन्धिषु तथा, यमकं यमिके व्रणे।**
**वृत्तेऽङ्गे मण्डलाख्यं च, पञ्चाङ्गीं चोर्ध्वजत्रुषु ॥५॥)**
**यो यत्र सुनिविष्टः स्यात्तं तेषा तत्र बुद्धिमान् ॥६१॥**

१ 'गोफणिका' क.ञ । २ 'तुन्नसेवन्या वे' क ञ स मू । 'तुन्नसीवनवेल्लितकरजग्रन्थि' स स.। ३ 'क ग्रन्थि' क ञ । ४ 'सान्तयि' अ ग ञ प । 'शान्तयि' इ । ५ 'तद्रुतै.' अ ड । 'तद्रवै' आ इ ग ञ ठ । ६ 'म्या द्रवै—' ट ठ । ७ 'देव विलिख्य' आ ठ । ८ 'ण विलिख्य' ट । 'ण चालिख्य' ड । ९ 'ख्य तत स' ठ ड । १० 'णिता ओष्ठा व्यधनीयप्रदेशा य' घ.प । ११ 'स्नावल्क' आ.ग.ञ.प ठ.।

१ 'च ताम्रादीनि भ' ट । २ बन्धलक्षणानि यथा—"पूरयित्वौषधीर्बन्ध क्रियते कोशकाकृति । कोशकाख्य स विज्ञेयो वैद्यैर्बन्धे न वार्जित ॥ दामाकृतिं चतुष्पादा दामाख्य, स्वस्तिक पुन । स्वस्तिकाकृतिमासीव्य पश्चादावेष्ट्य बध्यते ॥ अनुवेल्लित तद्विद्यात्, मुत्तोलीलक्षण शृणु। बहुभिर्मुद्रिकाकारो जालवद्बहुरन्ध्रक ॥ मुत्तोलीबन्ध एष स्यात्सञ्ज्ञान्तरमत शृणु। गोतुण्डिका चालनी च तामेवाहुर्भिषग्वरा ॥ मण्डल वेष्टनाकार विद्ध्यान्मण्डलाख्यके। भेषजादिभिरापूर्य स्थगिका पट्टकेन च ॥ बध्यते मण्डलाकारो यमलव्रणयोस्तु स । बन्ध यमकनामान भिषजो वर्णयन्ति तम्॥ खट्वा तु बहुपादा स्याद्वा ( ची ) राभिर्बहुभिर्वृता। चीनबन्ध विजानीयाच्ची- ( चा ) राभिर्बहुभिर्वृतम्॥ विबन्धो विविधो बन्ध स च षड्ग्रन्थिकायुत । ज्ञेयो वितानसञ्ज्ञस्तु वितानाकारसयुत ॥ पाषाणगुडकोत्क्षेपकारिणी गोफणा विदु । तदाकृतिं भिषक्कुर्याद्गोफणा, पञ्चकम्बिभि ॥ पञ्चाङ्गी तु वृता कुर्याद्बन्धनाय चिकित्सक ।" इति डल्हण । ३ वाग्भटोक्तोऽयमुत्सङ्गबन्ध सुश्रुते नोक्त । ४ 'गोफणा' अ.इ । 'गो फणा' ञ.ठ.। ५ ( ) आ. पुस्तकस्थोऽय पाठ । ६ 'सन्निविष्ट.' ग प.।

स०-स्व च तन्नाम च स्वनाम, तेनानुगत-अनुबद्ध, आकार-सस्थानविशेषो, येषा ते पञ्चदश बन्धा वक्ष्यमाणा । तुशब्दोऽवधारणार्थ.[१] । अर्थात् पञ्चदशैवेति[२], न न्यूना । कोशादय पञ्चाङ्ग्यन्ता । तेषा-बन्धाना मध्ये, यो-बन्धविशेषो, यत्र-यस्मिन्देहदेशे, सुनिविष्टो भवेत्, त-बन्ध कोशादिक, तत्र-तस्मिन्देशे, योजयेत् । तत्र कोशोऽङ्गुलीपर्वसु चर्मादिकृत । स्वस्तिक सन्धिकूर्चभ्रूस्तनान्तरकक्षाक्षिकपोलकर्णेषु[३] । मुत्तोली ग्रीवामेढ्रयो । चीनमपाङ्गयो । दाम सम्बाधेऽङ्गे[४] वङ्क्षणादौ । अनुवेल्लित शाखासु । खट्वा हनुसन्धिगण्डेषु । विबन्धमुदरोरुपृष्ठेषु । स्थगिकाऽङ्गुष्ठाङ्गुलीमेढ्रान्त्रमूत्रवृद्धिषु[५] । वितान मूर्द्धादौ पृथुलेऽङ्गे । उत्सङ्गमङ्गविशेषे लम्बिनि बाह्वादौ । गोष्फण नासौष्ठचिबुकसक्थिषु । यमक यमलव्रणयो । मण्डल वृत्तेऽङ्गे । पञ्चाङ्गी जत्रूर्ध्वमिति योजना कार्या ।

आ० र०-बन्धानाह-स्वनामानुगताकारा इति । सङ्ग्रहे तु ( सू अ ३८ )-"तत्र कोशमङ्गुलिपर्वसु विदध्यात् । दाम सम्बाधेऽङ्गे[६] । उत्सङ्ग विलम्बिनि । स्वस्तिक सन्धिकूर्चभ्रूस्तनान्तरकक्षाक्षिकपोलकर्णेषु[७] । अनुवेल्लित शाखासु । मुत्तोलीं ग्रीवामेढ्रयो । मण्डल वृत्तेऽङ्गे । स्थगिकामङ्गुष्ठाङ्गुलिमेढ्राग्रमूत्रवृद्धिषु[८] । यमक यमलव्रणयो । खट्वा हनुशङ्खगण्डेषु । चीनमपाङ्गयो । विबन्धमुदरोरुपृष्ठेषु । वितान मूर्द्धादौ पृथुलेऽङ्गे । गोष्फण नासौष्ठचिबुकसक्थिषु । पञ्चाङ्गीं जत्रूर्ध्वमिति । न तु व्रणस्योपरि कुर्याद् ग्रन्थि न[१०] चाबाधकरो यथा स्यात् । बन्धस्त्विष्टोऽनिले दुष्टे दृष्टे भग्ने व्रणेषु च । तत्रान्त्ययोर्द्विधा बन्ध सव्यदक्षिणभेदत ॥ त्रिविधस्त्वेव सर्वत्र गाढश्लथसमत्वत । कफवाते घनो गाढ. पित्तरक्ते[११] तनु[१२] श्लथ ॥ वातपित्ते समो बन्ध कफपित्तव्रणेषु च ।" इति ।

सम्प्रत्येषा बन्धाना गाढशिथिलादिबन्धत्व देशाद्यनुरोधान्निरूपयति—

**बध्नीयाद्गाढमूरुस्फिक्कक्षावङ्क्षणमूर्धसु ।**
**शाखावदनकर्णोरःपृष्ठपार्श्वगलोदरे ॥ ६२ ॥**
**समं मेहनमुष्के च, नेत्रे सन्धिषु च श्लथम् ।**
**बध्नीयाच्छिथिलस्थाने वातश्लेष्मोद्भवे समम् ॥६३॥**
**गाढमेव समस्थाने, भृशं गाढं तदाशये[१३] ।**
**शीते वसन्तेऽपि[१४] च तौ मोक्षणीयौ[१५] त्र्यहात्त्र्यहात् ६४**
**पित्तरक्तोत्थयोर्बन्धो गाढस्थाने समो मतः ।**
**समस्थाने श्लथो, नैव शिथिलस्याशये तथा ॥ ६५ ॥**

**सायंप्रातस्तयोर्मोक्षो ग्रीष्मे शरदि चेष्यते ।**

स०-ऊरुस्फिगादिषु देशेषु गाढ बन्ध बध्नीयात्, न तु श्लथम् । शाखावदनादिषु सम बन्ध बध्नीयात् । चशब्दान्मेहने मुष्कयोश्च सममेव । नेत्रे-नयने, तथाऽस्थिसन्धिषु शिथिल बन्ध बध्नीयात् । शिथिलस्थाने शिथिलो बन्ध उपदिष्ट, तत्र स्थाने[१] यौ व्रणौ वातश्लेष्मोद्भवौ तौ सम कृत्वा बध्नीयात्, न गाढ न शिथिलम् । समस्थाने समो बन्ध उपदिष्ट, तत्र[२] स्थाने वातश्लेष्मोद्भवौ व्रणौ गाढमेव बध्नीयात् । भृशमित्यादि । तदित्यनेन गाढाशय परामृश्यते । गाढबन्धोद्दिष्टे स्थाने वातश्लेष्मोद्भवौ व्रणौ भृश-सुतरा, गाढ बध्नीयात् । तौ-वातश्लेष्मोद्भवौ व्रणौ, शीते-हेमन्तशिशिराख्ये काले, वसन्ते च, त्र्यहात्त्र्यहात्-त्रिदिन त्रिदिनमन्तरीकृत्य, मोक्षणीयौ-मोक्षणार्हौ[३] भवत । पित्तरक्तोत्थयोर्व्रणयोर्गाढबन्धस्थाने समो बन्धो मत, न शिथिल । समस्थाने यत्र समो बन्ध उपदिष्ट शाखावदनादौ, तत्रस्थयो पित्तरक्तोत्थयोर्व्रणयो शिथिलो बन्ध कार्य । शिथिलस्य बन्धस्याशये यत्र शिथिलो बन्ध कार्य इत्युक्त, तत्र नैव बन्ध कार्य इति । एवकारोऽवधारणार्थं कृत । तयो-पित्तरक्तोत्थयो, सायप्रातर्द्वौ कालौ मोक्ष इष्यते । ग्रीष्मे शरदि चान्यदोषोत्थव्रणस्यापि सायप्रातर्मोक्ष इष्यते ।

आ० र०-प्रदेशविशेषेण बन्धविशेषमाह-बध्नीयादिति । ऊर्वादिषु गाढम् । शाखादिषु समम् । नेत्रादौ श्लथम् । त्र्यहान्तर्मोक्षण सायप्रातर्मोक्षण च सर्वर्तुषु प्राप्तस्यैकाहान्तरमोक्षणस्य[४] ऋतुविशेषेऽपवाद ।

न तु बन्धेन विना व्रणो धार्य इत्याह—

**अबद्धो दंशमशकशीतवातादिपीडितः ॥ ६६ ॥**
**दुष्टीभवेच्चिरं चात्र न तिष्ठेत्स्नेहभेषजम् ।**
**कृच्छ्रेण शुद्धिं रूढिं वा याति रूढो विवर्णताम् ६७**

स०-अबद्धो व्रणो दंशादिभि[५] पीडितो-व्यथित, तथाऽऽदिशब्दात् रजोधूमादिभिश्च व्यथित, अदुष्टोऽपि दुष्टीभवति । अत्र च-व्रणे, बन्धमन्तरेण व्रणघ्न स्नेह उपयोजितो भेषज[६] चोपयोजित चिर न तिष्ठेत् । बन्ध च विना सम्यगुपचर्यमाणोऽपि व्रण कष्टेन शुद्धि याति । रूढि च कृच्छ्रेण याति । रूढोऽपि सन् विवर्णता याति, न शरीरवर्णताम् । इत्यबन्धनाद्दोषा[७] ।

आ० र०-बन्धाकरणे दोषमाह-अबद्ध इति । स्नेहश्च भेषज चेति द्वन्द्व. । सङ्ग्रहे तु ( सू. अ ३८ )-"स्नेहश्चात्र न चिर तिष्ठति । भेषजमचिराच्छुष्यति ।" इति ।

इदानी बन्धनाद्गुणानाह—

**बद्धस्तु चूर्णितो भग्नो विश्लिष्टः पाटितोऽपि वा ।**
**छिन्नस्नायुसिरोऽप्याशु सुखं संरोहति व्रण. ॥६८॥**

१ 'र्थं । पञ्च' ठ ड । २ 'ति नोना ' ट । ३ 'स्तिक स्तना० क्षिकर्णे' ठ ड । ४ 'ङ्गे । अ' ड । ५ 'मेढ्रमूत्र' ट ठ ट । ६ 'सम्बद्धेऽङ्गे' ञ । ७ 'रकुक्ष्यक्षि' स.स । ८ 'ढ्राग्रमूत्र' ग । ९ 'सन्धिषु' क । १० 'न वाबा' ग । ११ 'पित्ते रक्ते' घ प. । १२ 'तनुश्लथ ' क ग घ ञ स मू । १३ 'तदाश्रये' अ आ ग घ. । १४ 'न्ते च तथा मो' अ इ ग.घ.ञ प । १५ 'क्षयेत्तौ त्र्य' अ.इ. । 'क्षणीयस्त्र्यहा' ग. ।

१ 'यत्र स्थाने' ड । २ 'तत्रस्थौ वात' ट । ३ 'मोक्षार्हौ' ड. । ४ 'क्षस्य' ग घ प । ५ 'भिरादिशब्देन रजो' ड. । ६ 'षजो वा योजितश्चिर' ठ.ट । ७ 'एतेऽब' ड. ।

**उत्थानशयनाद्यासु सर्वेहासु न पीड्यते ।**
**उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनोऽतिरुक् ॥६९॥**
**समो मृदुररुक् शीघ्रं व्रणः शुध्यति रोहति ।**

**स०**—तुरत्ववारणे । बद्ध एव व्रणो बन्धमाहात्म्यात्, चूर्णित –अस्थिसमाश्रितो व्रण, तथा भग्न –अस्थिसमाश्रित एव व्रण, तथा विश्लिष्ट –सन्धिस्थानादन्यस्थानगतो व्रणो नेत्रादिस्थ, तथा पाटित –सर्वदेशस्थितोऽपि, तथा छिन्नस्नायुसिरोऽप्याशु व्रण सुख सम्यग्रोहति। तथोत्थानशयनाद्यासु सर्वास्वीहासु–चेष्टासु, न पीड्यते–न व्यथते । ऊर्ध्वं वृत्तौ–वर्तुलौ, ओष्ठौ यस्य स उद्वृत्तौष्ठ, न सम । तथा, समुत्सन्न –समन्तादुच्छूनरूपो यो व्रणो न सम । तथा, विषम –उद्वृत्तौष्ठसमुत्सन्नाभ्या व्यतिरिक्तो विषमसस्थान । तथा, कठिनो–यो व्रणो न मृदु । तथा, अतिरुक् च यो व्रण । स सर्व उद्वृत्तौष्ठादि पञ्चप्रकारोऽपि बन्धमाहात्म्यात् अशुभरूपता हित्वा व्रण [ समो मृदुररुक् च भवति, तथा ] शीघ्र शुद्धि याति रोहति । ननु, उद्वृत्तौष्ठसमुत्सन्नावपि विषमकठिनशब्देनैव-(ब्दाभ्यामेव) ग्रहीष्येते, किमेताभ्यामुपात्ताभ्याम् ? अस्त्येवैतत् । किन्त्वनयो पृथङ्निर्देशेनातिदुश्चिकित्स्यतरत्व गमयति ।

**आ० ६९–बन्धकरणे गुणमाह–बद्धस्त्विति । उद्वृत्त –ऊर्ध्व चलित, ओष्ठ –प्रान्तो, यस्य । समुत्सन्नो–विवृद्धमास । विषम –क्वचिदुच्च क्वचिन्नीच । स त्रिविधोऽपि समो भवति । तत्तद्दोषत्यागात् कठिनो मृदुर्भवति । अतिरुक् रुजाहीनो भवति । अशुद्ध शुध्यति । अरूढो रोहति ।**

**स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ॥७०॥**
**प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च ।**
**अजीर्णतरुणाच्छिद्रैः समन्तात्सुनिवेशितैः ॥ ७१ ॥**
**धौतैरकर्कशैः क्षीरिभूर्जार्जुनकदम्बजैः ।**

**स०**—स्थिराणा व्रणाना दीर्घकालानुषङ्गिणा, तथाऽल्पमासाना–अनुपचितपललाना, अत एव हेतो, तथा रौक्ष्यादनुपरोहता–रूढिमगच्छता, औषध–कल्कस्नेहादि, यदुपयुज्यते, तत् पत्रै क्षीरिभूर्जार्जुनकदम्बजै प्रच्छाद्य–स्थगितव्यम् । यथादोषं–दोषानतिक्रमेण, यथर्तु–ऋत्वनतिक्रमेण च, तद्वशाद्यथायोगम् । यथा–वातव्रणे शीततौ स्निग्धोष्णै पत्रै, पित्तव्रणे घर्मकाले शीतस्वभावै, कफव्रणे उष्णकाले रूक्षोष्णप्रायै । एव च प्रावृषि काले मिश्रदोषे च कल्पनीयम् । किम्भूतै पत्रै ? अजीर्णानि–अजर्जराणि, तरुणानि–प्रत्यग्राणि, अच्छिद्राणि–छिद्ररहितानि, तैरजीर्णतरुणाच्छिद्रै । तथा, समन्तात्–सर्वत, सुष्ठु निवेशितै । तथा, धौतै –जलादिना निर्मलीकृतै । तथा, अकर्कशै –अकठिनै ।

**आ० ७०–व्रणविशेषे लेपस्य पत्राच्छादनमाह–स्थिराणामिति । यथादोष–शीते दोषे उष्णै, उष्णे शीतै । एव यथर्तु । अजीर्णतरुणे –वृद्धत्वबालत्वरहितै । क्षीरिण –अश्वत्थादय ।**

**कुष्ठिनामग्निदग्धानां पिटिकामधुमेहिनाम् ॥ ७२ ॥**
**कर्णिकाश्चोन्दुरुविषे क्षारदग्धा विषान्विताः ।**
**बन्धनीया न मांसपाके गुदपाके च दारुणे ॥ ७३ ॥**
**शीर्यमाणाः सरुग्दाहाः शोफावस्थाविसर्पिणः ।**

**स०**—कुष्ठ्यादीना ये व्रणास्ते न बन्धनीया । तथा, उन्दुरुविषे या कर्णिका –कोठरूपा, ताश्च न बन्धनीया । तथा, क्षारदग्धा ये व्रणास्तथा विषदग्धा ये व्रणास्ते च न बन्धनीया । तथा, मासपाके व्रणास्तथा दारुणे च गुदपाके–न गुदपाकमात्रे, व्रणास्ते च न बन्धनीया । मासपाक इति "मासस्य पचि युद्भवो" इत्यलोप । तथा, शीर्यमाणा –शदनावस्था भजमाना, तथा सरुग्दाहा, तथा शोफावस्था –अनेकावस्था भजन्तोऽपि ये शोफावस्थावस्थिता, तथा विसर्पिणो–विसर्पावस्थास्थिता, ते च न बन्धनीया ।

**आ०७०–व्रणविशेषे बन्धन निषेधति–कुष्ठिनामिति । ते च कुष्ठादिव्रणास्त्रयोदश । तत्र मधुमेहिना पिटिका । उन्दुरुविषे कर्णिका –मूषकविषोत्थपद्मकर्णिकाकारमांसवृद्धय । विसर्पिण –इतस्ततो व्रणा ।**

इदानी सक्रमीणा व्रणाना चिकित्सामाह—

**अरक्षया व्रणे यस्मिन् मक्षिका निक्षिपेत्क्रमीन् ॥७४॥**
**ते भक्षयन्तः कुर्वन्ति रुजाशोफास्रसंस्रवान् ।**
**सुरसादिं प्रयुञ्जीत तत्र धावनपूरणे ॥ ७५ ॥**
**सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ।**
**गोमूत्रकल्कितो लेपः सेकः क्षाराम्बुना हितः ॥७६॥**
**प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत् ।**

**स०**—अरक्षया–अपालनेन, यस्मिन् व्रणे मक्षिका क्रमीन्निक्षिपेत् । ते–तत्रस्था क्रमयो, व्रण भक्षयन्तो रुजादीन् कुर्वन्ति । तत्र–सक्रमौ व्रणे, सुरसादिर्गण धावनपूरणे–तन्निमित्त, प्रयुञ्जीत । धावन च पूरण च तस्मिन् । तथा तस्मिन्व्रणे सप्तपर्णादीना त्वचो गोमूत्रकल्किता –पिष्टा, लेपो हित । तथा, क्षाराम्बुना सेको

१ 'पीडयेत्' अ घ । २ 'उद्धृतौष्ठ' घ ञ । ३ 'तो पिष्टव्रण' ट । ४ 'सस्थानादन्यतो गतो' ट । ५ 'न्यथा गतो' ठ ड । ६ 'तथोत्पाटि' ड । ७ 'न बाध्यते' ट । ८ 'दुत्सन्न उन्नतो यो' ठ. । ९ 'त्ताभ्या कठिनविषमौ तेनैव गृही' ठ.ड । १० 'न्धनक' क ग ञ । ११ 'उद्धृत' क ञ । 'ऊर्ध्वत' घ । १२ 'अजीर्णातरु' स स । १३ 'तामिति रोहमग' ड । १४ 'त्रैरुपरि क्षी' ट ठ । १५ 'तौ सति स्नि' ठ ड. । १६ 'व साधारणेऽपि का' ट.ठ. ।

१ 'मासपाके न बध्नीयात् ('बद्धव्या' स द्व ।) गु' अ आ. ग स द्व । 'न मासपाके च बध्नीयाद्गुद' व । २ 'बध्नीयात्' ड । ३ 'ग्धा विषदग्धाश्च व्रणा न' ठ ड । ४ 'के व्रणा' ठ ड । ५ 'शीर्यमाणान् सशूलदाहान् शोफावस्थान् विसर्पिणश्च व्रणान् न बध्नीयात् ।' ठ ड । ६ 'च व्रणा' ग घ प. । ७ 'स्नविस्रुती' अ ञ । ८ 'ल्किता लेप' आ म । ९ 'अरक्षणेन यस्मि' ट । १० 'त्र–तस्मिन् व्र' ट । ११ 'गणो धावने पूरणे च योज्य ।' ठ ड । १२ 'ल्कित पिष्टलेपो' इति क्वचित् ।

हित । अथवा मासपेश्या व्रणं प्रच्छाद्य-पिधाय, तान्-कृमीन्, आशु निर्हरेत् ।

आ० र०-व्रणे कृमिप्रतीकारमाह-अरक्षयेति[2] । सुरसादिगणस्य क्काथेन धावनं, चूर्णेन पूरणम् । राजादन-राजाह्व । मासपेश्या-मासगर्भया पेश्या । तान्-मांसलोभात् पेशीप्रविष्टान् कृमीन् ।

**न चैनं त्वरमाणोऽन्तः सदोषमुपरोहयेत् ॥ ७७ ॥**
**सोऽल्पेनाप्यपचारेण भूयो विकुरुते यतः ।**

स०-न चैनं-व्रणमन्तः सदोषं त्वरमाणो वैद्य उपरोहयेत् । कस्मात्? इत्याह-स इत्यादि । यतो-यस्मात्, स-अन्तःस्थितदोषो व्रणो, रूढोऽपि भूयः-पुनः, स्तोकेनाप्यपचारेण विकृतिं याति ।

आ० र०-अशुद्धस्य रोपणं निषेधति-न चैनमिति ।

**रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ॥ ७८ ॥**
**हर्षं क्रोधं भयं चापि यावदास्थैर्यसम्भवात् ।**
**आदरेणानुवर्त्योऽयं मासान् षट् सप्त वा विधिः ७९**

स०-रूढेऽपि सत्यजीर्णादीन् विवर्जयेत् । [स्थैर्यं यावत् हर्षादीन् वर्जयेत् ।] अयम्-अजीर्णव्यायामव्यवायादिपरिवर्जनलक्षणो, विधिः षट् सप्त वा मासान् आदरेण-यत्नवता, अनुवर्त्यः-अनुष्ठातव्यः ।

आ० र०-रूढव्रणस्य सप्तमासावधिं नियममाह-रूढ इति । आदिशब्दात् क्रोधशोकभयादयः ।

**उत्पद्यमानासु च तासु तासु**
**वार्तासु दोषादिबलानुसारी ।**
**तैस्तैरुपायैः प्रयतश्चिकित्से-**
**दालोचयन् विस्तरमुत्तरोक्तम् ॥ ८० ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने शस्त्रकर्मविधिर्नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥**

स०-यथा,-मक्षिकाभिः कृमिनिक्षेपात् कृमिप्राबल्ये जाते चिकित्सा विहिता । तथा, अन्यास्वपि तासु तासु वार्तासु-अवस्थासु निर्दिष्टस्वरूपाभिधानासु, उत्पद्यमानासु-जायमानासु, तैस्तैः-उक्तानुक्तैः, उपायैः-साधनैः, चिकित्सेद्वैद्यः । किम्भूतो वैद्यः? दोषादिबलानुसारी,-दोषादीनां बलं दोषादिबलम्, आदिशब्दाद्देशकालादयो गृह्यन्ते, तदनुसरत्येवंविधो यो वैद्यः स । तथा, प्रयतो-यत्नपरः । तथा, उत्तरे-उत्तरतन्त्रे व्रणभङ्गविधाने, उक्त-निर्दिष्टं, विस्तरमालोचयन्-निरूपयन्, न तु यदृच्छयेति भावः । इन्द्रवज्रावृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने शस्त्रकर्मविधिर्नामैकोनत्रिंशोऽध्यायः समाप्तः ॥ २९ ॥

आ० र०-अनुक्तं स्वयमूहनीयमित्याह-उत्पद्यमानास्विति । वार्तासु-अवस्थासु । उत्तरोक्त-उत्तरस्थानोक्तम् ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
शस्त्रकर्मप्रकरणं सामस्त्येन निरूपितम् ॥ २९ ॥



# त्रिंशोऽध्यायः ।

अतोऽनन्तरं क्षाराग्निकर्मविधिरारभ्यते । यथैव हि शस्त्रेण पाटनादीनि कृत्वा तत्साध्य आमय उपक्रम्यते, तथैव क्षाराग्निभ्यामित्याह—

**अथातः क्षाराग्निकर्मविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

(गद्यसूत्रे ॥ २॥)

स०-क्षारश्चाग्निश्च क्षाराग्नी, तयोः कर्म क्षाराग्निकर्म, तस्य विधिः । शेषं पूर्ववत् । क्षारस्य बाह्याभ्यन्तरोपयोगित्वेन पूर्वमुपन्यासः ।

आ० र०-क्षाराग्निकर्मविधिमध्यायं व्याख्यातुं प्रतिजानीते-अथेति ।

**सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत् ।**
**छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ १ ॥**
**दुःखावचार्यशस्त्रेषु तेन सिद्धिमयात्सु च ।**
**अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्यते ॥ २ ॥**

स०-सर्वाणि च तानि शस्त्राण्यनुशस्त्राणि च तान्येवम्, तेषां सर्वशस्त्रानुशस्त्राणां मध्ये क्षारः श्रेष्ठो ज्यायान् । कुतोऽस्य श्रे-

१ 'व्रणमाच्छा' ट । २ 'ति । व्रणे कृमीणामौषधमाह-सुरसादिमिति । सुर' ग । ३ हेमाद्रिचन्द्रनन्दनाभ्यामपठितमिदं श्लोकार्धं सङ्ग्रहेऽपि नोपलभ्यते । ४ 'वाऽपि' आ इ घ प । ५ [ ] इति पाठः ट ठ पुस्तकयोर्नोपलभ्यते । ६ 'ण-अजीर्णव्यायामव्यवायादिपरिवर्जनलक्षणे प्रयत्नं, रक्षयेत् ।' ठ ड । ७ 'वधिनि' क ग ञ । ८ 'त् शोक' क ञ । ९ 'पि व्रणावस्थासु उत्पद्यमानासु उत्तरतन्त्रोक्तं व्रणभङ्गचिकित्सितादिकं विस्तरतः आलोचयन् प्रयतो नियतात्मा समाहितः सावधानो वैद्यश्चिकित्सां कुर्यात् । वातादिदोषाणां विचारं कुर्वन् वैद्यः । कैश्चिकित्सेदित्याह-तैस्तैरुत्तरतन्त्रकथितैर्दोषनिग्रहसमर्थैरतीवश्रेष्ठैरुपायैः साधनैरिति ।' ठ.ड ।

१ अथ क्षाराग्निकर्मविधिः सुश्रुते सू० ११।१२ अध्याययोः, अष्टाङ्गसङ्ग्रहे सू० ३९।४० अध्याययोश्चास्ति वर्णितः, चरके तु न वर्णितः । २ 'न्तरप्रयोगेण च पू' ट । ३ क्षारस्य "क्षरणात् क्षणनाद्वा क्षारः" इति सुश्रुते निरुक्तिरुक्ता । ४ 'सिद्धिं न यात्सु' आ.घ प । ५ 'स्त्राणुश' ट । ६ 'यानिति । यत्' ट ।

ष्ठता? इत्याह–यत्–यस्मात्, बहूनि छेद्यभेद्यादीनि कर्माण्यसौ करोति। आदिशब्देन लेखनपाटनादिपरिग्रहः। विषमेष्वपि–देहदेशेषु। दुःखावचार्यशस्त्रेषु–नासार्शोऽर्बुदादिषु, दुःखेनावचारयितु शक्यं शस्त्रं येषु तेषु। अपिशब्दात् समेष्वपि देहदेशेषु युज्यते। तेन च–शस्त्रेण च, सिद्धिमयात्सु–असिध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु । किम्भूतेषु? अतिकृच्छ्रेषु–अतिदुःखसाध्येषु दुष्टव्रणादिषु। चशब्दादन्येष्वपि रोगेष्वसौ क्षारो युज्यते–योग्यः सम्पद्यते, ततोऽपि हेतोः क्षारः श्रेष्ठः । यच्चेति। यस्माच्च क्षारः पानविषयेऽपि युज्यते शरीरान्तःस्थितरोगशान्त्यै। अपिशब्दाद्बाह्येऽपि बाह्यस्थितरोगशान्त्यै लेपे स युज्यते।

**आ० र०–तन्त्रादौ क्षारकर्मविधिः । तत्र क्षारप्रशंसामाह–सर्वशस्त्रानुशस्त्राणामिति । सङ्ग्रहे तु (सू अ ३९)–"क्षारो हि नानौषधिसमवायनिर्वृत्तेः सर्वरसाधिष्ठानः, कटुकलवणरसभूयिष्ठस्तीक्ष्णो दहनः पाचनोऽवदारणो विलयनः शोधनो रोपणः कृम्यामममेदोविषापहः सर्वशस्त्रानुशस्त्राणां च वरिष्ठः, छेदनभेदनपाटनलेखनकरणात्। यत् सम्बाधावकाशजेषु दुःखावचारणीयशस्त्रेषु नासार्शोऽर्बुदादिषु शस्त्रेण चासिध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु प्रयुज्यते। स द्विधा बाह्यान्तःपरिमार्जनभेदेन।" इति ।**

अधुना क्षारस्य पेयलेपविषयविभागं दर्शयति—

**स पेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादिषु ।**

स०–स –क्षारः, अर्शःसु विषये पेयः । तथाऽग्निसादे, तथाऽश्मर्यां, गुल्मादिषु च। आदिग्रहणादानाहशूलादिषु च।

**आ० र०–अन्तःपरिमार्जनस्य विषयमाह–स पेय इति। सङ्ग्रहे तु (सू अ ३९)–"स यथार्हमेवोपदेक्ष्यते।" इति।**

**योज्यः साक्षान्मषश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ॥ ३ ॥**
**भगन्दरार्बुदग्रन्थिदुष्टनाडीव्रणादिषु ।**

स०–स क्षारो योज्यः साक्षात्–लेपनेन, मषादिषु। आदिग्रहणात् चर्मकीलवर्त्मतिलकादिपरिग्रहः ।

**आ० र०–बहिःपरिमार्जनस्य विषयमाह–योज्य इति।**

**न तूभयोऽपि योक्तव्यः पित्ते रक्ते चलेऽबले ॥ ४ ॥**
**ज्वरेऽतिसारे हृन्मूर्धरोगे पाण्ड्वामयेऽरुचौ ।**
**तिमिरे कृतसंशुद्धौ श्वयथौ सर्वगात्रगे ॥ ५ ॥**
**भीरुगर्भिण्यृतुमतीप्रोद्वृत्तफलयोनिषु ।**
**अजीर्णेऽन्ने शिशौ वृद्धे धमनीसन्धिमर्मसु ॥ ६ ॥**
**तरुणास्थिसिरास्नायुसेवनीगलनाभिषु ।**

**देशेऽल्पमांसे वृषणमेढ्रस्रोतोनखान्तरे ॥ ७ ॥**
**वर्त्मरोगादृतेऽक्ष्णोश्च शीतवर्षोष्णदुर्दिने ।**

स०–पानलेपनभेदेन द्विविधोऽपि क्षारः पित्तादौ न योक्तव्यः । चले–वाते। अबले–प्राणहीने। [ज्वरे, अतिसारे, हृद्रोगे, मूर्धरोगे, पाण्ड्वामये–पाण्डुरोगे, अरुचौ–अरोचके, कृतसंशुद्धौ–कृतवमनविरेके, श्वयथौ सर्वगात्रगे–सर्वाङ्गे शूने, तथा भीरौ, गर्भिण्याम्, ऋतुमत्याम्,] प्रोद्वृत्तफलयोनि–वक्ष्यमाणा उत्तरतन्त्रे गुह्यरोगविज्ञाने। प्रकर्षेणोद्वृत्तं फल–रजोरूपं, यस्या योनेः सा प्रोद्वृत्तफलयोनिः । रज एव फलं गर्भाख्यफलसाधनोपायत्वात् । प्रोद्वृत्तफलयोनेर्लक्षणमुक्तम्, यथा (हृ उ अ ३३।३३)–"वेगोदावर्तनाद्योनिं प्रपीडयति मारुतः । सा फेनिलं रजः कृच्छ्रादुदावृत्तं विमुञ्चति ॥ इयं व्यापदुदावृत्ता" इत्यादि। तथा शिशौ–बाले, वृद्धे–गतवयसि। तथा धमन्यादिषु शरीरदेशेषु, देशेऽल्पमांसे–स्वल्पपिशिते। तथा, वृषणादिषु शरीरदेशेषु। तथा, अक्ष्णोः–नेत्रयोः, वर्त्मरोगं वर्जयित्वाऽन्यत्र क्षारो न प्रयोज्यः । वर्त्मरोगे तु क्षारो योज्य एव । शीतवर्षोष्णा इति हेमन्तशिशिरप्रावृड्ग्रीष्माः, दुर्दिनं–मेघाद्याकुलदिवसम्, एषु क्षारो न योज्यः ।

**आ० र०–द्वयोरपि क्षारयोर्निषेधमाह–न त्विति। चले–वाते । अबले–दुर्बले । प्रोद्वृत्ता–स्वस्थानविपर्ययं प्राप्ता, फलयोनिः–गर्भाशयो, यस्याः सा तथा । तरुणास्थि–नासाद्यस्थि ।**

अधुना क्षारक्रियामाह—

**कालमुष्ककशम्याककदलीपारिभद्रकान् ॥ ८ ॥**
**अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान् ।**
**इन्द्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ॥ ९ ॥**
**काकजङ्घामपामार्गमग्निमन्थाग्नितिल्वकान् ।**
**सार्द्रान् समूलशाखादीन् खण्डशः परिकल्पितान् ॥ १० ॥**

---

१ 'सिद्धि न यात्सु' ट । २ 'नामौषधस' स स । ३ 'क्ष्णोष्णो द' स स । ४ 'नो विदा' न स स । ५ 'धनारोपण' ग । ६ 'यतश्च स' स द्व । ७ 'द्विविधो बा' स स । ८ 'स्वयमे' ग घ । ९ 'रापचीग्र' अ आ इ.ञ । १० 'बलेऽबले' इत्यशुद्धः पाठः । ११ 'गात्रजे' आ ।

१ 'वृषणे मेढ्रे' अ आ । २ 'शक्ति पराक्रमः प्राणो' इत्यमरः । ३ [ ] इति पाठो लिखितपुस्तकेषु नोपलभ्यते। ४ "उद्वृत्तापवृत्तफलयोनयः" इति सुश्रुतपाठे 'उद्वृत्तापवृत्तशब्दौ फलयोनिभ्यां सह प्रत्येकं सम्बध्येते। अत्र फलं–अण्डम्, योनिः–गर्भाशयः, उद्वृत्तफलः–स्थानादूर्ध्वगताण्डः, अपवृत्तफलः–स्थानात् स्रस्ताण्डः, उद्वृत्तयोनिः–स्थानादूर्ध्वगतयोनिः, अपवृत्तयोनिः–स्थानात् स्रस्तयोनिः । अन्ये तु फलयोनिशब्देन समुदितेन गर्भाशयमाचक्षते। तत्रायमर्थः,–उद्वृत्तफलयोनिः–स्थानादूर्ध्वगतगर्भाशया, अपवृत्तफलयोनिः–स्थानात्स्रस्तगर्भाशयेत्यर्थः। अपरे तु फलशब्दं रजसि वर्तयन्ति। कुतः? गर्भस्य फलसाधनत्वात्। तेन यस्य योनेः सकाशात् फलं–रजः, उद्वृत्तं–ऊर्ध्वगतं, अपवृत्तं–अधोगतं, सा उद्वृत्तापवृत्तफलयोनिः।' इति डल्हणव्याख्या। 'केचित्तु फलशब्देनेहात्र ग्राहयन्त्युपचारात्, गङ्गायां घोष इतिवत्' इति हाराणचन्द्रः । ५ 'स फे' ठ. । ६ 'मेघव्याकुल दि' ट ।

कोशातकीश्चतस्रश्च शूकं नालं यवस्य च ।
निवाते निचयीकृत्य पृथक् तानि शिलातले ॥ ११ ॥
प्रक्षिप्य मुष्ककचये सुधाश्मानि च दीपयेत् ।
ततस्तिलाना कुंतलैर्दग्ध्वाऽग्नौ विगते पृथक् ॥ १२ ॥
कृत्वा सुधाश्मना भस्म द्रोणं त्वितरभस्मनः ।
मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ॥ १३ ॥
गालयेदर्धभारेण महता वाससा च तत् ।
यावत्पिच्छिलरक्ताच्छस्तीक्ष्णो जातस्तदा च तम् १४
गृहीत्वा क्षारनिष्यन्दं पचेल्लौह्यां विघट्टयन् ।
पच्यमाने ततस्तास्तिस्ताः सुधाभस्मशर्कराः ॥ १५ ॥
शुक्तीः क्षीरपकं शङ्खनाभीश्चायसभाजने ।
कृत्वाऽग्निवर्णान्बहुशः क्षारोत्थे कुडवोन्मिते ॥१६॥
निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत् ।
श्लक्ष्णं शकृद्दक्षशिखिगृध्रकङ्ककपोतजम् ॥ १७ ॥
चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च ।
परितः सुतरां चातो दर्व्या तमवघट्टयेत् ॥ १८ ॥
सबाष्पैश्च यदोत्तिष्ठेद्बुद्बुदैर्लेहवद्घनः ।
अवतार्य तदा शीतो यवराशावयोमये ॥ १९ ॥
स्थाप्योऽयं मध्यमः क्षारो

**स०**–कालमुष्कको–मोक्ष । अश्वकर्ण –कुशिक । महावृक्ष –स्नुही । आस्फोतो–गिरिकर्णिका । वृक्षको–नन्दीवृक्ष । इन्द्रवृक्ष –कुटज । पूतीक –पूतीकरञ्ज । नक्तमाल –करञ्ज । अश्वमार –करवीर । कालमुष्ककादीन् मूलादिसहितान् खण्डखण्ड कल्पितान्–परश्वादिना छिन्नान् । तथा कोशातकीश्चतस्रो, यवस्य च शूक नाल–यवस्य शूको नालोऽवयवो भवति, ताश्च निवाते देशे शिलातले–शिलापृष्ठे, पृथक् मुष्ककादीन्निचयीकृत्य, मुष्ककचये च सुधाश्मानि–सुधाशर्करा , प्रक्षिप्य दीपयेत्–ज्वालयेत् । कै ? तिलाना कुंतलै –कॉण्डै । सुधाश्मानि चेति नपुसकत्व चिन्त्यम् । पृथग्दीपने चैषामचिन्त्यप्रभाव । एव तानि दग्ध्वाऽनन्तरमग्नौ विगते सुधाश्मना भस्म द्रोण पृथक्कृत्वा–व्यस्त सस्थाप्य, इतरभस्मन –शम्याकादिद्रव्यभस्मनो, द्रोणमादाय–गृहीत्वा । किम्भूत द्रोणम् ? मुष्कक उत्तर –अधिको, यस्य तमादाय, जलमूत्रयो प्रत्येकमर्धभारेण तत्–भस्म, गालयेत् । कथ गालयेत् ? महता–विस्तीर्णेन, वाससा । कियन्त कालम् ? यावत् क्षारनिष्यन्द –क्षारस्राव , पिच्छिल रक्ताच्छस्तथा तीक्ष्णो जात –सम्पन्न , तदा–तस्मिन्काले, तं–क्षारनिष्यन्द, गृहीत्वा लौह्या स्नेहपाकविधिना पचेत् । किं कुर्वन् ? दर्व्या–खजकसञ्ज्ञया, विघट्टयन्–आलोडयन् । तत –अनन्तर, तस्मिन्–क्षारनिष्यन्दे, पच्यमाने ता –प्राक् स्थापिता सुधाभस्मशर्करा , [ या मुष्ककमध्ये प्रक्षिप्य दत्ता , ] तथा शुक्ती –प्राणिविशेषास्थीनि, तथा क्षीरपक–प्रलेपक (?) खटिकासञ्ज्ञम्, तथा शङ्खनाभीश्चाग्निवर्णान् कृत्वा, क्षारोत्थे–क्षारनिष्यन्दे, कुडवोन्मिते–पलाष्टकपरिमाणे कथितक्षारोत्थे, आयसभाजने–तीक्ष्णलोहपात्रगते, बहुश –बहून् वारान् , निर्वाप्य–शीतीकृत्य, तेनैव–क्षारनिष्यन्देन, दृषदि पिष्ट्वा तस्मिन्पच्यमाने क्षारनिष्यन्दे, प्रतीवाप विनिक्षिपेत् । द्रवद्रव्ये द्रव्यान्तरं श्लक्ष्णपिष्ट दीयते स प्रतीवाप उच्यते । न च केवलमेष एव प्रतीवापत्वेन क्षेप्तव्यो यावत् दक्षादीनामपि शकृत् श्लक्ष्ण कृत्वा विनिक्षिपेत् । दक्ष –कुक्कुट । [ शिखी–मयूर । गृध्र –श्येन । कङ्ककपोतकौ–पक्षिणौ । ] तथा चतुष्पदा–गवादीना, तथा पक्षिणा पित्त, तथा हरितालमनोह्वालवणानि च [ अल–हरितालम् । मनोह्वा–मन शिला । लवण–सैन्धवादि । एतानि ] श्लक्ष्णानि कृत्वा प्रतीवाप विनिक्षिपेत् । अत –प्रतीवापादनन्तर, परित –समन्तात्, दर्व्या तमवघट्टयेत् । सबाष्पैरित्यादि । यदा–यस्मिन् काले, स क्षारनिष्यन्द सबाष्पै –सोष्मभि , बुद्बुदैर्घनो लेह इवोत्तिष्ठेत्–उद्गच्छेत्, यदा [ सान्द्रतया पच्यमान सन् लेहतुल्यो ] दर्वीप्रलेपी स्यादित्यर्थ । तदा–तस्मिन् काले, अयोमये–लोहभाण्डे, स्थितो यवराशौ स्थाप्य । किं कृत्वा ? अवतार्य चुल्लीत , तथा शीत सन् । अय मध्यम क्षार ।

**आ० र०**–बहिः परिमार्जनस्य दहनविधिमाह–कालमुष्ककेति । सङ्ग्रहे तु ( सू. अ ३९ )–"अथ बहिः परिमार्जनस्त्रिविधो मध्यो मृदुस्तीक्ष्णश्च । तस्य पाकविधि । शरदि शुचिरुपोषित शुक्लवासा प्रशस्तेऽहनि प्रशस्तप्रदेशजातं मध्यवयसमनुपहत महान्त कालमुष्कक सुरापललसुमनोक्षतादिभिश्चतुर्दिश बलिं दत्त्वा प्रदक्षिण चाभ्यर्च्यैनमधिवासयेत् । दैवतेभ्यो नमस्तेभ्यो निवसन्तीह ये श्रिता । गन्तुमर्हन्त्यसक्रुद्धास्त्यक्त्वेम वा समर्पयन् ॥ भेषजार्थे ग्रहीष्यामि सर्वप्राणभृतामिमम् । वृक्ष न लोभान्न क्रोधाद् ब्राह्मणार्थे विशेषत ॥ इति । अथापरेद्युस्तत्र यद्यद्भुत वैकृत वा किञ्चिन्न पश्येत् ततो युगमात्रमारूढे सवि-

१ 'शूकनाल' आ ग घ प । २ 'कुन्तालै' घ । 'कुतिलै' अ ठ । ३ 'ण चेतर' ग प । ४ 'नाभीश्चा' ग । ५ 'क्षाराच्छे' ड प । ६ 'यदा तिष्ठे' इ अ । ७ 'तत ' अ इ घ ठ । ८ 'शीते' आ ठ । ९ 'कुन्तलै ' ट । 'कुन्तालै –पलालै का' इति क्वचित् । १० 'तिलकाण्डै ' ठ । ११ 'द्रव्यात्, द्रो' ट. ।

१ 'कुण्डलसञ्ज्ञया' इति क्वचित् । २ [ ] एतच्चिन्हान्तर्गता' पाठा ट ठ पुस्तकयोर्नोपलभ्यन्ते । ३ 'क–वराटिकासञ्ज्ञम्' ट । 'क्षीरपाको–जलशुक्ति ' इति डल्हण । ४ खटिका–'खडू' 'खर्रा' इति च प्रसिद्धा । ५ "द्विगुण योजयेदार्द्रं कुडवादि तथा द्रवम् ।" ( हृ. क अ ६।२३ ) इत्युक्त्वा कुडवशब्देन पलाष्टकपरिमित एव क्षारद्रवो ग्राह्य । ६ 'हि प्रमार्जे' क अ. । ७–८ 'स्तदेश' '-व्यमवय' स द्व । ९ 'पलसु' क अ स मू । १० 'दद्याद्वा प्र' घ प. 'लि कृत्वा' स स । ११ 'समर्पयेत्' क अ । 'सपर्ययम्' स मू । 'वासमन्ययम्' स स । १२ 'जार्थं' क.स द्व. ।

तरि ब्राह्मणान् वाचयित्वा त पादप पूर्वाग्रमुत्तराग्र वा पातयेत् । एव च पारिभद्रकादिषु ।'' इति । कालमुष्कक – कृष्णो मोक्षक । महावृक्ष.–स्नुही । आस्फोत –कोविदार । वृक्षक –कुटज. । इन्द्रवृक्ष –अर्जुन । परिकल्पितान्–छिन्नान् । चतस्र कोशातकी –क्ष्वेडो धामार्गव पटोली देवदाली च । निचयीकृत्य–पुञ्जीकृत्य । पृथक्–प्रत्येकम् । तेषु पुञ्जेषु मध्ये य कालमुष्ककपुञ्जस्तत्र सुधाश्मानि प्रक्षिपेत् । सुधा–प्रासादादिधवलीकरण द्रव्यम्, तत् येभ्यो दग्धेभ्यो जायते तानि सुधाश्मानि । तत सर्वान् पुञ्जान् तिलाना कुंतलैर्दीपयेत् । समूलनाल. शुष्कतिल –कुंतलम् । दीपन–वह्निना प्रज्वालनम् ।

गालनविधिमाह–दग्ध्वेति । दग्ध्वा–भस्मीकृत्य । अग्नौ विगते–शान्ते सति । सुधाश्मना भस्म पृथक्कृत्वा, इतरद्रव्यभस्मनो द्रोण, मुष्ककभस्मना उत्तर–सपादता नीतम्,–शम्याकादीना समाना चत्वार आढका , मुष्ककस्यैक आढक इत्यर्थ. । जलस्यार्धभारो मूत्रस्यार्धभार इत्युभयोर्भारेणालोड्य महता वस्त्रेण गालयेत् । पुन पुनस्तेनैव परिस्रावेणालोड्य यावत्पिच्छिलो रक्तोऽच्छस्तीक्ष्णश्च परिस्रावो भवति ।

पाकविधिमाह–तदा चेति । तदा तं क्षारनिष्यन्द गृहीत्वा, क्षार पक्त्वा(?) लौह्यां–लोहपात्रे, पचेत् । ता –या मुष्ककभस्मन पृथक् कृता । क्षीरपक–खटिका । शङ्खनाभि –शङ्खस्यावर्त । बहुश –बहून् वारान्, त्रीणि तापनानि त्रीणि निर्वापणानीत्यर्थ । पेषणस्य क्षारोदकस्य मानोक्त्या पेष्यमानमनुक्तमपि कल्प्यम् । दक्षादीना पक्षिणा शकृत्–पुरीषम् । चतुष्पदा पक्षिणा च पित्तम् । अल–हरितालम् । दक्षादिविष्ठादिक श्लक्ष्ण चूर्ण कृत्वा निक्षिपेत् । अत –आवापानन्तर, सुतरां परितो दर्व्याऽवघट्टयेत् । लेहवद्घन.–लेह इव सान्द्र । अयोमये–लोहपात्रे, विनिक्षिप्य यवराशिमध्ये स्थाप्य । अय मध्यम क्षार , मृदुतीक्ष्णयोर्वक्ष्यमाणत्वात् ।

**न तु पिष्ट्वा क्षिपेन्मृदौ ।**
**निर्वाप्यापनयेत्तीक्ष्णे पूर्ववत् प्रतिवापनम् ॥ २० ॥**
**तथा लाङ्गलिकादन्तिचित्रकातिविषावचाः ।**
**स्वर्जिकाकनकक्षीरिहिङ्गुपूतीकपल्लवाः ॥ २१ ॥**
**तालपत्री बिडं चेति, सप्तरात्रात्पर तु सः ।**
**योज्यः**

**स०**–मृदौ क्षारे सुधादीनि निर्वाप्य–तस्मिन्निष्यन्दे प्रक्षिप्यैव, अपनयेत्–विसर्जयेत्, न तु पिष्ट्वा विनिक्षिपेत् । तीक्ष्णे क्षारे पूर्ववत्–मध्यमक्षारतुल्य, प्रतिवापन–निर्वाप्य पिष्ट्वा विनिक्षिपेदिति । न चैतावदेवात्र प्रतिवापनमित्याह–तथेत्यादि । लाङ्गलिकादीनि बिडपर्यन्तानि च तत्र प्रतिवाप विनिक्षिपेत् । सप्तरात्रात् पर–अनन्तर, स –क्षारो, योज्य ।

**आ० र०**–मृदुतीक्ष्णक्षारयोर्विशेषमाह–न त्विति । मृदौ क्षारे मध्यमवत्सर्वम् । आवापे तु विशेष । निर्वाप्यापनयेत्, न तु पिष्ट्वा क्षिपेत् । निर्वापणद्रवमेव क्षिपेदित्यर्थ । दक्षविष्ठादिक च क्षिपेत् । तीक्ष्णेऽपि सर्व मध्यमवत् । लाङ्गलिकाद्यावापोऽधिक । पूतीकपल्लवा –करञ्जपत्राणि । तालपत्री–मुशली । स –त्रिविधोऽपि क्षार, सप्तरात्रात्पर योज्य । सप्तरात्र यवराशौ स्थाप्य इत्यर्थ ।

इति क्षारत्रैविध्यमुक्त्वा तद्विषय निर्दिदिक्षुराह—

**तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥ २२ ॥**
**मध्येष्वेष्वेव मध्योऽन्य. पित्तास्रगुदजन्मसु ।**
**बलार्थं क्षीणपानीये क्षाराम्बु पुनरावपेत् ॥ २३ ॥**

**स०**–तीक्ष्ण क्षारो वातश्लेष्ममेद समुत्थेष्वर्बुदादिषु योज्य । महत्स्वेव योज्य , मध्येषु क्षारान्तरविधानात् । आदिग्रहणादन्येष्वपि तत्साध्येषु रोगेष्वय क्षारो योज्य । मध्येष्वेष्वेवेति । एष्वेव–अनिलकफमेदोजेषु विकारेष्वर्बुदादिषु, मध्येषु–नोत्कृष्टेषु नापि हीनेषु, मध्य क्षारो योज्य । अन्य इति । अन्यो–मृदु क्षार, पित्तरक्तसमुत्थेष्वर्श सु योज्यो, न तीक्ष्णमध्यौ क्षारौ । बलार्थमित्यादि । क्षीणपानीये–घनीभूते क्षारे, बलार्थ–बलाधानार्थ, पुन –भूय, क्षाराम्बु–क्षारविधिस्रुत जलम्, आवपेत्–दद्यात् ।

**आ० र०**–क्षारत्रये विषयत्रयमाह–तीक्ष्ण इति । तत्र कफवातमेदोजेषु क्षारसाध्येषु तीक्ष्णेषु तीक्ष्णो योज्य । ते(ए)ष्वेव मध्येषु मध्यम । पित्तास्रजन्मसु क्षारसाध्येषु अन्यो–मृदु । तथा, गुदजन्मसु–अर्श सु, कफवातजेष्वपि । क्षीणपानीये क्षारेऽन्यत् क्षाराम्बु निक्षिपेत् ।

अधुना क्षारगुणानाह—

**नातितीक्ष्णमृदुः श्लक्ष्णः पिच्छिलः शीघ्रगः सितः ।**
**शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् २४**
**क्षारो दशगुणः शस्त्रतेजसोरपि कर्मकृत् ।**
**आचूषन्निव संरम्भाद्गात्रमापीडयन्निव ॥ २५ ॥**
**सर्वतोऽनुसरन् दोषानुन्मूलयति मूलतः ।**
**कर्म कृत्वा गतरुज. स्वयमेवोपशाम्यति ॥ २६ ॥**

**स०**–[ क्षारे नातितीक्ष्णादयो दश गुणा भवन्ति । ] शीघ्र

१ 'णानर्चयित्वा' ग । 'णान् स्वस्ति वाच' ञ । २ 'तददमभ्यो० यत इति ता' क ञ । ३ 'कुन्त' क घ ञ । ४ 'त्यक्त्वा' क ग ञ । ५ 'बहुवा' ग ञ । ६ 'दक्षवि' ग घ प । ७ 'आवपनान' क ञ. । ८ 'विडङ्ग च सप्त' आ । ९ 'र्वाप्यापसारयेत्, न तु' ट.ठ ।

१ 'चेतदेवा' ट । २ 'मध्येष्वेव च मध्यो' अ.इ घ.ङ । 'मध्येष्वेषु च मध्यो' ग । ३ 'त्तासृग्गुद' आ इ । ४ 'रोऽनिलश्ले' ट. । ५ 'गेष्वेव क्षा' ट. । ६ 'त्रयस्य विषयमाह' क ञ । ७ 'सु कफ' क ग ञ । ८ 'तीक्ष्णो मृदु' आ क ग घ.ञ.ठ. । ९ [ ] इति पाठ ट ठ पुस्तकयोर्नोपलभ्यते ।

गच्छति-आशु व्याप्नोतीति शीघ्रग । शिखरी-उपरिष्टात्पि-टिकावान्।[1] सुखेन-काञ्जिकादिना, निर्वाप्यते-शीतीक्रियते, इति सुखनिर्वाप्य । विष्यन्दोऽस्यास्तीति विष्यन्दी-स्रुतिमान्, न विष्यन्दी-न स्रुतिमान्। न चातिरुक्-न चार्तिमान्। नातितीक्ष्णादयो दश गुणा यस्य स दशगुण क्षार । सङ्ग्रहे चास्य दशैव दोषा गदिता । तद्यथा ( सू अ ३९ )-"अत्युष्णोऽतिशीतोऽतितीक्ष्णोऽतिमृदुरतितनुरतिघनोऽतिपिच्छिलोऽतिविसर्पी[2][3] हीनौषधो हीनपाकश्चेति ।" इति । शस्त्रस्य यत्कर्म-छेदनपाटनलेखनादिक, तथा तेजसो-वह्नेरपि, यत्कर्म-व्याध्युपशमलक्षण, तत्करोति।[4] अधुना त्वन्तरानुभवद्वारेण क्षारस्य गुणान्निर्दिशति-आचूषन्निवेत्यादि। सरम्भात्-क्षोभात्, गात्रमाचूषन्निव, तथाऽऽपीडयन्निव, तथा सर्वत-सर्वस्मिन्, अनुसरन्-गच्छन्, दोषान्-तत्साध्यान्, मूलत उन्मूलयति-[5][6] उद्धरति। तथा, कर्म-स्वीय दाहादिक, कृत्वा गतरुज-पुरुषस्य, स्वयमेव-यत्न विनैव, उपशाम्यति ।

**आ० र०-क्षारगुणानाह-नातितीक्ष्णमृदुरिति। शीघ्रग - शीघ्रव्यापी। सित.-श्वेत । शिखर-चिरसस्थस्य द्रव्यस्योपरि पिण्डिका, तद्वान्-शिखरी। सुखेन निर्वाप्य-शीतता नेय । न विष्यन्दी-क्लेद नोत्पादयति। यच्छस्त्रेणाग्निना च कार्यं तत् क्षार करोति। आचूषन्-अन्तर्गत समाकर्षन्। आपीडयन्-सङ्कोचयन् । सरम्भात्-वेगेन। सङ्ग्रहे तु ( सू अ ३९ )-"दश क्षारगुणा दशैव च दोषा । तद्यथा,-अत्युष्णोऽतिशीतोऽतितीक्ष्णोऽतिमृदुरतितनुरतिघनोऽतिपिच्छिलोऽतिविसर्पी हीनौषधो हीनपाकश्चेति ।" इति ।**[7][8][9]

**क्षारसाध्ये गदे छिन्ने लिखिते स्रावितेऽथवा ।**
**क्षारं शलाकया दत्त्वा प्लोतप्रावृतदेहया ॥ २७ ॥**[10]
**मात्राशतमुपेक्षेत**

**स०**-क्षारसाध्ये व्याधावर्शोऽर्बुदादौ छेदादौ [ छिन्ने-द्विधाकृते, लिखिते-शस्त्रेण विघृष्टे, स्राविते-प्रच्छाद्य निर्हृत शोणिते, ][11] कर्मणि कृते क्षारो योज्यो, नाकृते छेदादौ, इति क्षारस्य विषयो दर्शित । क्षार शलाकया दत्त्वा मात्राशतमुपेक्षेत, न काञ्जिकादिना निर्वापण कार्यमित्यर्थ । किम्भूतया शलाकया? प्लोतेन-चैलखण्डेन, प्रावृत-स्थगितो, देह-विग्रहो[12] यस्या।

**आ० र०-अथ क्षारप्रयोगविधि. । तत्र सङ्ग्रहे ( सू अ ३९ )-"तत्र क्षारकर्मण्युपहरेत् पिचुवर्तिशलाकादर्व्यग्लिकघृतमधुशुक्ततुषोदकमस्तुक्षारोदकशीतप्रदेहशयनासनादीनि । अथ क्षारार्हस्योपविष्टस्य सविष्टस्य वा परिचारकोपगृहीतस्य" इति । क्षारप्रयोगमाह-क्षारसाध्य इति ।**[1][2][3][4][5]

**तत्रार्शःस्वावृताननम् ।**
**हस्तेन यन्त्रं कुर्वीत**

**स०**-तत्र क्षारसाध्येष्वर्श सु क्षारपातन कृत्वा मात्राशत यावत्तावद्धस्तेन यन्त्रमावृतानन-छादितमुख, कुर्यात्।

**आ० र०-अर्श सु विशेषमाह-तत्रार्श स्विति । हस्तेनावृताननं-पाणिना मुख पिहितम्।**[6]

**वर्त्मरोगेषु वर्त्मनी ॥ २८ ॥**
**निर्भुज्य पिचुनाऽऽच्छाद्य कृष्णभागं विनिक्षिपेत् ।**
**पद्मपत्रतनुः क्षारलेपो, घ्राणार्बुदेषु च ॥ २९ ॥**[7]

**स०**-क्षारसाध्येषु वर्त्मरोगेषु वर्त्मनी निर्भुज्य-कुटिलीकृत्य, तत क्षारस्पर्शपरिहाराय पिचुना-कार्पासादिमयेन, कृष्णभाग-तारकप्रदेश, आच्छाद्य क्षार विनिक्षिपेत्। तत्र च पद्मपत्रतनु क्षारलेपो देय, न गुदार्श स्विव घन । पद्मपत्रमिव तनुरिति "उपमानानि सामान्यवचनै" इति समास । घ्राणार्बुदेषु च पद्मपत्रतनु क्षारलेपो योज्य ।

**आ० र०-वर्त्मरोगेषु विशेषमाह-वर्त्मरोगेष्विति । वर्त्मनी निर्भुज्य-उद्वृत्तता नीत्वा, पिचुना कृष्णभागमाच्छाद्य वर्त्मरोगेषु क्षार विनिक्षिपेत्।**

कथ तत्र लेपो देय ? इत्याह—

**प्रत्यादित्यं निषण्णस्य समुन्नम्याग्रनासिकाम् ।**
**मात्रा विधार्यः पञ्चाशत्**[8][9]

**स०**-प्रत्यादित्य-रविसम्मुखं, निषण्णस्य-सस्थितस्य। तथा, अग्रे नासिका-अग्रनासिका, तामुन्नम्य-उत्क्षिप्य । कियन्त काल लेपो धार्य ? इत्याह । मात्रा पञ्चाशद्विधार्य । वर्त्मसु चाल्पतरा मात्रा, स्थानस्य सुकुमारत्वात्।

**आ० र०-घ्राणार्बुदेषु विशेषमाह-घ्राणार्बुदेष्विति । अग्रनासिका-नासाग्रम्।**

**तद्वदर्शसि कर्णजे ॥३०॥**

**स०**-कर्णजेऽर्शसि तद्वत्-तेन घ्राणार्बुदेन तुल्यम्, स एव पद्मपत्रतनु क्षारलेपस्ता एव पञ्चाशन्मात्रा धार्य ।

**आ० र०-कर्णार्श.सु विशेषमाह-तद्वदर्शसीति । तद्वत्-नासार्बुदवत् ।**

**क्षारं प्रमार्जनेनानु परिमृज्यावगम्य च ।**[10]
**सुदग्धं घृतमध्वक्तं तत्पयोमस्तुकाञ्जिकैः ॥ ३१ ॥**

१ 'टिकोत्थानम्। सु' ठ । २ 'दुरतिघनोऽतिपिच्छिल कृच्छ्रनिर्वाप्यो विसर्पी' ट । ३ 'लो विस' स द्व क । ४ 'मे-तत्साध्यव्या' इति क्वचित्। ५ 'ति। तथा' ट ठ । ६ 'य कृत्वा' ट ठ । ७ 'पिटिका' क घ ञ प । ८ 'त रसमाकर्षयन्' घ प । ९ 'रस्य तु' स द्व । १० 'तद्वावित' अ इ ञ । ११ [ ] इति पाठ ट ठ पुस्तकयोर्नोपलभ्यते। १२ 'परिग्रहो' ठ ।

१ 'लिकाघृ' स द्व । २ 'क्तसुखोदक' ग । ३ 'स्तुक्षीरो' स द्व । ४ 'शीतोपदे' स मू । ५ 'वाऽऽसपरिचारकगृ' स द्व । ६ 'मुखे पि' क घ ञ प । ७ 'तु' आ इ घ ठ । ८ 'न्नस्याग्र' इ घ ञ प । ९ 'धार्य' अ ठ । 'धार्या.' इ ट । १० 'नानु प' अ ।

**निर्वापयेत्ततः साज्यैः स्वादुशीतैः प्रदेहयेत् ।**
**अभिष्यन्दीनि भोज्यानि भोज्यानि क्लेदनाय च ३२**

**स०**–अनु–पश्चात् क्षारलेपदाननियमितात्कालादनन्तरं, क्षार प्रमार्जनेन–चैलादिना, परिमृज्य–शोधयित्वा, सुदग्धं क्षारस्थानमर्शोर्बुदाद्यधिष्ठानमवगम्य–सम्यग्दाहलक्षणेन ज्ञात्वा, तत्–क्षारदग्ध स्थान, घृतमनुलेपित कृत्वा पय प्रभृतिभिर्निर्वापयेत्–शीतीकुर्यात् । तत –अनन्तरं, स्वादुशीतैर्द्रव्यै –मधुयष्टिकादिभि , साज्यै –सघृतै , लेपयेत् । अभिष्यन्दीनि–स्रुतिरूपश्लेष्मकारीणि, भोज्यानि–अन्नपानानि माषदध्यादीनि, भोज्यानि–भक्षयितव्यानि । किमर्थम्? क्लेदनाय–क्षारदग्ध स्थानविशरणाय । यत क्षारदग्ध क्लिन्न सच्छीर्यते ।

**आ० र०**–क्षारप्रयोगानन्तर कृत्यमाह–क्षारमिति । सुदग्धमवगम्य–सम्यग्दग्ध ज्ञात्वा, पयोमस्त्वादिभि सिञ्चेत् । पयोमस्तुकाञ्जिकाना विकल्प ।

**यदि च स्थिरमूलत्वात्क्षारदग्धं न शीर्यते ।**
**धान्याम्लबीजयष्ट्याह्वतिलैरालेपयेत्ततः ॥ ३३ ॥**
**तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।**

**स०**–यदि च क्षारदग्धमभिष्यन्दिभिरपि भोज्यैरुपयुक्तै[2] स्थिरमूलत्वात्–दृढमूलत्वात्, तद्रोगाधिष्ठान न शीर्यते, ततो धान्याम्लस्य बीज–अवयवविशेष , तेन तथा मधुकतिलाभ्या चालेपयेत् । तिलकल्को मधुयष्टियुक्तो घृतान्वितो व्रणस्य रोपण ।

**आ० र०**–सुदग्धेऽप्यशीर्णे कृत्यमाह–यदि चेति । धान्याम्लबीज–धान्याम्लतलस्थं[3] द्रव्यम् । सङ्ग्रहे तु ( सू अ ३९ )–"सुवर्णक्षीरियुक्तैर्वा त्रिवृद्विडङ्गसारवद्भिर्वा[4] तिलैरालेपयेत् । मालतीवृषाङ्कोटनिम्बास्फोतपटोलीकरवीरपत्र क्वाथो[5] वा व्रणप्रक्षालनम् । एषामेव च कल्कक्वाथे सिद्ध सर्पिस्तैलं वा रोपणम् । नागपुष्पमञ्जिष्ठाचन्दनतिलपर्णिकासु वा यथाव्याधिदोष च व्रणवदुपक्रमेत् ।" इति ।

**पक्वजम्ब्वसितं सन्नं सम्यग्दग्धम्**

**स०**–पक्वजम्बूफलवदसित–कृष्ण, तथा सन्न–निम्नं, सम्यग्दग्ध स्थान विद्यात् ।

**आ० र०**–सुदग्धलक्षणमाह–पक्वजम्ब्वसितमिति । पक्वजम्बूफलवदसित–श्यामम् । सन्न–निम्नम् ।

**विपर्यये ॥ ३४ ॥**
**ताम्रतातोदकण्ड्वाद्यैर्दुर्दग्धम्**

**स०**–विपर्यये–पक्वजम्ब्वसितादिलक्षणविपर्यये, तथा ताम्रतातोदकण्ड्वाद्यै , आदिग्रहणात् शोफविस्फोटादिभि , दुर्दग्ध[1] स्थान विद्यात् ।

**आ० र०**–दुर्दग्धलक्षणमाह–विपर्यय इति । विपर्यये–ताम्रादिवर्णत्व उत्सन्नत्वे च, ताम्रताद्यैश्च ।

**तं[2] पुनर्दहेत् ।**

**स०**–त–तथाभूत ज्ञात्वा, पुनर्दहेत्–भूयस्तत्र क्षारं पातयेत्, दाहाय ।

**आ० र०**–दुर्दग्धे पुनर्दाहमाह–त[2] पुनरिति ।

**अतिदग्धे स्रवेद्रक्तं मूर्च्छादाहज्वरादयः ॥ ३५ ॥**

**स०**–अतिदग्धे सति रक्त स्रवेत् । तथा, मूर्च्छादयो जायन्ते । आदिग्रहणाद्विसर्पशोफौषविस्फोटादयोऽपि ।

**आ० र०**–अतिदग्धलक्षणमाह–अतिदग्ध इति ।

**गुदे विशेषाद्विण्मूत्रसंरोधोऽतिप्रवर्तनम् ।**
**पुंस्त्वोपघातो मृत्युर्वा गुदस्य शातनाद्ध्रुवम्[3] ॥३६॥**

**स०**–गुदेऽतिदग्धे विशेषेण विण्मूत्रयो सरोध , तथा तयोरेवातिप्रवर्तन कदाचिद्भवति । विशेषग्रहणात् पूर्वोक्ता रक्तस्रावादयोऽपि । तथा, पुस्त्वोपघात –शुक्रक्षयात्कान्तागमनासामर्थ्यम् । अथवा, गुदस्य शातनात्–विदारणात्, निश्चयेन मृत्युर्भवेत् ।

**आ० र०**–गुदातिदग्धलक्षणमाह–गुद इति ।

**नासायां नासिकावंशदरणाकुञ्चनोद्भवः ।**
**भवेच्च विषयाज्ञानम्**

**स०**–नासाया क्षारातिदग्धाया नासिकावंशस्य दरणाकुञ्चने उद्भवत । तथा, विषयाज्ञानं–गन्धस्यावेदन च भवेत् ।

**आ० र०**–नासातिदग्धलक्षणमाह–नासायामिति ।

**तद्वच्छ्रोत्रादिकेष्वपि ॥ ३७॥**

**स०**–तद्वत्–तेन क्षारातिदग्धनासिकाविषयाज्ञानेन तुल्य, क्षारातिदग्धेषु श्रोत्रादिकेषु–श्रोत्रचक्षूरसनेषु स्थानेषु, विषयाज्ञानं स्यात् ।

**आ० र०**–श्रोत्राद्यतिदग्धलक्षणमाह–तद्वदिति । तद्वत्–नासावत् । वशस्थाने तत्तदवयवो ज्ञेय ।

**विशेषादत्र सेकोऽम्लैर्लेपो मधु घृतं तिलाः ।**
**वातपित्तहरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३८ ॥**
**अम्लो हि शीतः स्पर्शेन क्षारस्तेनोपसंहितः ।**
**यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत्तराम् ॥ ३९ ॥**

---

१ 'क्रियामाह' घ प । २ 'भिर्भोज्यै' ठ । ३ 'तलस्थित काञ्जिकद्रव्यम्' घ प । ४ 'म्लजल' ञ । ५ 'सारिवाभिर्वा' क । 'सारिवावद्भि' ञ । 'सारिवाद्भि' स मू । ६ 'क्वोलनि' स स । ७ 'क्वाथेन व्रण' स स । ८ 'व्रणे प्र' स मू । ९ 'जम्बूनिभ स' आ ।

१ 'ग्ध जानीयात्' ट । २ 'तत्पुन' क घ ञ प । ३ 'शातन ध्रुवम्' अ. । 'सदना' आ ञ ठ प । 'सदन ध्रुवम्' ड ।

( विषाग्निशस्त्राशनिमृत्युतुल्यः[1][2]
क्षारो भवेदल्पमतिप्रयुक्तः ।
स धीमता सम्यगनुप्रयुक्तो
रोगान्निहन्यादचिरेण घोरान् ॥ १ ॥ )

स०–तस्मिन्नतिक्षारदग्धे विशेषेणाम्लै –काञ्जिकादिभि , सेको हित । मधुघृततिलैश्च[3] लेप इष्ट । तथा सर्वैव च शिशिरा क्रिया वातपित्तहरा चेष्टा । सङ्ग्रहे चोक्तम् ( सू अ ३९ )–"पाययेतातियोगे[4]ऽत्र[5] त शीघ्र सघृत दधि । सगुड वा दधिसर तैल वा ससितोपलम् ॥" इति । अम्ल इत्यादि । तस्माद्धेतो क्षारदग्धमम्लै –काञ्जिकादिभि , निर्वापयेत्तराम् । यस्मादम्ल शीत स्पर्शेन । तेन च–अम्लेन, क्षार उपसहितो–युक्त , आश्वेव कटुकलवणभूयिष्ठता त्यक्त्वा स्वादुतां याति । तराग्रहणमतिशयेनाम्लैर्निर्वापयेत् देशसात्म्यानुरोधात् कदाचित् क्षीरादिभिरपीति गमयति । इति क्षारविधि ।

आ० र०–अतिदग्धे[6] प्रतीकारमाह–विशेषादिति । विशेषग्रहणात् पूर्वोक्तवन्निर्वापणम्[7] । उक्त च सङ्ग्रहे ( सू अ ३९ )–"तमतिप्रवृत्तमाशु पूर्वोक्तैरेव निर्वापणै पुन पुनर्निर्वापयेत् । अतश्च दाह्यमतिप्रमाणं न सकृदेव दहेदिति ।" इति । तथा ( स. सू अ ३९ )–"ज्वरातिसारतृण्मोहमूर्च्छाहृद्वेदनार्तिभि । कृश[8] दहत्यग्निरिव शरीरं क्षारविभ्रम ॥ पाययेतातियोगे[9]ऽत्र त शीघ्र सघृत दधि । सगुड वा दधिसर तैल वा ससितोपलम् ॥ धात्रीफलकपित्थाम्लदाडिमस्वरसे घृतम् । द्विगुणे साधित पानसेकै क्षारातिरुग्घरम् ॥ दाडिमामलकाम्रातकपित्थकरमर्दकात्[10] । आम्राच्च मातुलुङ्गाच्च रसं[11] मृद्वग्निना पचेत् ॥ ततोऽतिवृत्तक्षाराय[12] दद्यान्मात्रा यथाबलम् । क्षारो निवर्तते तेन प्रसाद त्वक् च गच्छति ॥ शोणितातिप्रवृत्तौ च[13] बाह्यान्त शिशिरो विधि ।" इति । इति क्षारविधि ।

अग्निकर्मविधिमाह—

**अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसम्भवात् ।**
**भेषजक्षारशस्त्रैश्च न सिद्धाना प्रसाधनात् ॥ ४० ॥**

स०–क्षारादप्यग्ने प्रशस्यतरत्वम् । कुत ? तेन–अग्निना, दग्धाना रोगाणामर्श प्रभृतीनामसम्भवात् । भूयोऽग्निदग्धो रोग प्ररोह न याति, मूलादुन्मूलनादित्यर्थ । भेषजक्षारशस्त्रैश्च ये रोगा न शान्तास्तेषां वह्निना साधनात् ज्वलनो ज्यायान् ।

आ० र०–अथाग्निकर्मविधि । तत्राग्निप्रशसामाह–अग्निरिति ।

**त्वचि मांसे सिरास्नायुसन्ध्यस्थिषु स युज्यते ।**

स०–स –अग्निदाह , त्वगादिषु युज्यते ।

आ० र०–अग्निभेद्या(दाह्या)[2]न्यङ्गान्याह–त्वचीति ।

**मषाङ्गग्लानिमूर्धार्तिमन्थकीलतिलादिषु ॥ ४१ ॥**
**त्वग्दाहो वर्तिगोदन्तसूर्यकान्तशरादिभिः ।**

स०–तत्र मषादिषु रोगेषु त्वग्दाह कार्यो वर्त्यादिभि । वर्ति –पिचुवर्ति । आदिग्रहणादन्येष्वपि क्षुद्ररोगाद्यायोक्तेषु त्वग्दाहो योज्य । शरादिभिरित्यादिग्रहणादन्यैरपि देशान्तरप्रसिद्धैस्त्वग्दाह कार्य ।

आ० र०–त्वग्दाहविषयमाह–मषेति । सङ्ग्रहे तु ( सू. अ ४० )–"सरुक्स्तब्धप्रम्लायदङ्गाभिष्यन्दाधिमन्थशिरोभ्रूशङ्खललाटरुजार्दितेषु[3] यथास्वमभिष्यन्दादिषु तु भ्रूशङ्खललाटदेशेषु ।" इति ।

त्वग्दाहसाधनान्याह–वर्तिगोदन्तेति । वर्ति –गुग्गुल्वादिकृता । गोदन्तो–गवा दन्त । सूर्यकान्त –स्फटिक । आदिशब्दात् पिप्पल्यजाशकृच्छलाकादय ।

**अर्शोभगन्दरग्रन्थिनाडीदुष्टव्रणादिषु ॥ ४२ ॥**
**मांसदाहो मधुस्नेहजाम्बवौष्ठगुडादिभिः ।**

स०–अर्श प्रभृतिषु रोगेषु मधुस्नेहादिभिर्मांसदाह कार्य । आदिग्रहणेनार्बुदगण्डमालादयो गृह्यन्ते । तत्र कदाचिन्मधुना, कदाचित्पृथक्स्नेहै , कदाचिज्जाम्बवौष्ठेन, जाम्बवौष्ठ –शलाकाविशेषो यन्त्रविधावुक्त (हृ सू अ २५।२६) येन क्षारो दीयते, कदाचिद्गुडेन, कदाचिदेवप्रायेणान्येनापि देशविशेषप्रसिद्धेन ।

आ० र०–मासदाहविषयमाह–अर्श इति । आदिशब्दादर्बुदगण्डमालाश्लीपदाव्रवृद्ध्यवगाढपूयलसीकव्रणादयः ।

मासदाहसाधनान्याह–मधुस्नेहेति । आदिशब्दात् सूचीशलाकामधूच्छिष्टताम्रायोरूप्यकास्यादय ।

**श्लिष्टवर्त्मन्यसृक्स्रावनीलयसम्यग्व्यधादिषु[4] ॥ ४३ ॥**
**सिरादिदाहस्तैरेव**

स०–श्लिष्टवर्त्मादिषु सिरादिदाह कार्य । तैरेव–मधुस्नेहादिभि ।

आ० र०–शिरादिदाहविषयमाह–श्लिष्टवर्त्मेनीति । आदिशब्दाच्छिरास्नायुसन्ध्यस्थिच्छेददन्तनाड्युपपक्ष्मकलगणादय ।

शिरादाहसाधनान्याह–तैरेवेति । तै –मासदाहोक्तै ।

**न दहेत्क्षारवारितान्[5] ।**
**अन्तःशल्यासृजो भिन्नकोष्ठान् भूरिव्रणातुरान् ४४**

स०–क्षारवारितान् न दहेत् । न केवल येषु क्षारो वारि-

१ ( ) अ पुस्तके समुपलब्धोऽय श्लोक सुश्रुतेऽपि पठ्यते । २ 'स्युकल्प. क्षारो भवत्यल्प' स सु । ३ 'लालेपश्चेष्ट ' ट ठ. । ४ 'येदतियोगे तु त' ट । ५ 'ऽतस्त' स.द्व । ६ 'दग्धप्र' क ञ , 'दग्धस्य प्र' ग । ७ 'वोक्तैरेव निर्वापणै ।' क ग ञ । ८ 'तिवृत्त' ग घ ञ प । ९ 'णमसक्र' क ग ञ । १० 'कान्' घ प स स । ११ 'रसे' क.ग ञ । १२ 'तो निवृत्त' क.ग.ञ. स मू । १३ 'तु' ग. स द्व ।

१ 'योज्यते' आ चन्द्र । २ 'भेदान् षडाह' क घ ञ प । ३ 'म्लानाङ्ग' स.स. । ४ 'स्रावे नी' आ ञ ठ. । ५ 'रवर्जितान्' ङ ञ ठ ।

तस्मान् न दहेत्, यावदन्त शल्य तथाऽन्तर्लोहित येषा तान्, तथा भिन्न –शस्त्रादिना, कोष्ठ –शरीरमध्यो, येषा तान्, तथा भूरिभिर्व्रणैरार्तान् [ च न दहेत् ] ।

आ० र०–अग्निदाह निषेधति–न दहेदिति । अन्त शल्यान् अन्तरसृजश्च । सङ्ग्रहे तु ( सू अ ४० )–"उष्णे च काले आत्ययिके तु व्याधौ कृतोष्णप्रतीकारस्य पिच्छिलमन्नमशितवतोऽग्निकर्म कुर्यात् ।" इति । तथा ( स सू अ ४० )–"अथ दाहार्हमातुर कृतस्वस्त्ययनमुपहृतसर्वोपकरण प्राक्शिर सविष्टमासावलम्बित कृत्वा वैद्यो निर्धूमदृढस्थिरदीप्तखादिरबादराद्यङ्गारैरयोघटनप्रकारेण भस्त्रानिलाध्मातैर्व्यजनैर्न चोर्ध्वानिर्गच्छज्ज्वालतयाऽऽपादितापाद्यमानभासुराग्निवर्णैर्जाम्बवौष्ठादिभिर्व्याधिप्रदेशवशात् वलयार्धचन्द्रस्वस्तिकाष्टापदबिन्दुरेखाप्रतिसारणविकल्पैर्मुहुर्मुहुर्हितोपहिताभिर्वाग्भिरद्भिश्चातुरमाश्वासयन् दहेदासम्यग्दाहलिङ्गोत्पत्ते । उच्छूनसुषिरप्रलूनदन्तनाडीसंजन्तुदुष्टव्रणेषु तु स्नेहमधूच्छिष्टगुडे पूरयित्वा दहेत् ।" इति ।

**सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत् ।**

स०–सुदग्ध–अग्निना रोगाधिष्ठान ज्ञात्वा, घृतमधुभ्याम-भ्यक्त कृत्वा, स्निग्धशीतै –मधुयष्टिशालिमूलादिभि., प्रलेपयेत् ।

आ० र०–दाहानन्तर कृत्यमाह–सुदग्धमिति ।

**तस्य लिङ्गं स्थिते रक्ते शब्दवल्लसिकान्वितम् ॥४५॥**
**पक्वतालकपोताभं सुरोहं नातिवेदनम् ।**

स०–तस्येत्यनेन सुदग्ध स्थान परामृश्यते । तस्य–सुदग्धस्य स्थानस्य, लिङ्ग–लक्षण, स्थिते रक्ते–दह्यमानावस्थाप्रवृत्तासृजि निवृत्ते सति, शब्दवत्–बुद्बुदशब्दवत्, तत्स्थान भवेत् । तथा, लसिकान्वितम् । लसिका–कुशशस्त्रादिविक्षते प्रथम या दृश्यते जललवाकृति । तथा, पक्वतालफलसदृशम्, कदाचित्कपोतसदृशम् । सुखेन रोहति–सुरोहम् । तथा, नातिवेदन–न तीव्ररुक् ।

आ० र०–सुदग्धलक्षणमाह–तस्येति । ताल–तालफलकम् । कपोत –पक्षी । सङ्ग्रहे तु ( सू अ ४० )–"सशब्द दहन दुर्गन्धित्व त्वक्सङ्कोचश्च त्वग्दग्धे । कपोतवर्णत्वमल्पशोफरुजता शुष्कसङ्कुचितव्रणता च मांसदग्धे । कृष्णोन्नतव्रणत्व स्थिते च रक्ते लसीकास्रुति शिरादग्धे । कृष्णारुणकर्कशस्थिरव्रणता स्नाय्वादिदग्धे च ।" इति ।

**प्रमाददग्धवत्सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ४६ ॥**

स०–दुर्दग्धात्यर्थदग्धयो प्रमाददग्धेन तुल्य सर्व लक्षणं बोध्यम् ।

आ० र०–दुर्दग्धातिदग्धयोर्लक्षणमाह–प्रमाददग्धवदिति ।

न च लक्षणमन्तरेणैतत्सम्यग्ज्ञायत इति तल्लक्षणार्थं भेदान्तरदर्शनार्थं चाऽऽह—

**चतुर्धा तत्तु तुच्छेन सह**

स०–तत्–प्रमाददग्ध, चतुष्प्रकारम् । कथम् ? तुच्छेन–तुच्छदग्धलक्षणेन, सह । अविमृश्यदग्ध हि कदाचित् सम्यग्दग्धलक्षण, कदाचिद्दुर्दग्धलक्षण, कदाचिदतिदग्धलक्षण, कदाचिच्च तुच्छदग्धलक्षण स्यात् ।

आ० र०–प्रमाददग्धभेदानाह–चतुर्धेति । तुच्छ दुर्दग्धमतिदग्धं सुदग्ध चेति चतुर्धा ।

**तुच्छस्य लक्षणम् ।**
**त्वग्विवर्णोष्यतेऽत्यर्थं न च स्फोटसमुद्भवः ॥ ४७ ॥**

स०–तुच्छस्य–तुच्छदग्धस्य लक्षणमिति कार्ये कारणोपचारादेवमुक्तम् । त्वगित्यादि । त्वग्विवर्णा सत्यत्यर्थमुष्यते–रुज्यते, न च स्फोटाना समुद्भूतिरिति तुच्छदग्धस्थानस्य लक्षणम् । यत्किञ्चिन्मात्रमेवाग्निना स्पृष्ट तत्तुच्छदग्धमित्युच्यते ।

आ० र०–तुच्छलक्षणमाह–तुच्छस्येति ।

**सस्फोटदाहतीव्रोषं दुर्दग्धम्**

स०–यत्र प्रदेशे स्फोटानामुद्भवो दाहयुक्ता तीव्रा ऊषा–रुजा, जायते, तद्दुर्दग्ध रोगाधिष्ठान विद्यात् ।

आ० र०–दुर्दग्धलक्षणमाह–सस्फोटदाहतीव्रोषमिति । ऊषा–सर्षपलिप्तस्येव व्यथा ।

**अतिदाहतः ।**
**मांसलम्बनसङ्कोचदाहधूपनवेदनाः ॥ ४८ ॥**
**सिरादिनाशस्तृण्मूर्च्छाव्रणगाम्भीर्यमृत्यवः ।**

स०–अतिदाहाद्रोगाधिष्ठानस्य मासलम्बनादय स्यु । [ सङ्कोच –सिरादीनाम् । धूपन–धूमायनम् । वेदना–रुजा । सिरादीना नाशो–व्यापत् । व्रणगाम्भीर्य–गम्भीरव्रणता । मृत्यु –मरण च । ] सम्यग्दग्धलिङ्ग तूक्तमेव "तस्य लिङ्ग स्थिते रक्ते" ( श्लो ४५ ) इत्यादिना । तस्मात्तत्पुनर्न निर्दिष्टम् ।

आ० र०–अतिदग्धलक्षणमाह–अतिदाहत इति । धूपन–धूमायनम् । सुदग्धस्य लक्षणमुक्तं प्राक् ( श्लो ४५ ) । सङ्ग्रहे तु ( सू अ ४० )–"स्नेहदाहस्तु कष्टतरो भवति । स हि स्नेहस्य सूक्ष्ममार्गानुसारित्वाद्दूरमनुप्रविशतीति ।" इति ।

अधुना चतुर्विधस्यास्य चिकित्सितमाह—

**तुच्छस्याग्निप्रतपनं कार्यमुष्णं च भेषजम् ॥ ४९ ॥**
**स्त्याने‌ऽस्रे वेदनाऽत्यर्थं विलीने मन्दता रुज ।**

स०–तुच्छदग्धस्याग्निना प्रतपन कार्यम् । तथा, उष्ण

१ 'शल्यान् तथाऽन्तर्लोहितान्, तथा भि' ट । २ 'माप्लावित कृ' ग । ३ 'प्तशिखादिबाद' ग । 'खदिरबदरा' स इ । ४ 'नेनोर्ध्वा' क ग ञ. । 'न वोर्ध्वनि' घ.स मू । ५ 'कल्पैन मुहु' स.स । ६ 'ग्दहनलि' क. । ७ 'प्रदेशलू' घ प । ८ 'सकुन्तदु' घ प । ९ 'च्छमधुगुडैः' स स । १० 'सुदग्धे कृ' ग । ११ 'वृत्तेऽसृजि' ट । १२ 'का–स्ता शस्त्रादिभिरिव क्षते' ट । १३ 'नातितीव्र' ठ । १४ 'ब्ददह' क ञ । 'ब्दवेदन' ग । १५ 'दुर्गन्ध त्व' ग.ञ प । 'गौन्धि त्व' क. । १६ 'क्ते सलसी' घ प.स.मू ।

१ 'तच्च' अ क ञ । 'तत्र' आ ठ. । २ 'तुत्थेन' 'तुत्थस्य' घ । ३ 'कारणे कार्योपचा' ट । ४ 'तुत्थ–स्तोकदाह' इतीन्दु । ५ 'नासमु' ट । ६ 'शतृण्मू' अ ठ. । ७ 'दाहतो रोगा' ट । ८ [ ] इति पाठ ट ठ. पुस्तकयोर्नोपलभ्यते । ९ 'तुत्थस्या' घ स स ।

भेषज–औषधम् । रक्तस्य विलयनार्थमेतत् । यतस्तुच्छदग्धेऽवश्य स्थानमसृग्भवतीति युक्त्या प्रतिपादयन्नाह–स्थानेऽस्र इत्यादि । लोहिते स्थाने सत्यतिशयेन रुग्भवति । विलीने रक्ते पीडाया मन्दता–मन्दत्व भवति । अतस्तुच्छदग्धेऽग्निप्रतपन योज्यम् ।

आ० र०–तुच्छस्यौषधमाह–तुच्छस्येति । सङ्ग्रहे तु (सू अ ४०)–"स्थाने रक्ते हिमैर्नोष्मा निष्क्रामति यतो बहि । वेदना वर्द्धते तेन रुधिर च विदह्यते ॥ उष्ण निष्क्रामयत् कुर्यादूष्माणं मन्दतां रुज ।" इति ।

**दुर्दग्धे शीतमुष्णं च युञ्ज्यादादौ ततो हिमम् ॥५०॥**

स०–दुर्दग्धे शीतमुष्ण च पर्यायेणौषधम् । तत्रादौ–प्रथम, हिम भेषज युञ्ज्यात् ।

आ० र०–दुर्दग्धस्यौषधमाह–दुर्दग्ध इति ।

**सम्यग्दग्धे तवक्षीरिप्लक्षचन्दनगैरिकैः ।**
**लिम्पेत्साज्यामृतैरूर्ध्वं पित्तविद्रधिवत्क्रिया ॥ ५१ ॥**

स०–सम्यग्दग्धे तवक्षीर्यादिभिर्लेपयत् । किम्भूतै ? साज्यामृतै –घृतगुडूचीयुक्तै । आदावित्यत्रापि योज्यम् । आदौ तैर्लेपयेत्, उर्ध्व–अनन्तरं, पित्तविद्रधिवत् क्रिया कार्येति शेष ।

आ० र०–सम्यग्दग्धौषधमाह–सम्यग्दग्ध इति । आज्येनामृतया च सह वर्तन्त इति साज्यामृतान्यौषधानि ।

**अतिदग्धे द्रुतं कुर्यात्सर्वं पित्तविसर्पवत् ।**

स०–अतिदग्धे द्रुत–शीघ्रमेव, सर्व–बहिरन्तश्च भेषजं, पित्तविसर्प इव कुर्यात् ।

आ० र०–अतिदग्धस्यौषधमाह–अतिदग्ध इति । द्रुत–शीघ्रम् ।

**स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥ ५२ ॥**
**( शस्त्रक्षाराग्नयो यस्मान्मृत्योः परममायुधम् ।**
**अप्रमत्तो भिषक् तस्मात्तान् सम्यगवचारयेत् ॥१॥)**

स०–स्नेहदग्धेऽतितरा रूक्ष योजयेत् । [ भृशतर रूक्ष चात्र भेषज तत्र तु योजयेत् । तुशब्दान्न केवल ] भृशतरग्रहणाच्च बाहुल्येन रूक्ष [ प्रलेपादि तत्र योजयेत् किन्तु ] देहदेशादिसात्म्यवशात्स्निग्धमपि यथावस्थ यथायोग योजयेत् ।

आ० र०–स्नेहदग्धस्यौषधमाह–स्नेहदग्ध इति । भृशतर–अत्यर्थम् । तुशब्दान्न केवल भृशतर रूक्ष प्रलेपादि, किन्तु पूर्वोक्तमपि यथावस्थ योजयेत् ।

**समाप्यते स्थानमिदं हृदयस्य रहस्यवत् ।**

स०–वक्तव्य यद्वस्तु तस्य सर्वस्यैवोक्तत्वादिद स्थान समाप्यते–निष्पाद्यते । किम्भूत स्थानम् ? रहस्यवत्, रहस्य–अत्यर्थ गुह्यरूप, तद्यस्यास्ति तद्रहस्यवत् । कस्य स्थानम् ? हृदयस्य । हृदयशब्देनाष्टाङ्गहृदयमुपलक्ष्यते, यथा–सत्यभामा भामेति ।

आ० र०–सूत्रस्थानमुपसहरति–समाप्यत इति ।

कुत एतत्स्थान रहस्यवत् ? इत्याह—

**अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः ॥५३॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां सूत्रस्थाने क्षाराग्निकर्मविधिर्नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥**

स०–यस्मादत्र–स्थाने, अर्था सूत्रिता –सूचिता । किम्भूता ? सूक्ष्मा ,–तीक्ष्णतरमतिसमधिगम्या । यतस्ते एवार्था सर्वस्मिंस्तन्त्रे प्रतन्यन्ते–विस्तार्यन्ते । तस्मादिद स्थानं तन्त्रसम्बन्धिनामन्यस्थानाना रहस्यवदित्युक्तमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया सूत्रस्थाने क्षाराग्निकर्मविधिर्नाम त्रिंशत्तमोऽध्याय समाप्त ॥ ३० ॥

आ० र०–[कस्मादेतद्रहस्यवदित्यत आह–अत्रार्था इति ।]

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
क्षाराग्निकर्मजाध्याय सामस्त्येन निरूपितं ॥ ३० ॥

१ 'मार्दव' ट । २ 'न कार्यम् ।' ट । ३ 'त्रापि प्र' ट । ४ 'तुगाक्षीरि' अ आ इ क घ ञ । ५ 'याम्' अ ठ. । 'या ' इ । ६ ( ) अ आ ञ पुस्तकेषूपलब्धोऽय श्लोक सङ्ग्रहेऽपि पठ्यते । ७ 'सात्तस्य' आ. । ८ [ ] इति पाठौ ट ठ पुस्तकयोर्नोपलभ्येते ।

१ 'थावयो योज' ठ । 'थावत् यो' इति क्वचित् । २ 'अर्थंगुह्य' ट ठ । ३ 'सूचिता ' आ ङ ञ ठ. । ४ 'यत नवसहस्र नवशताधिक चेति सूत्रितम् । सव' ट । 'यत सव' ठ । ५ [ ] इति पाठ क.घ ञ.प. पुस्तकेषु नोपलभ्यते । ६ 'कर्मप्रकरण० तम्' ग ञ. ।





श्रीमद्वाग्भटविरचिते

# अष्टाङ्गहृदये शारीरस्थानम् ।



## श्रीमदरुणदत्तविरचितया सर्वाङ्गसुन्दराख्यव्याख्यया

## समुल्लसितम् ।

## प्रथमोऽध्यायः ।

श्रीगणेशाय नम । अथ सूत्रस्थानादनन्तर शारीरस्थानमिदमारभ्यते[1] । तत्राय सम्बन्ध ,–पूर्वस्मिन्स्थाने कायादीन्यष्टाङ्गानि चिकित्सा[2]धारभूतानि सकलतन्त्रसारभूतानि सूत्रितानि "कायबाल" ( हृ सू अ १।५ ) इत्यादिना ग्रन्थेन । कायश्च निजागन्तूना व्याधीनामधिष्ठानम् । तस्य च कायस्य चतुर्वर्गसाधनस्य पालनार्थं हेतुलिङ्गौषधस्कन्धभेदेन त्रिस्कन्धोऽय ग्रन्थो ग्रन्थकृता प्रणीत । ततश्च[3] शरीरस्य प्रथम सूत्रितत्वात्प्राधान्याच्च प्राक् सूत्रस्था[4]नमनन्तर शारीरस्थानमिदमारभ्यत इत्याह—

**अथातो गर्भा[5]वक्रान्ति शारीरं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

शरीरमधिकृत्य कृतो[6] ग्रन्थ शारीर । गर्भस्यावक्रान्ति –अवक्रमण सम्प्राप्ति , यथाऽगर्भो गर्भता सम्पद्यत इत्यर्थ । गर्भावक्रान्तिर्विद्यते यस्मिन्नध्याय इति मत्वर्थे कप्रत्यय । तस्य "अध्यायानुवाकयोर्लुक्" इति लुक् । अथादिशब्दानामर्था आयुष्कामीयाध्याये ( हृ सू. अ १ ) व्याख्याता एव ।

**शुद्धे शुक्रार्तवे सत्वः स्वक[7]र्मक्लेशचोदितः ।**
**गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ ॥ १ ॥**

शुक्र–अन्त्यो धातु । ऋतौ भवमार्तवम्, स्त्रीणा यदपत्यमार्गात् शुद्धमीषत्कृष्ण विगन्ध च वायुप्रेरित लोहितं प्रवर्तते तदार्तवमुच्यते । शुक्र चार्तव च शुक्रार्तवम्, पिण्डे पित्रो[1] सम्बन्धि गर्भबीजम्, तस्मिन् शुक्रार्तवे, शुद्धे–वातादिभिरदूषितेऽधिष्ठानभूते, सत्वो–जीव , गर्भ सम्पद्यते । किल नासौ गर्भ[2] , अथ च गर्भतामासादयति । कीदृश सत्व ? स्वकर्मेत्यादि । कर्माणि–पूर्वजन्मार्जि[3]तानि शुभाशुभानि, स्वानि च तानि कर्माणि च स्वकर्माणि । क्लेशयन्ति–लोका[4]न् दु खयन्तीति, क्लेशा । ते च–अ[5]विद्यास्मितारागद्वेषाभिनिवेशा । अतथावस्तुनि तथेति ("अनित्याशुचिदु खानात्मसु नित्यशुचिसुखात्म)ख्याति –अविद्या । दृग्दर्शनशक्त्योरेकात्म[6]ता–अस्मिता । सुखानुशयी–राग । दु खानुशयी–द्वेष । स्व[7]रसवाही विदुषोऽपि तथा रूढ –अभिनिवेश " (पात यो सू २।५-६-७-८-९ ) । स्वकर्माणि च क्लेशाश्च स्वकर्मक्लेशा, तैश्चोदित –प्रेरितो गर्भ सम्पद्यते, न तु कर्मक्लेशवियु[8]क्त । अत एव वीतरागाणा जन्मासम्भव , कर्मक्लेशरहितत्वात् । तथा चोक्तम्–"चित्तमेव हि ससारि रागादिक्लेशदूषितम् । तदेव तैर्विनिर्मुक्त [9]मुक्तमित्यभिधीयते ॥" इति । अथ किं शुद्धे शुक्रार्त[10]वे एव स्वकर्मक्लेशचोदित एव गर्भ सम्पद्यतेऽथवाऽन्य[11]दपि किञ्चिदपेक्षते ? इत्याह–युक्तिवशादिति । योजनं–युक्ति, उपादेयस्यार्थस्येतिकर्तव्यतासाधनोपायार्थम् । [12]युक्तेर्वश –सामर्थ्य प्रभावो, युक्तिवश । तत शुद्धे शुक्रार्तवे स्वकर्मक्लेशै[13]श्चोदित एव स सत्वो गर्भ सम्पद्यते, नान्यथा ।

१ अस्य शारीरस्थानस्य हेमाद्रिप्रणीताऽऽयुर्वेदरसायनाख्या टीका प्रयत्नैरनेकविधैरप्यद्यावधि नोपलभ्यते । २ 'त्सासारभू' ड ढ । 'त्सासाधनभू' ण । ३ 'श्च कायस्य' इति क्वचित् । ४ 'स्थानादन' ट ड.ण. । ५ इय गर्भावक्रान्तिश्चरके शा० २।३।४।८ अध्यायेषु, सुश्रुते शा० २।३।४।१० अध्यायेषु, अष्टाङ्गसङ्ग्रहे शा० १।२।३ अध्यायेषु चास्ति वर्णिता । ६ 'तोऽय ग्र' ढ. । ७ 'कर्मफलनोदि' ड. ।

१ 'पिण्डिसम्बन्धि' ड ढ । २ 'र्भ , सत्वगर्भमासा' ट । ३ 'जितशुभा' ट । ४ 'कास्तापयन्ती'ट । ५ एषा पञ्चविधाना क्लेशाना लक्षणादिविस्तर सर्वदर्शनसङ्ग्रहे द्रष्टव्य । ६ 'त्मतेव–'पात. यो सू । ७ 'स्वस्य रसेन सस्कारमात्रेण वहतीति स्वरसवाही–स्वाभाविक , न त्वागन्तुक । तादृशश्च भयविशेषरूप क्लेश –अह कदापि मा भुवमिति न किं तु सदा भूयासमेव–इत्याकारकोऽविदुष इव विदुषोऽपि रूढ –प्रसिद्ध ।' इति दर्शनाङ्कुरे । ८ 'क्लेशादिभिरयुक्त ' ट । 'क्लेशावि' ड ढ । ९ 'मुक्त इत्य' ड ढ । 'भवान्त इति कथ्यते ॥' ण । १० 'र्तवे स्व' ण । ११ 'न्यत् किं' ड.ढ.ण. । १२ 'युक्तौ वश.' ड.ढ. । १३ 'श्चनोदि' ड.ढ. ।

कथम्? इत्याह–युक्तिवशादग्निरिवारणौ[2]। तथा हि,–मथ्यमन्थनमथकादिसामग्रीमन्तरेणारणावग्निर्यथा न जायते, तथा गर्भोऽपि यथोक्तसामग्रीवैकल्यात् न भवति। सकलसामग्रीसद्भावत एव भवतीति भाव।

तदेव गर्भस्य सम्पत्तिमभिधाय यथा तस्य कुक्षौ वृद्धि स्यात्तथा वक्ति—

**बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्वानुगैश्च सः।**
**मातुश्चाहाररसजैः क्रमात्कुक्षौ विवर्द्धते ॥ २ ॥**

बीजात्मकै–गर्भजैरायुस्वभावै शुक्रार्तवरूपता परिणतै। कै? महाभूतै,–आकाशादिभि सत्वरजस्तमोमयै, "तत्र सत्वबहुलमाकाशम्, रजोबहुलो वायु, सत्वरजोबहुलोऽग्नि, सत्वतमोबहुला आप, तमोबहुला पृथ्वी चेति।" (सु शा अ १।२०) इत्येवरूपै। स–गर्भ, कुक्षौ विवर्द्धते–विशेषेण वृद्धि याति। किम्भूतै? सूक्ष्मै,–अतीन्द्रियैर्योगिदृश्यै। तथा, सत्व–चेतोऽनुगच्छन्तीति सत्वानुगानि, तै। यत्र सत्व तिष्ठति तत्रावश्य तान्यपि तिष्ठन्ति, सत्वानुशायित्वात्तेषाम्। तथा चोक्तम् (चरके शा अ २।३७)–"अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तपूर्व।" इत्यादि। चशब्दो हेतुसमुच्चयार्थ। [न[10] केवल महाभूतैर्हेतुभूतैर्गर्भो विवर्द्धते यावन्मातुश्चाहाररसजैरित्यतो वक्ष्यमाणाद्धेतोरपि वर्द्धत इत्यर्थ। मातुरित्यादि। मातु सम्बन्धिभिराहाररसजैश्च कुक्षौ विवर्द्धते। चशब्दोऽत्रानुक्तसमुच्चयार्थ।] न केवल पूर्वोक्तायथानिर्दिष्टाद्धेतोर्गर्भ कुक्षौ विवर्द्धते, यावदनिर्दिष्टादपि मातु सौमनस्यादे कललार्बुदपेश्याद्यवस्थाभावेन विशेषतो वृद्धिं यातीति। कथ विवर्द्धते? इत्याह–क्रमात्,–न झटित्येव। ननु, "मातुश्चाहाररसजै" इति कथमुक्तम्? यतं[12] पञ्चभूतात्मक एवाहाररस। न च यदात्म कोऽसौ स तस्यैव जन्मकारण भवितुमर्हति, अव्यतिरिक्तत्वात्। तस्मादेवमयं व्याख्यातव्य,–आहाररसे जातैराहाररसजै। सप्तम्यन्तादुपपदाज्जनेर्ड। मातुराहाररसात्मना परिणतैरिति।

ननु, सत्व कुक्षौ प्रविष्टो[13] गर्भस्य वर्द्धने हेतुरुक्त, न चास्य प्रवेश उपलभ्यते, इत्याह—

**तेजो यथाऽर्करश्मीनां स्फटिकेन तिरस्कृतम्।**
**नेन्धनं दृश्यते गच्छत्सत्वो गर्भाशयं तथा ॥ ३ ॥**

न केवल दृश्यत्वादृश्यत्वाभ्या वस्तुसद्भावासद्भावौ व्यवस्थाप्येते, येनादृश्यत्वात्सत्वस्य कुक्षौ प्रवेशासम्भव। किन्तर्हि? तत्कार्यान्यथानुपपत्त्याऽपि[1] वस्तुसद्भावो व्यवस्थाप्यत एव। तथा च[2],–यथाऽर्करश्मीना सम्बन्धि तेज. स्फटिकेन–सूर्यकान्ताख्येन, तिरस्कृत–व्यवहित, स्फटिकस्याधस्तात् स्थितमिन्धन गच्छत्–व्रजत्, न दृश्यते। अथ च तेज कार्यमिन्धन गत [दृश्यते[4] नान्यसम्बन्धि कार्यम्। तदेव तेज कार्यान्यथानुपपत्त्या तेजस इन्धनगमन], तथा तत्र तस्य सद्भावोऽप्यवगम्यते[5]। एव सत्वो गर्भाशय गच्छन्[6]–व्रजन्, न दृश्यत एव। वस्तुप्रभावाद्गच्छति च। सत्वशब्द उपलक्षणार्थ, महाभूतान्यपि तदन्तर्गतानि न दृश्यन्त एव, अथ च कार्येणोपलभ्यन्त एव। तदेव सत्वानुयायिभिर्महाभूतैर्गर्भ कुक्षौ विवर्द्धते, न तु केवलै सत्वानधिष्ठितै। चेतोवक्रान्त्या हि क्रमात्कललादिना वस्तुजात वि[7]वृद्धिविमलतामापद्यते, नान्यथा मृतशरीरवत्।

ननु, सत्वो भूतानुग एकरूप एव। तत्कथमनेकजात्याकृत्या नरतुरगोरगगजगवयादिमत्याऽऽलिङ्गित सम्पद्यते? इत्यस्मिन् पर्यनुयोग इदमाह—

**कारणानुविधायित्वात्कार्याणां तत्स्वभावता।**
**नानायोन्याकृतीः सत्वो धत्तेऽतो द्रुतलोहवत् ॥ ४ ॥**

कारण–हेतु, अवश्यमनुविदधतीति कारणानुविधायीनि। आवश्यके णिनि। कारणस्वभावानि कार्याणि भवन्ति सर्वाण्येव, तस्माद्धेतो कार्याणा तत्स्वभावता। स्वभावशब्द सदृशार्थ[8]। तच्छब्देन कारण परामृश्यते, तस्य–कारणस्य स्वभावता, तत्सादृश्यम्[9]। तस्मात्कार्यकारणसादृश्याद्धेतो सत्वो–महाभूतानुग[10] एकरूप एव, अनेकरूपा[11] नानायोन्याकृती–जाति[12]बिम्बविशेषान्, धत्ते–धारयति। कथमिव? द्रुतलोहवत्। यथा रूप्यादिवस्तुजातमग्निना द्रुतरूपता गतमेकरूपमेव सिक्थ[13]यादिकल्पिताया नानारूपाया मनुष्याद्याकृतौ[14] तन्निषिक्तं ता तामाकृतिं यथाकल्पिता धत्ते, एव स सत्वो नानायोनौ गच्छति, ता ता यथास्वमाकृतिं धारयति।

तथा—

**अत एव च शुक्रस्य बाहुल्याज्जायते पुमान्।**
**रक्तस्य स्त्री, तयोः साम्ये क्लीबः**

अत एव च–पूर्वोक्तात्कार्यकारणसादृश्याख्याद्धेतो, शुक्रस्य–पुरेतसो, बाहुल्यात्–बहुत्वात्, सामर्थ्यलभ्याच्च*[15] स्त्रीरेतोरजोल्पत्वात् पुमान् जायते न स्त्री, तथाविधस्य कारणस्याभावात्।

---

१ 'कथ यथा?' ट। 'क कथयेत्?' ड ढ। २ 'णौ। यथा,–म' ट। 'णौ। मथ्य' ड ढ। ३ 'मन्थानसयोगवशादीदृक्सामग्रीसामर्थ्यादग्निररणौ जायते' ट। 'मथकसयोगादीदृक्सामर्थ्यादग्निररणौ जायते' ड ढ। 'मन्थानादि' ण। ४ 'द्भावाद्भव' ण। ५ 'जननपुस्त' ट। ६ 'पत परि' ट। ७ 'रजस्तमोब' ड ढ। 'तमोरजोब' ट ण। ८ 'थ्वीति।" एव' ट ण। ९ 'कारूप' स च। १० [ ] इति पाठ ड ढ पुस्तकयोर्नोपलभ्यते। ११ 'तोवर्द्ध' ट ण। १२ 'यावता' ट.ड.ढ.ण.। १३ 'गर्भतामाप्नोतीत्युक्तम्, न' ट ण.।

१ 'पत्तावपि' ड ढ। २ 'च, अर्क' ट ड ढ ण। ३ [ ] इति पाठो ड ढ पुस्तकयोर्नोपलभ्यते। ४ 'न त्वन्यसम्बन्धि कार्यं च।' ण। ५ 'प्यवग' ड ढ। ६ 'च्छन् न दृ' ट ट ढ। ७ 'वृद्धिं विपुलता' ट ड ढ। ८ 'सादृश्ये' ड ढ। ९ 'तत्साम्यम्' ट। १० 'ताग्रग एव' ड ढ। ११ 'पामवस्था विधत्ते। किवत्? द्रु' ट। १२ 'प्रति' ण। १३ 'सिक्षुकादि' ण। १४ 'तौ निषि' ड.ढ। *१५ 'लभ्यत्वाच्च' ट.।

[ "तथा, अत एव–पूर्वोक्तात्कार्यकारणसादृश्यात् स्त्रीरेतसो"–रक्तस्य, बाहुल्यात्–बहुत्वात्, सामर्थ्यलिङ्गैर्योश्च पुरेतोल्पत्वात् स्त्री जायते न पुमान्, तथाविधस्य कारणस्याभावात्। ] पुरेतो हि बलवत्, अल्प स्त्रीरजोऽभिभूय पुगर्भस्य कारणता याति। यदा तु स्त्रीरजसो बलवत्वमल्पत्व च पुरेतस, तदाऽल्प तु पुरेतोऽभिभूय स्त्रीरज स्त्र्याख्यस्य गर्भस्य कारणतामापद्यते। यदा तु शुक्रार्तवयो साम्य–तुल्यत्व भवति, तदा न स्त्री न पुमान् जायते, अपि तु लिङ्गद्वयालिङ्गित क्लीब –षण्ढो, जायते। एव पितु सम्बन्धि शुक्र स्त्रीरक्तमिश्रित गर्भकारणम्। न केवल पितृसम्बन्ध्येवै मातुर्वा। दारुवाहिना तूक्तम्–"स्त्रीपुसयोस्तु सयोगे यद्यादौ विसृजेत्पुमान्। शुक्र, तत पुमान् वीरो जायते बलवान् दृढ ॥ अथ चेद्वनिता पूर्व विसृजेद्रक्तसयुतम्। ततो रूपान्विता कन्या जायते दृढसहृता ॥" इति। अत एव च पुगर्भा केचित्किञ्चिन्मातृसदृशा दृश्यन्ते, स्त्रीगर्भाश्च केचित्किञ्चित्पितृसदृशा दृश्यन्ते। ननु, "रसाद्रक्त ततो मास मासान्मेदस्ततोऽस्थि च। अस्थ्नो मज्जा तत शुक्र शुक्राद्गर्भ प्रजायते ॥" (सु शा अ ३।६२) इत्यविशिष्य निर्दिष्टम्, न तु पुशुक्राद्गर्भ प्रजायत इत्येव निर्दिष्टम्। उभयोरपि च स्त्रीपुसयोरवश्य सप्तधातुकत्वमभ्युपगन्तव्यम्, न पुंस एव। तदेव तरुणीना कुसुमशराक्रान्तमानसाना तथाविधेन पुरुषसयोगेन विना केवलात् स्मृतिसस्पर्शदर्शनाच्चलितप्रसुत[रक्त]-रेतसा किमिति गर्भो न जायते ? शुक्रार्तव हि गर्भकारणम्। तच्च सन्निहितमेवेति केचित्। तान् ब्रूमहे। पुशुक्राभावात्। पुशुक्र हि स्त्रीरेतोरक्तयुक्त गर्भकारणम्। न च तदत्रास्ति। तदभावाद्गर्भस्यानुत्पत्ति। तथा सङ्ग्रहेऽप्यध्यगीष्ट (शा अ १)–"योषितोऽपि स्रवन्त्येव शुक्र पुस समागमे। गर्भस्य तु न तत्किञ्चित्करोतीति न चिन्त्यते ॥" इति।

साम्प्रत यथाऽनेकगर्भत्व तुल्यकाल स्यात्तथा प्रतिपादयितुमाह—

**शुक्रार्तवे पुनः ॥ ५ ॥**
**वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता।**

वातेन यथास्वं शुक्रार्तवे बहुशो भिन्ने–बहुधा कृते सति, बह्वपत्यता भवति। यथास्वमिति यदा शुक्रमाधिक्येन वर्तमान वातेन बहुधा भिद्यते तदा पुगर्भानेकत्वम्, यदा तु स्त्रीरज आधिक्येन वर्तमान वायुना बहुधा भिद्यते तदा स्त्रीगर्भानेकत्वम्, इति बह्वपत्यता भवति। सूकरसारमेयादिजातिषु त्वनेनैव हेतुना सदाऽनेकापत्यता।

नन्, कथ वियोनयो विकृताकाराश्च गर्भा स्यु ? इत्याह—

**वियोनिविकृताकारा जायन्ते विकृतैर्मलैः ॥ ६ ॥**

वियोनयश्च विकृताकाराश्च वियोनिविकृताकारा, ते तथाविधा गर्भा जायन्ते। कथम् ? इत्याह–विकृतैर्मलै। वातादिभिर्दुष्टैरुन्मार्गगामिभि।

**मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम्।**
**वत्सराद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ७ ॥**

स्त्रीणा मासि मासि–प्रतिमास, रजो–रक्त, त्र्यह स्रवति–त्रीणि दिनानि प्रवर्तते। ननु, "शुद्धे शुक्रार्तवे" इति पूर्व शुक्रमेवोद्दिष्टम्, ततस्तस्यैव निर्देशो न्याय्य इति शुक्रमानुपूर्वीप्राप्तमुल्लङ्घ्य कस्माद्रक्त निर्दिष्टम् ? उच्यते। बहुवक्तव्यत्वात्। रक्ते हि बहुवक्तव्यमस्ति, अतस्तदेव प्राग्वक्तु युक्तम्। त्र्यहमिति "कालाध्वनो" इति द्वितीया। किम्भूत रज ? रसाज्जात–रसजम्। ननु, रक्त रसजमेव। वक्ष्यति हि (सु शा अ ३।६२)–"रसाद्रक्त ततो मास" इत्यादि। तत्किमर्थ रसजमित्युक्तम् ? ब्रूमहे। रसात्–आहाररसात् परिणमतो जात रसजमित्यत्र निर्दिष्टम्, न तु रसधातो, इत्यचोद्यमेतत्। कुत प्रभृति तद्रज प्रवर्तते ? इत्याह–वत्सरादित्यादि। द्वादशाद्वर्षादूर्ध्व–अनन्तर, स्रवति। पञ्चाशतो वर्षादूर्ध्व–परेण, क्षय याति। द्वादशाना पूरण वर्षमिति "तस्य पूरणे डट्" इति डट्। द्वादशादिति प्रायिकमेतत्, एकादशवार्षिकाणामपि स्त्रीणा रक्तप्रवृत्तिदर्शनात्। पञ्चाशत क्षयमित्यत्राप्येवमेव चिन्त्यम्।

**पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता।**
**शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥ ८ ॥**
**वीर्यवन्तं सुतं सूते**

पूर्णानि षोडशवर्षाणि यस्या सा, एवविधा स्त्री पूर्णविंशेन नरेण सङ्गता–मिथुनता याता सती, गर्भाशयादिषु शुद्धेषु वीर्यवन्त–सामर्थ्ययुक्त, पुत्र सूते–जनयति। प्रायिक चैतत्, अर्वागपि साधुगर्भदर्शनात्। अत एवायमेव तन्त्रकारोऽन्यथा सङ्ग्रहे जगाद (शा अ १)–"षोडशवर्षाया पञ्चविंशतिवर्ष पुत्रार्थ प्रयतेत।" इति। विशते पूरण इति डटिति "विंशते" इति तिलोपे विंशशब्द। पूर्णो विंशो यस्येति पूर्णविंश। गर्भस्याशयो गर्भाशय, तस्मिन्। शुद्धे–निर्मले, वातादिभिरदुष्टे। तथा, मार्गे–प्रकृतत्वादपत्यमार्गे, वातादिभिरदुष्टे। तथा, रक्ते–स्त्रीरजसि, शुद्धे। तथा, शुक्रे–पुबीजे, शुद्धे। तथा, अनिले शुद्धे–पित्तादिभिरनावृते। तथा, हृदि शुद्धे–दोषानधिष्ठितेऽसन्तप्ते।

**ततो न्यूनाब्दयोः पुनः।**
**रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥ ९ ॥**

१ [ ] एतच्चिन्हान्तर्गत पाठ ड ढ पुस्तकयोर्नोपलभ्यते। " " एतच्चिह्नान्तर्गतस्तु ट. पुस्तके च। २ 'रेतोरक्त' ण। ३ 'द्वयलि' ड ढ.ण। ४ 'लिङ्गी क्ली' ढ। ५ 'व। दारु' ट ढ। ६ 'धीरो' ट। ७ 'पाधिका क' ट। ८ 'सहिता' ट। 'हति' ड ढ। ९ 'विशेष नि' ट। १० 'नाऽपि के' ट। ११ 'स्रवत्येव' स स। १२ 'म्, इति बह्वपत्यता भवति। एवमार्तवाधिक्ये बोध्यम्। शूकर' ट।

१ 'रसपरि' ड.ढ। २ 'र्षाया प' ट ड ढ ण। ३ सुश्रुते तु (शा अ १०।५४)–"ऊनषोडशवर्षायामप्राप्त पञ्चविंशतिम्। यद्याधत्ते पुमान् गर्भं कुक्षिस्थ स विपद्यते ॥ जातो वा न चिर जीवेज्जीवेद्वा दुर्बलेन्द्रिय. ।" इत्युक्तम्।

तत -पूर्वोक्ताद्वय परिमाणात्, न्यूनाब्दयो -हीनवर्षैयो स्त्रीपुरुषयो पञ्चदशाष्टादशवर्षयो, रोगी भवति। रोगीत्यतिशय इनिर्मलत्र्थीय। तथोत्पन्नोऽल्पायुरधन्यश्च-अप्रशस्तो, गर्भो भवति। न भवत्येव वा।

ननु, दम्पत्यो शुक्रार्तवसयोगेऽपि सति क्वचिद्गर्भसम्भूतिर्न दृश्यते। तत्कथमेतत्? इत्याशङ्क्येदमाह—

**वातादिकुणपग्रन्थिपूयक्षीणमलाह्वयम्।**
**बीजासमर्थं रेतोस्रम्**

आदिशब्देन पित्तश्लेष्मणो परिग्रह। वातादयश्च कुणप च ग्रन्थिश्च पूयश्च क्षीण च मल चेति द्वन्द्व। एत आह्वय-सज्ञा, यस्य रेतोस्रस्य तदेवम्। आह्वयशब्द प्रत्येक वातादिषु योज्य। रेतश्चास्र च रेतोस्र वाताद्याह्वयम्। वातसज्ञ शुक्र वातशुक्रम्। एव पित्तशुक्र कफशुक्रम्। कुणपगन्धित्वात्कुणप नाम शुक्र कुणपशुक्रम्, तद्रक्तेन दुष्टेन भवति। एव ग्रन्थिशुक्र पूयशुक्र क्षीणशुक्रम्। मलाह्वय तु द्विधा,-मूत्रपुरीषभेदात्। मूत्रसदृश शुक्र मूत्रशुक्रम्। एव पुरीषशुक्रम्। आर्तवमपि शुक्रवद्दोषदूषितमबीजमेव। तस्य लिङ्ग नाम च शुक्रवद्वेद्यम्। यथा,-वातार्तव पित्तार्तवमित्यादि, यावत्पुरीषार्तवमिति। साध्यासाध्यविभागश्च तद्वदेव। शुक्रार्तवदोषेषु च चिकित्सामपि तुल्या ब्रूते। यत्र तु विशेष द्रक्ष्यति, तत्र विशेषमभिधास्यति। यथा (श्लो १५)-"पिबेद्ग्रन्थ्यार्तवे पाठा" इत्यादि।

**स्वलिङ्गैर्दोषजं वदेत्॥ १०॥**
**रक्तेन कुणपं, श्लेष्मवाताभ्या ग्रन्थिसन्निभम्।**
**पूयाभं रक्तपित्ताभ्यां, क्षीणं मारुतपित्ततः॥ ११॥**

स्वानि च तानि लिङ्गानि-लक्षणानि च, स्वलिङ्गानि,-यथास्व वातादीनां रूपाणि। यथा,-रूक्षश्यावारुणादीनि वायो, विस्रगन्ध्यौष्ण्यादीनि पित्तस्य, स्निग्धपाण्डुपिच्छिलादीनि कफस्य, तै स्वलिङ्गैर्वातादिदोषज वदेत्-जानीयात्, वैद्य इति शेष। रक्तेन दुष्टेन कुणप-कुणपगन्धित्वात्कुणपसज्ञ, अन्वर्थ रेतोस्र भवति। एव ग्रन्थ्यादीनामप्यन्वर्थसज्ञता बोध्या। श्लेष्मवाताभ्या दुष्टाभ्या ग्रन्थिसन्निभ-ग्रन्थ्याकारम्। पूयाभ-पूयसदृशम्, रक्तपित्ताभ्या रेतोस्र पूयाह्वय भवति। क्षीण नाम रेतोस्र मारुतपित्ततो भवति, मारुतपित्ताभ्यां दुष्टाभ्या दुष्ट तद्दूषणात् क्षीणता नीतमित्यर्थ।

**कृच्छ्राण्येतान्यसाध्यं तु त्रिदोषं मूत्रविट्प्रभम्।**

पूर्वोक्तानीमानि वातादिशुक्रार्तवानि क्षीणशुक्रार्तवान्तानि कृच्छ्रसाध्यत्वात् कृच्छ्राणि। असाध्य त्विति। मूत्र च विट् च मूत्रविशौ, तयोरिव प्रभा यस्य तदेवम्। रेतोस्रमुभयमपि मलसज्ञम्। त्रिदोष-त्रिदोषदुष्टम्। असाध्य-साधयितुमशक्यम्।

इदानीमुपक्रममाह—

**कुर्याद्वातादिभिर्दुष्टे स्वौषधम्**

स्व-आत्मीय, च तदौषध च स्वौषधम्, वाताद्यौषधमित्यर्थ। तेन वायो कुपितस्य यदौषध-प्रशमोपाय स्निग्धोष्णाम्ललवणादि, पित्तस्य मधुरशीतकषायादि, श्लेष्मण कटुरूक्षकषायादि, तत्तस्य भेषजमित्यवतिष्ठते। विशेषतस्तु-"वातजे शुक्रदोषे वसुकसैन्धवफलाम्लसिद्ध यवक्षारप्रतीवाप सर्पिष्पानम्, बिल्वविदारीसिद्ध क्षीरयुक्तमास्थापनम्, मधुभद्रदारुसिद्ध तैलमनुवासनम्, क्षीरकुलीररससिद्ध तैलमनुवासनमुत्तरबस्तिश्च। पैत्तिके काण्डेक्षुश्वदंष्ट्रागुडूचीक्काथसिद्ध मूर्वामधूकप्रतीवाप सर्पिष्पानम्, त्रिवृच्चूर्ण सघृतो विरेक, पयस्याश्रीपर्णीसिद्ध क्षीरयुक्तमास्थापनम्, मधुकमुद्गपर्णीसिद्ध तैलमनुवासनमुत्तरबस्तिश्च। श्लैष्मिके पाषाणभेदाश्मन्तकामलकक्काथसिद्ध पिप्पलीमधुकचूर्णप्रतीवाप सर्पिष्पानम्, मदनफलकषायो वमनम्, दन्तीविडङ्गचूर्णस्तैललीढो विरेक, राजवृक्षमदनफलकषायप्रगाढमास्थापनम्, मधुकपिप्पलीसिद्ध तैलमनुवासनमुत्तरबस्तिश्च। वातजे पुष्पदोषे भार्गीभद्रदारुसिद्ध सर्पिष्पानम्, काश्मर्यक्षुद्रसहासिद्ध वा क्षीरम्, मधुकशृगालविन्नाकल्क पय सर्पि सहित प्रियङ्गुतिलकल्क वा योनौ धारयेत्, सरलमुद्गपर्णीकषाय प्रक्षालनम्। पित्तजे काकोलीद्वयविदारीमूलक्काथमुत्पलपद्मकक्काथ मधुकपुष्पकाश्मर्यफलक्काथ वा सशर्कर पिबेत्, श्वेतचन्दनक्काथ वा सक्षौद्रम्।" इत्यादिक सङ्ग्रहात् (शा अ. १) बोध्यम्।

इदानी कुणपचिकित्सामाह—

**कुणपे पुनः॥ १२॥**
**धातकीपुष्पखदिरदाडिमार्जुनसाधितम्।**
**पाययेत्सर्पिरथवा विपक्कमसनादिभिः॥ १३॥**

कुणपाह्वये तु रेतसि धातक्यादिद्रव्यसाधित घृत पाययेत्, वैद्य इति शेष। अथवा, असनादिभि-असनादिगुणोद्दिष्टैभेषजै (हृ. सू अ. १५।१९) विपक्क घृत पाययेत्। ननु, कुणप इति सामान्योक्तावपि कथ रेतसीति विशेषो लभ्यते। ब्रूम। रेत प्रकरणात्। अपि च कुणपास्रस्य पुरस्तादुपक्रमं वक्ष्यति (श्लो १६)-"पेय कुणपपूयास्रे" इति। तस्माद्रेतसैव इह ग्रहण युक्तम्। पुनर्ग्रहणमत्र वातादिदुष्टे रेतस्युक्ता क्रिया कुर्यादिति द्योतयति।

साम्प्रत ग्रन्थिसज्ञे रेतस्युपक्रम ब्रूते—

**पलाशभस्माश्मभिदा ग्रन्थ्याभे**

पलाशस्य भस्म पलाशभस्म। अश्मभित्-पाषाणभेद।

१ 'वर्षीयो' ड ढ। २ 'शङ्कायामाह' ट। ३ 'प्रजासमर्थं' अ इ ण। ४ 'वज्ज्ञेयम्' ट। ५ 'ना स्वरू' ट। ६ 'वस्तिग' ड ढ। ७ 'भ्या रेतोस्र दुष्ट क्षी' ट। ८ 'शुक्राणि क्षीणशुक्रान्तानि' ट.ड.ढ.। ९ 'क्यत्वात्।' ड.ढ.।

१ 'वातिके शु' स ढ। २ 'षे यवस्तुकसैन्धवकटूष्णाम्ललवणक्षार' ट। 'षे सुक्तसै' स मू। ३ 'चीसिद्ध' स ढ.। ४ 'लमुत्तर' स ढ। ५ 'जे आर्तवदोषे' ट ड ढ स मू। ६ 'र्गीमधुकभद्र' स स.। ७ 'षाथै प्र' ड ढ। ८ 'धातु' इ.ड। ९ 'शेष उपल' ट.। १० 'सग्रहणमेव यु' ट। ११ 'क्रिया न कु' ट.। 'क्रिया तु कु' ड.।

पलाशभस्म चाश्मभिच्च, तेन विपक्व घृत ग्रन्थ्याभे-ग्रन्थिनाम्नि रेतसि, पाययेत् ।

पूयरेतसि ।

**परूषकवटादिभ्याम्**

पूयाख्ये रेतसि परूषकवटादिभ्या विपक्व घृत पाययेत् । परूषकश्च वटश्च परूषकवटौ, तावादी ययोर्गणयोस्तौ परूष कवटादी, ताभ्याम् । "परूषक वरा द्राक्षा" (हृ सू अ १५।१३) इति परूषकादि । तथा, "न्यग्रोधपिप्पल" (हृ. सू. अ १५।४१) इति वटादि ।

**क्षीणे शुक्रकरी क्रिया ॥ १४ ॥**

क्षीणे-क्षीणत्वात् क्षीणाह्वये रेतसि, शुक्रकरी क्रिया । कार्येति शेष । शुक्रलमतिशयेन सेव्यमित्यर्थ ।

**संशुद्धो विट्प्रभे सर्पिर्हिङ्गुसेव्यादि(ग्नि)साधितम् । पिबेत्**

सशुद्ध -कृतवमनविरेचन, विट्प्रभे-विण्मलसदृशे रेतसि, आतुरो घृत पिबेत् । किम्भूतम्? हिङ्गुसेव्यादिसाधितम् । अत्रादिशब्दो व्यवस्थावाची । तेन सङ्ग्रहोक्तस्य (शा. अ १)- "हिङ्गुशीर[चित्रकैरथवा]चित्रक[वितुन्नक]प्रियङ्गु[हिङ्गु]समङ्गामृणालसिद्धमेलाचोचचूर्णप्रतीवापम् ।" इत्यस्य पाठस्य सूचना भवति । हिङ्गुसेव्याग्निसाधितमित्यपरे पेठु । ननु, "असाध्य तु त्रिदोष मूत्रविट्प्रभम् ।" (श्लो १२) इत्युवाच तन्त्रकृत् । तत्किमित्यस्य चिकित्सोपदिष्टा? ब्रूम । किञ्चित्साध्यताऽप्यस्यास्तीति प्रतिपादयितु चिकित्सामुपदिदेश शास्त्रकार । अत एव मूत्रप्रभस्यासाध्यत्वाच्चिकित्सा नोपादिशत् । मूत्रप्रभार्तवविट्प्रभार्तवयोरप्यसाध्यत्वादेवोपक्रम नाभ्यधात् ।

वाताद्यार्तवेषु "स्वौषध कुर्यात्" (श्लो १२) इत्युक्तम् । कुणपग्रन्थ्याद्यार्तवेषु विशेषेण चिकित्सा वक्ष्यति—

**ग्रन्थ्यार्तवे पाठाव्योषवृक्षकजं जलम् ॥ १५ ॥**

ग्रन्थ्यार्तवे-ग्रन्थिनाम्न्यार्तवे स्त्रीरजसि, जल पिबेत् । किम्भूतम्? पाठादिजातम् । पाठा-प्राचीना । व्योष-त्रिकटुकम् । वृक्षक -कुटज ।

**पेयं कुणपपूयास्रे चन्दनं वक्ष्यते तु यत् । गुह्यरोगे च तत्सर्वं कार्यं सोत्तरबस्तिकम् ॥ १६ ॥**

कुणपाख्ये रजसि पूयाख्ये चापि चन्दन पेयम् । अत्र 'द्रवानुक्तौ जल देयम्' (हृ क अ ६।२३) इति परिभाषया जलेन पातव्यमिति बोध्यम् । क्षीणार्तव इह चिकित्सित नोक्तम्, तच्च स्वधियोह्यम् । यथा क्षीणरेतसि शुक्रकरी क्रिया कार्येत्युक्तम्, तथा क्षीणे रक्ते रक्तकरी क्रिया कार्येति । न च केवलमेतत्पूर्वोक्तमेव चिकित्सित कार्यम्, यावद्गुह्यरोगप्रतिषेधे यद्वक्ष्यते-भणिष्यते, तदपि सर्व साधन यथायोग वमनादि योनौ पिचुकधारणादिक च कार्यम् । किम्भूतम्? सोत्तरबस्तिकम् । सहोत्तरबस्तिना वर्तत इति सोत्तरबस्तिकम् । उत्तरबस्तिरपि तत्र कार्य इत्यर्थ । सोत्तरबस्तिकमिति "तेन सहेति तुल्ययोगे" इति बहुव्रीहि, "शेषाद्विभाषा" इति कप्, 'वोपसर्जनस्य" इति सभाव । उत्तरबस्तिरपि तत्रौषधमित्यर्थ ।

बीजासमर्थ रेतोऽस्रमभिधाय साम्प्रत शुद्धं यच्छुक्रार्तवं बीजसमर्थ तल्लक्षणार्थमाह—

**शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहलं बहु । घृतमाक्षिकतैलाभं सद्गर्भाय**

शुद्धे शुक्रार्तव इति पूर्वं शुक्रस्योपदेशात्प्राधान्याच्च शुक्रस्य पूर्वमुपन्यास । "तत्राहाररसस्य सम्यक्परिणतस्य क्रमान्मज्जानमनुप्राप्तस्य सार शुक्रसज्ञा लभते । तच्च क्षीर इव सर्पिरिक्षुरस इव गुड शरीरे शुक्रधरा कलामाश्रित्य सर्वाङ्गव्यापितया स्थितम् । विशेषतश्च मज्जमुष्कस्तनेषु । हर्षोदीरित तु सङ्घट्टनेन हृदयावेशात् पिण्डीभूतमङ्गादङ्गात्प्रवर्तते (सङ्ग्रहे शा अ १) ।" तच्च शुक्लादिगुणयुक्त शुक्रम् । तथा, घृताभ माक्षिकाभ तैलाभ वा सद्गर्भाय-शोभनगर्भार्थं, भवति । तत्र घृताभेन गौरवर्णत्व गर्भस्य, माक्षिकाभेन श्यामवर्णत्व, तैलाभेन कृष्णवर्णत्व, भवति ।

**आर्तवं पुनः ॥ १७ ॥**

**लाक्षारसशशास्राभं धौतं यच्च विरज्यते ।**

"रक्तमेव स्त्रीणा मासि मासि गर्भकोष्ठमनुप्राप्य त्र्यहं प्रवर्तमानमार्तवमाचक्षते । अतिप्रसङ्गेनानृतौ वा प्रवर्तमान तदेवासृग्दरादिसज्ञा लभते" (स शा अ. १) । यदार्तव लाक्षा-

---

१ अस्याग्रे "स्निग्ध वान्त विरिक्त च निरूढमनुवासितम् । योजयेच्छुक्रदोषार्त सम्यगुत्तरबस्तिभि. ॥ १ ॥" इति सौश्रुत श्लोक क्वचिदधिको दृश्यते । किन्तु नासौ लिखितपुस्तकेषु केषुचिदप्युपलभ्यते, नाप्यरुणदत्तेन व्याख्यात, अतो न ग्रन्थकारप्रणीत । २ " हिङ्गुसेव्याग्निसाधितम्" इति युक्त पाठ, "विट्प्रभे पाययेत्सिद्ध चित्रकोशीरहिङ्गुभि ।" इति सुश्रुते (शा अ २।१०), "मूत्रपूरीषरेतसि हिङ्गुशीरचित्रकै" इति सङ्ग्रहे (शा अ १) चोक्तत्वात् । ३ 'रेक' ड ढ । ४ विट्प्रभ इत्यस्य 'पुरीषमूत्रसदृशे' इत्यर्थो युक्त, 'विट्प्रभे-मूत्रपुरीषप्रकाशे' रेतसि । विट्ग्रहणेनात्र पुरीष मूत्र च गृह्यते, मलमूत्रमात्रवाचकत्वाद्विट्शब्दस्य ।' इति (सु शा अ २।१० टी) डल्हणोक्तत्वात् "मूत्रपुरीषरेतसि वायुनाऽतिविकृते हिङ्गुशीरचित्रकै" इति सङ्ग्रहोक्तत्वाच्च । अरुणदत्तव्याख्यान तु चिन्त्यम् । ५ 'सिद्ध त्व गेला' ण. । ६ 'पर. पाठ ।' ट ।

१ 'क्षक-त्रुटि ।' ट ड ढ । २ 'वाऽपि' ण । ३ 'धिया ग्राह्यम्' ट ण । 'धियाऽप्यूह्यम्' ड । ४ 'क्षणमाह' ट ड ढ. । ५ 'शुद्ध शुक्र गु' ढ । ६ 'तत्र ह्याहा' ट । ७ 'कला समा' ट. ड ढ । ८ 'श्रित्यास्तृत स' स स । ९ 'शेषेण म' ड ढ । १० 'मासे मासे' स द्व. । ११ 'वमित्याहु ।' स द्व. । १२ 'ग्दर प्रदर व्यापद च रक्तयोनिसज्ञा' स द्व. ।

रसाभ–अलक्तकरससदृशम्, तथा शशरुधिरसदृशम्, तथा यच्च धौत सद्भिरज्यते–वस्त्रादिलग्न धौत सल्लाहित्य जहातीत्यर्थ । तदीदृशमार्तव तु सद्गर्भाय सम्पद्यते ।

शुद्धशुक्रार्तवलक्षणमुक्त्वा, इदानी गर्भसम्भवात्पूर्वमितिकर्तव्यतामाह—

**शुद्धशुक्रार्तवं स्वस्थं संरक्तं मिथुनं मिथः ॥१८॥**
**स्नेहैः पुंसवनैः स्निग्धं शुद्धं शीलितवस्तिकम् ।**

शुक्र चार्तव च शुक्रार्तवे, शुद्धे शुक्रार्तवे यस्य मिथुनस्य तच्छुद्धशुक्रार्तवम्,–स्त्रीपुरुषयुगल, समुपाचरेदिति सम्बन्ध । तथा, स्वस्थ–अरोग, रोगलेशेनाप्यनाक्रान्तम् । तथा, मिथ –परस्पर, सरक्त–अनुरागयुक्तमन्योन्यदर्शनेनै कुसुमचापाविष्ट मेवविधम् । स्नेहै पुसवनै –यथाभिमतगर्भग्रहणप्रभावै फल सर्पिर्महाकल्याणकादिभि , स्निग्धम् । तथा, शुद्ध–कृतवमनविरेचनम् । तथा शीलितबस्तिकम्, शीलिता –अभ्यासेनानुष्ठिता, बस्तयो येन–मिथुनेन, तच्छीलितबस्तिकम् । न सकृदेवानुष्ठितबस्तिकमित्यथ ।

एव दम्पत्योस्तुल्यामितिकर्तव्यतामभिधाय, इदानीमनयो पृथग्वक्ति—

**नरं विशेषात्क्षीराज्यैर्मधुरौषधसंस्कृतैः ॥ १९ ॥**

विशेषात्–विशेषेणातिशयेन, नर क्षीरैर्घृतैश्च समुपाचरेदिति सम्बन्ध । विशेषादित्यनेनैतत् द्योतयति । विशेषेण नर क्षीराज्यै समुपाचरेत्, न पुनर्नारीमपि तैर्न समुपाचरेदिति । किम्भूतै ? मधुरौषधसस्कृतै मधुराणि–मधुरप्रायाणि मधुरप्रभावाणि च तान्यौषधानि–जीवनीयादीनि, [च] तैर्मधुरौषधै , सस्कृतै –सिद्धै ।

**नारीं तैलेन माषैश्च पित्तलैः समुपाचरेत् ।**

नारीं तैलेन माषैश्च समुपाचरेत् । चशब्दोऽत्र भिन्नक्रम । पित्तलैश्च समुपाचरेदित्यर्थ । पित्तलानि हि रक्तवृद्धिहेतव । उक्त हि (हृ सू अ ११।२६)–"आश्रयाश्रयिणा मिथ । यदेकस्य तदन्यस्य वर्द्धनक्षपणौषधम् ॥" इति । एव च तैल पित्तकृत्त्वादेवोपन्यस्तम् । विशेषादित्यत्राप्यनुवर्तते । क्षीराज्येभ्योऽपि विशेषेण नारी तैलादिभि समुपाचरेदित्यर्थ । पुरुषस्य तु रजसोऽभावात्तद्वृद्धिहेतवस्तैलादयो नोपयुज्यन्त एव ।

पूर्वोक्तसकलसामग्रीयुक्तादपि मिथुनाद्विशिष्टकालमन्तरेण गर्भस्यासम्भव इति स्त्रीमधिकृत्य तद्गर्भग्रहणयोग्य काल दर्शयितुमाह—

**क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ॥ २० ॥**
**स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ।**

कार्श्यहेतु विना क्षाम, तथा प्रसन्न–निर्मल, वदन–मुख, यस्या सेवभूता, ताम् । श्रोणिश्च पयोधरौ च श्रोणिपयोधरम्, स्फुरत्–कम्पमान, श्रोणिपयोधर यस्या सा, ताम् । श्रोणि –कटि । स्रस्ते–च(ग)लिते, इवाक्षिणी कुक्षिश्च यस्या सा, ताम् । तथा, पुसि काम –अभिलाषो, यस्या सा, ताम् । एवविधा स्त्रियमृतुमती–ऋतुयुक्ता, विद्यात् । तस्या स गर्भ ग्रहणकाल इत्यर्थ । पुस्कामामिति "सपुकाना सो वक्तव्य" इति मकारस्य सकारादेशाद्वत्वाभाव ।

"सर्व च हेतुमद्ब्रूयात्" इत्यागम , अत आह—

**पद्मं सङ्कोचमायाति दिनेऽतीते यथा, तथा ॥ २१ ॥**
**ऋतावतीते योनिः, सा शुक्रं नातः प्रतीच्छति ।**

यथा दिवा प्रफुल्ल पद्ममनन्तर दिवसातिक्रान्तौ सङ्कोचमायाति–मुकुलभाव प्राप्नोति, तत्स्वभावत्वात्तस्य । तथा–तेनैव प्रकारेण, ऋतावतीते–अतिक्रान्ते द्वादशरात्रस्वभावे, योनि सङ्कोचमायाति । सा च–योनि , [अत –] सङ्कुचितत्वात्, शुक्र न प्रतीच्छतीति ।

विवृताविवृतमुखत्व हि योनेर्गर्भग्रहणाग्रहणहेतु । तच्च वायो क्रियावत कालसहायस्यायत्तमित्याह—

**मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ॥ २२ ॥**
**ईषत्कृष्णं विगन्धं च वायुर्योनिमुखान्नुदेत् ।**

मासेन यदुपचितमाहाररसतो वृद्धिं प्राप्त रक्त तत्पुनर्मासेनोपचित रक्तमृतौ वायुर्योनिमुखान्नुदत्–प्रेरयेत् । विधौ लिङ् । तदा योनिमुख विवृत सम्पद्यत । कन नुदत् ? धमनीभ्या–स्रोतोविशेषाभ्याम् । किम्भूत रक्तम् ? ईषत्कृष्ण, तथा विगन्ध–विस्रगन्धविरहितम् । प्रकृतिस्थप्रेरकपवनसम्पर्कादीषत्कृष्णता, न तु कुपितसमीरणप्रेरणसश्लेषवशादिवात्यन्त कृष्णता । नापि पित्तेन तथाभूतेन युक्तम्, येन विस्रगन्धि स्यात् । नापि श्लेष्मणा तथाभूतेन युक्तम्, येन तद्वर्णयुक्त स्यात् । तस्माच्छुद्ध विशिष्टे काले योनिमुखात्प्रवर्तमान रक्तमार्तवसज्ञा लभत । तदेव चान्यदा योनिमुखात्प्रवर्तमानमसृग्दरसज्ञामासादयति ।

शुद्ध च रक्त पुष्पसज्ञम्, गर्भाख्यस्य फलस्य भविष्यतोऽभिव्यञ्जकत्वात् । अत एवाह—

**ततः पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ॥२३॥**
**मृजालङ्काररहिता दर्भसंस्तरशायिनी ।**
**क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्षणम् ॥ २४ ॥**

१ 'लग्न स' ट ड ढ । २ 'युग्म' ढ । ३ 'न तुष्ट मत्सरानाविष्टमानसम् ।' ट । ४ 'प्रकारैर्महा' ट । 'प्रभावैर्महा' ड ढ । ५ 'पृथगुपक्रम वक्ति' ट । ६ 'धसाधितै.' अ ढ । ७ 'द्वैरित्यर्थः ।' ट. । ८ 'भ्यो विशे० तैलेन स' ट । ९ 'पद्यन्त' ट । १० 'नारिकमिह' ड.ढ. । ११ 'क्षामा प्र' अ.ढ. । १२ 'क्षामा' ट.ढ. ।

१ 'यस्यास्ताम्' ट ण । २ 'स्रस्त इवा' ट ड ढ । 'स्रस्त–सन्धिबन्धेभ्य शिथिलीभूतम्' इतीन्दु । ३ 'गमादाह' ड ढ । ४ 'योनि स्याच्छुक्र' स स । ५ 'नान्त' अ ढ स मू । ६ 'भावात्तस्य' ड ढ ण । ७ योनि –गर्भाशय । ८ 'हृणे हे' ड ढ. । 'हृणन च वायो' ट । ९ 'लमाहात्म्यस्या' ड ढ । १० 'मुखं नयेत्' सुश्रुत । ११ 'तथा यो' ड.ढ । १२ 'शादत्यन्त' ट.ड.ढ. । १३ 'कर्शनम्' इ ण ।

**पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ।**

पुष्पेक्षणात्–पुष्पस्य दर्शनादेवानन्तर[1], स्त्री त्र्यह–त्रीणि दिनानि, कल्याण–शुभ, अवश्य ध्यायति–चिन्तयतीति कल्याणध्यायिनी स्यात् । आवश्यके णिनि. । तथा, मृजा–स्नानक्रिया, अलङ्कार –कटकादि पुष्पादिर्वा, अलङ्क्रियते–भूष्यते शरीरमेभिरिति कृत्वा, एव गन्धमाल्यस्याप्यलङ्कारत्वम् । तथा च वक्ष्यति ( हृ चि अ ५।८२ )–"गन्धमाल्यादिका भूषाम्" इति । मृजालङ्काराभ्या रहिता–वर्जिता । तथा दर्भाणा सस्तर – शय्या, तत्र शेते सा दर्भसस्तरशायिनी । "व्रते" इति णिनि । तथा[3], क्षैरेय–क्षीरसिद्ध, यावक–यवान्नविशेष, पर्णे शरावे हस्ते वा भुञ्जीत–भक्षयेत् । कियन्मात्रम् ? स्तोक–अल्पमात्रम् । तत्क्षैरेयमुपयुक्त कीदृश स्यात् ? इत्याह– कोष्ठशोधनकर्षणमिति[4] । शोधन च कर्षण च शोधनकर्षणम् । कोष्ठस्य शोधनकर्षणमिति षष्ठीसमास । शरीरस्य[5] महास्रोतो मध्यमो भाग आमपक्वस्याशय कोष्ठशब्दवाच्य । स एव गर्भाधिष्ठानम्, अतस्तस्यैव शोधनम् । तथा, तदङ्गाना कर्षणमिति व्याख्येयम् । न पुन कोष्ठस्य शोधनमन्येषा चाङ्गाना कर्षणम् । तथा[6] हि–त्रिवृतादिना विरिच्यते, नैवमनेन यावकेन । वस्तुस्वाभाव्यात् कोष्ठशोधनकर्षणमात्रमेव क्रियते । क्षैरेयमिति "क्षीराड्ढञ्" इति ढञ् । याव एव यावक इति "यावादिभ्य कन्" इति कन् । तथा, ब्रह्मचारिणी–त्यक्तव्यवाया, स्यात् ।

**चतुर्थेऽह्नि ततः स्नाता शुक्लमाल्याम्बरा शुचिः २५**
**इच्छन्ती भर्तृसदृशं पुत्र पश्येत्पुरः पतिम् ।**

तत –त्र्यहादूर्ध्व, चतुर्थे वासरे स्नाता, तथा शुक्लानि माल्यान्यम्बराणि च यस्या सैवम्, तथा शुचि –अन्तर्बहिश्च पवित्रा सती, पुर –पूर्व, पति पश्येत् । सङ्ग्रहेऽप्युक्तम् ( शा अ. १ )–चतुर्थे[7] त्वहन्युद्वर्तिता शीतसलिलस्नाताऽनुलिप्ताऽलङ्कृता शुक्लमाल्याम्बरा कृतमङ्गलस्वस्त्ययनैवविधमेव[8] भर्तार पश्येदनन्यमना । तदा[9] हि यादृश[10] पश्यति चिन्तयति वा तादृशमेव प्रसूत इति ।" इति ।

तत्किं त्र्यहमेव ऋतु, अत्रैव पुष्पदर्शनात् । अथोत्तरकालमपि ? इत्याशङ्क्याह—

**ऋतुस्तु द्वादश[11] निशाः पूर्वास्तिस्रो[12]ऽत्र निन्दिताः २६**

१ 'देव दर्शनानन्तर' ण । २ 'गन्धस्या' ट ड ढ । ३ 'था त्र्यह क्षै' ट । ४ 'कोष्ठेत्यादि ।' ड ढ ण । ५ 'रमहानिष्ठो मध्य' ड ढ । ६ 'यथा' ड ढ ण । ७ 'तुर्थेऽह्न' ट स द्व । ८ 'विधाभ' ड ढ । ९ 'तथा हि' ट ड ढ ण । १० 'यादृशमेव प० तादृश प्र' स द्व । ११ अत्रार्थे सुश्रुतेन (शा अ ३।६)–"ऋतुस्तु द्वादशरात्र भवति दृष्टार्तव ।" इत्युक्तम् । व्याख्यात च डल्हणेन 'द्वादशरात्रमिति षोडशदिनेषु मध्ये, आद्य दिनत्रयमन्तिम च षोडश योनिसङ्कोचदिन न गणनीयम् ।' इति । अत्राप्येवमेव व्याख्यान युक्तम्, "षोडशर्तुनिशा. स्त्रीणाम्" इत्यादि स्मृते । १२ 'स्तिस्रश्च ता' इति क्वचित् ।

**एकादशी च, युग्मासु स्यात्पुत्रोऽन्यासु[1] कन्यका ।**

पुष्पदर्शनात्प्रभृति यावद्द्वादशरात्रयस्तावदृतुर्योषित, न पुनस्त्र्यहमेव, यत्र पुष्प प्रवर्तते, इति[2] ऋतुशब्देन दर्शयति । अत्र–अस्मिन् द्वादशनिशाव[3]च्छिन्नर्तुकाले, या पूर्वास्तिस्रो निशा, यासु प्राय पुष्प[4] प्रवर्तते, ता निन्द्या[5]–गर्ह्या सद्भि । न तत्र सन्मति स्त्रिय सङ्गच्छेत्[6] । अत एवात्र ब्रह्मचारित्वोपदेश । तथा, एकादशी निशा निन्द्या–अप्रशस्ता । चशब्दोऽत्रानुक्तायास्त्रयोदश्या समुच्चयार्थ । त्रयोदश्या हि मिथुनीभावे नपुसकस्योत्पत्तिरिति केचिदाहु । युग्मासु–चतुर्थषष्ठाष्टमदशमद्वादशलक्षणासु निशासु, सङ्गमे पुत्र स्यात्, अचिन्त्यत्वाद्धेतुभावस्य । तासु हि रात्रिष्वार्तवमल्पीभवति । अन्यासु[8]–अयुग्मासु निशासु पञ्चमीसप्तमीनवमीषु, कन्या जायते । तदा हि शुक्रमल्पीभवति, पूर्वोक्ताद्धेतो[9] । यदि पुनराहारादिवशात् शुक्रस्याविकलत्वमयुग्मासु, युग्मासु[10] चार्तवपूर्णता[11] स्यात्, तदा पुमान् स्त्र्याकृतिर्दुर्बलो हीनाङ्गो वा जायते, स्त्री च पुरुषाकृतिर्दुर्बला हीनाङ्गा वा[12] । एकादशीत्रयोदश्योस्तु नपुसकमिति[13] । तदेव दम्पती पुगर्भमिच्छन्तौ युग्मासु निशासु पुसवनादिक[14] कर्माचरेताम्, स्त्रीगर्भमिच्छन्तौ त्वयुग्मासु रात्रिषु ।

**उपाध्यायोऽथ पुत्रीयं कुर्वीत विधिवद्विधिम् ॥२७॥**
**नमस्कारपरायास्तु शूद्राया मन्त्रवर्जितम् ।**

अथेत्यानन्तर्ये[15] मङ्गलसूचको निर्दिष्ट । अत एवायमत्रार्थ – ऋतुकालादनन्तर मङ्गलपूर्विका सर्वामिमा वक्ष्यमाणामितिकर्तव्यता कुर्यादिति । उपाध्याय –पुरोहितोऽथर्ववेदवित्, पुत्रीय[16]–पुत्राय हित, विधिमित्य[17] कुर्वीत । कथम् ? विधिवत्–न यथाकथञ्चित् । विधिरस्यास्तीति विधिमत्, प्रशसाया मतुप् । क्रियाविशेषण चैतत्, तेन प्रशस्त वेदोक्तमन्यूनातिरिक्तविधान यथा

१ 'ऽन्यत्र क' अ ढ । २ 'इति तु श' ट ण । ३ 'शाभिधर्तुकाले' ट । ४ 'ऋतौ पुष्पदर्शने प्रशस्तकाल –ऋतुकाल । आर्तवदर्शन च शरदाद्यृतुसाधर्म्यात् ऋतुशब्देनोच्यते । यथा ऋतावुप्तानि बीजानि प्ररोहन्ति, तथा आर्तवदर्शनादृतौ शुक्ररूप बीजमुप्तमिति ऋतुसाधर्म्यम् ।' इति चक्र । ५ 'न्द्या –अग्राह्या' ट । ६ 'स्त्रिया सङ्गच्छते' ड ढ ण । ७ 'सकोस्त' ट । ८ 'तु षष्ठ्या' ड ढ ण । ९ 'त्वाद्धेतु' ट ढ ण । १० 'सु–युग्माभ्य सकाशात्, पञ्च' ट ढ ण । ११ 'सु च न्यूनता' ण. स द्व । 'सु च न न्यूनता' ट । 'सु चार्तवान्यूनता' ड । १२ अस्याग्रे 'उक्त हि–स्त्रिया शुक्रेऽधिके स्त्री स्यात्पुमान् पुसोऽधिके भवेत् । तस्माच्छुक्रविवृद्ध्यर्थ वृष्य स्निग्ध च सेवयेत् ॥' इति ट. पुस्तकेऽधिक पाठ । १३ 'कमेवेति' ण । १४ 'पुसादि कर्मा' ड ढ । १५ 'न्तर मङ्गलवाचको' ट । १६ पुत्रीयविधान चरके ( शा अ. ८।१० ), डल्हणटीकाया ( सु शा अ २।२७ ) च द्रष्टव्यम् । १७ 'मिष्टि कु' ट. । 'मिष्ट कु' ण. ।

भवति तथाविध कुर्वीतेत्यवतिष्ठते । ब्राह्मणादिवर्णत्रयस्येम विधिं कुर्वीत । शूद्राया पुनर्नमस्कारपराया –नमस्कारप्रधानाया, यथोक्त सर्वं विधि मन्त्रवर्जित कुर्यात् । पुत्रीयमिति "पुत्राच्छ च" इति च्छ ।

**अवन्ध्य एवं संयोगः स्यादपत्यं च कामतः ॥ २८ ॥**

एव–यथोक्तविध्यनुष्ठाने, दम्पत्योर्य सयोगो–मिथुनीभाव, स न वन्ध्य स्यात् । अपि तु सफलो गर्भसम्भवहेतुर्भवेदित्यर्थः । न केवल दम्पत्यो सयोग एव निष्फलो न भवेत्, अपत्य च कामत –यथाभिमत पुगर्भरूप स्त्रीगर्भरूप वा, स्यात्।

अत एवाह—

**सन्तो ह्याहुरपत्यार्थं दम्पत्योः सङ्गतिं रहः ।**

रह शब्देन ग्राम्यवचसाऽत्र ग्राम्यधर्म सूचयति । हि–यस्मात्, सन्त –साधव, अपत्यार्थ–अपत्यजननाय, दम्पत्यो –स्त्रीपुरुषयो, रह –एकान्ते, विशिष्टकालोचित विशिष्टसयोग–सङ्गतिमाहु, न ग्राम्यसुखलिप्सायै ।

न चापत्यमात्रायेत्याह—

**दुरपत्यं कुलाङ्गारो गोत्रे जातं महत्यपि ॥ २९ ॥**

दुष्टापत्य स्त्रीगर्भ पुगर्भो वा, महत्यपि गोत्रे जात–उत्कृष्टेऽपि कुल उत्पन्न, अङ्गारकार्यकरणसामर्थ्यात्समस्तत्कुलविनाशहेतुत्वात्कुलाङ्गार इत्युच्यते ।

**इच्छेतां यादृशं पुत्रं तद्रूपचरितांश्च तौ ।**
**चिन्तयेतां जनपदांस्तदाचारपरिच्छदौ ॥ ३० ॥**

तौ–दम्पती, यादृश पुत्रमिच्छेता–कामयेता, तद्रूपचरितान् रूप–वर्णसस्थानप्रमाणाकृत्यादि । तथा चरित–श्रद्धाश्रुतसत्यार्जवानृशस्यदानदयादाक्षिण्यस्वभावादि । तस्य–मनीषितस्य, सदृशे रूपचरिते येषा तान् जनपदान् चिन्तयेता–ध्यायेताम् । पुत्रशब्दोऽपत्यमात्रोपलक्षणार्थोऽत्र । तथा हि दुहितरमपि कश्चिदिच्छत्येव । किम्भूतौ तौ पितरौ ? तदाचारपरिच्छदौ । आचरण–आचार, कुलानुरूपस्य देशानुरूपस्य चेतिकर्तव्यतालक्षणस्य कर्मणोऽनुष्ठानम् । परिच्छदो–मनुजगवाश्वधनधान्यवस्त्रालङ्कारशयनरथायुधगृहोद्यानवीणापणवगायनशय्यास्तरणादि । आचारश्च परिच्छदश्चाचारपरिच्छदौ । तदित्यनेनाभिलषितापत्य परामृश्यते । तस्यैवाचारपरिच्छदौ ययोस्तौ दम्पती इच्छासदृशरूपचरितान् जनपदान् ध्यायेताम् ।

**कर्मान्ते च पुमान् सर्पिःक्षीरशाल्योदनाशितः ।**
**प्राग्दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ॥ ३१ ॥**
**आरोहेत् स्त्री तु वामेन तस्य दक्षिणपार्श्वतः ।**
**तैलमाषोत्तराहारा तत्र मन्त्रं प्रयोजयेत् ॥ ३२ ॥**

कर्मान्ते च–पुत्रीयविध्यनुष्ठानावसाने च, पुमान् स्त्रीतः प्राक्–पूर्व, शय्यामारोहेत्–आक्रमेत् । किम्भूत ? सर्पिःक्षीरशाल्योदनाशित,–सर्पिर्मिश्रक्षीरशाल्योदनेनाशितो–भोजितः । कथमारोहेत् ? दक्षिणेन पादेन, मौहूर्तिकाज्ञया–ज्योति शास्त्रविदादिष्ट । स्त्री तु वामेन पादेन तस्य दक्षिणपार्श्वत शय्यामारोहेत्, मौहूर्तिकाज्ञयेति योज्यम् । तुरवधारणे, उभयत्रापि । पुमान् दक्षिणेनैव पादेन प्रागेव, स्त्री पश्चादेव वामेनैव पादेन पुसो दक्षिणपार्श्वत एव, शय्यामारोहेत्, नान्यथा क्वचेति । "पुमान् सर्पि क्षीरशाल्योदनाशित " इत्युक्तम् । स्त्रियास्तु तत्कालोचितमाहार निरूपयन्नाह–तलेत्यादि । तैल च माषश्च, ताभ्यामुत्तर –अधिक, आहारो यस्या सैवम् । उत्तरशब्दोऽत्र तैलमाषौ पित्तलौ रक्तवृद्धिहेतू तयाऽत्यन्त सेवितव्यौ, न पुनस्तथा शुक्रवृद्धिकराण्यन्यान्यपि क्षीरादीनि द्रव्याणीति प्रतिपादयति । तत्र च मन्त्र वक्ष्यमाण प्रयोजयेत्–पठेत् ।

तमेव मन्त्रमाह—

**ॐ अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वां दधातु विधाता त्वां दधातु ब्रह्मवर्चसा भवेति ।**
**ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाऽश्विनौ ।**
**भगोऽथ मित्रावरुणौ वीरं ददतु मे सुतम् ॥ ३३ ॥**

आहिरसीत्यादि [ वीर ददतु मे सुतमित्यन्त मन्त्र पठेत् ।]

**सान्त्वयित्वा ततोऽन्योन्यं संविशेतां मुदान्वितौ ।**
**उत्ताना तन्मना योषित्तिष्ठेदङ्गैः सुसंस्थितैः ॥३४॥**

ततो–मन्त्रपाठादनन्तर, परस्पर सान्त्वयित्वा–प्रियवचनादिना प्रीतिमुत्पाद्य, सविशेता–मिथुनीभाव गच्छेताम् । किम्भूतौ ? मुदा–हर्षेण, अन्वितौ–युतौ । तत्र च सवेशने योषिदुत्ताना तच्चित्ता चावयवै सुसस्थितैस्तिष्ठेत् ।

किमेवसति भवति ? इत्याह—

**तथा हि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः ।**

हि–यस्मात्, तथा–तेन प्रकारेण, सा बीज गृह्णाति, दोषै –

१ 'विधिं कु' ट । २ 'यस्यैव वि' ण । ३ 'छानेन द' ट । ४ 'एव' ट । ५ 'सङ्गत' ढ ण । ६ 'न वाऽप' ट । ७ 'ङ्गारं गोत्रे' अ ढ । ८ "यादृश च पुत्रमाशासीत तद्रूपवर्णचरितान् जनपदाननुचिन्तयेति स्त्री वाच्या ।" इति सङ्ग्रहे ( सू अ १ ), "या या येषा येषा जनपदाना मनुष्याणामनुरूप पुत्रमाशासीत सा सा तेषा तेषां जनपदानामाहारविहारोपचारपरिच्छदाननुविधस्वेति वाच्या।" इति चरके (शा अ ८।१४) च स्त्रिया एव कर्तृत्वम्, हृदयसुश्रुतयोस्तु दम्पत्योरिति विशेष । ९ 'रत्नायुधार्थगृहवीणा' ट ।

१ 'च' ढ । २ 'दिष्टकाले' ट । ३ 'तू तावदत्यन्त' ट । 'हेतुतया' ढ ण । ४ 'राणि क्षीरा' ट । ५ 'अहि' अ ढ, चरक । ६ 'सि सर्व' अ ढ । ७ 'ता वाग्दधातु' चरक । ८ 'त्वा' स. ढ चरक । ९ 'भवेदिति' इ ण, चरक । १० 'णौ पुत्र वीर दधातु मे ।' चरक । ११ [ ] इति पाठ ड ढ ण पुस्तकेषु नोपलभ्यते । १२ 'सान्तयि' अ ढ । १३ 'सवसेता' ण.ड.ढ. स.मू चरक. । १४ 'सवसने' ड. । १५ 'माश्रितैः' ण. ।

वानादिभि, स्वस्थानावस्थितैः सद्भिः । सङ्ग्रहे तूक्तम् ( शा अ १ )—"न चासावधस्तिष्ठेत् । तथा हि स्त्रीचेष्टः पुमान् जायते पुंचेष्टा वा स्त्री । न च न्युब्जा पार्श्वगता वा सेवेत । न्युब्जाया वातो बलवान् स योनिं पीडयति । दक्षिणपार्श्वगाया श्लेष्मा पीडितश्च्युतोऽपिदधाति गर्भाशयम् । वामपार्श्वगायास्तद्वत्पित्तं विदहति रक्तशुक्रे । तस्मादुत्ताना बीजं गृह्णीयात् ।" इति ।

**लिङ्गं तु सद्योगर्भाया योन्यां बीजस्य सङ्ग्रहः ॥ ३५ ॥**
**तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानुबन्धनम् ।**
**हृदयस्पन्दनं तन्द्रा तृड्ग्लानिर्लोमहर्षणम् ॥ ३६ ॥**

सद्यः—तत्क्षणात्, गर्भो यस्याः सैवम्, तस्याः सद्योगर्भायाः लक्षणं बीजस्य—गर्भाख्यस्य, योन्या—करणभूतया, सङ्ग्रहः—सम्यग्ग्रहणम् । तथा, तृप्तिरिव तृप्तिः, गुरुत्वं स्फुरणं च कुक्षेर्भवति । तथा, शुक्रं चास्रं च—शुक्रास्रे, अनुबन्धनं—प्रवर्तनम्, नानुबन्धनं—अननुबन्धनम्, शुक्रास्रयोरप्रवर्तनं—शुक्रास्रानुबन्धनम्,—शुक्रास्रयोर्योनिमुखाद्वमनं बहिर्निःसरणम्, अत्र च योन्या गृहीतबीजत्वं हेतुः । तथा, हृदयस्पन्दनादयः पञ्च सद्योगर्भायाः लक्षणानि भवन्ति । लोमहर्षणं[10] हर्षवशाद्भवति । तथा च सङ्ग्रहे ( शा अ २ )—"प्रहर्षो हृल्लासः" इत्यादि ।

इदानीं गर्भस्यावस्थाः प्रदर्शयितुमाह—

**अव्यक्तः प्रथमे मासि सप्ताहात्कललीभवेत् ।**
**गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत् ॥ ३७ ॥**

सप्ताहादर्वाग्गर्भगोलकः[11] श्लेष्मपिण्डीभूतो भवेत् । सप्ताहादनन्तरं यावन्मासस्तावदव्यक्ताकृतिः कललीभवेत्[12] । अत्र कललीभूते[13] यावत्स्त्रीपुरुषाद्युत्पत्तिर्लक्षणा[14] व्यक्तिर्न भवति तावद्व्यक्तेः प्राक् प्रथमे मासि पुंसवनानि प्रयोजयेत् ।

ननु, "शुद्धे शुक्रार्तवे सत्त्वः स्वकर्मक्लेशचोदितः[15] । गर्भः सम्पद्यते" (श्लो १) इत्युक्तम् । तत्र यदि प्राक्तनेन[16] कर्मणा स्त्रीगर्भः कुक्षिमाक्षिप्तः[17][18]स्तदा पुरुषप्रयत्ने सत्यपि पुंगर्भः कर्तुं न शक्यते । तस्मात्पुंसवनमनर्थकमेवेत्याशङ्क्याह—

**बली पुरुषकारो हि दैवमप्यतिवर्तते ।**

हि—यस्मात्, पुरुषकारो बलवान् दुर्बलं दैवमतिवर्तते—अतिक्रम्य वर्तते । अपिशब्दात् पुरुषकारमपि दुर्बलं दिष्टं बलीयोऽतिक्रम्य वर्तेत इति प्रतिपादयति । अत एव प्राक्तनेन[1] कर्मणा बलीयसाऽऽक्षिप्तस्य स्त्रीगर्भस्य पुंसवनादिदानेन पौरुषेण कर्मणा शतशोऽपि प्रयोजितेन न कथञ्चित्पुंगर्भता कर्तुं पार्यते इति । उक्तं च ( चरके वि अ ३।३६ )—"दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते । दैवेन चेतरत्कर्म विशिष्टेनोपहन्यते ॥" इति । अत्र पुंसवनादि सम्यक् प्रयोजितं सिद्ध्यसिद्ध्यनुमीयमानं प्राक्तनस्य कर्मणो हीनबलत्वप्रबलत्वमवगमयति ।

अधुना पुंसवनादिप्रयोगमाह—

**पुष्ये पुरुषकं हैमं राजतं वाऽथवाऽऽयसम् ॥ ३८ ॥**
**कृत्वाऽग्निवर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत् ।**

पुष्ये—पुष्यनक्षत्रयुक्ते काले, पुरुषकं—पुत्तलकं, हेमादिकृतमग्निवर्णं कृत्वा सुध्मातत्तया, ततः क्षीरे निर्वाप्य—निवेश्य, तस्य—क्षीरस्य, अञ्जलिं—पलचतुष्टयाख्यं, पिबेत् । पुरुषकमिति पुरुष इवेत्यस्मिन्नर्थे "इवे प्रतिकृतौ" इति कन् । हैममिति हेम्नो विकारार्थेऽण् "नस्तद्धिते" इति टिलोपः । राजतमिति "प्राणिरजतादिभ्योऽञ्" इत्यञ् । आयसमिति "तस्येदम्" इत्यण् ।

**गौरदण्डमपामार्गं जीवकर्षभसैर्यकान् ॥ ३९ ॥**
**पिबेत्पुष्ये जले पिष्टानेकद्वित्रिसमस्तशः ।**

गौरदण्डादींश्चतुरो द्रव्यविशेषान् पिबेत् । किम्भूतान्? जले पिष्टान्—कल्कीकृतान् । कथं कृत्वा? एकद्वित्रिसमस्तशः । एकादिषु प्रत्येकं शस्प्रत्ययार्थयोगः । तेनैकमेकं कृत्वा, द्वौ द्वौ कृत्वा, त्रींस्त्रीन्कृत्वा, चतुरश्चतुरः कृत्वा, एतान् पिबेदित्यर्थोऽवतिष्ठते । कदा प्राश्यम्? पुष्ये—पुष्ययुक्ते काले ।

**क्षीरेण श्वेतबृहतीमूलं नासापुटे स्वयम् ॥ ४० ॥**
**पुत्रार्थं दक्षिणे सिञ्चेद्वामे दुहितृवाञ्छया ।**

शुक्लपुष्पकण्टकारिकाया मूलं क्षीरेण कल्कीकृत्य स्वयं—स्त्री, दक्षिणे नासापुटे पुत्रार्थं—पुत्रसम्पत्तये, सिञ्चेत् । दुहितृवाञ्छया—सुताकाम्यया, वामे नासापुटे सिञ्चेत् ।

**पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम् ॥ ४१ ॥**
**नासयाऽऽस्येन वा पीतं वटशुङ्गाष्टकं तथा ।**
**ओषधीर्जीवनीयाश्च बाह्यान्तरुपयोजयेत् ॥ ४२ ॥**

पयसा—क्षीरेण, लक्ष्मणामूलं[11] कल्कीकृत्य पीतं पुत्रोत्पादप्रदं

१ 'वस्थैः स' ट । २ असौ—पुरुष । ३ 'ब्जाया' ट.ड ढ स द्व । ४ 'श्च्युत पि' स स । ५ 'योन्या' अ इ ढ । ६ 'सयोर्योनि' ण. । ७ 'दवहिर्नि स' ट. । ८ 'सद्योगृहीतग' ट । ९ 'या हेतवो भ' ट ण । 'भाय हेतवो भ' ड ढ । १० 'ण च हर्षाद्भ' ट । ११ 'र्भखोटक श्लेष्मापिण्डी भ' ट । 'र्भगोटक श्लेष्मपिण्डभूतो' ड ढ । १२ 'कलल—सिङ्घाणप्रख्यम्' इति डल्हण । 'गृहीतकाठिन्यम्' इतीन्दु । चरके त्वेवं पठ्यते ( शा अ ४।९ )—"प्रथमे मासि सम्मूर्च्छितः सर्वधातुकलनीकृतः खेटभूतो भवत्यव्यक्तविग्रहः सदसद्भूताङ्गावयवः ।" इति । १३ 'लीभावे या' ट । १४ 'त्तिर्लक्षणाव्यक्ति' ड ढ. । १५ 'शनोदित' ट ड. । १६ 'प्राक्तनेन' ट । 'प्राकृचितेन' ड ढ । १७ 'भे कर्तुमा' ट.ण । १८ 'प्तस्त तदा' ड.ढ । १९ 'वन जातम' ट ।

१ 'प्राकृचितेन' ड ढ. । २ 'तश प्र' ट । ३ 'गन्तु' ड ढ. । ४ 'विशिष्टे' स च । ५ 'वनदानादि' ड ढ । ६ 'प्राकृचितस्य' ड ढ । ७ 'वनप्र' ड ढ ण । ८ 'ध्मापयित्वा, त' ट । ९ 'प्य—शीतीकृत्य, त' इति क्वचित् । १० 'वटसुङ्गा' इ ण । 'वटशृङ्गा' इति क्वचित् । ११ 'लक्ष्मणालक्षणं तु—"पुत्रकाकाररक्ताल्पबिन्दुभिर्लाञ्छितच्छदा । लक्ष्मणा पुत्रजननी बस्तगन्धाकृतिर्भवेत् ॥" इति' डल्हण ।

पुत्रस्थितिप्रद च भवति । कथ पीतम् ? नासयाऽऽस्येन वा,–कदाचिन्नासिकया कदाचिदास्येन । यस्या पुत्रो नोत्पद्यते, तथोत्पन्नो वा स्थिति न लभते–चिर न जीवति, तयैव पातव्यमित्यर्थ । वटशुङ्गाष्टक तथा–तेनैव प्रकारेण नासया आस्येन वा पीत पुत्रोत्पादस्थितिप्रद भवति । न्यग्रोधस्य प्रथमोद्भिन्नैं प्ररोहो–वटशुङ्ग , तस्याष्टकमिति । प्रभावस्याचिन्त्यत्वादेत त्सङ्ख्यावच्छिन्नत्वम् । जीवनीया या ओषध्यो–जीवन्तीकाकोल्याद्या दश, या शोवनादिगणसङ्ग्रहोक्ता (हृ सू अ १५।८), ता बाह्यान्तरुपयोजयेत् । तत्र स्नानोद्वर्तनादिना बाह्य उपयोग , आहारपानादिनाऽन्तरुपयोग ।

**उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक् ।**
**नवनीतघृतक्षीरैः सदा चैनामुपाचरेत् ॥ ४३ ॥**

उपचार –उपचरणम् । प्रिया –इष्टा , हिता –पथ्या ,आहारविहारा , तै प्रियहितर्य उपचारो भर्त्रा–पत्या कृतो, भृत्यैश्च य एवभूत कृत , स गर्भधृक्–तदनुष्ठानाद्गर्भ स्थिति दधातीत्यर्थ । एना च स्त्रिय नवनीतादिभिर्यथासात्म्य सदोपाचरेत् ।

**अतिव्यवायमायासं भार प्रावरणं गुरु ।**
**अकालजागरस्वप्नं कठिनोत्कटकासनम् ॥ ४४ ॥**
**शोकक्रोधभयोद्वेगवेगश्रद्धाविधारणम् ।**
**उपवासाध्वतीक्ष्णोष्णगुरुविष्टम्भिभोजनम् ॥ ४५ ॥**
**रक्तं निवसनं श्वभ्रकूपेक्षां मद्यमामिषम् ।**
**उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत्त्यजेत् ॥ ४६ ॥**
**तथा रक्तस्रुतिं शुद्धिं बस्तिमामासतोऽष्टमात् ।**
**एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥ ४७ ॥**

गर्भिणी स्त्री अतिव्यवायादीनुत्तानशयनान्तास्त्यजेत् । न केवलमेतान् अन्यद्यच्चाहारविहारादिवस्तुजात स्त्रियो–बहुश प्रसूतास्तत्कालव्यापारनिपुणा वा या काश्चन स्त्रियो, नेच्छन्ति तदपि वर्जयेत् । तथा रक्तस्रुतिं, शुद्धिं च–वमनविरेचनरूपा, वर्जयेत् । बस्ति–अनुवासन, अष्टम मास मर्यादीकृत्य वर्जयेत् । अष्टमे तु मासे बस्ति प्रयोजयेदेवेत्यर्थ । एभि –वर्ज्यैर्वस्तुभिरासेव्यमानै , गर्भ आम –असम्पूर्ण , स्रवेत्–पतेत्, कुक्षौ वा शुष्येत्, म्रियेत वा–मृत्यु वा गर्भ प्राप्नुयात् ।

**वातलैश्च भवेद्गर्भः कुब्जान्धजडवामनः ।**
**पित्तलैः खलतिः पिङ्गः,श्वित्री पाण्डुः कफात्मभिः॥४८**

वातलैश्चाहारैर्मात्रा सेवितै कुब्जोऽन्धो जडो वामनो वा गर्भो भवति । पित्तलैराहारैर्मात्रा सेवितै खलति –खल्वाट , पिङ्गो वा स्यात् । कफवृद्धिराहारैर्मात्रा सेवितै श्वित्रवान् पाण्डुर्वा स्यात् ।

**व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ।**

अस्याश्च–गर्भिण्या , ये व्याधयो जायन्ते, तान् व्याधीन् मृदुसुखैरौषधैस्तथाऽतीक्ष्णैर्जयेत् । मृदूनि च तानि सुखानि च–मृदुसुखानि । मृदूनि–अकर्कशानि वीर्यादिभिर्नोत्कृष्टसामर्थ्यानि सुकुमारोचितानि । सुखानि–सुखोपभोग्यानि, प्रियाणीति यावत् । ननु, मृदूनि परिहृत्यातीक्ष्णानि चेति निर्देष्टव्यम् । किमुभयोरुपादानेन ? यतो मृदूनि–अकर्कशानि, अतीक्ष्णान्यपि–अकर्कशानि, इत्यनर्थान्तरत्वमेतयो । अत्रोच्यते । मृदूनि–अकर्कशानि शर्करादीनि, उत्कृष्टशक्तीनि मरिचादीनि–अतीक्ष्णानि, तीक्ष्णानि पुनस्तीक्ष्णगुणयुक्तानि राजिकादीनि दोषोत्क्लेशकराणि भेषजानि भवन्ति, इति द्वयोरुपादान युक्तम् । तन्त्रान्तरे ( सङ्ग्रहे ) त्वेवमुक्तम् ( शा अ २ )–"इत्यनात्ययिके व्याधौ विधिरात्ययिके पुन । तीक्ष्णैरपि क्रियायोगै स्त्रिय यत्नेन पालयेत् ॥" इति । यच्च व्यवायादि गर्भिण्या परिहार्यत्वेन निर्दिष्टम्, तथा "व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ।" इति । तदस्मिन् काले विशेषेणेति द्रष्टव्यम्, न तथाऽन्यदा । तथा चान्यदाऽतिव्यवायादिसेवनान्न तथा प्रत्यवायभयम्, तथा तीक्ष्णौषधप्रयोगाच्च । अत एव "तथा रक्तस्रुतिं शुद्धिं बस्तिमामासतोऽष्टमात् ।" इत्येतत्पृथङ्निर्दिशत्यतिव्यवायादिपरिहार्यगणमध्ये ।

प्रथमे मास्यव्यक्तलिङ्ग कललावस्थो गर्भो भवेत् । द्वितीये तु मासि गर्भ कीदृश स्यात् ? इत्याह—

**द्वितीये मासि कललाद्घनः पेश्यथवाऽर्बुदम् ॥ ४९ ॥**
**पुंस्त्रीक्लीबाः क्रमात्तेभ्यः**

द्वितीये मासि कललाद्घन पेश्यथवाऽर्बुद गर्भ स्यादिति योज्यम् । तेभ्यो–घनादिरूपेभ्य , क्रमात्–परिपाट्या, पुंस्त्रीक्लीबा सम्पद्यन्ते । घनात् पुमान् । पेश्या स्त्री । अर्बुदात् क्लीब –षण्ढो, न स्त्री न पुमानिति ।

**तत्र व्यक्तस्य लक्षणम् ।**

**क्षामता गरिमा कुक्षेर्मूर्च्छा च्छर्दिररोचकः ॥ ५० ॥**
**जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ।**
**अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ॥५१॥**

१ 'टशृङ्गा' ट । 'टसुङ्गा' ड ण । 'शृङ्ग–प्रथमोद्भिन्न पत्राङ्कुरम्' इतीन्दु । २ 'धमथ' ट ड ढ ण । ३ 'न्नप्र' ट ड ढ । ४ 'ल्यादिदश शो' ट । ५ 'वाय व्यायाम भा' ड । ६ 'स्वप्नकठि' ड ण । ७ 'त्कटुका' अ । 'नोत्कुट' ड । ८ 'सादिती' ढ । ९ 'विवसन' ढ । १० 'एव गर्भ ' ण । ११ 'न् यावच्चा' ड ढ । 'न् यद्याहार' ण । १२ 'त्यजेत्' ण । १३ बस्ति–आस्थापनमनुवासन वा, इत्यर्थो युक्त , "मासान् सप्त च गर्भिणी । अनास्थाप्या" इति हृदये ( सू अ १९।५ ), "केवल त्वष्टम मासमुपादायास्थापनमनुवासन वा ।" इति सङ्ग्रहे ( शा. अ २ ) चोक्तत्वात् । १४ 'मे मासि ब' ण. ।

१ 'मृदून्यतीक्ष्णानि चे (वे) ति' ट ड ढ । २ 'योपा' ण । ३ 'क्ष्णानि–अ' ड ढ । ४ 'इत्यर्थैकत्वमे' ड ढ. । ५ 'शानि उत्कृ' ड ढ ण । ६ 'तूक्तम्' ण । ७ 'दिष्टमति' इति क्वचित् । ८ 'लिङ्गकल' ड ढ ण. । ९ 'पेशीत ' ड ढ ण. । १० 'अर्बुदत ' ड.ढ. । ११ 'कुक्षौ मू' इति क्वचित् ।

**पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिकाः ।**

तत्र—व्यक्ताव्यक्तयोर्मध्यात्, व्यक्तो निर्धार्यते । व्यक्तस्य गर्भस्य वक्ष्यमाण लक्षण क्षामतेत्यादिकम् । गरिमेति गुरोर्भाव इति "पृथ्वादिभ्य इमनिज्वा" इतीमनिच्, "प्रियस्थिर" इत्यादिना गरादेश । विदाहोऽन्य इति । अन्ये आचार्या विदाहो देहे भवतीत्याहु । नानाप्रकाराश्च श्रद्धा—पथ्यापथ्य-विषया अभिलाषा, व्यक्तस्य गर्भस्य लक्षणम् । सङ्गहे तूक्तम् (शा अ २)—"तस्याश्च रजोवाहिना स्रोतसा वर्त्मान्युपरुध्यन्ते गर्भेण । तस्मात्तत परमार्तव न दृश्यते । ततस्तदध प्रतिहतमपरमपर चोपचीयमानमपरेत्याहु ।" इति ।

गर्भिण्याश्च श्रद्धासूत्पन्नासु किमपथ्य तस्यै देय न वा ? इत्येवं सदेहे तन्निरासार्थमाह—

**मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् ॥ ५२ ॥**
**सम्बद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम् ।**

हि—यस्मात्, अस्य—गर्भस्य, यद्धृदय—चेतनाधिष्ठान, तन्मातृजम् । तथा चोक्तम् (हृ शा अ ३।४)—"मृद्वत्र मातृज रक्त" इत्यादि । तच्च—गर्भहृदय, मातृहृदयेन सम्बद्ध—सयुक्त, भवति । ततश्च गर्भिणीहृदयेन सन्तप्तेन गर्भहृदयमपि सन्तप्यते । परस्परं हृदयस्य सम्बद्धत्वात् । अत एव च गर्भिणी द्विहृदया दौर्हृदिनीत्युच्यते । अत एव च परायत्तहृदयत्वात्तत्काले स्वस्वभावोचितमभिलाष विहाय नानाभिलाषो जायते । यतश्चैवं तेन कारणेन गर्भिण्या श्रद्धाविमानन—अभिलाषाप्रतिपूरण, नेष्टम् ।

तदर्थमाह—

**देयमप्यहितं तस्यै हितोपहितमल्पकम् ॥ ५३ ॥**

तस्यै—गर्भिण्यै, हितेन—पथ्येन, युक्तमहित—अपथ्यमपि विदाहिविष्टम्भ्यादि पूर्वनिषिद्ध यत्तदपि, देयम् । अपिशब्देन किमु तस्यै प्रार्थ्यमानायै हित देयमिति गमयति । कि मात्रामनपेक्ष्यैवाहित देयम् ? नेत्याह । अल्पक—अतिशयेनाल्पम् ।

ननु, यद्यहित तत्कस्माद्दीयते ? इत्याह—

**श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा ।**

यदि चिरकालोषित कुक्षौ गर्भस्तदा तस्य गर्भस्य विकृति—वैरूप्य भवेत्, श्रद्धाविमाननचिन्तानिदानकुपितसमीरत्वात् । तथाऽचिरोषितो गर्भस्तदा तस्य गर्भस्य च्युति—विनाशो भवेत्, अत एव श्रद्धाविमाननचिन्तानिदानकुपितपवनत्वाद्धेतो । लब्धदौर्हृदा तु वीर्यवन्त चिरायुषं च सुत सूते ।

१ 'होऽन्ये' इ । २ 'हो भव' ड ढ ण । ३ 'नानाका' ट ढ ण । ४ 'षयेष्वभि' ड ढ । ५ 'पर चापरं' ण । ६ 'नं ? इत्ये' ट ट ढ । ७ 'तन्निरासार्थं' ड ढ । ८ 'विधारणम्' अ ढ ण । 'द्वावमा' इ । ९ 'दौहृदिनी' ट ण । 'द्विहृदिनी' ड ढ । १० 'यत्तत् दे' ड ढ ण । ११ 'द्धाभिघा' अ ढ । १२ 'ननात् चि' ट. । १३ 'अथा' ण । १४ 'ब्धदोहृदा' ड ढ ण ।

**व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ॥ ५४ ॥**
**मूर्द्धा द्वे सक्थिनी बाहू सर्वसूक्ष्माङ्गजन्म च ।**
**सममेव हि मूर्द्धाद्यैर्ज्ञान च सुखदुःखयोः ॥ ५५ ॥**

अस्य—गर्भस्य, तृतीये मासि गात्रपञ्चक व्यक्तीभवति,—अव्यक्तरूप व्यक्त तदानी सम्पद्यत इत्यर्थ । तदेव पञ्चाङ्गमाह—मूर्द्धा द्वे सक्थिनी बाहू इति । सर्वेषा सूक्ष्माणा चाङ्गाना चेतनाधिष्ठानाना जन्म—उत्पत्ति, अन्यत्र जन्मोत्तरकालजेभ्यो दन्तादिभ्य । तथा, सममेव—तुल्यकालमेव, मूर्द्धाद्यै सुखदु खयोर्ज्ञान भवति,—तदानी सुखसविद्दु खसविच्च गर्भस्य जायत इत्यर्थ । च समुच्चये । हिर्यस्मादर्थे ।

अत्र मात्राऽभ्यवहृताभ्यामन्नपानाभ्या कथ गर्भो वर्द्धते ? इत्याह—

**गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते ।**
**ययाँ स पुष्टिमाप्नोति केदार इव कुल्यया ॥ ५६ ॥**

एकैव नाडी गर्भस्य नाभौ मातुश्च हृदये निबध्यते—अदृष्टवशात्सश्लिष्यते । यया—नाड्या, स—गर्भ, पुष्टिमाप्नोति—आवहति । क इव ? केदार इव कुल्यया,—लघुनद्या जल वहन्त्या केदारस्थ शाल्यादिर्यथाऽभिवर्द्धते, तथैव मातृहृदयाश्रितया नाड्या मात्राऽभ्यवहृतादाहाराज्जाठराग्निना पच्यमानात् प्रसादाख्येन रसेन । यस्मात् "व्यक्तीभवदङ्गप्रत्यङ्गस्य [अस्य] नाभ्या प्रतिबद्धा नाडी, नाड्यामपरा, तस्या मातृहृदयम् । ततो मातृहृदयादाहाररससारो धमनीभि स्यन्दमानोऽपरामुपैति । तत क्रमान्नाभि च । ततश्च स पुनर्गर्भस्य पक्वाशये [स्व] कायाग्निना पच्यमान प्रसादबाहुल्याद्धात्वादिपुष्टिकर सम्पद्यते । तथा रोमकूपैरुपस्नेह एव प्रविशति । (स्नेहो रस एव च पयोभूत । अजातस्य) साक्षादन्नपानाननुप्रवेशात् रसस्य वा समलत्वाभावात् (अमलत्वाच्च रसस्य) गर्भस्य स्थूलमूत्रपुरीषाद्यसम्भव ।" (स शा अ २) ।

**चतुर्थे व्यक्तताऽङ्गानां, चेतनायाश्च पञ्चमे ।**

गर्भस्येत्यनुवर्तते । चतुर्थे मासि गर्भस्य सर्वेषामङ्गानां सूक्ष्मत्वादव्यक्तरूपाणा व्यक्तता भवति । चेतनाया पुनर्मनोद्वितीयनामिकाया अव्यक्तरूपाया पञ्चमे मासि व्यक्तता जायते ।

**षष्ठे स्नायुसिरारोमबलवर्णनखत्वचाम् ॥ ५७ ॥**

१ 'तु' इ ढ । २ 'धैर्विज्ञान सु' अ ढ । ३ 'पञ्चकमा' ट । ४ 'षा पञ्चाङ्गाना स्थूलसूक्ष्मादीना चे' ट ड ढ । ५ 'व्यक्ति' ट । ६ 'स्य नाभौ जा' ड ढ । ७ 'या पुष्टिमवाप्नोति' ढ । ८ 'कुल्याऽल्पा कृत्रिमा सरित् ।' इत्यमर । ९ 'पुनाड्या ज' ण । १० 'शालिर्यथा वर्द्धते' ट । ११ 'रा, अपरस्या' ट ण । १२ 'ररसो ध' स ढ । १३ 'नो गर्भमु' ट ड ढ ण । १४ 'न्नाभौ । त' ट । १५ 'स्य काया' ट । 'भकाया' ड ढ । १६ 'स्य च समलत्वात्' ड ढ. । 'स्य कफमलत्वात्' ण । १७ 'लमलास' स.ढ. ।

षष्ठे मास्यव्यक्तरूपाणा स्नाय्वादीना व्यक्तता जायते ।

**सर्वैः सर्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे ।**

सप्तमे मासि सर्वै –सकलै , भावै –वस्तुभि , सर्वाङ्गसम्पूर्णो गर्भ पुष्यति–पोष याति । अङ्गसम्पूर्ण पुष्यतीत्येतावतैव प्रकृतार्थावगतेः सर्वग्रहणमधिकार्थद्योतनाय । तेन सर्वेण जन्मजीवनलक्षणेनार्थेनाङ्गैश्च सम्पूर्णो भवतीत्यवतिष्ठते । अकालप्रसवत्वात्तु न तथा गर्भस्य जन्मजीवनलक्षणो योऽसावर्थ. सोऽप्यस्मिन् भवतीति ज्ञाप्यते । तथा चास्मिन् मासि गर्भो जातो जीवति, किन्त्वकालेप्रसवत्वान्न तथा दीर्घजीवितत्वादिक स्यात् । वक्ष्यति हि (श्लो ६६)–"काल सूतेरत परम्" इति । अमुमेव च न्याय चेतसि विधायाष्टमे मास्योज स्वरूपनिगदनप्रस्तावे "जातो न जीवति शिशु" इति वक्ष्यति (श्लो ६३) । अन्यथाऽकालप्रसवत्वादेवास्मिन् गर्भस्य जीवन न सम्भाव्यत एव । "जातो न जीवति" इत्येतद्वाक्यमनर्थकमिव स्यात् । तस्मात्सप्तमे मासि जातो जीवतीति सुप्रतिपादितमेतत् ।

**गर्भेणोत्पीडिता दोषास्तस्मिन् हृदयमाश्रिताः ।**
**कण्डू विदाहं कुर्वन्ति गर्भिण्याः किक्किसानि च ५८**

गर्भेणोत्पीडिता –ऊर्ध्वं पीडिता , दोषा –वातादय , तस्मिन् काले हृदयमाश्रिता गर्भिण्या कण्डू विदाह [ च ] कुर्वन्ति । तथा, किक्किसानि कुर्वन्ति । ऊरुस्तनोदरे वलिविशेषा रेखाकारास्तत्काले प्रायो ये जायन्ते ते–किक्किससज्ञा । कैश्चित् 'शूकैरिव पूर्णता–किक्किसानि' इति व्याख्यायि । पाणिपादासमूलेषु विविध सन्तापो–विदाह उच्यते ।

**नवनीतं हितं तत्र कोलाम्बुमधुरौषधैः ।**
**सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम् ॥ ५९ ॥**
**चन्दनोशीरकल्केन लिम्पेदूरुस्तनोदरम् ।**
**श्रेष्ठया वैणहरिणशशशोणितयुक्तया ॥ ६० ॥**
**अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य मर्दयेत् ।**
**पटोलनिम्बमञ्जिष्ठासुरसैः सेचयेत्पुनः ॥ ६१ ॥**
**दार्वीमधुकतोयेन मृजां च परिशीलयेत् ।**

तत्र–तेषु कण्ड्वादिषु, उपशमार्थं नवनीतं हितम्, अन्तर्बहिश्चोपयोगितया । कीदृशम्? कोलाम्बुना मधुरौषधै –द्राक्षादिभिश्च कल्कीकृतै , सिद्ध–पक्वम् । तथा, तत्र भोजन हितम् । किम्भूतम्? अल्प पटु–लवण, स्नेहश्च यत्र तदेवम् । तथा, लघु–मात्रास्वभावाभ्याम् । तथा, स्वादु–मधुरम् । तथा, चन्दनोशीरयोर्य कल्क –पिष्टो जलेनालोडित , तेनोरुस्तनोदरं लिम्पेत् । श्रेष्ठया वा–त्रिफलया वा, ऊरुस्तनोदरं लिम्पेत् । किम्भूतया? एणादिरुधिरपिष्टया । तथा, अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य–अभ्यक्तमङ्ग कृत्वा, अनन्तर पटोलनिम्बमञ्जिष्ठासुरसैर्मर्दयेत् । अश्वघ्न –करवीर । सेचयेत्पुन –परिषेक च कुर्यात् । दार्वीमधुकतोयेन–दारुहरिद्रामधुयष्टिकाभ्या क्वथितेन जलेन, मृजा–शुद्धि स्नानादिका, शीलयेत् । सङ्ग्रहे तूक्तम् (शा अ. ३)–"परिषेक पुनर्मालतीमधुकसिद्धेनाम्भसा । कण्डूयन वर्जयेत् त्वग्भेदवैरूप्यपरिहारार्थम् । स्नानोद्वर्तन च शीलयेत् । मधुरं चाहारमल्पमल्पस्नेहलवणमल्पोदकानुपान भुञ्जीत ।" इति ।

१ 'तीत्यनेनैव' ट ण । २ 'गति स' ढ ण । ३ 'सवात्तु' ट ण । ४ 'त्वप्रभव' ट । 'त्वत्वा' ड ढ । ५ 'सवादे' ट ड ढ । ६ 'रेषाका' ड । ७ 'शमनार्थं' ढ.ड.ढ । ८ 'किम्भूतम्' ट ।

इदानीमष्टमे मासि गर्भस्वरूप तत्रेतिकर्तव्यता चाचष्टे—

**ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ॥६२॥**
**तेन तौ म्लानमुदितौ तत्र जातो न जीवति ।**
**शिशुरोजोनवस्थानान्नारी संशयिता भवेत् ॥ ६३ ॥**

ओज –सर्वधातूना तेज कर्तृ, मातापुत्रौ कर्मभूतौ, सञ्चरति । माता च पुत्रश्चेति द्वन्द्व । "आनङृतो द्वन्द्वे" इत्यानङादेश । कथं सञ्चरति? मुहुर्मुहु । क्रमात्–क्रमेण, कदाचिद्गर्भिणीमोज सञ्चरति कदाचित्पुत्रमिति । एव [ तेन– ] कादाचित्केनौज सञ्चरणेन, तौ–मातापुत्रौ, म्लानमुदितौ स्याताम् । तया पूर्वनिरूपितया गर्भगर्भिण्युभयसम्बद्धया नाड्योभयत्र सञ्चरत्तदोज उभयसम्बद्ध यदा गर्भ सञ्चरति तदा गर्भो मुदितो–हृषितो, भवेदोज सम्पत्त्या, गर्भिणी च म्लाना भवेत् । यदा च तदोजो गर्भिणी सञ्चरति तदा तयैवोज-सम्पत्त्या गर्भिणी मुदिता भवेत्, शिशुर्म्लानो भवेदोज-सम्पत्त्यभावात् । [ तत्र– ] तस्मिन् काले, शिशु –बालो, जात –उत्पन्नो, न जीवति । कुत? ओजोनवस्थानात् । ओजस्तदानी शिशावनवस्थितत्वात्,–अचिरकालप्ररूढत्वादोजस । गर्भिण्या तु न सर्वमचिरकालमनवस्थितमोज , यथा गर्भे । तस्मान्न तस्या निरोजस्त्वम् । अत एवाह–नारीसंशयिता भवेत्,–कदाचिज्जीवति कदाचिन्न जीवतीति संशयितार्थ. ।

**क्षीरपेया च पेयाऽत्र सघृताऽन्वासनं घृतम् ।**
**मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ॥ ६४ ॥**
**शुष्कमूलककोलाम्लकषायेण प्रशस्यते ।**
**शताह्वाकल्कितो बस्तिः सतैलघृतसैन्धवः ॥ ६५ ॥**

अत्र–अष्टमे मासि, क्षीरसंस्कृता पेया पातव्या । किम्भूता? सघृता । तथा, अन्वासन घृत शस्यते । कीदृक्? मधुरै –द्राक्षादिभि , साधित–पक्वम् । तथा–तेनैव प्रकारेण, पुराणश-

१ 'क कृत्वाऽङ्गमनन्त' ड ढ ण । २ 'न, तथा मृ' ट ण । ३ 'रमल्पस्नेह' ट ड ढ ण । ४ 'तौ स्यातामत्र न' अ ढ । 'तौ स्याता जातो न' इ ण । ५ 'सम्बन्धि' ट. । ६ 'सर्वसविकयाऽनव' ट ड ढ । ७ 'हितम्' अ इ ढ. । 'घृतम्' इत्यरुणदत्तसम्मत पाठश्चिन्त्य , वातविजये तैलस्य श्रेष्ठतमत्वात् "मधुकादिमधुरौषधसिद्धेन च तैलेनानुवासयेत् ।" इति, "पयोमधुरकषायसिद्धेन तैलेनानुवासयेत् ।" इति, सङ्ग्रहे ( शा अ. ३ ) सुश्रुते ( शा. अ १०।४ ) चोक्तत्वाच्च ।

कृत शुद्ध्यर्थ, बस्ति –निरूह, प्रशस्यते–युज्यते । तत्र च बस्तौ क कषाय ? क कल्क ? इत्याह–शुष्कमूलकेति । शुष्कमूलकादीना कषायेण, तथा शताह्वाकल्कित, तथा सह तैलेन घृतेन सैन्धवेन च ।

**तस्मिंस्त्वेकाहयातेऽपि कालः सूतेरतः परम् ।**

एक च तदहश्चैकाहम् । "राजाह सखिभ्यष्टच्" इति टच् । "अह्नष्टखोरेव" इति टिलोप । एकाह्नेन यातोऽतिक्रान्तोऽन्तरितोऽष्टमो मास –एकाहयात, [ तस्मिन् । ] तस्मिन्–अष्टमे मासि, पुनरेकदिवसातिक्रान्तेऽप्यत पर सूते –प्रसवस्य, कालो यावद्वर्षम् । अपिशब्दाद्याते त्वष्टमे मास्यत पर सूते काल इति गम्यते । अष्टमान्मासादनन्तरं नवमदशमैकादशद्वादशमासान् यावत् । एषु मासेषु गर्भो जातो दीर्घायुष्ट्वादियुक्तो जीवति ।

**वर्षाद्विकारकारी स्यात्कुक्षौ वातेन धारितः ॥ ६६ ॥**

वर्षादित्यानन्तर्ये पञ्चमी । वर्षात्–द्वादशमासादनन्तर, गर्भ कुक्षौ वातेन धारितो–रुद्धनिष्क्रमणो, विकारकारी भवेत्–विकारमवश्य करोति । गर्भस्य सन्निवेशोऽपि सङ्ग्रहे प्रोक्त, यथा (शा. अ २)–"गर्भस्तु मातृपृष्ठाभिमुखो ललाटे कृताञ्जलि सङ्कुचिताङ्गो गर्भकोष्ठे दक्षिण पार्श्वमाश्रित्यावतिष्ठते पुमान्, वामं स्त्री, मध्यं नपुसकम् । तत्र स्थितश्च गर्भो मातरि स्वपत्या स्वपिति प्रतिबुद्धाया प्रतिबुध्यते ।" इति ।

**शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः ।**
**बहुस्नेहा यवागूर्वा पूर्वोक्त चानुवासनम् ॥ ६७ ॥**

नवमे मासि स्निग्धो मासरसयुक्त ओदन शस्तो–हित । अथवा, पेया बहुस्नेहा शस्तेति लिङ्गविपरिणामेन सम्बन्ध । पूर्वोक्तमनुवासन–"घृत मधुरै साधित" इत्यादि, तच्च शस्तम् ।

**तत एव पिचुं चास्या योनौ नित्यं निधापयेत् ।**
**वातघ्नपत्रभङ्गाम्भः शीतं स्नानेऽन्वहं हितम् ॥६८॥**

तत एव–अन्वासनघृतात्, पिचु–नक्तकं, अस्या –गर्भिण्या, योनौ नित्य–सदा, निधापयेत्–तत्र स्थापयेत्, वातविजयार्थम् । पवनेनानाक्रान्तयोनिर्हि सुख गर्भं सूते । तथा, वातघ्नाना द्रव्याणा पत्राणि, तेषा भङ्ग –समूह, तेन क्वथितमम्भ शीत कृत्वा स्नानेऽन्वह–अहरह, गर्भिण्यै हितम् । अन्वहमित्यनश्चेति टच् ।

**निःस्नेहाङ्गीं न नवमान्मासात्प्रभृति वासयेत् ।**

निःस्नेहगात्रां गर्भिणीं न वासयेत्, अपि तु सस्नेहाङ्गीं स्थापयेत् । निःशेषेण निरस्त स्नेहो यस्मादङ्गात्तदेव निःस्नेहमङ्ग यस्या सा निःस्नेहाङ्गी, ताम् । अङ्गगात्रकण्ठेभ्यो वक्तव्यमिति ङीप् । कुत कालादारभ्य ? नवमान्मासात्प्रभृति । यद्यपि कालोऽत्र न निर्दिष्ट, तथाऽपि नवमान्मासादारभ्य सामर्थ्याद्यावन्मुक्तगर्भशल्या स्यात्, तावन्निःस्नेहाङ्गी गर्भिणी न स्थापयेदिति लभ्यते । सस्नेहाङ्गधारण च तस्या कुपितवायोर्नित्य सन्निहितत्वात् ।

इदानीं गर्भिण्या यैर्लक्षणैरव्यभिचारिभि पुत्रदुहितृनपुंसकयमकप्रसवोऽनुमीयते, तान्याह—

**प्राग्दक्षिणस्तनस्तन्या पूर्वं तत्पार्श्वचेष्टिनी ॥ ६९ ॥**
**पुन्नामदौर्हृदप्रश्नरता पुंस्वप्नदर्शिनी ।**
**उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले ॥ ७० ॥**
**पुत्रं सूतेऽन्यथा कन्यां या चेच्छति नृसङ्गतिम् ।**
**नृत्यवादित्रगान्धर्वगन्धमाल्यप्रिया च या ॥ ७१ ॥**

प्राक्–पूर्व, दक्षिणे स्तने स्तन्य–क्षीर, यस्या प्रादुर्भवति सा पुत्र सूत इति सम्बन्ध । तथा, पूर्वं तत्पार्श्वचेष्टिनी । तच्छब्देन दक्षिणपार्श्व परामृश्यते । तेन–दक्षिणेन पार्श्वेन, चेष्टित–गमनस्वपनादिक, यस्या सा–तत्पार्श्वचेष्टिनी, पुत्रं सूत इति सर्वत्र योज्यम् । तथा गच्छन्त्या पूर्वं दक्षिणपादोत्क्षेप, हस्तकरणीये च पूर्वं दक्षिणेन पाणिना चेष्टते, इति तत्पार्श्वचेष्टा बोध्या । पुन्नामेत्यादि । पुलिङ्गोपलक्षित नाम–पुन्नाम, दौर्हृद च प्रश्नश्च दौर्हृदप्रश्नौ । पुन्नाम्नोर्दौर्हृदप्रश्नयो रता–अभियुक्ता, पुन्नाम्नि दौर्हृदे रता । दौर्हृदकाले योऽभिलाषविशेषो गर्भिण्यां स दौर्हृदशब्दवाच्य । तथा, पुन्नाम्नि प्रश्नेऽभिरता–पुन पुन पुन्नामप्रश्न करोति । तथा, पुन्नामधेयान् स्वप्नान्–पुरुषगजवाजिवराहादीन् आम्रदाडिमाशोकवृक्षादीन् वा, द्रष्टु शील यस्या सैवम् । तथा, उन्नते दक्षिणे गर्भकोष्ठाख्ये कुक्षौ । तथा, गर्भे–गर्भसस्थाने, परिमण्डले–वर्तुले सति, पुत्र सूते । अन्यथा–पुत्रप्रसवसूचकाद्विलोमैर्वैपरीत्ये च, कन्या सूते । यथा–प्राग्दक्षिणस्तनस्तन्येत्यादि पुत्रप्रसवसूचक लक्षणम्, अतोऽन्यथा प्राग्वामस्तनस्तन्येत्यादि लक्षण गर्भिण्या कन्याप्रसवसूचकम् । न केवलं पुत्रप्रसवलक्षणाद्विपर्ययेण कन्यां सूते, यावत् या चेच्छति नृसङ्गतिम् । या च–गर्भिणी पुरुषेण सह सङ्गतिमिच्छति–कामयते, सा कन्या सूते । तथा या च नृत्यादिप्रिया सा कन्या सूते ।

१ 'तस्मिन्नेका' अ ढ । २ 'काल । अ' ड ढ । ३ 'मासान्तं या' ड ढ । ४ 'भवति' ड ढ. । ५ 'र्षादनन्तर' ड ढ । ६ 'रुद्धो निष्क्रमणात्, वि' ट ढ । ७ 'गर्भश्च मा' ट ड ढ । ८ 'मातृकुक्ष्यभि' ड ढ 'मातु पृ' स ढ । ९ 'सङ्कोचि' ड ढ । १० 'स्वपिताया' ट । ११ 'प्रबु' स ढ । १२ 'स्निग्धमास' अ ढ, ट । १३ 'प्रसूते' ट ड.ढ । १४ पत्रभङ्ग –खण्डश कृतानि सङ्क्षुण्णानि वा पत्राणि ।

१ 'निःस्नेहाङ्गी–अस्नेह' ट । २ 'त्रा ता गर्भिणी गर्भप्रसवकाल यावत् न' ण । ३ 'निःशेष निः'ट । ४ 'नश्वसना' ड । ५ 'सम्बन्ध ।' ड ण । ६ 'चेष्टा तत्पा' ट ड ढ । ७ 'श्नौ' । ताभ्या युक्ता । पुन्नाम्नि' ट । ८ 'यो विलासो ग' ट । ९ 'लाषो ग' ड ढ । १० 'ण्या सोऽपि दौ' ट ड ढ. । ११ 'गर्भस्था' ण. । १२ 'जनयति ।' ड ढ ।

इदानीं पण्डप्रसवलक्षणमाह—

**क्लीबं तत्सङ्करे, तत्र मध्यं कुक्षेः समुन्नतम् ।**

तदित्यनेनात्र पुत्रप्रसूतिलक्षणं दुहितृप्रसूतिलक्षणं च द्वयमपि परामृश्यते । द्वयस्यैतस्य लक्षणस्य सङ्करे-सङ्कीर्णलक्षणतायां, क्लीब-नपुंसकं गर्भं, सूते । तत्र-तस्मिन् क्लीबे गर्भे कुक्षिस्थिते, कुक्षेर्मध्यं समुन्नतं भवति ।

**यमौ पार्श्वद्वयोन्नामात्कुक्षौ द्रोण्यामिव स्थिते ७२**

यमौ द्वौ गर्भौ, गर्भिणी सूते । कथमिति तल्लक्षणार्थमाह—पार्श्वद्वयोन्नामात्,—पार्श्वद्वयोत्सेधात् । अत एव कुक्षौ-उदरे, द्रोण्यामिव स्थिते । द्रोणी-मध्यनिम्ना, कुक्षिरपि पार्श्वद्वयोन्नत्या मध्यनिम्ना भवति ।

**प्राक् चैव नवमान्मासात् सा सूतिगृहमाश्रयेत् ।**
**देशे प्रशस्ते सम्भारैः सम्पन्नं साधकेऽहनि ॥ ७३ ॥**

सा-गर्भिणी, सूतिगृह-सूतिकागारं, नवमान्मासात्पूर्वमेवाश्रयेत् । कुत्र देशे कृतम् ? इत्याह-देशे प्रशस्ते,-प्राक्प्रवण उदक्प्रवणे वा, वास्तुविद्याविद्भिः परीक्ष्य कल्पितम् । कीदृशम् ? सम्भारैः सम्पन्नं,-सकलैरुपकरणैर्युक्तम् । तथा, साधकेऽहनि-शुभेपुनक्षत्रे दिवसे सति ।

**तत्रोदीक्षेत सा सूतिं सूतिकापरिवारिता ।**

तत्र-सूतिकागृहे, स्थिता सूतिमुदीक्षेत,-अहमत्र प्रसविष्य इति चेतसि निधाय सा-गर्भिणी, तत्रासीतेत्यर्थः । किम्भूता ? सूतिकापरिवारिता,-अनेकवारप्रसवानुभूततत्कालोचितव्यवहारकुशलाभिः स्त्रीभिः परिवारिता । सङ्ग्रहे तूक्तम् ( शा अ ३ )- "बहुशः प्रसूताभिरनुरक्ताभिरविषादिनीभिरविसंवादिनीभिः क्लेशसहाभिः परिवृता स्वस्त्ययनपराऽनुलोमनैराहारविहारैरनुलोमितवातमूत्रपुरीषा प्रसवकालमुदीक्षेत । स्वल्पेऽपि च विण्मूत्रविबन्धे फलवर्तीं प्रयोजयेत् ।" इति ।

इदानीमासन्नप्रसवाया लक्षणमाह—

**अद्यश्वःप्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः ॥ ७४ ॥**
**अधोगुरुत्वमरुचिः प्रसेको बहुमूत्रता ।**
**वेदनोरूदरकटीपृष्ठहृद्बस्तिवङ्क्षणे ॥ ७५ ॥**
**योनिभेदरुजातोदस्फुरणस्रवणानि च ।**

अद्य वा श्वो वा आसन्नः प्रसवः, तस्मिन् आसन्न (अद्यश्व )-प्रसवे ग्लान्यादयो भवेयुः, गर्भिण्या इति सम्बन्धः । ग्लानिः-हर्षक्षयः । तथा, कुक्षी चाक्षिणी च कुक्ष्यक्षि, तस्य श्लथता-शिथिलत्वं, स्वस्थानाचलितत्वमिव । तथा, क्लमः-उपतापः । तथा, अधोगुरुत्वादीनि भवन्ति । तथा, ऊर्वादिषु वेदना-पीडा भवति । तथा, योनिभेदादयः स्युः ।

**आवीनामनु जन्मातस्ततो गर्भोदकस्रुतिः ॥ ७६ ॥**

अतः-अस्माद्योनिभेदादेः, अनु-पश्चात्, आवीना-गर्भनिष्क्रमणकालशूलविशेषाणां, जन्म-उत्पादः । ततः-अनन्तरं, गर्भोदकस्रुतिः-तत्कालं योनितो जलस्रावः, स्रावमात्रं स गर्भोदकसंज्ञः ।

**अथोपस्थितगर्भा तां कृतकौतुकमङ्गलाम् ।**
**हस्तस्थपुन्नामफलां स्वभ्यक्तोष्णाम्बुसेचिताम् ७७**
**पाययेत्सघृतां पेयां**

अथ-गर्भोदकस्रुतेरनन्तरं, तां-गर्भिणीं, उपस्थितगर्भां-अभिमुखीभूतगर्भामाविजन्मोदकस्रावादिना ज्ञात्वा, सघृतां पेयां पाययेत् । किम्भूताम् ? कृतकौतुकमङ्गलाम् । विशिष्टकाल एव यो रक्षाबन्धो बाह्वादौ बध्यते स कौतुकवाच्यः । कौतुकाख्यं मङ्गलं कौतुकमङ्गलम् । कृतं कौतुकमङ्गलं यस्याः, ताम् । तथा, हस्तस्थं पुन्नाम-दाडिमादि, फलं यस्याः, ताम् । तथा, सुष्ठु अक्ता-अभ्यक्ताम् । तथा, उष्णाम्बुसेचिताम् । इत्यस्यानन्तरं "पाययेत्पेयां" इति पाठेनोष्णाम्बुसेचनादनन्तरं पेयापानं कार्यमिति बोधयति ।

**तनौ भूशयने स्थिताम् ।**
**आभुग्नसक्थिमुत्तानामभ्यक्ताङ्गीं पुनः पुनः ॥ ७८ ॥**
**अधो नाभेर्विमृद्नीयात्कारयेज्जृम्भचङ्क्रमम् ।**

तनौ-मृदुनि, भूशयने स्थितां मृद्नीयात्,-न खट्वादिशयने स्थिताम् । तथा चोक्तं सङ्ग्रहे ( शा अ ३ )-"सुरक्तार्षभचर्मप्रच्छदे मृदुनि भूशयने शयाना" इत्यादि । कुतोऽङ्गात्प्रभृति विशेषेण मृद्नीयात् ? नाभेरधः,-नोर्ध्वं नाभेः । किम्भूतां ताम् ? आभुग्नसक्थिम्, आसमन्ताद्भुग्ने-कुटिले, सक्थिनी यस्याः साऽऽभुग्नसक्थिः, तां तथाविधां मृद्नीयात् । तथा, पुनः पुनरभ्यक्ताङ्गीं वातकोपभयात् । तथा, जृम्भो चङ्क्रमं च तां कारयेत् । जृम्भो-जृम्भणम् । चङ्क्रमः-चङ्क्रमणं द्रुतगमनम् ।

किमेवमनुष्ठिते सति भवति ? इत्याह—

**गर्भः प्रयात्यवागेवं, तल्लिङ्गं हृद्विमोक्षतः ॥ ७९ ॥**
**आविश्य जठरं गर्भो बस्तेरुपरि तिष्ठति ।**

एवं-अनयेतिकर्तव्यतयाऽनुष्ठितया, गर्भोऽवाक् प्रयाति-

१ 'क्षौद्रो' ट ड ढ । २ 'मध्ये नि' ट । ३ 'त् सूतिकागृह' अ ढ । ४ 'सूतिकागृ' ढ । ५ 'मनक्ष' ट । 'भपुण्यन' इति क्वचित् । ६ 'भि क्लेश' ड ढ ण । 'भादाभि क्लेश' स ह्व । ७ 'प्रणिदध्यात्' स ह्व. । ८ 'आसन्नप्रसवे' इत्यरुणदत्तसम्मत पाठ । ९'सन्नप्रसव , तस्मिन् प्रसवे' ट ड ढ. ।

१ 'तमिव' ड ढ ण । २ 'स्वक्तामुष्णाम्बु' इत्यरुणदत्तसम्मत पाठ । ३ 'गर्भा मानवगर्भोदक' ड ढ । ४ 'कशब्दवा' इति क्वचित् । ५ 'समौ करकदाडिमो' इत्यमरोक्तत्वात्पुल्लिङ्गो दाडिम । ६ 'अभ्यक्ता-स्वभ्य' ट । ७ 'पठन्नुष्णा' ण । ८ 'यनस्थि' ड ढ ण । ९ 'रक्तर्ष' ड ढ ण । 'रक्तवृषभ' ट. । १० 'भूमिश' स ह्व । ११ 'कुञ्चिते' ण । १२ 'मणम् ।' ड ढ. ।

ऊर्ध्वादधो गच्छति, हृत्स्थानं परित्यज्याधोऽवस्थितिं करोतीत्यर्थः । सङ्ग्रहे तूक्तम् ( शा. अ. ३ )—"दद्यात् कुष्ठैलालाङ्गलीवचाचव्यचित्रकचिरिबिल्वचूर्णमुपाघ्रातुं मुहुर्मुहुः । तथा भूर्जपत्रशिंशिपासर्जरसानामन्यतमधूममन्तरान्तरा च । पार्श्वपृष्ठकटीसक्थिदेशान् कोष्णेन तैलेनाभ्यज्यानुसुखमस्या विमृद्नीयात् । एवमवाक् परिवर्तते गर्भः ।" इति । मुसलेनोलूखले धान्यपूर्णमाहननीयं गर्भस्यावाक्स्थित्यै इति केचिदाहुः । तदयुक्तम् । यतो गर्भिण्यास्तावद्व्यायामवर्जनं सततमुपदिष्टम् । विशेषतश्च प्रसवकाले प्रचलितसर्ववातुदोषायां सुकुमारायां नार्या, मुसलव्यायामप्रेरितो हि वायुः प्राणान् हिंस्यादिति । विमर्दनादिक्रिया च गर्भिण्यास्तावत्कारयेत् यावद्गर्भनिष्क्रमणं न भवति । अथ मातृहृदयान्मुक्तो गर्भः केन लक्षणेन ज्ञायते? इत्याह—तल्लिङ्गमित्यादि । तदित्यनेन गर्भः परामृश्यते । तस्य—गर्भस्य, लिङ्गं—लक्षणं, तल्लिङ्गम् । गर्भस्यैतल्लिङ्गं यद्धृद्विमोक्षतो—हृदयमोचनादनन्तरं स गर्भो जठरमाविश्य बस्तेरुपरि तिष्ठति ।

**आव्योऽभित्वरयन्त्येनां खट्वामारोपयेत्ततः ॥ ८० ॥**

आव्यः—प्रसवकालशूलविशेषाः, यस्मादेनां—गर्भिणीम्, अभित्वरयन्ति, अनवरतमुत्पद्यमानत्वात् । ततः—तस्मात्, एनां—गर्भिणीं, खट्वामारोपयेत्—आरोहयेत् ।

**अथ सम्पीडिते गर्भे योनिमस्याः प्रसारयेत्[11] ।**

अथ—खट्वारोहणादनन्तरं खट्वास्थितायां[12] गर्भे सम्पीडिते—समन्तात्पीडिते, वायुना योनिमुखाक्रान्ततया, अस्या गर्भिण्या योनिं प्रसारयेत्—अभ्यङ्गादिदानेन[13] विकासयेत् ।

**मृदु पूर्वं प्रवाहेत बाढमाप्रसवाच्च सा ॥ ८१ ॥**

ततः सा—गर्भिणी, गर्भं मृदु कृत्वा पूर्वं प्रवाहेत, यावद्योनिमुखे नागतो गर्भः । गर्भं योनिद्वारमागतं तु ज्ञात्वा बाढं—भृशं प्रवाहेत, आप्रसवात्—प्रसवं यावत् । तथा चोक्तं सङ्ग्रहे (शा. अ. ३)—"शनैः शनैश्च पूर्वं प्रवाहिष्ठाः[14], निर्गमे बाढं गर्भस्य योनिमुखप्रतिपत्तौ[15] बाढतरमाप्रसवादिति ।" इति । आङ्मर्यादावचन इत्याङः कर्मप्रवचनीयत्वे पञ्चम्यपाङ्परिभिरिति पञ्चमी ।

**हर्षयेत्तां मुहुः पुत्रजन्मशब्दजलानिलैः ।**

तां—गर्भिणीं, अनन्तरं [मुहुः] हर्षयेत्—सुमनसं मुहुः कारयेत् । केन? पुत्रजन्मशब्देन,—प्रसूता प्रसूताऽसि सुभगे धन्यं पुत्रमित्येवंरूपेणासकृत् स्त्रीभिरुच्चारितेन, तथा जलेन शीतलेन, तथाऽनिलेन । सङ्ग्रहेऽप्युक्तम् ( शा. अ. ३ )—"एनां ब्रूयाच्च सुभगे शनैः शनैः प्रवाहयस्व शोभनस्ते सुखवर्णं पुत्रं जनयिष्यसीति । तथाऽन्या तु वामकर्णेऽस्या मन्त्रमिमं जपेत् । 'क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः । सगर्भां त्वा सदा पातु वैशल्यं चादधात्विति ॥ प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने । कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितम् ॥' इति । तथा, 'इहामृतं च सोमश्च चित्रभानुश्च भामिनि । उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥ इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं प्रमुञ्चतु स्त्रि । तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥' इति । अथापरा स्त्री गर्भिणीमनुशिष्यात् । अनागतायां वेदनायां मा प्रवाहिष्ठाः । अकालप्रवाहणं हि विण्मूत्रादिवेगानामिवोदीरणमनर्थकरमहितं च । गर्भस्य श्वासकासशोषकुब्जतादिकरत्वात् ।" इति ।

अथ किं हर्षाद्युत्पादनेन स्यात्? इत्याह—

**प्रत्यायान्ति तथा प्राणाः सूतिक्लेशावसादिताः ॥ ८२ ॥**

तथा—तेन प्रकारेण हर्षादिजननेन, प्राणाः सूते[10] क्लेशाः—आधयः[11], तत्कृतानि दुःखानि, तैरवसादिताः—ग्लानिं नीताः[12], गर्भिण्याः प्रत्यायान्ति—पुनर्नवीभवन्ति ।

**धूपयेद्गर्भसङ्गे तु योनिं कृष्णाहिकञ्चुकैः ।**
**हिरण्यपुष्पीमूलं च पाणिपादेन धारयेत् ॥ ८३ ॥**
**सुवर्चलां विशल्यां वा जराय्वपतनेऽपि च ।**
**कार्यमेतत्तथोत्क्षिप्य[13] बाह्वोरेनां*[14] विकम्पयेत् ॥ ८४ ॥**
**कटीमाकोटयेत्पार्ष्ण्या स्फिजौ गाढं निपीडयेत् ।**
**तालुकण्ठं स्पृशेद्वेण्या मूर्ध्नि दद्यात्स्नुहीपयः ॥ ८५ ॥**
**भूर्जलाङ्गलिकीतुम्बीसर्पत्वक्कुष्ठसर्षपैः ॥**
**पृथग्द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम्[15] ॥ ८६ ॥**
**कुष्ठतालीसकल्कं वा सुरामण्डेन पाययेत् ।**
**यूषेण वा कुलत्थानां *[16]बाल्वजेनासवेन वा ॥ ८७ ॥**

गर्भस्य सङ्गे—सक्तौ, योनिं कृष्णसर्पनिर्मोकेण धूपयेत्—धूपनं योनौ कुर्यात् । धूपयेदिति "गुपूधूप"इत्यादिना आयप्रत्ययः, ततो विधौ लिङ् । तथा, हिरण्यपुष्पीमूलं पाणिना[17] पादेन च सा गर्भिणी धारयेत् । अथवा, सुवर्चलां विशल्यां वा धारयेत् ।

---

१ 'परिहृत्याधो' ड ढ । २ 'धो बस्तिनिकटो भवतीत्यर्थः' ट । ३ 'कुष्ठैलालाङ्गलीवचा' स द्व । ४ 'मुपघ्रातुं मुहुर्मुहुरुपजिघ्रेत् । तथा' ट ड ढ । ५ 'पान्यतरधू' ड ढ । ६ 'सान्यतम' स द्व । ७ 'राशयाया ना' ण । ८ 'म् । यद्धृ' ट ण । ९ 'आव्यो हि त्वर' अ इ ढ । १० 'अतित्व' ट । ११ 'साधयेत्' ड ढ ण स स । 'सादयेत्' ट । 'प्रसाधन—गर्भनिष्क्रमणयोग्यताकरणम्' इतीन्दुः । १२ 'ताया ग' ट ड ढ । १३ 'दिना वि' ट । १४ 'प्रवाहेथा' ट.ढ.ण. । 'प्रवाहयेथा' ड । १५ 'त्तौ चार्हमाप्र' ड ढ. ।

१ 'रूपेण सुस्त्री' ड ढ । २ 'स्व सुप्रसन्नस्ते' स द्व । ३ 'ति । अन्या' स द्व । ४ 'पान्तु' ट, स च । ५ 'वा द' ण । 'वा दधात्वपि' स द्व । 'च दिशन्तु ते' स च । ६ 'क्षिता ॥ इहा' ट । ७ 'तथा पराऽनुशि' स द्व । ८ 'वाहितं हि' ड ढ । ९ 'दिकारित्वात्' स द्व । १० 'सूतिक्ले' ट । ११ 'आवय' ट ढ । १२ 'ता, प्र' ण । १३ 'थोत्क्षिप्य' अ ढ । *१४ 'ता' ण, ड ढ. । १५ 'योनिधूपं च लेपनम्' अ ढ । *१६ 'बिल्व' ण. ट. । 'पुंसि भूम्नि तु बल्वजाः' इत्यमर. । १७ 'पाणिपा' ट.ड.ढ. ।

एतत्–गर्भसङ्गोक्त जरायो–अपराख्यस्य, अपतने–अनिष्क्रान्ता कार्य–विधातव्यम्। न केवल गर्भसङ्गोक्त कार्यं याव देना–अपतितजरायु, बाह्वोर्द्वयोरुत्क्षिप्य विकम्पयेत्–विधुनीत। सङ्ग्रहे तूक्तम् ( शा अ ३ )–"न चेदपरा पतति ततो दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवदुत्पीड्यान्येन पृष्ठत उपसङ्गृह्य विधुनुयात्।" इति । तथा, पार्ष्ण्या कटीमाकोटयेदिति पुनःपुन कव्या पार्ष्णिघात कुर्यादित्यर्थ । तथा, स्फिजौ युतौ सुष्ठु निपीडयेत्। तथा, वेण्या–केशरचनाविशेषाख्यया, तालुकण्ठ स्पृशेत्। सङ्ग्रहेऽप्युक्तम् ( शा अ ३ )–"वेण्याऽङ्गुल्या वा केशवेष्टितया वा तालुकण्ठ परामृशेत्।" इति। तथा, मूर्ध्नि–मस्तके, स्नुहीपय–सुधादुग्धं, दद्यात्। तथा भूर्जादिभिर्द्रव्यै पृथक्–प्रत्येक, अथवा द्वाभ्या कृत्वा, समस्तैर्वा, योन्याँ लेपन धूपन च कार्यमिति शेष । कुष्ठतालीसपत्रयो कल्क वा सुरामण्डेन–सुराभागेनोपरिस्थितेन, ता पाययेत्। अथवा, कुलत्थाना यूषेण–क्वाथेन, पाययेत्। बाल्वजेनासवेन वा। बल्वज वारिणा आसुत्यं रात्रौ धारितं तच्छीतकषायो बाल्वज आसव उच्यते । सङ्ग्रहेऽप्युक्तम् ( शा अ. ३ )–"भूर्जपत्रकाचमणिसर्पनिर्मोकैश्च योनिं धूपयेत्। भूर्जगुग्गुलुभ्या वा। शालिमूलसिद्धेन वा सर्पिषा योनिमभ्यज्य कटुकालाबुजालिनीनिम्बसर्पनिर्मोकैर्धूपयेत्। अनभ्यक्ता वा कटुतैलमिश्रै कल्कीकृतैर्वा तैलाक्तैरालिम्पेत्। गुडनागरकल्केन वा। तदेव वा भक्षयेत्। लाङ्गलीमूलकल्केन वा पाणिपादमुदर च लिम्पेत्।" इति। तथोक्तम् ( स शा अ ३)–"कुष्ठैलाकल्कं वा सुरया पाययेत्। अर्कालर्ककषाय वा सुरोन्मिश्रम्। कुष्ठलाङ्गलिकीमूलकल्क वा मद्यमूत्राण्यतरेण। [ वत्सकादिचूर्णं वा मद्येन।] शतपुष्पाकुष्ठमदनहिङ्गुसिद्धस्य च तैलस्य पिचु ग्राहयेत्।" इति ।

**शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकचित्रकैः ।**
**सहिङ्गुकुष्ठमदनैर्मूत्रे क्षीरे च सार्षपम् ॥ ८८ ॥**
**तैल सिद्ध हितं पायौ योन्या वाऽप्यनुवासनम् ।**
**शतपुष्पावचाकुष्ठकणासर्षपकल्कितः ॥ ८९ ॥**
**निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ।**
**तत्सङ्गे ह्यनिलो हेतुः सा निर्यात्याशु तज्जयात् ९०**

शताह्वादिभिर्द्रव्यै सार्षप तैल मूत्रे क्षीरे चोभयस्मिन् सिद्ध–पक्व, अनुवासन हितम्। क्व? पायौ–गुदे । अथवा योन्या–गर्भनिष्क्रमणद्वारे। तथा, शताह्वादिभिर्द्रव्यै कल्कितो निरूहो–बस्तिकल्पोक्तो यौगिक, सह स्नेहेन लवणेन च वर्तमान, आशु–शीघ्रमेव, अपरा–जरायुसञ्ज्ञा, पातयति। यस्मात्तत्सङ्गेऽनिलो हेतु–वायु कारणम्। तज्जयात्–वातजयात्, सा–अपरा, निर्याति–कुक्षितो बहिर्निष्क्रामति। पवनविजये च बस्ति प्रधानम्। तथा चोक्तम् (हृ सू अ १९।१)–"वातोल्बणेषु दोषेषु वाते वा बस्तिरिष्यते।" इत्यादि। सङ्ग्रहे तु गर्भिण्या आस्थापनेऽनुवासने च सन्निवेशविशेष उक्त। यथा ( शा अ ३ )–"गर्भिणी तु न्युब्जामास्थापयेदनुवासयेच्च । तथाऽस्या विवृतमार्गतया सम्यगौषधमनुप्रविशति।" इति।

**कुशला पाणिनाऽक्तेन हरेत्कृत्तनखेन वा ।**

अथवा कुशला–तद्व्यापारनिपुणा योषित्, पाणिना सर्पिषाऽभ्यक्तेन ता हरेत्। किम्भूतेन पाणिना? कृत्तनखेन, कृत्ता–कल्पिता शस्त्रेण, नखा यस्य तेन, तथाविधेन पाणिना नालानुसारत आकर्षेत्। सङ्ग्रहेऽप्युक्तम् ( शा अ ३ )–"[उमा] शाल्मलीपिच्छया वा सघृतया योनिं पूरयित्वा विधुनुयात्।"इति।

**मुक्तगर्भापरां योनिं तैलेनाङ्गं च मर्दयेत् ॥ ९१ ॥**

गर्भश्चापरा च गर्भापरम्, मुक्त गर्भापर यया योन्या, ता योनिं तैलेन मर्दयेत्। अङ्ग–शरीर च, मर्दयेत्।

**मक्कल्लाख्ये शिरोबस्तिकोष्ठशूले तु पाययेत् ।**
**सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ॥ ९२ ॥**
**धान्याम्बु वा गुडव्योषत्रिजातकरजोन्वितम् ।**

मक्कल्लाख्ये रोग उत्पन्ने शिरोबस्तिकोष्ठशूललक्षणे सति यवक्षार सूक्ष्मचूर्णित घृतेनाथवोष्णजलेन ता सूता पाययेत्। धान्याम्बु वा ता पाययेत्। किम्भूतम्? गुडव्योषत्रिजातकरजोन्वितम्। गुड इति सामान्योक्तावपि पुराणोऽत्र गुडो ग्राह्य, पथ्यत्वात्। मक्कल्लाख्यो–रोग । शिरोबस्तिकोष्ठशूल इति लाघवेन तन्त्रकृताऽस्य लक्षणमुक्तम्।

**अथ बालोपचारेण बालं योषिदुपाचरेत् ॥ ९३ ॥**

अथ बाल–जातमात्रमेव, उपाचरेत्–उपपादयेत्। का? योषित्,–बहुकृत्व प्रसूता, न पुमान्। केन? बालोपचारेण,–बालोपचरणीयोक्तेनाहारविहारादिना।

**सूतिका क्षुद्वती तैलाद्घृताद्वा महतीं पिबेत् ।**
**पञ्चकोलकिनी मात्रामनु चोष्णं गुडोदकम् ॥ ९४ ॥**
**वातघ्नौषधतोयं वा, तथा वायुर्न कुप्यति ।**
**विशुध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रमः ॥ ९५ ॥**

सूतिका क्षुद्वती–बुभुक्षिता सती, तैलादथवा घृतान्महतीं मात्रा पिबेत्। किम्भूताम्? पञ्चकोलक विद्यते यस्या मात्रायास्ता पञ्चकोलकिनीम्। सूक्ष्मचूर्णीकृतपञ्चकोलकयुक्ता ता

१ 'पार्ष्णिं पातयेदि' ड ढ ण । २ 'नयेदि' ट । ३ 'या च कण्ठतालु प' स द्व । ४ 'योन्या' ट. । ५ 'ण्डेनोपरिस्थितेन पा' ड ढ ण । ६ 'त्थ धान्यराशौ धा' ट. । ७ 'कैश्च कुक्ष्यादि धूप' ट । ८ 'येत्। गुडनागरकल्केन वा लिम्पेत्। तदे' ट.ड ढ.ण । ९ 'पाणिमुदर चालि' स द्व । १० 'वा सुरामिश्रम्' ट । 'वा प्रजातासुरो' स स । ११ 'ङ्गलीकल्क' ड ढ. । १२ 'छतग-रसिद्ध' ड.ढ. । १३ 'वा ह्यनु' अ ढ ।

१ 'वा' ड ढ ण । २ 'येद्वा।' स.द्व. । ३ 'स्या अनिवृत' ट । 'स्या अविहत' ण. । ४ 'नाऽभ्य' ट.ड. । ५ 'यथा' इ., ट.ड. ।

मात्रा पिबेदित्यर्थ । अष्टाभिर्यामैर्या जरा गच्छति सा स्नेहमात्रा महती । अनु चोष्ण गुडोदक पिबेदिति योज्यम् । वातहरद्रव्यक्काथ वा पश्चात्पिबेत् । तथा–एव कृते सति, वायुर्न कुप्यति–न कोप याति शून्य कोष्ठ प्राप्य । दुष्ट रक्त च विशुध्यति । अय–एष, क्रमो द्विरात्र त्रिरात्र वा यथायोग कार्य ।

**स्नेहायोग्या तु निःस्नेहममुमेव विधि भजेत् ।**
**पीतवत्याश्च जठरं यमकाक्तं विवेष्टयेत् ॥ ९६ ॥**

स्नेहपानायोग्या तु स्त्री–या स्नेहं नार्हति सा, नि स्नेह–स्नेह विना, अमुमेव–पूर्वोक्त विधिं, भजेत् । पीतवत्याश्च तस्या जठर यमकाक्त–तैलघृताभ्यामभ्यक्त, विवेष्टयेद्वाससेति शेष । पीतवत्या इत्यविशेषनिर्देश कदाचित् स्नेहयोग्या स्नेह पीतवती, स्नेहायोग्या तूष्ण गुडोदक पीतवती, अथवा वातघ्नौषधतोय पीतवती, इति सामान्येन यो निर्देशस्तस्यार्थ ।

**जीर्णे स्नाता पिबेत्पेयां पूर्वोक्तौषधसाधिताम् ।**
**त्र्यहादूर्ध्वं विदार्यादिवर्गक्काथेन साधिता ॥ ९७ ॥**
**हिता यवागूः स्नेहाढ्या सात्म्यतः पयसाऽथवा ।**
**सप्तरात्रात्पर चास्यै[२] क्रमशो बृंहणं हितम् ॥ ९८ ॥**

स्नेहे जीर्णे कवोष्णगुडोदके वातघ्नौषधतोये वा, अनन्तर स्नाता सती पूर्वोक्तौषधसाधिता–पञ्चकोलकृता, पेया पिबेत् । त्र्यहादूर्ध्वं–अनन्तर, विदार्यादिवर्गोक्तौषधै सिद्धा यवागू–पेया, स्नेहाढ्या हिता । अथवा सात्म्यत –सात्म्यवशात्, पयसा–क्षीरेण साधिता, यवागूर्हिता । सप्तरात्रात्पर–अनन्तर, क्रमशो–न सहसा, तस्यै बृहण हितम् । बृहण च जीवनीयबृहणीयमधुरवर्गसिद्धैरभ्यङ्गोद्वर्तनपरिषेकावगाहनैर्हृद्यैश्चान्नपानैर्विधातव्यम् ।

**द्वादशाहेऽनतिक्रान्ते पिशितं नोपयोजयेत्[३] ।**

द्वादशाहेऽनतिक्रान्ते–अपरिसमाप्ते, पिशित–मास, नोपयोजयेत्–नाभ्यवहारयेत्, स्कन्दादिद्वादशग्रहाभिषङ्गपरिहारार्थम् । मासभोजनेन हि कदाचित्तैरभिषङ्गो[५] भवेत्, तेषा मासादत्वात् ।

**यत्नेनोपचरेत्सूतां, दुःसाध्यो हि तदामयः ॥ ९९ ॥**
**गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रुतिपीडनैः ।**

सूता स्त्रीं यत्नेन–तात्पर्येण, उपचरेत्–उपक्रमेत् । कुतो हेतो ? इत्याह–हि–यस्मात्, तस्या आमयो–रोगो, दु साध्य –कृच्छ्रेणोपक्रम्य । किमिति कृच्छ्रसाध्य ? इत्याह–गर्भेत्यादि । वृद्धिश्च प्रसवश्च वृद्धिप्रसवौ, गर्भस्य वृद्धिप्रसवौ च रुक् च क्लेदास्रस्रुतिश्च पीडन च गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रुतिपीडनानि, तैर्हेतुभूतैस्तदामयो दु साध्य । रुक्–प्रवाहवेदना ।

**एवं च मासादध्यर्धान्मुक्ताहारादियन्त्रणा ॥ १०० ॥**
**गतसूताभिधाना स्यात्पुनरार्तवदर्शनात् ॥ १००½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां द्वितीये शारीरस्थाने गर्भावक्रान्तिर्नाम प्रथमोऽध्यायः ॥ १ ॥**

---

एवं–अनेन प्रकारेण, सार्ध मासमुपस्कृता क्रमेण मुक्ताहारविहारयन्त्रणा स्यात् । अध्यर्धमासात्परेण गतसूताभिधाना–व्यपेतप्रसूतिव्यपदेशा, पुनरार्तवदर्शनाद्भवेत् । सङ्ग्रहे तूक्तम् ( शा अ २ )–"जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते । वायोर्मार्गनिरोधाच्च न गर्भस्य प्ररोदिति ॥" इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया द्वितीये शारीरस्थाने गर्भावक्रान्तिर्नाम प्रथमोऽध्याय समाप्त ॥ १ ॥



## द्वितीयोऽध्यायः ।

गर्भावक्रान्तिशारीरादनन्तर गर्भव्यापद शारीरमारभ्यते । गर्भस्य व्यापत्प्रतीकारविज्ञानार्थमाह—

**अथातो गर्भव्यापदं[३] शारीरं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

गर्भस्य व्यापत् गर्भव्यापत्, सा विद्यते यस्मिन्निति छ, तस्य "अध्यायानुवाकयोर्लुक्" इति लुक् । यद्यपि चात्र गर्भव्यापदश्चिकित्साऽप्युक्ता न केवल व्यापत्, तथाऽपि बाहुल्यादिदमुक्तमिति वेद्यम्[४] । अथादीना पूर्ववद्व्याख्या ।

**गर्भिण्याः परिहार्याणां सेवया रोगतोऽथ[५] वा ।**
**पुष्पे दृष्टेऽथवा शूले बाह्यान्तः स्निग्धशीतलम् ॥ १ ॥**
**सेव्याम्भोजहिमक्षीरिवल्ककल्काज्यलेपितान् ।**
**धारयेद्योनिबस्तिभ्यामार्द्रार्द्रान्[६] पिचुनक्तकान् ॥ २ ॥**

गर्भिण्या परिहार्याणा–आहारविहाराणा पूर्वोक्तानामतिव्यवायादीना, सेवनेन पुष्पे दृष्टे, अथवा रोगत- पुष्पे दृष्टे, रोगस्य च स्वभावापथ्यसर्षपशाकमन्दकदध्यादेराहारान्मात्रादेशकाला-

---

१ 'अयमेव क्र' ण । २ 'चास्या.' इ । 'वाऽस्या' अ ढ । ३ 'नैव योज' इ । ४ 'भिष्वङ्ग' ट ड.ढ. । ५ 'मिष्वङ्गो' ड । ६ 'रुक्क्लेदाश्च अस्र' ड ढ ।

१ 'न्दर्याख्या' ट । २ 'पञ्छारार' ट । ३ इय गर्भव्यापत् चरके शा० २ । ८ अध्याययो , सुश्रुते शा० १० अध्याये, चि० १५ अध्याये च, अष्टाङ्गसङ्ग्रहे शा० ४ अध्याये चास्ति वर्णिता । ४ 'बोध्यम्' ट । ५ 'तोऽपि वा' अ.इ.ण । ६ 'येद्बस्तियोनिभ्या' अ इ ढ.ड. ।

दिवशाद्वा सम्भव, गर्भाख्यफलहेतुत्वाद्रक्त पुष्पमुच्यते, तस्मिन् दृष्टे–चक्षुर्गोचर प्राप्ते, अथवा शूले दृष्टे–प्रश्नादिनोपलब्धे सति, दृशिरत्रोपलब्धिवचनं, बाह्यान्त स्निग्धशीतल साधन–अन्न पानप्रदेहपरिषेकादि, कार्यम्। बहि–स्नानावगाहादौ, अन्तश्च–भोजनानुपानादावित्यर्थ। रोगत इति तृतीयार्थे तसि। तथा, स्त्री योनिबस्तिभ्या पिचुनक्तकान् धारयेत्। किम्भूतान्? सेव्यादिभिर्लेपितान्। सेव्य–उशीरम्। अम्भोज–पद्मम्। हिम–चन्दनम्। क्षीर विद्यते येषा ते क्षीरिणो वृक्षा–पिप्पलादय, येषा शस्त्रादिच्छिन्नाना क्षीर दृश्यते। वल्क–वल्कलम्। सेव्य चाम्भोज च हिम च क्षीरिवल्क च, तेषा कल्कश्चाज्य च, तैर्लेपितान्। तथा च किम्भूतान्? आर्द्रार्द्रान्–अतिशयेनार्द्रीकृतान्। पिचुशब्देन विकेशिकासदृश कार्पासमय। नक्तक–चैलखण्ड।

**शतधौतघृताक्तां स्त्री तदम्भस्यवगाहयेत्।**
**ससिताक्षौद्रकुमुदकमलोत्पलकेसरम्॥ ३॥**
**लिह्यात् क्षीरघृतं खादेच्छृङ्गाटककसेरुकम्।**
**पिबेत्कान्ताब्जशालूकबालोदुम्बरवत्पय॥ ४॥**
**शृतेन शालिकाकोलीद्विबलामधुकेक्षुभिः।**
**पयसा रक्तशाल्यन्नमद्यात्समधुशर्करम्॥ ५॥**
**रसैर्वा जाङ्गलैः**

शतशब्दो बहुवारपर्यायं, न सङ्ख्यावाचीत्यर्थ। तथा च सङ्ग्रहेऽधीतम् (शा अ ४)–"सहस्रधौतसर्पिषाऽधोनाभे सर्वत प्रदिह्यात्।" इति। शतधौतेन–बहुधा प्रक्षालितेन घृतेन, अक्ता–अभ्यक्ता, स्त्री तदम्भस्यवगाहयेत्–तत्र ता निमज्जन कारयेत्। तदित्यनेन हि सेव्यादिद्रव्यपरामर्श। स्त्रीमिति वाम्शसोरितीयङ्विकल्पात्पूर्वरूपम्। तथा क्षीर घृत च लिह्यात्। किम्भूतम्? ससितेत्यादि। सह सितया तथा क्षौद्रेण तथा कुमुद कमलोत्पलाना केसरेण–किञ्जल्केन सहितम्। अन्ये तु "क्षीराहृत क्षीरोद्भव घृतं क्षीरघृतमिति व्याचक्षते। तथा, खादेच्छृङ्गाटक कसेरुक च। तथा, पय–क्षीर, पिबेत्। किम्भूतम्? कान्तेत्यादि। कान्ता–गन्धप्रियङ्गु। अप्सु जात–अब्जम्, कमलादि। शालूक–उत्पलमूलम्। बालमुदुम्बर–अपक्वमुदुम्बरफलम्। कान्ता चाब्ज च शालूक च बालोदुम्बर च तानि विद्यन्ते यस्य पयसस्तदेवम्, तै शृत क्षीर पिबेदित्यर्थ। यैर्हि तत्पय शृत तानि तत्रावश्य विद्यन्ते। क्षीरश्रपणविधिश्चातीसारचिकित्सोक्त (हृ चि अ ९।३९)–"पयस्युत्क्वाथ्य मुस्ताना विशति" इत्याद्यनुसारेणात्र कल्प्य। तन्त्रान्तरे त्वेवमुक्तम्–"द्रव्यादष्टगुण क्षीर क्षीरात्तोय चतुर्गुणम्। क्षीरावशेष कर्तव्य क्षीरपाके त्वय विधि॥" इति। अन्ये तु कान्तादिद्रव्याणा चूर्णेन युक्त कल्केन वा युक्त पय पिबेदित्याहु। पयसा रक्तशाल्यन्न समधुशर्कर सुशीत भुञ्जीत। किम्भूतेन क्षीरेण? शाल्यादिभि शृतेन–सिद्धेन। देशसात्म्याद्यनुरोधाज्जाङ्गलैर्वा रसै शाल्यन्नमद्यात्।

**शुद्धिवर्जं चास्रोक्तमाचरेत्।**

शुद्धिं वर्जयित्वा, अस्रोक्त–रक्तपित्ताभिहित, यत्साधन तद्बाह्यान्तराचरेत्–सेवेत। अस्रशब्दस्योपलक्षणार्थत्वाद्रक्तपित्त गम्यते।

**असम्पूर्णत्रिमासायाः प्रत्याख्याय प्रसाधयेत्॥ ६॥**
**आमान्वये च**

असम्पूर्णास्त्रयो मासा यस्या गर्भिण्या सैवम्। तस्या पुष्पदर्शने सति गर्भ प्रायो न तिष्ठति, असञ्जातसारत्वात्। तस्मात् प्रत्याख्याय–प्रत्याख्यान कृत्वा, प्रसाधयेत्–प्रकर्षेण यत्नेन साधयेत्। आमान्वये च। अत्रापि प्रत्याख्याय प्रसाधयेदित्यनुवर्तते। आमानुगते रक्तदर्शने सम्पूर्णत्रिचतुरादिमासाया अपि सञ्जातसारेऽपि गर्भे सति विरुद्धोपक्रमत्वात् प्रत्याख्याय साधन कारयेत्। तथा हि,–रूक्षतीक्ष्णोष्णकटुप्रायमामघ्न गर्भिण्या विरुद्धम्, शीतस्निग्धप्राय चामस्य।

एवमप्यामरक्तयोर्द्वयोर्यदविरुद्ध तदुपदेष्टुमाह—

**तत्रेष्टं शीतं रूक्षोपसंहितम्।**
**उपवासो घनोशीरगुडूच्यरलुधान्यकाः॥ ७॥**
**दुरालभापर्पटकचन्दनातिविषाबलाः।**
**क्वथिताः सलिले पानं तृणधान्यानि भोजनम्॥ ८॥**
**मुद्गादियूषैरामे तु जिते स्निग्धादि पूर्ववत्।**

तत्र–आमान्वये सामताया सत्या, शीत यदन्नपानादि, तत्सर्वं बाह्यतोऽन्तश्च हितम्। शीत रक्तस्य पथ्यं, आमस्य विरुद्धत्वादपथ्य, इत्याशङ्क्याह–रूक्षोपसहितम्,–रूक्षेण–तिक्तकषायादिना, युक्तम्। तथा, देशसात्म्याद्यनुरोधादुपवासो हित, न केवल शीत रूक्षोपसहितम्। तथा घनादयो द्रव्यविशेषा सलिले क्वथिता पान हितम्। घनो–मुस्त। अरलु–स्योनाक। तथा, तृणधान्यानि–नीवारकोद्रवश्यामाकादीनि, भोजन–आहार, तत्र–आमान्वये, हितम्। कै सह? मुद्गादियूषै। आदिग्रहणेन मकुष्टमसूरादय शिम्बीधान्यविशेषा पित्तश्लेष्महरा गृह्यन्ते। सामतायामेवोत्पन्नायामयमुपक्रम। आमे तु जिते स्निग्धादि पूर्ववत्। पूर्वस्मिन्निव पूर्ववत्। सप्तम्यन्ताद्वति। यथा

१ न, शिशिर–शीतलम्, बाह्या० धन कार्यम्' ड.ढ। २ 'येन छिन्नान्' ट ढ ण। ३ 'सभव।' ट। ४ 'य, सङ्ख्यावाचीत्यन्ये।' ड ढ ण। ५ 'सहस्रधौत सर्पि–यदनेकशोऽप्सौ विलाप्य शीतोदके प्रक्षिप्य स्त्यानीक्रियते' इतीन्दु। ६ 'धौतेन स' स ह्र। ७ 'न–शतवारप्र' ट। ८ 'म्भसि–सेव्यादिद्रव्याम्भसि, अव' ट.। ९ 'हित क्षीर घृत च लिह्यात्। अन्ये' ट.। १० 'क्षीराद्धृत' ड.ढ.। ११ 'ति मन्यन्ते।' ड.ढ ण।

१ 'शेष कर्तव्य' ढ। २ 'वाऽस्रो' अ ढ। ३ 'णाद्रक्त' ण। ४ 'तु' ड ढ। ५ 'क्तयोर्यद' ट.। ६ 'न्यादिभो' ड ण। ७ 'पाने हिता।' ट। ८ 'मुस्ता' ट। ९ 'नि–श्यामा' ट ड ढ। १० 'केन सह' ट.ड.ढ ण त। ११ 'दिशब्देन' ट। १२ 'वत्। गर्भिण्या' ड.ढ.।

प्रथम रक्तदर्शने स्निग्धशीतलादि हित, तथाऽत्रापि पूर्वनिर्दिष्ट स्निग्धादि हितमित्यर्थ । स्निग्धशीतानि बाह्यान्तरुपयोज्यानि ।

**गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ ९ ॥**
**गर्भकोष्ठविशुद्ध्यर्थमर्तिविस्मरणाय च ।**
**लघुना पञ्चमूलेन रूक्षां पेयां ततः पिबेत् ॥ १० ॥**
**पेयाममद्यपा कल्के साधितां पाञ्चकौलिके ।**
**बिल्वादिपञ्चकक्काथे तिलोद्दालकतण्डुलैः ॥ ११ ॥**
**मासतुल्यदिनान्येवं पेयादिः पतिते क्रमः ।**
**लघुरस्नेहलवणो दीपनीययुतो हितः ॥ १२ ॥**

गर्भिण्या एवमासेवमानाया अप्यदृष्टवशाद्गर्भे निपतिते—नि शेषेण पतिते सति, तीक्ष्ण—कर्कश, मद्य सामर्थ्येन पिबेत्,—बहु पिबेदित्यर्थ । किमर्थम् ? इत्याह—गर्भकोष्ठेत्यादि । गर्भकोष्ठविशुद्ध्यर्थमर्त —पीडाया , विस्मृत्यर्थ च । ततो—मद्यपरिणामादनन्तर, रूक्षा पेया पिबेत् । किम्भूताम् ? लघुना पञ्चमूलेन—बृहत्यादिना ( हृ सू अ ६।१६८ ), कृताम् । अमद्यपा तु या स्त्री सा गर्भे निपतिते पेया पिबेत्, न तु मद्यम् । क साधिताम् ? कल्के । कि सम्बन्धिनि ? पाञ्चकौलिके,—पञ्च कोलस्याय पाञ्चकौलिक , तस्मिन् । पञ्चकोलक कल्कीकृत्य तत्र पेया साधितामित्यर्थ । तथा, बिल्वादिपञ्चकक्काथे—महत्पञ्चमूलकषाये ( हृ सू अ ६।१६७ ), साधिता पेया पिबेदिति योज्यम् । कै साधिताम् ? तिलोद्दालकतण्डुलै । उद्दालको—व्रीहिविशेष । मासैस्तुल्यानि दिनानि—माससङ्ख्या वासरा । यावन्तो मासा गर्भस्य तावन्त्यहानि गर्भे निपतिते सति, एव—पूर्वोक्तेन प्रकारेण, पेयादि क्रम कार्य । किम्भूत ? लघुरस्नेहलवण । न विद्येते स्नेहलवणे यस्य । तथा, दीपनीयै —अग्निवृद्धिर्मरिचचित्रकादिभिर्द्रव्यैर्युत । स —तथाविध , तत्र क्रमो हित ।

किमर्थम् ?

**दोषधातुपरिक्लेदशोषार्थं विधिरित्ययम् ।**

दोषौ—पित्तकफावत्र गृह्येते । वातस्य क्लेदासम्भवात् । दोषौ च धातवश्च, तेषा परिक्लेद , तस्य शोषार्थ—शोषणाय, अय विधिरिति ।

**स्नेहान्नबस्तयश्चोर्ध्वं बल्यदीपनजीवनाः ॥ १३ ॥**

ऊर्ध्व—अतो दोषधातुपरिक्लेदशोषादनन्तर, स्नेहान्नबस्तयो हिता । स्नेहश्चतुर्विध पानादौ हित । तथा, अन्न स्निग्धनं रूक्ष, हितम् । बस्तयोऽपि स्निग्धा एव—न रूक्षा हिता , वातकोपभयात् । किम्भूता स्नेहान्नबस्तय ? बल्यदीपनजीवना । बल्या —बलाय हिता । दीपना —वह्ने सन्धुक्षणकृत । तथा, जीवना —ओजोवृद्धिकरा ।

१ 'शीत हित, तथाऽत्रापि हित' ण त. । २ 'र्थ । गर्भिण्या' ट । ३ 'हि स.' ढ अरुण । ४ 'परिपानाद' ण त. । ५ 'सा पेया' ट ड ढ । ६ 'केन सा' ट । ७ 'युक्त' ट. । ८ 'क्लेदसम्भवाभावात्' ट. । ९ 'अरूक्ष' ण त ।

इदानीमुपविष्टकनागोदरयोर्गर्भयोर्हेतुलिङ्गौषधानि वितानयितुमाह—

**सञ्जातसारे महति गर्भे योनिपरिस्रवात् ।**
**वृद्धिमप्राप्नुवन् गर्भः कोष्ठे तिष्ठति सस्फुरः ॥ १४ ॥**
**उपविष्टकमाहुस्तं, वर्द्धते तेन नोदरम् ।**

सञ्जात सारो—बल, यस्यासौ सञ्जातसारो—बलवान् गर्भ , तस्मिन् । तथा, महति—प्रवृद्धे सति । गर्भिण्या परिहार्यापरिहाराद्योऽसौ योने परिस्रव —परिस्रवण, तस्मात् । परिस्रव इति च सामान्येन निर्देशात् कदाचिद्रक्तरूप कदाचिदन्यादृशोऽपि गर्भात्स्रवति । परिस्रवाच्च कारणात् वृद्धिमप्राप्नुवन्—अगच्छन्, कोष्ठ एव—गर्भाधार एव, तिष्ठति गर्भ । यतो योनिपरिस्रवात्कारणात् वायु कुपित पित्तश्लेष्माणौ परिगृह्य गर्भस्य रसवहां नाडी प्रतिपीड्यावतिष्ठते । ततो नाड्या दोषै कुल्यायामिव तृणपत्रादिभि प्रतिच्छन्नाया रसस्यासम्यग्वहनान्नाडीरोधाद्वृद्ध्यभावो गर्भस्य । किम्भूत कोष्ठे तिष्ठति ? सस्फुर । स्फुरण—स्फुर । अज्विधौ भयादीनामुपसङ्ख्यानमित्यच् । गाङ्कुटादिभ्यो ञ्णिङिदिति ङित्त्वाद्गुणाभाव । सह स्फुरेण—चलनेन, वर्तत इति सस्फुर । एतावन्मात्रविशेषावस्थ कोष्ठे तिष्ठति । त—तथाविध गर्भ, उपविष्टकसञ्ज्ञमाहु । 'मुनय' इति शेष । तेन—तथाभूतेन गर्भेण कोष्ठस्थितेन, तस्या उदर न वर्द्धते—न वृद्धि याति, गर्भस्यैवावृद्धे । न हि यद्यस्य वृद्धौ वर्द्धते तदवृद्धौ तस्य वृद्धि स्यात् । तथा हि,—चन्द्रवृद्धावेव समुद्रवेलाया वृद्धि । उपविष्टकावस्थश्च गर्भो न वर्द्धते । अतस्तत्कारणाभावादुदरस्याप्यवृद्धि ।

एवमुपविष्टकमुक्त्वा नागोदराख्य वक्तुमाह—

**शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात् ॥ १५ ॥**
**वाते क्रुद्धे कृशः शुष्येद्गर्भो नागोदरं तु तम् ।**
**उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ १६ ॥**

शोकोपवासरूक्षाद्यै —गर्भगर्भिण्यपचयकारिभि पवनप्रकोपकारिभिर्हेतुभि , वाते क्रुद्धे—कुपिते, अथवा गर्भगर्भिण्योरुपचयप्रदैराहारविहारैरुपचितयोर्गर्भगर्भिण्योरपि कदाचिदत्यर्थ रक्तस्रुतिकारणान्यासेवेत स्त्री, तदानी तस्या योन्यतिस्रवो जायते । तस्माद्योन्यतिस्रवात्कारणादपि पवने कुपिते, कृशो गर्भ सम्पद्यते । शुष्येदित्यत्र चशब्दो लुप्तनिर्दिष्टो द्रष्टव्य । न केवल कृशो भवति शुष्येच्चेत्यर्थ । त—तथाभूत गर्भ, नागोदरसञ्ज्ञक केषाचिन्मते चोपशुष्ककसञ्ज्ञक विद्यात् । अत्र—नागोदरसञ्ज्ञके गर्भेऽन्तस्थिते, उदर वृद्धमपि—महदपि सत्,हीयते—हानिं याति । स्फुरण च चिरात्—चिरेण भवति । उपविष्टके तु केवलमवृद्धिर्न तु हानि ।

१ 'बिभणिपुराह' ट । २ 'निर्दिष्ट कदा' ट ड ढ ण त । ३ 'गर्भ स्र' ट ड ढ । ४ 'कोष्ठे स्थि' ड ढ ण त । ५ 'तत्' अ. इ ढ ण । ६ 'तत्—' ण त । ७ 'ज्ञकमिति के' ट । ८ 'ज्ञकमिति । अत्र' ट ड ढ ण त । ९ 'ज्ञगर्भे' ड ढ.ण ।

**तयोर्बृंहणवातघ्नमधुरद्रव्यसंस्कृतैः ।**
**घृतक्षीररसैस्तृप्तिरामगर्भाश्च खादयेत् ॥ १७ ॥**
**तैरेव च सुभिक्षायाः क्षोभणं यानवाहनैः ।**

तयो –उपविष्टकनागोदराख्ययोर्गर्भयो , घृतक्षीररसैस्तृप्तिर्गर्भिण्या कार्येति शेष । किम्भूतैस्तै ? बृंहणवातघ्नमधुरद्रव्यसस्कृतै –सिद्धै । बृंहणानि च तानि वातघ्नानि च मधुराणि च, एवभूतानि यानि द्रव्याणि द्राक्षाशर्करादीनि, न तु व्यस्तानि बृंहणानि वातघ्नानि मधुराणि च । तत्र केवल बृंहणानि–प्रियङ्गुप्रभृतीनि, न तु वातघ्नानि । वातघ्नानि च बृंहणानि, न तु मधुररसानि, यथा–नागरादीनि । मधुराणि न वातघ्नानि नापि बृंहणानि, यथा–तण्डुलीयमसूरादीनि । तदेतैर्व्यस्तगुणैर्द्रव्यै सस्कृतेन घृतादिना तृप्तिर्न कार्या, किं तर्हि ? समस्तबृंहणादिगुणयुक्तैर्द्रव्यै सस्कृतैरिति बोध्यम् । तथा च सङ्ग्रहेऽपि जगे (शा अ ४)–'तयोर्जीवनीयबृंहणीयमधुरौषधसिद्धाना सर्पिषामुपयोग ।" इत्यादि । तथा, तद्गर्भपुष्टये ता गर्भिणीमामगर्भाश्च खादयेत्, वैद्य इति शेष । आमगर्भान् खादन्त्या कदाचिद्गर्भिण्या जुगुप्सा स्यात्, अतो गर्भगर्भिण्योर्द्वयोरपि व्यापदो भवेयुरिति ण्यन्तोऽत्र खादिर्निर्दिष्ट । वैद्यो हि ता तथा युक्त्या खादयेत्, यथाऽसौ न जुगुप्सेत । आमगर्भा अपरिपूर्णगर्भा उच्यन्ते । तथा, तैरेव–बृंहणादिद्रव्यसस्कृतैर्घृतक्षीररसैरामगर्भैश्च, सुभिक्षाया –तृप्तिं प्राप्ताया , क्षोभण कार्यम् । कै ? यानै –रथादिभि , वाहनै –गजतुरगादिभि । तत्रारोप्य ता गर्भिणी वेगेन नयेदित्यर्थ ।

अथ लीनाख्यस्य गर्भस्य चिकित्सामाह—

**लीनाख्ये निस्फुरे श्येनगोमत्स्योत्क्रोशबर्हिजाः॥१८॥**
**रसा बहुघृता देया माषमूलकजा अपि ।**
**बालबिल्वं तिलान्माषान्सक्तूंश्च पयसा पिबेत् ॥१९॥**
**समेद्यमांसं मधु वा कट्यभ्यङ्गं च शीलयेत् ।**

अस्योपविष्टकनागोदराभ्यामेव हेतुलक्षणयोरुक्तत्वात् यदेव निस्फुरणत्वादि विशेषान्तर तदेवेह तन्त्रकृतोक्तम् । सङ्ग्रहे तु पपाठ ( शा अ. ४)–"यस्या पुनर्वातोपसृष्टस्रोतसो लीनो गर्भ प्रसुप्तो न स्पन्दते त लीनमित्याहु ।" इति । तत्र लीनाख्ये गर्भे सति गर्भिण्या श्येनादिजा रसा बहुघृता देया । आदिशब्देन ( उपलक्षणत्वेन ) [ सङ्ग्रहोक्ताना ] तित्तिरिकुक्कुटादीना ग्रहणम् । तथा, माषमूलकजा रसा बहुघृता देया । तथा, सात्म्यादिवशात् बालबिल्वादीन् समस्तानेकध्य कृत्वा क्षीरेण पिबेत् । तथा सह मेदुरमासेन मार्द्वीकं वा पिबेत् । कट्या चाभ्यङ्ग शीलयेत्–अभ्यसेत् ।

१ 'सुतृप्ताया' ट ण । 'सुभिक्षाया इति सुबुभुक्षाया ' इति चक्र । २ 'कुर्यादिति' ड ढ । ३ 'योर्व्यापदो भवेरन्निति' ड ढ । ४ 'केन?' ड ढ ण त । ५ 'स्रोतसि' स ढ । ६ 'दीन् क्षीरेण' ट ड ढ. । ७ 'कट्याश्चाभ्य' ट ।

**हर्षयेत्सततं चैनामेवं गर्भः प्रवर्द्धते ॥ २० ॥**

सतत–मुहुर्मुहुश्च, एना–गर्भिणीमुपविष्टकनागोदरलीनाख्यगर्भोदरस्था, हर्षयेत्–मुदिता कुर्यात् । एव–अनयेतिकर्तव्यतया कृतया, गर्भ प्रवर्द्धते–वृद्धिं याति ।

**पुष्टोऽन्यथा वर्षगणैः कृच्छ्राज्जायेत, नैव वा ।**

अन्यथा–अन्येन प्रकारेण पूर्वोक्तविपर्ययेण रूक्षात्मना सेवितेन मातुराहाररसेनाल्पेन, पुष्ट –चेतनामात्रावशेष एव, वत्सरसन्दोहै कृच्छ्राज्जायेत–कष्टेन योनितो निष्क्रामेत् । नैव वेति । अथवा यावज्जीव गर्भिण्या कुक्षावेवावसीदेत् न ततो निष्क्रामेत् कुक्षावेवावतिष्ठेत ।

**उदावर्तं तु गर्भिण्याः स्नेहैराशुतरां जयेत् ॥ २१ ॥**
**योग्यैश्च बस्तिभिर्हन्यात्सगर्भा स हि गर्भिणीम् ।**

गर्भिण्या यद्युदावर्ताख्यो व्याधि स्यात्, त स्नेहै –चतुर्भिर्यथायोग्यौषधसाधितै ? पानादिना सेवितै , आशुतरा–अतित्वरित, जयेत् । तथा, योग्यै –तत्कालोचितै , बस्तिभि –अनुवासनै , जयेत् । ननु, गर्भिण्या वर्ज्येषु "बस्तिमामासतोऽष्टमात्" इति प्रागुक्तम् ( हृ शा अ १।४७ ) । तत्कथमिह सामान्येनानुवासन तन्त्रकृदुपादिक्षत्? इत्याह–हन्यादित्यादि । स यस्मादुदावर्तो गर्भेण सह गर्भिणी हन्यात्, अतस्तमाशुतरा जयेत् ।

**गर्भेऽतिदोषोपचयादपथ्यैर्दैवतोऽपि वा ॥ २२ ॥**
**मृतेऽन्तरुदरं शीतं स्तब्धं ध्मातं भृशव्यथम् ।**
**गर्भास्पन्दो भ्रमतृष्णा कृच्छ्रादुच्छ्वसनं क्लमः ॥ २३ ॥**
**अरतिः स्रस्तनेत्रत्वमावीनामसमुद्भवः ।**

दोषाणा–वातादीना, उपचय –प्रवृद्धत्वम्, अतिशयेन दोषोपचयोऽतिदोषोपचय , तस्माद्धेतो , अन्त –उदरमध्ये, गर्भे मृते सति, अपथ्यै –स्वभावमात्राकालादिविरुद्धस्वभावैर्वा, अन्त मृते, अथवा दैवात् ( दैवत )–अन्यजन्मार्जितशुभाशुभकर्मवशात्, अन्तर्मृते गर्भे सति, गर्भिण्या उदर शीत–ऊष्मरहित, भवति । तथा, स्तब्ध–निश्चल, भवति । तथा, ध्मात–दृतिवद्वातपूरितम् । तथा, भृशव्यथ–अतिवेदन, भवति । तथा, गर्भास्पन्दो–गर्भस्यास्फुरण, भ्रमस्तृष्णा च भवति । तथा, कृच्छ्रार्त्–कृच्छ्रेण, गर्भिण्या उच्छ्वसन–ऊर्ध्वश्वसनम् । तथा, क्लमो–ग्लानि । तथा, अरति –स्थानासनशयनादिष्वनवस्थितत्व चेतस । तथा, स्रस्ते च ते नेत्रे च, तयोर्भाव स्रस्तनेत्रत्वम्, स्रस्ते–स्थानाच्युते इव । तथा, आवीना–आसन्नप्रसवकालज शूलविशेषाणा, असमुद्भव–अनुत्पाद ।

१ 'ष्क्रामति नैव वेत्यवतिष्ठते' ड.ढ । २ 'तैरादरात् पा' ट । 'तैरादरात् से' ड ढ । ३ 'दुपदिशति?' ट । 'पादिशत्' ण । ४ 'न्तर्जठर' ड । ५ 'स्तब्धाध्मात' अ ड ढ । ६ 'वच्छ्वासपू' ड ढ ण त. । ७ 'न्दो भ्रम' ट ड ढ । ८ 'त्–न सुखेन, ग' ट. । ९ 'आधीना' ड.ण त.

**तस्याः कोष्णाम्बुसिक्तायाः पिष्ट्वा योनिं प्रलेपयेत् ॥**
**गुडं किण्वं सलवणं तथान्तः पूरयेन्मुहुः ।**
**घृतेन कल्कीकृतया शाल्मल्यतसिपिच्छया ॥ २५ ॥**
**मन्त्रैर्योगैर्जरायूक्तैर्मूढगर्भो न चेत्पतेत् ।**
**अथापृच्छ्येश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥ २६ ॥**
**हस्तमभ्यज्य योनिं च साज्यशाल्मलिपिच्छया ।**
**हस्तेन शक्यं तेनैव**

तस्या –अन्तर्मृतगर्भायाः, ईषदुष्णजलसिक्ताया योनिं प्रलेपयेत्–प्रदेहयेत्। गुडादिकं पिष्ट्वा सामर्थ्याद्गुडादिकेनैव लेपयेदिति योज्यम्। तथाऽन्तः पूरयेत्, शाल्मल्यतसिपिच्छयेति सम्बन्धनीयम्। योनेः प्रकृतत्वात्तस्या अन्तः–अभ्यन्तरं, अन्तर्बहिश्च। कीदृश्या पिच्छया? घृतेन कल्कीकृतया,–पिष्टया। एवं योनेर्मुहुर्मुहुरभ्यन्तरं पूरयित्वाऽनन्तरं मूढगर्भपातनार्थं मन्त्रान् सिद्धान् प्रयोजयेत्। तथा, जरायूक्ताः–जरायवपतने कथिताः, तांश्च योगान् प्रयोजयेत्। मन्त्रैः–सङ्ग्रहोक्तैः (शा. अ. ३)–"क्षितिर्जलं" इत्यादिभिः, अथर्ववेदोक्तैश्च मन्त्रैर्जरायोः पातनार्थमुक्तैः। एवमनुष्ठीयमानेऽपि मूढगर्भो यदि न पतति, अथ–अनन्तरं, ईश्वरं–नृपं, आपृच्छ्य–तदाज्ञां गृहीत्वा, तं–मूढगर्भं, आशु गर्भिण्या आहरेत्–आकर्षेत्। कथम्? हस्तमभ्यज्य–लेपयित्वा, तथा योनिमभ्यज्य। केन? साज्येत्यादि। शाल्मल्याः पिच्छा शाल्मलिपिच्छा–निर्यासः, सहाज्येन वर्तते इति साज्या, साज्या चासौ शाल्मलिपिच्छा च तया, हस्तं योनिं चाभ्यज्य यत्नेन गर्भमाहरेत्। हस्तेन शक्यमाक्रष्टुं तेनैव–हस्तेन साज्यशाल्मलिपिच्छाक्तेन, तं–गर्भं, समाकर्षेत्।

**गात्रं च विषमं स्थितम् ॥ २७ ॥**
**आञ्छनोत्पीडसम्पीडविक्षेपोत्क्षेपणादिभिः ।**
**आनुलोम्यं समाकर्षेद्योनिं प्रत्यार्जवागतम् ॥ २८ ॥**

गात्रं च गर्भस्य विषमं कृत्वा स्थितं–अयथामार्गेण स्थितं, आञ्छनादिभिरानुलोम्य–स्पष्टत्वं प्राप्ते गात्रे सति, योन्यभिमुखमार्जवेन–ऋजुमार्गेणागतं सन्तं, आहरेत्। आञ्छनेन–आयामेन दीर्घतया स्थापनेन, तथोत्पीडनेन–ऊर्ध्वं पीडनेन, तथा समन्तात्पीडनेन, तथा विक्षेपेण–विशेषप्रेरणेन, तथा उत्कर्षेण क्षेपण–उत्क्षेपणं तेन, आदिग्रहणादेवप्रायैरन्यैरपि स्वबुद्धिपरिकल्पितैः, स्पष्टत्वं प्राप्ते सति।

इदानीं शस्त्रोपायसाध्या मूढगर्भचिकित्सामाह—

**हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते ।**
**पादेन योनिमेकेन भुग्नोऽन्येन गुदं च यः ॥ २९ ॥**
**विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः ।**

हस्तेन पादेन शिरसा, अतुल्यकालं–कदाचिद्धस्तेन कदाचित्पादेन कदाचिच्छिरसा, योनिं प्रति भुग्नः–कुटिलः, प्रपद्यते–आयाति, यः स एको विष्कम्भो नाम मूढगर्भः। तथा, पादेनैकेन योनिं तथा द्वितीयपादेन गुदं–पायुं, भुग्नः सन् यो मूढगर्भः प्रपद्यते, सोऽपरो विष्कम्भः। तौ–एतौ द्वौ, विष्कम्भौ नाम मूढौ–मूढगर्भौ, शस्त्रदारणमर्हतः। हस्तेनाक्रष्टुमशक्यत्वात्तयोः शस्त्रदारणं कार्यमित्यर्थः।

अत एवाह—

**मण्डलाङ्गुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते ॥ ३० ॥**

मण्डलं चाङ्गुलिश्च मण्डलाङ्गुली। मण्डलशब्देन मण्डलाग्रं शस्त्रमुपलक्ष्यते, अङ्गुलिशब्देन चाङ्गुलिशस्त्रम्। ते नामनी ययोः शस्त्रयोस्ते मण्डलाङ्गुलिशस्त्रे शस्त्रविध्यध्यायोक्ते (हृ. सू. अ. २६।५–१३), ताभ्यां मण्डलाङ्गुलिशस्त्राभ्यां [तत्र–] तयोर्विष्कम्भाख्ययोर्मूढगर्भयोः, कर्म प्रशस्यते। ताभ्यां शस्त्राभ्यां दारणमेतयोः कार्यमित्यर्थः।

**वृद्धिपत्रं हि तीक्ष्णाग्रं न योनाववचारयेत् ।**

वृद्धिपत्रसंज्ञं शस्त्रं यस्मात्तीक्ष्णाग्रमतस्तद्योनौ नावचारयेत्–तेन तत्र विदारणं न विधेयम्, प्रत्यवायभयात्।

दारणं च यथा विधेयं तथाऽऽह—

**पूर्वं शिरःकपालानि दारयित्वा विशोधयेत् ॥ ३१ ॥**
**कक्षोरस्तालुचिबुकप्रदेशेऽन्यतमे ततः ।**
**समालम्ब्य दृढं कर्षेत्कुशलो गर्भशङ्कुना ॥ ३२ ॥**
**अभिन्नशिरसं त्वक्षिकूटयोर्गण्डयोरपि ।**

पूर्वं शिरःसम्बन्धीनि कपालानि विशोधयेत्। किं कृत्वा? शस्त्रेण दारयित्वा,–छित्त्वा। एवं शिरःकपालानि शोधयित्वा–गर्भिणीकोष्ठबाह्यानि कृत्वा, ततः–अनन्तरं, कक्षोरस्तालुचिबुकप्रदेशेऽन्यतमे–तद्विषये, समालम्ब्य–तं गर्भं गृहीत्वा, दृढं कृत्वा आकर्षेत्। केन? गर्भशङ्कुना। कः? कुशलः,–अभ्यस्तकर्मा वैद्यः। अभिन्नशिरसं–अविदारितोत्तमाङ्गं पुनर्गर्भं, अक्षिकूटयोस्तथा गण्डयोस्तद्विषयेऽन्यतमे प्रदेशे–कदाचिदक्षिकूटप्रदेशे कदाचिद्गण्डप्रदेशे, समालम्ब्य तं गर्भं दृढं गर्भशङ्कुना गृहीत्वा कर्षेत्।

**बाहुं छित्त्वांऽससक्तस्य वाताध्मातोदरस्य तु ॥ ३३ ॥**
**विदार्य कोष्ठमन्त्राणि बहिर्वा सन्निरस्य च ।**

असाध्या सक्तोंऽससक्तः, तस्य बाहुं छित्त्वाऽऽकर्षणं कुर्यात्। वामेनांसेन सक्तस्य वामं बाहुं दक्षिणेनांसेन सक्तस्य दक्षिणं बाहुं छित्त्वेत्यर्थः। वातेनाध्मातं–दृतिवत्पूरितं, उदरं यस्य मूढगर्भस्यासौ वाताध्मातोदरः, तस्य तु कोष्ठं–आमपक्वाशयाश्रयं, विदार्य–पाटयित्वा, अन्त्राणि च बहिः सम्यङ्निरस्य–बाह्यतः प्रक्षिप्य, आकर्षेत्।

१ 'पृष्ट्वेश्वरं' अ। 'अथ पृष्ट्वेश्वरं' ढ। २ 'हिश्चेत्यवेहि।' ट। ३ 'रायुपं' ड ढ। ४ 'अथवाऽथर्व' ण त। ५ 'तत आज्ञा' ट ण त। ६ 'षमस्थि' अ इ ढ त। ७ 'आनुलोम्ये स' अ. इ ढ ण त। ८ 'लोम्ये–' ट. ण. त.। ९ 'न, आदि' ट ड, ढ।

१ 'त्पाय' ड ढ ण त। २ 'ण यत्र यथा' ण त.। ३ 'बुके प्र' ण.। ४ 'ल.–स्वभ्य' ट। ५ 'शयप्राय' ड ढ.।

**कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥ ३४ ॥**

कटीसक्तस्येति तृतीया समास । कट्या सक्तस्य-ककुन्दरलग्न-लीनस्य, तद्वच्चेति तेन-वाताध्मातोदरेण, तुल्य कर्म दारणात्मक कृत्वा, तत्कपालानि तस्या -कट्या, कपालानि-खण्डानि, विदारयेत् ।

इति विशेषेण गर्भस्याकर्षणमुक्त्वा, सामान्येन मूढगर्भचिकित्सामाह—

**यद्यद्वायुवशादङ्गं सज्जेद्गर्भस्य खण्डशः ।**
**तत्तच्छित्वाऽऽहरेत्सम्यग्रक्षेन्नारीं च यत्नतः ॥३५॥**

यद्यदङ्ग मूढगर्भस्य वायुवशात् सजेत्-सश्लिष्येत्, तत्तदङ्ग खण्डशो-लैवश, छित्वा-दारयित्वा, सम्यगाहरेत्। किलैकवेलया सकलगर्भशरीरच्छेदनादन्तस्थितमूढगर्भाया नार्या अपि बलवच्छस्त्रनिपातनाद्विघात सम्भाव्यत इति खण्डश इत्युक्तम्। अत एवाह-रक्षेदित्यादि। नारी च यत्नेन-तात्पर्य कृत्वा, रक्षेत्। यथा नार्या अङ्ग किञ्चिदपि न छिद्यते तथा विधेयमित्यर्थ ।

**गर्भस्य हि गति चित्रां करोति विगुणोऽनिलः ।**
**तत्रानल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥ ३६ ॥**

यस्माद्गर्भस्य चित्रा-नानारूपा, गति-अवस्थिति, विगुण -प्रकुपित, प्रभञ्जन करोति, तस्माद्योऽनल्पमति -महाबुद्धिर्वैद्य, स तत्र-तस्या गतौ, अवस्थापेक्षमाचरेत्,-मूढगर्भ प्रत्यनुक्तमप्यवस्थित कर्म कुर्यादित्यर्थ ।

**छिन्द्याद्गर्भं न जीवन्तं मातरं स हि मारयेत् ।**
**सहात्मना, न चोपेक्ष्यः क्षणमप्यस्तजीवितः ॥३७॥**

जीवन्त गर्भ गर्भिण्यन्तर्मृतगर्भलक्षणानभिज्ञो वैद्याभिमानी य स त गर्भं न दारयेत्। कुतो हेतो ? इत्याह-यस्मात्स मातर मारयेत्। कथम् ? सहात्मना,-मातरमात्मान च, स छिन्नो गर्भो व्यापादयेदित्यर्थ । न चास्तजीवितो-गर्भिण्या अन्तर्मृतो गर्भ, क्षणमपि-मुहूर्तमात्रमपि, उपेक्ष्य । अपि तु तस्य द्रागेव प्रतिक्रिया कुर्यात् ।

इदानीमुपेक्ष्या मूढगर्भां स्त्रियमाह—

**योनिसंवरणभ्रंशमक्कल्लश्वासपीडिताम् ।**
**पूत्युद्गारां हिमाङ्गीं च मूढगर्भां परित्यजेत् ॥ ३८ ॥**

योने सवरण-सवृतयोनित्वम्, तथा तस्या एव योनेर्भ्रंश -स्वस्थानाच्यवनम्, तथा मकल्ल -शिरोबस्तिकोष्ठशूललक्षण प्रागुक्तो व्याधि, तैर्योनिसवरणादिभि पीडिताम्। तथा, पूत्युद्गाराम्। तथा, हिमाङ्गीम्। एवविधा मूढगर्भां त्यजेत्-नोपक्रमेत्।

**अथापतन्तीमपरां पातयेत्पूर्ववद्भिषक् ।**
**एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ॥ ३९ ॥**
**दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ।**
**योनिर्मृदुर्भवेत्तेन शूलं चास्याः प्रशाम्यति ॥ ४० ॥**

अथ-मूढगर्भाहरणादनन्तर, अपरा-जरायुसज्ञा, अपतन्ती-अनिष्क्रामन्ती, पूर्ववत्पातयेत्। पूर्वेण तुल्य-पूर्ववत्, पूर्वोक्तेनापरापातनोक्तविधिना "हिरण्यपुष्पीमूल च" (हृ शा अ १।८३) इत्यादिनेत्यर्थ । एव-अनन्तरोक्तेन विधिना, निर्हृतशल्य-गर्भजरायुसज्ञ, यस्यास्ता तु स्त्रियमुष्णेन जलेन सिञ्चेत् । तत -स्नानादनन्तर, अभ्यक्तशरीरायै स्त्रियै योनौ स्नेहपिचु दद्यात्। तेन-स्नेहपिचुना, अस्या -योषित, योनिर्मृदुर्भवेत्। शूल-रुजा च, प्रशाम्यति ।

**दीप्यकातिविषारास्नाहिङ्ग्वेलापञ्चकोलकात् ।**
**चूर्णं स्नेहेन कल्कं वा क्वाथं वा(तां)पाययेत्ततः॥४१॥**
**कटुकातिविषापाठाशाकत्वग्घिङ्गुतेजिनीः ।**
**तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च ॥ ४२ ॥**
**त्रिरात्रमेवं, सप्ताहं स्नेहमेव ततः पिबेत् ।**
**सायं पिबेदरिष्टं च तथा सुकृतमासवम् ॥ ४३ ॥**
**शिरीषककुभक्वाथपिचून् योनौ विनिक्षिपेत् ।**
**उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥४४॥**

तत -स्नानाभ्यङ्गादनन्तर, दीप्यकादेश्चूर्णं स्नेहेन-घृतादिना प्रकृत्यादिवशात् यथायोग्येन, ता-स्त्रिय, पाययेत्। कल्क वा-दीप्यकादेर्जलेन पिष्ट्वा, स्नेहेन ता पाययेत्। क्वाथ वा दीप्यकादेस्ता पाययेत्। तथा, कटुकादीनि तद्वत् ता स्त्रिय पाययेत्। एतानि द्रव्याणि चूर्णीकृत्य स्नेहेन कल्कीकृत्य क्वाथीकृत्य वा पाययेत्। शाक-खरच्छदम्। त्वक्-त्वचम्। तेजिनी-तेजोवती। किमर्थ पाययेत् ? दोषस्यन्दार्थम्। दोषस्य-रक्तादे, स्यन्द -स्रवण, तदर्थ पाययेत्। तथा, वेदनाया -पीडाया, उपशान्त्यर्थ च। त्रिरात्रमेव मूढगर्भाकर्षणदिनात्प्रभृति कार्यम्। तत -त्रिरात्रादनन्तर, सा मूढगर्भा, सप्ताह स्नेहमेव पिबेत्, न तु रूक्षौषधम्, इत्येवकारोऽवधारणार्थो द्योतयति। साय-दिनान्ते, अरिष्ट-पूर्वोक्तलक्षण, पिबेत्। तथा, शोभन कृत्वा कृत-निष्पादित, आसव-मद्यविशेष, तथा शिरीषककुभक्वाथाक्तान् पिचून्-विकेशिकाप्रायान् कार्पासादिमयान्, योनौ विनिक्षिपेत्। उपद्रवा ज्वरादयश्चान्ये ये भवेयु, तान्-उपद्रवान्, यथास्वमुपाचरेत्,-यस्य ज्वरादेर्य आत्मीय उपक्रम, तेन तमुपक्रमेदित्यर्थ ।

एतच्च पूर्वोक्तमासेव्य, अनन्तर यत्कर्तव्य मूढगर्भाया. स्त्रियास्तदाह—

**पयो वातहरैः सिद्धं दशाहं भोजने हितम् ।**
**रसो दशाहं च पर लघुपथ्याल्पभोजना ॥ ४५ ॥**

१ 'खण्डान्' ट । २ 'हरन्सम्य' अ ढ । ३ 'नैकश' ट । ४ 'कहेल' ट ड ढ त । ५ 'घाता सम्भाव्यन्त' ड ढ त । ६ 'उपेक्षेत' ड.ढ ण.त। ७ 'प्रागेव' ड ढ । ८ 'मण्कल्ल' इ । 'मकल' ढ । 'मकल्ल' ण । ९ 'योनिसव' ट. । 'योने स्रवृत्ति स्रव' ड.ढ ।

१ 'क्तदेहायै' ट । २ 'तेजनी' अ इ ढ, स स । ३ 'तेजनी-तेजवती' ड ढ.ण । ४ 'मेव चूर्ण मूढ' ट ड.ढ. । ५ 'क्वाथकृतान्' ट ।

**स्वेदाभ्यङ्गपरा स्नेहान् बलातैलादिकान् भजेत् ।**
**ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च ४६**

पय –क्षीर, अनन्तर तस्यै दशाह भोजने हितम् । किम्भूतम् ? वातहरै –रास्नादिभिर्द्रव्यै , सिद्ध–शृतम् । दशाहादनन्तर द्वितीय च दशाह रसो भोजने हित । पर–अतो दिनविंशतेरनन्तर, सा–स्त्री, लघुपथ्याल्पभोजना सती, तथा स्वेदाभ्यङ्गपरा–तत्प्रधाना सती, स्नेहान्–बलातैलादिकान्, भजेत् । ऊर्ध्व–अनन्तर चतुर्भ्यो मासेभ्य पञ्चममासात्प्रभृति, सा–निष्क्रान्तमूढगर्भा स्त्री, क्रमेण–न तु सहसा, सुखानि–अन्नपानाहारविहाररूपाणि, भजेत् ।

अथ बलातैल निरूपयति—

**बलामूलकषायस्य भागाः षट् पयसस्तथा ।**
**यवकोलकुलत्थानां दशमूलस्य चैकतः ॥ ४७ ॥**
**निष्क्वाथभागो भागश्च तैलस्य तु चतुर्दशः ।**
**द्विमेदादारुमञ्जिष्ठाकाकोलीद्वयचन्दनैः ॥ ४८ ॥**
**सारिवाकुष्ठतगरजीवकर्षभसैन्धवैः ।**
**कालानुसार्याशैलेयवचागुरुपुनर्नवैः ॥ ४९ ॥**
**अश्वगन्धावरीक्षीरशुक्लायष्टीवरारसैः ।**
**शताह्वाशूर्पपर्ण्येलात्वक्पत्रैः श्लक्ष्णकल्कितैः॥ ५० ॥**
**पक्वं मृद्वग्निना तैलं सर्ववातविकारजित् ।**
**सूतिकाबालमर्मास्थिहतक्षीणेषु पूजितम् ॥ ५१ ॥**
**ज्वरगुल्मग्रहोन्मादमूत्राघातान्त्रवृद्धिजित् ।**
**धन्वन्तरेरभिमतं योनिरोगक्षयापहम् ॥ ५२ ॥**

बलाया मूलानि, तेषा कषाय –क्वाथ , तस्य भागा षट् । तैलैकभागापेक्षयैतद्बोध्यम् । पयसस्तथा–क्षीरस्य षडेव भागा । यवकोलकुलत्थाना दशमूलस्य चैकत –एकत्र क्वथिताना निष्क्वाथभाग । यवादीना तैलसमो निष्क्वाथभाग एक इत्यर्थ । एव त्रयोदश भागा भवन्ति । तैलस्य तु चतुर्दशो भाग । चतुर्दशाना पूरण "तस्य पूरणे डट्" इति डट् । एतदेव स्पष्टीक्रियते शिष्यहितार्थम् । तत्र यदा षोडशपलानि तैलस्य श्रपयितव्यानि तदा बलामूलपलानि चतुर्विंशतिर्भवन्ति, जलपलशतानि त्रीणि चतुरशीत्यधिकानि, ततश्चतुर्थांशेन षण्णवति क्वाथपलानि । क्षीरपलानि षण्णवति । यवादीना पलानि चत्वारि, पानीयपलानि चतु षष्टि , षोडशपलानि कषायस्य । द्विमेदादीनि द्रव्याणि प्रत्येकमर्धकर्षप्रमाणानि रक्तिकया पञ्चमभागसहितया सवानकयाऽधिकानीति । कालानुसार्या–उत्पलसारिवा । क्षीरशुक्ला–क्षीरविदारी । वरा–त्रिफला । रसो–बोल । योऽयं यवकोलकुलत्थदशमूलैरेको भाग परिकल्पित , तत्र यवकोलकुलत्थानां त्रयोऽशा दशमूलस्य दशाशा इति व्याख्येयम् । "कल्पयेत्सदृशान्भागान् प्रमाण यत्र नोदितम् ।" ( हृ क. अ ६।२४ ) इति वचनात् । सङ्ग्रहेऽप्युक्तम् ( शा अ ४ )–"यवकोलकुलत्थदशमूलकषायस्य भाग " इति । ये तु यवकोलकुलत्थाना त्रयोऽशा दशमूलस्य चतुर्थोऽश इति भागोऽय कल्प्य इत्याहु , ते तु पौर्वापर्यं न पर्यालोचयन्त्येव । यत "कल्पयेत्" इत्यादिकया परिभाषया द्रव्याणामेषा समाशत्व नियमितमेव । पृथक् षष्ठ्याऽत्र यो निर्देश स छन्दोनुरोधादेव बोध्य । तथा चानेनैव तन्त्रकृता सङ्ग्रहे समस्तान्येवैतानि द्रव्याणि निर्दिष्टानि । अपि च, दशमूलस्याधिक्येन वातरोगहन्तृत्व यथाऽस्य तैलस्य, न तथा यवादिभिरिति सर्वथा पूर्वं व्याख्यान श्रेय । मृद्वग्निनेति मृदुशब्दोऽग्निविशेषणाय प्रयुक्त । किल खरतरदहनसम्पर्कात् क्षीरबाहुल्येनास्य तैलस्य झटिति पाकातिक्रान्तताऽपि किञ्चित्सम्भाव्यते । एतच्च तैलमशेषवातरोगहन्तृ । तथा, सूतिकादिषु प्रशस्तम् । तथा, ज्वरादिजित् । तथा, भगवतो धन्वन्तरेरभिमतम्, अतिशयगुणवत्वात् । तथा, योनिरोग क्षयं चापहन्ति ।

**बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।**
**जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम्॥५३॥**

विपन्नाया –मृताया गर्भिण्या , यदि कुक्षि प्रस्पन्दते–अत्यन्त चलति । क्व प्रदेशे ? बस्तिद्वारे,–तत्समीपे । कदा ? जन्मकाले,–गर्भप्रसवोन्मुखे काले । तदा कुशलो वैद्य शीघ्र [ तत –] कुक्षिप्रस्पन्दनादनन्तर, पाटयित्वा शिशु–बाल, उद्धरेत् ।

**मधुकं शाकबीजं च पयस्या सुरदारु च ।**
**अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ ५४ ॥**
**वृक्षादनी पयस्या च लता सोत्पलसारिवा ।**
**अनन्ता सारिवा रास्ना पद्मा च मधुयष्टिका ॥५५॥**
**बृहतीद्वयकाश्मर्यक्षीरिशुङ्गत्वचा घृतम् ।**
**पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ५६ ॥**
**शृङ्गाटकं बिसं द्राक्षा कसेरु मधुकं सिता ।**
**सप्तैतान् पयसा योगानर्द्धश्लोकसमापनान् ॥ ५७ ॥**
**क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ।**

मधुकादिद्रव्योपलक्षितान् सप्त योगान् क्रमात्–यथाक्रमनिर्दिष्टानतिक्रमेण,सप्तसु मासेषु गर्भे स्रवति तद्रक्षार्थं तान् योजयेत् । कीदृशान् योगान् ? अर्द्धश्लोकेन समापन–समाप्ति , येषा तानर्द्धश्लोकसमापनान् । अश्मन्तको–यमलपत्रक । ताम्रवल्ली–रामतरुणी, मञ्जिष्ठेत्येके । लता–गन्धप्रियङ्गु , गौरसारिवेत्यन्ये ।

१ 'क्रमान्मासा' ट । २ 'नाहाररू' ट ड ढ । ३ 'च' इ । ४ 'सार्यशै' अ त । 'सारीशै' ढ । ५ 'स्थिक्षत' ण त । ६ 'शिष्याणा हि' ण त । ७ द्विमेदादीनामेकत्रिंशद्द्रव्याणा चत्वारि पलानात्यथ । ८ 'कालानुसार्य–उशीरम्' इतीन्दु । ९ 'सारी–उ' ट.ड ढ. ।

१ 'पर्यमपर्या' ड ढ । २ 'शेषादिह प्र' ट । ३ 'हरम्' ड ढ । ४ 'रादीन् हन्ति ।' ट । ५ 'स्याऽमर' इ । ६ 'ता चोत्प' ण त स.स । ७ 'म्राऽथ म' अ इ त । 'म्राह्वम' ढ । 'पद्मक म' ण । ८ 'श्मर्य क्षी' ण त । ९ 'रिशृङ्ग' ढ स.स । १० 'बला' स स । ११ 'दिष्टेन क' ट. ।

उत्पलसारिवा-कृष्णसारिवा। क्षीरिणा-न्यग्रोधादीना,शुङ्गा[1] ,तथा तेषामेव त्वक् चेति द्वन्द्व । "द्वन्द्वाच्चुदषहान्तात्" इति टच्।

**कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकात्[2] ॥५८॥**
**मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाऽष्टमे।**
**नवमे सारिवानन्तापयस्यामधुयष्टिभिः ॥ ५९ ॥**
**योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया।**
**अथवा यष्टिमधुकनागरामरदारुभिः ॥ ६० ॥**

कपित्थादीना समाहारद्वन्द्व.। कपित्थादेर्द्रव्यान्मूलै[3] शृत क्षीरमष्टमे मासि प्रयुञ्जीत। नवमे मासि सारिवादिभि सिद्ध क्षीरं प्रयुञ्जीत। दशमे मासि काकोल्यादिसिद्ध क्षीरमथवा यष्ट्यादिभि सिद्ध योजयेत्।

**अवस्थितं लोहितमङ्गनाया**
**वातेन गर्भं ब्रुवतेऽनभिज्ञाः।**
**गर्भाकृतित्वात्कटुकोष्णतीक्ष्णैः**
**स्रुते पुनः केवल एव रक्ते ॥ ६१ ॥**
**गर्भं जडा भूतहृतं वदन्ति**
**मूर्तेर्न दृष्टं हरणं यतस्तैः।**
**ओजोशनत्वादथवाऽव्यवस्थै-**
**र्भूतैरुपेक्ष्येत न गर्भमाता ॥ ६२ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां द्वितीये शारीरस्थाने गर्भव्यापन्नाम द्वितीयोऽध्यायः ॥ २ ॥**



लोहित वातेन हेतुनाऽवस्थित-कुक्षौ पवनेन[4] रुद्धं, गर्भं ब्रुवतेऽनभिज्ञा। नञत्र पर्युदासे, अभिज्ञसदृशा इत्यर्थ। कुतस्तेषा भ्रान्ति.? इति तद्बीजमाह-गर्भाकृतित्वादिति। गर्भस्याकृति-सस्थानमुन्नत्यादिकम्[5], तथा "हृल्लासदौर्हृद" (हृ नि. अ ११।५१) इत्यादि रक्तगुल्मनिदानोक्त लक्षण, वातरुद्धलोहितावस्थितौ गर्भस्थितौ चोभयत्र समानम्। अतोऽल्पबुद्धित्वादवस्थित लोहित गर्भ ब्रुवते। कटुकोष्णादिभि-अवस्थितलोहितस्रुतिहेतुभि, स्रुते केवल एव रक्ते-गर्भरहिते, जडा-निर्बुद्धयो, भूतहृतमिति गर्भ वदन्ति। पुन शब्द शिरस कम्प कृत्वा तेषामसम्भाव्याङ्गीकारेण[6] सर्वजनप्रथितेन जडत्व सहेतुक प्रतिपादयति। अत एवाह-यतो,-यस्मात्, मूर्ते-शरीरस्य, हरण तै-भूतै, न दृष्टं-न क्वचिदुपलब्धम्, अत-असम्भाव्यवस्तुप्रतिज्ञानात्, तेषा जडत्वमित्यर्थ। ननु, एतदपि कथ मुच्यते? इत्याह-ओजोशनत्वात्। यस्मात्ते भूता ओजोशना-ओजोभक्षणमर्यादा। अथवा कदाचित्ते-भूता उल्लङ्घितमर्यादा स्यु। तै-तथाभूतै, अव्यवस्थै-अव्यवस्थावस्थितै, भूतैर्गर्भस्य माता नोपेक्ष्येत, अपि तु ह्रियेतैव। तथा हि-यथा गर्भमातोपचितशरीरा न तथा गर्भ इति। उपजातीन्द्रवज्राख्ये वृत्ते।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया द्वितीये शारीरस्थाने गर्भव्यापन्नाम द्वितीयोऽध्याय समाप्त ॥ २ ॥





## तृतीयोऽध्यायः।

गर्भव्यापदोऽनन्तरमङ्गविभाग उच्यते। अङ्गप्रत्यङ्गविज्ञाने हि सति सम्यग्गर्भस्याहरणादिक कर्तुं शक्यते,नान्यथा। इतीदमाह-

**अथातोऽङ्गविभागं[2] शारीरं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

(गद्यसूत्रे ॥ २ ॥)

अङ्गस्य-शरीरस्य, विभागो-विभजन, अङ्गप्रत्यङ्गादिना पृथक्करण-अङ्गविभाग। अथेत्यादि पूर्ववत्।

अथ तान्येवाङ्गानि विभक्तुकाम आह-

**शिरोऽन्तराधिर्द्वौ बाहू सक्थिनीति[3] समासतः।**
**षडङ्गमङ्गं प्रत्यङ्गं तस्याक्षिहृदयादिकम् ॥ १ ॥**

षडङ्ग-षडवयवं, अङ्गं-शरीरम्। तान्येव षडङ्गान्याह-शिर, तथाऽन्तराधि, तथा द्वौ बाहू-वामदक्षिणौ, तथा सक्थिनी द्वे-वामदक्षिणे, इति-एव, समासत-सङ्क्षेपेण, षडङ्गम्। विस्तरेण पुनरनेकावयवम्। अन्तराधिशब्देन शिरोबाहुसक्थिवर्ज[4] सर्वो मध्यभाग उच्यते[5]। आधीयन्ते-निबध्यन्ते यथायथ शरीरस्यान्त स्थाप्यन्ते प्राकृतेन कर्मणा शिर प्रभृतय पञ्चावयवा यस्मिन् सोऽन्तराधि। तस्य-षडवयवस्याङ्गस्य, अक्षिहृदयादिक प्रत्यङ्गम्। आदिशब्देन कर्णनासापाणिपादादिपरिग्रह[6]। अवयवमवयव प्रति योऽवयव, तत्प्रत्यङ्गमुच्यते।

---

1 'शृङ्गा' ट। 2 'गिधजै' अ ढ ण त। 3 'त्थादिद्रव्यमूलै' ट। 4 'क्षौ रुद्ध' ड ढ। 5 'दिका, त' ट ढ ण त। 6 'ङ्गीकरणेन सकलजन' ट।

1 'तेजो' ड ढ ण त। 2 'अयमङ्गविभागश्चरके सू० २८ अध्याये वि० ५।६।८ अध्यायेषु शा० ७ अध्याये चि० १५ अध्याये च, सुश्रुते सू० १४ अध्याये शा०४।५।७।८।९ अध्यायेषु च, अष्टाङ्गसङ्ग्रहे शा० ५।६।८ अध्यायेषु सू०१८ अध्याये चास्ति वर्णित। 3 'क्थिनी च स' अ इ.ढ ण त। 4 'वर्ज' ट। 'वर्ज्य' ड ढ। 5 'ते। अन्तराधी' ट। 6 'नाभिपा' ण त.।

शरीरं व्योमवाय्वादिपञ्चमहाभूतात्मकं चेतनादीनामधिष्ठानम् । अतस्तमेव प्रत्येकं महाभूतगुणमाह—

**शब्दः स्पर्शश्च रूपं च रसो गन्धः क्रमाद्गुणाः । खानिलाग्न्यब्भुवाम्**

शब्दादयः पञ्च गुणाः क्रमात्-क्रमेण, खादीनां पञ्चानां भवन्ति । खं चानिलश्चाग्निश्चापश्च भूश्च खानिलाग्न्यब्भुवः, तासाम् । तत्र शब्दः खस्य-आकाशस्य गुणः, सुषिरेऽतिरिक्तस्पर्शादिगुणचतुष्टयायोगित्वेन शब्दमात्रस्यैवोपलम्भात् । स्पर्शो वायोः । रूपमग्नेः । रसोऽपां-पानीयस्य । गन्धो भूमेः । एतेषां गुणानां खाद्याश्रितत्वात्तेषां गुणा इत्युच्यन्ते ।

किमेकैक एवाकाशस्येव वाय्वादीनां यथोक्तो गुणः ? उतान्येऽपि सन्ति ? इत्याह—

**एकगुणवृद्ध्यन्वयः परे ॥ २ ॥**

एकेन गुणेन वृद्धिः, तयाऽन्वयः-सम्बन्धः । परे-वाय्वादौ महाभूते । अथवा, एकस्य गुणस्य वृद्धिः, तयाऽन्वयः-अनुगमस्तद्भावित्वं परः इति । चतुर्णां महाभूतानां परत्वोक्तिर्भाक्तमाकाशापेक्षया । तेन वाय्वादौ महाभूते एकगुणवृद्ध्यन्वयः । आकाशस्त्वेकगुण एव । तस्य परत्वासम्भवान्न तस्यैकगुणवृद्ध्यन्वयः । आकाशात्परे-अनन्तरे महाभूते वाय्वाख्ये, एकगुणवृद्ध्यन्वयेन द्विगुणत्वात् शब्दस्पर्शगुणत्वम् । ततः परे महाभूतेऽग्न्याख्ये, एकगुणवृद्ध्यन्वयेन त्रिगुणत्वात् शब्दस्पर्शरूपगुणत्वम् । ततः परे-जलाख्ये महाभूते, एकगुणवृद्ध्यन्वयेन चतुर्गुणत्वात् शब्दस्पर्शरूपरसगुणत्वम् । ततः परे-पृथिव्याख्ये महाभूते, एकगुणवृद्ध्यन्वयेन पञ्चगुणत्वात् शब्दस्पर्शरूपरसगन्धगुणत्वम् । एवं पञ्चानां खादीनामेकैकगुणवृद्ध्यैकद्वित्रिचतुःपञ्चगुणत्वं बोध्यम् ।

इदानीं यथाक्रमनिर्दिष्टेभ्यो भूतेभ्यो ये भावा भवन्ति, तान् दर्शयति—

**तत्र खात् खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता । वातात्स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ॥ ३ ॥ आप्या जिह्वारसक्लेदा घ्राणगन्धास्थि पार्थिवम् ।**

[तत्र-] तेषु पञ्चसु महाभूतेषु मध्ये, अस्मिन् देहे-मनुष्यादौ स्थूलतया परिणते, नान्यस्मिन्नतीन्द्रिये भूतादौ । खात्-आकाशात् सत्वबहुलात्, खानि-छिद्राणि, 'भवन्ति' इति शेषः । एवं श्रोत्रेन्द्रियाधिष्ठानं-श्रोत्रम् । तथा, शब्दो-घोषः । तथा, विविक्तता-शून्यता रिक्तता, खादेव छिद्रविशेषः । यद्यपि छिद्रादिषु सर्वभूतानामेव व्यापारः, तथाऽप्याकाशस्यैवात्र विशिष्टं कारणत्वम् । यथा-घटादौ मृद्दण्डचक्रसलिलसूत्रादिकारणसमुदायनिष्पन्नेऽपि मृद एव विशिष्टकारणत्वम् । अत एवासौ मृन्मय एवोच्यते । एवं सर्वेषु वक्ष्यमाणेषु वातादिजेषु स्पर्शादिषु बोध्यम् । वातात्-अनिलाद्रजोबहुलात्, स्पर्शादयो भवन्ति । स्पर्शः-स्पर्शनम् । त्वगिति स्पर्शनेन्द्रियाधिष्ठानम् । तथा, उच्छ्वासः-प्राणाख्यः । वह्नेः सत्वरजोबहुलाद्दृगादयो भवन्ति । दृक्-दृष्टिः, चक्षुरिन्द्रियाधिष्ठानम् । तथा, रूपाख्यो गुणः । पक्तिः-पाकः । उपलक्षणं चेदम् । तेजः पित्तोष्ममेधावर्णशौर्यादयोऽपि वह्नेरेव वेद्याः । अद्भ्यः सत्वतमोबहुलाभ्यो जाता आप्या जिह्वादयो भवन्ति । जिह्वाशब्देनात्र जिह्वाया विशिष्टः एकदेशो रसनेन्द्रियाधिष्ठानं विवक्षितं, न सर्वैव जिह्वा । तथा, रसाख्यो गुणः । तथा, क्लेदाख्यो भावः । उपलक्षणं चेदम् । स्वेदस्नेहमूत्रादयोऽप्याप्या एव । घ्राणादि पार्थिवं भवति । घ्राणं-नासाया विशिष्ट एकदेशो घ्राणेन्द्रियाधिष्ठानम् । गन्धो गुणः । तथा, अस्थि भावः । एतानि सर्वाणि पृथिव्याख्यात्तमोबहुलान्महाभूताज्जातानि ।

देहेऽस्मिन् किं मातृजम् ? किं पितृजम् ? इत्याह—

**मृद्वत्र मातृजं रक्तमांसमज्जगुदादिकम् ॥ ४ ॥ पैतृकं तु स्थिरं शुक्रधमन्यस्थिकचादिकम् । चैतनं चित्तमक्षाणि नानायोनिषु जन्म च ॥ ५ ॥**

अत्र-अस्मिन् देहे, अनेकसामग्रीकेऽपि यन्मृदु वस्तु तन्मातृजम् । मातुराधिक्येन कारणभाव इत्यर्थः । मातृजमिति "पञ्चम्यामजातौ" इति जनेर्डः । किं पुनस्तन्मृदु ? इत्याह-रक्तेत्यादि । आदिशब्देन नाभिहृदययकृत्प्लीहामाशयादीनां ग्रहणम् । ननु, गुदस्य मांसप्रायत्वान्मांसग्रहणेनैव सिद्धं ग्रहणम् । तत् किं गुदग्रहणेन ? ब्रूमः । मांसत्वस्याप्यस्यानिश्चयात् पृथगुपादानं कृतम् । तथा च वक्ष्यति (हृ. शा. अ. ४।४५)-"मांसममर्म गुदोऽन्येषाम्" इति । यद्वस्तु स्थिरं तत् पैतृकं-पितृजम् । किं तत् ? इत्याह-शुक्रादिकम् । आदिशब्देन शिरास्नायुरोमादीनां ग्रहणम् । पैतृकमिति "पितुर्यच्च" इति ठक् । "इसुसुक्तान्तात्कः" इति कादेशः । चेतना-आत्मैव, प्राकृतशुभाशुभकर्मबीजक्षेत्रमित्यर्थः । ततो जातं चैतनम् । किं तत् ? इत्याह-चित्तमित्यादि । चित्तम्-इन्द्रियसारथिः । तथा, अक्षाणि-श्रोत्रादीनि । ननु, चैतनान्यक्षाणीत्येतत्पूर्वापरव्याहतमिव मन्यामहे । यतः पूर्वमुक्तम् ( श्लो. ३ )-"खात्खानि देहेऽस्मिन्" इति । तत्कथमिह चैतनान्यक्षाणीत्युच्यन्ते ? ब्रूमः । नात्र तत्र वाऽवधारणं कृतम् । यथा चैतनान्येवाक्षाणि खादेव खानीति । तस्मादाकाशं चेतना च द्वयमप्यक्षाणां कारणमित्यवेहि । तथा, नानायोनिषु-गजाजवाजिवस्तशशशम्बरप्रभृतिषु, यज्जन्म-सम्भ-

१ 'कं भूत' ड ढ । २ 'लाद्ग्यम्बुभूश्चैवेक' इ । ३ 'न्ति । तेन शब्दः' ड ढ ण त । ४ 'श्चाम्बु च भूश्च खानिलाग्न्यम्बुभुवः, तासु । तत्र' ट । ५ 'वृध्याऽन्वयः' अ ढ । ६ 'क्तिक्रम आका' ड ढ ण । ७ 'कवृ' ट ण त ।

१ 'वाच्यम्' ट । २ 'ह्वहि स्प' ट । ३ 'तम्' ट । ४ 'स्थि । ए' ट. ड ढ ण त । ५ 'आत्मज चि' इ ण त । ६ 'धिक्यकारण' ट. । ७ 'स्त्रावरो' ट त । ८ 'म्, आत्मजमेव किं' ट । ९ 'साद्भूतानि चे' ट ड ढ । १० 'जिपशुसारससारङ्गशम्ब' ट त. । 'बस्तशशखरप्र' ड. । ११ 'जननं सम्भवति तद' ट ।

व, तदपि चैतनम्। उपलक्षण चेदम्। कामक्रोधलोभभयहर्ष धर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रयत्नाहङ्कारसुखदुःखायु स्वरविशेषादयोऽपि हि चैतना एव।

**सात्म्यजं त्वायुरारोग्यमनालस्यं प्रभा बलम्।**

सात्म्य त्रिविधम्, व्याधिसात्म्य देशसात्म्य देहसात्म्य च। तत्रेह व्याधिसात्म्य न गृह्यते। यतो देहस्य सम्भवत सम्भूतमात्रस्य चेय विचारणा प्रस्तुता, कुत कि सम्भवति? इति। अतो व्याधिर्चर्चेहाप्रस्तावान्नोपयुज्यते। [ तस्माद्देशसात्म्य देहसात्म्य च गृह्यते। देहस्य हि सम्भवत सम्भूतमात्रस्य च मात्राहारविहारादि यदपथ्यमप्यतिशयेन शीलित तदप्यस्य देहस्योचितता गच्छत्सुखानुबन्धत्वेन सात्म्यमुच्यते।] तस्माद्देशसात्म्य देहसात्म्य च ग्रहीतु युक्तम्। सात्म्याज्जात–सात्म्यजम्। कि तत्? आयु,–जीवितम्। तथा, आरोग्य–धातुसाम्यम्। तथा, अनालस्य–सर्वचेष्टासूद्योग,–उत्साह। तथा, प्रभा–कान्ति। तथा, बल–शक्ति। उपलक्षण चेदम्। अलोलुपत्वेन्द्रियप्रसादस्वरवर्णवीर्यौज सम्पत्प्रहर्षाद्यपि हि सात्म्यजमेव।

**रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता॥ ६॥**

रसात्–आहाररसात् परिणताज्जात रसजम्। किं तत्? जन्म,–सम्भव। कस्य? वपुष,–सकलस्य शरीरस्य। तथा, वृत्ति–वर्तन, जीवितानुबन्ध। रस हि विना जीवितस्याप्यभाव। तथा, वृद्धि–आयामविस्तराभ्या यथासस्थानस्य शरीरस्याधिक्यम्। तथा, अलोलता–अलौल्यम्। अलोलता रसजेति लिङ्गविपरिणामे सति सम्बन्ध। उदाहरणमात्र चेदम्। उत्साहपुष्टितृप्त्योऽपि हि रसजा एव।

**सात्त्विकं शौचमास्तिक्यं शुक्लधर्मरुचिर्मतिः।**
**राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सरम्॥ ७॥**
**तामसं भयमज्ञानं निद्राऽऽलस्यं विषादिता।**

सत्वज शौचादिकम्। शौच–वाक्कायमनसा शुद्धि, सत्यवाक्यायभिधायित्व–वाक्शुद्धि, मृज्जलादिना क्षालनादि शास्त्रोदित–कायिक शौचम्। मानस तु शौच–जगद्बन्धुता करुणा शुद्धसन्तानत्वमास्तिक्यादि। शौचमिति "इगन्ताच्च लघुपूर्वात्" इत्यण्। आस्तिक्यमिति अस्ति परलोक इति मतिरस्येत्यास्तिक। "अस्ति नास्ति" इत्यादिना ठक्। आस्तिकस्य भाव आस्तिक्यम्। ब्राह्मणादित्वात् ष्यञ्। तथा, शुक्ले धर्मे–निर्व्याजे, रुचि–भक्ति। मति–प्रज्ञा। उपलक्षण चेदम्। कृतज्ञतादाक्षिण्यव्यवसायशौर्यगाम्भीर्यस्मृतिमेधादयोऽपि हि सात्त्विका एव। राजसानि बहुभाषित्वादीनि। उपलक्षण चेदम्। शौर्यदुरुपचारताल्लोलुपत्वहर्षकामादयोऽपि राजसा एव। तामसानि भयादीनि। उपलक्षण चेदम्। प्रमादशोकादीन्यपि तामसान्येव। तत्र सत्व–मन, तस्योपप्लवो रजस्तमश्चेति। सुश्रुते (सङ्ग्रहे) चोक्तम् (सू अ २०)–"वाग्वाकाशवातुभ्या वायु, आग्नेय पित्तम्, अम्भ पृथिवीभ्या श्लेष्मा।" इति। आयुर्वेदावतारे तूक्तम्–"शीतोष्णशमवृद्ध्याऽऽप्य न पित्त द्रुतताम्रवत्। करकाम्भ कफो भौमो नानिलानलसहत॥ (?)" इति।

अधुना देहाश्रितसर्वभावोपसहार कुर्वन् प्रधानो यो भावो देहस्य, तस्य प्राधान्य दर्शयन्निदमाह—

**इति भूतमयो देहः**

सर्वेभ्यो देहाश्रितभावेभ्यो महाभूतानामेव प्राधान्यम्, तन्मयत्वाद्देहस्य सर्वभावाधारभूतस्य।

इत्येवमनेन ग्रन्थेन देहस्य भूतमयत्वमभिधाय, इदानीं देहस्य प्रतिभागशो निरूपयन्नाह—

**तत्र सप्त त्वचोऽसृजः॥ ८॥**
**पच्यमानात्प्रजायन्ते क्षीरात्सन्तानिका इव।**

तत्र–तस्मिन् महाभूतमये देहे, असृजो–रक्तात् सप्तत्वगुत्पादनसमर्थेन धातूष्मणा पच्यमानात्, सप्त त्वच प्रकर्षेण जायन्ते। कुत का इव? यथा क्षीरात् पच्यमानाच्छीतीभूतात्तदुपरि घनभागस्वभावा सन्तानिका–जालिका, जायन्ते तद्वदसृज पच्यमानात्सप्त त्वचो भवन्ति। तत्र "भासिनी लोहिनी श्वेता ताम्रा त्वग्वेदिनी तथा। स्याद्रोहिणी मासधरा सप्तमी परिकीर्तिता॥ १॥ व्रीहेरष्टादशाशाऽऽद्या द्वितीया षोडशाशिका। द्वादशाशा तृतीया तु चतुर्थ्यष्टाशमात्रिका॥ २॥ पञ्चमी पञ्चमाशा तु षष्ठी व्रीहिप्रमाणिका। व्रीहिद्वयप्रमाणा तु सप्तमी भिषजा मता॥ ३॥ स्यादिच्छायापञ्चकस्य भासिन्याधारता गता। मन्यन्ते षट् त्वच केचित्तासा बाह्योदकाश्रया॥ ४॥ द्वितीयाऽसृग्धरा सिध्मश्वित्राधारा तृतीयका। चतुर्थी सर्वकुष्ठानामधिष्ठानत्वमागता॥ ५॥ विद्रध्यलज्यधिष्ठाना पञ्चमी रोगकारिणी। षष्ठ्यत्र यस्या च्छिन्नाया ताम्यत्यन्धं तमो विशेत्॥ ६॥ यामविष्टाय जायन्ते स्थूलमूलानि पर्वसु। अरूषि कृष्णरक्तानि दुश्चिकित्स्यतमानि च॥ ७॥" इति।

इदानी कला आह—

**धात्वाशयान्तरक्लेदो विपक्वः स्वंस्वमूष्मणा॥ ९॥**
**श्लेष्मस्नायवपराच्छन्नः कलाख्यः काष्ठसारवत्।**
**ताः सप्त**

---

१ 'यमदह' ट। २ 'चायु' अ ढ। ३ 'त्रस्यैव वि' ट। ४ 'धिवार्तेहा' ट। ५ [ ] इति पाठ ड ढ पुस्तकयोर्नोपलभ्यते। ६ 'स्म्य चेह गृ' ट त। ७ 'स्य मा'ण। ८ 'देहोचि' ट। ९ 'वीर्यतेज' ट। १० 'प्रभव' ट.। ११ 'रसेन विना' ट। १२ 'णामेन स' ट। १३ 'स्सरा.' इति क्वचित्। १४ 'मन सशुद्धि' ट। 'यमानसी शु' ड ढ। १५ 'वाग्भाषित्व' ट। १६ 'लादिक्षा' ट ड ढ। १७ 'स्ति दिष्टे मति' ड ढ ण त। १८ 'आस्तिक्य–अस्तिभाव श्रद्दधानताऽऽगमार्थेषु' इति शाङ्करभाष्यम्।

१ 'भागानशेषान्निरू' ट। २ श्लोकेष्वेषु सप्तसु मध्ये प्रथमेन सार्धत्रितयेन सुश्रुतमत, द्वितीयेन च चरकमत, सङ्गृहीत कुशलेन टीकाकारेण। ३ 'लोहिता' इति सुश्रुते। ४ 'ता व्यक्तास्ता वेदि' ट.। ५ 'स्याद्रोणिनी' ड,ढ,। ६ केचित्–चरकसङ्ग्रहादय।

वातूना–रसादीना, आशया –आधारा जलाशयवत्तेषामन्तराण्यन्तरालानि, तेषु धात्वाशयान्तरेषु क्लेदो धात्वाशयान्तरक्लेद । स विपक्क कलाख्य उच्यते–कलासञ्ज्ञा लभते । केन विपक्क ? स्वस्वमूष्मणा,–आत्मीयेनात्मीयेन वह्निना । यथा–रसधात्वाशयान्तरस्थ क्लेदो रसधातूष्मणा विपक्क. कलैका भवति । यावच्छुक्रधात्वाशयान्तरस्थ शुक्रधातूष्मणा विपक्क सप्तमी कला भवति । कीदृशो विपक्क ? श्लेष्मणा स्नाय्वाऽपरया च–जराय्वाख्यया, छन्न –छादित । "वा दान्तशान्त" इत्यादौ छदेर्ण्यन्तात् छन्नशब्दो निपातित । किंवत् ? काष्ठसारवत् । यथा काष्ठस्य सार, तथाऽय धातुसारशेषोऽल्पत्वात्कलासञ्ज । धात्वाशयान्तरमर्यादा सप्त कला । तत्र–"आद्या मासधरा यस्या धमन्य स्नायव सिरा । स्रोतासि च प्ररोहन्ति प्रतानैर्व्यापिभि कला ॥ १ ॥ द्वितीयाऽसृग्धराऽस्या तु मासान्त शोणित स्थितम् । विशेषत सिराप्लीहयकृत्सु क्षतज क्षतात् ॥ २ ॥ मासात्प्रवर्तते क्षीर क्षीरिवृक्षादिव क्षतात् । मेदोधरा तृतीयाऽत्र मेदोऽस्थ्नामुदरे स्थितम् ॥ ३ ॥ भवेत्व णुषु मज्जाऽन्त स्थूलास्थिष्वथ मूर्द्धनि । मस्तुलुङ्गकपालान्त श्चतुर्थी तु कफाश्रया ॥ ४ ॥ तत्स्थ कफो द्रढयति सन्धी नरस्या शरीरजान् । पञ्चम्यासा विडाधारा साऽऽमपक्वाशयाश्रया ॥ ५ ॥ उन्दुकस्थ विभजते मल, पित्तधरा पुन । षष्ठी पक्वाशयान्तस्था वह्न्यधिष्ठानभावत ॥ ६ ॥ पक्वाशयोन्मुख कृत्वा बलात्पित्तस्य तेजसा । शोषयन्ती पचत्यन्न तदेव च विमुञ्चति ॥ ७ ॥ दोषदुष्टोऽथ दौर्बल्यादाममेव निरस्यति । लभते ग्रहणीसञ्ज्ञामस्याश्चाग्निबल बलम् ॥ ८ ॥ शरीर धारयत्यग्निबलोपष्टम्भबृहिता । अन्त्या कला शुक्रधरा मूत्रमार्गमुपाश्रिता ॥ ९ ॥ द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यध । शरीरं व्याप्य सकल सा शुक्र वर्तयत्यपि ॥ १० ॥" इति ।

कलाख्य भावमाख्याय, आधाराख्यान् भावानाह—

**सप्त चाधारा रक्तस्याद्यः क्रमात् परे ॥ १० ॥**
**कफामपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः ।**
**गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरे ॥ ११ ॥**

न केवल कला सप्त यावदाधारा अपि सप्त । रक्तादीना मस्मिन् देहे सम्भवन्तीति वाक्यशेष. । रक्तस्याद्यो–रसाख्यो धातु, परे–अन्ये ये धातव षट्, ते क्रमात्–यथाक्रम, कफादीनामाधारा स्मृता –उक्ता । आमस्यान्नस्य य आधार सोऽन्नामशब्देनोक्त । तथा पक्वस्यान्नस्य–पुरीषता प्राप्तस्य, य आधार स पक्वशब्देनोच्यते । गर्भाशयो–गर्भाधारो, य सोऽष्टम, स्त्रीणामेव देहे सम्भवति न पुसाम् । क्व शरीरदेशे स्त्रीणा सम्भवति ? इत्याह–पित्तपक्वाशयान्तर इति । पक्वशब्देनेह पक्वान्नमुच्यते । पित्त च पक्व च पित्तपक्वे, तयोराशयौ–आधारौ, पित्तपक्वाशययोरन्तर–मध्य, पित्तपक्वाशयान्तरम् । तस्मिन् गर्भस्याशय ।

**कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोम फुप्फुसम् ।**
**यकृत्प्लीहोन्दुकं वृक्कौ नाभिडिम्भान्त्रबस्तयः ॥ १२ ॥**

एषु–रक्ताद्याधारेषु, कोष्ठाङ्गानि–उदरावयवा हृदयादीनि, स्थितानि–आश्रितानि । तत्र–"कफरक्तप्रसादात्स्याद्धृदय स्थानमोजस । चेतनानुगभावाना परम चिन्तितस्य च ॥ १ ॥ मासपेशीचयो रक्तपद्माकारमधोमुखम् । तस्य दक्षिणत क्लोम यकृत्फुप्फुसमास्थितम् ॥ २ ॥ समानवायुप्रध्माताद्रक्ताद्देहोष्मपाचितात् । किञ्चिदुच्छ्रितरूपस्तु जायते क्लोमसञ्ज्ञक ॥ ३ ॥ तत्तुल्यहेतुजे प्लीहयकृती भिषजा मते । रक्तकिट्टादुन्दुक स्यात्फुप्फुसो रक्तफेनज ॥ ४ ॥ मेदोसृज पच्यमानात् स्याता वृक्कौ प्रसादजौ । नाभि सर्वशिराणा स्यादाधार, शकृत पुन ॥५॥ डिम्भ स्याद्रक्तमासस्य प्रसादादन्त्रसम्भव । सार्धत्रिर्व्याममात्राणि पुरुषाणा तु तानि च ॥ ६ ॥ स्त्रीणा त्रिव्याममात्राणि, बस्तिर्मूत्रस्य चाशय ।" इति । सङ्ग्रहे चोक्तम् (शा अ ५)–"कफरक्तवाहिस्रोतसा महाभूताना च प्रसादादिन्द्रियाणि । तेष्वपि नेत्रे श्लेष्मण प्रसादाच्छुक्रमण्डलम्, तत्पितृजम् । असृज कृष्णमण्डलम्, तन्मातृजम् । मध्ये दृष्टिमण्डलम्, तदुभयात्मकम् । पक्ष्मवर्त्मशुक्लकृष्णदृष्ट्याख्यानि पञ्च मण्डलानि । तत्सन्धयश्चत्वारो द्वौ चापाङ्गकनीनयोरिति [ ते षट् ] षट् [ च ] पटलानि । द्वे वर्त्मनी । बाह्य चाश्रितमम्भस्यम्भसी, द्वितीय मास, तृतीय मेद, चतुर्थमस्थि, तेषा बहलता दृष्टेपञ्चमाशेन । बन्धनगुणौस्तु चत्वार सिराकण्डरामेद कफात्मका । श्लेष्मा तु परं सर्वसन्धिबन्धनमित्युक्त प्राक् । नेत्राश्रित तेजो बाह्यतेजसा स्वयोनिना योगाच्छ्रममिवाश्मना कर्मण्य भवति । अतियोगादुपहन्यते । तच्च वैद्युतवद्वडवामुखवच्चाम्भोमध्यगमपि वीर्योत्कर्षात्तेजस्त्व न जहाति ।" इति ।

१ 'सार' शे' ट । २ 'यकृत क्ष' ट । ३ 'दोऽस्थ्नासु' ट । 'दोऽस्मतरुद' ट ढ । 'दोऽस्थ्नमु' ण त । ४ 'भवेदणु' ट । ५ अस्थ्नामणुषु मेद, स्थूलास्थिषु मज्जेति सम्बन्ध । ६ 'तुर्थ्यामकफा' ड.ढ । ७ 'भ्रम्यन्या वि' ड ढ । 'भ्रम्यस्यां वि' ण । ८ 'सा च प' ट । 'रा नाम प' ट ढ । ९ 'तत्रैकस्थ' ड ढ. । १० 'पचेत्पक्व त' ट ड ढ त । ११ 'ष्टाऽऽशु दौ' ड ढ त । १२ 'व विमुञ्चति' ण त । १३ 'स्याध. क्र' इ. । १४ एतदरुणदत्तव्याख्यानमयुक्तमेव । चन्द्रनन्दनस्तु 'सप्त चाधारा –आशया, अस्मिन् देहे भवन्ति रक्तादीनाम् । तत्र रक्तस्याद्य –प्रकाधार । परे–अन्ये ये आधारा, ते क्रमात्–यथाक्रम, कफादीना स्मृता –उक्ता । कफाधार, आमाधार, पित्ताधार, पक्वाधारो, वाय्वाधारो, मूत्राधारश्चेति सप्त ।' इति व्याख्यानयति, युक्त चैतत् ।

१ 'ब्देनेहोच्य' ट । २ 'प्फुस' अ ढ । 'प्फुसे' इ । ३ 'श्लेष्मरक्त' ट । ४ 'दुच्छूनरू' ट ड ढ । ५ 'सञ्ज्ञित' ण त । ६ 'दुण्डुक' ट । ७ 'डिम्ब' ण त । ८ 'व्यामो बाह्वो सकरयोस्ततयोस्तिर्यगन्तरम् ।' इत्यमर । ९ 'ममात्राणि' ण.त । १० 'वाहिना स्रो' स ढ । ११ 'णाश्चत्वा' ड.ढ ण त. । १२ 'कलात्मका' ट ड ढ ण.त । १३ 'त तु ते' स ढ. ।

अधुना यानि विशेषेण जीवितस्य स्थानानि–देहावयवा, तान्याह—

**दश जीवितधामानि शिरोरसनबन्धनम् ।**
**कण्ठोऽस्रं हृदयं नाभिर्बस्तिः शुक्रौजसी गुदम् ॥१३॥**

शिरश्च रसन च शिरोरसनम् । रसन–जिह्वा । बध्यतेऽने नेति बन्धनम् । शिरोरसनस्य बन्धन शिरोरसनबन्धनम् । शिरोरसनबन्धनादीनि दश जीवितस्य स्थानानि । एतेषु स्थानेषु विशेषेण जीवित–शरीरेन्द्रियसत्वात्मसयोगलक्षण, अवतिष्ठते ।

**जालानि कण्डराश्चाङ्गे पृथक् षोडश निर्दिशेत् ।**
**षट् कूर्चा· सप्त सीवन्यो मेढ्रजिह्वाशिरोगताः॥१४॥**
**शस्त्रेण ता परिहरेच्चतस्रो मासरज्जवः ।**
**चतुर्दशास्थिसङ्घाताः, सीमन्ता द्विगुणा नव ॥ १५ ॥**
**अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह ।**

जालानीव जालानि शरीरे षोडश आदिशेत् । कण्डराश्च पृथगेव षोडश आदिशेत्–ब्रूयात् । आचार्य इति शेष । तथा, षट्ट् कूर्चा अङ्गे स्यु । तथा सीवन्य सप्तसङ्ख्या मेढ्रादिस्थिता । ता शस्त्रेण परिहरेत्, प्रत्यवायभयात् । न तासु शस्त्र पातये दित्यर्थ । तत्र–"शिरास्नाय्वस्थिपिशितैश्चत्वारि मणिबन्धने । एकैकत्र गुल्फे च जालान्येव तु षोडश ॥ १ ॥ हस्तयोर्द्वे पादयोर्द्वे ग्रीवाभागेऽथ पृष्ठत । प्रत्येक तु चतस्र स्यु कण्डरा इति षोडश ॥ २ ॥ करयोर्द्वौ पादयोर्द्वौ ग्रीवाया मेहने तथा । एकैकमिति षट्ट् कूर्चा, सीवन्य सप्त कीर्तिता ॥ ३ ॥ एका मेढ्रेऽथ जिह्वाया भवेयु पञ्च मूर्द्धनि । पृष्ठवशे ह्युभयत-श्चतस्रो मासरज्जव ॥ ४ ॥ बाह्ये द्वे अन्तरे द्वे च, गुल्फे जानुनि वङ्क्षणे । त्रिके शिरसि कक्षाया कूर्परे मणिबन्धने ॥ ५ ॥ अस्थ्ना भवेयु सङ्घाता अमी अत्र चतुर्दश। सीमन्ता पञ्च मूर्ध्नि स्युर्गुल्फादिष्वस्थिसङ्घवत् ॥ ६ ॥ अस्थ्ना शतानि षष्टिश्च त्रीणि दन्तनखै सह। पञ्च पादनखा सक्थ्नि प्रत्यङ्गुल्य-स्थिकत्रयम् ॥ ७ ॥ एव पञ्चदशैतानि शलाका पञ्च तु स्मृता । एकस्तत्प्रतिबन्धश्च जङ्घाया कूर्चगुल्फके ॥ ८ ॥ द्वे द्वे इति षडेव स्यु पार्ष्ण्यूरौ च जानुनि । एकैकमित्थ कसक्थ्नि पञ्च-त्रिंशत्तथाऽपरे ॥ ९ ॥ भुजयो सक्थितुल्यानि भेदो एषा तु नामत । पाणि स्यात्पादवत्तत्र हस्तमूल च पार्ष्णिवत् ॥१०॥ मणिबन्धो गुल्फतुल्य· कूर्चतुल्यो द्वयेऽपि च । प्रकोष्ठौ जङ्घया तुल्यौ जानुवत्कूर्परो भवेत् ॥ ११ ॥ ऊरुवद्बाहुपृष्ठ स्यादन्त रावौ तु पर्शुका । चतुर्विंशतिरेतेषु स्थालकान्यर्बुदानि च ॥ १२ ॥ तावन्ति पृष्ठे त्रिंशत्स्युरुरस्यष्टौ त्रिके भगे । एकैक स्यादक्षकयोरसयोस्तत्फलाख्ययो ॥ १३ ॥ नितम्बे तु भवेता द्वे शतमेतत्सविंशति । गण्डयो कर्णयोर्द्वे द्वे शङ्खयोश्चाथ तालुनि ॥१४॥ तथा जत्रुण्येकमेक ग्रीवाया तु त्रयोदश । कण्ठ नाड्या तु चत्वारि हनुबन्धे द्वय भवेत् ॥ १५ ॥ द्वात्रिंशदेव दन्ता स्युस्तत्सङ्ख्योलूखलानि च । त्रीणि घ्राणे षट् शिरसि शतमूर्ध्वमिति स्मृतम् ॥ १६ ॥ शाखान्तराध्यूर्ध्वभेदादेव षष्टिशतत्रयम् । कपाल रुचक चैव तरुण वलय तथा ॥१७॥ नलक पञ्चधेति स्युर्नितम्बे गण्डजानुनि । तालुमध्ये शिर स्यसे कपालाख्यानि निर्दिशेत् ॥ १८ ॥ दशना रुचकाख्या· स्युर्घ्राणे कर्णेऽक्षिकोशके। तरुणानि पृष्ठपार्श्वे चरणे वलयानि तु ॥१९॥ शेषाणि नलकाख्यानि नामाख्याताकृतीनि च ।" इति ।

**धन्वन्तरिस्तु त्रीण्याह, सन्धीनां च शतद्वयम् १६ दशोत्तरं**

धन्वन्तरिसज्ञ पुनस्तन्त्रकृदस्थ्ना शतानि त्रीण्येवाह, नाधिकानि । तथा, अस्थिसन्धीना शतद्वय दशोत्तर धन्वन्तरिराहेति योज्यम् । "सङ्ख्यायन्ते सन्धयोऽत्र चतस्रोऽङ्गुल्य पदे । चतसृष्वङ्गुलीषु स्यु प्रत्येक त्रय एव तु ॥ १ ॥ द्वावङ्गुष्ठे वङ्क्षणे स्यादेको गुल्फेऽथ जानुनि। सक्थ्न्येकस्मिन् सप्तदश तावन्तोऽपि द्वितीयके ॥ २ ॥ भुजयो सक्थितुल्यानि अन्तराधौ त्विमे मता । त्रय कटीकपालेषु विंशतिश्चतुरुत्तरा ॥ ३ ॥ पृष्ठे तद्वत्पार्श्वयोश्च, उरस्यष्टौ तथोर्ध्वत । शिरोधरायामष्ट स्यु कण्ठनाड्या त्रय स्मृता ॥ ४ ॥ हृदयक्लोमयकृता नाडीष्वष्टा-दश स्मृता । द्वात्रिंशद्दन्तमूलेषु एकैके घ्राणकाकले ॥ ५ ॥ मूर्ध्नि च, द्वौ कर्णशङ्खे गण्डनेत्रे च वर्त्मनि । हनुसन्धौ च विज्ञेयौ द्वौ भ्रुवोश्चोपरि स्मृतौ ॥ ६ ॥ पञ्च मूर्द्धकपालेषु ऊर्ध्व-मेव त्र्यशीतिका । सज्ञैतेऽष्टधा ज्ञेया मणिबन्धेऽर्थ जानुनि ॥ ७ ॥ गुल्फेऽङ्गुलौ कोरसञ्ज्ञा द्विजमूलेषु वङ्क्षणे । कक्षायां चोलूखलाख्या असपीठे गुदे भगे ॥ ८ ॥ नितम्बे चैव सामुद्रा ग्रीवाया पृष्ठवशके । प्रतरा, स्युर्मूर्द्धकटीकपाले तुन्नसीवना ॥ ९ ॥ हनूभये काकतुण्डा, कण्ठस्य यकृतस्तथा । हृदयक्लोम नेत्राणा नाड्या मण्डलनामका ॥ १० ॥ श्रोत्रश्रृङ्गाटकाख्येषु शङ्खावर्ता इति स्मृता ।" इति ।

अथात्रेयमत ब्रूते—

**सहस्रे द्वे निजगादात्रिनन्दनः ।**

अत्रिनन्दनो द्वे सहस्रे सन्धीना निजगाद–प्रोवाच । स हि

१ 'गुद' अ इ ढ ण त । २ 'सेवन्यो' अ ढ त । 'सेविन्यो' इ । ३ 'शस्त्रेणैता' ण त । ४ द्विगुणा नव–अष्टादशेत्यर्थ । सुश्रुते तु चतुर्दशैव सीमन्ता उक्ता । यथा (शा अ ५।१७)–"चतुर्दशैव सीमन्ता, ते चास्थिसङ्घातवद्गणनीया ।" इति । ५ 'षष्टीनि त्रि' अ ढ ण, ट । ६ 'शत्रू' ट ड ण त । ७ 'सेवन्य' ढ ण त । 'सेविन्य' ड । ८ 'त्पपाय' ड ढ ण त । ९ 'एकैकत्र तु गु' ढ । १० 'त्वत्र' इति क्वचित् । ११ 'सकला प' ड ढ । १२ 'भेद ए' ड ढ । १३ 'हि' ड ढ ।

१ 'पार्श्वका' ट ड ढ, इन्दु । २ 'षष्ठ्या श' ण । ३ 'या सन्धी' ड ढ ण । ४ 'लयो यदि' ट ड ढ ण त । ५ 'स्याष्टवथो' ट ण त । ६ 'कालके' ट ड ढ । ७ 'सज्ञायैते' ड ढ । 'सज्ञया त्वष्ट' ण । 'सन्धयस्त्वष्ट' इति क्वचित् । ८ 'च' ड ढ । ९ 'पा-लेषु तु सी' ण त. ।

स्नायुपेशीसिराश्रितै सन्धिभि सह गणयति । एतच्च बाहुल्येनोक्तम् । तथा हि–नवसु स्नायुशतेषु नवशतानि सन्धीनाम्, पञ्चसु पेशीशतेषु पञ्चशतानि, सप्तसु सिराशतेषु सप्तशतानि, इत्येकविंशतिशतानि प्रायेण प्राप्नुवन्तीति मन्यामहे ।

**स्नाव्नां नवशती**

स्नायूनामस्मिन् देहे नवशती । नवाना शताना समाहारो नवशती, "द्विगो" इति ङीप्, नवशतानीत्यर्थ । तत्र "पादे पञ्च स्युरङ्गुल्य प्रत्यङ्गुलि तु तानि षट् । त्रिशदेव, दश दश कूर्चे पादतले तथा ॥ १ ॥ गुल्फे चेति, त्रिशदेव जङ्घाया, दश जानुनि । चत्वारिंशत्स्युरूरौ च, वङ्क्षणे दश, सक्थिनि ॥ २ ॥ सार्ध शत, द्वितीयेऽपि तद्वद्वाह्वोश्च सक्थिवत् । शाखास्वेव षट्शतानि, कट्या द्वे विंशती स्मृते ॥ ३ ॥ विंशतिर्मुष्कयोर्मेढ्रबस्त्यन्त्रेषु च कीर्तिता । अशीति पृष्ठभागे स्यु, पार्श्वयो षष्टिरक्षयो ॥ ४ ॥ चत्वार्युरस्यष्टदश, अष्टावसयुगे स्मृता । मध्ये शतद्वय त्रिशद्वे द्वे मन्यावटौ स्मृते ॥ ५ ॥ नेत्रौष्ठतालुनि तथा, ग्रीवाया त्रिशदीरिता । जत्रुणि त्रीणि, चत्वारि हन्वो पञ्च तु कीर्तिता ॥ ६ ॥ जिह्वाया, दन्तमासेषु द्वादशैवाथ मूर्ध्नि षट् । एव शतानि स्नायूना नवैवेतेषु विनिर्दिशेत् ॥ ७ ॥ आमपक्वाशयान्त्रेषु बस्तौ च सुषिराणि तु । प्रतानवन्ति शाखासु महास्नावानि कण्डरा ॥ ८ ॥ वृत्तानि, पार्श्वे पृष्ठोर शिरसि स्यु पृथूनि च । सिरादिभ्योऽप्यस्थितोऽपि रक्षेत्स्नावानि यत्नत ॥ ९ ॥" इति । तथा चोक्तम् ( सुश्रुते शा अ ५।३५ )–"न ह्यस्थीनि तथा हिंस्युर्न पेश्यो न च सन्धय । व्यापादिता अपि सिरा यथा स्नायूनि देहिनाम् ॥ स्नायूनि यो वेत्ति सम्यग्बाह्यान्याभ्यन्तराणि च । स गूढ शल्यमाहर्तु देहाच्छक्नोति देहिन ॥" इति ।

**पञ्च पुंसां पेशीशतानि तु ॥ १७ ॥**
**अधिका विंशतिः स्त्रीणां योनिस्तनसमाश्रिताः ।**

"पेश्य सम्प्रति भण्यन्ते पञ्चाङ्गुल्योऽथ तासु ता । प्रत्येक तिस्र इत्येव ता पञ्चदश कीर्तिता ॥ १ ॥ दश पादतले गुल्फे तथा पादस्य चोपरि । कूर्चे तु ( च ) विंशति स्यात्तु जङ्घाया, पञ्च जानुनि ॥ २ ॥ ऊरौ विंशतिरित्येव शत सक्थ्येकतो भवेत् । शत द्वितीयेऽपि तथा, सक्थिवद्भुजयोर्मता ॥ ३ ॥ चत्वार्येव शतानि स्यु शाखास्वेकैव मेहने । सीवन्या च, वृषणयोर्द्वे, स्फिजोस्तु दश स्मृता ॥ ४ ॥ तिस्रो गुदे, बस्तिमूर्ध्नि द्वे, चतस्रस्तु कोष्ठगा । नाभ्यामेकाऽथ, हृद्येका, स्यादेकाऽऽमाशयेऽपि, षट् ॥ ५ ॥ यकृत्प्लीहोन्दुकेषु, स्युश्चैतस्य पृष्ठतो, दश । पार्श्वयोर्वक्षसि दश, चतस्रश्चाक्षकासयो ॥ ६ ॥ इत्यन्तराधौ षष्टि, स्युर्ग्रीवाया दश, गण्डयो । अष्टौ, हनुप्रदेशेऽष्टावेकैका काकले तथा ॥ ७ ॥ जिह्वाया मूर्ध्नि गलके, द्वे ललाटेऽथ तालुनि ( द्वे द्वे तालुललाटयो ) । द्वे ओष्ठयो, कर्णयोर्द्वे, नासाया द्वे च कीर्तिते ॥ ८ ॥ पुरुषाणा भवेदेतत्पेशीना शतपञ्चकम् । दशाधिका स्यु स्तनयोर्दश योनौ च योषिताम् ॥ ९ ॥ प्रत्येक स्तनयो पञ्च, तासा वृद्धिस्तु यौवने । योन्यन्तराश्रिते द्वे तु द्वे च वृत्ते मुखाश्रिते ॥ १० ॥ गर्भमार्गाश्रयास्तिस्रो यत्र गर्भोऽवतिष्ठते । शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता जायते स्त्रिया ॥ ११ ॥ तस्यास्तृतीय आवर्ते रोहितस्याकृतिर्भवेत् । गर्भशय्याऽथ तिस्रश्च भवेयु सम्प्रवेशिका ॥ १२ ॥ शुक्रस्य चार्तवस्यैव पेशीस्तन्त्रविदो विदु ।" इति । ( सङ्ग्रहे चोक्तम् शा अ ५ )–"एताभिर्हि शरीरे तनुबहलस्थूलाणुवक्रवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशाभि सन्ध्यस्थिसिरास्नावानि प्रच्छादितानि । सिराधमनीना चाणुशो विभज्यमानानामेकोनत्रिंशच्छतसहस्राणि नव च शतानि षट्पञ्चाशानि भवन्ति । ताभिरिद शरीर गवाक्षित पिनद्धमातत च । तावन्ति च केशश्मश्रुलोमानि । तासा हि मुखानि तत्प्रतिबद्धानि । अतस्तानि ताभिराप्याय्यन्ते । तैश्च ता स्वेदमभिवहन्ति । तथाऽभ्यङ्गालेपादिवीर्यं त्वचि विपक्वमन्तर्नयन्ति । स्पर्श च गृह्णन्ति । स्रोतासि पुनरसङ्ख्येयान्येव ।" इति । अन्ये त्वाहु –"शरीरे रोम्णा द्वासप्तति कोट्यो भवन्ति ।" इति ।

इदानी सिरा सङ्ख्यातुमाह—

**दश मूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः ॥१८॥**
**रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् ।**

हृदि तिष्ठन्तीति हृत्स्था, दश मूलसिरा । यतोऽन्यासा सिराणा सर्वासा मूलभूतत्वेनैवैता स्थिता, तत प्रधानभूता

---

१ 'स्नायोर्नव' ण । २ 'पादे' ट ड ढ त । ३ 'नव तेषु तु नि' ट ड ढ त. । 'नवैवेषु' ण । ४ 'तु' ड ढ । ५ 'नि न वा पेश्यो न सिरा न च० तास्तथा हन्युर्यथा स्नायु शरीरिणम् ॥ य स्नायू प्रविजानाति बाह्याश्चाभ्यन्तरा स्तथा । स० देहिनाम् ।' स सु । ६ 'स मूढ' ट । 'स दृढ' ढ । ७ 'च' ण । ८ 'माश्रया' अ इ ढ । ९ 'सङ्ग्रहे तु ( शा अ ५ )–"दश दश प्रपदे पादतले गुल्फे च । तथा पादस्योपरि कूर्चे सन्निविष्टा ।" इत्युक्तम् । सुश्रुतेऽप्येवमेव ।

१ सङ्ग्रहे तु ( शा अ ५ )–"पृष्ठे पञ्चोर्ध्वसन्निविष्टा, तिस्रोऽसकाक्षकोपरित ।" इत्युक्तम् । २ सुश्रुते तु ( शा. अ. ५।३७ )–"पञ्चोदरे, पृष्ठोर्ध्वसन्निविष्टा पञ्च पञ्च दीर्घा, षट् पार्श्वयो, अक्षकासौ प्रति समन्तात् सप्त" इत्यन्यथा कृत्वा अन्तराधौ **'षट्षष्टि'** इति "ग्रीवाया चतस्र, द्वे नेत्रयो, गण्डयोश्चतस्र, ललाटे चतस्र" इति च कृत्वा ग्रीवा प्रत्यूर्ध्व **'चतुस्त्रिंशत्'** इति चोक्तम् । अत्र सङ्ग्रहे चान्तराधौ **'षष्टि'** ग्रीवा प्रत्यूर्ध्व च **'चत्वारिंशत्'** इति वर्णितम् । ३ 'द्वे नेत्रयो' ड ढ । ४ 'मार्गाश्रितास्ति' ड ढ । ५ 'ते तु या' ड ढ । ६ सुश्रुते चोक्तम् (शा अ ५।४४)–"यथा रोहितमत्स्यस्य मुख भवति रूपत । तत्सस्थाना तथारूपा गर्भशय्या विदुर्बुधा ॥" इति । ७ 'गुप्तृथुव' स ढ, स गु । ८ 'मनीमुखाना त्वणु' स ढ । ९ 'चानेकशो' ट । १० 'श्चाशतानि' ट ड ढ । 'श्चाशत्कानि' स च । ११ 'भ्यङ्गादिले' ट.ड.ढ. । 'भ्यङ्गले' स स । १२ 'कोट्य ।' ड.ढ.ण त ।

इत्यर्थ । हृत्स्था –हृदयसम्बद्धा । ता सर्वं वपु –सकल देह, ओजो वहन्ति–प्रापयन्ति । कथम् ? सर्वत ,–सर्वदिक्कम् । वपुरोजो वहन्तीति वहेर्द्विकर्मकत्वात् वपुरोजश्च कर्म । किम्भूत मोज ? रसात्मक,–रसस्वभावम्, आहारात्सारकिट्टतया परिणतात् सारम् । तन्निबद्ध हि चेष्टितम् । तासु–दशसु सिरासु, निबद्ध–निश्चयेन स्थित, चेष्टित–वाक्कायमनोव्यापार । हिशब्दो यस्मादर्थे । यस्मात्तन्निबद्ध चेष्टितमतस्ता मूलसिरा. ।

इदानी संस्थानमासा निदिशति—

**स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवत् ॥१९॥**
**भिद्यन्ते तास्ततः सप्तशतान्यासां भवन्ति तु ।**

स्थूल मूल यासां ता एवम् । सुष्ठु सूक्ष्ममग्र–प्रान्तो यासा ता एवम् । स्थूलमूलत्वेन तासा व्यानवायुविक्षिप्तो रस शीघ्रमेवं चान्त प्रविशति । सूक्ष्मप्रान्तत्वेन रोमराज्यामप्यन्त प्रविश्य तेषा रोम्णा वृद्धिहेतु सम्पद्यते । ततश्चास्मिन् देहे स्थूलमूला सुसूक्ष्माग्रा पत्ररेखाप्रतानवत् भिद्यन्ते–अनेकधा सम्पद्यन्ते । यथा, वृक्षस्य पलाशरेखाना प्रताना –समूहा , स्थूलमूला सुसूक्ष्माग्रा अनेकधा जायन्ते तथैवैता सिरा स्थूलमूला सूक्ष्माग्रा अनेकधा सम्पद्यन्ते नानारूपा यत ,तत –तस्मा द्धेतो , पलाशरेखाप्रतानवदनेकधा गमनादासा सिराणा सप्त शतानि भवन्ति । तुशब्दोऽवधारणे भिन्नक्रम , सप्तैव शतानि ।

**तत्रैकैकं च शाखायां शतं, तस्मिन्न वेधयेत् ॥ २० ॥**
**सिरां जालन्धरां नाम तिस्रश्चाभ्यन्तराश्रिता. ।**

तासामेकैकस्मिन् सक्थ्नि शतम् । तस्मिन्–सिराशते, सिरा जालन्धरा नाम–या जालानि धारयति ता, न विध्येत् । तिस्रश्चेति । याश्चान्यास्तिस्र सिरा अभ्यन्तराश्रिता –अन्तर्मुखा , ता अपि न वेध्या इति चशब्दार्थ । एव सक्थ्याश्रिते सिराशते चतस्र सिरा न वेध्या । द्वितीयेऽपि सक्थ्नि चतस्र एव । सक्थिवद्बाह्वोरपि । एव चतुर्षु सिराशतेषु शाखास्वाश्रितेषु षोडश सिरा न वेध्या ।

**षोडशद्विगुणाः श्रोण्यां, तासां द्वे द्वे तु वङ्क्षणे ॥२१॥**
**द्वे द्वे कटिकतरुणे शस्त्रेणाष्टौ स्पृशेन्न ताः ।**

षट्त्रिंशच्छतमन्तराधौ । तत्र षोडशद्विगुणा श्रोण्या–द्वात्रिंशच्छ्रोण्यवयवाश्रिता सिरा । तासा मध्ये द्वे द्वे तु वङ्क्षणे–द्वयोर्वङ्क्षणयो प्रत्येक द्वे सिरे । द्वे द्वे कटीकतरुणे–द्वयो कटीकतरुणयो प्रत्येक द्वे सिरे । एव श्रोण्याश्रिता अष्टौ सिरा शस्त्रेण न स्पृशेत् ।

**पार्श्वयोः षोडशैकैकामूर्ध्वगां वर्जयेत्तयोः ॥ २२ ॥**[६]

पार्श्वयो षोडश सिरा । तासामेकैकामूर्ध्वगा पार्श्वसन्धिसञ्ज्ञा प्रत्येक वर्जयेत् ।

**द्वादशद्विगुणा· पृष्ठे पृष्ठवंशस्य पार्श्वयोः ।**
**द्वे द्वे तत्रोर्ध्वगामिन्यौ न शस्त्रेण परामृशेत् ॥२३॥**

द्वादशद्विगुणा पृष्ठे–चतुर्विंशति सिरा पृष्ठमाश्रिता । तासा पृष्ठवशस्य पार्श्वयो –पृष्ठवशमुभयत , द्वे द्वे तत्रोर्ध्वगामिन्यौ । एवं चतस्र शस्त्रेण न परामृशेत् ।

**पृष्ठवज्जठरे तासां मेहनस्योपरि स्थिते ।**
**रोमराजीमुभयतो द्वे द्वे शस्त्रेण न स्पृशेत् ॥ २४ ॥**

पृष्ठवज्जठरे–पृष्ठेन तुल्या सिरा उदरे, तत्सङ्ख्या चतुर्विंशति रित्यर्थ । तासा–उदराश्रिताना शिराणा मध्यात्, मेहनस्य–मेढ्रस्योपरि स्थिते, रोमराजीमुभयत –उभयपार्श्वयो , द्वे द्वे सिरे । एव चतस्र सिरा । ता शस्त्रेण न परामृशेत् ।

**चत्वारिंशदुरस्यासां चतुर्दश न वेधयेत् ।**
**स्तनरोहिततन्मूलहृदये तु पृथग्द्वयम् ॥ २५ ॥**
**अपस्तम्भाख्ययोरेकां तथाऽपालापयोरपि ।**

चत्वारिंशदुरसि सिरा । तासा मध्यात् चतुर्दश सिरा न वेधयेत् । ता एव दर्शयति–स्तनरोहितेत्यादि । तयो –स्तनयोर्मूले तन्मूले । तत्र स्तनरोहितयो , तथा स्तनमूलयो , तथा हृदये, पृथक्–प्रत्येक, द्वय–द्वे द्वे सिरे, न विध्येत् । अपस्तम्भाख्ययो प्रत्येकमेका सिराम्, तथाऽपालापयो प्रत्येकमेका सिरा न विध्येत् ।

**ग्रीवायां पृष्ठवत्तासां नीले मन्ये कृकाटिके ॥ २६ ॥**
**विधुरे मातृकाश्चाष्टौ षोडशेति परित्यजेत् ।**

ग्रीवाया पृष्ठवत् सिराणा सङ्ख्या–चतुर्विंशति सिरा । तासा सिराणा मध्यान्नीले द्वे, मन्ये द्वे, कृकाटिके द्वे, विधुरे द्वे, अष्टौ च मातृका –मातृकाख्यानि मर्माणि, इति–एव, षोडश परित्यजेत्–न शस्त्र तासु पातयेत् ।

**हन्वोः षोडश, तासां द्वे सन्धिबन्धनकर्मणी ॥२७॥**

हन्वोर्द्वयो षोडश सिरा सश्रिता । तासा सिराणा मध्याद्वे सिरे परित्यजेत् । किंकर्मणी ते आह ? सन्धिबन्धनकर्मणी । बध्यतेऽनेनेति बन्धनम् । सन्धेर्बन्धनं सन्धिबन्धनम् । अर्थाद्धनुसम्बन्धिन सन्धेर्बन्धन कर्म–क्रिया, ययो सिरयोस्ते सन्धिबन्धनकर्मणी सिरे ।

**जिह्वाया हनुवत्तासामधो द्वे रसबोधने ।**
**द्वे च वाचःप्रवर्तिन्यौ**

जिह्वाया हनुवत् सिरासङ्ख्या–षोडशैव सिरा । तासा मध्यात् जिह्वाया अधो ये द्वे स्थिते रसबोधने–याभ्या रसो ज्ञायते मधु-

१ 'मेवान्त' ट ड.ढ । २ प्रताना –कुटिला सूक्ष्मतन्तव । ३ 'तथैव ता' ट । 'तथैता' ड ढ । ४ 'नायासां' ड.ढ । ५ 'कैकत्र शा' इ. । ६ 'येत्सिराम्' अ. ।

१ 'पार्श्वगे' इ ण त । २ 'न स्पृशेत्' ड ढ । ३ 'मध्ये' ड ढ ण.त । ४ स्तनरोहित –स्तनरक्तभाग । ५ 'द्वयौता. प' ढ ।

रादिरसबोधिन्यौ, द्वे च वाच प्रवर्तिन्यौ ये सिरे, एव चतस्रो जिह्वाश्रिता सिरा परित्यजेत् ।

**नासायां चतुरुत्तरा ॥ २८ ॥**
**विंशतिर्गन्धवेदिन्यौ तासामेकां च तालुगाम् ।**

नासाया चतुरुत्तरा विंशति सिराणाम्, एव चतुर्विंशति सिरा नासाश्रिता । तासा मध्याद्द्वे गन्धवेदिन्यौ–गन्ध वेदितु शील ययोस्ते गन्धवेदिन्यौ सिरे, तथैका तालुगा सिराम्, एव नासाश्रिता सिरास्तिस्र परित्यजेत् ।

**षट्पञ्चाशन्नयनयोर्निमेषोन्मेषकर्मणी ॥ २९ ॥**
**द्वे द्वे, अपाङ्गयोर्द्वे च तासां षडिति वर्जयेत् ।**

षट्पञ्चाशन्नयनयो सिरा । तासा मध्यान्निमेषोन्मेषकर्मणी । निमेषोन्मेषौ–निमीलनोन्मीलने, कर्मणी ययोस्ते निमेषोन्मेषकर्मणी सिरे द्वे द्वे प्रत्येकम्, तथाऽपाङ्गयोर्द्वे सिरे, एव षट् सिरा वर्जयेत्–तत्र शस्त्र न पातयेत् ।

**नासानेत्राश्रिताः षष्टिर्ललाटे, स्थपनीश्रिताम् ॥३०॥**
**तत्रैकां, द्वे तथाऽऽवर्तौ, चतस्रश्च कचान्तगाः ।**
**सप्तैवं वर्जयेत्तासाम्**

नासानेत्रगता या सिरा उक्ता । तासा मध्याल्ललाटे षष्टि सिरा भवन्ति। तत्र–तासा मध्यात्, स्थपनीश्रिता–स्थपनीनाम मर्मविशेषस्तत्रस्था, एका सिरा न विध्येत् । द्वे तथाऽऽवर्तौ–मर्मणी, तयोरावर्तयो स्थिते द्वे सिरे न विध्येत् । चतस्रश्च कचान्तगा –केशान्तस्था सिरा, न विध्येत् । एव सप्त सिरा ललाटे वर्जयेत् ।

**कर्णयोः षोडशात्र तु ॥ ३१ ॥**
**द्वे शब्दबोधने शङ्खौ सिरास्ता एव चाश्रिताः ।**
**द्वे शङ्खसन्धिगे तासाम्**

कर्णयोर्द्वयो षोडश सिरा । अत्र तु–अस्मिन् षोडशसङ्ख्ये सिरोद्देशे, कर्णयोरास्थिते द्वे सिरे शब्दबोधने–याभ्या शब्दो बुध्यते–ज्ञायते ते, वर्जयेत् । शङ्खौ सिरास्ता एव कर्णाश्रिता । तासा मध्याद्द्वे सिरे शङ्खसन्धिगे–शङ्खसन्ध्याश्रिते, वर्जयेत् ।

**मूर्ध्नि द्वादश तत्र तु ॥ ३२ ॥**
**एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थिताम् ।**

मूर्ध्नि विषये द्वादश सिरा । तत्र तु–तासु द्वादशसु सिरासु मध्येऽष्टौ सिरा शस्त्रेण वर्जयेत् । ता एवाह–एकैकामिति । एव प्रत्येकमुत्क्षेपयोर्द्वयोरेकैकौ, सीमन्तेषु पञ्चस्वेकैकौ, अधिपतावेकौ, इत्यष्टौ ।

**इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः सिराः ॥ ३३ ॥**

इति–समाप्तौ प्रकारे वा । अवेध्यसिराविभागविज्ञानार्थ–तन्निमित्त, प्रत्यङ्ग–शिरस्यन्तराधौ बाह्वादिषु, या सिरास्ता वर्णिता –उक्ता, ता वर्णयितु समाप्ता इति, अथवाऽनेन प्रकारेण पूर्वोक्तेन वर्णिता ।

**अवेध्यास्तत्र कार्त्स्न्येन देहेऽष्टानवतिस्तथा ।**
**सङ्कीर्णा ग्रथिताः क्षुद्रा वक्राः सन्धिषु चाश्रिताः ३४**

तत्र–तासु सिरासु मध्ये, कार्त्स्न्येन–साकल्येन, अष्टानवति सिरा अवेध्या वर्णिता । देहे–शरीरे । न केवलमेता एवावेध्या, यावत्सङ्कीर्णादयश्चेति तथाशब्दस्यार्थ । सङ्कीर्णा –परस्पर निबद्धा । ग्रथिता इव–ग्रथिता । क्षुद्रा –अल्पा सूक्ष्मा न महत्य । वक्रा –कुटिला । तथा सन्धिषु–अस्थिसन्धिषु, या आश्रितास्ता अपि न वेध्या ।

**तासां शतानां सप्तानां पादोऽस्रं वहते पृथक् ।**
**वातपित्तकफैर्जुष्टं शुद्धं चैवं स्थिता मलाः ॥ ३५ ॥**
**शरीरमनुगृह्णन्ति पीडयन्त्यन्यथा पुनः ।**

तासा सिराणा सम्बन्धीनि यानि सप्तशतानि, तेषा पाद –पञ्चसप्तत्यधिक शत, अस्र वहते, अस्मिन् देहे । किम्भूत तद्रक्तम् ? वातपित्तकफैर्जुष्ट–सेवित, शुद्ध च–तैरनाक्रान्तमजुष्ट कृत्वा । पृथक्–प्रत्येक कृत्वा, पादोऽस्र वहते । एव वातजुष्ट रक्त सिराशत पञ्चसप्तत्यधिक वहते । पित्तजुष्ट पञ्चसप्तत्यधिकं शतं, तथा कफजुष्ट पञ्चसप्तत्यधिक शत, तथा शुद्ध रक्त पञ्चसप्तत्यधिक शत वहते । एव–पूर्वोक्तेन प्रकारेण, मला स्थिता शरीरमनुगृह्णन्ति–वर्तयन्ति । अन्यथा पुन –व्यत्ययेन स्थिता, पीडयन्ति–विकारेण योजयन्ति ।

किंलक्षणा सिरा वातादिजुष्टमस्र वहन्ति ? इत्याह—

**तत्र श्यावारुणाः सूक्ष्माः पूर्णरिक्ताः क्षणात्सिराः ३६**
**प्रस्पन्दिन्यश्च वातास्रं वहन्ते**

तत्र–तासु सिरासु मध्ये, श्यावारुणा वर्णेन या सिरास्ता वातास्र–वातरक्त, वहन्ते । तथा सूक्ष्मा । तथा पूर्णरिक्ता –वायोश्चलत्वात् क्षणात्पूर्णा क्षणाद्रिक्ता –शून्या एव । तथा प्रस्पन्दिन्य । किल स्पन्दनं सर्वासा विद्यते, प्रकर्षेण तु वातरक्तवाहिनीनामिति प्रशब्देन द्योत्यते ।

**पित्तशोणितम् ।**
**स्पर्शोष्णाः शीघ्रवाहिन्यो नीलपीताः**

सिरा पित्तशोणित वहन्ते । किंविधा ? स्पर्शोष्णाः–स्पर्शेनोष्णा, न शीता । तथा, शीघ्रवाहिन्य । तथा, नीलपीता वर्णेन ।

**कफं पुनः ॥३७॥**
**गौर्यः स्निग्धाः स्थिराः शीताः**

कफ पुनर्गौर्यो वहन्ते । तथा स्निग्धादिविशेषणा । कफमिति कफशोणितम्, शोणितशब्दलोपात् । स्निग्धा –स्निग्धच्छाया । तथा, स्थिरा –न तु चपला । तथा, शीता स्पर्शेन ।

**संसृष्टं लिङ्गसङ्करे ।**

१ 'सवेदिन्यौ' ड.ढ ण त । २ 'का' ण त. ।

१ 'तद्रुधिरम्' ड ढ त । २ 'मदुष्ट' ट ड ढ । ३ 'चला' ड.ढ ण.त. ।

लिङ्गसङ्करे–यथा निर्दिष्टस्य लक्षणस्य सङ्कीर्णत्वे, संसृष्ट-कफवातजुष्ट वातपित्तजुष्ट कफपित्तजुष्ट त्रिभिरपि दोषैर्जुष्ट, रक्त सिरा वहन्ति–सकल शरीर प्रापयन्ति ।

**गूढाः समस्थिताः स्निग्धा रोहिण्यः शुद्धशोणितम् ॥**

गूढा –अन्तर्गता , तथा सम कृत्वा स्थिता –समस्थिता , तथा स्निग्धा –स्निग्धच्छाया , रोहिण्य –सिरापरसंज्ञा लोहिताभासा वा प्रसरणशीला वा, शुद्धशोणित देहेऽस्मिन् वहन्ति ।

**धमन्यो नाभिसम्बद्धा विंशतिश्चतुरुत्तरा ।**
**ताभिः परिवृता नाभिश्चक्रनाभिरिवारकैः ॥ ३९ ॥**
**ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते ।**

धमन्यो नाभिसम्बद्धा विंशतिश्चतुरुत्तरा–चतुर्विंशतिरित्यर्थ । ताभि –धमनीभि , नाभि परिवृता–परिवेष्टिता । कथम् ? चक्रनाभिरिवारकै ,–यथा रथाङ्गस्य मध्यमभागो नाभिशब्दवाच्योऽरकै परिक्रियते तद्वन्नाभि –शरीरमध्यभागो, धमनीभि । ध्मानाद्धमन्य स्रोतोविशेषा उच्यन्ते । ताभि –धमनीभि , अय देह ऊर्ध्वमधस्तिर्यक् चानुगृह्यते–रसादिप्रापण कर्मणा ता कायस्यानुग्रह कुर्वन्ति । ताभिरयं देह आप्यायते, आराम इव जलहारिणीभि केदार इव कुल्याभि । सङ्ग्रहे चोक्तम् ( शा. अ ६ )–"तासा खलु धमनीनां मध्यादृश धमन्य ऊर्ध्व प्रसृता दशाध प्रसृतास्तिर्यक् चतस्र । ताभिर्यथास्वमङ्गावयवा ऊर्ध्वाधस्तिर्यक् समाश्रिता धार्यन्ते आप्याय्यन्ते च । तासामूर्ध्वगा हृदयमभिप्रपन्ना प्रत्येकं त्रिधा जायन्ते । एव तास्त्रिंशत् । त्रिंशतो मध्याद्वे द्वे वातपित्तकफरक्तरसान् वहत । एव दश । द्वे द्वे शब्दरूपरसगन्धान् गृह्णीत । एवमष्टाभि शब्दरूपरसगन्धा गृह्यन्ते । द्वाभ्या द्वाभ्या भाषते घोष करोति स्वपिति प्रतिबुध्यते च । एवमष्टौ । द्वे चाश्रु वहत । तथैव द्वे स्तनाश्रिते नार्या स्तन्य नरस्य शुक्रम् । अधोगमा पक्काशयस्था दश त्रिधा जायन्ते । एव ता अपि त्रिंशत् । तत्राद्या पूर्ववद्दश द्वे द्वे वातपित्तकफरक्तरसान् वहत । द्वे वहतोऽन्नमन्त्राश्रयेण, द्वे तोय द्वे मूत्रम् । द्वे शुक्र वहतो द्वे च मुञ्चत । त एव नारीणामार्तव वहत । द्वे वर्चोनिरसन्यौ स्थूलान्त्रप्रतिबद्धे । एव द्वादश । शेषास्त्वष्टौ धमन्यस्तिरश्चीना स्वेदमभिवर्धयन्ति । तिर्यग्गामिन्यस्तु चतस्रो भिद्यमाना सुबहुधा भवन्ति ।" इति ।

१ 'गूढानाम–अ' ड ढ । २ 'संज्ञा शुद्ध शो' ड ढ । ३ 'वृतो' इति क्वचित् । ४ 'वृतो–परिवेष्टित ' ट । ५ 'वाच्य आरकै ' ट ड ढ । ६ 'ना दशोर्ध्व प्रसृता दशाधश्चतस्रस्तिर्यक् ततस्ताभि० वा धार्यन्ते' स द्व । ७ 'न्ते । ततस्त्रिंशतो मध्ये द्वे' स द्व । ८ 'त । अष्टाभि ' स द्व । ९ 'च । द्वे' स द्व । १० 'चास्र व' ट ड ढ । ११ 'स्था एव त्रिधा जायन्ते । तत्र दशाद्या पूर्ववत् । द्वे वह' स द्व । १२ 'न्न मात्राश्रयेण' ड ढ स स. । १३ 'सने स्थू' ट ड ढ त । १४ 'भितर्पय' त स.द्व ।

इदानीं स्त्रीपुरुषाणा दृश्यानि स्रोतासि निरूपयितुमाह—

**स्रोतांसि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम् ॥४०॥**
**स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ।**

स्रोतासि पुंसा नव,–द्वौ नासापुटौ, द्वौ कर्णौ, द्वे नेत्रे, पायु – गुदम्, आस्य–मुखम्, मेहन–मूत्रनिष्क्रमणद्वारम् । स्त्रीणामेतानि तथाऽन्यानि त्रीणि,–द्वौ स्तनौ, तथैको रक्तपथो–रक्तमार्ग , प्रतिमास यतो योनौ रक्त प्रवर्तते । तदेव स्त्रीणा त्रीणि स्रोतासि पुम्भ्योऽधिकानि ।

एवं स्रोतासि दृश्यान्यभिधाय शरीरे यान्यदृश्यानि स्रोतासि तान्याह—

**जीवितायतनान्यन्तः स्रोतांस्याहुस्त्रयोदश ॥ ४१ ॥**
**प्राणधातुमलाम्भोन्नवाहीनि**

अन्त –शरीराभ्यन्तरे, त्रयोदश स्रोतासि वदन्ति । 'आचार्या ' इति शेष । तानि च स्रोतासि जीवितायतनानि–विशेषेण जीवितस्याधिष्ठानानि । किम्भूतानि ? प्राणधातुमलाम्भोन्नवाहीनि । प्राणाख्यं वात वहन्ति यानि तानि–प्राणवाहीनि । धातुवाहीनि–रसादिधातून् यानि वहन्ति । मलवाहीनि–मूत्रशकृत्स्वेदान् यानि वहन्ति । तथा, अम्भोवाहीनि–उदकवाहीनि । तथा, अन्नवाहीनि–अन्नमभ्यवहृतं यानि वहन्ति । एव त्रयोदश । सङ्ग्रहे चोक्तम् ( शा अ ६ )–"तत्र प्राणवाहिना हृदय मूल महास्रोतश्च । तानि क्षयरौक्ष्यपिपासाक्षुद्व्यायामवेगविधारणादिभिर्दुष्यन्ति । ततोऽतिसृष्ट प्रतिबद्धं कुपितमल्पाल्पमभीक्ष्ण वा सशब्दशूलमुच्छ्वसनं कुर्वन्ति । तत्र श्वासवत्साधनम् । उदकवाहिना तालु मूल क्लोम च । तान्यामभयातिपानोष्णशुष्कान्नतृङ्निग्रहादिभिर्दुष्यन्ति । ततोऽतितृष्णा मुखशोष कर्णक्ष्वेडन तमोदर्शन च । तत्र तृष्णोक्तमौषधम् । अन्नवाहिनामामाशयो मूल वामपार्श्व च । तेषा दुष्टौ सर्व मात्राशितीयोक्तमवगच्छेत् । रसवाहिना हृदय मूल दश धमन्यश्च । रक्तवाहिना यकृत् प्लीहा च । मासवाहिना स्नावानं त्वक् च । मेदोवाहिना वृक्कौ मास च । अस्थिवाहिना जघन मेदश्च । मज्जवाहिना पर्वाण्यस्थीनि च । शुक्रवाहिना स्तनौ मुष्कौ मज्जा च । मूत्रवाहिना बस्तिर्वङ्क्षणौ च । शकृद्वाहिना पक्वाशय स्थूलान्त्रं च । स्वेदवाहिना मेदो रोमकूपाश्च । स्रोतसामेव विशेषा सिरा धमन्य । अपरे त्वन्यत्वमिच्छन्ति सिराधमनीस्रोतसाम् । सरणात् सिरा । ध्मानाद्धमन्य ।

१–२ 'तो रक्त' 'व त्रीणि' ट ड ढ । ३ 'रीरस्याभ्य' ण त । ४ 'गद' ड ढ । ५ 'नि वातुक्षय' स स । ६ 'क्ष्यक्षु' ट ढ ण त । ७ 'बद्धमल्प' स स । ८ 'सनम् । तत्र' स द्व । ९ 'पानशु' ट ट ढ ण त । १० 'न्नकषायतृण्निग्र' स स । 'न्नतृण्निग्र' स मू । ११ 'मनुग' ट ड ढ. । 'तीयमनुग' ण । 'तीयमव' त । १२ 'नि धमन्यश्च त्वक् च ।' ट ण त । 'नि धमन्यश्च ।' ड ढ । १३ 'अन्ये' स द्व । १४ 'म् । केवल' स.द्व. ।

स्रवणात्स्रोतांसि । केवलं परस्परसन्निकर्षात् सदृशकर्मत्वात् सौक्ष्म्याच्च विभक्तकर्मणामप्यविभाग इव लक्ष्यते । अन्ये पुनरेवमाचक्षते । स्रोतांसि सिरा धमन्यो रसायन्यो वाहिन्यो नाड्यः पन्थानोऽयनानि मार्गाः शरीरच्छिद्राणि संवृतासंवृतानि स्थानान्याशयाः क्षयाः निकेताश्चेति शरीरे धात्ववकाशानां लक्ष्यालक्ष्याणां पर्यायेण नामानीति ।" इति ।

अहितसेवनात् ।

**तानि दुष्टानि रोगाय, विशुद्धानि सुखाय च ॥४२॥**

अहितानामाहारविहारादीनां सेवनात्—शीलनात्, तानि—स्रोतांसि, दुष्टानि रोगाय सम्पद्यन्ते । तेषां विज्ञानार्थं दोषादिविज्ञानीयोक्तमवगच्छेत् । विशुद्धानि—अदुष्टानि स्रोतांसि, सुखाय—आरोग्याय, सम्पद्यन्ते ।

**स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।**
**स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥ ४३ ॥**

स्रोो धातुः स्वधातुः,—यो यो यस्य यस्य स्रोतस आधारस्याधेयत्वेन स्थितो धातुः, तेन तेन स्वधातुना समः—समानो, वर्णो येषां स्रोतसां तानि स्वधातुसमवर्णानि । यथा,—रसधातुतुल्यवर्णानि रसवाहिस्रोतांसि, यावच्छुक्रधातुसदृशवर्णानि शुक्रवाहिस्रोतांसि । तथा, सर्वस्रोतसां मध्ये कानिचिद्वृत्तानि—वर्तुलानि, कानिचित्स्थूलानि, कानिचिदणूनि—सूक्ष्माणि स्रोतांसि । तथा, आकृत्या—संस्थानेन, दीर्घाणि सर्वाण्येव । तथा, प्रतानसदृशानि—पत्ररेखातुल्यानि । पत्ररेखातुल्यरूपत्वेन शाखाप्रशाखतयाऽनेकधा दूरं प्रविसृतानीति गमयति ।

यतश्चाहिताहारविहारसेवनं स्रोतोदुष्टिकारणम्, अतस्तानि तद्दुष्टिकारणानि वक्ति—

**आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।**
**धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥ ४४ ॥**

आहारः—पानाशनादिलक्षणः, दोषगुणैः—वातपित्तश्लेष्मगुणैः रौक्ष्यादिभिः, यः समः—तुल्यः समानगुणः, स स्रोतसां प्रदूषकः । विहारोऽपि—यो वाग्देहमनश्चेष्टालक्षणः, सोऽपि दोषगुणैः समानगुणो यथायथं स्रोतसां प्रदूषकः । यश्चाहारस्तथा विहारो धातुभिः—रसादिभिः, विगुणो—विरुद्धगुणो रससमानगुणैर्विपरीतगुणः, स यथायथमेव स्रोतसां प्रदूषकः ।

स्रोतसां दुष्टिः कथं ज्ञायते ? इत्याह—

**अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।**
**विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ४५ ॥**

अतिशयेन प्रवृत्तिः, यथा—मूत्रवाहिस्रोतसां प्रमेहवद्बहुमूत्रता । सङ्गः—अप्रवृत्तिः, किञ्चिद्वा प्रवृत्तिर्मूत्रकृच्छ्रवत् । शकृद्वाहिनां स्रोतसामतीसारवत्पुरीषातिसरणं—अतिप्रवृत्तिः । सङ्गः—स्तोकं स्तोकं कृत्वा पुरीषस्य प्रवृत्तिः, अथवा सर्वैसविकयोदावर्तैवत्पुरीषस्याप्रवृत्तिः । एवं मूत्रवाहिस्रोतसां मूत्रातिप्रवृत्त्यप्रवृत्ती तत्स्रोतोदुष्टेर्लक्षणम् । तथैव पुरीषवाहिनां पुरीषातिप्रवृत्त्यप्रवृत्ती पुरीषवाहिस्रोतोदुष्टेर्लक्षणम् । एवमन्येषामपि स्रोतसां यथायथं वस्तुवाहिनां यथास्वं वस्त्वतिप्रवृत्त्यप्रवृत्ती तेषां दुष्टेर्लक्षणम् । अथवा सिराणां—स्रोतसां, ग्रन्थयः—कुटिलभावत्वं, दुष्टेर्लक्षणम् । विमार्गतो वेति । अथवा स्वं मार्गमुज्झित्वा मार्गान्तरासादनं स्रोतसां दुष्टेर्लक्षणम् ।

**बिसानामिव सूक्ष्माणि दूरं प्रविसृतानि च ।**
**द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ ४६ ॥**

बिसानां—मृणालानां, यथा सूक्ष्माणि द्वाराणि—छिद्राणि, दूरं प्रविसृतानि—सकलं बिसं गतानि, तथैव स्रोतसां द्वाराणि—मुखानि, सूक्ष्माणि देहे दूरं प्रविसृतानि—कृत्स्नं देहं प्रकर्षेण गतानि । यैः—द्वारैश्छिद्रैः, देहे—शरीरे, अभ्यवहृतस्याहारस्य कायाग्निना पच्यमानस्य प्रसादभावो यः समुद्भवति स रसः, प्रसादाख्य उपचीयते—वृद्धिं नीयते ।

**व्यधे तु स्रोतसां मोहकम्पाध्मानवमिज्वराः ।**
**प्रलापशूलविण्मूत्ररोधा मरणमेव वा ॥ ४७ ॥**
**स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत् ।**
**उद्धृत्य शल्यं यत्नेन सद्यःक्षतविधानतः ॥ ४८ ॥**

स्रोतसां तु व्यधे—ताडने सति, मोहादयो भवन्ति । मोहादीनामितरेतरद्वन्द्वः प्रलापादीनां च । विण्मूत्रयो रोधेन सम्बन्धः । अथवा मरणमेव भवति । अतः—अस्माज्जीवितसंशयाद्धेतोः, वैद्यः प्रत्याख्याय—"अक्रियायां ध्रुवो मृत्युः" (इ चि अ ११।४४) इत्याद्युक्त्वा, शल्यमुद्धृत्य—बहिर्निष्कास्य, प्रसाधयेत् । कथम् ? यत्नेन—नावहेलया । केन प्रसाधयेत् ? सद्यःक्षतविधानतः—सद्योव्रणप्रतिषेधोक्तविधिना ।

**अन्नस्य पक्ता पित्तं तु पाचकाख्यं पुरेरितम् ।**
**दोषधातुमलादीनामूष्मेत्यात्रेयशासनम् ॥ ४९ ॥**

तुरवधारणे । अनेकविधस्याहारस्याभ्यवहृतस्य पित्तमेव पक्ता । किम्भूतं पित्तम् ? पाचकाख्यं पुरेरितं,—पूर्वं दोषभेदीयेऽध्याय उक्तम् । यथा (इ सू अ १२।१०)—"पक्वामाशयमध्यगम्" इत्यारभ्य यावत् "पाचकं नाम तत्स्मृतम् ।"

१ 'त्वाच्च' ट ड ढ ण त । २ 'अपरे पुनराहुः । स्रो' स इ । ३ 'संवृतानि' ट ण त । ४ 'या निके' ट ड ढ । ५ 'क्षयो गेहे कल्पान्तेऽपचये रुजि' इति हैमः । ६ 'तत्साधनार्थं' ण त । ७ 'स्रोतांसि कानि' ट ड ढ । ८ 'दुष्टेः कारणम्, अतस्तद्दुष्टका' ट. । ९ 'गुणैरसमानगुणो विप' ण त । १० 'स्रोतो दुष्टं कथं' ड ढ ण त । ११ 'दुष्टलक्षणं कथं' ट । १२ 'दुष्टल' अ इ त ।

१ 'सर्वथोदा' ण । २ 'दुष्टस्य लक्ष' ट ड ढ ण त । ३ 'मार्गं त्यक्त्वा मार्गान्तरासरणं स्रो' ट । ४ 'नि दूरं' ड ढ । ५ 'रोधनं—विबन्धः ।' ड ढ. । ६ अस्याग्रे **"वामपार्श्वाश्रितं नाभेः किञ्चित्सूर्यस्य मण्डलम् । तन्मध्ये मण्डलं सौम्यं तन्मध्येऽग्निर्व्यवस्थितः ॥ जरायुमात्रप्रच्छन्नः काचकोशस्थदीपवत् ।"** इति सार्द्धः श्लोकोऽधिकः क्वचित् । ७ 'उदीरितम्' ट. ।

इति। तदीदृश पित्तमाहार पाचयतीति धन्वन्तरिमतम्। दोषधात्विति। आत्रयस्य–अत्रिपुत्रस्य, शासन–आज्ञा, इति–एव, दोषादीनामूष्माऽग्निरिति। दोषा–वातादय, धातवो–रसादय, मला–मूत्रपुरीषस्वेदा, आदिशब्देन दूषिकादय। तेषा दोषादीना सम्बन्धी ऊष्मा–अग्नि, य स एवान्नस्य पक्ता, न तु पित्तं पाचकाख्यमिति।

**तदधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता।**
**सैव धन्वन्तरिमते कला पित्तधराह्वया ॥ ५० ॥**
**आयुरारोग्यवीर्यौजोभूतधात्वग्निपुष्टये।**
**स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सा ॥ ५१ ॥**

तस्य–अग्नेर्जाठरस्य, अधिष्ठान–आधारो, यत्रासौ शारीरोऽग्निस्तिष्ठति, साऽन्नस्य ग्रहणात् तत्सञ्ज्ञा ग्रहणीति मता। आमाशयस्थो विशिष्टो धमनीविशेष इत्यर्थ। सैव ग्रहणी धन्वन्तरिमते कला पित्तधरा नाम कथ्यते। यत एव ग्रहण्यग्नेराधारभूता, तथाऽन्नग्रहणात्तत्सञ्ज्ञा, अत आयुरादिपुष्टये 'सम्पद्यते' इति वाक्यशेष। भूतधात्वोरग्निना सम्बन्ध। आयुरादीना द्वन्द्व। आयु–शरीरेन्द्रियसत्वात्मसयोगविशेष। आरोग्य–धातुसाम्यम्। वीर्य–शक्ति, कर्मणि सामर्थ्यम्। ओज–आहारस्य पर प्रसादज सर्वधात्वाप्यायक यद्वस्तुजात तदुच्यते। पुष्टिशब्द एषा प्रत्येक योज्य, आयु पुष्टये आरोग्यपुष्टये वीर्यपुष्टये ओज पुष्टये पञ्चमहाभूताग्निपुष्टये धात्वग्निपुष्टये चेति पिण्डार्थ। पक्वाशयस्य द्वा पक्वाशयद्वा, तस्या स्थिता। सा हि–ग्रहणी, भुक्तस्य सहसा पक्वाशयान्त प्रवेशरोधिनी। सा चार्गलेव–यथा द्वारि कपाटमार्गरोधेऽर्गला स्थिता, तथा भुक्त ह्यभ्यवहृत कण्ठनाडीलुठित कायस्य महानिम्नदेश कोष्ठाख्यमवतीर्ण ग्रहणी गृहीत्वाऽवतिष्ठते। अनन्तरं जाठरेणाऽग्निना विपक्व शनै पक्वाशये मुञ्चति। अत एवोच्यते–'स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सा।' इति।

पक्वाच्चान्नादायुरादय पुष्यन्ति, नापक्वादित्याह—

**भुक्तमामाशये रुध्वा सा विपाच्य नयत्यधः।**
**बलवत्यबला त्वन्नमाममेव विमुञ्चति ॥ ५२ ॥**

भुक्त–अभ्यवहृतमन्न, आमाशये–आमान्नस्थाने यत्राममन्नं तत्र, सा–ग्रहणी, रुद्ध्वा–अवष्टभ्य, अधो नयति। किं कृत्वा? विपाच्य,–विविधै प्रकारै पाचयित्वा। बलवतीति। बलवती भुक्त विपाच्याधो नयति। अबला पुन सती सा आममेव–अपक्वमेव विमुञ्चति। ननु, जाठराग्निरन्न ग्रहणीस्थ पचति, न ग्रहणी। ततश्च कथमुक्तम्? "सा विपाच्य नयत्यध" इति। अत्रोच्यते। अग्निग्रहण्योराधाराधेयभावेन स्थितत्वाद्युज्यत एवैतदुक्तम्। ग्रहणी ह्यग्नेराधार। तथा च प्रागुक्तम् (श्लो ५०)–"कला पित्तधराह्वया" इति। पित्तं च वह्नि। तथा चाधुनैव वक्ष्यति (श्लो. ९०)–"पित्त वह्नि" इत्यादि। तदेव वह्न्याधारा या कला साऽन्नग्रहणाद्ग्रहणीत्युच्यते। ततश्चाधारतया ग्रहणीमाश्रित्याग्नि पाककरणसमर्थो भवति, नाधारमन्तरेण केवल एव। तदेवमग्न्याधारस्य ग्रहण्याख्यस्य पाकनिर्वर्तन प्रति कर्तृत्व युक्तमेवेति। अत "सा विपाच्य नयत्यध" इत्येतदुपपन्नमेव।

अग्निग्रहण्योराधाराधेयभावतयाऽवस्थानात् परस्परबलाधानेनोपकार्योपकारकभाव सम्भाव्यत इत्याह—

**ग्रहण्या बलमग्निर्हि स चापि ग्रहणीबलः।**
**दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारिणी ॥ ५३ ॥**

हि यस्मादर्थे। यस्माद्ग्रहण्या यद्बल–सामर्थ्य, तस्य हेतुरग्नि। अग्नितो ग्रहण्या बलमुत्पद्यते। स चाप्यग्निर्ग्रहणीबल, ग्रहणी बल यस्याग्ने स एवम्। अपिशब्दाच्च केवलमग्निर्ग्रहण्या बलम्, ग्रहण्यप्यग्नेर्बलम्। अतो हेतोर्दूषितेऽग्नौ दुष्टा ग्रहणी रोगकारिणी सम्पद्यते। एव चार्थाद् ग्रहण्यामपि दुष्टायामग्निर्दुष्यति। दुष्टश्च सोऽपि रोगकारी सम्पद्यते। एवं या पित्तधरा कला साऽदुष्टा सत्यायुरादीना पुष्ट्यै भवतीत्युक्तम्। अन्नग्रहणाद्ग्रहण्या एवरूपता।

तच्चान्न विपक्वमेव देहधात्वादिपोषणम्, नापक्वम्। तस्य चान्नपाकस्य हेतुरग्नि, अत आह—

**यदन्नं देहधात्वोजोबलवर्णादिपोषणम्।**
**तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ॥ ५४ ॥**

यदन्न–आहारो, देहधात्वादिपोषण भवति, तत्राग्निर्हेतु। कुत? इत्याह–न हीत्यादि। हि–यस्मात्, अपक्वादाहाराद्रसरुधिरादयो न सम्भवन्ति। अतो देहधात्वादिपोषणे सर्वत्राग्निकारणम्, पाकक्रियानिर्वर्तनात्। तदेवमन्वयव्यतिरेकाभ्यामवगम्यते, अन्न देहधात्वादिहेतुरग्निप्रभावादेव, तस्मादग्निपाककारणम्, पक्वमन्न देहादिपोषणम्। इति परस्परकारणत्वमनयो।

"न ह्यपक्वाद्रसादय" इत्युक्तम्। अत पाकस्यैवेतिकर्तव्यतां निरूपयन्नाह—

**अन्नं कालेऽभ्यवहृतं कोष्ठं प्राणानिलाहृतम्।**
**द्रवैर्विभिन्नसङ्घातं नीतं स्नेहेन मार्दवम् ॥ ५५ ॥**
**सन्धुक्षित समानेन पचत्यामाशयस्थितम्।**
**औदर्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलम् ५६**

काले–"प्रसृष्टे विण्मूत्रे" (हृ सू अ ८।५५) इत्यादिना ग्रन्थेन प्राङ्निरूपिते। अन्नमभ्यवहृत कोष्ठ–हृदयाद्यङ्गनिबन्धन स्थान, प्राणाख्येन वायुनाऽऽहृत–आनीतम्। "ष्ठीवनक्षवथूद्गार" (हृ सू अ. १२।५) इत्यादिनैव प्राणानिलाहृतत्वे

1 'भ्मा य' ण त। 2 'या' इ ण त। 3 'ना सह स' ट। 4 'शय मु' ट ड ढ। 5 'त्वात्सयुज्य' ढ।

1 'तेनकर्मत्व' ण। 'न प्रति कर्मत्व' ड ढ त। 2 'हणीव' ट ड ढ ण त। 3 'म्। यत, अतो' ड ढ ण त। 4 'कोष्ठे' इ ढ। 5 'न्धन, प्रा' ड ढ ण त।

लब्धे पुनरुक्त स्पष्टार्थम् । तच्च द्रवै -द्रवैर्गुणोपलक्षितैस्तोय-व्यञ्जनमयक्षीरादिभि , विभिन्नसङ्घातं-अपनीतपिण्डितभावम्। तथा, स्नेहेन-घृतादिना, मृदुत्व प्रापितम् । तथा, आमाशय-स्थितमग्नि पचति । "नाभिस्तनान्तर जन्तोरामाशय इति स्मृत ।" इति व्याख्यात आमाशयस्तन्मान्तरे ( चरके वि अ २।२३ ) । किम्भूतोऽग्नि ? औदर्यो-जठरभव । तथा समानाख्येन वायुना सन्धुक्षित -उद्दीपित । कालग्रहणस्योप-लक्षणार्थत्वान्मात्रादिसहायेन जाठराग्निना समानोद्दीपितेन पक्क-मन्न देहधात्वादिपोषणम् । ननु, औदर्योऽग्निरदृश्यत्वान्न ज्ञायते कथ पचति ? अतस्तदर्थ बाह्य दृष्टान्त निरूपयितु ग्रन्थकृदाह-यथेत्यादि । यथा बाह्योऽग्नि स्थालीस्थं तोयतण्डुल पचति । तोयं च तण्डुलाश्च तोयतण्डुलम्, द्वन्द्वैकवद्भाव । तथैवासावौ-दर्योऽग्नि सन्धुक्षित समानेनामाशयस्थित चतुर्विधमन्न-अ-शितपीतलीढखादितभेदभिन्न, प्राणानिलाहृत पचति । ननु, दोषभेदीयेऽध्याये पूर्वमुक्तम् (हृ सू अ १२।४)-"प्राणोऽत्र मूर्धग ।" इत्यारभ्य यावत् "निश्वासान्नप्रवेशकृत् ।" इति । अन्नस्य प्रवेश-आहरण, करोतीत्यन्नप्रवेशकृत् । प्राणानिला-हृतमित्यनेनैाप्ययमर्थ प्रत्यपादि । तत्किमेतेन ? अत्रोच्यते । अन्नप्रवेशकृदित्यनेनान्नप्रवेशकरणमात्रमुक्तम्, न तु कोष्ठ-प्रापणमिति । प्राणस्य हि वायोर्मूर्धाश्रितस्योरो यावत्सञ्चार उक्त , न ततोऽध । एवमन्नप्रवेशकरण तावत्प्राप्त यावदुर , न कोष्ठमिति । कोष्ठ प्राणानिलाहृतमित्यनेन तु कोष्ठप्रापणा-ख्योऽर्थविशेष उक्त । इति द्वयमप्येतद्वक्तु युक्तम्। [ ननु, ] 'सन्धुक्षितः समानेन' इति च न वाच्यम् । यत प्रागुक्तम् ( हृ सू अ १२।८ )-"समानोऽग्निसमीपस्थ कोष्ठे चरति सर्वत ।" इति । एव जाठरेणाग्निना सहचर समानो वायु सन्धुक्षयतीत्यर्थोऽवतिष्ठते । तस्मात् "सन्धुक्षित समानेन" इत्यनेन नार्थ । उच्यते । अर्थविशेषसम्प्रत्ययार्थमेतदुक्तम् । तथा हि-"समानोऽग्निसमीपस्थ कोष्ठे चरति सर्वत । अन्न गृह्णाति पचति" इति समानस्यैव पाकक्रिया प्रति वह्निसन्धु-क्षणद्वारेण कर्तृत्वमुक्तम्, नाग्ने । इह पुन सन्धुक्षित समा-नेनाग्नि पचात, न समानो वायु , इत्यपौनरुक्त्यमेव । यद्यपि चैकप्रत्ययजनित न किञ्चिदस्ति, तथाऽप्यन्नपाकक्रिया प्रत्यग्ने-रेव कर्तृत्वम्, न समानादे । समानादयो ह्युपकारका एव । अतो युक्तमिद 'अग्नि पचति' इति ।

तस्यान्नस्येदानीमग्निसमीपस्थस्य या अवस्थास्ता कथयन् पुमस्तमेव पाक निर्दिशति—

**आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् ।**
***[7]फेनीभूतं कफ, यातं विदाहादम्लतां ततः ॥ ५७ ॥**
**पित्तमामाशयात्कुर्याच्च्यवमानं, च्युतं पुनः ।**
**अग्निना शोषितं पक्कं पिण्डितं कटु मारुतम् ॥५८॥**

आदौ-प्रथम, षड्रसमपि, अपिशब्दाद्द्वित्रादिरसमपि, अन्न-अभ्यवहृतमशितपीतादिक, तत्पच्यमान मधुरीभूत-अमधुर मधुर सम्पन्न सत्, कफमीरयेत्। किम्भूत कफम् ? फेनीभूतम्। पानीयादेरपि पच्यमानस्य प्रथम फेनोत्पत्तिदर्शनादेवमुक्तम् । विदाहादिति । तत -प्रथमावस्थातो माधुर्यप्रायाया अनन्तरं, मध्यमावस्था प्राप्य जाठरेण वह्निना पक्क षड्रसमप्यन्नमभ्य-वहृतमम्लता यात-अनम्लमम्ल सम्पन्न, पित्त विदध्यात् । कस्मात्पुनरम्लता याति ? इत्याह-विदाहात्। विरुद्धो विषमो वा दाहो-विदाह । ततो विदाहाद्धेतोरम्लता यातम् । किम्भूत-मन्नम् ? आमाशयाच्च्यवमान,-नामाशयस्थितमेव । च्युत पुन -तत आमाशयात्पक्काशय प्राप्त, जाठराग्निना पक्क शोषि-तमन्न, तथा पिण्डित-तदानी पिण्ड सञ्जात सहृत सम्पन्न, तथा कटुक जात, अन्या(न्त्या) तृतीयामवस्थां प्राप्य मारुत कुर्यादिति योज्यम् । एतच्च सर्व स्वभावसिद्ध स्वसंवेद्यप्रायं कार्यानुमेय च । अत एव रसषट्केऽपि यद्द्रव्याणा विपाकत्रै-विध्य मधुराम्लकटुकलक्षणमुक्त, तदनया रीत्योपपन्नतर भवति । तथा हि-षड्रसस्याप्यन्नस्य जाठराग्निना पच्यमानस्य रसत्र-योपलक्षितेन मधुराम्लकटुकस्वभावेनावस्थात्रयेण परिणामो भवति । अथ ( ननु, ) अन्नमित्यत्र कस्मात् "अदो जग्धि-र्ल्यप्तिकिति" इति जग्ध्यादेशो न भवति? । ब्रूम । अन्न इति निपातनात् "बहुल छन्दसि" इति बहुलवचनाद्वा जग्ध्या-देशाभाव । ननु, विदाहादम्लता गतमिति सामान्येनोक्तम-युक्तमिवाभाति । यतो द्राक्षेक्षुशर्करादीनामविदाहित्व श्रूयते । अपि च विदाहादीनि च वर्जयेदिति तन्त्रकार ( हृ सू अ. ८।३२ ) पठति । अनया च रीत्या अविदाहिद्रव्याभाव एव स्यात् । तस्मात्सामान्येन विदाहित्वमभ्युपगम्यमानमन्याय्य-मिव मन्यामहे । उच्यते । विदाहस्य द्वैविध्याददोष । इह हि द्विविधो विदाह प्रथितो दोषस्थानकृतो द्रव्यकृतश्च । तत्र हि दोषस्थानकृतस्य ग्रहणम् । [ननु,] आमाशयाच्च्युत-मग्निना पक्कमिति कथमुक्तम् ? यत पक्काशयस्थस्याग्निना पाकोऽनुपपन्न । दूरव्यवधानो ह्यग्निरामाशयस्थ । तस्मात्प-क्काशयस्थस्यान्नस्य पक्कत्वमनुपपन्नम् । अत्रोच्यते । पक्काशयेऽ-प्यास्त पाक , तन्त्रकारवचनात् । तथा हि प्राग्बस्तिविधाव-भ्यधात् ( हृ सू अ १९।३४ )-"यथा वा स्नेहपक्ति स्यादतोऽत्युल्बणमारुतान् । व्यायामनित्यान् दीप्ताग्नीन्" इत्यादि। तदेव पक्काशयस्थस्याप्यनुवासनस्य स्नेहपाकोऽभिहत । तथा पक्काशयेऽप्यग्निना पक्कस्य पुन पाको युक्त एव । तन्त्रान्तरेषु मासादीनामपि विक्लेददर्शनादन्यत्रापि पाकोऽनुज्ञात एव ।

१ 'वगणो' ट त । २ 'ठरे भ' ड ढ ढ । ३ 'नाय' ट । ४ 'सम्प्रात्यर्थं' ण । ५ 'त्यपुनरुक्तमेव' ण. । ६ 'यत्यतस्त' ट । *७ 'फेनभूत' इ ढ ण त ङ ।

१ 'धुररस स' ण त । २ 'त्पत्तेर्दर्श' ट । ३ 'स्थाया मा' इति क्वचित् । ४ 'तत् आ' ट ण । ५ 'पिण्डि' ण । ६ 'जात-मन्न, अ' ट । ७ 'स्वयवे' ट । 'स्वय स' ढ । ८ 'न्येनावि' ट ड ढ त । ९ 'व्यमिह म' ड ढ । 'न्यार्थमेव' ण । १० 'स्य न पक्कत्वमुप' ण त । ११ 'दाहान्त' ड ढ.। १२ 'नुभूत' ण.।

जाठरस्याग्नेः कर्माभिधाय, इदानीमन्येषामप्यग्नीनां कर्माभिधातुमाह—

**भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।**
**पञ्चाहारगुणान्स्वान् स्वान् पार्थिवादीन् पचन्त्यनु ॥**

भूमेरयं भौमः । आप्य इति चिन्त्यम् । आग्नेय इति "अग्नेर्ढक्" इति ढक् । वायव्य इति "साऽस्य देवता" इत्यर्थे "वाय्वृतुपित्रुषसो यत्" इति यत् । तदत्रोपम्यर्थो बोध्यः, वायव्य इव वायव्य इति । के पुनस्ते ? इत्याह—पञ्चोष्माण इति । किम्भूताः ? सनाभसाः । सह नाभसेनोष्मणा पञ्चोष्माणः—पञ्चाग्नयः । भौमः ऊष्मा यावन्नाभसः ऊष्मेति । तदेतेऽग्नयः पञ्चाहारगुणान् अनु—पश्चात्, पचन्ति । कुतोऽनु ? प्रकृतत्वादौदार्याग्निनिर्वर्तितादन्नपाकात् । किम्भूतानाहारगुणान् ? स्वान्स्वान् पार्थिवादीन् । यो यस्य महाभूतोष्मणः पार्थिवादेरात्मीयो गुणः, तं गुणं स एव पार्थिवाद्यूष्मा पचति ।

अनया चोक्त्या आहारः शरीरगतानां भावानां समानगुणानां गुणद्वारेण वर्द्धनहेतुः, विपरीतगुणानां च क्षयहेतुः, इति प्रतिपादयति—

**यथास्वं ते च पुष्णन्ति[1] पक्वा भूतगुणान् पृथक् ।**

ते[2] च—गुणाः, पञ्चमहाभूताश्रिताः । यथास्वं ये येषां महाभूतानामात्मीया गुणाः, ते यथास्वमात्मीयेन वह्निना पक्वा आत्मीयानेव देहस्थान् महाभूतगुणान् पुष्णन्ति । कथं पुष्णन्ति ? इत्याह—पृथक्,—प्रत्येकं कृत्वा, नैकः सर्वे, न सर्वानेकः ।

तामेव प्रत्येकं भूतगुणपुष्टिं पञ्चोष्मपक्वाहारगुणकृतां स्पष्टीकुर्वन्नाह—

**पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान् ॥ ६० ॥**

पार्थिवाः महाभूतगुणाः पार्थिवानेव[3] महाभूतगुणान् देहगान्[4] पुष्णन्ति—वृद्धिं नयन्ति । शेषाः—पार्थिवगुणेभ्यो[5] येऽन्ये महाभूतगुणाः आप्यास्तैजसा वायव्या नाभसाश्च, ते शेषान्—पार्थिवगुणव्यतिरिक्तानाप्यादिमहाभूतगुणान्, पुष्णन्ति—आप्याययन्ति । गुणानां च निराधाराणामसम्भवात् सहाधारेण पृथिव्यादिना महाभूतेन सह पक्वा एते महाभूतगुणास्तथाविधानेव महाभूतगुणान् पुष्णन्तीति सामर्थ्यलभ्योऽर्थः । अत्र चोदयन्ति । ननु, पृथिव्यादिमहाभूतचतुष्टयव्यतिरिक्तस्योद्देशमात्रत्वादाकाशस्य सत्तैव दुर्घटा । कुतः पुनस्तस्योष्मणः सम्भवः ? इति । अत्रोच्यते । आकाशस्य सत्ता तावत् द्रव्यनिर्णयप्रस्तावे प्राक् ( हृ. सू. अ. ९।१ ) प्रतिपादितैव । तथा नासिकाश्रोत्रास्यादिषु सुषिरेषु स्थानेषु स्थित ऊष्मा दाहपाकादीन् कुर्वन् नाभस ऊष्मेत्युपचर्यते । इत्यौपचारिक ऊष्माऽप्यस्योपपन्न एव । एवं पञ्च भौतिका[6] अग्नय एते, एक उदराग्निः, सप्त च धात्वग्नयो वक्ष्यमाणाः, इति त्रयोदशाग्नयः । ननु, पार्थिवाद्यूष्मभिः पक्वस्य पुनर्धातूष्मभिः पाककाले धातूनामपि पाञ्चभौतिकत्वात्तत्रापि पार्थिवाद्यूष्मभावः । तैश्च पार्थिवाद्यूष्मभिः पुनः पाकः, इत्येवमष्टादश प्राप्नुवन्ति । सत्यमेवतत् । किन्तु त एव पञ्चोष्माणः पार्थिवादयः स्थानान्तरप्राप्ता धातूष्माण इति व्यपदेशमासादयन्ति । यथा—उदकं स्थानान्तरगतं लसीकादिव्यपदेशं लभते । तथा चोक्तम्—"तच्छरीरगतं लसीकादिव्यपदेशं प्राप्नोति ।" इति । अन्ये त्वेवमाहुः—"एते त्रयोदशाग्नयः, तथा सप्तसु सिराशतेषु सप्ताग्निशतानि, पञ्चसु मांसपेशीशतेषु च पञ्चाग्निशतानि ।" इति । एवं पञ्चमहाभूतात्मकादाहाराद्यथास्वमग्निना पक्वाद्रसः आहारसारः । तत्रस्थैर्महाभूतगुणैर्देहगा महाभूतगुणा रसधात्वाश्रिता यथास्वमभिवर्द्धन्ते ।

**किट्टं सारश्च[1] तत्पक्वमन्नं सम्भवति द्विधा ।**

तदन्नं पक्वं द्विधा सम्भवति—द्विप्रकारं जायते, किट्टरूपप्रसादरूपतया ।

किट्टमपि यदेतदन्नस्य पक्वस्य, तदप्यच्छानच्छभेदेन द्विधेत्याह—

**तत्राच्छं किट्टमन्नस्य मूत्रं विद्याद्घनं शकृत् ॥ ६१ ॥**

तत्र—तयोरच्छानच्छभेदभिन्नयोः किट्टयोर्मध्यात्, यदच्छमन्नस्य किट्टं तन्मूत्रं विद्यात् । यद् घनं—संहतं, अन्नस्य किट्टं तत् शकृत्—पुरीषं, जानीयात् ।

**सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः ।**

सारः पुनः—प्रसादाख्यो भागो, भूयः सप्तभिरग्निभिः पच्यते । उदराग्निना पञ्चभिश्च भूताग्निभिः पूर्वं पक्वः सन् पश्चात्सारीभूतो धातूष्मभिः पच्यत इति प्रतिपादनार्थं भूयो ग्रहणम् । कथं पच्यते ? यथास्वं,—यस्य सारस्य रसादिसप्तधातुस्थस्य योऽग्निः स आत्मीयः, तेन तेन स स सारः पच्यत इत्यर्थः । रसधातुस्थः सारो रसधात्वग्निना पच्यत इति भावः । चतुर्विधोऽप्याहारो[2]ऽभ्यवहृतो जठराग्निना भूतसहायेन पक्वः किट्टसारतां याति । ततो यः सारः प्रसादाख्यः स पूर्वं हृदयं याति । ततो हृदयान्तःस्थेन व्यानेन विक्षिप्तस्तत्स्थाभिः सिराभिर्दशभिर्मूलभूताभिः कृत्स्नं शरीरमुह्यमानो रसधातुना सहैकतां प्राप्तो रसधात्वाशयस्थेन वह्निना भूताग्निसहायेन पच्यमानो रक्तधातुसारतया परिणमति । रक्तधातुसारतया परिणतो मांसधातुसारतया परिणमति । यावत्स एवाहाररसः क्रमेण गर्भतया परिणमतीति ।

अमुमर्थं[3] द्योतयितुमुवाच—

**रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च[4] ॥ ६२ ॥**
**अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते[5] ।**

रसात्—धातुरसादाहाररसेन सहैकतामापन्नात्, रक्तं प्रजायते—स धातुरसस्तथाभूतो रक्ततया सम्पद्यते । तावद्यावत्स

१ 'पुष्यन्ति' अ ढ । २ 'ते—पञ्चगुणा ' ट । ३ 'व गुणान्' ट ड ढ. । ४ 'न् स्पष्ट कुर्वन्ति पु' ट ड ढ. । ५ 'र्थिवेभ्यो गु' ड ढ. । ६ 'भौता अ' ण.त. ।

१ 'रसस्तथा पक्व' इ । २ 'धो ह्याहा' ड ढ । ३ 'उक्तमेवार्थं' ड.ढ. । ४ 'मेदोऽस्थि मेदस ।' इ.ण.त । ५ 'प्रसादज.' स.च. ।

एव गर्भत्वेनेति योज्यम् । अत्र चोदयन्ति । ननु, यद्याहार रसो व्यानविक्षिप्तो रसधातुना सहैकतां परिणमन् क्रमेण रक्तादीन् भावान् गर्भावसानान् परिणमति । तर्हि कथमुक्त "सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभि ।" इति[2] अत्रोच्यते । कार्ये कारणोपचारादेतदुक्तमित्यवेहि । सारकार्येषु रसरक्तादिषु सप्तभिर्धात्वग्निभि पच्यमानेषु "सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभि ।" इत्युक्तम् । तस्माद्रसादिधातव एव साराख्यान्मूलकारणादुत्थिता परमार्थेन पच्यन्त इति बोध्यम् । ननु, यदि क्रमेणाहाररसाद्रसो रसाद्रक्त रक्तान्मासमित्यादिक्रम आश्रीयते, तत्कथमुक्त ( श्लो ६८ )–"व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।" इति[2] अत्र हि युगपदिति च निर्दिश्यते । युगपत्–एककाल, व्यानेन रसो देहे विक्षिप्यते । विक्षिप्ताच्च रसात् सर्वधातूत्पत्तिरिति प्रत्यज्ञायि । इह च रसरक्तमासादिक्रमेणाहाररसाद्धातुनिष्पत्तिरित्युच्यते । तदेतत् परस्पर विरुद्धमिव लक्ष्यते । ब्रूम । युगपच्छब्दोऽत्र शीघ्रक्रमार्थ । तथा चोवाच साङ्ख्ये ( सा. का. ३० )–"युगपच्चतुष्टयस्य तु वृत्ति क्रमशश्च तस्य निर्दिष्टा ।" इति । अस्यार्थ –मनोबुद्ध्यहङ्कारात्रयश्चक्षु श्रोत्रादीना मध्यादन्यतम इत्येव चतुष्टयमेतत् । अस्य च वृत्तिर्युगपन्निर्दिष्टा क्रमेण च । तत्र युगपद्वृत्तिरुत्पलपत्रशतसूचीभेदनन्यायेन । क्रमेण च वृत्तिर्यथा,–चक्षुरादि रूपादिक पश्यति, मनस्तत्र सशेते[3], बुद्धिर्निश्चिनोति, अह करोमीत्यहङ्कार उद्यमयति । तद्वदत्रापि युगपत्क्रमेण च विक्षेपो न विरुद्ध । अस्त्वेतत् । रसधातुरित्येतत्कथमुक्तम्[2] यतो रसाख्यो धातुस्तेन न विक्षिप्यते, किन्तर्हि[2] आहाररस । अत एव धातुशब्दोपादानमनर्थकम् । ब्रूम । धातुशब्द आधाराभिधेयत्वेनेहोपात्तो रसस्य देहधारणत्व दर्शयितुम् । सर्वेषा हि धातूना यद्देहधारणस्वभावत्व तदाहाररसाप्यायितानामेषाम्, न त्वनाप्यायितानाम् । अत स आहाररसो धातूनामाधार –उद्भवस्थानम् । यथा,–लोके हेमादीना य आधार प्रतिनियतो विशिष्टा मृत् स धातुसञ्ज्ञया भण्यते । इय मृद्धेमधातुरिय रजतधातुरिति । एवमाहाररसो व्यानेन विक्षिप्यते, न रसाख्यो धातु, इति स्थितमेतत् । किञ्च, आहाररसादेककाल सप्तसु धातुस्रोत सु प्रवेशिताद्रसरक्तादयो धातव उत्पद्यन्ते, इति यदैष एककालधातुपोषणपक्ष आश्रीयते, तदानीमिद विरुध्य-

१ 'ता प्राप्त परिणामक्रमेण' इति क्वचित् । २ 'चतुष्टयस्य दृष्टे प्रतिविषयाध्यवसाये युगपद्वृत्ति , बुध्यहङ्कारमनश्चक्षूषि युगपत्–एककाल, रूप पश्यन्ति स्थाणुरयमिति । बुध्यहङ्कारमनोजिह्वा युगपद्रस गृण्हन्ति । बुध्यहङ्कारमनोघ्राणानि युगपद्गन्ध गृण्हन्ति । तथा त्वक्श्रोत्रेऽपि । किञ्च तस्येति चतुष्टयस्य, क्रमशश्च वृत्तिर्भवति । यथा–कश्चित् पथि गच्छन् दूरादेव दृष्ट्वा स्थाणुरय पुरुषो वेति सशये सति तत्रोपरूढ तल्लिङ्ग पश्यति शकुनिं वा, ततस्तस्य मनसा सङ्कल्पिते सशये व्यवच्छेदभूता बुद्धिर्भवति स्थाणुरयमिति, अतोऽहङ्कारश्च निश्चयार्थं स्थाणुरेवेत्येव बुध्यहङ्कारमनश्चक्षुषा क्रमशो वृत्तिर्दृष्टा । यथा रूपे तथा शब्दादिष्वपि बोद्धव्या ।' इति गौडपादभाष्यम् । ३ 'समेति' ड ढ त. । ४ 'आकरा' 'माकर ' 'आकर ' ड ढ त । ५ 'यता वि' ट ढ त ।

१ 'रसाद्रक्त प्रसादजमिति रसात् पाकेन जायते य प्रसादाशस्तसाद्रक्त जायते, एव रक्तात् पाकेन जायते य प्रसादाशस्तसाच्च मास जायत इत्यादि व्याख्येयम् । जनिश्चाय पोषण एव वर्तते नापूर्वोत्पादे । यतो रक्तादयो गर्भात् प्रभृत्येवोत्पन्ना रसादिभि पोष्यन्ते । अन्ये तु "गर्भप्रसादजम्" इति पठित्वा गर्भप्रसादजमिति समस्तपदेन ओज आचक्षते । अस्मिस्तु पक्षे प्रसादजशब्दस्य न सर्वत्रान्वय । ननु, "पुष्यन्ति त्वाहाररसात्" इत्यादिना चरके (सू अ २८।३) रसेन रसपोषणमुक्तम्, अत्र तु रसाद्रक्तमित्यादिना रसेन रक्तपोषणमुच्यत इति विरोध । नैवम् । एक एवायमाहाररसो द्विप्रस्थान पोष्यपोषकभेदेन । तत्रान्नपानादुत्पन्नो रस पोषक , रक्तादिवत् स्थायी य स पोष्य , तस्यैव हृदय स्थानमुक्तम् । [ पोषकाहाररसस्य तु धमन्य एव स्थानम् ] अत एव पोष्यस्थायिरसव्यवच्छेदार्थमाहारेति रसविशेषणमुक्त चरकेण । यत्तु रसाद्रक्तमित्यादिवचन तद्रसत्वेनाभेदविवक्षया रस परित्यज्य रक्तमेव पठित, न तु पोष्यस्य रसाख्यधातोरभावादिति । न चैवमष्टधातुकत्व शरीरस्येति वाच्यम् । यत स्थायिरसभागपोषकरसभागयो स्थानभेदाग्निभेदाद्यभावादेकत्वमेवेति सप्तधातुकमेव शरीरमुच्यत इति । अत्र च रसाद्रक्ताद्युत्पादे केचिदिद वदन्ति,–यद्रसोऽग्निपच्यमान सर्वात्मना रक्तता याति, रक्त च मासतामित्यादि पूर्वपूर्वधातुपरिणामेनोत्तरोत्तरधातूत्पाद । यथा–सर्वात्मना क्षीराद्दधि भवति, दध्नो नवनीत, नवनीताद्घृत, घृताच्च घृतमण्ड , इत्येक पक्ष । किंवा रस एव रक्त प्रथम प्लावयति, तत्र रक्तस्थानसम्बन्धाद्रक्तसादृश्य रक्तव्यपदेश चानुभवति, रक्त च रक्तसमानेन स्तोकेनाशेनास्य पोषयति । ततो रक्तमाप्लाव्य मासमाप्लावयति, तत्रापि माससमानेनाशेन मासपोषण करोति, माससादृश्य मासशब्दाभिधेयता चानुभवति, एवमुत्तरोत्तरधातून् रस एवाप्लावयति । यथा–केदारनिषिक्त कुल्याजल प्रत्यासन्ना केदारीमाप्लावयतीति द्वितीय पक्ष । एतदेवोक्त हारीते यत्,–"रस सप्ताहादर्वाक् परिवर्तमान श्वेतकपोतहरितहारिद्रपद्मकिंशुकालक्तकरसप्रख्यश्चाय यथाक्रम दिवसपरिवर्ताद्वर्णपरिवर्तमान पित्तोष्मोपरागाच्छोणितत्वमापद्यते ।" इति । सुश्रुतेऽपि ( सू अ १४।११)–"तत्रैषा धातूना" इत्यादिना, तथा "स खलु त्रीणि त्रीणि" ( सु सू अ १४।१४) इत्यादिना रसेनैव रक्तादिधातुपोषणमनेन न्यायेनोक्तम्, किंवा आहाररस उत्पन्नो भिन्नैरेव मार्गैः स्थायिरसरुधिरमासादीन् रसरुधिरादिसमानाशेन तर्पयति, तत्र य प्रत्यासन्नो धातुस्तत्पोषको भागस्तत्शीघ्र पुष्णाति, यस्तु विदूरधातुस्तस्य सूक्ष्मविदूरमार्गतया चिरेण पोषण भवति, एव भिन्नैरपि मार्गैर्धातुपोषण भवति । तेन रक्तपोषणकालादुत्तरकाल मासपोषको रसभागो मास पोषयति, तथा मासपोषणकालादुत्तरकाल मेद पोषको रसभागो मेद पोषयतीत्यादि । तेन रसाद्रक्तमित्यादिवचनस्यायमर्थो यत्–रसपुष्टिकालादुत्तरकाल रक्त प्रवर्तते, रक्तपुष्टिकालादुत्तर काल मास प्रव-

ते–"पूर्वो धातु परं कुर्याद्वृद्ध क्षीणश्च तद्विधम् ।" ( हृ सू अ ११।३५ ) इति । यत सर्वे धातव आहाररसेन युगप

तत इत्यादि। अस्मिस्तु पक्षे–"विण्मूत्रमाहारमल सार प्रागीरितो रस । स तु व्यानेन नि(वि)क्षिप्त सर्वान् धातून् प्रतर्पयेत् ॥" इत्यादिवचन मुख्यार्थमेव घटते। तेन यथा खले उपचिताना कपोताना भिन्नदिग्गामिना स्वीयस्वीयमार्गेणैव गच्छता गम्यदेशस्य प्रत्यासन्नत्वविप्रकृष्टत्वादिभेदेन शीघ्र चिरेण वा गमन भवति तद्वत्। इति क्षीरदधिन्यायकेदारीकुल्यान्यायखलेकपोतन्यायात्रिधा धातु पोषणक्रम । तत्र एतेषु पक्षेषु सर्वात्मपरिणामे त्रिचतुरोपवासेनैव देहस्य नीरसत्व स्यात्, मासोपवासाच्च शुक्रमय शरीर स्यादित्युपेक्षणीय एव प्रथम पक्ष । केदारीकुल्यान्यायपक्षे तु रसाद्रक्तादिपोषण मुख्यार्थतया भवति, यदपि रक्तादेर्मासादिपोषण तदपि रसादेव रक्तादिधर्मतया रक्तादिव्यपदेशभाजो भवतीति व्युत्पादित मेव, यत्तु रसस्य सर्वधातुपोषकत्वमुक्तम्, तदपि रक्तादिपोषकतया तथा हृदयस्थस्थायिरसस्य कृत्स्नदेहव्यापकतया वोपपन्नम्। एव चरकेऽप्युक्तम् (चि अ १५।३३)–"व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा । युगपत् सर्वतोऽजस्र देहे विक्षिप्यते सदा ॥" इत्यादि, तदप्युक्तन्यायादेवोपपन्नम् । यदपि मासादिना समानेन मासादेरेव पोषण तदपि धात्वाप्लावनन्यायेन गच्छताऽपि रसेन तद्धातुसमानेनाशेन तद्धातुपोषणादुपपन्नम्। वृष्य तु प्रभावात्। यथा खलेकपोतन्यायेन विदूरमपि शुक्र प्रभावाच्छीघ्र याति, तथाऽत्रापि शीघ्रमेव वृष्योत्पन्नो रसो रक्तादिधातून् शीघ्रमाप्लावयतीति सुघटम्। एवमनया दिशाऽप्यत्र दूषणमुद्धार्यम्। तेनाय पक्षस्तावत् साधु । खलेकपोतपक्षेऽपि यथा रसाद्रक्तमित्यादि गौणतया भवति, तद्दर्शितमेव। यत्तु चरके–"रक्त विबद्धमार्गत्वान्मासादीन् न प्रपद्यते ।"इत्युक्तम्, तत् कृत्स्नदेहचारिशोणिताभिप्रायेण, न तु पोषकरक्ताभिप्रायेणेति व्यवस्थाप्यते । यत्तु "एकैकस्मिन् धातौ त्रीणि त्रीणि" इत्यादिना धातावस्थानकाल उक्त, स पूर्वपूर्वरक्तादिधातुलङ्घनकालो विदूरगामिरसस्येति व्यवस्थाप्यते । एवमनयो पक्षयोर्महाजनपरिगृहीतयोर्गतिरुपदर्शिता। स्वरसस्त्वस्माक केदारीकुल्यान्याये । यत्त्वन्यै खलेकपोतन्यायस्वीकारेण चरके सन्ततज्वरस्य द्वादशाश्रयत्व युक्तमित्याद्युक्त तन्न बुध्यामहे। सन्ततज्वरस्य द्वादशाश्रयत्व दोषमहिम्ना कृत्स्नदेहव्यापकतया "यथा धातूस्तथा मूत्र पुरीष चानिलादय ।" ( च चि अ ३।५५ ) इत्यादिनोक्तम्। दोषाणा च कुपिताना सम्प्राप्तिविशेषात् किमगम्यमस्ति देहे, येन तावद्रसमेव पर सर्वधात्वादिव्यापक सवधातुदूषणेऽपेक्षन्त इति" इति शिवदास ।

अन्नरसादेव सकलधातुपोषणे तन्त्रान्तरीयमत सङ्ग्रहे उक्तम्। यथा (शा अ ६)–"अन्ये तु वर्णयन्ति,–अभ्यवहृतमात्रस्याहारस्य कण्ठनाडीप्रलुठितस्य महानिम्नमवतीर्णस्य यो य एवाश कायाग्निनाऽवलीढ पाकमुपनीयते तस्य तस्यैव प्रसादाख्यो रसलेशोऽभिनिर्वृत्तिसमनन्तर सम समस्तधातुषु सवृतासवृते प्रविसृतो विवृतमुखेष्वासन्नेषु स्रोत सु भूयान् प्रथमतर चान्वेति, पर्यायेणतरेष्वपि। एवमन्नरस एव साक्षात्सर्वधातून् केनचिदेव कालभेदेन पुष्णाति। न पुनर्धातवो धात्वन्तरता स्वरूपोपमर्देन प्रतिपद्य त इति ।" इति।

ध्यानविक्षिप्तेन स्वे स्वे स्रोतस्यवतिष्ठमाना स्वातन्त्र्येणाहाररसाप्यायिता पुष्यन्ति, अनाप्यायिता क्षय यान्ति। तदेव कथ पूर्वस्य धातोर्वृद्धौ परस्य वृद्धि पूर्वस्य धातो क्षये परस्य क्षय स्यात्[1] न हि कदाचिद्धटते मत्रे तृप्ते चैत्र सुहित[2] स्यात्, अतृप्ते वाऽसुहित स्यात्। तथा स्थूलस्य मेद एवोपचीयत इति दृष्टम् । न च सम कृत्वा सप्तसु धातुस्रोत सु विनिक्षिप्ते रसे मेदसोऽधिका वृद्धि कथञ्चिदुपपद्यते। क्रमपरिणामपक्षे तु स्थूलस्याहाररसो रसधातुतया परिणमति । रसधातू रक्ततया, रक्तधातुर्मांसतया, मासधातुर्मेदस्तया परिणमति । मेदस आहारपूर्णस्य[4] स आहाररसो मेदस्त्व प्राप्त पुन प्रतिस्रोतोन्यायेन मासस्य विशेषवती वृद्धिं करोति, अनन्तर रक्तस्य, अनन्तर रसस्य। पुनश्च रसधातुरतिपूर्णो रक्तस्य वृद्धिं विधत्ते, रक्तधातुर्मांसस्य, मासधातुर्मेदम, इत्येवमतिस्थूलस्य मेदोवद्रसादयो मासावसाना अप्युपचीयन्ते । अस्थ्यादयश्चास्थ्यादिस्रोतसा मेदसाऽऽवृतत्वान्न तथोपचीयन्ते। तस्मादाहाररसेन मेदोभावेन परिणमता उदकपरिपूर्णाभिनवमृत्कुम्भजलवत्स्यन्दनन्यायेनास्थ्यादयो धातव केवलमाप्याय्यन्ते, न तु तथोपचीयन्ते । तथा च मुनि ( च सू अ २१।४ )–"स्थूलस्य[5] मेद एवोपचीयते, न तथेतरे धातव ।" इति। अस्य ह्ययमर्थ,–मेदसो येऽन्येऽस्थ्यादय शुक्रावसानास्ते न तथोपचीयन्ते, न पुन पूर्वे रसादयो धातव स्थूलस्य नोपचीयन्त इति । अत एवाह मुनि ( च सू अ २१।९ )–"मेदोमासातिवृद्धत्वाच्चलस्फिगुदरस्तन । अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥" इति। अपि च, यदि क्रमपरिणामपक्षो नोररीक्रियेत तदानी गर्भस्य शुक्रधातुसारोत्पन्नस्य रसादयो मज्जावसाना धातवो न स्यु । कारणानुविधायीनि हि कार्याणि भवन्तीत्युक्तम्। क्रमपरिणामपक्षे पुन शुक्रप्रसादस्य सर्वधातुप्रसादरूपतया परिणतत्वात् स शुक्रप्रसादो गर्भतया परिणमस्तथारूप एव परिणमति। कारणानुरूपत्वात्कार्याणाम्[6]। तथा च बीजकारणे वटधवप्ररोहादो[7] सकलान्यवश्य तत्पदार्थजातानि तथारूपाण्यव्यक्तरूपतया तान्यवतिष्ठन्ते। यानि कार्यरूपतया परिणमन्ति, सर्वाण्यभिव्यक्ति यान्ति कार्ये दृश्यन्ते[8]। ननु, क्रमपरिणामपक्षे धातोर्धात्वन्तरोत्पत्तावाश्रीयमाणायां यो यो धातुर्धात्वन्तरभावेन देहे परिणमति । तस्य तस्य धातोर्धात्वन्तरभावेन परिणतत्वादभाव प्राप्नोति पूर्वस्य पूर्वस्य। ततश्च शुक्रप्रसादस्यैव देहे सद्भाव स्यात्, न रसादीना धातूनाम्। तथा चैवमाहार[9]विनिवृत्तावपि[10] स्त्रीगमनसामर्थ्य स्यात्, शुक्रस्य विद्यमानत्वात्। अत्रोच्यत । अनवच्छिन्नप्रवाहसन्ता-

१ 'चिद्यथा मै' ड ढ त । २ सुहित –तृप्त । ३ 'चासु' त । ४ 'आहारपूर्णे स' ट । 'आधाररसो मेद प्राप्त' ड ढ । 'आधारेऽतिपूर्णे स' त । ५ 'तस्य ह्रे अतिमात्र मेदस्विनो मेद' स च । ६ 'रणस्वरू' ड ढ । ७ 'वटधानकादौ' ड ढ त । ८ 'न्यदृश्यपदा' इति क्वचित्। ९ 'रस्य वि' त । १० 'निवृत्ताव' ट ।

नक्रमेणाशाशिकतया[1] धातूना धात्वन्तरभावापत्ति[2], न तुल्यकाल सर्वैरवयवरुत्पत्ति । इति कृत्वा यो यो धातुर्धात्वन्तरभावेन देहे परिणमति न तस्य तस्य धातो पूर्वस्याभाव प्राप्नोति, सर्वैरवयवैरपरिणतत्वात् । तदेव सर्वथा क्रमपरिणामपक्ष एवाश्रयितु न्याय्य । तथा चाष्टाङ्गसङ्ग्रहेऽप्यधीतम् ( शा अ. ६ )–"तत्राहाररसो व्यानविक्षिप्तो यथास्व सप्तसु धात्वग्निषु क्रमात्पच्यमान स्वात्मभावप्रच्युतिसमनन्तरमेव प्राप्तरक्तादिसञ्ज्ञ कालवदस्खलितप्रयाणो[3] देहमूर्जयन्[4]" इत्यादि । तथा चरकसहितायां दृढबलोऽप्याह ( चि अ १५।१४ )–"रसाद्रक्त ततो मास मासान्मेदस्ततोऽस्थि च । अस्थ्नो मज्जा तत शुक्र शुक्राद्गर्भ[5] प्रसादज ॥ इत्युक्तवन्तमाचार्य शिष्यस्त्विदमचोदयत् । रसाद्रक्त विसदृशात्कथ देहेऽभिजायते ॥ रसस्य न च[6] रागोऽस्ति स कथ याति रक्तताम् । रसाद्रक्तात् स्थिर मास कथ तज्जायते नृणाम् ॥ रसाद्रक्तात्तथा मासान्मेदस श्वेतता कथम् । श्लक्ष्णाभ्या मासमेदोभ्या खरत्व कथमस्थिषु ॥ खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा । मज्ज्ञश्च परिणामेन यदि शुक्र प्रजायते[7] ॥ कथ सर्वगत शुक्र प्रवदन्ति मनीषिण । अथ प्रसादान्मज्ज्ञश्च शुक्र भवति देहिनाम् ॥ छिद्र न दृश्यतेऽस्थ्ना च तन्नि सरति वा कथम् । एवमुक्तस्तु शिष्येण गुरु प्राहेदमुत्तरम् ॥ तेजो रसाना सर्वेषामम्बुजाना[8] यदुच्यते । पित्तोष्मण[9] स रागेण रसो रक्तत्वमृच्छति ॥ वाय्वग्नितेजसा[10] युक्त रक्त मासत्वमृच्छति । श्लेष्माण च समाश्रित्य मास स्नेहाभिसयुतम्[11] ॥ स्थिरता प्राप्य शौक्ल्य च मेदो देहेऽभिजायते । पृथिव्यग्न्यनिलादीना सङ्घात श्लेष्मणा वृत ॥ खरत्व प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम् । करोति तत्र सौषिर्यमस्थ्ना मध्ये समीरण ॥ मेदसा[12] तानि पूर्यन्ते स्नेहो मज्जा तत स्मृत । तस्मान्मज्ज्ञश्च[13] य स्नेह शुक्र सञ्जायते तत ॥ वाय्वाकाशादिभिर्भावै सौषिर्य जायतेऽस्थिषु । येन[14] स्रवति तच्छुक्र नवात्कुम्भादिवोदकम् ॥ स्रोतोभि स्यन्दते देहात्समन्ताच्छुक्रवाहिभि । हर्षेणोदीरित[15] रागात्सङ्कल्पाच्च मनोभवात्[16] ॥ [विलीन घृतवद्व्यायामोष्मणा स्थानविच्युतम् ।] बस्तौ सम्भृत्य निर्याति स्थलान्निम्नमिवोदकम् ।"इति । तथा चरकमुनिरपि साक्षाद्धिजगे (चि अ ८।३७)–"स्रोतसा च यथास्वेन धातु पुष्यति धातुना ।' इति । तथा (च. सू अ २८।३ )–"धातवो हि धात्वाहारा प्रकृतिमनुवर्तन्ते ।" इति । नग्नजिदप्याह–"तत्राहाररसात्पूर्वं रसधातुर्विवर्द्धते । रक्तधातू रसाच्चव रक्ताख्यान्माससमेव च ॥ मेदोधातुस्ततो मासादस्थ्याख्यो मेदसस्तथा । मज्जधातुस्ततोऽस्थ्याख्यान्मज्ज्ञ शुक्राख्य एव च ॥ शुक्रात्पर च गर्भस्य सम्भव परिकीर्तित ।" इति । तस्मात्क्रमपरिणामपक्ष एव युक्त ।

एव रसादीना धातूना प्रसाद दर्शयित्वा, किट्ट यथाक्रम दर्शयितुमाह—

**कफः पित्तं मलाः खेषु प्रस्वेदो नखरोम च ॥ ६३ ॥**
**स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः ।**

कफादयो धातूना क्रमेण मला । रसस्य कफो मल । रक्तस्य पित्त मल । खेषु नासिकाविवरादिषु यो मलोऽन्त सम्भवति स मासस्य मल । य शरीरे प्रस्वेदो–रोमभ्य सलिलसम्भव, स मेदसो मल । नखा रोमाणि चास्थ्ना मल । मज्ज्ञ स्नेहो मल । स्नेह केषा सम्बन्धी ? नेत्रयोस्त्वचो विश –पुरीषस्य,च । यत्तदोज –सर्वधातूना तेज शरीरसम्भव, स शुक्रस्य मल ।

न केवलमाहारस्य प्रसादकिट्टतया द्वैविध्यम्, यावद्धातूनामप्याहाररसाप्यायिताना प्रसादकिट्टतया द्वैविध्यमिति दर्शयन्नाह–

**प्रसादकिट्टौ धातूनां पाकादेवं द्विधर्छतः ॥ ६४ ॥**

धातूना–रसादीना, एवं–अनेन प्रकारेण यथादर्शितेन पाकादग्न्याहितात्, प्रसादकिट्टौ द्विधा ऋच्छत –द्वैविध्य व्रजत । किट्टशब्दस्यात्र पुस्त्व लोकाश्रयत्वाल्लिङ्गस्येति बोध्यम्, अर्धर्चादिषु लपाठ एवास्य ।

**परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा ।**

धातूना स्नेह –सारो धातुस्नेह । आहाररसस्य धात्वात्मना परिणमतो यथायथ धात्वग्निभि पच्यमानस्य क्षीरस्येव शृतस्य सार –तथापाकवशाद्धातूना यथोत्तर यथारूप[1] स्नेहो जायते, तस्य धातुस्नेहस्य परम्परा–आहाररसाप्यायिता याऽव्युच्छिन्नप्रबन्धप्रवृत्ततया विशिष्टैव यथोत्तर धातुस्नेहोत्कर्षक्रमपरिणति, सा धातुस्नेहपरम्परा, परस्परमुपसस्तम्भात्–उपसश्लेषात्, जायते । अत एव शोणितप्रभृतीना धातूनामुत्तरोत्तरं गौरवं–यथोत्तर स्नेहोत्कर्षे ।

इदानी परिणतिकालमाहारस्य निरूपयन्नाह—

**केचिदाहुरहोरात्रात्षडहादपरे, परे ॥ ६५ ॥**
**मासेन याति शुक्रत्वमन्नं पाकक्रमादिभिः ।**

केचिदाचार्या, अहोरात्रात्–रात्रिंदिनेन, अन्न शुक्रत्व यातीत्याहु । कै ? पाकक्रमादिभि । पाकस्य जाठराग्निना भूताग्निभिर्धात्वग्निभी रसरक्तादिपरिपाट्येत्यवप्रकार क्रम, स आदिर्येषा–वीर्यप्रभावादीना, तै । अपरे–अन्ये आचार्या, षडहात्–

१ 'या धातूत्पत्ति' ड ढ । २ 'भावोत्पत्ति' इति क्वचित् । ३ 'तबलप्रमाणो' स द्व । ४ 'मूर्जयित्वा' स द्व । ५ 'दारक' ड ढ । ६ 'च रङ्गोऽस्ति' स च । ७ 'प्रवर्तते ॥ सर्वदेहगत० । अथापि मध्ये मज्ज्ञ' स च । ८ 'वैषा मनुजाना' स च । ९ 'ष्मणा सरा' ट । १० 'सा रक्तमूष्मणा चाभिसयुतम् । स्थिरता' स च । ११ 'स वाय्वग्निस' ण । १२ 'दसस्तानि' स च । १३ 'ज्ज्ञस्तु य' स च । १४ 'तेन' स च. । १५ 'णोच्चालत' ड ढ । १६ [ ] इति पाठो लिखितमुद्रितेषु केषुचिदप्यरुणदत्तटीकापुस्तकेषु नोपलभ्यते ।

१ 'रक्त धातुरसा' इति क्वचित् । २ 'मल.' इ ण ल.अरुण. स स । ३ 'क्रान्भादि' ट । ४ 'भ्मा धातु' स च । ५ 'यितत्याऽ' ण । ६ 'मासात्प्रयाति' स द्व । ७ 'मादिति' स मू ।

षड्भिर्दिनै , अन्न पाककमादिभि शुक्रत्व यातीति वदन्ति। परे– अन्ये, त्वाहु ,–अहोरात्रात्प्रभृति मासे पर प्रमाणावधिरन्नस्य रसादिपाककमादिना परिणमत शुक्रत्वगमने, न तत ऊर्ध्व कदाचिदपि । तथा च पराशरोऽष्टरात्रेणान्न परिणमच्छुक्रत्व यातीति सङ्गिरते। तथा च तद्ग्रन्थ –"आहारोऽद्यतनो यश्च श्वो रसत्व स गच्छति। शोणितत्व तृतीयेऽह्नि, चतुर्थे मासतामपि॥ मेदस्त्व पञ्चमे, षष्ठे अस्थित्व, सप्तमे व्रजेत्। मज्जता, शुक्रतामेति दिवसे त्वष्टमे नृणाम्॥ तस्माद्धि पथ्यापथ्याभ्यामाहाराभ्या नृणा ध्रुवम्। सप्तरात्रेण शुध्यन्ति प्रदुष्यन्ति च धातव॥"इति।

अथैतदन्न रसादिभावेन परिणमच्छुक्रत्व याति। किञ्चिच्छिन्न कृत्वाऽर्थे कालवदनवरत कृत्वा पाककमेण ? अत आह—

**सन्तता भोज्यधातूनां परिवृत्तिस्तु चक्रवत् ॥६६॥**

भोज्याश्च ते धातवश्च भोज्यधातव । भोज्यशब्देनेह यस्य धातोर्य आहारस्तस्य सर्वस्य ग्रहणम्। उक्त हि ( च सू अ २८।३ )–"धातवो हि धात्वाहारा ।" इति । एतदुक्त भवति,–यस्य धातोर्यस्मादुत्पत्ति स तस्याहार इति । भोज्यधातूना परिवृत्ति –परिवर्तन भ्रमण गति , सा चक्रवत्सन्तता– अव्युच्छिन्नप्रबन्धस्वरूपा, आहाररसेनाप्यायितत्वात् ।

एव पूर्वोक्तेन कालावधिना वृष्याद्यपि यद्वस्तुजात तदपि शुक्रत्व यातीत्याशङ्कायामिदमाह—

**वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्वते ।**

वृष्याणि क्षीररसमधुकमाषकूष्माण्डहंसादिपक्ष्यण्डप्रायाणि । तथा, आदिग्रहणाद्विषगरप्रशमनमूढगर्भजरायुनिष्क्रमणक्रियाप्रायाणि। सद्य –तत्क्षणादेव, सुसूक्ष्म दुर्लक्ष्य तथाविध प्रभावमासार्ध तानि परिणमन्ति शुक्रबलादि कुर्वते नापरिणमन्ति ।

**प्रायः करोत्यहोरात्रात्कर्मान्यदपि भेषजम् ॥ ६७ ॥**

वृष्यादिद्रव्यव्यतिरिक्तमन्यदपि भेषज–चूर्णगुटिकादि दीपनादिक्रिय, अहोरात्रेण प्राय स्व स्व कर्म करोति । प्रायोग्रहण किञ्चिद्भेषजमहोरात्रादप्यूर्ध्व किञ्चित्ततोऽप्यर्वाक् वीर्यादिवशात् कर्म करोतीति द्योतनार्थम्।

आहाररसो रसधातुना सहैकतामापन्नो रसरक्तादिभावेन परिणमति यावच्छुक्रप्रसादो गर्भत्वेनेत्युक्तम्। तत्कथ कदाचिदेकदेशे रोगकृद्रुधिरमासाद्येकदेशवृद्धिक्षयविकारकृत्त्वाद्भवति ? इति सशयापनोदार्थमिदमाह—

**व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।**
**युगपत्सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥ ६८ ॥**
**क्षिप्यमाण· खवैगुण्याद्रसः सज्जति यत्र सः ।**
**तस्मिन्विकारं कुरुते खे वर्षमिव तोयदः ॥ ६९ ॥**

आहाररसो जठराग्निना पक्क प्रसादो धात्वाकारत्वाद्धातुवाच्यो यस्माद्व्यानेन सदा सर्वत –सर्वस्मिन् देहे, विक्षिप्यते– विशेषेण प्रेर्यते । सर्वत इत्याद्यादित्वात्तसि । किम्भूतेन ? विक्षेप –प्रेरणमेव, उचित–योग्य, कर्म यस्य, तेन विक्षेपोचितकर्मणा। कथ विक्षिप्यते ? युगपत्–एककालम्, तथाऽजस्र–अनवरतम्। स –रसधातुराहाररसप्रसादाख्यो, व्यानेन विक्षिप्यमाण खवैगुण्यात्–स्रोतोदुष्टे, यत्र प्रदेशे स्वरूपात्प्रच्युतोऽपि सज्जति–सक्त सम्पद्यते, तस्मिन् प्रदेशे देहस्य विकार कुरुते, न सर्वत्र । एतदेव दृष्टान्तद्वारेण स्पष्टयति । खे वर्षमित्यादि। यथा खे–वियति, तोयदो–मेघो, वातवशात् क्षिप्यते वर्ष–वृष्टिं, क्वचिदेव देशे कुरुते, न सर्वत्र । खस्य वैगुण्य खवैगुण्यमिति षष्ठीसमास । "पूरणगुण" इत्यादिना चात्र यथा समासनिषेधो न भवति, तथा "शिरोतीन्द्रिय· दौर्बल्य" ( हृ सू अ ४।९ ) इत्यत्र प्रतिपादितमेव। तस्मिन् विकार कुरुत इत्यत्रात्मनेपद न प्राप्नोति, रसस्य कर्त्रभिप्रायाभावात्। न हि तस्य चित्रमुत्पद्यत इति करोतीति प्राप्नोति । ब्रूम । औपचारिकोऽत्र कर्त्रभिप्राय कल्प्य । अनेनैव न्यायेन 'व्रीहीनातप शोषयति' इत्याद्यप्युपपन्नम्। व्यानो रसधातु यत्र नयति तत्र विकार , इति तावद्रसस्य विक्षेपे ।

**दोषाणामपि चैवं स्यादेकदेशप्रकोपणम् ।**

एवमिति दोषप्रकोपक्रमातिदेशार्थम् । यथा रस क्षिप्यमाण खवैगुण्याद्यत्र सज्जति तस्मिन् विकार कुरुते। एवं–अनेन न्यायेन, दोषाणामपि–वातादीना व्यानेन विक्षिप्यमाणाना, एकदेशप्रकोपण–विकारकरणं, स्यात्। अत एव सिध्मदद्रुश्च यश्वाद्येकदेशे जायते। एव क्षेप्याणा स्वभावस्थानामप्यस्वात· न्त्र्याद्विकारकारित्व भवति ।

**अन्नभौतिकधात्वग्निकर्मेति परिभाषितम् ॥ ७० ॥**

भूतमेव भौतिकम्। विनयादिभ्यष्ठक् । अन्न च भौतिक च धातवश्चान्नभौतिकधातव , तेषामग्निरन्नभौतिकधात्वग्नि , तस्य कर्म अन्नभौतिकधात्वग्निकर्म। इति प्रकारे । इति–पूर्वोक्तेन प्रकारेण, अन्नभौतिकधात्वग्निकर्म परिभाषित–उक्त निश्चयीकृतम् । तत्र "अन्न कालेऽभ्यवहृत" ( श्लो ५५ ) इत्यादिना "कटु मारुतम्" इत्यन्तेन ग्रन्थेन। तथा, अन्न सारकिट्टतया यत्परिणमति तदेतज्जाठराग्ने कर्म। "भौमाप्याग्नेय" ( श्लो ५९ ) इत्यारभ्य "शेषा शेषाश्च देहगान्" इत्येवमन्तेन ग्रन्थेन यन्निर्दिष्ट तद्भूताग्ने कर्म। "सारस्तु सप्तभिर्भूयो" ( श्लो ६२ ) इत्यारभ्य "प्रसादकिट्टौ धातूना" इत्येवमन्तेन यन्निर्दिष्ट तद्धात्वग्निकर्मेति।

१ 'स परोऽवधि' ट । 'मासप्रमा' ड ढ । २ 'धिस्तस्य' ण । ३ 'सञ्जगाद' ण । ४ 'थवा कालवशाद' ण । ५ 'सन्तत्या' स च । ६ 'प्रभावात्तु' स मू । ७ 'शुक्र प्रकु' ढ । ८ 'च तेन शुक्र० ते न परि' ण । ९ 'पनक्रियामहो' ट ड ढ ण त । १० 'देशरो' ट ड ढ । ११ 'देशे वृ० कृद्ध' इति क्वचित्।

१ 'त्वाकर' त । २ 'हारप्र' ड ढ ण त । ३ 'पात्प्रच्यु' ट ण त । ४ 'पत ।' ड ढ.त. । ५ 'रे, एव पूर्वो' ट ण त । ६ 'तदेव जाठ' ट ड ढ ।

**अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः ।**
**तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ॥ ७१ ॥**
**तस्मात्त विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ।**
**पालयेत्प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥ ७२ ॥**

सर्वेषा पक्तॄणा मध्ये योऽन्नस्य पक्ता—पाचको जाठराग्नि, सोऽधिको मत—बलीयानभिप्रेत । तन्त्रकृतामिति शेष । कुत श्रेष्ठ ? इत्याह—तन्मूला इत्यादि । स जाठरानलो, मूल—प्रधान, येषा—भूताग्न्यादीना, ते यस्मात्तन्मूला । मूलमिव मूलम् । यथा, वृक्षादीना प्रधानमवयवो मूल, सर्वेषा हि तद वयवाना जन्मादिषु तत्कारणम्, तेन विना तेषा जन्माद्य सम्भवात् । यस्माच्चैव मूल—सर्वावयवेभ्य प्रधानमवयव । तस्मात्ते—भूतधात्वग्न्य, तद्वृद्धिक्षयवृद्धिक्षयात्मका,—वृद्धिश्च क्षयश्च वृद्धिक्षयौ, तस्य—जाठराग्ने, वृद्धिक्षयौ—चयापचयौ, ताभ्या वृद्धिक्षयौ तद्वृद्धिक्षयवृद्धिक्षयौ, तावात्मा—स्वभावो, येषा ते तद्वृद्धिक्षयवृद्धिक्षयात्मका । एतदुक्त भवति,—जाठरानलवृद्ध्या परेषामग्नीना वृद्धि, तत्क्षयेण तेषा क्षय । तस्मात्त—पाचकमग्निं, विधिवत्—प्रशस्तेन विधानेन, युक्तै —योजितै, अन्नपानेन्धनैर्हितै —पथ्यै, पालयेत् । अन्नपानान्येवेन्धनानि, तै । कथ पालयेत् ? प्रयत —यत्नवान् नावहेलया । हि—यस्मात्, तस्य—अन्नस्य पक्तु, स्थितौ—सद्भावे, आयुर्बलस्थिति—तत्स्थितावायुरवतिष्ठते बल च । तथा चोक्तम् (सङ्ग्रहे चि. अ. १२)—"अग्निमूलं बलं पुसा बलमूल हि जीवितम् ।" इति ।

जाठराग्निमधुना चतुर्विध वक्ति—

**समः समाने स्थानस्थे विषमोऽग्निर्विमार्गगे ।**
**पित्ताभिमूर्च्छिते तीक्ष्णो मन्दोऽस्मिन्कफपीडिते ७३**

समाने वायौ स्थानस्थे—स्वाशयस्थिते सति, समोऽग्निर्भवति । विमार्गगे—मार्गमुज्झित्वोत्पथप्रवृत्ते समाने सति, विषमोऽग्निर्भवति । पित्तेनाभिमूर्च्छिते—एकलोलीभूते समाने, तीक्ष्णोऽग्निर्भवति । अस्मिन्—समाने, कफपीडिते—श्लेष्माभिभूते, मन्दोऽग्निर्भवति ।

**समोऽग्निर्विषमस्तीक्ष्णो मन्दश्चैवं चतुर्विधः ।**

एव—समादिभेदेन, चतुर्विधोऽग्निर्भवति ।

इदानीमस्य चतुर्विधस्याग्नेर्लक्षण वक्ति—

**यः पचेत्सम्यगेवान्नं भुक्तं सम्यक् समस्त्वसौ ॥७४॥**
**विषमोऽसम्यगप्याशु सम्यग्वाऽपि चिरात्पचेत् ।**
**तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम् ॥ ७५ ॥**
**मन्दस्तु सम्यगप्यन्नमुपयुक्तं चिरात्पचेत् ।**
**कृत्वाऽऽस्यशोषाटोपान्त्रकूजनाध्मानगौरवम् ॥७६॥**

वह्निरिति वक्ष्यमाणेन सम्बन्ध । यो वह्नि सम्यक्—यथाविधि, भुक्तमन्न सम्यगेव पचेत्, स सम एव भवति, इति तुशब्दोऽवधारयति । अन्नमिति प्रकृतम् । योऽसम्यगपि—देशकालमात्राविविप्रभ्रष्टमपि, अन्न भुक्तमाशु पचेत्, सम्यग्वाऽन्न भुक्त चिरात्पचेत्, स विषम । योऽसम्यगप्यन्न भुक्त द्राक् पचेत्, स तीक्ष्ण । यस्तु सम्यगप्यन्नमुपयुक्तमास्यशोषादीन् कृत्वा चिरात्पचेत्, स मन्द । आटोप —क्षोभ । मन्देऽग्नौ च सभक्तमेवौषध प्रायेणोपयोक्तु युज्यते । तथा च सङ्ग्रहे पपाठ (सू अ ११)—"यामैश्चतुर्भिर्द्वाभ्या च भोज्यमेपज्ययो समे । पाकोऽग्नौ युक्तयोर्द्राक् च तीक्ष्णे, मन्दे पुनश्चिरात् ॥ सभक्तमौषध तस्मान्मन्दाग्नेरवचारयेत् ।" इति ।

एवमग्निमुक्त्वा, अग्न्यायत्तत्वाद्बलस्य बलत्रैविध्य दर्शयति—

**सहजं कालजं युक्तिकृतं देहबलं त्रिधा ।**

सह जायत इति सहजम्, कालाजात कालजम्, युक्तिभिरुपजात युक्तिजम्, इति देहबलं—शरीरबल, त्रिधा ।

**तत्र सत्त्वशरीरोत्थं प्राकृतं सहजं बलम् ॥ ७७ ॥**
**वयस्कृतमृतूत्थं च कालजं, युक्तिजं पुन. ।**
**विहाराहारजनितं तथोर्जस्करयोगजम् ॥ ७८ ॥**

तत्र—तेषु बलेषु मध्ये, सत्त्वरजस्तम समुत्थ शरीरोद्भूतं च यद्बल तत्प्राकृत—स्वाभाविकम् । सत्त्वशब्देन गुणत्रयमुपलक्ष्यते । शरीर—त्वग्रक्तादिसारमय यद्वस्तुजात तत् । वयो—बाल्ययौवनादि, तेन कृत वयस्कृतम्,—वयोनुसारेण निष्पादितम्, ऋतुभ्यो—हेमन्तादिभ्य उद्भूतमृतूत्थम्, एतदुभयमपि कालज बलम् । वयस्कृतमित्यत्र "अत कृकमि" इत्यनेन स. । युक्तिज पुनर्बल,—विहरण—विहारो वाङ्मनश्चेष्टालक्षणोऽनेकप्रकार, आहार—पूर्वमुक्त, ताभ्या विहाराहाराभ्या जनितं विहाराहारजनित यद्बल तद्युक्तिजम् । युक्ति—योग इतिकर्तव्यता, ततो जात युक्तिजम् । तथा, ऊर्जस्करास्त्विमे योगा—"तद्यथा,—बलवत्पुरुषे देशे जन्म [ तद्विधे च काले ] सुखश्च कालयोगो बीजक्षेत्रगुणशरीराहारसत्वसम्पत्तयश्च" ( स. शा. अ ८) । तथा ये योगा रसायनवाजीकरणोक्ता, तेभ्यो जातमूर्जस्करयोगज यद्बल तदपि युक्तिजम् ।

सम्प्रति देशत्रैविध्यं दर्शयति—

**देशोऽल्पवारिद्रुनगो जाङ्गलः स्वल्परोगदः ।**
**आनूपो विपरीतोऽस्मात्समः साधारणः स्मृतः ७९**

स्तोकजलवृक्षशैलाक्रान्त स्वल्परोगदो जाङ्गलो देश शुद्धस्रोतस्तया । तथा च—मरुदेशोद्भवा अल्परोगाश्चिरंजीविनश्च दृश्यन्ते । अस्मात्—जाङ्गलात्, विपरीतो—बहूदकतरुगिरिसमधिष्ठितो बहुरोगदश्च, आनूप । समस्तु देशो यो नात्यम्बुवृक्षपर्वतो, न चात्यल्पवारितरुगिरि, स साधारणो मध्यस्थरोगारोग्य ।

१ 'जठ' ड ण त । २ 'धानाव' ण । ३ 'तेनैत' ट । ४ 'समस्तु सः' अरुण । ५ 'म्यगेवाशु सम्यगेव चि' अ । ६ 'पभुक्त' इति क्वचित् । ७ अस्याग्रे "शान्तेऽग्नौ म्रियते, युक्ते चिर जीवत्यनामय । रोगी स्याद्विकृते, मूलमग्निस्तस्मान्निरुच्यते ( 'रूप्यते' इ ) ॥" इति अ.इ. पुस्तकयोरधिक सङ्ग्रहश्लोक ।

१ 'पमुक्त' ट. । २ 'तु' ट ण. । ३ 'यदेतद्व' ट.ड. । ४ 'रुषदे' ट. । ५ 'ति त्रिविध देश.द' ढ. । ६ 'रञ्जीवि' ट ।

एव भूमिलक्षण देशमुक्त्वा मज्जादीना परिमाणार्थमाह—

**मज्जमेदोवसामूत्रपित्तश्लेष्मशकृन्त्यसृक् ।**
**रसो जलं च देहेऽस्मिन्नेकैकाञ्जलिवर्द्धितम् ॥ ८० ॥**

मज्जादिद्रव्य जलावसान, अस्मिन्–पौरुषे देहे, एकैकाञ्जलि वर्द्धितम् । तेन मज्ज एकोऽञ्जलि , द्वौ मेदस , यावज्जलस्य देहाश्रितस्य दशाञ्जलय ।

**पृथक् स्वप्रसृतं प्रोक्तमोजोमस्तिष्करेतसाम् ।**
**द्वावञ्जली तु स्तन्यस्य चत्वारो रजसः स्त्रियाः ॥८१॥**

ओजोमस्तिष्कशुक्राणा देहगानां पृथक्–प्रत्येक, स्वप्रसृत प्रमाणम् । स्त्रिया स्तन्यस्य द्वावञ्जली, रजसो–रक्तस्यार्तवस्य चत्वारोऽञ्जलय । स्वेन मानेनाञ्जलिप्रसृताविह हस्तसस्थान-विशेषवाच्यौ गृह्येते, न तु चतुष्पलद्विपलपरिमाणौ मानवाच्यौ, स्वशब्दप्रयोगात् । प्रसृतशब्दे तु मानवाचिनि गृह्यमाणे स्वश-ब्दोऽनर्थक एवेह स्यात् । ननु, यथा मज्जादीना समत्वाधि क्यहानयो विद्यन्ते, तथा पवनस्यापि । तथा च प्राग्भ्य धायि ( हृ सू. अ ११।१ )–"उत्साहोच्छ्वासनि श्वास" इत्यादि । तथा ( हृ सू अ ११।५ )–"वृद्धस्तु कुरुतेऽनिल । कार्श्य" इत्यादि । तथा ( हृ. सू अ ११।१५ )–"लिङ्ग क्षीणेऽनिलेऽङ्गस्य" इत्यादि । तस्माद्वायोरपि प्रमाण वाच्य स्यात् । तत्कथमिह नोक्तम् ? अत्रोच्यते । पवनस्यामूर्तत्वात्प्र माण वक्तुमयुक्तम् । तथा च चरक (?)–"न मानोन्मानता वायोररूपत्वात्तु युज्यते ।" इति । तस्माल्लिङ्गैरेव समत्वाधिक्य-हानयोऽनिलस्य वक्तु युक्ता ।

**समधातोरिदं मानं विद्याद्वृद्धिक्षयावतः ॥ ८२ ॥**

समधातो –समप्रकृते , एतन्मान विद्यात्, नैकदोषाधिकप्र कृतीना द्विदोषाधिकप्रकृतीना वा । तेषा ह्यत एव यथोक्तादञ्ज लिप्रमाणादिकायथायथ मज्जादीना वृद्धिक्षयौ विद्यात् ।

अधुना यदुक्तमायुष्कामीयाध्याये ( हृ. सू अ १।९ )–"शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमे । तैश्च तिस्र. प्रकृतय " इत्यादि सूत्रस्यैव विवरणमाह—

**शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ।**
**यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥८३॥**

शुक्र चासृक् चेत्यादिद्वन्द्व । गर्भिणी–सम्पद्यमाना गर्भ-माता, तस्या भोज्यचेष्टे–आहारविहारौ, एतेषु योऽधिको दोषो–वातादि , तेन प्रकृति सप्तधा–सप्तप्रकारा, [ उदिता– ] अभिहिता, सूत्रस्थाने ( अ. १।१० ) । य इति जातावेक-वचनम् । तेन यो दोषो, यौ दोषौ, ये दोषा , इत्यर्थोऽवति-ष्ठते । एकदोषद्विदोषत्रिदोषप्रकृतिषु यथासङ्ख्यमेको दोषो द्वा दोषौ त्रयो दोषा अधिका इत्यर्थ । ननु, समवातोर्वातादीना समत्वात् कथमिवाधिक्य स्यात् ? ब्रूम । समधातोरपि समाना त्रयाणामपि दोषाणा तस्मिन् काले स्वप्रमाणतो यथास्व तुल्ये-नाधिकत्व भवतीति युक्त तत्राप्याधिक्यम् । यदि वा दोषोऽ-धिक इति बाहुल्येनोक्तम् । तेन षट्स्वेव प्रकृतिषु दोषाधिक्य-भाव , न तु समधाताविति वेद्यम् ।

अधुना वातस्य प्राधान्य षड्भि कारणै प्रदर्श्य वातप्रकृति प्रागभिधत्ते—

**विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात् ।**
**स्वातन्त्र्याद्बहुरोगत्वाद्दोषाणां प्रबलोऽनिलः ॥ ८४ ॥**

विभुत्वात्–व्यापित्वात् । तथा, आशुकारित्वात् । तथा, बलित्वात्, यथा हि वायुर्व्याप्याशुकारी बली च, न तथा पित्तश्लेष्माणौ । तथा, अन्यकोपनात्, स्वजातीयापेक्षयाऽन्यो–पित्तश्लेष्माणौ, अनेन यथा कोप्येते, न ताभ्या तथाऽयम् । तथा, स्वातन्त्र्यात्–प्रेरकत्वात्, तथा हि नासावन्येन प्रेर्यतेऽत स्वत-न्त्रोऽसौ । तथा, बहुरोगत्वात् । तथा चोक्तम्–"अशीतिर्वातजा रोगाश्चत्वारिंशच्च पित्तजा । विंशति श्लेष्मजाश्च" इति । एव त्रयाणा दोषाणा मध्येऽनिल प्रबल –प्रधानम् ।

**प्रायोऽत एव पवनाध्युषिता मनुष्या**
**दोषात्मकाः स्फुटितधूसरकेशगात्राः ।**
**शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टा-**
**सौहार्ददृष्टिगतयोऽतिबहुप्रलापाः ॥ ८५ ॥**
**अल्पवित्तबलजीवितनिद्राः**
**सन्नसक्तचलजर्जरवाचः ।**
**नास्तिका बहुभुजः सविलासा**
**गीतहासमृगयाकलिलोलाः ॥ ८६ ॥**
**मधुराम्लपटूष्णसात्म्यकाङ्क्षाः**
**कृशदीर्घाकृतयः सशब्दयाताः ।**
**न दृढा न जितेन्द्रिया न चार्या**
**न च कान्तादयिता बहुप्रजा वा ॥ ८७ ॥**
**नेत्राणि चैषां खरधूसराणि**
**वृत्तान्यचारूणि मृतोपमानि ।**
**उन्मीलितानीव भवन्ति सुप्ते**
**शैलद्रुमांस्ते गगनं च यान्ति ॥ ८८ ॥**
**अधन्या मत्सराध्माताः स्तेनाः प्रोद्बद्धपिण्डिकाः ।**
**श्वशृगालोष्ट्रगृध्राखुकाकानूकाश्च वातिकाः ॥ ८९ ॥**

१ 'माणमा' ट. । २ 'स्तस्य' ट । ३–४ 'माणोन्मान' 'तून्मान' ट ड । ५ 'च दारुक ' ट. । 'च दारक ' ड. । ६ 'इद मान' ट । ७ 'नैतदनेक' ण त । ८ 'च' ण । ९ 'सप्तधा स्मृता' इ । १० 'मानग' ण ।

१ 'कता भ' ट ड. । २ 'वातेन' ण त । ३ 'शत्रु पि' ड । ४ 'एषा त्र' ट ड । ५ 'प्रवर –' ट ड. । ६ 'हपपित्त' अ ण । ७ 'त्तकफजी' अ इ । ८ 'याना ' अ । ९ 'वैषां' इ त । १० 'प्रोद्वृत्तपि' अ ।

प्रायोग्रहण क्वचिद्व्यभिचारार्थम् । अत एव–अस्मादेव कारणात्, पवनाध्युषिता –वायुनाऽधिष्ठिता , मनुष्या प्राय एवरूपा भवन्ति । कारणानुविधायित्वात् कार्याणाम् । दोषात्मका –न तु गुणस्वभावा , न शुभस्वभावा भवन्ति । शुक्रार्तवरूपावस्थामारभ्याजीवित पवनाध्युषिता मानवा स्फुटितधूसरकेशगात्रा । स्फुटितानि धूसराणि च केशगात्राणि येषा त एवम् । तथा, शीत द्विषन्तीति शीतद्विष , उष्णाभिलाषित्वात् । तथा, चला धृत्यादयो गलन्ता येषा ते तथोक्ता । तथा, अतिशयेन बहु प्रलाप –सम्भाषण, येषा त एवम् । वसन्ततिलकावृत्तम् । अल्पा वित्तादयो निद्रान्ता येपा त एवम् । तथा, सन्ना सक्ता चला जर्जरा वाक् येषा त एवम् । केषाञ्चित्सन्ना–अवसाद नीता, केषाञ्चित्सक्ता–भाषणे विलम्ब्य विलम्ब्य प्रवृत्ता, केषाञ्चिच्चला, केषाञ्चिज्जर्जरा–भिन्नकांस्यस्वनसदृशी वागिति । तथा, नास्ति परलोक इत्येव मतिर्येषा ते नास्तिका । "अस्ति नास्ति दिष्ट मति " इति ठक् । तथा, बहुभुज –अनल्पाशना । तथा, सविलासा –सलीला । तथा, गीतहासादिलोला –तत्प्रिया । स्वागतावृत्तम् । तथा, मधुराम्लपटूष्णसात्म्या मधुराद्यभिलाषिणश्च । कृशाश्च ते दीर्घाकृतयश्च, ते कृशदीर्घाकारा । तथा, सशब्द यात–गमन, येषां ते सशब्दयाता । न दृढा –न दृढशरीरा । न जितेन्द्रिया । न चार्या –असन्त । कान्ताना– स्त्रीणा, न च दयिता.–[न] अभिमता । न च बहुप्रजा –अपि तु स्वल्पसन्तत्तय । "या(र्या)वन्त (न्त) शेषं(ष) पूर्वसाम्यादौपच्छन्दसिक वदन्ति सन्त ।" एषा च–वातप्रकृतीना, नेत्राणि खराणि–परुषाणि, तथा धूसराणि–पांसुनेवावकीर्णानि, वृत्तानि–वर्तुलानि, अचारूणि, मृतोपमानि च, तथा सुप्ते–स्वप्ने, उन्मीलितानीव–उद्घाटितानीव, भवन्ति । ते–वातप्रकृतय , स्वप्ने सति शैलद्रुमान् गगन च गच्छन्ति । इन्द्रवज्रावृत्तम् । ते च, अधन्या –अभव्या , मत्सरेणाध्माता –द्वेषपूर्णा । तथा, स्तेना –चौरा । प्रोद्बद्धपिण्डिका –जङ्घाया पश्चिमाद्भागात् प्रकर्षेणोन्नता पिण्डिका येषा त एवम् । अनूक–स्वभाव , स्वररूपचेष्टानुकरणम् । श्वादीनामिवानूक येषां–वातिकाना, त एवम् । वातिका इति भूम्नि मत्वर्थीयष्ठक् , वातभूयिष्ठा इत्यर्थ ।

अधुना पित्तप्रकृतिलक्षण प्रस्तौति—

**पित्तं वह्निर्वह्निजं वा यदस्मा-**
**त्पित्तोद्रिक्तस्तीक्ष्णतृष्णाबुभुक्षः ।**
**गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः**
**शूरो मानी पिङ्गकेशोऽल्परोमा ॥ ९० ॥**

**दयितमाल्यविलेपनमण्डनः**
**सुचरितः शुचिराश्रितवत्सलः ।**
**विभवसाहसबुद्धिबलान्वितो**
**भवति भीषु गतिर्द्विषतामपि ॥ ९१ ॥**
**मेधावी प्रशिथिलसन्धिबन्धमांसो**
**नारीणामनभिमतोऽल्पशुक्रकामः ।**
**आवासः पलिततरङ्गनीलिकाना**
**भुङ्क्तेऽन्नं मधुरकषायतिक्तशीतम् ॥ ९२ ॥**
**घर्मद्वेषी स्वेदनः पूतिगन्धि-**
**र्भूर्युच्चारक्रोधपानाशनेर्ष्यः ।**
**सुप्तः पश्येत्कर्णिकारान्पलाशान्**
**दिग्दाहोल्काविद्युदर्कानलांश्च ॥ ९३ ॥**
**तनूनि पिङ्गानि चलानि चैषां**
**तन्वल्पपक्ष्माणि हिमप्रियाणि ।**
**क्रोधेन मद्येन रवेश्च भासा**
**रागं व्रजन्त्याशु विलोचनानि ॥ ९४ ॥**
**मध्यायुषो मध्यबला पण्डिताः क्लेशभीरवः ।**
**व्याघ्रर्क्षकपिमार्जारयक्षानूकाश्च पैत्तिकाः ॥ ९५ ॥**

धन्वन्तरिमतेन पित्तमेव वह्नि ,पाकादिकर्मकरणात् । अथवा वह्निज–वह्नेर्जात, अग्न्याधारत्वात् । यदस्मात्–यतश्चैवमतो हेतो , पित्ताधिक पुरुषस्तीव्रतृष्णाबुभुक्षो भवति । तथाविधात्कारणादुत्पन्नत्वात् अब्धातु रसधातुश्च तस्य द्रागेव शुष्यतीति भाव । तथा, गौर उष्णाङ्गश्च । तथा, ताम्रवर्ण हस्ताङ्घ्रिवक्त्र यस्य स एवम् । तथा, शूरो मानी च । तथा, कपिलकेशोऽल्परोमा च । शालिनीवृत्तम् । दयितानि माल्यादीनि यस्य स एवम् । तथा, सुचरित –शोभनचेष्टित । तथा, शुचि –कायवाङ्मनोव्यापारैर्मलिनैरसस्पृष्ट । आश्रिताना वत्सल –प्रियकृत्, विभवादियुक्तश्च । तथा, भीषु–भयेषु, द्विषतामपि गति शरण्यत्वाद्भवति । अपिशब्दात्सुहृदा मध्यस्थाना किमु स गतिर्न भवति ? इति द्योतयति । द्रुतविलम्बित वृत्तम् । मेधावीति प्रशसायं "अस्मायामेधास्रजो विनि " इति विनि । सन्धिबन्धाश्च मांसानि च, तानि प्रशिथिलानि यस्य स एवम् । तथा, स्त्रीणामनभीष्ट । अल्पौ शुक्रकामौ यस्य स एवम् । पलितादीनामावास –तान्यस्य बहूनि सन्तीत्यर्थ । स च मधुराद्यन्नं भुङ्क्ते । प्रहर्षिणीवृत्तम् । घर्मद्वेषीति "बहुलमाभीक्ष्ण्ये" णिनि । स्विद्यतीति स्वेदन । पूतिर्गन्धो यस्य स पूतिगन्धि । "गन्धस्येदुत्पूति" इत्यादिना इदादेश. । भूरय.–

1 'स्यात आर' ड । 'स्या आर' त । 2 'प –असक्कृद्वाप' ट । 3 'पित्ता' ट ड । 4 'म्भ्य प्रवृ' ड.ण त । 5 'स्वध्वनिस' ट । 6 'स्ति दिष्टे मति' ट ड ण त । 7 'पर्यन्ते यौं तथैव शेषमौपच्छन्दसिक सुधीभिरुक्तम् ।" इति वृत्तरत्नाकरे ( अ० २।१३ ) । 8 'स्वरूप' ट ड । 9 'स्तीव्रतृ' अ. ।

1 'वैषां' इ । 2 'रवृकानु' भा प्र । 3 'त् । ततो जात किट्टरूपतयाऽसृज किट्ट पित्तम् । य' ण त । 'त् । किट्टरूपतया जातमसृजो मल पित्तम् । य' इति क्वचित् । 4 'केश. स्वल्प' ट । 5 'ससृष्ट ' ट । 6 गति –रक्षणकृत् । 7 'ण्यवान् भव' इति क्वचित् । 8 'गतिर्भ' ड. ।

प्रभूता , उच्चारादयो यस्य स एवम् । स च पैत्तिक सुप्त सन् कर्णिकारादीन् पश्येत् । शालिनीवृत्तम् । एषा च-पैत्तिकाना, विलोचनानि तनुत्वादिगुणयुक्तानि भवन्ति । तानि च क्रोधाद्यै-र्द्रागेव लौहित्य यान्ति । उपजातिवृत्तम् । ते च पैत्तिका मध्या-युष्ट्वादियुक्ता भवन्ति । व्याघ्रादीनामिवानूक येषा त एवम् ।

अथ श्लेष्मप्रकृतिलक्षणार्थमाह—

**श्लेष्मा सोम. श्लेष्मलस्तेन सौम्यो**
**गूढस्निग्धश्लिष्टसन्ध्यस्थिमांसः ।**
**क्षुत्तृड्दुःखक्लेशघर्मैरतप्तो**
**बुद्ध्या युक्तः सात्त्विकः सत्यसन्धः ॥ ९६ ॥**
**प्रियङ्गुदूर्वाशरकाण्डशस्त्र-**
**गोरोचनापद्मसुवर्णवर्णः ।**
**प्रलम्बबाहुः पृथुपीनवक्षा**
**महाललाटो घननीलकेशः ॥ ९७ ॥**
**मृद्वङ्ग. समसुविभक्तचारुदेहो**
**बह्वोजोरतिरसशुक्रपुत्रभृत्यः ।**
**धर्मात्मा वदति न निष्ठुरं च जातु**
**प्रच्छन्नं वहति दृढं चिरं च वैरम् ॥ ९८ ॥**
**समदद्विरदेन्द्रतुल्ययातो**
**जलदाम्भोधिमृदङ्गसिंहघोषः ।**
**स्मृतिमानभियोगवान् विनीतो**
**न च बाल्येऽप्यतिरोदनो न लोलः ॥९९॥**
**तिक्तं कषायं कटुकोष्णरूक्ष-**
**मल्पं स भुङ्क्ते बलवांस्तथाऽपि ।**
**रक्तान्तसुस्निग्धविशालदीर्घ-**
**सुव्यक्तशुक्लासितपक्ष्मलाक्षः ॥ १०० ॥**
**अल्पव्याहारक्रोधपानाशनेहः**
**प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः ।**
**श्राद्धो गम्भीरः स्थूललक्षः क्षमावा-**
**नार्यो निद्रालुर्दीर्घसूत्रः कृतज्ञः ॥ १०१ ॥**
**ऋजुर्विपश्चित्सुभगः सुलज्जो**
**भक्तो गुरूणां स्थिरसौहृदश्च ।**
**स्वप्ने सपद्मान्सविहङ्गमालां-**
**स्तोयाशयान् पश्यति तोयदांश्च ॥ १०२ ॥**
**ब्रह्मरुद्रेन्द्रवरुणतार्क्ष्यहंसगजाधिपैः ।**
**श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहाश्वगोवृषैः ॥ १०३ ॥**

यस्माच्छ्लेष्मा सोम , तेन हेतुना श्लेष्मलो नर सौम्यो भवति । कारणानुविधायित्वात्कार्याणाम् । सोम इव सौम्यः, शाखादित्वाद्यत् । तथा, गूढस्निग्धश्लिष्टानि सन्ध्यस्थिमासानि यस्य स एवम् । तथा, क्षुदादिभिरतप्त —अक्षोभितो भवति । तथा, बुद्ध्याऽन्वित प्रशस्तसत्त्वश्च । तथा, सत्य सन्दधाति— प्रतिजानीते, इति सत्यसन्ध । "आतश्चोपसर्गे" इत्यङ् । शालिनीवृत्तम् । प्रियङ्ग्वादितुल्येन वर्णेन एकैकेन युक्त । कश्चित्प्रियङ्गुसमानवर्णं कश्चिद्दूर्वासदृशवर्णं कश्चिच्छरस्तम्ब-सदृशवर्णं कश्चिच्छस्त्रतुल्यवर्णं कश्चिद्गोरोचनातुल्यवर्णं कश्चि त्पद्मतुल्यवर्णं , कश्चित्सुवर्णसदृशवर्णं । तथा, प्रलम्बबाहु'— दीर्घभुज । तथा, विस्तीर्णपीवरवक्षा । तथा, महल्ललाट— अलिक, यस्य स तथा । तथा, घननीलकेश । उपजाति-वृत्तम् । मृद्वङ्ग —कोमलावयव । सम सुष्ठु विभक्तो—विभक्ता-वयव , चारुर्देहो यस्य स एवम् । बह्वयस्तेजोरतिरसादयो यस्य स एवम् । तथा, धर्मस्वभाव । निष्ठुर न कदाचिद्वदति । प्रच्छन्नं—गूढं कृत्वा, वैर दृढ चिर वहति—न तु शिथिलयति । प्रहर्षिणीवृत्तम् । समदस्य द्विरदेन्द्रस्य तुल्यं यात—गमन, यस्य स एवम् । तथा, जलदादिसदृशशब्द । तथा, प्रशस्तस्मृति शोभनाभियोगी विनयी च भवति । बाल्येऽपि—बालत्वेऽपि, नातिरोदनो न च लोलुप । औपच्छन्दसिक वृत्तम् । स चान्न तिक्तादिरसयुक्तं बलक्षेपक भुङ्क्ते, तथाऽल्पमपि भुङ्क्ते, तथाऽपि स्वभावाद्बली भवति । रक्तावन्तौ ययोस्ते रक्तान्ते, तथा सुस्निग्धे विशाले दीर्घे च, तथा सुव्यक्तौ शुक्लासितौ ययोस्ते सुव्यक्तशुक्लासिते, तथा पक्ष्मले, एवंभूते अक्षिणी यस्य स एवम् । इन्द्रवज्रावृत्तम् । अल्पा व्याहारादयो यस्य स एवम् । [ *व्याहारो—भाषणम् । पान—पानीयादि । अशन—भोजनम् । ईहा—कायिका चेष्टा ।] प्राज्ये—प्रभूते, आयुर्वित्ते यस्य स एवम् । दीर्घदर्शी—भावि कार्य पश्यति, इद कुर्वत इदमवश्य सम्पद्यत इति । वदान्यो—वल्गुभाषी दाता च । श्राद्धो—दानादौ श्रद्धा-वान् । गम्भीरो—महाचित्त । स्थूललक्षो—भूरिदाता । क्षमा-वान्—क्षान्तियुक्त । आर्य —सज्जन । निद्रालु —बहुनिद्र । दीर्घ-सूत्र —चिरकारी । कृत जानातीति कृतज्ञ. । वैश्वदेवीवृत्तम् । ऋजु —अकुटिलचित्त । विपश्चित्—पण्डित । सुभगो—जनप्रिय । सुष्ठु लज्जत इति सुलज्ज । गुरूणा—पित्रादीना, भक्त —सेवक । तथा, स्थिर—दृढं, सौहृद—मैत्री, यस्य स एवम् । स्वप्ने तोया-शयान्—तडागादीन्, सजलजान् पक्षिपङ्क्तियुक्तांश्च पश्यति, तोयदांश्च पश्यति ।

१ 'रुवर्मा' ण त । २ 'यानो' इ । ३ 'ङ्गशङ्खघो' भा प्र । ४ 'नेष्ट्यं.' इ । ५ 'युर्वृत्तो' अ चन्द्र । ६ 'लक्ष्य.' इति क्वचित् । ७ 'सूत्री' अ इ स मू । ८ 'सलज्जो' अ.इ.त.स. द्व. । ९ 'सौहृदय्य ' स स ।

१ 'रकाण्डस' ड । २ 'लाटफलक' ट । ३ 'यान—' ट । ४ 'बालभावेऽपि' ट । ५ 'दि सु' ट त । ६ [ ] इति पाठो ण त पुस्तकयोर्नोपलभ्यते । ७ 'प्राज्य—प्रभूत, आयु —जीवित, चारित्र्य च यस्य' इति चन्द्र । ८ 'यस्य प्रसादादाकारे क्रोधशो-कभयादिका । अवस्था नोपलभ्यन्ते तद्गाम्भीर्यमिति स्मृतम् ॥' इतीन्दुचन्द्रौ । ९ 'लक्ष्यो—' ट । 'अल्प दातु न शक्नोति स्थूल-लक्ष स उच्यते ।' इतीन्दु । १० 'सूत्री—चिरकालकार्यकारी' ट.।

उपजातिवृत्तम् । ब्रह्मादिभि श्लेष्मप्रकृतय समाना., सिंहादिभिश्च । [ *तार्क्ष्यो–गरुड । गजाधिप –ऐरावत । ]

एव पृथग्वातादिप्रकृतीस्तिस्रोऽभिधाय द्वन्द्वसर्वदोषप्रकृतिलक्षणाभिधित्सयेदमाह—

**प्रकृतीर्द्वयसर्वोत्था द्वन्द्वसर्वगुणोदये ।**

द्वयात्–संसर्गात्, उद्भूतास्तिस्र प्रकृतय , सर्वोत्था–सर्वदोषोद्भूता, एका प्रकृति , एव प्रकृतयो द्वयसर्वोत्थाश्चतस्र । गुणशब्दोऽत्र धर्मवचनो लिङ्गवचनो वा । द्वन्द्वशब्देन दोषद्वय सर्वशब्देन च दोषत्रयं लक्ष्यते । द्वन्द्वं च सर्वे च द्वन्द्वसर्वे, तेषा गुणा –दोषद्वयदोषत्रयाणा धर्मा लिङ्गानि वा, तेषामुदय –प्रादुर्भावो, द्वन्द्वसर्वगुणोदय , तस्मिन् द्वन्द्वसर्वगुणोदये सति, द्वयसर्वोत्था प्रकृतीर्वदेत्–आदिशेत् । द्वय च सर्वे च द्वयसर्वे, तेभ्य उत्थ –उत्थान, यासा ता । एव द्वन्द्वदोषगुणोदये द्वन्द्वोत्था प्रकृतीर्वदेत्, सर्वदोषगुणोदये सर्वोत्था प्रकृतिं वदेत् । उत्थ इत्युत्पूर्वात्तिष्ठते "सुपि स्थ" इति योगविभागात्क । "उद स्थास्तम्भो पूर्वस्य" इति पूर्वसवर्णादेश । "अत्राद्यास्त्रयो नित्यातुरा दोषानुशयितैशरीरत्वात् । विशेषतश्च द्वन्द्वप्रकृतय । तेषु हि गुणमिश्रविकारकारिषु क्षुत्पिपासादिष्विवारोग्यव्यपदेश " ( स शा अ ८ ) ।

एवं वातादिप्रकृतीर्निर्दिश्य, सत्त्वादिप्रकृतीर्निर्दिदिक्षुराह—

**शौचास्तिक्यादिभिश्चैवं गुणैर्गुणमयीर्वदेत् ॥१०४॥**

चशब्दो भिन्नक्रमे, गुणमयीश्चेत्यत्र द्रष्टव्य । एव–वातादिप्रकृतिवत्, पृथग्द्वन्द्वसर्वोत्था शौचास्तिक्यादिभि सत्त्वादिगुणै ( श्लो. ७ ) सप्त सत्त्वादिगुणमयीश्च प्रकृतीर्वदेत् । आदिग्रहणात् शुक्लधर्मरुच्यादिभि सत्त्वादीना गुणैर्यथायथ सत्त्वादिप्रकृतीर्वातादिप्रकृतय परस्परमनुरुध्यन्ते, सत्त्वादिप्रकृतयश्च वातादिप्रकृतीरनुरुध्यन्ते । एव वातादिप्रकृतय सप्त, सत्त्वादिप्रकृतयोऽपि सप्तैव । जातिकुलदेशकालवयोबलप्रत्यात्मसंश्रयैश्च सप्तैव । तथा हि–दृश्यन्ते पुरुषाणा जात्यादिनियतास्ते ते भावविशेषा परस्परविलक्षणा सत्त्वाद्यसङ्ख्येयभेदानेशाच्च रूपस्वरचरितानुकरणमप्यनूकशब्दवाच्यमसङ्ख्यभेद भवति । सत्त्वाद्यावेशस्त्वनन्तरजन्माभ्यासवासनया जन्यते । तस्माद्देवमानुषतिर्यक्प्रेतनारकाणा तत्तद्विशेषाणां च यथायथमेवानूक पुरुषस्यान्वीक्षेत । यस्माच्छरीर सत्त्वादीननुरुध्यते, सत्त्वादयोऽपि शरीरम् । प्रकृतिविभागश्चाय तदनुरूपचिकित्साप्रवृत्तये वैद्यस्योपयुज्यते । तत्राद्यास्त्रयो नित्यातुरा , दोषानुशयितैशरीरत्वात् । विशेषतश्च द्वन्द्वप्रकृतय । तस्माद्विपरीतगुणेन विधिना दोषोपक्रमणीयोक्तेन तानुपाचरेत् । समधातुप्रकृतिस्तु सर्वरसेन सात्म्येनोपचरणीय । तथा च मुनि ( च सू अ. ७।४१ )– "समसर्वरस सात्म्य समधातो प्रशस्यते ।" इति ।

एवं वातादिप्रकृती सत्त्वादिप्रकृतीश्च परस्परानुरोधिनीर्निर्दिश्य, वयोज्ञानार्थमाह—

**वयस्त्वाषोडशाद्बालं तत्र धात्विन्द्रियौजसाम् ।**
**वृद्धिरासप्ततेर्मध्यं तत्रावृद्धिः परं क्षयः ॥ १०५ ॥**

कालकृता शरीरावस्था–वय । तच्च त्रिधा, बालमध्यवृद्धभेदेन । वय पुनराषोडशाद्वर्षात्–षोडश वर्ष यावत्, बालम् । तदपि त्रिविधम्,–क्षीरक्षीरान्नान्नवृत्त्या । तत्र–बाले वयसि, धातूना–रसादीना, इन्द्रियाणा–चक्षुरादीनां, तथा सर्वधात्वाप्यायकस्य–ओजसो, वृद्धि । श्लेष्माधिक्याच्च बालस्य स्नेहमार्दवसौकुमार्याल्पक्रोधत्वसौभाग्यानि भवन्ति । आसप्ततेर्मध्यं वय । आङत्र मर्यादायाम्, नाभिविधौ । ततश्चैकोनसप्ततिं यावन्मध्य वय । तदपि त्रिविधम्,–यौवन सम्पूर्णत्वम परिहानिश्च । तस्मिन् पित्तोद्रेक, तेन दीप्ताग्निता प्रज्ञापरिपाको व्यवसायश्चेति भवति । तत्रात्रिंशतो यौवनम्, आचत्वारिंशत सर्वधात्विन्द्रियबलवीर्यपौरुषस्मरणवचनविज्ञानप्रश्रयगुणसम्पूर्णत्वम्, अत परमपरिहानि । तत्रेत्यादि । [ तत्र– ] तस्मिन्मध्ये वयसि, धात्वादीनामवृद्धि –अवर्धन, भवति । परं क्षय । पर–एकोनसप्ततेराजीवित यावत्, धात्विन्द्रियौजसा क्रमेण क्षय , तथा बलवीर्यपौरुषवचनस्मरणविज्ञानप्रश्रयगुणाना च । तथा, "वलीपलितकासश्वासाग्निसादादिभिरभिभूयमानं जीर्णं भवनमिवाभिवृष्ट सीदति । तस्मिन्मारुतोद्रेक , तेन श्लथासारमाससन्ध्यस्थिता त्वक्पारुष्यमवनाम कायस्य वेपथु श्लेष्मसिङ्घाणकोदीरण धातुक्षयश्च" ( स शा. अ. ८ ) । इति ।

**स्वं स्वं हस्तत्रयं सार्द्धं वपुः पात्रं सुखायुषोः ।**
**न च यद्युक्तमुद्रिक्तैरष्टाभिर्निन्दितैर्निजैः ॥ १०६ ॥**
**अरोमशासितस्थूलदीर्घत्वैः सविपर्ययैः ।**

स्वस्व–आत्मीयमात्मीय, हस्तत्रय सार्द्धं प्रमाणतो यद्वपु –शरीर, तत्सुखायुषो पात्रं–भाजनम् । एवंभूतमपि यत्–वपु , उद्रिक्तै –अधिकैर्निमित्तै , निन्दितै –अप्रशस्तै , निजै –सहजै , अष्टाभिर्न युक्तम् । कै ? अरोमशादिभि । तेनारोमश यद्वपुस्तत्सुखायुषोर्न पात्रम् । तथा, यदतिरोमश तच्च सुखायुषोर्न पात्रम् । असितादिष्वप्येव योज्यम् । एवमीषद्रोमादियुक्त यद्वपुर्नर्हस्तत्रयं सार्द्धं तत्सुखायुषो पात्रम् ।

१ 'तत्रा' स.द्व. । २ आद्यास्त्रय –वातजा पित्तजा श्लेष्मजा च । ३ 'तत्प्रकृतिरवा' स द्व । ४ 'प्रकृत्या' ट.ण त । ५ 'याच्च स' त. । ६ 'णा । वातादिसत्त्वा' ट. । ७ 'भेदवशा' ट । ८ 'नशब्दैर्वाच्य' ट । ९ 'तद्धि' ट ण त. । १० 'देव ।' ट ।

१ 'निश्चित्य व' ट । २ 'देनेत्याह । व' ट ण त । ३ 'त्रस्य वृ' ट ण त । ४ 'प्रज्ञाधिक्यपरिपाकौ' स द्व. । ५ 'कोऽध्यव' ट । ६ 'पर क्षय –सप्तते प्रभृत्याजीवित वृद्ध वय , तत्र वयसि धात्वादीना क्रमेण क्षय । बालमध्ययोर्वयसो. श्रवणात्तृतीयमप्येतदनुक्तमर्थादुक्त भवति ।' इति चन्द्रनन्दन । ७ 'लीखलतिका' स द्व । ८ 'श्लथसार' स.स. । ९–१० 'वेत्रम्' 'यद्वपुर्ह' ट ।

**सुस्निग्धा मृदवः सूक्ष्मा नैकमूलाः स्थिराः कचाः ॥**
**ललाटमुन्नतं श्लिष्टशङ्खमर्धेन्दुसन्निभम् ।**
**कर्णौ नीचोन्नतौ पश्चान्महान्तौ श्लिष्टमांसलौ ॥१०८॥**
**नेत्रे व्यक्तासितसिते सुबद्धघनपक्ष्मणी ।**
**उन्नताग्रा महोच्छ्वासा पीनर्ज्वी नासिका समा ॥१०९॥**
**ओष्ठौ रक्तावनुद्वृत्तौ, महत्यौ नोल्बणे हनू ।**
**महदास्यं,घना दन्ताः स्निग्धाः श्लक्ष्णाः सिताःसमाः**
**जिह्वा रक्ताऽऽयता तन्वी, मांसल चिबुकं महत् ।**
**ग्रीवा ह्रस्वा घना वृत्ता, स्कन्धावुन्नतपीवरौ ॥१११॥**
**उदरं दक्षिणावर्तगूढनाभि समुन्नतम् ।**
**तनुरक्तोन्नतनखं स्निग्धमाताम्रमांसलम् ॥ ११२ ॥**
**दीर्घाच्छिद्राङ्गुलि महत्पाणिपादं प्रतिष्ठितम् ।**
**गूढवंशं बृहत्पृष्ठं, निगूढाः सन्धयो दृढाः ॥ ११३ ॥**
**धीरः स्वरोऽनुनादी च, वर्णः स्निग्धः स्थिरप्रभः ।**

केशा सुस्निग्धादिगुणयुक्ता 'श्रेष्ठा' इत्यनुक्तमप्यर्थाद्गम्यते । तथा चैवगुणविशिष्टैरेतैर्युक्तं वपु सुखायुषो पात्र भवति । एव ललाटादिष्वपि चिन्त्यम् ।

ललाटमुन्नत-ऊर्ध्व गतम् । तथा, श्लिष्टौ-अनुल्बणौ, शङ्खौ यस्मिंस्तदेवम् । तथा, अर्धेन्दुसन्निभ-अर्धचन्द्राकारम् ।

कर्णौ नीचोन्नतौ,-अधो नीचौ-ह्रस्वौ, ऊर्ध्वमुन्नतौ । पश्चान्महान्तौ-विस्तीर्णौ । तथा, श्लिष्टौ च तौ मासलौ च, श्लिष्टौ-रम्यौ, मासलौ-उपचितमासौ ।

नेत्रे व्यक्तौ-स्फुटौ, असितसितौ वर्णौ ययोस्त एवम् । कृष्णो भाग कृष्ण एव, शुक्ल शुक्ल एव, न वर्णान्तरव्यामिश्रे । तथा, सुबद्धे-सुसन्धिनी, घने-सहते, पक्ष्मणी ययोस्त एवम् ।

नासिका-घ्राणम् । उन्नतमग्र यस्या सैवम् । तथा, महानुच्छ्वासो यस्या सैवम् । तथा, पीना-अशिथिला । तथा, ऋजु -अवक्रा । तथा, समा-अनिम्नोन्नता ।

ओष्ठौ रक्तौ । तथा, अनुद्वृत्तौ-बहिरनिर्गतौ ।

द्वे हनू महत्यौ । नोल्बणे-नोन्नते । हनुशब्दस्य स्त्रीत्वमत्र चिन्त्यम् ।

आस्य-मुखम्, महत् ।

दन्ता -द्विजा । घना -अविरला । श्लक्ष्णा-कोमल स्पर्शा । स्निग्धा -स्निग्धरुचय । सिता -शुक्ला । समा -स मपङ्क्तय ।

जिह्वा-रसना, रक्ता । तथा, आयता-दीर्घा । तथा, तन्वी-न स्थूला ।

चिबुक मासल महच्च ।

ग्रीवा-शिरोधरा, ह्रस्वा-अदीर्घा, घना-निबिडा, वृत्ता-वर्तुला च ।

स्कन्धौ-असौ । उन्नतौ च तौ पीवरौ च ।

दक्षिण आवर्तो यस्या नाभे सा दक्षिणावर्ता । दक्षिणावर्ता गूढा-निम्ना [च], नाभिर्यस्य तद्दक्षिणावर्तगूढनाभि जैठरम् । तथा, समुन्नत-सम्यगुन्नत श्रेष्ठत्वेनोन्नतम् ।

तनवो रक्ता उन्नता नखा यस्य तदेवभूत पाणिपाद प्रतिष्ठित-प्रशस्त, भवति । तथा, स्निग्ध-स्निग्धच्छायम् । तथा, आताम्र च तन्मासल च,-आताम्रमासलम् । समन्तात्ताम्र-आताम्रम् । मासल-उपचितमासम् । तथा, दीर्घा -आयता , अच्छिद्रा -परस्पर सश्लिष्टा, अङ्गुलयो यस्य तदेवम् । तथा, महत्-विस्तीर्णम् ।

तथा, गूढ -अदृश्यो, वशो यस्य तदेवविध पृष्ठ प्रशस्तम् । तथा, बृहत्-विस्तीर्णम् ।

सन्धयो निगूढा -अन्तर्गता , दृढा -अत्रुटनशीला ।

धीर -अकृपण । स्वर -शब्द । अनुनादी-घण्टादिवदनुरणनन्यायेन ।

वर्ण स्निग्ध -अरूक्ष । स्थिरा प्रभा-कान्ति , यस्य स एव प्रशस्त ।

**स्वभावजं स्थिरं सत्त्वमविकारि विपत्स्वपि ॥ ११४ ॥**

सत्त्व स्वभावाज्जात स्वभावजम्,-अनाहार्य प्राकृतमबाह्यहेतुज न मद्यादिहेतुजम् । स्थिर-अहार्यम् । अत एव विपत्स्वप्यविकारि-अक्षोभि । अपिशब्दात् किमुत सम्पत्सु न स्यादेवविध सत्त्व स्वभावजमहार्य च ।

**उत्तरोत्तरसुक्षेत्रं वपुर्गर्भादिनीरुजम् ।**
**आयामज्ञानविज्ञानैर्वर्द्धमानं शनैः शुभम् ॥ ११५ ॥**

क्षेत्रमिव क्षेत्रम्, शोभन क्षेत्र सुक्षेत्रम् । वपु-शरीरम् । तस्य यथावत्प्रशस्त प्रमाणलक्षणं "स्व स्व हस्तत्रय सार्द्धं" इत्यादिग्रन्थोक्तम् । तथा, तदवयवाना ललाटादीना यथावत्प्रशस्त गुणलक्षणं "ललाटमुन्नत" (श्लो १०८) इत्यादिग्रन्थोक्तम् । तथा, प्रशस्त सत्त्वलक्षण "स्वभावजं स्थिर" इत्यादिग्रन्थोक्तम् । उत्तरोत्तर सुक्षेत्र यस्मिन् वपुषि तदुत्तरोत्तरसुक्षेत्रं प्रशस्तलक्षणभूमिक वपु शुभमित्यत्र योज्यम् । एतदुक्त भवति,-यथोक्त प्रमाण सुक्षेत्र वपु शुभम्, ततोऽपि यथोक्तलक्षणललाटाद्यवयव सुक्षेत्र वपु शुभतरम् ,ततोऽपि यथोक्तसत्त्वलक्षणगुण सुक्षेत्र वपु शुभतम-

१ 'नैकमूला -पृथङ्मूला , स्थिरा -दृढा ' इति चन्द्र । २ 'बद्धे घ' अ.इ त । ३ 'महत्पृष्ठ' अ इ ड ४ 'श्लिष्टौ-लीनौ नोन्नतौ' इति चन्द्र । ५ 'श्लिष्टमासलौ-लीनोपचितमासौ' इति चन्द्र । ६ 'व्यामिश्रौ' ड ण त । ७ 'पीना-पीवरा' इति चन्द्र । ८ 'महत्यौ-विस्तीर्णे' इति चन्द्र । ९ 'हनुर्द्दवविलासिन्या सूनावजे गदे स्त्रियाम् । द्वयो कपोलावयवे' 'तत्परा हनु ' इति मेदिन्यमराभ्या युक्तमेवात्र स्त्रीत्वम् । १० 'ग्धकान्तय.' ट.ड. ।

१ 'वा-कन्धरा' ड । २ 'उदरम्' ट. । ३ सत्त्व-मन । ४ 'म्-प्राक्' ट ड । ५ 'स्थिर-न चलम्' इति चन्द्र । ६ 'म्र गर्भात्प्रभृति नी' स द्द । ७ 'म् । तत्र शरीरस्य यथा' ण.त. । ८ 'क्तलला' ट ड ण त ।

म्, इत्युत्तरोत्तरसुक्षेत्रशब्दस्यार्थः । तथा, गर्भादिनीरुजम् । गर्भ आदिर्येषा–बालयौवनादीना वयोवस्थाविशेषाणा, त एवम् । गर्भादयो नीरुजा यस्य–वपुष, तद्गर्भादिनीरुज वपु शुभम् । आयामेत्यादि। आयामो–दैर्ध्यम्, ज्ञान–लौकिको व्यवहारलेश, विज्ञान–विशिष्ट ज्ञान शास्त्राभ्यासादिसमुत्थित परमार्थावबोध-पर्यन्तम्, तैर्यद्वपु शनैर्वर्द्धमान–वृद्धिमाप्नुवन्न सहसा, त च्छुभम् ।

**इति सर्वगुणोपेते शरीरे शरदां शतम् ।**
**आयुरैश्वर्यमिष्टाश्च सर्वे भावाः प्रतिष्ठिताः ॥११६॥**

इति–एव प्रकारेण यथोक्तेन । सर्वगुणैरुपेते–युक्ते, शरीरे शरदा–समाना, शतमायु–जीवितम्, तथैश्वर्य, तथेष्टा–शुभा ये केचिद्भावास्ते, तत्र तथाभूते देहे सर्वे प्रतिष्ठिता–व्यवस्थिता वर्षशतानुबन्धिन ।

एव वपुष[1] प्रशस्तलक्षणमुक्त्वा बलप्रमाणज्ञानार्थमाह—

**त्वग्रक्तादीनि सत्त्वान्तान्यग्र्याण्यष्टौ[2] यथोत्तरम् ।**
**बलप्रमाणज्ञानार्थे साराण्युक्तानि देहिनाम् ॥११७॥**
**सारैरुपेत. सर्वैः स्यात्पर गौरवसंयुतः ।**
**सर्वारम्भेषु चाशावान्सहिष्णुः सन्मतिः[3] स्थिरः ॥११८॥**

त्वग्रक्तादीनि सत्त्वान्तानि देहिना साराणि यथोत्तरमग्र्याणि[4]–उत्तरोत्तरश्रेष्ठानि, अष्टावुक्तानि[5] । तेन त्वग्रक्तमासमेदोऽस्थिमज्जशुक्रसत्त्वानीति बोध्यम् । "एव वर्षशतमायु प्रमाणमस्मिन् काले । सन्ति च पुन[6] कर्मविशेषादूनाधिकवर्षशतजीविनो मनुष्या । तेषा यथोक्तै प्रकृतिविशेषैरायु प्रमाणमुपलभ्य वयस्त्रिधा विभजेत् ।" ( सं शा अ ८ ) इति । किमर्थं सारा ण्युक्तानि ? बलप्रमाणज्ञानार्थम् । तथा च देहमात्रदर्शनादेव[7] भिषड् [न] मुह्येत्,–अयमुपचयेन महाशरीरत्वाद्बलवान्, अय कृशत्वादल्पशरीरत्वादल्पबल, इति । तच्चोभयमप्यन्यथा[8] दृष्ट गजसिंहे । सर्वै–अष्टभिरेतै, सारैर्युक्त परं–अतिशयेन, गौरवेण सयुत स्यात् । सर्वेत्यादि । सर्वारम्भेषु–अशेषचिकीर्षितकार्येषु, आशावान् स्यात् । अस्मात्कर्तव्यात् कृतादिदमिद सम्पद्यत इत्याशाशब्दार्थ । तथा, सहिष्णुः–सहनशील. । अत एव शारीरमानसैर्दु खैर्नासावभिभूयत इति यावत् । तथा, सन्मति–सुधी । तथा, स्थिर–कर्तव्येषु स्थिरबुद्धि । मुनिना च लक्षणमुक्तम् ( च. वि. अ ८।१४–७–११ )–"तद्यथा । त्वग्रक्तमासमेदोऽस्थिमज्जशुक्रसत्त्वानि । तत्र स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगम्भीरसुकुमारलोमा सप्रभेव च त्वक् त्वक्साराणाम् । सा सारता सुखसौभाग्यैश्वर्योपभोगबुद्धिविद्यारोग्यप्रहर्षाण्यायुष्यानि[1] त्वरमाचष्टे ॥ कर्णाक्षिमुखजिह्वानासौष्ठपाणिपादतलनखललाटमेहन स्निग्ध[3] रक्त श्रीमद्भ्राजिष्णु[4] रक्तसाराणाम् । सा सारता[5] सुखमुदग्रता मेधा[6] मनस्वित्व सौकुमार्यमनतिबलमक्लेशसहिष्णुता[7] चाचष्टे ॥ शङ्खललाटकृकाटिकाक्षिगण्डहनुग्रीवास्कन्धोदरवक्ष[9] कक्षापाणिपादसन्धय स्थिरगुरुमासोपचिता[10] मांससाराणाम् । सा सारता क्षमा धृतिमलौल्य वित्त विद्या सुखमार्जवमारोग्य बलमायुश्च दीर्घमाचष्टे ॥ वर्णस्वरनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु[11] विशेषेण[12] स्नेहो मेद साराणाम् । सा सारता वित्तैश्वर्य[13]सुखोपभोगप्रदानान्यार्जव[14][15] सुकुमारोपचारता चाचष्टे ॥ पार्ष्णिगुल्फजान्वरत्निजत्रुचिबुकशिर[16][17] पर्व स्थूला[18] स्थूलास्थिनखदन्ताश्चास्थिसारा । ते महोत्साहा क्रियावन्त क्लेशसहा[19] सारस्थिरशरीरा भवन्त्यायुष्मन्तश्च ॥ तन्वङ्गा बलवन्तश्च स्निग्धवर्णस्वरा स्थूलदीर्घवृत्तसन्धयश्च मज्जसारा । ते दीर्घायुषो बलवन्त श्रुतविज्ञानवित्तापत्यसन्मानभाजनाश्च[20] सदा भवन्ति ॥ सौम्या सौम्यप्रेक्षिण[21] क्षीरपूर्णलोचना इव प्रहर्षबहुला स्निग्धवृत्तसारसमसहतशिखरदशना[22] प्रसन्नस्निग्धवर्णस्वरा भ्राजिष्णवो महास्फिजश्च शुक्रसारा । ते स्त्रीप्रियोपभोगा[23] बलवन्त सुखैश्वर्यारोग्यवित्तसम्मानापत्यभाजश्च[24] भवन्ति ॥ स्मृतिमन्तो भक्तिमन्त कृतज्ञा प्राज्ञा शुचयो महोत्साहा दक्षा धीरा समरविक्रान्तयोधिनस्त्यक्तविषादा[25] सुव्यवस्थितगतिगम्भीरबुद्धिचेष्टा[26] कल्याणाभिनिवेशिनश्च[27] सत्त्वसारा । तेषा स्वलक्षणैरेव गुणा व्याख्याता ॥ तत्र सर्वसारैरुपेता पुरुषा भवन्त्यतिबला परमगौरवयुक्ता क्लेशसहा सर्वारम्भेष्वात्मनि जातप्रत्यया[28] कल्याणाभिनिवेशिन स्थिरसमाहितशरीरा सुसमाहितगतय सानुनादस्निग्धगम्भीरमहास्वरा[29][30] सुखैश्वर्यवित्तोपभोगसन्मानभाजो मन्दजरसो मन्दविकारा प्रायस्तुल्यगुणविस्तीर्णापत्याश्चिरजीविनश्च[31] भवन्ति ॥

१ 'वपु प्र' ण त. । २ 'न्यग्राण्य' इ ड ण त चन्द्र । ३ 'सुमति' अ., ट ड । ४ 'मग्राणि' ण त । ५ 'ष्टाम्युक्तानि' ड ण त । ६ 'न स्वकर्म' ट । ७ 'देव भि' ट.ड. । 'देव हि भि' त । ८ 'तथोभयमन्यथा' ड । ९ 'रवर्स' ट ड । १० 'लोमशप्रमेव च त्वक्सा' ट ड.ण.त ।

१ 'युष्कानि पर व्याचष्टे । त्वग्रोमदन्तकर्ण' ट । 'युश्चानित्वर' स च । 'युष्यत्व चाच' च मू । २ 'नि वर' त । ३ 'स्निग्धरक्त' ट ड स च । ४ 'ष्णु सुखमिति र' ट ड । ५ 'ता सुरा' ट ड । ६ 'मेधात्व' ट ड. । ७ 'ष्णु त्वमुष्णासहित्व चा' स च । ८ 'व्या चष्टे' ट । ९ 'न्धोरुकक्षावङ्क्षणपाणि' ट ट । 'न्धोर कक्षवक्ष पा' स च । १० 'रशुभमा' ट ड । ११ 'दष्टौष्ठ' ड । १२ 'शेषत 'स. च । १३ 'विविधैश्च' ड । १४ 'प्रसादना' ट । १५ 'नाभ्यार्ज' ण त । 'नान्यार्ज' स च । १६ 'जानूरुजत्रु' ट ण । १७ 'त्रुवक्ष शि' ड । १८ 'स्थूलास्थि' ट ड ण त । १९ 'हा स्थिर' ट ड । २० 'सम्मानभाजश्च भ' स च । २१ 'प्रेक्षणा क्षी' ट । २२ 'खरिद' च मू । २३ 'प्रिया प्रियोप' त च मू । 'प्रिया भोगाद्बल' ट । २४ 'सुखारोगवित्तैश्वर्यसम्मानभाजनाश्च' ट ड । 'सुखैश्वर्यारोग्यवित्तसम्मानापत्यभाजश्च' स च. । २५ 'न्तस्त्यात्तविजयिन' ट । २६ 'सुव्यवस्थिता ग० द्धिचेतस क' च.मू । २७ 'कल्पनाभि' ड । २८ 'प्रत्याशा' ण त । २९ 'सान्तनाद' ट ड । ३० 'दगम्भी' ट.ड ण.त । ३१ 'श्च प्रायो भ' स.च. ।

अतो विपरीतास्त्वसारा ॥" इति । सङ्ग्रहे च प्रमाणमप्युक्तम् । यथा ( शा अ ८ )–"स्वाङ्गुले पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते । तिस्रोऽन्या क्रमेणोत्तरोत्तर पञ्चमभागहीनास्तन्नखहीना वा । चतुरङ्गुलायता पृथक्प्रपदपादतलपार्ष्णय षट्पञ्चचतुरङ्गुलविस्तृता । चतुर्दशैवायामेन पादश्चतुर्दशैव परिणाहेन । तथा गुल्फौ जङ्घामध्य च । चतुरङ्गुलोत्सेध पाद । अष्टादशायामा जङ्घा षोडश परिणाहेन । चतुरङ्गुल जानु षोडशाङ्गुलपरिणाहम् । ऊरू त्रिंशत्परिणाहावष्टादशायामौ । वृषणौ षडायामौ परिणाहेन चाष्टाङ्गुलौ । मेढ्र षडङ्गुलायामोऽर्द्धपञ्चपरिणाह । षोडशविस्तारा कटी पञ्चाशत्परिणाहा । दशाङ्गुल बस्तिशिर । द्वादशाङ्गुलमुदरम् । दशविस्तारे द्वादशायामे पार्श्वे । द्वादशोत्सेधं त्रिकम् । अष्टादशोत्सेध पृष्ठम् । द्वादशक स्तनान्तरम् । द्व्यङ्गुलं स्तनपर्यन्त । चतुर्विंशत्यङ्गुलविशाल द्वादशोत्सेधमुर । द्व्यङ्गुल हृदयम् । अष्टकौ स्कन्धौ कक्षे च । षट्कावसौ । षोडशकौ प्रबाहू । पञ्चदशकौ प्रपाणी । दशाङ्गुलौ पाणी । तत्रापि पञ्चाङ्गुला मध्यमाङ्गुलि । ततोऽर्धाङ्गुलहीने प्रदेशिन्यनामिके । सार्धत्र्यङ्गुलौ कनिष्ठिकाङ्गुष्ठौ । चतुरुत्सेधा द्वाविंशतिपरिणाहा शिरोधरा । द्वादशोत्सेध चतुर्विंशतिपरिणाहमाननम् । पञ्चाङ्गुलमास्यम् । चतुरङ्गुल पृथक् चिबुकौष्ठनासादृष्ट्यन्तरकर्णललाटम् । शङ्खगण्डाश्चतुरङ्गुला । त्रिभागाङ्गुलविस्तारा नासापुटमर्यादा । द्व्यङ्गुलायतमङ्गुष्ठोदरविस्तृत नेत्रम् । तत्र शुक्लात्तृतीयाश कृष्ण । कृष्णान्नवमाशा मसूरदलमात्रा दृष्टि । षडङ्गुलोत्सेध द्वात्रिंशत्परिणाह शिर इति । सर्व पुन शरीरमङ्गुलानि चतुरशीति । तदायामविस्तारसम सममुच्यते । तत्र यथोक्तपरिमाणमिष्टम् । तथा स्नातानुलिप्तमापादानुपूर्व्या शुष्यद्वरम् । अनिष्ट हीनमधिक वा यथोक्तप्रमाणादिति ।" इति ।

१ 'गुल्फे जङ्घामध्ये च' ट ड । २ 'जङ्घा ऊरुश्च । चतुरङ्गुल जानु । त्रिंशदङ्गुलपरिणाह ऊरु । षडायामौ मुष्कमेढ्रावष्टपञ्चपरिणाहौ । षो' ण त स द्व । ३ 'म् । चतुर्विंशतिविस्तार द्वादशायामे पार्श्वेद्वादशोत्सेध पृष्ठम् । द्वा' ड । ४ 'ल स्तनपर्यन्तम्' ट ड स स स च । ५ 'अष्टावसौ' ट ड । ६ 'द्वादशा' स द्व । ७ 'तत एकाङ्गु' ण । ८ 'म् । चिबुकौष्ठनासादृष्ट्यन्तरकर्णललाटशङ्खगण्डाश्चतुरङ्गुला ।' ट ड । ९ 'टम् । त्रि' स द्व । १० 'स्तारौ नासापुटौ । द्व' ट ड ण.त । ११ 'शुक्लतृती' स मू । १२ 'याश कृष्णम्' स स । १३ 'सुश्रुतेन सम योऽत्र मानविरोध सोऽत्राङ्गुलिमानभेदाच्छमयितव्य । तत्र हि ( सु सू अ ३५।१२)–"सविंशमङ्गुलिशत" पुरुषमानमुक्तम् । तेन तत्राङ्गुलिमानमेवाल्प ज्ञेयम् ।' इति चक्र । १४ 'ष्टमनिष्ट हीनमधिक वा ।······तथा स्नातानुलिप्तमथ प्रस्तुतानुपूर्व्या शुष्यदिष्ट शरीरमिति ।' स.द्व. । १५ 'प्रस्तवापा' ड । १६ 'पादपू' ट । १७ 'पूर्व शु' ण. ।

सत्त्वादिप्रकृतीना तिसृणा कथ सुखदु खानुभव स्यात् ? इत्याह—

**अनुत्सेकमदैन्यं च सुखं दुःखं च सेवते ।**
**सत्त्ववांस्तप्यमानस्तु राजसो नैव तामसः ॥ ११९ ॥**

अनुत्सेक कृत्वा–अभिमान हित्वा, सत्त्ववान् पुरुष सुख सेवते–अनुभवति । तथा, अदैन्य–कार्पण्य हित्वा, दु ख सेवते–अनुभवति । तप्यमानस्त्विति । तुर्व्यतिरेके भिन्नक्रमे । राजस पुन पुरुष तप्यमानोऽहमेवामुना प्रकृष्टेनानन्यसाधारणेन सुखेन सुखीत्येव सुख सेवते । अहङ्काराक्रान्तमानसोऽहमेवेद दु ख सोढु शक्त इत्येव राजसो नरो दु खमनुभवति । तामस पुन पुरुषो नैव सुख सेवते, न दु खम्, अत्यन्तमूढत्वात् । नासौ सुखेन सुखी, न च दु खेन दु खी, प्राप्ततृतीयावस्थो यथा पुरुष । एवं द्वन्द्वप्रकृतिरपि सुख न सेवते, नापि दु खम्, अत्यन्तमूढत्वात् । समसत्त्वादिप्रकृतिस्त्वनुत्सिक्तोऽदीन. सन् सुखदु खे सेवते ।

इदानी प्रधानफलदायि यत्प्रधान प्रशस्त लक्षण वपुष, तद्दर्शयितुमाह—

**दानशीलदयासत्यब्रह्मचर्यकृतज्ञताः ।**
**रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद्गणः ॥ १२० ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां द्वितीये शारीरस्थानेऽङ्गविभागो नाम तृतीयोऽध्यायः ॥ ३ ॥**

दान–धनादित्याग, तच्छीलयति–अभ्यस्यति दानशील । "शीलिकामि" इत्यादिना ण । दया–दीनेष्वभ्युपपत्ति । मैत्री–सर्वसत्त्वानामात्मभावनम् । न केवल पूर्वोक्त ( श्लो १०६ )–"स्व स्व हस्तत्रयं" इत्यादि "वर्द्धमान शनै" इत्येतत्पर्यन्तं यल्लक्षण, तच्छरीरस्यायुर्वृद्ध्यादिहेतु । यावदय दानशीलादिर्गणो मैत्र्यवसान पुण्यायुर्वृद्धिकृत् । दानादयश्च यथासम्भव केचित्पुण्यकृत, केचिदायुर्वृद्धिकृत, केचिदुभयकृतश्च । अन्येभ्यश्च महापुरुषलक्षणेभ्योऽस्यैव गणस्य ज्यायस्त्व प्रतिपादयता शास्त्रकृताऽध्यायावसाने ग्रन्थस्यास्य निर्देश कृत इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्यायां द्वितीये शारीरस्थानेऽङ्गविभागो नाम तृतीयोऽध्याय. समाप्त ॥ ३ ॥

१ 'स्तभ्यमान' अ ड.ण चन्द्र स.स. । २ 'न्य–अकार्पण्य च कृत्वा' ड । ३ 'ब्रह्मणि चरण–ब्रह्मचर्यं,–ब्रह्मसेवाऽथ स्त्रीनिवृत्ति. ।' इति चन्द्र । ४ 'दिको ग' ड । ५ पुण्यमायुर्विशेषणम् । पुण्य च तदायुश्च, तस्य वृद्धि करोतीति । पुण्य–सुकृत गुणवत् सुन्दर च ।




अङ्गविभागादनन्तरं मर्मविभाग शारीर प्रारभ्यते । मर्म णामङ्गाश्रितत्वात् । यतो मर्माण्यङ्गप्रत्यङ्गसमाश्रितानि, अतस्तत्रैव व्याख्यातु युक्तानि, बहुवक्तव्यत्वात्पृथगुच्यन्ते । तस्मादस्यैवाध्यायस्यारम्भो युक्त इत्याह—

**अथातो मर्मविभागं शारीरं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

म्रियतेऽस्मिन्नङ्ग उपहत इति मर्म । विभजन-विभाग, मर्मणा विभागो मर्मविभाग । सोऽस्मिन्नध्यायेऽस्तीति मर्मविभाग । अर्शआदित्वादच् । शारीरस्थानप्रतिबद्धत्वाच्च शारीर.। शेष पूर्ववत् ।

सुखग्रहणार्थं च पूर्वं मर्मणां सङ्ख्या वक्तुमाह—

**सप्तोत्तरं मर्मशतम्**

सप्तोत्तराणि-अधिकानि, यस्मिन्-शते, तदेवम् ।

**तेषामेकादशादिशेत् ।**
**पृथक्सक्थ्नोस्तथा बाह्वोस्त्रीणि कोष्ठे नवोरसि ॥ १ ॥**
**पृष्ठे चतुर्दशोर्ध्वं तु जत्रोस्त्रिंशच्च सप्त च ।**

तेषा-मर्मणा मध्ये, पृथक्-प्रत्येक कृत्वा, सक्थ्नोर्द्वयोर्बाह्वोश्च द्वयोरेकादशादिशेत्, एव चतुश्चत्वारिंशन्मर्माणि शाखासु विद्यात् । कोष्ठे-जठरे, त्रीणि मर्माणि । उरसि-वक्षसि, नव-सङ्ख्यानि । पृष्ठे चतुर्दश । जत्रोरूर्ध्वं-जत्रुण उपरिष्टात्, त्रिंशत्तथा सप्त, एव सप्तत्रिंशदित्यर्थं । जत्रोरिति पुंस्त्वमत्र चिन्त्यम् । अथवा 'अनित्यमागमशासनम्' इत्यत्र नुम् न कृत ।

इदानीमेषा मर्मणामापादतलान्मस्तक यावद्विशिष्टदेशसमाश्रयेण विशिष्टसञ्ज्ञान्तराणि विशिष्टकर्माणि मर्माणि दर्शयितुमाह—

**मध्ये पादतलस्याहुरभितो मध्यमाङ्गुलिम् ॥ २ ॥**
**तलहृन्नाम रुजया तत्र विद्धस्य पञ्चता ।**

पादतलस्य मध्ये-मध्यप्रदेशे, मध्यमाङ्गुलिमभितो-मध्यमाङ्गुले पादसम्बन्धिन्या आभिमुख्येन, यत्पादतल-पादपृष्ठं, तत्र तलहृन्नाम मर्माहु, पूर्वाचार्या इति शेप । मध्यमाङ्गुलिमिति "अभित [परित समयानिकषाहाप्रतियोगेऽपि" इति] शब्दप्रयोगे द्वितीया । तत्र-तस्मिन्, विद्धस्य-आहतस्य, पञ्चता-मरण, भवति । कया ? रुजया,-वेदनया ।

**अङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रमाक्षेपमारणम् ॥ ३ ॥**

अङ्गुष्ठश्चाङ्गुलिश्च, तयोर्मध्य-अङ्गुष्ठाङ्गुलिमध्यस्थित, क्षिप्र नाम मर्म । तद्विद्धमाक्षेपमारण-आक्षेपकाख्येन वातव्याधिना मारयति ।

**तस्योर्ध्वं द्व्यङ्गुले कूर्चः पादभ्रमणकम्पकृत् ।**

तस्योर्ध्वं-तस्य क्षिप्राख्यस्य मर्मण उपरिष्टात्, द्व्यङ्गुले-द्व्यङ्गुल विमुच्य, कूर्चो नाम मर्म । तद्विद्ध पादस्य भ्रमण कम्प च करोति ।

**गुल्फसन्धेरधः कूर्चशिरःशोफरुजाकरम् ॥ ४ ॥**

गुल्फसन्धेरध कूर्चशिरो नाम मर्म । तद्विद्ध शोफरुजाकरम् ।

**जङ्घाचरणयोः सन्धौ गुल्फो रुक्स्तम्भमान्द्यकृत् ।**

जङ्घाचरणयो सन्धौ-सन्धिप्रदेशे, गुल्फो नाम मर्म । तद्विद्ध रुक् च स्तम्भश्च मान्द्य च, तानि करोति । स्तम्भ - स्तब्धत्वमिवाङ्गस्य ।

**जङ्घान्तरे त्विन्द्रबस्तिर्मारयत्यसृजः क्षयात् ॥ ५ ॥**

जङ्घान्तरे-जङ्घामध्ये पार्ष्णिप्रभृतिद्वादशभिरङ्गुले, इन्द्रबस्तिर्नाम मर्म । तद्विद्ध रक्तक्षयान्मारयति, नान्यथा । तस्माद्रक्तस्तम्भने यतितव्यमिति प्रतिपादनार्थमसृक्क्षयादिति हेतुरुपन्यस्त । एष एव न्यायोऽन्यत्राप्यनुसर्तव्य । तेन यत्र यद्गुरु मारणादिक कर्म व्यधे कथित, तत्र तच्चिकित्साया यतितव्यमिति ।

**जङ्घोर्वोः सङ्गमे जानु खञ्जता तत्र जीवत. ।**

जङ्घोर्वो सङ्गमे-सन्धो, जानुनाम मर्म । तत्र-जानुनि विद्धे, पुरुषो म्रियत एव । अथ जीवति ततोऽस्य जीवत पुस खञ्जता स्यादिति । अर्थात् प्रायेण मरण पुरुषस्येति बोधयति ।

**जानुनस्त्र्यङ्गुलादूर्ध्वमाण्यूरुस्तम्भशोफकृत् ॥ ६ ॥**

जानुन -जानुसन्धे, त्र्यङ्गुलादूर्ध्वमाणीनाम मर्म । तद्विद्धमूरुस्तम्भशोफकरम् ।

**उर्व्यूरुमध्ये तद्वेधात्सक्थिशोषोऽस्रसङ्क्षयात् ।**

उर्वी नाम मर्म ऊरुमध्ये । तद्वेधात्-तदभिघातात्, सक्थिशोष -ऊरुकार्श्यम् । सक्थिशोपोऽस्रसङ्क्षयात् स्यात्, नान्यथा व्यधे सत्यपि ।

१ 'भागाख्य. शारीर प्रक्रम्यते' ङ ण त । २ 'त्रैवाख्या' ङ. । ३ अथ मर्मविभागश्चरके शा० ७ अध्याये चि० २६ अध्याये सि० ९ अध्याये च, सुश्रुते शा० ६ अध्याये, अष्टाङ्गसङ्ग्रहे शा० ७ अध्याये चास्ति वर्णित । ४ 'शारीर' ट ङ. । ५ 'ङ्ख्यानि' ङ. । ६ 'श्रयाणा वि' ण. । ७ 'कथयितु' ङ. । ८ 'लमध्यम' ट. ।

१ 'म्भशाण्ड्यकृत्' 'म्भजाड्यकृत्' अ । 'म्भखाञ्ज्यकृत्' ट । अत्र "तत्र रुज स्तब्धपादता खञ्जता वा ।" इति सुश्रुते, "तत्र रुक् स्तब्धसक्थिता जडता वा ।" इति सङ्ग्रहमूले, "तत्र रुक् स्तब्धसक्थिता पण्डता वा ।" इति सटीकसङ्ग्रहे चोक्तम् । २ 'श्च खाञ्ज्य च' ट । ३ 'ध्ये, इन्द्र' ट.ङ । ४ 'नार्थोऽसृ' ङ. । ५ 'विद्धे' ट.ट ।

**ऊरुमूले लोहिताक्षं हन्ति पक्षमसृक्क्षयात् ॥ ७ ॥**

ऊरुमूले[3]-उर्व्यास्तूर्ध्वं वङ्क्षणसन्धेरधस्ताल्लोहिताक्ष नाम मर्म । तद्विद्ध पक्ष हन्त्यसृक्क्षयार्त्, व्यधे सत्यपि ।

**मुष्कवङ्क्षणयोर्मध्ये विटपं षण्ढताकरम् ।**

मुष्कवङ्क्षणयोर्मध्ये विटप नाम मर्म । तद्विद्ध पुस षण्ढताकर–निरपत्यताकरम् ।

**इति सक्थ्नोस्तथा बाह्वोर्मणिबन्धोऽत्र गुल्फवत् ॥८॥**
**कूर्पर जानुवत्कौण्य तयोर्विटपवत्पुन. ।**
**कक्षाक्षमध्ये कक्षाधृक्कू कुणित्वं तत्र जायते ॥ ९ ॥**

इति-एवमनेन प्रकारेण, सक्थ्नोर्द्वयो प्रत्येकमेकादश मर्माणि भवन्ति । तथा बाह्वो –तेनैव प्रकारेण बाह्वो , तलहृदादीन्येकादश मर्माणि भवन्ति । अथ किञ्चिन्मात्रमत्र विशेषमाह–मणीत्यादि । अत्र–बाहुमर्मसु, गुल्फेन तुल्यो मणिबन्ध , सञ्ज्ञामात्रभेद , जानुतुल्य कूर्परम् । तयो –मणिबन्धकूर्पराख्ययोर्बाहुमर्मणो , विद्धयो कौण्य–पाणिपाण्यङ्गुलीकुब्जलम् । विटपेत्यादि । कक्षा चाक्षश्च कक्षाक्षौ, तयोर्मध्ये विटपेन तुल्य कक्षाधृक्सञ्ज्ञ मर्म । तत्र विद्धे सति कुणित्वं–बाहुपाण्यङ्गुलिकुब्जता, जायते ।

इति शाखासु मर्माणि चतुश्चत्वारिंशदुक्त्वा, अन्तराधौ कथयति—

**स्थूलान्त्रबद्धः सद्योघ्नो विड्वातवमनो गुदः ।**

स्थूलान्त्रसूक्ष्मान्त्रभेदात् द्विधाऽन्त्रम् । तत्र स्थूलान्त्रबद्धो गुदो नाम मर्मविशेष । स च विड्वातौ–वातवर्चसी, वमति–उद्गिरति, इति विड्वातवमन । बाहुलकात्कर्तरि ल्युट् । स गुद सद्य –तत्क्षणादेव,हन्ति । सद्योघ्न इति "अमनुष्यकर्तृके च"इति ठक् । गुदशब्दस्यात्र पुस्त्व चिन्त्यम्, न चार्धर्चादिष्वयमस्ति ।

अधुना बस्त्याख्यमाह—

**मूत्राशयो धनुर्वक्रो बस्तिरल्पास्रमांसगः ॥ १० ॥**
**एकाधोवदनो मध्ये कट्याः सद्यो निहन्त्यसून् ।**
**ऋतेऽश्मरीव्रणाद्विद्धस्तत्राप्युभयतश्च सः ॥ ११ ॥**
**मूत्रस्राव्येकतो भिन्ने व्रणो रोहेच्च यत्नतः ।**

मूत्रस्याशय आधारो मूत्राशयो–यत्र मूत्र तिष्ठति, स धनुर्वक्र –चापवत् कुटिल । अनेनास्य सस्थानमुक्तम् । स च बस्तिनाम मर्मविशेष । अस्र च मास चास्रमासे, अल्पे अस्रमासे गच्छति । "अन्येभ्योऽपि दृश्यते" इति ड । तत्रस्थो न बहुरक्तमासप्रदेशे इत्यर्थ । तथा, एकमधोवदन यस्यासावेकाधोवदन । कट्या मध्य इति स्थाननिर्देश । कट्या मध्यप्रदेशेऽसाववतिष्ठते । स विद्ध सद्य –तत्क्षणादेव, असून्–प्राणान्, निहन्ति । ऋतेऽश्मरीव्रणात्–अश्मर्याहरणार्थ यो व्रण क्रियते त व्रण वर्जयित्वा । तत्रापि–अश्मरीव्रणे, उभयत –उभयपार्श्वतश्च, स विद्धस्तदाऽसौ सद्योऽसून्निहन्ति । तस्मिन् बस्तावेक[त –एक]पार्श्वतो, भिन्ने–विद्धे सति, मूत्रस्रावी व्रण स्यात् । स च यत्नत –आदरेणोपक्रान्तो, रोहति नान्यथा ।

**देहामपक्वस्थानानां मध्ये सर्वसिराश्रयः ॥ १२ ॥**
**नाभिः, सोऽपि हि सद्योघ्नो**

आम च पक्व चामपक्वे, स्थान च स्थान च स्थाने, आमपक्वयो स्थाने आमपक्वस्थाने, देहश्चामपक्वस्थाने च देहामपक्वस्थानानि, तेषा मध्ये । तत्रैकत्वाद्देहस्य देहमध्यप्रदेशे, तयोभयोरामपक्वाशययोर्मध्ये–अन्तराले, नाभिर्नाम मर्म । स सर्वासा सिराणा–सकलशरीरगाना, आश्रय –आधार । सोऽपि हि सद्योघ्न । अपि समुच्चये । हिर्यस्मादर्थे । न केवल गुदबस्ती सद्योघ्नौ यावन्नाभिरपि विद्ध. सद्योघ्न । नाभिशब्दस्य पुस्त्व चिन्त्यम् ।

**द्वारमामाशयस्य च ।**
**सत्त्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम् ॥ १३ ॥**

हृदय नाम यन्मर्म तदपि सद्योघ्नम् । तच्चामाशयस्य द्वार–मुखम् । तेन हि द्वारेणान्नपानमामाशये प्रविशति । तच्च सत्त्वादीना–सत्वरजस्तमसा, तथा विज्ञानस्य–इन्द्रियाणा चार्थपञ्चकस्य, तथाऽऽत्मन –चेतस , धाम–स्थानम् । तच्च स्तनोर -कोष्ठमध्यगम् । स्तनौ चोरश्च कोष्ठश्च स्तनोर कोष्ठं, तस्य मध्यं, तत्र गच्छति–स्थितिं बध्नाति, कोष्ठवक्षसो स्तनयोश्च मध्ये स्थितमित्यर्थ ।

**स्तनरोहितमूलाख्ये द्व्यङ्गुले स्तनयोर्वदेत् ।**
**ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयोः क्रमात् ॥१४॥**

स्तनरोहित च मूल च प्रकृतत्वात्स्तनस्यैव, ते । स्तनरोहितस्तनमूले आख्ये–सञ्ज्ञे, ययोस्ते स्तनरोहितमूलाख्ये द्वे मर्मणी वदेत् । क्व प्रदेशे ? स्तनयो । क्रमादिति वक्ष्यमाणमिहापि सम्बध्यते । तेन स्तनयोरूर्ध्वं द्व्यङ्गुले स्तनरोहिते । स्तनयोरधो द्व्यङ्गुले स्तनमूले । तयो –स्तनरोहितस्तनमूलाख्ययोर्मर्मणोर्विद्धयो , पुरुषोऽस्रकफापूर्णकोष्ठ क्रमात्–यथाक्रम, नश्येत् । तेन स्तनरोहिते विद्धे सत्यसृजा पूर्णकोष्ठो नरो नश्येत्, स्तनमूले विद्धे कफेन पूर्णकोष्ठो नश्येत् ।

---

१ 'ताख्य' ड ण त ट स मू । २ 'ऊरोर्मूले' त । ३ 'लेवङ्क' ट ड. । ४ 'त्, अन्यथा व्यधे' इति क्वचित् । ५ 'विटिप' अ चन्द्र । ६ षण्ढता–स्त्रीगमनासामर्थ्यम् । ७ 'इति शब्द परिसमाप्तौ, सक्थ्नोर्यावन्ति मर्माणि भवन्ति तानि परिसमाप्तानि ।' इति चन्द्र । ८ 'गुल्फतुल्यो' ट ड । ९ 'प्रबाहु' ड ण । १० 'स द्यसून् तत्क्ष' ड । ११ 'य.' चन्द्र । १२ 'तेना' ण त. ।

१ 'शस्य इ' ण त । २ 'योऽधिव्रण ' ड. । ३ 'तश्चैस वि' ट ड । ४ 'पक्वयो' ड ण त । ५ 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययो पुमान् । द्वयो प्राणिप्रतीके स्यात्स्त्रिया कस्तूरिकामदे ॥' इति मेदिनी । प्रतीके–अवयवे । ६ 'शय प्र' ट.ड. । ७ 'धोऽसृक्कफा' इ । ८ 'पोऽसृक्कफा' ट ड.ण.त. ।

**अपस्तम्भावुर पार्श्वे नाड्यावनिलवाहिनी ।**
**रक्तेन पूर्णकोष्ठोऽत्र श्वासात्कासाच्च नश्यति ॥१५॥**

उरस पार्श्वे द्वे नाड्यावपस्तम्भाख्ये मर्मणी । अनिलवाहिनी–वातवहे । अत्र मर्मद्वये विद्धे रक्तेन पूर्णकोष्ठ श्वास कासाभ्या विपद्यते ।

**पृष्ठवंशोरसोर्मध्ये तयोरेव च पार्श्वयोः ।**
**अधोंऽसकूटयोर्विद्यादपालापाख्यमर्मणी ॥ १६ ॥**
**तयोः कोष्ठेऽसृजा पूर्णे नश्येद्यातेन पूयताम् ।**

पृष्ठवशस्य तथोरस , अनयोर्मध्ये–अन्तराले, तयोरेव च–पृष्ठोरसो , ये पार्श्वे, तयोरुपरिभागयोरसकूटयोरध , अपाला पाख्ये द्वे मर्मणी विद्यात् । तयोर्विद्धयो रक्तेन कोष्ठे पूर्णे, पूयता यातेन–गतेन, लोहितेन नश्येत् । यावद्रक्त पूयता न यात तावज्जीवति । न तु रक्तकोष्ठपूरणमात्रादेव म्रियत इति भाव ।

इदानीं पृष्ठे वक्ति—

**पार्श्वयोः पृष्ठवंशस्य श्रोणीकर्णौ प्रति स्थिते ॥१७॥**
**वशाश्रिते स्फिजोरूर्ध्वे कटीकतरुणे स्मृते ।**
**तत्र रक्तक्षयात्पाण्डुर्हीनरूपो विनश्यति ॥ १८ ॥**

पृष्ठवशस्य पार्श्वयो –उभयत , प्रतिश्रोणीकर्णौ स्थिते । वशाश्रिते–वशप्रतिबद्धे, स्फिजोरूर्ध्वे–उपरिष्टात्, द्वेऽस्थिनी कटीकतरुणे–एतत्सञ्ज्ञे द्वे मर्मणी, स्मृते–उक्ते। तत्र–तस्मिन्मर्मद्वये विद्धे, रक्तक्षयात्पाण्डुर्हीनरूपो–विगतकान्ति सन्, नरो विनश्यति ।

**पृष्ठवंशं ह्युभयतो यौ सन्धी कटिपार्श्वयोः ।**
**जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दरौ ॥ १९ ॥**
**चेष्टाहानिरध कायें स्पर्शाज्ञानं च तद्व्यधात् ।**

पृष्ठवशस्योभयो कटिपार्श्वयोर्या सन्धी जघनस्य बहिर्भागेनान्त ,तौ कुकुन्दरौ निम्नाकारौ सन्धिमर्मणी । तद्व्यधात्–तयोर्व्यधात्, अध शरीरे चेष्टाहानि –गमनाकुञ्चनप्रसारणादावध कायोऽशक्त सम्पद्यत इत्यर्थ । तथा, स्पर्शाज्ञान–स्पर्शासवित्तिर्भवति। पृष्ठवंशमुभयत इति "उभसर्वतसो " इत्यादिना द्वितीया ।

**पार्श्वान्तरनिबद्धौ यावुपरि श्रोणिकर्णयोः ॥ २० ॥**
**आशयच्छादनौ तौ तु नितम्बौ तरुणास्थिगौ ।**
**अधःशरीरे शोफोऽत्र दौर्बल्यं मरणं ततः ॥ २१ ॥**

पार्श्वान्तरे–पार्श्वमध्ये, निर्बद्धौ–प्रतिबद्धौ लग्नौ, पार्श्वान्तरनिबद्धौ यौ, तथा श्रोणिकर्णयोरुपरि–उपरिष्टात्, मूत्रादीना य आशया –आधारा बस्त्यादय , तेषा छादनौ, नितम्बौ–नितम्बसञ्ज्ञौ मर्मविशेषौ। तौ च तरुणास्थिगौ–तरुणसञ्ज्ञेऽस्थ्नि स्थिताविलर्थं । अत्र–अस्मिन्मर्मद्वये विद्धे सति, अध काये शोफो भवति । तथा, दौर्बल्य प्रकृतत्वादध शरीर एव । दौर्बल्य–अल्पबलत्व स्वव्यापाराक्षमत्वम् । ततो–दौर्बल्यादनन्तर, मरण भवति ।

**पार्श्वान्तरनिबद्धौ च मध्ये जघनपार्श्वयो. ।**
**तिर्यगूर्ध्वं च निर्दिष्टौ पार्श्वसन्धी तयोर्व्यधात् ॥२२॥**
**रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवः ।**

पार्श्वयोरन्तर–मध्य, तत्र निबद्धौ–सश्लिष्टौ, सन्धी मर्मविशेषौ पार्श्वसन्धी इति निर्दिष्टौ । ततश्चैकस्मिन् पार्श्वान्तर एक सन्धिर्द्वितीयस्मिन् पार्श्वान्तरे द्वितीयः सन्धि । क्व स्थितौ कथम्? जघनस्य पार्श्वे जघनपार्श्वे, तयोर्मध्ये तिर्यगूर्ध्वं च । एवमेकस्मिन् जघनपार्श्वमध्य एक सन्धिर्द्वितीयस्मिन् द्वितीय स्थित इति । तयोर्व्यधात् पुसो रक्तपूरितकोष्ठस्य शरीरान्तरसम्भव –अपरशरीरोत्पत्ति , मरणमित्यर्थ ।

**स्तनमूलार्जवे भागे पृष्ठवंशाश्रये सिरे ॥ २३ ॥**
**बृहत्यौ, तत्र विद्धस्य मरणं रक्तसङ्क्षयात् ।**

स्तनयोर्मूल स्तनमूलम्, तस्यार्जवे भागे–स्पष्ट उद्देशे, पृष्ठवशाश्रये सिरे–पृष्ठवशस्योभयपार्श्वप्रतिबद्धे सिरे, बृहत्यौ–एतत्सञ्ज्ञे मर्मणी । तत्र–मर्मद्वये, विद्धस्य मरण भवति रक्तसङ्क्षयात्, नान्यथा ।

**बाहुमूलाभिसम्बद्धे पृष्ठवंशस्य पार्श्वयोः ॥ २४ ॥**
**अंसयो. फलके बाहुस्वापशोषौ तयोर्व्यधात् ।**

बाहोर्मूले बाहुमूले,–यत्र बाहू प्रतिष्ठितौ । मूले हि प्रतिष्ठा, वृक्षमूलवत् । पृष्ठवशस्य पार्श्वद्वये बाहुमूलयोराभिमुख्येन सम्बद्धे–सश्लिष्टे । के ते? असयो फलके । असमासनिर्देशश्छन्दोनुरोधात् । फलकस्य च नपुंसकत्व लोकाश्रयत्वाल्लिङ्गस्येति । असफलकाख्ये द्वे मर्मणी । तयोर्व्यधात् बाहुस्वापशोषौ भवत । स्वाप इव स्वाप , यथा सुप्तस्य निश्चेतनमङ्ग भवति तथा बाहू असफलके विद्धे भवत ।

**ग्रीवामुभयतः स्नान्नी ग्रीवाबाहुशिरोन्तरे ॥ २५ ॥**
**स्कन्धांसपीठसम्बन्धावंसौ बाहुक्रियाहरौ ।**

ग्रीवाया उभयो पार्श्वयो स्नान्नी द्वे असावुच्येते । क्व स्थितौ? ग्रीवाबाहुशिरोन्तरे । ग्रीवायास्तथा बाह्वो शिरसश्च मध्ये–

१ 'रक्तस्य पू' ङ ण त चन्द्र । २ 'पूर्णे तेन पू' ण त । ३ 'प्रतिष्ठितौ' अ इ ड.। 'कर्णप्रतिष्ठिते' इति क्वचित् । ४ 'ण्डुविंगत' ट ड त । ५ 'वशस्युभ' अ । ६ 'शयाच्छा' इ ट ण त चन्द्र , स मू स सु । ७ सुश्रुते तु ( शा अ ६।२६ )–"तत्राधःकायशोफो दौर्बल्याच्च मरणम् ।" इति पठ्यते । ८ 'निबद्धौ–लग्नौ, पार्श्वान्तरप्रतिबद्धौ यौ' ट.ड ।

१ 'रुणास्थिस्थिता' ट ड । २ 'था दौर्बल्य–अ' ट ड । ३ 'मध्यौ जघनपार्श्वयो । निर्दिष्टौ पार्श्वसन्धी तौ तिर्यगूर्ध्वं तयो' चन्द्र । ४ 'पो तौ पा' ट ड । ५ 'तौ?ज' ट । ६ 'पार्श्वे, जघनपार्श्वयोर्मे' ण त. । ७ 'इति सञ्ज्ञे' ट ड । ८ 'शोफौ' अ चन्द्र । ९ 'र्व्यधे' इ चन्द्र , ट.ड । १० 'मूल हि' ट ड त । ११ 'पार्श्वयोर्द्वयोर्बाहु' ट ड । १२ 'ठबन्धार्थावसौ' अ. चन्द्र । 'ठबद्धार्थावसौ' इ । 'ठसम्बद्धावसौ' ड. ।

तेषामन्तराले स्थिता । किं प्रयोजनौ ? स्कन्धेत्यादि । असयो पीठ इव पीठे,—प्रतिष्ठाने, यत्रासौ तिष्ठत । स्कन्धा चासपीठे च, तेषां सम्बन्ध—प्रयोजन, ययोस्तावेवासा विद्धौ बाह्वो क्रिया—आकुञ्चनप्रसारणादिका, ता हरत , ता बाहुक्रियाहरौ ।

**कण्ठनाडीमुभयतः सिरा हनुसमाश्रिता ॥ २६ ॥**
**चतस्रस्तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते ।**
**स्वरप्रणाशवैकृत्य रसाज्ञान च तद्वधे ॥ २७ ॥**

कण्ठनाड्या पार्श्वयोर्द्वयो सिरा याश्चतस्रो हन्वो समाश्रिता , तासु मध्ये द्वे सिरे नीले नाम द्वे मर्मणी, मन्ये नाम द्वे मर्मणी स्मृते, तन्त्रकृद्भिरिति शेष । तासा व्यधस्तद्वध , तस्मिन् तद्वधे स्वरप्रणाशादयो जायन्ते । स्वरस्य प्रणाश स्वरप्रणाश ,—स्वरहानि । अथवा वैकृत्यम् , तच्च प्रकृतत्वात्स्वरस्यैव, स्वरभावान्यथात्वमित्यर्थ । रसाज्ञान—रसानवबोध ।

**कण्ठनाडीमुभयतो जिह्वानासागताः सिराः ।**
**पृथक् चतस्रस्ताः सद्यो घ्नन्त्यसून्मातृकाह्वयाः ॥२८॥**

कण्ठनाड्या उभयपार्श्वयो सिरा जिह्वागतास्तथा नासागता पृथक्—प्रत्येक, एकस्मिन् पार्श्वे चतस्र द्वितीये पार्श्वे चतस्र । ता मातृकाह्वया—मातृकासञ्ज्ञा , विद्धा सद्योऽसून् घ्नन्ति । एतानि मातृकाख्यानि सिरामर्माणि ।

**कृकाटिके शिरोग्रीवासन्धौ, तत्र चलं शिरः ।**

शिरश्च ग्रीवा च, तयो. सन्धाने यौ सन्धी पार्श्वद्वये कृकाटिकाख्ये ते द्वे मर्मणी । तत्र—तस्मिन्मर्मद्वये विद्धे, चल—सकम्प, शिरो भवति ।

**अधस्तात्कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ॥ २९ ॥**

अधस्तात्कर्णयो —कर्णपृष्ठयोरधो, निम्ने—नोन्नते, विधुराख्ये द्वे मर्मणी । ते च विद्धे सती श्रुति—शब्दश्रवण, हरत , श्रुतिहारिणी ।

**फणावुभयतो घ्राणमार्गं श्रोत्रपथानुगौ ।**
**अन्तर्गलस्थितौ वेधाद्गन्धविज्ञानहारिणौ ॥ ३० ॥**

फणौ नाम मर्मविशेषौ घ्राणमार्गस्योभयो पार्श्वयो श्रोत्रपथानुगौ—श्रोत्रमार्गप्राप्तौ । अन्तर्गलस्थितौ—गलाभ्यन्तरे स्थितौ । फणाविव सस्थान रूपमनयो फणाविति नाम । तौ वेधाद्गन्धविज्ञान—गन्धोपलब्धि , तद्धरतस्तौ गन्धविज्ञानहारिणौ ।

**नेत्रयोर्बाह्यतोऽपाङ्गौ भ्रुवोः पुच्छान्तयोरधः ।**
**तथोपरि भ्रुवोर्निम्नावावर्तावान्ध्यमेषु तु ॥ ३१ ॥**

नेत्रयोर्द्वयोर्बाह्यत —बहिर्भागे, भ्रुवो पुच्छान्तयो —अवसानयो , अध , अपाङ्गौ नाम मर्मविशेषौ प्रसिद्धावेव । तथोपरीति तेनैवापाङ्गोद्दिष्टेन न्यायेन भ्रुवो पुच्छान्तयोरुपरि निम्नावावर्तसञ्ज्ञौ । एषु तु—अपाङ्गावर्ताख्येषु चतुर्षु, विद्धस्य नरस्यान्ध्य भवति ।

**अनुकर्णं ललाटान्ते शङ्खौ सद्योविनाशनौ ।**

अत्रापि भ्रुवो पुच्छान्तयोरुपरि ललाटावसानेऽनुकर्ण—कर्णसमीपे, शङ्खौ मर्मविशेषौ । तौ विद्धौ पुरुषस्य सद्योविनाशनौ भवत ।

**केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपौ, स्थपनी पुनः ॥ ३२ ॥**
**भ्रुवोर्मध्ये, त्रयेऽप्यत्र शल्ये जीवेदनुद्धृते ।**
**स्वयं वा पतिते पाकात्सद्यो नश्यति तूद्धृते ॥ ३३ ॥**

केशावसाने शङ्खयोरूर्ध्व—उपरि, उत्क्षेपौ मर्मणी । स्थपनी पुनर्मर्म भ्रुवोर्मध्ये । त्रयेऽप्यत्र—अस्मिन् मर्मत्रये द्वावुत्क्षेपावेका स्थपनी एवभूते, विद्धे पुरुषोऽनुद्धृते शल्ये जीवेत् । कालान्तरेण पाकात्—पाकेन हेतुना, स्वय वा पतिते शल्ये सति,—न तूद्धरणहेतुना, जीवेत् पुरुष । सद्य इत्यादि । उद्धृते तु शल्ये सद्य एव नरो नश्यति, वायुकोपादिति भाव ।

**जिह्वाक्षिनासिकाश्रोत्रखचतुष्टयसङ्गमे ।**
**तालुन्यास्यानि चत्वारि स्रोतसां, तेषु मर्मसु ॥३४॥**
**विद्धः शृङ्गाटकाख्येषु सद्यस्त्यजति जीवितम् ।**

जिह्वा चाक्षिणी च नासिका च श्रोत्रे च तदेवम् । तस्य खानि, तेषा चतुष्टय—चत्वारि स्रोतासि, तेषा सङ्गम —सन्निपात , तस्मिस्तालुनि—यत्र जिह्वादीना तर्पणानि स्रोतासि सन्निपत्यावतिष्ठन्ते, जिह्वादिस्रोतसा चत्वार्यास्यानि शृङ्गाटकाख्यानि । तेषु मर्मसु विद्ध पुरुष सद्यस्त्यजति जीवित—विद्धमात्र एव प्राणैर्वियुज्यते ।

**कपाले सन्धयः पञ्च सीमन्तास्तिर्यगूर्ध्वगाः ॥ ३५ ॥**
**भ्रमोन्मादमनोनाशैस्तेषु विद्धेषु नश्यति ।**

शिर सम्बन्धिन पञ्च सन्धय । पञ्चाना कपालखण्डानां सश्लेषा ये शिरस्यवतिष्ठन्ते तिर्यगूर्ध्वगा , त एव सीमन्ताख्या मर्मविशेषा । तेषु—सीमन्ताख्येषु, विद्धेषु भ्रमेण तथोन्मादेन तथा मनोनाशेन— चित्तविस्मृत्या च, नश्यति ।

**आन्तरो मस्तकस्योर्ध्वं सिरासन्धिसमागमः ॥३६॥**
**रोमावर्तोऽधिपो नाम मर्म सद्यो हरत्यसून् ।**

मस्तकस्याभ्यन्तरतो य स्थित , तथोर्ध्व—प्रकृतत्वान्मस्तकस्यैवोपरि, सिरासन्धिसमागम —सिरासन्धीना सन्निपातो, रोमावर्तलक्षण. सोऽधिपो नाम मर्मविशेष । मर्मणामधिपो यथार्थनामा, तदायत्तानि हि सर्वाणि मर्माणीत्यर्थ । सोऽधिपो विद्धो नरस्य सद्योऽसून् हरति—पुरुष मारयतीत्यर्थ ।

१ 'णाख्या' ट ढ । २ 'नाशो वै' अरुण । ३ 'कृत्यरसाज्ञानानित' अ.इ ड चन्द्र । ४ 'सन्धी'इ.ड. । ५ 'सन्धौ यौ' ट,ड. ।

१ 'अमुष्मिन्' ट । २ 'मनीत्येव' ट । ३ 'णादीनि' ट ड । ४ 'पालस' इ ड,त चन्द्र । ५ 'ना ये संश्लेषार्थी शि' ट.ड. । ६ 'चित्तास्मृ' ड. । ७ 'अन्तरे म' ड. ।

इति सप्तोत्तरस्य मर्मशतस्य लक्षणान्युक्त्वा, सामान्येन यन्मर्मलक्षण तदाख्यातुमाह—

**विषमं स्पन्दनं यत्र पीडिते रुक् च मर्म तत् ॥३७॥**

यत्र—यस्मिन् देहदेशे, विषम स्पन्दनं—स्फुरण, तन्मर्म । यत्र च देहदेशे पीडिते सति रुक् च विषमा भवति, तच्च मर्म । अत्रापि विषममिति सम्बध्यते । विषम च विषमा च विषमम्, "नपुसकमनपुसकेनैकवच्च" इति नपुसकशेष । तदेव मर्मलक्षण द्विधा मन्तव्यम्,—कस्मिंश्चिन्मर्मणि सिराधमन्यादिकस्य विषम स्पन्दन प्रायो लक्षणम्, मासास्थिजातीयस्य मर्मण पीडनात् प्राय पीडोत्पत्तिर्लक्षणमिति । सङ्ग्रहे च मर्मविद्धस्य लक्षणमुक्तम् । यथा ( शा अ ७ )—"देहप्रगुप्तिर्गुरुता सम्मोह शीतकामिता । स्वेदो मूर्च्छा वमि श्वासो मर्मविद्धस्य लक्षणम् ॥" इति । मरणकारित्वान्मर्म, मरणसदृशदु खदायित्वाद्वा ।

इदानी मर्मणां सुप्रभेद लक्षण षट्प्रकारमाह—

**मांसास्थिस्नायुधमनीसिरासन्धिसमागमः ।**
**स्यान्मर्मेति च तेनात्र सुतरां जीवितं स्थितम् ॥३८॥**

मासादीना सन्ध्यन्ताना स्वजात्यपेक्षो य समागम —सन्निपात, स मर्माख्य, तन्मर्मेति तस्यैव नाम । तदेव मासपेशीसमागमो मासमर्म, अस्थ्ना समागमोऽस्थिमर्म, स्नायूना समागम स्नायुमर्म, धमनीना समागमो धमनीमर्म, सिराणा समागम सिरामर्म, सन्धीना समागम सन्धिमर्मेति । यतो मासादीना य समागम स एव मर्मेत्युच्यते, तेन हेतुना, अत्र सुतरा जीवित स्थित—प्राणा व्यवस्थिता ।

ननु, यदि मासादीना समागमो मर्मेत्यभिधीयते, तदानीमनेकसङ्ख्याकानि मर्माणि शरीरे सम्भाव्येरन् । मासपेश्यादिभावानामनेकसङ्ख्याश्रयत्वात् । तथा च,—मासपेशीशतानि पञ्च पुसामुक्तानि स्त्रीणा तु विंशत्यधिकानि ( हृ शा अ ३।१७ ) । एवमस्थ्यादीन्यप्यनेकान्युक्तानि । ततश्च मर्मणामसङ्ख्येयत्व प्राप्नोति । एवं च "सप्तोत्तर मर्मशतम्" ( श्लो. १ ) इति विरुध्यत इत्याह—

**बाहुल्येन तु निर्देशः षोढैवं मर्मकल्पना ।**
**प्राणायतनसामान्यादैक्यं वा मर्मणां मतम् ॥ ३९॥**

सप्तोत्तरमेव मर्मणा शतमित्येव न । कि तर्हि ? पूर्वोक्तेन न्यायेन बहूनि मर्माणि । "सप्तोत्तर मर्मशतम्" इत्यय तु यो निर्देश स बाहुल्येन—भूयसा, येषा मर्मणा मर्मत्वेन प्रसिद्धिस्तद्विषय एव । एव—अनेन प्रकारेण मासास्थ्यादीना समागमो मर्मेति, मर्मणा षोढा—षड्विधा, कल्पना भवति । कल्पनाशब्देनैतत्प्रतिपादयति,—तदेव मनुष्यस्य प्रसिद्धितो जीवितधामत्वेन मर्मणा कल्पना—निरूपणा । प्राणेत्यादि । अथवा न मर्मणा षोढा कल्पना । कि तर्हि ? प्राणायतनसामान्यात्—जीवितस्याधिष्ठानमित्येवलक्षणात्, ऐक्य—एकत्व, मर्मणा मत—न षट्त्वम् । एवमेकैव मर्मकल्पना । एव सङ्क्षेपविस्तरकौशल मर्मसु दर्शितम् ।

मासादीना सन्ध्यन्ताना यथास्व प्रतिनियतानि मर्माणि सङ्ख्ययाऽभि ग्रातुमाह—

**मासजानि दशेन्द्राख्यतलहृत्स्तनरोहिताः ।**

जङ्घयोरिन्द्राख्ये द्वे मर्मणी, बाह्वोर्द्वे एव, तलहृदाख्यानि चत्वारि—पादयोर्द्वे हस्तयोर्द्वे इति, स्तनरोहिते द्वे—प्रत्येक स्तने एककम्, एव दश मासजानि ।

**शङ्खौ कटीकतरुणे नितम्बावंसयोः फले ॥ ४० ॥**
**अस्थ्न्यष्टौ**

अस्थ्न्यष्टौ मर्माणि । शङ्खौ द्वे मर्मणी, कटीकतरुणे द्वे, नितम्बौ द्वे, असयो फलके द्वे, इत्येवमष्टौ मर्माणि ।

**स्नावमर्माणि त्रयोविंशतिराणयः ।**
**कूर्चकूर्चशिरोऽपाङ्गक्षिप्रोत्क्षेपासबस्तयः ॥ ४१ ॥**

स्नावमर्माणि त्रयोविंशति । कथम् ? आणयश्चत्वारि—प्रत्येकमूरुमध्ये एकैक बाह्वो प्रत्येकमेकैकम्, एव चत्वार्याणय । कूर्चाख्यानि चत्वारि—हस्तयोर्द्वे पादयोर्द्वे । कूर्चशिर सञ्ज्ञानि चत्वारि—पादयोर्द्वे हस्तयोर्द्वे इति चत्वारि । अपाङ्गाख्ये द्वे—"नेत्रयोर्बाह्यत " ( श्लो ३१ ) इत्यादिना निर्दिष्टे द्वे । क्षिप्राख्यानि चत्वारि—"अङ्गुष्ठाङ्गुलिमध्यस्थ क्षिप्र" ( श्लो ३ ) इति, तच्च पादद्वये द्विविध हस्तद्वये च । उत्क्षेपौ द्वौ—"केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपौ" ( श्लो ३२ ) इति । असाख्ये द्वे—"स्कन्धासपीठसम्बन्धावसौ" ( श्लो २६ ) इति । बस्तिरेको—"मूत्राशयो" ( श्लो १० ) इत्यादिनोक्त । एव स्नावमर्माणि त्रयोविंशति ।

**गुदापस्तम्भविधुरशृङ्गाटानि नवादिशेत् ।**
**मर्माणि धमनीस्थानि**

गुद—स्थूलान्त्रबद्ध एक । अपस्तम्भाख्ये द्वे—"अपस्तम्भावुर पार्श्वे नाड्यावनिलवाहिनी ।" (श्लो १५) इति, विधुराख्ये द्वे—"अधस्तात्कर्णयोर्निम्ने विधुरे" ( श्लो. २९ ) इति । शृङ्गाटकाख्यानि चत्वारि—"जिह्वाक्षिनासिका" ( श्लो. ३४ ) इत्यादिनोक्तानि । एवं धमनीस्थाने—धमन्याश्रितानि, नव मर्माणि ।

**सप्तत्रिंशत्सिराश्रयाः ॥ ४२ ॥**
**बृहत्यौ मातृका नीले मन्ये कक्षाधरौ फणौ ।**
**विटपे हृदयं नाभिः पार्श्वसन्धी *स्तनाधरे ॥ ४३ ॥**
**अपालापौ स्थपन्युर्वश्चतस्रो लोहितानि च ।**

१ 'न्याख्यस्य' ट ड । २ 'देहे प्र' ट. । ३ 'कामता' ड ण त. । ४ 'णा मासादिप्र' इति क्वचित् । ५ 'सजा' इति क्वचित् । ६ 'ख्य इति च तस्यै' ड । ७ 'मर्मेत्युच्यते' ड । ८ 'न्यने' ण त. । ९ 'स्मृतम्' इ ण त. । १० 'लेकान्तत ।' ड.त । लेकान्तिकम् ।' ण ।

१ 'रि—तानि पा' ण त । २ 'स्नायुम' अ । ३ 'स्नायुम' ड. । ४ 'ठवन्धार्यावसौ' ट ड । ५ 'गुदोऽप' अ.त चन्द्र । *६ 'स्तनान्तरे' इ.ड.ट । स्तनाधरे—स्तनमूले ।

सिराश्रया मर्मविशेषा सप्तत्रिंशत्। कथम्? इत्याह-बृहत्या-वित्यादि । बृहत्यौ द्वे-"स्तनमूलार्जवे भागे" ( श्लो २३ ) इत्यादिनोक्ते । मातृकाख्यानि-"कण्ठनाडीमुभयतो जिह्वाना-सागता" ( श्लो २८ ) इत्यादिनोक्तान्यष्टौ । नीलाख्ये द्वे सिरे मन्याख्ये [च] द्वे-"कण्ठनाडीमुभयत सिराहनुसमा-श्रिता । चतस्र" ( श्लो २६ ) इत्यादिनोक्तानि । कक्षावरौ द्वौ-यथोक्तम् ( श्लो ९ ) "कक्षाक्षमध्ये कक्षाधृक्' इत्यादि । फणौ द्वौ-"फणावुभयतो" ( श्लो ३० ) इत्यादिना कृतल क्षणौ । विटपे द्वे-"मुष्कवङ्क्षणयोर्मध्ये" ( श्लो ८ ) प्रत्येक सक्थ्न्येकम्, द्वितीयेऽप्येवम् । हृदयमेकमेव, तस्य लक्षणम् ( श्लो १३ )-"द्वारमामाशयस्य च" इत्यादि । नाभिरेक एव, तल्लक्षणम् ( श्लो १२ )-"देहामपक्वस्थानाना" इत्यादि । पार्श्वसन्धी द्वौ-"पार्श्वान्तरनिबद्धौ च" ( श्लो २२ ) इत्यादि-नोक्तौ । *[१]स्तनावरे-स्तनयोरधो, द्वे । अपालापौ द्वावेव-"पृष्ठ-वंशोरसो" ( श्लो १६ ) इत्यादिनोक्तौ । स्थपनी एकैव, तल्लक्षणम् ( श्लो ३३ )-"भ्रुवोर्मध्ये" इति । उर्व्यश्चतस्र - ऊर्वोर्द्वयोर्द्वे बाह्वोश्च, "उर्व्यूरुमध्ये" ( श्लो ७ ) इति तस्या लक्षणम्, "इति सक्थ्नोस्तथा बाह्वो" ( श्लो ८ ) इति चाति-देश । लोहितानीति लोहिताक्षनामानि चत्वारि, "ऊरुमूले लोहिताक्ष" "सक्थिवद्बाह्वो" (श्लो ७-८) इति तल्लक्षणम् ।

सम्प्रति सन्धिमर्माण्याह—

**सन्धौ विंशतिरावर्तौ मणिबन्धौ कुकुन्दरौ ॥४४॥**
**सीमन्ताः कूर्परौ गुल्फौ कृकाट्यौ जानुनी पति ।**

सन्धौ विंशतिर्मर्माणि । आवर्ताख्ये द्वे, तयोर्लक्षणम् ( श्लो ३१ )-"तयोपरि भ्रुवोर्निम्नावावर्तौ" इति । मणिबन्धौ द्वौ, [२]तल्ल-क्षणम् ( श्लो ८ )-"मणिबन्धोऽत्र गुल्फवत्" इति । कुकु-न्दरौ द्वौ, तल्लक्षणम् ( श्लो. १९ )-"जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दरौ ।" इति । सीमन्ताख्यानि पञ्च, तल्लक्षणम् ( श्लो ३५ )-"कपालसन्धय पञ्च सीमन्ता" इति । कूर्परौ [३]द्वौ, तल्लक्षणम् ( श्लो ९ )-"कूर्पर जानुवत्" इति । कूर्परशब्द उभयलिङ्ग । गुल्फौ द्वे मर्मणी, तयोर्लक्षणम् ( श्लो ५ )-"ज-ङ्घाचरणयो सन्धौ गुल्फ" इति । कृकाट्यौ द्वे, तल्लक्षणम् ( श्लो २९ )-"कृकाटिके शिरोग्रीवासन्धी" इति । जानुनी द्वे, तयोर्लक्षणम् ( श्लो ६ )-"जङ्घोर्वो सङ्गमे जानु" इति । पति -अधिपतिर्मर्मणाम्, तच्चैकम्, तल्लक्षणम् (श्लो ३६ )-"[४]अन्तरो मस्तकस्योर्ध्व" इत्यादिनोक्तम्। एव सप्तोत्तर मर्मशतं मांसादिपरिकल्पनया कल्पितम् ।

**मांसमर्म गुदो[५]ऽन्येषां, [६]स्नानि कक्षाधरौ तथा ॥४५॥**
**विटपौ विधुराख्ये च, शृङ्गाटानि सिरासु तु ।**

१ 'ताख्य' ट ड । २ 'तयोर्लक्ष' ट ड । ३ 'द्वौ, कूर्परशब्द' ट ड, । 'द्वो-बाह्वो , कूर्परशब्द' ण त । ४ 'अन्तरे म' ट ड, । ५ अन्येषा-सुश्रुतसङ्ग्रहादीनाम् । ६ 'स्नाव्नि' इति क्वचित् ।

**अपस्तम्भावपाङ्गौ च, धमनीस्थं न [१]तैः स्मृतम् ॥४६॥**

अन्येषामाचार्याणा मतेन गुदो मासमर्म-न धमनीमर्म । स्नाव्नीत्यादि । तेषामेव मतेन कक्षाधरौ स्नावाश्रितौ न तु सिरा-श्रयौ । विटपौ विधुराख्ये च स्नावाश्रितो । पूर्वमतेन तु विटपौ सिराश्रितौ, विधुरे च धमन्याश्रिते । शृङ्गाटकानि चत्वा-र्यपि सिरास्वेव, तुरवधारणे, न तु धमनीस्थानि, अपस्तम्भौ तथाऽपाङ्गौ च । एतद्धमनीस्थमन्यैराचार्यैर्न स्मृतम्, अपि तु स्नावा[या]श्रितमभिहितम् ।

इदानी मासादिजाना मर्मणां व्यधलक्षणमाह—

**विद्धेऽजस्रमसृक्स्रावो मांसधावनवत्तनुः ।**
**पाण्डुत्वमिन्द्रियाज्ञानं मरण [२]चाशु मासजे ॥ ४७ ॥**

मासजे मर्मणि विद्धे सति, [अजस्र-] अनवरत, असृक्स्रा-वो भवति। मासधावनवत्-मासधावनोदकेन तुल्य । तथा, तनु -अच्छो भवति, न बहल । पाण्डुत्व-पीतीभत्व शरीर-स्य। इन्द्रियै -चक्षुरादिभि , स्वविषयाज्ञान-अनवबोध । मरण चाशु-शीघ्र, भवति । तदेवमिन्द्रबस्त्यादिमासजमर्मव्यधे निर-न्तरस्रावादिसर्वलिङ्गदर्शनानुमानेन मरणमनुमीयमान बुध्वा वैद्य प्रत्याख्याय[३] चिकित्सा प्रयोजयेत्। नियतायुषा क्वचि-न्मरण[४]स्य व्यभिचारादिति ।

**मज्जान्वितोऽच्छो विच्छिन्नः**
**स्रावो रुक् चास्थिमर्मणि ।**

अस्थिमर्मणि-शङ्खादिके, विद्धे मज्जान्वित स्राव, तथाऽ-न्छो-न घन, विच्छिन्नो-न मासमर्मव्यध इव निरन्तरो, भवति । रुक्चेत्यनेनात्यन्त पीडा भवतीति प्रतिपादयति । रुङ्मात्रस्य सर्वमर्मस्वपि सद्भावात् ।

**आयामाक्षेपकस्तम्भाः स्नावजेऽभ्यधिकं रुजा ॥४८॥**
**यानस्थानासनाशक्तिर्वैकल्यमथवाऽन्तकः ।**

[५]स्नावजे-कूर्चा(आण्या)दिके मर्मणि, विद्धे आयामादयो भव-न्ति। आक्षेपक -आक्षेप , स्तम्भो-यथास्वमङ्गानाम्, अतिरुजा च । तथा, यानस्थानासनाशक्ति -यातु स्थातुमासितु चासाम-र्थ्यम् । वैकल्य चाङ्गानाम् । अथवाऽन्तको-मरण, भवति ।

१ तै -सुश्रुतसङ्ग्रहादिभि , धमनीस्थानि मर्माणि नोक्तानीत्यर्थ । हृदयोक्तानि धमनीमर्माणि तैर्यथायथ मासस्नावसिरामर्मस्वेव सन्नि-वेशितानि । तानि च ( सु शा अ ६।४, स शा अ ७ )-"एकादश मासमर्माणि, एकचत्वारिंशत्सिरामर्माणि, सप्तविंशति स्नायुमर्माणि, अष्टावस्थिममाणि, विंशति सन्धिमर्माणि च ।" इति कृत्वा सप्तोत्तरमेव मर्मशत पञ्चविधेष्वेव माससिरास्नाय्वस्थि-सन्धिषु निर्दिष्टम् । इह तु षड्विधेषु सधमनीषु तेष्विति विशेष । २ 'णा वेधे ल' ट ड । ३ 'वाऽऽशु' इ । ४ 'तावभासत्व' ट ड । ५ 'दिके मासजे मर्म' ट ट । 'दिजमा' ण त । ६ 'य प्र-त्याख्यान कृत्वा, चि' ट । ७ 'णव्य' ट ड. । ८ 'स्नायुगेऽ' इ । ९ 'धिका रुज.' अ । 'क रुज ' ड.ण.त । १० 'स्नायुजे' ट ड. ।

**रक्तं सशब्दफेनोष्णं धमनीस्थे विचेतसः ॥ ४९ ॥**

धमनीस्थे-[गुदा]पस्तम्भादौ मर्मणि, विद्धे सति विचेतसो-मूच्छितस्य सतो, रक्त स्रवेत् । कीदृशम् ? सशब्दफेनोष्णम् । सशब्दस्यात्र प्रत्येक सम्बन्ध ।

**सिरामर्मव्यधे सान्द्रमजस्रं बहसृक्स्रवेत् ।**
**तत्क्षयात्तृड्भ्रमश्वासमोहहिध्माभिरन्तक· ॥ ५० ॥**

सिरामर्मणो-बृहत्यादेर्व्यधे सति, असृक् सान्द्र-घन, अजस्र-निरन्तरं, बहु-प्रभूत, स्रवति । तत्क्षयात्-तस्यासृज क्षयात्, तृड्भ्रमादिभिरन्तको-जीवितनाश ।

**वस्तु शूकैरिवाकीर्णं रूढे च कुणिखञ्जता ।**
**बलचेष्टाक्षय· शोष· पर्वशोफश्च सन्धिजे ॥ ५१ ॥**

सन्धिजे मर्मणि-आवर्तादौ, विद्धे वस्तु शूकैरिवाकीर्णं भवति। वस्तुशब्देनाधिष्ठान विद्धदेश उच्यते। तच्छूकै-शालियवादिसम्बन्धिभि किंशारुभि[1], व्याप्तमिव भवति। रूढे च सति तस्मिन्मर्मव्यधे कुणिता खञ्जता वा भवति । तथा बलचेष्टयो क्षय, तथा शोषोऽङ्गस्य, पर्वसु शोफ-श्वयथुश्च, सन्धिजे भवति ।

इदानीमेषामेव मर्मणा व्यधे जीवितनाशे काल नियमयति—

**नाभिशङ्खाधिपापानहृच्छृङ्गाटकबस्तयः ।**
**अष्टौ च मातृकाः सद्यो निघ्नन्त्येका[2]न्नविंशतिः ॥५२॥**
**सप्ताहः [3]परमस्तेषा कालः कालस्य कर्षणे ।**

नाभिशङ्खादीनि मर्माण्येकान्नविंशति सद्यो घ्नन्ति । नाभिरेक, शङ्खौ द्वौ, अधिप एक, अपानोऽप्येक, हृदेकम्, शृङ्गाटकानि चत्वारि, बस्तिरेक, अष्टौ मातृका[4], एकान्नविंशतिरेतानि सद्य प्राणहराणि । तेषा-मर्मणा, कालस्य-मृत्यो, कर्षणे-आकर्षणे, सप्ताह [3]परम काल-प्रकृष्टोऽवधि । एकान्नविंशतिरिति न विंशतिरिति सुप्सुपेति समास, तत एकेन[5] न विंशतिरिति तृतीयेति योगविभागात्समास, तत "एकादिश्चैकस्य" इत्यादिना नञ प्रकृतिभाव एकस्यादुगागमश्च, ऊनार्थेऽत्र नञ्, एकोनविंशतिरित्यर्थ ।

**त्रयस्त्रिंशदपस्तम्भतलहृत्पार्श्वसन्धयः ॥ ५३ ॥**
**कटीतरुणसीमन्तस्तनमूलेन्द्रबस्तयः ।**
**क्षिप्रापालापबृहतीनितम्बस्तनरोहिताः ॥ ५४ ॥**
**कालान्तरप्राणहरा मासमासार्द्धजीविताः ।**

त्रयस्त्रिंशदपस्तम्भादय कालान्तरप्राणहरा । मास मासार्द्ध वा जीवित येषु विद्धेष्विति मासमासार्द्धजीविता, मासेन प्राणान् हरन्ति मासार्द्धेन वेत्यर्थ । सङ्ग्रहे तूक्तम्[6] ( शा अ ७ )—"सौम्याग्नेयत्वात्तेषा पक्षाभ्यन्तर काल ।" इति । त्रयस्त्रिंशदिति "त्रेस्त्रय" इति त्रयसादेश· । तत्र, अपस्तम्भौ द्वौ, तलहृन्ति चत्वारि, पार्श्वसन्धी द्वौ, कटीकतरुणे द्वे, सीमन्ता पञ्च, स्तनमूले द्वे, इन्द्रबस्तयश्चत्वारो-जङ्घामध्ययोर्द्वे बाहुमध्ययोर्द्वे, क्षिप्राणि चत्वारि-हस्तयोर्द्वे पादयोर्द्वे, अपालापबृहतीनितम्बस्तनरोहिता प्रत्येक द्वौ द्वाविति ।

**उत्क्षेपौ स्थपनी त्रीणि विशल्यघ्नानि, तत्र हि[1] ॥५५॥**
**वायुर्मांसवसामज्जमस्तुलुङ्गानि शोषयन् ।**
**शल्यापाये विनिर्गच्छन् श्वासात्कासाच्च हन्त्यसून् ॥**

उत्क्षेपौ द्वौ स्थपन्येका, इत्येतानि त्रीणि विशल्यघ्नानि । कोऽत्र हेतु ? इत्याह-तत्र हीत्यादि । हि-यस्मात्, तत्र-व्यधे, शल्यापाये वायुर्विनिर्गच्छन्-निर्यान्, मांसादीन् शोषयन् श्वासकासाभ्या प्राणान् हन्ति । तत्र च हेतौ शतृप्रत्यय । निर्गमेन हि हेतुना मासादीनां शोषण भवति ।

**फणावपाङ्गौ विधुरे[2] नीले मन्ये कृकाटिके ।**
**अंसांसफलकावर्तविटपोर्वीकुकुन्दराः ॥ ५७ ॥**
**सजानुलोहिता[3]क्षाणिकक्षाधृक्कूर्चकूर्पराः ।**
**वैकल्यमिति चत्वारि चत्वारिंशच्च कुर्वते ॥ ५८ ॥**
**हरन्ति तान्यपि प्राणान् कदाचिदभिघाततः ।**

फणादीनि विटपान्तानि प्रत्येक द्वौ द्वौ, उर्व्यश्चतस्र, कुकुन्दरौ द्वौ, जानुनी[4] द्वे, लोहिता[5]क्षाणि चत्वारि, आणयश्चत्वार, कक्षाधरौ द्वौ, कूर्चाश्चत्वारो-हस्तयोर्द्वौ पादयोर्द्वौ, कूर्परौ द्वौ, इत्येव चत्वारि चत्वारिंशच्चेति चतुश्चत्वारिंशन्मर्माणि वै[6]कल्यमङ्गस्य कुर्वते । कदाचित्त्वभिघातात् तान्यपि-चतुश्चत्वारिंशत्, प्राणान् हरन्ति ।

**अष्टौ कूर्चशिरोगुल्फमणिबन्धा रुजाकराः ॥ ५९ ॥**

अष्टौ कूर्चादयो मर्मविशेषा रुजाकरा[7] । "अग्निवायुसोमगुणबाहुल्यात्। अग्निवायू हि विशेषेण शूलकरौ। सोमस्तु [8]प्राणावलम्बक (स शा अ ७)।" इति नैतानि प्राणहन्तृणि । तत्र कूर्चशिरासि हस्तपादेषु चत्वारि, गुल्फौ द्वौ, मणिबन्धा द्वौ, इत्यष्टौ ।

इदानीं मर्मणां यथायथ प्रमाणमभिधातुमाह—

**तेषां विटपकक्षाधृ[9]ग्गुर्व्यः कूर्चशिरांसि च ।**
**द्वादशाङ्गुलमानानि**

तेषा-मर्मणा मध्ये, विटपादीनि द्वादश मर्माण्यङ्गुलमानानि-अङ्गुलप्रमाणानि ।

**द्व्यङ्गुले मणिबन्धने ॥ ६० ॥**
**गुल्फौ च स्तनमूले च**

मणिबन्धने-मणिबन्धौ, द्व्यङ्गुलप्रमाणौ । गुल्फौ स्तनमूले च द्व्यङ्गुले प्रत्येकम् । एकश्चशब्द समुच्चयार्थो द्वितीय पादपूरणे ।

**[10]त्र्यङ्गुलं जानुकूर्परम् ।**

त्र्यङ्गुलप्रमाणौ जानू कूर्परौ च ।

---

१ "किंशारु सस्यशूक स्यात्" इत्यमर । २ 'कोनविं' अ इ ड ण त ट । ३ 'परम' इ चन्द्र, ट ड । ४ 'का, एवमेकोन' ट.ड । ५ 'न ऊना विं' ट ण त । ६ 'चोक्त' ण.त. ।

१ 'तु' इ । २ 'विधुरौ' इ ट ण त । ३ 'ताख्याणि' ट । ४ 'जानू द्वौ' ट ड । ५ 'ताख्यानि' ट ड. । ६ 'वैकल्य-पङ्ग्वादिलक्षण' इति चन्द्र । ७ 'रुजाकरौ' स द्व. । ८ 'प्राणानवलम्बत इत्युक्तम् ।' स. द्व. । ९ 'गुर्वीकूर्च' अ. । १० 'त्र्यङ्गुलौ जानुकूर्परौ' इति क्वचित् ।

**अपानबस्तिहृन्नाभिनीला॰ सीमन्तमातृकाः ॥ ६१ ॥**
**कूर्चशृङ्गाटमन्याश्च त्रिशदेकेन वर्जिताः ।**
**आत्मपाणितलोन्मानाः**

अपानबस्त्यादयस्त्रिशदेकेन वर्जिता –एकोनत्रिंशत्, आत्मपाणितलोन्माना –स्वहस्ततलपरिमाणा ।

**शेषाण्यर्द्धाङ्गुलं वदेत् ॥ ६२ ॥**
**पञ्चाशतषट् च मर्माणि, तिलव्रीहिसमान्यपि ।**
**इष्टानि मर्माण्यन्येषाम्**

शेषाणि षट्पञ्चाशन्मर्माणि स्वेनाङ्गुलपरिमाणेनार्द्धाङ्गुलप्रमाणान्यादिशेत् । अन्येषा तन्त्रकृता तिलप्रमाणानि व्रीहिप्रमाणानि वा मर्माणीष्टानि–अभिमतानि । "परमतमप्रतिषिद्धमनुमतमेव' इत्यस्यापि ग्रन्थकृत एतदेव मतमिति बोध्यम् ।

इदानी यथा मर्माभिघा॰ते मरण सम्पद्यते तथा दर्शयति—

**चतुर्द्धोक्ताः सिरास्तु याः ॥ ६३ ॥**
**तर्पयन्ति वपुः कृत्स्नं ता मर्माण्याश्रितास्ततः ।**
**तत्क्षतात्क्षतजात्यर्थप्रवृत्तेर्धातुसङ्क्षये ॥ ६४ ॥**
**वृद्धश्चलो रुजस्तीव्राः प्रतनोति समीरयन् ।**
**तेजस्तदुद्धृतं धत्ते तृष्णाशोषमदभ्रमान् ॥ ६५ ॥**
**खिन्नस्रस्तश्लथतनुं हरत्येन ततोऽन्तकः ।**

या सिर॰श्चतुर्द्धा उक्ता –प्राङ्निर्दिष्टा वातपित्तकफशुद्धशुद्धरक्तवाहिन्य सप्तसङ्ख्या, कृत्स्न–अशेष, शरीरं तर्पयन्ति–प्रीणयन्ति, ता मर्माण्याश्रिता –गता प्राप्ता । तत्क्षतादित्यादि । यत एव सर्वा सिरा मर्माणि प्राप्ता, तत कारणात्–मर्माश्रयलक्षणात्, तत्क्षतात्–तेषा मर्मणा क्षेत तत्क्षत, तस्मान्मर्मक्षतात्कारणात्, क्षतजस्य–रक्तस्य, अतिप्रवृत्ति । तस्मात्क्षतजात्यर्थप्रवृत्ते कारणात्, यो धातुसङ्क्षय –परम्पराक्रमायातो मासादिधा॰वपचय, तस्मिन् धातुक्षये सति यो वृद्धश्चलो–वायु, स तीव्रा –अत्यन्तदु खदायिनी, रुज –शूलविशेषान्, प्रतनोति–करोति । कि कुर्वन्? तेज –पित्त, समीरयन्–उदीरयन् वृद्धि नयन्, तत्–तेज, उद्धृत–बृंहसम्पन्न, तृष्णादीन् धत्ते–करोति । तत –अनन्तर तृष्णादिभ्य, एन–पुरुष मर्मविद्ध, अन्तको हरति । किम्भूतम्? खिन्ना स्रस्ता श्लथा तनुर्यस्य तम् । तदयमर्थ,–मर्माभिघाते रक्तवाहिनीना सिराणा मुखविकासो जायते । तद्विकासाज्जीविताधिष्ठानस्यासृजोऽत्यर्थं यां नि सृतिर्याबत्तस्य क्षय, तत्क्षयाच्च जीवितनाश, आश्रयाभावात् ।

अधुना मर्माभिघाते चिकित्सामाह—

**वर्द्धयेत्सन्धितो गात्रं मर्मण्यभिहते द्रुतम् ॥ ६६ ॥**
**छेदनात्सन्धिदेशस्य सङ्कुचन्ति सिरा ह्यतः ।**
**जीवितं प्राणिनां तत्र रक्ते तिष्ठति तिष्ठति ॥ ६७ ॥**

मर्मण्यभिहते सति, गात्र–शरीर, आश्वेव छेदयेत् । कुत? सन्धित,–सन्धिप्रदेशात् । हि–यस्मात् सन्धिदेशस्य छेदनात्सिरा सङ्कुचन्ति–सवृतमुखा भवन्ति । वर्द्धयेदिति वर्द्धछेदनादाविति चौरादिक । अत –सिरासङ्कोचात्कारणात्, रक्त न बहिर्निसरति । तत्र रक्ते तिष्ठति–बहिरवहति राति, जीवित तिष्ठति ।

तदनेन प्रकारेण मर्माभिघातक्षतान्मरणम्, न त्वमर्माभिघातक्षतात् । अत इदमाह—

**सुविक्षतोऽप्यतो जीवेदमर्मणि न मर्मणि ।**
**प्राणघातिनि जीवेत्तु कश्चिद्वैद्यगुणेन चेत् ॥ ६८ ॥**
**असमग्राभिघाताच्च सोऽपि वैकल्यमश्नुते ।**
**तस्मात्क्षारविषाग्न्यादीन् यत्नान्मर्मसु वर्जयेत् ॥ ६९ ॥**

यतो मर्माभिघातक्षतात् प्राणी म्रियते, नान्यथा क्षतमात्रात् । अत –अस्मात्कारणात्, सुष्ठु कृत्वा विशेषेण क्षतोऽपि–परशतैर्विद्धोऽपि, अमर्मणि विद्धो जीवेत्, न तु मर्मणि विद्धो जीवेत् । किम्भूते? प्राणघातिनि । द्विविध हि मर्म–प्राणघात्येकमपर वैकल्यकरम् । तत्र प्राणघातिनि मर्मणि कुशाग्रेणापि विद्धो न जीवति । अथ पुण्यवाञ्छियतायुश्च प्राणघातिन्यपि मर्मणि विद्धो वैद्यगुणेनासमग्रस्य–असकलस्य, मर्मणोऽभिघाताच्च कश्चिद्यदि विद्धो जीवेत्, सोऽपि वैकल्यमश्नुते–विकलता प्राप्य जीवतीत्यर्थं । वैद्यशब्द प्राधान्याद्व्यादिपादत्रयमुपलक्षयति । वैद्यगुणेन–पादत्रयसम्पत्त्येत्यर्थं । यतश्चैवं मर्माभिघातं सापाय प्राणोपरोधकृत्, तस्मात्कारणात् मर्मसु क्षारादीन् यत्नात्–तात्पर्येण, वर्जयेत्–परिहरेत् । अग्न्यादीनत्रादिशब्देन भल्लातकरसकपिकच्छुशूकादीना ग्रहणम् ।

**मर्माभिघातः स्वल्पोऽपि प्रायशो बाधतेतराम् ।**
**रोगा मर्माश्रयास्तद्वत्प्रक्रान्ता यत्नतोऽपि च ॥ ७० ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां द्वितीये शारीरस्थाने मर्मविभागो नाम चतुर्थोऽध्याय॰ ॥ ४ ॥**

एव मर्माभिघातो रक्ष्य । यस्मान्मर्माभिघात सुष्ठ्वतिशयेनाल्पोऽपि प्रायशो–बाहुल्येन, बाधतेतरा–अतिशयेन पीडयति । न केवल मर्माभिघातो बाधते यावद्रोगा अपि मर्माश्रयास्तद्वद्बाधन्ते । यत्नतोऽपि–आदरेणापि, प्रक्रान्ता –उपक्रान्ता, इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां द्वितीये शारीरस्थाने मर्मविभागो नाम चतुर्थोऽध्याय समाप्त ॥ ४ ॥

१ 'नीलासी' अ इ । २ 'घातेन मरण भवति तथा' ट ड । ३ 'त्यर्थं प्रवृत्तिर्धा' इ । ४ 'त–व्रण, त' ट ड. । ५ 'वृत्तिकार' ण.त । ६ 'चयकृत, त' ट ड । ७ 'ति वृद्धश्चलो वायुस्तीव्रा' ट ड । ८ 'उद्दीपयन्, त' ट ड । ९ 'वृद्धिसम्पन्न' इति क्वचित् । १० 'घातेन र' ण.त. । ११ 'हिनीसिरामुख' ड । १२ 'स्याऽतिसृ' ट.ड. ।

१ 'आशु छे' ण त । २ 'त्वसमग्राभिघातात्' ड । ३ 'तः स्वल्पोऽपि प्रा' ट ट । 'त सोऽपायः' ण. । ४ 'दीनित्यादि' इति क्वचित् । ५ 'मर्माश्रितास्त' अ. । ६ 'तोऽतिबाधतेतराम्, अपि तु रोगा' ट.ड. ।



# पञ्चमोऽध्यायः ।

मर्मविभागादनन्तरं विकृतिविज्ञानीयं शारीरमारभ्यते । यतो मर्मविभागे मर्मशब्द उपात्तः, मरणकारित्वान्मर्मेत्युच्यते, विकृतेरनन्तरं च मरणं दृश्यते, इत्ययमुच्यते—

**अथातो विकृतिविज्ञानीयं शारीरं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥)

प्रकृतिः–स्वभावः, प्रकृतेः–स्वभावात्, प्रच्युतिः–विकृतिः, तस्या विज्ञान–अवबोधः, स विद्यते यस्मिन्निति "मतौ छः सूक्तसाम्नो" इति छः, "अध्यायानुवाकयोर्लुक्" इति तस्य पाक्षिकत्वान्न लुक्, विकृतिविज्ञानीयं, तं शारीरं व्याख्यास्यामः । शेषं पूर्ववत् । विकृतिः पुनरत्र रिष्टमेव विज्ञेयम् ।

अत एवाह—

**पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ।**
**यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ॥१॥**
**(आयुष्मति क्रियाः सर्वाः सफलाः सम्प्रयोजिताः ।**
**भवन्ति भिषजां भूत्यै कृतज्ञ इव भूभुजि ॥ १ ॥**
**क्षीणायुषि कृतं कर्म व्यर्थं कृतमिवाधमे ।**
**अयशो देहसन्देहं स्वार्थहानिं च यच्छति ॥ २ ॥**
**तर्हीदानीं गतासूनां लक्षणं सम्प्रचक्षते ।**
**विकृतिः प्रकृतेः प्राज्ञैः प्रदिष्टा रिष्टसंज्ञया ॥ ३ ॥ )**

यथा फलस्य भाविनो–भविष्यतः पुष्पम्, अग्नेर्भाविनो धूमः, वर्षस्य भाविनो जलदोदयः, तथा–तेनैव दृष्टान्तेन, मृत्योर्भविष्यतो रिष्टं लिङ्ग–गमकं, ध्रुवं–निश्चितम् । ध्रुवशब्दनिर्देशादिदं द्योतयति,–रिष्टच्छायानुकारि तदाभासरूपं मृत्योर्न लिङ्गमिति ।

अत एवाह—

**अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् ।**

न विद्यते पूर्वं रिष्टं यस्य मरणस्य तदरिष्टं तथाविधं मरणं नास्ति । तथा, दृष्टं रिष्टं यस्य जीवितस्य तदेवंभूतं जीवितमपि नास्ति । यत्तु पुष्पादर्शनेऽपि वटवृक्षादौ फलसद्भावो दृश्यते, तत्तु कचिदेव न सर्वत्र, इति नायं दोषोऽत्र चिन्त्यः ।

ननु, "दृष्टरिष्टं जीवितं नास्ति" इत्ययुक्तमेतत्, व्यभिचारात् । तथा च वक्ष्यति ( श्लो १२८ )–"यं नरं सहसा रोगो दुर्बलं परिमुञ्चति । संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥" इत्याह—

**अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ॥ २ ॥**

परमार्थेन यद्रिष्टत्वेन न च निश्चयीकृतं, तस्मिन्नरिष्टे रिष्टविज्ञान–रिष्टत्वावगमः । न च रिष्टेऽपि रिष्टविज्ञानं केषाञ्चिद्भवति । कुतो हेतो ? इत्याह–अनैपुणात् । निपुणस्य भावो नैपुणम् । "हायनान्तयुवादिभ्योऽण्" इत्यण् । न नैपुणमनैपुणं तस्मात्–मिथ्याज्ञानादित्यर्थः । तदेव यदभ्रान्तरिष्टं तदव्यभिचारित्वान्मरणं निश्चितं सूचयति । यदन्यद्रिष्टच्छायानुकारि "यं नरं सहसा रोगो" इत्यादिलक्षणं तद्भ्रान्तमेव । यथा–अधूमे बाष्पादौ धूम इति ज्ञानम् । न च तस्मान्मिथ्याज्ञानादग्न्युपलब्धिर्निश्चिता भवति । तस्माद्युक्तमुक्तं "अरिष्टं नास्ति मरणं" इत्यादि । मुनिरप्याह (?) ( सङ्ग्रहेऽप्युक्तम्, शा अ. १० )–"अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् । अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ॥" इति । सुश्रुतस्तु पठति ( सू अ २८।५ )–"ध्रुवं हि रिष्टे मरणं ब्राह्मणैस्तत्किलामलैः । रसायनतपोदानतत्परैर्वा निवार्यते ॥" इति ।

कृष्णात्रेयस्तु द्विधा रिष्टमिच्छतीति तन्मतमाविष्कुर्वन्नाह–

**केचित्तु तद्द्विधेत्याहुः स्थाय्यस्थायिविभेदतः ।**

केचिदाचार्यास्तत्–रिष्टं, द्विधा वदन्ति । कथम् ? इत्याह–स्थायीत्यादि । तृतीयार्थे तसि । स्थाय्यस्थायिभेदेन द्विप्रकारम् ।

तत्रास्थायिरिष्टभेदं दर्शयन्नाह—

**दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ॥ ३ ॥**
**स दोषाणां शमे शाम्येत्स्थाय्यवश्यं तु मृत्यवे ।**

अपिशब्दः समुच्चये भिन्नक्रमः । रिष्टाभासश्च दोषाणां बाहुल्यात्समुद्भवेत् । दोषाणां शमे–दोषाणां शान्तौ सत्यां, सः–रिष्टाभासः, शाम्येत्–न तु मरणाय सम्पद्यते । स्थायि तु रिष्टमवश्यं मृत्यवे–मरणाय, जायते । ननु, "अरिष्टं नास्ति मरणं" इत्ययुक्तमिवाभाति । रिष्टमन्तरेणाप्यकालमृत्यो राजचौराग्न्युदकादिभिर्दर्शनात् । अत्र सञ्चक्ष्महे । कालमृत्योरेव रिष्टपूर्वकत्वात् । तथा च वक्ष्यति ( श्लो० १४ )–"सर्वे ते कालचोदिता ।" तथा च (श्लो ६१)–"वशगा समवर्तिनः ।" इति । समवर्ती हि कालमृत्युरेव ।

किं तद्रिष्टम् ? इत्याह—

**रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥ ४ ॥**

---

१ अयं विकृतिविज्ञानीयश्चरके इ० १।२।३।४।५।६।७।८।९।१०।११।१२ अध्यायेषु, सुश्रुते सू० २८।३०।३१।३२।३३ अध्यायेषु, अष्टाङ्गसङ्ग्रहे शा० ९।१०।११ अध्यायेषु चास्ति वर्णितः । २ 'प्रकृतेरन्यथात्वं स्वभावप्रच्युतिः–' ण त. । ३ ( ) अ ट. पुस्तकयोः समुपलब्धा इमे श्लोकाः । ४ 'आयासादेह' ट. । ५ 'तदिदानीं' ट. । ६ विकृतिरिति श्लोकार्धं ट. पुस्तके नोपलभ्यते । ७ 'यत्पुष्पा' ट.ड ।

१ 'शय प्रा' ट.ण.त । २ 'अनैपुणात्–अपरीक्षकत्वात्' इति चन्द्र. । ३ 'ज्ञानं, तन्मिथ्याज्ञानम् । न' ड. । ४ 'तु' स सु । ५ 'तपोजप्यत' स सु । ६ 'तद्दोषाणां' अ सं.द्व । ७ 'मे–शान्तौ'ट.ड. । 'मे–दोषशान्तौ' त. ।

**अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ।**
**विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥ ५ ॥**

रूप-गोरादिवर्णविशेष, गौरं श्याम कृष्णो गौरश्याम कृष्णश्याम इति देहप्रकृतिवर्णा । तद्भेदास्तु पद्मगौरादय । "नीलश्यामताम्रहारिद्रशुक्लादयस्तु विकृतय" ( स शा अ ९) । तथा, चक्षुषा यद्ग्राह्य वस्तुजात सस्थानादि तदपि रूपम् । इन्द्रियाणि-चक्षुरादीनि । स्वर-शब्द, प्रतिपुरुष विशिष्टो रव । छाया-वर्णप्रभाश्रया वक्ष्यमाणलक्षणा । प्रतिच्छाया-प्रतिबिम्बम् । क्रिया-देहवाङ्मनोव्यापार । तत्र धावनप्लवनाद्यनेकरूपो व्यायामो नृत्यस्थानकादि-कायिको व्यापार । गीताध्ययनादि-वाचिको व्यापार । रागद्वेषभयेर्ष्यादि-मानस । आदिशब्दोऽन्येषामपि शरीरगतानां भावाना ग्रहणार्थम् । रूप चेन्द्रियाणि च स्वरश्च च्छाया च प्रतिच्छाया च क्रियादयश्च, तेषु रूपादिषु भावेषु, तथाऽन्येष्वपि प्राकृतेषु भावेषु, अनिमित्तत-अकस्मान्निमित्तमन्तरेणैव, या विकृति सा (तत्) समासेन रिष्टमिति लक्षयेत्-जानीयात् । प्रकृतौ भवा-प्राकृता । यथा वातप्रकृतौ चलधृतिस्मृत्यादय । तदेव रूपादिषु भावेषु क्रियादिपर्यन्तेष्वन्येषु च प्राकृतेषु भावेषु या विकृति-स्वभावप्रच्युति, सा (तत्) सङ्क्षेपेण रिष्टम् । विस्तरतस्त्वनेकधा वक्ष्यमाणम् ।

**केशरोम निरभ्यङ्गं यस्याभ्यक्तमिवेक्ष्यते ।**

केशाश्च रोमाणि च तत् केशरोम, यस्य निरभ्यङ्ग-अभ्यङ्गरहित, अभ्यक्तमिवेक्ष्यते-दृश्यते, स कालचोदित इति वचनविपरिणामेन सम्बन्ध । एवमुत्तरत्रापि । एतद्रूपविकृतेरुदाहरणम् ।

इन्द्रियाणामधिष्ठानस्य विकृति-इन्द्रियविकृति, इत्याह—

**यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ॥ ६ ॥**
**जिह्मे विस्तृतसङ्क्षिप्ते सङ्क्षिप्तविनतभ्रुणी ।**
**उद्भ्रान्तदर्शने हीनदर्शने नकुलोपमे ॥ ७ ॥**
**कपोताभे अलाताभे स्रुते लुलितपक्ष्मणी ।**

नेत्रशब्देन नेत्राधिष्ठानमिष्टम्, नेन्द्रियम् । यस्य चले लोचनेऽत्यर्थ-अतिशयेनेतश्चेतश्च परिभ्रमत । तथा, यस्य नेत्रे स्तब्धे-निश्चले । तथा, यस्यान्तर्गते-अन्त प्रविष्टे । तथा, यस्य निर्गते-बहिर्याते । तथा, यस्य जिह्मे-कुटिले । तथा, यस्य विस्तृते-विस्तार गते । तथा, यस्य नेत्रे सङ्क्षिप्ते-सङ्कुचिते । तथा, सङ्क्षिप्ते विशेषेण नते भ्रुवौ ययोस्ते सङ्क्षिप्तविनतभ्रुणी ।

तथा, उद्भ्रान्तदर्शने-विभ्रान्तदृष्टिनी । तथा, हीनदर्शने-अल्पदर्शने नष्टदृष्टिनी वा । तथा, नकुलोपमे-नकुललोचनाभे । समुदायेषु हि प्रवृत्ता शब्दा अवयवेष्वपि वर्तन्त इति नकुलशब्दोऽत्र नकुललोचनविषयो वेद्य । यथा च नागानन्दनाटके (अ १।१७)-"चक्षुस्तामरसानुकारि हरिणा वक्ष स्थल स्पर्धते" इति । अत्र हि हरिवक्षसा वक्ष स्पर्धते इत्ययमर्थो वेद्य । अथवा नकुललोचने उपमा ययोस्ते नकुलोपमे, इत्यत्र उत्तरपदलोपी समास । एव कपोताभे । तथा, अलाताभे-उल्मुकसदृशे । तथा, स्रुते-निर्निमित्तमश्रु परिस्रवत । तथा, लुलिते-वातोद्धत इव पक्ष्मणी ययोस्ते लुलितपक्ष्मणी ।

**नासिकाऽत्यर्थविवृता संवृता पिटिकाचिता ॥ ८ ॥**
**उच्छूना स्फुटिता म्लाना**

तथा, यस्य नासिका निर्निमित्तमत्यर्थ-अतिशयेन, विवृता । अथवा, संवृता-सङ्कुचिता । तथा, पिटिकाचिता-पिटिकाभिर्व्याप्ता । तथा, उच्छूना-ऊर्ध्वं श्वयथुनाऽऽक्रान्ता । तथा, स्फुटिता म्लाना च ।

**यस्यौष्ठो यात्यधोऽधरः ।**
**ऊर्ध्वं द्वितीयः स्यातां वा पक्वजम्बूनिभावुभौ ॥ ९ ॥**

यस्यौष्ठो-दन्तच्छद, अधर-अनुत्तर, अधो याति । द्वितीय-उपरिष्टाद्भवो यो दन्तच्छद, स ऊर्ध्वं याति । तथा, यस्य च पक्वजम्बूफलनीलौ द्वावोष्ठौ भवत ।

**दन्ताः सशर्कराः श्यावास्ताम्राः पुष्पितपङ्किताः ।**
**सहसैव पतेयुर्वा**

तथा, यस्य दन्ता सशर्करा-शर्कराभिरान्विता, तथा श्यावास्तथा ताम्राश्च वर्णत, तथा पुष्पिता-सञ्जातपुष्पा, तथा पङ्किता-सञ्जातपङ्का कर्दमोपलिप्ता इव, तथा सहसैव-झगित्येव, यस्य वा द्विजा पतेयु-भ्रंशेयु ।

**जिह्वा जिह्मा विसर्पिणी ॥ १० ॥**
**शूना शुष्का गुरुः श्यावा लिप्ता सुप्ता सकण्टका ।**

तथा, यस्य जिह्वा-जिह्वेन्द्रियाधिष्ठान, जिह्मा-कुटिला, तथा विसर्पिणी-कारण विना विशेषेण सर्पति तच्छिला, तथा शूना-निमित्त विनाऽपि [श्वयथुयुक्ता], तथा शुष्का गुरुश्च, तथा श्यावा, तथा लिप्ता, तथा सुप्ता-सुप्तवत्सुप्ता रसाज्ञानाद्विचेतनेत्यर्थ, तथा सकण्टका-कण्टकाचितेव ।

**शिरः शिरोधरा वोढुं पृष्ठं वा भारमात्मनः ॥ ११ ॥**
**हनू वा पिण्डमास्यस्थं शक्नुवन्ति न यस्य च ।**

यस्य पुस शिरोधरा-ग्रीवा, शिरो वोढु न शक्नोति ।

१ 'गौरो गौरश्याम कृष्ण इति । तद्भेदास्तु पद्मगौरादय । देहप्रकृतिवर्णास्तु नील० दय । तथा' ट ड ण त । २ 'श्यावता' ट ड । ३ 'रूपव्यायामोत्पत्तिस्था' ट ड. । ४ 'चलोभभयेत्यादि' ट ड । ५ 'रजाना' ट । 'रगाना' ड. । ६ 'भावजाताना ग्रहणार्थं' ट.ड । ७ 'सेनैव रि' ट ड । ८ 'वातादिप्र' ण त. । ९ 'लनोदि' ट.ड. । १० 'ले नेत्रे-अति' ड. ।

१ 'अत्रापि ह' ट । २ 'मध्यमपद' इति क्वचित् । ३ 'लतिभौ द्वा' ट. । ४ 'झटिले' ट. । ५ 'सुप्तेव सु' ट.ड. ।

तथा, यस्य पृष्ठं वा आत्मनो भार-पृष्ठस्य [1]वोढृत्वेनोपयारूढ ग्रीवादिकं धारयितुं, न शक्नोति । यस्य वा पुंसो हनू भक्त-पिण्ड-कवलं, आस्यस्थं वोढुं न शक्नुत । एवं शिरोधरादीनि त्रीण्यङ्गानि स्वमात्मीयं कायं यस्य वोढुं न शक्नुवन्ति, स [2]कालचोदित इति योज्यम् ।

**यस्यानिमित्तमङ्गानि गुरूण्यति लघूनि वा ॥ १२ ॥**

यस्यानिमित्त-कारणं विना, अङ्गान्यतिगुरूणि कदाचिदति-लघूनि वा भवन्ति ।

**विषदोषाद्विना यस्य खेभ्यो रक्तं प्रवर्तते ।**

तथा, यस्य विषदोषमन्तरेण खेभ्य -छिद्रेभ्यो, रक्तं प्रवर्तते-आयाति ।

**उत्सिक्तं मेहनं यस्य वृषणावतिनिःसृतौ ॥ १३ ॥**
**अतोऽन्यथा वा यस्य स्यात्**

यस्य मेहन-लिङ्गं, उत्सिक्त-ऊर्ध्वं गतम् । तथा, वृषणावति-नि सृतौ-प्रलम्बौ । अतोऽन्यथा वा-उक्तप्रकाराद्विपरीत प्रकारो य सोऽन्यथा, यथा-वृषणावुत्सिक्तावतिनि सृत मेहनमिति ।

**सर्वे ते [3]कालचोदिताः ।**

"केशरोम निरभ्यङ्गं" (श्लो ६ ) इत्यारभ्य यावत् "अतोऽ-न्यथा वा" इत्येतत्पर्यन्तं[4]ग्रन्थोक्त लक्षण येषां जात ते पुरुषा सर्वे कालेन-मृत्युना, चोदिता -अन्तकेनात्मसात्कृता इत्यर्थं । ननु, अत्र कालनियमो न कृतं कियता कालेन मृत्युर्भवति मासेनार्धमासेन वा ? इति सन्देहोंऽत्र युक्तमेतत् । अत्र ब्रूम । अनिर्दिष्टकालाना सवत्सरोऽवधिरिति व्यवस्था वेद्या । तथा चाह ( श्लो २४ )-"वर्षान्तं तस्य जीवितम्" तथा ( श्लो २५ )-"सोऽपि वर्षं न जीवति" इत्यादिवचनान्नास्ति वर्षादूर्ध्वं जातरिष्टस्य जीवितमिति निश्चय ।

**यस्यापूर्वाः सिरालेखा बालेन्द्वाकृतयोऽपि वा ॥१४॥**
**ललाटे बस्तिशीर्षे वा षण्मासान्न स जीवति ।**

यस्य-पुस स्वस्थस्य निर्निमित्तमेव, ललाटे बस्तेर्वा शिरसि, अपूर्वा -अभिनवा न तु प्रागवस्थिता , सिरालेखा -सिराराजयो, दृश्यन्ते । अथवा बालेन्द्वाकृतयो-वक्रा, स पुमान् षण्मासान्न जीवति ।

**पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ॥ १५ ॥**
**प्लवते प्लवमानस्य षण्मासास्तस्य जीवितम् ।**

तथा, यस्य पुस प्लवमानस्य-जले स्नानं कुर्वत , शरीरे पद्मिनीपत्रवत्-पद्मिनीपत्रस्थिततोयवत्, तोय प्लवते-अन-वस्थितस्थिति भवति, तस्यापि षण्मासा न जीवितम् । पद्मि नीपत्रवदिति सप्तम्यर्थे वतिर्न षष्ठ्यर्थे, शरीर इति सप्तम्या [2]निर्दिष्टत्वात् । तथा चोक्तं भाष्यकृता-"उपमाने य सशय. स उपमेयाद्यावर्तते ।" इति ।

**हरिताभाः सिरा यस्य रोमकूपाश्च संवृताः ॥ १६ ॥**
**सोऽम्लाभिलाषी पुरुष पित्तान्मरणमश्नुते ।**

यस्य सिरा हरिताभा रोमकूपाश्च सवृता स्यु , स नरोऽम्लाभिलाषी सन् [3]पित्तेन मृत्यु प्राप्नोति ।

**यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा ॥ १७ ॥**
**सस्नेहं, मूर्ध्नि धूमो वा, मासान्तं तस्य जीवितम् ॥**

यस्य पुरुषस्य गोमयचूर्णसदृश चूर्णं सस्नेह मूर्ध्नि मुखे वा भवेत्, तथा मूर्ध्नि धूमो यस्य वा भवति, तस्य मासान्त जीवित स्यात् ।

**मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका नवाः ॥ १८ ॥**
**मृत्युं स्वस्थस्य षड्रात्रात्त्रिरात्रादातुरस्य तु ।**

सीमन्तानामावर्तका -मण्डलानि,-सीमन्तावर्तका , शिरसि भ्रुवोर्वा नवा -अपूर्वा, स्वस्थस्य षड्रात्रान्मृत्यु कुर्वन्ति । आतुरस्य पुनस्त्रिरात्रात् कुर्वन्ति । अनेकार्थत्वाद्धातूना सूच-यन्तीत्यर्थं , न तु विषवन्मारणे तेषा कर्तृत्वम् । तर्हि सूच-यन्तीत्येतदेव कस्मान्न कृतम् ? ब्रूम । यदोत्पद्यन्ते सीम-न्तावर्तकास्तदा निश्चित स्थायि रिष्ट समुत्पन्नमित्यवगन्तव्यमिति प्रतिपादनार्थं कुर्वन्तीत्युक्तम् ।

**जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति ॥ १९ ॥**
**खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ।**

तथा, यस्य जिह्वा श्यावा भवति, तथा मुख पूति-दुर्गन्धि, तथा सव्य-वाममक्षि, निमज्जति-अन्त प्रविशति, तथा यस्य खगा -पक्षिणश्च, मूर्ध्नि लीयन्ते-श्लिष्यन्ति, त परिवर्जयेत् । वैद्य इति शेष ।

**यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ॥ २० ॥**
**आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ।**

यस्य स्नातानुलिप्तस्य-पूर्वं स्नात पश्चादनुलिप्तस्तस्य, आर्द्रेषु सर्वगात्रेषु पूर्व-आदौ, भृशमुर शुष्यति-अतिशयेन वक्ष शोषमायाति, सोऽर्धमास-पक्षं, न जीवति । ननु, "आर्द्रेषु सर्वगात्रेषु" इति न वक्तव्यम्, पुनरुक्तत्वात् । तथा हि-"पूर्वं शुष्यत्युरो भृशम्" इत्युक्ते "आर्द्रेषु सर्वगात्रेषु" इत्यर्थाद्ग-म्यत एव । अन्यथा पूर्वग्रहणमनर्थकं स्यात् । मैवम् । अत्र हि भृशग्रहणात् पूर्वमुरो भृशं शुष्यति, न पुनरन्यान्यपि गात्राणि न शुष्यन्तीत्यायाति । न चैतदिष्टं शास्त्रकृत । अत

१ 'वोढव्यत्वे' ड त. । 'वोढुव्यत्वे' ट ण. । २ 'लनोदि' त । ३ 'लनोदि' इ ण.त. । ४ 'षा पुरुषाणा जा' ट ड । ५ 'नोदि' ड । ६ 'त इयता' ट.ड. । ७ 'ह्यादयु' ट ड. । ८ 'न्नास्त्येव व' ट ड । ९ 'ण्मास तस्य' अ.चन्द्र ,स.स. । 'ण्मासांस्त' इ. । 'ण्मासास्तस्य' ट ण. ।

१ 'सान् जी' ट । 'सा जी' ड । २ 'निर्देशात्' ट ड । ३ 'पित्तान्मरण-मृ' ड । ४ 'यस्य चूर्णं' ण । ५ 'र्वा यस्य स्यु सी' अ. । ६ 'च' अ.इ. चन्द्र । ७ 'ष्वात्र । अ' ट.ड. ।

एव "आर्द्रेषु" इत्याह । तदयमर्थोऽत्राभिप्रेत –यथैवोरसो भृश शोष', तथैव शेषाणामङ्गाना[1] भृशार्द्रता स्यादिति, एतच्च प्रतिपादयितु "आर्द्रेषु" इत्युक्तम् । सर्वगात्रेष्वार्द्रेषु सत्सु पूर्वमुरो भृश शुष्यतीत्येतदाश्चर्यम् । आश्चर्यत्वाद्[2]रिष्टम् ।

**अकस्माद्युगपद्गात्रे वर्णौ प्राकृतवैकृतौ ॥ २१ ॥**
**तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ।**

तत्र प्राकृतो वर्णो–गौरादि प्रागुक्त , वैकृतस्तु वर्णो–नीलादि , तौ प्राकृतवैकृतौ वर्णौ यस्य निमित्तमन्तरेणापि तुल्यकाल देहे भवत , तो मृत्यवे । तथैवोपचयग्लान्यादय परस्पर प्रतिपक्षभूता युगपद्यस्योत्पद्यन्ते तस्य मृत्यवे । आदिशब्देन शैत्यौष्ण्यादीनि गृह्यन्ते ।

**यस्य स्फुटेयुरङ्गुल्यो नाकृष्टा न स जीवति ॥ २२ ॥**
**क्षवकासादिषु तथा यस्यापूर्वो ध्वनिर्भवेत् ।**
**ह्रस्वो दीर्घोऽति वोच्छ्वासः पूतिः सुरभिरेव वा ॥२३॥**

यस्य आकृष्टा अङ्गुल्यो न स्फुटेयु –न त्रुटेयु , स न जीवति । यस्य क्षवादिष्वपूर्वो ध्वनि –अलौकिक शब्द , स्यात् स न जीवति । यस्योच्छ्वासोऽतिह्रस्वोऽतिदीर्घो वा भवेत्, अथवोच्छ्वास पूतिगन्धि सुरभिर्वा यस्य, स न जीवति ।

**आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः ।**
**मलवस्त्रव्रणादौ[3] वा वर्षान्तं तस्य जीवितम् ॥ २४ ॥**

तथा, आप्लुतानाप्लुते–स्नातास्नाते, काये यस्य मानुषमतिक्रान्त –अतिमानुष , गन्ध –सुरभिरसुरभिर्वा, भवति । यस्य मलवस्त्रव्रणादो वाऽतिमानुपो गन्ध स्यात्, वर्षान्त तस्य जीवित–तत्क्षणादारभ्य तावदसाववस्थितजीवितो यावद्वर्षम् । तदन्ते–वत्सरान्ते, मृत्युभाक् जायत इत्यर्थ. ।

**भजन्तेऽत्यङ्गसौरस्याद्यं यूकामक्षिकादयः ।**
**त्यजन्ति वाऽतिवैरस्यात्सोऽपि वर्षं न जीवति ॥२५॥**

शोभनस्य रसस्य भाव सौरस्यम्, अङ्गस्य सौरस्यमङ्गसौरस्यम्, अतिशयेनाङ्गसौरस्याद्धेतोर्यूकामक्षिकादयो य भजन्ते, अथवा यमतिवैरस्यात्त्यजन्ति, सोऽपि वर्षं न जीवति ।

**सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ।**
**शीतेषु भृशमौष्ण्यं वा स्वेदः स्तम्भोऽप्यहेतुकः[4] ॥२६॥**

तथा, यस्य सततोष्मसु–सदोष्णेषु, गात्रेषु–अवयवेषु, भृश शैत्यमुपलक्ष्यते–उपलभ्यते, शीतेषु वा गात्रेषु भृशमौष्ण्य यस्योपलभ्यते, भृशशब्दस्यात्र[5] हि विषयद्वयेऽपि सम्बन्ध । यस्याहेतुक –निर्निमित्त , अङ्गेष्वतिस्वेद[6], तथा स्वेदविषयो य स्तम्भ , सोऽपि यस्य स्यात्, सोऽपि वर्षं न जीवतीति योज्यम् ।

**यो जातशीतपिटिकः शीताङ्गो वा[7] विदह्यते ।**
**उष्णद्वेषी च शीतार्तः स प्रेताधिपगोचरः ॥ २७ ॥**

जाता शीता पिटिका यस्य स जातशीतपिटिक ,–कफोद्भूतपिटिकाक्रान्तदेहो, यो विदह्यते–विदाहमनुभवति, शीताङ्ग[1] सन् यो वा विदह्यते, तथोष्ण द्वेष्टि य पुरुष शीतार्त सन्, स प्रेताधिपगोचर –स मृत्युनाऽऽत्मसात्क्रियत[2] इत्यर्थ ।

**उरस्यूष्मा भवेद्यस्य जठरे चातिशीतता[3] ।**
**भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ॥ २८ ॥**

उरसि यस्योष्मा–औष्ण्य भवेत्, जठरे–उदरे चातिशै[4]त्यम्, पुरीष भिन्न तृष्णा च भवति, स प्रततुल्य , प्राप्तमरणत्वादिति भाव ।

**मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वाऽप्सु[5] निमज्जति ।**
**निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ २९ ॥**

यस्य मूत्र पुरीषं निष्ठ्यूत शुक्र वा अप्सु निमजति–ब्रुडति, यस्य वा निष्ठ्यूत–निष्ठीवन, अनेकवर्णं भवति, असौ मासेन नश्यति ।

**घनीभूतमिवाकाशमाकाशमिव यो घनम् ।**
**अमूर्तमिव मूर्तं च मूर्तं चामूर्तवत्स्थितम्[6] ॥ ३० ॥**
**तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत्[7] ।**
**अनेत्ररोगश्चन्द्रं[8] च बहुरूपमलाञ्छनम् ॥ ३१ ॥**
**जाग्रद्रक्षांसि गन्धर्वान् प्रेतानन्यांश्च तद्विधान् ।**
**रूपं व्याकृति तत्तच्च[9] यः पश्यति स नश्यति ॥ ३२ ॥**

मरणाभिमुख पुरुषो विपर्यासकारिभिर्दोषैरघनादि घनादिरूप मन्यैते[10], घनादि[11] वाऽघनादि मन्यते, तद्विपर्ययेण । अत एवोपमार्थमिवशब्द प्रायुङ्क्त । अघनो घन सम्पन्नो घनीभूत । च्विप्रत्ययान्तस्यास्य "च्वौ" इतीत्वम् । घनीभूतमिवान्तरिक्ष[12] मन्तरिक्षमिव घन मेदिनीधर्ममन्तरिक्षमूर्ध्वस्थ यत्तदध स्थ पातालस्थमिव पश्यति, स नश्यतीति वक्ष्यमाणेन सम्बन्ध ।

चशब्दो भिन्नक्रम इवशब्दश्च । अमूर्तं च वातादिकं मूर्तमिव–रूपवन्तमिव, पश्यति । मूर्तं च वह्न्यादिकममूर्तमिव स्थित य पश्यति स नश्यति । भेडोऽप्यधीते (इ अ ७)–"यस्य दर्शनमायाति वायुरम्बरगोचर[13] । वह्निर्नायाति दीप्तोऽपि तस्या[14]यु क्षयमादिशेत् ॥" इति ।

तथा, तेजस्वि–यद्वस्तवग्न्यादिक भास्वर, तदतेजो–निस्तेजो, य पश्यति । तेजस्वीति "अस्मायामेधा" इत्यादिना विनिः । तद्वच्चेति तेजँस्व्यतेजोदर्शनेन तुल्यं–तद्वत्, शुक्ल कृष्ण य पश्यति, असच्च यद्वस्तु तत्सत् य पश्यति स नश्यति ।

---

१ 'षाणा गात्राणा भृ' ट.ड । २ 'श्चर्यत्वाद्रि' ट.ड । ३ 'णाद्ये वा' अ ड.,ट. । ४ 'म्भोऽप्यहे' त. । ५ 'ब्दस्य वि' ड. । ६ 'त· स्वेद ' ड. । ७ 'वाऽति द' अ. । 'वाऽपि द' इ. ।

१ 'ङ्ग शीतो वा वि' ट ड. । २ 'त्मवशीकृत' ट ड । ३ 'वाऽति' अ. । ४ 'वाऽति' ट.त । ५ 'चाप्सु' स द्व । ६ 'वाऽमू' इ ड.चन्द्र स.द्व । ७ 'जस्यते' अ.इ ड.,ट.चन्द्र । ८ 'रोगी चन्द्र' अरुण । ९ 'तद्वच्च' ड.ण.सं द्व. । १० 'न्यते, तद्वि' ट.ड । ११ 'दि त्वघ' इति कचित् । १२ 'तमन्त' ट ण त । १३ 'ति मारुतोऽम्बरगोचर । अग्निर्नायाति वा दीप्तस्तस्यापि क्षय' भे स. । १४ 'स्यापि क्षय' ड. ।

नेत्रेषु रोगो नेत्ररोग, स विद्यते यस्य नैवं सोऽनेत्ररोगी, तिमिरादिकमन्तरेण बहुरूप चन्द्र पश्यति–बहून् शशाङ्कानालोकयत इत्यर्थ । यो वा अलाञ्छन–अकलङ्क, चन्द्र पश्यति स नश्यति । एषु च घनीभूतमित्यादिषु विशिष्टेषु वस्तुविपर्यासदर्शनमात्रलक्षणस्यैकस्मिन्नेवोदाहरणत्वेन रिष्टे दर्शयितु युक्ते यदनेकरिष्टप्रदर्शन तत्प्रपञ्चार्थ वेद्यम् ।

आसन्नमरणो नरो जाग्रदेव यथास्वरूपाणि रक्ष पिशाचादीनि यः पश्यति, न विपर्ययवस्तुरूपाणि । यतस्तदानीं तैरेव स उपास्यते । तथा च वक्ष्यति ( श्लो १३० )–"यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते।" इति। रक्षांसीति बहुवचननिर्देशो बहुराक्षसदर्शने सुतरामस्य रिष्टस्य परिपूर्णत्वमिति द्योतयितुम् । एकस्मिन्नपि हि राक्षसे दृष्टे रिष्ट भवत्येव। जातौ वा बहुवचनम्। अन्यांश्च तद्विधान्–राक्षसादिप्रकारान्, य पश्यति । तथा, विकृतों–द्रष्टु दु शक्या, आकृतिर्यस्य–रूपस्य, तद्रूपं व्याकृति, रक्ष पिशाचादिव्यतिरिक्त तत्तत्–अनेक, य पश्यति स नश्यति ।

**सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।**
**ध्रुवमाकाशगङ्गां वा स न पश्यति तां समाम् ॥३३॥**

यो नरोऽरुन्धती सप्तर्षीणा समीपस्था न पश्यति, स ता समा न पश्यति–स तस्य सवत्सरस्यान्तरे म्रियत इत्यर्थ । सप्तर्षीणा समीपस्थामित्यरुन्धत्या विशेषण सप्तर्षिसमीपेऽरुन्धत्या स्थितिर्भवतीति वेदयति । तथा चान्यै सामान्येनैवोक्तम् । यथा– "अरुन्धतीं ध्रुवं चैव सोमच्छाया महापथम् । यो न पश्येन्न पश्येत्स नर सवत्सरात्परम् ॥" इति । तथा, यो ध्रुव न पश्यति, तथा आकाशगङ्गा यो न पश्यति, स ता समा न पश्यति ।

इदानीं श्रोत्रेन्द्रियस्य विकृतिमाचिख्यासुराह—

**मेघतोयौघनिर्घोषवीणापणववेणुजान् ।**
**शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा ॥३४॥**
**निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकास्वनम् ।**
**तद्वद्गन्धरसस्पर्शान् मन्यते यो विपर्ययात् ॥ ३५ ॥**
**सर्वशो वा न यो, यश्च दीपगन्धं न जिघ्रति ।**
**विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसाः३६**
**यः पांसुनेव कीर्णाङ्गो योऽङ्गे घातं न वेत्ति वा ।**
**अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ॥ ३७ ॥**
**जानात्यतीन्द्रियं यश्च तेषां मरणमादिशेत् ।**

मेघादिजान् वेणुपर्यन्तान् शब्दांस्तथाऽन्यांश्च शब्दांस्तथारूपान्महतो य पुरुषोऽसत –परैरनुपलभ्यमानान्, शृणोति, तथा मेघादिजांस्तथाऽन्यांश्च य शब्दान् सतो–विद्यमानान्, न शृणोति, तेषां मरणमादिशेदिति वक्ष्यमाणस्य वचनविपरिणामेनात्र सम्बन्ध कार्य. ।

१ 'नैवासावनेत्र' ट । २ 'षु विप' ट.ड. । ३ प्रपञ्चार्थ–स्पष्टीकरणार्थम् । ४ 'सन्ने मरणे न' ट ड । ५ 'ता–दुष्टा द्र' ट । ६ 'तद्वत्–' ट त । ७ 'त्यनेनारुन्धत्या विशेषणेन स' ट । *८ 'धुक' ण. त । ९ 'यो भस्मनेव० योऽङ्गघात' ड. ।

यो धुकधुकाशब्द कर्णावङ्गुलीभिर्निष्पीड्य न शृणुयात् । तैर्मेघादिजै शब्दैस्तुल्य–तद्वत् । यथा–मेघादिजान् शब्दान् योऽसत शृणोति सतश्च न शृणोति, तद्वद्यो गन्धरसस्पर्शान् विपर्ययात्–वैपरीत्येन मन्यते, न यथावस्तु जानाति । तत्र गन्धविपर्ययो यथा–सुगन्धि दुर्गन्ध मन्यते । रसविपर्ययो यथा–मधुरमम्लमम्लं मधुरमित्यादि । स्पर्शविपर्ययो यथा–मृदुस्पर्श खरस्पर्श मन्यते । सर्वसविकया गन्धादीन् वा योऽपि न मन्यते, सोऽपि नश्यति । तत्कालनिर्वाणस्य दीपस्य यो गन्ध न जिघ्रति–घ्राणेन्द्रियेण नानुभवति । विधिना–शास्त्रप्रयुक्तेन, प्रयुक्ता रसा यस्य दोषाय–रोगाय, अविधिना–शास्त्रविधिव्यतिक्रमेण, प्रयुक्ता स्वास्थ्याय स्यु । तथा, य पांसुना–रजसेव, कीर्णाङ्गो–धूलिधूसरितशरीर । यश्चाङ्गे घात–हतिं, न वेत्ति । तपस्तीव्रमन्तरेण–उग्र तपो विना, य पुरुषोऽतीन्द्रिय–इन्द्रियेभ्योऽतिक्रान्त वेत्ति, इन्द्रियाणामगोचरं स्वर्गादि वेत्ति, तथा योगं वा विधिपूर्वकमन्तरेण योऽतीन्द्रिय जानाति । तेषा–पूर्वोक्ताना सर्वेषा, मरणमादिशेत् । योग –चित्तवृत्तिनिरोध, विधिपूर्वको यथाशास्त्रं सम्यगुपदेश । तथा, अन्योऽपि योगो–रसायनादि । युज्यत इति योगो–विधिविशेष । शास्त्रोद्दिष्टरसायनाञ्जनादिनाऽपि ह्यतीन्द्रिय दृश्यते दूरव्यवहितादि ।

अधुना स्वरविकृतिमाह—

**हीनो दीनः स्वरोऽव्यक्तो यस्य स्याद्गद्गदोऽपि वा ३८**
**सहसा यो विमुह्येद्वा विवक्षुर्न स जीवति ।**

यस्य पुरुषस्य स्वर –शब्दो, निमित्तमन्तरेण हीनोऽथवा दीनो–दैन्ययुक्तो, भवति । अव्यक्त –अस्फुटो, यस्य स्यात् । गद्गदो–घर्घरो, वा यस्य भवति । यो वा विवक्षु –वक्तुमिच्छन्, कारणमन्तरेण विमुह्येत्–वक्तुं न शक्नोति, स न जीवति ।

**स्वरस्य दुर्बलीभावं हानिं च बलवर्णयोः ॥ ३९ ॥**
**रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ।**

स्वरस्य–शब्दस्य, दौर्बल्य दृष्ट्वा बलवर्णयोश्च हानिमयुक्त्या दृष्ट्वा मरणमादिशेत् । चशब्द समुच्चये । रोगवृद्धिमयुक्त्या च दृष्ट्वा नरस्य मरणमादिशेत् । अयुक्त्या–निर्निमित्तमेवेत्यर्थ. ।

**अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ॥ ४० ॥**
**श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ।**

स्वभावस्वरादपगत भ्रष्ट–अपस्वरं,–हीनस्वरं कृत्वा, यो नरोऽहं मरिष्यामि मरिष्यामीत्येवमात्मनो मरणं भाषते

१ 'ङ्गुल्या नि' ण. त । २ 'ते । शीतमुष्ण स्निग्ध रूक्षमिति विपर्ययेण मन्यते । सर्व' ण.त । ३ 'र्वापण' ड । ४ 'स्वन्यति' ट. । 'स्वविध्यति' ड. । ५ 'अवधू' ट. । ६ 'त–शस्त्रप्रहारहतिं' ट. । ७ 'न्त वेत्ति, तथा' ड. त. । ८ 'ण पातञ्जलिशास्त्रोपदेशविधिना, तथाऽन्येनापि योगावस्थादृष्टेन विधिना योऽ' ट. । ९ 'दिविनाऽपि' ण. त । १० 'वा' स स. । ११ 'वाऽस्य' ण । 'तस्य' चन्द्र । १२ 'र–दीन' ट. । 'र कृत्वा' ड. । १३ 'ष्यामीत्येव' ट.ड. ।

परस्य, त तथाभूत दूरादेव वर्जयेत्-वैद्यो न चिकित्सेत्। तथा, अस्य शब्दस्य-अह मरिष्यामीत्येवभूतस्य, यो नर श्रोता, तमपि वैद्यो दूरतो वर्जयेत्।

स्वराश्रय रिष्टमुक्त्वा छायाश्रय रिष्टमभिधित्सुराह—

**संस्थानेन प्रमाणेन वर्णेन प्रभयाऽपि वा ॥ ४१ ॥**
**छाया विवर्तते यस्य स्वप्नेऽपि प्रेत एव सः ।**

संस्थान-प्रतिपुरुष विलक्षण समविषम रूपम्, आकृतिरित्यर्थ। तत्र यदि शरीरस्य सम सस्थान भवति, छाया तस्य विषमा दृश्यते, तदा रिष्टम्। तथा, यदि शरीरस्य विषम सस्थान छाया तु समा भवति, तदा रिष्टम्। तथा, यदि दीर्घप्रमाणस्य सतो ह्रस्वा छाया भवति ह्रस्वप्रमाणस्य वा दीर्घा भवति, तदपि रिष्टम्। एव सस्थानेन प्रमाणेन च छायाविवृत्तिर्वेद्या। तथा, यस्य नाभसी छाया आग्नेयी छाया या वर्णतो दृश्यते सा वर्णविवृत्ति। एव पृथिव्यादिमयीषु छायासु वर्णविवृत्तिर्योज्या। तथा, यस्य यथाभूता प्रभा साऽन्यथाभूता भवति सा प्रभाविवृत्ति। एव सस्थानाद्यन्यतमेन यस्य छाया विवर्तते-अन्यथाभूताऽन्यथा सम्पद्यते, स्वप्नेऽपि स पुमान् प्रेत एव, कि पुनर्जाग्रदवस्थाया न प्रेत ? इति एवकारेण रिष्टस्यास्याव्यभिचारित्व सूचयति। उत्पन्नश्चेन्नरस्य छायाया अन्यथाभाव, तदानी पुरुषो यमसात्सम्पन्नो मन्तव्य इत्यर्थ।

अस्याश्च छायाया द्वैरूप्य दर्शयितुमाह—

**आतपादर्शतोयादौ या संस्थानप्रमाणतः ॥ ४२ ॥**
**छायाऽङ्गात्सम्भवत्युक्ता प्रतिच्छायेति सा पुनः ।**
**वर्णप्रभाश्रया या तु सा छायैव शरीरगा ॥ ४३ ॥**

या शरीरादातपादर्शतोयघृतादौ शरीरसस्थानप्रमाणानुरूपा सम्भवति प्रतिबिम्बकरूपा, सा प्रतिच्छायेत्युच्यते। तस्या हि न वर्णप्रभे आश्रय। यस्या पुनर्वर्णप्रभे आश्रयश्छायाया, सा शरीरगैव-शरीरस्थैव, छाया। न प्रतिच्छायावच्छरीराद न्यत्रातपादर्शतोयादौ कुत्रचिदपयाति प्रतिबिम्बकरूपतया।

**भवेद्यस्य प्रतिच्छाया छिन्ना भिन्नाऽधिकाऽऽकुला ।**
**विशिरा द्विशिरा जिह्मा विकृता यदि वाऽन्यथा ४४**
**तं समाप्तायुषं विद्यान्न चेल्लक्ष्यनिमित्तजा ।**
**प्रतिच्छायामयी यस्य न चाक्ष्णीक्ष्येत कन्यका ॥४५॥**

यस्य पुस. प्रतिच्छाया छिन्ना-द्विधा, दृश्यते। अथवा भिन्ना-किञ्चित्सच्छिद्रेव यस्य दृश्यते। तथा, यस्याधिका दृश्यते-न यथा प्रमाणा। यस्य वा आकुला-चलस्वरूपा अनिश्चितप्रतिबिम्बा, भवति। तथा, यस्य विशिरा-शिरोरहिता। तथा, यस्य द्विशिरा। तथा, यस्य जिह्मा-कुटिला। विकृतेति उक्तप्रकारादन्यथा-अन्येन प्रकारेण, यस्य विकृता दृश्यते आतपादर्शतोयादौ, तत्पूर्वोक्त च सर्वमेव, समाप्तायुष-क्षीणजीवित, विद्यात्। न चेदित्यादि। लक्षयितु प्रत्यक्षादिभि प्रमाणै शक्य-लक्ष्यम्। शक्यार्थे कृत्य। लक्ष्य च तन्निमित्त च, तस्मात्तथाविधान्निमित्ताद्विकृता जाता [प्रति] च्छाया यदि न भवति तदा रिष्टम्, नान्यथा।

प्रतिच्छायामयी कन्यका-प्रतिबिम्बकुमारिकेति या लोके प्रसिद्धा, साऽक्ष्णि-नेत्रे, यस्य नेक्ष्येत-नोपलभ्येत, त समाप्तायुष विद्यात्।

इदानी यस्य महाभूतस्य यादृशी छाया स्यात्, ता कथयितुमाह—

**खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः ।**
**नाभसी निर्मलाऽऽनीला सस्नेहा सप्रभेव च ॥४६॥**
**वाताद्रजोऽरुणा श्यावा भस्मरूक्षा हतप्रभा ।**
**विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ४७ ॥**
**शुद्धवैदूर्यविमला सुस्निग्धा तोयजा सुखा ।**
**स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी ॥**

खादीना महाभूताना पञ्चाना पञ्च छाया भवन्ति। ननु, खादीना पञ्चत्वाच्छायाना पञ्चत्वमर्थाल्लब्धमेव। तत्कि पञ्चग्रहणेन ? अस्त्वेवैतत्। किन्तु यथा खादिभ्य पञ्चभ्यो द्रव्यमेक भूतोत्कर्षापकर्षभेदाचासङ्ख्येय द्रव्यम्, तथा छायानामप्येकत्व भूतोत्कर्षापकर्षभेदाचासङ्ख्येयत्वमाशङ्केत, तदाशङ्कानिवृत्त्यर्थ पञ्चग्रहणम्। पञ्चैव छाया भवन्ति, नोनाधिका इति। किम्भूताश्छाया ? विविधलक्षणा,-विविध लक्षण वक्ष्यमाण यासा ता एवम्।

आकाशजा छाया निर्मला-शुद्धा। तथा, आनीला-ईषन्नीला, इत्याकारप्रश्लेषोऽत्र वेद्य। "शुद्धवैदूर्यविमला" हि "तोयजा" (श्लो ४८) इति वक्ष्यति। तथा, किञ्चित्स्निग्धा। सप्रभेत्यनेन शोभनत्वमुक्तम्। एतदेव स्फुटयितुमिवशब्दं तन्त्रकृत् प्रायुङ्क्त। अन्यथा छायाप्रभयोर्भिन्नविषयत्वादनुपपन्नमेतद्वाक्य स्यात्। भेदश्चानयोरधुनैव वक्ष्यति (श्लो ५१)।

वाताद्रजोरुणादियुक्ता छाया भवति।

१ 'रस्पर तथा' ट.ण। २ 'रत परिव' ट ट। ३ 'विकृति' ट.। ४ 'वृत्ति विद्यात्।' ण त.। ५ 'ता चान्य' ट ड। ६ 'ति। न तु सुप्तस्य नर' ट। 'ति। त्पन्नस्य नर' ट। ७ 'याया मन्य' ड। ८ 'भिन्ना-विदारितेव' इति चन्द्र। ९ 'ञ्चित्खण्डिता य' ड.।

१ 'विकृता-अन्यथाकारा, यदि वाऽन्यथा-उक्तप्रकारेणान्यथा हस्त्यश्वगोगवादितुल्याकारा' इति चन्द्र। २ 'था। निर्निमित्तमेव या दृश्यते।' त.। ३ 'कस्य० कीदृशी' इति क्वचित्। ४ 'जा हि सा।' अ। 'न्धा चाम्भसी मता।' स च। ५ 'सुखा' इति पद पार्थिव्या सह सम्बन्धनीयम्, सङ्ग्रहे (शा अ ९)-"भुवो रुचिराभा घना" इत्युक्तत्वात् तोयजायामस्यानुक्तत्वाच्च। ६ 'मर्थैलब्ध' ट ड। ७ 'निर्मला-मलरहिता, नीला-नीलवर्णा, सस्नेहा-न रूक्षा, सप्रभेव-कान्तियुक्ता। छाया रजोयुक्तेव-धूलिलिप्तेव, अरुणा-लोहिताभा, श्यावा-श्यामवर्णा, भस्मेव रूक्षा, हतप्रभा-निष्प्रभा नष्टकान्ति.। विशुद्धरक्ता-हुताशरक्ता तप्तसुवर्णवद्रक्ता, दीप्ताभा-दीप्तवर्णा, दर्शनप्रिया-दृष्टिसुखा। सुखा-आरोग्यदा। स्थिरा-अचला, स्निग्धा-स्निग्धवर्णा, घना-स्फुटोपलक्ष्या, शुद्धा-निर्मला।' इति चन्द्र.।

आग्नेयी विशुद्धरक्तवर्णा, दीप्ताभा, तथा दर्शने प्रिय यस्या सैवविधा, भवति ।

तोयजा छाया निर्मलवैदूर्यविमला, सुष्ठु स्निग्धा,सुखा-सुखावहा। पार्थिवी छाया स्थिरादिगुणयुक्ता। ननु च, अग्निजलभुवा स्वय वर्णादियोगादाग्नेय्यादिकाना तद्वर्णकत्वमुपपन्नम्। नभोमारुतयोस्तु स्वय वर्णाद्ययोगात्कथ तच्छायाना वर्णादियोगो युज्येत ? इति केचित् । तान् ब्रूमहे । अचिन्त्यत्वाद्धेतुफलस्यादोष । तथा हि,-मधुरादयो रसा कालादमूर्ताद्भवन्तो दृश्यन्ते यथा, तथा तच्छाये अप्येते भविष्यत । तत्र यस्य नरस्य कर्मादिसहाय नभश्छायामुत्पादयति तस्य नाभसीति युज्यत एव । एव वायव्यामपि वाच्यम् ।

इदानीमासा छायाना गुणनिर्देशमाह—

**वायवी रोगमरणक्लेशायान्याः सुखोदयाः ।**

वायवी छाया रोगाद्यर्थं जायते । अन्याः-शेषाश्चतस्र, छाया सुखोदया -सुखावहा ।

**प्रभोक्ता तैजसी सर्वा, सा तु सप्तविधा स्मृता ॥४९॥**
**रक्ता पीता सिता श्यावा हरिता पाण्डुराऽसिता ।**

प्रभा सर्वा-सप्तप्रकाराऽपि, तैजसी-आग्नेयी, उक्ता-तन्त्रकृद्भि स्मृता । तदेव सप्तविधत्वमाह-रक्तेत्यादि ।

**तासा याः स्युर्विकासिन्यः स्निग्धाश्च विमलाश्च याः।**
**ताः शुभा, मलिना रूक्षाः सङ्क्षिप्ताश्चाशुभोदयाः ।**

तासा-पूर्वोक्ताना प्रभाणा मध्यात्, या प्रभा विकासिन्य -प्रसृता इव, तथा स्निग्धा विमलाश्च स्यु, ता शुभा -कल्याणकारिण्य । याश्च मलिनादिगुणयुक्तास्ता अशुभोदया -अमाङ्गल्यकारिण्य ।

छायाप्रभयोरन्यत्व प्रदर्शयितु लक्षणमाह—

**वर्णमाक्रामति छाया प्रभा वर्णप्रकाशिनी ॥ ५१ ॥**

छाया रक्तादिवर्णमाक्रामति-परिभूयावतिष्ठते । प्रभा तु वर्णप्रकाशिनी-वर्ण प्रकाशयितु शीलमस्या सा वर्णप्रकाशिनी ।

तथेदमपि छायाप्रभयोरन्यत्वे लक्षणमाह—

**आसन्ने लक्ष्यते छाया विकृष्टे भा प्रकाशते ।**

निकटे छाया लक्ष्यते । प्रभा पुनर्विकृष्टे-दूरप्रदेशे, प्रकाशते-दूरादवभासत इत्यर्थ । यथा-पाषाणादिपरिपूर्णानामपि पर्वतादिप्रदेशाना दूराद्विलक्षणैव कान्ति प्रकाशते ।

एवं छायाप्रभयोरन्यत्व प्रदर्श्य तयोरेव व्याप्तिं प्रदर्शयति—

१ 'कथनमुप' ड.। २ 'स्य सा नाभसीति युज्यते। एव' ट ड । ३ 'वायव्या' इ.ण.त ट ड चन्द्र । ४ 'न्याश्छाया' ट ड ण. । ५ 'श्यामा' इ ण त । ६ 'प्रधात्व' ड ण त । ७ 'श्चासुखोदया.' अ इ ड ण स चन्द्र । ८ 'श्च स्पष्टा स्यु' ट ड. । ९ 'या भास्तु व' स.च. । १० 'र्णविका' इ. । ११ 'ते। यथा' ण त. ।

**नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु ॥५२॥**
**नृणां शुभाशुभोत्पत्ति काले छायासमाश्रयाः ।**

कश्चिदपि पुरुषश्छायारहित प्रभाहीनश्च नास्ति । विशेषास्तु नृणा शुभाशुभोत्पत्ति काले विशिष्टे चिह्नयन्ति-व्यञ्जयन्तीत्यर्थ । किम्भूता विशेषा ? छायासमाश्रया -छायाश्रिता ।

**निकषन्निव यः पादौ च्युतांसः परिसर्पति ॥ ५३ ॥**
**हीयते बलतः शश्वद्योऽन्नमश्नन् हितं बहु ।**
**योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट्॥५४॥**
**यो वाऽल्पाशी कफेनार्तो दीर्घं श्वसिति चेष्टते ।**
**दीर्घमुच्छ्वस्य यो ह्रस्वं निःश्वस्य परिताम्यति ॥५५॥**
**ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम् ।**
**शिरो विक्षिपते कृच्छ्राद्योऽञ्चयित्वा प्रपाणिकौ॥५६॥**
**यो ललाटात्स्रुतस्वेदः श्लथसन्धानबन्धनः ।**
**उत्थाप्यमानः सम्मुह्येद्यो बली दुर्बलोऽपि वा ॥५७॥**
**उत्तान एव स्वपिति यः पादौ विकरोति च ।**
**शयनासनकुड्यादेर्योऽसदेव जिघृक्षति ॥ ५८ ॥**
**अहास्यहासी सम्मुह्यन् यो लेढि दशनच्छदौ ।**
**उत्तरौष्ठं परिलिहन् फूत्कारांश्च करोति य ॥ ५९ ॥**
**यमभिद्रवति च्छाया कृष्णा पीताऽरुणाऽपि वा ।**
**भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ॥ ६० ॥**
**वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः ।**

निकषन्-घर्षयन्निव, य पादौ च्युतास -स्रस्तास सन्, भूमौ परिसर्पति । तथा, ये वक्ष्यमाणाश्च ते सर्वे समवर्तिनो वशगा इति योज्यम्, अन्तर्दीपकालङ्कारत्वादस्य ।

तथा, योऽन्नमश्नन्-भक्त भक्षयन्, बलान्नित्यं हीयते। किम्भूतमन्नम् ? हित-पथ्यम् । बहु-भूरि। योऽल्पाशी बहुविण्मूत्रो यश्च बह्वाशी-बह्वश्नाति, नित्यमल्पविण्मूत्रश्च । यश्च (यो वाऽ)ल्पाशी कफेनार्त -पीडितो, दीर्घ श्वसिति-बहुश्वास मुञ्चति। तथा, चेष्टते-परिलुठति। तथा, यो दीर्घमुच्छ्वस्य-बहूर्ध्वश्वास मुक्त्वा, अनन्तर ह्रस्व नि श्वस्य-अल्प श्वास प्रत्यावृत्यान्त कृत्वा, परिताम्यति-दु खायते । यश्च ह्रस्व प्रश्वसिति। व्याविद्ध-विषमं कृत्वा, नाडीभि स्पन्दते भृश-अतिशयेन स्फुरति । य प्रपाणिकौ-पाण्यो पश्चाद्भागस्थितावव-

१ 'माश्रिता.' चन्द्र, ट.। 'छायाप्रभाश्रया' इति सुयुक्त श्चरकोक्त पाठ । २ 'न्ति-द्योतय' ड । ३ 'वाऽल्प' अ.। ४ 'ड्यादौ यो' ण स मू । 'देर्य सदैव' अ । ५ 'हनुद्गारांश्च' स मू.। 'हन्नोत्का' चन्द्र । 'लिह्यादुत्का' स ड.। 'उत्कारान्-उद्गारानित्यर्थ ।' इति डल्हण । ६ 'च' इ । ७ 'न्तकाल' ण त.। ८ 'त्यावृत्यमन्त कृ' ट.। त्यावृत्तिमन्त कृ' ड । प्रवृत्यावृन्तमन्त ' ण त.। ९ 'ह्रस्व प्रश्वसिति-स्वल्प वायु प्रमुञ्चति' इति चन्द्र.। १० 'प्रपाणिकौ-मणिबन्धादूर्ध्वं कूर्परपर्यन्तौ' इति चक्र ।

यवविशेषौ, अञ्चयित्वा–सङ्कोच्य, कृच्छ्रेण शिरो–मूर्धानं, विक्षिपते। यो ललाटात्–अलिकात्, स्रुतस्वेद सन् शिथिलसन्धिबन्धो भवति । य उत्थाप्यमानो बली दुर्बलो वा सम्मुह्येत्–मोहमुपैति । य उत्तान एव–जातुचित्पार्श्वे न, स्वपिति । यश्च पादौ विकरोति–विकृतिं नयति । य शयनादेरसत्–अविद्यमानमेव वस्तु, ग्रहीतुमिच्छति । य अहास्ये–हास्यविषयाभावेऽपि, अभीक्ष्ण हसन् सम्मुह्यन् दशनच्छदौ लेढि–जिह्वया परिमृशति । यश्चोत्तरौष्ठ परिलिहन् फूत्कारान्–नानाविधान् शब्दान्, करोति । य–नर, छायाऽभिद्रवति–अभिभवति । कीदृशी ? कृष्णा पीताऽरुणाऽपि वा । ये च भिषगादिद्विष । एते सर्वे समवर्तिनो वशगा विज्ञेया । समवर्तते रागद्वेषौ हित्वा समवर्ती,–यम । सर्वे एवेत्येतत् "निकषन्निव य पादौ" इत्यत आरभ्य यावत् "भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ।" इत्येतत्पर्यन्तस्य ग्रन्थस्य सम्बन्धार्थम् ।

**(ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम् ॥ ६१ ॥**
**उष्णोऽपरः प्रदेशश्च शरणं तस्य देवताः ।)**
**[ पूर्वरूपाणि सर्वाणि ज्वरादिष्वतिमात्रया ।**
**यं विशंति विशत्येनं मृत्युर्ज्वरपुरःसरः ॥ १ ॥ ]**

(यस्य ग्रीवादिकं शीतल सत् स्विद्यति–स्वेदयुक्त भवति, अपर प्रदेशश्चोष्ण, तस्य शरण–रक्षणं, देवता नान्यत् ।)

**योऽणुज्योतिरनेकाग्रो दुःच्छायो दुर्मनाः सदा ॥६२॥**
**बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते ।**
**निर्निमित्तं च यो मेधां शोभामुपचयं श्रियम् ॥६३॥**
**प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम् ।**

य पुमानणुज्योति –स्तोकदृक्, केचित्त्वल्पतेजा इत्याहु । तथा, अनेकाग्रो–व्याकुलचेता । दु.च्छायो–विवर्णच्छायो निन्दितकान्तिर्वा । दुर्मनाः सदा–सततमेव शोकाक्रान्तमानस । तथा, यस्य पुसो बलि प्रणीत–तन्नामोद्दिश्य प्रदत्त, बलिभृतो–बलिभुजो वायसादयो, नोपभुञ्जते–न खादन्ति, स यमक्षयं प्राप्नोतीति सम्बन्ध । बलिभृत इत्यतिशयार्थम् । किल काका अपि नादन्ति किं पुनरन्ये ? इत्यर्थ ।

तथा, यो नरो निर्निमित्त मेधादिजननरसायनादिकारणमन्तरेण मेधादीन् प्राप्नोति । अतो वा–मेधादिभ्यो, भ्रंश प्राप्नोति । सोऽन्तकगृह प्राप्नोति । श्रीरत्र धन राज्य वा । उपचय –शरीरपुष्टि ।

**गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा ॥ ६४ ॥**
**यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति ।**

यस्य नरस्य गुणमयी–सत्वादिमयी, प्रकृतिर्दोषमयी–वातादिमयी, स्वस्थस्यातुरस्य वाऽन्यथात्व याति–स्वभाव हित्वा, स षण्मासान्न जीवति ।

**भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ॥६५॥**
**षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ।**

षड्भिर्मासैर्मरिष्यतो नरस्य भक्त्यादीनि षट् अहेतुक–कारणमन्तरेण, निवर्तन्ते । अहेतुकमिति निवर्तनक्रियाविशेषणम् । षडिति नियमार्थम् । यदा षडपि निवर्तन्ते नैकैक, तदा रिष्टमित्यर्थ ।

**मत्तवद्गतिवाक्कम्पमोहा मासान्मरिष्यतः ॥ ६६ ॥**

मासेन मरिष्यतो मत्तवत्–मत्तस्येव, गतिवाक्कम्पमोहा भवन्ति ।

**नश्यत्यजानन् षडहात्केशलुञ्चनवेदनाम् ।**
**न याति यस्य चाहारः कण्ठं कण्ठामयादृते ॥ ६७ ॥**

कचोत्पाटनपीडामविन्दन् षडहान्नश्यति । यस्याहार कण्ठामय विना कण्ठ न याति, स च षडहान्तरे म्रियते ।

**प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ।**
**यस्य निद्रा भवेन्नित्या नैव वा न स जीवति ॥ ६८ ॥**

प्रेष्या –भृत्या, यस्य प्रतीपता–वैपरीत्य, यान्ति, स नश्यति । यश्च प्रेताकार उपलक्ष्यते सोऽपि न जीवति । यस्य नरस्य नित्य– सतत, निद्रा भवति, यस्य नैव वा–न कदाचिन्निद्रा भवति, सोऽपि न जीवति ।

**वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ।**
**चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः ॥ ६९ ॥**

यस्य नरस्याश्रूणा–अश्रुस्रोतसां, मुखं ( वक्त्र )–द्वारं, आपूर्यते स न जीवति । यस्य चरणौ भृश–अत्यर्थं, निर्निमित्त स्विद्यत स न जीवति । चक्षुरित्यादि । यमराज्यं यास्यतो नयनमाकुलत्वं याति ।

---

१ 'त्वा कु' ड ण त. । २ 'विक्षिपते–भ्रामयति' इति चन्द्र. । ३ 'व–न जातुचित्पार्श्वेण, स्व' ड । ४ 'नासनादेरविद्य' ट. । ५ 'वा । भिषगादिद्विषश्च ये नरास्ते सम' ट ड ण त । ६ ( ) ग्रीवाललाटेत्यादिदेवतेत्यन्त श्लोक सटीक ट ड.त सञ्ज्ञेष्वरुणदत्तटीकापुस्तकेषु चन्द्रनन्दनटीकापुस्तके च नोपलभ्यते । अ इ ण पुस्तकेषु तु टीकारहितो मूल एवोपलभ्यते । अतो नाय हृदयटीकाकारसम्मत । किन्तु सङ्ग्रहे तट्टीकाकारसम्मत एवायम् । ७ [ ] श्लोकोऽय अ इ पुस्तकयोरुपलब्ध । ८ 'ज्वरोक्तान्यति' स च । ९ 'बलिभुजो' ड स द्व. । १० 'अणुज्योति –'स्वल्पाग्नि.' इति चन्द्रचक्रौ, 'स्वल्पप्रकाश ' इतीन्दु. । ११ 'त्रिदतुल्यतेजा' ट.ड. । १२ क्षय–गृहम् ( पृ. ३९३ टी. ५ ) ।

१ 'दिसञ्जन ड । २ 'गुणागुणमयी' चन्द्र । ३ 'भक्ति –देवादिष्वाराधनम् । शील–चरित्रम् । स्मृति.–आक्रान्तस्य वस्तुन सरणम् । त्यागो–दानशीलता । बुद्धि –मेधा । बल–शरीरसामर्थ्यम् ॥ मत्तस्येव गतिस्खलन वाक्स्खलनम् ।' इति चन्द्र । ४ 'स्विद्य' अरुण । ५ 'यस्यातुरस्य प्रेष्या –परिचारका., प्रतीप्रतां–प्रातिकूल्य यान्ति–गच्छन्ति, तस्य प्रेताकृतिरुदीर्यते–प्रेतसदृशत्व भण्यते ।' इति चन्द्र । 'प्रेताकृति –प्रेतजातीय', उदीर्यते–उच्यते' इतीन्दु । ६ 'नित्या–स्थिराऽहोरात्र भवेत्, नैव वा–सर्वसर्विकयाऽह्नि रात्रौ वा न भवेत्' इति चन्द्रः । ७ 'स न' ण.त. । ८ 'राष्ट्र' इ ड.स.मू स.मु. ।

**यैः पुरा रमते भावैररतिस्तैर्न जीवति ।**

यैर्भावै[१]-पदार्थैः, पुरा-पूर्वं, रमते-सुखायते, तैः पदार्थैर्न रतिर्भवति यस्य, स न जीवति ।

**सहसा जायते यस्य विकारः सर्वलक्षणः ॥ ७० ॥**
**निवर्तते वा सहसा, सहसा स विनश्यति ।**

यस्य पुंसो विकारो-ज्वरादिः, सहसा-कारणं विना, सर्वलक्षणः-सकललिङ्गोपेतो, जायते । अथवा तादृशो विकारः सहसा-शीघ्रमेव, निवर्तते-नश्यति । स-पुरुषः, सहसा-अचिरादेव, विनश्यति ।

अधुना प्रतिरोगं रिष्टं वक्तुं सर्वव्याधिप्र[२]धानस्य ज्वरस्यैव तावद्विकृतिं[३] लिलक्षयिषुराह—

**ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिकः ॥७१॥**
**सप्रलापभ्रमश्वासः क्षीणं शूनं हतानलम् ।**
**अक्षाम सक्तवचनं रक्ताक्षं हृदि शूलिनम् ॥ ७२ ॥**
**[४]सशुष्ककासः पूर्वाह्णे योऽपराह्णेऽपि वा भवेत् ।**
**बलमांसविहीनस्य श्लेष्मकाससमन्वितः ॥ ७३ ॥**

ज्वरो बलवानित्यादिलक्षणः क्षीणादिलक्षणं पुरुषं हन्ति । बलवान्-हेत्वादिभिर्बलवद्भिर्युतः । ग[५]म्भीरः-अशेषधात्वन्तर्गतः । दैर्घरात्रिको-दीर्घकालानुबन्धी, अन्ये तु रात्रिजागरकारीत्याहुः । दीर्घा हि जा[६]ग्रतो रात्रिः । तथा चोक्तम्-"दीर्घं श्रान्तस्य योजनम् ।" इति । तथा, प्र[७]लापादियुक्तः । कीदृशमातुरम्? क्षीणं-धातुक्षययुक्तम् । तथा, अक्षामं-सबलम्, ग्लानो न भवत्यथ च स[८]क्तवचनं, तमक्षामं सक्तव[९]चनम् । तथा, रक्तनेत्रं हृदयशूलान्वितं हन्तीति योज्यम् ।

यश्च ज्वरः स[४]शुष्ककासः पूर्वाह्णेऽथवाऽपराह्णे भवेत्स द्विविधोऽपि हन्ति ।

तथा यः श्लेष्मकाससमन्वितो ज्वरो बलमांसविहीनस्य पुंसः स्यात्, स तं निहन्ति । इति रिष्टत्रयमेतत् । ननु च, "हेतुभिर्बहुभिर्युक्तो बहुभिर्बहुलक्षणः । ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ॥" (च. चि. अ. ३।४९) इत्येष ज्वरस्य रिष्टप्रकारः कस्मान्नोक्तः? उच्यते । उक्तप्राय एवायं बलवानिति वचनात् ।

रक्तपित्तविकृतिलक्षणं रिष्टमधिकृत्याह—

**रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुष्प्रभम् ।**
**ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत् ॥ ७४ ॥**
**रोमकूपप्रविसृतं कण्ठास्यहृदये सजत् ।**

१ 'भावैः-रूपादिभिः' इति चन्द्रः । २ 'धिप्राधान्यस्य' ड । ३ 'कृतिलिङ्ग लि' ड. । ४ 'सशुष्क' ण स मू । ५ 'गम्भीरः-सर्वधातुष्वन्तर्गतत्वाद्गूढलक्षणः' इति चन्द्रः । ६ 'जागरतो' ण त । ७ 'प्रलापः-बहुसम्बद्धभाषणम्' इति चन्द्र. । ८ 'सक्तवचनं-अपरिस्फुटभाषम्' इति चन्द्रः । ९ 'चसम् ।' ट ड ।



**वाससोऽरञ्जनं पूति वेगवच्चाति भूरि च ॥ ७५ ॥**
**वृद्धं पाण्डुज्वरच्छर्दिकासशोफातिसारिणम् ।**

रक्तपित्तमीदृग्रूपं कर्तृभूतं नरं हन्ति । कीदृक्? भृशं-अत्य[२]र्थं, रक्तं-लोहितम् । तथा, अतिकृष्णम् । भृशशब्दो हि द्वयोरपि युज्यते । तथा, इन्द्रधनुष्प्रभं-नानावर्णमित्यर्थः । क्लिष्टदशे रक्तपित्ते रसमेदोमज्जादिमिश्रि[३]तस्य रक्तस्य स्रवणान्नानावर्णत्वं सम्पद्यते । यच्च रक्तपित्तं कर्तृभूतं ताम्रहारिद्रहरितं रक्तं च रूपं दृश्यमा[४]काशे वा प्रदर्शयेत्, तन्निहन्ति । यच्च रक्तपित्तं विनाऽपि वर्णैः रोमकूपेभ्यः समस्तेभ्यः प्रकर्षेण विसृतं-यातं प्रवृत्तम्, तच्च निहन्ति । तथा, कण्ठे मुखे हृदये च तुल्यकालं स[५]जत्-सश्लिष्यत् सानुष[६]ङ्गम्, तच्च हन्ति । वाससोऽरञ्जनमिति वाससः अरञ्जनमित्यका[८]रप्रश्लेषोऽत्र बोध्यः । वस्त्रस्य हि जीवशोणितं शुद्धशोणितरूपत्वान्न रञ्जकम् । अतस्तेन रक्तं व[१०]स्त्रं समनन्तरं प्रक्षालितं शुद्धं सम्पद्यते, न रागयुक्तम् । तथा ह्यस्मिन् व्याधौ रक्तपित्ताभ्यां परस्परमवि[११]भागापन्नत्वाद्वस्त्रस्य रञ्जनं प्राप्तम् । रक्तेन हि पित्तसहितेन वस्त्रं रज्यते, [१२]न च तद्धौतं शुद्धं सम्पद्यते । तथा चोक्तम् (हृ. क. अ. ३।३४)-"[१३]शुक्लं वा भावितं वस्त्रमावानं कोष्णवारिणा । प्रक्षालितं विवर्णं स्यात्पि[१४]त्ते, शुद्धं तु शोणिते ॥" इति । तथा, पूति-दुर्गन्धि, तद्धि धातू[१५]नुपक्लेदयति, उपक्लिन्नानां धातूनामत्यर्थं दु[१६]ष्टता, इति निहन्त्येव । तथा, [अति] वेगवत्-वेगेन निर्गत्य रुद्धं पुनर्वेगेन प्रवर्तत इति । तथा, भूरि-प्रभूतम् । एवंविधं च रक्तपित्तं निहन्ति ।
[१७]वृद्धं-उद्रिक्तं रक्तपित्तं सत्, पाण्ड्वादियुतं नरं हन्ति ।

**कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम् ॥७६॥**

कासश्वासौ ज्वरादिपञ्चविधोपद्रवोपेतं निहत इति वचनविपरिणामेन सम्बन्धः ।

**यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम् ।**

यक्ष्मा-राजयक्ष्मा, पार्श्वरुजादियुतं नरं हन्ति ।

**छर्दिर्वेगवती मूत्रशकृद्गन्धिः सचन्द्रिका ॥ ७७ ॥**
**सास्रविट्पूयरुक्कासश्वासवत्यनुषङ्गिणी ।**

छर्दिर्हन्ति, । कीदृक्? वेगवती,-महता वेगेन प्रवर्तमाना । तथा, मूत्रशकृतोरिव ग[१९]न्धो यस्याः सा, "उपमानाच्च" इति

१ 'वाससो रञ्जन-वस्त्ररागकृत्' इति चन्द्रः । २ 'त्यर्थं लो' ट ड ण त । ३ 'श्रस्त' ट ट । ४ 'मानं वा' ट ण त । ५ 'जात' ण । ६ 'सजत्-सम्यक् सादं गच्छत्' इति चन्द्रः । ७ 'षङ्ग रोमानुगम्, तं' ट ड । ८ 'वाससः इत्यादि वा' ड ण त । ९ 'कारेण प्रश्लेषो बोद्धव्यः ।' ड । १० 'वस्त्रम' ट.ड । ११ 'भागोपपन्न' ट । १२ 'नैतद्धौ' ण । १३ 'शुद्धं वा' ड ण.त. । १४ 'पित्तं शु० णितम् ।' ट ड ण त । १५ 'तून् क्ले' ट । १६ 'ष्टत्वं चेति' ण । १७ 'वृद्धं-गतवयसं, कर्मभूतम् ।' इतीन्दुचन्द्रौ । १८ 'च्छर्द्यङ्गता' अ ण । १९ 'न्धोऽस्याः इत्युपमानार्थे(चे)तीदादेशः ।' ट ट.ण त. ।

गन्धस्वेदादेश । तथा, सचन्द्रिका–जलतैलबिन्दुसस्थाना चन्द्रिकोच्यते । तथा, सहास्रेण वर्तते विट् सास्रविट् । सास्रविट् च पूयश्च रुक् च कासश्च श्वासश्च, ते विद्यन्ते यस्या सैवम् । तथा, अनुषङ्गिणी–दीर्घकालानुवर्तिनी ।

**तृष्णाऽन्यरोगक्षपितं बहिर्जिह्वं[१] विचेतनम् ॥ ७८ ॥**

तृष्णेदृश[४] नर हन्ति । कीदृशम् ? अपररोगेण क्षपित–कर्षितम् । बहिर्जिह्व–बाह्यतो जिह्वा नि सारयन्तम् । तथा, विचेतनम् । एतत्समुदित रिष्टलक्षणम् ।

**मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननम् ।**

मदात्ययोऽतिशयेन शीतपीडित क्षीण तैलप्रभमुख च नर हन्ति ।

**अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम् ॥ ७९ ॥**
**हृत्पार्श्वाङ्गरुजाछर्दिपायुपाकज्वरातुरम् ।**

अर्शांसि पाण्यादिशोफयुत हृद्रुजाद्यातुर नर घ्नन्ति, इति वचनविपरिणामेन सम्बन्ध । हृदादीना रुजा सम्बन्ध । हृत्पार्श्वाङ्गरुजा च छर्दिश्च पायुपाकश्च ज्वरश्च तैरातुर–पीडितम् ।

अतीसारविकृतिमाह—

**अतीसारो यकृत्पिण्डमांसधावनमेचकैः ॥ ८० ॥**
**तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः ।**
**मस्तुलुङ्गमषीपूयवेसवाराम्बुमाक्षिकैः ॥ ८१ ॥**
**अतिरक्तासितस्निग्धपूत्यच्छघनवेदन. ।**
**कर्बुरः प्रस्रवन् धातून् निष्पुरीषोऽथवाऽतिविट्॥८२**
**तन्तुमान् मक्षिकाक्रान्तो राजीमाश्चन्द्रकैर्युत. ।**
**शीर्णपायुवलि मुँक्तनालं पर्वास्थिशूलिनम् ॥ ८३ ॥**
**स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयन्* ।**
**सतृट्श्वासज्वरच्छर्दिदाहानाहप्रवाहिकः ॥ ८४ ॥**

अतीसारो यकृत्पिण्डादिभिर्माक्षिकान्तस्तुल्यो हन्ति । मेचको–नीलवर्ण । अतिरक्तासितस्निग्धपूत्यच्छश्चासौ घनवेदनश्च, इति कर्मधारय । कर्बुरो–नानावर्ण । कस्मात्पुनरनेकवर्णो[१०] ? यस्माद्धातून्–रक्तमासादीन् स्रवति,अत एवाह–धातून् प्रस्रवन् । लक्षणेऽत्र शतृप्रत्यय , धातुप्रस्रवणेन हि हेतुना नानावर्णत्व लक्ष्यते । तथा, निष्पुरीष –पुरीषरहित । अथवा, अतिविट्–बहुपुरीष । तथा, तन्तुमान् मक्षिकाक्रान्तो राजीमाश्चन्द्रकैर्युतश्च । ईदृशोऽतीसारो वक्ष्यमाण नरं हन्ति । शीर्णा गुदवलयो यस्य तम् । [तथा,] मुँक्तो[११] नालो–नालक इव, यस्य त मुँक्तनाल,–मुक्तबन्धनमित्यर्थ । तथा, पर्वास्थिशूलो[२] विद्यते यस्य तम् । तथा, स्रस्तपायु–स्थानाच्युतगुदम् । तथा, बलेन क्षीणम् । पुन प्रकृतत्वादतीसारो[३] विशिष्यते । अन्नमेवापक्वमुपवेशयन् सह तृडादिभि सप्तभिरुपद्रवैर्युक्त पूर्वोक्तविशेषणमातुरं हन्ति ।

**अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम् ।**

अश्मरी शूनवृषणादियुक्त नरं हन्ति ।

**मेहस्तृड्दाहपिटिकामांसकोथातिसारिणम् ॥ ८५ ॥**

मेह –प्रमेह , तृडाद्युपद्रवयुक्त नर हन्ति ।

**पिटिका मर्महृत्पृष्ठस्तनांसगुदमूर्द्धगाः[५] ।**
**पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम् ॥ ८६ ॥**
**सर्वं च मांससङ्कोथदाहतृष्णामदज्वरैः ।**
**विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः ॥ ८७ ॥**

पिटिका मर्मादिगा अथवा पर्वादिस्था मन्दोत्साह प्रमेहातुरं घ्नन्ति । सर्वं च नरं मांससङ्कोथादिभि क्लमान्तैर्युक्त पिटिका घ्नन्ति ।

**गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः ।**
**सिरानद्धो ज्वरच्छर्दिहिध्माध्मानरुजान्वितः॥८८॥**
**कासपीनसहृल्लासश्वासातीसारशोफवान् ।**

गुल्म पृथुपरीणाहो यावच्छोफवान् हन्ति नरम् ।

इदानीमुदरव्याधिनिमित्त रिष्टमाह—

**विण्मूत्रसङ्ग्रहश्वासशोफहिध्माज्वरभ्रमैः ॥ ८९ ॥**
**मूर्च्छाच्छर्द्यतिसारैश्च जठरं हन्ति दुर्बलम् ।**
**शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ॥ ९० ॥**
**विरेचनेहृतानाहमानह्यन्त पुनः पुनः ।**

विण्मूत्रादिभिरतीसारान्तैरुपद्रवैर्हेतुभूतैर्जठरं च कर्तृभूतमातुर हन्ति । कीदृशम् ? दुर्बलं–हीनबलम् । तथा, शूने अक्षिणी यस्य तम् । "बहुव्रीहौ सक्थ्यक्ष्णो" इति षच् । [ तथा ] कुटिल उपस्थो–बस्तिमेढ्रवृषणादिरूपो, यस्य तम् । तथा, उपक्लिन्ने देहत्वचौ यस्य तम् । [ तथा,] विरेचनेन हृत आनाहो यस्य तमपि मुहुर्मुहुरानह्यन्तम् ।

पाण्डुरोगरिष्टमाह—

**पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनम् ॥ ९१ ॥**

पाण्डुरोग श्वयथुयुत पीताक्षिनखदर्शनमातुरं हन्ति ।

---

१ 'जिह्वमचे' ड । २ 'तसम्' इ । ३ 'तृष्णा हन्ति' ट ड । ४ 'रोगक्ष' ट ड ण त । ५ 'कादिशो' ड । ६ 'हृदयादी' ट ण त । ७ 'मुक्तताल' ड ण त । 'मुक्तताड' चन्द्र । *८ 'शयेत्' चन्द्र , ट । ९ 'नरेव वर्ण ' ट । १० 'र्णे ? इत्याह–' ड । ११ 'मुक्तस्तालस्तालक इव यस्य त मुक्तताल' ट.ड.ण त. ।

१ 'मुक्तनाल–स्रस्तगुदबन्धम्' इतीन्दु । 'मुक्तनाड–स्रस्तग्रहणीबन्धम्' इति चन्द्र । २ 'शूलौ विद्येते' ड । ३ 'सारी' ट. ड ण त । ४ 'मासकोथो–मासक्लेद ' इति चन्द्र । ५ 'मूर्द्धजा ' अ चन्द्र । 'मूर्द्धगा' स स । ६ 'स्वाश्च म' इ । ७ 'क्लोच' इति क्वचित् । ८ 'न्ति । हृदयस्य प्राधान्यत्वात्पृथग्ग्रहण मर्मणाम् । सर्वं' ट. । ९ 'नहता' इति क्वचित् ।

शोफरिष्टं ब्रूते—

**तन्द्रादाहारुचिच्छर्दिमूर्च्छाध्मानातिसारवान् ।**
**अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् ॥ ९२ ॥**
**नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ।**
**राजीचितः स्रवंश्छर्दिज्वरश्वासातिसारिणम्॥९३॥**

तन्द्रादियुक्तः शोफोऽनेकैरुपद्रवैः—ज्वरश्वासादिभिः, युतः पादतः प्रसृतो नरं हन्ति । मुखात्प्रसृतः शोफः पूर्वोक्तविशेषणयुक्तो नारीं हन्ति । कुक्षिगुह्यात्प्रसृतः उभावपि—स्त्रीपुंसौ, हन्ति । तथा, राजीचितो—यथास्वं दोषवर्णाभी रेखाभिर्व्याप्तः, तथा स्रवन्—यथादोषं स्रुतिं कुर्वन्, छर्द्यादियुतं पुरुषं हन्ति ।

**ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।**
**दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः ॥ ९४ ॥**

ज्वरातिसारौ स्वतन्त्रस्य शोफस्यान्ते—अवसाने, जायेते । अथवा श्वयथुस्तयोः—ज्वरातिसारयोः, क्षये जायते । एवं ज्वरातिसारशोफा यस्य शरीरिणो जायन्ते, तस्य तेऽन्ताय—मृत्यवे, जायन्ते । दुर्बलस्य विशेषेणान्ताय, शीघ्रकारित्वात् ।

**श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिण्डिके ।**
**सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत् ॥९५॥**

श्वयथुः पादस्थो यस्य पिण्डिके च परिस्रस्ते—स्थानाच्युते, सक्थिनी च सीदतः—सादं गच्छतः,तं—तादृशं नरं, वैद्यो वर्जयेत् ।

**आननं हस्तपादं[१] च विशेषाद्यस्य शुष्यतः[२] ।**
**शूयेते[३] वा विना देहात्स मासाद्याति पञ्चताम् ॥९६॥**

मुखं हस्तचरणं[४] च यस्यैते विशेषेण शुष्यतः[५], देहं विना वा यस्य शूयेते[६], स आतुरो मासेन पञ्चतां—पञ्चमहाभूतसमत्वं, याति ।

**विसर्पः कासवैवर्ण्यज्वरमूर्च्छाङ्गभङ्गवान् ।**
**भ्रमास्यशोफ[७]हृल्लासदेहसादातिसारवान् ॥ ९७ ॥**

विसर्पः कासादिमान् हन्ति ।

**कुष्ठं विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम् ।**
**मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम् ॥९८॥**

कुष्ठं च कर्तृ विशीर्यमाणाङ्गादियुक्तं नरं हन्ति । विशीर्यमाणाङ्गं—कोथवच्छरीरम् ।

**वायुः सुप्तत्वचं भुग्नं[८] कम्पशोफरुजातुरम् ।**

वायुः सुप्तत्वगादियुक्तं नरं हन्ति ।

**वातास्रं मोहमूर्च्छायमदास्वप्नज्वरान्वितम् ॥ ९९ ॥**
**शिरोग्रहारुचिश्वाससङ्कोचस्फोटकोथवत् ।**

वातास्रं[१]—वातरक्तं, मोहादियुतं हन्ति ।

**शिरोरोगारुचिश्वासमोहविड्भेदतृड्भ्रमैः ॥ १०० ॥**
**घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम् ।**

शिरोरोगेति । सर्वे च ते आमयाश्च ते [शिरोरोगादिभिः] क्षीणस्वरादिकं नरं घ्नन्ति ।

**वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी ॥ १०१ ॥**
**गुल्मी मेही च तान् क्षीणान् विकारेऽल्पेऽपि वर्जयेत् ।**

वाताख्यो व्याधिर्यस्य स नरः, तथाऽपस्मारवान् कुष्ठवान् रक्तपित्ती जठरी क्षयवान् गुल्मवान् प्रमेही च, तान्—एतान् पुरुषान्, क्षीणान्सतोऽल्पेऽपि विकारे सति वर्जयेत् ।

**बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ॥ १०२ ॥**
**यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान्न स जीवति ।**

बलमांसयोरत्यन्तं क्षयः, रोगस्य वृद्धिः, तथाऽरोचकः, एते यस्यातुरस्य लक्ष्यन्ते—उपलभ्यन्ते, स त्रीन् पक्षान्—सार्धं मासं, न जीवति ।

**वाताष्ठीलाऽतिसंवृद्धा तिष्ठन्ती दारुणा हृदि॥१०३॥**
**तृष्णया तु[२] परीतस्य सद्यो मुष्णाति जीवितम् ।**

वाताष्ठीलाऽत्यन्तं प्रवृद्धा हृदि तिष्ठन्ती दारुणा—अतिरुक्करी, तृषायुक्तस्य पुंसः शीघ्रमेव जीवितहारिणी भवति ।

**शैथिल्यं पिण्डिके वायुर्नीत्वा नासां च जिह्मताम् ॥**
**क्षीणस्यायस्य[३] मन्ये वा सद्यो मुष्णाति जीवितम् ।**

वायुः पिण्डिके शैथिल्यं नीत्वा, तथा नासां जिह्मतां—कुटिलतां नीत्वा, तथा क्षीणस्य नरस्य मन्ये वा आयम्य—आयामयित्वा[४], द्राग् जीवितं मुष्णाति ।

**नाभीगुदान्तरं गत्वा वङ्क्षणौ वा समाश्रयन् ॥१०५॥**
**गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली ।**
**मलान् बस्तिशिरो नाभिं विबद्ध्य जनयन् रुजम् १०६**
**कुर्वन् वङ्क्षणयोः[५] शूलं तृष्णां भिन्नपुरीषताम् ।**
**श्वासं वा जनयन् वायुर्गृहीत्वा गुदवङ्क्षणम् ॥१०७॥**

वायुर्नाभीगुदयोरन्तरं—मध्यं, गत्वा वङ्क्षणौ वा समाश्रयन् जीवितं मुष्णाति ।

बली वा पवनः पायुं हृदयं च गृहीत्वा—अवष्टभ्य, क्षीणदेहस्य[६] पुंसः सद्यो मुष्णाति जीवितम् ।

वायुर्मलान् विबद्ध्य—सन्निरुद्ध्य, बस्तिशिरो नाभिं च विबद्ध्य रुजं जनयन् सद्यो मुष्णाति जीवितम् ।

वायुर्वङ्क्षणयोः शूलं तथा तृष्णां कुर्वन् भिन्नपुरीषतां च

---

१ 'पादौ च' स मू. । २ 'शुष्यति' अ. । ३ 'शूयन्ते' स मू. । ४ 'रणे च' ड । ५ 'शुष्यन्ति' ट ण त । ६ 'शूयन्ते' ट ण त । ७ 'शोषहृ' इ ण त । ८ 'भग्नं' अ इ. ण त ।

१ वातास्रमित्यादिसार्धश्लोकस्य टीका ड ण. पुस्तकयोर्नोपलभ्यते । २ 'तु' इ ण । ३ 'स्यायस्य' अ । ४ 'आयस्य—आयासयित्वा' ट ड । ५ 'वङ्क्षणौ' अ. स इ. । ६ 'क्षीणाङ्गस्य' ड ।

विदधदथवा श्वास जनयन् गुद वङ्क्षणौ च गृहीत्वा सद्यो मुष्णाति जीवितम् ।

**वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ।**
**स्तिमितस्याततक्षस्य सद्यो मुष्णाति जीवितम्१०८**

मारुत पर्शुकाना-पार्श्वास्था, अग्राणि-प्रान्तानि, वितत्य-प्रस्तार्य, तथोर-वक्षो, गृहीत्वा स्तिमितस्य-आर्द्रता गतस्य सस्वेदस्य निश्चलस्य वा, तथा आततक्षस्य-प्रसारितनेत्रस्य, सद्यो मुष्णाति जीवितम् ।

**सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः ।**
**विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते ॥ १०९ ॥**

सहसा-झटित्येव, ज्वरसन्ताप, तथा तृष्णा मूर्च्छा बलक्षय सन्धिविश्लेषश्च, इत्येतन्मुमूर्षो -सद्यो मरिष्यतो, जायते ।

**गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ।**
**लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ ११० ॥**

गोसर्गे-गवा मोक्षकाले प्रत्यूषसि, लेपज्वरेण-श्लेष्मज्वरेणोपतप्तस्य यस्य वदनात् स्वेद प्रच्यवते, तस्य दुर्लभ जीवितम् । दुर्लभमिति "ईषदु सुषु" इत्यादिना खल् । "न सुदुर्भ्यां" इति नुम्निषेध । ननु, रिष्टाना निश्चितानामिहाभिधानप्रस्तावात् किमिदमनिश्चितमुक्त दुर्लभमिति? मैवम् । एकान्तिक एवार्थोऽय हि दुर्लभशब्द । तथा च वाल्मीकिना जगदे-"पुत्र वीक्षस्व पितरं सुहृष्टं च कुरु प्रियम् । दुर्लभ जीवित ह्यस्य पुन पुत्रो भविष्यति ॥" इति । तस्माद्दुर्लभशब्दस्य नास्ति जीवितमित्येष निश्चित एवार्थं प्रसिद्ध ।

**प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः ।**
**उत्पद्याशु विनश्यन्ति न चिरात्स विनश्यति ॥१११॥**

मसूरिका -मसूरसस्थाना पिटिका, प्रवालगुटिकासदृशा यस्य शरीर उत्पद्य शीघ्र विनश्यन्ति, स नरो द्रागेव विनश्यति ।

**मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः ।**
**अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः ११२**

मसूरविदलाकारा, तथा प्रवालसदृशा, तथाऽन्त -मध्ये, वक्त्रं-मुख, येषा ते, तथा किणाभा, एते चतुष्प्रकारा अपि विस्फोटा देहस्य नाशना ।

**कामलाऽक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता ।**
**सन्त्रासश्चोष्णताऽङ्गे च यस्य तं परिवर्जयेत् ॥११३॥**

यस्याक्ष्णो कामला-पीताभासत्व भवति, मुख पूर्ण-स्वाभाविकम्, शङ्खयोर्मुक्तमांसत्वम्, सन्त्रास, उष्णता चाङ्गे भवति, तमातुर वर्जयेत्-अयश परिहृतये न चिकित्सेत् ।

**अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम् ।**

अकस्मात्-कारण विना, त्वक्समाश्रय विघृष्ट यस्यानुधावच्च लक्ष्यते तमपि वैद्यो वर्जयेत् ।

**[चन्दनोशीरमदिराकुणपध्वाङ्क्षगन्धयः ।**
**शैवालकुक्कुटशिखाकुङ्कुमालमषीप्रभाः ॥ १ ॥**
**अन्तर्दाहा निरूष्माणः प्राणनाशकरा व्रणाः ।]**

**यो वातजो न शूलाय स्यान्न दाहाय पित्तजः ॥११४॥**
**कफजो न च पूयाय मर्मजश्च रुजे न यः ।**
**अचूर्णश्चूर्णकीर्णाभो यत्राकस्माच्च दृश्यते ॥ ११५ ॥**
**रूपं शक्तिध्वजादीनां सर्वास्तान्वर्जयेद्व्रणान् ।**

यो व्रणो वातजो लिङ्गानुमित शूलाय न भवति, पित्तजो न दाहाय, कफजश्च न पूयाय, मर्मजश्च न पीडायै । तथा, यो व्रणोऽचूर्णश्चूर्णेनाकीर्णाभ -चूर्णव्याप्त इव दृश्यते । तथा, यस्मिन् व्रणे कारण विना-अकस्मात्, रूप शक्तिध्वजादीनां दृश्यते । आदिशब्देन शल्यतोमरादिपरिग्रह । तान् सर्वान् व्रणान् वर्जयेत् ।

**विण्मूत्रमारुतवहं कृमिणं च भगन्दरम् ॥ ११६ ॥**

विण्मूत्रमारुता येन नि सरन्ति कृमिजुष्टश्च य, तं च भगन्दर वर्जयेत् । कृमिणमिति "पामादित्वात्" ('लोमादिपामादिपिच्छादिभ्य शनेलच ।') नप्रत्यय ।

**घट्टयन् जानुना जानु पादावुद्यम्य पातयन् ।**
**योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ ११७ ॥**

यश्चातुरो जानुना जानु घट्टयन्, तथा पादावुद्यम्य-उत्क्षिप्य, पातयन्-सक्षिपन्, मुहुर्मुहुरात्मीय वक्त्र-मुखं, अपास्यति-कारण विनाऽन्यत्र नयति, स न जीवति ।

**दन्तैश्छिन्दन्नखाग्राणि तैश्च केशांस्तृणानि च ।**
**भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन्॥११८॥**
**हृष्टरोमा सान्द्रमूत्रः शुष्ककासी ज्वरी च यः ।**
**मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः॥११९॥**
**मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति ।**

यश्चातुरो हृष्टरोमा सान्द्रमूत्र, तथा शुष्ककासी, तथा ज्वरी, स इदमिद कुर्वन्न जीवति । कि तत्? इत्याह-दन्तैश्छिन्दन्नखाग्राणि, तथा तैरेव-दन्तै, केशाश्छिन्दन्, तथा

१ 'पार्श्वका' अ इ ण त । २ 'पार्श्वका' ट ड । ३ 'कानामग्राणि' ट ड ण त । ४ 'स, तथा' ट ड । ५ 'इहालभ्य एव जीविते "दुर्लभ" इत्युक्तम् । यथा-"सर्वथाऽलभ्ये दुर्लभम्" इति । अन्ये तु दुर्लभभाषया अनियत मरणे रिष्टमिति ब्रुवते ।' इति चक्र । ६ 'सुदुष्ट' ट । 'सुदृष्ट' ड. । ७ 'पुत्र भ' ड.ण त ।

१ 'मासता-मासशैथिल्यम्' इति क्वचित् । २ विघृष्ट-सद्योव्रणभेद । ३ [ ] इति सार्ध श्लोक अ इ ण पुस्तकेषु सङ्ग्रहे चोपलभ्यते । ४ 'खानक्तमाल' इ । 'खाकुन्दशालिमयप्रभा' ण । ५ शक्ति -कासूनामक शस्त्रभेद । 'कासूसामर्थ्ययो शक्ति' इत्यमर । ६ 'शूलतो' ट । ७ 'दिसङ्ग्रह' ड । ८ 'वा' अ इ स.ढ. । ९ 'च' अ. ।

तृणानि छिन्दन्, तथा भुव काष्ठेन विलिखन्, लोष्टमपरलोष्टेन ताडयन्, मुहु -पुन पुनर्हसन्, तथा मुहु क्ष्वेडन्-शब्द कुर्वन्, मुहु शय्या पादेन यो हन्ति, तथा छिद्राणि-अपराधान्, विमृशन्-घोषयन्। केचिद्व्याचक्षते,-छिद्राणि-नासिकादीनि, विमृशन्-सस्पृशन्, इति।

**मृत्यवे सहसाऽऽर्तस्य तिलकव्यङ्गविप्लवः ॥ १२० ॥**
**मुखे, दन्तनखे पुष्पं, जठरे विविधाः सिराः ।**

आर्तस्य-आतुरस्य, सहसा जातो मुखे-वदने, तिलकव्यङ्गविप्लवो मृत्यवे-मरणाय। तथा, दन्ताश्च नखाश्च दन्तनख, तस्मिन् दन्तनखे, सहसा पुष्प जातमातुरस्य मृत्यवे। तथा, जठरे सहसा विविधा -नानाविधा वर्णेन सस्थानेन च, सिरा जाता आर्तस्य मृत्यवे-मरण सूचयन्तीत्यर्थ ।

**ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम् ॥ १२१ ॥**
**शर्म चानधिगच्छन्तं बुद्धिमान् परिवर्जयेत् ।**

ऊर्ध्वश्वासादिमन्तमातुर सुमतिर्वर्जयेत्-न चिकित्सेत्।

**विकारा यस्य वर्धन्ते प्रकृतिः परिहीयते ॥ १२२ ॥**
**सहसा सहसा तस्य मृत्युर्हरति जीवितम् ।**

विकारा -ज्वरादय , यस्यातुरस्याकस्माद्वर्धन्ते। प्रकृति -स्वभाव , परिहीयते। यथा,-शूर कातर स्यात्, दाता वा तृष्णावान्, इत्यादि। अथवा, प्रकृति -वातादि , तेन वातप्रकृति पित्तप्रकृतिर्भवेत्, इत्यादि। तस्य सहसा-शीघ्रमेव, जीवित मृत्युर्हरति।

**यमुद्दिश्यातुरं वैद्यः संपादयितुमौषधम् ॥ १२३ ॥**
**यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ।**

यमातुरमुद्दिश्य भिषग्यतमान औषध सम्पादयितु न शक्नोति, तस्य दुर्लभ जीवितम्।

**विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् ॥१२४॥**
**न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ।**

यस्यातुरस्यौषध विज्ञात बहुश सिद्ध विधानेन चोपयुक्त न सिध्यति, तस्य चिकित्सित नास्ति।

**भवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ॥ १२५ ॥**
**अकस्माद्वर्णगन्धादेः स्वस्थोऽपि न स जीवति ।**

यस्यौषधे-कषायघृतलेहादौ, तथाऽन्ने-भक्तसूपादिके, वा कल्प्यमाने विपर्यय -अन्यथासम्पत्तिर्वर्णगन्धरूपादे , अकस्मात्-निमित्त विनाऽपि भवेत्, स स्वस्थोऽपि न जीवति।

**निवाते सेन्धनं यस्य ज्योतिश्चाप्युपशाम्यति॥१२६॥**
**आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।**
**अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ १२७ ॥**

१ 'चित्तु व्याच' ट ड। २ 'वाऽन' इति क्वचित्। ३ 'सवर्तयितु' स.च । ४ 'विधिना चो' ट । ५ 'च' स मू।

यस्य चातुरस्य गृहे निवात इन्धनसहित ज्योति -अग्न्यादि[१]रूप शाम्यति, तस्य दुर्लभ जीवितम्।

यस्य चातुरस्य गृहेऽमत्राणि-भाजनानि, अतिमात्रं-अत्यन्त भिद्यन्ते, अथवा पतन्ति, तस्य दुर्लभ जीवितम्।

**यं नर सहसा रोगो दुर्बलं परिमुञ्चति ।**
**संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥ १२८ ॥**

य नर दुर्बल सशयप्राप्त सन्त सहसा-झटित्येव, रोगो मुञ्चति तस्य नरस्यात्रेयो जीवित सशयप्राप्त मन्यते-प्रतिपद्यते।

**कथयेन्न च पृष्टोऽपि दुःश्रव मरणं भिषक् ।**
**गतासोर्बन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम् १२९**

गतासोर्बन्धुमित्राणि तेषाम्, प्रकृतत्वाद्गतासुसम्बन्धि मरण दु श्रव पृष्टोऽपि वैद्यो न कथयेत्, किम्भूतापृष्ट ? तथा हि-वैद्योक्ताद् श्रवमरणशब्दश्रवणात् सन्ताप उत्पद्यते तत्सुहृदाम्। एव च भिषज परोपतापकरणात् पापेन योग स्यात्। न च त-गतासु, चिकित्सितु वैद्य इच्छेत्। तथाविधातुरचिकित्सनाद्धि वैद्यस्यायश सयोग स्यात्। गतासोरिति भाविनि भूतवदुपचाराद्भविष्यति क्तो वेद्य । यथा-"वृष्टो देव सम्पन्ना शालय " इति।

चिकित्सानैष्फल्याच्च त नोपक्रमेदिति प्रतिपादयन्नाह—

**यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते ।**
**घ्नद्भिरौषधवीर्याणि तस्मात्तं परिवर्जयेत् ॥ १३० ॥**

यमदूतपिशाचरक्ष प्रभृतिभि , यत्-यस्मात्, परासु -गतासु, उपास्यते-सेव्यते । किम्भूतै ? औषधाना-रसायनादीना, वीर्याणि-शक्ती, घ्नद्भि -यथायथ व्याधिप्रशमनसामर्थ्यमन्यथा कुर्वद्भि । तस्मात्त परिवर्जयेत्।

इदानी रिष्टज्ञानादरस्य हेतुमाह—

**आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम् ।**
**रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक् ॥ १३१ ॥**

१ 'दिरुपशा' ट ड। २ 'शय प्रा' ण स मू। ३ 'प्राप्तमात्र सह' ड। ४ 'झगिति' ण त। ५ 'सशयप्राप्तमात्रेय इत्यादौ, अनियतारिष्टतया आत्रेयस्यात्र मरण प्रति सन्देह इति ब्रूते। तच्च न, रिष्टस्य मरणाव्यभिचारित्वमाचार्येण प्रयत्नेनोक्तम्, व्युत्पादित चास्माभि । किञ्च न च वीतसशयस्यात्रेयस्य सशयोऽस्ति। तेन शिष्यव्युत्पत्त्यर्थमयमाचार्य सशय दर्शयति, तथा निर्णय करोति। यथा (च चि अ ६।५३)-"दृष्ट्वा प्रमेह मधुर सपिच्छ मधूपम स्याद्द्विविधो विचार ।" इत्यादौ सशय दर्शयित्वा निर्णय दर्शितवान्। तथेहापि दुर्बलस्य सहसा रोगमुक्तौ रिष्ट वा स्यात्, सर्वथा सन्तर्पणाद्व्याधिक्षयो वा स्यात्, इति सन्देह । रिष्टपक्षे तु मरणम्।' इति चक्र। ६ 'येन्नैव पृ' ण। ७ 'श्रवमरण पृ' ट ण त। ८ 'मुत वाऽपृ' त। ९ 'रणान्यायेनाग.' ण। १० 'सुरुपा' ट ड ण।

यत्-यस्मात्,आयुर्ज्ञे-आयुर्वेदविदि वेद्ये, आयुर्वेदफल सकल प्रतिष्ठितम् । तस्माद्रिष्टज्ञानाद्दतो भिषग्भवेत् । आयुर्वेदस्य ह्येतत्फलम्,-यदायुष परिज्ञान परिपालन च । तच्चोभय रिष्टज्ञानाज्जायते, तस्मादत्रादर कार्य ।

**मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् ।**
**तयोरप्यक्षयाद्दृष्टं विषमापरिहारिणाम् ॥ १३२ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां द्वितीये शारीरस्थाने विकृतिविज्ञानीयो नाम पञ्चमोऽध्यायः ॥ ५ ॥**

आयुश्च पुण्य चोभय च, प्रकृतत्वादायु पुण्ययोरुभयोस्तेषामायु पुण्योभयाना क्षय आयु पुण्योभयक्षय, तस्मादायु पुण्योभयक्षयात् मरण प्राणिना-शरीरिणा, दृष्ट-उपलब्ध, मुनीन्द्रै । तत्र सर्वोपकरणसम्पन्नानामपि सम्यग्वाह्यमानरथवदुपभोगवशेन यथोचितप्रमाणायु क्षयाद्यन्मरण जायते, तदायु क्षयादिति बोध्यम् । ज्योति शास्त्रविद्भिर्जातकपरिकल्पितनियतायुषामन्येषा च यदाहाराद्यभावेन मरण, तत्पुण्यक्षयाद्बोध्यम् । यत्रायु क्षयो यथावल्लक्षितो दृश्यते, तथैव च पुण्यक्षय, तदुभयक्षयान्मरण बोध्यम् । न चैतदेव हेतुत्रयमायु पुण्योभयक्षयलक्षणं शरीरिणा मरणे कारणम् । किन्तर्हि ? अन्यदपि विद्यत इत्याह-तयोरित्यादि । ननु, आयु पुण्योभयक्षयात्मकं लक्षणत्रितय प्रकृतम् । ततश्च तेषामिति निर्देश प्राप्त । नैतदेवम् । इह ह्यायु पुण्ययोरेव परामर्श सर्वनाम्ना युक्तो न तु तृतीयस्य हेतो, तदात्मकत्वादुभयस्य । अत 'तयोरप्यक्षयात्' इति युक्तो द्वयोर्निर्देश । तयो -आयु पुण्ययो, अहानितोऽपि मरण दृष्टम् । यस्माद्दीर्घायुषोपेताना तथा पुण्यवत्त्वलक्षण यत्सर्वोपकरणत्व तत्सम्पन्नानामसेव्योद्भूतम् । विषम-चण्डमातङ्गतुरङ्गगोमहिषदुर्गन्धवेगश्वभ्रप्रपातकेसरीसरीसृपादिसेवन, न तत्परिहरन्त्येवं शील येषा ते विषमापरिहारिण, तेषा यन्मरण तद्विषमापरिहरणाद्भवति । यद्यप्यायु क्षयादेव सर्वं मरणम्, तथाऽपि पुण्यक्षयविषमापरिहरणाभ्यामायु क्षयस्यैव कारणभूतत्वादेवमुक्तम् । तदेव विद्यमानायुष्ट्वे तथा सर्वोपकरणसम्पन्नत्वे विषममपरिहरता यन्मरण तद्विषमापरिहारिणा बोध्यम् । वाह्यवाहकदोषादिकारणरथविनाशसदृशमिति ।

**इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया द्वितीये शारीरस्थाने विकृतिविज्ञानीयो नाम पञ्चमोऽध्याय समाप्त ॥ ५ ॥**



१ 'आयुर्वेदफल सकल रिष्टज्ञाने प्र' ड । २ 'ण्ययोस्ते' ण त । ३ 'त्र पूर्वोक्तोप' ट ड । ४ 'कल्पनानि' ट ड । ५ 'यक्षयस' ट त । ६ 'क्तो निर्दे' ट । ७ 'युरुपे' ट । ८ 'ण्यबन्धल' ट । ९ 'व्योद्भ्रान्तचण्ड' त. । १० 'रणमा' ण. त । ११ 'भूत, तदे' ण. ।



## षष्ठोऽध्यायः ।

विकृतिविज्ञानीयाध्यायादनन्तरं दूतादिविज्ञानीयाध्यायारम्भेऽय सम्बन्ध । उक्तमायु प्रमाण स्वस्थातुराणा रूपेन्द्रियस्वरच्छायादिविकृतिलक्षणै प्रतिनियतविशिष्टव्याधिलक्षणैरपि । अथ पुनरध्यायो दूताद्याश्रयै शुभाशुभनिमित्तै शुभाशुभ सूचयितुमारभ्यते-

**अथातो दूतादिविज्ञानीयं शारीरं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

दूत -स्त्रीपुरुषादिर्य आतुरेण प्रेष्यते स कथ्यते । दूत आदिर्येषा ते दूतादय । आदिग्रहणाद्वैद्यस्य गृहान्निर्गच्छत पथि गच्छतो यावदातुरगृहे प्रवेश, प्रविष्टस्यापि यानि शुभाशुभसूचकानि निमित्तानि दृश्यन्ते श्रूयन्ते च, तेषा परिग्रह । दूतादीनां विज्ञान दूतादिविज्ञानम् । यथैते दूतादय शुभा एतेऽशुभा इति विशिष्ट-निश्चित, ज्ञानं-अवबोध, परिच्छेद इत्यर्थ । तस्मै हितो दूतादिविज्ञानीय । शेषं पूर्ववद्व्याख्येयम् ।

**पाखण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।**
**त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ १ ॥**

पाखण्ड -षण्णवतिभेदभिन्नो व्रात्यविशेष । आश्रमा -ब्रह्मचारिगृहस्थभिक्षुवैखानसभेदेन चत्वार । वर्णा -ब्राह्मणक्षत्रियविट्शूद्राश्चत्वार । ते च प्रतिलोमानुलोमतो बहव । तेषा पाखण्डादीना ये सवर्णा -समानवर्णास्तुल्यजातयो, दूतास्ते च कर्मसिद्धये-कर्मसिद्ध्यर्थं भवन्ति, कर्मसिद्धिं सूचयन्तीत्यर्थ । यथा-पाखण्डस्य पाखण्डो दूत, ब्रह्मचारिणो ब्रह्मचारी, गृहस्थस्य गृहस्थो, वानप्रस्थस्य वानप्रस्थो, भिक्षोर्भिक्षु, यावच्छूद्रस्य शूद्र शुभ इति । त एव-पाखण्डादयो, विपरीता -विजातीया सवर्णा ये न भवन्ति ते, कर्मविपत्तये-चिकित्सानैष्फल्याय भवन्ति, चिकित्सानैष्फल्य सूचयन्तीत्यर्थ ।

**दीनं भीतं द्रुतं त्रस्तं रूक्षामङ्गलवादिनम् ।**
**शस्त्रिणं दण्डिनं षण्ढं मुण्डश्मश्रुजटाधरम् ॥ २ ॥**

१ 'तुरयो रू' ट । २ अय दूतादिविज्ञानीयश्चरके इ० ५।१२ अध्याययो, सुश्रुते सू० २९ अध्याये, अष्टाङ्गसङ्ग्रहे शा० १२ अध्याये चास्ति वर्णित । ३ 'रस्य गृहप्र' ट । ४ 'न्तेऽनुभूयन्ते च' ट । ५ 'वा' ण । ६ 'सपक्षा' स सु । ७ 'व्रतवि' ट ण त । ८ वैखानस -वानप्रस्थ । ९ 'भवन्ति' इति ट ण त. पुस्तकेषु नोपलभ्यते । १० 'यथा-परिव्राजकस्य परिव्राजको दूत,० हस्थो, भिक्षो' ट ण त । ११ 'खण्डं' अ । १२ 'मुण्डश्मश्रु' अ.त प. । 'मुण्डश्मश्रु ज' इ ।

**अमङ्गलाह्वयं क्रूरकर्माणं मलिनं स्त्रियम् ।**
**अनेकं व्याधितं व्यङ्गं रक्तमाल्यानुलेपनम् ॥ ३ ॥**
**तैलपङ्काङ्कितं जीर्णविवर्णार्द्रैकवाससम् ।**
**खरोष्ट्रमहिषारूढं काष्ठलोष्टादिमर्दिनम् ॥ ४ ॥**
**नानुगच्छेद्भिषग्दूतमाह्वयन्तं च दूरतः ।**

सवर्णमपि दूतं दीनभीतादिविशेषणविशिष्टं यावत्काष्ठलोष्टादिमर्दिनं भिषग् दृष्ट्वा नानुगच्छेच्चिकित्सानैष्फल्यादिति । रूक्षवादिनं—परुषभाषिणम् । अमङ्गलवादिनं—मरिष्यत्यसौ पतिष्यति न जीवतीत्याद्यमङ्गलवादी, तम् । तथा, षण्ढं—नपुंसकम् । तथा, मुण्डं—कृतवपनं, श्मश्रु—मुखव्यञ्जनं, यस्य स एवम् । मुण्डश्मश्रुश्चासौ जटाधरश्च तम् । तथा, अमङ्गलं—अकल्याणं, आह्वयो—नाम, यस्य तम् । व्यङ्गं—हीनाङ्गम् । तैलपङ्काभ्यामङ्कितं—दिग्धम् । तथा, जीर्णादिकं वासो यस्य तम् । तथा, दूरादाह्वयन्तं—आकारयन्तं, नानुयायात् ।

**अशस्तचिन्तावचने नग्ने छिन्दति भिन्दति ॥ ५ ॥**
**जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि ।**
**सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयते[3] तथा ॥ ६ ॥**
**वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ।**

चिन्ता च वचनं च चिन्तावचने, अशस्ते चिन्तावचने यस्येति मत्वर्थे बहुव्रीहिः । वैद्येऽशस्तचिन्तां कुर्वति, अशस्तवचनं चोच्चारयति । मनुष्याणां मुमूर्षतां—आसन्नमृत्यूनां, सम्बन्धिनो दूता आयान्ति । मुमूर्षतामिति "आशङ्कायामुपसङ्ख्यानम् ( या सन् वक्तव्यः )" इति सन् । "म्रियतेर्लुङ्लिङोश्च" इति नियमादात्मनेपदाभावः । तथा च किम्भूते[4] नग्ने—विवस्त्रे, छिन्दति भिन्दति किञ्चित् । तथा, पावकं—अग्निं जुह्वाने, पितृभ्यश्च पिण्डान् निर्वपति—अनुप्रयच्छति, यावदप्रयते—अशुचौ । मनुष्याणामित्युपलक्षणम्, रूयादयोऽपीह गृह्यन्त एव ।

**विकारसामान्यगुणे देशे कालेऽथवा भिषक् ॥ ७ ॥**
**दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ।**

विकारेण—ज्वरादिना, सामान्यः—तुल्यो, गुणो यस्यासौ विकारसामान्यगुणः, तस्मिंस्तथाविधे, देशे काले वा दूतमभ्यागतं—सम्मुखमागच्छन्तं, दृष्ट्वा भिषक्तमातुरं—दूतस्य प्रेषकं, नोपाचरेत् । यथा,—कफजे ज्वरादावामये घृतोदकादिद्रवसमीपे देशेऽनूपे वा काले वा प्रत्युषस्यागतो दूतोऽशुभः । पित्तामये[5] वह्न्यादिना सन्तप्ते देशे काले मध्याह्ने दूतोऽशुभः । वातरोगे परुषरूक्षसिकतापाषाणशर्करादिविशिष्टे देशे काले सायाह्ने दूतोऽशुभः । विपरीतस्तु शुभः । छर्दिमेहातीसारादिषु सेतुभङ्गोऽशुभः । एवमेव सेतुबन्धः शुभः ।

**स्पृशन्तो नाभिनासास्य[6]केशरोमनखद्विजान् ॥ ८ ॥**

१ 'लोहादि' अ । २ 'तपरिवापन' ट ड । ३ 'तेऽथवा' इ । ४ 'ने, तेऽशस्ते यस्ये' ड । ५ 'पित्तरोगे' ट । ६ 'साक्षिके' अ ।

**गुह्यपृष्ठस्तनग्रीवाजठरानामिकाङ्गुलीः[1] ।**
**कार्पासबुससीसास्थिकपालमुशलोपलम् ॥ ९ ॥**
**मार्जनीशूर्पचैलान्तभस्माङ्गारदशातुषान् ।**
**रज्जूपानत्तुलापाशमन्यद्वा भग्नविच्युतम्[2] ॥ १० ॥**
**तत्पूर्वदर्शने दूता व्याहरन्ति मरिष्यताम् ।**

तदित्यनेन वैद्यः परामृश्यते । तस्य पूर्वदर्शने[3]—प्रथमदर्शने, तस्मिन् सति तत्काल एव, मरिष्यतां—आसन्नमरणानां, सम्बन्धिनो दूता नाभ्यादि स्पृशन्तो व्याहरन्ति । "लक्षणहेत्वोः क्रियायाः" इति हेतावत्र शतृप्रत्ययः । नाभ्यादिस्पर्शनं हि मुमूर्षुदूतव्याहरणस्य हेतुः । मुमूर्षोर्वैद्य दूता इति प्रतिपादयन्तीत्यर्थः । अनामिकाऽङ्गुलिः—कनीयसीनिकटस्थिता । दशा—वस्त्रवर्तिः । उपानत्—चर्मपादुका । तुला—मानविशेषः । न केवलं नाभ्यादि स्पृशन्तोऽपरमपि च भग्नविच्युतं च स्पृशन्त इति योज्यम् ।

**तथाऽर्धरात्रे मध्याह्ने सन्ध्ययोः पर्ववासरे ॥ ११ ॥**
**षष्ठीचतुर्थीनवमीराहुकेतूदयादिषु ।**
**भरणीकृत्तिकाऽऽश्लेषापूर्वाऽऽर्द्रापित्र्यनैर्ऋते ॥ १२ ॥**

नाभ्यादिकमस्पृशन्तोऽप्यर्धरात्रादिष्वागच्छन्तो मरिष्यतां दूता व्याहरन्ति । अर्धरात्रं इति "अर्ह सर्वैकदेश" इत्यत्र चकारादच् समासान्तः । आगच्छन्त इत्यत्रापि योज्यम् । पैत्र्यनैर्ऋतं इति मघामूलाख्ये नक्षत्रे । आदिशब्देनोत्पातदर्शनकृष्णचतुर्दश्यादयो गृह्यन्ते । सङ्ग्रहेऽप्युक्तम् (शा अ १२)—"मध्याह्नोभयसन्ध्यार्धरात्रचतुर्थीषष्ठीनवमीपर्वदिनेषु ग्रहोपरागोत्पातदर्शनभरणीकृत्तिकार्द्राऽऽश्लेषामघामूलपूर्वासु चाशुभः ।" इति ।

**यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।**
**पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥ १३ ॥**

यस्मिन् दूते आतुरसंश्रयं—आतुरप्रतिबद्धं, वाक्यं ब्रुवति सत्यशुभं निमित्तं भिषक् पश्येत् । तं—दूतमातुरचिकित्सार्थमागतं, नानुव्रजेत् ।

किं तदशुभं निमित्तम्? इत्याह—

**तद्यथा विकलः प्रेतः प्रेतालङ्कार एव वा[4] ।**
**छिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ॥ १४ ॥**
**रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान् ।**
**स्पर्शो वा विपुलः क्रूरो यद्वाऽन्यदपि तादृशम् १५**
**तत्सर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः ।**
**दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १६ ॥**

तद्यथाशब्दोऽशुभनिमित्तसदर्शनसम्बन्धार्थः । विकलः—अङ्गहीनः काणकुण्ठादिकः[6] । प्रेतो—मृत एव । प्रेतालङ्कारो—यो मृतस्यानुलेपनवस्त्रादिनाऽलङ्कारो विधीयते । छिन्नं—रज्वा-

१ 'ङ्गुलि' अ । २ 'विद्युतम्' अ ड । ३ 'न—तत्प्रथ' ण. त । ४ 'पञ्चमीदि' ट ड ण त । ५ 'च' अ ण त । ६ 'लङ्कूरो' अ ण. । ७ 'कुब्जादि' त. । 'कुण्ठोऽकर्मण्यमूर्खयो ' इति मेदिनी ।

दिकम् । दग्ध-वस्त्रादिकम् । विनष्ट वा-घटभाजनादिकम् । तद्वादीनि-छिन्नदग्धविनष्टवाचकानि, वचासि-वचनानि, श्रोत्रेण श्रूयन्ते । रसो वा कटुकस्तीव्र इत्यनेन रसाधार द्रव्यमनाहारप्रतिबद्धमुपलक्ष्यते । रसो हि रसनेन्द्रियग्राह्य एव । तस्मात् कटुकरसाधिष्ठित द्रव्य मरिचादि कटुकरसशब्देनेह गृह्यते । लोकेऽपि रसेन द्रव्य व्यपदिश्यत एव । यथा-इद मधुर द्रव्यमिदमम्लमिति । तदेवमुत्कटकटुकरसाधिष्ठित द्रव्य यदा चक्षुषा गृह्यते वैद्येन, तदा न शुभम् । तीव्रग्रहणादतीव्रस्य कुठेरकादेर्निरास । गन्धश्च कौणपो-महान् दुर्गन्धोऽतिशयेन, तत्काल एव घ्राणेन्द्रियेण गृह्यते, स्पर्शो वा विस्तीर्ण क्रूर-अतिदु सह., तत्काल एवाग्न्यादिसम्बन्धी स्पर्शनेन्द्रियेण गृह्यते, सोऽशुभ । यद्वेति । अथवाऽपरमपि यत्तादृशविकलाद्यशुभनिमित्तसदृशमनिर्दिष्टमपि रक्तकरवीरकुसुमादिक, तत्सर्वं वाक्यमभित -आतुराश्रयाद्वाक्यादग्रे, अथवा वाक्यकाले-आतुराश्रयवाक्यमध्ये विकलाद्यशुभनिमित्त तदानीमप्यशुभसूचकत्वात् तस्मिन् काले, दूतमभ्यागत-आभिमुख्येन तत्कालमेवागत, दृष्ट्वा येनासौ प्रेषितो दूतस्तमातुर नोपाचरेत् ।

अथान्यदप्यशुभ निमित्तमाह—

**हाहाक्रन्दितमुत्क्रुष्टमाक्रुष्ट स्खलन क्षुतम् ।**
**वस्त्रातपत्रपादत्रव्यसन व्यसनीक्षणम् ॥ १७ ॥**
**चैत्यध्वजानां पात्राणां पूर्णानां च निमज्जनम् ।**
**हतानिष्टप्रवादाश्च दूषणं भस्मपांसुभिः ॥ १८ ॥**
**पथःच्छेदोऽहिमार्जारगोधासरठवानरैः ।**
**दीप्तां प्रति दिशं वाचः क्रूराणा मृगपक्षिणाम् ॥१९॥**
**कृष्णधान्यगुडोदश्विल्लवणासवचर्मणाम् ।**
**सर्षपाणां वसातैलतृणपङ्केन्धनस्य च ॥ २०॥**
**क्लीबक्रूरश्वपाकानां जालवागुरयोरपि ।**
**छर्दितस्य पुरीषस्य पूतिदुर्दर्शनस्य च ॥ २१ ॥**
**निःसारस्य व्यवायस्य कार्पासादेररेरपि ।**
**शयनासनयानानामुत्तानाना तु दर्शनम् ॥ २२ ॥**
**न्युब्जानामितरेषां च पात्रादीनामशोभनम् ।**

हाहाक्रन्दितमित्यादिकमशोभनमिति वक्ष्यमाणेन सम्बन्ध । हाहेति क्रन्दित-रुदित क्वणन हाहाक्रन्दितम् । तथा, उत्क्रुष्ट-उच्चै कृत्वा क्रुष्ट, आक्रुष्ट-आक्रोश । स्खलन-पतन, वैद्यस्याऽन्यस्य वा । क्षुत-छिक्का । वस्त्रादीना-वैद्यस्य सम्बन्धिना, व्यसन-विनाश । व्यसनिना-आपद्गताना, ईक्षण-आलोकनं, न शोभनमिति सर्वत्र योज्यम् ।

चैत्यादीना निमज्जन-पतन ब्रुडन च । तथा, हत इत्येवरूपाणामनिष्टानां-अमङ्गलाना, प्रवादा -उच्चैरुच्चरितानि वाक्यानि । दूषण भस्मपांसुभि -वैद्यस्यैव पथि गच्छतो भस्मना पांसुना वा विकिरणमशोभनम्, कर्मसिद्ध्यभावादातुरस्यापि मरणसूचकत्वात् । एवमन्यत्राप्युभयोरशोभनत्व योज्यम् ।

पथ च्छेद इति मार्गस्य छेद । कै [1] ? सर्पमार्जारादिभि । सरठ -सर्पसदृशी रक्तवर्णादिमुखी प्राणिजातिश्चक्रलण्ड इत्यपरपर्याय ।

यस्या दिशि सूर्य स्थित सा दीप्ता भण्यते । तथा चोक्तम्—"अङ्गारिण्यर्कनिर्मुक्ता, दीप्ता यस्या दिवाकर । प्रधूमितैष्यत्सूर्या वै, शान्ता पञ्चेतरा दिश ॥" इति । दीप्ता दिश प्रति या वाचो-वाण्य , क्रूराणा-क्रव्यभुजा, मृगाणा-द्वीपिशृगालादीना, पक्षिणा-गृध्रश्येनादीना, ता अशोभना इति लिङ्गविपरिणामेन सम्बन्ध ।

कृष्णधान्यादीना यद्दर्शन वैद्यस्य पथि गच्छत आतुरगृहे प्रविशतो वा तदशोभनम्, अशुभसूचकत्वात् । उदश्वित्-तक्रम् । सर्षपो-रक्ताभास । क्रूरो-निष्ठुरवादी । श्वपाक -चाण्डाल । जाल-आनाय । वागुरा-मृगबन्धनी । पूति -दुर्गन्धि । दुर्दर्शन -करालाकृति । नि सारस्य-व्यपेतसारस्य वस्तुन । व्यवायस्य-मैथुनस्य । कार्पासादेरित्यादिशब्देन कार्पासबुससीसादेर्दूतचिन्तानिर्दिष्टस्य ( श्लो ९ ) ग्रहणम् । कार्पासादे पदार्थस्य दर्शन पथि गच्छत आतुरगृह प्रविशतो वाऽशोभनम् । अरेर्दर्शनमशोभनम् । प्रकृतत्वाद्वैद्यस्यात्मशत्रुदर्शनम् । तथा, शयनादीनामुत्तानाना-ऊर्ध्वमुखस्थितपादाना दर्शनम्, तथेतरेषा-पात्रादीना घटशरावोदञ्चनादीनामधोमुखाना, दर्शनमशोभनम् ।

**पुंसंज्ञाः पक्षिणो वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः॥२३॥**
**प्रदक्षिणं खगमृगा यान्तो, नैवं श्वजम्बुकाः ।**

पुसंज्ञा -पुनामान , पक्षिणो-वर्तकादयो, वामस्थिताः प्रशस्ता । स्त्रीनामानो-बलाकासारिकादयो, दक्षिणस्थिता शुभा ।

प्रदक्षिणमिति वामाद्दक्षिणं गच्छन्त खगमृगा शुभा । खगा -काकपारावतादय । मृगा -हरिणैणादय ।

यान्तो नैव श्वजम्बुका ,-किन्तर्हि ? दक्षिणाद्वाम गच्छन्त शुभा इत्यर्थ ।

**अयुग्माश्च मृगाः शस्ताः**

अयुग्मा -पञ्चसप्ता पि(दयो), मृगा शुभा ।

**शस्ता नित्यं च दर्शने ॥२४॥**

**चाषभासभरद्वाजनकुलच्छागबर्हिण ।**

चाषादयो मयूरान्ता नित्य दर्शने-वामतो दक्षिणतो वा, शस्ता ।

**अशुभं सर्वथोलूकबिडालसरठेक्षणम् ॥ २५ ॥**

सर्वथा-सर्वेण प्रकारेण वामतो दक्षिणतो वा युग्मानाम-

१ वा-'भग्नघट' ण त । २ 'व्यमुप' ट ड । ३ 'कुणप पूतिगन्धौ शवेऽपि च' इति मेदिनी । ४ 'गन्धश्च तत्का' ट । ५ 'णीकू' ण । ६ 'ल एवा' ट ड । ७ 'च' अ इ ।

१ 'कै ? मार्जा' ट ड. । २ 'र्णा दिमुखी' ड.ण त. । ३ 'व्यपगत' ण ।

युग्माना वा, उलूकादीना दर्शनमशुभम् । कीर्तने तु प्रशस्ता इत्येके ।

**प्रशस्ताः कीर्तने कोलगोधाहिशशजाहकाः[1] ।**
**न दर्शने न विरुते, वानरर्क्षावतोऽन्यथा ॥ २६ ॥**

कोलादय कीर्तने प्रशस्ता । दर्शने विरुते [ च ] न प्रशस्ता । कोल –सूकर ।

वानरश्च ऋक्षश्च तौ दर्शने विरुते [ च ] शस्तौ । अत – उक्तन्यायात्, अन्यथा–विपरीतौ, प्रशस्तौ । कीर्तन तयोर-प्रशस्तमित्यर्थ ।

**धनुरैन्द्रं च लालाटमशुभ, शुभमन्यत. ।**
**अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ॥२७॥**

ऐन्द्र धनुर्ललाट–अभिमुख, अशुभम् । अन्यत[2] –पुर स्थितं सम्मुख वर्जयित्वा तिर्यक् पृष्ठतो वा स्थित, शुभम् । लालाट-मिति भवार्थे अण् । लालाटशब्देनेह ललाटसमीपो देशो लक्ष्यते, सम्मुखमित्यर्थ । पात्राण्यग्निपूर्णान्यशोभनानि । तथा भिन्नानि–भग्नानि । तथा, विशिखानि–अन्त शून्यानि । न शुभानीति वचनविपरिणामेन सम्बन्ध ।

वैद्यस्यातुरगृहप्रवेशे शुभाशुभसूचकानि निमित्तान्याह–

**दध्यक्षतादि निर्गच्छद्वक्ष्यमाणं च मङ्गलम् ।**
**वैद्यो मरिष्यतां वेश्म प्रविशन्नेव पश्यति ॥ २८ ॥**

आदिशब्देनेक्षुनिष्पावादिपरिग्रह । दध्यक्षतावादी ( ता आदयो ) यस्य मङ्गलस्य तदेवम् । वैद्य प्रविशन्नेव–तत्काल एव, आतुरगृहाद्दध्यक्षतादि–यद्वक्ष्यमाण, तन्निर्गच्छत्–नि.सरत्, मरिष्यता–आसन्नमरणाना, पश्यति ।

**दूताद्यसाधु दृष्ट्वैवं त्यजेदार्तमतोऽन्यथा ।**
**करुणाशुद्धसन्तानो यत्नतैस्तमुपाचरेत्[3] ॥ २९ ॥**

एव–पूर्वोक्तेन प्रकारेण, दूताद्यसाधु–अशुभ पूर्वनिर्दिष्ट, दृष्ट्वा आर्त–आतुर, त्यजेत्–न चिकित्सेत् । आदिशब्देन शकुनादेर्ग्रहणम् । अतोऽन्यथेति दूतादि शुभ दृष्ट्वा, त-आतुर, वैद्यो यत्नेन समुपाचरेत् । किम्भूत ? करुणया शुद्ध–निर्मल, सन्तान–चेतो, यस्य स एवभूत सन् ।

अथ तदेव दध्यक्षताद्याह—

**दध्यक्षतेक्षुनिष्पावप्रियङ्गुमधुसर्पिषाम् ।**
**यावकाञ्जनभृङ्गारघण्टादीपसरोरुहाम् ॥ ३० ॥**
**दूर्वार्द्रमत्स्यमांसानां लाजानां फलभक्ष्ययोः ।**
**रत्नेभपूर्णकुम्भानां कन्यायाः स्यन्दनस्य च ॥ ३१ ॥**
**नरस्य वर्धमानस्य[4] देवतानां नृपस्य च ।**

१ 'जाहको गात्रसङ्कोची मण्डली च बुधै स्मृत ।' इति हलायुध । २ 'त –तिर्यक् पृष्ठतो वा शुभम् ।' ट । ३ 'त समु' इ ण त । ४ 'वर्धमान –शराव । अन्ये तु विशिष्टमेव दर्पण मङ्ग-ल्यार्थ चषक वा वर्धमानमाचक्षते ।' इति डल्हण । 'अन्ये त्वङ्का-रोपित कुमार कुमारी वा वर्धमानमाहु ।' इति चक्र । 'वर्धमान–अलङ्कारविशेष ।' इतीन्दु ।

अ० ५५

**शुक्लानां सुमनोवालचामराम्बरवाजिनाम् ॥ ३२ ॥**
**शङ्खसाधुद्विजोष्णीषतोरणस्वस्तिकस्य च ।**
**भूमेः समुद्धतायाश्च वह्नेः प्रज्वलितस्य च ॥ ३३ ॥**
**मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।**
**नृभिर्धेन्वाः सवत्साया वडवायाः स्त्रिया अपि ३४**
**जीवञ्जीवकसारङ्गसारसप्रियवादिनाम् ।**
**हंसानां शतपत्राणां बद्धस्यैकपशोस्तथा ॥ ३५ ॥**
**रुचकादर्शसिद्धार्थरोचनानां च दर्शनम् ।**
**गन्धः सुसुरभिर्वर्णः सुशुक्लो मधुरो रसः ॥ ३६ ॥**
**गोपतेरनुकूलस्य[1] स्वनस्तद्वद्गवामपि ।**
**मृगपक्षिनराणां च शोभिना शोभना गिरः ॥ ३७ ॥**
**छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ।**
**भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिःस्वनाः ॥ ३८ ॥**
**वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ।**
**पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ॥ ३९ ॥**

दध्यक्षतादीना दर्शन 'पथि वेश्मप्रवेशे च विद्यादारोग्यल-क्षणम् ।' इति वक्ष्यमाणेन सम्बन्ध । अक्षता –यवा , अख-ण्डितास्तण्डुला इत्यन्ये, धान्यमेवाखण्डितमक्षतशब्दवाच्यमि-त्यपरे । यावक–अलक्तक । भृङ्गार –कनकालुका । आर्द्रम-त्स्या , आर्द्रमासम् । आर्द्रग्रहणमत्र शुष्कपरिहारार्थम् । भक्ष्य[2]–मोदकादि । पद्मरागादिक–रत्नम् । इभो–हस्ती । नरस्येति शौर्यत्यागप्रज्ञाराजसत्कारादिभिर्वर्धमान –प्रतिदिनमुपचय गत , तथाविधस्य पुरुषस्य[3] दर्शन शुभम् । शुक्लाना सुमन प्रभृतीना दर्शन शुभम् । बालचामर–केशप्रकीर्णकम् । वाजी–तुरङ्ग । उष्णीष–शिरोवेष्टनम् । मनोज्ञस्य–हृदयहारिणोऽन्नपानस्य । शकटस्य–रथस्य, नृभि –नरै , पूर्णस्य–सम्भृतस्य । धेन्वा इत्यादि । स्त्रिया अपीत्यपिशब्द समुच्चये । यथा धेन्वा सवत्साया दर्शनमेवं वडवाया स्त्रियाश्च सवत्साया –साप-त्याया इति । रुचको–वलय[4] , आभरणविशेष । सिद्धार्थो–गौ-रसर्षप । गन्ध –सुष्ठु सुरभि । वर्ण सुष्ठु शुक्ल –सित । रसो मधुर । गोपते –वृषभस्य, अनुकूलस्य[5]–अकुपितस्य, स्वन[6] –शब्द । तद्वत्–गोपतिना तुल्यो, गवामप्यनुकूलाना शब्द इत्यर्थ । तथा, शोभिना–प्रशस्ताना मृगादीना, प्रशस्ता गिर । विद्यादारोग्यलक्षणमिति योज्यम् । मृगपक्षिनरा ह्यशोभिनोऽपि शृगालोलूकपुल्कस[7]चाण्डालादय सन्ति, तद्व्यवच्छेदनार्थं शो-भिनामिति विशेषणम् । शोभिनामपि मृगादीनां क्षामरोगा-र्ताभिहतानामशोभना वाच स्यु , तत्त्यागार्थं शोभना इति विशेषणम् । छत्रादीनामुत्क्षेपण–उत्थापनम्[9] । पताका–वैज-

१ 'तुलोमस्य' इ । २ 'भक्ष्य' ट । ३ 'पुस द' ट । ४ 'लयाख्य ' ट । ५ 'स्य स्वन ' ट । ६ 'न –न प्रतिकूलस्य कुपितस्य शब्द ' ट ण त । ७ 'पुष्कस' ड । 'पुष्पस' ण त. । ८ 'नां क्रमरो' ड. । ९ 'उपस्थाप' ण त. ।

यन्ती । अभिष्टुति – प्रयाणकाले जनेन स्तुतिर्जयजयेत्यादिशब्दपूर्वाऽभिमुखमुच्चारिता । तथा, भेर्यादीना शब्दा, पुण्या हनि स्वना –प्रशस्तशब्दा आरोग्याय, न त्वप्रशस्तानि स्वना प्रेतपटहादिजा । वेदाध्ययनस्य–वेदपाठस्य, ये शब्दास्ते च शुभा । प्रदक्षिण –अनुकूलो, वायु सुख –सुखावह । पथि वेश्मप्रवेशे चैतदारोग्यलक्षण विद्यात् ।

**इत्युक्त दूतशकुनं**

इत्येवमथे परिसमाप्तौ वा । दूत –स्त्रीपुरुषादि, इत्यादि प्रागुक्तम् । तथा, चेतनाचेतनरूप शुभाशुभसूचको दूतवर्जितो लोकप्रसिद्ध –शकुन उक्त । यथा ( श्लो १७ )–"हाहाक्रन्दित" इत्यादि । इति–एव, उक्त–अभिहितम् ।

**स्वप्नानूर्ध्वं प्रचक्षते ।**

अतो दूतशकुनादूर्ध्व–अनन्तर, स्वप्नान् प्रचक्षते–सम्यग् भणिष्यति, तन्त्रकार इति शेष । स्वप्नलक्षणमष्टाङ्गसङ्ग्रहे कथितम् । यथा ( सू अ ९ )–"सर्वेन्द्रियव्युपरतौ मनोऽनुपरत यदा । विषयेभ्यस्तदा स्वप्न नानारूप प्रपश्यति ॥" इति । तथा ( स सू अ ९ )–"श्लेष्मावृतेषु स्रोत सु श्रमादुपरतेषु च । इन्द्रियेषु स्वकर्मभ्यो निद्राऽऽविशति देहिनम् ॥" इति निद्रालक्षणम् ।

**स्वप्ने मद्यं सह प्रेतैर्यः पिबन् कृष्यते शुना ॥ ४० ॥**
**स मर्त्यो मृत्युना शीघ्रं ज्वररूपेण नीयते ।**

यो मर्त्य –पुरुष, स्वप्ने–स्वप्नावस्थाया, प्रेतै सह मद्य पिबन् शुना कृष्यते–आक्रम्यते, स मृत्युना ज्वररूपेण शीघ्र–अचिरात् कतिपयैरेव दिवसै, नीयते, लोकान्तरमिति शेष ।

**रक्तमाल्यवपुर्वस्त्रो यो हसन् ह्रियते स्त्रिया ॥ ४१ ॥**
**सोऽस्रपित्तेन**

रक्तमाल्यो रक्तवपू रक्तवस्त्रश्च यो मर्त्यो हसन् स्त्रिया स्वप्ने ह्रियते–आकृष्यत आक्रम्यते, सोऽस्रपित्तेन मृत्युना शीघ्र नीयते ।

**महिषश्ववराहोष्ट्रगर्दभैः ।**
**यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ॥४२॥**

यो महिषादिभि करणभूतैर्याम्या दक्षिणा दिश, स्वप्ने प्रयाति, तस्य यक्ष्मणा मरण भवति ।

**लता कण्टकिनी वंशस्तालो वा हृदि जायते ।**
**यस्य तस्याशु गुल्मेन**

मर्त्य इति प्रथमान्तोऽपीहार्थवशात् षष्ठ्यन्त सम्बध्यते । यस्य मर्त्यस्य स्वप्ने कण्टकयुक्ता लता हृदये जायते, वशो वा–अथवा ताल, तस्य शीघ्र गुल्मेन मरण भवेत् । सङ्ग्रहे त्वेवमुक्तम् ( शा अ १२ )–"यस्य कण्टकिनी लता वशस्तालो वा हृदि जायते स गुल्मेन । यस्य तु शिरसि स शिरोरोगेण शस्त्रेण वा शिर च्छेदनेन ।" इति ।

**यस्य वह्निमनर्चिषम् ॥ ४३ ॥**
**जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते ।**
**पद्म स नश्येत्कुष्ठेन**

यस्य मर्त्यस्य नग्नस्याज्याभ्यक्तस्य वह्निमनर्चिष–ज्वालारहित, जुह्वत उरसि पद्म स्वप्ने जायते, स नर कुष्ठेन नश्येत् ।

**चण्डालैः सह यः पिबेत् ॥ ४४ ॥**
**स्नेहं बहुविधं स्वप्ने स प्रमेहेण नश्यति ।**

चण्डालै सह बहुविध–अनेकप्रकार, स्नेह–घृततैलादिक, यो मर्त्य स्वप्ने पिबेत्, स प्रमेहेण नश्यति । स्वप्ने प्रकृतेऽपि पुन स्वप्नग्रहण कृत स्पष्टार्थम् ।

**उन्मादेन जले मज्जेद्यो नृत्यन् राक्षसैः सह ॥ ४५ ॥**

उन्मादेन स नश्यति, यो राक्षसै सह नृत्यन् जले मज्जेत् ।

**अपस्मारेण यो मर्त्यो नृत्यन् प्रेतेन नीयते ।**

स मर्त्योऽपस्मारेण नश्यति, यो नृत्यन् प्रेतेन स्वप्ने नीयते ।

**यानं खरोष्ट्रमार्जारकपिशार्दूलसूकरैः ॥ ४६ ॥**
**यस्य प्रेतैः शृगालैर्वा स मृत्योर्वर्तते मुखे ।**

यस्य नरस्य स्वप्ने खरादिभिर्यान भवति, स मृत्योर्मुखाभ्यन्तरे वर्तते, अत्यासन्नविनाशत्वात् ।

**अपूपशष्कुलीर्जग्ध्वा विबुद्धस्तद्विधं वमन् ॥ ४७ ॥**
**न जीवति**

अपूपान् शष्कुलीर्वा जग्ध्वा–भक्षयित्वैव स्वप्ने दृष्ट्वा, विबुद्ध सन् तद्विध–अपूपशष्कुलिप्रायमेव, वमेत्–उद्गिरेत्, स न जीवति ।

**अक्षिरोगाय सूर्येन्दुग्रहणेक्षणम् ।**

सूर्यचन्द्रयोर्ग्रहणदर्शनमक्षिरोगाय ।

**सूर्याचन्द्रमसोः पातदर्शनं दृग्विनाशनम् ॥ ४८ ॥**

स्वप्ने सूर्याचन्द्रमसो पतनदर्शन मर्त्यस्य दृष्टिविनाशनम् । सूर्याचन्द्रमसोरिति "देवताद्वन्द्वे च" इत्यानङादेश ।

**मूर्ध्नि वंशलतादीनां सम्भवो वयसा तथा ।**
**निलयो मुण्डता काकगृध्राद्यैः परिवारणम् ॥ ४९ ॥**
**तथा प्रेतपिशाचस्त्रीद्रविडान्ध्रगवाशनैः ।**
**सङ्गो वेत्रलतावंशतृणकण्टकसङ्कटे ॥ ५० ॥**
**श्वभ्रश्मशानशयनं पतनं पांसुभस्मनोः ।**
**मज्जनं जलपङ्कादौ शीघ्रेण स्रोतसा हृतिः ॥ ५१ ॥**
**नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम् ।**
**वयोऽङ्गवृद्धिरभ्यङ्गो विवाहः श्मश्रुकर्म च ॥ ५२ ॥**

---

१ 'सिव्या–श' ट ड त । २ 'प्रचक्ष्यते' इ ण । 'प्रवक्ष्यते' त. । ३ 'हिनाम्' ट ड । ४ 'ना तूर्णं' ण त । ५ 'क्तशरीरो र' ट । ६ 'यस्य तु शिरसि लता वशो वा जायते मर्त्यस्य स शिरो' ट.ड ण त ।

१ 'न्नमरणत्वात्' ट ।

**पक्वान्नस्नेहमद्याशः प्रच्छर्दनविरेचने ।**
**हिरण्यलोहयोर्लाभः कलिर्बन्धपराजयौ ॥ ५३ ॥**
**उपानद्युगनाशश्च प्रपातः पादचर्मणोः ।**
**हर्षो भृशं प्रकुपितैः पितृभिश्चावभर्त्सनम् ॥ ५४ ॥**
**प्रदीपग्रहनक्षत्रदन्तदैवतचक्षुषाम् ।**
**पतनं वा विनाशो वा, भेदनं पर्वतस्य च ॥ ५५ ॥**
**कानने रक्तकुसुमे पापकर्मनिवेशने ।**
**चितान्धकारसम्बाधे जनन्यां च प्रवेशनम् ॥ ५६ ॥**
**पातः प्रासादशैलादेर्मत्स्येन ग्रसनं तथा ।**
**काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ५७**
**रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते ।**

जातु नेष्यत इति वक्ष्यमाणेन सम्बन्धः । वंशलतादीनां मूर्ध्नि–शिरसि, सम्भवो–जन्म, जातु नेष्यते । एवमग्रेऽपि योज्यम् । तथा, वयसा–पक्षिणा, मूर्ध्नि निलयो–निलयनम् । तथा, मुण्डता–कृतमुण्डनत्वम् । काकाद्यैः परिवारणं–परिवृतत्वम् । न केवलं काकाद्यैः, प्रेताद्यैश्चेति तथाशब्दस्यार्थः । गवाशनाः–गोमांसभक्षाः, तैः । वेत्रादिसङ्कटे–सवृते, सङ्गः–द्वारालाभः, तत्रैव निःसारमपश्यतः । श्वभ्रे श्मशाने च शयनं–स्वपनम् । पांसौ भस्मनि च पतनम् । जलपङ्कादिके मज्जनं–ब्रुडनम् । आदिशब्देन कूपकलुषोदकादि गृह्यते । स्रोतसा शीघ्रेण हृतिः–हरणम् । नृत्यं च वादित्रं च गीतं च तानि । तथा, स्रक् च वस्त्रं च स्रग्वस्त्रे, रक्ते च ते स्रग्वस्त्रे च, तयोर्धारणम् । वयश्चाङ्गं च, तयोर्वृद्धिः । अभ्यङ्गः–अभ्यञ्जनम् । विवाहः–परिणयः । श्मश्रुकर्म–मुखव्यञ्जनमुण्डनम् । पक्वान्नं–मण्डकादि, स्नेहः–तैलादि, मद्यं–सीध्वादि, तेषामाशो–भक्षणम् । प्रच्छर्दनं–वमिः । विरेचनं–विरेकः । हिरण्यस्य–रुक्मादेः, लोहस्य च लाभः । सङ्ग्रहे तूक्तम् (शा. अ. १२)–"लभते वा हिरण्यलोहलवणं" इति । कलिः–अनर्थः । बन्धो–बन्धनम् । पराजयः–परिभवः । उपानद्युगस्य नाशः । पादस्य चर्मणश्च प्रकर्षेण पतनम् । भृशम्–अतिशयेन, हर्षः । पितृभिः प्रकुपितैरवभर्त्सनं–सन्तर्जनम् । प्रदीपादीनां पतनमथवा विनाशः । पर्वतस्य च भेदनम् । कानने–वने, रक्तपुष्पे प्रवेशनमिति सम्बन्धः । पापकर्मणा–पापिना, निवेशने–गृहे, प्रवेशनम् । चिन्तायामन्धकारसम्बाधे–तमःसङ्कटे, जनन्या–मातरि, च प्रवेशनम् । प्रासादात् पर्वताद्वा पातः–पतनम्, आदिशब्देन वृक्षगृहादेर्ग्रहणम् । मत्स्येन ग्रसनं–निगरणम् । कषायेण रक्तं वस्त्रं–काषायम्, तद्विद्यते येषामितीनिः । तेषां काषायिणां–काषायवस्त्रावृतानां, तथा असौम्यानां–दुर्दर्शानां, तथा नग्नानां–विवस्त्राणां, तथा दण्डधारिणां–दण्डिनां, तथा रक्तनयनानां कृष्णवर्णानां च नृणां जातु–कदाचित्, न दर्शनमिष्यते, स्वप्नेऽशुभहेतुत्वात् ।

**कृष्णा पापाननाचारा दीर्घकेशनखस्तनी ॥ ५८ ॥**
**विरागमाल्यवसना स्वप्ने कालनिशा मता ।**

एवंविधा स्त्री स्वप्ने कालनिशा–तद्विधा, मता । कृष्णा–कृष्णवर्णा । तथा, पापमाननमाचारश्च यस्याः सा । तथा, दीर्घा केशा नखाः स्तनौ च यस्याः सैवम् । "स्वाङ्गाच्चोपसर्जनात्" इति ङीप् । माल्यं च वसनं च माल्यवसनम् । विगतो रागो यस्य माल्यवसनस्य तदेवंभूतं माल्यवसनं यस्याः सैवम् ।

**मनोवहानां पूर्णत्वात्स्रोतसां प्रबलैर्मलैः ॥ ५९ ॥**
**दृश्यन्ते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।**
**अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते ॥ ६० ॥**

मनः–चेतो, वहन्ति यानि विशेषेण हृदाश्रितानि स्रोतांसि तानि मनोवहानि, तेषां मनोवहानां प्रबलैः–अतिबलवद्भिः, मलैः–मलिनीकरणस्वभावैर्वातपित्तश्लेष्मभिः, पूर्णत्वात् दारुणाः–घोरा अप्रशस्ताः, स्वप्ना दृश्यन्ते–अनुभूयन्ते । यैः–स्वप्नैर्दृष्टैः, रोगी–आतुरः, पञ्चतां याति–मरणं प्राप्नोति, तथास्वभावत्वादेषां स्वप्नानाम् । अरोग इत्यादि । स्वस्थो नरः संशयं–जीवितसंदेहं, प्राप्य कश्चिदेव–बहूनां मध्यात्पुण्यवान्नियतायुरेव, विमुच्यते, मरणादिति शेषः ।

स्वप्नभेदानिदानीमाह—

**दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा ।**
**भाविको दोषजश्चेति स्वप्नः सप्तविधो मतः ॥ ६१ ॥**

चः समुच्चये । इतिः प्रकारे । दृष्टादिना प्रकारेण स्वप्नः सप्तविधो मतः,–सप्त स्वप्ना इत्यर्थः । दृष्टः स उच्यते,–यश्चक्षुषा जाग्रदवस्थायां किञ्चिद्वस्तुजातं दृष्ट्वा तदानीं सुप्तावस्थायां तादृशं वस्तुजातं सवित्तिरूपतयाऽनुभूयते । १ । यश्च शब्दमात्रेण वस्तुजातं श्रोत्रेन्द्रियेण गृह्यते तदानीं सुप्तावस्थायां तादृक्सवित्तिरूपतयाऽनुभूयते, स श्रुत उच्यते । २ । यस्तु जाग्रदवस्थायां यथायथमिन्द्रियैरनुभूयते सुप्तावस्थायां तादृगन्तःसवित्तिरूपतयाऽनुभूयते, सोऽनुभूत उच्यते । ३ । यस्मिन् दृष्टे श्रुतेऽनुभूते वा यत्पूर्वं जाग्रदवस्थायां वस्तुजातं मनसाऽभ्यर्थ्यते तथैव च सुप्तावस्थायामन्तःसवित्तिरूपतयाऽनुभूयते, स प्रार्थित उच्यते । ४ । यस्तु षड्भिः प्रत्यक्षानुमानादिभिर्न दृष्टो नापि श्रुतो नाप्यनुभूतो दृष्टश्रुतानुभूतत्वाभावादत एव न प्रार्थितः, अपि तु केवलं मनसा यथेच्छमुत्प्रेक्ष्य

१ 'चनम्' अ इ ण त । २ 'वा' अ इ । ३ 'पांसोर्भसनश्च प' ट ड । ४ 'बुड' ट ड । ५ 'मै–श्मश्रुमुण्ड' ड । ६ 'चोक्तम्' ड । ७ 'पराभ' ड । ८ 'न–आक्रोशनम्' ड । ९ 'कर्मिणां' ट । १० 'वृक्षाच्च गृ' ड त । ११ 'दर्शिनां' ट ।

१ 'पा निराचारा' स च । २ 'विविधो रा' ड । ३ 'गत्वा' स च । ४ 'णत्वाद्दात' ड । ५ 'युश्च वि' ड । ६ 'विधस्मृत' इ, ट । ७ 'स्वप्नाव' ड । ८ 'व स्वप्न ष' ड । ९ 'भूताद्भावा' ट, ण त ।

यत्किञ्चनरूपाभि कल्पनाभिस्ताभिस्ताभि कल्पितो जाग्रद वस्थाया वस्तुजातोऽन्त सवित्तावुपारूढ, तदानी सुप्तावस्थाया तादृगनुभूयते, स कल्पित उच्यते । ५ । यश्च दृष्टश्रुतादिभ्य स्वप्नेभ्योऽन्यो विलक्षणस्वप्नो यथा दृश्यते सुप्तावस्थायामुत्तरकाल तथैव तत्स्वप्नदर्शिना नरेण तन्मुखावगततदर्थैरन्यैरपि प्रत्यक्षतो दृश्यते, स भाविक । ६ । दोषज स स्वप्न -यो वातज पित्तज कफजो वा यथायथ दोषगुणानुरूपोऽन्त सवित्तावनुभूयत इति । ७ ।

**तेष्वाद्या निष्फलाः पञ्च यथास्वप्रकृतिर्दिवा ।**
**विस्मृतो दीर्घहस्वोऽति**

तेषु स्वप्नेषु मध्याद्ये पञ्चाद्या -आदौ पठिता दृष्टादय , ते निष्फला -न ते यथानुरूप फल शुभमशुभ वा ददति । यथास्वप्रकृति -यथादोषजो, य स्वप्न सोऽपि निष्फल -नासौ यथानुरूप शुभाशुभलक्षण फल ददाति । वातप्रकृतेर्वातप्रकृत्यनुरूपत स्वप्नो यावद्द्वन्द्वप्रकृतेर्द्वन्द्वप्रकृत्यनुरूपत सन्निपातरूपतो वाऽफल । तथा दिवा दृष्टो य स्वप्न, तथा विस्मृत, तथाऽतिदीर्घोऽतिहस्वो वा य स्वप्न , स पञ्चविधव्यतिरिक्तोऽप्यफल ।

**पूर्वरात्रे चिरात्फलम् ॥ ६२ ॥**
**दृष्टः करोति तुच्छं च**

पूर्वरात्रे दृष्ट स्वप्नश्चिरात्-चिरेण कालेन, फल तुच्छ-अल्प, न यथापरिभाषित, विदधाति । केचित्त्वाहु ,-चेति विकल्पार्थे, चिरेण कालेन तुच्छ वेत्यर्थ । पूर्वरात्र इति "अह सर्वैकदेश" इति समासान्त ।

**गोसर्गे तदहर्महत् ।**
**निद्रया वाऽनुपहतः प्रतीपैर्वचनैस्तथा ॥ ६३ ॥**

गोसर्गे-गवा मोक्षकाले, यो दृष्ट स्वप्न स तदह -तस्मिन्नेवाहनि, फल महत्करोतीति योज्यम् । तदहरित्यह शब्द सप्तम्यर्थवृत्तिरव्यय । शुभ स्वप्नो दृष्टो रात्रिशेषे निद्रया वा यद्यनुपहतो-यस्मिन्स्वप्ने दृष्टेऽनन्तर न सुप्यते, स स्वप्नो महत् फल करोति । अन्यथा स्वल्पम् । प्रतीपै -अननुकूलैर्वचनैश्च, अनुपहत -अनभ्याहत , शुभ स्वप्नो दृष्टो महत् फल करोति ।

एव शुभं स्वप्न प्रत्युक्त्वाऽशुभ स्वप्न प्रत्याह—

**याति पापोऽल्पफलतां दानहोमजपादिभिः ।**

पाप -अशुभ स्वप्न, अल्पफलता याति । कै ? दानादिभि । आदिग्रहणात् ध्याननियमादयो गृह्यन्ते ।

**अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ॥ ६४ ॥**
**पश्येत्सौम्यं शुभं तस्य शुभमेव फलं भवेत् ।**

अकल्याणमपि-अशुभसूचकत्वादशुभ [अपि], स्वप्न दृष्ट्वा तत्रैव-तस्मिन्नेवावसरेऽशुभस्वप्नदर्शनसमनन्तरे काले, सौम्यकर शुभसूचकत्वाच्छुभ स्वप्न य पश्येत्तस्य जन्तोस्तस्य वा स्वप्नस्य शुभमेव-कल्याणरूपमेव, फल भवेत्, न पूर्वदृष्टमशुभमित्येवशब्दार्थ । अपिशब्दात् कल्याण स्वप्न दृष्ट्वा यस्तत्रैव वा स्वप्नमध्ये सुप्तोऽशुभ च स्वप्न पश्येत्, तस्याशुभमेव फल भवेत्, न पूर्वदृष्ट शुभमिति बोध्यम् । ननु, एव सति स्वप्नानामनिश्चितफलत्व प्राप्नोति । ततश्च "स्वप्ने मद्य सह प्रेतै" ( श्लो ४० ) इत्यादिना यदुक्त तदन्यथाऽपि स्यात् । यतोऽशुभलक्षणोऽप्येव दानादिभिश्चान्यथा सम्पद्यते । ततश्चानिश्चितफलत्वान्मरण प्रति नासौ निश्चितो हेतु । एवमन्येऽपि ये स्वप्ना प्रतिनियता रक्तपित्तादीना व्याधीना हेतवो निर्दिष्टा, तेऽपि तथैव बोद्धव्या । अत्राचक्ष्महे । निश्चितानिश्चितफलस्वभावत्वात् स्वप्नानामदोष । तथा हि-केचित्स्वप्ना निश्चितफलस्वभावा निर्दिष्टा । यथा-"स्वप्ने मद्य सह प्रेतै" इत्यादय । केचिदनिश्चितफलस्वभावा । यथा-"मूर्ध्नि वशलतादीना" ( श्लो ४९ ) इत्यारभ्य यावत् "रक्ताक्षाणा च कृष्णाना दर्शन जातु नेष्यते" इत्येवमन्तेन ग्रन्थेन ये निर्दिष्टा । तत्र ये निश्चितफलस्वभावास्तेषा न कथञ्चिदप्यन्यथा कर्तु पार्यते । प्राक्तनस्य कर्मणस्तथारूपस्य बलवत्त्वात् । ये त्वनिश्चितफलस्वभावा "मूर्ध्नि वशलतादीना" इत्यादय । तेषा स्वप्नान्तरदर्शनादिभिरन्यथा सद्भाव सम्भाव्यत इति ।

"पश्येत्सौम्य" इत्युक्तम् । अतस्तानेव सौम्यान् स्वप्नान् दर्शयितुमाह—

**देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥ ६५ ॥**
**साधून् यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान् ।**
**कन्याः कुमारकान् गौरान् शुक्लवस्त्रान्सुतेजसः ॥ ६६ ॥**
**नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितम् ।**
**यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् ॥ ६७ ॥**
**शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ।**
**शैलप्रासादसफलवृक्षसिंहनरद्विपान् ॥ ६८ ॥**
**आरोहेद्द्रोध्ययानं च, तरेन्नदहृदोदधीन् ।**

१ 'स्वामि क' ट ण । २ 'सुषुप्ता' ड । ३ 'स्वप्न प्रत्यक्षवृत्तित सुखावगतस्तदर्थै' ड । ४ 'वा स्वस्वलक्षणात्तु' ड । ५ 'दोषाणामनु' ण । ६ **'थास्व प्र'** अ इ त स सु । ७ **'स्वो वा'** अ । **'स्वोऽपि'** इ । ८ 'शुभाशुभ' ट ण त । ९ **'रूप** स० रूपो वा' ट ड । 'रूपतोऽफल ।' ण । १० 'वा । दिवा' ड । ११ **'वा'** अ । १२ **'न** स्वकीय फ' ड । १३ 'थाभाषित ददाति' ट । १४ **'चानु'** अ इ ड त । १५ **'स्वप्नो** यतोऽनिष्टनिद्रया चानु' ड. । १६ 'स सम्पूर्णफल' ड. । १७ **'पोऽप्यफल'** इ ।

१ 'व स्व' ड । २ 'ध्येऽशु' ट ड । ३ 'थाफलरूप' ट । ४ 'थाऽपि स' ड । ५ इद्ध-प्रज्वलितम् । ६ **'कन्या'** अ इ ण त स मू । ७ रुधिरोक्षित नराशन-रक्तसिक्त राक्षसम् । ८ **'तनु'** ण । ९ **'क्षित '**ण स मू । १० **'दमहोद'**ण त । ११ ह्रद -अगाधजलजलाशय । १२ नदह्रदोदधीन् अस्वच्छानपीत्यर्थं । यदुक्त सुश्रुते ( सू अ २९।७९ )-"नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान् । तरेत्कल्याणलाभाय व्याधेरपगमाय च ॥" इति ।

**पूर्वोत्तरेण गमनमगम्यागमनं मृतम् ॥ ६९ ॥**
**सम्बाधाग्निःसृतिर्देवैः पितृभिश्चाभिनन्दनम् ।**
**रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ॥ ७० ॥**
**यस्य स्यादायुरारोग्यं वित्तं बहु च सोऽश्नुते ।**

कुमारका–बालका । विष–वत्सनाभादि । आमिष–मासम् । सुमनस -पुष्पाणि । शुक्लशब्दो वस्त्रमित्यत्रापि सम्बध्यते, अर्थवशाच्चास्य नपुसकत्वमेकत्व च बोध्यम् । देवादीन् य पश्येत्, यो वा छत्रादीन् लभते, यश्च शैलादीन् समारोहेत्, यश्च नदादीस्तरेत्, यस्य वा पूर्वोत्तरगमनादिक स्यात्, स पुरुष आयुरादीनश्नुते–प्राप्नोति ।

"आरोग्यमश्नुते" इत्युक्तम् । अतस्तदेवारोग्य लक्षयितुमाह–

**मङ्गलाचारसम्पन्नः परिवारस्तथाऽऽतुरः ॥ ७१ ॥**
**श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसङ्ग्रहः ।**
**सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ॥ ७२ ॥**
**चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ।**

"प्रशस्ताचरण नित्यमप्रशस्तविसर्जनम् । एतद्धि मङ्गल प्रोक्तमृषिभिस्तत्त्वदर्शिभि ॥" आचरण–आचार सद्वृत्तानुष्ठानम् । मङ्गलाचाराभ्या सम्पन्नो–युक्त । क ? परिवार । तथा, आतुर. । श्रद्दधान –अवश्य मे व्याधिरयमनेन भेषजेन नश्यतीत्येव मन्यमान । तथा च, परिवारोऽनुकूल –दक्षिण । तथा, प्रभूतस्य द्रव्यस्य सङ्ग्रह –सङ्ग्रहणम् । तथा, सत्त्वलक्षणयो सयोगो, वैद्यादिषु भक्ति , चिकित्साया–उपक्रमे, अनिर्वेद –सोत्साहता, तत्–एतत्, आरोग्यलक्षणम् ।

कस्मादिद स्थान शारीरमुच्यते ? इत्यस्य निरुक्तिमाह—

**इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम् ॥ ७३ ॥**
**शरीरस्य ततः स्थानं शारीरमिदमुच्यते ॥ ७३½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसहितायां द्वितीये शारीरस्थाने दूतादिविज्ञानीयो नाम षष्ठोऽध्यायः ॥ ६ ॥**

इति–परिसमाप्तौ । अत्र–अस्मिन्स्थाने, यतो–यस्मात्, शरीरस्य जन्म सम्यक्–अविपरीत गर्भावक्रान्त्यादिभिश्चतुर्भिरध्यायै प्रसक्तानुप्रसक्तिकया, उदाहृतम् । मरण–विकृतिविज्ञानीयाख्येन तथा दूतादिविज्ञानीयाख्येन च । तत–शरीरस्य जन्ममरणोदाहरणात् कारणात् , इद स्थान शारीरमुच्यते । यद्यपि सर्व आयुर्वेदाख्यो ग्रन्थ शरीरमधिकृत्य प्रवृत्त, तथाऽपीद स्थान साक्षाज्जन्ममरणचिन्तनाच्छरीरस्य प्राधान्येन शारीर स्थानमुच्यत इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां द्वितीये शारीरस्थाने दूतादिविज्ञानीयो नाम षष्ठोऽध्याय समाप्त ॥ ६ ॥

१ 'मृतिम्' स मू । 'मृति' स स । २ 'सङ्कटाग्नि' अ । सम्बाध –सङ्कटम् । ३ 'चापम' अ । ४ 'त्त स बहुशोऽश्नुते' अ स द्व । ५ 'नाभ.।' ण त । ६ 'भि सत्यद' ड । ७ 'रय नश्य' ट । 'धिर्नश्य' ड । ८ 'ल –भक्तियुक्त ।' ड.।

१ 'योग , वैद्यादिभि षड्तृभि (?) र्भैदैश्चिकित्सायामुपकल्पन सङ्ग्रह स्यात्, तदारोग्य' ड । २ 'णात् इ' ण. । ३ 'चिन्तासु शरी' ड. ।





श्रीमद्वाग्भटविरचिते

# अष्टाङ्गहृदये निदानस्थानम् ।



## श्रीमदरुणदत्तविरचितया सर्वाङ्गसुन्दराख्यव्याख्यया, श्रीहेमाद्रिप्रणीतया आयुर्वेदरसायनाह्वया टीकया च समुल्लसितम् ।



## प्रथमोऽध्यायः ।

स०–श्रीगणेशाय नम । अथ शारीरस्थानादनन्तर निदानस्थानारम्भ । अस्य चायं सम्बन्ध । हेतुलिङ्गौषधस्कन्धलक्षणोऽयमायुर्वेद प्रणीत । तानि च हेतुलिङ्गौषधानि सूत्रस्थाने सूचितानि । शरीरलक्षण चाधारं समुत्पाद्य तानि विस्तारेणोपदेष्टु शक्यन्ते। तस्माच्छारीरस्थान पूर्वमारब्धवान्। ननु, एव सत्यौषधस्कन्ध एव प्राक् प्राधान्यादुपदेष्टु न्याय्य । नैवम्। हेतुलिङ्गाभ्या ह्यामय परीक्ष्यानन्तर यथायोगमामयप्रशमनार्थमौषध दातुमुचितम् । तस्माद्धेतुलिङ्गयोरेवोपादान प्रागयुक्तम्, न त्वौषधस्य, इति चिकित्सितस्थानात् प्रागिदमेव स्थानमुपदेष्टु युक्तम् । तथा चोक्त मुनिना ( च सू अ २०।२४ )–"रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।" इति । तस्मादौषधाद्धेतुलिङ्गयोरेवामय प्रति प्राधान्यम्। अतो निदानस्थानारम्भ. । तत्र च पूर्व सर्वरोगनिदानमेवारब्धु युक्तम्, प्राधान्यात्। प्राधान्य च सर्वरोगकारणनिर्देशात् । तथा हि वातादय एव प्रकुपिता सर्वरोगकारणम्। वक्ष्यति हि ( श्लो १२ )–"सर्वेषामेव रोगाणां निदान कुपिता मला ।" इति । तेषा च प्रकोपकारणमस्मिन्निर्दिश्यत इत्याह—

**अथातः सर्वरोगनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

स०–अथात इत्यादि । सर्वे च ते रोगाश्च सर्वरोगा, तेषा निदान सर्वरोगनिदानम् । शेषमायुष्कामीयाध्यायवद्व्याख्येयम् । इतीत्यादिशब्दानामपि पूर्ववद्व्याख्या ।

आ० र०–श्री । शुभमस्तु । ओ नमो गणेशाय । श्रीवैद्यनाथाय नम ॥

अथ हेमाद्रिटीकायामायुर्वेदरसायने ।
अङ्ग कायचि[कित्सा]ख्य सामस्त्येन निरूप्यते॥ १ ॥

तत्रादौ ज्वरप्रकरणम् । तत्र ज्वरोत्पत्ति. । सा चेतिहासरूपेण निरूपिता सङ्ग्रहे ( नि अ १ )–"[ पुरा ] कृतयुगे विगतरागद्वेषादिद्वन्द्वा जितलोभश्रमक्लमालस्यभया निष्परिग्रहा पुरुषा बभूवु । तेषा पुण्यबलेन पृथिव्यादीना सर्वगुणसमुदायादचिन्त्यरसवीर्यादिसमुदितानि सस्यान्यौषधयश्चासन् । ते तानि जितेन्द्रियत्वात् काले मात्रया चोपयुञ्जाना सत्यार्जवानृशंस्यादिगुणयोगाच्च सुरसदृशतेजोरूपाकृतिप्रमाणप्रसादोपचयसहननाना सरवसारसम्पन्ना दीर्घायुषो नीरुजश्च बभूवु । भ्रश्यति तु कृतयुगे युगस्वभावक्रमेण परिहीयमानसर्वगुणेषु पृथिव्यादिषु शरीरेषु च धर्मातिक्रमात् पुरुषेष्ववश्यभाविनो निरपेक्षरूक्षाभिरुपेक्षिता देवताभिर्ज्वरादय प्रादुरभूवन्निति–सर्वरोगाणां सामान्यत सम्भव । निरपेक्षा –निराशा., रूक्षा –नि स्नेहा. । ज्वरस्तु स्थाणुशापात् प्राचेतसं तामुपगतस्य प्रजापते क्रतौ भागमपरिकल्पयतस्तद्विनाशार्थं पूर्वजन्मावमानितया रुद्राण्या प्रेरितस्य पशुपतेर्दिव्यमब्दसहस्रं परिरक्षितवत कोपमतिचिरकालसम्भूतो व्रतान्ते रोषाग्नि

१ 'थ निदा' ड ण थ द । २ 'युक्त ।' ड थ. । ३ 'मयपरीक्षान' ट ड । ४ 'नमार' ड । ५ 'वातपित्तकफा कुपि' थ । ६ इद सर्वरोगनिदान चरके नि० १ अध्याये, सुश्रुते सू० ३५ अध्याये, अष्टाङ्गसङ्ग्रहे नि० १ अध्याये चास्ति वर्णितम् ।

१ 'इद क्' स स । २ 'भक्रोधश्च' स.द्व । ३ 'लस्या निष्प्रतिग्र' फ । ४ 'निष्परिग्रहा –स्वच्छन्दचारिण ।' इतीन्दु । ५ 'तेजसो रू' स द्व । ६ सहनन–शरीरम् । ७ 'ननसत्व' स.द्व. । ८ 'भावात् क' स द्व । ९ 'उपेक्षिता –अविहितप्रतिक्रिया ' इतीन्दु । १० 'स्थाणू रुद्र उमापति ' इत्यमर । ११ 'सत्वमुपाग' स.स । १२ 'मुपादाय तस्य' फ. । १३ 'क्रोधम' स.द्व. । १४ 'कालात्सम्भूतो व्रततीव्ररोषा' फ. ।

किङ्करूपेण किल पिण्डितमूर्तिर्वीरभद्रनामा भस्मप्रहरणस्त्रि शिरोक्षिबाहुपाद पिङ्गललोचनो दंष्ट्री शङ्कुकर्णो कृष्णतनुरुत्तमाङ्गाग्निश्चचार । स देवीविनिर्मितया सह भद्रकाल्या प्रतिरोमकूपमभिनि सृतैर्विविधविकृताकृतिभिरनन्तैर्भयानक वाक्यक्रियावपुर्भिरनुचरै परिवृतश्चतुर्युगान्तक[1]राम्भोदसहस्ननिदोऽनुनादयन् रोदसी ज्वालागर्भेण परिवृत[2] कल कल[3]रवेण महाभूतसम्प्लवकारिणा विधाय दानववधमश्वमेधाध्वरविध्व[4]स च प्राञ्जलिर्विज्ञापयामास शिवम् । शिवीभूतोऽसि देवदेव देवै पितामहप्रभृतिभि जगत पित्रा च धात्रा[5]ऽभिष्टूयमान सम्प्रत्यह कि करवाणीति । त शू[6]ली सक्रोधमादिदेश । यस्मात्त्रिदशैरप्यर्जय्य मत्क्रो[7]ध व्रतविघ्न चिकीर्षु[8] दैत्यसैन्य दक्षो दक्षहव्य च त्वया जीर्णमतो[9] जगतोऽस्य सस्थावरस्य ज्वरयिता ज्वरो भवान् भवतु । त्व हि सर्वरोगाणा प्रथम प्रवरो जन्ममरणेषु तमोमयतया[10] महामोह प्राग्जन्ममरणमतो विस्मारयिताऽपचारान्तरेषु चो[11]ष्मायमाणत्वात् सन्तापात्मा द्वयेष्वपि ध्रुवो ज्वरो भवेति । सोऽयमेवमुमापतिनाऽनुगृहीतो नानानामभि सर्व[12]तोऽनुभुवि विचरति । तद्यथा,–पाकलो गजेषु, अभितापो वाजिषु, अलर्क कुक्कुरेषु, इन्द्र[13]मदो जलजेषु, ज्योतिरोषधीषु, चूर्ण[14]को धान्येषु, अप्सु नीलिका, भूमावूषर[15], मानुषेषु[16] ज्वर , इति । तत्सहजाश्चारोचकाङ्गमर्दशिरोव्यथाश्रमक्लमग्लानितृष्णासन्तापादय । तत्सन्तापाच्च रक्तपित्तम् । तत्रैव च यज्ञे क्रोध[17]भयाभिभूताना परितो विद्रवता लङ्घनप्लवनाद्यैर्देहविक्षोभणैर्गुल्मविद्रधिवृद्धिजठरादयो हवि प्राशान्मेहकुष्ठार्श शोफातिसारादयो भ[18]यत्रासशोकाशुचिसस्पर्शैरुन्मादापस्मारग्रहादयो रोहिण्यतिसङ्गाच्छेषदुहित्रसम्भोगकृ[19]ताच्च प्रजापतिक्रोधात् नक्षत्रराजस्य राजयक्ष्मा तत्सहोद्भवाश्च कासश्वासादय । सोऽपि हि न विना ज्वरेणानुबध्ना तीति सकलोऽपि रोगग्रामो ज्वरपूर्वको ज्वरशब्द[20]वाच्यश्च ।" इति । रोगलक्षण व्याख्यातु प्रतिजानीते–अथात इति ।

तत्र रोगाणा सामान्य निदान बिभणिषुस्तावद्रोगाणामेव पर्यायान् वदति । रोगपर्यायश्रवणेन हि शिष्याणा तत्र तत्र शास्त्रप्रदेशेषु स[21]म्मोहो न भवति—

**रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामयः ।**
**यक्ष्मातङ्कगदाबाधाः शब्दाः पर्यायवाचिनः ॥ १ ॥**

स०–रोगादय शब्दा पर्यायवाचिन –एकार्था इत्यर्थ । ननु च, एषा रोगादिशब्दाना प्रवृत्तिनिमित्त प्रत्यर्थभेदोऽपि दृश्यते । यथा,–रुजतीति रोग , दु खस्य कर्तृत्वाद्दु खस्याभिधायक । पाप्मेति किल सर्वे रोगा पापस्य कर्मण फलमिति कृत्वा पाप्मेत्युच्यते । "ज्वर प्रधानो रोगाणामुक्त" ( च चि अ ३।४) । प्राधान्य चास्य दुरुपक्रमत्वादतिदु सहत्वाच्च । अत एव सर्वकायमन सन्तापकत्व ज्वरस्याहु । तथा, "ज्या वयोहानौ" इत्यस्य धातोरौणादिके वरप्रत्यये सति ज्वरशब्दस्यार्थान्तर[1]त्वमप्यापतति । विविधमाधि–दु ख, आदधाति शरीरे मनसि चेति–व्याधि । विकारो बुद्धीन्द्रियमन शरीराणा विकृति–अन्यथात्व, जनयतीत्यर्थ । दु खमित्यनेनोपतापकत्वमनुभव गमयति । आमय इत्यस्यार्थ –किलाऽऽमसमुत्था सर्वे व्याधय । प्रायेण हि लोकोऽखिल एव लौल्याददेशकाला पथ्यातिमात्राशी भवति । तस्य चावश्यमामसम्भवाद्बाहुल्येनामसमुत्था व्याधय । बाहुल्य चाङ्गीकृत्य शब्दप्रवृत्ति । यक्ष्मेव यक्ष्मा, यथा–"यक्ष्मा रोगसमूहानाम्" ( च सू अ २५। ३९, स सू अ १३ ) इत्युक्त । एव सर्वोऽपि रोगो रोगसमूह इ[2]त्यनेन द्योतयति । तथा च, सर्वो विकार उत्पद्यमानोऽनेकैर्व्याधिलक्षणभूतैश्च[3] युक्त उत्पद्यते । यथा,–ज्वरस्यालस्यारोचकादय । आतङ्क इति "तकि कृच्छ्रजीवने" इत्यस्य धातोराङ्पूर्वस्य रूपम् । रोगोपतप्त[4]त्वाद्धि स्त्रीपानभोजनादिभ्यो निवृत्ता[5] कृच्छ्रेण जीवन्ति । ग[6]द इव गदोऽनेककारणजन्यत्वात् । यथा हि गदोऽनेककारणजस्तथा गदोऽपीति[7] गदशब्दस्यार्थ । आबाध इति आसमन्तात् कायमनसोर्बाधन–पीडेत्यर्थ । एव प्रवृत्तिनिमित्त प्रत्यथभेददर्शनात् कथमुक्त पर्यायवाचिन ? इति । अत्राचक्ष्महे । एवमेवैतत् । किन्तु पीडाका[8]रित्वसामान्य प्रवृत्तिनिमित्तमुररीकृत्य पर्यायवाचिन इत्युक्तम् ।

आ० र०–पर्यायकथनद्वारेण रोगलक्षणमाह–रोग इति । रुजतीति रोग इत्यादिव्युत्पत्त्या रोगादिशब्दैर्योऽर्थोऽभिधीयते स रोग ।

**निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।**
**सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥२॥**

स०–निदानादय सम्प्राप्त्यन्ता रोगाणा विज्ञान पञ्चधा स्मृतम् , मुनीन्द्रैरिति शेष । निदानादिविज्ञानेन सर्वे[9] रोगा विशेषेण बुध्यन्त इत्यर्थ । उपशयस्तथेति यथा निदानादयो

१ 'करकालाम्भो' स स । २ 'परित ' स मू । 'परीत ' स सं. । ३ 'लारावे' स द्द । ४ 'ध्वसाज्ञा च' स मू । 'ध्वसन च' स स । ५ 'त्रा च स्तूय' फ । ६ शूली–शिव । ७ 'ली क्रो' स द्द । ८ 'जय्य क्रोधव्रत मम विघ्न' फ । 'जय्यो मम क्रोधो व्रत' स मू । ९ 'न्य च दक्षश्च दक्षहव्य त्व' स मू । १० 'न्मनो विस्मा' स द्द । ११ 'चोष्ममयत्वा' स मू । १२ 'तो वि' फ । १३ 'इन्द्रियमदो' फ । १४ 'चूर्णिका धा' फ । १५ 'वूष ' स मू । १६ 'मनुष्येषु' स स । १७ 'क्रोधाद्भयाद्भूताना' फ । १८ 'भयोत्रास' स द्द । १९ 'कृतप्रजा' फ । २० 'वाच्यो वा ।' स.स. । २१ 'सन्देहो' ट. ।

१ 'रभूतत्व ज्ञापयति' ड । २ 'इत्येव चो' ड । 'इत्येतद् द्यो थ । ३ 'तैर्व्याधिभिरुत्प' ण । ४ 'क्त समुत्प' ट । ५ 'त्वाद्धि पान० वृत्तो कृ० वति' ड । ६ 'गदन गदो' ट । 'गदो भ्रातरि विष्णो स्यादामये, चायुधे गदा ।' इति विश्वमेदिन्यौ । ७ 'हि गरोऽने' ट. । 'हि रोगोऽने' ण थ द । ८ 'रित्वात् सा' ट. ण द. । ९ 'सर्वरोगविशेषोऽवबुध्यत इ' ड थ. ।

रोगाणा विज्ञान तथोपशयोऽपीति तत्तुल्यकक्षता द्योतयितु तथाशब्द तन्त्रकृत् प्रयुक्तवान् । एव सम्प्राप्तिश्चेत्यत्र चकार मपि । इति-परिसमाप्तौ, एतावदेव रोगाणा विज्ञानम् । निदान द्विधा,-रोगाणामासन्न विप्रकृष्ट च । तत्रासन्नं यथा-वातादय प्रकुपिता । विप्रकृष्ट कारण यथा-वातादिचयप्रकोपकरमाहार-विहारादि । तत्र निदान-कटुकाम्लदध्यादिक ज्वरस्य । पूर्वरूपं यथा-ज्वरस्यैवालस्यादय । रूप यथा-"आगमापगमक्षोभमृदुतावेदनोष्मणाम् । वैषम्य तत्रतत्राङ्गे ताला स्युर्वेदनाश्चला ॥" ( हृ नि अ २।१० ) इत्यादि । उपशयो यथा-ज्वर स्नेहमर्दनादिनोपशाम्यन्तमुपलभ्य स तस्योपशय इत्युच्यते । सम्प्राप्तिस्तु-"यथादुष्टेन" (श्लो ८) इत्यादिलक्षणा । विनिश्चितज्ञानकारणत्वाद्विज्ञानम्, कारणे कार्योपचारात् । निदानादीनामसमासनिर्देश एकैकस्यापि प्राधान्यमिति द्योतनाय । एवमेकैकस्योपलब्धिकारणत्व भवति । उपचारादेव सङ्ख्याया लब्धाया पञ्चधेत्युक्त नियमार्थम् । पञ्चधैवैतानि तत्त्वतो नान्ये रोगावबोधहेतव सन्तीत्यर्थं ।

**आ० र०-रोगलक्षणस्य भेदानाह-निदानमिति । विज्ञान-लक्षणम् ।**

**निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।**
**निदानमाहुः पर्यायैः**

**स०**-निमित्तादिभि षड्भि पर्यायैर्निदानमाहु -वदन्ति, मुनय इति शेष । तत्र तत्र शास्त्रप्रदेशे निदानमेतै पर्यायैर्वेद्यमित्यर्थ ।

**आ० र०-पर्यायकथनद्वारेण निदानलक्षणमाह-निमित्तेति । सङ्ग्रहे तु ( नि अ १ )-"तत्र निदान वाय्वादिप्रकोप । तस्य पुनरहिताहारविहारसेवा ॥" इति ।**

**प्राग्रूपं येन लक्ष्यते ॥ ३ ॥**
**उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ।**

**स०**-येन-आलस्यारुच्यादिना, उत्पित्सु -उद्बुभूषु, आमयो-ज्वरादि, लक्ष्यते-ज्ञायते, तत्प्राग्रूपम् । दोषविशेषेण-वातादिना, अनधिष्ठित -अनासादितो, 'व्यक्तरूपेण' इत्यत्रानुक्तमपि गम्यमानत्वादुक्तं बोध्यम् । तथा हि-वातादिदोषेणानधिष्ठितत्वाद्व्याधेरुत्पित्सुतैव न घटते, व्याधिकारणाभावात् । न हि वातादीन् विमुच्य व्याधे प्रायेणान्यत. सम्भव सम्भाव्यते । वक्ष्यति हि ( श्लो १२ )-"सर्वेषामेव रोगाणा निदान कुपिता मला ।" इति । तस्माद्दोषविशेषानधिष्ठितत्व मुत्पित्सोरामयस्य यदुच्यते, तद्व्यक्तरूपदोषापेक्षमवगन्तव्यम् ।

**आ० र०-अथ पूर्व[रूप]लक्षणमाह-प्राग्रूपमित्यादि । उत्पित्सुरामयो येन लक्ष्यते तत्प्राग्रूपम् । उत्पित्सु -उत्पतितुकाम । रोगो हि राजेव बहुपरिवार । तस्य केचिदग्रे केचित्सह केचित्पश्चाद्व्रजन्ति । ते च पूर्वरूपरूपोपद्रवसंज्ञा । तत्र पूर्वरूपेण ज्वराद्यन्यतम उत्पत्स्यत इति ज्ञायते, न तु वातज्वराद्यन्यतम इति, अत आह-दोषविशेषेणानधिष्ठित इति । यत्तूक्त रुग्विनिश्चये ( ज्व नि श्लो. ६ )-"सामान्यतो, विशेषात्तु जृम्भाऽत्यर्थं समीरणात् । पित्तान्नयनयोर्दाह , कफान्नान्नाभिनन्दनम् ॥" इति । तत्सम्भावनाज्ञान न प्रमाज्ञानमित्युपेक्षित पूर्वै. ।**

अत एवाह—

**लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ ४ ॥**

**स०**-तदित्यनेन प्राग्रूप परामृश्यते । तत्-प्राग्रूप, उत्पित्सूना ज्वरादीनामल्पत्वात्-अनासादितबलत्वात्, अव्यक्त लिङ्ग-अस्पष्ट लक्षणम् । यथायथ-यद्यस्य व्याधेर्ज्वराद्यन्यतमस्यात्मीयमात्मीयम् । तच्च प्राग्रूप त्रिधा दृश्यते,-किञ्चिच्छारीर किञ्चिन्मानस किञ्चिच्छारीरमानस च । तत्र शारीर यथा-ज्वरस्यालस्यास्यवैरस्यगात्रगौरवजृम्भासास्राकुलाक्षितेत्येवंप्रायम् । मानस च-अरतिर्हितोपदेशेष्वक्षान्तिरित्येवप्रायम् । किञ्चिच्छारीरमानस यथा-"प्रीतिरम्लपटूषणे । द्वेष स्वादुषु भक्ष्येषु" ( हृ नि अ. २।८ ) इत्येवप्रायम्, शारीरमानसदोषजनितत्वात् ।

**आ० र०-प्राग्रूपस्य सामान्यरूपत्वमाह-लिङ्गमव्यक्तमिति । अव्यक्त-विशेषज्ञानहीनम् । अल्पत्वात्-विशेषलक्षणसाधनापरिपूर्णत्वात् । किं व्याधिमात्रस्य ? न । यथायथ व्याधिविशेषस्य ज्वरादे । यत्तु क्वचित्पूर्वरूपमुक्त्वा सामान्यरूपमुच्यते तद्विशेषरूपमेव । प्रतिविशेष वक्तव्यम् । एकत्रोच्यते ।**

इदानीं रूप लक्षयितुमाह—

**तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।**
**संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ५ ॥**

**स०**-तदेव-प्राग्रूप, व्यक्तता यातं-व्यक्तदोषाधिष्ठितं सत्, रूपमित्यभिधीयते । तदेवेत्येवशब्देनैतत् द्योतयति,-यदेव शारीर प्राग्रूप पूर्वोपवर्णित तदेवेह गृहीतव्यम्, स्थायित्वात् । तद्ध्यामयानुबन्धि । मानस शारीरमानस चास्थायित्वान्न गृहीतव्यम् । तद्धि द्वयमप्युत्पन्नव्याधिसमनन्तर प्रायेण नश्यतीति तद्व्यक्तता न याति । अत शारीरमेवोत्पित्सुव्याधिप्राग्रूपमिह परामृष्टु युक्तम् । सस्थानादय षट् रूपस्य पर्याया

१ 'ति तुल्य' ट.ण द. । २ 'प्रायुङ्क्त ।' ड.थ । ३ 'उपादानादेव' ड थ । ४ 'धैव, न त्वन्ये' ड. । 'धैतानि, न त्वन्ये' थ । 'तानि, न त्वेतदन्ये' ण । ५ 'रोगाणा बहवो हेतव सम्भवन्तीत्यर्थ ' ड.थ. । ६ 'बोधे हे' ट । ७ 'यैर्बोद्धव्यमि' ड थ । ८ 'बोद्धव्यम्' ड थ ।

१ 'कफादन्नारुचिर्भवेत् ।' मा.नि. । २ 'यस्य यस्य व्या' थ. । ३ 'अतश्च' ट द । ४ 'वाऽस्था' ड थ । 'स च मनसोऽस्था' ण. द । ५ 'प्युत्पित्सुव्या' ट.ण थ.द. । ६ 'द्व्यक्तिं नायाति' ड.थ. । ७ 'इ तदा प' ट.ड ण.द. । ८ 'रामर्शार्थं' ण.द. ।

इत्यर्थ । इमे च पर्याया¹ प्राग्रूपस्यापि योज्या । यथा–पूर्वसंस्थान पूर्वव्यञ्जन पूर्वलिङ्गमित्यादि ।

**आ० र०–रूपलक्षणमाह–तदेव व्यक्ततामिति । तत्र पूर्वरूपव्यक्ततादोषविशेषेण निर्धारकत्वम् । रूपादय सप्त पर्याया ।**

## हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ।
## औषधान्नविहाराणामुपयोगं सुखावहम् ॥ ६ ॥
## विद्यादुपशयं व्याधे स हि सात्म्यमिति स्मृतः ।

**स०**–उपयुज्यत इत्युपयोग -सेवनम् । सुखमावहति–उत्पादयतीति सुखावह ,–देहस्य सुख करोतीत्यर्थ । य उपयोग सुखावहस्तमुपशय विद्यात्²–जानीयात्, मुनीन्द्र इति शेष । केषामुपयोग ? औषधान्नविहाराणाम् । औषध–हरीतक्यादि । अन्न–रक्तशाल्यादि । विहारो–वाग्देहमनोनिर्वर्तित चेष्टाविशेषो व्यायामव्यवायजागरणा³ध्ययनगीतभाषणध्यानधारणादिरूप । औषध चान्न च विहारश्चौ⁴षधान्नविहारा , तेषा मौषधान्नविहाराणाम् । तेषा किम्भूतानाम् ? हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् । हेतुव्याधिविपर्यस्ताना विपर्यस्तार्थ कारिणा च । विपर्यस्ता –विपरीता , हेतुव्याध्योर्विपर्यस्ता । हेतुश्च व्याधिश्च हेतुव्याधी, तयोर्विपर्यस्ता हेतुव्याधिविपर्यस्ता ,–निदानरोगयोर्विपरीता⁵ । तथा विपर्यस्तानामर्थो विपर्यस्तार्थ , त कुर्वन्तीति विपर्यस्तार्थकारिण । हेतुव्याधिविपर्यस्ताश्च विपर्यस्तार्थकारिणश्च हेतु⁶व्याधिविपर्यस्तविपर्यस्तार्थकारिण , तेषाम् । केषा विपर्यस्तानामर्थ कुर्वन्ति⁷ ? अत्र प्रकृतत्वाद्धेतुव्याधिविपर्यस्तानाम् । त⁸दयमर्थ –हेतुव्याध्योरविपरीता अपि हेतुरूपा इ⁹व भासमाना व्याधिरूपा इ¹⁰व भासमाना हेतुव्याधिविपर्यस्तानामर्थ व्याध्युपशमलक्षण कुर्वन्ति । यथा हेतुविपरीतैर्व्याधिविपरीतैश्चौषधान्नविहारैर्व्याध्युपशम क्रियते प्रतिपक्षत्वात्, तथा विपर्यस्तार्थकारिभिरपीत्यर्थ । सङ्ग्रहे तु जगाद ( सू अ. १२ )–"उभयार्थकारि पुनर्दैवव्यपाश्रय¹¹म्¹² । तथा छर्द्या छर्दनमित्यादि । एवविध ह्यविपरीतमेव¹³ सत् भेषज¹⁴ विपरीतमर्थ¹⁵ करोति ।" इति । तत्र हेतुविपरीता औषधान्न-

१ 'अत एवमेव पर्या' ण द । २ 'द्यात्, सु' ट ड ण द । ३ 'रणध्यानादि' ड थ । ४ 'रश्च, तेषाम् । किम्भू' ड थ । ५ 'नाम् ? हेतुश्च व्याधिश्च' थ । 'नाम् ? हेतुव्याधिविपर्यस्ताश्च ते विपर्यस्तार्थकारिणश्च' ड । ६ 'ता ये औषधान्नविहारास्ते तथा' ट द । 'ता औषधान्नविहाराणा तथा' ण । ७ आयुर्वेददीपिकामधुकोशातङ्कदर्पणकारैस्त्वत्र हेतुविपर्यस्ता , व्याधिविपर्यस्ता , हेतुव्याधिविपर्यस्ता , हेतुविपर्यस्तार्थकारिण , व्याधिविपर्यस्तार्थकारिण , हेतुव्याधिविपर्यस्तार्थकारिणश्चेति षट् प्रकारा सोदाहरणा वर्णिता । ८ 'र्यस्तमर्थ' ड । ९ 'न्ति ? प्र' ड.थ । १० 'तदाऽय' ट । ११ 'इवाऽऽभा' ट थ द । १२ 'यमौषधम् ।' स द्ध । 'यम् । स्रसने स्रसन छर्दने छर्दिरिति । एव' ड थ । १३ 'व मे' ट ण द । १४ 'ज हेतुव्याधिविप' स.द्ध । १५ 'रीतार्थ' ड थ ।

विहारा यथा–गुरुस्निग्धशीतजे व्याधौ लघुरूक्षोष्णमौषधमन्न वा । तथा, सन्तर्पणोत्थेऽपतर्पणम् , अपतर्पणोत्थे सन्तर्पणम् , जागरणोत्थे व्याधौ स्वाप , स्वापोत्थे जागरणम् , व्यायामोत्थे आसना, इत्यादि । तथा, व्याधिविपर्यस्ता औषधान्नविहारा यथा¹–वातजे ज्वरे सर्पि पानमौषधम् । तस्मिन्नेव ज्वरेऽन्न पेया । विहारश्च तस्मिन्नेव² ज्वरे देहमनोव्यापारोपरम । तथा, पाचनसाध्ये ज्वरे दोषानपेक्षमौषध मुस्तापर्पटकम् । अन्न रक्तशाल्यादि । प्रमेहे रजनी यवान्न च । तथा च वक्ष्यति ( हृ चि अ १।७२ )–"रक्ताद्या शालयो जीर्णा षष्टिकाश्च ज्वरे हिता ।" इत्यादि । विहारश्च यथा ( हृ चि अ. १।१७१ )–"ज्वरकालस्मृतिं चास्य हारिभिर्विषयैर्हरेत् ।" इति । तथा मुनिरप्यवोचत् ( च चि अ ३।३१९ )–"ज्वरकाल च वेग च चिन्तयन् ज्वर्यते तु य । तस्येष्टैश्च विचित्रैश्च विषयैर्नाशयेत्स्मृतिम् ॥" इति । विपर्यस्तार्थकारिणश्च द्वेधा भवन्ति,–व्याधिविपर्यस्तार्थकारिणो हेतुविपर्यस्तार्थकारिणश्च । तत्र व्याधिविपर्यस्तार्थकारिणो यथा–छर्दिर्व्या³धौ तदर्थकार्यौषध मदनादि । अन्न च तदुपसृष्ट शाल्यादि । अथवा यदहृद्यमसात्म्यमपरिशुष्क गुरु च । विहारोऽङ्गुल्युत्पलनालादिना तदुद्वमनम् । यथा⁴ चातिसारे विरेचनम् । वमनेन विरेचनेन च छर्द्यतीसारयोर्वृद्धिरेव कर्तु युक्ता, तद्धेतुकत्वात्तस्य । इह च शमनकरणाद्विपर्यस्तार्थकारित्वम् । हेतुविपर्यस्तार्थकारिणश्च यथा–मद्योत्थे व्याधौ मद्यमेवोपयुक्त व्याधिं शमयत्यौषधत्वेन । एवमन्नविहारावप्यूह्यौ । मद्येन मदात्ययस्य वृद्धिरेव कर्तु युक्ता, तद्धेतुकत्वात्तस्य । इह तु शमनकरणाद्विपर्यस्तार्थकारित्वम् । एतदेव च तदर्थकारीति वदन्ति । तच्च मात्राशितीये ( हृ सू अ ८।२४ ) व्याख्यातमेव । हि–यस्मात्, स –उपशयो, व्याधे –आमयस्य, सात्म्यमिति स्मृत । मुनीन्द्रैरिति वाक्यशेष । एव व्याधिगुणविपरीतो य आहारो⁵ विहारश्च प्रायेण निदानविपरीत स व्याधिसात्म्यम् । मुनिस्त्ववोचत् ( च सू अ ६।५० )–"देशानामामयाना च विपरीतगुण गुणे । सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टित चाद्य⁶मेव च ॥" इति ।

**आ० र०–उपशयलक्षणमाह–हेतुव्याधीति । हेतुविपर्यस्ता,–शीतादिजे व्याधावुष्णादय । व्याधिविपर्यस्ता –स्तम्भादिरूपे व्याधौ स्वेदादय । विपर्यस्तार्थकारिण –पित्तेऽन्तर्निगूढे विमार्गगे वा स्वेद इत्यादय । स्वेदो हि पित्तस्य न विपर्यस्त , अर्थं तु विपर्यस्तस्य करोति पित्तशमनाख्यम् । एवं त्रिविधस्यौषधस्य अन्नस्य विहारस्य चोपयोगो य सुखावह , तमुपशय विद्यात् । तस्य पर्यायो व्याधिसात्म्यम् ।**

१ 'था–कफजे' ड । 'था–पित्तजे' थ । २ 'व कफजे ज्व' ट ड । ३ 'व्याधेस्तद' थ । ४ 'था वाऽति' ट । ५ 'हारविहार प्रा' ड थ. । ६ 'त सात्म्यमे' ड ण थ द । 'अदनीय–आद्यम् । आद्यग्रहणेनौषधाहारयोर्ग्रहणम्' इति चक्र ।

उपशयलक्षणकथनप्रस्तावादनुपशयोऽपि लक्ष्यं इत्याह—

**विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः॥ ७॥**

**स०**—अतो यथानिर्दिष्टलक्षणादुपशयाख्यात् यो विपरीतलक्षण औषधान्नविहाराणामुपयोग —सेवनमसुखावह, सोऽनुपशयं उच्यते। स एव व्याधेरसात्म्यमित्यभिसञ्ज्ञित —आभिमुख्येन सङ्केतित।

**आ० र०—अनुपशयलक्षणमाह—विपरीतोऽनुपशय इति। उपशयलक्षण[त्]विपरीतो—दु.खावह। तस्य पर्यायो व्याध्यसात्म्यम्। अनुपशयस्य पृथगुद्देशो न कृत, उपशयान्तर्भावात्। इत्थ सुखमन्यथा दु खमित्यन्वयव्यतिरेकाभ्या ह्युपशय एव निर्धार्यते। सङ्ग्रहे तु देशकालोपयोगो ह्यु(ऽप्यु) क्त (नि अ १)—"एतेन देशकालौ व्याख्यातौ।" इति।**

निदानप्राग्रूपरूपोपशयानुक्त्वा, सम्प्रति सम्प्राप्ति लक्षयितुमाह—

**यथादुष्टेन दोषेण यथा चानुविसर्पता।**
**निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः॥ ८॥**

**स०**—येन प्रकारेण दुष्ट—कुपितो, वाताद्यन्यतमो दोषो—यथादुष्ट, तेन यथादुष्टेन दोषेण यथा चानुविसर्पता—देहमनुधावता सन्निवेशविशेषेण गच्छता, प्रत्यामय वा निर्वृत्ति—निष्पत्तिरुद्भव इति यावत्, निर्दिष्टा सा सम्प्राप्ति। सा च जातिरागतिश्च कथ्यते। यथा ज्वरस्य—"मलास्तत्र" (हृ नि. अ २।३) इत्यादिलक्षणलक्षिता। तत्र मलानामामाशयप्रवेशनेन, तथाऽऽमानुगमनेन, तथा स्रोतोरोधेन, तथा पक्तिस्थानाज्ज्वलननिरसनेन, तथा तेनैव जाठरेण वह्निना तेषामभिसर्पणेन, तथा सकलदेहतापेन, गात्र चात्युष्ण कुर्वता, एवविधया सम्प्राप्त्या ज्वरोऽयमिति निश्चीयते। एव रक्तपित्तादिष्वपि चिन्त्या सम्प्राप्ति।

**आ० र०—सम्प्राप्तिलक्षणमाह—यथा दुष्टेनेति। यथा—येन प्रकारेण निर्वृत्ति, असौ प्रकार सम्प्राप्ति। स च प्रकारो दुष्टत्वेन [स]चलितत्वेन च। रूपहानिर्वा रूपवृद्धिर्वा रूपान्तर वेत्यादि दुष्टत्वप्रकार। सञ्चलितत्वेन वा वेगेन वा मार्गान्तरेण वा गतिरित्यादि सञ्चलितत्वप्रकार। सम्प्राप्ते पर्यायौ जातिरागतिश्च।**

**सङ्ख्याविकल्पप्राधान्यबलकालविशेषतः।**
**सा भिद्यते, यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति॥९॥**
**दोषाणां समवेतानां विकल्पोंऽशांशकल्पना।**
**स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत्॥१०॥**
**हेत्वादिकात्स्न्र्यावयवैर्बलाबलविशेषणम्।**
**नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम्॥ ११॥**

**स०**—सा च—सम्प्राप्ति, सङ्ख्यादिविशेषेण भिद्यते,—सङ्ख्या च विकल्पश्च प्राधान्य च बल च कालश्च त एवम्, तेषा विशेष सङ्ख्याविकल्पप्राधान्यबलकालविशेष, तस्मात्सा सम्प्राप्तिर्बहुधा सम्पद्यते।

तत्र सङ्ख्याविशेषो यथा—[अत्रैव—]इहैव, वक्ष्यन्तेऽष्टौ ज्वरा, इति। एवमन्यत्र पञ्च कासा, पञ्च श्वासा, अष्टौ गुल्मा, इत्येवमादय सङ्ख्याविशेषा सम्प्राप्तिभेदा।

दोषाणा—वातादीना, समवेताना—एकस्मिन् व्याधौ सङ्घटिताना, या अशांशकल्पना—भागेन भागेन कार्यानुमेयेन निरूपणा, स विकल्प। अशश्चांशश्चांशांशौ, ताभ्या कल्पना—अनेकविधो विशेष। यथा—अस्मिन् व्याधौ वात कुपित कदाचिदेकेन गुणेनाधिकेन रूक्षेण कदाचिल्लघुना कदाचिच्छीतेन कदाचिद्वाभ्या त्रिभिर्वाऽधिकैर्दुष्यति। एव पित्त कट्वम्लादिना कुपित कदाचिदेकेन गुणेन तीक्ष्णेन कदाचिदुष्णेन कदाचिद्वाभ्या बहुभिर्वाऽधिकैर्दुष्यति। एव कफेऽपि निरूप्यम्। तदेवरूपो यो निश्चय स विकल्प इति। यतश्चैव तत सर्वेषु रोगेषु तुल्या कोपनप्रकारा न भवन्ति। तथा हि—रूक्षादयो गुणा वातस्य सदा कोपका, किन्तु कदाचित् कस्यचिद्गुणस्य प्रकृष्टत्व कोपने कस्यचिन्न्यूनत्वमिति। अत एव हेतोर्गदानन्त्य चिकित्सानन्त्य च। दोषाणामिति बहुवचनोपादानादेव समवेतानामित्यर्थे लब्धे समवेतग्रहण पृथग्द्वन्द्वसमस्तानामपि चांशांशकल्पना विकल्प उच्यत इति प्रतिपादनार्थम्।

स्वातन्त्र्य च पारतन्त्र्य च, ताभ्या व्याधे प्राधान्यमादिशेत्—जानीयात्। तत्र स्वतन्त्रस्य व्याधे प्राधान्यम्, यथास्वनिर्दिष्टोपक्रमसाध्यत्वात्। अस्वतन्त्रस्य व्याधेरप्राधान्यम्, प्रधानव्याध्युपक्रमेण प्रायस्तस्याप्युपक्रम्यत्वात्। यद्यपि प्राधान्यविशेषादसौ सम्प्राप्तिर्भिद्यत इत्युक्तम्, तथाऽप्यप्राधान्यविशेषादप्यसौ सम्प्राप्तिर्भिद्यत इत्यर्थादुक्त च भवत्येव। प्राधान्याप्राधान्ययो परस्पर सापेक्षत्वात्। तथा हि—अप्राधान्यं प्राधान्यमपेक्ष्य वक्तु युज्यते, अप्राधान्य चापेक्ष्य प्राधान्यमिति।

कृत्स्नस्य भाव कात्स्न्र्यम्। कात्स्न्र्य चावयवाश्च कात्स्न्र्यावयवा। हेत्वादीना कात्स्न्र्यावयवा हेत्वादिकात्स्न्र्यावयवा। आदिशब्देन प्राग्रूपादयो गृह्यन्ते। बल चाबलं च बलाबले व्याधे सम्बन्धिनी, तयोर्विशेषण—विशिष्टता, बलाबलविशेषणम्। तद्यथासङ्ख्येन हेत्वादिकात्स्न्र्यावयवैरादिशेत्। तत्र प्रतिरोग यन्नि-

१ 'क्ष्यत इ' ड थ। २ 'य इत्युच्य' ट ण। ३ 'सात्म्याभि' ट। ४ 'त्तिनिर्दिष्टा' ड थ। 'त्ति —उद्भ' ण द। ५ 'सरणे' ट द। 'भिसारणे' ण। ६ "अत्रैव—निदानस्थाने, इतिशब्द प्रकारार्थ" इति चन्द्र।

१ 'शेषाद्यथा' ण द। २ 'सहिता' ड। ३ 'ना—भागेन कार्या' ट ड थ। ४ 'पण स' ट। ५ 'कफोऽपि निरूप्य। एव' ट। ६ 'त्या प्रकोपप्र' ट। 'त्याख्या कोपप्र' थ। ७ 'अतो हे' ट ण द। ८ 'चाश' ट ड थ द.। ९ "प्राधान्य—मुख्यभाव" इति चन्द्र। १० 'थाऽप्रा' ट.। ११ 'इत्युक्तार्था' ड.थ.।

दानत्वेनोपदिष्ट, तत्किं कात्स्न्र्येनास्य व्याधेरुत्पादकमुतावयवेन ? एव प्राग्रूपमपि । तथा लक्षणमपि किं समस्तमस्य व्याधे र्लक्ष्यत उतावयवेन ? उपशयोऽप्यस्य व्याधे सन्तर्पणापत र्पणरूप, स किं कात्स्न्र्येन सुखानुबन्ध करोत्युतावयवेन ? तत्र कात्स्न्र्येन यथा–रक्तशाल्यादिमासघृतक्षीरदधिवसामज्जतैलादिना । अवयवेन तु–रक्तशाल्यादिमासाद्यन्यतमेन चैकैकेन । तथाऽपतर्पणरूपोऽपि यवश्यामाकगवेधुककोरदूषनीवारतक्रारनालादि, स किं कात्स्न्र्येन सुखानुबन्ध करोत्युतावयवेन यवादिनैकैकेन ? एवमन्यदपि चिन्त्यम् । यथा च ज्वरस्य–आमाशय प्रविश्य किं कात्स्न्र्येनाथांशेन ? तथाऽऽममनुगम्य किं कात्स्न्र्येनाथांशेन ? इत्यादि । तदेवभूतैर्मलैरय ज्वरो निर्वर्तित इत्येव बलाबलविशेषणमादिशेदिति ।

नक्त च दिन च ऋतुश्च भुक्त च, तानि नक्तदिनर्तुभुक्तानि । तेषामशा –अवयवा, नक्तदिनर्तुभुक्ताशा । व्याधे कालो व्याधिकाल । यथामल–यथादोषम् । यो यस्य दोषस्यात्मीय कालस्त नक्तदिनर्तुभुक्ताशैर्व्याधिकालमादिशेत् । यथा–श्लेष्मज्वरस्य रात्रिमुखे पूर्वाह्णे वा वसन्ते कृतावाहारे च भुक्तमात्रे बललाभो भवति । एवं मारुतपित्तयोरपि बललाभो निरूप्य ।

**आ० र०–सम्प्राप्तिभेदानाह–सङ्ख्याविकल्पेति । अष्टौ ज्वरा इत्युकेर्जा(र्ज्ञा)यते ज्वरस्यायमसाधारण उत्पत्तिप्रकारः, येनाष्टवैवोत्पद्यत इति । तस्य प्रकारस्य शब्दान्तराप्रतिपाद्यत्वात् सङ्ख्याशब्देनोक्तिः । द्वन्द्वजे सन्निपातजे वा व्याधौ व्याधितारतम्यविकल्प. । यत्रैक प्रकार स्वतन्त्र व्याधिमुत्पादयस्तत्परतन्त्रमप्युत्पादयति तत्प्राधान्यम् । अत्रोत्पत्तिप्रकारे हेत्वादिसामग्र्यनुरूप व्याधेर्दु सहत्व तद्बलम् । अबलग्रहणमनुपशयवत् । यत्रोत्पत्तिप्रकारे स्वदोषकाले व्याधिवृद्धि. स काल ।**

**इति प्रोक्तो निदानार्थः**

**स०**–इतिशब्द प्रकारे, अनेन सङ्क्षेपाख्येन प्रकारेण यथानिर्दिष्टेन, निदानार्थो–निदानाभिधेय, समासत [ प्रोक्त – ] प्रकर्षेणोक्तो, न तु व्यासत ।

**आ० र०–निदानार्थमुपसंहरति–इति प्रोक्त इति ।**

अत एवाह—

**तं व्यासेनोपदेक्ष्यति ।**

**स०**–य एव निदानार्थ समासेन प्रोक्त, तमेव व्यासेनोपदेक्ष्यति–तन्त्रकृदभिधास्यति ।

**आ० र०–नियमार्थं विस्तर वक्तुं प्रतिजानीते–स व्यासेनोपदेक्ष्यत इति । व्यासेन–विस्तरेण, उपदेक्ष्यते–वक्ष्यति(ते), ग्रन्थकार (रेण) । प्रतिरोगमिति शेष ।**

**सर्वेषामेव रोगाणां निदानं कुपिता मलाः ॥ १२ ॥**
**तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ।**

**स०**–सर्वेषामपि रोगाणा कुपिता मला –क्रुद्धा वातपित्तकफा, निदान–हेतु । तदित्यनेन वातादय परामृश्यन्ते । तस्य–वातादिप्रकोपस्य, निदानं विविध–नानाप्रकार, अहितसेवन–अहितानुष्ठान, प्रोक्तम् ।

**आ० र०–कश्चिदंशमिहैव वक्ति–सर्वेषामेवेति । मला – दोषा. ।**

किं तत् ? इत्याह—

**अहितं त्रिविधो योगस्त्रयाणां प्रागुदाहृत. ॥ १३ ॥**

**स०**–त्रयाणां–कालार्थकर्मणा, त्रिविधो–हीनमिथ्यातिमात्रलक्षणो, योगोऽहितमिति प्राक्–सूत्रस्थाने, उदाहृत –उक्त । यथा ( हृ सू अ १२।३५ )–"अर्थैरसात्म्यै सयोग काल कर्म च दुष्कृतम् ।" इत्यादि ।

**आ० र०–[त्रिविध.–]हीनमिथ्यातिमात्रभेदेन । त्रयाणां–कालार्थकर्मणाम् । प्राक्–दोषभेदीयाध्याये ।**

इदानी वातादीनामन्नपानविहारैसहित कोपकारणमाह—

**तिक्तोषणकषायाल्परूक्षप्रमितभोजनैः ।**
**धारणोदीरणनिशाजागरात्युच्चभाषणैः ॥ १४ ॥**
**क्रियातियोगभीशोकचिन्ताव्यायाममैथुनैः ।**
**ग्रीष्माहोरात्रिभुक्तान्ते प्रकुप्यति समीरणः ॥ १५ ॥**

**स०**–तिक्तादिभि समीरण कुप्यति । ननु, अल्पप्रमितभोजनशब्दयो पर्यायशब्दत्वाद्द्वयोरुपादानमयुक्तम् । नैत-

---

१ 'त्स्न्र्येनोतांशे' ण । २ "एतदेव स्पष्टीकृत खरनादेन–'व्याधीनामृत्वहोरात्रनियमाद्भोजनस्य च । विशेषो विद्यते यस्तु कालाक्षेप स उच्यते ॥ वसन्ते श्लेष्मजा रोगा शरत्काले तु पित्तजा । वर्षासु वातजा रोगा प्राय प्रादुर्भवन्ति हि ॥ निशान्ते दिवसान्ते च बलिनो वातजा गदा । अह्न क्षपादौ कफजास्तयोर्मध्ये तु पित्तजा ॥ श्लेष्मजा भुक्तमात्रेऽन्ने लक्ष्यन्ते बलिनो मला ।' इति ।" इति चन्द्र । ३ "इति शब्द समाप्तौ" इति तोडर. । ४ 'स व्या' इ ट हेमाद्रि. । ५ 'प्रदेक्ष्यते' ड. हेमाद्रि., तोडर. । 'प्रदिश्यते' इ.थ. ।

१ 'स एव' थ. । २ 'पदिश्यते' ट.ड थ. । ३ 'हितस्त्रिवि' इ फ चन्द्र । ४ 'ततस्त्रयाणा' ट । ५ 'दीना सर्वेषामौषधाहारवि' थ । ६ 'रमहि' ण थ द । ७ "तिक्तानि–निम्बवासकवाकुचिकापर्पटिकादीनि । ऊषणानि–कटूनि कालशाकतिलशाकवेतसप्रभृतीनि । कषायाणि–राजमाषजम्बूफलामतिन्दुककमलोत्पलकुमुदकन्दादीनि । अल्पानि–लघूनि श्यामकादीनि । रूक्षाणि–चणककालमसूरादीनि । प्रमितभोजन–प्रमिताशनम्, प्राप्तसङ्ग्रहकालात् यदतिक्रान्तकाल धान्य सङ्गृह्यते तत्प्रमिताशनम् । तथा चागम –'धान्य शिलाकासम्पन्न ज्ञेय नत्प्रमिताशनम् । अतीतकालम्' इति । यद्वा, अल्पादयो भोजनेन सम्बध्यन्ते । अल्पभोजन–हीनभोजनम् । रूक्षभोजन–अस्निग्धभोजनम् । प्रमितभोजन–अतिक्रान्तकालमित्यर्थ । व्यायामो–बलवद्विग्रहादि ।" इति चन्द्र ।

दस्ति । भिन्नार्थत्वादनयो । तथा हि—अल्पभोजन हीनभोजन-मुच्यते । प्रमितभोजन तु तदुच्यते यदतिक्रान्तवेल भुक्तम् । तथा चागम —"धान्य पुलाकनिष्पन्न ज्ञेय तत्प्रमिताशनम् । अतीतकाल यद्भुक्त" इत्यादि । धारणोदीरणे—वातवेगादीनाम् । क्रियातियोगो—वमनविरेचनास्थापनादिक्रियाणामतिसेवनम् । ननु, आस्थापनेन च वायो कोपोऽनुपपन्न । तथा हि—"वाते बस्तिरिष्यते" ( हृ सू अ १९।१ ) इत्युक्तम् । नैवम् । आस्थापनातियोगो हि पित्तश्लेष्मादीना धातूनामपचयकृत् । तदपचयाच्च वायो कोप । तथा चोक्तम्—"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च ।" इति । तस्माद्युक्तो वायोरास्थापनातियोगेन कोप । तत्रकृताऽप्युक्तम् (हृ सू अ १९।६५)—"स्नेहबस्तिं निरूह वा नैकमेवातिशीलयेत् । उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ॥" इति । ग्रीष्मान्त इत्यन्तशब्द समीपवचनो वेद्य । तेन ग्रीष्मसमीपे वर्षाख्ये काले प्रकोप इति युज्यते । अन्यथा "चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ।" ( हृ सू अ १२।२४ ) इत्येतद्व्याहन्येत ।

आ० र०—तिक्तादिभिः समीरण कुप्यति । प्रमित—चिरकालनिहित, अजीर्णमित्यर्थ । ग्रीष्मादीनामन्ते—वर्षा-पराह्णापररात्रपरकालविदाहसञ्चितम् । सङ्ग्रहे तु ( नि अ १ )—"विष्टम्भिविरूढकतृणधान्यकलायचणककरीरतुम्बकालिङ्गचिर्भिटबिसशालूकजाम्बवतिन्दुकशुष्कतृषिताशनक्षुधिताम्बुपानासृक्क्षयप्रवातबलवद्युद्धनिग्रहातिखरचापकर्षणात्युच्चविषमलङ्घनधावनसंरिप्रतरणाभिघातदम्यगोवाजिगजनिग्रहाश्मशिलालोहकाष्ठोत्क्षेपविक्षेपभ्रमणचालनगाढोच्छादनपराघातनादिसाहसोत्कण्ठादिभिरतिसेवितै ।" इत्यधिकम् ।

**पित्तं कट्वम्लतीक्ष्णोष्णपटुक्रोधविदाहिभिः ।**
**शरन्मध्याह्नरात्र्यर्धविदाहसमयेषु च ॥ १६ ॥**

स०—पित्तं कट्वादिभि कुप्यति । अर्धरात्रे पित्तस्य कालस्वभावात्कोप ।

आ० र०—कट्वादिभिः पित्त प्रकुप्यति । विदाहसमय – आहारस्य विदग्धावस्था । सङ्ग्रहे तु ( नि अ १ )—"क्षारयुक्तशाण्डाकीमद्यमूत्रमस्तुदधिधान्याम्लतैलकुलत्थमाषनिष्पावतिलान्नलद्वाकुठेरकादिवर्गामान्नातकाम्लीकापीलुभल्लातकास्थिलाङ्गलिकामरिचातपाग्निरजोधूमक्रोधेर्ष्याजीर्णमैथुनोपगमादिभि ।" इत्यधिकम् ।

**स्वाद्वम्ललवणस्निग्धगुर्वभिष्यन्दिशीतलैः ।**
**आस्यास्वप्नसुखाजीर्णदिवास्वप्नातिबृंहणैः ॥ १७ ॥**
**प्रच्छर्दनाद्ययोगेन भुक्तमात्रवसन्तयोः ।**
**पूर्वाह्णे पूर्वरात्रे च श्लेष्मा**

स०—स्वाद्वादिभि कफ कुप्यति ।

आ० र०—स्वाद्वादिभि श्लेष्मा प्रकुप्यति । आस्या—आसना । स्वप्नसुख—शय्यासुखम् । सङ्ग्रहे तु ( नि अ १ )—"मोचखर्जूरभव्यनालिकेरनिशाम्बुपानात्यम्बुपानभुक्तमात्रकालातिस्वप्नकायवाङ्मनोव्यापारानारम्भानुपधानशयनावश्यायहर्षच्छर्दिविघातादिभि.।" इत्यधिकम् ।

**द्वन्द्वं तु सङ्करात् ॥ १८ ॥**

स०—द्वन्द्व—द्वय, वातपित्ते वातकफौ पित्तकफाविति । सङ्करात्—मिश्रीभावात्तिक्तादीना, कुप्यति । एतदुक्त भवति,—येन तिक्तादिर्वातहेतु सेवित कट्वम्लादिश्च पित्तहेतु , तस्य वातपित्ते प्रकुप्यत । एव शेषयोर्योज्यम् ।

आ० र०—वातादिकोपनसङ्करात्—द्वयोर्द्वयोर्योगात्, द्वन्द्वं प्रकुप्यति ।

**मिश्रीभावात्समस्तानां सन्निपातस्तथा पुनः ।**
**सङ्कीर्णाजीर्णविषमविरुद्धाध्यशनादिभिः ॥ १९ ॥**
**व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ।**
**पिण्याकमृद्यवसुरापूतिशुष्ककृशामिषैः ॥ २० ॥**
**दोषत्रयकरैस्तैस्तैस्तथाऽन्नपरिवर्तनात् ।**
**ऋतोर्दुष्टात्पुरोवाताद्ग्रहावेशाद्विषाद्गरात् ॥ २१ ॥**
**दुष्टान्नात् पर्वताश्लेषाद्ग्रहैर्जन्मर्क्षपीडनात् ।**
**मिथ्यायोगाच्च विविधात्पापानां च निषेवणात्॥२२॥**
**स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ।**

स०—समस्ताना—तिक्तादीना, मिश्रीभावात् सन्निपात

१ 'त्वादेतयो' ड थ । २ 'पुनरनि' ट । 'पुलाकैर्नि' ण । 'पुलाकस्तुच्छधान्ये स्यात्' इति मेदिनी । ३ 'य तु प्र' ड य । ४ 'बोध्य.' ड.। 'वाच्य' थ । ५ 'द्ववियग्रहादिख' फ । ६ 'सलिलतर' स द्व । ७ 'ढोत्सादनपरघा' फ । ८ 'र्धनिदाघस' फ. । ९ "कटूनि—शुण्ठीमरिचकुठेरकादीनि । अम्लानि—जम्बीरकरमर्दकपरूषकप्रभृतीनि । तीक्ष्णानि—हिङ्गुराजिकादीनि । उष्णानि—स्वभाववीर्याभ्यामग्निमाषादीनि । पटूनि—लवणानि रोमकसामुद्रबिडसौवर्चलादीनि । क्रोध —कोप । विदाहीनि—मत्स्यकुलत्थसर्षपशाकादीनि । विदाहसमये—अन्नस्य पच्यमानावस्थासमये ।" इति चन्द्र । १० 'लत्थाम्रामान्रा' फ. ।

१ 'न्नकटूरकु' स स । २ 'र्गाम्राम्रा' स मू । ३ 'गमनादि' स स । ४ 'अतिस्वप्न' इति क्वचित् । ५ "स्वादूनि—मधुराणि द्राक्षाखर्जूरशर्कराखण्डप्रभृतीनि । अम्लानि—किलाटकूचिकाप्रभृतिदध्यादिविकृतानि । लवणानि—सैन्धवबिडसौवर्चलादीनि । स्निग्धानि—दुग्धादीनि । गुरूणि—माहिषादिमासदधिदुग्धकृशराप्रभृतीनि । शीतलानि—अतिशीतानि स्वभाववीर्याभ्या छायाज्योत्स्नामहिषीदुग्धघृतप्रभृतीनि । आसन—आस्या निरीहत्व एकत्रावस्थानम् । स्वप्नसुख—अतिशयनोत्पन्न सुखम् । अतिबृंहणानि—सक्तुप्रभृतीनि ।" इति चन्द्र । ६ 'मात्राका' फ । ७ 'पयोश्च ।' ड थ । ८ 'वर्तत' इ द. । 'रिवृत्तित' इति क्वचित् । ९ 'ष्टामात्' इ द. हेमाद्रि , तोडर. ।

कुप्यति । तथेति समुच्चये । सङ्कीर्णाशनादिभिश्च[1] सन्निपात कुप्यति । आदिशब्देन पर्युषितक्लिन्नादिभोजनादयो गृह्यन्ते । सङ्कीर्णाशनादीना लक्षण प्रागुक्तम् । दोषत्रयकरैस्तैस्तैरिति पूर्वोक्तैर्मन्दकदधिफाणितयवकपाटलव्रीहिसर्षपशाकादिभि । तथेति न केवलमेतै, अन्नपरिवर्तनादिभिश्चेति[2] तथाशब्दस्यार्थ ।

**आ० र०-सर्वेषा मिश्रीभावात् सङ्कीर्णाशनादिभिश्च सन्निपात प्रकुप्यति । सङ्कीर्णाशन-अपाङ्क्त्यै सह भोजनम्, समशन च । अजीर्णभोजन-अजीर्णहेतुद्विष्टविष्टम्भ्यादि भोजनम् । अन्नपरिवर्तनात्-क्रीतान्नभोजनादसात्म्यभोजनाच्च । दुष्टामात्[3]-दोषदुष्टापक्वान्नरसात् । पर्वताश्लेषात्-पर्वतासन्नवननिवासात् । मिथ्योपचारत -प्रसूतानाम् । सङ्ग्रहे तु ( नि अ १ )-"मन्दकदधियावकसर्षपलकुचामफलासात्म्यौषधिगन्धाघ्राणानार्तवदुर्दिनरसायनस्नेहस्वेदविरेचनादिमिथ्यायोगेभ्य पूर्वकृताना पापाना च कर्मणा परिणामात् ।" इत्यधिकम् ।**

**प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः ॥ २३ ॥**
**रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ॥ २३½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने सर्वरोगनिदानं नाम प्रथमोऽध्यायः ॥ १ ॥**

---

**स०-**प्रत्यामयमिति[4]-अनेन प्रकारेण, क्रुद्धा -कुपिता, दोषा आशु-द्रागेव, देहे विकुर्वते-शरीरे विकार जनयन्ति । कि कृत्वा ? रसायनी -नाडी , प्रपद्य-प्राप्य । किम्भूता ? रोगस्याधिष्ठानानि-स्थानानि रसरुधिरादीनि, तानि गन्तु शील

1 "सङ्कीर्णाशनेन-पथ्यापथ्यदुष्टमलिनाशनेन । अजीर्णाशनेन-सत्यजीर्णे भोजनेन । विषमाशनेन-अप्राप्तातीतकालहीनमात्रातिमात्रेण भोजनेन । विरुद्धाशनेन-मत्स्यामलकपय प्रभृतीनामशनेन । अध्यशनेन-भुक्तस्योपरिभोजनेन । व्यापन्न मद्य-नष्टवर्णगन्ध क्लिन्न दुर्गन्धप्रायम् । तद्वत्पानीयमपि व्यापन्नम् । पिण्याक -खल । मृत्-मृत्तिका । पूत्यामिष-दुर्गन्धि मासम् । शुष्कामिष-वल्लूरमासम् । कृशामिष-क्षीणधातु स्नायुभूयिष्ठमस्थिशेष मासम् । तथा, अन्नपरिवर्त्तत -सात्म्यान्नत्यागात् । ऋतो -वसन्तादे , दुष्टात्-हीनमिथ्यातियोगयुक्तात् । ग्रहावेशात्-ग्रहाणा देवदैत्यगन्धर्वादीनामावेशात् । गरात्-कृत्रिमविषात् । विषात्-जङ्गमविषात् । दुष्टान्नात्-विषोपहतान्नाभ्यवहारात् । पर्वताश्लेषात्-पवतसङ्कटे निवसनात् । ग्रहै.-सूर्यादिभि , जन्मर्क्षपीडनात्-जन्मनक्षत्रताडनात् । तथा, विविधान्मिथ्यायोगात्-रसायनस्नेहस्वेदविरेचनादीनामनेकधाऽसम्यगुपचारात् । च-अपरम् । पापाना-हिंसास्तेयादिकाना, निषेवणात्-करणात् । स्त्रीणा-नारीणा, प्रसववैषम्यात्-प्रसूतिक्लेशात्, तथा मिथ्योपचारत -असम्यगुपचारात् ।" इति चन्द्र । 2 'दिभ्यश्चे' ट । 3 "दुष्टामात्-दुष्टाद्रसधातोरसम्यक् पक्वात्" इति तोडर । 4 'ति-उक्तेन प्र' ड य ।

यासा ता रोगाधिष्ठानगामिन्य , तास्तथाविधा नाडी प्राप्य विकृतिभाजो दोषा सम्पद्यन्त इत्यर्थ ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने सर्वरोगनिदान नाम प्रथमोऽध्याय समाप्त ॥ १ ॥

---

**आ० र०-सम्प्राप्तिमाह-प्रतिरोगमिति । रोगाधिष्ठानगामिनी -रोगोत्पत्तिस्थानानि गता । रसायनी -नाडी । सङ्ग्रहे तु ( नि अ १ )-"आधानजन्मनिधनप्रत्यराख्य[1][2]-विपत्करे । नक्षत्रे व्याधिरुत्पन्न क्लेशाय मरणाय वा ॥ जन्मनक्षत्राद्गण्यमानेषु नवकेषु प्रथमतृतीयपञ्चमसप्तमानि-जन्मविपत्करप्रत्यरनिधनसञ्ज्ञानि । जन्मै(न्मनै)व द्वितीयतृतीयमानवकस्थ-आधानम् । ज्वरस्तु जात षड्रात्रादश्विनीषु निवर्तते । भरणीषु तु[3] पञ्चाहात्, सप्ताहात् कृत्तिकासु च[4] ॥ त्रिसप्तरात्रादथवा[5], रोहिण्यामष्टरात्रत । एकादशाद्वा दिवसान्मृगे षण्णवरात्रयो ॥ पञ्चाहान्मृत्युरार्द्राया त्रिपक्षे सप्तायोऽथवा । पुनर्वसौ प्रवृत्तस्तु ज्वरोऽपैति त्रयोदशात् ॥ दिवसात्सप्तविंशाद्वा द्व्यहात्सप्ताहतोऽथवा । पुष्ये[6] श्लेषासु मरण चिरेणापि, मघासु तु ॥ अवश्य स्वास्थ्यमाप्नोति द्वादशाहान्मृतो न चेत् । फल्गुन्यो पूर्वयोर्मृत्युरन्ययोर्स्तु[7] दिनेऽष्टमे[8] ॥ नवमेऽह्न्येकविंशे[9] वा ज्वर सौम्यत्वमृच्छति । हस्तेन[10], सप्तमे शान्तिश्चित्रायामष्टमेऽथवा ॥ पुनश्चित्रागमे स्वातौ दशाहादथवा त्रिभि । पक्षैर्मृत्यु विशाखासु द्वाविंशेऽहनि निर्दिशेत् ॥ नवमेऽह्नि[11] न चेच्छान्तिर्मैत्रे मृत्युस्तत परम् । ज्येष्ठाया पञ्चमे मृत्युरूर्ध्वं वा द्वादशात् सुखम् ॥ स्वास्थ्य दशाहान्मूलेन[12] त्रिसप्ताहेऽथवा[13] गते । पूर्वाषाढासु नवमे ततोऽन्यासु तु मासत ॥ अष्टाभिरथवा मासैर्नवभिर्वा भवेच्छिवम् । [ ज्वरस्तु श्रवणे याति शान्तिमेकादशाहत ॥ ] ऐन्द्रे[14]ऽष्टाहाद्धनिष्ठासु[15] दशाहाद्वारुणेषु तु । षडहे द्वादशाहे वा मृत्युर्भाद्रपदासु तु ॥ उत्तरासु[16] द्विसप्ताहात्प्रशमो, रेवतीषु तु[17] । चतूरात्रेऽष्टरात्रे वा क्षेममित्याह [18]शौनक. ॥" इति ।**

**इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**सर्वरोगनिदान च कथित च समासत ॥ १ ॥**

---

1 "आधान नक्षत्र-येन व्याधितो गर्भे सम्भूत , जन्मनक्षत्र-येन प्रजात , निधन-जन्मत सप्तमम्, प्रत्यर-पञ्चमम्, विपत्कर-तृतीयम् ।" इतीन्दु । अरुणदत्तस्तु "आधान-जन्मर्क्षाद्दशम नक्षत्रम् ।" इत्याह । 2 "प्रत्ययाख्य" इति विजयरक्षितसम्मत पाठ । 3 'च' स मू । 4 'तु' स स । 5 'त्रि. स' स द्व फ । 6 'पुष्याश्ले' फ स मू । 7 'यो षष्ठे, परयो' फ । 8 'योश्च दि' स स. । 9 'मे ह्येक' स मू । 10 'हस्तेऽह्नि स' स मू । 11 'मे च तथाऽशान्ति' फ । 12 'ले तु त्रिस' स स । 13 'त्रि स' फ स मू । 14 'आज्येष्ठा' स द्व । 15 'सु द्वादशाद्वा' स द्व । 16 'सु त्रिस' स.स. । 17 'च' स द्व. । 18 'हारित.' स.मू । 'गौतम.' स.स. ।



# द्वितीयोऽध्यायः।

स०—सर्वरोगनिदानादनन्तर ज्वरनिदानारम्भेऽय सम्बन्ध । उक्त सर्वरोगनिदानम् । अतोऽनन्तरमवश्य कस्यचिद्विशिष्टस्य रोगस्य निदान वक्तुमुचितम् । रोगेषु च ज्वर प्रधान । तथा च मुनि ( च सू अ २५।४० )—"ज्वरो रोगाणाम्।" इति । स्वयमेव चास्य प्राधान्य तन्त्रकृत् प्रतिपादयिष्यतीति ज्वरनिदानमेवारब्धु युक्तम् ।

**अथातो ज्वरनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

स०—अथादिशब्दाना पूर्ववद्व्याख्या ।

**आ०र०—अथ ज्वरनिदान व्याख्यातु प्रतिजानीते—अथेति।**

**ज्वरो रोगपतिः पाप्मा मृत्युरोजोशनोऽन्तकः ।**
**क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥ १ ॥**
**जन्मान्तयोर्मोहमयः सन्तापात्माऽपचारजः ।**
**विविधैर्नामभि· क्रूरो नानायोनिषु वर्तते ॥ २ ॥**

स०—रोगाणा पती रोगपति —सर्वरोगप्रधान । पाप्मा—पापस्वभाव । तथा, मृत्यु —सर्वप्राणिनां हि मरणेनासावेव योजयति यथा, न तथाऽन्ये रोगा । सर्वधात्वाप्यायक यदोजस्तदशन भोजन यस्येत्योजोशन । अन्तको—मारणहेतुसामान्यात् । क्रोधो—भगवतो महेश्वरस्य दक्षापमानितस्य लोकाग्निदिधक्षोर्ललाटान्निर्गत । अत एवाह—दक्षाध्वरध्वसी रुद्रोर्ध्वनयनोद्भव इति । जन्मान्तयोर्मोहमय इति ज्वरस्य सन्तापात्मकत्व लिङ्गम्, जन्मान्तयोश्च क्वचित्सन्तापानुपलब्धेर्मोहमय इत्युक्तम्, मोहस्वभावादेवान्यजन्मज कर्म प्राणी न स्मरति । यश्चापचारज —तथाविधादाहारविहारादुद्भूत, स सन्तापस्वभाव, स च क्रूरो—दुश्चिकित्स्य । नानायोनिषु—हस्त्यश्वगोपक्ष्यादिषु च, विविधैर्नामभिर्वर्तते । [ यथा—"पाकलस्तद्यथेभानामभितापो हयेषु च । गवा गोकर्णकश्चैव पक्षिणा मकरस्तथा ॥ वान्तादानामलर्क स्यादब्जेष्विन्द्रमद स्मृत । ओषधीषु तथा ज्योतिश्चूर्णको धान्यजातिषु ॥ जलेषु नीलिका भूमा वूषो नृणा ज्वरो मत । 'ऋते देवमनुष्येभ्यो नान्यो विषहते तु तम् ॥ शेषा सर्वे विपद्यन्ते तिर्यग्योन्यो ज्वरार्दिता । कर्मणा लभते जन्तुर्देवत्व मानुषादपि ॥ पुनश्चैव च्युत स्वर्गान्मानुष्यमभिपद्यते । तस्मात्स देवभावाच्च सहते मानवो ज्वरम्' ( सु उ अ ३९।११ )॥" इति । ] यथा—दन्तिशरीरे पाकलो नाम ज्वर, अश्वशरीरेऽभितापक, गोशरीरे गोकर्णक, पक्षिशरीरे मकर, श्वशरीरेऽलर्क, [ मत्स्येष्विन्द्रमद, ओषधीषु ज्योति, धान्येषु चूर्णक, ] अप्सु नीलिका, [ भूमावूष, ] मानुषेषु ज्वर, इति । ननु, यदि रुद्रोर्ध्वनयनोद्भव, तर्ह्यपचारज इति कथमुक्तम्? ब्रूम । पूर्व कृतयुगे ललाटजलोचनादुत्पन्नो ज्वर । त्रेतायुगे तु सम्प्राप्ते परिग्रहदोषाद्धर्मस्य पादोऽन्तर्हित इत्यपचारेणासौ प्रथम प्राणिषूद्भूतोऽपचारज इत्युच्यते । कलियुगेऽप्यन्नपानौषधाद्यपचारेण जात इत्यपचारज उच्यते, इति न किञ्चिदत्रायुक्तम् ।

**आ० र०—ज्वरप्रभावमाह—ज्वरो रोगपतिरित्यादि । ओजोऽशन—आहारो, यस्य [ इति ] ओजोशन । दुष्कृतस्यान्त करोति भोगेनेत्यन्तक । जन्मकाले अन्तकाले[चा]ऽयं मोहमयो—मूर्च्छात्मक ।**

स चापचारजो ज्वर किमेको वाऽनेकविध ? इत्याह—

**स जायतेऽष्टधा दोषैः पृथग्मिश्रैः समागतैः ।**
**आगन्तुश्च**

स०—स —सन्तापलक्षणो ज्वर, अष्टधा—अष्टप्रकार, सम्पद्यते । कथम्? पृथग्दोषै —वातपित्तकफै, तथा मिश्रै —द्वाभ्या द्वाभ्याम्, तथा समागतै —सन्निपतितैस्त्रिभि, तथाऽऽगन्तुकारणजनितो ज्वर, एव पृथग्दोषैस्त्रयो मिश्रैस्त्रय सन्निपतितैरेक आगन्तुश्चैक इत्यष्टौ ।

**आ०र०—ज्वरभेदानाह—स जायत इति । पृथग्दोषैस्त्रय, द्विशो मिश्रैस्त्रय, समागतैरेक, आगन्तुरेक, इत्यष्टधा ।**

---

१ 'धानम्' ड ण द । २ इद ज्वरनिदान चरके नि० १ अध्याये, सुश्रुते उ० ३९ अध्याये, अष्टाङ्गसङ्ग्रहे नि० १।२ अध्याययोश्चास्ति वर्णितम् । ३ 'स्युस्तेजो' चन्द्र । ४ 'णिनो हि' ड । ५ 'नाभावेन यो०ऽन्यो रोग ।' ड थ । ६ 'था ज्वरो, न' थ । ७ 'यत्तदो' ड थ । ८ 'मर' ट थ । ९ 'वन्महे' ट ड थ । १० 'लाटनिर्ग' थ । ११ 'योरर्कवत्सन्ता' ण द । १२ 'लब्धौ मो' थ । १३ 'थाविविधा' ट ण द थ । १४ 'दाहाराद्' ड थ । १५ 'स्त्यश्वाविगो' थ । १६ [ ] एतच्चिह्नान्तर्गता श्लोका थ पुस्तके नोपलभ्यन्ते । १७ 'कलस्तु यथे' ट । "पाकल स तु नागानामभितापस्तु वाजिनाम् । गवामीश्वरसञ्ज्ञश्च मानवाना ज्वरो मत ॥ अजादीना प्रलापाख्य करभेष्वलसो भवेत् । जले च-(श्चि)न्द्रमदो नाम क्षारोऽश्मस्वनिलो नगे ॥ ऋते" इति चन्द्र ।

१ 'शुनादीना' ट । २ 'भूमौ चूषो' ट । ३ 'विषहते—सोढु शक्नोति' इति डल्हण । ४ 'तैर्यग्योना ज्व' स सु । 'ग्योनौ ज्व' ट । ५ 'ते यस्माद्देव' स सु । ६ 'मनुवर्तते । तस्मात्ते देवभावेन सहन्ते मानुषा ज्व' स सु । ७ 'रे खोरक' ण द । 'रे खोरक' थ । ८ [ ] इति पाठ ट ड ण थ द पुस्तकेषु नोपलभ्यते । ९ "खरेषु खोरक, गोष्वीश्वर, उष्ट्रेष्वलसक, व्याडेष्वाक्षिक, प्रलापकोऽजादिषु, सरीसृपेषु कृष्णीष, हारिद्रको महिषेषु, मृगरोगो मृगेषु, पक्षिष्ववताप, पतङ्गेषु [पक्षपात,] गुल्मेषु गुच्छक, माल्येषु पर्वक, ऋषभको नलिनीषु, लल कोद्रवेषु, मधुक शाकेषु" इत्यधिक हस्त्यायुर्वेदे (महारोगस्थाने अ ९)। १० 'इत्युक्तम् । ब्रू' थ । ११ 'गे च सञ्जाते प' थ ।

सम्प्राप्तिमस्याधुना वक्ति—

**मलास्तत्र स्वैः स्वैर्दुष्टाः प्रदूषणैः ॥ ३ ॥**
**आमाशयं प्रविश्याममनुगम्य पिधाय च ।**
**स्रोतांसि पक्तिस्थानाच्च निरस्य ज्वलनं बहिः ॥ ४ ॥**
**सह तेनाभिसर्पन्तस्तपन्तः सकलं वपुः ।**
**कुर्वन्तो गात्रमत्युष्णं ज्वरं निर्वर्तयन्ति ते ॥ ५ ॥**

**स०**–तत्रेति निर्धारणे, तेष्वष्टसु ज्वरेषु मध्ये निजाना ज्वराणामुत्पत्तिर्निर्धार्यते । मला –वातादय , स्वै स्वै प्रदूषणै –कोपनै , दुष्टा –कुपिता , ज्वर निर्वर्तयन्ति–उत्पादयन्ति । तत्र यथा–वातस्तिक्तादिभि , पित्त कट्वादिभि , कफ स्वाद्वादिभि , एव ससर्गे सन्निपाते च चिन्त्यम् । आगन्तुना च केनचित् प्रकुपिता दोषा ज्वर निर्वर्तयन्ति । यद्यपि चागन्तुज्वरस्तद्धेतुक , तथाऽपि तत्रापि वातादय एव हेतव । न हि वातादीन् विसृज्य व्याधे समुद्भव कथमपि सम्भाव्यते । एतावास्तु विशेष ,–दोषजे व्याधौ पूर्व वातादय कुप्यन्ति पश्चात्कायस्य पीडा भवति । आगन्तुके तु व्याधौ पूर्व शरीरस्य व्यथा भवति पश्चाद्वातादिकोप इति । कयाऽऽनुपूर्व्या ज्वर निर्वर्तयन्ति ? इत्याह–आमाशयमित्यादि । आमाशय प्रविश्य–नाभिस्तनान्तरे स्थित्वा, तथाऽऽम–पूर्वोक्तलक्षणलक्षित, अनुगम्य तेन चामेनानुगता स्रोतांसि–रसादिवाहीनि, पिधाय–छादयित्वा, तथा ज्वलन पक्तिस्थानाद्बहिर्निरस्य–निष्कास्य । पक्तिग्रहणमत्र जाठराग्नेर्नि सन्देहेन ग्रहणार्थम्, अन्यथा त्रयोदशानामग्नीना मध्यात् कतम ज्वलन स्थानाद्बहिर्निरस्येति सन्दिह्येत । तेन च–निरस्तवह्निना, सह–एकलोलीभूता , सकल वपुरभिसर्पन्तस्तपन्तो गात्रमत्युष्ण कुर्वन्तो ज्वरं निर्वर्तयन्ति । अत्युष्णग्रहणेनैव प्रतिपादयति,–अत्युष्णगात्रत्वेनैव ज्वरसम्भव , नोष्णगात्रमात्रेण । तथा च निरामयस्यापि हि प्राणिनो जीवतो गात्रमुष्ण भवत्येव । ननु, वायुकृते ज्वरे वायोर्योगवाहित्वात् पित्तकृतेऽपि ज्वरे पित्तस्य वह्निना समानगुणत्वात् सन्तापोपलब्धिर्युक्ता । श्लेष्मज्वरे तु श्लेष्मणो वह्निप्रतिपक्षत्वात् कथमिव सन्तापकर्तृत्वं युक्तम् ? इति केचित् । अत्रोच्यते । स्वभावादुपपन्नमेतत् । ज्वरस्य ह्ययमचिन्त्य स्वभाव , येनावश्य सन्तापमुत्पादयति । एव वातस्यामूर्तिमत्त्वेऽपि गुल्मादिषु श्यावारुणत्वोपलब्धि । तस्माद्व्याधीनामेव स्वभावविशेषान्न्याय्यमेवेदम् ।

**आ० र०–ज्वरसम्प्राप्तिमाह–मलास्तत्रेति । आममनुगम्य–आमेन रसेनैकीभूय, पक्तिस्थानात्–ग्रहण्याः, सह तेन–ज्वलनेन, तपन्त –सन्तापयन्त ,ते–मला एव, आरम्भका. ।**

**स्रोतोविबन्धात्प्रायेण ततः स्वेदो न जायते ।**

**स०**–यत एव स्रोत पिधानं तत एव हेतो स्वेदो न जायते । प्रायोग्रहणात् क्वचित्पित्तज्वरादौ स्वेदो जायत एवेत्यर्थं । तथा चानन्तरमेव तन्त्रकृदधीते ( श्लो २० )–"स्वेदो नि श्वासवैगन्ध्य" इत्यादि ।

**आ० र०**–स्वेदाभावे युक्तिमाह–स्रोतोविबन्धात्प्रायेणेति । प्रायेणेति पित्तज्वरादौ स्वेददर्शनात् ।

पूर्वरूप लक्षयितुमाह—

**तस्य प्राग्रूपमालस्यमरतिर्गात्रगौरवम् ॥ ६ ॥**
**आस्यवैरस्यमरुचिर्जृम्भा सास्राकुलाक्षिता ।**
**अङ्गमर्दोऽविपाकोऽल्पप्राणता बहुनिद्रता ॥ ७ ॥**
**रोमहर्षो विनमनं पिण्डिकोद्वेष्टनं क्लमः ।**
**हितोपदेशेष्वक्षान्तिः प्रीतिरम्लपटूषणे ॥ ८ ॥**
**द्वेषः स्वादुषु भक्ष्येषु तथा बालेषु तृड् भृशम् ।**
**शब्दाग्निशीतवाताम्बुच्छायोष्णेष्वनिमित्ततः ॥ ९ ॥**
**इच्छा द्वेषश्च**

**स०**–तस्य–ज्वरस्य, प्राग्रूपम् । आलस्य–वाङ्मन कायकर्मस्वनुद्यम । सुश्रुते चोक्तम् । यथा ( शा अ ४।५२ )–"सुखस्पर्शप्रसङ्गित्व दु खद्वेषणलोलता । शक्तस्य चाप्यनुत्साह कर्मण्यालस्यमुच्यते ॥" इति । अरति–एकत्रानवस्थितिश्चेतस । तथा, अङ्गगुरुत्वम् । आस्यवैरस्य–वक्त्रविरसता । अरुचि –अन्नाभिलाषाभाव । जृम्भा–जृम्भणम् । सहास्रेण वर्तेत इति सास्रे, आकुले अक्षिणी यस्य स एवम्, तस्य भाव सास्राकुलाक्षिता । अङ्गमर्द –अङ्गभङ्ग । अविपाक –अन्नस्याविपक्ति । अल्पप्राणता–स्तोकबलत्वम् । तथा, बहुनिद्रता । "स्वतलोर्गुणवचनस्य पुवद्भावो वक्तव्य " इत्यत्र पुवद्भाव । रोमहर्षो–रोमाञ्च । विनमन–अङ्गाना विनाम । पिण्डिकयोरुद्वेष्टन–उद्वेष्ट । क्लमो–ग्लानि । हितस्य–गुरुपित्रादे , उपदेशास्तेषु, अक्षान्ति –असहनत्वम् , तदुपदिष्ट न क्षमते । प्रीतिरित्यादि । अम्लादिषु द्रव्येषु प्रीति –भक्ति । स्वादुषु भक्ष्येषु–मधुरेषु द्रव्येषु, द्वेषो भवति । तथा, बालेषु–शिशुषु सकललोकवल्लभेष्वपि, ज्वरस्वभावाद्द्वेषो भवति । तथा, तृड् भृश–तृष्णाऽत्यर्थम् । शब्दादिष्वनिमित्तत –कारण विना, सज्वरस्य प्रीत्यप्रीती जायेते । कदाचिदप्रियमपि शब्द न द्वेष्टि, कदाचित् प्रियमपि वेणुवीणादिजनित द्वेष्टि । एव शीतार्तोऽपि कदाचिदग्निं द्वेष्टि, कदाचिदशीतार्तोऽप्यग्निमभिलषति । एव शीतादिष्वपि योज्यम् । एव प्राग्रूप–अव्यक्तलिङ्गम् ।

**आ० र०–ज्वरप्राग्रूपमाह–तस्य प्राग्रूपमिति । आकुल–स्वव्यापारेष्वस्थिरम् । अविपाक.–आहारस्य । प्राणो–बलम् । विनमन–गात्रशैथिल्यम् । शब्दादिष्वाकस्मिका–विच्छाद्वेषौ ।**

१ 'त्रमात्युष्ण ज्व' फ. । २ 'व्याधिस' ड थ । ३ 'रीरे व्य' ड.थ । ४ "स्रोतासि–रसस्वेदवाहीनि" इति चन्द्रतोडरौ । ५ 'राग्नेरस' ड थ । ६ 'मध्ये क' ड थ । ७ 'व वेद' ड थ । ८ 'कत्वमुक्तम् ?' ड.थ. । 'करण यु' ण द । ९ 'ह्येवम' ट ।

१ 'लाक्षता' ण द फ ,ट । २ 'तेऽप्युक्तम् । सुख' ड थ । ३ 'द्वेषोऽतिलो' ड । 'द्वेषो न लो' थ । ४ 'कर्मस्वाल' स सु । ५ "अङ्गमर्द.–अङ्गानि मृद्नन्त इव वेष्टयन्त इव" इति चन्द्र । ६ 'अवि' ड.थ. । ७ 'हितस्योपदेशेषु, असहनत्व–हितोपदिष्ट' ड थ. ।

तदनु ज्वरस्य व्यक्तता भवेत् ।

स०-एतस्य चानु (तदनु)-प्राग्रूपाणां पश्चात्, ज्वरस्य व्यक्तता-स्फुटता भवेत्, स्पष्टलिङ्गोत्पत्तिः। वातज्वरोऽयं पित्तज्वरोऽयं श्लेष्मज्वरोऽयं संसर्गजोऽयं सन्निपातजोऽयमिति व्यक्तीभवति।

आ० र०-पूर्वरूपानन्तरं रूपोत्पत्तिरित्याह-तदनु ज्वरस्येति। पूर्वरूपोक्तप्रतीकारे कृते न भवतीत्येवमर्थः।

आगमापगमक्षोभमृदुतावेदनोष्मणाम् ॥ १० ॥
वैषम्यं तत्रतत्राङ्गे तास्ताः स्युर्वेदनाश्चलाः।
पादयोः सुप्तता स्तम्भः पिण्डिकोद्वेष्टनं श्रमः ॥११॥
विश्लेष इव सन्धीनां सादः ऊर्वोः कटीग्रहः।
पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरम् ॥ १२ ॥
छिंद्यन्त इव चास्थीनि पार्श्वगानि विशेषतः।
हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः ॥ १३ ॥
स्कन्धयोर्मथनं बाह्वोर्भेदः पीडनमंसयोः।
अशक्तिर्भक्षणे हन्वोर्जृम्भणं कर्णयोः स्वनः ॥ १४ ॥
निस्तोदः शङ्खयोर्मूर्ध्नि वेदना विरसास्यता।
कषायास्यत्वमथवा मलानामप्रवर्तनम् ॥ १५ ॥
रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता।
प्रसेकारोचकाश्रद्धाविपाकास्वेदजागराः ॥ १६ ॥
कण्ठौष्ठशोषस्तृट् शुष्कौ छर्दिकासौ विषादिता।
हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः ॥ १७ ॥
भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे।

स०-आगमादीनां वैषम्यमनिलज्वरे लिङ्गमिति योज्यम्। ज्वरस्यागमः-सन्तापारम्भः, तस्य वैषम्यं-शिरःप्रभृतीनामङ्गानां न युगपत्सन्तापः, अपि तु कदाचिदस्य शिरसि पूर्वमागच्छति कदाचिदसयोः पादयोर्वेति। अपगमो-ज्वरस्य मोक्षः, तस्य वैषम्यं-कदाचिदस्य पूर्वं पादयोः सन्तापमोक्षः कदाचित्रिके कदाचिच्छिरसि सन्तापस्य मुक्तिरिति। तथा, क्षोभमृदुतयोर्वैषम्यं-कदाचित्तीव्रः सन्तापः कदाचिन्मृदुरिति। वेदना ज्वरस्य तास्ताः, तासां वैषम्यं-न युगपत्सर्वाङ्गीणो वेदनोपलम्भः, अपि तु क्वचित् कदाचित् कस्मिंश्चिदङ्ग इति। तथा, ज्वरस्य य ऊष्मा-सन्तापः, तस्यापि वैषम्यात् कदाचिच्छिरःस्वंसस्य सन्तापः उपलभ्यते कदाचित् पादाद्यन्यतमेऽङ्गे। तत्रतत्राङ्गे-बाहुशिरःप्रभृतौ, तास्ता वेदनाः-पादयोः सुप्ततायाः वक्ष्यमाणाः, चलाः-अनवस्थिताः स्युः, वायोश्चलरूपत्वात्। ता एवाह-पादयोरित्यादि। पादयोः सुप्तिः-निश्चेतनत्वम्, नखक्ष-तादिकमपि न चेतयेते ताविल्यर्थः। स्तम्भः-स्तब्धता, तयोरेव। पिण्डिकयोरुद्वेष्टनं-उद्वेष्टः। श्रमः-खेदः। सन्धीनां विच्छेदनमिव। ऊर्वोः सादः-स्वक्रियायामसमर्थत्वम्। कट्या ग्रहः-स्तम्भ इव। पृष्ठं क्षोदमिव-सङ्क्षुण्णतामिव, आप्नोति, सङ्क्षुण्णसस्यादिवत्। निष्पीड्यत इवोदरं-पिण्याकादिवत्। छिद्यन्त इवास्थीनि-क्रकचादिना काष्ठादिवत्। अतिशयेन पार्श्वगान्यस्थीनि छिद्यन्त इव। तथा, हृदयस्य ग्रहणम्। वक्षसः-उरसः, प्राजनेनेव-प्रतोदेनेव, तोदो-व्यथनम्। स्कन्धयोर्मन्थनम्-अरणेरिव। बाह्वोर्भेदो-विदारणमिव। असयोः पीडनं-तैलादिपीडनकाष्ठैरिव। हन्वोर्भक्षणेऽसामर्थ्यम्। तथा, जृम्भणादीनि स्युः। विरसास्यता-अव्यक्तरसत्वं, मुखस्य भवति, येन मधुराद्यन्यतमं रसं न निश्चिनोति। अथवा कषायरसत्वं वक्त्रस्य। मलानां-मूत्रपुरीषादीनां, अप्रवर्तनम्-अविसर्गः। रूक्षत्वमरुणत्वं च त्वगादीनां भवति, रोगस्वभावात्। तथा, प्रसेकादयः स्युः। अथ, अरोचकाश्रद्धयोः को विशेषः? ब्रूमः। अरोचकेन वक्त्रस्थमपि न भुङ्क्ते। अश्रद्धया तु केवलं नाभिलषति मुखस्थं तु भक्षयत्येवेति विशेषः। विषादिता-विषण्णत्वं दुःखितत्वम्। रोमादीनां हर्षो, वेपथ्वादयश्च वातज्वरे स्युः।

आ० र०-वातज्वरलक्षणमाह-आगमापगमेति। आगमः-उत्पत्तिः, अपगमो-विनाशः, क्षोभः-आधिक्यम्, मृदुता-न्यूनत्वम्, वेदना-बुद्धिः, ऊष्मा-वह्निः, एषां वैषम्यम्। तत्रागमादिचतुष्टयस्य देशकालयोरनियमः। बुद्धेर्भ्रान्त्या। ऊष्मणो बुभुक्षा(क्षया)। वेदनाः-व्यथाः। चलाः-भूत्वा भूत्वा विनश्यन्ति। यत्र यत्र यासां यासां सम्भावना, तत्र तत्र तास्ताः। तदेव प्रपञ्चयत्युत्तरग्रन्थेन। सुप्तता-स्पर्शाज्ञानम्। स्तम्भः-सर्वाङ्गेषु। सादः-स्वकार्याक्षमत्वम्। क्षोदो-विशीर्णावयवत्वम्। ग्रहः-अवरोधः। तोदो-निखननव्यथा। प्राजनेन-तोत्रेण। असयोः-स्कन्धबाहुसन्ध्योः। अरोचको-जिह्वेन्द्रियाप्रवृत्तिः। श्रद्धा-मनःप्रवृत्तिः। शुष्कौ-श्लेष्मरहितौ। विषादिता-ग्लानिः। रोमहर्षः-ऊर्ध्वरोमता। अङ्गहर्षः-त्वचः कण्टकितत्वम्। दन्तहर्षो-दन्तरोगेषूक्तः। भ्रमो-भ्रमणमिवाङ्गस्य।

अथ पित्तज्वरलक्षणार्थमाह—

युगपद्व्याप्तिरङ्गानां प्रलापः कटुवक्त्रता ॥ १८ ॥
नासास्यपाकः शीतेच्छा भ्रमो मूर्च्छा मदोऽरतिः।
विड्भ्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः ॥ १९ ॥
रक्तकोठोद्गमः पीतहरितत्वं *त्वगादिषु।
स्वेदो निःश्वासवैगन्ध्यमतितृष्णा *च पित्तजे ॥२०॥

स०-पित्तज्वरे युगपत्-तुल्यकालं, अङ्गानां व्याप्तिः-शिरः-

१ 'व्यक्तलि' ड य । २ "वैषम्यं-अनेकरूपत्वम्। वेपथुः-कम्पः। क्षवथोर्ग्रहः-अप्रवृत्तिः" इति चन्द्रतोडरौ। ३ 'क्रमः' इ स स । ४ 'भिद्यन्त' स स । ५ 'शुः श्वयथुः' ण द । ६ 'लजे ज्व' ड य । ७ 'गमो भवति क' ण । ८ 'चिदस्य पा' य । ९ 'योश्चेति' ण । १० 'रस सन्ता' ड.य.। ११ 'म्, क्षता' ट य.।

१ 'तयेत्।' ड य । २ 'काष्ठव' ट । ३ 'व-तोदनेनेव' ट । ४ 'मुखेऽस्य' ट द । ५ 'र्षो, श्वयथ्वा' ण.। *६ "त्वगादिषु-पूर्वोक्तेषु त्वगास्याक्षिनखमूत्रपुरीषेषु। चकारोऽनुक्तसमुच्चयार्थः।" इति तोडरः।

प्रभृतीन्यङ्गानि सन्तापेनैककालं व्याप्यन्ते । न तु वातज्वर इवागमादीनां वैषम्यमिति व्याप्तिग्रहणेन द्योतयति । प्रलापः—असम्बद्धवचनस्योक्तिः । कटुवक्त्रता—कटुकरसत्वमास्ये । तथा, नासायामास्ये च पाकः । तथा, शीतेच्छादयोऽत्र भवन्ति । मण्डलाकारा निर्मुखाः पिटिकाः कोठा इत्युच्यन्ते । ननु, दोषास्त्रयोऽपि ज्वरं निवर्तयन्तीत्युक्तम् । पित्तज्वरे च पित्तेन युक्तस्य कायाग्नेर्भूयो वृद्ध्या भाव्यम्, नाग्निमान्द्येन, "वृद्धिः समानैः सर्वेषां" ( हृ सू अ १।१४ ) इति वचनात् । एवं चाग्निमान्द्याभावात् ज्वरस्य सम्भवेऽप्युपपत्तिरयुक्ता । नैवम् । स्वस्थानाच्चालनेनाग्नेर्मान्द्यापत्तेः । स्थानवशाद्वाऽन्यथात्वस्यापि क्रियासामर्थ्यं दृष्टम् । तथा चाष्टाङ्गसङ्ग्रहे (?) (चरके) शोषनिदाने वक्ष्यति ( च नि अ ६।५ )—"योऽश [ तस्य ] शरीरसन्धीनाविशति तेन [ अस्य ] जृम्भा ज्वरश्चोपजायते ।" इत्यादि । तस्मात्स एवाग्निः क्वचिदेव देशे पक्तुं शक्तो भवति, न सर्वत्र । उष्णगुणेन तु पित्तेन युक्तः पक्ता भवत्येवोष्णतरः । अत एव सन्तापादीनधिकतरान् करोतीति न किञ्चिदत्रानुपपन्नम् ।

**आ० र०—पित्तज्वरलक्षणमाह—युगपद्व्याप्तिरिति । नासापाको—नासारोगेषु । आस्यपाको—मुखरोगेषु । मूर्च्छामदौ—मदात्ययनिदानोक्तौ । रक्तकोठो—रक्तवर्णानि मण्डलानि ।**

कफज्वरलक्षणमाह—

**विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता ।**
**प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ॥ २१ ॥**
**हृल्लासश्छर्दनं कासः स्तम्भः श्वैत्यं त्वगादिषु ।**
**अङ्गेषु शीतपिटिकास्तन्द्रोदर्दः कफोद्भवे ॥ २२ ॥**

**स०**—सर्वज्वरेऽरुचिर्भवत्येव, अतिशयेन तु कफजे । तथा, जाड्यादयः स्युः । त्वगादिष्वित्यादिशब्द आस्याक्षिनखादीनां ग्रहणाय । [ त्वगादिषु श्वैत्यं—श्वेतता । अङ्गेषु—शिरःपाण्यादिषु, शीतपिटिका—श्लेष्मपिटिका । निद्रार्तस्येव विषयाग्रहणं—तन्द्रा । ] उदर्दस्य लक्षणं तन्त्रान्तरे उक्तम्—"शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः । श्वयथुः शिशिरार्तानामुदर्दः कफसम्भवः ॥" इति ।

**आ० र०—कफज्वरलक्षणमाह—विशेषादरुचिरिति । विशेषादरुचिः—अत्यरुचिः । जाड्यं—आलस्यम् । अल्पवेगता—सौम्यत्वं ज्वरस्य । हृल्लेपः—श्लेष्मलिप्तहृदयत्वम् । हृल्लासो—हृदयात्सलवणश्लेष्मनिर्गमः । शीतपिटिका—शीतसहिता पिटिका । उदर्दः—उरोभिस्पन्दनम् ।**

१ 'क्ति । कटुकर' ट ण थ द । २ 'दयो भ' य । ३ 'शादन्य' ट ण । ४ 'साप्यग्ने क्रि' इति क्वचित् । ५ 'त्येवात्युष्ण' य. । ६ 'नातितरा क' ड । 'नपि सुतरा क' य. । ७ [ ] इति पाठः ट ण द पुस्तकेषु नोपलभ्यते । ८ "उदर्दः—शीतवेपथुः ।" इति चन्द्रतोडरौ ।

एवं त्रयाणां दोषाणां पृथक् लिङ्गान्यभिधाय सामान्यलिङ्गान्यधुना कथयति—

**काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ।**

**स०**—कालः—पूर्वाह्णादिको वर्षादिको वा यो वातादेः, तस्मिन् काले, यथास्वं—यथायथं वातादिज्वराणामप्रवृत्तानां, प्रवृत्तिः—उत्पत्तिः, उत्पन्नानामाधिक्यं वा स्यात्, तदा वातादिज्वरोऽयमित्यवबुध्येत ।

**आ० र०—उक्तानां ज्वराणां कालसम्प्राप्तिमाह—काले यथास्वमिति । प्रवृत्तिः—उत्पत्तिः ।**

इदानीं सामान्येनान्यदपि लिङ्गद्वयमाह—

**निदानोक्तानुपशयो विपरीतोपशायिता ।**

**स०**—निदानानि च तान्युक्तानि च,—तिक्तोषणादीनि वातादिज्वरकारणानि, तैरनुपशयो यस्मिन् ज्वरे स एवम् । रोगजुष्टा हि रोगिणो दुःखावहत्वम् । ननु, निदानानुपशय इत्येतावदस्तु । किमुक्तग्रहणेन ? उच्यते । उक्तग्रहणं स्वनिदानग्रहणार्थम् । उक्तग्रहणमन्तरेण यानिकानिचिन्निदानानि रक्तपित्तश्वासादीनां, तेषामनुपशय इत्येव प्राप्नुयात् । उक्तशब्दोच्चारणसामर्थ्यात्तु यान्येव वातज्वर उक्तानि तान्येव तत्र ज्वरे गृह्यन्ते, नेतराणि । एवं पित्तकफादिज्वरादिषु । तस्मादुक्तग्रहणं कर्तव्यम् । विपरीतोपशायितेति । उपशेतेऽवश्यमित्युपशायि, विपरीतैरुपशायि—विपरीतोपशायि, तस्य भावो विपरीतोपशायिता,—सुखानुबन्धि आरोग्यलक्षणा । कस्माद्विपरीतैः ? प्रकृतत्वान्निदानस्यैव । एवं ज्वरनिदानप्रतिपक्षभूतैः सर्वेषां ज्वराणामुपशयः सुखानुबन्धो विपरीतोपशायितेति बोध्यम् । ननु, "निदानोक्तानुपशयः" इतीदमेवास्तु, किं "विपरीतोपशायिता" इत्यनेन ? यस्य हि निदानोक्तानुपशयः, तस्यावश्यं विपरीतोपशायितया भाव्यम् । नैवम् । अनैकान्तिकत्वात् । तथा हि,—अतीसारादिषु निदानोक्तानुपशय उपलभ्यते । न च सामावस्थायां विपरीतं सङ्ग्राह्युपशेते । अपि च, मद्योत्थानां विकाराणां मद्यमेव प्रशामकमित्युक्तम् । न चैव "विपरीतोपशायिता" इति घटते । तस्माद्द्वयोरुभयोरुपादानम् । एवं हि लक्षणं सम्यगुक्तं भवति ।

१ 'मित्युच्यते' ड । २ "निदानत्वेनोक्तानि यथा—वातज्वरे तिक्तादीनि, पित्तज्वरे कटुकादीनि, कफज्वरे मधुरादीनि, तैर्निदानोक्तैरनुपशयोऽसुखानुबन्धित्वं भवति । एतेन निदानोक्तैः स्वैः स्वैरौषधाहारविहारैस्तत्र ज्वरस्यातिवृद्धिर्विपरीतैश्च सेवितैः शान्तिर्भवतीत्यर्थः ।" इति चन्द्रः । ३ 'त्र गृ' ड थ । ४ 'बन्ध आ' ट ड ण द । ५ 'क्षणः ।' ट ण द । ६ 'कस्यचिद्वि' ट ड य । ७ 'बोद्धव्यम्' ड थ । ८ 'चास्यामावस्था' ड । ९ 'ङ्ग्राह्यमिति । अ' ड य । 'ह्युपशायिता ।' इति क्वचित् । १० 'प्रबाध' ट.ड.ण. । ११ 'द्व्य द्वयोरु' ड य. ।

आ० र०—उक्तानां ज्वराणा उपशममाह—निदानोक्तानुपशय इति। निदानोक्तानि—दोषकोपनानि । विपरीतानि—दोषशमनानि । उपशायिता—उपशय ।

**यथास्वं लिङ्गसंसर्गे ज्वरः संसर्गजः**

स०—यद्यत्स्व यथास्व, यानि यस्य ज्वरस्य स्वानि लिङ्गानि वातज्वरस्य पित्तज्वरस्य श्लेष्मज्वरस्य वा, तेषा ससर्गो लिङ्गससर्ग,—ससृष्टलिङ्गत्व, तस्मिन्सति संसर्गजो ज्वरो वेद्य । अत्रापि "काले यथास्व" इत्यादि सर्व लक्षण बोध्यम् ।

आ० र०—ससर्गजाना ज्वराणा लक्षणमाह—यथास्वमिति । अपि चेति वक्ष्यमाणविशेषणेना(पैर)पि लक्षणै. ससर्गजा ज्ञेया ।

न चैतावदेव ससर्गलक्षणमित्याह—

**अपि च ॥२३॥**

**शिरोर्तिमूर्च्छावमिदाहमोह-**
**कण्ठास्यशोषारतिपर्वभेदाः ।**
**उन्निद्रतातृड्भ्रमरोमहर्षा**
**जृम्भातिवाक्त्वं च चलात्सपित्तात् ॥ २४ ॥**

स०—चलात्सपित्तात्—वातपित्तससर्गजे, शिरोर्त्यादय स्यु । कण्ठास्ययो. शोषेण सम्बन्ध । वातज्वरे शिरोर्त्यादीनि प्रायो दृष्टानि, कानिचित्तु पित्तज्वरे दृष्टानि, तानि च वातपित्तज्वरे दृश्यन्ते । तथा, अन्यान्यप्य विकान्यत्र वातपित्तज्वरे दृश्यन्ते, यानि न केवले वातज्वरे नापि पित्तज्वरे दृष्टानि। एवमन्ययो ससर्गज्वरयोर्योज्यम् । उपजातिवृत्तम् ।

आ० र०—वातपित्तज्वरलक्षणमाह—शिरोर्तीति । पर्वाणि—सन्धयः। अतिवाक्त्व—प्रलाप । यद्यपि मूर्च्छया मोहस्य गतार्थत्वम्, तथाऽपि कदाचिन्मूर्च्छा कदाचिन्मोह इत्यपौनरुक्त्यम् । मोहो हि वैचित्त्यमात्रम् । विकृतिविषमसमवेतवातपित्तज्वरज्ञानार्थम् । तल्लिङ्गससर्गविशेषस्यापि शिरोर्तिधर्मस्य पृथगुक्ति । प्रकृतिसमसमवेतवातपित्तज्वरज्ञाने तल्लिङ्गससर्गस्योपयोग । वक्ष्यमाणेष्वप्येवम् ।

इदानी कफानिलससर्गलक्षणमाह—

**तापहान्यरुचिपर्वशिरोरुक्**
**पीनसश्वसनकासविबन्धाः ।**
**शीतजाड्यतिमिरभ्रमतन्द्राः**
**श्लेष्मवातजनितज्वरलिङ्गम् ॥ २५ ॥**

स०—तापहान्यादि श्लेष्मवातकृतस्य ज्वरस्य लिङ्गम् । तापहानि —तापाभाव । विबन्धो—मूत्रपुरीषादीनामप्रवृत्ति । स्वागतावृत्तम् ।

आ० र०—वातश्लेष्मज्वरलक्षणमाह—तापहान्यरुचीति । हानि —अल्पत्व ज्वरस्य । विबन्धो—मलरोध ।

अधुना कफपित्तससर्गज्वरं लक्षयति—

**शीतस्तम्भस्वेददाहाव्यवस्था**
**तृष्णाकासश्लेष्मपित्तप्रवृत्तिः ।**
**मोहस्तन्द्रालिप्ततिक्तास्यता च**
**ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ २६ ॥**

स०—शीतादीनामव्यवस्था—अनियम । तथा, तृष्णाप्रवृत्त्यादिक च श्लेष्मपित्तज्वरस्य रूप ज्ञेयं—वेद्यम् । शालिनीवृत्तम् । अथ, द्विदोषजाना ज्वराणा किमागमापगमवैषम्यादीना क्रमेणोत्पत्ति युगपत्सर्वशरीरप्राह्या वा इत्यत्र सशय । तत्र ससर्गजत्वादेककाल द्वयोरपि पक्षयो सम्भवो युक्त । किन्त्वेतयो पक्षयोर्विरोधाद्युगपदसम्भव इति । अत्रोच्यते। यदि ससर्गजे ज्वरे बलवान् वायु स्यात् तदा आगमापगमवैषम्यादिना क्रमेण, अथ पित्तस्य बलीयस्त्व तदा युगपत्सर्वशरीरव्याप्तिक्रमेण ज्वरो भवति । समौ यदा द्वावपि भवत, तदाऽपि यस्य देशकालादिना बललाभस्तदा तस्यैवोत्पत्तिक्रमेण ज्वरो भवति । सन्निपाते तु युगपदेव शरीरव्याप्ति ।

आ० र०—पित्तश्लेष्मज्वरलक्षणमाह—शीतस्तम्भेति। शीतदाहयो स्तम्भस्वेदयोश्चाप्यव्यवस्था, शीतेन दाहोऽपनीयते दाहेन शीतमित्यादि ।

अथ सन्निपातज्वरस्य लक्षणमाह—

**सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः ।**
**तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥ २७ ॥**
**सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा ।**
**गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम् ॥ २८ ॥**
**साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी ।**
**अक्षिणी पिण्डिकापार्श्वमूर्द्धपर्वास्थिरुग्भ्रमः ॥२९॥**
**सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवाचितः ।**
**परिदग्धा खरा जिह्वा गुरुः स्रस्ताङ्गसन्धिता ॥३०॥**

१ 'थास्वलि' स मू । २ "लिङ्गससर्गे—लक्षणमिश्रीभावे सति, यथास्व—यथायथ, ससर्गजो—द्विदोषोत्थो, ज्वरो विज्ञेय ।" इति चन्द्रतोडरौ । "अपि चेति समुच्चये, तेन वक्ष्यमाणैरपि लक्षणै ससर्गजा ज्वरा ज्ञेया । उन्निद्रता—जागरण निद्रानाश । विबन्ध —स्रोतोरोध ।" इति तोडर । "तापहानि —ज्वरसन्तापस्याल्पता" इति चन्द्र । ३ 'ससर्गलिङ्गता—सस्' ड थ । ४ 'सर्गे शि' ड । 'त्तज्वरससर्गे शि' थ । ५ 'था तान्य' थ. । ६ 'क्षणान्याह' ड । 'र्गज्वर लक्षयति' थ ।

१ 'दीनाम् । स्वा' ट थ । 'षाणाम् । स्वा' ण द । २ 'ष्णाकास श्ले' द तो स द्र । ३ 'र्गज एक' ड । 'र्गजे ज्वरे एक' थ । ४ 'ण। समौ' ड ण थ द । ५ 'महान् स्वे' ण चन्द्र । 'मुहु स्वे' स स । ६ 'सस्रुतेक' स स । ७ 'रुक् भ्रम.' स मू । ८ 'गुरुस्र' इ ण द फ चन्द्र स द्र । "गुरव स्रस्ताश्चाङ्गसन्धयो भवन्ति ।" इति चन्द्र । "गुर्वङ्गता स्रस्तसन्धिता च भवति।" इतीन्दु ।

**रक्तपित्तकफष्ठीवो लोलनं शिरसोऽतिरुक् ।**
**कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥३१॥**
**हृद्व्यथा मलसंसङ्गः प्रवृत्तिर्वाऽल्पशोऽति वा ।**
**स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता ॥३२॥**
**दोषपाकश्चिरात्तन्द्रा प्रततं कण्ठकूजनम् ।**

स०–सर्वेभ्यो जातो वातपित्तकफसमुत्थ –सर्वज , सर्वैर्लक्षणैर्युतो भवति । यथा,–अत्र च–सन्निपातज्वरे, दाहो मुहुर्मुहु , तद्वत्–दाहवत् पुन पुन , शीत भवति । अहनि महती निद्रा । रात्रौ तु जागरणम् । सदा वा–दिवसे निशि च, नैव वेति द्वयोरपि नक्तदिवसयोर्निद्रा न भवति । तथा, बहुस्वेदोऽतिशयेन नैव वा स्वेद । तथा, गीतादिकाया विकृताया ईहाया –चेष्टाया , प्रवर्तनम् । तथा, नयने सास्रे भवत । तथा, कलुषे रक्ते तथा कुटिले । तथा, लुलिते पक्ष्मणी ययोस्त एवम् । तथा, पिण्डिकादिरुक् । भ्रमो–मोह । कर्णौ सशब्दौ सरुजौ–सपीडौ, च । कण्ठ शूकै –किशारुभिरिव, व्याप्त । जिह्वा परिदग्धा, तथा खरा–अमृदु , तथा गुरु । तथा, स्रस्ताङ्गसन्धित्वम् । रक्तादिष्ठीवनम् । मूर्ध्नो लोलन–चलनम् । तथा, अतिरुक् । कोठाना श्यावरक्ताना मण्डलाना च दर्शनम् । नैव वेत्यत्रापि योज्यम् । तथा, हृदि पीडा । मलाना–मूत्रपुरीषादीना, [ससङ्ग –] अप्रवृत्ति । अल्पशो वा प्रवृत्तिरतिशयेनाथवा । तथा, स्निग्धास्यतादि भवति ।

**आ० र०–सन्निपातज्वरलक्षणमाह–सर्वजो लक्षणै सर्वैरिति । सर्वै –वातपित्तकफज्वरोक्तै ।**

**तल्लिङ्गसंसर्गविशेषण पृथगाह–दाहोऽत्र चेति । अतिमहान् स्वेद , नैव वा स्वेद । भुग्ने–कुटिले । पिण्डिकादिपञ्चके रुक् । सन्धीनामङ्गत्वेऽपि पृथग्ग्रहणमतिशयार्थम् । शिरसो लोलन–सव्यापसव्यगमनम् । मण्डलाना–कफकुष्ठाना दर्शनम् । हृदये व्यथा । मलानामल्पप्रवृत्ति , अतिप्रवृत्तिर्वा ।**

अथास्य सन्निपातस्य नामद्वयमाह–

**सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम् ॥३३॥**

स०–त सन्निपातमभिन्यास हृतौजस च ब्रूयात् । तत्र–"ओजस्तु तेजो धातूना" ( हृ सू अ ११।३७ ) इत्याद्योजोलक्षणम् । हृतमोजो येन स हृतौजा , त हृतौजसम् ।

**आ० र०–सन्निपातज्वरस्य नामान्याह–सन्निपातमभिन्यासमिति । तानि च त्रीणि । वाताधिक सन्निपात , कफाधिकोऽभिन्यास , पित्ताधिको हतौजा , इति केचित् । तद्व्युदासार्थमिदमुक्तम् । वङ्गसेने ( ज्वराधिकारे श्लो ४८४–५०४ )–"निद्रोपेतमभिन्यास क्षिप्र विद्याद्धतौजसम् । आचितामाशयकफे सन्निपातज्वरे दृढे ॥ शान्तेऽप्यवश्य तस्याशु तन्द्रा समुपजायते । अतिद्रवरसक्षीरदिवास्वप्ननिषेवणात् ॥ दुर्बलस्याल्पवातस्य जन्तो श्लेष्मा प्रकुप्यति । वायुमार्गं समावृत्य धमनीरनुसृत्य स ॥ तन्द्रां सुघोरा जनयेत्तस्या वक्ष्यामि लक्षणम् । उन्मीलितविनिर्भुग्ने परिवर्तिततारके ॥ भवतस्तस्य नयने लुलिते चलपक्ष्मणी । विवृत्ताननदन्तौष्ठ मुहुरुत्तानशायिनं ॥ पिच्छिलोच्छिन्नतन्तुश्च कण्ठाच्छ्लेष्माऽस्य गच्छति । कण्ठमार्गोपरोधश्च वैकृत चोपजायते ॥ सोऽर्वाक् त्रिरात्रात्साध्य स्यादसाध्यस्तु तत परम् । त्रयं प्रकुपिता दोषा उर-स्रोतोनुगा भृशम् ॥ आमा विबद्धा ग्रथिता बुद्धीन्द्रियमनोगता । जनयन्ति महाघोरमभिन्यास महादृढम् ॥ प्रध्वस्तगात्र श्वसिति न चेष्टा काञ्चिदीहते । न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने ॥ न च गन्धरसस्पर्शशब्दांश्चाप्यवबुध्यते । शिरो लोलयतेऽभीक्ष्णमाहार नाभिनन्दति ॥ कूजते तुद्यते चैव प्रतिपत्तिश्च हीयते । कल प्रभाषतेऽत्रापि किञ्चित्सन्दिग्धवाक् चिरात् ॥ न वा प्रभाषते किञ्चिदभिन्यास स उच्यते । प्रत्याख्येय स भूयिष्ठ कश्चिदेवात्र सिध्यति ॥" इति । प्रज्ञा–बुद्धि ।**

**दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ।**
**असाध्यः**

स०–[ननु,] दोषे विबद्ध इत्येकवचनमयुक्तम् । दो

१ 'लिवृट्' इ फ.तो स द्व । २ 'ससर्ग' इ ण द फ चन्द्र स मू । ३ 'तथा' ट ण द । ४ 'तजे ज्व' थ । ५ 'साश्रुणी' ट. । ६ 'र्ध्नोऽतिलो' थ । ७ सुश्रुते तु (उ अ ३९।४२)–"निद्रोपेतमभिन्यास क्षीणमेन हतौजसम् । सन्न्यस्तगात्र सन्न्यास विद्यात्सर्वात्मके ज्वरे ॥" इति विशेष । ८ "त–ज्वर, सन्निपात ब्रूयात्, तथाऽभिन्यास, तथा हृतौजसम् । तस्यैते पर्याया सन्निपातज्वरस्य नामानि । यदुक्तम्–'निद्रोपेतमभि यास क्षीण विद्यात् हृतौजसम् ।' इति । अथवा वातादिधिक सन्निपात , पित्ताधिकोऽभिन्यास , कफाधिको हृतौजा , इति ।" इति तोडर । ९ 'हृतौ' चन्द्र स मू, ट । १० अस्याग्रे "वायुना कफरुद्धेन पित्तमन्त प्रपीडितम् । व्यवायित्वाच्च सूक्ष्मत्वाद्बहिर्मार्गं प्रवर्तते ॥ तेन हारिद्रनेत्रत्व सन्निपातोद्भवे ज्वरे ।" इति इ. तो पुस्तकयोरधिक सार्धश्लोक । 'सन्निपातज्वरे हारिद्रनेत्रत्वे युक्तिमाह–वायुनेत्यादि । कफरुद्धेन–श्लेष्मावृतेन, वायुना अन्त –स्वस्थाने एव, प्रपीडित–प्रदापित, व्यवायित्वात् तथा सूक्ष्मत्वात् स्रोत प्रवेशित्वात् पित्त बहिर्मार्ग प्रपद्यते । तेन कारणेन हारिद्रनेत्रत्व–पीतनयनत्व, सन्निपातोद्भवे–सन्निपातजे, ज्वरे जायते । हारिद्रनेत्रत्वमित्युपलक्षणम्, तेन त्वगास्यनखमूत्रमलेष्वपि पीतता ।' इति तोडरटीका च ।

१ 'क्षीण' फ । २ 'अभिद्रव' वङ्गसेन । ३ 'न्द्रा घोरा जनयति तस्या' फ । ४ 'निवृत्ता' वङ्ग । 'वृतोत्तानद' फ । ५ 'नम् ।' वङ्ग । ६ 'कण्ठे श्लेष्मा' वङ्ग । ७ 'मार्गविरो' वङ्ग । ८ 'रात्र सा' वङ्ग । ९ 'यश्च कु' वङ्ग । १० 'नोनुगा ।' वङ्ग । ११ 'स ज्वर नृणाम्' वङ्ग. । १२ 'प्रस्तब्धगात्रस्त्ववाग्मी नष्टचेष्टो न काङ्क्षते ।' वङ्ग । १३ 'ब्दान् प्राप्याथ बु' वङ्ग । १४ 'लोठय' वङ्ग । १५ 'ते किञ्चिदभिन्यास स उच्यते ।' वङ्ग. ।

षाणां ह्यत्र च बहुत्वाद्बहुवचनं न्याय्यं स्यात् । अत्रोच्यते । जात्यभिप्रायाददोषः । जात्याख्यायामेकस्य बहुत्वसिद्धेर्दाष इत्युक्ते बहुत्वं गम्यते । यथा—निष्पन्नो यव इति । तस्माद्दोषे विबद्ध इति युक्तम् । नष्टेऽग्नाविर्त्यसत् । सर्वज्वरेष्वेव ह्यग्निनाशस्य प्रागभिधानात् । तस्मादयुक्तमेतदुच्यते । न । विशेषाभिप्रायात् । काम सर्वज्वरेष्वग्निनाश उक्तः । अस्मिंस्तु सान्निपातिके विशेषेणाग्निनाश इत्यभिप्रायः । दोषे—वातपित्तकफमूत्रपुरीषादिके, विबद्धे—अप्रवृत्तिशीले, अग्नौ नष्टे सति, सर्वसम्पूर्णलक्षणः सन्निपातोऽसाध्यः—साधयितुमशक्यः ।

**आ० र०—असाध्यसन्निपातज्वरलक्षणमाह—दोषे विबद्धे इति । विबद्धे—पच्यमानाद्यवस्थामगच्छति । नष्टे—उष्णोदकमप्यपचति ।**

**सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा ॥**

**स०**—अन्यथा—असम्पूर्णलक्षणत्वेन, सः—ज्वरः, कृच्छ्रो भवेत् वैकल्यदो वा भवेत् ।

**आ० र०—कृच्छ्रसाध्यसन्निपातज्वरलक्षणमाह—अन्यथा कृच्छ्र इति । अन्यथा—साध्यलक्षणविपर्यये । वाशब्दात् कश्चिद्वैकल्यमदत्वाऽपि निवर्तते । अत एव यस्य रोगस्य यावन्ति लक्षणान्युच्यन्ते तावद्भिः समुदितैर्निश्चीयत इति न ज्ञातव्यम् । किन्तु यावद्भिरसाधारण्यं तावद्भिरेवेति । लक्षणान्तरोक्तिस्तु सुखसाध्यादिभेदज्ञानार्थम् ।**

किमेष एव सन्निपातज्वरप्रकारः सम्भवति ? उतान्योऽपि सम्भवति ? इत्याह—

**अन्यश्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितम् ।**
**त्वचि कोष्ठेऽथवा दाहं विदधाति पुरोऽनु वा ॥३५॥**
**तद्वद्वातकफौ शीतं, दाहादिर्दुस्तरस्तयोः ।**

**स०**—अन्यशब्दार्थोऽन्यदित्ययं निपातः । अपरोऽयं सन्निपातोत्थो ज्वरः । यत्र सन्निपाते पित्तं वातकफाभ्यां पृथक्—भिन्नं, स्थितं सत् त्वच्यथवा कदाचित् कोष्ठे दाहं करोति । कथम् ? पुरोऽनु वा,—पूर्वं पश्चाद्वा । अथवेति स्थानविशेषाभिधायिपदसमीपे श्रूयमाणं स्थानविशेषे विकल्पं करोति । पुरोऽनुवेत्यत्र कालविशेषाभिधायिपदसमीपे श्रूयमाणं कालं विकल्पयति । तत्र चायं विशेषः—त्वचि स्थितं बहिरधिकं दाहं करोति, अन्तरल्पम् । कोष्ठे तु स्थितमन्तरधिकम्, बहिः स्वल्पमिति । तद्दित्यनेन पित्तं परामृश्यते । [तद्वत्—] पित्तेन तुल्यम् । यथा,—पित्तं पृथक् स्थितं त्वचि कोष्ठेऽथवा दाहं करोति पुरोऽनु वा, तथैव वातकफौ त्वचि कोष्ठेऽथवा पुरोऽनु वा शीतं विदधतः, इति द्विविधोऽयं सन्निपातः । तयोः—शीतादिदाहाद्योः सन्निपातयोर्मध्ये, यो दाहादिः सन्निपातः स दुस्तरः—कृच्छ्रसाध्य इत्यर्थः । केचित्तु शीतादिः शीतान्तो दाहादिर्दाहान्त इति द्विधा (चतुर्धा) सन्निपातं समगिरन् ।

**आ० र०—अमिश्रीभूतदोषजसन्निपातज्वरमाह—अन्यश्चेति । स चतुर्धा,—त्वग्गतपित्तकोष्ठगतवातकफजः, त्वग्गतवातकफकोष्ठगतपित्तजश्चेति द्वौ, पित्तकार्यपूर्वको वातकफकार्यपूर्वकश्चेति । तौ पृथक्द्विधेति । तयोर्मध्ये दाहादिः पित्तकार्यपूर्वको दुस्तरः । तत्रापि कोष्ठगतपित्तकार्यपूर्वक इति ज्ञेयम् ।**

ननु, अस्मिन् शीतादौ दाहादौ च ज्वरे को विशेषः ? इत्याह—

**शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते ॥ ३६ ॥**
**शीते शान्तेऽम्लको मूर्च्छा मदस्तृष्णा च जायते ।**

**स०**—शीतादौ तत्र—तस्मिन् सन्निपाते, पित्तेन कर्त्रा कफे स्यन्दिते—स्राविते, शोषिते च ग्रीष्म इव खरदिनकरकरतापेन हिमं इव, तथा शीते शान्ते चार्थाद्दाह उपजायते । अम्लकादयश्च चत्वारः स्युः । पित्तेनेति कर्तरि तृतीया । अत एव च बलवत्त्वेन प्राधान्यात् कफं स्रावयति शोषयति चेति । अम्लोद्गिरणं—अम्लकः ।

**आ० र०—शीतादिसन्निपातज्वरलक्षणमाह—शीतादौ तत्रेति । स्यन्दितो—घनीभावं त्याजितः । पश्चाच्छोषितः ।**

**दाहादौ पुनरन्ते स्युस्तन्द्राष्ठीववमिक्लमाः ॥ ३७ ॥**

**स०**—दाह आदिर्यस्मिन् स दाहादिः । शीतावसान इत्यर्थाद्गम्यते । दाहादौ च सन्निपातेऽस्य दाहस्यान्ते—अवसाने, तन्द्रादयो भवन्ति । दाहकारिपित्तस्यन्दितेनैव कफेन शमिते पित्ते कफोद्रेकादेव कफजास्तन्द्रादयो भवन्ति ।

**आ० र०—दाहादिसन्निपातज्वरलक्षणमाह—दाहादौ पुनरिति । अत्र कफेन पित्ते प्रशमिते इति ज्ञेयम् ।**

**आगन्तुरभिघाताभिषङ्गशापाभिचारतः ।**
**चतुर्धा**

**स०**—आगन्तुज्वरश्चतुर्धा भवति, अभिघातजोऽभिषङ्गजोऽभिशापजोऽभिचारजश्च ।

---

१ 'णां तु ब० न्याय्यमेव ।' ड थ । २ 'कस्मिन् ब' ड । ३ 'हुत्वे सिद्धे दोष' ट य । ४ 'त्वसामान्यम् ।' ड । ५ 'कफाख्ये मू' ट ण । ६ 'नश्चेत् स' ण । ७ "वैकल्यदः—कायवाङ्मनसा स्वकर्महानिकारी" इति चन्द्रतोडरौ । ८ 'दोऽसौ वा' ड । ९ 'ज्वरः सम्भ' ट ण द । १० 'अन्यश्च' इ ण द चन्द्र स मू । ११ 'ब्दार्थेऽ' ड थ । १२ 'त्र तयोर्वि' ड । 'त्र द्वयोर्वि' य । १३ 'हिरल्पतप' य. । १४ 'तद्वदि' ड ण.थ द ।

१ 'त्रिधा' ट । २ 'समुद्गिरन्ते' ड । 'सङ्गिरन्ते' य । ३ 'द्राविते' ण य द । ४ 'इवात्यर्थशीते' ट । 'इव शीते' ड । ५ "तथाविधे कफे सति शीते शान्ते च सति तदन्तेऽम्लकादयो जायन्ते । अभिघातः—अभिहननं शस्त्रलोष्टमुष्टिलगुडादिभिः । अभिषङ्गः—कामादीनां भूतानां च सम्बन्धः । शापो—ब्राह्मणगुरुवृद्धसिद्धानामनिष्टाभिशपनम् । अभिचारः—सर्पपादिहोमः ॥" इति तोटर । "अभिचारः—यन्त्रमन्त्रादिभिरवपीडनम्" इति डल्हण, "मन्त्रादिभिर्मारणप्रयोग" इति वाचस्पति । ६ 'न्द्राष्टेव' इ स स । 'न्द्रास्वेदव' स मू ।

**आ० र०**–आगन्तुज्वरभेदानाह–आगन्तुरिति । ते च चत्वार, अभिघातादिहेतुभेदात् ।

**अत्र क्षतच्छेददाहाद्यैरभिघातजः ॥ ३८ ॥**
**श्रमाच्च**

**स०**–अत्र–अस्मिन्नागन्तौ ज्वरे, अभिघातजो यो ज्वर स क्षतच्छेदाद्यै –शस्त्रप्रहाराद्यै, जायते । तथा, श्रमाच्च–अध्वादिकृतादायासाच्च ।[1]

**आ० र०**–अभिघातजागन्तुज्वरभेदाना(वा)ह–अत्रेति । तत्र क्षतादिजोऽनन्तभेदत्वादेको गण्यते, श्रमजश्चैक इति द्वौ ।

**तस्मिन्पवनः प्रायो रक्तं प्रदूषयन् ।**
**सव्यथाशोफवैवर्ण्यं, सरुजं कुरुते ज्वरम् ॥ ३९ ॥**

**स०**–तस्मिन्–अभिघातजे ज्वरे, प्रायो–बाहुल्येन, पवनो–वायु, ज्वर कुरुते । किं कुर्वन्? रक्त प्रदूषयन् । कीदृश ज्वरम्? सव्यथेत्यादि । व्यथादियुक्त[3] तथा सरुजम् । प्रायोग्रहण क्वचिदभिघातजेऽन्योऽपि दोष कुप्यति, बाहुल्येन तु वायुरिति द्योतयति ।

**आ०र०**–तस्य द्विविधस्य लक्षणमाह–तस्मिन् पवन इति । तत्र सव्यथाशोफवैवर्ण्यमिति क्षतादिजस्य लक्षणम् । सरुजमिति श्रमजस्य । एकलक्षणत्वे व्यथारुजयो पौनरुक्त्यात् ।

**ग्रहावेशौषधिविषक्रोधभीशोककामजः[4] ।**
**अभिषङ्गात्**

**स०**–ग्रहादिजो ज्वरोऽभिषङ्गाद्भवति ।

**आ० र०**–अभिषङ्गजागन्तुज्वरभेदानाह–ग्रहावेशेति । ते च सप्त, ग्रहावेशादिहेतुत्वात् । अभिषङ्गो–मनोभिघात. ।

इदानीं ग्रहोत्पन्नस्य लिङ्गमाह[5]

**ग्रहेणास्मिन्नकस्माद्धासरोदने ॥ ४० ॥**

**स०**–ग्रहेण–देवदानवादिनाऽष्टादशभेदभिन्नेन, यो ज्वरो भवति, अस्मिन्–ज्वरे, अकस्मात्–निर्निमित्तमेव, हासरोदने भवत ।

**आ० र०**–ग्रहावेशजलक्षणमाह–ग्रहेणेति । अस्मिन्–अभिषङ्गजज्वरे ।

**ओषधीगन्धजे मूर्च्छा शिरोरुग्[6]वमथुः क्षवः ।**

**स०**–विषौषधीपुष्पगन्धेन वायुनोपनीतेन यो ज्वरस्तस्मिन् मूर्च्छादयो जायन्ते ।

**आ० र०**–ओषधि[ज]लक्षणमाह–ओषधीगन्धज इति ।

**विषान्मूर्च्छातिसारास्यश्यावतादाहहृद्[7]ग्रहाः ॥ ४१ ॥**

१ 'एषु ज्वरेषु, अ' थ । २ 'युद्धादिकृताचायासात् ।' ङ । 'अध्वादौ कृ' ण । ३ 'क्त वा सरु' ङ । ४ "ग्रहावेशो–दिव्यग्रहसञ्चार । काम –अभिमतकामिन्याद्यभिलाष ॥ वमथु –वान्ति ॥ हृद्ग्रहो–हृदयावरोध " इति तोडर । ५ 'लिङ्गान्याह' थ । ६ '**रुक्-श्वयथु** ' फ स.द्व । '**रुग्वेपथु** ' इति क्वचित् । ७ '**हृद्ग्रहा.**' तोडर ।

**स०**–विषाज्जाते तस्मिन् ज्वरे मूर्च्छादयो जायन्ते । आस्यश्यावता–कृष्णमुखत्वम् । हृद्ग्रहो–हृदये पीडा ।

**आ० र०**–विषजलक्षणमाह–विषादिति । आस्य–मुखम् ।

**क्रोधात्कम्पः शिरोरुक् च**

**स०**–क्रोधात्–कोपात्, सञ्जाते ज्वरे कम्पो–वेपथुर्जायते । तथा, शिरोरुक्–शिरोर्तिश्च ।

**आ० र०**–क्रोधजलक्षणमाह–क्रोधादिति ।

**प्रलापो भयशोकजे ।**

**स०**–भयशोकजे ज्वरे प्रलाप ।

**आ० र०**–भयशोकजयोर्लक्षणमाह–प्रलाप इति ।

**कामाद्[4]भ्रमो[1]ऽरुचिर्दाहो ह्रीनिद्रा[3]धीधृतिक्षयः ॥ ४२ ॥**

**स०**–कामादुद्भूते ज्वरे भ्रमादयो भवन्ति । ह्री –लज्जा, निद्रा –स्वप्न[5], धी –बुद्धि, धृति –धैर्यम्, तेषा [क्षयो]–विघात ।

**आ० र०**–कामजलक्षणमाह–कामादिति । भीप्रभृतीनां क्षय. ।

**ग्रहादौ सन्निपातस्य भयादौ मरुतस्त्रये ।**
**कोपः कोपे[6]ऽपि पित्तस्य**

**स०**–ग्रहादौ त्रये–ज्वरे ग्रहावेशौषधिविषजे, सन्निपातस्य कोप । भयादौ त्रये–भीशोककामजे ज्वरे, मारुतस्य[7] कोप । कोपे[6,8] पित्तस्य [ कोप ] । अपिशब्दाद्वातस्यापि कोप इति ।

**आ० र०**–अभिषङ्गजानां दोषानुबन्धमाह–ग्रहादाविति । तत्र प्रथमे त्रये त्रयाणां दोषाणा कोप । चरमे त्रये मरुत । कोप पित्तस्येति वचनात्पित्तस्य च । कोपजे तु पित्तस्यैव ।

**यौ तु शापाभिचारजौ ॥ ४३ ॥**
**सन्निपातज्वरौ घोरौ तावसह्यतमौ[9] मतौ ।**

**स०**–तमशब्देनैतद्दर्शयति[10],–अन्येऽपि ये सन्निपातज्वरास्तेऽप्यसह्या –सोढुमशक्या, एतौ पुन शापाभिचारजावतिशयेन सोढुमशक्याविति ।

**आ० र०**–शापजाभिचारजयोरागन्तुज्वरयोर्लक्षणमाह–यौ त्विति ।

१ 'मान्मोहोऽ' स स । २ "भ्रम –उद्विग्नचित्तता भ्रमण वा" इति तोडर । ३ '**भीनिद्रा**' हेमाद्रि । ४ 'कामोद्भ' ट ण । ५ 'स्वाप ' ट । ६ '**कोपे तु पि**' इ. चन्द्र तो । **क्रोधे तु पि**' फ स स । "तु–पुन , कोपे–कोपजे ज्वरे, पित्तस्य कोपो भवति ।" इति चन्द्र । "कोपे तु–कोपजे क्रोधजे ज्वरे, पित्तस्य कोप ।" इति तोडर । ७ 'वातस्य' ट । 'मरुत ' ङ य । ८ 'पेऽपि पित्त०ब्दात्पित्तस्यापि' ङ य । ९ '**वसाध्यत**' इ । १० 'तत्क्षय' ट । 'तद्गमय' थ ।

**तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ॥ ४४ ॥**
**पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ।**
**सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः ॥ ४५ ॥**

**स०**–अभिचारिकैर्मन्त्रै –अथर्ववेदाद्युपदिष्टै , हूयमानस्य पुस , यन्नामोद्देशेन हवि प्रक्षेपः स हूयमान उच्यते, अभिचारमधिकृत्य प्रणीत इति "प्राग्वहतेष्ठक्" इति ठक् । हूयमानस्य पुस प्रथम चेतस्तप्यते–सदु ख जायते । तत –अनन्तर, देह –शरीर, तप्यते–सज्वर सम्पद्यते । तत –अनन्तर, विस्फोटतृड्भ्रमैर्दाहमूर्च्छायुतैर्ग्रस्तस्य–आक्रान्तस्य, प्रत्यह ज्वरो वर्द्धते–ज्वरस्याधिक्य भवति । तनव स्फोटा एव विस्फोटा भण्यन्ते ।

**आ०र०–अभिचारजस्य विशेषमाह–तत्राभिचारिकैरिति ।**

**इति ज्वरोऽष्टधा दृष्टः**

**स०**–इति–पूर्वोक्तेन प्रकारेण निज सप्तप्रकार आगन्तुश्चेति, अष्टप्रकारो ज्वरो दृष्ट , मुनीन्द्रैरिति शेष ।

**आ०र०–अष्टविधज्वरलक्षणमुपसहरति–इति ज्वर इति ।**

**समासाद्द्विविधस्तु सः ।**
**शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः ४६**
**प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः ।**

**स०**–तुर्विशेषे । समासात्–सङ्क्षेपात् , तु–पुन , स –ज्वरो, द्विविध । तदेव द्वैविध्यमाह–शारीरो मानस इत्येक द्विकम् । सौम्यस्तीक्ष्ण इति द्वितीयम् । अन्तराश्रयो बहिराश्रय इति तृतीयम् । प्राकृतो वैकृत इति चतुर्थम् । साध्योऽसाध्य इति पञ्चमम् । सामो निराम इति षष्ठम् । इति द्वैविध्यमेषां द्विकानाम् ।

**आ० र०–अष्टाना ज्वराणा प्रत्येक द्वैविध्यषट्कमाह–समासादिति । समासात्–सङ्क्षेपात् । विस्तरादनन्तभेदत्वम् ।**

सम्प्रत्येतानेव ज्वरान् व्याचष्टे—

**पूर्वं शरीरे शारीरे तापो, मनसि मानसे ॥ ४७ ॥**

**स०**–शारीरे ज्वरे प्रथम शरीरे तापो भवति, पश्चान्मनसीति पूर्वशब्दस्य सम्बन्धिशब्दत्वाद्गम्यते । एव मानसे ज्वरे पूर्वं मनसि तापो–दु खम् , पश्चाद्देहे ताप –पीडाविशेषो जायते ।

**आ० र०–शारीरस्य लक्षणमाह–पूर्वं शरीरे इति । पूर्वग्रहणात् पश्चान्मनसि ताप. ।**

**मानसलक्षणमाह–मनसि मानस इति । पूर्वं मनसि पश्चाच्छरीरे ताप. ।**

इदानीं सौम्यतीक्ष्णौ व्याचष्टे–

**पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ।**

**स०**–पवने श्लेष्मयुते योगवाहित्वाद्धेतो शीत भवेत् । तस्माद्वातश्लेष्मज्वर सौम्य इति बोध्यम् । श्लेष्मा हि "सोम" इति प्रागुक्तम् ( हृ शा अ ३।९६ ) ।

१ 'पुरुषस्य' ड य । २ 'तनुत्वच ' ड । ३ 'व्यदर्शयितुमा' य ।

**आ० र०–सौम्यस्य लक्षणमाह–पवने योगवाहित्वादिति । योगवाही–सम्बन्धनिर्वाहक ,येन युज्यते तद्गुणमेव पुष्णाति ।**

तीक्ष्णमिदानीं वक्ति—

**दाहः पित्तयुते, मिश्रं मिश्रे**

**स०**–दाह पित्तसम्बन्धे पवने योगवाहित्वाद्भवेत् । इत्थेव मिश्रे–पित्तश्लेष्मयुते पवने, योगवाहित्वाच्च पवनस्य मिश्र–दाहशीत भवेत्, मुहुर्दाहो मुहु शीतमिति । तदथ सौम्यतीक्ष्णव्यामिश्रस्तृतीयो ज्वर इति वेद्यम् । सौम्यस्तीक्ष्ण इति द्वैविध्यकथन तु समासादिति मन्तव्यम् । योग वहति तच्छीलो योगवाही, येन येन युक्तो भवति तस्य तस्य स्वभाव भजत इत्यर्थ । एव च सति स्वय नोष्णो न च शीतो वायुरित्यभ्युपगतम् । तदेवमिह योगवाहित्वात् कफेन युक्ते वायौ शीत भवेदित्युक्तम्, असौ वायु शीत करोतीत्यर्थं । पित्तयुक्तेऽस्मिन् दाहो भवेत्, असौ दाह करोतीति । एव स्वय नोष्णो न शीत इत्यवतिष्ठते । "तत्र रूक्षो लघु शीत " इत्यत्र च शीत इत्युच्यते । तदिमे वचसी परस्पर व्याजघ्नाते । नैवम् । "तत्र रूक्षो लघु शीत खर सूक्ष्मश्चलोऽनिल ।" ( हृ सृ अ १।११ ) इत्यत्रैवायमर्थस्तथा व्याख्यातो यथा न पूर्वापरव्याहतत्व भवेत् । तेनेह पुनर्न प्रतन्यते ।

**आ० र०–तीक्ष्णलक्षणमाह–दाह पित्तयुत इति । पवने योगवाहित्वादित्यनुवर्तते । मिश्रे–श्लेष्मयुते पित्तयुते च । मिश्र–शीत दाहश्च । तीक्ष्णस्यैवाय भेद , पृथक्त्वे द्वित्वहाने. । दाहस्य तु सहत्वात् न सौम्यभेद ।**

इदानीमन्तराश्रयस्य लक्षणमाह—

**अन्तःसंश्रये पुनः ॥ ४८ ॥**
**ज्वरेऽधिकं विकाराः स्युरन्तः क्षोभो मलग्रहः ।**

**स०**–अन्तराश्रये तु ज्वरेऽधिक कृत्वाऽन्तर्विकारा स्यु , न बहिरेव । तथा, क्षोभ –तीव्रदाहत्वम् । मलाना–मूत्रपुरीषादीना, ग्रहो–विबन्ध ।

**आ० र०–अन्तराश्रयलक्षणमाह–अन्त संश्रय इति । विकारा –यथास्वमुक्तानि लक्षणानि । क्षोभ –तीव्रत्वम् ।**

**बहिरेव बहिर्वेगे तापोऽपि च सुसाध्यता ॥ ४९ ॥**

**स०**–बहिर्वेगे तु बहिरेव ताप , न त्वन्तरे । अपिचेत्यन्त - क्षोभमलग्रहावप्यत्र न स्त इति समुच्चिनोति । तत्र च बहिर्वेगेऽत एव सुसाध्यता–सुखसाध्यत्व, भवति । अन्तराश्रये तु दु साध्यतेत्यर्थादुक्तं भवति ।

**आ० र०–बहिराश्रयलक्षणमाह–बहिरेवेति । बहिरेव तापो–नान्त. । सुसाध्यता–सुखसाध्यत्वम् ।**

१ 'रित्युप' ण य । २ 'भवतीति ।' य । ३ "अन्त –कोष्ठे" इतीन्दुचन्द्रौ । "अन्तरेव क्षोभ –तीव्रा रुक्" इति चन्द्र । "किम्भूतो मलग्रह ? अन्तरेव क्षोभ –तीव्ररुक्, यस्मात् स अन्त - क्षोभ ।" इति तोडर । ४ 'अ, अन्त क्षो' ट ।

सम्प्रति प्राकृतवैकृतौ लक्षयति—

**वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्।**
**वैकृतोऽन्यः स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात्॥**

**स०**–वर्षादिषु त्रिषु ऋतुषु यथाक्रमं वाताद्यैस्त्रिभिर्दोषैर्यो ज्वरो जायते स प्राकृतः। वर्षासु वातज्वरः प्राकृतः, शरदि पित्तज्वरो, वसन्ते कफज्वरः, इति परिभाष्यते। अत एव वातप्रकृतेर्वातेन यो ज्वरः, पित्तप्रकृतेः पित्तेन, श्लेष्मप्रकृतेः श्लेष्मणेति, स प्रकृतिभवत्वेन प्राकृत इत्युच्यते। वैकृतोऽन्य इति। यो ज्वरो वर्षादिभ्य ऋतुभ्योऽन्यत्र काले जातो वर्षादिष्वपि वा न यथाक्रमं वाताद्यैर्जनितः, स यथोक्तप्राकृतलक्षणादन्यः, स वैकृत उच्यते। स च दुःसाध्यः–कृच्छ्रसाध्यः। प्राकृतस्तु सुसाध्य इत्यर्थाद्गम्यते। प्राय इत्यादि। प्रायो–बाहुल्येन, प्राकृतोऽपि यो ज्वरोऽनिलाज्जायते सोऽपि दुःसाध्यः। प्रायोग्रहणेनैतद् द्योतयति। कदाचिद्दैवानुकूलत्वात्सुसाध्य एवं भवति। ननु, वर्षास्व(शरत्स्व)पि प्राकृतोऽपि ज्वरो यथा विकृतिविज्ञानीये कथितस्तथाऽसाध्य एव। "ज्वरो निहन्ति बलवान्" (हृ. शा. अ. ५।७१) इत्यादि। तदेतत्पूर्वापरव्याहतमिव दृश्यते। नैवम्। अनयोर्वचसोः सामान्यविशेषरूपत्वात्। तथा चेह सामान्येनोक्तम्, विकृतिविज्ञानीये तु विशेषेणेति। एतदेव च स्फुटीकर्तुं वक्ष्यति (श्लो० ५३)–"विकृतिज्ञाने प्राग् साध्य उदाहृतः।" इति।

**आ० र०–प्राकृतलक्षणमाह–वर्षाशरद्वसन्तेष्विति। वर्षासु वातजः, शरदि पित्तजः, वसन्ते कफजः, प्राकृतो ज्ञेयः। वैकृतलक्षणमाह–वैकृतोऽन्य इति। अथ ऋतुना दोषेण वा शरदि वातजः, वर्षासु कफजः, इत्यादि वैकृतो दुःसाध्यो** ज्ञेयः। प्राकृतश्चानिलाज्जातः। प्रायोग्रहणात् क्वचित् सुसाध्योऽपि। "एकमार्गक्रियारम्भव्यतिवृत्तेर्महात्ययात्।" इत्यधिकं सङ्ग्रहे (नि० अ० २)। एकमार्गः एकक्रियाकारम्भश्च रोगः सुखसाध्यः। वातजे त्वेषा व्यतिवृत्तिः–विपर्ययः। बहिर्मार्गोऽयं लङ्घनसाध्योऽयं सौम्योऽयमित्युपचर्यमाणोऽपि वातजोऽन्तर्मार्गत्वं बृंहणसाध्यत्वं तीक्ष्णत्वं चोपैति। वातस्यानवस्थितत्वात्। महाश्चात्ययः–अतिक्रमः, यदौषधकालमपि न प्रतीक्षते। वातस्याशुकारित्वात्।

सम्प्रति वर्षासु प्राकृतस्य ज्वरस्य स्वरूपं निरूपयति—

**वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्।**
**कुर्यात् पित्तं च शरदि तस्य चानुबलं कफः॥ ५१॥**
**तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम्।**
**कफो वसन्ते तमपि वातपित्तं भवेदनु॥ ५२॥**

**स०**–प्रावृषि पवनः [दुष्टः–] कुपितः, पित्तश्लेष्मयुतो ज्वरं कुर्यात्। प्रावृषि प्राकृतो ज्वरो वातप्रधानः पित्तश्लेष्माणौ त्वनुबलत्वेन वातस्य स्थितौ, न तु सन्निपात इव स्वयं ज्वरकारकावित्यर्थः।

साम्प्रतं शरदि प्राकृतस्य ज्वरस्य दोषबलाबलं लक्षयति–पित्तं चेत्यादि। पित्तं शरदि [दुष्टं] प्राकृतं ज्वरं कुर्यादित्यनुवर्तते। प्रावृट्सञ्चितस्य पित्तस्य तदा कोपसद्भावात्। तस्य च पित्तस्यानुबलं–अनुबन्धि बलं, कफः। अनुबलमिवानुबलम्। यथा,–कस्यचित् स्वतन्त्रस्य राज्ञो गजतुरगरथपुरुषादिबलवतो वैरिभिः सह युध्यमानस्य पश्चादन्यद्बलं तच्छक्तेरनुबृंहणार्थमागच्छति, एवं स्वतन्त्रस्य पित्तस्य ज्वरं कुर्वतो बलोपबृंहणं शरदि कफः करोति। तत्प्रकृत्येति तच्छब्देन वर्षाशरदृतौ मारुतज्वरपित्तज्वरौ परामृश्येते। तयोः प्रकृतिस्तत्प्रकृतिः, तया तत्प्रकृत्या,–तत्स्वभावेन, तत्र–प्राकृते ज्वरे, अनशनात्–लङ्घनात्, भयं न 'भवति' इति शेषः। विसर्गाच्च वर्षाशरदुपलक्षितो हि कालो विसर्गः सौम्यस्वभावः, अस्माच्च कारणात्त-

१ "उक्तादन्यो वैकृतो दुःसाध्यो भवति। य एतेषु ऋतुषु क्रमेण नोत्पद्यते। यथा–वर्षासु पित्तजः श्लेष्मजो वा, शरदि वातजः कफजो वा, वसन्ते वातजः पित्तजो वा। एवमन्येष्वपि ऋतुषु सर्व एव ज्वरो वैकृतः।" इति चन्द्रः। २ 'ष्मणा, स' ट। ३ 'अर्थात् सुखसाध्यः प्राकृत इति। यदुक्तम् (च. चि. अ. ३।४१)–"प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः।" इत्यादि। अत्र वाग्भटेन वातजस्य प्राकृतत्वप्रणयनं यत्कृतं तदन्ये नानुमन्यन्ते, दुःसाध्यत्वेन वैकृताभिन्नत्वात्। जतूकर्णेनाप्यसौ न पठितः। यदाह–"वसन्तशरदोः प्राकृतोऽन्यत्र वैकृतः।" इति। अत्रोच्यते। न प्राकृतत्वं सुखसाध्यत्वख्यापनपरा सञ्ज्ञा, किन्तु कुम्भकारादिवद्यौगिकतरम्। यतो यथर्तुकुपितो दोषः प्रकृतिरुच्यते, ततः उद्भूतः प्राकृतः। तेन प्राकृतत्वेऽपि दोषस्वभावाद्वातिकस्य दुःखसाध्यत्वं वैकृतवदिति। दुःखसाध्यत्वेन वैकृतसाधर्म्यात्तु चरकजतूकर्णाभ्यां नोक्तः, न तु प्राकृतत्वाभावादित्यभिप्रायो वाग्भटस्येति। अन्यरोगेषु प्राकृतत्वेन दुःसाध्यतरम्, ज्वरस्य तु व्याधिप्रभावात् सुखसाध्यत्वम्। तन्त्रान्तरं हि (सङ्ग्रहे सू. अ. ७)–"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्॥" इति' इति विजयरक्षितः। ४ 'वं वा भ' ट।

१ 'बलं कफः' इ फ चन्द्र तो ए द स च मा नि। "अनुबलं–असम्पूर्णबलं।" इति तोडरः। २ 'सम्भवा' ट ण द। ३ तत्प्रकृत्येति श्लोकार्धस्येदमरुणदत्तव्याख्यानमयुक्तं प्रतिभाति। चन्द्रनन्दनस्त्वत्र समीचीनं व्याचष्टे। तद्यथा–"तत्र–शरदि पैत्तिके ज्वरे, अनशनात्–लङ्घनात्, भयं न भवति। केन कारणेन? तत्प्रकृत्या, तयोः–पित्तकफज्वरयोः, लङ्घनसाध्यत्वेन, तथा विसर्गाच्च–कालस्य विसर्गाख्यभावात्। तत्र लङ्घनात् प्रत्यवायशङ्का नोत्पद्यते, ज्वरस्यामाशयसमुत्थत्वात् पित्तश्लेष्मणोर्लङ्घनसाध्यत्वाच्च। उक्तं च–'कफपित्ते द्रवत्वाच्च सहेते लङ्घनं महत्। आमक्षयादूर्ध्वमपि वायुर्न सहते क्षणम्॥' इति।" "तत्र–शरदि पैत्तिके ज्वरे। तयोः–पित्तश्लेष्मणोः, प्रकृत्या–स्वभावेन।" इति तोडरोऽपि। ४ "तत्प्रकृत्या विसर्गस्य, इति पाठान्तरे तत्प्रकृत्या–कफपित्तप्रकृत्या, विसर्गस्य च प्रकृत्येति योज्यम्।" इति विजयः। 'प्रकृत्यैव विसर्गस्य' इति चरकपाठः। ५ 'भावात्' ट। ६ 'तस्मा' ट.ण.थ.द.।

स्मिन्काले ज्वर उत्पन्ने लङ्घनात् प्रत्यवार्यशङ्का तथा न भवति, यथाऽन्यस्मिन् काले ज्वर आदानकालस्वभावाद्वातपित्तानुबलत्वाचानशनाद्भय भवतीत्यर्थ ।

वसन्तकाले कफो दुष्टो ज्वर कुर्यादिति वर्तते । त च कफमनु वातपित्त भवेत्, वातपित्ते तस्यानुबले भवत इत्यर्थ । ननु, अत्र साक्षात्कफस्य कर्तृत्वमुच्यते । कफश्च सौम्यस्वभाव । तस्मादत्र नानशनाद्भयमिति । तच्चायुक्तम् । तथाहि–वर्षाशारदो श्लेष्मानुबलत्व कालश्च विसर्गाख्य इति कारणद्वयसँद्भावाद्धात्वपचयो न सम्भाव्यत एव । वसन्ते तु कालस्याग्नेयत्वाद्वातपित्तानुबलत्वाचावश्यभावी धात्वपचय एव । तस्माद्वसन्तेऽनशनाद्भय शङ्क्यते । केचित्तु ज्वरस्यामाशयसमुत्थत्वात् कफोत्थत्वाचात्रापि किञ्चिन्मात्रमनशनाद्भय नाशङ्क्यत एवेत्याहु ।

**आ० र०–विरुद्धाविरुद्धोपक्रमज्ञानार्थं प्राकृतानां सम्प्राप्तिरुच्यते । तत्र वातजस्य–वर्षासु मारुत इति । पित्तजस्य–पित च शरदीति । कफजस्य–कफो वसन्त इति । "तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।" इति पित्तजस्याविरुद्धोपक्रमत्वमुक्तम् । तयो –पित्तकफयो , प्रकृति –लङ्घनसाध्यत्वम् । विसर्ग –कालबलवर्धनत्वम् । वर्षासु स्वल्पं बल दोषश्च बृहणसाध्य । ज्वर पित्तश्लेष्माणौ च लङ्घनसाध्याविति विरुद्धोपक्रमत्वम् । वसन्तेऽनुक्षीयमाणेऽपि मध्यम बलं, वातस्य चाप्राधान्य, प्रधानयो. कफज्वरयो पित्तस्य च लङ्घनसाध्यत्वमित्यविरुद्धोपक्रमत्वमेव ।**

अथ साध्यासाध्यज्वरलक्षणार्थमाह—

**बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ।**

**स०**–बलवत्सु नरेषु यौवनादिसम्पत्त्या तथाऽल्पदोषेषु यो ज्वरो जायते, उपद्रवेण–कासादिना रहित , स साध्य –साधयितुं शक्य ।

**आ०र०–साध्यलक्षणमाह–बलवत्स्वल्पदोषेष्विति । दोषोदुष्टनाम (?) । उपद्रवा रुग्विनिश्चये दर्शिता (मा नि ज्व श्लो ६६ टी.)–"श्वासो मूर्च्छाऽरुचिश्छर्दिस्तृष्णातीसारविड्ग्रहा. । हिक्का कासोऽङ्गभेदश्च ज्वरस्योपद्रवा दश ॥" इति ।**

**सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः ॥ ५३ ॥**

**स०**–सर्वथेति यादृशस्यातुरस्य यादृशो ज्वरोऽसाध्यो भवति तादृशो, विकृतिविज्ञानीये शारीरे ( अ ५।७१ )–"ज्वरो निहन्ति बलवान्" इत्यादिना ग्रन्थेन प्राक्–पूर्वमुक्त ।

**आ० र०–असाध्यलक्षणमाह–सर्वथेति । विकृतिज्ञानेऽध्याये । प्राक्–शारीरे स्थाने । सर्वथेत्यसाध्यविशेषणम्, अनुपक्रम इत्यर्थ । याप्यदु साध्ययोस्तु लक्षण स्वयमप्यूह्यम् । उदाहृतो यथा ( हृ शा अ ५।७१)–"ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिक ॥ सप्रलापभ्रमश्वास क्षीण शून हतानलम् । अक्षाम सक्तवचन रक्ताक्ष हृदि शूलिनम् ॥ सशुष्ककास पूर्वाह्णे योऽपराह्णेऽपि वा भवेत् । बलमांसविहीनस्य श्लेष्मकाससमन्वित ॥" इति । वृन्दे तु (ज्वराधिकारे श्लो १८७)–"स्वेदो ललाटे हिमवाञ्ज्वरस्य शीतादितस्यैति सुपिच्छिलश्च । कण्ठस्थितो यस्य न याति वक्षो नून यमस्यैति गृह स मर्त्य ॥ मृत्युश्च तस्मिन्बहुपिच्छिलत्वाच्छीतस्य जन्तो परित सरत्वात् ।" इति ।**

अधुना सामनिरामौ ज्वरौ लक्षयति—

**ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता ।**
**न प्रवृत्तिर्न विड् जीर्णा न क्षुत्सामज्वराकृतिः ॥५४॥**

**स०**–ज्वरस्योपद्रवा –प्रलापभ्रमादय , तेषा तीक्ष्णत्व–तीव्रता । तथा, बहुमूत्रत्वम् । तथा, न प्रवृत्ति –न पुरीषस्य प्रवर्तनम् । विट्प्रवृत्तावपि हि प्रवृत्तिशब्द प्रसिद्ध । यथा–ऽनन्तरमधुनैवाधीतम् ( श्लो० ३२ )–"प्रवृत्तिर्वाऽल्पशोऽति वा ।" इति । अथ चेद्विट् प्रवर्तते सा न जीर्णा–पक्का न भवति । तथा, न क्षुत्–न बुभुक्षा । इयमशेषा लिङ्गसहति सामज्वराकृति –सामज्वरस्य लक्षणम् । सहामेन वर्तते यो ज्वर स सामज्वर , तस्याकृति । "ऊष्मणोऽल्पबलत्वेन" ( हृ सू. अ १३।२५ ) इत्याद्यामलक्षणम् ।

**आ० र०–सामज्वरलक्षणमाह–ज्वरोपद्रवतीक्ष्णत्वमिति । न प्रवृत्तिर्विड् । प्रवर्तमानाऽपि विड् न जीर्णा–न पक्का ।**

सम्प्रति पच्यमानज्वरस्य लक्षणमाह—

**ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ।**
**मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ५५ ॥**

**स०**–अतिशयेन ज्वरवेगस्तृष्णादयश्चेति पच्यमानज्वरस्य लक्षणम् । पच्यमानज्वरस्य च द्विकेष्वनिर्दिष्टस्यापीह कथनमन्ता(मामा)न्तरीयकत्वात् । तथा हि–यावत्पच्यमानावस्था न भवति तावत्कथ निरामावस्था स्यात्? तस्माद्युक्त पच्यमानज्वरस्य निर्देश ।

**आ० र०–अथ पच्यमानज्वरलक्षणमाह–ज्वरवेगोऽधिक इति । पच्यमानस्य पक्वान्तर्भावान्न द्वैविध्यहानि ।**

---

१ 'यसकाशात् भय न' थ । 'शङ्का न' ट ण द । २ 'लस्वाभाव्याद्वा' ड ण थ द । ३ 'पित्तोल्बणत्वा' ट ड । ४ 'सन्ते का' ड ण.द । ५ 'ति युक्तम् । तथा' ड थ । ६ 'श्लेष्मणोऽनु' ट । ७ 'सम्भवा' ट ण द । ८ "हेतुश्चात्र वसन्तस्यादानमध्यत्वेनाग्नेयरूक्षत्वाद्वातपित्तप्रकोपकत्वम् । यदुक्त चरके ( चि अ ३।४५ )–'आदानमध्ये तस्यापि वातपित्त भवेदनु ।' इति । अत्र कफपित्तप्रकृत्या लङ्घन युक्तमेव । किन्त्वादानमध्यत्वेन निर्भय तन्न कार्यम् । अत एव 'तत्र नानशनाद्भयम्' इत्येतस्मात् पूर्वमेव पठितम्, अन्यथा सर्वशेषे पठित स्यात् ।" इति मधुकोशे ।

१ 'रक्षेत्को हृ' फ । २ 'स्यैव सु' फ । ३ 'लत्वम्' फ । ४ 'वक्षान्नून' फ । ५ 'इहाशे' थ । ६ 'नस्य ज्व' ड ण । ७ 'धिकस्तृष्णा' फ स च मा नि । ८ "ज्वरवेगोऽधिक कृत्वा भवति । तृष्णा–पिपासा, चाधिका । उत्क्लेशो–दोषस्य च्युति ।" इति चन्द्रतोडरौ । ९ 'ष्टत्वादपीह कथनेनाना(मा)न्तरीय' थ । १० 'थन तान्त' द । 'थन नान्तरी' ड ण ।

इदानीं निरामज्वरलक्षणमाह—

**जीर्णताऽऽमविपर्यासात्सप्तरात्रं च लङ्घनात् ।**

**स०**–आमशब्देनात्र सामज्वरलक्षणमुपलक्ष्यते । तेन सामज्वरोक्तलक्षणविपर्यासात् ज्वरस्य जीर्णता वेद्येति बोध्यम् । यथा–ज्वरोपद्रवमृदुत्व ग्लानिरल्पमूत्रता पक्वविट्प्रवृत्ति क्षुदुपगमनमिति, एवरूपो विपर्यास । तथा, "ज्वरवेगोऽधिक" इत्यादिपच्यमानज्वराकृतेश्च विपर्यासात् जीर्णता–पक्वता, लक्षयितव्या । तथा हि–पच्यमानतायामपि सामता सम्भाव्यत एव । तथा, सप्तरात्र च लङ्घनात् । सप्तरात्रमिति सप्ताना रात्रीणा समाहार इत्यच् समासान्त , अत्यन्तसयोगे द्वितीया । तेनायमर्थ ,–सप्तरात्रीर्लङ्घयित्वा–अतिवाह्य, ततोऽनन्तर य कालोऽष्टमदिनादिस्तदा ज्वरस्य जीर्णता–निरामतेति । तथा च मुनि (च चि अ ३।२७२)–"सप्ताहेन तु पच्यन्ते सप्तधातुगता मला । निरामश्चाप्यत प्रोक्तो ज्वर प्रायोऽष्टमेऽहनि ॥" इति । ननु, एवसति सप्तरात्रातिप्रवृत्तिरेव निरामज्वरलिङ्गमस्तु, "जीर्णताऽऽमविपर्यासात्" इत्यनेन नार्थ । अस्त्येवैतत् । किन्तु सन्निपातज्वरे बहुना कालेन मलपाको भवति । तस्मात्तल्लक्षणार्थं "जीर्णताऽऽमविपर्यासात्" इत्यप्युक्तम् । यद्येव "जीर्णताऽऽमविपर्यासात्" इत्यस्तु, किं "सप्तरात्र च लङ्घनात्" इत्यनेन ? अपि च त्रिदोषजे ज्वरे सप्तरात्रातिक्रमलक्षण लिङ्ग नोपयुज्यते । तत्र ह्येव पठ्यते ( श्लो० ६१ )–"वातपित्तकफै सप्त दश द्वादश" इत्यारभ्य यावत् "शुद्ध्यशुद्ध्यौ ज्वर काल दीर्घमप्यनुवर्तते ॥" इति । तस्मात् "सप्तरात्र च लङ्घनात्" इत्यवाच्यम् । अत्रोच्यते । अल्पदोषो यो ज्वरस्तस्यामविपर्यासात् सप्ताहादर्वागपि जीर्णतोच्यते । यस्तु बहुदोषो ज्वरस्तस्य तु कृतसप्तलङ्घनस्य जीर्णतोच्यते । इति लक्षणद्वयेन प्रत्यपादि । अत एव च तत्र पथ्यमनुजज्ञे । वक्ष्यति हि (हृ चि अ १।३८)–"इत्यय षडहो नेयो बल दोष च रक्षता । तत पक्वेषु दोषेषु लङ्घनाद्यै प्रशस्यते ॥ कषायो दोषशेषस्य" इत्यादि । तस्मादेतयोर्लक्षणयोर्द्वयोरप्युपादान न्याय्यमिति स्थितम् । खरनादेनाप्येवमवादि–"न च नि सप्तैवेह निरामज्वरकारणम् । चिरादपि हि पच्यन्ते सन्निपातज्वरे मला ॥ सप्तरात्रातिवृत्तिश्च क्षामतादि च लक्षणम् । तस्मात्तदुभय दृष्ट्वा निराम ज्वरमादिशेत् ॥" इति । जीर्ण पक्व पुराण इति पर्याया ।

**आ० र०–निरामज्वरलक्षणमाह–जीर्णतेति । आमविपर्यासात्–ज्वरोपद्रवमृदुत्वादे । सप्तरात्र लङ्घनादिति मध्यदोषविषयम् । बहुदोषाल्पदोषयोस्तत पर पूर्वं च दर्शनात् ।**

१ 'णद्वय लभ्यते' ड । २ 'तेनास्याम' ड थ । ३ 'ज्वरल' ट । ४ 'त्यादे प' ट । ५ 'हि' ड स च । ६ 'सर्वथा' स च । ७ 'इत्युक्तम्' ण । ८ 'क्रमामल' ड थ । ९ 'शुद्ध्योज्वर ' ण द । १० 'तु सप्ताहाल्लङ्घनात् जी' थ । ११ 'तत्राप्यथम' थ । १२ 'ज्ञेयो' ण थ द । १३ देत्वेव' ट ण द । 'देनोक्तम्' ड । १४ 'नव वा सप्त चैवे' ट ।

**ज्वर० पञ्चविधः प्रोक्तो मलकालबलाबलात् ॥५६॥**
**प्रायश० सन्निपातेन भूयसा तूपदिश्यते ।**
**सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ ५७ ॥**

**स०**–पञ्चप्रकारो ज्वरो वक्ष्यमाण सन्ततादिभिर्भेदै प्रोक्तो, 'मुनीन्द्रै ' इति शेष । कुत ? मलेत्यादि । मलो–वातादि । काल –पूर्वाह्णादि । बल च बल च बलमित्येकशेष , बल चाबल च बलाबलम्, काले बलाबल कालबलाबलम्, सप्तमीति योगविभागात् समास , मलाना कालबलाबल मलकालबलाबलम्, तस्मात् । द्विबलशब्दोऽत्र निर्दिष्टो द्विविधसम्बन्धार्थ । कोऽसौ द्विविध सम्बन्ध ? इति चेत् ब्रूम । ज्वर पञ्चविध कथितो मलकालबलात् तथा मलकालबलाबलात् । तदयमत्रार्थ ,–सन्ततो ज्वरो मलकालबलादुक्त । तथा चानन्तरमेव सन्ततलक्षण वक्ष्यति ( श्लो ५८–५९ )–"मला बलिनो गुरव स्तब्धा सन्तत निष्प्रतिद्वन्द्वा ज्वर कुर्यु ।" इति । तस्माद्बलवन्त एव दोषा सन्तत ज्वर कुर्वन्ति । विषमज्वराश्चत्वारो मलकालबलाबलाद्भवन्ति । तथा च विषमज्वरलक्षणेऽग्रुनैवाध्येष्यते ( श्लो ६४ )–"अल्पोऽपि दोषो दूष्यादेर्लब्ध्वाऽन्यतमतो बलम् । सविपक्षो ज्वर कुर्याद्विषम क्षयवृद्धिभाक् ॥" इति । तस्माच्चतुष्प्रकारोऽपि विषमज्वरो मलकालबलाबलाद्भवति । खरनादेनाप्युक्तम्–"बलिभि सर्वगै सामै रसस्रोतोविसारिभि । निष्प्रत्यनीकैर्दोषैर्य सन्ततो जायते ज्वर ॥" इत्यादि । तथा तत्रैव विषमज्वरे गदितम्–"व्याविक्लिष्टस्य" इत्यारभ्य यावत् "बलाबलविशेषस्तु दोषाणा सम्प्रवर्तते ।" इति । तथा तत्रैव चोक्तम्–"भुव्युत्क्रम्य यथाकाल बीज काले प्रसूयते । तथा कालक्रमाद्दोष काले ज्वरकरो भवेत् ॥" इति । प्रायश इत्यादि । बाहुल्येनाय सन्ततादिज्वर सन्निपाताद्भवति । [ननु,] अत्र सन्निपातेनेत्यसाधु । न ह्यन्य कश्चित्सन्ततादिव्यतिरिक्तो ज्वरोऽस्ति यमेकदोषज द्विदोषज वा परिकल्पयेदिति, तस्मादसदेतत् । उच्यते । समर्यादया दोषगत्या ये सन्ततादयो ज्वरा उत्पद्यन्ते, त एकदोषजादय उपपद्यन्ते । ये पुनर्विषमसम्प्राप्तिसमुत्पन्ना सन्ततादयस्ते सन्निपातेन । इति प्रायश सन्निपातेनेति न्याय्यमेतत् । ननु, एव सति वातिकोऽय पैत्तिकोऽय श्लैष्मिकोऽयमय द्वान्द्विक इति

१ **'प्राय स सन्नि'** च तो स स । "स –पञ्चविधो ज्वर " इतीन्दुचन्द्रतोडरा । २ **'सा व्यप'** स मू । **'सा त्वप'** स स । ३ "मलकालयोर्बलाबल मलकालबलाबलम्, तस्मात् । मलाना–दुष्टाना वातादीना, बलवत्वादबलत्वाच्च । तथा, ज्वरकारणदोषकोपो यस्मिन् काले निमित्तमायाति, तस्यापि बलवत्वादबलवत्वाच्च । अथवा, मलाना कालो मलकाल ,–नक्तदिनतुभुक्ताशलक्षण , बल चाबल च बलाबलम्, मलकालस्य बलाबल मलकालबलाबलम्,–दोषवृद्धिक्षयहेतुकम्, तस्मात् ।" इति चन्द्र । ४ 'लबलादु' ट ण द । ५ 'द्वन्द्व ज्व' ट । ६ 'कालाबलाद्भ' थ. । ७ 'क्षणमधु' ड थ । ८ 'खारणादिना' ट । ९ 'अभ्युत्क' ड । 'अन्युत्क' ण थ.द. । १० 'जा , ये पु' थ. ।

कथ व्यपदेश ? इत्याह—भूयसेति । सन्निपातोद्भवेऽप्यस्मिन् सन्ततादौ भूयान्—अधिको दोष, तद्दोषोपलक्षिता सञ्ज्ञामासादयतीत्यर्थ, वातज्वरोऽय पित्तज्वरोऽयमित्यादि । तुरवधारणे, भूयसैव दोषेण व्यपदेशो नान्येनापि । ततश्चैव सन्निपातोऽथ सन्ततादिर्ज्वर इति स्थितम् । अत एव तन्त्रान्तर एव जगाद—"सन्ततो मारुतात्प्राय पित्तात् प्रायस्तृतीयक । अन्येद्युश्च कफात्प्राय सन्निपाताच्चतुर्थक ॥ सन्निपातकृतत्वात्तु दुश्चिकित्स्यश्चतुर्थक ।" इति । तथा च—"पृष्ठेऽनिलकफोद्भूत श्लेष्मपित्तोद्भवस्त्रिके । शिरस्यनिलसम्भूतो गृह्णातीह तृतीयक ॥ चतुर्थकस्तु श्लेष्मोत्थ प्रतिगृह्णाति जङ्घयो । वातिक शिरसोऽन्येति द्विधैवाय स्वभावत ॥ प्रस्कन्धतस्तु विज्ञेयो विपरीतश्चतुर्थक ।" इति ।

अथ तदेव पञ्चविधत्वमाह—सन्तत सततोऽन्येद्युस्तृतीयकचतुर्थकाविति । ननु, पञ्चविधो ज्वर इत्यनुपपन्नम्, षष्ठस्य चतुर्थकविपर्ययस्य च वक्ष्यमाणत्वात् । अत्र ब्रूम । चतुर्थकान्तर्गतत्वाददोष । प्लीहोदरे यकृदुदरवत् । तथा हि—अष्टावुदराणीति, प्लीहोदरे च यथा यकृदुदरस्यान्तर्भावादष्टधात्वम्, एव ज्वरे चतुर्थक एव चतुर्थकविपर्ययस्यान्तर्भावात् पञ्चधात्वमेव ज्वरस्य साधु ।

**आ० र०—उक्ताना ज्वराणा पृथक् पञ्चविधत्वमाह—ज्वर पञ्चविध इति । मलकालबलात् सन्तत, सततादयस्त्वबलात् । अबल—हीनबलम् । तत्र यथोत्तर ज्ञेयम् । प्रायशो ग्रहणादनियमोऽपि तेन च सन्निपातेन । वातज्वरादिव्यपदेशस्तु वातादिभूयस्त्वात् ।**

अथ महारम्भत्वेन प्राधान्यात् सन्ततसम्प्राप्तिमेव लक्षयति—

**धातुमूत्रशकृद्वाहिस्रोतसा व्यापिनो मला । तापयन्तस्तनुं सर्वा तुल्यदूष्यादिवर्द्धिताः ॥ ५८ ॥**
**बलिनो गुरव स्तब्धा विशेषेण रसाश्रिताः । सन्ततं निष्प्रतिद्वन्द्वा ज्वर कुर्युः सुदुःसहम् ॥५९॥**

**स०**—मला ज्वर कुर्यु —उत्पादयेयु । कीदृशा ? धात्वादिस्रोतसा व्यापिन । धातवश्च मूत्र च शकृच्च तानि वहन्ति नित्य यानि स्रोतासि तेषाम् । मला इत्यनेनैतद्द्योतयति । यदैव वातादयो मलिनीकरणस्वभावा स्युस्तदा सन्तत ज्वर कुर्यु, न तु दोषरूपा धातुरूपा वा । तथा, सर्वा—अशेषा, तनु तापयन्त —सन्तापादिना पीडयन्त, न पुन सन्तापमात्रमुत्पादयन्त । तथा, तुल्यै —समानै, दूष्यादिभिर्वर्द्धिता —वृद्धि नीता । आदिशब्देन देशर्तुप्रकृतयो गृह्यन्ते । दूष्या —रसादिधातव । ते च त्रयाणामपि दोषाणा यथायथ तुल्यत्वाद्वर्द्धनहेतव । देशर्तुप्रकृतयस्तु तुल्यकाल मलै सर्वैरतुल्या अपि भवन्ति । प्रायेणैकैकस्य मलस्य चैकैको देशो वा ऋतुर्वा प्रकृतिर्वा तुल्या भवति । अत "तुल्यदूष्यादिवर्द्धिता" इत्युक्तम् । तथा च, धन्वदेशो वातस्यैव वृद्धिहेतु, तुल्यत्वात्, कफस्य त्वतुल्यत्वात्क्षपणहेतु । आनुपस्तुल्यत्वात् कफस्य वृद्धिहेतु, वातस्य त्वसमानत्वात्क्षपणहेतु । ऋतावप्येव चिन्त्यम् । प्रकृतिस्त्रयाणा दोषाणा तुल्यकाल वृद्धिहेतुर्न सम्भवति, विषमदोषजनितत्वात् । ये त्वेवमवोचन्,—समाख्या प्रकृतिस्तुल्यत्वादेषा मलानामत्र ज्वरे वर्द्धनहेतुरिति । तेऽपि मैव वोचन्ते(वचन्त्वि)ति वचनीया । यतो रोगजननोन्मुखाना दोषाणा नासौ वृद्धिहेतु, आरोग्यलक्षणत्वात् । किम्भूता दोषा ? बलिन, प्रतिपक्षैरखण्डितशक्तित्वात् । तथा गुरव, सामत्वात् । स्तब्धा —निश्चला, ऊर्ध्वमधश्चानि सरणात् । विशेषेण रसाश्रिता । विशेषग्रहण मलाना सर्वधात्वाश्रितत्व द्योतयति । सकलधातुसमाश्रिता अपि भवन्ति । अतिशयेन रसाख्य धातुमाश्रित्यैते सन्तत कुर्यु । तथा, निष्प्रतिद्वन्द्वा —प्रत्यनीकरहिता । कीदृश ज्वरम् ? सुष्ठु दु खेन—कृच्छ्रेण, सोढु शक्यत इति सुदु सहम् ।

**आ० र०—सन्ततज्वरलक्षणमाह—धातुमूत्रशकृद्वाहिस्रोतसामिति । दूष्यादयो—दूष्यदेशकालप्रकृत्यादय । "ज्वरे तुल्यर्तुदोषत्व प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्व सुखसाध्यत्वहेतव ॥" (स सू अ ७) इति तत् ऋतुविषयम्, न पूर्वाह्णादिविषयम् । गुरवो—निबिडावयवा । स्तब्धा —स्थिरा । रसाश्रिता —रसस्रोतसो व्यापिन । सन्तत नाम ज्वरम् । सन्तत—अविच्छेदेन, कुर्युरित्यावृत्त्या व्याख्येयम् । निष्प्रतिद्वन्द्वा —प्रतिपक्षैर्देशकालादिभिरनभिभूता ।**

**मलं ज्वरोष्मा धातून्वा स शीघ्रं क्षपयेत्ततः । सर्वाकार रसादीनां शुद्ध्याऽशुद्ध्याऽपि वा क्रमात् ॥ वातपित्तकफैः सप्त दश द्वादश वासरान् । प्रायोऽनुयाति मर्यादां मोक्षाय च वधाय च ॥६१॥ इत्यग्निवेशस्य मत, हारीतस्य पुन स्मृतिः । द्विगुणा सप्तमी यावन्नवम्येकादशी तथा ॥ ६२ ॥ एषा त्रिदोषमर्यादा मोक्षाय च वधाय च । शुद्ध्यशुद्धौ ज्वरः कालं दीर्घमप्यनुवर्तते ॥ ६३ ॥**

**स०**—ज्वरस्योष्मा—अनलधर्म सकलवस्तुक्षपणस्वभाव, स कदाचित्तथाभूताददृष्टवशादस्मिन् ज्वरे धातुमलयोरेकलोलीभूतयोर्मल—वातविडादिक, क्षपयेत् । तथाभूताददृष्टसामर्थ्याद्धातून्वा—रसादीन्, क्षपयेत् । शीघ्र—आश्वेव, न तु चिरेण कालेन । अत्र च मलक्षपणोद्यतोऽय ज्वरोष्मा न धातुक्षपणो-

१ 'ऋतप्रा' 'पित्तप्रा' 'कफप्रा' थ तो । २ 'स्कन्धनस्तु' ट । 'स्कन्दनस्तु' ड ण थ द । ३ 'तद्गमय' ड थ । ४ 'मलद्वयस्य चै' ट । 'मलद्वयस्य वैकै' ण द. । ५ 'ऋतुर्वा तुल्यो भ' ड थ ।

१ 'तिस्तु त्रया' ट । २ 'येऽप्येव' ट ण द । ३ "बलिन —प्रकृष्टशक्तियुक्ता, चिरकाल सञ्चिता । गुरवो—दु सहा दुर्धरा ।" इति चन्द्रतोडरौ । ४ **'मलान् ज्व'** तो स स । ५ **'क्षपयस्तत '** स स । ६ **'दा विमोक्षाय वधाय वा ।'** तोडर । ७ **'शुध्योर्ज्वर '** हेमाद्रि । ८ 'भूतत्वाद' ट । ९ 'वातादिक' ण द । 'वातादिवि' थ ।

द्यत इति निराममलक्षणेन विज्ञायते । तत्र चैतन्निराममलक्षणम्[१]–
'अरोचकस्रोतस्त्व सप्राणत्वमङ्गलाघव वातानुलोमनत्व वाग्देह-
मनश्चेष्टाखनालस्यमग्निदीप्तत्व विशदास्यत्व मूत्रपुरीषादिमलप्र-
वर्तनत्व क्षुदुपगमो निर्ग्लानिता' इत्येव किञ्चिदुत्पद्यमानमुपलभ्य
निश्चीयते ज्वरोष्मणो मलक्षपणोद्यततत्वम् । एतल्लक्षणविपर्ययेण
दोषोपक्रमणीयोक्तेन ( हृ सू अ १३।२३ )–"स्रोतोरोध"
इत्यादिना सामलक्षणमवगम्य निश्चीयते, यथाऽस्य ज्वरोष्मा
धातुक्षपणोद्यत इति ।

स इत्यनुवर्तते । तत –तस्मान्मलधातुक्षपणात् कारणात्,
रसादीना–धातुमूत्रशकृद्दोषाणा द्वादशानामप्येकलोलीभूताना,
सर्वाकार–नि शेष कृत्वा, शुद्ध्या–ज्वरोष्मणा निष्पादितया निर्म-
लतया, वातपित्तकफैर्भूयिष्ठैरेकैकश उत्पन्न स सन्ततो ज्वर
प्रायो मोक्षार्थं[२]–ज्वरमुक्तये, मर्यादा–अवधिं, सप्त दश द्वादश
वासराननुयाति–अनुवर्तते । वासरानिति "अत्यन्तसयोगे"
द्वितीया । सर्वे आकारो यस्मिन् शोधने तत्सर्वाकार–नि शेष-
रूपम् । "क्रियाविशेषणाना नपुसकत्व द्वितीया च" इति द्वितीया ।
क्रमात्–यथाक्रमम्, तेन वातभूयिष्ठ सन्ततो ज्वर सप्त
वासरान्, पित्तभूयिष्ठो दश वासरान्, कफभूयिष्ठो द्वादश
वासरान्, इत्यवतिष्ठते । तथा, रसादीना–एकैलोलीभूताना केवल
ज्वरोष्मक्षपणमात्रमनुभवता, अशुद्ध्या–समलतया, एषामेष[३]
ज्वरोष्मा वातपित्तकफैरेकैकश उत्पन्न प्रायो वधाय मर्यादा
सप्त दश द्वादश वासराननुयाति । प्रायो–बाहुल्येन, एषा मर्यादा ।
कदाचिच्च वातज्वरादिरुक्तेभ्य सप्तादि वासरेभ्योऽधिकानि दि
नान्यनुवृत्त्य मोक्षाय वधाय वा भवति, कदाचित् न्यूनान्य-
पीति । तन्त्रान्तरे चोक्तम्–"पित्तकफानिलवृद्ध्या दशदिवस-
द्वादशाहसप्ताहात् । हन्ति विमुञ्चति वाऽऽशु ज्वरोष्मणा धातु-
मलपाकात् ॥" इति । इत्यग्निवेशस्य मत–ज्ञानम् । हारीतस्य
पुनरेव स्मृति –स्मरणम्, नित्यत्वादायुर्वेदस्य । द्विगुणा
सप्तमी–चतुर्दशदिनानि यावद्वातज्वर सन्तत, पित्तज्वरो
द्विगुणा नवमी–अष्टादशदिनानि, कफज्वरो द्विगुणैकादशी–द्वा
विंशतिर्दिवसा । "एषा त्रिदोषमर्यादा मोक्षाय च वधाय च।"
इति "सर्वाकार रसादीना शुद्ध्याऽशुद्ध्याऽपि वा क्रमात् ।"
इत्यत्राप्यनुवर्तनीयम् । त्रयश्च ते दोषाश्च त्रिदोषा, तेषा
मर्यादा–अवधि , त्रिदोषमर्यादा । द्वयमपि चैतत् तन्त्रकृद्वच
प्रमाणम् , तथादृष्टत्वात् ।

इदानीं यथापरिभाषितात् द्विविधादपि मर्यादाप्रकारादधिकतर
काल यथाऽस्य ज्वरस्यानुवृत्तिर्भवति तथा दर्शयितुमाह–शुद्ध्या-

१ 'तत्रैव तन्नि०णम् , यथा–' ट । 'तत्र तन्नि' ण द । 'तत्र
निराम लक्षणमवगम्य निश्चीयते । तद्यथा–' ड थ । २ 'त्येतत् कि'
ड थ । ३ 'य–रोगमु' ड थ । ४ 'कत्र लो' ड थ । ५ 'तयैव,
ए' ट । ६ 'एषामेव ज्व' ण द । ७ 'नुप्रवृत्त्या मो' ण द । ८ 'त्
तन्न्यूना' ड । 'त् तथारूपाणीति' थ । ९ 'सान्' ट ण थ द ।
'सानि' ड ।

शुद्धाविति । शुद्धिसहिता अशुद्धि शुद्ध्यशुद्धि । शाकपार्थिवा-
दित्वात्समास । तस्या सत्या ज्वर सन्तताख्यो दीर्घमपि
कालमनुवर्तते–अनुबध्नाति । कदाचिद्रसाख्यो धातुर्मलैरहितो[१]
ज्वरोष्मणा क्षपितमलो भवति, कदाचिद्रक्ताद्यन्यतम , कदा-
चिद्रक्तादय सर्वे न रस , कदाचिद्रक्तादय सर्वे किञ्चिन्मल-
रहिता न रसस्तथाभूत , कदाचित्किञ्चिन्मलरहितो रक्ताद्यन्य-
तम , एवप्रकारा शुद्धिसहिता अशुद्धिरुच्यते । तस्या सत्या
सन्तताख्यो ज्वरो दीर्घकालमनुवर्तते ।

**आ० र०–सन्ततस्यावधिमाह–मल ज्वरोष्मेति । स च
द्विविध ,–मोक्षावधिर्वधावधिश्चेति । तत्र यदा ज्वरोष्मा
रसादीना–दूष्याणा, सर्वाकार–सर्वथा, शुध्या–हेतुभूतया,
मल क्षपयेत्, तदा मोक्ष । यदा तु रसादीना सर्वाकारम-
शुध्या धातून् क्षपयेत्, तदा वध । यदा तु न सर्वाकार
शुद्धिरशुद्धिर्वा तदा शुध्यशुध्योर्ज्वर काल दीर्घमप्यनुवर्तत
इति । ततो–ज्वरोत्पत्तेरनन्तरम् । सप्तम्यादिद्वैगुण्य पूर्वतिथि
द्वैगुण्यमाक्षिपति, चतुर्दशाष्टादशद्वाविंशतिवासरानित्यर्थ ।
क्षपणीयाल्पत्वबहुत्वकृतोऽयमवधिभेद रोगस्वभावकृतो वा,
अग्निवेशहारीतयोर्मतभेदस्थित्या कृत ।**

एव सन्ततस्य लक्षणमाख्याय सततकादीना विषमज्वरस-
ज्ञानिमित्त सामान्येन लक्षणमाह—

**कृशानां व्याधिमुक्तानां मिथ्याहारादिसेविनाम् ।
अल्पोऽपि दोषो दूष्यादेर्लब्ध्वाऽन्यतमतो बलम् ६४
सविपक्षो ज्वरं कुर्याद्विषमं क्षयवृद्धिभाक् ।**

स०–ईदृशाना पुसामल्पोऽपि–हीनबलोऽपि, अपिशब्दा-
न्महाबलोऽपि, दोषो–वाताद्यन्यतमो, ज्वर विषमसञ्ज्ञ कुर्यात् ।
किं कृत्वा ? दूष्यादेरन्यतमतो बल लब्ध्वा । आदिशब्दो देश-
र्त्वोर्ग्रहणाय । अन्यतमग्रहण चोपलक्षणार्थम् । तेन कदाचिद्दू-
ष्यादेरेकस्माद्रसादे कदाचिद्द्वाभ्या रसरक्ताद्यन्यतमाभ्या कदा-
चिद्दूष्यदेशाभ्या कदाचिद्दूष्यदेशर्तुभ्यो बल लब्ध्वेति योज्यम् ।
किम्भूतो दोष ? सविपक्ष ,–सह विपक्षेण–प्रत्यनीकेन दूष्याद्य-
न्यतमेन, वर्तते सविपक्ष । तथा च किम्भूत ? क्षयश्च
वृद्धिश्च, ते भजते–सेवते, क्षयवृद्धिभाक् । सन्ततो हि ज्वरो
निष्प्रत्यनीक इति सन्ततादस्य भेद । मिथ्याहारादिसेविना
मित्यत्रादिशब्देन विहारौषधादिपरिग्रह ।

**आ० र०–विषमाख्यस्य सन्ततादिचतुष्टयस्य सामान्य-
लक्षणमाह–कृशानामिति । कृशत्वादित्रयस्याष्टधाऽपि हेतु-
त्वम् । अन्यतमत –न तु सन्ततवत्सर्वेभ्यो दूष्यादिभ्य ।
दोष इति क्षयवृद्धिभाक् ।**

**दोषः प्रवर्तते तेषां स्वे काले ज्वरयन् बली ॥ ६५॥
निवर्तते पुनश्चैष प्रत्यनीकबलाबलः ।**

स०–तेषा–कृशादीना, दोषो–वाताद्यन्यतम , स्वे काले–

१ 'मैलै रहि' ड ण थ द । २ 'ज्वराणा स' ट । ३ 'स्वकाले'
इ फ ।

यो यस्यात्मीय कालो वृद्धिहेतुर्वयोहोरात्रिभुक्तलक्षणस्तस्मिन् स्वे काले, दोष प्रवर्तते,- स्वीय कर्म दर्शयतीत्यर्थं । कि कुर्वन् ? ज्वरयन्–सन्तापमुत्पादयन् । कीदृशो दोष ? बली–बलवान् सन् प्रवर्तते । पुनश्चैष –विषमज्वरारम्भी दोष सततकादेरुत्पादको, निवर्तते–स्वव्यापाराद्विरमति । किम्भूत ? प्रत्यनीकस्य बल प्रत्यनीकबल, तेनाबल । एतदुक्त भवति,–यदसौ दोषो दूष्यादीना सपक्षाणामन्यतमस्माद्बल लभते तदाऽसौ स्वव्यापारे प्रवर्तते । यदा तु तस्य विपक्षा भवन्ति तदा-तेषा विपक्षाणामन्यतमस्य बलेनास्य दोषस्य बल हीयते । तदानी च प्रत्यनीकबलाबलत्वादसौ दोषो निवर्तते, वटादिबीजवत् । यथा,–वटादिबीज जलादिसामग्रीतो बलमासाद्य विशिष्टे काले रोहति–अङ्कुरादिकमुद्भावयति ततो जलादिविरहाद्भूमावेवावतिष्ठते, न तु स्वकार्यमुद्भावयति, तथैवैषोऽपि विषमज्वरस्य कर्ता दोष स्वपक्षतो दूष्यादेर्बल लब्ध्वा स्वव्यापार कुरुते । यदा तु विपक्षबलेनासौ प्रतिहतशक्तिस्तदा स्वव्यापार न कुरुते, देह एव निलीय तिष्ठति ।

**आ० र०–यथोक्तमर्थं विवृणोति–दोष इति । तेषा–विषमाणां, प्रत्यनीकस्य–प्रतिपक्षस्य, बलेन अबल –अपगतबल ।**

**क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते ॥६६॥**
**लीनत्वात्कार्श्यवैवर्ण्यजाड्यादीनादधाति सः ।**

**स०**–दोषे–विषमज्वरकारिणि, क्षीणे सति, सततकादिज्वर सूक्ष्मो भूत्वा रसादिष्वेव धातुषु लीयते–लय याति । कथ पुनरेतदवगम्यते ? यदसौ लीनो न पुनर्विनष्ट एव, इत्यत्र हेतुमाह–लीनत्वादित्यादि । स तु लीनो ज्वरो लीनत्वात् कार्श्यादीन् करोति । अत एवासौ न विनष्ट एवेत्युच्यते । यत कार्श्याद्युद्गम उपलभ्यते । निरन्वयविनष्टाद्धि तद्धेतुकार्श्याद्यनुपलब्धिरेव । तस्माल्लीनो दोषो विषमज्वरेषु भवतीति स्थितम् ।

**आ० र०–विषमज्वरस्य सन्ततनिवृत्तिर्नास्तीत्याह–क्षीणे दोष इति । रसग्रहण सन्ततस्यापि मध्यमे लीनत्वमस्तीति ज्ञापनार्थम् । अनेनैवाभिप्रायेण रुग्विनिश्चये ( मा नि ज्व श्लो ३२)–"धातुमन्यतमं प्राप्य करोति विषमज्वरम् ।" इत्युपक्रम्य "सन्तत रसरक्तस्थ" इत्युक्तम् । आदधाति–करोति । चतुर्थकात्पर विषमासम्भवे सङ्ग्रहे युक्तिरुक्ता (नि अ २)–"अतिलीनोऽतिमन्दत्वाद्बलवान्हि न पञ्चमे ।" इति ।**

ननु, तुल्येऽपि वातादिदोषप्रकोपे सन्ततज्वर एवाशु सकलकायव्यापि, सततकादिषु तु चिरेण विच्छिद्य भवतीत्यत्र युक्ति का ? इत्याह—

**आसन्नविवृतास्यत्वात्स्रोतसां रसवाहिनाम् ॥६७**
**आशु सर्वस्य वपुषो व्याप्तिर्दोषेण जायते ।**
**सन्ततः सततस्तेन, विपरीतो विपर्ययात् ॥ ६८ ॥**
**विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान् ।**

**स०**–आसन्न विवृत चास्य–मुख, येषा रसवाहिना स्रोतसा तान्येवम् । तेषा भाव आसन्नविवृतास्यत्वम् । तस्माद्धेतोस्तत्र प्रविष्टेन दोषेण शीघ्र सर्वस्य वपुष –शरीरस्य, व्याप्तिर्जायते । तेन–कारणेन दोषेणाशु सर्वशरीरव्याप्तिलक्षणेन, सन्तताख्यो ज्वर सततो–निरन्तरो, भवति । विपरीत प्रकृतत्वात्सन्ततेन विषमो–विषमसज्ञ , सततादिज्वरो विपरीतो भवति–न निरन्तर ज्वरयति । कस्माद्विपरीत ? विपर्ययात् । एतदुक्त भवति,–स्थूलान्यासन्नानि विवृतास्यानि च रसवाहीनि स्रोतासि । दूरतराणि सवृतास्यानि सूक्ष्मतराणि च रक्तवाहीनि । तैर्दोषश्चिरेण तथा असाकल्येन काय व्याप्नुवन् विच्छिन्नकाल ज्वर करोति । अत एवाह (श्लो ७०)–"अहोरात्रस्य स द्वि स्यात्" इत्यादि । ततो दूरतराणि सवृततरास्यानि च मासवाहीनि स्रोतासि । तानि चिरतरेण प्राप्नोति दोष । न चैतै स्रोतोभि साकल्येन युगपद्देहमनुव्याप्नोति । अतोऽनेन कारणेनासावन्यस्मिन् दिने ज्वर निर्वर्तयत्यन्येद्यु सज्ञम् । तेनासौ सततादपि विप्रकृष्टो भवति । ततोऽपि सूक्ष्मतराणि सवृततरमुखानि च मेदोवहानि । तानि चिरतरेण दोष प्राप्नोति । न च तैरशेषदेह व्याप्नोति । अतोऽसावनेन कारणेन यथाक्रममन्यदिनमेक हित्वा तृतीयेऽह्नि तृतीयको भवति । ततोऽप्यनेनैव विप्रकृष्टतमेन क्रमेण दिनद्वय हित्वा चतुर्थको भवति । एव चतुर्थकविपर्ययश्च । सङ्ग्रहेऽप्याख्यत् ( नि अ २ )–"सूक्ष्मसूक्ष्मतरास्येषु दूरदूरतरेषु च । दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत् ॥ याति देह च नाशेष भूयिष्ठ भेषजेऽपि च । क्रमोऽय तेन विच्छिन्नसन्तापो लक्ष्यते ज्वर ॥" इति ।

अधुना विषमज्वरस्य स्वरूप प्रतिपादयन्नाह–विषम इति । विषमो–विषमसज्ञो ज्वरो, विषमारम्भक्रियाकालो भवति । आरम्भश्च क्रिया च कालश्च आरम्भक्रियाकाला । विषमा आरम्भक्रियाकाला यस्य स एवम् । तत्र विषम आरम्भो यथा,–कश्चित्पूर्व मूर्धानमारभ्यागच्छति, कश्चित्पृष्ठम्, कश्चिज्जङ्घाभ्यामिति । विषमक्रियो यथा,–कश्चिच्छीतकृत्, कश्चिद्दाहकृदिति । विषमकालश्च यथा,–कश्चित्पूर्वाह्णे समागच्छति, कश्चिन्मध्याह्ने, कश्चिदपराह्णे, कश्चिन्निशीथे, इति । तथा, अनुषङ्गवान्–दीर्घकालानुबन्धी ।

---

१ 'ज्वरदो' इति क्वचित् । २ 'तु ते त' ट । ३ 'ग्रीणा व' ट थ । ४ "जाड्य–जडता देहे, वाक्कायमनश्चेष्टार्थानामसामर्थ्यम् । आदिग्रहणात् कण्डूकोठपिटिकाश्वयथुपाण्डुतारुचयो गृह्यन्ते ।" इति चन्द्र । ५ 'तत्रासौ' ड । 'अथासौ' थ । ६ 'सोऽन्तलीनो' ड थ । ७ 'तर' फ । ८ 'एव याऽऽशु' य । ९ 'तीत्यर्थं । सा च का युक्ति ?' थ ।

१ "विपरीतो–छिन्नसन्तापादिसततादिश्चतुर्विधो, विपर्यासाद्भवति ।" इति चन्द्र । २ 'ज्वर कुर्वन्नत' ट । 'ज्वरयति' ड । ३ 'देहमनुव्या' ण द । ४ 'न्यद्दिन' ड द । ५ 'च' ट । 'वा' ण द । 'तु' थ । ६ 'ष सततादीन् करोत्यत ।' ट ड ण य द । ७ 'ङ्घामि' य । ८ 'क्रिया य' ट ण य । ९ 'न्निशीति' ट य ।

आ० र०–सन्ततादीना सन्ततत्वादौ युक्तिमाह–आसन्नविवृतास्यत्वादिति । आसन्नमामाशयम् । आमाशयस्थो हि दोषो ज्वर करोति । आसन्नत्वादाशुप्राप्ति । विवृतास्यत्वादस्खलितप्रवेश । आ स्रोतस्यादामाशय याती त्यखण्डितत्व सन्ततस्य । सतते त्वामाशयरक्तस्रोतसो यातायाते रसस्रोतसा खण्डितत्वम् । एवमुत्तरेषूत्तरोत्तर खण्डितत्वम् । विपरीत –खण्डित । विपर्ययात्–दूरसवृतास्यत्वात् । विषमारम्भ –कदाचिच्छीतपूर्वं कदाचिद्दाहपूर्व , कदाचिच्छिरस. कदाचित्पादत । विषमक्रिय –कदाचिल्लङ्घनसाध्य कदाचिद्बृहणसाध्य । विषमकाल –कदाचित्पूर्वाह्णे कदाचिदपराह्णे । अनुषङ्गवान्–उपचर्यमाणोऽपि बहूनि दिनान्यवतिष्ठते । सङ्ग्रहे तु विस्तरेण युक्तिरुक्ता ( नि अ २ )–"सूक्ष्मसूक्ष्मतरास्येषु दूरदूरतरेषु च । दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत् ॥ याति देह च नाशेष भूयिष्ठ भेषजेऽपि च । क्रमोऽय तेन विच्छिन्नसन्तापो लक्ष्यते ज्वर ॥ विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान् । यथोत्तर मन्दगतिर्मन्दशक्तिर्यथा यथा ॥ कालेनाप्नोति सदृशान् स रसादींस्तथा तथा । दोषो ज्वरयति कुद्धश्चिराच्चिरतरेण च ॥ भूमौ स्थित जलै. सिक्त कालमेव प्रतीक्षते । अङ्कुराय यथा बीज दोषबीज रुजे तथा ॥ वेग कृत्वा विष यद्वदाशये लीयतेऽबलम् । कुप्यत्याप्तबल भूय काले दोषविष तथा ॥ एव ज्वरा प्रवर्तन्ते विषमा सन्ततादय ।" इति ।

**दोषो रक्ताश्रयः प्रायः करोति सततं ज्वरम् ॥६९॥**
**अहोरात्रस्य स द्वि. स्यात्**

स०–प्रायो–बाहुल्येन, रक्ताश्रयो दोष सतत ज्वर विदधाति । प्रायोग्रहणात् रसाद्याश्रयत्वमस्य सूचयति । तस्मात्सर्वो ज्वर सर्वधातुव्यापी । भूयास्तु धातुर्व्यपदिश्यते । अत एव सन्तते पपाठ ( श्लो ५९ )–"विशेषेण रसाश्रिता ।" इति । तस्माद्विशेषेण रक्ताश्रय सतत इत्यवेहि । स –सतत , अहोरात्रस्य मध्ये द्वि स्यात्–द्वौ कालावनुवर्तते । अहर्युक्ता रात्रिरहोरात्र । "अह सर्वैकदेश" इत्यादिना अच् समासान्त । "रात्राह्नाहा पुसि" इति पुस्त्वम् । द्वौ वारौ द्वि । "द्वित्रिचतुर्भ्य सुच्" इति सुच् । अत्र च नाय नियम , यदह्न्येकवार रात्रावेकवारमिति, किं तर्हि? कदाचिदह्न्येव वारद्वय, कदाचिद्रात्रावेव वारद्वय, कदाचिद्द्वयोरपि वारद्वयमिति प्रतीहि ।

आ० र०–सततलक्षणमाह–दोषो रक्ताश्रय इति ।

**सकृदन्येद्युराश्रितः ।**
**तस्मिन्मांसवहा नाडीः**

स०–सकृदन्येद्यु 'अहोरात्रस्य' इत्यनुवर्तते । अहोरात्रस्य मध्येऽयमन्येद्युर्नाम विषमज्वर सकृत्–एकवार भवेत् । कदाचिदहन्येकवारमुत्पद्यते, कदाचिद्रात्राविति । तस्मिन्–अन्येद्युर्ज्वरे, सर्वधातवाश्रयोऽपि दोषो विशेषेण मासवहा नाडीराश्रित ।

आ० र०–अन्येद्युर्लक्षणमाह–सकृदिति । सकृत्–एकवारम् । आश्रितो दोष । अस्मिन्–अन्येद्यौ ।

**मेदोनाडीस्तृतीयके ॥ ७० ॥**
**ग्राही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्तत. ।**
**सपृष्ठस्यानिलकफात्स चैकाहान्तर. स्मृतः ॥ ७१ ॥**

स०–तृतीयके मेदोवहा नाडीर्विशेषेण दोष आश्रित इति योज्यम् । मेदोवहा नाडीराश्रित्य दोषस्तृतीयक कुरुत इत्यर्थ । स च त्रिविध ,–पित्तवातादथ्विकात् कफपित्तात् वातकफाच्च । तत्र ग्राही मूर्ध्न –शिरस , पित्तानिलात्तृतीयको भवति, मूर्ध्नि वेदनास्तास्ता जनयतीत्यर्थ । यश्च कफपित्तादुत्पद्यते स त्रिकस्य ग्राही–त्रिके पीडामुत्पादयति । यश्चानिलकफाज्जायते स पृष्ठसहितस्य त्रिकस्य ग्राही–पृष्ठे त्रिके च पीडा जनयति । एवमय त्रिप्रकारस्वभाव । स च तृतीयक एकाहान्तर इति स्मृतो, 'मुनिभि ' इति शेष । एकेनाह्नाऽन्तर–व्यवधान, यस्य स एवम् । एकस्मिन्नहनि तिरोभूय पुनरुदेतीत्यर्थ ।

आ० र०–तृतीयकलक्षणमाह–मेदोनाडीरिति । स च त्रिविध ,–पित्तानिलजो मूर्ध्न प्रवर्तते, कफपित्तजस्त्रिकात्, वातकफज पृष्ठात् । त्रिविधोऽप्येकाहान्तर ।

**चतुर्थको मले मेदोमज्जास्थ्यन्यतमस्थिते ।**
**मज्जस्थ एवेत्यपरे प्रभावं स तु दर्शयेत् ॥ ७२ ॥**
**द्विधा कफेन जंघाभ्यां स पूर्वं शिरसोऽनिलात् ।**

स०–मेदश्च मज्जा चास्थि च मेदोमज्जास्थीनि, तेषामन्यतमस्मिन् स्थिते दोषे कदाचिन्मेदसि स्थिते दोषे कदाचिन्मज्जनि कदाचिदस्थनि स्थिते दोषे चतुर्थको ज्वरो जायते । एक दिन ज्वरयित्वा द्व्यह विमुच्य पुनर्ज्वरयति स चतुर्थको वेद्य. । मज्जस्थ एवेत्यपरे–अन्ये पुनराचार्या एव स्मरन्ति, चतुर्थको ज्वरो मज्जस्थ एव दोषे जायते । स पुनश्चतुर्थक प्रभाव द्विधा–द्विप्रकार, दर्शयेत् । कफेनाधिकेन यो जायते स पूर्व–प्रथम, जङ्घाभ्या ततोऽन्येभ्योऽङ्गेभ्य । अनिलाद्यो भवति स पूर्व शिरसो जायतेऽनन्तरमङ्गान्तरेभ्य ।

आ० र०–चतुर्थकलक्षणमाह–चतुर्थक इति । स च द्विविध ,–कफजो जङ्घाभ्या पूर्वं प्रभाव दर्शयेत्, वातज. शिरस ।

१ 'वा' स मू । २ 'अस्मिन्मा' हेमाद्रि । ३ 'र्नामा वि' ण.द. ।

१ 'न्येद्यौ ज्वरे' ड थ । 'द्युष्के ज्वरे' ण द । २ 'त्स चैका' इ । ३ 'एव स त्रि' ण द । ४ "प्रभाव–रुजारूपा शक्तिः" इति तोडर । ५ 'भ्यां प्रथम शि' स द्व ।

**अ[1]स्थिमज्जोभयगते च[2]तुर्थकविपर्ययः ॥ ७३ ॥**
**त्रि[3]धा, व्यहं ज्वरयति दिनमेकं[4] तु मुञ्चति ।**

**स०**–अस्थि च मज्जा चास्थिमज्जानौ, अस्थिमज्ज्ञोरुभय–द्वय, तत्र गतो यो मलो वाताद्यन्यतमस्तस्मिन्, चतुर्थकविपर्यय –तद्विपरीतलक्षणो विषमज्वरो, भवति । स च त्रिधा–त्रिप्रकार, सन्निपातोद्भवत्वेऽपि कदाचिद्वातेनाधिकेनाऽथवा पित्तेन श्लेष्मणा वा । तमेव च लक्षयितुमाह–व्यहमिति । द्विधातुस्थितदोषोत्पन्नत्वात् द्वे दिने ज्वरयित्वा दिनमेक विमुच्य पुनर्व्यह ज्वरयति स चतुर्थकविपर्यय । अनेनैव लक्षणेन चतुर्थकस्यापि लक्षणमुक्त भवति । स एकमहो ज्वरयित्वा व्यह विमुच्य पुनर्ज्वरयति । द्वे अह्नी समाहृते द्व्यह । "राजाह-सखिभ्यष्टच्" इति टच् । "अह्नष्टखोरेव" इति टिलोप ।

**आ० र०–चतुर्थकविपर्ययलक्षणमाह–अस्थिमज्जोभयगते इति । उभयग्रहणमन्यतरव्यावृत्त्यर्थम् । विपर्ययलक्षणेन चतुर्थकलक्षणमप्युक्तम्,–एक दिन ज्वरयति व्यह मुञ्चतीति । त्र्यहादिति चतुर्थकत्वनिर्वाहार्थम् । चतुर्थेऽह्नि भवश्चतुर्थक । अय च त्र्यहेण स्वरूप निष्पाद्य पुनरारभते । एव जन्मदिनाच्चतुर्थेऽह्नि पुनर्जन्म भवति । अस्य चतुर्थकेऽन्तर्भावात् न पञ्चत्वहानि । विपर्यये मेदसोऽकथनात् चतुर्थके कथन पूर्वपक्षमात्रम् । तृतीयकेन हि तदवरुद्धम् । चतुर्थकश्च तृतीयकाद्गम्भीरधातुचारी । उक्त च सङ्ग्रहे (नि अ २)–"गम्भीरधातुचारित्वात्सन्निपातेन सम्भवात् । तुल्योच्छ्रायाच्च दोषाणा दुश्चिकित्स्यश्चतुर्थक ॥" इति । तुल्योच्छ्रायत्वेऽपि कफानिलाभ्या द्वैविध्य कार्यक्रमाभिप्रायम् । अत एव तत्र पूर्वमित्युक्तम् ।**

इदानीमेषा विषमज्वराणामिम शेषभूत ग्रन्थमाह–

**बलाबलेन दोषाणामन्नचेष्टादिजन्मना ॥ ७४ ॥**
**ज्वरः स्यान्म[5]नसस्तद्वत्क[5]र्मणश्च त[5]दा तदा ।**
**[6]दोषदूष्यर्त्वहोरात्रप्रभृतीनां बलाज्ज्वरः ॥ ७५ ॥**
**मनसो विषयाणा च कालं तं तं प्रपद्यते ।**

**स०**–बल चाबल च बलाबल,–सामर्थ्यासामर्थ्यम्, आ-स[1]न्नव्याधि[2]कारणाना दोषाणा–वातादीना, तदा तदा बलाबलेन ज्वर स्यात् । किम्भूतेन? अन्नचेष्टादिजन्मना । अद्यत इत्यन्न,–रक्तशाल्यादि । अन्नग्रहणमुपलक्षणार्थम्, मासरसाद्यपि हि पान गृह्यते । चेष्ट्यत इति चेष्टा,–कायवाङ्मनोव्यापारो, विहार इत्यर्थ । अन्न च चेष्टा चान्नचेष्टे, ते आदी येषा कालदूष्यादीना त एवम्, तेभ्यो जन्म यस्य बलाबलस्य, तेनान्नचेष्टाद्युत्पन्नेन सततकादिर्ज्वरो भवेत् । मनसस्तद्वत् । तद्वदित्यनेन दोषाणा बलाबलमतिदिश्यते । यथा दोषाणा शारीराणा बलाबलेन सततकादिज्वर स्यात्, तथा मनसोऽपि दोषाणा बलाबलेन ज्वर स्यात् । चशब्दात् कर्मणोऽपि[3] पूर्वोक्तस्य बलाबलेन सततकादिज्वर स्यादिति । कस्य सम्बन्धिन कर्मण? प्रकृतत्वान्मनस एव । तदेव कर्मणो व्यापारस्य चित्तस्यार्थस्य बलाबलेन तद्वशाज्ज्वरोऽसौ भवेत् । अन्ये त्वाचक्षते,–कर्मण –पुराकृतस्य बलाबलेन, पुराकृतकर्मवशादिति । यत्तदोर्नि[4]त्याभिसम्बन्धाद्यदत्रानुक्तमपि लभ्यते । तेनाय सम्बन्ध,–यदा यदाऽन्नचेष्टादिजन्म दोषाणा बलाबल स्यात्, तथा मनसो दोषाणा बलाबल स्यात्, तथा कर्मण पूर्वकृतस्य बलाबल स्यात्, तदा तदा सततकादिर्ज्वर स्यादिति । अपिच दोषाणा वातादीना बलेन, तथा दूष्याणा रसादीना तथा ऋतूना शिशिरादीना तथाऽहोरात्रस्य तथा प्रकृतीना बलेन, मनसो बलेन, तथा विषयाणा शब्दस्पर्शरूपरसगन्धाना बलेन, ज्वरस्त त–विशिष्ट, काल प्रपद्यते । तेन कदाचित् सततकोऽन्येद्युस्तृतीयकश्चतुर्थको वा भवति । तथा कदाचित् चतुर्थको भूत्वा तृतीयकोऽन्येद्यु सततको वा भवेत् । सङ्ग्रहे च रसादिधातुस्थज्वरलक्षणमुक्तम् । यथा (नि अ २)–"[5]उत्क्लेशो गौरव दैन्य भङ्गोऽङ्गाना विजृम्भणम् । अरोचको वमि साद सर्वस्मिन् रसगे ज्वरे ॥ १ ॥ रक्तनिष्ठीवन

---

१ "अस्थिमज्जोभयगते–कदाचिदस्थिगते दोषे जायते, कदाचिन्मज्जगते, कदाचिदुभयगते–मज्जास्थ्नो स्थिते, इति त्रिधा–त्रिप्रकारो जायते । व्यह–दिनद्वय निरन्तरमेव ।" इति चन्द्रतोडरौ । तोडरस्तु 'त्रिधा' इति पदमेव व्याख्यायानन्तर 'न्यहात्' इत्यपि पाठान्तरीय तत्स्थानीय पद "त्र्यहात्–तृतीयाद्दिवसादनन्तरम्" इति व्याख्याति । २ **'चातुर्थिक'** इ स मू । ३ **'त्र्यहात् व्यह'** हेमाद्रि स मू पराशर । ४ **'क विमु'** फ चन्द्र । ५ "तदा तदा–तस्मिन् तस्मिन् काले । तथा मनसो बलाबलेन, तथा कर्मणो–दैवाख्यस्य बलाबलेन" इति चन्द्रतोडरौ । "मनोबलेन यथा,–सत(न्त)तज्वरो गुणोद्रेकात् प्रहृष्टमनोबलस्तदा सततकादीनामन्यतमत्व प्राप्नोति ।" इति तोडर । ६ श्लोकोऽयमरुणदत्तस्यैव सम्मतो न हेमाद्रिचन्द्रतोडराणाम् ।

१ 'सन्न व्या' ण द । २ 'कारण दो' ड थ । ३ 'पि प्राक्तनस्य' थ । ४ 'नित्यस' ट ण । ५ चन्द्रनन्दनतोडरमल्लौ तु रसादिसप्तधातुगतज्वरलक्षणार्था "उत्क्लेश" इत्यादि सार्धषट् श्लोका हृदयस्था इति मत्वा तद्व्याख्यान कुरुत । तत्र चन्द्रनन्दनस्येत्थम्–"उत्क्लेश इत्यादि । सर्वस्मिन्–वातादिसमुत्थे ज्वरे विषमे, रसधातुगे सति उत्क्लेशादयो भवन्ति । वमि –छर्दि । साद –अनुत्साह ॥ रक्तनिष्ठीवनमित्यादि । रक्तसंश्रिते–रक्तस्थे, सर्वस्मिन् रक्तनिष्ठीवनादयो भवन्ति । रक्ताना उष्णाना–सन्तप्ताना पिटिकाना, उद्गम –उद्भव ॥ तृडित्यादि । मासस्थे सर्वस्मिन् ज्वरे तृडादयो भवन्ति । तृट्–पिपासा । ग्लानि –हर्षक्षय । सृष्टवर्चस्त्व–सृष्टपुरीषत्वम् । अन्त शरीरे दाह । गात्राणा विक्षेपण–गात्रविक्षेप ॥ मेदसि स्थिते स्वेद इत्यादि । मेदसि स्थिते ज्वरे स्वेदादयो भवन्ति । स्वगन्धस्य–आत्मीयस्य गन्धस्य, असहिष्णुता–असहत्वम् ॥ अस्थिस्थे त्वस्थिभेदन दोषप्रवृत्तिरित्यादि । अस्थिस्थे ज्वरे अस्थिभेदादयो भवन्ति । अस्थिभेदन–अस्थिविदारणम् । दोषप्रवृत्तिरूर्ध्वाध –मुखपायुद्वारेण दोषाणा प्रवृत्ति । कूजन–अव्यक्तशब्दकरणम् ॥ अन्त-

तृष्णा रक्तोष्णपिटिकोद्गम । दाहरागभ्रममदप्रलापा रक्तसंस्थिते[1] ॥ २ ॥ तृड् ग्लानि सृष्टवर्चस्त्वमन्तर्दाहो भ्रमस्तम । दौर्गन्ध्य गात्रविक्षेपो मासस्थे, मेदसि स्थिते ॥ ३ ॥ स्वेदोऽतितृष्णा वमन स्वगन्धस्यासहिष्णुता । प्रलापो ग्लानिररुचिरस्थिस्थे त्वस्थिभेदनम् ॥ ४ ॥ दोषप्रवृत्तिरुर्ध्वाध श्वासोऽङ्गाक्षेपकूजनम् । अन्तर्दाहो बहि शैत्य श्वासो हिध्मा च मज्जगे ॥ ५ ॥ तमसो दर्शन मर्मच्छेदन स्तब्धमेढ्रता । शुक्रप्रवृत्तिर्मृत्युश्च जायते शुक्रसंश्रये ॥ ६ ॥ उत्तरोत्तरदु साध्या पञ्चात्रान्त्यौ तु वर्जयेत् । प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेण च ॥ ७ ॥ मन्दज्वरप्रलेपस्तु सशीत स्यात्प्रलेपक । नित्य मन्दज्वरो रूक्ष[3] शून कृच्छ्रेण सिध्यति ॥ ८ ॥ स्तब्धाङ्ग श्लेष्मभूयिष्ठो भवेद्वातबलासक[5] । हरिद्राभेकवर्णाभस्तद्वर्ण यं[6] प्रमेहति ॥ ९ ॥ स वै हारिद्रको नाम ज्वरभेदोऽन्तक स्मृतं[7] । कफवातौ समौ यस्य हीनपित्तस्य देहिन ॥ १० ॥ तीक्ष्णो वा यदि वा मन्दो जायते रात्रिको ज्वर । दिवाकरापीतबले व्यायामाच्च विशोषिते ॥ ११ ॥ शरीरे नियत वाताज्ज्वर स्यात्पूर्वरात्रिक । आमाशये यदा दुष्टे श्लेष्मपित्ते व्यवस्थिते ॥ १२ ॥ तदाऽर्द्ध शीतल देहे[8] त्वर्द्ध चोष्ण प्रजायते । काये पित्त यदा दुष्ट श्लेष्मा चान्ते व्यवस्थित ॥ १३ ॥ उष्णत्व तेन देहस्य शीतत्वं करपादयो ।” इति । खरणादिना[9] तु शुक्रस्थ एव दोषे वर्ज्यता प्रत्यपादि । तथा च तद्ग्रन्थ –“शुक्रस्थे शुक्रविण्मोक्ष श्वसन् प्राणान् विमोक्ष्यति[10] ।” इति ।

**आ० र०–अनुक्तज्वरभेदसङ्ग्रहमाह–बलाबलेनेति । आदिशब्दाद्देशकालौ । कर्मण –पापस्य । तदा तदा–तद्वत् । यदा यदा–यद्वद्दोषवत्, मन कर्मणां बलमबल वा । कारण-**

व्यौ(?)च आनन्त्यात् कार्यवैचित्र्यानन्त्यमित्यर्थ । तच्च दर्शितया दिशा बुद्धिमद्भिर्गम्यम् । सङ्ग्रहे तु (नि अ २)–“उत्क्लेशो गौरव दैन्य भङ्गोऽङ्गाना विजृम्भणम् । अरोचको वमि साद सर्वस्मिन् रसगे ज्वरे ॥ रक्तनिष्ठीवन तृष्णा रक्तोष्णपिटिकोद्गम । दाहरागभ्रममदप्रलापा रक्तसंश्रिते ॥ तृट् ग्लानि सृष्टवर्चस्त्वमन्तर्दाहो भ्रमस्तम । दौर्गन्ध्य गात्रविक्षेपो मासस्थे, मेदसि स्थिते ॥ स्वेदोऽतितृष्णा वमन स्वगन्धस्यासहिष्णुता । प्रलापो ग्लानिररुचिरस्थिस्थे त्वस्थिभेदनम् ॥ दोषप्रवृत्तिरूर्ध्वाध श्वासो[1] विक्षेपकूजनम् । अन्तर्दाहो बहि शैत्य श्वासो हिध्मा च मज्जगे ॥ तमसो दर्शन मर्मच्छेदन स्तब्धमेढ्रता । शुक्रप्रवृत्तिर्मृत्युश्च जायते शुक्रसंश्रये ॥ उत्तरोत्तरदु साध्या पञ्चान्त्यौ[2] तु विवर्जयेत् ।” इति । एते रसगादिभेदा सर्वेषा ज्वराणाम्, सर्वस्मिन्निति वचनात् । सन्ततादीना रसगादिनियमस्त्वारम्भाभिप्राय । रुग्विनिश्चये तु ( मा नि ज्व श्लो ४० )–“नित्य मन्दज्वरो रूक्ष शून[3] कष्टेन सिध्यति । स्तब्धाङ्ग श्लेष्मभूयिष्ठो[4] भवेद्वातबलासक ॥ प्रलिम्पन्निव गात्राणि घर्मेण[5] गौरवेण च । मन्दज्वरविलेपी च सशीत स्यात्प्रलेपक ॥ विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते । तेनार्धं शीतल देहमर्धमुष्ण[6] च जायते ॥ काये दुष्ट यदा पित्त श्लेष्मा चान्ते व्यवस्थित । तेनोष्णत्व शरीरस्य शीतत्वं हस्तपादयो ॥ काये श्लेष्मा यदा दुष्ट पित्त चान्ते व्यवस्थितम् । शीतत्व तेन गात्रस्य[7] उष्णत्व हस्तपादयो ॥ आमाशयस्थ[8] पित्त च मध्य वाऽथ प्रवर्तते । त्वक्स्थौ पित्तसमीरौ द्वौ बाह्यसस्थानमाश्रितौ ॥ तेनान्तर्दाहसम्प्राप्तिर्बाह्ये भवति शीतता । त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ॥ तयो प्रशान्तयो पित्तमन्ते दाह करोति च । करोत्यादौ तथा पित्त त्वक्स्थ दाहमतीव च ॥ तस्मिन् प्रशान्ते त्वितरौ कुरुत शीतमन्तत ।” इति । ( मधुकोशे ज्व. श्लो ४७)–कफवातौ समौ यस्य हीनपित्तस्य देहिन । प्रायो रात्रौ ज्वरस्तस्य दिवा हीनकफस्य च ॥” इति ।

**धातून् प्रक्षोभयन् दोषो मोक्षकाले विलीयते ॥७६॥**
**ततो नर· श्वसन् स्विद्यन् कूजन् वमति चेष्टते ।**
**वेपते प्रलपत्युष्णै· शीतैश्चाङ्गैर्हतप्रभः ॥ ७७ ॥**
**विसञ्ज्ञो ज्वरवेगार्तः सक्रोध इव वीक्षते ।**
**सदोषशब्दं च शकृद्द्रवं सृजति वेगवत् ॥ ७८ ॥**

स०–दोषो–वाताद्यन्यतमो, धातून्–रसादीन्, प्रक्षोभयन्–चण्डपवनोद्धूतमहाजलाशयानिव[9] कुर्वन्, ज्वरमोक्षकाले विली-

दाह इत्यादि । मज्जगे ज्वरे अन्तर्दाहादयो भवन्ति । अन्त शरीरे दाह , बहि शरीरे शीतता च ॥ तमसो दर्शनमित्यादि । शुक्रसंश्रये–शुक्रस्थे ज्वरे, तमसो दर्शनादिक भवति । तमसो दर्शन–तम -प्रवेशनम् । स्तब्धमेढ्रता–स्तब्धलिङ्गत्वम् ॥ उत्तरोत्तरेत्यादि । अत्र–एतेषु मध्ये, पञ्च ज्वरा उत्तरोत्तर दु साध्या –कृच्छ्रसाध्या । रसगो दु साध्य , ततोऽपि रक्तग , एव सवत्र । अन्त्यौ पुन –मज्जशुक्रगतौ ज्वरौ, वर्जयेत्–न चिकित्सेत् ॥” इति । तोडरव्याख्याने त्वय विशेष ,–“उत्क्लेशो–वमनोन्मुखत्वमेव । भङ्गोऽङ्गाना–अङ्गानि मोट्यन्त इव भज्यन्त इव । साद –स्वकार्याक्षमत्वम् ॥ रागो–लोहितत्वमङ्गे । मदो–वैकल्यम् ॥ ग्लानि –अपचय । तम –अन्धकारप्रविष्टस्येव । दौर्गन्ध्य–दुर्गन्धता गात्रे । गात्रविक्षेपो -हस्तादिचालनम् ॥ मर्मच्छेदन–हृदयभेदनम् ।” इति ।

1 ‘संश्रिते’ चन्द्र स द्व । 2 ‘साङ्गक्षे’ स स । 3 ‘क्ष शीत कृ’ ट ण ढ तो स द्व । 4 ‘ण गच्छति’ ट ण द । 5 ‘सकी’ मा नि । 6 ‘यस्तु मे’ इ तो । 7 अस्याग्रे “दाहप्रलापारतितृट्स्वेदौत्सुक्यप्रजागरै । हतविट्तीव्रवेगाभ्यामसाध्यो धातुपाक्ययम् ॥” इति इ पुस्तकेऽधिक श्लोक । 8 ‘देह’ ण तो । 9 ‘खरनादे तु’ ट । 10 ‘विमुञ्चति’ ड थ ।

1 ‘श्वासाङ्गाक्षे’ स मू । ‘श्वासाङ्गक्षे’ स स । 2 ‘श्चात्रान्त्यौ तु वर्ज’ स द्व । 3 ‘शूनकस्तेन सीदति ।’ मा नि । 4 ‘ष्ठो नरो वातबलासकी’ मा नि । 5 ‘मेंणागौ’ फ । 6 ‘देहे चार्धं चोष्ण प्रजा’ मा नि । 7 ‘गात्राणामुष्ण’ मा नि । 8 ‘आमाशयस्थ’ इत्यादिसार्द्धश्लोको माधवनिदाने नोपलभ्यते । 9 ‘नोद्धत’ ण ढ । ‘नोद्गतान् महा’ य ।

यते । विलीयमानदोषवशात् नर श्वसन्, तथा खिद्यन्–रोमकूपेभ्यो जल स्रवन्, तथा कूजन्–अव्यक्त शब्द कुर्वन्, वमति–छर्दयति, तथा चेष्टते–भूमिशय्यादौ परिलुण्ठति, वेपते–कम्पते लतेव चलति, प्रलपति–असम्बद्ध ब्रूते, तथा हतप्रभो–नष्टकान्ति, उष्णै शीतैश्चाङ्गैस्तुल्यकालमुपलक्षितो भवति । चशब्दोऽत्र तुल्यकालार्थे । तुल्यकाल तस्य कानिचिदुष्णान्यङ्गानि कानिचिच्छीतानि । विगता सज्ञा यस्यासौ विसज्ञ, तथा ज्वरवेगार्तं सक्रोध इव वीक्षते–सरोष इवालोकन करोति, तथा शकृत्–पुरीष, विमुञ्चति । किम्भूत शकृत् ? दोषश्च शब्दश्च दोषशब्दौ, सह ताभ्या वर्तते सदोषशब्दम् । दोषशब्देनेहामो विवक्षित, साम सस्वन चेत्यर्थ । तथा, द्रव–अकठिनम् । तथा वेगोऽस्यास्तीति वेगवत्, इति सवेग कृत्वा शकृत्सृजति ।

**आ० र०–ज्वरमोक्षलक्षणमाह–धातूनिति । प्रक्षोभयन्–चालयन् । चेष्टते–सव्यापसव्येन । उष्णै शीतैश्च–कानिचिदुष्णानि कानिचिच्छीतानि । सदोष सशब्द च । दोष –आम. पित्त श्लेष्मा वा । वेगवत्–वेगैर्युक्त, पुनरित्यर्थ ।**

इति ज्वरमोक्षकालक्षणमुक्त्वा विगतज्वरलक्षणमभिधित्सुराह—

**देहो लघुर्व्यपगतक्लममोहतापः**
**पाको मुखे करणसौष्ठवमव्यथत्वम् ।**
**स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा**
**कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ ७९ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने ज्वरनिदानं नाम द्वितीयोऽध्यायः ॥ २ ॥**

**स०**–तस्य विगतज्वरस्य नरस्यैतानि लक्षणानि । यथा–देहो लघुर्भवति–न तु गात्रे गौरवम् । तथा, व्यपगता –नष्टा, क्लममोहतापा यस्यासौ व्यपगतक्लममोहतापस्तदा स सम्पद्यते । तथा, अस्य मुखे–वदने, पाक । करणाना–चक्षुरादीना, सौष्ठवं–पाटव, जायते । तथा, अव्यथत्वादयोऽस्य भवन्ति । प्रकृत्या योग प्रकृतियोग,–स्वभावेन सम्बन्ध । प्रकृतियोगो यस्यास्ति मनसस्तत् प्रकृतियोगि । यादृग्यस्य चित्त पूर्वं रजोबहुल तमोबहुल वा आसीत् तादृक् तस्य सम्पद्यत इत्यर्थ । तथा, अन्नलिप्सा–अन्नाभिलाष । सङ्ग्रहे च नक्षत्रसमाश्रयणेन च साध्यासाध्यज्वरलक्षणमुक्तम् । यथा (नि अ. १)–"आधानजन्मनिधनप्रत्यराख्यविपत्करे । नक्षत्रे व्याधिरुत्पन्न क्लेशाय मरणाय वा ॥ ज्वरस्तु जात षड्रात्रादश्विनीषु निवर्तते । भरणीषु तु पञ्चाहात्सप्ताहात्कृत्तिकासु च ॥ त्रिसप्तरात्रादथवा रोहिण्यामष्टरात्रत । एकादशाद्वा दिवसान्मृगे पणवरात्रेय ॥ पञ्चाहान्मृत्युरार्द्रायां त्रिपक्षे सशयोऽथवा । पुनर्वसौ प्रवृत्तस्तु ज्वरोऽपैति त्रयोदशात् ॥ दिवसात्सप्तविंशाद्वा द्व्यहात्सप्ताहतोऽथवा । पुष्ये श्लेषासु मरण चिरेणाऽपि मघासु च ॥ अवश्य स्वास्थ्यमाप्नोति द्वादशाहान्मृतो न चेत् । फल्गुन्यो पूर्वयोर्मृत्युरन्ययोस्तु दिनेऽष्टमे ॥ नवमेऽह्न्येकविंशे वा ज्वर सौम्यत्वमृच्छति । हस्तेन सप्तमे शान्तिश्चित्रायामष्टमेऽथवा ॥ पुनश्चित्रागमे स्वातौ दशाहादथवा त्रिभि । पक्षैर्मृत्यु विशाखासु द्वाविंशेऽह्नि निर्दिशेत् ॥ नवमेऽह्नि न चेच्छान्तिर्मैत्रे मृत्युस्तत परम् । ज्येष्ठाया पञ्चमे मृत्युरूर्ध्वं वा द्वादशात्सुखम् ॥ स्वास्थ्य दशाहान्मूलेन त्रिसप्ताहेऽथवा गते । पूर्वाषाढासु नवमे ततोऽन्यासु तु मासत ॥ अष्टाभिरथवा मासैर्नवभिर्वा भवेच्छिवम् । [ज्वरस्तु श्रवणे याति शान्तिमेकादशाहत ॥] अज्येष्ठाहाद्धनिष्ठासु दशाहाद्वारुणेषु तु । षडहे द्वादशाहे वा मृत्युर्भाद्रपदासु च ॥ उत्तरासु द्विसप्ताहात् प्रशमो, रेवतीषु च । चतूरात्रेऽष्टरात्रे वा क्षेममित्याह हारित ॥" इति । ज्वर इत्युपलक्षणम् । प्राय सर्वो व्याधिरनया दिशाऽनुसृतो बोध्य क्षिप्रचिरमोक्षाय जीवितान्ताय वा । आधान–जन्मर्क्षाद्दशम नक्षत्रम् । विपत्कर–तृतीया तारा । प्रत्यरं–पञ्चमी । निधनसज्ञा–सप्तमी तारा स्मृतेति । अथ, किं नक्षत्रसमाश्रयणेन ज्वरस्य साध्यासाध्यविभागोऽङ्गीक्रियतामुत यथानिदान कुपितदोषलक्षणेन ? ब्रूम । उभयथाऽपि । यतो नक्षत्र त्रिविधमपि प्राक्तनस्य कर्मणो दैवाख्यस्य शुभरूपस्याशुभरूपस्य शुभाशुभरूपस्य च सौम्यक्रूरमध्यस्वभावसूचकम् । तत्र सौम्येन नक्षत्रेण शुभ, क्रूरेणाशुभ, मध्यस्वभावेन च शुभाशुभम् । एतदुक्त भवति,–पुरातनकर्मवशान्नक्षत्रेण ज्वर उत्पद्यते, ऐहिककर्मवशान्मिथ्याहारसेवनाख्याद्यथानिदान वा-

१ "वमति–पित्तश्लेष्मादीन् छर्दयति" इति चन्द्रतोडरौ । २ 'कालमुक्त्वा० क्षणमाह' ट । ३ "क्लमो–ग्लानि. दुर्बलत्वम् । मोहो–विचेतनता । ताप –औष्ण्यम् । अव्यथत्व–स्वास्थ्येन योग । क्षव –छिक्का ।" इति चन्द्र । "मूर्ध्नि–शिरसि, कण्डू –कण्डूयन, व्याधिमहिम्ना ।" इति तोडर । ४ 'गात्रगौ' ट.ड. । ५ 'द्रगस्य' ड. ।

१ 'च' स मू । २ 'तु' स स । ३ 'त्रि स' ट ण द फ स द्व । ४ 'त्रयो' फ स द्व । ५ 'रो याति' ट । ६ 'पुष्याश्ले' फ स मू । ७ 'तु' फ स द्व । ८ 'हान्न चेन्मृत' ड स मू । ९ 'यो षष्ठे परयो' फ । १० 'योश्च दि' स स । ११ 'मे चैक' ट ण थ द । 'मे ह्येक' स मू । १२ 'हस्तेऽह्नि स' ट ण द स मू । १३ 'मे भवेत्' ट ण द । १४ 'मृत्युर्विशा' ट ड ण थ. द फ । १५ 'स्वाया' थ । १६ 'मे च तथाऽशान्ति' फ । १७ 'ले तु त्रिस' स स । १८ 'त्रि स' ण फ स मू । १९ 'हे तथा ग' ट ड । २० 'ऐन्द्रेऽष्टाहा' फ । २१ 'सु द्वादशाद्वा' स द्व । २२ 'तु' फ स द्व । २३ 'सु त्रिस' स स । २४ 'तु' ड थ फ । २५ 'गौतम.' स.स इन्दु । 'शौनक' फ । २६ 'सर्वे व्याधयोऽनया दिशाऽनुसर्तुं बोध्या.' ट । २७ 'नुसर्तव्य क्षि' थ । २८ 'न्मतो यद्' ट.ड ण द । २९ 'यते उत' थ. । ३० 'नकर्म' ड. । ३१ 'भावतया । उक्त च । तत्र' थ. ।

तादिकुपितदोषलक्षणेन च । तदनयोर्बलाबलेन ज्वरस्य साध्यासाध्यविभागो व्यवस्थाप्य । प्रत्यपादि च मुनिभि । यथा (च वि अ ३)–"कदाचित्कर्मणो बलवत्त्व कदाचित्पुरुषकारस्य" इत्युभयथा ज्वरस्य साध्यासाध्यविभागो न्याय्य ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने ज्वरनिदान नाम द्वितीयोऽध्याय समाप्त ॥ २ ॥

**आ० र०–ज्वरमुक्तलक्षणमाह–देह इति । करणानि–इन्द्रियाणि । मन प्रकृतियोगि–प्रकृतिस्थम् ।**

**इति हेमाद्रिटीकायामायुर्वेदरसायने।**
**ज्वरनिदान द्वितीय समासे(सामस्त्ये)न निरूपितम् ॥ २ ॥**



## तृतीयोऽध्यायः ।

ज्वरनिदानादनन्तर रक्तपित्तनिदानमारभ्यते । यतो ज्वर ऊष्मणा विना न सम्भवति, पित्त च विना न कदाचिदूष्मा । तस्माज्ज्वरनिदानादूर्ध्वं रक्तपित्तनिदानमिदानीमारब्धु युक्तमित्याह—

**अथातो रक्तपित्तकासनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**स०**–व्याख्याऽस्य पूर्ववत् ।

**भृशोष्णतीक्ष्णकट्वम्ललवणादिविदाहिभिः ।**
**कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः ॥ १ ॥**
**कुपितं पित्तलैः पित्तं द्रवं रक्तं च मूर्च्छिते ।**
**ते मिथस्तुल्यरूपत्वमागम्य व्याप्नुतस्तनुम् ॥ २ ॥**

**स०**–भृशशब्दस्योष्णादिभिर्विदाह्यन्तै सम्बन्ध । आदिशब्देनात्र क्षारादयो गृह्यन्ते । भृशोष्णादिभिरन्नै पित्तलैरतिसेवितैर्द्रव–द्रवस्वभावं, यत् पित्त तत् कुपित–दुष्ट, तथा रक्त कुपित, तैरेवातिसेवितै । अतिसेवन चोभयथा भवति,–चिरकालमभ्यवहृतैस्तथाऽतिमात्राभ्यवहृतै । न केवलमेतैर्यावत् कोद्रवोद्दालकैश्चान्नै । तदित्यनेन भृशोष्णादीनि परामृश्यन्ते । तैर्युक्तै–मिश्रितै कोद्रवोद्दालकैश्चान्नैरतिसेवितै कुपित पित्त तथा रक्त च भवति । ते–द्वे अपि रक्तपित्ते, मूर्च्छिते–मिश्रता गते, मिथ–परस्पर, तुल्यरूपत्व–समवर्णत्व, आगम्य–प्राप्य, सर्वा तनु–देह, व्याप्नुतो–व्यश्नुवाते । ननु, भृशोष्णादीना पित्तलत्वाव्यभिचारात् किमर्थ पित्तलैरित्युक्तम् ? ब्रूम । दाडिमामलकसैन्धवेष्वम्ललवणादिषु व्यभिचारात् । तथाहि–दाडिमामलकसैन्धवान्यम्ललवणान्यपि पित्त न कुर्वते । अपि च न केवल भृशोष्णादियुक्तै कुपित पित्त रक्त च । यावदन्यैरपि पित्तलैरभृशोष्णादिस्वभावैर्व्रीहिप्रभृतिभिरतिसेवितै कुपित पित्त चेति प्रतिपादनार्थ पित्तलैरित्युक्तम् । ननु, एव सति पित्तलैरित्येव निर्देश कर्तु युक्त उभयानुग्रहार्थे । तथा च भृशोष्णादीनि तथाऽन्यान्यप्यभृशोष्णादीनि व्रीहिप्रभृतीन्येव गृहीतानि भवन्ति । अस्त्येवैतत् । किन्तु पित्तलत्वसामान्याद्गृहीतानामपि भृशोष्णादीनामुपादान कृतमतिशयद्योतनार्थम् । यथा भृशोष्णादीन्यतिशयेन पित्त रक्त च कोपयन्ति, न तथाऽन्यानि व्रीहिप्रभृतीनि । अत एव कोद्रवोद्दालकौ शीतवीर्यावपि भृशोष्णादिद्रव्ययुतौ पित्तस्य कर्तारौ भवत । भृशोष्णादीनामतिपित्तलत्वात् । ननु, पित्तस्य द्रवमिति विशेषणमयुक्तम्, व्यभिचाराभावात् । तथा च तन्त्रकृज्जगौ (हृ सू अ १।११)–"पित्त सस्नेहतीक्ष्णोष्ण लघु विस्र सरं द्रवम् ।" इति । अत्रोच्यते । पित्तमद्रवमप्यस्ति । कथ ज्ञायते ? ग्रन्थकारवचनात् । तथा चोवाच तन्त्रकृत् ( हृ सू अ १२।१० )–"पित्त पञ्चात्मक तत्र पक्वामाशयमध्यगम् । पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥ त्यक्तद्रवत्व" इत्यादि । तस्मात् यद्द्रवरूप पित्त तद्भृशोष्णादिभि कुपित रक्तपित्ते कारणम्, न पुनर्यत् त्यक्तद्रवत्व–कठिनता प्राप्त, इति प्रतिपादयितु द्रवग्रहणम् ।

**आ० र०–अथ रक्तपित्तप्रकरणम् । तत्र निदानमाह–भृशोष्णेत्यादि । भृशोष्णाद(द्य)न्यविदाहित्व च मिलित कारणम् । कोद्रवा –कोरदूषा , उद्दालका –वन्या , तेषा तद्युक्तानांविदाहियुक्ताना, कारणत्वम् । "कोद्रव हन्त्यसृक्पित्त करोत्येव विदाहिभि ।" इति वचनात् । अन्नैरित्यदनेन हेतुत्वम्, न बहिर्लेपादिना । पूर्वं पित्तलै कुपित पश्चाद्भृशोष्णाभिर्वेदितम् । द्रवग्रहण पाचकपित्तनिवृत्त्यर्थम् ।**

**सम्प्राप्तिमाह–ते मिथ इति । ते–पित्तरक्ते । तुल्यरूपत्व–रक्तवर्णत्व तुल्यगुणात् कदाचिद्धरितादिवर्णत्वमपि ।**

ननु, यदि तुल्यरूपत्व पित्तरक्ते प्राप्ते, तत्कथमीदृशो निर्देश उपपद्यते ? "अधोग यापयेद्रक्त" ( हृ चि अ. २।२ ) इति । एवमादौ हि रक्तस्य पित्तसहितस्यैव निर्देशो युक्तो "रक्तपित्तमधोगं यापयेत्" इति । एवमाशङ्क्याह—

**पित्तं रक्तस्य विकृतेः संसर्गाद्दूषणादपि ।**
**गन्धवर्णानुवृत्तेश्च रक्तेन व्यपदिश्यते ॥ ३ ॥**

**स०**–पित्त रक्तेन व्यपदिश्यते । यस्मात् पित्त रक्तस्य विकृति –विकारो, रक्ताद्युत्पन्नमित्यर्थ । तथा चोक्तम् ( हृ शा. अ ३।६३ )–"कफ पित्त *मला खेषु प्रस्वेदो नखरोम च ।

१ 'वेद्य 'ट । २ इद रक्तपित्तकासनिदान चरके नि० २ अध्याये चि० ४।११।१८ अध्यायेषु च, सुश्रुते उ० ४५।५२ अध्याययो, अष्टाङ्गसङ्ग्रहे नि० ३ अध्याये चास्ति वर्णितम् । ३ 'सवर्ण' थ. ।

१ 'तमित्यति' ड. । 'तमितिभृशतायो' थ । २ 'था प्रोवा' ड थ. । ३ 'तत्तु' ट.ड.थ द । ४ 'विकृति.' फ.तो । *५ 'मल ' ड.ण.थ.द फ. ।

स्नेहोऽस्थिस्वग्विशामोजो धातूना क्रमशो मला ॥" इति । तथा, ससर्गात्–अन्योन्यमिश्रीभावात् । तथा, दूषणादपि–यस्माद्रक्त पित्तेनाश्वेव दूष्यते, तथा रक्तदूषणे पित्तमपि दूष्यते, तात्स्थ्यात् । तथा च ग्रन्थ ( हृ सू अ ११।२७ )–"यदेकस्य तदन्यस्य वर्द्धनक्षपणौषधम् ।" इति । अन्ये तु धातवो न तथा दूष्यन्ते यथा पित्तम् । तथा चोक्तम् ( हृ सू अ ११।२६ )–"तत्रास्थनि स्थितो वायु पित्त तु स्वेदरक्तयो ।" इति । तथा, गन्धवर्णानुवृत्तेश्च । गन्धश्च वर्णश्च गन्धवर्णौ, तयोरनुवृत्ति –अनुकरण गन्धवर्णानुवृत्ति । कस्य गन्धवर्णौ ? प्रकृतत्वाद्रक्तस्य यादृशौ गन्धवर्णौ तादृशावपि पित्तस्य । एव च रक्तेन तत् व्यपदिश्यते । तस्मात् "अधोग यापयेद्रक्त" इत्यादिनिर्देशो युक्त एव ।

**आ० र०–रक्तपित्तस्य रक्तत्वे वाच्ये हेतुमाह–पित्त रक्तस्येति । रक्तस्य कार्यं दूषण च रक्तेन संसृष्ट सदृश चेति चतुष्टय हेतु । "कफ पित्त *मला खेषु" (हृ शा अ ३।६३) इति रक्तमलत्वात्कार्यत्वम् । योगरूढिरियम् । योगस्य पित्तेऽपि तुल्यत्वात् ।**

ननु, रक्तस्य शरीरे स्वाभाविक प्रमाणमुक्तमष्टावेवाञ्जलय । प्रकोपमापन्न त्वाढकादिसङ्ख्यातमपि दृश्यते । तत्कथमेतत् ? इत्याह—

**प्रभवत्यसृजः[3] स्थानात्प्लीहतो यकृतश्च तत् ।**

**स०**–असृज स्थानात् तत्–पित्तमूर्च्छित रक्त, प्रभवति–प्रकर्षेण भवति वर्धते । तस्माद्बहुत्वमस्य युक्तमेव । कि तदसृज स्थानम् ? यतस्तत्प्रभवतीत्याह—प्लीहतो यकृतश्चेति ।

**आ० र०–रक्तोद्गमस्थानमाह–प्रभवतीति । रक्तस्थाने–प्लीहयकृती ।**

अथास्य पूर्वरूपाण्याह—

**शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ॥ ४ ॥**
**छर्दिश्छर्दितबैभत्स्यं कास' श्वासो भ्रमः क्लमः ।**
**लोहलोहितमत्स्यामगन्धास्यत्वं स्वरक्षयः ॥ ५ ॥**
**रक्तहारिद्रहरितवर्णता नयनादिषु ।**
**नीललोहितपीतानां वर्णानामविवेचनम् ॥ ६ ॥**
**स्वप्ने तद्वर्णदर्शित्वं भवत्यस्मिन् भविष्यति ।**

**स०**–शिरोगुरुत्वादिकमस्मिन्–रक्तपित्ते,भविष्यति सति भवति । छर्दिते–वमिते, बैभत्स्य–जुगुप्सा । स्वप्ने–स्वप्नावस्थाया, तद्वर्णदर्शित्व–रक्तवर्णाकार पश्यति ।

**आ० र०–प्राग्रूपमाह–शिरोगुरुत्वमिति । छर्दितबैभत्स्यं–जुगुप्सा । आस्ये लोहादीनां गन्ध । तद्वर्णो–रक्तहारिद्रादि ।**

तच्च रक्तपित्त त्रिविधमूर्ध्वगमधोगमुभयमार्गग च । तत्रोर्ध्वगमाह—

**ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥ ७ ॥**
**कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ।**

**स०**–ऊर्ध्वग रक्तपित्त कुपित नासादिभि सप्तभिर्द्वारै प्रवर्तते । अधोग रक्तपित्त कुपित मेढ्रयोनिगुदैस्त्रिभिर्द्वारै प्रवर्तते । प्राण्यङ्गाना द्वन्द्व एकवदित्यस्य प्रायिकत्वाद्बहुवचनमत्र न दुष्टम् । तथा रोमकूपै समस्तै । चशब्दान्नासाक्षिकर्णास्यमेढ्रयोनिगुदैरुभयमार्गगमुभयमार्गाभ्या तत्–रक्तपित्त, प्रवर्तते ।

**आ० र०–रूपमाह–ऊर्ध्वमिति । कस्यचिदूर्ध्व, कस्यचिदध', कस्यचिद्रोमकूपै, कस्यचित्समस्तैर्मार्गै, प्रवर्तते ।**

**ऊर्ध्वं साध्यं कफाद्यस्मात्तद्विरेचनसाधनम् ॥ ८ ॥**
**बह्वौषधं च, पित्तस्य विरेको हि वरौषधम् ।**
**अनुबन्धी कफो यश्च तत्र तस्यापि शुद्धिकृत् ॥ ९ ॥**
**कषायाः स्वादवोऽप्यस्य विशुद्धश्लेष्मणो हिताः ।**
**किमु तिक्ताः कषाया वा ये निसर्गात्कफापहाः १०**

**स०**–ऊर्ध्व–ऊर्ध्वग रक्तपित्त, साध्यम् । यस्मात्कारणात कफादविकाजायते । तच्च विरेचनसाधनम् । साध्यतेऽनेनेति साधन,–चिकित्सितम् । तच्च–ऊर्ध्वग रक्तपित्त, बह्वौषधम् । बहु औषध यस्य तद्बह्वौषध,–अनेकसाधनम्, मधुरकषायतिक्तद्रव्य साध्यत्वात् । अपिच, यस्माद्विरेक पित्तस्य वरौषधम् । तथा चोक्तम् ( च सू अ २५।४० )–"विरेचनं पित्तहराणाम् ।" इति । यश्च [तत्र–] तस्मिन्नूर्ध्वगे रक्तपित्ताख्ये व्याधौ, कफोऽनुबन्धी । तस्य–अनुबन्धिन कफस्य, विरेचन शुद्धिकृत्–शोधन करोति । अतो हेतोरूर्ध्वग रक्तपित्त साध्यम् । कषाया–स्वरसकल्कशृतशीतफाण्टाख्या, ते स्वादवोऽपि हिता, व्याधिप्रतिपक्षत्वात् । न तु दोषप्रतिपक्षताद्वारेण, दोषसमानत्वात्तेषाम् । अथवा केचन मकुष्ठतण्डुलीयादिसम्बन्धिनो व्याधिप्रतिपक्षास्तथा रूक्षत्वाद्दोषप्रतिपक्षा इति श्लेष्मणोऽपि हिताः । अपिशब्दात्तिक्तादयोऽपि । विशुद्धो–वाताद्य दूषित, श्लेष्मा यस्य स तस्य । किमु–किपुन, तिक्ता कषायाश्च ये स्वरसादयस्तेऽप्यस्य–ऊर्ध्वगस्य रक्तपित्ताख्यस्य व्याधेरथवा तद्वतो नरस्य विशुद्धश्लेष्मणो, हिता । व्याधिप्रतिपक्षत्वाद्दोषप्रतिपक्षत्वाच्च ये निसर्गात्–स्वभावात्, कफघ्ना ।

**आ० र०–ऊर्ध्वगस्य साध्यत्वमाह–ऊर्ध्वं साध्यमिति ।**

१ 'नेत्रविट्त्वक्षु च स्नेहो धा' ड थ । २ 'क्तैनैतत्' ट. । ३ "असृज स्थानात्–रक्तवाहिस्रोतोभ्य, प्रभवति–प्रवर्तते । तथा, प्लीहतो यकृतश्च प्रभवति। नयनादिषु–नयनत्वङ्मूत्रपुरीषनखेषु ।" इति चन्द्रतोडरौ । "अविवेचन–अव्यक्ति ।" इति तोडर ।

१ "समस्तै –नासाक्षिकर्णास्यमेढ्रयोनिगुदै सकलै ॥ अनुबन्धी–ससर्गरूपो न तुल्यलक्षणावेदक । स्वादवोऽपि–मधुरा अपि, अस्य विशुद्धश्लेष्मणोऽपि पुरुषस्य कफादविपरीता अपि हिता –पथ्या । विशुद्ध –केवल. श्लेष्मा ।" इति तोडर । "विशुद्धो–विरेचनेन हत. ।" इति चन्द्र । २ 'मार्ग तत्–' ड ण । ३ 'यश्च यस्मि' ट । 'यथा यस्मिन् रक्त' ड ण द । 'यच्चास्मिन् रक्त' थ । ४ 'दय ।' ड ण थ.द.। ५ 'णो न हि' ड द ।

कफजत्व विरेच्यत्व शमनबाहुल्य च साध्यत्वे हेतु ।

विरेच्यत्वस्य हेतुत्वे युक्तिमाह–पित्तस्येति। पित्तमुत्पादक, कफोऽनुबन्धी–निर्वाहक ।

बह्वौषधत्व दर्शयति–कषाया इति ।

**अधो याप्यं चलाद्यस्मात्तत्प्रच्छर्दनसाधनम् ।**
**अल्पौषधं च पित्तस्य वमनं न वरौषधम् ॥ ११ ॥**
**अनुबन्धी चलो यश्च शान्तयेऽपि न तस्य तत् ।**
**कषायाश्च हितास्तस्य मधुरा एव केवलम् ॥ १२ ॥**

स०–अधो याप्य–अधोग रक्तपित्त याप्यम्। कस्मात्? यस्माच्चलात्–वातादधिकात्, 'उत्पद्यते' इत्यध्याहार्यम्। तच्च–अधोग रक्तपित्त, प्रच्छर्दनसाधनम्। प्रच्छर्दन–वमन, साधन–चिकित्सित, यस्य तदेवम्। तथा, अल्पमौषध–चिकित्सित, यस्य तदल्पौषधम्, नोर्ध्वगरक्तपित्तवद्बह्वौषधम्। कथम्? इत्याह–यस्मादय रोग पित्तप्रधान । पित्ते च वमन न वरौषैव–श्रेष्ठ मौषध न भवति। कफे हि वमन प्रधानमुक्तम्। अल्पौषधत्वे द्वितीय हेतुमाह–कषायाश्चेत्यादि। तस्य–अधोगस्य रक्तपित्तस्य, मधुरा एव केवल कषाया हिता–पथ्या, न तिक्ता कषायाश्च, तेषा वातकोपकारणत्वात्। तथा, अस्य चलो–वायु, योऽनुबन्धी–अनुबलत्वेन स्थित, तस्यापि वायोर्न तत्–वमन, शान्तये–शान्त्यर्थम्।

आ० र०–अधोगस्य याप्यत्वमाह–अधो याप्यमिति ।

**कफमारुतसंसृष्टमसाध्यमुभयायनम् ।**
**अशक्यप्रातिलोम्यत्वादभावादौषधस्य च ॥ १३ ॥**
**न हि संशोधनं किञ्चिदस्त्यस्य प्रतिलोमगम् ।**
**शोधनं प्रतिलोमं च रक्तपित्ते भिषग्जितम् ॥ १४ ॥**
**एवमेवोपशमनं सर्वशो नास्य विद्यते ।**
**संसृष्टेषु हि दोषेषु सर्वजिच्छमनं हितम् ॥ १५ ॥**

स०–उभयायन–मार्गद्वयप्रपन्न, कफमारुतसंसृष्टमसाध्य–साधयितुमशक्यम्।

असाध्यत्वे हेतुद्वयमाह–अशक्यप्रातिलोम्यत्वादित्यादि। अनुलोमविपरीत–प्रतिलोम, तस्य भाव प्रातिलोम्यम्। अशक्य–कर्तुमशक्य प्रातिलोम्य यस्य रक्तस्य तदशक्यप्रातिलोम्यम्। तस्य भावोऽशक्यप्रातिलोम्यत्वम्। तस्मादुभयायन रक्तपित्तमसाध्यम्। अभावादौषधस्य च,–एतद्योग्यौषधासम्पत्तेश्चैतदसाध्यम्।

ननु, कथमेवमुच्यते? इत्याह–न हीत्यादि। हि–यस्मात्, तदस्य सशोधन प्रतिलोमग न किञ्चिदस्ति। यच्च प्रतिलोमग सशोधन तद्रक्तपित्ते भिषग्जित–औषधम्। तच्च तथाभूतमौषध न सम्भवति यत्तत्र सशमनार्थं दीयते । यद्यधोमार्गापेक्षया दीयते तदानीमूर्ध्वभागप्रवृत्त रक्त प्रवृद्ध सम्पद्यते। अधोर्ध्वमार्गापेक्षया विरेचनमुपयुज्यते तदाऽधोग रक्तपित्त वर्द्धते । एवमस्य प्रतिलोमगमौषध शोधन न सम्भवति। तस्मादोषधस्याभाव । भिषग्जितमिति भिषक्शब्दात् कण्ड्वादियगन्तान्निष्ठा इट् च। स्वभावाच्चाय भेषजवाची।

ननु, उभयायनस्य रक्तपित्तस्य सशोधनरूपमौषध मा भवतु। शमनरूप त्वौषधमस्य शमाय भविष्यतीति "अभावादौषधस्य च" इत्ययुक्तमुदितम्, इत्याशङ्क्याह–एवमेवेत्यादि। यथा शोधनमस्य–उभयायनस्य, शमनाय न सम्भवति तथा शमनमपि यदौषध तदप्येतस्य शमन न सम्भवति।

कुतो हेतो? इत्याह–ससृष्टेष्वित्यादि। हि–यस्मात्, ससृष्टेषु त्रिषु दोषेषु यत्सर्वजिच्छमन तद्धितम्। तच्च सन्तर्पणापतर्पणरूपत्वाद्द्विविधम्। तत्र यदि सन्तर्पण बृहण शमनमधोमार्गप्रवृत्तरक्तपित्तदोषापेक्षया मारुतशान्त्यर्थमुपयुज्यते तदा तच्छान्तिं कुर्वतो रक्तपित्तविकारकरणस्य श्लेष्मणो वृद्धये सम्पद्यते। अथापतर्पणमूर्ध्वभागप्रवृत्तदोषापेक्षया कफशान्त्यर्थमुपयुज्यते तदानीं तस्य शान्तिं कुर्वतोऽधोगरक्तपित्तस्य कारण वायु प्रकोपयेत्। न चोभयात्मकमेक नृसिंहरूपवत् शमनमस्ति यत्प्रयोजितमुभयायनस्य शमनाय स्यात्। तस्मादुभयायनमसाध्यम्।

आ० र०–ऊर्ध्वाधोगस्य असाध्यत्वमाह–कफमारुतससृष्टमिति।

**तत्र दोषानुगमनं सिरास्र इव लक्षयेत् ।**

स०–तत्र–तस्मिन् रक्तपित्ते, दोषानुगमन–वातपित्तश्लेष्मणामनुबन्ध, सिरास्र इव–सिराव्यधविध्युक्तम् (हृ सू.अ २७।४०)–"वाताच्छ्यावारुण रूक्ष" इत्यादिग्रन्थनिर्दिष्टेन लक्षणेन लक्षित, लक्षयेत्।

**आ० र०–अनुबोधिदोषज्ञानोपायमाह–तत्रेति। सिरास्र इव–सिराव्यधदर्शितेन लक्षणेन ।**

**उपद्रवांश्च विकृतिज्ञानतस्तेषु चाधिकम् ॥ १६ ॥**
**आशुकारी यतः कासस्तमेवातः प्रवक्ष्यति ।**

स०–उपद्रवाश्च विकृतिज्ञानतो लक्षयेदिति योज्यम्। विकृतिज्ञानशब्देन विकृतिविज्ञानीय (हृ शा अ ५)उपलक्ष्यते।

तेषु च–उपद्रवेषु मध्ये, य कासाख्य उपद्रव, स आशुकारी–क्षिप्र मारयति, यतोऽतस्तमेव रक्तपित्तनिदानानन्तर प्रकर्षेण निदानप्राग्रूपादिभिर्वक्ष्यति–भणिष्यति, तन्त्रकृत्।

**आ० र०–विकृतिविज्ञानीयोक्तमसाध्यलक्षण स्मारयति–उपद्रवाश्चेति। (हृ. शा अ. ५।७४)–"रक्तपित्त भृश रक्त कृष्णमिन्द्रधनुष्प्रभम्। ताम्रहारिद्रहरित रूप रक्त प्रदर्श-**

१ 'तादुत्प' ण थ द । २ 'तथाऽधो' ण थ द । ३ 'षधम्। कफे' ड ण थ द.। ४ 'मनम्' ण द फ । 'मकम्' इ चन्द्र तो । ५ 'द्वये प्र' ट । 'द्वयमाप' ड । ६ 'ध्यम्। उभयायनस्यासाध्य' ण द.। ७ 'क्य–प्रतिकर्तु' ट । ८ 'मयोग्य प्रा' ण द । ९ 'तस्य' ट ड.। १० 'मन न' ण थ ।

१ 'तद्रक्तस' ट.। २ "एवमेव–शोधनवमनवत्" इति तोडर । ३ 'षु दोषे' थ । ४ 'स स एवा' स मू । ५ 'प्रचक्ष्यते' इ ण द.फ चन्द्र । 'प्रचक्षते' स मू तो । 'प्रवक्ष्यते' स स ।

येत् ॥ रोमकूपप्रविसृत कण्ठास्यहृदये सजत् । वाससोऽरञ्जन पूति वेगवच्चाति भूरि च ॥ वृद्ध पाण्डुज्वरच्छर्दिकासशोफाति-सारिणम् ।" इति । रुग्विनिश्चये तु (मा नि रक्त श्लो ११)-"दौर्बल्यश्वासकासज्वरवमथुमदा पाण्डुतादाहमूर्च्छा भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा । तृष्णा कण्ठप्रभेद शिरसि च तपन पूतिनिष्ठीवनत्व भक्तद्वेषाविपाकौ विकृतिरपि भवेद्रक्तपित्तोपसर्गात् ॥ मासप्रक्षालनाभ क्वथितमिव च यत् कर्दमाम्भोनिभ वा मेद पूयास्रकल्प यकृदिव यदि वा पक्वजम्बूफलाभम् । यत्कृष्ण यच्च नील भृशमतिकुणप यत्र चोक्ता विकारास्तद्वर्ज्य रक्तपित्त सुरपतिधनुषा यच्च तुल्यं विभाति ॥" इति । कुणप-शवगन्धि यत् । इति रक्तपित्तनिदानम् ।

**पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ॥ १७ ॥**

स०-पृथग्दोषैस्त्रय क्षतेनैक क्षयेणैक इति कासा पञ्चैव स्मृता । ननु, यदि पञ्चैव कासास्तत्कथ भणिष्यति ? (हृ चि अ ३।१)-"केवलानिलज कास स्नेहैरादावुपाचरेत् ।" इति । न ह्यन्यदोषयुक्तो वातिक कासोऽभिहित । अपि तु त्रिभिरपि दोषै पृथगेवोक्ता कासा । तथा, (हृ चि अ ३।२५)-"पित्तकासे तु सकफे वमन सर्पिषा हितम् ।" तथा, (हृ चि अ ३।२७)-"पित्तकासे तनुकफे त्रिवृता मधुरैर्युताम् । युञ्ज्याद्विरेकाय युता घनश्लेष्मणि तिक्तकै ॥" इत्यादि । तथा, अस्मिन्नेवाध्यायेऽध्येष्यते (श्लो ३७)-"साध्या दोषै पृथक् त्रय । मिश्रा याप्या द्वयात्" इति । तदेतत्पूर्वापरव्याहतमिव । अत्रोच्यते । कासा पञ्चैव वक्ष्यमाणया सम्प्राप्त्या जायन्ते, वस्तुस्वाभाव्यात् । अनन्तरं वातिककासे कदाचिदाहारविहारवशात् पित्तेनानुबन्ध कदाचित् श्लेष्मणा जायते । पित्तकासे तथैवाहारविहारवशात् कदाचिद्वातेनानुबन्ध कदाचिच्छ्लेष्मणेति । कफकासेऽपि तद्वदाहारविहारवशात् वातेनानुबन्ध. कदाचित्पित्तेन । इति न किञ्चिदत्र पूर्वापरव्याहतत्वम् ।

आ० र०-अथ कासप्रकरणम् । तत्र कासभेदानाह-पञ्च कासा इति ।

**क्षयायोपेक्षिताः सर्वे**

स०-सर्वे एव कासा उपेक्षिता -चिकित्सा विना, क्षयाय सम्पद्यन्ते, उत्तरोत्तरक्रियावस्थाकर्षणात् । क्षयजोऽप्युपेक्षित क्षयायैवेति बोध्यम् ।

आ० र०-पञ्चानां क्षयहेतुत्वमाह-क्षयायेति ।

**बलिनश्चोत्तरोत्तरम् ।**

स०-उत्तरोत्तर चैते कासा बलिन ।

आ० र०-पञ्चानामुत्तरोत्तर दु साध्यत्वमाह-बलिनश्चेति ।

तेषा कासाना पूर्वरूपमाह—

**तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ॥ १८ ॥ शूकपूर्णाभकण्ठत्वम्**

स०-तेषा-कासाना, भविष्यता-उत्पित्सूना, गले कण्डू - खर्जू, तथाऽरोचक, तथा शूकपूर्णसदृशकण्ठत्व च भवति ।

आ० र०-पूर्वरूपमाह-तेषामिति । सङ्ग्रहे तु (नि अ ३)-"अस्वास्थ्य हृदयस्य च ।" इत्यधिकम् ।

अधुना सर्वकासाना सम्प्राप्तिं दर्शयति—

**तत्राधो विहतोऽनिलः ।**
**ऊर्ध्वं प्रवृत्तः प्राप्योरस्तस्मिन् कण्ठे च संसजन् ॥ १९ ॥**
**शिरःस्रोतांसि सम्पूर्य ततोऽङ्गान्युत्क्षिपन्निव ।**
**क्षिपन्निवाक्षिणी पृष्ठमुरः पार्श्वे च पीडयन् ॥ २० ॥**
**प्रवर्तते स वक्रेण भिन्नकांस्योपमध्वनिः ।**

स०-तत्र-तेषु कासेषु, अनिलोऽध -अवस्तात्, विहतो-विशेषेणात्यर्थ हत, ऊर्ध्व प्रवृत्तोऽनन्तरं क्रमेणोरो-हृदय, प्राप्य तस्मिन्-उरसि, ससजन्-अभिष्वजमान, तथा कण्ठेऽपि ससजन्, अनन्तर शिरस्रोतासि सम्पूर्य-मस्तकशिरा आध्माप्य, तत -अनन्तरम्, अङ्गानि-सर्वानवयवान्, उत्क्षिपन्निव-ऊर्ध्व प्रेरयन्निव, तथाऽक्षिणी क्षिपन्निव-बहिरिव शरीरात्प्रेरयन्, तथा पृष्ठमुरश्च पार्श्वे च पीडयन्, स -वायु, वक्रेण प्रवर्तते । किम्भूत ? भिन्नकास्योपमध्वनि, भिन्न-भग्न, यत् कास्य तत्तुल्यशब्द ।

आ०र०-सम्प्राप्तिमाह-तत्राध इति । सङ्ग्रहे तु(नि अ ३) -"कषायविज्जलासात्म्यकटुम्लमधुरोषणे । रूक्षशीतगुरुस्निग्धक्लेदिपर्युषिताशनै ॥ धारणोदीरणायासराज्यह स्वप्नजागरै । अन्यैश्च तद्विधैर्धातुक्षयावरणकारिभि ॥ क्रुद्ध प्रतिहतोऽपाने यदाऽपान प्रवर्तते । ऊर्ध्वं रसस्य स स्थाने तिष्ठन्नुरसि पीड्यते ॥ उदानेन संजस्तत्र कण्ठे चानुप्रपूर्य च । वाहिनीर्गलमूर्धस्थास्ततोऽङ्गान्युत्क्षिपन्निव ॥ क्षिपन्निवाक्षिणी पृष्ठमुर पार्श्वे च पीडयन् । विवृतत्वान्मुखेनैति भिन्नकास्योपमध्वनि ॥ यस्मात्तस्मात्स वर्णौजोबलमासक्षयावह. ।" इति ।

---

१ 'दास्तन्द्रिता' स सु । २ 'कोष्ठस्य भेद ' मा नि । 'कण्ठस्य भेद ' स सु । ३ 'विरतिरपि रते रक्त' स सु. । ४ 'सर्गा ।' स सु. मा नि । ५ 'कुथित' मा नि । ६ 'यास्थिकल्प' फ. । ७ 'तु त्रिभिरेव दो' ट. । 'तु तत्रिभि' ड. । 'तु तत्र त्रि' ण । ८ 'तुस्वभावात्' ट । ९ 'त्र तत्पूर्वा' थ । १० "उपेक्षिता - अनुपक्रान्ता, क्षयाय-मरणाय राजयक्ष्मणे वा" इति चन्द्र ।

१ 'नश्च यथोत्त' ण द । २ "ससजन्-अभिषङ्ग कुर्वन्" इति तोडर । ३ 'त्यन्त ह' ड. । ४ 'भिषज्जमा' ट । ५ "विज्जल - छिन्नपिच्छिलप्रायो गुणविशेष." इतीन्दु । ६ 'म्ललवणोष' स स । ७ 'स्निग्धोक्लेदि' स स । ८ 'प्रपद्यते' स द्व । ९ 'स्वस्थाने' फ स.मू । १० 'तिष्ठासुरुपपद्यते' स मू. । ११ 'सहैकत्र' फ. ।

ननु, कथमेकरूपायां काससम्प्राप्तौ सत्यामनेकरूपता कास रुग्ध्वनीनां जायते ? इत्याह—

**हेतुभेदात्प्रतीघातभेदो वायोः सरहसः ॥ २१ ॥**
**यद्रुजाशब्दवैषम्यं कासानां जायते ततः ।**

स०–हेतुभेदात्–निदानविशेषात्, काससम्प्राप्तौ वर्तमानस्य वायोः प्रतीघातभेदः–प्रत्याहारविशेषः । किम्भूतस्य वायोः ? सरहसो–वेगवतः । यत्–यस्मात्, ततः–तस्मात्, रुजाशब्दयोः–शूलध्वन्योः, वैषम्यं–न समता, कासानां जायते । अन्यादृशौ रुक्शब्दौ वातकासे, अन्यादृशावन्येषु कासेषु ।

**आ० र०–सम्प्राप्त्यैक्येऽपि कासभेदे युक्तिमाह–हेतुभेदादिति । यद्यपि पञ्चानां कासानां वायुरेव समवायिकारणम्, तथाऽपि निमित्तकारणानां पित्तादीनां भेदाद्वायोः प्रतीघातः भेदः । पित्तेन कफेन उरःक्षतेन धातुजक्षयसङ्कुचितैः स्रोतोभिर्योऽन्यथा प्रतिहन्यते प्रतिघातभेदात् । शूलभेदः शब्दभेदश्च कासानां भेदकः । यत्–यस्मात् ।**

अधुना वातकासस्य निदानादिनिर्देशार्थमाह—

**कुपितो वातलैर्वातः शुष्कोरःकण्ठवक्त्रताम् ॥ २२ ॥**
**हृत्पार्श्वोरःशिरःशूलं मोहक्षोभस्वरक्षयान् ।**
**करोति शुष्कं कासं च महावेगरुजास्वनम् ॥ २३ ॥**
**सोऽङ्गहर्षी कफं शुष्कं कृच्छ्रान्मुक्त्वाऽल्पतां व्रजेत् ।**

स०–वातलैर्वातः कुपितः शुष्कोरःकण्ठवक्त्रतां हृत्पार्श्वोरःशिरःशूलं मोहक्षोभस्वरक्षयान् करोति । तथा, अतिवेगपीडाशब्दयुतं शुष्कं च कासं करोति । वातलैरिति निर्देशोऽस्यार्थः वातलैः कुपितो वायुरिति बोध्यम् । वातिके कासेऽन्येष्वपि हि कासेष्वीषद्वातलैः कुपितस्य वातस्यानुज्ञाऽस्त्येव । कुपितवातमन्तरेण हि कासानां जन्मासम्भवः । कोपस्तु कोपकारणैर्विना यथायथं दोषाणां न जायते । तस्मादत्रातिवातलैः कुपित इति बोध्यम् । तथा, सः–वायुः, अङ्गं हर्षयति । तथा, कफं शुष्कं कृच्छ्रान्मुक्त्वाऽल्पतां व्रजेत् ।

**आ० र०–वातकासलक्षणमाह–कुपित इति । कषायपिच्छिलादिषु यानि वातलानि, तैः कुपितैः । अनयेव पित्तकासे पित्तलैः, श्लेष्मकासे श्लेष्मलैरिति ज्ञेयम् । क्षोभः–शरीरसञ्चलनम् । सः–शुष्ककासः । अङ्गहर्षी–अङ्गानि कण्टकितानि कुर्वन् ।**

**पित्तात्पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः ॥२४॥**
**पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमकोऽम्लकः ।**
**प्रततं कासवेगेन ज्योतिषामिव दर्शनम् ॥ २५ ॥**

१ 'प्रत्याहननविशेष' इति चन्द्र । २ **'वायु'** ण द स स । ३ **'शुष्ककास'** हेमाद्रि चन्द्र स स । ४ 'ताः करोति । हृदादिशूलं तथा' ट ड ण थ द । ५ 'लम्बवा' ट । ६ 'त्राप्यति' ड । ७ **'को मद'** फ. चन्द्र स स । ८ "प्रततं–निरन्तरम् । कासवेगेन–कासस्यातिशयेन ।" इति तोडर ।

स०–पित्तात्–पित्तकासात्, पीताक्षिकफतादिकं जायते । ज्योतींषि–तारकाः, तेषां दर्शनमिव ।

**आ० र०–पित्तकासलक्षणमाह–पित्तादिति ।**

**कफादुरोऽल्परुङ्मूर्द्धहृदयं स्तिमितं गुरु ।**
**कण्ठोपलेपः सदनं पीनसच्छर्द्यरोचकाः ॥ २६ ॥**
**रोमहर्षो घनस्निग्धश्वेतश्लेष्मप्रवर्तनम् ।**

स०–कफात्–कफकासात्, उरोऽल्परुगित्यादि जायते । पित्तलैः कुपितात् पित्तात्, तथा श्लेष्मलैः कुपितात् कफात्, इत्यनिर्दिष्टमपि पित्तकफकासयोर्निर्दिष्टं बोध्यम् ।

**आ० र०–कफकासलक्षणमाह–कफादिति ।**

इदानीं क्षतकासस्य निदानादि निरूपयति—

**युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ॥ २७ ॥**
**उरस्यन्तःक्षते वायुः पित्तेनानुगतो बली ।**
**कुपितः कुरुते कासं कफं तेन सशोणितम् ॥ २८ ॥**
**पीतं श्यावं च शुष्कं च ग्रथितं कुथितं बहु ।**
**ष्ठीवेत्कण्ठेन रुजता विभिन्नेनेव चोरसा ॥ २९ ॥**
**सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।**
**पर्वभेदज्वरश्वासतृष्णावैस्वर्यकम्पवान् ॥ ३० ॥**
**पारावत इवाकूजन् पार्श्वशूली ततोऽस्य च ।**
**क्रमाद्वीर्यं रुचिः पक्ता बलं वर्णश्च हीयते ॥ ३१ ॥**
**क्षीणस्य सासृङ्मूत्रत्वं स्याच्च पृष्ठकटीग्रहः ।**

स०–युद्धं–बाहुयुद्धं, आद्यं येषां–साहसानां कठिनधनुराकर्षणादीनां, तैः साहसैरयथाबलं–शक्त्यतिक्रमेण, सेवितैः–आचरितैः, उरस्यन्तः–मध्ये, क्षते सति वायुः पित्तेनानुगतः कासं करोति । तैस्तैरिति सर्वनाम्ना दुःशकं हस्त्यश्वादिसाधनं तथोच्चभाषणं गुरुभारोद्यमनं वेगवन्नद्यादिषु प्रतिस्रोतस्तरणादिकमुरःक्षतोत्पादनं गृह्यते । पित्तानुगतमात्रेण च वायोरतिकोपं प्रतिपादयति । अत एवाह–बलीति । पित्तानुगतत्वेनैव सः रक्तदूषणं कासं कुर्वन् वायुः, तेन–कासेन, कफं सशोणितं–रक्तयुतं, तथा पीतं कुथितं–पूतिगन्धि, बहु च ष्ठीवेत् । तथा, कुपितवायुवशात् कफं बहु श्यावं शुष्कं ग्रथितं–पिण्डितं, च

१ "पीतशब्दः प्रत्येकमक्षिकफयोः सम्बध्यते ।" इति चन्द्र. । २ "मूर्द्धहृदयं–शिरोहृदयम् । स्तिमितं–जडं स्तब्धम् । गुरु–भारिकम् । कण्ठास्यलेपः,–कण्ठस्य–गलस्य, तथा आस्यस्य–मुखस्य, लेपः–श्लेष्मलिप्तता ।" इति तोडर । "आद्यशब्देनातिव्यवायभाराध्वगजाश्वमहिषादिनिग्रहादेरयथाबलारम्भाख्यस्य साहसस्य परिग्रहः । पक्ता–अग्निः ।" इति चन्द्रतोडरौ । "क्रमात्–कालपरिपाकेन ।" इति चन्द्र । ३ **'कण्ठास्यलेप'** तोडर । ४ **'श्याम'** फ । ५ **'पक्तिर्बलं'** स स । ६ 'युद्धमत्र । युद्धमाद्य' ट ड थ । ७ 'न्नदीप्रति' ट ड । ८ 'क्षत्युत्पा' ट ड । ९ 'रपि कोप' ड ण द । १० 'यु कफ' ड ण थ द । ११ 'मुहु' ड ण थ,द ।

ष्ठीवेत् । तथा, कण्ठेन रुजता-शूलवता, तथोरसा विभिन्नेनेव-द्विधेव विदीर्णेन, तथा सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना-रुजायुक्तेन, च वक्षसोपलक्षित पर्वभेदादिमान् पुरुष , तथा पारावत इवाकूजन्-अव्यक्त शब्द कुर्वन् । तथाऽस्य-कासिन , क्रमेण वीर्यादि हीयते । क्षीणस्य चास्य सास्रमूत्रता स्यात् पृष्ठकटीग्रहश्चेति ।

आ० र०-क्षतकासलक्षणमाह-युद्धाद्यैरिति । तेन-कासेन, हेतौ तृतीया, कण्ठेनोरसेति करणे । भेदतोदशूलान्युरस । तत -सोपद्रवात्कासात् । क्षीणस्य-वीर्यादिहीनस्य ।

इदानी क्षयकासलक्षण निरूपयति—

**वायुप्रधानाः कुपिता धातवो राजयक्ष्मिणः ॥ ३२ ॥**
**कुर्वन्ति यक्ष्मायतनैः कासं ष्ठीवेत्कफं ततः ।**
**पूतिपूयोपमं पीतं विस्रं हरितलोहितम् ॥ ३३ ॥**
**लुञ्च्येत इव पार्श्वे च हृदयं पततीव च ।**
**अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः ॥ ३४ ॥**
**स्निग्धप्रसन्नवक्त्रत्वं श्रीमद्दर्शननेत्रता ।**
**ततोऽस्य क्षयरूपाणि सर्वाण्याविर्भवन्ति च ॥ ३५ ॥**

स०-राजयक्ष्मिणो-राजयक्ष्मवतो नरस्य, वायु प्रधानो-बली, येषा ते वायुप्रधाना । तथा, कुपिता -क्रुद्धा । के ते ? धातवो-वातादय , कास कुर्वन्ति । कै कुपिता ? यक्ष्मायतनै -यक्ष्मनिदानोक्तै साहसादिभि । तत -अनन्तर, पूतिपूयोपम पीत विस्र तथा हरितलोहित ष्ठीवेत् । तथा, पार्श्वे लुञ्च्येते इव-स्थानात्प्रच्याव्येते इव । हृदय च पततीव-भ्रश्यतीव । तथा, अस्य-क्षयजकासिन , अकस्मात्-निमित्तमन्तरेणापि, उष्णशीतेच्छा भवति । कदाचिच्छीतार्तोऽपि नोष्णमभिलषति, कदाचिदत्युष्णक्रान्तोऽपि न शीतमभिलषति । तथा, बह्वाशित्वादय स्यु । तत -अनन्तर, सर्वाणि क्षयरूपाणि -पीनसश्वासादीनि, अस्याविर्भवन्ति ।

आ० र०-क्षयकासलक्षणमाह-वायुप्रधाना इति । यक्ष्मायतनै -राजयक्ष्मनिदानै कुपिता । लुञ्च्येते-निष्पीड्यापनीयेते ।

**इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।**
**याप्यो वा बलिना, तद्वत् क्षतजोऽभिनवौ तु तौ ३६**
**सिध्येतामपि *सानाथ्यात्**

स०-इत्येष -एवमादिरूप , क्षयज कास क्षीणाना देहनाशन । बलिना-अक्षीणाना, याप्यो वा देहनाशनो वेति वाशब्दस्यार्थ । तद्वत्-क्षयजकासवत् । क्षतज कास क्षीणाना देहनाशनो बलवता याप्यो वा देहनाशनो वा भवति । अभिनवौ तु तौ-नवोत्थितौ पुन क्षयक्षतजकासौ, बलिना सिध्येतामपि, न केवलमसाध्ययाप्याविल्यपिशब्देन द्योत्यते । कुत सिध्येताम् ? सानाथ्यात्-चतुष्पात्सम्पत्तेरित्यर्थ ।

आ० र०-अथ कासाना साध्यादिभेदा । तत्र क्षयकासस्य-क्षीणानामिति । क्षीणानामसाध्य । बलिना याप्योऽसाध्यो वा ।

क्षतकासस्य-तद्वत् क्षतज इति । तद्वत्-क्षयकासवत् ।

क्षयक्षतकासयो -अभिनवाविति । सानाथ्यात्-भिषगादिगुणसम्पत्ते । अपिशब्दात् कदाचित् न सिध्येताम् ।

इदानी शेषाणामपि कासाना साध्ययाप्यविभाग निरूपयति-

**साध्या दोषैः पृथक् त्रयः ।**
**मिश्रा याप्या द्वयात्सर्वे जरसा स्थविरस्य च ॥ ३७ ॥**

स०-पृथग्दोषै -वातपित्तश्लेष्मभि , ये जातास्त्रय कासास्ते साध्या । ये पुनरुत्तरकालमाहारविहारादिना मिश्रा -मिश्रलक्षणा सम्पन्ना , ते याप्या । किं सर्वे एव मिश्रदोषोत्पन्ना याप्या ? नेत्याह-द्वयात्,-दोषद्वयात्, ये मिश्रा सम्पन्नास्ते याप्या । न पुनर्दोषत्रयाद्ये मिश्रलक्षणास्तेऽपि याप्या इति द्वयग्रहणात् प्रतिपादयति । सर्वे-कासा ये साध्या उक्ता पृथग्दोषजास्तेऽपि, जरसा-जरया हेतुभूतया, स्थविरस्योत्पन्ना याप्या । वृद्धो हि निष्कास एव याप्यानाम् । तथा चोवाच सङ्ग्रहे ( सू अ १३ )-"वृद्धो याप्यानाम् ।" इति ।

आ० र०-वातकासादित्रयस्य साध्यतामाह-साध्या इति ।

द्विदोषाणाम्-मिश्रा याप्या द्वयादिति । द्विदोषत्व च पश्चादनुबन्धिना दोषेण, द्विदोषजकासानुक्ते ।

सर्वेषां कासानाम्-सर्वे इति । याप्यत्व स्थविरस्य पुरुषस्य, जरसा जनिता ये कासास्ते याप्या । आहारविहारजनितास्तु साध्या । "कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम् ।" इति विकृतौ (हृ शा अ ५।७६) ।

**कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः ।**
**भवन्त्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत् ॥ ३८ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने रक्तपित्तकासनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥**

स०-[यस्मात्-] यत कारणात्, कासादुपेक्षया सहकारिकारणभूतया श्वासादयो रोगा भवन्ति, तस्मात् तं-कास, त्वर-

१ 'स तस्य' ण द । २ 'क्षणानि नि' ट । ३ 'लुप्येत' ण द फ स द्व । ४ "श्रीमत्-कान्तिमत्, दर्शननेत्रता-दन्तलोचनता ।" इति चन्द्रतोडरौ । 'दर्शन' इ ण द स द्व । ५ 'रेण, उ' ण द । ६ 'र्तो नो' ट । ७ 'न्तो न' ट । ८ 'दयश्च स्यु ' ड थ । *९ 'सामर्थ्यात्' स मू ,ड । १० 'इत्येवमेष क्ष' ण द । ११ "देहनाशन -शरीरघ्न , असाध्य इत्यर्थ. ।" इति तोडर ।

१ 'शब्दार्थ ' ट । २ 'म्पत्ताविल' ट । 'म्पत्त्येत्य' ण द । ३ 'मिलितल' ण द । ४ 'मिश्रास्ते' ड. । ५ 'वृद्धस्य कासो याप्य । तथा' ड.थ. ।

या–शीघ्रमेव, जयेत् । आदिशब्देनात्र पीनसादयो यक्ष्मनिदानोक्ता गृह्यन्त इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने रक्तपित्त कासनिदान नाम तृतीयोऽध्याय समाप्त ॥ ३ ॥

**आ० र०**–कासस्यानुपेक्षणीयत्वमाह–कासादिति । इति कासनिदानम् ।

[ इति हेमाद्रिटीकायामायुर्वेदरसायने ।
[1]निदान रक्तपित्तादि सामस्त्येन निरूपितम् ॥ ३ ॥]



## चतुर्थोऽध्यायः ।

**स०**–कासनिदानादनन्तर श्वासनिदानारम्भेऽय सम्बन्ध । कासादुपेक्षया श्वासो भवति । तथाऽनन्तरमुक्तम् ( हृ नि अ ३।३८ )–"कासाच्छ्वासक्षयच्छर्दि" इत्यादि । तस्माच्छ्वासनिदानारम्भो युक्त । श्वासेन तु सहैकीकृत्य हिध्माया कथने युक्त्या तन्त्रकृत् कारण वक्ष्यति ( श्लो १८ )–"श्वासैकहेतुप्राग्रूप" इत्यादिना ।

**अथातः [2]श्वासहिध्मानिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**स०**–पूर्ववदेतद्व्याख्येयम् ।

अथ श्वासस्य निदानानि लक्षयति—

**कासवृद्ध्या भवेच्छ्वासः पूर्वैर्वा दोषकोपनैः ।**
**आमातिसारवमथुविषपाण्डुज्वरैरपि ॥ १ ॥**
**रजोधूमानिलैर्मर्मघातादतिहिमाम्बुना ।**

**स०**–कासाधिक्येन श्वासो जायते, इत्येतदस्य प्रधान निदानम् । तथा, पूर्वैर्वा–सर्वरोगनिदानोक्तै, वातादिदोषकोपनै –तिक्तोषणादिभि । न केवलमेतैर्यावदामातिसारादिभि । [3]आमातिसारेण वमथुना विषेण पाण्डुरोगेण ज्वरेण[4] च ।

**आ० र०**–अथ श्वासप्रकरणम् । तत्र हेतूनाह–कासवृद्ध्येति । पूर्वै –सर्वरोगनिदानोक्तै । रजो–धूलि ।

**क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चमः ॥ २ ॥**

**स०**–श्वास क्षुद्रकादित्वेन पञ्चविधो[1] भवेत् ।

**आ० र०**–श्वासभेदानाह–क्षुद्रक इति ।

अधुना श्वासस्य पञ्चविधस्यापि सम्प्राप्तिमाह—

**कफोपरुद्धगमनः पवनो विष्वगास्थितः ।**
**प्राणोदकान्नवाहीनि दुष्टः स्रोतांसि दूषयन् ॥ ३ ॥**
**उरःस्थः कुरुते श्वासमामाशयसमुद्भवम् ।**

**स०**–कफेनोपरुद्ध–स्थगित, गमनं–मार्गो, यस्य स एवम् । तथा, विष्वगास्थित –समन्तादिह व्याप्य स्थित , श्वास कुरुते । कि कुर्वन् ? प्राणाश्चोदक चान्न च, तानि वोढु शील येषा तानि स्रोतासि दूषयन्–दुष्टानि विदधत् । यतो दुष्ट –कुपित । तथा, उरसि तिष्ठतीत्युर स्थ । किम्भूत श्वासम् ? आमाशयसमुद्भवम् । आमाशयात् समुद्भवो–जन्म, यस्य तमामाशयसमुद्भवम् । शास्त्रकारश्चैवविधा सम्प्राप्तिं दर्शयन् यदौषध वातजित् पाचनदीपन तदत्र शस्तमिति द्योतयति । एव सर्वरोगाणामपि सम्प्राप्त्यनुरूपमौषध रोगोपशान्त्यै इति वेद्यम् । पवनो विष्वगास्थित इत्यनेनैवोर स्थत्वे लब्धे उर स्थग्रहण प्रकर्षार्थम्, अतिशयेनोर स्थित श्वास करोतीत्यर्थ ।

**आ० र०**–श्वाससम्प्राप्तिमाह–कफोपरुद्धगमन इति । विष्वक्–सर्वत , स्वमार्गं हित्वाऽपि ।

**प्राग्रूपं तस्य हृत्पार्श्वशूल प्राणविलोमता ॥ ४ ॥**
**आनाहः शङ्खभेदश्च**

**स०**–तस्य पञ्चविधस्यापि श्वासस्य पूर्वरूप हृच्छूलादिक शङ्खभेदावसानम् ।

**आ० र०**–श्वासपूर्वरूपमाह–प्राग्रूपमिति । विलोमता–विपरीतता ।

**तत्रायासातिभोजनैः ।**
**प्रेरितः प्रेरयेत् क्षुद्रं स्वयं संशमनं मरुत् ॥ ५ ॥**

**स०**–तत्र–पञ्चसु श्वासेषु मध्ये, मरुत्–पवन , आयासातिभोजनै क्षुद्राख्य श्वास करोति । आयासो–व्यायामादिरूप , तेन तथाऽतिभोजनेन प्रेरित –प्रकर्षेणेरित उन्मार्गगामीकृत , कोपित इत्यर्थ । किम्भूत श्वासम् ? स्वय सशमन,–चिकित्सा विना किञ्चित्कालातिवाहनेन शाम्यतीत्यर्थ , अचिरकालावस्थायित्वात् । स्वय सशमनादल्पबलत्वाच्च क्षुद्रसञ्ज्ञोऽयम् ।

**आ० र०**–क्षुद्रकलक्षणमाह–तत्रेति । क्षुद्र–क्षुद्रकश्वासम् । स्वय–औषध विनैव ।

---

१ 'रक्तपित्तस्य कासस्य निदान सुनिरूपितम् ।' इत्यन्योऽपि युक्त पाठ । २ इद श्वासहिध्मानिदान चरके चि० १७ अध्याये, सुश्रुते उ०५०।५१ अध्याययो , अष्टाङ्गसङ्ग्रहे नि० ४ अध्याये चास्ति वर्णितम् । ३ 'वध्या' ड ण द । ४ 'नादि ल' ट थ । ५ 'दम्भेति । एतदस्य प्र' ट । 'दन्यप्र' ण द । ६ "वातेनोर्ध्व नीतेनामरसेन, तथाऽतिसारेण, तथा वमथुना–छर्द्या, तथा विषेण–स्थावरजङ्गमेन,० तथा रजोधूमानिलै श्वासो भवेत्,–रजसा–मुखनासाप्रविष्टधूल्या, तथैव धूमेन, तथैव अनिलेन–वायुना, तथा मर्मघातात्–गुदनाभिहृदयादिमर्मपीडनात्" इति तोडर । ७ 'ण क्षयेण च' ट.द. ।

१ 'दिभेदेन' ट । 'दि , तेन प' ण द. ।

अथ तमक लक्षयति—

**प्रतिलोमं सिरा गच्छन्नुदीर्य पवनः कफम् ।**
**परिगृह्य शिरोग्रीवमुरः पार्श्वे च पीडयन् ॥ ६ ॥**
**कासं घुर्घुरकं मोहमरुचिं पीनसं तृषम् ।**
**करोति तीव्रवेगं च श्वासं प्राणोपतापिनम् ॥ ७ ॥**
**प्रताम्येत्तस्य वेगेन निष्ठ्यूतान्ते क्षणं सुखी ।**
**कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमृच्छति ।**
**उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्तिमान् ।**
**विशुष्कास्यो मुहुःश्वासी काङ्क्षत्युष्णं सवेपथुः॥ ९ ॥**
**मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते ।**
**स याप्यस्तमकः, साध्यो नवो वा बलिनो भवेत् १०**

**स०**–पवन प्रतिलोम–विपर्यय कृत्वा, शिरा –स्रोतांसि, गच्छन् श्वास करोति । तथा कफमुदीर्य–ऊर्ध्व प्रेर्य, तथा शिरो ग्रीवा च परिगृह्य–समन्ताद्गृहीत्वा, तथोर पार्श्वे च पीडयन्–निर्मन्थयन्, कासादीन् श्वास च तीव्रवेग तथा प्राणोपतापिन करोति । प्राणाख्यो वायुरुपतप्यते येन तच्छीलत्वादसौ प्राणोपतापी श्वास । तस्य–तमकस्य, वेगेन–बलेन, पुरुष प्रताम्येत्–दु खी सम्पद्यते, श्लेष्मणा रुद्धमार्गत्वात् । अत एवाह–निष्ठ्यूतान्ते क्षण सुखीति । स च तमकश्वासी शयान –शय्यामासीन, कृच्छ्रात्–दु खेन, श्वसिति–श्वास मुञ्चति । निषण्ण –उपविष्ट सन्, स्वास्थ्यमृच्छति–नीरुक्त्व प्राप्नोति । उच्छ्रितेऽक्षिणी यस्य स उच्छ्रिताक्ष, "बहुव्रीहौ सक्थ्यक्ष्णो" इति षच् । उच्छ्रिताक्ष –ऊर्ध्वदृक् । ललाटेन स्विद्यता–स्वेदयुक्तेनोपलक्षित । भृश–अतिशयेन, अर्तिमान्–पीडावान् । तथा, विशुष्कमास्य यस्य स एवम् । मुहु –पुन पुन, श्वासो यस्य स मुहु श्वासी । उष्ण काङ्क्षति–अभिलषति । तथा, सवेपथु –कम्पवान् । स च तमको मेघादिभि पृथक् तथा श्लेष्मलै –गुडादिभि, वर्द्धते–वृद्धिं याति । मेघशब्देनात्रोभय गृह्यते, मेघोन्नमन वर्षण च । तेन मेघोन्नमनेन वर्द्धते तदुपलक्षितेन कालेन वर्षाख्येन च वर्द्धते । एव शीतशब्देनापि द्वय गृह्यते,– शीतलक्षण कालो हेमन्तशिशिराख्य, शीतगुणयुक्त औषधाहारविहारादि, तेनोभयेनापि विवर्द्धते । स तमक श्वासो याप्यो–नासौ सुखसाध्य, कृच्छ्रसाध्यो वा दुर्बलस्य पुस । स एवाभिनवोत्पन्नो बलवत पुस साध्यो वा भवेत् । सम्भावनाया लिङ्, साध्यत्वेन सम्भाव्यत इत्यर्थ ।

**आ० र०–तमकलक्षणमाह–प्रतिलोममिति । शिरोग्रीवं परिगृह्य–स्तम्भयित्वा । प्राणा –इन्द्रियाणि श्वासस्य । उच्छ्रिताक्ष –ऊर्ध्वनेत्र । ललाटेनार्तिमान्, अक्ष्णा काणवत्तृतीया ।**

१ 'सि रुन्धान. श्वा' ड. । 'सि रुध्वा श्वा' ण द. । २ "अथवा प्राणा असव उच्यन्ते बल वा । निष्ठ्यूतान्ते–श्लेष्मसङ्घातविमुक्त्यवसाने, क्षण–मुहूर्तमात्र, सुखी–स्वस्थ, स्यात् ।" इति चन्द्रतोडरौ । "प्रताम्येत्–दु खी सम्पद्येत तमसि प्रविशेद्वा ।" इति तोडर ।



मेघादिभिश्चतुर्भि, श्लेष्मलत्वेऽपि पृथक् ग्रहणमतिशयार्थम् । नवत्वे बलित्वेऽपि साध्य । वाशब्दात्सोऽपि कदाचिद्याप्य ।

**ज्वरमूर्च्छायुतः शीतैः शाम्येत्प्रतमकस्तु सः ।**

**स०**–स एव–तमकाख्यो ज्वरमूर्च्छायुतो यदा भवति, शीतैश्चौषधाहारविहारै शाम्येत्–शम याति न तमकवत् वर्द्धते, तदा स च प्रतमक उच्यते । अय च तमकस्यैव भेद इति षट्त्व श्वासाना नाशङ्क्यम् ।

**आ० र०–तमकविशेषप्रतमकलक्षणमाह–ज्वरमूर्च्छायुत इति ।**

अथ छिन्न लक्षयति—

**छिन्नाच्छ्वसिति विच्छिन्नं मर्मच्छेदरुजार्दितः ॥११॥**
**सस्वेदमूर्च्छः सानाहो बस्तिदाहनिरोधवान् ।**
**अधोदृग्विप्लुताक्षश्च मुह्यन् रक्तैकलोचनः ॥ १२ ॥**
**शुष्कास्यः प्रलपन् दीनो नष्टच्छायो विचेतनः ।**

**स०**–छिन्नाख्याच्छ्वासात् विच्छिन्न कृत्वा नर श्वसिति–न निरन्तरम् । मर्मच्छेदतुल्यया रुजयाऽर्दित । तथा, सह स्वेदमूर्च्छाभ्या वर्तते सस्वेदमूर्च्छ । तथा, आध्मानवान् । दाहश्च निरोधश्च दाहनिरोधौ, बस्तौ दाहनिरोधौ बस्तिदाहनिरोधौ, तौ विद्येते यस्य स एवम् । अध –अधस्तात्, दृक्–दृष्टि, यस्य स एवम् । तथा, विप्लुते–एकत्रानवस्थिते, अक्षिणी यस्य स एवम् । तथा, मुह्यन्–मोह गच्छन् । तथा, रक्तमेक लोचन यस्य स एवम् । तथा, शुष्कास्य सन् दीन प्रलपन् । तथा, नष्टकान्तिर्विचेताश्च ।

**आ०र०–छिन्नश्वासलक्षणमाह–छिन्नाच्छ्वसितीति । मर्मच्छेदतुल्या रुजा । निरोधो–मूत्राप्रवृत्ति । विप्लुताक्ष.–साश्रुनेत्र ।**

अधुना महदाख्य श्वास लक्षयति—

**महता महता दीनो नादेन श्वसिति क्रथन् ॥ १३ ॥**
**उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम् ।**
**प्रणष्टज्ञानविज्ञानो विभ्रान्तनयनाननः ॥ १४ ॥**
**वक्षः समाक्षिपन् बद्धमूत्रवर्चा विशीर्णवाक् ।**

१ "सानाह –ऊर्ध्वाधोवातरोधयुक्त । दीनो–दैन्ययुक्त ।" इति चन्द्रतोडरौ । "विप्लुताक्ष –चलचक्षु, अश्रुपूर्णनेत्रश्च । विचेतन –उद्विग्नचित्त । क्रथन्–नासयाऽद्भुत शब्द कुर्वन् । दीन –क्लान्तचित्त । उद्धूयमान –उत्पाद्यमान, आन्दोल्यमान । सरब्ध –सक्रुद्ध, सवेग । मत्तर्षभ इव–मेदोयुक्तो मत्तवृषभ इव । अनिश–अनवरतम् । स्वरविशेषज्ञानार्थमुपमा । विभ्रान्ते–चलिते, नयने–नेत्रे, आनन–मुख, च यस्य स एवम् । वक्ष –उर, समाक्षिपन्–श्वासवशादाकर्षन् । विशीर्णा–विनष्टा, वाक् यस्य स एवम् ।" इति तोडर । २ 'छिन्नश्वासात्' ट । ३ 'आनाहवान्' ट.थ. । ४ 'सदीन' ड.ण.थ.द । ५ 'महतो' ण.द. हेमाद्रितोडरौ ।

**शुष्ककण्ठो मुहुर्मुह्यन् कर्णशङ्खशिरोतिरुक् ॥ १५ ॥**

**स०**–महता श्वासेनार्तः पुरुषो महता नादेन–शब्देन, श्वसिति यावत्कर्णशङ्खशिरोतिरुगिति । क्रथन्–क्वणन् । उद्धूयमान –उत्कम्प्यमान । सरब्धः–सङ्क्षुभित । ज्ञान–तत्त्वावबोध । विज्ञान–कर्मसु कौशलम् ।

**आ०र०–महाश्वासलक्षणमाह–महतो महतेति । महत –श्वासात् । महता–नादेन । क्रथन्–कूजन् । उद्धूयमान –आन्दोल्यमान । सरब्ध –क्रुद्धै(क्षुब्धै)व । विभ्रान्त–अस्थिरम् । विशीर्णा–विशकलिता ।**

अथोर्ध्वलक्षणार्थमाह—

**दीर्घमूर्ध्वं श्वसित्यूर्ध्वान्न च प्रत्याहरत्यधः ।**
**श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥ १६ ॥**
**ऊर्ध्वदृग्वीक्षते भ्रान्तमक्षिणी परितः क्षिपन् ।**
**मर्मसु च्छिद्यमानेषु परिदेवी निरुद्धवाक् ॥ १७ ॥**

**स०**–ऊर्ध्वाख्याच्छ्वासात् दीर्घमूर्ध्व श्वसिति । ऊर्ध्व श्वास मुक्त्वा पुनरधो निश्वासवन्नै[3]त श्वास प्रत्याहरति । यथा,–अन्येषु श्वासेषु नर ऊर्ध्व[4] दीर्घ श्वास मुक्त्वा पुनरध प्रत्याहरति–पुनरन्त प्रवेशयितु शक्नोति, नैवमस्मिन्नूर्ध्वश्वास इत्यर्थ । किम्भूतो नैरो[5]ऽत्र स्यात्? इत्याह–श्लेष्मेत्यादि । श्लेष्मणाऽऽवृतानि मुखानि येषा तान्येवम्, श्लेष्मावृतमुखानि स्रोतासि यस्य स एवम् । तथा, क्रुद्धगन्धवहेन–कुपितमरुता, अर्दित –पीडित । तथा, ऊर्ध्वा दृग्–दृष्टि, यस्य स ऊर्ध्वदृक् । तथा, अक्षिणी परित –समन्तात्, क्षिपन् भ्रान्त कृत्वा वीक्षते । तथा, मर्मसु छिद्यमा[6]नेष्विव परिदेवी–दु खार्त, सम्पद्यते । तथा, निरुद्धवाक्–अन्त प्रविष्टवागित्यर्थ ।

**आ० र०–ऊर्ध्वश्वासलक्षणमाह–दीर्घमूर्ध्वमिति । ऊर्ध्वात्–ऊर्ध्वश्वासात् । गन्धवहो–वायु । परिदेवी–रोदनवान् ।**

**एते सिद्ध्येयुरव्यक्ता[7] व्यक्ताः प्राणहरा ध्रुवम् ।**
**इति श्वासनिदानम् ।**

**स०**–एते–तमकादय श्वासा, अव्यक्ता –अस्फुटरूपा, सिद्ध्येयुश्चिकित्स्यमाना । व्यक्ता –स्फुटलक्षणा, पुनर्ध्रुव–निश्चित, प्राणहरा स्यु ।

**आ० र०–छिन्नादीना श्वासानां साध्यत्वमसाध्यत्व चाह–एते सिद्ध्येयुरिति । अव्यक्ता.–तमकाद्भिन्नत्वेन अनिर्धारिता । "कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम् ।" इति विकृतौ (द्द. शा. अ ५।७६) । इति श्वासनिदानम् ।**

अथ हिध्मास्वरूपं लक्षयति—

१ 'कर्मकौ' ण द । २ 'शल्यम्' ड ण थ द । ३ 'न्न श्वा' ड ण थ द्ध । ४ 'नर स्वा' ड ण थ द । ५ 'ऊर्ध्व दृ' ण थ । ६ 'मानेषु प' ड ण थ द । ७ "अव्यक्ता –अस्पष्टा प्राग्रूपे वर्तमाना सन्त, अपरिपूर्णतत्वादस्फुटा' सन्त ।" इति तोडर । ८ 'दर्शय' ट. ।

## अथ हिध्मानिदानम् ।

**श्वासैकहेतुप्राग्रूपसङ्ख्याप्रकृतिसंश्रयाः ॥ १८ ॥**
**हिध्माः**

**स०**–एकशब्दस्तुल्यार्थ । श्वासाना तुल्या हेत्वादयो यासा–हिध्माना, ता श्वासैकहेतुप्राग्रूपसङ्ख्याप्रकृतिसश्रया । श्वासाना हेतु –"कासवृद्ध्या भवेच्छ्वास " (श्लो १) इत्यादिग्रन्थेन प्रतिपादित , स एव हिध्माना हेतु । श्वासाना प्राग्रूप–"हृत्पार्श्वशूल" (श्लो. ४) इत्यादि, तदेव हिध्मानाम् । तथा, श्वासा पञ्च, हिध्मा अपि पञ्च । श्वासाना प्रकृति –आसन्न कारणम्,–"कफोपरुद्धगमन " (श्लो ३) इत्यादिविशेषणविशिष्ट पवन , तादृश एव वातो हिध्माना प्रकृति । श्वासाना सश्रय –आश्रय , यमधिष्ठाय सम्भवन्ति श्वासा । यथा,–"आमाशयसमुद्भवम्" (श्लो ४) इति, स एव हिध्मानाम् । प्रायिक[3]त्व वाऽस्य बोध्य म् । जत्रुमूलादप्युत्पत्ते क्षुद्राया । तदेव श्वासाना तुल्या हेत्वादयो हिध्मानाम् ।

**आ० र०–अथ हिध्माप्रकरणम् । तत्र हिध्माया श्वासतुल्यत्वमाह–श्वासैकहेत्विति । एका–तुल्या । प्रकृति –सम्प्राप्ति. । सश्रय.–स्थानम् ।**

**भक्तोद्भवा क्षुद्रा यमला महतीति च ।**
**गम्भीरा च**

**स०**–भक्तोद्भवाद्या पञ्च हिध्मा[4] । इतिशब्दो व्यवच्छेदे[5], च समुच्चये । एव गम्भीरा चेत्यत्रापि ।

**आ० र०–पञ्चाना हिध्माना नामान्याह–भक्तोद्भवेति ।**

भक्तोद्भवा लक्षयितुमाह—

**मरुत्तत्र त्वरया[6]ऽयुक्तिसेवितैः ॥ १९ ॥**
**रूक्षतीक्ष्णखरासात्म्यैरन्नपानैः प्रपीडितः ।**
**करोति हिध्मामरुजां मन्दशब्दां क्षवानुगाम् ॥२०॥**
**शमं सात्म्यान्नपानेन या प्रयाति च साऽन्नजा ।**

**स०**–तत्र–तासु हिध्मासु मध्ये, अन्नजा हिध्मामेवप्रकारा मरुत् करोति । किम्भूतो मरुत्? अन्नपानै प्रपीडितो–बाधित । किम्भूतै ? रूक्षतीक्ष्णखरासात्म्यै , सामर्थ्यादभ्यवहृतै । तथा, त्वरया–क्रममनपेक्ष्य,अयुक्त्या–यथेच्छया,वा सेवितै । किम्भूता हिध्माम्? अरुजा–पीडया रहिताम् । तथा, मन्दशब्दा–मन्दवेगाम् । तथा, क्षवेन–क्षुता, अनुगता–अनुबद्धाम् । न केवल-

१ 'श्रया ॥ हिध्मा' द फ । २ 'त्व चास्य' ट । 'त्व वाच्यम् । ये तु [हृत्पार्श्व]शूलादय उत्पद्यन्ते प्राय श्वासानाम्, त एव हिध्मा" नाम् । अत एव श्वासेन तुल्या हे' थ. । ३ 'लादित्युत्पत्ते ' ड ण द । ४ 'ध्मा इति । च शब्दो' थ । ५ 'दे समु' ट थ । 'व्यवधानच्छेदसमु' ड ण द । ६ "त्वरया–वैपरीत्येन । अयुक्त्या–अयोगेन, सेवितै –अभ्यवहृतै । प्रपीडित –कुपित ।" इति तोडर । ७ 'नपेक्षया, अ' ट । ८ 'या से' ट । 'या च से' ड.ण.द. ।

मेवलक्षणोपेता या साऽन्नजा, या च सात्म्येनान्नपानेन शम याति साऽप्यन्नजैव । अत्र चान्नपानैरिति हेतुनिर्देश । अरुजा मन्दशब्दा क्षवानुगामिति लक्षणनिर्देश । शम सात्म्यान्नपानेनेत्युपशयनिर्देश ।

**आ० र०–भक्तोद्भवालक्षणमाह–मरुत्तत्रेति । त्वरया–वेगेन सेवितै. । [ अयुक्तिसेवितै –]अयुक्तिर्यथा भवत्येव सेवितै, अनेन सहेद सेव्यमस्मादनन्तरमिद सेव्यमित्यादिकायुक्ति । रूक्षादिभिश्च सेवितै –युक्त्याऽपि त्वरा विनाऽपि । क्षवानुगा–क्षुतयुक्ताम् ।**

अथ क्षुद्राख्या लक्षयितुमाह—

**आयासात्पवनः क्षुद्रः क्षुद्रा हिध्मां प्रवर्तयेत् ॥२१॥**
**जत्रुमूलप्रविसृतामल्पवेगा मृदुं च सा ।**
**वृद्धिमायास्यतो याति भुक्तमात्रे च मार्दवम् ॥२२॥**

**स०**–आयासात्–व्यायामात् ,पवन खल्पात् प्रकोपात् क्षुद्र – अल्प , क्षुद्रा हिध्मा प्रवर्तयेत्–विदध्यात् । किम्भूताम् ? जत्रुमूलात् प्रकर्षेण विसृता–जाताम् । अत एव क्षुद्रत्वादल्पवेगाम् , तथा मृदु–नातिरुजाकरीम् । सा चायास्यत –आयास कुर्वतो, वृद्धिं याति । भुक्तमात्रे च–सद्यो भुक्ते, मार्दव–मृदुत्व, याति ।

**आ० र०–क्षुद्रालक्षणमाह–आयासादिति । जत्रुमूल–कण्ठोरसो सन्धि. ।**

अधुना यमला व्याचष्टे—

**चिरेण यमलैर्वेगैराहारे या प्रवर्तते ।**
**परिणामोन्मुखे वृद्धिं परिणामे च गच्छति ॥ २३ ॥**
**कम्पयन्ती शिरोग्रीवमाध्मातस्यातितृष्यतः ।**
**प्रलापच्छर्द्यतीसारनेत्रविप्लुतिजृम्भिणः ॥ २४ ॥**
**यमला वेगिनी हिध्मा परिणामवती च सा ।**

**स०**–चिरेण कालेन, आहारे परिणामोन्मुखे–प्रत्यासन्नपरिणामे, तथा परिणामे चाहारस्य, या वृद्धि गच्छति, यमलैश्च वेगै –न केवलै , या प्रवर्तते सा यमलवेगप्रवर्तनात्–यमलाख्या हिध्मा । कि कुर्वती सा प्रवर्तते ? शिरश्च ग्रीवा च कम्पयन्ती । किम्भूतस्य नरस्य ? आध्मातस्य तथाऽतितृष्यत –तृडार्तस्य, तथा प्रलापादिमत । सैव च यमला वेगिनी, सैव परिणामवती, इत्येव सञ्ज्ञात्रयमस्या बोध्यम् ।

**आ० र०–यमलालक्षणमाह–चिरेणेति । यमलैर्वेगै –द्वौ वेगौ निरन्तरौ कृत्वा पुनश्चिरेण द्वौ पुनश्चिरेण द्वाविति, प्रवर्तते । पच्यमाने आहारे वर्द्धते । यमलादीनि त्रीणि नामानि ।**

महाहिध्मा व्याचिख्यासुराह—

**स्तब्धभ्रूशङ्खयुग्मस्य सास्रविप्लुतचक्षुषः ॥ २५ ॥**
**स्तम्भयन्ती तनु वाचं स्मृतिं संज्ञां च मुष्णती ।**
**रुन्धती मार्गमन्नस्य कुर्वती मर्मघट्टनम् ॥ २६ ॥**
**पृष्ठतो नमनं शोषं महाहिध्मा प्रवर्तते ।**
**महामूला महाशब्दा महावेगा महाबला ॥ २७ ॥**

**स०**–स्तब्ध भ्रूयुग्म शङ्खयुग्म च यस्य तस्य तथाविधस्य पुरुषस्य महाहिध्मा प्रवर्तते । तथा, सास्रे विप्लुते–चले, चक्षुषी यस्य तस्य, तथेदमिद कुर्वाणा प्रवर्तते । तनु–देह, स्तम्भयन्ती–निश्चल कुर्वती, तथा वाचं स्तम्भयन्ती–मूकत्व च कुर्वाणा, स्मृतिं सञ्ज्ञा च मुष्णती–स्मृतिसञ्ज्ञयोरपहरण विदधती, तथाऽन्नस्य–चतुर्विधस्यापि, मार्ग रुन्धती, तथा मर्मणा–हृदयादीना, घट्टनं–चालनं, कुर्वती, तथा पृष्ठतो नमन तथा शोषं शरीरस्य कुर्वती, महाहिध्मा प्रवर्तत इति योज्यम् । तथा, महत् मूलं–उत्पत्तौ कारण, यस्या सा महामूला । तथा, महाशब्दा महावेगा महाबला चेय भवति । एतैश्च विशेषणैरस्या शीघ्रप्राणहारित्व द्योत्यते ।

**आ० र०–महतीलक्षणमाह–ध्वस्तभ्रूशङ्खयुग्मस्येति ।**

अथ गम्भीरा लक्षयति—

**पक्वाशयाद्वा नाभेर्वा पूर्ववद्या प्रवर्तते ।**
**तद्रूपा सा मुहुः कुर्याज्जृम्भामङ्गप्रसारणम् ॥ २८ ॥**
**गम्भीरेणानुनादेन गम्भीरा**

**स०**–पक्वाशयात्–नाभेरधस्तात्, अथवा नाभे –नाभिदेशात्, या प्रवर्तते, सा पूर्ववदिति महाहिध्मावत् । यथा,–महाहिध्मा "स्तब्धभ्रूशङ्खयुग्मस्य" (श्लो २५) इत्यादिविशेषणविशिष्टा प्रवर्तते तथैवेय तथाभूतस्य पुरुषस्येत्यर्थ । तथा, तद्रूपा–तस्या महाहिध्माया सदृश रूप–लक्षण, यस्या सा तद्रूपा । महाहिध्मातोऽस्या इदमधिक लक्षणम् ,–मुहुर्मुहुर्जृम्भा तथा मुहुर्मुहुरङ्गप्रसारण कुर्यात् । गम्भीरेणानुनादेनेति । अनुनाद –अनुरणनम् , घण्टादीनामिव । गम्भीरेणानुनादेन हेतुना गम्भीराख्येयम् ।

**आ० र०**

---

१ 'न. क्रुद्ध क्षु' इ फ चन्द्र तोडर स द्व । "क्रुद्ध –स्वल्पप्रकोप । क्षुद्रा–स्वल्पप्रकोपाम् ।" इति चन्द्र । "क्रुद्ध –कुपित ।" इति तोडर । **"क्षुद्रवातो यदा कोष्ठात्"** इति चरके (चि अ १७।३१) पाठ । २ 'मादिना, प' थ. । ३ 'स्वल्पप्र' ट । ४ "विसृता–निर्गता" इति चन्द्रतोडरौ । ५ 'प्रवृत्ताम्' इति क्वचित् । ६ 'रो ग्रीवामा' द स.स. । ७ 'क्षुतजृ' फ. । ८ 'खे सत्या' ड.ण.थ.द. ।

१ 'ध्वस्तभ्रू' इ ड ण थ द फ तोडर , स.स । "ध्वस्त–लुलित" इति तोडर । **'स्तब्धशङ्खच्युतभ्रुव.'** इति चरकपाठ । २ 'साश्रुवि' इ फ च तो । ३ "सञ्ज्ञा–चेतना" इति चन्द्र । "घट्टन–व्यथन" इति तोडर । "महत्–दृढ दुरुत्सेध मूल यस्या " इति चन्द्रतोडरौ । "पृष्ठतो नमन–वक्षसो बहिर्निःसारणम् । महामूला–आमाशये प्रथमोत्पत्तिर्यस्या , तत्र बहुव्यापारवतीत्यर्थ ।" इतीन्दु । "महामूलेति महाबलगम्भीराश्रयदोषमूला ।" इति चक्र । ४ 'ध्वस्त भ्रू' ड थ । 'ध्वस्तभ्रूयुग्माच यस्य तस्य नरस्य महा' ण. द । ५ 'त्व वाच. कु' ट ड ण.द । ६ 'ध्वस्तभ्रू' ण थ.द. । ७ 'विशेषात् प्र' थ. । ८ 'स्येत्यादि ।' ट. । ९ 'जृम्भण त' ट. । १० 'धाऽङ्गप्र' ट.ण.द. ।

**तासु साधयेत् ।**
**आद्ये द्वे, वर्जयेदन्त्ये सर्वलिङ्गा च वेगिनीम् ॥ २९ ॥**
**सर्वाश्च सञ्चितामस्य स्थविरस्य व्यवायिनः ।**
**व्याधिभि· क्षीणदेहस्य भक्तच्छेदक्षतस्य वा ॥ ३० ॥**
**इति हिध्मानिदानम् ।**

**स०**–तासु–पञ्चसु हिध्मासु मध्ये, आद्य द्वे ये हिध्मे–भक्तोद्भवाक्षुद्राख्ये, ते साधयेत्–चिकित्सेत्, साध्यत्वात् । अन्त्ये ये द्वे–महाहिध्मागम्भीराख्ये, ते वर्जयेत्–नोपक्रमेत्, असाध्यत्वात् । आदौ भवे आद्ये, एवमन्त्ये, "दिगादित्वात् (दिग्भ्यो यत्" इति) यत् । तथा वेगिनी च–यमलाख्या, सर्वलिङ्गा यथोक्तलक्षणा वर्जयेत् । न केवलमेता एव वर्जयेत्, यावत्सर्वा अपि हिध्मा एवभूतस्य पुरुषस्य जाता वर्जयेत् । किम्भूतस्य ? [सञ्चितामस्य–] चिरकालसम्भृतामस्य, तथा स्थविरस्य–वृद्धस्य, तथा व्यवायिन –स्त्रीगमनशीलस्य, [तथा व्याधिभि क्षीणदेहस्य,] तथा भक्तस्य छेदो भक्तच्छेदो,–भोजननिवृत्ति, तेन क्षत –क्षीणो दुर्बलो, भक्तच्छेदक्षत, तस्य च वर्जयेत् ।

**आ० र०**

अधुना हिध्माश्वासयो शीघ्रकारित्वमाह—

**सर्वेऽपि रोगा नाशाय न त्वेवं शीघ्रकारिणः ।**
**हिध्माश्वासौ यथा तौ हि मृत्युकाले कृतालयौ ॥ ३१ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने श्वासहिध्मानिदानं नाम चतुर्थोऽध्यायः ॥ ४ ॥**

**स०**–सर्वे रोगा नाशाय–अभावाय, स्यु । न केवल हिध्माश्वासावित्युपदर्शनार्थोऽपिशब्द । न पुनरेव शीघ्रविनाशकारिण सर्वे, यथा हिध्माश्वासौ शीघ्रविनाशकारिणौ । यस्मात्तौ मृत्युकाले–मरणावसरे, कृतालयौ–विहितवसती, तस्मिन् काले तयोरवश्यभावित्वात् । शीघ्रमारणस्वभावत्वादनयोस्तु चिकित्साया सत्वर यतितव्यमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने श्वासहिध्मानिदान नाम चतुर्थोऽध्याय समाप्त ॥ ४ ॥

**आ० र०** .

**[ इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**श्वासहिध्मानिदान च सामस्त्येन निरूपितम् ॥ ४ ॥ ]**

१ "सर्वलिङ्गा–परिपूर्णलक्षणाम्" इति चन्द्रतोडरौ । "सञ्चितामस्य–प्रभूताजीर्णस्य" इति तोडर· । २ 'सयोरेकयोगक्षेमत्वादन्यरोगातिशयित्व दर्शयितुमाह' ट ण द. । ३ 'रणवेलाया, कृ' ण.द । ४ 'त्वाच्च तयो । तस्माच्चिकि' ट. । 'त्वाच्च तयोस्तु' ड. । 'भावाच्च । अनयो' थ ।

## पञ्चमोऽध्यायः ।

श्वासहिध्मानिदानादनन्तर राजयक्ष्मादिनिदानारम्भेऽस्य सम्बन्ध । कासादुपेक्षया "श्वासक्षयच्छर्दि" ( हृ नि अ. ३।३८ ) इत्युक्तम् । हिध्माश्वासयोश्चैकयोगक्षेमत्वात् श्वासहिध्मानिदानानन्तरं राजयक्ष्मनिदानमारभ्यते—

**अथातो राजयक्ष्मादिनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**स०**–पूर्ववदत्र व्याख्या । आदिशब्देन स्वरभेदादीना ग्रहणम् ।

राजयक्ष्मा क उच्यते ? यस्येद निदानम्, इत्याह—

**अथ राजयक्ष्मनिदानम् ।**

**अनेकरोगानुगतो बहुरोगपुरोगमः ।**
**राजयक्ष्मा क्षय· शोषो रोगराडिति च स्मृतः ॥ १ ॥**

**स०**–अनेकै –ज्वरातीसारादिभि, परिवृत । तथा, बहूना रोगाणा–गुल्मातीसारादीना, पुरोगम -प्रधानश्च । यथा हि राजा प्राक् पश्चात् रथेभाश्वजनैरनुगम्यते, तथाऽय रोगो रोगै । राजयक्ष्मेत्यादयश्चतस्र सञ्ज्ञा ।

**आ० र०**–अथ राजयक्ष्मप्रकरणम् । तस्य नामचतुष्टयमाह–अनेकरोगानुगत इति ।

तत्राद्या सञ्ज्ञा व्युत्पादयन्नाह—

**नक्षत्राणा द्विजाना च राज्ञोऽभूद्यदयं पुरा ।**
**यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मत· ॥ २ ॥**
**देहौषधक्षयकृतेः क्षयस्तत्सम्भवाच्च स· ।**
**रसादिशोषणाच्छोषो रोगराट् तेषु राजनात् ॥ ३ ॥**

**स०**–नक्षत्राणा–अश्विन्यादीना, तथा द्विजाना–ब्राह्मणाना च, यो राजा–चन्द्र, तस्य पुरा–पूर्व, अभवत् । पूर्वकल्पे

१ 'च्छर्दय स्यु, इ' ट. । 'क्षयादय स्यु । हि' ण द । २ 'श्वासनि' ट थ । 'श्वासादनन्त' ड ण द । ३ इद राजयक्ष्मस्वरभेदारोचकच्छर्दिहृद्रोगतृष्णानिदान चरके सू० १७ अध्याये नि० ६ अध्याये चि० ८।२०।२२।२६ अध्यायेषु च, सुश्रुते उ० ४१।४३।४८।४९।५३।५७ अध्यायेषु, अष्टाङ्गसङ्ग्रहे नि० ५ अध्याये चास्ति वर्णितम् । ४ 'रसादा' ट । 'रभ्ङ्गादी' ण द । ५ 'नमारभ्यते ।' ट । ६ "अनेकै रोगैरनुगत –पश्चाद्भवद्भिर्युक्त । अथवा, बहुभिश्च रोगै पुरोगम.–बहवो रोगा पुरोगमा,–अग्रेसरा, यस्य स तथोक्त" इति चन्द्र. । ७ 'त् जनै' ट.ड.ण.द । ८ 'द रोगरा' इ.द तोडर ।

हि रोहिण्यामतिसक्तस्य चन्द्रस्य श्वशुर दक्षमनृतवादेन वञ्चयतोऽपमानितदुहितृस्नेहवशादुद्भूतक्रोधात् प्रजापतेर्दक्षतः राजयक्ष्माऽभवदिति श्रूयते । तस्माद्राज्ञो यक्ष्मा राजयक्ष्मेत्युच्यते षष्ठीसमासव्युत्पत्त्या । यच्च—यस्माच्च, राजा च यक्ष्मा च—राजा च रोगाणा मध्ये अनेकरोगानीकपरिवृतत्वेन यक्ष्मा च, ततो राजा चासौ यक्ष्मा च राजयक्ष्माऽभिमतो मुनीनामिति शेष । तथा देहश्चौषध च, तयो क्षय, तस्य कृति—कारण, ततो देहौषधक्षयकृते क्षय इत्युच्यते । अनेन चास्य व्याधे र्बहुकालस्थायित्व द्योतयति । किलाय व्याधिर्बहुतर कालमवतिष्ठते न च शान्ति गच्छति । यावद्देह क्षीयते, औषधान्यपि क्षीयन्ते, न पुनरय व्याधि, इति देहौषधक्षयकृते क्षय इत्युच्यते । तत्सम्भवाच्च स । तदित्यनेन देहोषधक्षय प्रत्यवमृश्यते । स सम्भवो—जन्म, यस्यासौ तत्सम्भव, तस्मादपि क्षय इत्युच्यते । एवमन्योऽपि यो व्याधिर्देहौषधक्षयकारी, सोऽपि क्षयाख्यस्य व्याधे सम्भव—कारणम्, तस्माज्जायत इत्यर्थ । रसादीना शोषणात् शोष इति भण्यते । रोगेत्यादि । बहुषु रोगेषु मध्ये रोगत्वेनैष एव भ्राजते, तस्माद्रोगराडित्युच्यते ।

**आ० द०—नामनिर्वचनमाह—नक्षत्राणामिति । राज्ञ—चन्द्रस्य, यक्ष्मा—रोगो, राजयक्ष्मा । अथवा, रोगाणा राजा यक्ष्मा चेति राजयक्ष्मा । देहमौषध च क्षिणोतीति क्षय । अथवा, शुक्रादिक्षयात् सम्भवतीति क्षय, कार्यकारणयोरभेदोपचारात् । रसादयो धातव शुष्यन्त्यनेनेति शोष । [राज] वद्रोगेषु राजत इति रोगराट् ।**

**साहसं वेगसंरोधः शुक्रौजःस्नेहसङ्क्षयः ।
अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः ॥ ४ ॥**

**स०**—साहस—कायेन वाचा वाऽयथाबलमारम्भ । वेगसरोधो—वातविण्मूत्रादीनामुन्मुखीभूताना वारणम् । शुक्र च ओजश्च स्नेहश्च तेषा सङ्क्षयो—विनाश । अत्र स्नेहशब्देन देहस्नेहो ग्राह्य, देहशब्दलोप कृत्वाऽय निर्दिष्ट । तथा च मुनि (च चि अ ८।२)—"देहस्नेहपरिक्षयात्" इति । तथा, अन्नपानयोर्यथाशास्त्र यो विधिस्तस्य त्यागो—अन्यथासेवनमन्यथाऽभ्यवहार । तस्य—राजयक्ष्मण, चत्वार साहसादयो हेतव । पाठादेव चतु सङ्ख्यात्वे लब्धे चतुर्ग्रहण नियमार्थम् । यद्यपि साहसादय एते प्रत्येकमनेकप्रकारतया भिन्ना, तथाऽपि साहसादिचतुष्टय नातिक्रामन्तीत्यर्थ ।

**आ० द०—हेतुचतुष्टयमाह—साहसमिति । ओज—शुक्रमल । स्नेहो—मज्जमल ।**

तैयाऽस्मिन् राजयक्ष्माख्ये साहसजे वेगसरोधजे शुक्रौज स्नेहसङ्क्षयजेऽन्नपानविधित्यागजे वा चतुर्विधेऽपि विशेषेण पवनो हेतु । अत एवाह—

**तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य *सर्वतः ।
शरीरसन्धीनाविश्य तान् सिराश्च प्रपीडयन् ॥५॥
मुखानि स्रोतसां रुद्ध्वा तथैवातिविवृत्य वा ।
*सर्पन्नूर्ध्वमधस्तिर्यग्यथास्वं जनयेद्गदान् ॥ ६ ॥**

**स०**—तै—साहसादिभि, उदीर्णोऽनिल इदमिद कुर्वन् यथास्व गदान् जनयेत् । उदीर्ण—उल्बण पित्तश्लेष्मभ्यामधिक । अत एव पित्तमुदीर्य—स्वस्थानाच्च्यावयित्वा, तथा कफ सर्वत—सर्वस्मात् उदीर्य, तथा शरीरसन्धीन्—दशाधिकशतद्वयसङ्ख्यातान् आत्रेयमतेन तु द्विसहस्रसङ्ख्यातान्, आविश्य—तेषामन्त-प्रवेश कृत्वा, ताश्च—सन्धीन्, प्रपीडयन्—प्रकर्षेण मर्दयन्निव, तथा सिरा अपि सकलशरीरगा प्रपीडयन्, तथाऽन्येषा स्रोतसा मुखानि—द्वाराणि रुद्ध्वा, तथैव तानि वा अतिविवृत्य—प्रसार्य स्रोतोमुखानि । सर्पन्नित्यादि । ऊर्ध्व सर्पन् वायु पीनसादीन् व्याधीन् जनयेत्, अध सर्पन् विड्भ्रश विट्शोष वा कुर्यात्, तिर्यक् सर्पन् पार्श्वरुज वा कुर्यात्, इति यथास्वशब्दस्यार्थ ।

**आ० द०—सम्प्राप्तिमाह—तैरिति । तै—हेतुभि । सर्वत आविश्य—सूक्ष्मेष्ववयवेषु प्रविश्य । तान्—सन्धीन् । प्रपीडयन्—सङ्कोचयन् । स्रोतसा—प्राणादिवाहिना त्रयोदशाना, मुखानि—द्वाराणि, रुध्वाऽतिविवृत्य वा । तथैव—येनैव प्रकारेणातिसवृतत्व तेनैवातिविवृतत्वम् । प्रकारश्च—कफपित्ताभ्या सह सञ्चार । तौ हि कदाचिद्वात रुन्धाते, कदाचित्तेन निसार्येते । यथास्व—ऊर्ध्व सप्त पीनसादीन्, अधो द्वौ विड्भेदातिसारौ, तिर्यक् त्रीन् छर्दिपार्श्वशूलज्वरान् । यद्यपि छर्दि कोष्ठगे, सन्धिगे ज्वर, तथाऽपि तिर्यग्गतिविशेषत्वादविरोध ।**

***रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः ।
प्रसेको मुखमाधुर्यं सदनं वह्निदेहयोः ॥ ७ ॥
स्थाल्यमत्रान्नपानादौ शुचावप्यशुचीक्षणम् ।
मक्षिकातृणकेशादिपात· प्रायोऽन्नपानयोः ॥ ८ ॥**

१ 'क्रोधे प्रजापतौ दक्षे क्षयोऽस्याभ' ट । २ 'पते क्षयोऽस्याभ' थ । ३ 'त· क्षयोऽभ' ड । ४ वर्णितेय कथा चरके (चि अ ८।२) सविस्तरम् । ५ 'क्ष्मा इत्युच्यते मुनिभिरिति' ण द. । ६ 'तयोर्यक्ष' ट । ७ "तत्सम्भवात्—धातुक्षयहेतुत्वात्" इति चन्द्र । ८ 'यकर, सो' ड ण द । ९ 'राजते' इति क्वचित् । १० "साहस—अतिमात्र युद्धादि कर्म यत् कायवाङ्मनोभि· कृतम्" इति चन्द्र, "बलवद्विग्रहादि युद्धादिकमनेकधा कायवाङ्मनोभि कृतम्" इति तोडर, "अविचार्यात्मशक्ति सेवितमतिमात्र युद्धादि" इतीन्दु ।

१ 'यथा तस्मि' ड ण द । 'यथाऽस्मिन् तद्राज' थ । २ 'इत्याह—' ण । *३ "उदीर्य—स्वस्थानादूर्ध्व प्रेरयित्वा । सर्वत—ऊर्ध्वाधस्तिर्यक् । अतिविवृत्य—अतिविकाश्य । सर्पन्—गच्छन् । रूप—चिह्नम् । पादासशोफ—चरणयोर्मुखे च श्वयथु । बैभत्स्यदर्शन—भयानकदर्शनम् । घृणित्व—जुगुप्सा लोलुपता ।" इति चन्द्रतोडरौ । "पतङ्ग—शलभ । कृकलास—शरड । श्वापदा—व्याघ्रादय । पक्षिण—मयूरादय ।" इति तोडर । "पतङ्ग—अग्नि ।" इतीन्दु. । ४ 'वा कदाचिदति' द. । ५ 'साद्यान् वा जन' ड.ण.थ.द. । ६ 'ज विदध्यात्' ट. ।

**हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः ।**
**पाण्योरवेक्षा *पादास्यशोफोऽक्ष्णोरतिशुक्लता ॥९॥**
**बाह्वोः प्रमाणजिज्ञासा काये बैभत्स्यदर्शनम् ।**
**स्त्रीमद्यमांसप्रियता घृणित्वं मूर्द्धगुण्ठनम् ॥ १० ॥**
**नखकेशातिवृद्धिश्च, स्वप्ने चाभिभवो भवेत् ।**
**पतङ्गकृकलासाहिकपिश्वापदपक्षिभिः ॥ ११ ॥**
**केशास्थितुषभस्मादिराशौ समधिरोहणम् ।**
**शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः ॥१२॥**
**ज्योतिर्गिरीणां पततां ज्वलतां च महीरुहाम् ।**

**स०**–तस्य–राजयक्ष्मण, भविष्यत उत्पित्सो, रूप–अग्ररूपं, प्रतिश्यायादि । वह्नेः सदन–पाकासामर्थ्यम् । देहस्य सादो–निर्बलता । स्थाल्यमत्रान्नपानादीना शुद्धानामप्यशुचिदर्शनमिति तदानी पुरुषस्य मिथ्याज्ञान जायत इत्यर्थ । पाण्योर वेक्षा–भूयसा स्वपाणी पश्यति । बाह्वो प्रमाणजिज्ञासा–कियत्प्रमाणौ मे बाहू इति ज्ञातुमिच्छति । काये–शरीरे शोभनेऽपि, बैभत्स्यदर्शनमिति मिथ्याज्ञान तदानी रोगस्वभावादस्योत्पद्यते । मूर्ध्न –मस्तकस्य, गुण्ठन–वस्त्रादिना सञ्छादनम् । स्वप्ने च तस्य यक्ष्मिण पतङ्गादिभिरभिभवो भवेत्–पतङ्गाद्यै पराभूयते । पतङ्ग –कीटभेद । तथा, केशादिराशिष्वधिरोहण तथा शून्यग्रामदेशादीना दर्शनं स्वप्ने भवेत् ।

**आ० र०–पूर्वरूपमाह–रूप भविष्यत इति । भृश क्षव – नासारोगेषु । सदन–स्वकार्याक्षमत्वम् । स्थाली–यत्रान्न पच्यते । अमत्र–यत्रान्न भुज्यते । पाण्योरवेक्षा–कीदृशौ मे पाणी इति जिज्ञासा । बैभत्स्यदर्शनं–सुन्दरेष्वसुन्दरत्वबुद्धि । घृणित्व–सकृपत्वम् । पतङ्गाभिभवादयो ज्वलद्वृक्षदर्शनान्ता [स्वप्ने भवन्ति] ।**

प्राग्रूपमुक्त्वा सम्प्रत्येकादशरूपमविकलमाह—

**पीनसश्वासकासांसमूर्द्धस्वररुजोऽरुचिः ॥ १३ ॥**
**ऊर्ध्वं, विड्भ्रंशसंशोषावधः, च्छर्दिश्च कोष्ठगे ।**
**तिर्यक्स्थे पार्श्वरुग्दोषे, सन्धिगे भवति ज्वरः ॥१४॥**
**रूपाण्येकादशैतानि जायन्ते राजयक्ष्मिणः ।**

**स०**–असौ च मूर्द्धा च स्वरश्च तेषा रुजोऽसमूर्द्धस्वररुज । पीनसश्च श्वासश्चासमूर्द्धस्वररुजश्च ता, तथा अरुचि, इत्यूर्ध्व–ऊर्ध्वस्थिते दोषे, भवति । अरुचेरेष पृथगुपन्यास प्राधान्यख्यापनार्थ । यथा,–अस्मिन् व्याधावतिभयावहोऽरुच्याख्य उपद्रवो न तथा पीनसादय इति । अध स्थिते दोषे विश –पुरीषस्य, भ्रंशसशोषौ विड्भ्रंशसशोषौ भवत । "विड्भ्रंशो–भिन्नवर्चस्त्व, विट्शोषो–बद्धविट्कता ।" एतयोश्च परस्पर विरुद्धत्वान्न तुल्यकाल सम्भव । तस्मात्कदाचिद्विड्भ्रंश कदाचिद्विट्शोषो भवति । छर्दिस्तु कोष्ठस्थिते दोषे स्यात् । तिर्यक्स्थे दोषे पार्श्वरुक् भवति । सन्धिगे ज्वरो भवति । एतानि पीनसादीन्येकादश रूपाणि शोषिणे उत्पद्यन्ते । मुनिस्त्वेवमवोचत् (च चि अ ८।२३)–"प्रतिश्याय ज्वर कासमङ्गमर्द शिरोरुजम् । श्वास विड्भेदमरुचि पार्श्वशूल स्वरक्षयम् ॥ कुरुते चाससन्तापमेकादश" इत्यादि ।

**आ० र०–रूपमाह–पीनसेति । स्कन्धरुक् मूर्द्धरुक् स्वररुक् चेति त्रीणि । विड्भ्रंशसशोषयोर्वैकल्पिकत्वादेकादशत्वम् । वङ्गसेने तु (राजयक्ष्माधिकारे श्लो ९) "भक्तद्वेषो ज्वर श्वास कास शोणितदर्शनम् । स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ॥" इति ।**

**तेषामुपद्रवान् विद्यात्कण्ठोद्ध्वंसमुरोरुजम् ॥ १५ ॥**
**जृम्भाङ्गमर्दनिष्ठीववह्निसादास्यपूतिताः ।**

**स०**–तेषा–एकादशसङ्ख्याना पीनसादीना पूर्वोत्पन्नाना, कण्ठोद्ध्वसादीन् पश्चादुत्थितान् सप्तोपद्रवान् जानीयात् । "व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालज । उपक्रमविघाती च स ह्युपद्रव उच्यते ॥" इत्युपद्रवलक्षणम् ।

**आ० र०–उपद्रवानाह–तेषामिति । उद्ध्वसो–वैकल्यम् । तेषामिति रूपप्राधान्यार्थम्, न स्वतन्त्रे पीनसादावमी उपद्रवा ।**

**तत्र वाताच्छिरःपार्श्वशूलमंसाङ्गमर्दनम् ॥ १६ ॥**
**कण्ठोद्ध्वंसः स्वरभ्रंशः**

**स०**–तत्र–तस्मिन् राजयक्ष्माख्ये व्याधौ, वातादधिकात् शिर शूलादय स्यु ।

**आ० र०–वातजस्य रूपमाह–तत्र वातादिति । असस्य पृथग्वचनमतिशयार्थम् ।**

**पित्तात्पादांसपाणिषु ।**
**दाहोऽतिसारोऽसृक्छर्दिर्मुखगन्धो ज्वरो मदः १७**

**स०**–पित्तादधिकात् पादादिषु दाह• स्यात् । तथा, अतीसारादयश्च *स्युः ।

**आ० र०–पित्तजस्य रूपमाह–पित्तादिति ।**

१ 'पत्रिभि' ण द । २ 'कस्यावगु' ट. । ३ 'ना च्छाद' ड थ । ४ 'मदर्शनादीनि स्व' ट । ५ 'विट्ध्वंससं' द स स । ६ 'र्दिस्तु को' फ स द्ध । ७ 'मूर्ध्नि स्थिते' थ । ८ 'रुचे पृ' ट ण द. । ९ 'वहेऽरु' ट. ।

१ 'स्रस' ट थ । २ "अत्राध स्रोतसा रोधात् विट्शोष, विवृतत्वात् विड्भ्रश । तेन सङ्ख्यायामनयोरन्यतरस्याग्रहणम्, युगपदसम्भवात् ।" इति चन्द्र । ३ 'क्कत्वम् । विट्भ्रंशसशोषयो परस्पर विरुद्धता तुल्यकालासम्भवात् । त' ड थ । 'ट्त्वम् । ए' ण द । ४ 'स्पर तुल्यकालसम्भवात् कदा' ण द । ५ 'ण, प्रपद्य' ड ण थ.द । ६ 'निश्चैव' ट । ७ 'करोति' स च । ८ 'घातित्वादुपद्रव इति स्मृत ॥' ड थ । ९ 'त्र पीनसादिषु मध्ये त' थ. । १०'दास्यपा' स.स. । *११ 'भवन्ति ।' ट.ण.द. ।

**कफादरोचकश्छर्दिः कासो मूर्द्धाङ्गगौरवम् ।**
**प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता ॥१८॥**

स०-कफाद्विकादरोचकादयो दश स्युः ।

आ० र०-कफजस्य रूपमाह-कफादिति ।

यक्ष्मिणो मांसा(अन्ना)द्यभ्यवहारतोऽपि धातुक्षयो जायते, न धातुपुष्टि, इत्यत्र युक्तिमाह—

**दोषैर्मन्दानलत्वेन सोपलेपैः कफोल्बणैः ।**
**स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च ॥ १९ ॥**
**विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् ।**
**कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति ॥२०॥**
**पच्यते कोष्ठ एवान्नमन्नपक्त्रैव चास्य यत् ।**
**प्रायोऽस्मान्मलतां यात नैवालं धातुपुष्टये ॥ २१ ॥**
**रसोऽप्यस्य न रक्ताय मांसाय कुत एव तु ।**
**उपस्तब्धः स शकृता केवलं वर्तते क्षयी ॥ २२ ॥**

स०-दोषै -वातपित्तकफै , कफोल्बणत्वात् स्रोतोद्वारेषु रुद्धेषु-पिहितेषु सत्सु, रस स्वस्थान एव विदह्यमानो-न सम्यग्पक्वता प्राप्नुवन्, तांस्तान्-अनेकान् कण्ठोद्ध्वंसादीन्, उपद्रवान् कुर्यात् । किम्भूतैर्दोषै ? कफोल्बणै -श्लेष्माधिकै । अत एव कफाधिकत्वात् सहोपलेपेन श्लेष्मलेपेन सह वर्तन्ते सोपलेपा , तैस्तथाविधैर्दोषैस्तदानी मन्दानलत्व क्रियते । तेनैव च मन्दानलत्वेन हेतुना धातूष्मसु-रसाद्यग्निषु, अल्प केषु-अतिशयेनाल्पेषु । एवमनेककारणसद्भावाद्रस स्वस्थान एव विदह्यमान -पित्तकारिणी मध्यमा पाकावस्थामनुभवन् सम्यक् पाकमगच्छन्, यथोचितान् विकारांस्तांस्तान् कुर्वन्, मांसादीन्- मांसप्रभृतिकान् धातून्, अगच्छन्-अप्राप्नुवन्, विदह्यमानतया रक्ततामापन्नं , तदसृक् चोर्ध्वं प्रधावति-ऊर्ध्व प्रसर्पति, केवल निष्ठीवनसहित वा । तस्मात् क्षयिणो न तन्मांसादिधातुपुष्टये ।

किञ्चास्मादपि हेतो स रसो न धातुपुष्टये । [यत्-] यस्मात्, [अन्न] पच्यते-अन्न सारकिट्टत्व नीयते, अन्नपक्त्रैव-जाठराग्निना, कोष्ठ एव-आमपक्वाशयाख्ये । उभयत्रैवकारोऽवधारणे । कोष्ठ एव-न धातुषु, जाठराग्निनैव-न धात्वग्निभि , इति । यत एव ततोऽस्मात्-प्राङ्निरूपिताद्धेतुकदम्बकात्, प्रायो मलता-आधिक्येन मूत्रपुरीषता, प्राप्तमन्न नैव धातुपुष्टयेऽल-समर्थम् । धातुपुष्टिग्रहणेनैतत्सूचयति,-अभिनवमृत्कुम्भजललवस्यन्दनन्यायेन सूक्ष्मस्रोतोनुप्रवेशितया सोऽन्नरसो धात्वाप्यायनमात्र करोत्येव, अन्यथा वर्षगणानुबन्धि जीवित क्षयिणो न सम्भाव्येत । तस्माद्धातुस्थितिमात्र भवति न तु धातुपोषणमिति स्थितम् ।

रसै -उभयरूपोऽन्नरसो धातुरसो वा, अस्य-क्षयिण , निकटस्य रक्तधातोर्न पुष्टये, मांसधातोर्विप्रकृष्टस्य तु कुत एव स्यात् ? एव न सम्भाव्यत इत्यपिशब्दार्थ ।

ननु, यद्येव तत्कथमन्येभ्यो धातुभ्यो विशेषेण धारणस्वभावेभ्यो विना क्षयी जीवेत् ? इत्याशङ्क्याह-उपस्तब्ध इति । स -क्षयी, शकृता-पुरीषेण, केवलमुपस्तब्ध -कृतावष्टम्भो, वर्तते-प्राणिति, पूर्वोक्तन्यायेन किञ्चिदाहाररसाप्यायितैर्धातुभिर्धारणस्वभावैर्धृतमात्र । ननु, "विदह्यमान· स्वस्थाने रसस्तांस्तानुपद्रवान् । कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति ॥" इत्यनेन रक्तस्य सत्ता प्रतिपादिता । "रसोऽप्यस्य न रक्ताय" इत्यनेन क्षयिणो रक्तस्याभाव प्रत्यपादि । तदिमे वाक्ये परस्परं व्याहाते । अत्रोच्यते । नानयोर्वाक्ययो परस्पर विरोध । यत "असृक् चोर्ध्वं प्रधावति" इत्यनेन न तद्धातुरूपतां प्राप्तमुक्तम् । किन्तर्हि ? रसस्य विदह्यमानतया स्वस्थानस्थितस्य रक्तधात्वाशयमगच्छतो रक्तोद्भूतिरुक्ता । अनेनैवाभिप्रायेणोत्तरत्र वाक्ये "रसोऽप्यस्य न रक्ताय" इत्युवाच । अनेन हि रसो धातुरूपाय रक्ताय शोषिणो न सम्पद्यत इति प्रत्यपादि ।

आ० र०-त्रयाणा सामान्य रूपमाह-दोषैरिति । उपलेपो-मलावगुण्ठनम् । विदह्यमान·-पवनपक्व , धातूष्मणामल्पत्वात् । स्वस्थान एव-न रक्तादिस्थानेषु, स्रोतोमुखरोधात् । तांस्तान्-रसवृद्ध्युक्तान् सामदोषोक्तांश्च । कोष्ठ एव-न स्रोतोन्तरेषु । अन्नपक्त्रैव-न भूतधात्वग्निभि ।

अथास्य क्षयिण साध्यासाध्यता निरूपयति—

**लिङ्गेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम् ।**
**वर्जयेत्**

स०-क्षयिण बलमांसाभ्या क्षीण लिङ्गेषु-पीनसादिषु, अल्पेष्वपि सत्सु-न सर्वेषूत्पन्नेषु, वर्जयेत्-नोपक्रमेत् । किम्भूतम् ? व्याध्यौषधबलाक्षमम् । व्याध्यौषधयोर्बल व्याध्यौषधबल, तस्याक्षमम् । क्षयाख्यस्य व्याधेर्यद्बल तथाऽस्य शमनोपायस्यौषधस्य यद्बल तत्राक्षम-असह, यतस्ततो वर्जयेदित्यर्थ ।

१ 'स्वरभेदो' इ फ तोडर । २ 'मासमवहतोऽपि ( ? ) यथा धातुक्षयो न जायते न' ण द । ३ 'पि रक्तादिक्षयो जायते सोऽतिशयेन जायते न' ड । 'पि रसातिशयो जा' थ । ४ "सोपलेपै -मलावगुण्ठितै , अपक्वै । स्वस्थाने-आमाशय एव ।" इति तोडर । ५ 'उपष्टब्ध ' स मू फ तोडर । 'अवष्टब्ध ' स स । ६ 'म्यग्विभक्त' ण द । ७ 'अतश्च क' ट । ८ 'लक्षणत्व' ड ण.थ द । ९ 'तेन म' ट ण द । १० 'सम्भवा' ण द । ११ 'मासमेद प्रभृतीन्' ट.ड थ. । १२ 'पच्यमान ' ण.द. । 'न्न , अतस्तद' ड । १३ 'अन्नसार किन्तु किट्टत्व' ड थ. । १४ 'न्नस प' ट.ड.थ. ।

१ 'न्दनेन न्या' थ. । २ 'सस्तावदुभ' ट. । ३ 'वा रसस्तावत्, अ' ण द । ४ 'भावाभ्या रक्तमासाभ्या विना' ट । ५ "केवल वर्तते-कानिचिद्दिनानि जीवति, न रक्ताद्युपष्टब्ध , इति केवलशब्देनावधारयति ।" इति तोडर । ६ 'तगात्र ' ड. । ७ 'न च रसो [न] रक्तधातुरूपतां प्राप्त उक्त । कि' ण द. । ८ 'स्थानास्थि' ड.ण.द. । ९ 'पि-सर्वेष्वनुत्पन्नेषु' ण.द. ।

**आ० र०**–असाध्यलक्षणमाह–लिङ्गेष्विति। क्षीण–क्षयरोगिणम्। व्याधिबल–दाहादिवेगम्। औषधबल–वमनादिवेगम्। न क्षमते–न सहते। "यक्ष्मा पार्श्वरुजानाहरक्तछर्दंसतापिनम्।" इति विकृतौ (हृ शा अ ५।७७)।

**साधयेदेवं सर्वेष्वपि ततोऽन्यथा ॥ २३ ॥**

**इति राजयक्ष्मनिदानम्।**

**स०**–अं(त)तोऽन्यथा–विपरीतलक्षण राजयक्ष्मिण बलमासाभ्यामक्षीणमत एव व्याध्यौषधबलक्षम, सर्वेष्वपि–पीनसादिषु लिङ्गेष्वपि सत्सु, साधयेदेवं । किंपुनर्द्वित्रादिष्वेषु साधयेदित्यपिशब्दार्थ ।

**आ० र०**–साध्यलक्षणमाह–साधयेदेवेति। ततोऽन्यथा–व्याध्यौषधबल क्षमते चेत्। इति राजयक्ष्मनिदानम्।

अथास्य व्याधेरुपद्रवभूतानामादिशब्दगृहीताना पञ्चाना स्वरभेदादीना रोगाणा निदानान्याह—

**अथ स्वरभेदनिदानम्।**

**दोषैर्व्यस्तैः समस्तैश्च क्षयात् षष्ठश्च मेदसा ।**
**स्वरभेदो भवेत्**

**स०**–दोषै –पृथग्वातपित्तकफै, समस्तै –सन्निपतितै, तथा क्षयात्, तथा षष्ठ स्वरभेदो मेदसा, स्यात्।

**आ० र०....**

**तत्र क्षामो रूक्षश्चलः स्वरः ॥ २४ ॥**
**शूकपूर्णाभकण्ठत्वं स्निग्धोष्णोपशयोऽनिलात्।**

**स०**–तत्र–तेषु षट्सु स्वरभेदेषु मध्ये, वातात्स्वरभेदे सति क्षामादिमान् स्वर स्यात्। तथा, शूकपूर्णसदृशगलत्व स्निग्धोष्णोपशयश्च भवति।

**आ० र० .**

**पित्तात्तालुगले दाहः शोष उक्तावसूयनम् ॥ २५ ॥**

**स०**–पित्तात् स्वरभेदे सति तालुनि गले च दाह, तथा शोष, प्रकृतत्वात्तालुगलयोरेव। तथा, उक्तावसूयन–वाक्यविषयेऽसहनम्, पित्तस्वरभेदी वाक्य वक्तुमसमर्थ इत्यर्थ ।

**आ० र० ...**

**लिम्पन्निव कफात्कण्ठं मन्दः खुरखुरायते ।**
**स्वरो विबद्धः**

**स०**–कफात्स्वरभेदे कण्ठ लिम्पन्निव–उपलेपमिव गलस्य कुर्वन्, खुरखुरायते–प्रकृतत्वात् कण्ठस्यैव खुरखुरमित्यव्यक्त शब्द करोति। तथा, सर्वेभ्य स्वरभेदेभ्योऽय मन्द स्वरो–नोचै श्रूयते। तथा, विबद्धो–वदतो मध्ये स्खलनरूप ।

**आ० र०**

**सर्वैस्तु सर्वलिङ्गः**

**स०**–सर्वै –त्रिभिर्दोषै समुदितै, सर्वलिङ्ग –त्रिदोषलक्षणः, स्वरभेदो भवति।

**आ० र०. ..**

**क्षयात्कंषेत् ॥ २६ ॥**
**धूमायतीव चात्यर्थम्**

**स०**–क्षयात् स्वरभेद कंषेत्–हिंस्यात्, कण्ठमर्मघटनादित्यर्थ । अनुक्तमपि प्रकृतत्वात् कण्ठमिति लभ्यते। तथा, क्षयस्वरभेदी धूमायतीवातिशयेन । अत्यर्थशब्देन पित्तस्वरभेदेऽपि धूमायन भवतीति गमयति । धूमायतीति धूमनि सरणमिव नासिकादिदेशेष्वनुभवति।

**आ० र०. ....**

**मेदसा श्लेष्मलक्षणः।**
**कृच्छ्रलक्ष्याक्षरश्च**

**स०**–मेदसा स्वरभेद श्लेष्मस्वरभेदलक्षण । तथा, कृच्छ्रेण–कथञ्चित्, लक्ष्याणि–ज्ञेयानि, अक्षराणि यत्र स एवम्। एतदेव कृच्छ्रलक्ष्याक्षरत्व कफस्वरभेदादधिकम्।

**आ० र०.**

**अत्र सर्वैरन्त्यं च वर्जयेत् ॥ २७ ॥**

**इति स्वरभेदनिदानम्।**

**स०**–सर्वैर्दोषैर्य स्वरभेद, तथाऽन्ते पठितत्वान्मेद स्वरभेद –अन्त्य, त च वर्जयेत्। चतुरस्त्वन्यान् साधयेदित्यर्थादवगम्यते।

**आ० र०**

**अथारोचकनिदानम्।**

**अरोचको भवेद्दोषैर्जिह्वाहृदयसंश्रयैः ।**
**सन्निपातेन मनसः सन्तापेन च पञ्चमः ॥ २८ ॥**

**स०**–जिह्वा च हृदय च जिह्वाहृदयम्, तत्संश्रय –आश्रयो, येषा तैस्तत्रस्थै पृथग्वातपित्तकफैररोचक स्यात्। तथा, सन्निपातेर्नात्राथो जिह्वाहृदयसंश्रितेनारोचक स्यादिति योज्यम्।

---

१ 'देव' इ ण द चन्द्र स मू । २ अस्याग्रे "क्षीणमांसबलजह्यात्पूर्वलिङ्गैरुपद्रुतम् । प्रत्याख्याय नर चाशु द्रव्यवन्तमुपाचरेत् ॥" इति इ पुस्तकेऽधिक श्लोक । ३ 'अन्यथाऽतो वि' ड थ । 'अन्यथा ततो वि' ण द.। ४ 'ङ्गेषु स' ड ण थ द.। ५ 'रसादा' ट ड ण थ द । ६ 'दस ' इ । ७ 'रसादो' स स.। ८ "क्षामो–निकटैरश्राव्य । रूक्ष –कर्णकठोर । चल –उच्चार्यवर्णत्यागी।" इति तोडर.। ९ 'प्रस्तुत' ट । १० "उक्तावसूयन–अपरिपूर्णवचनता" इतीन्दु । ११ 'हत्वम्' ड,ण.द । १२ 'भेदे वा' ट.।

१ 'खुरामि' ट ड ण द । 'खुरखुरामि' थ । २ "कषेत्–विदह्यात्" इति चन्द्र । "कर्मपदानुक्तत्वात् धूमायतीव–कण्ठतात्वादि धूममिवाचरति, सधूममिव निर्गच्छतीव वेदनयाऽनुभूयते।" इति तोडर । ३ 'त्–विद्ध स्यात्' ट ड ण द । ४ 'त्, अनु' ड ण थ.द । ५ 'शेषु च भ' ड थ । ६ 'र्थाद्गम्य' ट, । ७ 'संश्रितै.' तोडर । ८ 'नात्रार्थो' ण.द.।

**कफादरोचकश्छर्दिः कासो मूर्द्धाङ्गगौरवम् ।**
**प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता ॥१८॥**

स०-कफादविकादरोचकादयो दश स्युः ।

आ० र०-कफजस्य रूपमाह-कफादिति ।

यक्ष्मिणो मांसा(अन्ना)द्यभ्यवहारतोऽपि धातुक्षयो जायते, न धातुपुष्टि, इत्यत्र युक्तिमाह—

**दोषैर्मन्दानलत्वेन सोपलेपैः कफोल्बणैः ।**
**स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च ॥ १९ ॥**
**विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् ।**
**कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति ॥२०॥**
**पच्यते कोष्ठ एवान्नमन्नपक्तैव चास्य यत् ।**
**प्रायोऽस्मान्मलतां यात नैवालं धातुपुष्टये ॥ २१ ॥**
**रसोऽप्यस्य न रक्ताय मांसाय कुत एव तु ।**
**उपस्तब्धः स शकृता केवलं वर्तते क्षयी ॥ २२ ॥**

स०-दोषै -वातपित्तकफै , कफोल्बणत्वात् स्रोतोद्वारेषु रुद्धेषु-पिहितेषु सत्सु, रस स्वस्थान एव विदह्यमानो-न सम्यग्पक्वता प्राप्नुवन्, तांस्तान्-अनेकान् कण्ठोद्ध्वंसादीन्, उपद्रवान् कुर्यात् । किम्भूतैर्दोषै ? कफोल्बणै -श्लेष्माधिकै । अत एव कफाधिकत्वात् सहोपलेपेन श्लेष्मलेपेन सह वर्तन्ते सोपलेपा, तैस्तथाविधैर्दोषैस्तदानीं मन्दानलत्व क्रियते । तेनैव च मन्दानलत्वेन हेतुना धातूष्मसु-रसाद्यग्निषु, अल्प केषु-अतिशयेनाल्पेषु । एवमनेककारणसद्भावाद्रस स्वस्थान एव विदह्यमान -पित्तकारिणी मध्यमा पाकावस्थामनुभवन् सम्यक् पाकमगच्छन्, यथोचितान् विकारांस्तांस्तान् कुर्वन्, मांसादीन्- मांसप्रभृतिकान् धातून्, अगच्छन्-अप्राप्नुवन्, विदह्यमानतया रक्ततामापन्नं , तदसृक् चोर्ध्वं प्रधावति-ऊर्ध्व प्रसर्पति, केवल निष्ठीवनसहित वा । तस्मात् क्षयिणो न तन्मांसादिधातुपुष्टये ।

किञ्चास्मादपि हेतो स रसो न धातुपुष्टये । [यत्-] यस्मात्, [अन्न] पच्यते-अन्न सारकिट्टत्व नीयते, अन्नपक्तैव-जाठराग्निना, कोष्ठ एव-आमपक्वाशयाख्ये । उभयत्रैवकारोऽवधारणे । कोष्ठ एव-न धातुषु, जाठराग्निनैव-न धात्वग्निभि , इति । यत एव ततोऽस्मात्-प्राङ्निरूपिताद्धेतुकदम्बकात्, प्रायो मलता-आधिक्येन मूत्रपुरीषता, प्राप्तमन्न नैव धातुपुष्टयेऽल-समर्थम् । धातुपुष्टिग्रहणेनैतत्सूचयति,-अभिनवमृत्कुम्भजललवस्यन्दनन्यायेन सूक्ष्मस्रोतोनुप्रवेशितया सोऽन्नरसो धात्वाप्यायनमात्र करोत्येव, अन्यथा वर्षगणानुबन्धि जीवित क्षयिणो न सम्भाव्येत । तस्माद्धातुस्थितिमात्र भवति न तु धातुपोषणमिति स्थितम् ।

रसै -उभयरूपोऽन्नरसो धातुरसो वा, अस्य-क्षयिण , निकटस्य रक्तधातोर्न पुष्टये, मांसधातोर्विप्रकृष्टस्य तु कुत एव स्यात् ? एव न सम्भाव्यत इत्यपिशब्दार्थ ।

ननु, यद्येव तत्कथमन्येभ्यो धातुभ्यो विशेषेण धारणस्वभावेभ्यो विना क्षयी जीवेत् ? इत्याशङ्क्याह-उपस्तब्ध इति । स -क्षयी, शकृता-पुरीषेण, केवलमुपस्तब्ध -कृतावष्टम्भो, वर्तते-प्राणिति, पूर्वोक्तन्यायेन किञ्चिदाहाररसाप्यायितैर्धातुभिर्धारणस्वभावैर्धृतमात्र । ननु, "विदह्यमान. स्वस्थाने रसस्तांस्तानुपद्रवान् । कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति ॥" इत्यनेन रक्तस्य सत्ता प्रतिपादिता । "रसोऽप्यस्य न रक्ताय" इत्यनेन क्षयिणो रक्तस्याभाव प्रत्यपादि । तदिमे वाक्ये परस्परं व्याहते । अत्रोच्यते । नानयोर्वाक्ययो परस्पर विरोध । यत "असृक् चोर्ध्वं प्रधावति" इत्यनेन न तद्धातुरूपतां प्राप्तमुक्तम् । किन्तर्हि ? रसस्य विदह्यमानतया स्वस्थानस्थितस्य रक्तधात्वाशयमगच्छतो रक्तोद्भूतिरुक्ता । अनेनैवाभिप्रायेणोत्तरत्र वाक्ये "रसोऽप्यस्य न रक्ताय" इत्युवाच । अनेन हि रसो धातुरूपाय रक्ताय शोषिणो न सम्पद्यत इति प्रत्यपादि ।

आ० र०-त्रयाणा सामान्य रूपमाह-दोषैरिति । उपलेपो-मलावगुण्ठनम् । विदह्यमान.-पवनपक्व , धातूष्मणामल्पत्वात् । स्वस्थान एव-न रक्तादिस्थानेषु, स्रोतोमुखरोधात् । तांस्तान्-रसवृद्ध्युक्तान् सामदोषोक्तांश्च । कोष्ठ एव-न स्रोतोन्तरेषु । अन्नपक्तैव-न भूतधात्वग्निभि ।

अथास्य क्षयिण साध्यासाध्यता निरूपयति—

**लिङ्गेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम् ।**
**वर्जयेत्**

स०-क्षयिण बलमांसाभ्या क्षीण लिङ्गेषु-पीनसादिषु, अल्पेष्वपि सत्सु-न सर्वेषूत्पन्नेषु, वर्जयेत्-नोपक्रमेत् । किम्भूतम् ? व्याध्यौषधबलाक्षमम् । व्याध्यौषधयोर्बल व्याध्यौषधबल, तस्याक्षमम् । क्षयाख्यस्य व्याधेर्यद्बल तथाऽस्य शमनोपायस्यौषधस्य यद्बल तत्राक्षम-असह, यतस्ततो वर्जयेदित्यर्थ ।

---

१ 'स्वरभेदो' इ फ तोडर । २ 'मासमवहतोऽपि ( ? ) यथा धातुक्षयो न जायते न' ण द । ३ 'पि रक्तादिक्षयो जायते सोऽतिशयेन जायते न' ड । 'पि रसातिशयो जा' थ । ४ "सोपलेपै -मलावगुण्ठितै , अपक्वै । स्वस्थाने-आमाशय एव ।" इति तोडर । ५ 'उपष्टब्ध ' स मू फ तोडर । 'अवष्टब्ध ' स स । ६ 'म्यग्विभक्त' ण द । ७ 'अतश्च क' ट । ८ 'लल-क्षणत्व' ड ण.थ द । ९ 'तेन म' ट ण द । १० 'सम्भवा' ण द । ११ 'मासमेद प्रभृतीन्' ट.ड थ. । १२ 'पच्यमान ' ण.द. । 'न्न , अतस्तद' ड । १३ 'अन्नसार किन्तु किट्टत्व' ड थ. । १४ 'न्नस प' ट.ड.थ. ।

१ 'न्दनेन न्या' थ. । २ 'सत्तावदुभ' ट. । ३ 'वा रसस्तावत्, अ' ण द । ४ 'भावाभ्या रक्तमासाभ्या विना' ट । ५ "केवल वर्तते-कानिचिद्दिनानि जीवति, न रक्ताद्युपष्टब्ध , इति केवलशब्देनावधारयति ।" इति तोडर । ६ 'तगात्र ' ड. । ७ 'न च रसो [न] रक्तधातुरूपतां प्राप्त उक्त । कि' ण द. । ८ 'स्थानास्थि' ड.ण.द. । ९ 'पि-सर्वेष्वनुत्पन्नेषु' ण.द. ।

**सर्वलिङ्गा मलैः सर्वै रिष्टोक्ता या च तां त्यजेत् ।**

स०–सर्वलिङ्गा छर्दि सर्वैर्मलै –वातपित्तकफै सन्निपतितै[1], भवेत्। न केवलं त्रिभिर्दोषै सर्वलिङ्गा, या च रिष्टोक्ता–विकृतिविज्ञानीयाध्याये (हृ शा अ ५।७७)–"छर्दिर्वेगवती" इत्यादिना ग्रन्थेनोक्ता, साऽपि सर्वलिङ्गा–दोषत्रयलक्षणोपेता, ता त्यजेत्–न चिकित्सेत्। न तु रिष्टोक्ता या छर्दिस्ता त्यजेदिति व्याख्येयम्, तस्या रिष्टत्वेनैवासाध्यत्वस्य प्रतिपादितत्वात् ।

आ० र०

**पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभि[2] ॥ ३६ ॥**
**तप्ते चित्ते हृदि क्लिष्टे छर्दिर्द्विष्टार्थयोगजा ।**

स०–पूत्यादिभिस्तप्त चित्ते–उपतप्ते मनसि, तथा तैरेव पूत्यादिभि क्लिष्टे–पीडिते, हृदि या जायते छर्दि सा द्विष्टार्थयोगजा छर्दिरुच्यते । आदि –प्रकारे, यथा–आकृतिगणेषु ।

आ० र०

ननु, कृम्यादिजान्यन्यानि छर्दीषि सम्भवन्त्येव । तेषा लक्षण कस्मान्नोक्तम् ? इत्याह—

**वातादीनेव विमृशेत्कृमितृष्णामदौहृदे ॥ ३७ ॥**
**शूलवेपथुहृल्लासैर्विशेषात् कृमिजा वदेत् ।**
**कृमिहृद्रोगलिङ्गैश्च**

**इति छर्दिनिदानम् ।**

स०–कारणे कार्योपचारात् कृम्यादिशब्दैरेव छर्दय उच्यन्ते । कृमितृष्णामगर्भिणीदौहृदजे छर्दिषि वातादीनेव यथायथ स्वलक्षणैर्विमृशेत्–विचारयेल्लक्षयेत् । न हि वातादीनन्तरेणेता छर्दय कथञ्चिदपि सम्भवन्ति । अत एवैवकारोऽवधारणार्थोऽत्र व्यवायि । एव कृमिजा कदाचिद्वायुच्छर्दिलक्षणोपेतामथवा पित्तच्छर्दिलक्षणोपेता कफच्छर्दिलक्षणोपेता वा यथायथ लक्षयेत्। एव तृष्णामदोहृदच्छर्दिषि वातादीन् विमृशेत् ।

विशेषेण शूलवेपथुहृल्लासै कृमिजा वदेत् । कृमिहृद्रोगलक्षणैश्च–अनन्तरमेव वक्ष्यमाणै, कृमिजा वदेत् ।

आ० र०

अधुना हृद्रोग लिलक्षयिषुराह[6]—

**अथ हृद्रोगनिदानम् ।**

**स्मृताः पञ्च तु हृद्गदाः ॥ ३८ ॥**

१ 'तैरिति भाव । न' ड । २ "पूति गन्धेन, अमेध्य रसेन, अशुचि रूपेण, द्विष्ट–तैर्विनाऽप्यप्रिय, एतेषा दर्शनश्रवणादिभि –दर्शनश्रवणाघ्राणभक्षणस्पर्शनचिन्तनादिभि । द्विष्टार्थयोगजा–अनभिप्रेतविषयसयोगजा ॥ अथ कृमितृष्णामाजीर्णदौहृदजासु छर्दिषु दोषानुबन्धमाह–वातादीनेवेत्यादि । दाहृदो–गर्भिण्या द्वितीयादिमासेषु जायते ।" इति तोडर । ३ 'उत्तप्ते' ट । ४ 'शब्देनैव' ड ण थ द । ५'थास्त लक्ष' ट । ६ 'ग लक्षयितुमाह–' ड ण द ।

**तेषां गुल्मनिदानोक्तैः समुत्थानैश्च सम्भवः ।**

स०–हृद्गदा पञ्च स्मृता, तैत्रकृद्भिरिति शेष । [ तेषां–हृद्रोगाणा, गुल्मनिदानोक्तै –वक्ष्यमाणै, समुत्थानै –कारणै, सम्भव –उत्पत्ति । ]

आ० र०–अथ हृद्रोगप्रकरणम् । तत्र हृद्रोगभेदानाह–स्मृता इति । वातपित्तकफसन्निपातक्रिमिभि । सङ्ग्रहे तु (नि अ ५)–"तेषा गुल्मनिदानोक्त समुत्थानैश्च सम्भव ।" इति । समुत्थानै –हेतुभि ।

**वातेन शूल्यतेऽत्यर्थं तुद्यते स्फुटतीव च ॥ ३९ ॥**
**भिद्यते शुष्यति स्तब्ध हृदय शून्यता द्रवः ।**
**अकस्माद्दीनता शोको भयं शब्दासहिष्णुता ॥ ४० ॥**
**वेपथुर्वेष्टन मोहः श्वासरोधोऽल्पनिद्रता ।**

स०–वातेन हृद्रोगेऽत्यर्थ हृदय शूल्यते । अत्यर्थशब्देनेदं गमयति,–अन्येष्वपि हृद्रोगेषु हृदय शूल्यतेऽतिशयेन तु वातजे हृद्रोगे इति । तथा, तुद्यते–प्राजनेनेव । शूल–सन्तता पीडा । तोदो–विच्छिन्नोऽतिशयेन रुगुद्भव । तथा, हृदय स्फुटतीत्यादिक्रियादियुतं भवति । तथा, शून्यता द्रवत्वं च, प्रकृतत्वाद्धृदयस्यैव स्यादिति बोध्यम् ।

आ० र०–वातजलक्षणमाह–वातेनेति । शूल्यते–पीडनेनेव । तुद्यते–निस्वनेनेव । स्फुटति–विशीर्यतेति । भिद्यते–विदारणेनेव । शून्यता द्रव., अकस्माद्दीनताशोकादीनि [च] नव हृदयस्य ।

**पित्तात्तृष्णा भ्रमो मूर्च्छा दाहः स्वेदोऽम्लकः क्लमः ॥ ४१ ॥**
**छर्दनं चाम्लपित्तस्य धूमकः पीतता ज्वरः ।**

स०–पित्तात्–पित्तेन, तृष्णादय स्यु ।

आ० र०–पित्तजलक्षणमाह–पित्तादिति ।

**श्लेष्मणा हृदयं स्तब्धं भारिकं साश्मगर्भवत् ॥ ४२ ॥**
**कासाग्निसादनिष्ठीवनिद्रालस्यारुचिज्वराः ।**

स०–श्लेष्मणा हृद्रोगे हृदय स्तब्ध, तथा भारिक–गुरु,

१ इद श्लोकार्धं चन्द्रनन्दनतोडरमल्लयो सम्मतम्, न हेमाद्यरुणदत्तयो, तत्तट्टीकाभावाभावात् । २ 'नै समुद्भव.' स मू फ । ३ "पृथक् दोषैस्त्रय, सर्वैरेक, कृमिज एक, एव पञ्च ।" इति चन्द्र । ४ 'शास्त्रकृ' ड । ५ [ ] इति पाठ ट ड ण थ द सञ्ज्ञेषु लिखितपुस्तकेषु केषुचिदपि नोपलभ्यते । ६ "शूल्यते–पीड्यते । स्फुटतीव–भज्यत इव । भिद्यते–विदार्यत इव । शुष्यति–शोषमायाति । स्तब्ध–आपूरितम् । शून्यता–अज्ञान, द्रवति–गच्छति, इति शून्यताद्रव,–ज्ञानरहितम् । दीनता–दैन्यम्, शोको भय च भवति । वेष्टन–भूमौ परिलुण्ठनम् ।" इति तोडर । ७ 'शून्यताद्रवम्' तोडर । ८ 'यायु' ट । ९ 'स्य तमक' ण द । १० 'भारिकसाश्म' स स । "भारि–गुरु । कृसगर्भवदश्मगर्भवच्च ।" इतीन्दु ।

भवति । कथम् ? साऽसगर्भवत्—विद्यमानाऽश्मगर्भमदशम् । तथा, कासादय स्यु ।

**आ० र०—कफजलक्षणमाह—श्लेष्मणेति ।**

**सर्वैर्लिङ्गैस्त्रिभिर्दोषैः**

**स०**—सर्वलिङ्गो हृद्रोगस्त्रिभिर्दोषै स्यात् ।

**आ० र०—त्रिदोषजलक्षणमाह—सर्वलिङ्गमिति ।**

**कृमिभिः श्यावनेत्रता ॥ ४३ ॥**
**तमःप्रवेशो हृल्लासः शोषः कण्डूः कफस्रुतिः ।**
**हृदयं प्रततं चात्र क्रकचेनेव दार्यते ॥ ४४ ॥**
**चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम् ।**

**इति हृद्रोगनिदानम् ।**

**स०**—कृमिभिश्च हृद्रोगे श्यावाक्षिताद्या स्यु । अत्र—कृमिहृद्रोगे, हृदय क्रकचेनेव—करपत्रेणेव, [ प्रतत— ] सन्ततं, दार्यते । त—कृमिहृद्रोगाख्यमामय, घोर—अतिदु सह, शीघ्रकारिण—आशुविघातकारिण, शीघ्र—आश्वेव, चिकित्सेत् । महामर्मणो हृदयस्य कृमिभिर्भक्षणात् ।

**आ० र०—कृमिजलक्षणमाह—कृमिभिरिति । वङ्गसेने ( हृदयरोगाधिकारे श्लो १-४ )—"अत्युष्णगुर्वम्लकषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गै । सञ्चिन्तनैर्वेगविधारणैश्च हृदामय पञ्चविध प्रदिष्ट ॥ दूषयित्वा रस दोषा विगुणा हृदय गता । हृदि बाधां प्रकुर्वन्ति हृद्रोग त प्रचक्षते ॥" इति हृद्रोगनिदानम् ।**

उक्ता हृद्रोगा । शीघ्रकारित्वसामान्यात् तृष्णाऽन्तर व्याख्यायते—

**अथ तृष्णानिदानम् ।**

**वातात्पित्तात्कफात्तृष्णा सन्निपाताद्रसक्षयात्॥४५॥**
**षष्ठी स्यादुपसर्गाच्च**

**स०**—वातादिभि पञ्च तृष्णा स्यु । षष्ठी स्यादुपसर्गाच्च । उपादानादेव षट्सङ्ख्याया लब्धत्वात् षष्ठीत्येतद्वचन नियमार्थम् । आमोद्भवाद्या या वक्ष्यमाणास्तृष्णास्ता सर्वास्तृष्णाना षट्त्व नातिक्रामन्ति, वातपित्तजत्वात् । प्रायेण तासामास्वेवान्तर्भाव ।

**आ० र०—अथ तृष्णानिदानम् । तत्र तृष्णाभेदानाह—वातादिति ।**

**वातपित्ते तु कारणम् ।**
**सर्वासु**

**स०**—सर्वासु—पूर्वोक्तासु वक्ष्यमाणासु च तृष्णासु, वातपित्ते कारणम् ।

**आ० र०—वातपित्तहेतुकत्वमाह—वातपित्ते त्विति ।**

ते एव वातपित्ते हेतु । कुत एवम् ? इत्याह—

**तत्प्रकोपो हि सौम्यधातुप्रशोषणात् ॥ ४६ ॥**
**सर्वदेहभ्रमोत्कम्पतापतृड्दाहमोहकृत् ।**

**स०**—हि—यस्मात्, सौम्यस्य शरीरगतस्य वातो —श्लेष्मणो रसादेर्वातो, आहारविहारादिना यत्प्रशोषण तस्मात्, तयो — वातपित्तयो, प्रकोपो 'जायते' इत्यध्याहार्यम् । किम्भूत प्रकोप ? सर्वदेहभ्रमोत्कम्पतापतृड्दाहमोहकृत् ।

**आ० र०—उक्ते युक्तिमाह—तत्प्रकोपो हीति । हि—यस्मात्, तयो —वातपित्तयो प्रकोप, सर्वस्मिन् देहे भ्रमादीन् करोति । सौम्यान् धातून् प्रशोष्य तस्मात् । ताभ्या विना न तृष्णोत्पत्ति । भ्रमादीना ग्रहण तृष्णोपद्रवत्वज्ञापनार्थम् ।**

सौम्यधातुप्रशोषणपूर्वक तृष्णाना यतो जन्म, तस्मादिदमाह—

**जिह्वामूलगलक्लोमतालुतोयवहा सिराः ॥ ४७ ॥**
**संशोष्य तृष्णा जायन्ते**

**स०**—जिह्वादिसिरा सशोष्य तृष्णा समुत्पद्यन्ते ।

**आ० र०—तृष्णासम्प्राप्तिमाह—जिह्वामूलगलेति ।**

**तासां सामान्यलक्षणम् ।**
**मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ॥ ४८ ॥**
**कण्ठौष्ठजिह्वाकार्कश्यं जिह्वानिष्क्रमणं क्लमः ।**
**प्रलापश्चित्तविभ्रंशस्तृड्ग्रहोक्तास्तथाऽऽमयाः ॥ ४९ ॥**

**स०**—मुखशोषादिक तृड्ग्रहोक्तामयपर्यन्त निर्दिष्ट तासा—तृष्णाना, सामान्यलक्षणम् । तृड्ग्रहोक्ता —रोगानुत्पादनीयोक्ता (हृ सू अ ४।१०) शोषाङ्गमादबाधिर्यादय ।

**आ० र०—सामान्यरूपमाह—तासामिति । तृड्ग्रहोक्ता — "शोषाङ्गसादबाधिर्यसम्मोहभ्रमहृद्गदा । तृष्णाया निग्रहात्" (हृ सू अ ४।१०) इत्युक्ता ।**

**मारुतात् क्षामता दैन्यं शङ्खतोदः शिरोभ्रमः ।**
**गन्धाज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षयाः ॥ ५० ॥**
**शीताम्बुपानाद्वृद्धिश्च**

**स०**—वातात्तृष्णाया क्षामताद्या स्यु ।

**आ० र०—वातजालक्षणमाह—मारुतादिति ।**

**पित्तान्मूर्च्छाऽस्यतिक्तता ।**
**रक्तेक्षणत्वं प्रततं शोषो दाहोऽतिधूमकः ॥ ५१ ॥**

१ 'त—अन्तर्विद्यमानाऽश्मसदृशम्' ट । २ 'लिङ्ग त्रिभि' हे तो स मू । "सर्वलिङ्ग—सर्वलक्षण हृदय भवति" इति तोडर । ३ "शीघ्रकारिण—यममिव मारकस्वभाव विघातकारिणम् । उपसर्गात्—अन्यरोगाभिषङ्गात्, ज्वरादिरोगदीर्घकालानुबन्धात् । अथवा, उपसर्गादिति रोगात् । उपसर्गशब्द सामान्येन रोगमात्रेऽपि वर्तते ।" इति तोडर । ४ 'हृद्रोग स्यात् । कृ' ड.थ । 'हृद्रोगे हृदय' ण.द.।

१ 'हेतू' ट । २ "सौम्यधातु —श्लेष्मा रसो वा, तस्य प्रकर्षेण शोषणात् ॥ जिह्वामूल—रसनानालम् । गल —कण्ठ । क्लोम—फुप्फुसम् ॥ कार्कश्य—पारुष्यम् ॥ क्षामता—कृशत्वम् । दैन्य—चित्तक्लान्तत्वम् ॥ प्रतत—सन्तत निरन्तरम् ।" इति तोडर । ३ 'स्व रसा' ट ड । ४ 'ना जायते ज' थ । ५ 'सम्पद्य' ड थ । 'मुपपद्य' ट । ६ 'रस्य श्रु' इ तो । ७ 'क्षय' इ ण द तो । ८ 'ता दैन्यादय' ट. । 'तादय' ड.।

स०-पित्तात्तृष्णाया मूर्च्छादयो भवन्ति ।

आ० र०-पित्तजालक्षणमाह-पित्तादिति । प्रतत शोष मुखे, पित्तर्य (?) ।

कफतृष्णामाह[1]—

**कफो रुणद्धि[2] कुपितस्तोयवाहिषु मारुतम् ।**
**स्रोतःसु स कफस्तेन पङ्कवच्छोष्यते तत ॥ ५२ ॥**
**शुकैरिवाचित. कण्ठो निद्रा मधुरवक्त्रता ।**
**आध्मानं शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकाः ५३**
**आलस्यमविपाकश्च**

स०-कफ कुपितो जलवाहिषु स्रोत सु यदा[3] मारुत रुणद्धि तदा[3] स च कफस्तेन-मरुता, पङ्क इव शोष्यते । तत -तस्मिन् कफे शुष्के सति, कण्ठ शूकैरिवाचितो-व्याप्त , स्यात् । तथा, निद्रादयश्च स्यु ।

आ०र०-कफजालक्षणमाह-कफो रुणद्धीति । कफस्य साक्षाद्धेतुत्वाभावात् तदवरोधक पितेन वातेन शुष्क वमुक्तम् । तत.-शुष्ककफात् ।

**सर्वैः स्यात्सर्वलक्षणा ।**

स०-सर्वै -सन्निपतितै , सर्वलिङ्गा तृष्णा स्यात् ।

आ० र०-सन्निपातजालक्षणमाह-सर्वैं स्यादिति ।

**आमोद्भवा[4] च, भक्तस्य संरोधाद्वातपित्तजा ॥ ५४ ॥**
**उष्णक्लान्तस्य सहसा शीताम्भो भजतस्तृषम् ।**
**ऊष्मा रुद्धो गतः कोष्ठं या कुर्यात्पित्तजैव सा ॥५५॥**
**या च पानातिपानोत्था, तीक्ष्णाग्ने[5] स्नेहजा च या ।**
**स्निग्धगुर्वम्ललवणभोजनेन कफोद्भवा ॥ ५६ ॥**

स०-आमोद्भवा[6] च तृष्णा भक्तस्याहारस्य सरोधात् स्यात् । सा च वातपित्तजा ।

उष्णेन म्लानस्य नरस्य सहसा-झटित्येव, शीत जलं सेवमानस्योष्मा रुद्ध कोष्ठ गतो या तृषं-तृष्णा, कुर्यात् सा पित्तजैव तृष्णा, न त्वन्या बोध्या ।

या च तृट् पानस्य-मद्यपानस्य, अतिपानोद्भवा साऽपि पित्तजैव ।

याँ[7] च तीक्ष्णाग्ने पुरुषस्य स्नेहजा तृट् साऽपि पित्तजैव ।

स्निग्धादिगुणयुक्तेन भोजनेन या तृट् स्यात् सा कफसम्भवा वेद्या[8] ।

आ० र०-तृष्णान्तराणामन्तर्भावमाह-आमोद्भवा चेति, आमजाया सन्निपातजायामन्तर्भाव· । भक्तस्य सरोधाद्वात पित्तजेति, उपवासजाया वातपित्तजायाम् । उष्णक्लान्तस्य सहसा शीताम्भो भजतस्तृषम् । ऊष्मा रुद्धो गत कोष्ठ या कुर्यात्पित्तजैव सेति, उष्णपीडितस्य सहसा बहि शीताम्बुसेचनाज्जाताया पित्तजाया पित्तजायाम् । या च पानाति पानोत्थेति, मद्यातिपानजायाश्च । तीक्ष्णाग्निस्नेहजा च येति, तीक्ष्णाग्निपीतस्नेहजायाश्च । स्निग्धगुर्वम्ललवणभोजनेन कफोद्भवेति, स्निग्धादिभोजनजाया कफजायाम् ।

**तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ।**

स०-रसक्षयोक्तेन लक्षणेन-"रसे रौक्ष्य श्रम[1] "(हृ सू अ ११। १७) इत्यादिग्रन्थनिर्दिष्टेन लक्षणेन, क्षयात्मिका तृष्णा बोध्या।

आ०र० रसक्षयजालक्षणमाह तृष्णेति । रसक्षयोक्तेन-"रसे रौक्ष्य श्रम शोपो ग्लानि शब्दासहिष्णुता (हृ सू अ ११)।" "वेपथुर्वेष्टन मोह श्वासरोधोऽल्पनिद्रता ।" (?) इत्युक्तेन।

**शोषमेह[2]ज्वराद्यन्यदीर्घरोगोपसर्गत. ॥ ५७ ॥**
**या तृष्णा जायते तीव्रा[3] सोपसर्गात्मिका स्मृता ५७½**

**इति तृष्णानिदानम् ।**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये शारीरस्थाने राजयक्ष्मादिनिदानं नाम पञ्चमोऽध्याय. ॥५॥**

स०-शोषमेहज्वराद्यन्यतमदीर्घरोगोपसर्गात्-दीर्घकालानुबन्धात्,या तृष्णा स्यात् सोपसर्गात्मिका स्मृता,मुनीन्द्रैरिति शेष ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां तृतीये निदानस्थाने राजयक्ष्मादिनिदानं नाम पञ्चमोऽध्याय समाप्त ॥ ५ ॥

आ० र०-उपसर्गजालक्षणमाह-शोषमेहेति । शोषो-राजयक्ष्मा । मेह -प्रमेह । आदिशब्दात् कासश्वासोर क्षतोदरादय । अन्य.-एषामन्यतमो यो दीर्घो रोग., तेनोपसर्ग -अभिभूतत्व, तस्मात् । असाध्यलक्षण विकृतिविज्ञाने (हृ शा अ ५।७८)-"तृष्णाऽन्यरोगक्षपित बहिर्जिह्व विचेतनम् ।" इति । वङ्गसेने ( तृषाधिकारे श्लो १ )-"भयश्रमाभ्या बलसङ्क्षयाद्वा ऊर्ध्वं चित पित्तविवर्द्धनैश्च । पित्त सवात कुपित नराणा तालुप्रपन्न जनयेत्पिपासाम् । बाष्पावरोधात्कफसवृतेऽग्नौ तृष्णा बलासेन भवेत्तथा तु । सर्वास्त्वतिप्रसक्ता रोगकृशाना वमिप्रसक्तानाम् । घोरोपद्रवयुक्ता तृष्णा मरणाय विज्ञेया ॥" इति । इति तृष्णानिदानम् ।

[ इति हेमाद्रिटीकायामायुर्वेदरसायने ।
निदान राजयक्ष्मादि सामस्त्येन निरूपितम् ॥ ५ ॥ ]



१ 'कफात्तृष्णा' ड ण य । २ "रुणद्धि-आवृणोति ।" इति तोडर । ३ 'यदा' 'तदा' इत्येतन्नास्ति ड ण य द पुस्तकेषु । ४ 'या आमोद्भवा-आमाजीर्णजा, सा सन्निपातलक्षणा भवति । भक्तस्य सरोधात्-निरसनात् उपवासात्, वातपित्तजा-वातपित्तलक्षणा, भवति ।" इति चन्द्रतोडरौ । ५ 'क्ष्णाग्निस्ने' हे । ६ इदमरुणदत्तव्याख्यानमयुक्तमिव प्रतिभाति । ७ 'यावत्ती' ट । ८ 'बोध्या' ट ।

१ 'श्रम ' ड ण द, फ । २ 'षमोह' ण द चन्द्र स मू । ३ "तीव्रा-सोढुमशक्या । उपसर्गात्मिका-उपसर्गरूपा ।" इति चन्द्रतोडरौ । ४ 'षमोहाद्यपरदी' ट ण.द । 'षमोह' ड थ ।



षष्ठोऽध्यायः ।

राजयक्ष्मनिदानादनन्तर मदात्ययनिदानारम्भ । यतो यथा राजयक्ष्मा दोषत्रयजस्तथा मदात्ययोऽपि । वक्ष्यति हि तत्र (श्लो १४)-"सर्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तु भूयसा।' इति। तस्मान्मदात्ययनिदानमुच्यत इत्याह—

**अथातो मदात्ययादिनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

स०-पूर्ववद्व्याख्या ।

**तीक्ष्णोष्णरूक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु ।**
**विकाषि विशदं मद्यमोजसोऽस्माद्विपर्ययः ॥ १ ॥**

स०-तीक्ष्णोष्णादिगुण मद्यम् । अस्मात्-मद्यात्, ओजसो विपर्ययो-वैपरीत्यम्, यथा-मन्दशीतस्निग्धसान्द्रमधुरस्थिरचिरकृद्गुरुश्लक्ष्णपिच्छिलत्वम् ।

आ० र०

**तीक्ष्णादयो विषेऽप्युक्ताश्चित्तोपप्लाविनो गुणाः ।**
**जीवितान्ताय जायन्ते विषे तूत्कर्षवृत्तितः ॥ २ ॥**

स०-एत एव तीक्ष्णादयो दश गुणा विषेऽप्युक्ता । चित्तमुपप्लावितु शील येषा ते चित्तोपप्लाविन ,-चित्तविभ्रमकारिण । न केवल मद्य इत्यपिशब्दार्थ । ननु, यदि त एव तीक्ष्णादयो गुणा विषे, त एव मद्ये, तत्कथ विषस्था एव तीक्ष्णादयो मारयन्ति न मद्यस्था ? इत्यत्र युक्तिमाह-जीवितान्तायेत्यादि । विषस्थास्तीक्ष्णादयो ये गुणास्ते मारणाय सम्पद्यन्ते, उत्कर्षवृत्तित -उत्कर्षवर्तनात् ।

आ० र०. ..

कथ कृत्वा मद्य चेतो विकार नयति ? इत्याह—

**तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान् ।**
**दशभिर्दश सङ्क्षोभ्य चेतो नयति विक्रियाम् ॥ ३ ॥**

आद्ये मदे

स०-तीक्ष्णादिभिर्दशभिर्गुणैर्मन्दादीनोजस सम्बन्धिनो गुणान् सङ्क्षोभ्य-समन्तादुष्टतामापाद्य, चेतो विक्रिया-विकार नयति, आद्ये मदे । ननु, तीक्ष्णादिभिर्मन्दादीनित्येतावदेवास्तु, किं दशभिर्दशेत्यनेन ? पाठादेव हि दशसङ्ख्याऽवगमिष्यते । अस्त्येतत् । किन्तु सर्वैरेव तीक्ष्णादिभि सर्वानपि मन्दादीन् सङ्क्षोभ्य चेतो विक्रिया मद्य नयति, न तु कियद्भिरपि तीक्ष्णादिभि कियत एव मन्दादीन्, इति प्रतिपादनाय सङ्ख्याग्रहणम् । उत्कर्षतारतम्यतस्त्वस्त्येव विशेष , तेन सर्वत्र मदे नैव तुल्य क्षोभ इति वेद्यम् । आद्ये च मदे यथास्व प्रबोधजनके पुमान् स्थितो मद्यपानात्तादात्विक सुख समधिगच्छतीत्यनुक्तमपि सम्भाव्यते । तथा च मुनि (च चि अ २४।६४)-"पञ्चस्वर्थेषु कान्तेषु या रति प्रथमे मदे। यूना वा स्थविराणा वा तस्या नास्त्युपमा भुवि ॥" इति।

आ० र० ..

**द्वितीये तु प्रमादायतने स्थितः ।**
**दुर्विकल्पहतो मूढः सुखमित्यधिमुच्यते ॥ ४ ॥**

स०-अनन्तर द्वितीये तु मदे स्थित -प्राप्त , स्वार्थैर्दुष्टैस्तैस्तैर्विकल्पैर्हत -पुरुषार्थाद्विनष्ट , अत एव मूढ -कार्याकार्यानभिज्ञ , सुखमित्यविमुच्यते-सुखमिति ज्ञानेन प्रथममदोत्थेन तदानीमविमुच्यते-अधिक कृत्वा तेन सुखेन परित्यज्यते । तादात्विकमाद्य सुख नानुभवति, ओजसो विहतत्वात् । अन्ये त्वाहु ,-अवमुच्यते-निश्चिनोति सुखमेतदित्यभिनिविशते । किम्भूते मदे स्थित ? प्रमादायतने, प्रमादाना-साहसानामिहामुत्र चाशुभहेतूना, [आयतने-] स्थाने ।

आ० र०..

**मध्यमोत्तमयोः सन्धिं प्राप्य राजसतामसः ।**
**निरङ्कुश इव व्यालो न किञ्चिन्नाचरेज्जडः ॥ ५ ॥**

स०-मध्यमोत्तमयो -द्वितीयतृतीययो , सन्धिं प्राप्य-अन्तर लब्ध्वा, पुरुषो राजसतामसो न किञ्चिदशुभ नाचरेत्-अपि

१ इद मदात्ययमदमूर्च्छायसन्न्यासनिदान चरके सू० २४ अध्याये चि० २४ अध्याये च, सुश्रुते उ० ४६।४७ अध्याययो , अष्टाङ्गसङ्ग्रहे नि० ६ अध्याये चास्ति वर्णितम् । २ "मदेन मदाद्वा अत्ययो मदात्यय । प्रथममेव मद्यगुणानाह-तीक्ष्णोष्णादि । तीक्ष्णादिभिर्दशभिर्गुणैर्मद्य युक्त स्मृतम् । ननु, तीक्ष्णादयो [ये] मद्यगुणास्ते च विषेऽपि सन्ति, तर्हि मद्य विषवदनुपसेव्य प्रसज्येन, अत आह-तीक्ष्णादय इत्यादि । तुरवधारणे । अहो ये विषे स्थितास्ते जीवितान्ताय जायन्ते। कस्मादित्याह-उत्कर्षवृत्तित ।" इति तोडर । ३ 'क्ष्माम्लव्य' ण द स मू । ४ 'काशि' इति क्वचित् । ५ 'शब्दस्यार्थ ' ड । ६ 'स्थास्तीक्ष्णा' ण द । ७ 'ह-मद्य हृदयमोजस स्थान द्रव्यप्रभावादाविश्य तीक्ष्णा' ट. ।

१ "सङ्क्षोभ्य-समन्तादुद्धूय निरस्य पराभूय । आद्ये-प्रथमे, मदे-मद्यवेगे ।" इति चन्द्रतोडरौ । २ 'अस्तु चैत' ट । ३ 'सर्वैस्तीक्ष्णा' ड ण थ द । ४ 'बोध्यम्' ट । ५ 'प्रकोपक' द्र.म.थ.द्र.। ६ 'दात्मिक' ट । 'तादात्म्यिक' ण थ द । ७ 'सुखम' ड ण थ द । ८ 'तस्य ना' ट ड थ स च । ९ 'च' इ.ण.द च,तो स मू । 'स' इति क्वचित् । १० 'त्यभिमु' इ.ण.द । 'त्यभिमन्यते' ड । 'धिमुच्यते' स मू । 'त्यवबुध्यते' स.स । 'त्यवमन्यते' 'सुखमिति-असुखज्ञाने सुख मन्यते ।' इति तोडर । ११ 'र्थाद्वि' ण द । 'र्थविनष्ट ' थ । १२ 'नी विमु' ड.ण.थ.द । १३ 'तेन तेन सु' ड ण द । १४ 'दात्मिकमाद्य सुख तत्सुख' ट । १५ 'च तत्सुख' थ । १६ 'सुख मे भवेदि' ट । १७ 'त.-प्राप्त ?' ड ण थ द. । १८ 'न किं किं वाऽऽच' ण.द. ।

तु सर्वमशुभमाचरेत् । राजमसहितस्तामसो राजसतामस । शाकपार्थिवादित्वात् मध्यम (उत्तर) पदलोपी समास, राजसो वा तामसो वेत्यर्थ । राजसतामसग्रहणात् सात्विक पुरुषो नेदृशीमवस्थां प्राप्नोतीति गमयति। निरङ्कुश इव व्याल । यथा,- व्यालो-दुष्टहस्ती, जडो-बधिर, तथा निरङ्कुशो, न किञ्चिदशुभ नाचरेत्, उन्मार्गप्रवृत्तत्वात्। तन्त्रान्तरे चैवमुक्तम्-"सात्विके शौचदाक्षिण्यहर्षमण्डनलालस । गीताध्ययनसौभाग्यसुरतोत्सा हकृन्मद ॥ राजसे दु खशीलत्वमात्मत्याग ससाहसम्। कलह सानुबन्ध च करोति पुरुषे मद ॥ अशौचनिद्रामात्सर्यागम्यागमनलोलता । असत्यभाषण चापि कुर्याद्धि तामसे मद ॥" इति । व्यालग्रहणाच्च शुद्धस्वभावो हस्ती स सृणिरहितोऽपि कदाचिद्धस्त्यारोहशब्दश्रवणात् कालोचित सङ्केतमुपलभ्य युक्तमाचरत्येवेति, अतो व्यालो निरङ्कुश इति द्वितयमुपन्यस्तम्। तेजस किञ्चिच्छेषत्वात् निन्द्यामिमामवस्था प्राप्त ।

आ० र०

अत एवाह—

**इयं भूमिरवद्यानां दौःशील्यस्येदमास्पदम्।**
**एकोऽयं बहुमार्गाया दुर्गतेर्देशिकः परम् ॥ ६ ॥**

स०-अवद्याना-निन्द्याना, इय-मदावस्था, भूमि -आकर । तथा, दौ शील्यस्य-असमाहितत्वस्य, इद-मदावस्थान्तर, आस्पद-आवसथ । एकोऽय-मदविशेषो, बहुमार्गाया - अनेकमुखाया दुर्गते, पर कृत्वा देशिक -आचार्य ।

आ० र०.

**निश्चेष्टः शवच्छेते तृतीये तु मदे स्थितः।**
**मरणादपि पापात्मा गतः पापतरां दशाम् ॥ ७ ॥**

स०-तृतीये-उत्तमे मदे, स्थितो नरस्तेजसो विहतत्वात् निश्चेष्ट -चेष्टया कायवाङ्मनोलक्षणया रहित, अत एव शववच्छेते-मृतानुकल्प स्वपिति । एव च सत्यसौ पापात्मा मरणादपि पापतरामवस्था प्राप्त । यतो मृतो मरणात्समनन्तरमेव शरीरान्तर प्राप्य सुखादीन् विन्दते । तृतीया मदावस्था प्राप्तस्तु पुरुषोऽपरशरीराप्राप्तेर्न कथञ्चित् सुखाद्यनुभवतीति मरणादप्यस्य निकृष्टत्वम् ।

आ० र० ..

**धर्माधर्मं सुखं दुःखमर्थानर्थं हिताहितम्।**
**यदासक्तो न जानाति कथं तच्छीलयेद्बुधः ॥ ८ ॥**

स०-यस्मिन्नासक्तो-यदासक्तो, धर्मादीन् न जानाति । तत्-तथाविध मद्य, बुधो-मतिमान्, कथ शीलयेत्-अभ्यसेत्। तत्र धर्मो-दानाध्ययनदेवगुरुपूजादिक । अधर्मो-हिंसादि । सुख-आह्लादकोऽनुभव । दु ख-उपताप । अर्थ -उभयलोकहितम्। अनर्थ -अहितम्। शीलयेदित्यनेन तत्रासक्ति निषेधति, न तु मद्यपानमपि ।

आ० र०

**मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः।**
**सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः ॥ ९ ॥**
**यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधु यत्।**

स०-मद्येऽतिपीते मोहादय सश्रिता -आश्रिता, मद्यातिपानादनन्तर मोहादीना सद्भावात्। अथवा किमत्र बहुनाऽभिहितेन । यत्र-यस्मिन् मद्ये, स्मृतेर्विभ्रशो-लोप, तत्र यत्किञ्चिद्विद्यते तत्सर्वमसाधु-अशोभनम्। यत्रौजसो न विहतिर्हृत्प्रबोधश्च स प्रथमो मद । यत्राल्पा विहतिरोजस स मध्यम । यत्र सर्वस्यौजसो विहति स उत्तम । तथा च मुनि (च चि अ २४।३५)-"ओजस्यविहते पूर्वो हृदि च प्रतिबोधिते। मध्यमो विहतेऽल्पे तु विहते तूत्तमो मद ॥" इति ।

आ० र०

**अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा ॥ १० ॥**
**मद्यं त्रिवर्गधीधैर्यलज्जादेरपि नाशनम्।**

स०-यस्मादयुक्त्या योजितमन्नमपि-यत्प्राणकर तदपि, कर्मवशाद्व्याधये मरणाय वा सम्पद्यते। मद्य त्वयुक्तियोजित त्रिवर्गादेरपि नाशनम् । युक्तिपीत पुनस्तदेव त्रिवर्गादीना साधनमित्यपिशब्देन द्योतयति ।

आ० र०

तामेव युक्ति वक्ष्यमाणेन ग्रन्थेन प्रतिपादयन्नाह—

**नातिमाद्यन्ति बलिनः कृताहारा महाशनाः ॥ ११ ॥**
**स्निग्धाः सत्त्ववयोयुक्ता मद्यनित्यास्तदन्वयाः।**
**मेदःकफाधिका मन्दवातपित्ता दृढाग्नयः ॥ १२ ॥**

स०-यत एवविधा नरा नातिमाद्यन्ति, ततो बलवद्भि पुरुषै

१ 'स्वामवामो' ट । २ "निरङ्कुश -स्वतन्त्रवृत्ति" इति चन्द्र तोडरेन्दव । ३ 'कृत्सदा' ड । ४ 'अङ्कुशोऽस्त्री सृणि स्त्रियाम्।' इति 'आधोरणा हस्तिपका हस्त्यारोहा निषादिन ।' इति चामर । ५ 'हस्त्यातुश' ड ण थ द । ६ 'एतावता व्या' ट । ७ 'द्वय' ट । ८ 'ञ्चित्सत्वा' ड । 'ञ्चिच्छिष्टत्वा' ण । ९ रविद्या' तो । १० "इय-एव मध्यमोत्तमयो सन्धित्वेन निर्दिष्टाऽवस्था, सा भूमि -स्थान, स्यात्। कासाम्? अविद्यानाम्। अथवा, अवद्यानामिति पाठे तदाऽवद्याना-दोषाणा सर्वपापाना गर्ह्यत्वाद्कुमक्षमाणाम्। दौ शील्यस्य-दु शीलताया दुराचारस्य । बहुमार्गाया - नानाविधाया, दुर्गते -दुर्व्यापारस्य दुर्ज्ञानस्य, देशिक -उपदेष्टा आचार्य ॥ शववत् शेते-स्थाणुकुड्यमृतोपमो भूमौ पतति ।" इति तोडर । ११ 'ञ्चानोजया' ट । १२ 'स्थाणुकल्प' ड.ण थ द ।

१ 'दिक' थ । २ 'निपाततताप' ड ण द । ३ 'सम्भवा' ट। ४ 'त्र चित्र ब' ड ण थ द । ५ 'समस्ततेजोवि' ट । ६ 'जसोऽविहते पू' ट ण थ द । ७ 'च' स च । 'तु पतिते' ण द । ८ "त्रिवर्गो-धर्मार्थकामा । दृढाग्नय -प्रबलवह्नय ।" इति चन्द्रतोडरौ । ९ 'अतो' ट ।

कृताहारैर्महाशने स्निग्ध मत्वयुक्तैर्वयोयुक्तमद्योचितस्तदन्वये – मद्यपकुलप्रसूतै, मेदोविके कफाविके स्वल्पवातपित्तैर्दृढाग्निभि –अपकारसहिष्णवग्निभि, मद्य पेयम, नातो विपर्यस्ते, इत्यन्यतन्त्रकारकथिताया युक्तेरत्रैवान्तर्भावोऽनेन तन्त्रकृता कृत ।

आ० र०

**विपर्ययेऽतिमाद्यन्ति विश्रब्धाः कुपिताश्च ये ।**
**मद्येन चाम्लरूक्षेण साजीर्णे बहुनाऽति च ॥ १३ ॥**

स०–यथानिर्दिष्टाद्वैपरीत्येन, यथा–अबलिनो यावदहटाग्नय इति । तथा, विश्रब्धा –अमृतमिवेद स्पृहणीय सुरेभ्य पेपीयतेऽस्माभिरिति तद्गतमनसो विश्वस्ता, तथा कुपिता – क्रुद्धा, ये तेऽतिमाद्यन्ति । मद्येनेत्यादि । अम्लरूक्षेण च मद्येन पीतेन सर्वे एवातिमाद्यन्ति । अत्र चात्यम्लेनेति वेद्यम्, मद्यस्य सर्वस्यैवाम्लप्रायत्वात् । रूक्षेण–न त्वीषत्स्निग्धेन । तथा, साजीर्णे–सशब्द ईषदर्थे ईषदजीर्णे, तस्मिन्नेव मद्ये पीतेऽतिमाद्यन्ति । तथा, अतिबहुना पीतेन मद्येनातिमाद्यन्ति ।

आ० र०

**वातात्पित्तात्कफात्सर्वैश्चत्वारः स्युर्मदात्ययाः ।**
**सर्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तु भूयसा ॥ १४ ॥**

स०–वातादिभि पृथक्स्थितैर्दोषै सन्निपातेन चेति चत्वारो मदात्यया वस्तुस्वभावाज्जायन्ते, नोनाधिका । सर्वेऽपि मदात्यया सर्वैरपि दोषैर्जायन्ते । भूयसा–बाहुल्येन तु, व्यपदेश –सञ्ज्ञा भवति, अय वातमदात्ययो यावत् सन्निपातमदात्ययोऽयमिति ।

आ० र०

**सामान्यं लक्षणं तेषां प्रमोहो हृदयव्यथा ।**
**विड्भेदः प्रततं तृष्णा सौम्याग्नेयो ज्वरोऽरुचिः १५**
**शिर पार्श्वास्थिरुक्कम्पो मर्मभेदस्त्रिकग्रहः ।**
**उरोविबन्धस्तिमिर कासः श्वासः प्रजागरः ॥१६॥**
**स्वेदोऽतिमात्रं विष्टम्भ श्वयथुश्चित्तविभ्रमः ।**
**प्रलापश्छर्दिरुत्क्लेशो भ्रमो दुःस्वप्नदर्शनम् ॥ १७ ॥**

स०–तेषा–मदात्ययाना, सामान्यं लक्षण–अविभागेन [चिह्नम्], प्रमोहादिदु स्वप्नदर्शनपर्यन्तम् ।

आ० र०

**विशेषाज्जागरश्वासकम्पमूर्धरुजोऽनिलात् ।**
**स्वप्ने भ्रमत्युत्पतति प्रेतैश्च सह भाषते ॥ १८ ॥**

स०–वातेन मदात्यये जागरादिक प्रेतै सह भाषत इति पर्यन्त स्यात् ।

आ० र०

**पित्ताद्दाहज्वरस्वेदमोहातीसारतृड्भ्रमाः ।**
**देहो हरितहारिद्रो रक्तनेत्रकपोलता ॥ १९ ॥**

स०–पित्तेन मदात्यये दाहादिक रक्तनेत्रकपोलतापर्यन्त स्यात् ।

आ० र०

**श्लेष्मणा छर्दिहृल्लासनिद्रोदर्दाङ्गगौरवम् ।**

स०–श्लेष्मणा मदात्यये छर्द्यादिकमङ्गगौरवपर्यन्त स्यात् ।

आ० र०....

**सर्वजे सर्वलिङ्गत्वम्**

स०–सर्वजे मदात्यये सर्वलिङ्गत्व भवति ।

आ० र०...

सम्प्रति ध्वंसकविक्षयौ लक्षयति—

**मुक्त्वा मद्यं पिबेत्तु यः ॥२०॥**
**सहसाऽनुचितं वाऽन्यत्तस्य ध्वसकविक्षयौ ।**
**भवेतां मारुतात्कष्टौ दुर्बलस्य विशेषतः ॥ २१ ॥**

स०–उचित मद्य मुक्त्वा–चिर काल परित्यज्य, य पुरुषस्तदेव सहसा–अतिमात्रया पिबेत्, अथवाऽन्यद्यन्मद्य यदनुचित–असात्म्य मद्य, तत्सहसा–अतिमात्र पिबेत्, तस्य–पुरुषस्य, ध्वसकविक्षयौ व्याधी मारुताद्भवेता–जायेयाताम् । किम्भूतौ ? कष्टौ,–कृच्छ्रसाध्यौ । दुर्बलस्य पुन पुसस्तौ विशेषेण भवेताम् ।

**ध्वंसके श्लेष्मनिष्ठीवः कण्ठशोषोऽतिनिद्रता ।**
**शब्दासहत्वं तन्द्रा च**

स०–ध्वसके श्लेष्मनिष्ठीवादय स्यु ।

आ० र० ..

**विक्षयेऽङ्गशिरोतिरुक् ॥२२॥**
**हृत्कण्ठरोगः संमोहः कासस्तृष्णा वमिर्ज्वरः ।**

स०–विक्षये अङ्गशिरोतिरुगाद्या स्यु ।

आ० र०. ...

**निवृत्तो यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत् ॥२३॥**
**विकारैः स्पृश्यते जातु न स शारीरमानसैः ।**
**इति मदात्ययनिदानम् ।**

स०–शारीरमानसाना रोगाणा मद्य कारणमिति कृत्वा य पुमान् जितात्मा मद्येभ्यो निवृत्तो बुद्धिपूर्वकृत्–विमृश्यकारी, स कदाचिच्छारीरैर्मानसैर्वा विकारैर्न स्पृश्यते–नाक्रम्यते । इति मदात्यय ।

१ 'अपाकसहिष्णुभिरत्यग्निभि ' ण द । 'अपचारनीता(?)ग्निभि ' ट । २ 'नापि च' ण द चन्द्रतोडरौ । ३ अतिशब्दोऽम्लरूक्षेण सह सम्बन्धनीय । ४ 'स्योऽपि पीय' ट । ५ 'नस्का वि' ण थ द. । ६ 'बोध्यम्' ण थ । ७ 'दये व्य' ण द चन्द्र स मू । ८ 'रुक्स्तम्भो म' तोडर । ९ ण प्रमो' ण थ द । १० "भ्रमति–देशाद्देशान्तर व्रजति । उत्पतति–नभो याति ।" इति चन्द्रतोडरौ ।

१ 'ष्मणश्छ' इ । २ 'चान्य' इ ण द स द्व । ३ 'विद्रक्ष' इ स च । ४ 'ण्ठरोध ' ण द स स । "हृद्रोग कण्ठरोगश्च" इति चन्द्रतोडरौ । ५ "सम्मोह –इन्द्रियमनोमोह ॥ निवृत्तो–गृहीतनियम ।" इति तोडर । ६ 'विशिष्टकारी' ण द ।

आ० र०

अथ मद्यवच्चेतोविहतिकारणसामान्यान्मदादीन् लक्षयति—

**रजोमोहाहिताहारपरस्य स्युस्त्रयो गदाः ॥ २४ ॥**
**रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ।**
**मदमूर्च्छायसंन्यासा यथोत्तरबलोत्तराः ॥ २५ ॥**

स०–रज प्रधानस्य मोहप्रधानस्य तथाऽपथ्याहारपरस्य त्रयो गदा स्यु –जायेरन् । किम्भूता ? रसश्चासृक् च चेतना च, ता वहन्ति यानि स्रोतांसि, तेषा रोध समुद्भवो–हेतु , येषा ते रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवा । मदमूर्च्छायसन्यासा –एतत्सञ्ज्ञा । ते च यथोत्तरबलोत्तरा । यो य उत्तरो यथोत्तरम्, बलस्योत्तर–उत्कर्ष , यथोत्तर बलोत्तर येषा त एवम् । मदान्मूर्च्छायो बलवान् तस्मादपि सन्यास इत्यर्थ ।

आ० र० रज पर –दुर्लभ लिप्सु । मोहपरो–दुर्बोधबुभुत्सु । रसरक्तप्राणवाहिना त्रयाणामन्त स्रोतसा रोध –असम्यग्वहनम् । हेतुत्रयेऽधिष्ठानत्रयेऽपि यथोत्तराधिक्य ज्ञेयम्, बलाधिक्यान्यथाऽनुपपत्ते ।

अथ मद लक्षयति—

## अथ मदनिदानम् ।

**मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ।**

स०–अत्र–एषु मदादिषु मध्ये, मद सप्तधा,–पृथग्दोषै सन्निपातेन रक्तेन मद्येन विषेण च ।

आ०र०–मदस्य भेदानाह–मदोऽत्रेति । दोषैस्त्रयो भेदा ।

**सक्तानल्पद्रुताभाषश्चलः स्खलितचेष्टितः ॥ २६ ॥**
**रूक्षश्यावारुणतनुर्मदे वातोद्भवे भवेत् ।**

स०–वातोद्भवे मदे सति पुमान् सक्तानल्पद्रुताभाषणादिलक्षणो भवेत् ।

आ० र०–वातजलक्षणमाह–सक्तानल्पेति । चल–सकम्पम् । स्खलित–सप्रतिबन्धम् ।

**पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ॥ २७ ॥**

स०–पित्तेन क्रोधनादिलक्षण ।

आ० र०–पित्तजलक्षणमाह–पित्तेनेति ।

**स्वल्पसम्बद्धवाक्पाण्डुः कफाद्ध्यानपरोऽलसः ।**

स०–कफात् स्वल्पसम्बद्धवागादिलक्षण ।

आ० र०–कफजलक्षणमाह–स्वल्पसम्बद्धवागिति ।

**सर्वात्मा सन्निपातेन**

स०–सर्वात्मा–सर्वदोषलक्षण , सन्निपातेन ।

आ० र०–सर्वजलक्षणमाह–सर्वात्मेति ।

**रक्तात्स्तब्धाङ्गदृष्टिता ॥ २८ ॥**
**पित्तलिङ्गं च**

स०–रक्तात्–रक्तमदात्, स्तब्धाङ्गत्व स्तब्धदृष्टिता तथा पित्तमदलिङ्ग च स्यात् ।

आ० र०–रक्तजलक्षणमाह–रक्तादिति ।

**मद्येन विकृतेहास्वराङ्गता ।**

स०–मद्येन मदे विकृता चेष्टा तथा स्वरस्य विकृतत्वमङ्गस्य च ।

आ० र०–मद्यजलक्षणमाह–मद्येनेति ।

**विषे कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकस्तु सः ॥**

स०–विषे–विषोत्थे मदे, कम्पोऽतिनिद्रा च स्यात् । स च–विषमद , सर्वेभ्योऽधिक ।

आ० र०–विषजलक्षणमाह–विषे कम्प इति ।

**लक्षयेल्लक्षणोत्कर्षाद्वातादीन् शोणितादिषु ।**

इति मदनिदानम् ।

स०–शोणिताद्युत्थेषु मदेषु वातादीन् लक्षयेत्–जानीयात् । कुत ? लक्षणोत्कर्षात्–स्वस्वलक्षणोत्कर्षेण ।

आ० र०–अदोषजेष्वपि दोषानुबन्धमाह–लक्षयेदिति । नात्र यथासङ्ख्यम् । किन्तु यथासम्भवम् ।

अथ मूर्च्छाय लक्षयति—

## अथ मूर्च्छायनिदानम् ।

**अरुणं कृष्णनीलं वा खं पश्यन्प्रविशेत्तमः ॥ ३० ॥**
**शीघ्रं च प्रतिबुध्येत हृत्पीडा वेपथुर्भ्रमः ।**
**कार्श्यं श्यावारुणा छाया मूर्च्छाये मारुतात्मके ३१**

स०–मारुतोद्भवे मूर्च्छाये अरुणाधन्यतमवर्णमाकाश पश्यन् पुमास्तम प्रविशेत्–मूढावस्था प्राप्नोति । शीघ्र च प्रतिबुध्येत–सञ्ज्ञा लभेत् । हृत्पीडावेपथुभ्रमयुतस्तथा कार्श्यादि च स्यात् ।

आ० र०–मूर्च्छायस्य तु दोषजा एव चत्वारो भेदा । तत्र वातजलक्षणमाह–अरुणमिति । तम प्रविशेत्–अज्ञानव्याप्तो भवेत् । प्रतिबुध्येत–तमसो निर्गच्छेत् ।

**पित्तेन रक्तं पीतं वा नभः पश्यन् विशेत्तमः ।**
**विबुध्येत च सस्वेदो दाहतृट्तापपीडितः ॥ ३२ ॥**
**भिन्नविण्नीलपीताभो रक्तपीताकुलेक्षणः ।**

१ "रज परस्य–रजोगुणपरस्य 'राजस बहुभाषित्व मानक्रुद्दम्भमत्सरम् ।' (हृ शा अ ३।७) इत्यत्रोक्तस्य । तथा, मोहपरस्य–अज्ञानाविष्टस्य । स्वल्पा–निकटैरश्राव्या, सम्बद्धा सलग्ना, वाक्–वाणी, यस्य स स्वल्पसम्बद्धवाक् । ध्यानपर –चिन्तनपर । अलस –अनुत्साह ।" इति तोडर । "स्वल्पसम्बद्धवाक्–स्वल्पोक्तिर्गद्गदोक्तिश्च पुरुष स्यात् ।" इति चन्द्र । २ 'जायन्ते' थ. । ३ 'वातकृते' ण.द । ४ 'स्वल्पास' इ स स ।

१ "स्तब्धाङ्गदृष्टिता–सशोफाङ्ग सशोफदृष्टिश्च जायते ॥ विकृता–कुत्सिता, ईहा–चेष्टा कायवाङ्मनोलक्षणा ।" इति तोडर । "विकृतशब्द इहादिषु सम्बध्यते ।" इति चन्द्र । २ 'विषात्कम्पो' ण.द स.स. । ३ 'कश्च स.' फ.स स.चन्द्र । ४ 'रुणच्छाये' ण द ।

स०–पित्तेन मूर्च्छायं रक्तं पीतं वा नभः पश्यंस्तम पुमान् विशेत्–मूढावस्था प्राप्नुयात् । सह स्वेदेन विबुध्येत–सञ्ज्ञां लभते । तथा दाहादिपीडितस्तथा भिन्नविडादिकः ।

आ० र०–पित्तजलक्षणमाह–पित्तेनेति । दाहः–अग्निनेव दुःखम् । तापः–सूर्येणेव ।

**कफेन मेघसंकाशं पश्यन्नाकाशमाविशेत् ॥ ३३ ॥**
**तमश्चिराच्च बुध्येत सहृल्लासः प्रसेकवान् ।**
**गुरुभिः स्तिमितैरङ्गैरार्द्रचर्मावनद्धवत् ॥ ३४ ॥**

स०–कफेन मूर्च्छायं मेघाभमाकाशं पश्यंस्तम आविशेत्, चिरेण च बुध्येत–संज्ञां लभते । हृल्लासादिमान्, तथाऽऽर्द्रेण चर्मणाऽवनद्धो–वेष्टित इव ।

आ०र०–कफजलक्षणमाह–कफेनेति । स्तिमितैः–आर्द्रैः । आर्द्रचर्मावनद्धवत्–[अ]यथाबुद्धिं जनयद्भिः ।

**सर्वाकृतिस्त्रिभिर्दोषैरपस्मार इवापरः ।**
**पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ॥ ३५ ॥**

## इति मूर्च्छायनिदानम् ।

स०–त्रिभिर्दोषैर्यो मूर्च्छायः सर्वाकारः सोऽपरोऽपस्मार इवाशु–शीघ्रमेव, पुरुषं निश्चेष्टं पातयति । विना बीभत्सचेष्टितैः–अपस्मारोत्थानि निन्द्यानि चेष्टितानि वर्जयित्वा, अन्यत्सर्वं समानम् ।

आ० र०–सर्वजलक्षणमाह–सर्वाकृतिरिति । रुग्विनिश्चये (मा नि मूर्च्छा श्लो १)–"क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः । वेगाघाताद्भिघाताद्धीनसत्त्वस्य वा पुनः ॥ करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च । निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥ द्रवस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति । गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः ॥ त एव तस्मात्ताभ्यां तु मोहौ स्यातां यथेरितौ । स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोश्वासश्च मूर्च्छितः ॥ मद्येन विलपञ्छेते नष्टविभ्रान्तमानसः । गात्राणि विक्षिपन्भूमौ जरां यावन्न याति तत् ॥ वेपथुस्वप्नतृष्णाः स्युस्तमश्च विषमूर्च्छिते । वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥ मूर्च्छा पित्ततमःप्राया रजःपित्तानिलाद्भ्रमः । तमोवातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा ॥ योऽनायासः श्रमो देहे प्रभूतश्वासवर्जितः । क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ हृत्पीडा जृम्भणं ग्लानिः सञ्ज्ञादौर्बल्यमेव च । मूर्च्छानां पूर्वरूपाणि यथास्वं च विभावयेत् ॥ पृथिव्यापस्तमोरूपं रक्तगन्धस्तदन्वयः । तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः ॥" इति ।

---

१ 'निश्चेष्टं–निश्चलं करचरणस्पन्दनरहितं, पातयति–लुण्ठयति । क इव ? महारम्भत्वेऽपरो–द्वितीयः, अपस्मार इव । बैभत्स्यचेष्टितैः–फेनकम्पादिभिः ॥ सन्न्यसति–मोहयति, इति सन्न्यासः ।" इति तोडरः । "विना बीभत्सचेष्टितैः–अपस्मारोदितानि भयानकानि चेष्टितानि वर्जयित्वा" इति चन्द्रः । २ 'ना बैभत्स्यचे' तोडरः । ३ 'यित्वेत्यर्थ ।' ण थ द । ४ 'मूढो' फ । ५ 'प्रवृद्ध श्वा' इति सुश्रुतवाचस्पतिसम्मतः पाठः । ६–७ 'सर्वासां पू' 'ता' मा नि. ।

अ० ६२

इदानीं सन्न्यासं लक्षयितुमाह—

## अथ सन्न्यासनिदानम् ।

**दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ।**
**स्वयमेवोपशाम्यन्ति, सन्न्यासो नौषधैर्विना ॥३६॥**

स०–मदाश्च मूर्च्छायाश्च मदमूर्च्छायाः, कृतवेगेषु दोषेषु सत्सु स्वयमेव–औषधं विनाऽपि, शाम्यन्ति ।

सन्न्यासः पुनरौषधैर्विना न शान्तिमेति ।

आ०र०–मदमूर्च्छयोरौषधाभेदान्मदभेदा अपि मूर्च्छाभेदत्वेनोक्ताः । मदादीनामौषधं विना निवृत्तिमाह–दोषेष्विति ।

सन्न्यासस्यौषधैकनिवर्त्यत्वमाह–सन्न्यास इति ।

**वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।**
**सन्न्यासं सन्निपतिताः प्राणायतनसंश्रयाः ॥ ३७ ॥**
**कुर्वन्ति, तेन पुरुषः काष्ठीभूतो मृतोपमः ।**
**म्रियेत शीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते ॥३८॥**

स०–वाक् च देहश्च मनश्च, तेषां चेष्टां–यथास्वलक्षणां, आक्षिप्य मलाः–वातपित्तकफाः, सन्निपतिताः सन्तः–त्रय एककार्योद्यताः, सन्न्यासं कुर्वन्ति । किम्भूताः ? अतिबलास्तथा प्राणायतनसंश्रयाः,–विशेषेण हृदयाश्रयाः । तेन–सन्न्यासेन, पुरुषः काष्ठीभूतः–स्थाणुकुड्यकल्पः, तथा मृतोपमः–तत्सदृशो भूत्वा, अनन्तरं शीघ्रं म्रियेत । यदि शीघ्रं चिकित्सा न प्रयुज्यते । म्रियेत इति सम्भावनायां लिङ् ।

आ०र०–सन्न्यासस्य सम्प्राप्तिमाह–वाग्देहमनसामिति । सन्न्यासलक्षणमाह–तेनेति ।

शीघ्रं चिकित्सनाज्जीवेत्, इत्यत्रैवोदाहरणार्थमाह—

**अगाधे ग्राहबहुले सलिलौघ इवातटे ।**
**सन्न्यासे विनिमज्जन्तं नरमाशु निवर्तयेत् ॥ ३९ ॥**

## इति सन्न्यासनिदानम् ।

स०–अगाधे–अतलस्पर्शे, सलिलौघे, तथा ग्राहबहुले–मकरादिप्राणहरप्राणिभूयसि, तथाऽतटे–अरोधसि । तथा तस्मिन्निमज्जन्तं नरमाशु–शीघ्रं, निवर्तयेत्–तस्मादुद्धरेत्, एवं सन्न्यासेऽपि निमज्जन्तं नरमाशु निवर्तयेत् । अनेनोदाहरणेन मदा(हा)त्ययैलमस्य व्याधेः प्रदर्शयन् स्वल्पकालहापनमप्यत्र व्याधौ न कार्यमिति द्योतयति ।

आ० र०–सन्न्यासस्त्वरया चिकित्स्य इत्याह–अगाध इति । इति मदादिनिदानम् ।

---

१ 'गन्धे तद' फ । २ 'काष्ठभू' इ ण द च तो स स । ३ 'र्योदिता' ण थ द । ४ 'अभिन्यासे च म' ण द । ५ 'अनल्पे' ट थ । 'अनल्पेऽस्तोके' ण द । ६ 'यनिदानं प्रदर्श्य त्रयस्य समाधिं (?) प्र' ण द । 'यत्रयस्य व्याधिं प्र' थ. ।

इदानी मदात्ययनिदानत्वान्मद्यस्य मद्येनैवोपसंहार कुर्वन्नाह—

**मदमानरोषतोषप्रभृतिभिररिभिर्निजैः परिष्वङ्गः ।**
**युक्तायुक्तं च समं युक्तिवियुक्तेन मद्येन ॥ ४० ॥**

**स०**–युक्तिवियुक्तेन मद्येन मदादिभिर्निजै –सहजातै , [अरिभि –] शत्रुभिर्दृष्टादृष्टविनाशकारिभि , परिष्वङ्ग –अतिसश्लेषो, भवति । न केवल मद्येन मदाद्यतिसङ्ग , यावद्युक्तायुक्त समतुल्य, सम्पद्यते । युक्तमनुष्ठेयम्, अयुक्तमननुष्ठेयम्, तदुभय सम जायते, कार्याकार्य न जानातीत्यर्थ । यतश्चैव ततो मद्यपाने युक्तेर्गरीयस्त्वम् । युक्तिश्च प्रागेव दर्शिता । "आर्याद्वितीयदलभवलक्ष्म प्रतिनियतमवगम्य । उभयत्राप्युपगीतिं वदन्ति यत्यशकैर्गदितै ॥"

**आ० र०. . ..**

पुनरपि युक्तिं प्रदर्शयन्नाह—

**बलकालदेशसात्म्यप्रकृतिसहायामयवयांसि ।**
**प्रविभज्य तदनुरूपं यदि पिबति तत पिबत्यमृतम् ॥ ४१ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया तृतीये निदानस्थाने मदात्ययादिनिदानं नाम षष्ठोऽध्यायः ॥६॥**

**स०**–बलकालादीन् प्रविभज्य–बुद्ध्या विमृश्य, तदनुरूप–तद्योग्य, यदि पिबति ततोऽमृत पिबति । मद्यव्याजेनामृतमास्वादयतीत्यर्थ । आर्या ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने मदात्ययादिनिदान नाम षष्ठोऽध्याय समाप्त ॥ ६ ॥

**आ० र०**

**[ इति हेमाद्रिटीकायामायुर्वेदरसायने ।**
**मदात्ययनिदान च सामस्त्येन निरूपितम् ॥ ६ ॥ ]**



१ 'त्वादस्य मद्य' ण थ द । २ "मद –वैकल्यम् । मान –अभिमान । रोष –क्रोध । तोष –तुष्टि ॥ सहाया –सहचरा ।" इति तोडर । "युक्त्या–वक्ष्यमाणया बलकालादिरूपया, वियुक्त–रहित, तेन ॥ तत –तस्माद्युक्तियुक्ताद्युक्तमद्यपानात् ।" इति चन्द्र । ३ 'तिसयोग ' ड ण थ द । ४ 'समान' ट । 'म ज्ञाय' ड । ५ 'कार्यं न' ट. । ६ 'गीतिर्नियत नियतासकैर्गदिता ॥" ण द ।




मदात्ययनिदानादनन्तरमर्शोनिदानारम्भो युक्त । यत "अरिभिर्निजै परिष्वङ्ग" ( हृ नि अ ६।४० ) इत्युक्तम्, अर्शांसि च रिपुसदृशानीति वक्ष्यति, तस्मादर्शोनिदान प्रक्रम्यते ।

**अथातोऽर्शसां निदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
**( गद्यसूत्रे ॥ २ ॥ )**

**स०**–व्याख्या पूर्ववत् ।

**अरिवत्प्राणिनो मांसकीलका विशसन्ति यत् ।**
**अर्शांसि तस्मादुच्यन्ते गुदमार्गनिरोधतः ॥ १ ॥**
**दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन् ।**
**मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥ २ ॥**

**स०**–अनेन सर्वेषामप्यर्शसा गुदमेढ्रादिजाना सामान्येन सम्प्राप्त्याकृती निरूपयति । दोषा –वातादय , त्वङ्मांसमेदांसि दूषयित्वाऽपानादौ यन्मांसाङ्कुरान् कुर्वन्ति तानर्शांसि जगु , तज्ज्ञकृत इति शेष । आदिशब्देन कर्णनासादीना ग्रहणम् । किम्भूतान् मांसाङ्कुरान् ? विविधाकृतीन्–नानासंस्थानान् ।

**सहजन्मोत्तरोत्थानभेदाद्द्वेधा समासतः ।**
**शुष्कस्राविविभेदाच्च**

**स०**–तानि च समासत –सङ्क्षेपतो, द्वेधा –द्विप्रकाराणि । कथम् ? इत्याह–सहेत्यादि । सह जन्मना, सहजन्म चोत्तर च सहजन्मोत्तरे, तयोरुत्थान सहजन्मोत्तरोत्थान, तेन भेदो–विशेष , तस्मात् । कानिचिच्छरीरेण सह जातानि कानिचि-

१ सप्तमाध्यायादारभ्यानिदानस्थानसमाप्तेर्हेमाद्रिटीका नोपलभ्यते । २ 'म्यते । दोषा इत्यादि । अनेन' ड ण थ द । ३ 'ऽर्शोनि' सं मू । ४ इदमर्शोनिदान चरके चि० १४ अध्याये, सुश्रुते नि० २ अध्याये, अष्टाङ्गसङ्ग्रहे नि० ७ अध्याये चास्ति वर्णितम् । ५ श्लोकोऽय चन्द्रनन्दनतोडरमल्लयो सम्मत , नारुणदत्तस्य, तत्तट्टीकाभावाभावात् । "अर्शसा निर्वचनमाह–अरिवदित्यादि । तस्मात् कारणात्, अर्शांसि इति नाम्ना उच्यन्ते–भण्यन्ते, तस्मात् कस्मात् ? यत्–यस्मात्कारणात्, मांसकीलका –मांसाङ्कुरा कर्तार , अरिवत्–शत्रुवत्, प्राणिनो–जीविन कर्मभूतान्, गुदमार्गनिरोधत –पायुद्वारावरणाद्धेतो , विशसन्ति–मारयन्ति हिंसन्ति, अतस्तान्यरिवद्विशसनादर्शांस्युच्यन्ते । अरिवत् सृणन्ति–हिंसन्ति, इत्यर्शांसि, इति पृषोदरादित्वाद्रूपसिद्धि । विविधाकृतीन्–बहुप्रकारान् बहूपद्रवान् नानावर्णांश्च ।" इति तोडर । "विशसन्ति–व्यथयन्ति ।" इति चन्द्र ।

जन्मोत्तरभावीनि । तथा, शुष्कस्राविविभेदाच्च द्वेधा,-कानिचिच्छुष्काणि कानिचित्स्रावीणि ।

"अपानादौ" इत्युक्तम् । अथ तदेव गुदापरपर्याय लक्षयति—

**गुदः स्थूलान्त्रसंश्रयः ॥ ३ ॥**
**अर्धपञ्चाङ्गुलस्तस्मिंस्तिस्रोऽध्यर्धाङ्गुलाः स्थिता ।**
**वल्यः, प्रवाहिणी तासामन्तर्मध्ये विसर्जनी ॥ ४ ॥**
**बाह्या संवरणी तस्या गुदौष्ठो बहिरङ्गुले ।**
**यवाध्यर्धः प्रमाणेन रोमाण्यत्र तत परम् ॥ ५ ॥**

**स०**–स्थूलान्त्र सश्रय –आश्रयो, यस्य स एवविधो गुद । स्थूल यदन्त्र तत्र प्रतिबद्ध इत्यर्थ । किप्रमाणोऽसौ ? अर्धपञ्चाङ्गुल । अर्धेनोनानि पञ्च–अर्धपञ्च । शाकपार्थिवादित्वात्समास । अर्धपञ्च अङ्गुलानि यस्य सोऽर्धपञ्चाङ्गुल,-सार्धचतुरङ्गुलपरिमाण । तस्मिन्–गुदे, तिस्रो वल्य –त्रिसङ्ख्या स्थिता । किपरिमाणा ? अध्यर्धाङ्गुला, अधिकमर्धमङ्गुल प्रत्येकं परिमाण यासा ता एवम् । अथ तासा–तिसृणा, अर्थानुगतानि नामान्याह–तत्र मलप्रवाहणादन्त –अन्तरे स्थिता वली, प्रवाहिणीति कथ्यते । मध्ये–मध्यस्थिता वली, मलस्य प्रवहतो बहिर्विसर्जनात् विसर्जनीति भण्यते । गुदस्य बाह्ये स्थिता मलस्य सवरणात् सवरणीत्युच्यते । तस्या –सवरणीसञ्ज्ञाया वले, अङ्गुले–तत्परिमाणे, बहि –बाह्ये, गुदौष्ठ स्थित । प्रमाणेन–परिमाणतो, गुदौष्ठो यवाध्यर्ध –सार्धयवप्रमाण । ततो–गुदौष्ठात्, परं–परतो बहि, रोमाण्यत्र–गुदे, जायन्ते ।

**तत्र हेतुः सहोत्थानां वलीबीजोपतप्तता ।**
**अर्शसां, बीजतप्तिस्तु मातापित्रपचारतः ॥ ६ ॥**
**दैवाच्च, ताभ्यां कोपो हि सन्निपातस्य तान्यतः ।**
**असाध्यान्येवमाख्याताः सर्वे रोगाः कुलोद्भवाः ७**

**स०**–तत्रेति निर्धारणे, सहजोत्तरकालभाविष्वर्श सु मध्ये, सहोत्थानामर्शसा हेतु वलीबीजोपतप्तता । वल्या –सम्बन्धि बीज–शुक्रार्तवांशो, यस्मात्सा वली उत्पद्यते । उपतप्तस्य भाव उपतप्तता,–अर्शोविकारकरणसमर्थैर्वातपित्तकफै पीडनं, वलीबीजस्योपतप्ततोच्यते । सा च बीजोपतप्ति –बीजोपतापो, मातापित्रपचारत । माता च पिता च मातापितरौ, तयोरपचार –अपराध आहारविहारादिकृत, तस्मात् । तथा दैवात्–तथाविधात् प्राक्कृतादशुभकर्मणो, बीजोपतप्ति । ताभ्या–मातापित्रपचारदैवाभ्या, यस्मात्सन्निपातस्य कोप, तस्मात्तानि–अर्शांसि, असाध्यानि । एव–अनेन प्रकारेण, प्राणिना सर्वे रोगा कुलोद्भवा आख्याता । बीजोपतप्तत्वादसाध्या इत्यर्थ ।

**सहजानि विशेषेण रूक्षदुर्दर्शनानि च ।**
**अन्तर्मुखानि पाण्डूनि दारुणोपद्रवाणि च ॥ ८ ॥**

**स०**–सहजान्यर्शांसि विशेषेण रूक्षादिगुणयुतानि भवन्ति । विशेषेणेत्यनेनैतद् द्योतयति,–उत्तरजातान्यप्येवभूतानि भवन्तीति ।

**षोढाऽन्यानि पृथग्दोषसंसर्गनिचयास्रतः ।**

**स०**–अन्यानि–उत्तरजातान्यर्शांसि, षट्प्रकाराणि । पृथग्दोषैर्वातपित्तकफैस्त्रीणि, तथा ससर्गेणैक, तथा निचयेन [एक] तथा रक्तेन [एक], इति षट्त्वम् । षोढाशब्द पृषोदरादि ।

**शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्रपित्ततः ॥९॥**

**स०**–"शुष्कस्राविविभेदाच्च द्विधा" ( श्लो ३ ) इत्युक्तम् । तत्र शुष्काणि प्रायेण वातकफाभ्या व्यस्तसमस्ताभ्याम् । यानि त्वार्द्राणि तान्यस्रपित्तत, तथैव व्यस्तसमस्ताभ्या भवन्ति ।

**दोषप्रकोपहेतुस्तु प्रागुक्तस्तेन सादिते ।**
**अग्नौ, मलेऽतिनिचिते, पुनश्चातिव्यवायतः ॥ १० ॥**
**यानसङ्क्षोभविषमकठिनोत्कटकासनात् ।**
**बस्तिनेत्राश्मलोष्ठोर्वीतलचैलादिघट्टनात् ॥ ११ ॥**
**भृशं शीताम्बुसंस्पर्शात्प्रततातिप्रवाहणात् ।**
**वातमूत्रशकृद्वेगधारणात्तदुदीरणात् ॥ १२ ॥**
**ज्वरगुल्मातिसारामग्रहणीशोफपाण्डुभिः ।**
**कर्शनाद्विषमाभ्यश्च चेष्टाभ्यो, योषितां पुनः ॥१३॥**
**आमगर्भप्रपतनाद्गर्भवृद्धिप्रपीडनात् ।**
**ईदृशैश्चापरैर्वायुरपानः कुपितो मलम् ॥ १४ ॥**
**पायोर्वलीषु तं धत्ते तास्वभिष्यण्णमूर्तिषु ।**
**जायन्तेऽर्शांसि**

**स०**–प्राक्–पूर्व सर्वरोगविदाने, दोषप्रकोपहेतु [ उक्तो– ] दर्शित । तेन–दोषप्रकोपकारणेन, वह्नौ सादिते–मन्दत्व गमिते । अग्निमान्द्यादाहार सम्यक्पाकमगच्छन् भूयसा मल-

१ "शुष्काणि–स्रावरहितानि । स्रावीणि–रुधिरस्रावीणि ॥ सवरणात्–मलवेगरोधात् । गुदौष्ठो–गुदबाह्यावयव ।" इति तोडर । २ 'तस्यां' इ तो । "तस्या–सवरण्या" इति तोडर । ३ 'ध्यर्धप्र' इ ण द चन्द्र । ४ 'यस्यासौ अर्ध' ण द थ । ५ 'ल परि' ड ण थ द । ६ 'अथासा' ड ण थ द । ७ 'मध्ये प्र' ड ण थ द । ८ 'तस्या–स० ज्ञाया बलौ' ड । ९ 'ष्ठोऽध्यर्धो यव –सा' ट ण द । १० 'र्धं –प्रमाणेन सा' ड थ । ११ सार्धयव –अर्धमङ्गुलम् । १२ 'तप्तिता' च तो । "उपतप्ति –दोषैर्दूषणम्" इति चन्द्रतोडरौ । १३ 'ज वलीबीज–' ड. ण. थ द. । १४ 'प्रीडित' ड ण. द. ।

१ 'न पूर्वोक्तेन प्रा' ट । 'न मार्गेण प्रा' ण थ । २ 'व्याख्या' ड थ । ३ "रूक्षदुर्दर्शनानि–परुषविकरालानि । अन्तर्मुखानि–आभ्यन्तरवदनानि, अबहिर्मुखानि । दारुणोपद्रवाणि,–दारुणै –कष्टसाध्यै, उपद्रवै –वातविण्मूत्रसङ्गादिभि, सहितानि ।" इति तोडर । "यानसङ्क्षोभात्–उद्भ्रान्तयानोष्ट्रादियानगमनात् । घट्टनात्–सङ्घर्षात्, गुदक्षणनात् । विषमाभ्यश्चेष्टाभ्य –कायादिकृताभ्य ।" इति चन्द्र । ४ 'नेन द्यो' ड ण थ द । ५ 'पायुवली' इ ण द । ६ 'षु संधत्ते' च.तो. । ७ 'ग्न्याद्याहा' ड.थ. । 'ग्निसादित्वाच्चाहा' ण.द. ।

त्वेनैव सम्पद्यते । तत[1] इदमाह—मलेऽतिनिचिते । मले—पुरीषाख्ये, अतिनिचिते—प्रवृद्धे मामाङ्कुरजननयोग्ये, वायुरपानाख्य [2]पायो सम्बन्धिनीषु वलीषु, त मल निचित वत्ते । तद्देशे[3]मलव्यतिसम्पर्कात्ता वलयोऽभिष्यण्णमूर्तय प्रक्लिन्नदेहा सम्पद्यन्ते । तासु चाभिष्यण्णमूर्तिष्वर्शांसि जायन्ते । इत्युत्तरकालजानामर्शसा सम्प्राप्ति । तथा च[4] केन वायु कुपितो मल धत्ते? इत्याह—पुनश्चातिव्यवायत इत्यादि । पुनरिति निर्देशात् पूर्वोक्तेन हेतुना वायु कुपित , तथाऽतिव्यवायादिभि कुपित इति गमयति । बस्त्यादीना घट्टनेन सम्बन्ध । प्रतताति प्रवाहणेन दोषा[5]दिवेगाना प्रवर्तनम् । वातमूत्रशकृ[6]द्वेगाना तूदीरणमिहोक्तमिति प्रवाहणोदीरणयोर्द्वयोरुपादानम् । ज्वरादिभि कर्षणादिति योज्यम् । विषमाभ्यश्च[7] चेष्टाभ्य इति साहसादिविषमाचरणादिकाभ्य. । योषिता पुनरिति पुन शब्देन पूर्वोक्तेभ्य[8] प्रकारेभ्य प्रकारान्तरमामगर्भप्रपतनादिक गृह्यते । ईदृशैरपरैरप्यनिर्दिष्टै[9]रिह तत्प्रकोपहेतुभिर्वायु कुपित इति योज्यम् ।

**तत्पूर्वलक्षणं मन्दवह्निता ॥ १५ ॥**
**विष्टम्भः[10] सक्थिसदनं पिण्डिकोद्वेष्टनं भ्रम ।**
**सादोऽङ्गे नेत्रयोः शोफः शकृद्भेदोऽथवा ग्रहः १६**
**मारुतः प्रचुरो मूढः प्रायो नाभेरधश्चरन् ।**
**सरुक् सपरिकर्तश्च कृच्छ्रान्निर्गच्छति स्वनन् ॥१७॥**
**अन्त्रकूजनमाटोपः क्षामतोद्गारभूरिता ।**
**प्रभूतं[11] मूत्रमल्पा विडश्रद्धा धूमकोऽम्लकः ॥ १८ ॥**
**शिरःपृष्ठोरसां शूलमालस्यं भिन्नवर्णता ।**
**तन्द्रेन्द्रियाणां दौर्बल्यं क्रोधो दुःखोपचारता ॥१९॥**
**आशङ्का ग्रहणीदोषपाण्डुगुल्मोदरेषु च ।**

स०—तेषामर्शसा पूर्वलक्षण तत्पूर्वलक्षण मन्दवह्नितेत्यादिकं *[12]शकृद्ग्रहपर्यन्तम् । अत्र च पूर्वलक्षणमध्ये "शकृद्भेदोऽथवा ग्रह "इति निर्दिष्टम्, कस्यचित्पुरुषस्योत्पित्सुष्वर्श सु भिन्नवर्चस्त्व कस्यचिद्बद्धवर्चस्त्वमित्यथवाशब्दस्यार्थ । मारुत इति सामर्थ्यादपानाख्य , प्रायो—भू[13]यिष्ठ कृत्वा, नाभेरधश्चरन्—गच्छन्, प्रचुरो भवति । तथा, मूढो—मूढ इव मूढं[1] क्रियामात्मीयां[2] हित्वेव वर्तमान । तथा, सरुक्—सशूल । तथा, सह परिकर्तेन वर्तते सपरिकर्त । छिन्दन्निव कृच्छ्रान्निर्गच्छति, स्वनन्—शब्दायमान । तथा, अन्त्रकूजनादिक भवति । तथा च ग्रहणीदोषादिष्वाशङ्का भवति ।

**एतान्येव[4] विवर्द्धन्ते [3]जातेषु हतनामसु ॥ २० ॥**

स०—एतान्येव—*[12]ग्रहणीदोषादीनि, हतनामसु—अर्श सु, जातेषु विवर्द्धन्ते—वृद्धिमाप्नुवन्ति[5] ।

**निवर्तमानोऽपानो हि तैरधोमार्गरोधतः ।**
**क्षोभयन्ननिलानन्यान् सर्वेन्द्रियशरीरगान् ॥ २१ ॥**
**तथा मूत्रशकृत्पित्तकफान् धातूंश्च साशयान् ।**
**मृद्नात्यग्निं ततः सर्वो भवति प्रायशोऽर्शसः ॥२२॥**
**कृशो भृशं [3]हतोत्साहो दीनः क्षामोऽतिनिष्प्रभः ।**
**[3]असारो विगतच्छायो जन्तुजुष्ट इव द्रुमः ॥ २३ ॥**
**कृत्स्नैरुपद्रवैर्ग्रस्तो यथोक्तैर्मर्मपीडनैः ।**
**तथा कासपिपासास्यवैरस्यश्वासपीनसैः ॥ २४ ॥**
**क्लमाङ्गभङ्गवमथुक्षवथुश्वयथुज्वरैः ।**
**क्लैब्यबाधिर्यतैमिर्यशर्कराश्मरिपीडितः ॥ २५ ॥**
**क्षामभिन्नस्वरो ध्यायन्मुहुः ष्ठीवन्नरोचकी ।**
**सर्वपर्वास्थिहृन्नाभिपायुवङ्क्षणशूलवान् ॥ २६ ॥**
**गुदेन स्रवता पिच्छां [3]पुलाकोदकसन्निभाम् ।**
**[3]विबद्धमुक्तं शुष्कार्द्रं पक्वामं चान्तराऽन्तरा ॥ २७ ॥**
**पाण्डु पीतं हरिद्रक्तं पिच्छिलं चोपविश्यते ।**

स०—तै—अर्शोभि , अधोमार्गरोधा[6]दपानो निवर्तमान ऊर्ध्व प्रवृत्त सर्वा(अन्या)ननिलान्—समानोदानव्यानप्राणान्, सर्वेन्द्रियशरीरगान् प्रत्याहरणरूपतया क्षोभयन्—सरम्भान् कुर्वन्, तथा मूत्रादीन्, तथा धातून्—रसादींश्च, साशयान्—सहाधारै[7] वर्तमानान्, क्षोभयन्नग्नि मृद्नाति—मन्दीकरोति[8] । तत —अग्निमा[9]र्दवादिकात् कारणात्, प्रायेणार्शसो—दुर्नामवान्, कृशादिक स्यात् । अर्शस इत्यत्र "अर्शआदित्वात्" अच् । विगतच्छायो द्रुमो जन्तु-

१ 'अत' ट । २ 'पायुसम्ब' ट. । ३ 'देशे मलाति' ट । ४ 'च तेन वायु कुपितो बलवान् इत्या' ड ण.थ द । ५ 'दोषवे' थ । 'षादिप्र' ड ण द । ६ 'कृतामुदी' ट थ. । 'गानामुदी' ड । ७ 'दिभि पादाच' ड थ । 'विषादाच' ट द । ८ 'पूर्वकेभ्य ' ट ड ण थ द । ९ 'ष्टैरपि त' ड ण द । १० "विशेषेण स्तम्भो—विष्टम्भ.,—अङ्गाना जडिमा । अथवा, अन्नस्य विष्टम्भ —आहारो विष्टब्ध आमाशय एवावतिष्ठते । मूढो—विमार्गगति , मार्गरोधात् क्रियासमर्थ । अश्रद्धा—अन्नानभिनन्दनम् । तन्द्रा—तन्द्री । दु खोपचारता—स्वजनसेवकादिभिर्दु खेन सेव्यते, अथवा रोगी दु खेनोपचर्यते ।" इति तोडर । ११ 'भूतमूत्रताऽल्पा' इ ण । *१२ 'शकृद्ग्रहपर्यन्तम्' इति 'ग्रहणीदोषादीनि' इति चारुणदत्तव्याख्यानमयुक्तम् । १३ 'भूयो भूयिष्ठत्वात्, ना' ण.थ द. ।

१ 'ढ क्षयात्मता हित्वा व' ड । २ 'या क्ष(क्रि)यात्मता हि' ट ण द । ३ "एतान्येव—मन्दवह्नितादीनि रूपाणि । जातेषु—उत्पन्नेषु । विवर्द्धन्ते—व्यक्ततराणि भवन्ति । हतोत्साहो—निरुत्साह । दीन —क्लान्तचित्त । क्षाम —क्रियास्वसमर्थ । अतिनिष्प्रभ —अतिनष्टकान्ति । असार —साररहित , 'त्वग्रक्तादीनि सत्त्वान्तान्यग्राण्यष्टौ यथोत्तरम् ।' (हृ शा अ ३।११७) इत्युक्तानि साराणि । जन्तुजुष्ट —कृमिभिर्भक्षित । पुलाकोदकसन्निभा—अप्राप्तपाकधान्यमण्डोदकसदृशीम् ।" इति तोडर । "विबद्ध—बद्धम् । विमुक्त—शिथिलम् ।" इति चन्द्र । ४ 'व च व' चन्द्र । ५ 'वृद्धिं प्राप्नु' ट । ६ 'धाचापा' ण द. । ७ 'ण प्रव' ड.ण थ द. । ८ 'मन्द क' ण.द. । ९ 'ग्निमन्दादि' ड.थ. ।

जुष्ट पंत्रौघविरहाद्यथा छायारहित, तथैवार्शस शोभारहित इति श्लेषोपमालङ्कार । तथेति न केवल पूर्वोक्तैरुपद्रवैर्ग्रस्त, अपि तु कासादिभिरपीत्यर्थ । क्लैब्येत्यादि । अश्मरिपीडित इत्यत्र "ङ्यापो" इत्यादिना बहुलवचनाद्ध्रस्व । अथवा, 'अश्मनि पीडित' इति पाठ । क्षामो भिन्नश्च स्वरो यस्य स एवम् । तथा ध्यायन्–चिन्ताव्याप्त । तथा, निष्ठीवनादिभिर्युत । तथा, गुदेन पिच्छा पुलाकोदकसन्निभा स्रवता विबद्धादिकमुपवेश्यते । अप्राप्तपाक धान्य पुलाकशब्दवाच्यम् । आगम – "धान्य पुलाकोऽनिष्पन्नम्" इति । अथवा, पुलाक –कुत्सित धान्यम्, तस्योदकेन तुल्याम् । अन्ये तु यवगोधूमादिस्वेदं पुलाकोदकमित्याहु, तेन तुल्याम् । विबद्धमुक्तमिति कदाचिद्दुर्वृत्त कदाचिर्द्दुवृत्त भवति ।

वातार्शसा लक्षणमाह—

**गुदाङ्कुरा बह्वनिला· शुष्काश्चिमिचिमान्विताः ॥२८॥**
**म्लानाः श्यावारुणाः स्तब्धा विषमाः परुषाः खराः ।**
**मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः २९**
**बिम्बीकर्कन्धुखर्जूरकार्पासीफलसन्निभाः ।**
**केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ॥३०॥**
**शिरःपार्श्वांसकट्यूरुवङ्क्षणाभ्यधिकव्यथाः ।**
**क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ॥ ३१ ॥**
**कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ।**
**तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ॥ ३२ ॥**
**रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ।**
**कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ॥ ३३ ॥**
**गुल्मप्लीहोदराष्ठीलासम्भवस्तत एव च ।**

स०–वाताधिका गुदजा शुष्कादिगुणयुक्ता । विषमा –विषमसस्थाना ऊर्ध्वाधस्तिर्यगादिदु सस्थिता । परुषा –शाकपत्रादितुल्यस्पर्शा । मिथो विसदृशा –परस्परमर्तुल्यसन्निवेशा । वक्रा –धनुष्कोट्यादिवत् । तथा, तीक्ष्णा –दर्भाङ्कुरवत् । विस्फुटितं–केसरादिवत्, आनन येषा त एवम् । बिम्ब्याद्यनेकोपमानोपादान तेषा विचित्ररूपदर्शनार्थम् । शिरआदिष्वधिकव्यथा । तथा, क्षवथ्वादिप्रदा । तथा, कासादिकृत । तैरार्त –पीडितो, ग्रथितादिकमुपवेश्यते । कृष्णत्वगादिश्च स्यात् । तत एव च गुदाङ्कुरेभ्यो गुल्मादिसम्भव ।

**पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ॥ ३४ ॥**
**तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथा· ।**
**शुकजिह्वायकृत्खण्डजलौकोवक्त्रसन्निभाः ॥ ३५ ॥**
**दाहपाकज्वरस्वेदतृण्मूर्च्छारुचिमोहदा· ।**
**सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ॥ ३६ ॥**
**यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः ।**

स०–पित्तार्शसा नीलमुखा इत्यादि लक्षण हारिद्रत्वङ्नखादय इतिपर्यन्तम् । तनु–अच्छ, अस्र–रक्त, नित्य स्रवन्ति, इति "आभीक्ष्ण्ये" णिनि । तथा, तनवो–न घना, श्लेष्मगुदाङ्कुरवत् । मृदव –शिरीषपुष्पादिवत् । श्लथा –खिन्नमासादिवत् । शुकजिह्वेत्यादि बहूपमात्व पूर्ववत् सस्थानवर्णवैचित्र्यार्थम् । द्रवादीना वर्चसा सम्बन्ध । यवमध्या –यवमध्यसस्थाना । हरितो–दूर्वावर्णा, पीता हारिद्राश्च त्वगादयो येषा त एवम् । आदिशब्देन नयनविण्मूत्रादयो गृह्यन्ते ।

**श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः ३७**
**उच्छूनोपचिताः स्निग्धा·**
**स्तब्धवृत्तगुरुस्थिराः ।**
**पिच्छिलाः स्तिमिताः श्लक्ष्णाः**
**कण्ड्वाढ्या· स्पर्शनप्रियाः ॥ ३८ ॥**
**करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ।**
**वङ्क्षणानाहिनः पायुबस्तिनाभिविकर्तिनः ॥ ३९ ॥**
**सकासश्वासहृल्लासप्रसेकारुचिपीनसाः ।**
**मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ॥ ४० ॥**
**क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदा· ।**
**वसाभसकफप्राज्यपुरीषाः सप्रवाहिकाः ॥ ४१ ॥**
**न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ।**

स०–श्लेष्मार्शसा महामूलादिक लक्षण पाण्डुस्निग्धत्वगादयन्तम् । बह्वनिला इत्यनेन पित्तो[त्तरा इत्यनेन श्लेष्मो]ल्बणा इत्यनेन च निर्देशेन सर्वेषामेवार्शसा त्रिदोषजत्व द्योतयति । तेन सर्वाण्यर्शांसि त्रिदोषजानि, भूयसा तु व्यपदेश इति वेद्यम् ।

**संसृष्टलिङ्गाः संसर्गात्**

स०–ससर्गाद्गुदाङ्कुरा ससृष्टलिङ्गा –ससृष्टरूपा, स्यु ।

---

१ 'पत्रादिवि' ट. । 'रहितत्वाच्च' ड य । २ 'दज पु' ड । ३ 'दावर्त' ड य । 'दाहत' ण द । ४ 'चिद्रव भ' ड ण थ द । ५ "चिमिचिमान्विता –सर्षपलिप्तवेदनाविशेषयुक्ता । म्लाना –चिपिटिका अनुपचिता । श्यावारुणा –सुनीलश्वेतरक्ता । स्तब्धा –कीलवत्, काठिन्यात् । खरा –कठिना पाषाणादिसमस्पर्शा कर्कोटिकाफलवत् । हृद्रवो–हृद्रोग । एते गुल्मादयो वातार्शसामुपद्रवा ।" इति तोडर । ६ 'हृद्द्रवारो' इ तो । ७ 'दिस' ट. । ८ 'तुल्या. । व' ड.ण थ.द ।

१ "विस्रा –विस्रगन्धा आमगन्धिन । सोष्माण –ऊष्मवन्त. । उच्छूनोपचिता ,–उच्छूना –दैर्घ्येणोद्धूता. श्वयथुमन्तो वा, उपचिता –पीवरा परिणाहेन स्थूला वा । पायुबस्तिनाभिविकर्तिन –तच्छेदिन । पायुबस्तिनाभिविकर्षिण इति पाठे एषु पायुबस्तिनाभिष्वाकर्षणवत् पीडाकारिण । आमप्राया –आमबहुला अतीसारग्रहण्यादय । न स्रवन्ति रक्तादिकमिति शेष ।" इति तोडर । "हरिद्राभङ्गवर्ण–हरितपीतम् । हरिद्रासम–हारिद्रम् ।" इति चन्द्र । २ 'स्पीता हा' द । ३ 'येषु' ड । ४ 'साभा. स' ण द. । ५ 'षामर्श' ट.ड । 'मेषामर्श' थ ।

**निचयात्सर्वलक्षणाः ॥४२॥**

स०-निचयात्-सन्निपातात्, सर्वलक्षणा -दोषत्रयलक्षणयुता ।

**रक्तोल्बणा गुदेकीलाः पित्ताकृतिसमन्विताः ।**
**वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः ॥ ४३ ॥**
**तेऽत्यर्थं दुष्टमुष्णं च गाढविट्प्रतिपीडिताः ।**
**स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ ४४ ॥**
**भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ।**
**हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥ ४५ ॥**

स०-रक्तोल्बणा -रक्ताधिका, गुदेकीला पित्तस्याकृत्या-लक्षणेन, समन्विता इत्यादिक कलुषेन्द्रिय इति यावदेषा लक्षण बोध्यम् । गुदाङ्कुरा इति प्रकृतेऽपि गुदेकीला इत्युक्त वैचित्र्यार्थम् । ते च गुदेकीला अतिदुष्टमुष्ण च सहसा-अचिन्तितमेव शूलादिलिङ्गै, रक्त स्रवन्ति, गाढविट्प्रतिपीडिता सन्त । तस्य-रक्तस्य, अतिप्रवृत्तितो भेकाभो भवति । चोऽवधारणे, तस्यैव रक्तस्यातिप्रवर्तनान्मण्डूकाभ स्यात्, न कारणान्तरेणेत्यर्थ । शोणितक्षयसम्भवैर्दुखै -रोगै, पीड्यते । "रक्तेऽम्लशिशिरप्रीतिसिराशैथिल्यरूक्षता ।" (हृ सू अ ११।१७) इति रक्तक्षयजा उक्ता । तथा, हीनवर्णबलोत्साहादि स्यात् ।

**मुद्गकोद्रवजूर्णाह्वकरीरचणकादिभिः ।**
**रूक्षैः सङ्ग्राहिभिर्वायुः स्वे स्थाने कुपितो बली ॥४६॥**
**अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ।**
**पुरीषं वातविण्मूत्रसङ्गं कुर्वीत दारुणम् ॥ ४७ ॥**
**तेन तीव्रा रुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत् ।**
**आध्मानमुदरावेष्टो हृल्लासः परिकर्तनम् ॥ ४८ ॥**
**बस्तौ च सुतरां शूलं गण्डश्वयथुसम्भवः ।**
**पवनस्योर्ध्वगामित्वं ततश्छर्द्यरुचिज्वराः ॥ ४९ ॥**
**हृद्रोगग्रहणीदोषमूत्रसङ्गप्रवाहिकाः ।**
**बाधिर्यतिमिरश्वासशिरोरुक्कासपीनसाः ॥ ५० ॥**
**मनोविकारस्तृष्णास्रपित्तगुल्मोदरादयः ।**
**ते ते च वातजा रोगा जायन्ते भृशदारुणाः ॥५१॥**
**दुर्नाम्नामित्युदावर्तः परमोऽयमुपद्रवः ।**
**वाताभिभूतकोष्ठानां तैर्विनाऽपि स जायते ॥ ५२ ॥**

स०-आदिशब्देन मसूरादीना ग्रहणम् । मुद्गादिभी रूक्षै सङ्ग्राहिभिर्वायु -अपानाख्य, स्वे स्थाने-बस्त्यादिलक्षणे, कुपितोऽत एव बलवान्, स्वस्थाने कुपितो बली स्यात् । बली पवनो वातादिसङ्ग [दारुण] कुर्वीत । किं कृत्वा ? अधोवहानि स्रोतासि सरुध्य । किं कुर्वन् ? अध पुरीष प्रशोषयन् । तेन-वातविण्मूत्रसङ्गेन हेतुना, तेन वा-तथाविधेन वायुकोपेन, तीव्रा-दारुणा, पीडा कोष्ठादिगा भवेत् । तथा, आध्मानादय स्यु परिकर्तन च । बस्तौ चेति चशब्दो भिन्नक्रम, शूल चेत्यर्थ । गण्डयो श्वयथुर्गण्डश्वयथु, तस्य सम्भव । पवनस्य-प्रकृतत्वादपानाख्यस्य, ऊर्ध्वगामित्व स्यात् । तत -ऊर्ध्वगमनात्, छर्द्यादय स्यु । ते ते च वातजा रोगा -अनेके नखभेदादयो, भृशदारुणा -अतिशयेन दुःखावहा, जायन्ते । दुर्नाम्नामिति-एव पूर्वोक्तेन प्रकारेण, अय उदावर्त परमो-महान्, उपद्रव स्मृतो मुनीन्द्रैरिति शेष । वातेत्यादि । वातेनाभिभूतो-व्याप्त, कोष्ठो येषा त एव तेषा [तै -] दुर्नामभिर्विनाऽपि, स -उदावर्तो जायते, न केवल तै., इत्यपिशब्दार्थ ।

अधुना साध्यासाध्यविभागमेषामाह—

**सहजानि त्रिदोषाणि यानि चाभ्यन्तरे वलौ ।**
**स्थितानि तान्यसाध्यानि, याप्यन्तेऽग्निबलादिभिः॥**

स०-सहजान्यर्शासि, तथा त्रिदोषजानि यथोत्तरकालजान्यपि, आभ्यन्तरे वलौ यानि स्थितान्येकदोषजानि तान्यप्यसाध्यानि । वलिशब्द पुस्त्रीलिङ्ग । अर्शसामसाध्याना किं कार्यम् ? इत्याह-याप्यन्त इत्यादि । अग्निबलमादि येषा त एवम्, तैर्याप्यन्ते । अग्निबलेऽक्षीण आयुषि च पादसम्पदि चेत्यर्थ ।

**द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।**
**कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥५४॥**

स०-द्वन्द्वजानि-सङ्करोत्पन्नानि, यानि च द्वितीयाया वलौ सश्रितानि, तानि कृच्छ्रसाध्यान्याहु, मुनय इति शेष । तथा परिसवत्सराणि च कृच्छ्रसाध्यानि । परिगतानि सवत्सर परिसवत्सराणि, प्रादिसमास, वर्षातिक्रान्तानीत्यर्थ. ।

**बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च ।**
**अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥५५॥**

स०-बाह्याया वलौ जातानि यानि तथैकदोषोल्बणानि च तथा न चिरोत्पतितानि-सवत्सरादर्वाग्जातानि, तानि च सुखसाध्यानि ।

---

१ "गाढविट्प्रतिपीडिता -गाढया विशा प्रतिपीडिता कठिनपुरीषयन्त्रिता । भेकाभो-मण्डूकसदृश प्रावृषेण्यभेकाभ पीतच्छवि । हतौजा -हतशक्ति । कलुषेन्द्रियो-दुर्बलेन्द्रियो व्याकुलसर्वेन्द्रियो वा । कोद्रव -श्यामाक । जूर्णाह्वो-जोन्हलक । करीर-करीरवृक्षफलम्, 'करीरमाध्मानकर' (हृ सू अ ६।८२) इत्युक्तत्वात् । इति-एवलक्षणलक्षितो रोग, उदावर्तोनाम दुर्नाम्ना-अर्शसा, परम -उत्कृष्ट, उपद्रव स्यात्-प्रधान उपद्रवो जायते ।" इति तोंडर । २ 'हृतौ' तो । ३ 'दित क' थ । ४ 'सा-झटितितमेव शू' ड । 'सा-त्तमिगिति तमेकमूलादि'(?) ण द । ५ 'रणात्तस्यै' ड ण द । ६ 'स्वस्थाने' इ ण द तो.स.मू । ७ 'तीव्ररु' स द्व ।

१ 'न महामसू' ड ण थ द । २ 'स्वस्थाने' ट । ३ 'तिदु' ट । ४ "आदिशब्देन देहबलद्रव्यप्रयोगदैवसाद्गुण्यादयो गृह्यन्ते ।" इति तोंडर. । ५ 'नि यानि' ड ण थ.द. ।

**मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं**

स०–मेढ्रभगनासाकर्णादिषु चार्शांसि वक्ष्यन्ते । यथास्व-स्वीये स्वीयेऽध्याये गुह्यरोगविज्ञाने नासारोगविज्ञाने कर्णरोग-विज्ञानादौ चेति ।

**नाभिजानि तु ।**
**गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ ५६ ॥**

स०–नाभिजानि तु–नाभौ जातानि पुनर्गण्डूपदास्यरूपाणि, गण्डूपदाना–किञ्चुलुकानामास्य तदिव रूप येषा तान्येवम् । तथा पिच्छिलानि–पिच्छावन्ति, तथा मृदूनि च भवन्ति ।

चर्मकीलान्याह—

**व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ।**
**कीलोपमं स्थिरखरं चर्मकीलं तु तं विदुः ॥ ५७ ॥**

स०–व्यानाख्यो वायु श्लेष्माण गृहीत्वाऽर्श करोति । क्व? त्वचो बहि –बाह्यप्रदेशे । किम्भूतम्? कीलोपम तथा स्थिर खर च । त च–गुदाङ्कुर, चर्मकील विदु, मुनय इति शेष ।

**वातेन तोदः पारुष्यं, पित्तादसितरक्तता ।**
**श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥५८॥**

स०–तत्र वातेनाधिकेन तोदपारुष्ये भवत । पित्तादसितरक्तता भवति । श्लेष्मणा तस्य–चर्मकीलस्य, स्निग्धतादिक स्यात् । ग्रथितत्व–ग्रन्थिसदृशत्वम् । सवर्णता–प्राकृतशरीर-तुल्यवर्णता ।

**अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान् ।**
**तान्याशु हि गुदं बद्ध्वा कुर्युर्बद्धगुदोदरम् ॥ ५९ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थानेऽर्शसां निदानं नाम सप्तमोऽध्यायः ॥७॥**

स०–अर्शसा प्रशमे–शान्तौ, मतिमान् शीघ्र यत्न कुर्वीत । किमिति चेत्? तदाह–तानीत्यादि । यस्मात्तानि–अर्शांसि, गुद बद्ध्वा–निरुध्य, बद्धगुदोदर शीघ्रं कुर्युरिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थानेऽर्शसा निदान नाम सप्तमोऽध्याय समाप्त ॥ ७ ॥



१ 'स्वीयेष्वध्यायेषु गु' ण थ द. । २ "पिच्छिलानि–चिक्कणानि । मृदूनि–कोमलानि ॥ त्वचो बहि –गुदौष्ठदेश एव, नान्यत्र । तु इति अहो ।" इति तोडर । ३ 'नि मृदू' ड ण थ द । ४ 'सुमति' ट ण द । ५ 'चेत्ताह' ट. । 'चेत्तदित्याह' ण ।




अर्शोनिदानादनन्तरमतिसारग्रहणीरोगनिदानारम्भ । यतो वक्ष्यति ( हृ चि अ ८।१६४ )–"अर्शोतिसारग्रहणीविकारा प्रायेण चान्योन्यनिदानभूता ।" इति । तस्मादतिसारग्रहणीरोगनिदान प्रक्रम्यत इत्याह—

**अथातोऽतीसारग्रहणीदोषनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

स०–पूर्ववद्व्याख्या ।

**दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ।**
**अतीसारः**

स०–दोषैर्व्यस्तै –पृथग्वातपित्तकफै, समस्तै –सन्निपातेन, तथा भयात् शोकाच्चेति षड्विधोऽतीसार ।

**स सुतरां जायतेऽत्यम्बुपानतः ॥ १ ॥**
**कृशशुष्कामिषासात्म्यतिलपिष्टविरूढकैः ।**
**मद्यरूक्षातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात् ॥ २ ॥**
**कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ।**
**विस्रंसयत्यधोऽब्धातुं हत्वा तेनैव चानलम् ॥ ३ ॥**
**व्यापद्यानुशकृत्कोष्ठं पुरीषं द्रवतां नयन् ।**
**प्रकल्पतेऽतिसाराय**

स०–स च सुतरामत्यम्बुपानात् जायते । कृशशुष्कामिषादिभिस्तथा तद्विधै –वातप्रकोपहेतुभिरिहानुक्तैरपि, अनिल कुपितोऽब्धातु शरीरगतमधो विस्रंसयति–अधस्तान्नयति । स्नेहविभ्रम –स्नेहव्यापत्ति । तेनैव–अब्धातुना, अनल–जठराग्नि, हत्वा–मन्दत्व नीत्वा, तथा कोष्ठ व्यापद्य–शून्यता कोष्ठस्य कारयित्वा, अनुशकृत्–शकृत समीपे, न तु सर्व कोष्ठम् । पुरीष च तेनैव धातुना द्रवता नयन्–प्रापयन् । अतीसाराय कल्पते–सम्पद्यते । अनिल इति योज्यम् ।

**लक्षणं तस्य भाविनः ॥ ४ ॥**
**तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः ।**
**आध्मानमविपाकश्च**

स०–तस्य–अतीसारस्य, भाविनो–भविष्यतो लक्षण, तोदो हृदादिषु गात्रसादादि च ।

१ इदमतीसारग्रहणीदोषनिदान चरके चि० १५।१९ अध्याययो°, सुश्रुते उ० ४० अध्याये, अष्टाङ्गसङ्ग्रहे नि० ८ अध्याये चास्ति निरूपितम् । २ 'णीरोगनि' इ ण द स.मू । ३ "अब्धातु–उदकाख्यम् । अनु–पच्छात्, शकृत्कोष्ठ व्यापद्य ।" इति चन्द्र । ४ 'कृशा' मि' ड थ । ५ 'भ्रमात्–स्नेहव्यापत्ते ।' ड. । ६ 'कृत्समी' ड थ ।

**तत्र वातेन विड्जलम् ॥ ५ ॥**
**अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते ।**
**रूक्षं सफेनमच्छं च ग्रथितं वा मुहुर्मुहुः ॥ ६ ॥**
**तथा दग्धगुडाभासं सपिच्छापरिकर्तिकम् ।**
**शुष्कास्यो भ्रष्टपायुश्च हृष्टरोमा विनिष्टनन् ॥ ७ ॥**

स०–[तत्र–] तेषु षडतीसारेषु, वातेनातीसारे विड्जलादिक शुष्कमुखादिको नर उपवेश्यते । किं कुर्वन्? विनिष्टनन् । कोऽर्थः? निं कुथन् ।

**पित्तेन पीतमसितं हारिद्रं शाद्वलप्रभम् ।**
**सरक्तमतिदुर्गन्धं तृण्मूर्च्छास्वेददाहवान् ॥ ८ ॥**
**सशूलं पायुसन्तापपाकवान्**

स०–पित्तेन तृडादिमान्नर पीतादिकमुपवेश्यते ।

**श्लेष्मणा घनम् ।**
**पिच्छिलं तन्तुमच्छ्वेतं स्निग्धमामं कफान्वितम् ॥९॥**
**अभीक्ष्णं गुरु दुर्गन्धं विबद्धमनुबद्धरुक् ।**
**निद्रालुरलसोऽन्नद्विडल्पाल्पं सप्रवाहिकम् ॥ १० ॥**
**सरोमहर्षः सोत्क्लेशो गुरुबस्तिगुदोदरः ।**
**कृतेऽप्यकृतसंज्ञश्च**

स०–श्लेष्मणा घनादिगुणं नर उपवेश्यते । निद्रालुस्तथाऽलसोऽन्नद्वेषी च स्तोक स्तोक सह प्रवाहिकया वर्तते सप्रवाहिक चोपवेश्यते । तथा, सरोमहर्षादिक स्यात् । तथा, कृतेऽप्यकृतसज्ञश्च–कृतेऽपि पुरीषोत्सर्गेऽकृतसज्ञ कृतपुरीषोत्सर्ग इति सवेदना न भवति ।

**सर्वात्मा सर्वलक्षणः ॥ ११ ॥**

स०–सर्वात्मा–सन्निपातेन, सर्वदोषलिङ्ग ।

**भयेन क्षोभिते चित्ते सपित्तो द्रावयेच्छकृत् ।**
**वायुस्ततोऽतिसार्येत क्षिप्रमुष्णं द्रवं प्लवम् ॥ १२ ॥**
**वातपित्तसमं लिङ्गैराहु**

स०–भयेन चित्ते क्षोभिते सति पित्तसहितो वायु शकृ द्रावयेत् । ततोऽनन्तरमतिसार्येत, क्षिप्रादिगुणयुक्त लिङ्गैर्वातपित्ततुल्यम् ।

**तद्वच्च शोकतः ।**

स०–तद्वच्च–भयेन तुल्यलिङ्ग, शोकादतिसार्यते ।

**अतीसारः समासेन द्विधा सामो निरामकः ॥१३॥**
**सासृङ्निरस्रः**

स०–अतीसार षोढा भवन् द्विप्रकार सङ्क्षेपेण । एक सामो द्वितीयो निरामक । तथा, एक सरक्तो द्वितीयो निरस्र ।

**तत्राद्ये गौरवादप्सु मज्जति ।**
**शकृद्दुर्गन्धमाटोपविष्टम्भार्तिप्रसेकिनः ॥ १४ ॥**

स०–तत्र–तस्मिन, आद्ये–सामेऽतीसारे, गौरवादप्सु पतितं पुरीष मज्जति–ब्रुडति, दुर्गन्ध च स्यात् । आटोपादियुतस्य पुस ।

**विपरीतो निरामस्तु**

स०–निरामस्त्वतीसारोऽतो विपरीत –अप्सु प्लवति, आटोपादिरहितस्य पुस ।

**कफात्पक्वोऽपि मज्जति ।**

स०–कफात्पुन स्वभावगुरुत्वात् पक्वोऽपि मज्जति ।

अथ ग्रहणीरोग लक्षयति—

**अतीसारेषु यो नातियत्नवान् ग्रहणीगदः ॥ १५ ॥**
**तस्य स्यादग्निविध्वंसकरैरन्यस्य सेवितैः ।**

स०–अतीसारेषु योऽतियत्नवान्न भवति तस्य ग्रहणीगदो भवेदिति ग्रहण्या निदानम् । अन्यस्य–अनतिसारिण , अग्निविध्वंसकरै –वह्निमान्द्यहेतुभिरन्नपानै , शीलितैर्ग्रहणीरोग स्यात् ।

अतीसारग्रहणीरोगयो समानाभासत्वात् को विशेष? इत्याह—

**सामं शकृन्निरामं वा जीर्णे येनातिसार्यते ॥ १६ ॥**
**सोऽतिसारोऽतिसरणादाशुकारी स्वभावतः ।**

स०–साम पुरीषमथवा निराम जीर्णे आहारे सति येन–व्याधिना, अतिसार्यते–अत्यर्थं बहिर्नि सार्यते, स व्याधिरतीसार । अतिसरणाद्धेतो । अतिसरणशब्दनिर्देशेन चास्यान्वर्थत्व द्योतितम् । तदेवमतिसरणादतीसार इत्युच्यते । ननु, एव सति यदा ग्रहणीदोषेऽप्यतिसरण कथञ्चित्स्यात्तदा तस्याप्यतीसारत्व स्यादित्याशङ्क्याह–आशुकारीत्यादि[7] । प्रभावप्रधानोऽय निर्देश. । हेतौ प्रथमा । स्वभावेनाशुकारित्वादतीसारो ग्रहणीदोषादन्य इत्यर्थ । ग्रहणीदोषो हि नाशुकारी, किन्तर्हि? चिरकृत् । तथा चाह (श्लो १८)–"चिरकृद्ग्रहणीदोष " इति ।

१ 'विज्जल' स द्व । "विज्जल–क्लिन्नोदकप्रायम् ।" इतीन्दु । २ विट्जल–किण्वोदकप्रायम् । विनिष्टनन्–निष्ठानिका प्रवाहिका कुर्वन् । दुर्गन्ध–क्लिन्नगन्धम् । विबद्ध–कठिनप्राय स्वल्पप्रवृत्तिर्वा । अनुबद्धा–लग्ना, रुक्–वेदना, यस्य तत् अनुबद्धरुक् । सप्रवाहिक–सनिष्ठानिकम् ।" इति चन्द्र । ३ 'विनष्टवाक्' इति कश्चित् । ४ 'तेष्वती' ड ण थ द । ५ 'नि कुथ' ड य द । ६ 'न् उपवेश्यते ।' ट । ७ 'हवत्' 'कवत्' ण द । ८ 'शूल पा' स स । ९ 'स्तिर्गुरूदर ' ण द स मू । १० 'दिकमुप' ड ण थ द । 'दिगुणमनुबद्धरुगन्त निद्रात्वादिविशेषणोऽल्पादिगुण च नर' इति कश्चित् । ११ 'या सप्र' ड ण द. ।

१ 'द्वेधा' ण द. च स स । २ 'सामाती' ण द । ३ 'बुड' ट । ४ 'त्वाच्च प' ण द । ५ "अतीसारेषु जातेषु सत्सु वर्ज्या(र्ज्य)वर्जने सेव्या(व्य)सेवने च यो नातियत्नवान् तस्य ग्रहणीगद स्यात् । आशुकारी–सवमाशु करोति व्यापादयति, अनेकार्थत्वाद्धातूनाम् ।" इति चन्द्र । ६ 'शनैवास' ण द । ७ 'दि । भाव' ट ।

अथ ग्रहणीदोषस्य स्वरूपं वर्णयन्नतीसाराद्भयो भेदमाह—

**सामं सान्नमजीर्णेऽन्ने जीर्णे पक्वं तु नैव वा ॥ १७ ॥**
**अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः ।**
**चिरकृद्ग्रहणीदोषः सञ्चयाच्चोपवेशयेत् ॥ १८ ॥**

स०-ग्रहणीदोषोऽजीर्णेऽन्ने सामं कदाचित्सान्नं, कदाचिज्जीर्णेऽन्ने पक्वं तथा नैव वा । अकस्मात्-कदाचिन्निमित्तमन्तरेणापि,मुहुर्मुहु -पुन पुनर्बद्ध, कदाचिन्निमित्त विना मुहु शिथिल, सञ्चयादुपवेशयेदिति योज्यम् । अयं तु ग्रहणीदोषश्चिरकृत् ।

**स चतुर्धा पृथग्दोषैः सन्निपाताच्च जायते ।**

स०-स -ग्रहणीदोष , पृथग्दोषै -वातपित्तकफै , सन्निपातेन चेति चतुष्प्रकारो जायते ।

**प्राग्रूपं तस्य सदनं चिरात्पचनमम्लकः ॥ १९ ॥**
**प्रसेको वक्त्रवैरस्यमरुचिस्तृट् क्लमो भ्रमः ।**
**आनद्धोदरता छर्दिः कर्णक्ष्वेडोऽन्त्रकूजनम् ॥ २० ॥**

स०-तस्य-ग्रहणीदोषस्य, प्राग्रूप सदन चिरात्पचनादि च ।

**सामान्यं लक्षणं कार्श्यं धूमकस्तमको ज्वरः ।**
**मूर्च्छा शिरोरुग्विष्टम्भः श्वयथुः करपादयोः ॥२१॥**

स०-चतुर्विधस्यास्य ग्रहणीगदस्य सामान्य लक्षण कार्श्यादिकम् ।

**तत्रानिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः ।**
**पार्श्वोरुवङ्क्षणग्रीवारुजाऽभीक्ष्णं विषूचिका ॥ २२ ॥**
**रसेषु गृद्धिः सर्वेषु क्षुत्तृष्णा परिकर्तिका ।**
**जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते २३**
**वातहृद्रोगगुल्मार्शःप्लीहपाण्डुत्वशङ्कितः ।**
**चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ॥ २४ ॥**
**पुनःपुनः सृजेद्वर्चः पायुरुक्श्वासकासवान् ।**

स०-तत्र-तेषु चतुर्षु गदेषु मध्ये, वातात्तालुशोषादि स्यात् ।

**पित्तेन नीलपीताभं पीताभः सृजति द्रवम् ॥ २५ ॥**
**पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ।**

स०-पित्तेन पीताभ सन् तथा पूत्यम्लोद्गाराद्यर्दितो नीलवर्णादिक वर्चं सृजति ।

**श्लेष्मणा पच्यते दुःखमन्नं छर्दिररोचकः ॥ २६ ॥**
**आस्योपदेहनिष्ठीवकासहृल्लासपीनसाः ।**
**हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ॥ २७ ॥**
**उद्गारो दुष्टमधुरः सदनं स्त्रीष्वहर्षणम् ।**
**भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ॥ २८ ॥**
**अकृशस्यापि दौर्बल्यम्**

स०-श्लेष्मणा दु ख-कृच्छ्रेण, अन्न पच्यते । छर्द्यादि च स्यात् । तथा, हृदयं स्त्यानं-पिण्डितमिव, मन्यते । जठर निश्चलं गुरु च । उद्गारश्च दुष्टमधुर स्यात् । सदन शरीरस्य । स्त्रीष्वहर्षणादि च स्यात् ।

**सर्वजे सर्वसङ्करः ।**

स०-सर्वजे-सन्निपातजे, सर्वेषा लक्षणाना सङ्करो-मिश्रत्वं, भवति ।

**विभागेऽङ्गस्य ये चोक्ता विषमाद्यास्त्रयोऽग्नयः ॥२९॥**
**तेऽपि स्युर्ग्रहणीदोषाः**

स०-अङ्गस्य विभागे च ये विषमाद्या -विषमतीक्ष्णमन्दा , त्रयोऽग्नय उक्तास्तेऽपि ग्रहणीदोषा स्यु । ननु, एव सति सप्त ग्रहणीदोषा इति प्राप्नोति । मैवम् । मुख्या सम्प्राप्तिपूर्वरूपरूपनिर्देशादियुक्ताश्चत्वार एव ग्रहणीगदाः । ये तु विषमाद्या त्रयस्ते ग्रहणीरोगाभासा इति बोध्यम् ।

**समस्तु स्वास्थ्यकारणम् ।**

स०-सम पुनरग्नि स्वास्थ्यस्य-आरोग्यस्य, कारणम् ।

**वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ।**
**अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ ३० ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थानेऽतीसारग्रहणीदोषनिदानं नामाष्टमोऽध्यायः ॥८॥**

स०-वातव्याध्यादयोऽष्टौ महारोगा. सुदुस्तरा -विषमा । तस्मात्तेषु यत्न कार्य इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थानेऽतिसारग्रहणीदोषनिदान नामाष्टमोऽध्याय समाप्त ॥८॥

१ 'घस्रूः' ट ण द । २ "चिरकृत्-चिरकालेन व्यापादयति । सञ्चयात्-सञ्चितैर्दोषै ॥ सदन-अङ्गसाद । कर्णक्ष्वेड -कर्णयोर्महान् स्वन । अन्त्रकूजन-अन्त्राणामव्यक्तशब्दकरणम् ॥ तमक - तम प्रवेश. ॥ रसेषु सर्वेषु-मधुरादिषु, गृद्धि -अभिलाष ।" इति चन्द्र । "तमक -श्वासभेद तम प्रवेशो वा । तिमिर-नेत्ररोगो मन्ददृष्टिता । परिकर्तिका-गुदे कर्तनवत् पीडा, अन्त्रच्छेदो वा । जीर्णे जीर्यति च 'अन्ने' इति शेष· ।" इति तोडर । "द्रव शुष्क-कदाचिद्द्रव कदाचिच्छुष्कम्" इति विजयवाचस्पती । ३ 'र्णेऽप्यन्ने' ण द । ४ 'वाऽतिसार्यते । अ' ट. । ५ 'स्वाप्यस्य' थ. । ६ 'नील पी' इ स.द्ध. । 'पीतनीलाभ' ण. द. ।

१ 'पीतवर्णा' ट । २ 'हमाधुर्यकासष्ठीवनपी' इ तो.,स च , मा नि । ३ "हृल्लासो-दोषोत्क्लेश ॥ सुदुस्तरा -दुर्जया , कस्यचित् सिध्यन्तीत्यर्थ. ।" इति चन्द्र· । ४ 'वैरूपनि' ट.ण.द. ।



## नवमोऽध्यायः ।

अतीसारग्रहणीरोगनिदानादनन्तरं मूत्राघातनिदानमेकसम्बन्धनत्वादुच्यत इत्याह—

**अथातो मूत्राघातनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**बस्तिबस्तिशिरोमेढ्रकटीवृषणपायवः ।**
**एकसम्बन्धनाः प्रोक्ता गुदास्थिविवराश्रयाः ॥ १ ॥**

स०–बस्त्यादीनां द्वन्द्वः । बस्त्यादय एकसम्बन्धना प्रोक्ताः । एकं सम्बन्धनं–ग्रन्थनं, येषां त एवम् । तदेवैकसम्बन्धनत्वमेषां प्रकटयति–गुदेत्यादि । गुदास्थिविवरमाश्रयो येषां त एवम्, तत्राश्रिता इत्यर्थः ।

ननु, अत्र मूत्राश्रिता दोषा अवश्यं बस्तिं प्राप्य विकुर्वते । बस्तेश्चाधोमुखत्वान्मूत्रान्त प्रवेशो बस्तिमुखेन न सम्भाव्यते, तस्मान्मूत्राघातानुत्पत्तिरेव, इत्याशङ्क्याह—

**अधोमुखोऽपि बस्तिर्हि मूत्रवाहिसिरामुखैः ।**
**पार्श्वेभ्यः पूर्यते सूक्ष्मैः स्यन्दमानैरनारतम् ॥ २ ॥**
**यैस्तैरेव प्रविश्यैनं दोषाः कुर्वन्ति विंशतिम् ।**
**मूत्राघातान् प्रमेहांश्च कृच्छ्रान्मर्मसमाश्रयान् ॥ ३ ॥**

स०–हिर्यस्मादर्थे । अपिश्च हेत्वभ्युपगमे । यद्यप्यधोमुखो बस्तिस्तथाऽपि जलमध्यस्थिताधोमुखनवमृत्कुम्भवत् । हि–यस्मात्, पार्श्वेभ्यो मूत्रवाहिसिरामुखैः–स्रोतोद्वारैः, सूक्ष्मैः प्रकृतत्वान्मूत्रं स्यन्दमानैः–स्रवद्भिः, अनारतम्–अनवरतं, यैरेव मूत्रस्रोतोद्वारैर्बस्तिः पूर्यते तैरेव मूत्रस्रोतोद्वारैर्दोषा एनं–बस्तिं, प्रविश्य विंशतिं मूत्राघातान् कुर्वन्ति तावतश्च प्रमेहान् । किम्भूतान्? बस्त्याख्यमर्मसमाश्रयान् । हेतौ द्वितीया । मर्मसमाश्रितत्वात् कृच्छ्रान्–कृच्छ्रसाध्यान् ।

**बस्तिवङ्क्षणमेढ्रार्तियुक्तोऽल्पाल्पं मुहुर्मुहुः ।**
**मूत्रयेद्वातजे कृच्छ्रे**

१ "अथ–अनन्तरं, अतः–कारणात्, यतः स्थूलमलस्यातीसारा(पुरीषा)ख्यस्य व्याधय उक्ताः । अथाच्छस्य मूत्राख्यस्य मलस्योच्यन्तेऽध्यायद्वयेन । मूत्रस्याघाता मूत्राघाताः–मूत्रकृच्छ्रादयः । एकसम्बन्धनाः–तुल्यग्रथनबन्धनाः परस्पराधाराः ।" इति तोडरः । २ 'इदं मूत्राघातमूत्रकृच्छ्राश्मरीनिदानं चरके चि० २६ अध्याये सि० ९ अध्याये च, सुश्रुते नि० ३ अध्याये उ० ५८।५९ अध्याययोश्च, अष्टाङ्गसङ्ग्रहे नि० ९ अध्याये चास्ति वर्णितम् । ३ 'स्त तेषां' ण द । ४ 'मध्येस्थि' ड ण द. । ५ 'मूत्रै स्र' थ द ।

स०–अत्र चत्वारो मूत्राघाता वातपित्तकफसन्निपातात्मकाः । तत्र वातजे कृच्छ्रे–मूत्राघाते, बस्त्याद्यर्तियुक्तः पुमानल्पाल्पं कृत्वा मुहुर्मुहुर्मूत्रयेत् ।

**पैत्ते पीतं सदाहरुक् ॥ ४ ॥**
**रक्तं वा**

स०–पैत्ते कृच्छ्रे पुमान् मूत्रं पीतं सदाहरुङ्मूत्रयेत्, अथवा रक्तम् ।

**कफजे बस्तिमेढ्रगौरवशोफवान् ।**
**सपिच्छं सविबन्धं च**

स०–कफजे कृच्छ्रे बस्तिमेढ्रगौरवशोफयुक्तः सन् सपिच्छं सविबन्धं च–रुद्ध्वा रुद्ध्वा, मूत्रं मूत्रयेत् ।

**सर्वैः सर्वात्मकं मलैः ॥ ५ ॥**

स०–सर्वैः–त्रिभिर्दोषैः सन्निपतितैर्जाते कृच्छ्रे, सर्वात्मकं–दोषत्रयलक्षणलिङ्गितं, मूत्रं मूत्रयेत् ।

इदानीमश्मरीं लक्षयति—

**यदा वायुर्मुखं बस्तेरावृत्य परिशोषयेत् ।**
**मूत्रं सपित्तं सकफं सशुक्रं वा तदा क्रमात् ॥ ६ ॥**
**सञ्जायतेऽश्मरी घोरा पित्ताद्गोरिव रोचना ।**
**श्लेष्माश्रया च सर्वा स्यात्**

स०–यदा–यस्मिन् काले, वायुः कुपितो बस्तेर्मुखमावृत्य–रुद्ध्वा, परिशोषयेन्मूत्रं केवलं कदाचित्सपित्तं कदाचित्सकफमथवा सशुक्रं मूत्रं तदा सञ्जायतेऽश्मरी । क्रमात्–यथोत्तरम्, घोरा मूत्राश्मरी, घोरतरा पित्ताश्मरी, घोरतमा श्लेष्माश्मरी, ततोऽपि घोरा शुक्राश्मरी, इति क्रमशब्दस्यार्थः । वायुना पित्तं सशोष्य गोर्यथा रोचना सञ्जायते तथाऽश्मरीति । सर्वा चाश्मरी श्लेष्माश्रया । श्लेष्मा आश्रयः–आधारो, यस्याः सैवम् । कफमाश्रित्य सर्वाऽश्मरी स्यादित्यर्थः ।

**अथास्याः पूर्वलक्षणम् ७**
**बस्त्याध्मानं तदासन्नदेशेषु परितोऽतिरुक् ।**
**मूत्रे च बस्तगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥ ८ ॥**

स०–अथ–अनन्तरं, अस्याः पूर्वलक्षणं–प्राग्रूपं, बस्त्याध्मानादि ।

**सामान्यलिङ्गं रुङ्नाभिसेवनीबस्तिमूर्धसु ।**

१ 'कृच्छ्रात् मु' ण थ द । २ 'क्त सपि' ण थ द । ३ "घोरा–तीव्रा दुस्तरा ॥ तदासन्नदेशेषु–बस्तिशिरोमुष्कमेढ्रादिषु । परितः–समन्तात् ।" इति चन्द्रतोडरौ । ४ 'रा वाताश्मरी' ड ण द । 'रा मूत्रवाताश्मरी' थ । ५ 'क्रमाच्छब्द' ट. । ६ 'त्रे बस्तसगन्ध' ण द तो ।

**विशीर्णधारं मूत्रं स्यात्तया[1] मार्गनिरोधने ॥ ९ ॥**
**तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् ।**
**तत्सङ्क्षोभात्क्षते सास्रमायासाच्चातिरुग्भवेत् ॥१०॥**

स०–सामान्य लक्षण ना+यादिषु रुग्भवति । तया–अ[3]श्मर्या, मार्गनिरोधे सति मूत्रं विशीर्णधार–विच्छिन्नधार, भवेत्। तद्व्यपायात्[4]–अश्मर्यपगमात्, नर सुखं–अकृच्छ्रेण, मेहेत्–मूत्र मुञ्चेत् । कीदृशम् ? अच्छं[5]–अकलुषम्, गोमेदकोपमम्, गोमेदको–रत्नविशेष , उपमा यस्य तदेवम् । तस्या सङ्क्षोभस्तत्सङ्क्षोभो–हस्त्यश्वा[रोहणा]दिनाऽनेकवेदनाप्रादुर्भाव , तस्मात्तत्सङ्क्षोभाद्यत्क्षत भवति तस्मिन्क्षते सति सास्र–सलोहित, मेहेत् । आयासात्–अध्वादिकृतात् श्रमात्, अतिरुग्भवेत् ।

**तत्र वाताद्भृशार्त्यार्तो[6] दन्तान् खादति वेपते ।**
**मृद्नाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ॥ ११ ॥**
**सानिलं[7] मुञ्चति शकृन्मुहुर्मेहति बिन्दुशः ।**
**श्यावा रूक्षाऽश्मरी चास्य स्याच्चिता कण्टकैरिव१२**

स०–तत्र–तास्वश्मरीषु मध्ये, वाताद्याऽश्मरी तस्यामुत्पन्नाया सत्या पुमान् भृशार्त्यार्त –अत्यन्त पीडया पीडितो, दन्तान् खादति । तथा, वेपते–कम्पते । मेहन– मेढ्र, मृद्नाति–मलयति । नाभिं च हस्ताभ्या पीडयति । किं कुर्वन् ? अनिश–अनवरत, क्वणन्–नानाविधदु खोद्भावक शब्द विदधत् । तथा, सहानिलेन–वातसहितं, शकृन्मुञ्चति । तथा, मुहुर्मेहति–मूत्र पुन पुन सृजति । बिन्दुशो–बिन्दु बिन्दु कृत्वा । अस्य च–नरस्य, अश्मरी श्यावा वर्णत , तथा रूक्षा कण्टकैश्चि[8]तेव–व्याप्ता, भवेत् ।

**पित्तेन दह्यते बस्तिः पच्यमान इवोष्मवान् ।**
**भल्लातकास्थिसंस्थाना रक्ता[9]पीताऽसिताऽश्मरी१३**

स०–पित्तेन याऽश्मरी तया बस्तिर्दह्यते । पच्यमान इव ऊष्मवान्–सन्तापयुक्तो भवति । सा चाश्मरी भल्लातकास्थिसंस्थाना–तदाकारा स्यात् । तथा, वर्णतो रक्ता पीता तथाऽसिता–कृष्णच्छाया ।

**बस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ।**
**अश्मरी महती श्लक्ष्णा मधुवर्णाऽथवा सिता ॥१४॥**

स०–श्लेष्मणा[10] जातायामश्मर्या बस्तिर्निस्तुद्यत इव शीतलो गुरुश्च स्यात् । अश्मरी च महती–स्थूला वातपित्तोत्था+या सकाशात् । तथा, श्लक्ष्णा–कोमला । मधुवर्णा–माक्षिकाभा । अथवा, सिता–शुक्ला ।

**एता भवन्ति बालानां तेषामेव च भूयसा ।**
**आ[1]श्रयोपचयाल्पत्वाद्ग्रहणाहरणे सुखाः ॥ १५ ॥**

स०–एता –तिस्रोऽश्मर्यो, बालानामेव भवन्ति । तथा च तन्त्रान्तरे (सुश्रुते नि अ ३।११)–"तिस्रोऽश्मर्यो दिवास्वप्न[2]शीलनाध्यशनशीतस्निग्धमधुराहारप्रियत्वाद्बाला[3]नामेव भवन्ति ।" इति । तेषा च बालाना जातास्ता भूयसा ग्रहणाहरणे सुखा । ग्रहण–बडिशादिना, आहरण–शस्त्रादिना, तस्मिन् सुखा –सुखोपाया । अ[4]त्रैव हेतुमाह–आश्रयेत्यादि । आश्रय –आधार , उपचयो–वृद्धि , तयोरल्पत्व, तस्माद्धेतोर्बालानामश्मर्या आश्रयोऽल्पो भवति, यत्रासावश्मरी जायते । अत एव चाश्रयानुसारेणोपचयोऽप्यश्मर्या बालानामल्पो भवति । अतस्ता ग्रहणाहरणे सुखा । महता तु यथोक्तहेत्वभावाद्ग्रहणाहरणे ता दु खावहा ।

**शुक्राश्मरी तु महतां जायते शुक्रधारणात् ।**
**स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥ १६ ॥**
**शोषयत्युपसङ्गृह्य शुक्रं तच्छुष्कमश्मरी ।**
**बस्तिरुक्कृच्छ्रमूत्रत्वमुष्कश्वयथुकारिणी ॥ १७ ॥**
**तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ।**
**पीडिते त्ववकाशेऽस्मिन्**

स०–तुरवधारणे । महतामेव शुक्राश्मरी जायते, न बालानाम्, तथाविधस्य तेषा शुक्रस्याभावात् । कुतो जायते ? शुक्रधारणात्–हर्षाद्युदीरणात्[5]स्थानच्युतस्य शुक्रस्य धारणात् । अत एवाह–स्थानादित्यादि । यस्मात्स्थानाच्च्युत–परिभ्रष्ट, बहिरमुक्त–अत्यक्त, तदानी वायुर्मुष्कयो –वृषणयो , अन्तरे–मध्ये, शोषयति । किं कृत्वा ? उपसङ्गृह्य,–शुक्रं सर्वतो गृहीत्वा । तच्च शुष्कं सदश्मरीति भण्यते । सा च बस्तिरुगादिकारिणी । तस्यामुत्पन्नमात्राया–न चिरकालोत्पन्नाया, पीडिते–ह[6]स्तादिनाऽभिभूते, अस्मिन्नवकाशे–शुक्राश्मरीस्थाने, शुक्रमेति–आगच्छति, तथा विलीयते च, इति चशब्दो लुप्तनिर्दिष्टो बोध्य । विशेषेण लीयते–तत्रैव सुष्ठु श्लिष्यते, कठिनत्वात् ।

**अश्मर्येव च शर्करा ॥ १८ ॥**
**अणुशो वायुना भिन्ना सा त्वस्मिन्ननुलोमगे ।**
**निरेति सह मूत्रेण प्रतिलोमे विबध्यते ॥ १९ ॥**

स०–अश्मर्येव च पवनेनाणुशो भिन्ना सती शर्करा स्यात्,

१ 'तथा मा' ण द । २ "मार्गो–मूत्रस्रोत । गोमेदकोपम–लोहितमणिसदृशम् ॥ दन्तान् खादति–खट्खटायते । मृद्नाति–घर्षयति । सानिल–सवातशब्द, शकृत्–पुरीष, मुञ्चति–सृजति, मूत्रप्रवृत्त्यर्थं कृतात् कुन्थनात् ॥ मधुवर्णा–ईषत्पिङ्गा ।" इति तोडर । "गोमेदक–अङ्कोलकम् ।" इतीन्दु । ३ 'तथा, अ' ट ड ण थ द । ४ 'त्–तदप' ड ण द । 'त्–तदपगमात् अश्म' थ । ५ 'च्छ–निर्मलम्' ट चन्द्र । ६ 'कृश चार्तो' मा.नि । ७ 'वाऽरुणाऽ' मा नि । ८ 'श्चिता–व्या' थ । ९ 'रक्तपीता' ण द ट । १० 'या श्लेष्मणा जायते तयाऽश्मर्या ब' ण द ।

१ "आश्रय –आधारो बस्ति । उपचयो–वृद्धिर्मांसस्य । एति–निरेति । विलीयते–विलय गच्छति ।" इति चन्द्रतोडरौ । २ 'प्नसमशनाध्य० ग्धगुरुम० त्वाद्विशेषेण बालाना भ' स सु । ३ 'लाना भ' ण थ द । ४ 'तत्रेव' ण थ द । ५ 'त्स्थानाच्च्युत' ट । ६ 'हस्तादिना' इति लिखितपुस्तकेषु नोपलभ्यते ।

न तु तस्या अन्यदुपादानकारणमित्यर्थ । सा–शर्करा, अस्मिन्–पवने, अनुलोमगे–अनुलोम कृत्वा स्थिते सति, मूत्रेण सह निरेति–बहिर्निष्क्रामति । प्रतिलोमे वायौ सा शर्करा विबध्यते–न तु बहिर्निष्क्रामति । अश्मरी त्वनुलोमगेऽपि मरुति न निरेति–मूत्रेण सह न निष्क्रामति, इत्यनयोर्भेद । अश्मरीणा भल्लातकादिसस्थाननिर्देशस्तदनुसारेणाहरणार्थं बस्त्यवयवविपाटनमुपयुज्यते । श्यावादिवर्णनिर्देशश्च बहिर्निष्क्रान्ताना श्यावादिवर्णनिदर्शनेन वातादीननुमाय तत्कृताना व्रणाना चिकित्सार्थमुपयुज्यते । ननु च, सस्थानेनैव वाताद्यनुमानंमश्मरीव्रणस्य भविष्यतीति वर्णनिर्देशोऽनर्थक । मैवम् । सस्थान प्रायिकमिति केचिन्मन्यन्ते, तस्माद्वर्णनिर्देशोऽपि वाच्य । प्रायिकत्वे च तद्वयोरुपादानं लिङ्गम् ।

अथ वातबस्त्यादीनाह—

**मूत्रसन्धारिणः कुर्याद्रुद्ध्वा बस्तेर्मुखं मरुत् ।**
**मूत्रसङ्गं रुजं कण्डूं कदाचिच्च स्वधामतः ॥ २० ॥**
**प्रच्याव्य बस्तिमुद्वृत्तं गर्भाभं स्थूलविप्लुतम् ।**
**करोति तत्र रुग्दाहस्पन्दनोद्वेष्टनानि च ॥ २१ ॥**
**बिन्दुशश्च प्रवर्तेत मूत्रं बस्तौ तु पीडिते ।**
**धारया द्विविधोऽप्येष वातबस्तिरिति स्मृतः ॥२२॥**
**दुस्तरो दुस्तरतरो द्वितीयः प्रबलानिलः ।**

स०–मूत्रसन्धारिण पुरुषस्य बस्ते–मूत्राधारस्य, मुखं–द्वार, रुद्ध्वा मारुतो मूत्रसङ्ग कुर्याद्रुजं कण्डू च । स वातबस्तिर्मूत्राघातविशेष । कदाचित्–अदृष्टवशात्, वायुस्त बस्तिं स्वधामत –स्वस्थानात्, प्रच्याव्य–च्यावयित्वा, उद्वृत्तं–ऊर्ध्वमुख, गर्भाभ–गर्भसदृश, स्थूल–स्वप्रमाणात् प्रवृद्ध, तथा विप्लुत–चञ्चल, करोति । चशब्दान्न केवल बस्तिभ्रंशमेवविध करोति, यावत्तत्र रुगादीनपि । मूत्र च बिन्दुश –बिन्दुर्बिन्दु प्रवर्तते । बस्तौ च पीडिते–हस्तादिना, मूत्र धारया–अविच्छिन्न, प्रवर्तते । एष द्विविधो वातबस्तिरिति नाम्ना स्मृत । स च प्रथमो दुस्तरो–दु खेन कृच्छ्रेण तरितुं शक्यते । द्वितीयो वातबस्तिर्दुस्तरतरो यत प्रबलानिल । अत एव चात्र प्रबलानिलत्वान्मूत्रस्य बिन्दुश प्रवर्तनम् ।

**शकृन्मार्गस्य बस्तेश्च वायुरन्तरमाश्रितः ॥ २३ ॥**
**अष्ठीलाभं घनं ग्रन्थिं करोत्यचलमुन्नतम् ।**
**वाताष्ठीलेति साऽऽध्मानविण्मूत्रानिलसङ्गकृत् २४**

स०–शकृन्मार्गस्य–गुदस्य, बस्तेश्चान्तर–मध्यं, वायुराश्रित सन् ग्रन्थिमष्ठीलाभ घनमचलमुन्नतं करोति। सा वाताष्ठीलेत्युच्यते । सा चाध्मानादिकृत् ।

**विगुणः कुण्डलीभूतो बस्तौ तीव्रव्यथोऽनिलः ।**
**आविध्य मूत्रं भ्रमति सस्तम्भोद्वेष्टगौरवः ॥ २५ ॥**
**मूत्रमल्पाल्पमथवा विमुञ्चति शकृत्सृजन् ।**
**वातकुण्डलिकेत्येषा**

स०–विगुण.–कुपितो न त्वनुलोमग , तथा दोषदेशादिसहकारिकारणवशात् कुण्डलाकारगति , तथा तीव्रव्यथ , कार्यं कारणोपचारादेवमुक्त , तथा सह स्तम्भेन–स्तब्धतया, तथोद्वेष्टेन गौरवेण च वर्तते । स एवंभूतो वायुर्मूत्रमाविध्य–क्षोभयित्वा बस्तौ भ्रमति । अथवा न मूत्रमाविध्य भ्रमति । किम्भूतस्तर्हि ? शकृत्–पुरीष, सृजन्–विसर्गं कुर्वन्, मूत्रमल्पाल्प–स्तोक स्तोक कृत्वा, विमुञ्चति । एवरूपा वातकुण्डलिकोच्यते ।

**मूत्रं तु विधृतं चिरम् ॥ २६ ॥**
**न निरेति विबद्धं वा मूत्रातीतं तदल्परुक् ।**

स०–मूत्र तु चिर विधृत न निरेति–न प्रवर्तते । अथवा पवनवशाद्विबद्ध निर्गच्छत्यल्परुक् तन्मूत्रातीत कथ्यते ।

**विधारणात्प्रतिहतं वातोदावर्तितं यदा ॥ २७ ॥**
**नाभेरधस्तादुदरं मूत्रमापूरयेत्तदा ।**
**कुर्यात्तीव्ररुगाध्मानमपक्तिं मलसङ्ग्रहम् ॥ २८ ॥**
**तन्मूत्रजठरम्**

स०–विधारणात्–मूत्रवेगस्य रोधात्, प्रतिहत मूत्र कर्तृभूत वातेनोदावर्तित यदा नाभेरधस्तादुदर कर्मभूतमापूरयेत् तदा तीव्ररुजादिक कुर्यात्, तन्मूत्रजठरमित्युच्यते ।

**छिद्रवैगुण्येनानिलेन वा ।**
**आक्षिप्तमल्पं मूत्रं तद्बस्तौ नालेऽथवा मणौ ॥ २९ ॥**
**स्थित्वा स्रवेच्छनैः पश्चात्सरुजं वाऽथ नीरुजम् ।**
**मूत्रोत्सङ्गः स विच्छिन्नतच्छेषगुरुशेफसः ॥ ३० ॥**

१ 'रा,वातेऽनु' ट ण द । २ 'नमप्यश्म' थ । ३ 'च द्वयो' ट । ४ "मूत्रसङ्गमाह-मूत्रेत्यादि । मूत्रसन्धारिण –मूत्रवेगरोधिन , रुध्वा-पिधाय आच्छाद्य आवृत्य, मूत्रसङ्ग नाम मूत्राघात कुर्यात् । मूत्रकृच्छ्रमूत्राघातयोश्चायमेव भेद ,–मूत्रकृच्छ्रे कृच्छ्रत्वमतिशयितमीषद्विबन्ध , मूत्राघाते तु विबन्धो बलवान्, इति भेद । वातबस्तिमाह–कदाचिदिति । तत्र–बस्तौ । स्पन्दन–कम्पनम् । द्विविधोऽपि–द्विप्रकारोऽपि, वातबस्तिरिति–एव, स्मृत –उक्त. ।" इति तोडर. । ५ 'बिन्दुबिन्दु प्र' थ. ।

१ 'आविश्य' इ च स मू । "आविश्य–प्रविश्य" इति चन्द्र । २ "आविध्य–प्रविश्य आवृत्य । स्तम्भो–बस्तिकाठिन्यम् । उद्वेष्टं –पीडनम् । उदावर्तित–ऊर्ध्वं नीतम् ॥ छिद्रवैगुण्येन–मूत्रवाहिस्रोतोद्वारावरणेन । आक्षिप्त–रुद्ध सत् । किम्भूतो मूत्रोत्सङ्ग ? सविच्छिन्न ,–छित्वा छित्वा भवति, वायोश्चलत्वेन ।" इति तोडर । "नाले–मेढ्रस्रोतसि । मणौ–मेढ्राग्रप्रदेशे । यद्यपि 'नाले' इत्यनेनैव मणेरपि ग्रहण सञ्जात, तथाऽपि मणेरुपादान मणावलन्तमूत्रोत्सङ्गप्रतिपादनार्थम् ।" इति डल्हण । ३ 'पित पुरीषादीना नानुलोमन ' थ । ४ 'त् बस्तौ कु' थ. । ५ 'विश्य–' ट । ६ 'ति । अथवा मूत्रमाविश्य भ्र' ट । 'ति । कि' ण द । ७ 'किन्तर्हि' ट य । ८ 'वेगस्य धारणात् प्रति' ण थ द । ९ 'मूत्रस्य बस्तौ' ण द । १० 'थवाऽरु' इ. चन्द्र. । ११ 'च्छिन्न त' इ । 'च्छिन्नस्तच्छे'तो. ।

स०—छिद्रवैगुण्येन—मूत्रद्वारदोषेण, अनिलेन वा तथाभूतेन, यदाक्षिप्तं मूत्रमल्प—किञ्चिच्छेषं मूत्रं, तद्वस्तौ स्थितमथवा नाले मणिकन्दे वा स्थितम् । तत्र स्थित्वा पश्चात्—अनन्तरं, शनैः—मन्दं मन्दं कृत्वा, सरुजमथवा नीरुजं स्रवेत्। पुंसः किम्भूतस्य ? विच्छिन्नतच्छेषगुरुशेफसः । तदिति प्रकृतं मूत्रं परामृश्यते, तस्य—मुक्तमूत्रस्य, शेषस्तच्छेषः, विच्छिन्नश्चासौ तच्छेषश्च विच्छिन्नतच्छेषः, तेन गुरुशेफो—गुरु मेढ्रं, यस्य स विच्छिन्नतच्छेषगुरुशेफाः, तस्य विच्छिन्नतच्छेषगुरुशेफसः । स एवंविधः सन् मूत्रोत्सङ्ग उच्यते ।

**अन्तर्बस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ।**
**अश्मरीतुल्यरुक् ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥३१॥**

स०—बस्तेर्मुखस्य मध्ये ग्रन्थिर्वृत्तो—वर्तुलः, तथा स्थिरोऽल्पश्च सहसा—झटित्येव, भवेत् । अश्मरीतुल्यरुग् ग्रन्थिः स मूत्रग्रन्थिरुच्यते ।

**मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ।**
**स्थानाच्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्तते ॥३२॥**
**भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ।**

स०—सञ्जातमूत्रस्य पुंसः स्त्रियं गच्छतो मूत्रयतो—मूत्रं कुर्वतः, स्थानाच्युतं शुक्रं वायुनोद्धतं—ध्मातं, भस्मोदकेन प्रतीकाशं—तुल्यं, प्राक् मूत्रितात् पश्चाद्वा यत् प्रवर्तते शुक्रं तन्मूत्रशुक्रमुच्यते ।

**रूक्षदुर्बलयोर्वातादुदावर्तं शकृद्यदा ॥ ३३ ॥**
**मूत्रस्रोतोऽनुपर्येति संसृष्टं शकृता तदा ।**
**मूत्रं विट्तुल्यगन्धं स्याद्विड्विघातं तमादिशेत् ३४**

स०—रूक्षदुर्बलयोः पुंसोर्वातादुदावर्तं—पीडितं, शकृद्यदा मूत्रस्रोतोऽनुपर्येति—मूत्रस्रोतोऽभितः आगच्छति, तदा शकृता संसृष्टं मूत्रं पुरीषसदृशगन्धं स्यात्, तं विड्विघातमित्यादिशेत् ।

**पित्तं व्यायामतीक्ष्णोष्णभोजनाध्वातपादिभिः ।**
**प्रवृद्धं वायुना क्षिप्तं बस्त्युपस्थार्तिदाहवत् ॥ ३५ ॥**
**मूत्रं प्रवर्तयेत्पीतं सरक्तं रक्तमेव वा ।**
**उष्णं पुनःपुनः कृच्छ्रादुष्णवातं वदन्ति तम् ॥३६॥**

स०—पित्तं कर्तृ व्यायामादिभिः प्रवृद्धं तथा वातेन क्षिप्तं बस्त्युपस्थार्तिदाहयुक्तं मूत्रं कर्मभूतं प्रवर्तयेत् । किम्भूतम् ? पीतं तथा सह रक्तेन सरक्तं रक्तमेव वा केवलं तथोष्णं मुहुर्मुहुः कृच्छ्रेण मूत्रयेत्, तं उष्णवातं वदन्ति ।

**रूक्षस्य क्लान्तदेहस्य बस्तिस्थौ पित्तमारुतौ ।**
**मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ ३७ ॥**

स०—रूक्षस्य पुंसस्तथा क्लान्तदेहस्य—ग्लानशरीरस्य, बस्तिस्थौ पित्तमारुतौ सरुग्दाहं मूत्रस्य क्षयं जनयेतां—उत्पादयेताम् । तदाह्वयं—मूत्रक्षयसञ्ज्ञम्, मूत्रक्षयमित्यर्थः ।

**पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् ।**
**कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥३८॥**
**सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च तत् ।**
**शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥ ३९ ॥**

स०—पित्तमथवा कफो व्यस्तोऽनिलेन संहन्यते—समन्तात्पीड्यत आक्रम्यते । अथवा द्वावपि—संसर्गरूपौ, तेन हन्येते यदि, तदा कृच्छ्रेण मूत्रं पीतादिनैकैकेन वर्णेन श्वेतान्तेन युक्तं घनं सदाहं सृजेत्—मुञ्चेत् । तच्च शुष्कं कालान्तरेण रोचनाशङ्खचूर्णवर्णं भवेत्, कदाचिद्रोचनाचूर्णवर्णं कदाचिच्छङ्खचूर्णवर्णं कदाचित्पीतादिसमस्तवर्णं वा स्यात्, तं मूत्रसादं वदन्ति ।

**इति विस्तरतः प्रोक्ता रोगा मूत्राप्रवृत्तिजाः ।**
**निदानलक्षणैरूर्ध्वं वक्ष्यन्तेऽतिप्रवृत्तिजाः ॥ ४० ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने मूत्राघातनिदानं नाम नवमोऽध्यायः ॥९॥**

स०—इति—एवं, विस्तरेण मूत्राप्रवृत्तिः—अप्रवर्तनं, ततो जाता रोगाः, निदानानि च लक्षणानि च, तैः प्रकर्षेणोक्ताः । ऊर्ध्वमित्यतोऽध्यायादनन्तरं तुल्यस्थानसङ्ख्यादित्वात् मूत्रातिप्रवृत्तिजाः—प्रमेहाख्या, रोगा वक्ष्यन्ते—वदिष्यन्ते । अनेनास्य ग्रन्थकृता युक्त्या सम्बन्धोऽभिहित इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां तृतीये निदानस्थाने मूत्राघातनिदानं नाम नवमोऽध्यायः समाप्तः ॥ ९ ॥

१ 'मूत्रस्याल्प' ट ण थ द । २ 'वा स्थितं मणौ वा स्थि' ट । ३ 'य एवंविधः सन् मू' ट. । ४ 'दावृत्तं' इ चन्द्र । "उदावृत्तं—ऊर्ध्वप्रवृद्धं" इति चन्द्रः । ५ "उदावर्तं—ऊर्ध्वं परिवृत्त(द्ध) ऊर्ध्वं गतं सत्, यदा मूत्रस्रोतो—मूत्रवहस्रोतोविवरं, अनुपर्येति—उपपद्यते प्राप्नोति । विट्तुल्यगन्धमित्यत्र वाशब्दो द्रष्टव्यः ।" इति तोडरः । "क्षिप्तं—प्रेरितम्" इति चन्द्रतोडरौ । ६ 'दावृत्तं—पिण्डितं' ट द । 'र्तं—पिण्डितं' थ. । ७ 'तेनाक्षिप्तं' ट.ण.थ.द. ।

१ "संहन्यते—स्त्यानीक्रियते । तत्र तन्मूत्रं रोचनाभं—पिङ्गं पित्तेन, कफेन शङ्खचूर्णाभं, समस्तवर्णं सन्निपातात् ।" इति तोडरः । २ 'त्रावसादजा.' स.मू. । ३ 'जा रोगा' ड ण थ.द. ।



## दशमोऽध्यायः ।

अश्मरीनिदानादनन्तरं प्रमेहनिदानमारभ्यते—

**अथातः प्रमेहनिदानं व्याख्यास्यामः ।**[1]
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**प्रमेहा विंशतिस्तत्र श्लेष्मतो दश, पित्ततः ।**
**षट्, चत्वारोऽनिलात्**

स०—प्रमेहा विंशतिर्भवन्ति । तत्र—विंशतिप्रमेहेषु[2], दश श्लेष्मतः प्रमेहाः, षट् पित्ततः, चत्वारो वातात् ।

**तेषां मेदोमूत्रकफावहम् ॥१॥**
**अन्नपानक्रियाजातं यत्प्रायस्तत्प्रवर्तकम् ।**
**स्वाद्वम्ललवणस्निग्धगुरुपिच्छिलशीतलम् ॥ २ ॥**
**नवधान्यसुरानूपमांसेक्षुगुडगोरसम् ।**
**एकस्थानासनरतिः शयनं विधिवर्जितम् ॥ ३ ॥**

स०—तेषां—प्रमेहाणां, मेदोमूत्रकफकरं यदन्नपानक्रियाजातं प्रायो—बाहुल्येन, तत्प्रवर्तकं—उत्पादकम् । जातशब्दः प्रकारे । क्रिया—चेष्टा शय्यासननिद्रालस्यादिका[3] कफकरी । तद्देवान्नादि[4] दर्शयितुमाह—स्वाद्वम्लेत्यादि । एकस्थानासने रतिः—प्रीतिः । शयनं—स्वप्नो, विधिवर्जितं—अयथोक्तम् ( हृ. सू. अ. ७।५४ )—"अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता । सुखायुषी पराकुर्यात्कालरात्रिरिवापरा ॥" इत्यादि ।

**बस्तिमाश्रित्य कुरुते प्रमेहान् दूषितः कफः ।**
**दूषयित्वा वपुःक्लेदस्वेदमेदोरसामिषम् ॥ ४ ॥**[5][6]

स०—कफः प्रमेहकारणैर्दूषितो बस्तिमाश्रित्य प्रमेहान् कुरुते । किं कृत्वा ? वपुरादीन् दूषयित्वा ।

कफजप्रमेहाणां सम्प्राप्तिमुक्त्वा पित्तप्रमेहसम्प्राप्तिमाह—

**पित्तं रक्तमपि क्षीणे कफादौ मूत्रसंश्रयम् ।**[7][8]

स०—पित्तं कर्तृ रक्तं मूत्रसंश्रयं दूषयित्वा प्रमेहान् कुरुते । अपिशब्दाद्वपुरादींश्च । कदा ? कफादौ,—सौम्ये धातौ, क्षीणे सति ।

**धातून् बस्तिमुपानीय तत्क्षयेऽपि च मारुतः ॥ ५ ॥**[1]

स०—मारुतश्च दूषितो धातून्—वातप्रमेहसम्पादनयोग्यान्, बस्तिमुपानीय—समन्तान्मूत्राधारसमीपं नीत्वा, तत्क्षयेऽपि च प्रमेहान् कुरुते । तेषां—धातूनां, क्षयस्तस्मिंश्च सति । न केवलं धातून् बस्तिमुपानीय यावदधःक्षरणत्वादिना तेषामपि स्वयं कृत्वेत्यपि चेत्यस्यार्थः[2] ।

अथ साध्यासाध्यविभागमाह—

**साध्ययाप्यपरित्याज्या मेहास्तेनैव तद्भवाः ।**
**समासमक्रियतया महात्ययतयाऽपि च ॥ ६ ॥**[3]

स०—स—श्लेष्मादि, भवो—जन्म, येषां ते तद्भवाः कफादिसमुत्थाः, तेनैव—विशिष्टेन सम्प्राप्तिविशेषेण, साध्ययाप्यपरित्याज्याः स्युः । तथा च,—कफप्रमेहा वपुरादिदूषणमात्रोत्थितत्वात् साध्याः, पित्तप्रमेहाणां सौम्यधातुक्षये वपुरादेः रक्तस्य च दूषणेन समुत्थानाद्याप्यत्वम्, वातप्रमेहास्तु सर्वधातुक्षयोद्भूतत्वादसाध्याः । अन्यदपि हेत्वन्तरं साध्ययाप्यासाध्यत्वे वक्ति—समेत्यादि । समं चासमं च समासमे,—समानासमाने, समासमे क्रिये ययोस्तावेवम्, तयोर्भावः समासमक्रियता, तया । तथा, महात्ययतया । महांश्चासावत्ययो—विनाशः शरीरविघटनरूपो[4][5] महात्ययः, तस्य भावो महात्ययता, तया । तत्र कफस्य तथा शरीरक्लेदादेः प्रमेहदूष्यस्याप्यतर्पणरूपयैकयैव क्रियया साध्यत्वात् कफप्रमेहाः साध्याः । पित्तस्य शीतमधुरादिरूपा क्रिया प्रमेहाणां रूक्षतीक्ष्णादिका दूष्यप्रतिपक्षत्वादौपयिकीति तस्मात्ते पित्तप्रमेहा याप्याः । वातप्रमेहाणां रूक्षतीक्ष्णादि तु पथ्यम् । वातस्य स्निग्धमधुरादिकं सन्तर्पणरूपं पथ्यम् । तदेवं विरुद्धक्रियत्वाद्वातप्रमेहा असाध्याः । अपिचेति समुच्चये ।

**सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ।**[6]

स०—तेषां—प्रमेहाणां, सामान्यलक्षणं प्रभूतमूत्रताऽऽविलमूत्रता च ।

---

१ इदं प्रमेहनिदानं चरके सू० १७ अध्याये नि० ४ अध्याये चि० ६ अध्याये च, सुश्रुते नि० ६ अध्याये, अष्टाङ्गसङ्ग्रहे नि० १० अध्याये चास्ति वर्णितम् । २ 'शतौ प्र' ण द. । ३ 'दि कफ' ण थ द । 'का । कफकारि तत्तदेव निदर्श' ङ । ४ 'तद्विधान्ना' ण द । ५ "वपुः क्लेदः—शरीरजक्लेदः ॥ किम्भूतं पित्तम् ? मूत्रसंश्रयं,—मूत्रावस्थितम् ।" इति तोडरः । ६ 'दोवसा' इ तो । ७ 'संश्रयान् धातून् दू' थ. । ८ 'सौम्यधा' ङ ।

१ "तत्क्षये—पित्तकफक्षये सति, धातून्—रसादीन्, अथवा धातून्—वसामज्जौजोरसाख्यान्, शरीरस्य परं सारभूतं बस्तिं—मूत्राशयं प्रति, उपानीय—नीत्वा आकृष्य, प्रमेहान् कुरुते । तेभ्यः—कफपित्तवातेभ्यो, भवो—जन्म, येषां ते तद्भवाः प्रमेहाः, तेनैव क्रमेण साध्ययाप्यपरित्याज्या भवन्ति ।" इति तोडरः । "तेनैव—प्रागुक्तेन हेतुना" इति चन्द्रः । "महात्ययत्वादिति मज्जादिगम्भीरधात्वपकर्षकत्वेन बह्वुपद्रवापत्तिकरत्वात्, आशुकारित्वादितीशानः ।" इति श्रीकण्ठः । २ 'चेत्यर्थः' ट ङ ण द । 'पिशब्दस्या' थ । ३ अपिचेति शब्दादसमक्रियता च वातप्रमेहेषु समुच्चीयते । तथा च सङ्ग्रहे (नि.अ. १०)—"वातजाः पुनः क्षीणेषु धातुषु महात्ययतया विरुद्धोपक्रमत्वाच्च ।" इति । ४ 'तदादि' ण द. । ५ 'घटनामहारू' ङ ण द । 'विघ्नतारू' थ । ६ 'ताकुल' ङ ण द ,थ ।

ननु, दोषस्य-कफादे, दूष्यस्य च-वपु क्लेदादे, तुल्यत्वात् कथं प्रतिदोष प्रमेहानेकत्व स्यात्? इत्याह—

**दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ ७ ॥**
**मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ।**

स०-दोषदूष्याविशेषेऽपि-समानत्वेऽपि सति, तत्सयोगविशेषतो मेहेषु भेद-अनेकत्व कल्प्यते । तयो-दोषदूष्ययो, सयोग-सश्लेष, तत्सयोग, तस्य विशेष-प्राक्कृतकर्मवशाद्भेदो, दोषदूष्ययो सयोगानेकत्वमित्यर्थ । तस्मान्मूत्रस्य यो वर्णादिभेदो-वर्णगन्धरसस्पर्शादिविशेष, तेन भेदेन भेदो मेहेषु कल्प्यते-निरूप्यते ।

अथोदकमेहादीन् लक्षयति—

**अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ॥ ८ ॥**
**मेहत्युदकमेहेन किञ्चिच्चाविलपिच्छिलम् ।**

स०-उदकमेहेनाच्छादिगुणयुक्त मेहति । किञ्चिचाविलपिच्छिलमिति ईषत्स्वच्छमूत्रादाविल पिच्छिल च भवति ।

**इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ ९ ॥**

स०-इक्षोर्मेहादिक्षुरससदृशं मेहति । अत्यर्थ मधुर चेतीक्षुरसाद्विशेषमाह ।

**सान्द्रीभवेत्पर्युषितं सान्द्रमेहेन मेहति ।**

स०-सान्द्रमेहेन यन्मेहति तत्पर्युषित-रात्रिस्थितं, घनीभवेत् ।

**सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥ १० ॥**

स०-सुरामेही सुरातुल्यं मेहति । तच्च मूत्रं पर्युषितमेवोपरिभागेऽच्छमध-अधस्तात्, घन भवेत् ।

**संहृष्टरोमा पिष्टेन पिष्टवद्बहलं सितम् ।**

स०-पिष्टेन-पिष्टमेहेन, सहृष्टरोमा सन् पिष्टवत्-पिष्टसदृश, बहल शुक्ल च मेहति ।

**शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ ११ ॥**

स०-शुक्रमेही शुक्राभ शुक्रमिश्रं वा प्रमेहति ।

***मूर्ताणून् सिकतामेही सिकतारूपिणो मलान् ।**

स०-सिकतामेही *मूर्ताणून्-सहतान् सूक्ष्माश्च, मलान् सिकतासदृशान् मेहति । मलानिति बहुवचन जातौ, कफाख्यो ह्येक एव मलोऽत्र गृह्यते ।

**शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ १२ ॥**

स०-शीतमेही सुष्ठु बहुशो मधुरमतिशीतल च मेहति ।

**शनैःशनैः शनैर्मेही मन्दंमन्दं प्रमेहति ।**

स०-शनैर्मेही शनै शनैर्मेहतीत्युद्देशे मन्दमन्दमिति निर्देश इत्यपि पौनरुक्त्यम् ।

**लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १३ ॥**

स०-लालामेहेन लालातन्तुयुत पिच्छिल च मूत्र प्रमेहति । इति कफप्रमेहा दश ।

पित्तजानाह—

**गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ।**

स०-क्षारतोयमिव गन्धवर्णरसस्पर्शै क्षारमेहेन मेहति ।

**नीलमेहेन नीलाभं**

स०-नीलमेहेन नीलाभ गन्धादिभिर्मेहति ।

**कालमेही मषीनिभम् ॥ १४ ॥**

स०-कालमेही मषीसदृश मूत्र मेहति ।

**हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् ।**

स०-हारिद्रमेही हरिद्रासदृश कटुक दहत्-दहदिव, मूत्र मेहति ।

**विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ १५ ॥**

स०-माञ्जिष्ठमेही मञ्जिष्ठाजलसदृश विस्र च मेहति ।

**विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ।**

स०-रक्तमेहेन विस्रादिक मेहति ।

अधुना वातजान् वक्ति—

**वसामेही वसामिश्रं वसां वा मूत्रयेन्मुहुः ॥ १६ ॥**

स०-वसामेही वसामिश्र वसा वा पुन पुनर्मूत्रयेत् ।

**मज्जानं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ।**

स०-मज्जमेही मज्जान मज्जमिश्र वा पुन पुनर्मेहति ।

**हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम् ॥ १७ ॥**

---

१ 'स्य तु-क' ङ ण थ द । २ "मूत्रवर्णादीना-श्वेतपीतकृष्णश्यावरक्ताना पञ्चाना वर्णाना रसस्पर्शगन्धाना च, भेदो मूत्रवर्णादिभेद ॥ आविल-मलिनमाकुलम् । पिच्छिल-अविशदम् ॥ मूर्तान्-दृश्यान् । अणून्-सूक्ष्मान् । सिकतारूपिण -कठिणान् सहतान् ।" इति तोडर । "शुक्राभमिति सर्वमेव मूत्र शुक्रतुल्यम् । शुक्रमिश्र वेति शुक्राभशुक्रमिश्रम् । वास्तवशुक्रमिश्रत्वे तु कफजस्याप्यसाध्यत्व स्यात् । मलानिति बहुवचन दोषाणामवयवबहुत्वात्, जात्याख्यायामेकस्मिन् बहुवचनमिति वाप्यचन्द्र ।" इति श्रीकण्ठ । ३ 'प्राक्चित' ङ ण थ द । ४ 'एतत्स्व' ट । 'धदच्छ' ण द । ५ 'घनीभ' ङ ण थ द. । ६ 'द्वहुल' ण द्र च तो, ट थ. । *७ 'मूत्राणू' ङ ण द, ट ङ । 'मूत्रेऽणू' इति क्वचित् ।

१ 'सुब' ङ ण थ द. । २ "शनै शनै -छित्वा छित्वा । मन्दमन्द-अल्पमल्प कृत्वा । नीलाभ-चाषपक्षप्रतिमम् ॥ दहत्-दाह कुर्वत् । दहन्निति पाठे दाहमनुभवन् पुरुष ॥ मज्जान-शुद्धाम् ।" इति तोडर । ३ 'त्युपदेशे' ङ । ४ 'निर्दिशत्य' ण.द. । ५ 'मज्जाभं' इ । ६ 'मज्जाभ' ङ.थ द. ।

**सलसीकं विबद्धं च हस्तिमेही प्रमेहति ।**

स०–हस्तिमेही मत्तगज इवानवरतं वेगरहितं लसीकया सह विबद्धं च मूत्रं प्रमेहति ।

**मधुमेही मधुसमम्**

स०–मधुमेही मधुसमं प्रमेहति ।

**जायते स किल द्विधा ॥ १८ ॥**

**क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ।**

स०–स तु–मधुमेहो, वायौ धातुक्षयात्कुपिते सति, अथवा दोषावृतपथे मरुति, किल द्विधा जायते । अत्र च केचिदेवाचार्या द्विधा आहुः । बहवस्त्वेकमेव धातुक्षयवातकोपजमाहुः, न तु मार्गावृतवातकोपजमिति सूचनार्थं किलशब्दः । वायोस्तु द्विधा कोपः । तथा चोक्तम्–"वायोर्धातुक्षयात्कोपो मार्गस्यावरणेन च ।" इति ।

**आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयेत् ॥ १९ ॥**
**क्षीणः क्षणात्क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ।**

स०–सः–वायुः, आवृतमार्गो लिङ्गानि–वातावरकदोषलक्षणानि वातशोणितनिदानोक्तानि, अनिमित्तं–अकस्मात्, प्रदर्शयेत् चलस्वभावत्वाद्वायोः । अत एव च क्षणात्क्षीणो–बस्तेरपूरणाद्रिक्तः । क्षणाच्च पूर्णो–मूत्राशयपूरणात्पूर्णो, न तु रिक्तः । अत एव दोषावृतमार्गवातकोपजत्वादसौ कृच्छ्रसाध्यतां भजते, न तु धातुक्षयवातकोपजवदत्यन्तासाध्यताम् ।

**कालेनोपेक्षिताः सर्वे यद्यान्ति मधुमेहताम् ॥ २० ॥**
**मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति ।**
**सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनोरतः ॥ २१ ॥**

स०–यत्–यस्मात्, सर्वे मेहा कालेनोपेक्षिताः सन्तो मधुमेहतां यान्ति । यच्च–यस्माच्च, सर्वेषु मेहेषु मधुरं मध्विव–मधुसदृशं, मेहति । तनोः–शरीरस्य, च स्वभावादेव माधुर्यम् (र्यात्)। अतः–अस्मात्कारणसन्दोहात्, सर्वेऽपि मधुमेहसञ्ज्ञाः ।

**अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः ।**
**उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ २२ ॥**

स०–कफजानां मेहानामविपाकादय उपद्रवाः प्रजायन्ते ।

**बस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।**
**दाहस्तृष्णाऽम्लको मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ २३ ॥**

स०–पित्तजन्मनां बस्त्यादितोदादयो जायन्ते ।

**वातिकानामुदावर्तकम्पहृद्ग्रहलोलताः ।**
**शूलमुन्निद्रता शोषः कासः श्वासश्च जायते ॥ २४ ॥**

स०–वातिकानामुदावर्तादयः स्युः ।

प्रमेहिणां च पिटिकाः शराविकाद्याः प्रायेण भवन्ति, इति ता एवाह—

**शराविका कच्छपिका जालिनी विनताऽलजी ।**
**मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २५ ॥**
**विद्रधिश्चेति पिटिकाः प्रमेहोपेक्षया दश ।**
**सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥ २६ ॥**

स०–शराविकादयो दश पिटिकाः प्रमेहाणामुपेक्षया जायन्ते । सन्धिमर्मसु मांसलेषु च–बहुमांसेषु स्थानेषु ।

**अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुजान्विता ।**
**शरावमानसंस्थाना पिटिका स्याच्छराविका ॥ २७ ॥**

स०–शराविकासञ्ज्ञा पिटिकाऽन्तोन्नतत्वादिगुणयुक्ता भवति । तथा शरावस्येव मान–प्रमाणं, संस्थानं–आकारश्च, यस्याः सैवम् ।

**अवगाढार्तिनिस्तोदा महावस्तुपरिग्रहा ।**
**श्लक्ष्णा कच्छपपृष्ठाभा पिटिका कच्छपी मता ॥ २८ ॥**

स०–अर्तिः–पीडा । निस्तोदो–विच्छिन्नं व्यथनम् । अवगाढावर्तिनिस्तोदौ यस्याः सैवम् । तथा, महान् वस्तुपरिग्रहः–शरीरावयवविशेष आश्रयो, यस्याः सैवम् । तथा, श्लक्ष्णा कच्छपपृष्ठतुल्या च कच्छपीसञ्ज्ञा पिटिका मता । तन्त्रकृतामिति शेषः ।

**स्तब्धा सिराजालवती स्निग्धस्रावा महाशया ।**
**रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥ २९ ॥**

स०–स्तब्धादिगुणयुक्ता जालिनीसञ्ज्ञा ।

**अवगाढरुजाक्लेदा पृष्ठे वा जठरेऽपि वा ।**
**महती पिटिका नीला विनता विनता स्मृता ॥ ३० ॥**

स०–अवगाढरुजादियुक्ता पिटिका महती तथा नीला–नीलवर्णा, विनता च । सा च विनतासञ्ज्ञा पृष्ठे जठरे वा स्यात् ।

**दहति त्वचमुत्थाने भृशं कष्टा विसर्पिणी ।**
**रक्तकृष्णाऽतितृट्स्फोटदाहमोहज्वराऽलजी ॥ ३१ ॥**

स०–अलजीसञ्ज्ञा उत्थाने सति त्वचं दहति । अतिदुःसहा विसर्पणशीला तथा रक्तकृष्णाऽतितृडादियुक्ता च ।

१ 'मेहे म' ण द. मा वि । २ 'थेऽपि वा' ण । ३ 'च' थ । ४ "मुष्कावदरणं–वृषणविदारणमिव । विड्भेदः–अतीसारः ॥ कम्पो–वेपथुः । लोलता–सर्वान्नपाने लौल्यम् ।" इति तोडरः । "लौल्यं–विषयगृद्धिः" इतीन्दुः । ५ 'दि[तोदादयो]दाहादयोऽपि जा' ण.द. । ६ 'कण्ठह' च. ।

१ "उन्निद्रता–निद्रानाशः । शोषो–गलताल्वास्यशोषः । अन्तोन्नता–उन्नतौष्ठा । महाशया–महाभोगा पृथुतराधिष्ठाना । विनता–नम्रा गभीरा ।" इति तोडरः । "महावस्तुपरिग्रहा–[महा] मूलत्वेनोत्पन्ना ।" इति चन्द्रतोडरौ । "विनता–विशेषेण कुटिला ।" इति चन्द्रः । २ 'णी च वि' तो । ३ 'काख्या पि' ण द । ४ 'हावास्तु' स.च । ५ 'दौ–अन्तर्गतव्यथानिस्तोदौ, य' थ. । ६ 'महाश्रया' इ ण । ७ 'ता–न तून्नता ।' इति क्वचित् । ८ 'रेऽपि स्या' ण द. ।

**मानसंस्थानयोस्तुल्या मसूरेण मसूरिका ।**

स०-मसूरिकासज्ञा मसूरेण प्रमाणाकृतिभ्या तुल्या ।

**सर्षपामानसंस्थाना क्षिप्रपाका महारुजा ॥ ३२ ॥**
**सर्षपी सर्षपातुल्यपिटिकापरिवारिता ।**

स०-सर्षपीसज्ञा सर्षपतुल्यप्रमाणाकारा तथा शीघ्रपाका महारुजा च। तथा सर्षपसदृशीभि पिटिकाभि परिवारिता च।

**पुत्रिणी महती भूरिसुसूक्ष्मपिटिकाचिता ॥ ३३ ॥**

स०-पुत्रिणीसज्ञा प्रमाणेनापरपिटिकापेक्षया महती। तथा भूरिभि सुसूक्ष्माभि पिटिकाभिराचिता च ।

**विदारीकन्दवद्वृत्ता कठिना च विदारिका ।**

स०-विदारिकासज्ञा शृगालिकाकन्द इव वर्तुला कठिना च स्यात् ।

**विद्रधिर्वक्ष्यतेऽन्यत्र**

स०-विद्रधिरन्यत्रेत्यतोऽध्यायादन्यस्मिन्ननन्तराध्याये वक्ष्यते-भणिष्यते ।

**तत्राद्यं पिटिकात्रयम् ॥ ३४ ॥**
**पुत्रिणी च विदारी च दुःसहा बहुमेदस. ।**

स०-तत्र-तासु पिटिकासु मध्ये, आद्य-शराविकाकच्छपिकाजालिनीत्येतत्, पिटिकात्रय तथा पुत्रिणी विदारिका चेति पञ्च दु सहा, कृच्छ्रसाध्यत्वात् । यतो बहुमेदस एता सम्भवन्ति ।

**सह्याः पित्तोल्बणास्त्वन्याः सम्भवन्त्यल्पमेदसः३५**

स०-अन्या -एताभ्योऽपरास्तु, पित्तोल्बणाश्चतस्र ( श्च ता ) सह्या -सोढु शक्या , सुखसाध्यत्वात् । ताश्चाल्पमेदस सम्भवन्ति ।

**तासु मेहवशाच्च स्याद्दोषोद्रेको यथायथम् ।**

स०-तासु-पिटिकासु, मेहानुरोधाद्दोषोद्रेको यथायथ-यथास्व स्यात् । वातमेहजासु वाताधिक्य पित्तमेहजासु पित्ताधिक्य कफमेहजासु कफाधिक्यम् । उद्रेकशब्देनैतद्द्योतयति,-त्रिदोषजा सर्वा एवैता इति ।

**प्रमेहेण विनाऽप्येता जायन्ते दुष्टमेदसः ।**
**तावच्च नोपलक्ष्यन्ते यावद्वस्तुपरिग्रहः ॥ ३६ ॥**

स०-एता -पूर्वोक्ता पिटिका , प्रमेहेण विनाऽपि-अप्रमेहिणोऽपि पुसो, दुष्टमेदसो जायन्ते । जाता अपि तास्तथाविधस्य नरस्य तावन्न लक्ष्यन्ते-यथायथ लक्षण नोत्पद्यते, यावत्-यथास्व, पृष्ठोदरादि वस्त्वासामाधारत्वेन तन्त्रकृता यत्परिभाषित तन्न परिगृहीतम् । एव चिरेण कालेनोत्पन्ना अपि ज्ञायन्त इत्यर्थ ।

**हारिद्रवर्ण रक्तं वा मेहप्राग्रूपवर्जितम् ।**
**यो मूत्रयेन्न त मेहं रक्तपित्तं तु तद्विदुः ॥ ३७ ॥**

स०-मेहस्य यत् प्राग्रूप तेन वर्जित हारिद्रवर्ण रक्त वा यो मूत्रयेत् त मेह न विदु , किन्तर्हि ? तत् रक्तपित्तमित्याहु ।

**स्वेदोऽङ्गगन्धः शिथिलत्वमङ्गे**
**शय्यासनस्वप्नसुखाभिषङ्गः ।**
**हृन्नेत्रजिह्वाश्रवणोपदेहो**
**घनाङ्गता केशनखातिवृद्धिः ॥ ३८ ॥**
**शीतप्रियत्वं गलतालुशोषो**
**माधुर्यमास्ये करपाददाहः ।**
**भविष्यतो मेहगणस्य रूपं**
**मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥ ३९ ॥**

स०-एतद्भविष्यतो-भाविनो, मेहगणस्य-विंशतिसङ्ख्यस्य, स्वेद इत्यादि रूपम् । न केवलमेतत् प्राग्रूप यावत्पिपीलिका मूत्रेऽभिधावन्ति । मधुररसप्रियत्वात्तेषाम् । मुनिस्त्वत्र नखवृद्धि न जगाद ( ? ) ।

**दृष्ट्वा प्रमेहं मधुरं सपिच्छं**
**मधूपमं स्याद्द्विविधो विचारः ।**
**सम्पूरणाद्वा कफसम्भवः स्यात्**
**क्षीणेषु दोषेष्वनिलात्मको वा ॥ ४० ॥**

स०-मधूपम-माक्षिकतुल्य, मधुर तथा सह पिच्छया-शाल्मलीनिर्यासतुल्यया, वर्तत इति सपिच्छम् । एवविध प्रमेह दृष्ट्वा तदानीं द्विविधो विचार स्यात् । सम्पूरणात्कारणात् किमय कफसम्भवो मेहोऽपतर्पणसाध्य ? उत क्षीणेषु

१ 'सर्षपा' इ.द । २ 'र्षपास' ण थ द । ३ "महती-महाभोगा महास्थूला ॥ अन्या -पञ्च पिटिका विनतालजीमसूरिकासर्षपिकाविद्रधिनामान ।" इति तोडर । "अन्या -शेषा पञ्च पिटिका ।" इति चन्द्र । ४ 'कावृता' इ च । 'कान्विता' ण द. । ५ 'सितुत्तरा' ण थ.द । ६ 'वद्वास्तु' स.च.मा.नि. । "वास्तु-स्थानम्" इति चक्र ।

१ 'मेहेणापि' ण । २ 'लेन चोत्प' ट । ३ 'च' इ स मू । 'तु त विदु ' ण द स स. । ४ 'नस्थानसुखाभिलाष.' ण द । 'सुख रतिश्च' स च । ५ "अभिषङ्ग -आसक्ति रति प्रीतिरिति यावत् ।" इति तोडर । "उपदेहो-मलाधिक्यात् प्रलेप । घनाङ्गता-स्थूलशरीरत्वम् ।" इति चन्द्रतोडरौ । ६ 'गदस्य' स च । ७ अस्याग्रे "यद्यपि निदानानन्तर पूर्वरूप वक्तव्य भवति, तथाऽपि निदानलक्षणानन्तरमत्र पूर्वरूपम् । निदानलिङ्गयोश्चिकित्साङ्गत्वप्रतिपादनार्थं त्वनयो पूर्वमभिधानम् । अथवा, अवश्यवक्तव्यानां कामचारमभिधानम् । एवमन्यत्रापि व्यतिक्रमे द्रष्टव्यम् ।" इति मधुकोशभाष्ये ( अर्शोनिदाने श्लो ३१ टी ) । तस्मादत्राप्येवमेव चिन्त्यम् ।' इति ट पुस्तकेऽधिक पाठ । ८ 'सन्तर्पणा' इ तो स च. । ९ 'णाच्छ्लेष्मसमुद्भव.' स.स. । १० 'र्यासेन तु' ट ।

दोषेषु[1]–कफादिदोषक्षयात्, सन्तर्पणसाध्योऽनिलात्मक स्यात्? इति सन्देहो मन्दबुद्धे[2]। तीक्ष्णमतिस्तु कफमेहान् वातमेहांश्च लिङ्गान्तरै सम्यग्वेत्त्येव।

अधुना यदुक्त साध्ययाप्यपरित्याज्या कफादिसम्भवा इत्यस्यापवादमाह—

**सपूर्वरूपाः कफपित्तमेहाः**
**क्रमेण ये वातकृताश्च मेहाः।**
**साध्या न ते, पित्तकृतास्तु याप्या**
**साध्यास्तु मेदो यदि नातिदुष्टम् ॥ ४१ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने प्रमेहनिदानं नाम दशमोऽध्यायः ॥१०॥**

स०–सह पूर्वरूपै –"स्वेदोऽङ्गगन्ध" (श्लो ३८) इत्यादिभिर्वर्तन्तेऽनवरत कृत्वाऽनुबध्यन्ते ये ते सपूर्वरूपा असाध्या। सर्वेषा पूर्वरूपाव्यभिचारेऽपि विशेषण साकल्यप्रापणार्थम्। सर्वै पूर्वरूपै[5] सह ये वर्तन्ते ते कफमेहा पित्तमेहाश्चासाध्या, साधयितुमशक्यत्वात्। उपलक्षणं चेदम्,–अपरेऽपि हि रोगा सपूर्वरूपा[6] प्रायेणासाध्या एव। तथा क्रमेण कफानुपूर्व्या ये वातकृता मेहास्तेऽसाध्या[7]। ननु, वातकृता मेहा असाध्या इति प्रागुक्तमेव, तत्किमनेन ग्रन्थेन? इति। ब्रूम। अक्रमेण प्रथममेव ये वातोत्पन्नास्ते त्याज्या इति पूर्वमुक्तम्। इह तु क्रमेण प्रथम कफप्रमेहास्तत पित्तप्रमेहास्तत कालेन त एव ये वातप्रमेहा सम्पन्नास्ते पूर्व कफप्रमेहत्वात्साधयितुमपि[8] शक्यन्त इत्याशङ्काया क्रमेण ये वातकृतास्तेऽसाध्या इत्युक्तम्। पित्तकृतास्त्वसपूर्वरूपा[9] अपि याप्या असमक्रियत्वादिति प्राङ्निर्दिष्टम्। तेषा यदि मेदो नातिदुष्टं भवेत्तदा तेऽपि याप्या सन्त साध्या भवन्ति। मेदो नातिदुष्टमित्यनेनैतज्ज्ञापयति,–सर्वमेहेषु मेदोदुष्टिरवश्यभाविनीति। मेहिनो राजयक्ष्मिणश्च केशनखातिवृद्धि किट्टबाहुल्याद्भवति, रोगस्वभावादित्यन्ये। वृत्तान्युपजातिसञ्ज्ञानि।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने प्रमेहनिदान नाम दशमोऽध्याय समाप्त ॥१०॥



१ 'षु–कदाचिद्दोष' ट थ। २ 'सन्दिहीत मन्दबुद्धि।' ट। ३ 'श्च' ण.द। ४ 'त्वाऽतिव' ड.द। 'त्वा निव' ण। ५ 'सपूर्वै पू' ड.। 'सह पूर्वै पू' ण द.। ६ "सर्वपूर्वरूपानुबन्धे यद्यपि सर्वरोगाणामसाध्यत्वमुक्तम्। इह त्वसमस्तपूर्वरूपानुबन्धेऽप्यसाध्यत्व भवतीति विशेषवचनाल्लभ्यते। तथा क्रमेण च ये वातकृतास्ते पूर्वरूपरहिता अप्यसाध्या।" इति चक्र। ७ 'स्तेऽप्येव क' ण द। 'स्ते पूर्वमेव क' ड.। ८ 'यितु श' ड ण.द। ९ 'तास्तु सपू' ड.ण थ द।



## एकादशोऽध्यायः।

प्रमेहनिदानादनन्तर विद्रधिनिदानारम्भ, यतोऽनन्तरेऽध्याये पिटिकालक्षणावसरे "विद्रधिर्वक्ष्यते" (श्लो. ३४) इत्युक्तम्। अतस्तमेव विद्रधिं लक्षयितुमस्याध्यायस्य प्रसङ्ग इत्याह—

**अथातो विद्रधिवृद्धिगुल्मनिदानं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

( गद्यसूत्रे ॥ २ ॥ )

**भुक्तैः[2] पर्युषितात्युष्णरूक्षशुष्कविदाहिभिः।**
**जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः ॥ १ ॥**
**दुष्टत्वङ्मांसमेदोस्थिस्नाय्वसृक्कण्डराश्रयः[3]।**
**यः शोफो बहिरन्तर्वा महामूलो महारुजः ॥ २ ॥**
**वृत्तः स्यादायतो यो वा स्मृतः षोढा स विद्रधिः।**

स०–पर्युषितादिभिर्भुक्तै, तथा जिह्मशय्याविचेष्टाभि, विविधाश्चेष्टा विचेष्टा, शय्या च विचेष्टाश्च शय्याविचेष्टा, जिह्माश्च ता शय्याविचेष्टाश्च, ताभि। जिह्मा कुटिला वक्रा इति पर्याया। तथा तैस्तै –तत्रतत्रासृक्प्रदूषणैश्च निर्दिष्टै, य शोफो जायते दुष्टत्वगाद्याश्रयो बहि –बहिर्भागे, अन्त –अन्तर्भागे वा, स शीघ्रविदाहित्वाच्छोफ षोढा–षट्प्रकारो, विद्रधि स्मृत –अभिहित। शोफशब्द पृषोदरादित्वात्साधु। त्वक् च मास च मेदश्च अस्थि च स्नायुश्चासृक् च कण्डरा च, ता एवम्। "सुमहान् स्नायुसङ्घात कण्डरेत्यभिधीयते।" दुष्टा –दोषैर्दूषिता, त्वङ्मांसादय आधारो यस्य स दुष्टत्वङ्मांसमेदोस्थिस्नाय्वसृक्कण्डराश्रय। तथा, महामूलस्तथा महारुज, अनेनास्य दुरुपक्रमत्वमुक्तम्। तथा, वृत्त स्यात्, अथवा आयतो–न वर्तुलं, इत्यनेनास्य[5] सस्थानमुक्तम्।

षोढेत्युक्तम्। अथ तदेव षोढात्वं प्रतिपादयितुमाह—

**दोषैः पृथक्समुदितैः शोणितेन क्षतेन च ॥ ३ ॥**

स०–पृथग्दोषै –वातपित्तकफैस्त्रय, समुदितै –सन्निपातेन चैक, तथा शोणितेन–दोषाधिष्ठितेन, क्षतेन–शस्त्रादिघातादिना, चेति।

१ इद विद्रधिवृद्धिगुल्मनिदान चरके सू० १७।१८ अध्याययो नि० ३ अध्याये चि० ५ अध्याये च, सुश्रुते नि० ९।१२ अध्यायेषु उ० ४२ अध्याये च, अष्टाङ्गसङ्ग्रहे नि० ११ अध्याये चास्ति वर्णितम्। २ "भुक्तै –अभ्यासीकृतै.। जिह्मशय्याविचेष्टाभि –भग्नखट्वासु शयनासनादिव्यापारै। दुष्ट –असुखकारी।" इति तोडर। "जिह्मशय्या०–उच्चनीचशय्याभिर्विरुद्धचेष्टाभिश्च।" इति चन्द्र। ३ 'दुष्टस्त्वङ्मा' इ तोडर। ४ 'स्नावासृ' स द.। ५ 'ल एव, एतेना' ण.द। 'ल, अने' थ.।

षड्विधस्यापि शोफस्य विद्रध्याख्यस्यान्तर्बहीरूपतया द्विधात्वमित्याह—

**बाह्योऽत्र तत्रतत्राङ्गे दारुणो ग्रथितोन्नतः ।**
**आन्तरो दारुणतरो गम्भीरो गुल्मवद्घनः ॥ ४ ॥**
**वल्मीकवत्समुच्छ्रायी शीघ्रघात्यग्निशस्त्रवत् ।**

स०—अत्र—अनयोर्बाह्याभ्यन्तरभेदभिन्नयोर्विद्रध्योर्मध्यात्, बाह्यो विद्रधिस्तत्रतत्र—नाभ्यादावङ्गे, जायते । तथा, दारुणो ग्रथितोन्नत । ग्रथित इव ग्रथित । उन्नत —उत्तुण्डित । शोफस्य स्वभावोन्नतत्वादुन्नतग्रहणमतिशयार्थम् । आन्तरो दारुणतर । तथा, गम्भीरे —अन्तर्निगूढ । तथा, गुल्मवद्घनो—गुल्मेन तुल्य । तथा, समुच्छ्रायी—उन्नतो वल्मीकशिखरवत् । तथा, शीघ्रघाती—बाह्यविद्रधित शीघ्रव्यापादक । अग्निशस्त्रवत्—अग्निशस्त्राभ्या तुल्य ।

**नाभिबस्तियकृत्प्लीहक्लोमहृत्कुक्षिवङ्क्षणे ॥ ५ ॥**
**स्याद्वृक्कयोरपाने च**

स०—नाभ्याद्यन्यतमे देशे चायं स्यात् ।

**वातात्तत्रातितीव्ररुक् ।**
**श्यावारुणश्चिरोत्थानपाको विषमसंस्थितिः ॥ ६ ॥**
**व्यधच्छेदभ्रमानाहस्पन्दसर्पणशब्दवान् ।**

स०—तत्र—तेषु विद्रधिषु मध्ये, वातात्तीव्ररुगादि शब्दवानित्येतदन्तलक्षण स्यात् ।

**रक्तताम्रासितः पित्तात्तृण्मोहज्वरदाहवान् ॥ ७ ॥**
**क्षिप्रोत्थानप्रपाकश्च**

स०—पित्ताद्रक्तताम्रासितादिक क्षिप्रोत्थानप्रपाकश्चेत्यन्तलक्षण स्यात् ।

**पाण्डुः कण्डूयुतः कफात् ।**
**सोत्क्लेशशीतकस्तम्भजृम्भारोचकगौरवः ॥ ८ ॥**
**चिरोत्थानविपाकश्च**

स०—कफात् पाण्डु —वर्णेन । तथा, कण्डूयुत इत्यादिचिरोत्थानविपाकश्चेत्यन्तलक्षण स्यात् ।

**सङ्कीर्णः सन्निपाततः ।**

स०—सन्निपातजो विद्रधि. सङ्कीर्णो—वातादिदोषव्यामिश्रलक्षण ।

१ "गम्भीर —अन्तर्निगूढो यत्र निश्चय कर्तुं न शक्यते । समुच्छ्रायी—समुन्नद्ध समन्तादुन्नत ॥ क्लोम—वृक्कादूर्ध्वे पिपासास्थानम् । वृक्कौ—मांसपिण्डद्वयरूपौ ॥ स्पन्द —स्फुरणम् । सर्पण—शीघ्रगति । शीतक—शीतज्वर ।" इति तोडर. । २ 'र —मूढ' ग.द । 'रः—गूढ' थ. । ३ 'वा' ण द तो स.स । ४ अत्र 'चिरोत्थानप्रपाकश्च विद्रधिर्वातसम्भव. ।' इति माधवगृहीत सुश्रुतपाठ । ५ 'नप्रपाक' इ सु मा नि. । 'नविदाहश्च' स द्व । "विदाह.—पाकाभिमुखत्वम् ।" इतीन्दु. । ६ 'निदाहश्चे' ट.थ.द. ।

**सामर्थ्याच्चात्र विभजेद्बाह्याभ्यन्तरलक्षणम् ॥ ९ ॥**

स०—अत्र—विद्रधौ, पूर्वोक्ताद्दारुणाद्दा(णदा)रुणतरत्वादिलक्षणात्—सामर्थ्यात्, बाह्याभ्यन्तरलक्षण विभजेत्—बाह्यस्य विद्रधेस्तथाऽऽभ्यन्तरस्य च लक्षण वदेत् ।

**कृष्णस्फोटावृत· श्यावस्तीव्रदाहरुजाज्वर· ।**
**पित्तलिङ्गोऽसृजा बाह्य· स्त्रीणामेव तथाऽऽन्तरः १०**

स०—रक्तेन विद्रधि कृष्णस्फोटैरावृत —चितो, यावत्तीव्रदाहरुजाज्वर । तथा पित्तलिङ्गो—"रक्तताम्रासित" (श्लो ७) इत्यादिलक्षण । स च बाह्यो—बाह्य एव नान्तरो नराणाम्, वस्तुस्वाभाव्यात् । आन्तरो यो विद्रधिरसृजा जायते, स स्त्रीणामेव—न नराणाम्, वस्तुस्वाभाव्यात् ।

अथ क्षतविद्रधिं लक्षयति—

**शस्त्राद्यैरभिघातेन क्षते वाऽपथ्यकारिणः ।**
**क्षतोष्मा वायुविक्षिप्तः सरक्तं पित्तमीरयन् ॥ ११ ॥**
**पित्तासृग्लक्षणं कुर्याद्विद्रधिं भूर्युपद्रवम् ।**

स०—शस्त्रलोष्टाद्यैर्योऽभिघातस्तेन हेतुना य क्षतोष्मा, अथवाऽभिघातमन्तरेणापि व्रणाद्युद्भवात् क्षते जाते सत्यपथ्यकारिण पुसो य क्षतोष्मा—अग्नि, स वायुना विक्षिप्त पित्तमीरयन्—कोपयन् । किम्भूत पित्तम् ? सरक्तम् । तथा, पित्तासृग्भ्यामुत्पन्नयोर्विद्रध्योर्यल्लक्षण तत्समानलक्षण विद्रधि कुर्यात् । तथा, भूर्युपद्रवम् । इयानेव चास्य विशेष ,पित्तासृग्विद्रध्यो सकाशात् ।

**तेषूपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः ॥ १२ ॥**

स०—तेषु—विद्रधिषु, उपद्रवविशेषोऽधिष्ठानविशेषाद्भवति ।

तमेवोपद्रवभेद दर्शयति—

**नाभ्यां हिध्मा, भवेद्बस्तौ मूत्रं कृच्छ्रेण पूति च ।**
**श्वासो यकृति, रोधस्तु प्लीह्न्युच्छ्वासस्य, तृट् पुनः १३**
**गलग्रहश्च क्लोम्नि, स्यात्सर्वाङ्गप्रग्रहो हृदि ।**
**प्रमोहस्तमकः कासो हृदये घट्टनं व्यथा ॥ १४ ॥**
**कुक्षिपार्श्वान्तरांसार्तिः कुक्षावाटोपजन्म च ।**
**सक्थ्नोर्ग्रहो वङ्क्षणयोर्वृक्कयो· कटिपृष्ठयोः ॥ १५ ॥**
**पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम् ।**

स०—नाभ्या जाते विद्रधौ हिध्मा विशेषेण भवेत् । बस्तौ जाते मूत्र पूति कृच्छ्रेण च भवेत् । यकृति जाते श्वास स्यात् ।

१ "यथा,—वातजे विद्रधौ बाह्यलक्षण तदा वातजो विद्रधिर्बाह्य । यदा वातजविद्रधौ आन्तरलक्षण तदा वातजविद्रधिरान्तर । एवमितरेष्वपि पित्तजकफजसन्निपातजेष्वपि ज्ञेयम् ॥ उच्छ्वासस्य—ऊर्ध्वश्वासस्य । गलग्रह —कण्ठावरोध. । सर्वाङ्गप्रग्रह —सर्वस्याङ्गस्य प्रकर्षेण ग्रहो—निश्चलत्व प्रलङ्गव्यथा ।" इति तोडर । "स च [ रक्तविद्रधि. ] बाह्य आभ्यन्तरो वा स्त्रीणामेव भवति, न तु पुरुषाणाम् ।" इति चन्द्रतोडरेन्दव । "तमक —तम प्रवेश । घट्टन—चलनम् ।" इति चन्द्रतोडरौ । २ 'क्षणसा' ण द. । ३ 'सुस्वभावात्' ट. । ४ 'षेत्' ण.द. । ५ 'दयोर्द्वह' स.द्व.।

प्लीह्नि जात उच्छ्वासस्य रोध । क्लोम्नि जाते गलग्रह इव गलग्रहो व्याधिविशेष स्यात्तृष्णा च । हृदि जाते सर्वस्याङ्गस्य प्रकर्षेण ग्रह स्यात् । तथा, प्रमोहादय स्यु । तमक –श्वासविशेष । हृदये घट्टन व्यथा च । कुक्षौ जाते सति कुक्षिपार्श्वयोरन्तरेंऽस-योश्च पीडा भवति, तथा कुक्षावाटोपसम्भव । वङ्क्षणयोर्जाते सक्थ्योर्ग्रहो निश्चल इव सक्थिनी जायेते । वृक्कयोर्जाते कट्या पृष्ठस्य च ग्रह , पीडा च पार्श्वयो स्यात् । पायौ–गुदे जाते, पवनस्य–अपानाख्यस्य वायो , निरोध स्यात् ।

**आमपक्वविदग्धत्वं तेषां शोफवदादिशेत् ॥ १६ ॥**

स०–तेषा–विद्रधीना, आमत्व पक्वत्व विदग्धत्व–पाकातिक्रान्तत्व,शोफवदादिशेत्। शोफानामिव शोफवत्, षष्ठ्यन्ताद्वति । तत्र शोफस्य शस्त्रकर्मविधौ (हृ सू अ २९।२)–"शोफोऽल्पोऽल्पोष्मरुक्" इत्यादिना ग्रन्थेनामादिलक्षणमुक्तम्, तथैव विद्रधिषु बोध्यम् ।

**नाभेरूर्ध्वं मुखात्पक्वाः प्रस्रवन्त्यधरे गुदात् ।**
**गुदास्यान्नाभिजो**

स०–नाभेरूर्ध्वं–ऊर्ध्वप्रदेशेषूत्पन्ना , पक्वा सन्तो मुखात्–आस्यात्, स्राव स्रवन्ति । नाभेरधरे–अधस्तात्, पक्वा सन्तो गुदात् स्राव स्रवन्ति । नाभिज पुनर्विद्रधिरुत्पन्नो गुदास्यात्–उभयत , स्राव स्रवति । गुद चास्य च गुदास्यम्, तस्मात् ।

**विद्याद्दोषं क्लेदाच्च विद्रधौ ॥१७॥**
**यथास्वं व्रणवत्**

स०–विद्रधौ व्रण इव यथास्वं वातादिदोष क्लेदाद्विद्यात् । व्रणप्रतिषेधोक्तया रीत्या (हृ उ अ २५।६) मस्तुमांसपुलाकाम्बुतुल्यतन्वल्पसृत्यादिकया वातिक विद्रधिं विद्यात् । मूत्रकिंशुकभस्माम्बुतैलाम्भोष्णबहुस्रुतेत्यादिकया च पैत्तिक विद्रधिं विद्यात्। बहुश्वेतघनस्रुत्यादिकया च कफज विद्रधिं विद्यात् । चशब्दाच्च केवल पूर्वोक्तात् "वातात्तत्रातितीव्ररुक्" (श्लो ६)इत्यादेर्वातादिलक्षणाद्वातादिदोषविद्रधिं जानीयात् , क्लेदाच्चेत्यर्थ । व्रणवदिति सप्तम्यन्ताद्वति , विद्रधाविति सप्तम्यन्तनिर्देशात् । तथा चोक्तं भाष्ये–"उपमाने य सशय स उपमेयाद्व्यावर्तते ।" इति ।

अथैषा साध्यासाध्यविभागार्थमाह—

**तत्र विवर्ज्यः सन्निपातजः ।**
**पक्वो हृन्नाभिबस्तिस्थो भिन्नोऽन्तर्बहिरेव वा ॥१८॥**
**पक्वश्चान्तः स्रवन् वक्त्रात् क्षीणस्योपद्रवान्वितः ।**

स०–सन्निपातजो यो विद्रधि स विवर्ज्योऽसाध्यत्वात् । तथा, पक्वोऽन्तर्बहिरेव वा भिन्नोऽन्त –अन्तर्भिन्नो, बाह्यो–बहिर्भिन्नो, हृन्नाभिबस्तिस्थो वर्ज्य एव । पक्वश्चान्तरो हृदादिभ्योऽन्यत्रापि जातो वक्त्रेण स्रवन् क्षीणस्योपद्रवै –हिध्मादिभि , युक्तो वर्ज्य एव ।

इदानी स्तनविद्रधिर्योषिता यथा स्यात् तथा वक्ति—

**एवमेव स्तनसिरा विवृताः प्राप्य योषिताम् ॥१९॥**
**सूताना गर्भिणीनां वा सम्भवेच्छ्वयथुर्घनः ।**
**स्तने सदुग्धेऽदुग्धे वा बाह्यविद्रधिलक्षणः ॥ २० ॥**
**नाडीनां सूक्ष्मवक्त्रत्वात्कन्यानां न स जायते ।**

**इति विद्रधिनिदानम् ।**

स०–[एवमेव–] यथैव विद्रध्याख्य श्वयथुविशेषो भुक्तपर्युषितादिभिस्तैस्तैश्चासृक्प्रदूषणैर्दुष्टत्वङ्मांसमेदोस्थिस्नाय्वसृक्कण्डराश्रय , तथैव सूताना गर्भिणीना वा स्त्रीणा स्तने सदुग्धेऽथवाऽदुग्धे स्तनसिरा विवृता प्राप्य–आक्रम्य, बाह्यविद्रधिलक्षण –"बाह्योऽत्र तत्रतत्राङ्गे" ( श्लो ४ ) इत्यादिलक्षणो घनो–निबिडो, य श्वयथु सम्भवेत् स स्तनविद्रधिसञ्ज्ञ । नाडीना–स्तनसिराणा, सूक्ष्मवक्त्रत्वात् स कन्याना न जायते ।

अथ श्वयथुसामान्यादिदानी वृद्धिं–वर्ध्मापरनामान व्याधिं, वक्तुमुपक्रमते—

**अथ वृद्धिनिदानम् ।**

**क्रुद्धो रुद्धगतिर्वायुः शोफशूलकरश्चरन् ॥ २१ ॥**
**मुष्कौ वङ्क्षणतः प्राप्य फलकोशाभिवाहिनीः ।**
**प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः ॥ २२ ॥**

स०–वायु प्रकुपितो वृद्धिं करोति । किं धातुक्षयात् कुपित ? नेत्याह–रुद्धगति । रुद्धा गतिर्यस्येति रुद्धगति , आवृतमार्ग इत्यर्थ । किम्भूत ? शोफशूलकर । तथा, चरन्–देशाद्देशान्तर गच्छन् । वङ्क्षणत –ततो देशात्, मुष्कौ–वृषणौ, यथा प्राप्य तथा फलकोशाभिवाहिनी सिरा प्रकर्षेण पीडयित्वा। कस्य वृद्धिं करोति ? इत्याह–फलकोशयो ,–वृषणयो ।

अधुनाऽस्य व्याधे सङ्ख्या कुर्वन्नाह—

**दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः ।**
**मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ॥ २३ ॥**

१ 'सर्वाङ्ग' ण थ द । २ 'उभाभ्या नाभि' चन्द्र स मू । ३ "क्लेदात्–कोथात्" इतीन्दु , "–पूयस्रावात्" इति चन्द्र । "तत्र–तेषु विद्रधिषु मध्ये । हृन्नाभिबस्तिस्थ केवलवातादिजोऽपि य सोऽपि वर्ज्य , मर्मजत्वात् । अथवा पक्वोऽन्तर्बहिरेव वा भिन्न पूयादिस्रावी सोऽपि विवर्ज्य । तथा, अन्त –आन्तर , पक्वो हृन्नाभिबस्तिभ्योऽन्यत्रापि जातो वक्त्रात्–मुखात्, य स्रवेत् सोऽपि विवर्ज्य । तथा, क्षीणस्यातुरस्योत्पन्न सोऽपि विवर्ज्य । तथा, उपद्रवान्वित सोऽपि विवर्ज्य ।" इति तोडर. । ४ 'सुलक्षपु' ट.थ. । 'सुलिङ्गपु' ण.द. ।

१ 'व द्विधा भि' ण थ द । २ 'षितो य' ट । ३ 'ना तु न जा' ण.द.स ह । ४ 'स्रावास्' ट । ५ 'द्धोऽनूर्ध्वगति' तो मा नि । ६ "वृद्धिशब्देन कुरण्डो भण्यते । [अनूर्ध्वगतिरिति पाठे] अन्यव्याख्यान यथा,–अनूर्ध्वगति –अधोगति , वायु –पवनो, मुष्कौ–वृषणौ, चरन्–गच्छन्, वङ्क्षणतो–मेढ्रजङ्घासन्धे सकाशात्, फलकोशाभिवाहिनीरिति फल च कोशश्च फलकोशौ, तद्वहा धमनी प्रपीड्य–सदूष्य, वृद्धिं करोति । फलकोशयोरिति द्विवचनमुपलक्षणम्, तेनैकफलकोशेऽपि वृद्धिर्दृश्यते । अथ वृद्धिशब्द. पुल्लिङ्ग । सङ्ख्येयनिर्देशादेव सङ्ख्यासिद्धौ सत्या सप्तधेति वचन सप्ताधिकसङ्ख्यानिरा-

स०-पृथग्वातपित्तकफैर्दोषैस्तथाऽस्रेण मेदसा मूत्रेण च[1] तथाऽऽन्त्रेण च, एव दोषास्रमेदोमूत्रान्त्रै स वृद्ध्याख्यो गद सप्तधा-सप्तप्रकारो, मत । न केवल [वात]वृद्ध्याख्यो यो गद स एवानिलजो यावन्मूत्रान्त्रजावपि यौ वृद्ध्याख्यौ गदौ तावप्यनिलजौ । ननु, एव पृथङ्निर्देशो मूत्रान्त्रजयो कर्तु न युक्तोऽनिलजत्वात्, इत्याह-हेतुभेदस्तु केवलम् । सत्यम् । मूत्रान्त्रजावप्यनिलाज्जायेते । किन्तु कारणभेदान्मूत्रान्त्रजाविति निर्दिष्टौ । यतो मूत्रान्त्रेऽधिष्ठाय वायुर्मूत्रान्त्रजौ गदौ वृद्ध्याख्यौ करोति । एव तौ परमार्थतो वातजावपि मूत्रान्त्रजावुच्येते, तथारूपाद्धेतुभूतादुत्पन्नत्वात् । एतच्चोपलक्षणमात्रम् । मेदोरक्तजावपि वृद्धिगदौ दोषजावेव, कफपित्ताभ्या दूष्यसञ्ज्ञके मेदोरक्तेऽधिष्ठाय कृतत्वात् । तस्मान्मेदोरक्तहेतुवशान्मेदोरक्तजाविति सञ्ज्ञया तावुक्तौ[2] । एवमन्येऽप्येवंरूपा व्याधयो बोध्या ।

**वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ।**

स०-तत्र वाताद्वृद्धिर्वातेन पूरिता या दृति -भस्त्रा, तस्या इव स्पर्शो यस्य स एवभूतो भवति । तथा, रूक्ष । तथा, अहेतु -निमित्तं विना, रुक्-पीडा, यस्मिन् स एवम् ।

**पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ॥ २४ ॥**

स०-पित्ताद्वृद्धि पक्वोदुम्बरफलतुल्यो दाहादिमाश्च स्यात् ।

**कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक्**

स०-कफाद्वृद्धि शीतादियुक्त स्यात् ।

**कृष्णस्फोटावृतः[4] पित्तवृद्धिलिङ्गश्च रक्ततः ॥ २५ ॥**

स०-रक्ताद्वृद्धि कृष्णस्फोटैश्चित पित्तवृद्धिलिङ्गश्च । पित्तवृद्धिलिङ्गानीव लिङ्गानि यस्य स एवम् । सप्तम्युपमानपूर्वस्येत्यादिनोत्तरपदलोपी समास ।

**कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ।**

स०-मेदसा वृद्धि कफवदिति कार्ये कारणोपचारात्कफकार्यो रोग कफ उक्त । विशेषमत्राह[6]-मृदुस्तालफलोपम इति ।

**मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ॥ २६ ॥**
**अम्भोभिः पूर्णदृतिवत्क्षोभं याति सरुङ्मृदुः ।**

**मूत्रकृच्छ्रमधस्ताच्च वलयं फलकोशयोः ॥ २७ ॥**

स०-मूत्रजो वृद्धिर्मूत्रधारणशीलस्य जलपूर्णभस्त्रेव स्यात् । स तु-मूत्रजो वृद्धि, गच्छतो-व्रजत, क्षोभ याति सरुक् मृदुश्च स्यात् । तथा, मूत्रकृच्छ्र स्यात् । फलकोशयोरधस्ताच्च वलय-कटक, स्यात् ।

**वातकोपिभिराहारैः शीततोयावगाहनैः ।**
**धारणेरणभाराध्वविषमाङ्गप्रवर्तनैः ॥ २८ ॥**
**क्षोभणैः क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा ।**
**पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ॥ २९ ॥**
**कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ।**
**उपेक्ष्यमाणस्य च मुष्कवृद्धि-**
**माध्मानरुक्स्तम्भवतीं स वायुः ।**
**प्रपीडितोऽन्तः स्वनवान् प्रयाति**
**प्रध्मापयन्नेति पुनश्च मुक्तः ॥ ३० ॥**
**अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः ॥ ३१ ॥**

**इति वृद्धिनिदानम् ।**

स०-वातकोप्याहारादिभिरन्यैश्च पूर्वोक्तै क्षोभणै -कोपनै, क्षुभित -कुपितो, यदाऽल्पस्यान्त्रस्यावयव -एकदेश, त स्वनिवेशात्-स्वस्थानात्, विगुणीकृत्याधो नयेत् तदा पवनो वङ्क्षणसन्धिस्थो ग्रन्थ्याभ श्वयथु कुर्यात् । उपेक्ष्यमाणस्येत्यादि । उपेक्ष्यमाणस्य-अचिकित्स्यमानस्य वृद्ध्याख्यगदस्य, स पूर्वनिर्दिष्टो वायुर्मुष्कयोर्वृद्धि-वर्द्धन, कुर्यात् । किम्भूताम्? आध्मानरुक्स्तम्भवतीम् । तथा, प्रपीडितो बाह्यादन्त स्वनवान्-सशब्द, प्रयाति । मुक्त -अप्रपीडित, प्रध्मापयन् पुनरेति-आगच्छति । उपजातिवृत्तम् । अय-एवलक्षण, अन्त्रवृद्धिरसाध्यो न पुन सर्व एवेत्ययशब्देन द्योतयति । किमस्य लक्षणम्? इत्याह-वातवृद्धिसमाकृति, -"वातपूर्णदृतिस्पर्श" (श्लो २४) इत्यादिलक्षणलक्षित ।

वृध्याख्यस्य व्याधेरनन्तर शोफसामान्यात् गुल्मस्यावसर, इति त लक्षयितुमाह—

## अथ गुल्मनिदानम् ।

***रूक्षकृष्णारुणसिरातन्तुजालगवाक्षितः ।**

सार्थम् । तेन द्वन्द्वजवृद्धेरधिकाया निरास । असम्भवस्तु तस्या व्याधिप्रभावात् । मूत्रान्त्रवृद्ध्योर्वातवृद्ध्यन्तर्भावात् न्यूनसङ्ख्यानिरासश्च । अनयोर्वातजत्वेऽपि निमित्तचिकित्साभेदात् पृथगभिधानम् । निमित्तभेदनिर्बन्धन एव व्याधिभेद इति । यदुक्तम् (सु सू अ २४।८)—'दोषदूष्यससर्गादायतनाना च विशेषान्निमित्ततश्चैषा व्याधीना भेद ।' इति ।" इति तोडर ।

१ 'वा' ट । २ 'तुभावुक्तौ' थ. । ३ 'वाच्या' ट. । ४ 'कृष्ण स्फो' च तो । "कृष्ण -मषीवर्ण" इति चन्द्रतोडरौ । ५ "तालफलोपम -तत्तुल्य पक्वतालफलवन्नीलवर्तुल ।" इति तोडर । ६ 'षमाह' ड. ।

१ 'चालयन्' मा नि । २ 'भस्त्रोपम स्या' ण द । ३ 'कङ्कण' ण द । ४ 'द्विगुणीकृत्य' श्रीकण्ठवाचस्पती । ५ "विगुणीकृत्य-विश्लिष्टीकृत्य सङ्कोचेन द्विगुणीकृत्य । उपेक्ष्यमाणस्य-अचिकित्सितपुरुषस्य । च-अन्यत् । प्रपीडित -करप्रपीडित सन् । प्रध्मापयन्-आपूरयन् उच्छूनयन् सन्, पुनर्मुष्कावेव एति-आगच्छति । पुन किंविशिष्टोऽन्त्रवृद्धि ? रूक्षेत्यादि । रूक्षा -नि स्नेहा, कृष्णा -कृष्णवर्णा, अरुणा -लोहिता, या सिरा, तासा तन्तुजालै -तन्तुसमूहै, गवाक्षितो-व्याप्त, स्यात् ।" इति तोडर । ६ 'त, द्विगुणी' ण. । ७ 'वर्ध्माख्य' ट ण द । *८ अरुणदत्तेन 'रूक्षकृष्ण' इत्यादिश्लोकार्धस्य गुल्मेन सम्बन्ध प्रतिपादित । किन्तु, इद श्लोका-

**गुल्मोऽष्टधा पृथग्दोषैः संसृष्टैर्निचयं गतैः ॥ ३२ ॥**
**आर्तवस्य च दोषेण नारीणां जायतेऽष्टमः ।**

स०–सर्वगुल्मानां सामान्यलक्षणं *रूक्षकृष्णेत्यादिग्रन्थनिर्दिष्टम् । गवाक्षितो–निरन्तरमाक्रान्तः । गुल्मोऽष्टधेति सङ्ख्यारूपा सम्प्राप्तिः । तदेवाष्टधात्वं प्रतिपादयितुमाह–पृथग्दोषैः–वातपित्तकफैः, त्रयः । तथा, संसृष्टैः–संसर्गेण, त्रयः । निचयं गतैः–सन्निपातेन, एकः । तथा, अष्टमो नारीणां चार्तवस्य दोषेण–दुष्टतया, स्यात् ।

**ज्वरच्छर्द्यतिसाराद्यैर्वमनाद्यैश्च कर्मभिः ॥ ३३ ॥**
**कर्शितो वातलान्यत्ति शीतं वाऽम्बु बुभुक्षितः ।**
**यः पिबत्यनु चान्नानि लङ्घनप्लवनादिकम् ॥ ३४ ॥**
**सेवते देहसङ्क्षोभि छर्दिं वा समुदीरयेत् ।**
**अनुदीर्णामुदीर्णान्वा वातादीन्न विमुञ्चति ॥ ३५ ॥**
**स्नेहस्वेदावनभ्यस्य शोधनं वा निषेवते ।**
**शुद्धो वाऽऽशु विदाहीनि भजते स्यन्दनानि वा ॥३६॥**
**वातोल्बणास्तस्य मलाः पृथक् क्रुद्धा द्विशोऽथवा ।**
**सर्वे वा रक्तयुक्ता वा महास्रोतोनुशायिनः ॥ ३७ ॥**
**ऊर्ध्वाधोमार्गमावृत्य कुर्वते शूलपूर्वकम् ।**
**स्पर्शोपलभ्यं गुल्माख्यमुत्प्लुतं ग्रन्थिरूपिणम् ॥ ३८ ॥**

स०–"ज्वरच्छर्दि" इत्यादि यावत् "भजते स्यन्दनानि वा" इति निदानम् । अतिसाराद्यैरित्यादिशब्देन ग्रहण्यादयो गृह्यन्ते, वमनाद्यैरित्यत्र च विरेचनास्थापनादयः । ज्वरादिभिर्व्याधिभिर्वमनादिभिश्च कर्शितो यो वातलान्यन्नानि भुङ्क्ते । अथवा, बुभुक्षितो–भोजनं विनैव, शीतं–अपक्वमम्बु, यः पिबति । तथा चोक्तम् ( सङ्ग्रहे सू. अ. ६ )–"अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च । नाल्पमप्यामुदकं हितं, तद्धि त्रिदोषकृत् ॥" इति । अनु चान्नानि–भोजनादनन्तरं, लङ्घनादिकं यत्कर्म देहसङ्क्षोभि–शरीरसंरम्भोत्पादकं, तत्सेवते । छर्दिं वा योऽनुदीर्णां–अनुत्क्लिष्टां, समुदीरयेत्–समन्तादूर्ध्वं नयेत् । उदीर्णान् वातादीन्–वातमूत्रपुरीषादीनागतान्, न विमुञ्चति । तथा यः कश्चन स्नेहस्वेदावनभ्यस्य–पुनः पुनरकृत्वा, शोधनं–वमनविरेचनादि, निषेवते । अथवा, शुद्धः–कृतवमनविरेचनः, आशु–समनन्तरमेव, विदाहीन्यन्नपानानि भजते–सन्तापनान्यन्नपानानि भुङ्क्ते । पच्यमानान्यन्नपानानि यानि विदाहावस्थां प्राप्तान्यामाशय एव चिरमवतिष्ठन्ते तानि विदाहीन्युच्यन्ते । अथवा, कृतवमनविरेचनोऽनन्तरमेव स्यन्दनानि–स्रुतिरूपश्लेष्मकारीण्यन्नपानानि, भजते । तस्य मलाः–वातादयो, गुल्मसंज्ञं व्याधिं कुर्वते । कीदृशाः ? वातोल्बणाः–वातकारणाः । न हि पवनकारणमन्तरेण श्लेष्मपित्तरक्तानां सङ्घट्टना घटते । तस्मात् पित्तादीनामुत्पत्तिकारणानां वातस्य च पित्तादिगुल्मेषु गुल्मनिष्पादनं प्रति तुल्यकक्षतामनेन विशेषणेन प्रतिपादयत्याचार्यः । यदि पुनरुल्बणः–अधिकः, इति व्याख्यायते । तदानीं पित्तगुल्मेऽप्यधिकत्वं वातस्येति वातगुल्मपित्तगुल्मादीनां विषयविभागो न स्यात् । तस्माद्वातकारणत्वं वातोल्बणा इत्यनेन विवक्षितमिति वेद्यम् । किम्भूता दोषाः ? क्रुद्धाः–कुपिताः । कथम् ? पृथक्–प्रत्येकं कृत्वा । अथवा, द्विशो–द्वौ द्वौ कृत्वा, संसर्गस्था इत्यर्थः । सर्वे वा–समस्ता रक्तयुक्ता वेति । वाशब्दः समुच्चये, रक्तयुक्ताश्चेत्यर्थः । तथा च खरनादेऽभिहितम्–"वायुः, क्रुद्धः कफं रक्तं पित्तं चौदाय पिण्डितम् । गुल्मं कुर्यात्" इत्यादि यावत् "रक्तपित्तकफा वातपिण्डिता गुल्म उच्यते ।" इति । तथा महास्रोतोनुशायिनः । महास्रोतः–आमपक्वाशयस्थानं, तदनुशेरते ये ते महास्रोतोनुशायिनः । किं कृत्वा गुल्मं निष्पादयन्ति ? इत्याह–ऊर्ध्वाध इत्यादि । ऊर्ध्वाधोमार्गमावृत्य–आपूर्य, अनेनास्य सम्प्राप्तिरुक्ता । शूलं पूर्वं यस्मिन् स एवं तं शूलपूर्वकम्,–पूर्वं शूलं कृत्वा पश्चाद्दोषा गुल्मं कुर्वन्ति, अनेनास्य प्राग्रूपमुक्तम् । तथा स्पर्शोपलभ्यं–अस्मादिसदृशम्, तथा उत्प्लुतं–ऊर्ध्वं गतम् । तथा ग्रन्थिरूपिणं–ग्रन्थ्याकारम्, इत्यनेनास्य संस्थानमुक्तम् ।

---

भैमग्रवृद्धिना सम्बन्धनीयम्, युक्ततरत्वात् चन्द्रतोडरेन्दुभिस्तथैव व्याख्यातत्वाच्च ।

१ "आर्तवस्य दोषेणेति किम् ? तत्राह [क्षारपाणि]–'स्त्रीणामार्तवजो गुल्मो न पुंसामुपजायते । अन्यस्त्वसृग्भवो गुल्मः स्त्रीणां पुंसां च जायते ॥' इति । गुल्म इति लतादिपिहितस्थानविशेषे गुल्मव्यपदेशः, तत्सादृश्यात्सञ्चितपरिपिण्डितदोषेऽपि गुल्मसंज्ञेत्याहुः । बुभुक्षितः सन्–आहाराभिलाषी सन्, भोजनादौ शीतं–हिमं, अम्बु–उदकं, पिबति । सेवेत–भजेत । शूलपूर्वकं–शूलं पूर्वं कृत्वा शूलमुपजनयन्तः, इत्यनेन शूलनिदानं सूचितम् । 'वातोद्भवं बस्तिगतं वदन्ति पित्तोद्भवं चापि वदन्ति नाभौ । हृत्पार्श्वकक्षोदरसन्निविष्टं कफोद्भवं सर्वभवं तु सर्वे ॥' इति । स्पर्शोपलभ्यं–करस्पर्शेन विज्ञायते । उन्नतं–उत्प्लुतम् ।" इति तोडरः । "वातोल्बणाः–वातप्रधानाः । महास्रोतः–उदरशरीरस्य मध्यभागः ।" इति चन्द्रतोडरौ । सङ्ग्रहे तु (नि. अ. ११)–"शूलमुपजनयन्तो गुल्ममभिनिर्वर्तयन्ति । यतश्च तस्मिन् शूलव्यध इव व्यथते तीव्रवेदनार्दितः कृच्छ्रोच्छ्वासस्तस्माच्छूलमित्युच्यते ।" इति विशेषः । २ 'न्तराक्रा' ट । ३ 'चाम्बु' इ ण । ४ आदिशब्देन व्यवायवानयानादि सङ्ग्रहोक्तं ग्राह्यम् । ५ 'मुञ्चतं' तो. ।

१ 'कर्षितो' ट ण थ द । २ 'चनानन्त' ट ण थ द । ३ 'दिगुल्मनि' ट । ४ 'त्यकुक्षिता' ण थ द । ५ 'नीं वातगुल्मे' ट ण थ. द । ६ 'खारणादे' ट. थ । ७ 'वाऽऽदाय' ण द. । ८ 'फाद्वातपिण्डिताद्गुल्म' ट. ण. द ।

अधुना वातगुल्मं लक्षयति—

**कर्शनात्कफविट्पित्तैर्मार्गस्यावरणेन वा ।**
**वायुः कृताश्रयः कोष्ठे रौक्ष्यात्काठिन्यमागतः ॥३९॥**
**स्वतन्त्रः स्वाश्रये दुष्टः परतन्त्रः पराश्रये ।**
**पिण्डितत्वादमूर्तोऽपि मूर्तत्वमिव संश्रितः ॥ ४० ॥**
**गुल्म इत्युच्यते बस्तिनाभिहृत्पार्श्वसंश्रयः ।**

स०–कर्शनात्–धातुक्षयात्, वायुर्दुष्टः कदाचित् कफविट्पित्तैः कृतेन मार्गस्यावरणेन–रोधेन, कोष्ठे–आमपक्वाशयाख्ये, कृताश्रयो–गृहीतास्पदः, तथा रौक्ष्यात्कारणात् काठिन्यमागतः–पिण्डितत्वं प्राप्तः, स्वाश्रये–पक्वाशयस्थाने, दुष्टः स्वतन्त्रः, पराश्रये–आमाशयस्थाने, दुष्टः परतन्त्रः पित्तकफयोरायत्तः, पिण्डितत्वात्कारणात् स्पर्शोपलभ्यः सन्, अमूर्तोऽपि–अकठिनोऽपि, मूर्तत्वमिव–काठिन्यमिव, संश्रितः–सम्पन्नो, गुल्म इत्यभिधीयते, तन्त्रकृद्भिरिति शेषः । बस्तिनाभिहृत्पार्श्वसंश्रयः, बस्त्यादि संश्रयः–आधारो, यस्य स एवम् ।

**वातान्मन्याशिरःशूलं ज्वरप्लीहान्त्रकूजनम् ॥ ४१ ॥**
**व्यधः सूच्येव विट्सङ्गः कृच्छ्रादुच्छ्वसनं मुहुः ।**
**स्तम्भो गात्रे मुखे शोषः कार्श्यं विषमवह्निता ॥४२॥**
**रूक्षकृष्णत्वगादित्वं चलत्वादनिलस्य च ।**
**अनिरूपितसंस्थानस्थानवृद्धिक्षयव्यथः ॥ ४३ ॥**
**पिपीलिकाव्याप्त इव गुल्मः स्फुरति तुद्यते ।**

स०–वाताद्गुल्मे सति मन्याशूलादयो भवन्ति । तथा, चलत्वाच्च वायोर्गुल्मोऽनिरूपितसंस्थानस्थानवृद्धिक्षयव्यथः स्यात् । अनिरूपिता संस्थानादयो यस्य स एवम् । संस्थानं–आकारः । स्थानं–आश्रयः । तथा, पिपीलिकाभिर्व्याप्त–चित इव, गुल्मः स्फुरति तुद्यते च । तुद्यत इति कर्मकर्तरि ।

**पित्ताद्दाहोऽम्लको मूर्च्छाविड्भेदस्वेदतृड्ज्वराः ॥४४**
**हारिद्रत्वं त्वगाद्येषु गुल्मश्च स्पर्शनासहः ।**
**दूयते दीप्यते सोष्मा स्वस्थानं दहतीव च ॥ ४५ ॥**

स०–पित्ताद्गुल्मे दाहादयः स्युः । तथा त्वङ्नखादिषु हारिद्रो वर्णः स्यात् । गुल्मश्च स्पर्शनं न सहते–स्पर्शनासहः, स्यात् । तथा, दूयते–उपतप्यते, दीप्यते–ज्वलतीव । सोष्मा च स्यात् । स च स्वस्थानं–गुल्माश्रितमास्पदं, दहतीव–तप्तायःपिण्ड इव । दूयत इति "दूङ् परितापे" दिवादिः ।

**कफात्स्तैमित्यमरुचिः सदनं शिशिरज्वरः ।**
**पीनसालस्यहृल्लासकासशुक्लत्वगादिताः ॥ ४६ ॥**
**गुल्मोऽवगाढः कठिनो गुरुः सुप्तः स्थिरोऽल्परुक् ।**

स०–कफाद्गुल्मे सति स्तैमित्यादयः स्युः । गुल्मोऽवगाढादियुक्तः स्यात् ।

**स्वदोषस्थानधामानः स्वे स्वे काले च रुक्कराः ॥४७॥**
**प्रायः**

स०–ते च गुल्माः स्वदोषस्थानधामानो दोषस्य–वातादेः, स्थानं–पक्वाशयादि स्वमात्मीयमात्मीयं, दोषस्थानं तद्धामस्थानं, येषां–वातपित्तकफगुल्मानां, ते प्रायो–बाहुल्येन, स्वदोषस्थानधामानः । तथा स्वे स्वे काले–आत्मीये वयोहोरात्रिभुक्तानामन्तमध्यादिलक्षणे, यथासङ्ख्यं वातपित्तकफगुल्मा रुक्करा–शूलकराः, भवन्ति ।

**त्रयस्तु द्वन्द्वोत्था गुल्माः संसृष्टलक्षणाः ।**

स०–द्वन्द्वोत्था–संसर्गजा गुल्मास्त्रयः, संसृष्टलक्षणाः स्युः ।

**सर्वजस्तीव्ररुग्दाहः शीघ्रपाकी घनोन्नतः ॥ ४८ ॥**
**सोऽसाध्यो**

स०–सर्वजस्त्रिदोषजो गुल्मस्तीव्ररुगादियुक्तः । स चासाध्यः ।

**रक्तगुल्मस्तु स्त्रिया एव प्रजायते ।**

स०–रक्तगुल्मः पुनः स्त्रिया एव प्रजायते ।

अत्रैवोपपत्तिमाह—

**ऋतौ वा नवसूता वा यदि वा योनिरोगिणी ॥४९॥**
**सेवते वातलानि स्त्री क्रुद्धस्तस्याः समीरणः ।**
**निरुणद्ध्यार्तवं योन्यां प्रतिमासमवस्थितम् ॥ ५० ॥**
**कुक्षिं करोति तद्गर्भलिङ्गमाविष्करोति च ।**
**हृल्लासदौहृदस्तन्यदर्शनक्षामतादिकम् ॥ ५१ ॥**

स०–ऋतौ–आर्तवकाले, नवप्रसूता वा योनिरोगिणी वा स्त्री वातलान्यन्नपानानि यदि सेवते तस्याः–स्त्रियाः, समीरणः–पवनः, कुपितो योन्यां प्रतिमासं यदवस्थितमार्तवं तदुपरुणद्धि । तत्–आर्तवं, कुक्षिं करोति, गर्भलिङ्गं चाविष्करोति–प्रकटयति । गर्भलिङ्गमिव लिङ्गं यस्येति "सप्तम्युपमानपूर्वस्य" इति बहुव्रीहिरुत्तरपदलोपश्च । अथ तदेव गर्भलिङ्गमाह–हृल्लासेत्यादि । मुनिस्तु रक्तगुल्मे ( च नि अ ३।१४)–"पादयोः श्वयथुर्भवति ।" इत्यूचे । आदिशब्देन मूर्च्छादीनां ग्रहणम् ।

**क्रमेण वायुसंसर्गात्पित्तयोनितया च तत् ।**
**शोणितं कुरुते तस्या वातपित्तोत्थगुल्मजान् ॥५२॥**
**रुक्स्तम्भदाहातीसारतृड्ज्वरादीनुपद्रवान् ।**
**गर्भाशये च सुतरां शूलं दुष्टासृगाश्रये ॥ ५३ ॥**
**योन्याश्च स्रावदौर्गन्ध्यतोदस्पन्दनवेदनाः ।**

१ "गुल्मशब्देन किमभिधीयते ? इत्याह–कर्शनादित्यादि । एतेन विशेषणेन बस्तिनाभिहृदयानि द्वे पार्श्वे चेति पञ्च गुल्मस्थानानि ॥ वातगुल्मलक्षणमाह–वातान्मन्येत्यादि । अनिरूपिता–अनिश्चिता अनिर्धारिता. ।" इति तोडर. । २ 'कर्षणात्' ट.ण.थ.द ।

१ 'स्वकाले' थ द । २ "सेवेत–भजेत । आर्तवं–ऋतुसम्बन्धि रजः । कुक्षिं करोति–कुक्षिमभिनिर्वर्तयति, उदरमभिवर्धयति ।" इति तोडर । ३ 'रुन्ध्यं कुक्षिं' थ । ४ 'न्ध्यक्लेदस्वेदन' ण.द. । 'तोदस्फुरणवे' इति क्वचित् ।

स०-क्रमेण-अनन्तर, वायुससर्गात्[1]-मरुत्सश्लेषात्, तथा पित्तयोनितया च-पित्तस्य[2] कारणत्वेन, तच्छोणित वातपित्तोत्थगुल्मजानुपद्रवान् कुरुते रुक्स्तम्भदाहातीसारतृड्ज्वरादीन्। अनया च भङ्ग्या वातपित्तगुल्मयोरुपद्रवा अप्युक्ता भवन्ति। गर्भाशय इत्यादि। गुल्मश्च गर्भाशये सुतरा शूल करोति। किम्भूते? दुष्टस्यासृज आश्रये-आधारभूते। योन्याश्च स्रावादीन् कुरुते।

गर्भलक्षणाद्रक्तगुल्मस्य विलक्षण लक्षणमाह-

**न चाङ्गैर्गर्भवद्गुल्मः स्फुरत्यपि तु शूलवान्॥ ५४॥**
**पिण्डीभूतः स एवास्याः कदाचित्स्पन्दते चिरात्।**
**न चास्या वर्द्धते कुक्षिर्गुल्म[3] एव तु वर्द्धते॥ ५५॥**

स०-न च गर्भ इवाङ्गै -पाण्यादिभिरवयवै, स्फुरति-निस्पन्दते गुल्मोऽङ्गाभावात्, अपि तु शूलवान्। स एव-गुल्म, पिण्डीभूत कदाचिच्चिरेणास्या स्पन्दते-न गर्भवच्छीघ्रम्। तथा, गर्भेऽन्त स्थिते कुक्षिरस्या वर्धते। गुल्मे त्वन्त स्थिते स एव वर्धते गुल्मो, न कुक्षि। इति गर्भरक्तगुल्मयोर्लक्षणभेद।

अथ गुल्मविद्रध्योर्लक्षणभेद कथयति—

**स्वदोषसंश्रयो गुल्मः सर्वो भवति तेन सः।**
**पाकं चिरेण भजते नैव वा, विद्रधिः पुनः॥ ५६॥**
**पच्यते शीघ्रमत्यर्थं दुष्टरक्ताश्रयत्वतः।**
**अतःशीघ्र[3]विदाहित्वाद्विद्रधिः सोऽभिधीयते॥५७॥**

स०-सर्वो गुल्म स्वदोष सश्रयो यस्य स एवम्। येन येन दोषेण वाताद्यन्यतमेनाथवा द्वन्द्वस्वरूपेण सन्निपातेनान्येन वा गुल्मो जायते स दोषस्तस्य गुल्मस्याश्रय। तदेवं वातगुल्मस्य वात एवाश्रयो, न तस्य पित्तादय। पित्तादिकृताना त एवाश्रया, न पवन आश्रय। एव स्वदोषसश्रयो गुल्म सर्वो भवति। तेन-स्वदोषसश्रयाख्येन कारणेन, गुल्मश्चिरेण कालेन पाक भजते। एतच्च पित्तगुल्म प्रति प्रायेण तथैकीयमतेनोक्तम्। अत एवाह-नैव वेति। अथवा गुल्म पाक न भजत एव। विद्रधिस्तु शीघ्र-अचिरेणैव कालेन, पाकं भजते, अत्यर्थं दुष्टरक्ताश्रयत्वात्[4]। अत शीघ्रविदाहित्वात् कारणादसौ विद्रधिरभिधीयते। तथा चागम (सुश्रुते नि अ. ९।३२)-"मासशोणितभूयस्त्वात्[5] पाक गच्छति विद्रधि। मासशोणितहीनत्वाद्गुल्म पाक न गच्छति॥" इति। तथा प्रायेण वातात्मक सर्वो गुल्मो जायते। वात एवामूर्तोऽपि मूर्तत्वमिव सश्रितो गुल्म इत्युच्यते। अत एव वातस्यैव सर्वगुल्मकारण प्रति प्राधान्यम्। तस्माद्गुल्मस्य[6] पाकानुपपत्ति।

१ 'द्व-तत्सश्ले' थ। २ 'तस्याकरत्वे' थ। ३ "कुक्षि-उदरम्॥ शीघ्रविदाहित्वात्-आशुपाकित्वात्।" इति तोडर। ४ 'तवाइत्यात्' स.सु.। ५ 'त्मकर' ण.द.। ६ 'द्गुल्मे पा' ण.द.।

अथ गुल्मस्य बाह्याभ्यन्तरलक्षणमाह—

**गुल्मेऽन्तराश्रये बस्तिकुक्षिहृत्[1]प्लीहवेदनाः।**
**अग्निवर्णबलभ्रंशो[2] वेगानां चाप्रवर्तनम्॥ ५८॥**
**अतो विपर्ययो बाह्ये कोष्ठाङ्गेषु तु नातिरुक्।**
**वैवर्ण्यमवकाशस्य बहिरुन्नतताऽधिकम्॥ ५९॥**

**इति गुल्मनिदानम्।**

स०-गुल्मेऽन्तराश्रये-आभ्यन्तरे, बस्त्यादिवेदनादय स्यु। तथा, अग्न्यादिभ्रंशो[3]-विनाशो, वेगाना च प्रवर्तन न भवति। अत -अस्माद्बाह्ये, विपर्ययो-वैपरीत्यम्। यथा,-अग्न्यादिभ्रंशाभावो वेगाना च प्रवर्तन भवति। तथा, बस्तिहृदयादिषु कोष्ठाङ्गेष्वतिरुङ् भवति। यथा[4]ऽन्तरे तथाऽवकाशस्य गुल्मप्रदेशस्य वैवर्ण्य-शरीरादन्यवर्णत्वम्। बहि -बाह्यभागे, उन्नतत्वमधिकं भवति।

गुल्मानामानाहभूयिष्ठत्वादानाहलक्षणमाह—

**साटोपमत्युग्ररुजमाध्मानमुदरे भृशम्।**
**ऊर्ध्वाधोवातरोधेन तमानाहं प्रचक्षते॥ ६०॥**

स०-ऊर्ध्वाधोवातरोधेन कारणभूतेनोदरे भृशमाध्मान यत् तमानाह प्रचक्षते, मुनय इति शेष। किम्भूतम्? साटोप-सशब्दम्, तथाऽत्युग्रा रुक्-पीडा, यत्र तदेवम्। सुश्रुतेन प्रत्याध्मानस्यापि लक्षणमभ्यधायि (नि अ. १।८९)-"विमुक्तपार्श्वहृदय तदेवामाशयोत्थितम्। प्रत्याध्मान विजानीयात् कफव्याकुलितानिलम्॥" इति।

**घनोऽष्ठीलोपमो ग्रन्थिरष्ठीलोर्ध्वं समुन्नतः।**
**आनाहलिङ्गस्तिर्यक्[5]तु प्रत्यष्ठीला तदाकृतिः॥ ६१॥**

स०-[ घनो-]निबिडो, यो ग्रन्थिरष्ठीलयोपमीयते तथोर्ध्वं समुन्नत -नाधस्तात्, स ग्रन्थिरानाहलिङ्गोऽष्ठीला भण्यते। तिर्यक् च ( पुन ) यो ग्रन्थि -नोर्ध्वं समुन्नत, तदाकृति-अष्ठीलासदृश, स ग्रन्थि प्रत्यष्ठीलोच्यते।

तूनीप्रतून्यौ लक्षयति—

**पक्वाशयाद्गुदोपस्थं वायुस्तीव्ररुजः प्रयान्।**
**तूनी, प्रतूनी तु भवेत्स एवातो विपर्यये॥ ६२॥**

स०-गुद चोपस्थ च गुदोपस्थम्। पक्वाशयात्-ततो देशात्, वायुस्तीव्ररुज सन् गुदोपस्थ प्रयान्-गच्छन्, तूनीत्युच्यते। स एव-वायु, अतो विपर्यये-गुदोपस्थात्पक्वाशय गच्छन्, तीव्ररुज सन् प्रतूनीति[6] गद्यते।

१ 'हृत्पार्श्ववे' तो। २ "अग्निभ्रंशो-अग्निमान्द्यम्। वर्णभ्रंशो-गात्रवैवर्ण्यम्। बलभ्रंशो-निर्बलत्वम्।" इति तोडर। "ऊर्ध्वाधोवातरोधेन-मार्गावरणेन।" इति चन्द्रतोडरौ। ३ 'शो-अभाव.।' ण। ४ 'तथा' ण.थ.द.। ५ 'स्तिर्यक् च' इ। ६ 'तूनीत्युच्यते।' ट।

उद्गारबाहुल्यपुरीषबन्ध-
तृप्त्यक्षमत्वान्त्रविकूजनानि ।
आटोपमाध्मानमपक्तिशक्ति-
मासन्नगुल्मस्य वदन्ति चिह्नम् ॥ ६३ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने विद्रधिवृद्धिगुल्मनिदानं नामैकादशोऽध्यायः ॥ ११ ॥

स०—उद्गारबाहुल्यादीन्यासन्नगुल्मस्य चिह्न—प्राग्रूप, वदन्ति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने विद्रधिवृद्धिगुल्मनिदान नामैकादशोऽध्याय समाप्त ॥ ११ ॥



## द्वादशोऽध्यायः ।

अथोदरनिदानमारभ्यते । यतोऽनन्तरेऽध्याय आनाहलक्षणमुक्तम् । उदर च कुक्षिमानह्य दोषा कुर्वते । तस्मादतोऽनन्तरमुदरनिदानमुच्यत इत्याह—

अथात उदरनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
( गद्यसूत्रे ॥ २ ॥ )

रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि तु ।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात् ॥ १ ॥

स०—सर्वेऽपि—ज्वरातीसारादयो, रोगा मन्देऽग्नौ सति जायन्ते, अतिशयेन पुनरुदराणि । अन्येभ्यश्चोदरहेतुभ्यो मन्दाग्नित्व प्रधानमुदराणा कारणमिति मन्देऽग्नावित्यनेन प्रागुद्दिष्टेन द्योतयति । अजीर्णादित्यादि । चतुर्विधादजीर्णात्—आमविष्टब्धविदग्धरसशेषाख्यात्, तथा मलिनैश्चान्नै —पूतिपर्युषितसङ्कीर्णादिलक्षणै , तथा मलसञ्चयात्—चिरकालसम्भृतादोषाणा प्रचयात्, उदराणि जायन्ते ।

अधुना सम्प्राप्तिविशेषमाह—

ऊर्ध्वाधो धातवो रुद्ध्वा वाहिनीरम्बुवाहिनीः ।
प्राणाग्न्यपानान् सन्दूष्य कुर्युस्त्वङ्मांससन्धिगाः २
आध्माप्य कुक्षिमुदरम्

स०—अम्बुवाहिनीर्वाहिनी —जलवाहीनि स्रोतासि, ऊर्ध्वाधो रुद्ध्वा धातवो—वातादय , उदर कुर्यु । कीदृशा ? त्वक् च मास च त्वङ्मासे, तयो सन्धि —अन्तर, तत्र गच्छन्तीति त्वङ्माससन्धिगा , तत्रस्था इत्यर्थ । कि कृत्वा ? कुक्षिमाध्माप्य—आनह्य । तथा, प्राणश्चाग्निश्चापानश्च तान् प्राणाग्न्यपानान् सन्दूष्य—दूषयित्वा । प्रकृत्या मन्दोऽग्नि पुनर्वातादिभि सन्दूषितो जठर करोतीत्यर्थ ।

अष्टधा तच्च भिद्यते ।
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥ ३ ॥

स०—तच्च—उदर, अष्टधा स्यात् । पृथग्दोषै —वातपित्तकफैस्त्रय , समस्तै —सन्निपातेन चैक , प्लीहोदर बद्धोदर क्षतोदर जलोदरमिति [ च चत्वार, एवमष्टौ ] । वातादिकृतान्यपि प्लीहाद्युदराणि प्लीहादिनिमित्तसञ्ज्ञयोक्तानि । यथा, वृध्न्याख्यो रोग । सञ्ज्ञाविशेषश्च चिकित्साविशेषप्रतिपत्त्यर्थ ।

तेनार्ताः शुष्कताल्वोष्ठाः शूनपादकरोदराः ।
नष्टचेष्टाबलाहाराः कृशाः प्रध्मातकुक्षयः ॥ ४ ॥
स्युः प्रेतरूपाः पुरुषाः

स०—तेन—उदरेण, आर्ता —पीडिता पुरुषा , शुष्कताल्वोष्ठा शूनपादादयो नष्टचेष्टादिका कृशादयश्च स्यु ।

भाविनस्तस्य लक्षणम् ।
क्षुन्नाशोऽन्नं चिरात्सर्वं सविदाहं च पच्यते ॥ ५ ॥
जीर्णाजीर्णं न जानाति सौहित्यं सहते न च ।
क्षीयते बलतः शश्वच्छ्वसित्यल्पेऽपि चेष्टिते ॥ ६ ॥
वृद्धिर्विशोऽप्रवृत्तिश्च किञ्चिच्छोफश्च पादयोः ।
रुग्बस्तिसन्धौ ततता लघ्वल्पाभोजनैरपि ॥ ७ ॥
राजीजन्म वलीनाशो जठरे

---

१ 'पक्वशक्ति' तो. । २ "आसन्नगुल्मस्य—नरस्य प्राग्रूपावस्थाया, चिह्न—लक्षणम् ।" इति चन्द्रतोडरौ । "अपक्तिशक्ति —अन्नाविपाकोऽग्निसादश्च ।" इति चन्द्र । ३ 'कुर्वन्ति ।' ण थ द । ४ इदमुदरनिदान चरके चि० १३ अध्याये, सुश्रुते नि० ७ अध्याये, अष्टाङ्गसङ्ग्रहे नि० १२ अध्याये चास्ति वर्णितम् । ५ "मलसञ्चयात्—चिरकालनिभृताद्दोषसञ्चयात्, अथवा मला —दोषा पुरीषादयश्च, तेषामतिवृद्धत्वात् ।" इति तोडर । ६ 'सम्भूता' ट.थ. ।

१ "कुक्षि—उदरम् । अत्र प्राणाग्न्यपानानित्यत्र पुनरग्निदूषणाभिधानेन मन्दस्याग्ने पुनर्दोषकृत सुतरा मान्द्य बोधयति । तथा दोषसञ्चयगतेनापि वायुना प्राणापानयोर्दूषण न विरुद्धम्, यतो वायुना वाय्वन्तरदुष्टि क्रियत एवेति ॥ प्रेतरूपा —मृतप्राया ॥ विश —पुरीषस्य, वृद्धि —अतिसरण, भवति । वा—अथवा, अप्रवृत्ति —पुरीषस्य विबन्धो जायते ।" इति तोडर । "विश —शकृतो, वृद्धिर्जायते । अप्रवृत्तिश्च—विबन्ध पुरीषस्य, भवति ।" इति चन्द्र । २ "अत्रोदरस्थो रोगोऽप्युदरशब्देनोच्यते । उक्त च—'तात्स्थ्यात तद्धर्मताभ्या च तत्समीपतयाऽपि च । तत्साहचर्याच्छब्दाना वृत्तिरेषा चतुर्विधा ॥' इति ।" इति वाचस्पति । ३ 'वाहिस्रो' ण द. । ४ विदधाती' ण.द. । ५ 'ह स्निप' च.तो. । ६ 'स्निर्वो' तो. ।

स०–तस्य भाविनो–भविष्यतो, लक्षण क्षुन्नाशादिक स्यात्। तथा, बस्तिमन्धौ रुक्–शूलम् । तथा, लघुभोजनैरल्पभोजनैर-भोजनैरपि च बस्तिसन्धौ ततता–विस्तीर्णता, आध्माततेत्यर्थ । तथा, राजीना जन्म–सम्भवो, वलीना च नाशो जठरे स्यात्।

जठरेषु तु।
सर्वेषु तन्द्रा सदनं मलसङ्गोऽल्पवह्निता ॥ ८ ॥
दाहः श्वयथुराध्मानमन्ते सलिलसम्भवः।

स०–जठरेषु–जठराख्येषु, सर्वेषु तु रोगेषु तन्द्रा–आलस्य, तथा सदन देहस्य भवति। तथा, मलस्य सङ्ग –पुरीषस्याप्रवृत्ति । तथा, अल्पाग्निलम् । तथा, दाह श्वयथुराध्मान च । अन्ते–अवसाने, सलिलसम्भव ।

अतोयमुदर किलक्षणम्? इत्याह—

सर्वं त्वतोयमरुणमशोफं नातिभारिकम् ॥ ९ ॥
गवाक्षितं सिराजालैः सदा गुडगुडायते।
नाभिमन्त्रं च विष्टभ्य वेगं कृत्वा प्रणश्यति ॥ १० ॥
मारुतो हृत्कटीनाभिपायुवङ्क्षणवेदनाः।
सशब्दो निश्चरेद्वायुर्विड्बद्धा मूत्रमल्पकम् ॥ ११ ॥
नातिमन्दोऽनलो लौल्यं न च स्याद्विरसं मुखम्।

स०–सर्वमुदरमतोय–जलोदरतामप्राप्त, वर्णतोऽरुण, तथाऽशोफ–शोफेनानाक्रान्त, तथा नातिभारिक–नातिशयेन गुरु, तथा सिराजालै–सिरासमूहैर्जालाकृतिभि , गवाक्षित–निरन्तरमाक्रान्त, सदा–सर्वकाल, गुडगुडायते–गुडगुड ईदृशमव्यक्त शब्दमाचरति। तथा, मारुतो नाभिं विष्टभ्य–स्तब्धता नीत्वा, तथाऽन्त्र च विष्टभ्य, वेग कृत्वा–हृत्कटीनाभिपायुवङ्क्षणवेदना इत्येवरूपमात्मीय सरम्भ प्रदर्श्यानन्तर, प्रणश्यति। तथा, सशब्दो वायुरन्तर्निश्चरेत्–निर्याति। तथा विड्बद्धा, तथा मूत्रमतिशयेनाल्प स्यात् । तथा किञ्चिन्मन्दोऽग्नि, तथा लौल्य–गृद्धि, न च विरस मुख स्यात्। यत्र तदतोयसम्भव वेद्यम्। अस्माच्च विपरीतलक्षण सामर्थ्यात् सतोयम्।

तत्र वातोदरे शोफः पाणिपान्मुष्ककुक्षिषु ॥ १२ ॥
कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्वभेदनम्।
शुष्ककासोऽङ्गमर्दोऽधोगुरुता मलसङ्ग्रहः ॥ १३ ॥
श्यावारुणत्वगादित्वमकस्माद्वृद्धिह्रासवत्।
सतोदभेदमुदरं तनुकृष्णसिराततम् ॥ १४ ॥
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च।
वायुश्चात्र सरुक्शब्दो विचरेत्सर्वतोगतिः ॥ १५ ॥

स०–तत्र–तेषूदरेषु मध्ये, वातोदरे शोफ पाण्यादिषु, तथा कुक्ष्यादिषु रुक् पर्वभेदन तथा शुष्ककासादय स्यु। अकस्मात्–निमित्त विना, उदर वृद्धिह्रासयुतं स्यात्, तथा सतोदभेद, तथा तनुकृष्णसिराभिस्तत–व्याप्तम्, आहत च तदुदरमाध्मातदृतिवच्छब्द करोति। अत्र च–वातोदरे, वायु सरुक्शब्द सर्वतोगतिश्च सन् विचरेत्–भ्रमति।

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता।
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥ १६ ॥
पीतताम्रसिरानद्धं सस्वेदं सोष्म दह्यते।
धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ १७ ॥

स०–पित्तोदरे ज्वरादय स्यु । तथा, त्वगादौ पीतत्व भवति। जठर हरितवर्ण तथा पीतताम्राभि सिराभिर्नद्ध–युक्तं, सस्वेद सोष्म च स्यात्, दह्यते–तप्यते च। तथा, धूमायति। तथा, मृदु –अकठिन, स्पर्शो यस्य तदेवम्। तथा, क्षिप्रपाक स्यात्। प्रदूयते–उपतप्यते च।

श्लेष्मोदरेऽङ्गसदनं स्वापः श्वयथुगौरवम्।
निद्रोत्क्लेशारुचिश्वासकासशुक्लत्वगादिता ॥ १८ ॥
उदरं स्तिमितं श्लक्ष्णं शुक्लराजीततं महत्।
चिराभिवृद्धि कठिनं शीतस्पर्शं गुरु स्थिरम्॥१९॥

स०–श्लेष्मोदरेऽङ्गसादादय स्यु । तथोदर स्तिमितं–निश्चलम्, तथा श्लक्ष्ण–कोमलस्पर्शम्, तथा शुक्लराजीभिस्तत–व्याप्तम्, तथा बृहत्, तथा चिराभिवृद्धि कठिन च, तथा शीतस्पर्शम्, तथा गुरु, तथा स्थिर–न तु चलम्।

अधुना सन्निपातोदरं लक्षयितुमाह—

त्रिदोषकोपनैस्तैस्तैः स्त्रीदत्तैश्च रजोमलैः।
गरदूषीविषाद्यैश्च सरक्ताः सञ्चिता मलाः ॥ २० ॥

---

१ 'षु–एतदाख्येषु च सर्वेषु रो' ण द । २ 'रीषाप्र' ण थ द । ३ 'अल्पवह्नित्व' ट । ४ "अशोफ–किञ्चिच्छोफम्। सदा गुडगुडायते–सर्वकाल मेघवदव्यक्तेन शब्देन युक्त भवति। प्रणश्यति–नोपलभ्यते।" इति चन्द्रतोडरौ। "लौल्य च–अन्ने लोलुपत्व भवति।" इति तोडर । ५ 'दना' इ द । 'दन' स स । ६ 'द्बन्धो' स.मू.। 'द् बन्धा' स स । ७ 'यते–ई' ट ण थ द । ८ 'डूबन्ध' ट.। ९ 'णिपन्मु' स मू ।

१ 'तनु कृष्ण' "तनु–कृशम्" इति तोडर । २ "तनुभि –स्वल्पाभि, कृष्णाभि शिराभिश्च, तत–व्याप्तम् । आहत–हस्तादिना ताडित सत्॥ हरित्–पीतवर्णम्।" इति चन्द्र । "हरित्–नीलवर्णम्॥ स्त्रीदत्तैश्च–वशीकरणार्थं प्रयुक्तै, रजोमलै –आर्तवपाण्याद्यङ्गमलै। स्त्रीग्रहण विवेकरहितजनोपलक्षणार्थम्। गर –सयोगज विष कृत्रिम विषम्। दूषीविष–विषमेवाम्ब्वाद्यपहत यदप्रभाव वा तद्दूषीविषमुच्यते। आद्यशब्देन दुष्टाम्बुसविषमाल्यतृणासृग्लादिकादय।" इति तोडर । ३ 'तद्दृतिरि' ट । ४ 'यते' ण.द.। ५ 'पक्ष' इ.च । ६ 'त्क्लेशोऽरुचि श्वास कास शु' मा नि.। ७ 'दिता.' स.मू. । ८ 'स्निग्ध' इ ण.द.च तो स.ह, स सु । "स्निग्ध–सस्नेहम्।" इति तोडर ।

**कोष्ठं प्राप्य विकुर्वाणाः शोषमूर्च्छाभ्रमान्वितम् ।**
**कुर्युस्त्रिलिङ्गमुदरं शीघ्रपाक सुदारुणम् ॥ २१ ॥**
**बाधते तच्च सुतरां शीतवाताभ्रदर्शने ।**

स०-मला -वातादय, सरक्ता सञ्चितास्त्रिलिङ्ग-त्रिदोषलक्षण, तथा शोषादियुतं, तथा शीघ्रपाक, तथा सुदारुणमुदर कुर्यु । किम्भूतै सञ्चिता ? त्रिदोषकोपनै -सङ्कीर्णादिभोजनै, तैस्तै -सर्वरोगनिदानोक्तै, तथा स्त्रिया दत्तै रजोमलै -कार्मणापरपर्यायैर्वशीकरणै, तथा गरेण दूषीविषाद्यैश्च । आदिशब्देन विरुद्धाऽभ्यवहारादेर्ग्रहणम् । अनेनास्य हेतुविशेषकथनम् । कीदृशा दोषा ? कोष्ठ प्राप्य-आश्रित्य, विकुर्वाणा -विक्रिया याता । तच्च-जठर, सुतरा शीतवाताभ्रदर्शने बाधते । इत्यनेनास्य विशेषलक्षण कथितम् ।

प्लीहोदरादीन्यधुना लक्षयति—

**अत्याशितस्य सङ्क्षोभाद्यानयानादिचेष्टितैः ॥ २२ ॥**
**अतिव्यवायकर्माध्ववमनव्याधिकर्शनैः ।**
**वामपार्श्वाश्रितः प्लीहा च्युतः स्थानाद्विवर्द्धते ॥२३॥**
**शोणितं वा रसादिभ्यो विवृद्धं तं विवर्द्धयेत् ।**
**सोऽष्ठीलेवातिकठिनः प्राक् ततः कूर्मपृष्ठवत् ॥२४॥**
**क्रमेण वर्द्धमानश्च कुक्षावुदरमावहेत् ।**
**श्वासकासपिपासास्यवैरस्याध्मानरुग्ज्वरैः ॥ २५ ॥**
**पाण्डुत्वमूर्च्छाच्छर्दीभिर्दाहमोहैश्च संयुतम् ।**
**अरुणाभं विवर्णं वा नीलहारिद्रराजिमत् ॥ २६ ॥**

स०-अतितृप्तस्य नरस्य यानगमनादिचेष्टितैर्य सङ्क्षोभस्तस्मात्, तथाऽतिव्यवायादिभि कर्शनै प्लीहा स्थानात्-स्वाशयात्, च्युतो विवर्धते-विशेषेण वृद्धिं गच्छति । किम्भूत प्लीहा ? वामपार्श्वाश्रित । अथवा रसादिभ्यो धातुभ्य शोणित विवृद्ध-वृद्धिहेतुभिरधिक कृत्वा वृद्धिं प्राप्त, अनन्तर तं-प्लीहान स्वस्थानाच्युतमच्युत वा, विशेषेण वर्धयेत्-स्वप्रमाणादाधिक्यं जनयेत् । स -प्लीहा, अष्ठीलेवातिकठिन प्राग्भूत्वा, तत -अनन्तर, कच्छपपृष्ठाकृति क्रमेण-न सहसैव, वर्धमान -आधिक्यं गच्छन्, कुक्षौ-स्वीये स्थाने, उदर विदध्यात् । कीदृशम् ? श्वासादिभिर्दाहमोहपर्यन्तै सयुतम् । तथा, अरुणाभ-अरुणवर्णम्, अथवा विवर्णं-अनिश्चितवर्णम्, तथा नीलहारिद्रराजिमत् एवंविधा राजयो विद्यन्ते यस्मिंस्तदेवम् ।

१ "शोष -कण्ठतालुमुखशोष । तच्च-उदर, शीतवाताभ्रदर्शने सति, अथवा दर्शनै कृत्वा, सुतरा-अतिशयेन, बाधते-पीडा करोति ॥ सङ्क्षोभात्-उच्चलनात् । अतिकर्म-अतिकायादिविरुद्धचेष्टा । अतिवमन-अति प्रच्छर्दनम् ।" इति तोडर । "अष्ठीला-दीर्घो लोहमयो ग्रन्थिर्लोहकारेषु प्रसिद्ध" । इति चक्र । २ 'दर्शनै' इ ण । ३ 'द्धाशनादे' ध । ४ 'यान्त' ट ण द । ५ 'क्षणकथनम्' ण द । ६ 'अशितस्यातिस' स च । ७ 'प्राकृत' ण द । 'प्रोन्नत' स द्व । ८ 'त्वक्छर्दिमूर्च्छार्तिदाह' स मू । 'च्छार्तिछर्दिदाह' ण द । ९ 'दिक' ट. १० 'प्रापित' इति क्वचित् । ११ 'भिर्मोह' ण. थ द ।

**उदावर्तरुजानाहैर्मोहतृड्दहनज्वरैः ।**
**गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात् ॥२७॥**

स०-तत्र-प्लीहोदरे, पृथग्लक्षणलक्षितान्मलान्—वातादीन्, क्रमेणोदावर्तादिना विद्यात् । तत्रोदावर्तरुजानाहैर्वात विद्यात् । मोहतृड्दहनज्वरै पित्तं विद्यात् । गौरवारुचिकाठिन्यै कफ विद्यात् ।

अथ यकृल्लक्षयति—

**प्लीहवद्दक्षिणात्पार्श्वात् कुर्याद्यकृदपि च्युतम् ।**

स०-यथा पूर्वोक्तैर्हेतुभि प्लीहा वामपार्श्वाच्च्युतो विवर्धतेविवृद्धो भूत्वाऽनन्तरमुदरमावहेत्, तद्वद्यकृदपि दक्षिणात् पार्श्वाच्युत सद्वर्धते-वृद्ध सदुदर कुरुते । अथवा शोणित स्वहेतुतो विवृद्ध यकृद्विवर्धयेत्, तच्च विवृद्धमुदरमावहेत् । इति प्लीहोदरयकृदुदरयो सादृश्यम् ।

अथ बद्धोदर लक्षयति—

**पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे ॥ २८ ॥**
**दुर्नामभिरुदावर्तैरन्यैर्वाऽन्त्रोपलेपिभिः ।**
**वर्चःपित्तकफान् रुद्ध्वा करोति कुपितोऽनिलः ॥२९॥**
**अपानो जठरं तेन स्युर्दाहज्वरतृट्क्षवाः ।**
**कासश्वासोरुसदनं शिरोहृन्नाभिपायुरुक् ॥ ३० ॥**
**मलसङ्गोऽरुचिश्छर्दिरुदरं मूढमारुतम् ।**
**स्थिरं नीलारुणसिराराजिनद्धमराजि वा ॥ ३१ ॥**
**नाभेरुपरि च प्रायो गोपुच्छाकृति जायते ।**

स०-पक्ष्माणि च वालाश्च पक्ष्मवाला, तैरन्नेन सह भुक्तैर्बद्धायने गुदे सत्यपानो वायुर्विगुण -कुपितो, जठर करोति । बद्धमयन-द्वार पुरीषानिलवाहि, यस्य तदेवंविधे गुदे । तथा दुर्नामभिर्गुदे बद्धायने, तथोदावर्तैर्बद्धायने, तथाऽन्यैर्वाऽन्त्रोपलेपिभि -उपदेहिभिर्दध्योदनमाषोमादिभि, गुदे बद्धायने, अपानो जठर करोति । किं कृत्वा ? वर्चःपित्तकफान् रुद्ध्वा-आवृत्य, तद्बद्धोदरमुच्यते । तेन-बद्धोदरेण, दाहज्वरतृट्क्षवा स्यु । तथा, कासश्वासावूरुसदन शिरोहृन्नाभिपायुरुक् स्यात् । तथा, मलाना-मूत्रपुरीषादीना, सङ्ग -अप्रवर्तनम् । अरुचिस्तथा छर्दि स्यात् । तथोदर मूढमारुत भवेत् । मूढो-बहिरनिसरणरूपो, मारुतो यस्मिंस्तदेवम् । मूढमारुतत्वस्य सामान्यलक्षणेनैव गृहीतत्वात्पुनर्ग्रहणमतिशयार्थम् । तथा, स्थिरं-अचलम् । तथा, नीलारुणसिराराजिभिर्नद्ध-व्याप्तम्, अथवाऽराजि स्यात् ।

१ 'रुगाना' इ च स मू । २ 'त् । तथा वा शो' ण थ द । ३ "उदावर्तै -शकृन्मूत्रादीना सम्बन्धिभि ।" इति चन्द्रतोडरौ । "अन्त्र-गुदनाडी, उपलिप्यन्तीति अन्त्रोपलेपीनि तैरन्त्रोपलेपिभि, अन्नै -पिच्छिलै उपदेहिभिर्मांसातसीशाका(कशा)लुकादि[भि]श्च । क्षव -क्षुति ।" इति तोडर । ४ 'रन्नैर्वा' तो स द्व । ५ 'दक्षुधाः (त)' ण द थ । ६ 'दे बद्धायने । त' थ । ७ 'दकमा' ट. ण थ द ।

तच्चोदर प्रायो नाभेरुपरिष्टाद्गोपुच्छाकृति जायते । यथायथोर्ध्वं तथातथा सूक्ष्ममित्यर्थ । अनेनास्य सस्थानमुक्तम् ।

अधुना छिद्रोदर लक्षयति—

**अस्थ्यादिशल्यैः सान्नैश्चैर्भुक्तैरत्यशनेन वा ॥ ३२ ॥**
**भिद्यते पच्यते वाऽन्त्रं तच्छिद्रैश्च स्रवन्बहिः ।**
**आम एव गुदादेति ततोऽल्पाल्पं सविड्रस ॥३३॥**
**तुल्यः कुणपगन्धेन पिच्छिलः पीतलोहितः ।**
**शेषश्चापूर्य जठरं जठरं घोरमावहेत् ॥ ३४ ॥**
**वर्द्धयेत्तदधो नाभेराशु चैति जलात्मताम् ।**
**उद्रिक्तदोषरूपं च व्याप्तं च श्वासतृड्भ्रमैः ॥ ३५ ॥**
**छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे ।**

**स०**–अस्थितृणकण्टकपाषाणधातुशृङ्गदार्वादिशल्यै सान्नै–सहभोजनेन भुक्तै । अथवा, अत्यशनेन–अतिमात्रभोजनेन, यदाऽन्त्र भिद्यते–सच्छिद्र सम्पद्यते, अथवा पच्यते–पाक याति । तच्छिद्रैश्च–अन्त्रच्छिद्रैर्भेदोत्पन्नै , पाक्तो वा, बहिराम एव–अपरिपक्व एव, सविड्रस स्रवन्नल्पाल्पमेव गुदादेति–आयाति । तुल्य –सदृश , कुणपगन्धेन–शवगन्धेन । तथा पिच्छिल , पीतलोहितश्च वर्णेन । शेषश्च रसो–यो गुदान्नागच्छति, स जठरमापूर्य–पूरयित्वा, घोर–कष्टतर, जठराख्य व्याधिं कुर्यात् । तत्–उदर, अधो नाभेर्वर्धयेत्–वृद्धि गच्छेत् । वर्धिश्चुरादि । तथा, आशु–शीघ्रमेव जलात्मता–जलोदरत्वमेति, उद्रिक्तदोषरूप च । उद्रिक्त–अधिक, दोषाणा–वातपित्तकफाना, रूप–आकृति , यस्य तदेवम् । तथा, श्वासतृड्भ्रमैर्व्याप्तमिदमुदर छिद्रोदर प्राहुराचार्या । अपरे त्वाचार्या परिस्रावीत्याहु ।

अथोदकोदरदर्शनार्थमाह—

**प्रवृत्तस्नेहपानादेः सहसाऽऽमाम्बुपायिनः ॥ ३६ ॥**
**अत्यम्बुपानान्मन्दाग्नेः क्षीणस्यातिकृशस्य वा ।**
**रुद्ध्वाऽम्बुमार्गाननिलः कफश्च जलमूर्छितः ॥३७॥**
**वर्धयेतां तदेवाम्बु तत्स्थानादुदराश्रितौ ।**
**ततः स्यादुदरं तृष्णागुदस्रुतिरुजान्वितम् ॥ ३८ ॥**
**कासश्वासारुचियुतं नानावर्णसिरातितम् ।**
**तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु ॥ ३९ ॥**
**दकोदरं महत्स्निग्धं स्थिरमावृत्तनाभि तत् ।**

**स०**–प्रवृत्त–आरब्ध, स्नेहपानादि येन स प्रवृत्तस्नेहपानादि । आदिग्रहणाद्वमनादिक कर्म पञ्चविध गृह्यते । तस्य तथाभूतस्य सहसाऽऽमाम्बुपायिन –सहसैवापक्वपानीयपस्य, तथा मन्दाग्ने –नष्टवह्ने ,तथा क्षीणस्य–विशिष्टव्याध्याक्रान्ततया धालपचयवत , तथाऽतिकृशस्य–अनशनादिना क्षीणमेदोमासस्य, एवविधस्य पुरुषस्यात्यम्बुपानादम्बुमार्गान्–तोयवाहीनि स्रोतासि, रुद्ध्वाऽनिल कफश्च । किम्भूत ? जलमूर्छित –तोयमिश्रित । तावुभौ वातकफौ जैलमूर्च्छितावुदराश्रितौ तदेवाम्बु तत्स्थानात्–उदकस्थानात् क्लोमतो, वर्द्धयेताम् । तत –अनन्तर, उदर स्यात् । तृष्णादियुत, तथा कासादियुत, तथा नानावर्णाभि –अनेकवर्णाभि सिराभि , तत–व्याप्तम् । तोयेत्यादि । शब्दस्य प्रक्षोभ –सरम्भ शब्दप्रक्षोभ , वेपथु –कम्प , स्पर्शश्च शब्दप्रक्षोभश्च वेपथुश्च त एवम्, तोयेन पूर्णा तोयपूर्णा, सा चासौ दृतिश्च तोयपूर्णदृति ,तोयपूर्णदृतिवत् स्पर्शशब्दप्रक्षोभवेपथवो यस्मिन्नुदरे तत्तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु, दकोदर–जलोदर, स्यात् । तच्च महत्–अन्येभ्य उदरेभ्यो विस्तीर्णम्, तथा स्निग्ध, तथा स्थिर–अचलम्, आवृत्तनाभि तत्, आसमन्ताद्वृत्ता–वर्तुला, नाभिर्यस्य तदेवम् ।

अधुना जठरेऽप्यवसाने यथा जलसम्भव स्यात्तथाऽऽह—

**उपेक्षया च सर्वेषु दोषाः स्वस्थानतश्च्युताः ॥४०॥**
**पाकाद्द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि ।**
**स्वेदश्च बाह्यस्रोतःसु विहतस्तिर्यगास्थितः ॥ ४१ ॥**
**तदेवोदकमाप्याय्य पिच्छां कुर्यात्तदा भवेत् ।**
**गुरूदरं स्थिरं वृत्तमाहतं च न शब्दवत् ॥ ४२ ॥**
**मृदु व्यपेतराजीकं नाभ्या स्पृष्टं च सर्पति ।**
**तदनूदकजन्मास्मिन्कुक्षिवृद्धिस्ततोऽधिकम् ॥ ४३ ॥**
**सिरान्तर्धानमुदकजठरोक्तं च लक्षणम् ।**

**स०**–उपेक्षया–अचिकित्सनात्, सर्वेषूदरेषु दोषा –वातपित्तकफा , स्वस्थानत –आत्मीयात् स्थानात्, च्युता –स्थानान्तर गता , तथा पाकाद्धेतोस्ते दोषा द्रवा अधिकं द्रवीकुर्यु सन्धिस्रोतोमुखान्यपि । सन्धयश्च स्रोतोमुखानि च सन्धिस्रोतोमुखानि–द्वाराणि । न केवल स्वय दोषा द्रवत्व गता ,यावत्सन्धिस्रोतोमुखान्यपि द्रवीकुर्यु , इत्यपिशब्दार्थ । स्वेदश्च बाह्यस्रोत सु सवृतेषु विहतो–निरुद्ध , तिर्यगास्थित –तिर्यक् प्रवृत्तश्च, तदेवोदकं प्राक् कुक्षौ वृद्धिं गतमाप्याय्य–वृद्धिं गमयित्वा, पिच्छा कुर्यात् । तदा भवेद्गुरूदर स्थिर–अचल, वृत्त–वर्तुल, च । तथाऽऽहत च पाण्यादिना न शब्दवत्–न शब्दयुक्तम् , तथा मृदु–अकठि-

१ 'तथोद' थ । अथोद' ण द । २ 'स्नैश्च भुक्तै' ण द स स । ३ "चेत्–यदि, भुक्तै –भक्षितै ,चेदप्यर्थे । अल्पाल्प–स्तोक स्तोकम् । सविट्–शकृता सह । शेषो रस –यो गुदान्न निर्गत । छिद्रोदर–क्षतोदरम् ॥ सहसा–न चिरादेव शीघ्रमेव । रुध्वा–स्थगयित्वा ।" इति तोडर । ४ 'चान्न' इ ण द स द्व । ५ 'ल्पाल्प.' इ ण द स मू । ६ 'वर्द्धते तद' इ ण द च तो स द्व । "वर्द्धते–वृद्धि गच्छति" इति चन्द्र । "–वृद्धिमेति" इति तोडर । ७ 'ड्ज्वरै.' तो. । ८ 'यदा तु भि' ण थ द । ९ 'ल्पाल्प गु' ण थ द । १० 'स्तु' थ । ११ 'जायुत' इति कचित् । १२ 'रान्वितम्' ण । 'राचितम्' द । 'रावृतम्' तो । "आवृत–व्याप्तम्" इति तोडर ।

१ 'येनासौ प्र' ण थ द । २ 'स्य नरस्य स' ट । ३ 'जलपूरितादुदरात्तदेवाम्बु जठराश्रित तत्स्था' ण थ द । ४ 'र्णा–ध्माता, तो' थ । ५ 'द्रवात् द्र' इ च तो । ६ "कि विशिष्टात् पाकात् ? द्रवात्,–द्रवस्वभावात् । द्रवीकुर्यु –उपक्लेदयेयु ।" इति चन्द्र-तोडरौ । "पिच्छा कुर्यात्–चिक्कणभाव विदध्यात् ।" इति तोडर । ७ 'चिका' स.मू । ८ 'क द्रवा द्रवी' ट. थ. ।

नम्, तथा व्यपेता राज्यो यस्मात् तद्व्यपेतराजीक स्यात् । नाभ्या च स्पृष्ट सत् सर्पति-प्रसारि सम्पद्यते । तदनु-ततोऽनन्तरम्, अस्मिन्-उदराख्ये व्याधौ, उदकजन्म-जलसम्भव । तत-अनन्तर, अधिक कृत्वा कुक्षिवृद्धिर्भवेत् । तथा, सिरान्तर्धान-सिराणामदर्शनम् । किमेतदेव लक्षणम्? नेत्याह-उदकजठरोक्त च लक्षणम् । न केवल यदत्रैवोक्त लक्षणम्, यावज्जलोदरोक्त चेति चशब्दस्यार्थ ।

इदानीमुदराणा सुखसाध्यत्वाभावात् कृच्छ्रसाध्यासाध्यत्वे वेदयति—

**वातपित्तकफप्लीहसन्निपातोदकोदरम् ॥ ४४ ॥**
**कृच्छ्रं यथोत्तरम्**

स०-वाताद्युद्भवमुदर यथोत्तर कृच्छ्रम् । तेन वातोदरात् पित्तोदर यावदुदकोदरमत्यर्थं कृच्छ्रम्, कृच्छ्रसाध्यत्वात् ।

**पक्षात्परं प्रायोऽपरे हतः ।**

स०-पाठापेक्षया ये द्वे अपरे-बद्धक्षतोदरे, ते प्राय पक्षात्पर-अनन्तर, हतो-मारयत । प्रायोग्रहणात्-कदाचिन्नियतायुष्युत्पन्ने नैव मारयत ।

**सर्वं च जातसलिलं रिष्टोक्तोपद्रवान्वितम् ॥ ४५ ॥**

स०-किलोपेक्षया सर्वेष्वूदरेष्वन्ते सलिलसम्भव इत्युक्तम् । सर्व च जठर जातोदक यद्वातादिसमुत्थं कृच्छ्रमुक्त तदपि हन्त्येव । अत्रापि प्रायोग्रहणमनुवर्तनीयम् । कदाचिज्जातोदकमपि न मारयति, अपि तु याप्यत्येव । तथा, रिष्टोक्तोपद्रवान्वित-रिष्टाध्यायोक्तैरुपद्रवैर्युक्त "जठर हन्ति दुर्बलम् । शूनाक्ष कुटिलोपस्थ" (हृ शा अ ५।९०) इत्यादिभिश्च, तदपि हन्ति ।

**जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ।**
**बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥ ४६ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने उदरनिदानं नाम द्वादशोऽध्यायः ॥१२॥**

स०-जन्मनैव-जात्यैव स्वभावेनैव, उदर सर्वं प्राय कृच्छ्रतम मतम्, व्याधिस्वभावात् । प्रायोग्रहणात्किञ्चिदुदरं कृच्छ्रमेव भवति, न कृच्छ्रतमम् । अत एवाह-बलिन इत्यादि । बलिनो-बलवत, तदुदरमुत्थित नवं सत् अजातोदक सत्, यत्नसाध्यमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने उदरनिदानं नाम द्वादशोऽध्याय समाप्त ॥ १२ ॥



१ 'यस त' ट. । २ 'यथोक्त' ण द । ३ 'मलन्त कु' ट. । ४ 'पक्षापे' ट ण थ द । ५ 'रयेत्' ट । ६ 'नाक्षि कु' थ चन्द्र । ७ "जन्मनैव-उत्पत्तिमात्रेणैव ।" इति तोडर । ८ 'नवमजा' ट थ ।



## त्रयोदशोऽध्यायः ।

उदरनिदानादनन्तर पाण्डुशोफविसर्पनिदानमारभ्यते । यतो यथैवोदर दोषसङ्घातज तथैतेऽपि, इत्याह—

**अथातः पाण्डुरोगशोफविसर्पनिदानं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ।**
**तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम् ॥ १ ॥**
**धमनीर्दश सम्प्राप्य व्याप्नुवत्सकलां तनुम् ।**
**श्लेष्मत्वग्रक्तमांसानि प्रदूष्यान्तरमाश्रितम् ॥ २ ॥**
**त्वङ्मांसयोस्तत्कुरुते त्वचि वर्णान् पृथग्विधान् ।**
**पाण्डुहारिद्रहरितान् पाण्डुत्वं तेषु चाधिकम् ॥३॥**
**यतोऽतः पाण्डुरित्युक्तः स रोगः**

स०-यत्र मला-वातादय, पित्तप्रधाना यथोक्तै-सर्वरोगनिदानाद्युक्तै, कोपनै कुपिता-क्रुद्धा, पाण्डुरोगहेतव । कथम्? इत्याह-तत्रेत्यादि । [ तत्र-] तेषु तथाभूतेषु सत्सु, वातेन बलिना-बलवता, क्षिप्त पित्त हृदि स्थितमनन्तर तत्पित्तं धमनीर्दश-हृदि स्थिता, सम्प्राप्य-आश्रित्य, सकला तनु व्याप्नुवत्-अश्नुवानम् । सकलशब्दोपादान मूत्रपुरीषादीनामपि ग्रहणार्थम् । अत एवाख्यास्यति ( श्लो ९ )-"कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रता ।" इति । तथा श्लेष्मत्वग्रक्तमासानि प्रदूष्य । किम्भूत पित्तम्? त्वङ्मासयोरन्तर-मध्यमाश्रितम् । तत्-पित्त, त्वचि वर्णान् पृथग्विधान्-नानाप्रकारान्, पाण्डुहारिद्रहरितान् कुरुते । तेषु-वर्णेषु मध्ये, यतो-यस्मात् अतिशयेन पाण्डुत्वमधिकमत-अस्मात्, स रोग पाण्डुरित्युक्त-सञ्ज्ञित । ननु, 'पित्तप्रधाना' इति कथमुक्तम्? यावता (यतो) वायोर्बलीयस्त्वात् 'वातप्रधाना' इति वक्तु युक्त स्यात् । बलीयस्त्वं चानन्तरमेव प्रतिपादित 'तत्रानिलेन बलिना क्षिप्त' इति । असदेतत् । यतो नात्र बलीयस्त्वाबलीयस्त्वकृते प्राधान्याप्राधान्ये विवक्षिते । किन्तर्हि? पाण्डुरोगकरण प्रति कर्तृत्वाकर्तृत्वे । पित्तस्य च पाण्डुरोगकरण प्रति मुख्यं कर्तृत्वम्, अत 'पित्तप्रधाना' इति युक्तमुक्तम् । ननु, यदि त्रयो दोषा

१ "उदरे हि समुद्भूते पाण्ड्वादय उपद्रवा जायन्ते तदर्थमस्याध्यायस्यारम्भ ।" इति चन्द्र । २ 'यथोदर कृच्छ्रमेव सङ्घा' ण द । 'यथोत्तर कृच्छ्र दोषत्रयसङ्घा' थ । ३ इद पाण्डुरोगशोफविसर्पनिदान चरके सू० १८ अध्याये चि० १६।२१ अध्याययोश्च, सुश्रुते नि० १० अध्याये चि० २३ अध्याये उ० ४४ अध्याये च, अष्टाङ्गसङ्ग्रहे नि० १३ अध्याये चास्ति वर्णितम् । ४ 'कल वपु.' स मू । ५ 'हृदाश्रिता' ण द. ।

पाण्डुरोगहेतव, कथं तर्हि वक्ष्यति? (श्लो ७)–"स पञ्चधा पृथग्दोषै समस्तैर्मृत्तिकादनात्।" इति। उच्यते। सर्व पाण्डुरोगस्त्रिदोषज एव। किन्तु हेतुविशेषैर्यो रूपभेदस्तेन पञ्चात्मक शोफवत्, इति न किञ्चिदत्रायुक्तम्।

**तेन गौरवम्।**

**धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः॥ ४॥**
**ततोऽल्परक्तमेदस्को निःसारः स्याच्छ्लथेन्द्रियः।**
**मृद्यमानैरिवाङ्गैर्ना द्रवता हृदयेन च॥ ५॥**
**शूनाक्षिकूटः सदनः कोपनः ष्ठीवनोऽल्पवाक्।**
**अन्नद्विट् शिशिरद्वेषी शीर्णरोमा हतानलः॥ ६॥**
**सन्नसक्थो ज्वरी श्वासी कर्णक्ष्वेडी भ्रमी श्रमी।**

स०–तेन–पाण्डुरोगेण, धानूना–रसरुधिरादीना, गौरव शैथिल्य च स्यात्। तथा, ओजसो गुणक्षयो–माधुर्य(मन्द) शैत्यादीनामोजोगुणाना (हृ नि अ ६।१) विनाश। तत एव–ओजोगुणक्षयात्, पाण्ड्वामयी नरोऽल्परक्तमेदस्क। अल्पे रक्तमेदसी यस्य स एवम्। तथा, नि सारो–दुर्बल स्यात्। तथा श्लथेन्द्रिय। [श्लथानि–] शिथिलानि, इन्द्रियाणि–वाक्पाणिपादपायूपस्थरूपाणि, यस्य स श्लथेन्द्रिय। तथा, इन्द्रियशब्देन बुद्धीन्द्रियाणा चक्षुरादीनामधिष्ठानान्युपलक्ष्यन्ते। ननु, पित्तप्रधाना कुपिता इति पित्तवृद्धिरुक्ता। पित्तवृद्ध्या च रक्तवृद्ध्या भवितव्यम्। तत्कथमुक्तमल्परक्ततेति? अत्रोच्यते। दोषाणामन्योन्यदूषणात् दूष्यस्य च दोषैर्दूषितत्वात् प्रसादपरम्परयाऽपुष्टौ सत्या किट्टबाहुल्यात् पित्त[स्या]धिक्यम्, न रक्तस्य प्रसादात्मकस्य, इति पित्ताधिक्यमल्परक्तता चेत्युपपन्नम्। तथा, अङ्गै–अवयवै, मृद्यमानैरिवासौ नर उपलक्षित, तथा हृदयेन द्रवता च। तथा, शूनावक्षिकूटौ यस्य स एवम्। तथा, सदन–अङ्गसादवान्। तथा, कोपनादिक स्यात्।

**स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात्॥ ७॥**

स०–स–पाण्डुरोग, पञ्चधा स्यात्। कथम्? इत्याह–पृथग्दोषै सन्निपातेन मृद्भक्षणाच्च। ननु, मृत्तिकादनात् पृथग् पाण्डुरोगो न वाच्य, पृथग्वातादिदोषजे पाण्डुरोगेऽन्तर्भूतत्वात्। मृदा हि वातादिप्रकोपो विधीयते तिक्तोषणादिभिरिव। वातादिप्रकोपश्च पाण्डुरोगकृत्। तस्मात्पृथङ्मृदो न युक्तो निर्देश। अत्र ब्रूम। मृदोऽन्ये ये वातादिप्रकोपहेतव पाण्डुरोगसम्पादने सम्भावनायोग्या, ते पाण्डुरोग सम्पाद्य हेतुस्वरूपसत्तया विनिवर्तन्ते। मृत्तिका तु तीक्ष्णै सशोधनैर्विना पाण्डुरोग यावत्कायेऽवतिष्ठते। इत्ययं वातादिकोपहेतुभ्योऽन्येभ्यो मृद पाण्डुरोग प्रति विशेष। तस्मान्मृदा पृथक् पाण्डुरोगो वक्तु न्याय्य।

**प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि।**
**अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवह्निता॥ ८॥**
**सादः श्रमो**

स०–अस्य पाण्डुरोगस्य हृदयस्पन्दनादि प्राग्रूपम्।

**अनिलात्तत्र गात्ररुक्तोदकम्पनम्।**
**कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रता॥ ९॥**
**शोफानाहास्यवैरस्यविट्शोषाः पार्श्वमूर्धरुक्।**

स०–तत्र–तेषु पाण्डुरोगेषु मध्ये, वातात्पाण्डुरोगे गात्ररुगादय स्यु।

**पित्ताद्धरितपीताभसिरादित्वं ज्वरस्तमः॥ १०॥**
**तृट्स्वेदमूर्च्छाशीतेच्छा दौर्गन्ध्यं कटुवक्त्रता।**
**वर्चोभेदोऽम्लको दाहः**

स०–पित्ताद्धरितपीताभसिरादित्व(त्वादि) स्यात्।

**कफाच्छुक्लसिरादिता॥११॥**
**तन्द्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः।**
**कासश्छर्दिश्च**

स०–कफाच्छुक्लसिरादिता[दि] स्यात्।

**निचयान्मिश्रलिङ्गोऽतिदुःसहः॥१२॥**

स०–निचयात्–सन्निपातात्, मिश्रलिङ्ग पाण्डुरोग सोऽतिदु सहो–घोरतम।

**मृत्कषायाऽनिलं पित्तमूषरा मधुरा कफम्।**
**दूषयित्वा रसादींश्च रौक्ष्याद्भुक्तं विरूक्ष्य च॥ १३॥**
**स्रोतांस्यपक्वैवापूर्य कुर्याद्रुद्ध्वा च पूर्ववत्।**
**पाण्डुरोगं ततः शूननाभिपादास्यमेहनः॥ १४॥**
**पुरीषं कृमिमन्मुञ्चेद्भिन्नं सासृक्कफं नरः।**

स०–मृद्भक्षिता कषायरसा वात दूषयित्वा पाण्डुरोग कुर्यात्। ऊषरा–सक्षारमृत्तिका, पित्त दूषयित्वा पाण्डुरोग कुर्यात्। मधुरा मृत्तिका कफ दूषयित्वा पाण्डुरोग कुर्यात्। तथा, रसादींश्च धातून् दूषयित्वा रौक्ष्याच्च हेतोर्भुक्त विरूक्ष्य चेति। यत स्वभावत एव मृत्तिका रूक्षा। तस्माद्भुक्त विरूक्षयति। स्रोतांसि चापूर्य रुद्ध्वाऽपक्वैव सती पाण्डुरोग पूर्ववत्

१ 'न्तु दोषहेतु' ट। २ "गौरव–शरीरजडता। शैथिल्य–शिथिलता स्यात् सङ्घातभेदो भवेत् स्वरूपाद्धानि स्यादित्यर्थ। गुणा–मन्दादयो दश। ततो–धातुषु क्षीणेषु शिथिलेषु ओजसि क्षीणगुणे च सति, अल्परक्तत्वादिगुणो ना–पुरुष, स्यात्। इन्द्रियाणि–कर्मेन्द्रियाणि बुद्धीन्द्रियाणि च। वा–अथवा, हृदयेन–हृदा, द्रवता–क्षुब्धेन सकोपेन सता, युक्तश्च स्यात्।" इति तोडर। ३ 'रः शिथिलेन्द्रिय.' इति क्वचित्। ४ 'वा' तो। ५ 'कूटवदन.' ण द स स। ६ 'न सदनो' ण। 'न स्वेदनो' द। ७ 'सक्थी' तो। ८ 'ओज क्ष' ट ण थ द। ९ 'यस्यासौ श्ल' ण द। १० 'दीन्यधि' ट.। 'दीना स्वधि' थ.। ११ 'न्निपतितैर्मृ' थ.।

१ 'च' ण थ द। २ 'ये विद्यते' ट। ३ 'सादन्य पृ' ण द.। ४ 'त्वं हर्षो रोम्णा स्व' द। ५ 'रूक्षयति' ट थ.।

पित्तप्रधाना कुपिता इत्यादिना न्यायेन कुर्यात् । मृत्तिकायां गुरुत्वात् पाकाभाव । अथवा अशब्दोऽत्रेषदर्थे । अलोमिका एडकेति यथा । तेन किञ्चित्पक्केति गम्यते । तत -तेन पाण्डुरोगेण, शूननाभ्यादिक सैन् कृम्यादियुत पुरीष मुञ्चेत् ।

अथ प्रतिज्ञावाक्येऽनुक्तामपि कामला तुल्यहेत्वादिकत्वात् प्रदर्शयन्नाह—

**यः पाण्डुरोगी सेवेत पित्तलं तस्य कामलाम् ॥१५॥**
**कोष्ठशाखाश्रयां पित्तं दग्ध्वाऽसृङ्मांसमावहेत् ।**
**हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया ॥ १६ ॥**
**दाहाविपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः ।**

स०-यो नर पाण्डुरोगी सन् पित्तल-मरिचकाञ्जिकादिद्रव्यमत्यर्थं, सेवेत-उपयुङ्क्ते, तस्य-पाण्डुरोगिण, पित्त कर्तृ कामलामावहेत् । कीदृशीम् ? कोष्ठशाखाश्रयाम् । कोष्ठो-महास्रोत, शाखा-रक्तादयस्त्वक् च, ईति तदुभयमाश्रयो यस्यास्ताम्, किं कृत्वा ? रक्त मास च दग्ध्वा । कथम् ? हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया । तदा च पुरषो दाहादिमान् मण्डूकच्छायो दुर्बलेन्द्रियश्च स्यात् । दुर्बलानि-स्वविषयेऽप्यशक्तानि, इन्द्रियाणि यस्य स एवम् ।

किं पाण्डुरोगिण एव पित्तलान्यासेवमानस्य कामला भवेत्, उतापाण्डुरोगिणोऽपि ? इत्याह—

**भवेत्पित्तोल्बणस्यासौ पाण्डुरोगादृतेऽपि च ॥१७॥**

स०-पाण्डुरोगमन्तरेणापि पित्ताधिकस्य नरस्य पित्तलान्यासेवमानस्यासौ कोष्ठशाखाश्रया कामला स्यात्, न केवल पाण्डुरोगिण ।

**उपेक्षया च शोफाढ्या सा कृच्छ्रा कुम्भकामला ।**

स०-उपेक्षया-चिकित्सा विना, सैव-कामला, यदा शोफाढ्या-श्वयथुबहुला, स्यात्तदा कुम्भकामलेत्युच्यते । कृच्छ्रा-कृच्छ्रसाध्या ।

हलीमक लक्षयति—

**हरितश्यावपीतत्वं पाण्डुरोगे यदा भवेत् ॥ १८ ॥**

१ 'या दुष्पाकत्वा' ट । २ 'वा नञ् अत्रे' ण द । ३ 'स कृ' थ । ४ 'कामिला' स.स । ५ "किम्भूत पित्तम् ? कोष्ठशाखाश्रयम् । अथवा कोष्ठशाखाश्रयामिति पाठे किम्भूता कामलाम् ? कोष्ठशाखाश्रयामिति । एका कामला कोष्ठाश्रया द्वितीया शाखाश्रयेति । ततोऽनन्तर तया-कामलया, हारिद्रनेत्रत्वङ्नखवक्त्रशकृन्नर स्यात् । कोष्ठाश्रयाया कामलाया कालान्तरेण कृच्छ्रसाध्यत्वमाह-उपेक्षयेत्यादि । कुम्भ -कोष्ठ , अन्त सुषिरसाधर्म्यात् । तद्भूता कामला कुम्भकामला, कोष्ठाश्रयेत्यर्थ ।" इति तोडर । ६ 'श्रय' ण द तो स स । ७ 'कीदृशम् ? कोष्ठशाखाश्रयम्' ण द । ८ 'इत्येव त' ट । 'इत्युभ' ण.द. । ९ 'मेऽश' ट.ण द । १० 'शुबाहुल्या स्या' ट ।

**वातपित्ताद्भ्रमस्तृष्णा स्त्रीष्वहर्षो मृदुर्ज्वरः ।**
**तन्द्राबलानलभ्रंशो लोढरं तं हलीमकम् ॥ १९ ॥**
**अलसं चेति शंसन्ति**

स०-पाण्डुरोगे सति यदा हरितश्यावपीतता भ्रमादयश्च वातपित्तात्स्यु , अतश्च त हलीमक शसन्ति, मुनय इति शेष. । त च हलीमक, लोढर तथाऽलस चाचक्षते ।

**तेषा पूर्वमुपद्रवाः ।**
**शोफप्रधानाः कथिताः स एवातो निगद्यते ॥ २० ॥**
**इति पाण्डुरोगनिदानम् ।**

स०-तेषा-पाण्डुरोगप्रकाराणा, पूर्वमुपद्रवा यत शोफप्रधाना कथिता । अत -अस्माद्धेतो , पाण्डुरोगनिदानादनन्तरं शोफ एव भण्यते, न विसर्प । शोफ प्रधान -प्रथमो, येषा त एव कथिता । क्व ? इहैव । यथोक्तम् (श्लो ६)-"शूनाक्षिकूट" इत्यादि । तथा (श्लो १४)-"शूननाभिपादास्यमेहन" इति ।

**अथ शोफनिदानम् ।**
**पित्तरक्तकफान्वायुर्दुष्टो दुष्टान् बहिःसिराः ।**
**नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् ॥ २१ ॥**
**उत्सेधं संहतं शोफं तमाहुर्निचयादतः ।**
**सर्वं**

स०-बहिर्भूता सिरा बहि सिरा ,-बाह्या सिरा. । वायु पित्तरक्तकफान् कर्मभूतान् बहि सिरा कर्मभूतां नीत्वोत्सेधं कुर्यात् । नयतेर्द्विकर्मकत्वात् पित्तादयो बहि सिराश्च कर्म । यथा,-अजा नयति ग्राममिति । तेनायमर्थोऽवतिष्ठते-बहि सिरासु पित्तादीन्नीत्वेति । किम्भूतो वायु ? दुष्ट सन् ,-कोपनैः कुपित । किम्भूतमुत्सेधम् ? त्वक् च मास च त्वङ्मासे, ते सश्रय -आश्रयो, यस्य तम् । तैर्हीति हिशब्दोऽवधारणे । तैरेव-बहि सिरा प्राप्तै पित्तरक्तकफै , रुद्धगति । अत एव सहत-समन्तादृत निश्चलमिव सम्पन्न, उत्सेधम् । यतश्चैव वातपित्तकफै शोफ सञ्जायते, तस्मात्सर्वं शोफ निचयात्-दोषत्रयात्, आहु ।

ननु, एवं सतीद विरुध्यते "दोषै पृथग्द्वयै सर्वै" इति । अत आह—

**हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥ २२ ॥**
**दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ।**

स०-तुशब्दो विशेषार्थ । यद्यपि सर्वस्त्रिदोषज शोफस्तथाऽपि हेतुविशेषैर्यो रूपभेदस्तस्मान्नवात्मकं शोफमाहु । तथा हि-योऽय सन्निपात शोफहेतुरेष कदाचित्सम कृत्वा

१ 'स चेति लक्ष्यन्ते' ण.थ द. । २ "पूर्वं-विकृतिविज्ञानीयेऽध्याये । यथा ( हृ शा अ. ५।९१ )-'पाण्डुरोग श्वयथुमान् पीताक्षिनखदर्शनम् ।' इति ग्रन्थेन । उत्सेध-उच्छ्राय औन्नत्यम् ।" इति तोडर । ३ 'स्मात्कथिताद्धे' थ. । ४ 'ता नाडीर्नी' ट द. । ५ 'तैर्हि द्वि' ण.द. । ६ 'तमेवम्' ट. । ७ 'सम्पद्यते' ण.द. ।

कुप्यति कदाचिद्विषम कुवैकदोषद्विदोषै[1]वृद्धिस्वरूपतया । एव च हेतुविशेषैर्यो लक्षणभेदस्तस्मान्नवप्रकारत्व शोफस्य न्याय्यमेव । लक्षणभेदश्चैषा स्पष्ट एव । तथा चाभिघाताद्धेतोश्च यथावदन्यल्लक्षण विषाद्धेतोरन्यल्लक्षण तद्वत् पृथग्वा[2]तादेश्च यथा[3]वदन्यत् द्वन्द्वजे चान्यत् सन्निपातजे चान्यदिति । एव लक्षणविशेषान्नवात्मकमाहु । उपलक्षण चेदम्, चिकित्साविशेषादपि हि नवात्मक एव शोफ ।

**द्विधा वा निजमागन्तुं सर्वाङ्गैकाङ्गजं च तम् ॥२३॥**
**पृथून्न[4]तग्रथितताविशेषैश्च त्रिधा विदुः ।**

**स०**–अथवा निजागन्तुभेदेन द्विधा श्वयथुमाहु । तथा, त–शोफ, सर्वाङ्गज–सर्वशरीरज, एकाङ्गज–एकावयवज च, इति पुनर्द्विप्रकारमाहु । पृथुश्चोन्नतश्च ग्रथितश्च तेषा भाव पृथून्नतग्रथितता, तया विशेषास्तेस्त्रिधा–त्रिप्रकार, शोफ विदु । विदुरिति "विद ज्ञाने" इत्यस्मादुसादेश । पृथुत्वेन–विस्तीर्णकृतत्वेन विशेषेण, तथोन्नतत्वेन विशेषेण, तथा ग्रथित[5]स्वरुपत्वेन विशेषेणेति योज्यम् ।

**सामान्यहेतुः शोफानां दोषजाना विशेषतः ॥ २४ ॥**
**व्याधिकर्मोपवासादिक्षीणस्य भजतो द्रु[6]तम् ।**
**अतिमात्रमथा[7]न्यस्य गुर्वम्लस्निग्धशीतलम् ॥ २५ ॥**
**लवणक्षारतीक्ष्णोष्णशाकाम्बु स्वप्नजागरम् ।**
**मृद्ग्राम्यमासवल्लूरमजीर्णश्रममैथुनम् ॥ २६ ॥**
**पदातेर्मार्गगमनं यानेन क्षोभिणाऽपि वा ।**
**श्वासकासातिसारार्शोजठरप्रदरज्वराः ॥ २७ ॥**
**विषूच्यलसकच्छर्दिगर्भवीसर्पपाण्डवः ।**
**अन्ये च मिथ्योपक्रान्तास्तै[8]र्दोषा वक्षसि स्थिताः ॥ २८**
**ऊर्ध्वं शोफमधो बस्तौ मध्ये कुर्वन्ति मध्यगाः ।**
**सर्वाङ्गगाः सर्वगतं प्रत्यङ्गेषु त[9]दाश्रयाः ॥ २९ ॥**

**स०**–वक्ष्यमाणो गुर्वम्लस्निग्धादिको वर्ग [ शोफाना– ] श्वयथूना निजानामागन्तूना च, सामान्यहेतु –उत्पत्तौ कारणम् । दोषजाना श्वयथूना पुनरतिशयेन हेतु , न तथाऽऽगन्तूनाम्, इति विशेषशब्देन द्योतयति । व्याधिकर्मोपवासादिभि क्षीणस्य, व्याधिना–ज्वरादिना क्षीणस्य, तथा कर्मणा–पञ्चविधेन वमनविरेचननिरूहानुवासननस्याख्येन, तथोपवासेन, आदिग्रहणादन्येन च मार्गादिना क्षीणस्य, द्रुत कृत्वा–सहसैव, गुर्वादिकं भजत । अथेति समुच्चये । व्याध्यादिक्षी[1]णलक्षणेभ्य सकाशादन्यस्य स्वस्थादेरप्यतिमात्र–मात्रामतिक्रम्य, भजतो दोषा वक्षसि स्थि[2]ता ऊर्ध्व शोफ कुर्वन्ति, प्रकृतत्वाद्वक्षस ऊर्ध्वम् । बस्तौ स्थिता अध शोफ कुर्वन्ति । मध्ये स्थिता दोषा मध्ये शोफ कुर्वन्ति । ग्राम्याणा–चटककुक्कुटादीना, मास ग्राम्यमासम् । वल्लूर–शुष्कमासम् । स्वप्नोऽत्राह स्वप्नो जागरश्च रात्रिजागरो बोध्य । यानेन–तुरगादिना, क्षोभिणा–शरीरसरम्भजनकेन । तथा, श्वासादय पाण्डुपर्यन्ता रोगा प्राधान्येन । तथा, अन्येऽपि–श्वासकासादिव्यतिरिक्ता रोगा , मिथ्योपक्रान्ता –मिथ्योपचरिता अयथाशास्त्रमुपक्रान्ता , शोफहेतव । तैरपि दोषा वक्षसि स्थिता ऊर्ध्व शोफ कुर्वन्ति । बस्तौ स्थिता अधो, मध्यगा मध्ये, सर्वाङ्गगा सर्वगत, प्रत्यङ्गेषु तदाश्रया , दोषा [3]शोफ कुर्वन्ति ।

**तत्पूर्वरूपं दवथु· सिरायामोऽङ्गगौरवम् ।**

**स०**–तस्य–श्वयथो , पूर्वरूप तत्पूर्वरूपम् । दवथु –चक्षुरादिषु यस्तीव्र ऊ[4]ष्मा स भण्यते । यदुक्तम्–"दवथुश्चक्षुरादिभ्यस्तीव्र[5]मूष्मप्रवर्तनम् ।" इति । तथा, सिरायामो–यत्र प्रदेशे श्वयथुरुद्बुभूषुस्तत्र सिराणा दैर्ध्यमिव । तथा, अङ्गगौरव स्यात् ।

**वाताच्छोफश्च[6]लो रूक्षः खररोमाऽरुणासितः ॥३०॥**
**सङ्कोचस्पन्दहर्षार्तितोदभेदप्रसुप्तिमान् ।**
**क्षिप्रोत्थानशमः शीघ्रमुन्नमेत्पीडितस्त[6]नुः ॥ ३१ ॥**
**स्निग्धोष्णमर्दनैः शाम्येद्रात्रावल्पो दिवा महान् ।**
**त्वक् च सर्षपलिप्तेव तस्मिंश्चिमिचिमायते ॥ ३२ ॥**

**स०**–वा[7]ताच्छोफश्चलादिलक्षण ।

**पीतरक्तासिताभासः पित्तादाताम्ररोम[8]कृत् ।**
**शीघ्रानुसारप्रशमो मध्ये प्राग्जायते त[9]नुः ॥ ३३ ॥**
**सतृड्दाहज्वरस्वेददक्लेदमदभ्रमः ।**
**शीताभिलाषी विड्भेदी [6]गन्धी स्पर्शासहो मृदुः ३४**

**स०**–पित्ताच्छोफ पीतरक्तासिताभासादिलक्षण । स च मध्ये–मध्यप्रदेशे, प्राक्–पूर्व, जायते । प्राग्ग्रहण पश्चात्सकलेऽपि देहदे[10]शे स्यादिति द्योतयति ।

---

1 'षत्रिदोषस्व' ट । 'षस्व' ण द । 2 'वातजश्च' ट द । 'वातजैश्च' थ । 3 'था ह्यन्य' ण द । 4 "उन्नत –वल्मीकवत् समुच्छ्रायी । विशेषा –भेदा ॥ अजीर्णे सति अध्वादिना जाते श्रमे च सति मैथुनम् । इत्युक्तनिदानस्य सम्प्राप्तिपूवक प्रयोजनमाह–तैर्दोषा इत्यादि । तै –हेतुभिर्व्याधिकर्मोपवासादिभि , दुष्टा इत्यनुवर्तते । तदाश्रया –प्रत्यङ्गाश्रया ।" इति तोडर । 5 'तत्वेन ग्रथितविशेषेण स्वरूपत्वेनेति' ट । 'तसद्रूपेण वि' थ । 6 **'द्रवम्'** तो । "द्रव–जलप्राय भोजनम्" इति तोडर । 7 **'थान्न च'** इति कश्चित् । 8 **'पाण्डुता'** इ ण,द. । 9 'त्पत्तिका' थ. ।

1 'क्षीणेभ्य ' ण द । 2 'ता सक्लेदा सन्त ऊ' ट । 'ता सक्लेदा अन्त शोफमूर्ध्वं कु' ण.द । 3 'शोफान्' ण द । 4 'ष्मा भासते । तथा, सि' ण द । 'ण्यते । तथा' थ । 5 'व्र ऊष्मा प्रवर्तते' तो वाच । 6 "चल –अनियतरूप । तनु –तनुत्वक् ॥ गन्धी–गन्धयुक्त ।" इति तोडर । 7 'वातोल्बणशोफश्चलादिलक्षणयुक्त ।' ट. । 'वातेनोत्थो शोफ' ण द । 8 **'रोमवान्'** स.मू. । 9 **'तनो.'** स स. । 10 'देहे स्या' ण.द ।

**कण्डूमान् पाण्डुरोमत्वक्कठिनः शीतलो गुरुः ।**
**स्निग्धः श्लक्ष्णः स्थिरः स्त्यानो निद्राच्छर्द्यग्निसाद कृत् ॥ ३५ ॥**
**आक्रान्तो नोन्नमेत्कृच्छ्रशमजन्मा निशाबलः ।**
**स्रवेन्नासृक् चिरात्पिच्छां कुशशस्त्रादिविक्षतः॥३६॥**
**स्पर्शोष्णकाङ्क्षी च कफात्**

स०—कफाच्छोफः कण्डूयुतादिलक्षणः स्यात् । तथा, आक्रान्तः—पीडितः सन्, वातिक इव नोन्नमेत् । तथा, कृच्छ्रे शमजन्मनी यस्य स एवम् । तथा, निशाबलो—रात्रावधिक इत्यर्थः । तथा, कुशशस्त्रादिभिर्विक्षतः स शोफो न रक्तं स्रवेत् । किन्तर्हि? चिरेण पिच्छां—लसीकापरपर्यायां, स्रवेत् । तथा, स्पर्शाभिलाषी उष्णाभिलाषी च स्यात् ।

**यथास्वं द्वन्द्वजास्त्रयः ।**
**सङ्कराद्धेतुलिङ्गानाम्**

स०—हेतवश्च लिङ्गानि च, तेषां सङ्करात्—सङ्कीर्णत्वेन, यथास्वं द्वन्द्वजास्त्रयः शोफाः, स्युरिति शेषः ।

**निचयान्निचयात्मकः ॥ ३७ ॥**

स०—निचयात्मको—दोषत्रयजः शोफो, निचयात्—हेतुलिङ्गनिचयात्, स्यात् ।

**अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः ।**
**हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः ॥ ३८ ॥**
**रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ।**
**भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥३९॥**

स०—तथा, शस्त्रादिच्छेदभेदक्षतादिभिर्यः शोफः सोऽभिघातेन, वेद्य इति शेषः । तथा, हिमेनानिलेन तथोदध्यनिलेन—सागरजेन वायुना, तथा रसैः शूकैश्च भल्लातकपिकच्छुजैः संस्पर्शाच्छ्वयथुर्विसर्पवान् भवेत् । स च भृशोष्मा लोहिताभासश्च बाहुल्येन च पित्तलक्षणः स्यात् । पित्तशोफस्य लक्षणं पित्तशोफलक्षणम्, पित्तशोफलक्षणमिव लक्षणं यस्य स पित्तलक्षणः । सप्तम्युपमानपूर्वस्येति बहुव्रीहिरुत्तरपदलोपश्च ।

**विषजः सविषप्राणिपरिसर्पणमूत्रणात् ।**
**दंष्ट्रादन्तनखापातादविषप्राणिनामपि ॥ ४० ॥**
**विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करात् ।**
**विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ ४१ ॥**
**मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ।**

स०—विषजः शोफः सविषाणां प्राणिनामङ्गे परिसर्पणात्—गमनात्, तथा तेषामेव मूत्रणात् । तथा, दंष्ट्रादन्तनखानामापातात् अविषप्राणिनामपि शोफः स्यात् । अपिशब्दान्न केवलं सविषप्राणिनाम् । तथा, विण्मूत्रशुक्ररुपहतं—तैःस्पर्शाद्दूषितमप्रशस्तम् । विण्मूत्रशुक्रोपहतं च तन्मलवच्च विण्मूत्रशुक्रोपहतमलवत्, तथाविधं च तद्वस्त्रं च, तस्य सङ्करः—सस्पर्शः, तस्मादपि शोफः स्यात् । तथा विषवृक्षाणामनिलस्तस्य सस्पर्शात्, गरयोगस्यावचूर्णनं—अवध्वमनं, तस्माच्च मृद्वादिगुणयुक्तः श्वयथुः स्यात् ।

**नवोऽनुपद्रवः शोफः साध्योऽसाध्यः पुरेरितः ॥४२॥**

**इति शोफनिदानम् ।**

स०—नवः—अचिरोत्पन्नः, तथाऽनुपद्रवः—उपद्रवरहितः, शोफः साध्यः । असाध्यः पुरा—विकृतिविज्ञानीये, ईरितः—अभिहितः । यथोक्तम्(हृ शा अ ५।१२)—'अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् । नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ॥'' इति ।

श्वयथुवद्दोषैर्दूष्यैश्च यतो विसर्पो भवति, अतस्तन्निदानं प्रक्रम्यते—

**अथ विसर्पनिदानम् ।**

**स्याद्विसर्पोऽभिघातान्तैर्दोषैर्दूष्यैश्च शोफवत् ।**

स०—विसर्पः सर्व एव शोफवत् । दोषैः—पृथग्वातपित्तकफैर्द्वयैः समस्तैस्तथाऽभिघातात्, एवमभिघातान्तैर्दोषैः शोफवद्विसर्पसम्भवः । दूष्यैरपि शोफवत् । एवं "पित्तरक्तकफान् वायुः" (श्लो २१) इत्यादिरपि ग्रन्थोऽत्र योज्यः ।

**त्र्यधिष्ठानं च तं प्राहुर्बाह्यान्तरुभयाश्रयात् ॥ ४३ ॥**
**यथोत्तरं च दुःसाध्याः**

स०—तं च—विसर्पं, त्र्यधिष्ठानं प्राहुः, आत्रेयादय इति शेषः । [कस्मात्?] बाह्यान्तरुभयाश्रयात्—पूर्वार्जितकर्मवशात् कदाचिद्बाह्याश्रयो विसर्पो जायते, बाह्य आश्रयो यस्य स तथा, एवं कदाचिदन्तराश्रयः, कदाचिदुभयाश्रयः, [तस्मात्] । ते च बाह्यान्तरुभयाश्रया विसर्पा यथोत्तरं दुःसाध्याः । दुःखेन साध्यन्त इति दुःसाध्याः ।

**तत्र दोषा यथायथम् ।**
**प्रकोपणैः प्रकुपिता विशेषेण विदाहिभिः ॥ ४४ ॥**
**देहे शीघ्रं विसर्पन्ति तेऽन्तरन्तःस्थिता बहिः ।**
**बहिःस्था द्वितये द्विस्थाः**

स०—तस्मिन् विसर्पे यथायथं प्रकोपणैः—तिक्तोषणादिभिः,

१ 'च्छेण श' ट । २ ''आदिशब्देन काष्ठलोष्टपाषाणादयः । छेदो—द्विधाकरणमङ्गस्य, भेदो—विदारणम्, क्षतं—व्रणं, आदिशब्देन पीडनस्पर्शनप्रहारबन्धनकण्टकादीनि । भल्लातजैः रसैः—पुष्परसैः । कपिकच्छुः—आत्मगुप्ता शूकशिम्बिः, तस्याः शूकैः—किशारुकैः ॥ आपातः—निपातनम् । अविषप्राणिनां—मनुष्यादीनाम् । अपिशब्दात् सविषप्राणिनामपि । सङ्करः—ससर्गः ।'' इति तोडरः । ३ 'हिमानलो' तो । ''हिमेन—तुषारेण, अनलेन—अग्निना ।'' इति तोडरः । ४ 'तथा हिमो वाऽ(मं चा)निलश्चोदध्यनिलश्च, तैर्हिमेना' थ । ५ 'न च तं' थ द । ६-७ 'स्रावात्' 'स्रधारणात्' ण.द. ।

१ ''अवलम्बी—अधोगमनशीलः । शीघ्रो—व्यापादनशीलः, अथवा शीघ्रः—शीघ्रोत्पत्तिः ।'' इति तोडरः । २ 'तत्तत्स्प' ण । 'तस्य स्प' थ. । ३ 'तान्तोत्पन्नैर्दो' ण । ४ 'पूर्वजातः' थ. । ५ 'तेन बा' ण द. । ६ 'पणोत्पन्नैः' ण.थ द ।

प्रकुपिता विशेषेण पुनर्विदाहिभिरत्यर्थं कृत्वा प्रकुपिता देहे शीघ्र-आश्वेव, विसर्पन्ति । तेऽन्तःस्थिता अन्तर्विसर्पन्ति । बहिःस्था दोषा बहिर्विसर्पन्ति । द्वितयेऽन्तर्बहीरूपे, द्विस्था–उभयस्था सन्तो, विसर्पन्ति ।

**विद्यात्तत्रान्तराश्रयम् ॥ ४५ ॥**
**मर्मोपतापात्सम्मोहादयनानां विघट्टनात् ।**
**तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात् ॥ ४६ ॥**
**आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात् ।**

स०–तत्र–तेषु त्रिषु विसर्पेषु मध्ये, अन्तराश्रयं विसर्पं मर्मोपतापादिभिर्विद्यात् । मर्मणा–हृदयादीनां, उपतापो–दुःखं, तस्मात् । तथा, सम्मोहात्–मूर्च्छोद्भवात् । अयनानां–कर्णनासादीनां, विघट्टनात्–विशेषेणं चलनादतिशयेन परिस्फुरणादित्यर्थः । तथा, तृष्णाया अतियोगात् । तथा वेगानां–नानारूपाणां वेदनानां, विषमं कृत्वा–विच्छिद्य विच्छिद्य कृत्वा, प्रवर्तनात् । आशु च–शीघ्रमेव, अग्निबलयोर्भ्रंशात्–विनाशात् । अतो [ विपर्ययात्–पूर्वोक्तान्तविसर्प ] लक्षणविपर्ययात्, बाह्य–बाह्याश्रयं, विसर्पं विद्यात् ।

**तत्र वातात्परीसर्पो वातज्वरसमव्यथः ॥ ४७ ॥**
**शोफस्फुरणनिस्तोदभेदायामार्तिहर्षवान् ।**

स०–[तत्र–] तेषु विसर्पेषु मध्ये, वाताद्यो विसर्पः स वातज्वरतुल्यव्यथः स्यात् शोफादियुतश्च ।

**पित्ताद्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ॥ ४८ ॥**

स०–पित्ताद्विसर्पो द्रुतगतिः–शीघ्रव्यापी, तथा पित्तज्वरलिङ्गोऽतिलोहितश्च स्यात् । पित्तज्वरलिङ्गानीव लिङ्गानि यस्य, इति सप्तम्युपमानपूर्वस्येत्यादिना बहुव्रीहिरुत्तरपदलोपश्च ।

**कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ।**

स०–कफाद्विसर्पः कण्डूमान् स्निग्धः कफज्वरतुल्यरुक् च । वातादिज्वरलक्षणं यथोक्तम् ( हृ नि अ २।११ )–"वैषम्यं तत्रतत्राङ्गे तास्ता स्युर्वेदनाश्चला ।" इत्यादि ।

**स्वदोषलिङ्गैश्चीयन्ते सर्वे स्फोटैरुपेक्षिताः ॥ ४९ ॥**
**ते पक्वभिन्नाः स्वं स्वं च बिभ्रति व्रणलक्षणम् ।**

स०–सर्वे च विसर्पा उपेक्षिताः–उपक्रमरहिताः, स्फोटैश्चीयन्ते–व्याप्यन्ते । किम्भूतैः ? स्वदोषलिङ्गैः–यथायथं स्वदोषलक्षणैः । ते च पक्वभिन्नाः स्वंस्वं–आत्मीयमात्मीयं दोष(षज), व्रणलक्षणं बिभ्रति–धारयन्ति । पूर्वं पक्वाः पश्चाद्भिन्नाः पक्वभिन्नाः, "पूर्वकाल" इत्यादिना समासः । "तत्र मारुतात् । श्यावः कृष्णोऽरुणः" (हृ उ. अ २५।५) इत्यादिग्रन्थनिर्दिष्टं व्रणलक्षणम् । "पित्तेन क्षिप्रज" इत्यादिग्रन्थनिर्दिष्टम् । एवं कफादिलक्षणमपि बोध्यम् ।

अधुना द्वन्द्वजं लक्षयति—

**वातपित्ताज्ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः ॥ ५० ॥**
**अस्थिभेदाग्निसदनतमकारोचकैर्युतः ।**
**करोति सर्वमङ्गं च दीप्ताङ्गारावकीर्णवत् ॥ ५१ ॥**
**यं यं देशं विसर्पश्च विसर्पति भवेत्स सः ।**
**शान्ताङ्गारासितो नीलो रक्तो वाऽऽशु च चीयते ५२**
**अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद् द्रुतं च सः ।**
**मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ॥ ५३ ॥**
**व्यथेताङ्गं हरेत्संज्ञां निद्रां च श्वासमीरयेत् ।**
**हिध्मां च स गतोऽवस्थामीदृशीं लभते न ना ॥५४॥**
**क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु ।**
**चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम् ॥ ५५ ॥**
**दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ।**

स०–वातपित्ताद्विसर्पो ज्वरादिभिर्युतः सकलमङ्गं च दीप्ताङ्गारावकीर्णवत्–ज्वलिताङ्गारव्याप्तसदृशं करोति । यं यं च शरीरदेशं विसर्पो विसर्पति–प्रसरति, स स प्रदेशः शान्तागारवदसितो नीलो रक्तो वा भवेत् । तथा, सः–विसर्पो, द्रागेवाग्निदग्ध इव स्फोटैश्चीयते–व्याप्यते । स च विसर्पः शीघ्रगत्वात्–तत्स्वभाववशात्, मर्मानुसारी द्रुतं–त्वरितं कृत्वा, स्यात् । तत एव च वातोऽतिबलो–बलीयान्, अङ्गं–शरीरं, व्यथेत–पीडयेत् । संज्ञा–संविदं, हरेत्–नाशयेत्, निद्रां च हरेत् । श्वासमीरयेत्–कुर्यात्, तथा हिध्मां च । सः–विसर्पी, ना–पुरुषः, ईदृशीमवस्थां गतः–प्राप्तः, चेतोनवस्थालक्षणया–अरत्या, ग्रस्तः–अभिभूतो, न क्वचिद्भूमिशय्यासनादिषु शर्म–सुखं, लभते । अरतिग्रस्त इति हेतौ प्रथमा, अरतिग्रस्तत्वादित्यर्थः । एवं क्वचिदपि सुखालाभाद्भूम्यादिषु चेष्टमानः–परिलुठन्, ततः क्लिष्टो–मनसा कायेन च, मनोदेहश्रमोद्भवां–तदुत्थां, निद्रामश्नुते । किम्भूतः ? दुष्प्रबोधः,–दुःखेन प्रबोधो–निद्रापगमो, यस्य स एवम् । एष चाग्न्याख्यो विसर्प उच्यते ।

**कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम् ॥५६॥**
**रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नावमांसगम् ।**
**दूषयित्वा च दीर्घाणुवृत्तस्थूलखरात्मनाम् ॥ ५७ ॥**

१ 'त्वा कु' ण द । २ 'पघातात्' तो । ३ "सम्मोहात्–अज्ञानात् । मलानां (वेगानां)–मूत्रपुरीषादीनाम्, विषमात्–असम्यक्, प्रवर्तनात्–बहिर्निर्गमात् । अतः–पूर्वोक्तात्, विपर्ययात्–अन्तर्विसर्पलिङ्गाद्विपरीतभावेन ।" इति तोडर । ४ 'विषमाच्च' तो. । ५ 'च्छोपद्रवा' ण थ द । ६ 'ण तद्वल' थ । ७ 'यदोषव्रण' ण द । 'स्वमात्मीयदोषव्रण' थ ।

१ "ततः–क्रमाच्छनैः शनैः । अथवा दुष्प्रबोधोऽश्नुते निद्रामिति निद्रा–मरणरूपां प्राप्नोतीत्यर्थः ।" इति तोडर । २ 'न स्वतः' वाच । "स्वतः–आत्मनैव" इति वाचस्पति । ३ 'स्नानल' ण.द.तो ।

**ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् ।**
**श्वासकासातिसारास्यशोषहिध्मावमिभ्रमैः ॥ ५८ ॥**
**मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम् ।**
**इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ॥ ५९ ॥**

स०—कफेन पवनो रुद्धस्तमेव—कफ, बहुधा भित्वा ग्रन्थीना माला कुरुते । रक्त च वृद्धरक्तस्य नरस्य दूषयित्वा ग्रन्थीना माला कुरुते । किम्भूत रक्तम्? त्वक्सिरास्नावमासगम् । किम्भूताना ग्रन्थीनाम्? दीर्घाणुवृत्तस्थूलखरस्वभावाना तथा रक्तवर्णानाम् । किम्भूताम्, मालाम्? तीव्ररुग्ज्वराम् । तीव्रौ रुग्ज्वरौ यस्यास्ताम् तथा श्वासादिभिर्युताम् । इत्ययं—अनन्तरोक्तो, ग्रन्थिवीसर्प उच्यते । कफवातकोपजश्चाय वेद्य ।

**कफपित्ताज्ज्वरः स्तम्भो निद्रातन्द्राशिरोरुजः ।**
**अङ्गावसादविक्षेपप्रलापारोचकभ्रमाः ॥ ६० ॥**
**मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ।**
**आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ ६१ ॥**
**प्रायेणामाशये गृह्णन्नेकदेशं न चातिरुक् ।**
**पिटकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥ ६२ ॥**
**मेचकाभोऽसितः स्निग्धो मलिनः शोफवान् गुरुः ।**
**गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ६३**
**पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणः ।**
**शवगन्धिश्च वीसर्पं कर्दमाख्यमुशन्ति तम् ॥ ६४ ॥**

स०—कफपित्तात् कर्दमाख्यो जायते । तत्र ज्वरादय स्यु । स च—विसर्प, प्रायेण—बाहुल्येन, आमाशये—नाभिस्तनान्तरमध्ये, एकदेश गृह्णन्—आक्रामन्, अनैन्तर देहं सर्पति—व्याप्नोति । न चातिरुक् स्यात् । तथा, पिटकैरवकीर्णो—व्याप्त, स्यात् । किम्भूतै? अतिपीतलोहितपाण्डुरै । तथा, मेचकाभादिक स्यात् । मेचको—मयूरकण्ठसदृशो वर्ण । त—तादृशं, विसर्प कर्दमाख्य—कर्दमसज्ञ, उशन्ति, मुनय इति शेष ।

**सर्वजो लक्षणैः सर्वैः सर्वधात्वतिसर्पणः ।**

स०—सर्वैस्त्रिभिर्दोषैर्जात सर्वज—सन्निपातोद्भवो, वीसर्प सर्वैर्लक्षणैरुपलक्षित । स च सर्वान् धातूनतिशयेन सर्पति सर्वधात्वतिसर्पण स्यात् ।

**बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पित्तमीरयन् ॥ ६५ ॥**
**विसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम् ।**
**स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितम् ६६**

स०—मारुतो—वात, क्षताद्बाह्यकारणात् क्रुद्ध सन् विसर्प कुर्यात् । किं कुर्वन्? पित्त सह रक्तेन प्रेरयन् । तथा, स्फोटै—पिटकै, चित—व्याप्तम् । किम्भूतै? कुलत्थसदृशै । तथा, शोफादिभिराढ्य—अतिशयेन युतम् । तथा, श्यावलोहित—वर्णेन ।

**पृथग्दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः ।**
**असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रान्तमर्मकाः ॥६७॥**
**शीर्णस्नायुसिरामांसाः प्रक्लिन्नाः शवगन्धयः॥६७½॥**

**इति विसर्पनिदानम् ।**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने पाण्डुरोगशोफविसर्पनिदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥**

स०—पृथग्दोषै—वातपित्तकफै केवलै, त्रयो विसर्पा साधयितु शक्या । द्वन्द्वजाश्चानुपद्रवा—कासवैवर्ण्यज्वरादिभिरुपद्रवै (हृ शा. अ ५।९७) रहिता, त्रय साध्या । क्षतसर्वोत्थौ द्वौ विसर्पावसाध्यौ, तथास्वभावत्वात् । सर्वे विसर्पाश्चाक्रान्तमर्मका—अभिभूतमर्मकाश्च, असाध्या । तथा, शीर्णानि स्नायुसिरामासानि यैस्तेऽप्यसाध्या । तथा, प्रकर्षेण—अतिशयेन क्लिन्ना, तथा शवगन्धय—कुणपगन्धतुल्या, ये तेऽप्यसाध्या । शवस्येव गन्धो येषामिति "उपमानाच्च" इति गन्धस्येदादेश ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने पाण्डुरोगशोफविसर्पनिदान नाम त्रयोदशोऽध्याय समाप्त ॥१३॥



१ "आमोपवेशन—आमस्य वर्चसस्त्यजनम् । लेप—स्रोतसा श्लेष्मादिना लेप इव लेप । एकदेश—अवयव विसर्पति, कफपित्तयोरामाशयस्थानत्वात् प्रायेणामाशये भवेन्नैकदेशव्यापी भवतीत्यर्थः । तथा न चातिरुक्—अतिव्यथको न भवति । मेचकाभो—नीलकृष्णकपिलवर्ण । असितस्निग्ध—कृष्णस्निग्धप्राय । मलिनो—ध्यामल मलदिग्ध । गुरु—भारिक । गम्भीरपाक—अन्तर्निगूढपाक अन्त पाक । स्पृष्टो—हस्तादिनाऽऽक्रान्तो, अवदीर्यते—भेद याति । क्लिन्न सन्—आर्द्र सन् ।" इति तोडर । २ 'सितास्न' इ. तो । ३ 'र स' ट. । ४ 'रचन्द्रकस' ण.द. ।

१ "सर्वधात्वभिसर्पण—सर्वधातुव्यापी । बाह्यहेतो—बाह्यनिमित्तात् शस्त्रादिभि कृतात्, क्षतात्—व्रणात् ॥ प्रक्लिन्ना—प्रकर्षेण क्लिन्ना पूतिदुर्गन्धा. ।" इति तोडर । २ 'स्त्वभिस' इ.तो.स द. । ३ 'द्वाह्यात्का' ट.थ. । ४ 'भावात्' ट.ण. ।




विसर्पनिदानादनन्तरं तुल्यहेतु[1]त्वादितवात्कुष्ठनिदानमारभ्यते—

**अथातः कुष्ठश्वित्रकृमिनिदानं[2] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥२॥ )

**मिथ्या[3]हारविहारेण विशेषेण विरोधिना ।**
**साधुनिन्दावधान्यस्वहरणा[3]द्यैश्च सेवितैः ॥ १ ॥**
**पाप्मभिः कर्मभिः सद्यः प्राक्तनैर्वेरिता मलाः ।**
**सिराः प्रपद्य तिर्यग्गास्त्वग्लसीकासृगामिषम् ॥ २ ॥**
**दूषयन्ति श्लथीकृत्य निश्चरन्तस्ततो बहिः ।**
**त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तत् ॥३॥**

स०—मिथ्याहारादिना तथा साधुनिन्दावधादिभिः पाप्मभिः कर्मभिः सद्यः सेवितैः—अनुष्ठितैः, प्राक्तनैर्वा—अन्यजन्माचरितैः । सेवितग्रहणेन सातत्यानुष्ठानं द्योतयति । तेन कदाचित्करण[6]त्वमेषां न कुष्ठहेतुरिति गम्यते । तैस्तथाभूतैः कर्मभिर्मिथ्याहारादिना च ईरिताः—दुष्टाः, मलाः—वातपित्तकफाः, शिरास्तिर्यग्गामिनीः प्रपद्य—आश्रित्य, त्वग्लसीकासृगामिषं दूषयन्ति । तदेव च त्वगादिकं शिथिलीकृत्य ततः—अनन्तरं, बहिर्निश्चरन्तो—बाह्यदेशे प्रसरन्तः, त्वचो [ यत् ] वैवर्ण्यं कुर्वन्ति तत्कुष्ठमुशन्ति, मुनय इति शेषः ।

कुतोऽस्य रोगस्य कुष्ठमिति सञ्ज्ञा ? इत्याह—

**कालेनोपेक्षितं यस्मात्सर्वं कुष्णाति तद्वपुः ।**
**प्रपद्य धातून्व्याप्यान्तः सर्वान् संक्लेद्य चावहेत्॥४॥**
**सस्वेदक्लेदसङ्कोथान् कृमीन् सूक्ष्मान् सुदारुणान् ।**
**लोमत्वक्स्नायुधमनीतरुणास्थीनि यैः क्रमात् ॥ ५ ॥**
**भक्षयेच्छ्वित्रमस्माच्च कुष्ठबाह्यमुदाहृतम् ।**

स०—यस्माद्धेतोरुपेक्षितं—अनुपक्रान्तं सत्, कालेन सर्वं वपुः—शरीरं, कुष्णाति तस्मात्तत् कुष्ठमित्युच्यते । तच्च कुष्ठं धातून् सर्वान् प्रपद्य—प्राप्य, अनन्तरमन्तर्व्याप्य—प्रकृतत्वात्तेषामेवान्तरं व्याप्य, तथा सर्वांस्तानेव धातून् सक्लेद्य—क्लेदयित्वा, कृमीनावहेत्—कुर्यात् । किम्भूतान् ? स्वेदादिभिर्युतान् । तथा, सूक्ष्मान् । तथा, सुदारुणान्—दुश्चिकित्स्यान् । यैः—कृमिभिः, तत्कुष्ठं लोमादीन् भक्षयेत् । श्वित्रस्येदृग्रूपता न विद्यते या कुष्ठस्योक्ता । अस्माच्च कारणाच्छ्वित्रं कुष्ठबाह्यमुदाहृतम्, कुष्ठाद्बाह्यं त्वग्गतमात्रमेवोक्तमित्यर्थः ।

**कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ॥ ६ ॥**

स०—कुष्ठानि सप्तधा—सप्तप्रकाराणि । कथम् ? इत्याह—पृथक्—वातपित्तकफैः । [3]तैरेव च मिश्रैः—वातपित्ताभ्यां वातकफाभ्यां पित्तकफाभ्याम् । तैरेव दोषैः समागतैः—सन्निपतितैः ।

ननु, एवं सत्येकदोषजं द्विदोषजं कुष्ठम्, न सर्वं त्रिदोषजं स्यात्, इत्याशङ्क्याह—

**सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ।**

स०—सर्वेष्वपि कुष्ठेषु त्रिदोषेषु—सन्निपातजेष्वपि, अधिकत्वेन व्यपदेशः । सन्निपातस्य समविषमात्मकत्वात् ।

अत आह—

**वातेन कुष्ठं कापालं, पित्तादौदुम्बरं,कफात् ॥ ७ ॥**
**मण्डलाख्यं विचर्ची च, ऋक्षाख्यं[4] वातपित्तजम् ।**
**चर्मैककुष्ठकिटिभसिध्मालसविपादिकाः ॥ ८ ॥**
**वातश्लेष्मोद्भवाः, श्लेष्मपित्ताद्दद्रुशतारुषी ।**
**पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ॥ ९ ॥**
**सर्वैः स्यात्काकणं**

स०—[वातेन—] वातोल्बणेन सन्निपातेन, कापालं नाम कुष्ठं भवति । पित्तात्—पित्ताधिकात्सन्निपातात्, औदुम्बरं नाम कुष्ठं जायते । कफात्—कफाधिकात्सन्निपातात्, मण्डलाख्यं कुष्ठं जायते । तथा विचर्ची च, कफादेवेति चार्थः । ऋक्षाख्यं कुष्ठं वातपित्तजं—वातपित्तोल्बणात्सन्निपाताज्जातम् । एवमग्रेऽपि योज्यम् । चर्मैककुष्ठकिटिभसिध्मालसविपादिका वातश्लेष्मोद्भवाः । श्लेष्मपित्तात् दद्रुशतारुषी द्वे कुष्ठे । न केवलं दद्रुः शतारुश्च श्लेष्मपित्तात्, यावत्पुण्डरीकं तथा विस्फोट-

---

१ 'हेतुत्वात्कु' ण द । 'हेतुत्वादित्वा' थ । २ इदं कुष्ठश्वित्रकृमिनिदानं चरके नि० ५ अध्याये वि० ७ अध्याये चि० ७ अध्याये च, सुश्रुते नि० ५ अध्याये चि० ९ अध्याये उ० ५४ अध्याये च, अष्टाङ्गसङ्ग्रहे नि० १४ अध्याये चास्ति वर्णितम् । ३ "मिथ्याविहारेण—हिंसास्तेयादिकेन कायवाङ्मानसेन प्राण्युपघातपरुषवचनानिष्टवर्तिना । विरोधिना—पयोमत्स्यादिना । सद्यः सेवितैः—इहलोककृतैः । वा—अथवा । प्राक्तनैः—पूर्वजन्मना सम्भृतैरभ्यासेनानुष्ठितैर्वा । साधूनां—सुकृतिनाम्, निन्दा—अपभाषणम् । अथवा साधुवधः । अन्यस्वहरणं—परद्रव्यापहारः । आद्यशब्दादाचार्यगुरुपितृमातृप्रभृतिपरुषवचनादयः ॥ कुष्णाति—कुत्सितं करोति । अथ कुष्ठश्वेतकुष्ठयोर्भेदमाह—प्रपद्येत्यादि । सर्वान्—समग्रान् । धातून्—रसादीन् । सक्लेद्य—आर्द्रतां नीत्वा । सङ्कोथः—पूतीभावः । सूक्ष्मान्—अणून् ।" इति तोडरः । ४ 'नैः प्रेरि' इ ण द स मू । ५ 'यन्तः स्र' तो.स स । ६ 'णमे' ट ण.थ द. । ७ 'मिषाणि' थ. ।

१ "क्रमात्—कालक्रमात् । अस्माच्च—कुष्ठात्सकाशात् । बाह्यं—अन्यादृशं क्लेदकृम्याद्यभावो त्वग्रोगत्वे कुष्ठादन्यत् कुष्ठं मुनिभिश्वतमुदाहृतं—प्रोक्तम् ।" इति तोडरः । २ 'थक्द्वन्द्वैः स' इ मा नि । ३ 'तैर्मिश्रैः' ट । ४ 'ऋक्षाक्ष' इ । 'ऋश्याख्य' स.स. । ५ 'ऋष्याख्य' थ. ।

स्तथा पामा तथा चर्मदल जायते । सर्वैः–त्रिभिरेव समैर्दोषैः, काकण नाम कुष्ठमुत्पद्यते । एवमेतान्यष्टादश कुष्ठानि भवन्ति ।

**पूर्वं त्रिकं दद्रु[1] सकाकणम् ।**
**पुण्डरीकर्क्षजिह्वे[2] च महाकुष्ठानि[3] सप्त तु ॥ १० ॥**

स०–पूर्वं त्रिक–कापालोदुम्बरमण्डलाख्य, तथा दद्रु काकण पुण्डरीकमृक्षजिह्व चेति महाकुष्ठानि सप्त स्युः ।

**अतिश्लक्ष्णखरस्पर्शखेदास्वेदविवर्णताः ।**
**दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः श्रमः ॥ ११**
**व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।**
**रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम्[3] ॥ १२**
**रोमहर्षोऽसृजः काष्ण्यं कुष्ठलक्षणमग्रजम् ।**

स०–अतिश्लक्ष्णादिकं कुष्ठलक्षणमग्रज–प्राग्रूपमित्यर्थः ।

अधुनैतेषां लक्षणान्याह—

**कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु ॥ १३ ॥**
**विस्तृतासमपर्यन्तं हृषितैर्लोमभिश्चितम् ।**
**तोदाढ्यमल्पकण्डूकं कापालं शीघ्रसर्पि च ॥ १४ ॥**

स०–कृष्णारुणकपालाभमित्यादिकं कापालस्य लक्षणम् ।

**पक्वोदुम्बरताम्रत्वग्रोम गौरसिराचितम् ।**
**बहलं बहलक्लेदरक्तं दाहरुजाधिकम् ॥ १५ ॥**
**आशूत्थानावदरणकृमि विद्यादुदुम्बरम् ।**

स०–पक्वोदुम्बरताम्रेत्यादिकमौदुम्बरस्य लक्षणम् ।

**स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगम् ॥१६॥**
**अन्योन्यसक्तमुत्सन्नं बहुकण्डूस्रुतिकृमि ।**
**श्लक्ष्णपीताभपर्यन्तं मण्डलं परिमण्डलम् ॥ १७ ॥**

१ 'दद्रू सकाकणा' इ तो । २ 'कर्ष्य' ण द । 'कश्यं' स स । ३ "महत्त्व चैषा [सप्ताना] शीघ्रमुत्तरोत्तरधात्ववगाहनबहुलदोषजन्यत्वात् तथा क्रियाभूयस्त्वयोगाच्च ॥ अतिश्लक्ष्ण –अतिमसृण ॥ कपालाभ–खर्पराभ तद्रूपम् । सुप्त–विचेतनम् । तनु–ननुत्वक् । विस्तृतानि–विस्तीर्णानि, असमानि–ह्रस्वदीर्घाणि पर्यन्तानि, अथवा, असमानि–विषमाणि दुश्चिकित्स्यानि, पर्यन्तानि यस्य तत् । हृषितैः –हर्षितैः । बहुल–घनम् । बहुले–प्रभूते, क्लेदरक्ते–आर्द्रभावशोणिते, यस्मिन् तत् बहुलक्लेदरक्तम् । अवदरण–भेद ॥ स्थिर–अचल कठिनम् । स्त्यान–छीन सान्द्र सदल वा । अनाशुग–मन्दगति । उच्छून–उत्सेधवत् । पर्यन्ता.–अवसाना । परिमण्डल–वर्तुलम् ।" इति तोडर । "अतिश्लक्ष्णता–अतिमृदुता, अतिखरस्पर्शता–पारुष्य, वा । कोपन–दुष्टिरसरोहण च । तनु–अबहलम् । बहल–घनम् । उत्सन्न–उत्सेधयुक्तम् ।" इति चन्द्र । "अवदरण–कोथनम्" इतीन्दु । ४ 'कोथनम्' स स । ५ 'दूषितैः' ण द । ६ 'राततम्' तो । ७ 'बहुल बहुल' इ तो । 'बहल बहुल' स स । ८ 'मुच्छून' इ तो । 'मुत्सङ्ग' ण द. ।

स०–स्थिर स्त्यानमित्यादिक मण्डलस्य लक्षणम् ।

**सकण्डूपिटिका श्यावा लसीकाढ्या विचर्चिका ।**

स०–सकण्डूपिटिकेत्यादिक विचर्चिकाया लक्षणम् ।

**परुषं तनु[1] रक्तान्तमन्तःश्यावं समुन्नतम् ॥ १८ ॥**
**सतोददाहरुक्क्लेदं कर्कशैः पिटिकैश्चितम् ।**
**ऋक्षजिह्वाकृति[2] प्रोक्तमृक्षजिह्वं बहुकृमि ॥ १९ ॥**

स०–परुषमित्यादिक ऋक्षजिह्वस्य लक्षणम् । ऋक्षजिह्वेव प्रकाशखरा आकृतिर्यस्य ऋक्षजिह्वस्य तथैवम् ।

**हस्तिचर्मखरस्पर्शं चर्म**

स०–हस्तिचर्मवत् खरस्पर्शं चर्माख्य कुष्ठम् ।

**एकाख्यं महाश्रयम् ।**
**अस्वेदं मत्स्यशकलसन्निभम्**

स०–एकसंज्ञ[4] कुष्ठ महाश्रय–विस्तीर्णाशयम् । तथा, अस्वेद–स्वेदरहितम् । तथा, मत्स्यशकलसन्निभ–मत्स्यत्वङ्मण्डलसदृशम् । सुश्रुते त्वेककुष्ठस्यैव लक्षणमभ्यधायि (नि अ. ५।९)–"कृत्स्नो देहो यस्य रक्तोऽरुणो वा तदेकाख्य कुष्ठमाहुः सुकष्टम् ।" इति । खरनादेऽप्युक्तम्–"महदस्वेदनं मत्स्यशकलाकारमेकजम् ।" इति ।

**किटिभं पुनः ॥ २० ॥**
**रूक्षं किणखरस्पर्शं कण्डूमत्परुषासितम् ।**

स०–किटिभ तु रूक्ष किणखरस्पर्श कण्डूमत्परुषासितम् ।

**सिध्मं रूक्षं बहिः स्निग्धमन्तर्घृष्टं रजः किरेत् ॥२१॥**
**श्लक्ष्णस्पर्शं तनु श्वेतताम्रं दौग्धिकपुष्पवत् ।**
**प्रायेण चोर्ध्वकाये स्यात्**

स०–सिध्म नाम कुष्ठ बहीः रूक्षम्, अन्तः स्निग्धम्, घृष्ट सद्रज किरेत्–क्षिपेत् । तथा श्लक्ष्णस्पर्शम् । तथा तनु । वर्णेन श्वेतताम्रम्, दौग्धिकपुष्पवत्–अलाबुकुसुमाभम् । तच्च प्रायेण–बाहुल्येन, ऊर्ध्वकाये स्यात् । खरनादेऽप्युक्तम्–"अलाबुपुष्पवत्सिध्म घृष्ट यच्चोद्वमेद्रज ।" इति ।

१ "तनुरक्तान्त–पत्रल रक्तपर्यन्त च, अथवा तनु पृथक् पदम् । किण–अङ्गे घर्षणग्रन्थि ॥ ऊर्ध्वकाये–उर पृष्ठादौ ।" इति तोडर । २ 'ऋष्य' च स च स सु मा नि । 'ऋश्य' स स । "ऋष्यो–नीलाण्डो हरिण ।" इति चक्रडल्हणश्रीकण्ठा । "ऋश्यजिह्वा–रोहितजिह्वा ।" इतीन्दु । "ऋक्षो–रोमश ।" इति तोडर । ३ 'ऋष्य' ण थ द । ४ 'ज्ञ तु महाश्रयम् । त' ण थ द । ५ स्वकुखण्डम' ट । ६ 'कृष्णारुण येन भवेच्छरीर तदेककुष्ठ प्रवदन्त्यसाध्यम् ।' स सु । ७ 'सिध्म'स स । ८ 'देनोक्तम्' ण.थ.द. ।

गण्डैः कण्डूयुतैश्चितम् ॥ २२ ॥
रक्तैरलसकम्

स०–अलसक नाम कुष्ठ गण्डै रक्तवर्णै कण्डूयुतैश्च व्याप्त भवेत् ।

पाणिपाददार्यो विपादिकाः ।
तीव्रार्त्यो मन्दकण्ड्वश्च सरागपिटिकाचिताः ॥ २३ ॥

स०–विपादिका पाणिपाददार्य स्यु । तथा, तीव्रार्त्य–अत्यन्तपीडया युता । तथा, मन्दकण्ड्व–अल्पखर्जूका । तथा, सरागपिटिकाचिताश्च । पाणिपादौ दारयन्तीति कर्मण्यणतान्ङीप् ।

दीर्घप्रताना दूर्वावदतसीकुसुमच्छविः ।
उत्सन्नमण्डला दद्रू कण्डूमत्यनुषङ्गिणी ॥ २४ ॥

स०–दूर्वावद्दीर्घप्रताना दद्रू । तथा, अतसीपुष्पाभा । तथा, उत्सन्नमण्डला च । तथा, कण्डूमती । तथा, अनुषङ्गिणी–प्रसक्तानुप्रसक्त्या सश्लेषवती शरीरमनुधावती ।

स्थूलमूलं सदाहार्ति रक्तश्यावं बहुव्रणम् ।
शतारुः क्लेदजन्त्वाढ्य प्रायशः पर्वजन्म च ॥ २५ ॥

स०–शतारुर्नाम कुष्ठ स्थूलमूलादिलक्षणम्, यावत् प्रायश पर्वजन्म चेति ।

रक्तान्तमन्तरा पाण्डु कण्डूदाहरुजान्वितम् ।
सोत्सेधमाचित रक्तैः पद्मपत्रमिवांशुभिः ॥ २६ ॥
घनभूरिलसीकासृक्प्रायमाशु विभेदि च ।
पुण्डरीकम्

स०–पुण्डरीकं नाम कुष्ठ रक्तपर्यन्तम् । तथा, अन्तरा–मध्ये, पाण्डु । तथा, कण्डूदाहरुजायुतम् । तथा, उन्नतियुक्तम् । तथा, रक्तैरंशुभिः–सूक्ष्मरेखाभि, आचित–व्याप्त, पद्मपत्रमिव । तथा, घनभूरिलसीकासृक्प्रायम् । आशु च विभेदि ।

तनुत्वग्भिश्चितं स्फोटैः सितारुणैः ॥२७॥
विस्फोटम्

स०–विस्फोट नाम कुष्ठ तनुत्वग्भि स्फोटैश्चित–व्याप्तम् । किम्भूतै ? सितारुणै –श्वेतलोहितै ।

पिटिकाः पामा कण्डूक्लेदरुजाधिकाः ।
सूक्ष्माः श्यावारुणा बह्वयः प्रायः स्फिक्पाणिकूर्परे ॥

स०–पिटिका कण्डूक्लेदरुजाधिका पामेत्युच्यते । किम्भूता ? सूक्ष्मा श्यावारुणा बह्वयश्च । प्रायो–बाहुल्येन, सा च पामा स्फिजो पाण्यो कूर्परयोश्च स्यात् ।

सस्फोटमस्पर्शसह कण्डूषातोददाहवत् ।
रक्तं दलच्चर्मदलम्

स०–चर्मदल नाम कुष्ठ स्फोटवत् तथा स्पर्शाक्षमम् । तथा, कण्ड्वादियुतम् । तथा, रक्त–वर्णेन । तथा दलत्–स्फुटत्, स्यात् ।

काकणं तीव्रदाहरुक् ॥ २९ ॥
पूर्वं रक्तं च कृष्णं च काकणन्तीफलोपमम् ।
कुष्ठलिङ्गैर्युतं सर्वैर्नैकवर्णं ततो भवेत् ॥ ३० ॥

स०–काकण नाम कुष्ठ तीव्रदाहरुक् । तथा पूर्वं–प्रथम, रक्त तथा कृष्ण काकणन्तीफलोपम–गुञ्जाफलसदृशम् । तत –अनन्तर, सर्वै कुष्ठलिङ्गैर्युतम् । नैकवर्ण–अपि तु श्वेतपीतादिवर्णमपि स्यादित्यर्थ । सुश्रुते तु मण्डलशतारुर्विपादिकालसकचर्मदलविस्फोटाख्यानि नोदितानि । स्थूलारुष्कमहाकुष्ठपरीसर्पविसर्परकसारुणाख्यानि तत्रोक्तानि । एवं च तल्लक्षणम् ( नि अ ५।८ )–"यत्र स्थूलमूलान्यरूषि जायन्ते सन्धिषूग्राणि तत् स्थूलारुष्क कुष्ठम् । उत्पद्यन्ते सर्वदेहे महाख्य त्वक्सङ्कोचस्वापतोदाङ्गसादा । यस्मिन् दीर्घा स्फोटिका स्राववत्य ससर्पैर्युक्त परीसर्पमाहु ॥ तुल्य सर्पैयो विसर्पेण शीघ्र त्वग्रक्तादीन् व्याप्य स स्याद्विसर्प । कृत्स्ने देहे स्फोटिका स्रावहीना कण्डूप्राया रकसास्ता प्रदिष्टा । अरुणानि तनूनि विसर्पीणि तापयुतान्यरुणानि ।" इति । तदेतेषु कुष्ठभेदेषु यथा नामविपर्ययस्तथा लक्षणविपर्ययोऽपि । किन्त्वेतेऽपि कुष्ठभेदा दृश्यन्ते एव, इत्येतदपि लक्षणमादरणीयमेवेति मन्यामहेऽधिक कुष्ठेषु, इत्यादि ।

कुष्ठेषु त्रिदोषजेषु सत्सु, इद वाताधिकं कुष्ठमिद पित्ताधिक कुष्ठमिद कफाधिकं कुष्ठमिति कथ ज्ञातव्यम् ? इत्याह—

दोषभेदीयविहितैरादिशेल्लिङ्गकर्मभिः ।
कुष्ठेषु दोषोल्बणताम्

१ "दीर्घप्रताना–दीर्घाभोगा । अनुषङ्गिणी–चिरकालानुबन्धिनी प्रसक्ता सश्लेषवती ॥ शतारुरिति [बहु]व्रणयोगादनुगत नाम ॥ विभेदि–भेदनशीलम् ॥ तनुत्वग्भि –कोमलकृत्तिभि. ।" इति तोडर । "अंशवो–रजासि ।" इतीन्दु । २ 'दद्रु' ण द स स । ३ 'ष्पाकारा ।' ण द. ।

१ "दलत्–विसरणयुक्तम् । पूर्वं–आदौ । तत –अस्मात् कारणात्, नैकवर्ण–नानावर्णम् ।" इति तोडर । २ 'वर्णत ।' ट । 'रक्त–लोहितम् । द' थ । ३ 'स्फुटित' ट । 'स्फुटन' ण । ४ 'काकणन्दीफ' स स । ५ 'एषा च त' ट । 'एषा लक्ष' ण द । ६ मुद्रितसुश्रुते त्वेतल्लक्षणलक्षिता इमे श्लोका –"स्थूलानि सन्धिष्वतिदारुणानि स्थूलारुषि स्यु कठिनान्यरूषि । त्वक्कोचभेदस्वपनाङ्गसादा कुष्ठे महत्पूर्वयुते भवन्ति ॥ विसर्पवत् सर्पति सर्वतो यस्त्वग्रक्तमासान्यभिभूय शीघ्रम् । मूर्च्छाविदाहारतितोदपाकान् कृत्वा विसर्प स भवेद्विकार. ॥ शनै शरीरे पिडका स्रवत्य सर्पन्ति यास्त परिसर्पमाहु ॥ कण्ड्वन्विता या पिडका शरीरे सस्रावहीना रकसोच्यते सा ॥ वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि ।" इति । ७ 'न्धिष्वत्युग्रा' थ । ८ 'ह्वाख्ये' ण थ द । ९ 'राकसा' ट । १० 'क्षण करणी' ण.द. । ११ 'षु दो' ट द. । १२ 'मित्यादिक क' थ. ।

स०—कुष्ठेषु दोषोल्बणता—दोषाधिक्य, दोषभेदीयविहितर्य थायथ लिङ्गकर्मभिरादिशेत्। लिङ्गानि च तानि कर्माणि च लिङ्गकर्माणि। यथा—वायो स्रसादीनि, पित्तस्य दाहादीनि, श्लेष्मण स्नेहकाठिन्यादीनि, यथायथमात्मीयैरेव कर्मभिर्यतस्तेषा लिङ्ग लक्ष्यते ततस्तेषा दोषाणा कर्माण्येव लिङ्गान्युच्यन्ते। अत एव च स्रसादीनि कर्माणि दोषाणामुक्त्वाऽनन्तरमिदमुवाच (हृ सू अ १२।५४)—"इत्यशेषामयव्यापि यदुक्त दोषलक्षणम्। दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेत् ॥" इति।

**सर्वदोषोल्बणं त्यजेत् ॥ ३१ ॥**
**रिष्टोक्तं यच्च यच्चास्थिमज्जशुक्रसमाश्रयम्।**

स०—सर्वदोषोल्बण—सन्निपातज, कुष्ठ त्यजेत्—न चिकित्सेत्। रिष्टोक्तमिति यच्च विकृतिविज्ञानीये कथित (हृ शा अ ५।९८)—"कुष्ठ विशीर्यमाणाङ्ग" इत्यादि, तच्च नोपक्रमेत्। यच्च कुष्ठमस्थिमज्जशुक्रसमाश्रय तच्च त्यजेत्।

**याप्यं मेदोगतम्**

स०—मेदोगत कुष्ठ याप्य—पथ्यादिभिर्यापयितु[२] शक्यम्।

**कृच्छ्रं पित्तद्वन्द्वास्रमांसगम् ॥ ३२ ॥**

स०—पित्तस्य द्वन्द्व पित्तद्वन्द्वम्। पित्तद्वन्द्वज तथा रक्तग मासग च कुष्ठ कृच्छ्र—कृच्छ्रसाध्यम्।

**अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत्।**

स०—कफवाताढ्यमकृच्छ्र—सुखसाध्यम्। तथा त्वक्स्थ, तथा एकदोषाधिक च यत्कुष्ठ तच्च सुखसाध्यम्।

**तत्र त्वचि[३] स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः ॥ ३३ ॥**
**स्वेदस्वापश्वयथवः शोणिते, पिशिते पुनः।**
**पाणिपादाश्रिता स्फोटा क्लेदः सन्धिषु चाधिकम्॥**
**कौण्यं[३] गतिक्षयोऽङ्गाना दलनं स्याच्च मेदसि।**
**नासाभङ्गोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः ॥ ३५ ॥**
**क्षते च कृमयः, शुक्रे स्वदारापत्यबाधनम्[४]।**

स०—तत्र—तेषु कुष्ठेषु मध्ये, त्वचि प्राप्ते कुष्ठे तोदादय स्यु। रक्तस्थे कुष्ठे स्वेदाद्या स्यु। मासस्थे कुष्ठे पाणिपादाश्रिता स्फोटा स्यु, सन्धिषु चातिशयेन क्लेदो भवति। मेदसि स्थिते कुष्ठे कौण्य—कुणिता, तथा गतिक्षय, तथाऽङ्गाना दलनं—छेदनमिव, स्यात्। अस्थिमज्जस्थे कुष्ठे नासाया—घ्राणस्य भङ्ग, तथा नेत्रयो राग स्वरस्य च क्षय स्यात्, क्षते च कृमय स्यु। शुक्रस्थे कुष्ठे दाराणामपत्याना च बाधन—उपद्रवे स्वेदादिभि पीडन स्यात्।

**यथापूर्वं च सर्वाणि स्युर्लिङ्गान्यसृगादिषु ॥ ३६ ॥**

**इति कुष्ठनिदानम्।**

स०—असृगादिषु धातुषु कुष्ठाक्रान्तदेहाना नराणा यानि लिङ्गान्युक्तानि तानि यथापूर्वं[२] स्यु। यथा—स्वेदादीनि रक्तस्थे कथितानि पाण्याद्याश्रिता स्फोटादयश्च मासस्थे स्यु। एव मेद प्रभृतिषु योज्यम्। एवं च स्वेदस्वापादीनि सर्वाण्यपि शुक्रस्थे कुष्ठे दाराणामपत्याना च स्युरिति यथापूर्वशब्दस्यार्थ।

कुष्ठनिदानादनन्तर श्वित्रस्योच्यते। कुष्ठश्वित्रयोरेककारणत्वात्। अत एवाह—

**अथ श्वित्रनिदानम्।**

**कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं[४] च तत्।**
**निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्[६] ॥ ३७ ॥**

स०—कुष्ठानामेक—समान, सम्भवो यस्य तच्छ्वित्र कुष्ठैकसम्भव[५] भवति। किलास दारुण च तन्निर्दिष्टम्, न केवलं श्वित्रमिति। तच्चापरिस्रावि—न कुष्ठवत् स्रवति। उद्भवो—जन्म, सश्रय—आश्रय, उद्भवश्च सश्रयश्चोद्भवसश्रयौ, धातुशब्देनोभय परिगृह्यते, वातादयस्त्रयो दोषास्तथा रक्तादयस्त्रयो धातव, धातवश्च धातवश्च धातव, त्रयो धातवो यथाक्रममुद्भवसश्रयौ यस्य तत् त्रिधातूद्भवसश्रयम्।

**वाताद्रूक्षारुणं, पित्तात्ताम्रं कमलपत्रवत्।**
**सदाहं रोमविध्वंसि, कफाच्छ्वेतं घनं गुरु ॥ ३८ ॥**
**सकण्डु च, क्रमाद्रक्तमांसमेदःसु चादिशेत्।**

स०—वाताद्रूक्षारुण श्वित्र स्यात्। पित्तात् कमलपत्रमिव ताम्र वर्णेन, तथा सदाहम्, तथा रोमविध्वसि—रोमशातनस्वभावम्। कफाच्छ्वेतम्, तथा घनम्, तथा गुरु—अङ्गेनानुभूयते, तथा सह कण्ड्वा वर्तेत इति सकण्डु। क्रमात्—यथाक्रम, वाताद्युद्भव श्वित्र रक्तमासमेद सु चादिशेत्। तत्र वातोद्भव श्वित्र रक्ताश्रयम्। पित्तोद्भव मासाश्रयम्। कफोद्भव मेदोधात्वाश्रयमिति[७] क्रमशब्दस्यार्थ।

---

१ 'स्ते लिङ्ग्यन्ते लक्ष्यन्ते तत' ट। २ 'दिना या' ट। ३ "त्वचि—रसे, त्वक्शब्देनात्र रसोऽभिधीयते (द्रष्टव्या चास्मिन् विषये सम्यग्विवृता मधुकोशव्याख्या कुष्ठनि श्लो २५)। कौण्य—कुणिता करभङ्ग।" इति तोडर। "कौण्य—विकलपाणित्वम्। गतिक्षय—गमनेऽशक्तता। नेत्रयोश्च रागो—लोहितत्वम्। बाधन—कुष्ठसम्भव.।" इति चन्द्र। ४ 'स्वधावनम्' तो।

१ "असृगादिषु—रक्तमासमेदोस्थिमज्जशुक्रेषु, यथापूर्वं सर्वाणि लिङ्गानि स्यु—भवेयु। यो यथा पूर्वो—यथापूर्वम्, तेन यस्मिन् धातौ स्थित कुष्ठ तस्य य पूर्वो धातुस्तल्लिङ्गान्यपि तत्र भवन्ति, तेन रक्ताश्रये कुष्ठे त्वग्रक्ताश्रयाणि। मासगे त्वग्रक्तमासाश्रयाणि। एवं यावत् शुक्रगे सर्वाण्येव लिङ्गानि भवन्ति।" इति चन्द्र। "श्वित्र—श्वेतकुष्ठम्। त्रिधातूद्भवसश्रयमिति विशेषणेन श्वेतकुष्ठस्य सम्प्राप्तिरुक्ता।" इति तोडर। "तच्च श्वित्र नाम्ना किलास चारुणमपरिस्रावि च निर्दिष्टमाचार्यै।" इतीन्दु। २ 'पूर्वं पूर्वस्य यथा' ण थ द। ३ अस्मादरुणदत्तव्याख्यानात् चन्द्रनन्दनव्याख्यान सुष्ठुतरम्। ४ 'चारुण' द स स। ५ 'म्भवम्। कि' ण.थ द। ६ 'श्रय स्यात्।' ण.द.। ७ 'मेद सश्रय' ण द।

**वर्णेनैवेदृगुभय कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ३९ ॥**

स०–एवेति चार्थे । उभय–दोषोद्भव रक्ताद्याश्रय श्वित्र, वर्णेन चेदृक्–अरुण ताम्र श्वेत यथाक्रमम्, न पुनर्वाताद्युद्भव त्वादन्यवर्ण रक्तादिसंश्रयत्वादन्यवर्णमित्यर्थ । तच्च–श्वित्र वाता द्युद्भव रक्तादिसंश्रय च, उत्तरोत्तर कृच्छ्रसाध्यमादिशेदिति प्रकृतम् । रक्ताश्रयाद्वातजात्कृच्छ्रात् मासाश्रय पित्तज कृच्छ्रतरम् । ततो मेद संश्रित कफज कृच्छ्रतममिति ।

अधुना साध्यासाध्यविभागार्थमाह—

**अशुक्लरोमाबहलमसंसृष्टं मिथो नवम् ।**
**अनग्निदग्धजं साध्यं श्वित्रं, वर्ज्यमतोऽन्यथा ॥४०॥**
**गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ।**

स०–अशुक्लरोम यच्छ्वित्र, तथा अबहल–अघन, तथा मिथ –परस्पर, असंसृष्ट–अमिलित, तथा नव–अवर्षातिक्रान्त, तथाऽनग्निदग्धज–अग्निदग्धज यन्न भवति, तच्च साध्यम् । वर्ज्यमतोऽन्यथा–शुक्लरोम श्वित्र, तथा बहल, तथा परस्पर संसृष्ट, तथा चिरकालोत्पन्नमग्निदग्धज च, तच्चासाध्यम् । गुह्यपाणितलौष्ठेषु जातमचिरन्तनमप्यचिन्त्यस्वभावत्वेन वर्ज्यम् ।

**स्पर्शैकाहारशय्यादिसेवनात् प्रायशो गदाः ॥४१॥**
**सर्वे सञ्चारिणो, नेत्रत्वग्विकारा विशेषतः ।**

**इति श्वित्रनिदानम् ।**

स०–सर्वे रोगा प्रायशो–बाहुल्येन, सञ्चारिण –सञ्चरण शीला । कुत ? एके च त आहारशय्यादयश्चकाहारशय्यादय, आदिशब्देनासनादीना ग्रहणम्, स्पर्श –संश्लेष, स्पर्शश्च एकाहारशय्यादयश्च, तेषा सेवन–भजन, तस्मात् । नेत्रे च त्वक् च नेत्रत्वक्, तत्र विकारा –गदा, ते विशेषेण सञ्चारिण ।

अधुना क्रमप्राप्तान् कृमीनधिकृत्याह—

## अथ कृमिनिदानम् ।

**कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ॥ ४२ ॥**

स०–कृमयो द्विधा प्रोक्ता, मुनिभिरिति शेष । तुरवधारणे, द्विधैवेत्यर्थ । कथम् ? इत्याह–बाह्याभ्यन्तरभेदत । एके बाह्या ये केशवस्त्रादिजा यूकालिक्षादय । अन्ये चान्तरा, यथा–अन्त्रादादय ।

जन्मभेदेन चतुष्प्रकारा । कथम् ? इत्याह—

**बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ।**

स०–बहिर्मलजन्मान केशवस्त्रमलेभ्य शरीरबाह्येभ्य उत्पन्नत्वात्, तथा कफजन्मानो रक्तजन्मानो विड्जन्मानश्चेति चतुर्विधा । विट्–पुरीषम् ।

**नामतो विंशतिविधाः**

स०–नामतो–नामभेदात्, कृमयो विंशतिप्रकारा ।

**बाह्यास्तत्रामृजोद्भवाः ॥ ४३ ॥**
**तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ।**
**बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥ ४४ ॥**
**द्विधा ते कोठपिटिकाकण्डूगण्डान् प्रकुर्वते ।**

स०–तत्र–तेषु बाह्याभ्यन्तरेषु कृमिषु मध्ये, अमृजोद्भवा – बाह्यमलरूपेणोत्पन्ना, बाह्या । ते च तिलानामिव प्रमाणसंस्थानवर्णा येषा त एवम् । केशा [ अम्बर–] वस्त्र चाश्रयो येषा त एवम् । तथा बहुपादा सूक्ष्माश्च । नामतो–नाम्ना, यूका लिक्षाश्चेति द्विधा । ते च कोठादीन् विदधति ।

**कुष्ठैकहेतवोऽन्तर्जाः**

स०–अन्तर्जा –आन्तरा कृमय, कुष्ठैकहेतव कुष्ठेन सहैक –तुल्यो, हेतु –निदान मिथ्याहारादिक, येषा त एवम् ।

**श्लेष्मजास्तेषु चाधिकम् ॥४५॥**
**मधुरान्नगुडक्षीरदधिसक्तुनवौदनैः ।**

स०–तेषु–अन्तर्जेषु कृमिषु मध्ये, श्लेष्मजा अधिक–अतिशयेन, मधुरान्नादिभि स्यु ।

रक्तजाना निदानविशेषो वक्ष्यमाण इति पुरीषोत्थास्ता(त्थाना ता)वदाह—

**शकृज्जा बहुविड्धान्यपर्णशाकोलकादिभिः ॥ ४६ ॥**

१ 'वातोद्भव रक्तस' ट थ । 'वातोद्भव रक्ता' द । २ 'त्तर–यथोत्तर, कृ' थ । ३ 'ततोऽपि मे' थ । ४ "अशुक्लरोम–कृष्णरोम । अबहुल–तनु अघन वा । अतोऽन्यथा उक्तसर्वप्रकारविपरीतम् । अचिरन्तनमपि–अचिरोत्पन्नमपि । तलमत्र पादतलम् ।" इति तोडर । ५ 'बहुल' इ ण द च तो स स, ट । ६ 'सृष्टमथो' ण द । ७ 'वह्निद' ण.द । ८ 'ज न भ' ण थ.द. । ९ 'न्त्यप्रभाव' ट. ।

१ "बहिर्मलो–गात्रोपलेपी स्वेदाभिध ॥ बहिर्मलोद्भवा कृमयो बहुपादा –प्रभूतचरणा, ते यूका नामत । तथा ये बहिर्मलोद्भवा कृमय सूक्ष्मास्ते नामतो लिक्षा इति । मलरूपेणोत्पन्ना –मलोद्भवा कृमय । संस्थान–आकृति, वर्ण –श्वेत कृष्णो वा । उलक –स्वेदपर्याय, उलक–लवणमित्यन्ये ।" इति तोडर । "अमृजोद्भवा –अशुद्ध्युत्था, स्नानादिभिर्यदा शुद्धिर्न क्रियते तदा जायन्ते ।" इति चन्द्र । २ 'वस्त्रेभ्य' ट । ३ बहिर्मलजौ द्वौ यूकालिक्षानामानौ, कफजा सप्त अन्त्रादिनामान, रक्तजा षट् केशादादय, पुरीषजा पञ्च ककेरुकादयश्चेति विंशति । ४ 'स्त्वत्र मलोद्भ' तो स मू मा नि । 'त्रासृगुद्भ' ण द । ५ 'असृगुद्भवा रक्तेन वा' ट । ६ 'अभिधानात्' थ । ७ 'हारविरुद्धभोजनादिक' ट । ८ 'राम्लगु' इ । ९'रादि' ण थ द । १० 'इह पु' द । ११ 'शाकौकुलादिभि' इ ण द चन्द्र, स स । "गोधूमयवादिक स्वेदित परिदग्धप्राय ओकुलमुच्यते ।" इति चन्द्र । "ओकुल–काण्डस्थान्यपक्वानि भृष्टानि सस्यानि ।" इतीन्दु ।

स०–शकृज्जा शकृदुद्भूता, ते कुष्ठैकहेतुसामान्येऽप्यधिक बहुविड्धान्यै –यवमाषादिभि, बहुविड्भिरेव पर्णशाकै –पालक्यादिभि, तथोलकादिभि । उलक –खेदपर्याय । अपरे तु "उल्लुकादिभि "इति जगु । उल्लुक–हरितावस्थ शिम्बीधान्यमिति व्याचक्षते च ।

**कफादामाशये जाता वृद्धा· सर्पन्ति सर्वतः ।**
**पृथुब्रध्ननिभाः केचित् केचिद्गण्डूपदोपमाः ॥ ४७ ॥**
**रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाऽणवः ।**
**श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥४८॥**
**अन्त्रादा उदरावेष्टा हृदयादा महाकुहाः ।**
**कुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ॥ ४९ ॥**
**हृल्लासमास्यस्रवणमविपाकमरोचकम् ।**
**मूर्च्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ ५० ॥**

स०–कफादामाशये जाता –न पक्वाशये । तत्र हि पृथगध्येष्यते ( श्लो ५३ )–"पक्वाशये पुरीषोत्था" इति । ते च वृद्धा सन्त सर्वत – सर्वस्मिन् शरीरे, सर्पन्ति–प्रसरन्ति । सर्वत इति "आद्यादित्वात्(दिभ्य )" तसि । पृथुब्रध्ननिभा इत्यादिना सस्थानकथनम् । श्वेता इत्यादिना वर्णकथनम् । नामतो–नाम्ना च, ते सप्तधा–सप्तप्रकारा । तुश्चार्थे । तान्येव सप्त नामान्याह–अन्त्रादा इत्यादिना । अन्त्राण्यदन्तीत्यन्त्रादा, इत्यादीन्यर्थानुगतानि नामानि । कानिचित् यादृच्छिकानि कुरव इत्यादीनि । ते च–कफजा कृमयो, हृल्लासादिक कुर्वन्ति ।

अधुना रक्तजानाह—

**रक्तवाहिसिरोत्थाना रक्तजा जन्तवोऽणवः ।**
**अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः ॥५१॥**
**केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः ।**
**षट् ते कुष्ठैककर्माणः सहसौरसमातर ॥ ५२ ॥**

स०–रक्तजा कृमयो रक्तवाहिसिरोत्थाना स्यु । तथा, अपादा वृत्तास्ताम्रवर्णाश्च । सौक्ष्म्यात्–सूक्ष्मत्वात्कारणात्, केचिददर्शना –प्रत्यक्षप्रमाणासमधिगम्या कार्येणैवानुमीयन्ते । तेषा नामान्याह–केशादा लोमविध्वसा लोमद्वीपा उदुम्बरा इति । तथा सह सौरसमातृभ्या वर्तन्त इति सहसौरसमातर । सौरसमातृसज्ञ नामद्वयम् । एव षडेते रक्तजा· कृमय । अन्ये त्वेव पठन्ति "सहजा रसमातर" इति । सह शरीरेण जायन्त इति सहजा, रसो माता–जननी, येषा तत्प्रभवत्वात्ते रसमातर इति । कुष्ठेन सहैक कर्म–रोमहर्षकण्डूतोदादिक केशलोमध्वसादिक त्वक्सिरास्नायुमासतरुणास्थिभक्षण वा, येषा त एवम् ।

**पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ।**
**वृद्धा· सन्तो भवेयुश्च ते यदाऽऽमाशयोन्मुखाः ५३**
**तदाऽस्योद्गारनिःश्वासा विड्गन्धानुविधायिन· ।**
**पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ ५४ ॥**
**ते पञ्च नाम्ना कृमयः ककेरुकमकेरुकाः ।**
**सौसुरादाः सुल्लूनाख्या लेलिहा जनयन्ति च ॥५५॥**
**विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।**
**रोमहर्षाग्निसदनगुदकण्डूर्विनिर्गमात् ॥ ५६ ॥**

**इति श्रीवैद्यपतिसिहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने कुष्ठश्वित्रकृमिनिदानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥**

स०–पुरीषोत्था पक्वाशय एव जायन्ते । पुरीषस्य पक्वाशयस्थत्वात् । ते चाधोविसर्पिण स्यु –नोर्ध्वगा । वृद्धा सन्तो–वृद्धि गता, यदाऽऽमाशयोन्मुखास्ते स्युस्तदाऽस्य–कृमिमतो रोगिण, उद्गारनि श्वासा विड्गन्धानुविधायिन –पुरीषगन्धानुकारिणो, भवेयु । तथा ते पृथुवृत्ततनुस्थूला सस्थानेन स्यु, श्यावपीतसितासिता वर्णेन, तथा नाम्ना पञ्च सङ्ख्यया । तान्येव नामान्याह–ककेरुकेत्यादिना । ते च विनिर्गमाद्धेतोर्विड्भेदादीन् जनयन्ति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने कुष्ठश्वित्रकृमिनिदान नाम चतुर्दशोऽध्याय· समाप्त ॥१४॥

१ "कफादिति कफनिमित्ता कफोद्भवा· कृमय । सर्वत इति ऊर्ध्वमधश्च सर्वस्मिन् शरीरे । ब्रध्न –चर्मलता, वाधीति लोके । तनुदीर्घा –तनव परिणाहेन, दीर्घा आयामेन ॥ कुष्ठैककर्माण –कुष्ठजनका ।" इति तोडर । २ 'रविष्टा' ण द तो च । ३ 'हाहहा' इ च स स । ४ 'चुरवो' तो स स मा नि । ५ 'तु' स स । ६ 'गतना' ट । ७ 'सिरास्थाना र' इ तो स द्व स च । 'शिरास्थानाद्रक्त' चन्द्र । ८ 'ना.–अप्रत्यक्षप्रमाणेनैव सम' ण थ.द. ।

१ 'कर्म येषा' ण थ द । २ "अधोविसर्पिण –गुदान्नि सरणशीला· ।" इति तोडर । ३ 'द्धास्ते स्युर्भवे' इ द स द्व । ४ 'शल्लना' ण द । 'सल्लना' स द्व । ५ 'ण्डूविनिर्गमान्' स स । 'विनिर्गता.' 'विमार्गगा' इति क्वचित् । ६ 'समन्ततो' थ । ७ 'स्थानत, श्या' ट. । ८ 'सङ्ख्या' ण.द. । 'सङ्ख्याता' थ. ।

## पञ्चदशोऽध्यायः ।

कुष्ठनिदानादनन्तर वातव्याधिनिदानमारभ्यते, वातरोगाणा कुष्ठवद्बहुप्रकारत्वाद्विविधदु खदायित्वाच्च । इत्यत आह—

**अथातो वातव्याधिनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥)

**सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम् ।**
**अदुष्टदुष्टः पवनः, शरीरस्य विशेषतः ॥ १ ॥**

स०—अर्थाश्चानर्थाश्चार्थानर्था —शुभाशुभा । सर्वे च तेऽर्थानर्थाश्च सर्वार्थानर्था , तेषा करण—निर्वृत्ति , तस्मिन् । अस्य विश्वस्य—जगत , एक—प्रधान, कारण वात । किम्भूत ? अदुष्टदुष्ट , यथाक्रमम् ,—अदुष्ट सर्वार्थकरणे—जगत्स्थितिलक्षणे, वायु प्रधान कारणम् । सर्वानर्थकरणे—जगद्विनाशलक्षणे, दुष्ट पवन प्रधानो हेतु । शरीरस्य पुनर्विशेषत —अतिशयेन, अर्थानर्थकरणे प्रधान कारणमिति शेष । पञ्चवात्व गतेन प्राणादितया शरीरजननाद्धारणाच्च । अतस्तददुष्टौ यतितव्यमिति सम्बन्ध ।

कथ वायु कारणमित्यवगम्यते ? इत्याह—

**स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः ।**
**स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरन्तकः ॥ २ ॥**
**तददुष्टौ प्रयत्नेन यतितव्यमतः सदा ।**

स०—यतोऽसौ वायुर्विश्वकर्मा, विश्वानि—शरीरजननवर्धनधारणभञ्जनशोषणादीन्यर्थानर्थकरणानि, कर्माणि यस्य स विश्वकर्मा । कस्माद्विश्वकर्मा ? इत्याह—विश्वात्मा, विश्वेषा—शुभाशुभाना, आत्मा—हेतु । हेत्वर्थोऽत्रात्मशब्द । ननु, विश्वात्मेति कथ ज्ञायते ? इत्याह—विश्वरूप इति । यतो विश्वं—रूप—बाह्याध्यात्मिकाख्य, यस्य स एवम् । तथा, प्रजापति —प्रजाना पालक । तथा, स्रष्टा—प्रकृतत्वाद्विश्वस्य । तथा, धाता—विश्वस्य धारक , तथा हि—बाह्यो लोको वायुमण्डलेन धार्यते, सत्यलोकोऽपि प्राणापानादिभि । कस्माद्विश्वरूप ? यस्माद्विभु , अतस्तदर्थानर्थकरणे प्रभुरित्यर्थ । कस्मात्प्रजापति ? यस्माद्विष्णु ,—व्यापी । "विष्लृ—व्याप्तौ" इत्यस्यौणादिके नुप्रत्यये विष्णुशब्द । संहर्ता—बाह्याध्यात्मिकसर्गसंहरणात् । मृत्यु —यमरूप , तत्कार्यकरणात् । तथा, अन्तको—यमभट्टारक एव साक्षात् । यतश्चैवमतस्तददुष्टो—तस्याप्रकोपे, सदा—सर्वकाल, यतितव्यम् ।

**तस्योक्तं दोषविज्ञाने कर्म प्राकृतवैकृतम् ॥ ३ ॥**
**समासाद्व्यासतो दोषभेदीये नाम धाम च ।**
**प्रत्येकं पञ्चधा चारो व्यापारश्च**

स०—तस्य—पवनस्य, कर्मोक्तम् । क्व ? दोषविज्ञाने,—दोषविज्ञानीयाध्याये ( हृ सू अ ११ ) । किम्भूत कर्म ? प्राकृतवैकृतम् । प्रकृतौ भव प्राकृत—स्वाभाविकमुत्साहोच्छ्वासादिलक्षणम् । वैकृत तु—"वृद्धस्तु कुरुतेऽनिल । कार्श्यकार्ष्ण्यौष्ण्य" इत्यादिग्रन्थनिर्दिष्टम् । एतत्समासात्—सङ्क्षेपतो, वायो कर्म । व्यासतो—विस्तरत पुन , दोषभेदीये नाम धाम चोक्तमित्यनुवर्तनीयम् । प्रत्येक पञ्चधा । एकमेक प्रति प्रत्येक नाम धाम च । प्राणादिभेदेन नाम पञ्चधा । धाम—स्थानमपि, पञ्चधा मूर्धादिभेदेन । प्राणस्य मूर्धा स्थानम्, "प्राणोऽत्र मूर्धग" ( हृ सू अ १२।४ ) इति वचनात् । तथा, "उर स्थानमुदानस्य" इति । तथा, "व्यानो हृदि स्थित " इति । तथा, "समानोऽग्निसमीपस्थ " इति । तथा, "अपानोऽपानग " इति । तथा, चारोऽपि पञ्चधा । चरण—चारो गति । तथा चोक्तम् (हृ सू अ १२।४)—"प्राण उर कण्ठचर " "उदानो नासानाभिगलचर " "व्यान कृत्स्नदेहचर " "समान कोष्ठचर " "अपानो बस्तिमेढ्रोरुगोचर "इति । व्यापारोऽपि वायो प्राणादिभेदेन पञ्चधा । तत्र प्राणस्य व्यापारो "बुद्धिहृदयेन्द्रियचित्तधृक्" इत्यादि , उदानस्य व्यापारो "वाक्प्रवृत्ति " इत्यादि , व्यानस्य व्यापारो "गत्यपक्षेपणोत्क्षेपणादिक ", समानस्य व्यापारोऽन्नग्रहणादिक , अपानस्य व्यापार शुक्रार्तवादीना निष्क्रमणरूपत्वम्, एव विस्तरेण दोषभेदीये वात प्राणादिभेदेन पञ्चधा नामादिभिरुक्त ।

**इह वैकृतम् ॥ ४ ॥**
**तस्योच्यते विभागेन सनिदानं सलक्षणम् ।**
**[असङ्ख्यमपि सङ्ख्याय यैर्दशीत्या पुरेरितम् ।]**

स०—इह—अस्मिन्नध्याये, तस्य—वातस्य, वैकृत कर्म विभागेन—पृथग्रूपतया, उच्यते । किम्भूतम् ? सनिदान सलक्षणम् । सह निदानेन सनिदानम् । तथा, सह लक्षणेन सलक्षणम् ।

वायोश्चोभयथाऽपि कोप सम्भवति । तमिदानी दर्शयन्नाह—

**धातुक्षयकरैर्वायुः कुप्यत्यतिनिषेवितैः ॥ ५ ॥**

---

१ इद वातव्याधिनिदान चरके चि० २७।२८ अध्याययो सि० ९ अध्याये च, सुश्रुते नि० १ अध्याये चि० ५ अध्याये च, अष्टाङ्गसङ्ग्रहे नि० १५ अध्याये चास्ति वर्णितम् । २ 'स्य जग' ण.थ द । ३ 'गत स्थिति' ट थ. । ४ 'शकरणल' ट थ । ५ "अदुष्टि —समावस्था । प्रयत्नेन—आदरेण ।" इति तोडर । ६ 'रणातर्जनशो' थ द । 'नरञ्जन' ण । ७ 'विश्व रूप' ट ण । ८ 'त्मिकस्वभावाख्य' ट थ । ९ 'श्वस्याधार ' ण द । 'श्वस्यास्य' थ. । १० 'बाह्या लोका० धार्यन्ते' ण.द. । ११ 'रित्यर्थ.' ट ।

१ 'यमतर ' ण द । 'यमभय ' थ । 'यमभट ' तो । २ 'रणत्वात्' ण द । 'कारणात्' थ । ३ 'एष' ण द तो । ४ 'धा । तथा चोक्तम्—"प्राणादिभेदात्पञ्चात्मा वायु प्राणोऽत्र मूर्धग ।" तथा' ण थ द । ५ 'यथाऽशीत्यपरे' इति क्वचित् । ६ उभयथा—धातुक्षयात् आवरणाच्च । ७ 'कुप्यत्य' इ.द.च.स.मू. ।

चरन् स्रोतःसु रिक्तेषु भृशं तान्येव पूरयन्।
तेभ्योऽन्यदोषपूर्णेभ्य प्राप्य वाऽऽवरणं बली॥ ६॥

स०—धातुक्षयकरैराहारविहारादिभिरतिनिषेवितै—अतिमात्रसेवितैश्चिरकालसेवितैश्च, पवन कुप्यति। किं कुर्वन्? स्रोत सु रिक्तेषु चरन्,—धातुक्षयकरातिसेवनात्, यतस्तदानी स्रोतसा शून्यता भवति। तथाभूतेषु स्रोत सु प्रभञ्जनस्तदन्त प्रविशस्तान्येव स्रोतासि रिक्तानि भृश पूरयन्नेव धातुक्षयात् कुप्यति मरुत्। तथा तेभ्य स्रोतोभ्योऽन्यदोषपूर्णेभ्य आवरणं प्राप्य बली वायुरेव वा कुप्यति।

तत्र पक्वाशये क्रुद्धः शूलानाहान्त्रकूजनम्।
मलरोधाश्मवर्ध्मार्शस्त्रिकपृष्ठकटीग्रहम्॥ ७॥
करोत्यधरकाये च तांस्तान् कृच्छ्रानुपद्रवान्।

स०—एवमुभयथा वायु पक्वाशये क्रुद्ध शूलानाहावन्त्रकूजनादीश्च करोति। तथा, अधरकाये च—शरीरस्याधस्तात्, तांस्तान्—नानाविधान्, उपद्रवान्—व्याधीन्, कृच्छ्रान्—कृच्छ्रसाध्यान्, करोति। कायस्याधर इति पूर्वापरेत्यादिना समास।

आमाशये तृड्वमथुश्वासकासविसूचिका॥ ८॥
कण्ठोपरोधमुद्गारान् व्याधीनूर्ध्वं च नाभितः।

स०—आमाशये क्रुद्धस्तृडादींस्तथाऽन्यानप्यनुक्तान् व्याधीन्नाभेरूर्ध्वं—ऊर्ध्वकाये, करोति।

श्रोत्रादिष्विन्द्रियवधं

स०—श्रोत्रादिषु—इन्द्रियाधारेषु, क्रुद्ध इन्द्रियाणा वध—विनाश, करोति।

त्वचि स्फुटनरूक्षते॥ ९॥

स०—त्वचि क्रुद्धस्तस्यास्त्वच स्फुटन रूक्षता च करोति।

रक्ते तीव्रा रुजः स्वापं तापं रागं विवर्णताम्।
अरूंष्यन्नस्य विष्टम्भमरुचिं कृशतां भ्रमम्॥ १०॥

स०—रक्ते क्रुद्धस्तीव्रा रुजस्तथा स्वापादीन् करोति।

मांसमेदोगतो ग्रन्थींस्तोदाढ्यान् कर्कशान् श्रमम्।
गुर्वङ्गं चातिरुक्स्तब्धं मुष्टिदण्डहतोपमम्॥ ११॥

स०—मांसमेदोगतस्तत्रस्थ क्रुद्धो ग्रन्थींस्तोदादियुतांस्तथा श्रमादीश्च करोति। सुश्रुते चात्र विशेष उक्त। तथा च तद्ग्रन्थ—(सु नि.अ १।२६)—कर्कशांस्तोदबहुलान् ग्रन्थीन् मांससमाश्रित। वायुर्मेदोयुत कुर्याद्ग्रन्थीन् मन्दरुजोऽव्रणान्॥" इति।

अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रं बलक्षयम्।

स०—अस्थिस्थ क्रुद्ध सक्थिसन्ध्यस्थिशूल तीव्र—दारुण, बलक्षय च करोति।

मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं सन्ततां रुजम्॥१२॥

स०—मज्जस्थ क्रुद्धोऽस्थिसौषिर्यादीन् करोति।

शुक्रस्य शीघ्रमुत्सर्गं सङ्गं विकृतिमेव वा।
तद्वद्गर्भस्य शुक्रस्थः

स०—शुक्रस्थ क्रुद्ध शुक्रस्य शीघ्रमुत्सर्ग सङ्गादीन्वा करोति। तद्वत्—तथैव, गर्भस्यापि तथाभूतबीजोत्पन्नत्वात् शीघ्रोत्सर्गादीन् करोति।

सिरास्वाध्मानरिक्तते॥ १३॥

तत्स्थः

स०—तत्स्थ—सिरास्थित, क्रुद्धस्तास्वेव सिरास्वाध्मानरिक्तते करोति।

स्नावस्थितः कुर्याद्गृध्रस्यायामकुब्जताः।

स०—स्नावस्थित क्रुद्धो गृध्रस्यादीन् करोति।

वातपूर्णदृतिस्पर्शं शोफं सन्धिगतोऽनिलः॥ १४॥
प्रसारणाकुञ्चनयोः प्रवृत्तिं च सवेदनाम्।

स०—सन्धिगतोऽनिल क्रुद्ध शोफ कुर्यात्। किम्भूतम्? वातपूर्णदृतिस्पर्श—तत्तुल्यम्। तथा, प्रसारण आकुञ्चने च सवेदना प्रवृत्तिं करोति।

सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम्॥ १५॥
स्तम्भनाक्षेपणस्वापसन्ध्याकुञ्चनकम्पनम्।

स०—सर्वाङ्गसश्रयोऽनिलस्तत्रस्थ क्रुद्धस्तोदादीन् करोति।

यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः॥१६॥
तदाऽङ्गमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः।

स०—यदा तु सर्वा धमनीर्वायु क्रुद्धोऽभ्येति—आभिमुख्ये-

१ 'प्रवेशात्तान्ये' ट थ। २ 'क्रुध्यति' ण द। ३ "अश्म—अश्मरीरोग। वर्ध्म—अन्त्रवृद्धि॥ राग—अङ्गे लोहितत्वम्। अङ्गस्य—देहस्य, विष्टम्भ—विशेषेण स्तम्भ स्तब्धताम्।" इति तोडर। ४ 'कायेषु' चन्द्र। ५ 'इन्द्रियद्वारेषु' ण द। ६ 'ष्यङ्गस्य' तो। ७ 'श्रमान्' ण द। 'भ्रमम्' स द्व। 'भृशम्' इति क्वचित्। ८ 'स्तम्भ' स मू। ९ 'भ्रमा' थ। १० 'व्रणाश्च रक्तगो, ग्रन्थीन् सशूलान् मांससंश्रित। तथा मेद श्रित कु' स सु।

१ 'रुजो नृणाम्' ट थ। २ 'स्तब्धता' ण द स मू। ३ "सन्तता—निरन्तराम्, रुज—व्यथाम्। प्रवृत्तिं—व्यापारम्। स्तम्भन—अङ्गजाड्यम्। आक्षेपण—अङ्गविक्षेपम्। स्वापो—विचेतनत्वम्। सन्ध्याकुञ्चन—सन्धिसङ्कोच॥ सर्वा—ऊर्ध्वाधस्तिर्यग्गता। अङ्गमाक्षिपति—आक्रमति उत्क्षिपति देह हस्त्यादियानारूढस्येव गात्र चालयति।" इति तोडर। "सन्तता—अनवच्छिन्ना, रुज—वेदना, अस्थामेव जनयति॥ तेन तुल्य तद्वत्, गर्भस्यापि शुक्रस्थो वायु शीघ्रमुत्सर्गसङ्गविकृती करोति। शुक्रस्थेन दुष्टेन वायुना यो गर्भो योजितस्तस्यैव भवतीत्यर्थ। प्रवृत्तिं—कर्मारम्भम्।" इति चन्द्र। "आक्षिपति—सङ्कोचयति।" इतीन्दु। ४ 'ब्जताम्' इ.तो.। ५ 'स्नायुस्थि' थ। ६ 'ल कु' थ.।

नागच्छति, पुन पुनस्तदाऽङ्ग–शरीर, आक्षिपति–आक्रमति, एष वातव्याधिराक्षेपक स्मृत ।

अथापतन्त्रक लक्षयति—

**अधः प्रतिहतो वायुर्व्रजन्नूर्ध्वं हृदाश्रिताः ॥ १७ ॥**
**नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन् ।**
**आक्षिपेत्परितो गात्रं धनुर्वच्चास्य नामयेत् ॥ १८ ॥**
**कृच्छ्रादुच्छ्वसिति स्तब्धस्रस्तमीलितदृक्ततः ।**
**कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ॥ १९ ॥**
**स एव चापतानाख्यो मुक्ते तु मरुता हृदि ।**
**अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते ॥ २० ॥**

**स०**–अध प्रतिहत ऊर्ध्व व्रजन् मारुतो हृदाश्रिता –हृदयस्था, नाडीरन्त प्रविश्य हृदय तथा शिरश्च शङ्खौ च पीडयन्, आक्षिपेत्परितो गात्र–समन्तात्कायमाक्षिपेत्,–सहरेत् । तथा, धनुर्वच्चास्य–अपतन्त्रकवत, प्रकृतत्वाद्गात्र नामयेत् । तथा स पुमान् कृच्छ्रादुच्छ्वसिति–कथञ्चिच्छ्वसिति । दृक्–चक्षुरिन्द्रियाधिष्ठान दृक्शब्देनेह गृह्यते । स्तब्धा स्रस्ता मीलिता च दृग्यस्यासौ स्तब्धस्रस्तमीलितदृक् । तत –अनन्तर, कपोत इव कूजेत्–अव्यक्त शब्द विदध्यात् । तथा, नि सञ्ज्ञो–विचेतन सम्पद्यते । स –एवरूपो वातव्याधि, अपतन्त्रकाख्यो भण्यते । स एव चापतानकसञ्ज्ञो निगद्यते । मुक्ते त्वित्यादि । वायुनाऽनाक्रान्ते हृदये क्षण स्वास्थ्य प्राप्नुयात् । मुहुरस्वास्थ्यतेनावृते हृद्यस्वास्थ्यमश्नुवीत ।

**गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः ।**
**अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः ॥ २१ ॥**

**स०**–स चाकालगर्भपातात्समनन्तर योषिता प्रायो जायते । कदाचिच्छोणितातिस्रवात् स्त्रीणा पुरुषाणा च, अभिघाताच्च स्यात् । स –अपतन्त्रको, गर्भपातसमुत्पन्नो दुश्चिकित्स्य स्यात्, शोणितातिस्रवोत्थितो दुश्चिकित्स्यतर, अभिघातसमुत्थो दुश्चिकित्स्यतम ।

**मन्ये संस्तभ्य वातोऽन्तरायच्छन् धमनीर्यदा ।**
**व्याप्नोति सकल देहं जत्रुरायम्यते तदा ॥ २२ ॥**
**अन्तर्धनुरिवाङ्गं च वेगैः स्तम्भ च नेत्रयोः ।**
**करोति जृम्भां दशनं दशनाना कफोद्गमम् ॥ २३ ॥**
**पार्श्वयोर्वेदना वाक्यहनुपृष्ठशिरोग्रहम् ।**
**अन्तरायाम इत्येष**

**स०**–मन्ये द्वे–ग्रीवापार्श्वाश्रिते नाड्यौ, वायु सस्तभ्य, अन्तरायच्छन् धमनीर्यदा गृह्णन् सकल देह व्याप्नोति तदा जत्रुरायम्यते–वक्रीक्रियते । जत्रुशब्दस्य पुस्त्व लोकाश्रयत्वाल्लिङ्गस्येति । अन्तर्धनुरिवाङ्ग च,–तथाऽन्त –मुखतो भागात्, अङ्ग–शरीर च, धनुरिवायम्यत इति चार्थ । वेगै –विच्छिद्य पुनरुद्भवैर्भज्यत इव तुद्यत इवै इति च नानाव्यथारूपै । तथा स्तम्भ च नेत्रयो करोति । तथा जृम्भाम् । तथा, दशनाना–दन्ताना, दशन–खादनम् । दशनमित्यत्र "दाम्नीशसयुयुज"इत्यादौ दशेरनुनासिकलोपनिर्देशो ज्ञापनार्थं, क्वतोऽन्यस्मिन्नपि प्रत्यये लोपो भवतीति तेन ल्युट्यपि भवति । दशनमिति वचनादत्र नलोप । प्रायिक चैतज्ज्ञापकमिति "हित कीटैश्च दशनम्" इत्यपि भवति । तथा कफस्योद्गमनम् । तथा, पार्श्वयोर्द्वयोर्वेदना–शूलम् । तथा, वाक्यादीना ग्रह–स्तम्भम् । इत्येष –वातव्याधि, अन्तरायामसञ्ज्ञोऽङ्गस्यान्तरायमनात्–वक्रीकरणात्, उच्यत इति शेष ।

**बाह्यायामश्च तद्विधः ॥ २४ ॥**
**देहस्य बहिरायामात् पृष्ठतो नीयते शिरः ।**
**उरश्चोत्क्षिप्यते तत्र कन्धरा चावमृद्यते ॥ २५ ॥**
**दन्तेष्वास्ये च वैवर्ण्यं प्रस्वेदः स्रस्तगात्रता ।**
**बाह्यायामं धनुष्कम्भं ब्रुवते वेगिनं च तम् ॥ २६ ॥**

**स०**–बाह्यायामश्च तद्विध –तादृश । देहस्य बहिरायामात्–अङ्गस्य धनुर्वद्बहिर्वक्रीकरणात्, बहिरायाम उच्यत इति शेष । तमेव प्रदर्शयितुमाह–पृष्ठत इत्यादि । शिर [पृष्ठत –] पृष्ठाभिमुख नीयते । तथा, तत्र–बाह्यायामे, उरो–वक्ष, उत्क्षिप्यते–उन्नतिं नीयते । तथा, कन्धरा–ग्रीवा च, अवमृद्यते–क्षुद्यते । तथा, दन्तेषु वक्त्रे च वैवर्ण्यं–प्राकृताद्वर्णाद्वर्णान्तरापत्ति । तथा, प्रकर्षेण स्वेद । तथा, स्रस्तगात्रता–श्लथाङ्गता । त–तथाभूत वातव्याधिं, बाह्यायाम धनुष्कम्भं च ब्रुवते । तमेव केचिद्वेगिनमित्याचक्षते ।

अधुना व्रणायाममाह–

**व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात् ।**
**व्यायच्छन्ति तनुं दोषाः सर्वामापादमस्तकम् ॥ २७ ॥**
**तृष्यतः पाण्डुगात्रस्य व्रणायामः स वर्जितः ।**

१ 'जत्यूर्ध्वं' स मू । २ "व्रजन्–गच्छन् । पीडयन्–रुजन् सन् । कपोत इव–कवडाख्यपक्षीव । मुक्ते–उज्झिते त्यक्ते सति । हि–स्फुट निश्चितम् । अभिघातसमुत्थ –खड्गादिप्रहाराज्जात ।" इति तोडर । "अथवा गर्भपातादिभिस्त्रिभि कारणै समुत्पन्न [ दुश्चिकित्स्यतम –] कृच्छ्रसाध्यतमो भवेत् ॥ आयच्छन्–आयाम कुर्वन् ।" इति चन्द्र । ३ 'दाश्रया' ण द. चन्द्र । ४ 'पीडयेत्' ण द । ५ 'त इव स्वा' इ । ६ 'यस्थिता' ट । ७ 'डयेत्' ट थ. । ८ 'स्य नामयेत् प्रकृतत्वाद्गात्रमेवास्य–अपतन्त्रकवतो नरस्य, नामयेत् ।' ट । ९ 'नेन्द्रिय गृ' ण द । 'ब्देन गृ' ट । १० 'त्रको भ' ट. । ११ 'पातात्समु' थ । १२ 'न्तरुपेत्य ध' स मू । १३ 'रागच्छन्' तो. । "आगच्छन्–गृह्णन् सन्" इति तोडर ।

१ "जत्रु –कण्ठोरसो सन्धि । वेगै –अङ्गप्रसरणादिलक्षणै । अवमृद्यते–क्षुभ्यते पीड्यते वा ।" इति तोडर । २ 'युराविश्य, भ' थ. । ३ 'व नाना' ट । 'इति वचनाद्यथारूपै' ण द. । ४ 'ह्रियते' इ ण द च स.द्व । ५ 'धनुस्तम्भ' ण द तो । 'धनुष्कम्प' स द्व । ६ 'प्रकृ' ट ७ 'न्तरोत्पत्ति' ट. । ८ 'नुस्तम्भ' थ. । ९ 'मर्माश्रय' इ. ।

स०–दोषा व्रण मर्माश्रित प्राप्यानन्तर समीरणस्य समीरणात्–प्रेरणात्, सर्वा तनु–सकल देहमापादमस्तक, व्यायच्छन्ति–विशेषेणाक्रामन्ति । [स –] एष व्रणायाम , तृष्यतस्तथा पाण्डुगात्रस्य नरस्य वर्जित , असाध्यत्वात् ।

**गते वेगे भवेत्[1]स्वास्थ्य सर्वेष्वाक्षेपकेषु च[2] ॥ २८ ॥**

स०–सर्वेषु चाक्षेपकेषु–"यदा तु धमनी सर्वा" (श्लो १६)–इत्यादिग्रन्थनिर्दिष्टेषु व्रणायामपर्यन्तेषु, वेगे गते सति–वेगाना शान्तौ सत्या, स्वास्थ्य भवेत्–नान्यदा ।

**जिह्वातिलेखनाच्छुष्कभक्षणादभिघातत. ।**
**कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू ॥ २९ ॥**
**करोति विवृतास्यत्वमथवा संवृतास्यताम् ।**
**हनुस्रंसः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् ॥ ३० ॥**

स०–जिह्वा[3]तिलेखनादिभि कुपितो हन्वोर्मूले स्थितो वायुर्हनू स्रसयित्वा–स्थानाच्चालयित्वा, विवृतास्यत्व–प्रसारितमुखत्व, अथवा सवृतास्यत्व करोति । स.–एवभूतो, हनुस्रस उच्यते । तेन च–हनुस्रसेन, कृच्छ्रात्–क[4]थमपि, चर्वण भाषण च स्यात् ।

**वाग्वाहिनीसिरासंस्थो जिह्वां स्तम्भयतेऽनिलः ।**
**जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ॥ ३१ ॥**

स०–वाग्वाहि[5]नीसिरासस्थो वायुर्जिह्वा स्तम्भयते । स – एवविधो, जिह्वास्तम्भ उच्यते । तेन–जिह्वास्तम्भेन, अन्नपानवाक्येषु अनीशता–असमर्थता, भवति ।

**शिरसा भारहरणादतिहास्यप्रभाषणात् ।**
**उ[6]त्त्रासवक्र[7]क्षवथोः[8] खरकार्मुककर्षणात् ॥ ३२ ॥**
**विषमादुपधानाच्च कठिनानां च चर्वणात् ।**
**वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्ध्वमास्थित. ॥ ३३ ॥**
**वक्रीकरोति वक्त्रार्धमुक्तं हसितमीक्षितम् ।**
**ततोऽस्य कम्पते मूर्धा वा[9]क्सङ्ग. स्तब्धनेत्रता॥३४॥**
**दन्तचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः ।**
**गन्धाज्ञानं स्मृतेर्मोहस्त्रासः सुप्तस्य जायते ॥ ३५ ॥**

**निष्ठीवः पार्श्वतो यायादेकस्याक्ष्णो निमीलनम् ।**
**जत्रोरूर्ध्वं रुजा तीव्रा शरीरार्धेऽधरेऽपि वा ॥३६॥**
**तमाहुरर्दितं केचिदेकायाममथापरे ।**

स०–शि[3]रोभारहरणादिभिर्वायुर्विवृद्धो–विशेषेण वृद्धि गत , तथा तैस्तैश्च वातलै –सर्वरोगनिदानाद्युक्तै , ऊर्ध्वमास्थित –शरीरस्योपरिभागे आसमन्तात्स्थितो,वक्त्रार्ध वक्रीकरोति । तथा, उक्त हसितमीक्षित च वक्रीकरोति । तत –अनन्तर, अस्य–नरस्य, मूर्द्धा कम्पते । तथा, वाक्सङ्गो जायते । तथा, स्तब्ध नेत्रतादयश्च । तथा, निष्ठीवो–निष्ठीवन, पार्श्वेन गच्छेत् । एकस्य चाक्ष्णो निमीलन स्यात् । जत्रोरूर्ध्व तीव्रा रुजा–दारुणा पीडा, भवति । शरीरार्धेऽवरेपि वा–अधस्ताद्वा, त–ईदृश वातव्याधि, केचिदर्दितमाहु , अपरे तन्त्रकृत एकायाम वदन्ति ।

**रक्तमाश्रित्य पवनः कुर्यान्मूर्द्धधराः सिराः ॥ ३७ ॥**
**रूक्षाः सवेदनाः कृष्णा. सोऽसाध्यः स्यात्सिराग्रहः॥**

स०–पवनो रक्तमाश्रि[4]त्य–श्रयित्वा, मूर्द्धाश्रिता सिरा रूक्षादिगुणयुक्ता कुर्यात् । स सिराग्रह उच्यते । स चासाध्य ।

**गृहीत्वाऽर्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च॥३८॥**
**पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोक्षयन् ।**
**कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ॥३९॥**
**एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ।**

स०–वायुस्तनो –शरीरस्य, अर्ध गृहीत्वा सिरा स्नायूश्च विशोष्य ततोऽ[5]न्यतर–वाम दक्षिण वा, पक्ष हन्ति । किं कुर्वन्? सन्धीना बन्धान् विमोक्षयन्–विघट्टयन् । तस्यैव च–व्याधिमत , कृत्स्न –सर्वोऽर्धकाय , अकर्मण्य –क्रियायामशक्तो, विचेतनश्च स्यात् । त–ईदृश वातव्याधिं, केचिदेकाङ्गरोग वदन्ति, अन्ये पक्षवधमित्याहु । अर्धकाय इति "अर्ध नपुसकम्"इति समास ।

**सर्वाङ्गरोगं तद्वच्च सर्वकायाश्रितेऽनिले ॥ ४० ॥**

स०–सर्वकायाश्रिते वायौ तेन–पूर्वोक्तेनैकाङ्गरोगोक्तेन लक्षणेन, तुल्य वर्तते तद्वत्, सर्वाङ्गरोग[6]मित्याहु ।

**शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः ।**
**कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्य. क्ष[7]यहेतुकः ॥ ४१ ॥**

---

१ "स्वास्थ्य भवेत्–पीडालाघव स्यात्, यथा–भारापगमे सुखित्वव्यपदेश ॥ जिह्वातिलेखनात्–दन्तधावनादिना जिह्वानिलेखनात् । स्रसयित्वा–अध कृत्वा ॥ उत्त्रासवक्रक्षवथो –अनृजुमुखक्षुते ।" इति तोडर । "सर्वेषु–प्रागुक्तेषु पञ्चसु । हनू–द्वे । विषमात्–निम्नोन्नतात् । उपधानात्–शिरोभाजनात् ।" इति चन्द्र । "खरकार्मुक–अतिकठिनचापम् ।" इतीन्दु । २ 'तु' इ तो स द्व । ३ 'ह्वानिलेख' ण थ.द । ४ 'कथञ्चित्' ण थ द । ५ 'नीशिरामुपस्थितो' ण द । 'नी शिरा सस्थितो' थ । ६ 'उच्छ्वास' ण द । ७ 'वक्रक्ष' ण द स द्व. । ८ 'वथुख' इ.ण द स.द्व. । ९ 'वाग्भङ्ग' इ ण द चन्द्र ।

१ 'जास्तीव्रा' स द्व । २ "अथ इति अथवा। तनो –शरीरस्य, अर्धनारीश्वरवत्–अर्धमङ्ग, गृहीत्वा–विष्टम्भ्य । सिरा स्नायू –बृहच्छिरा क्षुद्रशिरा । पक्ष–बाहुकक्षापार्श्वभाग,हन्ति–निष्क्रिय करोति। सन्धिबन्धान्–कफसहितस्नायुभि. कृतबन्धान् । विमोक्षयन्–श्लथीकुर्वन् । विचेतन –ईषत्स्पर्शविज्ञानवान् ॥ शुद्धवातहत –केवलवायुहत । अन्येनेति पित्तेन कफेन वा ।" इति तोडर. । "गृहीत्वा–अवष्टभ्य । विचेतन –विगतसज्ञ ।" इति चन्द्र. । ३ 'शिरसा भा' ट । ४ 'त्य–आश्र' द ५ 'तोऽनन्तर' ट थ । ६ 'गमप्याहु.' ट । '॰ रोग विदु.' थ. । ७ 'क्षत्रहे' स स. ।

स०-शुद्धवातेन हत पक्ष -एकाङ्गरोगं कृच्छ्रसाध्यतमो मत -अतिशयेन कृच्छ्रसाध्य । अन्येन सयुक्तो वात कृच्छ्र-कृच्छ्रसाध्य । क्षयहेतुक पक्षो विवर्ज्यो-नोपक्रम्य , असाध्यत्वात् ।

**आमबद्धायनः कुर्यात्संस्तभ्याङ्गं कफान्वितः ।**
**असाध्यं हतसर्वेहं दण्डवद्दण्डकं मरुत् ॥ ४२ ॥**

स०-आमेन बद्धानि-स्थगितानि, अयनानि-द्वाराणि प्रकृतत्वात् स्रोतसा, येन स आमबद्धायन , कफान्वितो मारुतोऽङ्ग सस्तभ्य-स्तम्भयित्वा दण्डवत् दण्डकाख्य वातव्याधिविशेष कुर्यात् । तमसाध्यम् । तथा हता सर्वा ईहा -चेष्टा , यस्मिंस्तमेवभूतम् ।

**अंसमूलस्थितो वायुः सिराः सङ्कोच्य तत्रगाः ।**
**बाहुप्रस्पन्दितहरं जनयत्यवबाहुकम् ॥ ४३ ॥**

स०-वायुरसमूले स्थित , तत्रगा -असमूलाश्रिता , सिरा सङ्कोच्यावबाहुकाख्य वातव्याधिं जनयति । किम्भूतम् ? बाहुप्रस्पन्दित हरतीति बाहुप्रस्पन्दितहरम्, "हरतेरनुद्यमनेऽच्" इत्यच् ।

**तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः ।**
**बाहुचेष्टापहरणी विश्वाची नाम सा स्मृता ॥ ४४ ॥**

स०-तल-हस्ततल, प्रति-लक्षणी (लक्ष्मी)कृत्य, या कण्डरा-सुमहान् स्नायुसङ्घात , सा बाहुपृष्ठतो गता, तथा मारुतार्दिता-वातेन पीडिता सती, बाहुचेष्टा-भुजव्यापार, अपहरति [इति] बाहुचेष्टापहरणी । बाहुलकादत्र कर्तरि ल्युट् स्त्रीत्व च । एवभूता विश्वाचीसज्ञा स्मृता, मुनिभिरिति शेष ।

**वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ।**
**तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोरपि ॥ ४५ ॥**

स०-कट्या स्थितो मारुतो यदा सक्थ्न -ऊरो सम्बन्धिनी, कण्डरामाक्षिपेत्-आकर्षेत्, तदा प्राणी खञ्जो भवेत् । द्वयोरपि सक्थ्नो सम्बन्धिनी कण्डरा यदाऽऽक्षिपेत्तदा पङ्गु स्यात् ।

**कम्पते गमनारम्भे खञ्जन्निव च याति यः ।**
**कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ४६ ॥**

स०-तथा यो गमनारम्भे कम्पते-वेपते, खञ्जन्निव च याति । त-एवभूत, कलायखञ्जाख्य व्याधि विद्यात् । किम्भूतम् ? मुक्त सन्धिप्रबन्धन यत्र, त तथाविधम् ।

**शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।**
**जीर्णाजीर्णे तथाऽऽयाससङ्क्षोभस्वप्नजागरैः ॥ ४७ ॥**
**सश्लेष्ममेदःपवनमाममत्यर्थसञ्चितम् ।**
**अभिभूयेतर दोषमूरू चेत्प्रतिपद्यते ॥ ४८ ॥**
**सक्थ्यस्थीनि प्रपूर्यान्तः श्लेष्मणा स्तिमितेन तत् ।**
**तदा स्कभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥४९॥**
**परकीयाविव गुरू स्यातामतिभृशव्यथौ ।**
**ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः ॥ ५० ॥**
**संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः ।**
**तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ५१ ॥**

स०-जीर्णेन सहितमजीर्णं जीर्णाजीर्णं-पक्वापक्वमाहारकदम्बक, केनचिन्निमित्तेन जाठराग्निसयोगादाहाररराशे कश्चिद्भाग पक्व कश्चिदपक्व इति जीर्णाजीर्णम्, तस्मिन्सति । शीतोष्णादिभिस्तथाऽऽयाससङ्क्षोभादिभिर्निषेवितै -चिरमभ्यस्तै , आममत्यर्थ सञ्चित-बहु सम्भृत, ऊरू यदा प्रतिपद्यते-उभावाश्रित्यास्ते, तदा-तस्मिन्काये, तेन-यथोक्तेन हेतुना, तावूरू स्कभ्नाति-स्तम्भयति । किम्भूतमामम् ? सश्लेष्ममेद पवनम् । सह श्लेष्मणा मेदसा पवनेन च वर्तत इति सश्लेष्ममेद पवनम्, न तु कवलमेव । तथा, इतर दोष-वातश्लेष्मापेक्षया पित्ताख्य, अभिभूय-आक्रम्य, न वात कफ वा । तेन हि तयोरभिभवो न युक्त , तत्सहवर्तमानत्वात् । तथा, तेन सहवर्तमानेनापि श्लेष्मणा च स्तिमितेन-स्त्यानेन, सक्थिसम्बन्धीन्यस्थीन्यन्त प्रपूर्य-तानि निर्भराणि कृत्वा, तदा तत्-आम, ऊरू स्कभ्नातीति योज्यम् । तेन हेतुना तदा-तस्मिन्काले, तावूरू स्तब्धौ-

१ 'शुद्धेन वायुना-दोषान्तरासपृक्तेन निरामेण च, यो हत० ग म क्' थ । २ "दण्डवत्-लगुडवत्स्तब्धम् ।" इति चन्द्र । "बाहुप्रस्पन्दितहर-बाहुचेष्टापहारिणम् । तल-हस्तस्योपरिभाग , तलशब्दोऽत्रोपरिवचन । यथा,-भूतलमित्यादि । अनेनायमर्थ ,-बाहो पृष्ठ बाहुपृष्ठम्, तदारभ्य हस्ततल लक्षीकृत्याङ्गुलीना या कण्डरास्ता सदूष्य बाहो कर्मक्षयकरी या सा विश्वाचीनाम वातव्याधि । बाहो कर्म-ग्रहणाकुञ्चनादि । द्वित्व चात्र सम्भवपरम्, तेनैकबाहावपि भवतीति॥ सक्थ्नोरिति द्विवचनेनैव द्वित्वे सिद्धे द्वयोरिति पदेन नियम कृत , सक्थिद्वयवधात् पङ्गुरेवेति ।" इति तोडर । ३ 'त्यपबा' स स । ४ 'मूलस्थिता ' ट । ५ 'बाहो कर्मक्षयकरी वि' तो मा नि । ६ 'विश्वभी' स स । ७ 'तल्लक्षण कृत्वा' ट । ८ 'हाखा' ण थ.द । ९ वक्ष्यमाणोक्त (श्लो ५४) 'मारुतार्दिता' इति पदमत्रापि युक्तत्वादावश्यकत्वाच्चारुणदत्तचन्द्रनन्दनतोडरमल्लैर्व्याख्यातमिति प्रतिभाति । १० 'योर्वधात्' स सु ,मा नि ।

१ 'भवति' ण थ.द । २ 'कडाय' द च ,ट । ३ 'थाभूतम्' ट । ४ "अत्र शीतोष्णग्रहण [अनुक्त]परस्परविरोधिद्वन्द्वोपलक्षणार्थम् । तेन गुरुस्निग्धाभ्या लघुरूक्षयोर्ग्रहण बोद्धव्यम् । आयाससङ्क्षोभ -व्यायामातिशय ।" इति तोडर । ५ 'स्तभ्नाति' ण द ,ट मा नि । 'स्कन्नाति' इ । 'स्कन्दति' तो । "स्कन्दति-शोषयति । 'स्कन्दिर् गतिशोषणयो ' इति धातु " इति तोडर । * ६ 'सयुक्तौ' ण द थ । ७ 'वात तथा' स मू । ८ 'ररसस्य क' ण । 'ररसै क' द तो. । ९ 'श्चिद्दिदग्ध इ' ट.थ । १० 'वतन' ट ण.थ.द. ।

निश्चलौ, तथा स्पर्शत शीतौ, तथाऽचेतनौ–सूच्यादिभिस्तुद्य मानावपि पीडा न वेदयेताम्, अत एव परकीयाविव गुरू स्याताम् । तथाऽतिभृशव्यथौ–अत्यन्तशूलान्वितौ । परकीयाविति "कुञ्जनस्य परस्य च" इति ईय कुगागमश्च । तथा ध्यानादिभि सयुतौ । ध्यान–चिन्ता दौर्मनस्यमित्यर्थ । तथा पादसदनादिभि सयुतौ । एवलक्षणो यो व्याधिविशेषस्तमूरुस्तम्भमाहु, तन्त्रकृत इति शेष । अपरे आचार्या आढ्यवातमिति तमाहु । आमशब्दस्य नपुसकत्व लोकाश्रयत्वाल्लिङ्गस्येति बोध्यम् ।

**वातशोणितज॰ शोफो जानुमध्ये महारुजः ।**
**ज्ञेयः क्रोष्टुकशीर्षश्च स्थूल॰ क्रोष्टुकशीर्षवत् ॥ ५२॥**

स॰–जानुमध्ये महारुज शोफो वातशोणिताज्जात क्रोष्टुकशीर्षाख्यो वातव्याधिभेद । स च स्थूल शृगालशिर सदृशो भवति ।

**रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा ।**
**वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ ५३ ॥**

स॰–पादे–चरणे विषमन्यस्ते सति, अथवा श्रमेण यदा गुल्फमाश्रित्य वातेन रुजायते, त वातकण्टकाख्य वातव्याधिमाहु ।

**पार्ष्णिं प्रत्यङ्गुलीनां या कण्डरा मारुतार्दिता ।**
**सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥ ५४॥**

स॰–पार्ष्णिं प्रति–पार्ष्ण्यभिमुख, या अङ्गुलीना कण्डरा सा मारुतेन–वायुना, अर्दिता–व्यथिता, चरणोद्धरणावसरे य सक्थ्युत्क्षेप –ऊर्ध्व प्रेरण, त निगृह्णाति–अवमृद्नाति सक्थ्नोर्निश्चलत्वमिवोत्पादयति । ता–कण्डरा, व्याधिविशेषसज्ञा गृध्रसी प्रचक्षते, तन्त्रकृत इति शेष ।

**विश्वाची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विते ।**

स॰–विश्वाची चोक्ता "बाहुचेष्टापहरणी" (श्लो ४४) इत्यादिना ग्रन्थेन, गृध्रसी चाधुनैवोक्ता । ते द्वे तीव्ररुजान्विते सत्यौ खल्ली भण्यते ।

**हृष्येते चरणौ यस्य भवेतां च प्रसुप्तवत् ॥ ५५ ॥**
**पादहर्षः स विज्ञेयः कफमारुतकोपजः ।**

स॰–यस्य पुसश्चरणौ हृष्येते प्रसुप्ताविव च स्याताम्, स –एवभूतो वातव्याधि, पादहर्षाख्य । स च वातश्लेष्मकोपजो वेद्य ।

**पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ॥५६॥**
**विशेषतश्चङ्क्रमिते पाददाहं तमादिशेत् ॥ ५६½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने वातव्याधिनिदानं नाम पञ्चदशोऽध्यायः॥१५॥**



स॰–अनिल पित्तरक्तसहित पादयोर्दाह कुरुते, विशेषेण तु चङ्क्रमिते सति । त–एवभूत, पाददाहमादिशेत्–ब्रूयात्, भिषगिति शेष ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया तृतीये निदानस्थाने वातव्याधिनिदान नाम पञ्चदशोऽध्याय समाप्त ॥ १५ ॥



## षोडशोऽध्यायः ।

वातशोणितनिदान वातव्याधिनिदानात् पृथगारभ्यते, बहुवक्तव्यत्वात् । अन्यथा वातव्याधिविशेष एव वातशोणिताख्यो व्याधिरिति तत्रैव वक्तु युक्त स्यात् । तस्माद्वातशोणितनिदानं प्रक्रम्यत इत्याह—

**अथातो वातशोणितनिदानं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
(गद्यसूत्रे ॥ २ ॥)

**विदाह्यन्नं विरुद्धं च तत्तच्चासृक्प्रदूषणम् ।**
**भजतां विधिहीनं च स्वप्नजागरमैथुनम् ॥ १ ॥**
**प्रायेण सुकुमाराणामचङ्क्रमणशीलिनाम् ।**
**अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥ २ ॥**
**वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ।**
**तादृशैवासृजा रुद्धः प्राक्तदेव प्रदूषयेत् ॥ ३ ॥**
**आढ्यरोगं खुडं वातबलासं वातशोणितम् ।**
**तदाहुर्नामभि॰**

स॰–मद्याम्लतक्रदधिनिष्पावव्रीहिचीरिचरमासकुलत्थकुठेरादिक–विदाह्यन्न, तथा विरुद्धमन्न–सयोगमात्रादिवशात् यथा "आनूपमामिष माषक्षौद्रक्षीर" (हृ सू अ ७।२९) इत्यादिकं प्रागुक्तम्, तत्तच्चासृक्प्रदूषणं–अन्यदप्याहारविहारजात यत्तत्र-

१ 'भिर्युक्तौ' ण थ द । २ 'कमूर्द्धवत्' तो स सु । ३ 'कमूर्द्धाख्यो' थ । ४ "निगृह्णाति–अवष्टभ्नाति" इति चन्द्र । "चरणौ–पादौ, हृष्येते–हर्षयुक्तौ भवत, हर्षश्च रोमाञ्चप्रायोऽन्त शीतो झिणिझिणिवद्वेदनाविशेष इत्याहु, झिणिझिणी तु न चिरानुबन्धिनी । प्रसुप्तवत्–निश्चेतनवत् ।" इति तोडर । ५ 'विश्वभी' स स । ६ 'न्विता' इ.ण.द.स.स ।

१ 'ङ्क्रमत' इ मा नि । 'ङ्क्रमणात्' स सु॰ । २ इद वातशोणितनिदान चरके चि॰ २९ अध्याये, सुश्रुते नि॰ १ अध्याये, अष्टाङ्गसङ्ग्रहे नि॰ १६ अध्याये चास्ति वर्णितम् । ३ 'तथाऽसृ' स मू चन्द्र । ४ "सुकुमाराणा–मृदुदेहावयवानाम् ।" इति तोडर । ५ 'दृशेनासृ' इ.स.द. । ६ 'तपलाद्यं' तो. । ७ 'हिकुठे' ण,थ,द. ।

तत्रोक्तम्, तद्भजता–शीलयता, नृणा–पुरुषाणा, तथा विविहीन–अयथाशास्त्र, स्वप्नजागरमैथुन भजता प्रायेण सुकुमाराणाम्, प्रायोग्रहणम(णेना)न्येषामपि रक्तोपचयहेत्वाहारसेविनाम्, तथा अचङ्क्रमणशीलिना–अत्यन्तमास्यादिसुखसेविनाम्, अभिघातात्–अनेकविधात्प्रहारविशेषात्, तथा अशुद्धे –अशोधनान्मलानिर्हरणात्, तेषामसृजि दूषिते–तद्दूषणहेतुभिर्यथोक्तैर्दुष्टे सम्पन्ने, ततो वातलै·–तिक्तोषणादिभि सर्वरोगनिदानोक्तै, तथाऽतिशयेन शीतलैर्वायुर्वृद्ध –अत्यन्तमुपचय प्राप्य, पश्चात्क्रुद्ध –कुपित, अत एव च विमार्गगो–विशेषेणोन्मार्गगामी, तादृशैव–तथाभूतेनैव, असृजा दुष्टेन क्रुद्धेन रुद्धो–विहतगति कृतात्यन्तसश्लेषं, तदेव–शोणित, प्राक्–पूर्व, प्रदूषयेत्। प्राग्ग्रहणादनन्तर सर्वान् धातून् मासादीन् प्रदूषयेत्। तच्च तथाविध रक्तमत्युपचितं प्रदुष्टमाढ्यरोग खुड वातबलास वातशोणितमिति नामभिराचार्या आहु ।

तच्च पूर्वं पादौ प्रधावति ॥ ४ ॥
विशेषाद्यानयानाद्यै· प्रलम्बौ

स०–तच्च रोगस्वभावात् पूर्वं पादौ प्रधावति–समुत्पद्यते। तौ च पादौ विशेषात्–अतिशयेन, यानयानाद्यै प्रलम्बौ–उच्छूनौ सन्तौ, प्रधावति। यानेन–हस्त्यश्वादिना, यान–गमनम्। आदिग्रहणादन्यैरपि पादप्रलम्बनोत्पादकैर्गजतुरगादिसदृशै ।

तस्य लक्षणम्।

भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता ॥ ५ ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु।
कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तता· ॥ ६ ॥
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च।

स०–तस्य–वातशोणितस्य, भविष्यतो–भाविनो, लक्षण–प्राग्रूप, कुष्ठसम–कुष्ठेन तुल्यम्, कुष्ठस्य यत् प्राग्रूप–"अतिश्लक्ष्णखरस्पर्श" (हृ नि अ १४।११) इत्यादि कुष्ठनिदानोक्त, तदस्यापि। न केवलमेतदेव यावत्तथा साद श्लथाङ्गतेत्यादि च, यावन्मुहुराविर्भवन्ति चेत्येतदपि भविष्यतो लक्षणम्।

पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥ ७ ॥
आखोरिव विषं क्रुद्धं कृत्स्नं देहं विधावति।

स०–तच्च वातशोणित पादयोर्मूलमास्थाय–तत्र पूर्वं स्थितिं कृत्वा, कदाचिद्धस्तयोरपि प्रतिष्ठा कृत्वा, आखो–मूषकस्य सम्बन्धि, यथा विष क्रुद्ध देहैकदेशे पूर्वं स्थितिं कृत्वाऽनन्तरं कृत्स्नं देह विधावति–विशेषेण प्रसरति।

१ 'दृशेन–' ट.थ। २ 'जा कु' ण थ द। ३ 'कृतोऽत्य'ण द। ४ 'श्लेषात्तत एव शो' ट । ५ "अथ सम्प्राप्तिमाह–तच्चेत्यादि॥ तथा–अन्यच्च। साद –स्वकार्याक्षमत्वम्। भूत्वा भूत्वा–सम्भूय सम्भूय॥ क्रुद्धं सत्–अनुपक्रमत्वादधिक सत्। आखोरिव विषमित्यनेन मन्दविसर्पिता दर्शितवान्।" इति तोडर। ६ 'लम्बितौ त्वा' ट.ण.द.। ७ 'कै कुञ्जरतु' ण.द.।

तच्च वातशोणितमुत्तानगम्भीरभेदेन द्विधा स्यादित्याह—

त्वङ्मांसाश्रयमुत्तानं तत्पूर्वं जायते ततः ॥ ८ ॥
कालान्तरेण गम्भीरं सर्वान् धातूनभिद्रवत्।

स०–त्वक् च मास च, ते आश्रयो यस्य वातरक्तस्य तदेवभूत तत्–वातशोणित, उत्तान पूर्वं–प्राक्, जायते। तत –पश्चात्, कालान्तरेण पुन सर्वान् धातून्–अपरानपि मेद प्रभृतीन्, अभिद्रवद्गम्भीर जायते।

कण्ड्वादिसंयुतोत्ताने त्वक्ताम्रा श्यावलोहिता ॥ ९ ॥
सायामा भृशदाहोषा

स०–उत्ताने वातशोणिते त्वक् कण्ड्वादिसयुता–कण्डूस्फुरणनिस्तोदादियुक्ता(श्लो ६), तथा ताम्रा श्यावलोहिता–व्यामिश्रवर्णा, भवति। तथा सहायामेन वर्तत इति सायामा, तथा भृशदाहोषा–अत्यर्थ दाहरुग्युक्ता।

गम्भीरेऽधिकपूर्वरुक्।
श्वयथुर्ग्रथितः पाकी वायुः सन्ध्यस्थिमज्जसु ॥ १० ॥
छिन्दन्निव चरत्यन्तर्वक्रीकुर्वंश्च वेगवान्।
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन् ॥ ११ ॥

स०–गम्भीरे वातशोणितेऽधिकपूर्वरुक् श्वयथु स्यात्। अधिक कृत्वा पूर्वा रुक् यस्य श्वयथोरसावधिकपूर्वरुक् श्वयथु। कुतोऽधिकपूर्वरुक् ? प्रकृतत्वादुत्तानवातशोणितात्। तथा श्वयथुर्ग्रथित, तथा पाकी–पाकयुक्त, स्यात्। तथाऽस्मिन् गम्भीरे वायुर्वेगवान्–बलवान्, शरीरे सर्वतश्चरन्–गच्छन्, वक्रीकुर्वंश्च सामर्थ्यात्तदेव शरीर खञ्ज पङ्गु वा करोति। तथा, असौ सन्ध्यस्थिमज्जसु छिन्दन्निवान्तश्चरति।

वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम्।
शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः ॥ १२ ॥
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक्।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ १३ ॥

स०–तत्र–वातशोणिते, वाताधिकेऽधिक शूलस्फुरणतोदन भवति। शूल–सन्तता रुक्। तोदन तु–विच्छिन्ना रुक् प्रतो-

१ "सर्वान् धातून्–रसादीन्। अभिद्रवत्–व्याप्नुवत्॥ दाह –सन्ताप। ऊषा–सर्षपलिप्तस्येव चिमिचिमा वेदनाविशेष॥ ग्रथित –उत्तुण्डित॥ स्फुरण–अङ्गस्पन्दनम्। अथवा 'वृद्धिहानय' इति पृथक् पदम्, तेन वातरक्तलक्षणाना वृद्धिहानय इति वा। शीतद्वेष –शीतासहिष्णुत्वम्, तथा शीतेनैवानुपशय –असुखानुबन्धो वातरक्तस्यैव।" इति तोडर। "अभिद्रवत्–आभिमुख्येन गच्छत्। ग्रथित –कठिन। वक्रीकुर्वन्–कुटिलीकुर्वन्। शीतेन द्वेषस्तेनेव शीतेनो (नानु) पशय –[अ] सुखानुबन्ध।" इति चन्द्र। "अनुपशय –शीतेन रोगवृद्धि।" इति वाचस्पति। २ 'क्ताम्रश्या' स स। ३ 'ताम्रश्या' ट थ। ४ 'भिन्द' स स। ५ 'रन्त' ण द। ६ 'पूर्वरु' ण द। 'पूर्व रु' थ। ७ 'त स्यात्। त' ण.द। 'थित इव ग्रथित, त' थ। ८ 'था तस्मि' ट.।

देनेव । तथा, शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानय स्यु, वातस्य चलस्वभावत्वात् । तथा, धमनीना-सिराविशेषाणा, अङ्गुलिसन्धीना च सङ्कोच स्यात् । तथा, अङ्गग्रह -अङ्गान्य-बबद्धानीव स्यु । तथा, अतिरुक् शीतद्वेषानुपशयौ च भवत । शीतद्वेष -शीतासहिष्णुत्वम् । तथा, अनुपशय -असुखानुबन्ध । केनानुपशय ? प्रकृतत्वाच्छीतद्वेषेणोष्णकामितयोष्णसेवनेन भवति । तथा, स्तम्भवेपथुसुप्तय स्यु । स्तम्भ इव स्तम्भो-देहस्तब्धता । वेपथु -कम्पनम् । देहस्य सुप्ति -अङ्गानामचैतन्यम् ।

वातोत्तरस्य लक्षणमुक्त्वा रक्तोत्तर वक्तुमाह—

**रक्ते शोफोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।**
**स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥ १४ ॥**

स०-अधिक इत्यत्रानुवर्तते । रक्तेऽधिके शोफोऽतिरुक्तोद इति । वातेऽप्यधिके शोफ सरुग्भवति किन्तु रक्तेऽधिकेऽतिरुक्तोद शोफ स्यादिति विशेष । तथा, ताम्रो-वर्णेन, भवति । चिमिचिमामिवाचरति-चिमिचिमायते । तथा, स्निग्धरूक्षैरसौ शोफ शम नैति-न याति, कण्डूक्लेदयुक्त सन् ।

**पित्ते विदाहः सम्मोहः स्वेदो मूर्च्छा मदः सतृट् ।**
**स्पर्शाक्षमत्वं रुग्राग. शोफः पाको भृशोष्मता ॥१५॥**

स०-पित्ते-पित्तानुविद्धे वातशोणिते, विदाहादय स्यु ।

**कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ।**
**कण्डूर्मन्दा च रुक्**

स०-कफानुविद्धे वातशोणिते स्तैमित्यादय स्यु ।

**द्वन्द्वसर्वलिङ्गं च सङ्करे ॥ १६ ॥**

स०-द्वन्द्वशब्देन च वातपित्तकफरक्ताना द्वन्द्वानीति प्रायेणेह गृह्यन्ते, सर्वशब्देन च वातपित्तरक्तकफा गृह्यन्ते । द्वन्द्व च सर्व च द्वन्द्वसर्वे, तयोर्लिङ्ग-लक्षण, द्वन्द्वसर्वलिङ्गम् । सङ्करे-व्यामिश्रत्वे सति, द्वन्द्वसर्वलिङ्ग वातशोणित भवति । कस्य सङ्करे? प्रकृतत्वाद्वातपित्तरक्तकफाना द्वन्द्वसङ्करे द्वन्द्वलिङ्ग वातशोणित भवति । सर्वसङ्करे-सर्वेषा वातादीना सङ्करे, सर्वलिङ्ग वातशोणितं भवति ।

**एकदोषानुगं साध्यं नवं, याप्यं द्विदोषजम् ।**
**त्रिदोषजं त्यजेत्स्रावि स्तब्धमर्बुदकारि च ॥ १७ ॥**

स०-एकदोषानुग वातशोणितं नव साध्य-साधयितु शक्यम् । द्विदोषोद्भवं याप्य-यापनार्हम् । त्रिदोषज वातशोणित त्यजेत्-असाध्यत्वान्नोपक्रमेत् । तथा, स्रावि यद्वातरक्तमर्बुदकारि च, तच्चासाध्यम् ।

**रक्तमार्गं निहत्याशु शाखासन्धिषु मारुतः ।**
**निविश्यान्योन्यमावार्य वेदनाभिर्हरत्यसून् ॥ १८ ॥**

स०-शाखासन्धिषु मारुतो निविश्य-तत्र स्थितिं कृत्वा, तथा रक्तमार्गमाशु-शीघ्र निहत्य, अनन्तरमन्योन्यमावार्य-प्रकृतत्वाद्रक्त कर्तृ वातमावार्य वातोऽपि रक्तम्, ततो वेदनाभि -वातरक्तोचिताभि पीडाभि, असून्-प्राणान्, हरति ।

**वायौ पञ्चात्मके प्राणो रौक्ष्यव्यायामलङ्घनैः ।**
**अत्याहाराभिघाताध्ववेगोदीरणधारणैः ॥ १९ ॥**
**कुपितश्चक्षुरादीनामुपघात प्रवर्तयेत् ।**
**पीनसार्दिततृट्कासश्वासादींश्चामयान्बहून् ॥ २०॥**

स०-पञ्चात्मके-प्राणादिभेदात् पञ्चस्वभावे वाते सति, प्राणो नाम वातो रौक्ष्यादिभि कुपितश्चक्षुरादीनामुपघात प्रवर्तयेत्-विदधाति । तथा, पीनसादींश्च बहून् रोगान् कुर्यात् । आदिशब्देन हिध्मादयो गृह्यन्ते ।

**उदान. क्षवथूद्गारच्छर्दिनिद्राविधारणैः ।**
**गुरुभारातिरुदितहास्याद्यैर्विकृतो गदान् ॥ २१ ॥**
**कण्ठरोधमनोभ्रंशच्छर्द्यरोचकपीनसान् ।**
**कुर्याच्च गलगण्डादींस्तांस्तान् जत्रूर्ध्वसंश्रयान्॥२२॥**

स०-उदान क्षवथुविधारणादिभिर्विकृत -कुपित, कण्ठरोधादीन् गदान् कुर्यात् । चशब्दोऽत्र भिन्नक्रम । गलगण्डादींश्च गदान्, तास्तान्-अनेकविधान्, जत्रूर्ध्वसश्रयान् कुर्यात् ।

**व्यानोऽतिगमनध्यानक्रीडाविषमचेष्टितैः ।**
**विरोधिरूक्षभीहर्षविषादाद्यैश्च दूषित. ॥ २३ ॥**
**पुंस्त्वोत्साहबलभ्रंशशोफचित्तोत्प्लवज्वरान् ।**
**सर्वाङ्गरोगनिस्तोदरोमहर्षाङ्गसुप्तताः ॥ २४ ॥**
**कुष्ठं विसर्पमन्यांश्च कुर्यात्सर्वाङ्गगान् गदान् ।**

स०-व्यानोऽतिगमनादिभिर्विरोध्यादिभिश्च दूषितो-दुष्टिं प्राप्त, पुंस्त्वोत्साहादिभ्रशादीन् अपरानपि सर्वाङ्गगान् गदान् कुर्यात् ।

**समानो विषमाजीर्णशीतसङ्कीर्णभोजनैः ॥ २५ ॥**
**करोत्यकालशयनजागराद्यैश्च दूषितः ।**
**शूलगुल्मग्रहण्यादीन् पक्वामाशयजान् गदान् ॥२६॥**

स०-समानो विषमादिभोजनादिभिरकालशयनादिभिश्च दूषित शूलादीन् पक्वामाशयजान् गदान् करोति ।

---

१ 'ङ्गानि स्तब्धानी' थ । २ 'तथा तेन च शीतेनोपशय -सुखानुबन्धो जायते, अनु' ट । ३ "स्निग्धरूक्षै -आहारौषधाद्युपयुक्तै. ॥ विदाह -विविध सन्ताप ॥ स्तब्ध-निश्चलम् ।" इति चन्द्र । "स्तैमित्य-आर्द्रता" इति वाचस्पति । ४ 'सङ्करात्' मा नि । ५ 'दोष तत्त्यजे' इ चन्द्र । ६ 'दोषज' ट. । ७ 'त तत्त्यजे' थ. । ८ 'तदसाध्य' ट । 'असाध्य नोप' ण.द. ।

१ 'हत्वा' ण द च स स स च । २-३ 'माबाध्य' 'हरेदसून्' स च. । ४ 'वातो' ण द. । ५ 'निहन्ति' थ । ६ 'रूक्षव्या' इ ण द तो । ७ "चक्षुरादीना-पञ्चेन्द्रियाणाम् ।" इति तोडर । "विकृतो-दुष्ट ।" इति चन्द्र । ८ 'रूक्षादि' ण थ द । ९ 'ग्रावधा' इ ण द तो । १० 'वध्वादिभि' ण थ द । ११ 'नस्थान' इ ण द तो स स. । १२ 'सुप्तिता.' ण.द । १३ 'हादिविसर्पान्तान्' थ. ।

**अपानो रूक्षगुर्वन्नवेगाघातातिवाहनैः ।**
**यानयानासनस्थानचङ्क्रमैश्चातिसेवितैः ॥ २७ ॥**
**कुपितः कुरुते रोगान् कृच्छ्रान् पक्वाशयाश्रयान् ।**
**मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान् बहून् ॥ २८ ॥**

स०–अपानो रूक्षान्नादिभिरतिसेवितैर्वेगाघातादिभिश्चातिसेवितैः कुपितः कृच्छ्रान्–दारुणान्, पक्वाशयाश्रयान् मूत्रशुक्रप्रदोषादीन् बहून् गदान् कुर्यात् ।

**सर्वं च मारुतं सामं तन्द्रास्तैमित्यगौरवैः ।**
**स्निग्धत्वारोचकालस्यशैत्यशोफाग्निहानिभिः ॥२९॥**
**कटुरूक्षाभिलाषेण तद्विधोपशयेन च ।**
**युक्तं विद्यान्निरामं तु तन्द्रादीनां विपर्ययात् ॥ ३०॥**

स०–सर्वमपि मारुतं तन्द्रादिभिर्लक्षणैर्युतं सामं विद्यात् । तन्द्रादिलक्षणविपर्ययेण तु निरामं जानीयात् ।

**वायोरावरणं चातो बहुभेदं प्रवक्ष्यते ।**

स०–अतः–सामादिलक्षणादनन्तरं, वातस्यावरणं बहुभेदं–अनेकप्रकारं, प्रकर्षेण वक्ष्यते । किल नास्याम एवावरणम्, अपि त्वन्यदप्यस्तीति द्योतयति ।

**लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः ॥३१॥**
**कटुकोष्णाम्ललवणैर्विदाहः शीतकामता ।**

स०–पित्तेनावृते मरुति दाहादिकं लिङ्गम् ।

**शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ॥ ३२ ॥**
**लङ्घनायासरूक्षोष्णकामता च कफावृते ।**

स०–कफावृते वायौ शैत्यादिकं लिङ्गं लङ्घनादिकामता च ।

**रक्तावृते सदाहाऽर्तिस्त्वङ्मांसान्तरजा भृशम् ३३**
**भवेच्च रागी श्वयथुर्जायन्ते मण्डलानि च ।**

स०–रक्तावृते पवनेऽर्तिः–पीडा, भृशं त्वङ्मांसान्तरजा दाहयुक्ता स्यात् । रागवांश्च श्वयथुः स्यात् । तथा, मण्डलानि च जायन्ते ।

**मांसेन कठिनः शोफो विवर्णः पिटिकास्तथा ॥३४॥**
**हर्षः पिपीलिकानां च सञ्चार इव जायते ।**

स०–मांसेनावृते वायौ कठिनो विवर्णश्च शोफस्तथा पिटिकाः स्युः, हर्षश्च । तथा, पिपीलिकानां गात्रेषु सञ्चार इव जायते ।

**चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः ३५**
**आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसाऽऽवृते ।**

स०–मेदसा आवृते वायावङ्गेषु शोफश्चलस्तथा स्निग्धस्तथा शीतो मृदुश्च स्यात् तथाऽरोचकः । स–एवंविधः, आढ्यवात इति वेद्यः । स च कृच्छ्रः–कृच्छ्रसाध्यः ।

**स्पर्शमस्थ्यावृतेऽत्युष्णं पीडनं चाभिनन्दति ॥३६॥**
**सूच्येव तुद्यतेऽत्यर्थमङ्गं सीदति शूल्यते ।**

स०–अस्थ्यावृते समीरणे स्पर्शमत्युष्णं पीडनं चाभिनन्दति–अभिलषति । तथा, अङ्गमतिशयेन सूच्येव तुद्यते । तथा, सीदति शूल्यते च ।

**मज्जावृते विनमनं जृम्भणं परिवेष्टनम् ॥ ३७ ॥**
**शूलं च पीड्यमानेन पाणिभ्यां लभते सुखम् ।**

स०–मज्जावृते समीरे विनमनादिकं स्यात् । विनमनम्–अङ्गानाम् । तथा, पाणिभ्यां पीड्यमानेन च–प्रकृतत्वादङ्गेन, सुखं लभते ।

**शुक्रावृतेऽतिवेगो वा न वा निष्फलताऽपि वा ३८**

स०–शुक्रावृते प्रभञ्जनेऽतिवेगो वा–प्रकृतत्वाच्छुक्रस्य, न वा वेगो निष्फलता वा स्यात् ।

**भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले ।**

स०–अन्नावृते वाते भुक्ते सति रुजा कुक्षौ भवति । जीर्णेऽन्ने सति रुजा शाम्यति ।

**मूत्राप्रवृत्तिराध्मानं बस्तेर्मूत्रावृते भवेत् ॥ ३९ ॥**

स०–मूत्रावृते वायौ मूत्रस्याप्रवृत्तिराध्मानं च बस्ते स्यात् ।

**विडावृते विबन्धोऽधः स्वस्थाने परिकृन्तति ।**
**व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ॥ ४० ॥**
**शकृत्पीडितमन्नेन दुःखं शुष्कं चिरात्सृजेत् ।**

स०–विडावृते मातरिश्वनि स्वस्थाने–अपानाख्ये, अधोविबन्धो जातविबन्धत्वात् परिकृन्तति । स्नेहश्चाशु जरां याति । भुक्ते च सति नरः आनह्यते–आध्माप्यते । शकृदन्नेन पीडितं चिरेण शुष्कं दुःखं कृच्छ्रेण सृजेत् ।

**सर्वधात्वावृते वायौ श्रोणिवङ्क्षणपृष्ठरुक् ॥ ४१ ॥**

---

१ 'वेगाघा' ण द तो । २ 'अतिवाहनैः–अतिप्रेरणैः । सर्वं–प्रश्नवधम् ।' इति तोडरः । ३ 'प्रचक्ष्यत' इ तो । 'प्रचक्षत' स.मू. । ४ 'कादीनां स' इ तो. । ५ 'हर्षस्तथा' ण.द. ।

१ "विनमनं–गात्रशैथिल्यम् । परिवेष्टनं–रज्ज्वादिभिरङ्गं बद्धमिव । पीड्यमाने–मृद्यमानेऽङ्गे सति । सुखं–शूलाद्यपायम् ॥ निष्फलताऽपि स्यात्–तस्माच्छुक्राद्गर्भो न भवतीत्यर्थः ॥ अतिविड्रोधः–पुरीषाप्रवृत्तिर्मलाप्रवृत्तिरिति यावत् । सोऽतिविड्रोधः कर्ता । स्वे स्थाने–मलस्थाने, परिकृन्तति–कर्तरीवत् व्यथयति पीडयति ।" इति तोडरः । २ 'ने तु पा' इ तो । 'ने च पा' ण द स स । ३ 'च' इ तो । ४ 'ता तस्य स्या' ट । 'ता तथा स्या' ड थ । ५ 'बस्तौ मू' इति क्वचित् । ६ 'बस्तौ' ड थ । ७ 'तेऽतिविड्रोध' इ तो । ८ 'स्वे स्थाने' तो स द्व, ट ड थ । ९ 'बन्धः सन् प' ण.द. । १० 'आध्मानं क्रियते' थ. ।

**विलोमो मारुतोऽस्वस्थं हृदयं पीड्यतेऽति च ।**

स०–सर्वधात्वावृतेऽनिले श्रोण्यादिरुक् स्यात् । तथा, पवनो विगुणो भवति । हृदय च व्याकुल [अति] पीड्यते च ।

**भ्रमो मूर्च्छा रुजा दाहः पित्तेन प्राण आवृते ॥४२॥**
**विदग्धेऽन्ने च वमनम्**

स०–प्राणे पित्तेनावृते भ्रमाद्या स्यु । अन्ने च विदाहावस्था प्राप्ते सति वमन स्यात् ।

**उदानेऽपि भ्रमादयः ।**
**दाहोऽन्तरूर्जाभ्रंशश्च**

स०–उदाने च पित्तेनावृते सति भ्रमाद्या –पूर्वोक्ता, स्यु । तथा, अन्तर्दाह ऊर्जाया –बलस्य च, विनाश ।

**दाहो व्याने च सर्वगः ॥ ४३ ॥**
**क्लमोऽङ्गचेष्टासङ्गश्च ससन्तापः सवेदन ।**

स०–व्याने च पित्तेनावृते सर्वश (ग)–अन्तर्बहिश्च दाह, क्लमादयश्च स्यु ।

**समान ऊष्मोपहतिरतिस्वेदोऽरतिः सतृट् ॥ ४४ ॥**
**दाहश्च स्यात्**

स०–समाने पित्तेनावृते ऊष्मण –अग्ने, उपहति –उपघात, अतिस्वेदादयश्च स्यु ।

**अपाने तु मले हारिद्रवर्णता ।**
**रजोतिवृत्तिस्तापश्च योनिमेहनपायुषु ॥ ४५ ॥**

स०–अपाने पुन पित्तेनावृते सति मले–पुरीषादौ, हारिद्रवर्णता स्यात् । योन्यादिषु रुज –पीडाया, अतिवृत्तिस्तापश्च स्यात् ।

**श्लेष्मणा त्वावृते प्राणे सादस्तन्द्राऽरुचिर्वमिः ।**
**ष्ठीवनं क्षवथूद्गारनिःश्वासोच्छ्वाससङ्ग्रहः ॥ ४६ ॥**

स०–प्राणे च श्लेष्मावृते सादादय स्यु ।

**उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रह ।**
**बलवर्णप्रणाशश्च**

स०–उदाने च श्लेष्मावृते गुरुगात्रत्वादय स्यु ।

**व्याने पर्वास्थिवाग्ग्रह ॥ ४७ ॥**
**गुरुताऽङ्गेषु सर्वेषु स्खलितं च गतौ भृशम् ।**

स०–व्याने कफावृते पर्वास्थिवाग्ग्रहस्तथाऽङ्गेषु गौरव गतौ च स्खलन स्यात् ।

**समानेऽतिहिमाङ्गत्वमस्वेदो मन्दवह्निता ॥ ४८ ॥**

स०–समाने कफावृतेऽतिशीताङ्गत्वमस्वेदो मन्दाग्नित्व च स्यात् ।

**अपाने सकफं मूत्रशकृतः स्यात्प्रवर्तनम् ।**

स०–अपाने कफावृते मूत्रशकृत प्रवर्तन सकफ स्यात् ।

**इति द्वाविंशतिविधं वायोरावरणं विदुः ॥ ४९ ॥**

स०–इति–अनेन प्रकारेण, वायोरावरण द्वाविंशतिप्रकार [विदु –] जानन्ति, तन्त्रकृत इति शेष ।

**प्राणादयस्तथाऽन्योन्यमावृण्वन्ति यथाक्रमम् ।**
**सर्वेऽपि विंशतिविधं विद्यादावरणं च तत् ॥ ५० ॥**

स०–प्राणादय –पञ्च वायव, अन्योन्य–परस्पर, आवृण्वन्ति यथाक्रम–यथासङ्ख्य, तथा–तेनोक्तेन प्रकारेण, यथा पित्तकफाभ्या प्राणादय आवृतास्तथा प्राणादयोऽन्योन्यमावृण्वन्तीति तथाशब्दस्यार्थ । तत्र यथा,–प्राणेनोदानादयश्चत्वार आवृ-

१ "विलोमो–विमार्गगति । अस्वास्थ्य–असुख, हृदयम् ॥ अङ्गचेष्टाभङ्ग –शरीरव्यापारनाश ॥ रजोतिवृत्ति –अज्ञानप्रवृत्ति ॥ ष्ठीवन–श्लेष्मनिरसनम् । सङ्ग्रहशब्द क्षवथ्वादिभिश्चतुर्भि प्रत्येक योज्य ।" इति तोडर । २ '**ऽस्वास्थ्य**' इ तो स द्व । ३ '**ऽपि च**' स मू । ४ 'ण्यादौ रु' ण द । ५ '**जाऽऽनाह**' तो । ६ '**ने विभ्रमा**' स स । "विभ्रमो–मोहप्राय" इतीन्दु । ७ '**तु**' इ तो स द्व । ८ '**ष्टाऽभङ्ग**' तो स मू । ९ रजोतिवृत्ति –रक्तप्रवर्तनम् । '**रजोऽतिवृत्ति**' इत्यरुणदत्तसम्मतपाठ '**रजोऽतिवृद्धि**' इति सङ्ग्रहपाठश्चायुक्त, चरकसुश्रुतविरुद्धत्वात् । तथा च चरक (चि अ २९।२२४)–'लिङ्ग पित्तावृतेऽपाने रजस सम्प्रवर्तनम् ।' इति । सुश्रुतश्च (नि अ १।३७)–'अपाने पित्तसयुक्ते दाहौष्ण्ये स्यादसृग्दर ।' इति । १० 'तिप्रवृ' ट. । ११ 'त्ति श्वासश्च' ड.ण.थ.द. ।

१ '**पार्श्वास्थि**' तो । २ "पार्श्वग्रह –पार्श्वस्तम्भ, अस्थिग्रह –अस्थ्ना स्तम्भ, वाग्ग्रह –वाक्स्तम्भ । भृश–अत्यर्थम् । मूत्र सकफ स्यात् । तथा शकृत –पुरीषस्य, प्रवर्तन–अतीसार स्यात् ॥ द्वाविंशतिविध यथा,–पित्तावृत ।१। कफावृत ।२। रक्तावृत ।३। मासावृत ।४। मेदसावृत ।५। अस्थ्यावृत ।६। मज्जावृत ।७। शुक्रावृत ।८। अन्नावृत ।९। मूत्रावृत ।१०। विडावृत ।११। सर्वधात्वावृत ।१२। पित्तावृत प्राण ।१३। पित्तावृत उदान ।१४। पित्तावृतो व्यान ।१५। पित्तावृत समान ।१६। पित्तावृतोऽपान ।१७। कफावृत प्राण ।१८। कफावृत उदान ।१९। कफावृतो व्यान ।२०। कफावृत समान ।२१। कफावृतोऽपान ।२२। इति ॥ विंशतिविध यथा–, प्राणेनोदान ।१। उदानेन प्राण ।२। प्राणेन व्यान ।३। व्यानेन प्राण ।४। प्राणेन समान ।५। समानेन प्राण ।६। प्राणेनापान ।७। अपानेन प्राण ।८। अधुना प्राणस्य त्याग,–उदानेन व्यान ।९। व्यानेनोदान ।१०। उदानेन समान ।११। समानेनोदान ।१२। उदानेनापान ।१३। अपानेनोदान ।१४। उदानस्य त्याग,–व्यानेन समान ।१५। समानेन व्यान ।१६। व्यानेनापान ।१७। अपानेन व्यान ।१८। व्यानस्य त्याग,–समानेनापान ।१९। अपानेन समान ।२०। इति।" इति तोडर । ३ '**मूत्रं श**' तो । ४ '**कृतो स्या**' स.स. । ५ '**यथायथम्**' इ. ।

यन्ते, तथैवोदानादिभिरपि प्राण आव्रियते । एवमुदानेन व्यानादयस्त्रय आव्रियन्ते, व्यानादिभिश्च त्रिभिरुदान । तथा व्यानेन समानापानौ, तथा समानापानाभ्या व्यान । समानेनापान, अपानेनाऽपि समान आव्रियते । इत्येकद्वित्र्यादिक्रमेणाप्येवमावरणं निरूप्यम् । एव च सर्वेऽपि परस्परमावृण्वन्ति । तच्चावरण विंशतिभेद विद्यात् ।

अथास्यावरणस्य लिङ्गमाह—

**निःश्वासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः ।**
**हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते ॥ ५१ ॥**
**उदानेनावृते प्राणे वर्णौजोबलसङ्क्षयः ।**

स०–प्राणेनोदान आवृते नि श्वासोच्छ्वाससरोधादय स्यु । उदानेन प्राण आवृते वर्णौजोबलसङ्क्षय स्यात् । ननु च, पित्तादिभि प्राणादीनामावरण युक्तम् । परस्पर तु प्राणादीना यदावरणं तदमूर्तत्वादनुपपन्नमिव मन्यामहे । ब्रूम । द्वयोर्वातयोरन्योन्यमुपसर्पतोर्बलवता दुर्बलस्याभिघातेन गतिभङ्गात्स तेनावृतमार्ग इत्युच्यते । तस्माद्वातानामपि परस्परमावरण युक्तमेव ।

**दिशाऽनया च विभजेत्सर्वमावरणं भिषक् ॥ ५२ ॥**
**स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम् ।**

स०–अनया दिशा–दिङ्मात्रप्रदर्शनेन, सर्वमावरण विभजेद्भिषक् । इय चात्र दिक्,–उदानेनावृतेऽपाने छर्दिश्वासकासादय स्युस्तथाऽल्पोऽग्निरतिसारश्च । उदानेऽपानेनावृते बस्त्याध्मानोदावर्तगुल्माल्पाग्निपरिकर्तिका स्यु । अपाने व्यानेनावृते विण्मूत्ररेतसामतिप्रवृत्ति । व्याने समानेनावृते मूर्च्छातन्द्राप्रलापाङ्गसादवह्न्योजोबलक्षय । व्यान उदानेनावृते च श्यावास्यता स्तब्धताऽल्पाग्निता स्वेदश्चेष्टाहानिर्निमीलनमिति । एवमन्यदप्यावरणं भिषक् स्वमनीषया यथाशास्त्रसस्कारवत्या विभजेत् । ग्रन्थकृता तु ग्रन्थगौरवभयान्नोक्तम् । कथ विभजेत्? इत्यत्र युक्तिं दर्शयति–स्थानानीत्यादि । स्थानानि–पक्वाशयादीनि दोषभेदीयोक्तानि, वातानां–प्राणादीना, अवेक्ष्य । तथा, वृद्धि–आवरकवायुसम्बन्धिना वैकृतकर्मणा, अवेक्ष्य–ज्ञात्वा । तथा, आवार्यमरुता हानिमवेक्ष्य, सर्वमावरण–अनुक्तमपि, विभजेत् । यथा–उत्साहोच्छ्वासचेष्टादीनि कर्माणि प्राणादिसम्बन्धीनि यदा हीनानि दृश्यन्ते उदानादीना कर्माणि वाक्प्रवृत्त्यादीनि वृद्धानि तदैव ज्ञातव्यम्, यथा–प्राण उदानादीनामेकेन द्वाभ्या त्रिभिश्चतुर्भिर्वा आवृत इति । एवमुदानादिष्वपि प्राणादिभिरावरण विभागीकार्यम् ।

१ 'कच्चादि' ड ण.थ द । २ 'तिविध' ड । ३ 'स्वरोगश्च' इ । ४ 'कर्तरिका.' ण.द. । ५ 'च स्त' ड.ण द. । ६ 'या शास्त्र' ट थ. ।

अधुनाऽस्या आवृतेरसङ्ख्येयत्वमपि दर्शयन्नाह—

**प्राणादीनां च पञ्चाना मिश्रमावरणं मिथः ॥ ५३ ॥**
**पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः ।**

स०–प्राणादीना पञ्चाना वायूना परस्परमावार्यावरकत्वेन स्थिताना मिश्र–द्वयेन त्रयेण चतुष्टयेन च, मिथ –परस्पर, आवरणमवेक्ष्य यात्यावृतिरसङ्ख्यतामिति सम्बन्ध । तथा, पित्तादिभिर्द्वादशभि –धात्वयसानै, मिश्राणा प्राणादीनां मिश्रै मिथ आवरणमवेक्ष्य यात्यावृतिरसङ्ख्यतामिति योज्यम् । अत्र चैषा उदाहरणदिग्द्रष्टव्या,–प्राणेन द्वादशविधेन पित्तादिभिर्मिश्रितत्वात् चतुर्णामुदानादीनामावरण विभजेत् । तथा, चतुर्भिरुदानादिभि पित्तस्यावरण प्रत्येक द्वादशविधैर्द्वादशविधस्यैकस्य प्राणस्यावरणमिति । तैरित्यनेन प्राणादय परामृश्यन्ते । तै –पित्ताद्यावरणमिश्रितै प्राणादिभि, परस्परमावार्यावरकत्वेन स्थितैर्मिश्रमावरणमवेक्ष्य यात्यावृतिरसङ्ख्यतामिति योज्यम् । च समुच्चये ।

**मिश्रैः पित्तादिभिस्तद्वन्मिश्रणाभिरनेकधा ॥ ५४ ॥**
**तारतम्यविकल्पाच्च यात्यावृतिरसङ्ख्यताम् ।**
**ता लक्षयेदवहितो यथास्वं लक्षणोदयात् ॥ ५५ ॥**
**शनैःशनैश्चोपशयाद्गूढामपि मुहुर्मुहुः ।**

स०–तैस्तुल्य तद्वत् । यथा प्राणादीना पित्तादिभिर्द्वादशभिर्मिश्राणा मिश्रमावरण मिथस्तथा मिश्रैश्च तै –प्राणादिभि, यथा मिश्रमावरण मिथस्तथैव मिश्रै –सयुक्तैरेतै पित्तादिभिर्न केवलै, प्राणादीना मिश्रमावरण मिथस्तथा मिश्रै पित्तादिभिर्ये प्राणादयो मिश्रितास्तैस्तथाभूतै प्राणादीनामावरणम् । एवमनेकधा मिश्रणाभि –बहुभि सयोजनै, आवृतिरसङ्ख्यता याति । तथा, तारतम्यविकल्पाच्च प्राणादीनामावृतिरसङ्ख्यता याति–सङ्ख्यामतिक्रम्य गच्छति । ता–आवृतिं, तेषा प्राणादीना गूढा–दुर्लक्ष्यामपि, अवहितं –तज्ज्ञानाय तत्पर सन्, लक्षयेत्–जानीयात् । कथम्? यथास्व लक्षणोदयात् । तेषा प्राणादीना यथा यथ लक्षणोदयात्–आत्मीयालिङ्गोद्भवात्, शनै शनै –न झटित्येव, तथा मुहुर्मुहु –क्षणे क्षणे लक्षयेत्, न तु सकृदेव, प्राणादीना यथास्व लक्षणोदयाज्जानीयादिति । न केवल केवलायथास्व लक्षणोदयात् प्राणादीनामावृतिं लक्षयेत्, यावदुपशया-

१ 'स्यावृते' ण थ । २ "पित्तादिभिर्द्वादशभि –पित्तकफरक्तमासमेदोस्थिमज्जशुक्रान्नमूत्रविट्सर्वधातुसञ्ज्ञै । तै –प्राणादिभि, मिश्रितै –द्वित्र्यादिभि । चकारात् पित्तादीनामेकैकशो वा । मिश्राणा–पञ्चाना वायूनाम् ।" इति तोडर । ३ 'दीनामावरण वि' ण थ द । ४ 'मिश्रमावरण मिथ ' ड । ५ 'चेयमुदा' ड । ६ 'कस्थितै' ट । ७ 'मिश्रितैश्च प्रा' ण थ द । ८ 'जनाभि ' थ । ९ 'त सन्–' ण द । १० 'त्मीयलिङ्गो' ण थ द. । ११ 'दुर्लक्ष्' ड.ण थ.द. । १२ 'दयात् प्राणा' ड ण थ.द. ।

दप्येषा गूढामप्यावृतिमवगच्छेत् । तत्र प्राणादीनामेकैकेनान्योन्यावरणे[1] विंशतिर्भेदा । एवमेकेन द्वयोर्द्वाभ्या चैकस्यावरणे निरूप्यमाणे त्वमी भेदा –प्राणस्योदानव्यानाभ्यामन्योन्यावरणे[2] द्वौ भेदौ । एवमुदानसमानाभ्यामुदानापानाभ्या [ व्यानसमानाभ्या व्यानापानाभ्या समानापानाभ्या ] च सहान्योन्यावरणे[3] पराणि पञ्च द्विकानि, इति प्राणस्य द्वादश भेदा भवन्ति । उदानस्य षट् । व्यानस्य द्वौ । एव व्यानस्योदानादिभिस्त्रिभिरन्योन्यावरणे[4] षट् । उदानस्य द्वौ । प्राणस्योदानादिभिश्चतुर्भिर्द्वौ[5] चान्योन्यावरणाद्भेदौ भवत । तथा, प्राणादीना पित्तादिभिर्द्वादशभिरावृतत्वात् द्वादशप्रकाराणामन्योन्याना मिश्रणात् चत्वारि शतानि विंशत्युत्तराणि भवन्ति । एवमन्यदप्यावरण निरूप्यम् ।

**विशेषाज्जीवितं[6] प्राण उदानो बलमुच्यते ॥ ५६ ॥**
**स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च ।**

**स०**–प्राणादय सर्वे एव वाता जीवितम्, विशेषेण[7] तु प्राणाख्यो वायुर्जीवितमुच्यते । तथा, उदानाख्यो वायुर्विशेषेण बलमुच्यते । यतश्चैवमतस्तयो –प्राणोदानयो, पीडनात्–क्षोभणात्, यथास्वमायुषो[8] बलस्य च हानिर्भवेत् । तस्माद्धेतो[9] प्राणोदानाख्यौ पवनावाहारादिना यत्नेन भिषजा रक्ष्यौ । तथा च वक्ष्यति (हृ चि अ २२।६९)–"प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसस्थिति ।" इति ।

१ 'रणाद्विंशतिर्भेदा उक्ता भवन्ति । एव' ट । २ 'रणात् द्वौ' ट ड थ । ३ 'रणे प' ड थ । ४ 'रणेन ष' ट ड ण थ द । ५ 'न्योन्यमिश्राणा च' ड । 'न्योन्य मिश्राणा च' थ । ६ '**प्राणे उदाने सश्रित बलम् ।**' स च । ७ 'ण प्राणो वा' ड थ । ८ 'यथास्वजीवितस्य ब' ड. । 'तथा जीवितस्य ब' थ । ९ 'स्मादेतौ प्रा' थ ।

**आवृता वायवोऽज्ञाता ज्ञाता वा वत्सर स्थिताः[1] ५७**
**प्रयत्नेनापि दुःसाध्या[2] भवेयुर्वाऽनुपक्रमाः ।**

**स०**–वातादीनामन्यतमेनावृता इत्येवमज्ञाता[3] –सम्यगनिश्चिता, वर्षोषिता प्रयत्नेनापि दु साध्या –कृच्छ्रसाध्या भवेयु । ज्ञाता वा–पित्तादिना आवृता यथावत्सम्यङ्निश्चय गता, वत्सर स्थिता । वाशब्द एवार्थे[4], अनुपक्रमा एव भवेयु । ततो वाता आवृते प्रयत्नेन रक्षणीया ।

**विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः ॥ ५८ ॥**
**भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात्[5] ॥ ५८½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया तृतीये निदानस्थाने वातशोणितनिदानं नाम षोडशोऽध्यायः ॥१६॥**

**स०**–तेषा–वायूना, आवृतानामुपेक्षणात्–अचिकित्सनात्[6], विद्रध्यादय उपद्रवा जायन्ते । तस्मात्तदुपक्रमे यतितव्यमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया[7] तृतीये निदानस्थाने वातशोणितनिदान नाम षोडशोऽध्याय समाप्त ॥१६॥

१ "स्थिता –उपेक्षिता सन्त ॥ उपद्रवा –रोगा ।" इति तोडर । २ '**साधा**' स स. । ३ 'ता –असम्यग्विनि' ट । 'ता –न सम्यङ्निश्चि' थ । ४ 'एवशब्दार्थे' ड ण द । ५ 'अस्याग्रे' "**व्याधीना सशय छेत्तुमन्यतो योऽप्रमत्तवान् । निदान सतत तेन चिन्तनीय [वि]पश्चिता ॥**" इति इ पुस्तकेऽधिक श्लोक । ६ 'ति भद्रम् ।' थ । ७ 'न्दर्याख्या' ट ।





श्रीमद्वाग्भटविरचिते

# अष्टाङ्गहृदये चिकित्सितस्थानम्।



श्रीमदरुणदत्तविरचितया सर्वाङ्गसुन्दराख्यव्याख्यया,

श्रीहेमाद्रिप्रणीतया आयुर्वेदरसायनाह्वया टीकया च

समुल्लसितम्।



## प्रथमोऽध्यायः।

श्रीगणेशाय नम । श्रीसरस्वत्यै नम । श्रीगुरुभ्यो नम । अथेदानी चिकित्सितस्थानस्यारम्भ । तस्य चाय सम्बन्ध । रोगपरीक्षा निदानस्थाने गदिता। साम्प्रत चिकित्सा वक्तु युक्ता। तथा च मुनि (च सू अ २०।२०)-"रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।" इति। तस्माच्चिकित्सितस्थानारम्भो न्याय्य । तत्र यथोद्देशो व्याधीना निदानस्थाने, तेनैव क्रमेणास्य स्थानस्य विरचना युक्तेति ज्वरचिकित्सितमेव विवक्षुराह—

**अथातो ज्वरचिकित्सितं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**
(गद्यसूत्रे ॥ २ ॥)

**स०**-इति ह स्माहुरात्रेयादयो महर्षय इत्यनेनागमशरणत्वमात्मन प्रतिपादयति।

**आ० र०**-अथ चिकित्सास्थानमारभ्यते, निदानस्थानानन्तरत्वात्। तत्रादौ ज्वरचिकित्सा[माह]-अथात इति। व्याख्या पूर्ववत्। चिकित्सित-व्याधिप्रतीकार, त व्याख्यास्याम इति।

**आमाशयस्थो हत्वाऽग्निं सामो मार्गान् पिधाय यत्।**
**विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लङ्घनम् ॥ १ ॥**
**प्राग्रूपेषु ज्वरादौ वा, बलं यत्नेन पालयन्।**
**बलाधिष्ठानमारोग्यमारोग्यार्थः क्रियाक्रमः ॥ २ ॥**

**स०**-आमाशयस्थो दोषो वह्नि हत्वा। सहामेन वर्तत इति साम । तथा, मार्गान् पिधाय-स्रोतासि स्थगयित्वा, यत्-यस्माद्धेतो, ज्वर विदधाति, तस्मात्कारणाल्लङ्घन कुर्वीत। लङ्घनमत्रोपवास । तथा चोक्तम् । "लङ्घनस्याविशेषोक्तावुपवास प्रकल्पयेत्।" इति । अत एवायमपि वक्ष्यति (श्लो १०)-"तस्मादादोषपचनाज्ज्वरितानुपवासयेत्।" इति । कदा लङ्घन कुर्वीत? इत्याह-प्राग्रूपेषु-पूर्वलक्षणेषूत्पन्नमात्रेष्वेव, ज्वरादौ वा-उत्पन्नमात्रे ज्वरे सति। कि कुर्वन् लङ्घन कुर्वीत? इत्याह-बल यत्नेन पालयन्,-प्राणास्तात्पर्येण रक्षन्, तदविरोधेनेत्यर्थ । ननु, कुत एव विधीयते? इत्याह—बलाधिष्ठानमित्यादि । यस्मादारोग्य-स्वास्थ्य, बलाधिष्ठानम्। बलमधिष्ठान-आश्रयो, यस्य तदेवम्। तथा, क्रियाक्रम आरोग्यार्थ -स्वास्थ्यप्रयोजन ।

**आ० र०**-लङ्घनमाह-आमाशयस्थ इति। आमाशयस्थत्वादिचतुष्टय लङ्घनसाध्यत्वे हेतु । प्राग्रूपज्ञानदिने लङ्घनं कार्यम्। तदतिक्रमे [ज्वरादौ-] रूपज्ञानदिने । लङ्घनस्यारोग्यार्थत्वात्, आरोग्यस्य बलाधीनत्वात्, यावन्न बलक्षयस्तावत् [लङ्घन] कार्यम् । वङ्गसेने तु (ज्वराधिकारे श्लो १४१)-"ज्वरस्य पूर्वरूपेषु वर्तमानेषु बुद्धिमान्। पाययेत्सर्पिरच्छ तु तत स लभते सुखम्॥ विधिर्मारुतजेष्वेष पैत्तिकेषु विरेचनम्। मृदु प्रच्छर्दनं तद्वत् कफजेषु विधीयते॥ सर्वं त्रिदोषजेषूक्त यथादोषं विकल्पयेत्।" इति। एतच्च प्रकृतिदेशकालादिभिर्दोषस्य ज्ञाने सति ज्ञेयम्, पूर्वरूपेणाज्ञानात्। तत्र च लङ्घनमेवानिषिद्धम्।

लङ्घने विहिते सति यत्स्यात् तदाह—

**लङ्घनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति।**

१ 'नमारभ्यते।' ट । २ इद ज्वरचिकित्सित चरके नि० १ अध्याये चि० ३ अध्याये च, सुश्रुते उ० ३९ अध्याये, अष्टाङ्गसङ्ग्रहे चि० १।२ अध्याययोश्चास्ति वर्णितम्। ३ "ज्वरस्य पूर्वरूपदर्शन एव लङ्घन कुर्वीत। यदा तु प्राग्रूपदर्शनकाले निदानस्य साधारणत्वादपरिज्ञानाद्वा लङ्घनाविषयताऽऽशङ्क्यते तदा ज्वरादावपि योज्यम्। अन्ये पुनरेव वर्णयन्ति,-ज्वरस्य प्राग्रूपेषु लङ्घनमवश्य कुर्वीत। तेन शुद्धवातादिविषये व्यक्ते ज्वरे लङ्घन न विधेयम्।" इतीन्दु.।

१ 'थ्यार्थ' ड फ । २ 'त्सर्पिरेवार्त त' वङ्ग । ३ "लङ्घनै -वमनादिभि , दोषे तत्साध्ये ज्वरारम्भके क्षपिते, तत्क्षपणाच्च भस्मापनयनेनेवाग्नौ दीप्ते लाघवे चोत्पन्ने स्वास्थ्यादिक जायते। दोषक्षपणादूर्ध्व लङ्घनेनानिन्धनत्वादग्नेर्नाश एव स्वास्थ्याद्यभावश्च। तथा चोक्तम् (हृ सू अ १८।४५)-'सशोधनास्रविस्रावस्नेहयोजनलङ्घनै । यात्यग्निर्मन्दता' इति। तत्र च लङ्घनशब्देनोपवास एव भण्यते।" इतीन्दु ।

**स्वास्थ्यं क्षुत्तृड् रुचिः पक्तिर्बलमोजश्च जायते ॥३॥**

स०–लङ्घनै –उपवासै , दोषे–पूर्वोक्ते, क्षपिते–क्षय नीते, तथाऽग्नौ दीप्ते–समिद्धे सति, तथा लाघवेऽङ्गाना सति, स्वास्थ्यादि जायते । स्वास्थ्य–यथाप्रकृतित्वम् । रुचि –अन्नाभिलाष । पक्ति –पाक आमस्य । बल–उत्साह । ओज –पर धातुतेज । क्षपिधातुरनुक्तोऽपि धातुगणे शिष्टप्रयोगवशादङ्गीकृत । लङ्घनैरिति जातौ बहुवचनम्[1] । तेन कदाचिदेकेनैव लङ्घनेन कदाचिदनेकैर्दोषक्षयो जायत इति ज्ञेयम् ।

**आ० र०–लङ्घनफलमाह–लङ्घनैरिति । लङ्घनानि द्वादश वमनविरेचनबस्तिनस्यरक्तस्रावदीपनपाचनान्नवर्जनोदकवर्जनव्यायामातपमारुतभेदाद्भवन्ति ।**

**तत्रोत्कृष्टे[2] समुत्क्लिष्टे कफप्राये चले मले ।**
**सहृल्लासप्रसेकान्नद्वेषकासविपूचिके ॥ ४ ॥**
**सद्योभुक्तस्य सञ्जाते ज्वरे सामे विशेषत ।**
**वमनं वमनार्हस्य शस्त**

स०–तत्र–तस्मिन्मले, उत्कृष्टे–स्वजन्मगुणकर्मलक्षणतोऽधिके । तथा, कफप्राये–कफबहुले वाताख्ये पित्ताख्ये वेति सामर्थ्याद्गम्यते । समुत्क्लिष्टे–स्वस्थानाचलिते बहिरनिर्याते । तथा, चले–शिथिले, उत्क्लिष्टेऽपि हि कदाचित् स्थानावष्टम्भादचल स्यात् । एतदेव कफोत्क्लिष्टादिक दर्शयति–सहृल्लासेत्यादि । हृल्लासादीना द्वन्द्व । सह तैर्वर्तते यस्तस्मिन् । हृल्लास –उद्वमनमिवानुभव । उद्वमन–हृदयस्य । प्रसेक –पानीयैस्येव निष्ठीवनम् । सद्योभुक्तस्येत्यादि । ईदृशे मले सति सद्य कृताहारस्य ज्वरे सञ्जाते विशेषेण सामे ज्वरे वमनार्हस्य वमन शस्तम् । वमनार्हा –वमनविरेचनविधा प्रोक्ता ।

**आ० र०–ज्वरविशेषे वमनमाह–तत्रोत्कृष्ट इति । उत्कृष्टदोषादिष्वेकादशेषु ज्वरेषु वमन शस्तम् । तथाऽपि सामे विशेषेण । उत्कृष्ट –अतिप्रभूत । समुत्क्लिष्टो–बहिर्निर्जिगमिषु. । कफप्राय –श्लेष्मबहुल । चल –चञ्चल. ।**

**कुर्यात्तदन्यथा[3] ॥ ५ ॥**
**श्वासातीसारसम्मोहहृद्रोगविषमज्वरान् ।**

स०–अन्यथा–उक्तविधिविपर्ययेण, तत्–वमन कृत, श्वासादीन् कुर्यात् । तथा,–अनुत्क्लिष्ट कफाप्रधान स्थिरो हृल्लासादिरहितो–विपरीत ।

**आ० र०–अन्यथावमने दोषमाह–कुर्यात्तदिति ।**

वमनद्रव्याण्याह—

**पिप्पलीभिर्युतान्[1] गालान्[3] कलिङ्गैर्मधुकेन वा[2] ॥ ६ ॥**
**उष्णाम्भसा समधुना पिबेत्सलवणेन वा ।**
**पटोलनिम्बकर्कोटवेत्रपत्रोदकेन वा ॥ ७ ॥**
**तर्पणेन रसेनेक्षोर्मद्यैः कल्पोदितानि वा ।**
**वमनानि प्रयुञ्जीत बलकालविभागवित् ॥ ८ ॥**

स०–गालो–मदनफलम्, अस्य निरपायत्वाच्छ्रेष्ठत्वाच्च पिप्पल्यादिद्रव्येभ्योऽनेन सहोपयोगिभ्यो बहूपयोगितया प्रधानविभक्त्या प्रागुपन्यास । अन्यथा "कल्पयेत्सदृशान् भागान् प्रमाण यत्र नोदितम् ।" (हृ क. अ ६ । २४) इति मदनफलेन पिप्पल्यादीना च तुल्य प्रमाण प्राप्नुयात् । पिप्पलीभिर्युतान् गालानथवा शक्रयवैर्युतानथवा मधुयष्टिकया वा युतानथवोष्णाम्बुना माक्षिकयुतेन वा सह पिबेत् । अथवा पटोलादीना पत्रोदकेन वा सह पिबेत् । अथवा तर्पणादिभि पिबेत् । अथवा कल्पोदितानि–वमनकल्पोक्तानि वमनानि योग्यानि प्रयुञ्जीत । बलकालविभागविदिति अस्या देहबलावस्थाया तथा व्याधिबलावस्थाया चेद वमन दातु योग्यमिति यो विभाग वेत्ति स बलकालविभागवित् ।

**आ० र०–वमनयोगानाह–पिप्पलीभिर्युतानिति । पिप्पलीन्द्रयवयष्टीमधुयुक्तैर्मदनफलैस्त्रय । समधूष्णोदकसलवणोदकपटोलाद्युदकमदे(न्धे)क्षुरसमद्यैरालोडनार्थं प्रत्येकम् । कल्पोदितानि वा–यथालाभ यथासात्म्य यथादोष च प्रयोगार्थमनेकधोपदेशात् । अत एवोक्त बलकालविभागवित् । एव सर्वत्र ज्ञेयम् ।**

**कृतेऽकृते वा वमने[4] ज्वरी कुर्याद्विशोषणम् ।**
**दोषाणा समुदीर्णानां पाचनाय शमाय च ॥ ९ ॥**

स०–वमने योग्यो यो ज्वरी स कृते वमने, अपरस्तु वमनेऽयोग्य सोऽकृते वमने, विशोषण–उपवासलक्षण, कुर्यात् । एव कृतवमनोऽकृतवमनो वा ज्वरी सर्वथा लङ्घन कुर्यात् । किमर्थम् ? इत्याह–दोषाणा–वातादीना, समुदीर्णाना–समन्तात्स-

1 'केन ल' ट ड ध । 2 "ननु, किं सवत्रानियमेन सर्वमेव लङ्घन विधेयम् ? आहोस्वित् केनचिद्विशेषेण ? इत्याह–तत्रेत्यादि । वमनमेव शस्त नान्यलङ्घनमिति सम्बन्ध । वमनार्हग्रहणेन प्रतिषिद्धवमनाना गर्भिण्यादीना वमनविषयेऽपि ज्वरे वमन प्रतिषिध्यते । तच्च वमनमन्यथा–उत्कृष्टत्वादिलक्षणविपरीते मले प्रयुक्त, श्वासादीन् ज्वरितस्य कुर्यात् । अनुत्कृष्टस्योत्क्लेशेन वायोर्मार्गरोधात् श्वास । ईषदुत्क्लिष्टस्य स्यन्दनेनाग्निनाशात् अतीसार । उपशुष्के दोष औषधस्य तैक्ष्ण्यात् सम्मोह । तथाविध एवोर्ध्वनयनात् हृद्रोग । दोषस्य स्वल्पत्वाद्बहिरनिहरणाद्दूरतरस्रोत पूरणेन वा यथाहेतु सततादिको विषमज्वर ।" इतीन्दु । 3 'यस्यैव' ध. ।

1 'युता गाला' स स । 2 'वा ॥ पीत्वोष्णतोयेन वमेन्मध्वम्बु लवणाम्बु वा । पटोलनिम्बकर्कोटवेत्रपत्रजलानि वा ॥ पेयां मण्ड रस चेक्षोर्मद्य कल्पो' इति सङ्ग्रहपाठ । 3 'गालान्–' ड ध । 4 "अनन्तरोक्तप्रकारेण कृते वमने विशोषणमुपवासादिना कुर्यात्, न तु सम्यग्योगेऽप्यवश्य तदहरेव वमनविधिप्रदर्शितप्रकारेण पेया सेवेत । तथा यत्रापि वमनस्याविषयत्वात् विषयेऽपि वा निमित्तान्तरात् वमन न कृत तत्रापि विशोषण कुर्यात् ।" इतीन्दु. । 5 'मनयो' ड.ध. ।

मुत्थाना, पाचनाय—पक्त्यर्थ, शमाय—शान्त्यर्थं च । निरामाणा पुन समुदीर्णाना शान्त्यर्थमेव ।

**आ० र०—अन्नवर्जनमाह—कृतेऽकृते वेति । कृते वमने वमनयोग्यत्वाभावादकृते वा । अपक्वाना पाचनाय, पक्वाना शमनाय ।**

**दोषेण भस्मनेवाग्नौ छन्नेऽन्नं न विपच्यते ।**
**तस्मादादोषपचनाज्ज्वरितानुपवासयेत् ॥ १० ॥**

**स०**—दोषेण—आमाख्येन वातादिना वा सहैकलोलीभूतेन, अग्नौ छन्ने—च्छादिते, अन्नमामाशयस्थ न विपच्यते भस्मनेव । यथा बाह्येऽग्नौ स्थगिते तोयतण्डुलादिक स्थालीस्थ न विपच्यते, तथैवामाशयस्थमन्नमामेन छन्नेऽग्नौ न विपच्यते । यतश्चैव तस्माद्धेतोरामदोषस्य—पूर्वोक्तस्य, पचन—पाकमवधिं कृत्वा, ज्वरितान्नरानुपवासयेत् ।

**आ० र०—विशेषेण युक्तिमाह—आमेन भस्मनेवेति ।**

**तृष्णगल्पाल्पमुष्णाम्बु पिबेद्वातकफज्वरे ।**
**तत्कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ॥११॥**
**उदीर्य चाग्निं स्रोतांसि मृदूकृत्य विशोधयेत् ।**
**लीनपित्तानिलस्वेदशकृन्मूत्रानुलोमनम् ॥ १२ ॥**
**निद्राजाड्यारुचिहरं प्राणानामवलम्बनम् ।**
**विपरीतमतः शीतं दोषसङ्घातवर्द्धनम् ॥ १३ ॥**

**स०**—[ तृष्णक्— ] तृष्णावान्नर , अल्पाल्प—स्तोक स्तोकं, वातकफज्वरे उष्णाम्बु पिबेत् । तृष्णगिति "स्वपितृषोर्नजिङ्" इति नजिङ् । अल्पाल्पमिति "प्रकारे गुणवचनस्य" इति द्वित्वम् । तत्—उष्णाम्बु पीत, कफ—वातस्त्यान, विलय नीत्वा—विलीनविग्रहतामापाद्य, तृष्णामाशु निवर्तयेत्, तर्पणस्वभावत्वात् । तथा, अग्निमुदीर्य—समिद्ध कृत्वा, स्रोतासि विशोधयेत् । किं कृत्वा? मृदूकृत्य,—तेषा स्रोतसा मार्दवमुत्पाद्य । तथा, लीनानि—अप्रवृत्तस्वरूपाणि च, तानि पित्तानिलस्वेदशकृन्मूत्राणि च, तेषामनुलोमन—प्रवर्तनम् । तथा, प्राणाना—जीविताख्याना, अवलम्बनम् । तदुष्ण जलमाश्रित्य तथा प्राणा प्रवर्तन्त इत्यर्थ । अनेन चोष्णाम्बुकर्मकथनव्याजेन वातकफज्वरस्वरूपमपि किञ्चित् प्रकाशयति । यथा,—वातशोषितेन कफेन स्त्यानीभूतेनात्र तृष्णा जायते, तथाऽधिकमग्निमान्द्यम्, स्रोतसामशुद्धत्वम्, तथा लीनानि पित्तादीन्यत्र स्युः, इति ।

**आ० र०—उदकवर्जनमाह—तृष्णगल्पाल्पमिति । तच्च न सर्वथा, किन्त्वल्पाल्पमुष्णाम्बु षडङ्गादिशृत वा । तत्राद्य वातकफज्वरे, द्वितीय पित्तज्वरादौ । तृष्णक्—तृषावान् ।**

उष्णाम्बुगुणानाह—तत्कफ विलय नीत्वेति । लीनानां पित्तादीनामनुलोमनम् ।

शीताम्बुदोषानाह—विपरीतमत शीतमिति । दोषसङ्घात —आमपित्तश्लेष्मरसादिसङ्घात ।

**उष्णमेवंगुणत्वेऽपि युञ्ज्यान्नैकान्तपित्तले ।**
**उद्रिक्तपित्ते दवथुदाहमोहातिसारिणि ॥ १४ ॥**
**विषमद्योत्थिते ग्रीष्मे क्षतक्षीणेऽस्रपित्तिनि ।**

**स०**—एवगुणमप्युष्णाम्बु एकान्तपित्तले—केवलपित्तले ज्वरिणि वा, न युञ्ज्यादिति । तथा, उद्रिक्त—अधिक, पित्त यस्मिंस्तस्मिंश्च न युञ्ज्यात् । तथा, तदुष्णाम्बु दवथ्वादिमति नरे न युञ्ज्यात् । चक्षुरादिभ्यो यस्तीव्र ऊष्मा प्रवर्तते स दवथु । सर्वाङ्गीणस्तीव्र ऊष्मा—दाह । मोहो—भ्रम । तथा, विषमद्याभ्यामुत्थिते—जाते ज्वरे । तथा, ग्रीष्मकाले । तथा, क्षतश्च क्षीणश्च क्षतक्षीण , क्षत —उर क्षत , क्षीणो—धात्वपचयवान्, तस्मिंस्तथाभूते नरे न युञ्ज्यात् । तथा, अस्रपित्तिनि—रक्तपित्तवति [नरे, न युञ्ज्यात्] ।

**आ० र०**—उष्णाम्बु ज्वरविशेषे निषेधति—उष्णमेवगुणत्वेऽपीति । एकान्तपित्तले—पित्तज्वरे । उद्रिक्तपित्ते—संसर्गजे सन्निपातजे वा । दवथु —इन्द्रियसन्निपाद्य (?) ।

**घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम् ॥ १५ ॥**
**शीत तेभ्यो हितं तोयं पाचनं तृड्ज्वरापहम् ।**

**स०**—तेभ्य —उद्रिक्तपित्तादिभ्य पिपासितेभ्यो, घनादिसाधित शीत तोय हितम् । पानीयसाधने च तन्त्रान्तरे विधिरुक्तो यथा—"कर्षं गृहीत्वा द्रव्यस्य तोयस्य प्रस्थमावपेत् । अर्धावशेष तद्ग्राह्य तोयपाने त्वय विधि ॥" इति ।

**आ० र०**—निषिद्धो [ष्णो] दकाना शीतोदकमाह—घनचन्दनेत्यादि । [चन्दनशब्देन रक्तचन्दन ग्राह्यम् ,] "चन्दने रक्तचन्दनम्" इति वचनात् ।

**ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना १६**
**तस्मात्पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम् ।**

**स०**—पित्त विना ऊष्मा न विद्यते, ज्वरश्चोष्मणा विना नास्ति, सन्तापलक्षणत्वात् ज्वरस्य । यतश्चैव तस्माद्यानि पित्तस्य विरुद्धान्याहारविहारादीनि तानि सर्वस्मिन् ज्वरे त्यजेत् । पित्ताधिके पुनरधिक कृत्वा—अतिशयेन, त्यजेत् । पित्ताधिक इत्यत्राधिकग्रहणेनेद प्रतिपादयति,—सर्वो ज्वरस्त्रिदोषजो भूयसा तु व्यपदेश इति ।

**आ० र०— ऊष्मा—सन्ताप । सर्वस्मिन् ज्वरे निषेध , पित्ताधिके त्वधिकम् । रागप्राप्तस्याय निषेधो न विधिप्राप्तस्योक्तो(ष्णो)दकादे. ।**

---

१ 'मुत्पन्नाना' ट । 'मुत्थानामुत्पन्नाना' ड । २ 'आमेन भ' अ.इ फ स ढ । ३ 'तृष्यन्नल्पा' अ इ स मू । ४ "निद्रा च्चास्वहेतुका गृहीता ।" इतीन्दु । ५ 'तथा' ड. ।

१ 'पित्ते पित्तले ज्वरे ज्वरि' ड. । २ 'स्य पानीय प्र' ड. ।

**स्नानाभ्यङ्गप्रदेहांश्च परिशेषं च लङ्घनम् ॥ १७ ॥**

स०-न केवलं ज्वरे पित्तविरुद्धानि त्यजेत्। यावत् स्नानादींश्च त्यजेत्। स्नानादीनां पित्तहरत्वाशङ्कया सेव्यत्वे प्राप्तेऽचिन्त्यप्रभावत्वात् ज्वरे विरुद्धानीति तत्सेवनं निषेधति। प्रदेहः-चन्दनाद्यनुलेपः। परिशेषं च लङ्घनं त्यजेत्, यल्लङ्घनमुपयुक्तमुपवासलक्षणं ततो यदन्यत्तत् परिशेषम्,-शुद्ध्यादेकादशप्रकारं च, तत्त्यजेत्। उपवासलक्षणं तु लङ्घनं नवज्वरे कर्तव्यमेव।

आ० र०-स्नानादीनि ज्वरे निषेधति-स्नानाभ्यङ्गप्रदेहांश्चेति। प्रदेहः-अनुलेपनम्। परिशेषं लङ्घनं-दीपनपाचनादि।

**अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे।**
**न पिबेदौषधं तद्धि भूय एवाममावहेत् ॥ १८ ॥**
**आमाभिभूतकोष्ठस्य क्षीरं विषमहेरिव।**

स०-यथाऽजीर्णे सामे तीव्ररुज्यपि शूलघ्नमौषधं न पिबेत्, प्रत्यवायभयात्। तथैव सामे ज्वरे दारुणपीडावति तदानीमामपक्त्यर्थं मुस्तापर्पटकाद्यौषधं क्वाथादिकल्पनाकल्पितं न पिबेत्। हि-यस्मात्, तत्-औषधं पीतं, अस्यामवस्थायामामाभिभूतकोष्ठस्य प्रयुक्तं भूय एवाममावहेत्। अत्र च साम इत्युक्ते बह्वाम इति गम्यते। अल्पे ह्यजीर्णे भेषजमनुज्ञातमेव। तथा चोवाच तन्त्रकारः (हृ सू अ ८।१९)-"जीर्णाशने तु भैषज्यं युञ्ज्यात्स्तब्धगुरूदरे। दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च॥" इति। तस्मात्सामो बह्वाम इति बोध्यम्। अथात्र दृष्टान्तमाह-क्षीरं विषमहेरिव। यथा क्षीरं विषघ्नमप्यभिहितमहीनां तदेव विषं कुर्यात्।

आ० र०-निषेधे युक्तिमाह-अजीर्ण इव शूलघ्नमिति। यथा विषघ्नमपि क्षीरं विषाभिभूतकोष्ठे विषवर्धनम्, एवमामघ्नमप्यौषधं आमाभिभूतकोष्ठे आमवर्धनम्। वङ्गसेने तु (?)-"वैयात्याद्यधिकोऽप्यत्र भेदं कर्तुमिहेच्छति। कदा तेनैव कर्तव्यो भेदो नैवान्यथा भवेत्॥ कषायं पिप्पलीमूलत्रिवृच्चूर्णावचूर्णिकम्। सामज्वरे कफोरस्के एतत्स्रंसनमुच्यते॥ यवक्षारान्वितो यद्वा क्वाथो धान्यपटोलयोः।" इति।

**सोदर्दपीनसश्वासे जङ्घापर्वास्थिशूलिनि ॥ १९ ॥**
**वातश्लेष्मात्मके स्वेदः प्रशस्तः, स प्रवर्तयेत्।**
**स्वेदमूत्रशकृद्वातान् कुर्यादग्नेश्च पाटवम् ॥ २० ॥**

स०-उदर्दादयः प्रागुक्ताः। उदर्दश्च पीनसश्च श्वासश्च तैः सह वर्तते यो ज्वरस्तस्मिन्। तथा, जङ्घे च पर्वाणि चास्थीनि च, तत्र शूलं, तद्विद्यते यस्य तस्मिंश्च। तथा, वातश्लेष्मात्मके-वातकफोद्भवे, स्वेदः प्रशस्तो-हितः। स आचरितः स्वेदादीन् प्रवर्तयेत्। अग्नेश्च पाटवं-दीप्ततरत्वं, विदध्यात्।

आ० र०-ज्वरविशेषे स्वेदमाह-सोदर्दपीनसश्वास इति। "उदर्द उक्तो वक्षोभिष्यन्दोऽन्यैः शीतवेपथुः। शीताम्बुस्पर्शजः शोथो रागकण्डूयुतोऽपरैः॥" इत्यायुर्वेदप्रकाशोक्तस्त्रिविधोऽप्युदर्दः।

स्वेदगुणानाह-स प्रवर्तयेत्। स्वेदमूत्रेति। स्वेदः स्वेदादीन् प्रवर्तयेत्। सिद्धयोगे तु (ज्वराधिकारे श्लो १३१)-"खर्परभृष्ट[पटस्थितकाञ्जिकसिक्तो हि वालुकास्वेदः। शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन्॥"] इति।

**स्नेहोक्तमाचारविधिं सर्वशश्चानुपालयेत्।**

स०-तथा, स्नेहोक्तं-स्नेहविध्यध्याये कथितं, आचारविधिं च सर्वशोऽनुपालयेत्, कुर्यादित्यर्थः।

आ० र०-स्नेहविध्युक्तं नियममतिदिशति-स्नेहोक्तमिति। स्नेहोक्तमाचारविधिमिति उष्णोदकोपचारीति।

**लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ॥ २१ ॥**
**मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा।**

स०-मलानां-सामानां वातादीनां पृथक्स्थितानां संसर्गस्थितानां सन्निपातस्थितानां च, सामर्थ्याल्लङ्घनादयस्तिक्तरसावसानाः पाचनानि स्युः। यथावस्थं-अवस्थानतिक्रमेण। कस्याञ्चिज्ज्वरावस्थायां लङ्घनं-उपवासलक्षणं, मलानां पाचनं स्यात्। कस्याञ्चित् स्वेदनं स्यात्। [कस्याञ्चित्] कालः षडहाख्यः। कस्याञ्चिद्यवाग्वः-पेयाः। कस्याञ्चित्तिक्तको रसः-तिक्तरसप्रायद्रव्योपयोगः। एवमवस्थावशात् लङ्घनादयस्तिक्तरसान्ता मलानामेकैकशः पाचनानि स्युः। अथवा क्रमेणैव पाचनानि स्युः, यथा-लङ्घनं स्वेदनं च कृत्वा षडहादूर्ध्वं यवाग्वस्तिक्तको रसः पाचनान्यविपक्वानां मलानां तरुणे ज्वरे स्युः। तत्र "आमाशयस्थः" (श्लो १) इत्यादिना ग्रन्थेन निर्दिष्टा लङ्घनयोग्यावस्था, "सोदर्दपीनस" (श्लो १९) इत्यादिना च स्वेदनयोग्यावस्था, "इत्ययं षडहो नेयः" (श्लो ३८) इत्यादिना च निर्दिष्टा कालयोग्यावस्था, "युक्तं लङ्घितलिङ्गैस्तु तं" (श्लो २४) इत्यादिना पेयायोग्यावस्था, "उद्रिक्तपित्ते" (श्लो १४) इत्यादिना च तिक्तरसोपयोगयोग्यावस्था, इति यथावस्थं द्रष्टव्यम्। क्रमस्तु यथा,-वातश्लेष्मके सामे ज्वरे प्रथमं लङ्घनं कुर्वन्नेव स्वेदनं द्वित्रादिदिनलक्षणं च कालं लङ्घितलक्षणयुक्तस्य यवाग्वादिपेयाद्यन्नभुक्तस्यानन्तरं मुस्तापर्पटकादितिक्तरसोपयोगः, इति क्रमार्थः।

आ० र०-लङ्घनादीनां प्रयोगकालमाह-लङ्घनं स्वेदनमिति। लङ्घनं-वमनम्, क्षुत्तृषोः कालशब्देन ग्रहणात्।

१ 'षधं न' ड ध। २ 'स्थायां भूय' ड ध। ३ 'जीर्णेऽश' ट ड.ध.। ४ 'सात् ब' ड ध.। ५ 'ङ्घापार्श्वास्थि' अ.।

१ 'सर्वतश्चा' स ड। २ 'चार विधिवत् स' ट। ३ 'वागूस्ति' अ। ४ "तिक्तको रसोऽत्र यवागूपानीयादिसंस्कारकत्वेन ज्ञेयः, स्वतन्त्रभेषजप्रयोगस्तरुणे निषिद्ध एव। उक्तं च-'भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्।' इति।" इति चक्रः। ५ 'ना-वाता' ड ध। ६ 'वागू-पेया' ध। ७ 'रसद्रव्यो' ट। ८ 'सावसाना म' ड। ९ 'वागूस्ति' ध.। १० 'पित्तादिना' ड.ध। ११ 'रसयोग्या' ट.।

यथावस्थमिति उत्कृष्टदोषाद्यवस्थाया वमनम्, सोदर्द्दाद्यवस्थायां स्वेदनम्, सामत्वमात्रावस्थाया काल, क्षुद्बोधावस्थाया यवागू, मृदुज्वरत्वाद्यवस्थाया तिक्तको रस । अनुत्पन्नैतदवस्थे तु ज्वरे क्रमेण लङ्घनादीनि कुर्यात् ।

ज्वरे "लङ्घनं कुर्वीत" इत्युक्तम् । अस्य विशिष्टविषयेऽपवादमाह–

**शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् ॥ २२ ॥ नेष्यते**

**स०**–शुद्धेन वातेन–आमदोषाद्यदुष्टेन, यो ज्वर स शुद्धवातज्वर । क्षयेण–धात्वपचयादिलक्षणेन, यो ज्वर स क्षयज्वर । यश्च भूतविषवाय्वग्निसम्प्रहारादिसमुद्भव स आगन्तुज्वर । तथा, अतरुणो ज्वर स जीर्णज्वर । ते विद्यन्ते येषा त एवभूता । तेषु लङ्घन नेष्यते ।

**आ० र०**–ज्वरविशेषे लङ्घन निषेधति–शुद्धवातक्षयेति । शुद्धवात–निरामवायु । क्षयो–राजयक्ष्मा । आगन्तु–अभिघातादिज. । जीर्ण–चिरकालज. ।

तेषु तर्हि किं कार्यम् ? इत्याह—

**तेषु हि हितं शमनं यत्र कर्शनम् ।**

**स०**–हि–यस्मात्, तेषु–शुद्धवातादिज्वरेषु, शमन हितम् । शमनस्य सन्तर्पणापतर्पणरूपेण द्वैविध्यात् किं तच्छमन तेभ्यो हितम् ? इत्याह–यत्र कर्शनम्, बृहणमित्यर्थ । यद्येव तत्स्पष्टमेव बृहणमित्येतदेव कस्मान्न कृतम् ? किं शमनं यत्र कर्शनमिति पदद्वयोपादानेन ? ब्रूम । अर्थान्तरद्योतनार्थमेतदुक्तम् । तथा चायमर्थो विशिष्ट उभययोरुपादानेन प्रकाश्यते । यथा–न सर्वसर्विकया यद्बृहण शमन तत्तेभ्यो हितम् । किन्तर्हि ? किञ्चिद्बृहण शमन तत्तेभ्यो हितमिति ।

**आ र०**–हि–यस्मात्, तेषु शमन हितम् । किं लङ्घनभेद ? नेत्याह–यत्र कर्शनम्,–बृहणभेद इत्यर्थ । "बृहण शमन त्वेव वायो पित्तानिलस्य च ।" (हृ सू अ १४।७) इति वचनात् । वैनाशम्यमात्र(?)निवारकबृहणलाभार्थं शमनशब्दोक्ति । वङ्गसेने तु (ज्वराधिकारे श्लो १६६)–"कार्यं न बाले वृद्धे वा ।" इति ।

**तत्र सामज्वराकृत्या जानीयादविशोषितम् ॥ २३ ॥ द्विविधोपक्रमज्ञानमवेक्षेत च लङ्घने ।**

**स०**–[ तत्र– ] तेषु ज्वरेषु मध्ये, सामज्वरस्याकृत्या लक्षणेन "ज्वरोपद्रवतीक्ष्णत्व" ( हृ नि अ २।५४ ) इत्यादिना, अविशोषित–अलङ्घित, विद्यात् । लङ्घने–लङ्घनलक्षणापेक्षया, द्विविधोपक्रमज्ञान–द्विविधोपक्रमणीयाध्यायोक्तलक्षण, चावेक्षेत । तल्लक्षण च–"विमलेन्द्रियता सर्गो मलाना" (हृ सू अ १४।१७) इत्यादि । "अतिकार्श्यं" (हृ सू अ १४।२९) इत्यादिभिरतिलङ्घित च ।

**आ० र०**–अलङ्घितलक्षणमाह–तत्र सामज्वराकृत्येति । "ज्वरोपद्रवतीक्ष्णत्व" इत्यादि सामज्वराकृत्या अलङ्घितलक्षणे सिद्धेऽप्यलङ्घितलक्षण लक्षणसङ्करे लङ्घितोऽभूदित्येवमर्थं । लङ्घितलक्षणमाह द्विविधोपक्रमे–"विमलेन्द्रियता सर्ग" इत्यादि ।

**युक्तं लङ्घितलिङ्गैस्तु त पेयाभिरुपाचरेत् ॥ २४ ॥**
**यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ।**
**षडहं वा मृदुत्वं वा ज्वरो यावदवाप्नुयात् ॥ २५ ॥**
**तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ।**

**स०**–लङ्घितलिङ्गै–विशोषितलक्षणै, युक्त ज्वरित नर ज्ञात्वा तं पेयाभिरुपाचरेत् । किम्भूताभि ? यथास्वौषधसिद्धाभि । यद्यत्स्व यथास्वमिति वीप्सायामव्ययीभाव । यथास्व च तदौषध च यथास्वौषधम् । वातादे पृथग्रूपस्य ससृष्टस्य संनिपतितस्य यद्यस्य योग्यमौषध तेन सिद्धाभि–वक्ष्यमाणै पेयादिद्रव्यैर्यथायथ योग्यै कृताभिरित्यर्थ । किम्भूताभि ? मण्ड पूर्वं–प्रधान, अच्छतया याभ्यस्ताभिरिति समास । एव मण्डात् किञ्चिद्धना पेया कार्या इत्यर्थोऽवतिष्ठते । न तु मण्ड पूर्वं–प्रथमोऽभ्यवहारो, यासा ता मण्डपूर्वा इति व्याख्येयम् । एव हि व्याख्यायमाने सर्वासा पेयाना मण्डपूर्वाणा ज्वरेऽभ्यवहार प्राप्नोति । ततश्च (श्लो २७)–"सृष्टविड्बहुपित्तो वा सशुण्ठीमाक्षिका हिमा पेया पिबेत् ।" तामपि मण्डपूर्वां पिबेत्, न केवलामिति । एतच्च क्रियमाण विरुद्ध स्यात् । तथा क्वथितामलकेऽलर्थं पित्तशमने क्व मण्ड ? तथा क्व बहुपित्तो ज्वरी वा मण्ड "श्रृत पिप्पलीशुण्ठीभ्या युक्तो लाजाम्बुदाडिमै ।" (च सू अ २७।२५६) इत्येवस्वरूप ? पेयायाश्च ज्वरघ्नत्वमुक्तम् । तथा क्षुधिते सम्यग्लङ्घित ज्ञात्वा मण्डात् किञ्चिद्धनाभि पेयाभिरसावुपाचरणीय । तस्य–ज्वरिण, ताभि–पेयाभि, अग्निर्दीप्यते–समिध्यते, समिद्भि–"एधै, यथा बाह्य पावक । मुनिना चोक्तम् (च चि अ ३।१४९)–"ताश्च भेषजसयोगाल्लघुत्वाच्चाग्निदीपना । वातमूत्रपुरीषाणा दोषाणा चानुलोमना ॥ स्वेदनाय द्रवोष्णत्वाद्द्रवत्वात्तृट्प्रशान्तये । आहारभावात् प्राणाय सरत्वाल्लाघवाय च ॥ ज्वरघ्नो ज्वरसात्म्यत्वात्तस्मात्पेयाभिरादित । ज्वरानुपाचरेद्धीमान्" इति । खरनादेनाप्युक्तम्–"पिबेच्छा ससिक्था वा स्वा स्वा पेया नवज्वरे ।" इति । कियन्त

१ 'न–दोषा' ध । २ 'कर्षणम्' अ., ट ड ध । ३ 'योक्त ल' ध. । ४ 'त । लक्ष' ट.ड.ध. ।

१ 'कार्श्यादिभि' ट ड ध । २ "मण्डपूर्वाभिरिति मण्डप्रधानाभि, तत्र प्रथम मण्ड पीत्वा तदनु घनभागो योज्य ।" इति चक्र । ३ तस्याग्निरिति श्लोकार्धं त्वरुणदत्तटीकाया अ ध पुस्तकयोश्च षडह वेति श्लोकार्धात्पूर्वमेव पठ्यते । ४ 'सन्निपातस्य' ड ध । ५ 'जाम्लदा' स च । ६ 'एधोभि' ट । ७ 'त्वान्मृदुत्वा' ट. । ८ 'खारणादेऽप्यु' ट. ।

काल ज्वरिण पेयाभिरुपाचरेत् ? इत्याह–षडहमित्यादि । पेयाभिर्ज्वरिण षडह यावदुपाचरेत् । षण्णामह्ना समाहार, "तद्धितार्थोत्तरपद" इत्यादिना समास, "राजाह सखिभ्यष्टच्" इति टच्, "न सङ्ख्यादे समाहारे" इत्यह्नादेशो न, "अह्नष्टखोरेव" इति टिलोप । तथा, षडहादर्वागपि यदि शान्तो ज्वरस्तदा दोषदूष्याद्यपेक्षया भक्तयूषादिभिरुपाचरेदिति वाशब्देन गमयति । मृदुत्व वेति । अथवा षडहेऽतीतेऽपि यावज्ज्वरो मार्दव गच्छति तावत्पेयाभिरुपाचरेत् । ननु, तर्हि किं षडह वेत्यनेन ? अत्र केचिदेवमाहु । षडहादर्वाक्प्रायेण मृदुतायामपि जाताया षडह यावत् ज्वरिण पेयाभिरुपाचरेदिति द्योतनार्थं षडहं वेति कृतम् । अपरे तु काल एव बाहुल्येन ज्वरमार्दवस्येति ज्ञापनार्थमिदं कृतमिति मन्यन्ते । ज्वरमार्दवे तु जाते पाचनादियोग कार्य । तथा च वक्ष्यति (श्लो ३९)–"तत पक्वेषु दोषेषु लङ्घनाद्यै प्रशस्यते । कषाय" इति ।

आ० र०–पेयोपचारमाह–युक्त लङ्घितलिङ्गैरित्यादि । यथास्वौषधसिद्धाभिरिति । षडह मृदुत्व वा–यथाऽस्मिन् ज्वरे यदौषध पाचन शमन वा । मण्डपूर्वाभि –प्रथमदिने मण्ड प्रयुज्यते, द्वितीयदिनादौ प्रयुक्ताभि । आदित –आदौ, अन्ते यूषै रसैश्चेत्यर्थ । एतेन प्रथमदिने मण्ड, द्वितीयतृतीयचतुर्थेषु पेया –यवागूर्विलेप्य, "यवाग्वा च" (श्लो ३७) इति वक्ष्यमाणत्वात्, चकारेण विलेपी, पञ्चमे यूषौदन, षष्ठे रसौदन, इति षडहमुपाचरेत् । यूषौदनरसौदनौ युक्त्या हि, "इत्यय षडहो नेय" (श्लो ३८) इति वक्ष्यति । ज्वरमृदुत्वाद्यवेक्ष्य यावध्यन्तरे (?) प्रकारान्तरं स्वयमूह्यम् ।

उक्तोपचारफलमाह–तस्याग्निरिति । तस्य–लङ्घितस्य । ताभि–मण्डादिरसयूषरसपेयादिभि ।

अथ ता एव पेया वक्तुमुपक्रमते—

**प्राग्लाजपेया सुजरां सशुण्ठीधान्यपिप्पलीम् ॥२६॥**
**ससैन्धवां, तथाऽम्लार्थी ता पिबेत्सहदाडिमाम् ।**

स०–प्राक्–पूर्वं सर्वाभ्य पेयाभ्यो, लाजपेया पिबेत्, न तु यवादिप्रकृतिजा पेयाम् । कीदृशीम् ? सुजराम्, अल्पजत्वाद्यावच्छीघ्र जरा याति ताम् । तथा, सशुण्ठीधान्यपिप्पलीं–शुण्ठ्यादिभि शृतामिति बोध्यम् । अत एव ससैन्धवामिति पृथग् निर्दिष्टम् । अन्यथा सशुण्ठीधान्यपिप्पलीसैन्धवामिति निर्देशं कुर्यात् । मुनिरप्याह (च चि अ. ३।१७७)–"लाजपेयां च सुजरा पिप्पलीनागरै शृताम् ।" इत्यादि । ससैन्धवामित्यत्र सशब्दस्येषत्पर्यायत्वात् अल्पसैन्धवामिति बोध्यम् ।

तथा, अम्लार्थी–यो ज्वर्यम्ल प्रार्थयते स, ता–पूर्वोक्ता पेया, सहदाडिमां पिबेत् । पूर्वस्या पेयाया सदाडिमत्वमेवास्या विशेष । "वोपसर्जनस्य" इति सहशब्दस्य सभाव ।

आ० र०–पेयासु प्रथम लाजपेया योज्येत्याह–प्राग्लाजपेयामिति । सुजरा–सुक्वथिताम् । क्वथन च शुण्ठ्यादिक्वाथेन । क्वाथश्च षडङ्गवत्साध्य । सलवणत्व तु पश्चात्, "कषाययोनय पञ्च रसा लवणवर्जिता ।" (हृ क अ. ६।८) इति वचनात् । "चतुर्दशगुणे पेया" इति वचनात् लाजाश्चतुर्दशगुणे क्वाथे क्वथनीया । अस्या एव पेयाया मण्ड प्रथम दिने पेय । उक्त हि सिद्धयोगे (ज्वराधिकारे श्लो १५९) "शस्त सुलङ्घितस्यादौ विधाय कवलग्रहम् । लाजसक्तुकपथ्य स्यात्सैन्धवेनावचूर्णितम् ॥ रक्तपित्तहितत्वेन दाहज्वरहृतेस्तथा । सक्तव शीतवीर्या स्युर्लाजपूर्वा हिता न ते ॥ पाचनो दीपनो लाजमण्डस्तेनोष्ण इष्यते । अतोऽस्य दशमूलादिसाधितो भिषजां मत ॥ तच्चेज्जीर्यत्यविघ्नेन ज्वरी जीवेत्तदा ध्रुवम् ।" इति । यत् "वाते वातकफे पित्ते सामवातरुजाज्वरे । वाट्यमण्ड प्रशसन्ति पटोलमगधान्वितम् ॥" इति । तद्बद्धमलविषयम् । भृष्ट शकलीकृतो यवो–वाट्य ।

अम्लार्थिन पेयामाह–तथाऽम्लार्थीति । तां–लाजपेयाम् । तथा–तद्वत्साधिताम् । सहदाडिमा–शुण्ठ्यादिषु दाडिमं प्रदेयम् ।

**सृष्टविड् बहुपित्तो वा सशुण्ठीमाक्षिकां हिमाम् २७**

स०–पिबेदित्यनुवर्तते । सृष्टविट्–भिन्नवर्चा ज्वरी, बहुपित्तो वा सशुण्ठीमाक्षिका हिमा पेया पिबेत्, नोष्णा नान्यथा यो ज्वरी । धान्यपिप्पल्यावत्रापास्ये, शुण्ठीग्रहणात् । अत्र च शुण्ठ्या द्रव्येभ्योऽसयोगान्मधुरपाकत्वादग्निमान्द्योत्सारणोपक्षीणशक्तित्वाद् युक्त पित्ते प्रयोग । एवमन्यत्रापि शुण्ठ्याः प्रयोगे चिन्त्यम् । सैन्धवं तु तावन्मात्र सर्वत्राविरुद्धमेव ।

आ० र०–शिथिलमलपित्तोत्तरयो पेयामाह–सृष्टविडिति । हिमाया माक्षिकप्रक्षेप, किञ्चिन्माधुर्यं यथा स्यात् ।

**बस्तिपार्श्वशिरःशूली व्याघ्रीगोक्षुरसाधिताम् ।**

स०–बस्त्यादिशूली व्याघ्रीगोक्षुरसाधिता पेयां पिबेत् ।

आ० र०–बस्त्यादिशूलिन पेयामाह–बस्तिपार्श्वशिर–शूलीति ।

**पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥ २८ ॥**
**सिद्धा ज्वरातिसार्यम्लां पेयां दीपनपाचनीम् ।**

स०–पृश्निपर्ण्यादिसाधिता पेया दीपनपाचनी ज्वरातिसारवान् अम्ला पिबेत् । दीपनी चासौ पाचनी चेति पुवत्कर्मधारयेति पुवद्भाव । अत्राम्लग्रहण न कर्तव्यम् । यत सर्वत्र पेयाप्रसङ्गेऽम्लार्थी यो ज्वरी स सदाडिमां पेया पिबेदित्युक्तम् ।

---

१ अपेक्ष्य भ' ड । २ 'एष' ड । ३ "अम्लार्थीग्रहणेन 'कुर्वते हि रुचिं दोषा' (हृ सू अ ११।४३) इति स्मार्यते, न त्वर्थितामात्रे प्रयाग ।" इतीन्दु । ४ 'ल्पलाजत्वा' ट । ५ 'या सुखजरा' स च ।

१ 'त्वमस्या' ड ध । २ 'त्रान्याप्ये' ट. ।

तस्मात्किमनेन ? ब्रूम । अम्लाभिलाषी भवतु वा मा भवतु । तथाऽप्यम्लामेव ज्वरातिसारी पिबेदित्यस्यार्थस्य द्योतनार्थमम्लामित्युक्तम् ।

**आ० र०**–ज्वरातिसारिण पेयामाह–पृश्निपर्णीति । अम्लां–दाडिमोपेताम् ।

**ह्रस्वेन पञ्चमूलेन हिक्कारुक्श्वासकासवान् ॥ २९ ॥**

**स०**–पिबेत्सिद्धामित्यत्रानुवर्तते । ह्रस्वेन–बृहत्यादिना, पञ्चमूलेन सिद्धा पेया हिध्मादिवान् पिबेत् ।

**आ० र०**–हिध्मादियुक्तस्य पेयामाह–ह्रस्वेन पञ्चमूलेनेति । ह्रस्वेन–बृहत्यादिना । रुक्–शूलम् ।

**पञ्चमूलेन महता कफार्तो यवसाधिताम्[1] ।**
**विबद्धवर्चा[2] सयवा पिप्पल्यामलकैः कृताम्[3] ॥३०॥**
**यवागूं सर्पिषा भृष्टा मलदोषानुलोमनीम् ।**

**स०**–कफार्तो नरो बिल्वादिना–महता, पञ्चमूलेन सह यवसाधिता पिबेत् । तण्डुला एवात्र प्रकृतित्वेन योज्या । यवास्तु क्वाथ एव । विबद्ध–विष्टब्ध, वर्चः –पुरीष, यस्य–नरस्य, स नर सयवा–यवप्रधाना, पिबेत् । किम्भूताम् ? पिप्पल्यामलकैः कृताम् । तथा, सर्पिषा भृष्टा–सम्यगाज्येन सस्कृताम् । तथा, मल –पुरीषादि , दोषो–वातादि , तेषामनुलोमनी–स्वमार्गप्रवर्तिनीम् ।

**आ० र०**–कफार्तस्य पेयामाह–पञ्चमूलेन महतेति । यवरूपेय सर्पिषा भृष्टा यावन्निरध(न्निर्धूम)त्वं तावत्सर्पिः सन्ताप्य तन्मध्ये प्रक्षिप्ताम् ।

**चविकापिप्पलीमूलद्राक्षामलकनागरैः ॥ ३१ ॥**
**कोष्ठे विबद्धे सरुजि**

**स०**–कोष्ठे विबद्धे–विबद्धदोषाधिष्ठाने, तथा सरुजि चविकादिभि साधिता पेया पिबेत् ।

**आ०र०**–विबद्धशूलयुक्तस्य पेयामाह–चविकापिप्पलीति ।

**पिबेत्तु परिकर्तिनि ।**
**कोलवृक्षाम्लकलशीधावनीश्रीफलैः कृताम्[4] ॥ ३२ ॥**

**स०**–तु पुनरर्थे । परिकर्तन–परिकर्तिका छेदनमिवानुभव , स यस्यास्ति स परिकर्ती कोष्ठ , तस्मिन्परिकर्तिनि तु कोष्ठे, कोलादिभि साधिता पेया पिबेत् । श्रीफल–बिल्वफलम् ।

**आ० र०**–परिकर्तिन पेयामाह–पिबेत्त्विति । कोलं–बदरम् । कलशी–पृश्णिपर्णी । श्री.–बिल्व ।

**अस्वेदनिद्रस्तृष्णार्तः[5] सितामलकनागरैः ।**
**सिताबदरमृद्वीकासारिवामुस्तचन्दनैः ॥ ३३ ॥**
**तृष्णाच्छर्दिपरीदाहज्वरघ्नीं क्षौद्रसंयुताम् ।**

**स०**–अस्वेदनिद्रो नरस्तृष्णार्तश्च सितादिभिः साधिता पेया पिबेत् ।

**आ० र०**–अस्वेदनिद्रातृष्णार्तस्य पेयामाह–अस्वेदनिद्रातृष्णार्त इति । सिता–शर्करा, सा च मधुवद्योज्या । सङ्ग्रहे (चि अ १)–"सितांधात्र्याज्यनागरै[2]" इति पाठ । तेन सर्पिर्भृष्टा कार्या । परीवार –उपद्रव[1] ।

**कुर्यात्पेयौषधैरेव रसयूषादिकानपि ॥ ३४ ॥**

**स०**–पेयोद्दिष्टैरेवौषधैर्मांसरसादयोऽपि यथोपयोग कर्तव्या ।[[3]तथा च सङ्ग्रहेऽप्यगीष्ट–(चि अ १)–"कुर्यात् पेयौषधैरेव रसयूषादिकानपि ।"] रसोऽत्र मासरस । यूषा –मुद्गादिसम्बन्धिनः क्वाथा । आदिग्रहणात् पानीयमस्तुतक्रव्यञ्जनादयो गृह्यन्ते । पेयादिषु च द्रव्यपरिमाणादिक पूर्वोक्त सूपशा[4]स्त्रादिभ्यो वाऽवगन्तव्यम् । तथा च तन्त्रान्तरे–"पेयायूषरसायेषु रसालापानकादिषु । द्रव्यमात्रा[5] प्रयुञ्जीत लोकसिद्धा यथार्हत[6] ॥" इति ॥ यस्य पुसो यत्परिमाणैर्द्रव्यैर्मात्रा योग्या तस्य तत्परिमाणैर्द्रव्यैरेव पेयादय कार्या इत्यर्थ । अन्ये त्वेव मन्यन्ते,–पेयायूषरसायेषु द्रव्यपरिमाणमल्पमेव कल्पयितव्यम् । पानार्थे च यद्द्रव्यै साधित तोयमुक्त तदल्पपरिमाणद्रव्यैरेव साधनीयम् । अल्पपरिमाणेनैव द्रव्येण तत्तोयं सम्यक् पाच्यते । तथा च खरणादिरपाठीत्[7]–"बहुद्रव्यो घन क्वाथ स्वच्छमल्पौषध जलम् ।" इति । श्रपणक्रियासामान्येऽप्यस्योभयस्य पृथक्सञ्ज्ञाविनिर्देशो द्रव्यपरिमाणभेदादय क्वाथ इद जलमिति । ज्वरिणा च प्रथमं यथाऽच्छा पेया देयास्तथा यूषरसा अप्यच्छा एव देया , अग्निमान्द्यभयात् । क्वाथोऽप्यत एव बहुपरिमाणद्रव्यसाध्यत्वाद्घनतया तिक्तरसद्रव्यकृतोऽपि प्रथम ज्वरे निषिद्ध ।

**आ० र०**–पेयौषधैरेव रसयूषादिकानपि कुर्यादित्याह–कुर्यादिति ।

कि सर्वत्र ज्वरे सर्वा सर्वदा सर्वस्मिन्देशे पेया देया न ? इत्याशङ्क्याह—

**मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे ।**
**ग्रीष्मे तयोर्वाऽधिकयोस्तृट्छर्दिदाह[*९]पीडिते ॥ ३५ ॥**
**ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छन्ति**

**स०**–मद्योद्भव इत्यादिष्वर्थेषु पेया नेच्छन्ति, मुनय इति शेष. । मद्येनोद्भवो[10] यस्य तस्मिन् मद्योद्भवे ज्वरे, तथा मद्यनित्ये

---

१ "यवसाधिता–यस्या तण्डुला न प्रविशन्ति । सयवा–यत्र स्तोक ग्वानाम् ।" इतीन्दु २ 'भृताम्' इ स च ध । ३ 'वान्नप्र ध । ४ 'श्रीबलाकृताम्' इति हेमाद्रिपठितपाठो युक्त , चरकसम्मतत्वात् । ५ 'निद्रातृष्णा' हे ।

१ 'परीवारज्व' हे । 'परो दाह' इ । २ 'सितामलकनागरै ' स द्व । ३ [ ] एतच्चिह्नान्तर्गत. पाठो लिखितमुद्रितेषु सर्वेषु पुस्तकेष्वुपलब्धोऽप्ययुक्त. । ४ 'सूदशा' ट । 'क्त तच्छास्त्रा ड ध । ५ 'तत्र मात्रा' ड ध । ६ 'यथार्थत ' ध । ७ 'खरनादोऽपाठीत्' ध. । ८ 'भ्यत्वा' ड ध । *९ 'र्दिदाह' अ इ ,ट ड.ध. । १० 'द्भवति यस्तस्मि' ड.ध. ।

पुरुषे, तथा कफे पित्तस्थानगते सति, तथा ग्रीष्मकाले, तथा तयोर्वाऽधिकयो, तयोरिति पित्तकफौ परामृश्येते, पित्तकफयोश्चाधिकयो, पित्तस्थानगते कफ इत्यतस्तयोरेव प्रकृतत्वात्, तथा तृट्छर्दिर्दाहै समुदितैः पीडिते पुरुषे यो ज्वरस्तस्मिंश्च, प्रत्येक तु तृडार्तेऽनुज्ञातैव, अस्वेदनिद्रस्तृष्णार्त इत्युक्ते, दाहार्तेऽपि सृष्टविड्बहुपित्तो वेत्याह, तथा यस्योर्ध्व प्रवृत्ते रक्ते ज्वरस्तस्मिंश्च पेया नेच्छन्ति ।

**आ० र०–ज्वरविशेषे पेया निषेधति–मद्योद्भव इति । मद्यनित्ये पुरुषे । तयो –पित्तकफयोरधिकयोर्वा ।**

तेषु तर्हि कि कार्यम् ? इत्याह—

**तेषु तु ।**

**ज्वरापहैः फलरसैरद्भिर्वा लाजतर्पणान् ॥ ३६ ॥**
**पिबेत्सशर्कराक्षौद्रान्**

**स०**–तेषु पुनविषयभूतेषु लाजतर्पणान्–लाजसक्तून्, पिबेत्,–पेयावसरे न तु यवसक्तून् पिबेत् । ज्वरापहै फलरसै–द्राक्षादीना ज्वरघ्नाना फलाना रसै–स्वरसै, अथवा तद्रसै–क्वाथै । अथवा, अद्भि–जलै, क्वथितशीतलैरित्यर्थाद्गम्यते । किम्भूतान् लाजतर्पणान् ? सशर्कराक्षौद्रान् ।

**आ० र०–निषिद्धपेयस्य तर्पणमाह–तेषु त्विति । लाजतर्पण–लाजचूर्णकृतमर्थम् । सङ्ग्रहे तु ( चि अ १ )–"द्राक्षादाडिमकाश्मर्यपथ्यापीलुपरूषकै । ज्वरघ्नैस्तोयमृदितैरद्भिर्वा लाजतर्पणान् । पिबेत्सुसूक्ष्मरजस" इति । तत्र तर्पणशब्देन सक्तव । ते च लाजानाम् ।**

**ततो जीर्णे तु तर्पणे ।**
**यवाग्वां वौदनं क्षुद्वानश्नीयाद्भृष्टतण्डुलम् ॥ ३७ ॥**
**दकलावणिकैर्यूषै रसैर्वा मुद्गलावजैः ।**

**स०**–तत–तर्पणपानादनन्तर, जीर्णे तर्पणे, यवाग्वा वेति यवागूपानार्हे नरे यवाग्वा जीर्णाया, क्षुद्वान् पुरुषो–जातबुभुक्ष सन्, द्वितायेऽन्नकाल ओदनमश्नीयात्–भुञ्जीत । किम्भूतम् ? भृष्टास्तण्डुला यस्मिन् । कि केवलमोदन भुञ्जीत ? नेत्याह–दकल्यादि । दकलावणिकै–कुलत्थादीना सम्बन्धिभिर्यूषै–क्वाथै, ओदनमद्यात् । अथवा, अवस्थावशात् मुद्गलावजैरोदनमद्यात् । मुद्गलावजरसैरिति वक्तव्ये रसैरिति पृथङ्निर्देशो लावजरसाना प्राधान्यज्ञापनार्थम् । तथा लावजरसा संस्कार्या, संस्कारकाश्च मुद्गा, अत एव बहुमात्राणा लावानामल्पाना च मुद्गानामत्रोपयोग कार्य इत्यवतिष्ठते । "नातिमा

१ 'तर्पणम्' अ इ हे स मू. । २ 'क्षौद्र' अ इ हे । ३ 'क्षामलकादी ट । ४ घ्नाना रसे' ड ध । ५ 'त्यर्थ ।' ड ध । ६ 'तर्पणम्' फ स मू । ७ 'च' इ । ८ 'ग्वा चौद' हे स मू । 'ग्वामाद' अ इ । ९ 'चेति' ट.ध । १० 'नातिमात्रास्तत्र रसा' ड ध. ।

त्रास्तनुरसा दकलावणिका स्मृता ।" इति केचिदाहु । अन्ये त्वाचक्षते,–"अल्पमासपटुस्नेहा दकलावणिका स्मृता ।" इति ।

**आ० र०–यूषोदनरसौदनावाह–ततो जीर्णे त्विति । यस्य तर्पणमुक्त तस्य तर्पणे जीर्णे, यस्य यवागूरुक्ता तस्य यवाग्वा जीर्णाया, ओदनमश्नीयात् । जीर्णत्वमपि विकार पाक । स च दिनत्रयेण जायते । त्रिदिन तर्पण यवागू वा भुक्त्वा ततो यूषौदन ततो रसौदन भुञ्जीतेत्यर्थ । मुद्गजैर्यूषै रसै । लावजैर्दकलावणिकै । दक–उदकम्, तेन लवणेन च संस्कृतै, अकृतैरित्यर्थ । वाशब्दादमुद्गलावजैरपि यथासात्म्य धान्यान्तरमासान्तरजै । यूषैर्वा रसैर्वेति व्याख्याने मुद्गलावजैरिति विशेषण न घटते, क्रमाभावात् ।**

**इत्ययं षडहो नेयो बलं दोषं च रक्षता ॥ ३८ ॥**

**स०**–इति–पूर्वोक्तेन प्रकारेण, प्रथमो ज्वरस्य षडहो नेय–अतिवाह्य, नान्यो ज्वरस्य सम्बन्धी, इत्ययमिति निर्देशाल्लभ्यते । किं कुर्वता भिषजा षडहो नेय ? बल रक्षता, तथा दोष–तत्काले साम वाताद्यन्यतम पृथक् ससृष्ट सन्निपतित वा तज्ज्वरकारण रक्षता,–तत्र तद्रक्षा कुर्वता, यथाऽसौ दोष कृच्छ्रसाध्यतामसाध्यता वा न याति । अत्र च यदि किल बलरक्षार्थं सन्तर्पण क्रियते तदा सन्तर्पणस्यामवृद्धिहेतुत्वात् सामो दोषो वर्धेत, अथामदोषक्षपणार्थमपतर्पण कुर्वीत तदा बलहानि स्यात्, तस्मान्मध्यमया वृत्त्याऽवहितेन वैद्येनोभय रक्षतोपक्रम कार्य, नात्रावहेला कार्येत्यर्थ ।

**आ० र०–मण्डाद्युपचारमुपसहरति–इत्ययं षडहो नेय इति ।**

**ततः पक्वेषु दोषेषु लङ्घनाद्यैः प्रशस्यते ।**
**कषायो दोषशेषस्य पाचनः शमनोऽथवा ॥ ३९ ॥**

**स०**–लङ्घनाद्यै–तिक्तरसावसानैस्तत्कालोचितैर्ज्वरकारिसाममलपक्तृहेतुभि, पक्वेषु दोषेषु तत–षडहादूर्ध्व, कषाय. प्रशस्यते । मुस्तापर्पटकादि पाचन, प्राधान्येन पाचनसञ्ज्ञया विहितत्वात् । तथा वक्ष्यमाण कलिङ्गकादिरर्धश्लोकसमापनः ( श्लो ४८ ) पञ्चप्रकार शमन प्रशस्यते, प्राधान्येन शमनसञ्ज्ञया विहितत्वात् । तथा चाध्येष्यते तन्त्रकृत् ( श्लो. ५१ ) "पञ्चैते सन्ततादीना पञ्चाना शमना मता ।" इति । तदेतदुभय–पाचनशब्दश्रुत्याक्षिप्तो मुस्तापर्पटकादि शमनश्रुत्याक्षिप्त कलिङ्गकादि, कषाय–क्वाथ, प्रशस्यते । कस्य पाचन ? इत्याह– दोषशेषस्य । अत एव पक्वेषु दोषेषु लङ्घनाद्यैरित्यल्पपक्वेषु पक्वप्रायेष्वीषदामेषु दोषेष्विति बोध्यम् । अन्यथा पक्वस्य पाचनमयुक्तमिव स्यात्, पिष्टपेषणन्यायेनानर्थकत्वात् । तथा चापक्व यद्वस्तुजात तदग्नि पचति, पचन्तमग्नि पाचन पाचयति । एव च पाक्याभावात् किमग्नि पचतु ? कि वा कषाय.

१ 'ता–तद्रक्षा' ड ध । २ 'तथा' ड ध । ३ 'लपाकहे' इति क्वचित् । ४ 'चनशमनश्रुत्याक्षिप्त कलि' ड.ध ।

पाचयतु ? इत्यनुपपन्नमिवैतत्स्यात् । यदा पुनर्मुस्तापर्पटकादि कलिङ्गादिरन्यो वा कश्चित् कषायस्तिक्ताद्यन्यतमो वातादिदोषज्वरशान्त्यर्थं प्रयुज्यते तदा पाचनो भवन्नपि शमनसञ्ज्ञ, न पाचनसञ्ज्ञ । ननु, प्रथम एव दिने तिक्तरसकषायमनुजज्ञे तन्त्रकृत् । तथा चोवाच (श्लो १५)–"घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम् । शीतं तेभ्यो हित तोय पाचन तृड्ज्वरापहम् ॥" इति । तत्कथमेतत् ? अत्रोच्यते । ज्वरिण प्रसक्ततृषोऽवश्य पान किञ्चिद्वितरणीयम् । न च (पाने) मद्येक्षुरसदधिमस्त्वारनालक्षीरादीनामत्र योग्यत्वेऽपि ज्वरस्यैवविधानि निषिद्धानि तन्त्रकृद्भि, शिशिरजलमप्यामदोषस्रोत सरोधाग्निसादादीनावहेत् ज्वर गाढतर कुर्यात् । तस्मात् पानार्थे तिक्तसाधितमुक्तमम्ब्वनुमेने । द्रव्याणि चात्र स्वल्पमात्रयैव योज्यानीत्यनन्तरमेव प्रत्यपादि । किञ्च ज्वरितस्तृषितो जल बह्वौषध पातुमपि न क्षमेत । किञ्च कतिपयान्येव घनादीनि जलसंस्कारेण पातुमनुमतानि, न सकलान्यपि तिक्तान्यनुमतानि । कि तर्हि ? विशिष्टप्रभाव दर्शयन्ति घनादीन्येव । विशिष्टप्रभावत्व चान्यत्रापि द्रव्याणा दृष्टम् । यथा–शमीफल मधुरमपि केशघ्नम्, तथाऽम्लमप्यामलक पित्तकफघ्नम्, सैन्धव लवणमपि चक्षुष्यम्, इत्याद्यन्यदप्यूह्यम् । तस्मात् घनादीनां पानीयसंस्कारोपयोगो नवज्वरेऽपि हित ।

**आ० र०–औषधमाह–तत पक्केष्विति । तत.–षडहात्परम् । कषाय –स्वरसादि । अपक्वदोषशङ्काया पाचन, तदभावे शमन । बृद्धिजशनम् (?) । पक्केषु दोषेष्विति दिनसङ्ख्यानादरार्थम् । तदुक्तिस्तु क्रमकथनार्थम् ।**

**तिक्तः पित्ते विशेषेण प्रयोज्य., कटुकः कफे ।**

**स०**–कषाय इति वर्तते । ज्वरस्य प्रकृतत्वात् पित्ते–पित्तज्वरे, तिक्तकषायकल्पनाप्रकार प्रयोज्य । तिक्त पित्ते विशेषेणेत्यतो विशेषनिर्देशादन्यदोषोत्थेऽपि ज्वरे तिक्तरसाधिष्ठितो द्रव्यकषायो यथावस्थ प्रयोज्य, न केवल पित्तज्वराख्ये, व्याधिदोषघ्नत्वात् । तथा तिक्तो रसो निसर्गत एव ज्वरघ्न शास्त्रेऽस्मिन्पठित । यथा (हृ सू अ १०।१४)–"तिक्त स्वयमरोचिष्णुररुचिं कृमितृड्विषम् । कुष्ठमूर्च्छाज्वरोत्क्लेददाहपित्तकफान् जयेत् ॥" इति । मुनिरप्यवोचत् (च सू अ २६।४३)–"तिक्तो रस स्वयमरोचिष्णुररोचकघ्नो विषघ्न क्रिमिघ्नो मूर्च्छादाहप्रशमनस्तृष्णाप्रशमनस्त्वङ्मासयो स्थिरीकरणो ज्वरघ्न" इत्यादि । तस्माद्रसेषु यथा तिक्तरसस्य ज्वरघ्नत्व तथा नान्येषा रसानामित्यवेहि । गुडूच्यादेश्च द्रव्यस्य तिक्तरसत्वादेव ज्वरघ्नत्वस्य प्रतिपादितत्वात् पुनर्यज्ज्वरघ्नत्वमुक्त तच्छक्त्युत्कर्षायेति बोध्यम् । गुडूच्याश्च मुनि(?)गुणानाह । यथा (सङ्ग्रहे अ १२)–"तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी । दीपनी ज्वरतृड्दाहकामलावातरक्तनुत् ॥" इति । एवमन्येषामपि द्रव्याणामाधेयसामर्थ्याद्युत्कर्षसिद्धमपि यत् पुनरुच्यते, तत्तेषा तस्य कर्मण शक्त्युत्कर्षार्थं बोध्यम् । कटुक इत्यादि । कटुकरसाधिष्ठितो ज्वरघ्नद्रव्यविशेषज क्वाथ कफे–कफज्वरे प्रयोज्य, न तु य कश्चित्कटुकद्रव्यकषाय, सर्वस्य ज्वरघ्नत्वानुपपत्ते । यस्माद्द्रव्यप्रभावाद्विशिष्टमेव कटुरसाधिष्ठित किमपि यद् द्रव्य तज्ज्वरघ्नमिति मन्तव्यम् । एतदेवं तस्माचाय ग्रन्थकृत् "कफे कटुको योज्य" इति जगाद ।

**आ० र०–यस्मिन् दोषे य कषायस्तमाह–तिक्त पित्त इति । विशेषेणेति वचनात् कफेऽपि, न तु वाते, विरुद्धत्वात् ।**

**पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते ॥ ४० ॥**
**नवज्वरे, मलस्तम्भात्कषायो विषमज्वरम् ।**
**कुरुतेऽरुचिहृल्लासहिध्माध्मानादिकानपि ॥ ४१ ॥**

**स०**–कषाय –कषायरसाधिष्ठितद्रव्यज कषाय, स पित्तश्लेष्महरत्वेऽपि नवज्वरे,–तरुणज्वरे, न शस्यते । कुत ? इत्याह–मलेत्यादि । कषायो ह्यत्र योजितो मलस्तम्भात्कारणात् विषमज्वर–सततादिक, कुरुते । कषायस्तम्भिता हि मला कोष्ठमप्रतिपन्नत्वात् सम्यक्पाकमयान्त सन्धिस्रोतोलीनाः कषायपानविहितवेगा अशक्तत्वाद्विषममेव ज्वरं कुर्वन्ति । यदि हि तेषा कषायदानेन शक्तिहानिर्न कृता स्यात् तदा सन्ततमेव ज्वर कुर्यु । तस्मात् स्वल्पत्वात् सततादिक विषमज्वर कर्तुमेषां युक्तम् । ननु, पित्तश्लेष्महरत्वेपीत्यनर्थम् । यत "कषाय पित्तकफहा" (हृ सू अ १०।२०) इति पूर्वमुक्तम् । अस्त्येवैतत् । अर्थविशेषज्ञापनार्थं तु पुनरुक्तम् । नवज्वरे–एकदोषजे सन्निपातजे वातकफजे वातपित्तजे, केवल कषायो न शस्तोऽपि तु पित्तश्लेष्मज्वरेऽपि न शस्त, तस्मात् पित्तकफजेऽपि ज्वरे नाय योज्य इत्यर्थ । तथा, कषायोऽय योजितो न केवल विषमज्वर करोति, यावदरुच्यादींश्च करोति । अत्रापि मलस्तम्भादिति सम्बध्यते । तेन यद्यप्यादिशब्देनानियतरूपाणामनेकानां व्याधीना ग्रहण प्राप्तम्, तथाऽपि मलस्तम्भाद्ये व्याधय उत्पद्यन्तेऽरुच्यादिरूपास्तेषामेवेह ग्रहणार्थमेव सम्बन्ध कृत । तथा, विषमज्वरारुचिहृल्लासहिध्माध्मानादिकानपीत्येकविभक्त्यैवं निर्देश कर्तुं व्यवच्छिद्य पृथङ्निर्देशो य कृतस्तेनेद द्योत्यते,–कषाय प्रयोजितोऽवश्यमेव विषमज्वर कुरुते, अरुच्यादीन् पुनर्नावश्यं कुरुते, इति । तदेव कषायो रसविशेषो मलस्तम्भादेव नवज्वरे निषिध्यते, न तु कल्पनावशात् । तथा च मुनि (च

१ 'जगौ' ध । २ 'ज्वरे ह्येव' ट । 'ज्वरे त्वेव' ध । ३ 'मुष्णम' ट । ४ 'बहुतौष' ध । ५ 'नुक्तानि' ट ड ध । ६ 'त्यघ्नम्' ध । ७ 'ना सस्का' ड ध । ८ 'दैशेऽन्य' ड । ९ 'धिविषघ्न' ड. । १० 'रप्यरोच' स च. । ११ 'दाहकण्डूकुष्ठतृष्णा' स च ।

१ 'च्यादेश्च' ट । २ 'कफजे ज्व' ड ध । ३ 'साचात्तद्द्व्यप्रभावत्वाद्वि' ट । ४ 'व्यस्य प्र' ड । ५ 'व यदेतस्या ग्रन्थ' ध । 'म् । तदेव यदेवस्य ग्रन्थ' ड । ६ 'यस्तु न' इ फ. । ७ 'ज्वरान्' स स. । ८ 'सन्तता' ट । ९ 'पन्ना. सम्य' ड ध. । १० 'मयाता' ट । ११ 'ज्ञानार्थं' ड.ध. ।

चि अ ३।१६०)-"य कषाय कषायैस्तु स वर्ज्यस्तरुणे ज्वरे । न तु कल्पनमुद्दिश्य कषाय प्रतिषिध्यते ॥" इति ।

**आ० र०-कषाय ज्वरे निषेधति-पित्तश्लेष्महरत्वेऽपीति । कषाय -कषायरसस्य कषाय. ।**

**निषेधातिक्रमे दोषमाह-मलस्तम्भादिति । सङ्ग्रहे तु ( चि अ १ )-"न च्यवन्ते न पच्यन्ते कषायस्तम्भिता मला । तिर्यग्गता विमार्गा वा वर्द्धयन्त्यपि च ज्वरम् ॥ बह्वामकफवातत्वाच्छूलानाहादिकानपि ।" इति ।**

**सप्ताहादौषधं केचिदाहुरन्ये दशाहतः ।**
**केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु ॥ ४२ ॥**

**स०**-सप्ताहादनन्तरमष्टमेऽह्न्यौषध-ज्वरघ्न यथायोग्य शृता दिकल्पनया कल्पित, योज्यमिति केचिदेवाचार्या आहु । अन्ये तु दशाहादूर्ध्वमौषध-मुस्तापर्पटकादिक, योज्यमाहु । केचिदाचार्या लघ्वन्नभुक्तस्य नरस्यौषध योज्यमित्याहु । लघ्वन्नशब्देन पेयादिक भण्यते, ओदनतस्तस्य लघुत्वोक्ते । लघ्वन्न भुक्त येनासा लघ्वन्नभुक्त । आहिताग्न्यादित्वान्निष्ठान्तस्य परनिपात । "परमतमप्रतिषिद्धमनुमतमेव" इति सर्वमेतत् प्रमाणम्, अवस्थावशेन प्रयोगार्हत्वात् । आमोल्बणे तु न-आमाधिकज्वरिणि पुरुषे पुनरौषध ज्वरघ्न मुस्तापर्पटकादिक षडहादूर्ध्वं सप्ताहात् दशाहाद्वा न योज्यम् ।

**आ० र०-उक्तमौषधकालं मतान्तरेण निराकुरुते-सप्ताहादौषधमिति । लघ्वन्न-मण्डादि, षडहादनन्तर अवधित्रयमप्यप्रयोजकम् । यावदामोल्बणस्तावदौषधं न योज्यम् ।**

किमिति चेत् ? आह-

**तीव्रज्वरपरीतस्य दोषवेगोदये यतः ।**
**दोषेऽथवाऽतिनिचिते तन्द्रास्तैमित्यकारिणि ॥४३॥**
**अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम् ।**

**स०**-तीव्रज्वरेण परीतस्य ज्वरिण पुसो दोषवेगोदये दोषस्य-आमाख्यस्योल्बणस्य, वेगो-मुस्तापर्पटकादिनोत्क्लेशात्, दोषवेग, तस्योदय -प्रादुर्भावो, दोषवेगोदय । अथवा, उल्बणामस्य वातादेर्दोषस्य वेगोदय, तस्मिन् दोषवेगोदये सति । अथवा तथैव दोषे-आमाख्ये, अतिनिचिते-अतिशयेन सञ्चय प्राप्ते, वातादौ वा दोष उल्बणे । अत एव तन्द्रास्तैमित्येऽवश्यं करोति तस्मिन् तन्द्रास्तैमित्यकारिणि । यतो-यस्मात्, तदानीमामच्छन्नपावकेनापच्यमान भैषज्य-औषध मुस्तापर्पटकादि शृतादिकल्पनाकल्पित, तदौषध प्रयुक्त भूय -पुनरपि, ज्वर ज्वलयति-उत्तेजयति न शमयति । तस्मादामोल्बणे ज्वरे न षडहादूर्ध्वं नापि सप्ताहान्न च दशाहादूर्ध्वं भैषज्य योज्यम् ।

**आ० र०**-स्वसिद्धान्ते युक्तिमाह-तीव्रज्वरपरीतस्येति । द्विविधो ह्यामोल्बणो ज्वर -अपक्व पच्यमानश्च । तत्र प्रथमेऽर्थे पच्यमानस्योक्ति, अपक्वस्य द्वितीये । उभयोरपि प्रयुक्तमौषधमपच्यमान पुनर्ज्वर ज्वलयति ।

कदा तर्हि योज्यम् ? इत्याह-

**मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा ॥ ४४ ॥**
**अचिरज्वरितस्यापि भेषज योजयेत्तदा ।**

**स०**-मृदुर्ज्वर -उपद्रवमृदुतया । लघु -पटु, देह । चलिता मला -मूत्रपुरीषादय । मृदुर्ज्वर इत्यादिलक्षणावस्था यदा भवति तदाऽस्यामवस्थायामचिरज्वरितस्यापि-अनतिक्रान्तषडहस्यापि, भैषज्य योज्यम्। अपिशब्दात् किं पुन षडहेऽप्यतीते ज्वरितस्यैवलक्षणायामवस्थायामुत्पन्नाया तदौषधं च न योज्यम् ? इत्येव व्याध्यवस्था कालतो गरीयसीत्युक्त भवति ।

**आ० र०-औषधयोग्या ज्वरावस्थामाह-मृदुर्ज्वर इति ।**

अथ तदौषधमाह—

**मुस्तया पर्पटं युक्तं शुण्ठ्या दुःस्पर्शयाऽपि वा ॥४५॥**
**पाक्यं शीतकषायं वा पाठोशीर सवालकम् ।**
**पिबेत्तद्वच्च भूनिम्बगुडूचीमुस्तनागरम् ॥ ४६ ॥**

**स०**-मुस्तया सह पर्पटं युक्तमथवा शुण्ठ्या धन्वयासेन युक्त पाक्य-शृत, शीतकषाय-शीतकल्पनाकल्पित, वा कृत्वा पिबेदिति वक्ष्यमाणेन सम्बन्ध । पाठा चोशीर च पाठोशीर वालकेन सह शृत शीत वा पिबेत् । स्वरसकल्कफाण्टाख्यकल्पनाभ्य शृतशीताख्यकल्पनाद्वयकल्पितस्यास्य तथा सामर्थ्यस्य दृष्टत्वा देतत्कल्पनायुगलमुपन्यस्तवान् । वा समुच्चये भिन्नक्रमे । तद्वदित्यादि । न केवल मुस्तापर्पटक पिबेत्, तथा पाठोशीर सवालक पिबेत्, यावद्भूनिम्बगुडूचीमुस्तनागरमपि पिबेदिति ।

**आ० र०-औषधमाह-मुस्तया पर्पट युक्तमिति । तच्च पञ्चधा,-मुस्तापर्पटम्, शुण्ठीपर्पटम्, दुरालभापर्पटम्, पाठादित्रयम् भूनिम्बादिचतुष्टय च । तच्च पाक्य शीतकषायं वा कृत्वा पिबेत् । पाक्य -क्वाथ ।**

**यथायोगमिमे योज्याः कषाया दोषपाचनाः ।**
**ज्वरारोचकतृष्णास्यवैरस्यापक्तिनाशनाः ॥ ४७ ॥**

**स०**-इमे-पूर्वोक्ता मुस्तापर्पटकादय कषाया, यथायोग-योगानतिक्रमेण, यो य कषायो यस्मिन् ज्वरे दातु युक्त स तत्र योज्य इति यथायोग योज्या । किंक्रिया एते स्यु ? इत्याह-दोषपाचना, दोषस्य-आमाख्यस्य पक्वप्रायस्य, पाचना । तन्त्रान्तरे चोक्तम्-"प्रयुक्तं पाचयेदामं यत्तत्पाचनमुच्यते । पित्तादिजिन्निरामस्य यत्स्यात्तच्छमन मतम् ॥" इति । अत्र मुस्तापर्पटस्य पूर्वमुपन्यासो ज्वरनाशनेभ्योऽन्ये-

१ 'षायकषा' इति क्वचित् । २ 'य स्यात् स' स च । ३ 'ह्यन्ये' अ । ४ 'न मण्डपेया' इति क्वचित् । ५ 'मेवैतत्' ध । ६ 'सञ्चिते प्रा' ड.ध. । ७ 'न्नतया पाव' ट. ।

१ 'शीतस्य कल्प' ड ध । २ 'क्रम ।' ट.ड. ।

भ्योऽस्य मुस्तापर्पटस्य प्राधान्यप्रदर्शनार्थं । तथा चाचार्योऽग्र्याणा मध्ये "मुस्तापर्पटक ज्वरे" (हृ उ अ ४०।४८) इति निर्देक्ष्यते । तस्मान्मुस्तापर्पटस्यैव ज्वरनाशने ज्यायस्त्वमित्यवेहि, व्याधिप्रतिपक्षत्वात् ।

आ० र०–उक्तानामौषधानां विषय विभाग फल चाह–यथायोगमिति । यथायोग–यो यत्र देशे काले वा लभ्य, यत्र ज्वरे वा द्रव्यशक्तिपर्यालोचनया योग्य, स तत्र योज्य । सिद्धयोगे तु ( ज्वराधिकारे श्लो ८२ )–"नागर देवकाष्ठ च धान्यक बृहतीद्वयम् । दद्यात्पाचनक पूर्वं ज्वरिताय ज्वरापहम् ॥" इति । सङ्ग्रहे तु ( चि अ १ )–"पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृता । जयन्त्याममतीसार ज्वर च समहौषधा ॥" इति ।

**कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ॥ ४८ ॥**
**पटोलं सारिवा मुस्ता पाठा कटुकरोहिणी ।**
**पटोलनिम्बत्रिफलामृद्वीकामुस्तवत्सकाः ॥ ४९ ॥**
**किराततिक्तममृता चन्दनं विश्वभेषजम् ।**
**धात्रीमुस्तामृताक्षौद्रमर्धश्लोकसमापनाः ॥ ५० ॥**
**पञ्चैते सन्ततादीनां पञ्चानां शमना मताः ।**

स०–कलिङ्गकादयोऽर्धश्लोके समापन येषा तेऽर्धश्लोकसमापना पञ्चैते पञ्चाना सन्ततादीना यथासङ्ख्य शमना मता, मुनीनामिति शेष ।

**दुरालभामृतामुस्तानागरं वातजे ज्वरे ॥ ५१ ॥**
**अथवा पिप्पलीमूलगुडूचीविश्वभेषजम् ।**
**कनीयः पञ्चमूलं च**

स०–दुरालभादि पाचन वातजे ज्वरे, अथवा पिप्पल्यादिक वातजे ज्वरे, कनीयो–बृहत्यादिक, पञ्चमूल च वातजे ज्वरे, इति योज्यम् ।

आ० र०–सामान्यपाचनान्युक्त्वा विशेषपाचनानि कथयति । तत्र वातज्वरस्याह–दुरालभामृतामुस्तानागरमिति । दुरालभादिचतुष्क पिप्पलीमूलाद्यष्टको वा ।

**पित्ते शक्रयवाघनम् ॥ ५२ ॥**
**कटुका चेति सक्षौद्रं मुस्तापर्पटकं तथा ।**
**सधन्वयासभूनिम्बं**

स०–पित्ते–पित्तजे ज्वरे, शक्रयवादय समाक्षिका मता । पित्तजेऽपि मुस्तापर्पटक धन्वयासकिराततिक्ताभ्या सहित हितम् ।

आ० र०–पित्तज्वरस्याह–पित्ते शक्रयवाघनमिति । इन्द्रयवादित्रिको मुस्तादिचतुष्को वा ।

**वत्सकाद्यो गणः कफे ॥ ५३ ॥**
**अथवा वृषगाङ्गेयीशृङ्गबेरदुरालभाः ।**

स०–"वत्सकमूर्वाभार्ङ्गी" (हृ सू अ १५।३३) इत्यादि कफे मत । अथवा वृषादि । गाङ्गेयी–मुस्ता ।

आ० र०–कफज्वरस्याह–वत्सकाद्यो गण इति । "वत्सकमूर्वाभार्गी" इत्यादिगण, वृषादिचतुष्को वा । गाङ्गेयी–मुस्ता । शृङ्गबेरं–शुण्ठी ।

**रुग्विबन्धानिलश्लेष्मयुक्ते दीपनपाचनम् ॥ ५४ ॥**
**अभयापिप्पलीमूलशम्याककटुकाघनम् ।**

स०–रुग्विबन्धादियुक्ते ज्वरेऽभयादिघनावसान दीपनपाचनम् ।

आ० र०–सशूलविबन्धस्य कफवातज्वरस्याह–रुग्विबन्धानिलश्लेष्मयुक्त इति । सिद्धयोगे तु ( ज्वराधिकारे श्लो ८८ )–"बिल्वादिपञ्चमूलाम्बु पाचन वातजे ज्वरे ॥ कलिङ्ग कट्फल मुस्त पाठा तिक्तकरोहिणी । पक्व सशर्कर पीत पाचन पैत्तिके ज्वरे ॥ मातुलिङ्गशिफाविश्वकायस्था ग्रन्थिकोद्भवम् । कफज्वरेषु सक्षार पाचन वा कणादिकम् ॥ ससृष्टदोषेषु हित ससृष्टमथ पाचनम् ।" इति ।

अथ शमनानि । तत्र सङ्ग्रहे (चि अ १)–"सगुडा सारिवाद्राक्षाशताह्वाकणरेणुका । काश्मर्यसारिवाद्राक्षात्रायमाणामृतागुडा ॥ शतपुष्पावचाकुष्ठदेवदारुहरेणुका । शर्करामधुसयुक्ता समासीमुस्तधान्यका ॥ कृष्णापुनर्नवाद्राक्षाशताह्वागुडसारिवा । शालिपर्णीबलाद्राक्षासारिवाच्छिन्नसम्भवा ॥ आरग्वधो बला रास्ना काश्मर्यं मधुक गुड । शतावरीच्छिन्नरुहास्वरसो वा गुडान्वित ॥ सकृष्णजीरकसितानागरश्चामृतारस । वातज्वर जयत्याशु केवलो वाऽमृतारस ॥ भार्गीसरलगाङ्गेयीदारुकुष्ठैलवालुकम् । कोष्ण गुडघृतोपेत पिबेद्वा वातजे ज्वरे ॥" इति । सिद्धयोगे तु (ज्वराधिकारे श्लो ८९)–"किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरं । सस्थिराकलशीविश्वै क्राथो वातज्वरापह ॥" इति । वङ्गसेने तु (ज्वराधिकारे श्लो २२७)–"पञ्चमूलीबलारास्नाकुलत्थै सह पौष्करै । पर्वभेद शिर कम्प निहन्ति पवनज्वरम् ॥ दर्भं बला गोक्षुरक पाचयेत्पादशेषितम् । शर्कराघृतसयुक्त पिबेद्वातज्वरापहम् ॥" इति । इति वातज्वर ।

अथ पित्तज्वर । तत्र सङ्ग्रहे (चि अ १)–"पटोलादिर्गुडूच्यादी सूत्रोक्तौ पित्तजे ज्वरे । अञ्जनादि सकाश्मर्य

१ 'ताना ज्व' सि. । २ हेमाद्रिस्तु 'कलिङ्गका' इत्यादि त्रीन् श्लोकान् बाहुशिरावेध (श्लो १५१) चिकित्सितादनन्तर पठति व्याख्याति च । ३ 'ज्वरे योज्यमिति ।' ट । ४ 'पित्ते क्षौद्रसमन्विता ॥ कलिङ्गमुस्तकटुका मुस्ता' इ स द्व । ५ 'त पिबेत् ।' ट ।

१ 'वातिके' सि । २ कलिङ्गादी द्वौ श्लोकौ मुद्रितसिद्धयोगे नोपलभ्येते । किन्त्विमौ वङ्गसेने ज्वराधिकारे ( श्लो २३६-२६३) वर्तेते । ३ 'ठा कटुकरो' वङ्ग । ४ 'ष्टमिह पा' फ । ५ 'ग्वधबलारास्नाका' इ । ६ 'कृष्णाजी' स स । ७ 'यन्त्याशु' स द्व । ८ 'भार्ङ्गीस' स द्व । ९ 'तीयवगो' फ । १० 'दिर्गुडूच्यादि सूत्रोक्तो' फ. । ११ 'उत्पलादि समधुक सारि' इ. ।

सारिवादि सशर्कर ॥ सितामधुककाश्मर्यशीतोशीरपरूष कम् । गुडूचीसारिवारोध्रकमलोत्पलशर्करा ॥ द्राक्षाभया तिक्तघनशम्याकफलपर्पटम् । श्यामापर्पटदु स्पर्शातिक्तातिक्त वृषासिता ॥ श्यामा–प्रियङ्गु । शर्करातिक्तकटुकात्राय माणाबिभीतकम् । गुडूच्यामलकैर्युक्त केवलो वाऽपि पर्पट ॥ कषायो वा हिमस्तिक्तद्राक्षामधुकनिम्बज । पित्तज्वरघ्नी तिक्ता वा श्लक्ष्णपिष्टा सशर्करा ॥" इति। वङ्गसेने तु ( ज्वरा धिकारे श्लो २४१)–"पटोलयवधान्याकमधुक मधुसंयुतम् । हन्ति पित्तज्वर दाह तृष्णा चातिप्रमाथिनीम् ॥ द्राक्षारग्वध-योश्चापि काश्मर्यस्याथवा जलम् । पटोलाभयनिष्क्राथो मधुना मधुरीकृत । तीव्रपित्तज्वरामर्दी पानात्तृद्दाहनाशन ॥ एक पर्पटक श्रेष्ठ पित्तज्वरविनाशन । किं पुनर्यदि युज्येत चन्दनोदीच्यनागरै ॥ गुडूचीमुस्तधान्याकमधुक कटुरोहिणी । तृष्णाशूलारुचिच्छर्दिपित्तज्वरहरो गण ॥ किराताभृतधान्या-ब्दचन्दनोशीरपपटै । सपद्मकै कृत क्वाथो हन्ति पित्तभव ज्वरम् । दाहहृल्लासमरुचिमुत्क्लेशवमथुक्लमान् ॥ ससितो निशि पर्युषित प्रातर्धान्याक्तण्डुलक्काथ । पीत शमयत्य-चिरादन्तर्दाह ज्वर घोरम् ॥ चन्दन मधुक द्राक्षा कटुका सदुरालभा । चन्दनादिगण प्रोक्तो हन्याद्दाहज्वरारुची ॥ मुद्गानामञ्जलीचूर्णं यष्टीमधुकसाधितम् । पाक्य शीतकषाय वा पिबेत्पित्तज्वरापहम् ॥ ह्रीबेर मुस्तक धान्य चन्दन यष्टिकाऽमृता । वृषोशीरयुत क्वाथ शर्करामधुसयुत । रक्तपित्त जयत्युग्र तृष्णादाहज्वरापह ॥ भूनिम्बातिविषारोध्र मुस्तकेन्द्रयवामृतम् । वासक नागर बिल्व कषायो माक्षिका-न्वित. । सश्वासकासविड्भेदरक्तपित्तज्वरापह ॥ पथ्यातै-लघृतक्षौद्रैर्लेहो दाहज्वरापह । कासासृक्पित्तवीसर्पश्वासान् हन्ति वमीरपि ॥" इति । इति पित्तज्वर ।

अथ कफज्वर । तत्र सङ्ग्रहे ( चि अ १ )–"कफजे-ऽतिविषोशीरपटोलमरिचक्षपा । समूर्वेन्द्रयववृद्धीपिकुष्ठ-निम्बवचागुडा ॥ क्षपा–हरिद्रा । सप्तच्छदामृतानिम्ब-स्फूर्जात माक्षिकान्वितम् । स्फूर्जात –तिन्दुक । निशा त्रिकटुक तिक्ता नागपुष्प कलिङ्गका ॥ सारिवातिविषाकु-ष्ठदु स्पर्शामुस्तगुग्गुलु । परूष त्रिफला तिक्ता बीज वृक्ष कज घन ॥ नागरत्रिफलामुस्तामूर्वापाठा समाक्षिका ।" इति । वङ्गसेने तु ( ज्वराधिकारे श्लो २६४ )–"त्रिफला त्रिवृतामुस्त कटुक सकलिङ्गकम् । पटोलारग्वध चैव रोहिणी चित्रक समम् । क्काथ क्षौद्रयुत श्लेष्मज्वरकासगलामये ॥ निम्बविश्वामृताभीरुशठीभूनिम्बपौष्करम् । पिप्पली बृहती चेति क्काथो हन्ति कफज्वरम् ॥ त्रिफलापटोलवासा-छिन्नरुहातिक्तरोहिणिषड्ग्रन्था । मधुना श्लेष्मसमुत्थे दश-मूलीवासकस्य वा क्काथ ॥ आमलक्यभया कृष्णा चित्रक-श्चेत्यय गण । सर्वज्वरकफातङ्कभेदी दीपनपाचन ॥ सिन्धु-वारदलक्काथ कणाढ्य कफजे ज्वरे । जङ्घयोश्च बले क्षीणे कर्णे च पिहिते पिबेत् ॥ कट्फल पुष्करं कृष्णा श्रृङ्गी च मधुना सह । कासश्वासज्वरहर श्रेष्ठो लेह कफान्तकृत् ॥ कफज्वरार्तस्त्रिफलां पिप्पलीं च समाक्षिकाम् । कासे श्वासे च मधुना सर्पिषा च सुखी भवेत् ॥ कट्फल पुष्कर श्रृङ्गी मुस्तक कटुक शठी । समस्तान्येकशो वाऽपि श्लक्ष्णचूर्णानि कारयेत् ॥ सार्द्रकस्वरसक्षौद्र लिह्यात्कफविनाशनम् । शूलानिलारुचिच्छर्दिकासश्वासक्षयापहम् ॥ क्षौद्रोपकुल्या-सयोग कासश्वासज्वरापह । प्लीहान हन्ति हिक्का च बालानां च प्रशस्यते ।" इति । इति कफज्वर ।

अथ ससर्गजा । तत्र सङ्ग्रहे ( चि अ १ )–"ससर्ग-सन्निपातेषु मिश्रानेतान्विकल्पयेत् ।" इति ।

**द्राक्षामधूकमधुकरोध्रकाश्मर्यसारिवाः ॥ ५५ ॥**
**मुस्तामलकह्रीबेरपद्मकेसरपद्मकम् ।**
**मृणालचन्दनोशीरनीलोत्पलपरूषकम् ॥ ५६ ॥**
**फाण्टो हिमो वा द्राक्षादिर्जातीकुसुमवासितः ।**
**युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम् ॥ ५७ ॥**
**ज्वरं मदात्ययं छर्दिं मूर्च्छां दाहं श्रमं भ्रमम् ।**
**ऊर्ध्वगं रक्तपित्तं च पिपासां कामलामपि ॥ ५८ ॥**

स०–द्राक्षादिरय गण फाण्ट –"सद्योऽभिषुतपूत " (हृ क अ ६।११ ) इत्येवलक्षण , तथा हिम –शीतो वा, "रात्रिं द्रवे स्थित " ( हृ क अ ६।१० ) इत्येवलक्षण । तथा जातीकुसुमै सुगन्धीकृतो मधुसितालाजैर्युक्तो वातपित्तज ज्वर जयति, मदात्ययादींश्च ।

आ० र०–वातपित्तज्वरे शमनमाह–द्राक्षामधूकेति । मृणाल–बिसम् । चूर्णपलोपेतमुष्णोदकचतुष्पल शीत वस्त्र-पूत–फाण्ट । हिम –शीतकषाय । मधुसितालाजाना मिथ समाना पेयत्वानुपघातेन प्रक्षेप ।

**पाचयेत्कटुकां पिष्ट्वा कर्परेऽभिनवे शुचौ ।**
**निष्पीडितो घृतयुतस्तद्रसो ज्वरदाहजित् ॥ ५९ ॥**

स०–कटुका पानीयेन पिष्ट्वा कर्परे–मृद्घटखण्डे, अभिनवे तथा शुचौ पाचयेत् । तस्या रसो निष्पीडित सर्पिर्युक्तो ज्वर-दाहौ जयति ।

१ 'क्तभूनिम्बत्रा' इ । २ 'मलक' फ । ३ 'घ्नी कटुका श्र' म स । ४ 'चैव प्र' वङ्ग । ५ 'टोलयवनि' वङ्ग । ६ 'ज्वरोन्मर्दी' वङ्ग । ७ 'न मधुयष्टिका ।' वङ्ग । ८ 'पथ्या तैलघृतक्षौद्रैर्लिहेद्दाहज्वराप-हाम् ।' वङ्ग । ९ "स्फूर्जात–काकतिक्त " इतीन्दु । १० 'घनम् ।' इ स द । ११ 'लातिविषामुस्त क्रमुक स' फ ।

१ 'च' फ । २ 'ष्णा बिम्बक' फ । ३ 'तङ्कभेदी वृष्योऽग्नि-दीपन ।' फ । ४ 'लिहेज्ज्वरा' वङ्ग । ५ 'ली सममा' वङ्ग । ६ 'मालिहन् ।' फ । ७ 'पौष्कर' वङ्ग । ८ 'आर्द्रकस्वरसक्षौद्रै-लिह्या' वङ्ग । ९ 'छर्दिंमूर्च्छां' इ । १० 'खर्परे' ट ।

आ० र०-शमनान्तरमाह-पाचयेत्कटुकामिति । पाकोऽत्र पुटपाकविधिना । सङ्ग्रहे तु ( चि अ १ )-"गोकण्टकबलादर्भा ससिता वातपित्तजे । द्राक्षामलकभूनिम्बा सगुडूचीशठीगुडा ॥ त्रायन्तीसारिवाद्राक्षाकाश्मर्यच्छिन्नजागुडा. । द्राक्षामसूरत्रायन्तीगुडूचीसारिवाबला ॥" इति । सिद्धयोगे तु (ज्वराधिकारे श्लो ११६ )-"त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषकै । शृतमम्बु हरेत्तूर्ण वातपित्तोद्भव ज्वरम् ॥ [ विश्वामृताब्दभूनिम्बै पञ्चमूलीसमन्वितै । कृत कषायो हन्त्याशु वातपित्तोद्भव ज्वरम् ॥ ] पञ्चमूली-ह्रस्वा । निदिग्धिकामृतारास्नात्रायमाणाबलान्वितै । मसूरविदलै क्वाथो वातपित्तज्वर जयेत् ॥ विदला -यत्रदलनजा अवयवा । गुडूची पर्पट मुस्त किरात विश्वभेषजम् । वातपित्तज्वरे देय पञ्चभद्रमिद शुभम् ॥" इति । वङ्गसेने तु ( ज्वराधिकारे श्लो २९२ )-"बलाभार्ग्यमृतै[1]रण्डचन्दनोशीरपर्पटै । उपकुल्याब्दह्रीबेरै कषाय च पिबेत्तत । पर्वभेद शिर कम्प वातपित्तज्वर जयेत् ॥ नीलोत्पलमुशीर च बला पद्मकमेव च । काश्मरी मधुक द्राक्षा मधूकानि[2] परूषकम् । पेय शीतकषायोऽय वातपित्तज्वरापह ॥ आरग्वधफल मुस्त यष्टीमधुकमेव च । उशीरमभया चैव हरिद्रा दारुसाह्वया ॥ पटोल पिचुमन्दश्च तथा कटुकरोहिणी । एष[3] सिद्ध. कषाय. स्याद्वातपित्तभवे ज्वरे ॥" इति । इति वातपित्तज्वर ।

**कफवाते वचातिक्तापाठारग्वधवत्सकाः ।**
**पिप्पलीचूर्णयुक्तो वा क्वाथश्छिन्नोद्भवोद्भवः ॥६०॥**

स०-वातश्लेष्मणि[4] कषायकल्पनया कल्पिता वचादयो मता । अथवा, गुडूचीसम्भव क्वाथ पिप्पलीचूर्णयुतो मत ।

आ० र०-अथ वातकफज्वर । तत्र शमनमाह-कफवात इति ।

शमनान्तरमाह-पिप्पलीचूर्णयुक्तो वेति ।

**व्याघ्रीशुण्ठ्यमृताक्वाथः पिप्पलीचूर्णसंयुतः ।**
**वातश्लेष्मज्वरश्वासकासपीनसशूलजित् ॥ ६१ ॥**

स०-व्याघ्र्यादिक्वाथ कणाचूर्ण[5]सयुक्तो वातश्लेष्मज्वरादिजित् ।

आ० र०-शमनान्तरमाह-व्याघ्रीशुण्ठ्यमृताक्वाथ इति ।

**पथ्याकुस्तुम्बरीमुस्ताशुण्ठीकट्तृणपर्पटम् ।**
**सकट्फलवचाभार्ङ्गीदेवाह्वं मधुहिङ्गुमत् ॥ ६२ ॥**
**कफवातज्वर[6]ष्ठीवकुक्षिहृत्पार्श्ववेदनाः ।**
**कण्ठामयास्यश्वयथुकासश्वासान्नियच्छति ॥ ६३ ॥**

स०-पथ्यादि पाचन सिद्धचूर्ण मधुहिङ्गुभ्या सयुत कफवातज्वरादीन् पराकरोति ।

आ० र०-शमनान्तरमाह-पथ्याकुस्तुम्बरीति । सिद्धयोगे ( ज्वराधिकारे श्लो १३४)-"पिप्पलीपिप्पलीमूलचव्यचित्रकनागरै । दीपनीय स्मृतो वर्ग कफानिलगदापह ॥ पिप्पलीभि शृत तोयमनभिष्यन्दि दीपनम् । वातश्लेष्मविकारघ्न प्लीहघ्न ज्वरनाशनम् ॥ मुस्तपर्पटकु स्पर्शागुडूचीविश्वज जलम् । कफवातारुचिच्छर्दिदाहशोफज्वरापहम् ॥ दशमूलीरस पेय कणायुक्त कफानिले । अविपाकेऽतिनिद्राया पार्श्वरुक्श्वासकासके ॥" इति । वङ्गसेने तु (ज्वराधिकारे श्लो ३३५ )-"सभूनिम्बामृतादारु[2] कट्फल कटुका वचा । कषाय पाययेदाशु वातश्लेष्मज्वरापहम् । पर्वभेदशिर शूलकासारोचकपीडितम् ॥ तृष्णान्विते वातकफज्वरार्ते[3] सश्वासकासारुचिविड्विबन्धे[4] । हित जल पाचनदीपन च पटोलशुण्ठीयवपिप्पलीनाम् ॥" इति । इति वातकफज्वर ।

**आरग्वधादिः सक्षौद्रः कफपित्तज्वरं जयेत् ।**
**तथा तिक्ता[5]वृषोशीरत्रायन्तीत्रिफलामृता. ॥ ६४ ॥**
**पटोलातिविषानिम्बमूर्वाधन्वयवासकाः ।**

स०-"आरग्वधेन्द्रयवादिभि" (हृ सू अ १५।१७) माक्षिकसहित कफपित्तज्वर जयति । तथा तिक्तादय कफपित्तज्वर घ्नन्ति ।

आ० र०-अथ पित्तकफज्वर । तत्र शमनमाह-आरग्वधादिरिति ।

शमनान्तरमाह-तथेति । सङ्ग्रहे तु ( चि अ १)-"वृषपुष्पच्छदरस शर्करामाक्षिकान्वित । पित्तश्लेष्मज्वरं हन्ति सासृक् पित्त सकामलम् ॥ अनन्ताविश्वभैषज्यकटुकातोयतोयदा । ज्वरतृड्भ्रमसम्मोहधूमकाम्लकनाशना ॥" इति । अनन्ता-दुरालभा । सिद्धयोगे तु (ज्वराधिकारे श्लो १२२)-"कण्टकार्यमृताभार्गीनागरेन्द्रयवासकम् । भूनिम्बं चन्दन मुस्त पटोल कटुरोहिणी ॥ कषायं पाययेदेन पित्तश्लेष्मज्वरापहम् । दाहतृष्णारुचिच्छर्दिकासहृत्पार्श्वशूलनुत् ॥ [ गुडूचीनिम्बधान्याक पद्मक चन्दनान्वितम् ।] एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपन । हृल्लासारोचकच्छर्दिपिपासादाहनाशन ॥ सशर्करामक्षमात्रा कटुकामुष्णवारिणा । पीत्वा ज्वर जयेज्जन्तु कफपित्तसमुद्भवम् ॥ पटोल पिचुमन्द च त्रिफला मधुकं बला । साधितोऽय कषाय स्यात्पित्तश्लेष्म[6]भवे ज्वरे ॥ दीपन कफविच्छेदि पित्तवातानुलोमनम् । ज्वरघ्न पाचन भेदि शृतं धान्यपटोलयो ॥" इति । इति पित्तकफज्वर. ।

१ 'भाङ्गर्यमृ' वङ्ग । २ 'धूक सप' वङ्ग. । ३ 'एभि सि' वङ्ग । ४ 'णि वचा' ड.ध. । ५ 'र्णयुतो' ड. । ६ 'ज्वरे ष्ठेव' ड. ।

१ 'ज्वरे ष्ठीवादीन्' ट । २ 'निम्बामृताविश्वदारु' वङ्ग । ३ 'कफार्तिशूले स' वङ्ग । ४ 'विबद्धविड्के ।' वङ्ग । ५ "तिक्तादिधन्वयवासकान्त तथा-सक्षौद्रमेवेत्यर्थ ।" इतीन्दु । ६ 'श्लेष्मोद्भवे' सि. ।

**सन्निपातज्वरे व्याघ्रीदेवदारुनिशा[1]घनम् ॥ ६५ ॥**
**पटोलपत्रनिम्बत्वक्त्रिफलाकटुकायुतम् ।**

स०–सन्निपातज्वरे व्याघ्र्यादिकटुकान्त पाचनम् ।

आ० र०–अथ सन्निपातज्वर । तत्र शमनमाह–सन्निपातज्वर इति ।

**नागर पौष्कर मूलं गुडूची कण्टकारिका ॥ ६६ ॥**
**सकासश्वासपार्श्वार्तौ वातश्लेष्मोत्तरे ज्वरे ।**

स०–नागरादिपाचन वातश्लेष्माधिके ज्वरे कासादींश्चिहन्ति ।

आ० र०–शमनान्तरमाह–नागरमिति । सङ्ग्रहे तु (चि अ १)–"मुस्ता पर्पटक पथ्या मृद्वीका कटुरोहिणी । त्रायन्तीकणतन्मूलद्राक्षापथ्यामधूलिका ॥ मधूलिका–जलजयष्टीमधु । त्रिफलोशीरषड्ग्रन्थायष्टीमधुघनाबला ॥" इति । सिद्धयोगे तु (ज्वरा श्लो १६६)–"पञ्चमूली[2] किरातादिर्गणो योज्यस्त्रिदोषजे । पित्तोत्कटे च[3] मधुना कणया वा[4] कफोत्कटे ॥ वातपित्तज्वरोक्तोऽय नवाङ्ग । उभय दशमूल तु सन्निपातज्वरापहम् । कासे श्वासे च तन्द्राया पार्श्वशूले च शस्यते । पिप्पलीचूर्णसयुक्त कण्ठहृद्ग्रहनाशनम् ॥ उभय–द्विपञ्चमूलात्मकम् । चिरज्वरे वातकफोल्बणे वा त्रिदोषजे वा दशमूलमिश्र । किराततिक्तादिगण प्रयोज्य शुद्धार्थिने वा त्रिवृताविमिश्र ॥ आदिशब्दात् गुडूचीमुस्ताशुण्ठ्य । दशमूलमिश्रस्यैव त्रिवृतामिश्रत्वम् । दशमूली शठी शृङ्गी पौष्कर सदुरालभम् । भार्गी कुटजबीज च पटोल कटुरोहिणी ॥ अष्टादशाङ्ग इत्येष सन्निपातज्वरापह । कासहृद्ग्रहपार्श्वार्तिश्वासहिक्कावमीहर ॥ भूनिम्बदारुदशमूलमहौषधाब्दतिक्तेन्द्रबीजधनिकेभकणाकषाय । तन्द्राप्रलापकसनारुचिदाहमोहश्वासादियुक्तमखिल ज्वरमाशु हन्ति ॥ मुस्तापर्पटकोशीरदेवदारुमहौषधम् । त्रिफला धन्वयासश्च नीली कम्पिल्लक त्रिवृत् ॥ किराततिक्तक पाठा बला कटुकरोहिणी । मधुक पिप्पलीमूल मुस्ताद्यो गण उच्यते ॥ अष्टादशाङ्गमुदितमेतद्वा सन्निपातनुत् । पित्तोत्तरे सन्निपाते हित चोक्त मनीषिभि । मन्यास्तम्भ उरोघात उर पार्श्वशिरोग्रहे ॥ बृहत्यौ पौष्कर भार्गी शठी शृङ्गी दुरालभा । वत्सकस्य च बीजानि पटोल कटुरोहिणी ॥ बृहत्यादिर्गण प्रोक्त सन्निपातज्वरापह । कासादिषु च सर्वेषु हित सोपद्रवेषु च ॥ शठी पुष्करमूल च व्याघ्री शृङ्गी दुरालभा । गुडूची नागर पाठा किरात कटुरोहिणी ॥ एष शठ्यादिको वर्ग सन्निपातज्वरापह । कासहृद्ग्रहपार्श्वार्तिश्वासे तन्द्र्या च शस्यते ॥" इति । वङ्गसेने तु (ज्वरा श्लो ४४३)–"दशमूलस्य नि[1]काथ कट्फलादिरजोयुत । तुल्यार्द्रकरस[2] पीतो मृत्युकल्प ज्वर जयेत् ॥ दशमूलीकषाय तु सपौष्करकणान्वितम्[3] । सन्निपातज्वरे देय श्वासकासतृषान्विते ॥ अमृतादशमूला[4]भ्या साधित विधिवज्जलम् । सन्निपातज्वर हन्यात्त्रयोदशविध नृणाम् ॥ विश्व[5]शठीदशमूलीछिन्नापाठेभपिप्पलीन्द्रयवा । सकिराततिक्तवासा शमयन्ति हुतौजस सद्य ॥ त्र्यूषणदशमूलशठीभार्गीछिन्नोद्भ[6]वाक्वाथ । पीत शमयति सहसा ज्वरमुग्र सन्निपाताख्यम् ॥ द्विपञ्चमूलीषड्ग्रन्थाविश्वगृध्रनखीद्वयात्[7] । गृध्रनखीद्वय–कन्थारिकाद्वयम् । कफवातहर क्वाथ सन्निपातहर पर ॥ सिंहास्यपर्पटारिष्ट[8]यष्टीधान्याकनागरम् । दारुत्रगन्धेन्द्रयवा श्वदंष्ट्रा ग्रन्थिक[9] तथा ॥ एषा कषाय[10]माहत्य सन्निपातज्वरी पिबेत् । श्वासातिसारकासघ्न शूलारुचिहर परम् ॥ कट्फल त्रिफला दारु चन्दन सपरूषकम् । कटुकापद्मकोशीर विपचेत्कार्षिक जलम् ॥ तत्सन्निपातदाहघ्न[11] पीतमात्रेयपूजितम् । दीर्घकालप्रयुक्ताना [12]ज्वरिणाममृतोपमम् ॥ व्योषा[13]ब्दत्रिफलारिष्टपटोलीतिक्तवत्सकै । सभूनिम्बामृतापाठैस्त्रिदोषज्वरजिज्जलम् ॥ तिल्व[14]कं[15] त्रिवृता दन्ती समूल चतुरङ्गुलम् । पक्व कषाय विज्ञाय [16]नीलिनीचूर्णमिश्रितम् । ससर्पिष्क पिबेत्तूर्ण सन्निपाते विरेचनम् ॥ (श्लो० ३०२)–"वर्धनै[17]र्वाऽपि हीनस्य ह्रापनैरुच्छ्रितस्य वा । कफस्थानानुपूर्व्या वा सन्निपातज्वरे क्रिया ॥ हीनस्य वर्धनाद्धानिवृद्ध्योरिति निश्चय । ह्रापनादतिवृद्धस्य हीनयोर्वृद्धिसम्भव ॥ तत समत्व दोषाणा[18]मुर[19] स्थान कफस्य तु । तत्रस्थाना क्रिया तद्वदिति ज्वरविनिर्जय ॥ यथादोषोच्छ्रय चैव ज्वरान् शेषानुपक्रमेत् । निर्हरेत्पित्तमेवादौ ज्वरेषु समवायिषु । दुर्निवारतर तद्धि ज्वरार्तेषु विशेषत ॥ सन्निपाते क्षुधार्त यो भोजयेत्पिशितौदनम् । स कथ भिषगाख्याति लभेन्मूढो नराधम ॥ सन्निपाते तु दाहार्त य सिञ्चेच्छीतवारिणा[20] । आतुर स कथ जीवेद्भिषग्वा स कथ भवेत् ॥ सन्निपाते च कम्पन्त विलपन्त च यो घृतम् । पाययेद्भोजयेद्वाऽपि तौ च स्यातामु(ता शु)भौ [21]कथम् ॥ सन्निपातेन[22] तृष्यन्त पार्श्वरुक्तालुशोषिणम् । य पाययेज्जल शीत स मृत्युर्नरविग्रह ॥ समुद्रतरण ह्येतद्-

---

१ 'शाद्वयम्' स स । २ "पित्तोत्कटेऽल्पा पञ्चमूली, कफोत्कटे तु महती । किरात नागर मुस्त गुडूची चेति किरातादि काथोऽयम् ।" इति श्रीकण्ठदत्त । ३ 'तु' फ । ४ 'च' फ. ।

१ 'निर्यूह क' वङ्ग । २ 'रसोपेतो' वङ्ग । ३ 'तु पुष्कराह्वकणायुतम्' वङ्ग । ४ 'मूलीभ्या' वङ्ग । ५ 'विषशुण्ठीद' वङ्ग । ६ 'द्भव का' वङ्ग । ७ 'द्वयम् ।' वङ्ग । ८ 'पृष्णिधान्यद्विना' फ । ९ 'ग्रथित त' फ । १० 'यमहनि स' वङ्ग । ११ 'पानमात्रे प्रपू' वङ्ग । १२ 'ज्वराणा' फ. । १३ 'षाह्वत्रि' वङ्ग । १४ 'बिल्वक' वङ्ग । १५ 'ल्वकत्रिगुणा द' फ । १६ 'नीलीचूर्णविमि' वङ्ग । १७ 'वर्ध्यते वाऽपि हीनस्य ह्रियते ह्युच्छ्रितस्य च ।' वङ्ग । १८ 'णामामस्थान' वङ्ग । १९ 'निर्णय ' वङ्ग । २० 'तेन मनुज विलपन्त तु यो' वङ्ग. । २१ 'वधम्' वङ्ग. । २२ 'न तप्यन्त' वङ्ग ।

दन्ति भिषगीश्वरा । मृत्युना सह योद्धव्य सन्निपात चिकित्सता ॥ सन्निपातार्णवे मग्न योऽभ्युद्धरति मानवम् ॥ कस्तेन न कृतो धर्म का च पूजा न सोऽर्हति ॥ श्लेष्मनिग्रहमेवादौ कुर्याद्व्याधौ त्रिदोषजे । निरस्ते श्लेष्मणि ह्यस्य स्रोत सूद्घाटितेषु च । लाघव जायते सद्यस्तृष्णा चैवोपशाम्यति ॥ लङ्घन वालुकास्वेदो नस्य निष्ठीवन तथा । अवलेहोऽञ्जन चैव प्राक् प्रयोज्य त्रिदोषजे ॥ सुरसार्जकनिर्यास समधुव्योषसैन्धव । महाश्लेष्मानिलोद्रेकसञ्ज्ञानाशविमोक्षण ॥" [इति । सिद्धयोगे तु (ज्व श्लो १५३ )]-"मधूकसारसिन्धूत्थवचोषणकणा समा । श्लक्ष्ण पिष्ट्वाऽम्भसा नस्य कुर्यात्सञ्ज्ञाप्रबोधनम् ॥ (श्लो १५१)-मातुलिङ्गार्द्रकरस कोष्ण त्रिलवणान्वितम् । अन्यद्वा सिद्धिविहित नस्य तीक्ष्ण प्रयोजयेत् ॥ तेन प्रभिद्यते श्लेष्मा प्रभिन्नश्च प्रसिच्यते । शिरोहृदयकण्ठास्यपार्श्वरुक् चोपशाम्यति ॥ (श्लो १४७)-आर्द्रकस्वरसोपेत सैन्धव कटुकत्रयम् । आकण्ठ धारयेदास्ये निष्ठीवेच्च पुन पुन ॥ तेनास्य हृदये श्लेष्मा मन्यापार्श्वशिरोगलात् । लीनोऽप्याकृष्यते शुष्को लाघवं चास्य जायते ॥ पर्वभेदो ज्वरो मूर्च्छा निद्राकासगलामया । मुखाक्षिगौरव जाड्यमुत्क्लेशश्चोपशाम्यति ॥ सकृद्द्विस्त्रिचतु कुर्याद्दृष्ट्वा दोषबलाबलम् । एतद्धि परम प्राहुर्भेषज सन्निपातिनाम् ॥ स्विन्नमामलक पिष्ट्वा द्राक्षाभि सह संसृजेत् । विश्वभेषजसयुक्त मधुना सह लेहयेत् ॥ तेनास्य शाम्यते मूर्च्छा कास श्वासस्तथैव च ॥ कट्फल पौष्कर शृङ्गी व्योष यासश्च कारवी । श्लक्ष्णचूर्णीकृत चैतन्मधुना सह लेहयेत् ॥ एषाऽवलेहिका हन्ति सन्निपात सुदारुणम् । हिक्का श्वास च कास च कण्ठरोध नियच्छति । एतद्योज्य कफोद्रेके चूर्णमार्द्रकजै रसै ॥ सर्वेषु सन्निपातेषु न क्षौद्रमवचारयेत् । शीतोपचारि क्षौद्र स्याच्छीत चात्र विरुध्यते ॥ क्रियाभिस्तुल्यरूपाभि क्रियासाङ्कर्यमिष्यते । भिन्नरूपतया तास्तु न तु कुर्वन्ति दूषणम् ॥ (श्लो १५४)-शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवै । अञ्जन स्यात्प्रबोधाय सरसोनशिलावचै ॥ यदा तुल्यानिलकफौ तालुक्लोमगलाश्रितौ । कुर्यात्तावधिक शोष जिह्वाया खरतां तथा ॥ तथा ता स्फुटिता जिह्वा सशुष्का मधुपिष्टया । द्राक्षया सघृत चास्य लेपयेत्सन्निपातिन ॥ स्वेदोद्गमे भृष्टकुलित्थचूर्णनिपातन शस्तमिति ब्रुवन्ति ।" इति । वङ्गसेने तु (ज्व. श्लो ५०३)-"दुर्गेऽम्भसि यथा मज्जद्भाजन त्वरया बुध. । गृह्णीयात्तलमप्राप्त तथाऽभिन्यासपीडितम् ॥ कारवीपुष्करैरण्डत्रायन्तीनागरामृता । दशमूलीशठीशृङ्गीयवासाभार्गीपुनर्नवा ॥ तुल्या मूत्रेण निष्क्वाथ्य पीता स्रोतोविशोधना । अभिन्यासज्वरायासमाशु घ्नन्ति समुद्धतम् ॥ मातुलुङ्गाश्मभिद्बिल्वव्याघ्रीपाठोरुबूकज । क्वाथो लवणमूत्राढ्योऽभिन्यासानाहशूलनुत् ॥ व्याघ्रीदुरालभाभार्गीशठीशृङ्गि सपौष्करम् । पक्वाम्बु श्लेष्मर्हृत्पेयमभिन्यासप्रशान्तये ॥ भार्गी पुष्करमूल च रास्ना बिल्व समुस्तकम् । नागर दशमूल च पिप्पल्याद्यु च साधितम् । हिङ्ग्वार्द्रकरसोपेत पिप्पलीचूर्णसयुतम् ॥ सन्निपातज्वर घोरमभिन्यास च दारुणम् । हृत्पार्श्वशूलमानाह सद्य पीत नियच्छति ॥ बीजपूरकबिल्बाश्मभेदक बृहतीद्वयम् । सकेशीक तथैरण्ड जले चाष्टगुणे शृतम् ॥ पक्वगोमूत्रसंयुक्त बिडसौवर्चलान्वितम् । हृद्बस्तिशूले सानाहेऽप्यभिन्यासज्वरे हितम् ॥ दन्तीं द्रवन्तीं बृहतीं सैरण्ड [बीजपूरकम् । श्यामां व्याघ्रीं च निष्क्वाथ्याभिन्यासे बहुवर्चसि ॥ सिही व्याघ्र्यमृता द्राक्षा अजाजी सकटुत्रिकम् । शृङ्गीविड]ङ्ग च सम पक्त्वा विस्राव्य साधयेत् ॥ घृताक्तैस्तण्डुलैर्भृष्ट पेयामुष्णा ज्वरी पिबेत् । हिक्की श्वासी च कासी च तथाऽभिन्यासपीडित । विबद्धवातविण्मूत्रे पानमस्य प्रयोजयेत् ॥ बृहती पौष्कर भार्गी शठी शृङ्गी दुरालभा । पक्त्वा पान प्रशसन्ति श्लेष्मा तेनास्य शाम्यति ॥ त्रिवृद्विशालात्रिफलाकटुकारग्वधै कृत । सक्षारो भेदन क्वाथ पेय सर्वज्वरापह ॥ तिक्ताऽभया त्रिवृत्तीर्णा त्रायन्ती राजवृक्षक । क्षाराढ्य सैन्धवोपेत क्वाथो भेदी ज्वरापह ॥ शिरीषबीज मरिच बस्तमूत्रेण तत्समम् । अञ्जन तदभिन्यासे सञ्ज्ञाबोधनमिष्यते ॥ मातुलुङ्गरस तस्य हिङ्गुशुण्ठीयुत मुखे । दद्यात्प्रबोधन तीक्ष्ण कटुतिक्तोष्णसहितम् ॥ त्वगेलापत्रसुषवीबृहतीकण्टकारिका । मरीच पिप्पली बिल्व चिरिबिल्व सचित्रकम् ॥ करञ्जबीज मञ्जिष्ठा त्रायन्ती विश्वभेषजम् । गलप्रबोधन श्रेष्ठमभिन्यासज्वरापहम् ॥ करञ्जवह्निमञ्जिष्ठात्रायन्तीविश्वकूलकम् । कूलक-पटोलम् । बृहत्यौ सुषवी व्योष क्वाथ स्याद्गलशोधन ॥ इत्यभिन्यास उद्दिष्ट सरूप सचिकित्सित । चिकित्सिते कृतेऽप्येव [यस्य सञ्ज्ञा न जायते । ललाटे पादयोर्वाऽपि] तस्य दाह प्रशस्यते ॥ (श्लो ४९०)-ज्योतिष्मत्यास्तथा तैल मूल

१ 'पातचिकित्सुना ।' वङ्ग । २ सुरसार्जकनिर्यास इति श्लोको मुद्रितवङ्गसेनसिद्धयोगपुस्तकयोर्नोपलभ्यते । ३ 'हृद्गत श्ले' 'हृदयाच्छ्लेष्मा' सि । ४ 'स्विन्नमामलक' इति श्लोको मुद्रितसिद्धयोगे नोपलभ्यते। ५ 'स्तु तन्न कु' मि । ६ 'लालकै ' सि । ७ 'यदा इत्यादी द्वौ श्लोकौ मुद्रितसिद्धयोगे नोपलभ्येते। ८ 'मग्न भाज' वङ्ग.।

१ 'यासभा' फ । २ 'ताश्चैते वि' फ । ३ 'शृङ्गी सपौष्करा ।' फ । ४ 'हृदेय' वङ्ग । ५ 'प्पलीविषसा' वङ्ग । ६ 'सकाशक' वङ्ग । ७ स्मृतम् ॥ पक्त्वा गोमूत्रसम्पृक्त' वङ्ग । ८ 'हतीमेर' वङ्ग । ९ 'ण्मूत्र पानमेतत्प्र' वङ्ग । १० 'तेनोपशा' वङ्ग । ११ 'वृद्दन्ती फल वै राजवृक्षजम् ।' वङ्ग । १२ 'त्प्रधमन' वङ्ग । १३ 'पटोलपत्र सु वङ्ग । १४ 'विषभेषजे ।' फ । १५ 'करञ्जो बिल्वमञ्जिष्ठे त्रायन्त्यग्नि पटोलकम् ।' वङ्ग । १६ 'इत्यभिन्यास ' इति श्लोकार्ध मुद्रितवङ्गसेनपुस्तके नोपलभ्यते ।

पिण्डालुकस्य[1] च । तन्द्रीविनाशनं[2] श्रेष्ठं नस्यकर्मणि योजितम् ॥ सैन्धवं श्वेतमरिचं सर्षपं कुष्ठमेव च । बस्तमूत्रेण[3] पिष्टानि नस्यं तन्द्रीनिवारणम् ॥ असुराह्वपतङ्गस्य विट्चूर्णं मधुसंयुतम् । अञ्जनाद्बोधयेन्मुग्धं तन्द्रितं सन्निपातिनम् ॥ जातीपुष्पं प्रवालं च रोहिणी मरिचं वचा । सैन्धवं बस्तमूत्रेण[4] तन्द्रीनाशनमुत्तमम् ॥ अयोरजः श्वेतरोध्रमञ्जनं मरिचं तथा । गोपित्तेन समायुक्तं तन्द्रीनाशनमुत्तमम्[5] ॥" इति । इति सन्निपातज्वरः ।

**मधूकपुष्पमृद्वीकात्रायमाणापरूषकम् ॥ ६७ ॥**
**सोशीरतिक्तात्रिफलाकाश्मर्यं कल्पयेद्धिमम् ।**
**कषायं तं पिबन् काले ज्वरान् सर्वानपोहति[6][7] ॥६८॥**
**जात्यामलकमुस्तानि तद्वद्धन्वयवासकम् ।**

स०—मधूकपुष्पादिकं काले—शास्त्रोक्ते, शीतकषायं पिबन् ज्वरान् सर्वान्—एकदोषद्विदोषजान्, अपोहति । "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" इति परस्मैपदम् । जातिपल्लवा आमलकानि मुस्तं धन्वयासकं तद्वत्—पूर्ववच्छीतकषायं कल्पयित्वा पिबन् सर्वान् ज्वरान् हन्ति । धन्वयवासकं चेति चशब्दोऽत्र लुप्तो द्रष्टव्यः । तदेतैश्चतुर्भिर्द्रव्यैरेतत् पाचनम् । केचित्तु धन्वयवासकं पृथगेवेच्छन्ति । तस्मादेतत्कृतोऽपि कषायः पूर्ववद्बोध्यः ।

**आ० र०—अथ ज्वरसामान्यम् । तत्र शमनमाह—मधूकपुष्पेति । तच्च त्रिधा—मधुकपुष्पादिदशकं जात्यादित्रिकं धन्वयासकं चेति । त्रयोऽपि शीतकषायाः ।**

**बद्धविट् कटुकाद्राक्षात्रायन्तीत्रिफलागुडम्[8] ॥ ६९ ॥**

स०—तथा च बद्धविट् पुरुषः कटुकादिकं कषायं पिबेदिति वर्तते, न तु हिममिति । शीतस्य मलस्तम्भहेतुत्वादस्य चौषधस्य शोधनरूपत्वात् । गुडा—सुधा, गुड इत्यन्ये ।

**आ० र०—बद्धविङ्क्स्य शोधनमाह—बद्धविडिति । शीतकषाये गुडप्रक्षेपः । इति ज्वरौषधानि ।**

**जीर्णौषधोऽन्नं पेयाद्यमाचरेत्**

स०—जीर्णं—परिणतं, औषधं यस्य स जीर्णौषधः सन्, पेयाद्यमेव पूर्वोक्तमन्नं भुञ्जीत । अद्यत इत्यन्नम्, इति कृत्वा पेयादेरप्यन्नत्वम् । आदिशब्देन यूषादिपरिग्रहः ।

**आ० र०—अथ ज्वरौषधानन्तरं पथ्यानि । तत्र पेयाद्यं पथ्यमाह—जीर्णौषधोऽन्नमिति । तच्च लङ्घनानन्तरौषधदानविषयम् । पेयाद्यनन्तरौषधदाने रसौदनपर्यन्तपथ्यसेवानिष्पत्तेः पुनः पेयादिक्रमस्यानुचितत्वात् । आद्यशब्दाद्यूषौदनादयः । सिद्धयोगे तु (ज्व. श्लो. ८४)—"अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता । लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः । क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा । अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ औषधशेषे भुक्तं पीतं च तथौषधं च शेषेऽन्ने । न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥" इति ।**

न च सर्वः कश्चित्पेयादिकमाचरेदित्याह—

**श्लेष्मवान्न तु ।**
**पेया कफं वर्धयति पङ्कं पांसुषु वृष्टिवत् ॥ ७० ॥**

स०—श्लेष्मवान्न तु—जीर्णौषधोऽपि श्लेष्मवान्नरः पेयादिकं नाश्नीयात् । किम् ? इत्याह—पेयेत्यादि । यतः पेया कफं वर्धयति,—विलीनरूपस्य कफस्य स्त्यानभावतामुत्पादयन्ती सस्थानविशेषमुपर्युपरि[2]भावतयोपचयमुत्पादयति, न तु सा कफं साक्षाद्वर्धयति, इति वर्धयतेरर्थः, अनेकार्थत्वाद्धातूनामिति, एषं[3] चार्थोऽनुरूपतन्त्रकारदृष्टान्तदर्शनादवगम्यते । तथा चाह—पङ्कं पांसुषु वृष्टिवदिति । यथा,—पांसुषु वृष्टिः पतिता[4] न तु पङ्कं वर्धयति[5]—शिथिलरूपतां पांसूनामपास्य निबिडरूपतामिव तेषामुत्पादयति । न पांसून् वृष्टिर्वर्धयति—आधिक्यं नयति, न वर्धयतेऽत्रा(लेत्य)र्थः । तन्त्रकारस्यार्थ एव विवक्षितो भविष्यत् तदानीमत्रैव स्पष्टमेव दृष्टान्तमदर्शयिष्यत् । यथा—"पेया कफं वर्धयति यथा वृष्टिर्नदीजलम् ।" इति ।

**आ० र०—श्लेष्मज्वरे पेयां निषेधयति—श्लेष्मवान्न त्विति ।**

**पेयानिषेधे युक्तिमाह—पेया कफं वर्धयति पङ्कं पांसुषु वृष्टिवत् । श्लेष्माभिषवदेहानामिति । यथा पांसुषु पतिता वृष्टिः पङ्कं वर्द्धयति तथा श्लेष्माभिषवे—कफक्लिन्ने देहे, पतिता पेया कफं वर्द्धयति ।**

तच्च तन्त्रकारोऽमुनैवानुसारेणाह—

**श्लेष्माभि[6]ष्यण्णदेहानामतः प्रागपि योजयेत् ।**
**यूषान् कुलत्थचणक[7]कलायादिकृतान् लघून् ॥ ७१ ॥**
**रूक्षांस्तिक्तरसोपेतान् हृद्यान् रुचिकरान् पटून् ।**

स०—अभि[8]ष्यण्ण इति, अभिपूर्वात्स्यन्दे स्रवणार्थो व्युत्पादितः । श्लेष्मणा[9]—स्रुतिरूपेणैव[10], अभिष्यण्णः—क्लिन्न इव, देहो येषां ते श्लेष्माभिष्यण्णदेहाः, तेषाम्, अतो ज्वरिणां प्रागपि—प्रथमपथ्यावसरेऽपि, यूषान् योजयेत् । किमुत श्लेष्मवतः पुंसो जीर्णौषधस्य यूषान्न योजयेत् ? इत्यपिशब्दस्यार्थः । किम्भूतान् ? कुलत्थादिकृतान् । तथा, लघून् । ननु, कुलत्थादीनां लघुत्वात्तत्कृता यूषा लघव एव भविष्यन्ति । तत्किं लघूनित्यनेन ?

१ 'ण्डारक' वङ्ग । २ 'तन्द्राविनाशनम्' वङ्ग । ३ 'मूत्रेण पिष्टा बस्तस्य न' वङ्ग । ४ 'मूत्र च त' फ । ५ 'तन्द्राना' वङ्ग । ६ 'र्वान् व्यपो' अ । ७ 'रानपोहति ।' ट. । ८ 'गुडान्' अ इ फ.सं.द्र. । 'गुडा.' अरुण. ।

१ 'हि' सि । २ 'भावतो यदायमु (?)' ध । 'भाषचतोयादीयमु (?)' ङ । ३ 'एष एवार्थो' इति क्वचित् । ४ 'पतति न' ट ङ ध । ५ 'यतीति' ट ध । ६ 'भिस्पन्ददे' इ । 'भिषवदे' हे. । 'भिष्यन्नदे' स मू । ७ 'कदाडिमादि' अ. । ८ 'भिष्यन्न' ट.ध. । ९ 'ष्मण स्रु' ट. । १० 'रूपेण, अ' ङ. ।

अत्रोच्यते । शिम्बीधान्याना मध्ये गुरवोऽपि राजमाषमापादय सन्ति, तन्निवृत्त्यर्थमेतत् । अपि च, लघूनित्यनेन यूषप्रकृतिद्रव्यैरल्पपरिमाणै कृतानिति द्योतयति । यतोऽल्पपरिमाणै कुलत्थादिभि कृता लघुतरा स्यु, तस्माल्लघूनिति युक्तम् । तथा, रूक्षान्–घृतभर्जनकादिरहितान् । तथा, तिक्तरसयुक्तान् । तथा, हृद्यान्–इष्टरसगन्धवर्णस्पर्शयुक्तत्वाच्चेतस आह्लादकरान् । तथा, रुचिकरान्–ज्वरिणोऽन्यस्य वा रोचिष्णून् । तथा, पटून्–सलवणान् ।

**आ० र०**–पेयास्थाने यूषमाह–अत प्रागपीति । प्रागपि –"युक्त लङ्घितलिङ्गैस्तु त पेयाभिरुपाचरेत् ।" (श्लो २४) इत्यत्रापि । लघून्–सम्यक्पाकेन । रूक्षान्–अकृतत्वेन धान्यस्थानवत्त्वेन [ च ] । पटून्–सैन्धवयोगेन ।

**रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिताः ७२**
**श्लेष्मोत्तरे वीततुषास्तथा वाटीकृता यवाः ।**

**स०**–रक्ताद्या –"रक्तो महान् सकलम" (हृ सू अ ६।१) इत्यादय । तथा, षष्टिका व्रीह्यादयोऽपि, जीर्णा –पुराणा, हिता –पथ्या । श्लेष्मोत्तरे–प्रभूतश्लेष्मणि ज्वरे, वीततुषा –अपनीतत्वचो, यवाश्च पथ्या । कीदृशा ? वाटीकृता,–भृष्टविदलीकृता इत्यर्थ ।

**आ० र०**–पथ्ययोग्य धान्यमाह–रक्ताद्या इति । वाटीकृता –बाधत्व नीता । बाधत्व–भृष्टस्य शकलीकरणम् ।

**ओदनस्तैः स्नुतो द्विस्त्रिः प्रयोक्तव्यो यथायथम् ७३**
**दोषदूष्यादिबलतो ज्वरघ्नक्वाथसाधितः ।**

**स०**–ओदनस्तै –रक्ताशाल्यादिभि पूर्वोक्तैश्च, कृतो ज्वरिणो यथायथ यो यस्य दाने योग्य स तस्य प्रयोक्तव्य । किम्भूत ? द्विस्त्रि स्नुतो–द्वौ वारौ त्रीन् वारान् वा जल दत्त्वा धौत । कथं प्रयोज्य ? दोषदूष्यादिबलेन । ज्वरघ्नै –ज्वरापहैर्द्रव्यै, क्वाथ कृत्वा, तेन क्वाथेन साधित । दोषस्य–वातादेर्बल तथा दूष्यस्य रसादेर्बलमपेक्ष्य, आदिग्रहणाद्देशकालवय सत्त्वसात्म्यशरीराहारबल गृह्यते । एकाहादिकाना ज्वरिणामकृतपेयानामेव कुलत्थमुद्गचणकादियूषा उक्ता ।

**आ० र०**–ओदनविधिमाह–ओदनस्तैरिति । तैः–रक्तशाल्यादिभि, द्विस्त्रिर्वा स्नुतो–यूलित (?), उदकान्तरप्रक्षेपेण ।

सम्प्रति सामान्येन ज्वरिणा कृतपेयाना यूषादीनाह–

**मुद्गाद्यैर्लघुभिर्यूषाः कुलत्थैश्च ज्वरापहाः ॥ ७४ ॥**

**स०**–मुद्गाद्यै –शिम्बीधान्यै, लघुभि कृता यूषास्तथा कुलत्थै कृता यूषा ज्वरघ्ना । मुद्गाद्यैरित्यादि प्रकारे । तेन मुजर्रा मुद्गचणककुलत्थमकुष्टमसूरादयो गृह्यन्ते । मुद्गशब्दस्यादा निर्देश इद बोधयति,–यूषसाध्ये व्याधौ बाहुल्येन मुद्गयूष कार्य, मुद्गाना पथ्यतमत्वात् । तथा चोवाच मुनि (च सू अ २५।३८)–"मुद्ग शिम्बीधान्याना पथ्यत्वे श्रेष्ठतम ।" इति । ननु, मुद्गाद्यैरित्यादिशब्देनैव कुलत्था गृहीता एव, किं पृथङ्निर्देशेन ? ब्रूमहे । कुलत्थयूषस्य ज्वरविषये विरल प्रयोग कार्य इति सूचयितु पृथक्कृतो निर्देश इति । तथा च कुलत्था एवगुणा (हृ सू अ ६।१९)–"उष्णा कुलत्था पाकेऽम्ला शुक्राश्मश्वासपीनसान् । कासार्श कफवाताश्च घ्नन्ति पित्तास्रदा परम् ॥" इति । एवमुष्णत्वादम्लविपाकित्वादतिपित्तास्रकारित्वात् कुलत्थाना यूषो बहुद्रव्यपरिमाणो बहुमात्रोप युक्तो ज्वरस्य न शान्तये सम्पद्यते, प्रत्युत वृद्धये स्यादिति सम्भाव्यते, पित्तविरुद्धत्वात् । तस्मादल्पपरिमाणद्रव्यसाधितोऽल्पमात्रया कुलत्थयूष श्लेष्माद्युपशमकृद्यावन्मात्र स्यात्तावानेव प्रयोज्यत इति स्थितम् ।

**आ० र०**–यूषद्रव्याण्याह–मुद्गाद्यैरिति ।

**कारवेल्लककर्कोटबालमूलकपर्पटैः ।**
**वार्ताकनिम्बकुसुमपटोलफलपल्लवैः ॥ ७५ ॥**
**अत्यन्तलघुभिर्मांसैर्जाङ्गलैश्च हिता रसाः ।**
**व्याघ्रीपरूषतर्कारीद्राक्षामलकदाडिमैः ॥ ७६ ॥**
**संस्कृताः पिप्पलीशुण्ठीधान्यजीरकसैन्धवैः ।**
**सितामधुभ्यां प्रायेण संयुता वा कृताकृताः ॥७७॥**

**स०**–कारवेल्लकादिभी रसा ज्वरे हिता । मुनिस्तु कारवेल्लकादीना शाकत्वमेवेच्छति (च चि अ ३।१८७) । खरणादेऽप्युक्तम्–"पटोल सफल निम्ब कर्कोटककठिल्लकम् । शाक पर्पटक च स्यात्" इति । तथा जाङ्गलै –जाङ्गलदेशप्राणिजैस्तदभावात्तुल्यैरन्यदेशप्राणिजैरपि, मांसैर्हिता रसा व्याघ्र्यादिभि संस्कृतास्तथा पिप्पल्यादिभि संयुता इति वक्ष्यमाणेन सम्बन्ध । संस्कारमात्रयोगभाज पिप्पल्यादयोऽत्र योज्या इत्यर्थ । प्रायेण केचिदेव सितामधुभ्या युक्ता अवस्थावशात्, न तु सर्व एव । किम्भूता रसा यूषाश्चैवविधा कार्या ? कृताकृता । पानकदाडिमाजाजीशुण्ठ्याद्यैरपि संस्कृता यूषा रसाश्च–कृता । विपरीतास्त्वत –अकृता ।

**आ० र०**–खलद्रव्याण्याह–कारवेल्लकेति । निम्बस्य कुसुमम् । पटोलस्य फल पल्लवश्च । रसा इति वक्ष्यमाणमत्र योज्यम् । खलत्व तु धान्यमांसेतरकृतत्वात् ॥

रसद्रव्याण्याह–अत्यन्तलघुभिरिति ।

**यूषादीनामुपकरणद्रव्याण्याह–व्याघ्रीपरूषेति । तानि च व्याघ्र्यादीनि त्रयोदश । प्रायेणैतान्यन्यान्यपथ्यवस्थावशात् प्रयोज्यानि । ते तु यूषादय संस्कृता संयुता वा कार्या ।**

१ 'जमाषादय' ड । २ 'वाट्यकृता' स स । ३ 'वाट्यीकृता' ट ड । ४ 'दानयोग्य' ड । ५ 'त स्नुत ।' ड ध । ६ 'रा मकुष्ट' ड ध ।

१ 'शमीधा' ड, स च । २ 'पथ्यतमत्वे' स च । ३ 'प्रचारयोग' ड । ४ 'तो मात्र' ड ध । ५ 'श्लेष्मकोपशम' ड । ६ 'ता । दाडि' ट । ७ 'मादिशु' ड ध ।

प्रक्षेप्यापनयनेन संस्कृतत्वम्, अनपनयनेन संयुतत्वम्। प्रक्षेपश्च यथायोग क्थनकाले क्थनानन्तरं वा। स्नेहेन विशिष्टा -कृता, अविशिष्टा -अकृता, कटुपद्वम्लानामुक्तत्वात्।

**अनम्लतक्रसिद्धानि रुच्यानि व्यञ्जनानि च।**
**अच्छान्यनलसम्पन्नानि**

**स०**-अनम्लेन तक्रेण सिद्धानि। तथा, रुच्यानि-अभ्यवहर्तुमभिलषितानि। तथा, अच्छानि-तनूनि न घनानि। तथा, अनलसम्पन्नानि-वह्निपक्वानि। केचिद्धि तक्रमपक्वमेवाच्छीकृत्य संस्कृत्य च शुण्ठीजीरकादिनाऽभ्यवहरन्ति तन्निषेधायेतदुक्तम्। एवंविधानि व्यञ्जनानि-तेमनानि रसकषायाणि, ओदनेन सहाभ्यवहर्तव्यानि।

**आ० र०**-व्यञ्जनविधिमाह-अनम्लतक्रसिद्धानीति। व्यञ्जनानि-शाकानि। अच्छानि-अघनानि। अनलसम्पन्नानि-सुपक्वानि।

**अनुपानेऽपि योजयेत्॥७८॥**
**तानि क्वथितशीतं च वारि मद्यं च सात्म्यतः।**

**स०**-अनुपानेऽपि-आतुरस्य पश्चात्पानेऽपि, तानि योजयेत्। तथा क्वथितशीतं च वारि मद्यं च, सात्म्यतः-सात्म्यवशात्, अनुपानेऽपि योजयेत्।

**आ० र०**-अनुपानान्याह-अनुपानेऽपीति। तानि-व्यञ्जनानि पानयोग्यानि कृतानि।

**सज्वरं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु॥७९॥**
**श्लेष्मक्षयविवृद्धोष्मा बलवाननलस्तदा।**

**स०**-सज्वरं नरं दिनान्ते भोजयेत्,-अथवा ज्वरमुक्तम्-अचिरकालज्वरत्यक्तम्। किम्भूतं भोजनं भोजयेत्? लघु,-मात्रया स्वभावात्[च] उभयथा यल्लघु। किमित्येतस्मिन् काले लघु भोजयेत्? इत्याह-श्लेष्मेत्यादि। तदा-तस्मिन्दिनान्ताख्ये काले, श्लेष्मक्षयो यस्तेन विवृद्ध ऊष्मा-स्वस्वभावो, यस्यानलस्य जाठराग्नेरसौ श्लेष्मक्षयविवृद्धोष्माऽनलः। अत एव बलवान् तदा पक्तुं शक्तः।

**आ० र०**-पथ्यग्रहणकालमाह-सज्वरं ज्वरमुक्तं वेति। ज्वरमुक्तं तु-आबललाभात्। दिनान्ते-पञ्चदशे मुहूर्ते। लघु-अल्पमात्रम्। तदा-दिनान्ते।

१ 'नानि-नातिरस' ट। २ "दिनान्ते-अपराह्णे।" इति "अन्ये प्रातर्भोजनकालं मुक्त्वा दिनान्तमाहुः। तदुक्तम्-'न दिवस्वाप्नं पूर्वाह्णे नाभिष्यन्दि कदाचन। न तीक्ष्णं न गुरुप्रायं भुञ्जीत तरुणज्वरी॥' इति। पाराशरेणाप्युक्तम्-'ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु। स्फुटो यस्यान्तरग्निः स्यात्स्तैमित्योपरमात्तदा।' इति। तथा च-'दोषा शैथिल्यमायान्ति वह्निरन्तश्च वर्द्धते। स्फुटीभवन्ति स्रोतांसि दिनान्ते ज्वरितस्य हि॥' इति।" इति च श्रीकण्ठदत्तः। "दिनान्ते-अन्तशब्दोऽत्र मध्यवाची, तेन त्रिधा विभक्तस्य दिवसस्य मध्यभागे पित्तस्य प्राधान्यसमये।" इति भावप्रकाशटीकायाम्। ३ 'क्षयेण वि' ट।

**यथोचितेऽथवा काले देशसात्म्यानुरोधतः॥८०॥**

**स०**-अथवा यथोचिते काले सज्वरं ज्वरमुक्तं वाऽऽतुरं भोजयेत्। यस्य यस्य य उचितः-सात्म्यः, आहारकालस्तस्मिन् भोजयेत्। यथोचिते हि काले प्रायः क्षुदुपगमो जायते। कथं भोजयेत्? इत्याह-देशेत्यादि। देशसात्म्यवशात् तं भोजयेत्, नर्वमेव।

**आ० र०**-दिनान्तस्यापवादमाह-यथोचितेऽथवेति। देशो-भूमिर्देहश्च।

ननु, एवं यस्य पूर्वाह्णे काले भोजनमुचितं तदा तस्य भोजने दीयमाने को गुणः स्यात्? इत्याह-

**प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते।**

**स०**-यस्मादल्पवह्निः-मन्दाग्निः, पूर्वाह्णे भुञ्जानोऽजीर्णेन न पीड्यते-न बाध्यते।

**आ० र०**-अपवादापवादमाह-प्रागल्पवह्निरिति। योऽल्पवह्निः प्राक्-दिनान्ते, भुञ्जानो हि-स्फुटं, अजीर्णेन न बाध्यते, अन्यथा बाध्यते, तस्माद्दिनान्त एव भुञ्जीत। अमन्दवह्निं प्रति पूर्वोऽपवादः।

अधुना सर्पिःपानकालं निरूपयति-

**कषायपानपथ्यान्नैर्दशाह इति लङ्घिते॥८१॥**
**सर्पिर्दद्यात्कफे मन्दे वातपित्तोत्तरे ज्वरे।**
**पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा॥८२॥**
**दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत्।**
**लङ्घनादिक्रमं तत्र कुर्यादाकफसङ्क्षयात्॥८३॥**

**स०**-कषायस्य-मुस्तापर्पटकादेः, पानं कषायपानम्, तेन। तथा, पथ्यान्नैः-पेयायूषादिभिः, दशाह इति-अनेन प्रकारेण, लङ्घिते-अतिक्रान्ते। तथेति प्रायेण क्षीणः कफः सम्भाव्यतेऽतो दशाहे लङ्घित इत्युक्तम्। आमज्वरसञ्ज्ञानिवृत्तिस्तु षडहादूर्ध्वं सप्तमेऽह्न्यष्टमे वाऽहनि ज्वरस्य जायते। तथा च मुनिः (च चि अ ३।२७२)-"सप्ताहेन हि पच्यन्ते सप्तधातुगता मलाः। निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि॥" इति। तस्मात् कषायपानपथ्यान्नैरित्यादितो दशाहे लङ्घिते कफे मन्दे-क्षीणप्राये, सर्पिर्दद्यात्। किम्भूते ज्वरे? वातपित्तोत्तरे,-वातपित्ताधिके। अस्यामवस्थायां पक्वेषु-निरामेषु वातादिदोषेषु, सर्पिर्देयात्। पक्वेषु सर्पिर्दत्तममृतं-महागुणमित्यर्थः। अन्यथा पुनः-अपक्वेषु दोषेषु कफोत्तरे, तत्सर्पिर्दत्तं विषोपमं-विषतुल्यं, दशाहेऽतिक्रान्तेऽपि स्यात्। अतोऽस्यामवस्थायां सर्पिर्दत्तं ज्वरस्य तदुपद्रवाणां च वृद्धिं करोति, तस्मादस्यामवस्थायां सर्पिःपानमयुक्तम्। तत्र-कफोत्तरे ज्वरे सति, लङ्घनादिक्रमं कुर्यात्।

१ 'नेदं याव (तन्मात्र) मेव।' ड। २ "यस्त्वल्पाग्निः स प्रागेव भुञ्जानोऽजीर्णेन न पीड्यते। प्रागेव-प्रथमदिने।" इतीन्दुः। ३ 'सवधातु' स च।

कियन्त कालम् ? आ।कफमक्षयात्,-यावत्कफस्य-ज्वरकारिणोऽधिकस्य, सक्षय -सम्यक् क्षय , न धातुक्षयोऽपि यावत् । यत कफज्वरेऽपि विडङ्गादिसर्पिर्वक्ष्यति (श्लो ९३) ।

आ० र०-असर्पिष्कस्य भोजनस्यावधिमाह-कषायपानपथ्यान्नैरिति । पक्वेषु दोषेषु दशाहेऽनतीतेऽप्यमृतोपम सर्पि । अपक्वेष्वतीतेऽपि विषोपमम्, ज्वरोपद्रववर्धनात् । तत्र-तथाविधे चिरपाकज्वरे, लङ्घनादिक्रममेव कुर्यात्, न ससर्पिष्कभोजनादिष्ट [ बृ ]हणक्रमम् । सिद्धयोगे तु पथ्ये विशेष उक्त ( ज्वराधिकारे श्लो ४२ )-"श्रमोपवासानिलजे हितो नित्य रसौदन ॥ मुद्गयूषौदनश्चापि देय कफसमुत्थिते । स एव सितया युक्त शीत पित्तज्वरे हित ॥ मुद्गामलकयूषस्तु वातपित्तात्मके हित । मुद्गामलकयूषस्तु गाढविट्के विधीयते ॥ शुष्कमूलकयूषस्तु कफवातात्मके हित । निम्बकूलकयूषस्तु हित पित्तकफात्मके ॥ कूलक -पटोलम् । लघुना पञ्चमूलेन पिप्पल्या सह धान्यया । महत्या पञ्च मूल्या तु व्याघ्रीदु स्पर्शगोक्षुरै ॥ सिद्धानि भिषँ[3]गन्नानि प्रयुञ्जीत यथाक्रमम् । वातपित्ते श्लेष्मपित्ते कफँ[4]वाते त्रिदोषजे ॥ (श्लो १६४)-यवकोलकुलत्थाना मुद्गमूलकशुण्ठयो । एकैक मुष्टिमाहृत्य पचेदष्टगुणे जले ॥ पञ्चमुष्टिक इत्येष वातपित्तँ[5]कफापह । शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे ॥ मूलकशुण्ठ -शुष्कमूलकम् । पञ्चमुष्टिकयूषेण त्रिकण्टककृतेन वा । आदोषशमनात्पथ्य त्रिकण्टेनैव साधयेत् ॥ [6]महादाहो विधातव्यो यूषश्चणकसम्भव । मुस्तापर्पटकैरातो निर्यूहेन प्रसाधित ॥ कफपित्तज्वरहरो यूषो धान्यपटोलयो । (वङ्गसेने ज्वरा श्लो ४१६)-यवकोलकुलत्थैस्तु मुद्गमूलकशुण्ठकै ॥ धान्याकविश्वै सयुक्तैर्यूषो वातकफापह । सप्तमुष्टिक इत्येष सन्निपातज्वरापह ॥ कफवातामदोषघ्न कण्ठ हृद्वक्त्रशोधन ॥" इति । इति नवज्वर ।

अथ जीर्णज्वरचिकित्सामाह-

**देहधात्वबलँ[7]त्वाच्च ज्वरो जीर्णोऽनुवर्तते ।**

स०-जीर्ण -पुराणो ज्वँ[8]र , अनुवर्तते-अनुबध्नाति । कुत ? देहधात्वबलत्वात् । देहधातव -तदारम्भका रसरुधिरादय , देहग्रहणाद्वातपित्तश्लेष्माणोऽपि धारणाद्धातव उच्यन्ते । देहधातूनामबलत्व-स्वल्पत्वम् । तस्माच्च जीर्णो ज्वरोऽनुबध्नाति, न स्वभावमात्रादेव, इति चशब्दस्यार्थ ।

आ० र०-अथ जीर्णज्वर. । तत्र जीर्णज्वरानुवृत्तौ हेतुमाह-देहधात्वबलत्वाच्चेति । देहस्याबलवत्त्व-स्रोतसामदृढत्वम् । धातूनामबलत्व-स्वस्रोतोभिसञ्चरणाशक्ति. ।

---

१ श्लोकार्द्धमिद मुद्रितसिद्धयोगे नोपलभ्यते । २ 'ह्रस्वमूल' सि । ३ 'षगाज्यानि' फ । ४ 'वातत्रिदोषयो ।' फ । ५ 'त्तज्वरापह ' फ । ६ इमे महादाहादय सार्धत्रय श्लोका मुद्रितसिद्धयोगे नोपलभ्यन्ते । ७ 'लत्वेन ज्व' स.द्व । ८ 'ज्वरो दीर्घकालमनु' ट.।



जीर्णज्वरस्य शान्त्यर्थ देहबलाधानार्थं च सर्पि पान हितमिति प्रतिपादयन्नाह-

**रूक्षं हि तेजो ज्वरकृत्तेजसा रूक्षितस्य च ॥ ८४ ॥**
**वमनस्वेदकालाम्बुकषायलघुभोजनैः ।**
**य. स्यादतिबलो धातुः सहचारी सदागतिः ॥८५॥**
**तस्य संशमनं सर्पिर्दीप्तस्येवाम्बु वेश्मनः ।**

स०-रूक्ष यत्तेजस्तज्ज्वरकृत् । रूक्षमिति वचनाद्देहोष्मा जाठरोऽनलो गृह्यते, तस्यैव ज्वरकृत्त्वात् । तथोक्तम् (हृ नि अ २।३)-"मलास्तत्र स्वै स्वैर्दुष्टा " इत्यादि यावत् । "ज्वर निर्वर्तयन्ति ते ।" इत्यादि जाठरानलस्यैव ज्वरकृतत्वम् । तेन ज्वरकृता रूक्षेण तेजसा रूक्षितस्य च पुंस सर्पि सशमनम् । चशब्दाच्चान्यस्यापि । अत एवाह-वमनेत्यादि । वमनादिभी रौक्ष्यकृद्भि कृतैस्तदानीं य स्यात्-भवेत्, अतिबल -प्रवृद्धत्वादतिसमर्थो धातु । को धातु ? सहचारी,-य सह चरति तच्छीलो वाताख्यो धातुरग्निना सह चरति । ननु, एव परस्परसहचरभावत्वेऽग्निरपि वायुना सह चरति, ततो[1]ऽग्निस्वभावत्वात् पित्ताख्योऽपि धातुरिह सहचारी प्राप्त , तन्निवृत्त्यर्थ सदागतिरित्याह । सदागतित्व वायोरेवान्वर्थत्वेनोपपद्यत इति पित्तस्याग्रहणम् । कि कस्य यथा सशमनम् ? अम्बु वेश्मनो,-गृहस्य, दीप्तस्य-ज्वलितस्य, जल यथा ।

आ० र०-सर्पि प्रयोगे युक्तिमाह-रूक्षमित्यादि । हि-यस्मात्, जीर्णावस्थाया निराम तेजो ज्वर करोति । तेन च तेजसा रूक्षितस्य ज्वरिण , तथा वमनादिभिर्नवज्वरोपक्रमै रूक्षितस्य, सहचारी-सखा, पुनस्तदेव वर्धयति । ततो धातून् नयति । तस्य-तथानुवृत्तस्य जीर्णज्वरस्यानुवृत्तौ प्रधानभूतस्य वायो , सर्पि सशमनम् ।

**वातपित्तजितामग्र्यं संस्कारं[2] चानुरुध्यते ॥ ८६ ॥**
**सुतरा तद्घ्यतो दद्याद्यथास्वौषधसाधितम् ।**

स०-यस्माद्धृत सर्वेषा वातपित्तजितामग्र्य यथा न तथाऽन्यान्यौषधानि वातपित्तजिन्तीति । अत एव प्रागभ्यधात् ( श्लो. ८२ )-"सर्पिर्दद्यात्कफे मन्दे वातपित्तोत्तरे ज्वरे ।" इत्यादि । यस्माच्च घृत सस्कारमनुरुध्यते-अनुवर्तते । गुणान्तराधान-सस्कार । त च यस्माद्धृत सुष्ठ्वतिशयवैलक्षण्यादनुरुध्यते-आत्मसात्करोति । तैलादिरपि स्नेह सस्कारमनुवर्तते । न तु यथा घृत स्वशैत्यमजहदेव सस्कारमनुवर्तत इति । एतच्च स्नेहविधौ प्रतिपादितमेव । अमुमेव च न्यायमङ्गीकृत्य मुनिरप्यवोचत् (च नि अ १।४०)-"नान्य स्नेहस्तथा कश्चित् सस्कारमनुवर्तते । यथा सर्पिरत सर्पि सर्वस्नेहोत्तम मतम् ॥" इति । हि-यस्मात्, सुतरा सस्कारमनुरुध्यते घृतम्, तस्मा[3]द्धृत जीर्णे वातपित्तोत्तरे निर्विकल्प दद्यात् । कीदृशम् ? यथास्वौषधसाधितम्,-यथायथं व्याधिप्रतिपक्षैरौषधै पक्वम् ।

---

१ 'अतो' ध. । २ 'स्कारमनु' अ.स स. । ३ 'साज्जीर्णे' ध.ड. ।

आ० र०-सर्पिर्दान विधत्ते-वातपित्तजितामस्यमिति । यत एव अतस्तत्सपिर्दद्यात् । सर्पिषोऽपि तैल वातहरमिति चेत्तत्राह-वातपित्तजितामग्र्य पित्तसमृष्टश्र(वा)नायु(?)। जीर्णज्वरे तैलमप्यौषधसाधित तथेति चेत्तत्राह-सस्कार चा नुरुध्यते सुतराम् । अत एव यथास्वौषधसाधितमित्युक्तम् ।

**विपरीतं ज्वरोष्माणं जयेत्पित्त च शैत्यतः ॥ ८७ ॥**
**स्नेहाद्वातं घृत तुल्यं योगसस्कारतः कफम् ।**

स०-घृत विपरीत ज्वरोष्माण जयेत् । ज्वरनिर्वर्तक ऊष्मा-जाठरोऽनलो, रूक्षतीक्ष्णादिगुण स पक्तिस्थानान्निरस्तो[1] ज्वरनिवर्तको घृतस्य स्निग्धशीतत्वादिगुणयोगाद्विपरीत , एव विपरीत ज्वरोष्माण घृत जयेत् । पित्त च शैत्यत -शैत्याद्धृत जयेत्, न स्नेहात्, "पित्तसस्नेह" (हृ सू अ १।११) इति वचनात् । स्नेहात्-स्निग्धत्वात्, घृत वात जयेत् न तु शैत्यात्, "शीतोऽनिल" ( हृ सू अ १।११ ) इति वचनात् । कफ स्निग्धशीतत्वादिना तुल्य योगसस्काराभ्या जयेत् । योगो-युक्ति कफज्वरहरैर्द्रव्यै सह योजना, सस्कारो-गुणाधानम्, योगश्च सस्कारश्च योगस स्कारौ, ताभ्या घृत कफ जयेत् । ननु, विपरीत ज्वरोष्माण घृत जयेदिति न घटते, घृतस्याग्निवृद्धिहेतुत्वात् । तथा च वक्ष्यति ( हृ चि अ १०।६८ )-"स्नेहमेव पर विद्याद्दुर्बलानलदीपनम् । नाल स्नेहसमिद्धस्य शमायान्न सुगुर्वपि ॥" इति । अत्रावक्ष्महे । घृतं स्नेहनत्वदीपनत्वाभ्या वातशमनं कुर्वञ्ज्वरोष्माक्षेपत्व वातस्य विनिवार्य ज्वरोष्मणोऽपि रौक्ष्यतैक्ष्ण्यादियुतस्य घृत विपरीतगुणत्वाच्छम करोति, न वृद्धिम् । ननु, यथा स्नेहाद्वात शमयति तथा तत एव स्नेहात्किमिति घृत समानगुणत्वात् पित्त शमयति? ब्रूम । जीर्णज्वरे लङ्घनादिभिरतिरूक्षेण ज्वरोष्मणा पित्त रूक्षमेव सम्पन्न स्नेहभागपरिक्षयान्न सस्नेहम्[3], अत कथ कुर्वा ज्वरयतु[4] । तच्च घृत पित्तमेव शमयति, न वात कोपयति, द्रव्यप्रभावत्वात्सस्नेहनत्वाच ।

आ० र०-सर्पिषो व्याधिविपरीतत्व हेतुविपरीतत्व चाह-विपरीत ज्वरोष्माणमिति । विपरीत-उष्णम् । ज्वर वातमपि विपरीतम् । कफस्तु शीतत्वात् स्निग्धत्वाच्च तुल्य , तमप्युष्णरूक्षयोगसस्काराज्जयेत् ।

**पूर्वे कषायाः सघृताः सर्वे योज्या यथामलम् ॥८८॥**

स०-पूर्वे कषाया -प्रागुक्तानि पाचनानि, सह घृतेन प्रयुञ्ज्यात् । कथम्? यथामल-दोषानतिक्रमेण ।

आ० र०-उक्ते क्वाथै. सर्पि पानमाह-पूर्वे कषाया इति। यथामल-यथादोषम्, वातज्वरे वातज्वरघ्ना इत्यादि । ये तु प्रागेव ससर्पिष्का उक्ता , ते न ज्वरे दानार्थम्, तत्र च न सर्पि प्रधान चूर्णाद्या वा, एतत्प्रयोगात् । इह तु प्रधानम्, अत एव समेन क्वाथेन पेयम्, भागानुक्तौ समत्वात् ।

**त्रिफलापिचुमन्दत्वड्मधुक बृहतीद्वयम् ।**
**समसूरदल क्वाथः सघृतो ज्वरकासहा ॥ ८९ ॥**

स०-त्रिफलादीनि मसूरदलानि चैष क्वाथो घृतेन सहोपयोजितो ज्वरकासहा स्यात् ।

आ० र०-कासोपद्रवके ज्वरे सर्पि प्रयोगमाह-त्रिफलेति । मसूरदलान्तानि क्वाथ्यानि ।

**पिप्पलीन्द्रयवधावनितिक्ता-**
**सारिवामलकतामलकीभिः ।**
**बिल्वमुस्तहिमपालनिसेव्यै**
**र्द्राक्षयाऽतिविषया स्थिरया च ॥ ९० ॥**
**घृतमाशु निहन्ति साधितं**
**ज्वरमग्निं विषमं हलीमकम् ।**
**अरुचिं भृशतापमंसयो-**
**र्वमथु पार्श्वशिरोरुजं क्षयम् ॥ ९१ ॥**

स०-पिप्पलीत्यादिभिर्द्रव्यै[2] कल्कीकृतैर्घृतचतुर्थांशैस्तोयेन चतुर्गुणेन घृतापेक्षया साधित घृतमाशु ज्वर हन्ति, विषमाग्न्यादीश्च ।

आ० र०-पिप्पल्यादिसिद्ध घृतमाह-पिप्पलीति । धावनी-कण्टकारी । तामलकी-भूम्यामलकी । हिम-चन्दनम् । पालनी-त्रायमाणा । सेव्य-उशीरम् । अत्र घृते द्रवमुदकम्, पिप्पल्यादीना कल्क ।

**तैल्वकं पवनजन्मनि ज्वरे**
**योजयेत्त्रिवृतया वियोजितम् ।**
**तिक्तकं वृषघृतं च पैत्तिके**
**यच्च पालनिकया शृतं हविः ॥ ९२ ॥**

स०-तैल्वक घृत-वातव्याधिचिकित्सितोक्त (अ २१।३२), त्रिवृतया रहित[3] [ वातिके ज्वरे ] पिबेत् । पैत्तिके ज्वरे तिक्तक-कुष्ठचिकित्सितोक्त (अ १९।२), तथा वृषघृत-रक्तपित्तचिकित्सितोक्त (अ २।४०), अत्रैव वा वक्ष्यमाण (श्लो ९४), योजयेत् । पालनिकया-त्रायन्त्या, यद्धृत पक्व तच्च पित्तज्वरे योजयेत् ।

आ० र०-तैल्वकादिघृतान्यतिदिशति-तैल्वकमिति । तैल्वक-वातव्याधिचिकित्सितोक्त "पलाष्टक तिल्वकतो वराया " (अ. २१।३२) इत्यादि । तत्र च त्रिवृदुक्ता, सा प्रत्याख्याता । तिक्तकादीनि त्रीणि पित्तज्वरे । तत्र तिक्तक-कुष्ठ चिकित्सितोक्त "पटोलनिम्बकटुका" (अ १९।२) इत्यादि । वृषघृत-रक्तपित्तचिकित्सितोक्त "समूलमुस्तक क्षुण्ण" (अ २।४०) इत्यादि । पालनिकाघृत-विद्रधिचिकित्सितोक्त "कुडव त्रायमाणाया " (अ १३।१३) इत्यादि ।

१ 'स्थाननिरस्तो' ट ड ध । २ 'ण जये' ड ध. । ३ 'स्नि-ग्धेहम्, एतत्कथ' ट. । ४ 'त्वा त्वर' ड ध ।

१ 'रमुग्र वि' फ । २ 'दिना साधित' ड. । 'दिभि साधित' ध. । ३ 'त पचेत्' ड ध. ।

विडङ्गसौवर्चलचव्यपाठा
व्योषाग्निसिन्धूद्भवयावशूकैः ।
पलांशकैः क्षीरसमं घृतस्य
प्रस्थं पचेज्जीर्णकफज्वरघ्नम् ॥ ९३ ॥

स०-विडङ्गादिभि पलप्रमाणैर्घृतप्रस्थ क्षीरतुल्य चतुर्गुणजल पचेत् । तच्चोपयुक्त जीर्णो य कफज्वरस्त हन्ति ।

आ० र०-कफज्वरघ्न घृतमाह-विडङ्गसौवर्चलेति । विडङ्गादीना दशाना कल्कीकृताना प्रत्येक पलम् । घृतस्य प्रस्थ-द्वात्रिंशत्पलानि ।

गुडूच्या रसकल्काभ्यां त्रिफलाया वृषस्य च ।
मृद्वीकाया बलायाश्च स्नेहाः सिद्धा ज्वरच्छिदः ९४

स०-गुडूच्यादीना पञ्चानां पृथक्पृथग्रसकल्काभ्या सिद्धा पञ्च स्नेहा ज्वरच्छिदो-जीर्णज्वरघ्ना स्युरित्यर्थ ।

आ० र०-गुडूचीघृतादिपञ्चकमाह-गुडूच्या रसकल्काभ्यामिति । सङ्ग्रहे तु ( चि अ २ )-"वासागुडूचीत्रिफलात्रायमाणायवासकात् । क्वाथे क्षीरे च विपचेज्ज्वरघ्न कल्कितैर्घृतम् ॥ पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः । बलादुरालभामुस्तात्रायन्तीनिम्बपर्पटम् ॥ पञ्चमूल कनीयश्च क्वाथयित्वा घृत पचेत् । सक्षीर कल्कितैर्द्राक्षामेदामलक पौष्करैः ॥ शठीतामलकीयुक्तैस्तच्च ज्वरहर परम् । क्षयकासशिर पार्श्वहृच्छूलासाभितापनुत् ॥ कुलत्थकोलत्रिफलादशमूलयवान् पचेत् । द्विपलान् सलिलद्रोणे पूते पिष्ट्वाऽक्षिकान् क्षिपेत् ॥ पञ्चकोलकससाह्ववयस्थानिम्बतुम्बरून् । शठीपुष्करमूलार्कमूलप्रतिविषावचाः ॥ किराततिक्तक मुस्त कर्कटाख्या दुरालभाम् । नक्तमालशुभे पाठे कटुकाशिग्रुतेजिनी ॥ सोमवल्कद्विरजनीकण्टकीकण्टकारिका । पटोलीहिङ्गुगोजिह्वाकेम्बुक मदनाजटाम् ॥ लवणानि पलांशानि क्षारानर्द्धपलोन्मितान् । प्रस्थ चाज्यस्य तत्सिद्ध दीपन कफवातजित् ॥ हृत्प्लीहग्रहणीगुल्मश्वासकासार्शसा हितम् । दीर्घज्वराभिभूताना ज्वरिणाममृतोपमम् ॥ वयस्था-गुडूची । तेजिनी-मूर्वा । सोमवल्क -कट्फल । कण्टकी-विकङ्कत । मदनो-राठ । क्षारान्-यवक्षारस्वर्जिकाक्षारटङ्कणक्षारान् । मञ्जिष्ठातिविषापथ्यावचानागररोहिणी । देवदारु हरिद्रा च द्रोणेऽपां पालिकान् पचेत् ॥ क्वाथेऽस्मिन् साधयेत्पिष्टैर्घृतप्रस्थ पिचून्मितैः । शृङ्गबेरकणाहिङ्गुद्विक्षारपटुपञ्चकैः ॥ तत्कफावृतसर्वोत्थज्वरिणाममृतोपमम् । वर्ध्मविड्भिमारुचिश्वासकासपाण्डुविकारिणाम् ॥ गलग्रहप्रमेहार्शःप्लीहापस्मारशोषिणाम् । उदावर्तपरीताना मन्दाग्निक्रिमिकोष्ठिनाम् ॥" इति । सिद्धयोगे तु ( ज्वराधिकारे श्लो २५३ )-"दशमूलीरसे सर्पि सक्षीरे पञ्चकोलकैः । सक्षारैर्हन्ति तत्सिद्ध ज्वरकासाग्निमन्दताम् । वातपित्तकफव्याधीन् प्लीहान चापि पाण्डुताम् ॥ अस्य षट्पलेन दत्वा(?)सर्पि प्रस्थम्, षट्पल कल्क, क्षीर समम्, अर्थाद्दशमूलीरसस्त्रिगुण । पञ्चकोलैः ससिन्धूत्थैः पालिकैः पयसा समम् । सर्पि प्रस्थ श्रुत प्लीहविषमज्वरगुल्मनुत् ॥" इति । वङ्गसेने तु ( ज्वराधिकारे श्लो ७३१ )-"कल्याणक षट्पल वा घृत जीर्णज्वरे पिबेत् ॥ कुक्कुट तरुण सर्व्वशकृत्पादास्यवर्जितम् । तस्य मासस्य कुर्वीत श्रुत पलशत भिषक् ॥ बृहती कण्टकारी च शृङ्गी कर्कटकस्य च । बदराणि कुलित्थाश्च भार्गी ह्यामलक तथा ॥ शकटी पुष्कर मूल पञ्चमूल महत्तथा । एतत्तुला च सङ्गृह्य तद्द्विद्रोणेऽम्भस पचेत् ॥ पादशेष परिस्राव्य कषाय ग्राहयेद्भिषक् । षड्गुण क्षीरमाहृत्य विपचेत्तु घृताढकम् ॥ तत्र कल्कीकृत दद्याँदाश्वत्थ पञ्चमूलकम् । तत्साधुसिद्ध विज्ञाय शुभे भाण्डे निधापयेत् ॥ तस्य काले पिबेन्मात्रा बल दोषमवेक्ष्य च । जीर्णे तस्मिस्तु भुञ्जीत रक्तशाल्योदन मृदु ॥ जीर्णज्वरोपसृष्टाना शुष्यता श्वासकासिनाम् । प्रयोज्य कौक्कुट सर्पिर्यैद्मिणा विषमज्वरे ॥ लेखन बृहणीय च बलवर्णाग्निवर्धनम् ॥ पञ्चमूलक-पञ्चाङ्गम् । वासारिष्टामृताभार्गीपञ्चमूलफलत्रिकैः । सयासमधुकद्राक्षाकाश्मर्यैरक्षसम्मितैः ॥ घृतप्रस्थ विपक्तव्यमेभिर्मात्रामत पिबेत् । बृंहद्वासाघृत प्रोक्तमेतत्सर्वज्वरापहम् ॥ मागधीचूर्णकुडव तस्मादष्टगुण हविः । जले चतुर्गुणे सिद्ध ज्वरघ्न प्लीहनाशनम् ॥" इति ।

जीर्णे घृते च भुञ्जीत मृदुमांसरसौदनम् ।
बल ह्यलं दोषहर पर तच्च बलप्रदम् ॥ ९५ ॥

स०-घृते च परिणते सति मृदु-अतीक्ष्ण, मासरसाशन भुञ्जीत । हि-यस्मात्, अल बल जात दोषहर भवति । तच्च-रसाशन, अतिशयेन बलकर स्यात् ।

आ० र०-घृतानन्तर पथ्यमाह-जीर्णे घृते चेति । हि-यस्मात्, बलमत्यर्थं दोषहरम् । तच्च-मास, अत्यर्थं बलप्रदम् ।

१ 'लाशिकैः' अ । २ 'ना पृथग्र' ट ड ध । ३ 'सकैः' इ । ४ 'पर्पटान्' इ स मू । ५ 'मूलद्वय यच्च क्वा' स स । ६ 'ऽक्षकान्' स द्व । ७ 'म्बरु' इ स मू । ८ 'टोलहि' इ स द्व । ९ 'केबुक' फ स म । १० 'दनाज्झटा' स स । 'दनोत्कटम्' फ । ११ 'पलान्वितान्' स मू । १२ "कण्टकी-खदिर." इतीन्दु ।

१ 'ग्रन्थिप्र' स मू इ । २ 'रसैः सर्पि सक्षारैः पञ्चकोलकैः । सक्षीर इति' सि । ३ 'क कट्फलक घृ' वङ्ग । ४ 'च कृत्वा पादात्रव' वङ्ग । ५ 'शठी पुष्करमूल च प' वङ्ग । ६ 'द्य द्विद्रोणे त्वम्भ' वङ्ग । ७ 'चादस्वल्प प' वङ्ग । ८ 'तथा' वङ्ग । ९ 'सपायसमधुद्राक्षाकाश्मीरैरक्ष' वङ्ग । १० 'बृहद्वासा' वङ्ग । ११ 'रसाशनम्' फ । १२ 'ल दोष' ड ध. ।

**कफपित्तहरा मुद्गकारवेल्लादिजा रसाः।**
**प्रायेण तस्मान्न हिता जीर्णे वातोत्तरे ज्वरे॥ ९६॥**
**शूलोदावर्तविष्टम्भजनना ज्वरवर्धनाः।**

स०–अत एव तस्मात्कारणात् मुद्गकारवेल्लादिजा रसा कफ पित्तहरा जीर्णज्वरे वातोत्तरे प्रायेण न हिता । ते ह्युपयुक्ता शूलादिकृतो ज्वरवर्धनाश्च स्यु ।

आ० र०–यूषखलयोर्निषेधमाह–कफपित्तहरा इति । मुद्गादिरसा –यूष । कारवेल्लादिरसाश्च–खल । इति जीर्णे ज्वरघृतानि ।

**न शाम्यत्येवमपि चेज्ज्वरः कुर्वीत शोधनम्॥ ९७॥**
**शोधनार्हस्य, वमन प्रागुक्तं तस्य योजयेत्।**
**आमाशयगते दोषे बलिनः पालयन्बलम्॥ ९८॥**

स०–एवमपि कृते सति यदि ज्वरो न शाम्यति तदा शोधनार्हस्य नरस्य प्रागुक्त–"पिप्पलीभिर्युतान् गालान्"(श्लो ६) इत्यादिक, वमन योजयेत्। कदा[१] दोषे आमाशयगते सति, बलवत पुसो वमन योजयेत्, बल पालयन्–रक्षयन्।

आ० र०–अथ जीर्णज्वरशोधनानि। तत्र शोधनकाल-माह–न शाम्यतीति।

वमनमाह–वमन प्रागुक्तमिति। प्रागुक्त–"पिप्पलीभि-र्युतान् गालान्" इत्यादि। सङ्ग्रहे तु (चि अ २) "सन्तर्प-णोत्थे वमन पिप्पलीलवणाम्बुना । शर्करामाक्षिकाम्भोभि र्दाहतृष्णोल्बणे ज्वरे॥" इति।

**पक्वे तु शिथिले दोषे ज्वरे वा विषमद्यजे।**
**मोदकं त्रिफलाश्यामात्रिवृत्पिप्पलिकेसरैः॥ ९९॥**
**ससितामधुभिर्दद्याद्व्योषाद्यं वा विरेचनम्।**
**( लिह्याद्वा त्रैवृतं चूर्णं संयुक्तं मधुसर्पिषा।)**
**द्राक्षाधात्रीरसं तद्वत्सद्राक्षां वा हरीतकीम्॥१००॥**
**आरग्वधं वा पयसा मृद्वीकानां रसेन वा।**
**त्रिफलां त्रायमाणां वा पयसा ज्वरितः पिबेत् १०१**

स०–पक्वे पुनर्दोषे तथा शिथिले–अविष्टब्धे, अथवा विषजे मद्योत्थे वा ज्वरे, मोदक त्रिफलादिभिर्विरेचन दद्यात्। व्योषाद्य वा–"व्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत् । सर्वैं समा समसिता क्षौद्रेण गुटिका[३] कृता॥" (हृ क अ २।२१) इति वा, दद्यात् । अथवा पयसा–क्षीरेण, मृद्वीकाना रसेन वा, आरग्वध विरेचन दद्यात् । त्रिफला त्रायन्ती वा पयसा ज्वरी पिबेत्।

आ० र०–विरेचनमाह–पक्वे त्विति । श्यामा–श्याम-मूला त्रिवृत्। त्रिवृत्–अरुणमूला । केसर–नागकेसरम् । सितया मोदक कृत्वा मधुना लिह्यात्।

१ अ इ पुस्तकयो समुपलब्धमिद श्लोकार्द्धम्। २ श्लोकार्द्धमिद हेमाद्रिसम्मतम्। ३ 'टिकीकृता' ट.।

व्योषाद्य विरेचनमतिदिशति–व्योषाद्य वेति। तच्च विरे-चनकल्पोक्त "व्योषत्रिजातकाम्भोद" इत्यादि।

विरेचनषट्कमाह–द्राक्षाधात्रीरस तद्वदिति । तत्र त्रीणि धात्रीहरीतक्यारग्वधैर्द्राक्षायुक्तै । त्रीण्यारग्वधत्रिफलात्रा-यमाणाभि पयोयुक्ताभि । सङ्ग्रहे तु (चि अ २)–"रस-मामलकाना वा घृतभृष्ट ज्वरापहम्। लिह्याद्वा त्रिवृतश्चूर्णं कृष्णात्रिफलयोस्तथा॥ सर्पिर्मधुभ्यां त्रिफला पिबेद्द्राक्षा-रसेन वा। सघृत त्रिफलाक्काथ सर्पिषा वा विना घृतम्॥ पयोनुपानमुष्ण वा मृद्वीकास्वरस पिबेत्।" इति । वङ्ग-सेने तु (ज्वराधिकारे श्लो ७२७)–"मधुकारग्वधद्राक्षा तिक्तायासफलत्रिकै । सपटोलैर्जल भेदि ज्वर हन्ति त्रिदो-षजम्॥ अरोचके गात्रसादे वैवर्ण्येऽङ्गमलादिषु। शान्तज्व-रेऽपि शोध्य स्यादनुबन्धभयान्नर.॥" इति।

**विरिक्तानां च संसर्गी मण्डपूर्वा यथाक्रमम्।**

स०–विरिक्ताना ज्वरिणा चशब्दाद्वमिताना च यथाक्रम–क्रमानतिक्रमेण, ससर्गी कर्तव्येत्यध्याहार्यम्। मण्ड पूर्वं–प्रथ-मो, यस्या सैवम्। मण्ड प्रथमं दत्त्वाऽनन्तरं पेयाविलेप्यादयो यथाक्रम देया । कृतवमनविरेचनानन्तरं य पेयाद्यवचारणा-क्रम स ससर्गीत्युच्यते।

आ० र०–विरेचनानन्तर पथ्यमाह–विरिक्तानां चेति। संसर्गी–पेयादिक्रम, "पेया विलेपी" (हृ सू अ १८।२९) इत्यादिक ।

**च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा॥ १०२॥**
**पक्वोऽपि हि विकुर्वीत दोषः कोष्ठे कृतास्पदः।**

स०–ज्वरेणोत्क्लिष्ट–उत्क्लेशित[५] ज्वरोत्क्लिष्ट, मल–पुरीषाख्य, च्यवमान–पतन्त, सदा उपेक्षेत[६]–न तद्विधारणे प्रयत्न कुर्यात्। ननु, औषधानि(येन) किमित्यसौ न विध्रीयते[७] इत्याह–पक्वो-ऽपीत्यादि। दोष–पुरीषाख्यो, यत पक्व । अपिशब्दा-त्किमुतापक्व[८] कोष्ठे–आमपक्वाशयाश्रयाख्ये, कृत–गृहीत, आस्पद–अवस्थिति, येन स एवभूतो विकुर्वीत–विकार कुर्यात्।

आ० र०–स्वयप्रवृत्ते. स्तम्भन निषेधयति–च्यवमा-नमिति।

**अतिप्रवर्तमानं वा पाचयन् सङ्ग्रहं नयेत्॥ १०३॥**
**आमसङ्ग्रहणे दोषा दोषोपक्रम ईरिताः।**

स०–अतिप्रवर्तमान वा त मल अपक्व पाचयन् सङ्ग्रह नयेत्। न त्वाम एव सङ्ग्रहीतव्य इत्याह—आमसङ्ग्रहण इत्यादि। आमशब्द पुरीषाख्यस्य दोषस्य पच्यमानावस्थोपलक्षणार्थं ।

१ 'विरेचनम्' फ । २ 'कृतम्' फ । 'श्रृतम्' स द्व । ३ 'ज्वरेऽपि० न्नरै' वङ्ग.। ४ 'णारूपक्रम' ट । ५ 'त मल' ट । ६ 'त। ननु' ड ध । ७ 'षधनिमित्त कि' ट । ८ 'हणाद्दोषो दोषोपक्रम ईरित' फ ।

आमस्य–अपक्वस्य दोषस्य, सङ्ग्रहणमामसङ्ग्रहण तस्मिन्नाम-सङ्ग्रहणे ये दोषा भवन्ति ते दोषोपक्रमे–दोषोपक्रमणीयेऽध्याये, ईरिता–उक्ता । तथा च तत्रोक्तम् (हृ सू अ १३।३१)–"उत्क्लिष्टानध ऊर्ध्वं वा न चामान् वहत स्वयम् । धारयेदौषधैर्दोषान् विवृतास्ते हि रोगदा ॥" इति । तस्मादामसङ्ग्रहणार्थमौषध न देयम् ।

आ० र०–[अति]प्रवृत्तौ पाचनपूर्वक स्तम्भनं कार्यमित्याह–अतिप्रवर्तमान वेति ।

तथा, आमज्वरेऽप्यामनिर्हरणार्थमौषध न देयम्, इति प्रतिपादयन्नाह—

**पाययेद्दोषहरणं मोहादामज्वरे तु यः ॥ १०४ ॥**
**प्रसुप्तं कृष्णसर्पं स कराग्रेण परामृशेत् ।**

स०–तुर्व्यतिरेके भिन्नक्रम । यस्तु मोहात्–अज्ञानात्, भिषक्पापो दोषहरणमामज्वरे पाययेत् स स्वयमनर्थकारी सुप्त कृष्णसर्पं करस्याग्रेण परामृशेत्–स्पृशेत् । अतिप्रलेवाय पश्यतैवमुक्त तन्त्रकृता । तत्र च वाक्ये रूपकाख्योऽलङ्कार । तस्य चैतल्लक्षणम्–"तदपरमौपम्ये सति यस्मिन् स्याद्वाक्ययोर्योग ।" अस्योदाहरणम्–"य सेवते कुनृपतिं कुरुते बधिरस्य कर्णजाप स ।" इति ।

आ० र०–आमज्वरे शोधन निषेधयति–पाययेद्दोषहरणमिति ।

**ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ॥ १०५ ॥**

स०–ज्वरेण क्षीणस्य पुसो न वमनं हित न च विरेचन हितम् ।

आ० र०–ज्वरक्षीणस्य शोधनं निषेधयति–ज्वरक्षीणस्येति ।

तर्हि कथ दोषनिर्हरण तस्य? इत्याह—

**कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ।**

स०–तस्य काम–यथेष्ट कृत्वा, पयसा निरूहैर्वा मलान् हरेत् ।

आ० र०–ज्वरक्षीणस्य पय.पानं बस्तिकर्म च शोधनार्थं विधत्ते–काम त्विति ।

**क्षीरोचितस्य प्रक्षीणश्लेष्मणो दाहतृड्वतः ॥ १०६ ॥**
**क्षीरं पित्तानिलार्तस्य पथ्यमप्यतिसारिणः ।**

स०–क्षीरमुचित–सात्म्य, यस्य तस्य क्षीरोचितस्य, तथा प्रकर्षेण क्षीण श्लेष्मा यस्य तस्य प्रक्षीणश्लेष्मण, तथा दाहश्च तृट् च ते विद्येते यस्य तस्य दाहतृड्वत, अत एव पित्तानिलाभ्यामार्तस्य–पीडितस्य, क्षीर पथ्यम् । अतिसारिणोऽपि पथ्यम्, किं पुन प्रक्षीण श्लेष्मा यस्य तस्य क्षीरोचितस्य पूर्वोक्तविशेषणविशिष्टस्य क्षीर न पथ्यम्? इत्यपि शब्दार्थ ।

आ० र०–पय पानेऽधिकारिणमाह–क्षीरोचितस्येति । अतिसारिणोऽपि–किं पुन शोध्यस्य ।

**तद्वपुर्लङ्घनोत्तप्तं प्लुष्टं वनमिवाग्निना ॥ १०७ ॥**
**दिव्याम्बु जीवयेत्तस्य ज्वरं चाशु नियच्छति ।**

स०–तच्च–क्षीर, लङ्घनोत्तप्त वपुर्जीवयेत्–कायस्य सप्राणतामुत्पादयेत् । किं किमिव? अग्निना–दावेन, प्लुष्ट वन यथा दिव्याम्बु जीवयेत्–प्ररोहयेत्, तथा वपु क्षीरमिति । लङ्घनशब्देनात्र सामान्य लङ्घनवाच्य वस्तु भण्यते । "शरीरलाघवकर यद्द्रव्य कर्म वा पुन । तल्लङ्घनमिति ज्ञेयम्" इत्येवलक्षणम्, न तु विशिष्टमुपवासलक्षणम्, योग्यतावशात् । तस्य–ज्वरिण पुस, तत्–क्षीर, आशु ज्वर च नियच्छति । न केवलं वपुर्जीवयेदिति चार्थ ।

आ० र०–क्षीरगुणानाह–तद्वपुरिति । दिव्याम्बु–वृष्ट्यम्बु, यथा दग्ध वनं जीवयेत् तथा क्षीर वपुर्जीवयेत् ।

**संस्कृतं शीतमुष्णं वा तस्माद्धारोष्णमेव वा ॥ १०८ ॥**
**विभज्य काले युञ्जीत ज्वरिणं हन्त्यतोऽन्यथा ।**

स०–यत एव महागुणं क्षीर तस्माद्धेतो सस्कृत–द्रव्यान्तरेण, तथा शीतमुष्ण वेति कृत्वा, अथवा धारोष्णमेव काले विभज्य, युञ्जीत–यथाविषय काले प्रयोजयेत् । अत –यथानिरूपितात् क्षीरोपयोगविषयात्, अन्यथा–अन्येन प्रकारेण, प्रयुक्त क्षीर ज्वरिण हन्ति ।

आ० र०–क्षीरविशेषे नियममाह–सस्कृतमिति । सस्कृत–औषधसिद्धम् । तच्च शीतमुष्ण वा दोषवशात् । धारोष्ण तूष्णमेव । तद्वत्–संस्कृतसमफलम् ।

**पयः सशुण्ठीखर्जूरमृद्वीकाशर्कराघृतम् ॥ १०९ ॥**
**शृतशीतं मधुयुतं तृड्दाहज्वरनाशनम् ।**

स०–क्षीर शुण्ठ्यादियुत शृतमनन्तर शीत मधुयुत तृड्दाहजिदित्यर्थ ।

आ० र०–संस्कृत क्षीरमाह–पय इति । तत्र शुण्ठ्यादिभिस्त्रिभि पाक, शर्कराघृतयो पक्वोष्णे प्रक्षेप, मधुनः पक्वशीते ।

**तद्वद् द्राक्षाबलायष्टीसारिवाकणचन्दनैः ॥ ११० ॥**
**चतुर्गुणेनाम्भसा वा पिप्पल्या वा शृतं पिबेत् ।**

स०–तेनैव पूर्वोक्तेन पयसा तुल्य–तद्वत् । यथा पूर्वोक्तं शृतशीतं तृड्दाहज्वरहृत् तथा द्राक्षादिभि शृतमनन्तर शीतं मधुयुत तृडादिजिदित्यर्थ । अथवा क्षीर चतुर्गुणेन जलेन शृत पिबेत् । अथवा पिप्पल्या शृत पिबेत् ।

आ० र०–क्षीरान्तरमाह–तद्वदिति । तद्वत्–शर्करादियुतम् ।

क्षीरद्वयमाह–चतुर्गुणेनाम्भसेति ।

१ 'दोषदा' ट ड ध । २ 'ङ्ग्रहार्थं' ट ध । ३ 'पाशो' ध । ४ 'स सुप्त' ड ध । ५ 'लपाय' ट ड ध । ६ 'तस्मातुरस्य, त' ट । ७ 'थ्यमप्यतिसारिण, किं' ड ध ।

१ 'तद्वद्दा' हे । २ 'अतोऽन्येन प्र' ध । ३ 'योगिवि' ड. । ४ 'दिशृत' ड ध । ५ 'तेन पू' ड.ध. ।

**कासाच्छ्वासाच्छिरःशूलात्पार्श्वशूलाच्चिरज्वरात् ॥**
**मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ।**

स०–पञ्चमूलेन शृत क्षीर पीत्वा कासादिभ्यो मुच्यते । मुच्यत इति कर्मकर्तरि तङ् । चिरज्वरो–दीर्घकालानुबन्धी ज्वर ।

आ० र०–क्षीरान्तरमाह–कासाच्छ्वासादिति ।

**शृतमेरण्डमूलेन बालबिल्वेन वा ज्वरात् ॥ ११२ ॥**
**धारोष्णं वा पयः पीत्वा विबद्धानिलवर्चसः ।**
**सरक्तपिच्छातिसृतेः सतृट्शूलप्रवाहिकात् ॥११३॥**

स०–एरण्डमूलेनाथवा बालबिल्वेन शृतमथवा धारोष्ण क्षीर पीत्वा पुरुषो ज्वराद्विमुच्यते । किम्भूताज्ज्वरात् ? विबद्धानिलवर्चस । विबद्धे–विशेषेण बद्धे, असम्यक्प्रवर्तनादनिलवर्चसी यस्मिन् ज्वरे स विबद्धानिलवर्चा , तस्माज्ज्वराद्विमुच्यते । तथा, रक्त च पिच्छा च रक्तपिच्छे, ताभ्यामुपलक्षिता अतिसृति –अतीसार , सह तया वर्तते यो ज्वर , तस्मात्तथाविधा ज्वरात् तथा सह तृषा सह शूलेन तया प्रवाहिकया–निर्श्वारिकापरसञ्ज्ञया, वर्तते यस्तस्मात् तथाविधाज्ज्वरात् प्रमुच्यते ।

आ० र०–क्षीरत्रयमाह–शृतमेरण्डमूलेनेति । अतिसृति –अतिसार , सरक्तपिच्छयो पिच्छा अतस्तूदकवत्(?)।

**सिद्धं शुण्ठीबलाव्याघ्रीगोकण्टकगुडैः पयः ।**
**शोफमूत्रशकृद्वातविबन्धज्वरकासजित् ॥ ११४ ॥**

स०–शुण्ठ्यादिभि सावित पय शोफादिजित् ।

आ० र०–क्षीरान्तरमाह–सिद्धमिति । गुडेन पक्वोष्णप्रक्षिप्तेन सिद्धत्वम् ।

**वृश्चीवबिल्ववर्षाभूसाधितं ज्वरशोफनुत् ।**

स०–वृश्चीवादिभि साधित पयो ज्वरशोफनुदिति । वृश्चीव –सूक्ष्मपुनर्नव । स्थूलपुनर्नवस्तु–वर्षाभू । पुनर्नवद्वय बिल्वं चात्र योज्यम् ।

आ० र०–क्षीरान्तरमाह–वृश्चीवेति । वृश्चीववर्षाभ्वौ–पुनर्नवे ।

**शिशिपासारसिद्धं च क्षीरमाशु ज्वरापहम् ॥ ११५ ॥**

स०–शिंशिपासारेण सिद्ध–शृत क्षीरमुपयुक्त, आशु–न तु चिरेण, ज्वरहृत् । क्षीरस्य श्रपणे विधिरतीसारचिकित्सितोक्त (हृ चि अ ९।३९)–"पयस्यु क्वाथ्य मुस्ताना विंशति" इत्यनुसारेणानुकल्प्य । तन्त्रान्तरे त्वेवमुक्तम्–"द्रव्यादष्टगुण क्षीर क्षीरात्तोय चतुर्गुणम् । क्षीरावशेष कर्तव्य क्षीरक्वाथे त्वयं विधि ॥" इति । ननु, किं वातपित्तोत्तरे ज्वरे घृत प्रधानमाश्रीयता पूर्ववचनप्रामाण्यात् ? अथवा क्षीर प्रधानमेतद्वचनप्रामाण्यात् ? इत्यत्र सशय । अत्रोच्यते । उभयमपीद घृत क्षीर च वातपित्तोत्तरे ज्वरे प्रधानम्, अवस्थावशात् सात्म्यवशाच्च क्वचित्किञ्चिदुपयुज्यते ।

आ० र०–क्षीरान्तरमाह–शिशपासारसिद्ध चेति ।

**निरूहस्तु बल वह्निं विज्वरत्वं मुदं रुचिम् ।**
**दोषे युक्तः करोत्याशु पक्वे पक्वाशय गते ॥ ११६ ॥**
**पित्तं वा कफपित्तं वा पक्वाशयगत हरेत् ।**
**स्रंसन त्रीनपि मलान् बस्तिः पक्वाशयाश्रयान् ११७**

स०–निरूहो युक्तो दोषे पक्वे तथा पक्वाशय गते सति बलादीन् द्रागेव करोति । पित्त केवल कफपित्त वा पक्वाशयाश्रित स्रंसन–विरेचन, हरेत् । बस्ति प्रयोजितस्त्रीनपि मलान्–वाताद्यान् हरेत् । कीदृशान् ? पक्वाशयसाश्रितान् ।

आ० र०–निरूहगुणानाह–निरूहस्त्विति । पक्वाशयाश्रयान्–पक्वाशयमाश्रित्य, मलास्तु–सर्वगतान्, हरेत् । अथ तु पक्वाशयगतानित्यपकर्ष एव, पक्वाशयादूर्ध्वं हि पित्ताशय ।

**प्रक्षीणकफपित्तस्य त्रिकपृष्ठकटिग्रहे ।**
**दीप्ताग्नेर्बद्धशकृतः प्रयुञ्जीतानुवासनम् ॥ ११८ ॥**

स०–प्रक्षीणे कफपित्ते यस्य पुसस्तथा दीप्ताग्नेर्बद्धवर्चसस्त्रिकपृष्ठकटिग्रहे सत्यनुवासन प्रयुञ्जीत ।

आ० र०–निरूहाङ्गेऽनुवासनेऽधिकारिणमाह–प्रक्षीणकफपित्तस्येति ।

**पटोलनिम्बच्छदनकटुकाचतुरङ्गुलैः ।**
**स्थिराबलागोक्षुरकमदनोशीरवालकैः ॥ ११९ ॥**
**पयस्यर्धोदके क्वाथं क्षीरशेषं विमिश्रितम् ।**
**कल्कितैर्मुस्तमदनकृष्णामधुकवत्सकैः ॥ १२० ॥**
**बस्ति मधुघृताभ्या च पीडयेज्ज्वरनाशनम् ।**

स०–पटोलादिभि क्वाथ क्षीरेऽर्धोदके क्षीरशेष तथा मिश्रित कल्कीकृतैर्द्रव्यैर्मुस्तादिभिर्मधुघृताभ्या च योजित बस्ति ज्वरनाशन दद्यात् ।

आ० र०–निरूहमाह–पटोलनिम्बेति । पटोलनिम्बयोश्छदन–पत्रम् । पयसो द्वौ भागौ पटोलादिक्वथितस्योदकस्यैको भाग इत्यर्धोदकत्वम् । न स्याप्यु(दु)क्तरसामित्यादिवचनात्(?)समत्वे प्राप्तेऽर्धत्वविधि ।

**चतस्रः पर्णिनीर्यष्टीफलोशीरनृपद्रुमान् ॥ १२१ ॥**
**क्वाथयेत्कल्कयेद्यष्टीशताह्वाफलिनीफलम् ।**
**मुस्तं च बस्तिः सगुडक्षौद्रसर्पिर्ज्वरापहः ॥ १२२ ॥**

स०–मुद्गपर्णी माषपर्णी शालिपर्णी पृश्निपर्ण्यादि(चेति)–चतस्र पर्णिनी , यष्टीफलादीश्च क्वाथयेत् । फल–मदनफलम् । तथा, यष्ट्यादीन् कल्कयेत्, इत्येष सगुडादिर्बस्तिर्ज्वरहृत् ।

१ "पञ्चमूल्यत्र कनीयसी, वातपित्तहरत्वात् ।" इति श्रीकण्ठदत्त । २ 'मूलशृत' म च । ३ 'तैमानेऽनिल' ट । ४ 'निम्लाम्भिका' 'निस्ताभिका' ध. । ५ 'वा' अ । ६ 'नमश्नीयात् पू' ट,ड. ।

१ 'याश्रितान्' अ अरुण. । २ 'वा वातपित्ताशया' ड । 'वा पित्ताशया' ध ।

आ० र०-निरुहान्तरमाह-चतस्र पर्णिनीरिति। चतस्र पर्णिनी -मुद्गमाषशालपृश्निपूर्वा । फल-मदनफलम् । नृपद्रुम -आरग्वध । फलिनी-प्रियङ्गु । फल-मदनफलम्। सङ्ग्रहे तु (चि अ २)-"त्रायमाणामृतायष्टीमदनाशुमती-द्वयै । सबलाचन्दनवृषैर्जाङ्गलैश्च मृगद्विजै ॥ क्वाथे कृते क्षिपेत्पिष्ट्वा फलयष्टिकणाघनम् । स सद्योज्वरहा बस्ति साज्यक्षौद्रोऽल्पसैन्धव ॥ आम्रादीना त्वच शङ्ख चन्दन मधुकोत्पलम् । स्वर्णगैरिकमञ्जिष्ठामृणालाञ्जनपद्मकम् ॥ क्षीरेण कल्कित बस्तिं शीत समगुशर्करम् । दाहज्वरहर दद्यात् सिद्ध तैश्चानुवासनम् ॥" इति ।

**जीवन्तीं मदनं मेदा पिप्पलीं मधुकं वचाम् ।**
**ऋद्धिं रास्ना बलां बिल्वं शतपुष्पां शतावरीम् १२३**
**पिष्ट्वा क्षीरं जलं सर्पिस्तैलं चैकत्र साधितम् ।**
**ज्वरेऽनुवासनं दद्याद्यथास्नेहं यथामलम् ॥ १२४ ॥**

स०-जीवन्त्यादीनि द्रव्याणि स्नेहस्य चतुर्भागमात्राणि जलेन पिष्ट्वा क्षीर स्नेहसम तैलात्सर्पिषश्च चतुर्गुण जल च तैलसर्पिर्द्रव्याच्चतुर्गुणमित्येकत्र साधित पक्कमेतत् ज्वरेऽनुवासन दद्यात्। यथास्नेह यथामल-यो यस्मिन् ज्वरे दोषे[4]-वातादौ, य स्नेहो योग्यस्तत्र त, दद्यात् ।

आ० र०-अनुवासनमाह-जीवन्तीमिति । क्षीरस्य च त्वारो भागा, जलस्य चत्वार, सर्पिष एक, तैलस्यैक, कल्कस्य सार्ध, इत्येकत्र-मिलित, साधयेत् । स्नेह -शरीरस्निग्धत्वम्, तदनुसारेण मलानुसारेण च कल्पना । सङ्ग्रहे तु ( चि अ २ )-"चन्दनागरुकाश्मर्यपटोलमदनोत्पलै. । पटोलारिष्टमदनगुडूचीमधुकैरपि ॥" इति ।

**ये च सिद्धिषु वक्ष्यन्ते बस्तयो ज्वरनाशनाः ।**

स०-ये च बस्तय सिद्धिषु-बस्तिकल्पाध्याये[5], वक्ष्यन्ते ज्वरनाशनास्ते च, 'देया' इति शेष ।

आ० र०-बस्त्यन्तरमतिदिशति-ये च सिद्धिष्विति । सिद्धिषु-कल्पस्थाने । ते च योज्या इति शेष. । इति जीर्णज्वर ।

**शिरोरुग्गौरवश्लेष्महरमिन्द्रियबोधनम् ॥ १२५ ॥**
**जीर्णज्वरे रुचिकरं दद्यान्नस्यं विरेचनम् ।**
**स्नैहिकं शून्यशिरसो दाहार्ते पित्तनाशनम् ॥१२६॥**

स०-जीर्णज्वरे विरेचनाख्य नस्य दद्यात्। कीदृश तन्नस्य स्यात्? शिरसो रुज गौरव च श्लेष्माण च हरति तच्छील तत्। तथा, इन्द्रियाणा-चक्षुरादीना च, बोधनम् । तथा, रुचिकृत्। शून्यशिरस पुम स्नैहिक-स्नेहेन मिश्र स्निग्ध, नस्य दद्यात्। दाहार्ते शिरसि पित्तहर नस्य दद्यात् ।

आ० र०-अथ ज्वरोपद्रवा । तत्र शिर शूलादिषु नस्यमाह-शिरोरुग्गौरवश्लेष्महरमिति। विरेचन-शोधनम्। स्नैहिक-बृहणम् । पित्तनाशन-शमनम् ।

**धूमगण्डूषकवलान् यथादोषं च कल्पयेत् ।**
**प्रतिश्यायास्यवैरस्यशिरःकण्ठामयापहान् ॥ १२७ ॥**

स०-धूमादींश्च यथादोष कल्पयेत्। किम्भूतान्? प्रतिश्यायादिघ्नान् ।

आ० र०-प्रतिश्यायादौ धूमादीनाह-धूमगण्डूषकवलानिति ।

**अरुचौ मातुलुङ्गस्य केसरं साज्यसैन्धवम् ।**
**धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत् १२८**

स०-अरुचौ सत्या बीजपूरकस्य केसर सघृतसैन्धवमास्येन धारयेदिति सम्बन्ध । अथवा धात्र्यादीना कल्क धारयेत्।

आ० र०-अरुचौ कवल(कल्क)द्वयमाह-अरुचाविति । वङ्गसेने तु (ज्वराधिकारे श्लो २३१)-"शर्करादाडिमाभ्यां च द्राक्षादाडिमयोस्तथा। वैरस्ये धारयेत्कल्क गण्डूष च तथा घृतम् ॥ (श्लो २५९)-हरीतकी प्रियङ्गुश्च पिप्पली लोध्रमेव च । दार्वी हरिद्रा तेजोह्वा सक्षौद्र मुखधावनम् ॥ एतेन कटुभावश्च मुखरोगश्च शाम्यति । वक्त्र विशदतामेति भक्तच्छन्दश्च जायते ॥ ( श्लो २८० )-अजाजीशर्करायुक्तो दाडिमस्वरसेन तु । रुचिष्यो मधुना युक्त कर्तव्य कवलग्रह ॥" इति ।

**यथोपशयसंस्पर्शान् शीतोष्णद्रव्यकल्पितान् ।**
**अभ्यङ्गालेपसेकादीन् ज्वरे जीर्णे त्वगाश्रिते ॥१२९॥**
**कुर्यादञ्जनधूमांश्च तथैवागन्तुजेऽपि तान् ।**

स०-त्वगाश्रिते जीर्णज्वरेऽभ्यङ्गादीन् कुर्यात्। यथोपशय-यथासुखावह, सस्पर्शो येषा तान्, तथा शीतवीर्यैरुष्णवीर्यैश्च द्रव्यै कल्पितान्-योजितान्। तथा, अञ्जनधूमांश्च कुर्यात्। अञ्जनधूमानागन्तुजेऽपि ज्वरे तथैव कुर्यात्। संयोगत्वादागन्तुजेऽप्येतेऽनिषिद्धा एव। तानिति पुन कृतमतिशयार्थम् । विशेषेणागन्तुजेऽपि ज्वरे-भूतविषाद्युद्भवे, तान् कुर्यादित्यर्थ ।

आ० र०-त्वग्गते ज्वरेऽभ्यङ्गादीनाह-यथोपशयसंस्पर्शानिति । ते च शीताभिलाषिण शीतैर्द्रव्यै शीतस्पर्शाः कल्प्या, उष्णाभिलाषिण उष्णैरुष्णस्पर्शा । आदिशब्दादवगाहादय. । अञ्जनधूपाश्च त्वग्गते कुर्यात् ।

१ 'क्षौद्र ससै' स मू । २ 'द्यात्तथा स्ने' इ स स । 'द्यथादोष यथाबलम्' इति क्वचित् । ३ "जीवन्त्याद्ये क्षीरजलसर्पिस्तैलाना समानम्। स्नेहाच्चतुर्थांश पिष्टानाम्। तथा स्नेह यथामलमित्यनेनैतदुच्यते-दोषमधिक ज्वरे ज्ञात्वा कदाचित् सर्पिरधिकमत्र कुर्यात् कदाचित्तैलमिति।" इतीन्दु । ४ 'षे वा य ' ट । ५ 'कल्पनाध्या' ट।

१ 'थायोग क' ट ड ध । २ 'था हितम्' वङ्ग । ३ 'गाश्रये जी' ड ध । ४ 'सद्योक्तत्वा' ड. । ५ 'न्तुकेऽपि' ट । 'न्तुजे ज्व' ड. ।

प्रसङ्गादागन्तुजे नस्यादीनाह–तथैवागन्तुजेऽपीति । वङ्गसेने त्वभ्यङ्गतैलान्युक्तानि (ज्वराधिकारे श्लो ७७७)–"लाजामधुकमञ्जिष्ठामूर्वाचन्दनसारिवा । तैल षड्चरण नाम ह्यभ्यङ्गाज्ज्वरनाशनम् ॥ लाक्षा निशा कुष्ठशुण्ठी मञ्जिष्ठा च सुवर्चिका । मूर्वा च चन्दन सिद्ध तैल तक्रेऽथ षड्गुणे ॥ अभ्यङ्गेन प्रशमयेद्दाह शीतज्वर नृणाम् । (श्लो ६२८)–दध्न ससारकस्यात्र तक्र कट्वरमिष्यते ॥ (श्लो ७९१)–स्वर्जिकाकुष्ठमञ्जिष्ठा[लाक्षामूर्वामहौषधै । सक्षीरै साधित तैलमभ्यङ्गाद्दाहशीतनुत् ॥ बलामधुकमञ्जिष्ठा]पद्मापद्मकचन्दनै । समुद्रफेनह्रीबेरजनीसारिवोत्पलै ॥ पिष्टैस्तैल पचेद्देवैरजाक्षीर चतुर्गुणम् । वातपित्तज्वराज्जीर्णात्तेनाभ्यक्तो विमुच्यते ॥" इति ।

**दाहे सहस्रधौतेन सर्पिषाऽभ्यङ्गमाचरेत् ॥ १३० ॥**

स०–दाहे सति सर्पिषा सहस्रधौतेनाभ्यङ्गमाचरेत् ।

आ० र०–दाहस्यौषधान्याह–दाहे सहस्रधौतेनेति । सहस्रधौतेन–सहस्रकृत्वो धौतेन । यावति मज्जति तावच्छीतोदके घृत प्रक्षिप्य हस्तेन मर्दयेत्, तदुदक स्रावयेत्, इत्येको वार , एव सहस्रम् ।

**सूत्रोक्तैश्च गणैस्तैस्तैर्मधुराम्लकषायकैः ।**
**दूर्वादिभिर्वा पित्तघ्नैः शोधनादिगणोदितैः ॥ १३१ ॥**
**शीतवीर्यैर्हिमस्पर्शैः क्वाथकल्कीकृतैः पचेत् ।**
**तैलं सक्षीरमभ्यङ्गात्सद्यो दाहज्वरापहम् ॥ १३२ ॥**
**शिरो गात्रं च तैरेव नातिपिष्टैः प्रलेपयेत् ।**
**तत्क्वाथेन परीषेकमवगाहं च योजयेत् ॥ १३३ ॥**
**तथाऽऽरनालसलिलक्षीरशुक्तघृतादिभिः ।**

स०–सूत्रोक्तै–सूत्रस्थानोदितै , मधुराम्लकषायकैर्गणै । तत्र मधुरो गणो–"घृतहेम" (हृ सू अ १०।२२) इत्यादि, अम्लो गणो–"धात्रीफलाम्लीका" (हृ सू अ १०।२५) इत्यादि, कषायो गण –"पथ्याऽक्ष" (हृ सू अ १०।३१) इत्यादि, तत्र चैतैर्मधुराम्लकषायैर्वर्गै । तत्र दूर्वादिभिर्गणै –"दूर्वाऽनन्ता" (हृ सू अ १५।६) इति निर्दिष्ट एक, "न्यग्रोधादि" (हृ सू अ १५।४१) द्वितीय, तृतीयस्तु "पद्मकपुण्ड्रौ" (हृ सू अ १५।१२) इत्यादि, चतुर्थं "सारिवोशीर" (हृ सू अ १५।११) इत्यादि, एतै पूर्वोक्तैर्गणै पित्तघ्नै शोधनादिगणसङ्ग्रहोक्तै शीतवीर्यैर्हिमस्पर्शैर्भेषजैस्तथा स्पर्शतो वीर्यतश्च शीतगुणै , अक्वाथा क्वाथा कृता , अकल्का कल्का कृता , तै क्वाथकल्कीकृतैरेतैर्गणैस्तैल क्षीरेण सह पचेत् । तच्च पक्वमभ्यङ्गात्–म्रक्षणात्, सद्यो–न चिरेण कालेन, दाहज्वर जयेत् । न केवलमेतैर्गणैस्तैल पचेद्दाहज्वरशान्त्यै, यावत्तैरेव शिरो–मूर्धान, गात्र च नातिपिष्टै –किञ्चित्पिष्टै , प्रलेपयेत् । सुपिष्टैर्ह्येतै प्रत्युत दाह उत्पद्यते । तथा चोक्तम् (सङ्ग्रहे सू अ ७)–"श्लक्ष्णैर्शुष्कघनो लेपश्चन्दनस्यापि दाहकृत् । लग्नगतस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरो ॥" इति । अनेनैवाभिप्रायेण शीतज्वरे वक्ष्यति (श्लो १४१)–"तै सुपिष्टैश्च लेपयेत् ।" इति । गात्रग्रहणेनैव शिरोग्रहणे लब्धे पुन शिरोग्रहण विशेषार्थम् । विशेषेण शिरो लेपयेत्, तस्य विशेषेण ज्वराश्रयत्वात् । तथा चोक्तम्–"विमुक्तस्यापि हि शिरो ज्वरो यस्य न मुञ्चति । अविमुक्त स विज्ञेयो ज्वर पुनरुपैति तम् ॥" इति । तस्माच्छिरसो विशेषेण लेपनार्थं पृथगुपादानम् । तेषा गणाना क्वाथस्तत्क्वाथ , तेन परिषेकमवगाह च क्वाथपूर्णाया द्रोण्या योजयेत् । तथा, आरनालादिभि परिषेकादि योजयेत् ।

आ० र०–अभ्यङ्गार्थं तैलमाह–सूत्रोक्तैश्चेति । तैस्तैरित्यगणपठितैरपि । तैरेव–तैलद्रव्यै , तत्क्वाथेनारनालादिभिर्वा पृथक् परिषेकोऽवगाहश्च ।

**कपित्थमातुलुङ्गाम्लविदारीरोध्रदाडिमैः ॥ १३४ ॥**
**बदरीपल्लवोत्थेन फेनेनारिष्टकस्य वा ।**
**लिप्तेऽङ्गे दाहरुङ्मोहाश्छर्दिस्तृष्णा च शाम्यति १३५**

स०–कपित्थादिभिर्बदरीपल्लवोद्भवेन वा फेनेन लिप्तेऽङ्गे सति दाहादय शाम्यन्ति ।

आ० र०–दाहघ्न लेपत्रयमाह–कपित्थेति । मातुलुङ्गस्याम्ल केसरम् । अरिष्टको–रक्षाफल । वङ्गसेने तु (ज्वरा श्लो २५८)–"जिह्वातालुगलक्लोमशोषे मूर्ध्नि तु दापयेत् । केसर मातुलुङ्गस्य मधुसैन्धवसयुतम् ॥" इति ।

**यो वर्णितः पित्तहरो दोषोपक्रमणे क्रमः ।**
**तं च शीलयतः शीघ्रं सदाहो नश्यति ज्वरः १३६**

स०–यश्च दोषोपक्रमणीयाध्याये पित्तहर क्रमो वर्णित –उक्त, त च–क्रम, शीलयत –अभ्यसत , ज्वरो दाहेन सह नश्यति ।

आ० र०–सूत्रोक्त पित्तक्रममतिदिशति–यो वर्णित इति ।

**वीर्योष्णैरुष्णसंस्पर्शैस्तगरागुरुकुङ्कुमैः ।**
**कुष्ठस्थौणेयशैलेयसरलामरदारुभिः ॥ १३७ ॥**

---

१ 'षट्चरण ना' फ । २ 'नीगैरिकोत्पलै ॥ पिष्टैरेतै पचेत्तैल मस्तुक्षीर' वङ्ग । ३ "सहस्रधौत सर्पि –यत्तापित तापित शीतोदकेन शतश स्त्यानाक्रियते ।" इतीन्दु । ४ 'शीतैर्गणै ' ट ध ।

१ 'चेत्तद्दा' ड ध । २ 'क्ष्णपिष्टघ' ट । ३ 'च योज' ड ध । ४ "अम्ल –अम्लवेतस । बदरीपत्राणामम्लाना च मुसलक्षुण्णाना फेन उद्गच्छति । अरिष्टको–निम्ब ।" इतीन्दु । "अम्ल–काञ्जिकम् । अरिष्टो–निम्ब फेनिलावृक्षो वा । फेनकल्पनामाह–बदरीपल्लवान् काञ्जिकपिष्टान् काञ्जिकपूर्णभाजने निक्षिप्य करेण विलोडयेत्, ततो य फेन उत्तिष्ठेत् तेन लिम्पेत् ।" इति डल्हण । ५ 'द्भजेन वा' अ । ६ 'च' इ स सु ।

**नखरास्नापुरवचाचण्डैलाद्वयचोरकैः ।**
**पृथ्वीकाशिग्रुसुरसाहिस्राध्यामकसर्षपैः ॥ १३८ ॥**
**दशमूलामृतैरण्डद्वयपत्तूररोहिषैः ।**
**तमालपत्रभूतीकशल्लकीधान्यदीप्यकैः ॥ १३९ ॥**
**मिशिमाषकुलत्थाग्निप्रकीर्यानाकुलीद्वयैः ।**
**अन्यैश्च तद्विधैर्द्रव्यैः शीते तैलं ज्वरे पचेत् ॥१४०॥**
**क्वथितैः कल्कितैर्युक्तैः सुरासौवीरकादिभिः ।**
**तेनाभ्यङ्ग्यात्सुखोष्णेन, तैः सुपिष्टैश्च लेपयेत् ॥१४१॥**
**कवोष्णैस्तैः परीषेकमवगाहं च कल्पयेत् ।**
**केवलैरपि तद्वच्च शुक्तगोमूत्रमस्तुभिः ॥ १४२ ॥**
**आरग्वधादिवर्गं च पानाभ्यञ्जनलेपने ।**
**धूपानगरुजान् यांश्च वक्ष्यन्ते विषमज्वरे ॥ १४३ ॥**
**अङ्ग्यनग्निकृतान् स्वेदान् स्वेदि भेषजभोजनम् ।**
**गर्भभूवेश्मशयनं कुथकम्बलरल्लकान् ॥ १४४ ॥**
**निर्धूमदीप्तैरङ्गारैर्हसन्तीश्च हसन्तिकाः ।**
**मद्यं सत्र्यूषणं तक्रं कुलत्थव्रीहिकोद्रवान् ॥ १४५ ॥**
**संशीलयेद्वेपथुमान् यच्चान्यदपि पित्तलम् ।**
**दयिताः स्तनशालिन्यः पीना विभ्रमभूषणाः ॥१४६॥**
**यौवनासवमत्ताश्च तमालिङ्गेयुरङ्गनाः ।**
**वीतशीतं च विज्ञाय तास्ततोऽपनयेत्पुनः ॥ १४७ ॥**

स०–वीर्योष्णैरुष्णसस्पर्शैः–उभयथा वीर्यतः स्पर्शतश्चोष्णैः-स्तगरादिभिर्द्रव्यैः, [अन्यैश्च–] अपरैरपि, तद्विधैः–उष्णवीर्यैः उष्णसस्पर्शैश्च, क्वाथीकृतैः कल्कीकृतैश्च सुरादिभिः–अम्लपाकरसैः, [शीते–] शीतज्वरे एतद्विषये, तैलं पचेत् । तेन–तैलेन, सुखोष्णेनाभ्यङ्ग्यात्–म्रक्षयेत् ।

तैश्च–पूर्वोक्तैर्द्रव्यैः, सुपिष्टैः–अतिश्लक्ष्णैः, लेपयेत् । तैश्च किञ्चिदुष्णैः परिषेकमवगाहं च कल्पयेत्–योजयेत् । तद्वच्च–तथैव, शुक्तादिभिः केवलैश्च परिषेकादिकं कल्पयेत् । "आरग्वधेन्द्रव" (हृ. सू. अ.१५।१७) इत्यादिं च पानाभ्यञ्जनलेपने कल्पयेत् । अगरुजान् धूपान् कल्पयेत् । यांश्च धूपान् विषमज्वरे वक्ष्यन्ते तांश्च कल्पयेत् ।

तथा स्वेदान् शीलयेत् । किम्भूतान्? अग्निकृताननग्निकृतांश्च–स्वेदविध्युक्तान् । तथा स्वेदयति साधु स्वेदि यद्भेषजं भोजनं च तच्च संशीलयेत् । तथा गर्भे–गर्भगृहाभ्यन्तरे, यद्भूवेश्म–भूमिगृहं, तत्र शयनं–शय्याम्, तथा कुथादीनावरणविशेषान्, तथा हसन्तिकाः–वह्निशकटिकाः, शीलयेत् । किम्भूताः? निर्धूमदीप्तैरङ्गारैर्हसन्तीरिव । तथा, मद्यादींश्च शीलयेत् । वेपथुमन्तमङ्गना आलिङ्गयेयुर्दयितादिगुणयुक्ताः । गतशीतं च विदित्वा ततस्ताः–योषाः, पुनरपनयेत् । एतच्च ब्रुवस्ताभिः सम्भोगाभिलाषं निवारयति ।

आ० र०–शीतस्यौषधान्याह–वीर्योष्णैरिति । पुरो–गुग्गुलु । पृथ्वीका–बाह्लिका । ध्यामक–कत्तृणम् । तमालपत्र–पत्रकम् । [ भूतीक–] भूस्तृणम् । प्रकीर्या–करञ्जः । क्वथितैः कल्कितैश्च तगरादिभिः सुरासौवीरकाद्यम्लद्रवयुक्तैः । तेन–तैलेन । तैः–तैलद्रव्यैः । केवलैः–जलपिष्टैः । अपिशब्दात् सुरादिपिष्टैः शुक्तादिभिः, तद्वत्–तगरादियुक्तैः केवलैरपि । सङ्ग्रहे तु ( चि अ २ )–"कुङ्कुमागरुकस्तूरीनखैलासुरदारुभिः । शैलेयचण्डात्वग्वक्रारास्नाकपिपुरामयैः ॥ पृथक्प्रदेहाः सर्वैर्वा शीतघ्ना दृढकल्कताः । वक्र–तगरम् । कपि–सिह्लक । आमय–कुष्ठम् । यवचूर्णं घृताभ्यक्तं पचेत् क्षीरे चतुर्गुणे । दर्वीप्रलेपिनं लेपं तं ज्वरार्तस्य योजयेत् ॥" इति । वक्ष्यते आचार्यः । हसन्ती–हास्यमिव कुर्वन्ती । हसन्तिका–शकटिका । सत्र्यूषणं मद्यादिपञ्चकम् । सङ्ग्रहे तु ( चि अ २ )–"अजाज्या सगुडः कल्कः सगुडं वाऽमृतारसम् । रसं वार्ताकफलजं पिबेद्वा मधुसंयुतम् ॥ मधुकागुरुकौन्तीनां कल्को व्याघ्रनखस्य च । मद्येन पीतः सक्षौद्रस्तीव्रशीतज्वरापहः ॥ आनाहे कालवित्कुर्यात्क्रियामलसकोदिताम् । पिप्पलीपिप्पलीमूलयवानीचव्यसाधिताम् ॥ यवागूं पाययेच्चैनमनिलस्यानुलोमनीम् । सोपद्रवोऽपि चेदेव ज्वरः शीतो न शाम्यति ॥ अत्युदीर्णेऽनिलकफे स्वे स्थाने पित्तधाम्नि वा । तक्रानुपानं त्रपुसं भक्षयित्वाऽनलं भजेत् ॥ आस्वेदसम्भवं स्विष्टेत्प्रावृतस्तद्वदातपे । ततो विमृदितः स्नातो युक्ताशी स्याद्गते ज्वरे ॥ शमं तौ पित्तवृद्ध्यैव प्रपद्येते स्वधाम च । निवर्तते ततः शीघ्रं वातश्लेष्मोद्भवो ज्वरः ॥" इति ।

अधुना सन्निपातचिकित्सितं ब्रूते—

**वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा ।**
**कफस्थानानुपूर्व्या वा तुल्यकक्षाञ्जयेन्मलान् ॥ १४८ ॥**

स०–हीनाधिकभावत्वेन विषमदोषजे सन्निपाते वर्धनेनैकदोषस्यार्थात् क्षीणस्य क्षीणयोर्वा, उच्छ्रितस्योच्छ्रितयोर्वा क्षपणेन, देशकालबलान्मलान् जयेत् । कथं विषमदोषजे सन्निपाते वर्धनेनैकदोषस्य सन्निपातज्वरस्योपशान्तिः? तस्माद्वर्धनमयु-

१ स्नामुखव' अ. । 'स्नामुरवचा' स मू । २ 'त्रपूती' इ स स । ३ 'भ्यज्य सु' अ । ४ 'प्रपिष्टै' स मू । ५ 'योजयेत्' स स । ६ 'शुक्त' स ढ ड ध. । ७ 'न् ये च व' अ फ स स । ८ 'भजेच्छीतार्दितो युक्त्या यथा' इ । ९ 'त तु वियतास्तास्त' फ । १० 'अग्निकृतान्–स्वेदविध्युक्तान्, अनग्निकृतान्–अर्कतापक्रोधमद्यायासादीन् । तथा' ट. । ११ 'कुथकम्बलादी' ट. ।

१ 'योषिता' ट । २ 'त्वब्रुस्ताः' स ढ । ३ 'पिबचाम' स ढ । ४ 'ल्किते' फ । ५ 'लेपन लेपं ज्वरार्तस्य प्रयोज' स ढ. । ६ 'नीचित्रसा' स स । ७ 'वो पिबेदेव' फ । ८ 'स्वस्थाने' सं ढ. । ९ 'भजन्' इ स मू । १० 'म्भवास्तिष्ठे' इ सं ढ । ११ 'च' अ इ. । १२ अस्याग्रे "शमयेत्पित्तमेवादौ ज्वरेषु समवायिषु । दुर्निवारतरं तद्धि ज्वरार्तस्य विशेषतः ॥ छर्दिमूर्च्छापिपासादीनविरोधान् ज्वरस्य तु ।" इति इ पुस्तकेऽधिकः सार्धश्लोकः । १३ 'जेन स' ट.ड.ध. । १४ 'पातस्य व' ट. । 'पातव' ड.ध. ।

क्तम् । अत्राचक्ष्महे । सन्निपातस्थेन क्षीणेन दोषेण सताऽक्षीणौ दोषौ ज्वरकारिणौ । न तौ सुखेन जेतु शक्येते, विषमाश्रयत्वात् । क्षीणस्य तु दोषस्य वर्धनेन दोषसाम्यमुत्पाद्यैकरूपया क्रियया सन्निपात सुखेन जेतु शक्यते । तस्माद्वर्धनेनैकदोषस्येति वक्तुं युक्तम्[1] । तथा च,–वाताख्ये यतो दोषे शीतलघुरूक्षादिरूपैर्द्रव्यैर्वृद्धिर्भवति । वर्धमानेन च तत्रस्थौ पित्तकफावप्येव प्रायेण किञ्चित् क्षय यात, तत्क्षयाच्चासौ ज्वरोऽपि मृदुता गत सुखेन शक्यते जेतुम् । तथैव पित्ताख्यस्य दोषस्य सन्निपातस्थस्य ज्वरघ्नया तीक्ष्णोष्णकटुरूपया क्रियया वर्धनेन वातकफावपि किञ्चित्क्षय यात, तत्क्षयाच्च ज्वरोऽप्यसौ मृदुता गत सुखेन जेतु शक्यते । एव कफाख्यस्य दोषस्य सन्निपातस्थस्य ज्वरघ्नस्निग्धमधुरशीतादिकया क्रियया वर्धनेन तत्रस्थौ वातपित्ताख्यौ दोषौ किञ्चित्प्राय क्षय यात, तत्क्षयाच्च ज्वरोऽप्यसौ मार्दव गत सुखेन जेतव्य इति । एव दोषत्रयस्यापि ज्वरकारणे तया युक्त्या प्रतीकार कृतो भवति । एवमुच्छ्रितस्यापि क्षपणैरे(णैनै)करूपया क्रियया सुखेन सन्निपातो जीयते । तदेवं ह्युल्बणैकोल्बणैर्दोषैर्जनिते सन्निपाते चिकित्साक्रम उक्त । सम्प्रति समदोषजे सन्निपाते चिकित्साक्रम दर्शयितुमाह–कफेत्यादि । स्थिति.–स्थानम्, कफश्च स्थान च कफस्थाने, तयोरानुपूर्वी–क्रम, तया च तुल्यकक्षान्–समान् सन्निपातान्, ज्वरे[2] मलान् जयेत् । तत्र कफ प्राग्जेतव्यस्तत पित्त ततो वायुरिति कफानुपूर्वीत्युच्यते । उक्त च (सङ्ग्रहे सू अ २१)–"स्थानत कैश्चिदिच्छन्ति प्राक् तावच्छ्लेष्मणो वधम् । शिरस्युरसि कण्ठे च प्रलिप्तेऽन्नरुचि कुत ॥ तदभावे कथ भोज्य[3]पानद्रव्यावचारणम्[4] । असत्यभ्यवहारे च कुतो दोष[5]स्य निग्रह ॥ तस्मादादौ कफो घात्य कायद्वारार्गलो हि स । मध्यस्थायि यत पित्तमाशुकारि च चिन्त्यते ॥ अतो वातसखस्यास्य कुर्यात्तदनु निग्रहम् । [6]अध स्थायी च तदनु निग्राह्य स्यात्समीरण ॥" इति । सुश्रुतस्त्वाह(?) (सङ्ग्रहे सू अ २१)–"[सुश्रुतश्च न सर्वत्र मतमेतद्ब्रवीति तु ।] जयेज्ज्वरेऽतिसारे च क्रमात्पित्तकफानिलान् ॥ प्रायेण तापात्मतया ज्वरे तेजो विशिष्यते । विशश्च स[7]रता पित्तात्तथा च मृदुकोष्ठता ॥ तस्य चानुबल श्लेष्मा गौरवापक्तिजाड्यकृत् । वायुश्च वर्धतेऽवश्य य[8]स्त्वह सु तयो क्षये ॥ ज्वरातिसारयोस्तस्मादेष दोषजये क्रम । कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि ॥ यस्मादामाशयोत्[9]क्लेशाद्भूयिष्ठ तत्समुद्भव । क्रमेणाद्येन तत्रापि प्रवृद्धान्[1] स्वाशये स्थितान् । स्वा[2]शयेषु प्रदुष्टाना स्थितै[3]व ह्याशुकारिता । विज्ञाय कर्मभि स्वै स्वैर्दोषोद्रेक यथा[4]बलम् । भेषज योजये[5]त्तत्तु स्वीकुर्यान्न क्रम भिषक् ।" इति । अन्ये त्वाहु (स सू अ २१)–"क्रमान्मरुत्पित्तकफा सर्वत्र सदृशे बले । वातादीना यथापूर्व यत स्वाभाविक बलम् ॥ ऊचे पराशरोऽप्यर्थममुमेव प्रमाणयन् । यथोपन्यासत प्राप्त[6]मादौ दोषभिषग्जितम् । [7]नेतृभङ्गेन दृष्टो हि सम सैन्यपराजय ॥" इति । स्थानानुपूर्व्या वा दोषास्तुल्यकक्षान् जयेत् । स्थान च यद्यप्यविशेषेणैव सम्भवति तथाऽपीह ज्वरकारिदोषप्रस्तावादामाशयो गृह्यते । तेनामाशयस्थो दोष प्राग्जेतव्यस्तत पक्वाशयस्थ, इति स्थानानुपूर्वी–स्थानमाहात्म्यस्य चिकित्साक्रम, कार्य । तथा च प्रागध्यगीष्ट (हृ सू अ १७।१३)–"आमाशयगते वायौ कफे पक्वाशया[8]श्रिते । रूक्षपूर्व तथा स्नेहपूर्व स्थानानुरोधत ॥" इति । तदेव कफस्थानानुपूर्व्या वा तुल्यकक्षान् मलान् जये[9]त् । अन्ये त्वेव व्याख्यानयन्ति,–कफस्य स्थान कफस्थानम्, कफस्थानलक्षणा चासावानुपूर्वी च, तया कफस्थानानुपूर्व्या वा तुल्यकक्षान् मलान् [10]जयेत् । यद्यपि कफस्थानानि कण्ठादीन्यपि तथाऽपीह ज्वरकारिदोषप्रस्तावादामाशयो गृह्यते । तथा चोक्तम् ( श्लो. १ )–"आमाशयस्थो हत्वाऽग्नि सामो मार्गान् पिधाय यत् । विदधाति ज्वर दोषस्तस्मात्कुर्वीत लङ्घनम् ॥" इति । तदेव रूक्षोष्णपाचनादि क्रमोऽत्र कार्य इत्यवतिष्ठते । ननु, कफस्थानानुपूर्व्या वेत्येतन्न वाच्यम्, यतस्तुल्यकाल त्रिदोषहरैर्द्रव्यै सन्निपातस्य क्रिया कार्या । द्रव्याणि दोषघ्नानि । अत्रोच्यते । ज्वरनाशनानि द्रव्याणि त्रिदोषघ्नानि विरलानि । एकदोषघ्नानि पुनर्ज्वरहन्तॄणि त्रिदोषघ्नेभ्य समर्थतराणि बहुतराणीति कफस्थानानुपूर्व्या वेत्युक्तम् । अपि च दोषकालादिवशाच्चिकित्साप्रकारान्[11]तरोऽयमुपयुज्यत इति ।

**आ० र०–दाहशीतयोरेकज्वरोपद्रवयोरौषधमाह–वर्धनेनेति । यदा दाहोऽल्प शीतमधिक तदा दाहहेतोर्वर्धनेन शीतहेतो· क्षपणेन वा शीतजय, पश्चाद्दाहजय. । यदा शीतमल्प दाहोऽधिक· तदा शीतहेतोर्वर्धनेन दाहहेतोः क्षपणेन वा दाहजय, पश्चाच्छीतजय । यदा दाहशीते तुल्ये तदा तुल्यकक्षान् मलान् कफानुपूर्व्या वा स्थानानुपूर्व्या जयेत् । कफपित्तवाताना क्रमाज्जय –कफानुपूर्वी । उर कोष्ठ बस्तीना क्रमाज्जय –स्थानानुपूर्वी । उक्त च सङ्ग्रहे (चि अ २)–"वमनैश्च विरेकैश्च बस्तिभिश्च यथाक्रमम् । ज्वरानुपचरेद्धीमान् कफपित्तानिलोद्भवान् ॥ ससृष्टे सन्निपतितै-**

---

१ 'योग्यम्' ड. । २ 'ज्वरम' ध । ३ 'ज्य पानद्रव्यावचारणे ।' ड । ४ 'रणा ।' ट ध । ५ 'षविनि' ट ध स द्व । ६ 'अध स्थायी' इति श्लोकार्धं सङ्ग्रहहृदये नोपलभ्यते । किन्त्वेतदरुणदत्तेनेव हेमाद्रिणाऽपि सङ्गृहीत स्वटीकायाम् (सू अ १३।१५) । ७ 'सरण पि' स स । ८ 'यत्स्नेहस्वेदयो क्ष' ट । 'यत्स्वह ' ध । 'यात्स्वह ' स स. । 'येष्वह.' इति क्वचित् । ९ 'योत्क्लेदाद्भू' ट, । 'योद्भूताद्भू' ध. ।

१ 'द्धा स्वाशये स्थिता ।' ट ड । 'द्धा स्वाशयोस्थिता ।' ध । 'स्वाश्रये' स स । २ 'स्वाश्रयेषु' स.स । 'स्वाशये तु प्र' स मू । ३ 'तैव' स मू । ४ 'थाबलम्' स द्व । ५ 'त्तत्त ('तत्र' स मू) तत्री कुर्यान्न तु क्रमम् ।' स.द्व । ६ 'मादिदोष' ड ध. । ७ 'चतुरङ्गेऽपि दृष्टो हि समे सै' ड ध । ८ 'याश्रये' ट । ९ 'त् । यद्यपि' ड.ध । १० 'जयेदिति । यद्य' ट. । ११ 'न्तरमु' ट. ।

रेकैनैकोल्वणे समै । ज्वरान् दोषै क्रमापेक्षी यथोक्तै रौषधैर्जयेत् ॥ वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा । कफस्थानानुपूर्व्या वा सन्निपातज्वरं जयेत् ॥" इति । तथा (स चि अ २)-"निद्रानिवारणोपाय सन्न्यासेऽभिहितो हित । सन्निपाते विशेषेण दारुणोऽयमुपद्रव ॥ कम्प प्रलपन यस्य सञ्ज्ञानाशश्च दारुण । रसैस्तु लाववर्तीरकुलीरशशतैत्तिरै ॥ तर्पयेत्प्राक् पुराणेन सर्पिषाऽथ जयेदपि । बलारास्नागुडूच्याद्यैस्तैलैश्च परिषेचयेत् ॥" इति ।

सन्निपातचिकित्साप्रक्रमादिदमप्याह—

**सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।**
**शोफः सञ्जायते येन कश्चिदेव विमुच्यते ॥ १४९ ॥**

स०-सन्निपातज्वरस्यावसाने कर्णमूलप्रदेशे सुष्ठु दारुण शोफ सञ्जायते । येन-शोफेनोत्पन्नेन, कश्चिदेव विमुच्यते । कश्चिदेवेत्यनेनास्य रोगस्य नावश्यमसाध्यतेति ब्रूते ।

आ०र०-कर्णमूलोपद्रवमाह-सन्निपातज्वरस्यान्त इति ।

अत एव चिकित्सामत्राह-

**रक्तावसेचनैः शीघ्रं सर्पिःपानैश्च तं जयेत् ।**
**प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः ॥ १५० ॥**

स०-रक्तावसेचनादिभि कवलग्रहान्तैराशु त जयेत् । प्रदेह -प्रलेप ।

आ० र०-कर्णमूलौषधमाह-रक्तावसेचनैरिति । वङ्गसेने तु (ज्व. श्लो ५३२)-"गैरिक पांसुज शुण्ठी वचाकट्फलकाञ्जिकम् । कर्णशोथहरो लेप सन्निपातज्वरे भृशम् ॥" इति ।

**शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति ।**
**शाखानुसारी तस्याशु मुञ्चेद्बाह्वोः क्रमाच्छिराम् ॥**

स०-आदिशब्देन स्तम्भस्वेदनादयो गृह्यन्ते । शीतोष्णादिभिरुपक्रमैर्यथायथ पृथग्वातपित्तश्लेष्मससर्गसन्निपातज्वरप्रशमनै सम्यक् प्रयोजितैर्ज्वरो यस्य नरस्य शम न गच्छति, तस्य शाखानुसारित्वाद्धेतोर्बाह्वो क्रमात्-एकैकस्मिन् न युगपद् द्वयोर्भुजयो , शिरा मुञ्चेत् । शाखाशब्देनात्र केवल रक्त विवक्षितम्, न मासादय । अत एव रक्तस्यैव चिकित्सानुवाच मुञ्चेच्छिरामिति । मासजाना हि शस्त्रक्षाराग्निकर्मादिचिकित्सा । तस्माच्छाखाशब्देन रक्तस्यैव ग्रहण युक्तम् ।

आ० र०-रक्तस्थावसाध्य ज्वरमाह-शीतोष्णस्निग्धरूक्षाद्यैरिति । "शाखा-रक्तादयस्त्वक्च बाह्यरोगायन हि सा (हृ सू अ १२।४४)।" तदनुसारी-तद्व्यापी ।

अथ विषमज्वर । तत्र शमनान्याह-कलिङ्गका इति । सङ्ग्रहे तु (चि अ १)-"पटोलेन्द्रयवारिष्टभद्रमुस्तामृताद्वयम् । सारिवादितय पाठा त्रायन्ती कटुरोहिणी ॥ पटोलारिष्टमृद्वीकाशम्याकत्रिफलावृषा । चन्दनोशीरधान्याब्दगुडूचीविश्वभेषजम् ॥ देवदारु स्थिरा शुण्ठी वासा धात्री हरीतकी । पञ्च पञ्च ज्वरान् घ्नन्ति योगा मधुसितोत्कटा ॥" इति । अरिष्टो-निम्ब । अमृताद्वय-गुडूचीहरीतक्यौ ।

**अयमेव विधिः कार्यो विषमेऽपि यथायथम् ।**
**ज्वरे विभज्य वातादीन् यश्चानन्तरमुच्यते ॥१५२॥**

स०-अयमेव-पूर्वोक्तो, विधिर्विषमेऽपि-विषमज्वरे सततकादौ, यथास्व वातादीन् विभज्य कार्य । अनन्तरमधुनैव च यो विधिरुच्यते पटोलकटुकादिभि , सोऽपि विषमज्वरे कार्य ।

आ० र०-अतिदेशमाह-अयमेवेति । अयं-सन्ततज्वरोक्त. ।

**पटोलकटुकामुस्ताप्राणदामधुकैः कृताः ।**
**त्रिचतुःपञ्चशः क्वाथा विषमज्वरनाशनाः ॥ १५३॥**

स०-पटोलादिभिस्त्रिभिश्चतुर्भि पञ्चभिर्वा कृता क्वाथा विषमज्वरघ्ना ।

आ० र०-क्वाथानाह-पटोलेति ।

**योजयेत्त्रिफलां पथ्यां गुडूचीं पिप्पलीं पृथक् ।**
**तैस्तैर्विधानैः सगुडं भल्लातकमथापि वा ॥ १५४ ॥**

स०-त्रिफला वा पथ्या वा गुडूची पिप्पलीं वा पृथक् पृथक् योजयेत् सततकादिके विषमज्वरे । अथवा तैस्तै-रसायनाद्युक्तैर्विधिभि , गुडसहित भल्लातक वा योजयेत् ।

आ०र०-त्रिफलादिरसायनान्याह-योजयेत्त्रिफलामिति । तैस्तै -रसायनविध्युक्तै । भल्लातकरसायन तु सगुडमेव ।

**लङ्घनं बृंहणं वाऽऽदौ ज्वरागमनवासरे ।**

स०-यदि वा ज्वरागमनदिवसे आदौ-प्रथमं, लङ्घनं बृंहणं वा योजयेत् ।

आ० र०-ज्वरोत्पत्तिदिने अभोजन गुरुस्निग्धमधुरभोजन वा कार्यमित्याह-लङ्घन बृहण वेति ।

**प्रातः सतैलं लशुनं प्राग्भक्तं वा तथा घृतम् ॥१५५॥**
**जीर्णे तद्वद्दधि पयस्तक्रं सर्पिश्च षट्पलम् ।**
**कल्याणकं पञ्चगव्यं तिक्ताख्यं वृषसाधितम्॥१५६॥**

१ 'रेकानेको' स द्व । २ 'दोषक्रमा' स स । ३ 'न्यासाभि' स द्व. । ४ 'कम्प ' इत्यादि द्वौ श्लोकौ सङ्ग्रहद्वये नोपलभ्येते । ५ 'ह-निद्रानिवारणोपाय इति । स्पष्टम् । सन्नि' ट । ६ 'तेन' अ इ स स । ७ 'प्रभु' इ । ८ 'स वा तस्य वाऽवश्य' ड ध. । ९ 'फवातघ्नै' इ । १०-११ 'पाशुक' 'काञ्जिते ' वङ्ग ।

१ अरुणदत्तादिभि पूर्व (श्लो ४८) ये पठितास्ते "कलिङ्गका " इत्यादयस्त्रय श्लोका हेमाद्रिणाऽत्र पठिता व्याख्याताश्चेति युक्तमेतत् । निदानक्रमेण हि चिकित्साक्रमोपदेशोऽप्यावश्यक , अन्यथा क्रमहानिदोषापत्ते । २ 'ताभया ।' स मू । ३ 'वृषम्' स मू । ४ 'न्याम्बुगु' फ । ५ 'तक्री ।' स स । ६ 'मे च य' अ । ७ 'वाऽपि ज्व' इ फ स द्व । ८ "तथेति सतैलम् । तद्वदिति प्राग्भक्तम् ।" इतीन्दु ।

स०-विषमज्वरे अग्रे सहतैलेन लशुन योजयेत्। प्रागभक्तमित्यादि। भक्तात्प्रथम प्रातर्वा घृत च जीर्ण-पुराणं, योजयेत्। तथैव दधि, तथा पय, तथा तक्र, षट्पल च सर्पि-क्षयचिकित्सितोक्त (हृ चि. अ ५।२८), प्रात प्राग्भक्त वा योजयेदित्यर्थ। कल्याणक-उन्मादप्रतिषेधोक्त (हृ उ. अ ६।२६), पञ्चगव्य-अपस्मारप्रतिषेधोक्त (हृ उ अ ७।१९), तिक्ताख्य-कुष्ठचिकित्सितोक्त (हृ चि अ १९।२), तथा वृषसाधित-रक्तपित्तचिकित्सितोक्त (हृ. चि अ. २।४०), प्रात प्राग्भक्त वा योजयेत्।

आ० र०-लशुनपुराणघृतदधिक्षीरतक्राणि पृथक् सतैलानि प्रात.काले भोजनादौ वा प्रयोज्यानीत्याह-प्रात सतैलमिति।

षट्फलादीन्यतिदिशति-सर्पिश्चेति।

**त्रिफलाकोलतर्कारीक्वाथे दध्ना शृतं घृतम्।**
**तिल्वकत्वक्कृतावापं विषमज्वरजित्परम्॥ १५७॥**

स०-त्रिफलादिक्वाथे चतुर्गुणे सर्पिर्दधिसम शाबररोध्रकृतावापमतिशयेन विषमज्वरजित्।

आ० र०-घृतान्तरमाह-त्रिफलाकोलतर्कारीक्वाथ इति।

**सुरां तीक्ष्णं च यन्मद्य शिखितित्तिरिदक्षजम्[3]।**
**मांसं मेध्योष्णवीर्यं[4] च सहान्नेन प्रकामतः॥ १५८॥**
**सेवित्वा तदहः स्वप्यादथवा पुनरुल्लिखेत्।**

स०-सुरा च तीक्ष्णं च यन्मद्य शिखितित्तिरिदक्षज च मास मेध्यो(ध्यो)ष्णवीर्यमन्नेन सह बहु सेवित्वा तदह स्वप्यात्। यस्मिन् दिने तद्भुक्त त दिवस शयीत। तदह स्वप्यादिति "कालाध्वनोरत्यन्तसयोगे" इति द्वितीया। अथवा पूर्वोक्तपीतभुक्तभक्तो नर पुनरुल्लिखेत्-उद्वमेत्।

आ० र०-प्रयोगान्तरमाह-सुरामिति। सुरामन्यद्वा तीक्ष्ण मद्य, शि[खितित्तिरिकुक्कुटान्मांस,]··· अन्यद्वा मेध्यो(ध्यो)[ष्णवीर्यं-अ]लवी(धी)योष्णमास, अन्नेन सह ज्वरोत्पत्तिदिने सेवित्वा स्वप्यात्। न जीर्यति चेदुल्लिखेत्-वमेत्।

**सर्पिषो महतीं मात्रां पीत्वा[5] वा छर्दयेत्पुनः॥१५९॥**

स०-सर्पिषो वा महतीं-उत्तमा, मात्रा पीत्वा पुनश्छर्दयेत्-उद्वमेत्।

आ० र०-सर्पिर्वमनमाह-सर्पिष इति।

**नीलिनीमजगन्धां च त्रिवृतां कटुरोहिणीम्।**
**पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः॥ १६०॥**

स०-नीलिन्यादीन् पृथग्ज्वरागमनवासरे कृतस्नेहस्वेद पिबेत्।

आ० र०-विरेचनमाह-नीलिनीमिति। सद्य स्नेहन स्वेद च कृत्वा नीलिन्यादिचतुष्टय ज्वरोत्पत्तिदिने पिबेत्।

**मनोह्वा सैन्धवं कृष्णा तैलेन नयनाञ्जनम्।**
**योज्यं[1]**

स०-मनोह्वादिक तैलेन नयनाञ्जन योज्यम्। अञ्जनशब्दो म्रक्षणेऽपि[2] दृश्यत इति नयनशब्देऽत्र प्रयुक्त।

आ० र०-अञ्जनमाह-मनोह्वेति।

**हिङ्गुसमा व्याघ्रीवसा नस्यं ससैन्धवम्॥१६१॥**
**पुराणसर्पिः सिंहस्य वसा तद्वत्ससैन्धवा।**

स०-हिङ्गुतुल्या व्याघ्रीवसा नस्य ससैन्धव योज्यम्। व्याघ्रीति स्त्रीलिङ्गनिर्देश स्त्रिया ग्रहणार्थोऽचिन्त्यत्वात्प्रभावस्य, अन्यथा पुलिङ्गेनैव निर्देश कुर्यात्। यथा वक्ति-"पुराणसर्पि सिंहस्य वसा तद्वत्ससैन्धवा।" इति।

आ० र०-नस्यमाह-हिङ्गुसमा व्याघ्रीवसा नस्यमिति। व्याघ्री-व्याघ्रजातिस्त्री, तस्या वसा।

नस्यान्तरमाह-ससैन्धवम्। पुराणसर्पिरिति।

नस्यान्तरमाह-सिंहस्य वसा तद्वत् ससैन्धवेति।

**पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी॥ १६२॥**
**सर्षपाः सयवाः सर्पिर्धूपो विड्वा बिडालजा।**

स०-पलङ्कषादिधूम सर्वेषु ज्वरेषु कार्य। अथवा बिडालाज्जाता बिडालजा विट्।

आ० र०-धूपमाह-पलङ्कषेति। पलङ्कषा-गुग्गुलु।

धूपान्तरमाह-विड्वा बिडालजेति। बिडालजा विट्-मार्जारविष्ठा।

**पुरध्यामवचासर्जनिम्बार्कागरुदारुभिः॥ १६३॥**
**धूपो ज्वरेषु सर्वेषु[3] कार्योऽयमपराजितः।**

स०-पुरादिभि सहापराजिताख्योऽय धूपो ज्वरेषु कार्य।

आ० र०-अपराजित धूपमाह-पुरध्यामेति। पुरो-गुग्गुलु। ध्यामक-तृणम्। सर्जो-राला।

**धूपनस्याञ्जनोत्त्रासा[4] ये चोक्ताश्चित्तवैकृते॥ १६४॥**

स०-ये च चित्तवैकृते-उन्मादापस्मारे, धूमादय उक्तास्ते च विषमज्वरे योज्या। विकृतमेव वैकृतम्। प्रज्ञादित्वात्स्वार्थेऽण्।

आ० र०-उन्मादादिषूक्तान् धूपादीनतिदिशति-धूपनस्याञ्जनोत्त्रासा इति। उत्त्रास-अकस्माद्भयोत्पादनम्। चित्तवैकृत-उन्मादोऽपस्मारश्च, तत्र ये उक्तास्ते कार्या।

**दैवाश्रयं च भैषज्यं ज्वरान् सर्वान्[5] व्यपोहति।**
**विशेषाद्विषमान् प्रायस्ते ह्यागन्त्वनुबन्धजाः॥१६५॥**

---

१ 'विषमज्वरे' इति ड ध पुस्तकयोर्नास्ति। २ 'प्रागेव स' ट ड.। ३ 'रिकुक्कुटात्' अ इ फ। ४ 'मेध्योष्ण' अ.फ स स.। 'मध्योष्ण' इ.। ५ 'त्वा प्रच्छ' स मू।

१ 'योज्या हि० नस्ये ससैन्धवा।' स द्व। २ 'पि शस्त इ' ड ध। ३ 'षु प्रयोक्तव्योऽप' अ फ.स.मू। ४ 'ञ्जनत्रासा' अ। ५ 'र्वानपो' स द्व।

स०—न केवलं धूपादयो ज्वरं नाशयन्ति । दैवाश्रयं चौषधं मणिमङ्गलबल्युपहारप्रायश्चित्तजपदानस्वस्त्ययनहोमादिकं सर्वान् ज्वरान्—आगन्तून्निजांश्च, व्यपोहति । "उपसर्गादस्यत्यूह्योर्वा वचनम् (वेति वाच्यम्)" इति तङभावः । विशेषेण विषमान् व्यपोहति । यस्मात्ते—विषमज्वरा, आगन्तूना—भूतादीना, अनुबन्धाजाता ।

आ० र०—दैवव्यपाश्रयमौषधमाह—दैवाश्रयं चेति । दैवाश्रयं—जपहोमादि । हि—यस्मात्, प्रायो—बाहुल्येन, ते—विषमा, आगन्त्वनुबन्धजा—ग्रहावेशादिसम्भवा ।

**यथास्वं च सिरां विध्येदशान्तौ विषमज्वरे ।**

स०—विषमज्वराशान्तौ सत्यां यथास्वं—दोषाद्यपेक्षया, सिरां विध्येत् । सङ्ग्रहे च रसादिधातुस्थे ज्वरे चिकित्सोक्ता । यथा (चि अ २)—"रससस्थे तु सर्वस्मिन् कुर्याद्वमनलङ्घने । सेकसंशमनालेपरक्तमोक्षमसृक्स्थिते ॥ तीक्ष्णं विरेकं मांसस्थे, मेदोघ्नं मेदसि स्थिते । अस्थिस्थे वातशमनमभ्यङ्गस्वेदमर्दनम् ॥ ज्वरे वातार्तिशमनं विशेषाद्बस्तिकर्म च ।" इति । मज्जस्थशुक्रस्थयोर्ज्वरयोरसाध्यत्वात्तत्र चिकित्सा नोक्ता ।

आ० र०—शिराव्यधमाह—यथास्वं चेति । "तृतीयकेंऽसयोर्मध्ये स्कन्धस्याधश्चतुर्थके ।" (हृ सू अ २७।१३) इत्यादि—यथास्वम् । सङ्ग्रहे तु (चि अ २)—"पञ्चगव्यस्य महतो विधिना पञ्चमाहिषम् । पञ्चाजं चतुरौष्ट्रं वा सिद्धं सिद्धं घृतं तथा ॥ चतुरौष्ट्र—पयोदधिमूत्रघृतैः । कटुरोहिणिमञ्जिष्ठावृषग्रन्थिकचित्रकैः । पाठास्वगुसाद्विनिशैः पञ्चगव्यस्य पञ्चसु ॥ प्रस्थेषु सयुतैः सेव्यं विषमज्वरजित्परम् । वाक्स्वरस्मृतिमेधाग्निबलारोग्यवृषत्वकृत् ॥ श्वतक्षीरघृतक्षौद्रसिताकृष्णा खजाहता । विषमज्वरहृद्रोगक्षतकासक्षयापहा ॥ आस्थापनं वा तदहर्दद्यात्स्विन्नस्य यापनम् । पयसा वृषदंशस्य शकृद्वा तदह पिबेत् ॥ मस्तुना वा वृषशकृत् सुरया वा ससैन्धवम् ॥ सहदेवावचाभद्रानाकुलीभिः प्रयोजयेत् । धूपनोद्वर्तनालेपान् सर्वज्वरनिबर्हणान् ॥" इति । सिद्धयोगे तु (ज्व श्लो २३०)—"मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथ । पीत सकणाचूर्णं समधुर्विषमज्वरं हन्ति ॥ अपामार्गजटा कव्यां लोहितैः सप्ततन्तुभिः । बद्धा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥ गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः । तस्मै तिलोदकं दद्यान्मुञ्चत्येकाहिको ज्वरः ॥ अगस्त्यपत्रस्वरसेन नस्यं निहन्ति चातुर्थकमुग्रवीर्यम् ॥ सोमं सानुचरं देवं समातृगणमीश्वरम् । पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥ विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम् । स्तुवन्नामसहस्रेण ज्वरान्सर्वान् व्यपोहति ॥ मूलं भूमिजयन्त्याश्च सहदेवोद्भवं तथा । तण्डुलीयकमूलं वा बद्धं मूर्ध्नि ज्वरापहम् ॥ शान्तिं नयेत्त्रिवृद्वाऽपि सक्षौद्रा विषमज्वरम् । मधुना चाभया लीढा हन्त्याशु विषमज्वरम् ॥ (श्लो २२८) अजाजी गुडसयुक्ता विषमज्वरनाशिनी । गुडप्रगाढां त्रिफलां लिह्याद्वा विषमज्वरी ॥" [इति । वङ्गसेने तु (ज्व श्लो ५७३)–] "शैलूषमण्डनरजः पुरुषानुरूपं शुभ्राङ्गवत्ससुरभीपयसा निपीतम् । आदित्यवारभवपालिदिने नरेण चातुर्थकं सुचिरजं जयति क्षणेन ॥ शैलूषमण्डन—हरितालम् । पुरुषानुरूप—पुरुषाकृति । कल्कः शिरीषपुष्पस्य रजनीद्वयसयुतः । नस्यं सर्पिः समायोगाज्ज्वरं चातुर्थकं जयेत् ॥ सितवर्षाभूमूलं पयसा पीतं च पैत्तिकं जयति । चातुर्थकं सुचिरजं ताम्बूलेनैव भक्षणादथवा ॥ कृष्णामलकीरामठदार्वीवचाराजसर्षपरसोनैः । छागलमूत्रनिपिष्टैर्नस्यं त्वेकाहिकादिहरम् ॥ क्षीराविकारजनिमर्दकसत्र्पाणां मूलं ज्वरापहमवश्यमिदं शिखायाम् । बद्धं दिवाकरदिने यदि वाऽष्टमीषु रात्रिज्वरं हरति रञ्जितसूत्रबद्धम् ॥" इति । इति विषमज्वर ।

**केवलानिलवीसर्पविस्फोटाभिहतज्वरे ॥ १६६ ॥**
**सर्पिःपानहिमालेपसेकमांसरसाशनम् ।**
**कुर्याद्यथास्वमुक्तं च रक्तमोक्षादि साधनम् ॥१६७॥**

स०—केवलानिलादिभिर्ज्वरे सर्पिःपानादिकं कुर्यात् । यच्च रक्तमोक्षादि साधनं यथास्वमुक्तं तच्च कुर्यात् ।

आ० र०—अथागन्तुज्वरं । तत्राभिघातजन्मौषधमाह—केवलानिलेति । केवलनिलजो विसर्पजो विस्फोटजश्च ज्वरस्तुल्याषधत्वादुक्तः । किन्त्वसावागन्तुः । किन्तु निजभेदः । केवल—पित्तकफामैरसस्पृ(स्पृ)ष्टः ।

**ग्रहोत्थे भूतविद्योक्तं बलिमन्त्रादि साधनम् ।**

स०— ग्रहोत्थे ज्वरे भूतविद्योक्तं बलिमन्त्रादि साधनं—चिकित्सितम् ।

आ० र०—ग्रहावेशजस्यौषधमाह—ग्रहोत्थ इति । भूतविद्या—उत्तरस्थानोक्तं ग्रहप्रकरणम् ।

***औषधीगन्धजे पित्तशमनं**

१ 'शान्ते वि' ध । २ 'तुस्थज्व' ट । ३ 'तीक्ष्णान् विरेकान् मा' स द इ । ४ 'त्वाचिकि' ड । ५ 'च' स द । ६ 'सिद्धघृत' स मू । ७ 'ष्ठापृथुग' स मू । ८ 'ग्यविवन्धकृत् ॥ गुडक्षीर' स मू । ९ 'वाऽथ सै' स स । १० 'नाछेपातसर्वज्वरनिबर्हणम् ।' फ । ११ 'निवारणान्' इ । १२ 'ञ्चत्यैका' सि । १३ 'गस्तिप' सि । १४ 'ग्ररूपम्' सि ।

१ 'ला पिबेद्वा विषमार्दित ॥' सि । २ शैलूषेत्यादिश्लोका मुद्रितसिद्धयोगे नोपलभ्यन्ते । ३ 'रजो वयसाऽनु' वङ्ग । ४ 'चातुर्थिकं' वङ्ग । ५ कृष्णेति श्लोकः सिद्धयोगे टिप्पण्यामुपलभ्यते । ६ 'त्रमुपि' वङ्ग । ७ 'दिग्नम्' वङ्ग । ८ 'त्रयाणां' वङ्ग । ९ 'नेऽप्यथवा' वङ्ग. । १० 'हते ज्व' इ ध । ११ 'पान हि' ध स मू । १२ 'सेकान् मा' अ इ । १३ 'निलजे ज्वरे' ड ध । १४ 'क्त मणिम' स स. । *१५ 'औष' इ फ स मू ट । १६ 'त्तशमनैः' सं मू. ।

स०-औषधीगन्धजे पित्तशमनं चिकित्सितम्।
आ० र०-औषधीगन्धजस्यौषधमाह-औषधीगन्धज इति।

**विषजिद्विषे ॥ १६८ ॥**

स०-विषे-विषजे ज्वरे, विषजिच्चिकित्सितम्।
आ० र०-विषजस्यौषधमाह-विषजद्विष इति।

**इष्टैरर्थैर्मनोज्ञैश्च यथादोषशमेन च।**
**हिताहितविवेकैश्च ज्वरं क्रोधादिजं जयेत् ॥१६९॥**
**क्रोधजो याति कामेन शान्तिं क्रोधेन कामजः।**
**भयशोकोद्भवौ ताभ्यां भीशोकाभ्यां तथेतरौ १७०**

स०-क्रोधादिजं ज्वरमिष्टैः-अभिमतैः, अर्थैः-विषयैः, तथा मनोज्ञैः-रम्यैः, तथा यथादोषं यः शमः-शमनं तेन, तथा हिताहितविवेकैश्च जयेत्। आदिशब्दोऽत्र भीशोकादिपरिग्रहार्थः।

अधुना क्रोधजादीनां पृथगप्युपक्रममाह-क्रोधज इत्यादि। क्रोधजो ज्वरः कामेन-उपभोगेन, शान्तिं याति। कामजश्च ज्वरः क्रोधेन शाम्यति। भयशोकजौ ज्वरौ कामक्रोधाभ्यां शान्तिं यातः। तथा, इतरौ-कामक्रोधजौ, भीशोकाभ्यां शाम्यतः।

आ० र०-क्रोधादिजस्यौषधमाह-इष्टैरर्थैरिति। इष्टैः-भोक्तृगुणेन मनोज्ञैः स्वगुणेन वा।

**शापाथर्वणमन्त्रोत्थे विधिर्दैवव्यपाश्रयः।**
**ते ज्वराः केवलाः पूर्वं व्याप्यन्तेऽनन्तरं मलैः ॥१७१॥**
**तस्माद्दोषानुसारेण तेष्वाहारादि कल्पयेत्।**
**न हि ज्वरोऽनुबध्नाति मारुताद्यैर्विना कृतः ॥१७२॥**

स०-शापाद्युत्थे ज्वरे दैवव्यपाश्रयो विधिः कार्यः। शापो-मुनिपित्रादिभिः सक्रोधैर्दत्तः।

[ते-] ओषध्याद्युत्था ज्वराः पूर्वं केवला भवन्ति। अनन्तरं मलैः-वातादिभिः, व्याप्यन्ते। तस्माद्धेतोस्तेषु-ज्वरेषु, दोषानुसारेणाहारादि कल्पयेत्।

ननु, शापाद्युत्थेषु वातादिकोपो नाशङ्क्यत एव। तत्किमिति तेष्वाहारादिकं दोषानुसारेण कल्प्यते? इत्याह-न हीत्यादि। यस्माद्वातादीननन्तरेण विना कृतो ज्वरो नानुबध्नाति, तस्मादवश्यं तेष्वपि वातादिकोपः सम्भाव्यते। अत एव च तदनुसारेणाहारादिकल्पनम्।

आ० र०-शापजाभिचारजयोरौषधमाह-शापाथर्वणमन्त्रोत्थ इति। ··· वङ्गसेने तु (ज्वर श्लो ५४१)-"औषधीगन्ध[विषजौ विषपित्तप्रबाधनैः। जयेत्कषायैर्मतिमान् सर्वगन्धकृतैर्भिषक् ॥]" इति। इत्यागन्तुज्वरः।

अथ धातुज्वरः। [सङ्ग्रहे तु (चि अ २)-] "रससंस्थे तु सर्वस्मिन् कुर्याद्वमनलङ्घने। सेकसंशमनालेपरक्तमोक्षानसृक्स्थिते॥ तीक्ष्णान् विरेकान् मांसस्थे मेदोघ्न मेदसि स्थिते। अस्थिस्थे वातशमनमभ्यङ्गस्वेदमर्दनम् ॥ ज्वरे वातार्तिशमनं विशेषाद्बस्तिकर्म च।" इति।

**ज्वरकालस्मृतिं चास्य हारिभिर्विषयैर्हरेत्।**

स०-ज्वरकालं च वेगं च यैश्चिन्तयन् ज्वर्यते, अस्य च-ज्वरिणो, ज्वरकालस्मरणं हारिभिः-मनोहरैः, विषयैः-शब्दादिभिः, हरेत्-विस्मारयेत्।

आ० र०-अथ सर्वज्वरसाधारणानि। तत्र मनोहरसेवामाह-ज्वरकालस्मृतिमिति। ज्वरकालो-ज्वरवेगकालः, तस्य स्मृतिः-अस्मिन्काल आयात इति स्मरणम्।

**करुणार्द्रं मनः शुद्धं सर्वज्वरविनाशनम् ॥ १७३ ॥**

स०-शुद्धं-रागद्वेषाद्यनुपहतं, तथा करुणयाऽऽर्द्रं-कृपापरं, चेतः सर्वज्वरविनाशनं स्यात्।

आ० र०-मनसः शुद्धत्वं करुणार्द्रत्वं चाह-करुणार्द्रमिति।

**त्यजेदाबललाभाच्च व्यायामस्नानमैथुनम्।**
**गुर्वसात्म्यविदाह्यन्नं यच्चान्यज्ज्वरकारणम् ॥ १७४ ॥**

स०-बललाभादा-बललाभमवधीकृत्य, व्यायामादि त्यजेत्-नाचरेत्। स्नानं च यद्यपि दीपनादिगुणयुक्तं प्रागधीतं, तथाऽपि प्रभावाज्ज्वरं करोतीति तद्वर्जनम्। एवं व्यायामादिष्वपि चिन्त्यम्। [अन्यत्]-अपरमनुक्तमपीह यज्ज्वरकारणं, तदपि त्यजेत्। खरणादेऽप्युक्तम्-"पिष्टान्नं हरितं शाकं मांसं शुष्कं तिलान् दधि। ग्राम्यानूपौदकाजाविगव्यसूकरमाहिषम् ॥ मांसं शुष्काणि शाकानि सर्वमेव त्यजेज्ज्वरी।" तथोक्तम्-"ज्वरितैस्तित्तिरिक्रौञ्चशिखिवर्तककुक्कुटाः। गुरूष्णत्वाद्विवर्ज्याः स्युरत्र सोपद्रवे ज्वरे ॥" इति।

आ० र०-व्यायामादिवर्जनमाह-त्यजेदिति।

**न विज्वरोऽपि सहसा सर्वान्नीनो भवेत्तथा।**
**निवृत्तोऽपि ज्वरः शीघ्रं व्यापादयति दुर्बलम् १७५**

स०-तथा विज्वरोऽपि-पूर्वानुभूतज्वरः, सहसा-अक्रमेणैव, सर्वान्नभक्षो न स्यात्। सर्वान्नीन इत्युपपदसर्वान्नेत्यादिना खः। यतो निवृत्तोऽपि-अपगतोऽपि, ज्वरः शीघ्रमेव दुर्बलं व्यापादयति।

आ० र०-सहसाऽऽहारवृद्धिं निषेधति-न विज्वरोऽपीति। सर्वान्नमत्तीति सर्वान्नीनः।

निषेधातिक्रमे दोषमाह-निवृत्तोऽपीति।

---

१ 'त्सितं कुर्यात्।' ट। २ 'थगुपक्र' ध.। ३ 'कामोपभो' ट.ड.। ४ 'षधाद्यु' ट.ड.।

१ 'भ्यङ्गात्स्वेद' फ। २ 'यश्च चिन्त' ट। ३ 'रविमोक्षणम्' फ। 'रनिषूदनम्' स द्व। ४ 'खरनादे' ड। ५ 'त्तदा।' फ। ६ "तथेति सर्वान्नाहारत्वे। हिशब्दो यस्मादर्थे। यस्माज्ज्वरो निवृत्तो गत्वा पुनः प्रत्यावृत्तः पूर्वक्षपितत्वात् दुर्बलं नरं शीघ्रं व्यापादयतीति।" इतीन्दुः। ७ 'त्तो हि ज्व' अ इ ध स.द्व। ८ 'तो विगतोऽपि-अ' ट.।

**सद्य: प्राणहरो यस्मात्तस्मात्तस्य विशेषतः ।**
**तस्यां तस्यामवस्थायां तत्तत्कुर्याद्भिषग्जितम् १७६**

स०–यस्माच्च ज्वर सद्य एव प्राणहृद्भवति, तस्मात्कारणात्तस्य–ज्वरिणो, विशेषेणान्यरोगेभ्य सकाशात्तस्या तस्यामपच्यमानपक्वाजीर्णविषमचिरनिवृत्तज्वराद्यवस्थाया च, तत्तत्–लङ्घनस्वेदनयवागूपाचनक्षीरसर्पि पानादिक, भिषग्जित–औषध, कुर्यात् ।

आ० र०–ज्वरचिकित्सायामादरं विधत्ते–सद्य: प्राणहर इति ।

**ओषधयो मणयश्च सुमन्त्राः**
**साधुगुरुद्विजदैवतपूजाः ।**
**प्रीतिकरा मनसो विषयाश्च**
**घ्नन्त्यपि विष्णुकृतं ज्वरमुग्रम् ॥ १७७ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने ज्वरचिकित्सितं नाम प्रथमोऽध्यायः ॥ १ ॥**

स०–ओषध्यादयो विष्णुकृतमप्युग्र ज्वर घ्नन्ति । किं पुनरपचारादिकृत ज्वर न घ्नन्ति² इत्यपिशब्दार्थ । भौ तु भगाविति दोधकमेतत् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने ज्वरचिकित्सित नाम प्रथमोऽध्याय· समाप्त ॥१॥

आ० र०–सिद्धौषधादिधारणमाह–ओषधय इति । सङ्ग्रहे तु ( चि. अ. २ )–"कैश्या त्रिवर्गसयुक्ता रुड्निद्रादिविनोदिनी । शौत्र विचित्र श्रृणुयान्न प्रेतव्याधिताश्रयम् ॥ मनोभिरामविषय वचन ह्लादि दक्षिणम् । मातर पितर देवान् वैद्यान् विप्रान् हर हरिम् ॥ पूजयेच्छीलयेद्दानदमसत्यदयार्जवान् । धारयेच्च शुचिर्मूर्ध्ना मणिरत्नमहौषधी ॥ आर्यावलोकित पर्णशबरीमपराजिताम् । प्रणमेदार्यतारा च सर्वज्वरनिवृत्तये । जपस्तथा गतोष्णीष सर्वव्याधिचिकित्सितम् । आगन्तुदोषसहजै सर्वरोगैर्विमुच्यते ॥" इति ॥

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
ज्वरप्रकरण नाम सामस्त्येन निरूपितम् ॥ १ ॥

१ 'र्याचिकित्सितम्' फ. । २ 'औष' अ इ फ । ३ 'कथाश्चित्वर्ग० दिनी । श्रस्ता विचित्रा श्रृणु० श्रया ॥ मनोभिरामा विषया वचन' स ह्र इ । ४ 'त चार्या शब' स मू । ५ 'जप तथागतो' सं.मू । 'जपेत्तथागतो श्णीष सर्व ज्वरचि' फ. । 'जपेत्तथा' इ. ।




ज्वरचिकित्सितादनन्तर रक्तपित्तचिकित्सितमुच्यते । यतो महेश्वरस्य ललाटाज्ज्वरो बभूव, तत्सन्तापाद्रक्तपित्तमित्युक्तम् । अतो रक्तपित्तचिकित्सितस्यैवारम्भो युक्त । तथा, निदाने यद्विशेषेण नोक्त तदिह विशेषेण स्पष्ट कृत्वा निदानाभिप्रायमपि भण्यते, रक्तपित्तस्य क्षिप्रकारित्वात् ।

**अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**ऊर्ध्वगं बलिनोऽवेगमेकदोषानुगं नवम् ।**
**रक्तपित्तं सुखे काले साधयेन्निरुपद्रवम् ॥ १ ॥**

स०–बलिनो–बलवतः पुसो न स्त्रिया , यदुत्पन्नमूर्ध्वगं रक्तपित्त तत्साधयेत्–उपक्रमेत् । तथा यदेवोर्ध्वगमवेग–अवेगवत्, तथैको दोष –कफाख्य , अनुग –अनुबलो, यस्य तदेकदोषानुगम् । निदानेऽप्युक्तम् (हृ नि अ ३।८)–"ऊर्ध्वं साध्यं कफाद्यस्मात्" इति । तथा नव–अचिरोत्पन्न, तथा यत्सुखे काले–तद्व्याधिप्रतिपक्षभूते हेमन्ते शिशिरे वा जात, तथा यन्निरुपद्रव–विकृतविज्ञानीयाध्यायोक्ते (हृ शा अ ५।७४)"रक्तपित्तं भृश रक्त" इत्यादिग्रन्थनिर्दिष्टैरुपद्रवै रहितम् । अतो लक्षणाद्विपर्ययलक्षणमूर्ध्वगमपि रक्तपित्त तदर्थादसाध्य याप्य वा स्यादिति गम्यते ।

आ० र०–अथ रक्तपित्तचिकित्सितम् । तत्र साध्यमाह–ऊर्ध्वगमिति । अवेग–वेगबाहुल्यरहितम् । सुखे–हेमन्तादौ ।

**अधोगं *यापयेद्रक्त यच्च दोषद्वयानुगम् ।**
***शान्तं शान्तं पुनः कुप्यन्मार्गान्मार्गान्तरं च यत् २**

स०–अधोग रक्तपित्तमूर्ध्वगरक्तपित्तोक्तैकदोषानुगादिविशेषणविशिष्टमपि यापयेत् । यच्च दोषद्वयानुग–वातकफाभ्या हीनबलाभ्यामनुगतमूर्ध्वगमपि, तच्च यापयेत् ।

आ० र०–याप्यमाह–अधोगमिति, शान्तं शान्तमिति च । यत्–गच्छत्, इण् गतौ ।

१ 'दानप्राय' ध । २ इद रक्तपित्तचिकित्सित चरके चि० ४ अध्याये नि० २ अध्याये च, सुश्रुते उ० ४५ अध्याये, अष्टाङ्गसङ्ग्रहे चि० ३ अध्याये चास्ति वर्णितम् । ३ 'थैकदोष ' ध. । *४ शान्त शान्तमिति श्लोकार्धं यापयेदित्यनेन सम्बन्धनीयम्, चरकसम्मतत्वात् । तथा च तद्ग्रन्थ (चि. अ ४।१९)–"यद्विदोषानुग यद्वा शान्त शान्त प्रकुप्यति । मार्गान्मार्ग चरेद्वा याप्य पित्तमसृक् च तत् ॥" इति । हेमाद्रिचन्द्रनन्दनेन्दुभिरप्येवमेव व्याख्यातम् । अरुणदत्तेन त्वस्य त्यजेदित्यनेन य सम्बन्ध प्रतिपादित, सोऽयुक्त एव ।

**अतिप्रवृत्तं मन्दाग्नेस्त्रिदोषं द्विपथं त्यजेत् ।**

स०–शान्ति शान्त–अतिशयेन शान्त, पुन कुप्यत्–कोप गच्छत्, ऊर्ध्वगमेकदोषानुगमधोग वा त्यजेत् । अथ मार्गात्–ऊर्ध्वात् नासाक्षिकर्णास्यलक्षणात्, मार्गान्तर–गुदमेढ्रलक्षण, यत्–गच्छत्, एव यत्प्रवृत्त तच्च त्यजेत् । यदिति इण शतरि इणो यणिति यादेशे यदिति रूपम् । तथा, अतिप्रवृत्तमूर्ध्वमार्गादधोमार्गाद्वा यद्रक्तपित्त तत्त्यजेत्, रक्तस्य प्राणायतनत्वात् । उक्त च–"जीवित प्राणिना तत्र रक्ते तिष्ठति तिष्ठति ।" इति । तथा, मन्दाग्नेर्यत्प्रवृत्तमधोगमूर्ध्वग वा तदपि विरुद्धोपक्रमत्वात्त्यजेत् । तथा हि,–मन्दाग्ने कटुकाम्लोष्णरूक्षतीक्ष्णाद्यौषधमग्निसन्धुक्षण यत्तद्धितम्, रक्तपित्ते चातो विपरीतप्राय यत्तत्पथ्यम् । तथा, त्रिदोषमूर्ध्वगमधोग वा तदपि त्यजेत्, विषमत्वात् । यतो न तद्वमनविषय भवितुमर्हति नापि विरेचनविषयम् । तथा, यत् द्विपथग–द्विमार्गप्रवृत्त युगपद्रक्तपित्त, तदपि त्याज्यम्, प्रतिलोमौषधाभावात् । तथा चोक्तम् (हृ नि अ ३।१३)–"असाध्यमुभयायनम् । अशक्यप्रातिलोम्यत्वात्" इति ।

आ० र०–असाध्यमाह–अतिप्रवृत्तमिति । यत्रानुबन्ध्यपि पित्त तद्वि(त्रि)दोषजम् । यत्र तु जनकमेव तद्विदोष[ज]मेकदोष(ष)[ज] वा । निदानोक्तानामपि साध्यादीना पुनरुक्तिरपरिपूर्णपूरणाय । तत्र साध्यत्वे युक्तिरुक्ता, इह तु लक्षणमिति वा, पूर्वाचार्यातिविप्रकीर्णोक्तिप्रदर्शन वा ।

**ज्ञात्वा निदानमयनं मलावनुबलौ बलम् ॥ ३ ॥**
**देशकालाद्यवस्थां च रक्तपित्ते प्रयोजयेत् ।**
**लङ्घनं बृंहणं वाऽऽदौ शोधनं शमन तथा ॥ ४ ॥**

स०–निदानादि ज्ञात्वाऽनन्तर रक्तपित्ते–ऊर्ध्वगेऽधोगे वा, आदौ–प्रथमत एव, लङ्घन प्रयोजयेत्, अथवा बृहणम्, अथवा शोधन शमन वा । तत्र निदान–तीक्ष्णोष्णकट्वम्लादिसेवनम्, एतज्ज्ञान हि तन्निदानवर्जन उपयुज्यते । तथा च वक्ष्यति (श्लो २४)–"यत्किञ्चिद्रक्तपित्तस्य निदान तच्च वर्जयेत् ।" इति । अयन–ऊर्ध्वाधोलक्षण ज्ञात्वा । तथा च वक्ष्यति (श्लो.८)–"ऊर्ध्वगे तर्पण योज्य प्राक्" इति । तथा (श्लो ४५)–"रक्ते सपिच्छे सकफे ग्रथिते कण्ठमार्गगे । लिह्यान्माक्षिकसर्पिर्भ्या क्षारमुत्पलनालजम् ॥" इति । तथा ( श्लो ४७ )–"गुदागमे विशेषेण शोणिते बस्तिरिष्यते ।" इत्यादि । तथा, पित्ताख्यस्य मलस्यात्र मूलभूतत्वात्सामर्थ्यात् मलौ–वातकफाख्यौ, अनुबलौ ज्ञात्वा चिकित्साविशेष प्रयोजयेत् । तथा च वक्ष्यति (श्लो ३६)–"रक्तपित्त न चेच्छाम्येत्तत्र वातोल्बणे पय । युञ्ज्याच्छाग" इत्यादि । तथा, बल ज्ञात्वा । यतो वक्ष्यति (श्लो.१३)–"यथाख मन्थपेयादि प्रयोज्यो रक्षता बलम् ।" इति । देशो–द्विविध शारीरो भूमिदेशश्च । तत्र शारीरो–मुखनासाद्यवयवरूप । ऊर्ध्वगे हि रक्तपित्ते सत्यपि नासाप्रवृत्ते विशेषेणान्यदौषधमन्यप्रवृत्तेऽन्यत् । तथा, अधोगे रक्तपित्ते सत्यपि गुदप्रवृत्तेऽन्यदौषध मेढ्रप्रवृत्ते चान्यत् । भूमिदेशश्च–त्रिविधो व्याख्यातो जाङ्गलानूपसाधारणभेदेन । तत्र जाङ्गलेऽन्यदौषधमनूपेऽन्यत् साधारणे चान्यत् । कालो–मुहूर्तादि शीतोष्णवर्षलक्षण आवस्थिकश्च । तथा च शीते कालेऽन्यादृशमौषधमन्यस्मिन् कालेऽन्यादृशमौषधं रक्तपित्ते । आदिग्रहणेनानलाहारसत्त्वसात्म्यवय प्रकृतिप्रभृतयो गृह्यन्ते । अवस्था च ज्ञात्वा–अवस्थावशात्, रक्तपित्तस्य ह्यवस्थाविशेषेणान्यदौषध स्यात् ।

आ० र०–लङ्घनीयबृहणीयशोधनीयशमनीयविभागमाह–ज्ञात्वेति । तत्र निदानज्ञानात् बृहणोत्थे लङ्घन लङ्घनोत्थे बृहणम् । अयनज्ञानात् ऊर्ध्वगे लङ्घनमधोगे बृहणम् । अनुबलमलज्ञानात् कफे लङ्घन वाते बृहणम् । बलज्ञानात् सम्पूर्णे बले लङ्घनमल्पे बृहणम् । देशज्ञानात् अनूपे लङ्घन जाङ्गले बृहणम् । कालज्ञानात् विसर्गे लङ्घनमादाने बृहणम् । आदिशब्दात् यौवने लङ्घन वार्धके बृहणमित्यादि । अवस्थाज्ञानात् अपक्के लङ्घन पक्के बृहणम् । पूर्वं शमनशोधनविभागो ज्ञेय । आदौग्रहणात् लङ्घनानन्तर बृहण बृहणानन्तर लङ्घन च कार्यम् ।

**सन्तर्पणोत्थं बलिनो बहुदोषस्य साधयेत् ।**
**ऊर्ध्वभागं विरेकेण वमनेन त्वधोगतम् ॥ ५ ॥**
**शमनैर्बृंहणैश्चान्यल्लङ्घ्यबृंह्यानवेक्ष्य च ।**

स०–सन्तर्पणोत्थं बलिनो बहुदोषस्य नरस्य रक्तपित्तमूर्ध्वगं विरेकेण साधयेत्, अधोगत तु वमनेन साधयेत् । अन्यत्–अपतर्पणोत्थ रक्तपित्तं दुर्बलस्याल्पदोषस्योर्ध्वग शमनैरधोग बृहणैरुपाचरेत् । बृहणैर्वा शमनै । न चेद चिकित्सित निरपेक्ष युञ्जीतेत्याह–लङ्घ्यबृह्यानवेक्ष्य चेति । लङ्घनादुत्पन्नमधोगमपि शमनैरुपाचरेत् । बृहणादुत्पन्नमूर्ध्वगमपि लङ्घनैरुपाचरेदित्यर्थ ।

आ० र०–शोध्यत्वेऽपि वम्यविरेच्यविभागमाह–सन्तर्पणोत्थमिति । अधोगे वमनम् । ऊर्ध्वगे विरेचनम् । सन्तर्पणोत्थतादित्रय(क)मुभयत्र तुल्यम् ।

शाम्यत्वेऽपि लङ्घनशाम्यबृहणशाम्यविभागमाह–शमनैर्बृंहणैश्चेति । अन्यत्–अपतर्पणोत्थमल्पबलस्य चाल्पदोषस्य च । ऊर्ध्वग लङ्घनशमनैस्तथा लङ्घ्ये पुरुषे सन्तर्पणोत्थत्वादित्रये सत्यपि बृहणम् । बृंह्ये पुरुषे अतर्पणोत्थत्वादित्रये सत्यपि लङ्घनम् ।

१ अस्माग्रे 'तस्मादपि चाधोमार्गात् पुनर्मार्गान्तर–ऊर्ध्व याति, तदुभय यापयेदिति चन्द्रिकाव्याख्या ।' इति ट पुस्तकेऽधिक पाठ । २ 'ग–तुल्यकाल द्वि' ट. । ३ 'चादौ' फ स द्व । ४ 'रक्तपित्ते तु सकफे' ट ड ध. । ५ 'या त्रिविध बल' ट. ।

१ 'लेऽन्यदौष' इति क्वचित् । २ 'गमम्' फ. । ३ 'नपेक्ष्य' फ स मू ,ड. । ४ 'त्थ बृहणैर्वा शमनै ।' ड,ध. । ५ 'लङ्घ्यान् बृह्या' ड,ध. ।

**ऊर्ध्वं प्रवृत्ते शमनौ रसौ तिक्तकषायकौ ॥ ६ ॥**
**उपवासश्च निःशुण्ठीषडङ्गोदकपायिनः ।**

स०-ऊर्ध्वं प्रवृत्ते रक्तपित्ते शुण्ठीरहित षडङ्गोदक पिबत पुसस्तिक्तकषायौ रसौ शमनम् । तथा, उपवास ।

**आ० र०-शमनमाह-ऊर्ध्वं प्रवृत्त इति । षडङ्गोदक-"घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम् ।" (हृ चि अ १।१७) इति ज्वरोक्तम्, तच्चात्र शुण्ठीं विना कार्यम् ।**

**अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः ॥ ७ ॥**

स०-अधोगे तु रक्तपित्ते बृहणो मधुरो रसो हित ।

आ० र०-बृंहणमाह-अधोगे रक्तपित्त इति ।

**ऊर्ध्वगे तर्पण योज्यं प्राक् च पेया त्वधोगते ।**

स०-ऊर्ध्वगे रक्तपित्ते प्राक्-पूर्व, तर्पण योज्यम्, तथा सात्म्यत्वात् । एवमधोगे रक्तपित्ते प्राक् पेया योज्या ।

**आ० र०-ऊर्ध्वगाधोगयो पथ्यविभागमाह-ऊर्ध्वगे तर्पणमिति । ऊर्ध्वगे प्राक् तर्पण पथ्यम्, अधोगे तु पेया । शेष ज्वरवत् ।**

**अश्नतो बलिनोऽशुद्धं न धार्यं तद्धि रोगकृत् ॥ ८ ॥**
**धारयेदन्यथा शीघ्रमग्निवच्छीघ्रकारि तत् ।**

स०-बलिनो नरस्याश्नतो रक्तमशुद्ध-दुष्ट, न धार्य-न स्तम्भनीयम् । तद्धि धृत सिराव्यधविध्युक्तान् विसर्पविद्रधिप्लीहादीन् रोगान् करोति । अन्यथा-विधिविपर्यये सति दुर्बलस्यांभोजनस्य च, शीघ्र धारयेत् । यस्मादग्निवच्छीघ्रं मरणकारि तत्-रक्तमस्तम्भित, स्यात् ।

**आ० र०-अशुद्धस्य रक्तस्य स्तम्भन निषेधति-अश्नत इति ।**

शुद्धस्य स्तम्भन विधत्ते-धारयेदिति । अन्यथा-शुद्धत्वे, बलाशनयोरल्पयोरशुद्धत्वेऽपि । तत्-अस्तम्भित रक्तम् ।

**त्रिवृच्छ्यामाकषायेण कल्केन च सशर्करम् ॥ ९ ॥**
**साधयेद्विधिवल्लेहं लिह्यात्पाणितलं ततः ।**

स०-त्रिवृता-शुक्लगोपीत्युच्यते । श्यामा-मालविका त्रिवृदुच्यते । तयो कषायेण तथा तयोरेव [ कल्केन ] मात्रामाश्रित्यैतदुक्तम् । अत्र च कण्टकारिकालेहवत् (हृ चि अ ३।६२) क्वाथकल्कशर्कराणा परिमाण वेद्यमिति वृद्धवैद्यव्यवहार ।

**आ० र०-विरेचनमाह-त्रिवृच्छ्यामाकषायेणेति । कल्केन-त्रिवृद्द्वयस्यैव । पाणितलं-कर्षम् ।**

१ 'ज्यं पेया पूर्वमधो' अ स द्व । 'ज्य वा प्राक् पेया' फ । २ 'गमे' इ फ. । ३ अस्याग्रे "**गलग्रह पूतिनस्य मूर्च्छायमरुचिं ज्वरम् । गुल्मं प्लीहानमानाह किलासं मूत्रकृच्छ्रताम् ॥ कुष्ठान्यर्शांसि वीसर्प वर्णनाश भगन्दरम् । बुद्धीन्द्रियोपरोध च कुर्यात्स्तम्भितमादित. ॥**" इति इ. पुस्तके चरकस्थोऽधिक पाठ । ४ 'स्यातंजन' ड.ध. ।

**त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु ॥१०॥**
**मोदकः सन्निपातोर्ध्वरक्तशोफज्वरापहः ।**
**त्रिवृत्समसिता तद्वत् पिप्पलीपादसंयुता ॥ ११ ॥**

स०-तथा त्रिवृतादिभिर्मोदको-वटक । शर्करापरिमाण च पञ्चकोलचूर्णवदवबोध्यम् । स च मोदक सन्निपातोर्ध्वरक्तशोफज्वरहृद्भवति । पूर्वोक्तस्य लेहस्य विषयनिर्देशादेव विषयो वेद्य । त्रिवृत्समसिता पिप्पलीपादसयुता तद्वत्-सन्निपातादिहृदित्यर्थ ।

**आ०र०-विरेचनान्तरमाह-त्रिवृतेति । सन्निपातस्त्रिभि. सम्बध्यते ।**

विरेचनान्तरमाह-त्रिवृत्समसितेति । सङ्ग्रहे तु (चि अ ३) -"**त्रिफलात्रिवृताधात्रीत्रायन्त्यारग्वधाभया । गवाक्षीक्षुर सक्षीरद्राक्षा क्षौद्रसितोत्कटा ॥ यथास्व कल्पविहिता विरेकार्थं प्रयोजयेत् ।" इति । त्रिफलादीनि दश विरेचनानि । प्रत्येक मधुसितोत्कटानि । गवाक्षी-इन्द्रवारुणी ।**

एवमूर्ध्वगरक्तपित्तचिकित्सामुक्त्वा, अधोगरक्तपित्तचिकित्सामाह-

**वमनं फलसंयुक्तं तर्पणं ससितामधु ।**
**ससितं वा जलं क्षौद्रयुक्तं वा मधुकोदकम् ॥ १२ ॥**
**क्षीरं वा रसमिक्षोर्वा**

**स०-मदनफलेन** सयुक्त तर्पण सितामधुभ्या सह वमने देयम्, धातकोपभयादित्यभिप्राय । अथवा सशर्कर जल फल सयुक्त, [ अथवा ] मधुकोदकमथवा क्षौद्रसयुक्त, अथवा क्षीरं, अथवेक्षुरसम् । सर्वमेतत् मदनफलसयुक्त पृथक् प्रत्येक देयम् ।

**आ० र०-वमनपञ्चकमाह-वमन फलसयुक्तमिति । पञ्चस्वपि मदनफलसयोग । सङ्ग्रहे तु ( चि अ ३ )- "फलेन्द्रयवगाङ्गेयीमधुक वा समाक्षिकम् ।" इति ।**

**शुद्धस्यानन्तरो विधिः ।**
**यथास्वं मन्थपेयादिः प्रयोज्यो रक्षता बलम् ॥१३॥**

**स०-**ऊर्ध्व[ग]रक्तपित्तिनोऽधोगरक्तपित्तिनो वा यथाक्रमं विरेकवमनाभ्या शुद्धस्यानन्तर [यथास्व-]यथायोग यथाविधि, मन्थपेयादि[१०] प्रयोक्तव्य ,-ऊर्ध्वगे मन्थादिरधोगे पेयादिरिति यथार्थ ।

**आ० र०-शुद्धस्य पथ्यमाह-शुद्धस्येति । अनन्तर -**

१ 'क्तपित्तज्व' अ स द्व । २ "त्रिवृतश्चतुर्थेन भागेन पिप्पली । तद्वदिति मोदक सन्निपातादिहर । माक्षिकमनुक्तमपि तद्ग्रहणेन मोदकत्वाल्लभ्यते ।" इतीन्दु । ३ 'को-लड्डुक ।' ड । ४ 'कादिचू' ड । ५ 'तोतथरक्त' ट ड ध । ६ 'क्षाक्षौद्र' स द्व । ७ 'कित्सितमा' ध । ८ 'र वेक्षु' ड ध. । ९ 'रसान्तम् ।' ट । १० 'दिराहारार्थं प्र' ट. ।

"ऊर्ध्वगे तर्पण योज्यम्" ( श्लो ८ ) इत्यादि । बल-अग्निबल देहबल च ।

**मन्थो ज्वरोक्तो द्राक्षादिः, पित्तघ्नैर्वा फलैः कृत. ।**

स०-मन्थो ज्वरोक्तो द्राक्षादि -"द्राक्षामधूकमधुक" ( हृ चि अ १।५५ ) इत्यादि । पित्तघ्नैर्वा-द्राक्षामलककाश्मर्यमधु कादिभि , फलै कृत प्रयोक्तव्य ।

आ० र०-मन्थमाह-मन्थो ज्वरोक्त इति । द्राक्षादि - "द्राक्षामधूकमधुक"इत्यादि ।

मन्थान्तरमाह-पित्तघ्नैर्वेति ।

**मधुखर्जूरमृद्वीकापरूषकसिताम्भसा ॥ १४ ॥**
**मन्थो वा पञ्चसारेण सघृतैर्लाजसक्तुभिः ।**
**दाडिमामलकाम्लो वा मन्दाग्न्यम्लाभिलाषिणाम् ॥**

स०-अथवा मध्वादिना द्रव्यपञ्चकेन कृतेन पञ्चसाराख्येन लाजसक्तुभि ससपिष्कैर्मन्थो हित । मन्दाग्नीनामम्लाभिला षिणा च दाडिमामलकाभ्यामम्लश्च मन्थ प्रयोक्तव्य ।

आ० र०-मन्थान्तरमाह-मधुखजूरेति । पञ्च मध्वादीनि साराण्यत्रेति पञ्चसारम्, सज्ञा चेयम् ।

मन्थान्तरमाह-दाडिमामलकाम्लो वेति । दाडिमामलकप्रयोगादम्ल ।

'अधोगे प्राक्पेया प्रयोज्या' इत्युक्तम् । अतस्ता एव पैया ब्रूते-

**कमलोत्पलकिञ्जल्कपृश्निपर्णीप्रियङ्गुकाः ।**
**उशीरं शाबर रोध्रं शृङ्गवेर कुचन्दनम् ॥ १६ ॥**
**ह्रीबेर धातकीपुष्पं बिल्वमध्यं दुरालभा ।**
**अर्धार्धैर्विहिताः पेया वक्ष्यन्ते पादयौगिकाः ॥ १७ ॥**
**भूनिम्बसेव्यजलदा मसूराः पृश्निपर्ण्यपि ।**
**विदारिगन्धा मुद्गाश्च बला सर्पिर्हरेणुकाः ॥ १८ ॥**

स०-कमलोत्पलेत्यादिभिर्वर्गैरर्धश्लोकै पेया विहिता । पादयौगिका वक्ष्यन्ते । भूनिम्बसेव्येत्यादय ।

आ० र०-त्रिभिरर्धैस्तिस्र पेया आह-कमलोत्पलेति ।

चतुर्भि पादैश्चतस्र पेया आह-भूनिम्बसेव्यजलदा इति । विदारिगन्धा-शालिपर्णी । हरेणुका -सतीना । सङ्ग्रहे त्वधिका पेया. ( चि. अ ३ )-"चन्दनाम्बुप्रियङ्गव । तुवर्यो वाऽतिबलया बलया वा हरेणव ॥" इति ।

**जाङ्गलानि च मांसानि शीतवीर्याणि साधयेत् ।**
**पृथक्पृथग्जले तेषां यवागूः कल्पयेद्रसे ॥ १९ ॥**
**शीताः सशर्कराक्षौद्रास्तद्वन्मांसरसानपि ।**
**ईषदम्लाननम्लान् वा घृतभृष्टान् सशर्करान् ॥२०॥**

स०-मासानि जाङ्गलानि शीतवीर्याणि[1] -शशादिसबन्धीनि, पूर्वोक्तपेयौषधाना पृथक्पृथग्जले साधयेत् । अनन्तर तस्मिन् रसे यवागू कल्पयेत् । कीदृशी ? शीतास्तथा सशर्कराक्षौद्रा । तद्वदित्यनेन शीतत्व मासरसानामतिदिशति, न तु सशर्कराक्षौद्रत्वमपि, अयोगार्हत्वात् । अत एवाह-तान् मासरसान् ईषदम्लाननम्लाभिलाषिण , अनम्लाभिलाषिणोऽनम्लानेव । तथा, घृतभृष्टान् सशर्करान्-शर्करायुक्तान् ।

आ० र०-उक्ताना पेयाना प्रकारान्तरमाह-जाङ्गलानि चेति । तेषा-पेयौषधाना, जले-क्राथे । रसे-क्राथसिद्धमासरसे ।

मासरसानाह-तद्वदिति । तद्वत्-पेयावत् , तण्डुलप्रक्षेप विना । सङ्ग्रहे तु ( चि अ ३ )-"तत्कर्षाये हिता पेया मासपेयास्तथा रसा । अनम्ला किञ्चिदम्ला वा सघृतक्षौद्रशर्करा ॥" इति ।

**शूकशिम्बीभवं धान्यं रक्ते शाकं च शस्यते ।**
**अन्नस्वरूपविज्ञाने यदुक्तं लघु शीतलम् ॥ २१ ॥**

स०-तथा, शूकशिम्बीज धान्य शाक च रक्तपित्ते शस्यते । अन्नस्वरूपविज्ञानीयेऽध्याये ( सू अ ६ ) यदुक्त लघु च शीतल च ।

आ० र०-धान्यानि शाकानि चाह-शूकशिम्बीभव धान्यमिति । रक्ते-रक्तपित्ते ।

**पूर्वोक्तमम्बु पानीयं पञ्चमूलेन वा शृतम् ।**
**लघुना शृतशीतं वा मध्वम्भो वा फलाम्बु वा २२**

स०-पूर्वोक्तमम्बु-षडङ्ग शुण्ठीरहित, पानीयं-पातव्यम् । अथवा लघुना पञ्चमूलेन शृतम् । पानीयस्य श्रपणे तन्त्रकारैर्विधिरुक्त । यथा-"कर्षं गृहीत्वा द्रव्यस्य क्राथयेत्प्रास्थिकेऽम्भसि । अर्धशृत प्रयोक्तव्य जलपाके स्वय विधि ॥" इति । केवल वा जल शृतशीत हितम् । मध्वम्भो-माक्षिकयुक्तं पानीयम् । फलाम्बु वा-द्राक्षाभिर्वा पित्तघ्नै फलै कृतम् ।

आ० र०-तृषितस्य पानार्थमुदकमाह-पूर्वोक्तमम्ब्विति । पूर्वोक्त-नि.शुण्ठीषडङ्गोदकम् । लघुपञ्चमूलसिद्ध वा । शृतशीत वा केवलम् । मधूदक वा । फलोदक वा । फलानि-दाडिमादीनि लघुशीतलानि । सङ्ग्रहे तु ( चि. अ ३ ) "पञ्चकाद्यञ्जनादी च सारिवादि च कल्पयेत् । अन्नपाने गणं तद्वद्दशक दाहनाशनम् ॥ कफानुगे यूषशाक

१ 'लाषिण ।' अ इ फ स द्व । २ 'योज्य ।' ट. । ३ 'अर्धैर्वि' हे । 'र्धार्धविहि' अ इ । ४ 'सर्पि. प्रियङ्गुका.' इ. । ५ 'मिरर्ध' ट ।

१ 'णि-मेषादि' ड ध. । २ 'पेयोपयोगिना' ट । ३ 'कैरया सह यु' ट । ४ 'पायेर्हिता ' फ । *५ 'न्य शाकं मासं च' इति 'जमांसं पि' इति च सङ्ग्रहद्वयस्य पाठोऽयुक्त , मासस्य पूर्वमुक्तत्वात् हृदयटीकाकाराणा हेमाद्र्यरुणदत्तादीना सङ्ग्रहटीकाकारस्येन्दोश्चाप्यसम्मतत्वाच्च । ६ 'काद्युत्पलादी च' स मू । ७ 'नादीना सा' फ. । 'नादि च' स स. ।

मारुतानुगते रसम् । अभीरोरङ्कुरैर्वा सह मुद्गा पटोलजै । मकुष्ठा धन्वयासोत्थै रक्तपित्ते पर मता ॥" इति ।

**शशः सवास्तुकः शस्तो विबन्धे**

स०–शश –शशस्य मास, सहवास्तुकेन विड्विबन्धे सति रक्तपित्तिन शस्त ।

आ० र०–विबन्धे रसमाह–शश सवास्तुक इति ।

**तित्तिरिः पुनः।**
**उदुम्बरस्य निर्यूहे साधितो मारुतेऽधिके ॥ २३ ॥**
**प्लक्षस्य बर्हिणस्तद्वन्न्यग्रोधस्य च कुक्कुटः ।**

स०–तित्तिरिस्तु मारुतेऽधिक उदुम्बरस्य क्वाथे साधित शस्त । प्लक्षस्य क्वाथे साधितो बर्हिणो–मयूर , तद्वत्–मारुतेऽधिके शस्त । बर्हिण इति "फलबर्हाभ्यामिनच् ।" तथैव न्यग्रोधस्य निर्यूहे कुक्कुट शस्त । उदुम्बरादिक्वाथसाधनं तित्तिर्यादीनामौष्ण्य प्रतिहन्तुम् ।

आ० र०–मारुताधिके रसमाह–तित्तिरि पुनरिति ।

मारुता[धिके रसा]न्तरमाह–प्लक्षस्य बर्हिणस्तद्वदिति । बर्हिणो–मयूर ।

रसान्तरमाह–न्यग्रोधस्य च कुक्कुट इति । सङ्ग्रहे तु (चि. अ ३)–"बिसोत्पलमृणालाना वर्तकक्रकरौ हितौ । वैर्तीरोऽम्भोजनालानामश्वत्थस्य कपिञ्जल ॥" इति ।

**यत्किञ्चिद्रक्तपित्तस्य निदानं तच्च वर्जयेत् ॥ २४ ॥**

स०–यत्किञ्चिद्रक्तपित्तस्य कारणं–येन सेवितेन तज्जात, तच्च वर्जयेत्–परिहरेत् ।

आ० र०–वर्जनीयमाह–यत्किञ्चिदिति ।

**वासारसेन फलिनीमृद्रोध्राञ्जनमाक्षिकम् ।**
**पित्तासृक् शमयेत्पीतं, निर्यासो वाऽटरूषकात् २५**
**शर्करामधुसंयुक्तः केवलो वा, शृतोऽपि वा ।**
**वृषः सद्यो जयत्यस्रं, स ह्यस्य परमौषधम् ॥ २६ ॥**

स०–वासकस्य रसेन फलिन्यादिक पीत रक्तपित्त शमयति । अथवा,अटरूषकस्य रस शर्करामधुयुक्त पीतो रक्तपित्त जयेत् । अथवा केवलो वासारस । अथवा क्वथितो वृष शीघ्र रक्त जयेत् । स वृषो यस्मादस्य–रक्तस्य, परमौषधम् ।

आ० र०–शमनमाह–वासारसेनेति । फलिनी–प्रियङ्गु । मृत्–सौराष्ट्री । अञ्जन–रसाञ्जनम् । माक्षिक–मधु ।

[शमनान्तरमाह–निर्यास इति । निर्यासः–स्वरस । स शर्करामधुसयुक्त केवलो वेति द्विविध ।]

शमनान्तरमाह–शृतोऽपि वा वृष इति । शृतोऽपि शर्करामधुसंयुक्त केवलो वेति स्वरसवद्द्विविध ।

१ 'स्थैरक्तपित्ते' स द्व । २ 'तु' स मू । ३'वार्तीरो' स मू । 'वर्तिकाऽम्भो' स स । ४ 'रक्तपित्त' ड ।

**पटोलमालतीनिम्बचन्दनद्वयपद्मकम् ।**
**रोध्रो वृषस्तन्दुलीयः कृष्णा मृन्मदयन्तिका ॥२७॥**
**शतावरी गोपकन्या काकोल्यौ मधुयष्टिका ।**
**रक्तपित्तहराः क्वाथास्त्रय. समधुशर्करा ॥ २८ ॥**

स०–पटोलादयोऽर्धश्लोकास्त्रय क्वाथा मधुशर्करायुता रक्तपित्त जयन्तीति योज्यम् । अत्र च वासक आर्द्रोऽपि द्विगुणो न योज्य । एव ह्युक्त तन्त्रान्तरे–"वासाकुटजकूष्माण्डशतपुष्पासहाचरा । नित्यमार्द्रा प्रयोक्तव्यास्तथाऽपि द्विगुणा न ते ॥" इति ।

आ० र०–त्रिभिरर्धैः क्वाथत्रयमाह–पटोलमालतीति । चन्दनद्वय–श्वेत रक्त च । कृष्णा मृत्–कृष्णमृत्तिका । मदयन्तिका–यूथिका ।

**पलाशवल्कक्वाथो वा सुशीतः शर्करान्वितः ।**
**लिह्याद्वा मधुसर्पिर्भ्यां गवाश्वशकृतो रसम् ॥ २९ ॥**

स०–अथवा पलाशवल्कक्वाथ शीत शर्करायुत पूर्वोक्तगुण । अथवा मधुसर्पिर्भ्यां गवाश्वशकृतो रस पिबेत् । गवाश्वेति "अवङ् स्फोटायनस्य" इत्यवडादेश ।

आ० र०–क्वाथान्तरमाह–पलाशवल्कक्वाथो वेति । वल्कल–त्वक् ।

लेहमाह–लिह्याद्वा मधुसर्पिर्भ्यामिति । शकृद्रसस्य पाकाद्वनीभावेन लेहत्वम् ।

**सक्षौद्रं ग्रथिते रक्ते लिह्यात्पारावताच्छकृत् ।**

स०–ग्रथिते–ग्रन्थिमति, रक्तपित्ते पारावतस्य शकृत् क्षौद्रेण सह लिह्यात् ।

आ० र०–ग्रथिते रक्ते लेहमाह–सक्षौद्रमिति । ग्रथित–तन्तुलम् ।

**अतिनिःस्रुतरक्तश्च क्षौद्रेण रुधिरं पिबेत् ॥ ३० ॥**
**जाङ्गलं, भक्षयेद्वाऽऽजमामं पित्तयुतं यकृत् ।**

स०–अतिनि स्रुतरक्तश्च जाङ्गल रक्त क्षौद्रेण सह पिबेत् । आज यकृदपक्व पित्तयुत भक्षयेत् ।

आ० र०–अतियोगे रुधिरमाह–अतिनि.स्रुतरक्तो वेति । जाङ्गल–जाङ्गलवर्गीयहरिणादिशरीरजम् ।

अतियोगे यकृद्भक्षणमाह–भक्षयेद्वेति । अजस्य–छागस्येदमाजम् । आम–अपक्वम् । आजेनैव पित्तेन युक्तम् ।

**चन्दनोशीरजलदलाजमुद्गकणायवैः ॥ ३१ ॥**

१ 'टोलामलकीनि' इति क्वचित् । २ 'व्या न तासा द्विगुण भवेत्' ड । 'था हि द्वि' ट ध । ३ 'पिबेद्वा' अ इ अरुण । ४ 'वत शकृ' अ फ । ५ 'रापतश' ट ड ध । ६ 'नि सृत' अ फ. । ७ 'रक्तो वा क्षौ' इ फ.स.द्व ।

**र्बलाजले पर्युषितैः कषायो रक्तपित्तहा ।**

स०–चन्दनादिभिर्बलाजले पर्युषितै कषायो रक्तपित्तजित्।

आ० र०–अतियोगे शीतकषायमाह–चन्दनोशीरेति । बलाजले–बलाक्काथे ।

**प्रसादश्चन्दनाम्भोजसेव्यमृद्भृष्टलोष्टजः ॥ ३२ ॥**
**सुशीतः ससिताक्षौद्रः शोणितातिप्रवृत्तिजित् ।**

स०–चन्दनादिज प्रसाद सुशीत शर्करामाक्षिकाभ्या सह रक्तस्यातिप्रवृत्ति जयेत् ।

आ० र०–अतियोगे शीतकषायान्तरमाह–प्रसाद इति । मृद्भृष्टलोष्ट–पाकादग्निवर्णतां नीत मृल्लोष्टम् ।

**आपोथ्य वा नवे कुम्भे प्लावयेदिक्षुगण्डिकाः ॥३३॥**
**स्थितं तद्रुतमाकाशे रात्रिं प्रातः स्रुतं जलम् ।**
**मधुमद्विकचाम्भोजकृतोत्तंसं च तद्गुणम् ॥ ३४ ॥**

स०–इक्षुगण्डिका आपोथ्य भृशमादौ सैङ्कुट्य जले प्लावयेत् । नवे कुम्भे रात्रिमाकाशे गुप्त–कीटाद्युपहत यथा न स्यात्तथा, स्थित तत्–इक्षुगण्डिकाजल, प्रात स्रुत समाक्षिक विकसितपद्मेन कृतशेखर तद्गुण–पूर्ववद्गुणमित्यर्थ ।

आ० र०–अतियोगे शीतकषायान्तरमाह–आपोथ्य वेति । आपोथ्य–जर्जरीकृत्य । प्लावयेत्–नवकुम्भस्थे जले क्षिपेत् । अल्पत्वार्थं इक्षुगण्डिका –इक्षुखण्डानि । रात्रिमाकाशे स्थित–शिक्यालम्बनात् । गुप्त–प्रकृतिकीटादिभ्य । मधुमत्–क्षौद्रयुक्तम् । विकचाम्भोजकृतोत्तस–कुम्भकण्ठबद्वैरन्त प्रविशद्भिरिव विकसितकमलै सुरभीकृतम् । तद्गुण–पूर्वौषधसमानम् ।

**ये च पित्तज्वरे चोक्ताः कषायास्तांश्च योजयेत् ।**

स०–पित्तज्वरे च ये कषाया उक्ता –"शक्रयवाघनम् । कटुका चेति सक्षौद्रा" ( हृ चि अ. १।५२ ) इत्यादय, तांश्च–कषायान्, अत्र योजयेत् ।

आ० र०–पित्तज्वरकषायानतिदिशति–ये चेति । सङ्ग्रहे तु ( चि अ ३ )–"वासारसेन भूनिम्बकटुकाशर्करा पिबेत् । तेनैव वा क्षौद्रयुक्त पद्मकेसरपद्मकम् ॥ सरोजनागकुसुमशाद्वलोत्पलवास्तुकम् । शाद्वल–दूर्वा । पथ्या रजन्यहिंस्रा वा पलाण्डु तद्वदेव वा ॥ अहिंस्रा–कन्थारिभेद । तद्वत्–मधुसर्पिर्भ्यां लिह्यात् । फलिनीलोध्रखदिरशाल्मलीकोविदारजम् । शिरीषशेलुककुभसिन्दुवारातिमुक्तजम् ॥ पलाशयूथिकाशिग्रुमधूकासनजन्म च । मधुना चूर्णित पुष्पमेकश पृथगेव वा ॥ पुष्पैरेभिर्विपक्क च सक्षौद्र माहिष घृतम् । लिह्यात् क्षौद्रेण पथ्या वा किञ्जल्क कमलस्य वा ॥ लाजान् शृङ्गाटक मुस्त खर्जूर कृष्णमृत्तिकाम् । क्षीरिवृक्षाङ्कुरान् द्राक्षा तवक्षीरी सितोपलाम् ॥ गैरिक मधुक रोध्र शङ्ख शम्बूकमञ्जनम् । तण्डुलीयकमूल वा बीज वा वास्तुकोद्भवम् ॥ रोध्रकालीयकोशीरफलिनीशङ्खगैरिकम् । पटोलपत्र दु स्पर्शा समङ्गा सारिवा लता ॥ त्वग्जम्बूवेतसाश्वत्थहयाह्वोदुम्बरार्जुनात् । किराततिक्तकमुकमुस्तकट्फलपद्मकम् ॥ प्रपौण्डरीकह्रीवेरकमलोत्पलपर्पटम् । चन्दनेन पृथग्युक्त समस्त वा सशर्करम् ॥ फाण्टीकृत श्रुत शीत चूर्ण वा तण्डुलाम्भसा । पीतमाशु जयत्यस्र तृड्दाहतमकानपि ॥ तद्वदच्छः सितारोध्रमधूकोशीरचन्दनात् । मृच्छ्यामासारिवामुस्तधातकीयष्टिकान्वितात् ॥ अच्छ –प्रसाद । तद्वत्–चन्दनादिवत् । वैडूर्यमुक्तामृच्छङ्खगैरिकामलकोदकम् । मधूदक रस वेक्षो पिबञ्जयति शोणितम् ॥ त्रपुसीमूलकल्क वा सक्षौद्र तण्डुलाम्बुना । पिबेत्करञ्जबीज वा तेन क्षौद्रसितायुतम् ॥ रोध्र चन्दनयष्ट्याह्व तेन यष्ट्याह्वमेव वा । नीलोत्पल सिता यष्टी मधूक पद्मकेसरम् ॥ छिन्नोद्भवा च शीतोऽय कषायो रक्तजित्परम् ।" इति । वङ्गसेने तु ( रक्तपित्ताधिकारे श्लो ४८ )–"तालीसचूर्णयुक्त पेय क्षौद्रेण वासकस्वरस । कफपित्तश्वासवमीतमकस्वरभेदरक्तपित्तहर ॥ आटरूषक मृद्वीकापथ्याक्काथ सशर्कर । क्षौद्राढ्य कसनश्वासरक्तपित्तनिबर्हण ॥ शतावरी बला रास्ना काश्मर्य सपरूषकम् । पाययेद्रक्तपित्तघ्न सद्य शूलहर परम् ॥ चन्दनेन्द्रयवा पाठा कटुका सदुरालभा । गुडूची वासक रोध्र पिप्पलीक्षौद्रसयुतम् । [ कफान्वित जयेद्रक्त तृष्णाकासज्वरापहम् ॥ ] पिबेच्छीतकषाय वा जम्ब्वाम्रार्जुनसम्भवम् । उदुम्बरफलाना वा रस समधु पाययेत् ॥ अतसीकुसुमसमङ्गा वटप्ररोहत्वगम्भसा पीता । प्रशमयति रक्तपित्त यदि भुङ्क्ते मुद्गयूषेण ॥ लोहगन्धिनि निश्वासे उद्गारे धूमगन्धिनि । पृथ्वीकां शाणमात्रां तु खादेद्द्विगुणशर्कराम् ॥ (श्लो ४६)–वासाकषायोत्पलमृत्प्रियङ्गुरोध्राञ्जनाम्भोरुहकेसराणि । पीत्वा सिताक्षौद्रयुतानि हन्यात्पित्तासृजो वेगमुदीर्णमाशु ॥ वासाया विद्यमानायामाशाया जीवितस्य च । रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ समाक्षिक पद्मप(द)लोद्भवो वा पीतो रस शोणितमाशु हन्ति ॥ ( श्लो ६९ )–पक्कोदुम्बरकाश्मर्यपथ्याखर्जूरगोस्तना । मधुना घ्नन्ति स-

१ "बलाया क्काथस्य षट्सु पलेषु चन्दनादीना पल रात्रिस्थित द्वितीयेऽह्नि प्रात कषायो रक्तपित्तघ्न ॥ चन्दनाम्भोजादीना प्रसादो–विचूर्ण्य जलेनालोड्य स्थापितानामुपरिभवो भाग ।" इतीन्दु । २ 'पित्त जयेत्' ड ध । ३ 'सङ्क्षुद्य' ड.ध. । ४ 'सिन्धुवा' फ ।

१ 'भि प्रपक्क' स मू । २ 'क्त चन्दन वा' फ । ३ 'मृच्छामा' फ स मू । ४ 'चेक्षो' स द्व । ५ 'मधुक' स द्व । ६ 'रीवरारास्ना' वङ्ग । ७ 'च' वङ्ग । ८ 'समाक्षिक' इति श्लोकार्ध मुद्रितवङ्गसेनपुस्तके नोपलभ्यते । ९ 'र्य प' इ. वङ्ग । १० 'स्तनम् ।' इ. । 'स्तनी । मधुना हन्ति' वङ्ग. ।

लीढा रक्तपित्तं पृथक् पृथक् ॥ वासकस्वरसे[1] पथ्या सप्तधा परिभाविता । कृष्णा वा मधुना लीढा रक्तपित्तं द्रुतं जयेत् ॥ ( श्लो ९३ )–चन्दनं नलदं लोध्रमुशीरं पद्मकेसरम्[2] । नागपुष्पं च बिल्वं च भद्रमुस्तं सशर्करम्[3] ॥ ह्रीवेरं चैव पाठां[4] च कुटजस्य फलं त्वचम्[5] । शृङ्गवेरं सातिविषं धातकी च रसाञ्जनम्[6] ॥ आम्रास्थि जम्बुसारास्थि तथा मोचरसोऽपि च । नीलोत्पलं समङ्गा च सूक्ष्मैला दाडिमत्वचम् ॥ चतुर्विंशतिरेतानि समभागानि कारयेत् । तण्डुलोदकसंयुक्तं क्षौद्रेण[8] सह योजयेत् ॥ हितं लोहितपित्तानामर्शसु[9] ज्वरितेषु च । मूर्च्छातमोपसृष्टानां[11] तृषार्तानां च दापयेत् ॥ [अतीसारं तथा छर्दिं स्त्रीणां च रजसो ग्रहम् ।] [12]चलितानां च गर्भाणां स्तम्भनं परमुच्यते । [13]अश्विभ्यां विहितो योगो रक्तपित्तविनाशनः[14] ॥" इति । जम्बूसारा–राजजम्बू । इति नवरक्तपित्तम् ।

**कषायैर्विविधैरेभिर्दीप्तेऽग्नौ विजिते कफे ॥ ३५ ॥**
**रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्बणे पयः ।**
**युञ्ज्याच्छागं शृतं, तद्वद्गव्यं पञ्चगुणेऽम्भसि ॥३६॥**
**पञ्चमूलेन लघुना शृतं वा ससितामधु ।**
**जीवकर्षभकद्राक्षाबलागोक्षुरनागरैः ॥ ३७ ॥**
**पृथक्पृथक्शृतं क्षीरं सघृतं सितयाऽथवा ।**

स०–एभिर्विविधैः–नानाप्रकारैः कषायैः, अग्नौ दीप्ते कफे च विजिते सति यदि रक्तपित्तं न शाम्यति, तदा तत्र वातोल्बणे रक्तपित्ते सति पञ्चगुणेऽम्भसि शृतं छागं पयो युञ्ज्यात् । पञ्चगुणेऽम्भसि गव्यं क्षीरं क्वथितं तद्वत्–तेन छागेन समानगुणं, तच्च युञ्ज्यात् । अथवा लघुना पञ्चमूलेन शृतं गव्यं सशर्करा मधु तद्गुणम् । तथा, जीवकर्षभकादिभिः पृथक् पृथक् शृतं सह घृतेनाथवा शर्करया सह तद्गुणम् ।

आ० र०–अथ जीर्णरक्तपित्तम् । तत्र छागक्षीरप्रयोगमाह–कषायैर्विविधैरिति ।

गव्यक्षीरमाह–तद्वद्गव्यमिति । तद्वत्–"अल्पाम्बुपानव्यायामकटुतिक्ताशनैः" (हृ सू अ ५।२४) इत्युक्तहेतुमत् । पञ्चगुणेऽम्भसि शृतम् ।

१ 'कस्य रसे' वङ्ग । २ 'ष्पं कुशं बिल्वं भ' इ । ३ 'रं च सिता पाठा कु' इ । ४ 'ठा तु कुटजोत्पलमेव च ।' वङ्ग । ५ 'विषा धा' वङ्ग । ६ 'सारं च त' इ । ७ 'रसं शुभम् ।' इ । 'रसो भवेत् ।' फ । ८ 'मधुना' वङ्ग । ९ 'द्रेणैवावलेहितम् ।' इ । 'ण सह संयुतम् ।' फ । १० 'मशिना ज्वरिणा तथा ।' वङ्ग । ११ 'च्छामेदोप' वङ्ग । 'र्च्छातमोभिसृष्टाना विषार्ता' इ । १२ 'चलता चामगर्भा' इ । 'प्रच्युताना च गर्भाणां स्थापनं प' वङ्ग । १३ 'अश्विनो सम्मतो यो० त्तनिबर्हण ।' वङ्ग । १४ 'हितं पूर्वं र० शनम् ।' इ ।

क्षीरान्तरमाह–पञ्चमूलेनेति ।

क्षीरान्तरमाह–जीवकर्षभकेति ।

**गोकण्टकाभीरुशृतं पर्णिनीभिस्तथा पयः ॥ ३८ ॥**
**हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम् ।**

स०–गोकण्टकादिभिस्तथा [ पर्णिनीभिः– ] शालिपर्णीपृश्निपर्णीमुद्गपर्णीमाषपर्णीभिः, शृतं शीघ्रमेव रक्तं सवेदनं हन्ति । विशेषेण मूत्रमार्गगतम् । विशेषग्रहणादन्यमार्गगमपि रक्तं हन्तीति द्योतयति ।

आ० र०–मूत्रमार्गगे क्षीरमाह–गोकण्टकाभीरुशृतमिति ।

**विण्मार्गगे विशेषेण हितं मोचरसेन तु ॥ ३९ ॥**
**वटप्ररोहैः शुङ्गैर्वा[1] शुण्ठ्युदीच्योत्पलैरपि[2] ।**

स०–विण्मार्गगे–गुदगते, रक्तपित्ते तु विशेषेण मोचरसेन शृतं क्षीरं हितम् । वटप्ररोहैर्वा शृतं क्षीरं, अथवा वटशुङ्गैः–प्रथमोद्भूतमुकुलितैः पल्लवप्रायैः, शुण्ठ्युदीच्योत्पलैर्वा शृतं पयो हितम् ।

आ० र०–गुदप्रवृत्ते क्षीरचतुष्टयमाह–विण्मार्गगे विशेषेणेति । मोचरसः–शाल्मलीनिर्यासः । शृ(शु)ङ्गैः–वटशृ(शु)ङ्गैः । मुकुलावस्थं पत्रं–शृ(शु)ङ्गम् ।

**रक्तातिसारदुर्नामचिकित्सां चात्र कल्पयेत् ॥४०॥**

स०–रक्तशब्दस्यातिसारदुर्नाम्नोः सम्बन्धः । रक्तातिसारस्य रक्तार्शसश्च, या चिकित्सा तामत्र–रक्ते, योजयेत् ।

आ० र०–रक्तातिसाररक्तार्शश्चिकित्सामतिदिशति–रक्तातिसारेति ।

**पीत्वा कषायान् पयसा भुञ्जीत पयसैव[2] च ।**

स०–कषायान्–पूर्वोक्तान्, पयसा पीत्वा पयसैवाश्नीयात् ।

आ० र०–पूर्वोक्तकषायान् सपयस्कानाह–पीत्वा कषायानिति ।

**कषाययोगैरेभिर्वा विपक्वं पाययेद्घृतम् ॥ ४१ ॥**

स०–एतैर्वा कषायाख्यैर्योगैर्विपक्वं घृतं रक्तपित्तिनं पाययेत् ।

आ० र०–पूर्वोक्तकषायसिद्धानि घृतान्याह–कषाययोगैरिति ।

**समूलमस्तकं क्षुण्णं वृषमष्टगुणेऽम्भसि ।**
**पक्त्वाऽष्टांशावशेषेण घृतं तेन विपाचयेत् ॥ ४२ ॥**
**तत्पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितम् ।**
**पित्तगुल्मज्वरश्वासकासहृद्रोगकामलाः ॥ ४३ ॥**
**तिमिरभ्रमवीसर्पस्वरसादांश्च नाशयेत् ।**

स०–मूलपल्लवादियुक्तं क्षुण्णं–चूर्णितं, वृषमष्टगुणे जले पक्त्वा तेन–अष्टांशावशेषेण क्वाथेन, घृतं विपाचयेत् । किम्भू-

१ 'सुङ्गै' इ, ड । 'शृङ्गै' फ, ट । २ 'तु' स ढ ।

तम्[?] तत्पुष्पगर्भम्। तस्य–वृषस्य, पुष्पाणि गर्भ –कल्को, यस्य तदेवम्। तच्च शीतीभूत क्षौद्रेण सह पित्तशोणितादीन्नाशयेत्।

आ० २०–वाम्याघृतमाह–समूलमस्तकमिति । [ सिद्ध सारे रक्तपित्ताधिकारे श्लो ४८ ]–"शतवर्यादिके[१] चाज्ये शर्करामधु पादिकम्। मध्वेव पादिक श्रेयो वासासर्पिषि सम्मतम् ॥" इति । वङ्गसेने तु (रक्तपित्ताधिकारे)–"[३]वृषस्य पत्राङ्कुरपुष्पशाखाकषायकल्केन घृत विपक्कम्। समाक्षिक क्षीणकफे प्रयुक्त तद्रक्तपित्त शमयत्युदीर्णम् ॥ (श्लो १२६)–[४]वासकस्वरसे सर्पि पयसा सह पाचयेत्। कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनै ॥ उशीरमधुकानन्ता सारिवो[५]दीच्यपद्मकै । त्रायन्त्युत्पलमूर्वाभिर्मदयन्त्याश्च पल्लवै ॥ सिताक्षौद्रयुत हन्याद्रक्तपित्त सुदारुणम् । [६]पैत्त कास च गुल्म च स्वरभेद हलीमकम् ॥ ये चान्ये कीर्तिता रोगा रक्तपित्तकफाश्रया । तान् सर्वान् शमयेदेतत् पीयमान हिताशिना ॥ अश्वगन्धापलशत तदर्ध गोक्षुरस्य च । शतावरी विदारी च शालिपर्णी बलाऽमृता ॥ अश्वत्थस्य च शुङ्गानि पद्मबीज पुनर्नवा। काश्मर्य[७]स्य फल चैव माषबीज तथैव च ॥ पृथग्दश[८] पलानेतांश्चतुर्द्रोणेऽम्भस पचेत्। द्रोणशेषे रसे तस्मिन् [१०]पूते शीते प्रदापयेत् ॥ मृद्वीका पद्मक कुष्ट पिप्पली रक्तचन्दनम्। पत्रक नागपुष्प च आत्म गुप्ताफल तथा ॥ नीलोत्पल सारिवे द्वे जीवनीयान्यशेषत । पृथक्कर्षसमा भागा शर्कराया पलद्वयम् ॥ रस स्यात्पौण्ड्रकेक्षूणामाढकाढकमाहरेत्। [ चतुर्गुणेन पयसा घृतप्रस्थ विपाचयेत् ॥] रक्तपित्त क्षतक्षीण कामला वातशोणितम्। हलीमक पाण्डुरोग [११]वर्णभेद स्वरक्षयम् ॥ मूत्रकृच्छ्रमुरोदाह पार्श्वशूल च नाशयेत् । एतद्राज्ञा प्रदातव्य बह्वन्त पुरचारिणाम् ॥ स्त्रीणा चैवाप्रजातानां दुर्बलाना च देहिनाम्। श्रेष्ठ बलकरं धन्य हृद्य वृष्य रसायनम् ॥ ओजस्तेजस्कर स्वर्यमायुष्य प्राणवर्धनम्। स[१२]वर्धयति शुष्क च पुरुष दुर्बलेन्द्रियम् ॥ सर्वरोगविनिर्मुक्तस्तोयसिक्तो यथा द्रुम । कामदेवमिति ख्यात सर्पिरुक्त महागुणम् ॥ (श्लो ९९)–दूर्वा सोत्पलकिञ्जल्का मञ्जिष्ठा सैलवालुका । [१३]सितासितमुशीर च मुस्तचन्दनपद्मकम् ॥ विपचेत्कार्षिकैरेतै सर्पिराज सुखाग्निना। तण्डुलाम्बु[१४]स्त्वजाक्षीर दत्वा चैव चतुर्गुणम् ॥ [द्राक्षायष्ट्याह्वमधुकक्काश्मरीचन्दन सितम्। पिष्ट्वा तत्कार्षिकैर्द्रव्यै घृतप्रस्थ विपाचयेत् ॥] तत्पान वमतो रक्त नावन नासिकागते। कर्णाभ्या यस्य गच्छेच्च तस्य कर्णौ प्रपूरयेत्॥ चक्षु स्राविणि रक्ते च पूरयेत्तेन चक्षुषी । मेढ्रपायुप्रवृत्ते च बस्तिकर्मणि तद्धितम् ॥ रोमकूपप्रवृत्ते च तदभ्यङ्गे प्रयोजयेत्। पित्तजेषु विकारेषु विस्फोटादिषु बुद्धिमान् ॥ वि[१]षेषु कीटदोषेषु विसर्पेषु प्रयोजयेत् । [ रक्तस्रावीणि चार्शांसि लेपयेत्तेन सर्पिषा॥] दूर्वा सेन्दीवरी[२] पद्म मञ्जिष्ठा सैलवालुका। [३]राला मुस्ता तथोशीर चन्दन मधुकाह्वयम्[४] ॥ पद्मक रोध्रकुष्ठ च चन्दन रजनीद्वयम्। काकोल्यौ सारि[५]वा चेति कल्कैरेतैश्च कार्षिकै ॥ घृतप्रस्थमजाक्षीर तण्डुलोदकसंयुतम्। दूर्वाया स्वरसे[६]नैव साधित पूर्ववद्गुणम् ॥ न्यग्रोधोदुम्बराश्वत्थशुङ्गान्यापोथ्य वासयेत्। अहोरात्र जले तप्ते घृत तेनाम्भसा पचेत् ॥ तदर्धशर्करायुक्त लेहयेत्क्षौद्रपादिकम् । अधो वा यदि वा[७]ऽप्यूर्ध्व रक्त यस्य प्रवर्तते । सु[८]ख भवति तस्याशु अग्निवेशवचो यथा ॥ शतावरीदाडिमतित्तिडीक काकोलिमेदे मधुक विदारीम्। पिष्ट्वा च मूल फलपूरकस्य घृत पचेत् क्षीरचतुर्गुण च । कासज्वरानाहविबन्धशूल तद्रक्तपित्त च घृत निहन्ति ॥ शतावर्यास्तु मूलाना रसप्रस्थद्वय मतम् । तत्सम च भवेत्क्षीर घृतप्रस्थ विपाचयेत् ॥ जीवकर्षभकौ मेदा महामेदा तथैव च । काकोली क्षीरकाकोली मृद्वीका मधुक तथा ॥ मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम् । शर्करामधुसयुक्त सिद्ध विस्रावयेत् घृतम् ॥ रक्तपित्तविकारेषु वातरक्तगदेषु च । क्षीणशुक्रेषु दातव्य वाजीकरणमुत्तमम् ॥ अङ्गदाह शिरोदाह [९]ज्वरपित्तसमुद्भवम्। योनिशूल च दाह च मूत्रकृच्छ्र च पैत्तिकम् ॥ एतान् रोगान्निहन्त्याशु छिन्नाभ्र[१०]मिव मारुत । शतावरीसर्पिरिद बलवर्णाग्निवर्धनम् ॥ [ शतावर्यादिके चाज्ये शर्करामधु पादिकम् ॥ ] (श्लो. १४१)–अनन्ता सारिवा पद्म सलोध्र नीलमुत्पलम्। कल्कै[११]रेभि पचेत्सर्पि सक्षीर नावन परम् ॥ रक्तपित्त प्रशमयेन्नारीणा प्रदर तथा । ह[१२]स्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्ध्वगे । वासाघृत शतावर्या सितया परम हितम् ॥ दूर्वामधुकमञ्जिष्ठाद्राक्षेक्षुरसचन्दनै । सारिवाद्वयनक्ताह्वैस्तैलप्रस्थ विपाचयेत् ॥ क्षीर चतुगुण दत्वा सिद्धमभ्य[१३]ञ्जन भवेत्। रक्तपित्तहर[१४] ह्येतद्धल्य वातघ्नमुत्तमम्। दूर्वातैलमिति ख्यात सवर्णकरण महत् ॥ (श्लो १६७)–तुलामादाय वासाया. पचेद-

१ 'वरीघृते चास्मिन् श' सि । २ 'क देयवा' सि । ३ वृषस्येति श्लोको मुद्रितवङ्गसेनपुस्तके नोपलभ्यते। ४ 'वासाकल्करसे' वङ्ग.। ५ 'वोत्पलप' वङ्ग । ६ 'पैत्तिक वातिक गु' वङ्ग । ७ 'श्मर्याश्च फ' वङ्ग । ८ 'थगष्ट प' फ । ९ 'लान् भागाश्च' वङ्ग.। १० 'पूतशीते' वङ्ग.। ११ 'वर्णभङ्ग' वङ्ग । १२ 'सब्रहयति शुष्काश्च पुरुषान् दुर्बलेन्द्रियान्।' वङ्ग.। १३ 'शिवा रोध्रमु' वङ्ग.। १४ 'म्बु स्वगोक्षीर' फ.।

१ 'विशेषकी' फ । २ 'वर प' वङ्ग । ३ 'राला मु' वङ्ग । ४ 'काद्वयम्' फ । ५ 'रिवे चे' वङ्ग । ६ 'सेनापि साधित मृदुनाऽग्निना। तत्पान वमतो रक्त०' इत्यादिर्मुद्रितवङ्गसेनपुस्तकस्थ पाठ पूर्ववद्गुणमित्यनेन गतार्थत्वादयुक्त एवेति प्रतिभाति । ७ 'वा चोर्ध्व' वङ्ग । ८ 'ख तस्याशु युञ्जीत अ' वङ्ग । ९ 'ज्वर पि' वङ्ग । १० 'न्नाभ्राणीव' वङ्ग । ११ 'रेतै प' वङ्ग । १२ 'सिद्ध वा प' वङ्ग.। १३ 'ञ्जने हितम्।' वङ्ग । १४ 'त शशिवर्णकर म' वङ्ग.।

ष्टगुणे जले। तेन पादावशेषेण पाचयेदाढक भिषक् ॥ चूर्णानामभयानां तु खण्डाच्छुद्धाच्छत तथा। द्विपल पिप्पलीचूर्णात्सिद्धशीते च माक्षिकात् ॥ कुडव पलमान च चातुर्जात सुचूर्णितम्। क्षिप्त्वा विलोडित खादेद्रक्तपित्ती यथाबलम्। कासश्वासगृहीतश्च यक्ष्मणा च प्रपीडित. ॥ लोहाच्चतुर्गुण क्षीरमाज्य द्विगुणमुत्तमम्। चूर्णपाद च वैडङ्ग दद्यान्मधुसिते समे ॥ सर्वमेकत्र प्रक्षिप्य पात्रे ताम्रमये दृढे। पाकमानीय तत्त्वेन स्थापयेत् घृतभाजने ॥ माषकादिक्रमेणादौ भक्षयेद्विधिपूर्वकम्। अनुपान प्रयुञ्जीत नालिकेरजलादिकम् ॥ रक्तपित्त जयेत्तीव्रमम्लपित्तं क्षत क्षयम्। पुष्टिदं कान्तिजननमायुष्य वृष्यमुत्तमम् ॥ (श्लो १९३) शतावरी छिन्नरुहा वृषमुण्डितिका बला। तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥ भार्गी पुष्करमूल च पृथक् पञ्च पलानि च। जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥ दिव्यौषधिहतस्यापि माक्षिकेण हतस्य वा। पलद्वादशक देय रुक्मलोहस्य चूर्णितम् ॥ खण्डतुल्य घृत देय पलषोडशक बुधै। पचेत्ताम्रमये पात्रे गुडपाको मतो यथा ॥ प्रस्थार्ध मधुनो देय शुभाश्मजतुक त्वचम्। शृङ्गी विडङ्ग कृष्णा च शुण्ठ्यजाजी पल पलम् ॥ त्रिफला धान्यक पत्र द्व्यक्ष मरिचकेसरम्। चूर्ण दत्वा सुमथित स्निग्धे भाण्डे निधापयेत् ॥ यथाकाल प्रयुञ्जीत बिडालपदक तत। गव्यक्षीरानुपान च सेव्य मासरस पय ॥ गुरुवृष्यान्नपानानि स्निग्धमत्स्यादि बृहणम्। रक्तपित्त प्रदुष्ट च क्षतकासं विशेषत ॥ वातरक्त प्रमेह च शीतपित्त वमि क्लमम्। श्वयथु पाण्डुरोग च कुष्ठ प्लीहोदर तथा ॥ आनाह रक्तस्राव च अम्लपित्त निहन्ति च। चक्षुष्य बृंहण वृष्य माङ्गल्य प्रीतिवर्धनम् ॥ आरोग्य पुत्रद श्रेष्ठ कायाग्निबलवर्धनम्। श्रीकर लाघवकर खण्डखाद्य प्रकीर्तितम् ॥ छाग पारावत मास तित्तिरिक्करा शशा। कुलिङ्गा कृष्णसारा ये तेषा मासानि योजयेत् ॥ नारिकेलपय.पान सुनिषण्णकवास्तुकम्। शुष्कमूलकजीवाख्य पटोल बृहतीफलम् ॥ फल वार्ताकपक्वाम्र खर्जूर स्वादु दाडिमम्। ककारपूर्वक यच्च मासं चानूपसम्भवम् ॥ वर्जनीय विशेषेण खण्डखाद्य प्रकुर्वता। लोहान्तरवदत्रापि पुटनादिक्रियेष्यते ॥ (श्लो १६१)-पञ्चाशत्पलिक स्विन्न कूष्माण्ड प्रस्थमाज्यत। पक्व पलशत खण्डाद्वासाक्वाथाढके पचेत् ॥ शुभाधात्रीवनैर्भार्गीत्रिसुगन्धैश्च कार्षिकै। एलेयविश्वधान्याकमरिचैश्च पलांशकै ॥ पिप्पलीकुडव चैव मधुमानी प्रदापयेत्। कास श्वा[स क्षय हिक्का रक्तपित्त हलीमकम् ॥ हृद्रोगमम्लपित्त च पीनस च व्यपोहति। युक्तसर्पिषि कूष्माण्डे पाको ब]न्धेन मुद्रया ॥" इति।

**पलाशवृन्तस्वरसे तद्गर्भं च घृतं पचेत् ॥ ४४ ॥**
**सक्षौद्रं तच्च रक्तघ्नं, तथैव त्रायमाणया।**

स०—पलाशवृन्ताना स्वरसे तद्गर्भं-पलाशवृन्तकल्क, घृतं पचेत्। तच्च क्षौद्रेण सह रक्तघ्न भवति। तद्वदेव त्रायमाणया घृत रक्तपित्तघ्नम्।

आ० द०—पलाशघृतमाह—पलाशवृन्तस्वरस इति। वृन्त—पुष्पनालम्। तद्गर्भ—वृन्तकल्कगर्भम्।

त्रायमाणाघृतमाह—तथैवेति। तथैव—क्वाथकल्कीकृतया। सङ्ग्रहे तु (चि अ ३)—"क्षीरेण वपनीपुष्पं मधुक मधुशर्करा। वपनी—कार्पासी। रोध्रोत्पलसमङ्गाभिस्तद्वद्वत्सकसाधितम् ॥ रोध्रादित्रयेण, वत्सकेनैकेन। तद्वत्—क्वाथकल्काभ्या घृतम्। लाजगोधूममधुकसिताचूर्णं पयोद्धृतम्। घृतेनोत्कारिका कृत्वा खादेत्पित्तास्रवारिणीम् ॥" इति। वङ्गसेने तु (रक्त श्लो ६८)—"द्राक्षया फलिनीभिर्वा बलया मधुकेन वा। श्वदंष्ट्र्या शतावर्या रक्तजित्साधित पय ॥ (श्लो ६६)—सशर्कर माक्षिकसंप्रयुक्त विदारिगन्धादिगणे श्रृत वा ॥ (श्लो.७४)—क्षीरेण लाक्षां मधुमिश्रितेन प्रपीय जीर्णे पयसाऽन्नमद्यात्। सद्यो निहन्याद्रुधिर क्षतोत्थ कान्तार्जुनानामथवाऽपि कल्कम् ॥ कल्क मयूकत्रिफलार्जुनाना निशि स्थित लोहमये सुपात्रे। साज्य विलिह्यानुपिबेत्सुधीत सशर्कर छागपय क्षुधार्त. ॥ पारावतस्य मास वा घृतसिद्ध सशर्करम्। भक्षयेन्मधुना शीत रक्तपित्तनिवारणम् ॥ प्रायेणोपहताग्नित्वात्सपिच्छमतिसार्यते। प्राप्नोति वाऽऽस्यवैरस्य न चान्नमभिनन्दति ॥ नागरेन्द्रयवौ तत्र पातव्यौ तण्डुलाम्बुना। सिद्धा यवागू जीर्णे च चाङ्गेरीत(प)त्रदाडिमै ॥" इति।

**रक्ते सपिच्छे सकफे ग्रथिते कण्ठमार्गगे ॥ ४५ ॥**
**लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनालजम्।**
**पृथक्पृथक् तथाऽम्भोजरेणुश्यामामधूकजम् ॥४६॥**

स०—रक्ते पिच्छावति, पिच्छा—शाल्मल्या रससदृशी, तथा सकफे, तथा ग्रथिते—ग्रन्थिसदृशे, तथा कण्ठमार्गगे सति, क्षारमुत्पलनालज माक्षिकसर्पिर्भ्यां लिह्यात्। ननु, क्षारस्य तैक्ष्ण्यादिगुणयोगाद्रक्तपित्ते न युक्त उपयोग। तत्कथमिह तमनुमेने तन्त्रकृत्? ब्रूम। उत्पलादीनि शीतस्वभावानि। तत्समुत्थश्च

१ 'च' वङ्ग। २ 'द्वे पले पि' वङ्ग.। ३ 'थानलम्' वङ्ग। ४ 'च विशेषत।' फ। ५ 'क्षीर चतुर्गुण लोहाद्धृत द्वि' वङ्ग। ६ 'मे ॥ एकीकृत्य पचेल्लोह खादेदग्निबल यथा। रक्तपित्त जयत्युग्र खण्डखाद्य रस स्मृतम् ॥" वङ्ग। ७ सर्वमेकत्रेत्यादयस्त्रय श्लोका मुद्रितवङ्गसेनपुस्तके नोपलभ्यन्ते। ८ 'षमण्डति' वङ्ग। ९ 'मूलस्य पृ' वङ्ग। १० 'च' वङ्ग। ११ 'पल च द्वादश दे' वङ्ग। १२ 'गुडादे पाकवद्यथा।' वङ्ग। १३ 'द्वय म' वङ्ग। १४ 'स्निग्धभा' वङ्ग। १५ 'ग्ध मासादि' वङ्ग.। १६ 'क्षय कास' वङ्ग। १७ 'ध समक्षता।' वङ्ग। १८ लोहान्तरवदिति श्लोकार्ध मुद्रितवङ्गसेनपुस्तके नोपलभ्यते।

१ 'शच्च पल स्विन्नकूष्माण्डात्प्रस्थ' वङ्ग। २ 'खण्ड वासा' वङ्ग। ३ 'शैले' वङ्ग। ४ 'शस्य वृ' ट। ५ क्षीरेणेति श्लोकार्धं मुद्रितसङ्ग्रहद्वये नोपलभ्यते। ६ 'योद्रवम्' इ स द्व। ७ 'य' क्षयार्त' फ। ८ पारावतस्येत्यादयस्त्रय श्लोका मुद्रितवङ्गसेनपुस्तके नोपलभ्यन्ते।

क्षार स्वयोनिमनुकरोति। तथा चोक्तम् (हृ शा अ १।४)–"कारणानुविधायित्वात्कार्याणा तत्स्वभावता।" इति। क्षारस्वरूप च विष्यन्दनात्मक वर्त्तं। तदेव कण्ठमार्गगस्य कफानुबन्धस्य ग्रथितस्य रक्तस्य क्षारो घृतमाक्षिकाभ्या सयुक्तो विष्यन्दनपूर्व शोधयत्येव, न तु तस्य कोपाय स्यादिति युक्तोऽत्र क्षारोपयोग।

अम्भोजरेण्वादिज च पृथक् पृथक् तथा माक्षिकघृताभ्या लिह्यात्।

आ० र०–रक्तपित्तविशेषे क्षारचतुष्टयमाह–रक्ते सपिच्छ इति। अम्भोजरेणु–पद्मकेसरम्। श्यामा–प्रियङ्गु। सङ्ग्रहे तु (चि अ ३)–"मृणालाम्भोजकिञ्जल्कश्यामासन मधूकजम्। तद्वत्पृथक्पृथक् क्षार, घृत क्षीरेण साधयेत्॥ पिष्टैरभीरुकाकोलीमेदावृक्षाम्लदाडिमै। फलपूरकमूलेन विदार्या मधुकेन च॥ तद्विबन्धज्वरानाहशूलकासास्रपित्त जित्। पञ्चभि पञ्चमूलैर्वा सिद्धमाद्यैस्तदर्थकृत्॥" इति।

**गुदागमे विशेषेण शोणिते बस्तिरिष्यते।**

स०–गुदागमे रक्ते विशेषेण बस्तिरिष्यते।

आ० र०–गुदप्रवृत्ते बस्तिमाह–गुदागम इति। सङ्ग्रहे तु (चि अ ३)–"मधूकाञ्जनमञ्जिष्ठामृणालोत्पलगैरिकै। सुवर्णरोध्रकालीयसमङ्गाम्राम्बुचन्दनै॥ सौगन्धिकसिताशङ्खै पिष्टैर्मधुघृतान्वितै। क्षीरेणास्थापयेदेव स्नान च शिशिराम्भसा॥ क्षीरेणैवाशयेच्छालींस्ततो मधुकसर्पिषा। कालेऽनुवासयेदेवमतीसारेऽपि दुस्तरे॥ जीर्णेऽसृक्प्रबले कुर्याद्विरेके चातियोगिनि। विदार्यादिगणेनेष्ट शृत वाऽऽस्थापने पय॥ सक्षौद्रशर्करासपि सर्पिश्चैवानुवासने। मूत्राशयस्थ शमयेद्रक्तमुत्तरबस्तिभि॥ ईदृशैरेव तद्वच्च प्रदरेऽपि विधि स्मृत। छेदभेदादिभिश्चातिप्रवृत्ते शुद्धशोणिते॥ विशेषात्प्रदरस्योक्त योनिरोगेषु चौषधम्।" इति।

**घ्राणगे रुधिरे शुद्धे नावनं चानुषेचयेत्॥ ४७॥**
**कषाययोगान् पूर्वोक्तान् क्षीरेक्ष्वादिरसाप्लुतान्।**
**क्षीरादीन्ससितास्तोयं केवलं वा जलं हितम्॥४८॥**
**रसो दाडिमपुष्पाणामाम्रास्थ्नः शाड्वलस्य वा।**

स०–घ्राणगे रुधिरे शुद्धे सति नावनमनुषेचयेत्–नस्य दद्यात्। कषाययोगान् पूर्वोक्तान्–वासकादीन्, घ्राणगेऽनुषेचयेत्। किम्भूतान्[१] क्षीरेक्ष्वादिरसेनाप्लुतान्–सद्रवान्। आदिशब्देन मासरसघृतादि गृह्यते। क्षीरादीन् वा सशर्करान् दद्यात्। तथा तोयमर्थात्ससित, वा केवल जल हितमिति[२]। तथा दाडिमपुष्पाणा रस, तथा चूतफलास्थ्न, तथा दूर्वाया रसो, नस्यं पृथक्पृथक् हितम्।

आ० र०–घ्राणप्रवृत्ते नस्यमाह–घ्राणगे रुधिर इति। क्षीरादीन् ससितानित्यन्य प्रयोग। तोय ससितमित्यन्य। केवल वा जलमित्यन्य। रसो दाडिमपुष्पाणामित्यन्य। आम्रास्थ्नो रस इत्यन्य। शाड्वलस्य रस इत्यन्य।

**कल्पयेच्छीतवर्गं च प्रदेहाभ्यञ्जनादिषु॥ ४९॥**

स०–शीतवीर्यवर्ग च प्रलेपाभ्यञ्जनादिषु कल्पयेत्।

आ० र०–प्रदेहादीनाह–कल्पयेदिति।

**यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम्।**
**रक्तपित्ते हितं तच्च क्षतक्षीणे हितं च यत्॥ ५०॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने रक्तपित्तचिकित्सितं नाम द्वितीयोऽध्यायः॥ २॥**

स०–यच्च पित्तज्वरेऽभिहितमौषध बहिरन्तरे, तच्च रक्तपित्ते हितम्। तथा, यच्च क्षते क्षीणे च हित तदपि रक्तपित्ते हितमिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने रक्तपित्तचिकित्सित नाम द्वितीयोऽध्याय समाप्त॥ २॥

आ० र०–पित्तज्वरौषध क्षतक्षीणौषध च रक्तपित्तेऽतिदिशति–यच्चेति। वङ्गसेने तु (रक्त. श्लो ८१)–"नासाप्रवृत्तरुधिर घृतभृष्ट श्लक्ष्णपिष्टमामलकम्। सेतुरिव तोयवेग रुणद्धि मूर्ध्नि प्रलेपेन॥ रसो दाडिमपुष्पस्य दूर्वारससमन्वित[२]। अलक्तकरसोपेतस्त्वयं नासापुटे भिषक्॥ योजयेन्नाशयेत् क्षिप्र त्रिदोषमपि दारुणम्। नासारक्त प्रवृत्त तु हन्यादिति किमद्भुतम्॥ दूर्वाभयादाडिमपुष्पकाणा लाक्षामलक्यो स्वरसेन नस्यम्। [ दिनत्रय य कुरुते प्रभाते नासासृज नाम रुज निहन्ति॥ श्यामाश्वमोरटानन्ताशर्कराभि शृत घृतम्। सर्वदोषहर हृद्य नस्य] नासागतेऽसृजि॥ अश्व–अश्वकन्द। दूर्वा भव्यफल माष कुलत्था वशपत्रिका। जलस्थलोद्भवौ कर्णमोटकौ[३] खरमञ्जरी॥ दण्डोत्पलस्य मूल च निष्क्वाथ्याष्टगुणेऽम्भसि। तत्पादशेषित तैल तुल्य कृत्वा विपाचयेत्। तत्तैल प्रतिमर्शेन आनाहाख्य[४] गद जयेत्॥" इति। इति नासारुधिरम्।

**इति हेमाद्रिटीकायामायुर्वेदरसायने।**
**रक्तपित्तप्रकरण सामस्त्येन निरूपितम्॥ २॥**



१ 'दिक च' ड ध। २ 'माज्य तद' इ स मू। ३ 'ङ्गाम्बुजच' स स। ४ 'देन स्नात च' स स। ५ 'च्छालिं ततो' इ। ६ 'रसद्रु' अ इ ध। ७ 'स्य च।' इ स द्व। ८ अस्याग्रे "सुसूक्ष्मा माषपिष्टी च घृतभृष्टा शिवस्य च। रुणद्धि मूर्धलेपेन नासारक्त न सशय॥" इति इ. पुस्तकेऽधिक श्लोक। ९ 'ति हि वक्ष्यति। त' ट.ड.।

१ "शीतो वर्ग–पित्तशमनो दूर्वादि शोधनादिगणपठित (हृ सू अ १५।६)।" इतीन्दु। २ 'त पथ्यारससमन्वित॥ योजितो नासयो क्षिप्र' वङ्ग.। ३ 'मोचकौ' वङ्ग.। ४ 'आह्वाख्य' फ.।



# तृतीयोऽध्यायः ।

रक्तपित्तचिकित्सितादनन्तर कासचिकित्सितस्यारम्भ । तस्य च सम्बन्धो निदाने स्वय ग्रन्थकृतवोक्त ।

**अथातः कासचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**केवलानिलजं कासं स्नेहैरादावुपाचरेत् ।**
**वातघ्नसिद्धैः स्निग्धैश्च पेयायूषरसादिभिः ॥ १ ॥**
**लेहैर्धूमैस्तथाऽभ्यङ्गस्वेदसेकावगाहनैः ।**
**बस्तिभिर्बद्धविड्वातं, सपित्तं तूर्ध्वभक्तिकैः ॥ २ ॥**
**घृतैः क्षीरैश्च, सकफं जयेत्स्नेहविरेचनैः ।**

स०–केवलानिलज कास–दोषान्तरासस्पृष्ट, स्नेहै –वातघ्न सिद्धै, आदावुपाचरेत् । ननु, शुद्धस्य वातस्य स्नेहैरेव प्रधानोपक्रम आदिमध्यावसानेषु, न पुनरन्य उपक्रम , तस्मादादाविस्यनेन नार्थं । अत्रोच्यते । वात केवलो दोषान्तरावृतमार्ग कासस्य कारणम्, न त्वनावृतमार्ग । तथा च काससम्प्राप्ता वुक्तम् ( हृ नि अ ३।१९ )–"तत्राधो विहतोऽनिल । ऊर्ध्वं प्रवृत्त " इत्यादि । एव वातस्य विहतौ यो दोष कारण कफादि, तस्य रूक्षाद्युपक्रमेणैव शम कृत्वाऽनन्तर कासेन सहोपक्रममस्य भिषज कुर्युरिति तेषा भ्रान्तिनिरासार्थमादावित्युक्तम् । तथा, पेयादिभिरुपाचरेत् । तथा, बद्धौ विड्वातौ यस्मिन्कासे त बस्तिभिरुपाचरेत् । सपित्त च वातकासमूर्ध्वभक्तिकै –भक्तसमनन्तर पीयमानैर्घृतैर्भोजयेत् क्षीरैश्च । ऊर्ध्वभक्तिकैरिति ऊर्ध्वभक्तादिभि । मयूरव्यसकादित्वात् समास , अध्यात्मादित्वाट्ठञ् । तथा, वातघ्नसिद्धैरित्येतदेष्वपि योज्यम् । तथा, सकफ वातकास स्नेहविरेचनैरुपाचरेत् ।

**आ० र०–अथ कासचिकित्सितम् । तत्र शुद्धवातचिकित्सामाह–केवलानिलज कासमिति । आदौग्रहण जितेऽपि वाते कासानुवृत्तौ रूक्षोपचारार्थम् । स्निग्धैरिति पेयादिबस्त्यन्तानां विशेषणम् । आदिशब्दात् बलकान्ति ···· देयत(?) बस्तिभिर्बद्धविड्वातमिति वचनात् पूर्वैर्बद्धविड्वाते म······द्वातं च (?) ।**

**पित्तानुबद्धवातकासचिकित्सामाह–सपित्त त्विति । ऊर्ध्वभक्तिकै –ऊर्ध्वं भोजनात् प्रयुक्तै ।**

कफानुबद्धवातकासचिकित्सामाह–सकफमिति । स्नेहा –एरण्डतैलादय ।

अथ स्नेहानाह—

**गुडूचीकण्टकारीभ्यां पृथक्त्रिंशत्पलाद्रसे ॥ ३ ॥**
**प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ।**

स०–गुडूच्या कण्टकार्याश्च पृथक्–प्रत्येक, त्रिंशत्पल तस्मायो रसस्तस्मिन् घृतात् प्रस्थ सिद्धो वातकासादिजित् । त्रिस्रोऽपि पञ्चम्य एता अपेक्षितक्रियेऽपादाने बोध्या ।

**आ० र०–स्नेहैरित्युक्तम् । तानेव स्नेहानाह । तत्र घृतमाह–गुडूचीकण्टकारीभ्यामिति ।**

**क्षारास्नावचाहिङ्गुपाठायष्ट्याह्वधान्यकैः ॥ ४ ॥**
**द्विशाणैः सर्पिषः प्रस्थं पञ्चकोलयुतैः पचेत् ।**
**दशमूलस्य निर्यूहे पीतो मण्डानुपायिना ॥ ५ ॥**
**स कासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत् ।**

स०–क्षारादिभि पञ्चकोलयुतैर्द्विशाणमात्रै कल्कैर्दशमूलक्वाथे सर्पिष प्रस्थ पचेत् । स च–सर्पि प्रस्थो, मण्डानुपायिना पीत कासादिजित् ।

**आ० र०–घृतान्तरमाह–क्षारास्नेति ।**

**द्रोणेऽपां साधयेद्रास्नादशमूलशतावरीः ॥ ६ ॥**
**पलोन्मिता द्विकुडवं कुलत्थं बदरं यवम् ।**
**तुलार्धं चाजमांसस्य तेन साध्यं घृताढकम् ॥ ७ ॥**
**समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत् ।**
**प्रयुक्तं वातरोगेषु पाननावनबस्तिभिः ॥ ८ ॥**
**पञ्चकासान् शिरःकम्पं योनिवङ्क्षणवेदनाम् ।**
**सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलान् जयेत् ॥ ९ ॥**

स०–रास्नादीनि पलोन्मितानि कुलत्थबदरयवान् द्विकुडवोन्मितान् आजमासस्य च पञ्चाशत्पलानि जलद्रोणे पाचयेत् । तेन क्वाथेन घृताढक साध्य तुल्यक्षीर पालिकैर्जीवनीयै –जीवन्तीकाकोल्यादिभि ( हृ सू अ १५।८ ), तद्घृत समीक्ष्य–देशकालादीनालोच्य, पानादिभि प्रयुक्त पञ्चकासादीन् जयति ।

**आ० र०–घृतान्तरमाह–द्रोणेऽपामिति ।**

**विदार्यादिगणक्वाथकल्कसिद्धं च कासजित् ।**

स०–विदार्यादिगणस्य क्वाथकल्काभ्या च सिद्ध सर्पि कासजित् ।

**आ० र०–घृतान्तरमाह–विदार्यादिगणेति । सङ्ग्रहे तु ( चि अ. ४ )–"काश्मर्यत्रिफलाव्योषशठीद्राक्षापरूषकम् । द्वे पाठे देवदार्वर्द्धिस्वगुप्ताग्निकगोक्षुरा. ॥ व्याघ्री तामलकी मेदा काकनासा शतावरी । विदारी च घृतप्रस्थ. कर्षांशैस्तैर्विपाचित ॥ क्षीरेण च जयत्याशु ज्वरकासहली-**

१ इद कासचिकित्सित चरके चि० ११।१८ अध्याययो., सुश्रुते उ० ५२ अध्याये, अष्टाङ्गसङ्ग्रहे चि० ४।५ अध्याययोश्चास्ति वर्णितम् । २ 'त त्वौर्ध्व' स स । 'त वोर्ध्वं' फ । ३ 'न कोऽर्थ ?' ट । ४ 'क्तामि पेयादिभि । म' ट ड ।

१ ' सार्पिष प्र' ट. । २ 'क्षुरु' स.मू । 'क्षुरम्' स.स. ।

मकान् । गुल्मारुचियकृत्प्लीहशिरोहृत्पार्श्ववेदना ॥ कामलार्शोऽनिलाष्ठीलाक्षतशोष[1]क्षयाश्च स ।" इति । अग्नि[क] – चित्रक । वङ्गसेने तु ( कासाधिकारे श्लो १६ )–"दशमूलीकषायेण भार्गीकल्क[2] घृत पचेत् । दक्षतित्तिरिनिर्यूहे तत्परं वातकासनुत् ॥ भार्गीकल्कं घृतं[3] चाथ पचेदग्नि चतुर्गुणे । भार्गीरस द्विगुणित वातकासहर परम् ॥ घृत[4] व्याघ्रीकषायेण व्याघ्रीकल्क विपाचयेत् । चतुर्गुणेन दध्ना च तत्पर वातकासजित् ॥" इति । इति स्नेहा ।

**अशोकबीजक्षवकजन्तुघ्नाञ्जनपद्मकैः ॥ १० ॥**
**सविडैश्च घृतं सिद्धं तच्चूर्णं वा घृतप्लुतम् ।**
**लिह्यात्पयश्चानु पिबेदाजं कासा[5]तिपीडितः ॥ ११ ॥**

स०–अशोकबीजादिभिर्विडसहितैर्घृत सिद्ध कासजित् । तेषा वा–अशोकबीजादीना, चूर्णं घृतप्लुत लिह्यात् । अनु–पश्चात्च, छाग क्षीर कासेना[6]तिपीडित पिबेत् ।

आ० र०–लेहैरित्युक्तम् । तानेव लेहानाह । तत्राशोकबीजादिलेहमाह–अशोकबीजेति । चूर्णसिद्ध घृत स्त्यानीभूतं लिह्यात् । चूर्णं वा घृतान्वित लिह्यात् । उभयत्राजापयोऽनुपानम् ।

**विडङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम् ।**
**भार्गी क्षारश्च तच्चूर्णं पिबेद्वा घृतमा[7]त्रया ॥ १२ ॥**
**सकफेऽनिलजे कासे श्वासहिध्माहताग्निषु ।**

स०–अथवा विडङ्गादिचूर्णं घृतस्य मात्रया–यथायोग ह्रस्व मध्योत्तमया, पिबेत् वातजे सकफे कासे श्वासादिषु च ।

आ० र०–विडङ्गादिलेहमाह–विडङ्गमिति । पिबेद्वेति लेहायोग्यस्य पानविधि. । "घृत तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत् । लीढ निर्वापयेत्पित्तमल्पत्वाद्धन्ति नानलम् ॥ आक्रामत्यनिल पीतमूष्माण निरुणद्धि च ।" ( श्लो. ११० ) इति लेहपानयोग्यताविवेक. ।

**दुरालभां शृङ्गबेरं शठीं[8] द्राक्षां सितोपलाम् ॥ १३ ॥**
**लिह्यात्कर्कटशृङ्गीं च कासे तैलेन वातजे ।**

स०–दुरालभादीन् कर्कटशृङ्गीं च वातजे कासे तैलेन लिह्यात् ।

आ० र०–दुरालभादिलेहमाह–दुरालभामिति ।

**दुःस्पर्शां पिप्पलीं मुस्तां भार्गीं कर्कटकीं शठीम् ॥ १४ ॥**
**पुराणगुडतैलाभ्यां चूर्णितान्यवलेहयेत् ।**
**तद्वत्सकृष्णां शुण्ठीं च सभार्गीं तद्वदेव च ॥ १५ ॥**

स०–दु स्पर्शादीनि चूर्णितानि वातजे कासे पुराणगुडतैलाभ्यामवलेहयेत् । तथैव पिप्पलीसहिता शुण्ठी पुराणगुडतैलाभ्या लिह्यात् । तद्वच्च पुराणतैलाभ्या भार्गीसहिता शुण्ठी लेहयेत् ।

आ० र०–दु स्पर्शादिलेहमाह–दु.स्पर्शामिति ।

लेहद्वयमाह–तद्वत्सकृष्णामिति । तद्वत्–पुराणगुडतैलाभ्याम् ।

**पिबेच्च कृष्णां कोष्णेन सलिलेन ससैन्धवाम् ।**
**मस्तुना ससितां शुण्ठीं दध्ना वा कणरे[1]णुकाम् ॥ १६ ॥**
**पिबेद्बदरम[2]ज्जो वा मदिरादधिमस्तुभिः ।**
**अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम् ॥ १७ ॥**

स०–पिप्पली कदु[3]ष्णेन जलेन सैन्धवसहिता पिबेत् । मस्तुना सशर्करा शुण्ठी वा पिबेत् । अथवा दध्ना युक्ता पिप्पलीरेणुका पिबेत् । अथवा बदरमज्जो मदिरादिभि पिबेत् । बहुवचनोपादानाच्च मदिरया अथवा दध्ना मस्तुना वेत्येव द्रष्टव्यम्, न तु दध्नो मस्त्विति । पिप्पलीकल्क वा घृतभृष्ट सैन्धवयुक्त मदिरादिभि पिबेत् ।

आ० र०–उक्तलेहतुल्यगुण पानपञ्चकमाह । पिबेत्कृष्णा चेति । कणा च रेणुका च कणरेणुकम् । मज्ज.–अस्थ्यन्तर्गतबीजानि । पिप्पलीकल्के जलमेव द्रवम्, "पेषणालोडने वारि" ( हृ क. अ ६।२३ ) इति परिभाषाबलात् । हारीतात्–"दुरालभा शठी कृष्णा मधूक सितशर्करा । लीढ निहन्ति वातोत्थ कास क्षौद्रेण योजितम् ॥ उभे मेदे तुगाक्षीरी पिप्पली सितशर्करा । लिह्यात्तैल घृतक्षौद्रैर्वातकासनिवारणम् ॥ पद्मक त्रिफला व्योष विडङ्ग सुरदारु च । बला रास्ना च तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥ सम चूर्णैस्त्विमै. सर्वै. पृथक् क्षौद्र घृत सिताम् । लिह्याल्लेह विमथ्यैतत्सर्वकासहर शिवम् ॥" इति ।

**कासी सपीनसो धूमं स्नैहिकं विधिना पिबेत् ।**
**हिध्माश्वासोक्तधूमांश्च क्षीरमांसरसाशनः ॥ १८ ॥**

स०–कासी पीनसी च स्नैहिक धूम विधिना पिबेत् । क्षीरमासरसाशनो हिध्मोक्तान् श्वासोक्तांश्च धूमान् पिबेत् ।

आ० र०–धूमैरित्युक्तम् । तानेव धूमानाह । तत्र सपीनसे कासे धूममाह–कासी सपीनस इति । विधिना–धूमपानोक्तेन "शरावसम्पुटच्छिद्रे नाडीं न्यस्य दशाङ्गुलाम् । अष्टाङ्गुला वा वक्त्रेण कासवान् धूममापिबेत् ॥" ( हृ. सू अ २१।२१ ) इति । क्षीरेण मासरसेन वा धूमे पीयमाने भोजनम् ।

**ग्राम्यानू[4]पौदकैः शालियवगोधूमषष्टिकान् ।**
**रसैर्मांसात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥ १९ ॥**

१ 'शोफक्ष' स द । "शोषो–मासक्षय ।" इतीन्दु । २ 'कल्कैर्घृत' वङ्ग । ३ 'त क्वाथे पचेदग्निचतुर्गुणे (णे) । व्याघ्रीरस' फ । ४ घृतमित्यादिश्लोको मुद्रितवङ्गसेनपुस्तके नोपलभ्यते । ५ 'सादिपी' अ.इ. । 'साभिपी' फ स स । ६ 'नाभिपी' ड । ७ "मात्राशब्द स्नेहपर्याय. ।" इतीन्दु । ८ 'शुण्ठीं' फ. । ९ 'रास्ना' स.स. ।

१ 'णुकम्' इ हे । 'णुका ' स स । "कणरेणुका –पिप्पलीबीजानि ।" इतीन्दु । २ 'मज्जा' अ स मू ट । ३ 'दुष्णज' ट ड ध । ४ 'नूपोद्भवै.' फ ।

स०-ग्राम्यादिजैर्मांसरसैरथवा माषात्मगुप्तानां यूषैः शाल्यादीन् हितानाशयेत्। हितानिति देशकालादिसात्म्यवशात् यवा-(शाल्या)द्यन्यतमं यत् पथ्यं तद्भुञ्जीतेति प्रतिपादयति ।

आ० र०-पेयायूषरसादिभिरित्युक्तम् । तानाह । तत्र रसयूषानाह-ग्राम्यानूपौदकैरिति । ग्राम्या -सुश्रुतोक्ता "अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेद पुच्छकप्रभृतयो ग्राम्या ।" (सू अ ४६।८५) इति । आनूपा -महामृगा । औदका -जलचराः पक्षिणो मत्स्याश्च । तेषामानूपत्वेऽपि पृथग्ग्रहणमतिशयार्थम् । ग्राम्यादीनां मांसरसैः शाल्यादीन् भोजयेत्, माषयूषैरात्मगुप्तायूषैर्वा । हितानिति वचनाद्येन रसेन यूषेण वा यद्वान्यं प्रकृत्यादिवशाद्यस्य हितं तत्तस्य देयम् ।

**यवानीपिप्पलीबिल्वमध्यनागरचित्रकैः ।**
**रास्नाजाजीपृथक्पर्णीपलाशशठिपौष्करैः ॥ २० ॥**
**सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत् ।**
**कटिहृत्पार्श्वकोष्ठार्तिश्वासहिध्माप्रणाशनीम् ॥२१॥**

स०-यवान्यादिभिः सिद्धा स्निग्धामम्ललवणा पेया वातजे कासे पिबेत् । किम्भूताम् ? कट्याद्यार्तिश्वासहिध्माप्रणाशनीम् ।

आ० र०-यवान्यादिपेयामाह-यवानीपिप्पलीति । बिल्वफलस्य मध्य-अन्तर्गतो भाग । यवान्यादीना क्वाथेन पेया. ।

**दशमूलरसे तद्वत् पञ्चकोलगुडान्विताम् ।**
**पिबेत्पेयां**

स०-तद्वत्-पूर्वोक्तगुणाम्, दशमूलक्वाथे सिद्धां पञ्चकोलगुडयुता पेयां पिबेत् ।

आ० र०-पेयान्तरमाह-दशमूलरस इति । रस -क्वाथ । पञ्चकोलचूर्णेन गुडेन च पानकाले योग । तद्वत्-स्निग्धाम्ललवणां तद्गुणां च ।

**समतिलां क्षैरेयीं वा ससैन्धवाम् ॥२२॥**

स०-क्षैरेयीं-क्षीरसंस्कृता वा पेया, वातजे कासे पिबेत् । किम्भूताम् ? समतिला,-तिलसहिताम् । तथा, ससैन्धवाम् ।

आ० र०-पेयान्तरमाह-समतिलामिति । तण्डुलसमास्तिला । क्षीरेण सिद्धा-क्षैरेयी ।

**मात्स्यकौक्कुटवाराहैर्मांसैर्वा साज्यसैन्धवाम् ।**

स०-अथवा मात्स्याद्यैर्मांसैः साधिता सघृतसैन्धवा पेया पिबेत् ।

आ० र०-पेयान्तरमाह-मात्स्यकौक्कुटवाराहैरिति । मांसैः -मांसरसैः, मांसग्रहणं प्राचुर्यार्थम्, अल्पेनोदकेन रसो ग्राह्य इत्यर्थ । हारीते तु-"रसं कर्कटकानां वा घृतभृष्टं सनागरम् । श्वासकासप्रशमनं शृङ्गीमत्स्यस्य वा पुन. ॥" इति । कर्कटक -कुलीर. । शृङ्गीमत्स्य.-शृङ्गवान् मत्स्य । रस एवाय सनागर मेय. ।

**वास्तुको वायसीशाकं कासघ्नः सुनिषण्णकः ॥२३॥**
**कण्टकार्याः फलं पत्रं बालं शुष्कं च मूलकम् ।**

स०-वास्तुकादय शाकविशेषा ।

आ० र०-शाकान्याह-वास्तुक इति । वायसी-काकमाची । कासघ्न -कासमर्द. ।

**स्नेहास्तैलादयो**

स०-तैलादय स्नेहा ।

आ० र०-स्नेहानाह-स्नेहास्तैलादय इति ।

**भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥२४॥**

स०-भक्ष्या क्षीरादिसम्बन्धिनो हिता । क्षीरं चेक्षुरसश्च गुडश्च, तेषामिमे क्षीरेक्षुरसगौडिका । "द्वन्द्वान्ते पदं यच्छ्रूयते तत्सर्वैः सम्बध्यते" इति भाष्यकारवचनात् सर्वैरप्यत्र सम्बन्ध । तेन क्षीरसम्बन्धिन इक्षुरससम्बन्धिनो गुडसम्बन्धिनश्च भक्ष्या हिता इत्यवतिष्ठते ।

आ० र०-भक्ष्यानाह-भक्ष्या क्षीरेक्षुरसगौडिका इति । क्षीरेण इक्षुरसेन गुडेन वा कृता ।

**दधिमस्त्वारनालाम्लफलाम्बुमदिराः पिबेत् ।**

स०-तथा, दधिमस्त्वादीनि पिबेत् । इति वातजे कासे प्रायेणोपयोग्यन्नपानमुद्दिष्टम्[1] ।

आ० र०-पानान्याह-दधिमस्त्विति । अम्लानां फलानामम्बु । इति वातकासचिकित्सा ।

**पित्तकासे तु सकफे वमनं सर्पिषा हितम् ॥ २५ ॥**
**तथा मदनकाश्मर्यमधुककथितैर्जलैः ।**
**फलयष्ट्याह्वकल्कैर्वा विदारीक्षुरसाप्लुतैः ॥ २६ ॥**

स०-पित्तजे कासे, किम्भूते ? सकफे-कफयुक्ते, तु सर्पिषा वमनं हितम्[2] । अत एव वक्ष्यति ( श्लो २७ )-"पित्तकासे तनुकफे त्रिवृता" इति । तस्मादत्रार्थात् बहुकफत्वं बोध्यम् । न केवलं सर्पिषा वमन हितम् । यावन्मदनादिभिः क्वथितैर्जलैर्वमनमवस्थावशाद्धितम्, अथवा मदनफलमधुककल्कैर्विदार्यादिरसाप्लुतैर्वमनं हितम् ।

आ० र०-अथ पित्तकासचिकित्सा । तत्र सकफे पित्तकासे वमनमाह-पित्तकासे त्विति । मदनादिक्वाथेन ससर्पिष्केण वमनम् । फलयष्ट्याह्वचूर्णेन वा विदारीक्षुरसकल्कितेन वमनान्तरम् ।

**पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।**
**युञ्ज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः ॥ २७ ॥**

स०-पित्तजे कासे तनुकफे-अघनश्लेष्मणि, त्रिवृता मधुरैर्युता विरेकाय युञ्ज्यात् । घने तु कफे तिक्तकैः सह त्रिवृता युञ्ज्यात् ।

1 'न्यमन्न' ट. । 'न्यान्न' ड ध. । 2 'फे विरेकाय त्रि' ब. ।

आ० र०–विरेचनमाह–पित्तकासे तनुकफ इति। तच्च तनौ कफे मधुरैर्युक्तया त्रिवृतया, घने तिक्तै।

**हृतदोषो हिमं स्वादु स्निग्धं संसर्जनं भजेत्।**
**घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम्॥ २८॥**

स०–हृतदोषो नरो हिमं मधुरं स्निग्धं संसर्जनं–विरेकादनन्तरं पेयादिक्रमं, भजेत्। घने तु कफे शीतं तथा रूक्षं तिक्तयुतं संसर्जनं भजेत्।

आ० र०–संसर्जनमाह–हृतदोष इति। तच्च तनौ कफे शीतस्वादुस्निग्धम्, घने शीततिक्तरूक्षम्। शुद्धस्य शुद्धयोग्यस्य वा।

**लेहः पैत्ते सिताधात्रीक्षौद्रद्राक्षाहिमोत्पलैः।**
**सकफे साब्दमरिच॰, सघृत॰ सानिले हितः॥ २९॥**

स०–पित्तकासे सितादिभिर्लेहो हितः। सकफे पित्ते साब्दमरिचो लेहो हितः। सानिले पित्ते सघृतो लेहो हितः।

आ० र०–लेहमाह–लेहः पित्त इति। स च केवले पित्ते सितादिभिः, सकफे समुस्तमरिचैः, सवाते सघृतैः। सङ्ग्रहे तु (चि अ ४)–"पिप्पलीमुस्तयष्ट्याह्वद्राक्षामूर्वामहौषधम्। लाजामृतफलाद्राक्षात्वक्क्षीरीपिप्पलीसिता॥ अमृतफला–धात्री। दुःस्पर्शा कर्कटी शुण्ठी शठी द्राक्षा बला सिता। निदिग्धिकामूलफलं वटबीजं रसाञ्जनम्॥ खर्जूरं पिप्पली वांशी श्वदंष्ट्रा चेति पञ्च ते। घृतक्षौद्रयुता लेहाः श्लोकार्धैः पित्तकासिनाम्॥ पयोनुपानां शृङ्गीं वा लिह्यात् साज्यसितामधुम्।" इति।

**मृद्वीकार्धशतं त्रिंशत्पिप्पलीः शर्करापलम्।**
**लेहयेन्मधुना**

स०–तथा, मृद्वीकागुलिकाः पञ्चाशत् त्रिंशत्पिप्पलीः शर्करापलं च मधुना लेहयेत्।

आ० र०–लेहान्तरमाह–मृद्वीकार्धशतमिति।

**गोर्वा क्षीरपस्य शकृद्रसम्॥ ३०॥**

स०–गोर्वा वत्सस्य क्षीरपस्य–क्षीरवृत्तेः, शकृद्रसं मधुना लेहयेत्।

आ० र०–लेहान्तरमाह–गोर्वेति। क्षीरपस्य गोः–क्षीरमात्राहारस्य वत्सस्य, शकृद्रसं मधुना सह मर्दितं लेहयेत्।

**त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः।**
**लाजमुस्ताशठीरास्नाधात्रीफलबिभीतकैः॥ ३१॥**
**शर्कराक्षौद्रसर्पिर्भिर्लेहो हृद्रोगकासहा।**

स०–त्वगेलादिभिर्लेहो हृद्रोगकासहा भवति।

आ० र०–लेहान्तरमाह–त्वगेलेति। सङ्ग्रहे तु (चि अ ४)–"पिप्पल्यामलकद्राक्षालाजालाक्षासितोत्पलाः। सञ्चूर्ण्य पक्का पयसा लिह्यात् क्षौद्राष्टभागिका॥ विदारीक्षुमृणालानां रसान् क्षीरं सितोपलाम्। पिबेत् क्षौद्रेण संयोज्य पित्तकासमपोहति॥" इति। योगरत्ने तु–"व्याघ्रीबलाभ्यां च जलं साधितं पित्तकासनुत्। तैरेव साधितं क्षीरमनुपानं प्रशस्यते॥ पिप्पल्यामलकद्राक्षा व्याघ्री यष्टी शतावरी। पिप्पली चेति तुल्यानि शर्करा च चतुर्गुणा॥ त्वक्क्षीरीं द्विगुणां दत्वा लेहयेन्मधुसर्पिषा। क्षतकासं जयत्येष लेहः पित्तोल्बणं तथा॥ चूर्णं तु पद्मबीजानां मधुना सम्प्रयोजयेत्। पित्तकासार्दितो लिह्यात् स्वस्थतां लभते क्षणात्॥ वासाकषायकल्काभ्यां घृतं समधुशर्करम्। सिद्धं तत्पित्तकासघ्नं सर्वपित्तविकारनुत्॥" इति। वङ्गसेने तु (कासाधिकारे श्लो ३०)–"बलाद्विबृहतीद्राक्षावासाभिः क्वथितं जलम्। पित्तकासापहं पेयं शर्करामधुयोजितम्॥" इति।

**मधुरैर्जाङ्गलरसैर्यवश्यामाककोद्रवाः॥ ३२॥**
**मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः।**
**घनश्लेष्मणि लेहाश्च तिक्तका मधुसंयुताः॥ ३३॥**
**शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः।**

स०–घनश्लेष्मणि पित्तकासे जाङ्गलैः रसैर्मधुरैस्तथा मुद्गकुलत्थादियूषैस्तथा तिक्तैः शाकैश्च सह यवादयो मात्रया–परिमिता, हिता। घनश्लेष्मणि लेहाश्च तिक्तद्रव्ययुक्ताः। तनुकफे पित्ते शालयः षष्टिकाश्च रसादिभिर्हिताः स्युः–भवेयुः।

आ० र०–अन्नपानमाह–मधुरैरिति। तच्च घने श्लेष्मणि यवादिना शाल्यादि। लेहाः–लेह्यखलाः। ते च तिक्तद्रव्यकृता मधुमधुराश्च।

**शर्कराम्भोऽनुपानार्थं द्राक्षेक्षुस्वरसाः पयः॥ ३४॥**

स०–अनुपानार्थं शर्कराम्भो हितम्, द्राक्षेक्षुस्वरसाः पयश्च।

आ० र०–अनुपानान्याह–शर्कराम्भ इति।

**काकोलीबृहतीमेदाद्वयैः सवृषनागरैः।**
**पित्तकासे रसक्षीरपेयायूषान् प्रकल्पयेत्॥ ३५॥**

स०–काकोल्यादिभिर्मांसरसादीन् पित्तकासे प्रकल्पयेत्।

आ० र०–उक्तरसादिसाधनद्रव्याण्याह–काकोलीति। द्वयशब्दस्त्रिभिर्योज्यः।

**द्राक्षां कणां पञ्चमूलं तृणाख्यं च पचेज्जले।**
**तेन क्षीरं शृतं शीतं पिबेत्समधुशर्करम्॥ ३६॥**
**साधितां तेन पेयां वा सुशीतां मधुनाऽन्विताम्।**

स०–पित्तकासे तथा द्राक्षादीन् चतुर्गुणे जले पचेत्। तेन–

१ 'हृ पित्ते' इ फ स मू। २ 'मृताफलद्रा' स स। ३ 'क्षाफला शिवा।' स मू। 'क्षासिताबला।' स स। ४ वांशी–वंशरोचना। ५ "मृद्वीकाफलानि पञ्चाशत्, पिप्पलीफलानि त्रिंशत्।" इतीन्दुः। ६ 'काः–द्राक्षा, प' इति क्वचित्। ७ 'लिकीप' ट। 'लिकाप' भ.।

१ 'पक्त्वा प' स स। २ 'त् क्षुद्रा' फ। ३ 'रसः' स द्व। ४ 'तेन जलेन क्षीरं' ड ध।

पादावशिष्टेन द्राक्षादीना क्वाथेन, सम क्षीर क्वथित [ शीत ] मधुशर्करायुत पिबेत् । तेन वा-जलेन, साधिता पेया सुशीता माक्षिकयुता पिबेत् ।

**आ० र०-क्षीरान्तरमाह-द्राक्षां कणामिति । पेयान्तरमाह-साधितामिति । तेन-द्राक्षादिक्वाथेन ।**

**शठीह्रीबेरबृहतीशर्कराविश्वभेषजम् ॥ ३७ ॥**
**पिष्ट्वा रसं पिबेत्पूतं वस्त्रेण घृतमूर्च्छितम् ।**

**स०**-शठ्यादीन् जले पिष्ट्वा वस्त्रेण पूत रस घृतमिश्रित पिबेत् ।

**आ० र०-पानकमाह-शठीति । पिष्ट्वा-जलोष्णेन चतुर्गुणेन, फाण्टत्वात् । मूर्च्छित-भृष्टम् ।**

**मेदां विदारीं काकोलीं स्वयंगुप्ताफलं बलाम् ॥३८॥**
**शर्करां जीवकं मुद्गमाषपर्ण्यौ दुरालभाम् ।**
**कल्कीकृत्य पचेत्सर्पिः क्षीरेणाष्टगुणेन तत् ॥ ३९ ॥**
**पानभोजनलेहेषु प्रयुक्तं पित्तकासजित् ।**
**लिह्याद्वा चूर्णमेतेषां कषायमथवा पिबेत् ॥ ४० ॥**

**स०**-शर्करादीन् कल्कीकृत्याष्टगुणेन क्षीरेण सर्पि पचेत् । तच्च सपि पानादिषु युक्त पित्तकासजित् । एतेषा वा-शर्करादीना, चूर्ण लिह्यात् । अथवैषामेव कषाय पिबेत् ।

**आ०र०-घृतचूर्णक्वाथानाह-मेदां विदारीमिति । लिह्यान्मधुना । सङ्ग्रहे तु (चि अ ४)-"महिष्यजावीगोक्षीरधात्रीफलरसै समै । सर्पि सिद्धं पिबेत्तद्वन्मधुरेण गणेन वा । क्वाथीकृतेनेक्षुरसे क्षीरयुक्तेन साधितम् । सशर्कर पिबेत्प्रातर्लिह्याद्वा माक्षिकान्वितम् । मधुरेण-जीवनीयेन । क्षीरिवृक्षाङ्कुरक्वाथे पक्व क्षीरसम घृतम् । पाययेत्पित्तकासार्तं मधुना वाऽवलेहयेत् ॥" इति । इति पित्तकासचिकित्सा ।**

**कफकासी पिबेदादौ सुरकाष्ठात् प्रदीपितात् ।**
**स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम् ॥ ४१ ॥**

**स०**-कफकासी पूर्व सुरकाष्ठात् प्रदीपितात् य स्रुत स्नेहस्त व्योषयवक्षारावचूर्णितं पिबेत् ।

**आ० र०-अथ कफकासचिकित्सा । तत्र स्नेहनमाह-कफकासीति । परिस्रुत-पातालयन्त्रेण ।**

**स्निग्धं विरेचयेदूर्ध्वमधो मूर्ध्नि च युक्तितः ।**
**तीक्ष्णैर्विरेकैर्बलिनं**

**स०**-स्निग्ध च सन्तमनन्तर विरेचयेत् ऊर्ध्वमधो मूर्ध्नि च । युक्तितो-यथाबलहानिर्न स्यादिति भाव । केविरेचयेत्[१] तीक्ष्णैर्विरेकै । किम्भूतमातुरम्[२] बलवन्तम् ।

**आ०र०-वमनविरेकनस्यान्याह-स्निग्धमिति । विरेकै-वमनविरेचनानामौषधै ।**

**संसर्गी चास्य योजयेत् ॥ ४२ ॥**
**यवमुद्गकुलत्थान्नैरुष्णरूक्षैः कटूत्कटैः ।**
**कासमर्दकवार्ताकव्याघ्रीक्षारकणान्वितैः ॥ ४३ ॥**
**धान्वबैलरसैः स्नेहैस्तिलसर्षपनिम्बजैः ।**

**स०**-ससर्गी च-पेयादिपरिपाटी च, अस्य योजयेत् । यवादिभिर्यथायोगमुष्णरूक्षैस्तथा कटूत्कटै-प्रभूतकटुकै, कासमर्दकादियुक्तै । धन्वनि भवा धान्वा-जाङ्गला, बिलेषु भवा बैला-बिलेशया, तेषा रसास्तैर्मासरसे सहेत्यर्थ । तथा, स्नेहैस्तिलादिजै सह ।

**आ० र०-शुद्ध्यनन्तर ससर्जनमाह-संसर्गी चेति । यवानां पेया विलेपी च । मुद्गानां कुलित्थाना वा यूष । जाङ्गलाना बिलेशयाना वा रस । स च कासमर्दाद्यन्वित । क्षारो-यवक्षार । तिलादिजै स्नेहैर्यूषरसयो कृतकल्कम् । वङ्गसेने तु ( कासा श्लो ४० )-"मुद्गामलाभ्यां यवदाडिमाभ्यां कर्कन्धुना मूलकशुण्ठकेन । शुण्ठीकणाभ्या सकुलत्थकेन यूषो नवाङ्ग कफरोगहन्ता ॥" इति ।**

**दशमूलाम्बु घर्माम्बु मद्यं मध्वम्बु वा पिबेत् ॥४४॥**
**मूलैः पौष्करशम्याकपटोलैः संस्थितं निशाम् ।**
**पिबेद्वारि सहक्षौद्रं कालेष्वन्नस्य वा त्रिषु ॥ ४५ ॥**

**स०**-दशमूलाम्ब्वादीन्(नि) पिबेत् । अथवा, मूलै पौष्करादिभिर्निशा सस्थित-रात्रिस्थित, वारि क्षौद्रेण सहं प्रात पिबेत् । अथवा, अन्नस्य त्रिषु कालेषु-आदिमध्यावसानलक्षणेषु, पिबेत् ।

**आ० र०-तृषितस्य पानान्याह-दशमूलाम्ब्विति । घर्माम्बु-उष्णोदकम् ।**

**पानानन्तरमुष्णो(षितो)दकमाह-मूलैरिति । पुष्करादीनां मूलै, निशामन्वित-शीतकषायीकृतम् । त्रिषु कालेषु-अन्नादौ अन्नमध्ये अन्नान्ते वा ।**

**पिप्पली पिप्पलीमूलं शृङ्गबेरं बिभीतकम् ।**
**शिखिकुक्कुटपिच्छानां मषी क्षारो यवोद्भवः ॥ ४६ ॥**

---

१ श्लोकार्धमिद हेमाद्रिसम्मत इ फ पुस्तकयो समुपलब्ध च । २ मधुरो गणो-रसभेदीयोक्तो मधुरस्कन्ध (हृ सू अ १०।२२) । ३ 'च' फ । ४ 'रस क्षी' स मू । ५ 'कासे' फ । ६ "स्निग्धमिति अनेनैव स्नेहेन त्रिभिर्मार्गैं, युक्त्या-वातरक्षादिरूपया । विरेचयेदूर्ध्वमिति वमनेन, अध इति विरेचनेन, मूर्ध्नीति नस्येन । तीक्ष्णै पुनर्द्रव्यैस्त्रिधाऽपि बलिनमेव विरेचयेत् । अबल तु मृदुभिर्विरेकैरित्यर्थ ।" इतीन्दु ।

१ 'ध सर्वम' ड ध । २ "अस्य-विरिक्तस्य कासिन ॥ पौष्करादिमूलै सकला रात्रिं समन्वित वारि श्वोभूतेषु त्रिषु कालेष्वन्नस्य पिबेत । पूर्वप्रयोगापेक्षया विकल्प ।" इतीन्दु । ३ 'रसैर्लेहै०पबिल्वजै' फ स च । ४ 'शटीक' फ. । ५ 'हर्ता' वङ्ग । ६ 'लैरन्वित' इ हे स स । ७ 'ह पिबे' ड । ८ "प्रात पिबेत् । अथवा" इत्यरुणदत्तव्याख्यानमयुक्तमिव प्रतिभाति ।

**विशाला पिप्पलीमूलं त्रिवृता च मधुद्रवाः ।**
**कफकासहरा लेहास्त्रयः श्लोकार्धयोजिताः ॥ ४७ ॥**

स०–पिप्पल्यादयस्त्रयो लेहा श्लोकार्धैर्योजिता मधुना सह कफकासहरा भवन्ति ।

आ० र०–लेहत्रयमाह–पिप्पलीति । सङ्ग्रहे तु सप्त (चि अ.४)–"देवदार्वभया मुस्तं पिप्पली विश्वभेषजम् । गुडूची पिप्पली भार्गी शृङ्गी कर्कटकस्य च ॥ व्योषदाहविडङ्गानि त्रिफलाशर्कराबला । निदिग्धिकाया मूलत्वक् मरीचैः सह योजिता ॥" इति । [एभि ] चतुर्भिः सह ।

**मधुना मरिचं लिह्यान्मधुनैव च जोङ्गकम् ।**
**पृथग्रसांश्च मधुना व्याघ्रीवार्ताकभृङ्गजान् ॥ ४८ ॥**
**कासघ्नस्याश्वशकृतः सुरसस्यासितस्य च ।**

स०–तथा कफकासे मधुना मरिचं लिह्यात् । माक्षिकेणैवागुरु लिह्यात् । व्याघ्र्यादिजान् रसान् पृथक्पृथक् मधुना लिह्यात् ।

आ० र०–लेहाष्टकमाह–मधुना मरिचमिति । जोङ्गकम्–अगरु । व्याघ्र्यादीनां षण्णां रसाः । कासघ्नः–कासमर्दः । असितः सुरसः–कृष्णतुलसी ।

**देवदारुशठीरास्नाकर्कटाख्यादुरालभाः ॥ ४९ ॥**
**पिप्पली नागरं मुस्तं पथ्या धात्री सितोपला ।**
**लाजाः सितोपला सर्पिः शृङ्गी धात्रीफलोद्भवा ५०**
**मधुतैलयुता लेहास्त्रयो वातानुगे कफे ।**

स०–देवदार्वादयो मधुतैलयुता लेहास्त्रयः–श्लोकार्धगदिता, वातानुगे कफे स्युः । अत्र शृङ्गीधात्रीफलोद्भवेति केचिद्विशिष्टमामलकमाहुः । अन्ये तु शृङ्गी कर्कटशृङ्गीति व्याचक्षते ।

आ० र०–वातानुगे कफे लेहत्रयमाह–देवदारुशठीति । धात्रीफलोद्भवा शृङ्गी–शृङ्गाकारा शुष्कामलकत्वक् ।

**द्वे पले दाडिमादष्टौ गुडाद्व्योषात्पलत्रयम् ॥ ५१ ॥**
**रोचनं दीपनं स्वर्यं पीनसश्वासकासजित् ।**

स०–दाडिमस्य पले द्वे तु गुडादष्टौ त्रिकटुकात् पलत्रयमित्येतद्दाडिमाद्यं चूर्णं रोचनादिगुणं पीनसादिजित् ।

आ० र०–गुटिकामाह–द्वे पले इति ।

**गुडक्षारोषणकणादाडिमं श्वासकासजित् ॥ ५२ ॥**
**क्रमात्पलद्वयार्धाक्षकर्षार्धाक्षपलोन्मितम् ।**

स०–गुडादिकं क्रमेण पलद्वयमर्धकर्षं कर्षं अर्धकर्षं पलप्रमाणं पूर्वोक्तगुणम् ।

आ० र०–गुटिकान्तरमाह–गुडक्षारोषणकणादाडिमादिति । पलद्वयं गुडस्य । अर्धाक्षं क्षारस्य । कर्षो मरीचस्य । अर्धाक्षः कणायाः । पलं दाडिमस्य । सङ्ग्रहे तु (चि. अ ४)–"विडङ्गं सैन्धवं कुष्ठं व्योषं हिङ्गु मनःशिलाम् । कासे श्वासे च हिध्मायां लिह्यात् क्षौद्रघृताप्लुतम् ॥ पाठाशुण्ठीशठीमूर्वागवाक्षीपिप्पलीघनम् । पिष्ट्वा घर्माम्बुना हिङ्गुसैन्धवाभ्यां युतं पिबेत् ॥ तद्वन्मुस्ताशठीशृङ्गीनागरातिविषाभयाः ।" इति ।

**पिबेज्ज्वरोक्तं पथ्यादि सशृङ्गीकं च पाचनम् ॥५३॥**

स०–तथा ज्वरचिकित्सितोक्तं (श्लो ६२)–"पथ्याकुस्तुम्बरी" इत्यादिकं पाचनं कर्कटशृङ्गीसहितं पिबेत् पूर्वगुणम् ।

आ० र०–पाचनमाह–पिबेज्ज्वरोक्तमिति । पथ्यादि–पथ्याकुस्तुम्बरीमुस्तेत्यादि ।

**अथवा दीप्यकत्रिवृद्विशालाघनपौष्करम् ।**
**सकणं क्वथितं मूत्रे कफकासी जलेऽपि वा ॥ ५४ ॥**

स०–दीप्यकादिकं गोमूत्रे क्वथितं जलेऽथवा क्वथितं पिप्पलीसहितं कफकासी पिबेत् ।

आ० र०–पाचनान्तरमाह–अथवेति । तच्च मूत्रे जले[वा] क्वथितम् ।

**तैलभृष्टं च वैदेहीकल्काक्षं ससितोपलम् ।**
**पाययेत्कफकासघ्नं कुलत्थसलिलाप्लुतम् ॥ ५५ ॥**

स०–पिप्पलीकल्ककर्षं सशर्करं तैलेन पक्वं कुलत्थसलिलाप्लुतं कफकासघ्नं पाययेत् ।

आ० र०–शमनमाह–तैलभृष्टं चेति । वैदेही–पिप्पली । कल्को–द्रवपिष्टपिण्डम् । अक्षः–कर्षम् । सङ्ग्रहे तु (चि अ ४)–"सौवर्चलाभयाधात्रीपिप्पलीक्षारनागरम् । चूर्णितं सर्पिषा वातकफकासहरं पिबेत् ॥" इति ।

**दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ।**
**पुष्कराह्वशठीबिल्वसुरसाव्योषहिङ्गुभिः ॥ ५६ ॥**
**पेयानुपानं तत्सर्ववातश्लेष्मामयापहम् ।**

स०–दशमूलक्वाथाढके घृतस्य प्रस्थं पुष्करमूलादिभिः प्रत्येकं कर्षप्रमाणैः कल्कीकृतैः पचेत् । तत् पेयानुपानं सर्ववातकफामयघ्नम् ।

आ० र०–घृतमाह–दशमूलाढके इति । आढके क्वाथस्य ।

**निर्गुण्डीपत्रनिर्यासंसाधितं कासजिद्घृतम् ॥ ५७ ॥**

स०–निर्गुण्डीपत्रस्वरससाधितं घृतं कासजित्स्यात् ।

आ० र०–घृतान्तरमाह–निर्गुण्डीति ।

**घृतं रसे विडङ्गानां व्योषगर्भं च साधितम् ॥५७½॥**

स०–विडङ्गानां रसे व्योषगर्भं च साधितं घृतं पूर्वोक्तगुणम् ।

आ० र०–[ घृतान्तरमाह–घृतमिति । ]

**पुनर्नवशिवाटिकासरलकासमर्दामृता-**
**पटोलबृहतीफणिज्झकरसैः पयःसंयुतैः ।**

१ 'वा' इ । २ 'फलाद्भज ।' इ । ३ 'डिमाच्छ्वास' फ । ४ 'र्धाक्षार्धप' अ ।

१ 'ठीशुण्ठीना' स-द. । २ 'राख्यश' फ. । ३ 'तच्च पे' ट. ।

**घृतं त्रिकटुना च सिद्धमुपयुज्य सञ्जायते**
**न कासविषमज्वरक्षयगुदाङ्कुरेभ्यो भयम् ॥ ५८ ॥**

स०—पुनर्नवादिरसै पयसा युतैस्त्रिकटुना कल्केन च सिद्ध घृतमुपयुज्य—पीत्वा, कासादिभ्यो भय न जायते । "वसुग्रहयुता जसौ जसयलाश्च पृथ्वी गुरु ।" अत्र पुनर्नवादिरसो घृताच्चतुर्गुण क्षीर घृतसम घृत व्योषाच्चतुर्गुणमिति पाकक्रम ।

आ० र०—घृतान्तरमाह—पुनर्नवेति । शिवाटिका—द्वितीय. पुनर्नवा । त्रिकटुना कल्केन ।

**समूलफलपत्रायाः कण्टकार्या रसाढके ॥ ५९ ॥**
**घृतप्रस्थं बलाव्योषविडङ्गशठिदाडिमैः ।**
**सौवर्चलयवक्षारमूलामलकपौष्करैः ॥ ६० ॥**
**वृश्चीववृहतीपथ्यायवानीचित्रकर्धिभिः ।**
**मृद्वीकाचव्यवर्षाभूदुरालम्भाम्लवेतसैः ॥ ६१ ॥**
**शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ।**
**कल्कैस्तत्सर्वकासेषु श्वासहिध्मासु चेष्यते ॥ ६२ ॥**
**कण्टकारीघृतं चैतत्कफव्याधिविनाशनम् ।**

स०—कण्टकार्या समूलफलपत्राया रसाटके बलादिभि कल्कैर्घृताच्चतुर्थांशप्रमाणैर्घृतप्रस्थ पचेत् । तच्च सपि सर्वकासादिष्विष्यते—अभिहितम् । इद च कण्टकारीघृत कफव्याधिविनाशनम् ।

आ० र०—घृतान्तरमाह—समूलफलशाखाया इति । मूल—पिप्पलीमूलम् । सङ्ग्रहे तु (चि अ ४)—"कण्टकार्यास्तुला क्षुण्णा पक्त्वा द्रोणेऽम्भस पचेत् । तेनाढकेन क्काथस्य घृतप्रस्थ पिचून्मितै ॥ रास्नाद्रु स्पर्शषङ्ग्रन्थापिप्पलीद्वयचित्रकै । सौवर्चलयवक्षारकृष्णामूलैश्च तज्जयेत् ॥ कासश्वासकफष्ठीवहिध्मारोचकपीनसान् ।" इति ।

**पचेद्व्याघ्रीतुलां क्षुण्णां वहेऽपामाढकस्थिते ॥ ६३ ॥**
**क्षिपेत् पूते तु सञ्चूर्ण्य व्योषरास्नामृताग्निकान् ।**
**शृङ्गीभार्गीघनग्रन्थिधन्वयासान् पलार्धकान् ॥ ६४ ॥**
**सर्पिषः षोडशपलं चत्वारिंशत्पलानि च ।**
**मत्स्यण्डिकायाः शुद्धायाः पुनश्च तदधिश्रयेत् ॥ ६५ ॥**
**दर्वीलेपिनि शीते च पृथक् द्विकुडवं क्षिपेत् ।**
**पिप्पलीनां तवक्षीर्या माक्षिकस्यानवस्य च ॥ ६६ ॥**
**लेहोऽयं गुल्महृद्रोगदुर्नामश्वासकासजित् ।**

१ 'फलशाखाया' फ । 'मूलपत्रशाखाया' सि वङ्ग । २ 'रपिप्पलीमूलपौ' स.च । ३ 'शस्यते ॥० त द्धेतत्कफव्याधिनिषूदनम्' स च । 'शस्यते ॥० तं सर्वकफ' सि । 'शस्यते ॥० त सिद्ध कफकासनिषूदनम् ।' वङ्ग, नि र । ४ श्लोकार्धमिद इ पुस्तके समुपलब्ध अरुणदत्तचरकवृन्दवङ्गसेनादिसम्मत च । ५ 'च' इ । ६ "अधिश्रयण—पाकाय चुल्ल्यामारोहणम् ।" इतीन्दु । ७ 'तुगाक्षी' इ. ।

स०—व्याघ्र्यास्तुला क्षुण्णा—मर्दिता, जलस्य वहे—चतुर्द्रोणे, पचेत् । आटकस्थिते जले सञ्चूर्ण्य व्योषादीनि अर्धपलप्रमाणानि प्रत्येक क्षिपेत् । अग्निरेवाग्निक—चित्रक । घृतस्य च षोडश पलानि, मत्स्यण्डिकाया,—विमलाया, चत्वारिंशत्पलानि, भूयश्च तत्सर्व पचेत् । दर्वी लिम्पतीति दर्वीलेपी तस्मिन् दर्वीलेपिनि, अवलेहे शीते सति प्रत्येक द्विकुडवप्रमाण पिप्पल्यादि क्षिपेत् । अय लेहो गुल्मादिजित् ।

आ० र०—व्याघ्रीलेहमाह—पचेद्व्याघ्रीतुलामिति । वहे—द्रोणचतुष्के । ग्रन्थि—पिप्पलीमूलम् । मत्स्यण्डिकाया—शर्कराया । अनवस्य—जीर्णस्य । सङ्ग्रहे तु (चि अ ४)—"त्रिफला पिप्पली पाठा सारिवा बृहतीद्वयम् । मरीच पद्मक मुस्तमुशीर चाक्षसम्मितम् ॥ पक्त्वा जलाढके पादशेषे क्षीरपलाष्टकम् । दत्वा गुडस्य च पल पचेदादर्विलेपनात् ॥ लेह कफोल्बण कासं सर्वमेषं नियच्छति । साधित क्षीरमेभिर्वा तैलक्षौद्रयुत पिबेत् ॥" इति । वङ्गसेने तु (कासाधिकारे)—"कुष्ठ तामलकी भार्गी शठी क्षारो हरीतकी । कोल चोष्णाम्भसा चूर्ण लेहो वा मधुसंयुत ॥ कोल—मरिचम् । (श्लो ४७) व्योषपुष्करमृद्वीकात्रिफलाशठिचित्रकै । मधुतैलयुतो लेह श्लेष्मकासनिबर्हण ॥ व्योषाजमोदचित्रककषङ्ग्रन्थाचव्यकल्कित सर्पि । कफकासश्वासहर वासकरससाधित समधु ॥" इति । योगरत्ने तु—"विडङ्ग सैन्धव रास्ना शठी क्षारो महौषधम् । श्लेष्मकासे हित चूर्ण लेहो वा मधुसयुत ॥ बिभीतक घृताभ्यक्त गोशकृत्परिवेष्टितम् । स्विन्नमग्नौ हरेत्कास ध्रुवमास्ये विधारितम् ॥" इति ।

**शमनं च पिबेद्धूमं शोधनं बहले कफे ॥ ६७ ॥**

स०—तथा कफकासे शमन धूम पिबेत् । घनश्लेष्मणि शोधन धूम पिबेत् ।

आ० र०—धूममाह—शमन चेति । शमन धूमं पिबेत् । यस्य तु बहल कफ [स] शोधन धूम पिबेत् ।

अथ तमेव धूममाह—

**मनःशिलालमधुकमांसीमुस्तेङ्गुदीत्वचः ।**
**धूमं कासघ्नविधिना पीत्वा क्षीर पिबेदनु ॥ ६८ ॥**
**निष्ठ्यूतान्ते गुडयुतं कोष्णं धूमो निहन्ति सः ।**
**वातश्लेष्मोत्तरान् कासानचिरेण चिरन्तनान् ॥ ६९ ॥**

स०—एतेषा सम्बन्धिन धूम कासघ्नविधिना—सूत्रोदितेन, पीत्वाऽनु—पश्चात्, निष्ठ्यूतान्ते कोष्ण क्षीर गुडान्वित पिबेत् । स धूम पीतो वातश्लेष्मोत्तरान् कासाश्चिरन्तनान् आश्वेव हन्ति । चिरन्तनानिति "साय चिर" इत्यादिना ट्यु ।

१ 'क्षीर' फ स द्व. । २ 'मेव नि' इ स द्व । ३ 'क्षार' फ. । ४ 'र्वा तिल' स द्व । ५ कुष्ठमित्यादिश्लोको मुद्रितवङ्गसेनपुस्तके नोपलभ्यते । ६ 'कजीरकषङ्ग्रन्थिकचव्यकल्कितम् । सर्पि. कफकासहर' वङ्ग. । ७ 'बहुले' अ.स.मू ।

आ० र०–धूमान्तरमाह–मन शिलेति । अल–हरितालम् । इङ्गुदी–तापसद्रुम । त्वक्काजि(?)चूर्णीकृत्वा तेषा धूम पिबेदित्यर्थ । कासघ्नविधिना–धूमपानोक्तेन । धूमोत्क्लिष्टकफनिष्ठानामक्षीर पिबेत् । सङ्ग्रहे तु (चि अ. ४ )–"प्र पौण्डरीक मधुक शार्ङ्गेष्टाऽल मन शिलाम् । मरीच पिप्पली द्राक्षामेलां सुरसमञ्जरीम् ॥ कृत्वा वर्ति पिबेद्धूम क्षौमचैलानुवर्तिनीम् । घृताक्तामनु च क्षीर पिबेत्तद्वद्गुडाम्बु वा ॥ शार्ङ्गेष्टा–उत्तुण्डुकी । सुरस –तुलसी । तद्वत्–निष्ठ्यूतान्ते । नेपालीतालमरिचलाक्षानतकुटन्नटे । उशीररोहिषफलद्रविडी वशलेखनै ॥ पूर्वकल्पेन धूमोऽय सानुपानो विधीयते । नेपाली–मन शिला । ताल–हरितालम् । द्रविडी–एला । वशलेखन–वशत्वक् । कार्पासास्थ्यश्वगन्धा च धूम कास विनाशन । कोशातकीफलान्मध्ये पिबेद्वा समन शिलै ॥" इति । योगरत्ने तु–"ताम्यमानसकासेन नासाभङ्गे स्वरे जडे । क्षवथौ घ्राणनासे च धूमनाडी प्रयोजयेत् ॥ क्षौमगर्भा पिबेद्वर्ति हरिताल मन शिलाम् । तालीसपत्र कैडर्य गुडान्न चैव भोजयेत् ॥ कैडर्य–कट्फलम् । धूमवर्तिर्बला व्योष हरिताल मन शिला । अनुपान शृत वाऽपि प्रशस्त काञ्जिकौदनम् ॥ मधुक चाजमोदश्च जीवन्त्यगुरुसर्जजौ । स्वैरण्डमूला कासघ्नी धूमवर्तिरिय शुभा ॥ सर्जजो–राला । क्षौम हिङ्गुवचाभूर्जग्रन्थिश्चैष घृतान्वित । धूमकासहर. पीत सर्वगन्धमयोऽपि वा ॥ मन शिला समालि दरे परिशोषितै । स्यह पत्रै कृत धूम पिबेत्कासनिवारणम् ॥ जातेरुत्तरशिफाधूम शिलागुग्गुलमिश्रितम् । गात्रस्य बदराङ्गारै कारयेत्कासशान्तये ॥ जातेरुत्तरदिङ्मूल शिलैलागुग्गुलु समम् । अजामूत्रेण पिष्टोऽय धूप कासहर पर ॥ मूलेन शरपुङ्खाया धूप कासहर पर. ।" इति ।

**तमकः कफकासे तु स्याच्चेत्पित्तानुबन्धजः ।**
**पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥ ७० ॥**

स०–कफकासे यदि तमक पित्तानुबन्धज स्यात् । तत्र–तमके, पित्तकासक्रियामवस्थावशात् प्रयोजयेत् ।

आ० र०–तमकोपद्रवे प्रतीकारमाह–तमक इति । तमक.–प्रतमक, "ज्वरमूर्च्छायुत शीतै शाम्येत् प्रतमकस्तु स ।" (हृ नि अ ४।११) इति वचनात्पित्तजत्वाच्च ।

**कफानुबन्धे पवने कुर्यात्कफहरां क्रियाम् ।**
**पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ॥ ७१ ॥**
**वातश्लेष्मात्मके शुष्के स्निग्धमार्द्रे विरूक्षणम् ।**
**कासे कर्म सपित्ते तु कफजे तिक्तसंयुतम् ॥ ७२ ॥**

स०–पवने कफानुबन्धे सति कफकासहरा क्रिया कुर्यात् । पित्तानुबन्धयोर्वातकफयो पित्तकासनाशिनी क्रिया विदध्यात् । वातश्लेष्मात्मके शुष्के कासे स्निग्ध कर्म । आर्द्रे तु कासे विरूक्षण कर्म । कफजे तु कासे सपित्ते तिक्तसयुत विरूक्षण कर्म ।

आ० र०–अनुबन्धभेदाच्चिकित्सामाह–कफानुबन्ध इति । शुष्के–श्लेष्मनिष्ठीवनहीने, आर्द्रे–युक्ते । सपित्ते कफजे तु शुष्के तिक्तयुत स्निग्धम्, आर्द्रे रूक्षम् । इति कफकासचिकित्सा ।

**उरस्यन्तःक्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत् ।**
**क्षीरेण**

स०–अन्त क्षत उरसि सति सद्य –शीघ्रमेव, लाक्षा माक्षिकयुक्ता क्षीरेण पिबेत् । उर सन्धानजनने लाक्षाया प्राधान्यात् । तथा चाभ्य सङ्ग्रहे(सू अ १३)–"लाक्षा सद्य क्षतघ्नानाम्" इति ।

आ० र०–अथ क्षतकासचिकित्सा । तत्र क्षतस्यौषधमाह–उरस्यन्त क्षत इति । सद्य –उत्पन्नमात्रे ।

**शालीन् जीर्णेऽद्यात्क्षीरेणैव सशर्करान् ॥७३॥**

स०–जीर्णे–परिणते तस्मिन्नौषधे, क्षीरेणैव सह शालिम (लीन )द्यात् सशर्करम्( रान् ) ।

आ० र०–अन्नौषधभोजनमाह–शालीनिति । जीर्णे–औषधे ।

**पार्श्वबस्तिसरुक्चाल्पपित्ताग्निस्तां सुरायुताम् ।**

स०–पार्श्वबस्त्यादिरुगल्पाग्निश्च ता–लाक्षा,सुरायुता पिबेत् ।

आ० र०–औषधान्तरमाह–पार्श्वबस्तिसरुगिति । पार्श्वयोर्बस्तौ च सरुक्–सशूल । ता–लाक्षाम् ।

**भिन्नविट्क. समुस्तातिविषापाठां सवत्सकाम् ७४**

स०–भिन्नपुरीषो नरो मुस्तातिविषापाठावत्सकान्विता लाक्षा पिबेत् ।

आ० र०–औषधान्तरमाह–भिन्नविड्क इति । मुस्तादिभिश्चतुर्भिर्युता लाक्षा शीतोदकेन पिबेत् ।

**लाक्षा सर्पिर्मधूच्छिष्टं जीवनीयं गणं सिताम् ।**
**त्वक्क्षीरीं समितं क्षीरे पक्त्वा दीप्तानल. पिबेत् ॥**

स०–लाक्षादीनि हि क्षीरे पक्त्वा तत् क्षीर दीप्ताग्नि पिबेत् ।

आ० र०–औषधान्तरमाह–लाक्षा सर्पिरिति । समित्–गोधूमचूर्णम् ।

**इक्ष्वारिकाबिसग्रन्थिपद्मकेसरचन्दनैः ।**
**शृतं पयो मधुयुतं सन्धानार्थं पिबेत्क्षती ॥ ७६ ॥**

स०–इक्ष्वारिकादिभि शृत क्षीर मधुयुत सन्धानार्थमुरसि क्षत पुमान् पिबेत् ।

आ० र०–औषधान्तरमाह–इक्ष्वारिकेति ।

**यवानां चूर्णमामानां क्षीरे सिद्धं घृतान्वितम् ।**
**ज्वरदाहे सिताक्षौद्रसक्तून्वा पयसा पिबेत् ॥ ७७ ॥**

१ 'ष्टा च स' फ । २ 'तिनम्' फ । ३ 'क्षाजनकु' स द्व । ४ 'लद्रामिलीव' स स । ५ 'शलोचनै ' स.मू. । ६ 'ध चार्द्रे' अ. ।

१ 'द तु स' स द्व । २ 'संमित' अ इ स मू स च । ३ 'क्षीरसि' इ स.द्व ।

स०-यवानामामाना चूर्णं क्षीरे सिद्ध घृतयुत ज्वरदाहे पिबेत् । अथवा, शर्करामाक्षिकयुतान् सक्तून् पयसा पिबेत् ।

आ० र०-औषधान्तरमाह-यवानां चूर्णमिति । आमाना-उलम्बिकायोग्यानाम् ।

औषधान्तरमाह-सिताक्षौद्रसक्तून्वेति ।

**कासवांस्तु पिबेत्सर्पिर्मधुरौषधसाधितम् ।**
**गुडोदक वा क्वथितं सक्षौद्रमरिचं हितम् ॥ ७८ ॥**
**चूर्णमामलकानां वा क्षीरे पक्वं घृतान्वितम् ।**
**रसायनविधानेन पिप्पलीर्वा प्रयोजयेत् ॥ ७९ ॥**

स०-कासवांश्च मधुरौषधैः साधित सर्पि पिबेत् । अथवा, गुडोदक क्वथित सक्षौद्रमरिच शीत पिबेत् । आमलकाना वा चूर्ण क्षीरे सिद्ध सर्पिर्युक्त पिबेत् । रसायनोक्तविधिना वा पिप्पली प्रयोजयेत् ।

आ० र०-औषधान्तरमाह-कासवांस्त्विति । मधुराणि-जीवन्त्यादीनि ।

औषधान्तरमाह-गुडोदक वेति । क्वथित-क्वाथविधिना ।

औषधान्तरमाह-चूर्णमामलकाना वेति ।

औषधान्तरमाह-रसायनविधानेनेति ।

**कासी पर्वास्थिशूली च लिह्यात्सघृतमाक्षिकाः[३] ।**
**मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः[४] ॥ ८० ॥**

स०-कासी पर्वास्थिशूलवांश्च सघृतमाक्षिकां मधूकादी-र्लिह्यात् ।

आ० र०-औषधान्तरमाह-कासी पर्वास्थिशूलीति । वङ्गसेने तु ( कासाधिकारे श्लो ९३ )-"चूर्ण कंकुभसमुत्थ वासकरसभावित बहून् वारान् । मधुघृतसितोपलाभिर्लेह्य क्षतकासरक्तपित्तहरम् ॥" इति ।

**त्रिजातमर्धकर्षांशं पिप्पल्यर्धपलं सिता ।**
**द्राक्षा मधूकं खर्जूरं पलांशं श्लक्ष्णचूर्णितम् ॥ ८१ ॥**
**मधुना गुटिका घ्नन्ति ता वृष्याः पित्तशोणितम् ।**
**कासश्वासारुचिच्छर्दिमूर्च्छाहिध्मामदभ्रमान् ॥८२॥**
**क्षतक्षयस्वरभ्रंशप्लीहशोषाढ्यमारुतान् ।**
**रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि ॥ ८३ ॥**

स०-त्रिजातकमर्धकर्षप्रमाण कणा कर्षद्वयमात्रा सितादिक प्रत्येकं पलाश श्लक्ष्णचूर्णितं मधुना कृता गुटिका वृष्याः पित्त-शोणितादीन् घ्नन्ति ।

आ० र०-एलादिगुटिकामाह-त्रिजातमर्धकर्षांशमिति ।

**वर्षाभूशर्कराक्तशालितण्डुलज रजः ।**
**रक्तष्ठीवी पिबेत्सिद्धं द्राक्षारसपयोघृतैः ॥ ८४ ॥**
**मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ।**

स०-पुनर्नवादिचूर्ण द्राक्षारसपयोघृतै सिद्ध रक्तष्ठीवी पिबेत् । अथवा, मधूकादिभि सिद्ध तण्डुलीयक पिबेत् ।

आ० र०-औषधान्तरमाह-वर्षाभूशर्करेति ।

औषधान्तरमाह-मधूकमधुकक्षीरसिद्धमिति । मधूकम-धुकाभ्या सिद्धेन क्षीरेण सिद्धम् ।

**यथास्वं मार्गविसृते रक्ते कुर्याच्च भेषजम् ॥ ८५ ॥**

स०-मार्गेण-मुखादिना, विसृते रक्ते यथायय रक्तपित्त-चिकित्सितोक्तमौषध कुर्यात् ।

आ० र०-रक्तपित्तौषधमतिदिशति-यथास्वमिति । योग-रत्ने तु-"गङ्गागोदावरीक्षिप्राकालिन्दीनर्मदोद्भवाम् । आहृत्य सिकता श्वेता सुसूक्ष्मा प्रसृतोन्मिताम् ॥ तुल्या तैलघृत-क्षौद्रै सवसामज्जभिस्तथा । सागारधूमैस्त्रिफलारसेन च विमिश्रिताम् ॥ सप्तभि प्रसृतै सार्धं खजेन मथिता पिबेत् । रक्तष्ठीवी क्षतोरस्क सिद्धयोग समाचरेत् ॥ रक्ते प्रवृत्ते दक्षाण्ड यूषैस्तोयेन वा पिबेत् । चटकाण्डरस वाऽपि रक्तं वा छागजाङ्गलम् ॥" इति । सङ्ग्रहे तु (चि अ ५)-"रक्ते-ऽतिवृत्ते छाग वा जाङ्गल वा पिबेदसृक् ।" तथा-"पिप्पली-मधुक पिष्ट कार्षिक ससितोपलम् । प्रास्थिक गव्यमाज च क्षीरमिक्षुरसस्तथा[१] ॥ यवगोधूममृद्वीकाचूर्णमामलकाद्रस[२] । तैल च प्रसृताशानि तत्सर्वं मृदुनाऽग्निना ॥ पचेल्लेह घृत-क्षौद्रयुत स क्षतकासनुत् । कासहृद्रोगकार्श्यघ्नो[३] हितो वृद्धा-ल्परेतसाम् ॥" इति । यवचूर्णादीनि प्रसृतांशानि ।

**मूढवातस्त्वजामेदः सुराभृष्टं ससैन्धवम् ।**

स०-मूढवातस्तु पुरुषोऽजाया मेद सुरया भृष्टमीषत्सैन्ध-वसहितमद्यात् ।

आ० र०-

**क्षामः क्षीणः क्षतोरस्को मन्दनिद्रोऽग्निदीप्तिमान् ८६**
**शृतक्षीरसरेणाद्यात्सघृतक्षौद्रशर्करम् ।**

स०-क्षाम क्षीण क्षतोरस्को मन्दनिद्रो दीप्ताग्नि शृतक्षी-रस्य सम्बन्धिना सरेण सघृतक्षौद्रशर्करमजामेदोऽद्यात् ।

आ० र०-औषधान्तरमाह-क्षाम क्षीण इति । अजा-मेद इत्यनुषङ्ग ।

**शर्करा[४]यवगोधूमं जीवकर्षभकौ मधु ॥ ८७ ॥**
**शृतक्षीरानुपानं वा लिह्यात्क्षीणः क्षतः[५] कृशः ।**

स०-अथवा क्षीण क्षत कृशो वा शर्करादिक लिह्यात् । कथम् ? शृतक्षीरानुपानम् ।

१ 'वाश्च' इति क्वचित् । २ 'क्षीरपक्व' अ । ३-४ 'कान्' 'लान्' अ । ५-६ 'कान्' 'दीन् लि' ट ड ध । ७ 'काकुभनिष्क वा' वङ्ग । ८ 'क्षयका' वङ्ग. । ९ 'ध्मावमिभ्र' अ । १० 'शोफाढ्य' अ. फ स मू ।

१ 'रस तथा' स द्व इ । २ 'लेहो' स स । ३ 'श्वासहृद्रोगकासघ्नो' स द्व । 'श्वासहृत्पार्श्वरोगघ्नो' इ. । ४ 'राय' इ । ५ 'क्षती' स स ।

आ० र०-

क्रव्यात्पिशितनिर्यूहं घृतभृष्टं पिबेच्च सः ॥ ८८ ॥
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम् ।

स०-स च[1]-क्षीणादि , क्रव्यात्पिशितस्य निर्यूहं घृतेन भृष्टं पिबेत् । किम्भूतम् ? पिप्पलीक्षौद्रान्वितम् । तच्च मांसशोणितवर्धनं स्यात् ।

आ० र०-औषधान्तरमाह-क्रव्यात्पिशितनिर्यूहमिति । स-क्षीण क्षतकासी ।

न्यग्रोधोदुम्बराश्वत्थप्लक्षशालप्रियङ्गुभिः ॥ ८९ ॥
तालमस्तकजम्ब्वत्वक्प्रियालैश्च सपद्मकैः ।
साश्वकर्णैः शृतात्क्षीराद्याज्जातेन सर्पिषा ॥ ९० ॥
शाल्योदन क्षतोरस्कः क्षीणशुक्रबलेन्द्रियः ।

स०-न्यग्रोधादिभिः शृतात्क्षीरात् समुद्भूतेन सर्पिषा शाल्योदनं क्षतोरस्कः क्षीणशुक्रादिश्च नरोऽद्यात् ।

आ० र०-औषधान्तरमाह-न्यग्रोधोदुम्बरेति । ताल[2]मस्तको-अग्रमज्जा । न्यग्रोधादिभिः शृतं यत् क्षीरं, ततो जातं यत्सर्पिः, तेन शाल्योदनमद्यात् ।

वातपित्तार्दितेऽभ्यङ्गो गात्रभेदे घृतैर्मतः ॥ ९१ ॥
तैलैश्चानिलरोगघ्नैः पीडिते मातरिश्वना ।

स०-वातपित्तपीडिते गात्रभेदे वाऽभ्यङ्गो घृतैर्मतः । मातरिश्वना-वातेन, पीडिते सति तैलैर्वातरोगघ्नैरभ्यङ्गो मतः । चशब्दाद्घृतैरपीति द्योतयति ।

आ० र०-घृताभ्यङ्गमाह-वातपित्तार्दित इति ।
तैलाभ्यङ्गमाह-तैलैश्चेति ।

हृत्पार्श्वार्तिषु[3] पानं स्याज्जीवनीयस्य सर्पिषः ॥ ९२ ॥

स०-हृत्पार्श्वपीडासु जीवनीयस्य सर्पिषः पानं स्यात् । इति सम्भावनायां लिङ् ।

आ० र०-औषधान्तरमाह-हृत्पार्श्वार्तौ त्विति ।

कुर्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ।

स०-अथवा वातरोगघ्नं यत् पित्तरक्ताविरोधि तत् कुर्यात् ।

आ० र०-वातव्याध्युक्तमतिदिशति-कुर्याद्वेति ।

यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमे[4] घृतम् ॥ ९३ ॥
पयस्यापिप्पलीवांशीकल्कैः[5] सिद्धं क्षते हितम् ।

स०-यष्ट्याह्वयस्य नागबलायाश्च क्वाथे क्षीरतुल्ये पयस्यादिकल्कैः सिद्धं घृतं क्षतकासे हितम् ।

आ० र०-औषधान्तरमाह-यष्ट्याह्वनागबलयोरिति । सङ्ग्रहे तु ( चि. अ ५ )-"शृतं वाऽष्टगुणे क्षीरे कोललाक्षारसान्वितम् । कल्के कट्वङ्गदार्वीत्वग्वत्सकत्वक्फलैर्घृतम् ॥" इति । कट्वङ्ग-टुण्टुक । फल-वत्सकस्यैव ।

जीवनीयो गणः शुण्ठी वरी वीरा पुनर्नवा ॥ ९४ ॥
बलाभार्गीस्वगुप्तर्द्धिशठीतामलकीकणाः ।
शृङ्गाटकं पयस्या च पञ्चमूलं च यल्लघु ॥ ९५ ॥
द्राक्षाक्षोडादि च फलं मधुरस्निग्धबृंहणम् ।
तैः पचेत्सर्पिषः प्रस्थं कर्षांशैः श्लक्ष्णकल्कितैः ॥ ९६ ॥
क्षीरधात्रीविदारीक्षुच्छागमांसरसान्वितम् ।
प्रस्थार्धं मधुनः शीते शर्करार्धतुलारजः ॥ ९७ ॥
पलार्धकं च मरिचत्वगेलापत्रकेसरम् ।
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां[1] यथाबलम् ॥ ९८ ॥
अमृतप्राशमित्येतन्नराणाममृतं[2] घृतम् ।
सुधामृतरसं प्राश्यं क्षीरमांसरसाशिना ॥ ९९ ॥
नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान्[3] ।
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च बृंहयेत् ॥ १०० ॥
कासहिध्माज्वरश्वासदाहतृष्णास्रपित्तनुत् ।
पुत्रदं छर्दिमूर्च्छाहृद्योनिमूत्रामयापहम् ॥ १०१ ॥

स०-जीवनीयो गणस्तथा शुण्ठ्यादयस्तैर्जीवनीयादिगणादिभिः कर्षांशैः सूक्ष्मचूर्णितैः क्षीरधात्र्यादिरससंयुक्तं घृतस्य प्रस्थं-द्वात्रिंशत्पलानि पचेत् । द्राक्षाक्षोडादीन्य(त्य)त्रादिशब्देन नारिकेलनिकोचादिपरिग्रहः । शीते घृते माक्षिकस्य षोडशपलानि, शर्कराचूर्णपलानि पञ्चाशत्, मरिचादीनि द्विकार्षिकाणि चूर्णितानि प्रक्षिप्य तस्मान्मात्रां यथाबलं लिह्यात् । अमृतप्राशमेतत्संज्ञं घृतं नराणाममृततुल्यम्, महागुणत्वात् । यथा नागानां सुधा देवानाममृतम् । अत एवैतत् सुधामृतरसम् । प्राश्यं-भोज्यं, क्षीरमांसरसाशिना । एतच्च घृतं नष्टशुक्रादीन् बृंहयेत् । कासादिनुत् । पुत्रदम् । छर्द्यादिघ्नम् । अत्र च मधुरस्निग्धबृंहणानां द्राक्षादीनामपि यथालाभं कर्षप्रमाणमधिकं वा योज्यम् । यथा सामान्यपरिभाषोक्ता कर्षमात्रा परिपूर्णा स्यादिति ।

आ० र०-अमृतप्राशमाह-जीवनीयो गण इति । वीरा-विदारी । पयस्या-दुग्धिका । मधुरादिगुणं फलं-तच्च द्राक्षाक्षोडादि प्रसिद्धं ग्राह्यमित्यर्थः । विनीय-निक्षिप्य । सुधा-पाताले, अमृतं-स्वर्गे, ताभ्यां तुल्यरसमिदं घृतं नराणाममृतम् । अत एवामृतप्राशाख्यम् । "रसायनमिवर्षीणाममराणामिवामृतम् । सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥" (हृ सू अ १८।१७) इति मन्त्रलिङ्गात् ।

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम् ।
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिराम् ॥ १०२ ॥
पालिकानि पचेत्तेषां रसे क्षीरचतुर्गुणे ।
कल्कैः स्वगुप्ताजीवन्तीमेदर्षभकजीवकैः ॥ १०३ ॥

१ 'च-क्षामक्षी' ट । २ "तालमस्तक-तालप्रान्तम् ।" इतीन्दु । ३ 'र्श्वार्तौ तु पा' फ । ४ 'समं' स स, स च । ५ वांशी-वंशलोचना ।

१ 'थानलम्' स द्र, ध । २ 'श द्भूले' स मू । ३ 'कर्षिता' अ. । ४ 'श एतं' ट ड, ध. । ५ 'तच्चामृत न' ट ।

शतावर्य्यर्द्धमृद्वीकाशर्कराश्रावणीबिसैः[1] ।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत् ॥ १०४ ॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ १०५ ॥

सु०—श्वदंष्ट्रादीनि पालिकानि, तेषां रसे क्षीरचतुर्गुणे स्वगुप्तादिभिः कल्कैर्घृतात् प्रस्थः सिद्धो वातपित्तहृद्रोगशूलनुत् । मूत्रकृच्छ्रादिघ्नः । तथा, धनुरादिखिन्नानां बलमांसदः ।

आ० र०—घृतान्तरमाह—श्वदंष्ट्रोशीरेति । श्वदंष्ट्र्या षोडशगुणे जले चतुर्थांशावशिष्टः पाकानन्तरं यो रसः । यस्मात् चतुर्गुणं क्षीरम् । अ 'करुण एव हृतहृदयता ।

मधुकाष्टपलद्राक्षाप्रस्थक्वाथे पचेद्घृतम् ।
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥१०६॥
पृथगष्टपलं क्षौद्रशर्कराभ्यां विमिश्रयेत् ।
समसक्तु[2] क्षतक्षीणरक्तगुल्मेषु तद्धितम् ॥ १०७ ॥

सु०—मधुयष्ट्या अष्टौ पलानि, द्राक्षाया षोडश, एतत्क्वाथे पिप्पल्यष्टपले[3] घृतप्रस्थं पचेत् । घृते च सिद्धे सुशीते सति क्षौद्रशर्करयोः पृथगष्टपलं विमिश्रयेत् । एतच्च घृतं समसक्तु क्षतक्षीणे रक्तगुल्मे च हितम् ।

आ० र०—घृतान्तरमाह—मधुकाष्टपलेति । तत्रिपटां समसक्तु ।

धात्रीफलविदारीक्षुजीवनीयरसाद्घृतात् ।
गव्याजयोश्च[4] पयसोः प्रस्थं प्रस्थं विपाचयेत् ॥ १०८ ॥
सिद्धशीते[5] सिताक्षौद्रं द्विप्रस्थं विनयेत्ततः ।
यक्ष्मापस्मारपित्तासृक्कासमेह[6]क्षयापहम् ॥ १०९ ॥
वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम् ।

सु०—धात्र्यादिरसस्य पृथक् प्रस्थं गव्याजयोः क्षीरयोः प्रस्थौ घृतस्य प्रस्थं च विपाचयेत् । सिद्धपूते च ततस्तस्मिन् घृते शर्कराक्षौद्रयोः प्रस्थौ द्वौ विनयेत्—क्षिपेत् । तत इति "अव्ययादित्वात्" तसिः । एतच्च घृतं यक्ष्मादिहरं तथा वयःस्थापनादिगुणम् ।

आ० र०—घृतान्तरमाह—धात्रीफलेति । धात्रीफलरसादीनां नवानां नवप्रस्थः ।

घृतं तु पित्तेऽभ्यधिके लिह्याद्वाते[7]ऽधिके पिबेत् ॥११०॥
लीढं निर्वापयेत्पित्तमल्पत्वाद्धन्ति नानलम् ।
आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥ १११ ॥

सु०—पित्तेऽभ्यधिके घृतं लिह्यात् । वातेऽधिके घृतं पिबेत् । लीढं तु घृतं पित्तं निर्वापयेत्—संशमयेत् । अनलं च न हन्ति लीढं घृतम् । कुतः ? अल्पत्वात् । अत्रायं सद्भावार्थः,—किल पीतेनाधिकेन[1] द्रवतया वह्नेर्मान्द्येनावश्यं भवितव्यम् । तथा च वक्ष्यति (सु चि अ १०।३२)—"अग्नेर्निर्वापकं पित्तं रेकेण वमनेन वा ।" इति । तच्चाभ्यधिकं पित्तं लीढं घृतं संशमयति । अल्पत्वाच्च हेतोरग्निं न हन्ति—मन्दस्याग्नेरधिकं मान्द्यं न जनयति । पीतं सद्घृतमनिलमाक्रामति—प्रसह्य जयति । ऊष्माणं—जाठरं वह्निं जाज्वल्यमानं, रुणद्धि—आश्वेव स्थगयति, शमं किञ्चिन्नयति ।

आ० र०—घृतलेहपानयोर्विषयभेदमाह—घृतं त्विति । निर्वापयेत्—शमयेत्, शीतत्वात् । लेह्यं शीतस्पर्शं भवति । अल्पत्वात्—वह्नेरनावरकत्वात्, असृतावयवत्वात् । अल्पदेशे व्यापित्वं ह्यल्पत्वम् । ऊष्माणं—अग्निम् ।

क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि तु ।
त्वक्क्षीरी[2]शर्करालाजचूर्णैः[3] स्त्यानानि[4] योजयेत् ॥११२॥
सर्पिर्गुडान् समध्वंशान्[3] कृत्वा दद्यात्पयोऽनु च ।
रेतो वीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ ११३ ॥

सु०—क्षामाणां क्षीणानां कृशाङ्गानां च नृणामेतान्येव पूर्वोक्तानि घृतानि स्त्यानानि त्वक्क्षीरीशर्करालाजचूर्णैः सह योजयेत् । सर्पिर्मिश्रान् गुडान् समध्वंशान् कृत्वा च दद्यात् । शर्करायाः पलानि पञ्चाशत् मधुनः पलानि षोडशात्र देयानि । मुनिना ह्येवमुक्तम् (च चि अ ११।६०)—"धात्रीविदारीक्षुरसप्रस्थैः[5] प्रस्थं घृतात्पचेत् । शर्करार्धतुला शीते क्षौद्रार्धप्रस्थमेव च ॥ क्षिप्त्वा सर्पिर्गुडान् कुर्याद्धिक्काश्वासज्वरापहान् ।" इति । पय इत्यादि । अनन्तरं पयः पिबेत् । तैः—सर्पिर्गुडैः, रेतोवीर्यादीन् शीघ्रतरं प्राप्नोति ।

आ० र०—सर्पिर्गुडानाह—क्षामक्षीणकृशाङ्गानामिति । क्षामः—शुक्रेण हीनः । क्षीणो—बलवीर्याभ्याम् । कृशो—मांसादिभिः । स्त्यानानि घृतानि चूर्णैर्योजयेत् । तैः—मधुचतुर्थांशयुक्तैः । सर्पिर्गुडान्—घृतमोदकान् कृत्वा, रोगिणे दद्यात् । तदनु दुग्धं दद्यात् । सङ्ग्रहे तु (चि अ ५)—"बला विदारी ह्रस्वं च पञ्चमूलं पुनर्नवा[6] । पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्टयंशिकास्तथा ॥ एषां कषाये द्विक्षीरे विदार्याजरसांशिके । जीवनीयैः पचेत्पिष्टैरक्षमात्रैर्घृताढकम् ॥ सितापलानि पूते च शीते द्वात्रिंशदावपेत्[7] । गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥ समाक्षिकं कौडविकं तत्सर्वं खजमूर्च्छितम् । स्त्यानं सर्पिर्गुडान्कृत्वा भूर्जपत्रेण वेष्टयेत् ॥ तान् जग्ध्वा पालिकान् क्षीरं मद्यं त्वनु पिबेत्कफे । शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्षिते ॥ रक्तनिष्ठीवने तापे पीनसे

१ 'हृद्द्रवम्' इ फ स च. । २ "अस्य च घृतस्य सक्तुभिः समैरुपयोगः ।" इतीन्दुः । ३ 'ले पृथक् घृ' ट ड ध । ४ 'छाग गोपयसोश्चैव सप्तप्रस्थान् पचेद्भिषक् ।' स च । ५ 'द्धपूते' अ.अरुण. । ६ 'हृज्ज्वराप' फ. । ७ 'वाताधिके' अ.फ. ।

१ 'केनार्द्रवत्तया' इति क्वचित् । २ 'रीपिप्पलीला' इ सं द्व । ३ 'र्णैः पानानि' अ इ स मू, स च । "त्वक्क्षीर्यादीनां तावन्मानं ज्ञेयं यावता घृतस्य पानत्वम् । समध्वंशानित्यनेन मधुनः त्वक्क्षीर्यादिसमानतामाह ।" इति चक्रः । ४ "स्त्यानानि—अविलीनानि" इतीन्दुः । ५ 'विदारीक्षुरसप्रस्थैः प्रस्थं गव्याद्घृतात् पचेत् ।' ट.ड ध. । ६ 'नवम्' स.स. । ७ 'शतं क्षिपेत्' फ.स.च. ।

चोरसि स्थिते । शंखा पार्श्वशिर शूले भेदे च स्वरवर्णयो ॥ शृ(शु)ङ्गा –पल्लवाङ्कुरा । मुष्टि –पलम् । द्विक्षीरे–द्विगुण क्षीरे । [विदार्यांज] रस , अशिक –समभागो, यस्य तस्मिन् । गोधूमचूर्णादिपञ्चक प्रत्येक कुडवांशम् । भूर्जपत्रवेष्टन स्थापनासोकर्यार्थम् । 'मद्य तु कफे' इति वचनात् वाते पित्ते च क्षीरम् । शर्करया श्रते क्षीर घृततैलाढकत्रये । चूर्णीकृता क्षिपे त्पक्वसान्द्रे दशपला पृथक् ॥ द्राक्षात्मगुप्तावर्षाभूसमङ्गाभीरुपिप्पली । तद्वद्विदार्यामलके प्रस्थार्धं विश्वभेषजम् ॥ यष्ट्याह्वसौवर्चलयोर्द्विपल मरिचस्य च । क्षाम क्षीण कृश शुष्यस्तान् खादेत्पालिकैर्गुडै ॥ तथा सद्यो रसादीना वृद्ध्या पुष्टि समश्नुते ॥ तद्वत्–पृथक् दशपले । पालिकैर्गुडै –पालिकान् गुडान् कृत्वा । गोक्षीरैराढक सर्पि प्रस्थमिक्षुरसाढकम् । रसाद्विदार्या कुडव रसात्प्रस्थ च तैत्तिरात् ॥ दद्यात् सिध्यति तस्मिस्तु पिष्टानिक्षुरसैरिमान् । मधूकपुष्पकुडव कुडव च प्रियालत ॥ पलद्वय तवक्षीर्या खर्जूराणि च विंशतिम् । पृथग्बिभीतकान्मज्ज पिप्पल्याश्च चतुर्थिकाम् ॥ त्रिंशत्पलानि खण्डाच्च मधूकात्पाणिमानिकाम् । तथाऽर्धपलिकान्यत्र जीवनीयानि दापयेत् ॥ सिद्धे द्विकुडव क्षौद्राच्छीते दत्वा च मोदकान् । कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान् ॥ वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च । क्षीणौज स्वरशुक्रेषु योनिदोषेषु संस्रवे ॥ मृतप्रजासु वन्ध्यासु हितौ गर्भस्य च स्रुतौ ।" इति । चतुर्थिका–पलम् । पाणिमानिका–कर्षम् । मरिचाजाज्यो पृथक्पलम् ।

**वीतत्वगस्थिकूष्माण्डतुलां स्विन्ना पुनः पचेत् ।**
**घट्टयन् सर्पिषः प्रस्थे क्षौद्रवर्णेऽत्र च क्षिपेत् ॥११४॥**
**खण्डाच्छतं कणाशुण्ठ्योर्द्विपलं जीरकादपि ।**
**त्रिजातधान्यमरिचं पृथगर्धपलांशकम् ॥ ११५ ॥**
**अवतारितशीते च दत्वा क्षौद्र घृतार्धकम् ।**
**खजेनामथ्य च स्थाप्यं तन्निहन्त्युपयोजितम् ॥११६॥**
**कासहिध्माज्वरश्वासरक्तपित्तक्षतक्षयान् ।**
**उरःसन्धानजननं मेधास्मृतिबलप्रदम् ॥ ११७ ॥**
**अश्विभ्यां विहितं हृद्यं कूष्माण्डकरसायनम् ।**

स०–वीतानि–अपासितानि, त्वगस्थीनि यस्मात्कूष्माण्डात् तस्य तुला स्विन्ना सती पुन सर्पिष प्रस्थे घट्टयन् पचेत् । अत्र च कूष्माण्डे माक्षिकवर्णे जाते सति खण्डाच्छत, कणाशुण्ठ्योर्द्विपल, जीरकाच्च पलद्वय, त्रिजातकादि प्रत्येकमर्धपलांशक, क्षिपेत् । अवतारिते शीते चास्मिन् क्षौद्रस्य षोडश पलानि दत्वा, खजेन–दर्व्या, आमथ्य–विलोड्य, पश्चाद्भाण्डे स्थाप्यम् । एव ह्यस्य सम्यग् घृतादिसमयोग स्यात् । उपयोजितं च तत् कासादीन् हन्ति । उर सन्धान करोति । मेधादिप्रदम् । अश्विभ्या–दस्राभ्या, निर्दिष्ट कूष्माण्डकाख्य रसायनम् ।

आ० र०–कूष्माण्डकरसायनमाह–वीतत्वगस्थिकूष्माण्ड तुलामिति । स्विन्ना त्यक्तद्रवा शीतीकृता पुन पचेत् । क्षौद्रवर्णे कूष्माण्डे । शत–पलशतम् । खण्डप्रक्षेपसमये स्वेदनान्निर्गत कूष्माण्डरस प्रक्षेप्य इति वृद्धवैद्या ।

**पिबेन्नागबलामूलस्याधकर्षाभिवर्धितम् ॥ ११८ ॥**
**पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ।**
**एष प्रयोगः पुष्ट्यायुर्बलवर्णकरः परम् ॥ ११९ ॥**
**मण्डूकपर्ण्याः कल्पोऽयं यष्ट्या विश्वौषधस्य च ।**

स०–नागबलामूलस्य पल क्षीरयुत पिबेत् । किम्भूतम् ? अर्धकर्षादिवर्धित मास यावत् । किम्भूतो नर ? क्षीरवर्तीनोऽनन्नाद सन् । अय प्रयोग सुष्ठु पुष्ट्यादिकर । एवमेव कल्पो मण्डूकपर्ण्या यष्ट्या शुण्ठ्याश्च कार्य ।

आ० र०–नागबलारसायनमाह–पिबेदिति । वर्धित अर्धकर्षेणैव, अष्टभिर्दिनै पल भवति । अत पलमेव, यावन् मास पूर्यते ।

अन्यद्रसायनमाह–मण्डूकपर्ण्या इति । अय–नागबलोक्त । सङ्ग्रहे तु (चि अ ५)–"पादशेष जलद्रोणे पचेन्नागबलातुलाम् । तेन क्वाथेन तुल्यांश घृत क्षीर च साधयेत् ॥ पलार्द्धिकैश्चातिबलाबलायष्टीपुनर्नवै । प्रपौण्डरीककाश्मर्यप्रियालकपिकच्छुभि ॥ अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकै । काकोलीक्षीरकाकोलीक्षीरशुक्लर्धिजीवकै ॥ मृणालबिसखर्जूरशृङ्गाटककसेरुकै । एतन्नागबलासर्पि पित्त रक्त क्षत क्षयम् ॥ जयेत्तृड्भ्रमदाहाश्च बलपुष्टिकर परम् । वर्ण्यमायुष्यमोजस्यं वलीपलितनाशनम् ॥ उपयुज्य च षण्मासं वृद्धोऽपि तरुणायते । क्षीरशुक्ला–क्षीरविदारी । मृणालबिसे–सूक्ष्मस्थूलपद्ममूले । शर्करापिप्पलीचूर्णै सर्पिषा माक्षिकेण च ॥ सयुक्त वा श्रत क्षीर पिबेत्कासज्वरापहम् । फलाम्ल सर्पिषा भृष्ट विदारीक्षुरसे कृतम् ॥ स्त्रीषु क्षीण पिबेद्यूष जीवन बृहण परम् । सक्तूना वस्त्रपूताना मन्थ क्षौद्रघृतान्वितम् ॥ यवान्नसात्म्यो दीप्ताग्नि क्षतक्षीणः पिबेन्नर । जीवनीयोपसिद्ध वा जाङ्गल घृतभर्जितम् ॥ रस प्रयोजेत् क्षीणो व्यञ्जनार्थं सशर्करम् ॥ व्यञ्जनार्थ–शाकार्थम् । गोमहिष्यश्वनागाजै क्षीरैर्मांस रसैस्तथा । यवान्न भोजयेद्यूषै फलाम्लैर्वा घृताप्लुतै ॥" इति ।

१ 'बस्तिपार्श्व' फ । २ 'सशर्कराश्रते' स द्व । ३ 'यथा' फ । ४ 'राढाढक' स द्व. । 'राध्याढक' स च । ५ 'विदार्या स्वरसात्प्रस्थ रसा' स च । ६ 'पुष्प कु' स द्व स च । ७ 'हित' स स । ८ 'र्णे तु निक्षि' फ । ९ 'निर्मितं' स द्व । १० 'द्रस्यार्धे प' ट. । ११ 'ब्य सा' ड.ध ।

१ 'र्षादिव' फ स मू । 'कर्षविव' इ स च । २ 'बलारोग्यकर' स. च । ३ 'शेषे' फ । ४ 'शुक्लाद्विजीरकै' स द्व । ५ 'पित्तरक्त क्षतक्ष' स द्व । ६ 'ज्य तु षण्मासाद्वृद्धो' स द्व । ७ 'युत' स द्व । ८ 'श्रतम्' स च । ९ 'यावन्न सा' स मू स च. । १० 'क्षीणे' स स । ११ 'बृहणार्थं' स.मू । १२ 'यथाग्नि भो' फ स.च । १३ 'म्लैर्घृतसस्कृतै.' स च ।

[1]पादशेष जलद्रोणे पचेन्नागवलातुलाम् ॥ १२० ॥
तेन क्वाथेन तुल्यांशं घृतं क्षीरं च साधयेत् ।
पलार्धिकैश्चातिबलाबलायष्टीपुनर्नवैः ॥ १२१ ॥
प्रपौण्डरीककाश्मर्यप्रियालकपिकच्छुभिः ।
अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकैः ॥ १२२ ॥
काकोलीक्षीरकाकोलीक्षीरशुक्लाद्विजीरकैः[2] ।
मृणालबिसखर्जूरशृङ्गाटककसेरुकैः ॥ १२३ ॥
एतन्नागबलासर्पिः पित्तरक्तक्षतक्षयान्[3] ।
जयेत्तद्भ्रमदाहांश्च बलपुष्टिकरं परम् ॥ १२४ ॥
वर्ण्यमायुष्यमोजस्यं वलीपलितनाशनम् ।
उपयुज्य[4] च षण्मासान् वृद्धोऽपि तरुणायते १२५

स०—नागबलायास्तुला वारिद्रोणे पादशेषं यथा भवति तथा पचेत् । तेन—नागबलाक्वाथेन, तुल्यांशं घृत तथा क्षीरं तथा पलार्धप्रमाणैरतिबलादिभि कल्कैश्च साधयेत् । एतन्नागबलासर्पि पित्तरक्तादीन् जयेत् । तथा, सुष्ठु बलादिकरम् । तथा, वर्णाय हितमायुष्यमोजस्य वलीपलितघ्नं च । तथा, षण्मासानुपयुज्येद घृत वृद्धोऽपि तरुण इवाचरति ।

दीप्तेऽग्नौ विधिरेष स्यात्

स०—दीप्ते—समिद्धे, अग्नौ सत्येष विधि स्यात् ।

आ० र०—उक्तस्य क्षतकासोपचारस्य विषयमाह—दीप्तेऽग्नाविति ।

मन्दे दीपनपाचनः ।
यक्ष्मोक्तः क्षतिनां शस्तो, ग्राही शकृति तु द्रवे १२६

स०—मन्देऽग्नौ दीपनपाचन । यक्ष्मोक्तो—राजयक्ष्मण्युक्त, क्षतिना शस्त उपक्रम । द्रवे तु शकृति ग्राही उपक्रम ।

आ०र०—मन्देऽग्नावुपचारान्तरमाह—मन्द इति । यक्ष्मोक्त—राजयक्ष्मचिकित्सितोक्त ।

द्रवमलस्योपचारान्तरमाह—ग्राहीति । ग्राही—यक्ष्मोक्त एव ।

दशमूलं स्वयंगुप्तां शङ्खपुष्पीं शठीं बलाम् ।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥ १२७ ॥
भार्गीं पुष्करमूलं च द्विपलांशं यवाढकम् ।
हरीतकीशतं चैकं जलपञ्चाढके[5] पचेत् ॥ १२८ ॥
यवैस्विन्नैः[7] कषायं तं पूतं तच्चाभयाशतम् ।
पचेद्गुडतुलां दत्त्वा कुडवं च पृथग्घृतात् ॥ १२९ ॥
तैलात्सपिप्पलीचूर्णात्सिद्धशीते च माक्षिकात् ।

[1] पादशेषमित्यादि सार्धपञ्चश्लोका अरुणदत्तसम्मता । [2] 'जीवकै.' अ । [3] 'पित्तरक्त क्षतक्षयम्' स द्व । [4] 'उप तु षण्मासाद्वृद्धो' अ स द्व । [5] 'लाशान्' अ इ स द्व । [6] 'जले प' अ फ स मू, योग चक्र । [7] 'यवे स्विन्ने' अ । 'यवै स्विन्नै' स च योग चक्र । ''यवै स्विन्नैरित्युपलक्षणे तृतीया, तेन स्विन्नैर्यवैरुपलक्षित कषायो यदा भवति तदा त कषाय पूत कृत्वा'' इति शिवदास ।

लेहं[1] द्वे[2] चाभये नित्यमतः खादेद्रसायनात् ॥ १३० ॥
तद्वलीपलितं हन्याद्वर्णायुर्बलवर्धनम् ।
पञ्चकासान् क्षयं श्वासं सहिध्मं विषमज्वरम् १३१
मेहगुल्मग्रहण्यर्शोहृद्रोगारुचिपीनसान् ।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥ १३२ ॥

स०—दशमूलादिपुष्करान्त[3] पृथक् द्विपलप्रमाणम् । यवाना माढक—चतुःषष्टिपलानि । हरीतकीफलानामे[4]क शतम् । एतत्सर्वं जलस्य पञ्चाढके पचेत् । यवस्वेदे च सति त कषाय पूत—गालितं, तच्च स्विन्नमभयाशत गुडतुला दत्त्वा तथा घृततैलपिप्पलीचूर्णाना प्रत्येकं कुडव दत्त्वा पचेत् । सिद्धे शीते च लेहे माक्षिककुडव दत्त्वा, अतो—लेहाख्याद्[5]रसायनात् सत्रिभागपलं[6]मात्रं द्वे च हरीतक्यौ नित्य खादेत् । तच्च भुक्त वलीपलित हन्यात् । वर्णादिवर्धनं तथा पञ्चकासादीन् हन्ति । अगस्त्येन महर्षिणा निर्मितमेतद्रसायनं धन्य—श्रेष्ठमेतत् । अत्र च तैलघृतमधूना समाशानामप्यविरोध, पाकाच्छक्त्यन्तरोत्पत्ते ।

आ० र०—अगस्त्यहरीतकीमाह—दशमूलमिति । यवस्वेदे सति—यदा यवा स्विन्नास्तदा कषाय. सिद्धो भवतीत्यर्थ । लेह पलद्वयमितम् ।

दशमूलं बलां मूर्वां हरिद्रे पिप्पलीद्वयम् ।
पाठाश्वगन्धापामार्गस्वगुप्तातिविषामृताः[7] ॥ १३३ ॥
बालबिल्वं त्रिवृद्दन्तीमूलं पत्रं च चित्रकात् ।
पयस्यां कुटजं हिंस्रां पुष्पं सारं च बीजकात् १३४
बोटस्थविरभल्लातविकङ्कतशतावरीः[9] ।
पूतीकरञ्जशम्याकचन्द्रलेखासहाचरम्[10] ॥ १३५ ॥
सौभाञ्जनकनिम्बत्वगिक्षुरं च पलांशकम् ।
पथ्यासहस्रं सशतं यवानां चाढकद्वयम्[11] ॥ १३६ ॥
पचेदष्टगुणे तोये यवस्वेदेऽवतारयेत् ।
पूते क्षिपेत्सपथ्ये च तत्र जीर्णगुडात्तुलाम् ॥ १३७ ॥

[1] 'लेहे द्वे' अ स मू । 'लेहाद्वे' स स । 'लिह्याद्वे' स च. योग चक्र । [2] ''लिह्यादिति प्रकृत लेह लिह्यात्। द्वेऽभये च खादेत् । किंवा द्वेऽभये लिह्यात् तथा द्वेऽभये खादेत् । इत्यनेन अभयाद्वयसम्बद्धलेह्य भाग लिह्यात् ततस्तदभयाद्वय खादेदित्यर्थ ।'' इति चरके चक्र । ''लिह्यादिति प्रकृतलेह लिह्यात् द्वे चाभये खादेदिति योज्यम् । अत्र यद्यपि लेहस्य मान नोक्त तथाऽपि सुश्रुतसवादात् कर्षमान बोध्यम् । [तथा च सुश्रुत, उ अ ५२।४५—'रसायनात्कर्षमतो विलिह्याद्द्वे चाभये' इति ।] धन्यमिति प्रभावात् किंवा धनार्जनहेतु, नैरुज्यसाधकत्वात् ।'' इति चक्रदत्ते शिवदास । [3] 'न्त द्वि' ड ध । [4] 'कीनामे' ड ध । [5] 'लेह्याख्या' ड ध । [6] 'लद्वयमात्र' ट । [7] 'रिद्रापि' फ । [8] 'मृतम्' अ । [9] 'बोलस्थ' स स । ''बोलस्थविर—बोलवृक्ष कुलहलमलम्बुसो भूकदम्बक, शकदेशे मुण्डिकेति प्रसिद्ध ।'' इतीन्दु । [10] 'चरात्' फ. । [11] 'पथ्या च' अरुण, स मू ।

**तैलाज्यधात्रीरसतः प्रस्थं प्रस्थं ततः पुनः।**
**अधिश्रयेन्मृदावग्नौ दर्वीलेपेऽवतार्य च ॥ १३८ ॥**
**शीते प्रस्थद्वयं क्षौद्रात्पिप्पलीकुडवं क्षिपेत्।**
**चूर्णीकृतं त्रिजाताच्च त्रिपलं निखनेत्ततः ॥ १३९ ॥**
**धान्ये पुराणकुम्भस्थं मासं खादेच्च पूर्ववत्।**
**रसायनं वसिष्ठोक्तमेतत्पूर्वगुणाधिकम् ॥ १४० ॥**
**स्वस्थानां निष्परीहारं सर्वर्तुषु च शस्यते।**

**स०**–दशमूलादि इक्षुरकान्त पलप्रमाणम्। बोट–अलम्बुसा। स्थविर–शैलेयम्। चन्द्रलेखा–बाकुची। हरीतकीनामेकादशशतानि यवानामाढकौ द्वौ अष्टगुणे जले पचेत्। यवस्वेदे सति चावतारयेत्। तस्मिन् क्वाथे पूते पथ्यासहिता पुराणगुडात्तुला तैलादीना पृथक्पृथक् प्रस्थ क्षिपेत्। तत –अनन्तर, पुन पचेत्। मृदौ वह्नौ दर्वीलेपे सत्यवतार्य शीते सति प्रस्थद्वय क्षौद्रात् पिप्पलीनां चतुष्पल चूर्णित त्रिजाताच्च त्रिपल क्षिपेत्। तत –अनन्तर, पुराणकुम्भस्थ–घृतरूढभाण्डस्थ, धान्यमध्ये मास निखनेत्। मासादूर्ध्वं पूर्ववत् खादेत्। एतद्रसायन वसिष्ठेन कथितम्। अगस्त्यलेहाद्गुणैरधिक स्वस्थाना निष्परीहार सर्वर्तुष्विष्यते, तत्रक्रुद्धिरिति शेष।

**आ० र०–वसिष्ठहरीतकीमाह–दशमूल बलामिति। बोटस्थविरो–मुण्डी। चन्द्रलेखा–बाकुची। सहाचर–कुरण्टकः। इक्षुर–कोकिलाक्ष। एतत्सर्वं पलांशक–प्रत्येकं पलमात्रम्। सपथ्ये–हरीतक्येकादशशतीयुक्ते। पूर्ववत्–लेह द्वे चापथ्ये।**

**पालिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात्पले ॥१४१॥**
**कुडवांशानि वृक्षाम्लं दाडिमं पत्रमार्जकात्।**
**एकैकां मरिचाजाज्योर्धान्यकाद् द्वे चतुर्थिके १४२**
**शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत्।**
**कृत्वा चूर्णमतो मात्रामन्नपानेषु दापयेत् ॥ १४३ ॥**
**रुच्यं तद्दीपनं बल्यं पार्श्वार्तिश्वासकासजित्।**

**स०**–सैन्धव–लवण, पलप्रमाणम्। शुण्ठी पलप्रमाणा। पालिकमिति पल परिमाणमस्येति ठक्। पालिक पालिकी चेति "नपुसकमनपुसकेन" इत्येकशेष। सौवर्चललवणाच्च द्वे पले। कुडवप्रमाणानि वृक्षाम्लादीनि। आर्जक–कुठेरकम्, तस्मात्पत्रम्। एकामेका मरिचाजाज्योश्चतुर्थिका–पलसज्ञाम्, धान्यकात् द्वे चतुर्थिके, शर्करापलानि च द्वादशात्र देयानि। तथा च मुनि. (च चि अ. ११।८२)–"पालिक सैन्धव शुण्ठी" इत्यारभ्य यावत्"शर्कराया पलान्यत्र दश द्वे च प्रदापयेत्। कृत्वा चूर्णमतो मात्रा" इत्यादि। तस्मादत्राप्ययं ग्रन्थो निर्दिष्टो बोध्य। प्रमादाच्च केचिन्न पठन्ति। अय चात्रैव वक्ति–"रुच्य तद्दीपन" इत्यादि। शर्करामन्तरेण तु रुच्यत्वमस्य कथमिवोपपद्यते? तस्माद्युक्तोऽत्र शर्कराप्रयोग इति। एतच्चूर्णं कृत्वा,अत –अस्माच्चूर्णात्, मात्रा यथोचितामन्नपानेषु दापयेत्, वैद्य इति शेष। एतच्चूर्णं रुच्य दीपन बल्य पार्श्वाद्यार्तिजित्।

**आ० र०–षाडव चूर्णमाह–पालिकमिति। शुण्ठ्यपि पालिकी। आर्जकात्–पर्णाशात्, पत्रम्। अत्र–पलविंशतौ।**

**एकां षोडशिकां धान्याद् द्वे द्वे चाजाजिदीप्यकात्॥**
**ताभ्यां दाडिमवृक्षाम्ले द्विर्द्विः सौवर्चलात्पलम्।**
**शुण्ठ्याः कर्षं दधित्थस्य मध्यात्पञ्च पलानि च १४५**
**तच्चूर्णं षोडशपले शर्करायां विमिश्रयेत्।**
**षाडवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत् ॥ १४६ ॥**

**स०**–धान्यकादेका षोडशिका–कर्षसज्ञाम्। अजाजीदीप्यकात् द्वे द्वे षोडशिके। ताभ्या–अजाजीदीप्यकाभ्या मिश्रिताभ्या सकाशात्, दाडिमवृक्षाम्ले द्विर्द्वि –प्रत्येक चतस्र षोडशिका इत्यर्थ। एवमष्टौ कर्षा दाडिमस्य, अष्टौ वृक्षाम्लस्य। तथा सौवर्चलात् पल, शुण्ठ्या कर्षं, कपित्थस्य मज्जत पञ्च पलानि। तत्–एतत्, चूर्णं शर्कराया षोडशपलै सम्मेलयेत्। अय षाडवोऽन्नपानेषु पूर्ववत् प्रदेय स्यात्। अर्हार्थे कृत्य। केचित् षोडशिकां पलमित्याहु।

**आ० र०–षाडवान्तरमाह–एकां षोडशिकामिति। षोडशिका–कर्षम्। ताभ्या–मिलिताभ्या पलमिताभ्याम्। द्विर्द्वि–द्विर्भूत्वा द्वि, प्रत्येक चतु पलमिते दाडिमवृक्षाम्ले। षाडव –षड्रसयोगात्।**

**विधिश्च यक्ष्मविहितो यथावस्थं क्षते हितः।**

**स०**–क्षते चावस्थावशाद्यक्ष्मणि यो विहितो विधि स हित।

**आ० र०–यक्ष्मचिकित्सितमतिदिशति–विधिश्चेति।**

**निवृत्ते क्षतदोषे तु कफे वृद्धे उरः शिरः ॥ १४७ ॥**
**दाल्यते कासिनो यस्य स ना धूमान् पिबेदिमान्।**

**स०**–क्षतदोषे च निवृत्ते–शान्ते सति, कफे वृद्धे यस्य कासवत पुस उर शिरश्च दाल्यते–पाट्यत इव, स –कासी, धूमानिमान्–द्विमेदादीना, पिबेत्।

**आ० र०–धूमपानमाह–निवृत्त इति। दाल्यते–भिद्यते भिद्यमानमिव व्यथते। ना–पुरुष। इमान्–वक्ष्यमाणान्।**

**द्विमेदाद्विबलायष्टीकल्कैः क्षौमे सुभाविते ॥ १४८ ॥**
**वर्तिं कृत्वा पिबेद्धूमं जीवनीयघृतानुप.।**

**स०**–द्विमेदादिभि कल्कै क्षौमे सुभाविते वर्तिं कृत्वा धूम पिबेत्। जीवनीयाख्यं घृतमनु–पश्चात्, पिबेत्।

**आ० र०–धूममाह–द्विमेदाद्विवचायष्टीकल्कैरिति। सुभाविते–पुन पुनर्लिप्ते।**

१ 'तभा' ङ ध.। २ 'र्जकम्' अ.। ३ 'सनुत' इ स द। ४ 'कुबेर' ङ.।

१ 'कपित्थ' इ। दधित्थ–कपित्थम्। २ 'तु' इ। ३ 'खाण्डवो' स मू। ४ 'मज्ज प' ट। ५ 'तदेव चू' ट। ६ 'खाड' ट.। ७ 'दाल्येते' अ स.स, ङ.। ८ 'स धूमान्ना पि' अ.स च।

**मनःशिलापलाशाजगन्धात्वक्क्षीरिनागरैः ॥१४९॥**
**तद्वदेवानुपानं तु शर्करेक्षुगुडोदकम् ।**

स०–मन शिलादिभिस्तद्वदेव–द्विमेदादिभिर्यथा धूम पिबेत् । अनु शर्करोदकमिक्षुरस गुडोदक वा पिबेत् । उदकसादृश्या-दिक्षुरसोऽपीक्षूदकशब्देन गृहीत ।

आ० र०–धूमान्तरमाह–मन शिलेति । तद्वदेव–कल्कै क्षौमे सुभाविते वर्ति कृत्वेति । शर्करोदकाद्यन्यतममनुपानम् ।

**पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया ॥ १५० ॥**
**ससर्पिष्कं पिबेद्धूमं तित्तिरिप्रतिभोजनम् ।**

स०–मन शिलामार्द्रया वटशुङ्गया तुल्या पिष्ट्वा सह सर्पिषा धूमं सतित्तिरिप्रतिभोजन पिबेत् ।

आ० र०–धूमान्तरमाह–पिष्ट्वेति । तित्तिरिमांसरसप्रधान भोजन यत्र धूमे तम् । इति क्षतकासचिकित्सा ।

**क्षयजे बृंहणं पूर्वं कुर्यादग्नेश्च वर्धनम् ॥ १५१ ॥**

स०–क्षयजे कासे पूर्वोक्त बृहण कुर्यादग्निसन्दीपन च ।

आ० र०–अथ क्षयकासचिकित्सा । तत्र प्रथमोपचार माह–क्षयजे बृहणमिति ।

**बहुदोषाय सस्नेह मृदु दद्याद्विरेचनम् ।**

स०–बहुदोषाय–प्रभूतदोषाय क्षयकासिने, सह स्नेहेन मृदु विरेचन दद्यात् ।

आ० र०–विरेचनमाह–बहुदोषायेति ।

तदेवाह–

**शम्याकेन त्रिवृतया मृद्वीकारसयुक्तया ॥ १५२ ॥**
**तिल्वकस्य कषायेण विदारीस्वरसेन च ।**
**सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम् १५३**

स०–शम्याकेन–कर्णिकारेण, अथवा त्रिवृतया द्राक्षारसयुक्तया तिल्वकस्य कषायेण विदारीस्वरसेन च सर्पि सिद्ध युक्त्या–देशकालादिबलेन, क्षीणदेहो विशोधन पिबेत् ।

आ० र०–तदेव विरेचनत्रयमाह–शम्याकेनेति । शम्याककल्केन सिद्ध सर्पिरेकम् । त्रिवृत्कल्कद्राक्षारसाभ्यां द्वितीयम् । रोध्रकाथविदारीरसाभ्यां तृतीयम् ।

**पित्ते कफे धातुषु च क्षीणेषु क्षयकासवान् ।**
**घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत् ॥ १५४ ॥**

स०–पित्ते क्षीणे कफादिषु च क्षीणेषु क्षयकासी कर्कटक्यादिपक्व घृत पिबेत् ।

आ० र०–शमन घृतमाह । पित्ते कफ इति । कर्कटशृङ्गीबलातिबलाकल्केन क्षीरेण च साधितम् ।

१ 'लाबलासाज' स.स । २ 'भोजितम्' अ, ट ड । ३ 'षाय का' ट.ड.ध ।

**विदारीभिः कदम्बैर्वा तालसस्यैश्च साधितम् ।**
**घृतं पयश्च**

स०–विदारीभिरिति बहुवचन क्षीरविदार्यादिव्यक्तिविशेषाणां ग्रहणार्थम् । एव कदम्बैरित्यत्रापि धाराकदम्बादिग्रहणार्थम् । जातौ बहुवचनमित्यन्ये । तालसस्यै –तालफलैर्वा, साधित घृतं पयो वा पिबेत् ।

आ० र०–घृतान्तरमाह–विदारीभिरिति । वाशब्द पूर्व घृतापेक्षया, चशब्दस्य समुच्चयार्थत्वात् ।

**मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ॥ १५५ ॥**
**शूने सवेदने मेढ्रे पायौ सश्रोणिवङ्क्षणे ।**
**घृतमण्डेन लघुनाऽनुवास्यो मिश्रकेण वा ॥ १५६ ॥**

स०–मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे सति तथा मेढ्रे शूने सवेदने पायौ श्रोण्या वङ्क्षणे चैवविधे सति नरो लघुना घृतमण्डेनानुवास्य । मिश्रकेण वा–घृततैलेन, अनुवास्य ।

आ० र०–[अनुवासनमाह–मूत्रस्येति ।] लघुना–लघुपञ्चमूलसिद्धेन । [घृतमण्डेन–]चिरस्थितस्य घृतस्याच्छभागेन । मिश्रकेण–वृद्धिचिकित्सितोक्तेन सुकुमारकाख्येन "पचेत्पुनर्नवतुला" (हृ चि अ १३।४१) इत्यादिना ।

**जाङ्गलैः प्रतिभुक्तस्य वर्तकाद्या बिलेशयाः ।**
**क्रमशः प्रसहास्तद्वत्प्रयोज्याः पिशिताशिनः ॥१५७॥**
**औष्ण्यात्प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते ।**
**कफ शुद्धैश्च तैः पुष्टि कुर्यात्सम्यग् वहन् रसः १५८**

स०–अनुवासनानन्तर जाङ्गलैर्मासै –हरिणैणाजादिभि, तदभावात्तत्सदृशैरपि । प्रतिभुक्तस्यानन्तरं तथैव पिशिताशिनः प्रसहा –द्वीपिव्याघ्रादय, प्रयोज्या । नानुवासितमात्रस्य जाङ्गलमासप्रतिभुक्तस्यैव प्रसहा पिशिताशिनश्च योज्या, अग्निमान्द्यभयात् । ते प्रसहा प्रमाथिभावात् तथौष्ण्यात् कफोपलिप्तेभ्य स्रोतोभ्य कफ च्यावयन्ति । प्रमाथिद्रव्यलक्षण च खरणादौ गदितम् । यथा–"स्रोतासि दोषलिप्तानि प्रमथ्य विवृणोति यत् । प्रविश्य सौक्ष्म्यात्तैक्ष्ण्याच्च तत्प्रमाथीति सज्ञितम् ॥" इति । तैश्च–स्रोतोभि, शुद्धै सम्यग्वहन् रस पुष्टिं कुर्यात् ।

आ० र०–अनुवासनशुद्धस्य मासोपचारमाह–जाङ्गलैरिति । जाङ्गलै –मृगादिमासरसै । प्रतिभुक्तस्य- शुद्धयुक्तेष्टदोषशान्तिर्यथा भवत्येवं भुक्तस्य । वर्तकाद्या–विष्किराः । पिशिताशिन इति सर्वेषा विशेषणम् । प्रथम विष्किरास्ततो बिलेशयास्तत प्रसहा इति क्रम । तद्वत्-प्रतिभोजनवत्, अग्निबलापेक्षया मात्रावृद्धिरित्यर्थ । प्रमाथिभावात्–लीनमलोल्लेखनसामर्थ्यात् । तै –स्रोतोभि । रसो–रसधातु ।

१ 'लस सस्यै –फलैर्वा' ड.ध. । २ 'खरनादे' ड ध. । ३ 'मथ्यावि' ड.ध ।

चविकात्रिफलाभार्गीदशमूलैः सचित्रकैः।
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ॥ १५९ ॥
शृतैर्नागरदुःस्पर्शापिप्पलीशठिपौष्करैः।
पिष्टैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ॥१६०॥
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्च लवणानि च।
दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः १६१

स०-चविकादिभिर्जले शृतैर्नागरादिभि पिष्टै समै सर्पिर्विपाचयेत्। सिद्धेऽस्मिन् घृते क्षारौ द्वौ, पञ्च-सैन्धवादीनि लवणानि च, दत्त्वा मात्रा प्रकृतत्वात् घृतस्य पिबेत्, कफकासार्त पुरुष।

आ० र०-मासयोग्यस्य घृतमाह-चविकात्रिफलेति। समै-नागरादिभि पञ्चभिरेकया कर्कटशृङ्ग्या, अन्यथा समैरिति व्यर्थं, प्रत्येक समस्य परिभाषाप्राप्तत्वात्।

कासमर्दाभयामुस्तापाठाकट्फलनागरैः।
पिप्पल्या कटुरोहिण्या काश्मर्या सुरसेन च १६२
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके।
पचेच्छोषज्वरप्लीहसर्वकासहरं शिवम् ॥ १६३ ॥

स०-कासमर्दादिभिरक्षप्रमाणे क्षीरद्राक्षारसयोर्मिश्रितयोराढके घृतप्रस्थ पचेत्। शोषादिहर शिव च-आरोग्यकरम्।

आ० र०-घृतान्तरमाह-कासमर्दाभयेति।

वृषव्याघ्रीगुडूचीनां पत्रमूलफलाङ्कुरात्।
रसकल्कैर्घृतं पक्वं हन्ति कासज्वरारुची ॥ १६४ ॥

स०-वृषादीना प्रत्येकं पत्रमूलफलाङ्कुरात् रसकल्कै पक्व घृत कासादीन् हन्ति।

आ० र०-घृतान्तरमाह-वृषव्याघ्रीगुडूचीनामिति। पत्रादीना चतुर्णा रसैस्तेषामेव कल्कै। ते च वृषादीना प्रत्येक ग्राह्या।

द्विगुणे दाडिमरसे सिद्धं वा व्योषसंयुतम्।
पिबेदुपरि भुक्तस्य यवक्षारयुतं नरः ॥ १६५ ॥
पिप्पलीगुडसिद्धं वा छागक्षीरयुतं घृतम्।

स०-अथवा दाडिमस्वरसे द्विगुणे व्योषकल्कसयुत सिद्ध घृत भुक्तस्याहारस्योपरि यवक्षारयुत पिबेत्। पिप्पलीगुडाभ्या वा चतुर्गुणे घृते घृताच्चतुर्गुणे जले घृतसमे छागक्षीर इति पक्व पिबेत्।

आ० र०-घृतान्तरमाह-द्विगुण इति। व्योषयुत साधनकाले। यवक्षारयुत पानकाले।

घृतान्तरमाह-पिप्पलीगुडसिद्ध वेति। पिप्पलीगुडयो कल्केन छागक्षीरेण च सिद्धम्।

१ 'कल्कै' स च। २ 'तु' इ ३ 'द्राक्षयो रसाढके' ड। ४ 'सयोरा' ध। ५ 'ङ्कुरतो र' ड ध। ६ 'भक्तस्य' अ स द्व स च, ड ध.। ७ 'त घृतम्' अ स स.। 'रघृत नर' इ चन्द्र.स च।

एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनाम् ॥१६६॥
स्युर्दोषबद्धकण्ठोरःस्रोतसां च विशुद्धये।

स०-एतानि पूर्वोक्तानि चव्यादिभिर्विपक्वानि घृतान्यग्निवर्धनानि क्षयकासिना स्यु। दोषोपलिप्तकण्ठोर स्रोतसा च विशुद्धये स्यु।

आ० र०-उक्ताना घृताना दीपनत्व स्रोत शोधनत्व चाह-एतानीति। वङ्गसेने तु (कासा श्लो ९९)-"शुभदेशसमुद्भूत समुद्धृत्त मूल[मश्व]गन्धाया। पुण्येऽहनि सङ्क्षुण्ण विपचेद्द्रोणेऽम्भसस्तुलामस्मात् ॥ ज्ञात्वाऽष्टभागशेष गृण्हीयात्तद्रस सुपरिपूतम्। द्वे चैवात्र पलशते दद्याच्छागस्य शुद्धमासस्य ॥ सर्पि प्रस्थमथैक गव्य च पयश्चतुर्गुणे दद्यात्। कल्कानक्षसमाशानूर्ध्वमत सम्प्रवक्ष्यामि ॥ काकोलीयुगमृद्वी द्वे मेदे जीवक स्वयगुप्ताम्। ऋषभकमेला मधुक मृद्वीकाहस्तिपिप्पल्यौ ॥ जीवन्तीमुपकुल्या बलां विदारी शतावरीं चात्र। दत्त्वा सम्यग्विपचेत्सर्पिरथोद्धृत्य पूत्वा च ॥ मधुशर्करयो कुडव दत्त्वा भाण्डे शुभे स्थित मृदितम्। लीढ्वा तत्पाणितल यथेष्टमाहारमश्नीयात् ॥ क्षीणक्षतशिशुवृद्धा क्षीणेन्द्रियवर्णहीनमासाश्च। प्राश्यैतं प्राप्नु सद्य पुष्टिबलारोग्यतेजासि ॥ उपयुज्य सर्पिरेतत्सप्ततिवर्षो युवेव भूत्वाऽऽशु। बहुश स्त्रियोऽधिगच्छति न चात्र शुक्रक्षयं लभते ॥ पुत्रार्थिनी च नारी लभते पुत्रान् वयस्यतीतेऽपि। वन्ध्या लभते पुत्र सर्पि प्राश्यैतदश्वगन्धाख्यम् ॥ उपयुक्ते य पुरुषस्त्रीन् मासान् सार्धमास वा। नारीशत स गच्छेन्नैव भवेद्योषिता तृप्ति ॥ खालित्यवलीपलितैर्न चास्य देहोऽभिभूयते क्षिप्रम्। वातव्याधिभिरार्तास्तथैव हृद्बस्तिरोगार्ता ॥ भुञ्जाना भजमाना सर्पिररोगा भवन्तीह। एवं जगद्धितार्थं सर्पिरिद वाजिगन्धाया ॥ श्रेष्ठ वाजीकरण निर्दिष्ट पूर्वमश्विभ्याम् ॥ (श्लो ९५)-कुलीरशुक्तीश्वटकेण लावाग्नि काथवर्गैर्मधुरैस्तथाऽन्यै। पचेद्घृत तत्तु निषेव्यमाण हन्यात्क्षतोरथ क्षतज च कासम् ॥" इति। योगरत्ने तु-"षोडशभिर्जलपात्रै मृद्वीकाया पलानि दश षट् च। अष्टौ मधुयुक्तपचानि(?)च्छाग मास तुलार्ध स्यात् ॥ अवशिष्टपादतोय पूत शीत कषायमवतार्य। दत्त्वा कषायतुल्य पयो घनसर्पिष प्रस्थम् ॥ ऋषभकजीवकमेदाविदारिवीरात्मगुप्तानाम्। भव्याक्रोडनिकोचकशृङ्गाटकपद्मबीजानाम् ॥ भागानक्षसमाशानावाप्य च साधयेत्तु मृद्वग्नौ। सम्यक्सिद्धे

१ 'शुभेऽह्नि सुदेशसम्भूत मूलशत सम्यगश्वगन्धाया। पु० म्भसि च विद्वान् ॥' वङ्ग। २ 'गसिद्ध गृ' वङ्ग। ३ 'समानान्' वङ्ग। ४ 'लीढ्यमृ' वङ्ग। ५ 'का यासपिप्पल्यौ' वङ्ग। ६ 'स्थित्वा' वङ्ग। ७ 'श्य प्रकुर्यात्सद्य' वङ्ग। ८ 'गच्छेन्न चा' वङ्ग। ९ 'प्राश्येदमश्व' वङ्ग। १० 'रुषो मासत्रय द्विमास वा' वङ्ग। ११ 'गच्छेन्नै' वङ्ग। १२ 'न चिरादपि रोगार्ता भुञ्जाना सर्पि' वङ्ग। १३ 'अतो ज' वङ्ग।

तस्मिन् दद्यात्सितशर्करापलान्यष्टौ ॥ मधुनश्च पलान्यष्टौ चत्वारि पलानि पिप्पलीचूर्णात् । समसक्तुरुघृतमेतज्जनकेश्वरपूजित समुद्दिष्टम् । क्षीणे क्षतेऽल्पशुक्रे तद्रुधिरे पैत्तिकेषु रोगेषु । स्त्रीकामेषु च देय बल्य वृष्य च घृतमेतत् ॥'' इति ।

**प्रस्थोन्मिते यवक्वाथे विंशति विजयाः पचेत् ॥१६७॥**
**स्विन्ना मृदित्वा तास्तस्मिन्पुराणात्षट्पलं गुडात् ।**
**पिप्पल्या द्विपल कर्षं मनोह्वाया रसाञ्जनात् ॥१६८॥**
**दत्त्वाऽर्धाक्षं पचेद्भूयः स लेहः श्वासकासजित् ।**

स०-यवक्वाथे प्रस्थप्रमाणे हरीतकीर्विंशतिं पचेत् । स्विन्नास्ता -हरीतकी, तस्मिन्-यवक्वाथे, मृदित्वा पुराणाद् गुडात् षट्पल, पिप्पल्या द्विपल, कर्ष मन शिलाया, रसाञ्जनादर्धकर्ष दत्त्वाऽस्मिन्क्वाथे पुन पचेत् । स लेह श्वासकासजित् ।

आ० र०-हरीतकीलेहमाह-प्रस्थोन्मित इति । ता - हरीतकी । तस्मिन्-यवक्वाथे । मृदित्वा-निरस्थीकृत्य, मर्दनेन श्लक्ष्णीकुर्यादित्यर्थ । योगरत्ने तु ( वङ्गसेने कासा श्लो १७०)-''समूलपुष्पच्छदकण्टकार्यास्तुला जलद्रोणपरिश्रुतां च । हरीतकीना च शत निदध्यात्तथाऽत्र पक्त्वा चरणावशेषम् ॥ गुडस्य दत्त्वा शतमेतदग्नौ विपक्वमुत्तार्य तत सुशीते । कटुत्रिक च त्रिपलप्रमाण पलानि षट् पुष्परसस्य तत्र ॥ क्षिपेच्चतुर्जातपल यथाग्नि प्रयुज्यमानो विधिनाऽवलेह । वातात्मक पित्तकफोद्भव च द्विदोषज कासमपि त्रिदोषम् ॥ क्षतोद्भव च क्षयज च हन्यात्सपीनस श्वासमुर क्षत च । यक्ष्माणमेकादशरूपमुग्र भृगूपदिष्ट हि रसायन स्यात् ॥'' पुष्परसस्य-मधुन । 'तुलामादाय वासाया पचेदष्टगुणे जले । नपादावशेषेण पाचयेदभयाढकम् ॥ श्लक्ष्णचूर्णीकृत विद्यात्खण्डाच्छुद्धात्तथा शतम् । शीतीभूते निदध्याच्च क्षौद्रस्याष्टौ पलानि तु ॥ वशोद्भवायाश्चत्वारि पिप्पल्यर्धपल तथा । चतुर्जातपल चैव चूर्णित तत्र दापयेत् ॥ रक्तपित्त निहन्त्येषा कास श्वास तथा क्षयम् । विद्रधि जठर गुल्म तृष्णाहृद्रोगपीनसान् ॥ पलार्धं भक्षयेदस्या यथेष्ट चात्र भोजनम् ।' इति ।

**श्वाविधां सूचयो दग्धाः सघृतक्षौद्रशर्कराः ॥१६९॥**
**श्वासकासहरा, बर्हिपादौ वा मधुसर्पिषा ।**
**एरण्डपत्रक्षारं वा व्योषतैलगुडान्वितम् ॥ १७० ॥**
**लेहयेत्, क्षारमेवं वा सुरसैरण्डपत्रजम् ।**
**लिह्यात् त्र्यूषणचूर्णं वा पुराणगुडसर्पिषा ॥ १७१ ॥**

स०-श्वाविधा सम्बन्धिभ्य सूचयो दग्धा घृतक्षौद्रशर्करान्विता श्वासकासहरा बर्हिणो-मयूरस्य, वा पादौ दग्धौ मधुसर्पिषा सह श्वासकासहरौ । अथवा, एरण्डपत्रस्य क्षार व्योषतैलगुडयुत लेहयेत् । एव-पूर्वोक्तेन प्रकारेण, सुरसैरण्डपत्रज क्षार व्योषतैलगुडान्वित लेहयेत् । अथवा त्र्यूषणचूर्ण पुराणगुडसर्पिषा लिह्यात् ।

आ० र०-क्षारलेहमाह-श्वाविधामिति । सूचय.- शलाका, याभिस्ते पक्षिण श्वान विध्यन्ति ।

क्षारलेहान्तरमाह-बर्हिपादौ वेति । बर्हिपादौ-मयूरचरणौ, मधुसर्पिर्भ्यां लीढे तद्वत् ।

क्षारलेहान्तरमाह-एरण्डपत्रक्षार वेति ।

क्षारलेहान्तरमाह-क्षारमेव वेति । एवं-व्योषाद्यन्वितम् । सुरस -तुलसी ।

लेहान्तरमाह-लिह्यादिति । सङ्ग्रहे तु (चि. अ ५)- ''चित्रकत्रिफलाजाजीकर्कटाख्याकटुत्रिकम् । द्राक्षा च क्षौद्रसर्पिर्भ्यां लिह्यादद्याद्गुडेन वा ॥ पाठामधुकजीवन्तीत्वक्क्षीरीत्रिफलाघनम् । शठीद्विबृहतीद्राक्षापिप्पल्येलावितुन्नकम् ॥ सारिवापुष्करजटाकर्कटाख्या रसाञ्जनम् । पुनर्नवा लोहरजस्त्रायमाणा यवानिका ॥ वृद्धिस्तामलकी भार्गी विडङ्ग धन्वयासकम् । क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥ सर्वकासाञ्जयेल्लीढ तच्चूर्ण मधुसर्पिषा ।'' इति । पिप्पली-गजपिप्पली, इतरस्या व्योषेणोक्तत्वात् । वितुन्नक-क्षुद्रमुस्तम् ।

**पद्मकं त्रिफला व्योषं विडङ्गं देवदारु च ।**
**बला रास्ना च तच्चूर्णं समस्तं समशर्करम् ॥ १७२ ॥**
**खादेन्मधुघृताभ्यां वा लिह्यात्कासहरं परम् ।**
**तद्वन्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ॥ १७३ ॥**

स०-पद्मकादीना समस्त चूर्ण समशर्करम् । पद्मकादीना चूर्णमेकत , एकत शर्कराचूर्णम्, तदुभयं सयोज्य खादेत्-भक्षयेत् । अथवा, समशर्करमेव मधुघृताभ्या मिश्रयित्वा लिह्यात् । तथैव मरिचचूर्ण घृतक्षौद्रशर्करायुत लिह्यात् ।

आ० र०-समशर्कर चूर्णमाह-पद्मकमिति । एकेन केनचित् समशर्करा मा भूदिति समस्तग्रहणम् । खादेन्मधुघृताभ्या विनैव ।

मरिचचूर्णमाह-तद्वदिति । लिह्यात्कासहरं परमिति तद्वच्छब्दार्थ ।

**पथ्याशुण्ठीघनगुडैर्गुटिकां धारयेन्मुखे ।**
**सर्वेषु श्वासकासेषु, केवलं वा बिभीतकम् ॥१७४॥**

स०-पथ्याशुण्ठीघनगुडैर्गुटिका मुखे धारयेत् सर्वेष्वेव श्वासकासेषु । केवल वा बिभीतक मुखे धारयेदिति योज्यम् ।

आ० र०-गुटिकामाह-पथ्याशुण्ठीघनगुडैरिति ।

बिभीतकधारणमाह-केवल वेति ।

---

१ 'हरीतकीर्यवक्वाथस्याढके विंशति पचेत् ।' स मू । २ 'सनुत्' अ फ । ३ 'ध्यादेतत्तु प' वङ्ग. । 'ध्यादथा' चक्रदत्त । ४ 'च द्विपल' चक्र । ५ 'स्य चापि ।' वङ्ग । ६ 'षकासानपि च त्रिदोषान् ।' वङ्ग । ७ 'न्यात्तपी' वङ्ग । ८ 'वा क्षौद्रस' स.द्व स.च. ।

१ ''सुरस-सुनिषण्णकम्'' इति चक्र । २ 'ऋद्धि' स. द्व. । ३ 'ढस्तच्चूर्णो' फ. । ४ 'मस्तसम' अ.स.स. । 'समुस्त' स.मू. । ५ 'च' फ चन्द्र ।

**पत्रकल्कं घृतभृष्टं तिल्वकस्य सशर्करम् ।**
**पेया वोत्कारिका छर्दितृट्कासामातिसारजित् १७५**

स०-पत्रकल्क तिल्वकस्य घृते भृष्ट सशर्कर छर्दितृडादिजित्। पेया वा पत्रस्य कल्के सिद्धा तद्वत्। अथवा, उत्कारिका पत्रकल्ककृता छर्द्यादिजित्।

आ० र०-पेयामुत्कारिका चाह-पत्रकल्कमिति । तिल्वकपत्राण्यार्द्राणि पिष्ट्वा कल्क कुर्यात् । त घृतेन भर्जयेत्। तत्समेन तण्डुलपिष्टेन योजयेत्, पेयार्थमुत्कारिकार्थेन(र्थं च)। उत्कारिका-पूपलिका । सङ्ग्रहे तु (चि अ ५)-"गौरसर्षपगण्डीरविडङ्गव्योषचित्रकान्। साभयान् साधयेत्तोये यवागूस्तेन चाम्भसा ॥ ससर्पिर्लवणा कासे हिध्माश्वासे सपीनसे। पाण्ड्वामये क्षये शोषे कर्णशूले च शस्यते ॥" इति। गण्डीर-स्नुहीकाण्डम् ।

**कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ।**
**सगौरामलकः साम्लः सर्वकासभिषग्जितम् १७६**

स०-कण्टकार्या क्वाथे मुद्गयूष सुसस्कृतो-हिङ्गुसैन्धवादिर्भि, सगौरामलकाम्ल सर्वकासेषु भिषग्जित-ओषधम् ।

आ० र०-यूषमाह-कण्टकारीरस इति । सुसस्कृत-स्नेहलवणादिभि । गौरामलकं-पीतवर्णमामलकम् ।

**वातघ्नौषधनिःक्वाथे क्षीरं यूषान् रसानपि ।**
**वैष्किरान् प्रातुदान् बैलान् दापयेत्क्षयकासिने १७७**

स०-वातघ्नौषधाना नि क्वाथे सिद्ध क्षीरमथवा यूषान् रसाश्च विष्किरमांसजान् प्रतुदजान् वा । तथा, बिलेषु भवा बैला प्राणिनस्तेषा रसान् क्षयकासिने वैद्यो दापयेत् ।

आ० र०-क्षीरयूषरसानाह-वातघ्नौषधनि क्वाथ इति । बैलान्-बिलेशयकृतान् ।

**क्षतकासे च ये धूमाः सानुपाना निदर्शिताः ।**
**क्षयकासेऽपि ते योज्या वँक्ष्यते यच्च यक्ष्मणि ॥१७८॥**
**बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनम् ।**
**व्यत्यासात्क्षयकासिभ्यो बल्यं सर्वं प्रशस्यते ॥१७९॥**

स०-क्षतकासे च ये धूमा -द्विमेदेत्यादय, सानुपाना उक्ता, ते च क्षयकासेऽपि योज्या । यच्च यक्ष्मणि वक्ष्यते-बृहणमग्निदीपन स्रोतोविशोधन, तच्च क्षयकासिने योज्यम् । तथा, क्षयकासिभ्यो व्यत्यासेन सर्वं चिकित्सित बल्य प्रशस्यते।

आ० र०-क्षतकासधूमानतिदिशति-क्षतकासे चेति । यक्ष्मोक्तमतिदिशति-वक्ष्यते यच्चेति । व्यत्यासात्-परिवर्तात् । बृहण त्यक्त्वा दीपनमुक्त्वा(?) पुनर्बृंहणमित्यादि परिवर्तं ।

**सन्निपातोद्भवो घोरः क्षयकासो यतस्ततः ।**
**यथादोषबलं तस्य सन्निपातहितं हितम् ॥ १८० ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने कासचिकित्सितं नाम तृतीयोऽध्यायः ॥ ३ ॥**

स०-सन्निपातोद्भव क्षयकासो घोरो-दारुणो, यतो भवति, तस्माद् यथादोषबल तस्य यत्सन्निपाते हित तदत्र हितमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने कासचिकित्सित नाम तृतीयोऽध्याय समाप्त ॥ ३ ॥

आ० र०-क्षयकासे सर्वदोषाविरोधि कर्तव्यमित्याह-सन्निपातोद्भव इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने । कासप्रकरण नाम सामस्त्येन निरूपितम् ॥ ३ ॥





## चतुर्थोऽध्यायः ।

कासचिकित्सितादनन्तरं श्वासहिध्माचिकित्सितं व्याख्यायते। सम्बन्धोऽत्र निदान एवोक्त ।

**अथातः श्वासहिध्माचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
(गद्यसूत्रे ॥२॥)

**श्वासहिध्मा यतस्तुल्यहेत्वाद्याः, साधनं ततः ।**
**तुल्यमेव**

स०-यस्मात् श्वासहिध्मास्तुल्यहेत्वाद्या । आदिग्रहणात् प्राग्रूपादयो गृह्यन्ते। निदाने ह्युक्तम् (हृ नि.अ ४।१८)-"श्वासैकहेतुप्राग्रूपसङ्ख्याप्रकृतिसश्रया ।" इति । तत -तस्माद्धेतो, साधन-चिकित्सितं, श्वासहिध्मयोस्तुल्यमेव विहितम् ।

१ 'कल्के तिल्वकपत्राणा घृतभृष्टे सशर्करे । पेयोत्कार्यथवा छर्दि' स इ । २ 'या चोत्का' इ फ । ३ 'रजुत्' अ । ४ "उत्कारिका-स्विन्नपिण्डी" इतीन्दुचन्द्रौ । ५ 'शोफे' स इ इ । ६ अस्याग्रे "सह गौरामलकैर्वर्तत इति सगौरामलक । तथा सहाम्लै -दाडिमादिभि, वर्तत इति साम्ल । सुसस्कृत -आर्द्रकनागरघृतादिभि शोभन कृत्वा सस्कृत इत्युक्तम्।" इति ट पुस्तके पदार्थचन्द्रिकाटीकास्थोऽधिक पाठ । ७ 'वक्ष्यन्ते ये च य' इ । ८ 'कासेषु यो' ट ।

१ इद श्वासहिध्माचिकित्सित चरके चि० १७ अध्याये, सुश्रुते उ० ५०।५१ अध्याययो, अष्टाङ्गसङ्ग्रहे चि० ६ अध्याये चास्ति वर्णितम् ।

आ० र०-अथ श्वासचिकित्सितम् । श्वासचिकित्सित हिध्मास्वपि कर्तव्यमित्याह-श्वासहिध्मा इति । आद्यशब्दात् दोषदूष्यस्थानानि ।

**तदार्तं च पूर्वं स्वेदैरुपाचरेत् ॥ १ ॥**
**स्निग्धैर्लवणतैलाक्तं**

स०-तदार्त-श्वासहिध्मातुर, पूर्वं-उपक्रमेभ्य सर्वेभ्योऽपि प्राक्, स्वेदैरुपाचरेत् । किम्भूतै ? स्निग्धै -न रूक्षै , वातकोपभयात् । किम्भूतम् ? लवणान्वितेन तैलेनाभ्यक्तम् ।

आ० र०-तत्र प्रथम स्वेदमाह-तदार्त चेति । तदार्त-श्वासहिध्मार्तम् ।

किमेव सति स्यात् ? इत्याह-

**तैः[1] खेषु ग्रथितः कफः ।**
**सुलीनोऽपि विलीनोऽस्य कोष्ठं प्राप्तः सुनिर्हरः ॥२॥**
**स्रोतसां स्यान्मृदुत्वं च मरुतश्चानुलोमता ।**

स०-तै -स्वेदै , खेषु-स्रोत सु, योऽस्य-श्वासहिध्मावतो, ग्रथित -पिण्डित , कफ सुलीनोऽपि-अतिशयेन श्लिष्टोऽन्तर्भूत , अनयेतिकर्तव्यतया विलीनोऽस्य कोष्ठ प्राप्त सुनिर्हर स्यात्-सुखेन निर्हर्तु शक्यते । तथा, स्रोतसा-वायुस्तब्वाना, मृदुत्व च स्यात् । मरुतश्चानुलोमता-स्वमार्गगामित्व स्यात् ।

आ० र०-स्वेदफलमाह-तै खेष्विति । खेषु-स्रोत सु । ग्रथितो-घनीभूत । सुलीन -स्रोतोभिरेकता गत । एवविधोऽपि कफ स्वेदैर्विलीनता-द्रवता नीत , कोष्ठ प्राप्त सुख शोध्यो भवति ।

**स्विन्नं च भोजयेदन्नं स्निग्धमानूपजै रसैः ॥ ३ ॥**
**दध्युत्तरेण वा, दद्यात्ततोऽस्मै वमनं मृदु ।**
**विशेषात्कासवमथुहृद्ग्रहस्वरसादिने ॥ ४ ॥**
**पिप्पलीसैन्धवक्षौद्रयुक्तं वाताविरोधि यत् ।**

स०-स्विन्न च सन्तमातुर स्निग्ध-शाल्यादिक न रूक्ष यवादिकम्, आनूपजै -सूकरादिमासजै रसै सह, भोजयेत् । अथवा स्वेदादनन्तरमस्मै-श्वासहिध्मावते, दध्युत्तरेण-दधिसरेण, वमन मृदु दद्यात् । विशेषेण कासादिमते वमन दद्यात् । तच्च वमन पिप्पलीसैन्धवक्षौद्रयुक्त वाताविरोधि-वात न करोति, यत्तद्दद्यात् ।

आ० र०-स्विन्नभोजनमाह-स्विन्न चेति । स्निग्ध-स्निग्धै शाल्यादिभि कृतम् । दध्युत्तरेण-दधिसरेण ।

वमनमाह-दद्यादिति । अस्मै-श्वासिने । कासाद्युपद्रवयुक्ताय तु विशेषात्-अतिशयेन, वमन दद्यात् । पिप्पल्यादिभिस्त्रिभिर्युक्त मदनफलादिवच्च । वाताविरोधि-वमनकल्पोक्तम् ।

**निर्हृते सुखमाप्नोति स कफे दुष्टविग्रहे ॥ ५ ॥**
**स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ।**

स०-निर्हृते कफेऽसौ (स)-श्वासहिध्मावान्, सुखमश्नुते, रुड्निवृत्ते । किम्भूते कफे ? दुष्टो विग्रह -शरीर, येन तस्मिन् । तथा, स्रोत सु विशुद्धेषु-उपलेपादिरहितेषु, वायुरविहतो-न केनचिद्रुद्धगति , स्रोत सु चरति ।

आ० र०-वमनफलमाह-निर्हृत इति । दुष्टो विग्रह-शरीर, येन ।

**ध्मानोदावर्ततमके मातुलुङ्गाम्लवेतसैः ॥ ६ ॥**
**हिङ्गुपीलुबिडैर्युक्तमन्नं स्यादनुलोमनम् ।**
**ससैन्धवं फलाम्लं वा कोष्णं दद्याद्विरेचनम् ॥ ७ ॥**

स०-ध्मान-आनाह । उदावर्त -शकृदादीनामप्रवृत्ति । तमक -श्वासविशेष । ध्मान चोदावर्तश्च तमकश्च ध्मानोदावर्ततमकम्, तस्मिन्-प्रकृतत्वात् तथाविधे हिध्माश्वासवति । मातुलुङ्गाद्यैस्तथा हिङ्गुपीलुबिडैर्युक्तमन्नमनुलोमकारि स्यात् । अथवा, अस्यामवस्थाया सैन्धवेन सह फलाम्ल फलेन-वातानुलोमनेन बीजपूरादिना, अम्ल-अम्लीकृत, तथा कोष्ण-ईषदुष्ण, विरेचन दद्यात् ।

आ०र०-विरेचनमाह-ध्मानोदावर्ततमक इति । ध्मान-आध्मानम् । तमक -तम प्रवेशनम् । ध्मानादियुक्ते श्वासे विरेचनम् । तच्च मातुलुङ्गाद्युक्तमन्नान्तेन । यो न विरिच्यते तस्मै विरेचन-त्रिवृन्मूलादि । फलै -मातुलुङ्गादिभिरम्ल, ससैन्धवं च । योगरत्ने-"हिङ्ग्वम्लवेतसव्योषसौवर्चलफलत्रिकम् । तुल्यं त्रिवृद्द्विगुणितं तैः सर्वैः शर्करा समा ॥ स्रसन श्वासहिक्कान्न पिबेत्तद्भक्षयेदथ ।" इति ।

स्रोत शुद्ध्यर्थं किमेवं क्रियते ? इत्याह-

**एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ।**
**तस्मात्तन्मार्गशुद्ध्यर्थमूर्ध्वाधः शोधनं हितम् ॥ ८ ॥**
**उदीर्यते भृशतरं मार्गरोधाद्वहज्जलम् ।**
**यथा तथाऽनिलस्तस्य मार्गमस्माद्विशोधयेत् ॥ ९ ॥**

स०-यस्मादेते-हिध्माश्वासा । कफेन संरुद्धा गतिर्यस्य स एवम्, कफसरुद्धगतिश्चासौ प्राणश्च, तस्य प्रकोप ,ततो जाता । यत एव तस्माद्धेतोस्तन्मार्गशुद्ध्यर्थं-तस्य प्राणस्य वायोर्मार्गविशुद्धिनिमित्त, ऊर्ध्वमधश्च शोधन हितम् । एतच्च दृष्टान्तद्वारेण स्पष्टयति-उदीर्यत इत्यादि । यथा मार्गस्य रोधाज्जल वहत्

---

१ 'स्रोत सु ग्र' स द्व । २ 'तैर्लीनो स द्व । ३ 'भवेत्खेषु मृ' स द्व । ४ 'मारुतस्यानु' इ चन्द्र स मू । 'मारुते चानु' स स । ५ अरुणदत्तेन 'दध्युत्तरेण वा' इति पदयोर्वमनेन य सम्बन्ध प्रतिपादित सोऽयुक्त , चरकविरुद्धत्वात् । तथा च चरक (चि अ १७।७१)-"स्विन्न ज्ञात्वा ततस्तूर्णं भोजयेत्स्निग्धमोदनम् । मत्स्याना शूकराणा वा रसैर्दध्युत्तरेण वा ॥ तत श्लेष्मणि संरुद्धे वमन पाययेत्तु तम् ।" इति । हेमाद्रिचन्द्रमन्दनेन्दुभिस्त्वनयो पदयोरन्नेन सम्बन्धो व्याख्यात. स युक्त एव ।

भृशतर-सुतरा, उदीर्यते-वृद्धिं याति । तथाऽनिल स्वभावतो वहन् मार्गरोधात्-मार्गस्यावरणात्, भृशतरमुदीर्यते । तस्य-वायो, मार्गमस्मान्-यथोक्तान्कारणात्, विशोधयेत् ।

आ० र०-शोधने युक्तिमाह-एते हीति । एते-श्वासा । उदीर्यते-उन्मार्गता याति । वङ्गसेने तु ( श्वासाधिकारे श्लो ३० )-"स्नेहबस्ति विना केचिदूर्ध्व चाधश्च शोधनम् । मृदु प्राणवता श्रेष्ठ श्वासिनामादिशन्ति हि ॥" इति । प्राणो-बलम् ।

**अशान्तौ कृतसंशुद्धेर्धूमैर्लीनं मलं हरेत् ।**

स०-पूर्वस्या क्रियाया कृतायामप्यशमे सति, कृतसशुद्धे – श्वासहिध्मार्तस्य, लीन-सूक्ष्मस्रोत श्लिष्ट, मल-कफाख्य, धूमै – वक्ष्यमाणै, हरेत् ।

आ० र०-शोधनेनाशान्तौ धूम· कर्तव्य इत्याह-अशान्ताविति ।

**हरिद्रापत्रमेरण्डमूलं लाक्षां मनःशिलाम् ॥ १० ॥**
**सदेवदार्वेलं मांसीं पिष्ट्वा वर्तिं प्रकल्पयेत् ।**
**तां घृताक्तां पिबेद्धूमं यवान् वा घृतसंयुतान् ॥११॥**
**मधूच्छिष्टं सर्जरसं घृतं वा गुरु वाऽगुरु ।**
**चन्दनं वा तथा शृङ्गं वालान्वा स्नाव वा गवाम् १२**
**ऋक्षगोधकुरङ्गैणचर्मशृङ्गखुराणि वा ।**
**गुग्गुलुं वा मनोह्वां वा शालनिर्यासमेव वा ॥१३॥**
**शल्लकीं गुग्गुलुं लोहं पद्मकं वा घृताप्लुतम् ।**

स०-हरिद्रादीनि पिष्ट्वा जलेन वर्ति प्रकल्पयेत् । ता-वर्ति, घृताक्ता कृत्वा धूम पिबेत्, सामर्थ्यादग्निप्लुष्टाम् । अथवा यवान् घृताक्तान् धूम पिबेत् । मधूच्छिष्ट-सिक्थक, सर्जरस घृत वा एकीकृत्य धूम पिबेत् । अथवा, गुरु-श्रेष्ठ, अगुरु-कृष्णागरु, धूम पिबेत् । अथवा, चन्दनम् [ धूम पिबेत् ] । अथवा, गवा शृङ्ग धूम पिबेत् । अथवा, गवा वालान्-गलकम्बलजानि रोमाणि, धूम पिबेत् । स्नाव वा-स्नायु वा गवामेव, धूम पिबेत् । ऋक्षादीना चर्मादीनि वा धूम पिबेत् । खुरशब्दस्यार्धर्चादित्वान्नपुसकत्वम् । गुग्गुलु वा, अथवा मन शिला शालनिर्यास वा धूम पिबेत् । शल्लक्यादि घृताप्लुत वा ।

आ० र०-धूमानाह-हरिद्रापत्रमिति । [ अत्र ] 'दश धूमा । तत्राद्य सप्तभि, तृतीयपञ्चमौ द्वाभ्याम्, नवम त्रिभि', शेषा एकेन (?), सर्वे सघृता ।

**अवश्यं स्वेदनीयानामस्वेद्यानामपि क्षणम् ॥ १४ ॥**
**स्वेदयेत्ससिताक्षीरसुखोष्णस्नेहसेचनैः ।**
**उत्कारिकोपनाहैश्च स्वेदाध्यायोक्तभेषजैः ॥ १५ ॥**
**उरः कण्ठं च मृदुभिः**

स०-अवश्य स्वेदनीयाना तथाऽस्वेदार्हाणामपि क्षणमुर कण्ठ च मृदुभि स्वेदै स्वेदयेत् । कै ? सशर्कराक्षीरै सुखोष्णै स्नेहसेचनै । तथा, स्वेदाध्याये यान्युक्तानि द्रव्याणि तत्कृतैरुत्कारिकोपनाहैश्च स्वेदयेत् ।

आ० र०-[स्वेदमाह-] अवश्यमिति । स्वेद्याना श्वासिनामुर कण्ठ चावश्य-निर्भय, स्वेदयेत् । अस्वेद्याना च सभयम्, यद्यपि न सहते तथाऽपि क्षणमेक स्वेदयेत् । स्नेह ससिताक्षीरसुखोष्णै कुर्यात् । तेन सिञ्चेत् ।

**सामे त्वामविधिं चरेत् ।**

स०-सामे च श्वासहिध्मावत्यामविधि-लङ्घनपाचनादिक, चरेत् निरामीकरणाय ।

आ० र०- · सामे त्वामविधि चरेदिति । आमविधि-लङ्घनपाचनादिकम् ।

**अतियोगोद्धतं वातं दृष्ट्वा पवननाशनैः ॥ १६ ॥**
**स्निग्धैः रसाद्यैर्नात्युष्णैरभ्यङ्गैश्च शमं नयेत् ।**

स०-अतियोगाद्वमनविरेचनयोर्नराणामुद्धत वात दृष्ट्वा पवननाशनै स्निग्धै रसाद्यै-मासरसघृतक्षीरादिभिराहारै, तथा किञ्चिदुष्णैरभ्यङ्गैश्च शम नयेत् ।

आ० र०-श्लेष्मौषधातियोगोद्धतवातस्यौषधमाह-अति· योगोद्धतमिति । रसाद्यै काञ्जिकै ।

**अनुत्क्लिष्टकफास्विन्नदुर्बलानां हि शोधनात् ॥ १७ ॥**
**वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् ।**
**कषायलेहस्नेहाद्यैस्तेषां संशमयेदतः ॥ १८ ॥**

स०-अनुत्क्लिष्टकफानामस्विन्नाना दुर्बलाना च शोधनाद्धेतो पवनो लब्धास्पद सन् अन्यस्थानाश्रयैवशादासादितसामर्थ्योऽत एवामन्द शोषणस्वभावत्वाद् मर्म-हृदयाख्यं, सशोष्य शीघ्रमसून् हरेत् । तस्मादेवविधान् हिध्माश्वासवतो न शोधयेत् । अतोऽन्यथाभूताश्च शोधयेदित्यर्थादुक्त भवति । तथा च तेषा सशोधनादारोग्य सम्पद्यते । अनुत्क्लिष्टकफादीना शोधनायोग्याना तर्हि किं कार्यम् ? इत्याह-कषायेत्यादि । यतो यस्मात्ते सशोधनायोग्यास्तस्मात्तेषा कषायादिभि सशमयेत्, श्वासहिध्मा इति शेष ।

आ० र०—शोधनमहानर्हाणां(?)शमनमाह-अनुत्क्लिष्टेति । त्वात् । आस्पदं-कारणम् । मर्म-हृदयम् । तेषा-अशोध्याना, श्वासम् ।

**क्षीणक्षतातिसारासृक्पित्तदाहानुबन्धजान् ।**
**मधुरस्निग्धशीताद्यैर्हिध्माश्वासानुपाचरेत् ॥ १९ ॥**

१ 'भावेन व' ट । २ 'बस्तिमृते के' वङ्ग । ३ 'द्राक्षा' अ । ४ 'वाऽजश्रङ्ग वा वा' स द्द । ५ 'स्नायु वा' अ इ स मू । ६ 'ऋष्यगो' फ । 'ऋश्यगो' स.स । ७ 'च' अ इ. । ८ 'घृतप्लु' स.मू.,ट.ड.ध. । ९ 'ऋष्यादी' ट. ।

१ 'खोष्णस्ने' ड.ध । २ नात्युष्णै रसाद्यैरभ्यङ्गैश्चेति योज्यम् । ३ 'यत्वादा' ड. ।

स०—क्षीणक्षतातिसारासृक्पित्तदाहानुबन्धजान् हिध्माश्वासान् मधुरादिभिरुपक्रमेत् ।

आ० र०—क्षयाद्युत्पन्नस्य श्वासस्यौषधमाह—क्षीणक्षतेति । क्षीणादीनामनुबन्धो—दीर्घकालत्वम्, तस्माज्जातान् ।

**कुलत्थदशमूलानां क्वाथे स्युर्जाङ्गला रसाः । यूषाश्च**

स०—कुलत्थदशमूलाना क्वाथे जाङ्गलरसा यूषाश्च स्यु ।

आ० र०—अथान्नपानानि । तत्र रसानाह—कुलत्थदशमूलानामिति ।

**शिग्रुवार्ताककासघ्नवृषमूलकैः ॥ २० ॥**
**पल्लवैर्निम्बकुलकबृहतीमातुलुङ्गजैः ।**
**व्याघ्रीदुरालभाशृङ्गीबिल्वमध्यत्रिकण्टकैः ॥ २१ ॥**
**साम्रुताग्निकुलत्थैश्च यूषः स्यात्क्वथितैर्जलै[1] ।**
**तद्वद्रास्नाबृहत्यादिबलामुद्गैः सचित्रकैः ॥ २२ ॥**

स०—शिग्र्वादिभिश्च जले क्वथितैर्यूष स्यात् । तथैव रास्नादिभिर्यूष स्यात् ।

आ० र०—यूषानाह—यूषाश्चेति । चकारात्पूर्वस्मिन् क्वाथे सिद्धा । शिग्र्वादीना मुद्गादिभि सह प्रक्षेप । तत्र निम्बादीनां पल्लवा, इतरेषा यथास्व प्रसिद्धोऽवयव ।

यूषान्तरमाह—व्याघ्रीदुरालभेति । व्याघ्र्यादिक्वथितैर्जलैर्मुद्गादीना यूष ।

यूषान्तरमाह—[ तद्वदिति । सङ्ग्रहे तु (चि अ ६)—"शिरीषकुन्दकदलीकुसुम पिप्पलीयुतम् । तण्डुलाम्बुद्भुत हिध्माश्वासकासहर परम् ॥ आरनाले[3] पिष्ट्वा वा मातुलुङ्गरसान्वितान् । हिङ्गुसौवर्चलकणाकोल[4]मुद्गान् जलेन वा ॥ क्षार वा त्रिफलापाठाबृहतीफलै[5]र्मूलजम् । मुक्ताप्रवालवैदूर्यशङ्खसौगन्धिकाञ्जनम् ॥ मसारगल्लस्फटिककाचैलालवणद्वयम् । अपामार्गफल ताम्रमयो रूप्य शणात् फलम् ॥ ज्योतीरसेन तल्लिह्यादयो वैक मधुद्रवम् । लिह्याद्वा पिप्पलीद्राक्षा पथ्याश्रृङ्गीदुरालभा ॥ घृतमाक्षिकतैलैर्वा त्र्यूषण क्षारसंयुतम् । पिप्पलीक्षौद्रयुक्तौ वा रसौ धात्रीकपित्थयो[5] ॥ सितोपला त्वामलकी द्राक्षा गोश्वशकृद्रस । जीवन्ती चोरक श्रृङ्गी पौष्कर सुरस शठी ॥ पिप्पलीत्वग्बिडक्षारशुण्ठीहिङ्ग्वम्लवेतसम् । एलातामलकीभार्ङ्गीवृक्षाम्ल चेति चूर्णितम् ॥ रसेन मातुलुङ्गस्य मधेन हविषाऽथवा । लीढ प्रयुक्त[6]मन्ने वा केवल चोपयोजितम् ॥ ] हिध्माश्वासविबन्धार्शः-कासहृत्पार्श्वशूलै[7]जित् ।" इति । वङ्गसेने ( श्वासा श्लो ७५ ) —"शत सङ्गृह्य भार्ग्यास्तु दशमूल्यास्तथा परम् । शत हरीतकीनां च पचेत्तोये चतुर्गुणे ॥ पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते । आलोड्य तत्र च तुला गुडस्य त्वभयाश्च ता ॥ पुन पचेत्तु मृद्वग्नौ यावल्लेहत्वमागत । शीते च मधुनश्चात्र षट्पलानि प्रदापयेत् । त्रिकटु त्रिसुगन्ध च पलिकानि पृथक् पृथक् । कर्षद्वय यवक्षार सञ्चूर्ण्य प्रक्षिपेत्तत ॥ भक्षयेदभयामेका लेहस्यार्धपल लिहेत् । श्वास सुदारुण हन्ति कास पञ्चविध तथा ॥ स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपन ॥ कुलत्थ दशमूल च तथैव द्विजयष्टिकम् । शत शत च सङ्गृह्य जलद्रोणे विपाचयेत् ॥ पादावशेषे तस्मिंस्तु गुडस्यार्धतुला क्षिपेत् । शीतीभूते च पक्के च मधुनोऽष्टौ पलानि तु ॥ षट्पलानि तुगाक्षीर्या पिप्पल्याश्च पलद्वयम् । त्रिसुगन्धि सुगन्धी च खादेदग्निबल प्रति ॥ श्वास कास ज्वर हिक्कां नाशयेत्तमक तथा ॥" इति । जलद्रोणेऽत्र प्रतिशत, तेन द्रोणद्वये क्वाथ ।

**पेया च चित्रकाजाजीशृङ्गीसौवर्चलैः[3] कृता ।**
**दशमूलेन वा कासश्वासहिध्मारुजापहा ॥ २३ ॥**

स०—पेया च चित्रकादिभि कृताऽथवा दशमूलेन कृता, सा च कासादिहरा ।

आ० र०—

**दशमूलशठीरास्नाभार्गीबिल्वर्द्धिपौष्करैः ।**
**कुलीरशृङ्गीचपलातामलक्यमृतौषधैः[2] ॥ २४ ॥**
**पिबेत्कषायं जीर्णेऽस्मिन् पेयां तैरेव साधिताम् ।**

स०—दशमूलादिभि कषाय पिबेत् । अस्मिन्कषाये परिणते तैरेव—दशमूलादिभि, साधिता पेया हिध्माश्वासी पिबेत् ।

आ० र०—

**शालिषष्टिकगोधूमयवमुद्गकुलत्थभुक् ॥ २५ ॥**
**कासहृद्ग्रहपार्श्वार्तिहिध्माश्वासप्रशान्तये ।**

स०—तथा शाल्यादिभुक् स्यात्, कासादिशान्त्यर्थम् ।

आ० र०—

**सक्तून् वाऽर्काङ्कुरक्षीरभावितानां समाक्षिकान्[२६]**
**यवानां दशमूलादिनिष्क्वाथलुलितान् पिबेत् ।**

स०—अथवाऽर्काङ्कुरक्षीरभाविताना यवाना सम्बन्धिन सक्तून् समाक्षिकान् दशमूलशठीत्यादिनिर्यूहान्वितान् पिबेत् ।

आ० र०—

**अन्ने च योजयेत् क्षारहिङ्ग्वाज्यबिडदाडिमान् २७**
**सपौष्करशठीव्योषमातुलुङ्गाम्लवेतसान् ।**

स०—अन्ने—आहारे च, क्षारादीन् योजयेत् ।

आ० र०—

१ 'जलै' हे स मू । *२ "बृहत्यादिशब्देन ह्रस्वपञ्चमूल गृह्यते ॥ औषध—नागरम् ।" इतीन्दु । ३ 'न वा पिष्ट मा० न्वितम् । ० मुद्गजलेन' स मू । ४ 'लकुम्भिजम्' स मू । ५ 'रसश्च त' स मू. । ६ 'मथवा के' स.मू । ७ 'लनुत्' स.द्व ।

१ 'त्वनिपीडिते । आलोड्य च तुला पूता गुडस्य त्वभया तत ॥ पु' वङ्ग । २ 'राग्निप्रदी' वङ्ग । ३ 'लैर्हिता' स द्व । ४ 'हिता' ड ध । ५ 'ठीरास्नादीनामनन्तरोक्ताना निष्क्वाथेनालोडितान्निर्यू' इति क्वचित् ।

दशमूलस्य वा क्वाथमथवा देवदारुणः ॥ २८ ॥
पिबेद्वा वारुणीमण्डं हिध्माश्वासी पिपासितः ।

स०–हिध्माश्वासवान् पिपासितो दशमूलस्य क्वाथं देवदारुणो वा, अथवा वारुणीमण्डं पिबेत् ।

आ० र०–

पिप्पलीपिप्पलीमूलपथ्याजन्तुघ्नचित्रकैः ॥ २९ ॥
कल्कितैर्लेपिते रूढे निःक्षिपेद्घृतभाजने ।
तक्रं मासस्थितं तद्धि दीपनं श्वासकासजित् ॥३०॥

स०–पिप्पल्यादिभिः कल्कितैर्लेपिते घृतभाजने रूढे–शुष्के, तक्रं निःक्षिपेत् । तच्च तक्रं मासस्थितं दीपनं श्वासकासजित् ।

आ० र०–

पाठां मधुरसां दारु सरलं च निशि स्थितम् ।
सुरामण्डेऽल्पलवणं पिबेत्प्रसृतसम्मितम् ॥ ३१ ॥
भार्गीशुण्ठ्यौ सुखाम्भोभिः क्षारं वा मरिचान्वितम्
स्वक्वाथपिष्टां लुलितां बाष्पिकां पाययेत वा ॥ ३२ ॥

स०–पाठादिकं सुरामण्डे निशि स्थितं किञ्चिल्लवणं प्रसृतसम्मितं–पलद्वयमात्रं, पिबेत् । अथवा, भार्गीशुण्ठ्यावुष्णाम्बुना पिबेत् । यवक्षारं मरिचयुक्तं वा । बाष्पिका–हिङ्गुपत्रिका, हिङ्गुपत्रिकाथेन पिष्टां तेनैवालोडितां वा पाययेत् ।

आ० र०–

स्वरसः सप्तपर्णस्य पुष्पाणां वा शिरीषतः ।
हिध्माश्वासे मधुकणायुक्तः पित्तकफानुगे ॥ ३३ ॥
उत्कारिका तुगाकृष्णामधूलीघृतनागरैः ।
पित्तानुबन्धे योक्तव्या, पवने त्वनुबन्धिनि ॥ ३४ ॥
श्वाविच्छशामिषकणाघृतशल्यकशोणितैः ।
सुवर्चलारसव्योषसर्पिर्भिः सहितं पयः ॥ ३५ ॥
अनु शाल्योदनं पेयं वातपित्तानुबन्धिनि ।
चतुर्गुणाम्बुसिद्धं वा छागं सगुडनागरम् ॥ ३६ ॥

स०–सप्तपर्णस्य–अयुग्मच्छदस्य स्वरसः ,शिरीषात् पुष्पाणां वा स्वरसः, एतौ मधुकणायुतौ पित्तकफानुगे हिध्माश्वासे सति पाययेत् ।

पित्तानुबन्धिनि हिध्माश्वासे तुगादिभिरुत्कारिका योज्या । मधूली–जलजा मधुयष्टी, गोधूमविशेषो वा ।

पवने पुनरनुबन्धिनि श्वाविदादिभिरुत्कारिका निष्पादिता योज्या ।

हिध्माश्वासे वातपित्तानुबन्धिनि सति सुवर्चलारसादिभिः सिद्धं पयोऽनु शाल्योदनं भुक्त्वा पश्चात् क्षीरं पेयम्, गव्यं छागं वा देशसात्म्यादिवशात् ।

अथवा चतुर्गुणाम्बुसिद्धं वा पयश्छागं सगुडनागरं पिबेत् ।

आ० र०–

पिप्पलीमूलमधुकगुडगोश्वशकृद्रसान् ।
हिध्माभिष्यन्दकासघ्नान् लिह्यान्मधुघृतान्वितान् ॥

स०–पिप्पलीमूलादीन् मधुघृतान्वितान् सम्मिश्र्य हिध्माभिष्यन्दकासघ्नान् लिह्यात् ।

आ० र०–

गोगजाश्ववराहोष्ट्रखरमेषाजविट्रसम् ।
समध्वेकैकशो लिह्याद्बहुश्लेष्माऽथवा पिबेत् ॥३८॥
चतुष्पाच्चर्मरोमास्थिखुरशृङ्गोद्भवां मषीम् ।
तथैव वाजिगन्धाया लिह्याच्छ्वासी कफोल्बणः ३९
शठीपौष्करधात्रीर्वा पौष्करं वा कणान्वितम् ।
गैरिकाञ्जनकृष्णा वा स्वरसं वा कपित्थजम् ॥४०॥
रसेन वा कपित्थस्य धात्रीसैन्धवपिप्पली ।
घृतक्षौद्रेण वा पथ्याविडङ्गोषणपिप्पलीः ॥ ४१ ॥
कोललाजामलद्राक्षापिप्पलीनागराणि वा ।
गुडतैलनिशाद्राक्षाकणारास्नोषणानि वा ॥ ४२ ॥
पिबेद्रसाम्बुमद्याम्लैर्लेहौषधरजांसि वा ।

स०–गोगजादीनां शकृद्रसं बहुकफः समाक्षिकमेकैकशो लिह्यात्, अथवा पिबेत् । अथवा, चतुष्पदां चर्मादिजां मषीं पिबेत् । श्वासी कफाधिकोऽश्वगन्धायाश्च मषीं तद्वत्–मधुना, लिह्यात् । शठीपौष्करादीन् वा मधुना लिह्यात् । पौष्करं सकणं वा लिह्यात् । गैरिकादीन् वा लिह्यात्, कपित्थजं स्वरसं वा । कपित्थस्वरसेन धात्र्यादीन् लिह्यात् । पथ्याविडङ्गादीन् घृतक्षौद्रेण वा लिह्यात् । कोलादीन् वा पूर्ववल्लिह्यात्, गुडादीन् वा । अथवा, लेहरसः–अगस्त्यादेः, औषधानां चूर्णानि मांसरसादिभिः पिबेत् ।

आ० र०–

जीवन्तीमुस्तसुरसत्वगेलाद्वयपौष्करम् ॥ ४३ ॥
चण्डातामलकीलोहभार्गीनागरवालकम् ।
कर्कटाख्याशठीकृष्णानागकेसरचोरकम् ॥ ४४ ॥
उपयुक्तं यथाकामं चूर्णं द्विगुणशर्करम् ।
पार्श्वरुग्ज्वरकासघ्नं हिध्माश्वासहरं परम् ॥ ४५ ॥

१ 'स्य निष्क्वाथ' अ । २ "पिप्पल्याद्यैर्लेपोऽर्धाङ्गुलमात्रकः । रूढः–कठिनीभूतलेपः ॥ मधुरसा–मूर्वा । सरल–पीडाख्यं देवदारुसदृशमेव ।" इतीन्दुः । ३ 'ल निशि सस्थितम्' अ इ । ४ 'घृतिस' अ इ स मू , ट । ५ 'कोष्णेन भार्ङ्गीं शुण्ठीं च क्षारं' स द्व । ६ 'पित्तेऽनु' स द्व. ।

१ 'नू हि' ड ध । २ 'डसान्' स स । ३ 'लाजमधुद्रा' स द्व । ४ 'द्यायैर्ले' स स । ५ "अम्लैः–तक्रकाञ्जिकादिभिः ॥ यथाकाम–यथेच्छयाऽऽहारपानलेपादिना, उपयुक्तं पार्श्वरुजादिघ्नम् ।" इति चन्द्रः । ६ 'लेह्यस' ट.ड ध ।

स०-जीवन्त्यादिकं चूर्णं भुक्तं पाश्वरुगादिघ्नं सुष्टु हिध्मादिहरम् । लोह-अगुरु ।

आ० र०-' …

**शठीतामलकीभार्ङ्गीचण्डावालकपौष्करम् ।**
**शर्कराष्टगुणं चूर्णं हिध्माश्वासहरं परम् ॥ ४६ ॥**

स०-शठ्यादिकं चूर्णं पूर्ववद्गुणम् ।

आ० र०-'

**तुल्यं गुडं नागरं च भक्षयेन्नावयेत वा ।**

स०-तुल्यां सगुडशुण्ठीं च भक्षयेत् नस्यं वा दद्यात् ।

आ० र०-अथ नस्यानि । तत्र गुडनागरनस्यमाह-तुल्यं गुडमिति । नावयेत्-नासायां निषेचयेत् । भक्षणमपि श्वासघ्नम् ।

**लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा ॥ ४७ ॥**
**चन्दनाद्वा रसं दद्यान्नारीक्षीरेण नावनम् ।**
**स्तन्येन मक्षिकाविष्ठामलक्तकरसेन वा ॥ ४८ ॥**
**[1]ससैन्धवं घृताच्छं वा, सिद्धं स्तन्येन वा घृतम् ।**
**कल्कितैर्मधुरद्रव्यैस्तत्पिबेन्नावयेत वा ॥ ४९ ॥**
**सकृदुष्णं सकृच्छीतं व्यत्यासात् [2]ससितामधु ।**
**तद्वत्पयस्तथा सिद्धमधोभागौषधैर्घृतम् ॥ ५० ॥**

स०-लशुनादीनां मूलं पिष्ट्वा नारीक्षीरेण पृथक् पृथक् नावनं च स्यात् हिध्माश्वासार्ताय । चन्दनाद्वा रसं नारीक्षीरेण सह नस्यं दद्यात् । मक्षिकाविष्ठां स्तन्येन सह नस्यं दद्यात्, अलक्तकरसेन वा ।

आ० र०-नस्यचतुष्कमाह-लशुनस्येति । नारीक्षीरं चतुर्ष्वपि ।

नस्यत्रयमाह-स्तन्येनेति । मक्षिकाविष्ठा-मधु । घृताच्छं-घृतमण्डम् ।

नस्यान्तरमाह-सिद्धं स्तन्येनेति । मधुरैः-जीवन्त्यादिभिः । तद्घृतं पाने नस्ये च योज्यम् । तच्च व्यत्यासात्-प्रथममुष्णं ततः शीतं ततः पुनरुष्णं ततः पुनः शीतमित्यादि । यदोष्णं तदा ससितम् । यदा शीतं तदा समधु ।

क्षीरमाह-तद्वत्पय इति । तद्वत्-कल्कितैर्मधुरैः सिद्धं व्यत्यासात्प्रयोज्यम् ।

घृतमाह-तथा सिद्धमिति । अधोभागौषधानि-श्यामादिविरेचनानि । तथा-पूर्ववत्प्रयोज्यम् ।

**कणासौवर्चलक्षारवयस्थाहिङ्गुचोरकैः ।**
**सकायस्थैर्घृतं मस्तुदशमूलरसे पचेत् ॥ ५१ ॥**
**तत्पिबेज्जीवनीयैर्वा लिह्यात्समधु साधितम् ।**

स०-कणादिभिः कल्कैर्मस्तुदशमूलरसे स्नेहपानविध्युक्तपरिभाषामाश्रित्य घृतं पक्त्वा हिध्माश्वासार्तः पिबेत् । जीवनीयैर्वा द्रव्यैः कल्कर्घृतं पक्त्वा समाक्षिकं लिह्यात्-न पिबेत् । विषयभेदादेव कार्यम् । अथवा, वस्तुस्वभावादेकस्मिन्नपि विषये कणादिभिः पक्वं घृतं पीतं हिध्माश्वासार्तानामारोग्याय, जीवनीयैः पुनः कल्कैः पक्वं घृतं लीढं तेषामारोग्यायेति ।

आ० र०-घृतान्तरमाह-कणासौवर्चलेति । वयस्था-आमलकी । कायस्था-हरीतकी ।

घृतान्तरमाह । जीवनीयैर्वेति । जीवनीयैः साधितं घृतं मधुना सह लिह्यात् ।

**तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ॥ ५२ ॥**
**भूतीकं पौष्करं मूलं पलाशश्चित्रकः शठी ।**
**पटुद्वयं तामलकी जीवन्ती बिल्वपेशिका ॥ ५३ ॥**
**वचा पत्रं च तालीसं कर्षांशैस्तैर्विपाचयेत् ।**
**हिङ्गुपादैर्घृतप्रस्थं पीतमाशु निहन्ति तत् ॥ ५४ ॥**
**शाखानिलार्शोग्रहणीहिध्माहृत्पार्श्ववेदनाः ।**

स०-तेजोवत्यादिभिः कल्कैः कर्षांशैर्हिङ्गुपादैर्हिङ्गुनः पादः-चतुर्थांशो, येषां तैरेवविधैर्घृतं पचेत् । तत्पीतं दुष्टकफावृतस्रोतसां प्रमाथितया तेषां विवृतत्वमुत्पादयन् शाखानिलादीन् हन्ति ।

आ० र०-घृतान्तरमाह-तेजोवत्यभयेति । भूतीक-कत्तृणम् । पादः-कर्षचतुर्थांशः । सङ्ग्रहे तु (चि अ ६)-"सिद्धं वा पुरमञ्जिष्ठालाक्षासर्जरसैः पिबेत् । सपञ्चकमनोह्वालैर्घृतप्रस्थं पिचून्मितैः ॥ वत्सकादिप्रतीवापं सिद्धं वा प्रथमे गणे । सपञ्चलवणं सर्पिः श्वासकासावपोहति ॥ प्रथमे-विदार्यादौ । हिंस्राविडङ्गपूतीकत्रिकटुत्रिफलाग्निकैः । कोलमात्रैघृतप्रस्थं पाचयेत्सलिलाढके ॥ क्षीरप्रस्थद्वयोपेतं तत्कासश्वासपीनसान् । अर्शांस्यरोचकं गुल्मं क्षयं हिध्मां च नाशयेत् ॥" इति । कोल-कर्ष ।

**[4]अर्धांशेन पिबेत्सर्पिः क्षारेण पटुनाऽथवा ॥ ५५ ॥**
**धान्वन्तरं वृषघृतं दाधिकं हपुषादि वा ।**

स०-[6]धान्वन्तरादिघृतस्यार्धांशेन क्षारेण, अथवा पटुना-लवणेन चार्धांशेन, सर्पिः पिबेत् । धान्वन्तर-प्रमेहोक्तम् (हृ चि अ १२।१९) । वृषघृत-रक्तपित्तोक्तम् (हृ चि. अ २।४०) । दाधिक-गुल्मोक्तम् (हृ चि अ १४।१३) ।

१ ससैन्धवमित्यादी द्वौ श्लोकौ हेमादिसम्मतौ । २ 'ससितं मधु' सं द्व ।

१ 'लीसात् क' फ चन्द्र । २ 'द्रुत पा' ड ध । ३ 'सानपो' स द्व । ४ "घृतमर्धांशेन क्षारेण पिबेत् । अथवा, पटुना-लवणेन, अर्धांशेन पिबेत् । दाधिक-गुल्मोक्तम्, हपुषादि-तत्रैवोक्तम् (हृ चि अ १४।११) ।" इति चन्द्र । "केवल पुराणं सर्पिः सैन्धवस्यार्धभागेन युक्तम् ।" इतीन्दु । ५ 'कं त्र्यूषणादि' स स । ६ अरुणदत्तेन धान्वन्तरादिघृतानामर्धांशेन क्षारेण य सम्बन्ध प्रतिपादित सोऽयुक्त, चरकसङ्ग्रहविरुद्धत्वात् हेमादिचन्द्रनन्दनेन्द्वादिव्याख्याविरुद्धत्वाच ।

हपुषादिक-उदरोक्तम् ( हृ चि अ १५।२२ )।

**आ० र०**–घृतान्तरमाह–अर्धांशेनेति । सर्पि –पुराणम्, उक्त हि सङ्ग्रहे ( चि अ ६ )–"सैन्धवार्धांशसयुक्त पुराण पाययेद्घृतम् ॥" इति ।

घृतचतुष्कमतिदिशति–धान्वन्तरमिति । [ धान्वन्तरादीनि– ] प्रमेहरक्तपित्तगुल्मजठरोक्तानि । वङ्गसेने ( श्वासा श्लो ५९ )–"सौवर्चलयवक्षारव्दुकाव्योषचित्रकै । घृत वचाविडङ्गैश्च साधित श्वासशान्तये ॥ कुलत्थरससयुक्त पञ्चकोलश्च्त घृतम् । दीपन श्वासकासघ्न कफव्याधिहर परम् ॥ तिक्तासौवर्चलक्षारपथ्यात्रिकटुहिङ्गुभि । समांशै घृत सिद्ध सक्षीर श्वासकासनुत् । गुल्मानाह(हं) च शम येत्प्रवृद्धान् गुदजानपि ॥ सुवहा कालिका भार्गी शुगाख्या निचुल फलम् । काकादनी शृङ्गबेर वर्षाभूर्बृहतीद्वयम् ॥ कोलमात्रैर्घृतप्रस्थ पचेदेतैर्जलाढके । कदुष्ण पीतमेतद्धि श्वासामयविनाशनम् ॥ तैल दशगुणे सिद्ध भृङ्गराजरसे शुभे । पीयमान यथान्याय कासश्वासौ व्यपोहति ॥" इति ।

**शीताम्बुसेकः सहसा त्रासविक्षेपभीशुचः ॥ ५६ ॥**
**हर्षेर्ष्योच्छ्वासरोधाश्च हितं कीटैश्च दंशनम् ।**

**स०**–सहसा–झटित्येवाज्ञातसङ्केतस्यैव, हिध्माश्वासार्तस्य शीताम्बुना सेको हित । त्रास –चित्तस्योद्वेगकृत्कर्म, विक्षेप –अववूननम्, भी –भयम्, शुक्–शोकश्चेतस सन्ताप, त्रासादयश्चतसस्तामसगुणोद्भवा, ईर्ष्या–असूया परगुणासहिष्णुता, इय रजोगुणोदया, तथा उच्छ्वासस्य रोध, एते च सर्वे हिध्माश्वासार्ताय हिता । तथा, कीटै –पिपीलिकादिभि, तस्मिन् दशन हितम्, वातवेगविघाताय ।

**आ० र०**–चित्तक्षोभणमौषधमाह–शीताम्बुसेक इति । विक्षेपेण वैयग्र्यम् ।

एव हिध्माश्वासाना विशेषेण चिकित्सामुक्त्वा सामान्येनाह–

**यत्किञ्चित्कफवातघ्नमुष्णं वातानुलोमनम् ॥ ५७ ॥**
**तत्सेव्य प्रायशो यच्च सुतरा मारुतापहम् ।**

**स०**–यत्किञ्चित्–आहारविहारौषधादिक, कफवातौ–पृथक् सहितौ वा, निहन्ति तत्कफवातघ्नम् । तथा, उष्ण–न शीतम् । कफवातघ्न हि प्रायेणोष्णमेव भवति । उष्णमिति यदिह कृत तदतिशयेनोष्ण न त्वीषदुष्णमिति प्रतिपादनार्थम् । तथा, वातानुलोमन कफवातघ्नत्वेनैव वातानुलोमनकारित्वे लब्धे प्राधान्येन वातप्रतिपक्षेण स्निग्धेन यद्युक्त तद्धिध्माश्वासार्तै कफवातघ्नमधिकोष्ण सेव्यमिति प्रतिपादनायेति । अत एवाह–प्रायश इत्यादि । प्रायशो–बाहुल्येन, यत् सुतरा मारुतशमन तत् हिध्माश्वासार्तै सेव्यम् ।

**आ० र०**–अनुक्तसङ्ग्रहार्थमाह–यत्किञ्चिदिति । यन्मारुतापह तत्सुतरा सेव्यम्, कफकृन्न चेति । उक्त हि सङ्ग्रहे (चि अ ६)–"वातकृद्वा कफहर कफकृद्वाऽनिलापहम् । कार्य नैकान्तिक ताभ्या प्राय श्रेयोऽनिलापहम् ॥" इति ।

किमित्येव क्रियते ? इत्याह–

**सर्वेषां बृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत् ॥५८॥**
**नात्यर्थं शमनेऽपायो भृशोऽशक्यश्च कर्षणे ।**
**शमनैर्बृंहणैश्चातो भूयिष्ठं तानुपाचरेत् ॥ ५९ ॥**

**स०**–सर्वेषा–हिध्माश्वासार्ताना, हि–यस्मात्, बृहणे विधीयमाने कदाचिद्दैववशात् योऽपायो–रोगाविक्यमन्यरोगप्रादुर्भावो वा, भवेत् स प्रायशोऽल्पस्तथा शक्य –साधयितु सुखसाध्य । तथा, तेषा शमने भेषजादौ क्रियमाणेऽपायो यदि दैवात्स्यात् स नात्यर्थ–नातिशयेन । कि तर्हि ? मध्यमया वृत्त्या । हिध्माश्वासशान्त्यर्थ कर्षणे भेषजादौ क्रियमाणे योऽपायो जायते स भृशो–दु सह, अत एवाशक्य –साधयितु न शक्यते । यत एव कर्षणे भृशोऽशक्यश्चापायो भवति । अत –अस्मात्कारणात्, तान्–हिध्माश्वासान्, भूयिष्ठ–बाहुल्येन, शमनैर्भेषजैस्तथा बृहणैरुपाचरेत् ।

**आ० र०**–शमनबृहणकर्शनाना क्रमाद्धीनत्वमाह–सर्वेषामिति । यन्न बृहण न च कर्शन तच्छमनम् । तत्र नात्यर्थमपाय –अपायस्यात्यन्ताभाव । अपायो बृहणे तु कदाचिद्भवेत्, स चाल्प, स च शक्य । कर्शने तु सदा, स चानल्प, स चाशक्य ।

अत कर्शन न कार्यमित्याह–शमनैर्बृंहणैरिति । प्रथम शमनैस्तैरनुपशमे बृहणै । भूयिष्ठग्रहणात्कस्याञ्चिदवस्थाया कर्शनैरपि ।

अधुना कासादीना पञ्चानामप्येषा सामान्येन चिकित्सित वक्तुमाह–

**कासश्वासक्षयच्छर्दिहिध्माश्चान्योन्यभेषजैः ॥५९½॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने श्वासहिध्माचिकित्सितं नाम चतुर्थोऽध्यायः ॥४॥**

---

१ "हपुषादि–गुल्मोक्तम्" इति यदुक्त चन्द्रनन्दनेन तदेव युक्तम्, हपुषादिघृतस्य गुल्मचिकित्सित एवोक्तत्वात् । अरुणदत्तहेमाद्रिभ्या तु तदुदरोक्तमिति यदुक्त तदयुक्तमेव, उदरचिकित्सिते हपुषादिचूर्णस्यैवोक्तत्वात् श्वासनाशकगुणानुक्तत्वाच्च । २ 'शुकाख्य कौचुल' वङ्ग. । ३ 'पल' वङ्ग । ४ 'ससरोधा हि' अ इ । ५ 'तत्सेकस्यै' ड ध. । ६ वैयग्र्य–व्यग्रता ।

१ भृश –अत्यर्थम् । "अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ।" इत्यमर । २ 'कर्शने' अ फ चन्द्र स.द्व.। ३ 'शोऽत ए' ड.ध ।

स०-कासोक्तैर्भेषजै श्वासादीनुपाचरेत् । श्वासाद्युक्तै कासानुपाचरेत् । एव परस्पर सर्वैर्यथोक्तैर्भेषजै सर्वानेतानुपाचरेदिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदय टीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने श्वासहिध्माचिकित्सित नाम चतुर्थोऽध्याय समाप्त ॥ ४ ॥

आ० र०-कासादिभेषजमन्योन्यमतिदिशति-कासश्वासेति । उपाचरेदित्यनुवर्त्यम् । [ वङ्गसेने तु-( हिक्काधिकारे श्लो १८ )-"प्राणावरोधतर्जनविस्मापनभयभाषकैश्च घोरै । कथाप्रयोगै शमयेद्धिक्का घोरा मनोघातै ॥ हिक्कार्तस्य पयश्छाग हित नागरसाधितम् । रस पिबेत्फलिन्या ]श्च लाजसक्तून् ससैन्धवान् ॥ प्रवालशङ्खत्रिफलाचूर्णं मधुघृताप्लुतम् । पिप्पली गैरिक चेति लेहो हिक्कानिवारण. ॥ कोलमज्जाऽञ्जन लाजा तिक्ता[1] काञ्चनगैरिकम् । कृष्णा धात्री सिता शुण्ठी कासीस दधिनाम[2] च ॥ पाटल्या सफल पुष्प कृष्णा खर्जूरमुस्तकम् । षडेते पादिका लेहा हिक्काघ्ना[3] मधु संयुता ॥ निर्धूमाङ्गारनिक्षिप्तश्लक्ष्णमाषरजोभव । हिक्का पञ्च निहन्त्याशु धूम पीतो न सशय ॥" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।

श्वासहिक्काप्रकरण सामस्त्येन निरूपितम् ॥ ४ ॥



## पञ्चमोऽध्यायः ।

श्वासहिध्माचिकित्सितादनन्तरं राजयक्ष्मचिकित्सितारम्भ । यत कासश्वासक्षयादीनन्योन्यभेषजैरुपाचरेदित्युक्तम् । क्षयश्च राजयक्ष्मा । तस्मादेतदारभ्यते—

**अथातो राजयक्ष्मादिचिकित्सितं[4] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम् ।**
**ऊर्ध्वाधो यक्ष्मिणः कुर्यात्सस्नेहं[5] यन्न कर्शनम्[6] ॥ १ ॥**

स०-एवभूतस्य राजयक्ष्मिण ऊर्ध्वाध शोधन-वमन विरेचन च कुर्यात्, अस्निग्धस्विन्नस्य शोधनानर्हत्वात् । स्निग्धस्विन्नग्रहणं त्वतिशयार्थम् । किम्भूत शोधनम्? सस्नेह,-ईषत्स्निग्धम्, तथा यन्न कर्शन-देहस्य न क्षपणम् । यक्ष्मिण इति "द्वन्द्वोपताप" इत्यादिना इनिर्मत्वर्थीय ।

आ० र०-अथ राजयक्ष्मचिकित्सितम् । तत्र शोधनमाह-बलिनो बहुदोषस्येति ।

तत्र वमनमाह-

**पयसा फलयुक्तेन मधुरेण रसेन वा ।**
**सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥ २ ॥**
**वमेत्**

स०-पयसा-क्षीरेण मदनफलान्वितेन, राजयक्ष्मी वमेत् । एव तेन वमन कार्यम् । मधुरेण वा मासरसेन मदनफलयुक्तेन वमेत् । अथवा, यवाग्वा घृतवत्या तथा वमनद्रव्येण-मदनफलादिना, सिद्धया वमेत् ।

आ० र०-वमनमाह-पयसेति । रसेन-मांसरसेन ।

**विरेचनं दद्यात्त्रिवृच्छ्यामानृपद्रुमान् ।**
**शर्करामधुसर्पिर्भिः पयसा तर्पणेन वा ॥ ३ ॥**
**द्राक्षाविदारीकाश्मर्यमासानां वा रसैर्युतान्[1] ।**

स०-त्रिवृदादीनेकैकश शर्करामधुसर्पिर्युतान् विरेचनं दद्यात् । अथवा पयसा त्रिवृदादीन् दद्यात् । तर्पणेन वा सह त्रिवृदादीन् विरेचन दद्यात् । रसैरिति बहुवचननिर्देशाद् द्राक्षादीना पृथग्रसैरिति बोध्यम् ।

आ० र०-विरेचनमाह-विरेचनमिति । शर्करादित्रिभिर्युक्तै । द्राक्षादिचतुर्भि पृथक् । वङ्गसेने ( राजयक्ष्माधिकारे श्लो ३० )-"बलिनो बहुदोषस्य[2] पञ्चकर्माणि कारयेत् । यक्ष्मिण क्षीणशुक्रस्य तत्कृत स्याद्विषोपमम् ॥ शुक्रायत्त[3] बल पुसां मलायत्त च जीवितम् । अतो विशेषात्सरंक्षेद्यक्ष्मिणो मलरेतसी ॥" इति ।

**शुद्धकोष्ठस्य युञ्जीत विधि बृंहणदीपनम् ॥ ४ ॥**
**हृद्यानि[*] चान्नपानानि वातघ्नानि लघूनि च ।**

स०-शुद्धकोष्ठस्य सतो यक्ष्मिणो बृहण दीपन च विधिं प्रयुञ्जीत । तथाऽन्नपानानि हृद्यानि-हृदयप्रियाणि तथा वातघ्नानि लघूनि च युञ्जीत । बाहुल्येनैतदुक्तम् ।

आ० र०-शुद्धस्य कृत्यमाह-शुद्धकोष्ठस्येति ।

तथा चाह-

**शालिषष्टिकगोधूमयवमुद्गं समोषितम्[7] ॥ ५ ॥**
**[लघुमं[8](चा)च्युतवीर्यं च सुजरं बलकृच यत् ।]**
**आजं क्षीर घृतं मांसं क्रव्यान्मांसं च शोषजित्[9] ।**

स०-तथा शाल्यादिकं वर्षोषित युञ्जीत । आज क्षीरं घृतं मास तथा क्रव्यान्मास च क्षयजित् ।

१ 'तिक्तका' फ । २ 'रमष्टकम्' फ । ३ 'जोद्भव' वङ्ग । ४ इद राजयक्ष्मस्वरसादारोचकचिकित्सित चरके चि० ८।२६ अध्याययो, सुश्रुते उ० ४१।५३।५७ अध्यायेषु, अष्टाङ्गसङ्ग्रहे चि० ७ अध्याये चास्ति वर्णितम् । *५ "सस्नेह-न रूक्षम् ॥ हृद्यानि-मनोरुचिकराणि ।" इति चन्द्र । ६ 'कर्षणम्' अ.इ. ।

१ 'युतम्' चन्द्र । २ 'णदेहस्य' वङ्ग. । ३ 'बलायत्त' फ । ४ 'रक्ष्ये यक्ष्मि' फ. । ५ 'बल' फ । ६ 'दये प्रि' ड ध । ७ 'समास्थितम्' स स । 'समाक्षिकम्' स मू । ८ अ.इ. पुस्तकयो. समुपलब्धमिद श्लोकार्धम् । ९ 'मद्भुत' अ.इ. ।

आ० र०-यक्ष्मण्यन्नपानमाह-शालिषष्टिकेति । समा-सवत्सर । क्रव्यान्मासाशिना मांसम् ।

**काकोलूकवृकद्वीपिगवाश्वनकुलोरगम् ॥ ६ ॥**
**गृध्रभासखरोष्ट्रं च हितं छद्मोपसंहितम् ।**
**ज्ञातं जुगुप्सितं तद्धि छर्दिषे न बलौजसे ॥ ७ ॥**

स०-काकोलूकादिकमेतन्मास हितम् । किम्भूतम्? छद्म नोपसहितम्,-काकादयस्तित्तिर्यादिशब्देन देया इत्यर्थ । किमित्येव क्रियते? इत्याह-यस्मात्तत् जुगुप्सित ज्ञात सत् छर्दिषे सम्पद्यते, न बलाय न वौजसे ।

आ० र०-काकादिमासभक्षणोपायमाह-काकोलूकेति ।

**मृगाद्या. पित्तकफयोः पवने प्रसहादयः ।**
**वेसवारीकृता. पथ्या रसादिषु च कल्पिताः ॥ ८ ॥**
**भृष्टाः सर्षपतैलेन सर्पिषा वा यथायथम् ।**
**रसिका मृदव. स्निग्धा. पटुद्रव्याभिसंस्कृताः ॥९॥**
**हिता मौलककौलत्थास्तद्वद्यूषाश्च साधिताः ।**

स०-मृगाद्या -मृगविष्किरप्रतुदा[दय] , पित्तकफयोर्हिता । वाते [प्रसहादय -] प्रसहमहामृगाप्चरादयो, हिता । किम्भूता ? वेसवारीकृता -पिष्टा , पथ्या । तथा, रसादयो-मासरसादय कल्पिता । तथा, सर्षपतैलेन भृष्टा , सर्पिषा वा देशकालाद्यपेक्षया यथायथ भृष्टा । तथा, रसिका -प्रशस्तरसवन्त , प्रशसाया ह्येष मत्वर्थीय । मृदवो-न तीक्ष्णा । तथा स्निग्धा सैन्धवादिभि कृतसस्कारा हिता । तद्वत्-तथैव, मूलकादिकृता यूषा ।

आ० र०-मासपाकप्रकारमाह-मृगाद्या इति । मृगाद्याश्चत्वारो वर्गा । प्रसहाद्याश्चत्वार । यथायथ-पित्ते सर्पिषा, कफवातयो सर्षपतैलेन । रसिका -सुरसा । पटु-द्रव्यलक्षणम् ।

यूषानाह-हिता इति । तद्वत्-मासरसवत् ।

**सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥ १० ॥**
**सदाडिमं सामलकं स्निग्धमाजं रसं पिबेत् ।**
**तेन षड्विनिवर्तन्ते विकारा. पीनसादयः ॥ ११ ॥**

स०-पिप्पल्यादिभि सस्कृतमाज मासरस घृतादिस्नेहेन स्निग्ध पिबेत्, इत्यत्र मासानामवश्यं स्निग्धत्वेऽपि स्निग्धग्रहणमेषा घृतादिस्नेहेन स्निग्धत्व कार्यमिति प्रतिपादयति । तेन-रसेन पीतेन, षट् विकारा पीनसादय -"पीनसश्वासकासांसमूर्धस्वररुज" (हृ नि अ ५।१३), शाम्यन्ति ।

१ 'प्रचाषख' अ इ । २ मृगाद्या -मृगविष्किरप्रतुदबिलेशया । प्रसहादय -प्रसहमहामृगाप्चरमत्स्या । ३ "रसादिषु-पेयादिगदकादिषु (?) विविध्व्यञ्जनेषु, कल्पिता । पटुद्रव्यै -आर्द्रकविषजित्प्रभृतिभि , आभिमुख्येन सस्कृता । तद्वत्-पटुद्रव्याभिसस्कृता स्निग्धा यथायथ भृष्टा ।" इति चन्द्र । ४ 'मौद्गक' स.स । ५ 'माजरसं' अ.इ फ.स.मू । ६ 'माजमा' ट. ।

आ० र०-आजमांसरसमाह-सपिप्पलीकमिति । पीनसादय -एकादशस्वाद्या. षट् । अस्य पाकविधि [ सिद्धयोगे राजयक्ष्माधिकारे श्लो ३]-"द्रव्यतो द्विगुण मास सर्वतोऽष्टगुण जलम् । पादस्थ सस्कृत चाज्ये षडङ्गो यूष उच्यते ॥" इति । सङ्ग्रहे तु (चि अ ७)-"कोलदाडिमनिर्यासपिष्टयाऽस्थिविहीनया । द्राक्षया स्वच्छधान्याम्लप्लुतालोडितकल्कया ॥ कार्यं सौवर्चलव्योषपत्रैलादीप्यकान्वित । समाक्षिकः सकर्पूर. सलवङ्ग सकेसर ॥ चन्द्रकान्तो यथार्थाख्य शोषहाऽग्निरुचिप्रद । शुक्ताम्रधात्रीस्वरसैर्द्राक्षाया कैलिकत पलम् ॥ गुडषट्पलसयुक्त युक्त श्लक्ष्णैश्च कार्षिकै । वृक्षाम्लधान्यद्रविडीराजिकादाडिमोषणै. ॥ पलेन नागपुष्पस्य किञ्चित्सौवर्चलेन च । ससेव्यपत्रत्वक्तोय. सुरसारसमूर्च्छित ॥ भूरिभूस्तृणको राग कल्प्यो रुच्य. समाक्षिक ॥" इति । द्रविडी-एला । तोय-वालकम् । सुरसारस -तुलसीरस , तेन मूर्च्छित -एकलोलीभाव नीत । भूरि-उद्भूतरसगन्धि, भूस्तृण यत्र स तथा । राग.-पानकभेद ।

**पिबेच्च सुतरां मद्यं जीर्णं स्रोतोविशोधनम् ।**
**पित्तादिषु विशेषेण मध्वरिष्टाच्छवारुणीः ॥ १२ ॥**
**सिद्धं वा पञ्चमूलेन तामलक्याऽथवा जलम् ।**
**पर्णिनीभिश्चतसृभिर्धान्यनागरकेण वा ॥ १३ ॥**
**कल्पयेच्चानुकूलोऽस्य तेनान्नं शुचि यत्नवान् ।**

स०-अतितरा जीर्णं पुराण, च मद्य स्रोतोविशुद्धिकरं पिबेत् । पित्तादिषु पित्तकफवातेषु, यथायुक्त्या मध्वादीन् विशेषेण पिबेत् । अथवा, पञ्चमूलेन-ह्रस्वेन, सिद्ध जल पिबेत् । तामलक्या वा जल पर्णिनीभिश्चतसृभिर्वा जल पक्व पिबेत् । धान्यनागरकाभ्या वा शृत पिबेत् । अस्य च-यक्ष्मिण , अनुकूलो यत्नवान् परिचारकोऽन्नं शुचि तेन-पञ्चमूलादिजलेन, कल्पयेत् । अनुकूलादिग्रहणमत्रातिशयार्थम् ।

आ० र०-मद्यमाह-पिबेच्चेति । सुतरां-अन्येभ्यो द्रव्येभ्य । मधु-मार्द्वीक, तत्पित्ते । अरिष्ट कफे । अच्छवारुणी वाते ।

पानीयमाह-सिद्ध वेति ।

एतानि चत्वारि जलान्यन्नपाकेऽपि योज्यानीत्याह-कल्पयेच्चेति । तेन-पञ्चमूलादिजलान्यतमेन । अनुकूलो यत्नवानिति पाचकविशेषणम् । शुचीति पाक्यविशेषणम् । यक्ष्मिणोऽन्ने तात्पर्यार्थम् ।

**दशमूलेन पयसा सिद्धं मांसरसेन वा ॥ १४ ॥**
**बलागर्भं घृतं योज्यं क्रव्यान्मांसरसेन वा ।**
**सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ॥ १५ ॥**

स०-दशमूलक्वाथेन तथा पयसाऽथवा मासरसेन बलाक-

१ 'काख्यो य' स मू । २ 'क्ताम्लधा' स. स. । ३ 'कल्पित' स मू । ४ 'कल्पो' फ । 'कण्ठ्यो' स. स. । ५ 'रिष्ट च वारुणिम्' इ चन्द्र ।

ल्केन साधित घृत योज्यम् । क्रव्यान्मासरसेन वा बलागर्भ पक्व घृत योज्यम् । क्षीरेण वा दशगुणेन बलागर्भं सिद्ध घृत सक्षौद्र योज्यम् ।

**आ० र०**–अथ घृतानि । तत्र घृतसप्त[क]माह–दशमूलेनेति । दशमूलगर्भे द्वे । बलागर्भमेकम् । दशमूलस्य क्वाथश्चेचत्वारि । बलागर्भागर्भहीनमेकमिति सप्त (?) । सक्षौद्राणि पेयानि ।

**जीवन्तीं मधुकं द्राक्षा फलानि कुटजस्य च ।**
**पुष्कराह्वं शठीं कृष्णा व्याघ्रीं गोक्षुरकं बलाम् ॥१६॥**
**नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।**
**कल्कीकृत्य घृतं पक्वं रोगराजहरं परम् ॥ १७ ॥**

**स०**–जीवन्त्यादीन् कल्कीकृत्य घृत चतुर्गुणे जले पक्व रोगराजहर परम् ।

**आ० र०**–घृतान्तरमाह–जीवन्तीमिति ।

**घृतं खर्जूरमृद्वीकामधुकैः सपरूषकैः ।**
**सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम् ॥ १८ ॥**

**स०**–कल्कीकृत्य पक्वमित्यनुवर्तते । खर्जूरादिभि कल्कीकृत्य घृत पक्व पिप्पलीचूर्णेन युक्त वैस्वर्यादिहरम् ।

**आ० र०**–अन्यदाह–घृतमिति । खर्जूरादिकाथेन पिप्पलीकल्केन ।

**दशमूलशृतात्क्षीरात्सर्पिर्यदुदियान्नवम् ।**
**सपिप्पलीकं सक्षौद्रं तत्परं स्वरबोधनम् ॥ १९ ॥**
**शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ।**
**पञ्चभिः पञ्चमूलैर्वा शृताद्यदुदियाद्घृतम् ॥ २० ॥**

**स०**–दशमूलक्वथितात् क्षीराद्यत्सर्पिरुदियात्–उद्गच्छेत्, तत्–प्रत्यग्र, पिप्पलीक्षौद्रान्वितमतिशयेन स्वरबोधन शिर पार्श्वांसशूलघ्न कासादिहरम् । अथवा, पञ्चभि पञ्चमूलै शृतात्क्षीरात् यदुद्भवेद्घृत तत्पूर्वगुणम् ।

**आ० र०**–अन्यदाह–दशमूलशृतादिति । नव–प्रत्यह कृतम् ।

**पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ।**
**सिद्धं सर्पिर्जयत्येतद्यक्ष्मणः सप्तकं बलम् ॥ २१ ॥**

**स०**–पञ्चाना पञ्चमूलाना रसे क्षीरचतुर्गणे पक्वमेतद्यक्ष्मण सप्तक बल–पीनसादिक, एतद्घृतं जयेत् ।

**आ० र०**–अन्यदाह–पञ्चभि पञ्चमूलैर्वेति । रसक्षीरयोश्चतुर्गुणत्व मिलितयो , परिभाषया प्राप्तत्वात् ।

**पञ्चकोलयवक्षारषट्पलेन पचेद्घृतम् ।**
**प्रस्थोन्मित तुल्यपयः स्रोतसा तद्विशोधनम् ॥२२॥**
**गुल्मज्वरोदरप्लीहग्रहणीपाण्डुपीनसान् ॥**
**श्वासकासाग्निसदनश्वयथूर्ध्वानिलाञ्जयेत् ॥ २३ ॥**

**स०**–पञ्चकोलादिना षट्पलेन कल्केन घृतप्रस्थ तुल्यक्षीर पचेत् । तत्स्रोतसा विशोधन स्यात् । अत्र चानुक्तमपि जल स्नेहाचतुर्गुण त्रिगुण वा देय पूर्वोक्तन्यायात् । तथा गुल्मादीन् जयेत् ।

**आ० र०**–षट्फल घृतमाह–पञ्चकोलेति । षण्णा पलानि कल्कीकृतानाम्, पश्चात्कल्कीकरणे कल्काधिक्यात् । द्रवचातुर्गुण्य जलेन पूरणीयम्, जल विना मुक्तरसत्वाभावात् ।

**रास्नाबलागोक्षुरकस्थिरावर्षाभुवारिणि ।**
**जीवन्तीपिप्पलीगर्भं सक्षीरं शोषजिद्घृतम् ॥ २४ ॥**

**स०**–रास्नादिक्वाथे जीवन्तीपिप्पलीकल्क क्षीरसहित पक्व घृत शोषजित् ।

**आ० र०**–अन्यदाह–रास्नाबलेति ।

**अश्वगन्धाशृतात्क्षीराद्घृत च ससितापयः ।**

**स०**–अश्वगन्धया शृतात् क्षीरादुद्धृत घृत शर्कराक्षीरयुत पूर्वोक्तगुणम् ।

**आ० र०**–अन्यदाह–अश्वगन्धाशृतादिति । सितया कल्केन पयसा वैद्रेण (द्रवेण) सिद्धम् ।

**साधारणामिषतुलां तोयद्रोणद्वये पचेत् ॥ २५ ॥**
**तेनाष्टभागशेषेण जीवनीयैः पलोन्मितैः ।**
**साधयेत्सर्पिषः प्रस्थं वातपित्तामयापहम् ॥ २६ ॥**
**मांससर्पिरिदं पीतं युक्तं मांसरसेन वा ।**
**कासश्वासस्वरभ्रंशशोषहृत्पार्श्वशूलजित् ॥ २७ ॥**

**स०**–साधारणस्य–बिलेशयप्रसहाना मासस्य, तुला–पलशत, जलद्रोणद्वये पचेत् । तेनाष्टभागशेषेण क्वाथेन जीवनीयै पालिकै सर्पिष प्रस्थ पचेत् । माससर्पि सञ्ज्ञमेतत् केवल पीत मासरसेन वा युक्त पीत वातपित्तघ्न कासादिजित् ।

**आ० र०**–मासघृतमाह–साधारणामिषतुलामिति । साधारण–प्रसहबिलेशयानाम् । पीत प्रात , रसे[न]युक्त भोजनम् । सङ्ग्रहे (चि अ ७)–"दुरालभा गोक्षुरक चतस्र. पर्णिनीर्बलाम् । भागान् पलोन्मितान् कृत्वा पल पर्पटकस्य च ॥ पचेद्दशगुणे तोये दशभागावशेषिते । पूते तस्मिन् घृतप्रस्थ क्षीर च द्विगुण पचेत् ॥ गर्भं दत्वा शठीकृष्णाभूनिम्बोत्पलसारिवा । त्रायन्ती पौष्कर मूल सहपत्रफला फलम् ॥

१ 'बला ।' इ । २ "तामलकी–सहपत्रफला ॥ नव सपि –नवनीतम् । पञ्च पञ्चमूलानि–आद्यानि ॥ सप्तक बल–'कण्ठोध्वासादि' (ह नि अ ५।१५) सप्तोपद्रवकृतम् ।" इतीन्दु । ३ हेमाद्रीन्दू तु पञ्चभिरित्यादि सिद्धसर्पिरित्यन्तमेकमेव घृत मन्येते। अरुणदत्तवत् चक्रपाणिदत्तोऽपि पञ्चानामित्यादिना घृतान्तर व्याख्याति । ४ 'यक्ष्मिण.' अ इ फ , ट.ड. ।

१ 'गुण देय' ध ड । २ "क्षीरात् प्रमथ्य गृहीत घृत" इतीन्दु । ३ 'रसेषु वा' फ ,ड । ४ 'क्षीरद्विगुणित प' स द्द । ५ 'सपत्रं त्रिफला' स मू । 'समङ्गा त्रिफला' फ । "सहपत्रफला–तामलकी" इतीन्दु ।

कुट[1]जस्य जयेत्तद्धि शिर.पार्श्वांसवेदनाम् । तृ[2]ष्णा छर्दिमतीसारकासदाहभ्रमज्वरान् ॥ उत्पलसारिवा–कृष्णसारिवा । यष्टीबलागुडूच्यल्पपञ्चमूलतुला पचेत् । शूर्पे[3]ऽपामष्टभागस्थे तत्र पात्र पचेद्घृतात् ॥ धात्रीविदारीक्षुरसत्रिपात्रे पय सोऽर्मणे । स[4]म्पिष्टैर्जीवनीयैश्च पाराशरमिद घृतम् ॥ ससैन्य राजयक्ष्माणमुन्मूलयति शीलितम् । मुर्वाहरिद्राखदिरक्वाथ सर्पि शकृद्रसम् ॥ गोगजाजाविहरज पय[5]स्तुल्यान् दश द्रवान् । स्वादुस्कन्ध त्रिकटुक कल्कित देवदारु च ॥ पचे[6]त्तच्छ्वासशोषघ्न तद्द्वासावरीघृतम् । संपञ्चपट्ठ पञ्चाज क्षयी क्षीरानुप पिबेत् ॥ द्विपञ्चमूलवरणयवबिल्वपुनर्नवा । करञ्जबोर्ट[8]स्थविरकुलत्थबदराग्निका ॥ भल्लातक च तत्क्वाथे षड्गुणे साधयेद्घृतम् । गर्भ दत्वा स्नुहीक्षीर शु[9]ंकाख्याचव्यसैन्धवम् ॥ हरीतकीं च तच्छोषशोफमेदोदरापहम् ॥” इति । तथा (सङ्ग्रहे चि अ ७)–“यवाग्वा वा पिबेन्मात्रा लिह्याद्वा म[10]धुनाऽन्विताम् । सिद्धानां सर्पिषामे[11]षामद्यादन्नेन वा सह ॥” इति । सर्वेषा सर्पिषां प्रयोगान्तरमेतत् । वङ्गसेने तु ( राज श्लो ९५ )–“गुडूचीसारिवाहस्वापञ्चमूलीबलावृषम् । समूलपत्रशाख तु पृथग्दशप[12]लाशिकम् ॥ जलद्रोणे विपक्तव्य यावत्पादावशेषितम् । पिप्पली चन्दन रोध्र ह्रीबेरोशीरपर्पटम् ॥ पाठाभूनिम्बयष्ट्याह्वत्रायन्तीनीलमुत्पलम् । मुस्तकेन्द्रयवा शुण्ठी कटुक सदुरालभम् ॥ त्वक्पत्र वृषमूल च कल्कैरर्धपलैर्भिषक् । अजाक्षीरेण तत्तुल्य घृतप्रस्थ विपाचयेत् ॥ हन्ति यक्ष्माणमत्युग्र रक्तपित्त त्रिदोषजम् । श्वासकासक्षतक्षीणदाह[13]शोषरुजापहम् ॥ वासामृतारिष्टनिदिग्धिकाना रसेऽश्वगन्धेभबलार्जुनानाम् । सिद्ध सपञ्चोषणपुष्कराणा कल्कैर्घृत छागपय[14]श्च शोषे ॥” इति । योगरत्ने–“मधुकस्य शतं दद्यात् काश्मर्याणा तथाऽऽढकम् । परूषकाणा द्राक्षाया खर्जूरौदनपाक्ययो ॥ मधूकपुष्पस्य तथा मुजातकाढकम्(?) । द्विद्रोणेऽपा विपक्तव्य चतुर्भागावशेषितम् ॥ तस्मिन्कषाये पूते च पुनरग्नावधिश्रयेत् । आर्द्रामलककाश्मर्यविदारीक्षुरसाढकम् ॥ तैलाढक तु सयोज्य पचेत्क्षीरे चतुर्गुणे । तस्मिस्तथा पच्यमाने कल्कांश्चेमान् समावपेत् ॥ पिप्पलीं शृङ्गबेर च कदलीं [च स] शर्कराम् । बलावालकदम्ब च सूक्ष्मैला पद्मबीजकम् ॥ शृङ्गाटक कसेरु च जीवनीयानि यानि च । द्विपलीन पृथग्दत्वा विपचेन्मृदुनाऽग्निना ॥ तत्सिद्धं स्रावयित्वा तु शीत क्षौद्रेण ससृजेत् । नस्यमभ्यञ्जन पान प्रशस्त बस्तिकर्मणि । वातव्याधिषु सर्वेषु क्षतक्षीगे शिरोग्रहे । वातश्वले(?)प्रमेहे च गुल्मे चार्शो भगन्दरे ॥ वातभग्नाङ्गहीनाना कासे श्वासे च हृद्ग्रहे । ज्वरातिसारेष्वरुचौ कर्णनादे स्वरक्षये ॥ सुकुमारमिद तैल बालवृद्धसुखावहम् । एतद्धि वृष्य बल्य [च] रक्तमासविवर्धनम् ॥ स्वरवर्णकर चैव शोषिणाममृतोपमम् । नि पाकस्वस्य शैलस्य(?)सम्यक्सिद्धस्य योजयेत् ॥ उदश्विदिव दध्यर्थं सोऽपि कृत्यकरो भवेत् । एकादश च षट् चैव शोषिणां य उपद्रवा ॥ सुकुमार प्रशमयेन्मेध्यो(घो)ऽग्निरि(मि)व वृष्टिमान् ॥” इति । ओदनपाक्या–बला ।

पलाजमोदात्रिफलासौराष्ट्रीव्योषचित्रकान् ।
सारानरिष्टगायत्रीशालबीजकसम्भवान् ॥ २८ ॥
भल्लातक विडङ्गं च पृथगष्टपलोन्मितम् ।
सलिले षोडशगुणे षोडशांशस्थितं पचेत् ॥ २९ ॥
पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन्पलानि षट् ।
तवक्षीर्या॰ क्षिपेत्त्रिंशत्सिताया द्विगुणं मधु ॥ ३० ॥
घृतात्त्रिजातात्त्रिपलं ततो लीढं खजाहतम् ।
पयोनुपानं तत्प्राह्णे रसायनमयन्त्रणम् ॥ ३१ ॥
मेध्यं चक्षुष्यमायुष्यं दीपनं हन्ति चाचिरात् ।
मेहगुल्मक्षयव्याधिपाण्डुरोगभगन्दरान् ॥ ३२ ॥

स०–एलादि प्रत्येकमष्टपलप्रमाण षोडशगुणे जले षोडशांशस्थित–षोडशांशावशेषित यथास्यात्तथा, पचेत् । तेन–क्वाथेन, पुनर्घृतप्रस्थ पचेत् । सिद्धे चास्मिन् घृते तुगाक्षीर्या पलानि षट्, सितायास्त्रिंशत्पलानि, माक्षिक घृताद्द्विगुण–प्रस्थौ द्वावित्यर्थ , त्रिजातकात् पलत्रयं तदेतस्मिन् क्षिपेत् । खजाहत–समीकरणाय दर्व्याऽऽलोडित, पूर्वाह्णे लीढ पयोनुपान रसायनमयन्त्रण मेध्यादिगुण च स्यात् । आश्वेव गुल्मादीन् हन्ति ।

आ० र०–अथ सर्पिर्गुडा । तत्रैलादिसर्पिर्गुडमाह–एलाजमोदेति ।

ये च सर्पिर्गुडाः प्रोक्ताः क्षते योज्याः क्षयेऽपि ते ।

स०–ये च क्षते सर्पिर्गुडा गदितास्ते च क्षयेऽपि योज्या॰ ।

आ० र०–क्षतकासोक्तान् सर्पिर्गुडानतिदिशति–ये चेति । वङ्गसेने ( राज श्लो १२१ )–“छागमासतुला गृह्य साधये[1]न्नल्वणेऽम्भसि । पादशेषेण तेनैव सर्पि प्रस्थ विपाचयेत् ॥ ऋद्धिर्वृद्धिश्च मेदे द्वे[2] तथा ऋषभजीविते(वके) । काकोलीक्षीरकाकोली कल्कैः पृथक्पलोन्मितै ॥ सम्यक्सिद्धे चावतार्य शीते तस्मिन् प्रदापयेत् । शर्करायाः पलान्यष्टौ मधुनः कुडव क्षिपेत् ॥ पल पल लिहेत्प्रातर्यक्ष्माणं हन्ति दुस्तरम् । क्षतक्षय च कास च पार्श्वशूलमरोचकम् ॥ स्वरक्षयमुरोरोग श्वासं हन्यात्सुदुस्तरम् । बलमासकर वृष्य-

१ ‘टजाच्च ज’ स द्द॰ । २ ‘ष्णाच्छदिरती’ फ । ३ “शूर्पो–द्रोणद्वयम् । पात्र–आढकम् ।” इतीन्दु । ४ ‘सुपिष्टै’ स द्द । ५ ‘स्तुल्य दश द्रवम्’ फ । ६ ‘त्तत्वाशु शो’ स मू । ‘तच्चाशु शो’ स स । ७ सपञ्चपट्विति श्लोकार्धं सङ्ग्रहहृदये नोपलभ्यते । ८ ‘बोलस्थ’ स स । “बोलस्थविर–बोलवृक्ष ” इतीन्दु । ९ ‘शुक्ताक्षा चैव सै’ स मू । १० ‘धुरान्वि’ स.मू फ॰ । ११ ‘मेषा दद्या’ स द्द॰ । १२ ‘पलानि च ।’ वङ्ग॰ । १३ ‘शोथरु’ वङ्ग । १४ ‘य सु शो’ वङ्ग॰ ।

१ नल्वणो–द्रोण । २ ‘द्वे जीवकर्षभकौ तथा ।’ वङ्ग॰ ।

मग्निसन्दीपन परम् ॥ (श्लो १३५)-वासकस्य रसप्रस्थ मानिका सितशर्करा । पिप्पली द्विपलं तद्वदाज्य मृद्वग्निना पचेत् ॥ लेहीभूते तत पश्चाच्छीते क्षौद्रपलाष्टकम् । दत्वाऽवचारयेद्वैद्यो मात्रया लेहमुत्तमम् ॥ निहन्ति राजयक्ष्माण कास श्वास च दारुणम् । पार्श्वशूल च हृच्छूल रक्तपित्त ज्वर तथा ॥ त्वक्क्षीरीस्वाविणीद्राक्षामूर्वर्षभकजीवकै । वीरद्धिक्षीरकाकोलीबृहतीकपिकच्छुभि ॥ खर्जूरवृषमेदाभि क्षीरपिष्टै पलोन्मितै । धात्रीविदारीक्षुरसप्रस्थै प्रस्थ घृतात्पचेत् । शर्करार्धतुला शीते क्षौद्रार्धप्रस्थमेव च ॥ दत्वा सर्पिर्गुडान् कुर्यात् कासहिक्काज्वरापहान् । यक्ष्माण तमक श्वास रक्तपित्त हलीमकम् ॥ शुक्रनिद्राक्षय तृष्णा हन्यु कार्श्य सकामलम् । तथैव च्यवनप्राश. पित्तोद्रेके प्रशस्यते ॥" इति ।

**त्वगेलापिप्पलीक्षीरीशर्करा द्विगुणाः क्रमात् ॥३३॥**
**चूर्णिता भक्षिताः क्षौद्रसर्पिषा वाऽवलेहिताः ।**
**स्वर्याः कासक्षयश्वासपार्श्वरुक्कफनाशनाः ॥ ३४ ॥**

स०-त्वगेलादय क्रमेण द्विगुणाश्चूर्णिता भुक्ता माक्षिकसर्पिर्भ्यां वाऽवलेहिता स्वर्या -स्वराय हिता. स्यु , कासादिघ्नाश्च ।

आ० र०-अथ चूर्णादीनि । तत्र(त्र) त्वगादिचूर्णमाह-त्वगेलेति । क्षीरी-तुगाक्षीरी । सङ्ग्रहे ( चि. अ ७)-"खर्जूरपिप्पलीद्राक्षापथ्याशृङ्गीदुरालभा । त्रिफलापिप्पलीमुस्तशृङ्गाटीगुडशर्करा ॥ वीरा शठी पुष्कराख्या सुरसा शर्करा गुड । नागर चित्रको लाजा. पिप्पल्यामलक गुड ॥ विडङ्गसारश्चविका त्र्यूषण च विचूर्णितम् । अर्धश्लोकै स्मृता लेहा. पञ्चैते क्षौद्रसर्पिषा ॥ स्वर्या कासक्षयश्वासपार्श्वरुक्कफनाशना ॥ तिलमाषाश्वगन्धा वा माक्षिकाज्यघृतद्रुता । पूर्वोक्तेष्वेव [ रोगेषु वार्तप्रायेषु ] पूजिता ॥" इति । वङ्गसेने (राज श्लो ३६)-"धान्याकपिप्पलीविश्वदशमूलीजल पिबेत् । पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये ॥ अश्वगन्धामृताभीरुदशमूलीबलावृषा. । पुष्करातिविषे घ्नन्ति क्षय क्षीररसाशिन ॥ कपिमास समादाय श्लक्ष्णचूर्ण तु कारयेत् । तत्पिबेत् क्षीरसंयुक्त क्षयरोगहर परम् ॥ हरिणः छागमांसं तु [ श्लक्ष्णचूर्णीकृत शुभम् । अजाक्षीरेण पातव्य क्षयव्याधिविनाशनम् ॥ दशमूलवचारास्ना]पुष्करसुरदारुनागरै क्वथितम् ॥ पेय पार्श्वशिरोरुक्कासश्वासादिशान्तये सलिलम् । ककुभत्वङ्नागबलावानरिबीजानि चूर्णित पयसि । पक्व मधुघृतयुक्त ससित यक्ष्मादिकासहरम् ॥ द्विपञ्चमूलमगधाधान्यनागरज जलम् । चातुर्जातकसंयुक्त पिबेन्नित्य क्षयातुर । कासज्वरादिशमन बलपुष्टिविवर्धनम् ॥ समूलपुष्पत्वक्पल्लवाया रस प्रयोज्यो मदयन्तिकाया । मासोपयोगेन समस्तलिङ्ग यक्ष्माणमुग्र जयति प्रसह्य ॥ छाग मांस पयश्छाग छाग सर्पि सनागरम् । छागोपसेवा शयन छागमध्ये तु यक्ष्मनुत् ॥ कूष्माण्डकफलोत्थेन रसेन परिपेषितम् । लाक्षाकर्षद्वय पीत्वा जयेदुग्र क्षय नर ॥ व्योष शतावरी त्रीणि फलानि द्वे बले तथा । सर्वामयहरो योगं सोऽय लोहरजोन्वित ॥ एतद्वक्ष क्षत हन्ति कण्ठजा विविधा रुजम् । राजयक्ष्माणमत्युग्र सोरुस्तम्भमथार्दितम् ॥ (श्लो ८५)-शृङ्ग्यर्जुनाश्वगन्धानागबलापुष्कराभयाच्छिन्नरुहा । तालीसादिसमेता लेह्या मधुसर्पिषा च यक्ष्महरा ॥" इति । योगरत्ने-"कृष्णाद्राक्षासितालेह क्षयहा क्षौद्रतैलवान् । मधुसर्पिर्युतो वाऽश्वगन्धाकृष्णासितोद्भव. ॥ शतावरी विदार्यश्वगन्धा पथ्या पुनर्नवा । बलात्रय [श्व]दंष्ट्राऽऽज्यमधुलेह क्षयापह ॥ शिलाजितुमधुव्योष ताप्यलोहरजासि य. । क्षीरभुक् लेढितस्याशु क्षय क्षयमवाप्नुयात् ॥ मधुताप्यविडङ्गाश्मजतुलोहघृताभया. । घ्नन्ति यक्ष्माणमत्युग्र सेव्यमाना हिताशिना ॥ शर्करामधुसंयुक्त नवनीत लिहन् क्षयी । क्षीराशी लभते पुष्टिमतुल्ये वाऽऽज्यमाक्षिके ॥ बाह्यालकरसो(सात्) सिद्ध सर्पि. पीत क्षय हरेत् । घृतमाक्षिकसम्मिश्रो बाह्यालकरसो यथा ॥ जातसार तु गण्डीर सपुष्प परिशोषयेत् । षडशङ्छेदित कृत्वा तस्य पञ्चाढक पचेत् ॥ त्रींश्चैव त्रिफलाप्रस्थान् दशमूलीतुला तथा । दद्यात्कुटजवल्कस्य पलाना पञ्चविंशतिम् ॥ भल्लातकानीड(न्द्र)यवा विडङ्ग वनमेव च । अर्धप्रस्थसमान् भागानेकैकस्य समापयेत्॥ पाठा मधुरसा षड्ग्रन्था चित्रकस्तथा । एषा दशपलान् भागान् मृद्वीकायास्तथाऽऽढकम् ॥ तोयद्रोणेषु दशसु पचेद्विद्रोणशेषितम् । तस्मिन्कषाये पूते तु द्वे गुडस्य तुले पचेत् ॥ योगेन साधित चैव शुभे भाण्डे निधापयेत् । द्वौ प्रस्थौ पिप्पलीनां तु द्वौ चायोरजसस्तथा ॥ अर्धप्रस्थो विडङ्गानां कुडवो मरिचस्य च । एतानि सूक्ष्मचूर्णानि प्रतीवापार्थमाहरेत् ॥ चूर्णमिन्द्रयवाना च मधुना सह योजयेत् । भाण्डप्रलेप कर्तव्य समासिच्य निधापयेत् ॥ एष मासस्थितो लेह्यो यथाव्याधिबलाबलम् । गण्डीरारिष्ट इत्येष व्यासत परिकीर्तित. ॥ एष शोषान् प्रमेहाश्च गुल्मांश्च जठराणि च । क्रिमिकोष्ठानि वर्ध्मानि प्लीहार्शांसि भगन्दरम् ॥ श्वयथु पाण्डुरोगाश्च ग्रहणीदोषमेव च । ग्रन्थीन् सगलगण्डाश्च गण्डमाला तथैव च ॥ विषमज्वरकासांश्च विद्रधिं

१ 'ल सर्पिर्दत्वा मृ' वङ्ग । २ 'वतार' वङ्ग । ३ 'रायास्तुला' वङ्ग । ४ 'रामयम्' वङ्ग । ५ 'चाव' अ इ फ । ६ 'मुस्ता शृङ्गाटगु' स स. । ७ 'ते मधुस' स स । ८ 'तरोगेषु' स मू । ९ 'दि निवर्तयेत्' वङ्ग । १०'ताभार्ङ्गीदशमूलीवचावृ' वङ्ग ।११'हारिण छा' वङ्ग. । १२ 'पार्श्वसशिरोरुक्क्षयकासादि' चक्र. वङ्ग ।

१ 'मूलीम' वङ्ग. । २ 'लपत्रच्छदपल्ल' वङ्ग. । ३ 'येद्रक्तक्षय' वङ्ग । ४ 'ग सेव्यो लो' वङ्ग । ५ 'एष वक्ष ' चक्र । ६ 'ग्रबाहुस्त' वङ्ग । ७ 'राहया' वङ्ग । ८ 'सर्पिर्भ्या य' वङ्ग. चक्र. । ९ 'कृष्णयुतो' फ. ।

वातशोणितम् । अरिष्ट शमयत्येष युधि शक्र इवासुरम् ॥ समूलां पिप्पलीं शृङ्गीं बृहतीमश्मभेदकम् । पटोल देवकाष्ठ च श्वदंष्ट्रामभयाशतम् ॥ एकैक षोडशपल कोलानामाढक मितम् । दन्तीचित्रकमूलाना पञ्चविंशत्पल पृथक् ॥ चतुर्गुणे जलद्रोणे पचेदर्धावशेषितम् । शीत समावपेद्भाण्डे प्रलिप्ते मधुसर्पिषा ॥ खण्डस्य द्वे शते शुद्धे तद्वल्लेहस्य चाव पेत् । पत्र कृत्वा तिलोत्सेध सूक्ष्मचूर्णीकृतानि च ॥ प्रियङ्गु पिप्पलीं रोध्र मृद्वीकामेलवालुकम् । क्रमुक शतपुष्प च निम्ब तेजोवतीमपि ॥ पालिक देवदारु च खदिराच्च चतुष्पलम् । क्षौद्रप्रस्थद्वय चापि समासिच्य घटे शुभे ॥ सौम्ये पुष्ये तथा हस्ते रोहिण्यामुत्तरासु च । दशरात्रस्थितो पे(दे) योऽरिष्ट आत्रेयपूजित. ॥ अश्विभ्या कथित पूर्वं रसायनमिद शुभम् । यथाग्निबलमात्रां तु पिबेदस्य हिताशिन ॥ धन्य पुष्टिकर मेध्य वलीपलितनाशनम् । क्षयकासज्वरप्लीह कुष्ठगुल्माग्निमार्दवे ॥ श्वित्रेऽश्मर्याक(म)थोदर्दे विद्रधाम-थ(ञ्च)विद्विषु । गण्डरोगोदरतथा(?)रेतोदोषे च शस्यते ॥ नाडीपीडकयोर्दोषे भूतापस्मारसङ्करे । रहस्यमेतद्वैद्यानामुपदिष्टं चिकित्सितम् ॥ मद्य क्रव्यादमास च शोषिणाममृतोपमम् ॥ फलत्रिकक्काथविशुद्धमादौ शुद्ध गुडूच्या दशमूलशुद्धम् । स्थिरादिकाकोलियुगादिसिद्ध शिलाजतु स्यात्क्षयिषु प्रशस्तम् ॥ स्थिरादि -विदार्यादि । काकोली युगादि.-पद्मकादि । रसोनयोग विधिवत्क्षयार्ते क्षीरेण वा नागबलाप्रयोगम् । भवेत वा मागधिकाविधान तथैव योग जतुनोऽश्मजस्य ॥" इति ।

## अथ स्वरसादचिकित्सितम् ।

**विशेषात्स्वरसादेऽस्य नस्यधूमादि योजयेत्[१] ।**

स०-अस्य-क्षयिण., स्वरसादे विशेषेण नस्यधूमादि योज्यम् ।

आ० र०-

**तत्रापि वातजे कोष्णं पिबेदौत्तरभक्तिकम्[२] ॥ ३५ ॥**
**कासमर्दकवार्ताकीमार्कवस्वरसैर्घृतम् ।**
**साधितं कासजित्स्वर्यं सिद्धमार्तगलेन[३] वा ॥ ३६ ॥**

स०-[तत्र]-तेषु च स्वरसादेषु मध्ये, वातजे स्वरसादे कासमर्दादिस्वरसै साधितमौत्तरभक्तिक-भक्तादूर्ध्व, घृत पिबेत्। मार्कवो-भृङ्गराज । तच्च सर्पि कासजित् स्वर्य च स्यात् । उत्तरभक्तादिति "मयूरव्यसकादित्वात्" समास , ततश्च "अध्यात्मादित्वात्" ठञ् । अथवा, आर्तगलेन-नीलपुष्पसहचरेण, सिद्धं घृतमेव पिबेत् ।

आ० र०-

**बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ।**

स०-अथवा बदर्या पत्रकल्क घृतभृष्ट ससैन्धव योजयेत् ।

आ० र०-

**तैलं वा मधुकद्राक्षापिप्पलीकृमिनुत्फलैः[२] ॥ ३७ ॥**
**हंसपाद्याश्च मूलेन पक्वं नस्तो निषेचयेत् ।**

स०-अथवा तैलं मधुकादिभि पक्वं नस्तोऽवसेचयेत् । कृमिघ्न(नुत्)-विडङ्गम् । फल-मदनफलम् । हंसपादी-कीटमारिका । नस्त इति "नस्नासिकाया यत्तस्क्षुद्रेषु" इत्यनेन तसि नसादेश ।

आ० र०-

**सुखोदकानुपानं च ससर्पिष्कं गुडौदनम् ॥ ३८ ॥**
**अश्नीयात्पायसं चैव स्निग्धं स्वेदं नियोजयेत् ।**

स०-तथा गुडौदनं सर्पिषा सह सुखोदकानुपानमश्नीयात् । पायस चैव ससर्पिष्क सुखोदकानुपानमद्यात् । स्वेद च स्निग्धं योजयेत् ।

आ० र०-

**पित्तोद्भवे पिबेत्सर्पिः शृतशीतपयोनुपः ॥ ३९ ॥**
**क्षीरिवृक्षाङ्कुरक्काथकल्कसिद्धं समाक्षिकम् ।**
**अश्नीयाच्च ससर्पिष्कं यष्टीमधुकपायसम् ॥ ४० ॥**

स०-पित्तोद्भवे सर्पि समाक्षिक क्षीरिवृक्षाङ्कुरादिक्काथकल्कसिद्ध शृतशीतक्षीरानुप पिबेत् । मधुयष्टिकान्वित पायसं ससर्पिष्क भुञ्जीत ।

आ० र०-

**बलाविदारिगन्धाभ्यां विदार्या मधुकेन च ।**
**सिद्धं सलवणं सर्पिर्नस्यं स्वर्यमनुत्तमम् ॥ ४१ ॥**

स०-बलादिभि सिद्ध सर्पि ससैन्धव पर स्वर्य स्यान्नस्यम् । विदारिगन्धा-शालिपर्णी ।

आ० र०-

**प्रपौण्डरीकं मधुकं पिप्पली बृहती बला ।**
**साधितं क्षीरसर्पिश्च तत्स्वर्यं नावनं परम् ॥ ४२ ॥**

स०-पित्तजे स्वरसादे प्रपौण्डरीकादिसाधितं क्षीरोद्भवं सर्पि श्रेष्ठ नस्यम् ।

आ० र०-

**लिह्यान्मधुरकाणां च चूर्णं मधुघृताप्लुतम्[३] ।**

स०-मधुरकाणा च-मधुररसद्रव्याणा, चूर्ण मधुघृतान्वित लिह्यात् ।

आ० र०-

१ "यत्किञ्चिद्राजयक्ष्मण्युक्त तदेकादशस्वपि रोगेषु चिकित्सित सामान्येनोक्तमेव यत , अत उच्यते-विशेषादित्यादि ।" इतीन्दु । २ 'वेदुत्त' अ इ.स मू । ३ "आर्तगल -ककुभ सुगन्धमूल 'कौह्रा' इति नाम्ना पूर्वदेशे प्रसिद्ध ।" इति डल्हण । "हजाकरस्त्वार्तगलो हिन्तालो भीषणाह्वय ।" इतीन्दु ।

१ 'न्धवमुत्तरभक्तिक यो' ट. । २ 'मिद्गत्फ' अ इ । ३ 'तान्वितम्' स.स. ।

पिबेत्कटूनि मूत्रेण कफजे रूक्षभोजनः ॥ ४३ ॥
कट्फलामलकव्योषं लिह्यात्तैलमधुप्लुतम् ।
व्योषक्षाराग्निचविकाभार्गीपथ्यामधूनि वा ॥ ४४ ॥

स०-कफोद्भवे कटूनि-कटुकरसानि द्रव्याणि, मूत्रेण पिबेत् । रूक्षभोजनश्च स्यात् । तथा, कट्फलादिकं तैलमधुप्लुतं लिह्यात् । व्योषादीनि वा एव लिह्यात् ।

आ० र०-

यवैर्यवागूं यमके कणाधात्रीकृतां पिबेत् ।
भुक्त्वाऽद्यात्पिप्पलीं शुण्ठीं तीक्ष्णं वा वमनं भजेत् ॥

स०-यवैरुपादानैर्यमके-स्नेहद्वये, कणाधात्रीकृता-एतत्क्वाथे सिद्धा, यवागू पिबेत् । तथा, भुक्त्वा पिप्पली शुण्ठी वाऽद्यात् । अथवा, तीक्ष्ण वमन भजेत् ।

आ० र०-' ' ' '

शर्कराक्षौद्रमिश्राणि शृतानि मधुरैः सह ।
पिबेत्पयासि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ ४६ ॥

इति स्वरसादचिकित्सितम् ।

स०-यस्योच्चैर्भाषमाणस्य स्वरोऽभिहत स मधुरै[3]-जीवनीयै सह, शृतानि शर्करामाक्षिकमिश्राणि पयासि पिबेत् ।

आ० र०-

अथारोचकचिकित्सितम् ।

विचित्रैर्मन्नमरुचौ हितैरुपहितं हितम् ।
बहिरन्तर्मृजा चित्तनिर्वाणं हृद्यमौषधम् ॥ ४७ ॥
द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनैः ।
कषायैः क्षालयेदास्यं धूमं प्रायोगिकं पिबेत् ॥४८॥
तालीसचूर्णवटकाः सकर्पूरसितोपलाः ।
शशाङ्ककिरणाख्याश्च भक्ष्या रुचिकराः परम् ॥४९॥

स०-अरोचके विचित्र-नानाविधमन्नं, हित-पथ्यम् । किम्भूतम्? हितै-पथ्यै, उपहित-मिश्रितम् । एवमरुच्याख्यो व्याधिविशेष सर्वव्याधिभ्यो गरीयान् । येनापथ्यमपि यदन्न तस्मै तदपि देय प्राणसन्धारणार्थम्, "अन्नमेव प्राणिनां प्राणा" इत्याहु । एवं च सर्वव्याधिष्वरुचिरेव पूर्वं जेतव्या, ततो ज्वरादय इत्यर्थादुक्तं भवति ।

बहिर्मृजा-बहि शुद्धि स्नानादिना बहि परिमार्जनम् । अन्तर्मृजा-अन्त शुद्धि । तथा, चित्तनिर्वाणमरुचौ हित हृद्यमौषध च । तथा, द्वौ कालौ-सायप्रातराख्यौ, दन्तधावनं भक्षयेत् । तथा, मुखधावनै कषायैरास्य क्षालयेत् । प्रायोगिक-स्नैहिकं, धूम पिबेत् ।

तथा, तालीसचूर्णवटकाश्च । तथा, सकर्पूरशर्करा शशाङ्ककिरणाख्या भक्ष्या पर-अतिशयेन, रुचिकरा ।

आ० र०-अथारोचकचिकित्सितम् । तत्र सामान्यमाह-विचित्रैमन्नमिति । अन्तर्मृजा-वमनादि । निर्वाण-निवृत्ति । द्वौ कालौ-प्रातर्भुक्त्वा साय च । मुखधावनै-तिक्तकट्वम्लकृतै । प्रायोगिक-शमनम् । तालीसचूर्ण-तालीसपत्रचूर्ण., तस्य वटका. सितोपलया कार्या । ते च कर्पूरेण सुरभीकृता. । शशाङ्ककिरणा-कर्पूरनालिकाः ।

सामान्येनारुचौ चिकित्सितान्युक्त्वा विशेषमाह—

वातादरोचके तत्र पिबेच्चूर्णं प्रसन्नया ।
हरेणुकृष्णाकृमिजिद्द्राक्षासैन्धवनागरात् ॥ ५० ॥
एलाभार्गीयवक्षारहिङ्गुयुक्ताद्घृतेन वा ।
छर्दयेद्वा वचाम्भोभिः

स०-वातेनारुचौ सत्या हरेण्वादिभ्यश्चूर्णं प्रसन्नया पिबेत् । एलाभार्ग्यादियुक्तघृतेन वा पेयम् । वचाजलैर्वा वमेत् ।

आ० र०-वातस्यौषधमाह-वातादिति ।

वमनमाह-छर्दयेद्वेति । वचाम्भोभि.-वचाकल्कितैरुष्णाम्बुभि ।

पित्ताच्च गुडवारिभिः ॥ ५१ ॥
लिह्याद्वा शर्करासर्पिर्लवणोत्तममाक्षिकम् ।

स०-पित्तादरुचौ गुडवारिणा वमेत् । शर्करादिकं [वा] लिह्यात् ।

आ० र०-पित्तजस्यौषधमाह-पित्ताच्चेति । गुडवारिभिरिति मदनफलयुक्तैश्छर्दयेत् ।

लेहमाह-लिह्याद्वेति । लवणोत्तमं-सैन्धवम् ।

कफाद्वमेन्निम्बजलैर्दीप्यकारग्वधोदकम् ॥ ५२ ॥
पानं समध्वरिष्टाश्च तीक्ष्णाः समधुमाधवाः ।
पिबेच्चूर्णं च पूर्वोक्तं हरेण्वाद्युष्णवारिणा ॥ ५३ ॥

स०-कफादरोचके निम्बजलैर्वमेत् । दीप्यककर्णिकारयोरुदक पानं समाक्षिकम् । अरिष्टाश्च तीक्ष्णा समाद्वींकमाधवाः पानम् । हरेण्वादिचूर्ण च पूर्वोक्त (श्लो.५०)उष्णाम्बुना पिबेत् ।

आ० र०-कफजस्यौषधमाह-कफाद्वमेदिति । निम्बजलैरिति मदनफलयुक्तै ।

पानमाह-दीप्यकारग्वधोदकमिति । मधु-माध्वीकम् । माधवो-मधुकृत मद्यम् ।

चूर्णमाह-पिबेच्चूर्णमिति । सङ्ग्रहे (चि.अ. ७)-"त्रिकटुत्रिफलारात्रियवक्षार मधुप्लुतम् । प्रातराहारकाले च युञ्जीत मुखधावनम् ॥ रात्रिः-हरिद्रा । बिड सौवर्चल कुष्ठमजाजी

१ "मधुरै-काकोल्यादिभि." इति डल्हण । २ 'तो विहित.' स.स. । ३ 'रै सह' ड । ४ "अपथ्यमपि प्रिय हितैर्मिश्रित हितम् ।" इतीन्दु । ५ "मुखधावना कषाया -मुखरोगेषु वक्ष्यमाणा." इतीन्दु । ६ 'सपत्रव' स इ. । ७ 'रा भृशम्' अ इ । ८ 'यच्चापथ्यमिदमपि यदन्न तदपि तस्मै देय' ट. । ९ 'ना हि प्रा' ट. । १० 'त्याह ।' ड.।

मरीच सिता । धान्येलापद्मकोशीरपिप्पलीचन्दनोत्प लम् ॥ रोध्र तेजोवती पथ्या यवक्षार कटुत्रयम् । आर्द्रदा डिमनिर्यास साजाजीसितशर्कर ॥ सतैलमाक्षिकयुताश्च- त्वार कवलग्रहा । चतुरोऽरोचकान् हन्युरेकदोषसमस्त जान् ॥ कारव्यजाजीमरिचद्राक्षावृक्षाम्लदाडिमम् । सौव चैलगुडक्षौद्र सर्वारोचकनाशनम् ॥" इति । वङ्गसेने (१)- "जम्ब्वाम्रपल्लव रोध्र त्रिफला चव्यचित्रकौ । पटोल नक्त- मालश्च शिरीष खदिरासनौ ॥ दार्वी हरिद्रा मुस्त च तेजोह्वा मधुक बला । एतानि समभागानि कषायमुपसाधयेत् ॥ कवलग्रह इत्येष कर्तव्यो मधुना युत । सर्वेषा मुखरोगाणा- मरुचीना च नाशन ॥ षाडवश्च कपित्थानां सव्योषमधुश- र्कर । अरोचकेषु सर्वेषु प्रशस्तो धारितो मुखे ॥ आरनाल च शुक्त च मार्द्वीकमदिरासवा । दन्तयोरन्तरे धार्यास्तथैव कवलग्रहा. ॥ त्वङ्मुस्तवेलाधान्यानि, मुस्तमामलक त्वचा । त्वचोदार्व्यायवान्याश्च, पिप्पली तेजवत्यपि ॥ यवानी तिन्ति- डीक च, पञ्चैते मुखधावना । श्लोकपादेषु विहिता रोचना मुखशोधना ॥ कारञ्ज दन्तकाष्ठ च विधेयमरुचौ सदा । (वङ्गसेने अरोचकाधिकारे श्लो ११)-"मरिच मधुना लेह्य कफजेऽरोचके भृशम् ॥ अम्लीकागुडतोय च त्वगेला- मरिचान्वितम् । अभक्तच्छन्दरोगेषु शस्त कवलधारणम् ॥ शृङ्गबेररस चैव मधुना सह योजयेत् । अरुचिश्वासकासघ्न प्रतिश्यायकफवातनुत् ॥ भोजनाग्रे सदा पथ्य जिह्वाकण्ठवि शोधनम् । अग्निसन्दीपन हृद्य लवणार्द्रकभक्षणम् ॥ कार- व्यजाजीपत्रैलाव्योषवृक्षाम्लदाडिमम् । सक्षौद्रशर्कर हृद्य रुचि[2]कृद्वह्निदीपनम् ॥ बि[4]डचूर्णमधूपेतो रसो दाडिमसम्भव. । असाध्यामपि संहन्यादरुचि वक्त्रधारित ॥ शिग्रूफलान्यष्टादश दश मरिच वि[शतिश्च पिप्पल्य । आर्द्रकपल गुडपल प्रस्थ त्रयमारनालस्य ॥ बिडलवणसहितमेतत् खजाहत सुरभिग- न्धाढ्यम् । व्यञ्जनसहस्रघाति ज्ञेय कलहसक नाम्ना ॥" इति ।]

**एलात्वङ्नागकुसुमतीक्ष्णकृष्णामहौषधम् ।**
**भागवृद्धं क्रमाच्चूर्णं निहन्ति समशर्करम् ॥ ५४ ॥**
**प्रसेकारुचिहृत्पार्श्वकासश्वासगलामयान् ।**

स०-एलादिक चूर्ण क्रमेण भागवृद्ध समशर्कर प्रसेकादीन् हन्ति ।

आ० र०-[ समशर्करचूर्णमाह-] एलात्वगिति । केचि- त्त्वङ्नागपुष्पयोर्मध्ये पत्रकमधिक पठन्ति, केचिन्नागपुष्पम- रीचयोर्मध्ये । पाठत्रयमपि प्रमाणम् ।

**यवानीतिन्तिडीकाम्लवेतसौषधदाडिमम् ॥ ५५ ॥**
**कृत्वा कोलं च कर्षांशं सितायाश्च चतुष्पलम् ।**
**धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम् ॥ ५६ ॥**
**पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ।**
**चूर्णमेतत्परं रुच्यं हृद्यं ग्राहि, हिनस्ति च ॥ ५७ ॥**
**विबन्धकासहृत्पार्श्वप्लीहार्शोग्रहणीगदान् ।**

स०-यवानीत्यादि कोलान्तानि प्रत्येक कार्षिकाणि, शर्क- राया पलानि चत्वारि, धान्यकादिकमर्धकार्षिक, शतमेक पिप्पलीना, द्वे शते मरिचस्य च, चूर्णमिद पर रुच्य तथा हृदयाय हित ग्राहि, विबन्धादीन् हन्ति ।

आ० र०-षाडवमाह-यवानीति । औषधं-शुण्ठी । कोल- बदरम् । वराङ्ग-त्वक् । शत-मेयस्य, न मानस्य कर्षादे. । "सङ्ख्या फलानां शतशोऽपला स्यात् ।" इति वचनात् ।

**तालीसपत्रं मरिचं नागरं पिप्पली[2] शुभा[3] ॥ ५८ ॥**
**यथोत्तरं भागवृद्ध्या[4] त्वगेले चार्धभागिके ।**
**तद्रुच्यं[5] दीपनं चूर्णं कणाष्टगुणशर्करम् ॥ ५९ ॥**
**कासश्वासारुचिच्छर्दिप्लीहहृत्पार्श्वशूलनुत् ।**
**पाण्डुज्वरातिसारघ्नं मूढवातानुलोमनम् ॥ ६० ॥**

**इत्यरोचकचिकित्सितम् ।**

स०-तालीसपत्रादयो यथोत्तर-उत्तरोत्तर, भागवृद्धा कार्या । त्वक् च एला च एतेऽर्धभागप्रमाणे । एतच्चूर्ण पिप्पल्यष्टगुण- शर्कर दीपन कासादिजिच्च, पाण्ड्वादिघ्न मूढवातानुलोमन च ।

---

१ 'भिषक्' वङ्ग. । २ 'श्यायकफापहम् ।' वङ्ग. । ३ 'च्चिव- ह्निप्रदी' वङ्ग. । ४ 'विडङ्गमधुसयुक्तो' वङ्ग ।

१ 'तच्चूर्णं दीपन रुच्य' फ । २ 'ली कणा' स मू । ३ "शुभेति पिप्पलीविशेषणम्, न तु शुभा-वशरोचना, समान- तन्त्रे हारीतादावदृष्टत्वात् । तथा हि हारीत -'तालीस मरिच शुण्ठी पिप्पल्योऽक्षांशकोत्तरा । त्वगेलेऽर्धांशके दद्याच्छर्कराष्टपल भवेत् ॥' इत्यादि । जातूकर्णेनाप्युक्तम्-'तालीसमरिचनागरकृष्णा कर्षोत्तरा- स्त्वगेले च । अर्धांशे द्विकुडवसित गुटिका•• विपाच्य शतम् ।' इति । यथोत्तर भागवृध्येति तालीसपत्रस्यैको भाग , मरिचस्य द्वौ भागौ, नागरस्य त्रयो भागा , पिप्पल्याश्चत्वार । त्वगेले चार्धभागिक इति त्वगेलयो प्रथमभागापेक्षया प्रत्येकमर्धभागत्वम् । पिप्पल्यष्टगुणेति पिप्पलीभागादष्टगुणशर्करा ग्राह्येत्यर्थ । मूढवातानुलोमनमिति । तत्र मूढवात केचित्तु वर्णयन्ति-'य कृच्छ्रप्रमेहयोर्द्वयोरप्यन्तराल भजते कदाचिन्मूत्र विबध्यते कदाचिदतिवर्तते स मूढवात ।' इति । पित्तयुक्ते भवेच्छ्रेष्ठ वशरोचनयाऽन्वितमिति पित्तानुबन्धे शुभा- शब्देन वशरोचना ग्राह्येत्यर्थ । एषा च टिप्पणी वृन्दस्य, तन्त्रा- न्तरदर्शनात् । तदुक्तम्-'वाशीपिप्पलिशुण्ठीनां तथोषणतालीसयो ' इत्यादि ।" इति सिद्धयोगे श्रीकण्ठदत्त । "शुभेति पिप्पलीविशे- षणम्, न तु वशलोचना, समानतन्त्रे हारीतादावदृष्टत्वात् । किन्तु सङ्ग्रहकारा. प्रबलपित्ते शुभया वशलोचना ग्राह्येति लिखन्ति । एतमेवार्थं कश्चिल्लिखति । यथा-'तालीशमरिचनागरमागधिकावश लोचना क्रमश । वृद्धास्त्वगेलार्धं कृष्णाया सिता भवेदष्टगुणा ॥' इति ।" इति चक्रदत्ते शिवदास । "तालीसाद्ये शुभेति विशेषणं पिप्पल्या ।" इति चरके चक्रदत्त । सङ्ग्रहटीकाकार इन्दुरपि शुभाया पिप्पलीविशेषणत्वमेव मन्यते। ४ 'वृद्धास्त्वगेले' अरुण. स.मू. । ५ 'तद्रुच्य दी' इति क्वचित् ।

आ० र०–तालीसादिमाह–तालीसपत्रमिति । शुभा–वशरोचना । अर्धभागिके–मिलिते तालीससमे । योग रत्ने–"तालीसोषणनागचव्यलवणैस्तुल्याशकैर्द्विस्तत कृष्णाग्रन्थिकतित्तिडीकहुतभुक्त्वग्जीरकाख्यैर्युतै । विश्वैलाबदराम्लवेतसघनैर्धान्याजमोदायुतैस्त्र्यशैर्दाडिमपाद एष विहित श्रेष्ठ सितार्धायुत ॥ कण्ठास्योदरहृद्विकारशमन कायाग्निसन्दीपनो गुल्माध्मानविषूचिकागुदरुजाश्वासक्रिमिच्छर्दिहा । कासारुच्यतिसारमूढमरुतां हृद्रोगिणा कीर्तितश्चूर्णोऽयं भिषजामतीव दयित ख्यातो महाखाण्डव ॥ लवङ्गकङ्कोलमुशीरचन्दन नत सनीलोत्पलकृष्णजीरकम् । एला सकृष्णाऽगुरुभृङ्गकेसर कणा सविश्वा नलद सहाम्बुना ॥ कर्पूरजातीफलवशलोचन सिताष्टभाग समसूक्ष्मचूर्णितम् । सुरोचन तर्पणमग्निदीपन बलप्रद वृष्यतम त्रिदोषनुत् ॥ उरोविबन्ध तमक गलग्रह सकासहिध्मारुचियक्ष्मपीनसम् । ग्रहण्यतीसारमथासृज क्षय प्रमेहगुल्माश्च निहन्ति सत्वरम् ॥ कर्पूरचोचकङ्कोलजातीफलदला समा । लवङ्गनागमरिचकृष्णाशुण्ठ्यो विवर्धिता ॥ चूर्ण सितासम हृद्य रोचन क्षयकासजित् । वैस्वर्यश्वासगुल्मार्शश्छर्दिकण्ठामयापहम् ॥ प्रयुक्त चान्नपाने वा भेषजद्वेषिणा हितम् ।" इति । विवर्धिता –क्रमेण भागोत्तरा ।

**अर्कामृताक्षारजले शर्वरीमुषितैर्यवैः ।**
**प्रसेके कल्पितान्सक्तून् भक्ष्यांश्चाद्याद्बली वमेत् ६१**
**कटुतिक्तैस्तथा शूल्य भक्षयेज्जाङ्गलं पलम् ।**
**शुष्कांश्च भक्ष्यान् सुलघूंश्चणकादिरसानुपः ॥ ६२ ॥**

स०–अर्कादिजले रात्रिस्थितैर्यवै सक्तून् कल्पितान् भक्ष्याश्च प्रसेके भक्षयेत् । बलवान् कटुतिक्तैर्वमेत् । तथा, शूल्य जाङ्गल मास भक्षयेत् । शुष्काश्च भक्ष्यान् भोजयेत् । भोज्यविशेषान् लघुतरान् भक्षयेत् । चणकादिरसमनु–पश्चात्, पिबेत् ।

आ० र०–अथोपद्रवचिकित्सा । तत्र प्रसेकचिकित्सामाह–अर्कामृताक्षारजल इति । अर्कगुडूच्यो क्षारस्य क्षारविधिना गृहीते जले रात्रिमुषितैर्यवै सक्तवो भक्ष्याश्च कल्प्या । यस्तु प्रसेकी बलवान् स कटुतिक्तैर्वमेत् । चणकादीना रूक्षाणा रसो–यूष , अनुपाने ।

**श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति ।**
**कफप्रसेकं तं विद्वान्स्निग्धोष्णैरेव निर्जयेत् ॥ ६३ ॥**

स०–वायु श्लेष्माण क्षिपति श्लेष्मणोऽतिप्रसेकेन हेतुभूतेन त कफप्रसेक विद्वान् स्निग्धोष्णैरेव निर्जयेत् ।

आ० र०–चिकित्सान्तरमाह–श्लेष्मण इति । यस्मिन् कफस्यातिप्रसेकेन क्षीणत्वे सति कुपितो वायु. क्षीणमपि कफ बलादस्यति–प्रेरयति, त स्निग्धोष्णेन चौषधेन निर्जयेत्–न रूक्षशीतेन । विद्वान्–अवस्थोपचारज्ञो वैद्य. ।

**पीनसेऽपि क्रममिमं वमथौ च प्रयोजयेत् ।**

स०–इम–कफप्रसेकोक्त, क्रियाक्रम पीनसे वमथौ–छर्दिषि च, प्रयोजयेत् ।

आ० र०–छर्दिपीनसयो प्रसेकचिकित्सामाह–पीनसेऽपीति ।

**विशेषात्पीनसेऽभ्यङ्गान् स्नेहान् स्वेदांश्च शीलयेत् ६४**
**स्निग्धानुत्कारिकापिण्डैः शिरःपार्श्वगलादिषु ।**
**लवणाम्लकटूष्णाश्च रसान् स्नेहोपसंहितान् ॥६५॥**

स०–विशेषेण पीनसेऽभ्यङ्गान् स्नेहान् स्वेदाश्च स्निग्धान् शीलयेत् । कै ? उत्कारिकापिण्डै । केषु ? शिर पार्श्वगलादिषु । लवणादीश्च रसान् स्नेहोपसहितान् शीलयेत् ।

आ० र०–पीनसे विशेषमाह–विशेषादिति । स्निग्धान्–स्निग्धद्रव्यकृतान् । उत्कारिकाश्च पिण्डाश्चेति द्वन्द्व । पिण्डा.–पिण्डाकारा भक्ष्या ।

**शिरोंसपार्श्वशूलेषु यथादोषविधिं चरेत् ।**
**औदकानूपपिशितैरुपनाहाः सुसंस्कृताः ॥ ६६ ॥**
**तत्रेष्टाः सचतुःस्नेहाः**

स०–शिरोंसपार्श्वशूलेषु दोषानुसारेणोपक्रम कार्य । तेष्वौदकानूपमासैश्चतु स्नेहयुता. सुसस्कृता उपनाहा इष्टा ।

आ० र०–शिर शूलादिचिकित्सामाह–शिरोंसपार्श्वशूलेष्विति ।

वातजेषु विशेषमाह–औदकानूपपिशितैरिति । सुसस्कृता.–कटुपट्वम्लै. ।

**दोषसंसर्ग इष्यते ।**
**प्रलेपो नतयष्ट्याह्वशताह्वाकुष्ठचन्दनैः ॥ ६७ ॥**
**बलारास्नातिलैस्तद्वत्ससर्पिर्मधुकोत्पलैः ।**
**पुनर्नवाकृष्णगन्धाबलावीराविदारिभिः ॥ ६८ ॥**

स०–दोषसंसर्गे च–द्वन्द्वे, तगरादिभि प्रलेप इष्यते । तथैव बलादिभि घृतमधुकोत्पलयुतै , [तथा] पुनर्नवादिभि ।

आ० र०–संसर्गजेषु विशेषमाह–दोषसंसर्ग इति । त्रिभिरर्धैस्त्रयो लेपा । सङ्ग्रहे तु द्वावधिकौ (चि. अ. ७) –"पलङ्कषा देवदारु चन्दन मधुक घृतम् । अभीरुयष्टीमधुक पयस्या कतृण घृतम् ॥" इति ।

**नावनं धूमपानानि स्नेहाश्चौत्तरभक्तिकाः ।**
**तैलान्यभ्यङ्गयोगीनि बस्तिकर्म तथा परम् ॥ ६९ ॥**

१ 'ता वा हृद्रुजा नाशनश्चू'वङ्ग । २ 'कथित ' वङ्ग । ३ 'सश्वासयक्ष्मारुचिपीनस तथा' वङ्ग. । ४ 'हृरोग च नि' वङ्ग । ५ 'ङ्गमासीम' वङ्ग । ६ 'पानेषु मे' वङ्ग । ७ 'ताक्षीर' अ इ. । ८ 'केतु वा' स.च । ९ "त–वातहेतुकम् ।" इतीन्दु । १० 'ग्धोष्णेनैव' हे.स.च. ।

१ 'से च क' अ इ फ । २ "औदकाना पृथग्ग्रहण प्राधान्यात् ।" इतीन्दु. ।

स०–नस्य तथा धूमपानानीष्यन्ते । तथा, औत्तरभक्तिकाश्च स्नेहा । तैलान्यभ्यङ्गयोगीनि–अभ्यङ्गयोगप्रशस्तानि । तथा बस्तिकर्म–"प्राक्स्नेह" (हृ सू अ १९।६३) इत्यादिकम्, पर–श्रेष्ठम् ।

आ० र०–नस्यादीन्याह–नावनमिति । उत्तरभक्तिका –भोजनोत्तर प्रयुक्ता । पर–श्रेष्ठम् ।

**शृङ्गाद्यैर्वा यथादोषं दुष्टमेषां हरेदसृक् ।**
**प्रदेहः सघृतैः श्रेष्ठः पद्मकोशीरचन्दनैः ॥ ७० ॥**
**दूर्वामधुकमञ्जिष्ठाकेसरैर्वा घृताप्लुतैः ।**
**वटादिसिद्धतैलेन शतधौतेन सर्पिषा ॥ ७१ ॥**
**अभ्यङ्गः पयसा सेकः शस्तश्च मधुकाम्बुना ।**

स०–शृङ्गाद्यै –शृङ्गजलौकोलाबुभि , यथादोष–वातपित्तकफदुष्ट, रक्तमेषा–यक्ष्मिणा, हरेत् ।

प्रलेप पद्मकादिभि सघृतै श्रेष्ठ , दूर्वादिभिर्वा घृताप्लुतै ।

वटादिना–न्यग्रोधादिना, सिद्धेन तैलेनाभ्यङ्ग शस्त । शतधौतेन वा घृतेन तथा क्षीरेण सेक शस्त । मधुयष्टिकाजलेन वा ।

आ० र०–रक्तदुष्टौ विशेषमाह–शृङ्गाद्यैर्वेति । "वातादिधाम वा शृङ्गजलौकोलाबुभि क्रमात् ।" (हृ सू अ २६।५५)इत्युक्तत्वात् । एषां–शिरोंसपार्श्वशूलिनाम् । केसर–पद्मस्य । वटादि.–न्यग्रोधादिगण ।

**प्रायेणोपहताग्नित्वात्सपिच्छमतिसार्यते ॥ ७२ ॥**
**तस्यातिसारग्रहणीविहित हितमौषधम् ।**

स०–बाहुल्येनोपहताग्नित्वात्कारणात् पिच्छया सहातिसार्यते यक्ष्मी । तस्यातिसारे ग्रहण्या च यदुक्तमौषध तद्धितम् ।

आ० र०–अतिसारचिकित्सामाह–प्रायेणेति । सङ्ग्रहे तु ( चि अ ७ )–"सनागरानिन्द्रयवान् पाययेत्तण्डुलाम्बुना । जीर्णेषु तेषु पेया च चाङ्गेरीतक्रदाडिमैः ॥ पाठाबिल्वयवानीना चूर्णं तक्रेण वा पिबेत् । सुरया वा द्रुतां पाठा सनागरदुरालभाम् ॥ जम्ब्वाम्रबिल्वमध्य वा सकपित्थ सनागरम् । पेयामण्डेन योगैश्च पाठाद्यै कारयेत्त्रिभि. ॥ ससूप्यधान्यान् सस्नेहान् साम्लान् सलवणान् खलान् । वेतसार्जुनजम्बूनां मृणालीकृष्णगन्धयो ॥ श्रीपर्ण्यां मातुलुङ्गस्य धातक्या दाडिमस्य च । चाङ्गेर्या मदयन्त्याश्च यूथिकायाश्च पल्लवैः ॥ कालविदुग्धिकायाश्च चुक्रिकायाश्च योजयेत् । खलान् दधिसरोपेतान् ससर्पिष्कान् सदाडिमान् ॥ रोचनान् दीपनान् हृद्यानतीसारहरान् परान् ।" इति ।

पेयाया मण्डेन भक्तस्य[न्]ते जम्ब्वादिचूर्णं पिबेत् । मृणाली–पद्मिनी । कृष्णगन्धा–शिग्रु । मदयन्त्या –मल्लिकाया । चुक्रिका–वि... दा । तथा ( सङ्ग्रहे चि अ ७ )–"ज्वरादिष्वपि कुर्वीत विकारेषु यथामयम् । बह्वामयसमूहो हि यक्ष्माऽत स्रोऽतिदु सह. ॥" इति ।

**पुरीषं यत्नतो रक्षेच्छुष्यतो राजयक्ष्मिणः ॥ ७३ ॥**
**सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम् ।**

स०–तथा, राजयक्ष्मिण शुष्यत सत पुरीष यत्नेन रक्षेत् । किमित्याह–यस्मात्तस्य–शोषिण , सर्वधातुक्षयार्तस्य सतो विड्बलमेव बल,–न धात्वादिज बलम् ।

आ० र०–

**मासमेवाश्नतो युक्त्या मार्द्वीकं पिबतोऽनु च॥७४॥**
**अविधारितवेगस्य यक्ष्मा न लभतेऽन्तरम् ।**
**सुरां समण्डां मार्द्वीकमरिष्टान्सीधुमाधवान् ॥७५॥**
**यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन् ।**
**स्रोतोविबन्धमोक्षार्थं बलौजःपुष्टये च तत् ॥ ७६ ॥**

स०–मासमेव युक्त्या–देशकालसात्म्यादिलक्षणया, भक्षयतो मार्द्वीक च पश्चात् पिबतो वेगमधारयतो यक्ष्मा अन्तर–अवकाश, न लभते ।

तथा, सुरादीननुपानार्थ पिबेत् । मासानि भक्षयेत् । तत्–सुराद्यनुपान मासभक्षणं च, स्रोतोविबन्धमोक्षार्थ बलायौजसश्च पुष्टये ।

आ० र०–मांसमद्यप्रयोगमाह–मांसमेवेति ।

**स्नेहक्षीराम्बुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ।**
**उत्तीर्णं मिश्रकैः स्नेहैर्भूयोऽभ्यक्तं सुखैः करैः ॥७७॥**
**मृद्गीयात्सुखमासीनं सुखं चोद्वर्तयेत्परम् ।**

स०–स्नेहादिकोष्ठेषु स्वभ्यक्त सन्तमवगाहयेत्–निमग्नं स्थापयेत् । तत कोष्ठादुत्तीर्णं भूय पुनर्मिश्रकै स्नेहै –गुल्मोक्तै (हृ चि अ १४।८९), अभ्यक्त सुखै –सुखावहैर्न दुःखकरै , करै सुखेन तिष्ठन्त मृद्गीयात् । पर–अतिशयेन, सुख यथा भवति तथोद्वर्तयेत् ।

आ० र०–अवगाहादीन्याह–स्नेहक्षीराम्बुकोष्ठेष्विति । अवगाहाभ्यङ्गमर्दनोद्वर्तनानि क्रमेण कुर्यात् । मिश्रको–यमकादि. ।

**जीवन्तीं शतवीर्यां च विकसां सपुनर्नवाम् ॥ ७८ ॥**
**अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ।**
**विदारीं सर्षपान् कुष्ठं तण्डुलानतसीफलम् ॥ ७९ ॥**

---

१ 'उत्तर' ट । २ "वातेऽधिके शृङ्गेण, पित्तेऽधिके जलौकाभि , कफे तुम्बेन, इति यथादोषार्थं ।" इतीन्दु । ३ 'घृतैश्रेष्ट' स द्व । 'घृतश्रेष्ट.' स च. । ४ 'चन्दनाद्येन तै' स द्व स च । ५ 'इन्दुम्बप्रच्छानज' ट. । ६ 'थायोग वा' ट । ७ 'ठानिम्बय' स द्व । ८ 'लुङ्ग्याश्च धा' फ । ९ 'न् दद्यादती' स.द्व. । १० 'परम्' स.स. ।

१ 'रिष्टसी' अ इ स मू । २ 'स पुष्टये च ।' ट । ३ "कोष्ठ.–काष्ठादिमय स्नेहाद्याधार । उत्तीर्ण–अवगाहात् फललाभे सति ।" इतीन्दु । ४ 'अकस्ने' फ स.द्व.,ड. । ५ 'हैर्पुनरक्तं' स.द्व. । ६ 'दु खकरै' ट. ।

**माषास्तिलाश्च किण्वं च सर्वमेकत्र चूर्णयेत् ।**
**यवचूर्णं त्रिगुणितं दध्ना युक्तं समाक्षिकम् ॥ ८० ॥**
**एतदुद्वर्तनं[1] कार्यं पुष्टिवर्णबलप्रदम् ।**

स०–जीवन्त्यादिकं किण्वपर्यन्तं सर्वमेकत्र चूर्णयेत् । विकसा–मञ्जिष्ठा । यवचूर्णं सर्वेभ्यस्त्रिगुणं दध्ना युक्तं समाक्षिकमेतदुद्वर्तनं कार्यं पुष्ट्यादिप्रदम् ।

आ० र०–उद्वर्तनयोगमाह–जीवन्तीमिति । शतवीर्या–शतावरीम् । विकसा–मञ्जिष्ठाम् । तण्डुलान्–शालीनाम् । उत्सादन–उद्वर्तनम् ।

**गौरसर्षपकल्केन स्नानीयौषधिभिश्च[2] सः ॥ ८१ ॥**
**स्नायादृतुसुखैस्तोयैर्जीवनीयोपसाधितैः ।**

स०–गौरसर्षपाणां कल्केन स्नानीयैः–स्नानार्हैर्गन्धद्रव्यविशेषैः, औषधिभिश्च–सहदेव्यादिभिः, ऋतौ–हेमन्तादिके, सुखावहैः–उष्णादिभिः, तोयैर्जीवनीयद्रव्यशृतैः स्नायात् ।

आ० र०–स्नानमाह–गौरसर्षपकल्केनेति । स्नानैः–ग्रहस्नानोक्तैः द्रव्यैर्मन्त्रैश्चौषधिभिः सज्ञाभिः ।

**गन्धमाल्यादिकां[3] भूषामलक्ष्मीनाशनीं भजेत् ॥८२॥**

स०–तथा, गन्धैः–चन्दनकुङ्कुमादिभिः, माल्यैः–कुसुमैः, आदिशब्देनालङ्कारादिग्रहण, तैर्भूषामलक्ष्मीघ्नीं सेवेत ।

आ० र०–अनुलेपनादीन्याह–गन्धमाल्यादिकामिति ।

**सुहृदां दर्शनं गीतवादित्रोत्सवसंश्रुतिः[5] ।**
**बस्तयः क्षीरसर्पींषि मद्यमांससुशीलता[6] ॥ ८३ ॥**
**दैवव्यपाश्रयं तत्तदथर्वोक्तं[7] च पूजितम् ॥ ८३½ ॥**
**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने राजयक्ष्मादिचिकित्सितं नाम पञ्चमोऽध्यायः ॥ ५ ॥**

स०–तथा, सुहृदां–बन्धूनां, दर्शनम् । गीतस्य वादित्राणां तथोत्सवस्य–पुत्रजन्मविवाहादेः, संश्रवणम् । तथा, बस्तयः क्षीरसर्पींषि–क्षीराणि घृतानि, मद्यमांसानां सुशीलता । तथा, दैवव्यपाश्रयं–बलिमङ्गलहोमप्रायश्चित्तादिकम् । तथा, अथर्वोक्तम्–अथर्ववेदविहितं यागादिकं च, पूजितं–प्रशस्तमेतदत्रेत्यर्थः ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां चतुर्थे चिकित्सितस्थाने राजयक्ष्मादिचिकित्सितं नाम पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

१ 'दुत्सादन' हे स च । २ 'स्नानैरौष' हे । ३ 'दिकैर्भूषा' अरुण । ४ "भूषा–अलङ्करणम्" इतीन्दु । ५ 'श्रुतीः' स द्व. । ६ 'मद्य मांस सु' इ.स द्व. । ७ 'तद्वद' स.सं. ।

आ० र०–सुहृद्दर्शनादीन्याह–सुहृदां दर्शनमिति । सङ्ग्रहे (चि अ ७) "इष्ट्या यया च चन्द्रस्य राजयक्ष्मा पुरा जितः । पुरोहितः प्रयुञ्जीत वेदोक्तां तां जितात्मनः ॥ अजा वा[1] पर्युपासीत षण्मासा[2]नुटजे वसन् । तत्पयोमूत्रविङ्वृत्तिपरिषेकप्रघर्षणैः ॥ ताभिः परिवृतः स्वप्यात्तच्छकृद्दि[3]णुसस्तरे । एतद्रसायनं श्रेष्ठं रोगराजस्य नाशनम् ॥" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
राजयक्ष्मप्रकरणं सामस्त्येन निरूपितम् ॥ ५ ॥



## षष्ठोऽध्यायः ।

राजयक्ष्मचिकित्सितादनन्तरं छर्द्यादिचिकित्सितमारभ्यते । यतो यक्ष्मण एव प्रायेणैते उपद्रवभूता जायन्ते । अत एतदारम्भो युक्त इत्याह—

**अथातश्छर्दिहृद्रोगतृष्णाचिकित्सितं[5] व्याख्यास्यामः**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो हितं[6] ततः ।**
**लङ्घनं प्रागृते वायोर्वमनं तत्र योजयेत् ॥ १ ॥**
**बलिनो बहुदोषस्य वमतः प्रततं बहु ।**

स०–उत्क्लेशन–उत्क्लेशो,–दोषाणामुच्छूनावस्थैव । आमाशयोत्क्लेशात् सम्भवो–जन्म, यासां ता आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो यतस्तस्मात् प्राक्–प्रथमं, लङ्घनं हितम् । प्रायोग्रहणं वातजायां छर्द्यामामाशयोत्क्लेशासम्भवार्थं वायोर्ऋते तद्योजयेत् । कार्ये कारणोपचारादेव निर्दिष्टम् । वातजां हि छर्दिं मुक्त्वाऽन्यासु छर्दिषु लङ्घनं कार्यम् । लङ्घने कृतेऽप्यनुपशान्तवेगासु तत्र–तासु छर्दिषु, वमनं कार्यम् । बलिनः पुंसो–न दुर्बलस्य, अथवा बहुदोषस्य, तथा प्रततम्–अनारतं, बहु वमतो वमनं योजयेत् ।

आ० र०– ''

**ततो विरेकं क्रमशो हृद्यं मद्यैः फलाम्बुभिः ॥ २ ॥**
**क्षीरैर्वा सह स ह्यूर्ध्वं गतं दोषं नयत्यधः ।**
**शमनं चौषधं रूक्षदुर्बलस्य तदेव तु ॥ ३ ॥**

स०–ततो–वमनादनन्तरं विरेकौषधं क्रमशो–न सहसा,

१ 'अजां वा' स ह्र । २ 'षणाम्' स.मू. । 'षणा' फ । ३ 'कृद्धिपर्स' फ. । ४ 'तां प्रजा' ट । ५ इदं छर्दिहृद्रोगतृष्णाचिकित्सितं चरके चि० २०।२२।२६ अध्यायेषु, सुश्रुते उ० ४३।४८।४९ अध्यायेषु, अष्टाङ्गसङ्ग्रहे चि० ८ अध्याये चास्ति वर्णितम् । ६ 'तं मतम्' अ इ. । ७ 'शामावा' ड. ।

योजयेत्। किम्भूत विरेकद्रव्यम्? हृद्य-हृदयाय हितम्। कै सह? मद्यै-मार्द्वीकादिभि । तथा, फलाम्बुभि-शोभनद्राक्षादिफलनिष्पादितवारिभि । अथवा, क्षीरै-गोक्षीरादिभि सह। किमेव स्यात्? इत्याह-स ह्यूर्ध्वमित्यादि। यस्मात्स-विरेक., ऊर्ध्वं गत दोष छर्द्यनुगमधो नयति। न केवल शोधन-वमन विरेचन वा, तत्र योजयेत्। यावच्छमनमपि यदौषध तदपि तत्र योजयेत्। रूक्षदुर्बलस्य पुन पुसस्तदेव-शमनमेव, योजयेत्, शोधनामहत्वात्।

आ० र०-

परिशुष्कं प्रियं सात्म्यमन्नं लघु च शस्यते।
उपवासस्तथा यूषा रसाः काम्बलिकाः खलाः ॥४॥
शाकानि लेहा भोज्यानि रागषाडवपानकाः।
भक्ष्याः शुष्का विचित्राश्च फलानि स्नानघर्षणम् ५
गन्धाः सुगन्धयो गन्धफलपुष्पान्नपानजाः।
भुक्तमात्रस्य सहसा मुखे शीताम्बुसेचनम् ॥ ६ ॥

स०-तत्र सर्वास्वपि छर्दिषु परिशुष्कादिगुणयुक्तमन्न शस्यते। काम्बलिकादिलक्षण कृतान्नवर्गे कथितम्। तथा फलानि, स्नान-मुद्वर्तनादिरूपेण घर्षणं सुगन्धय-शोभनगन्धा, गन्धद्रव्य-पुष्पफलान्नपानजा शस्यन्ते। अत्र गन्धशब्देन गन्धद्रव्याणि। भुक्तमात्रस्य सहसा-झटितिवाज्ञातसङ्केतस्य, मुखे शीताम्बुसेचनम्। इति सामान्येन छर्दीनामुपक्रमा।

आ० र०-

अधुना विशेषेणाह—

हन्ति मारुतजां छर्दिं सर्पिः पीतं ससैन्धवम्।
किञ्चिदुष्णं विशेषेण सकासहृदयद्रवाम् ॥ ७ ॥
व्योषत्रिलवणाढ्यं वा सिद्धं वा दाडिमाम्बुना।
सशुण्ठीदधिधान्येन शृतं तुल्याम्बु वा पयः ॥ ८ ॥
व्यक्तसैन्धवसर्पिर्वा फलाम्लो वैष्किरो रसः।
स्निग्धं च भोजनं शुण्ठीदधिदाडिमसाधितम् ॥९॥
कोष्णं सलवणं चात्र हितं स्नेहविरेचनम्।

स०-वातजा छर्दिष सर्पि पीतं सैन्धवान्वित किञ्चिदुष्ण विशेषेण हन्ति। पीत-न तु लीढम्, अशक्तत्वात्। तथा चोक्तम् (हृ चि.अ ३।१११)-"आक्रामत्यनिल पीतं" इति।

१ "परिशुष्क-द्रवरहितम्। घर्षण-येन चूर्णेनाङ्गमुद्घृष्यते।" इतीन्दु। २ 'गखाण्डव' स मू। ३ 'शेषमाह' ट। ४ 'न पीत तु' अ इ स स। "तुल्याम्बु वा पय पीत मारुतजा छर्दिं हन्ति।" इतीन्दु। ५ 'म्बुना प' अ इ। ६ "कोष्ण सलवण चेति भोजनविशेषणम्।" इतीन्दुव्याख्यान चिन्त्यम्, सुश्रुत-विरुद्धत्वात्। तथा च सुश्रुत (उ० अ० ४९।२०)-"पिबेद्वा व्यक्तसिन्धूत्थ फलाम्ल वैष्किर रसम्। सुखोष्णलवण चात्र हित स्नेहविरेचनम् ॥" इति।

तस्मात् पीत घृत छर्दिं हन्तीति युक्तम्। अथवा त्रिकटुत्रिलवणोत्कट सर्पि पीत पूर्वोक्तगुणम्। दाडिमाम्बुना वा शुण्ठीदधिधान्येन सह सामान्यकल्पनया सिद्ध घृत पीत पूर्वोक्तगुणम्। जलतुल्य वा पय शृत पूर्ववत्। अथवा, वैष्किर-कुक्कुटादिजो, रसो बहुसपि सैन्धवो मारुतजा छर्दिं हन्ति। किम्भूत? फलेन-दाडिममातुलुङ्गादिना, अम्ल-अम्लता प्रापित। स्निग्ध च भोजन-अशन, [शुण्ठी]दधिदाडिमेन सस्कृत तु हित-छर्दिं हन्ति। अत्र च-मारुतच्छर्दिषि, स्नेहेन-एरण्डतैलादिना, विरेचनं स्नेहविरेचन कोष्ण सलवण च हितम्।

आ० र०··

पित्तजायां विरेकार्थं द्राक्षेक्षुस्वरसैस्त्रिवृत् ॥ १० ॥
सर्पिर्वा तैल्वकं योज्य वृद्ध च श्लेष्मधामगम्।
ऊर्ध्वमेव हरेत् पित्तं स्वादुतिक्तैर्विशुद्धिमान् ॥११॥
पिबेन्मन्थं यवागूं वा लाजैः समधुशर्कराम्।
मुद्गजाङ्गलजैरद्याद्व्यञ्जनैः शालिषष्टिकम् ॥ १२ ॥
मृद्भृष्टलोष्टप्रभवं सुशीतं सलिलं पिबेत्।
मुद्गोशीरकणाधान्यैः सह वा संस्थितं निशाम् ॥१३॥
द्राक्षारसं रसं वेक्षोर्गुडूच्यम्बु पयोऽपि वा।
जम्ब्वाम्रपल्लवोशीरवटशुङ्गावरोहजः ॥ १४ ॥
क्वाथः क्षौद्रयुतः पीतः शीतो वा विनियच्छति।
छर्दिं ज्वरमतीसारं मूर्च्छां तृष्णां च दुर्जयाम् ॥१५॥
धात्रीरसेन वा शीतं पिबेन्मुद्गदलाम्बु वा।
कोलमज्जसितालाजामक्षिकाविट्कणाञ्जनम् ॥१६॥
लिह्यात्क्षौद्रेण पथ्यां वा द्राक्षां वा बदराणि वा।

स०-पित्तजाया छर्द्या विरेकार्थं-विरेकप्रयोजनाय, द्राक्षेक्षुस्वरसैस्त्रिवृद्देया। तैल्वक वा सर्पिर्योज्यम्। पित्तजे छर्दिषि वृद्ध श्लेष्मधामगं पित्तमूर्ध्वमेव हरेत्-वमन तत्र देयमित्यर्थ। कैर्द्रव्यै? स्वादुतिक्तै। आतुरो विशुद्धिमान्-कृतवमनविरेको, लाजैर्मन्थ पिबेत्। किम्भूतम्? समधुशर्करम्, अथवा यवागू लाजै समधुशर्करा पिबेत्। समधुशर्करश्च समधुशर्करा चेति "पुमान् स्त्रिया" इत्येकशेष। तथा, मुद्गजैर्व्यञ्जनैर्जाङ्गलमांसै-(मासजै)श्च व्यञ्जनैः शालिषष्टिकमद्यात्। मृद्भृष्टलोष्टजं सुशीतल जल पिबेत्। मुद्गादिभिर्वा सह निशा स्थित जल पिबेत्। द्राक्षारसादि वा यथायोगं पिबेत्।

जम्ब्वाम्रादिज क्वाथ क्षौद्रान्वितः शीतो वा-शीतकषाय, पीत क्षौद्रयुतश्छर्द्यादीन् हन्ति।

मुद्गदलैः शृतमम्बु मुद्गदलाम्बु, तद्धात्रीरसेन सह पिबेत्। अथवा मुद्गदलानामम्बु मुद्गदलाम्बु, शीत-शीतकषाय, पिबेत्। कोलादिक क्षौद्रेण लिह्यात्। पथ्या वा क्षौद्रेण लिह्यात्। द्राक्षां वा बदराणि वा लिह्यात्।

१ 'कैरै.' स.स। २ 'चेक्षो' अ इ स द्व। ३ 'वटशुङ्गा' अ इ फ। 'वटाश्वत्थाङ्कुरोद्भव.।' स द्व.। ४ 'लाक्षाम' अ इ.। ५ 'द्रसाञ्ज' अ इ।

आ० र०–[पित्तच्छर्द्यौषधमाह–पित्तजायामिति ।] समधुशर्करं लाजमन्थं लाजयवागूं वा समधुशर्कराम् । व्यञ्जनैः–यूषरसाद्यैः ।

शमनमाह–मृद्भृष्टलोष्टप्रभवमिति ।

अन्यदाह–मुद्गोशीरकणाधान्यैरिति ।

शमनचतुष्टयमाह–द्राक्षारसमिति ।

अन्यदाह–जम्ब्वाम्रेति । शीतो वा–शीतकषायो वा ।

अन्यदाह–धात्रीरसेनेति । शीत–चन्दनम् ।

अन्यदाह–मुद्गदलाम्बु वेति । मुद्गदलाम्बु–मुद्गशकलक्काथम् ।

अन्यदाह–कोलमज्जेति ।

लेहत्रयमाह–क्षौद्रेणेति । सङ्ग्रहे (चि अ ८)–"कोलास्थिमज्जास्रोतोजलाजोत्पलरजांसि वा । पिबेच्छीताम्बुना शालिस्वर्णगैरिकजं रजः ॥ पिष्टं[1] वा चन्दनद्राक्षामांसीसेव्याम्बुगैरिकम् । शालितण्डुलतोयेन पिबेद्वा ससितामधु ॥ मधूकमधुकद्राक्षाकमलामलकाम्बुदम् । ससारिवापरूषाख्य[2] मूर्वां वा माक्षिकान्विताम् ॥ मधुकं[3] सात्मगुप्तं वा शीतं धात्रीरसेन वा ।" इति ।

**कफजायां वमेन्निम्बकृष्णापिण्डीतसर्षपैः ॥ १७ ॥**
**युक्तेन कोष्णतोयेन, दुर्बलं चोपवासयेत् ।**
**आरग्वधादिनिर्यूहं[4] शीतं क्षौद्रयुतं पिबेत् ॥ १८ ॥**
**मन्थान् यवैर्वा बहुशश्छर्दिघ्नौषधभावितैः ।**
**कफघ्नमन्नं हृद्यं च रागाः सार्जकभूस्तृणाः ॥ १९ ॥**
**लीढं मनःशिलाकृष्णामरिचं बीजपूरकात् ।**
**स्वरसेन कपित्थस्य[5] सक्षौद्रेण वमिं जयेत् ॥ २० ॥**
**खादेत्कपित्थं सव्योषं, मधुना वा दुरालभाम् ।**
**लिह्यान्मरिचचोचैलागोशकृद्रसमाक्षिकम्[6] ॥ २१ ॥**

स०–कफजायां छर्द्यां निम्बादिभिर्युक्तेन कोष्णजलेन वमेत् । दुर्बलं च नरमुपवासयेत् । आरग्वधादिनिर्यूहं शीतं क्षौद्रान्वितं पिबेत् । बहून् वारान् छर्दिघ्नौषधभावितैर्यवैर्मन्थान् पिबेत् । कफघ्नमन्नं हृद्यं च भुक्तं सद्वमिं जयेत् । रागाः सकुठेरकभूस्तृणा वमिं जयन्ति पीताः । मनःशिलादिकं बीजपूरकरसेन सक्षौद्रेण वमिं जयेत् । कपित्थस्य वा रसेन माक्षिकान्वितेन मनःशिलादिकं लीढं वमिं जयेत् । कपित्थं वा सत्रिकटुकं मधुना खादेत् । धन्वयवासं वा मधुना लिह्यात् ।

आ० र०–कफच्छर्द्यौषधमाह–कफजायामिति । पिण्डीतो–मदनः ।

उपवासमाह–दुर्बलं चोपवासयेदिति । दुर्बल–वमनासमर्थम् ।

1 'ष्टं चन्दनद्राक्षाभ्यां मां' फ । 2 'षाख्य मू' स स. । 3 'धुकमात्म' स मू । 4 'धादेर्निर्यू' स स । 5 'पित्थाच्च स' सं इ. । 6 श्लोकार्धमिदं अ.इ फ.पुस्तकेषूपलब्धं हेमाद्रिसम्मतं च ।

शमनमाह–आरग्वधादिनिर्यूहमिति । सङ्ग्रहे (चि अ ८)–"त्रिफलाकणचव्याद्वा पेया पत्रैः करञ्जजैः ।" इति । त्रिफलादिभ्यः क्काथः सक्षौद्रम्, करञ्जपत्रपेया वा सक्षौद्राम् ।

अन्यदाह–मन्थान् यवैर्वेति ।

भोजनमाह–कफघ्नमन्नमिति ।

शमनमाह–लीढमिति ।

अन्यदाह–खादेदिति ।

अन्यदाह–मधुना वेति ।

अन्यदाह–लिह्यादिति । चोचं–लवङ्गत्वक् । सङ्ग्रहे (चि.अ ८)–"समुस्तां मधुना शृङ्गीं कोलाम्लं[1] वा सजाम्बवम् । तद्वद्विडङ्गत्रिफलं विडङ्गपरिपेलवम् ॥" इति । योगरत्ने–"पिष्ट्वा धात्रीफलं लाक्षां[2] शर्करां च पलोन्मिताम् । दत्वा मधु पलं चात्र[3] कुडवं सलिलस्य च ॥ वाससा गालितं पीतं हन्ति छर्दिं त्रिदोषजाम् ॥ सारिवोशीरमधुककुस्तुम्बरुफलानि च । युक्त्या श्राव्यजलं देयं मधुना छर्दिनाशनम् ॥ कृतं गुडूच्या विधिवत्कषायं हिमसंज्ञितम् । तिसृष्वपि भवेत्पथ्यं माक्षिकेण समन्वितम् ॥ कपित्थरससंयुक्तां पिप्पलीं माक्षिकान्विताम् । मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्यः प्रतिमुच्यते ॥ धात्रीमुस्तकचूर्णं तु मधुना परिमिश्रितम् । प्रलिहन् प्रातरुत्थाय छर्दते सुखमाप्नुयात् ॥ प्रियङ्गुचन्दनोशीरशतपुष्पायवैः समैः । कल्कं समुस्तकं लिह्याच्छर्दिघ्नं मधुसंयुतम् ॥ कुष्ठं नागरसम्मिश्रं लिह्याच्चूर्णं समं ततः । प्रातरुत्थाय तोयेन छर्द्यामयहरं परम् ॥ यष्ट्याह्वं चन्दनोपेतं सम्यक्क्षीरप्रपेषितम् । तेनैवालोड्य पातव्यं रुधिरच्छर्दिनाशनम् ॥ मातुलुङ्गरसो लाजाशर्करामधुसंयुतः । पिप्पलीचूर्णसंयुक्तः श्रेष्ठश्छर्दिनिवारणः ॥ जात्या[4] रसः कपित्थस्य पिप्पलीमरिचान्वितः । क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्दिमुल्बणाम् ॥ सौवर्चलमजाज्यश्च शर्करा मरिचानि च । क्षौद्रेण[5] संयुतं चूर्णं श्रेष्ठं छर्दिनिवारणम्[6] ॥ विदलानि च मुद्गानां पिप्पल्यश्चैव कुट्टिताः । प्रस्रुतं[7] सलिलं पेयं छर्द्यां मधुसमन्वितम् । जम्बाम्रसारो मुस्तं च माचीद्राक्षा (?) च साधयेत् । कषायो मधुसंयुक्तः पेयश्छर्दितृषापहः ॥ फल्गुप्रवालं[8] मरिचं मधुकं नीलमुत्पलम् । क्षुण्णं[9] शीतकषायोऽयं

1 'बालाम्लं वा सदाडिमम्' फ । 2 'लाजा' अ इ । 'द्राक्षा' वङ्ग चक्र । 3 'चैव' वङ्ग । 4 "जातीशब्देनेह धात्री गृह्यते, अनुलोमकत्वाच्छीतवीर्यत्वाच्च । चरकेऽपि (चि अ, ७।६८)–'लिलीहकप्रयोगो रसेन जात्या समाक्षिकः परमः । सप्तदशकुष्ठघाती माक्षिकधातुश्च मूत्रेण ॥' इत्यत्र योगे जाती–धात्री, इति जैज्जटेन व्याख्यातम् । द्रव्यावल्यामभिधानेऽप्यामलकपर्याये जातीशब्दः पठ्यते ।" इति सिद्धसारे श्रीकण्ठदत्तः । 5 'जाजी च श' सि । 6 'युक्तोऽयं मधुना लेहः श्रेष्ठश्छर्दिनिबर्हणः ।" सि वङ्ग । 7 'आशु तत्सलिलं पेयं समधु छर्दिनाशनम् ।' वङ्ग. । 8 'लं छिन्नाया म' वङ्ग. । 9 'क्षुण्णैः शी' वङ्ग. ।

तृष्णाच्छर्दिनिवारण ॥ एतैरेवौषधै सिद्धा लाजपेयां पिबे न्नर । सशर्करां मधुयुतां तृष्णाच्छर्दिनिवारिणीम् ॥ अर्धोदक निषेवेत माक्षिकेणाथवा पय । तृष्णाछर्दिप्रशमन जाङ्गल रसमेव वा ॥ क्षीरिणा चैव वृक्षाणा शुङ्गान् लिह्यात्सुकुट्टि तान् । पिप्पलीमधुसयुक्तान् तृष्णाछर्दिनिवारणान् ॥" इति । [सिद्धसारे(छर्द्यधिकारे श्लो २२) ]–"लाजाकपित्थमधुमाग धिकोषणाना क्षौद्राभयात्रिकटुधान्यकजीरकाणाम् । पथ्या मृतामरिचमाक्षिकपिप्पलीनां लेहास्त्रय सकलवम्यरुचि प्रशान्त्यै ॥ एलालवङ्गगजकेसरकोलमज्जालाजाप्रियङ्गुघन चन्दनपिप्पलीनाम् । चूर्णानि माक्षिकसितासहितानि लीढ्वा[1] छर्दिं निहन्ति कफमारुतपित्तजाताम् ।" "लाजसैन्धवसयुक्त-[3] माम्रबीज समालिहेत् । मधुना छर्दिनाशाय क्षिप्र सुख मवाप्नुयात् ॥" (वङ्ग छर्द्य श्लो ४९)–"अश्वत्थवल्कल शुष्क दग्ध्वा निर्वापित जले । तज्जल पानमात्रेण छर्दिं जयति दुस्तराम् ॥" "विजयातिविषाक्वाथश्छर्दिहृच्छूलनाशन ॥" (वङ्ग छर्द्य श्लो ५७)–"आम्रास्थिबिल्वनिर्यूह पीत सम‍ु शर्कर । निहन्त्याच्छर्द्यतीसार वैश्वानर इवाहुतिम् ॥" इति ।

**अनुकूलोपचारेण याति द्विष्टार्थजा शमम् ।**

स०–द्विष्टार्थजा छर्दिर्मनसोऽनुकूलोपचारेण शाम्यति ।

आ० र०–द्विष्टार्थछर्द्यौषधमाह–अनुकूलोपचारेणेति ।

**कृमिजा कृमिहृद्रोगगदितैश्च भिषग्जितैः ॥ २२ ॥**
**यथास्वं परिशेषाश्च, तत्कृताश्च तथाऽऽमयाः ।**[4][5]

स०–कृमिभ्यो जाता छर्दि कृमिहृद्रोगगदितैरौषधै शम याति । न केवल कृमिजा छर्दिरेव शम याति । यथास्व परि शेषा अप्यामया –कृमिहृद्रोगकृता , तेऽपि कृमिहृद्रोगगदितै-र्भेषजै शम यान्ति ।

आ० र०–कृमिच्छर्द्यौषधमाह–क्रिमिजा इति ।

तृष्णा(शेष)च्छर्द्यामयादीनामौषधमाह–यथास्व परिशे षाश्चेति । यथास्व–कारणभूतरोगानुसारेण अनुबन्धिदोषानु-सारेण वा । परिशेषा –उक्तेभ्योन्या ।

छर्द्युपद्रवाणामौषधमाह–तत्कृताश्चेति । तत्कृता.–छर्दि-कृता. । तथा–यथास्वम् ।

**छर्दिप्रसङ्गेन हि मातरिश्वा**
**धातुक्षयात्कोपमुपैत्यवश्यम् ।**
**कुर्यादतोऽस्मिन् वमनातियोग-**
**प्रोक्तं विधिं स्तम्भनबृंहणीयम् ॥ २३ ॥**

**सर्पिर्गुडा मांसरसा घृतानि**[1]
**कल्याणकत्र्यूषणजीवनानि ।**
**पयांसि पथ्योपहितानि लेहा-**
**श्छर्दिं प्रसक्ता प्रशमं नयन्ति ॥ २४ ॥**

**इति छर्दिचिकित्सितम् ।**

स०–हि–यस्मात्, छर्दिप्रसङ्गेन–अनुबन्धेन, यो धातुक्षय तस्माद्धेतोर्मातरिश्वा अवश्य कोपमायाति । अतो हेतोर्वमनाति-योगप्रोक्त विधिं स्तम्भन बृहण च कुर्यात्, न पुनस्तदुक्तमन्यं विधिम् । इन्द्रवज्रावृत्तम् । तथा, सर्पिर्गुडादयो दोषदूष्यानुरो-धतो यथाकालमुपयुक्ताश्छर्दिं प्रसक्ता शमयन्ति । उपजाति-वृत्तम् । तन्त्रान्तरे(?)चोक्तम् (हृ क अ ३।२५)–"अञ्जन चन्दनोशीरमज्जासृक्शर्करोदकम् । लाजचूर्णे पिबेन्मन्थमति-योगहर परम् ॥" इति ।

आ० र०–प्रसक्तच्छर्द्यौषधमाह–छर्दिप्रसङ्गेनेति । सङ्ग्रहे (चि अ ७)–"त्वरमाणो जयेच्छर्दिं प्रसक्तामनुबन्धनीम् । कोष्ठाश्रया महामर्मपीडाकरतरा हि सा ॥ न चान्नेन विना कायस्तन्मयो वर्ततेऽपि च । धातुक्षयोऽतिवमथौ समीरण-समीरणात् ॥ नियत जायते तस्माद्धुतमत्र प्रयोजयेत् । धान्वन्तर त्र्यूषण वा दोषदेहानुरोधत ॥" इति ।[2][3]

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
छर्दिप्रकरण नाम सामस्त्येन निरूपितम् ॥

छर्दिचिकित्सितादनन्तर हृद्रोगसाधनमुच्यते, हृद्रोगशब्द-श्रवणसम्बन्धात् ।

## अथ हृद्रोगचिकित्सितम् ।

**हृद्रोगे वातजे तैलं मस्तुसौवीरतक्रवत् ॥ २५ ॥**
**पिबेत्सुखोष्णं सबिडं गुल्मानाहार्तिजिच्च तत् ।**

स०–वातजे हृद्रोगे तैल सुखोष्ण–किञ्चिदुष्ण, पिबेत् । किम्भूतम् ? मस्तुसौवीरतक्राणि विद्यन्ते यस्मिंस्तदेवम् । तथा सह बिडलवणेन सबिड, गुल्मादिजित् ।

आ० र०–अथ हृद्रोगचिकित्सितम् । तत्र वातजौषध माह–हृद्रोग इति । सौवीर–काञ्जिकम् । मस्त्वादित्रय द्र-व्यम् । बिड कल्क. ।

**तैलं च लवणै. सिद्धं समूत्राम्लं तथागुणम् ॥२६॥**

स०–लवणै –पञ्चभि. सैन्धवादिभि , गोमूत्रेण काञ्जिकेन च तैल सामान्यपरिभाषया पक्व तथागुण–गुल्मादिजित् ।

आ० र०–अन्यदाह–तैलमिति । अम्ल–काञ्जिकम् ।

**बिल्वं रास्नां यवान् कोलं देवदारुं पुनर्नवाम् ।**
**कुलत्थान् पञ्चमूलं च पक्त्वा तस्मिन्पचेज्जले ॥२७॥**
**तैलं तन्नावने पाने बस्तौ च विनियोजयेत् ।**

१ 'रा समाक्षीका तृ' वङ्ग. । २ 'चूर्णं सितामधुयुत मनुजो विलिह्य छ' वङ्ग । ३ लाजसैन्धवेति श्लोको विजयेति श्लोकार्धं च मुद्रितवङ्गसेनसिद्धयोगयोर्नोपलभ्यते । ४ "परिशेषाश्छर्दय –तृष्णा-मदौहृदजा." इतीन्दु । ५ 'योगे' इ. ।

१ 'गुडो' अ इ.फ. । २ 'श्रयमहा' स.स. । ३ 'द्रुत तत्र' स सं. ।

स०-बिल्वादीनि जले पक्त्वा तस्मिन् जले क्काथीभूते तैलं पचेत् । तत्तैलं नस्ये पानेऽनुवासने च विनियोजयेत् । तच्च पूर्वसमम् ।

आ० र०-अन्यदाह-बिल्वमिति ।

**शुण्ठीवयस्थालवणकायस्थाहिङ्गुपौष्करैः ॥ २८ ॥**
**पथ्यया च शृतं पार्श्वहृद्रुजागुल्मजिद्धृतम् ।**

स०-शुण्ठ्यादिभिः पक्वं च घृतं पार्श्वहृद्रुजादिजित् । वयस्था-आमलकी । कायस्था-काकोली ।

आ० र०-घृतमाह-शुण्ठीकयस्थालवणवयस्थाहिङ्गुपौष्करैरिति । कयस्था-तुलसी । वयस्था-गुडूची ।

**सौवर्चलस्य द्विपले पथ्यापञ्चाशदन्विते ॥ २९ ॥**
**घृतस्य साधितः प्रस्थो हृद्रोगश्वासगुल्मजित् ।**

स०-सौवर्चलस्य पलद्वये पथ्यापञ्चाशद्युक्ते साधितो घृतप्रस्थो हृद्रोगादिजित् ।

आ० र०-अन्यदाह-सौवर्चलस्येति ।

**दाडिमं कृष्णलवणं शुण्ठी हिङ्ग्वम्लवेतसम् ॥ ३० ॥**
**अपतन्त्रकहृद्रोगश्वासघ्नं चूर्णमुत्तमम् ।**

आ० र०-चूर्णमाह-दाडिममिति । अपतन्त्रको-वातव्याधिनिदानोक्तः ।

**पुष्कराह्वशठीशुण्ठीबीजपूरजटाभयाः ॥ ३१ ॥**
**पीताः कल्कीकृताः क्षारघृताम्ललवणैर्युताः ।**
**विकर्तिकाशूलहराः**

स०-पुष्कराह्वादयः कल्कीकृताः-पिष्टाः, तथा घृतादियुक्ताः पीता विकर्तिकाशूलहराः । विकर्तिका-हृदयस्यावर्तच्छेदनिका इव रुग्विशेषः । हृद्रोगप्रसङ्गादेतच्चिकित्साऽप्युक्ता ।

आ० र०-अन्यदाह-पुष्कराह्वेति । विकर्तिकाशूलं-हृदयच्छेदनमिव ।

**क्वाथः कोष्णश्च तद्गुणः ॥ ३२ ॥**
**यवानीलवणक्षारवचाजाज्यौषधैः कृतः ।**
**सपूतिदारुबीजाह्वपलाशशठिपौष्करैः ॥ ३३ ॥**
**(यवक्षारो यवानी च पिबेदुष्णेन वारिणा ।**
**एतेन वातजं शूलं गुल्मं चैव चिरोत्थितम् ॥ १ ॥**
**भिद्यते सप्तरात्रेण पवनेन यथा घनः । )**

स०-क्वाथश्च कोष्णो यवान्यादिभिर्देवदारुसहितैस्तद्गुणो-विकर्तिकाशूलहरः । औषधं-शुण्ठी । बीजाह्व-बीजसारम्, बीजपूरकमित्यन्ये ।

१ 'ण्ठीकयस्थालवणवयस्था' फ हे । २ 'ल्महृत्' फ । 'ल्मनुत्' स इ । ३ श्लोकोऽयं अ इ फ पुस्तकेषूपलब्धो हेमाद्रिसम्मतश्च । ४ 'तस' फ । ५ 'सपीतदारु' स स । 'सपू' हे । ६ 'ह्वविजयाश' अ । ७ अ इ पुस्तकयोः समुपलब्धोऽयं सार्धश्लोकः । ८ 'रुसयुतैः' इति क्वचित् ।

आ० र०-क्वाथमाह-क्वाथ इति । औषध-शुण्ठी । पूती-करञ्जः । बीजाह्वो-बीजपूरः । यवान्यादिभिः सह पेयः । स-क्वाथः, पूत्यादिभिः कृतः । वङ्गसेने (हृदयरोगाधिकारे श्लो १०)-"क्वाथः कृतः पौष्करमातुलुङ्गपलाशपूतीकशठीसुराह्वैः । सनागराजाजिवचायवानीभिः सक्षारः उष्णो लवणश्च पेयः ॥" इति वचनमूलेयं व्याख्या ।

**पञ्चकोलशठीपथ्यागुडबीजाह्वपौष्करम् ।**
**वारुणीकल्कितं भृष्टं यमके लवणान्वितम् ॥ ३४ ॥**
**हृत्पार्श्वयोनिशूलेषु खादेद्गुल्मोदरेषु च ।**

स०-पञ्चकोलादिकं वारुण्या-प्रसन्नया सुरया, कल्कितं-पिष्टं, यमके भृष्टं सैन्धवयुतं हृदादिशूलेषु गुल्मादिषु च खादेत् ।

आ० र०-चूर्णमाह-पञ्चकोलेति ।

**स्निग्धाश्चेह हिताः स्वेदाः संस्कृतानि घृतानि च ॥ ३५**

स०-इह-वातजे हृद्रोगे, स्वेदाश्च स्निग्धा हिताः । घृतानि पक्वानि वा (च) ।

आ० र०-स्नेहस्वेदावाह-स्निग्धाश्चेति । घृतानि स्नेहनार्थम् ।

**लघुना पञ्चमूलेन शुण्ठ्या वा साधितं जलम् ।**
**वारुणीदधिमण्डं वा धान्याम्लं वा पिबेत्तृषि ॥ ३६ ॥**

स०-तृषि सत्यां ह्रस्वेन पञ्चमूलेन शुण्ठ्या वा साधितं जलं पिबेत् । वारुणीमण्डं वा दधिमण्डं वा पिबेत् ।

आ० र०-पानपञ्चकमाह-लघुनेति ।

**सायामस्तम्भशूलामे हृदि मारुतदूषिते ।**
**क्रियैषा**

स०-आयामः-आक्षेपः, सह आयामादिभिर्वर्तते यद्धृदयं तस्मिंस्तथाविधे हृदि तथा मारुतदूषिते सति क्रियैषा-चिकित्सेयं पूर्वोक्ता ।

आ० र०-उक्तानामौषधानां विषयमाह-सायामस्तम्भशूलाम इति । आयामः-आकर्षणमिव ।

**सद्रवायामप्रमोहे तु हिता रसाः ॥ ३७ ॥**
**स्नेहाढ्यास्तित्तिरिक्रौञ्चशिखिवर्तकदक्षजाः ।**

स०-सद्रवायामप्रमोहे पुनः हृदि मारुतदूषिते रसास्तित्तिर्यादिजाः । स्नेहाढ्याः-बहुस्नेहाः, हिताः ।

आ० र०-विषयान्तरभेषजमाह-सद्रवायामप्रमोहे त्विति ।

**बलातैलं सहृद्रोगैः पिबेद्वा सुकुमारकम् ॥ ३८ ॥**
**यष्ट्याह्वशतपाकं वा महास्नेहं तथोत्तमम् ।**

स०-सहृद्रोगो नरो बलातैलं पिबेत् । सुकुमारकं वा-प्रमे-

१ 'वानी स० लवणेन पेयः' वङ्ग । २ 'तु' अ इ । ३ 'रुणीद' इ । 'रुणद' फ । ४ 'ह्वाद्यास्ति' फ. अरुण. । ५ 'द्रोगी' स स. । ६ सुकुमारकं प्रमेहोक्तमिति यदुक्तमरुणदत्तेन तदयुक्तं प्रतिभाति, सुकुमारकस्य वृद्धिचिकित्सायामुक्तत्वात् ।

होक्त घृत, यष्ट्याह्व च तच्छतपाक च यष्ट्याह्वशतपाकं-शत कुल पक्व तत्तैल वातशोणितोक्त (हृ चि अ.२२।४१) पिबेत्। महास्नेह तथोत्तम पिबेत् ।

**आ० र०-स्नेहचतुष्कमाह-बलातैलमिति ।** [1]बलातैल-शारीरके गर्भव्यापद्युक्तम् (हृ शा अ २।४७), वातरक्तोक्त वा बलाकषायकल्काभ्या शत सहस्र वा वाराभ्यक्तम् (हृ. चि अ २२।४५)। सुकुमारक-वृद्ध्युक्त घृतैरण्डतैलयमकम् (हृ चि अ १३।४१), तैलमेव वा तत्रान्तरोक्तराजयक्ष्मणि सङ्गृहीतम् । यष्ट्याह्वशतपाक-यष्टीमधुकल्ककषायाभ्यां शत वारान् पक्वम् । उत्तम महास्नेह-वातव्याध्युक्तमपतत्रके (हृ चि. अ. २१।२८) ।

तदेव चाह—

**रास्नाजीवकजीवन्तीबलाव्याघ्रीपुनर्नवैः ॥ ३९ ॥**
**भार्गीस्थिरावचाव्योषैर्महास्नेहं विपाचयेत् ।**
**दधिपादं तथाम्लैश्च लाभतः स निषेवितः ॥ ४० ॥**
**तर्पणो बृंहणो बल्यो वातहृद्रोगनाशन· ।**

**स०**-रास्नादिभि कल्कीकृतैर्महास्नेह दधिपाद विपाचयेत्। [2]दधिपादं च दध्न पाद -चतुर्थभागप्रमाणो, यस्मिंस्तथाभूतम्। तथा, अम्लै -काञ्जिकादिभि , लाभतो-यथालाभम् । अनयैव कल्पनया स -महास्नेहो, निषेवितस्तर्पणो बृहणो बल्यो वात हृद्रोगघ्नश्च स्यात् ।

**आ० र०-महास्नेहान्तरमाह-रास्नाजीवकेति । दधिपाद-पादांशेन दध्ना युक्तम् ।**

**दीप्तेऽग्नौ सद्रवायामे हृद्रोगे वातिके हितम् ॥४१॥**
**क्षीरं दधि गुड· सर्पिरौदकानूपमासिषम् ।**

**स०**-दीप्तेऽग्नौ सति वातहृद्रोगे सद्रवायामे सह द्रवेण-कम्पनेन, आयामेन च वर्तते यस्तस्मिंस्तथाभूते क्षीरादि हितम्। औदकामिष-मत्स्यादिमासम्, आनूपामिष-ग्राम्यवराहादिज मासम्।

**आ० र०-विषयान्तरभेषजमाह-दीप्तेऽग्नाविति ।**

**एतान्येव च वर्ज्यानि हृद्रोगेषु चतुर्ष्वपि ॥ ४२ ॥**
**शेषेषु, स्तम्भजाड्यामसयुक्तेऽपि च वातिके ।**

**स०**-वातहृद्रोग मुक्त्वाऽन्ये[3]षु-शेषे[4]षु, चतुर्षु हृद्रोगेष्वेतानि-क्षीरादीनि, वर्ज्यानि-न प्रयोज्यानि । न केवलमेष्वेतानि वर्ज्यानि, यावत्स्तम्भजाड्यामसयुक्ते वातिकेऽपि हृद्रोग एतानि वर्ज्यानि ।

**आ० र०-हृद्रोगान्तरे क्षीरादीनि निषेधति-एतान्येवेति ।**

**कफानुबन्धे तस्मिंस्तु रूक्षोष्णामाचरेत्क्रियाम् ४३**

**स०**-तस्मिन्-वातिके हृद्रोगे, कफानुबन्धे तु सति रूक्षोष्णा क्रिया सेवेत ।

**आ० र०-सकफे वातहृद्रोगे भेषजमाह-कफानुबन्ध इति ।** योगरत्ने-"नागर वा पिबेदुष्ण कषाय वह्निवर्धनम्। कासश्वासानिलहर शूलहृद्रोगनाशनम् ॥ पाठा वचा यवक्षारमभयामम्लवेतसम् । दुरालभा चित्रक च त्र्यूषणं लवणत्रयम् ॥ शठी पुष्करमूल च तित्तिडीक सदाडिमम् । मातुलुङ्गस्य मूलानि सूक्ष्मचूर्णानि कारयेत् ॥ सुखोदकेन मद्यैर्वा चूर्णान्येतानि पाचयेत् । अर्श·शूल सहृद्रोग गुल्मं चापि व्यपोहति ॥" इति । सङ्ग्रहे ( चि. अ ८ )-"त्र्यू[1]षण त्रिफला पाठा [2]मधूक मधुक त्रुटी । पञ्चमूल लघु बले मेदे [3]वृद्धि· शतावरी ॥ [4]कण्डूकरी तामलकी जीव[5]कश्चाक्षसम्मितै । तै पचेत्सर्पिष प्रस्थ दध्न प्रस्थेन माहिषात् ॥ युक्त सिद्धं च मधुना तन्निहन्ति निषेवितम् । हृत्पा[6]ण्डुग्रहणीपार्श्वश्वासकासहलीमकान् ॥" इति ।

**पैत्ते द्राक्षेक्षुनिर्यासिताक्षौद्रपरूषकैः ।**
**युक्तो विरे[8]को हृद्यः स्यात्क्रमः शुद्धे च पित्तहा ४४**
**क्षतपित्तज्वरोक्तं च बाह्यान्तः परिमार्जनम् ।**
**कट्वीमधुककल्कं च पिबेत्ससितमम्भसा ॥ ४५ ॥**

**स०**-पैत्ते हृद्रोगे द्राक्षेक्षुनिर्यासादियुक्तो विरेको हृद्य स्यात् । शुद्धे सत्यनन्तर क्रम पित्तहा स्यात्, स तु पेयादिक कार्य । क्षते पित्तज्वरे च या बहिरन्तश्च शुद्धिरुक्ता सा चात्र कार्या । कटुकीमधुककल्क शर्करान्वितमम्भसा पिबेत् ।

**आ० र०-पित्तहृद्रोगस्यौषधमाह-पैत्ते इति । विरेच -त्रिवृच्चूर्ण ।**

विरेचकानन्तर पेयादिक्रममाह-**क्रमः शुद्धे च पित्तहेति ।** पित्तहा-पित्तघ्नै कृत· ।

अतिदेशमाह-क्षतपित्तज्वरोक्त चेति । परिमार्जन-शोधनम्, बाह्य परिषेकेण, अन्तर्विरेकेण ।

औषधान्तरमाह-कट्वीमधुककल्कमिति ।

**श्रेयसीशर्कराद्राक्षाजीवकर्षभकोत्पलैः ।**
**बलाखर्जूरकाकोलीमेदायुग्मैश्च साधितम् ॥ ४६ ॥**
**सक्षीरं माहिषं सर्पिः पित्तहृद्रोगनाशनम् ।**

**स०**-श्रेयस्यादिभि साधित क्षीरान्वित माहिष सर्पि पित्तहृद्रोगघ्नम् । श्रेयसी-हस्तिपिप्पली । माहिषघृतस्यात्र निर्देश शीततमत्वात् ।

**आ० र०-घृतमाह-श्रेयसीति । श्रेयसी-गजपिप्पली ।**

---

१ बलातैल-वातव्याध्युक्त (हृ चि अ.२१।७२) मपि ग्राह्यम् । २ 'दधि पाद –' ड । ३ 'न्येषु चतु' ट । ४ 'षेषु च रोगेषु चतु' ड. ।

१ 'षणत्रि' स.स । २ 'मसूर मधुक शटी' फ. । ३ 'ऋद्धि' स द्द । ४ 'कण्टकारी' स मू. । ५ 'वक चाक्ष' स द्द. । ६ 'त्पा श्वग्रहणीरोगश्वा' स मू. । ७ 'णीदोषश्वा' स स. । ८ 'विरेचो' फ हे.।

**प्रपौण्डरीकमधुकबिसग्रन्थिकसेरुकाः ॥ ४७ ॥**
**सशुण्ठीशैवलास्ताभिः सक्षीरं विपचेद्धृतम् ।**
**शीतं समधु तच्चेष्टं स्वादुवर्गकृतं च यत् ॥ ४८ ॥**
**बस्तिं च दद्यात्सक्षौद्रं तैलं मधुकसाधितम् ।**

स०–प्रपौण्डरीकादिभि क्षीरयुत पक्व घृत शीतीभूत सन्माक्षिकोपेत तच्चेष्टमत्र रोगे । स्वादुवर्गेण–द्राक्षादिना, यच्च कृत तच्च हितम् । तथा, बस्ति मधुकसाधित–मधुकेन पक्व, माक्षिकान्वित दद्यात् ।

आ० र०–घृतान्तरमाह–प्रपौण्डरीकेति । शैवल.–शैवाल. ।

घृतान्तरमाह–स्वादुवर्गकृत च यदिति । स्वादुवर्गो–रसेस्कन्धेपूक्त (ह सू अ १०।२२) ।

बस्तिमाह–बस्ति चेति । बस्ति–अनुवासनम् । वङ्गसेने (हृदयरोगा श्लो १८)–"अर्जुनस्य त्वचा सिद्ध क्षीर योज्य हृदामये । सितया पञ्चमूल्या वा बलया मधुकेन वा ॥ स्थिरादिकल्कवत्सर्पि· क्षीरेणेक्षुरसेन वा । द्राक्षारसेन वा पक्व पित्तहृद्रोगनाशनम् ॥" इति ।

**कफोद्भवे वमेत्स्विन्न· पिचुमन्दवचाम्भसा ॥ ४९ ॥**
**कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशनः ।**

स०–कफोद्भवे हृद्रोगे स्विन्नो निम्बवचाभ्या क्वथितेन जलेन वमेत् कुलत्थजाङ्गलादिरस(लरसादि)भुक् ।

आ० र०–कफहृद्रोगौषधमाह–कफोद्भव इति ।

**पिबेच्चूर्णं वचाहिङ्गुलवणद्वयनागरात् ॥ ५० ॥**
**सैलायवानककणायवक्षारात्सुखाम्बुना ।**[3]
**फलधान्याम्लकौलत्थयूषमूत्रासवैस्तथा ॥ ५१ ॥**
**पुष्कराह्वाभयाशुण्ठीशठीरास्नावचाकणात् ।**[4][5]
**क्वाथं तथाऽभयाशुण्ठीमाद्रीपीतद्रुकट्फलात् ॥५२॥**

स०–चूर्णं वचादिभ्य उष्णोदकेन पिबेत् । यवानको–यवानीभेद । तथा, फलधान्याम्लादिभिर्वैकतरेण(मेन) पिबेत् । तथा, पुष्करादेश्चूर्णं पूर्वोक्तैरुष्णा[म्ब्वा]दिभि पिबेत् । तथा, हरीतक्यादे क्वाथं पिबेत् ।

आ० र०–चूर्णमाह–पिबेच्चूर्णमिति । सशब्द सहार्थे । यवानक –अजमोदा । फलाम्ल धान्याम्ल च । षण्णां द्रवाणा प्रकृत्यादिवशाद्विषय[वि]भाग ।

क्वाथमाह–पुष्कराह्वेति ।

क्वाथान्तरमाह–तथेति । माद्री–अतिविषा । पीतद्रु–दार्वी ।

**क्वाथे रोहितकाश्वत्थखदिरोदुम्बरार्जुने ।**[1]
**सपलाशवटे व्योपत्रिवृच्चूर्णान्विते कृतः ॥ ५३ ॥**
**सुखोदकानुपानश्च लेहः कफविकारहा ।**

स०–रोहितकादीनां क्वाथे त्रिकटुत्रिवृच्चूर्णयुते कृतो लेह उष्णोदकानुपान कफविकारहा । अर्शश्चिकित्सितोक्त (हृ चि अ. ८।१०४)–"तुला दिव्याम्भसि पचेत्" इति प्रमाणानुसारेण परिमाणमत्र निरूपितम् ।

आ० र०–लेहमाह–क्वाथ इति । रोहितकादीनां सप्ताना क्वाथ । तस्य पुन पाकाद्घनीभावसमये चूर्णप्रक्षेप ।

**श्लेष्मगुल्मोदिताज्यानि क्षारांश्च विविधान् पिबेत् ॥**
**प्रयोजयेच्छिलाह्वं वा ब्राह्मं वाँऽत्र रसायनम् ।**
**तथाऽऽमलकलेहं वा प्राशं वाऽगस्त्यनिर्मितम् ॥५५॥**

स०–कफहृद्रोगे, श्लेष्मगुल्मे यानि गदितान्याज्यानि–सर्पींषि, तैत्रैवोक्तान् क्षारांश्च नानाविधास्तान् पिबेत् । शिलाजतु प्रयोजयेत् । वा ब्राह्म रसायन–रसायनाध्यायोक्तम् (हृ उ अ ३९।१५) । तथा, आमलकलेह वाँ–रसायनोक्तमेव च्यवनप्राशाख्यम् (हृ उ अ ३९।३३) । अथवा, प्राँश–लेह, अगस्त्यनिर्मित कासचिकित्सितोक्त (हृ चि अ ३।१२७), प्रयोजयेत् ।

आ० र०–अतिदिशति–श्लेष्मगुल्मोदिताज्यानीति । शिलाह्व–शिलाजतुरसायनम् (हृ उ अ ३९।१३७), ब्राह्म–एर्काशनम् (हृ उ अ ३९।१५), आमलकलेह–च्यवनप्राशम् (हृ उ अ ३९।३३), एतानि रसायनोक्तानि । अगस्त्यनिर्मित–कासोक्तम् (हृ चि अ ३।१२७) । वङ्गसेने (हृदयरोगा श्लो २८)–"सूक्ष्मैला मागधीमूल प्रलीढं हविषा सह । नाशयत्याशु हृद्रोग गुल्मानपि विशेषत ॥ फलतैल विदध्याच्च बस्तौ बस्तिविशारद । 'फलैरष्टगुणेऽथाम्ले सिद्धमन्यासन कर्फे (?) ।' इत्युक्त फलतैलम् । 'हिङ्गुग्रगन्धाबिडविश्वकृष्णाकुष्ठाभयाचित्रकयावशूकम् । पिबेत्ससौवर्चलपुष्कराह्व यवाम्भसा शूलहृदामयघ्नम् ॥ दशमूलकषाय तु लवणक्षारयोजितम् । कास श्वाँस सहृद्रोग गुल्मशूलं च नाशयेत् ॥ घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये । हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥ पुटदग्धहरिणशृङ्गं पिष्ट गव्येन सर्पिषा पिबत । हृत्पृष्ठशूलमचिरादुपैति शान्ति सुकष्टमपि ॥

१ 'क्षौद्रतैल' अ इ । २ 'चाम्बुना' अ इ । ३ 'वानिक' अ इ । ४ "पुष्करादेश्चूर्णं हरीतक्यादे क्वाथ" इत्यरुणदत्तव्याख्यानमेव युक्तम्, चरकसम्मतत्वात् । तथा च चरक (चि. अ २६।९५)–'मूत्रे श्रुता. कट्फलशृङ्गबेरपीतद्रुपथ्यातिविषा प्रदेया । कृष्णाशठीपुष्करमूलरास्नावचाभयानागरचूर्णक वा ॥' इति । "एक पुष्करादीनां क्वाथो द्वितीयोऽभयादीनाम् ।" इतीन्दुव्याख्यानमेवमेव कृत हेमाद्रिव्याख्यान च चिन्त्यम् । ५ 'कणा ।' अ.इ ।

१ 'रौहीत' स द्र । २ 'नस्य ले' अ इ फ स मू । 'न स्याल्लेह' स स । ३ 'चात्र' अ इ स स । ४ 'प्राश्य' अ इ, ट.ड. । ५ 'चागस्तिनि' अ इ । ६ 'तथा क्षा' ड । ७ 'च' ट. । ८ 'एकादशसिताशनम्' (?) फ । ९ 'सर्पिषा' वङ्ग. । १० 'स च हृ' वङ्ग. । ११ 'त्वचोत्थम् ।' वङ्ग ।

तैलाज्यगुडविपक्व चूर्णं [गोधूमपार्थज वाऽपि । पिबति पयसा स भवेज्जितसकलहृदामय पुरुष ॥ गोधूमककुभचूर्णं] छागपयोगव्यसर्पिषा युक्तम् । मधुशर्करासमेत शमयति हृद्रोगमुद्धत पुसाम् ॥ मूल नागबलायास्तु चूर्णं दुग्धेन पाययेत् । हृद्रोगश्वासकासघ्न ककुभस्य च वल्कलम् ॥ रसायन पर बल्य वातजिन्मासयोजितम् । सवत्सरप्रयोगेण जीवेद्वर्षशतत्रयम् ॥ पार्थस्य कल्कस्वरसेन सिद्ध शस्त घृत सर्वहृदामयेषु । घृत बलानागबलार्जुनाम्बुसिद्ध सयष्टीमधुकल्कपादम् । हृद्रोगशूलक्षतरक्तपित्तकासानिलासृक्शमयत्युदीर्णम् ॥" इति ।

**स्याच्छूलं यस्य भुक्तेऽति, जीर्यत्यल्प, जरां गते ।**
**शाम्येत्स कुष्ठकृमिजिल्लवणद्वयतिल्वकैः ॥ ५६ ॥**
**सदेवदार्वतिविषैश्चूर्णमुष्णाम्बुना पिबेत् ।**

स०-यस्य-पुसो, भुक्ते-तत्काल एव, अति शूल स्यात् । जीर्यत्यन्ने-मध्यमायां पाकावस्थाया, अल्प शूल स्यात् । जरा गते-किट्टसारतया परिणतेऽन्ने, तु शाम्येत् । स -नर ,कुष्ठादिभिश्चूर्णमुष्णाम्बुना पिबेत् ।

आ० र०-अथ प्रसङ्गाच्छूलप्रकरणम् । शूल चतुर्धा,-अजीर्णेऽन्ने जीर्यति जीर्णे सर्वदा चेति । तत्राजीर्णशूलस्यौषधमाह-स्याच्छूलमिति ।

**यस्य जीर्णेऽधिकं स्नेहैः स विरेच्यः, फलैः पुनः ॥५७॥**
**जीर्यत्यन्ने, तथा मूलैस्तीक्ष्णैः शूले सदाऽधिके ।**

स०-यस्य-पुसो, जीर्णे सर्वाधिक शूल भवेत्, स स्नेहै -विरेचनद्रव्यसिद्धै , विरेचनीय । जीर्यत्यन्ने-पच्यमानावस्थाया, अधिक शूले सति फलैर्विरेच्य । तथा च मुनि (१)-"मृद्वीकाऽथ विडङ्गानि खर्जूराणि परूषकम् । आरग्वधोऽथामलक हरीतक्यो बिभीतकम् ॥ कम्पिल्लकोपचित्रे च त्रपुस च मुकूलकम् । नीलिका कुवल पीलु भवेत्फलविरेचनम् ॥" इति । यस्य पुन सदाऽधिकमेव शूल-केवल न भुक्तमात्रे जीर्णे जीर्यति वा, स -पुरुषो, मूलैस्तीक्ष्णै -मूलविरेचनैर्दन्तीत्रिवृच्छ्यामासप्तलादिद्रव्ये समन्वितै , विरेच्य । तथा चोक्तम्-"सप्तलाशङ्खिनीदन्तीद्रवन्तीगिरिकर्णिका । त्रिवृच्छ्यामोदकीर्या च प्रकीर्या क्षीरिणी तथा ॥ छगलाण्डी गवाक्षी च कुँचाक्षी गिरिकर्णिका । मसूरविदला चैव भवेन्मूलविरेचनम् ॥" इति ।

आ० र०-जीर्णशूलस्यौषधमाह-यस्येति । स्नेहै -एरण्डतैलादिभि. ।

जीर्यच्छूलस्यौषधमाह-फलै पुनर्जीर्यत्यन्न इति । फलै.-आरग्वधादिभि ।

सर्वदा शूलस्यौषधमाह-तथेति । मूलै.-श्यामादिभि. । तन्त्रान्तरे शूलप्रकरण च स्मृतम् । तत्र वङ्गसेने ( शूलरोगाधिकारे श्लो १ )-"दोषै पृथक्समस्तामद्वन्द्वै शूलोऽष्टधा भवेत् । सर्वेष्वेतेषु शूलेषु प्रायेण पवन प्रभु ॥ व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् । कलायमुद्गाढकिकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् ॥ कषायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकात् । विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिभाष्यहास्यात् ॥ वायु प्रवृद्धो जनयेद्धि शूल हृत्पार्श्वपृष्ठत्रिकबस्तिदेशे । जीर्णे प्रदोषे च घनागमे च शीते च कोप समुपैति गाढम् ॥ मुहुर्मुहुश्चोपशमप्रकोपौ विड्वातसस्तम्भनतोदभेदै । सस्वेदनाभ्यञ्जनमर्दनाद्यै स्निग्धोष्णभोज्यैश्च शम प्रयाति ॥ क्षारातितीक्ष्णोष्णविदाहितैलनिष्पावपिण्याककुलत्थयूषै । कट्वम्लसौवीरसुराविकारै. क्रोधानलायासरविप्रतापै ॥ ग्राम्यातियोगादशनैर्विदग्धै पित्त प्रकुप्याशु करोति शूलम् । तृण्मोहदाहातिकर हि नाभ्या सस्वेदमूर्च्छाभ्रमदोषयुक्तम् ॥ मध्यदिने कुप्यति चार्धरात्रे विदाहकाले जलदात्यये च । शीते च शीतै समुपैति शान्ति सुस्वादुशीतैरपि भोजनैश्च ॥ आनूपवारिजकिलाटपयोविकारैर्मांसेक्षुपिष्टकृशरातिलशष्कुलीभि । अन्यैर्बलासजनकैरपि हेतुभिश्च श्लेष्मा प्रकोपमुपगम्य करोति शूलम् ॥ हृल्लासकासंसदनारुचिसम्प्रसेकैरामाशये स्तिमितकोष्ठशिरोगुरुत्वै । भुक्ते सदैव हि रुज कुरुतेऽतिमात्र सूर्योदये च शिशिरे कुसुमागमे च ॥ [द्विदोषलक्षणैरेतैर्विद्याच्छूल द्विदोषजम् ।] सर्वेषु दोषेषु च सर्वलिङ्ग विद्याद्भिषक्सर्वभव हि शूलम् । सुकष्टमेन विषवज्रकल्प विवर्जनीय प्रवदन्ति तज्ज्ञा ॥ आटोपहृल्लासवमीगुरुत्वस्तैमित्यकानाहकफप्रसेकै । कफस्य लिङ्गेन समानलिङ्गमामोद्भव शूलमुदाहरन्ति ॥ बस्तौ हृत्कण्ठपार्श्वेषु स शूल कफवातिक । कुक्षौ हृन्नाभिमध्येषु स शूल कफपैत्तिक । दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः ॥ एकदोषोत्थित साध्य कृच्छ्रसाध्यो द्विदोषज । सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्युपद्रव ॥ निगृह्य मारुत श्लेष्मा कुक्षिपार्श्वे व्यवस्थित । साध्मांटोपामसरुद्ध सूचीभिरिव निस्तुदन् ॥ उच्छ्वसित्यथ वक्त्रेण न चान्नमभिनन्दति । न च निद्रामुपैत्येष पार्श्वशूल प्रकीर्तित. ॥ प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्य मारुत । तदाऽस्य भोजन भुक्त सोपस्तम्भ न पच्यते ॥ उच्छ्वासानीतशक्तता शूलेना हन्यते मृदु । नैवासने न शयने तिष्ठन् वा लभते सुखम् ॥ कुक्षिशूल इति ख्यातो वातादामसमुद्भवात् ॥ कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छित । हृदिस्थ कुरुते शूलमुच्छ्वासा-

१ 'पयोऽनु च स' सि चक्र । २ मूल नागबलाया इति द्वौ श्लोकौ मुद्रितवङ्गसेने नोपलभ्येते । ३ 'शत ध्रुवम् ।' सि चक्र । ४ 'क्तेऽन्ने जी' अ इ स मू । ५ 'लभ्य(घ्य)धि' ड । ६ 'लाङ्गली च ग' ट । ७ 'क्षीराक्षी' ट. ।

१ 'लाभिषेकात्' फ । २ 'मचोष' मा नि । ३ 'शिरोङ्गरुग्भि । युक्ता स' फ । ४ 'पार्श्वव्य' वङ्ग । ५ 'ध्मानाटोपस' वङ्ग । ६ 'सित्येव वक्त्रेण न वाऽन्न' वङ्ग । ७ 'क्त वातस्तब्ध न' वङ्ग । ८ 'उच्छ्वासन्नतिमात्रेण शू' वङ्ग । ९ 'शयने नासने चैव तिष्ठन्तो ल' वङ्ग. । १० 'दिस्थ' वङ्ग ।

रोधन परम् । हृच्छूल इति स ख्यातो रसमारुतसम्भवः ॥ सरोधात्कुपितो वायुर्बस्तिं सश्रित्य तिष्ठति । बस्तिवङ्क्षणनाडीषु तत शूलोऽस्य जायते । विण्मूत्रवातसरोधी बस्तिशूल स सज्ञित. ॥ नाभ्या वङ्क्षणयोश्चैव कुक्षौ मेढ्रेऽनुवर्तक । मूत्रमावृत्य गृह्णाति मूत्रशूल स मारुतात् ॥ वायु प्रकुपितो यस्य रूक्षाहारस्य देहिन । वात रुणद्धि कोष्ठस्थ मन्दीकृत्य तु पावकम् ॥ शूल सञ्जनयेच्छीघ्र स्रोत आवृत्य मारुत । दक्षिण यदि वा वाम कुक्षिमादाय जायते ॥ सर्वत्र वर्धते क्षिप्र [भ्रमति श्वासघोषवत् । पिपासा वर्धतेऽतीव भ्रमो मूर्च्छा च जायते ॥ उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति । विट्शूलमेत जानीयाद्भिषक् परमदारुणम् ॥ वेदना च तृषा मूर्च्छा आनाहो गौरवारुची । कासश्वासौ च हिक्का च शूलस्योपद्रवा स्मृता ॥ स्वैर्निदानै प्रकुपितो वायु सन्निहितस्तदा । कफपित्ते समावृत्य शूलकारी भवेद्बली ॥ भुक्ते जीर्यति यच्छूल तदेव परिणामजम् । तस्य लक्षणमप्येतत् समासेन विधीयते ॥ आध्मानाटोपविण्मूत्रविबन्धारतिवेपनै । स्निग्धोष्णै प्रशम याति वातिक तद्वदेद्भिषक् ॥ तृष्णादाहारतिस्वेद कट्वम्ललवणोत्तरम् । शूल शीतशमप्राय पैत्तिक तद्वदेद्भिषक् ॥ छर्दिहृल्लाससम्मोहस्वल्परुग्दीर्घसन्तति । कटुतिक्तोपशान्तौ च तद्विद्येय कफात्मकम् ॥ ससृष्टलक्षण बुद्ध्वा द्विदोष परिकल्पयेत् । त्रिदोषजमसाध्य स्यात् क्षीणमासबलानलम् ॥ जीर्णे जीर्यत्यजीर्णे वा यच्छूलमुपजायते । पथ्यापथ्यप्रयोगेण भोजनाभोजनेन वा । न शम याति नियमात्सोऽन्नद्रव उदाहृत ॥"] .. . .

(?)—"शृङ्गी द्विजीरक धान्य वृद्धदारुकपत्रकै । तुम्बुरूणि भद्रदारु क्षाराश्च लवणानि च ॥ अजमोदा तालमूली विशाला भूतिक वचा । कोशातकी पटोल च बृहत्पत्रकगन्धकै ॥ यावन्त्येतानि चूर्णानि मण्डूर द्विगुण तत । गोमूत्रत्रिफलाक्वाथे निषिक्त लोहचूर्णितम् ॥ कन्दात्कटाशृङ्गबेरश्रावणीकेशराङ्गजै । रसै सवज्रवल्लीजैस्तस्य तालसमस्य च ॥ भावयित्वैकतश्चूर्ण गोमूत्रेऽष्टगुणे पचेत् । चतुर्गुणे त्रिफलजे क्वाथे वा दर्विलेपनात् ॥ उपयुञ्जीत मतिमान् यथादोष यथाबलम् । ये च कुक्षिगता रोगा ग्रहणीमार्दवादय ॥ अर्शासि च प्रवृद्धानि शूलानि जठराणि च । मदोदोषामवाताश्च कफानिलभवाश्च ये ॥ व्याधयस्तान्निहन्त्येतद्भास्करस्तिमिर यथा । विया विद्या गत मण्डूर सर्वरोगनुत् ॥ यदि सकलरुजो यन्नैव योगो निहन्यात् कथमिति नियतेर्वा यादृदोष विना वा । तदखिलमुनिवाक्यप्रासतत्त्वार्थरत्नो नियतममृतवाक्यो वल्लभ स्याद्गुरूणाम् ॥ आशुभुक्तो यवै. पिष्टमभ्रक तत्र सस्थितम् । कन्दमाणास्थिसहारखण्डकर्णरसैरध । तण्डुलीयक *शोणो मात्रिकमेव च ॥ वृश्चीव बृहतीभङ्ग तत्क्षणात्केसराञ्जनै । पेषण भावन कुर्यात् पुट वाऽनेकशो भिषक् ॥ याव द्रक तस्याच्छुद्धिरेव विहायसम् । स्वर्णमाक्षिकशाण च ध्मातनिर्वापित जले ॥ त्रैफलेष्ववचूर्ण्य वा लोह पित्तादिक पुन । बृहत्पत्रक[r]रिकर्णत्रिफलावृद्धदारकै ॥ माणकन्दास्थिसहारशृङ्गबेरभवै रसै । दशमूलीमुण्डितिकातालमूलीसमुद्भवै ॥ पुटित साधु यत्नेन शुद्धिमेवमयोजयेत् । वसिर घालमधुपर्णीसयूरकम् ॥ तण्डुलीय च वर्षाभूदत्ताधश्चोर्ध्वमेव च । पाक्यं तु जीर्णमण्डूर गोमूत्रेण दिनत्रयम् ॥ अन्तर्बाष्पमदग्ध च तथा स्थाप्य दिनत्रयम् । विचूर्णित शुद्धिरिय लोहाकरस्य दर्शिता ॥ जयन्त्या वर्धमानस्य आर्द्रकस्य रसेन वा । पयस्याश्चानुपूर्व्येण मर्दन रसशोधनम् ॥ गन्धक नवनीताख्य कुटित लोहभाजने । त्रिधा चण्डातपे युक्त भृङ्गराजरसाप्लुतम् ॥ ततो वह्निद्रवीभूत त्वरित वस्त्रगालितम् । यत्नाद्भृङ्गरसे क्षिप्त पुन शुष्क विशुध्यति ॥ गगनाद्विपल चूर्ण लोहस्य पलमात्रकम् । लोहकिट्टपलार्ध च सर्वमेकत्र संस्थितम् ॥ मण्डूकपर्णीवसिनतालमूलरसै शुभै । वरीभृङ्गकेसराजमाणमार्गरसैस्तथा ॥ त्रिफलाभद्रमुस्ताभि स्थालीपाक विचूर्णितम् । रसगन्धकयो कर्ष प्रत्येक ग्राह्यमेकत ॥ तन्मनाश्च शिलाखल्वे यत्नत कज्जलीकृतम् । वचा चव्य यवानी च जीरके शतपर्णिका ॥ व्योष मुस्त विडङ्ग च ग्रथित खरमञ्जरी । त्रिवृता चित्रको दन्ती सूर्यावर्त सितस्तथा ॥ भृङ्गमाणवकन्दाश्च खण्डकर्णक एव च । दण्डोत्पल केसराजकालीयकटकोऽपि वा ॥ एषामर्धपल ग्राह्य पटघृष्ट सुचूर्णितम् । प्रत्येक त्रिफलायाश्च पलार्ध पलमेव च ॥ एतत्सर्व समालोड्य लोहपात्रेषु भावयेत् । आतपे चण्डसंघृष्टमार्द्रकस्य रसैस्त्रिधा ॥ तद्रसेन शिलापिष्ट गुटिका कारयेद्भिषक् । बदरास्थिमिता. शुष्क भावयेत् ॥ तत्प्रातर्भोजनादौ तु सेवित गुटिकात्रयम् । अन्नोदकानुपान च हित मधुरसश्रितम् ॥ दुग्ध च नालिकेर च वर्जनीय विशेषत । भोज्य यथेष्टमिष्ट च वारि भक्ताम्लकाञ्जिकम् ॥ हन्त्यम्लपित्त प्लीहान शूल च परिणामजम् । पी .... शोथोदरगुल्मादामयान् ॥ यक्ष्मा . ...मन्दाग्नित्वमरोचकम् । प्लीहानं श्वासमानाहमामवातं स्वरामयम् ॥ गु..... यख्यातवो.. नीकेसा विश्वयुतो यूषो धात्रीमुद्गादिभि कृत. । रियं * सर्गश्च ससेव्य कुलित्थान् स विवर्जयेत् ॥"

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
अम्लपित्तप्रकरण सामस्त्येन निरूपितम् ॥

**प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये गतः ॥ ५८ ॥**
**तस्यानुलोमनं कार्यं शुद्धिलङ्घनपाचनैः ।**

स०—बाहुल्येन मारुतो रुद्धमार्ग आमाशय(ये) गत कुप्यति । तस्य—मरुत , शुद्ध्यादिभि —अवस्थावशाद्व्यस्तै समस्तैर्वा, अनुलोमनं कार्यम् ।

आ० र०—......

१ 'तकोपत ।' वङ्ग. । २ 'णपार्श्वेषु कु' वङ्ग । ३ 'नुबन्धक ' वङ्ग. । ४ 'दातान् रुणद्धि कोष्ठस्थो म' वङ्ग । ५ 'नयच्छी' वङ्ग । ६-७-८-९-१० 'सेनाभिधी' 'ग्धोष्णोपशमप्राय' 'क लक्षयेद्बुध ।' 'शान्त च' 'च' मा नि. ।

१ 'तत ' इ स मू । 'यत ' स स. । 'शय गत.' इति क्वचित् ।

**कृमिघ्नमौषधं सर्वं[1] कृमिजे हृदयामये ॥ ५९ ॥**

इति हृद्रोगचिकित्सितम् ।

स०-कृमिजे हृद्रोगे सर्वमेव च कृमिघ्नमौषधम् ।

आ० र०-क्रिमिहृद्रोगौषधमाह-क्रिमिघ्नमौषधमिति । वङ्गसेने (हृदयरो श्लो ३९)-"क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् । दध्ना च पललोपेतं त्र्यहं, पश्चाद्विरेचयेत् ॥ सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः । विडङ्गगाढै-धान्याम्लं पाययेद्धितमुत्तमम् ॥ हृदि स्थिता पतन्त्येवमधस्तात्क्रिमयो नृणाम् । यवान्नं वितरेच्चास्मै सविडङ्गमतः परम् ॥ क्रिमिजे च पिबेन्मूत्रं विडङ्गामयसंयुतम् ।" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
हृद्रोगस्य प्रकरणं सामस्त्येन निरूपितम् ॥

अथ तृष्णाचिकित्सितम् ।

**तृष्णासु वातपित्तघ्नो विधिः प्रायेण शस्यते ।**
**सर्वासु शीतो बाह्यान्तस्तथा शमनशोधनः ॥ ६० ॥**
**दिव्याम्बु शीतं सक्षौद्रं तद्वद्भौमं च तद्गुणम् ।**
**निर्वापितं तप्तलोष्टकपालसिकतादिभिः ॥ ६१ ॥**
**सशर्करं वा क्वथितं पञ्चमूलेन वा जलम् ।**
**दर्भपूर्वेण मन्थश्च प्रशस्तो लाजसक्तुभिः ॥ ६२ ॥**
**वाट्यश्चामयवैः शीतः शर्करामाक्षिकान्वितः ।**
**यवागूः शालिभिस्तद्वत्कोद्रवैश्च चिरन्तनैः ॥ ६३ ॥**
**शीतेन शीतवीर्यैश्च द्रव्यैः सिद्धेन भोजनम् ।**
**हिमाम्बुपरिषिक्तस्य पयसा ससितामधु ॥ ६४ ॥**
**रसैश्चानम्ललवणैर्जाङ्गलैर्घृतभर्जितैः ।**
**मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः ॥ ६५ ॥**
**नस्यं क्षीरघृतं सिद्धं शीतैरिक्षोस्तथा रसः ।**
**निर्वापणाश्च गण्डूषाः सूत्रस्थानोदिता हिताः ॥६६॥**
**दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः ।**
**महासरिद्ध्रदादीनां दर्शनस्मरणानि च ॥ ६७ ॥**

स०-तृष्णासु सर्वासु वातपित्तहरः सर्वोऽपि विधिरिष्यते । तथा, बाह्यतोऽभ्यन्तरे च शीतो विधिः । तथा, शमनं शोधनं च शस्यते । दिव्याम्बु-आन्तरिक्षं जलं, शीतं माक्षिकेण सह शस्यते । भौमं च जलं तद्गुणं-दिव्याम्बुसमानगुणं "शुचिपृथ्वसितश्वेते देशे"(हृ सू अ ५।५) इत्यादिलक्षणलक्षितम्, तच्च शस्यते । तस्य-दिव्यजलस्येव गुणा यस्य तत्तद्गुणम् । तप्तलोष्टकपालसिकतादिभिस्तप्तैस्तन्निर्वापितं-शीतीकृतं शस्यते । अथवा, तदेव सशर्करं शस्यते । अथवा, दर्भपूर्वेण-तृणाख्येन, पञ्चमूलेन क्वथितं निर्वापितं शस्यते । तथा, लाजसक्तुभिः कृतो मन्थः प्रशस्तः । तथा, आमैः-अभृष्टैः, यवैर्वाट्यः प्रशस्तः शीतीभूतः शर्करामाक्षिकयुक्तः । यवागूः शालिभिस्तथैव शर्करामाक्षिकान्विता शस्ता । तथा, चिरन्तनैः कोद्रवैः शर्करामधुयुक्ता यवागूः शस्ता । तथा, शीतेन-शीतीकृतेन द्रव्येण, शीतवीर्यैश्च द्रव्यैः सिद्धेन भोजनं हितम् । अथवा, शीतजलैः परिषिक्तस्य पुंसः पयसा सशर्करामाद्वाकं भोजनं हितम् । अथवा न केवलं पयसा सात्म्यादिवशान्मांसरसैर्जाङ्गलैः किञ्चिदम्ललवणैर्घृतभर्जितैर्भोजनं हितम् । तथा, मुद्गमसूरादिकानां यूषैर्जीवनीयरसयुक्तैर्भोजनं हितम् । तथा, शीतैः-शीतवीर्यैश्चन्दनादिभिः, तथेक्षुरसे सिद्धं क्षीरघृतं नस्यं हितम् । क्षीरोद्भवं घृतं क्षीरघृतम् । तथा, सूत्रस्थानोदिता (अ.२२) निर्वापणा-रोपणा, गण्डूषा हिताः । तथा, दाहज्वरे य उक्ता लेपाद्या-"दूर्वादिभिर्वा पित्तघ्नैः" (हृ चि अ. १।१३१) इत्यादिग्रन्थनिर्दिष्टाः, ते च हिताः । तथा, निरीहत्वं-निर्व्यापारत्वं हितम् । तथा, मनसो रतिः-निर्वृतत्वम् । तथा, महासरितां महाह्रदानां-महातडागानां, च दर्शनस्मरणानि हितानि ।

आ० र०-अथ तृष्णाचिकित्सितम् । [तत्र सामान्यतृष्णौषधमाह]-तृष्णास्विति । तद्गुणं-दिव्यगुणम् । दर्भपूर्वेण-पञ्चसूक्तेन तृणाख्येन । आमयवैः-कोमलयवैः, कृतो वाट्यः । शीतद्रव्यसिद्धेन शीतेन पयसा भोजनम्, पयोरसयूषाणां सात्म्यादिवशाद्व्यवस्था । क्षीरघृतं-क्षीरमन्थनोत्थं घृतम् । इक्षुरसो नस्यम् । निर्वापणाः-मधुगण्डूषादयः । निरीहत्वं-निर्व्यापारत्वम् । मनोरतिः-मनःसुखम् । सङ्ग्रहे तु (चि अ ८) नाल[व]पीडनं(?)-"नारीक्षीरेण वा घृष्टमुष्ट्रास्थि ससितं हितम् ।" इति । वङ्गसेने ( तृषाधिकारे श्लो. २४ )-"लाजोदकं मधुयुतं शीतं गुडविमर्दितम् । काश्मरीशर्करायुक्तं पिबेत्तृष्णार्दितो नरः ॥ भु(च)विकापिप्पलीमूलयवानीधान्यनागरैः । शृतं शीतं हितं तोयं [मूर्च्छातृट्छर्दि]दोषजित् ॥ शर्कराकेसरक्षौद्रकृष्णाजीरकदाडिमैः । लेहो वा तृड्जयी कृष्णामधुक्षीरद्रुमाङ्कुरैः ॥ अम्लदाडिमबीजं पीतधात्रीफलं च धान्याम्लैः । आर्द्रपटास्तरणकृतप्रावृत गात्रं स्तृषं हन्ति ॥ गोस्तनीक्षुरसक्षीरयष्टीमधुमधूत्पलैः । नियतं नस्यतः पीतैस्तृष्णा शाम्यति दारुणा ॥ कर्णशिरोमुखलेपाच्चुक्रिकया वाऽम्लदाडिमरसेन । तर्पयति शीघ्रमेतज्जलौघवत्सैकतं राशिम् ॥ कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः ।

१ 'जे च हृदामये' अ । २ 'गाढ धान्या' सुश्रु. सि चक्र । ३ 'येत्सिद्धमु' वङ्ग. । 'येताप्यनन्तरम् ।' सुश्रु. । ४ 'युज्यते' अ.इ. । ५ 'धनम्' अ इ । ६ 'शरपू' स मू । ७ 'नलपल' अ.इ । ८ 'रसे' अ अरुण स मू । 'रसैः' इ । "इक्षुरस केवल एव ।" इतीन्दु । 'रसे' इत्यरुणदत्तपठितं पाठश्छिन्नः, चरकेन्दुहेमाद्रिसम्मतत्वात् । ९ 'नादि च' फ.स.द्व ।

१ 'जलपरि' ड. । २ 'तत्त्वात् ।' ट ड. । ३ 'श्मर्यैश्च' वङ्ग । ४ भुविकेति श्लोको मुद्रितवङ्गसेने नोपलभ्यते । ५ 'स्नेहो' वङ्ग. । ६ 'स्तृषा जयति ।' वङ्ग । ७ 'स्तनेक्षु' फ सि. । ८ 'लेपश्चुक्रिकया० क्रमेव जलौ' वङ्ग । ९ "चुक्रीका-अम्ललोणिका । चुक्रिका-कुवावि ।" इति श्रीकण्ठदत्तः । "चुक्रीका-चाङ्गेरी । चुक्रिका-चुकाई इति ख्याता ।" इति शिवदासः ।

पञ्चाम्लको मुखालेप सद्यस्तृष्णां नियच्छति ॥ क्षीरेक्षुरसमार्द्वीकक्षौद्रसीधुगुडोदकैः । वृक्षाम्लाम्लैश्च गण्डूषा मुखशोषप्रणाशना ॥ दाडिम बदर रोध्र कपित्थ बीजपूरकम् । पिष्ट्वा मूर्ध्नि प्रलेपैस्तु पिपासादाहनाशन ॥ वारि शीत मधुयुतमाकण्ठाद्वा पिपासितम् । पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥ वटप्ररोह मधुकुष्ठमुत्पल सलाजचूर्णं गुटिका प्रकल्पयेत् । सुसंहिता सा वदने विधारिता तृष्णा प्रवृद्धामपि हन्ति सत्वरम् ॥'' इति । योगरत्ने-''मधुरै सजीवनीयै शीतैश्च सतिक्तकै श्रित क्षीर पानाभ्यञ्जनसेकेष्विष्ट मधुशर्करायुक्तम् । लोहितकशालितण्डुलखर्जूरपरूषकोत्पल द्राक्षा. मधुपक्वे लोष्टमेव च जले स्थित शीतल पेयम् ॥ जम्ब्वाम्रातकबदरीदलवेतसपञ्चवल्कपञ्चाम्लैः । हन्मुखशिर प्रदेहा सघृता मूर्च्छाभ्रमातितृष्णाघ्ना ॥ द्राक्षेक्षुत्पलयष्ट्याद्यै शर्करामधुयोजितै । कषाय संपिबेच्छीत तृष्णानाशकर परम् ॥ लोष्टप्रतप्ततोय तु शर्करामधुयोजितम् । लाक्षाचूर्णसमायुक्त पीत तृड्दाहनाशनम् ॥ जम्ब्वाम्रपल्लवोशीरै सितावरुणकाजितै । सपयस्क. कृत. क्काथ. सम्पीतस्तृड्विनाशन ॥ रक्तवृक्षाम्लदाडिमाम्लोष्णवेतसै । सशर्करैर्निहन्त्याशु लेहस्तृष्णां सुदुर्जयाम् ॥ सारिवा लाज पिप्पलीमधुनागरै । पयस्तृषाघ्नो गण्डूष काञ्जिकैर्मुख ॥ मदनमधुक शीतमम्बु विवर्धितम् । अर्धशर्करायुक्त पिबेत्तृष्णार्दितै'' ॥'' इति ।

इति तृष्णासु सामान्येन चिकित्सितमुक्तम् । विशेषेणाह—

**तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ।**
**रसाश्च बृंहणाः शीता विदार्यादिगणाम्बु च ॥६८॥**

स०-पवनोत्थाया तृष्णाया दधि गुडेन सह शस्यते । मासरसाश्च बृंहणा शस्ता । तथा विदार्यादिगणाम्बु ''विदारिपञ्चाङ्गुल''(हृ सू अ १५।९)इत्यादिभि श्रृत तोय-पानीय, शस्तम् ।

आ० र०-वाततृष्णौषधमाह-तृष्णायामिति । योगरत्ने-''पञ्चाङ्गिका पञ्च गणा य उक्तास्तेष्वम्बु[सिद्ध प्रथमे ग]णे वा । पिबेत्सुखोष्णं मनुजोऽचिरेण तृषो विमुच्येत हि वातजाया. ॥ [तृष्णातिवृद्धौ] उदरे च पूर्णे सच्छर्दयेन्माग्धिकोदकेन । विलेखन चात्र हित विधेय स्याद्दा[डिमाम्रा]तर्कबीजपूरै. ॥'' [इति ।] वङ्गसेने (तृषा. श्लो. २२)-''वातघ्नमन्नपान मृदु लघु शीत रसो गुडूच्याश्च ।'' [इति ।]

१ 'मुखे लेप ' वङ्ग । २ 'यवाम्लैश्चापि ग' फ । ३ 'पश्च' वङ्ग । ४ 'वा' अ.इ । ५ 'जोऽल्पशस्तु मुच्येत तृट्त पवनात्मकात ।' वङ्ग. । 'जोऽल्पशश्च तृष्णोपरोध न कदाऽपि कुर्यात् ।' सि चक्र । ६-७-८ 'णें त वामयें' 'विलोभन' 'कमातुलुङ्गै ' सु वङ्ग । ९ 'त च वाततृष्णायाम् । स्याजीवनीयसिद्ध क्षीरघृत वातजे तर्षे ॥' वङ्ग. ।

**पित्तजायां सितायुक्तः पक्कोदुम्बरजो रसः ।**
**तत्क्काथो वा हिमस्तद्वत्सारिवादिगणाम्बु वा ॥६९॥**
**तद्विधैश्च गणैः शीतकषायान् ससितामधून् ।**
**मधुरैरौषधैस्तद्वत् क्षीरिवृक्षैश्च कल्पितान् ॥ ७० ॥**
**बीजपूरकमृद्वीकावटवेतसपल्लवान् ।**
**मूलानि कुशकाशानां यष्ट्याह्व च जले श्रृतम् ७१**
**ज्वरोदितं वा द्राक्षादि पञ्चसाराम्बु वा पिबेत् ।**

स०-पित्तोत्थाया शर्करान्वित पक्कोदुम्बरफलजो रस, तेषा-उदुम्बराणा वा क्काथो हिम, तद्वत्-सितायुक्त, शस्यते । तथैव सारिवादिगणाम्बु-''सारिवोशीर'' (हृ सू अ १५।११) इत्यादि प्रशस्यते । तद्विधै-शीतवीर्यैश्च, गणै कृतान् शीतकषायान् ससितामाक्षिकान् पिबेत् । तथैव मधुरै-द्राक्षादिभिर्द्रव्यै, कल्पितान् । क्षीरिवृक्षैश्च-अश्वत्थन्यग्रोधादिभि, कल्पितान् शीतकषायान् सशर्करामधून् पिबेत् । बीजपूरकादिपल्लवान् कुशकाशाना मूलानि मधुक चैतज्जले शृत पिबेत् । शीतमिति प्रकृतत्वायोग्यत्वाचात्र योज्यम् । अथवा, ज्वरचिकित्सितोक्त [द्राक्षादि-] ''द्राक्षामधूक'' (हृ चि अ १।५५) इत्यादिक फाण्ट शीतकषाय [वा] पिबेत् । पञ्चसाराम्बु वा-''मधुखर्जूरमृद्वीका'' (हृ चि अ २।१४) इत्यादि रक्तपित्तचिकित्सिते पठित, पिबेत् ।

आ० र०-पित्ततृष्णौषधमाह-पित्तजायामिति । तद्विधै-पित्तघ्नै । तद्वत्-ससितामधून् । क्षीरिवृक्षैश्च तद्वत् । बीजपूरपल्लवादिसप्तक जले श्रृतम् । वङ्गसेने ( तृषा. श्लो १८ )-''काश्मर्यं शर्करायुक्त चन्दनोशीरधान्यकम् । द्राक्षामधूकसयुक्त पित्ततर्षे जल पिबेत् ॥ स्याजीवनीयसिद्धक्षीरघृत वातपित्तजे तर्षे । तद्वद्द्राक्षाचन्दनखर्जूरोशीरमधुयुत तोयम् ॥ जीर्णसुक्त पिबेद्वाऽपि मधुना तण्डुलोदकम् ।'' [इति ।]

**कफोद्भवायां वमन निम्बप्रसववारिणा ॥ ७२ ॥**
**बिल्वाढकीपञ्चकोलदर्भपञ्चकसाधितम् ।**
**जलं पिबेद्रजन्या वा सिद्धं सक्षौद्रशर्करम् ॥ ७३ ॥**
**मुद्गयूषं च सव्योषपटोलीनिम्बपल्लवम् ।**
**यवान्नं तीक्ष्णकवलनस्यलेहांश्च शीलयेत् ॥ ७४ ॥**

स०-श्लेष्मजाया तृष्णाया निम्बपत्रपानीयेन वमन शस्तम् । बिल्वादिभिर्जल साधित कफतृष्णाया पिबेत् । रजन्या-हरिद्रया, जल सिद्ध पिबेत् । सक्षौद्रशर्कर कफतृष्णाया मुद्गयूष च त्रिकटुपटोलनिम्बपल्लवान्वित पिबेत् । यवान्नं तीक्ष्णकवल तीक्ष्णनस्य तीक्ष्णलेह च शीलयेत् ।

आ०र०-कफतृष्णौषधमाह-कफोद्भवायामिति । आढकी-

१ 'धुररसै.-' ट. । २ 'श्वत्थादि' ड. । ३ 'म् ॥ द्राक्षाचन्दनखर्जूरीश्रृत मधुयुत जलम् । तृष्णाहर पिबेद्वाऽपि' वङ्ग । ४ 'भेकच्छक' फ हे. । ५ 'जन्यां' अ स.मू ।

शिम्बीधान्यम् । कच्छक -तुम्बु(तूणी)क. । वङ्गसेने ( तृषा श्लो २२ )-"बिल्वाढकीधातकिपञ्चकोलदर्भेषु सिद्ध कफजा निहन्ति ।" इति । योगरत्ने-"बिल्वाढकी[कन्यक]पञ्चमूलदर्भेषु सिद्ध कफजा निहन्ति ।" इति । कच्छक(धातकि)-पञ्चकोलयो स्थाने लघु [पञ्चमूलम्] । वङ्गसेने ( तृषा श्लो २३ )-"सजीरकाण्यार्द्रकशृङ्गबेरसौवर्चलान्यर्धजलप्लुतानि । मद्यानि हृद्यानि च गन्धवन्ति पीतानि सद्य. शम यन्ति तृष्णाम् ॥" इति ।

**सर्वैरामाच्च तद्धन्त्री क्रियेष्टा वमनं तथा ।**
**त्र्यूषणारुष्करवचाफलाम्लोष्णाम्बुमस्तुभि. ॥७५॥**

स०-सर्वैरामाच्च तृष्णाया सत्या तद्धन्त्री सन्निपातघ्न्यामघ्नी च क्रियेष्टा । तथा च वमनमिष्टम् । त्र्यूषणारुष्करवचादियुक्तेन फलाम्लेनोष्णजलेन वा मस्तुना वा इष्टम् ।

आ० र०-सन्निपातजौषधमाह-सर्वैरिति । तद्धन्त्री-सर्व दोषहन्त्री आमहन्त्री च । त्र्यूषणादिभिर्वमनम् । फलाम्ल-मातुलुङ्गाद्यम्लम् । मदनफल वमनत्वालुक्तम् (?) ।

**अन्नात्ययान्मण्डमुष्णं हिमं मन्थ च कालवित् ।**

स०-अन्नात्ययात्-अन्नविरहात्, तृष्णाया सत्या मण्डमुष्ण शीत मन्थ च कालप्रकृतिसात्म्यादिवित् पिबेत् । वातकफप्रकृतिना उष्णो मण्ड पेयः । पित्तश्लेष्मप्रकृतिना वातपित्तप्रकृतिना च हिमो मन्थ पेय । एव कालसात्म्यादिषु निरूप्यम् । "सक्तव सर्पिषाऽभ्यक्ता शीतोदकपरिप्लुता । नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते ॥" इति ।

आ० र०-उपवासजौषधमाह-अन्नात्ययादिति । उष्ण मण्ड शीतकाले । शीत मन्थमुष्णकाले । अत एव काल विदित्युक्तम् ।

**तृषि श्रमान्मांसरसं मन्थं वा ससितं पिबेत् ॥७६॥**

स०-श्रमात्तृषि जाताया मासरस मद्य वा सशर्कर पिबेत् ।

आ० र०-श्रमजौषधमाह-तृषि श्रमादिति ।

**आतपात्ससितं मन्थं यवकोलजसक्तुभिः ।**
**सर्वाण्यङ्गानि लिम्पेच्च तिलपिण्याककाञ्जिकैः॥७७॥**

स०-आतपात्तृषि यवकोलोद्भवै सक्तुभि सशर्कर मन्थ पिबेत् । सर्वाणि चाङ्गानि तिलपिण्याककाञ्जिकैर्लिम्पेत् ।

आ० र०-आतपजौषधमाह-आतपादिति । कोलजा.-शुष्कबदरत्वग्जन्वा । तिलग्रहण पिण्याकेन विकल्पार्थम् ।

**शीतस्नानाच्च मद्याम्बु पिबेत्तृण्मान् गुडाम्बु वा ।**

स०-शीतस्नानाच तृण्मान् मद्याम्बु पिबेत् । तृण्मानिति मतुपि मय इति णत्वे रूपम् । गुडजल वा पिबेत् ।

आ० र०-उष्णक्रान्तस्ये(नि अ ५।५५) युक्ततृष्णौषध माह-शीतस्नानादिति ।

**मद्यादर्धजलं मद्यं स्नातोऽम्ललवणैर्युतम् ॥ ७८ ॥**

स०-मद्यात्तृण्मानर्धजल मद्य स्नातश्चाम्ललवणाभ्या युत पिबेत् ।

आ० र०-मद्यजौषधमाह-मद्यादिति । आयुत-युक्तम् ।

**स्नेहतीक्ष्णतराग्निस्तु स्वभावशिशिरं जलम् ।**

स०-स्नेहेन तीक्ष्णतरोऽग्निर्यस्य स नरस्तृण्मान्निसर्गशीतलं जल पिबेत् ।

आ० र०-तीक्ष्णाग्ने स्नेहजे(नि अ ५।५६)त्युक्ततृष्णौषधमाह-स्नेहतीक्ष्णतराग्निस्त्विति ।

**स्नेहादुष्णाम्ब्वजीर्णात्तु जीर्णान्मण्डं पिपासितः ७९**

स०-स्नेहात् पुनरजीर्णात् पिपासित उष्णाम्बु वा पिबेत् । जीर्णात्तु स्नेहात्तृषि मण्ड पिबेत् ।

आ० र०-अजीर्णस्नेहजौषधमाह-स्नेहादिति ।

जीर्णस्नेहजौषधमाह-जीर्णादिति । अतीक्ष्णाग्निविषयमिद मेदद्वयम् ।

**पिबेत्स्निग्धान्नतृषितो हिमस्पर्धि गुडोदकम् ।**

स०-स्निग्धान्नेन भुक्तेन तृषितो हिमस्पर्धि-तुहिनशीतल, गुडोदक पिबेत् ।

आ० र०-स्निग्धान्नजौषधमाह-पिबेदिति । हिमस्पर्धि- .. ।

**गुर्वाद्यन्नेन तृषितः पीत्वोष्णाम्बु तदुल्लिखेत् ॥८०॥**

स०-गुर्वाद्यन्नेन भुक्तेन तृषित पीत्वोष्णाम्बु तत्-गुर्वाद्यन्न, उद्वमेत् ।

आ० र०-गुर्वादिभोजनजौषधमाह-गुर्वाद्यन्नेनेति ।

**क्षयजायां क्षयहितं सर्वं बृंहणमौषधम् ।**

स०-क्षयजाया तृषि क्षये हित यद् बृंहणमौषधं तत्सर्व हित-शस्तम् ।

आ० र०-रसक्षयजौषधमाह-क्षयजायामिति । क्षयहित-राजयक्ष्महितम् ।

---

१ "अपरे 'बिल्वाढकीकण्टकपञ्चकोलदर्भेषु' इति पठन्ति । त च पाठ कार्तिककुण्डो नेच्छति, सर्वतृष्णासु पित्तसद्भावेन पञ्चकोलस्यानुचितत्वात् ।" इति डल्हण. । २ 'मूलीदर्भे' सु । ३ 'रधान्यार्द्र' वङ्ग । ४ कालविदिति "ग्रीष्मादिके पित्तकफाधिके वा ।" इतीन्दु । ५ 'हादेव, तृ' ट. । ६ 'य । वात(पित्त)प्रकृतिना पित्त' ट ड. । ७ 'ना पित्तप्र' ड । 'ना उष्णशीत पित्तप्र' इति क्वचित् । ८ 'मद्य वा' अ इ अरुण । मद्य वेत्यरुणदत्तपठितपाठश्चिन्त्य, सङ्ग्रहसुश्रुताद्यसम्मतत्वात् । तथा च सुश्रुत (उ अ ४८।३०)-"श्रमोद्भवा मासरसो निहन्ति गुडोदक वाऽप्यथवाऽपि मन्थ ।" इति ।

१ 'नातु म' अ इ फ स मू । २ चशब्देन 'आतपात्' इत्यस्य ग्रहणम्, तेन आतपपीडितादनन्तर शीतस्नानादित्यर्थ । ३ 'तृड्वान्' अ इ फ स ड. । ४ 'वणायुतम्' फ हे । ५ 'स्नेहात्तीक्ष्ण' इति क्वचित् । ६ 'पय.' स मू । ७ आदिशब्देन निदानोक्त(नि अ ५।५६) अम्ललवणान्न ग्राह्यम् । ८ 'र्वे श' ड. ।

**कृशदुर्बलरूक्षाणां क्षीरं छागो रसोऽथवा ॥ ८१ ॥**

स०—कृशादीनां तृषि जातायां क्षीरं हितम् । अथवा छागो रसो हितः ।

आ० र०—कृशादीनां विशेषमाह—कृशदुर्बलरूक्षाणामिति ।

**क्षीरं च सोर्ध्ववातायां क्षयकासहरैः शृतम् ।**

स०—सोर्ध्ववातायां तृषि क्षयकासहरैः शृतं क्षीरं हितम् । चशब्दान्मांसरसश्च ।

आ० र०—सोर्ध्ववातायां विशेषमाह—क्षीरं चेति ।

**रोगोपसर्गाज्जातायां[1] धान्याम्बु ससितामधु ॥८२॥**
**पाने प्रशस्तं सर्वा च क्रिया रोगाद्यपेक्षया ।**

स०—रोगोपसर्गाज्जातायां तृषि धान्याम्बु ससितामाक्षिकं पाने प्रशस्तम् । सर्वा च क्रिया रोगाद्यपेक्षया शस्ता ।

आ० र०—रोगोपसर्गजौषधमाह—रोगोपसर्गजातायामिति । धान्य—कुस्तुम्बरी । वङ्गसेने (तृषा श्लो ३७)—"क्षतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः । क्षयोत्थितां क्षीरजलं निहन्यान्मांसोदकं वा मधुकोदकं वा ॥" इति ।

**तृष्यन्[2] पूर्वामयक्षीणो न लभेत जलं यदि ॥ ८३ ॥**
**मरणं दीर्घरोगं वा प्राप्नुयात्त्वरितं ततः ।**
**सात्म्यान्नपानभैषज्यैस्तृष्णां तस्य जयेत्पुरा[3] ॥ ८४ ॥**
**तस्यां जितायामन्योऽपि व्याधिः शक्यश्चिकित्सि-**
**तुम् ॥ ८४½ ॥**

**इति तृष्णारोगचिकित्सितम् ।**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने छर्दिहृद्रोगतृष्णाचिकित्सितं नाम षष्ठोऽध्यायः ॥ ६ ॥**



स०—पूर्वामयेन क्षीणः सन् तृष्यन्—पिपासितो, यदि जलं न लभेत तदा मरणं दीर्घरोगं वा प्राप्नुयात् । ततश्च हेतोस्त्वरित—शीघ्रतरं, तस्य—नरस्य, पूर्वमन्येभ्यो रोगेभ्यः सात्म्यान्नपानभेषजैस्तृषं जयेत्, ततोऽपरं रोगम् ।

किमेवं क्रियते ? इत्याह—तस्यां तृषि जितायां सत्यामन्योऽपि रोग उपक्रमितुं शक्यः ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां चतुर्थे चिकित्सितस्थाने छर्दिहृद्रोगतृष्णाचिकित्सितं नाम षष्ठोऽध्यायः समाप्तः ॥ ६ ॥



1 'सर्गजाता' फ स द । 2 'तृष्यन्' अ इ । 'तृष्णन्' फ. । 'तृड्वान्' स मु. । 3 'त्पुरः ।' फ स.सं. ।

आ० र०—रोगाद्यपेक्षयेत्यस्यामाह—तृष्यन्निति । रोगविरोधेऽपि जलं देयमित्यर्थः ।

उपद्रवरूपायां अप्युपसर्गजायां (?) प्राधान्यमाह—त्वरितमिति । सात्म्यग्रहणं यद्युपशेते तत्तद्युक्तिनिरपेक्षमपि देयमित्येवमर्थम् । वङ्गसेने ( तृषा श्लो. ४१ )—"मूर्च्छाच्छर्दितृषादाहस्त्रीमद्यभृशकर्शिताः । पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये ॥ तृषितो मोहमायाति मोहात्प्राणान् विमुञ्चति । तस्मात्सर्वास्ववस्थासु न क्वचिद्वारि वार्यते ॥ अन्नेनापि विना जन्तुः प्राणान् धारयते चिरम् । तोयाभावा[1]त्पिपासार्तः क्षणात्प्राणैर्विमुच्यते ॥" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने । तृष्णारोगप्रशमनं सामस्त्येन निरूपितम् ॥ ६ ॥





## सप्तमोऽध्यायः ।

छर्द्यादिचिकित्सितादनन्तरं मदात्ययचिकित्सितारम्भः । चिकित्सासामान्यहेतुर्यतस्तृष्णा[2]याः यथा वातपित्ते कारणं तथा मदात्ययस्यापि ।

**अथातो मदात्ययादिचिकित्सितं[3] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
(गद्यसूत्रे ॥ २ ॥ )

**यं दोषमधिकं पश्येत्तस्यादौ प्रतिकारयेत् ।**
**कफस्थानानुपूर्व्या[4] च तुल्यदोषे मदात्यये ॥ १ ॥**

स०—यं दोषं—तत्र मदात्यये वातादिकं, उल्बणं पश्येत्—लक्षयेज्जानीयात् । तस्य—दोषस्य, आदौ—प्रथमत एव, प्रतिकारयेत्—प्रतिकारं कुर्यात् । एवं विषमदोषो मदात्ययश्चिकित्स्यः । तुल्यदोषे पुनर्मदात्यये कफस्थानानुपूर्व्या दोषान् प्रतिकारयेत् ।

आ० र०—

किमेवं क्रियते ? इत्याह—

**पित्तमारुतपर्यन्तः प्रायेण हि मदात्ययः ।**

स०—हि—यस्मात्[5], कालक्रमेण पित्तमारुतावसानो बाहुल्येन मदात्ययः स्यात् । प्रथमं कफस्याधिक्यम् । ततः पित्तमारुतावधिकौ भवतः । कफस्थानानुपूर्वीव्याख्यानं ज्वरचिकित्सिते (श्लो १४८) व्याख्यातम् ।

आ० र०—

1 'भावे पिपा' वङ्ग । 2 'ष्णाया वात' ट । 3 इदं मदात्ययमदमूर्च्छासंन्यासचिकित्सितं चरके सू० २४ अध्याये चि० २४ अध्याये च, सुश्रुते उ० ४६।४७ अध्याययोः, अष्टाङ्गसङ्ग्रहे चि० ९ अध्याये चास्ति वर्णितम् । 4 'वा' स द. । 'तु' अरुण. । 5 'सात्कारणात्, क्र' ट. । 'त, पित्त' ड. ।

**हीनमिथ्यातिपीतेन यो व्याधिरुपजायते ॥ २ ॥**
**समपीतेन तेनैव स मद्येनोपशाम्यति ।**

स०–हीनमिथ्यातिपीतेन मद्येन यो व्याधिरुत्पद्यते, स–व्याधि, तेनैव मद्येन समपीतेन–सम्यङ्मात्रया पीतेन, शाम्यति। "यावद् दृष्टेर्न सम्भ्रान्तिर्यावन्न क्षोभते मन । तावदेव विरन्तव्य मद्यादात्मवता सदा ॥" (श्लो ९४) इत्येव-लक्षण पान सममेव पीतम् । येनैव मार्द्वीकेनाथवा माधवेन गौडादिना वा यो जातो व्याधि स तेनैव मार्द्वीकादिना शाम्यति।

आ० र०–

कुत एव स्यात्? इत्याह—

**मद्यस्य विषसादृश्यात्**

स०–यथा तीक्ष्णादिभिर्दशभिर्गुणैर्विष युक्त तथैव तत्सङ्ख्यातैरेव गुणैर्मद्यमपि युक्तम् । ततश्च मद्येनैव शान्तिर्युक्ता ।

आ० र०–

ननु, यदि विषसादृश्य मद्यस्य, ततो यथा विषस्य विषान्तरेण शान्तिस्तथा मद्यस्यापि मद्यान्तरेण शान्ति प्राप्तेत्याशङ्क्याह–

**विषं तूत्कर्षवृत्तिभिः ॥ ३ ॥**
**तीक्ष्णादिभिर्गुणैर्योगाद्विषान्तरमपेक्षते ।**

स०–सत्यमेतत् । एव प्राप्तम् । किन्तु गुणैर्दशभिरुत्कर्षवृत्तिभि –अधिकशक्तिस्वरूपै, तीक्ष्णादिभिर्योगात्–सम्बन्धात्, विष विषान्तरमपेक्षते । न तु तद्धीनात्तदेव स्वोत्थे रोगे प्रश मायालम् । मद्य तु हीनवृत्तिभिर्दशभिर्गुणैर्योगान्न मद्यान्तरमपेक्षते । एवं तीक्ष्णादीना गुणानां हीनोत्कर्षभेदाद्विषान्मद्यस्य वैलक्षण्यम् ।

आ० र०–

**तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना ॥ ४ ॥**
**मद्येनान्नरसक्लेदो विदग्धः क्षारतां गतः ।**
**यान् कुर्यान्मदतृण्मोहज्वरान्तर्दाहविभ्रमान् ॥ ५ ॥**
**मद्योत्क्लिष्टेन[2] दोषेण रुद्धः स्रोतःसु मारुतः ।**
**सुतीव्रा[2] वेदना याश्च शिरस्यस्थिषु सन्धिषु ॥ ६ ॥**
**जीर्णाममद्यदोषस्य प्रकाङ्क्षालाघवे सति ।**
**यौगिकं विधिवद्युक्तं मद्यमेव[2] निहन्ति तान् ॥ ७ ॥**

स०–स्वभावत एव तीक्ष्णोष्णेन तथाऽतिमात्रेण तथाऽम्लविदाहिना मद्येन पीतेनान्नरसक्लेदो विदग्ध क्षारता च गतो यान् मदादीन् कुर्यात्। तथा मारुतो मद्योत्क्लिष्टेन दोषेण स्रोत सु रुद्धो या दारुणा मूर्धादिषु वेदना कुर्यात् तान्–मदादीन्, ताश्च वेदना मद्यमेव यौगिक विधिना युक्त निहन्ति । किम्भूतस्य पुरुषस्य? जीर्णाममद्यदोषस्य, तथा प्रकाङ्क्षायां लाघवे सति, ते च ताश्च तान्, "पुमान् स्त्रिया" इत्येकशेष । ननु, यदि मद्यमेव तान्निहन्ति ततश्चिकित्सान्तरारम्भो न युक्त । मैवम् । बह्वयो हि चिकित्सा प्रतिरोगं प्रोक्ता । तस्माच्चिकित्सान्तरोपन्यासो युक्त एव ।

आ० र०–

ननु, कथं तान् मद्यमेव निहन्ति? इत्याह—

**क्षारो हि याति माधुर्यं शीघ्रमम्लोपसंहितः[1] ।**
**मद्यमम्लेषु[2] च श्रेष्ठं दोषविष्यन्दनादलम्[3] ॥ ८ ॥**

स०–यस्मात् क्षारोऽम्लोपसहितो द्रागेव माधुर्यं याति । अम्लेषु मध्ये मद्य श्रेष्ठ दोषविष्यन्दनात् [अलं–] पर्याप्तम् ।

आ० र०–· ····

**तीक्ष्णोष्णाद्यैः पुरा प्रोक्तैर्दीपनाद्यैस्तथा गुणैः ।**
**सात्म्यत्वाच्च[2] तदेवास्यं[4] धातुसाम्यकरं[5] परम् ॥ ९ ॥**

स०–पुरा–मदात्ययनिदानोक्तैस्तीक्ष्णोष्णाद्यैर्गुणै (नि अ. ६।१) तथा मद्यवर्गोक्तैर्दीपनाद्यैर्गुणै (सू अ ५।६२) करणभूतै, तदेव–मद्य, सुष्ठु धातुसाम्यकरम् । धातुसाम्यकरमिति हेतौ ट ।

आ० र०– •••

**सप्ताहमष्टरात्रं वा कुर्यात्पानात्ययौषधम् ।**
**जीर्यत्येतावता पान कालेन विपथाश्रितम् ॥ १० ॥**

स०–सप्ताहमथवाऽष्टरात्र पानात्ययौषध कुर्यात्–नाधिक कालम् । यत एतावता कालेन विमार्गस्थ तत् पान–मद्यपान, परिणमति ।

आ० र०– •

**परं ततोऽनुबध्नाति यो रोगस्तस्य भेषजम् ।**
**यथायथं प्रयुञ्जीत कृतपानात्ययौषधः ॥ ११ ॥**

स०–तत –तस्मात्कालात्, परं–ऊर्ध्व, यो रोगोऽनुबध्नाति, तस्य–रोगस्य, कृतपानात्ययौषधश्च यथास्व भेषज प्रयुञ्जीत ।

आ० र०–

इति सामान्येन चिकित्सितमुक्त्वा विशेषेणाह[6]—

**तत्र वातोल्बणे मद्यं दद्यात्पिष्टकृतं युतम् ।**
**बीजपूरकवृक्षाम्लकोलदाडिमदीप्यकैः ॥ १२ ॥**
**यवानीहपुषाजाजीव्योषत्रिलवणार्द्रकैः[7] ।**

१ 'गाद्विषान्तरेण शान्तिमपेक्षते' ट । २ "मद्योत्क्लिष्टेन–मद्यप्रच्यावितेन। दोषेण–कफाख्येन। सुतीव्रा –सुष्ठ्वतिशयेन दु खदा । एवकारोऽवधारणार्थ, मद्यमेव नान्यद्भेषजम्। यौगिक–योगोत्थम्। [विधिवत्–] प्रणम्येत्यादिना शास्त्रेण निर्दिष्ट सङ्ग्रहे, यथाशास्त्रकृतम्।" इति चन्द्र ।

१ 'संस्कृत' स च । २ "सर्वेष्वम्लेषु–तक्रदधिकाञ्जिकप्रभृतिषु । सात्म्यत्वात्–औचित्यात् । अस्य–मद्योत्थव्याधिपीडितस्य । पर–अत्यर्थम् । विपथाश्रित–विमार्गस्थितम् ।" इति चन्द्र । ३ 'विस्रावणाद्' चन्द्र । ४ 'षधम्' अ सं.द्व । ५ 'षध च य' ट. । ६ 'शेषचिकित्सामाह' ट. । ७ 'णार्जकैः' अ. ।

शूल्यैर्मांसैर्हरितकैः स्नेहवद्भिश्च सक्तुभिः ॥ १३ ॥
उष्णास्निग्धाम्ललवणा मेद्यमांसरसा हिताः ।
आम्राम्रातकपेशीभिः संस्कृता रागषाडवाः ॥१४॥
गोधूममाषविकृतिर्मृदुश्चित्रा मुखप्रिया ।
आर्द्रिकार्द्रककुल्माषसुक्तमांसादिगर्भिणी ॥ १५ ॥
सुरभिर्लवणा शीता निर्गदा वाऽच्छवारुणी ।
स्वरसो दाडिमात् क्वाथः पञ्चमूलात्कनीयसः ॥१६॥
शुण्ठीधान्यात्तथा मस्तुसुक्ताम्भोच्छाम्लकाञ्जिकम्
अभ्यङ्गोद्वर्तनस्नानमुष्णं प्रावरणं घनम् ॥ १७ ॥
घनश्चागुरुजो धूपः पङ्कश्चागुरुकुङ्कुमः ।
कुचोरुश्रोणिशालिन्यो यौवनोष्णाङ्गयष्टयः ॥ १८ ॥
हर्षेणालिङ्गने युक्ताः प्रियाः संवाहनेषु च ।

स०–[तत्र–] तेषु मदात्ययेषु मध्ये, वाताधिके मदात्यये पिष्टकृतं मद्यं दद्यात् । बीजपूरकादिभिर्देशसात्म्यादिवशाद्यस्तैः समस्तैर्यथायोगैर्युक्तम् । तथा, मेद्यस्य–मेदुरस्य, मांसस्य रसा हिताः । किम्भूताः ? उष्णाः स्निग्धाम्ललवणाश्च । तथा, रागाः षाडवाश्चाम्राम्रातकपेशीभिः संस्कृता हिताः । लक्षणमेषामृतुचर्यायामुक्तम् ( हृ सू अ ३।३० ) । तथा, गोधूममाषयोर्विकृतिर्हिता। किम्भूता ? मृदुः–अतीक्ष्णा, चित्रा–नानाप्रकारा, मुखप्रिया–वदनरुचिकृत् । तथा, आर्द्रिकादिगर्भिणी । [ तथा, ] अच्छवारुणी च हिता । किम्भूता? सुरभिर्लवणा शीता च । तथा निर्गदा–पुराणा । तथा, दाडिमात्स्वरसो हितः । पञ्चमूलात् कनीयसो–ह्रस्वात्, क्वाथः । शुण्ठीधान्याच्च क्वाथो हितः । तथा, मस्त्वादि हितम् । तथा, अभ्यञ्जनादि उष्णं हितम् । प्रावरणं–आच्छादनं, घनं हितम्, अगरुजश्च धूपो घनो–बहुलो, हितः । अगरुकुङ्कुमपङ्कानुलेपनं हितम् । तथा, प्रिया हर्षेण–प्रीत्या, आलिङ्गने–परिष्वङ्गे, तत्र युक्ताः, संवाहनेषु–शरीरमर्दनेषु च, युक्ता हिताः । कुचाश्चोरवश्च श्रोणयश्च तेन शालन्ते यास्ता एवम् । तथा, यौवनेनोष्णाऽङ्गयष्टिः–शरीरलता, यासां ता एवम् ।

आ० र०–' ''''

पित्तोल्वणे बहुजलं शार्करं मधु वा युतम् ॥ १९ ॥
रसैर्दाडिमखर्जूरभव्यद्राक्षापरूषजैः ।
सुशीतं ससितासक्तु योज्यं तादृक् च पानकम् ॥२०॥
स्वादुवर्गकषायैर्वा युक्तं मद्यं समाक्षिकम् ।

स०–पित्ताधिके मदात्यये बहुजलं शार्करं–मद्यविशेषं योज्यम् । मधु–माक्षिकं वा, रसैर्दाडिमादिजैर्युक्तम् । तच्च सुष्ठु शीतं कृत्वा योज्यम् । परूषकाण्यत्र मधुराणि योज्यानि नाम्लानि, तेषां कफपित्तकरत्वात् । तथा च मुनिः ( च सू अ २७।१३२ ) "अम्लं परूषकं द्राक्षा बदराण्यारुकाणि च । पित्तश्लेष्मप्रकोपीणि" इति । तादृक् च–सुशीतं, पानकं योज्यम् । किम्भूतम् ? सह सितासक्तुभिर्वर्तते यत्तदेवम् । सक्तवश्च लाजानां योज्याः, योग्यतरत्वात्, न तु यवानाम् । तथा, स्वादुवर्गस्य क्वाथेन संयुक्तं मद्यं समाक्षिकं योज्यम् ।

आ० र०–

शालिषष्टिकमश्नीयाच्छशाजैणकपिञ्जलैः ॥ २१ ॥
सतीनमुद्गामलकपटोलीदाडिमैः रसैः ।

स०–शालिषष्टिकं भुञ्जीत । कैः सह? शशादिजैः रसैर्देशादिसात्म्यवशात् सतीनादिजैश्च रसैः ।

आ० र०–' ' '

कफपित्तं समुत्क्लिष्टमुल्लिखेत्तृड्विदाहवान् ॥ २२ ॥
पीत्वाऽम्बु शीतं मद्यं वा भूरीक्षुरससंयुतम् ।
द्राक्षारसं वा संसर्गी तर्पणादिः परं हितः ॥ २३ ॥
तथाऽग्निर्दीप्यते तस्य दोषशेषान्नपाचनः ।

स०–तृड्विदाहवान् मदात्ययी कफपित्तं समुत्क्लिष्टं–समुत्थितं स्वस्थानाच्च्युताभासं, सम्यग्वमेत् । किं कृत्वा ? अम्बु शीतं पीत्वा, मद्यं वा भूरिणेक्षुरसेन संयुतं पीत्वा, अथवा द्राक्षारसं पीत्वा । परं–अनन्तरं, संसर्गी तर्पणादिः सुष्ठु हितः । कृतवमनादिकस्यानन्तरं पेयादिक्रमः संसर्गीत्युच्यते । एवं कृते सति तस्य–मदात्ययिनः, अग्निर्दीप्यते । किम्भूतः ? दोषशेषस्यान्नस्य–आहारस्य च, पाचनः ।

आ० र०–' '' '

कासे सरक्तनिष्ठीवे पार्श्वस्तनरुजासु च ॥ २४ ॥
तृष्णायां सविदाहायां सोत्क्लेशे हृदयोरसि ।
गुडूचीभद्रमुस्तानां पटोलस्याथवा रसम् ॥ २५ ॥
सशृङ्गबेरं युञ्जीत तित्तिरिप्रतिभोजनम् ।

---

१ 'शूल्यमांसैः' अ इ । २ 'उष्णा. स्नि' इ । ३ 'णा मद्य' इ स मू । ४ 'गखाण्ड' अ स मू ,ट । ५ 'कृतीर्मृदुश्चित्रा० या. । ०णी ।' स स । ६ आर्द्रिका–कुस्तुम्बरी । ७ 'शुक्त' स.स । ८ 'निगदा' स स चन्द्र । ९ 'दा चाच्छ' स मू । १० 'ङ्गोच्छादनं स्ना' स मू । ११ 'धूमः' स.मू । १२ 'कुमात्' स स । १३ 'गम् ।' ट । १४ 'माषाणां विकृतीर्हिता । किम्भूताः ? मृदवः–अतीक्ष्णाः, ०कृतः ।' इति क्वचित् ।

१ "मधु–मार्द्वीकम् । तर्पणादिका हिता । तर्पणा –सक्तवः, पेयास्थाने तत्र योज्या , न तु पेया ।" इतीन्दु । ' तथा–सशोधनसंसर्गी क्रमेण । तस्य–विशुद्धस्य ।" इति चन्द्र । २ 'षकै.' अ.इ. चन्द्र स मू । ३ 'कृत यो' ट । ४ 'मैरपि ।' स ह चन्द्र । ५ 'हिता' स स । ६ 'तेनाग्नि' स च । ७ 'चक ' स स । ८ 'सनागरं योजयेत' स ह । ९ "तित्तिरिप्रतिभोजन–जीर्णे भोजने यस्मिन् तित्तिरिः प्रयुज्यते ।" इति चक्र. ।

स०-पित्तमदात्यये कासे रक्तनिष्ठीवमहिते पार्श्वादिरुजासु च तृष्णाया विदाहसहिताया हृदय उरसि च सोत्क्लेशे सति गुडूच्यादीना रसमथवा पटोलस्य रस सनागर युञ्जीत । अल्पस्त्तित्तिरिस्त्तित्तिरिप्रति । "सुप्प्रतिना मात्रार्थे" इत्यव्ययीभाव ।

आ० र०- · ·

**तृष्यते चाति बलवद्वातपित्ते समुद्धते ॥ २६ ॥**
**दद्याद् द्राक्षारसं पान शीत दोषानुलोमनम् ।**
**जीर्णेऽद्यान्मधुराम्लेन छागमासरसेन च ॥ २७ ॥**

स०-अतितृष्यते च पुरुषाय वातपित्तेऽधिके सति द्राक्षारसपान दद्यात् । किम्भूतम् ? शीतल तथा दोषानुलोमनम् । जीर्णे च तस्मिन् छागमासरसेन मधुराम्लेनाश्नीयात् ।

आ० र०- ·

**तृष्यल्पश' पिबेन्मद्यं मदं रक्षन् बहूदकम् ।**
**मुस्तदाडिमलाजाम्बु जल वा पर्णिनीशृतम् ॥२८॥**
**पाटल्युत्पलकन्दैर्वा स्वभावादेव वा हिमम् ।**

स०-तृषि सत्यामल्प-मन्द, मद रक्षन् बहूदक मद्य पिबेत् । मुस्तादिजल वा पिबेत् । पर्णिनीभि क्वथित वा पटो-(पाट)ल्यादिशृत वा सर्वमेतच्छीत पातव्यम् । यत्तोय स्वभावादेव वा हिममिति ।

आ० र०-······

**मद्यातिपानादब्धातौ क्षीणे तेजसि चोद्धते ॥ २९ ॥**
**यः शुष्कगलताल्वोष्ठो जिह्वा निष्कृष्य चेष्टते ।**
**पाययेत्कामतोऽम्भस्त निशीथपवनाहतम् ॥ ३० ॥**

स०-मद्यातिपानाद्धेतोरब्धातौ क्षीणे-अल्पीभूते, तेजसि चोद्धते-क्षोभिते सति, य पुरुष शुष्कगलताल्वोष्ठ सन् जिह्वा निष्कृष्य-नि सार्य, चेष्टते-इतश्चेतश्च लुठति, त-नर, कामत - इच्छया, अम्भो निशीथे य. पवनस्तेनाहत पाययेत् ।

आ० र०-··· ·

**कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः ।**
**पञ्चाम्लको मुखालेप· सद्यस्तृष्णा नियच्छति ॥३१॥**

स०-कोलादिभि पञ्चाम्लको मुखालेपो द्राक् तृष्णा शमयति ।

आ० र०-

**त्वचं प्राप्तश्च पानोष्मा पित्तरक्ताभिमूर्च्छितः ।**
**दाह प्रकुरुते घोर तत्रातिशिशिरो विधिः ॥ ३२ ॥**
**अशाम्यति रसैस्तृप्ते रोहिणीं व्यधयेच्छिराम् ।**

स०-पानस्य मद्यस्योष्मा त्वच प्राप्त पित्तरक्ताभ्यामभिमूर्च्छितो-मिश्रितो, दाह दारुण प्रकर्षेण कुरुते । तत्र-दाहे, [ अति ] शीतो विधि कार्य । शीतोपचारेणाप्यशाम्यति सति दाहे मासरसैस्तृप्ते नरे रोहिणीसज्ञा शिरा व्यधयेत्, वैद्य इति शेष । व्यधयेदिति 'घटादित्वान्मित्वे' ह्रस्व ।

आ० र०-अथ दाहप्रकरणम् । दाह' सप्तधा,-मद्यज पित्तजस्तृड्रोधज क्षयजो रक्तपूर्णजो मर्माभिघातजश्चेति ।

··· माह-त्वच प्राप्तस्त्विति । सङ्ग्रहे ·· ···

**उल्लेखनोपवासाभ्यां जयेच्छ्लेष्मोल्बणं पिबेत् ॥३३॥**
**शीतं शुण्ठीस्थिरोदीच्यदुःस्पर्शान्यतमोदकम् ।**

स०-श्लेष्माधिक मदात्यय वमनोपवासाभ्या जयेत् । शुण्ठ्याद्यन्यतमोदक शीतकषाय पिबेत् ।

आ० र०-

**निरामं क्षुधित काले पाययेद्बहुमाक्षिकम् ॥ ३४ ॥**
**शार्करं मधु वा जीर्णमरिष्टं सीधुमेव वा ।**
**रूक्षतर्पणसंयुक्तं यवानीनागरान्वितम् ॥ ३५ ॥**

स०-ततो निराम जातक्षुध सन्त, काले-यथोचिते, शार्कर बहुमाक्षिकं-बहुक्षौद्र, पाययेत् । मधु-मार्द्वीक, वा बहुक्षौद्रम् । द्वयमप्येतत् पुराणम् । तथा, अरिष्ट-अभयादिकृत, पाययेत् । सीधु वा पाययेत् । किम्भूतम् ? रूक्षा ये तर्पणास्तै सयुक्त [ तथा ] यवानीशुण्ठीभ्या सयुक्तम् ।

आ० र०- ·

**यूषेण यवगोधूमं तनुनाऽल्पेन भोजयेत् ।**
**उष्णाम्लकटुतिक्तेन कौलत्थेनाल्पसर्पिषा ॥ ३६ ॥**
**शुष्कमूलकजैश्छागै रसैर्वा धन्वचारिणाम् ।**
**साम्लवेतसवृक्षाम्लपटोलीव्योषदाडिमैः ॥ ३७ ॥**

स०-तथा कौलत्थेन यूषेण यवगोधूम भोजयेत् । किम्भूतेन ? तनुना-स्वच्छेन । तथा, अल्पेनोष्णाम्लकटुतिक्तेनाल्पघृतेन । अथवा, शुष्कमूलकजै रसैश्छागैर्वा रसैर्धन्वचारिणा वा रसैर्भोजयेत् । किम्भूतै ? सहाम्लवेतसतिन्तिडीकपटोलपत्रत्रिकटुकदाडिमै ।

आ० र०- ·

**प्रभूतशुण्ठीमरिचहरिताद्र्रकपेशिकम् ।**

१ 'पातु' स च । २ "जीर्णे इति द्राक्षारसे' इतीन्दु । ३ 'रस पा' ड । ४ 'पटोल्यु' अ इ । ५ "पाटला-सुगन्धिपुष्पविशेष । उत्पलव्यक्तिबहुत्वात् कन्देष्विति बहुत्वमुक्तम् ।" इति डल्हण । "तेजसि-पित्ताख्ये । उद्धते-प्रबले सति । निशीथपवनाहत-रात्रौ प्रवात स्थितम् । कामतो-यथेच्छम् । सद्य -तत्कालम् । घोर-क्षुद्र सहम् । रोहिणी-शुद्धशोणितवहाम् ।" इति चन्द्र । ६ 'तच्छृतशीत' ड । ७ 'वेष्टते' स.स । ८ 'स्र. स पा' अ.इ स.मू । 'सस्नु पा' फ.स स्तु. ।

१ 'त्ययमुल्लेखनोप' ट । २ "रूक्षै -अस्नेहै, तर्पणै -लाजसक्तुभि, सयुक्त शार्कर० पाययेत् । तच्च सर्वं यवानीनागराभ्या समन्वितम् ।" इतीन्दु । ३ 'ष्णाम्बुकटु' चन्द्र, ड । ४ 'म्ल-पाटली' चन्द्र. । ५ 'ससैन्धवप' ड ।

**बीजपूररसाद्यम्लभृष्टनीरसवर्तितम्[1] ॥ ३८ ॥**
**करीरकरमर्दादि रोचिष्णु बहुशालनम् ।**
**प्रव्यक्ताष्टाङ्गलवणं विकल्पितनिमर्दकम्[2] ॥ ३९ ॥**
**यथाग्नि भक्षयन् मांसं माधवं निगदं[3] पिबेत् ।**

स०–मास यथाग्नि–अग्न्यनतिक्रमेण, भक्षयन् माधव निगद–पुराण, पिबेत् । किम्भूत मासम्? विविधै प्रकारै कल्पितो–निष्पादितो, निमर्दको येन मासेन तद्विकल्पितनिमर्दकम् । तदेव विविधप्रकारत्व निमर्दकस्याह–प्रभूता –उत्कटा, शुण्ठीमरीचहरितार्द्रकपेशयो[4] यास्मिंस्तदेवम् । हरितार्द्रकस्य शस्त्रकृता दीर्घाकारा अवयवा पेशय उच्यन्ते । बीजपूररसादिभिरम्लस्तथा भृष्टो–यथायथ स्नेहादिना, नीरस –शुष्कप्रायो, वर्तितो–व्यञ्जनप्रकारो, यत्र तदेवम् । करीरादि रोचिष्णु–रोचनशील, बहु–प्रभूत, शालन–हरितक, यस्मिन् । तथा, प्रकर्षेण व्यक्त–स्पष्ट, वक्ष्यमाणमष्टाङ्गलवण यत्र । तदेव विविध कल्पन कृतम्[5] । क्रियाविशेषणान्येतानि ।

आ० र०–

**सितासौवर्चलाजाजीतिन्तिडीकाम्लवेतसम् ॥ ४० ॥**
**त्वगेलामरिचार्धांशमष्टाङ्गलवणं हितम् ।**
**स्रोतोविशुद्ध्यग्निकरं कफप्राये मदात्यये ॥ ४१ ॥**

स०–सितायैरष्टाङ्गलवणमन्वर्थसञ्ज्ञं कफाधिके मदात्यये हितम् । स्रोत शुद्धिकृदग्निदीपन च ।

आ० र०–······

**रूक्षोष्णोद्वर्तनोद्घर्षस्नानभोजनलङ्घनैः ।**
**सकामाभिः सह स्त्रीभिर्युक्त्या जागरणेन च ॥ ४२ ॥**
**मदात्ययः कफप्रायः शीघ्रं समुपशाम्यति ।**

स०–रूक्षोष्णैरुद्वर्तनादिभिर्लङ्घनेन तथा युक्त्या–देशकालाद्यपेक्षिण्या, सकामाभिर्दयितामि सह यज्जागरण तेन च कफाधिको मदात्ययो द्रागेव शम याति ।

आ० र०– · ···

**यदिदं कर्म निर्दिष्टं पृथग्दोषबलं प्रति ॥ ४३ ॥**
**सन्निपाते दशविधे[1] तच्छेषेऽपि विकल्पयेत् ।**

स०–"तत्र वातोल्बणे मद्य" (श्लो० १२) इत्यादि । "पित्तोल्बणे बहुजल" (श्लो० १९) इत्यादि, तथा "उल्लेखनोपवासाभ्या जयेच्छ्लेष्मोल्बण" (श्लो० ३३) इत्यादि च त्रिविध सन्निपात पृथग्दोषबल प्रति लक्षीकृत्य[2] कर्म निर्दिष्ट–कर्मेदमुक्तम् । न केवलमत्र त्रिविधे सन्निपाते, शेषेऽपि दशाविधे सन्निपाते विकल्पयेत्–विविध कृत्वा कल्पयेत्,–कुर्यात्, वैद्य इति शेष । एतदुक्त भवति,–वातोल्बणे मदात्ययजे सन्निपाते यत्कर्म निर्दिष्ट तथा पित्तोल्बणे मदात्ययजे सन्निपाते यत्कर्म निर्दिष्ट तदेव वातपित्तोल्बणे कुर्यात् । एव दोषबलमपेक्ष्य सर्वस्मिन् मदात्यये चिकित्सित कुर्यात् । स दशविध सन्निपात शिष्यहिताय पद्येन प्रदर्श्यते,–"उत्कर्षेण यदा त्वेको मध्येन द्वौ तदाऽऽदिम[3] । उत्कर्षेण यदा द्वौ तु मध्येनैको द्वितीयक ॥ एको मध्येन दोष स्याद् द्वावल्पेन तृतीयक । उत्कर्षेणैक एव स्यादल्पेन द्वौ चतुर्थक ॥ उत्कर्षेण यदा द्वौ तु अल्पेनैकश्च पञ्चम । एकोऽल्पेन तु मध्येन द्वौ दोषाविति षष्ठक ॥ उत्कर्षेण समस्ता स्युरेव भवति सप्तम । मध्येन सर्वेऽपि यदा तदा भवति चाष्टम ॥ अल्पेन सर्वेऽपि यदा तदा[4] तु नवम स्मृत । अल्पेनैको मध्येनैकस्तदा त्वन्त्य इति स्फुटा ॥ सन्निपातस्य मुनिना दश भेदा प्रकीर्तिता ।" इति ।

आ० र०–

**त्वङ्नागपुष्पमगधामरिचाजाजिधान्यकैः ॥ ४४ ॥**
**परूषकमधूकैलासुराह्वैश्च सितान्वितैः ।**
**सकपित्थरसं हृद्यं पानकं शशिबोधितम् ॥ ४५ ॥**
**मदात्ययेषु सर्वेषु पेयं रुच्यग्निदीपनम् ।**

स०–त्वगादिभि शर्करान्वितै कपित्थरसयुक्त कर्पूरकृताधिवास पानक सर्वेषु मदात्ययेषु पातव्य रुच्यग्निवृद्धिकरम् ।

आ० र०– ····

**नाविक्षोभ्य[5] मनो मद्यं शरीरमविहन्य[6] वा ॥ ४६ ॥**
**कुर्यान्मदात्ययं तस्माद्देष्यत हर्षणी क्रिया ।**

स०–मद्य यस्मान्मानस नाविक्षोभ्य–अपि तु मनस प्रक्षोभण कृत्वा, न च शरीरस्य विहननमकृत्वा[8], एवमेव यथा-

१ "नीरसवर्तित–निर्गतो रसोऽस्मेति नीरस, वर्तित–वृत्तनायात, परिशुष्कव्यञ्जनमिति यावत् ।" इति जैज्जट । "नीरसवर्तित–स्नेहेन नीरसत्वाच्छुष्कभावेन च ति(स)म चिक्कणपकम् । निगद–निर्दोषम् । मासहरितकादि[नानारसोऽच्छ]गोधूमविवेष्टितो वटकीकृत्या छिन्नो विमर्दक उच्यते, वर्कुत इति लोकप्रसिद्ध ॥ एको भाग सितादीनाम्, ततोऽर्धेन द्वितीयस्त्वगेलामरिचानाम् ।" इति चन्द्र । "त्वगेलामरिचाना प्रत्येकमेव भागार्धत्वम् ।" इति चरके चक्र । २ 'तविम' इ चन्द्र स मू, ट । ३ 'निगदं' अ. । ४ 'रिद्रार्द्रे' ट. । ५ 'वविध कल्पनम् । क्रि' ड. ।

१ "पूर्वं (हृ सू. अ १२।७५) हि त्रयोदशविध सन्निपात उक्त । तत्र एकदोषातशयेन य साऽत्र प्रदर्शित । द्व्यतिशयेन त्रय, तुल्याधिकैश्चैक सन्निपात, तारतम्यविकल्पनाच्च षट्, इत्येतद्दशकम् ।" इतीन्दु. । २ लक्षणाकृ' ट ड. । ३ 'त्कर्षेण स' ट । ४ 'दाऽपि न' ड । ५ 'नाक्षोभ्य हि म' चन्द्र स.स । ६ "अक्षोभयित्वा मनो मद्य मदात्यय न कुर्यात्, किन्तर्हि? सक्षोभ्य । तथा, शरीर नाविहन्य, अपि तु विहन्य मदात्यय कुर्यात् ।" इति चन्द्र. । ७ 'हत्य वा' अ. । ८ 'कृत्वैव यथा' ट. ।

कथञ्चिन्मदात्ययं कुर्यात्। यतश्चैव तस्माद्धेतोर्हर्षोत्पादिका क्रिया एष्टव्या। नाक्षोभ्येत्यस्य पाठो न श्रेयान्, त्वबादेशस्यात्र दुर्लभत्वात्।

आ० र०- ···

संशुद्धिशमनाद्येषु मददोषः कृतेष्वपि ॥ ४७ ॥
न चेच्छाम्येत्कफे क्षीणे जाते दौर्बल्यलाघवे।
तस्य मद्यविदग्धस्य वातपित्ताधिकस्य च ॥ ४८ ॥
ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः।

स०-संशुद्धिशमनाद्येषूपक्रमेषु कृतेष्वपि यदि मददोषो-मद्योत्थो व्याधि, न शाम्येत्, तस्य मद्येन विदग्धस्यात एव च कफे सौम्यधातौ क्षीणेऽत एव जाते दौर्बल्यलाघवे-अल्पप्रमाणत्वे कार्श्ये च सति, तदानीं सामर्थ्याद्वातपित्तयोरतिरिक्तता, वातपित्ताधिकस्य च क्षीणौजस्त्वात्तथा पय पथ्यम्। यथा ग्रीष्मोपतप्तस्य तरोर्वर्षम्। वर्षमिति वृषे कृद्विधौ "भयादीनामुपसङ्ख्यानम्" इत्यच्।

आ० र०-

मद्यक्षीणस्य हि क्षीणं क्षीरमाश्वेव पुष्यति ॥ ४९ ॥
ओजस्तुल्य गुणै· सर्वैर्विपरीत च मद्यत·।

स०-हि-यस्मात्, तस्य-तुल्य गुणै सर्वै -गुर्वादिभिरोजस क्षीर, मद्याच्च विपरीत गुणै। तथा च मुनि (च सू अ २७।२१७)-"स्वादु शीत मृदु स्निग्ध बहल श्लक्ष्णपिच्छिलम्। गुरु मन्द प्रसन्न च गव्य दशगुण पय॥ तदेवगुणमेवौज सामान्यादभिवर्धयेत्।" इति। यतश्चैव तस्मान्मद्यक्षीणस्य क्षीणमोज क्षीरमाश्वेव पुष्यति-वृद्धिं प्रापयति, न त्वपरं द्रव्यम्, यथोक्तहेत्वभावात्।

आ० र०-··

पयसा विहृते रोगे बले जाते निवर्तयेत् ॥ ५० ॥
क्षीरप्रयोगं, मद्यं च क्रमेणाल्पाल्पमाचरेत्।
न विक्षयध्वंसकोत्थैः स्पृश्यतेोपद्रवैर्यथा ॥ ५१ ॥

स०-पयसा रोगे-मदात्ययाख्ये, निवर्तिते बले जाते सति मद्योचित पुमान् क्षीरप्रयोग निवर्तयेत्। मद्य चाल्पाल्प क्रमेणोपयुञ्जीत। यथा विक्षयध्वसकोद्भवैरुपद्रवैरसौ न स्पृश्येत। विक्षयोद्भवा विकारा -कायशिरोरोगाद्या (हृ नि अ ६।२२), ध्वसकोपद्रवा -श्लेष्मनिष्ठीवादय (हृ नि. अ ६।२२)।

आ० र०-··· ·

१ 'धस्य एव च' ट। २ 'क्षीरं पीतमा' अ इ स मू। 'क्षीर क्षीणमा' स स। ३ 'विजिते' अ इ। 'साऽभिहते' स.च। *४ 'विद्क्षय' अ.इ स च, ट ड.। ५ 'स्पृश्येतो' इ. चन्द्र.स स.।

तयोस्तु स्याद्घृतं क्षीरं बस्तयो बृंहणाः शिवाः।
अभ्यङ्गोद्वर्तनस्नानान्यन्नपानं च वातजित् ॥ ५२ ॥

स०-तयोर्विक्षयध्वसकयोर्घृत क्षीर च चिकित्सित स्यात्। तथा बस्तयो बृहणा शिवा -निरपाया। तथा, अभ्यङ्गादीनि यच्च वातजिदन्नपान तच्च स्यात्।

आ० र०-

युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते।
अतोऽस्य वक्ष्यते योगो यः सुखायैव केवलम् ॥५३॥

स०-युक्तमद्यस्य पुसो मद्योत्थो व्याधिर्नोपजायते, युक्तमद्यत्वात्। अत -अस्माद्धेतो, अस्य-मद्यस्य, सयोगो वक्ष्यते। य केवल सुखायैव स्यात्।

आ० र०-··· ··

अधुना सुरा सम्पन्नामाह—

आश्विनं या महत्तेजो बलं सारस्वतं च या।
दधात्यैन्द्रं च या वीर्यं प्रभावं वैष्णवं च या ॥ ५४ ॥
अस्त्रं मकरकेतोर्या पुरुषार्थो बलस्य या।
सौत्रामण्या द्विजमुखे या हुताशे च हूयते ॥ ५५ ॥
या सर्वौषधिसम्पूर्णान्मथ्यमानात्सुरासुरैः।
महोदधेः समुद्भूता श्रीशशाङ्कामृतैः सह ॥ ५६ ॥
मधुमाधवमैरेयसीधुगौडासवादिभिः।
मदशक्तिमनुज्झन्ती या रूपैर्बहुभिः स्थिता ॥ ५७ ॥
यामास्वाद्य विलासिन्यो यथार्थं नाम बिभ्रति।
कुलाङ्गनाऽपि या पीत्वा नयत्युद्धतमानसा ॥ ५८ ॥
अनङ्गालिङ्गितैरङ्गैः क्वापि चेतो मुनेरपि।
तरङ्गभङ्गभ्रुकुटीतर्जनैर्मानिनीमन· ॥ ५९ ॥
एकं प्रसाद्य कुरुते या द्वयोरपि निर्वृतिम्।

१ "घृत शिव तथा क्षीर पानाय शिव तथा बस्तयो बृहणा -वृद्धिकारिण, शिवा -श्रेयस्करा।" इति चन्द्र। २ 'ङ्गोच्छादन' स मू। ३ "युक्तमद्यस्येति यथोक्तविधिना मद्यमाचरत।" इति चक्र। ४ 'मद्येन न' स मू। ५ 'त्वाद्यत। अत' ट। ६ "एवमितिहासेषु श्रूयते, यथा-किल सुराया अश्विभ्या स्वतेजो दत्तम्, सरस्वत्या च बलम्, इन्द्रेण वीर्यम्, विष्णुना प्रभाव। बलस्य-हलभृत। कुलाङ्गनाऽपि-लज्जादिमत्त्वादललिताऽपि। मुनेरपि-अभ्यस्तधैर्यस्यापि।" इतीन्दु। ७ 'च' अ इ। ८ 'मल्ल-जन्ती' ट। *९ 'मासाद्य' अ ट स मू.। *१० "या च सुरा एक मानिनीमन प्रसाद्य द्वयोरपि-मानिनीवल्लभयो, निर्वृतिं कुरुते, अतिनिबिडमानावष्टम्भपरवशाऽप्यास्वादितकादम्बरीरसा मान पृष्ठत कृत्वा अवधीरितपूर्वमपि प्रेयास प्रार्थयितु यतते। तत्र चैवमुत्प्रेक्ष्यते,-यस्या सुराया ये तरङ्गभङ्गा सैव भ्रुकुटी तया तर्जनेन सखीव सख्या वल्लभावधीरणानुतापभियेव मानिन्या मानमवधीर्य मन·

यथाकामं[1] भटावाप्तिपरिहृष्टाप्सरोगणे ॥ ६० ॥
तृणवत्पुरुषा युद्धे यां*[1]मास्वाद्य त्यजन्त्यसून् ।
यां शीलयित्वाऽपि चिर बहुधा बहुविग्रहाम् ॥६१॥
नित्यं हर्षातिवेगेन तत्पूर्वा[2]मिव*[1°] सेवते ।
शोकोद्वेगारतिभयैर्यां दृष्ट्वा नाभिभूयते ॥ ६२ ॥
गोष्ठीमहोत्सवोद्यानं न यस्याः शोभते विना ।
स्मृत्वा[3] स्मृत्वा च बहुशो वियुक्तः शोचते यया ६३
अप्रसन्नाऽपि या प्रीत्यै प्रसन्ना स्वर्ग एव या ।
अपीन्द्र मन्यते *[1]दुःस्थं *[1]हृदयस्थितया यया ॥ ६४ ॥
अनिर्देश्य*[1]सुखास्वादा स्वयं[4]वेद्यैव या परम् ।
इति चित्रास्ववस्थासु प्रियामनुकरोति या ॥ ६५ ॥
प्रियाऽतिप्रियता याति यत्प्रियस्य विशेषतः ।
या प्रीतिर्या रतिर्वा वाग्या पुष्टिरिति च स्तुता ६६
देवदानवगन्धर्वयक्षराक्षसमा[5]नुषैः ।
पानप्रवृत्तौ सत्या तु तां सु[6]रां विधिना पिबेत् ॥६७॥

स०–या–सुरा, आश्विन महत्तेजो–दीप्त, दधाति । आश्विनमित्यश्विनोरिदमित्यण्, "नस्तद्धिते" इति टिलोपे प्राप्ते "इनण्यनपत्ये" इति प्रकृतिभाव । या च सुरा सारस्वत बल–उत्साह, ऐन्द्र च वीर्यं–शक्तिं, वैष्णवं च प्रभाव–माहात्म्य, दधाति । या च मदनस्यास्त्रं–प्रहरण, बलभद्रस्य या पुरुषार्थं–परं प्रयोजनम् । या च सौत्रामण्या यज्ञे द्विजास्ये हुताशे च हूयते । या च महोदधे सर्वौषधिसम्पूर्णाद्देवदानवैर्विलोड्यमानात् लक्ष्म्यादिभि सहोत्पन्ना । या च सुरा मदशक्तिमत्यजन्ती बहुभिर्मध्वादिभिराकारै स्थिता । या सुरा पीत्वा विलासिन्यो–मृगलोचना, यथार्थं–अन्वर्थं, नाम बिभ्रति विलासो विद्यते यासामिति । या पीत्वा कुलवामलोचनाऽप्युद्धतमानसा सत्यनङ्गालिङ्गितैरङ्गैर्मुनेरपि चेत क्वापि नयति । तरङ्गभङ्गा–कुटिला, भ्रुकुटिस्तया तर्जनानि–प्रणयकलहविशेषा, तैर्मानिन्या मानसमेक प्रसाद्य द्वयोरपि–स्त्रीपुंसयो., निर्वृतिं–सौख्यं, या सुरा करोति । या सुरामास्वाद्य नरा समरे तृणमिव प्राणास्त्यजन्ति । कीदृशि युद्धे? यथेच्छ भटस्य–शूरपुरुषस्य, याऽवाप्तिस्तया परिहृष्टो–मुदित, अप्सर सङ्घो यस्मिन्नाहवे तस्मिन् । या–सुरा, बहुभि प्रकारै –आहारादिमध्यावसानलक्षणै, तथा या बहुविग्रहा–मधुमाधवादिभिरनेकशरीरा, शीलयित्वाऽपि नित्य हर्षस्यातिवेगेन तत्पूर्वमिव–तत्प्रथममिव, सेवते । या दृष्ट्वा–उपलभ्यास्वादादिना शोकादिभिर्नाभिभूयते । यस्या सुराया ऋते गोष्ठ्यादिर्न शोभते । यया च वियुक्त शोचते । शोचत इति नडिभ्यस्तङ् । यां[2] चाप्रसन्ना–कलुषाऽपि प्रीत्यै, प्रसन्ना–स्वच्छा सती, स्वर्ग एव स्यात् । यया चान्त स्थितयेन्द्रमपि दु स्थित मन्यते । अनिर्देश्य–अ[3]भणनीय सुख यस्मिन्नास्वादे स तथाविध आस्वादो यस्या सैवम् । या केवलमात्मनैव वेद्या । इति–पूर्वोक्तेन प्रकारेण, चित्रासु–नानाविधास्ववस्थासु, प्रिया–वल्लभा, अनुकरोति–अनुहरति । प्रियापक्षे नर्मार्थं –प्रणयकलहार्थं । अप्रसन्ना–कुपिता । प्रसन्ना–त्यक्तकोपा । अनिर्देश्य सुखास्वाद –सुखोपलम्भो, यस्या इति योज्यम् । एवं "या शीलयित्वा" इत्यादि सर्वोऽपि ग्रन्थ प्रियायामपि योज्य. । तथा, यत्–यस्मात्, सुरा प्रिया–इष्टा, अतिप्रियता–सुष्ठु वल्लभत्व, याति । यत्प्रियस्य–प्रकृतत्वात्सुराप्रियस्य, विशेषेण प्रियता याति । या सुरा प्रीतिरिति या वागिति या पुष्टिरिति या च देवादिभि स्तुता । पानप्रवृत्तौ सत्या येषा पानाधिकारोऽस्ति धर्मशास्त्रेष्वनिषिद्धत्वात् ता पूर्वोक्तगुणा सुरा विधिना–वक्ष्यमाणेन (श्लो० ७५), पिबेत् ।

आ० र०–

सम्भवन्ति[5] न ते रोगा मेदोनिलकफोद्भवाः ।
विधियुक्ताहृते म[6]द्याद्ये न सिध्यन्ति दारुणाः ॥६८॥

स०–ते मेदोनिलकफोद्भवा रोगा न सम्भवन्ति । दारुणा[4]–दु सहा । ये विधियुक्तान्मद्यादृते न सिध्यन्ति । विधियुक्तेन मद्येन सर्वे मेदोनिलकफजा रोगा. सिध्यन्तीति भाव. ।

आ० र०–

अस्ति देहस्य साऽवस्था यस्या पानं निवार्यते ।
अन्यत्र मद्यान्निगदाद्विविधौषधसंस्कृतात् ॥ ६९ ॥

स०–देहस्य साऽवस्था–प्रक्लिन्नदेहमेहादिका (हृ सू. अ. ८।५४) अस्ति, यस्या पान निवार्यते, मद्यादन्यत्र । किम्भूतात्? निगदात्, तथा विविधौषधसस्कृतात् । मद्यमेवाविधं वर्जयित्वा पान निषिध्यत इत्यर्थ. ।

आ० र०–······

प्रसादयति । तया च प्रसन्नमनसा द्वितीयो निर्वृतिमासादयति, तदिद सुराया महत्कौशलम्, यदेकत्र प्रसादमापाद्यान्यत्र निर्वृतिमातनोति । येनैव प्रिया आस्वादिता भवति स एवाप्सरोविषयेऽतिशय पश्यस्तल्लाभोपाये युद्धे तृणवदसूस्त्यजति । चिर शीलयित्वाऽपि पुरुषो नित्य तत् पूवमिव सेवते–सदैवाभिनवामेवातिप्रियत्वात् जानातीत्यर्थं । प्रियाऽपि बहुधा रतिप्रयोगैर्बहुविग्रहाऽनेकश कृतप्रणयकलहाऽपि नित्य हर्षातवेगेनाभिनवेव सेव्यते । यया च सुरया हृदयस्थितया–पीतया पुरुष इन्द्रमपि दु.स्थ मन्यते–आत्मानमेव सुस्थम् । सुखमास्वादश्च यस्या परस्य निर्देष्टुमिदतया न पार्यते ।" इतीन्दु. ।

१ 'कामभ' इ स स । २ 'तत्पूर्वामि' स मू । ३ 'स्वा तु या च' ट । ४ 'स्वसवे' स स । ५ 'मानवै अ. । ६ "प्रथम देवैरेव परिपूजिता तत. सुरयोगात् सुरेत्युपदिष्टा ।" इति चक्र ।

१ 'तत्र प्रथमविधियुक्त ।' ड । २ 'या वाऽप्र' ट.ड. । ३ 'अवर्णनीय' इति क्वचित् । ४ 'त् । ततो मेदो० णा –दु साध्या । विधि० दृते ते न' ड । ५–६ 'न्ति च ये रो' 'द्यात्ते न' अ.इ स.मू । ७ 'धसम्भृता' अ.स.ड. ।

**आनूपं जाङ्गलं मांसं विधिनाऽप्युपकल्पितम् ।**
**मद्यं सहायमप्राप्य सम्यक् परिणमेत्कथम् ॥ ७० ॥**

स०-आनूपं जाङ्गलं मांसं विधानेनाप्युपकल्पितं मद्यं विनोपयुक्तं कथं सम्यक् परिणमति[१] ।

आ० र०-……

पुनरपि मद्यमेव श्लाघयन्नाह—

**सुतीव्रमारुतव्याधिघातिनो लशुनस्य च ।**
**मद्यमांसवियुक्तस्य प्रयोगे स्यात्कियान् गुणः ॥७१॥**

स०-लशुनस्य च दारुणतरवातव्याधिविनाशिनः मद्यमांसरहितस्य[२] प्रयोगे कियान् गुणः स्यात्[२] अल्प एवेत्यर्थः ।

आ० र०-……

**निगूढशल्याहरणे शस्त्रक्षाराग्निकर्मणि[५] ।**
**पीतमद्यो विषहते[६] सुखं वैद्यविकत्थनाम् ॥ ७२ ॥**

स०-तथा निगूढस्य-अत्यर्थं प्रणष्टस्य, शल्यस्याहरणे-आकर्षणे, तथा शस्त्रादिकर्मणि पीतमद्यो नरः सुखं-अक्लेशेन, वैद्यविकत्थनां-कदर्थनां, सहते ।

आ० र०-……

**अनलोत्तेजनं रुच्यं शोकश्रमविनोदकम्[७] ।**
**न चातः[८] परमस्त्यन्यदारोग्यबलपुष्टिकृत् ॥ ७३ ॥**

स०-तथा,अनलस्य-अग्नेः,उत्तेजनं रुच्यं शोकादिघ्नम् । न च कदाचित् त(अ)स्मान्मद्यात् परं-अन्यत्, श्रेष्ठमस्त्यारोग्यादिकृत् ।

आ० र०-……

**रक्षता जीवितं तस्मात्पेयमात्मवता सदा ।**
**आश्रितोपाश्रितहितं परमं धर्मसाधनम् ॥ ७४ ॥**

स०-यत एव महागुणं मद्यम्, तस्माज्जीवितं रक्षता नरेण तथाऽऽत्मवता-सुधीमता, सदा पेयम् । आश्रितानामुपाश्रितानां च हितम् । परमं धर्मसाधनं-धर्मोपायः ।

आ० र०-……

अथास्य पाने विधिमाह—

**स्नातः प्रणम्य सुरविप्रगुरून् यथास्वं**
**वृत्तिं विधाय च समस्तपरिग्रहस्य ।**
**आपानभूमिमथ गन्धजलाभिषिक्ता-**
**माहारमण्डपसमीपगतां श्रयेत ॥ ७५ ॥**

**स्वास्तृतेऽथ शयने कमनीये**
**मित्रभृत्यरमणीसमवेतः ।**
**स्वं यशः कथकचारणसङ्घै-**
**रुद्धतं निशमयन्नतिलोकम्[*१] ॥ ७६ ॥**

**विलासिनीनां च विलासशोभि**
**गीतं सनृत्यं कलतूर्यघोषैः ।**
**काञ्चीकलापैश्चलकिङ्किणीकैः**
**क्रीडाविहङ्गैश्च कृतानुनादम् ॥ ७७ ॥**

**मणिकनकसमुत्थैरावरेयैर्विचित्रैः**
**[*]सजलविविधलेखक्षौमवस्त्रावृताङ्गैः ।**
**अपि मुनिजनचित्तक्षोभसम्पादिनीभि-**
**श्चकितहरिणलोलप्रेक्षणीभिः प्रियाभिः ॥ ७८ ॥**

**स्तननितम्बकृतादतिगौरवा-**
**दलसमाकुलमीश्वरसम्भ्रमात् ।**
**इति [*]गतं दधतीभिरसंस्थितं**
**तरुणचित्तविलोभनकार्मणम् ॥ ७९ ॥**

**यौवनासवमत्ताभिर्विलासाधिष्ठितात्मभिः ।**
**सञ्चार्यमाणं युगपत्तन्वङ्गीभिरितस्ततः ॥ ८० ॥**

**तालवृन्तनलिनीदलानिलैः**
**शीतलीकृतमतीव[*१] शीतलैः ।**
**दर्शनेऽपि विदधद्दृशां गुणं**
**स्वादितं किमुत चित्तजन्मनः ॥ ८१ ॥**

**चूतरसेन्दुमृगैः कृतवासं**
**मल्लिकयोज्ज्वलया च सनाथम् ।**
**स्फाटिकशुक्तिगतं सतरङ्गं**
**कान्तमनङ्गमिवोद्वहदङ्गम् ॥ ८२ ॥**

[*१] "निशमयन्-मनसा गृह्णन् । उत्कर्षेण लोकमतिक्रान्तं-अतिलोकम् । आवरेयैः-भाण्डविशेषैः । सजलानि-जलार्द्राणि, विविधभक्तीनि-नानाविधरचितशकुनिपत्रादिविच्छेदानि, यानि क्षौमाणि । लोलप्रेक्षणीभिः-चञ्चलप्रेक्षणीभिः । गतं दधतीभिः-गमनं धारयन्तीभिः । यौवनमेव मदहेतुत्वादासवस्तेन मत्ताभिः, युगपद्युगपद्भिः । चन्दनाद्यम्बुसंयोगात्-अतीव शीतलैः । चूतरस-सहकारः । इन्दुः-कर्पूरः । मृगः-कस्तूरिका । तत्-मद्यं, ये प्रार्थयन्ति-अभिलषन्ति भूतविशेषाः, तेभ्यः । सर्वमेव-परिवारं, उपलालयन्-सान्त्वयन् । कान्तामुखसदृशं यतः सौरभेण हृतो मधुपगणः-अलिसमूहो, येन एवंभूतं मद्यं पिबेत् ।" इतीन्दुः ।

१ 'थः सपरि' ट ड । २ 'वः विशेषय' इति क्वचित् । ३ 'योगः' अ स मू । 'योगात्स्या' इ । ४ 'स्य किया' ट ड । ५ 'कर्मसु' अ । ६ "विषहते-साधु सोढुं शक्नोति । अत इति मद्यात् । आश्रिताः-उपकृताः भृत्यबान्धवाद्याः । उपाश्रिताः-आश्रिताश्रिताः ।" इतीन्दुः । ७ 'दनम्' अ इ स मू । 'विनाशकम्' स स. । ८ 'धनमुपायः' ट.ड । ९ 'पानवि' ट ।

२ 'नृत्त' इ स ह । ३ 'पैः स्फुटकि' अरुण । ४ 'त्थैः पानपात्रैर्वि' इ । 'रावरेयैः' स स । 'त्थैरोपगेयैः' इति क्वचित् । ५ 'धभक्तिक्षौ' इ स स । ६ 'क्षणाभिः' इ. । ७ 'सेवित' अ । ८ 'याऽथ स' इ । ९ 'सुत' इ ।

तालीसाद्यं चूर्णमेलादिकं वा
हृद्यं प्राश्य प्राग्वय:स्थापनं वा ।
तत्प्रार्थिभ्यो भूमिभागे सुमृष्टे
तोयोन्मिश्रं दापयित्वा ततश्च ॥ ८३ ॥
धृतिमान् स्मृतिमान्नित्यमनूनाधिकमाचरन् ।
उचितेनोपचारेण सर्वमेवोपपादयन् ॥ ८४ ॥
जितविकसितासितसरो-
जनयनसङ्क्रान्तिवर्धितश्रीकम् ।
कान्तामुखमिव सौरभ-
हृतमधुपगणं पिबेन्मद्यम् ॥ ८५ ॥

स०—स्नातो नर सुरादीन् प्रणम्य यथास्व—यथायोग्य, समस्तस्य परिकरस्य वृत्तिं कृत्वा, अथ पानभूमिं गन्धजलेन—कर्पूरोशीरादिना वा सितेनाम्बुना, अभिषिक्तामाश्रयेत्। कीदृशीम्? आहारमण्डपस्य निकटस्थिताम् । पीतमद्यस्य दूर व्रजत आयासादि स्यात् । वसन्ततिलक वृत्तम् ।

अथ—भूमिश्रयणादनन्तर, शयनीये स्थितो मद्य पिबेदिति वक्ष्यमाणेन सम्बन्ध । किम्भूते? सुष्ठु आस्तृते—प्रदत्तप्रच्छदपटे । तथा, कमनीये—रम्ये । मित्रादिसहित । स्व यश इत्यादि । किं कुर्वन्? स्व—आत्मीय, यश कथकादिसङ्घैर्निशमयन्—श्रावयन् । कीदृशम्? उद्धत तथाऽतिलोक—अद्भुतरूपम् । स्वागतावृत्तम् ।

तथा विलासिनीना सम्बन्धि गीत निशमयन् । किम्भूतम्? सह नृत्येन सनृत्यम् । द्वयमपि विलासशोभि । विलासलक्षण चोक्तम्—"स्थानासनगमनाना हर्षभ्रूनेत्रकर्मणा चैव । उत्पद्यते विशेषो य श्लिष्ट स तु विलास' स्यात् ॥" इति । तथा तद्गीत मधुरतूर्यशब्दैस्तथा काञ्चीकलापै स्फुटास्तथा स्फुरन्त्य किङ्किण्य—सूक्ष्मघण्टिका, येषा तैस्तथाविधैस्तथा क्रीडाविहङ्गै—सारसादिभिश्च, कृतानुनादम् । उपजातिवृत्तम् ।

आवनेयै—डोलुङ्गकै, तन्वङ्गीभिर्युगपदितस्तत सञ्चार्यमाणम् । एव ह्यनुभूयमान रामणीयक धत्ते । किम्भूतैरावनेयै? मणिकनकसमुत्थै, तथा विचित्रै—नानाविधै, तथा सजल नानाप्रकारलेखं यत् क्षौमवस्त्र तेनावृतमङ्ग येषा तै । किम्भूताभिस्तन्वङ्गीभि? मुनिजनचित्तक्षोभसम्पादिनीभि । तथा, चकित—त्रस्तो, यो हरिणस्तद्वन्नेत्रै साधु प्रेक्षन्ते यास्ताभि । बाहुलकात् कर्तरि ल्युट् । तथा, वल्लभाभि । मालिनीवृत्तम् ।

तथा, गतमिति । असस्थित—अनवस्थितस्वरूप, दधतीभि । यत स्तनाभ्या नितम्बेन च कृतादधिक गौरवादलसम् । तथा, ईश्वरस्य—प्रभो, य सम्भ्रमो—भय, तस्मादाकुल [गत—]गमनम् । अत एव च तरुणचित्ताना विलोभने कार्मण—वशीकरणम् । "द्रुतविलम्बितमाह नभौ भरौ ।"

तथा, तन्वङ्गीभिरितस्ततो युगपत्सञ्चार्यमाणम् । किम्भूताभि? यौवनासवाभ्या मत्ताभि । तथा विलासेनाधिष्ठित आत्मा—चित्त, यासा ताभि । तथा च कीदृश मद्यम्? तालवृन्तादिभिरतिशीतै शीतलीकृतम् । दर्शनेऽप्येवरूप मद्य कामस्य वशानुग जन विदधत् कन्दर्पोद्दीपनत्वात् । किमुत—किपुन, पीत सत्कामवश जन कुर्यात् । "रान्नरौ लगयुता रथोद्धता ।"

तथा, चूतरसादिभि कृताधिवास—सुगन्धीकृतम् । तथा, मल्लिकया—पुष्पविशेषेण, उज्ज्वलया—विकसितया, सनाथ—युक्तम् । तथा, स्फटिकस्य विकारा स्फाटिकी, स्फाटिकी चासौ शुक्तिश्च, तस्या गत—स्थितम् । स्फटिकस्येय स्फाटिकीति व्युत्पत्तौ पुवद्भावो दुर्निवार स्यात् । तथा, सतरङ्गम् । एव च कान्त—रम्य, अङ्गमुद्वहन् । उत्प्रेक्षते । अनङ्ग [इव]—पञ्चशरमिव, चारुतरत्वेन कामोत्पादकत्वात् । दोधकवृत्तम् ।

प्राक्—पूर्व, तालीसाद्य चूर्णमेलादिकं वा हृद्यमथवा वय-स्थापन—रसायनोक्त, प्राश्य—भक्षयित्वा । तथा, सुमृष्टे—उपलिप्ते, भूमिभागे तत्प्रार्थिभ्यो—मद्यपानाधिकृतेभ्यो देवदानवकूष्माण्डादिभ्य, तोयोन्मिश्रं मद्य दापयित्वा पश्चाज्जल दापयितव्यमित्यर्थ । ततश्च—अनन्तर, पिबेत् । शालिनीवृत्तम् ।

किं कुर्वन्? अनूनाधिक—पूर्वोक्त, नित्यमाचरन् । धृतिमान् स्मृतिमाश्च सन् उचितेन—योग्येन, उपचारेण सर्वमेवोपपादयेत्(यन्) ।

किम्भूत मद्यम्? विकसित च तत् असित सरोजं च विकसितासितसरोजम् । जित—न्यक्कृत, विकसितासितसरोज याभ्या नयनाभ्या ते तथाविधे, तयो सङ्क्रान्त—प्रतिबिम्बत्व, तया सवर्धिता श्रीर्यस्य सरकस्य तदेवम् । तथा, सौरभेण हृतो रम्यगतित्वाद् भ्रमरसार्थो येन तदेवम् । सुरभेर्भाव सौरभम्, "इगन्ताच्च लघुपूर्वात्' इत्यण् । तच्च कान्तामुखमिव । यतो जितविकसितासितसरोजनयनयोर्या सङ्क्रान्ति—सञ्चार सकटाक्षेक्षितादिना, तया सवर्धिता श्री—शोभा, यस्य तदेवम् । सकटाक्षेक्षित हि मुख नितरा राजते । तथा, उत्तमस्त्रीणा मुख सुगन्धि भवतीति सौरभहृतमधुपगणम् । "विपुला तु याऽन्यथा पादभाक् ।"

आ० र०— · ···

पीत्वैवं चषकद्वयं परिजनं सन्मान्य सर्वं ततो
गत्वाऽऽहारभुवं पुरः सुभिषजो भुञ्जीत भूयोऽत्र च ।
मांसापूपघृतार्द्रकादिहरितैर्युक्तं ससौवर्चलै-
र्द्विस्त्रिर्वा निशि चाल्पमेव वनितासंवलनार्थं पिबेत्

स०—एव—अनेन प्रकारेण, चषकद्वयं पीत्वा तत —अन-

१ 'प्राश्य' अ इ स मू । २ 'मन्यूना' इ । ३ 'उदिते' इ । ४ 'पलालयन्' इ स स । ५ 'क्रान्तव' अ । 'यन्नं सत्कान्ति' इ । ६ 'नृत्तेन सनृत्तम्' ड । ७ 'रावनेयै—दोलु' ट.ड । 'औपगेयै.' इति क्वचित् ।

१ 'अन्यूना' ट. । २ सार्थ —समूह. । ३ 'कन्नय' इ स स । ४ 'सम्भाव्य' अ । ५ "अल्प वनितासवलनामात्र पिबेत्—यावता चित्तोल्लासेन केलिसुख भवति ।" इतीन्दु. । ६ 'ससर्गणार्थं' स मू ।

न्तर, परिजन सर्व-वेश्यादिकमपि, सन्मान्य तथाऽऽहारभुव गत्वा सुभिषज-शोभनवैद्यस्य, पुर-अग्रे, भुञ्जीत । अत्र च-आहारभुवि, मासापूपादिभिर्युक्त द्विस्त्रिर्वा सरक पिबेत् । मासापूरेति केचित् पेठु । निशि तु कान्ताया [1]सवल्गनार्थ-रञ्जनार्थं, अल्पमेव पिबेत्-न तु बहु । शार्दूलविक्रीडितम् ।

आ० र०-······

कान्तारञ्जनपान श्लाघयन्नाह—

**रहसि दयितामङ्के कृत्वा भुजान्तरपीडना-**
**त्पुलकिततनु जातस्वेदां सकम्पपयोधराम् ।**
**यदि सरभसं [2]शीधोर्वारं न पाययते कृती**
**किमनुभवति क्लेश[3]प्रायं [4]ततो गृहतन्त्रताम् ॥८७॥**

स०-कृती-प्रवीणो, यदि प्रिया मद्यो सरक न पाययते, तत कि-कस्मात्, गृहतन्त्रता-गृहोपकरणसम्पादनक्लेशं, अनुभवति ? । कि कृत्वा ? रहस्यङ्के-उत्सङ्गे, दयिता कृत्वा । किम्भू ताम् ? भुजान्तरपीडनात् पुलकितशरीराम्, तथा जातस्वेदाम्, तथा सवेपथुकुचाम् । रोमाञ्चस्वेदकम्पा सात्त्विका भावा शृङ्गारस्याविर्भाविका । दयितामिति "गतिबुद्धि" इत्यादिना कर्मत्वम् । पाययते इति "निगरणचलनार्थेभ्यश्च" इति परस्मैपदे प्राप्ते "न पादम्य" इत्यादिना निषिद्धे च स्वेत्याद्यात्मनेपदम् । "भवति हरिणी न्सौ म्रौ स्लौ गोरसोदधिसप्तिभि ।"

आ० र०-······

**वैरतनुवक्त्रसङ्गतिसुगन्धितरं सरकं**
**द्रुतमिव पद्मरागमणिमासवरूपधरम् ।**
**भवति रतिश्रमेण च मदः पिबतोऽल्पमपि**
**क्षयमत ओजसः परिहरन् स शयीत परम् ॥८८॥**

स०-किम्भूत मद्यम् ? वरतनुवदनसङ्गत्या सुरभितरम् । तथा पद्मरागमणिं द्रुतमिव-द्रवत्वमिव, प्राप्तमासवरूपधरम् । यतश्च रतिश्रमेणाल्पमपि मद्य पिबतो मदो भवति, ततो मद्यमोजसश्च क्षयहेतु । अत ओज क्षय परिहरन् स-मद्यपायी, पानानन्तर शयीत-स्वप्यात् । "नजभजजा लगौ च यदि [5]नर्कुटक तु तदा ।"

आ० र०-··· ··

**इत्थं युक्त्या पिबन्मद्यं न त्रिवर्गाद्विहीयते ।**
**असारसंसारसुखं परम चाधिगच्छति ॥ ८९ ॥**
**ऐश्वर्यस्योपभोगोऽयं स्पृहणीयः सुरैरपि ।**

स०-इत्थ-एवप्रकारया, युक्त्या मद्य पिबन् पुरुषस्त्रिवर्गात्-धर्मार्थकामलक्षणात्, यस्मान्न हीयते । हीयत इति कर्मकर्तरि तङ् । असारससारस्य परम सुख चाधिगच्छति-प्राप्नोति । अय-मद्यपानलक्षण, ऐश्वर्यस्योपभोग सुरैरपि स्पृहणीय ।

आ० र०- ···

**अन्यथा हि [1]विप[2]त्सु स्यात्पश्चात्तापेन्धनं धनम् ९०**
**उपभोगेन रहितो भोगवानिति निन्द्यते ।**
**निर्मितोऽतिकदर्योऽयं विधिना निधिपालकः ॥९१॥**
**त[3]स्माद्व्यवस्थया पानं पानस्य सततं हितम् ।**
**जित्वा विषयलुब्धानामिन्द्रियाणां स्वतन्त्रताम् ९२**

स०-अन्यथा-एवमपि भोगमकुर्वतो, हि विपत्सु सतीषु धन-द्रव्य, पश्चात्तापेन्धन स्यात् । स ह्येव विपदि चिन्तयति,-कि मया धन प्राप्योपभोगोऽस्मिन् कृत ? इति । उपभोग विना भोगवानिति सोल्लुण्ठमुच्यमानो गर्ह्यते । निन्दितत्वमेवास्य प्रकटयति-निर्मित इत्यादि । अयमतिकदर्य-कुत्स्वामी, विधिना निधिपालको निर्मित-कृत । यत एवं तस्मात् पानस्य-मद्यस्य, व्यवस्थया नियमेन पान हितम् । ननु, कथ निसर्गतो विषयलुब्धेष्विन्द्रियेषु व्यवस्था पालयितु शक्यते ? इत्याह-जित्वेत्यादि । विषयाभिलाषिणामिन्द्रियाणा स्वातन्त्र्य जित्वा नियमेन व्यवस्थया पान कर्तुं शक्यत इत्यर्थ ।

आ० र०- ·····

**विधिर्वसुमतामेष [4]भविष्यद्वसवस्तु ये ।**
**यथोपपत्ति तैर्मद्य पातव्यं मात्रया हितम् ॥ ९३ ॥**

स०-वसुमता-धनिना, एष विधि । ये तु भविष्यद्वसवस्तेषा च तैर्यथोपपत्ति-यथायुक्ति, हित मद्य मात्रया पातव्यम् ।

आ० र०-

**यावद् दृष्टेर्न सम्भ्रान्तिर्यावन्न क्षोभते मनः ।**
**तावदेव विरन्तव्यं मद्यादात्मवता सदा ॥ ९४ ॥**

स०-यावदेव दृष्टेर्न सम्भ्रान्तिर्यावदेव मनो न क्षोभं याति, तावदेव मद्यात् धीमता सर्वदा विरन्तव्य-निवृत्ति कार्या । एष एव समयोग । एतदतिक्रमोऽतियोग । यथोक्तात्समयोगाद्धीनस्त्वलक्षणो हीनयोग । दोषदेशप्रकृत्यादीनपरीक्ष्य मिथ्यायोग ।

आ० र०- ·

**अभ्यङ्गोद्वर्तनस्नानवासधूपानुलेपनैः ।**
**स्निग्धोष्णैर्भावितश्चान्नैः पानं वातोत्तरः पिबेत् ९५**

स०-वाताधिको नरोऽभ्यङ्गोद्वर्तनादिभि स्निग्धोष्णैर्भावितोऽन्नैश्च मद्य पिबेत् ।

आ० र०- ·

१ 'सञ्चालना' ट । २ 'सीधूद्गारं' अ स मू । ३ "वार-एक चषकम् । गृहतन्त्रता-गृहविषमताम् । क्लेशप्राय-बहुक्लेशम् ॥ वरतनो-कान्ताया ॥ परम-स्वादु विषयभोगाख्यम् ।" इतीन्दु । ४ 'प्राया वृथा गृ' अ । 'प्राया तदा गृ' इ.स मू । 'य तदा गृ' स.स. । ५ 'मर्कु' ड. । 'नर्दटक' वृ.र ।

१ "विपत्सु-राजोपद्रवादिषु, धन पश्चात्तापस्येन्धन-उद्दीपक, स्यात् ॥ भविष्यद्वसुशब्देन दरिद्रा उक्ता, भविष्यन्ति वसूनि येषामित कृत्वा ।" इतीन्दु । २ 'पत्स्वस्य प' अ. । ३ 'स्मादव' इ. । ४ 'सित्र कृत इति' ट. ।

**शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः ।**
**पैत्तिको भावितश्चान्नैः पिबन्मद्यं न सीदति ॥ ९६ ॥**

स०-पैत्तिको विविधै शीतोपचारै -चन्दनानुलेपनादिभि , मधुरस्निग्धशीतलैश्चान्नै सह मद्य पिबन् न सीदति ।

**आ० र०-……**

**उपचारैरशिशिरैर्यवगोधूमभुक् पिबेत् ।**
**श्लैष्मिको[1] धन्वजैर्मांसैर्मद्यं[2] मारिचिकैः[3] सह ॥ ९७ ॥**

स०-श्लैष्मिको यवगोधूमभुक् सन् मद्यमशिशिरैरुपचारैस्तथा मासैर्धन्वोद्भवैर्मरिचसस्कृतै सह पिबेत् ।

**आ० र०-…**

**तत्र वाते हितं मद्यं प्रायः पैष्टिकगौडिकम् ।**
**पित्ते साम्भोमधु, कफे मार्द्वीकारिष्टमाधवम्[4] ९८**

स०-तत्र-तेषु मद्येषु मध्ये, वाताधिके नरे प्रायो-बाहुल्येन, मद्य पैष्टिक गौडिक च हितम् । पित्ते सजल समाक्षिक च मद्य हितम् । कफे मार्द्वीकारिष्टमाधव हितम् ।

**आ० र०-……**

**प्राक् पिबेच्छ्लैष्मिको मद्यं, भुक्तस्योपरि पैत्तिकः ।**
**वातिकस्तु पिबेन्मध्ये, समदोषो यथेच्छया[5] ॥९९॥**

**इति मदात्ययचिकित्सितम् ।**

स०-श्लैष्मिक. प्राग्भक्त मद्यं पिबेत् । पैत्तिको भक्त भुक्त्वा पिबेत् । वातोत्तर पुनर्मध्ये भक्तस्य पिबेत् । समदोषो यथेच्छया-भक्तस्य पूर्व मध्येऽन्ते वा, पिबेत् ।

**आ० र०-…**

**अथ मदमूर्च्छायचिकित्सितम् ।**

**मदेषु वातपित्तघ्नं प्रायो मूर्च्छासु चेष्यते ।**
**सर्वत्रापि विशेषेण पित्तमेवोपलक्षयेत् ॥ १०० ॥**

स०-मदेषु प्रायेण वातपित्तघ्न चिकित्सितम्, मूर्च्छासु-मूर्च्छायेषु चेष्यते । सर्वत्रैव-मदे मूर्च्छाये च, पित्तमेवाधिक जानीयात्[*6] ।

**आ० र०-अथ मदादिचिकित्सितम् । तत्र मदमूर्च्छयोराह-मदेष्विति । सर्वत्रापि-कफजादिष्वपि । वातपित्तघ्नेऽपि पित्तघ्नं विशेषत ।**

१ 'को जाङ्गलैर्मां' अ इ चन्द्र । २ "धन्वज-जाङ्गलम् । मरिचेन सस्कृत मारिचिकम् ॥ पित्ते मधु-माक्षिक साम्भ ॥ प्रायोग्रहण व्यभिचारसूचनार्थम् ।" इतीन्दुः । "पैष्टिक-शालिपिष्टेन कृतम् । गौडिक-गुडकृतम् । मधु-मार्द्वीक, साम्भ-सतोय, हितम । माधव-मधुना कृतम् ।" इति चन्द्र । ३ 'मरिचकै' अ इ चन्द्र स मू । ४ 'माध्वीका' अ । ५ 'यदृच्छ' अ इ.। 'थेच्छति' चन्द्र. सं द्व । *६ 'त् । एवमेतेषा' ट. ।



[*]अत एव तेषामुपक्रम —

**शीताः प्रदेहा मणयः सेका व्यजनमारुताः ।**
**सिता द्राक्षेक्षुखर्जूरकाश्मर्यरसा[1] पयः ॥ १०१ ॥**
**सिद्धं मधुरवर्गेण रसा यूषाः सदाडिमाः ।**
**षष्टिकाः शालयो रक्ता यवाः सर्पिश्च जीवनम्[2] १०२**
**कल्याणकं महातिक्तं षट्पलं पयसाऽग्निकः ।**
**पिप्पल्यो वा शिलाह्वं वा रसायनविधानतः[3]॥१०३॥**
**त्रिफला वा प्रयोक्तव्या सघृतक्षौद्रशर्करा ।**

स०-शीता प्रदेहा । पयो मधुरवर्गेण-द्राक्षादिना, सिद्धम् । तथा, रसा -मासरसादय । यूषाश्च दाडिमान्विता । तथा, शालयो-रक्तशालय इत्यर्थ । षष्टिकादयश्च । तथा, घृत कल्याणकादिकम् । [कल्याणक-] उन्मादप्रतिषेधोक्तम् (हृ उ अ ६।२६) । महातिक्त-कुष्ठचिकित्सितोक्तम् (हृ चि अ १९।८) । षट्पल-राजयक्ष्मचिकित्सितोक्तम् (हृ चि अ ५।२२) । तथा, क्षीरेण चित्रकम् । तथा, पिप्पल्यो रसायनविधानेन । अथवा, शिलाजतु रसायनविधानेन । अथवा, त्रिफला सघृतक्षौद्रशर्करा प्रयोक्तव्या ।

**आ० र०-तदेव प्रपञ्चयति-प्रदेहा इति । जीवनादीनि चत्वारि सर्पींषि । अग्निकादीनि चत्वारि रसायनानि । अग्निक.-चित्रक । तत्र त्रीणि पयसा । त्रिफला घृतादिभि ।**

**प्रसक्तवेगेषु[4] हितं मुखनासावरोधनम् ॥ १०४ ॥**
**पिबेद्वा मानुषीक्षीरं[5] तेन दद्याच्च नावनम् ।**
**मृणालबिसकृष्णा वा लिह्यात्क्षौद्रेण साभयाः १०५**
**दुरालभां वा मुस्तं[6] वा शीतेन सलिलेन वा ।**
**पिबेन्मरिचकोलास्थिमज्जोशीराहिकेसरम् ॥ १०६ ॥**
**धात्रीफलरसे सिद्धं पथ्याक्वाथेन वा घृतम् ।**

स०-प्रसक्तवेगेषु मदादिषु मुखस्य नासायाश्च पाण्यादिनाऽवरोधन हितम् । मानुष्या वा क्षीरं पिबेत् । तेन च-मानुषीक्षीरेण, नस्य दद्यात् । मृणालादीन् सहरीतकीन् माक्षिकेण वा लिह्यात् । अथवा धन्वयवास मुस्तं वा मधुना लिह्यात् । अथवा शीतेन जलेन मरिचादीन् पिबेत् । अहिकेसर-नागकेसरम् । अथवा, आमलकरसे सिद्धं घृत हरीतकीक्वाथेन वा सिद्ध पिबेत् ।

**आ० र०-प्रसक्तवेगेषु विशेषमाह-प्रसक्तवेगेष्विति । मरिचादिचतुष्क शीतोदकेन पिबेत् । वङ्गसेने ( मूर्च्छाधिकारे श्लो २२ )-"महौषधामृताक्षुद्रापौष्करग्रन्थिकोद्भवम्[7] । पिबेत्कणायुत क्वाथ मूर्च्छासु[8] च मदेषु च ॥ स्विन्नमामलक पिष्ट्वा द्राक्षया सह ससृजन् । विश्वभेषजसयुक्त**

१ 'यो मुद्रा य' स स.। २ जीवन सर्पि -जीवनीयगणेन सिद्ध घृतम् (हृ उ अ ३४।४१) । ३ 'यनेन विधिना' ट । ४ "प्रसक्तवेगेषु-सततवेगेषु । अवरोधन-निरुच्छ्वासीकरणम् ।" इति चन्द्र । ५ 'नुष क्षी' फ । ६ 'मुस्ता वा' स स । ७ 'ताद्राक्षापुष्कर' फ.। ८ 'च्छाया च' वङ्ग ।

मधुना सह लेहयेत् । तेनास्य शाम्यते मूर्च्छा कास श्वासस्तथव च ॥ पञ्चमूलीकषाय च मधुना सितयाऽपि वा । यथास्व च ज्वरघ्नानि कषायाणि प्रयोजयेत् ॥ रक्तजाया तु मूर्च्छाया हित शीतक्रियाविधि । मद्यजायां पिबेन्मद्य निद्रा सेवेत वा सुखम् ॥ त्रिफलाया प्रयोगो वा प्रयोग पयसोऽपि वा। रसायनाना कौम्भस्य सर्पिषो वा प्रशस्यते॥ अञ्जनान्यवपीडाश्च धूमा प्रधमनानि च । पिबेद्दुरालभाक्काथ सघृत भ्रमशान्तये ॥ कृष्णाशताह्वाशुण्ठीना प्रत्येक तु पल पलम् । गुडात्पलानि चत्वारि गुटिका भ्रमनाशिनीम् ॥ कृष्णाशताह्वाशुण्ठीनामभयाना पल पलम् । गुडस्य षट्पलान्येषा गुटिका भ्रमनाशिनी ॥" इति । योगरत्ने-"मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुडार्द्रक प्रात । सप्ताहात्पथ्यभुजो मदमूर्च्छा[कास]कामलोन्मादान् ॥ शीतेन तोयेन पिबेन्मृणाल क्षौद्रेण कृष्णा सितया च पथ्याम् ।" इति ।

**कुर्यात्क्रियां यथोक्तां च यथादोषबलोदयम् ॥१०७॥**

स०-यथोक्ता च क्रिया दोषबलोदयानुसारेण कुर्यात् ।

आ० र०-विशेषचिकित्सामाह-कुर्यात्क्रियामिति । सामान्यशक्ति विचार्य विशेष प्रयुञ्जीत ।

**पञ्चकर्माणि चेष्टानि सेचनं शोणितस्य च ।**

स०-पञ्चकर्माणि-वमनविरेकास्थापनान्वासननस्याख्यानि, चेष्टानि रक्तमोक्षश्च ।

आ० र०-शोधनमाह-पञ्चकर्माणि चेति ।

**सत्त्वस्यालम्बनं ज्ञानमगृद्धिर्विषयेषु च ॥ १०८ ॥**

स०-सत्त्वस्यालम्बन-आश्रयणम् । तथा, ज्ञान-महाभूतेन्द्रियतन्मात्रमनोबुद्ध्यहङ्कारपुरुषादीनाम् । विषयेष्वगृद्धि-अनभिलाष ।

आ० र०-सत्त्वावजयमाह-सत्त्वस्यालम्बनमिति ।

**मदेष्वतिप्रवृद्धेषु मूर्च्छायेषु च योजयेत् ।**
**तीक्ष्णं सन्न्यासविहितं**

स०-मदेषु मूर्च्छायेषु अतिप्रवृद्धेषु तीक्ष्ण नस्यादि सन्न्यासोक्त योजयेत् ।

आ०र०-अतिप्रवृद्धानामौषधमाह-मदेष्वतिप्रवृद्धेष्विति ।

**विषघ्नं विषजेषु च ॥१०९॥**

**इति मदमूर्च्छायचिकित्सितम् ।**

स०-तथा विषजेषु मदेषु विषघ्न चिकित्सित योजयेत् ।

आ० र०-विषजानामौषधमाह-विषघ्न विषजेषु चेति ।

## अथ सन्न्यासचिकित्सितम् ।

**आशु प्रयोज्यं सन्न्यासे सुतीक्ष्णं नस्यमञ्जनम् ।**
**धूमः प्रधमनं तोदः सूचीभिश्च नखान्तरे ॥ ११० ॥**
**केशानां लुञ्चनं दाहो दशो दशनवृश्चिकैः ।**
**कट्वम्लगालनं वक्त्रे कपिकच्छ्ववघर्षणम् ॥ १११ ॥**
**उत्थितो लब्धसंज्ञश्च लशुनस्वरसं पिबेत् ।**
**खादेत्सव्योषलवणं बीजपूरककेसरम् ॥ ११२ ॥**
**लघ्वन्नप्रति तीक्ष्णोष्णमद्यात्स्रोतोविशुद्धये ।**

स०-सन्न्यासे शीघ्र सुष्ठु नस्यमञ्जन धूम प्रधमन च प्रयोज्यम् । सूचीतोदादिक च नखमध्ये । तथा, वक्त्रे कटूना-मरिचादीना, अम्लाना-मातुलुङ्गादीना, च गालन प्रयोज्यम् । तथा । कपिकच्छ्ववघर्षणम् । एवमुपक्रान्त समुत्थितो लब्धचेतनश्च सन् लशुनस्वरस पिबेत् । तथा, बीजपूरककेसर सव्योषलवण भक्षयेत् । स्रोतोविशोधनार्थं लघ्वन्नप्रति भुञ्जीत । कीदृशम्? तीक्ष्णोष्णम् । लघ्वन्नप्रतीति अल्पलघ्वन्नम् । "सुप्प्रतिना मात्रार्थे" इति समास ।

आ० र०-सन्न्यासस्यौषधमाह-आशु प्रयोज्यमिति ।

**विस्मापनैः संस्मरणैः प्रियश्रवणदर्शनैः ॥ ११३ ॥**
**पटुभिर्गीतवादित्रशब्दैर्व्यायामशीलनैः ।**
**स्रंसनोल्लेखनैर्धूमैः शोणितस्यावसेचनैः ॥ ११४ ॥**
**उपाचरेत्तं प्रततमनुबन्धभयात्पुनः ।**
**तस्य संरक्षितव्यं च मनः प्रलयहेतुतः ॥ ११५ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने मदात्ययादिचिकित्सितं नाम सप्तमोऽध्यायः ॥ ७ ॥**

---

१ 'या पिबेत् ।' वङ्ग । २ त्रिफलाया इत्यादयस्त्रय श्लोका मुद्रितवङ्गसेनपुस्तके नोपलभ्यन्ते । ३ "कौम्भ सर्पि -दशवर्षात्मकम्, अन्ये तु 'स्थित वर्षशत श्रेष्ठ कौम्भ सर्पिस्तदुच्यते ।' इति ।" इति शिवदास । "कौम्भ सर्पि -दशाब्दकम्, तच्च प्रभावान्मूर्च्छाहरम् ।" इति श्रीकण्ठदत्त । ४ 'ना साभ' वङ्ग । ५ 'या ज्वरोक्ता' स स । ६ 'णि शस्तानि तथा रक्तावसेचनम्' स द्व. । ७ "सेचन-निर्हरणम् । सत्त्वस्य-चित्तस्य, आलम्बन-धैर्येणावष्टम्भ । ज्ञान-स्वयथार्थबोध । अगृद्धि -अलोलुपत्वम् ।" इति चन्द्र । ८ विषयेषु-शब्दादिषु । ९ 'कर्म स' इ. ।

१ 'तु' अ । २ 'मग्न' स मू । 'म प्र' फ स स, ट ड । ३ "प्रधमन-नासाया चूर्णेन । नखमासयोर्मध्ये सूचीभिस्तोद ॥ प्रलयहेतुत -चित्तक्लेशात् ।" इतीन्दु । "लुञ्चन-अपनयनम् । दाह -अग्निना । दशनै -दन्तै , वृश्चिकैश्च दश ॥ ससरणै -अतीतार्थाना पुन स्मृतिभि । पटुभि -उच्चै श्रुतिभि । प्रतत-सन्तत कृत्वा । तस्य-निवृत्तसन्न्यासस्य । प्रलयहेतुत -तम प्रवेशकारणात् । सरक्षितव्य-येन पुनरनुबन्ध न गृह्णाति ।" इति चन्द्र । "प्रलयहेतुत इति मोहहेतुत ।" इति चक्र । ४ 'न्तरे.' अ फ । ५ 'कच्छ्वाऽव' इ फ स स, ड । ६ 'घ्वन्न कटुती' अ इ फ. चन्द्र. स.द्व. ।

स०–त–मदादिमन्त, उपाचरेत् । कै ? सस्मरणै । विस्मापनै–विस्मयकारिभि । विपूर्वात् स्मिङो णिचि "नित्य स्मयते" इत्यात्वे पुकि ल्युटि च विस्मापनैरिति रूपम् । तथा, प्रियस्य श्रवणेन दर्शनेन च गीतवादित्रशब्दै पटुभि –मनोहरै । तथा, व्यायामशीलनै । तथा वमनविरेचनाभ्या धूमेन शोणितस्रावेण चानुबन्धभयाच कारणात् तस्य–आतुरस्य, प्रलयहेतुतो मन सम्यग्वीक्षितव्य–तत इद कार्यमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने मदात्ययादिचिकित्सित नाम सप्तमोऽध्याय समाप्त ॥७॥

आ० र०–

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
मदमूर्च्छायसन्न्यासा सामस्त्येन निरूपिता. ॥७॥



## अष्टमोऽध्यायः ।

अस्मादनन्तरमर्शश्चिकित्सितमारभ्यते । सम्बन्धश्चास्य निदान एवोक्त ।

**अथातोऽर्शसां[3][4] चिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
(गद्यसूत्रे ॥ २ ॥)

**काले साधारणे[5] व्यभ्रे नातिदुर्बलमर्शसम् ।**
**विशुद्धकोष्ठं लघ्वल्पमनुलोमनमाशितम्[6] ॥ १ ॥**
**शुचिं कृतस्वस्त्ययनं मुक्तविण्मूत्रमव्यथम् ।**
**शयने फलके वाऽन्यनरोत्सङ्गे व्यपाश्रितम् ॥ २ ॥**
**पूर्वेण कायेनोत्तानं प्रत्यादित्यगुदं समम् ।**
**समुन्नतकटीदेशमथ यन्त्रगवाससा ॥ ३ ॥**
**सक्थ्नो. शिरोधराया च परिक्षिप्तमृजु स्थितम् ।**
**आलम्बितं परिचरैः सर्पिषाऽभ्यक्तपायवे ॥ ४ ॥**
**ततोऽस्मै सर्पिषाऽभ्यक्तं निदध्यादृजु यन्त्रकम् ।**
**शनैरनुमुख पायौ, ततो दृष्ट्वा प्रवाहणात् ॥ ५ ॥**

**यन्त्रे प्रविष्टं[1] दुर्नाम प्लोतगुण्ठितयाऽनु च ।**
**शलाकयोत्पीड्य भिषक् यथोक्तविधिना दहेत् ॥६॥**
**क्षारेणैवार्द्रमितरत्क्षारेण ज्वलनेन[2] वा ।**
**महद्वा बलिनश्छित्त्वा वीतयन्त्रमथातुरम् ॥ ७ ॥**
**स्वभ्यक्तपायुजघनमवगाहे निधापयेत् ।**
**निर्वातमन्दिरस्थस्य[3] ततोऽस्याचारमादिशेत् ॥ ८ ॥**
**एकैकमिति सप्ताहात्सप्ताहात्समुपाचरेत् ।**

स०–साधारणे–शरद्वसन्तादिके काले, तथा व्यभ्रे–विगताभ्रे । तथा नातिदुर्बलमर्शस–अपि तु किञ्चित्सप्राणम् । अत्र योग्यपरत्वात्[4] कृत्वेत्यध्याहृत्य सम्बन्ध कार्य । तथा विशुद्धकोष्ठादिक कृत्वा ततोऽस्मै–अर्शसाय, यन्त्र निदध्यादिति । सङ्ग्रहे चोक्तम् ( चि अ १० )–"अथ खलु बलवन्तमर्शोभिरुपद्रुत यथाहस्नेहोपस्निग्धखिन्नमनिलवेदनात्त्वद्विशमनार्थं स्निग्धमुष्णमल्पमन्न द्रवप्राय भुक्तवन्त[5] शुचि कृतस्वस्त्ययन मुक्तविण्मूत्रमव्यथ समे शुचौ विविक्ते देशे साधारणे व्यभ्रे काले समे फलके शय्याया वा प्रत्यादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्वकायमुत्तानमुन्नतकटीक[6] यन्त्रणशाटकेन परिक्षिप्तग्रीवासक्थिसन्धिदेशमलज्जाहैराप्तपरिचारकै सुपरिगृहीत कृत्वा ततोऽस्मै घृताभ्यक्त यन्त्रक निदध्यात् ।" इति । अर्शसमिति अर्शासि विद्यन्ते यस्येत्यर्थ, अर्शआदित्वादच् । किम्भूतम् ? विशुद्धो–वमनविरेचनादिना, कोष्ठो यस्य तम् । तथा, अन्नमाशित कृत्वा । किम्भूतम् ? लघु–स्वभावात्, अल्प च–मात्रया । तथा, अनुलोमन–वातवर्चसा प्रायेण प्रवर्तकम् । तथा, शुचि–मृज्जलाभ्या कृत्वा । तथा, कृत स्वस्त्ययन यस्य तम् । तथा, मुक्ते–विसृष्टे, विण्मूत्रे येन तम् । तथा, अव्यथ–व्यथारहितमन्येन व्याधिनाऽपीडितम् । तथा, शयने व्यपाश्रित–शय्यामाश्रित्य स्थितम् । अथवा, फलके–आसनविशेषे, व्यपाश्रितम् । अथवा, अन्यनरोत्सङ्गे व्यपाश्रितम् । उत्सङ्गविशेषात्स्थानकविशेष । नरोत्सङ्गे व्यपाश्रितमित्येव सिद्धेऽन्यग्रहण वैद्यस्य निरासार्थम् । अन्योत्सङ्गे व्यपाश्रितमिति कथ कृत्वा ? पूर्वेण कायेनोत्तान कृत्वा–नाधरेण । तथा, प्रत्यादित्यगुदम् । प्रति–आभिमुख्येन[7], आदित्य प्रत्यादित्य गुद यस्य तम् । यस्या दिश्यादित्यो गत तस्या दिश्यर्शसेन सम्मुख गुद कृत्वा स्थातव्यमित्यर्थ, सम च । तथा, सम्यगुन्नत कटिदेशो यस्य तम् । अथ–समुन्नतकटिदेशकरणादनन्तर, अर्शस सक्थ्नोस्तथा शिरोधराया परिक्षिप्त–समन्तात्क्षिप्तमाक्रान्त कृत्वा ।

१ 'प्रक्षय यतस्तत इति कार्यं' ड । २ अस्मादष्टमाध्यायादारभ्या चिकित्सितस्थानसमाप्तेर्हेमाद्रिटीका नोपलभ्यते । ३ 'र्शश्चिकि' अ । ४ 'इदमर्शश्चिकित्सित चरके चि० १४ अध्याये, सुश्रुते चि० ६ अध्याये, अष्टाङ्गसङ्ग्रहे चि० १० अध्याये चास्ति वर्णितम् । ५ "साधारणे–श्रावणकार्तिकचैत्राख्ये । शुचिं–कृतस्नानादिकम् । कृतस्वस्त्ययन–ब्राह्मणप्रयुक्तैराशीर्भिर्युक्तम् । प्रवाहणात्–निस्तरणात् ।" इति चन्द्र. । ६ 'स्वन्नमनु' अ.इ. ।

१ 'प्रविष्टे' अ । २ "ज्वलनेन–अग्निना । अवगाहे–यथाकालमुष्णोदक[कोष्ठे] शीतोदककोष्ठे वा, निधापयेत्–अवगाहयेत् ।" इति चन्द्र । ३ 'वीतागारसस्थ' इ । ४ 'ग्यत्वात्' ड । ५ 'न्नमाभुक्तवन्त समे' ट ड. । ६ 'कटीदेश य' स स । ७ 'सन्धिम' स इ. । ८ 'स्मै घृताभ्यक्तगुदाय घृताभ्यक्त यन्त्र मृज्वनुमुख शनै. पायौ प्रणिदध्यात्' स.इ. । ९ 'अभिमुखेन' इति कश्चित् ।

केन[2] यन्त्रणवाससा। यन्त्रणार्थं वासः-कार्पासादिमयं, यन्त्रणवाससेन। ऋजु-स्पष्टं कृत्वा, स्थितम्। तथा, तमातुरं परिचारकैरालम्बित-निश्चलं कृत्वाऽवष्टभ्य सम्यक् स्थापितम्। ततः-अनन्तरं, अस्मै-दुर्नामवते, सर्पिषाऽभ्यक्तपायवे घृताभ्यक्तं यन्त्रकमृजु-अनुसुखं कृत्वा, शनैर्निदध्यात्-प्रणयेत्। ततः-अनन्तरं गुदप्रणिहितयन्त्रान्ते, प्रवाहणात्-प्रवाहणेन हेतुना, यन्त्रे प्रविष्टं दुर्नाम दृष्ट्वा। अथ(तु) [च]-पश्चाच्च, शलाकया चैलखण्डप्रावृतदेहयोत्पीड्य-प्रकृततरवाद्दुर्नाम ऊर्ध्वं पीडयित्वा। वैद्यो यथोक्तविधिना-सूत्रस्थानोदितेन, क्षारेणार्द्रमर्शो दहेत्। एवेत्यवधारणे। क्षारेणैव नाग्निना। इतरत्-शुष्कं दुर्नाम, क्षारेण ज्वलनेन वा दहेत्। यथोक्तविधिनेत्यत्रापि योज्यम्। महद्वेति। बृहद्दुर्नाम तु बलवतः पुंसः छित्त्वा वा शस्त्रेण क्षाराग्निभ्यां यथायोगं दहेत्। अथ-अनन्तरं, आतुरं वीतयन्त्रं विधाय स्वभ्यक्तपायुजघनमवगाहे निधापयेत्-तत्र निहितं विदध्यादित्यर्थः। ततः-अनन्तरं, अस्याचार-"उष्णोदकोपचारी स्यात्" (हृ. सू. अ. १६।२६) इत्यादिकं, आदिशेत्। एकैकं दुर्नाम इति-अनेन पूर्वोक्तेन प्रकारेण, सप्ताहात्समुपाचरेत्-न तुल्यकालं सर्वाणि।

अथैषां कर्मादिक्रमं दर्शयितुमाह—

**प्राग्दक्षिणं ततो वाममर्शः पृष्ठाग्रजं ततः ॥ ९ ॥**
**बह्वर्शसः**

**स०**-बह्वर्शसः प्राक्-पूर्वं, दक्षिणदेशस्थमर्श उपाचरेत्। अनन्तरं वामं, ततः पृष्ठाग्रे जातमुपाचरेत्।

**सुदग्धस्य स्याद्वायोरनुलोमता ।**
**रुचिरन्नेऽग्निपटुता स्वास्थ्यं वर्णबलोदयः ॥ १० ॥**

**स०**-सुदग्धस्यार्शसो वातस्यानुलोमनं स्यात्। तथा, अन्नेऽभिलाषः, अग्नेः पाटवं तथा स्वास्थ्यं बलवर्णयोरभ्युदयश्च।

**बस्तिशूले त्वधो नाभेर्लेपयेच्छ्लक्ष्णकल्कितैः ।**
**वर्षाभूकुष्ठसुरभिमिशिलोहामराह्वयैः ॥ ११ ॥**

**स०**-बस्तिशूले सति पुनर्नाभेरधः वर्षाभ्वादिभिः सुपिष्टैर्लेपयेत्।

**शकृन्मूत्रप्रतीघाते परिषेकावगाहयोः ।**
**वरणालम्बुषैरण्डगोकण्टकपुनर्नवैः ॥ १२ ॥**
**सुषवीसुरभीभ्यां च क्वाथमुष्णं प्रयोजयेत् ।**
**सस्नेहमथवा क्षीरं तैलं वा वातनाशनम् ॥ १३ ॥**
**युञ्जीतान्नं शकृद्भेदि स्नेहान् वातघ्नदीपनान् ।**

**स०**-शकृतो मूत्रस्य च प्रतीघाते-विबन्धे सति, वरणादिभिः क्वाथं परिषेकावगाहयोरुष्णं सस्नेहं प्रयोजयेत्। अथवा, क्षीरं वातनाशनम्। बलातैलादिकं तैलं वा परिषेकावगाहयोः प्रयोजयेत्। अन्नं च यवादिकं शकृद्विबन्धघ्नं तथा स्नेहान् वातघ्नान् दीपनांश्च प्रयोजयेत्।

**अथाप्रयोज्यदाहस्य निर्गतान् कफवातजान् ॥ १४ ॥**
**संस्तम्भकण्डूरुक्शोफानभ्यज्य गुदकीलकान् ।**
**बिल्वमूलाग्निकक्षारकुष्ठैः सिद्धेन सेचयेत् ॥ १५ ॥**
**तैलेनाहिबिडालोष्ट्रवराहवसयाऽथवा ।**
**[ कासीसं सैन्धवं रास्ना शुण्ठी कुष्ठं च लाङ्गली ।**
**शिलाभ्रकाश्वमारं च जन्तुघ्नदन्तिचित्रकौ ॥ १ ॥**
**हरितालं तथा स्वर्णक्षीरी तैश्च पचेत्समैः ।**
**तैलं सुधार्कपयसी गवां मूत्रे चतुर्गुणे ॥ २ ॥**
**एतदभ्यङ्गतोऽर्शांसि क्षारवत्पातयेद्द्रुतम् ।**
**क्षारकर्मकरं ह्येतन्न च दूषयते वलिम् ॥ ३ ॥ ]**
**स्वेदयेदनु पिण्डेन द्रवस्वेदेन वा पुनः ॥ १६ ॥**
**सक्तूनां पिण्डिकाभिर्वा स्निग्धानां तैलसर्पिषा ।**
**रास्नाया हपुषाया वा पिण्डैर्वा कार्ष्ण्यगन्धिकैः ॥ १७ ॥**

**स०**-न प्रयोज्यो-निषिद्धो, दाहो यस्यासावप्रयोज्यदाहो,-दाहानर्हः, तस्य, निर्गतान्-बहिर्भूतान्, तथा कफवातजान् गुदकीलकान्-अर्शांसि, अभ्यज्य बिल्वादिसिद्धेन तैलेन सेचयेत्। किम्भूतान्[2] संस्तम्भकण्डूरुक्शोफान्, एवभूतान्-नान्यलक्षणान्। अथवा, भुजङ्गादिवसया सेचयेत्। अनु-सेकाभ्यङ्गाभ्यां पश्चात्, पिण्डेन-पिण्डस्वेदेन, स्वेदयेत्। पिण्डस्वेदो मुनिनोक्तः। यथा (च. सू. अ. १४।२५)-"तिलमाषकुलत्थाम्लघृततैलामिषौदनैः। पायसैः कृशरैर्मांसैः पिण्डस्वेदान् प्रयोजयेत् ॥" इति योज्यम्। अथवा, द्रवस्वेदेन-स्वेदविध्युक्तेन, स्वेदयेत्। पुनः शब्दोऽत्र लौकिक्या उक्त्या प्रयुक्तः। यथा-"इदं सारमिदं पुनरसारम्" इति। पिण्डस्वेदेनाथवा सक्तूनां तैलसर्पिषा स्निग्धानां पिण्डिकाभिः स्वेदयेत्। अथवा, रास्नाया हपुषाया वा पिण्डैः कार्ष्ण्यगन्धिकैर्वा स्वेदयेत्। तैलसर्पिषा स्निग्धैरित्यत्रानुवर्तनीयम्। कृष्णगन्धाया इमे कार्ष्ण्यगन्धिकास्तैः। अध्यात्मादित्वाट्ठञ्।

**अर्कमूलं शमीपत्रं नृकेशाः सर्पकञ्चुकम् ।**
**मार्जारचर्म सर्पिश्च धूपनं हितमर्शसाम् ॥ १८ ॥**

१ 'निश्चितं कृ' ड। २ 'नर्विदं' ड। ३ "पटुता-दीप्तिः। स्वास्थ्य-यथोपद्रवनिवृत्तिः॥ वर्षाभूः-पुनर्नवा। सुरभिः-गन्धसुरा। लोहनामा ऽगुरुः। अमराह्व-देवदारु।" इति चन्द्र। ४ 'दग्धार्शे' ड.। ५ 'न्नपरीघाते' इ. चन्द्र.। ६ 'म्बुसैर' इ स.स.।

१ 'लादिकतैलं' ट। २ 'सस्त' अ। 'सरम्भ' इ चन्द्र। ३ इ पुस्तके समुपलब्धा इमे त्रयः श्लोकाः। ४ 'कार्षकान्वितैः' चन्द्र। "काष्ण्यगन्धिकैरिति शोभाञ्जनकैः।" इति चक्र। ५ 'त्थाम्लघृ० स्वेदः प्र' स.च.।

**तथाऽश्वगन्धा सुरसा बृहती पिप्पली घृतम् ।**

स०-अर्कमूलादि चर्मसर्पिरन्त धूपन हितम् । तथा, अश्वगन्धादिक पृथगेव धूपन हितम् ।

**धान्याम्लपिष्टैर्जीमूतबीजैस्तज्जालकं मृदु ॥ १९ ॥**
**लेपितं छायया शुष्कं वर्तिर्गुदजशातनी ।**

स०-काञ्जिकेन पिष्टैर्जीमूतस्य-इक्ष्वाको , बीजैस्तथा तस्य-जीमूतफलस्य,जालकं तज्जालक-जालककार(र) फलबहिर्भागो, मृदु-अकर्कशं, लेपित छायाशुष्कमित्येषा वर्तिर्गुदजशातनी ।

**सजालमूलजीमूतलेहे वा क्षारसंयुते ॥ २० ॥**
**गुञ्जासूरणकूष्माण्डबीजैर्वर्तिस्तथागुणा ।**

स०-सजालमूलजीमूतेन कृतो यो लेहस्तस्मिंल्लेहे क्षारसयुते कृते सति गुञ्जादिबीजै कृता वर्तिस्तथागुणा-गुदजशातनी ।

**स्नुक्क्षीरार्द्रनिशालेपस्तथा, गोमूत्रकल्कितैः॥२१॥**
**कृकवाकुशकृत्कृष्णानिशागुञ्जाफलैस्तथा ।**

स०-स्नुक्क्षीरेणार्द्रा-आर्द्रीकृता, निशा-हरिद्रा, तया लेप स्नुक्क्षीरार्द्रनिशालेप । तथा-पूर्वगुण. । गोमूत्रेण कल्कितै-पिष्टै , कुक्कुटशकृदादिभिर्लेप पूर्वगुण ।

**स्नुक्क्षीरपिष्टैः षड्ग्रन्थाहलिनीवारणास्थिभिः २२**
**कुलीरशृङ्गीविजयाकुष्ठारुष्करतुत्थकैः ।**
**शिग्रुमूलकजैर्बीजैः पत्रैरश्वघ्ननिम्बजैः ॥ २३ ॥**
**पीलुमूलेन बिल्वेन हिङ्गुना च समन्वितैः ।**

स०-सुधाक्षीरपिष्टै षड्ग्रन्थादिभिर्लेपो हित । पीलुमूलेन बिल्वेन हिङ्गुना च युक्तैर्लेपो हित ।

**कुष्ठं शिरीषबीजानि पिप्पल्यः सैन्धवं गुडः ॥२४॥**
**अर्कक्षीरं सुधाक्षीर त्रिफला च प्रलेपनम् ।**

स०-कुष्ठादित्रिफलान्तं प्रलेपन पूर्वगुणम् ।

**आर्कं पयः सुधाकाण्डं कटुकालाबुपल्लवाः ॥ २५ ॥**
**करञ्जो बस्तमूत्रं च लेपनं श्रेष्ठमर्शसाम् ।**

स०-अर्कक्षीरादिबस्तमूत्रान्त प्रलेपनमर्शसा श्रेष्ठ स्यात् ।

**आनुवासनिकैर्लेपः पिप्पल्याद्यैश्च पूजितः ॥ २६ ॥**

स०-आनुवासनिकैरिति अनुवासने भवान्यानुवासनिकानि, अध्यात्मादित्वात् ठञ् । तैर्द्रव्यै "पिप्पली मदन" ( श्लो० ८९ ) इत्यादिभिर्वक्ष्यमाणैर्लेपोऽर्श॰सु पूजित ।

**एभिरेवौषधैः कुर्यात्तैलान्यभ्यञ्जनाय च ।**

स०-एभिरेव पूर्वोक्तैर्लेपनद्रव्यैरभ्यञ्जनानि तैलानि च कुर्यात् ।

**धूपनालेपनाभ्यङ्गैः प्रस्रवन्ति गुदाङ्कुराः ॥ २७ ॥**
**सञ्चितं दुष्टरुधिर, ततः सम्पद्यते सुखी ।**

स०-धूपनादिभिर्गुदाङ्कुरा सञ्चित दुष्ट रुधिर प्रस्रवन्ति । तत -तेन स्रुतेन, सुखी रुजाविरहात् सम्पद्यते ।

**अवर्तमानमुच्छूनकठिनेभ्यो हरेदसृक् ॥ २८ ॥**
**अर्शोभ्यो जलजाशस्त्रसूचीकूर्चैः पुनः पुनः ।**

स०-अर्शोभ्य उच्छूनकठिनेभ्यो रुधिरमवर्तमान जलौकशस्त्रादिभिरसकृद्धरेत् ।

शीतोष्णादिरुपक्रम कस्मादत्र न क्रियते ? इत्याह—

**शीतोष्णस्निग्धरूक्षैर्हि न व्याधिरुपशाम्यति ॥२९॥**
**रक्ते दुष्टे भिषक् तस्माद्रक्तमेवावसेचयेत् ।**

स०-यस्मात् शीतादिभिरुपक्रमैरुपक्रान्तोऽर्शोव्याधिर्न शाम्यति रक्ते दुष्टे सति, तस्माद्धेतो रक्तमेवावसेचयेत्-न तु शीतादिर्योज्य ।

**यो जातो गोरसः क्षीरांद्वह्निचूर्णावचूर्णितात्॥३०॥**
**पिबंस्तमेव तेनैव भुञ्जानो गुदजान् जयेत् ।**

स०-यो गोरस क्षीराज्जात -उत्पन्नः । किम्भूतात् ? वह्निचूर्णावचूर्णितात्-चित्रकचूर्णावकीर्णात् । तमेव-गोरस, पिबन्स्तेनैव च-गोरसेन, भुञ्जानो गुदजान् जयेत् । 'बहुमूलावचूर्णितात्' इति क(के)चित् पठन्ति । बहुमूला-शतावरी ।

**कोविदारस्य मूलानां मथितेन रजः पिबन् ॥ ३१ ॥**
**अश्नन् जीर्णे च पथ्यानि मुच्यते हतनामभिः ।**

स०-कोविदारमूलचूर्णं मथितेन पिबन् जीर्णे च तस्मिन् पथ्यान्यश्नन् दुर्नामभिर्मुच्यते-नश्यन्ति तान्यस्येत्यर्थ ।

**गुदश्वयथुशूलार्तो मन्दाग्निर्गौल्मिकान् पिबेत् ३२**

१ "तथा-धूपन हितमर्शसाम् ॥ जीमूतबीजै -कटुकालाबुबीजै , तस्य जालक-वल्लीसमूहम् । वर्ति कृता गुदे प्रणिहिता गुदजान् पातयति ॥ कुलीरशृङ्गी-कर्कटशृङ्गी । विजया-हरीतकी । अश्वघ्नस्य-हयमारस्य ।" इति चन्द्र । २ अर्कमूलादिसर्पिरन्तात् योगात् अश्वगन्धादिघृतान्त पृथग्योग । न पुन पृथक्शब्देन अश्वगन्धादय पृथक् पञ्च योगा ग्राह्या , चरकसङ्ग्रहादिविरुद्धत्वात् । ३ जीमूत-देवदाली । 'जीमूतस्य-इक्ष्वाको ' इति यदरुणदत्तचन्द्रनन्दनाभ्या व्याख्यान कृत तदयुक्तमिव प्रतिभाति, यत स्वय ग्रन्थकृतैव कल्पस्थाने ( अ १ श्लो० १९-२७ ) जीमूतस्येक्ष्वाकोश्च कल्पा पृथक् वर्णिता , 'वेणी गरागरी देवताडो जीमूत इत्यपि' इति 'इक्ष्वाकु कटुतुम्बी स्यात्' इति चामरेणापि । ४ 'कुर्कुट' ट । ५ हलिनी-लाङ्गली । वारणास्थि-गजास्थि । ६ 'कबीजैर्वा प' इ ।

१ 'स्नुहीकाण्ड' अ. । २ 'एभिर्लेपौष' अ इ । ३ 'नानि च' अ इ अरुण. । ४ 'सुखम्' स च. । ५ 'दिभिरु' ड । ६ 'रूक्षाद्यैर्न' अ. । ७ 'राद्बहुमूलाव' चन्द्र. । ८ 'पिबेत्' इ ।

**हिङ्ग्वादीननुतक्रं वा खादेद्गुडहरीतकीम् ।**
**तक्रेण वा पिबेत्पथ्यावेल्लाग्निकुटजत्वचः ॥ ३३ ॥**
**कलिङ्गमगधाज्योति'सूरणान् वाऽशवर्धितान् ।**
**कोष्णाम्बुना वा त्रिपटुव्योषहिङ्ग्वम्लवेतसम् ३४**

स०-गुदे श्वयथुशूलार्तो मन्दाग्निर्नरो गौल्मिकान्–गुल्मचिकित्साभवान्, हिङ्ग्वादीन् चूर्णान् ( हृ चि अ १४।३१) पिबेत् । इह द्रवानिर्देशादनन्तर च मथितशब्दश्रवणात् अर्शोविकारे च हिङ्ग्वादीन् चूर्णान् तक्रेण वा पिबेदिति योज्यम् । अनुतक्रं वा–तक्रानुपानात्, गुडहरीतकीं भक्षयेत् । अथवा, पथ्यादीस्तक्रेण पिबेत् । अथवा, कलिङ्गादीन् अशवर्धितान्–मूलद्रव्यापेक्षया भागेन यथोत्तर वधितान्, तक्रेण पिबेत् । ज्योति –चित्रक । अथवा, उष्णजलेन त्रिपट्वादि पिबेत् ।

**युक्तं बिल्वकपित्थाभ्यां महौषधबिडेन वा ।**
**अरुष्करैर्यवान्या वा प्रदद्यात्तक्रतर्पणम् ॥ ३५ ॥**
**दद्याद्वा हपुषाहिङ्गुचित्रक तक्रसंयुतम् ।**
**मासं तक्रानुपानानि खादेत्पीलुफलानि वा ॥ ३६ ॥**
**पिबेद्हरहस्तक्रं निरन्नो वा प्रकामतः ।**

स०-तक्रेण तर्पण–यवसक्तून्, दद्यात् । किम्भूतम् ? बिल्वकपित्थाभ्या युक्तमथवा महौषधबिडेन युक्त भल्लातकैर्वा युक्तमथवा यवान्या वा युक्त प्रदद्यात् । तक्रतर्पणमेव बिल्वादिभिर्यथोक्तै सह भुञ्जीत । नान्यत्किञ्चिदिति सूचयितु प्रशब्दोऽत्र न्यस्त । अथवा, हपुषादिक तक्रान्वित दद्यात् । मास पीलुफलानि तक्रानुपानानि वा खादेत् । अथवा, इच्छयाऽहरहरनन्नाशी तक्र पिबेत् ।

**अत्यर्थं मन्दकायाग्नेस्तक्रमेवावचारयेत् ॥ ३७ ॥**

स०-अत्यर्थं मन्दकायाग्नेर्नरस्य साय प्रातर्वा तक्रमेवावचारयेद्वैद्यो–न त्वन्नम्, अत एवैवकारोऽत्र निर्दिष्ट ।

**सप्ताहं वा दशाहं वा मासार्धं मासमेव वा ।**
**बलकालविकारज्ञो भिषक् तक्रं प्रयोजयेत् ॥ ३८ ॥**
**साय वा लाजसक्तूना दद्यात्तक्रावलेहिकाम् ।**
**जीर्णे तक्रे प्रदद्याद्वा तक्रपेयां ससैन्धवाम् ॥ ३९ ॥**
**तक्रानुपानं सस्नेहं तक्रौदनमत· परम् ।**
**यूषै रसैर्वा तक्राढ्यै· शालीन् भुञ्जीत मात्रया ॥४०॥**

स०-सप्ताह दशाह मासार्धं मास वा यावत् बलादिविद्वैद्यो मथित योजयेत् । अथवा, केवलेन तक्रेणाशितुमशक्तस्तदा साय–दिनान्ते, लाजसक्तूना सम्बन्धिनी तक्रावलेहिका दद्यात् । अथवा, तक्रे जीर्णे तक्रसिद्धा पेया सैन्धवान्विता दद्यात् । सैन्धवशब्दस्यान्ते श्रुतत्वादुभयोरप्यवलेहिकापेययो सैन्धवेन योगो वेद्य । अत पर–अवलेहिकापेयातोऽनन्तर, तक्रेण सह्यौदनमीषत्स्नेह तक्रानुपान दद्यात् । अथवा, यूषै रसैर्वा तक्रभूयिष्ठै शालीन् मात्रया भुञ्जीत । कार्ये भक्तादौ कारणत्वेनोपचारात् शालीन्–भक्तत्वेन परिणतान्, दद्यादिति वेद्यम् ।

सर्वथाऽत्र तक्रप्रयोग प्रायेण पूजित इत्यत एवाह—

**रूक्षमर्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् ।**
**तक्रं दोषाग्निबलवित्त्रिविधं तत्प्रयोजयेत् ॥ ४१ ॥**

स०-यथायोग कदाचिद्रूक्ष–नि शेषमुद्धृतस्नेहं, अथवाऽर्धोद्धृतस्नेह, कदाचिदनुद्धृत यस्माद्धृतम्, कारणे नवनीते कार्योपचारादेवमुक्तम्, तत्–एतत्त्रिविध, तक्रं दोषादिवित् प्रयोजयेत् ।

तक्रप्रयोगे कृते को गुण ? इत्याह—

**न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः ।**
**निषिक्तं तद्धि दहति भूमावपि तृणोलुपम् ॥ ४२ ॥**

स०-तक्रेण समाहता –उन्मूलिता , गुदजा पुनर्न प्ररोहन्ति, समूला नश्यन्तीत्यर्थ । कथमेतदवगम्यते ? इत्याशङ्क्याह–हि–यस्मात्, तत्–तक्रं, भूमावपि निषिक्त तृणोलुप विशेषेण दहत्यपुनरुत्पादनात् । भूमावपीत्यपिशब्दो न केवल शरीरे, बाह्यायामपि भुवीति सन्दर्शनार्थं । तृणोलुप कठिन यद्दहति तदवश्यमर्शासि मृदूनि मासप्रायाणि दहत्येव ।

**स्रोतःसु तक्रशुद्धेषु रसो धातूनुपैति यः ।**
**तेन पुष्टिर्बलं वर्णः परं तुष्टिश्च जायते ॥ ४३ ॥**
**वातश्लेष्मविकाराणां शतं च विनिवर्तते ।**

स०-वातश्लेष्मावृतेषु स्रोत सु तक्रेण शुद्धेषु सत्सु यो रस –आहाररसो, धातून् उपैति–सम्प्राप्नोति, तेन–रसेन प्राप्तेन, पुष्ट्यादयो जायन्ते । तथा, वातश्लेष्मविकाराणा शत विनिवर्तते–शाम्यति ।

***मथितं *भाजने क्षुद्रबृहतीफललेपिते ॥ ४४ ॥**
**निशां *पर्युषित पेयमिच्छद्भिर्गुदजक्षयम् ।**

स०-कण्टकारिकाफललेपिते भाजने मथित निशा स्थित गुदजक्षयमिच्छुभि पेयम् ।

---

१ 'तक्रा वा' अ । २ 'थ्या वे' इ चन्द्र । ३ 'तक्रा वा० पाना क्षुद्रहरी' इति कचित् । ४ 'आरु' इ । ५ 'त्यर्थमन्द' चन्द्र. । 'र्थं मृदुका' स च. । ६ 'रयेत्–अद्यात् न' ड. । 'बलकालविकारज्ञो वैद्यो' ट. ।

१ "रूक्षमित्यादिनोक्त त्रिविध तक्र कफपित्तवातेषु दोषेषु, मन्दतममन्दतरमन्देष्वग्निषु, बलेषु चाधममध्यमोत्तमेषु यथासङ्ख्य ज्ञेयम् ॥ शतमिति विंशति श्लेष्मविकारा अशीतिर्वातविकाराश्च मिलित्वा विकाराणा शतम् ।" इति चक्र । "वातश्लेष्मविकाराणा–अनिलकफातङ्काना, शत–बहवो रोगा ।" इति चन्द्र । २ 'तद्धिदह' इ । ३ 'लान्नश्य' ड । ४ 'श्लेष्मणाऽऽवृ' ट । *५ "भाजने–कुम्भे, मथित–तक्र, निशा–रात्रि, पर्युषित–अधिवासित, पेय–पातव्यम् ॥ जात–सम्पन्नम् । कामतो–यथेच्छम् । कारवी–शतपुष्पा । ग्रन्थिक–पिप्पलीमूलम् ।" इति चन्द्र. ।

**धान्योपकुञ्चिकाजाजीहपुषापिप्पलीद्वयैः ॥ ४५ ॥**
**कारवीग्रन्थिकशठीयवान्यग्नियवानकैः ।**
**चूर्णितैर्घृतपात्रस्थं नात्यम्लं तक्रमासुतम् ॥ ४६ ॥**
**तक्रारिष्टं पिबेज्जातं व्यक्ताम्लकटु कामतः ।**
**दीपनं रोचनं वर्ण्यं कफवातानुलोमनम् ॥ ४७ ॥**
**गुदश्वयथुकण्ड्वर्तिनाशनं बलवर्धनम् ।**

स०-धान्योपकुञ्चिकादिभिश्चूर्णितैर्घृतपात्रस्थ नात्यम्ल तक्रमासुत कृत्वाऽनन्तरं व्यक्ताम्लकटु यस्य तद् व्यक्ताम्लकटु, जात सत्तक्रारिष्ट कामत पिबेत् । तच्च पीत दीपनादिगुण स्यात् । अत्र च तक्रे पलशतमात्रे धान्यकादीनि पालिकानि देयानीति वृद्धवैद्यव्यवहार ।

**त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ॥ ४८ ॥**
**तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ।**

स०-चित्रकमूलस्य त्वच जलेन पिष्ट्वा कुम्भ प्रलेपयेत् । तक्र तत्र जातमथवा दधि जातमर्शोहर पिबेत् ।

**भार्गीस्फोतामृतापञ्चकोलेष्वप्येष संविधिः ॥ ४९ ॥**

स०-भार्ग्यादिष्वप्येष सविधि -एतत्त्वगादिभाजनलेपनादिक कार्यमित्यर्थ ।

**पिष्टैर्गजकणापाठाकारवीपञ्चकोलकैः ।**
**तुम्बवेजाजीधनिकाबिल्वमध्यैश्च कल्पयेत् ॥ ५० ॥**
**फलाम्लान् यमकस्नेहान् पेयायूषरसादिकान् ।**
**एभिरेवौषधैः साध्यं वारि सर्पिश्च दीपनम् ॥ ५१ ॥**

स०-हस्तिपिप्पल्यादिभि पिष्टै -कल्कितै , तथा फलै -बीजपूरादिभि , अम्लान् यमकस्नेहास्तथा पेयादिकान् कुर्यात् । एभिरेव-हस्तिपिप्पल्यादिभि ,वारि साध्य-श्रपणीयम्, सर्पिश्च साध्यम् , तच्च द्वय वह्नेर्दीपन स्यात् ।

**क्रमोऽयं भिन्नशकृतां**

स०-अय-पूर्वोक्त , क्रमो भिन्नशकृताम् ।

**वक्ष्यते गाढवर्चसाम् ।**

स०-कठिनपुरीषाणा तु वक्ष्यते-भणिष्यते ।

तमेवाह—

**स्नेहाढ्यैः सक्तुभिर्युक्तां लवणां वारुणीं पिबेत् ॥ ५२ ॥**
**लवणा एव वा तक्रसीधुधान्याम्लवारुणीः ।**

स०-स्नेहाढ्यै -बहुस्नेहसम्पृक्तै , सक्तुभिर्युक्ता लवणा वारुणी पिबेत् । तक्रादीन् वा लवणान् पृथक् पृथक् यथायोग पिबेत् । एवशब्दोऽत्र केवलानेवेतान् सक्तुरहितान् पिबेदिति द्योतयति ।

१ "उपकुञ्चिका-स्थूलजीरक । यवानक -अजमोदा । "यमानी चाजमोदा च" (च चि अ १४।७३) इति चरकोक्ते । २ 'वानिके' अ । ३ दीपनमिति पद लिङ्गवचनविपरिणामेन यमकस्नेहादावपि योजनीयम् । ४ लवणा -सैन्धवलवणयुक्ता ।

**प्राग्भक्तान् यमके भृष्टान् सक्तुभिश्चावचूर्णितान् ॥ ५३ ॥**
**करञ्जपल्लवान् खादेद्वातवर्चोनुलोमनान् ।**

स०-तथा, करञ्जपल्लवान् भक्षयेत् । किम्भूतान्? प्राग्भक्तान्,-भक्तात् प्राक्, मयूरव्यसकादित्वात्समास , करञ्जपल्लवान् भुक्त्वाऽन्न भोक्तव्यमित्यर्थ । किम्भूतान्? यमके-स्नेहद्वये, भृष्टान्-पक्वान्, तथा सक्तुभि सुष्ठु चूर्णितान् ताश्च भुक्त्वा वातवर्चोनुलोमनान् ।

**सगुडं नागरं पाठां गुडक्षारघृतानि वा ॥ ५४ ॥**
**गोमूत्राध्युषितामद्यात्सगुडां वा हरीतकीम् ।**

स०-तथा, गुडेन सह शुण्ठी पाठा वाऽश्नीयात् । अथवा, गुडयवक्षारसर्पींष्यद्यात् । गुडेन वा सह हरीतकीमद्यात् । किम्भूताम्? गोमूत्रेऽध्युषिताम् ।

**पथ्याशतद्वयान्मूत्रद्रोणेनामूत्रसङ्क्षयात् ॥ ५५ ॥**
**पक्वात् खादेत्समधुनी द्वे द्वे हन्ति कफोद्भवान् ।**
**दुर्नामकुष्ठश्वयथुगुल्ममेहोदरक्रिमीन् ॥ ५६ ॥**
**ग्रन्थ्यर्बुदापचीस्थौल्यपाण्डुरोगाढ्यमारुतान् ।**

स०-पथ्याना शतद्वय पथ्याशतद्वयम्, तस्माद्गोमूत्रद्रोणेन मूत्रसङ्क्षय यावत्-मूत्रक्षयावधि, पक्वात् द्वे द्वे-पथ्याख्ये फले, खादेत् । किम्भूते? समधुनी-माक्षिकयुक्ते । पथ्याशतद्वय चोपयुक्त कफोद्भवानामयान् दुर्नामादीन् हन्ति ।

**अजशृङ्गीजटाकल्कमजामूत्रेण यः पिबेत् ॥ ५७ ॥**
**गुडवार्ताकभुक् तस्य नश्यन्त्याशु गुदाङ्कुराः ।**

स०-अजशृङ्गीमूलकल्क य पुरुषोऽजामूत्रेण पिबेत् । किम्भूत ? गुडवार्ताकभुक्-एतदाहार , तस्य-पुरुषस्य, द्राक् दुर्नामानि नश्यन्ति ।

**श्रेष्ठारसेन त्रिवृतां पथ्या तक्रेण वा सह ॥ ५८ ॥**
**पथ्यां वा पिप्पलीयुक्तां घृतभृष्टां गुडान्विताम् ।**
**अथवा सत्रिवृद्दन्तीं भक्षयेदनुलोमनीम् ॥ ५९ ॥**
**हृते गुदाश्रये दोषे गुदजा यान्ति सङ्क्षयम् ।**

स०-श्रेष्ठारसेन-त्रिफलाक्वाथेन, त्रिवृतामद्यात् । अभया वा तक्रेण सहाद्यात् । पथ्या वा पिप्पलीयुक्ता घृतभृष्टा गुडयुक्ता भुञ्जीत । अथवा पथ्या त्रिवृद्दन्तीभ्या सहानुलोमकृता भक्षयेत् । गुदाश्रये दोषे हृते सति गुदजा सङ्क्षय यान्ति, आश्रयाभाव आश्रितानुपपत्ते । तस्मादनुलोमनमर्शसु हितमित्यर्थ ।

**दाडिमस्वरसाजाजीयवानीगुडनागरैः ॥ ६० ॥**
**पाठया वा युतं तक्रं वातवर्चोनुलोमनम् ।**
**सीधुं वा गौडमथवा सचित्रकमहौषधम् ॥ ६१ ॥**

१ 'ग्भक्त य' इ । २ 'सुष्ठवचू' ट । ३ 'श्च वात' ड । ४ 'पाठागुड' इ चन्द्र । ५-६ 'द्वय मूत्र' 'पक्त्वा खा' अ. इ । ७ 'हृते' स.च.,ट.ड. ।

**पिबेत्सुरां वा हपुषापाठासौवर्चलान्विताम् ।**

स०—दाडिमादिभिर्युक्त तक्र पाठया वातवर्चोनुलोमन स्यात् । अथवा, सीधु चित्रकशुण्ठीयुत पिबेत् । गौड वा चित्रकशुण्ठीयुत पिबेत् । अथवा, सुरा हपुषादियुक्ता पिबेत् ।

**दशादिदशकैर्वृद्धाः पिप्पलीर्द्विपिचुं तिलान् ॥६२॥**
**पीत्वा क्षीरेण लभते बलं देहहुताशयोः ।**

स०—दशादिदशकैर्वृद्धा पिप्पलीस्तथा तिलान् द्विपिचुं पीत्वा देहस्य वह्नेश्च बल प्राप्नोति । दशपिप्पल्य आदि—प्रथम दिन, येषा दशकाना त एवम् । दशादयश्च ते दशकाश्च दशादिदशका , तैर्वृद्धा । प्रथमे दिने दशपिप्पलीस्तिलकर्षद्वय च क्षीरेण पेया , अनन्तर प्रतिदिन दशदश पिप्पली पिप्पलीवर्धमानन्यायेन वृद्धति(द्धास्ति)लकर्षद्वयेन सह क्षीरेण पीत्वा देहस्याग्नेश्च बल लभते । अत्र कालस्यानिर्दिष्टत्वाद्देहाग्न्योर्बल मिच्छता यथेष्टकाल प्रयोग कार्य । क्षीरस्य चात्र प्रमाणानुक्ते सामान्यपरिभाषया "पेष्यस्य कर्षमालोड्य तद्द्रवस्य पलत्रये ।" (हृ.क अ ६।१३) इति परिमाण कल्प्यम् ।

**दुःस्पर्शकेन बिल्वेन यवान्या नागरेण वा ॥ ६३ ॥**
**एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ।**

स०—धन्वयवासकेन बिल्वेन यवान्या शुण्ठ्या वैकैकेनाप्येव पाठा युक्ता दुर्नाम्ना रुज हन्ति । एकैकेनापीत्यपिशब्दात् द्वाभ्या त्रिभिश्चतुर्भिश्च । एकैकेनेत्येकशब्दस्य "एक बहुव्रीहिवत्" इति द्वित्वबहुव्रीहिवद्भावात्सुपो लुक् ।

**सलिलस्य वहे पक्त्वा प्रस्थार्धमभयात्वचाम् ॥६४॥**
**प्रस्थं धात्र्या दशपलं कपित्थानां ततोऽर्धतः ।**
**विशालां रोध्रमरिचकृष्णावेल्लैलवालुकम् ॥ ६५ ॥**
**द्विपलांशं पृथक्पादशेषे पूते गुडात्तुले ।**
**दत्त्वा प्रस्थं च धातक्याः स्थापयेद्घृतभाजने ॥६६॥**
**पक्षात्स शीलितोऽरिष्टः करोत्यग्निं, निहन्ति च ।**
**गुदजग्रहणीपाण्डुकुष्ठोदरगरज्वरान् ॥ ६७ ॥**
**श्वयथुप्लीहहृद्रोगगुल्मयक्ष्मवमिक्रमीन् ।**

स०—सलिलस्य वहे—द्रोणचतुष्टये, पक्त्वा हरीतकीत्वचा प्रस्थार्ध—अष्टपलानि, आमलकदलाना प्रस्थ, कपित्थस्य पलानि दश, तत —कपित्थात्, अर्धेन विशाला पञ्चपला, रोध्रादिक द्विपलाश पृथक्पृथगेतत्सर्वं पक्त्वा तस्मिन् पादशेषे—द्रोणशेषे, पूते गालिते चास्मिन् गुडात्तुले द्वे दत्त्वा धातक्या प्रस्थ च ततो घृतरूढे भाजने स्थापयेत् । पक्षादूर्ध्व शीलित स—अभयारिष्टसञ्ज , अग्निं करोति—दीपयति, गुदजादींश्च हन्ति ।

**जलद्रोणे पचेद्दन्तीदशमूलवराग्निकान् ॥ ६८ ॥**
**पालिकान् पादशेषे तु क्षिपेद्गुडतुलां परम् ।**
**पूर्ववत्सर्वमस्य स्यादानुलोमितरस्त्वयम् ॥ ६९ ॥**

स०—जलस्य द्रोणे दन्त्यादीन् प्रत्येक पालिकान् पचेत् । पादशेषे चास्मिन् गुडात्तुला क्षिपेत् । पर—अन्यत् , सर्वमस्य—दन्त्यरिष्टस्य, पूर्ववत्—अभयारिष्टतुल्य धातकीपरिमाणघृतभाजनस्थापनपक्षोत्तरकालपानादि, स्यात् । आनुलोमीत्यादि । आनुलोमी—वातविबन्धनुत् अभयारिष्ट । अय पुनस्ततोऽप्यानुलोमितर ।

**पचेद्दुरालभाप्रस्थं द्रोणेऽपां प्रासृतैः सह ।**
**दन्तीपाठाग्निविजयावासामलकनागरैः ॥ ७० ॥**
**तस्मिन् सिताशतं दद्यात्पादस्थेऽन्यच्च पूर्ववत् ।**
**लिम्पेत्कुम्भं तु फलिनीकृष्णाचव्याज्यमाक्षिकैः ७१**

स०—अपा द्रोणे धन्वयासप्रस्थ दन्त्यादिभि द्विपलिकै सह पचेत् । तस्मिन्—पादस्थे क्वाथे, सिताया शत क्षिपेत् । अन्यत्—धातकीपरिमाणादिक, पूर्ववत्—अभयारिष्टवत् , कार्यम् । लिम्पेदित्यादि । तुर्विशेषे । विशेषस्तु फलिन्यादिभि कुम्भ लिम्पेत्, यत्राय निक्षिप्यते दुरालभारिष्ट इति ।

**प्राग्भक्तमानुलोम्याय फलाम्लं वा पिबेद्घृतम् ।**
**चव्यचित्रकसिद्धं वा यवक्षारगुडान्वितम् ॥ ७२ ॥**
**पिप्पलीमूलसिद्धं वा सगुडक्षारनागरम् ।**

स०—प्राग्भक्त—भक्तात् पूर्वं, घृत फलै —मातुलुङ्गादिभिरनुलोमनप्रायै , अम्लं तै पक्व पिबेत् । चव्यचित्रकाभ्या सिद्ध पक्व यवक्षारगुडाभ्या युक्त घृत पिबेत् । अथवा, पिप्पलीमूलसिद्ध गुडयवक्षारनागरसहित पिबेत् ।

**पिप्पलीपिप्पलीमूलधानकादाडिमैर्घृतम् ॥ ७३ ॥**
**दध्ना च साधितं वातशकृन्मूत्रविबन्धनुत् ।**

स०—पिप्पल्यादिभिर्दधिसहितै साधित घृतं वातशकृन्मूत्रविबन्धजित् ।

**पलाशक्षारतोयेन त्रिगुणेन पचेद्घृतम् ॥ ७४ ॥**
**वत्सकादिप्रतीवापमर्शोघ्नं दीपनं परम् ।**

स०—पलाशक्षारस्य जलेन त्रिगुणेन वत्सकादिप्रतीवापं घृत पचेत् । तच्चार्शोघ्न पर दीपन च ।

**पञ्चकोलाभयाक्षारयवानीबिडसैन्धवैः ॥ ७५ ॥**
**सपाठाधान्यमरिचैः सबिल्वैर्दधिमद्घृतम् ।**
**साधयेत् तज्जयत्याशु गुदवङ्क्षणवेदनाम् ॥ ७६ ॥**
**प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।**

स०—पञ्चकोलादिभिर्दधिसहित घृत पचेत् । तच्च गुदादिवेदनादीन् जयति ।

१ 'तिलात्' अ इ । २ "अनन्तर प्रतिदिन दशदश पिप्पलीस्तथा तिलकर्षद्वयमतिवर्ध्य क्षीरेण पिबेत् दशदिनानि ।" इति चन्द्र । ३ 'न दश पिप्पलीवर्ध' ट ड । ४ 'नुक्ते सा' ट । ५ 'प्रमाण' ड.। ६ 'च' चन्द्र.। ७ 'त्वचम्' इ.। ८ 'तु' इ.,ड.।

१ 'न् पालि' ट ड । २ 'पा द्विपलै. स' इ. । ३ 'धान्यका' अ इ. । ४ 'न्धद्धृत्' अ.।

**पाठाजमोदधनिकाश्वदंष्ट्रापञ्चकोलकैः ॥ ७७ ॥**
**सबिल्वैर्दध्नि चाङ्गेरीस्वरसे च चतुर्गुणे ।**
**हन्त्याज्यं सिद्धमानाह मूत्रकृच्छ्रं प्रवाहिकाम् ॥७८॥**
**गुदभ्रंशार्तिगुदजग्रहणीगदमारुतान् ।**

स०–पाठादिभिश्चाङ्गेरीस्वरसे दध्नि च चतुर्गुणे घृतं पक्वं चाङ्गेरीघृतम् । एतदानाहादीन् हन्ति ।

**शिखितित्तिरिलावानां रसानम्लान् सुसंस्कृतान् ॥**
**दक्षाणां वर्तकानां वा दद्याद्विड्वातसङ्गहे ।**

स०–मयूरतित्तिर्यादीनां सुसंस्कृतानम्लान् मांसरसान् विड्वातसङ्गहनिवृत्त्यर्थं दद्यात् ।

**वास्तुकाग्निविवृद्दन्तीपाठाम्लीकादिपल्लवान् ॥८०॥**
**अन्यच्च कफवातघ्नं शाकं च लघु भेदि च ।**
**सहिङ्गु यमके भृष्टं सिद्धं दधिसरैः सह ॥ ८१ ॥**
**धनिकापञ्चकोलाभ्यां पिष्टाभ्यां दाडिमाम्बुना ।**
**आर्द्रिकायाः किसलयैः शकलैरार्द्रकस्य च ॥ ८२ ॥**
**युक्तमङ्गारधूपेन हृद्येन सुरभीकृतम् ।**
**सजीरकं समरिचं बिडसौवर्चलोत्कटम् ॥ ८३ ॥**
**वातोत्तरस्य रूक्षस्य मन्दाग्नेर्बद्धवर्चसः ।**
**कल्पयेद्रक्तशाल्यन्नव्यञ्जनं शाकवद्रसान् ॥ ८४ ॥**
**गोगोधाछगलोष्ट्राणां विशेषात्क्रव्यभोजिनाम् ।**

स०–वास्तुकादीनां शाकं तथाऽपरमपि शाकं यत्कफवातघ्नं–कोशातकादिकं, लघु भेदि च । तच्च सहिङ्गु च तथा यमके भृष्ट–सन्तलितम् । तथा, दधिसरेण धनिकापञ्चकोलाभ्यां पिष्टाभ्यां दाडिमाम्बुना च सिद्धम् । तथा, आर्द्रिकाया–धनिकाया, किसलयैः–पल्लवैः, युक्तम् । तथा, आर्द्रकस्य शकलैर्युक्तम् । तथा, हृद्येन–मनःप्रियेण, अङ्गारधूपेन–अङ्गारैर्यो धूपो हिङ्ग्वादिना प्रसिद्धस्तेन, सुरभीकृतम् । तथा, सजीरकं समरिचं बिडसौवर्चललवणाभ्यामुत्कटं–अधिकं, वातोत्तरस्य–पवनाधिकस्य पुरुषस्य, तथा रूक्षस्य तथा मन्दाग्नेस्तथा बद्धवर्चसः कल्पयेत् । रक्तशालिभक्तस्य व्यञ्जनं–तेमनाख्यं, शाकवत्कल्पयेत्–शाकसंस्कारेण कुर्यादित्यर्थः । व्यञ्जनानिति पाठे पुंस्त्वं चिन्त्यम् । तथा, रसान् । केषां रसान्? गोगोधादीनाम्, विशेषेण क्रव्यभोजिनां–मांसभक्षिणाम् ।

तदेवमाहारं निरूप्य पानं निरूपयन्नाह—

**मदिरां शार्करं गौडं सीधुं तक्रं तुषोदकम् ॥ ८५ ॥**
**अरिष्टं मस्तु पानीयं पानीयं वाऽल्पकं शृतम् ।**

**धान्येन धान्यशुण्ठीभ्यां कण्टकारिकयाऽथवा ८६**
**अन्ते भक्तस्य मध्ये वा वातवर्चोनुलोमनम् ।**

स०–मदिरादि पानीयं–पातव्यम् । अथवा, पानीयं–जलं, अतिशयेनाल्पं–अल्पकं, शृतं यथायोगं कदाचिद्धान्येन कदाचिद्धान्यशुण्ठीभ्यां कदाचित्कण्टकारिकया शृतं कदाचिद्भक्तस्यान्ते कदाचिन्मध्ये, योग्यतावशात्येषां मारुताविष्टादिरूपत्वं तेषां भक्तस्य मध्ये अन्येषामन्ते, मदिरादिपानं वातवर्चोनुलोमनम्,–तयोरप्रवर्तनोपारूढयोर्यथामार्गप्रवर्तनमित्यर्थः । वातस्यानुलोमनं च यत्तत्कफपित्तयोरप्यनुलोमनम् । पवनो हि क्रियावान्–क्रियावता देहगतानां भावानामनुलोमनं सम्भाव्यते । तथा च प्रागभ्यधायि (हृ. सू. अ. १९।८६)–"विट्श्लेष्मपित्तादिमलोचयानां विक्षेपसंहारकरः स यस्मात् ।" इत्यादि ।

अर्शःसु चानुलोमनं कार्यमिति दर्शयितुमाह—

**विड्वातकफपित्तानामानुलोम्ये हि निर्मले ॥ ८७ ॥**
**गुदे शाम्यन्ति गुदजाः पावकश्चाभिवर्धते ।**

स०–यस्माद्विड्वातादीनामानुलोम्ये सति गुदं निर्मलं भवति । गुदे च निर्मले गुदजा शाम्यन्ति । पावकः–कायाग्निश्च, अभिवर्धते यतस्तस्मादर्शसां विड्वातकफपित्तानुलोमनं भेषजान्नपानादि यत्तद्देयमिति भावः ।

**उदावर्तपरीता ये ये चात्यर्थं विरूक्षिताः ॥ ८८ ॥**
**विलोमवाताः शूलार्तास्तेष्विष्टमनुवासनम् ।**

स०–ये पुरुषा उदावर्तयुक्ता ये चातिशयेन विरूक्षितास्तथा विगुणपवना शूलपीडिताश्च तेष्वनुवासनमिष्टम्, तन्त्रकृतामिति शेषः ।

तदेवानुवासनमाह—

**पिप्पलीं मदनं बिल्वं शताह्वां मधुकं वचाम् ॥८९॥**
**कुष्ठं शठीं पुष्कराख्यं चित्रकं देवदारु च ।**
**पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् ॥ ९० ॥**
**अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ।**
**गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ॥ ९१ ॥**
**कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ।**
**पिच्छास्रावं गुदे शोफं वातवर्चोविनिग्रहम् ॥ ९२ ॥**
**उत्थानं बहुशो यच्च जयेत्तच्चानुवासनात् ।**

स०–पिप्पल्यादीनि पिष्ट्वा जलेन तैलं द्विगुणक्षीरेण संयुक्तं पक्तव्यम् । जलस्यात्रानुक्तस्यापि चतुर्गुणोंऽशः प्रकल्प्यः । एवं हि द्रव्याणि सम्यक् मुक्तरसानि स्युः । तन्त्रान्तरे चोक्तम्–

१ 'सरेण च' अरुण । २ 'धूमेन' इ. चन्द्र. । ३ 'व्यञ्जनं' अ इ चन्द्र. । ४ 'अनान् शा' इ चन्द्र । ५ 'धूमो हि' ट. । ६ 'र्चसो रक्त' ड । ७ 'तीमना' ट ड । ८ रक्तशाल्यन्नव्यञ्जनानिति रसविशेषणं कृतं चेत्तस्य युक्तं पुंस्त्वम्। ९ "तुषोदकं–तुषैर्यवैः कृतम् । अरिष्टं–मद्यावशेषम् ।" इति चन्द्र ।

१ 'दिपानं पा' ड. । २ 'तावस्मादि' ट. । ३ 'तेमानयो रुद्धयोर्' ट. । ४ 'मलाचया' ड । ५ 'शुण्ठीं' इति क्वचित् । ६ 'पौष्क' चन्द्र. । 'राह्व वि' अ । ७ "उत्थानं–उपवेशनं पुरीषस्य । बहुशो–बहून् वारान् ।" इति चन्द्र ।

"स्नेहे सक्षीरमासाद्य पाको यत्रेरित क्वचित्। जल चतुर्गुण तत्र बीजादानार्थमावपेत् ॥ न मुञ्चति रस द्रव्यं क्षीरादिभि रुपस्कृतम्। सम्यक्पाको न जायेत तस्मात्तोय विनिक्षिपेत् ॥" इति। तच्च—तैल, त्रिगुणपवनानामर्शसा श्रेष्ठ—हितम्। अनुवा सनेनाच्च तत्—तैल, गुदनि सारणादीन् जयेत्।

**निरूहं वा प्रयुञ्जीत सक्षीरं पाञ्चमूलिकम् ॥ ९३ ॥**
**समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः।**

स०—अथवा निरूह पाञ्चमूलिक समानक्षीर मूत्रस्नेहलवणान्वित फलादिभि—पूर्वोक्तै, कल्कैर्युक्त प्रयुञ्जीत। स च पूर्वोक्तगुण। समान क्षीर यस्मिन् तत्सक्षीरम्। "समानस्य छन्दसि" इति योगविभागात् सभाव। सह मूत्रस्नेहलवणैर्वर्तते समूत्रस्नेहलवणस्तम्। "वोपसर्जनस्य" इति सभाव। सहशब्दश्लेषच्छब्दार्थं।

अर्शसा शुष्कार्द्रत्वेन द्वैविध्यम्। तत्र शुष्कार्शसा चिकित्सितमुक्त्वा, अधुना आर्द्राणा रक्तार्शसामाह—

**अथ रक्तार्शसा वीक्ष्य मारुतस्य कफस्य वा ॥ ९४ ॥**
**अनुबन्धं ततः स्निग्धं रूक्षं वा योजयेद्विमम्।**

स०—रक्तार्शसामधिकारे पित्तस्य सर्वदाऽव्यभिचारित्वात् कदाचिन्मारुतानुबन्ध कदाचित्कफानुबन्ध स्वलिङ्गतो वीक्ष्य—उपलभ्य, स्निग्ध रूक्ष वा पानान्नौषध योजयेत्। एतच्चोभयमपि शीत—न तूष्णम्, पित्तस्यात्र नित्य सन्निहितत्वात्। वातानुबन्ध वीक्ष्य स्निग्धं, कफानुबन्ध वीक्ष्य रूक्ष, चिकित्सित योज्यम्।

वातानुबन्धकफानुबन्धयोर्लक्षणमाह—

**शकृच्छ्यावं खरं रूक्षमधो निर्याति नानिलः ॥९५॥**
**कट्यूरुगुदशूलं च हेतुर्यदि च रूक्षणम्।**
**तत्रानुबन्धो वातस्य श्लेष्मणो यदि विट् श्लथा ९६**
**श्वेता पीता गुरुः स्निग्धा, सपिच्छः स्तिमितो गुदः।**
**हेतुः स्निग्धगुरुर्विद्याद्यथास्वं चास्रलक्षणात् ॥९७॥**

स०—शकृच्छ्यावादिशूलपर्यन्त लक्षण यदा स्यात् तत्रानुबन्धो वातस्येत्यवबोध्यम्। हेतुर्यदि रूक्षण—रूक्षेण चेद्धेतुरासेवित शकृच्छ्यावादिलक्षण चोत्पन्न तदा वातानुबन्धत्व ज्ञेयम्। तथैव विट्श्लथादिलक्षण स्निग्धगुरुणा च सेवितेन हेतुना सहितं श्लेष्मणोऽनुबन्धस्यानुमापकम्। अस्रस्य लक्षणाच्च—सिराव्यधविध्युक्तात् "वाताच्छ्यावारुणं" (हृ सू अ. २७।४०) इत्यादिकाच्च लक्षणात्, वातस्यानुबन्धं विद्यात्। "कफात् स्निग्ध" (हृ सू अ. २७।४१) इत्यादिकाल्लक्षणात् कफस्यानुबन्धं विद्यात्।

**दुष्टेऽस्रे शोधनं कार्यं लङ्घनं च यथाबलम्।**

स०—दुष्टे—वातादिदूषिते, अस्रे यथाबलं—बलानतिक्रमेण, कदाचिल्लङ्घनं शोधनं च कार्यम्। बहुदोषस्य शोधनं, इतरस्य लङ्घन—उपवासलक्षणं, कार्यम्।

**यावच्च दोषैः कालुष्यं स्रुतेस्तावदुपेक्षणम् ॥ ९८ ॥**

स०—यावच दोषेणास्रस्य कालुष्यं—अनैर्मल्यं सामदोषदुष्टत्वात्, तावत्स्रुते प्रकृतत्वादस्रस्योपेक्षणं कार्यम्,—तथाभूताया रक्तस्रुते सङ्ग्रहणाय यत्नो न कार्य इत्यर्थ।

**दोषाणां पाचनार्थं च वह्निसन्धुक्षणाय च।**
**सङ्ग्रहाय च रक्तस्य परं तिक्तैरुपाचरेत् ॥ ९९ ॥**

स०—कालुष्यरहिताया रक्तस्रुते परं—अनन्तर, दोषाणा सामाना पक्त्यर्थं तथा वह्नेः सन्धुक्षणाय तथा रक्तस्य सङ्ग्रहणार्थं तिक्तैः—तिक्तरसप्रायैर्द्रव्यैः, तमर्शसमुपाचरेत्, इति सामान्योपक्रमो रक्तार्शोविकारशान्त्यर्थमुपदिष्ट।

**यत्तु प्रक्षीणदोषस्य रक्तं वातोल्बणस्य वा।**
**स्नेहैस्तत्साधयेद्युक्तैः पानाभ्यञ्जनबस्तिषु ॥ १०० ॥**

स०—यत्पुन प्रक्षीणदोषस्य निरामयस्य रक्तं स्रवेत्, वाताधिकस्य वा पुरुषस्य यद्रक्तं स्रवेत्, तत्स्नेहैः पानादियुक्तैः—दत्तैः, चिकित्सेत्।

**यत्तु पित्तोल्बणं रक्तं घर्मकाले प्रवर्तते।**
**स्तम्भनीयं तदेकान्तान्न चेद्वातकफानुगम् ॥ १०१ ॥**

स०—यत्पुन पित्तोल्बण रक्त ग्रीष्मर्तौ प्रवर्तते तदेकान्तेन—अवश्यं, स्तम्भनीयं—नोपेक्षणीयम्, शीघ्रकारित्वात्। किं सर्वमेव घर्मर्तौ रक्तं स्तम्भनीयम्? नेत्याह—न चेद्वातकफानुगम्,—वातकफानुबद्धं तु लङ्घनादिभिरेव चिकित्सेत।

**सकफेऽस्रे पिबेत्पाक्यं शुण्ठीकुटजवल्कलम्।**
**किराततिक्तकं शुण्ठीं धन्वयासं कुचन्दनम् ॥१०२॥**
**दार्वीत्वङ्निम्बसेव्यानि त्वचं वा दाडिमोद्भवाम्।**

स०—कफानुगते रक्ते शुण्ठीकुटजवल्कलं क्वथित पिबेत्। किराततिक्तकादिना(कं) वा क्वथित पिबेत्। अथवा, दाडिमजात्वचं पिबेत्।

**कुटजत्वक्फलं ताक्ष्यं माक्षिकं घुणवल्लभाम् ॥१०३॥**
**पिबेत्तण्डुलतोयेन कल्कितं वा मयूरकम्।**

१ 'स्नेहस' ट। 'स्वरसक्षीरमाङ्गल्यै' इति क्वचित्। २ 'रमत्पाश' ड। ३ 'वीर्याधानार्थं' इति क्वचित्। ४ 'नाचैत' ड। ५ फलादिभि—मदनफलबिल्वादिभि (श्लो ८९)। ६ "अथेति प्रकरणान्तरसूचनार्थं।" इति च द्र। ७ 'च' अ। ८ 'क्तार्शोधि' ड। ९ 'स्येत्येव बो' ड। १० 'ण च हेतु' ट।

१ 'च' स च। २ 'नुबद्धे र' ट। ३ "मयूरक—अपामार्ग, कल्कित—'कल्को दृषदि पेषित' इत्युक्तत्वात् अपामार्गमार्द्रं दृषदि सूक्ष्मचूर्णीकृत्य, पिबेत्। आर्द्रमयूरकाभावे अपामार्गं यथालाभोपपन्न सूक्ष्मीकृत्य तण्डुलधावनेन सह पिबेत्, इत्यपि सम्प्रदाय।" इति चन्द्र।

स०–कुटजत्वचमिन्द्रयवान् रसाञ्जनादींश्च तण्डुलजलेन पिबेत्। घुणप्रिया( वल्लभा )–अतिविषाम् । अथवा, तेनैव तण्डुलजलेन पिष्टमपामार्गं पिबेत् ।

**तुलां दिव्याम्भसि पचेदार्द्रायाः कुटजत्वचः ॥१०४॥**
**नीरसाया त्वचि क्वाथे दद्यात्सूक्ष्मरजीकृतान् ।**
**समङ्गाफलिनीमोचरसान् मुष्ट्यंशकान्समान् १०५**
**तैश्च शक्रयवान् पूते तते दर्वीप्रलेपनम् ।**
**पक्त्वाऽवलेहं लीढ्वा च त यथाग्निबलं पिबेत्॥१०६॥**
**पेयां मण्डं पयश्छाग गव्यं वा छागदुग्धभुक् ।**
**लेहोऽयं शमयत्याशु रक्तातीसारपायुजान् ॥१०७॥**
**बलवद्रक्तपित्तं च स्रवदूर्ध्वमधोऽपि वा ।**

स०–कुटजत्वच आर्द्रायास्तुला दिव्ये–आन्तरिक्षे जले, पचेत् । दिवि भव दिव्यम्, दिगादित्वाद्यत् । एतच्च द्रव्य सामान्यपरिभाषापरिमाणकल्पनयैव क्वाथसामान्यपरिमाणेन च क्वथितमेकत्व प्राप्तमिति तदपवादार्थमाह–नीरसायामित्यादि । तावत्पचेद्यावदेषा कुटजस्य त्वक् नीरसा स्यात् । नीरसत्व च प्रायेणाष्टांशशेषे क्वाथे भवति । तस्या च नीरसाया सत्या यत्परिमाण क्वाथोऽवशिष्यते तस्मिन् क्वाथे श्लक्ष्णचूर्णीकृतान् समङ्गादीन् मुष्ट्यंशकान्–पलपरिमाणान्, दद्यात् । तैश्च सम ङ्गादिभि सर्वै समानिन्द्रयवान् दद्यात् । तत –अनन्तर, पूत दर्वीप्रलेपन पक्त्वा लीढ्वा च त–अवलेह, अनन्तरं यथाग्निबल–बलानुसारेण, पेयादिक पिबेत् । किम्भूत सन् ? छागदुग्ध-भोजन । अय लेहो रक्तातीसार रक्तार्शांसि च शमयति । रक्तपित्त च प्रवृद्धमूर्ध्वमधो वा स्रवत् जयेत् ।

**कुटजत्वक्तुलां द्रोणे पचेदष्टांशशेषितम् ॥ १०८ ॥**
**कल्कीकृत्य क्षिपेत्तत्र तार्क्ष्यशैलं कटुत्रयम् ।**
**रोध्रद्वयं मोचरसं बलां दाडिमजां त्वचम् ॥१०९॥**
**बिल्वकर्कटिकां मुस्तं समङ्गा धातकीफलम् ।**
**पलोन्मितं दशपलं कुटजस्यैव च त्वचः ॥ ११० ॥**
**त्रिंशत्पलानि गुडतो घृतात्पूते च विंशतिः ।**
**तत्पक्व लेहतां यातं धान्ये पक्षस्थितं लिहन् ॥१११॥**
**सर्वार्शोग्रहणीदोषश्वासकासान्नियच्छति ।**

स०–वत्सकत्वक्तुला जलद्रोणे पचेदष्टांशशेषितं यावच्च । तत्र–अष्टांशशेषिते क्वाथे पूते सति, कल्कयित्वा तार्क्ष्यशैलादीन् पलप्रमाणान् क्षिपेत् । एवं त्रिकटूनि । बिल्वकर्कटिका–लघूनि बिल्वफलानि । कुटजत्वचश्च दशपलानि । गुडपलानि त्रिंशत् । घृतस्य पलानि विंशति । एतैः सर्वं लेहतां यातं पक्व सत् धान्यराशिमध्ये मासार्धं स्थितं त लिहन् सर्वानर्शः प्रभृतीन् जयेत् ।

१ 'तेन त' ट ड. । २ 'पूत त' अ. । ३ "पूते–निश्चोतिते" इति चन्द्र । ४ 'सूक्ष्मचू' ट । ५ 'षिताम्' इति क्वचित् । ६ 'नि-र्हन्ति' चन्द्र. । ७ 'तदेव तस्स' ड । ८ 'क्व–सिद्ध, धा' ट. ।

**रोध्रं तिलान्मोचरसं समङ्गा चन्दनोत्पलम् ॥११२॥**
**पाययित्वाऽऽजदुग्धेन शालींस्तेनैव भोजयेत् ।**

स०–रोध्रादीनजादुग्धेन पाययित्वाऽऽतुर शालींस्तेनाजक्षीरेण भोजयेत् । एतच्चोपयुक्त पूर्वगुणम् ।

**यष्ट्याह्वपद्मकानन्तापयस्याक्षीरमोरटम् ॥ ११३ ॥**
**ससितामधु पातव्यं शीततोयेन तेन वा ।**

स०–यष्ट्याह्वादि सशर्करामाक्षिक शीतजलेन तेनाजपयसा वा पातव्यम् । क्षीरमोरटा–मधुस्रवा ।

**रोध्रकट्वङ्गकुटजसमङ्गाशाल्मलीत्वचम् ॥ ११४ ॥**
**हिमकेसरयष्ट्याह्वसेव्यं वा तण्डुलाम्बुना ।**

स०–लोध्रादिक तण्डुलाम्बुना रक्तार्श सु पातव्यम् । अथवा, चन्दननागकेसरमधुकोशीर तण्डुलाम्भसा पातव्य पूर्वोक्तगुणम् ।

**यवानीन्द्रयवाः पाठा बिल्वं शुण्ठी रसाञ्जनम्॥११५॥**
**चूर्णश्चले हित. शूले प्रवृत्ते चाति शोणिते ।**
**दुग्धिकाकण्टकारीभ्यां सिद्धं सर्पिः प्रशस्यते ११६**
**अथवा धातकीरोध्रकुटजत्वक्फलोत्पलैः ।**
**सकेसरैर्यवक्षारदाडिमस्वरसेन वा ॥ ११७ ॥**

स०–यवान्यादीना चूर्णो जलेन पीतो वाते शूले प्रवृत्ते चातिशयेन रक्ते हित । दुग्धिकाकण्टकारीभ्या पक्व सर्पिरस्मिन्विषये प्रशस्यते । अथवा, धातक्यादिभि सिद्ध घृत हितम् । यवक्षारदाडिमस्वरसेन वा सिद्ध घृत हितम् ।

**शर्कराम्भोजकिञ्जल्कसहितं सह वा तिलैः ।**
**अभ्यस्तं रक्तगुदजान् नवनीतं नियच्छति ॥ ११८ ॥**

स०–शर्करापद्मकेसरसहितमभ्यस्त–बहून्यहानि भुक्तं, नवनीत रक्तार्शांसि शमयति । तिलैर्वा सहाभ्यस्त नवनीत रक्तार्शांसि शमयति ।

**छागानि नवनीताज्यक्षीरमांसानि, जाङ्गलः ।**
**अनम्लो वा कदम्लो वा सवास्तुकरसो रस.॥११९॥**
**रक्तशालिः सरो दध्नः षष्टिकस्तरुणी सुरा ।**
**तरुणश्च सुरामण्ड. शोणितस्यौषधं परम् ॥ १२० ॥**

स०–छागसम्बन्धीनि नवनीतादीनि तथा जाङ्गलरसादीनि रक्तस्य परमोषधम् । जाङ्गलो वा रस सहवास्तुकरसेन वर्तेत इति सवास्तुकरस., अनम्ल –अम्लरहित , कदम्ल –ईषदम्लो वा, अभ्यस्तो रक्तगुदजान्नियच्छति । रक्तशालि –तज्जो भक्त इत्यर्थ । दध्न सरो–दध्युत्तर । षष्टिको व्रीहि । तरुणी–सञ्जातमधुरप्राया सुरा, [तरुणो सुरा]मण्डश्च । एतद्रक्तशाल्यादि शोणितस्य परमौषधम् ।

**पेयायूषरसाद्येषु पलाण्डुः केवलोऽपि वा ।**
**स जयत्युल्बणं रक्तं मारुत च प्रयोजितः ॥ १२१ ॥**

स०–पेयादिषु प्रयोजित पलाण्डु, केवलो वा, रक्तमत्युल्बण वात च जयति ।

१ 'त्वच' अ इ । २ 'धातु' इ ,ड ।

**वातोल्बणानि प्रायेण भवन्त्यस्रेऽतिनिःसृते ।**
**अर्शांसि तस्मादधिकं तज्जये यत्नमाचरेत् ॥ १२२ ॥**

स०-प्रायेण रक्तेऽतिस्रुते वाताधिकानि दुर्नामानि यतो भवन्ति, तस्माद्धेतोस्तज्जये-पवनजये, यत्नं कुर्यात् ।

**दृष्ट्वाऽस्रपित्तं प्रबलमबलौ च कफानिलौ ।**
**शीतोपचारः कर्तव्यः सर्वथा तत्प्रशान्तये ॥ १२३ ॥**

स०-रक्तपित्तं प्रवृद्धं दृष्ट्वा कफानिलौ चाबलावुपलभ्य तत्प्रशान्त्यर्थं शीतोपचारः कर्तव्यः ।

**न चेदेवं शमस्तस्य स्निग्धोष्णैस्तर्पयेत्ततः ।**
**रसैः, कोष्णैश्च सर्पिर्भिरवपीडकयोजितैः ॥ १२४ ॥**
**सेचयेत्तं कवोष्णैश्च कामं तैलपयोघृतैः ।**

स०-यद्येवं शमो न स्यात्तदा रसैस्तर्पयेत् । "रस इत्यविशेषोक्तौ योज्यो मांसभवो रसः ।" किम्भूतैः ? स्निग्धोष्णैः । तथा, कोष्णैर्घृतैश्च पुनस्तर्पयेत् । किम्भूतैः ? अवपीडकेन-रोगानुत्पादनीयोक्तेन ( हृ. सू. अ. ४।६ ), प्रयोजितैः । तं च कवोष्णैर्यथायोगं तैलपयोघृतैः सेचयेत् ।

**यवासकुशकाशानां मूलं पुष्पं च शाल्मलेः ॥ १२५ ॥**
**न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ।**
**त्रिप्रस्थे सलिलस्यैतत्क्षीरप्रस्थे च साधयेत् ॥ १२६ ॥**
**क्षीरशेषे कषाये च तस्मिन् पूते विमिश्रयेत् ।**
**कल्कीकृतं मोचरसं समङ्गां चन्दनोत्पलम् ॥ १२७ ॥**
**प्रियङ्गुं कौटजं बीजं कमलस्य च केसरम् ।**
**पिच्छाबस्तिरयं सिद्धः सघृतक्षौद्रशर्करः ॥ १२८ ॥**
**प्रवाहिकागुदभ्रंशरक्तस्रावज्वरापहः ।**

स०-यवासादीनां मूलं शाल्मलेः पुष्पं तथा न्यग्रोधादीनां च शुङ्गाः एतद् द्रव्यकदम्बकं प्रत्येकं द्विपलप्रमाणं जलप्रस्थत्रये क्षीरप्रस्थे च पाचयेत् । क्षीरशेषे च कषाये तस्मिन् पूते सति कल्कीकृतं मोचरसादि मिश्रयेत् । मोचरसादयोऽत्र सन्निभागैः मात्रशाणकर्षमात्रा ग्राह्या (?), बस्तिकल्पे कोशातकादौ निरूहे ( हृ. क. अ. ४।१७ ) विंशतिपलप्रमाणे कार्षिकाणामेव द्रव्याणामभ्यनुज्ञानात् । अयं पिच्छाबस्तिः सिद्धो घृतमाक्षिकशर्करान्वितः प्रवाहिकादिहरः । अल्पया मात्रया निरूहो बस्तिरेव पिच्छाबस्तिरुच्यते ।

**यष्ट्याह्वपुण्डरीकेण तथा मोचरसादिभिः ॥ १२९ ॥**
**क्षीरद्विगुणितः पक्वो देयः स्नेहोऽनुवासनम् ।**

स०-मधुयष्टिकया प्रपौण्डरीकेण तथा मोचरसादिभिः-पूर्वोक्तैः ( श्लो. १२७ ) कल्कीकृतैः, क्षीरद्विगुणितः पक्वः सन् स्नेहोऽनुवासनं देयः ।

**मधुकोत्पलरोध्राम्बु समङ्गा बिल्वचन्दनम् ॥ १३० ॥**
**चविकाऽतिविषा मुस्तं पाठा क्षारो यवाग्रजः ।**
**दार्वीत्वङ्नागरं मांसी चित्रको देवदारु च ॥ १३१ ॥**
**चाङ्गेरीस्वरसे सर्पिः साधितं तैस्त्रिदोषजित् ।**
**अर्शोऽतिसारग्रहणीपाण्डुरोगज्वरारुचौ ॥ १३२ ॥**
**मूत्रकृच्छ्रे गुदभ्रंशे बस्त्यानाहे प्रवाहणे ।**
**पिच्छास्रावेऽर्शसां शूले देयं तत्परमौषधम् ॥ १३३ ॥**

स०-मधुकादिद्रव्यैः स्नेहचतुर्थभागप्रमाणैश्चाङ्गेरीस्वरसे घृताच्चतुर्गुणे घृतं साधितं त्रिदोषजित् । अर्शःप्रभृतिष्वेतद् घृतं देयम् । यतः परमौषधम् ।

**व्यत्यासान्मधुराम्लानि शीतोष्णानि च योजयेत् ।**
**नित्यमग्निबलापेक्षी जयत्यर्शःकृतान् गदान् ॥ १३४ ॥**

स०-व्यत्यासेन-विपर्ययेण, मधुराण्यम्लानि च शीतान्युष्णानि च नित्यमग्निबलापेक्षी योजयेत् । एवं चार्शःकृतामतिशयिनीं रुजं जयति ।

**उदावर्तार्तमभ्यज्य तैलैः शीतज्वरापहैः ।**
**सुस्निग्धैः स्वेदयेत्पिण्डैर्वर्तिमस्मै गुदे ततः ॥ १३५ ॥**
**अभ्यक्तां तत्कराङ्गुष्ठसन्निभामनुलोमनीम् ।**
**दद्याच्छ्यामात्रिवृद्दन्तीपिप्पलीनीलिनीफलैः ॥ १३६**
**विचूर्णितैर्द्विलवणैर्गुडगोमूत्रसंयुतैः ।**
**तद्वन्मागधिकाराठगृहधूमैः ससर्षपैः ॥ १३७ ॥**

स०-उदावर्तेनार्तं नरं तैलैः शीतज्वरापहैः-तगरागुरुकुङ्कुमादिद्रव्यसाधितैः, अभ्यज्य सुस्निग्धैः पिण्डैः स्वेदयेत् । ततः-स्वेदादनन्तरम्, अस्मै-उदावर्तवते, गुदेऽभ्यक्तेऽभ्यक्तां वर्तिं दद्यात् । तत्कराङ्गुष्ठसन्निभां-आतुरहस्ताङ्गुष्ठसदृशीम् । तथा, अनुलोमकरीं दद्यात्-क्षिपेत् । कैः कृतां वर्तिम् ? इत्याह-श्यामेत्यादि । श्यामादिभिः सैन्धवाक्षलवणयुक्तैः सूक्ष्मरजीकृतैर्गुडगोमूत्रसंयुक्तैः कृतां वर्तिं क्षिपेत् । तथैव मागधिकामदनफलगृहधूमसर्षपैर्गुडगोमूत्रान्वितैर्वर्तिं क्षिपेत् ।

**एतेषामेव वा चूर्णं गुदे नाड्या विनिर्धमेत् ।**

स०-अथवा, एतेषामेव-पूर्वोक्तानां, चूर्णं नाड्या गुदे विनिर्धमेत् ।

**तद्विघाते सुतीक्ष्णं तु बस्तिं स्निग्धं प्रपीडयेत् १३८**
**ऋजू कुर्याद्धि शिरां विण्मूत्रमरुतोऽस्य सः ।**
**भूयोऽनुबन्धे वातघ्नैर्विरेच्यः स्नेहरेचनैः ॥ १३९ ॥**
**अनुवास्यश्च रौक्ष्याद्धि सङ्गो मारुतवर्चसोः ।**

---

१ "सर्वथा-सर्वप्रकारम् ॥ तस्य-रक्तपित्तस्य ॥ सिद्ध-प्रसिद्ध ।" इति चन्द्रः । २ 'वाऽब' ड । ३ 'यदा चैव शमो न स्यात् स्नि' इति क्वचित् । ४ 'घोक्ते यो' ट । ५ 'गशाण' ड. । 'गमात्रशेषेण कर्ष' ट. ।

१ "पर-श्रेष्ठम् ॥ विनिर्धमेत्-प्रक्षिपेत्, उदावर्तार्तस्येति शेष. ॥ तयोः-वर्तिचूर्णयो., विघाते-निष्फलतायाम् । सुतीक्ष्ण-तीक्ष्णद्रव्यकृतम् ।" इति चन्द्रः । २ 'कृता रुजम्' अरुण । ३ 'यिताः' ट । ४ द्विलवणैः-सैन्धवसोवर्चलैः । ५ 'त्रपाचितैः' अ । ६ 'अस्य-उदावर्तवतो' ट. । ७ 'शिरोवि' इति क्वचित् ।

स०-तद्विघाते-कार्यं कर्तुमशक्ते तास्मिश्चूर्णे, बस्तिं स्निग्ध-स्नेहबस्तिं, सुतीक्ष्णं दद्यात्। स -बस्तिः, अस्य-आतुरस्य, गुद-शिरांविण्मूत्रवातानानुलोमयेत्। पुनरनुबन्धे सति स्नेहरेचनविरेचनीयश्चानुवासनीयश्च। हि-यस्मात्, रौक्ष्याद्धेतोर्मारुतस्य पुरीषस्य च सङ्गो भवति।

त्रिपटुत्रिकटुश्रेष्ठादन्त्यरुष्करचित्रकम्॥ १४०॥
जर्जरं स्नेहमूत्राक्तमन्तर्धूमं विपाचयेत्।
शरावसन्धौ मृल्लिप्ते क्षारः कल्याणकाह्वयः॥१४१॥
स पीतः सर्पिषा युक्तो भक्ते वा स्निग्धभोजिना।
उदावर्तविबन्धार्शोगुल्मपाण्डूदरकृमीन्॥ १४२॥
मूत्रसङ्गाश्मरीशोफहृद्रोगग्रहणीगदान्।
मेहप्लीहरुजानाहश्वासकासांश्च नाशयेत्॥ १४३॥

स०-त्रिपट्वादि जर्जरीकृतं-सूक्ष्मीकृतं, स्नेहमूत्राभ्यामक्तमन्तर्धूमं कृत्वा विपाचयेच्छरावसम्पुटे। अत एवाह-शरावसन्धौ मृल्लिप्ते इति। अयं च कल्याणको नाम क्षारः सर्पिषा पीतः स्नेहभोजिना वा भक्ते युक्तः सन्नुदावर्तादीन् नाशयेत्।

सर्वं च कुर्याद्यत्प्रोक्तमर्शसां गाढवर्चसाम्।

स०-यच्च गाढवर्चसामर्शसां प्रोक्तं तच्च सर्वं कुर्यात्।

द्रोणेऽपां पूतिवल्कद्वितुलमथ पचे-
त्पादशेषे च तस्मिन्
देयाऽशीतिर्गुडस्य प्रतनुकरजसो
व्योषतोऽष्टौ पलानि।
एतन्मासेन जातं जनयति परमा-
मूष्मणः पक्तिशक्तिं
शुक्तं कृत्वाऽऽनुलोम्यं प्रजयति गुदज-
प्लीहगुल्मोदराणि॥ १४४॥

स०-द्वयोस्तुलयोः समाहारो द्वितुलम्। पूतिकरञ्जस्य त्वचस्तुलाद्वय-पलशतद्वयं, जलद्रोणे पचेत्। तस्मिंश्च पादशेषे सति गुडस्याशीतिः पलानि क्षेप्तव्यानि। त्रिकटुकस्य सूक्ष्मचूर्णस्याष्टौ पलानि देयानि। एतत्सर्वं मासेन शुक्तं जातं प्रबलमग्निं कुरुते। आनुलोम्यं कृत्वा गुदजादीन् जयति। स्रग्धरावृत्तम्।

पचेत्तुलां पूतिकरञ्जवल्काद्-
द्वे मूलतश्चित्रककण्टकार्योः।
द्रोणत्रयेऽपां चरणावशेषे
पूते शतं तत्र गुडस्य दद्यात्॥ १४५॥
पलिकं च सुचूर्णितं त्रिजात-
त्रिकटुग्रन्थिकदाडिमाश्मभेदम्॥
पुरपुष्करमूलधान्यचव्यं
हपुषामार्द्रकमम्लवेतसं च॥ १४६॥
शीतीभूतं क्षौद्रविंशत्युपेत-
मार्द्रद्राक्षाबीजपूरार्द्रकैश्च।

१ भक्त-युक्तम्। २ 'वल्क' अ। ३ 'सुक्त' इ.चन्द्र।

युक्तं कामं गण्डिकाभिस्तथेक्षोः
सर्पिःपात्रे मासमात्रेण जातम्॥ १४७॥
चुक्रं क्रकचमिवेदं दुर्नाम्नां वह्निदीपनं परमम्।
पाण्डुगरोदरगुल्मप्लीहानाहाश्मकृच्छ्रघ्नम्॥ १४८॥

स०-पूतिकरञ्जत्वचस्तुलामेकां द्वे च तुले चित्रककण्टकारीमूल्योर्जलद्रोणत्रये पचेत्। पादशेषे च तस्मिन् पूते गुडस्य पलशतं दद्यात्। उपजातिवृत्तम्। त्रिजातकादि सूक्ष्मरजीकृतं प्रत्येकं पलप्रमाणं निक्षिपेत्। एतत्सर्वं चूर्णितं श्लक्ष्णपिष्टं दद्यात्। औपच्छन्दसिकं वृत्तम्। एतच्च शीतीभूतं सत् क्षौद्रविंशत्योपेतमार्द्रद्राक्षादिभिश्चोपेतमिक्षुगण्डिकाभिश्च यथेच्छं युक्तं सर्पिःपात्रे मासमात्रेण जातं चुक्रमिति वक्ष्यमाणेन सम्बन्धः। शुक्तमिदमर्शसां क्रकचमिव-करपत्रतुल्यं,कर्तनशक्तिसामर्थ्यात्। तथा परं वह्निदीपनं पाण्ड्वादिघ्नं च। शालिनीवृत्तम्, आर्या च।

द्रोणं पीलुरसस्य वस्त्रगलितं न्यस्तं हविर्भाजने
युञ्जीत द्विपलैर्मदामधुफलाखर्जूरधात्रीफलैः।
पाठामाद्रिविदुलाम्लभाम्लविदुलव्योषत्वगेलोल्लकैः
स्पृक्काकोलकलवङ्गवेल्लचपलामूलाग्निकैः पालिकैः॥
गुडपलशतयोजितं निवाते
निहितमिदं प्रपिबंश्च पक्षमात्रात्।
निशमयति गुदाङ्कुरान् सगुल्मा-
ननलबलं प्रबलं करोति चाशु॥ १५०॥

स०-पीलुफलानां रसस्य द्रोणं वस्त्रपूतं सर्पिर्भाण्डे न्यस्तं मदादिभिर्द्विपलप्रमाणैः पाठादिभिश्च पालिकैर्युञ्जीत। मदा-धातकी। मधुफला-द्राक्षा। माद्री-रेणुका। विदुलो-वेतसः। शार्दूलविक्रीडितम्। तथा गुडपलशतेन योजितं निवाते धृतं पक्षमात्रादनन्तरं प्रपिबन्नर इदमर्शांसि गुल्मं च शमयति। द्रागग्निबलं च प्रकृष्टं विधत्ते। पुष्पिताग्रा।

एकैकशो दशपले दशमूलकुम्भ-
पाठाद्वयार्कघुणवल्लभकट्फलानाम्।
दग्धे स्रुतेऽनु कलशेन जलेन पक्वे
पादस्थिते गुडतुला, पलपञ्चकं च॥ १५१॥
दद्यात्प्रत्येकं व्योषचव्याभयानां,

१ "परमं-अतिशयेन॥ माद्री-अतिविषा। अम्लविदुल-अम्लवेतसम्। उल्लक-कटुकम्। स्पृक्का-देवीलता। कोल-बहुजीवकम्। चपलामूल-पिप्पलीमूलम्॥ दग्धे-क्षारीकृते। कलशेन जलेन-तोयद्रोणेन। स्रुते-पटपूते सति। तस्मिन् जले पक्वे पादस्थिते-चतुर्भागावशेषिते। कुम्भ-दन्ती। घुणवल्लभा-त्रिवृत्।" इति चन्द्र। २ 'गेल्लाल्ल' अ। अल्लक-धान्यकम्। ३ 'प्रशम' इ.। ४ "रेणुका राजपत्री च नन्दिनी कपिला द्विजा। भस्मगन्धा पाण्डुपत्नी स्मृता कौन्ती हरेणुका॥" धन्व नि। ५ 'द्री-अतिविषा।' ट। ६ 'च करोति पुष्टिं वि' ट.। ७ 'ठाभया' इ।

वह्निमुखी द्वे यवक्षारतश्च ।
दर्वीमालिम्पन् हन्ति लीढो गुडोऽयं
गुल्मप्लीहार्शःकुष्ठमेहाग्निसादान् ॥ १५२ ॥

स०-दशमूलादीना प्रत्येक दशपले दग्धे जलद्रोणेन स्रुते जले पक्के पादशेषे चास्मिन् गुडतुला व्योषादीना च प्रत्येक पलपञ्चक दद्यात् । चित्रकस्य पलद्वय यवक्षारस्य च पलद्वय दद्यात् । दवामालिम्पन् दर्वीलेपी सन्नय गुडो लीढो-भक्षितो, गुल्मादीन् पराकरोति । वसन्ततिलक वेश्वदवीय वृत्त च ।

तोयद्रोणे चित्रकमूलतुलार्धं
साध्यं यावत्पाद*[1]दलस्थ[2]मथेदम् ।
अष्टौ दत्त्वा जीर्णगुडस्य पलानि
क्वाथ्यं भूयः सान्द्रतया सममेतत् ॥ १५३ ॥
त्रिकटुकमिसिपथ्याकुष्ठमुस्तावराङ्ग-
कृमिरिपुदहनैलाचूर्णकीर्णोऽवलेहः ।
जयति गुदज[3]कुष्ठप्लीहगुल्मोदराणि
प्रबलयति हुताशं शश्वदभ्यस्यमानः ॥ १५४ ॥

स०-तोयस्य द्रोणे चित्रकमूलस्य तुलार्धं साध्य यावदष्टाशशेषमिद स्यात् । तत पुराणगुडपलान्यष्टौ दत्त्वा पुनरपि क्वाथ्य यावत्सान्द्रत्व गतम् । "म्तौ ज्यो भद्रा वेदवसू च विराम ।" त्रिकट्वादिचूर्णयुक्तोऽय लेहो नित्यमभ्यस्यमानो दारुण(दुर्नाम)-कुष्ठादीनि जयति । अग्निं च प्रकृष्ट कुरुते । मालिनीवृत्तम् ।

गुडव्योषवरावेल्लतिलारुष्करचित्रकैः ।
अर्शांसि हन्ति गु[4]लिका त्वग्वि*[1]कार च शीलिता १५५

स०-गुडादिभिर्गुलिका [5]कृताऽभ्यस्ता दुर्नामानि हन्ति त्वग्विकारं च ।

मृल्लिप्तं सौरणं कन्दं पक्त्वाऽग्नौ पुटपाकवत् ।
अद्यात्सतैललवणं दुर्नामविनिवृत्तये ॥ १५६ ॥

स०-सारणं कन्द मृदा लिप्तमग्नौ पुटपाकवत् पक्क तैल लवणान्वितमश्नीयाद् दुर्नामोपशमाय ।

मरिचपिप्पलिनागरचित्रकान्
क्रमविवर्धितभागसमाहृतान् ।
शिखिचतुर्गुणसूरणयोजितान्
कुरु *गुडेन गु[6]डान् गुदजच्छिदः ॥ १५७ ॥

स०-मरिचादीन् क्रमवर्धितभागान् चित्रकचतुर्गुणसूरणयोजितान् गुडान् गुडेन कुरु गुदाङ्कुरच्छिद । द्रुतविलम्बितम् ।

चूर्णीकृताः षोडश सूरणस्य
भागास्ततोऽर्धेन च चित्रकस्य ।
महौषधाद्द्वौ मरिचस्य चैको
*[1]गुडेन दुर्नामजयाय पिण्डी[2] ॥ १५८ ॥

स०-सूक्ष्मरजीकृता सूरणभागा षोडश, चित्रकभागा अष्टौ, नागरस्य द्वौ, मरिचस्य चको, गुडेनषा पिण्डी *कृता दुर्नामजयाय स्यात् । उपजातिवृत्तम् ।

पथ्यानागरकृष्णाकरञ्जवेल्लाग्निभिः सितातुल्यैः ।
वडवामुख इव जरयति बहुगुर्वपि भोजन चूर्णः[3] १५९

स०-पथ्यादिभि सितातुल्यैश्चूर्णो बहु गुरु च भोजनं वडवामुख इव जरयति । "आर्यायां पूर्वार्धे यथोक्तमात्रादतो मया लक्ष्म । गीति [ तत्र ] विधिविदो वदन्ति सवीक्ष्य तदितरत्रापि ॥"

कलिङ्ग*[1]लाङ्गलीकृष्णावह्न्य*[1]पामार्गतण्डुलैः ।
भूनिम्बसैन्धवगु*[1]डैर्गुडा गुदजनाशनाः ॥ १६० ॥

स०-कलिङ्गकादिभिर्गुडा -वटिका, अर्शोघ्ना ।

लवणोत्तमवह्निकलिङ्गयवां
श्चिर[4]िबिल्वमहापिचुमर्[5]न्दयुतान् ।
पिब सप्तदिनं मथिताल्[6]लुडितान्
यदि मर्दितुमिच्छसि पायुरु[7]हान् ॥ १६१ ॥

स०-सैन्धवादीनि तक्रालोडितानि पिब यद्यर्शांसि जिघांससि । "अथ तोटकमब्धिसकारचितम् ।"

शुष्केषु भल्लातकमग्र्यमुक्तं
भैषज्यमार्द्रेषु तु वत्सकत्वक् ।
सर्वेषु सर्वर्तुषु कालशेय-
मर्शःसु बल्यं च मलापहं च ॥ १६२ ॥

स०-शुष्केष्वर्शःसु भल्लातक भैषज्य अग्र्य-प्रधानमुदितम् । आर्द्रेषु पुनरर्शःसु कुटजत्वग्भैषज्यमग्र्य कथितम् । सर्वेष्वर्शःसु-शुष्केष्वार्द्रेषु च, सर्वर्तुषु-सर्वकाल, कालशय-मथित, अग्र्य बल्य-बलावह, मलापह-दोषापह च । इन्द्रवज्रावृत्तम् ।

---

*१ "पाददलस्थ-अष्टभागस्थितम् । अथ-अनन्तरम् ॥ त्वग्विकार-कुष्ठम् ॥ अत्रानुक्तोऽपि चूर्णात् द्विगुणो गुड कार्य. ॥ लाङ्गली-विशल्या । अपामार्गतण्डुला -अपामार्गबीजानि ।" इति चन्द्र । २ 'दृजलस्थमप्येदम्' अ । ३ 'जयुक्तप्लीं' अ । ४ 'गुटिका' अ । *५ 'कृता' इति ड पुस्तके नोपलभ्यते । ६ गुडा -गुटिका ।

१ 'न् गुडेन गुदा' ट ड. । २ पिण्डी-गुटिका । ३ 'चूर्णम्' अ । ४ "चिरिबिल्व -करञ्ज, तस्य मूलमत्र, यत्पुनरस्य सुश्रुते फलग्रहणमुक्त तच्छोधनविषयम् । महापिचुमन्द -पर्वतनिम्ब, निम्बसदृशबृहत्पत्रो वृक्ष, 'बकायणी' ('बकाणनिम्ब') इति लोके । ग्रामनिम्ब एव पर्वतभवत्वेन पर्वतनिम्ब उच्यते इत्याहुरन्ये । एतस्य त्वग्ग्राह्या ।" इति श्रीकण्ठदत्तशिवदासौ । ५ 'मर्दयु' चक्र. । ६ 'लुलिता' अ. चक्र सिद्ध । ७ 'रुह ' इ. चन्द्र. ।

भित्त्वा विबन्धाननुलोमनाय
यन्मारुतस्याग्निबलाय यच्च।
तदन्नपानौषधमर्शसेन
सेव्यं, विवर्ज्यं विपरीतमस्मात् ॥ १६३ ॥

स०-विबन्धान्-स्त्यानकफादिरूपान्, भित्त्वा यत्-अन्न पानौषधमासेवितं, मारुतस्यानुलोमनाय-स्ववर्त्मप्रवर्तनाय, तथा यच्चाग्निबलाय-अग्निवर्धनाय सम्पद्यते, तदेवान्नपानौषधं दुर्नामवता सेव्यम्। अस्मात्-यथोक्तात्, विपरीतं-यदन्नपानौषधं मारुतस्य विबन्धकरमग्निसादनं च तत्, तेन विवर्ज्यं-न सेव्यम्। उपजातिवृत्तम्।

अर्शोतिसारग्रहणीविकाराः
प्रायेण चान्योन्यनिदानभूताः।
सन्नेऽनले सन्ति, न सन्ति दीप्ते,
रक्षेदतस्तेषु विशेषतोऽग्निम् ॥ १६४ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थानेऽर्शश्चिकित्सितं नामाष्टमोऽध्यायः ॥ ८ ॥

स०-अर्शोतिसारग्रहण्योऽन्योन्यनिदानभूताः-परस्परं हेतुभूताः, प्रायेण-बाहुल्येन, अनले च सन्ने एते रोगा भवन्ति। दीप्ते त्वग्नौ न सन्ति, यतस्ततः-अस्मात्कारणात्, तेषु विशेषेणाग्निं रक्षेदिति। इन्द्रवज्रावृत्तम्।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां चतुर्थे चिकित्सितस्थानेऽर्शश्चिकित्सितं नामाष्टमोऽध्यायः समाप्तः ॥ ८ ॥



## नवमोऽध्यायः।

अस्मादनन्तरमतिसारचिकित्सितं प्रारभ्यते, अर्शोतिसारयोः परस्परं निदानभूतत्वेन चिकित्सासामान्यात्। अत एवाह-

अथातोऽतीसारचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः।
(गद्यसूत्रे ॥ २ ॥)

अतीसारो हि भूयिष्ठं भवत्यामाशयान्वयः।
हत्वाऽग्निं वातजेऽप्यस्मात्प्राक् तस्मिँल्लङ्घनं हितम् ॥ १ ॥

स०-हि-यस्मात्, बाहुल्येनाग्निं हत्वा-मन्दीकृत्य, आमाशयान्वयो भवत्यतीसारः। अस्मात्कारणादस्मिन्-अतीसाराख्ये व्याधौ, वातजेऽपि पूर्वं लङ्घनं हितम्। आमाशयोऽन्वयो-जन्मभूरुत्पत्तिर्यस्य स आमाशयान्वयः। अपिशब्दात्कचित्कफादिजे सुतरां लङ्घनं हितमिति द्योतयति। लङ्घनशब्देन चोपवास एवेह गृह्यते, शोधनादीनां लङ्घनानामवस्थावशादुच्यमानत्वात्। भूयिष्ठग्रहणेन कचिद्भयजादावतीसारे व्यभिचारं, नासावामाशयान्वयः। प्राग्ग्रहणेन नोत्तरकाले लङ्घनं हितम्। तदा हि रोगस्वभावाद्धात्वपचयोऽवश्यंभावी। लङ्घनमपि धात्वपचयहेतुः, अतस्तत्रायुक्तम्।

शूलानाहप्रसेकार्तं वामयेदतिसारिणम्।

स०-शूलादिभिरार्तमतीसारिणं वामयेत्, न तत्र प्राग् लङ्घनं हितम्। वमनं चैतत्सामान्यं पित्तजादिष्वप्येवंरूपेषु चिकित्सितं बोध्यम्, न केवलं वातजे।

दोषाः सन्निचिता ये च विदग्धाहारमूर्च्छिताः ॥ २ ॥
अतीसाराय कल्पन्ते तेषूपेक्षैव भेषजम्।
भृशोत्क्लेशप्रवृत्तेषु स्वयमेव चलात्मसु ॥ ३ ॥

स०-ये च दोषाः सन्निचिताः-अतिशयेन वृद्धिं गताः, तथा विदग्धेन-पक्वापक्वरूपेण, आहारेण मूर्च्छिताः-एकतां प्राप्ताः, अतीसाराय कल्पन्ते-सम्पद्यन्ते। तेषु तथोत्क्लेशेन-उत्क्लेशाख्यविकारकरणप्रत्युन्मुखता बीजस्याङ्कुरोत्पत्तावुच्छूनावस्थेव, अतिशयेनोत्क्लेशो भृशोत्क्लेशस्तेन प्रवृत्ताः-अतीसारकरणं प्रति समुद्यतास्तेषु, तथा स्वयमेव-यत्नं विना, चलात्मसु-चलस्वभावेषु, तेषु-तथाभूतेषु दोषेषु, उपेक्षा-पथ्याशित्वेन सम्यक् प्रवर्तनमेव भेषजम्, न तु पाचनादिकमित्यर्थः।

सङ्ग्रहणौषधं कुटजत्वगादिकं व्याधिप्रतिपक्षभूतं कस्मादत्र न प्रयुज्यते? अपि चाग्रसङ्ग्रहे पठिष्यति (हृ उ अ. ४०।४९)-"कुटजोऽतीसारे" इति। तस्मादत्र सङ्ग्राह्यौषधं दातुमुचितमिति यो मन्यते तं प्रत्याह-

न तु सङ्ग्रहणं योज्यं पूर्वमामातिसारिणि।

स०-सङ्ग्रहणं भेषजं पूर्वमामातिसारिणि पुरुषे न योज्यम्। तुशब्दोऽवधारणार्थः। अत्र पूर्वग्रहणं पश्चाद्दीयमानातिसारिणि दीयमानं युज्यत एवेति द्योतयति। सामे दोषेऽतीसारकारिणि प्रथममपि भेदनमौषधं दातुं(दत्तं) विशिष्टायामवस्थायां समानकार्यमपि कदाचिदतीसारिणो गुणाय सम्पद्यते नातीसारप्रतिपक्षभूतमपि च सङ्ग्रहणमौषधमिति कृत्वा।

१ 'विबन्धान् वातश्लेष्मादिकृतान्। ततः-तस्मात्कारणात्। तेषु-अर्शःप्रभृतिषु।" इति चन्द्र। २ 'क्षेत्तत' अरुण चन्द्र। ३ 'सन्तीति य' ट। ४ इदमतीसारचिकित्सितं चरके चि० १९ अध्याये सि० ८ अध्याये च, सुश्रुते उ० ४० अध्याये, अष्टाङ्गसङ्ग्रहे चि० ११ अध्याये चास्ति वर्णितम्। ५ 'स्प्राग्सिं' अरुण.चन्द्र.।

१ 'ब्दात्कदाच' ट। २ 'काल ल' ट ड। ३ 'स्तदयु' ट। ४ 'क्षा-अनायासेन स' ट। ५ 'प्रयोज्यम्?' ट.। ६ 'अथ चा' ड। ७ 'प्रयोज्य न तु सङ्ग्राहि पू' अ.इ,ट.। ८ 'मामोल्बणे न तु।' अ.। ९ 'युज्येतेति' ट.।

**अपि चाध्मानगुरुताशूलस्तैमित्यकारिणि ॥ ४ ॥**
**प्राणदा प्राणदा दोषे विबद्धे संप्रवर्तिनी ।**

स०–विबद्धे–अल्पाल्प कृत्वा प्रवर्तमाने, दोषेऽत एव विबन्धत्वादाध्मानादिकारिणि तथाभूतेऽस्मिन्दोषेऽसङ्ग्रहणमपथ्य मपि प्राणदा–हरीतकी, प्राणान् ददातीति–प्राणदा, भवतीति । एव बहुदोषाणामतीसारिणा प्रायेणैष उपक्रमो बोध्य ।

मध्यदोषाल्पदोषयोस्त्वाह—

**पिबेत्प्रकथितास्तोये मध्यदोषो विशोषयन् ॥ ५ ॥**
**भूतीकपिप्पलीशुण्ठीवचाधान्यहरीतकी. ।**
**अथवा बिल्वधनिकामुस्तनागरवालकम् ॥ ६ ॥**
**बिडपाठावचापथ्याकृमिजिन्नागराणि वा ।**
**शुण्ठीघनवचामाद्रीबिल्ववत्सकहिङ्गु वा ॥ ७ ॥**

स०–मध्यदोषोऽतीसारी भूतीकादी पिबेत्. किम्भूतास्ता ? तोये प्रक्रथिता । ननु, क्वथिता इत्येतावदेवास्तु, कि प्रशब्देन ? ब्रूम । प्रकर्षेण क्वथिता प्रमथ्यारूपेण श्वना प्रक्वथिता इत्यस्यार्थस्य प्रतिपादनार्थं प्रशब्दोकारि । प्रमथ्यायाश्च तन्त्रान्तरे लक्षणमुक्तम् । यथा–"श्वत कषायो निर्यूह क्वाथो यूषोऽकृतश्च स । कृतयूष प्रमथ्या च द्रव्यात्कल्कीकृताच्छृत ॥" इति । तदेव द्रव्य कल्कीकृत्य पिष्ट्वा यत्क्रियते स कृतयूषो भण्यते । स एव च प्रमथ्याशब्दवाच्य. । तस्मान्मध्यदोषोऽतीसारी भूती कादीनि पिष्ट्वा प्रकर्षेण क्वाथयित्वा प्रमथ्यारूपेण पिबेदित्यवतिष्ठते । मुनिनाऽप्युक्तम् ( च चि अ. १९।२२ )–"प्रमथ्या मध्यदोषेभ्यो दद्याद्दीपनपाचनीम् ।" इति । कि कुर्वन् पिबेत् ? विशोषयन्,–लङ्घयन्, प्रकृतत्वादात्मानमेव । अथवा, बिल्व धनिकादीनि पिबेत् । अथवा, बिडादीनि शुण्ठ्यादीनि वा पिबेत् ।

**शस्यते त्वल्पदोषाणामुपवासोऽतिसारिणाम् ।**

स०–अल्पदोषाणामतिसारिणामुपवास शस्यते । तुशब्दोऽवधारणार्थं । अत्रोपवास एवाल्पदोषाणा शस्यते न बहुदोषमध्यदोषोक्तोऽपर उपक्रम, स न तथा तेषा शस्यत इति । सर्वमतीसारिण दोषदेशाद्यनुरोधेन कदाचिल्लङ्घयेत् ।

**वचाप्रतिविषाभ्यां वा मुस्तापर्पटकेन वा ॥ ८ ॥**
**ह्रीवेरनागराभ्यां वा विपक्व पाययेज्जलम् ।**

स०–तृषि सञ्जाताया दोषदेशाद्यनुरोधेन कदाचिद्वचाप्रतिविषाभ्या विपक्व जल पाययेत् कदाचिन्मुस्तापर्पटकेन कदाचिद्वालकनागराभ्याम् । पाययेदित्यत्र कर्त्रभिप्राये क्रियाफले परस्मैपदम्, अन्यथा "न पादम्य" इत्यादिना परस्मैपदनिषेध स्यात् ।

**युक्तेऽन्नकाले क्षुत्क्षामं लघ्वन्नप्रति भोजयेत् ॥ ९ ॥**
**तथा स शीघ्र प्राप्नोति रुचिमग्निबल बलम् ।**

स०–युक्ते–योग्ये, अन्नकाले क्षुत्क्षाममतिसारिण लघ्वन्नप्रति भोजयेत्, नापरव्याध्यार्तमिव लङ्घनोचित सम्यग्लङ्घनादनन्तरमेव भोजयेत् । अपि तु सम्यग्लङ्घितलक्षणोत्पन्नमप्यतीसारिण किञ्चित्कालप्रतीक्षणं कृत्वा भोजयेदिति क्षामशब्देन द्योतयति । अल्प लघ्वन्न लघ्वन्नप्रति, "सुप्प्रतिना मात्रार्थे" इति समासोऽव्ययीभाव । एवं क्रियमाणे स –अतिसारी, द्रागेव रुचिं प्राप्नोति, तथा वह्निबल देहबलम् [ च ] ।

एवं च भुञ्जानस्य पानमुपदिश्यते—

**तक्रेणावन्तिसोमेन यवाग्वा तर्पणेन वा ॥ १० ॥**
**सुरया मधुना वाऽथ यथासात्म्यमुपाचरेत् ।**

स०–कदाचित्तक्रेण कदाचित्काञ्जिकेन कदाचित्पेयया कदाचित्तर्पणेन कदाचित्सुरया कदाचिन्माद्वीकेणेति यथासात्म्यमुपाचरेत् ।

**भोज्यानि कल्पयेदूर्ध्वं ग्राहिदीपनपाचनैः ॥ ११ ॥**
**वालबिल्वशठीधान्यहिङ्गुवृक्षाम्लदाडिमैः ।**
**पलाशहपुषाजाजीयवानीबिडसैन्धवैः ॥ १२ ॥**
**लघुना पञ्चमूलेन पञ्चकोलेन पाठया ।**

स०–अस्मात्क्रमादूर्ध्वं–अनन्तर, भोज्यानि–भोक्तव्यानि, कल्पयेदतीसारिणे । ग्राहिदीपनपाचनैरेव सङ्ग्रहणानि दीपनानि पाचनानि च यानि द्रव्याणि तानि सर्वाण्यतीसारिणे पथ्यानीति । एव सङ्क्षेपेण सामान्येन चिकित्सितमुक्तम् ।

तदेव दिङ्मात्र दर्शयति–बालेत्यादि । बालबिल्वादिभिर्भोज्यानि कल्पयेत् ।

**शालिपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ॥ १३ ॥**
**दाडिमाम्ला हिता पेया कफपित्ते समुल्बणे ।**

स०–शालिपर्ण्यादिभि साधिता दाडिमाम्ला पेया कफपित्ताधिके हिता ।

**अभयापिप्पलीमूलबिल्वैर्वातानुलोमनी ॥ १४ ॥**

---

१ "सम्प्रवर्तिनी–प्रवृत्तिकारिणी" इति चन्द्र । २ "भूतीक–यमानी" इति चक्रशिवदासौ । सुश्रुते तु भूतीकस्थाने मुस्तम् । तथा च तद्ग्रन्थ (सु उ अ. ४०।३६)–"अभया धान्यक मुस्त पिप्पली नागर वचा ।" इति । ३ "प्रमथ्यामिति पाचनीयदीपनीय कषायम् । प्रमथ्याशब्दो हि वृद्धपरम्परया वैद्यकशास्त्रपरिभाषया [च] पाचनदीपनकषाये श्रूयते । यथा–विडङ्गकषाय शैखरिककषायशब्देन वैद्यैरुच्यते ।" इति चरके चक्र । ४ 'दोषाणा द' स. च. । ५ 'स्वधातुन्याद्री' ड ।

१ 'लघू-यन्नानि भो' स च । 'लघ्वन्न प्रतिभो' इ.चन्द्र. । "लघ्वन्न–पेयादिक, प्रतिभोजयेत्–मात्रावदाहारयेत् । ' इति चन्द्र । २ "तर्पणेन–सक्तुभि कृतेन । यथासात्म्य–स्वसात्म्यानतिक्रमेण ॥ भोज्यानि–यवागूविलेपीखलकाम्बलिकयूषरसौदनानि । ऊर्ध्व–अत पर, बालबिल्वादिभिर्ग्राहिदीपनपाचनै कल्पयेद्यथायोगम् ॥ दाडिमेनाम्लेन च साधिता पेया ।" इति चन्द्र । ३ 'चाथ' अ. ।

स०-अभयादिभि पेया वातानुलोमनी ।

**विबद्धं दोषबहुलो दीप्ताग्निर्योऽतिसार्यते ।**
**कृष्णाविडङ्गत्रिफलाकषायैस्तं विरेचयेत् ॥ १५ ॥**
**पेयां युञ्ज्याद्विरिक्तस्य वातघ्नैर्दीपनैः कृताम् ।**

स०-यो बहुदोषो विबद्ध-अल्पाल्प कृत्वा, अतिसार्यते स कृष्णादिकषायैर्विरेचयेत् । विरिक्तस्य च तस्य सत पेया वातघ्नैर्दीपनैश्च द्रव्यै कृता युञ्ज्यात् ।

**आमे परिणते यस्तु दीप्तेऽग्नावुपवेश्यते ॥ १६ ॥**
**सफेनपिच्छं सरुजं सविबन्धं पुनः पुनः ।**
**अल्पाल्पमल्पशमलं निर्विड्वा सप्रवाहिकम् ॥ १७ ॥**
**दधितैलघृतक्षीरैः स शुण्ठीं सगुडां पिबेत् ।**
**स्विन्नानि गुडतैलेन भक्षयेद्बदराणि वा ॥ १८ ॥**
**गाढविड्भिर्हितैः शाकैर्बहुस्नेहैस्तथा रसैः ।**
**क्षुधितं भोजयेदेनं दधिदाडिमसाधितैः ॥ १९ ॥**
**शाल्योदनं तिलैर्माषैर्मुद्गैर्वा साधु साधितम् ।**
**शठ्या मूलकपोतायाः पाठाया स्वस्तिकस्य वा ॥२०॥**
**सूषायवानीकर्कारुक्षीरिणीचिर्भटस्य वा ।**
**उपोदकाया जीवन्त्या वाकुच्या वास्तुकस्य वा ॥२१॥**
**सुवर्चलायाश्चुञ्चोर्वा लोणिकाया रसैरपि ।**
**कूर्मवर्तकलोपाकशिखितित्तिरिकौक्कुटैः ॥ २२ ॥**

स०-य -अतीसारी, आमे परिणते दीप्तेऽग्नौ सत्युपवेश्यते सफेनपिच्छ तथा सरुज तथा सविबन्ध पुन पुनस्तथाऽल्पमल्प तथाऽल्पपुरीष निर्विड्वा-पुरीषरहितम्, तथा सप्रवाहिक-निस्तानिकासहितम् । "क्षुते रक्ते पुरीषे च वायुना विड्विवर्जितम् । प्रवाहिकेति विख्यात यत् फेनाभ प्रवर्तते ॥" इति प्रवाहिकालक्षणम् । य एवविधोऽतीसारी स दधितैलघृतक्षीरै समुदितै शुण्ठी सगुडा पिबेत् । अथवा, स्विन्नानि बदराणि गुडतैलेनाश्नीयात् । एव दोषादिवशाच्छुण्ठीं पाययित्वा कदाचित् पूर्वोक्तानि बदराणि भक्षयित्वाऽनन्तर क्षुधित-अतिसञ्जातबुभुक्ष, एन-अतीसारिणं, गाढविड्भिर्हितै -वास्तुकादिभि , शाकैस्तथा मासरसैर्बहुस्नेहैर्दधिदाडिमसस्कृतै शाल्योदन भोजयेत् ।

अथवा तिलैर्माषैर्मुद्गैर्वा साधु-शोभन कृत्वा, साधित शाल्योदन भोजयेत् । मूलकपोता-लघुमूलक पोतिकासज्ञ देशान्तरे प्रसिद्ध कुरुक्षेत्रादौ देशे । अत्र भाष्य कियत् त्यक्तम् ।

**बिल्वमुस्ताक्षिभैषज्यधातकीपुष्पनागरैः ।**
**पक्वातीसारजित्तक्रे यवागूर्दाधिकी तथा ॥ २३ ॥**
**कपित्थकच्छुराफञ्जीयूथिकावटशेलुजैः ।**
**दाडिमीशणकार्पासीशाल्मलीनां च पल्लवैः ॥ २४ ॥**

स०-बिल्वादिभिस्तक्रे सिद्धा यवागू पक्वातीसारजित् । दाधिकीति । कपित्थादिजै पल्लवैर्दाडिमादीना च पल्लवैर्दध्नि सिद्धा दाधिकी यवागू । तथा-पक्वातीसारजित् ।

**कल्को बिल्वशलाटूनां तिलकल्कश्च तत्समः ।**
**दध्नः सरोऽम्लः सस्नेहः खलो हन्ति प्रवाहिकाम् ॥**

स०-तथा बिल्वशलाटूना-स्तोककालजाताना लघूना बिल्वाना, कल्क । तथा तिलकल्कस्तत्समो-बिल्वशलाटुसम । तथा दध्न सरोऽम्लो-न मधुर , सस्नेहो-देशाद्यनुरोधाद्घृतादिना स्नेहेन यथायथ युक्त । अय खल सिद्ध प्रवाहिका हन्ति ।

**मरिचं धनिकाऽजाजी तित्तिडीकं शठी बिडम् ।**
**दाडिमं धातकी पाठा त्रिफला पञ्चकोलकम् ॥२६॥**
**यावशूकं कपित्थाम्रजम्बूमध्यं सदीप्यकम् ।**
**पिष्टैः षड्गुणबिल्वैस्तैर्दध्नि मुद्गरसे गुडे ॥ २७ ॥**
**स्नेहे च यमके सिद्धः खलोऽयमपराजितः ।**
**दीपनः पाचनो ग्राही रुच्यो बिम्बिशिनाशनः ॥२८॥**

स०-मरिचादिभि पिष्टै षड्गुण बिल्व-बिल्वमज्जा, येषा मरिचादीना तै सिद्ध । तथा परिपक्वश्च दध्नि तथा मुद्गरसे गुडे तथा यमके च स्नेहे । खलोऽयमपराजितो नाम दीपनादिगुण । बिम्बिशिनाशन -प्रवाहिकाघ्न ।

**कोलानां बालबिल्वानां कल्कैः शालियवस्य च ।**
**मुद्गमाषतिलानां च धान्ययूषं प्रकल्पयेत् ॥ २९ ॥**
**ऐकध्यं यमके भृष्टं दधिदाडिमसारिकम् ।**
**वर्चःक्षये शुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥ ३० ॥**
**दध्नः सरं वा यमके भृष्टं सगुडनागरम् ।**
**सुरां वा यमके भृष्टां व्यञ्जनार्थं प्रयोजयेत् ॥ ३१ ॥**
**फलाम्लं यमके भृष्टं यूषं गृञ्जनकस्य वा ।**
**भृष्टान्वा यमके सक्तून् खादेद्घोषावचूर्णितान् ॥३२॥**
**माषान् सुसिद्धांस्तद्वद्वा घृतमण्डोपसेवनान् ।**

१ "वातघ्नैर्दीपनैरिति शालिपर्ण्यादिभि ।" इति डल्हण । "वातघ्नैर्दीपनै -पञ्चकोलप्रभृतिभि ॥ आमे परिणते-निरामताया समुत्पन्नायाम् । अल्पाल्प-बहुशोऽल्पम् । समल-अल्पपुरीषम् । बहुस्नेहै -बहुतैलै । रसै -मांसरसै । शठ्यादीना शाकै शाल्योदन भोजयेत् । अपिशब्दात् कूर्मादीना रसै शाल्योदन भोजयेत् ।" इति चन्द्र । २ **'मल्पं समल'** अ इ चन्द्र । ३ **'मसस्कृतै'** चन्द्र. । ४ **'शुण्ठ्या'** अ । ५ **रिदक्षजै.'** अ. चन्द्र । ६ 'निष्ठानि' ट. । 'न्यस्तानि' ड । 'स्तारिका' इति क्वचित् । ७ 'ति तत्ख्यात' चन्द्र । ८ "यदाह पराशर -'निर्वाहयेत् सफेन च निष्पुरीष मुहुर्मुहु । प्रवाहिकेति सा ख्याता कैश्चिन्निश्चारिकश्च स. ॥' इति ।" इति शिवदास ।

१ 'वार्तिका' ट । 'वोत्तिका' ड । २ 'कुरुत्रयौ देशे । अत्र श्लोकद्वयाधिकस्य टीका त्रुटिता । बिल्वा' ड । ३ **'म्रीसण'** अ. इ । 'मीषण' इति क्वचित् । ४ **'लीमोचप'** अ. इ । ५ 'जै. पल्लवैर्दध्नि' ड । ६ **'साधितम्'** स च । "दाडिमदधिसाराभ्या सस्कृत-दधिदाडिमसाधितम्" इति चक्र. । ७ **'नार्थे प्रदापयेत्'** स. च. ।

लङ्घन शरीरलाघव कर्तुं यत्कर्म द्रव्य वा निर्दिष्ट तत्सर्व, तीक्ष्णोष्णवर्ज्यं 'अस्मिन् कार्यम्' इति शेष ।

**तृड्वान् पिबेत् षडङ्गाम्बु सभूनिम्बं ससारिवम् ५५**
**पेयादि क्षुधितस्यान्नमग्निसन्धुक्षणं हितम् ।**
**बृहत्यादिगणाभीरुद्विबलाशूर्पपर्णिभिः ॥ ५६ ॥**

स०–स पित्तातीसारी तृड्वान् षडङ्गाम्बु–ज्वरचिकित्सितोक्त (हृ चि अ १।१५), भूनिम्बसारिवाभ्या सहित पिबेत्, अर्धमष्टाङ्गजल तेन पेयमित्यवतिष्ठते । क्षुधितस्य–अतिशयेन बुभुक्षितस्य, पेयाद्यन्नमग्निसन्धुक्षण हितम् । [ किम्भूतम् ? ] बृहत्यादिना गणेनाभीरुणा तथा बलाद्वयेन शूर्पपर्णीद्वयेन च साधितम् ।

**पाययेदनुबन्धे तु सक्षौद्रं तण्डुलाम्भसा ।**
**कुटजस्य फलं पिष्टं सवल्कं सघुणप्रियम् ॥ ५७ ॥**
**पाठावत्सकबीजत्वग्दार्वीग्रन्थिकशुण्ठि वा ।**
**क्वाथं वाऽतिविषाबिल्ववत्सकोदीच्यमुस्तजम् ॥५८॥**
**अथवाऽतिविषामूर्वानिशेन्द्रयवताक्ष्यंजम् ।**
**समध्वतिविषाशुण्ठीमुस्तेन्द्रयवकट्फलम् ॥ ५९ ॥**

स०–एव लङ्घनपेयादिके कृतेऽप्यनुबन्धेऽतीसारस्य सति, तमतीसारिण कुटजस्य फल–शक्रयवाख्य, पिष्टं सवल्क–प्रकृतत्वात्तस्यैव कुटजस्य त्वचा युक्त,तथा सघुणप्रिय तथा सक्षौद्र तण्डुलाम्भसा पाययेत् । अथवा, पाठादिपिष्ट तण्डुलाम्भसा सक्षौद्रं तमतीसारिण पाययेत् । अथवा, क्वाथमतिविषादिज त पाययेत्। अथवा, अतिविषामूर्वादिज पाययेत्। ताक्ष्यं–रसाञ्जनम्। समध्वित्यादि । समाक्षिकमतिविषादिक क्वाथीकृत वा पाययेत्।

**पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत् ।**
**यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ ६०॥**
**मुस्ताकषायमेवं वा पिबेन्मधुसमायुतम् ।**
**सक्षौद्रं शाल्मलीवृन्तकषायं वा हिमाह्वयम् ॥ ६१॥**

स०–वत्सकबीजस्य वा पल जलेन क्वाथयित्वा तद्रस यो मांसरसाशी सन् पिबेत् स पित्तजमतीसार जयेत् । एव–प्राग्वत्, मुस्ताकषाय–मुस्ताना पलं श्रपयित्वा, मधुसमायुत रसाशी सन् क्वाथ पिबेत् स पैत्त जठरामय जयेत् । शाल्मलीवृन्तकषाय वा हिमाह्वय–शीतकषाय, सक्षौद्रं वा पिबेत् ।

**किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम् ।**
**कटङ्कटेरी ह्रीबेर बिल्वमध्यं दुरालभा ॥ ६२ ॥**

**तिला मोचरसं रोध्रं समङ्गा कमलोत्पलम् ।**
**नागरं धातकीपुष्पं दाडिमस्य त्वगुत्पलम् ॥ ६३ ॥**
**अर्धश्लोकैः स्मृता योगाः सक्षौद्रास्तण्डुलाम्बुना ।**

स०–किराततिक्तादयश्चत्वारो योगा अर्धश्लोकै स्मृता समाक्षिकास्तण्डुलजलेन योज्या ।

**निशेन्द्रयवरोध्रैलाक्वाथः पक्वातिसारजित् ॥ ६४ ॥**

स०–निशादिक्वाथ पक्वातीसारजित् ।

**रोध्राम्बष्ठाप्रियङ्ग्वादिगणास्तद्वत् पृथक् पिबेत् ।**

स०–रोध्रादीन् गणान् पृथक् [ तद्वत्–] समाक्षिकास्तथैव तण्डुलाम्भसा, पिबेत् ।

**कट्वङ्गवल्कयष्ट्याह्वफलिनीदाडिमाङ्कुरैः ॥ ६५ ॥**
**पेयाविलेपीखलकान् कुर्यात्सदधिदाडिमान् ।**
**तद्वद्दधित्थबिल्वाम्रजम्बुमध्यैः प्रकल्पयेत् ॥ ६६ ॥**

स०–कट्वङ्गत्वगादिभि पेयादीन् सदधिदाडिमान् कुर्यात् । तथैव दधित्थादिभि पेयादीन् सदधिदाडिमान् कल्पयेत् । दधित्थ –कपित्थ ।

**अजापयः प्रयोक्तव्यं निरामे, तेन चेच्छमः ।**
**दोषाधिक्यान्न जायेत बलिनं तं विरेचयेत् ॥६७॥**

स०–अजापय पथ्य निरामे स्मृतम् । तेन–अजाक्षीरेण, यदि दोषाधिक्याद्धेतो शमो न भवेत् तदा त बलवन्त विरेचयेत्–न दुर्बलम् ।

**व्यत्यासेन शकृद्रक्तमुपवेश्येत योऽपि वा ।**
**पलाशफलनिर्यूहं युक्तं वा पयसा पिबेत् ॥ ६८ ॥**
**ततोऽनु कोष्णं पातव्यं क्षीरमेव यथाबलम् ।**
**प्रवाहिते तेन मले प्रशाम्यत्युदरामयः ॥ ६९ ॥**

स०–व्यत्यास –परस्परक्षेपणम्, शकृद्रक्त क्षिपति रक्त शकृत्क्षिपत्येव व्यत्यास , तेन य उपवेश्येत स पलाशफलक्वाथं केवल पिबेदथवा पयसा युक्तम् । तत –तत्कषायं पीत्वाऽनन्तर, कोष्णं क्षीरमेव यथाबल–बलानतिक्रमेण, पेयम् । तेन–क्षीरेण, मले प्रवाहिते–नि सारिते सति, अतीसार शाम्यति ।

**पलाशवत्प्रयोज्या वा त्रायमाणा विशोधनी ।**

स०–पलाशं यथा तथा त्रायमाणा विशोधनाय प्रयोज्या ।

---

१ 'ज्यं यत् लङ्घन–शरीरलाघवकर पेयादिक, अस्मि' ट । २ आदिशब्देन मण्डसक्तुयूषरसादि ईषदम्लमनम्ल वा कवोष्ण सुशीत वा सक्षौद्रमित्यादि सङ्ग्रहोक्त (चि. अ. ११) ग्राह्यम् । ३ बृहत्यादिगण –ह्रस्व पञ्चमूलम् । ४ "अनुबन्धे–उक्तया चिकित्सयाऽनुपशमे" इतीन्दु । ५ 'लाम्बुना । वत्सकस्य' अ. ।

१ 'रनुत्' इ. । २ अस्याग्रे "नागरातिविषामुस्ताभूनिम्बामृतवत्सकैः । सर्वज्वरहर क्वाथ सर्वातीसारनाशन ॥ १ ॥ गुडूच्यतिविषाधान्यशुण्ठीबिल्वाब्दवालकैः । पाठाभूनिम्बकुटजचन्दनोशीरपद्मकैः ॥ २ ॥ कषायः शीतलः पेयो ज्वरातीसारशान्तये । हृल्लासारोचकच्छर्दिपिपासादाहनाशन. ॥ ३ ॥" इति इ. पुस्तकेऽधिकास्त्रय श्लोकाः । ३ 'भवति' ट. । ४ 'धने' इति क्वचित् ।

**संसर्ग्या क्रियमाणायां शूलं यद्यनुवर्तते ॥ ७० ॥**
**स्नुतदोषस्य तं शीघ्रं यथावह्न्यनुवासयेत् ।**

स०—स्नुतदोषस्य—अपचितमलस्यातीसारिण, ससर्ग्या क्रियमाणाया—पेयादिके क्रमे विधीयमाने, यदि शूलमनुवर्तते—निवृत्तिं न याति, त—आतुर, आशु यथावह्नि—अग्न्यनतिक्रमेण, अनुवासयेत् ।

तदेवानुवासनघृतमाह—

**शतपुष्पावरीभ्यां च बिल्वेन मधुकेन च ॥ ७१ ॥**
**तैलपादं पयोयुक्तं पक्वमन्वासनं घृतम् ।**

स०—शतपुष्पादिभिस्तैलपाद क्षीरयुत घृत पक्वमनुवासन स्यात् ।

**अशान्ताविति अतीसारे पिच्छाबस्तिः परं हितः ॥७२॥**

स०—इति—अनेन प्रकारेण कृतेन, अतीसारस्याशान्तौ सत्या पर—अनन्तरं, पिच्छाबस्ति —वक्ष्यमाणो, हित । अल्पया मात्रया निरूहाख्यो बस्ति —पिच्छाबस्ति ।

**परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः ।**
**कृष्णमृत्तिकयाऽऽलिप्य स्वेदयेद्गोमयाग्निना ॥ ७३ ॥**
**मृच्छोषे तानि सङ्क्षुद्य तत्पिण्डं मुष्टिसम्मितम् ।**
**मर्दयेत्पयस· प्रस्थे पूतेनास्थापयेत्ततः ॥ ७४ ॥**
**नतयष्ट्याह्वकल्काज्यक्षौद्रतैलवताऽनु च ।**
**स्नातो भुञ्जीत पयसा जाङ्गलेन रसेन वा ॥ ७५ ॥**
**पित्तातिसारज्वरशोफगुल्म-**
**समीरणास्रग्रहणीविकारान् ।**
**जयत्ययं शीघ्रमतिप्रवृत्ति**
**विरेचनास्थापनयोश्च बस्तिः ॥ ७६ ॥**

स०—आर्द्रै —अशुष्कैर्दर्भै, शाल्मलेरार्द्रवृन्तानि—कुसुमबन्धनानि, परिवेष्ट्य तत कृष्णमृत्तिकयाऽऽलिप्य गोमयाग्निना स्वेदयेत् । मृच्छोषे सति तानि सङ्क्षुद्य—सञ्चूर्ण्य, त पिण्ड मुष्टिसम्मित—पलप्रमाण, पयस प्रस्थे मर्दयेत् । तेन च पूतेनानन्तर नतादिमताऽऽस्थापयेत् । नतं—तगरम् । पुटपाकाना च सर्वेषामयमेव विधि । आस्थापितैश्च पश्चात् स्नात पयसा भुञ्जीत, सात्म्यादिवशाज्जाङ्गलरसेन वा । अयं—बस्ति प्रयुक्त, पित्तातीसारादीन् विरेचनास्थापनयोश्चातिप्रवृत्ति—दोषाणामतियोग, जयति । एतदुक्त भवति,—बहुदोषस्य या प्रवृत्तिर्विरेचनविषये आस्थापनविषये वा ता च प्रयुक्तोऽय जयति । उपजाति ।

**फाणितं कुटजोत्थं च सर्वातीसारनाशनम् ।**
**वत्सकादिसमायुक्तं साम्बष्ठादि समाक्षिकम् ॥७७॥**

स०—कुटजोत्थ च फाणित वत्सकादियुक्तमम्बष्ठादिसहितं माक्षिकयुक्त सर्वातीसार —आमातीसार पक्वातीसारश्च, तस्य नाशनं स्यात् ।

**नीरुङ्निरामं दीप्ताग्नेरपि सास्रं चिरोत्थितम् ।**
**नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ७८ ॥**

स०—नीरुक् चासौ निरामश्च नीरुङ्निरामस्तमतीसार, अपि सास्र—अपिशब्दात्किमुत निरस्रम्[१], त तथाभूतं चिरोत्थितं, तथा नानावर्ण—अनेकवर्ण, दीप्ताग्ने पुटपाकैरुपाचरेत् ।

**त्वक्पिण्डाद्दीर्घवृन्तस्य श्रीपर्णीपत्रसंवृतात् ।**
**मृल्लिप्तादग्निना स्विन्नाद्रसं निष्पीडितं हिमम् ॥७९॥**
**अतीसारी पिबेद्युक्तं मधुना सितयाऽथवा ।**

स०—त्वच पिण्डस्त्वक्पिण्ड, दीर्घवृन्तस्य त्वक्पिण्ड, तस्मात्, काश्मर्यपत्रसञ्छादितात् मृल्लिप्तात् सामान्योक्तावपि कृष्णमृत्तिकया लिप्तादिति वेद्यम् । प्रागुक्तं हि ( श्लो ७३ )—"कृष्णमृत्तिकयाऽऽलिप्य" इति । अनन्तरमग्निना स्विन्नाद्रस निष्पीडित शीत कृत्वाऽतीसारी मधुना युक्तमथवा सितया युक्त पिबेत् । दीर्घवृन्त —श्योनाक ।

**एव क्षीरिद्रुमत्वग्भिस्तत्प्ररोहैश्च कल्पयेत् ॥ ८० ॥**
**कट्वङ्गत्वग्घृतयुता स्वेदिता सलिलोष्मणा ।**
**सक्षौद्रा हन्त्यतीसारं बलवन्तमपि द्रुतम् ॥ ८१ ॥**

स०—एव—अनेन प्रकारेण, क्षीरिद्रुमाणा त्वग्भिस्तत्प्ररोहै —कोमलैर्विगतमूलैश्च, कल्पयेत् । प्ररोहा —अङ्कुरा इत्यन्ये । श्योनाकत्वक् घृतयुता तथोष्णसलिलोष्मणा स्वेदिता माक्षिकयुक्ताऽतीसार बलवन्तमपि शीघ्र हन्ति ।

**पित्तातिसारी सेवेत पित्तलान्येव यः पुनः ।**
**रक्तातिसारं कुरुते तस्य पित्तं सतृड्ज्वरम् ॥ ८२ ॥**
**दारुणं गुदपाकं च तत्र छागं पयो हितम् ।**
**पद्मोत्पलसमङ्गाभिः श्रृतं मोचरसेन च ॥ ८३ ॥**
**सारिवायष्टिरोध्रैर्वा प्रसवैर्वा वटादिजैः ।**
**सक्षौद्रशर्करं पाने भोजने गुदसेचने ॥ ८४ ॥**

स०—पित्तातीसारी पित्तलान्येवान्नपानानि य सेवते, तस्य पित्त कर्तृ रक्तातीसारं कुरुते । किम्भूतम्? तृष्णाज्वरयुतम् । तथा दारुण गुदपाक करोति । तत्र—एवविधेऽतीसारे, छागं

१ 'वृन्त प्रसवबन्धनम्' इत्यमर । "शाल्मलीवृन्तानि—तत्पत्राणि" इतीन्दु । २ 'शोषगु' इति सङ्ग्रहसम्मत पाठ । 'शोथगुल्माजीर्णातिसारग्रहणीप्रदोषान् । ०प्रवृत्तान् वि' स च । ३ अस्याग्रे "कट्वङ्गबिल्वज त्वस्थि कपित्थ सुरसाञ्जनम् । लाक्षा हरिद्रे ह्रीबेर कट्फल शुकनासिका ॥ १ ॥ रोध्र मोचरस मुस्त धातकी वटशुङ्गकान् । पिष्ट्वा तण्डुलतोयेन वट कानक्षसम्मितान् ॥ २ ॥ पिबेत्तेनैव तोयेन ज्वरातीसारनाशन । रक्तप्रसादनो ह्येष शोफातीसारनाशन. ॥ ३ ॥" इति इ. पुस्तकेऽधिकाश्चय. श्लोका । ४ 'त. प' ट. ।

१ 'म्? तथा चिरोत्थ त' ट । २ "दीर्घवृन्तस्य—अरलुकस्य" इति डल्हण. । ३ 'क्षीरद्रु' इ.,ट,ड. । क्षिरिद्रुमा —वटोदुम्बरादय ।

क्षीर पद्मादिभिर्मोचरसेन च शृत हितम् । अथवा, सारिवादिभि शृत छाग क्षीर हितम् । अथवा, वटादिजै पल्लवै शृत क्षौद्रशर्करान्वित पाने भोजने गुदसेके च छाग पयो हितम् ।

**तद्वद्रसादयोऽनम्लाः साज्याः पानान्नयोर्हिताः ।**
**काश्मर्यफलयूषश्च किञ्चिदम्ल' सशर्कर' ॥ ८५ ॥**

**स०**–तथैव रसयूषादयोऽनम्ला सघृता पानान्नयोर्हिता । काश्मर्यफलयूषश्च किञ्चिदम्ल सशर्करो हित ।

**पयस्यर्धोदके छागे ह्रीबेरोत्पलनागरै' ।**
**पेया रक्तातिसारघ्नी पृश्निपर्णीरसान्विता ॥ ८६ ॥**
**प्राग्भक्तं नवनीतं वा लिह्यान्मधुसितायुतम् ।**

**स०**–छागे पयस्यर्धोदके वालकोत्पलनागरै पृश्निपर्णीक्वाथेन च युक्ता पेया रक्तातीसार हन्ति । अथवा नवनीत प्राग्भक्त मधुशर्करान्वित लिह्यात् ।

**बलिन्यस्रेऽस्रमेवाजं मार्गं वा घृतभर्जितम् ॥ ८७ ॥**
**क्षीरानुपानं क्षीराशी त्र्यहं क्षीरोद्भवं घृतम् ।**
**कपिञ्जलरसाशी वा लिहन्नारोग्यमश्नुते ॥ ८८ ॥**

**स०**–प्रवृद्धे रक्ते छाग रक्तमथवा मार्ग–मृगसम्बन्धि रक्त, घृतभर्जित भुञ्जीत, एवकारान्न त्वपर किञ्चिदजस्य मृगस्य चेति गम्यते । उभयमपि क्षीरानुपान क्षीराशी च सन् भुञ्जीत । अथवा, क्षीरोद्भव घृत त्र्यह लिहन् कपिञ्जलरसाशनो नर आरोग्य प्राप्नोति ।

**पीत्वा शतावरीकल्कं क्षीरेण क्षीरभोजनः ।**
**रक्तातिसारं हन्त्याशु तया वा साधितं घृतम् ॥ ८९ ॥**

**स०**–शतावरीकल्क क्षीरेण पीत्वा क्षीराशी सन् रक्तातीसार द्रागेव पराकरोति । अथवा, तया–शतावर्या, पक्व घृतं रक्तातीसार हन्ति ।

**लाक्षानागरवैदेहीकटुकादार्विवल्कलैः ।**
**सर्पिः सेन्द्रयवैः सिद्धं पेयामण्डावचारितम् ॥ ९० ॥**
**अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ।**

**स०**–लाक्षादिभि सिद्ध घृत पेयामण्डेनावचारित शीघ्र त्रिदोषमप्यतीसारं घोर जयति । अपिशब्दाद्रक्तातीसारमपि ।

**कृष्णमृच्छङ्खयष्ट्याह्वक्षौद्रासृक्तण्डुलोदकम् ॥ ९१ ॥**
**जयत्यस्रं प्रियङ्गुश्च तण्डुलाम्बुमधुप्लुता ।**

**स०**–कृष्णमृदादिक तण्डुलजलालोडित रक्तं जयति । तथा, तण्डुलाम्बुमधुयुक्ता प्रियङ्गू रक्त जयति ।

**कल्कस्तिलानां कृष्णानां शर्करापाञ्चभागिकः ॥ ९२ ॥**
**आजेन पयसा पीत' सद्यो रक्तं नियच्छति ।**

**स०**–पञ्चमो भाग पञ्चभाग, स यस्यास्ति स पाञ्चभागिक । कोऽसौ? कृष्णतिलाना कल्क, शर्कराया पाञ्चभागिक कृष्णतिलाना कल्क छगलीक्षीरेण पीत सन् सद्यो रक्त नियच्छति ।

**पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्बुना ॥ ९३ ॥**
**दाहतृष्णाप्रमोहेभ्यो रक्तस्रावाच्च मुच्यते ।**

**स०**–तण्डुलजलेन चन्दन शर्करामाक्षिकान्वित पीत्वा दाहादिभ्यो मुच्यते । मुच्यत इति कर्मकर्तरि तङ् ।

**गुदस्य दाहे पाके वा सेकलेपा हिता हिमा' ॥ ९४ ॥**

**स०**–गुदस्य दाहे पाके च सति सेकलेपा हिमा हिता ।

**अल्पाल्पं बहुशो रक्तं सशूलमुपवेश्यते ।**
**यदा विबद्धो वायुश्च कृच्छ्राच्चरति वा न वा ॥ ९५ ॥**
**पिच्छाबस्ति तदा तस्य पूर्वोक्तमुपकल्पयेत् ।**

**स०**–अल्पमल्पं पुन पुन शूलेन सह यश्च बहुशो रक्तमुपवेश्यते । वायुश्च यदा विबद्धो–नानुलोमग, अत एव कृच्छ्रेण चरति न वा चरति तदा तस्य–पुरुषस्य, पूर्वोक्त–"त्वक्पिण्डात्" (श्लो ७९) इत्यादिक पिच्छाबस्तिमुपकल्पयेत् ।

**पल्लवान् जर्जरीकृत्य शिंशिपाकोविदारयोः ॥ ९६ ॥**
**पचेद्यवांश्च स क्वाथो घृतक्षीरसमन्वितः ।**
**पिच्छास्रुतौ गुदभ्रंशे प्रवाहणरुजासु च ॥ ९७ ॥**
**पिच्छाबस्तिः प्रयोक्तव्यः क्षतक्षीणबलावहः ।**

**स०**–शिंशिपाकोविदारयो पल्लवान् जर्जरीकृत्य यवांश्च पचेत् । स क्वाथो घृतक्षीरसयुक्त पिच्छास्रुत्यादिषु पिच्छाबस्ति प्रयोक्तव्य । स च क्षतक्षीणाना बलप्रद ।

**प्रपौण्डरीकसिद्धेन सर्पिषा चानुवासनम् ॥ ९८ ॥**

**स०**–प्रपौण्डरीकपक्वेन घृतेनानुवासन च प्रयोक्तव्यम् ।

**रक्तं विट्सहितं पूर्वं पश्चाद्वा योऽतिसार्यते ।**
**शतावरीघृतं तस्य लेहार्थमुपकल्पयेत् ॥ ९९ ॥**

१ क्षीरोद्भव–क्षीर प्रमथ्य यदुत्पादितम् । २ "कपिञ्जलो–गौरतित्तिरि. ।" इति चक्र । ३ 'त क्षीरभोजिन आशु रक्ता' ट । ४ असृक्–रुधिरम् । तथा च सङ्ग्रहे (चि अ ११)–"मधुककृष्णमृत्तिकाशङ्खकल्क सरुधिर पिबेत्" इति । "कृष्णमृदित्यादौ रुधिर–शोणितम्, केचित् कुङ्कुममाहु. ।" इति चक्र ।

१ 'शर्कराभागसंयुत" इति चक्रदत्तपाठे "शर्कराया भाग –चतुर्थोऽश, तेन संयुत इत्यर्थ । तेन शर्करायाश्चत्वारो भागा', एकस्तिलस्येति । उक्त हि जतुकर्णे–'कृष्णतिलान् शर्करापादिकान् छागीपयसा' इति । एव चरके वाग्भटेऽपि–'कल्कस्तिलाना कृष्णाना शर्करापाञ्चभागिक ।' इति । शर्कराभागमपेक्ष्य पञ्चमो भागस्तिलकल्कस्येत्यर्थ ।" इति शिवदास । २ 'प्रमेहे' अ स च । ३ सेका लेपा' अ । ४ पूर्वोक्त–"परिवेष्ट्य कुशैरार्द्रै "(श्लो ७३) इत्याद्युक्तम् । ५ शतावरीघृत–"शतावरीमूलतुलाचतुष्कात्" इत्यादिना गुह्यरोगप्रतिषेधे (हृ. उ. अ. ३४।३६) उक्तम् ।

स०–रक्त विशा सहितमथवा पूर्व पश्चाद्वा योऽतिसार्यते तस्य लेहार्थ शतावरीघृतमुपकल्पयेत्।

**शर्करार्धांशकं लीढं नवनीतं नवोद्धृतम्।**
**क्षौद्रपादं जयेच्छीघ्रं तं विकार हिताशिनः ॥१००॥**

स०–नवनीत नव शर्कराया अर्धभागेन युक्त माक्षिकचतुर्थप्रमाण माक्षिकस्य चतुर्थभागेनान्वित लीढ त–पूर्वोक्त, विकार हिताहारस्य जयेत्।

**न्यग्रोधोदुम्बराश्वत्थशुङ्गानापोथ्य वासयेत्।**
**अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत्॥ १०१ ॥**
**तदर्धशर्करायुक्तं लेहयेत्क्षौद्रपादिकम्।**
**अधो वा यदि वाऽप्यूर्ध्वं यस्य रक्तं प्रवर्तते ॥१०२॥**

स०–अधो वा ऊर्ध्व वा यस्य रक्त प्रवर्तते, स न्यग्रोधादीना शुङ्गान् आपोथ्य–जर्जरीकृत्य, तप्ते जलेऽहोरात्र वासयेत्। तेनाम्बुना घृत पचेत्। तच्च–घृत, शर्कराया अर्धभागेन युक्त माक्षिकचतुर्थांशक लेहयेत्। पूर्वगुणम्।

**श्लेष्मातिसारे वातोक्तं विशेषादामपाचनम्।**
**कर्तव्यमनुबन्धेऽस्य पिबेत्पक्त्वाऽग्निदीपनम् १०३**
**बिल्वकर्कटिकामुस्तप्राणदाविश्वभेषजम्।**
**वचाविडङ्गभूतीकधानकामरदारु वा ॥ १०४ ॥**
**अथवा पिप्पलीमूलपिप्पलीद्वयचित्रकम्।**

स०–श्लेष्मातीसारे वातातीसारोक्त यदामपाचन तद्विशेषात्तत्र कर्तव्यम्, न तथा वातातीसारोक्तोऽन्य उपक्रम कार्य इति विशेषशब्दस्यार्थ । अस्य–अतीसारस्य, अनुबन्धे–चिकित्साया सम्यक् कृतायामप्यशमे सति, बिल्वकर्कटिकादिक पक्त्वा पानमग्निदीपन पिबेत्। अथवा, वचादीनि पिबेत्। अथवा, पिप्पलीमूलादिक पक्त्वाऽग्निदीपन पिबेत्।

**पाठाग्निवत्सकग्रन्थितिक्ताशुण्ठीवचाभयाः॥१०५॥**
**क्वथिता यदि वा पिष्टा श्लेष्मातीसारभेषजम्।**

स०–एते पाठादय क्वथिता पाचनन्यायेन, चूर्णिता वा श्लेष्मातीसारभेषजमिति। अत्रापि वक्ष्यमाण सिंहावलोकनन्यायेन 'कोष्णवारिणा' इत्येतत्सम्बध्यते।

**सौवर्चलवचाव्योषहिङ्गुप्रतिविषाभयाः॥ १०६ ॥**
**पिबेच्छ्लेष्मातिसारार्तश्चूर्णिताः कोष्णवारिणा।**

स०–सौवर्चलादीश्चूर्णितान् कोष्णजलेन श्लेष्मातीसारार्त पिबेत्।

**मध्यं लीढ्वा कपित्थस्य सव्योषक्षौद्रशर्करम् ॥१०७॥**
**कट्फलं मधुयुक्तं वा मुच्यते जठरामयात्।**

१ 'वाऽप्यूर्ध्वं' इ.। २ 'धान्यका' अ । ३ 'त्र्यकान्' इति क्वचित्। ४ 'लोकितन्या' इति क्वचित्। ५ 'सक्षौद्रं व्योषशर्करम्' इति सङ्ग्रहानुसारी पाठ। तथाच सङ्ग्रहे (चि अ ११)–"लिह्याद्वा त्रिकटुचूर्ण क्षौद्रशर्करोपेतम्। कपित्थ क्षौद्रेण वा। कट्फल वा पिप्पलीर्वा" इति।

स०–कपित्थस्य मध्य सव्योषमाक्षिकशर्कर लीढ्वा, अथवा कट्फल माक्षिकान्वित लीढ्वा, जठररोगान्मुच्यते।

**कणां मधुयुतां लीढ्वा तक्रं पीत्वा सचित्रकम् १०८**
**भुक्त्वा वा बालबिल्वानि व्यपोहत्युदरामयम्।**

स०–कणा माक्षिकान्विता लीढ्वा तक्र च सचित्रक पीत्वा बालबिल्वानि वा भुक्त्वा जठररोग व्यपोहति। "उपसर्गादस्यत्यूह्योर्वा वचनम् (वेति वाच्यम्)" इति वाऽतङ्।

**पाठामोचरसाम्भोदधातकीबिल्वनागरम् ॥ १०९ ॥**
**सुकृच्छ्रमप्यतीसारं गुडतक्रेण नाशयेत्।**

स०–पाठादि गुडतक्रेण पीत्वाऽतीसार सुकृच्छ्रमपि नाशयेत्। श्लेष्मातीसारे प्रकृतेऽप्यतीसारग्रहणमन्यस्यापि निरामस्य तन्नाशनमिति द्योतनार्थम्।

***यवानीपिप्पलीमूलचातुर्जातकनागरैः ॥ ११० ॥**
**मरिचाग्निजलाजाजीधान्यसौवर्चलैः *समैः।**

*१ "समैरिति समभागै । वृक्षाम्ल–महार्द्रकम्। त्रिगुणैरिति एकभागापेक्षया वृक्षाम्लादीना षण्णा प्रत्येक त्रिगुणत्वम्। षड्गुणसितैः कपित्थाष्टगुणै कृत इति सिताकपित्थयोरपि षड्गुणाष्टगुणत्वे एकगुणापेक्षयैव। एतै कृतश्चूर्ण इति योज्य । अरुणस्तु वाग्भटटीकाया षड्गुणसितैरिति पद वृक्षाम्लादितिन्दुकान्ताना विशेषण व्याख्याय मिलितवृक्षाम्लादिद्रव्यषट्कापेक्षया सिताया षड्गुणत्वमाह। तथा सति सिताभागानां शतमष्टाधिक भवति । अन्ये तु 'षड्गुणसिते कपित्थाष्टगुणे' इति पठन्ति व्याख्यानयन्ति च,–एकभागापेक्षया कपित्थस्याष्टगुणत्वम्, अष्टगुणकपित्थापेक्षया च सिताया षड्गुणत्वमिति, तथा सति सिताया अष्टचत्वारिंशद्भागा भवन्तीति। अपरे तु षड्गुणसित कपित्थाष्टगुणीकृत इति चूर्णविशेषण कृत्वा समुदितचूर्णापेक्षया सिताकपित्थयो षड्गुणाष्टगुणत्वमाहु । एतन्मतत्रयमपि न व्यवहारसिद्धम्, शर्कराकपित्थयोरतिबहुत्वादिति। तस्मादेकभागापेक्षयैव षड्गुणाष्टगुणत्वमिति । कपित्थभागाधिक्यादस्य कपित्थाष्टकसंज्ञा।" इति शिवदास । कपित्थाष्टकचूर्णस्य शार्ङ्गधरेऽय पाठ (म अ. ६।५४)–"अष्टौ भागा. कपित्थस्य षड्भागा शर्करा मता। दाडिम तिन्तिडीक च श्रीफल धातकी तथा॥ अजमोदा पिप्पली च प्रत्येक स्युस्त्रिभागिका। मरिच जीरक धान्य ग्रन्थिक वालक तथा॥ सौवर्चल यमानी च चातुर्जात सचित्रकम्। नागर चैकभागा स्यु प्रत्येक सूक्ष्मचूर्णितम्॥ कपित्थाष्टकसंज्ञ स्याच्चूर्णमेतद्गलामयान्। अतीसार क्षय गुल्म ग्रहणी च व्यपोहति॥" इति। अस्य व्याख्याने "दाडिममत्राम्लम् 'अनारदाना' शब्दवाच्यम्। कपित्थ कर्षाष्टकम्, सिता षट्कर्षप्रमिता, दाडिमादिषड्द्रव्यमष्टादशकर्षमितम्, मरिचादित्रयोदशद्रव्य त्रयोदशकर्षमित्यर्थ । अस्य खाण्डवसंज्ञा तन्त्रान्तरे। कुत ? 'लवणाम्लसितायुक्त चूर्ण स्यात्खाण्डव मतम्।' इत्यादिवचनात् । कपित्थाष्टकसंज्ञाऽस्य रूढि.।" इत्याढमल्ल । "कपित्थस्याष्टौ भागा –पलानि वा कर्षाणि वा टङ्कानि वा, भागशब्देन पलादीनामभिधानात्।

**वृषाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः ॥ १११ ॥**
**त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणे कृतः ।**
**चूर्णोऽतीसारग्रहणीक्षयगुल्मगलामयान् ॥ ११२ ॥**
**कासश्वासाग्निसादार्शःपीनसारोचकान् जयेत् ।**

स०–यवान्यादिभिर्द्रव्यैः समैर्वृक्षाम्लादिभिस्त्रिगुणैर्मूलद्रव्यापेक्षया । किम्भूतैरेतैः ? षड्गुणा सिता येषां वृक्षाम्लादीनां त एव ते । षड्गुणसितैश्चूर्णं कृत इति योज्यम् । एवं शर्कराभागानां शतमष्टाधिकं भवति । क्व(कै) कृतश्चूर्णः ? मूलद्रव्यापेक्षयाऽष्टगुणे कपित्थे । केचित्त्वेवं पठन्ति–'षड्गुणसिते कपित्थेऽष्टगुणे' इति । तत्र चेदं व्याख्यानम्–मूलद्रव्यापेक्षया कपित्थेऽष्टगुणे । तथा च किम्भूते ? षड्गुणसिता यस्मात्तथा तस्मिन्, एवं शर्कराभागा अष्टचत्वारिंशत्स्युरिति । अयं चूर्णोऽतीसारादीन् जयेत् ।

**कर्षोन्मिता तवक्षीरी चातुर्जातं द्विकार्षिकम् ११३**
**यवानीधान्यकाजाजीग्रन्थिव्योषं पलांशकम् ।**
**पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः ॥११४॥**
**गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः ।**
**भोज्यो वातातिसारोक्तैर्यथावस्थं खलादिभिः ११५**

शर्करा–सिता, षड्भागा–षट्पलादिका । दाडिमाद्या षट् प्रत्येकं त्रिभागिका । स्यादेतच्चूर्णितं कपित्थाष्टकं स्यात् । तच्च गलामयादिकान् व्यपोहतीति स्पष्टार्थः । अन्य एवं व्याख्यानयन्ति,–यवान्यादित्रयोदशौषधयः समाः प्रत्येकं टङ्कमात्रास्त्रयोदशटङ्का एतैः, तिन्तिडीका( वृक्षाम्ला )द्यैः षड्भिस्त्रिगुणैः –त्रयोदशेभ्यस्त्रिगुणैरेकोनचत्वारिंशट्टङ्कैः, षड्गुणसितैः –त्रयोदशेभ्य एवाष्टसप्ततिटङ्कैः, [ कपित्थाष्टगुणैः –त्रयोदशेभ्य एव चतुरधिकशतटङ्कैः, इति । ] अस्मिन् पक्षे सर्वतोऽर्धगुणा सिता भवति, यथा–लुम्बा(लवङ्गा)-दौ ( शा म. अ ६।६७ ) अर्धांशा केचिच्छर्करा मेलयन्ति ।" इति काशिराम ।

१ 'मतिन्दुकैः' चक्र । २ 'गुणीकृतैः' यो र । ३ 'गुल्मोदराम' अ इ । ४ 'कास श्वासारुची हिक्का कपित्थाष्टमिदं जयेत् ।' यो र चक्र । ५ 'वदन्ति' ड । ६ 'पित्थाष्ट' ट । ७ दाडिमाष्टकचूर्णस्य शार्ङ्गधरेऽयं पाठः ( म अ ६।६० )–"दाडिमस्य पलान्यष्टौ शर्करायाः पलाष्टकम् । पिप्पली पिप्पलीमूलं यमानी मरिचं तथा ॥ धान्यकं जीरकं शुण्ठी प्रत्येकं पलसम्मितम् । कर्षमात्रा तुगाक्षीरा त्वक्पत्रैलाश्च केशरम् । प्रत्येकं कोलमात्राः स्युस्तच्चूर्णं दाडिमाष्टकम् । अतीसारं क्षयं गुल्मं ग्रहणीं च गलग्रहम् ॥ मन्दाग्निं पीनसं कासं चूर्णमेतद्व्यपोहति ।" इति । अस्य व्याख्याने "कोलं–कर्षार्धम् । अस्याष्टकसंज्ञा पलाष्टकेन बोद्धव्या, न तु द्रव्यसङ्ख्यया । शेषं सुगमम् ।" इत्याढमल्ल । ८ 'न्मिता तवक्षीरीचातु' इ अरुण । ९ "चातुर्जातं द्विकार्षिकमिति प्रत्येकम्, निर्देशस्य द्रव्यप्रधानत्वात् । एवं यमान्यादिकमपि प्रत्येकं पलांशिकम् ।" इति शिवदास. । १० 'जाजि ग्र' अरुण. ।

स०–तुगाक्षीरी चतुर्जातं च कर्षोन्मिता–कर्षप्रमाणम् । यवानी च धान्यकं चाजाजी च यवानीधान्यकाजाजि द्विकार्षिकम् । ग्रन्थिश्च व्योषं च तत्पलांशकं–पलभागिकम् । पलानि दाडिमादष्टौ, चशब्दात्सितायाः अप्यष्टौ पलानि । एवमयमेकत –एकस्मिन्, कृतश्चूर्णो दाडिमाष्टकः –एतत्संज्ञः । तेन चतुर्जातकमेकमेवास्य समुदायाद्यथोक्तः एक एव भागः । व्योषमप्येकमेवास्यापि समुदायाद्यथोक्तः एक एव भागः । एवं द्रव्यसमुदायस्यैकत्वे कल्पनाऽप्यत्राप्याचार्यस्याभिमतैव । यथा ( हृ चि अ १९।४३ )–"त्रिकटूत्तमातिलारुष्कराज्यमाक्षिकसितोपलाविहिता । गुलिका रसायनं कुष्ठजिच्च वृष्या च सप्तसमा ॥" इति । सप्तचेति तुगाक्षीर्येका, चतुर्जातं द्वितीयम्, यवानी तृतीया, धान्यकं चतुर्थम्, अजाजी पञ्चमी, पिप्पलीमूलं षष्ठम्, व्योषं सप्तमम्, दाडिममष्टममिति । अन्ये त्वेवं व्याचक्षते,–पलमिति प्रकृतम् । दाडिममष्टकं–अष्टपलप्रमाणं, यस्मिन् चूर्णे स दाडिमाष्टक इति । यथा चाक्षिरोगे (हृ उ अ. १६।५)–"सितमरिचभागमेकं चतुर्मनोह्व" इत्यत्र । तच्चूर्णं वातातीसारोक्तैरवस्थावशात् खलपेयादिभिः सह भोजनीयम् ।

**सविडङ्गः समरिचः सकपित्थः सनागरः ।**
**चाङ्गेरीतक्रकोलाम्लः खलः श्लेष्मातिसारजित् ॥**

स०–खलः श्लेष्मातीसारजित् । किम्भूतः ? विडङ्गादियुतः चाङ्गेरीतक्रकोलैरम्लः ।

**क्षीणे श्लेष्मणि पूर्वोक्तमम्लं लाक्षादि षट्पलम् ।**
**पुराणं वा घृतं दद्याद्यवागूमण्डमिश्रितम् ॥ ११७॥**

स०–क्षीणे श्लेष्मणि पूर्वोक्तमम्लं घृतं–"गुदरुग्भ्रंशयोर्युञ्ज्यात् सक्षीरं साधितं हविः ।" ( श्लो. ४८ ) इत्यादि, तथा लाक्षादि–"लाक्षानागरवैदेही" ( श्लो ९० ) इत्यादि, षट्पलं–यक्ष्मोक्तम् ( हृ चि अ ५।२२ ), पुराणं वा घृतं यवागूमण्डमिश्रितं, दद्यात् ।

**वातश्लेष्मविबन्धे वा स्रवत्यति कफेऽपि वा ।**
**शूले प्रवाहिकायां वा पिच्छाबस्तिः प्रशस्यते॥११८॥**
**वचाबिल्वकणाकुष्ठशताह्वालवणान्वितः ।**

स०–वातकफविबन्धे, वाऽतिशयेन कफे स्रवति, तथा शूले सति, प्रवाहिकायां वा सत्यां, पिच्छाबस्तिः –पूर्वोक्त एव "पल्लवान् जर्जरीकृत्य" (श्लो ९६) इत्यादिको, वचादिभिर्युक्तः प्रशस्यते ।

१ 'कत्वात् क' ड । २ 'था वाऽक्षि' ड । ३ अस्याग्रे "कट्फलं मधुकं रोध्रं त्वग्दाडिमफलस्य च । वातपित्तातिसारघ्नं पिबेत्तण्डुलवारिणा ॥ १ ॥ मुस्तं सातिविषा दार्वी वचा शुण्ठी च तत्समम् । कषायं क्षौद्रसयुक्तं श्लेष्मवातातिसारिणे ॥ २ ॥ पीतदारु वचा रोध्रं कलिङ्गफलनागरम् । दाडिमाम्बुयुतं दद्यात्पित्तश्लेष्मातिसारिणे ॥ ३ ॥" इति इ. पुस्तकेऽधिकास्त्रयः श्लोकाः । ४ 'च' इति क्वचित् ।

**बिल्वतैलेन तैलेन वचाद्यैः साधितेन वा ॥ ११९ ॥**
**बहुशः कफवातार्ते कोष्णेनान्वासनं हितम् ।**

स०–बिल्वमज्जभ्य उत्पन्न तैल बिल्वतैलम् । तेन वचाद्यै पक्केन, अथवा तैलेन–तिलतैलेन वचाद्यै साधितेन, उभयेनाप्युष्णेन बहुशोऽनुवासन कफवातार्ते हितम् ।

**क्षीणे कफे गुदे दीर्घकालातीसारदुर्बले ॥ १२० ॥**
**अनिलः प्रबलोऽवश्यं स्वस्थानस्थः प्रजायते ।**
**स बली सहसा हन्यात्तस्मात्तं त्वरया जयेत् ॥१२१॥**
**वायोरनन्तरं पित्तं पित्तस्यानन्तरं कफम् ।**
**जयेत्पूर्वं त्रयाणां वा भवेद्यो बलवत्तमः[1] ॥ १२२ ॥**

स०–कफे क्षीणे गुदे च दीर्घकालो योऽतीसारस्तेन दुर्बले–बलहीने सति, अनिल स्वस्थानस्थित –पायुस्थित , अवश्य प्रबलो जायते । स –वायु , बलवान् सहसा–झटितिव, व्यापादयेत् । तस्मात्त–वायु, शीघ्र जयेत् । त वायु जित्वाऽनन्तर पित्त जयेत् । पित्तस्यानन्तर कफ जयेत् । अथवा, त्रयाणा मध्ये यो बलवत्तमो दोषस्तमेव पूर्व जयेत् ।

**भीशोकाभ्यामपि चलः शीघ्रं कुप्यत्यतस्तयोः ।**
**कार्या क्रिया वातहरा हर्षणाश्वासनानि च ॥१२३॥**

स०–भयशोकाभ्यामप्यनिलो यस्मात् कुप्यति, अतस्तयो –भयशोकातीसारयो , वातहरा क्रिया कार्या । न केवल वातहरा, हर्षणाश्वासनानि च कार्याणि, भयशोकनिवृत्तये ।

**यस्योच्चाराद्विना मूत्रं पवनो वा प्रवर्तते ।**
**दीप्ताग्नेर्लघुकोष्ठस्य शान्तस्तस्योदरामयः ॥ १२४ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थानेऽतीसारचिकित्सितं नाम नवमोऽध्यायः ॥ ९ ॥**

स०–यस्य–अतीसारिण पुरुषस्य, उच्चारात्–मलप्रवृत्ते , विना मूत्रमथवा वात प्रवर्तते दीप्ताग्नेर्लघुकोष्ठस्य सत , तस्य जठररोग शान्त इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थानेऽतीसारचिकित्सित नाम नवमोऽध्याय समाप्त ॥ ९ ॥



१ 'काले यो' ट ।





## दशमोऽध्यायः ।

अतीसारचिकित्सितादनन्तर ग्रहणीदोषचिकित्सितमुच्यते, निदानसामान्यात् । तथा च प्रागुक्तम् ( हृ चि अ ८।१६४ ) –"अर्शोतिसारग्रहणीविकारा " इत्यादि, अत आह—

**अथातो ग्रहणीदोषचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**
( गद्यसूत्रे ॥ २ ॥ )

स०–ग्रहण्यामाश्रितो दोषो ग्रहणीदोष ,–तदाश्रितस्थानोदितकारी वाताद्यन्यतम , तस्य चिकित्सित ग्रहणीदोषचिकित्सितम् । शेष पूर्ववत् ।

**ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।**
**अतीसारोक्तविधिना तस्यामं च विपाचयेत् ॥ १ ॥**

स०–ग्रहणीमाश्रित दोषमजीर्णवदुपाचरेत्–तत्तुल्यसाधनेन लङ्घनो(नाद्यु)पचारादिनोपक्रमेत् । अतीसारोक्तविधिना तस्य–ग्रहणीदोषवत पुसो, यथादोषमाम विपाचयेत् ।

**अन्नकाले यवाग्वादि पञ्चकोलादिभिर्युतम् ।**
**वितरेत्पटुलघ्वन्नं पुनर्योगांश्च दीपनान् ॥ २ ॥**

स०–अन्नकाले–सम्यग् जाताया क्षुधि, यवाग्वाद्यन्न–पेयाविलेप्योदनलक्षण, वितरेत्–दद्यात् । किम्भूतम् ? पञ्चकोलादिभिर्युतम् । आदिशब्देनान्यैरप्येवप्रकारैर्द्रव्यैर्दीपनादिगुणयुक्तैर्युक्तम् । तथा, पटु–लवणम्, लघु–उभयथा मात्रया प्रकृत्या च । पुन –भूयो, दीपनान् षाडवादीन् योगान् वितरेत् ।

**दद्यात्सातिविषां पेयामामे साम्लां सनागराम् ।**
**पानेऽतीसारविहितं वारि तक्रं सुरादि च ॥ ३ ॥**

स०–तथा, आमे सति पेया दद्यात् । किम्भूताम् ? नागरातिविषायुताम् । तथा, साम्ला–ईषदम्लाम् । पानेऽतीसारविहित वारि तक्र सुरादि च सात्म्यादिवशाद् यथायोग्य तस्मै दद्यात् ।

१ इद ग्रहणीदोषचिकित्सित चरके चि० १५ अध्याये, सुश्रुते उ० ४० अध्याये, अष्टाङ्गसङ्ग्रहे चि० १२ अध्याये चास्ति वर्णितम् । २ "दोषमिति ग्रहणीरोगारम्भक वातादिकम् ।" इति श्रीकण्ठ । ३ दोषमजीर्णवत् अतीसारोक्तविधिना चोपाचरेत्, इति सम्बन्ध । तथा चोक्त सङ्ग्रहे ( चि अ १२ )–"ग्रहणीसमाश्रित दोषमादावेव यथास्वमजीर्णानुसारतो मात्राशितीयोक्तविधानेनोपक्रमेत । अथातीसारविधिना च ।" इति । अरुणदत्तव्याख्यान तु न मनोरमम् । ४ 'हणीदोषमाश्रितमजी' ट ड । ५ 'धनेनोक्तोप' ड । ६ 'वत्पुसो' ट.ड । ७ पटुलघ्वन्न–पटुना लवणेन लघुगुणेन च युक्तमन्नमित्यर्थ । ८ 'दिभिर्दीपनैर्द्रव्यैर्यु' ट. । ९ 'खाण्डवादीन् वि' ट. ।

**ग्रहणीदोषिणा तक्रं दीपनग्राहिलाघवात् ।**
**पथ्यं, मधुरपाकित्वान्न च पित्तप्रदूषणम् ॥ ४ ॥**
**कषायोष्णविकाशित्वाद्रूक्षत्वाच्च कफे हितम् ।**
**वाते स्वाद्वम्लसान्द्रत्वात्सद्यस्कमविदाहि तत् ॥ ५ ॥**

स०–ग्रहणीदोषिणा तक्रं पथ्यम् । कस्मात् ? दीपनग्राहिलाघवात् । दीपनग्राहिशब्दयोरत्र भावप्रधानयोर्निर्देशः, यथा–"द्व्येकयोर्द्विवचनैकवचने" इत्यत्र । अत एवैतौ भावप्रत्ययान्तेन लाघवशब्देन सह निर्दिष्टौ । भाष्यकारस्त्वाह–"द्वन्द्वात्परो यः श्रूयते स सर्वैः सम्बध्यते ।" इति । तेन दीपनग्राहिशब्दयोरपि भावप्रत्ययार्थसम्बन्धो भवतीति । मधुरपाकित्वात् पित्तप्रदूषणं च न भवति । नचपदेन प्रकर्षदूषणं पित्तस्य तक्रं निषिध्यते । तेनार्थात् किञ्चित् पित्तकरमित्युक्तं भवति । कषायोष्णविकाशित्वाद्रूक्षत्वाच्च कफे हितम् । तक्रं रूक्षत्वाच्चेति पृथङ्निर्देशाद्रूक्षत्वस्य तक्रगतस्य यथा कफे हितत्वं द्रव्यस्वभावान्न तथा कषायादीनामेतद् द्योतयति । वाते स्वाद्वम्लसान्द्रत्वात्तक्रं पथ्यम् । किम्भूतम् ? सद्यस्कं–सद्योविलोडितम्, अत एव न विदाहि । ननु, ग्रहणीदोषिणा तक्रं पथ्यमित्येतावदस्तु । किं हेतुनिर्देशेन ? अत्रोच्यते । लघ्वादिगुणेभ्यः प्राङ्निरूपितेभ्योऽधिकान् विकाशित्वमधुरपाकादीनभिधातुं दीपनादयोऽपि तत्प्रसङ्गान्निर्दिष्टाः । अपि च, ग्रहणीदोषिणा तक्रं पथ्यं यथा दीपनादिगुणयोगात्तथाऽन्यदपि यद्द्रव्यमेवंगुणं ग्रहणीदोषचिकित्सिते नोक्तं तदपि ग्रहणीदोषिणा पथ्यमिति हेतुनिर्देशेन द्योत्यते । द्रव्यस्वभावात्तु विशेषेण ग्रहणीदोषिणा तक्रं पथ्यमिति । एष च न्यायोऽन्यत्रापि सहेतुकद्रव्यकथने योज्यः । किञ्च यत्तदोर्नित्याभिसम्बन्धादेवंनिर्देशाच्चायमर्थोऽवतिष्ठते,–यदेवंविधं तक्रं तद् ग्रहणीदोषिणां पथ्यम्, नान्यादृशं यदनुद्धृतस्नेहमथवाऽर्धोद्धृतस्नेहं तथाऽतिजातत्वादम्लं तथाऽसद्यस्कं विदाहि च, तत्सर्वं ग्रहणीदोषिणामपथ्यमेव । तक्रे च रूक्षस्वाद्वम्लादयो गुणाः परस्परविरुद्धा अपि द्रव्यप्रभावात् कफविजयित्वं वातविजयित्वं च यथायोगं कुर्वन्त्येव स्वं स्वं कर्म, यथा सत्वरजस्तमःसञ्ज्ञा गुणाः ।

**चतुर्णां प्रस्थमम्लानां त्र्यूषणाच्च पलत्रयम् ।**
**लवणानां च चत्वारि शर्करायाः पलाष्टकम् ॥ ६ ॥**
**तच्चूर्णं शाकसूपान्नरागादिष्ववचारयेत् ।**
**कासाजीर्णारुचिश्वासहृत्पाण्डुप्लीहगुल्मनुत् ॥ ७ ॥**

स०–अम्लानां चतुर्णां–कोलदाडिमवृक्षाम्लचुक्रिकाणां, प्रस्थम् । केचित्तु वृक्षाम्लाम्लवेतसदाडिमबदराणामित्याहुः । त्रिकटुकात् पलत्रयम् । लवणानां च चत्वारि पलानि । शर्करायाः पलान्यष्टौ । तदेतच्चूर्णं शाकादिष्ववचारयेत्–मिश्रयेत् । तच्च कासादिजित् ।

**नागरातिविषामुस्तं पाक्यमामहरं पिबेत् ।**
**उष्णाम्बुना वा तत्कल्कं नागरं वाऽथवाऽभयाम् ॥८॥**
**ससैन्धवं वचादिं वा तद्वन्मदिरयाऽथवा ।**

स०–नागरादि पाक्यं क्वाथयित्वाऽऽमघ्नं पिबेत् । अथवा, तेषां–नागरादीनां, कल्कमुष्णाम्बुना पिबेत् । अथवा, शुण्ठीमुष्णाम्बुना पिबेत् हरीतकीं वा । वचादिगणं वा सैन्धवान्वितं तद्वत्–उष्णाम्बुना, पिबेत् । वचादिमेव मदिरया वा पिबेत् ।

**वर्चस्यामे सप्रवाहे पिबेद्वा दाडिमाम्बुना ॥ ९ ॥**
**बिडेन लवणं पिष्टं बिल्वचित्रकनागरम् ।**
**सामे कफानिले कोष्ठरुक्करे कोष्णवारिणा ॥ १० ॥**

स०–पुरीषे आमे तथा सप्रवाहे बिडेनोपलक्षितं लवणं बिडलवणं पिष्टं दाडिमाम्बुना वा पिबेत् । सामे वातकफे कोष्ठरुजाकरे बिल्वादीनि कोष्णवारिणा पिबेत् ।

**कलिङ्गहिङ्ग्वतिविषावचासौवर्चलाभयम् ।**
**छर्दिहृद्रोगशूलेषु पेयमुष्णेन वारिणा ॥ ११ ॥**
**पथ्यासौवर्चलाजाजीचूर्णं मरिचसंयुतम् ।**

स०–छर्द्यादिषु कलिङ्गादिकं कोष्णेन वारिणा पेयम् । पथ्यादिकं चूर्णं समरिचमुष्णजलेन पिबेत् । पूर्वगुणम् ।

**पिप्पलीं नागरं पाठां सारिवां बृहतीद्वयम् ॥ १२ ॥**
**चित्रकं कौटजं क्षारं तथा लवणपञ्चकम् ।**
**चूर्णीकृतं दधिसुरातन्मण्डोष्णाम्बुकाञ्जिकैः ॥ १३ ॥**
**पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं परम् ।**

स०–पिप्पल्यादिकं सूक्ष्मरजीकृतं दध्यादिभिरग्निदीप्त्यर्थं पिबेत् । तस्याः सुरायाः मण्डस्तन्मण्डः । कोष्ठवातहरं चैतच्चूर्णं स्यात् ।

१ "मधुरपाकित्वान्न च पित्तप्रकोपणमिति, अम्लत्वात् पित्तप्रकोपणे प्राप्ते मधुरपाकितया पित्तं न प्रकोपयति, चकारान्नापि पित्तं शमयतीति आकूतम् । किंवा 'सद्यमेवात्र प्रायो ह्यस्य विदह्यते' इत्युक्तेर्विदाहजनकं यदस्ति तदपि तक्रप्रयोगे विदाहकृन्न भवति, मधुरपाकित्वात् तक्रस्य । न तु जाताम्लत्वेन पित्तप्रकोपनिषेधार्थमयं ग्रन्थः, सद्यस्कोपयोगेन पित्तकारिणोऽम्लरसस्याभावात् । अम्लं च न प्रयोज्यं विदाहित्वादेव, अत एवाह–सद्यस्कमविदाहीति । सद्योमथितमेव तक्रं पच्यमानावस्थायां विदाहकृन्न भवति, किञ्चित्कालस्थितं पुनरम्लत्वाद्विदाहि भवत्येव । यत्तु स्वाद्वम्लसान्द्रत्वादित्यनेनाम्लरसत्वमुक्तं तदम्लानुरसतया ज्ञेयमित्याहुः ।" इति शिवदासः । २ 'प्रकोपणम्' सि चक्र । ३ 'काषित्वा' इ स द्व सि. । ४ 'स्वाद्वौक्ष्याच्चैव' चक्र । 'स्वाद्वैशद्याच्च' सिद्ध । ५ 'भावत्वात्' ड. ।

१ "चतुर्णां प्रस्थमम्लानामित्यत्र चतुरम्लं वृक्षाम्लाम्लवेतसदाडिमबदररूपमाहुः । अन्ये तु चव्यत्वगित्यादिप्रयोगे वक्ष्यमाणकपित्थचुक्रिकावृक्षाम्लदाडिमानां गणमाहुः । तन्त्रान्तरे तु–'वृक्षाम्लं मातुलुङ्गाम्लं बदरं चाम्लवेतसम् । चतुरम्लमिदं प्रोक्तं पञ्चाम्लं तु सदाडिमम् ॥' इत्युक्तम् । त्र्यूषणाच्च पलत्रयमिति मिलितात् पलत्रयम् ।" इति चक्र । २ 'पार्श्वामयशूलनुत्' अ इ । 'पाण्ड्वामयशूलनुत्' हे. (सू. अ. ६।१४९) । 'त्पाण्ड्वामयगुल्मनुत्' स. च ।

**पटूनि पञ्च द्वौ क्षारौ मरिचं पञ्चकोलकम् ॥ १४ ॥**
**दीप्यकं हिङ्गु गुलिका बीजपूररसे कृता ।**
**कोलदाडिमतोये वा पर पाचनदीपनी ॥ १५ ॥**

स०–लवणपञ्चकादिभिर्गुटिका बीजपूररसे कृता कोलदाडिमजले वा कृताऽतिशयेन पाचनी दीपनी च स्यात् ।

**तालीसपत्रचविकामरिचानां पलं पलम् ।**
**कृष्णातन्मूलयोर्द्वे द्वे पले शुण्ठी पलत्रयम् ॥ १६ ॥**
**चतुर्जातमुशीर च कर्षांशं श्लक्ष्णचूर्णितम् ।**
**गुडेन वटकान् कृत्वा त्रिगुणेन सदा भजेत् ॥ १७ ॥**
**मद्ययूषरसारिष्टमस्तुपेयापयोनुपः ।**
**वातश्लेष्मात्मना छर्दिग्रहणीपार्श्वहृद्रुजाम् ॥ १८ ॥**
**ज्वरश्वयथुपाण्डुत्वगुल्मपानात्ययार्शसाम् ।**
**प्रसेकपीनसश्वासकासाना च निवृत्तये ॥ १९ ॥**
**अभयां नागरस्थाने दद्यात्तत्रैव विड्ग्रहे ।**
**छर्द्यादिषु च पैत्तेषु चतुर्गुणसितान्विताः ॥ २० ॥**
**पक्केन वटका॰ कार्या गुडेन सितयाऽपि वा ।**
**परं हि वह्निसम्पर्काल्लघिमानं भजन्ति ते ॥ २१ ॥**

स०–तालीसपत्रादीना प्रत्येक पलम् । पिप्पली पले द्वे । पिप्पलीमूलस्य द्वे । शुण्ठी पलत्रयम् । चतुर्जातमुशीर च पृथक् कर्षभागम् । गुडेन त्रिगुणेन वटकान् कृत्वा मद्यादीन् पिबन् सदा भजेत् । किमर्थमित्याह–वातकफात्मकच्छर्द्यादीना शान्त्यर्थम् । तत्र च (त्रैव)–एतेष्वेव च वटकेषु, विड्ग्रहे–विड्विबन्धे सति, अभया नागरस्थाने दद्यात् । छर्द्यादिषु पूर्वोक्तेषु पित्तोद्भवेषु सत्सु गुडवर्जं चतुर्गुणसितया युक्ता वटका कार्या । वटकाना विधानमाह–पक्केन गुडेन वटका कार्या , सितया वा पक्कया कार्या । किमिति पक्वेन क्रियन्ते ? इत्याह–यस्मात्कारणादग्निसम्पर्कात् ते–वटका , पर लघुत्व भजन्ति। लघोर्भावो लघिमा, "पृथ्वादिभ्य इमनिच् ।" "टे " इति टिलोप ।

सामचिकित्सामुक्त्वा निरामचिकित्सा विशेषेणाह—

**अथैनं परिपक्वामं मारुतग्रहणीगदम् ।**
**दीपनीययुतं सर्पि॰ पाययेदल्पशो भिषक् ॥ २२ ॥**
**किञ्चित्सन्धुक्षिते त्वग्नौ सक्तविण्मूत्रमारुतम् ।**
**द्व्यहं त्र्यहं वा संस्नेह्य स्विन्नाभ्यक्तं निरूहयेत् ॥२३॥**
**तत एरण्डतैलेन सर्पिषा तैल्वकेन वा ।**
**सक्षारेणानिले शान्ते स्रस्तदोषं विरेचयेत् ॥ २४ ॥**

स०–मारुतग्रहणीगदा विद्यन्ते यस्येति "अर्शआदित्वात् (भ्योऽ)अच्" । एन–मारुतग्रहणीगदवन्त, दीपनीयौषधयुत–पञ्चकोलप्रायद्रव्यान्वित, वह्निसन्धुक्षणार्थमल्पमात्रया घृत पाययेत् । किञ्चित्सन्धुक्षिते–मनाक् सन्दीपिते, त्वग्नौ सति सक्तविण्मूत्रपवन नर द्वे दिने त्रीणि वा [1]संस्नेह्य–स्नेहयित्वा, अनन्तर स्विन्नाभ्यक्त कृत्वा निरुहयेत् । ततो–निरूहादनन्तर, मारुते शान्ते सत्येरण्डतैलेनाथवा तैल्वकेन (हृ चि अ. २१।३२) घृतेन सक्षारेण स्रस्तदोष–प्रच्युतदोष, विरेचयेत् ।

**शुद्धरूक्षाशयं बद्धवर्चस्कं चानुवासयेत् ।**
**दीपनीयाम्लवातघ्नसिद्धतैलेन तं ततः ॥ २५ ॥**
**निरूढं च विरिक्तं च सम्यक्चाप्यनुवासितम् ।**
**लघ्वन्नप्रतिसंयुक्तं सर्पिरभ्यासयेत्पुनः ॥ २६ ॥**

स०–शुद्धो रूक्ष आशयो यस्य स एवम्, तथा बद्ध वर्च –पुरीष यस्य तम्, शुद्धरूक्षाशयमितिहेतौ प्रथमा, शुद्धरूक्षाशयत्वेन बद्धवर्चस्कमित्यर्थ । तथाविध नरमनुवासयेत् । केन ? दीपनीयानि–नागरादीनि, अम्लानि–वृक्षाम्लमातुलुङ्गदाडिमादीनि, वातघ्नानि–कुष्ठरास्नैरण्डादीनि, तैर्दीपनीयाम्लवातघ्नैः सिद्धतैलेन। निरूढ विरिक्त च विधिना चानुवासित मात्रयेत्यर्थ , सम्यैक् चाप्यनुवासित लघ्वन्नप्रतिसयुक्त पुन सर्पि शीलयेत् ।

**पञ्चमूलाभयाव्योषपिप्पलीमूलसैन्धवैः ।**
**रास्नाक्षारद्वयाजाजीविडङ्गशठिभिर्घृतम् ॥ २७ ॥**
**शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च ।**
**शुष्कमूलककोलाम्लचुक्रिकादाडिमस्य च ॥ २८ ॥**
**तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः ।**
**काञ्जिकेन च तत्पक्वमग्निदीप्तिकरं परम् ॥ २९ ॥**
**शूलगुल्मोदरश्वासकासानिलकफापहम् ।**

स०–पञ्चमूलादिभि कल्कैर्द्रव्यै शुक्तादिभिर्द्रवद्रव्यै सामान्यपरिभाषया घृत पचेत् । पञ्चमूलमिह महद्ग्राह्यम्, सुतरा वातघ्नत्वात् । एतच्च घृत परममग्निदीप्तिकर शूलादिघ्नम् ।

**सबीजपूरकरसं सिद्धं वा पाययेद्घृतम् ॥ ३० ॥**

स०–बीजपूरकरसेन सह सिद्ध वा घृत पाययेत् ।

**तैलमभ्यञ्जनार्थं च सिद्धमेभिश्चलापहम् ।**

स०–एभि पञ्चमूलादिभिर्घृतौषधै॰ सिद्ध तैल वाऽभ्यञ्जनार्थं हितम् ।

**एतेषामौषधानां वा पिबेच्चूर्णं सुखाम्बुना ॥ ३१ ॥**
**वाते श्लेष्मावृते सामे कफे वा वायुनोद्धते ।**

स०–एतेषामौषधाना पञ्चमूलादीना चूर्णमुष्णाम्बुना वा पिबेत् । कस्यामवस्थायामित्याह–वाते । किम्भूते ? श्लेष्मावृते, तथा सामे कफे वा, वातेनोद्धते सामे वा ।

अधुना पित्तग्रहणीरोगचिकित्सामाह—

**अग्नेर्निर्वापकं पित्तं रेकेण वमनेन वा ॥ ३२ ॥**

१ 'रसेन कृ' ड. । २ 'जलेन वा' ड । ३ 'द्यादत्रै' इ । ४ 'मिलतिप' ट.ड । ५ 'क्वामभा' अ.इ. । ६ 'त, अल्पमा' ड.।

१ 'सस्नेहयित्वा' ट ड । २ 'म्यग्वाऽप्य' अ.इ. । ३ 'म्यग्वाऽप्य' इति क्वचित् ।

**हत्वा तिक्तलघुग्राहिदीपनैरविदाहिभिः ।**
**अन्नैः सन्धुक्षयेदग्निं चूर्णैः स्नेहैश्च तिक्तकैः ॥ ३३ ॥**

स०–अग्निपित्तयोर्ग्रहण्याश्रयत्वाद् द्रवत्वाच्च यदग्नेः प्लावक पित्तमूर्ध्वाधः प्रपन्नं तद्यथासन्नदेशं वमनेन विरेकेण वा हत्वा, अनन्तरं तमग्निमन्नैस्तिक्तलघुग्राहिदीपनैः सन्धुक्षयेत्। किम्भूतैः? अविदाहिभिः,–न तु सामान्येन दीपनैः। न केवलमेवंविधैरन्नैरग्निं सन्धुक्षयेत्, तथा च चूर्णैः स्नेहैश्च तं सन्धुक्षयेत्। किम्भूतैः? तिक्तकैः–तिक्तद्रव्यभूयिष्ठैश्चूर्णैस्तिक्तद्रव्यसाधितैः स्नेहैश्च।

"चूर्णैरग्निं सन्धुक्षयेत्" इत्युक्तम्। अतश्चूर्णान्याह—

**पटोलनिम्बत्रायन्तीतिक्तातिक्तकपर्पटम् ।**
**कुटजत्वक्फलं मूर्वा मधुशिग्रुफलं वचा ॥ ३४ ॥**
**दार्वीत्वक्पद्मकोशीरयवानीमुस्तचन्दनम् ।**
**सौराष्ट्र्यतिविषाव्योषत्वगेलापत्रदारु च ॥ ३५ ॥**
**चूर्णितं मधुना लेह्यं पेयं मद्यैर्जलेन वा ।**
**हृत्पाण्डुग्रहणीरोगगुल्मशूलारुचिज्वरान् ॥ ३६ ॥**
**कामलां सन्निपातं च मुखरोगांश्च नाशयेत् ।**

स०–मधुशिग्रुः–सोभाञ्जनकविशेषः, तस्य फलं श्वेतमरिचाख्यम्। एतत्पटोलादिकं चूर्णितं मधुना लेह्यमथवा जलेन पेयं मद्यैर्वा। तच्च हृद्रोगादीन् नाशयेत्।

**भूनिम्बकटुकामुस्तात्र्यूषणेन्द्रयवान् समान् ॥ ३७ ॥**
**द्वौ चित्रकात्कुटजत्वग्भागान् षोडश चूर्णयेत् ।**
**गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ॥ ३८ ॥**
**कामलाज्वरपाण्डुत्वमेहारुच्यतिसारजित् ।**

स०–भूनिम्बादीन् समभागान्, चित्रकात् द्वौ, कुटजत्वचः षोडश भागाश्चूर्णयेत्। तदेतच्चूर्णं गुडयुतेन शीताम्बुना पीतं ग्रहणीरोगादिहरम्।

**नागरातिविषामुस्तापाठाबिल्वं रसाञ्जनम् ॥ ३९ ॥**
**कुटजत्वक्फलं तिक्ता धातकी च कृतं रजः ।**
**क्षौद्रतण्डुलवारिभ्यां पैत्तिके ग्रहणीगदे ॥ ४० ॥**
**प्रवाहिकार्शोगुदरुग्रक्तोत्थानेषु चेष्यते ।**

स०–नागरादिद्रव्यं चूर्णितं क्षौद्रतण्डुलजलाभ्यां सह पैत्तिकग्रहणीरोग इष्यते, प्रवाहिकादिषु च।

**चन्दनं पद्मकोशीरं पाठां मूर्वां कुटन्नटम् ॥ ४१ ॥**
**षड्ग्रन्थासारिवास्फोतासप्तपर्णाटरूषकान् ।**
**पटोलोदुम्बराश्वत्थवटप्लक्षकपीतनान् ॥ ४२ ॥**
**कटुकां रोहिणीं मुस्तां निम्बं च द्विपलांशकान् ।**
**द्रोणेऽपां साधयेत्तेन पचेत्सर्पिः पिचून्मितैः ॥ ४३ ॥**
**किराततिक्तेन्द्रयववीरामागधिकोत्पलैः ।**
**पित्तग्रहण्यां तत्पेयं कुष्ठोक्तं तिक्तकं च यत् ॥ ४४ ॥**

स०–चन्दनादिद्रव्यं प्रत्येकं द्विपलांशकमपां द्रोणे पचेत्। तेन क्वाथेन पिचुप्रमाणैश्च किराततिक्तादिभिः कल्कैः सर्पिः पचेत्। कुटन्नटः–श्योनाकः। आस्फोता–उत्पलसारिवा। कपीतनो–वानीरः। अत्र च सर्पिः प्रमाणं क्वाथापेक्षया द्वात्रिंशत्पलानि कल्प्यानि, न तु कल्कापेक्षया पञ्च पलानि। क्वाथादिद्रवद्रव्यस्य स्नेहपाके प्राधान्यात्। यतः क्वाथादिद्रवमन्तरेण स्नेहपाकोऽपि नोपपद्यते, न तु तथा कल्कं विना। तस्मात् क्वाथस्य प्राधान्यात् क्वाथापेक्षयैव सर्पिर्ग्राह्यम्। तत्–एतद्धृतं, पित्तग्रहण्यां पेयम्। यच्च कुष्ठचिकित्सिते ( चि. अ. १९।२ ) गदितं तिक्तकं घृतं तच्च पेयम्। चशब्दो महातिक्तकस्यापि ग्रहणार्थः।

श्लेष्मग्रहणीचिकित्सार्थमाह—

**ग्रहण्यां श्लेष्मदुष्टायां तीक्ष्णैः प्रच्छर्दने कृते ।**
**कट्वम्ललवणक्षारैः क्रमादग्निं विवर्धयेत् ॥ ४५ ॥**

स०–श्लेष्मदुष्टायां ग्रहण्यां तीक्ष्णैर्द्रव्यैः प्रच्छर्दने–वमने, कृते सति प्रथमं कट्वम्ललवणक्षारैरग्निं विवर्धयेत्।

**पञ्चकोलाभयाधान्यपाठागन्धपलाशकैः ।**
**बीजपूरप्रगाढैश्च सिद्धैः पेयादि कल्पयेत् ॥ ४६ ॥**

स०–पञ्चकोलादिभिः सिद्धैः–क्वथितैः, पेयादिकं कल्पयेत्। गन्धपलाश–गन्धपत्रम्।

**द्रोणं मधूकपुष्पाणां विडङ्गं च ततोऽर्धतः ।**
**चित्रकस्य ततोऽर्धं च तथा भल्लातकाढकम् ॥ ४७ ॥**
**मञ्जिष्ठाऽष्टपलं चैतज्जलद्रोणत्रये पचेत् ।**
**द्रोणशेषं शृतं शीतं मध्वर्धाढकसंयुतम् ॥ ४८ ॥**
**एलामृणालागुरुभिश्चन्दनेन च रूषिते ।**
**कुम्भे मासं स्थितं जातमासवं तं प्रयोजयेत् ॥ ४९ ॥**
**ग्रहणीं दीपयत्येष बृंहणः पित्तरक्तनुत् ।**
**शोषकुष्ठकिलासानां प्रमेहाणां च नाशनः ॥ ५० ॥**

स०–मधूककुसुमानां द्रोणम्। ततो–मधूकपुष्पेभ्यः, अर्धेन विडङ्गम्। ततो–विडङ्गात्, चित्रकस्यार्धम्। भल्लातकस्य चाढकम्। मञ्जिष्ठाया पलान्यष्टौ। एतत्सर्वं पानीयद्रोणत्रये पचेत्। एतच्च द्रोणशेषं शृतं शीतं मधुनोऽर्धाढकेन संयुक्तमेलादिभिः कुम्भे रूषिते–लिप्ते, मासं स्थितं तं–एवंविधं जातं, आसवं प्रयोजयेत्। एष–आसवो, ग्रहणीं दीपयति बृंहणो रक्तपित्तादिनाशनः।

१ 'वदास' ड। २ 'रनुत्' स च चक्र। ३ तण्डुलजल–तण्डुलादष्टगुणेन षड्गुणेन वा तोयेन तण्डुलान् भावयित्वा यत्सम्पद्यते जलम्। तथा चोक्तं वृन्देन (ग्रहण्यधिकारे श्लो १६)–"जलमष्टगुणं दत्वा पलं कण्डिततण्डुलात्। भावयित्वा ततो देयं तण्डुलोदककर्मणि ॥" इति। चक्रेण च (ग्र श्लो ११)–"शीतकषायमानेन तण्डुलोदककल्पना। केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनम् ॥" इति। ४ 'णीगदं इ' ट।

१ 'तनम्' अ इ। २ 'लाशिकम्' स च। ३ 'विडङ्गानां त' स च.। ४ 'मासस्थितं' अ स च। ५ 'हणो रक्तपित्तनुत्' अ.। 'णः कफपित्तजित्' स.च.। ६ 'द्रोणांशेन शृ' ड।

मधूकपुष्पस्वरसं शृतमर्धक्षयीकृतम् ।
क्षौद्रपादयुतं शीतं पूर्ववत्सन्निधापयेत् ॥ ५१ ॥
तत्पिबन् ग्रहणीदोषान् जयेत्सर्वान् हिताशनः ।

स०-मधूकपुष्पाणा कुडवस्वरस च क्वथितमर्धक्षयीकृत-अर्धावशेष, शीत माक्षिकचतुर्थभागयुत पूर्ववत्-पूर्वेण तुल्यमेलादिरूषिते भाण्डे मास यावत्, सन्निधापयेत्-सम्यक् स्थापयेत्। "मधूकपुष्पकुडव" इत्यादि योऽय परिमाणनिर्देश स इह मात्रादिक्प्रदर्शनपर । अनया दिशाऽय सन्धातव्यो बहु, न त्वेतावान्। अन्यथा ह्यल्पसम्भृतत्वादयमासवो न शोभन स्यात्। अन्यत्र त्वासवारिष्टलेहादौ परिपूर्णत्वात् यथानिर्दिष्टैव मात्रा यथोक्तगुणकलाप करोति, न न्यूनाधिकेति वेद्यम्। तत्-एतत्, पिबन्नातुरो हितभोजी सन् सर्वान् ग्रहणीदोषान् जयति।

तद्वद्राक्षेक्षुखर्जूरस्वरसानासुतान् पिबेत् ॥ ५२ ॥

स०-[तद्वत्-] यथैव मधूकपुष्पक्वाथ आसुतस्तथैव, द्राक्षादिस्वरसानासुतान् पिबेत्। यथा च मधूकपुष्पाणा क्वाथ आदिष्टो ग्रन्थकृता तथैव द्राक्षादीना स्वरसाभावे क्वाथो ग्राह्य, तस्य दिक्प्रदर्शनपरत्वात्।

हिङ्गुतिक्तावचामाद्रीपाठेन्द्रयवगोक्षुरम् ।
पञ्चकोलं च कर्षांशं पलांशं पटुपञ्चकम् ॥ ५३ ॥
घृततैलद्विकुडवे दध्नः प्रस्थद्वये च तत् ।
आपोथ्य क्वाथयेदग्नौ मृदावनुगते रसे ॥ ५४ ॥
अन्तर्धूमं ततो दग्ध्वा चूर्णीकृत्य घृताप्लुतम् ।
पिबेत्पाणितलं तस्मिन् जीर्णे स्यान्मधुराशनः ॥५५॥
वातश्लेष्मामयान् सर्वान् हन्याद्विषगरांश्च सः ।

स०-हिङ्ग्वादि कर्षप्रमाण लवणानि पञ्च पलप्रमाणानि । तदेतद्घृततैलयो कुडवद्वये दधिप्रस्थद्वये चापोथ्य-सङ्कुट्य, मृदावग्नौ क्वाथयेत्। रसे चानुगते-प्रविष्टे सति, अनन्तरमन्तर्धूम कलशे दग्ध्वा ततश्चूर्णीकृत्य कर्षमात्र घृतालोडित पिबेत्। तस्मिन् जीर्णे मधुरभोजी स्यात् । स च-क्षारो, वातकफरोगादीन् हन्ति ।

भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम् ॥ ५६॥
दग्ध्वा माहिषमूत्रेण पिबेदग्निविवर्धनम् ।

स०-भूनिम्बादीनि दग्ध्वा माहिषमूत्रेण पिबेत्। तच्च पीत वह्निं वर्धयति ।

द्वे हरिद्रे वचा कुष्ठं चित्रकः कटुरोहिणी ॥ ५७ ॥
मुस्ता च छागमूत्रेण सिद्धः क्षारोऽग्निवर्धनः ।

स०-कटुरोहिणी-कटुका । हरिद्राद्वयादेश्छागमूत्रेण सिद्ध पूर्ववदग्निवृद्धिकृत् क्षार ।

१ 'ष्पकुडव शृ' इति पाठोऽरुणदत्तसम्मतोऽपि सङ्ग्रहचरकासम्मतत्वाच्चिन्त्य । २ 'ह दिङ्मात्रप्र' ट.। ३ 'ल्पसम्भारसम्भृ' ड । ४ 'चूर्णं कृत्वा' स च ।

चतुष्पलं सुधाकाण्डात्त्रिपलं लवणत्रयात् ॥ ५८ ॥
वार्ताककुडवं चार्कादष्टौ द्वे चित्रकात्पले ।
दग्ध्वा रसेन वार्ताकाद्गुटिका भोजनोत्तराः ॥ ५९ ॥
भुक्तमन्नं पचन्त्याशु कासश्वासार्शसां हिताः ।
विसूचिकाप्रतिश्यायहृद्रोगशमनाश्च ताः ॥ ६० ॥

स०-सुधास्तम्भाच्चत्वारि पलानि, लवणत्रयात्त्रीणि पलानि, पक्वशुष्कवार्ताककुडवम्, अर्कादष्टौ पलानि, चित्रकपले द्वे, एतत्सर्व दग्ध्वा, ततो वार्ताकाना रसेन कृता गुलिका भुक्त-उपयुक्त, भोजन पचन्त्याशु। कासादिभ्यो हिता । विसूचिकादिघ्न्यश्च स्मृता ।

मातुलुङ्गशठीरास्नाकटुत्रयहरीतकि ।
स्वर्जिकायावशूकाख्यौ क्षारौ पञ्चपटूनि च ॥ ६१ ॥
सुखाम्बुपीतं तच्चूर्णं बलवर्णाग्निवर्धनम् ।

स०-मातुलुङ्गादिक चूर्णमुष्णोदकेन पीत बलादिवर्धनम्।

श्लैष्मिके ग्रहणीदोषे सवाते तैर्घृतं पचेत् ॥ ६२ ॥
धान्वन्तरं षट्पलं च भल्लातकघृताभयम् ।

स०-श्लैष्मिके ग्रहणीदोषे वातान्विते तै-मातुलुङ्गादिभि, घृत पचेत्। अथवा, धान्वन्तरं घृत-प्रमेहचिकित्सिते "दशमूलशठी" (चि अ १२।१९) इत्यादिकम्। षट्पल-राजयक्ष्मचिकित्सिते "पञ्चकोलयवक्षार" (चि अ ५।२२) इत्यादिकम् । भल्लातकघृत-गुल्मोक्त "भल्लातकाना द्विपल" (चि अ १४।८०) इत्यादिकम्। अभयाघृत-उदरचिकित्सिते "हरीतकीसूक्ष्मरज" (चि अ १५।२८) इत्यादिकम्।

बिडकाचोषलवणस्वर्जिकायावशूकजान् ॥ ६३ ॥
सप्तलां कण्टकारी च चित्रकं चैकतो दहेत् ।
सप्तकृत्वः स्रुतस्यास्य क्षारस्यार्धाढके पचेत् ॥ ६४ ॥
आढकं सर्पिषः पेयं तदग्निबलवृद्धये ।

स०-बिडलवण काचलवण-कृष्णलवण, क्षारलवण स्वर्जिकादींश्चैकस्मिन् कृत्वा दहेत् । सप्तवारानस्य क्षारस्य स्रुतस्य चार्धाढके सर्पिष आढक पचेत्। तद्घृतमग्निबलादिवृद्धये पेयम्।

१ "त्रिपल लवणत्रयादिति मिलित्वा, निर्देशस्य मानप्रधानत्वात्। 'त्रिफलालवणानि च' इति ये पठन्ति, ते त्रिफलालवणैर्मिलित्वा चतुष्पल वदन्ति पूर्वोक्तचतुष्पलमित्यस्यापि सम्बन्धात्। लवणान्यविशेषात् पञ्चैवेत्याहु । अर्कादिति अर्कमूलात्। भोजनोत्तरा इति भोजनमुत्तर-पश्चात्कालीन, यासा तथा। किंवा भोजनादुत्तरा ।" इति शिवदास । २ 'र्ताकात् कु' अ । ३ 'दग्धानि वार्ताकरसे गु' स च । ४ 'भुक्त भुक्तं प' स च । 'भुक्त्वा भुक्त प' चक्र. । ५ 'तकी' इति क्वचित्। ६ 'मूल शठी' इत्यग्रे पाठ. ।

**निचये पञ्चकर्माणि युञ्ज्याच्चैतद्यथाबलम् ॥ ६५ ॥**

स०–निचये–सन्निपातजे ग्रहणीदोषे, पञ्चकर्माणि–वमनविरेचनास्थापनानुवासननस्यानि, यथाबल युञ्ज्यात् । यद्यपि शिरोविरेचनाख्यस्य कर्मणो बाहुल्येन ग्रहणीदोषे प्रयोजन न तथा दृश्यते यथा वमनादीनाम्, तथाऽपि भूयस्त्वमुररीकृत्य पञ्चकर्माणीत्युक्तम् । चशब्दाद्यदेतद्ग्रहणीत्रये प्रतिदोषमाश्रित्योक्त कर्म तदपि निचयोत्थे ग्रहणीदोषे युञ्ज्यात् ।

इति ग्रहणीदोषस्य चतुर्विधस्य चिकित्सामभिधायेदानी प्रतिपुरुष प्रतिदोष मन्दाग्नित्वमाश्रित्य यथावस्थ चिकित्सित निर्दिशन्नाह—

**प्रसेके श्लैष्मिकेऽल्पाग्नेर्दीपनं रूक्षतिक्तकम् ।**
**योज्यं कृशस्य व्यत्यासात्स्निग्धरूक्षं कफोदये ॥६६॥**
**क्षीणक्षामशरीरस्य दीपन स्नेहसंयुतम् ।**
**दीपनं बहुपित्तस्य तिक्तं मधुरकैर्युतम् ॥ ६७ ॥**
**स्नेहोऽम्ललवणैर्युक्तो बहुवातस्य शस्यते ।**

स०–प्रसेको द्विविध –वातिक श्लैष्मिकश्च । तत्र मन्दाग्नेः श्लेष्मप्रकोपजे प्रसेके दीपन रूक्षतिक्त यद् द्रव्य तत्प्रयोज्यम्, न घृत नापि मधुराम्ललवणादिकम् । श्लेष्मजप्रसेकस्य च लक्षणम् (हृ चि. अ ५।६३)–"श्लेष्मणोऽतिप्रसेकेन वायु श्लेष्माणमस्यति ।" इत्यादि । कृशस्य पुनर्मन्दाग्ने कफोदये सति व्यत्यासात् पर्यायेण व्यतिकर्मव्यवहारार्थ । व्यत्यासात् स्निग्धरूक्ष योज्यम्,–स्निग्ध योजयित्वा रूक्ष योज्य रूक्ष योजयित्वा स्निग्ध योज्यमित्यर्थ । यदि हि कृशे बहुकफे रूक्षे च नरे रूक्षमेव युञ्ज्यात्, ततो रूक्षे केवले युज्यमाने कार्श्यस्य वृद्धि स्यात् । अथ स्नेहमेव युञ्ज्यात्, तत स्नेहे केवले युज्यमाने कफवृद्धि स्यात् । इति व्यत्यासेन स्निग्धरूक्षमुपयोज्यम् । क्षीणक्षामशरीरस्य तु कफोदये दीपन द्रव्य–पञ्चकोलादिक, स्नेहै –घृतादिभि, सयुत स्नेहसयुक्त युञ्ज्यात् । बहुपित्तस्य मन्दाग्नेस्तिक्त मधुरकैर्द्रव्यैर्युक्त दीपन योज्यम् । बहुवातस्य मन्दाग्नेर्नरस्य स्नेहोऽम्ललवणैर्युक्त प्रायेण शस्यते ।

स्नेहस्य मन्दाग्निविषयेभ्योऽन्यद्रव्येभ्य प्रायेण प्राधान्य सर्वपुरुष प्रति द्योतयितुमिद ब्रूते—

**स्नेहमेव परं विद्याद्दुर्बलानलदीपनम् ॥ ६८ ॥**
**नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि ।**

स०–एवेत्यवधारणे । परं–प्रधान, स्नेहमेव मन्दाग्नेर्विद्यात्, न ततोऽन्यद् द्रव्यम् । तस्मान्मदाग्नेर्दोषप्रतिपक्षभूतैरौषधैर्युक्त स्नेहो बाहुल्येन पथ्य । अत एवेद कारण निर्दिशन्नाह–नालमित्यादि । यस्मात् स्नेहोद्दीपितस्याग्ने सुष्ठु गुर्वप्यन्न शमाय नाल–पर्याप्तम् । तस्मात् स्नेह एव दुर्बलानलदीपनाय श्रेष्ठ ।

**योऽल्पाग्नित्वात्कफे क्षीणे वर्चः पक्वमपि श्लथम् ६९**
**मुञ्चेत्पट्वौषधयुत स पिबेदल्पशो घृतम् ।**
**तेन स्वमार्गमानीत स्वकर्मणि नियोजित ॥ ७० ॥**
**समानो दीपयत्यग्निमग्नेः सन्धुक्षको हि स ।**

स०–य –नर, अल्पाग्नित्वात्कफे क्षीणे सति पुरीष पक्वमपि शिथिल मुञ्चेत्, स –नर, अल्पमल्प घृत पिबेत् । किम्भूतम्? पट्वौषधयुत–सैन्धवशुण्ठीयुक्तम् । तेन–सर्पिषा, समान स्वमार्गमानीय स्वकर्मणि–अन्नपचनाख्ये, नियोजितोऽग्नि सन्दीपयति । यतोऽसौ–समान, अग्ने सन्धुक्षक ।

**पुरीषं यश्च कृच्छ्रेण कठिनत्वाद्विमुञ्चति ॥ ७१ ॥**
**स घृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत् ।**

स०–यश्च–पुरुष, पुरीष काठिन्यात्–सहतत्वाद्धेतो, कृच्छ्रेण मुञ्चति । स –नर, लवणै पञ्चभिर्युक्त घृत पिबेत् । किम्भूतम्? अन्नावग्रह,–अन्नेनावग्रह सहसोर्ध्वकायगमनप्रतिबन्धोऽवष्टम्भो यस्य तदेवम् । घृत पीत्वाऽन्न भोक्तव्यमित्यर्थ ।

**रौक्ष्यान्मन्देऽनले सर्पिस्तैलं वा दीपनैः पिबेत् ॥७२॥**

स०–रौक्ष्याद्धेतोर्मन्देऽग्नौ सति सर्पिरथवा तैल दीपनीयैर्युत पिबेत् ।

**क्षारचूर्णासवारिष्टान् मन्दे स्नेहातिपानतः ।**

स०–स्नेहातिपानाद्धेतोर्मन्देऽग्नौ सति क्षारादीन् पिबेत् ।

**उदावर्तात्तु योक्तव्या निरूहस्नेहवस्तयः ॥ ७३ ॥**

स०–उदावर्तात्पुनर्मन्देऽग्नौ सति निरूहस्नेहवस्तय प्रयोक्तव्या ।

**दोषातिवृद्ध्या मन्देऽग्नौ संशुद्धोऽन्नविधि चरेत् ।**

स०–दोषाऽतिवृद्धया मन्देऽग्नौ सति वमनविरेचनादिभिर्हृतदोष कृतसशुद्धिरन्नविधिं–पेयादिक्रम, आचरेत् ।

**व्याधिमुक्तस्य मन्देऽग्नौ सर्पिरेव तु दीपनम् ॥७४॥**

स०–व्याधिमुक्तस्य मन्देऽग्नौ सर्पिरेव दीपन स्यात्, नान्यत्तथाद्रव्यम् ।

**अध्वोपवासक्षामत्वैर्यवाग्वा पाययेद्घृतम् ।**
**अन्नावपीडितं बल्यं दीपनं बृंहणं च तत् ॥ ७५ ॥**

स०–अध्वोपवासक्षामत्वैर्मन्देऽग्नौ यवाग्वा सह घृत

१ शिरोविरेचन–नस्यम् । २ 'स्नेहाम्ललवणैर्युक्त ब' स मू । 'बहुवातस्य तु स्नेहलवणाम्लयुत हितम् ।' स च । "स्नेहलवणाम्लयुतमिति दीपन[विशेषण]मित्यर्थ. ।" इति चक्र । ३ 'येणापीतिकर्म' इति क्वचित् । ४ 'व्यतिहा' ट । ५ 'पयुक्तम्' ट.ड । ६ 'पक्वैरौ' ट. ।

१ 'पनश्रेष्ठ ' ट ड । २ 'ह्यसौ' अरुण । ३ 'यस्तु कृ' स द्व । ४ 'र्तात्प्रयो' अ इ । ५ 'ग्नौ शुद्धो दोषविधिं' स च । "दोषविधिं–अग्निमान्द्यकारकदोषौषधविधिम्" इति चक्र । ६ 'भजेत्' अ । ७ "सर्पिरेवेति केवलस्य निरौषधस्य सर्पिष प्रयोगप्रदर्शनम् ।" इतीन्दु ।

पाययेत्, वेद्य इति शेष । किम्भूतम्? अन्नेनावपीडितमन्ना वपीडितम्, मध्यभक्त घृतमित्यर्थ । एव पीत बल्य बृहण दीपन च तद्भवति ।

**दीर्घकालप्रसङ्गात्तु क्षामक्षीणकृशान्नरान्।**
**प्रसहानां रसै· साम्लैर्भोजयेत्पिशिताशिनाम्॥ ७६॥**
**लघूष्णकटुशोधित्वाद् दीपयन्त्याशु तेऽनलम्।**
**मांसोपचितमासत्वात्पर च बलवर्धना· ॥ ७७॥**

**स०**–दीर्घकालप्रसङ्गात्तु मन्देऽग्नौ सत्यसम्यगाहाररसपरिणत्या हेतुभूतया क्षामक्षीणकृशान्नरान् पिशिताशिना–प्रसहादीना, रसै साम्लैर्भोजयेत्। कस्मात्तानेतान् भोजयेत्? इत्याह–लघूष्णेत्यादि । लघुत्वादुष्णत्वात्कटुत्वाच्छोधनत्वाच्च ते रसा शीघ्रमग्निं दीपयन्ति । भावप्रधाननिर्देश पूर्ववच्चात्र योज्य । ननु, प्रागभ्यधायि ( हृ सू अ ६।६१ )–"गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम्।" इति । इह च प्रसहाना लघुत्व मुच्यते । तदिमे वचसी परस्पर व्याघ्नाते । अत्र ब्रूम । लाघवशब्दोऽत्र क्रियाविशेषार्थ । धावनप्लवनलङ्घनादिका चेष्टा, तस्या पाटवविशेषो लाघवम्। यथा च प्रागध्यगीष्ट ( हृ सू अ २।१० )–"लाघव कर्मसामर्थ्य" इति । एव चात्राविरोध । हेतुनिर्देशादन्येऽप्येवप्राया ये मासरसास्तानप्येतान् भोजयेदिति । ते च–प्रसहा, मासोपचितमासत्वाद्धेतो सुष्ठु बलं वर्धयन्ति ।

**स्नेहासवसुरारिष्टचूर्णकाथहिताशनैः।**
**सम्यक् प्रयुक्तैर्देहस्य बलमग्नेश्च वर्धते॥ ७८॥**

**स०**–स्नेहादिभि सम्यक् प्रयुक्तै शरीरस्याग्नेश्च बल वर्धते। तस्मात् स्नेहादयो यथावस्थ प्रयोज्या इति भाव ।

अधुना स्नेहस्याग्निवृद्धिकरत्व दृष्टान्तेन दर्शयति—

**दीप्तो यथैव स्थाणुश्च बाह्योऽग्निः सारदारुभि·।**
**सस्नेहैर्जायते तद्वदाहारै· कोष्ठगोऽनल·॥ ७९॥**

**स०**–यथा–येन प्रकारेण, सारदारुभि–शमीखदिरादिभि, सस्नेहैर्बाह्योऽग्निर्दीप्त स्थाणु–स्थिरश्च, जायते। तथैव कोष्ठगोऽग्नि सस्नेहै पथ्यरूपैराहारै पटुतर स्थिरश्च सम्पद्यते।

**नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात्।**
**यथा निरिन्धनो वह्निरल्पो वाऽतीन्धनावृतः॥ ८०॥**

**स०**–नाभोजनेन कायाग्निर्दीप्यते । न चातिभोजनेन। अत्रैव दृष्टान्तमाह–यथा बाह्योऽग्निर्निरिन्धनो न दीप्यते–नश्यति । अल्पोऽग्निर्बाह्योऽतीन्धनेन–बहुभिर्दारुभि, आवृतो नश्यति,–न दीप्यते। एव कोष्ठाग्निरप्यभोजनातिभोजनाभ्या नश्यति,–न दीप्यत इत्यर्थ ।

**यदा क्षीणे कफे पित्तं स्वस्थाने पवनानुगम्।**
**प्रवृद्धं वर्धयत्यग्निं तदाऽसौ सानिलोऽनल·॥ ८१॥**
**पक्त्वाऽन्नमाशु धातूंश्च सर्वानोजश्च सङ्क्षिपन्।**
**मारयेत्स्यात्स ना स्वस्थो भुक्ते जीर्णे तु ताम्यति॥८२॥**

**स०**–यस्मिन् काले कफे क्षीणे–क्षय याते, अत एव स्वस्थाने–आमाशयाख्ये, पित्त वृद्धम्। किम्भूतम्? पवनानुगम्। मारुतेन धमनस्वभावेन पश्चाद्युक्तम् । अत एव तत्पित्तमग्निं वर्धयति । तदा–तस्मिन्काले, असावनलो–जाठराग्नि, सानिल–पवनसहितो, अन्न पक्त्वाऽनन्तर पक्तव्याभावात् सर्वान् धातून् पक्त्वा, आशु पुरुष मारयेत्। किं कुर्वन्? ओजश्च सङ्क्षिपन्–सहरन्, विनाशयन्नित्यर्थ । ननु, पित्तानिलयोर्द्वयो प्रकृतत्वात् सपित्तानिलोऽनल इति वक्तु युक्त स्यात्। मैवम्। "पित्त वह्निर्वह्निज वा" ( हृ शा अ ३।९० ) इति कृत्वा तदानी जठराग्निना सहैकता प्राप्त पित्तमिति सानिलोऽनल इति निर्दिष्टम् । स–अल्पाग्निपीडितो, ना–पुरुषो, भुक्ते स्वस्थ स्यात्। जीर्णे तु ताम्यति–उपतप्यते। अनेकार्थत्वाद्धातूनामुपतापार्थस्ताम्यति । तमकलक्षणेऽपि प्रागध्यगीष्ट।

अथास्योपद्रवान् वक्ति—

**तृट्कासदाहमूर्च्छाद्या व्याधयोऽत्यग्निसम्भवाः।**

**स०**–तृष्णादयो रोगा अत्यग्ने सम्भवन्ति।

**तमत्यग्निं गुरुस्निग्धमन्दसान्द्रहिमस्थिरैः॥ ८३॥**
**अन्नपानैर्नयेच्छान्ति दीप्तमग्निमिवाम्बुभि·।**

**स०**–तमत्यग्नि–भस्मकाख्य, गुरुस्निग्धादिभिरन्नपानै शान्तिं नयेत्। कमिव? दीप्त–इद्धमग्निं बाह्य, यथा जलै ।

**मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत्॥ ८४॥**
**निरिन्धनोऽन्तर लब्ध्वा यथैनं न विपादयेत्।**

**स०**–मुहुर्मुहु–क्षणेक्षणे, अजीर्णेऽपि भोज्यानि–कृशरादीनि, उपहारयेत्–आहारार्थं प्रकल्पयेत्। अजीर्णेऽपीत्यपिशब्दात् किमुत जीर्णे भोज्यानुपहारयेदिति । किमित्येव क्रियते? इत्याह–यस्मात्तस्मात्तथा तेन प्रकारेणाजीर्णेऽपि पुन पुनराहारोपयोगेन निरिन्धनोऽग्निरन्तर–अवकाश, लब्ध्वा यथा एन न विपादयेत्।

कानि भोज्यानि? इत्याह—

**कृशरा पायसं स्निग्धं पैष्टिकं गुडवैकृतम्॥ ८५॥**

---

१ "क्षामो–व्यवसायशून्य । क्षीणो–दुर्बल । कृशो–हीनमास ।" इति चक्र । २ 'धित्वैर्दीप' इ स हृ । ३ 'बाध्येते' ट । ४ 'चावि' ट । ५ 'स्थाग्नुश्च' स स. । ६ 'नान्वित' अ इ. ।

१ "ये चोक्ता विषमाद्यास्त्रयोऽग्नय । तेऽपि स्युर्ग्रहणीदोषा" इति निदानस्थाने (अ ८।२९) उक्तम्। तत्र विषमस्य मन्दस्य च वातश्लेष्मचिकित्सयैव प्रायेण प्रतीकार प्रदर्शित । तीक्ष्णस्य त्वग्ने. प्रस्तुतस्य व्याधिवैलक्षण्यात् महारोगत्वाच्च पृथगेव यदेत्यादिना कारण चिकित्सित चोच्यते॥ अन्तर–हृदयम्।" इतीन्दु । २ 'येत् त स' इति क्वचित्। ३ 'गमन' ट । ४ 'दृश्वासदा' स च । ५ 'ग्धशीतैर्मधुरविजलै ।' स च । ६ अस्य–अत्यग्ने । ७ 'पकल्पयेत्' हे (सू. अ. ८।३४)। ८ 'तथैन' अ ।

अश्नीयादौदकानूपपिशितानि भृतानि च ।
मत्स्यान् विशेषतः श्लक्ष्णान् स्थिरतोयचरांश्च ये ॥ ८६ ॥

स०-कृशरामित्यादीनि भुञ्जीत । गुडवैकृतमिति । विकृत मेव वैकृतम्, प्रज्ञादित्वादण् । तथौदकाना-मत्स्यकच्छपादीना पिशितानि, तथाऽऽनूपानि-वराहादीनाम्, भृतानि-मेदुराणि, भक्षयेत् । विशेषेण मत्स्यान् । श्लक्ष्णान्-अपरुषान् । चशब्दाद्ये च स्थिरतोयचरा -अवहज्जलाश्रिता , तानप्यश्नीयात् ।

आविकं सुभृतं मांसमद्यादत्यग्निवारणम् ।

स०-आविक मास सुभृत-अतीवमेदुर, अत्यग्निवारणमद्यात् ।

पयः सहमधूच्छिष्टं घृतं वा तृषितः पिबेत् ॥ ८७ ॥
गोधूमचूर्णं पयसा बहुसर्पिःपरिप्लुतम् ।
आनूपरसयुक्तान् वा स्नेहांस्तैलविवर्जितान् ॥ ८८ ॥
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ।
असकृत्पित्तहरणं पायसप्रतिभोजनम् ॥ ८९ ॥

स०-तथा, तृषित सन् पय पिबेत् । किम्भूतम्? सह-मधूच्छिष्ट-समदन, सर्पिर्वा एवभूत पिबेत् । गोधूमचूर्ण बहुघृत क्षीरेणालोडित पिबेत् । अथवा, आनूपमासरसान्वितान् स्नेहान् पिबेत् । किम्भूतान्? तैलविवर्जितान् । तैलस्य पित्तकृत्त्वान्निषेध । अथवा, श्यामात्रिवृद्भ्या विपक्व क्षीर विरेचन दद्यात् । तथा, पुन पुन पित्तस्य हरण पायसस्य प्रतिभोजन हितम् ।

अधुना सङ्क्षेपेण चिकित्सामाह—

यत्किञ्चिद्गुरु मेद्यं च श्लेष्मकारि च भोजनम् ।
सर्वं तदत्यग्निहितं भुक्त्वा च स्वपनं दिवा ॥ ९० ॥

स०-यत्किञ्चिद्गुरु भोजन यन्मेदस्कर श्लेष्मकर च, तदत्यग्नये हितम् । भुक्त्वा च यद्दिवा स्वपन तच्च हितम् ।

ननु, किमिति गुर्वादिभोजनमत्यग्नये दीयते? इत्याह—

आहारमग्निः पचति दोषानाहारवर्जितः ।
धातून् क्षीणेषु दोषेषु जीवितं धातुसङ्क्षये ॥ ९१ ॥

स०-अग्नि पूर्वमाहार पचति । आहाररहितस्त्वग्निर्दोषान् पचति । तदभावाद्धातून् पचति । धातुसङ्क्षये सति जीवित पचति-नाशयतीत्यर्थ ।

एतत्प्रकृत्यैव विरुद्धमन्नं
संयोगसंस्कारवशेन चेदम् ।
इत्याद्यविज्ञाय यथेष्टचेष्टा-
श्चरन्ति यत्साऽग्निबलस्य शक्तिः ॥ ९२ ॥
तस्मादग्निं पालयेत्सर्वयत्नै-
स्तस्मिन्नष्टे याति ना नाशमेव ।
दोषैर्ग्रस्ते ग्रस्यते रोगसङ्घै-
र्युक्ते तु स्यान्नीरुजो दीर्घजीवी ॥ ९३ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने ग्रहणीदोषचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

स०-एतदन्न प्रकृत्या[एव]-स्वभावेनैव, विरुद्धमपथ्यम्, यथा-करमर्दकदधिसर्षपशाकफाणितशुष्कमासविरूढकाममूलकलकुचादिकम् । सयोगविरुद्ध यथा-क्षीरमम्लेन सह, आनूपमामिष माषै सह, इत्यादि । सस्कारविरुद्ध यथा-हारीतमास हारिद्रशूलप्रोत हारिद्रवह्निना पाचितमित्यादि । एवमिद प्रकृत्यादिविरुद्ध सयोगस्य सस्कारस्य च वशेन-सामर्थ्येन, चेद विरुद्धम् । आदिग्रहणान्मात्राकालादिपरिग्रह । तत्र मात्राविरुद्ध यथा-मधुघृत समाशम् । कालवशेनेद यथा-रात्रिपर्युषिता काकमाची । पात्रवशेनेद यथा-कास्ये दशाहमुषित सर्पि । इत्याद्यविज्ञाय-अबुद्ध्वाऽपर्यालोच्य, यथेष्टचेष्टा -यथाभिलाषैमाहारमासेवमाना , यच्चरन्ति साऽग्निबलस्य शक्ति -सामर्थ्यम् । यत एव तस्मादग्निं पालयेत्, सर्वयत्नै -अखिलक्रियानुष्ठानै, तस्मिन्-अग्नौ, नष्टे-क्षीणे, ना-पुरुषो, नाश याति । दोषैर्ग्रस्ते वह्नौ ना-पुरुषो, रोगसङ्घैर्ग्रस्यते-पीड्यते । युक्ते-स्वस्थे, पुनरग्नौ नीरुजो दीर्घजीवी च भवेदिति । उपजातिशालिन्यौ वृत्ते ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने ग्रहणीदोषचिकित्सित नाम दशमोऽध्याय समाप्त ॥ १० ॥




ग्रहणीदोषचिकित्सितादनन्तरं मूत्राघातचिकित्सितमारभ्यते । सम्बन्धश्चास्य समसम्बन्धनत्वात् । तथा च प्रागध्यैष्ट (हृ नि. अ ९।१)-"बस्तिबस्तिशिरोमेढ्रकटीवृषणपायव । एकसम्बन्धना प्रोक्ता गुदास्थिविवराश्रया ॥" इति । तेनेदमाह—

अथातो मूत्राघातचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

( गद्यसूत्रे ॥ २ ॥)

१ "भृतानि-गृहे पुष्टानि ॥ तच्च विरेचनमसकृत् पित्तहरणार्थम् ।" इतीन्दु । २ 'चरास्तथा' स च. । ३ 'पिं प्लुत पिबेत्' स हृ । ४ 'त्तशान्त्यर्थ पा' स च । ५ 'पयसा प्र' स स । 'यस प्र' स.मू । ६ "पायसेन प्रतिभोजन यस्मिन् पित्तहरणे तत्पायसप्रतिभोजनम् ॥ मेद्यमिति मेदुर मेदोजनक वा ।" इति चक्र ।

१ 'षमासे' ट । २ 'ति शेष ।' ट.ड । ३ इद मूत्राघातचिकित्सित चरके चि० २६ अध्याये सि० ९ अध्याये च, सुश्रुते उ० ५८।५९ अध्यायायो चि० ७ अध्याये च, अष्टाङ्गसङ्ग्रहे चि० १३ अध्याये चास्ति वर्णितम् ।

**कृच्छ्रे वातघ्नतैलाक्तमधोनाभेः समीरजे ।**
**सुस्निग्धैः स्वेदयेदङ्गं पिण्डसेकावगाहनैः ॥ १ ॥**

स०–कृच्छ्रे–मूत्रकृच्छ्रे, आदिपदलोपं कृत्वा निर्दिष्टम् । यथा–मासरसे रस इति । मूत्रकृच्छ्रे वातोत्थे, अङ्ग–शरीरं, वातघ्नतैलेन–बलातैलादिना, अभ्यक्तमधो नाभेः समन्तात् स्वेदैः पिण्डादिभिः सुष्ठु स्निग्धैः–न रूक्षैः, स्वेदयेत् ।

**दशमूलबलैरण्डयवाभीरुपुनर्नवैः ।**
**कुलत्थकोलपत्तूरवृश्चीवोपलभेदकैः ॥ २ ॥**
**तैलसर्पिर्वराहर्क्षवसाः क्वथितकल्कितैः ।**
**सपञ्चलवणाः सिद्धाः पीताः शूलहराः परम् ॥ ३ ॥**

स०–दशमूलादिभिः क्वथितकल्कितैस्तैलसर्पिर्वराहर्क्षवसाः सिद्धाः–पक्वाः, सह पञ्चलवणैर्वर्तन्त इति सपञ्चलवणाः पीताः परं–सुष्ठु, शूलहराः ।

**द्रव्याण्येतानि पानान्ने तथा पिण्डोपनाहने ।**
**सह तैलफलैर्युञ्ज्यात्साम्लानि स्नेहवन्ति च ॥ ४ ॥**

स०–एतानि–दशमूलादीनि, द्रव्याणि पानान्ने तद्विजयाय, तथा पिण्डोपनाहाख्ये स्वेदद्वये तैलफलैः सह युञ्ज्यात् । तैलार्थानि फलानि नालिकेराक्षोडादीनि तैलफलानि, यथा–यूपाय दारु, तैः सह । केचित्तु तैलफलानि तिलानाहुः । किम्भूतानि ? साम्लानि, सहाम्लैः–तक्रारनालादिभिः, वर्तन्त इति साम्लानि । तथा, स्नेहवन्ति–बहुस्नेहानि । "भूम्नि मतुप्" ।

**सौवर्चलाढ्यां मदिरां पिबेन्मूत्ररुजापहाम् ।**

स०–तथा मदिरां बहुसौवर्चलां मूत्ररुजापहां पिबेत् ।

**पैत्ते युञ्जीत शिशिरं सेकलेपावगाहनम् ॥ ५ ॥**

स०–पैत्ते मूत्रकृच्छ्रे शीतलं सेकलेपावगाहनं युञ्जीत ।

**पिबेद्वरीं गोक्षुरकं विदारीं सकसेरुकाम् ।**
**तृणाख्यं पञ्चमूलं च पाक्यं समधुशर्करम् ॥ ६ ॥**

स०–तथा शतावर्यादिकं पाक्यं कृत्वा समधुशर्करं पिबेत् ।

**वृषकं त्रपुसैर्वारुलट्वाबीजानि कुङ्कुमम् ।**
**द्राक्षाम्भोभिः पिबन् सर्वान् मूत्राघातानपोहति॥७॥**

स०–वृषकादिकं कल्कीकृत्य द्राक्षाजलेन पिबन् सर्वान् मूत्राघातान् पराकरोति । अपोहतीति "उपसर्गादस्यत्यूह्योर्वा वचनम्" इति परस्मैपदम् । वृषकः–पाषाणभेदकः । लट्वाबीज–कुसुम्भबीजम् ।

**एर्वारुबीजयष्ट्याह्वदार्वीर्वा तण्डुलाम्बुना ।**
**तोयेन कल्कं द्राक्षायाः पिबेत्पर्युषितेन वा ॥ ८ ॥**

स०–एर्वारुबीजादिकं वा तण्डुलाम्भसा पिबेत् पूर्वगुणम् । पर्युषितेन वा जलेन द्राक्षाकल्कं पिबेत् ।

**कफजे वमनं स्वेदं तीक्ष्णोष्णकटुभोजनम् ।**
**यवानां विकृतीः क्षारं कालशेयं च शीलयेत् ॥ ९ ॥**

स०–कफजे मूत्रकृच्छ्रे वमनादीनि शीलयेत् ।

**पिबेन्मद्येन सूक्ष्मैलां धात्रीफलरसेन वा ।**
**सारसास्थि[*1]श्वदंष्ट्रैलाव्योषं वा मधुमूत्रवत् ॥ १० ॥**
**स्वरसं कण्टकार्या वा पाययेन्माक्षिकान्वितम् ।**
**शितिवारकबीजं वा तक्रेण श्लक्ष्णचूर्णितम् ॥ ११ ॥**
**धवसप्ताह्वकुटजगुडूचीचतुरङ्गुलम् ।**
**केम्बुकैलाकरञ्जं[2] च पाक्यं समधु साधितम् ॥ १२ ॥**
**तैर्वा पेयां प्रवालं वा चूर्णितं तण्डुलाम्बुना ।**
**सतैलं पाटलाक्षारं सप्तकृत्त्वोऽथवा स्रुतम् ॥ १३ ॥**

स०–तथा मद्येन सूक्ष्मैलां पिबेत् । आमलकरसेन वा सूक्ष्मैलां पिबेत् । [ अथवा, ] सारसास्थ्यादीनि मधुयुक्तानि गोमूत्रेण पिबेत् । अथवा, कण्टकार्याः स्वरसं समाक्षिकं पाययेत् । [ अथवा, ] शितिवारकस्य–करञ्जस्य, बीजं श्लक्ष्णपिष्टं तक्रेण सह पाययेत् । धवादिभिः कृतं पाक्यं–क्वाथं, वा समधु पाययेत् । तैर्वा–धवादिभिः, साधितां पेयां पाययेत् । प्रवालं–विद्रुमं, रजीकृतं तण्डुलाम्भसा [वा] पाययेत् । पाटलायाः क्षारं सप्तवारान् स्रुतं तैलेन वा पाययेत् ।

**पाटलीयावशूकाभ्यां पारिभद्रात्तिलादपि[*3] ।**
**क्षारोदकेन[4] मदिरां त्वगेलोषकसंयुताम्[5] ॥ १४ ॥**

१ अस्मात्प्राक् "लिङ्गप्रसुषिरे सम्यग्योन्यां वा सम्प्रवेशयेत् । मूत्रदु खहरं मुख्यं कर्पूरं परिसङ्क्षिपेत् ॥" इति इ. पुस्तकेऽधिकः श्लोकः । २ 'ह्वोर्वेति वाच्यम्' सि. कौ. ।

*१ "सारसास्थि–सरसिभवप्राणिनामस्थि ॥ उपदंशो–यस्मुपदंश्यान्नं भुज्यते ।" इतीन्दुः । २ 'कटुकैला' अ. । *३ "तिलादिति तिलनालात् । इह वक्ष्यमाणं पृथक्पृथगिति सम्बध्य पृथक्पृथक् पाटल्यादीनां क्षारस्राविणोदकेन समां मदिरां त्वगेलोषणचूर्णं प्रक्षिप्य पिबेत् ।" इति श्रीकण्ठः । ४ **'क्षारोदकेन मतिमान् त्वगेलोषणचूर्णकम् । पिबेद्गुडेन मिश्रं वा लिह्याल्लेहान् पृथक् पृथक् ॥"** इति सुश्रुतपाठः । "पारिभद्रः–पर्वतनिम्बः । अन्ये पारिभद्रशब्देन कण्टकिवृक्षं रक्तकुसुमं फलभद्रसंज्ञकं [ 'पागारा' इति ख्यातं ] वदन्ति । ऊषणं–पिप्पली । पाटल्यादीनां क्षारोदकेन सह त्वगेलोषणचूर्णं पिबेत् । पाटल्यादिक्षारोदकगुडकृतान् लेहान् वा लिह्यात् । कार्तिककुण्डस्तु 'त्वगेलोषणचूर्णकम्' इत्यत्र 'त्वगेलोषणसंयुतम्' इति पठति । तत्र पाटल्यादितिलान्तानां द्रव्याणां यच्चूर्णं तत् क्षारोदकेन–मुष्ककक्षारोदकेन, पिबेत् । तत्कृतान् वा पृथक् पृथक् त्वगेलोषणसंयुतान् लेहान् गुडमिश्रितान् लिह्यादिति व्याख्यानयति । 'मतिमान्' इत्यत्र 'मदिरां' इति केचित् पठन्ति, तथा 'गुडेन मिश्रं वा' इत्यत्र 'गुडोपदंशान् वा' इति च पठन्ति, तच्च पाठद्वयमनार्षम् ।" इति डल्हणः । ५ 'वणसं' सिद्ध. ।

पिबेद्गुडोपदंशान्वा[1] लिह्यादेतान्[2] पृथक् पृथक् ।

स०—पाटलीयवक्षाराभ्यां क्षारोदकेन तथा पारिभद्रतिलक्षारोदकेन मदिरां त्वगेलोषकसयुक्ता पिबेत् । ऊषक —कल्लर । गुडोपदशान्वेति । अथवा गुडमुपदश्य एतान्—त्वगादीन्, पृथक् पृथक् लिह्यात् ।

सन्निपातात्मके सर्वं यथावस्थमिदं हितम् ॥ १५ ॥
अश्मन्यप्यचिरोत्थाने वातबस्त्यादिकेषु[3] च ।

स०—सन्निपातात्मके मूत्रकृच्छ्रे सर्वमिद—पूर्वोक्त पृथग्दोषात्मकमूत्रकृच्छ्रनिर्दिष्ट, यथावस्थं—अवस्थामपेक्ष्य, हितम् । न केवलं सन्निपातात्मके कृच्छ्रे[4] प्राङ् निर्दिष्ट पृथग्दोषात्मकमूत्रकृच्छ्रचिकित्सित हितम् । यावदश्मर्यामप्यचिरोत्थाने, अचिरकाल उत्थान—जन्म, यस्य तस्मिन् हितम् । चशब्दाद्वातबस्त्यादिकेषु मूत्राघातेषु हितम् । आदिशब्देन वातकुण्डलिकादयो गृह्यन्ते ।

अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः ॥ १६ ॥
तरुणो भेषजैः[5] साध्यः प्रवृद्धश्छेदमर्हति[6] ।

स०—अश्मरी दारुणो व्याधिरन्तकप्रतिम —तत्तुल्यो मत , शीघ्र प्राणहारित्वात् । स चाश्मरी तरुण —अचिरोत्पन्न , औषधै साध्य —साधयितुं शक्य । प्रवृद्धे पुनश्छेदन—पाटन, शस्त्रेणार्हति ।

तस्य पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ॥ १७ ॥

स०—तस्य—अश्मर्याख्यस्य व्याधे , प्राग्रूपेषु स्नेहादिक्रम इष्यते । आदिशब्द स्वेदनवमनादीनां ग्रहाय ।

अथ स्नेहमाह—
पाषाणभेदो वसुको वशिरो[7]ऽश्मन्तको[8] वरी ।
कपोतवङ्कातिबलाभल्लूकोशीरकच्छकम्[1] ॥ १८ ॥
वृक्षादनी शाकफलं व्याघ्रयौ गुण्ठस्त्रिकण्टकः ।
यवाः कुलत्थाः कोलानि वरुणः कतकात्फलम् ॥१९॥
ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम् ।
भिनत्ति वातसम्भूतां तत्पीतं शीघ्रमश्मरीम् ॥२०॥

स०—पाषाणभेदादीनां क्वाथे घृत शृतमूषकादिगणोक्तद्रव्यप्रतिवाप—तत्कल्कं सत्, पीत वातजामश्मरी भिनत्ति । वसुक —ईश्वरमल्लिका । वशिरं—सामुद्रलवणम् । अश्मन्तको—मालुकपर्ण । कपोतवङ्का—सुवर्चला । भल्लूक —श्योनाक ।

गन्धर्वहस्तबृहतीव्याघ्रीगोक्षुरकेक्षुरात् ।
मूलकल्कं पिबेद्दध्ना मधुरेणाश्मभेदनम् ॥ २१ ॥

स०—गन्धर्वहस्तादीनां समाहारद्वन्द्व , अनित्यमागमशासनमिति तु प्रकृतम् । एरण्डादीनां द्रव्याणां यन्मूल तत्कल्कीकृत्य मधुरेण दध्ना पिबेदश्मभेदनम्,—प्रकृतत्वाद्वाताश्मरीभेदन गम्यते ।

कुशः काशः शरो गुण्ठ इत्कटो मोरटोऽश्मभित् ।
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः ॥ २२ ॥
भल्लूकः पाटली पाठा पत्तूरः सकुरण्टकः ।
पुनर्नवे शिरीषश्च तेषां क्वाथे पचेद्घृतम् ॥ २३ ॥
पिष्टेन त्रपुसादीनां बीजेनेन्दीवरेण च ।
मधुकेन शिलाजेन तत्पित्ताश्मरिभेदनम् ॥ २४ ॥

स०—कुशादीनां क्वाथे त्रपुसादीनां—पूर्वोक्तानां( श्लो ७ ) त्रपुसैर्वारुलर्द्वानां, बीजेन नीलोत्पलबीजेन मधुकेन च पिष्टेन शिलाजतुना च घृत पचेत् । तत्पित्ताश्मरीभेदनं भवति । शोधनादिगणसङ्ग्रहोक्तास्तु (हृ. सू अ १५।१ ) त्रपुसादयोऽत्र न गृह्यन्ते, तदन्त पातिना पित्तविरोधिना सर्पिरा(सर्षपा)दीनां द्रव्याणां तत्र पाठात् ।

वरुणादिः समीरघ्नौ गणावेलाहरेणुका ।
गुग्गुलुर्मरिचं कुष्ठं चित्रकः ससुराह्वयः ॥ २५ ॥
तैः कल्कितैः कृतावापमूषकादिगणेन च ।
भिनत्ति कफजामाशु साधितं घृतमश्मरीम् ॥ २६ ॥

स०—"वरुणसैर्यक" ( हृ सू अ १५।२१ ) इत्यादिर्वरु-

१ एतानिति पाटल्यादिक्षारान् । तथा चोक्तं सङ्ग्रहे (चि अ १३)—"तिलपाटलीपारिभद्रयावशूकक्षारोदकानुविद्धा वा त्वगेलोषकचूर्णयुक्ता प्रसन्नाम् । तिलादीनां वा पृथक् क्षार गुडोपदशमश्नीयात् ।" इति । अरुणदत्तव्याख्यान त्वयुक्तमिति प्रतिभाति । २ 'रां कृत्वा त्वगे' ट. । ३ 'केष्वपि' अ । ४ 'च्छ्रे, अश्मर्यां' ड । ५ 'भेषजै' ट. । ६ 'द्वस्तु छेद' ट । ७ "वशिरो—मर्कटसञ्ज्ञस्तृणजातिविशेष , सूर्यावर्तभेद इत्यन्ये ।" इति डल्हण । "वशिर.—सूर्यावर्त ।" इति चक्रः । वशिरः—अपामार्ग , "वशीरश्च परानपुष्पी कण्टी मर्कटपिप्पली ।" इति राजनिघण्टूक्तेर्धन्वन्तरिनिघण्टूक्तेश्च । अरुणदत्तव्याख्यान तु वशिरमिति नपुसकपद प्रकल्प्य "सामुद्र यत्तु लवणमक्षीव वशिर च तत ।" इत्यमर चाश्रित्य कृतमतोऽप्ययुक्तमिति प्रतिभाति । ८ "अश्मन्तको—अम्ललोटः कोविदारसदृशपत्रक. ।" इति डल्हण. ।

१ "कपोतवङ्का—कटभीसदृशपत्रो विटपी मध्यदेशे प्रसिद्ध । कच्चको—मध्यलेखानिचित ऋजुकपत्र ईषद्रक्तमूल 'कवहक' इति मालवके प्रसिद्ध., अन्ये तु कच्चकस्थाने 'ककुभ' इति पठन्ति, स च प्रसिद्ध । कतकफल—अम्बुप्रसादन शशकशुष्कपुरीषप्रतिमम् ॥ पत्तूर —शरबालिका ।" इति डल्हण । "इत्कट —शरविशेष । पत्तूरो—मत्स्याक्षक ।" इतीन्दु । "मोरट —इक्षुमूलम् । पत्तूर —शालिञ्च ।" इति शिवदास । २ 'कन्तकम्' इ । 'कच्चकम्' स मु । 'केम्बुकम्' स मू. । "कच्छुरम्" स.स. । "कच्छुर—तुनिक रङ्गद्रव्यम् ।" इतीन्दु । ३ 'दन चात्र प्र' ड. । ४ 'द्वानां' ट.ड. ।

णादिर्गण, समीरघ्नौ गणौ—"वीरतरादि (हृ सू अ १५।२४), तथा विदार्यादि (हृ. सू अ १५।९), एतैर्वरुणादिभिर्द्रव्यै कल्कीकृतैस्तथोषकादिगणेन—'ऊषकस्तुत्थक" (हृ सू अ १५। २३) इत्यादिना, कृतावाप—कल्कवत्कृला, घृत साधितमाशु कफजामश्मरीं हन्ति ।

**क्षारक्षीरयवाग्वादि द्रव्यैः स्वैः स्वैश्च कल्पयेत् ।**

स०—क्षारादि च स्वै स्वै—तद्योग्यैर्द्रव्यै कल्पयेत् ।

**पिचुकाङ्कोल्लकतकशाकेन्दीवरजैः फलैः ॥ २७ ॥**
**पीतमुष्णाम्बु सगुडं शर्करापातनं परम् ।**

स०—पिचुकादिभिरुष्णाम्बु सगुड पीत शर्कराया परं शातनम् । पिचुक—शितिवारक ।

**क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालपत्रिका ॥ २८ ॥**
**अजमोदा कदम्बस्य मूलं विश्वस्य चौषधम् ।**
**पीतानि शर्करां भिन्द्युः सुरयोष्णोदकेन वा ॥ २९ ॥**

स०—क्रौञ्चास्थ्यादीनि पीतानि सुरयोष्णजलेन वा शर्करा हन्यु ।

**नृत्यकुण्डकबीजानां चूर्णं माक्षिकसंयुतम् ।**
**अविक्षीरेण सप्ताहं पीतमश्मरिपातनम् ॥ ३० ॥**

स०—तुम्बरीबीजानां चूर्णं माक्षिकान्वितमविक्षीरेण सप्ताह पीतमश्मरिपातनम् । अत्राश्मरीशब्दस्य "ङ्यापो सञ्ज्ञाछन्दसो" इति ह्रस्व ।

**क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिपातनः ।**

स०—सोभाञ्जनकमूलक्वाथश्च कोष्ण पीतोऽश्मरिपातन ।

**तिलापामार्गकदलीपलाशयवसम्भवः ॥ ३१ ॥**
**क्षारः पेयोऽविमूत्रेण शर्करास्वश्मरीषु च ।**

स०—तिलादिसम्भव क्षारोऽविमूत्रेण शर्करास्वश्मरीषु च विषये पेय ।

**कपोतवङ्कामूलं वा पिबेदेकं सुरादिभिः ॥ ३२ ॥**
**तत्सिद्धं वा पिबेत्क्षीरं वेदनाभिरुपद्रुतः ।**
**हरीतक्यस्थिसिद्धं वा साधितं वा पुनर्नवैः ॥ ३३ ॥**
**क्षीरान्नभुग्बर्हिशिखामूलं वा तण्डुलाम्बुना ।**

स०—कपोतवङ्काया मूल केवल सुरोष्णजलादिभि पिबेत् । तया—कपोतवङ्कया, सिद्ध—शृत, वा क्षीर वेदनोपद्रुत पिबेत् । हरीतक्यस्थिभि सिद्ध वा क्षीरमथवा पुनर्नवपक्व क्षीर पिबेत् । मयूरशिखामूल तण्डुलाम्भसा पिबेत् । किम्भूत? क्षीरान्नाशी सन् ।

**मूत्राघातेषु विभजेदतः शेषेष्वपि क्रियाम् ॥ ३४ ॥**

स०—अत—अस्मात्पूर्वोक्ताच्चिकित्सितात्, यथायोग शेषेष्वपि मूत्राघातेषु—मूत्रातीतादिष्वपि, क्रिया विभजेत्—निरूप्य कुर्यात् ।

**बृहत्यादिगणे सिद्धं द्विगुणीकृतगोक्षुरे ।**
**तोयं पयो वा सर्पिर्वा सर्वमूत्रविकारजित् ॥ ३५ ॥**

स०—बृहत्यादिगणे द्विगुणीकृतगोक्षुरे जल पक्व क्षीरं वा सर्पिर्वा सर्वान् मूत्रविकारान् जयति ।

**देवदारु घनं मूर्वा यष्टीमधु हरीतकीम् ।**
**मूत्राघातेषु सर्वेषु सुराक्षीरजलैः पिबेत् ॥ ३६ ॥**

स०—देवदार्वादीन् सुरादीनामन्यतमेन सर्वेषु मूत्राघातेषु पिबेत् ।

**रसं वा धन्वयासस्य कषायं ककुभस्य वा ।**
**सुखाम्भसा वा त्रिफलां पिष्टां सैन्धवसंयुताम् ॥ ३७ ॥**
**व्याघ्रीगोक्षुरकक्वाथे यवागूं वा सफाणिताम् ।**
**क्वाथे वीरतरादेर्वा ताम्रचूडरसेऽपि वा ॥ ३८ ॥**
**अद्याद्वीरतराद्येन भावितं वा शिलाजतु ।**

स०—धन्वयवासकस्य रस वा ककुभस्य क्वाथ वा त्रिफलामुष्णोदकेन पिष्टा सैन्धवान्विता वा पिबेत् । कण्टकारिकागोक्षुरक्वाथसिद्धा वा यवागू सफाणिता पिबेत् । वीरतरादे क्वाथे वा सिद्धा पेया पिबेत् । अथवा, ताम्रचूडस्य—कुक्कुटस्य, मासरसे सिद्धां पेया पिबेत् । शिलाजतु वीरतराद्येन वा गणेन भावितमद्यात् ।

**मद्यं वा निगदं पीत्वा रथेनाश्वेन वा व्रजेत् ॥ ३९ ॥**
**शीघ्रवेगेन सङ्क्षोभात्तथाऽस्य च्यवतेऽश्मरी ।**

स०—अथवा, पुराण मद्य पीत्वा रथेन वाऽश्वेन वा शीघ्रवेगेन गच्छेत् । तथा—तेन प्रकारेण, सङ्क्षोभितस्य तस्याश्मरी च्यवते ।

**सर्वथा चोपयोक्तव्यो वर्गो वीरतरादिकः ॥ ४० ॥**

---

१ 'सघृत' अ । २ 'बिल्वस्य' इति क्वचित् । ३ 'नित्यकोरण्डबीज' स सं । "नृत्यकुण्डो—मल्लिका" इतीन्दु । 'भृङ्गकण्टकबीज' 'कतकबीज' सं.मू. । 'त्रिकण्टकस्य बीजानां' चक्र वृन्द. स.सु. । "त्रिकण्टको—गोक्षुरक । अन्ये तु 'मर्कटकस्य बीजानां' इति पठन्ति 'मकरा' इति लोके । अपरे 'अनर्तकस्य बीजानां' इति पठन्ति, तत्रापि स एवार्थ ।" इति डल्हण । ४ 'ण्डलबी' अ । ५ 'हन्त्यश्मरीमेदनं पिबेत्' स सु. । 'हृ पिबेदश्मरिनाशनम्' चक्र. । ६ 'वेदम्लैः सुरा' स सु. । "अम्लै.—काञ्जिकादिभि । सुरादिभि—सुरासौवीरकमैरेयकमेदकै ।" इति डल्हणः ।

१ 'हरीतक्यादिसिद्धं' स सु । "हरीतक्यादि:—त्रिफला, तत्सिद्ध क्षीर पित्तजाश्मरीवेदनाभिरुपद्रुत, वातकफजाश्मरीवेदनाभि[रुप]द्रुतस्तु पुनर्नवामूलसिद्ध पय पिबेत् ।" इति डल्हण । २ 'निगंदं' अ.स.मू. । ३ 'स्य तस्मात्तस्य साऽश्मरी' ड. ।

रेकार्थं तैल्वकं सर्पिर्बस्तिकर्म च शीलयेत् ।
विशेषादुत्तरान् बस्तीन्

स०-[सर्वथा-] सर्वेण च प्रकारेण क्वाथपेयाजलादिषु, वीरतरादिको योज्य । विरेचनार्थं तैल्वक-"शम्याकेन" (हृ चि अ ३।१५२) इत्यादिना साधित सर्पिरुपयोक्तव्यम् । तथा, बस्तिकर्म-"प्राक् स्नेह एक" ( हृ सू अ १९।६३ ) इत्यादिक शीलयेत् । विशेषेणोत्तरबस्तीनभ्यसेत् ।

शुक्राश्मर्यां तु शोधिते ॥ ४१ ॥
तैर्मूत्रमार्गे बलवान् शुक्राशयविशुद्धये ।
पुमान् सुतृप्तो वृष्याणां मांसानां कुक्कुटस्य च ॥४२॥
कामं सकामा· सेवेत प्रमदा मददायिनी ।

स०-शुक्राश्मर्यां च तै -उत्तरबस्तिभि , मूत्रमार्गे शोधिते सति पुमान् वृष्याणा द्रव्याणा कुक्कुटस्य मासाना च सुहित सन् यथेच्छ मददायिनी प्रमदा सेवेत शुक्राशयविशुद्धये । कुक्कुटस्य वृष्यत्वेनैव सिद्धे ग्रहणेऽतिशयेन कुक्कुटस्यात्र पथ्यत्व-मिति ज्ञापनार्थं [पुन ]उपादानम् ।

सिद्धैरुपक्रमैरेभिर्न चेच्छान्तिस्तदा भिषक् ॥ ४३ ॥
इति राजानमापृच्छ्य शस्त्रं साध्ववचारयेत् ।

स०-एभि -पूर्वोक्तै , उपक्रमै सिद्धै -अश्मरीहरै , यदि शमो न स्यात्, तदेति राजानमापृच्छ्याश्मर्याहरण शस्त्रं साध्ववचारयेत् ।

किमापृच्छ्य[1] इत्याह—

अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥४४॥
निश्चितस्यापि वैद्यस्य बहुशः सिद्धकर्मणः ।

स०-हे नृपते जातव्याधावक्रियाया-चिकित्सा विना, ध्रुव -अवश्य, मृत्यु स्यात् । अपर च क्रियाया-चिकित्साया क्रियमाणाया, निश्चितस्यापि-शास्त्रार्थविदोऽपि, वैद्यस्य तथा बहुश -अनेकश , सिद्धकर्मणो-निष्पन्नक्रियाक्रमस्यापि, सशयो भवेत्-कदाचिज्जीवति न वा, एवप्रकारेण राजानमापृच्छ्य ।

अथातुरमुपस्निग्धशुद्धमीषच्च कर्शितम् ॥ ४५ ॥
अभ्यक्तस्विन्नवपुषमभुक्तं कृतमङ्गलम् ।
आजानुफलकस्थस्य नरस्याङ्के व्यपाश्रितम् ॥ ४६ ॥
पूर्वेण कायेनोत्तानं निषण्णं वस्त्रचुम्भले ।
ततोऽस्याकुञ्चिते जानुकूर्परे वाससा दृढम् ॥ ४७ ॥
सहाश्रयमनुष्येण बद्धस्याश्वासितस्य च ।
नाभेः समन्तादभ्यज्यादधस्तस्याश्च वामतः ॥ ४८ ॥

मृदित्वा मुष्टिनाऽऽक्रामेद्यावदश्मर्यधोगता ।
तैलाक्ते वर्धितनखे तर्जनीमध्यमे तत· ॥ ४९ ॥
अदक्षिणे गुदेऽङ्गुल्यौ प्रणिधायानुसेवनि ।
आसाद्य बलयत्नाभ्यामश्मरीं गुदमेढ्रयो· ॥ ५० ॥
कृत्वाऽन्तरे तथा बस्तिं निर्वलीकमनायतम् ।
उत्पीडयेदङ्गुलिभ्यां यावद्ग्रन्थिरिवोन्नतम् ॥ ५१ ॥
शल्यं स्यात्सेवनीं मुक्त्वा यवमात्रेण पाटयेत् ।
अश्ममानेन न यथा भिद्यते सा तथाऽऽहरेत् ॥ ५२ ॥
समग्रं सर्पवक्त्रेण, स्त्रीणां बस्तिस्तु पार्श्वगः ।
गर्भाशयाश्रयस्तासां शस्त्रमुत्सङ्गवत्ततः ॥ ५३ ॥
न्यसेदतोऽन्यथा ह्यासां मूत्रस्रावी व्रणो भवेत् ।
मूत्रप्रसेकक्षणनान्नरस्याप्यपि चैकधा ॥ ५४ ॥
बस्तिभेदोऽश्मरीहेतु· सिद्धिं याति न तु द्विधा ।

स०-अथ-राजपृच्छनादनन्तरम्, आतुरमुपस्निग्धादिरूप कृत्वा ततोऽस्य नाभेरधोऽभ्यज्यात् । पूर्वमुपस्निग्ध पश्चाच्छुद्धस्तमुपस्निग्धशुद्धम् । तथा, मनाक् कर्शितम् । तथा, अभ्यक्तस्विन्नशरीर च । तथा, अभुक्त-अकृताहारम् । तथा, कृतमङ्गल-विहितस्वस्त्ययनम् । तथा, नरस्यान्यस्याङ्कमाश्रितम् । किम्भूतस्य[2] आजानुफलकस्थस्य । फलक -आसनविशेष , आजानु-जानुप्रमाणो य फलकस्तस्मिन् स्थितस्य । तथा, पूर्वेण कायेनोत्तानम् । तथा, वस्त्रचुम्भले निषण्णम् । चुम्भल -तृणमयो घटादीना चलनरक्षणार्थमाधारविशेषो य क्रियते स उच्यते, तथारूपो वस्त्रमयचुम्भलो वस्त्रचुम्भल ,-वस्त्र वेष्टयित्वा कृत आसनविशेष , तस्मिन्नुपविष्टम् । [ ततोऽस्य- ] तथाभूतस्यानन्तर, आकुञ्चिते-ईषत्कुटिलीकृते, जानुकूर्परे सति । जानुनी च कूर्परे च जानुकूर्पर, तस्मिन् । तथा, आश्रयमनुष्येण सह वाससा सूत्रैर्वा बद्धस्य-दृढ कृत्वा एवंयन्त्रितस्य, आश्रयश्चासौ मनुष्यश्च । कस्याश्रय ? प्रकृतत्वादातुरस्य, तमाश्रित्यातुरस्य स्थितत्वात् । तथा, आश्वासितस्य-निरामयो भवसीत्येवप्रायाभिर्वाग्भि शीतपवनादिभिश्च सान्त्वितस्य । ततो नाभेरध समन्तात्-परित , अभ्यज्यात् । तस्याश्च-नाभे , वामतो-वामपार्श्वे, मृदित्वा मुष्टिनाऽऽक्रामेत्-पीडयेत्, तावद्यावदश्मर्यधो गता-अध· प्रतिपन्ना । तत -अनन्तर, अदक्षिणे-वामे, तर्जनीमध्याङ्गुल्यौ वर्धितनखे तथा तैलाभ्यक्ते कृत्वा गुदे प्रणिधायानुसेवनि । अनन्तरं बलयत्नाभ्या आसाद्य-अश्मरीं

१ तैल्वक-वातव्याधिचिकित्सिते (चि अ २१।३२) वर्णित ग्राह्यम्, विषयेऽस्मिन् चि अ १३।२४ इत्यत्र कृतो विस्तरश्च द्रष्टव्य । २ 'च' इति क्वचित् । ३ 'हणमति' ट.ड. । ४ 'स्ततोभि' इ.स.द. । ५ 'स्निग्ध शु' अ इ । ६ 'कर्षितम्' इति क्वचित् । ७ "कर्शनेन ह्यश्मरी सुखसञ्चार्या भवति ।" इतीन्दु. ।

१ 'वनीम्' इति क्वचित् । २ "उत्सङ्गो-मुखमूले शस्त्रपीठिका, ययाऽवरुद्धप्रवेश शस्त्र मूत्रस्रावव्रणकरणायासमर्थं भवति । मूत्रप्रसेकक्षणनात्-मूत्रस्रोतस· शस्त्रेण स्पर्शात्" इतीन्दु । "उत्सङ्गवदिति ऊर्ध्वं सङ्ग स यस्यास्तीति तदुत्सङ्गवत्, उत्तानमित्यर्थ । अन्यथेति यदाऽवगाढ शस्त्रपात स्यात्तदा बहिर्गत त्वङ्मास भित्वा बस्तित्वचा सह भगवस्तुबस्तिपार्श्वाश्रयस्य गर्भाशयस्यापि त्वचो भेद· स्यात्, ततस्तासा भगान्तर्गतो मूत्रस्रावी व्रण· स्यादित्यर्थ· । क्षणनात्-छेदनात् ।" इति डल्हण· । ३ 'सा बद्ध' ट· ।

प्राप्य, गुदमेढ्रयोरन्तरे-मध्ये कृत्वा, कथम्? कृत्वा-तत्र नीत्वा, तथा बस्तिं निर्वलिकं कृत्वा, तथा तमनायत-अविस्तीर्णं सन्निवेश्य, अनन्तरमङ्गुलिभ्यां-वामहस्ततर्जनीमध्यमाभ्यां, प्रकृतत्वादश्मरीमुत्पीडयेत् । तावद्यावच्छल्य-अश्मर्याख्य, ग्रन्थिरिवोन्नत स्यात् । अनन्तर सेवन्या वामपार्श्वे सेवनी यवमात्रेण त्य(मु)क्त्वा-वर्जयित्वा, पाटयेच्छस्त्रेण । कियन्मात्रम्? अश्ममानेन,-अश्मरीप्रमाणेन, न तु ततोऽधिकमून वा । व्रण च कृत्वाऽश्मरी समग्र-निरवशेष यथा भवत्येव, सर्पफणवद्वक्रेण यन्त्रेणाहरेत्,-तथा चाकर्षेद्यथा सा ह्रियमाणा न भिद्यते । भिन्ना हि पुनर्वृद्धिमियात् । स्त्रीणा तु बस्ति पार्श्वतो भवन् गर्भाशयाश्रयो यस्मात्तत उत्सङ्गवदध शस्त्र न्यसेत्-पातयेत् । अत -अस्माच्छस्त्रपातनविधानात्, अन्यथाऽश्मर्याहरणार्थं शस्त्रपातनेन मूत्रस्रावी व्रणो भवेत् । न केवल स्त्रीणा मूत्रप्रसेकक्षणनान्मूत्रस्रावी व्रणो भवेत् । यावद् दीर्घकालानुबन्धी मूत्रप्रसेकक्षणनान्नरस्यापि । अपि च-अन्यच्च, एकधा-एकतो, बस्तिभेदोऽश्मरीहेतु -तन्निमित्त, सिध्यति क्रियाभ्यासान्नित्यमतिवृद्धत्वाच्च शल्यस्येति, न तु सहसा शस्त्राद्यभिघातहेतुज एकतो भिन्नोऽपि बस्ति सिध्यति । मर्मविभागेऽप्यवादीत् (हृ शा अ ४।१०)-"धनुर्वक्रो बस्ति सद्यो निहन्ति" इति । अश्मरीहेतुरपि यो बस्तिभेदो द्विधा-उभयत, सोऽपि न सिध्यति, व्रणस्वभावात् ।

**विशल्यमुष्णपानीयद्रोण्यां तमवगाहयेत् ॥ ५५ ॥**
**तथा न पूर्यतेऽस्रेण बस्तिः, पूर्णे तु पीडयेत् ।**
**मेढ्रान्तः क्षीरिवृक्षाम्बु**

स०-विशल्य-निर्गताश्मरीक, उष्णपानीयद्रोण्या त-आतुर, अवगाहयेत् । तथा-तेनावगाहनेन, बस्तिरस्रेण न पूर्यत । एवमपि कृते दैवादस्रेण तु पूर्णे बस्तौ क्षीरिवृक्षाम्बु मेढ्रान्त -मेढ्रे, पीडयत् । क्षीरिवृक्षकषायेणोत्तरबस्तिं दद्यादित्यर्थ । न्यग्रोधोदुम्बराश्वत्थकपीतनप्लक्षा -क्षीरिण ।

**मूत्रसंशुद्धये ततः ॥ ५६ ॥**
**कुर्याद्गुडस्य सौहित्यं मध्वाज्याक्तव्रणः पिबेत् ।**
**द्वौ कालौ सघृता कोष्णा यवागूं मूत्रशोधनैः ॥५७॥**
**त्र्यहं, दशाहं पयसा गुडाढ्येनाल्पमोदनम् ।**
**भुञ्जीतोर्ध्वं फलाम्लैश्च रसैर्जाङ्गलचारिणाम् ॥ ५८ ॥**

स०-तत -अनन्तर, मूत्रस्य सशुद्ध्यर्थं गुडस्य सौहित्य-तृप्तिं, कुर्यात् । ततो मध्वाज्याक्तव्रणो नरो द्वौ कालौ [ मूत्रशोधनै -] त्रपुसैर्वारुकूष्माण्डगोक्षुरादिभि कृता, यवागू सघृता कोष्णा त्र्यह पिबेत् । अनन्तर दशाह गुडाढ्येन-बहुगुडेन, क्षीरेणाल्पमोदनमद्यात् । उर्ध्व-दशाहादनन्तरं, जाङ्गलचारिणा प्राणिना रसैर्मांसरसोदन च मात्रया भुञ्जीत । फलाम्लैरिति कोलदाडिमाद्यम्लै, न तु मस्तुकाञ्जिकाद्यम्लैरित्यर्थ ।

**क्षीरिवृक्षकषायेण व्रणं प्रक्षाल्य लेपयेत् ।**
**प्रपौण्डरीकमञ्जिष्ठायष्ट्याह्वनयनौषधैः ॥ ५९ ॥**
**व्रणाभ्यङ्गे पचेत्तैलमेभिरेव निशान्वितैः ।**

स०-क्षीरिवृक्षकषायेण व्रण प्रक्षाल्य प्रपौण्डरीकादिभिर्लेपयेत् । नयनौषध-पट्टिकारोध्रम् । एभिरेव-प्रपौण्डरीकादिभि, हरिद्रान्वितैर्व्रणाभ्यङ्गविषये तैल पचेत् ।

**दशाहं स्वेदयेच्चैनं, स्वमार्गं सप्तरात्रत ॥ ६० ॥**
**मूत्रे त्वगच्छति दहेदश्मरीव्रणमग्निना ।**
**स्वमार्गप्रतिपत्तौ तु स्वादुप्रायैरुपाचरेत् ॥ ६१ ॥**
**तं बस्तिभिः**

स०-एन च व्रण दशाह स्वेदयेत् । स्वेदनादनन्तर तु-पुन, सप्तरात्रेण स्वमार्ग मूत्रेऽगच्छति सत्यश्मरीव्रणमग्निना दहेद्वैद्य इति । मूत्रस्य स्वमार्गप्रतिपत्तौ सत्या त-आतुर, स्वादुप्रायै -मधुरभूयिष्ठद्रव्यसाधितै, बस्तिभि -उत्तरबस्त्यादिभेदभिन्नै, उपाचरेत्-उपक्रमेत् ।

**न चारोहेद्वर्षं रूढव्रणोऽपि सः ।**
**नगनागाश्ववृक्षस्त्रीरथान्नाप्सु प्लवेत च ॥ ६२ ॥**

स०-रूढव्रणोऽपि [स -] अश्मर्यातुरो, वर्ष यावन्नगादीन्नारोहेत् । अप्सु च न प्लवेत ।

**मूत्रशुक्रवहौ बस्तिवृषणौ सेवनीं गुदम् ।**
**मूत्रप्रसेकं योनिं च शस्त्रेणाष्टौ विवर्जयेत् ॥ ६३ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचिता-**
**यामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सित-**
**स्थाने मूत्राघातचिकित्सितं नामै-**
**कादशोऽध्यायः ॥ ११ ॥**



स०-अश्मरीव्रणावसरे तदर्थमन्यार्थमपि मूत्रवहादीनि [अष्टौ] मर्माणि शस्त्रेण वर्जयेत् । तत्र मूत्रवहस्रोतश्छेदान्मूत्रपूर्णबस्तेर्मरण स्यात्, शुक्रवहस्रोतश्छेदान्मरण क्लैब्यं वा, बस्तिगुदच्छेदात्सद्यो मरणम्, वृषणस्रोतश्छेदात् ध्वजभङ्ग, सेवनीयोनिच्छेदाद्रुजाप्रादुर्भाव, मूत्रप्रसेकस्रोतश्छेदान्मूत्रप्रस्रवणमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने मूत्राघातचिकित्सित नामैकादशोऽध्याय समाप्त ॥ ११ ॥

१ 'वक्रेण' ट । २-३ 'पातवि' 'पातेन' ट । ४ "क्रियाभ्यासाच्छास्त्रविहितच्छेदान्निष्यन्दपरिवृद्धत्वाच्च शल्यस्येति ।" इति सङ्ग्रहे सुश्रुते च । ५ 'मेढ्रतः' अ. इ. । 'मेढ्रेऽन्त' अ. ।

१ "दशरात्र चैनमप्रमत्त स्वेदयेत् स्नेहेन द्रवस्वेदेन वा ।" इति सुश्रुत. । २ 'चैव' अ । 'चैव' इ । ३ 'एव व्रण' ट. । ४ 'त्रे नाग' ट । ५ 'ध्वजाम' ट. । "ध्वजभङ्गो-मेढ्रस्यास्तब्धता" इतीन्दु ।




मूत्राघातचिकित्सितादनन्तरं प्रमेहचिकित्सितव्याख्यानमुपक्रम्यते।

**अथातः प्रमेहचिकित्सितं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**
(गद्यसूत्रे ॥ २ ॥)

स०-सम्बन्धश्चास्य पूर्ववद्बोध्य।

**मेहिनो बलिनः कुर्यादादौ वमनरेचने।**
**स्निग्धस्य सर्षपारिष्टनिकुम्भाक्षकरञ्जजैः ॥ १ ॥**
**तैलैस्त्रिकण्टकाद्येन यथास्वं साधितेन वा।**
**स्नेहेन मुस्तदेवाह्वनागरप्रतिवापवत् ॥ २ ॥**
**सुरसादिकषायेण दद्यादास्थापनं ततः।**
**न्यग्रोधादेस्तु पित्तार्तं रसैः शुद्धं च तर्पयेत् ॥ ३ ॥**

स०-बलवतो मेहिन पुसोऽपरेभ्य उपक्रमेभ्यस्तत्तयोग्येभ्य प्रथम वमनविरेचने कुर्यान्मेहक्लेदप्रशमनाय। किम्भूतस्य[2] सर्षपादिजैस्तैलै स्निग्धस्य, त्रिकण्टकाद्येन वा स्नेहेन स्निग्धस्य, "त्रिकण्टकनिशारोध्र" (श्लो १७) इत्यादिस्नेहो वक्ष्यमाण, यथास्व दोषसात्म्यादिवशाद् द्रव्यैः साधितेन वा स्नेहेन स्निग्धस्य। ततो-वमनविरेचनकरणादनन्तर जातबलाय मेहिने, "सुरसयुग" (हृ सू अ १५।३०) इत्यादे सम्बन्धिना कषायेणास्थापन दद्यात्। किम्भूतम्[?] मुस्तादिप्रतिवापवत्। स प्रतिवापो विद्यते यस्य तदेवम्। पित्तले पुन "न्यग्रोधपिप्पल" (हृ सू अ १५।४१) इत्यादे कषायेणास्थापन दद्यात्। प्रतिवापान्तरानिर्देशादत्र पूर्वोक्त एव प्रतिवापो योज्य। अनन्तर शुद्ध प्रमेहिण रसैस्तर्पयेत्। यद्यपि रसैरिति सामान्यनिर्देशात्रिविधदेशसञ्जातप्राणिमासरसैस्तर्पण प्राप्त तथाऽपि योग्यतावशात् जाङ्गलप्राणिमांसरसैस्तर्पयेदिति बोध्यम्, न त्वानूपादिमांसरसैरिति। तेषा मेदोमूत्रकफावहत्वेन व्याधिवर्धनहेतुत्वात्।

**मूत्रग्रहरुजागुल्मक्षयाद्यास्त्वपतर्पणात्।**
**ततोऽनुबन्धरक्षार्थं शमनानि प्रयोजयेत् ॥ ४ ॥**

स०-यतोऽपतर्पणान्मूत्रग्रहादीनि जायन्ते ततो हेतोरनुबन्धरक्षार्थं शमनानि प्रयोजयेत्। अन्यथा प्रमेह उपशान्तोऽपि निदानलेशमासाद्य पुनः प्रादुर्भवेत्। ननु, मूत्रग्रहादीन्येतावदस्तु शेषा आदिशब्देनैव ग्रहीष्यन्ते। किं मूत्रग्रहरुजागुल्मक्षयाद्या इति? सत्यम्। मूत्रग्रहरुजागुल्मक्षया यथाऽवश्यमपतर्पणात् प्रमेहिणो जायन्ते तथा नापरे तज्जातीया इति।

**असंशोध्यस्य तान्येव सर्वमेहेषु पाययेत्।**

स०-असशोध्यो-वमने गर्भिण्यादि, विरेके नवज्वरादि, एतस्यासशोध्यस्य तान्येव-शमनानि, सर्वेषु प्रमेहेषु पाययेत्। एवेत्यवधारणे, न तु शोधनादिरूपमित्यर्थ।

तान्येवाह—

**धात्रीरसप्लुतां प्राह्णे हरिद्रां माक्षिकान्विताम् ॥ ५ ॥**
**दार्वीसुराह्वत्रिफलामुस्ता वा क्वथिता जले।**
**चित्रकत्रिफलादार्वीकलिङ्गान् वा समाक्षिकान् ॥ ६ ॥**
**मधुयुक्तं गुडूच्या वा रसमामलकस्य वा।**

स०-आमलकीरसालोडिता हरिद्रा समाक्षिका प्रभाते पाययेत्। दार्वीदेवदारुवरामुस्ता जले क्वथिता वा पाययेत्। चित्रकादीन् वा क्वथितान् समाक्षिकान् पाययेत्। समाक्षिक गुडूचीरस धात्रीरस वा।

**रोध्राभयातोयदकट्फलानां**
**पाठाविडङ्गार्जुनधन्वनानाम्।**
**गायत्रिदार्वीकृमिहृद्धवानां**
**कफे त्रयः क्षौद्रयुताः कषायाः ॥ ७ ॥**
**उशीररोध्रार्जुनचन्दनानां**
**पटोलनिम्बामलकामृतानाम्।**
**रोध्राम्बुकालीयकधातकीनां**
**पित्ते त्रयः क्षौद्रयुताः कषायाः ॥ ८ ॥**

स०-रोध्रादीना श्लोकपादोक्ताना कषाया क्षौद्रयुतास्त्रयः कफे हिता। एवमुशीरादीना माक्षिकान्विता कषायास्त्रयः पित्ते हिता। उपजातिवृत्ते।

**यथास्वमेभिः पानान्नं यवगोधूमभावनाः ॥ ९ ॥**

स०-एभी रोध्रादिभिर्यथायोग पानमन्न च कल्पयेत्। यवगोधूमभावनाश्च कल्पयेत्।

**वातोल्बणेषु स्नेहांश्च प्रमेहेषु प्रकल्पयेत्।**

स०-वाताधिकेषु प्रमेहेषु स्नेहाश्च तैरेव कल्पयेत्। न केवलमन्नभावना।

**अपूपसक्तुवाट्यादिर्यवानां विकृतिर्हिता ॥ १० ॥**
**गजाश्वगुदमुक्तानामथवा वेणुजन्मनाम्[1]।**
**तृणधान्यानि मुद्गाद्याः शालिर्जीर्णः सषष्टिकः ॥ ११ ॥**
**श्रीकुक्कुटोऽम्लः खलकस्तिलसर्षपकिट्टजः।**
**कपित्थं तिन्दुकं जम्बूस्तत्कृता रागषाडवाः ॥ १२ ॥**
**तिक्तं शाकं मधु श्रेष्ठा भक्ष्याः शुष्काः ससक्तवः।**

१ 'असादनन्तर' ट। २ 'क्रमते' ट.। ३ इद प्रमेहचिकित्सित चरके चि० ६ अध्याये, सुश्रुते चि० ११।१२।१३ अध्यायेषु, अष्टाङ्गसङ्ग्रहे चि०१४ अध्याये चास्ति वर्णितम्। ४ 'त्तार्तं र' इ.। ५ 'रसैरपि।' ट.। ६ 'ब्देन ग्र' ड.।

१ 'वनाम्' अ.। 'वनम्' इ.। २ 'वनाम्' ट.ड।

**धन्वमांसानि शूल्यानि परिशुष्काण्ययस्कृतिः ॥१३॥**
**मध्वरिष्टासवा जीर्णाः सीधुः पक्करसोद्भवः ।**
**तथाऽसनादिसाराम्बु दर्भाम्भो माक्षिकोदकम् ॥१४॥**

स०–यवाना विकृतिरपूपादि प्रमेहे हिता । अथवा, यवाना गजाश्वगुदमुक्तानामपूपादिविकृतिर्हिता । वेणुजाना वा यवाना विकृतिर्हिता । तृणधान्यानि–नीवारश्यामाकादीनि, तथा मुद्गाद्यास्तथा पुराणशालि षष्टिकश्चेति हितानि । श्रीकुक्कुटसञ्ज्ञोऽम्ल खलको हित । किम्भूत [1] तिलसर्षपकिट्टज ,–तिलसर्षपपिण्याकजन्मा तदुपादानकारणो न मुद्गाद्युपादानकारण , स च मालवकेषु प्रसिद्ध , आर्द्रकशकलनिस्तुषगोधूमादिना च क्रियते । तथा, कपित्थादयो हिता । तै –कपित्थादिभि , कृता रागा षाडवाश्च हिता । तिक्तशाकादीनि च हितानि । श्रेष्ठा–त्रिफला । शूल्यानीति शूले पक्वानि । "शूलात्पाके" ("शूलोखाद्यत्") इति यत् । तानि च सुपक्वत्वात् परिशुष्काणि । तथा, अयस्कृति –वक्ष्यमाणा ( श्लो २९ ) । तथा, मध्वादय पुराणा । पक्करसज सीधु । तथा, असनादिसारवर्गस्याम्भो ( सु सू अ १५।१९ ) दर्भजल माक्षिकोदक च हितम् ।

**वासितेषु वराक्काथे शर्वरीं शोषितेष्वहः ।**
**यवेषु सुकृतान् सक्तून् सक्षौद्रान् सीधुना पिबेत् १५**

स०–तथा, यवेषु सुकृतान् सक्तून् कृत्वा सक्षौद्रान् सीधुना आलोड्य पिबेत् । पक्करसोद्भवेन [2] तस्य योगत [3] स न स्यात्(?) । यवेष्विति निमित्तसप्तमी । किम्भूतेषु यवेषु [4] वराक्काथे–त्रिफलाकषाये, शर्वरीं–सकला रात्रिं, वासितेषु–अभिषुतेषु, अनन्तरमह शोषितेषु । तत्रात्यन्तसयोगे द्वितीया ।

**शालसप्ताह्वकम्पिल्लवृक्षकाक्षकपित्थजम् ।**
**रोहीतकं च कुसुमं मधुनाऽद्यात्सुचूर्णितम् ॥ १६ ॥**
**कफपित्तप्रमेहेषु पिबेद्धात्रीरसेन वा ।**

स०–शालादिज पुष्प सूक्ष्मरजीकृत मधुनाऽद्यात् । कफपित्तप्रमेहेषु धात्रीरसेन वा पिबेत् ।

**त्रिकण्टकनिशारोध्रसोमवल्कवचार्जुनैः ॥ १७ ॥**
**पद्मकाश्मन्तकारिष्टचन्दनागुरुदीप्यकैः ।**
**पटोलमुस्तमञ्जिष्ठामाद्रीभल्लातकैः पचेत् ॥ १८ ॥**
**तैलं वातकफे पित्ते घृतं सिश्रेषु मिश्रकम् ।**

स०–त्रिकण्टकादिभिस्तैल [5] पचेद्वातकफजे प्रमेहे । पित्तजे एभिरेव घृत पचेत् । मिश्रेषु दोषेषु मिश्रक–घृततैल, पचेत् ।

**दशमूलशठीदन्तीसुराह्वं द्विपुनर्नवम् ॥ १९ ॥**
**मूलं स्नुगर्कयोः पथ्या भूकदम्बमरुष्करम् ।**

**करञ्जौ [1] वरुणान्मूलं पिप्पल्याः पौष्करं च यत् ॥२०॥**
**पृथग् दशपलं प्रस्थान् यवकोलकुलत्थतः ।**
**त्रींश्चाष्टगुणिते तोये विपचेत्पादवर्तिना ॥ २१ ॥**
**तेन द्विपिप्पलीचव्यवचानिचुलरोहिषैः [2] ।**
**त्रिवृद्विडङ्गकम्पिल्लभार्गीविश्वैश्च [3] साधयेत् ॥ २२ ॥**
**प्रस्थं घृताज्जयेत्सर्वांस्तन्मेहान् पिटिका विषम् ।**
**पाण्डुविद्रधिगुल्मार्शःशोषशोफगरोदरम् ॥ २३ ॥**
**श्वासं कासं वमिं वृद्धिं प्लीहानं वातशोणितम् ।**
**कुष्ठोन्मादावपस्मारं धान्वन्तरमिदं घृतम् ॥ २४ ॥**

स०–स्नुगर्कमूलम्, करञ्जमूलम्, वरुणमूलम्, पिप्पलीमूलम्, पौष्करं च यदिति पुष्करमूल चेत्यर्थ । दशमूलादिक पृथक्–प्रत्येक, दशपलप्रमाण यवकोलकुलत्थात्त्रीन् प्रस्थांश्चाष्टगुणिते जले च विपचेत् । तेन–जलेन, पादवर्तिना–पादशेषेण, द्विपिप्पल्यादिमिश्र [कल्कीकृतै ] सामान्यपरिभाषोक्तप्रमाणाद्घृतात्प्रस्थ पचेत् । तद्घृत सर्वान् प्रमेहान् पिटिकादींश्च जयेत् ।

**रोध्रमूर्वाशठीवेल्लभार्गीनतनखप्लवान् ।**
**कलिङ्गकुष्ठक्रमुकप्रियङ्ग्वतिविषाग्निकान् ॥ २५ ॥**
**द्वे विशाले चतुर्जातं भूनिम्बं कटुरोहिणीम् ।**
**यवानीं पौष्करं पाठां ग्रन्थिं चव्यं फलत्रयम् ॥ २६ ॥**
**कर्षांशमम्बुकलशे पादशेषे स्रुते हिमे ।**
**द्वौ प्रस्थौ माक्षिकात्क्षिप्त्वा रक्षेत्पक्षमुपेक्ष्यया ॥२७॥**
**रोध्रासवोऽयं मेहार्शःश्वित्रकुष्ठारुचिक्रमीन् ।**
**पाण्डुत्वं ग्रहणीदोषं स्थूलतां च नियच्छति ॥ २८ ॥**

स०–रोध्रादि प्रत्येक कर्षप्रमाण जलकलशे पादशेषे स्रुते शीते च माक्षिकात् द्वौ प्रस्थौ क्षिप्त्वा पक्षमात्रमचल कृत्वा रक्षेत् । अयं रोध्रासवो मेहादीन्नाशयेत् [4] ।

**साधयेदसनादीनां पलानां विंशतिं पृथक् ।**
**द्विवहेऽपां क्षिपेत्तत्र पादस्थे द्वे शते गुडात् ॥ २९ ॥**
**क्षौद्राढकार्धं पलिकं वत्सकादिं च [5] कल्कितम् ।**
**तत्क्षौद्रपिप्पलीचूर्णप्रदिग्धे घृतभाजने ॥ ३० ॥**
**स्थितं दृढे जतुसृते यवराशौ निधापयेत् ।**
**खदिराङ्गारतप्तानि बहुशोऽत्र निमज्जयेत् ॥ ३१ ॥**

१ 'शूलाया प' ट ड । २ 'ना पि' ड । ३ 'न च तस्य योगत सन् । य' ट । ४ 'त सन् । य' ड । ५ 'मि कल्कीकृतैस्तैल' ट ।

१ 'करञ्जवरुणान्मूल' इति पाठोऽरुणदत्तसम्मतोऽप्ययुक्त , 'करञ्जद्वय' इति सङ्ग्रहे 'करञ्जौ द्वौ' इति वृन्दचक्रयोश्चोक्तत्वात्, "करञ्जयो फल, न तु मूलम्, फलस्यैव मेहहरत्वात् । यदुक्तम्– 'करञ्जकिंशुकारिष्टफल जन्तुप्रमेहनुत् ।' इति ।" इति शिवदासश्रीकण्ठव्याख्यानात् मूलपदस्य करञ्जपदेन सम्बन्धाभावाच्च । "करञ्जौ–करञ्जपूतिकरञ्जकौ" इति श्रीकण्ठ । २ निचुलो–जलवेतस । ३ 'गींबिल्वैश्च' अ इ । ४ अस्मिन् रोध्रासवे रोध्रादीनि त्रिंशद्द्रव्याणि । सङ्ग्रहचरकयोस्त्वेकात्रिंशदिमान्येव मरिचाधिकानीति विशेष । ५ 'कादि च' अ ।

**तनूनि तीक्ष्णलोहस्य पत्राण्यालोहसङ्क्षयात् ।**
**अयस्कृतिः स्थिता पीता पूर्वस्मादधिका गुणैः ॥३२॥**

स०-असनादीना-"असनतिनिश" ( हृ सू अ १५। १९ ) इत्यादिगणोक्ताना द्रव्याणा, पृथक्-प्रत्येक, पलाना विंशतिं-विंशतिपलानि, अपा द्विवहे-जलद्रोणाष्टके, स्रावयेत् । तत्र-तस्मिन्, पादशेषे श्रृते शीते च सति गुडस्य द्वे शते क्षिपेत् । माक्षिकस्यार्धाढकम् । "वत्सकमूर्वा" ( हृ सू अ १५।३३ ) इत्यादिक च पृथक् पालिक कल्कित कृत्वा क्षिपेत् । अनन्तरमन्तर्माक्षिकपिप्पलीचूर्णप्रलिप्ते घृतभाजने दृढे जतुलिप्ते स्थित यवराशौ स्थापयेत् । अनन्तर खदिराङ्गारतप्तानि तीक्ष्णलोहपत्राणि तनूनि पुन पुनरत्र निमज्जयेत् । यावत्सङ्क्षयं-विलीनवृत्तित्वमायान्ति । अयस्कृतिरिय स्थिता-सम्पन्ना, पीता पूर्वस्मात्-रोध्रासवात्, गुणैरधिका । अत्र च सङ्ग्रहोक्ताद्दशमूलारिष्टादयस परिमाण कल्प्य प्रायोऽत्र प्रस्थमात्रम् । एवमन्यत्रापि द्रवद्रव्यमपेक्ष्य नारसिंहघृतादौ ( हृ उ. अ ३९।१७०) अनयैव दिशाऽयस परिमाणं कल्पनीयम् ।

**रूक्षमुद्वर्तनं गाढं व्यायामो निशि जागरः ।**
**यच्चान्यच्छ्लेष्ममेदोघ्न बहिरन्तश्च तद्धितम् ॥ ३३ ॥**

स०-तस्मिन्प्रमेह उद्वर्तन रूक्ष तथा गाढ-न तु शिथिल, हितम् । तथा व्यायामरात्रिजागरौ च । अपरमपि यदेवप्राय श्लेष्ममेदोहरं बहिरन्तश्च, तच्च प्रमेहिणे हितम् ।

**सुभावितां सारजलैस्तुलां पीत्वा शिलोद्भवात् ।**
**साराम्बुनैव भुञ्जानः शालीन् जाङ्गलजै रसैः ॥३४॥**
**सर्वानभिभवेन्मेहान् सुबहूपद्रवानपि ।**
**गण्डमालार्बुदग्रन्थिस्थौल्यकुष्ठभगन्दरान् ॥ ३५ ॥**
**कृमिश्लीपदशोफांश्च पर चैतद्रसायनम् ।**

स०-सारा -असनखदिरादय , तेषा जलै -क्वाथै , शिलाह्वयात्तुला सुभाविता पीत्वा साराम्बुनैव जाङ्गलप्राणिमासजै रसै शालीनदन् सर्वान्मेहान् सुबहूपद्रवानपि जयेत्, गण्डमाला दींश्च । इद चोत्कृष्ट रसायनम् ।

**अधनश्छत्रपादत्ररहितो मुनिवर्तनः ॥ ३६ ॥**
**योजनानां शतं यायात्खनेद्वा सलिलाशयान् ।**
**गोशकृन्मूत्रवृत्तिर्वा गोभिरेव सह भ्रमेत् ॥ ३७ ॥**

स०-धनरहित प्रमेही छत्रपादत्ररहितो मुनिवृत्ति सन् योजनाना शत यायात् । अथवा, सलिलाशयान् खनेत् । अथवा, गोशकृन्मूत्रवर्तनो गोभिरेव सह भ्रमेत् ।

**बृंहयेदौषधाहारैरमेदोमूत्रलैः कृशम् ।**

स०-कृश नरमौषधयुक्तैराहारैर्बृंहयेत् । किम्भूतै ? अमेदोमूत्रकरै ।

**शराविकाद्याः पिटिकाः शोफवत्समुपाचरेत् ॥३८॥**
**अपक्का व्रणवत्पक्काः**

स०-"शराविका कच्छपिका" ( हृ नि अ १०।२५ ) इत्याद्या पिटिका अपक्का सती शोफवदुपक्रमेत् । पक्का पुनर्व्रणवदुपाचरेत् ।

**तासां प्राग्रूप एव च ।**
**क्षीरिवृक्षाम्बु पानाय बस्तमूत्रं च शस्यते ॥ ३९ ॥**
**तीक्ष्णं च शोधन, प्रायो दुर्विरेच्या हि मेहिनः ।**

स०-तासा च पूर्वरूपावस्थायामेव क्षीरिवृक्षाम्बु पानाय शस्यते छागमूत्र च । तथा, शोधन-विरेचन, तीक्ष्ण शस्यते । कुत ? इत्याह-यस्मात् प्रमेहिणो दु खेन विरेचयितु शक्या ।

**तैलमेलादिना कुर्याद्गणेन व्रणरोपणम् ॥ ४० ॥**
**उद्वर्तने कषायं तु वर्गेणारग्वधादिना ।**
**परिषेकोऽसनाद्येन पानान्ने वत्सकादिना ॥ ४१ ॥**

स०-"एलायुग्म" ( हृ सू अ १५।४३ ) इत्यादिना गणेन तैल व्रणरोपण कुर्यात् । उद्वर्तने "आरग्वधेन्द्रयव" ( हृ सू अ १५।१७ ) इत्यादिना गणेन कषाय कुर्यात् । "असनतिनिश" ( हृ सू अ १५।१९ ) इत्यादिना परिषेक स्यात् । पानमन्न च "वत्सकमूर्वा" ( हृ सू अ १५।३३ ) इत्यादिना सस्कृत कुर्यात् ।

**पाठाचित्रकशार्ङ्गेष्टासारिवाकण्टकारिकाः ।**
**सप्ताह्वं कौटजं मूलं सोमवल्कं नृपद्रुमम् ॥ ४२ ॥**
**सञ्चूर्ण्य मधुना लिह्यात्तद्वच्चूर्णं नवायसम् ।**

स०-पाठादीन् सञ्चूर्ण्य मधुनाऽवलेहयेत् । नवायस चूर्णं तद्वत्-माक्षिकेण लिह्यात् ।

**मधुमेहित्वमापन्नो भिषग्भिः परिवर्जितः ॥ ४३ ॥**
**शिलाजतुतुलामद्यात्प्रमेहार्तः पुनर्नव. ॥ ४३½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने प्रमेहचिकित्सितं नाम द्वादशोऽध्याय. ॥१२॥**

स०-मधुमेहित्वमपि प्राप्तो भिषग्भिश्च परिवर्जितो मेही शिलाजतुपलशत [अद्यात्-] सेवन कुर्यात् । कृतशिलाजतुतुल-

---

१ 'आयासरा' ड. । २ 'शालिं जा' इ । ३ 'अस्याग्रे "चन्दनं उत्पलं द्राक्षा उशीर च पुनर्नवा । यष्टीमधुकश्रीखण्ड त्रिफलोत्पलसारिवा ॥ १ ॥ शमी वशफल रोध्र त्रिजातं नागकेसरम् । पद्मक च कणाचूर्णं तत्तुल्या शर्करा शुभा ॥२॥ एतच्चूर्णं पिबेत्प्रातस्तण्डुलोदकवारिणा । प्रमेहे रक्तपित्ते च कृच्छ्रदोषे च दारुणे ॥३॥" इति इ पुस्तकेऽधिकास्त्रय. श्लोका । ४ 'लाजतुनस्तुला' इति क्वचित् ।

१ 'षेकेऽस' इ. । २ 'वायमुद्वर्तनार्थं कु' ट. ।

श्चासौ पुनर्नवो भवति । खारणादे च विशेषोपक्रमा उक्ता । यथा—"अश्वत्थचन्दनागरुपाठाक्काथो जलाभमेहे तु । इक्षुरसाभे पाठाक्रमिहन्तृसम्बन्धन क्वाथ ॥ सान्द्राकारे मेहे हिताऽऽढकी कर्णिकारो वा । क्वाथस्तथाऽर्जुनस्य पातव्यो वारुणीमेहे ॥ पिष्टे ससिता रजनी पातव्या शिशिरतोयेन । निम्बश्च शुक्रमेहे तप्त-जलेनाथवा सुरया ॥ सिकतामेहे चित्रकबाह्लीककुष्ठनि क्वाथ । शीतलमेहे क्वाथ पिचुमन्दकृतश्च पातव्य ॥ पाषाणभित्तु सुरया क्वथित शस्त शनैर्मेहे । गोक्षुरकस्य कषायो लालामेहे फलत्रि-केण सह ॥ शल्लक्युशीरसैन्धववचा हिता क्षारमेहिन पिष्टा । क्वथिताश्च नीलमेहे रोध्रसमङ्गाकदम्बा स्यु ॥ क्वाथो बिभी-तकस्य तु कल्को वा कालमेहिना शस्त । धातकिपद्मकविक-साक्काथ कल्कोऽपि वा निशामेहे ॥ माञ्जिष्ठे स्युस्त्रिफला जलदं जलपद्मक रोध्रम् । लोहितमेहे युञ्ज्यात्त्रिफलाक्काथेन सयुतं गिरिजम् ॥ वालक त्रिवृता धात्री मुस्त च सरसाञ्जनम् । कटु-कातिविषारोध्र खादिरेणाम्भसा पिबेत् ॥ प्राय शोधनमेतद्धि प्रधान समुदाहृतम् ।" इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटी-काया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने प्रमेह-चिकित्सित नाम द्वादशोऽध्याय समाप्त ॥१२॥





## त्रयोदशोऽध्यायः ।

अस्मादनन्तरं विद्रधिवृद्धिचिकित्सितमारभ्यते, प्रमेहोपद्रवभूतत्वाद्विद्रधे । इत्याह—

**अथातो विद्रधिवृद्धिचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षय ।**
( गद्यसूत्रे ॥ २ ॥ )

**विद्रधि सर्वमेवामं शोफवत्समुपाचरेत् ।**
**प्रततं च हरेद्रक्तं पक्के तु व्रणवत्क्रिया ॥ १ ॥**

स०–आम सर्वमेव विद्रधिं शोफवदुपक्रमेत् । अनवरत च रक्तमाहरेत् । अनन्तरं पक्के सति व्रणवत्क्रिया ।

विशेषेण चिकित्सितमाह—

**पञ्चमूलजलैर्धौतं वातिकं लवणोत्तरैः ।**
**भद्रादिवर्गयष्ट्याह्वतिलैरालेपयेद्व्रणम् ॥ २ ॥**

**वैरेचनिकयुक्तेन त्रैवृतेन विशोध्य च ।**
**विदारीवर्गसिद्धेन त्रैवृतेनैव रोपयेत् ॥ ३ ॥**

स०–वातिक व्रण–वातविद्रधावर्थाज्जात, पञ्चमूलजलै प्रक्षालित "भद्रदारु नत" (हृ सू अ १५।५) इत्यादिना मधुयष्टिकया तिलैश्च लवणाद्यै(धिकै)र्लेपयेत् । वैरेचनिकयुक्तेन–"निकुम्भकुम्भ" ( हृ सू अ १५।२ ) इत्यादिवर्गोक्तेन युक्तेन, त्रैवृतेन–त्रैवृताख्येन स्नेहेन, विशोध्य–शोधयित्वा, ततो "विदारिपञ्चाङ्गुल" ( हृ सू अ १५।९ ) इत्यादिद्रव्यसिद्धेन त्रैवृतेनैव स्नेहेन व्रण रोपयेत् ।

**क्षालितं क्षीरितोयेन लिम्पेद्यष्ट्यमृतातिलैः ।**
**पैत्तं घृतेन सिद्धेन मञ्जिष्ठोशीरपद्मकैः ॥ ४ ॥**
**पयस्याद्विनिशाश्रेष्ठायष्टीदुग्धैश्च रोपयेत् ।**
**न्यग्रोधादिप्रवालत्वक्फलैर्वा**

स०–पैत्त व्रण क्षीरितोयेन धौतम् । क्षीरिणो–न्यग्रोधादय । मधुयष्टिकागुडूचीतिलैर्लिम्पेद्धि । घृतेनेत्यादि । मञ्जिष्ठादिभिर्घृतेन सिद्धेन रोपयेत् । सामान्यपरिभाषोक्तप्रमाणेन (हृ क. अ ६।१५) द्रव्य घृतं जल समक्षीर [चतुर्गुणविवर्धितं] इत्यत्र पाकक्रम । न्यग्रोधेत्यादि । प्रवालश्च त्वक् च फल च प्रवालत्वक्फलानि । न्यग्रोधादीना (हृ सू अ १५।४१) प्रवालत्वक्फलै सिद्धेन वा घृतेन रोपयेत् ।

**कफजं पुनः ॥ ५ ॥**
**आरग्वधादिना धौतं सक्तुकुम्भनिशातिलैः ।**
**लिम्पेत्कुलत्थिकादन्तीत्रिवृच्छ्यामाग्नितिल्वकैः ॥६॥**
**ससैन्धवैः सगोमूत्रैस्तैलं कुर्वीत रोपणम् ।**

स०–कफज तु व्रणमारग्वधादिना (हृ सू अ १५।१७) धौत सक्त्वादिभिर्लिम्पेत् । कुलत्थिकादिभिर्द्रव्यैस्तैल रोपण कुर्वीत ।

**रक्तागन्तूद्भवे कार्या पित्तविद्रधिवत्क्रिया ॥ ७ ॥**

स०–रक्तोद्भवे तथाऽऽगन्तुजे क्षतोद्भवे च विद्रधौ पित्तविद्रधितुल्या क्रियैा कार्या ।

**वरुणादिगणक्काथमपक्केऽभ्यन्तरोत्थिते ।**
**ऊषकादिप्रतीवापं पूर्वाह्णे विद्रधौ पिबेत् ॥ ८ ॥**

स०–आन्तरे विद्रधौ वरुणादि( हृ सू अ. १५।२१ )-गणक्काथमूषकादि( हृ सू अ.१५।२३)प्रतीवाप पूर्वाह्णे पिबेत् ।

**घृतं विरेचनद्रव्यैः सिद्धं ताभ्यां च पाययेत् ।**
**निरूहं स्नेहवस्तिं च ताभ्यामेव प्रकल्पयेत् ॥ ९ ॥**

स०–विरेचनद्रव्यैर्यथादोष च घृतं सिद्धं तथा ताभ्या–वरुणादिगणोषकादिगणाभ्या, सिद्ध घृतमपक्काभ्यन्तरोत्थिते विद्रधौ पाययेत् । ताभ्यामेव गणाभ्या निरूहान्वासने निरूपयितव्ये ।

१ 'खरनादेन च' ड । २ 'बन्धिन.' ड. । ३ इद विद्रधिवृद्धिचिकित्सित चरके सू० १७ अध्याये, सुश्रुते चि० १६।१९ अध्याययो , अष्टाङ्गसङ्ग्रहे चि० १५ अध्याये चास्ति वर्णितम् । ४ "लवणोत्तरैरिति लवणप्रमुखै " इति डल्हण. ।

१ 'धाम्बुना' इ । २ 'मार्कति' स.मु. । ३ 'या स्यात् ।' ट.ड. । ४ 'न्तरस्थिते' इति क्वचित् ।

पानभोजनलेपेषु मधुशिग्रुः प्रयोजितः ।
दत्तावापो यथादोषमपक्कं हन्ति विद्रधिम् ॥ १० ॥

स०–पानादिषु मधुशिग्रु प्रयोजितो दत्तावापो–वितीर्णकल्क, सामर्थ्यात्तत्काथ पक्क विद्रधिं हन्ति ।

त्रायन्तीत्रिफलानिम्बकटुकामधुकं समम् ।
त्रिवृत्पटोलमूलाभ्यां चत्वारों ऽशाः पृथक् पृथक् ११
मसूरान्निस्तुषादष्टौ तत्क्काथः सघृतो जयेत् ।
विद्रधीगुल्मवीसर्पदाहमोहमदज्वरान् ॥ १२ ॥
तृण्मूर्च्छाच्छर्दिहृद्रोगपित्तासृक्कुष्ठकामलाः ।

स०–त्रायन्त्यादिक समं–समाश, त्रिवृतायाश्चत्वारोऽशा पटोलमूलाच, निस्तुषमसूरादष्टाविस्येतै क्काथो घृतसहितो विद्रध्यादीन् पराकुर्यात् ।

कुडवं त्रायमाणायाः साध्यमष्टगुणेऽम्भसि ॥ १३ ॥
कुडवं तद्रसाद्धात्रीस्वरसात्क्षीरतो घृतात् ।
कर्षांशं कल्कितं तिक्तात्रायन्तीधन्वयासकम् ॥ १४ ॥
मुस्तातामलकीवीराजीवन्तीचन्दनोत्पलम् ।
पचेदेकत्र संयोज्य तद्घृतं पूर्ववद्गुणैः ॥ १५ ॥

स०–त्रायमाणाया कुडवमष्टगुणे जले साध्यम् । तद्रसात्–त्रायमाणाया क्काथात् कुडव, धात्रीस्वरसात् क्षीराद्घृताच्च प्रत्येक कुडव, कर्षांश प्रत्येक कल्कीकृत तिक्तादि, एकत्र मिश्रयित्वा पचेत् । तदेतद् घृतं पूर्वगुणम् ।

द्राक्षा मधूकं खर्जूरं विदारी सशतावरी ।
परूषकाणि त्रिफला तत्क्काथे पाचयेद्घृतम् ॥ १६ ॥
क्षीरेक्षुधात्रीनिर्यासप्राणदाकल्कसंयुतम् ।
तच्छीतं शर्कराक्षौद्रपादिकं पूर्ववद्गुणैः ॥ १७ ॥

स०– द्राक्षादिभि क्काथे क्षीर इक्षुरसे धात्रीरसे हरीतकीकल्कयुत घृत सामान्यपरिभाषया पचेत् । तद्घृत शीत सच्छर्कराक्षौद्रपादयुत पूर्वगुणम् । शर्कराक्षौद्रपादिकमिति “अत इनिठनौ” इति ठन् ।

हरेच्छृङ्गादिभिरसृक् सिरया वा यथान्तिकम् ।

स०–शृङ्गादिभी रक्त हरेत् । सिरया वा यथासमीपमस्र हरेत् ।

विद्रधिं पच्यमानं च कोष्ठस्थं बहिरुन्नतम् ॥ १८ ॥
ज्ञात्वोपनाहयेत्

स०–विद्रधिं कोष्ठस्थ कोष्ठगतं बहिरुन्नतं पच्यमान बुद्ध्वोपनाहयेत्–उपनद्धं कुर्यात् ।

१ ‘कर्षदश्च प्र’ ड. । २ ‘यांसे प्रा’ इति कश्चित् । ३ “उपनाहयेत्–पिण्डैर्बध्नीयात्” इतीन्दु । ४ ‘येत् । तत्रै’ ट. ड. ।

शूले स्थिते तत्रैव पिण्डिते ।
तत्पार्श्वपीडनात्सुप्तौ दाहादिष्वल्पकेषु च ॥ १९ ॥
पक्कः स्याद्विद्रधिं भित्त्वा व्रणवत्तमुपाचरेत् ।

स०–तत्रैव शूले पिण्डिते स्थिते य दोषमाश्रित्योन्नद्धस्तिष्ठति तथा तत्पार्श्वे पीडनेन सुप्तौ–स्वपने, तथा दाहादिष्वल्पकेषु, आदिशब्देनोषादयो गृह्यन्ते, एतेषु सत्सु पक्को विद्रधिः स्यात् । त भित्त्वा–सञ्छेद्य, व्रणवदुपक्रमेत् ।

अन्तर्भागस्य चाप्येतच्चिह्नं पक्कस्य विद्रधेः ॥ २० ॥

स०–अन्तर्भागस्य च विद्रधेरेतदेव चिह्नम् ।

पक्कः स्रोतांसि सम्पूर्य स यात्यूर्ध्वमधोऽथवा ।
स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशिनः ॥ २१ ॥
दशाहं द्वादशाहं वा रक्षन् भिषगुपद्रवान् ।
असम्यग्वहति क्लेदे वरुणादि सुखाम्भसा ॥ २२ ॥
पाययेन्मधुशिग्रुं वा यवागूं तेन वा कृताम् ।

स०–तदाऽसौ पक्क सन् स्रोतांसि क्लेदयित्वोर्ध्व प्रयात्यधो वा, त दोष स्वय प्रवृत्तं–पतन्त, हिताशिन उपेक्षेत–न किञ्चिदुपक्रमान्तर कुर्वीत । दशाह द्वादशाह वा वैद्य उपद्रवात्रक्षेत् । क्लेदे च यथावदवहति सति वरुणादिमुष्णाम्बुना पाययेत्, वैद्य इति शेष । दशाहमिति दशानामह्ना समाहार इति समासे “राजाह सखिभ्यष्टच्” इति टच् । “न सङ्ख्यादे समाहारे” इत्यह्नादेशनिषेध । “नस्तद्धिते” इति टिलोप । “स नपुंसकम्” इति नपुसकत्वम् । “कालाध्वनो ” इति द्वितीया । अथवा मधुशिग्रु पाययेत् । तेन वा–मधुशिग्रुणा, कृता पेया पाययेत् ।

यवकोलकुलत्थोत्थयूषैरन्नं च शस्यते ॥ २३ ॥

स०–यवादिजैर्यूषै सहान्न च शस्यते ।

ऊर्ध्वं दशाहात्त्रायन्तीसर्पिषा तैल्वकेन वा ।
शोधयेद्बलतः, शुद्धः सक्षौद्रं तिक्तकं पिबेत् ॥ २४ ॥

स०–दशाहादनन्तरं त्रायन्तीघृतेन–“कुडव त्रायमाणाया” ( श्लो १३ ) इत्यादिना, अथवा तैल्वकेन–“शम्याकेन त्रिवृतया” ( हृ चि अ ३।१५२ ) इत्यादिना, शोधयेद्यथाबलम् । शुद्ध सन् क्षौद्रेण सह तिक्तक पिबेत् ।

सर्वशो गुल्मवच्चैनं यथादोषमुपाचरेत् ।

स०–सर्वेण प्रकारेण गुल्मवदेन–विद्रधिं, यथादोषमुपक्रमेत् ।

१ ‘घोऽपि वा’ अ । २ ‘रक्षेन्द्विष’ इति कश्चित् । ३ सङ्ग्रहे त्विदमधिकम् (चि. अ. १५)–“तन्निर्वाहणार्थमम्लसुरासवमैरेयोष्णोदकान्यतमेन वरणादिं मधुशिग्रु वा पिबेत् ।” इति । ४ तेन–वरुणादिना मधुशिग्रुणा वा । ५ तैल्वक–“पलाष्टक तिल्वकतो” इत्यादिना श्लोकद्वयेन (३२–३३) वातव्याधिचिकित्सिते पठित ग्राह्यम् । अरुणदत्तव्याख्यान त्वयुक्तम्, “शम्याकेन त्रिवृतया” इत्यादिना सार्धश्लोकेन घृतत्रयस्योक्तत्वात् । ६ तिक्तक–कुष्ठचिकित्सितोक्तम् (श्लो. २) ।

सर्वावस्थासु सर्वासु गुग्गुलुं विद्रधीषु च ॥ २५ ॥
कषायैर्यौगिकैर्युञ्ज्यात्स्वैः स्वैस्तद्वच्छिलाजतु ।

स०-विद्रधीषु सर्वासु सर्वावस्थास्वेव गुग्गुलु यौगिकै स्वै-स्वैर्योग्यै कषायैर्युञ्ज्यात् । तद्वत्-तथैव कषायै. सह, शिलाजतु युञ्ज्यात् ।

पाकं च वारयेद्यत्नात्सिद्धिः पक्वे हि दैविकी ॥ २६ ॥
अपि चाशु विदाहित्वाद्विद्रधिः सोऽभिधीयते ।

स०-पाक च यत्नेन वारयेत् । हि-यस्मात्, पक्वे सति दैविकी सिद्धि -न तु भिषग्वशानुगेत्यर्थ । आशु च विदाहित्वात् स -अयं रोगो, विद्रधिरित्युच्यते । तस्मात्तस्य पाकरक्षाया यतितव्यमित्यर्थ ।

सति चालोचयेन्मेहे प्रमेहाणां चिकित्सितम्[1] ॥२७॥

स०-मेहे च सति प्रमेहाणा चिकित्सितमालोचयेत् । चशब्दाद्विद्रधिचिकित्सितोक्तमपि कुर्यात् ।

स्तनजे व्रणवत्सर्वं न त्वेनमुपनाहयेत् ।
पाटयेत्पालयन् स्तन्यवाहिनीः कृष्णचूचुकौ ॥ २८ ॥
सर्वास्वामाद्यवस्थासु निर्दुहीत च तत्स्तनम् ।

इति विद्रधिचिकित्सितम् ।

स०-स्तनजे विद्रधावुपनाह वर्जयित्वा सर्वमेव व्रणक्रियाक्रम कुर्यात् । विद्रधिशब्द पुस्त्रीलिङ्ग । स्तनविद्रधिं च पाटयेद्वैद्य । स्तन्यवाहिनी सिरा कृष्णचूचुकौ च पालयन् । सर्वासु चामाद्यवस्थासु तस्य-विद्रधे सम्बन्धिन, स्तन निर्दुहीत । आदिशब्द पच्यमानपाकावस्थयोर्ग्रहणार्थं ।

इति विद्रधिचिकित्सितमुक्त्वा वृद्धिचिकित्सितमाह—

अथ वृद्धिचिकित्सितम् ।

शोधयेत्त्रिवृता स्निग्धं वृद्धौ स्नेहैश्चलात्मके ॥ २९ ॥
कौशाम्रतिल्वकैरण्डसुकुमारकमिश्रकैः ।

स०-चलात्मके वृद्धौ सति वृद्ध्यामयिन त्रिवृताख्येन स्नेहेनासमन्तात् स्निग्ध सन्त शोधयेत् । अत्र च सामान्योक्तावप्यपक्वस्य त्रैवृतस्य न तथा प्रयोग प्रशस्यत इति पूर्वोक्तया रीत्या (श्लो ३) विदारिवर्गसिद्धस्योपयोग कार्य इति केचिन्मन्यन्ते । कै स्नेहै [1] कौशाम्रादिभि सिद्धै । सुकुमारक-अत्रैव वक्ष्यमाणम् (श्लो ४१), मिश्रक च-गुल्मचिकित्सिते (श्लो ८९-९०) ।

ततोऽनिलघ्ननिर्यूहकल्कस्नेहैर्निरूहयेत् ॥ ३० ॥
रसेन भोजितं यष्टितैलेनान्वासयेदनु ।
स्वेदप्रलेपा वातघ्नाः पक्वे भित्त्वा व्रणक्रियाम् ॥ ३१ ॥

स०-तत -शोधनादनन्तर, वातघ्नकषायकल्कस्नेहैर्निरूहयेत् । अनु-निरूहस्य पश्चात्, मासरसेन भोजित सन्त मधुयष्टिकातैलेनानुवासयेत् । स्वेदा प्रलेपाश्च वातघ्ना हिता । पक्वे वृद्धौ भित्त्वा-पाटयित्वा, व्रणक्रिया कुर्यात् ।

पित्तरक्तोद्भवे वृद्धावामपक्वे यथायथम् ।
शोफव्रणक्रियां कुर्यात् प्रततं च हरेदसृक् ॥ ३२ ॥

स०-पित्तरक्तोत्थिते वृद्धावामे पक्वे च [यथायथ-] यथास्व, आमे शोफक्रिया कुर्यात्, पक्वे व्रणक्रिया कुर्यात् । सतत च रक्तमाकर्षेत् ।

गोमूत्रेण पिबेत्कल्कं श्लैष्मिके पीतदारुजम् ।
विम्लापनादृते चास्य श्लेष्मग्रन्थिक्रमो हितः ॥३३॥
पक्वे च पाटिते तैलमिष्यते व्रणशोधनम् ।
सुमनोरुष्कराङ्कोल्लसप्तपर्णेषु साधितम् ॥ ३४ ॥
पटोलनिम्बरजनीविडङ्गकुटजेषु च ।

स०-श्लैष्मिके वृद्धौ दार्वीकल्क गोमूत्रेण पिबेत् । अस्य च-श्लैष्मिकवृद्धे, विम्लापनमन्तरेण श्लेष्मग्रन्थिचिकित्सित हितम् । विम्लापन-तैस्तैर्मर्दनोपायैर्विमर्दनम् । पक्वे पाटिते सति सुमनोरुष्करादिभि कुटजान्तै साधित तैल व्रणशोधनमिष्यते ।

मेदोजं मूत्रपिष्टेन सुस्विन्नं सुरसादिना ॥ ३५ ॥
शिरोविरेकद्रव्यैर्वा वर्जयन् फलसेवनीम् ।

---

१ 'सर्वेषु' अ । २ अस्याग्रे "सौभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसयुत । अचिराद्विद्रधिं हन्ति प्रात. प्रातर्निषेवित ॥१॥ कटुत्रिकं तिक्तकरोहिणी घन किराततिक्तोऽथ शतक्रतोर्यवा । ससप्तपर्णाऽतिविषा दुरालभा पटोलमूल सह त्रायमाणया ॥२॥ गुडूचिचव्य सविडङ्गनिम्ब प्रियङ्गुनीलोत्पलरोध्रमञ्जनम् । सधातकीमोचरसं फलत्रिक सनागर बिल्वकपित्थसारिवा. ॥ ३ ॥ समा. स्युरेते द्विगुण तु चित्रक द्विरष्टभाग कुटजत्वच स्यात् । सुसूक्ष्मपिष्ट शिशिराम्बुयोजित पिबेन्मनुष्योऽर्द्धपल गुडान्वितम् ॥ ४ ॥ बुभुक्षिते स्यान्मृदु भोजन हितं शशैः सलावैरथवाऽपि तित्तिरै. । निहन्ति गुल्मान् कफपित्तसम्भवान् विराजते शारदपूर्णचन्द्रवत् ॥ ५ ॥ अजीर्णकासं क्षयपाण्डुते तथा ज्वरातिसारग्रहणीगदापची । प्रमेहमूत्रक्षयवर्ध्मविद्रधीन् जयेत् प्रयुक्त· सगुड कटुत्रिक ॥ ६ ॥ भूनिम्बार्धपलं निशापलयुत दार्वीपले द्वे तथा, दार्व्यर्धेन पुनर्नवां कुरु तथा दार्व्या सम प्रग्रह । सार्द्धं तु स्पर्शत पलं तु कटुका योज्या तदर्धेन वा, अश्वाह्व निशया समानममृता-पादाधिकं स्यात्पलम् ॥७॥ एतद्दृस्सकसप्तकर्षसहित सुश्लक्ष्ण चूर्णीकृतं, वासायाः स्वरसेन पञ्च चतुरस्त्रीन् वा पिबेद्वासरान् । भूयस्तद्गुडवारिणा प्रतिदिनं पेय पुरस्थे रवौ, एतद्विद्रधिरोगिणां निरुजकृच्चूर्णं तु गुह्योत्तमम् ॥ ८ ॥ नापुत्राय न चाभ्रात्रे नाशिष्यायाहितैषिणे । आरोग्यशास्त्रसर्वस्व देयमेतत्कथञ्चन ॥ ९ ॥" इति इ. पुस्तकेऽधिका नव श्लोका· ।

१ 'हेन स्निग्ध' ट. । २ 'चात्र श्ले' इ. । 'वाऽपि श्ले' स. सु. ।

**दारयेद्वृद्धिपत्रेण सम्यङ्मेदसि सूद्धृते ॥ ३६ ॥**
**व्रणं माक्षिककासीससैन्धवप्रतिसारितम् ।**
**सीव्येदभ्यञ्जनं चास्य योज्यं मेदोविशुद्धये ॥ ३७ ॥**
**मनःशिलैलासुमनोग्रन्थिभल्लातकैः कृतम् ।**
**तैलमाव्रणसन्धानात्स्नेहस्वेदौ च शीलयेत् ॥ ३८ ॥**

स०–मेदोज वृद्धिरोग गोमूत्रपिष्टेन सुरसादिना गणेन (हृ सू अ १५।३०) सुस्विन्न शिरोविरेकद्रव्यैर्वा सुस्विन्न वृद्धिपत्रेण सम्यक् कृत्वा दारयेत्। किं कुर्वन्? फलसेवनी वर्जयन्–परिहरन् । अनन्तर मेदसि सूद्धृते सति माक्षिकादिभि प्रतिसारित व्रण सीव्येत्। अनन्तरमस्याभ्यञ्जन तैल मन शिलादिभि कृत–सिद्ध, मेदोविशुद्धये योज्यम्। व्रणसन्धानं यावत् स्नेह स्वेद च शीलयेत्।

**मूत्रजं स्वेदितं स्निग्धैर्वस्त्रपट्टेन वेष्टितम् ।**
**विध्येदधस्तात्सेवन्याः स्रावयेच्च यथोदरम् ॥ ३९ ॥**
**व्रणं च स्थगिकाबद्धं रोपयेत्**

स०–मूत्रज वृद्धिं सेवन्या अधस्तात् स्निग्धै. स्वेदित तथा वस्त्रपट्टेन वेष्टित विध्येत्। जलोदरवच्च स्रावयेत्। द्विद्वारनलिकया पिच्छनलिकया वा क्रमेण व्रण च स्थगिकाख्येन बन्धविशेषेण बद्ध रोपयेत्।

**अन्त्रहेतुके ।**
**फलकोशमसम्प्राप्ते चिकित्सा वातवृद्धिवत् ॥ ४० ॥**

स०–अन्त्रजे वृद्धौ फलकोशमसम्प्राप्ते सति वातवृद्धिसदृशी चिकित्सा कुर्यात्।

**पचेत्पुनर्नवतुलां तथा दशपलाः पृथक् ।**
**दशमूलपयस्याश्वगन्धैरण्डशतावरीः ॥ ४१ ॥**
**द्विदर्भशरकाशेक्षुमूलपोटगलान्विताः ।**
**वहेऽपामष्टभागस्थे तत्र त्रिंशत्पलं गुडात् ॥ ४२ ॥**
**प्रस्थमेरण्डतैलस्य द्वौ घृतात्पयसस्तथा ।**
**आवपेद् द्विपलांशं च कृष्णातन्मूलसैन्धवम् ॥ ४३ ॥**
**यष्टीमधु(चित्र)कमृद्वीकायवानी-**
**नागराणि च (क्षारनागरम्) ।**
**तत्सिद्धं सुकुमाराख्यं सुकुमारं रसायनम् ॥ ४४ ॥**
**वातातपाध्वयानादिपरिहार्येष्वयन्त्रणम् ।**
**प्रयोज्यं सुकुमाराणामीश्वराणां सुखात्मनाम् ॥ ४५ ॥**
**नृणां स्त्रीवृन्दभर्तॄणामलक्ष्मीकलिनाशनम् ।**
**सर्वकालोपयोगेन कान्तिलावण्यपुष्टिदम् ॥ ४६ ॥**

१ 'चोद्धृते' अ ट.। २ 'यष्टीचित्रकमृद्वीकायवानीक्षारनागरम्' इति पाठो लिखितमुद्रितपुस्तकेष्वनुपलब्धोऽपि सङ्ग्रहानुसारित्वाद्युक्त । तथा च सङ्ग्रहे (चि अ १५)–"कल्कीकृतानि च द्विपलिकानि द्राक्षानागरपिप्पलीपिप्पलीमूलयवानीयवक्षारचित्रकमधुकसैन्धवान्यावाप्यैकध्य विपचेत् ।" इति ।

**वर्ध्मविद्रधिगुल्मार्शोयोनिमेढ्रानिलार्तिषु ।**
**शोफोदरखुडप्लीहविड्विबन्धेषु चोत्तमम् ॥ ४७ ॥**

स०–पुनर्नवस्य तुला जलस्य वहे पचेत्। तथा दशमूलादीनि पृथग्दशपलप्रमाणानि । पोटगलो–नल । अष्टभागशेषे च तस्मिन् गुडात्त्रिंशत्पलान्येरण्डतैलात् प्रस्थ घृतस्य प्रस्थौ द्वौ क्षीरप्रस्थौ द्वौ क्षिपेत्। द्विपलप्रमाण पिप्पल्यादिकम् । तदेतत्पक्व सुकुमारसञ्ज्ञ घृत रसायन सुकुमारम् । अत एव वातातपादिष्वयन्त्रणम् । सुकुमाराणामीश्वरादीना प्रयोज्यम् । अलक्ष्मीकलिघ्न सर्वकालोपयोगात् कान्त्यादिद वर्ध्माद्यार्तिषु श्रेष्ठम् ।

**यायाद्वर्ध्मा न चेच्छान्ति स्नेहरेकानुवासनैः ।**
**बस्तिकर्म पुरः कृत्वा वङ्क्षणस्थं ततो दहेत् ॥ ४८ ॥**
**अग्निना मार्गरोधार्थं मरुतः**

स०–यदि स्नेहादिभिर्वर्ध्मा शान्तिं न गच्छेत् ततो बस्तिकर्म कृत्वा वङ्क्षणस्थित वर्ध्म मरुतो मार्गरोधार्थमग्निना दहेत्।

**अर्धेन्दुवक्रया ।**
**अङ्गुष्ठस्योपरि स्नाव पीतं तन्तुसमं च यत् ॥ ४९ ॥**
**उत्क्षिप्य सूच्या तत्तिर्यग्दहेच्छित्त्वा यतो गदः ।**
**ततोऽन्यपार्श्वेऽन्ये त्वाहुर्देहेद्वाऽनामिकाङ्गुलेः ॥ ५० ॥**
**गुल्मेऽन्यैर्वातकफजे प्लीह्नि चायं विधिः स्मृतः ।**
**कनिष्ठिकानामिकयोर्विश्वाच्यां च यतो गदः ॥ ५१ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने विद्रधिवृद्धिचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥**

स०–यतो–यस्मिन्पार्श्वे, गदो विद्यते तत्पार्श्वस्थस्याङ्गुष्ठस्योपरि पृष्ठे स्नाव पीत यत्तन्तुतुल्यम् । तत् स्नावोत्क्षिप्यार्धेन्दुवक्रया सूच्या तिर्यक् छित्त्वाऽनन्तर तद्दहेदित्येके वदन्ति । अन्य आचार्या एवमाहु । तत पार्श्वात् यतोऽसौ गदस्ति-

१ अस्याग्रे "रास्नायष्ट्यमृतैरण्डबलागोक्षुरसाधित । काथोऽन्त्रवृद्धि हन्त्याशु रुबुतैलेन मिश्रित ॥ १ ॥" इति इ. पुस्तकेऽधिक श्लोक । २ 'तु' स द्ध । ३ अस्याग्रे "मूल बिल्वकपित्थयोररलुकस्याग्निबृहत्योर्द्वयो श्यामापूतिकरञ्जशिग्रुकतरोर्विश्वौषधारुष्करम्। कृष्णाग्रन्थिकवेल्लपञ्चलवणक्षाराजमोदान्वित पीत काञ्जिकतोय···मथितैश्चूर्णीकृत वर्ध्मजित् ॥ १ ॥ अजाजीकुष्ठगोमेदहपुषाबदराणि च। आरनालेन लेप. स्याद्वर्ध्मजित्परमौषधम् ॥ २ ॥ अविक्षीरेण गोधूमचूर्णं कन्दुरुकस्य च। प्रलेपनं सुखोष्णं स्याद्वर्ध्मजित्परमौषधम् ॥ ३ ॥ मृतमात्रे तु वै काके विशस्तेन प्रलेपयेत् । मुहूर्तं वर्ध्मं मेधावी तत्क्षणादरुजो भवेत् ॥ ४ ॥" इति इ. पुस्तकेऽधिकाश्चत्वार श्लोका ।

ष्ठति ततो यदन्यत्पार्श्वं तस्मिन् पार्श्वेऽङ्गुष्ठस्योपरि यत्स्नाव तथाविध यत्तत्पूर्ववत् दहेदिति । अन्ये त्वेव वदन्ति,–अनामिकाया अङ्गुलेरुपरि यत्स्नाव तथारूप तत्पूर्ववद्दहेदिति । अन्यैराचार्यैर्वातकफजे गुल्मे प्लीह्नि च एष (अय) एव–अनन्तरोक्तो, विधि स्मृत । तथा विश्वाच्या–वातव्याधिविशेषे, यतो यस्मिन् पार्श्वेऽसौ गदस्तस्मिन् पार्श्वे कनिष्ठिकानामिकयोरुपरि यत्स्नाव पीत तन्तुसम तदुत्क्षिप्य तिर्यक् छित्त्वा दहेदिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने विद्रधिवृद्धिचिकित्सित नाम त्रयोदशोऽध्याय समाप्त ॥ १३ ॥



## चतुर्दशोऽध्यायः ।

अस्मादनन्तर गुल्मचिकित्सितमारभ्यते । सम्बन्धश्चास्य प्रायेणैकयोगक्षेमत्वम्, वातकारणत्वात् ।

**अथातो गुल्मचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**गुल्मं बद्धशकृद्वातं वातिकं तीव्रवेदनम् ।**
**रूक्षशीतोद्भवं तैलैः साधयेद्वातरोगिकैः ॥ १ ॥**
**पानान्नान्वासनाभ्यङ्गैः स्निग्धस्य स्वेदमाचरेत् ।**
**आनाहवेदनास्तम्भविबन्धेषु विशेषतः ॥ २ ॥**
**स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम् ।**
**भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ ३ ॥**

स०–[वातिक गुल्म तीव्ररुज पुरीषवातग्रह रूक्षशीतोद्भूत वातचिकित्सितोक्तैस्तैलै साधयेत् । पानान्नान्वासनाभ्यङ्गै स्निग्धस्य गुल्मिन स्वेदमाचरेत् ।] पानशब्देन स्नेहपान वेद्यम्, स्निग्धस्येति वचनात् । आनाहादिषु विशेषेण स्वेदमाचरेत् । यस्मात्स्वेद स्निग्धस्य पुस स्रोतोमृदुत्व विधाय मारुतमुल्बण च जित्वा तथा विबन्ध भित्त्वा गुल्ममपोहति ।

**स्नेहपानं हितं गुल्मे विशेषेणोर्ध्वनाभिजे ।**
**पक्वाशयगते बस्तिरुभयं जठराश्रये ॥ ४ ॥**

स०–गुल्मे स्नेहपान हितम् । ऊर्ध्वनाभिजे गुल्मे विशेषेण स्नेहपान हितम् । पक्वाशयगते बस्तिर्हित । जठराश्रित उभय–स्नेहपानबस्त्याख्य, हितम् ।

**दीप्तेऽग्नौ वातिके गुल्मे विबन्धेऽनिलवर्चसोः ।**
**बृंहणान्यन्नपानानि स्निग्धोष्णानि प्रदापयेत् ॥ ५ ॥**
**पुनःपुनः स्नेहपानं निरूहाः सानुवासनाः ।**
**प्रयोज्या वातजे गुल्मे कफपित्तानुरक्षिणः ॥ ६ ॥**

स०–वातिके गुल्मे वह्नौ समिद्धे सति वातशकृतोश्च विबन्धे सति बृंहणान्यन्नादीनि स्निग्धोष्णानि च प्रयोजयेत् । तथा, पुन पुन स्नेहपान प्रदापयेत् । निरूहाश्च सहानुवासना वातिके गुल्मे कफपित्तानुरक्षिणो नरस्य प्रयोज्या ।

**वस्तिकर्म परं विद्याद्गुल्मघ्नं, तद्धि मारुतम् ।**
**स्वस्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति ॥ ७ ॥**
**तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः ।**
**प्रयुज्यमानैः शाम्यन्ति वातपित्तकफात्मकाः ॥ ८ ॥**

स०–बस्तिकर्म पर–अतिशयेन, गुल्मघ्न विद्यात् । यस्मात्तत्–बस्तिकर्म, स्वस्थाने–पक्वाशयाख्ये, प्रथम पवन जित्वा सद्य –शीघ्र, गुल्म जयति । यत एव तस्मात्कारणान्नित्य गुल्मा निरूहै सानुवासनै प्रयुज्यमानै शाम्यन्ति वातपित्तकफोत्था ।

**हिङ्गुसौवर्चलव्योषबिडदाडिमदीप्यकैः ।**
**पुष्कराजाजिधान्याम्लवेतसक्षारचित्रकैः ॥ ९ ॥**
**शठीवचाजगन्धैलासुरसैर्दधिसंयुतैः ।**
**शूलानाहहरं सर्पिः साधयेद्वातगुल्मिनाम् ॥ १० ॥**

स०–हिङ्ग्वादिभिर्दधियुक्तैर्घृत साधयेत् । तच्च पीत वातगुल्मवता शूलादिजित् । द्रव्येभ्यश्चतुर्गुण घृतम्, घृतसम दधि, घृताच्चतुर्गुण जलम्, इत्यत्र पाकक्रम ।

**हपुषोषणपृथ्वीकापञ्चकोलकदीप्यकैः ।**
**साजाजीसैन्धवैर्दध्ना दुग्धेन च रसेन च ॥ ११ ॥**
**दाडिमान्मूलकात्कोलात्पचेत्सर्पिर्निहन्ति तत् ।**
**वातगुल्मोदरानाहपार्श्वहृत्कोष्ठवेदनाः ॥ १२ ॥**
**योन्यर्शोग्रहणीदोषकासश्वासारुचिज्वरान् ।**

स०–हपुषादिभिर्घृताच्चतुर्थांशैर्द्रव्यैर्दधिदुग्धाभ्या दाडिममूलकबदररसै समै सर्पि पचेत् । तच्च वातगुल्मादीन् पराकुर्यात् ।

**दशमूलं बलां कालां सुषवीं द्वौ पुनर्नवौ ॥ १३ ॥**
**पौष्करैरण्डरास्नाश्वगन्धाभार्ग्यमृताशठीः ।**
**पचेद्गन्धपलाशं च द्रोणेऽपां द्विपलोन्मितम् ॥ १४ ॥**
**यवैः कोलैः कुलत्थैश्च माषैश्च प्रास्थिकैः सह ।**

१ 'तत्पूर्व द' ट ड । २ इदं गुल्मचिकित्सित चरके चि० ५ अध्याये, सुश्रुते उ० ४२ अध्याये, अष्टाङ्गसङ्ग्रहे चि० १६ अध्याये चास्ति वर्णितम् । ३ 'रूक्षव्यायामज' स च । ४ [ ] एतच्चिह्नान्तर्गत पाठ' ट ड पुस्तकयोर्नोपलभ्यते । ५ "पक्वाशयगत इति पक्वाशयसङ्गताधोभागे । बस्तिरिति निरूहोऽनुवासन च । जठराश्रय इति नाभिगते नाभिपार्श्वगते च ।" इति चक्र ।

१ 'प्रयोजयेत्' स च । २ 'वातगुल्मेषु क' स च. । ३ 'रक्षिणा' इ स द स.च । ४ 'द्वौऽतिशुद्धे' ड. । ५ 'काली' अ. । "काला–सारिवा" इति चक्रडल्हणौ ।

क्वाथेऽस्मिन्दधिपात्रे च घृतप्रस्थं विपाचयेत् ॥ १५ ॥
स्वरसैर्दाडिमाम्रातमातुलुङ्गोद्भवैर्युतम् ।
तथा तुषाम्बुधान्याम्लशुक्तैः श्लक्ष्णैश्च कल्कितैः॥१६॥
भार्गीतुम्बुरुषड्ग्रन्थाग्रन्थिरास्नाग्निधान्यकैः ।
यवानकयवान्यम्लवेतसासितजीरकैः ॥ १७ ॥
अजाजीहिङ्गुहपुषाकारवीवृषकोषकैः ।
निकुम्भकुम्भमूर्वेभपिप्पलीवेल्लदाडिमैः ॥ १८ ॥
श्वदंष्ट्रात्रपुसैर्वारुबीजहिंस्राश्मभेदकैः ।
मिसिद्विक्षारसुरससारिवानीलिनीफलैः ॥ १९ ॥
त्रिकटुत्रिपटूपेतैर्दाधिकं तद्व्यपोहति ।
रोगानाशुतरान् पूर्वान् कष्टानपि च शीलितम् ॥२०॥
अपस्मारगदोन्मादमूत्राघातानिलामयान् ।

स०–दशमूलादीन् पृथग् द्विपलप्रमाणान् यवादिभि प्रस्थप्रमाणै सह जलद्रोणे पचेत् । कैाला–नीलिनी । सुषवी–स्थूलजीरक । गन्धपलाशो–गन्धपत्रम् । अस्मिन् क्वाथे सामान्यपरिभाषया कृते दधिपात्रे च घृतप्रस्थ विपाचयेत् । किम्भूतम् ? दाडिमादिजै स्वरसैस्तथा तुषाम्ब्वादिभिश्च सर्पि समैर्युतम् । तथा भार्ग्यादिभि कल्कीकृतैरुपेतम् । यवानको–यवानीभेद । कारवी–अजमोदा । वृषको–वासक । ऊषक–कल्लर । इभपिप्पली–गजपिप्पली । अश्मभेद –पाषाणभेद । तत्–एतत्, दाधिक नाम घृत पूर्वोक्तानामयान् द्राक्तरा हन्ति । अपस्मारादींश्च कृच्छ्रानप्यभ्यस्त हन्ति । यदि चात्र स्वरसालाभस्तदा तन्त्रान्तरोक्ता कल्पना कार्या । तन्त्रान्तरे चोक्तम्–"प्रस्थ गृहीत्वा चूर्णस्य तोयस्य प्रस्थमावपेत् । अहोरात्रस्थित पूत तत्स्यात्स्वरसवद्गुणे ॥" मुनिरप्यूचे (च. चि अ १ पाद २।१२)–"स्वरसानामलाभे त्वयं विधि ,–चूर्णानामाढकमाढकमुदकस्याहोरात्रस्थित मृदितपूतमावपेत् तत्स्वरसवत् प्रयोज्यम् ।" इति ।

त्र्यूषणत्रिफलाधान्यचविकावेल्लचित्रकैः ॥ २१ ॥
कल्कीकृतैर्घृतं पक्वं सक्षीरं वातगुल्मनुत् ।

स०–त्र्यूषणादिभि कल्कीकृतैर्घृत समानक्षीर चतुर्गुणजलपक्व वातगुल्म नुदति ।

तुलां लशुनकन्दानां पृथक्पञ्चपलांशकम् ॥ २२ ॥
पञ्चमूलं महच्चाम्बुभारार्धे तद्विपाचयेत् ।
पादशेषं तदर्धेन दाडिमस्वरसं सुराम् ॥ २३ ॥
धान्याम्लं दधि चादाय पिष्टांश्चार्धपलांशकान् ।
त्र्यूषणत्रिफलाहिङ्गुयवानीचव्यदीप्यकान् ॥ २४ ॥
साम्लवेतससिन्धूत्थदेवदारून् पचेद्धृतात् ।
तैः प्रस्थं तत्परं सर्ववातगुल्मविकारजित् ॥ २५ ॥

स०–लशुनमूलतुला पलशत महत् पञ्चमूल च प्रत्येकं पञ्चपलद्वयम् । तदेतत्तोयाद्दशशते पादशेष विपाचयेत् । पादशेषादर्धेन दाडिमस्वरस सुरा धान्याम्ल दधि च गृहीत्वा त्र्यूषणादींश्च द्विकार्षिकानादाय तैर्घृतात् प्रस्थ पचेत् । तत्–घृत, सर्ववातगुल्मविकारजित् ।

षट्पलं वा पिबेत् सर्पिर्यदुक्तं राजयक्ष्मणि ।
प्रसन्नया वा क्षीरार्थः सुरया दाडिमेन वा ॥ २६ ॥
घृते मारुतगुल्मघ्नः कार्यो दध्नः सरेण वा ।

स०–राजयक्ष्मचिकित्सिते (श्लो. २२) यदुक्त षट्पल घृत तद्वा पिबेत् । राजयक्ष्मणीति विशेषण स्पष्टार्थम् । घृते षट्पलाख्ये क्षीरार्थ प्रसन्नया वा कार्य । अथवा सुरया दाडिमेन वा । दधिसरेण वा । एव क्षीर हित्वा प्रसन्नाद्यन्यतमेन साधितं घृत षट्पल वातगुल्मजित्स्यात् ।

वातगुल्मे कफो वृद्धो हत्वाऽग्निमरुचिं यदि ॥ २७ ॥
हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत्तु तम् ।

स०–वातजे गुल्मे श्लेष्मा वृद्ध सन्नग्नि हत्वा यद्यरुच्यादीन् जनयेत्तदा त–कफ, उल्लिखेत्–उद्वमेत् ।

शूलानाहविबन्धेषु ज्ञात्वा सस्नेहमाशयम् ॥ २८ ॥
निर्यूहचूर्णवटकाः प्रयोज्या घृतभेषजैः ।

स०–शूलादिषु सत्सु सस्नेहमाशय ज्ञात्वा घृतोक्तैरौषधै (घृतभेषजै )–अनन्तरोक्ताना घृतानामौषधै , क्वाथचूर्णगुटिका वा सह प्रयोज्या ।

कोलदाडिमघर्माम्बुतक्रमद्याम्लकाञ्जिकैः ॥ २९ ॥
मण्डेन वा पिबेत्प्रातश्चूर्णान्यन्नस्य वा पुरः ।

स०–कोलाद्यम्बुभिस्तक्रादिभिर्वा प्रातश्चूर्णानि–घृतौषधीनां सम्बन्धीनि, मण्डेन सह पिबेत् । अथवा अन्नस्य–आहारस्य, पुर –पूर्वं, पिबेत् ।

चूर्णानि मातुलुङ्गस्य भावितान्यसकृद्रसे ॥ ३० ॥
कुर्वीत कार्मुकतरान् वटकान् कफवातयोः ।

स०–चूर्णानि मातुलुङ्गरसेन मुहुर्मुहुर्भावितानि वटकान् कर्मकरणसमर्थान् कुर्वीत । कफवातयो –कफवातिके गुल्म इत्यर्थ ।

हिङ्गुवचाविजयापशुगन्धा-
दाडिमदीप्यकधान्यकपाठाः ।
पुष्करमूलशठीहपुषाग्नि-
क्षारयुगत्रिपटुत्रिकटूनि ॥ ३१ ॥
साजाजिचव्यं सहतिन्तिडीकं
सवेतसाम्लं विनिहन्ति चूर्णम् ।
हृत्पार्श्वबस्तित्रिकयोनिपायु-
शूलानि वाय्वामकफोद्भवानि ॥ ३२ ॥

१ "ऊषक –वातसाह्वय , तदेव सिंहमूत्रम्" इतीन्दु । २ 'गरोन्माद' इ । ३ 'काली' ट । ४ 'य स्वरसविधि ' 'पूत स्वरस' स.च. । ५ 'स्थ देवदारु प' इ ।

१ 'पलम् ।' ट । २ 'षधै क्वाथाद्या प्रयोज्या ।' ट. ।

कृच्छ्रान् गुल्मान् वातविण्मूत्रसङ्गं
कण्ठे बन्धं हृद्ग्रहं पाण्डुरोगम् ।
अन्नाश्रद्धाप्लीहदुर्नामहिध्मा-
वर्ध्माध्मानश्वासकासाग्निसादान् ॥ ३३ ॥

स०–हिङ्ग्वादिकमेतच्चूर्णं हृच्छूलादीन्निहन्ति तथा कृच्छ्र-गुल्मादींश्च । दोधकोपजातिशालिन्य ।

लवणयवानीदीप्यक-
कणनागरमुत्तरोत्तरं वृद्धम् ।
सर्वसमांशहरीतकी-
चूर्णं वैश्वानरः साक्षात् ॥ ३४ ॥

स०–लवणादिकं क्रमेणोत्तरं भागवृद्धं सर्वसमभागा हरीतकीति चूर्णमेतत्साक्षाद्वैश्वानरः, दीपनगुणसामान्यात् । आर्यावृत्तम् ।

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभोज्यः सर्पिषा संप्रयुक्तो
जनयति जठराग्निं वातगुल्मं निहन्ति ॥ ३५ ॥

स०–त्रिकटुकादीनां सप्तानां समधरणधृतानां–समप्रमाण-स्थापितानां, हिङ्गुभागोऽष्टमो 'देय' इत्यध्याहार्यम् । केचित्त्वेवं व्याख्यानयन्ति । धरणशब्देन पलस्य दशमो भाग उच्यते । धरणे धृता धरणधृताः, समाश्च ते धरणधृताश्च, तेषां समधर-णधृतानां त्रिकटुकादीनामष्टमो हिङ्गुभागो देयः । स च प्रथ-मकवले भोज्यो–भक्षणीयः । सर्पिषा सम्यक् प्रयुक्तो–मिश्रितो, जठराग्निं जनयति, वातगुल्मं च हन्ति । मालिनीवृत्तम् ।

हिङ्गूग्राबिडशुण्ठ्यजाजिविजयावाट्याभिधानामयै-
श्चूर्णैः कुम्भनिकुम्भमूलसहितैर्भागोत्तरं वर्धितैः ।
पीतः कोष्णजलेन कोष्ठजरुजो गुल्मोदरादीनयं
शार्दूलः प्रसभं प्रमथ्य हरति व्याधीन्मृगौघानिव ॥

स०–हिङ्गूग्रेत्यादिभिर्भागोत्तरमशाधिकं वर्धितैश्चूर्णैः कोष्ण-जलेन पीतो जठररुजादीन् पराकरोति । अयं शार्दूलाख्यश्चूर्णो हठात् प्रमथ्य व्याधीन् मृगौघानिव शार्दूलः–सिंहः । अत्यत एव श्लेषोपमाऽयमलङ्कारः । तथा, शार्दूलशब्देन शार्दूलविक्री-डितं वृत्तमुपलक्ष्यते । यथा भीमशब्देन भीमसेन इति । शार्दू-लविक्रीडितं वृत्तम् ।

सिन्धूत्थपथ्याकणदीप्यकानां
चूर्णानि तोयैः पिबतां कवोष्णैः ।
प्रयाति नाशं कफवातजन्मा
नाराचनिर्भिन्न इवामयौघः ॥ ३७ ॥

स०–सिन्धूत्थादीनां चूर्णानि कोष्णैस्तोयैः पिबतां कफवा-तजो रोगसङ्घो नाशं याति । क इव ? नाराचेन निर्भिन्न इवेत्यु-पमा । उपजातिवृत्तम् ।

पूतीकपत्रगजचिर्भटचव्यवह्नि-
व्योषं च संस्तरचितं लवणोपधानम् ।
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगुदोद्भवेषु ॥ ३८ ॥

स०–पूतिकादिद्रव्यं संस्तरचितं यथाक्रमनिर्दिष्टमुपर्युपरिभा-वेन संस्तीर्णं तथा लवणोपधानं लवणं सर्वोपर्युपधानं दत्त्वाऽन-न्तरं दग्ध्वा सञ्चूर्ण्य ततो दधिमस्तुना युतं गुल्मादिषु प्रयो-ज्यम् । वसन्ततिलकावृत्तम् ।

हिङ्गुत्रिगुणं सैन्धवमस्मात्त्रिगुणं च तैलमैरण्डम् ३९
तत्त्रिगुणरसोनरसं गुल्मोदरवर्ध्मशूलघ्नम् ।

स०–सैन्धवं हिङ्गुतस्त्रिगुणम् । अस्माच्च–सैन्धवात्, ऐर-ण्डतैलं त्रिगुणम् । तस्माच्च–ऐरण्डतैलात्, त्रिगुणं रसोनस्य रसम् । तदेतद्गुल्मादिघ्नम् । आर्यावृत्तम् ।

मातुलुङ्गरसो हिङ्गु दाडिमं बिडसैन्धवम् ॥ ४० ॥
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ।

स०–मातुलुङ्गरसादिकं सुरामण्डेन पातव्यं वातगुल्मपीडा-हरम् ।

शुण्ठ्याः कर्षं गुडस्य द्वौ धौतात्कृष्णतिलात्पलम् ४१
खादन्नेकत्र सञ्चूर्ण्य कोष्णक्षीरानुपो जयेत् ।
वातहृद्रोगगुल्मार्शोयोनिशूलशकृद्ग्रहान् ॥ ४२ ॥

स०–शुण्ठ्याः कर्षं गुडस्य द्वौ कर्षौ लुञ्चितकृष्णतिलात्पल-मित्येकत्र मिश्रयित्वा खादन् कोष्णक्षीरानुपः सन् वातहृद्रोगा-दीन् जयेत् ।

पिबेदेरण्डतैलं तु वातगुल्मी प्रसन्नया ।
श्लेष्मण्यनुबले वायौ, पित्ते तु पयसा सह ॥ ४३ ॥

स०–वातकफानुगे सत्येरण्डतैलं प्रसन्नया सह गुल्मवान् पिबेत् । पित्ते त्वनुगते पयसा सहैरण्डतैलं पिबेत् ।

विवृद्धं यदि वा पित्तं सन्तापं वातगुल्मिनः ।
कुर्याद्विरेचनीयोऽसौ सस्नेहैरानुलोमिकैः ॥ ४४ ॥
तापानुवृत्तावेवं च रक्तं तस्यावसेचयेत् ।

स०–वातगुल्मिनः पित्तं विवृद्धं यदि सन्तापं कुर्यात्, तदा-ऽसौ–वातगुल्मी, विरेचनीयो–विरेचनार्हः । कैः ? आनुलोमि-कैर्द्रव्यैः स्नेहयुतैः । एवं [च]–विरक्तस्यापि, तापानुवर्तने सति तस्य रक्तस्रावं कुर्यात् ।

१ 'माशं हरी' 'मांशा विजया चूर्णो वै' अ । २ 'षा चूर्णकोऽयं जनयति भृशमभि' अ.इ । ३ 'श्चूर्ण० पीत' ट.ड ।

१ 'ण्डुगदो' अ. । २ 'लमज्वराप' अ. । ३ 'एवमपि तापा' ट ड. ।

**[1]साधयेच्छुद्धशुष्कस्य [2]लशुनस्य चतुष्पलम् ॥ ४५ ॥**
**क्षीरोदकेऽ[1]ष्टगुणिते क्षीरशेषं च पाचयेत् ।**
**वातगुल्ममुदावर्तं गृध्रसीं विषमज्वरम् ॥ ४६ ॥**
**हृद्रोगं विद्रधिं शोषं [3]साधयत्याशु तत्पयः ।**

स०-क्षीरं चोदकं च क्षीरोदकम् । तस्मिन् लशुनादष्टगुणे शुद्धशुष्कस्य लशुनस्य चतुष्पलं साधयेत् । ततः क्षीरशेषं विपाचयेत् । तच्च क्षीरशेषं वातगुल्मादीन्य(न)भिभवति ।

**तै[1]लं प्रसन्ना गोमूत्रमारनालं यवाग्रजः ॥ ४७ ॥**
**गुल्मं जठरमानाहं पीतमेकत्र साधयेत् ।**

स०-तैलादिकमेकत्र-मिलितं, पीतं गुल्मादीन् हन्ति ।

**चित्रकग्रन्थिकैरण्डशुण्ठीक्वाथः परं हितः ॥ ४८ ॥**
**शूलानाहविबन्धेषु सहिङ्गुबिडसैन्धवः ।**

स०-चित्रकादिक्वाथो हिङ्ग्वादियुतः परं शूलादिषु हितः ।

**पुष्करैरण्डयोर्मूलं यवधन्वयवासकम् ॥ ४९ ॥**
**जलेन क्वथितं पीतं कोष्ठदाहरुजापहम्[4] ।**

स०-पुष्करैरण्डमूलादिकं जलेन क्वथितं पीतं कोष्ठदाहादि-जित् ।

**वाट्याह्वैरण्डदर्भाणां मूलं दारु महौषधम् ॥ ५० ॥**
**पीतं निःक्वाथ्य तोयेन कोष्ठ[5]पृष्ठांसशूलजित् ।**

स०-वाट्याह्वादीनां मूलं देवदार्वादि च तोयक्वथितं पीतं कोष्ठादिशूलजित् ।

**शिलाजं पयसाऽनल्पपञ्चमूलशृतेन वा ॥ ५१ ॥**
**वातगुल्मी पिबेत्**

स०-शिलाजतु वा महत्पञ्चमूलक्वथितेन क्षीरेण सह वातगुल्मी पिबेत् ।

**वाट्यमुदावर्ते तु भोजयेत् ।**
**स्निग्धं पैप्पलिकैर्यूषैर्मूलकानां रसेन वा ॥ ५२ ॥**

स०-उदावर्ते सति वाट्यं स्निग्धं-सस्नेहं, पिप्पलीसंस्कृतैर्यूषैः सह भोजयेत् । अथवा, मूलकरसेनाश्नीयात् ।

**बद्धविण्मारुतोऽश्नीयात्क्षीरेणोष्णेन यावकम् ।**
**कुल्माषान् वा बहुस्नेहान् भक्षयेल्लवणोत्तरान् ॥५३॥**

स०-बद्धविण्मारुत उष्णेन क्षीरेण यावकमश्नीयात् । अथवा, कुल्माषान् बहुस्नेहान् लवणप्रधानान् भक्षयेत् ।

**नीलिनीत्रिवृतादन्तीपथ्याकम्पिल्लकैः सह ।**
**समलाय घृतं देयं सबिडक्षारनागरम् ॥ ५४ ॥**

स०-नीलिन्यादिभिः सह सदोषाय नराय बिडादियुतं घृतं देयम् ।

**नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ।**
**पचेद्विडङ्गं व्याघ्रीं च पालिकानि जलाढके ॥ ५५ ॥**
**रसेऽष्टभागशेषे तु घृतप्रस्थं विपाचयेत् ।**
**दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च ॥ ५६ ॥**
**ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम् ।**
**जीर्णे सम्यग्विरिक्तं च भोजयेद्रसभोजनम् ॥ ५७ ॥**
**गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ।**
**श्वित्रं प्लीहानमुन्मादं हन्त्येतन्नीलिनीघृतम् ॥ ५८ ॥**

स०-नीलिन्यादीन् पलिकान् जलाढके पचेत् । अष्टभाग-शेषे च रसे दधिप्रस्थेन सुधाक्षीरपलेन च मिश्रयित्वा घृतप्रस्थं विपाचयेत् । ततो घृतपलं यवागूमण्डमिश्रितं दद्यात् । जीर्णे च घृते सम्यग्विरिक्तं नरं रसयुतं भोजनं भोजयेत् । एतच्च नीलिनीघृतं गुल्मादीन् हन्ति ।

**कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्तकाः ।**
**शालयो मदिरा सर्पिर्वातगु[1]ल्मचिकित्सितम् ॥५९॥**

स०-कुक्कुटादयो वातगुल्मे चिकित्सित-उपक्रमः ।

**मितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम् ।**
**समण्डा वारुणी पानं तप्तं वा धान्यकैर्जलम् ॥ ६० ॥**

स०-वातगुल्मिनां च भोजनं मितमुष्णं द्रवं स्निग्धं च स्यात् । वारुणी समण्डा धान्यकैः शृतं जलं वा पानं स्यात् ।

**स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ।**

स०-पैत्तिके गुल्मे स्निग्धोष्णेनोत्थिते सति स्रंसनं हितम् ।

तदेव विरेचनमाह—

**द्राक्षाभयागुडरसं कम्पिल्लं वा [2]मधुद्रुतम् ॥ ६१ ॥**
**कल्पोक्तं रक्तपित्तोक्तं**

स०-द्राक्षाभयागुडरसः स्रंसनं हितम् । अथवा, मधुद्रुतं कम्पिल्लं स्रंसनं हितम् । कल्पोक्तं विरेचनं-विरेचनकल्पविहितं, ( हृ. क. अ. २ ), रक्तपित्तोक्तं-"त्रिवृता त्रिफला" ( हृ. चि. अ. २।१० ) इत्यादिकं, हितम् ।

---

१ "साधयेदित्यादौ शुद्धशुष्कस्य-निस्तुषीकृतस्य आपूर्णवीर्यस्य च, क्षीरोदकेऽष्टगुणिते इत्यत्र 'भागेऽनुक्ते समानम्' इति वचनात् क्षीरं चतुर्गुणं जलं च चतुर्गुणमिति मिलित्वाऽष्टगुणितं क्षीरावशिष्टं साधयेत् । गुल्मस्य बहुभेषजसाध्यतया षोडशपलक्षीरमानं न दोषावहं भवति । क्षीररसोनयोश्च यद्यपि सहोपयोगो विरुद्धस्तथाऽपि व्याधिमहिम्ना महर्षिवचनादविवादः ॥ तैलं प्रसन्नेत्यादौ यौगिकत्वाज्जतूकर्णसंवादाच्चैरण्डतैलं ज्ञेयम् । उक्तं हि-'आरनालमूत्रक्षारैः संयोज्य तैलमैरण्डम् ।' इत्यादि" इति चक्रः । "रसोनचतुष्पलापेक्षया क्षीरनीरयोः प्रत्येकं चातुर्गुण्यान्मिलित्वा द्वात्रिंशत्पलानि स्युः । अनयोश्च द्रवत्वेऽपि न द्वैगुण्यम्, रसोनपलोल्लेखेनाष्टगुणत्वविधानात् ।" इति शिवदासः । २ 'रसोनस्य' चक्र. । ३ 'नाशयत्या' चक्र. । ४ 'तं सत् कोष्ठानाहादि' ट. । ५ 'पृष्ठ्यंस' इ. ।

१ 'ल्मभिषग्जितम्' स. च. । २ 'मधुद्रवम्' इ. स.च. ।

**गुल्मे रूक्षोष्णजे पुनः ।**
**परं संशमनं सर्पिस्तिक्तं वासाघृतं शृतम् ॥ ६२ ॥**
**तृणाख्यपञ्चकक्वाथे जीवनीयगणेन वा ।**
**शृतं तेनैवं वा क्षीरं न्यग्रोधादिगणेन वा ॥ ६३ ॥**

स०–रूक्षोष्णजे पैत्तिके गुल्मे सर्पिस्तिक्त–कुष्ठचिकित्सितोक्त ( हृ चि अ १९।२), तथा वासाघृत ( हृ चि अ २।४२) संशमन श्रेष्ठम् । तृणाख्य पञ्चक–"दर्भकासेक्षु" ( हृ सू अ ६।१७१) इत्यादि, तस्य क्वाथे शृत घृत हितम् । अथवा, जीवनीयगणेन शृत घृत हितम् । तेनैवं–जीवनीयगणेन, शृतं क्षीर हितम् । न्यग्रोधादिगणेन वा शृत क्षीर हितम् ।

**तत्रापि स्रंसनं युञ्ज्याच्छीघ्रमात्ययिके भिषक् ।**

स०–तत्रापि–न केवल स्निग्धोष्णजे रूक्षोष्णजेऽपि पैत्तिके सामान्यतो वा समुत्पन्ने गुल्मे, आत्ययिके शीघ्र स्रंसन युञ्ज्यात् ।

केन ? इत्याह—

**वैरेचनिकसिद्धेन सर्पिषा पयसाऽपि वा ॥ ६४ ॥**

स०–विरेचनविहितद्रव्यसिद्धेन सर्पिषा क्षीरेण वा ।

**रसेनामलकेक्षूणां घृतप्रस्थं विपाचयेत् ।**
**पथ्यापादं पिबेत्सर्पिस्तत्सिद्धं पित्तगुल्मनुत् ॥ ६५ ॥**
**पिबेद्वा तैल्वकं सर्पिर्यच्चोक्तं पित्तविद्रधौ ।**

स०–आमलकस्येक्षोश्च रसेनै घृताच्चतुर्गुणितेनाढकमानेन पथ्यापाद घृतप्रस्थ विपाचयेत् । तच्च सिद्ध पित्तगुल्मं हन्ति । तैल्वकमथवा सर्पि ( हृ चि. अ २१।३२ ) पिबेत् । यच्च पित्तविद्रधावुक्त घृत (हृ चि अ १३।४) तच्च पिबेत् ।

**द्राक्षां पयस्यां मधुकं चन्दनं पद्मकं मधु ॥ ६६ ॥**
**पिबेत्तण्डुलतोयेन पित्तगुल्मोपशान्तये ।**

स०–द्राक्षादि तण्डुलजलेन सह पित्तगुल्मशान्तये पिबेत् ।

**द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम् ॥ ६७ ॥**
**अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत् ।**
**पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम् ॥ ६८ ॥**
**तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः ।**

स०–त्रायन्त्या द्विपल जलद्विप्रस्थसाधितमष्टभागावशेष *पटेन पूत क्षीरसम पिबेत् । तस्योपरि कोष्ण क्षीरमेव यथाशक्ति पिबेत्–नान्यत्किञ्चित् । तेन–क्षीरेण, अपहृतदोषस्य गुल्म पैत्तिक शाम्यति ।

**दाहेऽभ्यङ्गो घृतैः शीतैः साज्यैर्लेपो हिमौषधैः॥६९॥**
**स्पर्शः सरोरुहां पत्रैः पात्रैश्च प्रचलज्जलैः ।**

स०–पैत्तिके[*४] गुल्मे दाहे सति घृतै शीतै –शीतवीर्यसाधितै स्पर्शतश्च शीतै, अभ्यङ्गस्तथा लेप शीतवीर्यौषधै सघृतैः स्यात् । पद्मपत्रै पात्रैश्च प्रचलज्जल स्पर्श ।

**विदाहपूर्वरूपेषु शूले वह्नेश्च मार्दवे ॥ ७० ॥**
**बहुशोऽपहरेद्रक्तं पित्तगुल्मे विशेषतः ।**

स०–विदाहपूर्वरूपेषु गुल्मेषु तथा शूले वह्निमान्द्ये च सति बहून् वारान् रक्त हरेत् । पित्तगुल्मे विशेषेणास्र हरेत् ।

**छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ॥७१॥**
**रक्तं हि व्यम्लतां याति, तच्च नास्ति न चास्ति रुक् ।**

स०–छिन्नमूला गुल्मा न विदह्यन्ते–न पाक यान्ति । च–पुन , क्षय यान्ति । हि–यस्मात्, रक्तमन्त स्थितं व्यम्लीभाव याति । तच्च–रक्त, नास्ति ततस्तदुत्था रुगपि नास्ति ।

**हृतदोष परिम्लानं जाङ्गलैस्तर्पितं रसैः ॥ ७२ ॥**
**समाश्वस्तं सशेषार्ति सर्पिरभ्यासयेत्पुनः ।**

स०–हृतदोष परिम्लान नर जाङ्गलमासरसैस्तर्पित समाश्वस्त सन्त सशेषार्ति सर्पिरभ्यासयेत् ।

**रक्तपित्तातिवृद्धत्वात्क्रियामनुपलभ्य वा ॥ ७३ ॥**
**गुल्मे पाकोन्मुखे सर्वा पित्तविद्रधिवत्क्रिया ।**

स०–रक्तपित्तातिवृद्धत्वाद्धेतो क्रिया वाऽनुपलभ्य–अनासाद्य, गुल्मे पाकोन्मुखे सति सर्वा पित्तविद्रधितुल्या क्रिया स्यात् ।

**शालिर्गव्याजपयसी पटोली जाङ्गलं घृतम् ॥ ७४ ॥**
**धात्री परूषकं द्राक्षा खर्जूरं दाडिमं सिता ।**
**भोज्यं, पानेऽम्बु बलया बृहत्याद्यैश्च साधितम् ॥७५॥**

स०–शाल्यादि भोज्यम् । पाने बलया साधितं जल बृहत्यादिना वा ।

**श्लेष्मजे[२] वामयेत्पूर्वमवम्यमुपवासयेत् ।**
**तिक्तोष्णकटुसंसर्ग्या वह्निं सन्धुक्षयेत्ततः ॥ ७६ ॥**
**हिङ्ग्वादिभिश्च[३] द्विगुणक्षारहिङ्ग्वम्लवेतसैः ।**

स०–श्लेष्मजे गुल्मे पूर्वं वामयेत् । अवमनार्हं[४] तु लङ्घयेत् । कृतोपवासस्य तिक्तोष्णकटुद्रव्ययुतया ससर्ग्या वह्निं दीपयेत् । तथा हिङ्ग्वादिभिरग्निं सन्धुक्षयेत् । किम्भूतै ? द्विगुणानि क्षारहिङ्ग्वम्लवेतसानि येषु तै ।

---

१ अथवा तृणपञ्चमूलक्वाथे जीवनीयगणकल्केन शृत सर्पिर्हितम् । तथा तेनैव–तृणपञ्चमूलक्वाथे जीवनीयगणकल्केन शृत क्षीर, न्यग्रोधादिगणेन वा शृत क्षीर हितमित्यर्थ । तथा च सङ्ग्रहे (चि अ १६)–"अथवा तृणपञ्चमूलक्वाथेन जीवनीयकल्केन च सिद्ध सर्पि । तथा न्यग्रोधादिगणेन तृणपञ्चमूलादिभिर्वा पृथक् साधित क्षीरम् ।" इति । अरुणदत्तव्याख्यान त्वयुक्तमिव प्रतिभाति । २ 'ष्णगुणे गुल्मे' ड । 'जेऽपि गुल्मे' ट । ३ 'सेन पथ्या' ट ड ।
*४ 'पटेन' इति 'पैत्तिके गुल्मे' इति च ट ड. पुस्तकयोर्नोपलभ्यते।

१ 'च' स च । २ 'कफजे' अ । ३ हिङ्ग्वादिभिरिति हिङ्ग्वादिघृतचूर्णै पूर्वोक्तै (श्लो ९ श्लो. ३१)। ४ 'नार्हं तु' ड.।

निगूढं यदि वोन्नद्धं स्तिमितं कठिनं स्थिरम् ॥७७॥
आनाहादियुतं गुल्मं संस्वेद्य विनयेदनु ।
घृतं सक्षारकटुकं पातव्यं कफगुल्मिनाम् ॥ ७८ ॥

स०—निगूढादिधर्मयुक्तं गुल्मं संशोध्य(सस्वेद्य) विनयेत्—उपशमयेत् । पश्चात् कफगुल्मिना घृतं क्षारकटुक्युतं पातव्यम् ।

सव्योषक्षारलवणं सहिङ्गुबिडदाडिमम् ।
कफगुल्मं जयत्याशु दशमूलशृतं घृतम् ॥ ७९ ॥

स०—व्योषादियुतं दशमूलपक्कं सर्पिः कफगुल्मं शीघ्रमेव हन्ति ।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम् ।
अल्पं तोयाढके साध्यं पादशेषेण तेन च ॥ ८० ॥
तुल्यं घृतं तुल्यपयो विपचेदक्षसम्मितैः ।
विडङ्गहिङ्गुसिन्धूत्थयावशूकशठीबिडैः ॥ ८१ ॥
सद्वीपिरास्नायष्ट्याह्वषड्ग्रन्थाकणनागरैः ।
एतद्भल्लातकघृतं कफगुल्महरं परम् ॥ ८२ ॥
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासजित् ।

स०—भल्लातकानां द्विपलं अल्पं—ह्रस्वं, पञ्चमूलं पृथक् पलप्रमाणं तोयाढके साधनीयम् । पादशेषेण च तेन क्वाथेन समं सर्पिस्तुल्यक्षीरं विडङ्गादिभिः कल्कीभूतैः कार्षिकैर्विपाचयेत् । एतच्च भल्लातकघृतं परं—सुष्ठु, कफगुल्महरं प्लीहादिजिच्च ।

ततोऽस्य गुल्मे देहे च समस्ते स्वेदमाचरेत् ॥ ८३ ॥

स०—ततो—घृतपानादनन्तरं, गुल्मे देहे चास्य समस्ते स्वेदमाचरेत् ।

सर्वत्र गुल्मे प्रथमं स्नेहस्वेदोपपादिते ।
या क्रिया क्रियते याति सा सिद्धिं न विरूक्षिते ॥८४॥

स०—[सर्वत्र—] सर्वस्मिन्नष्टविधे च, गुल्मे प्रथम—आदौ, स्नेहस्वेदाभ्यामुपपादिते सति या क्रिया क्रियते सा सिद्धिं याति । या तु विरूक्षिते सति क्रिया सा सिद्धिं न याति ।

स्निग्धस्विन्नशरीरस्य गुल्मे शैथिल्यमागते ।
यथोक्तां घटिकां न्यस्येद्गृहीतेऽपनयेच्च ताम् ॥ ८५ ॥
वस्त्रान्तरं ततः कृत्वा छिन्द्याद्गुल्मं प्रमाणवित् ।
विमार्गाजपदादर्शैर्यथालाभं प्रपीडयेत् ॥ ८६ ॥
प्रमृज्याद्गुल्ममेवैकं न त्वन्त्रहृदयं स्पृशेत् ।

स०—स्निग्धस्विन्नशरीरस्य गुल्मे शैथिल्यं याते सति यन्त्रविध्युदितां घटिकां योजयेत् । गृहीते च गुल्मे तामपसारयेत् । अनन्तरं वस्त्रव्यवहितं गुल्मं कृत्वा प्रमाणवित् विमार्गादिभिर्यथालाभं भिन्द्यात्—विदारयेत् सूचिकादिना । विमार्गो—दारुमयशस्त्राकृतिर्वस्तुविशेषश्चर्मकारसम्बन्धी । तथा, गुल्ममेव केवलं प्रपीडयेत् प्रमृज्याच्च । न पुनरन्त्रं हृदयं [च] स्पृशेत् ।

तिलैरण्डातसीबीजसर्षपैः परिलिप्य च ॥ ८७ ॥
श्लेष्मगुल्ममयस्पात्रैः सुखोष्णैः स्वेदयेत्ततः ।

स०—अथवा कफगुल्मं तिलादिभिः परिलिप्यानन्तरं लोहभाजनैः सुखोष्णैः स्वेदयेत् । अयस्पात्रैरिति "अत कृकमि" इत्यादिना सादेशः ।

एवं च विसृतं स्थानात् कफगुल्मं विरेचनैः ॥ ८८ ॥
सस्नेहैर्बस्तिभिश्चैनं शोधयेद्दाशमूलिकैः ।

स०—एवं—अस्मिन् प्रकारे कृते सति, स्थानाच्चलितं कफगुल्मं स्नेहयुक्तैर्विरेचनैर्बस्तिभिश्च दाशमूलिकैः (हृ क अ ४।४)शोधयेत् ।

पिप्पल्यामलकद्राक्षाश्यामाद्यैः पालिकैः पचेत् ॥८९॥
एरण्डतैलहविषोः प्रस्थौ पयसि षड्गुणे ।
सिद्धोऽयं मिश्रकः स्नेहो गुल्मिनां स्रंसनं हितम्॥९०
वृद्धिविद्रधिशूलेषु वातव्याधिषु चामृतम् ।

स०—पिप्पल्यादिभिः पलोन्मितैरेरण्डतैलसर्पिषोः प्रस्थौ द्वौ षड्गुणे क्षीरे पचेत् । अयं मिश्रकाख्यः स्नेहो गुल्मिनां परं स्रंसनं वृद्ध्यादिषु चामृततुल्यम् ।

पिबेद्वा नीलिनीसर्पिर्मात्रया द्विपलीनया ॥ ९१ ॥
तथैव सुकुमाराख्यं घृतान्यौदरिकाणि वा ।

स०—अथवा नीलिनीघृतं—प्रागुक्तं ( श्लो ५५ ), स्रंसनं द्विपलमात्रया पिबेत् । तथैव द्विपलमात्रया सुकुमाराख्यं घृतं—विद्रध्युक्तं (हृ चि अ १३।४१), स्रंसनार्थं पिबेत् । उदरचिकित्सितोक्तानि वा घृतानि पिबेत् ।

द्रोणेऽम्भसः पचेद्दन्त्याः पलानां पञ्चविंशतिम् ॥९२॥
चित्रकस्य तथा पथ्यास्तावतीस्तद्रसे स्रुते ।
द्विप्रस्थे साधयेत्पूते क्षिपेद्दन्तीसमं गुडम् ॥ ९३ ॥
तैलात्पलानि चत्वारि त्रिवृतायाश्च चूर्णतः ।
कणाकर्षौ तथा शुण्ठ्याः सिद्धे लेहे तु शीतले ॥९४॥
मधु तैलसमं दद्याच्चतुर्जाताच्चतुर्थिकाम् ।
अतो हरीतकीमेकां सावलेहपलामदन् ॥ ९५ ॥
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ।

---

१ 'सशोध्य' अ । २ 'सनुत्' अ स च । ३ "विमार्गो—मोचकानां चर्मणि रेखाकरणं काष्ठमयम्, यस्य पीवाङ्ग इति [कलबूद इति च] प्रसिद्धिः । अजपदस्य प्रान्तः क्रियायोगि । आदर्शस्य—दर्पणस्य, वर्तुला धारा क्रियायोगिनी । एतेषामन्यतमं—यथालाभम् । प्रमृज्यात्—प्रक्षयेत् ।" इतीन्दुः ।

१ 'सूचका' ड । २ 'वा' इति पाठोऽरुणदत्तसम्मतोऽपि सङ्ग्रहविरुद्धत्वादयुक्तः । ३ 'लीकया' इ । ४ "हरीतक्याः पञ्चविंशतिं फलसङ्ख्यया ।" इतीन्दुः । "हरीतक्याः फलानि कर्पटे पोट्टलीं बद्ध्वा अगस्त्यहरीतकीवत् क्वथनीयानि । तैलमुत्स्विन्नहरीतकीभर्जनार्थम्, न तु त्रिवृच्चूर्णपरिभर्जनार्थम्, भर्जनेन विरेचनशक्त्यपकर्षप्रसङ्गात् । प्रस्थमत्र दोषस्य सार्धत्रयोदशपलमानम् । उक्तं हि भोजे—'वमने च विरेके च तथा शोणितमोक्षणे । सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥' इति ।" इति शिवदासः । ५ 'शृते' अ.

**गुल्महृद्रोगदुर्नामशोफानाहगरोदरान् ॥ ९६ ॥**
**कुष्ठोत्क्लेशारुचिप्लीहग्रहणीविषमज्वरान् ।**
**घ्नन्ति दन्तीहरीतक्यः पाण्डुता च सकामलाम् ॥९७॥**

स०–जलद्रोणे दन्तीपलाना पञ्चविंशति, [तथा] चित्रकस्य पलाना पञ्चविंशतिं, [तथा] हरीतकीस्तावती –पञ्चविंशति, पचेत् । तद्रसे स्रुते द्विप्रस्थदघ्ने पूते पथ्यासहिते दन्तीतुल्य गुड क्षिपेत् । तैलपलानि चत्वारि, त्रिवृत्पलानि च चत्वारि । कणाया कर्षौ द्वौ शुण्ठ्याश्च । सिद्धे चास्मिन् लेहे तु सुशीते तैलतुल्य माक्षिक दद्यात् । चतुर्जातात् समुदिताच्चतुर्थिका–पलापरसञ्ज्ञा, दद्यात् । अतो–लेहात्, पथ्यामेका सावलेहपलयुता भक्षयेत् । स्निग्धो नर सुखं दोषप्रस्थ विरिच्यते निरामय । एता दन्तीहरीतक्य प्लीहा(गुल्मा)दीन् घ्नन्ति ।

**सुधाक्षीरद्रवं चूर्ण त्रिवृतायाः सुभावितम् ।**
**कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥ ९८ ॥**

स०–सुधाक्षीरेण द्रव त्रिवृतायाश्चूर्ण प्रकृतत्वात्सुधाक्षीरेणैव सुभावित कर्षप्रमाण मधुसर्पिर्भ्यां लीढ्वा सम्यग्विरिच्यते ।

**कुष्ठश्यामात्रिवृद्दन्तीविजयाक्षारगुग्गुलून् ।**
**गोमूत्रेण पिबेदेकं तेन गुग्गुलुमेव वा ॥ ९९ ॥**

स०–कुष्ठादीन् गोमूत्रेण पिबेत् । अथवा, तेन–गोमूत्रेण, गुग्गुलुमेकमेव पिबेत् ।

**निरूहान् कल्पसिद्ध्युक्तान् योजयेद्गुल्मनाशनान् ।**

स०–कल्पसिद्ध्युक्तान्निरूहान् गुल्मनाशनान् योजयेत् ।

**कृतमूलं महावास्तुं कठिनं स्तिमितं गुरुम् ॥ १०० ॥**
**गूढमांसं जयेद्गुल्मं क्षारारिष्टाग्निकर्मभिः ।**
**एकान्तरं द्व्यन्तरं वा विश्रमय्याथ वा त्र्यहम् ॥१०१॥**
**शरीरदोषबलयोर्वर्धनक्षपणोद्यतः ।**

स०–कृतमूलादिधर्मयुक्त गुल्म क्षारादिभिर्जयेत् । एकान्तरं द्व्यन्तर वा त्र्यह वा विश्रमय्य शरीरदोषबलयोर्यथाक्रम वर्धनक्षपणयोरुद्यत सन् ।

**अर्शोऽश्मरीग्रहण्युक्ताः क्षारा योज्याः कफोल्बणे १०२**

स०–कफाधिके गुल्मेऽर्शोऽश्मरीग्रहणीषूक्ता ये क्षारास्ते योज्या ।

**देवदारुत्रिवृद्दन्तीकटुकापञ्चकोलकम् ।**
**स्वर्जिकायावशूकाख्यौ श्रेष्ठापाठोपकुञ्चिकाः ॥ १०३ ॥**
**कुष्ठं सर्पसुगन्धा च द्व्यक्षांशं पटुपञ्चकम् ।**
**पालिकं चूर्णितं तैलवसादधिघृताप्लुतम् ॥ १०४ ॥**
**घटस्यान्तः पचेत्पक्कमग्निवर्णे घटे च तम् ।**
**क्षारं गृहीत्वा क्षीराज्यतक्रमद्यादिभिः पिबेत् ॥१०५॥**

**गुल्मोदावर्तवर्ध्माऽर्शोजठरग्रहणीकृमीन् ।**
**अपस्मारगरोन्मादयोनिशुक्रामयाश्मरीः ॥ १०६ ॥**
**क्षारागदोऽयं शमयेद्विषं चाखुभुजङ्गजम् ।**

स०–देवदार्वादिसर्पसुगन्धापर्यन्त द्विकार्षिक लवणपञ्चक पालिकमेतत्समस्त चूर्णीकृत तैलवसादधिघृतैराप्लुत–आलोडित, घटस्य मध्येऽन्तर्धूम पचेत् । सर्पसुगन्धा–नाकुली । अग्निवर्णे च घटे सति पक्क त क्षार गृहीत्वा यथादोष क्षीरादिभि पिबेत् । गुल्मादीन् जयेत् । अय क्षारागद आखुज भुजङ्गज च विष द्राक् शमयेत् ।

**श्लेष्माण मधुरं स्निग्धं रसक्षीरघृताशिनः ॥ १०७ ॥**
**छित्त्वा भित्त्वाऽऽशयात् क्षारः क्षरत्वात्क्षारयत्यधः ।**

स०–श्लेष्माण मधुर स्निग्ध मासरसाद्याशिन. क्षार क्षा(क्ष)रत्वादाशय(यात्) छित्त्वा भित्त्वाऽधस्तात् पातयति ।

**मन्देऽग्नावरुचौ सात्म्यैर्मद्यैः सस्नेहमश्नताम् ॥१०८॥**
**योजयेदासवारिष्टान्निगदान् मार्गशुद्धये ।**

स०–मन्देऽग्नावरुचौ च सत्या मद्यै सात्म्यै सहस्नेहमाहारमश्नतामासवादीन् मार्गशुद्धये योजयेत् ।

अधुनाऽन्नपानमाह—

**शालयः षष्टिका जीर्णाः कुलत्था जाङ्गलं पलम् १०९**
**चिरिबिल्वाग्नितर्कारीयवानीवरुणाङ्कुराः ।**
**शिग्रुस्तरुणबिल्वानि बालं शुष्कं च मूलकम् ॥११०॥**
**बीजपूरकहिङ्ग्वम्लवेतसक्षारदाडिमम् ।**
**व्योष तक्रं घृतं तैलं भक्तं, पान तु वारुणी ॥ १११ ॥**
**धान्याम्लं मस्तु तक्रं च यवानीबिडचूर्णितम् ।**
**पञ्चमूलश्टृतं वारि जीर्णं मार्द्वीकमेव वा ॥ ११२ ॥**

स०–शालय इत्यादि भक्तान्त भक्तम् । पान तु वारुण्यादि मार्द्वीकान्तम् ।

**पिप्पलीपिप्पलीमूलचित्रकाजाजिसैन्धवैः ।**
**सुरा गुल्मं जयत्याशु जगलश्च विमिश्रितः ॥११३॥**

स०–पिप्पल्यादिभि सह सुरा शीघ्रमेव गुल्म जयति । जगलश्च पिप्पल्यादिभिर्विमिश्रितो गुल्म जयति ।

**वमनैर्लङ्घनै. स्वेदै. सर्पिःपानैर्विरेचनैः ।**
**वस्तिक्षारासवारिष्टगुलिकापथ्यभोजनैः ॥ ११४ ॥**

---

१ 'लान्' इ । २ 'दन्तीबीजाना पलानि पञ्च' ट । ३ सङ्ग्रहे भेडे चास्मिन् क्षारागदे पिप्पली हस्तिपिप्पली चेति पिप्पलीद्वयमुक्तमिति विशेष ।

१ 'रध मासक्षीर' स च । २ 'छित्त्वा छित्त्वा' अ इ स च । ३ 'शय क्षा' अरुण । ४ 'त्वात्पातय' इति क्वचित् । ५ 'मधुरस्निग्धमास' ट ड । ६ अङ्कुरशब्दस्य चिरिबिल्वादिभि पञ्चभि सम्बन्ध कार्य । तथा च चरक (चि अ ६।१६५)–"चिरिबिल्वस्याङ्कुराणा यवान्याश्चित्रकस्य च ।" इति । ७ 'शिग्रोस्तरुणमूलानि' अ । ८ 'जाङ्गलश्च' अ. । ९ 'गुलिमका' अ.इ. । 'रिष्टैर्गौल्मिकै. पथ्य' इति क्वचित् ।

**श्लैष्मिको बद्धमूलत्वाद्यदि गुल्मो न शाम्यति ।**
**तस्य दाहं हृते रक्ते कुर्यादन्ते शरादिभिः ॥ ११५ ॥**

स०–वमनादिभि प्रयुक्तै श्लैष्मिको गुल्मो बद्धमूलत्वाद्यदि न शाम्यति, तस्य–गुल्मस्य, हृते रक्तेऽन्ते दाह शरादिभि कुर्यात् ।

अथ दाहविधान प्रस्तूयते—

**अथ गुल्म सपर्यन्तं वाससाऽन्तरित भिषक् ।**
**नाभिबस्त्यन्त्रहृदय रोमराजी च वर्जयन् ॥ ११६ ॥**
**नातिगाढ परिमृशेच्छरेण ज्वलताऽथवा ।**
**लोहेनारणिकोत्थेन दारुणा तैन्दुकेन वा ॥ ११७ ॥**
**ततोऽग्निवेगे शमिते शीतैर्व्रण इव क्रिया ।**

स०–गुल्म पर्यन्ते सह वस्त्रेणान्तरित–आच्छादित, नाभ्यादि वर्जयन्नातिशयेन परामृशेद्देह । शरेण लोहेन वा ज्वलता । किम्भूतेन ? आरणिकोत्थेन । अथवा, तैन्दुकेन काष्ठेन । अनन्तरमग्निवेगे शमिते सति शीतै प्रदेहादिभिर्व्रण इव क्रिया स्यात् ।

**आमान्वये तु पेयाद्यैः सन्धुक्ष्याग्निं विलङ्घिते ॥११८॥**
**स्वं स्वं कुर्यात्क्रमं मिश्रं मिश्रदोषे च कालवित् ।**

स०–आमान्वये च सति वह्नि पेयाद्यै सन्धुक्ष्य विलङ्घिते सति स्व स्व क्रम–यथादोष, कुर्यात । मिश्रदोषे मिश्र क्रम कुर्यात् । कालवित्–वैद्य ।

**गतप्रसवकालायै नार्यै गुल्मेऽस्रसम्भवे ॥ ११९ ॥**
**स्निग्धस्विन्नशरीरायै दद्यात्स्नेहविरेचनम् ।**

स०–नार्यै अस्रसम्भवे गुल्मे सति स्नेहविरेचन दद्यात् । किम्भूतायै ? गत प्रसवकालो यस्यास्तस्यै इति । एव हि पुराणत्वे सुखसाध्यता रक्तगुल्मस्य स्यात् सुनिश्चिततत्व च । तथा स्निग्ध स्विन्न शरीर यस्यास्तस्यै ।

**तिलक्वाथो घृतगुडव्योषभार्गीरजोन्वितः ॥ १२० ॥**
**पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषितः ।**

स०–रक्तोत्थे गुल्मे तिलक्वाथो घृतादियुक्त पान योषित । पुष्पे च नष्टे पान भवेत् ।

**भार्गीकृष्णाकरञ्जत्वग्ग्रन्थिकामरदारुजम् ॥ १२१ ॥**
**चूर्णं तिलानां क्वाथेन पीतं गुल्मरुजापहम् ।**

स०–भार्ग्यादिज चूर्ण तिलक्वाथेन पीत गुल्मरुजाहृत् ।

**पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः ॥ १२२ ॥**
**गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत् ।**

स०–पलाशक्षारपात्रे द्वे तैलसर्पिषोर्द्वे पात्रे पक्त्वा गुल्मशैथिल्यजननीं मात्रा प्रयोजयेत् । स्नेहाच्चतुर्गुण तोयमत्र क्षेप्तव्यम् ।

**न प्रभिद्येत यद्येवं दद्याद्योनिविरेचनम्[2] ॥ १२३ ॥**

स०–एव कृते सति यदि न प्रभिद्येत रक्तगुल्मस्तदा योनिविरेचनं दद्यात् ।

१ 'ष्मिक. कृतम्' स.द्व. । २ 'विशोधनम्' स च. ।

तदाह—

**क्षारेण युक्तं पललं सुधाक्षीरेण वा ततः ।**
**ताभ्यां वा भावितान्दद्याद्योनौ कटुकमत्स्यकान् १२४**
**वराहमत्स्यपित्ताभ्यां नक्तकान्[1] वा सुभावितान् ।**
**किण्वं वा सगुडक्षारं दद्याद्योनौ विशुद्धये ॥ १२५ ॥**
**रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा ।**
**लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रयोजयेत् १२६**
**बस्तिं सक्षीरगोमूत्रं[3] सक्षारं दाशमूलिकम् ।**

स०–क्षारयुक्त भृष्टतिलचूर्ण ततस्तस्या योनौ दद्यात् । सुधाक्षीरेण वाऽन्वित पलल दद्यात । ताभ्या–क्षारसुधाक्षीराभ्या, भावितान् कटुकमत्स्यकान् योनौ दद्यात् । वराहमत्स्ययो पित्ताभ्या कटुकमत्स्यकान् सुभावितान् नक्तकान् वा सुभावितान् योनौ दद्यात् । अथवा, किण्व गुडक्षारान्वित योनिविशुद्ध्यर्थं योनौ दद्यात् । रक्तपित्तहर क्षार मधुसर्पिषा लेहयेत् । लशुन मदिरा तीक्ष्णा मत्स्यांश्चास्यै प्रयोजयेत् । दाशमूलिक बस्ति–कल्पोक्त (हृ क अ ४।४), क्षीरगोमूत्रसहित क्षारान्वितमस्यै दद्यात् ।

**अवर्तमाने रुधिरे हितं गुल्मप्रभेदनम् ॥ १२७ ॥**

स०–रक्तेऽप्रवर्तमाने सति गुल्मप्रभेदन हितम् ।

**यमकाभ्यक्तदेहायाः[4] प्रवृत्ते समुपेक्षणम् ।**
**रसौदनस्तथाऽऽहारः पानं च तरुणी सुरा ॥ १२८ ॥**

स०–प्रवृत्ते रक्ते सति यमकाभ्यक्तगात्राया समुपेक्षण–सम्यगुपेक्षण हितम् । तथा, आहारो रसौदनो हित । तरुणी सुरा च पानम् ।

**रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहराः क्रियाः ।**
**कार्या वातरुगार्तायाः सर्वा वातहरा· पुनः ॥ १२९ ॥**
**आनाहादावुदावर्तबलासघ्नो यथायथम् ॥ १२९½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने गुल्मचिकित्सितं नाम चतुर्दशोऽध्यायः ॥ १४ ॥**

स०–रुधिरेऽतिप्रवृत्ते पुना रक्तपित्तहरा क्रिया कार्या । वातरुगार्ताया पुन सर्वा वातहरा क्रिया कार्या । आनाहादौ सत्युदावर्तबलासजित क्रिया कार्या इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने गुल्मचिकित्सित नाम चतुर्दशोऽध्याय समाप्त ॥१४॥



१ नक्तकान्–पिचून् । २ सङ्ग्रहे तु ( चि अ १६ )–"नक्तकानूर्ध्वाधोभागिकद्रव्यभावितान् वा । बस्ति च सक्षारक्षीरमूत्र दाशमूलिकमुत्तरबस्ति च योजयेत् ।" इति विशेष । ३ 'सक्षौद्रगो' अ. । ४ यमक –घृततैले ।



## पञ्चदशोऽध्यायः।

अस्मादनन्तरमुदरचिकित्सित प्रक्रम्यते। सम्बन्धश्चास्य गुल्मोत्पत्तौ किल यथा वायु प्रधान कारण प्राय, तथा स एवोदराणामपि, इत्याह—

**अथात उदरचिकित्सितं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

( गद्यसूत्रे ॥ २ ॥ )

**दोषातिमात्रोपचयात्स्रोतोमार्गनिरोधनात्।**
**सम्भवत्युदरं तस्मान्नित्यमेनं विरेचयेत्॥ १॥**

स०-दोषाणामतिमात्रमुपचयो-वृद्धि, तस्मात् स्रोतसा मार्गा-मुखरूपाणि छिद्राणि, तेषां निरोधाच्च भवत्युदर यत, तस्मादेन-उदरिण, अभीक्ष्ण विरेचयेत्।

प्रायेण वातप्रधानत्वादस्य व्याधे स्निग्ध विरेचनमाह—

**पाययेत्तैलमैरण्डं समूत्रं सपयोऽपि वा।**
**मासं द्वौ वाऽथवा गव्यं मूत्रं माहिषमेव वा॥ २॥**
**पिबेद्गोक्षीरभुक् स्याद्वा करभीक्षीरवर्तनः।**
**दाहानाहातितृण्मूर्च्छापरीतस्तु विशेषतः॥ ३॥**

स०-तैलमैरण्ड गोमूत्रान्वित क्षीरयुत वा मासमेकमथवा द्वौ मासौ पाययेत्। दोषादिवशाद् गव्य मूत्र माहिष वा मूत्रं पिबेत्। अथवा गोक्षीरभुग्भवेत्। करभीक्षीरवर्तनो वा स्यात्। दाहादियुतस्तु विशेषेणैवन्वृत्ति स्यात्।

**रूक्षाणां बहुवातानां दोषसंशुद्धिकाङ्क्षिणाम्।**
**स्नेहनीयानि सर्पींषि जठरघ्नानि योजयेत्॥ ४॥**

स०-रूक्षादीनां स्नेहनीयानि सर्पींष्युदरहन्तॄणि योजयेत्।

**षट्पलं दशमूलाम्बुमस्तुद्व्याढकसाधितम्।**

स०-"पञ्चकोलयवक्षार" ( हृ चि अ ५।२२ ) इति षट्पल दशमूलाम्बुना मस्तुनो द्व्याढकेन च साधित घृतप्रस्थ षट्पलोपलक्षणलक्षित योजयेत्।

**नागरत्रिपलं प्रस्थं घृततैलात्तथाऽऽढकम्॥ ५॥**
**मस्तुनः साधयित्वैतत्पिबेत्सर्वोदरापहम्।**
**कफमारुतसम्भूते गुल्मे च परमं हितम्॥ ६॥**

स०-शुण्ठ्या पलत्रय, प्रस्थ घृततैलात्, मस्तुन आढकमेतत्साधयित्वा सर्वोदरापह पिबेत्। कफमारुतोत्थे च गुल्मे सुष्ठु हितमेतत्।

**चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले।**
**कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत्॥ ७॥**

स०-सर्पिष प्रस्थ तदपेक्षया चतुर्गुणे जले गोमूत्रे द्विगुणे चित्रकपले कल्के सिद्ध सयवक्षारमुदरी पिबेत्।

**यवकोलकुलत्थानां पञ्चमूलस्य चाम्भसा।**
**सुरासौवीरकाभ्यां च सिद्धं वा पाययेद्घृतम्॥ ८॥**

स०-यवादिक्वाथेन सुराकाञ्जिकाभ्या सिद्ध वा घृत पाययेत्।

**एभिः स्निग्धाय सञ्जाते वले शान्ते च मारुते।**
**स्रस्ते दोषाशये दद्यात्कल्पदृष्टं विरेचनम्॥ ९॥**

स०-एभि स्नेहै स्निग्धाय नराय बले च सञ्जाते सति पवने च शान्ते स्रस्ते दोषाशये सति कल्पोक्त विरेचन दद्यात्।

**पटोलमूलं त्रिफलां निशां वेल्लं च कार्षिकम्।**
**कम्पिल्लनीलिनीकुम्भभागान् द्वित्रिचतुर्गुणान्॥१०॥**
**पिबेत्सञ्चूर्ण्य मूत्रेण पेयापूर्वं ततो रसैः।**
**विरिक्तो जाङ्गलैरद्यात्ततः षड्दिवसं पयः॥ ११॥**
**शृतं पिबेद्व्योषयुतं पीतमेवं पुनःपुनः।**
**हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि॥ १२॥**

स०-पटोलमूलादि कार्षिक कम्पिल्लादीना भागान् क्रमेण द्वित्रिचतुर्गुणान् सञ्चूर्ण्य गोमूत्रेण पिबेत्। अनन्तर विरिक्त सन् पेया भुक्त्वा जाङ्गलमासरसै शाल्यादिकमद्यात्। तत-अनन्तरं, षड्दिवसानि क्वथित क्षीर त्रिकटुयुत पिबेत्। एव पुन पुनरेतत्पीत सर्वोदराणि जातसलिलान्यपि हन्ति।

**गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम्।**
**पिबेत्कर्कन्धुमृद्वीकाकोलाम्भोमूत्रसीधुभिः॥ १३॥**

स०-गवाक्ष्यादिक चूर्णं कर्कन्ध्वादिजलमूत्रसीध्वन्यतमेन पिबेत्।

**यवानी हपुषा धान्यं शतपुष्पोपकुञ्चिका।**
**कारवी पिप्पलीमूलमजगन्धा शठी वचा॥ १४॥**
**चित्रकोऽजाजिकं व्योषं स्वर्णक्षीरी फलत्रयम्।**
**द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम्॥ १५॥**
**विडङ्गं च समांशानि दन्त्या भागत्रयं तथा।**
**त्रिवृद्विशाले द्विगुणे सातला च चतुर्गुणा॥ १६॥**
**एष नारायणो नाम चूर्णो रोगगणापहः।**
**नैनं प्राप्याभिवर्धन्ते रोगा विष्णुमिवासुराः॥ १७॥**
**तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना।**
**आनाहवाते सुरया वातरोगे प्रसन्नया॥ १८॥**

---

१ इदमुदरचिकित्सित चरके चि० १३ अध्याये, सुश्रुते चि० १४ अध्याये, अष्टाङ्गसङ्ग्रहे चि० १७ अध्याये चास्ति वर्णितम्।
२ 'र्गविघातनात्' अ.। ३ 'वा तथा ग' इति क्वचित्।
४ करभी-उष्ट्री। ५ 'गर त्रि' इति क्वचित्।

१ 'प्यातिवर्तन्ते' अ.इ, स.च.।

**दधिमण्डेन विट्सङ्गे दाडिमाम्भोभिरर्शसैः ।**
**परिकर्ते सवृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥ १९ ॥**
**भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ।**
**हृद्रोगे ग्रहणीदोषे कुष्ठे मन्देऽनले ज्वरे ॥ २० ॥**
**दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।**
**यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ २१ ॥**

स०–यवान्यादीनि विडङ्गपर्यन्तानि समाशानि । दन्त्या भागात्रय । त्रिवृद्विशालयोर्द्वौ द्वौ भागौ । सातलायाश्च चत्वार । एष चूर्णो नारायणो नाम रोगगणापह । एन चूर्ण प्राप्य रोगा नाभिवर्धन्ते । क क[इव][?] यथा विष्णुमिवासुरा । उदरिभिरेष तक्रेण पेय । गुल्म्यादिभिर्बदराम्ब्वादिभि पेय । भगन्दरादिष्वेतद्यथार्हं स्नेहपीतेन विरेचन पेयम् ।

**हपुषां काञ्चनक्षीरीं त्रिफलां नीलिनीफलम् ।**
**त्रायन्तीं रोहिणीं तिक्तां सातलां त्रिवृतां वचाम् २२**
**सैन्धवं काललवणं पिप्पलीं चेति चूर्णयेत् ।**
**दाडिमत्रिफलामांसरसमूत्रसुखोदकैः ॥ २३ ॥**
**पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च ।**
**श्वित्रे कुष्ठेष्वजरके सदने विषमेऽनले ॥ २४ ॥**
**शोफार्शःपाण्डुरोगेषु कामलायां हलीमके ।**
**वातपित्तकफांश्चाशु विरेकेण प्रसाधयेत् ॥ २५ ॥**

स०–हपुषादिकमेतच्चूर्णं दाडिमादिरसै पेयम् । गुल्मादिषु विरेकेण चैतदाशु वातपित्तकफान् सम्प्रसाधयेत् । काललवण–कृष्णलवणम् ।

**नीलिनीं निचुलं व्योषं क्षारौ लवणपञ्चकम् ।**
**चित्रकं च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥ २६ ॥**

स०–नीलिन्यादिक चूर्ण सर्पिषा पिबेत् । उदरगुल्मघ्नम् ।

**पूर्ववच्च पिबेद्दुग्धं क्षामः शुद्धोऽन्तराऽन्तरा ।**
**कारभं गव्यमाजं वा**

स०–पूर्ववच्च–यथा पटोलमूलादिके चूर्णे (श्लो १०) कथित, तथैव शुद्ध क्षाम सन् जाङ्गलरसादनन्तरमन्तराऽन्तरा–मध्ये मध्ये, दुग्ध पिबेत् । कारभ गव्य छाग वा क्षीरम् ।

**दद्यादात्ययिके गदे ॥ २७ ॥**
**स्नेहानेव विरेकार्थे दुर्बलेभ्यो विशेषतः ।**

स०–आत्ययिके रोगे विरेकार्थे स्नेहानेव दद्यात् । दुर्बलेभ्यो वा विशेषेण ।

१ 'यथार्थं' स च । २ 'यथास्व स्ने' ट । ३ "काललवण–बिडलवणमेव, अन्ये तु सौवर्चलाकार लवणमाहु । दाडिमादिभी रसशब्द सम्बध्यते ।" इति चक्र । ४ 'रेकात्सम्प्रसा' स च । ५ 'स्नेहमेव' इति क्वचित् ।

**हरीतकीसूक्ष्मरजःप्रस्थयुक्तं घृताढकम् ॥ २८ ॥**
**अग्नौ विलाप्य मथितं खजेन यवपल्लके ।**
**निधापयेत्ततो मासादुद्धृतं गालितं पचेत् ॥ २९ ॥**
**हरीतकीनां क्वाथेन दध्ना चाम्लेन संयुतम् ।**
**उदरं गरमष्ठीलामानाहं गुल्मविद्रधी ॥ ३० ॥**
**हन्त्येतत्कुष्ठमुन्मादमपस्मारं च पानतः ।**

स०–हरीतकीसूक्ष्मचूर्णप्रस्थयुक्त घृतस्याढकमग्नौ विलाप्य खजेनालोडित यवपल्लके–यवराशिमध्ये, निधापयेत् । ततो मासादनन्तरमुद्धृत गालित हरीतकीना क्वाथेन–सामान्यपरिभाषोक्तप्रमाणेन, अम्लेन दध्ना सयुत च पचेत् । एतच्च पानेनोदरादीन् हन्ति ।

**स्नुक्क्षीरयुक्ताद्गोक्षीराच्छृतशीतात् खजाहतात् ३१**
**यज्जातमाज्यं स्नुक्क्षीरसिद्धं तच्च तथागुणम् ।**

स०–स्नुक्क्षीरमिश्रिताद्गोक्षीराच्छृतशीतात् खजेनाहतात् यज्जात सर्पिस्तत्स्नुक्क्षीरपक्व पूर्वगुणम् ।

**क्षीरद्रोणं सुधाक्षीरप्रस्थार्धसहितं दधि ॥ ३२ ॥**
**जातं मथित्वा तत्सर्पिस्त्रिवृत्सिद्धं च तद्गुणम् ।**

स०–क्षीरद्रोण स्नुक्क्षीरप्रस्थार्धेन युत दधि जातं मथित्वा तत्सर्पिस्त्रिवृतापक्व पूर्वगुणम् ।

**तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत्[2] ॥ ३३ ॥**
**स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च ।**

स०–तथा सिद्ध–पूर्ववत्पक्व, घृतप्रस्थ क्षीरेऽष्टगुणे स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च[3] सिद्ध पिबेत् ।

**एषां चानु पिबेत्पेयां रसं स्वादु पयोऽथवा ॥ ३४ ॥**

स०–एषां च घृतादीनां पश्चात् पेयादीन् पिबेत् ।

**घृते जीर्णे विरिक्तश्च कोष्णं नागरसाधितम् ।**
**पिबेदम्बु ततः पेयां ततो यूषं कुलत्थजम् ॥ ३५ ॥**

स०–घृते जीर्णे विरिक्तश्च सन् कोष्ण शुण्ठीसाधित जल पिबेत् । अनन्तर पेया पिबेत् । कुलत्थयूष च पिबेत् ।

**पिबेद्रूक्षस्त्र्यहं त्वेवं भूयो वा प्रतिभोजितः ।**
**पुनःपुनः पिबेत्सर्पिरानुपूर्व्याऽनयैव च ॥ ३६ ॥**

स०–एव त्र्यह रूक्ष सन् पुनरपि प्रतिभोजित. पुन पुनरनेनैव क्रमेण सर्पि पिबेत् ।

**घृतान्येतानि सिद्धानि विदध्यात्कुशलो भिषक् ।**
**गुल्मानां गरदोषाणामुदराणां च शान्तये ॥ ३७ ॥**

स०–एतानि–प्रागुक्तानि, सिद्धानि घृतानि कुशलो वैद्य कुर्वीत गुल्मादीना शान्तये ।

१ 'स्थार्धेन युत' इति क्वचित् । २ 'पचेत्' अ. । ३ 'च पचेत् ।' ड. ।

**पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम् ।**
**तैल्वकं नीलिनीसर्पिः स्नेहं वा मिश्रकं पिबेत् ॥३८॥**

स०–पीलुकल्कपक्व घृतमानाहभेदन पिबेत् । तैल्वक ( हृ. चि. अ २१।३२ ) वा नीलिनीघृत ( हृ चि अ १४।५५ ) मिश्रक ( हृ चि अ १४।८९ ) वा स्नेह पिबेत् ।

**हृतदोषः क्रमादश्नन् लघुशाल्योदनप्रति ।**

स०–हृतदोष क्रमेण शाल्योदनमतिलघुगुणयुक्तमल्प खादेत् । एव ससर्जनक्रम आदरितव्य ।

**उपयुञ्जीत जठरी दोषशेषनिवृत्तये ॥ ३९ ॥**
**हरीतकीसहस्रं वा गोमूत्रेण पयोनुपः ।**
**सहस्रं पिप्पलीनां वा स्नुक्क्षीरेण सुभावितम् ॥४०॥**
**पिप्पलीवर्धमानं वा क्षीराशी वा शिलाजतु ।**
**तद्वद्वा गुग्गुलुं क्षीरं तुल्यार्द्रकरसं तथा ॥ ४१ ॥**

स०–जठरी दोषशेषस्य निवृत्तये हरीतकीसहस्र गोमूत्रेणासकृद्भावित पयोनुप सन् खादेत् । अथवा, स्नुहीदुग्धेनासकृद्भावित पिप्पलीसहस्रमुपयुञ्जीत । पिप्पलीवर्धमान वा रसायनविधानेनोपयुञ्जीत । अथवा, दुग्धाशन सन्नद्रिजमुपयुञ्जीत । तथैव गुग्गुलु प्रयुञ्जीत । तथा, तुल्यार्द्रकरस क्षीरमुपयुञ्जीत ।

**चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत् ।**
**मासं युक्तस्तथा हस्तिपिप्पलीविश्वभेषजम् ॥ ४२ ॥**

स०–अथवा, चित्रकदेवदारुणो कल्क क्षीरेण पिबेत् । तथा, मास हस्तिपिप्पलीविश्वभेषजकल्क युक्तो–नियत सन्, क्षीरेण पिबेत् ।

**विडङ्गं चित्रको दन्ती चव्यं व्योषं च तैः पयः ।**
**कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ॥ ४३ ॥**

स०–विडङ्गादिभि कल्कै कोलप्रमाणैरालोडित पय पीत्वा प्रवृद्धमुदरं जयेत् ।

**भोज्यं भुञ्जीत वा मासं स्नुहीक्षीरघृतान्वितम् ।**
**उत्कारिकां वा स्नुक्क्षीरपीतपथ्याकणाकृताम् ॥४४॥**

स०–स्नुक्क्षीरघृतान्वित भोज्य–आहारं, मास वा भुञ्जीत । स्नुक्क्षीरसिद्ध घृत स्नुक्क्षीरघृतम्, स्नुक्क्षीरयुत वा घृत स्नुक्क्षीरघृतम् । उत्कारिका वा स्नुक्क्षीरादियुता भुञ्जीत । उत्कारिकां–रोटिकाम् ।

**पार्श्वशूलमुपस्तम्भं हृद्ग्रहं च समीरणः ।**
**यदि कुर्यात् ततस्तैलं बिल्वक्षारान्वितं पिबेत् ॥४५॥**
**पक्वं वा टिण्टुकबलापलाशतिलनालजैः ।**
**क्षारैः कदल्यपामार्गतर्कारीजैः पृथक्कृतैः ॥ ४६ ॥**

स०–समीरण पार्श्वशूलादिक यदि कुर्यात् ततस्तैल बिल्वादियुत पिबेत् । अथवा, मयूरजङ्घादिजै क्षारै कदल्यपामार्गतर्कारीजै पृथक्कृतै पक्व तैल पिबेत् ।

**कफे वातेन पित्ते वा ताभ्यां वाऽप्यावृतेऽनिले ।**
**बलिनः स्वौषधयुतं तैलमेरण्डजं हितम् ॥ ४७ ॥**

स०–कफे वातेनावृते, पित्ते वा वातेनावृते, ताभ्या–कफपित्ताभ्या वाऽऽवृतेऽनिले सति, बलिनो नरस्य स्वौषधयुतमेरण्डतैल हितम् ।

**देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ।**
**साश्वकर्णैः सगोमूत्रैः प्रदिह्यादुदरं बहिः ॥ ४८ ॥**

स०–देवदार्वादिभिर्गोमूत्रसहितैरुदर बाह्यत प्रलिम्पेत् ।

**वृश्चिकालीवचाशुण्ठीपञ्चमूलपुनर्नवात् ।**
**वर्षाभूधान्यकुष्ठाच्च क्वाथैर्मूत्रैश्च सेचयेत् ॥ ४९ ॥**

स०–वृश्चिकाल्यादीना क्वाथैर्मूत्रैश्च जठर सेचयेत् ।

**विरिक्तम्लानमुदरं स्वेदितं साल्वणादिभिः ।**
**वाससा वेष्टयेदेवं वायुर्नाध्मापयेत्पुनः ॥ ५० ॥**

स०–उदर विरिक्तम्लान साल्वणादिभि स्वेदित ततो वस्त्रेण वेष्टयेत् । एव कृते सति वायुर्न पुनराध्मापयेत् ।

**सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम् ।**
**सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ॥ ५१ ॥**

स०–सुविरिक्तस्य नरस्य यस्य पुनराध्मान स्यात्, तउदरिण नर, पुनरेव निरूहै सुस्निग्धैरम्ललवणैश्चोपाचरेत् ।

**सोपस्तम्भोऽपि वा वायुराध्मापयति यं नरम् ।**
**तीक्ष्णाः सक्षारगोमूत्राः शस्यन्ते तस्य बस्तयः ॥५२॥**

स०–सहोपस्तम्भेन–कफाद्याधारकेण, वर्तते सोपस्तम्भो वायुर्य नरमाध्मापयति, तस्य तीक्ष्णा बस्तय क्षारगोमूत्राभ्या सह शस्यन्ते ।

**इति सामान्यतः प्रोक्ताः सिद्धा जठरिणां क्रियाः ।**

स०–इति–एव, सामान्येनोदरिणा क्रिया सिद्धा प्रोक्ता ।

---

१ 'गुल्मघ्न नी' स च । २ 'लीं वर्धमानां वा' इति क्वचित् । ३ 'मासयुक्त तथा' स च । ४ स्नुक्क्षीरपीता –स्नुहीदुग्धभाविता । तथा चारुणदत्त कल्पटीकाया ( अ २।४७ ) 'स्नुक्पय - पीतान्–स्नुक्क्षीरभावितान् ।' इति । सुश्रुतोऽपि (चि अ १४।१०)– 'पथ्याकृष्णाचूर्णं वा स्नुहीभावितमुत्कारिकां पक्वा दापयेत् ।' इति । ५ 'त । पीत –कौरण्टक । समी' ड ।

१ बिल्वस्य–बिल्ववृक्षस्य, क्षारेण युतमित्यर्थ । तथा च सङ्ग्रहे (चि अ. १७)–"बिल्वक्षाराम्भसा तैल पाययेत् ।" इति । बिल्वादियुतमित्यरुणदत्तव्याख्यान त्वयुक्तम् । २ "स्योनाक शुकनासश्च कट्वङ्गोऽथ कटम्भर । मयूरजङ्घोऽरलुक प्रियजीव कुटन्नट ॥" धन्व रा.नि । ३ 'लवणादि' स स, ट ड । ४ "सोपस्तम्भ इति सावरण ।" इति चक्र. । ५ 'क्वा० द्वा० या' अ.,ड. ।

**वातोदरेऽथ बलिनं विदार्यादिशृत घृतम् ॥ ५३ ॥**
**पाययेत तत· स्निग्ध स्वेदिताङ्ग विरेचयेत् ।**
**बहुशस्तैल्वकेनैनं सर्पिषा मिश्रकेण वा ॥ ५४ ॥**

स०–वातोदरे सति बलवन्त पुरुष विदार्यादिगणेन पक्व घृत पाययेत् । अनन्तरं स्निग्ध स्वेदितशरीरमेन बहुशस्तैल्वकेन घृतेन ( हृ चि अ २१।३२ ) विरेचयेत् । मिश्रकेण ( हृ चि अ १४।८९ ) वा घृतेन विरेचयेत् ।

**कृते संसर्जने क्षीरं बलार्थमवचारयेत् ।**
**प्रागुत्क्लेशान्निवर्त्यं च बले लब्धे क्रमात्पयः ॥ ५५ ॥**

स०–कृते ससर्जने सति क्षीर बलदानाय दद्यात् । उत्क्लेशात् प्राक्-प्रायेण कफोपचितेरुत्क्लेश दृष्ट्वाऽनन्तर, बले लब्धे सति क्रमेण क्षीर निवर्तयेत्–न सहसैव ।

**यूषै रसैर्वा मन्दाम्ललवणैरेधितानलम् ।**
**सोदावर्त पुनः स्निग्धस्विन्नमास्थापयेत्ततः ॥ ५६ ॥**
**तीक्ष्णाधोभागयुक्तेन दाशमूलिकबस्तिना ।**

स०–तत –अनन्तरमुदरिण यूषादिभि समिद्धाग्निमुदावर्तवन्त पुनरपि स्निग्धस्विन्न दाशमूलिकबस्तिना निरूहयेत् । दाशमूलिको बस्ति –"द्विपञ्चमूलैस्त्रिफलाफलबिल्वानि पाचयेत् ।" ( हृ क अ ४।३४ ) इत्यादि कल्पोक्त । तेन किम्भूतेन? तीक्ष्णाधोभागयुक्तेन । अधोभागे–अधस्ताच्छरीरे, युक्तो–योग्य । तीक्ष्णश्चासावधोभागयुक्तश्च, तेन ।

**तिलोरुबूकतैलेन वातघ्नाम्लशृतेन च ॥ ५७ ॥**
**स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्तिषु ।**
**रूक्ष बद्धशकृद्वातं दीप्ताग्निमनुवासयेत् ॥ ५८ ॥**
**अविरेच्यस्य शमना बस्तिक्षीरघृतादयः ।**

स०–रूक्ष बद्धशकृद्वात दीप्तानल तिलैरण्डतैलेन वातघ्नैर्द्रव्यैरम्लैश्च शृतेनानुवासयेत् । स्फुरणादिसद्भावे सत्यविरेच्यस्योदरिणो नरस्य शमना बस्त्यादय प्रयोज्या. । [अविरेच्या –] "न तु रेच्यो नवज्वरी" ( हृ. सू अ १८।१० ) इत्यादयो विरेचनविधावुक्ता ।

**बलिनं स्वादुसिद्धेन पैत्ते संस्नेह्य सर्पिषा ॥ ५९ ॥**
**श्यामात्रिभण्डीत्रिफलाविपक्वेन विरेचयेत् ।**
**सितामधुघृताढ्येन निरूहोऽस्य ततो हितः ॥ ६० ॥**
**न्यग्रोधादिकषायेण स्नेहबस्तिश्च तच्छृतः ।**

१ 'वर्तेत ब्' इति क्वचित् । २ 'येत्तरम्' स च । ३ 'मूलेन ब' अ । ४ दाशमूलिको बस्ति –"द्विपञ्चमूलस्य रसोऽम्लयुक्त" ( हृ क अ ४।४ ) इत्यादिनोक्तो ग्राह्य , सर्ववातव्याधिहरत्वात् शिवदाससम्मतत्वाच्च । 'द्विपञ्चमूलत्रिफला' इत्यादिरिव्यरुणदत्तव्याख्यान तु न युक्तम्, तस्य कफव्याधिहरत्वात् हेमाद्रिणा गोमूत्रबस्तिरित्युक्तत्वाच्च । ५ 'लत्रिवृतफलमूलानि साधयेत्' ट.ड ।

स०–बलवन्त पुरुष पैत्ते जठरे सति मधुरवर्गसिद्धेन घृतेन सस्नेह्य श्यामादिभिर्विपक्वेन सर्पिषा विरेचयेत् । श्यामा–मालविका त्रिवृत् । त्रिभण्डी–काशी त्रिवृत् । अनन्तर शर्करामाक्षिकघृतबहुलेन न्यग्रोधादिकषायेणास्य–आतुरस्य, निरूहो हित । [तथा,] तेनैव–न्यग्रोधादिना, [शृतो–] विपक्व , स्नेहबस्ति –अनुवासनो, हित । ननु, बलिनमित्ययुक्तम् । यत प्रागभ्यधायि ( हृ नि अ १२।४ )–"नष्टचेष्टाबलाहारा" इति । अत्रोच्यते । भेषजवेगसहिष्णुमात्रत्वमत्र बलवत्त्व परिकल्प्य बलिनमित्युक्तम्, न तु प्रकृष्टबलवन्तमित्यदोष ।

**दुर्बलं त्वनुवास्यादौ शोधयेत्क्षीरबस्तिभिः ॥ ६१ ॥**

स०–दुर्बल तु नर प्रागनुवास्य क्षीरबस्तिभि शोधयेत् ।

**जाते चाग्निबले स्निग्ध भूयो भूयो विरेचयेत् ।**
**क्षीरेण सत्रिवृत्कल्केनोरुबूकशृतेन वा ॥ ६२ ॥**
**सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा ।**
**सकफे वा समूत्रेण सतिक्ताज्येन सानिले ॥ ६३ ॥**
**पयसाऽन्यतमेनैषां विदार्यादिशृतेन वा ।**
**भुञ्जीत जठरं चास्य पायसेनोपनाहयेत् ॥ ६४ ॥**

स०–अग्निबले च जाते स्निग्ध सन्त पुन पुनर्विरेचयेत् । केन? क्षीरेण । त्रिवृच्चूर्णयुतेनैरण्डैश्शृतेन वा क्षीरेण सातलात्रायन्तीभ्या वा शृतेन कर्णिकारेण वा शृतेन । पित्तोदरिण सुतरा बलापेक्षित्वाद्दुर्बलमित्युक्तम् । कफयुते पित्ते समूत्रेण क्षीरेणैषामन्यतमेन शृतेन, सानिले पित्ते तिक्ताज्येन सह पयसा पूर्वोक्तद्रव्याणामन्यतमेन शृतेन विरेचयेत् । तिक्तद्रव्ययुतमाज्य तिक्ताज्यम्, कुष्ठोक्तं तिक्तघृत वा । विदार्यादिशृतेन वा पयसा भुञ्जीत–भोजन कुर्वीत । जठरं चास्य पायसेनोपनाहयेत् ।

**पुनः क्षीरं पुनर्बस्ति पुनरेव विरेचनम् ।**
**क्रमेण ध्रुवमातिष्ठन् यत्त· पित्तोदरं जयेत् ॥ ६५ ॥**

१ 'नर' ड । २ "त्रिभण्डी–शुक्ला त्रिवृत् ।" इति डल्हण । ३ 'कासी' ड । ४ 'मात्रमत्र' ड । 'मात्रबल' ट । ५ 'वत्त्वमि' ड । ६ 'ते त्वग्नि' अ । ७ 'पयसा स' स.च चक्र. । ८ "अत्र तु उरुबूकस्य फल ग्राह्यम् , विरेचकत्वात् । एवमारग्वधस्यापि फलम् । सातला–चर्मकषा । पयसेति सवत्र सम्बध्यते । सत्रिवृत्कल्केन पयसेत्येको योग , उरुबूकशृतेनेति द्वितीय , सातलादिरारग्वधान्तस्त्वपर , जतूकर्णसवादात् । अन्ये तु सत्रिवृत्कल्केनोरुबूकशृतेनेत्येको योग , तथा सत्रिवृत्कल्केन सातलारग्वधान्तेन तु द्वितीयो योग इत्याहु ।" इति शिवदास । "एरण्डशृत सत्रिवृत्कल्कमेक क्षीरम्, द्वितीय सातलात्रायमाणाभ्या शृतम्, तृतीयमारग्वधशृतम्, मूत्रेण सह चतुर्थम्, तिक्तघृतेन सह पञ्चममिति ।" इतीन्दु । ९ 'न तम् ।' अ इ । १० 'सप्तला' अ । ११ अन्यतमेनैषामित्युभयत्र सम्बन्धनीयम् । तथा च सङ्ग्रहे (चि अ १७)–"एभिरेव क्षीरैर्विदार्यादिशृतेन वा भोजयेत् ।" इति । १२ पायसेन–क्षीरसिद्धेनौदनेन । १३ 'ण्डतैलशृ' ड. । १४ 'यतः' इ । 'न् युक्त' स च. ।

स०–पुन क्षीर पुनर्बस्तिं पुनरेव विरेचन क्रमेण ध्रुवमातिष्ठन्–आचरन्, यत्तो–यत्नवान् सन्, पित्तोदर जयेत्। पुन क्षीरमित्यादिषु पुन शब्दो वीप्सार्थं । एतच्च क्रमेण ध्रुवमातिष्ठन्नित्यतो लब्धम् ।

**वत्सकादिविपक्वेन कफे संस्नेह्य सर्पिषा ।**
**स्विन्नं स्नुक्क्षीरसिद्धेन बलवन्तं विरेचितम् ॥ ६६ ॥**
**संसर्जयेत्कटुक्षारयुक्तैरन्नैः कफापहैः ।**

स०–कफे–कफोदरे, वत्सकादिविपक्वेन सर्पिषा सस्नेह्य स्विन्नं सन्त स्नुक्क्षीरसिद्धेन घृतेन बलिन विरेचितं सन्त ससर्जयेत्–पेयाद्यन्नैरुपक्रमेत् । किम्भूतै ? कटुक्षारद्रव्ययुतैरन्नै कफघ्नै । कटुक्षारयुताना कफघ्नत्वेऽपि कफघ्नैरित्युक्तमतिशयार्थम् ।

**मूत्रत्र्यूषणतैलाढ्यो निरूहोऽस्य ततो हितः ॥ ६७ ॥**
**मुष्ककादिकषायेण स्नेहबस्तिश्च तच्छृतः ।**
**भोजनं व्योषदुग्धेन कौलत्थेन रसेन वा ॥ ६८ ॥**

स०–तत –ससर्जनादनन्तर, निरूहो गोमूत्रत्रिकटुकतैलबहुलो मुष्ककादिवर्गक्काथेनास्य–कफोदरिणो, हित । स्नेहबस्ति –अनुवासनम्, तेनैव शृतो हित । भोजन व्योषयुक्तेन दुग्धेन सह हित कुलत्थरसेन वा ।

**स्तैमित्यारुचिहृल्लासे मन्देऽग्नौ मद्यपाय च ।**
**दद्यादरिष्टान् क्षारांश्च कफस्त्यानस्थिरोदरे ॥ ६९ ॥**

स०–मद्यपाय नराय मन्देऽग्नौ स्तैमित्यादौ च सत्यरिष्टान् क्षाराश्च दद्यात् । कफेन स्त्यान स्थिर जठर यस्य तस्मिन्निद कार्यम् ।

**हिङ्गूपकुल्ये त्रिफलां देवदारु निशाद्वयम् ।**
**भल्लातकं शिग्रुफलं कटुकां तिक्तकं वचाम् ॥ ७० ॥**
**शुण्ठीं मार्द्रीं घनं कुष्ठं सरलं पटुपञ्चकम् ।**
**दाहयेज्जर्जरीकृत्य दधिस्नेहचतुष्कवत् ॥ ७१ ॥**
**अन्तर्धूमं ततः क्षाराद्बिडालपदकं पिबेत् ।**
**मदिरादधिमण्डोष्णजलारिष्टसुरासवैः ॥ ७२ ॥**
**उदरं गुल्ममष्ठीलां तून्यौ शोफं विसूचिकाम् ।**
**प्लीहहृद्रोगगुदजानुदावर्तं च नाशयेत् ॥ ७३ ॥**

स०–हिङ्ग्वादिक जर्जरीकृत्य दधिस्नेहचतुष्कयुतमन्तर्धूम दाहयेत्। तस्मात् क्षाराद्बिडालपदक मदिरादिभि पिबेत् । एष च क्षार उदरगुल्मादीन् नाशयेत् ।

**जयेदरिष्टगोमूत्रचूर्णायस्कृतिपानतः ।**
**सक्षारतैलपानैश्च दुर्बलस्य कफोदरम् ॥ ७४ ॥**

स०–दुर्बलस्य नरस्य कफोदरमरिष्टादिपानेन जयेत् । अयस्कृति –प्रमेहचिकित्सिते ( अ १२।२९ ) प्रोक्ता, क्षारयुततैलपानैश्च जयेत् ।

**उपनाह्यं ससिद्धार्थकिण्वैर्बीजैश्च मूलकात् ।**
**कल्कितैरुदरं स्वेदमभीक्ष्णं चात्र योजयेत् ॥ ७५ ॥**

स०–तथा, उपनाह्य जठरमस्यैतै मूलकबीजै कल्कितै ससर्षपकिण्वै । तथा, नित्य स्वेदमत्र योजयेत् ।

**सन्निपातोदरे कुर्यान्नातिक्षीणबलानले ।**
**दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमाम् ॥७६॥**

स०–सन्निपातोदरे–अर्थात्सन्निपातोदरवति नरे, नातिक्षीणबलानलेऽधिकदोषानुरोधेन–तद्वशेनैव, क्रियामिमा–अनन्तरोक्ता, कुर्यात् । कि कृत्वा ? प्रत्याख्यार्यं,–एतदुदरमशक्यप्रतीकारमित्येवमुक्त्वा ।

अथोपक्रममाह—

**दन्तीद्रवन्तीफलजं तैलं पाने च शस्यते ।**

स०–दन्त्यादितैल पाने च शस्यते ।

**क्रियानिवृत्ते जठरे त्रिदोषे तु विशेषतः ॥ ७७ ॥**
**दद्यादापृच्छ्य तज्ज्ञातीन् पातुं मद्येन कल्कितम् ।**
**मूल काकादनीगुञ्जाकरवीरकसम्भवम् ॥ ७८ ॥**

स०–क्रियामतिक्रान्ते जठरे विशेषेण त्रिदोषजे तस्य–उदरिणो बन्धून्, पृष्ट्वा–यथैतद्विष विषम कि जीवयत्युत मारयतीति सन्देह इत्याद्युक्त्वा, प्रयोज्य वक्ष्यमाणं चैतत् । पातुमित्यादि । काकादन्यादिज मूल कल्कित मद्येन पातु दद्यात् । काकादनी–काकणन्तिका ।

**पानभोजनसंयुक्तं दद्याद्वा स्थावरं विषम् ।**
**यस्मिन् वा कुपितः सर्पो विमुञ्चति फले विषम् ७९**
**तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः ।**
**बहिः प्रवर्तते भिन्नो विषेणाशु प्रमाथिना ॥ ८० ॥**
**तथा व्रजत्यगदता शरीरान्तरमेव वा ।**

स०–अथवा पानभोजनसयुक्त स्थावर विषं दद्यात् । यस्मिन् फले सर्प कुपितो विष मुञ्चति तद्वा दद्यात् । तेन–विषेण प्रमाथिना, अस्य दोषसङ्घातो भिन्नो बहि प्रवर्तते। किम्भूत ? स्थिरस्तथा लीनो धात्वादिषु तथा उन्मार्गगामी । तथा–तेन प्रकारेणानुष्ठितेन, उदर्यगदता–निर्व्याधिता, व्रजति। शरीरान्तर वा याति–म्रियत इत्यर्थं ।

**हृतदोषं तु शीताम्बुस्नातं तं पाययेत्पयः ॥ ८१ ॥**
**पेयां वा त्रिवृतः शाकं मण्डूक्या वास्तुकस्य वा ।**

१ 'यतो' ड । २ 'रे, बलवन्तमुदरिण व' ट. । ३ 'ल्लासे मन्दे' अ. । ४ 'कफे स्त्याने स्थि' अ. । ५ बिडालपदक–कर्ष । ६ 'सुधास' अ । ७ 'विषूचि' अ. । ८ 'दरादीन्' ड. ।

१ 'दरस्वे' अ । २ 'य–"अक्रियाया ध्रुवो मृत्यु क्रियाया सशयो भवेत् ।" (चि अ. ११।४४) इत्येतदु' इति क्वचित् । ३ 'रमेवमश' ट । ४ 'ण चेति । पा' ड । ५ काकादनी–गुञ्जाविशेष । ६ 'नी–हिंसा ।' ट. । ७ 'विसृजेद्धि फ' स च. ।

कालशाकं यवाख्यं वा खादेत्स्वरससाधितम् ॥८२॥
निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्नभुक् ।
मासमेकं ततश्चैव तृषितः स्वरसं पिबेत् ॥ ८३ ॥

स०–हृतदोषं च तं शीतजलेन स्नातं सन्तं पयः शीतं पाययेत् । पेयामथवा त्रिवृच्छाकं मण्डूकीशाकं वास्तुकशाकं कालशाकं यवशाकं वा खादेत् । किम्भूतम् ? स्वरसेन साधितम्, तथाऽम्ललवणस्नेहवर्जितम्, तथा स्विन्नास्विन्नम् । अनन्नभोजी सन्, स्विन्नास्विन्नमिति "क्तेन नञ्विशिष्टेन" इति समासः, मासमेकं यावदेतदश्नीयात् । तृषितः सन् स्वरसं–प्रकृतत्वात्तच्छाकस्य, पिबेत् ।

एवं विनिर्हृते शाकैर्दोषे मासात् परं ततः ।
दुर्बलाय प्रयुञ्जीत प्राणभृत्कारभं पयः ॥ ८४ ॥

स०–एवं शाकविशेषेण दोषे निर्हृते–प्रायेण जलाख्ये, ततः–अनन्तरं, मासात् परं दुर्बलाय पुरुषाय कारभं क्षीरं प्राणकरं प्रयुञ्जीत ।

प्लीहोदरे यथादोषं स्निग्धस्य स्वेदितस्य च ।
सिरां भुक्तवतो दध्ना वामबाहौ विमोक्षयेत् ॥ ८५ ॥

स०–प्लीहोदरे दोषानुसारेण स्निग्धस्य स्वेदितस्य च दध्ना भुक्तवतः सिरां वामे बाहौ विमोक्षयेत् ।

लब्धे बले च भूयोऽपि स्नेहपीतं विशोधितम् ।
समुद्रशुक्तिजं क्षारं पयसा पाययेत्तथा ॥ ८६ ॥
अम्लस्रुतं बिडकणाचूर्णाढ्यं नक्तमालजम् ।
सौभाञ्जनस्य वा क्वाथं सैन्धवाग्निकणान्वितम् ॥८७॥
हिङ्ग्वादिचूर्णं क्षाराज्यं युञ्जीत च यथाबलम् ।

स०–बले च जाते पुनरपि स्नेहपीतं विशोधितं सन्तं क्षारं समुद्रशुक्त्युत्थं पयसा पाययेत् । तथा करञ्जजं क्षारमम्लैः–काञ्जिकादिभिः स्रुतं, बिडकणाचूर्णभूयिष्ठं पाययेत् । अथवा, सौभाञ्जनस्य क्वाथं सैन्धवादियुतं पिबेत् । हिङ्ग्वादिजं चूर्णं क्षारं तथा घृत–षट्पलादि, यथाबलं प्रयुञ्जीत । ननु, यथाबलमिहोच्यते । प्राक् चाभ्यधायि ( हृ. नि. अ. १२।४ )–"नष्टचेष्टाबलाहारा" इति । तदिमे वाक्ये परस्परं व्याहते । ब्रूमः । बलशब्देनेह भेषजबलं सोढुं शक्तं यद्बलमात्रं तदिह परिकल्पितम् । पूर्वं च प्रकृष्टं यद्बलं तद्विवक्षितमिति नात्र पूर्वापरव्याहतत्वम् ।

पिप्पलीनागरं दन्तीसमांशं द्विगुणाभयम् ॥ ८८ ॥
विडार्धांशयुतं चूर्णमिदमुष्णाम्बुना पिबेत् ।

स०–पिप्पलीनागरयोर्द्वावंशौ, दन्त्या द्वौ भागौ, हरीतक्याश्च द्वौ भागौ, बिडलवणस्यार्धभागं, इत्येवं चूर्णमुष्णाम्बुना पिबेत् ।

विडङ्गं चित्रकं सक्तून् सघृतान् सैन्धवं वचाम् ८९
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत् ।

स०–विडङ्गादिकं कपाले–कर्परे, दग्ध्वा क्षीरेण गुल्मप्लीहघ्नं पिबेत् ।

तैलोन्मिश्रैर्बदरकपत्रैः सम्मर्दितैः समुपनद्धः ॥ ९० ॥
मुसलेन पीडितोऽनु च याति प्लीहा पयोभुजो नाशम् ।

स०–बदरकस्य पत्रैस्तैलमिश्रितैः सुष्ठु मर्दितैः समुपनद्धः, अनु–पश्चाच्च, मुसलेन पीडितः प्लीहा क्षीराशिनो नाशं व्रजति । उपगीतिः ।

रोहीतकलताः कृत्ताः खण्डशः साभया जले ॥ ९१ ॥
मूत्रे वाऽऽसुनुयात्तच्च सप्तरात्रस्थितं पिबेत् ।
कामलाप्लीहगुल्मार्शःकृमिमेहोदरापहम् ॥ ९२ ॥

स०–रोहीतकस्य लताः खण्डं खण्डं कृत्त्वा सहरीतकीर्जले मूत्रे वाऽऽसुनुयात् । तच्च सप्तरात्रं स्थितं जलं मूत्रं वा पिबेत् । हरीतक्यश्च लेहवद्भुञ्जीत । तत्पीतं कामलादिघ्नम् ।

रोहीतकत्वचः कृत्वा पलानां पञ्चविंशतिम् ।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ ९३ ॥
पालिकैः पञ्चकोलैस्तु तैः समस्तैश्च तुल्यया ।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ९४ ॥
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम् ।

स०–रोहीतकत्वचः पलानां पञ्चविंशतिं कृत्वा बदरप्रस्थद्वयसंयुक्तं कषायमवतारयेत् । पञ्चकोलैः पालिकैस्तैः समस्तैः पञ्चकोलैः रोहीतकत्वचा तुल्यया पिष्टैर्घृतप्रस्थं विपाचयेत् । एतद्घृतं प्रयोजितं प्लीहाभिवृद्धिं द्रागेव शमयति ।

कदल्यास्तिलनालानां क्षारेण क्षुरकस्य च ॥ ९५ ॥
तैलं पक्वं जयेत्पानात्प्लीहानं कफवातजम् ।

स०–कदल्यादीनां क्षारेण तैलं पक्वं पानेन कफवातोत्थं प्लीहानं पराकरोति ।

---

१ "स्वरसेन साधितमिति त्रिवृच्छाकं त्रिवृच्छाकस्य स्वरसेनैव साधितं, वास्तुकशाकं वास्तुकस्वरसेनैव साधितमिति सर्वत्र योज्यम् । अम्लादिवर्जितं किञ्चिदेव स्विन्नमथवा, किञ्चिदस्विन्नमेव हरितकप्रकारेण । अनन्नभुगिति शाकवृत्तिरेव माममेकं स्यात् ॥ कारभम्–औष्ट्रम् ।" इतीन्दुः । २ ततश्चैव–त्रिवृच्छाकादेरेव, स्वरसं पिबेदिति सम्बन्धः । ३ 'श्चैव' अ. ।

१ 'न्ती चित्रकं द्वि' स. च. । २ "द्विगुणाभयमिति द्विभागाभयम् ।" इति चक्र. । ३ 'भया ।' अ. । ४ 'विडङ्गांशयुतं' स. च. । ५ 'याति ।' ड. । ६ "आसुनुयादिति द्रवे मग्नां कृत्वा सन्धानार्थं स्थापयेत् ॥ पिष्टैरिति पञ्चकोलैः पिष्टैः, तथा विभक्तिविपरिणामात् रोहीतकत्वचा पिष्टयेति ज्ञेयम् ।" इति चक्र. । ७ 'त्तत्तु स' अ. । ८ 'लैश्च' चक्र. । ९ 'सर्वैश्चापि तु' स. च. चक्र. । १० 'हाभिवृ' स. च., ड. । ११ 'मयेदेत' अ. चक्र. । १२ 'रेणेक्षु' इति क्वचित् । १३ क्षुरकः–कोकिलाक्षः ।

**अशान्तौ गुल्मविधिना योजयेदग्निकर्म च ॥ ९६ ॥**
**अप्रातपिच्छासलिले प्लीह्नि वातकफोल्बणे ।**

स०–एवमप्यनुपशान्तौ वातकफोत्थे प्लीह्न्यसञ्जातपिच्छोदके गुल्मविधानेनाग्निकर्म योजयेत् ।

**पैत्तिके जीवनीयानि सर्पींषि क्षीरवस्तयः ॥ ९७ ॥**
**रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते ।**

स०–पैत्तिके[1]–पित्तोल्बणे, प्लीह्नि जीवनीयगणसाधितानि सर्पींषि तथा क्षीरबस्तिरक्तावसेकादि च शस्यते । "सिरां[2] भुक्तवतो दध्ना वामबाहौ विमोक्षयेत् ।" (श्लो ८५) इत्यनेनैव रक्ताव सेकस्योक्तत्वात् पुनर्वचन प्रकर्षार्थम् । पित्ताधिक्ये हि रक्तातिवृद्धि । तस्मादतिरक्तस्रावो योज्य इति प्रतिपादनार्थमेतदुक्तम् ।

**यकृति प्लीहवत्कर्म दक्षिणे तु भुजे सिराम् ॥ ९८ ॥**

स०–यकृति प्लीहवत् कर्म कार्यम् । सिरा पुनर्दक्षिणे बाहौ दैद्यात्[3] ।

**खिन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम् ।**
**सतैर्लैलवणं[4] दद्यान्निरूहं सानुवासनम् ॥ ९९ ॥**
**परिस्रंसीनि चान्नानि तीक्ष्णं चास्मै विरेचनम् ।**
**उदावर्तहरं कर्म कार्यं यच्चानिलापहम् ॥ १०० ॥**

स०–बद्धोदरिणे पुरुषाय खिन्नाय गोमूत्रतीक्ष्णौषधयुतं तैलसैन्धवाभ्या सह निरूह दद्यात्, सानुवासन–पूर्वमनुवासन पश्चाच्चेत्यर्थ । उदरिण स्वेदनिषेधाद्बद्धोदरिण स्वेदानुज्ञानम पवाद इति नैतत्पूर्वापरव्याहतम् । परिस्रसीनि–अनुलोमकराण्यन्नानि, अस्मै च–जठरिणे, तीक्ष्ण च विरेचन दद्यात् । उदाव र्तहर कर्म कार्यम् । यच्च वातघ्न तच्च कार्यम् ।

**छिद्रोदरमृते स्वेदाच्छ्लेष्मोदरवदाचरेत् ।**
**जातं जातं जलं स्राव्यमेवं तद्यापयेद्भिषक् ॥ १०१ ॥**

स०–छिद्रोदर स्वेदमन्तरेण श्लेष्मोदरवदुपक्रमेत् । यदा तु कथञ्चिद्[5]रसच्छिद्रेभ्य परिस्रवन् जठरमापूर्[6]रयित्वा जल भवेत्तदा तज्जात[7] सलिल स्राव्यम् । न च सकृदेव स्राव्यमिति प्रतिपादनार्थं वीप्सा, जात जात जल स्राव्यमिति । कियन्त काल स्राव्यम्? इत्याह–एवमित्यादि । एव–अनेन प्रकारेण, तत्–बद्धोदर, यापयेत् । स्वास्थ्यमिति योग्यतयाऽत्र सम्बध्यते, तेनैव स्वास्थ्य प्रापयेदिति बोध्यम् । न तु याप्य विदध्यादिति व्याख्येयम्, न हि याप्यमुदरमस्ति ।

[1] 'के प्ली' ट ड. । [2] 'रा वाम' ड । [3] दद्यात्–मोक्षयेदित्यर्थ । [4] "निरूहस्रोतसर्गत एव सतैललवणत्वे सिद्धे सतैललवणमिति पद तैललवणयोरत्राधिकदानोपदर्शनार्थम् । बद्धच्छिद्रदकोदरिणा च यद्यप्यास्थापन निषिद्ध, तथाऽपि तदेकसाध्यायामवस्थाया निरूहानुवासनमिह ज्ञेयम् ।" इति चक्र । [5] 'कदाचित्छिद्र' ट. । [6] 'पूर्य ज' ड. । [7] 'तज्जल स' ट. ।

**अपां दोषहराण्यादौ योजयेदुदकोदरे ।**
**मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ॥ १०२ ॥**
**दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ।**

स०–उदकोदरे पूर्वमपा दोषहराणि योजयेत् । तानि सर्वाणि गोमूत्रयुक्तानि तथा तीक्ष्णानि तथा विविधा क्षारा विद्यन्ते येषु तानि विविधक्षारवन्ति, अनेकक्षारयुक्तानीत्यर्थ । ननु, अपामित्यनर्थकम्, "योजयेदुदकोदरे" इत्यनेनैवोदकहरत्वस्य सिद्धत्वात् । अत्रोच्यते । अपा च हरणानि यश्च तत्र ससृष्टो दोषोऽद्भिस्तस्य च हरणानि जलससृष्टदोषहरणानीति प्रतिपादयितुमुक्तम् । आदाविति निर्देशात् पश्चाद्वातादिदोषानुसारेण चोपक्रम कार्य इति द्योतयति । तथा भोजनैर्दीपनीयै कफापहैश्चोपाचरेत् ।

**क्षारं छागकरीषाणां स्रुतं मूत्रेऽग्निना पचेत् ॥ १०३ ॥**
**घनीभवति तस्मिंश्च कर्षांशं चूर्णितं क्षिपेत् ।**
**पिप्पली पिप्पलीमूलं शुण्ठी लवणपञ्चकम् ॥ १०४ ॥**
**निकुम्भकुम्भत्रिफलास्वर्णक्षीरीविषाणिकाः ।**
**स्वर्जिकाक्षारषड्ग्रन्थासातलायवशूकजम् ॥ १०५ ॥**
**कोलाभा गुटिकाः कृत्वा ततः सौवीरकाप्लुताः ।**
**पिबेदजरके शोफे प्रवृद्धे[1] चोदकोदरे ॥ १०६ ॥**

स०–क्षार छागकरीषाणा मूत्रे स्रुत चाग्निना पचेत् । अस्मिंश्च क्षारजले घनीभवति सति कर्षांश रजीकृत पिप्पल्यादिक क्षिपेत् । तत –तस्मात्क्षारात्, गुलिका कोलाभा कृत्वा सौवीरकालोडिता अजरकादौ पिबेत् ।

**इत्यौषधैरप्रशमे त्रिषु बद्धोदरादिषु ।**
**प्रयुञ्जीत भिषक् शस्त्रमार्तबन्धुनृपार्थितः ॥ १०७ ॥**

स०–इति–एव, औषधैरशान्तौ सत्या त्रिषु बद्धच्छिद्रोदकोदरेषु वैद्य आर्तज्ञातिभिर्नृपेण चाभ्यर्थित सन् शस्त्र प्रयुञ्जीत ।

**स्निग्धस्विन्नतनोर्नाभेरधो बद्धक्षतान्त्रयोः ।**
**पाटयेदुदरं मुक्त्वा वामतश्चतुरङ्गुलात् ॥ १०८ ॥**
**चतुरङ्गुलमानं तु निष्कास्यान्त्राणि तेन च ।**
**निरीक्ष्यापनयेद्वालमललेपोपलादिकम् ॥ १०९ ॥**
**छिद्रे तु शल्यमुद्धृत्य विशोध्यान्त्र[2]परिस्रवम् ।**
**मर्कोटैर्दंशयेच्छिद्रं तेषु लग्नेषु चाहरेत् ॥ ११० ॥**
**कायं मूर्ध्नोऽनु चान्त्राणि यथास्थानं निवेशयेत्[3] ।**
**अक्तानि मधुसर्पिर्भ्यामथ सीव्येद्बहिर्व्रणम् ॥ १११ ॥**
**ततः कृष्णमृदाऽऽलिप्य बध्नीयाद्यष्टिमिश्रया ।**
**निवातस्थः पयोवृत्तिः स्नेहद्रोण्यां वसेत्ततः ॥ ११२ ॥**

स०–बद्धक्षतान्त्रयो –बद्धोदरे छिद्रोदरे च, स्निग्धस्विन्नशरीरस्य नाभेरध उदरं चतुरङ्गुलाद्वामेन मुक्त्वा चतुरङ्गुलप्रमाण

[1] 'द्धे च द' अ.इ. । [2] 'ध्यान्त्र प' अ. । [3] 'विवेश' अ ।

पाटयेत् । तेन च—छिद्रेण, अन्त्राणि बहिर्निष्कास्य बालमलले पोपलादिकमपनयेदिति बद्धोदरोपक्रम । छिद्रोदरोपक्रममाह—छिद्रे तु परिस्राविणि शल्यमुद्धृत्य परिस्रवमान्त्र विशोध्यानन्तर मर्कोटैश्[1]छिद्र दशयेत् । तेषु च—मर्कोटेषु, भक्षयितु लग्नेषु मूर्ध्ने—शिरसोऽपरं, काय मर्कोटानामाकर्षेत् । अनु [च]—पश्चाच्च, अन्त्राणि मधुसर्पिर्भ्यामक्तानि यथास्थान स्थापयेत् । [अथ—] अनन्तरं, बहिर्व्रण सीव्येत् । बहि शब्दनिर्देशादाभ्यन्तरगत न सीव्येदिति गम्यते । तत—अनन्तर, कृष्णमृदा मधुयष्टिकामिश्रयाऽऽलिप्य बध्नीयात् । अनन्तरं निवातस्थ क्षीरवृत्ति सन् स्नेहद्रोण्या वसेत् ।

अधुना जलोदरस्यान्येषामपि जातजलाना जठराणा चिकित्सार्थमाह—

**सजले जठरे तैलैरभ्यक्तस्यानिलापहैः ।**
**स्विन्नस्योष्णाम्बुनाऽऽकक्षमुदरे पट्टवेष्टिते[2] ॥ ११३ ॥**
**बद्धच्छिद्रोदितस्थाने विध्येदङ्गुलमात्रकम् ।**
**निधाय तस्मिन्नाडी च स्रावयेदर्धमम्भसः ॥ ११४ ॥**
**अथास्य नाडीमाकृष्य तैलेन लवणेन च ।**
**व्रणमभ्यज्य बध्वा च वेष्टयेद्वाससोदरम् ॥ ११५ ॥**
**तृतीयेऽह्नि चतुर्थे वा यावदाषोडशं[3] दिनम् ।**
**तस्य विश्रम्य विश्रम्य स्रावयेदल्पशो जलम् ॥११६॥**
**विवेष्टयेद्गाढतरं जठरं[4] वाससा श्लथम् ।**
**निःस्रुते लङ्घितः पेयामस्नेहलवणा पिबेत् ॥ ११७ ॥**

स०—सजले जठरिणो जठरे तैलै[5]—तिलाना तैलै सर्षपैरण्डतैलादिभिश्च, अनिलघ्नैरभ्यक्तस्य तथोष्णाम्बुना स्विन्नस्याकक्ष—कक्षान्त यावत्, उदरे पट्टेन—वस्त्रेण वेष्टिते, तदुदर वस्त्रेणैव वेष्टयित्वा बद्धच्छिद्रोदरयोर्[6]यत्कथित स्थान तस्मिन् स्थानेऽङ्गुलप्रमाण विध्येत् । तस्मिंश्च छिद्रे नाडीं निधाय जलस्योदरस्थस्यार्ध स्रावयेत् । जलस्रावादनन्तरमस्य—उदरिणो, नाडीमाकृष्य सलवणेन तैलेन व्रणमभ्यज्य बद्ध्वा च वाससा जठर वेष्टयेत् । तृतीये दिवसेऽथवा चतुर्थे यावदाषोडश दिन तस्य—उदरिणो,विश्रम्य विश्रम्याल्पश —अल्पमल्प कृत्वा, जल[7]—दोष,स्रावयेत् । सहसा हि प्रचुरजलस्रावणादपाय स्यात् । तस्मात् स्रुतिदिवसादनन्तरं तृतीये चतुर्थे पञ्चमादौ वा दिने शरीरबलाबलमपेक्ष्य षोडशदिन मर्यादीकृत्य जलस्रावणं कार्यम् । जठर च शिथिल वाससा गाढतरं विवेष्टयेत् । नि स्रुते च जलेऽसौ जठरी लङ्घित. सन् पेयामस्नेहलवणा पिबेत् । नञत्र ईषदर्थे । ईषत् स्नेहलवण क्लेदरक्षार्थं वातकोपरक्षार्थं च । अन्यथा हि 'रूक्षा निर्लवणा पिबेत्' इत्येव निर्देशमाचार्यं कुर्यात् ।

१ 'मर्कोटकै' 'मर्कोटकेषु' 'मर्कोटकाना' ड । २ 'परिवे' अ । 'पट्टवे' स.द. । ३ 'बद्धाऽऽदिनषोडश ।' अ. । ४ 'र च श्लथाश्लेथम्' अ इ. । ५ 'तिलतैले' ड. । ६ 'च्छिद्रयो' ड. । ७ 'जलदोष' ड. ।

**स्यात्क्षीरवृत्तिः षण्मासांस्त्रीन् पेयां पयसा पिबेत् ।**
**त्रींश्चान्यान् पयसैवाद्यात् फलाम्लेन रसेन वा ११८**
**अल्पशोऽस्नेहलवणं जीर्णं श्यामाककोद्रवम् ।**
**प्रयतो वत्सरेणैवं विजयेत जलोदरम् ॥ ११९ ॥**

स०—षण्मासान् क्षीरवृत्ति स्यात् । त्रीन् मासान् क्षीरपेया पिबेत् । त्रींश्चान्यान् मासान् पयसैव जीर्णं श्यामाककोद्रवमद्यात् । फलाम्लेन वा मासरसेन । कथम्[2] अल्पमल्पम् । तथा, ईषत् स्नेहलवणम् । [एव—] अनेन प्रकारेण, प्रयत सलिलोदरं वत्सरेण विजयेत् ।

**वर्ज्येषु यन्त्रितो दिष्टे नात्यदिष्टे जितेन्द्रियः ।**

स०—वर्ज्येष्वा[1]हारविहारादिष्वत्यर्थोष्णाम्ललवणादिषु (श्लो १२५) यन्त्रित उदरी स्यात् । दिष्टे—कथितेऽन्नपानादौ, नातियन्त्रित स्यात् । अदिष्टे—अकथिते पुनरन्नपानादौ, जितेन्द्रिय. स्यात्—अलोलुपेन तत्र भवितव्यमित्यर्थ ।

जलोदरचिकित्साप्रसङ्गेन सर्वोदरचिकित्सामाह—

**सर्वमेवोदरं प्रायो दोषसङ्घातजं यतः ॥ १२० ॥**
**अतो वातादिशमनी क्रिया सर्वत्र शस्यते ।**

स०—सर्वमेवोदर बाहुल्येन दोषसङ्घातोत्थ यस्मात्तस्मात् सर्वत्रोदरे वातादिशमनी क्रिया प्रशस्यते । प्रायोग्रहण किञ्चित् प्राक्तनकर्मनिमित्तमुदर नावश्य दोषसङ्घातजमिति ।

**वह्निर्मन्दत्वमायाति दोषैः कुक्षौ प्रपूरिते ॥ १२१ ॥**
**तस्माद्भोज्यानि भोज्यानि[3] दीपनानि लघूनि च ।**
**सपञ्चमूलान्यल्पाम्लपटुस्नेहकटूनि च ॥ १२२ ॥**

स०—वह्निर्मन्दत्व यत आगच्छति दोषैरुदरे प्रपूरिते सति तस्मात्कारणात् भोज्यानि—आहारा ,भोज्यानि—भक्षयितव्यानि, जठरिभिर्दीपनानि लघूनि च । तथा सह पञ्चमूलेन तथाऽल्पाम्लादयो येषु तानि ।

**भावितानां गवां मूत्रे षष्टिकानां च तण्डुलैः ।**
**यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ॥ १२३ ॥**
**पिबेदिक्षुरसं चानु जठराणां निवृत्तये ।**
**स्वं स्वं स्थानं व्रजन्त्येषां वातपित्तकफास्तथा[4] ॥१२४॥**

स०—गोमूत्रे भाविताना षष्टिकाना तण्डुलैर्यवागू क्षीरेण सिद्धा प्रकाम—इच्छया, नर भोजयेत् । अनु—पश्चात्,इक्षुरस च पिबेदुदराणां शान्त्यर्थम् । तथा वातपित्तकफाश्चैषा—उदरिणां, स्व स्वं स्थान व्रजन्ति ।

**अत्यर्थोष्णाम्ल[5]लवणं रूक्षं ग्राहि हिमं गुरु ।**
**गुडं तैलकृतं[6] शाकं वारि पानावगाहयोः ॥ १२५ ॥**

१ 'ष्वाहारा' ड. । २ 'सर्वा प्रश' अ इ स मू । ३ 'योज्यानि' स.सं. । ४ "तथेत्युक्तप्रकारेण" इतीन्दु । ५ 'ष्णाम्बुल' अ.इ. । ६ 'तिलकृत' स.स. ।

**आयासाध्वदिवास्वप्नयानानि च परित्यजेत् ।**

स०-अत्यर्थोष्णाम्ललवणादिक जठरी त्यजेत् ।

वारि पानावगाहयोर्यदि त्यजेत् तर्हि किं पेयम्? इत्याह—

**नात्यच्छसान्द्रमधुरं तक्रं पाने प्रशस्यते ॥ १२६ ॥**
**सकणालवणं वाते, पित्ते सोषणशर्करम् ।**
**यवानीसैन्धवाजाजीमधुव्योषैः कफोदरे ॥ १२७ ॥**
**त्र्यूषणक्षारलवणैः संयुतं निचयोदरे ।**
**मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ॥ १२८ ॥**
**प्लीह्नि, बद्धे तु हपुषायवानीपट्वजाजिभिः ।**
**सकृष्णामाक्षिकं छिद्रे, व्योषवत्सलिलोदरे ॥ १२९ ॥**

स०-तक्रमीषदच्छसान्द्रमधुर पाने प्रशस्यते । तच्च पवने सपिप्पलीसैन्धव श्रेष्ठम् । पित्ते समरिचशर्करम् । यवान्यादिभिः सह कफोदरे हितम् । त्रिकटुकादिभि सयुक्त सन्निपातोदरे । मधुतैलादिभि प्लीहोदरे । हपुषादिभिर्युत बद्धोदरे । पिप्पली-मधुयुत छिद्रोदरे । जलोदरे व्योषयुत श्रेष्ठम् ।

**गौरवारोचकानाहमन्दवह्न्यतिसारिणाम् ।**
**तक्रं वातकफार्तानाममृतत्वाय कल्पते ॥ १३० ॥**

स०-वातकफार्ताना गौरवारोचकादियुताना तक्रममृतत्वाय कल्पते–सम्पद्यते । एतच्च ब्रुवन् वातकफयो शुद्धावपि देयमिति द्योतयति ।

**प्रयोगाणां च सर्वेषामनु क्षीरं प्रयोजयेत् ।**
**स्थैर्यकृत्सर्वधातूनां बल्यं दोषानुबन्धहृत् ॥ १३१ ॥**

स०-सर्वेषा च प्रयोगाणामनु क्षीरं[3] प्रयोजयेत् । तच्च क्षीर सर्वधातूनां स्थिरत्व करोति । तथा बल्य स्याद्दोषानुबन्धत्व हरति ।

**भेषजापचिताङ्गानां क्षीरमेवामृतायते[3] ॥ १३१½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थान उदरचिकित्सितं नाम पञ्चदशोऽध्यायः ॥ १५ ॥**

स०-भेषजेनापचित शरीर येषा तेषा क्षीरमेवामृतत्वाय सम्पद्यत इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थान उदरचिकित्सित नाम पञ्चदशोऽध्याय समाप्त ॥१५॥



१ 'वराशु' इ । 'वसाशु' इति क्वचित् । २ 'र तक्र च प्रयोजयेत । तच्च तक्र सर्व' ट ड. । ३ "अमृतायते–अमृतमिवाचरति जीवितदानेन ।" इतीन्दु ।



# षोडशोऽध्यायः ।

अस्मादनन्तर पाण्डुरोगचिकित्सितं[1] व्याख्यातुमुपक्रम्यते । सम्बन्धश्चास्य निदान एवोक्त ।

**अथातः पाण्डुरोगचिकित्सितं[2] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**पाण्ड्वामयी[3] पिबेत्सर्पिरादौ कल्याणकाह्वयम् ।**
**पञ्चगव्यं महातिक्तं शृतं वाऽऽरग्वधादिना ॥ १ ॥**

स०-पाण्ड्वातुर कल्याणकाख्य (हृ उ अ ६।२७), सर्पिरादौ पिबेत् । आदावित्यनेनैतद्गमयति,–अस्मिन् व्याधौ प्राधान्येन पित्तचिकित्सा कार्या, तदनु वातकफयो । तथा च पित्तस्यैवैतद्व्याधिकर्तृत्वे प्राधान्यम् । अत एव च निदानेऽध्यगीष्ट (हृ नि अ १३।१)–"पित्तप्रधाना कुपिता" इत्यादि । तस्मात् पित्तस्योपशान्त्यै सर्पि पान युक्तम् । पञ्चगव्य घृत–अपस्मारप्रतिषेधोक्तम् (हृ उ अ. ७।२०) । महातिक्त–कुष्ठचिकित्सितोक्तम् (हृ चि अ १९।८) । आरग्वधादिगणेन (हृ सू. अ १५।१७) वा पक्व घृत पिबेत् ।

**दाडिमात्कुडवो धान्यात्कुडवार्धं पलं पलम् ।**
**चित्रकाच्छृङ्गबेराच्च पिप्पल्यर्धपलं च तैः ॥ २ ॥**
**कल्कितैर्विंशतिपलं घृतस्य सलिलाढके ।**
**सिद्धं हृत्पाण्डुगुल्मार्शःप्लीहवातकफार्तिनुत् ॥ ३ ॥**
**दीपनं श्वासकासघ्नं मूढवातानुलोमनम्[4] ।**
**दुःखप्रसविनीनां च वन्ध्यानां च प्रशस्यते ॥ ४ ॥**

स०-दाडिमस्य कुडवम्, धान्यकात्कुडवार्धम्, चित्रकशुण्ठ्यो प्रत्येक पलम्, पिप्पल्या द्वौ कर्षौ, तै पिष्टैर्घृतस्य पलानि विंशतिं तोयाढके पचेत् । तच्च सिद्ध हृदयाद्यर्तिजित्, दीपनादिगुणयुक्त च । दु खप्रसविनीना स्त्रीणा वन्ध्याना–अप्रसविनीना च, शस्यते ।

**स्नेहितं वामयेत्तीक्ष्णैः पुनः स्निग्धं च शोधयेत् ।**
**पयसा मूत्रयुक्तेन बहुशः केवलेन वा ॥ ५ ॥**

स०-स्नेहित पाण्डुरोगिण तीक्ष्णैर्वामयेत् । पुनरपि स्निग्धं च बहुश क्षीरेण मूत्रयुतेन शोधयेत् । केवलेन वा पयसा शोधयेत् ।

१ 'त्सितमारभ्यते ।' ड । २ इद पाण्डुरोगचिकित्सित चरके चि० १६ अध्याये, सुश्रुते उ० ४४ अध्याये, अष्टाङ्गसङ्ग्रहे चि० १८ अध्याये चास्ति वर्णितम् । ३ 'पाण्डुरोगी पि' अ. । ४ 'वाते च शस्यते । ०ना चैव गर्भदम् ।' स.च. ।

दन्तीफलरसे[1] कोष्णे काश्मर्याञ्जलिमासुतम् ।
द्राक्षाञ्जलि वा मृदित तत् पिबेत् पाण्डुरोगजित् ॥६॥
मूत्रेण पिष्टां पथ्या वा तत्सिद्ध वा फलत्रयम् ।

स०-दन्तीफलरसे कोष्णे काश्मर्याञ्जलिमासुत पिबेत्, अथवा द्राक्षाञ्जलि मृदित पिबेत्, तदेतदुभयमपि पाण्डुरोगघ्नम्। गोमूत्रेण पिष्टा हरीतकी वा पिबेत्। तेन-गोमूत्रेण, सिद्ध-क्वथित, फलत्रय वा पिबेत्।

स्वर्णक्षीरीत्रिवृच्छयामाभद्रदारुमहौषधम् ॥ ७ ॥
गोमूत्राञ्जलिना पिष्टं शृत तेनैव वा पिबेत् ।
साधितं क्षीरमेभिर्वा पिबेद्दोषानुलोमनम् ॥ ८ ॥

स०-स्वर्णक्षीर्यादिक गोमूत्राञ्जलिना पिष्टमथवा तेनैव-गोमूत्रेण, शृत पिबेत्। एभिर्वा स्वर्णक्षीर्यादिभिर्द्रव्यै क्षीर साधित दोषानुलोमकर पिबेत्।

मूत्रे स्थितं वा सप्ताहं पयसाऽयोरजः पिबेत् ।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥ ९ ॥

स०-गोमूत्रे सप्ताह स्थित लोहचूर्ण क्षीरेण पिबेत्। जीर्णे तस्मिन् दुग्धेन सहान्न भुञ्जीत। मासरसेन वा मधुरेण-न लम्लेन।

शुद्धश्चोभयतो लिह्यात्पथ्यां[2] मधुघृतद्रुताम् ।

स०-शुद्धश्चोभयत -पायुतो मूर्धतश्च हरीतकी[3] मधुघृतद्रुता लिह्यात्।

विशालाकटुकामुस्ताकुष्ठदारुकलिङ्गकाः[5] ॥ १० ॥
कर्षांशा द्विपिचुर्मूर्वा कर्षार्धांशा घुणप्रिया ।
पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात्ततो मधु ॥ ११ ॥
पाण्डुरोगं ज्वर दाहं कासं श्वासमरोचकम् ।
गुल्मानाहामवातांश्च रक्तपित्तं च तज्जयेत् ॥ १२ ॥

स०-विशालादय षट् कर्षमात्रा, मूर्वा द्विकर्षप्रमाणा, अर्धकर्षदघ्नी अतिविषा तदेतच्चूर्ण कोष्णाम्बुना पीत्वा माक्षिक लिह्यात्। एतच्च पाण्डुरोगादीन् हन्ति।

वासागुडूचीत्रिफलाकट्वीभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्ति पाण्डुपित्तास्रकामलाः ॥ १३ ॥

स०-वासादिक्वाथो मधुयुत पाण्ड्वादीन् हन्ति।

व्योषाग्निवेल्लत्रिफलामुस्तैस्तुल्यमयोरजः ।
चूर्णित तक्रमध्वाज्यकोष्णाम्भोभिः प्रयोजितम् ॥ १४ ॥
कामलापाण्डुहृद्रोगकुष्ठार्शोमेहनाशनम् ।

स०-व्याषादिभिस्तुल्यमयो[6]रजश्चूर्णित तक्रादिभिरुपयोजित कामलादिनाशनम्।

गुडनागरमण्डूरतिलांशान् मानतः समान् ॥ १५ ॥
पिप्पलीद्विगुणान् दद्याद्गुटिकां पाण्डुरोगिणे ।

स०-गुडादिकान् समभागान् पिप्पलीद्विगुणानिमा गुटिका[1] पाण्डुरोगिणे दद्यात्।

ताप्यं दार्व्यास्त्वचं चव्यं ग्रन्थिकं देवदारु च ॥ १६ ॥
व्योषादिनवकं[2] चैतच्चूर्णयेद् द्विगुणं ततः ।
मण्डूर चाञ्जननिभं सर्वतोऽष्टगुणेऽथ तत् ॥ १७ ॥
पृथग्विपक्वे गोमूत्रे वटकीकरणक्षमे ।
प्रक्षिप्य वटकान् कुर्यात्तान् खादेत्तक्रभोजनः ॥ १८ ॥
एते मण्डूरवटकाः प्राणदाः पाण्डुरोगिणाम् ।
कुष्ठान्यजरकं शोफमूरुस्तम्भमरोचकम् ॥ १९ ॥
अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति च ।

स०-ताप्यादिकं व्योषादिनवक च-पूर्वोक्त, चूर्णयेत्। तत -तेभ्यो, द्विगुण मण्डूरमञ्जनसदृश सर्वेभ्योऽष्टगुणे मूत्रे पृथक् विपक्वे च वटकीकरणक्षमे-घने सति, प्रक्षिप्य वटकान् कुर्यात्। ताश्च तक्रप्रधानभोजन सन् प्राश्नीयात्। एते मण्डूरवटका पाण्ड्वामयिना प्राणदास्तथा कुष्ठादीन् घ्नन्ति।

ताप्याद्रिजतुरौप्यायोमलाः पञ्चपला· पृथक् ॥ २० ॥
चित्रकत्रिफलाव्योषविडङ्गैः पालिकै· सह ।
शर्कराष्टपलोन्मिश्राश्चूर्णिता[3] मधुना[4] द्रुताः ॥ २१ ॥
पाण्डुरोग विषं कासं यक्ष्माणं विषमं ज्वरम् ।
कुष्ठान्यजरक मेह शोफं श्वासमरोचकम् ॥ २२ ॥
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ।

स०-ताप्यादय पृथक् पञ्चपलाश्चित्रकादिभि पालिकै सह शर्कराष्टपलयुताश्चूर्णीकृता मधुना द्रवीकृता पाण्डुरोगादीन् घ्नन्ति। विशेषेणापस्मारादींश्च।

कौटजत्रिफलानिम्बपटोलघननागरैः ॥ २३ ॥
भावितानि दशाहानि रसैर्द्वित्रिगुणानि वा ।
शिलाजतुपलान्यष्टौ तावती सितशर्करा ॥ २४ ॥
त्वक्क्षीरीपिप्पलीधात्रीकर्कटाख्या· पलोन्मिताः ।
निदिग्ध्याः[5] फलमूलाभ्या पलं युक्त्या[6] त्रिजातकम् २५
मधुत्रिपलसंयुक्तान् कुर्यादक्षसमान् गुडान् ।
दाडिमाम्बुपयःपक्षिरसतोयसुरासवान् ॥ २६ ॥
तान् भक्षयित्वाऽनु पिबेन्निरन्नो भुक्त एव वा ।
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरम् ॥ २७ ॥
हृन्मूत्रपूतिशुक्राग्निदोषशोषगरोदरम् ।
कासासृग्दरपित्तास्रक्शोफगुल्मगलामयान् ॥ २८ ॥
मेहवर्ध्मभ्रमान् हन्युः सर्वदोषहराः शिवाः ।

---

१ 'न्तीपल' इति क्वचित्। २ 'लिना शृतम्।' स च। ३ 'थ्या मधुघृतद्रुता।' इ। ४ 'तकीमधुघृतद्रुता लि' ड.। ५ 'शाला कटुका मुस्ता कुष्ठ दा' अ.। ६ 'मयश्चू' ट.।

१ 'गुलिका' ड। २ 'क चेति चूर्ण' अ। ३ 'ता समधुद्रुता' अ। ४ 'ना युता.' इ। 'नाऽऽद्रुता.' स च। ५ 'दिग्धाफ' अ.। ६ 'युक्त कु' अ.इ, स.मू।

स०–कुटजादिभिर्द्रव्य रसै –रसता गत , क्काथीकृतैरित्यर्थ । शिलाजतुपलान्यष्टौ दशाहानि द्विगुणानि त्रिगुणानि वा भावितानि। अह शब्दो वारोपलक्षणार्थ । तदयमत्रार्थोऽव-तिष्ठते,–शिलाजतुपलाष्टक केवल जलधौत कौटजादिक तत्तुल्य-मष्टगुणिते जले क्कथित ततोऽष्टभागावशेषरस गृहीत्वा तेन रसेन दश वारान् द्विगुणान् त्रिगुणान् वा भावयेदिति । तावती–अ-ष्टपलप्रमाणा सितशर्करा, त्वक्क्षीर्यादिक पलोन्मित कण्टकार्या फलमूलयो पलम् । त्रिजातक युक्त्या–यावता त्रिजातकेनाति-सौगन्ध्य हीनसागन्ध्य वा न स्यात्, एव न हीनमात्रमत्रतद्द्वयमव्यापकत्वात्, न वाऽतिमात्रमप्यतिव्यापकत्वेनायोगार्हत्वात् । मधुनस्त्रिभि पलै सयुक्तान् कार्षिकान् गुडान् विदध्यात् । तान् गुडान् भक्षयित्वाऽनु–पश्चात्, दाडिमजलादीनि यथायोग पिबेत् निरन्न कृताहारो वा । ते च वटका पाण्ड्वादीन् हन्यु । सर्वदोषहरा शिवाश्च स्यु ।

**द्राक्षाप्रस्थं कणाप्रस्थं शर्करार्धतुलां तथा ॥ २९ ॥**
**द्विपलं मधुकं शुण्ठी त्वक्क्षीरीं च विचूर्णितम् ।**
**धात्रीफलरसद्रोणे तत्क्षिप्त्वा लेहवत्पचेत् ॥ ३० ॥**
**शीतान्मधुप्रस्थयुताद् लिह्यात्पाणितलं ततः ।**
**हलीमकं पाण्डुरोगं कामलां च नियच्छति ॥ ३१ ॥**

स०–द्राक्षाया षोडशपलानि पिप्पल्याश्च । शर्कराया पलानि पञ्चाशत् । यष्ट्यादिक रजीकृत द्विपलप्रमाणम् । धात्री-फलरसस्य द्रोणे सर्वमेतत्क्षिप्त्वा लेहमिव पचेत । तस्माल्लेहा-च्छीतात्ततो मधुन प्रस्थयुतात् पाणितल–कर्षमात्र, लिह्यात् । स च लेहो हलीमकादीन्नियच्छति–पराकरोति ।

**कनीयःपञ्चमूलाम्बु शस्यते पानभोजने ।**
**पाण्डूनां, कामलार्तानां मृद्वीकामलकाद्रसः ॥ ३२ ॥**

स०–पाने भोजने च शस्यते ह्रस्वपञ्चमूलजलम् । मृद्वी-कारस आमलकरसश्च पाण्डुरोगिणा कामलार्ताना च शस्यते ।

**इति सामान्यतः प्रोक्तं पाण्डुरोगे भिषग्जितम् ।**
**विकल्प्य योज्यं विदुषा पृथग्दोषबलं प्रति ॥ ३३ ॥**

स०–इति–एव, पाण्डुरोगे सामान्येन भिषग्जित–औषध, प्रोक्तम् । भिषज्धातु कण्ड्वादौ भिषज्यते स्म क्त भिषग्जितम् । तदभिज्ञेन वैद्येन विकल्प्य–निरूप्य, पृथग्दोषबल लक्षणीकृत्य योज्यम् ।

**स्नेहप्रायं पवनजे तिक्तशीतं तु पैत्तिके ।**
**श्लैष्मिके कटुरूक्षोष्णं विमिश्रं सान्निपातिके ॥ ३४ ॥**

स०–पवनजे पाण्डौ स्नेहप्राय–स्नेहभूयिष्ठ, भेषजम् । तिक्त-शीतप्राय तु पैत्तिके। श्लैष्मिके तु कटुरूक्षोष्णभूयिष्ठम् । सान्नि पातिके विमिश्र चिकित्सितम् ।

**मृद निर्यापयेत्कायात्तीक्ष्णैः संशोधनैः पुरः ।**
**बलाधानानि सर्पीषि शुद्धे कोष्ठे तु योजयेत् ॥ ३५ ॥**

स०–कायात्–शरीरात्, मृद–शल्यभूतस्थिता, तीक्ष्णै सशोधनै –स्नुहीक्षीरादिभि , निर्हरेत् पुर –पूर्वम् । शुद्धे तु कोष्ठे बलाधानानि घृतानि योजयेत् ।

तान्येवाह—

**व्योषबिल्वद्विरजनीत्रिफलाद्विपुनर्नवम् ।**
**मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥ ३६ ॥**
**वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम् ।**
**सर्वान् प्रशमयत्याशु विकारान् मृत्तिकाकृतान् ॥ ३७ ॥**

स०–व्योषादिभिर्घृताच्चतुर्थांश शृतानि समेन क्षीरेण तच्च तुगुणजलेन घृत सर्वान् विकारान् मृत्तिकाकृतान् शमयति ।

**तद्वत्केसरयष्ट्याह्वपिप्पलीक्षीरशाड्वलैः ।**

स०–केसरादिभि पक्व सपिस्तद्वत्–पूर्वगुणम् ।

**मृद्द्वेषणाय तल्लौल्ये वितरेद्भाविता मृदम् ॥ ३८ ॥**
**वेल्लाग्निनिम्बप्रसवैः पाठया मूर्वयाऽथवा ।**

स०–मृद्द्वेषणार्थे तस्या मृदि लौल्ये–लोलुपत्वे सति, वेल्ला-दिभिर्भाविता मृद दद्यात् ।

**मृद्भेदभिन्नदोषानुगमाद्योज्यं च भेषजम् ॥ ३९ ॥**

स०–मृदो भेदो–विशेष कृष्णपाण्डुरादि, तेन भिन्नो–विशेषितो, यो दोषस्तस्य वातादेर्दर्शनात् । "मृत्कषायाऽनिल पित्तमूषरा मधुरा कफम् । दूषयित्वा" (ह नि अ १३।१३) एव लक्षणाद्दोषानुगमाद्भेषज योज्यम् । नैवमेव मृद्भक्षणमात्र-विज्ञानेन मृन्निर्हरणोषध चैतद्धेतुविपरीतमेवेत्यवेहि । यतो मृदा हेतुभूतया य पाण्डुरोग उदभूत् तस्य मृन्निर्हरण विपरीतमेव ।

**कामलायां तु पित्तघ्नं पाण्डुरोगाविरोधि यत् ।**

स०–कामलाया पित्तहरमौषध यत् पाण्डुरोगाविरोधि तद्देयम् ।

**पथ्याशतरसे पथ्यावृन्तार्धशतकल्कितः ॥ ४० ॥**
**प्रस्थः सिद्धो घृताद्गुल्मकामलापाण्डुरोगनुत् ।**

स०–पथ्याशतक्काथे पथ्यावृन्तपञ्चाशत्कल्कीकृतो घृतप्रस्थ पक्व कामलादिघ्न ।

**आरग्वध रसेनेक्षोर्विदार्यामलकस्य वा ॥ ४१ ॥**
**सत्र्यूषणं बिल्वमात्रं पाययेत्कामलापहम् ।**

स०–इक्षो रसेन विदार्या रसेनामलकरसेन वा सहत्रिकटुक पलप्रमाणमारग्वध कामलापह पाययेत् ।

**पिबेन्निकुम्भकल्कं वा द्विगुडं शीतवारिणा ॥ ४२ ॥**
**कुम्भस्य चूर्णं सक्षौद्रं त्रैफलेन रसेन वा ।**

१ 'वा मासमेक भा' ट. । २ 'वासरो' ट । ३ 'गुण त्रिगुण वा' ट । ४ पानभोजने पाण्डूना कनीय पञ्चमूलाम्बु शस्यते, कामलार्ताना मृद्वीकामलकाद्रस शस्यते, इत्यन्वय । ५ 'रोगभि' इ । ६ 'टुतीक्ष्णोष्ण' इ. । ७ 'सन्निपातजे' अ. ।

१ 'निर्वाप' इ । 'निर्घातये' स द्व । २ 'छे नियो' अ इ । 'छेऽनु यो' स मू । ३ "मात्रशब्देनाचार्य पलस्य दोषाद्यपेक्षया ऊनस्याधिकस्य वा प्रयोगमुपदिशति। निकुम्भस्य–दन्त्या द्विगुण-गुडम् । कुम्भो–द्रव ती।" इतीन्दु । ४ 'वा कर्णिका(इक्ष्वा)द्यन्यत-मरसेन सह' ट.। ५ 'द्विगुण शी' अ.स मू. अरुण ।

स०-निकुम्भकल्कं वा पलद्वयप्रमाणं शिशिरजलेन पिबेत्। कुम्भचूर्णं क्षौद्रसहितं वा त्रैफलेन क्वाथेन पिबेत्।

**त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम्॥४३॥**
**प्रातः प्रातर्मधुयुतं कामलार्ताय योजयेत्।**

स०-त्रिफलाद्यन्यतमरसं मधुयुतं प्रातः प्रातः कामलिने योजयेत्।

**निशागैरिकधात्रीभिः कामलापहमञ्जनम्॥४४॥**

स०-निशादिभिरञ्जनं कामलाहृत्।

**तिलपिष्टनिभं यस्तु कामलावान् सृजेन्मलम्।**
**कफरुद्धपथं तस्य पित्तं कफहरैर्जयेत्॥४५॥**

स०-यः पुनः कामलावान् मलं तिलपिष्टसदृशं मुञ्चेत्, तस्य कफरुद्धमार्गं तस्यातुरस्य कफघ्नैर्द्रव्यैः पित्तं जयेत्।

**रूक्षशीतगुरुस्वादुव्यायामबलनिग्रहैः।**
**कफसम्मूर्च्छितो वायुर्यदा पित्तं बहिः क्षिपेत्॥४६॥**
**हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः।**
**भवेत्साटोपविष्टम्भो गुरुणा हृदयेन च॥४७॥**
**दौर्बल्याल्पाग्निपार्श्वार्तिहिध्माश्वासारुचिज्वरैः।**
**क्रमेणाल्पेऽनुषज्येत पित्ते शाखासमाश्रिते॥४८॥**
**रसैस्तं रूक्षकट्वम्लैः शिखितित्तिरिदक्षजैः।**
**शुष्कमूलकजैर्यूषैः कुलत्थोत्थैश्च भोजयेत्॥४९॥**
**भृशाम्लतीक्ष्णकटुकलवणोष्णं च शस्यते।**
**सबीजपूरकरसं लिह्याद्व्योषं तथाऽऽशयम्॥५०॥**
**स्वं पित्तमेति तेनास्य शकृदप्यनुरज्यते।**
**वायुश्च याति प्रशमं सहाटोपाद्युपद्रवैः॥५१॥**
**निवृत्तोपद्रवस्यास्य कार्यः कामलिको विधिः।**

स०-रूक्षादिभिः पवनः कुपितः कफेन मिश्रितो यदा पित्तं बहिः क्षिपेत्, तदा हारिद्रनेत्रादिः पुरुषो भवेत्, आटोपादिमांश्च। हृदयेन च गुरुणा युक्तः। दौर्बल्यादिभिः क्रमेण कुपितो वायुरल्पे पित्ते शाखासमाश्रितेऽनुषज्येत। अनुषज्येतेति कर्मकर्तरि। तं-तादृशं नरं, रसैः रूक्षकट्वम्लैर्मयूरादिमांसजैस्तथा शुष्कमूलकोद्भवैर्यूषैस्तथा कुलत्थोत्थैर्भोजयेत्। भृशाम्लादिकं च भोजनं शस्यते। तथा बीजपूरकरससहितं व्योषं लिह्यात्। एवं कृते सत्यस्य पित्तं स्वमाशयमेति, शकृच्चानुरज्यते, वायुश्च प्रशमं यात्याटोपान्त्रकूजनादिभिरुपद्रवैः सह। अस्य-आतुरस्य, अपगतोपद्रवस्य सतः कामलाविहितो विधिः कार्यः।

**गोमूत्रेण पिबेत्कुम्भकामलायां शिलाजतु॥५२॥**
**मासं माक्षिकधातुं वा किट्टं वाऽथ हिरण्यजम्।**

स०-कुम्भकामलायां गोमूत्रेणालोडितं शिलाजतु पिबेत्। धातुमाक्षिकं वा गोमूत्रेण मासं यावत् पिबेत्। हिरण्यजं [किट्ट]-रूप्योत्थं मलं वा, गोमूत्रेण पिबेत्।

१ 'शिलागै' इति क्वचित्। २ 'मार्गस्यातु' ट.। ३ "हिरण्यजं किट्ट-सुवर्णमलम्।" इतीन्दुः।

**गुडूचीस्वरसक्षीरसाधितेन हलीमकी॥५३॥**
**महिषीहविषा स्निग्धः पिबेद्धात्रीरसेन तु।**
**त्रिवृतां तद्विरिक्तोऽद्यात्स्वादु पित्तानिलापहम्॥५४॥**
**द्राक्षालेहं च पूर्वोक्तं सर्पींषि मधुराणि च।**
**यापनान् क्षीरबस्तींश्च शीलयेत्सानुवासनान्॥५५॥**
**मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याऽग्निवृद्धये।**
**कासिकं चाभयालेहं पिप्पलीं मधुकं बलाम्॥५६॥**
**पयसा च प्रयुञ्जीत यथादोषं यथाबलम्।**

स०-हलीमकवान् गुडूचीस्वरसक्षीरपक्वेन महिषीघृतेन स्निग्धः सन् त्रिवृतां धात्रीरसेन पिबेत्। गुडूचीस्वरसोऽत्र घृताच्चतुर्गुणः क्षीरं घृतसममिति पाकक्रमः। तया-त्रिवृतया, विरिक्ते सति मधुरं वातपित्तघ्नं चाद्यात्। प्रागुक्तं च द्राक्षालेहं (श्लो २९) भक्षयेत्। मधुरद्रव्यसाधितानि घृतानि चाद्यात्। यापनान्-प्राणकारिणः (हृ क अ ४।३७), क्षीरबस्तींश्च शीलयेदनुवासनसहितान्। मार्द्वीकारिष्टयोगांश्च युक्त्या वह्निवृद्धये पिबेत्। अभयालेहं च-आगस्त्यं कासचिकित्सितोक्तं "प्रस्थोन्मिते यवक्वाथे विंशतिर्विजया" इत्यादि, शीलयेत्। क्षीरेण च पिप्पलीं मधुयष्टिकां बलां च प्रयुञ्जीत यथादोषाद्बलाच्च।

**पाण्डुरोगेषु कुशलः शोफोक्तं च क्रियाक्रमम्॥५७॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने पाण्डुरोगचिकित्सितं नाम षोडशोऽध्यायः॥१६॥**

स०-पाण्डुरोगेषु शोफचिकित्सित(तोक्तं) च क्रियाक्रमं सुधीः प्रयुञ्जीत।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां चतुर्थे चिकित्सितस्थाने पाण्डुरोगचिकित्सितं नाम षोडशोऽध्यायः समाप्तः॥१६॥

१ "यापनादीनि कल्पे वक्ष्यन्ते।" इतीन्दुः। २ 'वाऽभया' अ इ स मू। ३ अगस्त्यलेहो-"दशमूलं स्वयगुप्ता" (हृ चि. अ ३।१२७) इत्यादिनोक्तः, अभयालेहस्तु-"प्रस्थोन्मिते यवक्वाथे" (हृ चि अ. ३।१६७) इत्यादिना। अतोऽरुणदत्तव्याख्यानं न मनोरमम्। ४ अस्याग्रे "**अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम्। तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः॥१॥**" इति इ. पुस्तकेऽधिकः श्लोकः।



# सप्तदशोऽध्यायः ।

पाण्डुरोगचिकित्सितादनन्तर शोफचिकित्सित व्याख्यातु प्रक्रम्यते[1] । सम्बन्धश्चास्य निदान एवोक्त इत्याह—

**अथातः श्वयथुचिकित्सितं[2] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**सर्वत्र सर्वाङ्गसरे दोषजे श्वयथौ पुरा ।**
**सामे विशोषितो[3] भुक्त्वा लघु कोष्णाम्भसा पिबेत् १**
**नागरातिविषादारु[4]विडङ्गेन्द्रयवोषणम् ।**
**अथवा विजयाशुण्ठीदेवदारुपुनर्नवम् ॥ २ ॥**
**नवायसं वा दोषाढ्यः शुद्ध्यै मूत्रहरीतकीः[5] ।**
**वराक्काथेन कटुकाकुम्भायस्त्र्यूषणानि वा ॥ ३ ॥**
**अथवा गुग्गुलुं तद्वज्जतु वा शैलसम्भवम् ।**

स०—सर्वत्र दोषजे श्वयथौ सर्वाङ्गजे तथा सामे विशोषित. सन् लघु भुक्त्वा कोष्णेन जलेन नागरादि पिबेत् । विशोषण मत्रोपवास । अथवा, विजयादीन् कोष्णाम्भसा पिबेत् । दोषबहुलो नवायस—पाण्डुरोगोक्त (द्व चि अ १६।१४), पिबेत् । शुध्यर्थं गोमूत्रेण हरीतकी शीलयेत् । त्रिफलाक्काथेन सह कटुकात्रिवृतालोहचूर्णकटुत्रिकाणि शीलयेत्[7] । गुग्गुलु वा शिलाजतु वा त्रिफलाक्काथेनैव शीलयेत् ।

**मन्दाग्निः शीलयेदामगुरुभिन्नविबद्धविट् ॥ ४ ॥**
**तक्रं सौवर्चलव्योषक्षौद्रयुक्तं गुडाभयाम्[6] ।**
**तक्रानुपानमथवा तद्वद्वा गुडनागरम् ॥ ५ ॥**

स०—मन्दाग्निरामगुरुभिन्नविबद्धविट् सन् तक्र सौवर्चलादियुत शीलयेत् । गुडयुतामभया तक्रानुपाना वा । तथैव गुड नागरं तक्रानुपान शीलयेत् ।

**आर्द्रक वा समगुडं प्रकुञ्चार्धविवर्धितम्[1] ।**
**परं पञ्चपलं मासं यूषक्षीररसाशनः ॥ ६ ॥**
**गुल्मोदरार्शःश्वयथुप्रमेहान्**
**श्वासप्रतिश्यालसकाविपाकान् ।**
**सकामलाशोषमनोविकारान्**
**कासं कफं चैव जयेत्प्रयोगः ॥ ७ ॥**

स०—आर्द्रक वा तुल्यगुड पलार्धेन प्रतिदिन वर्धित पर पञ्चपल यावत् । एकस्मिन्नेव दिने पलपञ्चकप्रमाण स्यात्, पुनरपि ह्रासयेदर्धपल यावत् । एव मास यावदेष प्रयोग । यथोचित कफपित्तवाताधिको यूषादिभोजी स्यात् । एष च प्रयोगो गुल्मादींश्चतुर्दश कफान्तान् जयेत् ।

**घृतमार्द्रकनागरस्य कल्क-**
**स्वरसाभ्यां पयसा च साधयित्वा ।**
**श्वयथुक्षवथूदराग्निसादै-**
**रभिभूतोऽपि पिबन् भवत्यरोगः[2] ॥ ८ ॥**

स०—घृतमार्द्रकनागरस्य कल्कस्वरसाभ्या पयसा च साधयित्वा—पक्त्वा, पिबन् शोफादिभिरभिभूतोऽपि निरामय स्यात्। आर्द्रकनागरमार्द्रकमुच्यते। उपजात्यौपच्छन्दसिके वृत्ते।

**निरामो बद्धशमलः पिबेच्छ्वयथुपीडितः ।**
**त्रिकटुत्रिवृतादन्तीचित्रकैः साधितं पयः ॥ ९ ॥**
**मूत्रं[3] गोर्वा महिष्या वा सक्षीरं क्षीरभोजनः ।**
**सप्ताहं मासमथवा स्यादुष्ट्रक्षीर[4]वर्तनः ॥ १० ॥**

स०—निरामो बद्धपुरीष शोफार्त सन् त्रिवृता(त्रिकट्वा)दिभि साधित पय पिबेत् । गोर्महिष्या वा सम्बन्धि मूत्र स[क्षीर] क्षीरभोजन सन् पिबेत् । तथा, उष्ट्रक्षीरभोजन पानाहाराभ्या विना सप्ताहमथवा मास स्यात् । उष्ट्रक्षीरवर्तन

१ 'क्रमते' ट । २ इद श्वयथुचिकित्सित चरके चि० १२ अध्याये, सुश्रुते चि० २३ अध्याये, अष्टाङ्गसङ्ग्रहे चि० १९ अध्याये चास्ति वर्णितम् । ३ विशोषणशब्देनेह लङ्घनपाचनशोधनानि ग्राह्याणि । यदुक्त सङ्ग्रहे (चि. अ १९)—"श्वयथुषु लङ्घनपाचनशोधनान्यादौ योजयेत् ।" इति । ४ दारु—देवदारु । ५ मूत्रहरीतकी—"पथ्याशतद्वयात्" इत्यादिनाऽर्शश्चिकित्सिते (श्लो ५५) प्रोक्ता ग्राह्या । अरुणदत्तव्याख्यानमपि युक्तम्, चरकसम्मतत्वात् । तथा च तद्ग्रन्थ (च चि अ १२।२१) "शमयेत्तु शोफ गव्येन मूत्रेण हरीतकी च ।" इति । ६ 'तक्रीम् ।' इ. । ७ 'त् । वराक्काथेन कुम्भादीन् गुग्गु' ट. ।

१ "अर्धपलाभिवृद्धिश्चेह गुडनागराभ्या ज्ञेया, अन्यथा केवलार्द्रकवृद्ध्या पञ्चपलमाने गुडेन सम दशपलताया भूरिमात्रतयाऽग्निवधादिदोषकारक स्यात् । अर्धपलादारभ्य प्रतिदिनमर्धपलवृद्ध्या दशभिर्दिनै पञ्चपल भवति, ततस्तु पञ्चपलस्य यावन्मासमुपयोग ।" इति चरके चक्र । "अयमिति मिश्रयोरर्धपलाभिवृद्ध्या पञ्चपलप्रकर्षो मास प्रयोग, पञ्चपलानि सगुडस्य सत । मनोविकारा —ये केचन सन्तर्पणोत्था मनोवहस्रोतोदुष्टिप्रभवा ।" इतीन्दु । २ अस्याग्रे "रसस्तथैवार्द्रकनागरस्य पेयोऽथ जीर्णे पयसाऽन्नमद्यात् । शिलाह्वय वा त्रिफलारसेन हन्यात्त्रिदोष श्वयथुं प्रसह्य ॥१॥ पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्यभयाकषाय. । सर्वाङ्गशोफोदरकासशूलश्वासान्वित पाण्डुगद च हन्ति ॥ २ ॥" इति इ पुस्तकेऽधिकौ श्लोकौ । "रसस्तथैवेत्यादौ पूर्वयोग(श्लो ६)-वदर्धपलाभिवृद्धि गुडयुक्तत्व चेत्यादि सर्वं तथैवेति पदेन गृह्यते ।" इति चरके चक्र । ३ सक्षीर मूत्रमिति समक्षीर मूत्रमित्यर्थ । ४ 'दुष्ट्रीक्षीर' अ.इ ।

इत्यत्र "कुकुट्यादीनामण्डादिषु" पुंवद्भावो वक्तव्य इत्युष्ट्रीशब्दस्य पुंवद्भाव । केचिदुष्ट्रीक्षीरेति जगु ।

**यवानकं यवक्षारं यवानीं पञ्चकोलकम् ।**
**मरिचं दाडिमं पाठां धानकामम्लवेतसम् ॥ ११ ॥**
**बालबिल्वं च कर्षांशं साधयेत्सलिलाढके ।**
**तेन पक्वो घृतप्रस्थः शोफार्शोगुल्ममेहहा ॥ १२ ॥**

स०–यवानकादि[1] कर्षांश जलाढके पचेत् । तेन–क्वाथेन, घृतप्रस्थ पक्व शोफादिहा स्यात् । अर्शआदिशब्दस्य प्रायिकत्वाच्छोफादिशब्दोत्तरादपि हन्ते क्विप् ।

**दध्नश्चित्रकगर्भाद्वा घृतं तत्तक्रसंयुतम् ।**
**पक्वं सचित्रकं तद्वद्गुणैः**

स०–चित्रकगर्भाद्ध्न –चित्रकचूर्णमिश्रितात्क्षीराद्यज्जात दधि तस्मान्मथ्यमानात्, तत्तक्रेण–चित्रकतक्रेण, सयुक्त पक्व तद्वत्–यवानकादिघृतसदृश, गुणै ।

**युञ्ज्याच्च कालवित् ॥ १३ ॥**
**धान्वन्तरं महातिक्तं कल्याणमभयाघृतम् ।**

स०–कालवित्–अवस्थादोषादिवित्, धान्वन्तर ( हृ चि अ १२।१९ ), महातिक्त ( हृ चि अ १९।८ ), कल्याणक ( हृ उ. अ ६।२७ ), अभयाघृत ( हृ चि अ. १५।२८ ) युञ्ज्यात् ।

**दशमूलकषायस्य कंसे पथ्याशतं पचेत् ॥ १४ ॥**
**दत्त्वा गुडतुलां तस्मिन् लेहे दद्याद्विचूर्णितम् ।**
**त्रिजातकं त्रिकटुकं किञ्चिच्च यवशूकजम् ॥ १५ ॥**
**प्रस्थार्धं च हिमे क्षौद्रात्तन्निहन्त्युपयोजितम् ।**

**प्रवृद्धशोफज्वरमेहगुल्म-**
**कार्श्यामवाताम्लकरक्तपित्तम् ।**
**वैवर्ण्यमूत्रानिलशुक्रदोष-**
**श्वासारुचिप्लीहगरोदरं च ॥ १६ ॥**

स०–दशमूलकषायस्याढके पथ्याशत पचेत् । अत्र च सामान्यपरिभाषया क्वाथ्यद्रव्यस्य च दशमूलस्य द्वात्रिंशत् पलानि भवन्ति । एव च तन्त्रान्तरे विरोध । तथा च तत्रैव कथ्यते, (च चि अ १२।५०)–"द्विपञ्चमूलस्य तुलाकषाये कंसेऽभयाना च शत गुडाच्च ।" इति । तदेव विरोध पश्यन्तो व्याख्यामेवविधा विद्वासो विदधति,–दशमूलस्य तुला, तस्या कषायो दशमूलकषाय इति । मयूरव्यसकादित्वादुत्तरपदलोपी समास । एव दशमूलस्य पलशत तत्क्वाथस्याढके पथ्याशत पचेत् । गुडतुला दत्त्वा तस्मिन् लेहे विचूर्णित त्रिजातकादि दद्यात् । एतेषा च प्रमाण वासिष्ठलेहवत् (हृ चि अ ३।१३३) कल्प्यम् । यवक्षारस्य कर्षमात्र देयम् । तन्त्रान्तरे[2] ह्युक्तम्–

१ 'दिचूर्ण क' ट । २ 'रे चोक्त' ड ।

"व्योषाच्चतुष्पल दद्यात्त्रिपल त्रिसुगन्धत । कर्षमात्र यवक्षारात्" इति । शीते च सति माक्षिकात् प्रस्थार्ध देयम् । तत्–एतत्, उपयोजित प्रवृद्धशोफादीन् हन्ति । खरनादस्तु[1] जगाद–"दशमूलाढकमभयाशतसहितं पाचयेदपा द्रोणे । अवशेषितचतुरशे तस्मिन् पुन प्रक्षिपेत् पथ्या ॥" इति । उपजातिवृत्तम् ।

**पुराणयवशाल्यन्नं दशमूलाम्बुसाधितम् ॥ १७ ॥**
**अल्पमल्पपटुस्नेहं भोजनं श्वयथोर्हितम्[2] ।**
**क्षारव्योषान्वितैर्मौद्गैः कौलत्थैः सकणै रसैः ॥ १८ ॥**
**तथा जाङ्गलजैः कूर्मगोधाशल्यकजैरपि ।**
**अनम्लं मथितं पाने मद्यान्यौषधवन्ति च ॥ १९ ॥**

स०–श्वयथो पुराणयवादि दशमूलक्वाथसाधितमल्प तथाऽल्पलवणस्नेह भोजन हितम् । कै सह ? मौद्गै रसै । किम्भूतै ? क्षारत्र्यूषणयुक्तै । तथा कौलत्थै रसै । किम्भूतै ? सपिप्पलीकै । तथा च मुनि ( च चि अ. १२।६२ )–"कुलत्थयूषैस्तु सपिप्पलीकैर्मौद्गैस्तु सत्र्यूषणयावशूकै । रसैस्तथा जाङ्गलविष्किराणा सकूर्मगोधाशिखिशल्लकानाम् ॥" इति । अत्र च शिखिनो जाङ्गलविष्किरत्वेन गृहीता अपि पथ्यतरत्वप्रतिपादनार्थं पुनरुपात्ता । तथाऽयमेव तन्त्रकृद्-ष्टाङ्गावतारेऽध्यगीष्ट (?)–"दशमूलाम्भमा सिद्धैर्व्योषक्षाररजोन्वितै । रसैर्जाङ्गलजैर्मौद्गै कौलत्थैर्मौलकैरपि ॥" इति । तथेत्यादि । तथा जाङ्गलमासजैस्तथा[3][4] कच्छपादिजैश्च । पाने मथितमनम्ल मद्यानि च सौषधानि हितानि ।

**अजाजीशठिजीवन्तीकारवीपौष्कराग्निकैः ।**
**बिल्वमध्ययवक्षारवृक्षाम्लैर्बदरोन्मितैः ॥ २० ॥**
**कृता पेयाऽऽज्यतैलाभ्यां युक्तिभृष्टा परं हिता ।**
**शोफातिसारहृद्रोगगुल्मार्शोल्पाग्निमेहिनाम् ॥ २१ ॥**

स०–अजाजीप्रभृतिभि पेया घृततैलाभ्या युक्त्या भृष्टाऽतिशयेन शोफादिमता हिता ।

**गुणैस्तद्वच्च पाठायाः पञ्चकोलेन साधिता ।**

स०–पञ्चकोलेन साधिता पेया गुणैस्तद्वच्च–पूर्वोक्तगुणा । तथैव पाठया साधिता पेया स्यात् ।

**शैलेयकुष्ठस्थौणेयरेणुकागुरुपद्मकैः ॥ २२ ॥**
**श्रीवेष्टकनखस्पृक्कादेवदारुप्रियङ्गुभिः ।**
**मांसीमागधिकावन्यधान्यध्यामकवालकैः ॥ २३ ॥**
**चतुर्जातकतालीसमुस्तागन्धपलाशकैः ।**
**कुर्यादभ्यञ्जनं तैलं लेपं स्नानाय तूदकम् ॥ २४ ॥**

स०–तथा शैलेयादिभिरभ्यञ्जनं तैल तथा लेप स्नानार्थमुदक च कुर्यात् ।

१ 'खारणाद' ट । २ 'यथौ हि' इ । ३–४ 'थश्च' 'द्रश्च' स च. । ५ 'रसैस्त' ट ड । ६ 'था गोधादिजैस्तथा क' ट ड । ७ 'न तद्वत्–बदरोन्मितेन सा' ट. । ८ 'पाठया सा' द.ड ।

**स्नानं वा निम्बवर्षाभूनक्तमालार्कवारिणा ।**

स०–निम्बादिवारिणा च(वा) स्नानं कुर्यात् ।

**एकाङ्गशोफे वर्षाभूकरवीरककिंशुकैः ॥ २५ ॥**
**विशालात्रिफलारोध्रनलिकादेवदारुभिः ।**
**हिंस्राकोशातकीमाद्रीतालपर्णीजयन्तिभिः ॥ २६ ॥**
**स्थूलकाकादनीशालनाकुलीवृषपर्णिभिः ।**
**वृध्यर्द्धिहस्तिकर्णैश्च सुखोष्णैर्लेपनं हितम् ॥ २७ ॥**

स०–एकाङ्गजे शोफे पुनर्नवादिभिर्जलपिष्टैः सुखोष्णैर्लेपो हितः । इति सामान्येन श्वयथोरुपक्रमः ।

**अथानिलोत्थे श्वयथौ मासार्धं त्रिवृतं पिबेत् ।**
**तैलमेरण्डजं वातविड्विबन्धे तदेव तु ॥ २८ ॥**
**प्राग्भक्तं पयसा युक्तं रसैर्वा कारयेत्तथा ।**
**स्वेदाभ्यङ्गान् समीरघ्नान् लेपमेकाङ्गगे पुनः ॥ २९ ॥**
**मातुलुङ्गाग्निमन्थेन शुण्ठीहिंस्रामराह्वयैः ।**

स०–अनिलजे शोफे पक्षं यावत्त्रिवृतं तथैरण्डतैलं पिबेत् । वातविड्विबन्धे सति तदेव–पूर्वोक्तमौषधं, प्राग्भक्तं क्षीरेण मासरसेन वा [युक्तं] पिबेत् । तथा, स्वेदाभ्यङ्गान् वातघ्नान् कारयेत्, 'वैद्य' इति शेषः । तथा, अनिलोत्थ एकाङ्गगे शोफे मातुलुङ्गादिभिर्लेपं कारयेत् । हिंस्रा–सिंही ।

**पैत्ते तिक्तं पिबेत्सर्पिर्न्यग्रोधाद्येन वा शृतम् ॥ ३० ॥**
**क्षीरं तृड्दाहमोहेषु लेपाभ्यङ्गाश्च शीतलाः ।**

स०–पित्तश्वयथौ तिक्ताख्यं घृतं पिबेत् । न्यग्रोधादिगणेन ( ह सू अ. १५।४१ ) वा शृतं पिबेत् । तथा, तृडादिषु क्षीरं पिबेत् । तथा, लेपाभ्यङ्गा शीता हिता ।

**पटोलमूलत्रायन्तीयष्ट्याह्वकटुकाभयाः ॥ ३१ ॥**
**दारु दार्वी हिमं दन्ती विशाला निचुलं कणा ।**
**तैः क्वाथः सघृतः पीतो हन्त्यन्तस्तापतृड्भ्रमान् ३२**
**ससन्निपातवीसर्पशोफदाहविषज्वरान् ।**

स०–पटोलादीनां क्वाथो घृतसहितः पीतोऽन्तस्तापतृष्णादीन् हन्ति ।

**आरग्वधादिना सिद्धं तैलं श्लेष्मोद्भवे पिबेत् ॥ ३३ ॥**

स०–कफोद्भवे शोफे आरग्वधादिना सिद्धं तैलं पिबेत् ।

**स्रोतोविबन्धे मन्देऽग्नावरुचौ स्तिमिताशयः ।**
**क्षारचूर्णासवारिष्टमूत्रतक्राणि शीलयेत् ॥ ३४ ॥**

स०–स्रोतोविबन्धे सति वह्नौ च मन्देऽरोचके च सति स्तिमिताशयः सन् क्षारादीन् शीलयेत् ।

**कृष्णापुराणपिण्याकशिग्रुत्वक्सिकतातसीः ।**
**प्रलेपोन्मर्दने युञ्ज्यात्सुखोष्णा मूत्रकल्किताः ॥३५॥**

स०–कृष्णादीन् कोष्णान् प्रलेपे उन्मर्दने च मूत्रकल्कितान् युञ्जीत ।

**स्नानं मूत्राम्भसी सिद्धे कुष्ठतर्कारिचित्रकैः ।**
**कुलत्थनागराभ्यां वा चण्डाऽगुरु विलेपने ॥ ३६ ॥**

स०–मूत्रजले कुष्ठादिभिः सिद्धे स्नानाय हिते । कुलत्थशुण्ठीभ्यां वा क्वथिते गोमूत्रजले हिते । विलेपने चण्डागुरुणी हिते ।

**कालाजशृङ्गीसरलबस्तगन्धाहयाह्वयाः ।**
**एकैषिका च लेपः स्याच्छ्वयथावेकगात्रगे ॥ ३७ ॥**

स०–कालाजशृङ्ग्यादय एकाङ्गगे शोफे लेपः स्यात् । काला–नीलिनी । बस्तगन्धा–कारवी । एकैषिका–त्रिवृता ।

**यथादोषं यथासन्नं शुद्धिं रक्तावसेचनम् ।**
**कुर्वीत, मिश्रदोषे तु दोषोद्रेकबलात्क्रियाम् ॥ ३८ ॥**

स०–यथादोषं–दोषानुसारेण, शुद्धिं तथा रक्तावसेचनं यथासन्नं कुर्वीत । संसर्गजे तु यथाभ्यधिकदोषानुसारेण क्रियां कुर्यात् ।

**अजाजिपाठाघनपञ्चकोल-**
**व्याघ्रीरजन्यः सुखतोयपीताः ।**
**शोफं त्रिदोषं चिरजं प्रवृद्धं**
**निघ्नन्ति भूनिम्बमहौषधे च ॥ ३९ ॥**

स०–अजाज्यादयः कोष्णजलपीताः शोफं त्रिदोषोत्थं चिरकालोत्पन्नं वृद्धिं गतं निघ्नन्ति । भूनिम्बनागरे च 'हतः' इति वचनविपरिणामेन सम्बन्धः । उपजातिवृत्तम् ।

**अमृताद्वितयं सिवाटिका**
**सुरकाष्ठं सपुरं सगोजलम् ।**
**श्वयथूदरकुष्ठपाण्डुता-**
**कृमिमेहोर्ध्वकफानिलापहम् ॥ ४० ॥**

स०–अमृतायुगलादिकं गुग्गुलुसहितं गोमूत्रेण पीतं शोफा-

१ तदेवेति एरण्डतैलमेव ग्राह्यम् । तथा च सङ्ग्रहे (चि अ १९)–"एरण्डतैलमेव च विड्वातसङ्गे प्राग्भक्तं पयसा रसैर्वा ।" इति । चरकेऽपि (चि अ १२।२८)–"विड्वातसङ्गे पयसा रसैर्वा प्राग्भक्तमद्यादुरुबूकतैलम् ।" इति । अरुणदत्तव्याख्यानं तु न स्पष्टार्थबोधकम् । २ 'ण सिद्धं मासरसेन वा पि' ट ड । ३ 'स्रा–काकादनी ।' ट. । "हिंस्रा–मांसी ।" इतीन्दुः । ४ क्षीरं न्यग्रोधादिशृतमेव ग्राह्यम्, न केवलम् । तस्य शोफे निषेधत्वात् । उक्तं च सुश्रुते (चि अ २३।१३)–"स्त्रियो घृतं तैलपयोगुरूणि शोफं जिघांसु परिवर्जयेत्तु ।" इति । ५ 'मूर्वाग्रा' इति सङ्ग्रहानुसारी पाठः । ६ 'तत्क्वाथ' इ । ७ 'हमदज्व' अ. ।

१ "चण्डा–चोरकः । काला–मञ्जिष्ठा । एकैषिका–मांसी ॥ ऊर्ध्वनाभिजे वमनम्, अधोनाभिजे विरेचनं बस्तिश्च, शिरोगे नस्यम्, इति यथासन्नशब्दार्थः ।" इतीन्दुः । २ 'एकगात्रगे' इति पदं यथादोषमित्यत्रापि सम्बन्धनीयम् । ३ अस्याग्रे–"**यष्टीदुग्धतिलैर्लेपो नवनीतेन संयुतः । शोफमारुत्करं हन्ति वृन्तैः शालदलस्य वा ॥**" इति इ. पुस्तकेऽधिकः श्लोकः । ४ 'धानुरो- धानुसा' ड. ।

दीन् हन्ति । वैतालीयम् । "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा । न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरु ।" ( वृ र अ २।१२ ) ।

**इति निजमधिकृत्य पथ्यमुक्तं**
**क्षतजनिते क्षतजं विशोधनीयम् ।**
**स्रुतिहिमघृतलेपसेककेकैः-**
**र्विषजनिते विषजिच्च शोफ इष्टम् ॥ ४१ ॥**

स०-इति-पूर्वोक्तेन प्रकारेण, निज शोफ-दोषजमधिकृत्य, [पथ्य-] चिकित्सितमुक्तम् । क्षतोत्थे शोफे क्षतज-असृक्, विशोध्यम् । कै [२] रक्तस्रावादिभि । विषजनिते शोफे विषहरमिष्टम् । पुष्पिताग्रा ।

**ग्राम्याब्जानूपं पिशितमबलं शुष्कशाकं तिलान्नं**
**गौडं पिष्टान्नं दधि सलवणं विज्जलं मद्यमम्लम् ।**
**धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि**
**स्वप्नं चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनं च ॥ ४२ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने श्वयथुचिकित्सितं नाम सप्तदशोऽध्यायः ॥१७॥**

स०-ग्राम्यादिमांसादि शोफी वर्जयेत् । "म्तौ न्यौ यौ ज्ञेया कुसुमितलतावेल्लिताऽक्षर्तुलोकैः ।"

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां चतुर्थे चिकित्सितस्थाने श्वयथुचिकित्सितं नाम सप्तदशोऽध्याय समाप्त ॥ १७ ॥



१ 'म् । "स्वावोऽष्टौ समश्चल न समोऽत्र परेण युज्यते नैता । षडनिरन्तरीयुत " । इति' ड । २ षड्विषम इत्यादि गुरुरित्यन्त कस्मिंश्चिदपि लिखितपुस्तके नोपलभ्यते । ३ "ग्राम्य-जनपदमध्यचारिप्राणिजम् । अब्जस्यानूपत्वेऽपि वर्जनीयप्राधान्यात् पृथग्ग्रहणम् । अबल-दुर्बलप्राणिजम् । गौड-पानकम् । पिष्टान्न-पिष्टकृत यत्किञ्चित् । सलवणमिति केवलमपि लवण वर्जयेत्, वर्जने सहभाव । पिच्छिल-छिन्नरूपम् ।" इतीन्दु । "पिशितं च लवणं चेति समाहार , तस्य विशेषण ग्राम्याब्जानूपमिति । तत्र छागादिमांस ग्राम्यम्, लवण च यत् पाकेनाभिनिर्वृत्त तत् ग्राम्यम् । अब्ज कच्छपादिमांसम्, लवण च सामुद्र करकचेति ख्यात तदब्जम् । आनूप शूकरादिमांसम्, लवण च समुद्रतीरज साम्भरीति ख्यात तदप्यानूपम् । गौड-गुडविकारम् । धाना-अङ्कुरितभृष्टयवा । वल्लूर-शुष्कमांसम् । अरात्राविति दिने ।" इति शिवदास । ४ 'तलवणं शुष्कशाकं नवान्नं' स च वृन्द चक्र । ५ 'धि तिलकृतवि ' स च. । 'धि च कृशर वि' वृन्द । 'धि सकृसर निर्जल' चक्र. । ६ 'ण पिच्छिल' स स. । 'ण निर्जल' अ.स मू ।



## अष्टादशोऽध्यायः ।

अस्मादनन्तरं विसर्पचिकित्सितमुत्सेधसामान्याच्चिकित्सासादृश्याच्च व्याख्यायते—

**अथातो विसर्पचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**आदावेव विसर्पेषु हितं लङ्घनरूक्षणम् ।**
**रक्तावसेको वमनं विरेकः, स्नेहनं न तु ॥ १ ॥**

स०-विसर्पेषु पूर्वमेव लङ्घनादि हितम् । स्नेहनं तु न हितम् ।

**प्रच्छर्दनं विसर्पघ्नं सयष्टीन्द्रयवं फलम् ।**
**पटोलपिप्पलीनिम्बपल्लवैर्वा समन्वितम् ॥ २ ॥**

स०-वमन विसर्पघ्न मदनफलं मधुयष्टिकेन्द्रयवान्वितं हितम् । पटोलादिभिर्युत वा मदनफल हितम् ।

**रसेन युक्तं त्रायन्त्या द्राक्षायास्त्रैफलेन वा ।**
**विरेचनं त्रिवृच्चूर्णं पयसा सर्पिषाऽथवा ॥ ३ ॥**
**योज्यं, कोष्ठगते दोषे विशेषेण विशोधनम् ।**

स०-त्रिवृच्चूर्णं त्रायन्त्या रसेन युक्त द्राक्षारसेन वा त्रिफलारसेन वा विरेचन योज्यम्, क्षीरेण घृतेन वा त्रिवृच्चूर्ण युक्तम् । कोष्ठगते दोषे विशेषेण शोधन योज्यम् ।

**अविशोध्यस्य दोषेऽल्पे शमनं चन्दनोत्पलम् ॥ ४ ॥**
**मुस्तनिम्बपटोलं वा पटोलादिकमेव वा ।**
**सारिवामलकोशीरमुस्तं वा क्वथितं जले ॥ ५ ॥**

स०-अशोधनार्हस्य पुंसोऽल्पे दोषे शमन चन्दनोत्पलं योज्यम् । मुस्तनिम्बपटोल वा योज्यम् । 'पटोलकटुरोहिणी' ( हृ सू अ १५।१५ ) इत्यादिक वा योज्यम् । सारिवादिक वा जले क्वथितम् ।

**दुरालभां पर्पटकं गुडूचीं विश्वभेषजम् ।**
**पाक्यं शीतकषायं वा तृष्णावीसर्पवान् पिबेत् ॥ ६ ॥**
**दार्वीपटोलकटुकामसूरत्रिफलास्तथा ।**
**सनिम्बयष्टीत्रायन्तीः क्वथिता घृतमूर्च्छिताः ॥ ७ ॥**

स०-दुरालभादिकं क्वथित शीतकषाय वा तृष्णादिमान् पिबेत् । तथा दार्व्यादीन् निम्बादिभि सह क्वथितान् सर्पिर्विमिश्रितान् पिबेत् ।

१ इद विसर्पचिकित्सित चरके चि० २१ अध्याये, सुश्रुते चि० १७ अध्याये, अष्टाङ्गसङ्ग्रहे चि० २० अध्याये चास्ति वर्णितम् । २ अस्याग्रे-"अमृतवृषपटोलं मुस्तकं सप्तपर्णं खदिरमसितवेत्रं निम्बपत्रं हरिद्रे । विविधविषविसर्पान् कुष्ठविस्फोटकण्डूरपनयति मसूरीं शीतपित्तं ज्वरं च ॥" इति इ.पुस्तकेऽधिक श्लोक. ।

शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत् ।
त्वङ्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते ॥ ८ ॥

स०–रक्ते च शाखादुष्टे सति प्रथम रुधिरमेव हरेत् । कुत ? इत्याह–त्वङ्मासेत्यादि । यस्मात् त्वगादिक्लेदो रक्तक्लेदा-जायते, [तस्माद्रक्त निर्हरेत् ।]

निरामे श्लेष्मणि क्षीणे वातपित्तोत्तरे हितम् ।
घृतं तिक्तं महातिक्तं शृतं वा त्रायमाणया ॥ ९ ॥

स०–निरामे पुसि तथा वातपित्ताधिके कफे च क्षीणे घृत तिक्तकादिक हितम् । पूर्वं सामान्येन विसर्पिण स्नेहन निषिद्धम्, अवस्थाविशेषेण च स्नेहनमिदमुक्तम्, इति पूर्वापर-व्याहतत्वमत्र नाशङ्कनीयम् ।

निर्हृतेऽस्रे विशुद्धेऽन्तर्दोषे त्वङ्मांससन्धिगे ।
बहिःक्रियाः प्रदेहाद्याः सद्यो वीसर्पशान्तये ॥ १० ॥

स०–रक्ते निर्हृतेऽन्तर्विशुद्धे दोषे त्वङ्मासाश्रिते सति प्रलेपसेकाद्या बहि क्रिया –परिमार्जने विधेया, शीघ्रमेव विसर्पशान्तये स्यु ।

शताह्वामुस्तवाराहीवंशार्तगलधान्यकम् ।
सुराह्वा कृष्णगन्धा च कुष्ठं चालेपनं चले ॥ ११ ॥

स०–शतपुष्पादिक चले-वातविसर्पे, प्रलेपन हितम् । आर्तगलो–नील सहचर ।

न्यग्रोधादिगणः पित्ते तथा पद्मोत्पलादिकम् ।

स०–न्यग्रोधादिगण ( हृ. सू अ १५।४१ ) पित्तविसर्पे प्रलेपो हित । तथा पित्तविसर्पे पद्मोत्पलादिक–दशग्रन्थ्याख्य ( सङ्ग्रहाख्य ) तन्त्रादवधार्यम् । यथा,–षड्धरणाख्यो योग (स चि अ. २१) । सङ्ग्रहे चैव पठ्यते (चि अ २०)–"पद्मो-त्पलशैवालपङ्कदूर्वामृणालशृङ्गाटककसेरुकशर्कराह्रीबेरचन्दनमु-क्तामणिगैरिकपयस्याप्रपौण्डरीकमधुकपद्मकघृतक्षीराणि ।" इति ।

न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः ॥ १२ ॥
बिसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ।
पद्मिनीकर्दमः शीतः पिष्टं मौक्तिकमेव वा ॥ १३ ॥
शङ्खः प्रवालं शुक्तिर्वा गैरिकं वा घृतान्वितम् ।

स०–न्यग्रोधस्य पादास्तरुणा –अभिनवा, कदलीगर्भान्विता बिसग्रन्थिश्च लेपोऽय शतधौतघृतालोडित । तथा, पद्मिनी-पङ्क शिशिर, मौक्तिक वा जलपिष्टम्, शङ्खो वा पिष्टो विद्रुमो वा शुक्तिर्वा, अथवा गैरिक घृतयुक्त, लेपो हित ।

त्रिफलापद्मकोशीरसमङ्गाकरवीरकम् ॥ १४ ॥
नलमूलान्यनन्ता च लेपः श्लेष्मविसर्पहा ।

स०–त्रिफलादिभिर्लेप श्लेष्मविसर्पहृत् ।

धवसप्ताह्वखदिरदेवदारुकुरण्टकम् ॥ १५ ॥
समुस्तारग्वधं लेपो वर्गो वा वरुणादिकः ।
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः ॥१६॥
इन्द्राणीशाकं काकाह्वा शिरीषकुसुमानि च ।

स०–धवादिक "वरुणसैर्यक" ( हृ सू अ १५।२१ ) इत्यादिर्वा कर्णिकारस्य वा पत्राणि श्लेष्मातकत्वचो वा इन्द्राण्या-दयो वा लेप ।

सेकव्रणाभ्यङ्गहविर्लेपचूर्णान् यथायथम् ॥ १७ ॥
एतैरेवौषधैः कुर्याद्वायौ लेपा घृताधिकाः ।

स०–एभिरेव श्लेष्मविसर्पलेपौषधै सेकादीन् कुर्यात् । व्रणाभ्यङ्गाय हविरिति 'अश्वघासवत्' समास । वायौ ये लेपा उक्तास्ते घृताधिका कार्या । अधिकशब्दनिर्देशाच्चेद गमयति,–अन्यत्रापि पित्तविसर्पे कफविसर्पे च ये लेपा उक्तास्तेऽपि स-घृता कार्या, न लघृता इत्यर्थ ।

कफस्थानगते सामे पित्तस्थानगतेऽथवा ॥ १८ ॥
अशीतोष्णा हिता रूक्षा रक्तपित्ते घृतान्विताः ।
अत्यर्थशीतास्तनवस्तनुवस्त्रान्तरास्थिताः ॥ १९ ॥
योज्याः क्षणे क्षणेऽन्येऽन्ये मन्दवीर्यास्त एव च ।

स०–कफस्थानगते सामे वायौ किञ्चिच्छीतोष्णरूक्षाश्च प्रलेपा हिता, पित्तस्थानगते च । रक्तपित्ते तु घृतान्विता अत्यन्तशीतास्तनवस्तथा तनुवस्त्रान्तरास्थिता क्षणे क्षणेऽपरे-ऽपरे योज्या । च-शब्दो यस्मादर्थे । यस्मात्त एव पुन पुन-प्रयुज्यमाना मन्दवीर्या स्यु ।

संसृष्टदोषे संसृष्टमेतत्कर्म प्रशस्यते ॥ २० ॥

स०–ससृष्टदोषे विसर्पे–उभयरूपे च ससर्गाख्ये सन्नि-पाताख्ये च, एतत्कर्म–इद चिकित्सितम्, यत्प्रतिदोषमुक्तं तदेव यथायथ ससृष्ट कृत्वा तत्र प्रशस्यते ।

इति सामान्येन ससृष्टदोषचिकित्सितमुक्त्वा वातपित्तजादि-ष्वग्निविसर्पादिषूपक्रममाह—

शतधौतघृतेनाग्निं प्रदिह्यात्केवलेन वा ।
सेचयेद्धृतमण्डेन शीतेन मधुकाम्बुना ॥ २१ ॥
सिताम्भसाऽम्भोदजलैः क्षीरेणेक्षुरसेन वा ।
पानलेपनसेकेषु महातिक्तं परं हितम् ॥ २२ ॥

स०–अग्निशब्देनाग्निविसर्प उपलक्ष्यते । तस्य च लक्षणम्

१ 'दिघु क्ले' ट. । २ [ ] इति ड पुस्तके नास्ति । ३ 'वा लेपन' अ । ४ 'षट्चरणयोग' ड । ५ 'कमलोत्पल' स द्व. । ६ 'दा गुन्द्रा च कदलीगर्भ एव च ॥' वृन्द । ७ "घृतान्वितमिति पूर्वयोगेष्वपि योज्यम् ।" इति श्रीकण्ठशिवदासौ ।

१ "करवीरजम् ॥' इति पाठे मूलम् ।" इति शिवदास । २ 'श्मान्तको' अ इ, ड । ३ "इन्द्राणिशाक केचित् मत्स्याक्षक-माहु, निर्गुण्डीमेवापरे ।" इति चक्र । ४ 'शाककाकाह्वाशि' इति क्वचित् । ५ 'न्तरस्थि' अ इ, ट.ड. । ६ 'म्भोजजलै.' इ. ।

( हृ नि अ १३।५० )—"वातपित्ताज्वर" इत्यादि यावत् "दुष्प्रबोधोऽश्नुते निद्रा सोऽग्निवीसर्प उच्यते ।" इति । तमग्निविसर्पं शतधौतघृतेन प्रलेपयेत् । सेचयेदित्यादि । अथवा केवलेन घृतमण्डेन सेचयेत्। शिशिरेण मधुयष्टीजलेन वा सेचयेत्। एव शर्कराजलेन मुस्तजलेन क्षीरेणेक्षुरसेन वेति योज्यम् । पानादिषु महातिक्त ( हृ चि अ १९।८ ) सुष्ठु हितम् ।

**ग्रन्थ्याख्ये रक्तपित्तघ्नं कृत्वा सम्यग्यथोदितम् ।**
**कफानिलघ्नं कर्मेष्टं पिण्डस्वेदोपनाहनम् ॥ २३ ॥**

स०—ग्रन्थिविसर्पे रक्तपित्तघ्न कर्म कृत्वा तत कफानिलघ्न कर्म पिण्डस्वेदादिकमिष्टम् ।

**ग्रन्थिवीसर्पशूले तु तैलेनोष्णेन सेचयेत् ।**
**दशमूलविपक्वेन तद्वन्मूत्रैर्जलेन वा ॥ २४ ॥**

स०—ग्रन्थिवीसर्पशूले सति दशमूलविपक्वेनोष्णेन तैलेन सेचयेत् । तथैव मूत्रैर्दशमूलविपक्वैरिति वचनविपरिणामेन सम्बन्ध । जलेन वा दशमूलक्वथितेन सेचयेत् ।

**सुखोष्णया प्रदिह्याद्वा पिष्टया कृष्णगन्धया ।**
**नक्तमालत्वचा शुष्कमूलकैः कलिनाऽथवा ॥ २५ ॥**

स०—अथवा, कृष्णगन्धया पिष्टया सुखोष्णया प्रदिह्यात् । अथवा, नक्तमालत्वचा पिष्टया सुखोष्णया प्रदिह्यात् । शुष्कमूलक पिष्टै सुखोष्णैरथवा कलिना—बिभीतकेन, सुखोष्णेन लेपयेत् ।

**दन्ती चित्रकमूलत्वक् सौधार्कपयसी गुडः ।**[1]
**भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि २६**
**बहिर्मार्गाश्रितं ग्रन्थिं किं पुनः कफसम्भवम् ।**
**दीर्घकालस्थितं ग्रन्थिमेभिर्भिन्द्याच्च भेषजैः ॥ २७ ॥**[2][3]

स०—दन्त्यादिभिर्द्रव्यैर्लेप शिलामपि भिन्द्यात् । किमुत कफज बाह्यमार्गाश्रित ग्रन्थिं लेपो न भिन्द्यात् । चिरकालावस्थित ग्रन्थिमेभिरेव—पूर्वोक्तैरौषधै , भिन्द्यात् ।

**मूलकानां कुलत्थानां यूषैः सक्षारदाडिमैः ।**
**गोधूमान्नैर्यवान्नैर्वा ससीधुमधुशार्करैः ॥ २८ ॥**[4][5]
**सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः ।**
**त्रिफलायाः प्रयोगैश्च पिप्पल्याः क्षौद्रसंयुतैः ॥२९॥**[6][7]
**देवदारुगुडूच्योश्च प्रयोगैर्गिरिजस्य च ।**
**मुस्तभल्लातसक्तूनां प्रयोगैर्माक्षिकस्य च ॥ ३० ॥**[*8]

[1] 'सुधार्क' इ । 'सुधार्क' स च । [2] 'ग्रन्थि भिन्द्याद्वा भेषजैरिमैः।' स च । [3] एभि —पूर्वोक्तैर्वक्ष्यमाणैर्मूलकादियूषादिमिश्रेलर्थ । [4] 'न्नैश्च स' अ.इ. । [5] 'धुशर्क' अ.इ स स स च । [6] त्रिफलाद्या प्रयोगा—उत्तरस्थाने—रसायनाध्याये (अ ३९) वर्णिता , मुस्तसक्तुप्रयोगस्तु "मुस्त व्योष" इत्यादिना कुष्ठचिकित्सिते (अ. १९।५०) । [7] 'प्पलीक्षौ' इ स च । [*8] "माक्षिकस्येति धातुमाक्षिकस्य । पूर्वोक्तैर्गुल्मभेदनैरिति विमार्गाजपदादर्शै' (हृ.चि.अ. १४।८६) । पाकिभिरिति पाचनपिण्डै.।" इति चक्र ।

**धूमैर्विरेकैः शिरसः पूर्वोक्तैर्गुल्मभेदनैः ।**[1]
**तप्तायोहेमलवणपाषाणादिप्रपीडनैः ॥ ३१ ॥**

स०—मूलकादियूषादिभि सक्षारदाडिमैर्गोधूमादिभोजनै स्तथा पानै ससीधुमधुश(शा)र्करैस्तथा सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैस्तथा "त्रिफलाया प्रयोगै" इत्यारभ्य यावत् "तप्तायोहेमलवणपाषाणादिप्रपीडनै ।" "दीर्घकालस्थित ग्रन्थि भिन्द्यात्" इत्यनुवर्त्य योज्यम् ।

**आभिः क्रियाभिः सिद्धाभिर्विविधाभिर्बले स्थितः ।**
**ग्रन्थिः पाषाणकठिनो यदि नैवोपशाम्यति ॥ ३२ ॥**
**अथास्य दाह. क्षारेण शरैर्हेम्नाऽपि वा हितः ।**
**पाकिभि. पाचयित्वा वा पाटयित्वा तमुद्धरेत् ॥३३॥**[2][3]

स०—आभि -पूर्वोक्ताभि , क्रियाभि सिद्धाभि —सिद्धर्षिप्रणीतत्वादविसंवादिनीभि , तथा विविधाभि —अनेकप्रकाराभि प्रयुक्ताभि , बले स्थितो ग्रन्थिर्दीर्घकालानुबन्धत्वादतिप्रवृद्ध अत एव पाषाणकठिनो यदि नैवोपशाम्यति । अथ—अनन्तर, अस्य दाह क्षारेण हित , अग्निना शरैर्हेम्नाऽपि वा हित । अथवा, पाकिभिरौषधै —बाह्यान्त शोधनै , पाचयित्वा पाटयित्वा त—ग्रन्थि, उद्धरेत् ।

**मोक्षयेद्बहुशश्चास्य रक्तमुत्क्लेशमागतम् ।**
**पुनश्चापहृते रक्ते वातश्लेष्मजिदौषधम् ॥ ३४ ॥**

स०—अस्य—ग्रन्थेर्ग्रन्थिविसर्पवतो, रक्तमुत्क्लेशमागत—विकारकरण प्रत्युन्मुखता प्राप्त, बहुशो मोक्षयेत् । पुनश्च रक्तेऽपहृते वातश्लेष्मजिदौषध तत्र हितम् ।

**प्रक्लिन्ने दाहपाकाभ्यां बाह्यान्तर्व्रणवत्क्रिया ।**
**दार्वीविडङ्गकम्पिल्लैः सिद्धं तैलं व्रणे हितम् ॥ ३५ ॥**
**दूर्वास्वरससिद्धं तु कफपित्तोत्तरे घृतम् ।**

स०—प्रक्लिन्ने सर्वस्मिन् विसर्पे दाहपाकाभ्या चोपलक्षिते बाह्यान्तर्व्रणवत्क्रिया स्यात् । तथा, दार्व्यादिभि सिद्ध तैल व्रणे हितम् । वातप्रधाने विसर्प इत्यर्थाद्गम्यते । तथा, कफपित्तोत्तरे विसर्पे दूर्वास्वरसेन पक्व घृत हितम् ।

**एकतः सर्वकर्माणि रक्तमोक्षणमेकतः ॥ ३६ ॥**

स०—एकत —एकस्मिंश्चिकित्सापक्षे, सर्वकर्माणि—यथानिर्दिष्टानि, रक्तमोक्षणमेकत —एकस्मिन् पक्षे । एव विसर्पोद्दिष्टया सर्वचिकित्सया रक्तमोक्षणस्य च विसर्पशमने तुल्यत्वात् ।

ननु, कथमेतत्स्यात् ? इत्याह—

**विसर्पो न ह्यसंसृष्टः सोऽस्रपित्तेन जायते ।**
**रक्तमेवाश्रयश्चास्य बहुशोऽस्रं हरेदतः ॥ ३७ ॥**[4][5]

स०—यस्माद्विसर्प सर्वो रक्तपित्तेनासंसृष्ट —असम्बद्धो, न जायते, न कदाचिद्रक्तपित्ताभ्यामन्तरेणोत्पद्यत इत्यर्थ । अस्य

[1] 'बली स्थिरः।' स च । [2] 'ग्नाऽथवा' 'रैर्लोहेन वा' स.च. । [3] 'च' अ । [4] 'रादिभि', र' ड. । [5] 'शोधितै र्घा' ड.।

च-विसर्पस्य, रक्तमेवाश्रयो नान्य । अत -अस्मात्, बहुशो-बहून् वारान्, रक्तमेव हरेत् ।

**न घृत बहुदोषाय देयं यन्न विरेचनम ।**
**तेन दोषो ह्युपस्तब्धस्त्वग्रक्तपिशितं पचेत् ॥ ३८ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया चतुर्थे चिकित्सितस्थाने विसर्पचिकित्सितं नामाष्टादशोऽध्याय. ॥ १८ ॥**

स०-बहुदोषाय विसर्पिणे तद्घृत न देय यद्विरेचन न भवति । पित्त हि विसर्पे प्राधान्येन चिकित्स्यम् । पित्तस्य च विरेचनमुपक्रमप्रधानमिति । तेन-घृतेन अविरेचनेन, यस्मादुप स्तब्ध -स्तम्भितो दोष , त्वग्रक्तमासानि पचेत् । तस्माद्वि रेचनकरमेव घृत योज्यमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने विसर्पचिकित्सित नामाष्टादशोऽध्याय समाप्त ॥ १८ ॥



## एकोनविंशोऽध्यायः ।

अस्मादनन्तरं कुष्ठचिकित्सितमारभ्यते । सम्बन्धश्चास्य निदान एवोक्त इत्याह—

**अथातः कुष्ठचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

त्वग्रक्तमांसादिदूषणात्तत्स्रवणादामयस्वभावाच कायकार्श्यं कुष्ठिन प्रायेणावश्य भावि । अनेनैवानुसारेण वक्ष्यति ( श्लो. १६ )-"स्नेहैराप्याययेच्चैन कुष्ठघ्नैरन्तराऽन्तरा ।" इत्याह—

**कुष्ठिनं स्नेहपानेन पूर्व सर्वमुपाचरेत् ।**

स०-कुष्ठवन्त नर सर्वमेव स्नेहपानैरुपक्रमेत्-शरीराप्यायनार्थं पूर्वमस्य स्नेहोपयोगो युक्त इत्यर्थ ।

**तत्र वातोत्तरे तैलं घृतं वा साधितं हितम् ॥ १ ॥**
**दशमूलामृतैरण्डशार्ङ्गेष्टामेषशृङ्गिभिः ।**

स०-तस्मिन् वातोत्तरे कुष्ठे दशमूलादिभि पक्व तैल घृत वा हितम् ।

**पटोलनिम्बकटुकादार्वीपाठादुरालभाः ॥ २ ॥**
**पर्पटं त्रायमाणां च पलांशं पाचयेदपाम् ।**
**द्माढकेऽष्टांशशेषेण तेन कर्षान्मितैस्तथा ॥ ३ ॥**
**त्रायन्तीमुस्तभूनिम्बकलिङ्गकणचन्दनैः ।**
**सर्पिषो द्वादशपलं पचेत्तत्तिक्तकं जयेत् ॥ ४ ॥**
**पित्तकुष्ठपरीसर्पपिटिकादाहतृड्भ्रमान् ।**
**कण्डुपाण्ड्वामयान् गण्डान् दुष्टनाडीव्रणापचीः॥५॥**
**विस्फोटविद्रधीगुल्मशोफोन्मादमदानपि ।**
**हृद्रोगतिमिरव्यङ्गग्रहणीश्वित्रकामलाः ॥ ६ ॥**
**भगन्दरमपस्मारमुदरं प्रदर गरम् ।**
**अर्शोऽस्रपित्तमन्यांश्च सुकृच्छ्रान् पित्तजान् गदान् ७**

स०-पटोलादि पलाश जले द्माढके पाचयेत् । तेनाष्टभागशेषेण क्वाथेन तथा कर्षमात्रैस्त्रायन्त्यादिभिर्घृतस्य पलानि द्वादश पचेत् । तदेव तिक्तकाख्य सर्पि पित्तकुष्ठादीन् जयेत् । अपरानपि पित्तजानामयान् हन्ति । एतैश्च द्वादशपलमात्र पक्व प्रकृष्टगुण स्यादिति दृष्ट तत्त्वदर्शिभिर्महर्षिभि ।

**सप्तच्छदः पर्पटकः शम्याकः कटुका वचा ।**
**त्रिफला पद्मक पाठा रजन्यौ सारिवे कणे ॥ ८ ॥**
**निम्बचन्दनयष्ट्याह्वविशालेन्द्रयवामृता. ।**
**किराततिक्तकं सेव्यं वृषो मूर्वा शतावरी ॥ ९ ॥**
**पटोलातिविषामुस्तात्रायन्तीधन्वयासकम् ।**
**तैर्जलेऽष्टगुणे सर्पिर्द्विगुणामलकीरसे ॥ १० ॥**
**सिद्धं तिक्तान्महातिक्तं गुणैरभ्यधिकं मतम् ।**

स०-सप्तच्छदादिभि कल्कैर्घृतादष्टगुणे जले द्विगुणामलकरसे सर्पि. पक्व महातिक्तसज्ञ गुणैश्चाभ्यधिक तिक्तान्मतम्, मुनीनामिति शेष ।

**कफोत्तरे घृतं सिद्धं निम्बसप्ताह्वचित्रकैः ॥ ११ ॥**
**कुष्ठोषणवचाशालप्रियालचतुरङ्गुलैः ।**

स०-कफोत्तरे निम्बादिभि कल्कीकृतै पक्व घृत पिबेत् ।

**सर्वेषु चारुष्करजं तौवरं सार्षपं पिबेत् ॥ १२ ॥**
**स्नेहं घृतं वा कृमिजित्पथ्याभल्लातकैः शृतम् ।**

स०-सर्वेषु च कुष्ठेषु भल्लातकोत्थ तुवरज सर्षपजं वा स्नेहमथवा घृत कृमिजिदादिभि साधित पिबेत् ।

---

१ "बहुदोषायेति पित्तस्य प्रकृतत्वात् बहुपित्तायेत्यर्थ ।" इति चक्र । २ 'चयेत् ।' स मू स च । ३ इद कुष्ठचिकित्सित चरके चि० ७ अध्याये, सुश्रुते चि० ९।१० अध्याययो , अष्टाङ्गसङ्ग्रहे चि० २१ अध्याये चास्ति वर्णितम् । ४ 'शार्ङ्गेष्टा' इ. ।

१ तिक्तकघृते चरकसुश्रुतयो पाठास्थाने त्रिफलोक्ता, सुश्रुते तु दार्वीस्थाने आटरूषश्चोक्त । २ महातिक्तघृते सुश्रुते सेव्यस्थाने गृष्टि केक्षुरकश्चोक्त , किन्त्विमौ चरकसङ्ग्रहहृदयचक्रदत्तसिद्धयोगादिष्वनुक्तत्वाचिन्त्यौ । गृष्टिका-वाराही, इक्षुरक -शर । ३ 'तकम्' अ.।

**आरग्वधस्य मूलेन शतकृत्वः शृतं घृतम् ॥ १३ ॥**
**पिबन् कुष्ठं जयत्याशु भजन् सखदिरं जलम् ।**

स०–कर्णिकारस्य मूलेन शतवारान् घृतं पक्वं पिबन् कुष्ठं जयति खदिरयुतं पानीयं सेवमानः ।

**एभिरेव यथास्वं च स्नेहैरभ्यञ्जनं हितम् ॥ १४ ॥**

स०–एभिरेव पूर्वोक्तैः स्नेहैर्यथायोगमभ्यञ्जनं हितम् ।

**स्निग्धस्य शोधनं योज्यं विसर्पे यदुदाहृतम् ।**

स०–स्निग्धस्य कुष्ठिनः शोधनं योज्यं यद्विसर्पे कथितम् । तत्र चोक्तम् ( हृ चि. अ. १८।३ )–"रसेन युक्तं त्रायन्त्या द्राक्षाया" इत्यादि ।

**ललाटहस्तपादेषु शिराश्चास्य विमोक्षयेत् ॥ १५ ॥**
**प्रच्छानमल्पके कुष्ठे शृङ्गाद्याश्च यथायथम् ।**

स०–ललाटादिषु चास्यातुरस्य बलापेक्षी वैद्यो शिरां विमोक्षयेत् । अल्पल्पे कुष्ठे प्रच्छानं स्यात् । यथायथं–यथास्वं, शृङ्गाद्याश्च स्युः ।

**स्नेहैराप्याययेच्चैनं कुष्ठघ्नैरन्तराऽन्तरा ॥ १६ ॥**
**मुक्तरक्तविरिक्तस्य रिक्तकोष्ठस्य कुष्ठिनः ।**
**प्रभञ्जनस्तथा ह्यस्य न स्याद्देहप्रभञ्जनः ॥ १७ ॥**

स०–अन्तराऽन्तरा स्रुतरक्तं कृतविरेकं च कुष्ठघ्नैः स्नेहैरेनं–कुष्ठिनं, आप्याययेत् । एवं कृते सत्यस्य–कुष्ठिनो, मुक्तरक्तस्य तथा विरिक्तस्यात एव रिक्तकोष्ठस्य प्रभञ्जनो देहस्य प्रभञ्जनो–विघातको, न स्यात् ।

**वासामृतानिम्बवरापटोल-**
**व्याघ्रीकरञ्जोदककल्कपक्वम् ।**
**सर्पिर्विसर्पज्वरकामलास्र-**
**कुष्ठापहं वज्रकमामनन्ति ॥ १८ ॥**

स०–वासादिभिः सिद्धं सर्पिर्विसर्पादिघ्नम् । एतच्च वज्रकसंज्ञं घृतं वदन्ति । इन्द्रवज्रावृत्तम् ।

**त्रिफलात्रिकटुद्विकण्टकारी-**
**कटुकाकुम्भनिकुम्भराजवृक्षैः ।**
**सवचातिविषाग्निकैः सपाठैः**
**पिचुभागैर्नववज्रदुग्धमुष्ट्या ॥ १९ ॥**
**पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः**
**क्रूरे कोष्ठे स्नेहनं रेचनं च ।**
**कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान्**
**हन्यात्कृच्छ्रांस्तन्महावज्रकाख्यम् ॥ २० ॥**

स०–त्रिफलादिभिः कार्षिकैः प्रत्यग्रस्नुहीक्षीरपलेन सह पिष्टैरेभिरौषधैर्घृतप्रस्थं चतुर्गुणजलसिद्धं क्रूरकोष्ठे स्नेहनं स्यात् रेचनं च । तथा, कुष्ठादीन् दारुणान् हन्यात् । तच्च महावज्रकं नाम । औपच्छन्दसिकशालिन्यौ वृत्ते ।

**दन्त्याढकमपां द्रोणे पक्त्वा तेन घृतं पचेत् ।**
**धामार्गवपले पीतं तदूर्ध्वाधो विशुद्धिकृत् ॥ २१ ॥**

स०–दन्त्याश्चतुःषष्टिपलानि जलद्रोणे पचेत् । तेन क्वाथेन राजकोशातकीपले घृतं पचेत् । तत्पीतमूर्ध्वाधो विशुद्धिकरम् ।

**आवर्तकीतुला द्रोणे पचेदष्टांशशेषितम् ।**
**तन्मूलैस्तत्र निर्यूहे घृतप्रस्थं विपाचयेत् ॥ २२ ॥**
**पीत्वा तदेकदिवसान्तरितं सुजीर्णे**
**भुञ्जीत कोद्रवमसंस्कृतकाञ्जिकेन ।**
**कुष्ठं किलासमपचीं च विजेतुमिच्छन्**
**इच्छन् प्रजां च विपुलां ग्रहणं स्मृतिं च २३**

स०–आवर्तक्याः शतं द्रोणेऽपामष्टांशशेषितं पचेत् । तत्र–क्वाथे, तस्या मूलैः कल्कीकृतैर्घृतप्रस्थं विपाचयेत् । तद्घृतमेकदिवसान्तरितं पीत्वा सुष्ठु जीर्णे च घृते कोद्रवमसंस्कृतेन काञ्जिकेन सह भुञ्जीत । कुष्ठादीन् विजिगीषुः, प्रजां च विस्तीर्णामिच्छन्, ग्रहणं स्मृतिं चाभिलषन् । वसन्ततिलकावृत्तम् ।

**यतेर्लेलीतकवसा क्षौद्रजातीरसान्विता ।**
**कुष्ठघ्नी समसर्पिर्वा सगायत्र्यसनोदका ॥ २४ ॥**

स०–यतेः–ब्रह्मचर्यस्थितस्य, लेलीतकवसा माक्षिकजातीरसयुता कुष्ठघ्नी स्यात् । लेलीतकवसा–सौवर्चललवणतैलम्, गन्धकमेके । जातीरसो–बोलः । अथवा, समघृता खदिरासनोदकसहिता कुष्ठघ्नी स्यात् ।

**शालयो यवगोधूमाः कोरदूषाः प्रियङ्गवः ।**
**मुद्गा मसूरास्तुवरी तिक्तशाकानि जाङ्गलम् ॥ २५ ॥**
**वरापटोलखदिरनिम्बारुष्करयोजितम् ।**
**मद्यान्यौषधगर्भाणि मथितं चेन्दुराजिमत् ॥ २६ ॥**

---

१ 'सप्तकृत्व' अ. । २ 'पिबेत्' इ. ।

१ धामार्गवपले–राजकोशातकीकल्कपल इत्यर्थः । २ "आवर्तकी तिन्दुकिनी विभाण्डी विषाणिका रङ्गलता मनोज्ञा । सा रक्तपुष्पी महदादिजाली सा पीतकीलाऽपि च चर्मरङ्गा ॥ वामावर्ता च सम्प्रोक्ता" इति राजनिघण्टौ । ३ 'वसुस' इ. । ४ "लेलीतकः–पाषाणभेदः औत्तरापथिकः । उच्यते हि निघण्टौ–'आसीद्दैत्यो महाबाहुर्लेलिहानो महासुरः । योजनानां त्रयस्त्रिंशत् कायेनाच्छाद्य तिष्ठति ॥ विष्णुचक्रेण सच्छिन्नो पपात धरणीतले । वसा तस्य समाख्याता लेलीह(त)क इति क्षितौ ॥' इत्यादि । जात्या इत्यामलक्या ।" इति चरके चक्रः । "लेलीतकवसा–उत्तरापथे रसरूपा प्रसिद्धा । जातीरसो–जात्याः स्वरसः ।" इतीन्दुः । "वटः सौगन्धिको गन्धो गन्धको गन्धमादनः । लेलीनो गन्धपाषाणो लेलीनश्च निकृन्तकः ॥" इति धन्वन्तरिनिघण्टौ । ५ 'तैलगन्ध' ट । ६ "मू ॥ त्रिफलारुष्करारिष्टक्षौद्रयोजितभावितम् । धात्रीखदिरनिम्बाम्बु रसं मुद्गपटोलजम् ॥ मद्या" इति सङ्ग्रहपाठः ।

अन्नपानं हितं कुष्ठे, न त्वम्ललवणोषणम् ।
दधिदुग्धगुडानूपतिलमाषास्त्यजेत्तराम् ॥ २७ ॥

स०-शाल्यादिकमन्नपान च वरादिभिर्योजित कुष्ठे हितम् । इन्दुराजि -बाकुची । अम्लादिकमन्नपान न हित कुष्ठे स्यात् । तथा दध्यादीनतिशयेन वर्जयेत् । प्रतिरोग च यन्निदानवर्जन तच्चिकित्सितमेवेत्यवगन्तव्यम् ।

[1]पटोलमूलत्रिफलाविशालाः
पृथक्त्रिभागापचितत्रिशाणाः ।
स्युस्त्रायमाणा कटुरोहिणी च
भागार्धिके नागरपादयुक्ते ॥ २८ ॥
एतत्पलं जर्जरितं विपक्वं
जले पिबेद्दोषविशोधनाय ।
जीर्णे रसैर्धन्वमृगद्विजानां
पुराणशाल्योदनमाददीत ॥ २९ ॥
[2]कुष्ठं किलास ग्रहणीप्रदोष-
मर्शांसि कृच्छ्राणि हलीमकं च ।
षड्रात्रयोगेन निहन्ति चै[3]तद्
हृद्बस्तिशूलं विषमज्वरं च ॥ ३० ॥

स०-पृथक्-प्रत्येक, त्रिभागेनापचितो-न्यून , तृतीय शाणो येषा ते पटोलादय पञ्च पृथक्त्रिभागापचितत्रिशाणा । लोकेऽपि चैव प्रयुक्ता एव । यथा,-त्रिभागोनास्त्रयो द्र[4]म्मा देया इति । अत्र हि द्वौ द्रम्मौ तृतीयश्च द्रम्मस्त्रिभागेन हीन इति गम्यते । तदेव पटोलस्य शाणौ द्वौ धानकाश्च चतस्रो भवन्ति । षड्धानको हि शाण । एव पटोलमूलादिद्रव्याणा पञ्चाना प्रत्येक षोडशधानका स्यु । स्त्रायमाणा कटुरोहिणी च भागार्धिके । किम्भूते ? नागरपादयुक्ते सत्यौ, न तु केवले । तदयमर्थ ,-त्रायन्त्या धानका षट्, कटुकाया धानका षट्, नागरस्य धानकाश्चत्वार । षोडशधानका ह्यत्र मूलद्रव्यभाग । तदेव पटोलादीना पञ्चानामशीतिर्धानका , त्रायन्तीकटुकयो शुण्ठीपादयुतयो षोडशधानका , इति षण्णवतिधानकाभि पल भवति । तदिद पल जर्जरित किञ्चिच्चूर्णित जले विपक्व दोषविशुद्ध्यर्थ पिबेत् । जीर्णे सत्यौषधे जाङ्गलमृगपक्षिणा मांसरसै सह पुराणशाल्योदनमश्नीयात् । उपजाती वृत्ते । एतच्च पीत षड्रात्रयोगेन-षड्दिनान्युपयुक्त, कुष्ठादीन् हन्ति । इन्द्रवज्रावृत्तम् ।

[1]विडङ्गसारामलकाभयानां
प[2]लत्रयं, त्रीणि पलानि कुम्भात् ।
गु[3]डस्य च द्वादश, मासमेष
जितात्मनां हन्त्युपयुज्यमानः ॥ ३१ ॥
कुष्ठश्वित्रश्वासकासोदरार्शो-
मेहप्लीहग्रन्थिरुग्जन्तुगुल्मान् ।
सिद्धं योगं प्राह यक्षो मुमुक्षो-
र्भिक्षोः प्राणान् माणिभद्रः किलेमम् ॥३२॥

स०-विडङ्गसारादीना समुदिताना पलत्रयम् , त्रीणि पलानि कुम्भात्-त्रिवृतायास्त्रीणि पलानि, गुडस्य च द्वादशपलानि । एष प्रयोगो जितेन्द्रियाणा मासमुपयुज्यमानो वक्ष्यमाणान् गदान् हन्ति । "उपेन्द्रवज्रा तु जतौ जगौ ग ।" मासशब्दोपादानाच्च प्रत्यहमस्यायोगादर्धपल धानकानवरक्तिकात्रयसहितमभ्यवहरणीयत्वेनात्रावतिष्ठते । अन्यत्रापि प्रदेशे य एवविधो निर्देशस्तत्र परिमाणकल्पनायामयमेव न्यायोऽनुमन्तव्य. । मणिभद्राख्यो यक्षो भिक्षो प्राणान् मुमुक्षो -जीवित जिहासो , इम सिद्ध योग प्राणकर प्राह,-जगादेत्यर्थ । अत्र भूते काले प्राहेति,तथा साधु किलेत्यागमिकत्व च सूचयति । शालिनीवृत्तम् ।

भूनिम्बनिम्बत्रिफलापद्मकातिविषाकणाः ।
मूर्वापटोलीद्विनिशापाठातिक्तेन्द्रवारुणीः ॥ ३३ ॥
सकलिङ्गवचास्तुल्या द्विगुणाश्च यथोत्तरम् ।
लिह्याद्दन्तीत्रिवृ[3]द्ब्राह्मीश्चूर्णिता मधुसर्पिषा ॥ ३४ ॥
कुष्ठमेहप्र[4]सुप्तीनां परमं स्यात्तदौषधम् ।

स०-भूनिम्बादयस्तुल्या दन्त्यादयश्च यथोत्तर द्विगुणाश्चूर्णिता मधुसर्पिषा लिह्यात् । कुष्ठादीनामेतत् प[5]रमं भेषजम् ।

---

१ "मूल पटोलस्य तथा गवाक्ष्या पृथक् पलाश त्रिफलात्वचश्च । स्त्रायमाणा कटुरोहिणी च भागार्धिका नागरपादयुक्ता ॥ पलं तथैषा सह चूर्णिताना जले शृत दोषहर पिबेत्ता । जीर्णे" इति चरकपाठ । "मूल पटोलस्येति पटोलमूलम्, तथा गवाक्ष्या अपि मूलम् । पलाश-पलपरिमाणम् । त्रिफलात्वचश्च प्रत्येक पलाशा । यद्यपि कल्याणकघृतोक्ताष्टाविंशतिपदेन त्रिफलाया प्रत्येक भाग सर्वत्र व्यवस्थापित , तथाऽपि तस्यैवार्थस्य द्योतनार्थं पुन पृथक्शब्द ग्राहयति । किंवा त्रायमाणाया कटुरोहिण्याश्च पृथक् भागार्धिकत्व दर्शयति, त्रिफलायास्तु प्रसङ्गत एव पृथग्भागग्रहण सिद्धम् । त्रायमाणाकटुरोहिण्यो प्रत्येक षट्शाणमात्र, नागरस्य चोभयोरर्धभागपूरकत्वेनार्धपलापेक्षया चतुर्थपादद्वयेन शाणचतुष्टय भवति, एव त्रायमाणाकटुरोहिणीनागरै पलमेकम्, पटोलमूलादिभि पञ्चपलानि, इति मिलित्वा षट्पलानि । तथा सत्येषा पटोलादीना चूर्णीकृतानामिति जर्जरीकृताना षट्पलाना पलमाकृष्य जले शृत पिबेत् । एव षड्दिन प्रयोज्यम्, षड्दिनप्रयोगेणैवास्य प्राय कुष्ठहरत्वमुन्नीयते ।" इति चक्र. । २ 'कुष्ठानि शोफ ग्र' स.च । ३ 'चैष हृ' इ.स च. । ४ द्रम्म -आणकचतुष्टयम् ।

१ "विडङ्गसारो-विडङ्गमज्जा । अन्ये त्वेव वर्णयन्ति,-'गुडस्य षड्द्वादश पलानि' इति । तथा गृहीते चूर्णात् त्रिगुण गुड स्यात् । एवमेव तालीसवटकादावपि प्रसिद्धम् । तस्मात् यत्र गुडस्य प्रमाणमनुक्त तत्र चूर्णात् त्रिगुण गुड ग्राह्यम् । एव कृतेऽप्यग्निमान्द्य न स्यात् । तदुक्त सूत्रे-'गुड करोत्यग्निसादस्य सह न त्वभयादिभि ।' इति ।" इतीन्दु । २ 'पलं पल त्रीणि' म स । ३ 'वृद्धात्रीश्चू' स मू । ४ 'प्रतप्ताना' अ । ५ 'पर मे' ट.ड. ।

वराविडङ्गकृष्णा वा लिह्यात्तैलाज्यमाक्षिकैः ॥ ३५ ॥

स०–त्रिफलादीन् वा तैलघृतमाक्षिकैर्लिह्यात् ।

काकोदुम्बरिकावेल्लनिम्बाब्दव्योषकल्कवान् ।
हन्ति वृक्षकनिर्यूहः पानात्सर्वांस्त्वगामयान् ॥ ३६ ॥

स०–काकोदुम्बरिकादिकल्कवान् वृक्षकक्काथः पानात्सर्वान् त्वग्रोगान् हन्ति । काकोदुम्बरिका–फल्गु । वृक्षकः–वत्सकः ।

कुटजाग्निनिम्बनृपतरुखदिरासनसप्तपर्णनिर्यूहे ।
सिद्धा मधुघृतयुक्ताः कुष्ठघ्नीर्भक्षयेदभयाः ॥ ३७ ॥

स०–कुटजादिक्काथे सिद्धाः पक्का हरीतकीर्मधुघृतसंयुक्ताः कुष्ठनुदो भक्षयेत् । आर्यावृत्तम् ।

दार्वीखदिरनिम्बानां त्वक्क्काथः कुष्ठसूदनः ॥ ३७½ ॥

स०–दार्व्यादीनां त्वक्क्काथः कुष्ठनाशनः स्यात् ।

निशोत्तमानिम्बपटोलमूल-
तिक्तावचालोहितयष्टिकाभिः ।
कृतः कषायः कफपित्तकुष्ठं
सुसेवितो धर्म इवोच्छिनत्ति ॥ ३८ ॥
एभिरेव च शृतं घृतमुख्यं
भेषजैर्जयति मारुतकुष्ठम् ।
कल्पयेत्खदिरनिम्बगुडूची-
देवदारुरजनीः पृथगेवम् ॥ ३९ ॥

स०–निशादिभिः कषायः कृतः कफपित्तजं कुष्ठमुद्दलयति । सुष्ठु सेवितो यथा धर्मः । एभिरेव–पूर्वोक्तैरौषधैः, पक्वं वरं घृतं वातकुष्ठं जयति । एवं–अनयैव कल्पनया, पृथक् खदिरादीन् कल्पयेत् । उपजातिस्वागते वृत्ते ।

पाठादार्वीवह्निघुणेष्टाकटुकाभि-
र्मूत्रं युक्तं शक्रयवैश्चोष्णजलं वा ।
कुष्ठी पीत्वा मासमरुक् स्याद्गुदकीली
मेही शोफी पाण्डुरजीर्णी कृमिमांश्च ॥ ४० ॥

स०–पाठादिभिरिन्द्रयवैश्च गोमूत्रं युक्तमथवोष्णजलं मासं पीत्वा कुष्ठी नीरुक् स्यात् । अर्शसादिश्च । "वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ।" ( वृ. र. अ. ३।७२ ) ।

लाक्षादन्तीमधुरसवराद्वीपिपाठाविडङ्ग-
प्रत्यक्पुष्पीत्रिकटुरजनीसप्तपर्णाटरूषम् ।
रक्तां निम्बं सुरतरु कृतं पञ्चमूल्यौ च चूर्णं
पीत्वा मासं जयति हितभुग्गव्यमूत्रेण कुष्ठम् ॥ ४१ ॥

स०–लाक्षादिचूर्णं गोमूत्रेण मासं पीत्वा हितभोजी सन् कुष्ठं जयति । रक्ता–मञ्जिष्ठा । सुरतरुशब्दस्य नपुंसकत्वमौषधवाचित्वाल्लोकाश्रयत्वाल्लिङ्गस्येति वा । पञ्चमूल्यौ–दशमूलमित्यर्थः । "मन्दाक्रान्ता मभनततगा गः समुद्रर्तुलोकैः ।"

निशाकणानागरचेल्लनावर-
सवह्निताप्यं क्रमशो विवर्धितम् ।
गवाम्बुपीतं वटकीकृतं तथा
निहन्ति कुष्ठानि सुदारुणान्यपि ॥ ४२ ॥

स०–निशादिकं क्रमेण विवर्धितं गोमूत्रेण पीतमथवा वटकीकृतं कुष्ठानि सुकृच्छ्राण्यपि निहन्ति । "उशन्ति वंशस्थमिदं जतौ जरौ ।"

त्रिकटूत्तमातिलारु-
ष्कराज्यमाक्षिकसितोपलाविहिता ।
गुलिका रसायनं[1] कु-
ष्ठजिच्च वृष्या च सप्तसमा ॥ ४३ ॥

स०–त्रिकट्वादिभिर्गुलिका विहिता रसायनं कुष्ठहृद् वृष्या च स्यात् । एवं च सप्तसमाख्या । त्रिकटु-त्रिफले ह्यत्र समुदायरूपत्वाद् द्वे एव कल्पिते । "आर्या विपुला तु याऽन्यथा पादभाक् ।"

चन्द्रशकलाग्निरजनी-
विडङ्गतुवरास्थ्यरुष्करत्रिफलाभिः ।
वटका गुडांशकृताः
समस्तकुष्ठानि नाशयन्त्यभ्यस्ताः ॥ ४४ ॥

स०–चन्द्रशकलादिभिर्वटका गुडांशेन कृताः –शीलिताः, निःशेषकुष्ठानि घ्नन्ति । चन्द्रशकला–बाकुची । आर्यागीतिः ।

विडङ्गभल्लातकबाकुचीनां
सद्वीपिवाराहिहरीतकीनाम् ।
सलाङ्गलीकृष्णतिलोपकुल्या
गुडेन पिण्डी विनिहन्ति कुष्ठम् ॥ ४५ ॥

स०–विडङ्गादीनां चूर्णेन गुडेन पिण्डी लाङ्गलिकायन्विता कुष्ठं विजयते ।

शशाङ्कलेखा सविडङ्गसारा[3]
सपिप्पलीका सहुताशमूला ।
सायोमला सामलका सतैला[4]
कुष्ठानि कृच्छ्राणि निहन्ति लीढा[5] ॥ ४६ ॥

स०–शशाङ्कलेखा विडङ्गादिभिः सह तैलेन लीढा कृच्छ्राणि कुष्ठानि विनाशयति । उपजातिर्वृत्तम्(त्ते) ।

पथ्यातिलगुडैः पिण्डी कुष्ठं सारुष्करैर्जयेत् ।
गुडारुष्करजन्तुघ्नसोमराजीकृताऽथवा ॥ ४७ ॥

स०–पथ्यादिभिः सभल्लातकैः पिण्डी कुष्ठं जयेत् । गुडादिभिर्वा कृता पिण्डी कुष्ठं हन्ति ।

---

१ 'सर्वत्वचा' अ. । २ 'वरघृत' ड. । ३ 'ङ्क प्र' इ. ।

१ 'न स्यात् कु' अ इ स ड. । २ 'ना गुडे' ड. । ३ 'ङ्कमूला स' इ । 'ङ्ककुष्ठा स' वृन्द. । ४ 'ला सर्वाणि कुष्ठानि नि' वृन्द. चक्र. । ५ 'ह लीढा' ड ।

विडङ्गाद्रिजतुक्षौद्रसर्पिष्मत्खादिरं रजः ।
किटिभश्वित्रदद्रुघ्नं खादेन्मितहिताशनः ॥ ४८ ॥

स०–खदिरचूर्णं विडङ्गादियुतं मितहितभोजनः किटिभादिघ्नं खादेत् ।

सितातैलकृमिघ्नानि धात्र्ययोमलपिप्पलीः ।
लिहानः सर्वकुष्ठानि जयत्यतिगुरूण्यपि ॥ ४९ ॥

स०–सितादीनि लिहानोऽशेषकुष्ठानि कृच्छ्राण्यपि जयति ।

मुस्तं व्योषं त्रिफला मञ्जिष्ठा दारु पञ्चमूले द्वे ।
सप्तच्छदनिम्बत्वक् सविशाला चित्रको मूर्वा ॥५०॥
चूर्णं तर्पणभागैर्नवभिः संयोजितं सर्मध्वंशम् ।
नित्यं कुष्ठनिबर्हणमेतत्प्रायोगिकं खादन् ॥ ५१ ॥
श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ।
वर्ध्मभगन्दरपिडकाकण्डूकोठापचीर्हन्ति ॥ ५२ ॥

स०–मुस्तादिकं समभागं सक्तुभागैर्नवभिः संयोजितं मध्वंशेन युतमेतच्चूर्णं प्रायोगिकं–प्रयोगयोग्यं, कुष्ठघ्नं सततं खादेत् । आर्यात्रिकम् ।

रसायनप्रयोगेण तुवरास्थीनि शीलयेत् ।
भल्लातकं बाकुचिका वह्निमूलं शिलाह्वयम् ॥ ५३ ॥

स०–रसायनोक्तेन विधिना तुवरास्थीनि ( हृ उ अ ३९।८४ ), शीलयेत् । भल्लातकं वा ( हृ उ अ ३९।७५ ), सोमराजीं वा ( हृ उ अ ३९।१०७ ), चित्रकमूलं वा ( हृ उ अ ३९।६३ ), शिलाजतु वा ( हृ उ अ ३९।१३७ ) ।

इति दोषे विजितेऽन्तस्-
त्वक्स्थे शमनं बहिः प्रलेपादि हितम् ।
तीक्ष्णालेपोत्क्लिष्टं
कुष्ठं हि विवृद्धिमेति मलिने देहे ॥ ५४ ॥

स०–इति–एवंप्रकारेण, अन्तर्विजिते दोषेऽत एव त्वक्स्थे बहिः प्रलेपादि हितम् । आदिशब्देन स्नानादिपरिग्रहः । ननु, बहिर्भागस्थं कुष्ठं किमिति पूर्वमेव प्रलेपादिना न जीयते? इत्याह–तीक्ष्णेत्यादि । यस्मात्तीक्ष्णेन लेपेनोत्क्लिष्टं उत्क्लेशं प्रापितं, कुष्ठं मलिने–सदोषे, काये विवृद्धिं याति । तस्मादन्तः शुद्धे काये प्रलेपादिकं हितम् । आर्यागीतिः ।

स्थिरकठिनमण्डलानां कुष्ठानां पोटलैर्हितः स्वेदः ।
स्विन्नोत्सन्नं कुष्ठं शस्त्रैर्लिखितं प्रलेपनैर्लिम्पेत्॥५५॥

स०–स्थिराणि कठिनानि च मण्डलानि येषां कुष्ठानां तेषां पोटलैः स्वेदो हितः । स्विन्नोत्सन्नं कुष्ठं शस्त्रैर्लिखितं प्रलेपैर्लिम्पेत् । गीतिरार्या ।

१ 'मध्वाज्यम् । श्रेष्ठं कु॰ क भक्ष्यम् ॥' स च । २ 'प्रायोगिकमिति सततोपयोज्यम् ॥ स्विन्नत्वेनोत्सन्न–स्विन्नोत्सन्नम् ।" इति चक्र । "स्विन्न चोत्सन्न–उन्नत च ।" इती दु । ३ 'पोट्टले' स स. । "पोट्टलैः –रूक्षैरौषधमूटकैः ।" इतीन्दु ।

येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनेषु कुष्ठेषु ।
तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्य ॥ ५६ ॥

स०–येषु कुष्ठेषु स्पर्शेन्द्रियनाशनेषु शस्त्रं न क्रमते, तेषु रक्तं दोषं च विस्राव्य क्षारो निपातनीयः । क्रमत इति "वृत्तिसर्ग" इत्यादिना तङ् ।

लेपोऽतिकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च ।
पीतागदस्य कार्यो विषैः समन्त्रोऽगदैश्चानु ॥५७॥

स०–पाषाणवत्कठिने तथा परुषस्पर्शे तथा सुप्ते स्थिरीभूते तथा पुराणे च कुष्ठे सत्यातुरस्योपयुक्तागदस्य विषैर्मन्त्रसहितैर्लेपः कार्यः । अनु–पश्चात्, अगदैश्च लेपः ।

स्तब्धानि सुप्तसुप्तान्यस्वेदनकण्डुलानि कुष्ठानि ।
घृष्टानि शुष्कगोमयफेनकशस्त्रैः प्रदेह्यानि ॥ ५८ ॥

स०–कुष्ठानि स्तब्धानि तथाऽतिसुप्तानि तथाऽस्वेदनानि कण्डूमन्ति च शुष्कगोमयादिभिर्घृष्टान्यनन्तरं प्रलेप्यानि ।

मुस्ता त्रिफला मदनं करञ्ज आरग्वधः कलिङ्गयवाः ।
सैताह्वकुष्ठफलिनीदार्व्यः सिद्धार्थकं स्नानम् ॥५९॥
एष कषायो वमनं विरेचनं वर्णकस्तथोद्धर्षः ।
त्वग्दोषकुष्ठशोफप्रबाधनः पाण्डुरोगघ्नः ॥ ६० ॥

स०–मुस्तादयः स्नानं स्यात् । एष एव कषायो वमनं [विरेचनं] वर्णकरस्तथोद्धर्षस्त्वग्दोषादिप्रबाधनः पाण्डुरोगहृच्च स्यात् ।

करवीरनिम्बकुटजाच्छम्याकाच्चित्रकाच्च मूलानाम् ।
मूत्रे दर्वीलेपी क्वाथो लेपेन कुष्ठघ्नः ॥ ६१ ॥

स०–करवीरमूलादिना चतुर्गुणे गोमूत्रे क्वथिते दर्वीलेपी क्वाथो लेपेन कुष्ठघ्नः–कुष्ठापहः ।

श्वेतकरवीरमूलं कुटजकरञ्जात्फलं त्वचो दार्व्याः ।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ६२ ॥

स०–सितकरवीरमूलादयः सुमनःपल्लवयुतो लेपो निश्चितं कुष्ठघ्नः ।

शैरीषी त्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि ।
पिष्टा च काकमाची चतुर्विधः कुष्ठहा लेपः ॥६३॥

स०–शिरीषत्वगादिलेपश्चतुष्प्रकारः कुष्ठजित् । आर्या अष्टौ ।

व्योषसर्षपनिशागृहधूमै-
र्यावशूकपटुचित्रककुष्ठैः ।

१ "अतिकठिनत्वादियुक्ते तत्कालपीतागदस्य पुंसो विषैर्लेपः कार्यः । अनु च विषलेपस्य मन्त्रयुक्तैरगदैर्लेपः कार्यः ।" इतीन्दु । "सुप्तसुप्तानीति सुप्तवत् सुप्तानि–अचेतनानि, सर्वथा स्पर्शाज्ञानीत्यर्थः ॥ वर्णकमित्यालेपनम् ।" इति चक्र । फेनक॰–समुद्रफेनः । २ 'मन्त्राग' अ स द्व । ३ "दार्वी सप्तपर्णो स्नानं सिद्धार्थकं नाम ।" स.मू स.च । ४ 'गैदस्त' स स । ५ 'लेपः' स द्व ।

कोलमात्रगुटिकाऽर्धविषांशा
श्वित्रकुष्ठहरणो वरलेपः ॥ ६४ ॥

स०-व्योषादिभिर्द्रव्यै समांशैस्तदर्धविषोपेतै कोलप्रमाणा वटिका लेपत श्वित्र कुष्ठ हन्ति । [ स्वागतावृत्तम् ।][1]

निम्बं हरिद्रे सुरसं पटोलं
कुष्ठाश्वगन्धे सुरदारु शिग्रुः ।
ससर्षपं तुम्बरुधान्यवन्यं
चण्डा च चूर्णानि समानि कुर्यात् ॥ ६५ ॥
तैस्तक्रपिष्टैः प्रथमं शरीर
तैलाक्तमुद्वर्तयितुं यतेत ।
तथाऽस्य[2] कण्डूः पिटिका. सकोठा.
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ६६ ॥

स०-पूर्व तैलाभ्यक्त शरीर निम्बादिभि समभागेन चूर्णीकृतैरुद्वर्तनार्थं यत्न कुर्यात् । तथा-एव कृते, अस्य-आतुरस्य, कण्ड्वादय शाम्यन्ति[3] । उद्वर्तनानन्तरमुष्णजलस्नान कार्यम् ।

मुस्तामृतासङ्ग[4]कटङ्कटेरी-
कासीसकम्पिल्लककुष्ठरोध्राः ।
गन्धोपलः सर्जरसो विडङ्ग
मनःशिलाले करवीरकत्वक् ॥ ६७ ॥
तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम् ।
दद्रूः सकण्डू. किटिभानि पामा
विचर्चिका चेति तथा न सन्ति ॥ ६८ ॥

स०-मुस्तादीनि समान्येतानि चूर्णानि कृतानि तैलाभ्यक्त देहस्यावचूर्णनार्थं दद्यात् । तथा-एवमवचूर्णिते सति, दद्रुरित्यादयो नश्यन्ति । चत्वार्येतान्युपजातिसज्ञानि वृत्तानि ।

स्नुग्गण्डे सर्षपात्कल्कः कुकूलानलपाचितः ।
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥ ६९ ॥
मनःशिलाले मरिचानि तैलं
मार्क[5] पयः कुष्ठहर. प्रदेहः ।
तथा करञ्जप्रपुनाटबीजं
कुष्ठान्वितं गोसलिलेन पिष्टम् ॥ ७० ॥

स०-सर्षपा[6]णा कल्क स्नुह्या गण्डे कुकूलाग्नौ पाचितो लेपेन विचर्चिका हन्ति, रागवेगो लज्जा यथा । मन शिलादय प्रलेपात् कुष्ठहृत । तद्वदेव करञ्जादि गोमूत्रपिष्टम् । उपजातिवृत्तम् ।

१ व्योषादिभिरित्यादि हन्तीत्यन्ता टीका ड पुस्तके नोपलभ्यते । २ 'तेनास्य' अ । ३ 'म्यन्ति । मुस्ता' ड । ४ "आसङ्ग-रसाञ्जनम् ।" इतीन्दु । ५ "तैल मार्षपम्, कुष्ठहरत्वात् ।" इति श्रीकण्ठशिवदासौ । ६ 'पाया क' ड ।

गुग्गुलुमरिचविडङ्गैः सर्षपकासीससर्जरसमुस्तैः ।
श्रीवेष्टकालगन्धैर्मन.शिलाकुष्ठकम्पिल्लैः ॥ ७१ ॥
उभयहरिद्रासहितैश्चाक्रिकतैलेन सिश्रितैरेभिः ।
दिनकरकराभितप्तै. कुष्ठं घृष्टं च नष्टं च[1] ॥ ७२ ॥

स०-गुग्गुल्वादिभिरेतैश्चक्रजतैलेन मिश्रितै सूर्यरश्मितप्तैर्घृष्ट कुष्ठ द्राक् नश्यति । चाक्रिक तैल-सद्य पीडित चक्रस्थमेवोष्ण तैलम् । केचित्तु बहुकालकृ[2]न्ततैलपीडनात् [3]कोहु(ह्र)ककाष्ठाद्देवदारुकाष्ठवत् खण्डश पाटिताद्युक्त्या यत्तैल गृह्यते तच्चक्र[4]तैलमित्याहु ।

मरिचं तमालपत्रं कुष्ठं समनःशिलं सकासीसम् ।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥ ७३ ॥
तेनालिप्त सिध्म सप्ताहा[5]द् घर्मसेविनोऽपैति ।
मासान्नव किलासं स्नानेन विना विशुद्धस्य ॥ ७४ ॥

स०-मरिचादिक तैलेन युक्त सप्तदिनानि ताम्रभाजने स्थित तेन च-मरिचादिना, सिध्ममालिप्त घर्मसेविनो नरस्य सप्ताहेनापैति । मासायत्सद्योत्थित श्वित्र तन्नश्यति । स्नानेन विना विशुद्धस्य नरस्य । चतस्र आर्या , आर्याश्च जघनचपला ।

मयूरकक्षारजले सप्तकृत्वः परिस्रुते ।
सिद्धं ज्योतिष्मतीतैलमभ्यङ्गात्सिध्मनाशनम् ॥ ७५ ॥

स०-अपामार्गक्षारोदके सप्तवारान् परिस्रुते सुवर्णलतातैल पक्कमभ्यङ्गेन सिध्म नाशयति ।

वायसजङ्घामूलं [6]वमनीपत्राणि मूलकाद्बीजम् ।
तक्रेण भौमवारे लेपः सिध्मापहः सिद्धः ॥ ७६ ॥

स०-काकजङ्घामूल वमन्या पत्राणि मूलकबीज च तक्रेणाङ्गारकदिने लेप सिध्मघ्न सिद्ध ।

जीवन्ती मञ्जिष्ठा दार्वी कम्पिल्लकं पयस्तुत्थम् ।
एष घृ[7]ततैलपाक. सिद्धः सिद्धे च सर्जरसः ॥ ७७ ॥
देय[8]. समधूच्छिष्टो विपादिका तेन नश्यति ह्यक्ता[9] ।
चर्मैककुष्ठकिटिभ कुष्ठं शाम्यत्यलसकं च ॥ ७८ ॥

स०-एष घृततैलपाक घृततैलाभ्या पाको यस्य योगस्य स घृततैलपाक , गमकत्वात्समास । सिद्धो-निष्पन्न । सिद्धेऽस्मिन्

१ "घृष्ट च नष्ट चेत्यनेन घर्षणनाशनयोरेककालता प्रदर्शिता ।" इतीन्दु । २ 'कृते तैल' ट. ड । ३ 'केद्रुकाष्ठादेव देवदा' ड । ४ चक्रतैलमुत्तरस्थाने ( अ २६।३१)ऽपि व्याख्यातम् । ५ 'ह्राद्धेति तिष्ठतो घर्मे । ०स्नान मुक्त्वा विशुद्धतनो ॥' स च । "स्नान मुक्त्वेति स्नान वर्जयित्वाऽय प्रयोग कर्तव्य ।" इति चक्र । ६ वमनी-शणपुष्पी । ७ "घृततैलपाक इति यमकपाक । अत्र च सिद्धे स्नेहे क्षेप्ययो सर्जरसमधूच्छिष्टयोरपि कल्कार्थोपात्तजीवन्ती मञ्जिष्ठादिद्रव्यै समानत्व साहचर्याज्ज्ञेयम् । किंवा स्नेहादष्टमो भाग सर्जरसमधूच्छिष्टयो , अन्यत्र दृष्टत्वात् ।" इति चक्र । ८ 'क्षेप्य स' स च । ९ 'न शाम्यतेऽभ्यक्ता ।' स.मू , स.च.।

पाके सर्जरसो मदनेन सह देय । तेन–सिद्धेन योगेन, विपादिकाऽभ्यक्ता नश्यति । तथा, चर्मकुष्ठादिकं च शाम्यति । क्षीरमत्रार्कग्राह्यम्, यौगिकत्वाद्वृद्धवैद्यव्यवहाराच्च । आर्यास्तिस्र ।

मूलं सप्ताह्वात्त्वक् शिरीषाश्वमारा-
दर्कोन्मालत्याश्चित्रकास्फोतनिम्बात् ।
बीजं कारञ्जं सार्षपं प्रापुनाटं
श्रेष्ठा जन्तुघ्नं त्र्यूषणं द्वे हरिद्रे ॥ ७९ ॥
तैलं तैलं साधितं तैः समूत्रै-
स्त्वग्दोषाणां दुष्टनाडीव्रणानाम् ।
अभ्यङ्गेन श्लेष्मवातोद्भवानां
नाशायालं वज्रकं वज्रतुल्यम् ॥ ८० ॥

स०–सप्तपर्णमूलं शिरीषादीनां त्वक् करञ्जादीनां बीजं तथा त्रिफलादयः, एतैर्गोमूत्रसहितैस्तिलतैलं पक्त्वा वातकफोद्भवानां त्वग्दोषाणां तथा दुष्टनाडीव्रणानामभ्यङ्गेन नाशाय वज्रकसञ्ज्ञमेतदलं-समर्थम् । तथा वज्रतुल्यम्, अव्याहतशक्तित्वात् । [विश्वदेवी शालिनी च ।]

एरण्डतार्क्ष्यघननीपकदम्बभार्गी-
कम्पिल्लवेल्लफलिनीसुरवारुणीभिः ।
निर्गुण्ड्यरुष्करसुराह्वसुवर्णदुग्धा-
श्रीवेष्टगुग्गुलुशिलापट्टतालविश्वैः ॥ ८१ ॥
तुल्यस्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रम् ।
अतिशयितवज्रकगुणं श्वित्रार्शोग्रन्थिमालाघ्नम् ८२

स०–एरण्डादिभिस्तुल्यस्नुगर्कदुग्धं तैलं पक्वं महावज्रसञ्ज्ञं स्मृतम् । अतिशयेन वज्रकगुणं श्वित्रादिघ्नम् । वसन्ततिलकं आर्या च ।

कुष्ठाश्वमारभृङ्गार्कमूत्रस्नुक्क्षीरसैन्धवैः ।
तैलं सिद्धं विषावापमभ्यङ्गात् कुष्ठजित्परम् ॥ ८३ ॥

स०–कुष्ठादिभिः सिद्धं तैलं विषावापमभ्यङ्गात् परं कुष्ठहृत् ।

सिद्धं सिक्थकसिन्दूरपुरतुत्थकतार्क्ष्यजैः ।
कच्छूं विचर्चिकां चाशु कटुतैलं निबर्हति ॥ ८४ ॥

स०–सिक्थकादिभिः पक्वं सर्षपतैलं कच्छ्वादीन्निहन्ति ।

लाक्षा व्योषं प्रापुनाटं च बीजं
सश्रीवेष्टं कुष्ठसिद्धार्थकाश्च ।
तक्रोन्मिश्रः स्याद्धरिद्रा च लेपो
दद्रूघ्नोक्तो मूलकोत्थं च बीजम् ॥ ८५ ॥

स०–लाक्षादयो निशा च तक्रोन्मिश्रो दद्रूषु लेपः उक्तः । मूलकबीजं च तक्रमिश्रं तद्वत् । शालिनीवृत्तम् ।

१ "सुरवारुणी–इन्द्रवारुणी ।" इतीन्दुः । २ 'लाहरिताल' स इ । ३ 'क्ष्यकै ।' अ । ४ 'पामा वि' अ. इ । ५ 'नियच्छति' इति क्वचित् । ६ 'वेष्टा कु' स. इ ।

चित्रकसोभाञ्जनकौ, गुडूच्यपामार्गदेवदारूणि ।
खदिरो धवश्च लेपः, श्यामा दन्ती द्रवन्ती च ॥८६॥
लाक्षारसाञ्जनैलाः, पुनर्नवा चेति कुष्ठिनां लेपाः ।
दधिमण्डयुताः पादैः षट् प्रोक्ता मारुतकफघ्नाः ॥८७॥

स०–चित्रकादयो दधिमण्डान्विताः पादैः षट् वातश्लेष्मकुष्ठघ्ना गदिताः । तत्र चित्रकसोभाञ्जनकाविल्येको लेपः, गुडूच्यपामार्गदेवदारूणीति द्वितीयः, एवमन्येऽपि वेद्याः । आर्ये ।

जलवाप्यलोहकेसरपत्रप्लवचन्दनमृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥ ८८ ॥

स०–जलादीनि भागोत्तराणि सिद्धं पित्तकफकुष्ठे प्रलेपः । जल–वालकम् । वाप्य–कुष्ठम् । जघनचपलाऽऽर्या ।

तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ।
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्च ॥ ८९ ॥
क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके च चर्मदले ।
शीताः प्रदेहसेका व्यधनविरेकौ घृतं तिक्तम् ॥९०॥

स०–तिक्तद्रव्यसाधितैर्घृतैस्तथा जलेन धौतैर्घृतैरभ्यङ्गो दाहयुक्तेषु कुष्ठेषु हितः । क्लेदे च प्रकर्षेण पतति सति तैलैश्चन्दनादियुक्तैरभ्यङ्गः, चशब्दाद्घृतैश्च, प्रकृतत्वाद्धितः । अङ्गे दाहादिमति शीतप्रदेहादयास्तिक्तकं च घृतं हितम् । व्यधन–सिराव्यधः ।

खदिरवृषनिम्बकुटजाः श्रेष्ठाकृमिजित्पटोलमधुपर्ण्यः
अन्तर्बहिः प्रयुक्ताः कृमिकुष्ठनुदः सगोमूत्राः ॥ ९१ ॥

स०–खदिरादयो गोमूत्रान्विता अभ्यन्तरं बाह्यतश्च प्रयुक्ताः कृमियुतकुष्ठहृतः ।

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्रे ॥ ९२ ॥

स०–वाताधिकेषु कुष्ठेषु घृतमग्रे–पूर्वं, हितम् । श्लेष्माधिकेषु च वमनम् । पित्तोत्तरेषु रक्तमोक्षो विरेचनं चाग्रे हितम् ।

ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम् ।

१ 'श्विनो ले' स च । २ "भागोत्तराणि–यथोत्तरमेकभागवृद्धानि ।" इति चक्र । ३ 'के सचर्मे' स च । ४ 'तैस्तिक्तघृतैस्त' ड । ५ 'दिभियु' ट ड । ६ अस्याग्रे "प्रलेपोद्वर्तनस्नानपानभोजनकर्मणि । शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम् ॥१॥" इति इ पुस्तकेऽधिक श्लोक । ७ 'चाग्र्यम् ।' अ.इ । "अग्र्यमिति पाठे श्रेष्ठम् ।" इति श्रीकण्ठशिवदासौ । ८ "अग्रे इति सर्पिरादिषु योज्यम्, तेन वातोत्तरादिषु सर्पिरादि प्रथमं कर्तव्यम्, तदनु वक्ष्यमाणा चिकित्सा कार्येत्यर्थः ।" इति चक्र । "अग्रे इति पूर्वरूपेष्वेव" इति चरकोपस्कारे योगीन्द्रनाथसेन । ९ 'मोक्षण वि' ड. ।

संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम्॥९३॥

स०-निर्हृतास्रदोषाणां तथा संशोधिताशयानां कुष्ठानां ये लेपा युज्यन्ते, तेषां सद्यः-शीघ्रमेव, सिद्धिः-आमयनिवृत्तिः, भवति।

अत एवेदमाह—

दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते शमने।
स्नेहे च कालयुक्ते न कुष्ठमतिवर्तते साध्यम्॥९४॥

स०-दोषे-वातादौ, हृते रक्तेऽपनीते बाह्येऽभ्यन्तरे शमने कृते स्नेहे कृते च काले युक्ते कुष्ठं साध्यं नातिवर्तते। अपि तूपशाम्यति। आर्या षद्, अन्यत्र जघनचपला (?)।

बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान्।
दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु॥ ९५॥

स०-बहुदोषः कुष्ठी प्राणान् रक्षता भिषजा पुनः पुनः संशोध्यः। ऐकवेलयैव कस्मान्न शोध्यते? इत्याह-यस्माद्दोषेऽतिमात्रहृते सत्त्वबलं नरं वातो द्रागेव हन्यात्। आर्या।

पक्षात्पक्षाच्छर्दनान्यभ्युपेया
न्मासान्मासाच्छोधनान्यप्यधस्तात्।
शुद्धिर्मूर्ध्नि स्यात्रिरात्रात्रिरात्रात्
षष्ठे षष्ठे मास्यसृङ्मोक्षणं च॥ ९६॥

स०-असौ कुष्ठी पक्षेण वमनानि सेवेत। मासान्मासादधः शोधनानि भजेत्। शिरसि त्रिरात्रे त्रिरात्रे शुद्धिः स्यात्। षष्ठे षष्ठे मासि रक्तमोक्षश्च स्यात्।

यो दुर्वान्तो दुर्विरिक्तोऽथवा स्यात्
कुष्ठी दोषैरुद्धतैर्व्याप्यतेऽसौ।
निःसन्देहं यात्यसाध्यत्वमेवं
तस्मात् कृत्स्नान्निर्हरेदस्य दोषान्॥ ९७॥

स०-यः कुष्ठी कृतासम्यग्वमनविरेचनः स्यात्, असावुद्धतैर्दोषैर्व्याप्यते। एवं निश्चयेनासाध्यत्वं याति। तस्माद्धेतोरस्य-कुष्ठिनः, कृत्स्नान्-निखिलान्, दोषान्निर्हरेत्। शालिनीवृत्तम्(त्ते)।

१ 'भवेत्तेषाम्' स च। २ "बहुशः इति बहून् वारान् स्तोकस्तोकनिर्हरणेन पुनः पुनः शोध्यः। एकदा हि भूरिदोषहरणे बलक्षयो महात्ययः स्यात्। अत एवाह-दोषे ह्यतिमात्रहृत इत्यादि। दोष इति जातावेकवचनम्, तेन कफपित्तयोरपि ग्रहणम्। किंवा दोष इति एकवचनेनैव एकदोषस्याप्यतिमात्रहरणे वायुर्हन्यादिति।" इति चक्र। ३ 'एकाहेनैव' ट.। ४ 'भन चाप्य० मूर्ध्नि स्या' स स.। ५ 'क्षणानि।' इ।

व्रतदमयमसेवा त्यागशीलाभियोगो
द्विजसुरगुरुपूजा सर्वसत्त्वेषु मैत्री।
शिवशिवसुतताराभास्कराराधनानि
प्रकटितमलपापं कुष्ठमुन्मूलयन्ति॥ ९८॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने कुष्ठचिकित्सितं नामैकोनविंशोऽध्यायः॥ १९॥

स०-व्रतादिसेवा त्यागाद्यभ्यासो द्विजादिपूजा सर्वसत्त्वमैत्री शिवाद्याराधनानि कुष्ठं प्रकटितमलपापं नाशयन्ति। मालिनीवृत्तम्।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां चतुर्थे चिकित्सितस्थाने कुष्ठचिकित्सितं नामैकोनविंशोऽध्यायः समाप्तः॥ १९॥



## विंशोऽध्यायः।

अस्मादनन्तरं श्वित्रकृमिचिकित्सितं व्याख्यायते। चिकित्सासाम्यमित्याह—

अथातः श्वित्रकृमिचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः।
(गद्यसूत्रे॥ २॥)

कुष्ठादपि बीभत्सं यच्छीघ्रतरं च यात्यसाध्यत्वम्।
श्वित्रमतस्तच्छान्त्यै यतेत दीप्ते यथा भवने॥ १॥

स०-यत्-यस्मात्, कुष्ठादपि बीभत्सं-जुगुप्सितं निन्द्यं, तथा शीघ्रतरमसाध्यत्वं श्वित्रं याति। अतः-अस्माद्धेतोः, तस्य-श्वित्रस्य शमाय, यत्नं कुर्यात्। यथा ज्वलिते गृहे। आर्या।

१ "व्रतः-शाश्वतो नियमश्चान्द्रायणादिः। दमः-अक्रोधादित्वम्। यमः-इन्द्रियजयः। प्रकटितमलपाप-प्रकाशितदोषपापम्, तेन हि कुष्ठेन मला वातादयो दुष्टा दुष्टं चादृष्टं कर्म प्रकाश्यते।" इतीन्दुः। २ 'जिनजिनसुत' इ स द। ३ इदं श्वित्रकृमिचिकित्सितं चरके चि० ७ अध्याये वि० ७ अध्याये च, सुश्रुते चि० ९ अध्याये उ० ५४ अध्याये च, अष्टाङ्गसङ्ग्रहे चि० २२ अध्याये चास्ति वर्णितम्।

संशोधनं विशेषात्प्रयोजयेत्पूर्वमेव देहस्य ।
श्वित्रे स्रंसनमग्र्यं मलयूरस इष्यते सगुडः ॥ २ ॥
तं पीत्वाऽभ्यक्ततनुर्यथाबलं सूर्यपादसन्तापम् ।
सेवेत विरिक्ततनुस्त्र्यहं पिपासुः पिबेत्पेयाम् ॥ ३ ॥

स०-प्रथममेव शरीरस्य संशोधनं विशेषेण प्रयोजयेत् । तदेवाह-श्वित्रे मलयूरसो-बाकुचीक्वाथ, सह गुडया-स्नुह्या, सगुडो विरेचनमिष्यते । मुखचपला । तं-क्वाथं, पीत्वाऽभ्यक्तशरीरः सन् यथाशक्ति सूर्यकिरणसन्तापं भजेत् । विरिक्तश्च सन् पिपासितः पेया त्रीणि दिनानि पिबेत् ।

श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात् ।
स्फोटेषु निःस्रुतेषु प्रातः प्रातः पिबेत् त्रिदिनम् ॥४॥
मलयूमसनं प्रियङ्गुं शतपुष्पां चाम्भसा समुत्क्वाथ्य ।
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ॥ ५ ॥

स०-श्वित्रे साभ्यङ्गे ये स्फोटा उद्भवन्ति, तान्-स्फोटकान्, कण्टकेन भिन्द्यात् । स्फोटेषु निःस्रुतेषु सत्सु प्रातः प्रातस्त्रीणि दिनानि मलय्वादीनि समुत्क्वाथ्य पिबेत् । पालाशं वा क्षारं फाणितयुक्तं यथाशक्ति पिबेत् । तिस्र आर्या ।

फल्ग्वक्षवृक्षवल्कलनिर्यूहेणेन्दुराजिकाकल्कम् ।
पीत्वोष्णस्थितस्य जाते स्फोटे तक्रेण भोजनं निर्लवणम् ॥ ६ ॥

स०-फल्गोरक्षस्य च त्वचो यो निर्यूहः-क्वाथ, तेन [इन्दुराजिकायाः-] बाकुच्याः, कल्कं पीत्वा उष्णे-आतपे, स्थितस्य स्फोटेषु जातेषु सत्सु तक्रेण सह भोजनं निर्लवणं हितम् । आर्या गीतिः (?) ।

गव्यं मूत्रं चित्रकव्योषयुक्तं
सर्पिःकुम्भे स्थापितं क्षौद्रमिश्रम् ।
पक्षादूर्ध्वं श्वित्रिणा पेयमेतत्
कार्यं चास्मै कुष्ठदिष्टं विधानम् ॥ ७ ॥

स०-गोमूत्रं चित्रकादियुक्तं माक्षिकान्वितं घृतकुम्भे स्थापितं पक्षं यावत् पक्षादूर्ध्वं श्वित्रवतैतत्पेयम् । अस्मै च-श्वित्रिणे, कुष्ठोक्तं विधानम् । अस्मै इति क्रियाग्रहणात्सम्प्रदानत्वम् । [ शालिनीवृत्तम् । ]

मार्कवमथवा खादेद्भृष्टं तैलेन लोहपात्रस्थम् ।
बीजकशृतं च दुग्धं तदनु पिबेच्छ्वित्रनाशाय ॥ ८ ॥

स०-भृङ्गराजं वा तैलेन भृष्टं लोहपात्रस्थं खादेत् । भुक्त्वा च पश्चाद्बीजकशृतं क्षीरं श्वित्रशान्त्यै पिबेत् । आर्या ।

पूतीकार्कव्याधिघातस्नुहीनां
मूत्रे पिष्टाः पल्लवा जातिजाश्च ।
घ्नन्त्यालेपाच्छ्वित्रदुर्नामदद्रू-
पामाकोठान् दुष्टनाडीव्रणांश्च ॥ ९ ॥

स०-पूतीकादीनां पल्लवा गोमूत्रे[1] पिष्टास्तथा जातिपल्लवा गोमूत्रे[1] पिष्टाः प्रलेपेन श्वित्रादीन् घ्नन्ति ।

द्वैपं[2] दग्धं चर्म मातङ्गजं वा
श्वित्रे लेपस्तैलयुक्तो वरिष्ठः ।

स०-द्वीपिसम्बन्धि चर्म दग्धं हस्तिजं च चर्म दग्धं तैलान्वितो[3] लेपः श्वित्रेऽतिशयेन वरः ।

पूतिःकीटो राजवृक्षोद्भवेन
क्षारेणाक्तः श्वित्रमेकोऽपि[4] हन्ति ॥ १० ॥

स०-पूतिः कीटो राजवृक्षजेन क्षारेण लेपत एक एव श्वित्रं हन्ति । पूतिः कीटो-वर्षाकालोद्भवः पिलिन्दिकेति लोके प्रसिद्धः । शालिन्यौ वृत्ते ।

रात्रौ गोमूत्रे वासितान् जर्जराङ्गा-
नह्नि च्छायायां शोषयेत्स्फोटहेतून्[5] ।
एवं वारांस्त्रींस्ततः श्लक्ष्णपिष्टैः
स्नुह्याः क्षीरेण श्वित्रनाशाय लेपः ॥ ११ ॥

स०-स्फोटहेतून्-भल्लातकान्, जर्जरीकृतान् निशि गोमूत्रे स्थितान् दिवसे छायायां शोषयेत् । एवं त्रीन् वारान् मूत्रस्थितान् शोषितांश्च । ततः-अनन्तरं, तैः स्नुहीक्षीरेण श्लक्ष्णपिष्टैः श्वित्रशान्त्यै लेपः । वैश्वदेवी[6] ।

अक्षतैलद्रुता[7] लेपः कृष्णसर्पोद्भवा मषी[8] ।
शिखिपित्तं तथा, दग्धं ह्रीबेरं वा तदाप्लुतम्[9] ॥ १२ ॥

स०-कृष्णसर्पजा मषी अक्षतैलेन द्रुता लेपः । मयूरपित्तं च लेपः पूर्वगुणः । अथवा, ह्रीबेरं दग्धं तेन-अक्षतैलेनालोडितं, लेपस्तद्वत् ।

---

१ "मलयूः-काकोदुम्बरिका ।" इति चक्रडल्हणौ । "काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ।" इत्यमरः । "मलयूः-सोमराजिः ।" इतीन्दुव्याख्यानमरुणदत्तव्याख्यानं च निघण्ट्वमरादिसम्मतत्वादयुक्तम् । २ 'ससेवेत विरिक्तस्त्र्यं' स च । ३ "श्वित्रेऽङ्गे-श्वित्रयुक्तेऽङ्गे ।" इति चक्रः । ४ 'त् पक्षम् ।' अ स ड, स.च । ५ 'सस्थित' स ह. । ६ 'त्रिभि पे' अ.ड.,स.ह. । ७ 'छदिष्टं' स.ह. ।

१ 'त्रेण पि' ट । २ "द्वीपी-चित्रकायो व्याघ्र, तस्येदं चर्म द्वैपम् ।" इति डल्हण । ३ 'न्वित ले' ट ड । ४ 'को निहन्ति' अ स ह । 'कोऽपहन्ति' स मू । ५ 'न् शोषयेत, शोषि' ट. । ६ 'वीछन्द ।' ट । ७ 'लद्रुतो ले' ड । 'लकृतो ले' इति क्वचित् । ८ "कृष्णसर्पो यदा दह्यमानोऽतिकृष्णत्वं गच्छति तदा तच्चूर्णं मषीत्युच्यते, स एवातिदह्यमानो यदा शुक्लत्वं याति तदा क्षार इत्युच्यते ।" इति डल्हणः । ९ "तथेत्यक्षतैलद्रुतम् । तदाप्लुतं-शिखिपित्ताप्लुतम् ।" इतीन्दुः ।

कुडवोऽवल्गुजबीजाद्धरितालचतुर्थभागसम्मिश्रः ।
मूत्रेण गवा पिष्टः सवर्णकरणं[1] परं श्वित्रे ॥ १३ ॥

स०-बाकुचीबीज पलचतुष्टय हरितालपल गोमूत्रेण पिष्ट श्वित्रे सवर्णकर स्यात् । आर्या ।

क्षारे सुदग्धे गजलिण्डजे[2] च[3]
गजस्य मूत्रेण[4] परिस्रुते च ।
द्रोणप्रमाणे दशभागयुक्तं
दत्त्वा पचेद्बीजमवल्गुजानाम्[5] ॥ १४ ॥
श्वित्रं जयेच्चिक्कणतां गतेन
तेन प्रलिम्पन्[6] बहुशः प्रघृष्टम् ।
कुष्ठं मषं[7] वा तिलकालकं वा
यद्वा व्रणे स्यादधिमांसजातम् ॥ १५ ॥

स०-गजपुरीषजे क्षारे सुदग्धे द्रोणप्रमाणे यथाप्रमाण गजस्य मूत्रेण क्षारविधिना परिस्रुतेऽस्मिन् बाकुचीबीज दत्त्वा पचेत् । किम्भूतम् ? दशभागयुक्तम्,-दशभिर्भागै प्रकृतत्वात् क्षारस्य सम्बन्धिभिर्मिश्रितम् । तेन चिक्कणता-मदनरूपता, गतेन पुरुषो बहुश प्रघृष्ट श्वित्र प्रलिम्पन् जयेत्, कुष्ठादींश्च । अधिमासरूपतो यच्च व्रणे स्यात्तच्च जयेत् । उपजाती ।

भल्लातकं[10] द्वीपिसुधार्कमूलं[11]
गुञ्जाफलं त्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि पञ्च
क्षारद्वयं लाङ्गलिका च पक्त्वा ॥ १६ ॥
स्नुगर्कदुग्धे[12] घनमायसस्थं
शलाकया तद्विदधीत लेपम् ।
कुष्ठे किलासे तिलकालकेषु
मषेषु[13] दुर्नामसु चर्मकीले ॥ १७ ॥

स०-भल्लातकादिक स्नुगर्कयोर्दुग्धे पक्त्वा घनमायसपात्रे स्थित तत्-एतत्, शलाकया लेप कुष्ठादिषु विदधीत । इन्द्रवज्रोपजाती ।

शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव[1] प्रशाम्यति क्षीणपापस्य ॥ १८ ॥

इति श्वित्रचिकित्सितम् ।

स०-श्वित्र कस्यचिदेव नरस्य क्षीणकल्मषस्य शुद्ध्यादिभि शाम्यति । आर्या । इति श्वित्रचिकित्सा ।

अस्मादनन्तर कृमिचिकित्सितं व्याख्यायते, चिकित्सा सामान्यात् ।

## अथ कृमिचिकित्सितम् ।

स्निग्धस्विन्ने गुडक्षीरमत्स्याद्यैः कृमिणोदरे ।
उत्क्लेशितकृमिकफे शर्वरीं तां सुखोषिते ॥ १९ ॥
सुरसादिगणं मूत्रे क्राथयित्वाऽर्धवारिणि ।
तं कषायं कणागालकृमिजित्कल्कयोजितम् ॥ २० ॥
सतैलस्वर्जिकाक्षारं युञ्ज्याद्बस्तिं ततोऽहनि ।
तस्मिन्नेव निरूढं तं पाययेत विरेचनम् ॥ २१ ॥
त्रिवृत्कल्कं फलकणाकषायालोडितं[2] ततः ।
ऊर्ध्वाधःशोधिते कुर्यात्पञ्चकोलयुतं क्रमम् ॥ २२ ॥
कटुतिक्तकषायाणां कषायैः परिषेचनम्[3] ।
काले विडङ्गतैलेन ततस्तमनुवासयेत् ॥ २३ ॥

स०-कृमिणमुदर यस्येति पामादित्वान्नप्रत्यय । तस्मिन् कृमिणोदरे नरे स्निग्धस्विन्ने तथा गुडादिभिरुत्क्लेशिता -स्वस्थानाच्चाविता, कृमय कफश्च यस्य तस्मिंस्तथाभूत उदरे तथा समुत्क्लेशितादनन्तर ता रात्रिं सुखोषिते सति सतैलस्वर्जिकाक्षार बस्तिं युञ्ज्यात् । कथम् ? इत्याह-सुरसादिगण (हृ सू अ १५।३०) गोमूत्रेऽर्धवारिणि क्राथयित्वा ततस्त कषाय कणादीना कल्केन योजित-मिश्र कृत्वा । ततो-निरूहादनन्तरं, तस्मिन्नेवाहनि त-निरूढ, विरेचन त्रिवृत्कल्क फलादिकषायालोडित पाययेत् । तत -अनन्तरं, ऊर्ध्वाध शोधिते तस्मिन् पञ्चकोलयुत क्रम-पेयाविलेप्यादिक, कुर्यात् । तत कट्वादिभि कषायै परिषेचित समनन्तर यदा सन्धुक्षितोऽग्निस्तदा तस्मिन् काले विडङ्गतैलेन तमनुवासयेत् ।

शिरोरोगनिषेधोक्तमाचरेन्मूर्धगेष्वनु ।
उद्रिक्ततिक्तकटुकमल्पस्नेहं च भोजनम्[4] ॥ २४ ॥

---

१ 'रण प' स स । २ 'जलेण्डजे तु ग' स सु । "गजलेण्ड-गजगण्डीरक, नदीपिप्पलिकेत्यन्ये ।" इति डल्हण । "जलगण्डजे चेति पाठात् जलगण्ड-समठ । जलगण्डो-जल पिप्पलीत्यपरे, जलगण्डीरक इत्यन्ये ।" इति श्रीकण्ठशिवदासौ । ३ 'जे वा ग' अ स स । ४ 'त्रे च प' अ. । 'त्रेण बहुस्रुते' स सु चक्र वृ । "गजस्य मूत्रेणेत्यनन्तर पक्व इति शेष । बहुस्रुत इति एकविंशतिवार सप्तवार वा परिस्रुते ।" इति शिवदासश्रीकण्ठौ । ५ 'ल्गुजस्य ।' स सु चक्र वृ । ६ 'प्रलिप्त ब' स द्व । ७ 'मश वा' इ स स । ८ 'सभूतम्' स मू । ९ 'मूत्रे क्षा' ट. । १० "अत्र भल्लातकाद्यर्कान्ताना मूलमिति केचित् । अन्ये तु भल्लातकस्य बीजम्, तस्यैव सर्वत्रोपयोगादित्याहु । चित्रकादित्रयस्य मूलम् ।" इति शिवदास । "द्वीपि -चित्रक । लाङ्गलिका-विशल्या गर्भपातनी च । स्नुगर्कदुग्धे मिश्रीभूते ।" इतीन्दु । ११ 'तकद्वीपिसुधार्कमूलगुञ्जाफलत्र्यू' इ स द्व वृन्द । १२ 'दुग्धैर्घन' स.मू । १३ 'मशेषु' अ इ स स । 'अशेषदु' चक्र वृ ।

१ "कस्यचिदेव क्षीणपापस्य-अक्षीणपापस्य न कथञ्चिदपि शम याति ॥ अत्र हि विरेचनशब्देन दोषरेचनात् वमनमप्युच्यते । तत इति त्रिवृत्प्रयोगात् ।" इतीन्दु । "कस्यचिदेव प्रशाम्यतीत्यनेन श्वित्राणा दुरुपगमतामाह ।" इति चक्र । २ "यालुडित" स मू । 'यालुलित' स.स । ३ 'चयेत्' अ । 'षेचितम्' स मू । ४ 'भोजयेत् ।' इति क्वचित ।

स०–शिरोरोगप्रतिषेधे यदुक्त तन्मूर्धगेषु कृमिष्वाचरेत् । अनु–पश्चात्, प्रभूततिक्तकटुकमल्पस्नेह च भोजनमाचरेत् ।

**विडङ्गकृष्णामरिचपिप्पलीमूलशिग्रुभिः ।**
**पिबेत्सस्वर्जिकाक्षारैर्यवागूं तक्रसाधिताम् ॥ २५ ॥**

स०–तथा विडङ्गादिभिस्तक्रसाधिता पेया पिबेत् ।

**रसं शिरीषकिणिहीपारिभद्रककेम्बुकात् ।**
**पलाशबीजपत्तूरपूतिकाद्वा पृथक् पिबेत् ॥ २६ ॥**
**सक्षौद्रं, सुरसादीन् वा लिह्यात्क्षौद्रयुतान् पृथक् ।**

स०–शिरीषादिरस पिबेत् । किणिही–गिरिकर्णिका । पलाशबीजादीना वा रस माक्षिकान्वित पृथक् पिबेत् । अथवा, सुरसादीन् (द्र सू अ १५।३०) क्षौद्रयुतान् पृथग् लिह्यात् ।

**शतकृत्वोऽश्वविट्चूर्णं विडङ्गक्वाथभावितम् ॥ २७ ॥**
**कृमिमान् मधुना लिह्याद्भावितं वा वरारसैः ।**

स०–अश्वपुरीषचूर्णं बहून् वारान् विडङ्गक्वाथेन भावितमथवाऽश्वशकृच्चूर्णं त्रिफलाक्वाथेन भावित मधुना कृमिमान् लिह्यात् ।

**शिरोगतेषु कृमिषु चूर्णं प्रधमनं च तत् ॥ २८ ॥**

स०–शिरोगतेषु कृमिषु तत्–शिरोरोगनिषेधोक्त, चूर्णं प्रधमन–नस्य, चाचरेत् ।

**आखुकर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः ।**
**पक्त्वा पूपलिकां खादेद्धान्याम्लं च पिबेदनु ॥२९॥**
**सपञ्चकोललवणमसान्द्रं तक्रमेव वा ।**

स०–तथा, मूषककर्णीपल्लवै सूक्ष्मचूर्णितै शालिचूर्णमिश्रितै पूपलिका पक्त्वा खादेत् । तदनु–पश्चाच, धान्याम्ल पिबेत् । अथवा, तक्र–मथित, पञ्चकोललवणयुत पिबेत् ।

**नीपमार्कवनिर्गुण्डीपल्लवेष्वप्ययं विधिः ॥ ३० ॥**
**विडङ्गचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत् ।**

स०–नीपादिष्वयमेव–पूर्वोक्तो मूषककर्णीपल्लवविधि ,कल्प्य । अथवा, पिष्टैर्विडङ्गचूर्णमिश्रितैर्भक्ष्यान् प्रकल्पयेत् ।

**विडङ्गतण्डुलैर्युक्तमर्धांशैरातपे स्थितम् ॥ ३१ ॥**
**दिनमारुष्करं तैलं पाने बस्तौ च योजयेत् ।**
**सुराह्वसरलस्नेहं पृथगेवं च कल्पयेत् ॥ ३२ ॥**

स०–अरुष्करज तैल पाने बस्तौ च योजयेत् । किम्भूतम्? अर्धभागप्रमाणैर्विडङ्गतण्डुलैर्मिश्रित तथा दिनमातपे स्थितम् । दिनमित्यत्यन्तसयोगे द्वितीया । देवदार्वादितैल पृथगेव–विडङ्गतण्डुलान्वितमातपे स्थित, कल्पयेत् ।

**पुरीषजेषु सुतरां दद्याद्बस्तिविरेचने ।**

स०–पुरीषजेषु कृमिषु सुतरा बस्तिं विरेचन च दद्यात् ।

**शिरोविरेकं वमनं शमनं कफजन्मसु ॥ ३३ ॥**

स०–कफजन्मसु कृमिषु शिरोविरेक–नस्य, वमन शमन च कुर्यात् ।

**रक्तजानां प्रतीकारं कुर्यात्कुष्ठचिकित्सितात् ।**

स०–रक्तोत्थाना कृमीणा कुष्ठचिकित्सितात् प्रतीकारं विदध्यात् । ल्यब्लोपे पञ्चमी, कुष्ठचिकित्सितोक्तमपेक्ष्येत्यर्थ ।

**इन्द्रलुप्तविधिश्चात्र विधेयो रोमभोजिषु ॥ ३४ ॥**

स०–रोमभोजिषु कृमिष्विन्द्रलुप्तविधि (द्र उ अ २४।२८) कार्य ।

**क्षीराणि मांसानि घृतं गुडं च**
**दधीनि शाकानि च पर्णवन्ति ।**

१ 'मधुकपि' अ । २ 'क्षारा यवा' इ । ३ "किणिही–अपामार्ग । पारिभद्रको–मन्दार ॥ शतकृत्व –बहून् वारान् ॥ तच्च–भाविताश्वविशश्चूर्णम् ।" इतीन्दु । ४ 'बहुकृत्वो' स मू । 'सप्तकृत्व ' स सु । 'अष्टकृत्वो दशकृत्वो वा' इति चरके । ५ प्रधमन–नासाया नाडीद्वारा चूर्णप्रक्षेपणम् । ६ 'आखुपर्णी' अ स मू चक्र वृन्द । 'पत्रैर्मूषिकपर्ण्या वा सु' स सु । "मूषिकपर्णी–दन्ती, अन्ये मूषिककर्णाख्य द्रव्यान्तरमाहु ।" इति डल्हणश्रीकण्ठौ । "आखुपर्णी–द्रवन्ती मूषकपर्णी दन्तीभेदो वा ।" इति शिवदास । "स्यादाखुकर्णी कृषिका द्रवन्ती चित्रा सुकर्ण्युन्दुरुकर्णिका च।" इति राजनिघण्टु । *७ "किसलय–अभिनवोद्भिन्न पल्लवम् । पिष्टेन–शालिपिष्टेन मिश्रितै । अनु धान्याम्ल च पिबेत् । किम्भूत धान्याम्लम्? सपञ्चकोलादिकम् । अथवा, असान्द्र–तनु स्वच्छ, तक्रमेव केवलमनु पिबेत् ॥ नीपो–धूलिकदम्ब ।" इतीन्दु । "पिष्टमिश्रितै –यवपिष्टमिश्रितै , तस्य विशेषेण कृमिहरत्वात् । धान्याम्ल–काञ्जिकम् । यद्यपि 'क्षीराणि मासानि घृतानि चैव' इत्यादि ग्रन्थोक्तादम्लवर्जनादत्र काञ्जिकस्यापि वर्जन प्राप्नोति, तथाऽपि काञ्जिकस्य प्रायोगिकत्वात् कृमिहरत्वाच्च काञ्जिकानुपानम् । तथाहि गुणोपवर्णने काञ्जिक कृमिघ्नत्वेन दृष्टम् ।" इति डल्हण । "आखुपर्णीपत्र पिष्टकसम पिष्ट्वा पिष्टकेन सहैकीकृत्य पोलिका कर्तव्या । आखुपर्णीपत्रस्य भागत्रय पिष्टस्यैको भाग इति वा मानव्यवस्था ।" इति श्रीकण्ठ ।

१ सपञ्चकोललवणमिति पद धान्याम्ले तक्रे च योजनीयम् । २ 'निम्बापामार्गेति' इति क्वचित् । ३ 'तपस्थि' अ ड । ४ 'श्चापि वि' स सु । ५ "यद्यपि 'सङ्क्षेपत क्रियायोगो निदानपरिवर्जनम् ।' इति वाक्यादेव क्षीरादीना निषेधविधि सिद्ध, तथाऽपि क्षीरादीना प्रतिषेधकरण नियमार्थम् । तेन कृमीणा निदानमपि क्षीरादिक मदात्यये मद्यवत् भेषज माभूदित्यर्थ ।" इति डल्हण । ६ 'घृतानि चैव द' स सु वृन्द ।

**समासतोऽम्लान्मधुरान् रसांश्च**
**कृमीन् जिहासुः परिवर्जयेत्तु ॥ ३५ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सितस्थाने श्वित्रकृमिचिकित्सितं नाम विंशोऽध्यायः ॥ २० ॥**

स०–कृमीन् जिहासुः क्षीरादीन् वर्जयेत् । उपजातिवृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां चतुर्थे चिकित्सितस्थाने श्वित्रकृमिचिकित्सितं नाम विंशोऽध्यायः समाप्तः ॥ २० ॥



## एकविंशोऽध्यायः ।

अस्मादनन्तरं वातव्याधिचिकित्सितं व्याख्यातुमुपक्रम्यते, सर्वचिकित्साबाविर्तित्वात् ।

**अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत् ।**
**वायुं सर्पिर्वसामज्जतैलपानैर्नरं ततः ॥ १ ॥**
**स्नेहक्लान्तं समाश्वास्य पयोभिः स्नेहयेत्पुनः ।**
**यूषैर्ग्राम्योदकानूपरसैर्वा स्नेहसंयुतैः ॥ २ ॥**
**पायसैः कृसरैः साम्ललवणैः सानुवासनैः ।**
**नावनैस्तर्पणैश्चान्नैः सुस्निग्धैः, स्वेदयेत्ततः ॥ ३ ॥**
**स्वभ्यक्तं स्नेहसंयुक्तैः शङ्करादैः पुनः पुनः ।**

स०–केवलं–शुद्धं, तथा निरुपस्तम्भं–अन्येनाधानकेन समीपसम्भविनाऽनाधारितं, ईदृशं वायुं स्नेहैरादावेवोपाचरेत् । कथम्? इत्याह–सर्पिरित्यादि । ननु, तैलस्य पवनविजये प्राधान्यादेव निर्देशः कर्तुं युक्तः, तैलवसामज्जसर्पिःपानैरिति । युक्तमाह भवान् । किन्तु, आजन्मसात्म्यात् सर्पिः प्रधानमनवरतमिति सर्पिः प्रागुपन्यस्तम् । सर्पिःपानादिभिस्तावत् स्नेहयेत् यावत् "स्नेहोद्वेगः क्लमः" (हृ. सू. अ. १६।३०) इत्यादि स्नेहलक्षणं स्यात् । स्नेहक्लान्तं च नरं पयोभिः समाश्वास्य पुनः यूषादिभिः स्नेहान्वितैः स्नेहयेत् । तथा तर्पणैश्चान्नैः सुस्निग्धैः स्नेहयेत् । ततः–अनन्तरं, सुष्ठ्वभ्यक्तं सन्तं शङ्करादैः–स्वेदैः स्वेदविधिगदितैः, पुनः पुनः स्वेदयेत् ।

एवं स्वेदिते सति यो गुणः स्यात्तमाह—

**स्नेहाक्तं स्विन्नमङ्गं तु वक्रं स्तब्धं सवेदनम् ॥ ४ ॥**
**यथेष्टमानामयितुं सुखमेव हि शक्यते ।**

स०–स्नेहाभ्यक्तं गात्रं स्विन्नं सद्वक्रं तथा स्तब्धं तथा सरुजं यथेष्टं सुखमेवानामयितुं शक्यते । "ज्वलह्वलह्मलनमामनुपसर्गाणां वा मित्त्वम् ।" इति नामयितुमित्यत्र न ह्रस्वत्वम् ।

एतदेव दृष्टान्तद्वारेण प्रतिपादयन्नाह—

**शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ॥ ५ ॥**
**शक्यं कर्मण्यतां नेतुं किमु गात्राणि जीवताम् ।**

स०–हि–यस्मात्, शुष्काण्यपि काष्ठानि स्नेहस्वेदसंयोजनेन कर्मण्यतां नेतुं शक्यन्ते । किमुत जीवतां गात्राणि न शक्यन्ते? शक्यन्त एवेत्यर्थः । शक्यमिति पूर्वोक्तक्रममात्रे नपुंसकत्वमेकत्वं च । यथा कालिदासस्य–"शक्यमङ्गुलिभिरुद्धृतैरधः शाखिनां पतितपुष्पकोमलैः । पत्रजर्जरशशिप्रभालवैरेभिरुत्कचयितुं तवालकान् ॥" इति ।

**हर्षतोदरुगायामशोफस्तम्भग्रहादयः ॥ ६ ॥**
**स्विन्नस्याशु प्रशाम्यन्ति मार्दवं चोपजायते ।**

स०–स्विन्नस्य पुंसो हर्षादयः शीघ्रं प्रशाम्यन्ति । मृदुत्वं च गात्रेषु जायते ।

**स्नेहश्च धातून् संशुष्कान् पुष्णात्याशूपयोजितः ॥७॥**
**बलमग्निबलं पुष्टिं प्राणांश्चास्याभिवर्धयेत् ।**

स०–तथा, स्विन्नस्य स्नेहः उपयोजितो धातून् विशुष्कान् द्रागेव पुष्णाति । तथा, अस्य–वातरोगिणो, बलादीनभिवर्धयेत् ।

**असकृत्तं पुनः स्नेहैः स्वेदैश्च प्रतिपादयेत् ॥ ८ ॥**
**तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ।**

स०–तं–आतुरं, पुनः स्नेहस्वेदाभ्यां योजयेत् । तथा–एवं कृते, स्नेहमृदौ कोष्ठे सति सर्वे वातरोगा नश्यन्ति ।

---

१ 'न् हिमांश्च' स सु वृन्द । २ 'जिघांसु' स हृ स सु वृ । ३ 'येच्च ।' स स.वृ । 'येत्तु ।' स सु । ४ 'क्रमते' ट । ५ 'धित्वात्' ट । ६ इदं वातव्याधिचिकित्सितं चरके चि० २७।२८ अध्याययोः सि० ९ अध्याये च, सुश्रुते चि० ४।५ अध्याययोः, अष्टाङ्गसङ्ग्रहे चि० २३ अध्याये चास्ति वर्णितम् । ७ "स्नेहक्लान्तमिति स्नेहपानोद्विग्नं स्नेहग्लानं च । समाश्वास्येति विश्रमयित्वा । स्नेहयेदिति पदं तर्पणैः पानैः(श्चान्नै)रित्यन्तं यावदनुवर्तते ।" इति चक्र । ८–९ 'ग्राम्याम्बुजानूप' 'स्निग्धः स्वे' स च । १० 'न्येनाधारित' ट ।

१ 'सर्पिष प्रागुपन्यास ।' ट. । २ 'ह्वाक्लस्वि' अ. । ३ "गौद्वा । एषा मित्त्व वा ।" सि कौ । ४ 'पनाहनैः' अ. । ५ 'त्याशु प्रयो' इ स च । ६ 'प्राण चास्या' इ । ७ 'श्चाप्यभि' स च. । ८ 'दैश्चाप्युपपा' स च. । ९ 'ति वात' ट. ।

**यद्येतेन सदोषत्वात्कर्मणा न प्रशाम्यति ॥ ९ ॥**
**मृदुभिः स्नेहसंयुक्तैर्भेषजैस्तं विशोधयेत् ।**

स०–अनेन कर्मणा चेन्न प्रशाम्यति वातामयस्तदा त–वातामयिन, मृदुभिर्द्रव्यै –कर्णिकारादिभि , स्नेहान्वितैर्विशोधयेत् ।

**घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ॥ १० ॥**
**पयसैरण्डतैलं वा पिबेद्दोषहरं शिवम् ।**

स०–तिल्वकेन पक्व सातलया वा पक्व क्षीरेण वा सहैरण्डतैल पिबेत् । तच्च पीत दोषहर शिव च स्यात् ।

ननु, किमित्यनुलोमनं क्रियते ? इत्याह—

**स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ॥ ११ ॥**
**स्रोतो बद्ध्वाऽनिलं रुन्ध्यात्तस्मात्तमनुलोमयेत् ।**

स०–यस्मात् स्निग्धादिभिराहारैर्मलश्चित स्रोतासि रुद्ध्वा वायु रुन्ध्यात्, तस्मान्मारुतमनुलोमयेत् ।

**दुर्बलो योऽविरेच्यः स्यात्तं निरूहैरुपाचरेत् ॥ १२ ॥**
**दीपनैः पाचनीयैर्वा भोज्यैर्वा तद्युतैर्नरम् ।**
**संशुद्धस्योत्थिते चाग्नौ स्नेहस्वेदौ पुनर्हितौ ॥ १३ ॥**

स०–यो नरो दुर्बलो विरेचनानर्हो भवेत् त–नरं, निरूहैरुपाचरेत् । किम्भूतै ? दीपनै पाचनीयैश्च । अथवा, तद्युतै –दीपनीयपाचनीययुतै , भोज्यैरुपाचरेत् । अनन्तरं सम्यक्शुद्धस्य वह्नौ चोत्थिते सति पुनरपि स्नेहस्वेदौ हितौ ।

**आमाशयगते वायौ वमितप्रतिभोजिते ।**
**सुखाम्बुना षड्धरणं वचादि वा प्रयोजयेत् ॥ १४ ॥**
**सन्धुक्षितेऽग्नौ परतो विधिः केवलवातिकः ।**

स०–आमाशयगते वाते सति तथा वमितश्चासौ प्रतिभोजितश्च तस्मिन् वमितप्रतिभोजिते नर उष्णजलेन षड्धरण वचादिगण ( हृ सू अ १५।३५ ) वा प्रयोजयेत् । षड्धरणयोग सङ्ग्रहादेवावगन्तव्य । तत्रैव पठ्यते (चि अ. २१)–"दार्वीकलिङ्गकटुकातिविषाग्निपाठा मूत्रेण सूक्ष्मरजसो धरणप्रमाणा । पीता जयन्ति गुदजोदरकुष्ठमेहकोष्ठानिलाढ्यपवनग्रहणीप्रदोषान् ॥" इति । धरण–पलस्य दशमो भाग । अग्नौ सन्दीपिते सति, अनन्तर केवलवातिको विधि , 'कार्य' इति शेष ।

**मत्स्यान्नाभिप्रदेशस्थे सिद्धान्बिल्वशलाटुभिः ॥ १५ ॥**

स०–नाभिप्रदेशस्थे वाते मत्स्यान् बिल्वशलाटुभि. सिद्धान् योजयेत् ।

**बस्तिकर्म त्वधोनाभेः शस्यते चावपीडकः ।**

स०–अधोनाभे स्थिते वातेऽवपीडक शस्यते । चशब्दान्मत्स्याश्च ।

**कोष्ठगे क्षारचूर्णाद्या हिताः पाचनदीपनाः ॥ १६ ॥**

स०–कोष्ठगे वायौ क्षाराद्या पाचना दीपनाश्च हिता ।

**हृत्स्थे पयः स्थिरासिद्धम्**

स०–हृदयस्थिते समीरणे क्षीर शालिपर्ण्या शृत हितम् ।

**शिरोबस्तिः शिरोगते ।**
**स्नैहिकं नावनं धूमः श्रोत्रादीनां च तर्पणम् ॥ १७ ॥**

स०–शिरोगते शिरोबस्ति शस्यते । स्नैहिक नस्य तथा धूम कर्णादितर्पण च हितम् ।

**स्वेदाभ्यङ्गनिवातानि हृद्यं चान्नं त्वगाश्रिते ।**

स०–त्वक्स्थे मरुति स्वेदादीनि हितानि । हृदयप्रिय चान्नं हितम् ।

**शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ १८ ॥**

स०–रक्तस्थे वाते शीता प्रदेहा रक्तमोक्षण च हितम् ।

**विरेको मांसमेदःस्थे निरूहाः शमनानि च ।**

स०–मासमेद स्थिते वायौ विरेकस्तथा निरूहा शमनानि च हितानि ।

**बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥ १९ ॥**

स०–अस्थिमज्जस्थ मारुत बाह्याभ्यन्तरत स्नेहैर्जयेत् ।

**प्रहर्षोऽन्नं च शुक्रस्थे बलशुक्रकरं हितम् ।**

स०–शुक्रस्थे समीरणे प्रहर्षण तथा बलशुक्रकारि चान्न हितम् ।

**विबद्धमार्गं दृष्ट्वा तु शुक्रं दद्याद्विरेचनम् ॥ २० ॥**
**विरिक्तं प्रतिभुक्तं च पूर्वोक्तां कारयेत्क्रियाम् ।**

१ 'यद्यनेन' स च । २ "सदोषत्वात्–दोषान्तरससर्गाद्धेतो । मल –पित्तश्लेष्माख्य ।" इतीन्दु । "सदोषत्व च स्नेहप्रयोगेणानुपशमे सशोधनकरणे च हेतु ।" इति चक्र । ३ 'तोबन्धाचलं' स मू । 'तो रुद्ध्वा' इति क्वचित् । ४ उत्थिते–प्रदीप्ते । ५ 'षट्चरण' इ । "षट्चरण इति पाठान्तरे षट्चरणा.–षडवयवा. ।" इति श्रीकण्ठ । ६ "षड्धरण इति षण्णा चित्रकादीना धरणा –मानविशेषा , यत्र योगे स षड्धरणो योग । तत्र धरणप्रमाण मध्यमैरेकविंशतिभिर्निष्पावैर्भवति ।" इति डल्हण । "कर्षोऽष्टादशनिष्पावैर्धरण त्र्यधिकैस्तु तै ।" इति वृन्द । "रत्नपरीक्षाशास्त्रेऽप्युक्तम्–'पलस्य दशमांशो हि धरण समुदाहृतम् ।' इति ।" इति श्रीकण्ठ । ७ 'चादिं वा गण प्र' ट ।

१ 'रगुल्मकुष्ठकोष्ठा० णीप्रमेहान् ।' सं द्व । २ 'भ्यङ्गानि शस्तानि' अ । 'भ्यङ्गावगाहाश्च हृ' स च.चक्र । ३ "निवातमिति सामान्येन गृहप्रावरणादि ।" इतीन्दु । ४ 'न्तरं स्ने' ट । ५ 'हर्षोऽन्नपान शु' स च चक्र. । ६ 'बल्यं शु' अ । ७ 'रिक्तप्रतिभुक्तस्य पू' इ स.च. । ८ पूर्वोक्ता–प्रहर्षोऽन्नमित्यादिकाम् ।

स०-शुक्रे च रुद्धमार्गे दृष्ट्वा विरेकं दद्यात्। विरिक्तं प्रतिभुक्तं च नरं पूर्वोदिता क्रिया कारयेत्। "हृक्रोरन्यतरस्याम्।" इति प्रतिभुक्तस्यापि कर्मत्वम्।

**गर्भे शुष्के तु वातेन बालानां च विशुष्यताम् ॥२१॥**
**सिताकाश्मर्यमधुकैः सिद्धमुत्थापने पयः।**

स०-वातेन गर्भे शुष्के सति बालानां च विशुष्यतां शर्करादिभिः सिद्धं क्षीरमुत्थापने हितम्।

**स्नावसन्धिशिराप्राप्ते स्नेहदाहोपनाहनम् ॥ २२ ॥**

स०-स्नावादिप्राप्ते स्नेहदाहोपनाहनं हितम्।

**तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम्।**

स०-सङ्कुचितेऽङ्गे सति माषसैन्धवसाधितं तैलमभ्यङ्गः।

**आगारधूमलवणतैलैर्लेपः स्रुतेऽसृजि ॥ २३ ॥**
**सुप्तेऽङ्गे वेष्टयुक्ते तु कर्तव्यमुपनाहनम्।**

स०-रक्ते स्रुते सत्यागारधूमादिभिर्लेपः। सुप्ते गात्रे तथा वेष्टनयुक्ते चोपनाहः कार्यः।

आक्षेपकादीनां मध्यात् महात्ययत्वादपतानकस्य तावच्चिकित्सामाह—

**अथापतानकेनार्तमस्रस्ताक्षमवेपनम्[2] ॥ २४ ॥**
**अस्तब्धमेढ्रमस्वेदं बहिरायामवर्जितम्।**
**अखट्वाघातिनं[3] चैनं त्वरितं समुपाचरेत् ॥ २५ ॥**

स०-अथ-अनन्तरं, वातव्याधयः सञ्ज्ञानिर्दिष्टाः प्रस्तूयन्ते। एनं-अपतानकार्तं नरं, अस्रस्ताक्षादियुक्तं यावदखट्वाघातिनं च त्वरितं कृत्वोपक्रमेत्।

**तत्र प्रागेव सुस्निग्धस्विन्नाङ्गे तीक्ष्णनावनम्।**
**स्रोतोविशुद्धये युञ्ज्यादच्छपानं ततो घृतम् ॥ २६ ॥**
**विदार्यादिगणक्वाथदधिक्षीररसैः शृतम्।**
**नातिमात्रं तथा वायुर्व्याप्नोति सहसैव वा ॥ २७ ॥**

स०-तस्मिन्नपतानकार्ते नरे, पूर्वमेव च सुष्ठु स्निग्धाङ्गे स्विन्नाङ्गे च तीक्ष्णं नस्यं-त्रिकटुकादिना, स्रोतोविशुद्धये योज्यम्। ततः-अनन्तरं, अच्छपानं घृतं युञ्जीत। कतरत्? इत्याह-विदार्यादिगणक्वाथादिशृतम्। घृताद्विदार्यादिगणक्वाथश्चतुर्गुणो दधिक्षीररसाः सर्पिःसमा ग्राह्याः। तथा-एवंकृते सति, मारुतोऽतिमात्रं न व्याप्नोति। सहसा-झटित्येव च, नाश्नुते।

**कुलत्थयवकोलानि भद्रदार्वादिकं गणम्।**
**निःक्वाथ्यानूपमांसं च तेनाम्लैः पयसाऽपि च ॥२८॥**
**स्वादुस्कन्धप्रतीवापं महास्नेहं विपाचयेत्।**
**सेकाभ्यङ्गावगाहान्नपाननस्यानुवासनैः ॥ २९ ॥**
**स हन्ति वातं, ते ते च स्नेहस्वेदाः सुयोजिताः।**

स०-कुलत्थादीनानूपमांसं च निःक्वाथ्य तेन क्वाथेनाम्लैः-धान्याम्लादिभिः, स्वादुस्कन्धकृतकल्कं महास्नेहं विपाचयेत्। सः-महास्नेहो[1], वातं हन्ति। ते ते च-पूर्वोक्ताः स्नेहाः स्वेदाः, सम्यग्योजिता वातं घ्नन्ति।

**वेगान्तरेषु मूर्धानमसकृच्चास्य रेचयेत् ॥ ३० ॥**
**अवपीडैः प्रधमनैस्तीक्ष्णैः श्लेष्मनिबर्हणैः।**
**श्वसनासु विमुक्तासु तथा संज्ञां स विन्दति ॥३१॥**

स०-वेगान्तरेषु-वेगान्तरालेषु, मूर्धानमसकृत्-बहून् वारान्, रेचयेत्। कैः? इत्याह-अवपीडैः-"कल्काद्यैरवपीडस्तु स तीक्ष्णैर्मूर्धरेचनः।" (हृ. सू. अ. २०।७) इत्युक्तैः। तथा प्रधमनैः-"ध्मानं विरेचनैश्चूर्णैर्युञ्ज्यात्" (हृ. सू. अ. २०।८) इत्युक्तैः। एतैश्च तीक्ष्णैः-तीक्ष्णद्रव्यकृतैः, अत एव श्लेष्मनाशनैः। [तथा-]एवंकृते सति, श्वसनासु श्लेष्मविमुक्तासु सञ्ज्ञां-चेतनां, सः-रोगी, लभते। प्राणनाड्यो हृदाश्रिताः श्वसना इत्युच्यन्ते।

**सौवर्चलाभयाव्योषसिद्धं सर्पिश्चलेऽधिके ॥ ३१½ ॥**

स०-वायावधिके सौवर्चलादिभिः कल्कीकृतैः सिद्धं सर्पिर्हितम्।

**पलाष्टकं तिल्वकतो वरायाः**
**प्रस्थं पलांशं गुरुपञ्चमूलम्।**
**सैरण्डसिंहीत्रिवृतं घटेऽपां**
**पक्त्वा पचेत्पादशृतेन तेन ॥ ३२ ॥**
**दध्नः पात्रे यावशूकात्त्रिबिल्वैः[2]**
**सर्पिःप्रस्थं हन्ति तत्सेव्यमानम्।**
**दुष्टान् वातानेकसर्वाङ्गसंस्थान्**
**योनिव्यापद्गुल्मवर्ध्मोदरं च ॥ ३३ ॥**

स०-तिल्वकतो-लोध्रात् पलाष्टकं, त्रिफलायाः प्रस्थं, महत्पञ्चमूलं पृथक् पलभागम्। किम्भूतं पञ्चमूलम्? एरण्डव्याघ्रीत्रिवृताभिर्युक्तम्। एतेऽपि पलांशा इत्यर्थः। जलद्रोणे पचेत्। तेन च पादावशेषेण तथा दध्न आढके यवक्षारपलैस्त्रिभिर्घृतप्रस्थं पचेत्। एतच्च घृतं सेव्यमानं दुष्टवातादीन् हन्ति। उपजातिशालिन्यौ वृत्ते।

**विधिस्तिल्वकवज्ज्ञेयो रम्यकाशोकयोरपि[3] ॥ ३४ ॥**

स०-तिल्वकस्येव तिल्वकवत् महानिम्बस्याशोकस्य च विधिर्ज्ञेयः।

---

१ 'ना चापि शु' स च चक्र। २ 'वेदनम्' स हृ। ३ "खट्वाघाती-यः शय्यात उत्थाय वातवेगात् पादेन शय्यामाहन्ति।" इतीन्दुः। 'अखट्वापातिनं' स सु। "खट्वाया न पततीति अखट्वापातिनम्। अयमर्थः-अपतानकवेगेन पतन्नेव पाणिभ्यां भूतलमवलम्बते, हस्तपादद्वयेन खट्वापादकल्पेन पतनशीलः खट्वापाती, नैतादृग्विध इत्यर्थः।" इति डल्हणः।

१ महास्नेह-स्नेहचतुष्टयम्। २ 'शूकत्रिबि' अ.। ३ 'शाम्याका' इ।

**चिकित्सितमिदं कुर्याच्छुद्धवातापतानके ।**
**संसृष्टदोषे संसृष्टं**

स०–एवमुपक्रम शुद्धवातापतानके कुर्यात् । ससृष्टदोषे ससृष्ट-दोषद्वयोक्त, चिकित्सित कुर्यात् ।

**चूर्णयित्वा कफान्विते ॥ ३५ ॥**
**तुम्बरूण्यभया हिङ्गु पौष्करं लवणत्रयम् ।**
**यवक्वाथाम्बुना पेयं हृत्पार्श्वार्त्यपतन्त्रके ॥ ३६ ॥**
**हिङ्गु सौवर्चलं शुण्ठी दाडिमं साम्लवेतसम् ।**
**पिबेद्वा श्लेष्मपवनहृद्रोगोक्तं च शस्यते ॥ ३७ ॥**

स०–कफयुक्ते तुम्बर्वादिक चूर्णयित्वा यवक्वाथजलेन पेय हृत्पीडादिषु(के) । अथवा, हिङ्ग्वादिक यवक्वाथाम्बुना पेयम् । श्लेष्मवातहृद्रोगे च यत्कथित तच्च शस्यते ।

**आयामयोरर्दितवद्बाह्याभ्यन्तरयोः क्रिया ।**
**तैलद्रोण्यां च शयनमान्तरोऽत्र सुदुस्तरः ॥ ३८ ॥**

स०–आयामयोर्बाह्याभ्यन्तरयोरर्दितवत्क्रिया स्यात् । तैल द्रोण्या शयन च । अत्र–अनयोर्मध्यात्, आन्तर आयाम सुदुस्तर –अतिकष्टसाध्य ।

**विवर्णदन्तवदनः स्रस्ताङ्गो नष्टचेतनः ।**
**प्रस्विद्यंश्च धनुष्कम्भी दशरात्रं न जीवति ॥ ३९ ॥**

स०–विवर्णदन्तास्य स्रस्ताङ्गादि प्रस्वेदवाश्च धनुष्कम्भी दशरात्र न जीवति ।

**वेगेष्वतोऽन्यथा जीवेन्मन्देषु विनतो जडः ।**
**खञ्जः कुणिः पक्षहतः पङ्गुलो विकलोऽथवा ॥ ४० ॥**

स०–अतोऽन्यथा-विवर्णदन्तादिविपर्ययेण, तथा मन्देषु वेगेषु सत्सु जीवेत् । जीवश्च विनतादिगुण स्यात् ।

**हनुस्रंसे हनू स्निग्धस्विन्नौ स्वस्थानमानयेत् ।**
**उन्नामयेच्च कुशलश्चिबुकं विवृते मुखे ॥ ४१ ॥**
**नामयेत्संवृते शेषमेकायामवदाचरेत् ।**

स०–हनुस्रंसे तु हनू स्निग्धस्विन्नौ सन्तौ स्वस्थान प्रापयेत् । कुशलो भिषक् विवृते मुखे सति चिबुकमूर्ध्वं नामयेत् । संवृते तु मुखे चिबुक नामयेत् । शेष चिकित्सितमेकायामवदाचरेत्–अर्दितवदाचरेत् ।

**जिह्वास्तम्भे यथावस्थं कार्यं वातचिकित्सितम् ॥ ४२ ॥**

स०–जिह्वाया स्तम्भे सति यथावस्थ वातस्योपक्रम कार्य स्नेहस्वेदान्वित ।

**अर्दिते नावनं मूर्ध्नि तैलं श्रोत्राक्षितर्पणम् ।**
**सशोफे वमनं, दाहरागयुक्ते सिराव्यधः ॥ ४३ ॥**

स०–अर्दिते नावनादि चिकित्सितम् । शोफान्विते सति वमन कार्यम् । दाहादियुक्ते सति सिराव्यध ।

**स्नेहनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ।**

स०–पक्षाघाते स्नेहन तथा विरेक कार्य स्नेहान्वित ।

**अवबाहौ हितं नस्यं स्नेहश्चोत्तरभक्तिकः ॥ ४४ ॥**

स०–अवबाहौ नस्यादि हितम् । आमे तूपवास एव हित इत्युवाच सङ्कहे (?) ।

**ऊरुस्तम्भे तु न स्नेहो न च संशोधनं हितम् ।**
**श्लेष्माममेदोबाहुल्याद्युक्त्या तत्क्षपणान्यतः ॥ ४५ ॥**
**कुर्याद्रूक्षोपचारश्च यवश्यामाककोद्रवाः ।**
**शाकैरलवणैः शस्ताः किञ्चित्तैलैर्जलैः शृतैः ॥ ४६ ॥**
**जाङ्गलैरघृतैर्मांसैर्मध्वम्भोरिष्टपायिनः ।**
**वत्सकादिर्हरिद्रादिर्वचादिर्वा ससैन्धवः ॥ ४७ ॥**
**आढ्यवाते सुखाम्भोभिः पेयः षड्धरणोऽथवा ।**

स०–ऊरुस्तम्भे तु स्नेहादि न हित श्लेष्माममेदोबाहुल्यात् । [अत –] अस्माच्च हेतो , तयो –आमश्लेष्मणो , क्षपणानि–क्षयकरणानि, युञ्ज्यात् । रूक्षोपचारार्थं मध्वम्भोरिष्टपायिनो यवादय शाकैरीषल्लवणैस्तथा जलै शृतै । तथा मासै सह । किम्भूतै ? जाङ्गलैस्तथा घृतरहितैर्हिता ।

**लिह्यात्क्षौद्रेण वा श्रेष्ठाचव्यतिक्ताकणाघनान् ॥ ४८ ॥**

१ 'हनस्वेदनान्वि' ट । २ अस्याग्रे "नवनीतेन सयुक्तां खादेन्माषेण्डरी नर । दुर्वारमर्दित हन्ति सप्ताहान्नात्र सशय ॥ १ ॥" इति अ इ पुस्तकयोरधिक श्लोक । ३ 'स्वेदनं स्नेह' स च । ४ अस्याग्रे "माषबलाशुकशिम्बीकत्तृणरास्नाश्वगन्धोरुबूकाणाम् । क्वाथो नस्यनिपीतो रामठलवणान्वितः कोष्ण ॥ १ ॥ अपनयति पक्षवात मन्यास्तम्भं सकर्णनादरुजम् । दुर्जयमर्दितवात सप्ताहाज्जयति चावश्यम् ॥ २ ॥" इति इ पुस्तकेऽधिकौ श्लोकौ । ५ अस्याग्रे "गुडमञ्जर्या खपुरं वृषभीमूल च शिशिरजलपिष्टम् । नावनविधौ प्रयोजितमवबाहुकगलरुजार्तिहरम् ॥ १ ॥ दशमूलबलामाषक्वाथं तैलाज्यमिश्रितम् । साय भुक्त्वा पिबेन्नस्य विश्वाच्यामवबाहुके ॥ २ ॥" इति इ पुस्तकेऽधिकौ श्लोकौ । ६ 'म्भे न च स्ने' अ । ७ 'आमवाते' इ. । ८ 'षट्चर' इति क्वचित् । ९ अस्याग्रे "चित्रकेन्द्रयवाः पाठा कटुकाऽतिविषा निशा । वातव्याधिप्रशमनो योग षड्धरणाह्वयः ॥ १ ॥" इति इ. पुस्तकेऽधिक सौश्रुत श्लोक । १० 'त् कुर्यात् । रू' ट. । ११ 'नान् ।' इ. ।

१ 'धनुस्तम्भी' अ ,ट । 'धनुष्कम्पी' स ह । २ "विनत –कुब्ज । खञ्ज –कुण्ठपाद । कुणि –कुण्ठबाहु । पक्षहतो–निष्क्रियदेहार्ध । पङ्गुल –सक्थिद्वयविकृत । विकलो–हीनवाक् ।" इतीन्दु । ३ 'लोऽपि वा' अ । ४ अस्याग्रे "वाग्ग्रहे कोष्ण तोयेन वेतसाम्लं पिबेन्नरः । मातुलुङ्गरस तद्वद्धिङ्गुसौवर्चलान्वितम् ॥ १ ॥" इति अ.इ. पुस्तकयोरधिक श्लोक ।

**कल्कं समधु वा चव्यपथ्याग्निसुरदारुजम् ।**
**मूत्रैर्वा शीलयेत्पथ्यां गुग्गुलुं गिरिसम्भवम् ॥ ४९ ॥**

स०–अथवा क्षौद्रेण त्रिफलादिक कल्क लिह्यात् । चव्यादिकं वा कल्क माक्षिकान्वित लिह्यात् । अथवा, गोमूत्रेण हरीतकीमभ्यसेत् । तथा, गुग्गुलु शिलाजतु वा शीलयेत् ।

**व्योषाग्निमुस्तत्रिफलाविडङ्गैर्गुग्गुलुं समम् ।**
**खादन् सर्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान् ५०**

स०–व्योषादिभिर्नवभिर्द्रव्यैर्गुग्गुलु तुल्य भक्षयन् सर्वान् मेद श्लेष्मामवातजान् व्याधीन् हन्ति ।

**शाम्यत्येवं कफाक्रान्तः समेदस्कः प्रभञ्जनः ।**
**क्षारमूत्रान्वितान् स्वेदान् सेकानुद्वर्तनानि च ॥५१॥**
**कुर्याद्दिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः ।**
**मूलैर्वाऽप्यर्कतर्कारीनिम्बजैः ससुराह्वयैः ॥ ५२ ॥**
**सक्षौद्रसर्षपापक्कलोष्टवल्मीकमृत्तिकैः ।**
**कफक्षयार्थं[1] व्यायामे सह्ये चैनं प्रवर्तयेत् ॥ ५३ ॥**
**स्थलान्युल्लङ्घयेन्नारीः शक्तितः परिशीलयेत् ।**
**स्थिरतोयं सरः क्षेमं प्रतिस्रोतो नदीं तरेत् ॥ ५४ ॥**

स०–एव–प्रागुक्ते क्रियाक्रमे कृते साते, कफावृतो मरुत् समेदस्क शाम्यति । तथा क्षारमूत्रयुतान् स्वेदादीन् कुर्यात् । तथा, करञ्जफलसर्षपै प्रभूतमूत्रालोडितैर्लिम्पेत् । अथवा, मूलैरर्कादिजै क्षौद्रादियुतैर्लिम्पेत्[2] । एन–ऊरुस्तम्भिन, सोढु शक्ये व्यायामे च कफक्षयाय प्रवर्तयेत् । शक्य इति "शकिसहोश्च" इति यत् । व्यायाम शनै कारयेदित्यर्थ । तमेव व्यायाममाह–स्थलान्युल्लङ्घयेत् । नारीर्यथाशक्ति शीलयेत् । स्थिरतोय सरस्तरेत् । क्षेम–ग्राहादिरहितम् । तथा नदीं तरेत् । कथम् ? प्रतिस्रोत –स्रोतोभिमुखम् ।

**श्लेष्ममेदःक्षये चात्र स्नेहादीनवचारयेत्[3] ।**

स०–श्लेष्ममेद क्षये सत्यस्मिन् स्नेहादीनवचारयेत् ।

१ कफक्षयार्थमिति लेपे व्यायामे चेत्युभयत्रापि सम्बन्धनीयम् । तथा च चरक (चि अ २७।४८)–"श्लेष्मण क्षपण त्वन्यद्बाह्य शृणु चिकित्सितम् । वल्मीकमृत्तिका मूल करञ्जस्य फल त्वचम् ॥ इष्टकाना तत्श्चूर्णैं कुर्यादुत्सादन भृशम् । कफक्षयार्थं शक्येषु व्यायामेष्वनुयोजयेत् ॥" इति । २ 'मे मेद कफ' इति क्वचित् । ३ अस्याग्रे "**वृहच्छिम्बतरोर्मूल वारिणा परिपेषितम् । स म्पीत नाशयेत्क्षिप्रमसाध्यामपि गृध्रसीम् ॥ १ ॥ तूनीप्रतून्योर्लवणं सघृत क्षारहिङ्गु वा । रक्तावसेचनं कुर्यादभीक्ष्ण वातकण्टके ॥ २ ॥ पिबेदेरण्डतैलं वा दहेत्सूचीभिरेव वा । साज्यै सक्तुभिरभ्यक्तौ न चाक्षीरसमन्वितैः ॥ ३ ॥ शाल्मलीत्वग्विलिप्तौ वा पादौ सन्तापमुद्धत** ।" इति इ. पुस्तकेऽधिकाः सार्धत्रय श्लोका ।

**स्थानदूष्यादि[1] चालोच्य[2] कार्या शेषेष्वपि क्रिया ५५**

स०–शेषेषु च वातरोगेषु स्थानदूष्यादीन्निरूप्य चिकित्सित कार्यम् ।

**सहचरं सुरदारु सनागरं**
**क्वथितमम्भसि तैलविमिश्रितम् ।**
**पवनपीडितदेहगतिः पिबन्**
**द्रुतविलम्बितगो भवतीच्छया ॥ ५६ ॥**

स०–सहचरादि क्वथित तैलयुत पिबन् मारुतार्दितशरीर इच्छया द्रुतगमनो विलम्बितगमनो वा भवति । तन्त्रकृता सुमतिनैतद्वातस्य वृत्तस्य नामापि[3] श्लिष्ट कृत्वा विबद्धम् । द्रुतविलम्बिताख्य ह्येतद्वृत्तम् । तस्य च लक्षणम् ( वृ र अ ३।४९ )–"द्रुतविलम्बितमाह नभौ भरौ ।" इति ।

**रास्नामहौषधद्वीपिपिप्पलीशठिपौष्करम् ।**
**पिष्ट्वा विपाचयेत्सर्पिर्वातरोगहरं परम् ॥ ५७ ॥**

स०–रास्नादीन् पिष्ट्वा सर्पि सामान्यपरिभाषया विपाचयेत् । तच्च सुष्ठु वातरोगहृत् ।

**निम्बामृतावृषपटोलनिदिग्धिकानां**
**भागान् पृथक् दश पलान् विपचेद्घटेऽपाम् ।**
**अष्टांशशेषितरसेन पुनश्च तेन**
**प्रस्थं घृतस्य विपचेत्पिचुभागकल्कैः ॥ ५८ ॥**
**पाठाविडङ्गसुरदारुगजोपकुल्या**
**द्विक्षारनागरनिशामिशिचव्यकुष्ठैः ।**
**तेजोवती[5]मरिचवत्सकदीप्यकाग्नि-**
**रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ ५९ ॥**
**मञ्जिष्ठयाऽतिविषया विषया[6] यवान्या**
**संशुद्धगुग्गुलुपलैरपि पञ्चसङ्ख्यैः ।**
**तत्सेवितं विधमति[7] प्रबलं समीरं**
**सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ ६० ॥**
**नाडीव्रणार्बुदभगन्दरगण्डमाला-**
**जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ।**
**यक्ष्मारुचिश्वसनपीनसकासशोफ[8]-**

१ '**स्थान दू**' इति क्वचित् । २ "आदिग्रहणादावरणग्रहणम् ।" इति चक्र । ३ 'नामविशिष्ट' इतीन्दु । ४ '**लकरञ्जकाना**' अ । ५ "तेजोवती–ज्योतिष्मती । कणमूल इत्यत्र कणाशब्दो लुप्त निर्दिष्ट , तेनात्र कणा च कणामूल च ग्राह्यम् । अत एव च मुनिनाऽत्र व्योषशब्दो निर्दिष्ट । युक्ता–रास्ना ।" इतीन्दु । ६ "विषा–काकोली ।" इत्यग्रे ( हृ उ अ ५।१९ ) अरुणदत्त । "द्रवन्ती शम्बरी चित्रा न्यग्रोधा मूषिकाह्वया । प्रत्यक्श्रेणी विषा चण्डा पत्रश्रेण्याखुपर्णिका ॥" इति धन्वन्तरिनिघण्टु । ७ '**प्रधमति**' इति क्वचित् । ८ '**शोषह**' स.सं. ।

हृत्पाण्डुरोगमदविद्रधिवातरक्तम्[१] ॥ ६१ ॥

स०-निम्बादीना पृथक् पृथक् दशपलानम्बुद्रोणे पचेत् । तेनाष्टाशशेषेण क्वाथेन पाठादिभिर्यवान्यन्तै कल्कीकृतै कर्षांशै श्रेष्ठगुग्गुलुपलैश्च पञ्चभि सर्पिष पुन प्रस्थ विपचेत् । तत्-सर्पि, शीलित वायुमतिबल सन्ध्यादिगतमपि पराकरोति । कुष्ठमपीदश(क)-सन्ध्यादिगन, हन्ति । तथा, नाडीव्रणादीन् शमयति । वसन्ततिलकाश्चतस्र ।

वलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत् ।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं वाते शिरोगते ॥६२॥

स०-बलाबिल्वाभ्या क्वथिते क्षीरे घृतमण्ड विपाचयेत् । तस्य-घृतमण्डस्य पक्वस्य, कर्षद्वय पल वा नस्य शिरोगते वाते प्रयोक्तव्यम् ।

तद्वत्सिद्धा वसा नक्रमत्स्यकूर्मचुलूकजा ।
विशेषेण प्रयोक्तव्या केवले मातरिश्वनि ॥ ६३ ॥

स०-तद्वत्-घृतमण्डवत्, नक्रादिजा वसा केवले वाते विशेषेण प्रयोज्या ।

जीर्णं पिण्याकं[५] पञ्चमूलं पृथक् च
क्वाथ्यं क्वाथाभ्यामेकतस्तैलमाभ्याम् ।
क्षीरादष्टांशं पाचयेत्तेन पाना
द्वाता नश्येयुः श्लेष्मयुक्ता विशेषात् ॥ ६४ ॥

स०-पुराण पिण्याक पञ्चमूल च पृथक् पृथक् क्वाथ्यम् । क्वाथाभ्यामेताभ्या तैलमेकत -एकस्मिन् तैल मिश्रित, क्षीरा दष्टाश पाचयेत् । तेन तैलेन वाता नश्यन्ति, विशेषेण कफ युक्ता । वैश्वदेवी ।

प्रसारिणीतुलाक्वाथे तैलप्रस्थं पयःसमम् ।
द्विमेदामिशिमञ्जिष्ठाकुष्ठरास्नाकुचन्दनैः ॥ ६५ ॥
जीवकर्षभकाकोलीयुगुलामरदारुभिः ।
कल्कितैर्विपचेत्सर्वमारुतामयनाशनम् ॥ ६६ ॥

स०-प्रसारिणीतुलाक्वाथे तैलप्रस्थ क्षीरसम द्विमेदादिभि कल्कितै सामान्यपरिभाषयोक्तकल्कप्रमाणैर्विपचेत् । तच्चाशेष-वातरोगघ्नम् ।

समूलशाखस्य सहाचरस्य
तुला समेतां दशमूलतश्च[६] ।
पलानि पञ्चाशदभीरुतश्च
पादावशेषं विपचेद्वहेऽपाम् ॥ ६७ ॥
तत्र सेव्यनखकुष्ठहिमैला-
स्पृक्प्रियङ्गुनलिकाम्बुशिलाजैः ।
लोहितानलदलोहसुराह्वै[१]
कोपनामिशितुरुष्कनतैश्च ॥ ६८ ॥
तुल्यक्षीरं पालिकैस्तैलपात्रं
सिद्धं कृच्छ्रान् शीलितं हन्ति वातान् ।
कम्पाक्षेपस्तम्भशोषादियुक्तान्[२]
गुल्मोन्मादौ पीनसं योनिरोगान् ॥ ६९ ॥

स०-सहाचरस्य मूलशाखान्वितस्य तुला समेता दशमूलाच्च तुला शतावर्या पलानि पञ्चाशत् जलस्य चतुर्द्रोणे पादावशेष विपचेत् । तस्मिन् पादावशेषे सेव्यादिभि पालिकैस्तैलाढकं तुल्यक्षीर सिद्ध शीलित कृच्छ्रान् मारुतान् कम्पादियुतान् गुल्मादींश्च हन्ति । स्वागताशालिन्यौ वृत्ते ।

सहाचरतुलायास्तु रसे तैलाढकं पचेत् ।
मूलकल्काद्दशपलं पयो दत्त्वा चतुर्गुणम् ॥ ७० ॥
अथवा नतषड्ग्रन्थास्थिराकुष्ठसुराह्वयात् ।
सैलानलदशैलेयशताह्वारक्तचन्दनात् ॥ ७१ ॥
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं क्षिपेत् ।
मेडस्य सम्मतं तैलं तत्कृच्छ्राननिलामयान् ॥ ७२ ॥
वातकुण्डलिकोन्मादगुल्मवर्ध्मादिकान् जयेत् ।

स०-सहाचरतुलाया क्वाथे तैलाढक पचेत् । मूलकल्काद्दशपलानि क्षीर तैलचतुर्गुणं दद्यादित्येव पाक । अथवा सहाचरतुलाया क्वाथे नतादिभि सिद्धेऽस्मिन् तैले शर्करारजसोऽष्टादशपलानि क्षिपेत् । एतच्च मेडाख्यस्य महर्षे सम्मत दारुणान् वातरोगान् वातकुण्डलिकादींश्च जयेत् ।

बलाशतं छिन्नरुहापादं रास्नाष्टभागिकम् ॥ ७३ ॥
जलाढकशते पक्त्वा शतभागस्थिते रसे ।
दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढकं समैः ॥ ७४ ॥
पचेत्साजपयोर्धांशं कल्कैरेभिः पलोन्मितैः ।
शठीसरलदार्वेलामञ्जिष्ठागुरुचन्दनैः ॥ ७५ ॥

---

१ 'त्पार्श्वरोग' अ. । २ अस्याग्रे "रास्नादरूषसुरदार्वमृताशतावर्येरण्डपुष्करधमासकशुण्ठिपथ्या । शैलेयशठ्यतिविषा क्वथिता प्रयुक्ता निघ्नन्ति वातजरुज खलु सम्वदष्ट्रा ॥ १ ॥" इति इ पुस्तकेऽधिक श्लोक । ३ 'दिभि कर्षां' ड । ४ 'जा । प्रत्यग्रा विधिनाऽनेन नस्यपानेषु योजयेत् ॥' इति सङ्ग्रहचरकपाठ । ५ "जीर्ण-बहुवर्षोषितम् । क्षीरादष्टांशमिति तैलादष्टगुण क्षीरम् ।" इतीन्दु । ६ 'श्च । अभीरुमूलाच्च तुलार्धमेतदष्टाशशेष' स इ ।

१ 'तुल्य क्षीर' अ स मू । २ 'षार्तियु' स मू । ३ 'नसान् यो' स स । ४ 'याश्च र' स च । ५ "मूलकल्काद्दशपलमित्यनेन सहाचरमूलादेव दशपल कल्को देय, जतूकर्णे त्वत्र मूलकस्यैव कल्क उक्त ।" इति चक्र । ६ 'यान् ।' 'नान् ।' अ इ । ७ 'दभूतापस्मारवर्ध्म च । गुल्महृद्रोगदुर्नामयोनिरोगाश्च नाशयेत् ॥' स.इ । ८ "शत-पलशतमित्यर्थ । निर्यास -स्वरस ।" इतीन्दु. । "साजपयोर्धांशमिति छागक्षीरार्धयुक्तम् ।" इति चक्र । ९ 'दशभाग' स च ।

पद्मकातिबलामुस्ताशूर्पपर्णीहरेणुभि॰ ।
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ ७६ ॥
पैलाशरसकस्तूरीनलिकाजातिकोशकै॰ ।
स्पृक्काकुङ्कुमशैलेयजातीकटुफलाम्बुभिः ॥ ७७ ॥
त्वक्कुन्दुरुककर्पूरतुरुष्कश्रीनिवासकैः ।
लवङ्गनखकङ्कोलकुष्ठमांसीप्रियङ्गुभि॰ ॥ ७८ ॥
स्थौणेयतगरध्यामवचामदनकप्लवैः ।
सनागकेसरैः सिद्धे दद्याच्चात्रावतारिते ॥ ७९ ॥
पत्रकल्कं ततः पूतं विधिना तत्प्रयोजितम् ।
कासं श्वासं ज्वरं छर्दिं मूर्च्छां गुल्मक्षतक्षयान् ॥८०॥
प्लीहशोषावपस्मारमलक्ष्मीं च प्रणाशयेत् ।
बलातैलमिद श्रेष्ठं वातव्याधिविनाशनम् ॥ ८१ ॥

स०-बलाया शत, गुडूच्या पञ्चविंशतिपलानि, रास्नाया सार्धानि द्वादशपलानि, एतच्च जलाढकशते पक्त्वाऽऽढकमात्रस्थिते क्वाथे दध्यादिभिस्तुल्यैस्तैलाढकमजाक्षीरस्यार्धाढक शठ्यादिभि पलोन्मितै पचेत् । कटुफल-लघुकङ्कोलकम् । प्लव -कुटन्नट । अवतारिते चास्मिन् पत्रकल्क दद्यात् । अनन्तरमेतत्तैल विधिना प्रयोजित कासादीन् हन्ति । एतद्बलातैल श्रेष्ठ गर्भव्यापदुक्ताद्बलातैलात् । तथा वातरोगघ्नम् ।

पाने नस्येऽन्वासनेऽभ्यञ्जने च
स्नेहाः काले सम्यगेते प्रयुक्ताः ।
दुष्टान् वातानाशु शान्ति नयेयु-
र्वन्ध्या नारीः पुत्रभाजश्च कुर्युः ॥ ८२ ॥

स०-एते-पूर्वोक्ता स्नेहा , पानादिषु काले-अवसरे, प्रयुक्ता दुष्टान् वातान् द्रागेव शमयेयु । वन्ध्याश्च नारी पुत्रभाजो विदध्यु । शालिनीवृत्तम् ।

स्नेहस्वेदैर्द्रुतः श्लेष्मा यदा पक्वाशये स्थितः ।
पित्तं वा दर्शयेद्रूप बस्तिभिस्तं विनिर्जयेत् ॥ ८३ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचिता-
यामष्टाङ्गहृदयसंहितायां चतुर्थे चिकित्सित-
स्थाने वातव्याधिचिकित्सितं नाम
एकविंशोऽध्यायः ॥ २१ ॥

स०-स्नेहस्वेदैश्च यदा कफो द्रुतो-द्रवत्व प्राप्त , पक्वाशयस्थो रूप दर्शयेत्, अथवा पित्त रूप दर्शयेत्, त-कफ पित्तं वा, बस्तिभिर्विनिर्जयेत् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदय-
टीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सित-
स्थाने वातव्याधिचिकित्सितं नाम एक-
विंशोऽध्याय समाप्त ॥ २१ ॥



## द्वाविंशोऽध्यायः ।

अस्मादनन्तरं वातरक्तचिकित्सितमारभ्यते । यतो वातशोणिताख्यो व्याधि प्रायो वातव्याधिरेव । शोणितयुक्तेन वायुना कृतत्वाद्बहुवक्तव्याच्च पृथगस्योपदेश , इत्यत आह—

अथातो वातशोणितचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
( गद्यसूत्रे ॥ २ ॥ )

वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् ।
अल्पाल्पं पालयन् वायुं यथादोषं यथाबलम् ॥ १ ॥

स०-वातशोणितिनो नरस्य स्निग्धस्य सतो बहून् वारान् लोहितमल्पाल्प हरेद्वातकोपभयात् । अत एवाह,—पालयन् वायुम्, तथा यथादोष-दोषानतिक्रमेण, तथा बलानतिक्रमेण । यथादोषमित्युपलक्षणार्थम्, दूष्याद्यनतिक्रमेणापि रक्त हरेत् ।

रुग्रागतोददाहेषु जलौकोभिर्विनिर्हरेत् ।
शृङ्गतुम्बैश्चिमिचिमाकण्डूरुग्दूयनान्वितम् ॥ २ ॥
प्रच्छानेन सिराभिर्वा देशाद्देशान्तर व्रजत् ।

स०-रुग्रागादिषु सत्सु जलौकोभी रुधिरं हरेत् । चिमि-

१ 'तिविषासु' स च. । २ "शूर्पपर्ण्यौ-मुद्गमाषपर्ण्यौ । नलिका-स्वनामख्याता । कटुफला-लताकस्तुरी, अन्ये सुगन्धि दक्षिणापथप्रसिद्ध पद्य(द्व)लमाहु । पत्रकल्कमिति सुगन्धित्वादस्य तैलस्य गन्धशास्त्रपरिभाषया पत्रकल्को देय इत्युच्यते । गन्धशास्त्रे च—'चूर्णस्वरसपुष्पाणा सिद्धशीतेऽवतारिते । दीयते गन्धवृद्ध्यर्थं पत्र कल्को मनीषिभि ॥' इति । तेनात्रकर्पूरादिपत्रकल्कोऽवतारिते एव देय ।" इति चक्र । "पलाश-पत्रकम्, तच्च तमालम् । रसो-बोल । नलिका-विद्रुमलता । जातिकोशक-जातिपत्री । स्पृक्का-ब्राह्मी । कटुफल-कर्कोटफलम् । अम्बु-वालकम् । तुरुष्क -तुवर ।" इतीन्दु । ३ 'कोषकै ' स च । ४ 'जातिका कट्फ' अ. इ स मू । ५ 'नपल्लवै.' अ स च । ६ 'योजयेत् ।' स च. । ७ 'र मूर्च्छां छर्दिं तृष्णा क्षतं क्षयम् ।' स द्व. । 'र हिक्कां छर्दिं गुल्मान् क्षत क्षयम् ।' स.च. । ८ 'कदशमा' ट. । ९ 'ज प्रकुर्यु.' अ. इ. ।

१ "केनचित् प्रकारेण श्वेतमूत्रपुरीषादिना स्वरूप दर्शयेत् । त-श्लेष्माण पित्त वा मिश्र वा ।" इतीन्दु । २ 'शय स्थि' अ । ३ इद वातशोणितचिकित्सित चरके चि० २९ अध्याये, सुश्रुते चि० ५ अध्याये, अष्टाङ्गसङ्ग्रहे चि० २४ अध्याये चास्ति वर्णितम् ।

चिमाद्यन्वित रक्त शृङ्गतुम्बैर्हरेत्। देशाद्देशान्तर गच्छदसृक् प्रच्छानेन सिरया वा हरेत्।

**अङ्गग्लानौ तु न स्राव्यं रूक्षे वातोत्तरे च यत्॥ ३॥**
**गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायुसिरामयान्।**
**ग्लानिमन्यांश्च वातोत्थान् कुर्याद्वायुरसृक्क्षयात्॥४॥**

स०–अङ्गग्लानौ तु सत्या न स्राव्य स्यात्। तथा रूक्षे वातोत्तरे च यद्रक्त तदपि न स्राव्यम्। रूक्षे सति वातचिकित्सित सेवेत। ननु, कस्माद्रक्तस्रावो न विधीयते? इत्याह–वायुरसृक्क्षयाद्गम्भीरशोफादीन् कुर्यात्।

**विरेच्य स्नेहयित्वा तु स्नेहयुक्तैर्विरेचनैः।**

स०–विरेचनयोग्य पुरुष स्नेहयित्वा विरेचनद्रव्यैः स्नेहयुतैर्विरेचनीय।

**वातोत्तरे वातरक्ते पुराणं पाययेद्घृतम्॥ ५॥**

स०–वाताधिके वातरक्ते पुराण घृत पाययेत्।

**श्रावणीक्षीरकाकोलीक्षीरिणीजीवकैः समैः।**
**सिद्धं सर्षभकैः सर्पिः सक्षीर वातरक्तनुत्॥ ६॥**

स०–श्रावण्यादिभि ऋषभकयुक्तैः कल्कीकृतैः सिद्ध घृत दुग्धयुक्त वा वातशोणितहृत्।

**द्राक्षामधूकवारिभ्यां सिद्धं वा ससितोपलम्।**
**घृतं पिबेत्तथा क्षीरं गुडूचीस्वरसे शृतम्॥ ७॥**
**तैलं पयः शर्करां च पाययेद्वा सुमूर्च्छितम्।**

स०–द्राक्षामधूकयो क्काथे सिद्ध वा घृत सशर्करं पिबेत्। क्षीर च गुडूचीस्वरसे क्वथित पिबेत्। तैलादि वा सम्मिश्रित पाययेत्।

**बलाशतावरीरास्नादशमूलैः सपीलुभिः॥ ८॥**
**श्यामैरण्डस्थिराभिश्च वातार्तिघ्नं शृतं पयः।**

स०–बलादिभि शृत पयो वातरुजानाशन स्यात्।

**धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम्॥ ९॥**

स०–धारोष्ण क्षीरं गोमूत्रयुक्त वा दोषानुलोमनं स्यात्।

**पैत्ते पक्त्वा वरीतिक्तापटोलत्रिफलामृताः।**
**पिबेद्घृतं वा क्षीरं वा स्वादुतिक्तकसाधितम्॥ १०॥**

स०–पैत्ते–पित्ताधिके वातशोणिते, शतावर्यादीन् पक्त्वा पिबेत्। स्वादुतिक्तद्रव्यैः साधित घृत क्षीरं वा पिबेत्।

**क्षीरेणैरण्डतैलं च प्रयोगेण पिबेन्नरः।**

**बहुदोषो विरेकार्थं जीर्णे क्षीरौदनाशनः॥ ११॥**

स०–बहुदोषो नरो विरेकार्थमेरण्डतैल क्षीरेण पिबेत्। जीर्णे तस्मिन् क्षीरौदनाशी स्यात्।

**कषायमभयानां वा पाययेद्घृतभर्जितम्।**
**क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा॥ १२॥**

स०–अथवा, हरीतकीना क्काथ घृतभर्जित पाययेत्। त्रिवृतामूलचूर्ण क्षीरानुपान द्राक्षारसेन वा पाययेत्।

**निर्हरेद्वा मलं तस्य सघृतैः क्षीरबस्तिभिः।**
**न हि बस्तिसमं किञ्चिद्वातरक्तचिकित्सितम्॥ १३॥**
**विशेषात्पायुपार्श्वोरुपर्वास्थिजठरार्तिषु।**

स०–अथवा तस्य–वातरक्तवतो, मल क्षीरबस्तिभिर्घृतान्वितैर्निर्हरेत्। यस्माद्बस्तितुल्य नान्यद्वातरक्तचिकित्सितमस्ति। विशेषेण पाय्वादिपीडासु बस्तिर्हित।

**मुस्ताधात्रीहरिद्राणां पिबेत्काथं कफोल्बणे॥ १४॥**
**सक्षौद्रं त्रिफलाया वा गुडूच्या वा यथातथा।**

स०–मुस्तादीनां क्काथ माक्षिकान्वित कफोत्तरे वातशोणिते पिबेत्। त्रिफलाया क्काथ वा समाक्षिक पिबेत्। सर्वेण प्रकारेण गुडूचीं वा पिबेत्।

**यथार्हस्नेहपीतं च वामितं मृदु रूक्षयेत्॥ १५॥**

स०–यो यस्यार्ह स्नेहस्त पीतवन्त कृतवमनं च मृदु कृत्वा रूक्षयेत्।

**त्रिफलाव्योषपत्रैलात्वक्क्षीरीचित्रकं वचाम्।**
**विडङ्गं पिप्पलीमूलं लोमशां वृषकं त्वचम्॥ १६॥**
**ऋद्धिं लाङ्गलिकीं चव्यं समभागानि पेषयेत्।**
**कल्ये लिप्त्वाऽऽयसीं पात्रीं मध्याह्ने भक्षयेदिदम् १७**
**वातास्रे सर्वदोषेऽपि पर शूलान्विते हितम्।**

स०–त्रिफलादीनि समांशानि जलेन पेषयेत्। पिष्ट्वा च प्रभाते लौहीं पात्रीं लिप्त्वा मध्याह्न इद भक्षयेत्। एतच्च वातरक्ते सर्वदोषेऽपि पर शूलयुक्ते हितम्।

१ "अङ्गग्लानाविति अङ्गशोषे" इति चक्र, "कार्श्ये" इति शिवदास। २ 'ङ्गम्लानौ' इ स मू, ट। ३ 'रूक्षं वातोत्तर च' अ इ स मू, ट.। ४ 'भि॰ कल्की' ट.। ५ "द्राक्षामधूकतोयाभ्यामित्यत्र द्विवचनसामर्थ्यात् प्रत्येक घृतम्।" इति जेज्जट। ६ "ससितोपलमिति प्रक्षिप्तशर्करम्॥ धारोष्णमिति दोहकालधारापतितमग्नियोगादिना उष्णीभूतम्। मूत्र चात्र क्षीरसमम्॥ प्रयोगेणेत्यभ्यासेन।" इति चक्र। ७ 'वा' स. च.।

१ 'ममृताना' स च। २ "क्षीरप्रधानो बस्ति क्षीरबस्ति।" इति चक्र.। ३ 'मू। बस्तिवङ्क्षणपार्श्वो' स च। ४ 'मुस्तद्राक्षाहरिद्राणा' इति पाठो अ इ पुस्तकयो. पूर्वमुद्रितपुस्तकेषु चोपलब्धोऽपि चरकसुश्रुतसङ्ग्रहवृन्दचक्रदत्ताद्यसम्मतत्वादयुक्त प्रतिभाति। ५ गुडूची यथातथा–"गुडूच्या स्वरस कल्क चूर्णं वा क्काथमेव वा।" इति वृन्द। ६ 'थाबलम्।' अ। 'थायथम्।' इ। ७ 'लोमशं' इ। 'रोमशं वृषकत्वचम्' स च.। "रोमश–कासीसम्" इति चक्र। ८ 'तामलकीं' स च। ९ 'कल्य लिप्तमयस्पात्रे मध्याह्ने भक्षयेत्तत॥ वर्जयेद्दधिशुक्तानि क्षारं वैरोधिकानि च। वातास्रे' स च.। १० 'लोहपात्र लि' ट।

**कोकिलाक्षकनिर्यूहः पीतस्तच्छाकभोजिना ॥ १८ ॥**
**कृपाभ्यास इव क्रोधं वातरक्तं नियच्छति ।**

स०-कोकिलाक्षकभोजिना कोकिलाक्षक्वाथ पीतो वातरक्त शमयति । कृपाभ्यास क्रोध यथा ।

**पञ्चमूलस्य धात्र्या वा रसैर्लेलीतकीं वसाम् ॥ १९॥**
**खुडं सुरूढमप्यङ्गे ब्रह्मचारी पिबन् जयेत् ।**

स०-पञ्चमूलस्य रसैरामलकरसैर्वा लेलीतकी वसा ब्रह्मचारी पिबन् शरीरे खुड सुस्थिरीभूतमपि जयेत् ।

**इत्याभ्यन्तरमुद्दिष्टं कर्म**

स०-इति-एव, आभ्यन्तर कर्म-चिकित्सितमुक्तम् ।

**बाह्यमतः परम् ॥ २० ॥**

स०-अत पर बाह्य कर्मोच्यते ।

**आरनालाढके तैलं पादसर्जरसं शृतम् ।**
**प्रभूते खजितं तोये ज्वरदाहार्तिनुत्परम् ॥ २१ ॥**

स०-काञ्जिकस्याढके तैल चतुर्थभागसर्जरस पक्व प्रभूते जले मथित पर ज्वरदाहार्तिनुत् ।

**समधूच्छिष्टमञ्जिष्ठं ससर्जरससारिवम् ।**
**पिण्डतैल तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ २२ ॥**

स०-पूर्वोक्त तैल पक्व सह मधूच्छिष्टमञ्जिष्ठासर्जरससारिवाभिरावापरूपाभिर्वर्तते यत्तदेवभूत सत्पिण्डतैलमुच्यते । तच्चाभ्यङ्गाद्वातरक्तरुजाहरम् ।

**दशमूलशृतं क्षीरं सद्यः शूलनिवारणम् ।**
**परिषेकोऽनिलप्राये तद्वत्कोष्णेन सर्पिषा ॥ २३ ॥**

स०-दशमूलेन क्षीरं सिद्ध शीघ्रमेव शूलहृत्, परिषेकेणेत्यर्थादवगम्यते । अत एवाह-परिषेकोऽनिलप्राये । तथैव कोष्णेन सर्पिषा-घृतेन, हित ।

**स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत् ।**
**स्तम्भाक्षेपकशूलार्तं कोष्णैर्दाहे तु शीतलैः ॥ २४ ॥**

स०-अथवा स्तम्भादिभिरार्तं नर चतुर्भिर्मधुरद्रव्यसाधितै स्नेहै कोष्णै परिषेचयेत् । दाहे पुनस्तैरेव शीतै परिषेचयेत् ।

**तद्वद्गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः ।**

स०-अथवा, गव्याविकच्छागै क्षीरैस्तैलविमिश्रितै कोष्णै स्तम्भाक्षेपकशूलार्तं तद्वत्-प्राग्वत्, परिषेचयेत् । दाहे पुनरेतैरेव शीतै परिषेचयेत् ।

**निःक्वाथैर्जीवनीयानां पञ्चमूलस्य वा लघोः ॥ २५ ॥**

स०-जीवनीयाना द्रव्याणा नि क्वाथैर्लघोर्वा पञ्चमूलस्य क्वाथै कोष्णै स्तम्भाद्यार्तं परिषेचयेत् । दाहे तु शीतलै ।

**द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्जिकम् ।**
**सेकार्थं तण्डुलक्षौद्रशर्कराम्भश्च शस्यते ॥ २६ ॥**

स०-दाहे द्राक्षारस इक्षुरस मद्यानि दधिमस्त्वम्लकाञ्जिक सेकार्थं शस्यते । तथा, तण्डुलाम्भ क्षौद्राम्भ शर्कराम्भश्च सेकार्थं शस्यते ।

**प्रियाः प्रियंवदा नार्यश्चन्दनार्द्रकरस्तनाः ।**
**स्पर्शशीताः सुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥२७॥**

स०-नार्य प्रिया -वल्लभा , प्रियवचसश्चन्दनेनार्द्रो करा स्तनाश्च यासा ता एवविधा स्पर्शेन शीता सुखस्पर्शाश्च दाह [रुज] क्लम च घ्नन्ति ।

**सरागे सरुजे दाहे रक्तं हृत्वा प्रलेपयेत् ।**
**प्रपौण्डरीकमञ्जिष्ठादार्वीमधुकचन्दनैः ॥ २८ ॥**
**सितोपलैरकासक्तुमसूरोशीरपद्मकैः ।**
**लेपो रुग्दाहवीसर्परागशोफनिवर्हणः ॥ २९ ॥**

स०-दाहे सरागे सरुजे सति रक्त हृत्वा प्रपौण्डरीकादिभिर्लेप कार्य । स च लेपो रुग्दाहादिनिबर्हण । दार्वी-दारुहरिद्रा । मधुक-यष्टीमधु । सितोपला-शर्करा । एरकासक्तु -एरकाबीजसक्तु ।

**वातघ्नैः साधितः स्निग्धः कृशरो मुद्गपायसः ।**
**तिलसर्षपपिण्डैश्च शूलघ्नमुपनाहनम् ॥ ३० ॥**

स०-कृशर -तिलमुद्गादिकृतो, वातघ्नै साधितो मुद्गपायसो-मुद्गक्षीरे यो मिश्रित, तिलसर्षपपिण्डैश्चैतदुपनाहन शूलघ्नम् ।

**औदकप्रसहानूपवेसवाराः सुसंस्कृताः ।**
**जीवनीयौषधैः स्नेहयुक्ताः स्युरुपनाहने ॥ ३१ ॥**

---

१ 'कभक्षिणा ।' अ । २ लेलीतकीवसा-गन्धक , विस्तरश्चास्य ७१२ पृष्ठे चतुर्थटिप्पण्या द्रष्टव्य । ३ अस्याग्रे "त्रिफलाष्टपल क्वाथ्य पादशेष जलाढके । षोडशैव पलान्यत्र प्रक्षिपेच्छुद्धगुग्गुलो. ॥१॥ ततस्तस्मिन् घनीभूते कल्कीकृत्य द्विकार्षिका । पथ्याविडङ्गकटुका गुडूची पलसम्मिता ॥ २ ॥ कर्षांशे त्रिवृता दन्ती, खादेदिष्टानुपानत । विविधमपि वातरक्त सुप्तशुष्कस्फुटितमपि हन्ति ॥ ३ ॥ व्रणकासकुष्ठगुल्मश्वयथूदरपाण्डुमेहमर्शांसि । अभिभूय जरादोष करोति कैशोरक कायम् ॥४॥ ' इति इ पुस्तकेऽधिकाश्चत्वार श्लोका । ४ 'यत्र तदेव' ट । ५ "स्नेहैर्मधुरसिद्धैरिति जीवनीयसिद्धस्नेहै ।" इति चक्र ।

१ 'क्वाथैर्वा जीव० वा भिषक् ।' स च । २ 'क्त विस्राव्य ले' 'क्त मुक्त्वा प्र' म च । ३ 'ससितोपलकासेक्षुमसूरैरकसक्तुभि ।' इति पूर्वमुद्रितपुस्तकस्थ पाठो चरकसङ्ग्रहाद्यसम्मतत्वादयुक्त प्रतिभाति । ४ "एरका-होग्गल ।" इति चक्र । ५ 'पिण्डश्च' इ । 'ण्डैर्वाऽप्युपनाहो रुजापहः ।' स च । ६ 'क्षीरैर्यो मिश्र ' ट । ७ 'पिण्डश्च। एत' ट । ८ 'षधस्नेह' इ ।

**स्तम्भतोदरुगायामशोफाङ्गग्रहनाशनाः ।**
**जीवनीयौषधैः सिद्धा सपयस्का वसाऽपि वा ॥३२॥**

**स०**–औदकाद्या जीवनीयौषधैः साधिता. स्नेहयुक्ता सुसस्कृता उपनाहेन स्तम्भादिनाशना स्यु । अथवा, औदकादीना वसा जीवनीयौषधैः सिद्धा सपयस्का स्तम्भादिनाशना स्यात् ।

**घृत सहचरान्मूलं जीवन्ती छागलं पयः ।**
**लेपः पिष्टास्तिलास्तद्वद्भृष्टा· पयसि निर्वृताः ॥३३॥**

**स०**–सहचरजीवन्तीमूलकल्को घृतच्छागपयोमिश्रो लेप उपयोगी भवति । पिष्टास्तिला भृष्टा –भर्जिता , पयसि–क्षीरे, निर्वृता –प्रक्षिप्ता , तद्वत्–प्राग्वत् प्रलेपे योज्या ।

**क्षीरपिष्टैरुमां लेपमेरण्डस्य फलानि वा ।**
**कुर्याच्छूलनिवृत्त्यर्थं शताह्वां वाऽनिलेऽधिके ॥३४॥**

**स०**–क्षुमा–अतसी, क्षीरेण पिष्टामधिकेऽनिले शूलनिवृत्त्यर्थं लेप कुर्यात् । यद्वा, एरण्डस्य फलानि क्षीरपिष्टानि शूलनिवृत्त्यर्थं लेपं कुर्यात् । यद्वा, शतपुष्पा क्षीरे पिष्ट्वा शूलनिवृत्त्यर्थं लेप कुर्यात् ।

**मूत्रक्षारसुरापक्वं घृतमभ्यञ्जने हितम् ।**

**स०**–मूत्रादिभि सिद्ध घृतमधिकेऽनिलेऽभ्यञ्जने हितम् ।

**सिद्धं समधु शुक्तं वा सेकाभ्यङ्गे**

**स०**–शुक्त–चुक्र, सिद्ध समाक्षिक सेके परिषेकेऽभ्यङ्गे च हितम् ।

**कफोत्तरे ॥३५॥**

**गृहधूमो वचा कुष्ठं शताह्वा रजनीद्वयम् ।**
**प्रलेपः शूलनुद्वातरक्ते**

**स०**–कफोत्तरे वातरक्ते गृहधूमादिप्रलेपो हितो भवति । शताह्वा–शतपुष्पा । रजनीद्वय–हरिद्रे द्वे ।

**वातकफोत्तरे ॥ ३६ ॥**

**मधुशिग्रोर्हितं तद्वद्बीजं धान्याम्लसंयुतम् ।**

**स०**–वातकफोत्तरे वातरक्ते मधुशिग्रोबीज काञ्जिकसयुक्त तद्वत्–प्रलेपे हितम् ।

**मुहूर्तलिप्तमम्लैश्च सिञ्चेद्वातकफोत्तरे ॥ ३७ ॥**

**स०**–वातकफोत्तरे वातरक्ते मुहूर्तलिप्तमर्थादेव काञ्जिकपिष्टमधुशिग्रुबीजेन लिप्तमम्लै –शुक्तादिभि , सिञ्चेत् ।

**उत्तानं लेपनाभ्यङ्गपरिषेकावगाहनैः ।**

**स०**–उत्तानं वातरक्त लेपादिभिराचरेत्–चिकित्सेत् ।

**विरेकास्थापनस्नेहपानैर्गम्भीरमाचरेत् ॥ ३८ ॥**

**स०**–गम्भीर वातशोणित विरेकादिभिराचरेत् ।

**वातश्लेष्मोत्तरे कोष्णा लेपाद्यास्तत्र शीतलैः ।**
**विदाहशोफरुक्कण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥ ३९ ॥**

**स०**–वातश्लेष्मोत्तरे उत्ताने वातशोणिते लेपाद्या कोष्णा हिता । तत्र–तस्मिन् वातश्लेष्मोत्तरे, शीतलैर्लेपनै स्तम्भनात् विदाहादीना विवृद्धिर्भवति ।

**पित्तरक्तोत्तरे वातरक्ते लेपादयो हिमाः ।**
**उष्णैः प्लोषोषरुग्रागस्वेदावदरणोद्भवः ॥ ४० ॥**

**स०**–वातरक्ते पित्तरक्तोत्तरे हिमा शीता लेपादयो हिता । तत्र पित्तरक्तोत्तरे वातरक्त उष्णैर्लेपै प्लोषादयो भवन्ति ।

**मधुयष्ट्या· पलशतं कषाये पादशेषिते ।**
**तैलाढकं समक्षीरं पचेत्कल्कैः पलोन्मितैः ॥ ४१ ॥**
**स्थिरातामलकीदूर्वापयस्याभीरुचन्दनैः ।**
**लोहहंसपदीमासीद्विमेदामधुपर्णिभिः ॥ ४२ ॥**
**काकोलीक्षीरकाकोलीशतपुष्पर्द्धिपद्मकैः ।**
**जीवकर्षभजीवन्तीत्वक्पत्रनखवालकैः ॥ ४३ ॥**
**प्रपौण्डरीकमञ्जिष्ठासारिवैन्द्रीवितुन्नकैः ।**
**चतुष्प्रयोगं वातासृक्पित्तदाहज्वरार्तिनुत् ॥ ४४ ॥**

**स०**–मधुयष्ट्या पलशत क्वाथकल्पनया क्वथित तस्मिन्कषाये पादशेषिते चतुर्भागावशिष्टे तैलस्याढक समक्षीरमाढकप्रमाणेन क्षीरेण तुल्य स्थिरादिभि· पलोन्मितै कल्कीकृतैर्युक्त पचेत् । तत्तैल चतुष्प्रयोग–पाने नस्येऽनुवासने बस्तौ च योजित, वातासृगादीनामर्तिनुद्भवेत् । स्थिरा–शालिपर्णी । तामलकी–भूधात्री । पयस्या–अर्कपुष्पी । अभीरु –शतावरी । लोह–अगरु । हसपदी–कीटमारी । मधुपर्णी–गुडूची । ऐन्द्री–विशाला । वितुन्नक–परिपेलवम् ।

१ "पयसि निर्वृता इति क्षीरे निर्वापिता ।" इति चक्र । २ 'ष्टमुमाले० नि च ।' स च । 'पिष्टामुमा' इति क्वचित् । ३ 'उमा' ट. । ४ 'मुस्तक्षारसितापक्व' इति क्वचित् । ५ 'क्त स्यात्सेका' स च । ६ 'काभ्यङ्ग. क' इ । 'सेकेऽभ्यङ्गे' इति क्वचित् । ७ 'हूर्तं लि' स च ।

१ 'बाह्यमाले' स द्व । २ 'नैरान्तर' स द्व । ३ 'त्तरे वात' ट । ४ 'शतात् क' स स । 'ष्ट्यास्तुलायास्तु क' स च । ५ 'तै ॥ शतपुष्पावरीमूर्वापयस्यागुरुचन्दनै । स्थिराहस' स द्व स च । ६ "वितुन्नक–धातकीफलम् । चतुष्प्रयोग–पानननस्याभ्यञ्जनसेकप्रयोगम् ।" इतीन्दु । "वितुन्नक–धान्यकम् । चतुष्प्रयोगादिति पानाभ्यङ्गबस्तिनस्यप्रयोगात् ।" इति चक्र । ७ 'योगात्तद्धन्ति तैल मारुतशोणितम् ॥ सोपद्रव साङ्गशूलं सर्वगात्रानुग तथा । वातासृक्पित्तदाहार्तिज्वरघ्नं बलवर्णकृत् ॥' अ स च । ८ परिपेलव–"कुटन्नटम्" इत्यरुण , "क्षुद्रमुस्ता" इति हेमाद्रि ( ह स अ १५।२६ ) ।

**बलाकषायकल्काभ्यां तैलं क्षीरसमं पचेत् ।**
**सहस्रशतपाकं तद्वातासृग्वातरोगनुत् ॥ ४५ ॥**
**रसायनं मुख्यतममिन्द्रियाणां प्रसादनम् ।**
**जीवनं बृंहणं स्वर्यं शुक्रासृग्दोषनाशनम् ॥ ४६ ॥**

स०–बलाकषायेण कल्केन च तैलं क्षीरेण समं तुल्यं पचेत् । तत्–तैलं, सहस्रपाकं शतपाकं वा वातशोणितवातरोगहरम् । तथा, मुख्यतमं–श्रेष्ठम्, तद्रसायनमिन्द्रियाणां–चक्षुरादीनां, प्रसादनं–प्रसादजनकम् । जीवनं–प्राणधारणम् । बृंहणं–उपचयकरम् । स्वर्यं–स्वरकरम् । शुक्रासृग्दोषाणां नाशनम् ।

**कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा ।**
**अतिवृद्ध्याऽनिले शस्तं नादौ स्नेहनबृंहणम् ॥ ४७ ॥**
**कृत्वा तत्राढ्यवातोक्तं वातशोणितिकं ततः ।**
**भेषजं स्नेहनं कुर्याद्यच्च रक्तप्रसादनम् ॥ ४८ ॥**

स०–अनिले–वाते, मेदसोऽतिवृद्ध्या कफस्य वाऽतिवृद्ध्या मार्गसंरोधात् कारणात् कुपिते स्नेहनबृंहणमौषधमादौ न शस्तम् । तत्र–मेदसावृते कफावृते वा वाते, आढ्यवातोक्तं यच्चिकित्सितमुक्तं तत्कार्यम् । ततः–अनन्तरं, वातशोणितिकं स्नेहनं भेषजं कुर्यात् । यच्चापि रक्तस्य प्रसादनं तदपि कुर्यात् ।

वातशोणितचिकित्सितमुक्त्वा प्राणादिचिकित्सामाह—

**प्राणादिकोपे युगपद्यथोद्दिष्टं यथामयम् ।**
**यथासन्नं च भैषज्यं विकल्प्यं स्याद्यथाबलम् ॥ ४९ ॥**

स०–प्राणादीनां पञ्चानां युगपत्–तुल्यकालं कोपे, यथोद्दिष्टं–यथोक्तवातव्याधिचिकित्सानतिक्रमेण, यथामयं–प्राणादिकोपजनितरोगाद्यपेक्षया, यथासन्नं–प्राणादीनामन्यतममासन्नमनतिक्रम्य, यस्मिन्नेव रोगे य एव प्राणादीनामन्यतम आसन्नस्तमेव चिकित्सेत् । यथाबलं–बलानतिक्रमेण, प्राणादीनामन्यतमस्य बलिनः पूर्वं प्रतीकारं कुर्यात् । इत्येवमत्र भैषज्यम्–औषधं, विकल्प्यं–विकल्पनीयं, स्यात्–भवेत् ।

**नीते निरामतां सामे स्वेदलङ्घनपाचनैः ।**
**रूक्षैश्चालेपसेकाद्यैः कुर्यात्केवलवातनुत् ॥ ५० ॥**

स०–सामे वाते स्वेदादिभिस्तथा रूक्षैः सेकलेपादिभिर्निरामतां नीते पश्चात् केवलवातनुत्–शुद्धवातचिकित्सितं, कुर्यात् ।

**शोषाक्षेपणसङ्कोचस्तम्भस्वपनकम्पनम् ।**
**हनुस्रंसोऽर्दितं खाञ्ज्यं पाङ्गुल्यं खुडवातता ॥ ५१ ॥**
**सन्धिच्युतिः पक्षवधो मेदोमज्जास्थिगा गदाः ।**
**एते स्थानस्य गाम्भीर्यात्सिध्येयुर्यत्नतो नवाः ॥ ५२ ॥**
**तस्माज्जयेन्नवानेतान् बलिनो निरुपद्रवान् ।**

स०–शोषः–अङ्गशोषः । आक्षेपणम्–आयामः । सङ्कोचः–अङ्गावयवानाम् । स्तम्भो–दण्डवत् स्तब्धता । स्वपनम्–अचैतन्यम् । कम्पनं–वेपथुः । हनुस्रंसो–हन्वभ्रंशः । अर्दितं–वायुना वक्रीकृतं वक्त्रार्धम् । खाञ्ज्यं–खञ्जता । पाङ्गुल्यं–पङ्गुता । खुडवातो–वातशोणितम् । सन्धिच्युतिः–स्थानाद्भ्रंशः । पक्षवधः–पक्षाघातः । तथा, ये गदाः–रोगाः, मेदआदिस्थानस्था भवन्ति त एते स्थानस्य गाम्भीर्यभावेन जाता नवाः–अचिरकालोत्पन्नाः, यत्नतः सिध्येयुः, बलिनः पुंसः । तस्मादेतान् शोषादीन् निरुपद्रवान् [नवान्–] शीघ्रजन्मनो, जयेत्–चिकित्सेत् ।

**वायौ पित्तावृते शीतामुष्णां च बहुशः क्रियाम् ॥ ५३ ॥**
**व्यत्यासाद्योजयेत्सर्पिर्जीवनीयं च पाययेत् ।**
**धन्वमांसं यवाः शालिर्विरेकः क्षीरवान् मृदुः ॥ ५४ ॥**

स०–वायौ पित्तावृते व्यत्यासात्–पर्यायेण, शीतामुष्णां च क्रियां बहुशः–शतशो, योजयेत् । तथा, जीवनीयं सर्पिस्तमातुरं पाययेत् । अत्र च पित्तावृते वायौ धन्वमांसं–जाङ्गलपिशितं, योज्यम् । यवाः शालयश्च, तथा क्षीरवान्–क्षीरयुक्तो, मृदुर्विरेको योज्यः ।

**सक्षीरा बस्तयः क्षीरं पञ्चमूलबलाशृतम् ।**
**कालेऽनुवासनं तैलैर्मधुरौषधसाधितैः ॥ ५५ ॥**

स०–अत्रापि पित्तावृते वायौ बस्तयः सक्षीरा योज्याः । पञ्चमूलं–महत्, तेन बलासहितेन शृतं क्षीरं प्रयोक्तव्यम् । काले–यथावसरमनुवासनयोग्ये, मधुरौषधसाधितैस्तैलैरनुवासनं देयम् ।

**यष्टीमधुबलातैलघृतक्षीरैश्च सेचनम् ।**
**पञ्चमूलकषायेण वारिणा शीतलेन वा ॥ ५६ ॥**

स०–मधुयष्टितैलेन बलातैलेन घृतेन क्षीरेण च सेचनं

---

१ "बलाकषायेत्यादिनोक्तशतसहस्रपाके अत्यर्थपाकात् स्नेहक्षयं पश्यन्तः शतगुणेन सहस्रगुणेन वा द्रवेणैकदैव पाकं व्याख्यानयन्ति, किन्तु तावती स्नेहमात्राऽत्र पक्तव्या या पाकोपक्षयेण निःशेषा न भवति, क्षीरं चात्र स्नेहवर्धकमस्ति, तेन यथाश्रुतमेवात्राचार्यवचनं प्रमाणमिति पश्यामः । किञ्च प्रत्यासन्न एव पाके सद्रवे स्नेहकल्कोद्धरणमत्र कर्तव्यम् ।" इति चक्रः । "दशपाकबलातैले बलाकाथश्चतुर्गुणः, चतुर्गुणक्षीरसाहचर्यात् । तैलमिदं यथोक्तमानेन द्रवेण कल्केन च दशवारान् पक्तव्यं वीर्योत्कर्षार्थम् । अनेन पाकेन स्नेहक्षयोऽप्यत्र नास्ति, क्षीरगतस्नेहेन न्यूनभागस्य पूरणात् । अयं च बहुपाकोपदेशः प्रकृतिसमसमवेतव्याध्यभिप्रायेण ज्ञेयः । तेनान्यत्रापि प्रकृतिसमसमवेते व्याधौ तैलादिपाकेष्वनुक्तोऽपि बहुधा पाको वीर्योत्कर्षार्थं युज्यत एव । विकृतिविषमसमवेते तु यथोद्दिष्टमेव कार्यम्, संयोगशक्तेरचिन्त्यत्वात् ।" इति शिवदासश्रीकण्ठौ । २ 'क्षीरचतुर्गुणम् । दशपाकं भवेदेतद्वातासृग्वातपित्तजित् ॥' चक्रवृन्दौ । ३ 'स्र शतवारं वा वाता' स च. । ४ 'न श्रेष्ठत' 'नमिदं श्रेष्ठमि' स च. ।

१ जीवनीयं सर्पिः–"दशमूलपुनर्नवद्वय" इत्यादिना सङ्ग्रहे (चि. अ. २४) उक्तम् । २ 'यव' स द. । ३ 'तैलं मं०थितम् ॥' अ. द. । ४ 'च' अ. द. ।

हितम् । पञ्चमूलस्य कषायेण-क्वाथेन, वा शीतलेन वारिणा पित्तावृते वाते सेचन योज्यम् ।

**कफावृते यवान्नानि जाङ्गला मृगपक्षिणः ।**
**स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥ ५७ ॥**
**पुराणसर्पिस्तैलं च तिलसर्षपजं हितम् ।**

स०-कफावृते यवान्नानि हितानि । जाङ्गला मृगा पक्षिणश्च तथा स्वेदा हिता । तीक्ष्णा निरूहा -आस्थापनविशेषाश्च । तीक्ष्ण वमन सविरेचन हितम् । पुराण च सर्पि , तिलसर्षपज च तैलं हितम् ।

**संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥ ५८ ॥**

स०-कफपित्ताभ्या द्वाभ्या ससृष्टे वात आदावेव पित्त विनिर्हरेत् । पश्चात् कफ वातयुक्त जयेत् ।

**कारयेद्रक्तसंसृष्टे वातशोणितिकी क्रियाम् ।**

स०-रक्तससृष्टे वाते वातशोणितिकीं क्रिया कारयेत् ।

**स्वेदाभ्यङ्ग[1]रसाः क्षीरं स्नेहो मांसावृते हितम्[2] ॥ ५९ ॥**

स०-मासावृते स्वेदाभ्यङ्गमासरसा क्षीर स्नेहश्च यथायोगमेतद्धितम् ।

**प्रमेहमेदोवातघ्नमाढ्य[4]वाते भिषग्जितम् ।**

स०-आढ्य[3]वाते-मेदसाऽऽवृते वायौ, प्रमेहघ्न मेदोघ्न वातघ्न च भिषग्जित-औषध, हितम् ।

**महास्नेहोऽस्थिमज्जस्थे पूर्वोक्त रेतसाऽऽवृते ॥ ६० ॥**

स०-अस्थिमज्जस्थे वाते महस्नेहो-घृतमज्जावसातैलै सिद्धो, यद्वा नारायणादि[6]र्हित । रेतसाऽऽवृते पूर्वोक्त-वातव्याधौ शुक्रस्थवातोक्त ( द्द चि अ २१।२० ), हितम् ।

**अन्नावृते पाचनीय वमनं दीपनं लघु ।**

स०-अन्नेनावृते पाचनीयमौषध वमन हितम् । दीपनीय-आग्नेय, यदौषध लघु च-प्रकृत्या, तत्सर्व हितम् ।

**मूत्रावृते मूत्रलानि स्वेदा[7]श्चोत्तरबस्तय. ॥ ६१ ॥**

स०-मूत्रेणावृते वाते मूत्रलानि-त्रपुसादीनि, स्वेदाश्चोत्तरबस्तयो हिता ।

**एरण्डतैलं वर्च.स्थे बस्तिस्नेहाश्च भेदिनः ।**

स०-वर्चसाऽऽवृते वात एरण्डतैल बस्तयश्च स्नेहाश्च भेदिनो हिता ।

**कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ॥ ६२ ॥**
**सर्वस्थानावृतेऽप्या[1]शु तत्कार्य मातरिश्वनि ।**

स०-सर्वस्थानावृते मातरिश्वनि-वायौ, आशु-शीघ्रमेव, यदौषध कफपित्तयोरविरुद्ध वातस्य चानुलोमन तत्कार्यम् ।

**अनभिष्यन्दि च स्निग्धं स्रोतसा शुद्धिकारणम् ॥ ६३ ॥**
**यापना बस्तय प्रायो मधुरा. सानुवासनाः ।**
**प्रसमीक्ष्य बलाधिक्य मृदु[2] कार्य विरेचनम् ॥ ६४ ॥**
**रसायनाना सर्वेषामुपयोग प्रशस्यते ।**
**शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलो. ॥ ६५ ॥**
**लेहो[3] वा भार्गवस्तद्वदेकादशसिता[4]शित ।**

स०-तस्मिन् सर्वधात्वावृते मातरिश्वनि यदनभिष्यन्दि स्निग्धं स्रोतसा यच्छुद्धिकर तत्सर्वमन्नपानौषध योज्यम् । यापनसज्ञा बस्तयो बाहुल्येन मधुरा सानुवासना -स्नेहबस्तयश्च, हिता । बलस्याधिक्य प्रसमीक्ष्य-बुद्ध्वा, मृदु विरेचन हितम् । सर्वेषा रसायनप्रयोगाणामुपयोग प्रशस्यते । विशेषेण-अत्यर्थ, शिलाजतुन पयसा सह प्रयोग प्रशस्यते । तथा शुद्धस्य गुग्गुलो प्रयोग , भार्गवो लेहो-ब्राह्मरसायनोक्तश्च्यवनप्राशो वा, तद्वदेकादशसिताशितो-ब्राह्मरसायनोक्त (?), प्रशस्यते ।

**अपा[6]ने त्वावृते सर्व दीपनं ग्राहि भेषजम् ॥ ६६ ॥**
**वातानुलोम[7]न कार्य मूत्राशयविशोधनम् ।**

स०-अपाने वायौ येनकेनचिदावृते सर्व भेषज दीपन-अग्ने , ग्राहि-सङ्ग्रहण, वातस्यानुलोमन मूत्राशयस्य-बस्ते , विशोधन तत्सर्व कार्यम् ।

**इति सङ्क्षेपत प्रोक्तमावृतानां चिकित्सितम् ॥ ६७ ॥**
**प्राणादीनां भिषक्कुर्याद्वितर्क्य स्वयमेव तत् ।**

स०-इति-अनन्तरोक्तेन प्रकारेण, आवृताना सङ्क्षेपतश्चिकित्सित-औषध, प्रोक्तम् । यत् प्राणादीना पञ्चानामावृताना चिकित्सित तत्-पूर्वोक्त, भिषक् स्वयमेव वितर्क्य-विचार्य, कुर्यात् ।

**उदा[9]नं योजयेदूर्ध्वमपानं चानुलोमयेत् ॥ ६८ ॥**

१ 'रसक्षीरस्नेहा मासावृते हिता. ।' स च । २ 'हित ' अ इ । ३ हित-चिकित्सितम् । ४ ''आढ्यवात इति ज्ञेय स कृच्छ्रो मेदसाऽऽवृते ।'' ( द्द नि अ १६।३६ )। ५ ''पूर्वोक्त-शुक्रस्थवातोक्त पुत्रकामीयोक्त च ।'' इतीन्दु । ६ 'दिभिर्हि' ट । ७ 'दा उत्त' अ इ । 'दा. सोत्त' स मू ,स च ।

१ 'ते त्वाशु' अ । 'ते चाशु' इ । २ 'दु वा स्रसन हितम् ।' स च । 'दु कायवि' इति क्वचित् । ३ 'लेह वा भार्गवप्रोक्तमभ्यसेत् क्षीरभुङ्नर । अभयामलकीयोक्तमेकादशसिताशतम् ॥' 'योक्तानेकादश मिताशन ।' स च । ४ ''च्यवनो हि भार्गव उच्यते । उक्त हि आयुर्वेदसमुत्थाने (च चि अ १ चतुर्थपादे श्लो ४३ )-'भार्गवश्च्यवन कामी वृद्ध सन् विकृतिं गत ।' इति ।'' इति चक्र । ५ 'ताशित ।' इ । 'ताशत ' स स । ६ 'पानेनावृते' स च । ७ 'न यच्च पक्वाशयवि' स च । ८ 'णादीना' स द्द । ९ ''उदानमित्यावृत विज्ञेयम् ।'' इतीन्दु ।

**समान शमयेद्विद्वास्त्रिधा व्यान तु योजयेत् ।**
**प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसस्थिति. ६९**
**स्व स्व स्थान नयेदेव वृतान् वातान् विमार्गगान् ।**

स०–उदानाख्य वायुमूर्ध्वमेव योजयेत्–यतोऽसौ सदैवोर्ध्वगामी, तथा प्रयतेत यथोर्ध्वगामी भवति । अपानाख्य चानिलमनुलोमयेत्–अधोगतिर्ह्यय सदैव समीरणस्तस्मादधोगमन यथाऽस्य सम्पद्येत तथा चिकित्सित कार्यमित्यर्थ । समानाख्य वायु विद्वान् वैद्यो वातघ्नैरौषधै शमयेत् । अयमभिप्रायो ग्रन्थकृत –किल नास्योर्ध्वगामिता नैवाधोगामिता यथा सम्पद्यते तथा चिकित्सित हितम्, कि तर्हि स्वस्थानप्रतिपत्तिरेवेत्येव चिकित्सा कार्येति । व्यानाख्य तु वायु त्रिधा योजयेत्–ऊर्ध्वाधोमध्यगमन यथाऽस्य शरीरे सम्पद्यते तथा चिकित्सा कार्येति । तथा, प्राणो वायुश्चतुर्भ्योऽपि–उदानापानसमानव्यानेभ्योऽपि, सर्वप्रयत्नेन रक्ष्य –यथोदानादिभिर्नास्य बाधा सम्पद्यते तथा चिकित्सा कार्येत्यर्थ । यतस्तस्य–प्राणस्य, स्थितौ सत्या देहस्य–शरीरस्य, सस्थिति –जीवन भवति, प्राण विना न जीवतीत्यर्थ । एव–अनेन प्रकारेण, वातान् विमार्गगानावृतान् स्व स्व स्थान नयेत् ।

**सर्व चावरणं पित्तरक्तसंसर्गवर्जितम् ॥ ७० ॥**
**रसायनविधानेन लशुनो हन्ति शीलित. ।**

स०–सर्वमेवावरण वाताना पित्तरक्तससर्गवर्जित रसायन विधिना शीलितो लशुनो हन्ति । एतेन पित्तरक्तससृष्टमावरण वर्जयित्वा सर्वावरणान्यन्यानि लशुन केवल एव निहन्ति ।

**पित्तावृते पित्तहरं मरुतश्चानुलोमनम् ॥ ७१ ॥**

स०–पित्तावृत उदानादौ पित्तहरं पवनस्य चानुलोमन हितम् ।

**रक्तावृतेऽपि तद्वच्च खुडोक्त यच्च भेषजम् ।**
**रक्तपित्तानिलहर विविध च रसायनम् ॥ ७२ ॥**

स०–रक्तावृते तद्वत्–पित्तहर तथैव मारुतानुलोमन, हितम् । यच्च खुडोक्त–वातशोणितोक्त, भेषज तथा पित्तरक्तानिलहर च हितम्, विविध रसायन च । विविध–नानाप्रकार, सर्वदोषदूष्यादिक चालोक्य यथायोग विधेयम् ।

**यथानिदान निर्दिष्टमिति सम्यक् चिकित्सितम् ।**
**आयुर्वेदफलं स्थानमेतत्सद्योऽर्तिनाशनात् ॥ ७३ ॥**

स०–इति–अनेन प्रकारेण, यथानिदान–निदानानतिक्रमेण, यथोद्देशस्तथा निर्देश । अनया रीत्या सर्वमेव चिकित्सित निर्दिष्टम् । एतच्चायुर्वेदफलभूत स्थानम्, एतदुपदेशेन सद्योऽर्तिनाशनाद्धेतो ।

**चिकित्सित हित पथ्य प्रायश्चित्तं भिषग्जितम् ।**
**भेषज शमनं शस्त पर्यायैः स्मृतमौषधम् ॥ ७४ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसहितायां चतुर्थे चिकित्सितस्थाने वातशोणितचिकित्सित नाम द्वाविंशोऽध्याय. ॥ २२ ॥**

स०–चिकित्सितादय औषधस्य पर्याया स्मृता इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया चतुर्थे चिकित्सितस्थाने वातशोणितचिकित्सित नाम द्वाविंशोऽध्याय समाप्त ॥ २२ ॥

१ 'मयेच्चव त्रिधा' स च । २ "व्यान त्रिधा योजयेत्–ऊर्ध्वमधस्तिर्यक् च।" इतीन्दु । "त्रिधा–ऊर्ध्वमधो मध्ये" इति चक्र । ३ 'च' अ इ स ह । ४ 'पि स्थाने ह्यस्य स्थितिर्ध्रुवा।' स च ।

१ 'लहित वि' स ह । २ 'शनम् ।' अ इ ।





श्रीमद्वाग्भटविरचिते

# अष्टाङ्गहृदये कल्पसिद्धिस्थानम् ।

श्रीमदरुणदत्तविरचितया सर्वाङ्गसुन्दराख्यव्याख्यया,
श्रीहेमाद्रिप्रणीतया आयुर्वेदरसायनाह्वया टीकया च
समुल्लसितम् ।



## प्रथमोऽध्यायः ।

श्रीगणेशायनम । चिकित्सितस्थानादनन्तर कल्पस्थानमारभ्यते, चिकित्सितस्थानस्य कल्पस्थानापेक्षत्वात् । तथा हि प्राग्भ्यगीष्ट ( हृ चि अ १।८ )–"तर्पणेन रसेनेक्षोर्मद्यै कल्पोदितानि वा । वमनानि प्रयुञ्जीत" इति । तदेवमाद्युपदेशात् सापेक्षत्वमस्य । तस्मात् कल्पस्थानमुच्यत इत्याह—

**अथातो वमनकल्पं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षय· ।**

*( गद्यसूत्रे ॥ २ ॥ )

स०–वमन–ऊर्ध्व मुखेन दोषहरणम्, तस्य *कल्प –कल्पन योजनमित्यर्थ । शेषमायुष्कामीयाध्यायवद्व्याख्येयम् ।

आ० र०–श्रीगणेशायनम । अथ कल्पस्थानारम्भ । वमनकल्प व्याख्यातु प्रतिजानीते–अथेति । अथ वमनकल्प । तत्र सङ्ग्रहे ( क अ १ )–"वमनद्रव्याणा मदनफलजीमूतकेक्ष्वाकुधामार्गवकोशातकीकुटजफलानि श्रेष्ठानि । तेष्वपि मदनफलम् । दोषदूष्यादिवशाच्चैषामेतत्कल्पनाना च प्राधान्यम् । दोषादीनामेव चातिबह्ववस्थाभेदाद्वमनादिषु कल्पनानां व्यापदा साधनानां च यदसङ्ख्येयत्वं, अतो बुद्धिमता विकल्पमार्गदर्शनार्थमुदाहरणमात्र कल्पसिद्धिस्थानमुपदेक्ष्यते ।" इति ।

प्राधान्याच्च वमनकल्पे मदनमेव शस्यत इत्याह—

**अथ मदनकल्प· ।**

**वमने मदनं श्रेष्ठं, त्रिवृन्मूलं विरेचने ।**
**नित्यमन्यस्य तु व्याधिविशेषेण विशिष्टता ॥ १ ॥**

स०–वमनविषये नित्य मदन श्रेष्ठम्, निरपायित्वादन्यद्रव्यविषयेऽपि वा तस्योपयोगात् सर्वत्रानिषिद्धप्रसरत्वाच्च । लाघवमिच्छश्च तन्त्रकृदिदमवोचत्–'त्रिवृन्मूल विरेचने' इति । यथा मदन वमने नित्य श्रेष्ठ, तथा त्रिवृन्मूल विरेचने, निरपायित्वादिहेतुना । मदन वर्जयित्वा व्याधिवशादन्यस्य–जीमूतादे, विशिष्टता । वक्ष्यति हि ( श्लो १९ )–"जीमूत तु विशेषत । प्रयोक्तव्य ज्वरश्वासकासहिध्मादिरोगिणाम् ।" इति । एव त्रिवृन्मूल वर्जयित्वा परस्य विरेचनद्रव्यस्य व्याधिविशेषेण विशिष्टत्वम्, न तु त्रिवृन्मूलवत्सर्वत्रानिषिद्धप्रसरत्व निरपायित्व च । तथा चोक्तम् ( सङ्ग्रहे सू अ १३ )–"त्रिवृत्सुखविरेचनानाम् ।" इति । तदेव वमने मदन श्रेष्ठ त्रिवृन्मूल विरेचने सर्वदेति स्थितम् ।

आ० र०–मदनत्रिवृतो श्रेष्ठत्वमाह–वमन इति । नित्य–अव्यभिचारेण ।

**फलानि नातिपाण्डूनि न चातिहरितान्यपि ।**
**आदायाह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः ॥ २ ॥**
**प्रमृज्य कुशमुत्तोल्या क्षिप्त्वा बद्ध्वा प्रलेपयेत् ।**
**गोमयेनानु मुत्तोलीं धान्यमध्ये निधापयेत् ॥ ३ ॥**
**मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात् ।**
**निष्कृष्टानि गतेऽष्टाहे शोषयेत्तान्यथातपे ॥ ४ ॥**
**तेषा ततः सुशुष्काणामुद्धृत्य फलपिप्पलीः ।**
**दधिमध्वाज्यपललैर्मृदित्वा शोषयेत्पुनः ॥ ५ ॥**
**ततः सुगुप्त संस्थाप्य कार्यकाले प्रयोजयेत् ।**

स०–अथशब्दोऽत्र प्रस्तुतौ मदनस्य प्रस्तावे । मदनस्य

१ 'माचोप' ट । २ अथ वमनकल्पश्चरके क० १।२।३।४।५।६ अध्यायेषु, सुश्रुते सू० ४३ अध्याये, अष्टाङ्गसङ्ग्रहे क० १ अध्याये चास्ति वर्णित । ३ 'ऊर्ध्वमु' ट । *४ "कल्पो–विधियोजना ॥ नित्य–सर्वदा सर्वेषु रोगेषु ॥ मृदुभूतानि–स्विन्नप्रायाणि । मध्विष्टगन्धानि–मध्विव शोभनगन्धानि ।" इति चन्द्र । ५ 'मार्गप्रद'स स. ।

१ 'ध्मातिसारिणाम्' ट न । २ 'नि तानि पा' अ आ इ क घ ज न प चन्द्र । ३ 'तान्यथ' अरुण । 'तानि च ।' क । ४ 'पूतोल्या' 'पूतोली' अ । 'मूतोल्या' 'मूतोली' इ ई क न । 'मोतोल्यां' 'मोतोली' चन्द्र । ५ 'मद्येष्ट' इति क्वचित् । ६ 'ष्कृष्य विगते' आ क । 'ष्कृष्य निर्गते' ग घ ञ न प. । ७ 'गताष्टा' इ । ८ "फलपिप्पलीरिति मदनफलमध्यगतानि पिप्पलीसस्थानानि बीजानि ।" इति चक्र । ९ 'ध्वाम्बुप' अ । १० 'वे । तानि मद' न ।

फलानि पाण्डूनि गृहीत्वा, न त्वतिपाण्डून्यतिक्रान्तपाकत्वात्, न चातिहरितान्यामत्वात् । कदाऽऽदाय[1] प्रशस्तनक्षत्रे दिवसे । कस्मिन्नृतौ[2] मध्ये ग्रीष्मवसन्तयो । एवमृतुसन्धौ गृहीतानि प्रमृज्य–व्यपगतमलादिदोषाणि कृत्वा, कुशमय्या मुस्तोल्या–मूटिकाया, क्षिप्त्वा पुनरुपरिष्टाद्बद्ध्वा च ततो गोमयेन ता मुस्तोली लिम्पेत् । अनन्तर धान्यमध्ये निधापयेत्–स्थापयेत् । कुशाना समूहो रचनाविशेषनिष्पादित कुशमुस्तोलीत्युच्यते । मृदुभूतानि तानि मधिष्टगन्धानि–कदाचिन्मधुगन्धानि कदाचिदिष्टगन्धानि, कुशवेष्टनादष्टाहेन ज्ञात्वा, अनन्तरमष्टाहेऽतिक्रान्ते कुशमुस्तोल्या निष्कृष्टानि–बहि कृतानि, अनन्तरमातपे शोषयेत् । तत –अनन्तर, तेषा–मदनफलाना, [ सुष्ठु ] शुष्काणा फलपिप्पलीरुद्धृत्य दधिमध्वाज्यपललैर्मृदित्वा–सङ्क्षुद्य, पुनरातपे शोषयेत् । तत –अनन्तर, सुष्ठु गुप्त धारयित्वा कार्यकाले–वमनावसरे, ता प्रयोजयेत् ।

**आ० र०–मदनसस्कारमाह–फलानीति । फलानि–मदनफलानि । प्रमृज्य–विशोध्य । कुशमुस्तोल्या–कुशमयरज्जुवेष्टनिकायाम् । ता च मुस्तोली रज्जुभिर्बध्वा गोमयेन लेपयेत् । अनु–पश्चात्, धान्यराशौ निधापयेत् । सङ्ग्रहे तु ( क अ १ )–"यवबुसमाषशालिव्रीहिकुलत्थमुद्गान्यतमराशौ" इति । ततोऽष्टाहे गते मृदुभूतानि मधुवदिष्टगन्धानि कुशवेष्टनान्निष्कृष्य आतपे शोषयेत् । तत सुशुष्काणा फलपिप्पली–मज्जान, उद्धरेत् । ततो दध्यादिभिर्मर्दयेत् । तत पुन शोषयेत् । ततो गुप्त स्थापयेत् । सङ्ग्रहे तु ( क अ १ )–"नव कलशमरजस्कमाकण्ठ पूरयित्वा" इत्यधिकम् ।**

**अथादाय ततो मात्रां जर्जरीकृत्य वासयेत् ॥ ६ ॥**
**शर्वरीं मधुयष्ट्या वा कोविदारस्य वा जले ।**
**कर्बुदारस्य[3] बिम्ब्या वा नीपस्य[4] विदुलस्य वा ॥ ७ ॥**
**शणपुष्प्याः[5] सदापुष्प्याः[6] प्रत्यक्पुष्प्युदकेऽथवा[7] ।**
**ततः पिबेत्कषायं तं प्रातर्मृदितगालितम् ॥ ८ ॥**
**सूत्रोदितेन विधिना साधु तेन तथा[8] वमेत् ।**

**स०**–अथ–अनन्तर, तत –पिप्पलीभ्यो, मात्रा–परिमाण प्रायेण देशकालादिवशाद्वा मात्रा, विकल्प्यानन्तर ता मात्रा जर्जरीकृत्य–सञ्चूर्ण्य, मधुयष्ट्यादीनामन्यतमस्य जले शर्वरी–सकला रात्रि, वासयेदभिषवणाय । तत –अनन्तर, [प्रात ] त कषाय मृदितगालित पूर्व मृदित पश्चाद्गालित–वस्त्रपूत कृत्वा, सूत्रोदितेन विधिना–"श्वो वम्य" ( सू अ १८।१२ ) इत्यादिग्रन्थोक्तेन, पिबेत् । [ तथा–] एव कृते सति, तेन साधु वमेत् ।

**आ० र०–मदनप्रयोगमाह–अथेति । तत –फलपिप्पलीभ्य, मात्रा–अन्तर्नखमुष्टि[1], यावद्वा साधु मन्येत[2] । कोविदार –काञ्चनार । कर्बुदार –श्लेष्मातक । बिम्बी–तुण्डिकेरी । नीप –कदम्बभेद । विदुलो–वेतस । शणपुष्पी–घण्टारवा । सदापुष्पी–वनकार्पासी । प्रत्यक्पुष्पी–अपामार्ग । तेन–तथाकृतेन कषायेण, साधु वमेत् । अन्यथा त्वसाधु ।**

**श्लेष्मज्वरप्रतिश्यायगुल्मान्तर्विद्रधीषु च ॥ ९ ॥**
**प्रच्छर्दयेद्विशेषेण यावत्पित्तस्य दर्शनम् ।**

**स०**–विशेषेण श्लेष्मज्वरादिषु वमेत् । यावत्पित्तस्य दर्शनम् ।

**आ० र०–श्लेष्मज्वरादौ विशेषमाह–श्लेष्मज्वरेति । श्लेष्मज्वरादिषु तु विशेषेण पुन पुनर्वामयेदापित्तदर्शनात् ।**

**फलपिप्पलिचूर्णं वा क्वाथेन स्वेन भावितम् ॥ १० ॥**
**त्रिभागत्रिफलाचूर्णं कोविदारादिवारिणा ।**
**पिबेज्ज्वरारुचिष्ठेवग्रन्थ्यपच्यर्बुदोदरी ॥ ११ ॥**

**स०**–अथवा मदनफलपिप्पलीचूर्ण स्वेन–फलपिप्पलीक्काथेन, भावित त्रिभागत्रिफलाचूर्णान्वित कोविदारादिजलेन पिबेत्, ज्वरादिषूदरान्तेषु ।

**आ० र०–वमनान्तरमाह–फलपिप्पलीति । स्वेन–फलपिप्पलिकाथेन । त्रिभाग–तृतीयभागतुल्य, सम्मीलित त्रिफलाचूर्ण यस्मिंस्तत्तथा । ज्वरादिमान् पिबेत् । ष्ठेव–कफप्रसेक ।**

**पित्ते कफस्थानगते जीमूतादिजलेन तत् ।**

**स०**–पित्ते कफस्थानगते सति ग्रन्थ्या(ज्वरा)दिमान्नरस्तत्–मदनफल, जीमूतादिजलेन पिबेत् ।

**आ० र०–वमनान्तरमाह–पित्त इति । कफस्थानगते पित्ते तत्–फलपिप्पलिचूर्णं, जीमूतादिजलेन पिबेत् । जीमूतादय –श्रेष्ठेषूक्ता ।**

---

१ 'मूतौ' ट । २ 'न–गोपुरीषेण ता' ट । ३ 'कुशस' ट । ४ 'द्राचय' घ ञ प । ५ 'जीमूतकस्य बि' अ इ । ६ "नीपो–धूलीकदम्ब । सदापुष्पी–अर्को बिल्व च ।" इतीन्दु । "सदापुष्पी–अर्कपुष्पिका" इति चक्र । "सदापुष्पी–अर्कस्तस्य मूलम् ।" इति डल्हण । "शणपुष्पी बृहत्पुष्पी सा चोक्ता शणघण्टिका । महाशणा माल्यपुष्पी वमनी कटुतिक्तका ॥" इति धन्वन्तरिनिघण्टु । "प्रात –प्रत्युषसि ।" इति चन्द्र । ७ 'पुष्पोद' आ इ । 'पुष्पोदकेन वा' अ । ८ 'यथा' अ आ । 'ततो व' घ प ।

१ 'अ तमुष्टमु' क स मू । २ "अन्तनखमुष्टिमिति अन्तरीकृतनखमुष्टिपरिमाणम् । यावद्वा साधु मन्येतेत्यनेन मात्राया बलदोषादिभेदेनास्थिरत्वम् ।" इति चक्र । "अन्तर्नखमुष्टिमिति नखाना मध्ये मुष्टि, न तु पारिभाषिक पलाभिधानम् ।" इति डल्हण । "अन्तनखा मुष्टिर्यस्मिन्, मुष्टौ नखानि न दृश्यन्ते ।" इतीन्दु । ३ 'वम्येत' क । ४ 'ज्वरगरस्वेदग्र' ई । 'ज्वरगरष्ठीव'ग । 'ज्वरगरष्ठे' घ च प । 'चिष्ठीव' ञ । 'चिष्ठेवं ग्र' आ । ५ 'त त्रिभागेन त्रिफलायाश्चूर्णं दत्त्वा को' न । ६ 'सममीलितत्रि' क ञ प । ७ 'स्तथा' क ग । ८ 'ष्ठीव' ग ञ । ९ "तत्–फलपिप्पलीचूर्णम्, जीमूतादिजलेन–जीमूतकेक्ष्वाकुकृतकोशातकीकुटजफलनिर्यूहेण, पित्ते कफस्थानगते पिबेत् ।" इति चन्द्र ।

**हृद्दाहेऽधोस्रपित्ते च क्षीरं तत्पिप्पलीशृतम् ॥१२॥
क्षैरेयी वा**

**स०**—हृदयदाहेऽधोगे रक्तपित्ते [च] तस्य—मदनफलस्य, पिप्पलीभि क्वथित क्षीर क्षैरेयी वा पिबेत् । तन्त्रान्तरे च क्षीरश्रपणविधिरुक्त—"द्रव्यादष्टगुण क्षीर क्षीरात्तोय चतुर्गुणम् । क्षीरावशेषं कर्तव्य क्षीरपाके त्वय विधि ॥" इति । अस्रपित्त इत्येतावत्युक्त ऊर्ध्वगोभयगयोरस्रपित्तयोर्वमनायोग्यत्वादेवाधोग्रहणे सिद्धे पुनरधोग्रहण सुखतरप्रतिपत्त्यर्थम् । क्षैरेयीमिति "क्षीराड्ढञ्" इति टञ्, "टिड्ढाण" इति ङीप् ।

**आ० र०**—अन्यदाह—हृद्दाह इति । फलपिप्पलीशृत क्षीर क्षैरेयी वा हृद्दाहेऽधोस्रपित्ते च पिबेत् । क्षैरेयी—क्षीरपेयाम् । क्षीर च—तत्पिप्पलीशृतमेव । सङ्ग्रहे तु (क अ १)—"तस्य वा पयस शीतस्य सन्तानिकाञ्जलि पित्ते प्रकुपिते उरसि कण्ठहृदये च तनुकफोपदिग्धे ।" इति

**कफच्छर्दिप्रसेकतमकेषु तु ।
दध्युत्तरं वा दधि वा तच्छृतक्षीरसम्भवम् ॥ १३ ॥**

**स०**—कफच्छर्दिप्रसेकतमकेषु द युत्तर—दधिसरमेव हितम् । अथवा दधि हितम् । उभयमपि वमने हित तच्छृतक्षीरसम्भवम् । तच्छृत—मदनपिप्पलीशृतम् ।

**आ० र०**—अन्यदाह—कफच्छर्दीति । कफच्छर्द्यादिषु तु तच्छृतक्षीरज दधि दध्युत्तर वा ।

**फलादिक्वाथकल्काभ्यां सिद्धं तत्सिद्धदुग्धजम् ।
सर्पिः कफाभिभूतेऽग्नौ शुष्यद्देहे च वामनम् ॥१४॥**

**स०**—क्वाथश्च कल्कश्च क्वाथकल्कौ, फलादीना—मदनफलजीमूतकेक्ष्वादीना क्वाथकल्कौ, ताभ्या सिद्ध—पक्व, सर्पि कफेनाभिभूतेऽग्नौ शुष्यच्छरीरे च वामन हितम् । किम्भूतं सर्पि ? तत्सिद्धदुग्धजम्,—तैश्च—फलादिभि शृत(सिद्ध), तत्सिद्ध च तद्दुग्ध च, तस्मादुद्भूतम् ।

**आ० र०**—अन्यदाह—फलादीति । फलादीनि—श्रेष्ठत्वेनोक्तानि, तेषा क्वाथ, तेषामेव कल्क, तेषामेव क्षीराज्जात सर्पि, एकत्र सिद्ध मन्दाग्नौ कार्श्ये च पिबेत् । सङ्ग्रहे तु (क अ १)—"फलमज्जचूर्णमिश्रेण वाऽऽरग्वधादिद्रव्याणां गोपघोण्टाभूनिम्बबाणवर्जानां ससोमवल्कपञ्चकोलकानामन्यतमस्य निर्यूहेण साधित लेहमुपयुञ्जीत । फलमज्जचूर्णमिश्रेण वा रेणुकैलाशताह्वाकुस्तुम्बुरुतगरकुष्ठत्वक्चोरकमरुबकागुरुगुग्गुलुवालकश्रीवेष्टकपरिपेलवमासीशैलेयकस्थौणेयकसुरसापालेवतपूत्यशोकरोहिणीना द्वाविंशतेरन्यतमस्य कषायेण साधितामुत्कारिकांमोदन वा भक्षयेत् । फलपिप्पलीस्वरसकषायपरिपीतैर्वा तिलशालितन्दुलपिष्टैस्तत्कषायोपसृष्टै सुरसादिद्रव्यान्यतमनिर्यूहोपसृष्टैर्वा शष्कुलीरपूपानन्य वा भक्ष्य साधयित्वा भक्षयेत् ।" इति ।

**स्वरसं फलमज्ज्ञो वा भल्लातकविधिशृतम् ।
आदर्वीलेपनात्सिद्ध लीढ्वा प्रच्छर्दयेत्सुखम् ॥ १५ ॥
तं लेहं भक्ष्यभोज्येषु तत्कषायांश्च योजयेत् ।**

**स०**—फलमज्ज्ञो वा स्वरस भल्लातकविधानेन शृत दर्वालेप यावत् पक्त्वा लीढ्वा सुख वमेत् । त च लेह भक्ष्यादिषु तथा तस्य—मदनफलस्य, कषायान् योजयेत् ।

**आ० र०**—अन्यदाह—स्वरसमिति । भल्लातकविधि—उक्तो रसायनेषु ( हृ उ अ ३९।७२ ) ।

**वत्सकादिप्रतीवाप. कषाय. फलमज्जजः ॥ १६ ॥
निम्बार्कान्यतरक्वाथसमायुक्तो नियच्छति ।
बद्धमूलानपि व्याधीन् सर्वान् सन्तर्पणोद्भवान् १७**

**स०**—मदनफलमज्जजो वा कषायो वत्सकादिगणप्रतीवापो ( हृ सू अ १५।३३ ) निम्बार्कान्यतरक्वाथसयुक्तो व्याधीन् समूलानपि नियच्छति । कीदृशान्? सन्तर्पणजान् ।

**आ० र०**—अन्यदाह—वत्सकादीति ।

**राठपुष्पफलश्लक्ष्णचूर्णमाल्यं सुरूक्षितम् ।
वमेन्मण्डरसादीनां तृप्तो जिघ्रन् सुखं सुखी ॥ १८॥
एवमेव फलाभावे कल्प्यं पुष्पं शलाटु वा ।**

**इति मदनकल्पः ।**

**स०**—मदनपुष्पफलसूक्ष्मचूर्णे सुरूक्षितं—तद्रजसाऽतिधूसरित, पुष्प जिघ्रन् मण्डरसादीना तृप्त, आदिग्रहणात् कृशराक्षीरयवागूना परिग्रह, तथाविधो जिघ्रन् सुखी—क्लेशासहिष्णु, सुखेन वमेत् । एवमेव—अनेनैव क्रमेण, फलाभावे सति पुष्प—प्रकृतत्वान्मदनस्य, कल्पनीयम् । "अथादाय ततो मात्रा जर्जरीकृत्य वासयेत् । शर्वरी मधुयष्ट्या वा कोविदारस्य वा जले ॥" ( श्लो ६ ) इत्यादिविधिना शलाटु वा—बालमदन अपक्व फल वा, एव कल्पनीयम् ।

---

१ 'शेष तच्छ्राप्य क्षीर' ट । २ 'भयायनमार्गयोर्वामना' न । ३ 'उरसि कण्ठे हृ' स स. । ४ 'हृदामये च तनुकफोपदेहे ।' घ प । ५ "कफच्छर्द्या कफप्रसेके तमके च । श्लेष्मनिरसन हि कफप्रसेक । तमक—श्वास [विशेष] ॥ फलादीना—फलजीमूतकेक्ष्वाकुकोशातकीराजकोशातकीकुटजफलाना षण्णाम् । वामन—छर्दनम् ।" इति चन्द्र । ६ 'च' अ आ इ । ७ 'सर वमने हि' न. । ८ 'तच्छृतात् क्षीरसम्भवात् । का' न. । ९ 'पु तत्क्षीर' क घ ञ प । १० "दध्युत्तर दधिसर दध्यग्र कद्वरो दधिलेह ।" इति हृद्दीपके । ११ 'शुष्कदेहे' आ ई । १२ 'तु' ग । १३ 'चारग्व' क घ ञ.प. । १४ 'ग्वधेन्द्रयवाणा' क । १५ 'णां घो' स द्व. ।

१ 'रिका मोदक वा' क ञ स द्व । २ 'ष्कुल्यपू' ग. । ३ 'नन्यान् वा भक्ष्यान् सा' स स । ४ "बद्धमूलान्—कृतमूलान् ॥ सुखी—सुकुमार ।" इति चन्द्र । ५ 'श्लेष्मसन्त' अ. । ६ 'माला सुरूषिताम्' इ । 'सुरूषितम्' अ ई. क प चन्द्र । 'विरूक्षितम्' आ. । ७ 'मेन्नरो रसा' आ. । ८ 'लालाभे' आ.इ न । ९ 'क्षित पु' ट. । १० 'शश्रमास' ट. ।

आ० र०-अन्यदाह-राठपुष्पफलेति । राठो-मदन । सुरूषित-सुष्ठु अवकीर्णम् । शलाटु-बाल फलम् । सङ्ग्रहे तु (क अ १)-"फलपिप्पलीना वा फलादिनिर्यूहेणैकविंशतिकृत्व सुभाविताना कुसुमरज सदृशेन चूर्णेनावचूर्णयेत् सरसि सरोरुह बृहत्सायाह्ने तद्रात्रिमुषित प्रभाते पुनरवचूर्णितमुद्धृत्य हरिद्राकृशराक्षीरयवागूनामन्यतम सैन्धवगुडफाणितोपेतमाकण्ठ पीतवानुपजिघ्रन् सुकुमार समुचितगन्धसम्पदुत्क्लिष्टकफपित्तो भेषजद्वेषी च तथा सुखेन छर्दयति । एतेन सर्वमाल्यगन्धप्रावरणपटा व्याख्याता ।" इति ।

## अथ जीमूतकल्पः ।

**जीमूताद्याश्च फलवत्**

स०-जीमूततुम्बीकोशातक्याद्या कुटजफलपर्यन्ता फलवत्-मदनफलतुल्यविधिना, कार्या ।

आ० र०-मदनविधि जीमूतादिष्वतिदिशति-जीमूताद्या इति ।

**जीमूतं तु विशेषतः ॥ १९ ॥**
**प्रयोक्तव्यं ज्वरश्वासकासहिध्मादिरोगिणाम् ।**

स०-विशेषेण तु जीमूतो ज्वरादिषु योज्य ।

आ० र०-अथ जीमूतकल्प । तत्र विषयमाह-जीमूतमिति । जीमूत-देवदाली ।

**पयः पुष्पेऽस्य निर्वृत्ते, फले पेया पयस्कृता ॥ २० ॥**
**लोमशे क्षीरसन्तानं, दध्युत्तरमलोमशे ।**
**शृते पयसि दध्यम्ल जात हरितपाण्डुके ॥ २१ ॥**
**आसुत्य वारुणीमण्डं पिबेन्मृदितगालितम् ।**
**कफादरोचके कासे पाण्डुत्वे राजयक्ष्मणि ॥ २२ ॥**

स०-अस्य-जीमूतस्य, पुष्पे सम्पन्ने पय -क्षीर, जीमूतकृशृत प्रयोज्यम् । फलेऽस्य निष्पन्ने पयस्कृता-जीमूतशृतक्षीरनिष्पादिता, पेया योज्या । जीमूतफलस्य लोमशालोमशतया मृदुकठिनभेदेन द्वैविध्यम् । लोमशे तस्मिन् जीमूतफले शृतक्षीरस्य या सन्तानिका-शीतीभूतस्योपरिष्टाद्घनोऽवयव , त वमने पिबेत् । अलोमशे जीमूतफले-काठिन्यमागते, तच्चूर्णयुत द युत्तर-दधिसर, पिबेत् । शृते पयसि प्रकृतत्वाज्जीमूतफलै शृते । किम्भूते ? हरितपाण्डुके,-लोमशालोमशयोर्मध्यमावस्था प्राप्ते सति, दध्यम्ल जात पिबेत् । अम्लमेव दधि-दध्यम्लम्, केचित्तु मस्तु दध्यम्लमित्याहु । जीमूतफलेन वाऽऽसुत्य वारुणीमण्ड पिबेत् । किम्भूतम् ? मृदितगालित,-पूर्व मृदित खजादिना, पश्चाद् गालित-प्रस्रुतम् । केषु ? कफारोचकादिषु ।

आ० र०-प्रयोगमाह-पय इति । अस्य-जीमूतस्य, पुष्पे निर्वृत्ते पुष्पसिद्ध पय प्रयोक्तव्यम् । फले फलसिद्धक्षीर पेया । लोमशे फले तत्सिद्धक्षीरसन्तानिका । च्युतलोमनि फले तत्सिद्धक्षीरदधिसर दधि वा । हरितपाण्डुनि फले तत्सिद्धक्षीरजमम्ल दधि क्षीर वा । हरितपाण्डुभिर्वारुणीमण्ड आसुनुयात्-अवस्थान्तर नयेत् । ततो मृदितगालित कफजेष्वरोचकादिषु पिबेत् ।

**इय च कल्पना कार्या तुम्बीकोशातकीष्वपि ।**

स०-इय च कल्पना-'पय पुष्पेऽस्य निर्वृत्ते' इत्यादिका 'आसुत्य वारुणीमण्ड' इतिपर्यन्ता, तुम्बीकोशातकीष्वपि कार्या ।

आ० र०-जीमूतकल्पना तुम्बीकोशातक्योरतिदिशति-इयमिति । इय-अवस्थाभेदेन, कल्पना तुम्ब्या कोशातकीद्वये च ।

**पर्यागतानां शुष्काणां फलाना वेणिजन्मनाम् ॥२३॥**
**चूर्णस्य पयसा शुक्तिं वातपित्तार्दित पिबेत् ।**
**द्वे वा त्रीण्यपि वाऽऽपोथ्य क्वाथे तिक्तोत्तमस्य वा ॥**
**आरग्वधादिनवकादासुत्यान्यतमस्य वा ।**
**विमृद्य पूत तं क्वाथ पित्तश्लेष्मज्वरी पिबेत् ॥ २५॥**

स०-पर्यागताना-प्राप्तसम्यक्पाकाना, फलाना वेणिजन्मना-देवदाल्युत्पन्नाना, चूर्णस्य शुक्ति-अर्धपल, पयसा वातपित्ताभ्यामर्दित -आतुर , पिबेत् । द्वे वा त्रीण्यपि वा जीमूतफलान्यापोथ्य-जर्जरीकृत्य, तिक्तोत्तमस्य-निम्बस्य, क्वाथ पित्तश्लेष्मज्वरी पिबेत् । अथवा, आरग्वधादिनवकात्-आरग्वधवर्गौदाद्यौषधनवकात्, अन्यतमस्य क्वाथे द्वे वा त्रीण्यपि वा जीमूतफलान्यासुत्य-सन्धाय, तथा विमृद्य पूत क्वाथ पित्तश्लेष्मज्वरी पिबेत् । गरागरी च वेणी च देवदाली च जीमूत चेति पर्याया ।

आ० र०-अन्यदाह-पर्यागतानामिति । पर्यागताना-पक्वानाम् । वेणी-जीमूत । शुक्ति-अर्धपलम् ।

अन्यदाह-द्वे वेति । आपोथ्य-जर्जरीकृत्य । तिक्तोत्तमस्य-पटोलस्य । सङ्ग्रहे तु (क अ १)-"जीवकर्षभकेक्षुशतावरीणामन्यतमस्य स्वरसेन वा पित्तजे । अथवा पूर्ववत् घृत सिद्धम् ।" इति ।

**जीमूतकल्क चूर्ण वा पिबेच्छीतेन वारिणा ।**
**ज्वरे पैत्ते, कवोष्णेन कफवातात्कफादपि ॥ २६ ॥**

**इति जीमूतकल्पः ।**

स०-जीमूतचूर्ण फलमपि कल्कीकृत्याथवा तच्चूर्ण पित्तज-

१ 'रूक्षित' ग । २ 'बालफ' क ञ । ३ 'कृत्वा सु' ग । ४ 'फाणिततोयेन तमाक' ग. । ५ 'जिघ्रेत्' घ प स स । ६ 'तत्सुरभिगन्ध' स स । ७ 'श हि सु' स स । ८ "क्षीरसन्तान-क्षीरोपरिष्टाज्जालिका ।" इति चन्द्र । ९ 'जाते' अ.क.घ. । १० 'पाण्डुरे' अ.आ.इ । ११ 'फले शृ' ट.न. ।

१ 'वेणुज' इ । 'चोणिज' आ । २ 'ण्यथवा' अ आ ई ग प. । ३ 'विमृज्य' आ इ घ प । ४ 'गादौषध' ट । ५ 'घराघरी' न । ६ 'न वातपित्तजे' स स । ७ 'तच्चूर्ण कल्क वा' क. । ८ 'फलपिष्ट क' न ।

ज्वरे शीतेन जलेनालोड्य पिबेत् । तस्यैव कल्कं चूर्णं वा कफवातात् कफाच्चोद्भूते ज्वरे कवोष्णेन वारिणा पिबेत् ।

**आ० र०**–अन्यदाह–जीमूतकल्कमिति ।

**अथेक्ष्वाकुकल्पः ।**

**कासश्वासविषच्छर्दिज्वरार्ते कफकर्शिते[1] ।**
**इक्ष्वाकुर्वमने शस्तः[2] प्रताम्यति[3] च मानवे ॥ २७ ॥**

**स०**–कासाद्यार्ते कफादिते पुरुषे वमने–वमनविषये, इक्ष्वाकुः शस्तः । प्रताम्यति च मानवे–प्रतमःकाक्रान्तत्वाद्य प्रताम्यति नरस्तस्मिंश्च, शस्तः ।

**आ० र०**–अथेक्ष्वाकुकल्पः । तत्र विषयमाह–कासश्वासेति । इक्ष्वाकुः–कटुतुम्बी । प्रताम्यति–मूर्च्छायुक्ते ।

**फलपुष्पविहीनस्य प्रवालैस्तस्य[4] साधितम् ।**
**पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते[5] प्रयोजयेत् ॥२८॥**

**स०**–फलपुष्पविहीनस्य–असञ्जातफलपुष्पस्य, [तस्य–] इक्ष्वाकोः, किसलयैः क्षीरं साधितं पित्तश्लेष्मज्वरे पित्तोद्रिक्ते प्रयोजयेत् । फलपुष्पविहीनस्येत्यनेन कोमलत्वं प्रतिपादयति इक्ष्वाकोस्तन्त्रकृत् । अन्यथा "प्रवालैः साधितं क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ।" इति ब्रूयात् ।

**आ० र०**–प्रयोगमाह–फलपुष्पविहीनस्येति । विहीनत्व–अनुत्पत्त्या ।

इक्ष्वाकुफलस्य जरठावस्थस्य प्रयोगमाह—

**हृतमध्ये फले[6] जीर्णे स्थितं क्षीरं यदा दधि ।**
**स्यात्तदा कफजे कासे श्वासे वम्यं[7] च पाययेत् ॥२९॥**

**स०**–हृतमध्ये जीर्णे–सुपक्वे, तस्मिन् इक्ष्वाकोः फले हृतमध्यभागत्वाच्छून्यमध्ये क्षीरं स्थितं सत् यदा दधि जातं स्यात्तदा कफकासादिषु वमनार्थं पाययेत् ।

**आ० र०**–अन्यदाह–हृतमध्य इति । हृतमध्ये–निष्कुलीकृते । जीर्णे–पक्वे ।

**मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः[8] ।**
**तेन तक्रं विपक्वं वा पिबेत्समधुसैन्धवम् ॥ ३० ॥**

**स०**–इक्ष्वाकुफलमध्यं वा मस्तुना पाण्ड्वाद्यर्दितः पिबेत् । तेन–इक्ष्वाकुफलमध्येन, तक्रं वा विपक्वं मधुसैन्धवयुतं पिबेत् । समधुसैन्धवमित्युक्तं स्पष्टार्थम्, वमनविधौ हि समधुसैन्धवस्य वमनस्यानुज्ञानात् ।

**आ०र०**–अन्यदाह–मस्तुनेति । तेन–फलमध्येन । सङ्ग्रहे तु (क अ १)–"तदेव वा मध्यं सगुडपललं भक्षयेत् । इक्ष्वाकुफलतैलं वा पिबेत् ।" इति ।

**भावयित्वाऽऽजदुग्धेन बीजं तेनैव वा पिबेत् ।**
**विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ॥ ३१ ॥**

**स०**–अजादुग्धेन तद्बीजं भावयित्वा तेनैव–छगलीक्षीरेण, विषगुल्मादिषु पिबेत् ।

**आ० र०**–अन्यदाह–भावयित्वेति । तेनैव–आजदुग्धेन, विषादिषु षट्सु पिबेत् ।

**सक्तुभिर्वा पिबेन्मन्थं तुम्बीस्वरसभावितैः ।**
**कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके[1] ॥ ३२ ॥**

**स०**–सक्तुभिः–यवसक्तुभिः, तुम्बीस्वरसभावितैर्मन्थं वा पिबेत् । कफोद्भवेषु ज्वरादिषु ।

**आ० र०**–अन्यदाह–सक्तुभिरिति । कफजेषु ज्वरादिषु मन्थं पिबेत् ।

**[2]गुल्मे ज्वरे [3]प्रसक्ते च कल्कं मांसरसैः पिबेत् ।**
**नरः साधु वमत्येवं न च दौर्बल्यमश्नुते ॥ ३३ ॥**

**स०**–कल्कं तुम्ब्या मांसरसैः पिबेत् । गुल्मे तथा ज्वरे प्रसक्ते–दीर्घकालानुबन्धिनि । एवं सति पुरुषः साधुकृत्वा वमति । दौर्बल्यं च न प्राप्नोति ।

**आ० र०**–अन्यदाह–गुल्म इति । गुल्मे चिरकालज्वरे[4] च मांसरसैः कल्कं पिबेत् ।

**तुम्ब्याः फलरसैः[5] शुष्कैः[6] सपुष्पैरवचूर्णितम् ।**
**छर्दयेन्माल्यमाघ्राय गन्धसम्पत्[7]सुखोचितः[8][9] ॥ ३४ ॥**

**इतीक्ष्वाकुकल्पः ।**

**स०**–([10]तुम्ब्याः फलरसैः पुष्परसैश्चावचूर्णितं शुष्कैः–शोषितैः, तुम्बीफलरसैस्तुम्बीपुष्पचूर्णमिश्रितैरवचूर्णितं माल्यमाघ्राय सुखं वमेत् । गन्धसम्पत्–गन्धसम्पत्तिमत् ।)

**आ० र०**–अन्यदाह–तुम्ब्या इति । तुम्बीफलरसैः तुम्बीपुष्पचूर्णमिश्रितैः शोषितैरवचूर्णितं माल्यमाघ्राय सुखं वमेत् । गन्धसम्पत्–गन्धसम्पत्तिमत् । सङ्ग्रहे तु (क अ १)–"इक्ष्वाकुफलस्वरसं वा त्रिगुणक्षीरसाधितमुरःस्थिते[11] कफे पीनसे स्वरसादे[12] च पिबेत् । बिल्वमूलैः[13]प्रस्थक्वाथेन वा तुम्बीबीजानि क्वाथयेत् । ततस्तस्मिंस्त्रिभागघृते[14] घृतसमानि च पिष्ट्वा[15]

१ 'कर्षिते' आ क ग । २ 'श्रेष्ठ' क । ३ 'प्रताम्यति–तम प्रवेशयुक्ते मा' न । ४ 'लैस्तेन सा' आ । ५ 'पित्तोद्रेके' अ आ ग घ प । ६ 'ले पक्वे स्थि' अ । ७ 'वम्या च' इ ई क ग घ ञ प स च । ८ 'पाण्डु. कुष्ठी वि' अ ई क ग घ.च.ञ.प. चन्द्र ।

१ 'कण्ठरोगे' स च । २ 'गुल्मे मेहे प्रसेके च' स च । ३ 'प्रसेके च' आ इ । ४ 'कालोत्थज्व' ग । ५ "फलरसैः पुष्परसैश्चावचूर्णितं शुष्कं माल्यमाघ्राय सुखं वमेत् ।" इति चन्द्र । ६ 'शुष्क स' च द्र । ७ 'गन्ध सम्यक् सु' अ । ८ "गन्धसम्पत्सुखोचित इति गन्धसम्पत्–सुगन्धवत्त्वम्, तया गन्धसम्पदा सुखमुचित–अभ्यस्त, येन स', अवचूर्णितेक्ष्वाकुफलरसपुष्प माल्यमाघ्रायैव वमति, अनभ्यस्तदुर्गन्ध इति भाव ।" इति चक्र । ९ 'चितम्' अ इ ई । १० () इति पाठ ट पुस्तके नोपलभ्यते । ११ 'साधितमातुर पित्ते कफपीनसे' स मू । १२ 'सादे वा वमनार्थी पि' स द्व । १३ 'मूलद्विप्रस्थ' स स । १४ 'भागशृतेन घृतेन घृत' ग । 'भागेन घृतेन घृत' घ च प । 'भागघृतेन घृत' ञ. । 'भागेन घृतम् । घृत' स.स. । १५ 'पिष्ठानि तु' ग. ।

तुम्बीबीजानि तदर्द्धांशिकानि च प्रत्येक जीमूतमहाजालिनी-वल्मककृतवधनानि क्वाथतुल्यमेव च त्रिकटुकमावपेत्। तत पुनरधिश्रित्य लेह साधयेत्। तमवलिह्य प्रमथ्यामनु पिबेत्। अयमेव च कल्प काश्मर्यादिषु चतुर्षु महापञ्चमूलाङ्गेषु पृथक् पृथगुक्तो वेदितव्य वातकफगुल्मप्रसक्तज्वरेषु।" इति।

अथ धामार्गवकल्पः।

**कासगुल्मोदरगरे वाते श्लेष्माशयस्थिते।**
**कफे च कण्ठवक्त्रस्थे कफसञ्चयजेषु चै[1] ॥ ३५ ॥**
**धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च।**

स०—कासादिषु, तथा कफस्थानस्थे वाते, श्लेष्मणि गलस्थे मुखस्थे च, तथा कफसञ्चयजेष्वरोचकादिषु तथा स्थिरेषु—दीर्घकालप्ररूढेषु, महत्सु—चात्यन्त प्रवृद्धेषु रोगेषु, धामार्गव—कोशफलाख्य, इष्ट।

आ० र०—अथ द्विकोशातकीकल्प। तत्रादौ धामार्गवकल्प। तत्र विषयमाह-कासगुल्मेति। धामार्गवो—राजकोशातकी।

**जीवकर्षभकौ वीरा कपिकच्छूः शतावरी ॥ ३६ ॥**
**काकोली श्रावणी मेदा महामेदा मधूलिका।**
**तद्रजोभिः पृथग्लेहा धामार्गवरजोन्विताः ॥ ३७ ॥**
**कासे हृदयदाहे च शस्ता मधुसितैद्रुताः।**

स०—जीवकर्षभादीना पृथक्—प्रत्येकं, तेषा रजोभिश्चूर्णैर्मधुसिताभ्यामत्यन्त द्रुता—द्रवीकृता, धामार्गवरजोन्विता—तच्चूर्णमिश्रा, लेहा कासे हृदयदाहे च शस्ता। मधूलिका—मधुयष्टि।

आ० र०—प्रयोगमाह-जीवकर्षभकाविति। वीरा—विदारी। श्रावणी—मुण्डी। मधूलिका—जलज यष्टीमधु। पाक विनाऽपि मधुसितायोगेनैव लेहत्वम्।

**ते सुखाम्भोनुपानाः स्युः पित्तोष्मसहिते कफे॥३८॥**

स०—त एव—पूर्वोक्ता लेहा, उष्णोदकानुपाना वमनाय भवेयु। कफे पित्तोष्मसहिते सति—पित्तेन तथा पित्तकार्येणोष्मणा युक्ते।

आ० र०—ते—जीवकादिलेहा। सुखाम्भः—कोष्णमुदकम्। पित्तोष्मा—पित्तजस्ताप। सङ्ग्रहे तु (क अ १)—"जीवनीयान्यतमचूर्णसयुक्तान् समधुशर्करास्तत्कषायैर्लेहान् पित्तोपसर्जने श्लेष्मणि विदध्यात्।" इति।

**धान्यतुम्बरुयूषेण कल्कस्तस्य विषापहः।**

स०—तस्य—धामार्गवस्य, कल्को धान्यतुम्बरुभ्या यूषेण—क्वाथेन, उपयुक्तो विषघ्न स्यात्।

आ० र०—अन्यदाह—धान्येति। धान्य—कुस्तुम्बरी। यूष—क्वाथ।

**बिम्ब्याः पुनर्नवायां वा कासमर्दस्य वा रसे ॥ ३९॥**
**एक धामार्गव द्वे वा मानसे मृदित पिबेत्।**
**तच्छृतक्षीरज सर्पिः साधितं वा फलादिभिः ॥४०॥**

इति धामार्गवकल्पः।

स०—बिम्ब्यादीनामन्यतमस्य रसे—क्वाथे, धामार्गवफलमेक मृदित कृत्वा, अथवा द्वे फले, मानसे—मनोविकारे, वमन (नार्थं) पिबेत्। अथवा, तच्छृतक्षीरज सर्पि—धामार्गवफलसाधित क्षीरोद्भव [घृत], फलादिभि साधित—मदनफलजीमूतकेक्ष्वाकुधामार्गवकोशातकीकुटजै षड्भि पक्व, मानसे वमनार्थ पिबेत्।

आ० र०—अन्यदाह-बिम्ब्या इति। फलादिभि—षड्भि श्रेष्ठै। सङ्ग्रहे तु (क अ १)—"सुमन सौमनस्यायनीहरिद्राचोरकहैमवतीमहासहाक्षुद्रसहावृश्चीवबिम्बीपुनर्नवाकासमर्दान्यतमकषायेण धामार्गवमेक द्वे वा मनोविकारेषु।" इति।

अथ क्ष्वेडकल्पः।

**क्ष्वेडोऽतिकटुतीक्ष्णोष्णः प्रगाढेषु प्रशस्यते।**
**कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥ ४१ ॥**

स०—क्ष्वेड—तिक्तकोशातकी, अतितीक्ष्णोष्णकटुकत्वात् कुष्ठादिषु प्रगाढेषु—अत्यन्तचिरकालजत्वाद् दृढेषु प्ररूढेषु, प्रशस्यते।

आ० र०—अथ क्ष्वेडकल्प। तत्र विषयमाह-क्ष्वेड इति। क्ष्वेड—कोशातकी।

**पृथक् फलादिषट्कस्य क्वाथे मांसमनूपजम्।**
**कोशातक्या सम सिद्धं तद्रसं लवणं पिबेत् ॥४२॥**

स०—पृथक् फलादिषट्कस्य—मदनफलेक्ष्वाक्वादिकस्य, क्वाथे मासमनूपज कोशातक्या सम—तया तुल्य, सिद्ध—पक्व, तद्रस—तस्य मासस्य रस, लवणान्वित पिबेत्।

आ० र०—प्रयोगमाह—पृथगिति।

**फलादिपिप्पलीतुल्यं सिद्धं क्ष्वेडरसेऽथवा।**

स०—फलादिपिप्पल्यो—मदनफलजीमूतेक्ष्वाकुफलमध्यबीजानि, ताभिस्तुल्यमानूप मास समक्ष्वेडरसेन सिद्ध वा पिबेत्।

---

१ 'दर्धांशानि' स स.। २ 'रपि शृत्वा ले' सं मू.। ३ 'तु' इ.। ४ 'तान्विता' इ.। 'तायुता' ग। ५ "धान्यतुम्बरुक्वाथ एव धान्यतुम्बरुयूष। उक्त हि जतूकर्णे—'धान्यतुम्बरुरसेन कल्को विषनुत्।' इति।" इति चक्र'।

१ 'याश्च का' अ। २ "सौमनस्यायनी—जातिपत्रिका।" इतीन्दु। ३ 'स्यायवानी' क स मू। ४ 'महासहाद्' क ग घ ञ प। ५ 'षु च श्रा' अ इ। ६ 'ड—कटुको' क। ७ 'क्या. सम' अ.इ क ग.। ८ 'डरसेन वा' अ.आ ई ञ।

आ० र०–अन्यदाह–फलादीति । पिप्पल्यो–बीजानि, तैस्तुल्यमानूपमासम् ।

**क्ष्वेडकाथं पिबेत्सिद्धं मिश्रमिक्षुरसेन वा ॥ ४३ ॥**

**इति क्ष्वेडकल्पः ।**

स०–यद्वा, इक्षुरसेन मिश्र क्ष्वेडक्काथे सिद्धमानूपज मासरस सलवण पिबेत् ।

आ० र०–अन्यदाह–क्ष्वेडक्काथमिति ।

**अथ कुटजफलकल्पः ।**

**कौटजं सुकुमारेषु पित्तरक्तकफोदये ।**
**ज्वरे विसर्पे हृद्रोगे खुडे कुष्ठे च पूजितम् ॥ ४४ ॥**

स०–कुटज सुकुमारेषु–अत्यन्तवमनासहिष्णुषु, पित्तरक्तकफोदये–अतिशयेनाधिके तस्मिन्, तथा ज्वरादिषु, वमने श्रेष्ठम् ।

आ०र०–अथ कुटजकल्प । तत्र विषयमाह–कौटजमिति ।

**सर्षपाणां मधूकानां तोयेन लवणस्य वा ।**
**पाययेत्कौटजं बीजं युक्तं कृशरयाऽथवा ॥ ४५ ॥**
**सप्ताहं वाऽर्कदुग्धाक्त तच्चूर्ण पाययेत्पृथक् ।**
**फलजीमूतकेक्ष्वाकुजीवन्तीजीवकोदकैः ॥ ४६ ॥**

**इति कुटजफलकल्प. ।**

स०–सर्षपादीना पृथक् तोयेन–क्काथेन, सैन्धवस्य च जलेन, कुटजबीज पाययेत् । अथवा, कृशरया सह कौटज पाययेत् । अथवा, सप्ताहमर्कदुग्धाक्त कुटजबीजचूर्ण पृथक् मदनफलाद्युदकै पाययेत् ।

आ० र०–प्रयोगमाह–सर्षपाणामिति ।

**वमनौषधमुख्यानामिति कल्पदिगीरिता ।**
**बीजेनानेन मतिमानन्यान्यपि च कल्पयेत् ॥ ४७ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां पञ्चमे कल्पसिद्धिस्थाने वमनकल्पो नाम प्रथमोऽध्यायः ॥ १ ॥**

स०–वमनौषधमुख्याना–छर्दिषि प्रधानानामौषधाना, इति–एव प्रकारेण, कल्पस्य दिक्–गति , ईरिता–कल्पमार्ग उदित । अनेन बीजेन–अनया दिशा, सुमतिरन्यान्यपि वमनौषधानि कल्पयेदिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया पञ्चमे कल्पसिद्धिस्थाने वमनकल्पो नाम प्रथमोऽध्याय समाप्त ॥१॥

आ० र०–वमनयोगानुपसहरति–वमनौषधेति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।

वान्त्यौषधप्रकरण सामस्त्येन निरूपितम् ॥ १ ॥



## द्वितीयोऽध्यायः ।

वमनादनन्तर विरेचनस्योपयोग इति वमनकल्पादनन्तर विरेचनकल्प प्रक्रम्यत इत्याह—

**अथातो विरेचनकल्पं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

स०–कल्पन कल्पो–योजना । विरेचन–अधोभागेन दोषनिर्हरणम्, तस्य कल्पो–विरेचनकल्प , त व्याख्यास्याम । शेष पूर्ववत् । दन्तीद्रवन्त्यादिभ्य सर्वेभ्योऽपि विरेचनद्रव्येभ्यो निरपायित्वाद्विरेचनसाध्ये व्याधावनिषिद्धप्रसरत्वात् [च] पूर्व त्रिवृताया उपन्यास ।

आ० र०–विरेचनकल्प व्याख्यातु प्रतिजानीते-अथेति । अथ विरेचनकल्प । तत्र सङ्ग्रहे (क अ २)–"विरेचनद्रव्याणा मूलेषु त्रिवृत्, त्वक्षु तिल्वक , क्षीरेषु स्नुही, फलेषु हरीतकी, प्रधानानि ।" इति ।

**अथ त्रिवृच्छ्यामयोः कल्प' ।**

**कषायमधुरा रूक्षा विपाके कटुका त्रिवृत् ।**
**कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ १ ॥**

स०–अनेनास्या स्वरूपकथनम् ।

---

१ 'क्ष्वेडक्काथे पि' अ इ ग ञ न अरुण चद्र । 'क्ष्वेडक्काथे' इति पाठ प्रकल्प्य 'इक्षुरसेन मिश्र क्ष्वेडक्काथे सिद्ध मांसरस पिबेत् ।' इति मासरसयोगरूप अरुणदत्तचन्द्रनन्दनाभ्या कृत व्याख्यानमयुक्तम्, चरकजतूकर्णविरुद्धत्वात् । चरके जतूकर्णे च नाय मासरसयोग , किन्तु इक्षुरसयोग । तथा च चरक (क अ ६।१२)–'क्ष्वेड कासी पिबेत्सिद्ध मिश्रमिक्षुरसेन च ।' इति । जतूकर्णश्च–'क्ष्वेडमिक्षुरसे शृतम् ।' इति । २ "सिद्धमिति इक्षुरसेन मिश्रित सत् साधितम् ।" इति चन्द्र । ३ 'कुटज' अ आ ई क न अरुण चन्द्र । कौटज–कुटजफलम् । ४ 'चार्के' अ इ क । ५ "कल्पदिगीरिता–सुतरामुपयोगिनी लेशोक्तिरभिहिता । अनेन बीजेन–उदाहरणेन ।" इति चन्द्र । ६ 'विधिनाऽनेन' आ. । ७ 'न्यानपि' अ आ इ ई क घ ञ प । ८ 'योजयेत्' आ ।

१ 'वाम्यौष' क । २ अथ विरेचनकल्पश्चरके क० ७।८।९।१०।११।१२ अध्यायेषु, सुश्रुते सू० ४४ अध्याये, अष्टाङ्गसङ्ग्रहे क० २ अ० चास्ति वर्णित । ३ 'वृत उप' ट । ४ 'कषाया मधुरा' अ आ. इ क ग घ ञ न ,स च । ५ 'क्ष्यात्स्याऽनि' आ । 'क्ष्यादनि' ग ।

आ० र०–त्रिवृद्गुणानाह–कषायमधुरेति ।

**सेदानीमौषधैर्युक्ता वातपित्तकफापहैः ।**
**कल्पवैशेष्यमासाद्य जायते सर्वरोगजित् ॥ २ ॥**

स०–सा–एवगुणा त्रिवृत्, अधुना वातपित्तकफघ्नैरौपधै-र्युक्ता कल्पविशेषत्व प्राप्य विरेचनमा यव्याधिविषये सर्वरोग-जिज्जायते ।

आ० र०–सयोगादिकृतान् गुणानाह–सेदानीमिति ।

**द्विधा ख्यातं च तन्मूलं श्यामं श्यामाऽरुणं त्रिवृत् ।**

स०–तस्या –त्रिवृतो, मूल द्विप्रकारम्,–एक श्याममपर-मरुणम् । श्याम मूल श्यामा, त्रिवृदरुणमिति ख्याख्य द्विसञ्ज्ञम् ।

आ० र०–भेदद्वयमाह–द्विधेति । श्याम–श्यामाख्यम् । अरुण–त्रिवृदाख्यम् ।

**त्रिवृदाख्यं वरतरं निरपायं सुखं तयोः ॥ ३ ॥**
**सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ।**

स०–तयो –श्यामारुणयो , यदरुण मूल तद्वरतरम् । सा-मर्थ्यात् श्याम वरम् । अरुण यन्मूल तन्निरपायत्वात् सुकुमा-रादिषु हितम्, न श्याम सापायत्वात् ।

आ० र०–अरुणस्य विषयमाह–त्रिवृदाख्यमिति ।

सापायत्वे विशेषेण हेतुमाह—

**मूर्च्छासम्मोहहृत्कण्ठकषणक्षणनप्रदम् ॥ ४ ॥**
**श्यामं तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ।**
**क्रूरे कोष्ठे बहौ दोषे क्लेशक्षमिणि चातुरे ॥ ५ ॥**

स०–श्याम मूल मूर्च्छादिहृत्कण्ठकषणक्षणनप्रदम् । तत्ती-क्ष्णत्वादाशुकारित्वाच सापायत्वमस्य । तदेवरूपमपि श्याम शस्यते क्रूरकोष्ठादिविषये ।

आ० र०–श्यामस्य विषयमाह–मूर्च्छेति । मूर्च्छासम्मो-हयोर्ज्ञानभ्रंशे तुल्ये देहपातापाताभ्या भेद । कषण–विले-खन हृदयस्य । क्षणन–क्षत कण्ठस्य ।

**गम्भीरानुगत श्लक्ष्णमतिर्यग्विसृत च यत् ।**
**गृहीत्वा विसृजेत्काष्ठं त्वच शुष्कां निधापयेत् ॥६॥**

स०–गम्भीरानुगत–गूढ कृत्वा भूमावन्त प्रविष्टम्, तथा श्लक्ष्ण–अपरुषम्, तथाऽतिर्यग्यात(विसृत)–स्पष्ट कृत्वा भूमौ गतम्, एवविध त्रिवृताया मूल गृहीत्वा तत्काष्ठं विसृजेत् । त्वच शुष्का कृत्वा निधापयेत्–स्थापयेत् ।

आ० र०–ग्रहणविधिमाह–गम्भीरानुगतमिति । गम्भी-रानुगत–दूरमधोयातम् । अतिर्यग्विसृत–बहुषु तथाभूतेषु मध्यमम् ।

**अथ काले[२] ततश्चूर्णं किञ्चिन्नागरसैन्धवम् ।**
**वातामये[३] पिबेदम्लैः**

स०–अथ–अनन्तरम्, काले–विरेचनप्रस्तावे, तत –मूल-त्वच, चूर्णमीपन्नागरसैन्धवमम्लै –काञ्जिकादिभि, वातविकारे पिबेत् ।

आ० र०–वाते विरेचनमाह–अथेति । किञ्चिन्नागरसै-न्धव–नागरसैन्धवयोर्मिथस्तुल्याशयोश्चूर्णेन चतुर्थांशतुल्येन युक्त, अम्लै पिबेत् । सङ्ग्रहे तु (क अ २)–"मांसरसेन वा ।" इति ।

**पैत्ते साज्यसितामधु ॥ ७ ॥**
**क्षीरद्राक्षेक्षुकाश्मर्यस्वादुस्कन्धवरारसैः ।**

स०–पैत्ते विकारे सहघृतशर्करामधु तच्चूर्ण क्षीरेण द्राक्षादि-रसैर्वा पिबेत् ।

आ० र०–पित्ते विरेचनमाह–पित्त इति । वरा–त्रिफला । रसशब्दो द्राक्षादिभि प्रत्येक सम्बध्यते ।

**कफामये पीलुरसमूत्रमद्याम्लकाञ्जिकैः ॥ ८ ॥**
**पञ्चकोलादिचूर्णैश्च युक्त्या युक्त कफापहैः ।**

स०–कफविकारे तच्चूर्ण पीलुरसादिभि पिबेत् । पञ्चको-लादिभिश्चूर्णैश्च कफघ्नैर्युक्तम् । कथम्? युक्त्या,–पञ्चकोलादिचू-र्णाना योगे नातिव्याप्तिर्न वाऽव्याप्ति, पञ्चकोलादिचूर्णेन त्रिवृता-चूर्णस्य सम्यग्योग स्यादित्यर्थ । आदिशब्देनान्येषा पाचनदी-पनाना पञ्चकोलसदृशाना चित्रका(मरिचा)दीना ग्रहणम् ।

आ० र०-कफे विरेचनमाह–कफामय इति । पीलु–तीक्ष्णतरु । सङ्ग्रहे तु (क अ २)–"एभिरेव च द्रव्यैर्य-थास्व घृतशर्कराद्राक्षाक्षोडतवक्षीरीमधुराणि मातुलुङ्गदाडि-मामलककोलकरमर्दककपित्थरसतक्राम्लानि सैन्धवलवणानि व्योषतीक्ष्णानि विविधवेसवारपूरितानि सहकाररसत्रिजात-कनागकेसरकर्पूरसुरभीणि लेहगुटिकामोदकभक्ष्यभोज्यान्यु-पकल्पयेत् ।" इति ।

**त्रिवृत्कल्ककषायाभ्यां[१२] साधितः ससितो हिमः ॥९॥**
**मधुत्रिजातसंयुक्तो लेहो हृद्य विरेचनम् ।**

स०–त्रिवृत कल्केन कषायेण च साधित सशर्करो लेह

१ "वरतर–अतिश्रेष्ठम् । निरपाय–निर्विघ्नम् । सुख–सुखकारि ॥ हृत्कर्षण–हृदयत्रास । कण्ठकर्षण–कण्ठव्यथाकारि । क्षणन–गुद-व्यथा ।" इति चन्द्र । "अतियग्विसृत–अधोगतम् ।" इतीन्दु । २ 'कर्षण' इ क ञ चन्द्र स ह्व । ३ 'बहुदोषे' आ इ । 'म-हादोषे' अ । ४ 'ग्विस्तृत' ग ।

१ 'विस्तृत' ग । २ 'ले च तच्चूर्ण' आ । 'लेन तच्चूर्ण' इ । 'ले त्रिवृच्चूर्ण' क । 'ले तु तच्चूर्ण' न । ३ 'मयी पि' आ । ४ 'वातातुर पि' ट । ५ 'पित्ते' अ इ ई क ग घ ञ प न । ६ 'श्च युक्त युञ्ज्यात्कफा' अ इ । ७ 'यु क्त्या युक्तम्–' न । ८ 'न चान्या' ट । ९ 'र्यथासुख घृ' ञ । १० 'द्राक्षेक्षुरसतुगाक्षीरी' स म । ११ 'वारपरिपू' स स । १२ 'कषायेण' अ आ इ क घ ञ न स ह्व ।

शीतो मधुत्रिजातसयुक्तो हृद्य विरेचन स्यात्। अत्र च कासचिकित्सितोक्तकण्टकारिकालेहवत् (हृ चि अ ३।६३) प्रमाण निरूपयितव्यम्।

**आ० र०–हृद्य विरेचनमाह–त्रिवृदिति।**

**अजगन्धा तवक्षीरी विदारी शर्करा त्रिवृत्॥ १०॥**
**चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते।**
**सन्निपातज्वरस्तम्भपिपासादाहपीडितः॥ ११॥**

**स०**–अजगन्धादिचूर्ण मधुसर्पिर्भ्या लीढ्वा साधु विरिच्यते। सन्निपातज्वरादिपीडित सन्।

**आ० र०–सन्निपातादौ विरेचनमाह–अजगन्धेति।**

**लिम्पेदन्तस्त्रिवृतया द्विधाकृत्वेक्षुगण्डिकाम्।**
**एकीकृत्य च तत्स्विन्नं पुटपाकेन भक्षयेत्॥ १२॥**

**स०**–इक्षुगण्डिका द्विधाकृत्य(त्वा)–पाटयित्वा, त्रिवृतयाऽन्तर्लिम्पेत्। अनन्तरमेकीकृत्य पुटपाकेन स्विन्न भक्षयेत्।

**आ० र०–तत्रैव विरेचनान्तरमाह–लिम्पेदिति। इक्षुगण्डिका–इक्षुकाण्डम्।**

**भृङ्गैलाभ्या समा नीली तैस्त्रिवृत्तैश्च शर्करा।**
**चूर्ण फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत्॥ १३॥**
**वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च।**
**नरेषु सुकुमारेषु निरपायं विरेचनम्॥ १४॥**

**स०**–त्वगेलाभ्या तुल्या नीली, तैश्च तुल्या त्रिवृत्, सर्वैश्च तुल्या सिता, चूर्ण फलरसक्षौद्रसक्तुभिस्तर्पण पिबेत्। वातपित्तकफोत्थेषु रोगेष्वल्पाग्निषु च नरेषु तथा सुकुमारेषु विरेचनमेतन्निरपायम्।

**आ० र०–वातरोगादिषु विरेचनमाह–भृङ्गैलाभ्यामिति। भृङ्ग–त्वक्। नीली–कालाञ्जनी। तै–त्रिभि। तै–चतुर्भि। फलरसो–द्राक्षादिर्रस। तर्पण–मन्थम्। मन्थग्रहण सक्तूनां प्राधान्यार्थम्, तेन चूर्णतुल्या यवसक्तवो मानानुक्तेश्च।**

**विडङ्गतण्डुलवरायावशूककणास्त्रिवृत्।**
**सर्वतोऽर्धेन तल्लीढ मध्वाज्येन गुडेन वा॥ १५॥**
**गुल्मं प्लीहोदर कासं हलीमकमरोचकम्।**
**कफवातकृताश्चान्यान् परिमार्ष्टि गदान् बहून्॥१६॥**

**स०**–विडङ्गतण्डुलादय समाशा, सर्वेभ्योऽर्धेन त्रिवृत्, तदेतच्चूर्ण मधुघृताभ्या लीढ गुडेन वाऽऽस्वादित गुल्मादीन् कफवातोत्थाश्चान्यानपि गदान् बहून् परिमार्ष्टि–पराकरोति।

**आ० र०–गुल्मादिषु विरेचनमाह–विडङ्गेति। विडङ्गतन्दुलो–विडङ्गसार।** कणा–पिप्पली। सर्वत–विडङ्गादिभ्य षड्भ्य।

**विडङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकान्।**
**मरीचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पलीः॥ १७॥**
**दीप्यक पञ्चलवणं चूर्णितं कार्षिकं पृथक्।**
**तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ॥ १८॥**
**धात्रीफलरसप्रस्थास्त्रीन् गुडार्धतुलान्वितान्।**
**पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयन्त्रणः॥ १९॥**
**कुष्ठार्शःकामलागुल्ममेहोदरभगन्दरान्।**
**ग्रहणीपाण्डुरोगाश्च हन्ति पुसवनश्च सः॥ २०॥**
**गुडः कल्याणको नाम सर्वेष्वृतुषु यौगिकः।**

**स०**–विडङ्गादीनि कार्षिकाणि, त्रिवृताचूर्णतिलतैले पृथगष्टपलप्रमाणे, आमलकफलरसप्रस्थास्त्रीन्, गुडपलानि पञ्चाशत्, मृद्वग्निना पक्त्वा तस्मान्मात्रामयन्त्रण–यन्त्रणारहित सन्, भक्षयेत्। स च भक्षित कुष्ठादीन् हन्ति पुसवनश्च स्यात्। गुडोऽय कल्याणकसज्ञ सर्वेषु च ऋतुषु यौगिक–युज्यते।

**आ० र०–कल्याणक गुडमाह–विडङ्गपिप्पलीति।**

**व्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत्॥ २१॥**
**सर्वैः समा समसिता क्षौद्रेण गुटिकाः कृताः।**
**मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये॥ २२॥**
**तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ताः सर्वविषेषु च।**
**अविपत्तिरयं योग प्रशस्तः पित्तरोगिणाम्॥ २३॥**

**स०**–व्योषादिभि समभागै सर्वैर्द्रव्यैस्त्रिवृत्समा, सा च त्रिवृत् तुल्यशर्करा, एवमेता क्षौद्रेण गुटिका कृता मूत्रकृच्छ्रादिषु शस्यन्ते। अविपत्तिरय योग पित्तरोगिणा प्रशस्त।

**आ० र०–मूत्रकृच्छ्रादिषु विरेचनमाह–व्योषेति। सर्वैं नवभि, समा–नवभागा त्रिवृत्। समसिता–शर्कराया अपि नव भागा।**

**त्रिवृता कौटज बीज पिप्पली विश्वभेषजम्।**
**क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम्॥ २४॥**

**स०**–त्रिवृतादिक क्षौद्रद्राक्षारससयुक्त प्रावृषि विरेचनम्।

**आ० र०–वर्षासु विरेचनमाह–त्रिवृतेति।**

---

१ 'तुगाक्षीरी' आ क। 'तुकाक्षीरी' स स। २ 'तच्चूर्णम' क। ३ 'ण्डिका' घ। 'ण्डिकम्' स द। 'काण्डिकाम्' ग। 'कण्डिकाम्' च प। ४ 'त्य च सुस्विन्न' अ। 'त्य तु त' आ। 'कृत च' इ। ५ 'क्षुकाण्डि' ग। 'क्षुकण्डि' च प। ६ 'त्वगेला' आ स स अरुण। ७ "भृङ्ग–गुडत्वक्। फलरस–दाडिमरस।" इति चक्र। "गुडयोगे जलेन लेह।" इतीन्दु। ८ 'दिफलरस' क।

अ० ९५

१ 'त्रकम्' अ घ न। २ 'प्पलि।' आ इ ग प न। ३ 'भागावष्ट' ग प। ४ 'तुलोन्मितान्' इ। 'तुला तथा' स च। ५ 'यन्त्रित' क। ६ अस्याग्रे 'मन्दाग्नित्व ज्वर मूर्च्छां मूत्रकृच्छ्रमरोचकम्।' इति क ञ पुस्तकयो सङ्ग्रहमूले चाधिक श्लोकार्धम्। ७ 'सर्वर्तुषु च यौ' स स। ८ "यौगिक–प्रयोगमर्हति।" इति चन्द्र। "मधु च तावन्मात्र यावता मोदको (गुटिका) भवति।" इति चक्र। ९ 'समाना ससिता क्षौद्रेण गुलकीकृता।' आ। १० अस्याग्रे 'भक्षयेत्प्रातरुत्थाय शीत चानु पिबेज्जलम्।' इति आ पुस्तकेऽधिक श्लोकार्धम्। ११ श्लोकार्धमिदमरुणदत्तसम्मतम्। १२ 'षि सुख वि' ट।

**त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम् ।**
**द्राक्षाम्बुना सयष्ट्याह्वसातलं जलदात्यये ॥ २५ ॥**

स०-त्रिवृद्दुरालभादिकं द्राक्षाजलेन शरदि विरेचनम् ।

आ० र०-शरदि विरेचनमाह-त्रिवृदिति । उदीच्य-वालकम् । सातला-सप्तला ।

**त्रिवृता चित्रकं पाठामजाजी सरलं वचाम् ।**
**स्वर्णक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ॥ २६ ॥**

स०-त्रिवृतादिकं चूर्णमुष्णाम्बुना सह हेमन्ते पिबेत् ।

आ० र०-हेमन्ते विरेचनमाह-त्रिवृतामिति ।

**त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ।**

स०-त्रिवृच्छर्करासमा ग्रीष्मर्तौ विरेचनम् ।

आ० र०-ग्रीष्मे विरेचनमाह-त्रिवृतेति ।

**त्रिवृत्त्रायन्तिहपुषासातलाकटुरोहिणीः ॥ २७ ॥**
**स्वर्णक्षीरीं च सञ्चूर्ण्य गोमूत्रे भावयेत्त्र्यहम् ।**
**एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ॥ २८ ॥**

स०-त्रिवृदादीनि सञ्चूर्ण्य त्र्यहं गोमूत्रे भावयेत् । एष योगः सर्वर्तुष्वपि स्निग्धानां नराणां मलदोषस्य हारकः स्यात् ।

आ० र०-स्निग्धानां सर्वर्तुकं विरेचनमाह-त्रिवृदिति ।

**श्यामात्रिवृद्दुरालम्भाहस्तिपिप्पलिवत्सकम् ।**
**नीलिनीकटुकामुस्ताश्रेष्ठायुक्तं सुचूर्णितम् ॥ २९ ॥**
**रसाज्योष्णाम्बुभिः शस्तं रूक्षाणामपि सर्वदा ।**

**इति त्रिवृच्छ्यामयोः कल्पः ।**

स०-श्यामाद्यं चूर्णीकृतं मासरसघृतोष्णाम्बुभी रूक्षाणामपि सर्वकालं शस्तम् । अपिशब्दात् स्निग्धानां शस्तमेव ।

आ० र०-रूक्षाणामपि सर्वर्तुषु विरेचनमाह-श्यामेति । सङ्ग्रहे तु(?)( चरके क अ ७ )-"व्योषत्वक्पत्रमुस्तैलाविडङ्गामलकानि समान् । त्रिवृतोऽष्टगुणं भागं शर्करायाश्च षड्गुणम् ॥ गुडेन गुटिकां कुर्यात् क्षौद्रेण सह संयुताम् । मूत्रकृच्छ्रे ज्वरे वम्यां कासे शोषे भ्रमे क्षये ॥ गुल्मे पाण्ड्वामयेऽल्पेऽग्नौ शस्ता निर्यन्त्रिताशिने । योगः सर्वविषाणां च मतः श्रेष्ठं विरेचनम् ॥" (सङ्ग्रहे क अ २)-"त्र्यूषणत्रिफलाहिङ्गु कार्षिकं त्रिवृतापलम् । सौवर्चलार्धकर्षश्च पलार्द्धं चाम्लवेतसात् ॥ तच्चूर्णं शर्करातुल्यं मण्डेनाम्लेन वा पिबेत् । गुल्मपार्श्वार्तिनुत्सिद्धं जीर्णे चास्मिन् रसौदनम् ॥ त्रिवृतात्रिफलादन्तीसातलाव्योषसैन्धवैः ॥ प्रकल्प्य चूर्णं सप्ताहं भाव्यमामलकाद्रसे ॥ तद्योज्यं तर्पणे यूषे पिशिते रागयुक्तिषु ॥ तुल्याम्लं त्रिवृताकल्कसिद्धं गुल्महरं घृतम् ॥ श्यामात्रिवृत्कषायेण सिद्धं सर्पिः पयोऽथवा । त्रिवृन्मुष्टीस्तु सनखानष्टौ द्रोणेऽम्भसः पचेत् ॥ पादशेषं कषायं तं पूतं गुडतुलायुतम् । स्निग्धे स्थाप्यं घटे क्षौद्रपिप्पलीफलचित्रकैः ॥ लिप्ते मासे गते पीतं पाण्डुश्वयथुगुल्मजित् । सुरा वा त्रिवृतापादकिण्वा तत्क्वाथसंयुता ॥ यवैः श्यामात्रिवृत्क्वाथस्विन्नैः कुल्माषमम्भसा । आसुतं षडहं पल्ले जातं सौवीरकं पिबेत् ॥ भृष्टान् वा सतुषान् सिद्धान् यवास्तच्चूर्णसंयुतान् । आसुतानम्भसा तद्वत्पिबेज्जातं तुषोदकम् ।" इति । वृन्दे तु (अ ७४।९)-"अभया पिप्पलीमूलं मरिचं विश्वभेषजम् । त्वक्पत्रपिप्पलीमुस्तविडङ्गामलकानि च ॥ एतानि समभागानि दन्ती च त्रिगुणा भवेत् । त्रिवृद्द्विगुणा देया षड्गुणा चात्र शर्करा ॥ मधुना मोदकान् कृत्वा चाक्षमात्रान् प्रमाणतः । एकैकं भक्षयेत्प्रातः शीतं चानु जलं पिबेत् ॥ तस्माद्विरिच्यते जन्तुर्यावदुष्णं न सेवते । पानाहारविहारेषु भवेन्निर्यन्त्रणं सदा ॥ पाण्डुत्वकासविषमज्वरवह्निसादान् जङ्घोरुपृष्ठजघनोदरपार्श्वशूलान् । दुर्नामकुण्डलभगन्दरशोफगुल्मान् यक्ष्मोदरभ्रमविदाहकमूत्रकृच्छ्रान् ॥ प्लीहाक्षिरोगपवनाश्मरिकुष्ठमेहान् हन्याद्रसायनमिदं भिषजा प्रयुक्तम् । अल्पव्ययं बहुफलं सततोपयोज्यमायुष्करं पलितनाशनमश्विदृष्टम् ॥" इति ।

## अथ राजवृक्षकल्पः ।

**ज्वरहृद्रोगवातासृगुदावर्तादिरोगिषु ॥ ३० ॥**
**राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ।**

स०-ज्वरादिष्वन्येभ्यस्तद्विषयोक्तेभ्यो विरेचनद्रव्येभ्यो राजवृक्षोऽतिशयेन पथ्यः । किम्भूतः ? मृदुर्मधुरः शीतलश्च ।

आ० र०-आरग्वधकल्पमाह-ज्वरहृद्रोगेति ।

**बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ॥ ३१ ॥**
**योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः ।**

---

१ 'हृच्छीतलं' अ इ । 'ह्नशीतलं' न स मू । २ "हेमन्ते यद्यपि प्रबलशीतवाते विरेचनं निषिद्धं तथाऽपि व्याधिविषयविहितविरेचनमेतद् ज्ञेयम् ॥ सर्वर्तुकयोगौ अनुक्ते ऋतौ वसन्तादौ च ज्ञेयौ।" इति चक्र । "मलदोषाः-दुष्टवातादिविकाराः ॥ सर्वदा-सर्वर्तुषु।" इतीन्दु । ३ 'त्रेण भा' ट । ४ 'ग्धानामातुराणां म' ट । ५ अस्याग्रे 'सैन्धवं पिप्पलीमूलमभया द्विगुणोत्तरम् । चूर्णमुष्णाम्बुना पेयं ('पीतं' आ) स्वस्थे सुखविरेचनम् ॥ १ ॥' इति आ ग पुस्तकयोरधिकः श्लोकः । ६ 'ग्धादीनां मलदोषहृत् ।' ट । ७ 'काभयाः । समभागा भिषग्दद्याद्द्विगुणं च मकूलकम् ॥ त्रिवृ०म् । चूर्णितं गुडिकां कृत्वा क्षौद्रेण पलसम्मिता ॥ भक्षयेत्कल्यमुत्थाय शीतं चानु पिबेज्जलम् । मूत्र" स च । ८ 'का कार्या क्षौ' क ।

१ 'यन्त्रणाशिनः' स च । २ 'शिने' ग । ३ 'द्रसैः' ग । ४ 'योऽपि वा' स द्व । ५ 'शुष्कान्' स द्व । ६ 'कान् बध्वा चाक्षमात्र प्र' वृ । ७ 'तावद्धि' वृ । ८ 'वेच्चापि नियन्त्रणं ।' वृ । ९ 'मगुल्मगलगण्डभगन्दरार्शोंय' क ग घ च ज प । १० 'नमाशु हृ' ग । ११ "मृदुः-मृदुविरेचनः । मधुरः-रसेन । शीतलः-शीतवीर्यः ।" इति चन्द्र ।

स०-बालादौ मृदुत्वादनपायित्वाच्च विशेषेण चतुरङ्गुलो योज्य ।

आ० र०-बालादौ विशेषादारग्वधो योज्य इत्याह-बाल इति ।

**फलकाले परिणतं फल तस्य समाहरेत् ॥ ३२ ॥**
**तेषां गुणवतां भार सिकतासु विनिक्षिपेत् ।**
**सप्तरात्रात्समुद्धृत्य शोषयेदातपे[3] ततः ॥ ३३ ॥**
**ततो मज्जानमुद्धृत्य शुचौ पात्रे निधापयेत् ।**

स०-तस्य-शम्याकस्य, फलकाले परिणत-पक्व, फल समाहरेत्-सङ्गृह्णीयात् । तेषा-फलाना, गुणवता-सुनिष्पन्नाना, भार-पलशतविशति , वालुकासु विनिक्षिपेत् । सप्तरात्रादूर्ध्व सिकताभ्य उद्धृत्यानन्तरमातपे शोषयेत् । तत -अनन्तर, तेभ्य फलेभ्यो मज्जानमुद्धृत्य-गृहीत्वा, पात्रे-भाण्डे, शुचौ-शुद्धे, स्थापयेत् ।

आ० र०-ग्रहणविधिमाह-फलकाल इति । तेषा-फलानाम् । भार-तुलाविशति ।

**द्राक्षारसेन तं दद्याद्दाहोदावर्तपीडिते ॥ ३४ ॥**
**चतुर्वर्षे सुखं बाले यावद्द्वादशवार्षिके ।**

स०-त-मज्जान, द्राक्षारसेन दद्यात् । दाहार्यार्ते नरे चतुर्वर्षे बाले सुखेनैतद्विरेचनम्, यावद्द्वादशवार्षिके बाले सुख विरेचनमिदम् ।

आ० र०-दाहोदावर्तयोर्विरेचनमाह-द्राक्षारसेनेति ।

**चतुरङ्गुलमज्ज्ञो वा कषायं पाययेद्धिमम् ॥ ३५ ॥**
**दधिमण्डसुरामण्डधात्रीफलरसैः पृथक् ।**
**सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा ॥ ३६ ॥**

स०-अथवा राजवृक्षमज्ज्ञो हिम [कषाय]-शीतकषाय, दधिमण्डादिभि पृथग्युक्तमथवा काञ्जिकेनाथवा कल्केन त्रिवृतासम्बन्धिना युक्त पाययेत् ।

आ० र०-अन्यद्विरेचनपञ्चकमाह-चतुरङ्गुलेति । सौवीरकेण-काञ्जिकेन ।

**दन्तीकषाये तन्मज्ज्ञो गुडं जीर्णं च निक्षिपेत् ।**
**तमरिष्टं स्थितं मासं पाययेत् पक्षमेव वा ॥ ३७ ॥**

**इति राजवृक्षकल्पः ।**

स०-दन्तीकषाये तन्मज्ज्ञ -कर्णिकारस्य मध्यानि,गुड जीर्णं च विनिक्षिपेत् । तमरिष्ट मास स्थित पाययेत् । पक्ष वा स्थितम् ।

आ० र०-विरेचनान्तरमाह-दन्तीकषाय इति ।

**अथ तिल्वककल्पः ।**

**त्वचं तिल्वकमूलस्य त्यक्त्वाऽभ्यन्तरवल्कलम् ।**
**विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत्तत· ॥३८॥**
**रोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ।**
**कषाये दशमूलस्य त भागं भावित पुनः ॥ ३९ ॥**
**शुष्कं चूर्णं पुनः कृत्वा ततः पाणितलं पिबेत् ।**
**मस्तुमूत्रसुरामण्डकोलधात्रीफलाम्बुभि· ॥ ४० ॥**

स०-तिल्वकमूलस्य त्वच त्यक्त्वा मध्यवत्कल विशोष्य तथा चूर्णयित्वा ततश्चूर्णात् द्वौ भागौ रोध्रस्यैव कषायेण गालयेत् । तत -अनन्तरम्, अवशिष्टो यस्तृतीयो भागस्ततश्चूर्णात्, त तेन कषायेण वस्त्रगालितेन भावयेत् । अनन्तर वस्त्रगालितकषायेण भावित पुन कषाये दशमूलस्य भावितमनन्तर शुष्कचूर्ण [कृत्वा] ततश्चूर्णात् पाणितल-कर्ष, मस्तुगोमूत्रादिकेन पिबेत् । (कोल-बदरम्, धात्रीफल-आमलकम्, तयोरम्बुनी-स्वरसौ ।) तद्भावनौषधप्रमाण च शिलाजतुन कल्पवत् कल्पयेत् । शिलाजतुकल्प च वक्ष्यति ( हृ उ अ ३९।१३५ )-"समगिरिजमष्टगुणिते नि क्वाथ्य भावनौषध तोये ।" इत्यादि । तस्मादत्र तिल्वकत्वचो भाव्यौषधस्य रोध्रश्च(ध्रच)भावनौषध सम देयम्, ततोऽष्टगुण जल देयम्, तच्च क्वथनेनाष्टाशशेष कार्यमिति । एवमन्यत्राप्यनिर्दिष्टप्रमाणाना भाव्यद्रव्यभावनार्द्रव्यतोयावशिष्टाना परिमाण बोध्यम् ।

आ० र०-तिल्वककल्पमाह-त्वचमिति । आभ्यन्तरवल्कल-काष्ठलग्ना त्वक् । चूर्णस्य भागत्रय कृत्वा द्वौ भागावेकीकृत्य रोध्रकषायेण मर्दयित्वा गालयेत् । तेन द्रवेण तृतीय भाग भावयेत् । पुनर्दशमूलकषायेण भावयेत् । पुन शोषयेत् । पुनश्चूर्णयेत् । तस्य चूर्णस्य पाणितल-कर्ष, मस्त्वादिभि पिबेत् । कोल-बदरम्, धात्रीफल-आमलकम्, तयोरम्बुनी-स्वरसौ ।

**तिल्वकस्य कषायेण कल्केन च सशर्करः ।**
**सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ॥४१॥**

**इति तिल्वककल्पः ।**

स०-रोध्रस्य कषायेण कल्केन च सशर्करो घृतान्वितो लेह स्यात् । स च लेह श्रेष्ठ विरेचनम् ।

आ० र०-विरेचनान्तरमाह-तिल्वकस्येति । सङ्ग्रहे तु ( क अ २ )-"भेषश्च्यभयाकृष्णाचित्रकै क्वथिते जले ।

१ "अकालेऽपि फलसम्भवात् कालविशेषणम् । परिणत-अतिक्रान्तपाकमेव, न मध्यमम् ।" इतीन्दु । "गुणवतां-कृम्यादिभिरदूषितानाम् ।" इति चन्द्र । "भारमिति भूरिद्रव्योपलक्षणम् ।" इति चक्र । २ 'येच्चातपे' न । ३ 'पे पुन ।' क ज । 'पे भिषक् ।' स च । ४ 'त्रात्पर सि' ट । ५ 'तन्मज्जां' स मू । ६ चरके तु (क. अ. ८।१५)-"दत्त्वा मासार्धमासस्थमरिष्ट पाययेत च ।" इत्युक्तम् । "मासार्धमासस्थमिति सार्धमासस्थम् ।" इति चक्र. ।

१ तिल्वकमूलस्याभ्यन्तरवल्कल त्यक्त्वा त्वच विशोष्य, इत्यन्वय । त्वचमिति बाह्यत्वचमित्यर्थ । 'त्यक्ताभ्यन्तरवल्कलाम् ।' इति सटीकसङ्ग्रहस्य पाठो युक्ततर । २ 'ध्रस्य तु क' आ । ३ 'शुष्कचूर्णं' आ इ स द्व । ४ 'र्णं तत कृ' अ स मू । 'र्णं तत कुर्यात् त' आ । ५ ( ) इति पाठ ट पुस्तके नोपलभ्यते । ६ 'द्रव्याणा तो' न.। ७ 'श्रेष्ठो' आ. ।

मरुजान्[1] सुषुयात्तत्र[2] जातं सौवीरकं यदा ॥ भवेदञ्जलिना तस्य रोध्रकल्कं पिबेत्तदा । मरुजान्-यवान् । सुरा रोध्रकषायेण जाता पक्षस्थिता पिबेत् ॥'' इति ।

### अथ सुधाकल्पः ।

**सुधा भिनत्ति दोषाणां महान्तमपि सञ्चयम् ।**
**आश्वेव कोष्ठ[3]विभ्रं[4]शान्नैव तां कल्पयेदतः ॥ ४२ ॥**
**मृदौ कोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ।**
**कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ॥ ४३ ॥**
**पाण्डौ दूषीविषे शोफे दोषविभ्रान्तचेतसि ।**
**सा श्रेष्ठा कण्टकैस्तीक्ष्णैर्बहुभिश्च समाचिता ॥ ४४ ॥**
**द्विवर्षा वा त्रिवर्षा वा शिशिरान्ते विशेषतः ।**
**तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः[5] ॥ ४५ ॥**
**बिल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः ।**
**मिश्रयित्वा सुधाक्षीरं ततोऽङ्गा[6]रेषु शोषयेत् ॥ ४६ ॥**
**पिबेत्कृत्वा तु गुँटि[7]कां मस्तुमूत्रसुरादिभिः ।**

**सु०**-सुधा-गुडा, दोषाणां महान्तमपि सञ्चयं हन्ति । एवंगुणामपि तां-सुधां, भिषक् मृदुकोष्ठादिषु अतो न कल्पयेत् । शीघ्रमेव कोष्ठविभ्रंशादिति[8] । कल्पयेदित्यतिसर्जने लिङ् । तर्हि केयं प्रयोज्या? इत्याह-कल्प्येति । गुल्मादिषु कल्प्या सा-स्नुक्, तीक्ष्णैर्बहुभिः कण्टकैश्चिता श्रेष्ठा स्यात् । तां-सुधां, द्विवर्षामथवा त्रिवर्षां विशेषेण शिशिरान्ते कार्यवशादन्यस्मिन्नपि ऋतौ शस्त्रेण पाटयित्वा ततः-सुधातः, क्षीरमुद्धारयेत् । द्वे वर्षे प्रमाणमस्या इति ठक् । तस्य रसाल्लुगिति लुक् । ततश्च टाप् । ततः-अनन्तरं, बिल्वादीनां कण्टकारीमहोटिकयोर्वा क्वाथेन एकशः-एकैकेन, समं मेलयित्वा सुधाक्षीरमनन्तरमङ्गारेषु[9] तदुभयमपि शोषयेत् । ततो गुँटिकां कृत्वा यथायोगं मस्त्वादिभिः पिबेत् ।

**आ० र०-स्नुहीकल्पमाह-सुधेति । तां-सुधाम्, मृदुकोष्ठादिषु न कल्पयेत् । कष्टविभ्रंशात्-दुःसहव्यापदम् । अतः-अतियोगभयात् । गुल्मादिषु तु कल्प्या । मधुमेहं[10]-मधुप्रमेहः । दूषीविष-विषप्रतिषेधोक्तम् । सा-सुधा, बहुतीक्ष्णाग्रकण्टका श्रेष्ठा । बिल्वादीनां-बृहत्पञ्चमूलोक्तानाम् । समं-सममात्रम् । एकशः-एकस्यैकस्य क्वाथेन क्रमान्मिश्रणं शोषणं च । वा शब्दाद्बृहतीद्वयस्य भिन्नः प्रयोगः ।**

१ 'सरुजान्' ग घ च ञ प. । २ 'तच्च' स ढ. । ३ 'कोष्ठ' ड न । ४ 'भ्रंशान्नै' हे. । 'भ्रंशा नै' स स । 'कष्टविभ्रमा' इति चरके पाठः । "कष्टविभ्रमेति दुःखसाध्यविभ्रमजनिका" इति चक्रः । ५ 'येत्ततः' आ.ई प स मू । ६ "अङ्गारेषु शोषयेदिति अङ्गारोपरिस्थितपात्रस्थं तत् सुधाक्षीरं बिल्वादीनामन्यतमस्य कषायेण समानं शोषणेन कठिनं कुर्यात् ।" इति चक्रः । ७ 'गुलिका' अ इ स ढ , न । ८ 'कोष्ठे वि' ट । ९ 'क्षीरमङ्गारेषु शोष' ट. । १० 'ह-प्रमेह' क ग.घ प. ।

**त्रिवृतादीन्नव वरां स्वर्णक्षीरीं ससातलाम् ॥ ४७ ॥**
**सप्ताहं स्नुक्पयःपीतान् रसेनाज्येन वा पिबेत् ।**
**तद्वद्[1]व्योषोत्तमाकुम्भनिकुम्भा[2]ग्नीन् गुडाम्बुना ॥ ४८ ॥**

### इति सुधाकल्पः ।

**सु०**-त्रिवृतादीन्नवेति 'त्रिवृच्छ्यामा राजवृक्षस्तिल्वकश्च तथा सुधा । शङ्खिनी सप्तला दन्ती द्रवन्तीति [स्मृता नव ॥]' इति । तदेतान् त्रिवृतादींस्तथा त्रिफलां स्वर्णक्षीरीं सातलां च सप्त वासरान् स्नुक्पयःपीतान्-स्नुक्क्षीरभावितान्, मांसरसेन घृतेन वा पिबेत् । तथैव व्योषादीन् गुडाम्बुना पिबेत् ।

**आ० र०-प्रयोगान्तरमाह-त्रिवृतादीनिति । त्रिवृतादीन्नव-त्रिवृत् श्यामा आरग्वधस्तिल्वकः स्नुही शङ्खिनी सप्तला दन्ती द्रवन्ती चेति । अत्र स्नुही काण्डं, न क्षीरम्, तस्य भावनासाधनत्वात् । वरा-त्रिफला । सातला-सप्तला, तस्याः पुनरुक्तत्वात् स्वर्णक्षीरीं ससातलामिति भिन्नः प्रयोगः । अत एव त्रिफलाप्रयोगोऽपि भिन्नः । रसेन-मांसरसेन । व्योषादिप्रयोगोऽपि तद्वत् । तस्य तु पानं गुडोदकेन । सङ्ग्रहे तु (क अ २)-"अद्याच्छ्यामात्रिवृत्क्वाथ[3]स्नुक्क्षीरघृतफाणितै[4]ः । कासारिरसयूषाद्यैर्युक्तं वा स्नुक्पयः पिबेत् ॥ निकुम्भकुम्भशम्याकशङ्खिनीसप्तलारजः । रात्रौ मूत्रे दिवा घर्मे सप्ताहं स्थापये[5]दनु ॥ स्नुक्क्षीरेऽपि ततस्तेन माल्यं वासोऽवचूर्णितम् । आजिघ्रन्[6] प्रावृणानश्च मृदुकोष्ठो विरिच्यते ॥" इति ।**

### अथ शङ्खिनीसप्तलयोः कल्पः ।

**नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम् ।**
**सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी[8] ॥ ४९ ॥**
**श्लेष्मामयोदरगरश्वयथ्वादिषु कल्पयेत् ।**
**अक्षमात्रं तयोः पिण्डं मदिरालवणान्वितम् ॥ ५० ॥**
**हृद्रोगे वातकफजे तद्वद्गुल्मे[7]ऽपि योजयेत् ।**

### इति शङ्खिनीसप्तलयोः कल्पः ।

**सु०**-शङ्खिन्याः फलं निस्तुषीकृतं नातिशुष्कं ग्राह्यम् । सप्तलायाश्च मूलं ग्राह्यम् । ते च-शङ्खिनीफलसातलामूले, तीक्ष्णविकाषिणी-तैक्ष्ण्यात् विकाशित्वाच्च, श्लेष्मामयादिषु कल्पयेत् । तयोः-शङ्खिनीसप्तलयोः पूर्वोक्तयोः, कर्षमात्रं पिण्डं सुरालवणयुक्तं वातकफजहृद्रोगादिषु कल्पयेत् ।

१ "तद्वदिति-सप्ताहं स्नुक्पयःपीतान् ।" इतीन्दुः । 'व्योषः-त्रिकटुकम् । उत्तमा-त्रिफला । कुम्भः-त्रिवृत् । निकुम्भः-दन्ती । अग्निः-चित्रकः ॥ शङ्खिनी-यवतिक्ताभेदः । तीक्ष्णविकाषिणी-शीघ्रविरेककरे ।" इति चन्द्रः । २ 'म्भादीन्' अ इ क ग घ ञ न प. स मू । ३ 'क्वाथे' क घ ञ प । ४ 'णितम् ।' क ग घ ञ प । ५ 'येदिति ।' स ढ ई । ६ 'जिघ्रेत्' स मू इ । ७ 'ल्मे प्रयोज' अ.न. चन्द्रः । ८ 'षिणी श्ले' न ।

आ० र०–शङ्खिनीफलसप्तलामूलयो कल्पमाह–नातिशुष्कमिति ।

**अथ दन्तीद्रवन्त्योः कल्पः ।**

**दन्तिदन्तस्थिर स्थूलं मूलं दन्तीद्रवन्तिजम् ॥ ५१ ॥**
**आताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाशि च ।**
**गुरु प्रकोपि वातस्य पित्तश्लेष्मविलायनम् ॥ ५२ ॥**
**तत्क्षौद्रपिप्पलीलिप्तं स्वेद्य मृद्दर्भवेष्टितम् ।**
**शोष्य मन्दातपेऽग्न्यर्कौ हतो ह्यस्य विकाशिताम् ॥**
**तत्पिबेन्मस्तुमदिरातक्रपीलुरसासवैः ।**
**अभिष्यण्णतनुर्गुल्मी प्रमेही जठरी गरी ॥ ५४ ॥**
**गोमृगाजरसैः पाण्डुः कृमिकोष्ठी भगन्दरी ।**
**सिद्ध तत्क्वाथकल्काभ्यां दशमूलरसेन च ॥ ५५ ॥**
**विसर्पविद्रध्यलजीकक्षादाहान् जयेद्घृतम् ।**
**तैलं तु गुल्ममेहार्शोविबन्धकफमारुतान् ॥ ५६ ॥**
**महास्नेहः शकृच्छुक्रवातसङ्गानिलव्यथाः ।**

**इति दन्तीद्रवन्त्योः कल्पः ।**

स०–दन्तिनो दन्त, तद्वत्स्थिर स्थूल च दन्तीद्रवन्त्युद्भव मूल किञ्चित्ताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाशि चेत्यादिना तत्स्वरूपोक्ति । तच्च क्षौद्रपिप्पलीभ्या लिप्त मृद्दर्भवेष्टित स्वेदित पश्चान्मन्दातपे शोष्यम् । किमेव क्रियते ? इत्याह–यस्मादग्न्यर्कावस्य विकाशिता हत । तच्च मस्त्वादिभि पिबेत् । अभिष्यण्णदेहादि पाण्ड्वामयी कृमिकोष्ठी भगन्दरी च गोमृगाजमासरसै पिबेत् । तस्य मूलस्य क्वाथकल्काभ्या दशमूलरसेन च सिद्ध घृत विसर्पादीन् जयेत् । तैल तु सिद्ध गुल्मादीन् जयेत् । महास्नेह शकृतादिसङ्गादीन् जयेत् ।

आ० र०–दन्तीद्रवन्त्यो कल्पमाह–दन्तीति । हत – नाशयत । अभिष्यण्णतनु –प्रक्लिन्नदेह । पाण्ड्वादिषु गवादिमांसरसै । विसर्पादिषु तत्क्वाथादिसिद्ध घृतम् । कक्षा–क्षुद्ररोगेषूक्ता ( हृ उ अ ३१।११ )। गुल्मादिषु घृतवत्सिद्ध तैलम् । शकृत्सङ्गादिषु घृतवत्सिद्धो महास्नेह । सङ्ग्रहे तु ( क अ २ )–"दन्त्या रसेऽजशृङ्ग्याश्च गुडक्षौद्रघृतान्वित । लेहः सिद्धो विरेकार्थे दाहसन्तापमेहनुत् ॥ वाततर्षे ज्वरे पैत्ते स्यात्स एवाजगन्धया । दन्तीद्रवन्त्योर्मूलानि पचेद्धात्रीरसे तत ॥ त्रीनशान् फाणितार्द्धौ च भृञ्जेत्तैले घृतेऽथवा । श्यामादिकल्कयुक्तोऽय लेह सिद्धो विरेचनम् ॥ पथ्याक्षदशमूलाना तद्वल्लेहा पृथग्रसै । तयोर्बिल्वसम चूर्ण तद्रसेनैव भावितम् ॥ विबद्धविशि वातोत्थे गुल्मे चाम्ल युत हितम् । मुद्गादिसिद्धैस्तन्मूलैर्यूषादीश्च विकल्पयेत् ॥ दन्तीद्रवन्तीमरिचस्वर्णक्षीरीयवानकम् । सशुण्ठ्यग्निकपृथ्वीक चूर्णित सप्तवासरान् ॥ मूत्रभावितमाज्येन पिबेज्जीर्णे च तर्पणम् । सर्वदा सर्वरोगेषु बाले वृद्धे च तद्धितम् ॥ दुर्भुक्ताजीर्णपार्श्वार्त्तिगुल्मप्लीहोदरेषु च । गण्डमालासु वाते च पाण्डुरोगे च शस्यते ॥" इति ।

**विरेचने मुख्यतमा नवैते त्रिवृतादयः ॥ ५७ ॥**

स०–एते त्रिवृतादयो विरेचने नव श्रेष्ठतमा ।

**अथ हरीतकीकल्पः ।**

**हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ।**

स०–यथा त्रिवृताया विधानमुक्त "अथ काले ततश्चूर्ण किञ्चिन्नागरसैन्धवम् ।" ( श्लो ७ ) इत्यादि, तथैव हरीतक्या अपि विधातव्यमित्यर्थ ।

आ० र०–हरीतकीकल्पमाह–हरीतकीमिति ।

**गुडस्याष्टपले पथ्याविंशतिः स्यात्पलं पलम् ॥ ५८ ॥**
**दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ।**
**प्रकल्प्य मोदकानेकं दशमे दशमेऽहनि ॥ ५९ ॥**
**उष्णाम्भोऽनु पिबेत्खादेत्तान् सर्वान्विधिनाऽमुना ।**
**एते निष्परिहाराः स्युः सर्वव्याधिनिबर्हणाः ॥ ६० ॥**
**विशेषाद्ग्रहणीपाण्डुकण्डूकोठार्शसां हिताः ।**

**इति हरीतकीकल्पः ।**

स०–गुडस्याष्टपले पथ्याविंशतिर्दन्तीचित्रकयो पल पलं प्रत्येक स्यात् । पिप्पलीत्रिवृतयो कर्षावुभौ । दश मोदकानेव प्रकल्प्यैकमेक मोदक दशमे दशमे दिने योजयेत् । पश्चादुष्णाम्बु पिबेत् । अमुना विधिना सर्वान् मोदकान् भक्षयेत् ।

---

१ 'विकाषि' इ ग प स द्व । २ 'लीयुक्त स्वे' क । 'लीमिश्र स्वे' ग । ३ 'स्वेदयेन्मृत्कुशान्तरे । शोषयेच्चातपे' स द्व । ४ 'ष्यन्दितनु' आ । 'ष्यन्दतनु' इ क ग घ ञ. । 'ष्यन्नतनु' न । ५ "अभिस्यन्दतनु –प्रस्वेदमुक्तशरीर ।" इति चन्द्र । "अभिष्यण्णा–अन्त क्लिन्ना, तनुर्यस्य स तथोक्त । तदिति दन्त्या द्रवन्त्याश्च मूलस्य परिग्रह । अलजी–प्रमेहोक्ता पिटिका । महास्नेह –स्नेहचतुष्टयम् ।" इतीन्दु । ६ 'कक्ष्यादा' स स । ७ 'हश्च विद्शुक्र' इ । ८ 'ष्यन्नतनु' क घ । ९ 'प्रस्विन्न' घ.प. । १० 'कक्ष्या–' क ञ । ११ 'कृच्छुक्रादि' ग. ।

१ 'सेन शृ' प । 'से वा शृ' ई स मू । २ 'द्रसान्वित' ग घ प । ३ 'स्नेह' क घ प । ४ 'कार्थं' ग । ५ 'तवर्षे' ई ग । ६ 'तार्द्धं च' क ग घ ञ प । ७ 'भृष्टस्तै' ई स स । 'भजेत्तै' क ग प स.मू । ८ 'ते तथा ।' प । ९ 'सिद्ध' स द्व. । १० 'बिडसम' ई स द्व । ११ 'विबन्धे वि' ई स मू । १२ 'प्रकल्प' ई स द्व. । १३ 'वानिक' ई ग । १४ 'दुर्भक्ता' ई क घ ञ । १५ 'गेषु श' घ ञ प । १६ 'ले च तच्चूर्णं' ट । १७ 'पिबन् खा' अ क.ञ प न स द्व । १८ 'ण्डूकुष्ठार्शं' अ. । 'कोष्ठार्शं' आ क घ ञ ।

एते मोदका निष्परिहारास्तथाऽशेषव्याधिनिबर्हणा स्युः । विशेषेण ग्रहण्यादीनां हिताः । सम्बन्धमात्रस्य विवक्षितत्वादत्र षष्ठी, अन्यथा तु हितयोगे चतुर्थी स्यात् ।

आ० र०–प्रयोगान्तरमाह–गुडस्येति । पथ्याविंशतिरिति फलानां विंशतिः, न पलानाम् । "सङ्ख्या फलानां शतशोऽपला स्यात्" इति वचनात् । सर्वस्य चूर्णस्य गुडपाकेन दश मोदकान् प्रकल्प्य, दशमे दशमेऽहन्येकं खादेत् । एवं सर्वान् खादेद्दिवसद्व्यशीत्या । सङ्ग्रहे तु (क अ २)–"विनिघ्नन्ग्रहणीशोफपाण्डुमेहोदरापहाम् । पिबेत्पथ्या ससिन्धूत्थविडङ्गोषणनागराम् ॥ मूत्रेण वत्सकादेर्वा निर्यूहेण हरीतकीम् । पथ्यानागरचूर्णं वा सयुक्तं नीलिनीफलैः ॥ गुडेन भक्षयेत्तोयं कवोष्णं प्रपिबेदनु । पथ्यात्रिवृद्भ्यां गुटिका कार्या द्राक्षारसाप्लुताः ॥ माषप्रमाणास्ताः शुष्का यक्ष्मी लिह्याद्घृतप्लुताः । पथ्यात्रिवृत्पटूष्णाम्बु सर्वश्रेष्ठं विरेचनम् ॥ स्नुक्क्षीरभाविते पथ्याचूर्णे कुर्वीत मोदकान् । कोलास्थिमात्रान् शुष्कांश्च नवनीतेन लेहयेत् ॥ गुल्मोदरयकृत्प्लीहशूलानाहविबन्धिनः । लिह्यादेरण्डतैलेन कुष्ठं त्रिकटुकान्वितम् ॥ सुखोदकं चानु पिबेत् सुखमेतद्विरेचनम् ।" इति ।

**अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ॥ ६१ ॥**
**कुर्यात्संश्लेषविश्लेषकालसंस्कारयुक्तिभिः ॥ ६१½ ॥**
**त्वक्केसराम्रातकदाडिमैला-**
**सितोपलामाक्षिकमातुलुङ्गैः ।**
**मद्येन तैस्तैश्च मनोनुकूलै-**
**र्युक्तानि देयानि विरेचनानि ॥ ६२½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां पञ्चमे कल्पसिद्धिस्थाने विरेचनकल्पो नाम द्वितीयोऽध्यायः ॥ २ ॥**

स०–अल्पस्य–वीर्येण मात्रया वा कदाचिदल्पौषधयोगस्य, केनचित्तद्योग्यौषधसंश्लेषेण तस्य महार्थत्वं कार्यम् । तथा कालेन–मध्याह्नादिना, तथा संस्कारेण–तद्योग्येन गुणान्तरोत्पादनेन, तथा युक्त्या–योजनाप्रकारविशेषेण, तथा वीर्येण प्रभूतस्य–मात्रयाऽथवा महार्थस्य, कदाचित् केनचिद्द्रव्येण विश्लेषं कृत्वा तस्याल्पकर्मत्वं कार्यम् । तथा कालेन–प्रत्यूषादिना मन्दवीर्येण, तथा संस्कारेण–गुणान्तराधानेन, तथा युक्त्या–तादृश्या, अल्पशक्तित्वलक्षणं कर्म कार्यम् । त्वक्केसरादिभिस्तैस्तैः–अन्यैश्च तथाविधैः, मनोनुकूलैः–मानसप्रियैः, औषधैर्युक्तानि विरेचनानि देयानि । एवं कृते सति सम्यग्योगो विरेचनस्य स्यादिति । उपजातिर्वृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां पञ्चमे कल्पसिद्धिस्थाने विरेचनकल्पो नाम द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

आ० र०–उक्तानां विरेचनकल्पानां किञ्चिद्विशेषमाह–अल्पस्येति । संश्लेषः–अनुक्तस्य । विश्लेषः–उक्तस्य । कालः–अवस्थाविशेषः । संस्कारः–पाकभावनादिः । युक्तिः–मात्राऽल्पत्वबहुत्वादिः ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
रेकौषधप्रकरणं सामस्त्येन निरूपितम् ॥ २ ॥



## तृतीयोऽध्यायः ।

अथ वमनविरेचनकल्पाभ्यामनन्तरं तद्व्यापत्सिद्धिं ब्रूते–

**अथातो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**

( गद्यसूत्रे ॥ २ ॥ )

स०–वमनविरेचनयोर्व्यापत्–अयथाशास्त्रमनुष्ठीयमानयोर्गदोत्पत्तिः, तस्या वमनविरेचनव्यापदः सिद्धिः–साधनं चिकित्सितं, तां वर्णयिष्यामः ।

आ० र०–वमनविरेचनव्यापत्सिद्धिमध्यायं व्याख्यातुं प्रतिजानीते–अथेति । व्यापदश्चोक्ताः सङ्ग्रहे (क अ ३)–"प्रतिकूला गतिः पाको ग्रथितत्वं सगौरवम् । दोषोत्क्लेशो भृशाध्मानं परिकर्तः परिस्रवः ॥ प्रवाहिका हृद्ग्रहणं सर्वगात्रपरिग्रहः । सह धातुस्रवेणैता द्वादशोक्ताः ससाधनाः ॥ व्यापदो योगविभ्रंशाद्विविधेऽपि विरेचने ।" इति ।

---

१ दशमे दशमेऽहनि–भक्षणदिनादारभ्य दशमे दशमे दिवसे, यथा–प्रथमं मोदकं प्रथमे दिवसे, द्वितीयं दशमे, तृतीयमेकोनविंशतितमे, चतुर्थमष्टाविंशतितमे, पञ्चमं सप्तत्रिंशत्तमे, षष्ठं षट्चत्वारिंशत्तमे, सप्तमं पञ्चपञ्चाशत्तमे, अष्टमं चतुःषष्टितमे, नवमं त्रिसप्ततितमे, दशमं द्व्यशीतितमे, खादेदित्यर्थः । २ 'शोषपाण्डुमे' ई ञ । 'णीपाण्डुशोषमोहो' स मू । ३ 'ङ्गोधनना' क । 'ङ्गोत्पलना' ई स मू । ४ 'र्या क्षौद्रर' ई स मू । ५ 'रसप्लु' ग । ६ 'कर्षप्रमा' ई । ७ 'द्घृताप्लु' क । 'तद्युता' स ह । ८ 'वृद्भ्यामुष्णा' क । वृत्कटुष्णा' ञ स मू । ९ 'सर्वत्रेष्ट' स ह । १० 'युक्ति ।' ह । ११ 'मद्यैश्च तै' इति क्वचित् ।

१ 'विश्लेषात् त' ट । २ इयं वमनविरेचनव्यापत्सिद्धिश्चरके सि० ६ अध्याये क० १२ अध्याये च, सुश्रुते चि० ३४ अध्याये, अष्टाङ्गसङ्ग्रहे क० ३ अध्याये चास्ति वर्णिता । ३ 'सर्वथा' स मू ।

**वमनं मृदुकोष्ठेन क्षुद्वताऽल्पकफेन वा ।**
**अतितीक्ष्णहिमस्तोकमजीर्णे दुर्बलेन वा ॥ १ ॥**
**पीतं प्रयात्यधस्तस्मिन्निष्टहानिर्मलोदयः ।**
**वामयेत्तं पुनः स्निग्धं स्मरन् पूर्वमतिक्रमम् ॥ २ ॥**

**स०**–एवविधेन पुरुषेणैवविध वमन पीतमध प्रयाति । तस्मिन्–वमनेऽधस्तात्प्रयाते सति, इष्टहानि –अभिप्रेतस्य वमनकार्यस्यानिष्पत्ति । तथा मलस्य–वमनसाध्यस्य श्लेष्मण केवलस्यान्यदोषयुक्तस्य वा, उदय –स्वस्थानस्थस्यैवामयकरण प्रति चलप्रबलके च । त–पुरुष पीतवमनमप्यवान्त, पुन स्निग्ध वामयेत् । पूर्व स्निग्धमपीति पुन शब्दस्यार्थ । कथ वामयेत्[१] स्मरन् पूर्वमतिक्रमम्, यतोऽतिक्रमात् पीतवमनोऽप्यसौ पुरुषो वमनकर्मण फल नाप्तवान् । तमतिक्रम–अपराध, स्मरन्–चेतसि कुर्वाणो, न त्वेवमेव, वामयेत् ।

**आ० र०**–वमनस्य प्रतिकूला गतिमाह–वमनमिति । अतिशब्दस्तीक्ष्णादिभिस्त्रिभि सम्बध्यते । तस्मिन्–वमने । इष्टहानि–यदर्थं वमन तस्यानिष्पत्ति । मलोदयो–दोषोत्क्लेश । त–तथाभूतम्, स्निग्ध कृत्वा पुनर्वामयेत्, येन सा व्यापज्जाता तत्परिहरन् ।

**अजीर्णिनः श्लेष्मवतो व्रजत्यूर्ध्वं विरेचनम् ।**
**अतितीक्ष्णोष्णलवणमहृद्यमतिभूरि वा ॥ ३ ॥**
**तत्र पूर्वोदिता व्यापत्सिद्धिश्च, न तथाऽपि चेत् ।**
**आशये तिष्ठति ततस्तृतीयं नावचारयेत् ॥ ४ ॥**
**अन्यत्र सात्म्याद्धृद्याद्वा भेषजान्निरपायतः ।**

**स०**–अजीर्णिनस्तथा बहुश्लेष्मिणो विरेचनमतितीक्ष्णोष्णलवणमहृद्यमतिप्रभूत च पीतमूर्ध्व याति । तत्र–तस्मिन्नूर्ध्व व्रजति, पूर्वोक्ता(दिता) व्यापत्–इष्टहानिर्मलोदय इति । तत्र तथैव सिद्धि –चिकित्सितम् । तथा,अनन्तर विरेचनस्योर्ध्वगमनादविरिक्त पुन स्निग्ध विरेचयेत् । तथैव पूर्व विरेचनातिक्रम स्मरन्नितोऽपराधात्पूर्व विरेचने न विरिक्तस्तमतिक्रम परिहरन् विरेचयेदित्यर्थ । तथाऽपि–एवमनुष्ठीयमाने तद्विरेचनौषध पीत, यद्याशये–कोष्ठलक्षणे, न तिष्ठति–तत्र स्थिति न बध्नाति ऊर्ध्वमेवं पुनरेति, ततस्तृतीय विरेचनौषध–आरग्वधादि, नावचारयेत् । यदि तु सात्म्य हृद्य निरपाय वा भेषज तदा तृतीयमप्यवचारयेत् ।

**आ० र०**–विरेचनस्य प्रतिकूलां गतिमाह–अजीर्णिन इति । तत्र–विरेचने । पूर्वोदिता–वमनोक्ता, व्यापत्–इष्टहानिर्मलोदय इत्येषा, सिद्धिश्च–त स्निग्ध पुनर्विरेचयेदित्येषा । तथाऽपि–तेनापि प्रकारेण, यद्याशये विरेचन न तिष्ठति–ऊर्ध्वं याति, तत –अनन्तर, तृतीय प्रयोग नावचारयेत्, यदि तु सात्म्य हृद्य निरपाय वा भेषज तदा तृतीयमप्यवचारयेत् ।

**अस्निग्धस्विन्नदेहस्य पुराण रूक्षमौषधम् ॥ ५ ॥**
**दोषानुत्क्लेश्य निर्हर्तुमशक्तं जनयेद्गदान् ।**
**विभ्रंशं श्वयथुं हिध्मां तमसो दर्शनं तृषम् ॥ ६ ॥**
**पिण्डीकोद्वेष्टनं कण्डूमूर्वोः सादं विवर्णताम् ।**
**स्निग्धस्विन्नस्य वाऽल्पं दीप्ताग्नेर्जीर्णमौषधम् ॥७॥**
**शीतैर्वा स्तब्धमामे वा समुत्क्लेश्याहरन्मलान् ।**
**तानेव जनयेद्रोगानयोगः सर्व एव सः ॥ ८ ॥**

**स०**–अस्निग्धस्विन्नशरीरस्य पुराण रूक्ष विरेचनौषधमुपयुक्त दोषानुत्क्लेश्य–प्रच्याव्य, निर्हर्तुमशक्त विभ्रंशादिकान् गदान् जनयेत् । अथवा, स्निग्धस्विन्नस्य चौषधमल्पल्प–मात्राहीन, दीप्ताग्नेर्जीर्ण–परिणतं, स्यात् । शीतैर्वा स्तब्धभेषजमामे वा स्तब्ध सत् [मलान्–] दोषान्, उत्क्लेश्यानिर्हरत् पूर्वोक्तानेव रोगान् जनयेत् । स –एवभूत , सर्व एवायोग ।

**आ० र०**–ग्रथितत्वपाकगौरवाण्याह–अस्निग्धेति । तत्र "विवर्णताम्" इत्यन्तेन ग्रथितत्वम् । "औषधम्" इत्यन्तेन पाकम् । शेषेण गौरवम् । विभ्रंश–इष्टहानिम् । जीर्णं–पक्वम् । शीतै –औषधपानानन्तरमन्तर्बहिर्वा सेवितै , औषध स्तब्ध भवति । तद्वदामे–अपक्वदोषे । तानेव–विभ्रंशादीन् । सङ्ग्रहे तु (क अ ३)–"स्निग्धस्विन्नस्य च वमनमकृत्वा विरेचन पीतवत सामस्य वा मृदु वा विरिक्तस्याधोभागेऽल्पार्थगुरुस्तब्धोदरता शूलो वातपुरीषसङ्गश्च भवति ।" इत्युक्तम् ।

**तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरसङ्करैः ।**
**निरूढं जाङ्गलरसैर्भोजयित्वाऽनुवासयेत् ॥ ९ ॥**
**फलमागधिकादारुसिद्धतैलेन मात्रया ।**
**स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ॥१०॥**

**स०**–त–उत्क्लिष्टदोष, तैललवणाभ्यक्त प्रस्तरसङ्कराख्यैः स्वेदै स्विन्न तथा निरूढ जाङ्गलरसैर्भोजयित्वा फलादिसिद्धतैलेन मात्रयाऽनुवासयेत् । वातहरै स्नेहै स्निग्ध पुनस्तीक्ष्णेन विरेचनेन विशोधयेत् ।

१ 'मनुक्' अ । २ 'द्याच्च भे०पायित' अ इ । ३ 'स्योर्ध्वग' ट. । ४ 'मेव वा पु' न. । ५ 'नोदिता व्या' घ. ।

१ 'स्निग्धास्विन्न' आ स च । २ "निर्हर्तुमिति नि शेषेण हर्तुम् । विभ्रंशमिति विपरीतप्रवृत्तिसामर्थ्यम् ।" इति चक्र । "अहरत्–निर्हर्तुमशक्तम् ।" इति चन्द्र । ३ 'विभ्रंश' इति कचित् । ४ 'चाल्पल्प' अ इ क ञ , स च । ५ 'मामैर्वा' चन्द्र । ६ 'वा दोषानुत्क्लिश्य नाहरेत् ।' म च । ७ 'श्याहरेन्म' इ । 'श्य हरेन्म' आ ग घ । ८ 'पक्वे दो' क ञ । ९ 'शूल' क ग घ ञ प । १० 'सस्तरशङ्क' अ । 'सस्तर' घ ञ प । ११ प्र(स)स्तरसङ्करौ–ऊष्मस्वेदभेदौ । तद्वर्णन चरके सूत्र० १४ अध्याये, सङ्ग्रहे सूत्र० २६ अध्याये, अस्मिन् पुस्तके २५५ पृष्ठे च द्रष्टव्यम् । १२ 'रशङ्क' न ।

आ० र०-त-त्रिविधायोगिन, निरूढ-समूत्रैस्तीक्ष्णैर्निरूहै, सङ्ग्रहे ( क अ ३ ) तथोक्तत्वात्, मदनफलादि-तैलेनानुवासयेत् ।

**बहुदोषस्य रूक्षस्य मन्दाग्नेरल्पमौषधम् ।**
**सोदावर्तस्य चोत्क्लेश्य दोषान् मार्गान्[2] निरुध्य तैः ॥**
**भृशमाध्मापयेन्[3]नाभि पृष्ठपार्श्वशिरोरुजम् ।**
**श्वासं विण्मूत्रवाताना सङ्ग कुर्याच्च दारुणम् ॥ १२ ॥**
**अभ्यङ्गस्वेदवर्त्यादि सनिरूहानुवासनम् ।**
**उदावर्तहर[3] सर्व कर्माध्मातस्य शस्यते ॥ १३ ॥**
**पञ्चमूल[5]यवक्षारवचाभूतिकसैन्धवैः ।**
**यवागूः सुकृता शूलविबन्धानाहनाशनी ॥ १४ ॥**

स०-बहुदोषस्य रूक्षस्य तथा मन्दाग्नेरल्पमौषध योजित तयोदावर्तवतो दोषानुत्क्लेश्य मार्गान् निरुध्य तैश्च दोषैर्भृश नाभिमाध्मापयेत् । तथा पृष्ठादिरुजादीन् कुर्यात् । आध्मातस्य नरस्याभ्यङ्गादिकं कर्म उदावर्तहर सर्व शस्यते । पञ्चमूलादिभि सुकृता यवागू शूलादिनाशनी ।

आ०र०-दोषोत्क्लेशभृशाध्माने आह-बहुदोषस्येति । तत्र "उत्क्लेश्य दोषान्" इत्यन्तेन दोषोत्क्लेशम् । शेषेण भृशाध्मानम् । उक्त हि सङ्ग्रहे ( क अ ३ )-"कफोल्बणस्यातिस्निग्धस्य गुरुकोष्ठस्य मन्दाग्नेर्वा मृदुप्रणीतमौषध भृशमुत्क्लेश्य दोषान् जाड्यतन्द्रादौर्बल्याङ्गसादान् जनयति । तच्छीघ्रमुल्लिखेत् । लङ्घित च सन्धुक्षिताग्नि पुन स्निग्ध तीक्ष्णोष्णैर्विशोधयेत् । सशेषान्नाय वातश्लेष्मवते रूक्षाय सोदावर्ताय मन्दाग्नये वा शीत रूक्ष वा दत्तमौषध भृशमाध्मान करोति । तत्र मलसङ्गात्समुन्नह्यत्युदरमन्त शूल दृतिवत्पार्श्वयोरापूर्णता शिर पृष्ठरुजा श्वास पायुबस्तिनिस्तोदश्च भवति । तमुदावर्तानाहहराभ्यङ्गस्वेदवर्तिदीपनचूर्णबस्तिक्रियाभिरुपाचरेत् ।" इति । तै -उत्क्लिष्टदोषै । नाभि-नाभिसमीपमुदरम् । पञ्चमूलादि[11]र्यवागू, सुकृता-त्रिकटुलवणस्नेहयुता । पञ्चमूल-महत् । उक्त हि वृन्देन ( ज्वरातिसाराधिकारे श्लो १६ )-"पञ्चमूलीति सामान्याद्ग्राह्या पित्ते कनीयसी । महती पञ्चमूली तु वातश्लेष्मोत्तरे हिता ॥" इति । भूतिक-रोहिषम् । सैन्धवस्य [12]क्वाथद्रव्येषू[13]क्तावपि सिद्धायां यवाग्वा लवणस्थाने प्रयोग । अत एव सुकृताशब्देन कृताख्यो भेद उच्यते ।

**पिप्पलीदाडिमक्षारहिङ्गुशुण्ठ्यम्लवेतसान् ।**
**ससैन्धवान् पिबेन्मद्यैः सर्पिषोष्णोदकेन वा ॥१५॥**
**प्रवाहिकापरिस्रा[1]ववेदनापरिकर्तने ।**

स०-पिप्पल्यादीन् मद्येन सर्पिषोष्णाम्बुना वा पिबेत् प्रवाहिकादिषु ।

आ० र०-प्रवाहिकादित्रये भेषजमाह-पिप्पलीति । पिप्पल्यादिचूर्ण मद्याद्यन्यतमेन प्रवाहिकादिषु तिसृषु व्यापत्सु पिबेत् । वेदनया परिकर्तन[2]-छेदनमिव । सङ्ग्रहे तु ( क अ ३ )-"क्षामेणाल्पबलेन मृदुकोष्ठाग्निना रूक्षेण[3] स्निग्धेन वा स्विन्नेन सामेन वा बलवदौषधमुपयुक्त सपित्तमनिल परिदूष्य परिकर्तिकामापादयति । तत्र नाभिबस्तिगुदमेढ्रे सदाह परिकर्तनमनिलसङ्गो विष्टम्भश्च । त कृष्णतिलमधुकमधुयुक्तै पिच्छाबस्तिभिरास्थापयेत् । क्षीरिवृक्षशृतक्षीरेण वा, शीताम्बुपरिषिक्त चै[4]न पयसा भुक्तवन्त घृतमण्डेन यष्टीमधुकतैलेन वा[5]ऽनुवासयेत् । क्षामस्य च मधुरो बृंहणश्च सर्वो विधिरिष्ट । सामे दीपनो लङ्घनश्च, लघुरूक्षोष्ण चान्नपानम् । निरामीभूते[6] चानुबन्धे लघुं[7]क्षाराम्लम् । [8]वातेऽधिके दधि साम्ल दाडिमत्वचा युक्त भोजने पाने च युञ्जीत । सदाडिम[9]रस सर्पि पिबेत् । उष्णाम्बुना वा तिलदेवदारुकल्कम् । क्रूरकोष्ठस्य बहुदोषस्या[10]ल्पमल्पगुण मृदुस्निग्ध वा शोधनमवचारितमुत्क्लेश्य दोषान्न निर्हरति, अल्पाल्प च पित्तकफसंसृष्ट परिस्रवति, विष्टम्भगौरवशोफकोठकण्डूपाण्डुताङ्गसादगुद[11]शूलानि चोपा[12]दयति । त तिनिशधवाश्वकर्णपलाशबलानिर्यूहैर्मधुयुक्तैरास्थापयेत् । उपशान्तपरि[13]स्रवं च पुनरुपस्निग्ध तीक्ष्णै शोधयेत् । शुद्धे च दीपनाश्चूर्णासवारिष्टादीन् योजयेत् । पीतौषधो यदा वेगमुदीरयति निगृह्णाति वा, तदा प्रवाहिकाऽस्य जायते । तस्या सदाहशूल सपिच्छ श्वेत कृष्ण सरक्त वा भृश प्रवाहमान कफमुपविशति । त परिस्रवविधिनोपचरेत् ।" इति ।

**पीतौषधस्य वेगाना निग्रहान्मारुतादयः ॥ १६ ॥**
**कुपिता हृदय गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ।**
**हि[14]ध्मापार्श्वरुजाकासदैन्यलालाक्षिविभ्रमैः ॥ १७ ॥**

---

१ 'विधमयो' ग । २ 'मार्गं' अ आ इ ग घ च प न । ३ 'भृश-अत्यन्त, आध्मापयेत्-आपूरयेत् । नाभ्यादीना च रुज कुर्यात् । उदावर्तहर-अर्शश्चिकित्सितोक्तम् ।" इति चन्द्र । ४ 'न्नाभिपृष्ठ' चन्द्र । ५ 'पञ्चकोल' इ । ६ 'कं कुर्यात् । उदावर्तहर सर्वं कर्म प्रशस्यते' ट । ७ 'स्निग्धरूक्षोष्णै' क ञ । ८ 'न्नह्य दह्यत्यु' स.मू । ९ 'श्वासकासौ पा' स स । १० 'रुपचरे' घ स मू । ११ 'दिकृता य' क । १२ 'क्वाथद्र' क ञ. । १३ 'व्येष्वनुक्ता' ग. ।

१ 'स्रावे वेद' ग घ च ञ प न । २ 'न गुदस्य छे' ग । ३ 'क्षेणास्नि' स स । ४ 'वैन' ग । ५ 'चानु' ग । 'लेनानु' स मू । ६ 'ते वानु' क स मू । 'तेऽनु' स स । ७ 'घुरूक्षाम्लं' क ञ । ८ 'सवाते दधिसाराम्ल' स स । ९ 'मत्वचस' ग घ प । १० 'स्याल्पमात्रगुण' स मू । ११ 'गुल्मशू' च स स । १२ 'वापा' ग घ प । १३ 'रिस्राव' क ग. । १४ 'स हिक्काकासपार्श्वार्तिदैन्य' स.च. ।

**जिह्वां खादति निःसंज्ञो[1] दन्तान् कटकटाय[2]यन् ।**
**न गच्छेद्विभ्रमं तत्र वामयेदाशु[3] तं भिषक् ॥ १८ ॥**
**मधुरैः पित्तमूर्च्छार्तं कटुभिः कफमूर्च्छितम् ।**
**पाचनीयैस्ततश्चास्य दोषशेषं[4] विपाचयेत् ॥ १९ ॥**
**कायाग्निं च बलं चास्य क्रमेणाभिप्रवर्धयेत्[5] ।**

**स०**–पीतौषधस्य वेगाना निग्रहाद्वाताद्य कुपिता हृदय गत्वा घोर हृद्ग्रह कुर्वन्ति । हि मादियुक्त स च हृद्ग्रहादिमान् जिह्वा खादति नि सञ्ज सन् । तथा दन्तान् कटकटायते । तत्र–तस्मिन्नवस्थाविशेषे, भिषगाश्वेव त–रोगिण, सशय हित्वा वामयेत् । मधुरै पित्तमूर्च्छार्त वामयेत् । कफमूर्च्छित कटुभिर्वामयेत् । वामयित्वा चास्य दोपशेष पाचनीयैर्द्रव्यैर्विपाचयेत् । कायाग्नि बल च क्रमेणास्याभिप्रवर्धयेत् ।

**आ० र०**–हृद्ग्रहमाह–पीतौषधस्येति । अक्षिविभ्रम –उत्पृताक्षत्वम् । कटकटाययन्–कटत्कटदिति[6] कारयन्, "लोहितादिडाज्भ्य क्यष्" इति क्यषन्ताण्णिच् । सङ्ग्रहे तु (क अ ३)–"तस्मै भिषक् शीघ्रमसुद्यन्नभ्यङ्गपूर्व धान्यस्वेदेन परिस्वेद्य तीक्ष्णमवपीड दद्यात् । यथादोषोच्छ्राय च बस्तीन् वितरेत् ।" इति ।

**पवनेनातिवमतो हृदयं यस्य पीड्यते ॥ २० ॥**
**तस्मै स्निग्धाम्ललवणान्[7] दद्यात्पित्तकफेऽन्यथा ।**

**स०**–यस्यातिवमत पवनेन हृदय पीड्यते, तस्मै रोगिणे स्निग्धाम्ललवण दद्यात् । पित्तकफे कुपिते, अन्यथा–मधुरशीतादिक, दद्यादित्यर्थ ।

**आ० र०**–हृद्ग्रहविशेषे भेषजमाह–पवनेनेति । अन्यथेति रूक्षमधुरकटुतिक्तकषायान् योगान् दद्यात् ।

**पीतौषधस्य वेगानां निग्रहेण कफेन वा ॥ २१ ॥**
**रुद्धो[8]ऽति वा विशुद्धस्य गृह्णात्यङ्गानि मारुतः ।**
**स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्तिभेदनैः[9] ॥ २२ ॥**
**तत्र वातहरं सर्वं स्नेहस्वेदादि शस्यते ।**

**स०**–पीतभेषजस्य वेगाना निग्रहेण कफेन वा रुद्धोऽतिविशुद्धस्य वा वायुरङ्गानि गृह्णाति स्तम्भादिभि । तत्र सर्व वातहर स्नेहस्वेदादि शस्यते ।

**आ० र०**–सर्वगात्रपरिग्रहमाह–पीतौषधस्येति । सङ्ग्रहे[1] तु (क अ ३)–"अस्निग्धस्विन्नेनाब्रह्मचारिणा वेगधारिणा मृदुकोष्ठेन सुकुमारेण वा रूक्षमौषधमतिमात्रप्रयुक्तमतिविरेकाद्वायु प्रकोपयति । तेन सर्वाङ्गग्रहे विशेषात्पार्श्वपृष्ठश्रोणिमन्यामर्मसु शूल मूर्च्छा भ्रम कम्प स्तम्भो निस्तोदो भेद उद्वेष्टन सज्ञानाशश्च स्यात् । तमभ्यज्य धान्यै स्वेदयित्वा यष्टीमधुविपक्वेन तैलेनानुवासयेत्, वातहरं चान्नपानम् ।" इति ।

**बहुतीक्ष्णं[2] क्षुधार्तस्य मृदुकोष्ठस्य भेषजम् ॥ २३ ॥**
**हृत्वाऽऽशु विट्पित्तकफान् धातूनास्रावयेद्द्रवान्[3] ।**
**तत्रातियोगे मधुरैः शेषमौषधमुल्लिखेत् ॥ २४ ॥**
**योज्योऽति[4] वमने रेको विरेके वमनं मृदु[5] ।**
**परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ॥ २५ ॥**
**अञ्जनं चन्दनोशीरमज्जासृक्[6]शर्करोदकम् ।**
**लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥ २६ ॥**

**स०**–क्षुधार्तस्य मृदुकोष्ठस्य नरस्य बहुतीक्ष्ण च भेषज विट्पित्तकफान् शीघ्रमेव हृत्वा द्रवान् धातूनास्रावयेत् । तस्मिन् विरेचनातियोगे मधुरैर्द्रव्यै शेष विरेचनद्रव्यमुद्धरेत् । अतिवमने सति विरेको योज्य । अतिविरेके च मृदु वमन योज्यम् । परिषेकादिभिश्च शीतैस्त–विरेक, स्तम्भयेत् । आदिशब्दो जलार्द्रशीतमारुतादिग्रहणाय । अञ्जनादिक लाजचूर्णै सह मन्थ पर विरेकातियोगहर पिबेत् ।

**आ० र०**–धातुस्रवमाह–बहुतीक्ष्णमिति । अजासृग्–छागरुधिरम् । अञ्जनादिषट्क लाजचूर्णै सह पिबेत् । "सक्तव सर्पिषाभ्यक्ता शीतवारिपरिप्लुता । नातिसान्द्रा[7] न चात्यच्छा मन्थ इत्यभिधीयते ॥" इत्युक्त[8]विशेषग्रहणार्थं मन्थमित्युक्तम् ।

**वमनस्यातियोगे तु शीताम्बुपरिषेचितः ।**
**पिबेत्फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ॥ २७ ॥**
**सोद्गारायां भृशं छर्द्यां मूर्वाया[9] धान्यमुस्तयोः ।**
**समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥ २८ ॥**

**स०**–वमनस्य त्वतियोगे शीताम्बुपरिषेचित सन् फलरसैर्मन्थ घृतादियुक्त पिबेत् । अतिशयेन सोद्गारे वमने सति मूर्वादिचूर्ण लेहयेत् ।

---

१ "नि सञ्ज –विचेतन ।" इति चन्द्र । "न गच्छेद्विभ्रम तत्रेति हृद्ग्रहपीडितोऽय म्रियमाणो वाऽयमिति भ्रान्ति न गच्छेदित्यर्थ. । वमन चात्र मूर्च्छिते दु शकप्रयोगम्, तेन मूर्च्छारम्भ एव वमन कारयितव्यम् । किंवा मूर्च्छायामप्यङ्गुलीप्रवेशादिना वमन कारयितव्यम् ।" इति चक्र । २ 'टायते' अ इ ई ञ । ३ 'श्वाशु दो' आ । ४ 'ष च पाच' ग घ प । ५ 'वर्तयेत्' इ ञ । ६ 'कटकटादि' क ञ । ७ 'वण द' अ आ क न चन्द्र अरुण स च । ८ 'द्धो वाऽति वि' अ. । ९ 'द्वेष्टाधिभे' आ । 'द्वेष्टनमन्थनै.' स.च ।

१ 'हो भवति । तस्य विशे' स स । २ 'अतितीक्ष्ण' स च । ३ 'तून् प्रस्रा' आ । 'तून् विस्रा' स च । ४ 'तिरेको वमिते वि' अ । ५ "मृद्विति पद वमनेन विरेचनेन च सम्बध्यते ।" इति चक्र । "फलरसैर्वेति दाडिमीफलरसै " इति डल्हण । "फलाना–द्राक्षादीनां रसै ।" इतीन्दु । "फलरसै –द्राक्षाद्युद्भूतै ।" इति चन्द्र । ६ 'मज्जासृक्' अ ञ, स च. । ७ 'न्द्रा च नात्य' क. । ८ 'त्युक्त वि' ग घ.च.प. । ९ 'मूर्च्छाया धा' आ.स च. ।

आ० र०-वमनातियोगे विशेषमाह-वमनस्येति। मूर्वा-दिपञ्चकचूर्णं मधुना लेहयेत्।

**वमतोऽन्तः प्रविष्टाया जिह्वायां कवलग्रहाः।**
**स्निग्धाम्ललवणा हृद्या यूषमांसरसा हिताः॥ २९॥**
**फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः।**
**निःसृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत्॥ ३०॥**

स०-छर्दयतोऽभ्यन्तरे जिह्वाया प्रविष्टाया सत्या कवल-ग्रहाश्छागमांसरसा स्निग्धादियुक्ता मनःप्रिया हिता। तथा तस्य-अन्तःप्रविष्टजिह्वस्य, अग्रेऽपरे नरा अम्लानि फलानि खादेयुः। निःसृता च रसना तिलद्राक्षाकल्केन लिप्तामन्तः प्रवेशयेत्।

आ० र०-कवलग्रहाः-गण्डूषाः। ते च यूषा मांसरसा वा।

**वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम्।**
**यवागूं तनुकां दद्यात्स्नेहस्वेदौ च कालवित्॥ ३१॥**

स०-वाग्ग्रहादिषु वातरोगेषु घृतमांसोपसाधितां स्वच्छां यवागूं दद्यात्। स्नेहस्वेदौ च योजयेत्।

आ० र०-तनुका-अच्छाम्।

**अतियोगाच्च*[१] भैषज्यं जीवं*[१] हरति शोणितम्।**
**तज्जीवादानमित्युक्तमादत्ते जीवितं यतः॥ ३२॥**
**शुने काकाय वा दद्यात्तेनान्नमसृजा सह।**
**भुक्तेऽभुक्ते वदेज्जीवं पित्तं वा भेषजेरितम्*[१]॥ ३३॥**
**शुक्लं वा भावितं वस्त्रमावानं कोष्णवारिणा।**
**प्रक्षालितं विवर्णं स्यात्पित्ते शुद्धं तु शोणिते॥ ३४॥**

स०-अतियोगेन च यद्भेषजं जीवाख्यं शोणितं हरति तद्भैषज्यं जीवादानमिति गदितम्, यतस्तज्जीवितमादत्ते। पित्तरक्तयोर्गन्धवर्णानुवृत्तित्वसामान्यात् किमिदं रक्तमुत पित्तम्? इति संशये। तत्परीक्षार्थमाह-शुने काकाय वेत्यादि। तेन-विरेचनातियोगोद्भवेन रक्तेन, मिश्रितमन्नं शुने वायसाय वा दद्यात्। तस्मिन् रक्तमिश्रितेऽन्ने भुक्ते सति जीवं वदेत्। अभुक्ते च सति तस्मिन् विरेचनातियोगेरितं पित्तं ब्रूयात्। शुक्लं वस्त्रं तेन विरेचनातियोगोद्भवेन रक्तेन संशयरूपेण भावितं-आर्द्रीकृतं, अनन्तरमावानं-शुष्कं, कोष्णवारिणा प्रक्षालितं-प्रकर्षेण धौतं, पित्ते सति विवर्णं वस्त्रं स्यात्, न शुद्धम्। शोणिते तु सति प्रक्षालितं वस्त्रं शुद्धं स्यात्।

आ० र०-वमनभैषज्यातियोगे व्यापदमाह-अतियोगादिति। जीवशोणितं-ओजः, "ओजस्तु तेजो धातूनां" (हृ सू अ ११।३७) इत्यादिनोक्तम्। तत्-व्यापद्रूपं जीवादानसंज्ञम्। तेनासृजा-जीवशोणितेन। भावितं-क्लिन्नं स्तिमितम्। ततः आवानं-ईषच्छुष्कम्। ततः कोष्णवारिणा प्रक्षालितम्। तद्यदि विवर्णं स्यात्तदा पित्तम्। यदि शुद्धं तदा जीवशोणितम्।

**तृष्णामूर्च्छामदार्तस्य कुर्यादामरणात्क्रियाम्।**
**रक्तपित्तातिसारघ्नीं तस्याशु प्राणरक्षणीम्॥ ३५॥**
**मृगगोमहिषाजानां सद्यस्कं जीवतामसृक्।**
**पिबेज्जीवाभिसन्धानं जीवं*[१] तद्ध्याशु गच्छति॥३६॥**
**तदेव दर्भमृदितं रक्तं बस्तौ निषेचयेत्।**
**श्यामाकाश्मर्यमधुकदूर्वोशीरैः शृतं पयः॥ ३७॥**
**घृतमण्डाञ्जनयुतं बस्तिं वा योजयेद्धिमम्।**
**पिच्छाबस्तिं सुशीतं वा घृतमण्डानुवासनम्॥३८॥**

स०-तृष्णाद्यार्तस्य शोणिते स्रवत्येव रक्तपित्तातिसारघ्नीं प्राणरक्षणीं शीघ्रं क्रियां कुर्यात्, आमरणात्। अनेन च मरणतुलाधिरूढत्वं द्योतयति। संशयेऽपि चिकित्सा कार्येति प्रागभ्यधायि। तत्र मृगादीनां जीवतां सद्यस्क-तत्क्षणोत्पन्नं, रक्तं पिबेत्। किम्भूतम्? जीवाभिसन्धानम्। जीवमभिसन्धीयतेऽत्रेति जीवाभिसन्धानम्। हि-यस्मात्, तत्-रक्तं कर्तृभूतं, जीवं कर्म आशु गच्छति-प्राप्नोति। तदेतद्रक्तं दर्भमृदितं-अभिनवप्रसूतदर्भमृदितं, बस्तौ निषेचयेत्-प्रक्षिपेत्। श्यामादिभिर्वा शृतं पयो घृतमण्डाञ्जनाभ्यां युक्तं बस्तिं हिमं-शीतलं, योजयेत्। अथवा पिच्छाबस्तिं-स्वल्पमनुवासनं, सुशीतं घृतमण्डेन-स्वच्छेनोर्ध्वभवेन घृतस्योपरिभागस्थितेन, देयम्।

आ० र०-तस्य-ज्ञातजीवशोणितनिर्गमस्य। सद्यस्क-गृहीतमात्रं शिराव्यधेन। जीवाभिसन्धानं-जीवशोणितन्यू-

१ 'नासह ले' क। २ 'द्याश्छागमांसरसा' क न अरुण। 'यूषक्षीररसैर्हिता' स च। ३ "पुरतोऽम्लफलखादनं मुखस्रावणेन जिह्वास्तम्भत्वं हन्तुम्।" इति चक्र। ४ 'चैवाग्रतो' अ इ। ५ 'जनाः' ई घ ग प। ६ 'प्रयोजयेत्' इ। ७ 'हानिलरोगेषु' ट। ८ अस्याग्रे "अतितीक्ष्णं मृदौ कोष्ठे लघुदोषस्य भेषजम्। दोषं हृत्वाऽतियोगेन (दोषान् हृत्वा विनिर्मथ्य) जीवं हरति शोणितम्॥" इति घ प पुस्तकयोरधिकश्चरकश्लोकः (च सि अ ६।७८)। *१ अतियोगादिति सामान्योक्त्या वमनस्य विरेचनस्य वाऽतियोगादिति ग्राह्यम्। "जीवमिति जीवनहेतुधातुरूपं शोणितम्। परीक्षा च चिकित्साभेदार्थमेव। रक्तपित्ते रक्तपित्तहरी क्रिया, जीवशोणिते तु दृष्ट्वा 'तृष्णा मूर्च्छामदार्तस्य' इत्यादिनोक्ता कर्तव्या॥ जीवं तद्ध्याशु गच्छतीति असृक्प्रभावादाश्वेव शोणितरूपतां याति सद्यस्कमसृक्।" इति चक्र। "जीवं-जीवरूपम्। भेषजेन ईरितं-प्रेरितम्॥ जीवं गच्छति-तदाप्याययति।" इति चन्द्र। १०'माधत्ते जीवनं नृणाम्।' आ। ११ 'भुक्त्वाऽभुक्ते' अ आ। 'भुक्ताभुक्तं व' क। 'भुक्ते तस्मिन् वदेज्जीवमभुक्ते पित्तमादिशेत्॥' इ ग घ ञ प। १२ 'त्पित्तं शुद्धं तु शोणितम्।' आ.क.ग घ प. इति हेमाद्रि।

१ 'न-किञ्चिच्छुष्क' न। २ 'रणक्रियाम्' क प। ३ 'स्याधि प्रा' आ.। ४ 'यच्छति' अ इ.ञ.,ट.। ५ 'जातजी' क.ग.ञ.।

नाशपूरणम् । हि–यस्मात्, तत् जीव–जीवशोणित, आशु गच्छति । तदेव–मृगादीनाम्, दर्भमृदित–दर्भचूर्णेन सह मर्दितम्, बस्तौ निषेचयेत्–तेन निरूह दद्यात्, श्यामादि-क्वथितेन पयसा वा । श्यामा–प्रियङ्गु । पिच्छाबस्ति–अति-सारचिकित्सितोक्तम् ( हृ चि. अ ९।७२ ) ।

अस्यामप्यतियोगोद्भवायामवस्थाया गुदभ्रश सम्भाव्यत इत्याह—

**गुदं भ्रष्टं कषायैश्च स्तम्भयित्वा प्रवेशयेत् ।**

**स०**–गुद भ्रष्ट कषायै –कषायरसनिष्पादितै क्वाथै ,स्तम्भ-यित्वा प्रवेशयेत् ।

**आ० र०**–गुद भ्रष्ट कषायै –कषायरसैर्द्रव्यै , स्तम्भ-यित्वा–स्तब्धता नीत्वा, प्रवेशयेत् ।

**विसंज्ञं श्रावयेत्सामवेणुगीतादिनिस्वनम् ॥ ३९ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया पञ्चमे कल्पसिद्धि स्थाने वमनविरेचनव्यापत्सिद्धिर्नाम तृतीयोऽध्यायः ॥ ३ ॥**

**स०**–विसज्ञ सम्पन्न सामवेणुगीतादीना निस्वन श्रावयेदिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्ग-हृदयटीकाया सर्वाङ्गसुन्दराख्याया पञ्चमे कल्प-सिद्धिस्थाने वमनविरेचनव्यापत्सिद्धिर्नाम तृतीयोऽध्याय समाप्त ॥ ३ ॥

**आ० र०**–विसंज्ञ सामादिध्वनीन् श्रावयेत् । सङ्ग्रहे तु ( क अ ३ )–"अतिमात्रमकालेऽल्प तुल्यवीर्यैरभावितम् । असम्यक् संस्कृत जीर्णं व्यापद्येतौषध ध्रुवम् ॥ छर्दन न तु दुश्छर्दे दुर्विरेच न रेचनम् । पाययेदौषध भूयस्तन्निहन्ति तथा हि तौ ॥ यस्योर्ध्व कफसंसृष्टं पीत यात्यानुलोमिकम् । वमित कवलै. शुद्ध लङ्घित पाययेत्तु तम् ॥ विबन्धेऽल्पे चिराद्दोषे स्रवत्युष्ण पिबेज्जलम् । तेनाध्मान वमिस्तृष्णा विबन्धश्चाशु शाम्यति ॥ भेषज दोषरुद्ध चेन्नोर्ध्व नाध प्रवर्तते । सोद्गार साङ्गशूल वा स्वेदं तत्रावचारयेत् ॥ सम्यग्विरिक्तस्योद्गारे भेषज क्षिप्रमुल्लिखेत् । अजीर्णमप्रवृत्तौ तु सुशीतै स्तम्भयेद्भिषक् ॥ कदाचिच्छ्लेष्मणा रुद्ध तिष्ठत्युरसि भेषजम् । क्षीणे श्लेष्मणि सायाह्ने निशि वा तत् प्रवर्तते ॥ क्षारानाहारयेज्जीर्णे तिष्ठत्यूर्ध्वं गतेऽपि वा । वायुना भेषजे त्वन्यत् सस्नेहलवण पिबेत् ॥ तृण्मोहभ्रममूर्च्छाद्या स्युर्जीर्यति च भेषजे । पित्तघ्न स्वादु शीत च भेषज तत्र शस्यते ॥ लालाहृल्लासविष्टम्भरोमहर्षा कफावृते । भेषज तत्र तीक्ष्णोष्ण कट्वादि कफनुद्धितम् ॥" इति । तथा वातुस्रवे ( स क अ ३ ) –"त शतधौतघृतेनाभ्यज्य कषायस्वादुशीतै प्रदेहपरिषेकावगाहान्नपानै शर्करामधुमद्भिश्च लेहे स्तम्भयेत् । विशेषेण तु विरेचनातियोगे तण्डुलाम्भसा मधुमिश्रेण वामयेत् । प्रियङ्ग्वादिक च तण्डुलोदकेन पिबेत् । रोध्ररसाञ्जनदाडिमत्वचो वा । कट्फलोत्पलसमङ्गापद्मकेसराणि वा । क्षौद्रशर्करामधुकोदुम्बरत्वचो वा । शेषेष्वपि चासम्यक्प्रयुक्तवमनविरेचनोपद्रवेषु यथामय दोषादीनालक्ष्य प्रतिकुर्यात् । बस्तिव्यापत्सिद्धि चेक्षेत । एवमुभयतो भागेऽपि शोधने यथावस्थमुत्तिष्ठेत । या तु विरेचने परिकर्तिका तद्वमने कण्ठक्षणनम्, यं परिस्रव स कफप्रसेक ,यत् प्रवाहण स शुष्कोद्गार इति ।" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने । शुद्धिव्यापत्प्रकरण सामस्त्येन निरूपितम् ॥ ३ ॥



# चतुर्थोऽध्यायः ।

अथ दोषहरणसामान्याद्बस्तिकल्प प्रक्रम्यत इत्याह—

**अथातो बस्तिकल्पं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**

( गद्यसूत्रे ॥ २ ॥ )

**स०**–कल्पनं–कल्प । बस्ते कल्पो बस्तिकल्प, तम् । शेष पूर्ववत् ।

**आ० र०**–बस्तिकल्पमध्याय व्याख्यातु प्रतिजानीते–अथेति ।

---

१ 'यच्छति' ञ । २ 'मति' ट । ३ 'प्रयोजयेत्' ड. । ४ "विसज्ञ–चेतनारहित पुरुषम् । निस्वन–शब्दम् ।" इति चन्द्र । "साम–सान्त्वनम् ।" इति चक्र । ५ 'मवेदवेणु' इति क्वचित् । ६ 'धृतम्' क । ७ 'छर्दिन न तु दुच्छर्दि दुर्विरेच विरेचने ।' च । ८ 'रेच्य' घ स सं । ९ 'येतौषधं' ग घ प. । १० 'यथा' क । ११ 'हि ते' स.मू. । १२ 'येत्तत ' च । 'येद्रुतम्' ञ. । १३'द्धेऽल्पे' स द्व. । १४ 'श्चानु शा' स मू । १५ 'यन्नोर्ध्व' ग. ।

१ 'रात्रौ वा' सं द्व. । २ 'रूक्षान्नाहा' स मू । 'रूक्षानाहारयोजीर्णे' स स । ३ 'भेषज' घ ञ प । ४ 'त्तघ्ने स्वा' घ. प । ५ 'हर्षान्' स मू । ६ 'तु वमनाति' ग घ.प । ७ 'वमेत्' स द्व । ८ 'पाययेत्' ग । ९ 'दीनपेक्ष्य' स द्व ।१० 'मुपतिष्ठेत' क ञ । ११ 'यदध प' स स । १२ 'यदध प्र' स.सं । १३ 'तो दोषहरणसाकल्य बस्ति' घ. । १४ अय बस्तिकल्प-श्चरके सि० ३।४।८ अध्यायेषु, सुश्रुते चि० ३७।३८ अध्याययो , अष्टाङ्गसङ्ग्रहे क० ४ अध्याये चास्ति वर्णित ।

बलां गुडूचीं त्रिफलां सरास्नां
द्विपञ्चमूल च पलोन्मितानि ।
अष्टौ फलान्यर्धतुला च मांसा-
च्छागात्पचेदप्सु चतुर्थशेषम् ॥ १ ॥
पूतो यवानीफलबिल्वकुष्ठ-
वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुडक्षौद्रघृतै. सतैलै
र्युक्त. सुखोष्णो लवणान्वितश्च ॥ २ ॥
बस्तिः पर सर्वगदप्रमाथी
स्वस्थे हितो जीवनबृहणश्च ।
बस्तौ च यस्मिन् पठितो न कल्कः
सर्वत्र दद्यादमुमेव तत्र ॥ ३ ॥

**स०**–बलादीनि प्रत्येक पलोन्मितानि, तथाऽष्टौ [फलानि–] मदनफलानि प्रायेण पल स्यु , छागमासात् पञ्चाशत्पलानि, अप्सु चतुर्भागावशेष पचेत् । पूतश्च क्वाथो यवान्यादिभि कल्कैस्तथा गुडादिभिर्युक्त सुखोष्णो लवणयुतश्च बस्त्यर्थ परिकल्पितत्वाद्बस्ति सर्वगदानामपहन्ता स्वस्थे च हित स्वास्थ्यानुवृत्तिकृत्त्वात् जीवनो बृहणश्च । अत्र चतुर्थशेषग्रहणमनर्थकम् । यतो वक्ष्यति ( क अ ६।१४ )–"क्वाथ द्रव्यपले कुर्यात्प्रस्थार्ध पादशेषितम् ।" इति । अत्रोच्यते । वक्ष्यमाणपरिभाषाप्रमाणमत्र नाश्रीयत इति प्रतिपादनाय चतुर्थशेषोपादानम् । तेन निरूहयोग्यक्वाथार्थ द्रव्याच्चतुर्गुण जल क्षिप्त्वा चतुर्भागावशेष ग्राह्यमितीहावतिष्ठते । एवमन्यत्रापि निरुह उपयुज्यते । ये तु तन्त्रकाराभिप्रायमविदन्त सरलाशमुखीकास्ते सामान्यपरिभाषोक्तप्रमाण जल क्षिप्त्वा चतुरशशेष ग्राह्यमिति वदन्ति, शेष स्थितम् । तथा यवान्यादिकल्कस्य पलद्वयमात्र ग्राह्यम्, "स्वस्थे कल्कपलद्वयम् ।" ( हृ सू अ १९।४४ ) इति वचनात् । स्नेहश्चात्र क्वाथे चतुर्थाश षष्ठाशोऽष्टमाश क्रमेण वातपित्तकफेषु योज्य । उक्त च ( हृ सू अ १९। ३९ )–"तत क्वाथाच्चतुर्थाश स्नेह वाते प्रकल्पयेत् । पित्ते स्वस्थे च षष्ठाशमष्टमाश कफेऽधिके ॥" इति । मधुलवणे च यथा नात्यच्छता नातिलवणता च बस्तौ स्यात्तथा योजयितव्ये । उक्त च ( हृ सू अ १९।४१ )–"मधुपद्मादिशेष च युक्त्या" एव ( इति )। बस्तौ च यत्र कल्को न पठितस्तत्रामुमेव कल्क दद्यात् । उपजातिवृत्ते इन्द्रवज्रा च ।

**आ० र०–बस्तिकल्पो द्विविध ,–निरूहकल्पोऽनुवासनकल्पश्च । तत्रादौ निरूहकल्प । तत्रापि वातहर । बलादिनिरूहमाह–बलामिति । बलादीनि षोडश पृथक् पलोन्मितानि । अप्सु–सर्वेभ्य षोडशगुणासु ।**

द्विपञ्चमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य सपूर्वपेष्यः ।
त्रिस्नेहयुक्तः प्रवरो निरूहः
सर्वानिलव्याधिहर. प्रदिष्ट. ॥ ४ ॥

**स०**–दशमूलस्य छागमाससहितस्य रस –क्वाथ , अम्लेन–काञ्जिकादिना युक्त , पूर्वै –यवान्यादिभि पेष्यै सहित , तथा त्रिभि स्नेहै –सर्पिर्मज्जावसाख्यैरन्वित , श्रेष्ठो निरूह सर्वव्याधिहरो गदित ।

**आ० र०**–दशमूलादिनिरूहमाह–द्विपञ्चमूलस्येति । त्रयः स्नेहा –घृततैलवसा ।

वलापटोलीलघुपञ्चमूल-
त्रायन्तिकैरण्डयवात्सुसिद्धात् ।
प्रस्थो रसाच्छागरसार्धयुक्त.
साध्यः पुनः प्रस्थसमः स यावत् ॥ ५ ॥
प्रियङ्गुकृष्णाघनकल्कयुक्तः
सतैलसर्पिर्मधुसैन्धवश्च ।
स्याद्दीपनो मासबलप्रदश्च
चक्षुर्बलं चोपदधाति सद्यः ॥ ६ ॥

**स०**–बलापटोल्यादे रसात् सुसिद्धात् प्रस्थ सिद्ध , तथा छागमासरसादर्धप्रस्थेन युक्त पुन साध्य , यावदसौ प्रस्थप्रमाण स्यात् । प्रियङ्ग्वादिभि कल्कैर्युक्तस्तैलादिभि सहितो बस्तिदीपनो मासबलप्रदश्च स्यात् । चक्षुर्बल च शीघ्रमेवोपदधाति ।

**आ० र०–बलादिनिरूहमाह–बलापटोलीति । बलादे सुसिद्धाद्यो रसो जात तस्मात् प्रस्थ छागरसस्यार्धप्रस्थेन युक्त । पाकेन प्रस्थावशेष कार्य ।**

एरण्डमूलात्त्रिपलं पलाशा
त्तथा पलाशं लघुपञ्चमूलम् ।
रास्नाबलाछिन्नरुहाश्वगन्धा-
पुनर्नवारग्वधदेवदारु ॥ ७ ॥
फलानि चाष्टौ सलिलाढकाभ्यां
विपाचयेदष्टमशेषितेऽस्मिन् ।
वचाशताह्वाहपुषाप्रियङ्गु
यष्टीकणावत्सकबीजमुस्तम् ॥ ८ ॥
दद्यात्सुपिष्ट सहताक्ष्यशैल-
मक्षप्रमाणं लवणांशयुक्तम् ।

१ "पलोन्मितत्वमिह त्रिफलापञ्चमूल्योरपि प्रतिद्रव्यम् ।" इति चक्र । २ 'पूतं' अ आ क ग ञ चन्द्र स.च । 'पूते' स मू. । ३ 'प्रणितो' स मू । 'कथितो' ई ग. । ४ 'शेषमिति विशेषणमन' ट. । ५ 'क्वाथचतु' न. ।

१ 'पूर्वकल्क ।' घ न । २ "त्रिस्नेहयुक्त इत्यनेन मज्जपरित्याग सर्वबस्तिसिद्ध स्मारयति । उक्त ह्यन्यत्र–'विज्ञेयस्त्रिविध स्नेहो बस्त्यर्थं मज्जवर्जित ।' इति ।" इति चक्र । "घृततैलवसाभिस्त्रिभि स्नेहैर्युक्त ।" इति चन्द्र । "त्रय स्नेहा दोषाद्यपेक्ष योज्या ।" इतीन्दु । ३ 'पलाशा–शठी" इति चक्र । ४ 'मूलात् ।' इति कश्चित् ।

समाक्षिकस्तैलयुतः समूत्रो
बस्तिर्जयेल्लेखनदीपनोऽसौ ॥ ९ ॥
जङ्घोरुपादत्रिकपृष्ठकोष्ठ-
हृद्गुह्यशूलं गुरुता विबन्धम् ।
गुल्माश्मवर्ध्मग्रहणीगुदोत्था-
स्तास्तांश्च रोगान् कफवातजातान् ॥ १० ॥

स०—एरण्डमूलस्य त्रीणि पलानि, पलाशात्—किंशुकाच्च पलानि त्रीणि, ह्रस्वपञ्चमूलं पालिकं, रास्नादीनि प्रत्येकं पालिकानि, अष्टौ मदनफलानि च जलाढकद्वये विपाचयेत् । अष्टांशशेषिते चास्मिन् वचादिकमक्षप्रमाणं सुपिष्टं दद्यात् । लवणकर्षचतुर्थांशयुक्तं माक्षिकतैलमूत्रान्वितोऽयं बस्तिर्लेखनो दीपनो जङ्घादिशूलादींस्तांस्तान्—बहुविधानपि, वातश्लेष्मोत्थान् रोगान् जयति । षड्उपजातयः इन्द्रवज्रा च ।

आ० र०—एरण्डादिनिरूहमाह—एरण्डमूलादिति । पलाशात् तथा—त्रिपलम् । तार्क्ष्यशैल—रसाञ्जनम् ।

यष्ट्याह्वरोध्राभयचन्दनैश्च
शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्कराक्षौद्रघृतं सुशीतं
पित्तामयान् हन्ति सजीवनीयम् ॥ ११ ॥

स०—यष्ट्याह्वादिभिः शृतं पयोऽग्र्यं—श्रेष्ठं, स्यात् । शर्कराक्षौद्रघृतयुक्तं सुशीतलं जीवनीयसहितं पित्तामयान् हन्ति । अभय—उशीरम् ।

आ० र०—अथ पित्तहरनिरूहाः । तत्र यष्ट्यादिनिरूहमाह—यष्ट्याह्वेति । अभय—उशीरम् । अग्र्य—गव्यम् । सजीवनीय—जीवन्त्यादिगणकल्कयुक्तम् ।

रास्ना वृषं लोहितिकामनन्तां
बलां कनीयस्तृणपञ्चमूल्यौ ।
गोपाङ्गनाचन्दनपद्मकर्द्धि-
यष्ट्याह्वरोध्राणि पलार्धकानि ॥ १२ ॥
निःक्वाथ्य तोयेन रसेन तेन
शृतं पयोऽर्धाढकमम्बुहीनम् ।
जीवन्तिमेदर्द्धिवरीविदारी-
वीरर्द्धिकाकोलिकसेरुकाभिः ॥ १३ ॥
सितोपलाजीवकपद्मरेणु-
प्रपौण्डरीकोत्पलपुण्डरीकैः ।
रोध्रात्मगुप्तामधुयष्टिकाभि-
र्नागाह्वमुञ्जातकचन्दनैश्च ॥ १४ ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं
ससैन्धवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन्
क्षीरेण वाऽद्यात्परिषिक्तगात्रः ॥ १५ ॥
दाहातिसारप्रदरास्रपित्त-
हृत्पाण्डुरोगान् विषमज्वरं च ।
सगुल्ममूत्रग्रहकामलादीन्
सर्वामयान् पित्तकृतान्निहन्ति ॥ १६ ॥

स०—रास्नादीन्यर्धपलप्रमाणानि तोयेन निःक्वाथ्य तेन रसेन पयः शृतमर्धाढकमात्रं जलहीनं जीवन्त्यादिभिः सुपिष्टैर्घृतक्षौद्रयुतैर्निरूहं सैन्धवान्वितं शीतलमेव दद्यात् । तस्मिन्निरूहे प्रत्यागते—निर्गते, परिषिक्ताङ्गो धन्वमांसरसेन शालीनद्यात् । सात्म्यादिवशाद्वा क्षीरेणाद्यात् । स च दाहादीन् हन्ति । पञ्चोपजातयः इन्द्रवज्रा च ।

आ० र०—रास्नादिनिरूहमाह—रास्नामिति । वृष—वासाम् । लोहितिका—मञ्जिष्ठाम् । अनन्ता—दूर्वाम् । कनीयः—बृहत्यादि । तृण—दर्भादि । गोपाङ्गना—सारिवा । रास्नादीन्येकविंशति पलार्धकानि । तोयेन षोडशगुणेन पादशेषः क्वाथो द्विचत्वारिंशत्पलानि, तेन पयसश्चतुःषष्टिपलानि पचेदम्बुहीन—क्वाथहीनं यावद्भवति, क्षीरावशेषमित्यर्थः । वीरा—क्षीरविदारी । पद्मरेणु—पद्मकेशरम् । पुण्डरीक—श्वेतपद्मम् । नागाह्व—नागकेसरम् । प्रदर—रजोतिप्रवृत्तिः । सङ्ग्रहे तु (क. अ. ४)—"गोपाङ्गनाचन्दनशीतपाकीद्राक्षर्धिकाश्मर्यमधूकसेव्यैः । पयः शृतं श्रावणिमुद्गपर्णीतुगास्वगुप्तामधुयष्टिकल्कैः ॥ गोधूमचूर्णैश्च पिचुप्रमाणैरिक्षोर्विदार्याश्च रसेन युक्तं । तैलेन यष्टीमधुसाधितेन सितोपलाक्षौद्रघृतैश्च शीतं ॥ बस्तिं प्रशस्तं स समस्तदेहदाहे सशूलेऽवयवाश्रिते वा । गुल्मातिसारभ्रममूत्रकृच्छ्रक्षीणे क्षतौजोबलसङ्क्षये च ॥ चतुष्पले तैलघृतस्य भृष्टे छागाच्छताधौ दधिदाडिमाम्ले । रसः सपेष्यो बलवर्णमांसरेतोग्नितैमिर्यशिरोरुजीष्टः ॥ यष्ट्याह्वयस्याष्टपलेन सिद्धं पयः शताह्वाफलपिप्पलीभिः । युक्तं ससर्पिर्मधु वातरक्तविसर्पवैस्वर्यहितो निरूहः ॥" इति ।

कोशातकारग्वधदेवदारु-
मूर्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान् बृहतीं च तोये
रसस्य तस्य प्रसृता दश स्युः ॥ १७ ॥

१ 'येद्दीपनपाचनो' आ । २ 'हणीविकारास्ता' 'वातजाश्च ।' ई. । ३ 'शात् शफा । तथा' घ प. । ४ 'शर्करं क्षौद्रयुतं सु' आ ग स. च । ५ 'मय ह' घ च प घ । ६ 'म् । पय –क्षीरम् । स' ग. । ७ 'पद्मकाह्वय' ग । ८ 'लोहात्म' अ इ ई ग न ।

१ 'परिषिक्तगात्र –कृतस्नपन ।" इति चन्द्र । २ 'रास्रपित्त' ग । ३ 'षमान् ज्वरांश्च ।' क ञ । 'मज्वरांश्च ।' ग । ४ 'तुगाश्वगन्धाम' क । 'तुगाश्वगु' घ प । 'गात्मगुप्ता' च । 'र्णींबलास्व' स द्व । ५ 'र्यां. स्वरसे' क ग ञ । ६ 'युक्तम् ।' स द्व । ७ 'द्रयुतै' ग ञ प । ८ 'सिद्ध' ग घ प । 'सिद्धे' ञ । ९ 'देहे दाहे' क घ च प । १० 'ले जठराश्रि' च । ११ 'च ।' ग घ च ञ प । १२ 'क्षीणक्षतौ' क ग ञ । १३ 'च्छताह्वाद' क स मू । 'च्छवद्धौ गुडदा' ग । 'च्छबद्धो गुडदा' ञ । 'धौं गुडदा' घ प । १४ 'धु रक्तपित्तवि' ग घ प । १५ 'वैवर्ण्यहरो नि' ञ. ।

तान् सर्षपैलामदनैः सकुष्ठै-
रक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
क्षौद्रस्य तैलस्य फलाह्वयस्य
क्षारस्य तैलस्य च[1] सार्षपस्य ॥ १८ ॥
दद्यान्निरूहं कफरोगिताय
मन्दाग्नये चाशनविद्विषे च ।

**स०**–कोशातकादीन् जले पक्त्वा तस्य रसस्य–क्वाथस्य, दश प्रसृता स्यु । तान् सर्षपादिभिरक्षप्रमाणैर्युक्तान्, क्षौद्रादीना प्रत्येक प्रसृतेन युक्तान्, फलाह्वय तैल–यन्मदनफलकल्केनाम्लैश्च पक्व तैलम्, तदेतत्संयोज्य कफरोगार्तादिभ्यो निरूह दद्यात् । अत्र कोशातकादीना द्रव्याणा परिमाणमनुक्तमपि सामान्यपरिभाषया तत्परिमाण कल्पनीयम्[2] । यत्परिमाणेभ्यो द्रव्येभ्य षोडशगुण जल दत्त्वा चतुर्भागावशेष यथा दश प्रसृता सम्पद्यन्ते तत्परिमाणानि कोशातक्यादीन्यत्र परिकल्पनीयानीति बोध्यम् ।

**आ० र०**–अथ कफहर[3]निरूहा । तत्र कोशातकादिनिरूहमाह–कोशातकेति । फलाह्वय तैल–फलतैलम् । क्षारस्य–यवक्षारस्य । सङ्ग्रहे तु ( क अ ४ )–"पुनर्नवैरण्डवृषाश्मभेदवृश्चीवभूतीकबलापलाशा[4] । द्विपञ्चमूल च पलाशकानि क्षुण्णानि धौतानि फलानि चाष्टौ ॥ बिल्व यवा[5]ङ्कोलकुलत्थधान्य[6]फलानि च स्यु प्रसृतोन्मितानि । पयो जलद्व्याढकसाधितं[7] तत् क्षीरावशिष्ट शुचिवस्त्रपूतम् ॥ वचाशताह्वामरदारुकुष्ठयष्ट्याह्वसिद्धार्थकपिप्पलीनाम् । कल्कैर्यवान्या[8] मदनैश्च युक्त[9] नात्युष्णशीत गुडसैन्धवाक्तम् ॥ क्षौद्रस्य तैलस्य च सर्पिषश्च नवस्य युक्त प्रसृत[10]त्रयेण । दद्यान्निरूह विधिना[11] विधिज्ञैस्त[12] सर्वसंसर्गकृतामयघ्नम् ॥ अर्धार्धविहितान् बस्तीनतश्चित्रान् प्रवक्ष्यते[13] । कोशातकीद्वयेक्ष्वाकुफलजीमूतवत्सका ॥ श्यामात्रिवृतयोर्मूल तथा दन्तीद्रवन्तिजम् । प्रकीर्या चोदकीर्या च क्षीरिणी नीलिनी फलम् ॥ सप्तला शङ्खिनी रोध्र फल कम्पिल्लकस्य च । सकल्क[14]सैन्धवयुता पक्वाशयविशोधना ॥ धातकीपुष्पतर्कारीजीवन्तीमूलवत्सका ॥ प्रग्रह खदिर कुष्ठ शमी पिण्डीतको यवा ॥ प्रियङ्गू[15] रक्तमूली च तरुणी[16]जाति[17]यूथिका । वटाद्या किंशुको[18] रोध्र[19]मिति सङ्ग्राहिका मता ॥ ब्राह्मी प्रियङ्ग्वम्बष्ठादिक्वाथकल्कै क्रमेण तु[20] । ऊषकादिप्रतीवापो लेखनस्त्रिफलारसै[1] ॥ मधुरक्वाथकल्केन सरसाज्येन[2] बृंहण । बदर्यैरावणीशेलूशाल्मलीधन्वनाङ्कुरा ॥ समाक्षिका क्षीरयुता सासृज पिच्छिला स्मृता । कोल[3]ङ्कतककाण्डेक्षुदर्भ[4]पौण्ड्रेक्षुवालुभि ॥ दाहघ्न[5] सघृतक्षीरो द्वितीय[6]श्चोत्पलादिभि । मुष्टि[7] शाल्मलिवृन्ताना क्षीरसिद्धो घृतान्वित[8] ॥ हितं[9] प्रवाहणे तद्वद्वृन्तै[10] शाल्मलिकस्य च । कर्बुदाराढकीनीपविदुलै क्षीरसाधितै ॥ परिकर्तें तथा वृन्तै श्रीपर्णीकोविदारजै । परिस्रवे पय सिद्ध सवृश्चीवपुनर्नवम् ॥ आखुकर्णिकया[11] तद्वत्तन्दुलीयकयुक्तया । अश्वावरोहकं[12] काकनासाराजकसेरुका ॥ सिद्धा क्षीरेऽति योगे स्यु क्षौद्राञ्जनघृतैर्युता । न्यग्रोधाद्यैश्चतुर्भिश्च तेनैव विधिनाऽपर ॥ बृहती क्षीरकाकोली पृश्निपर्णी[13] शतावरी । काश्मर्यबदरीमूर्वास्तथो[14]शीरप्रियङ्गव ॥ जीवादाने[15] शृते क्षीरे द्वौ घृताञ्जनसंयुतौ । बस्ती प्रदेयौ भिषजा शीतौ समधुशर्करौ ॥ गोव्य[16]जामहिषीक्षीरैर्जीवनीययुतैरपि । शशैणदक्षमार्जारमहिष्यै[17]व्यजशोणितै ॥ सद्यस्कैर्मृदितैर्बस्तिर्जीवादाने प्रशस्यते ।" इति ।

वक्ष्ये[18] मृदून् स्नेहकृतो निरूहान्
सुखोचितानां प्रसृतैः पृथक् तु ॥ १९ ॥

**स०**–तुशब्दो भिन्नक्रम । सुखोचिताना पुन सुकुमाराणा तु निरूहान् पृथक् प्रसृतैर्वक्ष्ये–भणिष्यामि । किम्भूतान्? मृदून्–अतीक्ष्णान्, तथा स्नेहकृत –कृतस्नेहान् । केचित्त्वसमग्र वृत्त चोक्तम(क्त्वाऽ)नुष्टुभा सगृह्णते, तच्चासम्यक्, एव हि वृत्तस्यास्य खण्डना स्यात्, तस्मादयमेव पाठ श्रेयान् । प्रसृतैश्च निष्पादितत्वादेते[19] वक्ष्यमाणा बस्तय प्रसृतसज्ञा [ ज्ञेया ] । उपजातीन्द्रवज्रोपजातय[20] ।

**अथेमान् सुकुमाराणा निरूहान् स्नेहनान् मृदून् ।**
**कर्मणा[21] विप्लुताना च[22] वक्ष्यामि प्रसृतैः पृथक् ॥२०॥**
**क्षीराद् द्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः ।**

१ 'च सर्षं' ग प । २ 'वेदनीयम्' ट । ३ 'हरा नि' क ग ञ प । ४ 'लाशात्' क च । 'लाशान्' ञ स द्व । ५ 'यवा कोल' घ ञ । 'यवाकोल' क प । ६ 'धान्य फ' क ग घ ञ प । ७ 'त तु क्षी' ग घ प । ८ 'न्यामलकैश्च' ग ञ । ९ 'युक्तैर्ना' क० । १० 'सृतित्र' स द्व । ११ 'विधिवद्विधि' ञ । १२'ज्ञ स सर्व० यघ्न ।' स स । १३ 'प्रचक्षते' क ग ञ स मू । १४ 'स्वकल्क' च स स । १५ 'यङ्गुरक्तमूले च' क ग ज स मू । 'यङ्गुरर्कमूली' स स । १६ 'भरणी' स मू । १७ 'णीयाति' ग । 'जातयू' ञ । १८ 'शुक रो' क ञ स द्व । १९ 'भ्रमति' ग.ञ । २० 'च' स द्व ।

१ 'रसे' घ च प । २ 'न देहिन ।' ञ । ३ 'कालङ्क' घ च.प । ४ 'र्भपाठेक्षु' ञ स मू । 'र्भपोटेक्षुपालिभि ' स स । ५'दोषघ्न ' प । ६ 'यश्चाञ्जनादि' घ प । 'यश्चन्दनादि' स स । ७ 'मुष्टिं शा' क स मू । 'मुष्टिशा' ग घ च प । 'बस्ति शा' स च । ८ 'न्वितै ' क ञ । ९ 'हितै प्र' क । १० 'द्वद्वेष्टै ' स च । ११ 'खुपर्णि' क ग ञ स मू । १२ 'हकाकाक' घ प । १३ 'पृष्ठिपर्णी' घ प । १४ 'स्तथा क्षीर प्रि' क ञ । 'स्तथा क्षीरप्रि' ग । १५ 'वादनी शृतै क्षीरैर्द्वौ' च । 'शृतै क्षी' स स । १६ 'गव्याजम' क ग ञ । १७ 'हिषाव्य' स स । १८ 'वक्ष्ये' इति श्लोकार्धं अरुणदत्तेन व्याख्यातमपि अ आ इ ई क ग घ ञ प पुस्तकेषु चरकसुश्रुतसङ्ग्रहेषु चानुपलब्धत्वात् हेमाद्रिचन्द्रनन्दनादिभिरस्वीकृतत्वात् 'अथेमान्' इति श्लोकेन पुनरुक्तत्वाच्चायुक्तम् । १९ 'देते च बस्तय प्रसृतैरुपलक्षिता काया. । अथ' न. । २० 'य ॥ क्षीराद्वौ' ट. । २१ "कर्मणा विप्लुता –अध्वादिक्रिययाऽनवस्थितदेहा ।" इतीन्दु । २२'तु' ई. ।

**खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ २१ ॥**
**एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।**
**बिल्वादिमूलक्वाथाद्द्वौ कौलत्थाद्द्वौ स वातजित् ॥२२॥**
**पटोलनिम्बभूतीकरास्नासप्तच्छदाम्भसः ।**
**प्रसृतः पृथगाज्याच्च बस्तिः सर्षपकल्कवान् ॥ २३ ॥**
**स पञ्चतिक्तोऽभिष्यन्दकृमिकुष्ठप्रमेहहा ।**
**चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात् ॥ २४ ॥**
**प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ।**
**पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ॥ २५ ॥**
**एकैकः प्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् ।**

**स०**–अथ–अनन्तरम्, इमान्निरूहान् स्नेहनसमर्थान् मृदून्–अतीक्ष्णान्, सुकुमाराणां नराणां कर्मणा–वमनादिना, विप्लुतानां–भ्रष्टानां, प्रसृतैः पृथगुपलक्षितान् वक्ष्यामि।

क्षीरात् द्वौ प्रसृतौ–चत्वारि पलानि, मधुतैलघृतात् त्रयः प्रसृताः–षट् पलानि, खजेन–दर्व्याकारेण, मथितो बस्तिर्वातं हन्ति बलं वर्णं च करोति। अत्र च कल्काभावात् बलाद्ये बस्तौ यः कल्कः (श्लो २), स एव कल्प्यः।

तैलादीनां प्रत्येकं प्रसृत एकः। बिल्वादिपञ्चमूलक्वाथात् द्वौ प्रसृतौ। कौलत्थात् क्वाथात् द्वौ प्रसृतौ। स बस्तिर्वातजित्।

पटोलादीनां पञ्चानां क्वाथात् पृथक् प्रसृतो, घृताच्च प्रसृतो, बस्तिः स सर्षपकल्कः स पञ्चतिक्तः अभिष्यन्दादिहा।

तैलादिभ्यश्चतुर्भ्यश्चत्वारः प्रसृताः–अष्टौ पलानि, पिष्टैः सर्षपैः सह बस्तिर्विट्सङ्गादिजित्।

पयस्यादिक्वाथानां पञ्चानां प्रसृताः पञ्च, माक्षिकघृतयोर्द्वौ प्रसृतौ, इति सप्त प्रसृताः। पिप्पलीकल्कवान् बस्तिर्वृषत्वकृत्–शुक्रकरः।

**आ० र०–सुकुमारनिरूहानाह–अथेति। स निरूहः पञ्चतिक्ताख्यः। पयस्या–क्षीरिणी। पयस्यादीनां पञ्चानां क्वाथः। सङ्ग्रहे तु (क अ ४)–"विडङ्गत्रिफलाशिग्रुफलमुस्ताखुकर्णिजात्। कषायात् प्रसृताः पञ्च तैलादेको विमथ्य तान् ॥[निरूहः कृमिहा वैल्लपिप्पलीकल्कयोजितः। श्वदंष्ट्राश्मभिदेरण्डक्वाथतैलसुरासवात् ॥ प्रसृताः पञ्च चपलाकौन्तीयष्ट्याह्वकल्कवान्।] बस्तिः कवोष्णः सानाहे मूत्रकृच्छ्रे परो मतः ॥" इति।**

**सिद्धबस्तीनतो वक्ष्ये सर्वदा यान् प्रयोजयेत् ॥२६॥**
**निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान् ।**

**स०**–अतः–प्रसृतेभ्यो निरूहेभ्योऽनन्तरं, निर्व्यापत्त्वादिगुणतः सञ्ज्ञया सिद्धबस्तीनतिप्रसिद्धान् वक्ष्ये–भणिष्यामि। यान् सर्वदा प्रयोजयेत्। तथा निर्व्यापदो बहुफलान् बलादिप्रदांश्च सुखांश्च। सुश्रुते चोक्तम् (चि अ ३८।११६)–"यस्मिन् बस्तौ यथा युक्ते ध्रुवा सिद्धिः प्रकीर्तिता। सिद्धबस्तिरिति ख्यातो मुनिभिस्तत्त्ववदिभिः ॥" इति।

**आ० र०–सिद्धबस्तीनाह–सिद्धबस्तीनिति।**

**मधुतैले समे कर्षः सैन्धवाद्द्विपिचुर्मिसिः ॥ २७ ॥**
**एरण्डमूलक्वाथेन निरूहो माधुतैलिकः ।**
**रसायनं प्रमेहार्शःकृमिगुल्मान्त्रवृद्धिनुत् ॥ २८ ॥**

**स०**–मधुतैले समे–तुल्ये, सैन्धवस्य कर्षो, मिसिः द्विपिचुः–द्विकर्षप्रमाणः, एरण्डमूलक्वाथेन सह माधुतैलिकोऽयं निरूहो रसायनं स्यात् प्रमेहादिजित्। "यस्मान्मधु च तैलं च प्राधान्येनात्र वर्तते। माधुतैलिक इत्येष विज्ञेयो बस्तिचिन्तकैः ॥" इति सुश्रुते (चि अ ३८।११४)।

**आ० र०–तत्र माधुतैलिकमाह–मधुतैल इति।**

**सयष्टिमधुकश्चैष चक्षुष्यो रक्तपित्तजित् ।**

**स०**–मधुयष्टियुक्तश्चैष बस्तिश्चक्षुष्यो रक्तपित्तजित्।

**आ० र०–मधुकक्वाथेऽधिके पूर्वस्य गुणान्तरमाह–सयष्टीति।**

**यापनो घनकल्केन मधुतैलरसाज्यवान् ॥ २९ ॥**
**पायुजानूरुवृषणबस्तिमेहनशूलजित् ।**

**स०**–यापनाख्यो बस्तिर्मुस्ताकल्केन सह मधुतैलमांसरसाज्ययुतः पाय्वादिशूलजित्। यापनः–प्राणधारणात्।

**आ० र०–यापनं बस्तिमाह–यापन इति। मांसरसोऽत्र क्वाथस्थाने।**

**प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥ ३० ॥**
**यापनं सैन्धवार्धाक्षहपुषार्धपलान्वितम् ।**

**स०**–यापनं निरूहं घृतादिभिः प्रसृतप्रमाणैः सैन्धवार्धकर्षेण हपुषार्धपलयुतं कल्पयेत्।

**आ० र०–पूर्वगुणं बस्त्यन्तरमाह–प्रसृतांशैरिति।**

---

१ 'सृतिस्तै' अ इ। २ 'म्बपूती' आ ई ग स स। 'म्बभूनिम्बरा' स च। ३ 'दाम्भसाम्। प्रसृता' ई। ४ "सर्षपकल्केन पञ्चभिश्च तिक्तैर्निम्बगुडूचीवृषपटोलनिदिग्धिकाख्यैर्युक्तः" इतीन्दु। ५ 'प्रमोहहा' ई। 'मेहजित्।' घ प। ६ 'भेदिनः' अ घ प। 'भेदना' इ ई। ७ 'सर्पिषः।' अ आ इ ग ञ न स मू। ८ 'तौ विधेयौ। मधु तैलघृतात् त्रयः प्रसृताः। ख०स्तिर्वातघ्नो बलवर्णवर्द्धनश्च। अत्र' ट। ९ 'रोति ॥ तैला' न। १० 'खुपर्णिजात्। कषाया प्र' क ञ। 'जा। कषाया प्र' ग घ प स मू। ११ 'मथ्यताम्' क ग ञ.। १२ 'नाहमूत्रकृच्छ्रहरो' क.ग.। १३ 'वरो' स स.।

१ 'यस्मिन् बस्तौ' इति श्लोको मुद्रितसुश्रुतपुस्तके नोपलभ्यते। तत्र त्वेतदर्थे "बलोपचयवर्णानां यस्माद्व्याधिशतस्य च। भवत्येतेन सिद्धिस्तु सिद्धबस्तिरतो मतः ॥" इति श्लोकः। २ 'ध्रुवं सि' ट। ३ 'मधु' अ आ ई क, ट न। ४ 'द्विहृत्' अ इ घ प। ५ 'नातिव' ट न। 'न्येन प्रदीयते। °त्येव भिषग्भिर्बस्तिरुच्यते।' स सु। ६ 'स्तिरीतिकै' ट। ७ 'मधु' क ग। ८ 'थे कृतेऽधि' ग.। ९ 'लवसा' स मू.। १० 'युजङ्घोरु' इ.।

**एरण्डमूलनिःक्वाथो मधुतैलं ससैन्धवम् ॥ ३१ ॥**
**एष युक्तरथो बस्तिः सवचापिप्पलीफलः ।**

स०-एरण्डमूलनिःक्वाथो मधुतैलसैन्धवान्वितः श्लेष्मवचा-पिप्पलीमदनफलान्वितो युक्तरथोऽन्वर्थनामा बस्तिः। सुश्रुते चोक्तम् (चि. अ. ३८।११५)-"रथेष्वपि हि युक्तेषु ह-स्त्यश्वेष्वपि योजयेत्। यस्मान्न प्रतिषिद्धोऽयमतो युक्तरथः स्मृतः ॥" इति।

आ० र०-पूर्वगुणं युक्तरथाख्यं बस्तिमाह-एरण्डमूलेति।

**स क्वाथो मधुषड्ग्रन्थाशताह्वाहिङ्गुसैन्धवम् ॥ ३२ ॥**
**सुरदारु च रास्ना च बस्तिर्दोषहरः शिवः ।**

स०-स पूर्वोक्त एरण्डमूलक्वाथो मध्वादिभिः सह एष बस्तिर्दोषहृच्छिवश्च।

आ० र०-दोषहरं बस्तिमाह-स क्वाथ इति। षड्ग्रन्था-वचा।

**पञ्चमूलस्य निःक्वाथस्तैलं मागधिका मधु ॥ ३३ ॥**
**ससैन्धवः समधुकः सिद्धबस्तिरिति स्मृतः ।**

स०-पञ्चमूलक्वाथस्तिलतैलादिकं सैन्धवमधुकसहितं सि-द्धबस्तिसञ्ज्ञो मुनिभिः स्मृतः।

आ० र०-दोषहरं सिद्धबस्तिमाह-पञ्चमूलस्येति।

**द्विपञ्चमूलत्रिफलाफलबिल्वानि पाचयेत् ॥ ३४ ॥**
**गोमूत्रे, तेन पिष्टैश्च पाठावत्सकतोयदैः ।**
**सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च ॥ ३५ ॥**
**युक्तो बस्तिः कफव्याधिपाण्डुरोगविषूचिषु ।**
**शुक्रानिलविबन्धेषु बस्त्याटोपे च पूजितः ॥ ३६ ॥**

स०-द्विपञ्चमूलादीनि गोमूत्रेण पाचयेत्। तेन-क्वथितेन गोमूत्रेण, पिष्टैश्च पाठादिभिर्युक्तः कफामयादिहृत्।

आ० र०-गोमूत्रबस्तिमाह-द्विपञ्चमूलेति।

**मुस्तापाठामृतैरण्डबलारास्नापुनर्नवाः ।**
**मञ्जिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणीः ॥ ३७ ॥**
**कनीयः पञ्चमूलं च पालिकं, मदनाष्टकम् ।**
**जलाढके पचेत्तच्च पादशेषं परिस्रुतम् ॥ ३८ ॥**
**क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ।**
**सपादजाङ्गलरसः ससर्पिर्मधुसैन्धवः ॥ ३९ ॥**

१ 'न्धव ।' आ। २ 'पि च युक्तेषु हस्त्यश्वे चापि कल्पिते ।' स सु। ३ 'तत्क्वाथो' अ इ। ४ 'न्धव ।' अ ञ न स स। ५ 'रु वचा रास्ना ब' अ इ ग। 'रु वरा रास्ना ब' स सु। ६ 'हरश्च स ।' ञ। 'हर स्मृत ।' स सु। 'हर पर ।' इति क्वचित्। ७ "शिव -श्रेष्ठ ।" इतीन्दु। "शिव -श्रेय-स्कर। स च दोषहरो नाम्ना।" इति चन्द्र। ८ 'भि कृतो ब' ट। ९ 'वा' च। १० 'षेषु पू' अ आ ग स मू। ११ 'नवम् ।' ई क ञ स ह्र। १२ 'हिणि ।' अ.आ इ ई.।

**पिष्टैर्यष्टिमिसिश्यामाकलिङ्गकरसाञ्जनैः ।**
**बस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्द्धनः ॥ ४० ॥**
**वातासृङ्मोहमेहार्शोगुल्मविण्मूत्रसङ्गहान् ।**
**विषमज्वरवीसर्पवर्ध्माध्मानप्रवाहिकाः ॥ ४१ ॥**
**वङ्क्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ।**
**हन्यादसृग्दरोन्मादशोफकासाश्मकुण्डलान् ॥ ४२ ॥**
**चक्षुष्यः पुत्रदो राजा यापनानां रसायनम् ।**

स०-मुस्तादीनि कनीयःपञ्चमूलपर्यन्तानि पृथक् पालि-कानि, मदनफलान्यष्टौ, जलाढके पचेत्। तच्च पादशेषं परि-स्रुतं क्षीरशेषं पुनः पचेदिति। तावत्कषायेण सह पक्तव्यं याव-त्क्षीरप्रस्थद्वयं स्यादित्यर्थः। बस्तिः सर्पिर्मधुसैन्धवयुतः पिष्टैर्य-ष्ट्यादिभिः सहितः सुखोष्णो मांसादिवर्द्धनो वातरक्तादीन् ह-न्यात्। चक्षुष्यादिगुणश्च। किम्भूतः? सपादजाङ्गलरसः,-तत्र चतुर्विंशतिपलिके निरूहे, तस्य पादेन षट्पलानि जाङ्गल-रसस्य स्युरित्यर्थः।

आ० र०-यापनराजं बस्तिमाह-मुस्तेति। अक्ष-बि-भीतकम्। रोहिणी-कटुका। श्यामा-प्रियङ्गु। कुण्डलो-वातकुण्डलिकाख्यो मूत्राघातः।

**मृगाणां लघुवभ्रा(ब्रा)णां दशमूलस्य चाम्भसा ॥ ४३ ॥**
**हपुषामिसिगाङ्गेयीकल्कैर्वातहरः परम् ।**
**निरूहोऽत्यर्थवृष्यश्च महास्नेहसमन्वितः ॥ ४४ ॥**

स०-ह्रस्वानां बृहतामुभयरूपाणां मृगाणां मांसानां तथा दशमूलस्य च क्वाथेन सह हपुषादिकल्को बस्तिः सुष्ठु वातहरो महास्नेहयुतो वृष्यश्च स्यात्।

आ० र०-अतिवृष्यं यापनमाह-मृगाणामिति। लघवो-हरिणादयः। वभ्रा-वराहादयः। गाङ्गेयी-मुस्ता।

**मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ।**
**लघुना पञ्चमूलेन पालिकेन समन्वितम् ॥ ४५ ॥**
**पक्त्वा क्षीरजले क्षीरशेषं सघृतमाक्षिकम् ।**
**तद्विदारीकणायष्टिशताह्वाफलकल्कवत् ॥ ४६ ॥**
**बस्तिरीषत्पटुयुतः परमं बलशुक्रकृत् ।**

१ 'वातरक्तप्रमेहा' आ ग। 'ङ्मेहमेदोर्शो' इ स मू। २ 'ङ्गहम् ।' घ च न प स ह्र। ३ "यापनानां बस्तीनां मध्ये प्राधान्यात् राजवत् राजा-तद्गुणैः सातिशय इत्यर्थः। रसायन-तत्कार्यैकरणात्।" इति चन्द्र। ४ 'यन ।' आ। ५ 'लघु वर्गाणा' अ ग। 'लघुबर्हाणां' आ। 'लघुवभ्राणां' क ञ.। 'लघुबभ्रूणां' इ। "लघूनां-हरिणादीनां, बभ्राणां-वराहादीनाम्।" इति चन्द्र। ६ "विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्। वड्रोरुविपुलं" इत्यमरः। ७ 'कल्को वातहरः' ई घ प। 'कल्कै-र्वातहरैः प' अ इ क ग ञ.। ८ 'बभ्रा -' क। 'वर्गा -'ग.। ९ 'कल्कवान् ।' क ञ.। १० 'बलवर्णकृत्' अ।

स०—मयूर पक्षादिवर्जित दशपलमात्र ह्रस्वेन पञ्चमूलेन पलमितेन युत क्षीरजले पक्त्वा क्षीरस्यावीटको जलस्यावीटक इत्येव कृत्वा तावत्काथयेत् यावत्क्षीरावशेष स्यात्। क्षीर च तच्छेष च क्षीरशेषम्। घृतमाक्षिकसहित विदार्यादिकल्कान्वितमीषल्लवणयुक्तो बस्ति परम [बल]शुक्रकृत्।

आ० र०—मायूर बस्तिमाह—मयूरमिति। पक्त्वा क्षीरजले, "द्रव्यादष्टगुण क्षीरम्" इत्यादिपरिभाषया।

**कल्पनेयं पृथक् कार्या तित्तिरिप्रभृतिष्वपि ॥ ४७ ॥**
**विष्किरेषु समस्तेषु प्रतुदप्रसहेषु च ।**
**जलचारिषु तद्वच्च मत्स्येषु क्षीरवर्जिता ॥ ४८ ॥**

स०—इय च कल्पना तित्तिर्यादिष्वपि विष्किरेष्वशेषेषु प्रतुदेषु प्रसहेषु च पृथक्कार्या। तथैव जलचारिष्वपीय कल्पना कार्या। मत्स्येषु तु क्षीरवजिता कल्पनेय कार्या, मत्स्याना क्षीरेण सह विरुद्धत्वात्।

आ० र०—मयूरविधि विष्किरादिष्वतिदिशति—कल्पनेति। मत्स्येषु क्षीरवर्जम्।

**गोधानकुलमार्जारशल्यकोन्दुरजं पलम् ।**
**पृथक् दशपलं क्षीरे पञ्चमूलं च साधयेत् ॥ ४९ ॥**
**तत्पयः फलवैदेहीकल्कद्विलवणान्वितम् ।**
**ससितातैलमध्वाज्यो बस्तिर्योज्यो रसायनम् ॥ ५० ॥**
**व्यायाममथितोरस्कक्षीणेन्द्रियबलौजसाम् ।**
**विबद्धशुक्रविण्मूत्रखुडवातविकारिणाम् ॥ ५१ ॥**
**गजवाजिरथक्षोभभग्नजर्जरितात्मनाम् ।**
**पुनर्नवत्व कुरुते वाजीकरणमुत्तमम् ॥ ५२ ॥**

स०—गोधादीना मास पृथक्—प्रत्येक, दशपलप्रमाण क्षीरे पञ्चमूल च साधयेत्। एतत्क्षीर मदनफलकणाकल्कसैन्धवसौवर्चलान्वित बस्ति शर्करातैलमधुघृतसहितो योज्यो रसायन स्यात्। व्यायाममथितोरस्कादीना पुनर्नवत्व कुरुते वाजीकरणेषु मुख्यश्च।

आ० र०—गोधादिबस्तिमाह—गोधेति। पल—मासम्। वैदेही—पिप्पली।

**सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ।**

स०—आत्मगुप्तादिभि सिद्धेन पयसा सह भोज्यम्। उच्चटा—गुञ्जा।

आ० र०—वृष्याणा बस्तीना भोजने विशेषमाह—सिद्धेनेति। सङ्ग्रहे तु (क अ ५)—"पृथक् पलाश विपचेत्पञ्चमूलमगोक्षुरम्। क्षीराढके चतुर्थस्थ पिष्टैर्यष्ट्यादिभिर्युतम् ॥ क्षौद्रतैलाज्यसिन्धूत्थयुक्त बस्ति सुपूजित। विशेषाद्बालवृद्धस्त्रीसुकुमारसुखात्मनाम् ॥ तद्वत्सहाचरबलासारिवादर्भसाधितम्। क्षीर, बस्तिस्तथाऽभीरुगुडूचीबृहतीद्वयैः ॥ सिद्ध पयो मागधिकायष्टीमधुककल्कवान्। पञ्चमूल बृहत्यादि प्रतिद्रव्य पलोन्मितम् ॥ द्विपल शालिगोधूमयवमाष सर्षपकम्। तै सिद्ध छागल क्षीर कुक्कुटाण्डरसं सिता ॥ साज्यक्षौद्रद्विलवणस्तैर्बस्ति शुक्रकृत्परम्। कल्पोऽय शिखिगोनर्दमत्स्याद्यण्डरसेष्वपि ॥ रस कुलीरमासस्य चटकाण्डरसान्वित। सशर्कराघृतमधुर्बस्तिर्वृष्यतमो मत ॥ बस्तशूकरजैर्मुष्कैः कुलीरचटकामिषैः। सिद्ध पयो बस्तमुष्कमुच्चटेक्षुरक मधु ॥ तैर्घृताढ्योऽल्पलवणो बस्तिर्वृष्यतम परम्। सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ॥ अतो दशदशाहेन यस्तु बस्तीन्निषेवते। वाजीव पुष्ट सवृषो गच्छति प्रमदाशतम् ॥ एते माक्षिकसयुक्ता कुर्वन्त्यतिवृष नरम्। नातियोग न चायोग स्तम्भितास्ते च कुर्वते ॥ निरूहा लेखनं प्रायो बृहणा स्नेहबस्तय। यापनेषूभय तस्मान्नेष्ट तेष्वनुवासनम् ॥ मृदुत्वान्न निवर्तेरन् यस्यत्वेते प्रयोजिता। समूत्रैर्बस्तिभिस्तीक्ष्णैरास्थाप्य क्षिप्रमेव स ॥ शोफाग्निनाशपाण्डुत्वशूलार्श परिकर्तिका। स्युर्ज्वरश्चातिसारश्च यापनात्यर्थसेवनात् ॥ अरिष्टक्षीरसीध्वाद्य स्तत्रेष्टा दीपनी क्रिया। युक्त्या तस्मान्निषेवेत यापनाञ्च प्रसङ्गत ॥ मृद्वल्पौषधसयोगात्पादहीनप्रमाणत। अल्पकालोपयोगाच्च तेषु निष्परिहारता ॥" इति। इति सिद्धबस्तय।

**स्नेहांश्चायन्त्रणान् सिद्धान् सिद्धद्रव्यैः प्रकल्पयेत् ॥**

स०—स्नेहाश्च—स्नेहबस्तीन्, अयन्त्रणान्—निष्परिहारान्, सिद्धान्—बहुशो दृष्टप्रत्ययान्, सिद्धद्रव्यै—निरपायै, प्रकल्पयेत्।

आ० र०—अथ सिद्धस्नेहा। सिद्धबस्तिद्रव्यैरेव सिद्धस्नेहा प्रकल्प्या इत्याह—स्नेहानिति। सङ्ग्रहे तु (क अ ५)—"सहाचराभीरुबलारास्नागोक्षुरकात् पृथक्। तुला जलद्रोणशते पञ्चद्रोणावशेषिते ॥ पूतशीते बिसद्राक्षातुगाक्षीरीनिदिग्धिका। महासहाक्षुद्रसहायष्टीमधुमधूलिका ॥ जीवकर्षभकोदीच्यमृणालोत्पलचन्दनम्। खर्जूरमामलक्यात्मगुप्तातामलकीकणा ॥ पटोलमेदात्वक्पत्रशीतपाक्योदनाह्वया। कल्कीकृत्य क्षिपेत्तस्मिन् पृथक् च प्रस्थसम्मितम् ॥

१ 'युक्त ब' न। २ 'ध्वाज्य ब' आ ग। ३ 'विबन्धशु' अ आ ग। ४ 'णसत्तम।' न अरुण। ५ 'पल क्षी' न। ६ 'लकगोक्षुरै। क्षीराढकैश्चतु' क ञ। 'लकगोक्षुरु।' ग। 'मूल सगोक्षुरु।' च। 'मगोक्षुरु।' घ प। ७ 'चतु प्रस्थ' क ग. ञ, स मू।

१ 'साधनम्' ञ। २ 'क्षीरब' क ञ स मू। ३ 'लकवत्।' स द्व। ४ 'सयष्टि' स मू। ५ 'रसाश्रितम्।' च। ६ 'वर्णैस्तै' क ग ञ। ७ 'क्षुरस मधु' क ग च ञ। ८ 'न वाऽयो' क ग. घ ञ प। ९ 'स्तम्भिनस्ते' क ञ स द्व। १० 'लेखनप्राया' च। ११ 'निवर्तन्ते' स स। १२ 'ष्क्षीर' क ग ञ। १३ 'रसिध्वाज्यैस्त' घ ञ प। 'सीध्वाज्यैस्त' ग। १४ 'योगार्थ' प। १५ 'श्चाद्यगुणान्' अ। १६ 'रक पृ' क ग ञ। १७ 'पञ्चद्रोणा' स मू। १८ 'रतालमजातम' स द्व.। १९ 'क् त्वक्प्रस्थ' क ग ञ।

रस वराहमहिषबस्तमुष्कोद्भव तथा । शिखिकुकुटहंसाण्डसम्भव तैलसर्पिषी ॥ धात्रीविदारीस्वरस गव्यक्षीराढकद्वयम् । ब्रह्मभेरीमृदङ्गाना निनादे साधित च तत् ॥ सितच्छत्रकृतच्छाय सितवस्त्रावगुण्ठितम् । आरोपित गजस्कन्धे पूजयित्वा वृषध्वजम् ॥ कृत्वा स्वस्त्ययन दद्यात्स्नेहबस्तिमयन्त्रणम् । प्राप्तस्तेनातिवृषता श्रमयेद्वनितागतम् ॥ निर्वलीपलित कान्तश्चिरञ्जीवी भवेत्स च । नष्टशुक्रक्षतक्षीणविषमज्वरिणा हितम् ॥ व्यापन्नार्तवशुक्राणा पुत्रदाता रसायनम् । एव च बस्तयोऽन्येऽपि कल्प्या पाक्याश्च नैकश ॥ शत वारान् सहस्र वा पाचयेत्सम्भवे सति ।'' इति ।

**दोषघ्नाः सपरीहारा वक्ष्यन्ते स्नेहबस्तयः ।**

**स०**–अधुना दोषघ्ना सपरीहारा स्नेहबस्तयो वक्ष्यन्ते ।

**आ० र०**–निष्परिहारान् स्नेहबस्तीनुक्त्वा सपरिहारानाह । तत्र प्रतिज्ञावाक्यमाह–दोषघ्ना इति ।

तानेवाह–

**दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ॥ ५४ ॥**
**गुडूच्यैरण्डभूतीकभार्गीवृषकरोहिषम् ।**
**शतावरी सहचरं काकनासां पलांशकम् ॥ ५५ ॥**
**यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान् ।**
**वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ॥ ५६ ॥**
**पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ।**
**अनुवासनमित्येतत्सर्ववातविकारनुत् ॥ ५७ ॥**

**स०**–दशमूलादिक पलप्रमाणम् । काकनासा–काकजङ्घा । यवादीनि प्रसृतप्रमाणानि, जलस्य वहे–द्रोणचतुष्टये, विपाच्य, तेन च द्रोणशेषेण तैलाढक पलाशकै जीवनीयै पेष्यै सह पचेत् । एतदनुवासनमखिलपवनामयजित् ।

**आ० र०**–दशमूलादिस्नेहमाह–दशमूलमिति । भूतीक–भूस्तृणम् । वृषक–पाषाणभेद । काकनासा–काकतुण्डी । वहे–द्रोणचतुष्टये ।

**आनूपानां वसा तद्वज्जीवनीयोपसाधिता ।**

**स०**–आनूपप्राणिना वसा जीवनीयद्रव्यसाधिता तद्वत्–पूर्वगुणा ।

**आ० र०**–वसास्नेहमाह–आनूपानामिति । जीवनीयाना कल्क कार्य । द्रव तूदकम् ।

१ 'ङ्गादिनि' स स । २ 'हित ।' स द्व । ३ 'घ्ना निष्परी' आ ञ । ४ 'वरा रा' स मू । ५ 'ण्डपूती' आ इ स स । ६ ''भूतीक–कत्तृण यवानिका वा ।'' इति चक्र । ''भूतीक–कत्तृणापरपर्यायम् ।'' इति डल्हण । ७ 'लाशिकम्' अ ग स मू । 'लाशिकाम्' इ ञ । ८ 'क कल्कैर्जी' ग । ९ 'रजित्' आ. ग. । १० 'वनविकारजित्' न । ११ 'षक–' क. ग. ।

**शताह्वाचिरिबिल्वाम्लैस्तैलं सिद्धं समीरणे ॥ ५८ ॥**

**स०**–शताह्वादिभिस्तैल पक्क पवने योज्यम् ।

**आ० र०**–तैलमाह–शताह्वेति । चिरिबिल्व–करञ्ज । अम्लानि–धान्याम्लादीनि ।

**सैन्धवेनाग्निवर्णेन तप्तं चानिलजिद् घृतम् ।**

**स०**–अग्निवर्णेन सैन्धवेन तप्त च घृत समीरणजिद्भवति ।

**आ० र०**–घृतमाह–सैन्धवेनेति । सैन्धवमग्निनाऽग्निवर्ण कृत्वा घृतमध्ये निक्षिपेत् ।

**जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ॥ ५९ ॥**
**शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ।**
**स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शठीं वचाम् ६०**
**पिष्ट्वा तैलघृतं क्षीरे साधयेत्तच्चतुर्गुणे ।**
**बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ॥ ६१ ॥**
**रजःशुक्रामयहरं पुत्रीयं चानुवासनम् ।**

**स०**–जीवन्त्यादीन् कृतकीकल्क तैलघृत–यमक, क्षीरे चतुर्गुणे साधयेत् । एतदनुवासन बृहण वातपित्तघ्न बलादिवर्धन रज शुक्ररोगहर पुत्रीय च । पुत्रीयमिति हितार्थे ''पुत्राच्छ च'' इति छ ।

**आ० र०**–जीवन्त्यादियमकमाह–जीवन्तीमिति ।

**सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा ॥ ६२ ॥**
**ह्रीबेरं मधुकं भार्गी देवदारु सकट्फलम् ।**
**नागरं पुष्करं मेदा चविका चित्रकः शठी ॥ ६३ ॥**
**विडङ्गातिविषे श्यामा हरेणुर्नीलिनी स्थिरा ।**
**बिल्वाजमोदचपला दन्ती रास्ना च तैः समैः ॥ ६४ ॥**
**साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ।**
**वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ॥ ६५ ॥**
**आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ।**

**स०**–सैन्धवादिभि समाशै सामान्यपरिभाषया एरण्डतैल तिलतैल वा साध्यम् । द्विर्वाग्रहणात् एरण्डतैलस्यार्धं तिलतैलस्यार्धमित्यपि कल्पनीयमित्याहु । एतदनुवासन कफरोगजित् शीघ्र वर्ध्मादीन् हन्यात् ।

**आ० र०**–सैन्धवादितैलमाह–सैन्धवमिति । निचुलो–वेतस । श्यामा–त्रिवृत् । चपला–पिप्पली । एरण्डतैल तिलतैल वा साध्यम् । तच्च कफरोगजिद्भवति । वर्ध्मादींश्च हन्यात् ।

१ 'ह्वायवबि' अ आ इ न स द्व स च । २ 'ल तद्वत् स' ग । ३ 'तैल घृत' आ ग च स द्व । ४ 'येच्च चतु' न. । 'येत चतु' स द्व । ५ 'क्रानिलहर' आ ग । ६ 'त्रीयमनु' क न । ७ 'पद्मक' अ । ८ 'विषाश्या' अ आ इ ग । ९ 'मोदा च' क ञ । 'मोदे च' ग स मू । १० 'ण्डज तैल कफवातजरोग' ग. । 'वा कफवातजरोग' इ. ।

साधितं पञ्चमूलेन तैलं बिल्वादिनाऽथवा ॥ ६६ ॥
कफघ्न

स०–पञ्चमूलेन बिल्वादिना वा साधित तैल कफघ्न कल्पयेत् ।

आ० र०–बिल्वादितैलमाह–साधितमिति ।

कल्पयेत्तैल द्रव्यैर्वा कफघातिभि· ।
फलैरष्टगुणैश्चाम्लैः सिद्धमन्वासनं कफे ॥ ६७ ॥

स०–अथवा कफघ्नैर्द्रव्यै फलैरष्टगुणैश्चाम्लै सिद्धमनुवासन कफे शस्तम् ।

आ० र०–अन्यैरपि कफघ्नैस्तैलकल्पनामाह–कल्पयेदिति ।

आ० र०–फलतैलमाह–फलैरिति । फलै –मदनफलै ।
सङ्ग्रहे तु (क अ ५)–"शूलानाहे तु तद्युक्तो निरूह पटुमूत्रवान् ॥ तद्युक्त –फलतैलयुक्त । शिशिरस्पर्शवीर्यैश्च पिष्टै क्षीरे चतुर्गुणे । तैलपाद घृत सिद्ध पित्तघ्नमनुवासनम् ॥" इति।

मृदुर्बस्तिजडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते ।
तीक्ष्णैर्विकर्षिते स्निग्धो मधुरः शिशिरो मृदुः ॥६८॥

स०–मृदुश्चासौ बस्तिश्च मृदुबस्ति , मधुरस्निग्धशीतलात्मकत्वान्मृदु , मृदुबस्तिश्चासौ जडीभूतश्च मृदुबस्तिजडीभूत ,–कोष्ठाद्बहिरनि सरणात् कोष्ठ एवावस्थिति कृत्वा स्थित , तस्मिंस्तथाभूतेऽन्यो बस्तिस्तीक्ष्ण शस्यते । तीक्ष्णै –गोमूत्रादिनिष्पादितैर्बस्तिभि , विकर्षिते कोष्ठे सति स्निग्धादिगुणो बस्तिरिष्यते ।

आ०र०–एव बस्तीनुक्त्वा कल्पनाप्रकारमाह । तत्र मृदुना जाड्ये जाते तीक्ष्णो योज्य , तीक्ष्णेन कर्षणे जाते मृदुर्योज्य इत्याह–मृदुबस्तीति ।

तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः ।
प्राप्तकालं विधातव्यं क्षीराज्याद्यैस्तु मार्दवम् ॥ ६९ ॥

स०–तीक्ष्णत्व बस्तेर्मूत्रपील्वग्निलवणक्षारसर्षपै प्राप्तकालयोग्येऽवसरे, विधातव्यम् । क्षीरघृताद्यैश्च बस्तेर्मार्दव प्राप्तकाल कर्तव्यम् ।

आ० र०–तीक्ष्णत्वमृदुत्वहेतूनि द्रव्याण्याह–तीक्ष्णत्वमिति ।

बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो बस्तिः ।
स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान्निवर्तयति ॥७०॥

स०–बलादीन् प्रविभज्य स्वे स्वैरौषधवर्गे –यथायथ योग्यै , सिद्धो बस्तिर्योजित स्वान् स्वानामयानुपशमयति ।

आ० र०–बलाद्यनुरोधेन बस्ति कल्प्य इत्याह–बलकालेति ।

उष्णार्तानां शीताञ्छीतार्तानां तथा सुखोष्णांश्च ।
तद्योग्यौषधयुक्तान् बस्तीन् संतर्क्य युञ्जीत ॥ ७१ ॥

स०–उष्णार्ताना नृणा शीतान् बस्तीन् शीतार्ताना च सुखोष्णान् बस्तीन् दद्यात् ।

आ० र०–हेतुव्याधिविपरीतो बस्ति· कल्प्य इत्याह–उष्णार्तानामिति ।

बस्तीन्न बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु ।

आ० र०–शोधनीयेषु बृंहणीयनिषेधमाह–बस्तीनिति ।

मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥७२॥

आ० र०–शोधनीयानाह–मेदस्विन इति ।

न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कशुद्धदेहानाम् ।
दद्याद्विशोधनीयान् दोषनिबद्धायुषो ये च ॥ ७३ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां पञ्चमे कल्पसिद्धिस्थाने बस्तिकल्पो नाम चतुर्थोऽध्यायः ॥ ४ ॥

स०–यस्मादेते दोषैर्निबद्धजीविता , तस्मादेतेषा दोषनिर्हरणात् प्राणसशय स्यादित्याह, जीवितरक्षार्थमेते न विशोध्या इति । आर्याश्चतस्र ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया पञ्चमे कल्पसिद्धिस्थाने बस्तिकल्पो नाम चतुर्थोऽध्याय समाप्त ॥ ४॥

१ "मदनैर्वाऽम्लसयुक्तैर्बिल्वाद्येन गणेन वा । तैल कफहरैर्वाऽपि कफघ्न कल्पयेद्भिषक् ॥" इति (सि अ ४।१७) चरकोक्त्या, साधितमित्यादिसार्धश्लोके त्रीणि तैलान्युक्तान्याचार्येण, व्याख्यातानि च तथैव हेमाद्रिचन्द्रनन्दनादिभिरिति युक्तमेव । अतश्चायुक्तमरुणदत्तेनात्र तैलद्वयमेव व्याख्यातमिति । २ 'वा ॥ अन्वासन श्लेष्महर द्रव्यै' स द्व । ३ "कफघातिभि –पञ्चकोलप्रभृतिभि । अम्लै –काञ्जिकादिभि , अष्टगुणै –तैलापेक्षया । फलै –मदनफलै कल्कीकृतै ।" इति चन्द्र । ४ 'गुणे चाम्ले सि' घ प स.द्व । ५ 'ट्तैलवा' क ञ । 'कटुमूत्र' ग । ६ 'तैल पादघृत' क ग. । 'तैल पाद' घ प । 'तैलपादघृत' ञ । ७ 'बस्तौ जडी' अ आ इ क ग ञ । ८ 'सरत्वात्' ट । ९ 'कर्शने जा' ञ प । १० 'त्रबिल्वाग्नि' अ आ ग स द्व । ११ "पीलु –औत्तरपथिकफलम् । पीलुस्थाने केचित् बिल्व पठन्ति । प्राप्तकालमित्युक्तावस्थम् ।" इति चक्र । १२ 'क्षीराद्यैश्चैव मा' आ. ग । 'द्यैश्च मा' अ. । 'घृतक्षीरैस्तु' इति क्वचित् ।

१ 'लदेशसात्म्यप्र' स मू । २ "प्रविभज्य–बुध्या विकल्प्य ॥ शुद्ध वमनविरेचनाभ्यामचिरप्रयुक्ताभ्या शरीर येषा ते शुद्धदेहा ।" इतीन्दु । "स्वै स्वैरौषधवर्गैरिति यथाव्याधिप्रतिपादितैरौषधै । स्वान् स्वानिति तत्तद्बस्तिविधेयौषधस्य प्रशमनीयान् ॥ तद्योग्यौषधयुक्तानिति उष्णार्तिहरेण शीतार्तिहरेण वा औषधेन कल्पितान् ॥ दोषनिबद्धायुष इति दोषे–मलादिरूपे देहस्थे, निबद्धमायुर्येषा शोष्यतिदुर्बलप्रभृतीना ते तथा ।" इति चक्र । "उष्णेन–पित्तेनाहारविहारादिना वोष्णेन, आर्ताना–पीडिताना नराणाम् । सतर्क्य–समीक्ष्य । शीतेन–वातश्लेष्माख्येन दोषेणाहारविहारादिना वा शीतेन, आर्ताना पुसाम् ।" इति चन्द्र । ३ 'प्रविवीक्ष्य यो' आ । ४ 'नू दोषाग्नि' ग. । ५ 'रीततमो ब' ञ । ६ 'षु च शोध' आ. । ७ 'येऽपि न' स.च ।

आ० र०–क्षीणादिषु शोधनीयनिषेधमाह–न क्षीणक्षतेति। दोषनिबद्धायुषो–मलाधीनजीविता । यथा(हृ नि अ ५। २२)–"उपष्टब्ध स शकृता केवल वर्तते क्षयी।"इति । सङ्ग्रहे तु (क अ ५)—"पृच्छति स्म मुनिमित्यथ धीमानग्निवेश इह किन्तु फलानाम् । बस्तिकर्मणि हित सतत स्यात् त पुनर्वसुरिति प्रशशास ॥ इह कुष्ठहिता गरागरी हितमिक्ष्वाकुफल प्रमेहिणाम् । कुटजस्य फल हृदामये प्रवर कोशफल तु पाण्डुषु ॥ उदरे कृतवेधन हित मदन सर्वगदाविरोधि तु । मधुर सकषायतिक्तक तदरूक्ष च कटूष्णविज्जलम् ॥ कफपित्तहृदाशुकारि यन्निरपाय पवनानुलोमि च । प्रवर तदत फलादिषु स्मृतमास्थापनयोजनास्विति ॥ अथ मुनिवृषभे निगद्य वाक्य स्थितवति विज्ञपयाबभूव भूय । इदमतिगहन सहान्यशिष्यैरवनिगतोऽञ्जलिमग्रतो निधाय ॥ क्षिप्रकर्मगुणकृद्गुरुणोक्तो बस्तिरूर्ध्वमर्थ चैति न नाभे । शीघ्रमापतति चानु स देहात्सर्वत कथमपोहति दोषान् ॥ ऊचे गुरु स्तिमितमारुतवश्यमेतद्देहस्य यद्बहिरपाश्रितमन्तरे च । दुष्टस्य तस्य जनयन्ननुलोमता तु बस्तिर्हिनस्ति विषमानपि रोगपूगान् ॥ शाखागता कोष्ठगताश्च रोगा मर्मोर्ध्वसर्वावयवाङ्गजाश्च । ये सन्ति तेषा न तु कश्चिदन्यो वायो पर जन्मनि हेतुरस्ति ॥ विट्श्लेष्मपित्तादिमलोच्चयाना विक्षेपसहारकरो हि वायु । तस्यातिवृद्धस्य शमाय नान्यद्बस्ते सम भेषजमस्ति यस्मात् ॥ शाम्यन्ति यत्नेन जितेऽनिले च तदीरिता पित्तकफादयोऽपि । तस्माच्चिकित्सार्धमिति ब्रुवन्ति कृत्स्ना चिकित्सामपि बस्तिमेके॥यस्तु पक्वाशयस्थोऽपि दोषानापादमस्तकम् । वीर्येण बस्तिरादत्ते खस्थोऽर्को भू रसानिव ॥ यत्तत्रौषधवीर्य हि तदपानेन वायुना । पर्याप्तमचिरादेव समान. प्रतिपद्यते ॥ समानादुत्तर चैव व्यानाद्या पवना क्रमात्। ते तृप्ता प्रकृति यान्ति शरीरानुग्रहे स्थिता ॥ प्रसाद्य पित्तश्लेष्माणौ यथास्थान निवेश्य च । सन्तर्पयति परित स्वान् स्वान् भूतगुणास्तनौ ॥ व्यानस्तिर्यगपानोऽध प्राणश्चोर्ध्व प्रकर्षति । यथास्वमेव नाडीभिर्हारिणीभिरिवोदकम् ॥ एव वा ते शिराभिश्च वपुर्बस्ति सुयोजित । व्याप्नुवन् प्रसभ हन्ति सुकृच्छ्रानपि यक्ष्मण ॥ बस्तिस्तस्मात् सर्वकर्मप्रधान सर्वातङ्कान् हन्ति नि शेषतश्च । स्रोतास्यन्त शोधयित्वा च कुर्यादोजस्तेज शुक्रमेधाग्निदीप्तिम् ॥" इति ।

अथ तन्त्रान्तरोक्ता बस्तय । सैन्धवाक्ष समादाय शताह्वाक्षसमन्वितम् । गोमूत्रस्य पलान्यष्टावम्लीकाया पलद्वयम् ॥ गुडस्य तु पले द्वे च सर्वमालोड्य यत्नत । वस्त्रपूत सुखोष्ण च बस्ति दद्याद्विचक्षण ॥ शूल विट्सङ्गमानाह मूत्रकृच्छ्र च दारुणम् । कृम्युदावर्तवातादीन् सद्यो हन्यात्प्रयोजित ॥ अष्टौ पलानि मूत्रस्य रुबुक्वाथश्चतुष्पलम् ॥ पलद्वय तु तैलस्य माक्षिकप्रसृत तथा ॥ रसकक्षीरसौवीरतित्तिडीक पल पलम् ॥ गुडोदक पल दद्यान्मदनस्य पल तथा ॥ शतपुष्पा वचा रास्ना कुष्ठ दारु घन निशा । सिद्धार्थक बिल्वपेशी यवानी सैन्धव बला ॥ कर्षान्वित श्लक्ष्णपिष्ट खजेनाशु प्रमथ्य च । युञ्ज्यान्निरूहवत् प्राज्ञो निरपाय महागुणम् ॥ मूत्रबस्तिरिति ख्यात सर्वव्याधिहर पर । सिन्धूद्भवस्य कर्षमम्लीकाया पल गुडार्धपलम् ॥ सुरभीजलाच्च कुडव सर्वै रेतै कृतो बस्ति । ईषत्तैलयुतोऽय भुक्ते दत्तो निहन्ति रोगगणम् ॥ कट्यूरुपृष्ठशूल शोथ चामानिल घोरम् । स्थिरतरमूरुस्तम्भ गृध्रसिरोग च जानुसङ्कोचम् ॥ विषमाग्निमग्निसाद क्लैब्य च निवारयत्याशु । बस्तिर्वैतरणोक्तो गुणगणयुक्त स्वविख्यात ॥ भोजयित्वा च सायाह्ने सर्वस्यापि प्रशस्यते । अथ चेद्बलवान् जन्तुरभुक्त्वाऽपि तदा क्वचित् ॥ दशमूलकषायस्य पलान्यष्टौ पलद्वयम् । तैलस्य मधुनश्चात्र शताह्वार्धपल तथा ॥ अक्ष च सैन्धवस्येष्ट बस्तिरेभिर्महागुण । आत्रेयानुमतो ह्येष भुक्ते योज्यो विचक्षणै ॥ नित्यमेकान्तर वाऽपि स विहारविवर्जित । सुकुमारेषु वृद्धेषु स्त्रीषु यन्त्रणभीरुषु ॥ दीयमानो निहन्त्याशु रोगानीकान् सुदुस्तरान् । वातरक्त क्षय श्वास पुराण विषमज्वरम् ॥ अश्मरी मूत्रकृच्छ्र च गुल्मप्लीहहलीमकम् । वातपित्तभवान् रोगान् कफजान् सान्निपातिकान् ॥ तान् सर्वान्नाशयत्याशु बलवर्णाग्निवर्द्धन । निरूहकेषु सर्वेषु बस्तिषु प्रवरो मत ॥ अर्धमात्रिकनिरूह. ।

इति हेमाद्रिटीकायामायुर्वेदरसायने
बस्त्यौषधप्रकरण सामस्त्येन निरूपितम् ॥ ४ ॥



१ 'कुपर प्र' क घ च ञ प । २ 'कोठफल' प स च । 'काण्डफल' क ग । 'कोष्ठफल' घ ञ । 'कौटफल' स मू । ३ 'च' स स । ४ 'क्ष सकटू' स द्व , स च । ५ 'च्छपिच्छिलम्' क ग ञ स द्व । ६ 'प्रचुर' ञ । ७ 'चित्रकर्म' च स द्व । 'सवकर्म' स च । ८ 'थवेति' घ प । ९ 'चात्र' च । १० 'वा' क.ग ञ स द्व । ११ 'मन तु' घ.ञ.प । १२ 'हि' घ । १३ 'मलाशयाना' ग घ , स च । 'मलाचयाना' स द्व । १४ 'स्ते पर मे' क । १५ 'न्ति सर्वा चि' स द्व । 'कृत्स्ना चिकित्साऽपि च बस्तिरेके ।' क ञ । १६ 'यच प' स द्व । १७'याता श' स स। १८ 'प्रसाद्य पि' क ग च ञ. । १९ 'त स्वै स्वान्' च । २० 'स्तनो ।' क ग.ञ । २१ 'भिर्हरि' घ.ञ । 'भिर्हरणी' क ग प ।

१ 'श्च पुनर्ब' च । २ 'प्रसह' ग । ३ 'र्वमेकप्र' क ग. ञ । ४ 'र्यादोषास्तेज ' स मू । ५ 'क्वाथचतु' क च । 'क्वाथाच्चतु' ग । 'क्वाथ चतु' घ प । ६ 'रोगाणाम्' ञ । ७ 'दवैक्लव्य नि' ग । 'क्लैब्य विनि' क । ८ 'तरुणो' च । ९ 'क्तश्च वि' क । 'क्त श्रुवि' ग । १० 'मूलीक' च । ११ 'त्तकृतान्' ग. ।



## पञ्चमोऽध्यायः ।

अस्मादनन्तरं बस्तिव्यापत्सिद्धिर्व्याख्यायते—

**अथातो बस्तिव्यापत्सिद्धिं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**स०**—अथात इति पूर्ववत् । ( असम्यक् प्रयुक्तेषु बस्तिषु या व्यापदः, तासां साधनायास्याध्यायस्यारम्भः । )

**आ० र०**—बस्तिव्यापत्सिद्धिमध्यायं व्याख्यातुं प्रतिजानीते—अथेति । बस्तिव्यापदश्च द्वादशोक्ताः सङ्ग्रहे (क अ ६) —"विबन्धगौरवाध्मानगिरोरुग्वाहनोर्ध्वगाः । कुक्षिशूलाङ्गरुग्हिध्माहृत्पीडाकर्तनस्रवाः ॥ अयोगादतियोगाच्च बस्तेः स्युः षड् षडापदः ।" इति ।

**अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।**
**शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ १ ॥**
**वस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।**
**करोत्ययोगं तेन स्याद्वातमूत्रशकृद्ग्रहः ॥ २ ॥**
**नाभिवस्तिरुजा दाहो हृल्लेपः श्वयथुर्गुदे ।**
**कण्डूर्गण्डानि वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ३ ॥**
**क्वाथद्वयं प्राग्विहितं मध्यदोषेऽतिसारिणि ।**
**उष्णस्य तस्मादेकस्य तत्र पानं प्रशस्यते ॥ ४ ॥**
**फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।**
**बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ॥ ५ ॥**
**सुरादिमूत्रवान् बस्तिः सप्राक्पेष्यस्तमानयेत् ।**

**स०**—अस्निग्धादिगुणस्य पुंसः शिशिरस्तथाऽल्पस्नेहलवणोऽल्पद्रव्यमात्रः—अल्पद्रव्यकल्प (ल्क), तथा घनो—बहुद्रव्यकल्को, बस्तिर्योजितः सन् बस्तिसाध्यं दोषं संक्षोभ्य दुर्बलत्वादनिर्हरन् अयोगं करोति । तेन—अयोगेन, वातादिग्रहः स्यात् । प्राक्—अतिसारचिकित्सिते (चि अ १९), क्वाथद्वयं—पाचनयुगलं मध्यदोषेऽतिसारिणि विहितं भूतीकपिप्पल्यादिरेको बिल्वधनिको द्वितीयः, तस्मात्—क्वाथद्वयात्, एकस्य—अन्यतरस्य क्वाथस्योष्णस्य, तत्रावस्थायां पानं प्रशस्यते, तथा फलवर्तयः स्वेदाश्च नानाविधाः, अवस्थां च ज्ञात्वा विरेचनं शस्यते । तथा बिल्वादिमान् बस्तिस्तथा सुरादिमान् बस्तिः, सप्राक्पेष्यः—'बला गुडूची' (क अ ४।१) इत्यादौ बस्तौ यः पेष्यो यवान्यादिकृत् तेन प्राक्पेष्येण सह वर्तत इति सप्राक्पेष्यः । तमत्र दत्तबस्तिनोत्क्लिष्टं दोषमानयेत्—आकर्षयेत् ।

**आ० र०**—विबन्धाख्यां व्यापदमाह—अस्निग्धेति । द्रव्य—क्वाथ्यं पेष्यं च । तं दोषं—यदर्थं दत्तं । क्वाथद्वयं—"पिबेत् प्रक्वथितास्तोये मध्यदोषो विशोषयन् । भूतीकपिप्पलीशुण्ठीवचाधान्यहरीतकीः ॥ अथवा बिल्वधनिकामुस्तनागरवालकम् ।" (हृ चि अ ९।५) इत्युक्तम् । भूतीक—कद्तृणम् । प्राक्पेष्य—"पूतीयवानीफलबिल्वकुष्ठवचाशताह्वाघनपिप्पलीनाम् । कल्कै" (हृ क अ ४।२) इत्युक्तम् । सुरा—मदिरा । आदिशब्दादन्यदप्यम्लम् ।

गौरवाख्यां व्यापदं त्वाह सङ्ग्रहे (क अ ६)—"सशेषामे निरूहेण मृदुना दोष ईरितः । मूर्च्छयत्यनिलं मार्गं रुणद्धि हिनस्ति च ॥ गौरवक्लमहृच्छूलदाहसम्मोहवेष्टनम् । ततः कुर्यादुपचरेत्तं रूक्षस्वेदपाचनैः ॥ पिप्पलीकद्तृणोशीरदारुमूर्वाशृतं जलम् । पिबेत्सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनम् ॥ वचानागरशब्यो वा घृतमण्डेन मूर्च्छिताः । पेया प्रसन्नया वा स्युररिष्टेनासवेन वा ॥ दारु त्रिकटुकं पथ्या पलाशं चित्रकं शठीम् । पिष्ट्वा कुष्ठं च मूत्रेण पिबेत् क्षाराश्च दीपनान् ॥ बस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकम् ।" इति ।

**युक्तोऽल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशयेऽथवा ॥ ६ ॥**
**बस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात्समीरणम् ।**
**स विमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनम् ॥ ७ ॥**
**विदाहं गुदकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ।**
**रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ॥ ८ ॥**
**स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्तिं प्रयोजयेत् ।**
**बिल्वादिश्च निरूहः स्यात्पीलुसर्षपमूत्रवान् ॥ ९ ॥**
**सरलामरदारुभ्यां साधितं चानुवासनम् ।**

**स०**—दोषाढ्ये तथा रूक्षे क्रूरकोष्ठे वा बस्तिरल्पवीर्यो दत्तो

१ इयं बस्तिव्यापत्सिद्धिश्चरके सि० ४।५।७।१०।१२ अध्यायेषु, सुश्रुते चि० ३६।३७।३८ अध्यायेषु, अष्टाङ्गसङ्ग्रहे क० ६।७ अध्याययोश्चास्ति वर्णिता । २ ( ) एतच्चिह्नान्तर्गतः पाठः ट पुस्तके नोपलभ्यते । ३ "अल्पशब्दो मात्रान्तैः प्रत्येकं सबध्यते ॥ कालं ज्ञात्वेति विरेचनयोग्यावस्थां ज्ञात्वा । सुरादिमूत्रवानित्यत्र आदिशब्देन सौवीरकतुषोदकादीनां ग्रहणम् । तमानयेदिति अयोगकारकं विबद्धं बस्तिं हरति ।" इति चक्र । "घन—सान्द्र । दुर्बलत्वात्—हीनवीर्यत्वात् । त—क्षुब्धम् । अनिर्हरन्—अविशोधयन् ।" इति चन्द्र । ४ 'द्रवमात्रो' आ, स च । ५ 'सस्तभ्य' क. । ६ 'रुजाऽऽनाहो' आ स मू । ७ 'ण्डाक्षिवै' अ । 'ण्डातिवै' इ क । ८ 'मरुचि व' स च । ९ 'विधीयते' आ । १० 'राविण्मूत्र' स स. । 'दिर्मास्तत्र ब' इति क्वचित् ।

१ 'दत्तम् । क्वा' क ञ । 'दत्त तत् क्वा' ग । २ 'हृचेष्ट' घ प । ३ 'शोषणम्' ञ । ४ 'दधिमण्डेन' स द्व । ५ 'दाहत्रि' क । ६ 'दशमू' क घ च ञ प । ७ "दोषाढ्ये—प्रभूतदोषे ।" इति चन्द्र । "रुद्धमार्ग इति निवारिताधोमार्ग । स चानिलं रुणद्धि । अनिलश्च रुद्धमार्गतया आध्मानं करोति । मर्मपीडनमित्याध्मानविशेषणम् ।" इति चक्र । ८ 'अभ्यक्त' क ञ । ९ 'गात्राय त' आ. । 'न्नदेहस्य' ञ. । १० 'वाऽनु' क. ।

दोषे -वाग्वाद्यावरकरावृत , अनन्तर स वस्ती रुद्धमार्ग -प्रतिहृतगतिप्रसरणो, वायु रुन्ध्यात् । सोऽनिलो विमार्गग आध्मान कुर्यात् । तथा हृदयादीना मर्मणा व्यथन-पीडन, तथा गुदकोष्ठस्य विदाह, तथा मुष्कवङ्क्षणवेदना च कुर्यात् । तथा शूले -नानाविधाभिर्भग्नरुद्धमृदितपीडितावनद्धादिभि पीडाभि , हृदय रुणद्धि-आवृणोति । हृदयमावृत्यानन्तरम् , इतश्चेतश्च-अनियते देशे, धावति पवन । तत्र-अवस्थाविशेषे, सुष्ठुभ्यक्ताङ्गस्य स्विन्नाङ्गस्य च फलवर्ति प्रयोजयेत् । बिल्वादिकश्च निरूह स्यात् पीलुसर्षपमूत्रवान् । सरलदेवदारुभ्या साधित तैल चानुवासन स्यात् ।

आ० र०-आध्मानाख्या व्यापदमाह-युक्त इति । बिल्वादि -विबन्धव्यापद्युक्त । पीलु-पीलुफलम् ।

शिरोरुजाख्या व्यापद त्वाह सङ्ग्रहे (क अ ६)-"बहुदोषेऽबले क्रूरकोष्ठे बस्तिस्तनुर्मृदु । शीतोऽल्पश्चावृतो दोषै प्रतिहन्ति समीरणम् ॥ ऊर्ध्वं सोऽनुसरन् देह कुर्याद्वायु शिरोरुजम् । ग्रीवास्तम्भ प्रतिश्याय बाधिर्य दृष्टिविभ्रमम् ॥ तमुष्णतैललवणप्रदिग्धं स्विन्नमर्दितम् । तीक्ष्णैर्धूमै प्रधमनैर्नस्यैरास्यविरेचनै ॥ विरेकैर्बस्तिभिश्चाशु योजयेदानुलोमिकै ।" इति ।

वाहनाख्या च व्यापदमाह सङ्ग्रहे (क अ ६)-"स्निग्धस्विन्ने महादोषे बस्तिर्मृद्वल्पभेषज । उत्क्लेश्याल्प हरेद्दोष जनयेच्च प्रवाहिकाम् ॥ शोफ बस्तावपाने च सदन चोरुजङ्घयो । विबद्धमारुतो जन्तुरभीक्ष्ण स प्रवाहते ॥ स्वेदाभ्यङ्गान्निरूहांश्च शोधनीयानुलोमिकान् । विदध्याल्लङ्घयित्वा च वृत्ति तस्य विरिक्तवत् ॥" इति ।

**कुर्वतो वेगसंरोधं पीडितो वाऽतिमात्रया ॥ १० ॥**
**अस्निग्धलवणोष्णो वा बस्तिरल्पोऽल्पभेषजः ।**
**मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात् ॥ ११ ॥**
**निरेति मूर्च्छाहृल्लासतृड्दाहादीन् प्रवर्तयन् ।**
**मूर्च्छाविकारं दृष्ट्वाऽस्य सिञ्चेच्छीताम्बुना मुखम् १२**
**व्यजेदाक्लमनाशाच्च प्राणायामं च कारयेत् ।**
**पृष्ठपार्श्वोदरं मृज्यात् करैरुष्णैरधोमुखम् ॥ १३ ॥**

**क्लेशेषूत्क्षिप्य धुन्वीत भीषयेद्व्यालदंष्ट्रिभिः ।**
**शस्त्रोल्काराजपुरुषैर्बस्तिरेति तथा ह्यधः ॥ १४ ॥**
**पाणिवस्त्रैर्गलापीडं कुर्यान्न म्रियते तथा ।**
**प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ॥ १५ ॥**
**अपानः पवनो बस्तिं तमाश्वेवापकर्षति ।**
**कुष्ठक्रमुककल्कं च पाययेताम्लसंयुतम् ॥ १६ ॥**
**औष्ण्यात्तैक्ष्ण्यात्सरत्वाच्च बस्तिं सोऽस्यानुलोमयेत् ।**
**गोमूत्रेण त्रिवृत्पथ्याकल्कं वाऽधोनुलोमनम् ॥ १७ ॥**
**पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः ।**
**यवकोलकुलत्थैश्च विधेयो मूत्रसाधितैः ॥ १८ ॥**
**बस्तिर्गोमूत्रसिद्धैर्वा साम्रतावंशपल्लवैः ।**
**पूतीकरञ्जत्वक्पत्रशठीदेवाह्वरोहिषैः ॥ १९ ॥**
**सतैलगुडसिन्धूत्थो विरेकौषधकल्कवान् ।**
**बिल्वादिपञ्चमूलेन सिद्धो बस्तिरुरःस्थिते ॥ २० ॥**
**शिरःस्थे नावनं धूमः प्रच्छाद्य सर्षपैः शिरः ।**

स०-वेगसरोध-वेगविधारण, कुर्वत पुसो य पीडितो बस्तिरतिमात्रया वा पीडितोऽस्निग्धलवणोष्णो वा तथाऽल्पोमात्रया, अल्पभेषजश्च मृदुर्वा, स तथाभूतो मारुतेनोर्ध्व क्षिप्तो मुखनासिकात् निरेति-निर्गच्छति । मूर्च्छादीन् प्रवर्तयेत् (यन्) ।

अस्य तु-तथाविधबस्ते पुरुषस्य, मूर्च्छादिविकार दृष्ट्वा शीताम्बुना मुख सिञ्चेत् । तथा क्लमनाश यावत् त तालवृन्तादिना वीजयेत् । तथा त पुरुष प्राणायाम च कारयेत्, प्राणायामेन ह्यूर्ध्व विक्षिप्तो बस्तिरधो याति । उष्णै करै पृष्ठ पार्श्वमुदर च मृज्यात् । तथा त पुरुषमधोमुख कृत्वा केशैरुत्क्षिप्योर्ध्व नीत्वा वपुर्धुन्वीत । तथा व्यालादिभिर्भीषयेत् । तयोर्ध्व प्रवृत्तो बस्तिर्यस्मादधो गच्छति । तथा पाणिवस्त्रैर्गलापीड कुर्याद्यथा न म्रियेत । एव सति प्राणोदाननिरोध सम्पद्यते, प्राणोदाननिरोधाद्यस्मादधोग सुप्रसिद्धतरायनो भूत्वाऽपानो वायुस्त बस्ति द्रागेवापकर्षति-ऊर्ध्वादध क्षिपति । सुष्ठु-प्रकर्षेण, प्रसिद्धतरमयन यस्य स सुप्रसिद्धतरायन । कुष्ठादिकल्क चाम्लसयुत पाययेत् । [स -] कल्क , अस्य-आतुरस्य, उष्णादिगुणयोगात्त बस्तिमनुलोमयेत् । त्रिवृतादिकल्क पीत गोमूत्रेणाधोनुलोमनम् । पक्वाशयस्थिते दोषे स्निग्धे (स्विन्ने) निरूहो दाशमूलिको विधातव्य । यवादिभिश्च गोमूत्रसाधितैर्बस्तिर्विधेय । अथवा गोमूत्रसिद्धैर्गुडूच्यादिभिस्तैलगुडसैन्धव-

१ 'गतिरप्र' ट । २ 'दोषेऽनिले' क ग ञ । 'दोषबले' घ प स मू । ३ 'शीताल्प' क ञ । ४ 'दिग्ध स्वि' स स । ५ 'तीक्ष्णधूमै' क ञ । ६ 'हिकम्' क ञ । ७ 'शोफो ब' घ प स मू । ८ 'भ्यङ्गनिरू' स स । ९ 'यान् सुलो' घ प । १० 'डित श्वाति' ई । ११ 'प्रकल्पयेत्' आ । 'र्तयेत्' इ ई क ञ । *१२ "मूर्च्छारूप विकारम् । शिर स्थ इति बस्त्येकदेशे शिरसि स्थिते सति । प्रच्छाद्यमित्यालेपनीयम् ।" इति चक्र । "उष्णैश्च करै -पाणिभि , अधोमुख कृत्वा आतुरस्य पृष्ठादिक मृद्यात्-मर्दयेत् । भाययेत्-भय तस्योत्पादयेत् । क्रमुक -पट्टिकारोध्र ।" इति चन्द्र । १३ 'वीज्येदा' अ इ ञ । 'वीजेदा' ई । 'वीजेत्क्लमविना' आ स स. । १४ 'मृद्यात्' अ ई न चन्द्र सं द्व ।

१ 'भापये' अ इ ई ग घ प न । 'भाययें' स स चन्द्र । २ 'तथाऽश्वे' आ । ३ 'वा' अ घ न प । ४ 'येदम्ल' आ ई क ञ स स. । ५ 'सोऽप्यनु' स मू । ६ 'चाधो' अ आ इ । ७ 'साधित.' आ स च । ८ अधोमुखमित्यस्य "पुरुषमधोमुख कृत्वा" इत्यरुणदत्तव्याख्यान चिन्त्यम् । ९ 'वाऽम्ल' न । १० 'साधितो बस्ति' ट.।

युक्तो बस्तिर्विरेकद्रव्यककवान् विवेय । उरसि स्थिते बित्वा दिपञ्चमूलेन सिद्धो बस्तिर्विवातव्य । शिरसि स्थिते बस्तौ नस्य वूमश्च, शिरश्च सर्षपकल्केन प्रच्छादनीयम् ।

**आ० र०**-ऊर्ध्वमारुताख्या व्यापदमाह-कुर्वीत इति । मृज्यात्-मर्दयेत् । भीर्षयेत्-त्रासयेत् । पाणिभिश्च वस्त्रैश्च । सुप्रसिद्धतर-गुद मेढ्रू च, अयनमस्य स तथा । क्रमुक-पूगं । दशमूलयवादीना मूत्रे क्वाथ, अमृतादीना वा सप्तानाम् । अमृता-गुडूची । त्वक् पत्र च पूतीकरञ्जस्य । तैलादियोगस्तु द्वयोरपि क्वाथयो, बिल्वादिक्वाथस्यापि । इत्ययोगव्यापद ।

**बस्तिरत्युष्णतीक्ष्णाम्लघनोऽतिस्वेदितस्य वा ॥२१॥**
**अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनःपुनः ।**
**अतियोगत्वमापन्नो भवेत्कुक्षिरुजाकरः ॥ २२ ॥**
**विरेचनातियोगेन स तुल्याकृतिसाधन. ।**

**स०**-अत्युष्णतीक्ष्णाम्लघनो बस्ति प्रयुक्तोऽतिस्वेदितस्य वा पुसोऽल्पे दोषे तथा मृदौ कोष्ठे मुहुर्मुहु प्रयुक्तत्वादतियोगत्व प्राप्तोऽय कुक्षिरुग्जनक स्यात् । स-तथाविधो बस्ति, विरेचनातियोगेन तुल्ये-सदृशे, लक्षणचिकित्सिते यस्य स एव स्यात् ।

**आ० र०**-अथातियोगव्यापद । कुक्षिशूलाख्यव्यापदमाह-बस्तिरिति । सङ्ग्रहे तु (क अ ६)-"पृश्निपर्णी स्थिरा पद्म काश्मर्य मधुकोत्पले । पिष्ट्वा द्राक्षा मधूक च क्षीरे तन्दुलधावने ॥ द्राक्षाया पक्वलोष्टस्य प्रसादे मधुकस्य वा । विनीय सघृत बस्ति युञ्ज्याद्दाहेऽतियोगत. ॥" इति । विरेचनतुल्यत्वोक्त्या दाहोऽप्युक्त ।

अङ्गरगादिव्यापच्चतुष्क त्वाह सङ्ग्रहे (क अ ६)-"स्नेहस्वेदैरसम्पाद्य गुरुतीक्ष्णोऽतिमात्रक । दु स्थिताय प्रणिहितो बस्तिर्दु शयिताय वा ॥ अतिप्रवृत्तो मरुत कोपयेत्स विमार्गग । करोत्यङ्गरुजं जृम्भा स्तम्भ भेद च पर्वणाम् ॥ त तैललवणाभ्यक्त स्वेदित सस्तरादिभि । बिल्वकोलयवैरण्डवर्षाभूबृहतीद्वयै ॥ सकुलत्थै शृतैर्मस्तुफलसौवीरकान्वितै । आस्थापयेत्ससिन्धूत्थैर्जाङ्गलैराशित रसै ॥ तैलेनानिलजिद्द्रव्यविपक्केनानुवासयेत् । मृदुकोष्ठेऽबले बस्तिरतितीक्ष्णोऽतिनिर्हरेत् ॥ कुर्याद्धिध्मा हित तत्र हिध्माघ्न बृहण च यत् । बलाबृहत्यादिवराकाश्मर्यैरसैसैन्धवै ॥ स-प्रसन्नारनालाम्लैस्तैल पक्त्वाऽनुवासयेत् । उष्णाम्बुनाऽक्ष पिप्पल्या ह्याल्लवणसयुतम् ॥ धूमलेहरराक्षीरस्वेदाश्चात्र च वातजित् । अतितीक्ष्ण सवातो वा न वा सम्यक् प्रपीडित ॥ घट्टयेद्धृद्य बस्तिस्तत्र काशकुशोत्कटै । स्यात्साम्ललवणस्कन्धकरीरबदरीफलै ॥ शृतैर्बस्तिर्हित सिद्धो वातघ्नैश्चानुवासनम् । मृदुकोष्ठाल्पदोषस्य रूक्षतीक्ष्णातिमात्रक ॥ हत्वा बस्तिर्मलान् शीघ्र वातपित्ते प्रकोपयेत् । नाभिबस्तिगुदास्ते हि कृन्ततोऽस्य मुहुर्मुहु ॥ विवर्णस्यात्पप्रमुत्थान बस्तिनिर्लेखनाद्भवेत् । स्वादुशीतौषधैस्तत्र पयस्येक्ष्वादिभि शृत ॥ यष्ट्याह्वतिलकल्काभ्या बस्ति स्यात् क्षीरभोजिन । ससर्जरसयष्ट्याह्व जिङ्गिणीकर्दमाञ्जनम् ॥ विनीय दुग्धे बस्ति स्याद्यक्ताम्लरसभोजिन । पिच्छिलश्च हितो बस्ति स्नेहैश्च मधुरै शृत ॥" इति ।

**बस्ति. क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा २३**
**गुद दहन् लिखन् क्षिण्वन् करोत्यस्य परिस्रवम् ।**
**स विदग्धं स्रवत्यस्रं वर्णै. पित्तं च भूरिभिः ॥ २४ ॥**
**बहुशश्चातिवेगेन मोह गच्छति सोऽसकृत् ।**
**रक्तपित्तातिसारघ्नी क्रिया तत्र प्रशस्यते ॥ २५ ॥**
**दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत् ।**
**तद्धि पित्तशकृद्वातान् हृत्वा दाहादिकान् जयेत्॥२६॥**
**विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम् ।**
**युञ्ज्याद्वाऽतिविरिक्तस्य क्षीणविट्कस्य भोजनम् २७**
**माषयूपेण कुल्माषान् पानं दध्यथवा सुराम् ।**
**सिद्धिर्बस्त्यापदामेवं**

**स०**-क्षाराम्लतीक्ष्णोष्णलवणो बस्ति प्रयुक्त पैत्तिकस्य वा प्रयुक्तो गुद दहन्निव विलिखन्निव क्षिपन्निवास्य-नरस्य, परिस्रव करोति । स-पुरुष, तदा विदग्धमस्र स्रवति । तथा बहुशो-बहून् वारान्, अतिवेगेन भूरिभि-बहुभि, वर्णै पित्त स्रवति । तथा मोहमसकृद् गच्छति । तत्रावस्थाया रक्त-

१ 'भापयेत्' ग घ प । २ 'पूगम्' ग घ प । ३ 'जनन' ट । ४ 'त्पलै ।' ग घ ञ । ५ 'गजे ।' स द्व । ६ 'तीक्ष्णाति' क ग घ ञ प । ७ 'न्नत ।' घ प । ८ 'दुं शायि' ग । 'दु शोधिता' स स । ९ 'वृत्त म' घ प । १० 'रुज स्तम्भमङ्गभेद च पर्वणि' क ग ञ । ११ 'शृत मस्तु' स द्व । १२ 'लैरशि' क ग स मू । 'लै पिशितै रसै' ञ । १३ 'हरेत्' घ प । १४ 'बलास्थिरादिकाश्मर्यत्रिफलावृष ('रम' स.मू.) सैन्धवै ।' क ग ञ स.मू. । १५ 'र्यफलसै' स स. ।

१ 'नाऽक्त पि' स मू । २ 'येदुदर ब' ग ञ । ३ 'कुशेत्क' घ प । ४ 'रीनलै ।' स स । ५ 'वासनै ।' क ग ञ म मू । ६ 'हरवा' क ग ञ स मू । ७ 'वर्णोत्पाल्प' स द्व । ८ 'स्रनो भवे' स मू । ९ 'यश्चेक्ष्वादिभि शृतम् ।' क ग ञ स मू । १० 'णीछर्दनाञ्ज' च । ११ 'स्नेहैश्च' क घ ञ प स मू । १२ 'च' अ ञ प । १३ "लिखन्-कर्षन् । क्षिण्वन्-हिंसन् । परिस्रव-स्रावम् । असकृत्-पुन पुन । मोह-विचेतनभावम् । तत्र-दाहादिके पैत्तिके विकारे । कुल्माषान्-स्विन्नान् मुद्गादीन् ।" इति चन्द्र । "अथवा योऽतिविरिक्तनया क्षीणविट्कस्तस्य ।" इतीन्दु । १४ 'त्यस्रपरि' आ ग ञ प स स । १५ 'भूरिश' स मू । १६ 'तियोगेन' अ आ क ग ञ स म । १७ 'चासकृत्' अ आ इ ञ प स द्व । 'वाऽसकृत्' ई । १८ 'चात्र' स.द्व. । १९ 'हत्वा' अ.आ क ञ स द्व ,ट.। २० 'शन्वितम्' आ.इ.ग.।

पित्तघ्नी तथा रक्तातिसारघ्नी क्रिया च प्रशस्यते। दाहमोहादिषु त्रिवृत्कल्क द्राक्षाजलेन पिबेत्। यस्मात् तत्-त्रिवृत्कल्कयुत द्राक्षावारि, पित्तशकृद्वातान् हत्वा दाहादीन् जयेत्। विशुद्धश्च सशर्करा शीता पेया पिबेत्। अतिविरिक्तस्य क्षीणपुरीषस्य पुस कुल्माषान् मापयूषेण सह भोजन युञ्ज्यात्। दध्यथवा सुरा पान दद्यात्। बस्त्यापदा-निरूहव्यापत्तीना, एव सिद्धि -चिकित्सित, स्यात्।

**आ० र०-स्ववाख्या व्यापदमाह-बस्तिरिति। सङ्ग्रहे तु (क अ ६)-"तत्रार्द्रैशाल्मलीवृन्तै क्षुण्णैराज पय शृतम्। पूत घृतान्वित बस्ति दद्यादन्याश्च पिच्छिलान्॥ वटादिपल्लवेष्वेव कल्पो यवतिलेषु च। सुवर्चलोपोदकयो कर्बुदारे च शस्यते॥ गुदे च शीतमधुरान् कुर्यात्सेकप्रलेपनान्।" इति। तथा (सङ्ग्रहे क अ ६)-"आम य कुणप रुग्बानुपवेशयेत सारुचि। सवनातिविषाकुष्ठनतदारुवचा पिबेत्॥ शकृद्वातमसृक्पित्त कफ वा योऽतिसार्यते। पक्व तत्र स्ववर्गीयो बस्ति श्रेष्ठ भिषग्जितम्॥ षण्णामेषा द्विससर्गास्त्रिशद्भेदा भवन्ति तु। केवलै सह षट्त्रिशद्विधास्सोपद्रवाश्च तान्॥ शूलप्रवाहिकाध्मानपरिकर्तारुचिज्वरान्। तृण्मोहदाहमूर्च्छादीश्चैषा विद्यादुपद्रवान्॥ तत्रामेऽन्तरपान तु कट्वम्ललवणैर्युतम्। पाचन शस्यते बस्तिरामे हि प्रतिषिध्यते॥ वातघ्नग्राहिवर्गीयो बस्ति शकृति शस्यते। स्वाद्वम्लो व्यक्तलवण स्नेहबस्ति समीरणे॥ रक्ते रक्तेन पित्ते तु कषायस्वादुतिक्तक। सार्यमाणे कफे बस्ति कषायकटुतिक्तक॥ शकृता वायुना चामे तेन वर्चस्यथानिले। ससृष्टेऽन्तरपान स्यात् कट्वम्ललवणैर्युतम्॥ पित्तेनामेऽसृजा तद्वत्तयोरामेन वा पुन। ससृष्टयोर्भवेत्पान सकटुस्वादुतिक्तकम्॥ तथाऽऽमे कफससृष्टे कषायकटुतिक्तकम्। आमेन तु कफे युक्ते कषायलवणोषवम्॥ वातेन विशि पित्ते वा विट्पित्ताभ्यां तथाऽनिले। स्यात् कषायाम्लमधुर ससृष्टे बस्तिरुत्तम॥ बस्तिर्वातेन रक्ते तु कार्य स्वाद्वम्लतिक्तक। शकृच्छोणितयो पित्तशकृतोरस्रपित्तयो॥ बस्तिरन्योन्यससर्गे कषायस्वादुतिक्तक। कफेन विशि पित्ते वा कफे विट्पित्तशोणितै॥ कटुतिक्तकषाय स्यात्ससृष्टे बस्तिरुत्तम। मधुरोषणतिक्तस्तु रक्ते कफविमूर्च्छिते॥ मारुते कफससृष्टे कट्वम्ललवणो भवेत्। स्याद्बस्ति कटुतिक्ताम्ल ससृष्टे वायुना कफे॥** त्रिचतु पञ्चषट्योगानेवमेव विकल्पयेत्। युक्तिश्चैषाऽतिसारोक्ता सर्वरोगेष्वपि स्मृता॥ युगपत् षड्रस षण्णा ससर्गे पाचन भवेत्। निरामाणा च पञ्चाना बस्ति षड्रसिको हित॥ उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वच। शङ्ख सर्जरस लाक्षा कट्तृण च पलाशिकम्॥ पिष्ट्वा तै सर्पिष प्रस्थ क्षीर द्विगुणित पचेत्। अतीसारेषु सर्वेषु पेयमेतद्यथाबलम्॥ कच्छुराधातुकीबिल्वसमङ्गारक्तमूलिभि। मसूराश्चाथशुद्वैश्च यवागू स्याज्जले शृतै॥ बालोदुम्बरकट्वङ्गसमङ्गाप्लक्षपल्लवै। मसूरधातकीपुष्पबलाभिश्च तथा भवेत्॥ नानाप्रकारा जायन्ते व्यापदो बस्तिविभ्रमात्। यथायथ यथावस्थ तासा कुर्वीत साधनम्॥" इति निरूहव्यापद।

**स्नेहबस्तेस्तु वक्ष्यते॥ २८॥**

स०-स्नेहबस्ते -अनुवासनस्य, सिद्धिर्वक्ष्यते।

**आ० र०-अथानुवासनव्यापद। ताश्चोक्ता सङ्ग्रहे (क अ ७)-"स्नेहबस्तौ मरुत्पित्तकफात्याशविडावृते। अभुक्तशूनपायवामदत्तेऽष्टौ व्यापद स्मृता॥" इति।**

**शीतोऽल्पो वाऽधिके वाते पित्तेऽत्युष्ण कफे मृदु।
अतिभुक्ते गुरुर्वर्च:सञ्चयेऽल्पबलस्तथा॥ २९॥
दत्तस्तैरावृतः स्नेहो नायात्यभिभवादपि।**

स०-शीतो बस्तिरल्पो वाऽधिके वाते दत्त, तथा पित्तेऽत्युष्ण, तथा कफे मृदु, अयोग सम्पद्यते। अतिभुक्ते गुरुर्बस्तिर्दत्त, तथा वर्चस -पुरीषस्य, सञ्चयेऽल्पबल -उभयया मात्रया वीर्यतश्च, दत्त, तै -शीतादिकारणाद्वातादिभि, स्नेहबस्तिरावृतो नायाति-गुदमार्गेण प्रत्यागच्छति, अभिभवादप्येतैरेव।

**आ० र०-तत्र पञ्चाना व्यापदा कारणमाह-शीतोऽल्प इति। गुरु -चिरपाक। अल्पबल -अनुलोमनासमर्थ। शीतादिगुणस्यावृतत्वम्। अल्पस्याभिभव।**

**स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनैः॥ ३०॥
पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम्।
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलिकैः॥ ३१॥
सौवीरकसुराकोलकुलत्थयवसाधितै.।**

१ 'त्रार्द्रै शल्मलीपत्रे क्षु' स स। २ 'ध्वेषक' घ प। ३ 'पनम्।' ग ञ। ४ 'वेशोऽनिशारुचि' इति क.ग पुस्तकयो पाठ, "उपविशति इत्युपवेश, अनिशमरुचिर्यस्य स।" इति ग पुस्तके टिप्पणी च। ५ 'वन्त्यत।' क ग ञ। ६ 'द्विन्त्यास्सो' घ प। ७ 'कर्बरु' स मू। ८ 'ततोऽनन्तर' क ग ञ। ९ 'पित्तास्रे क' स मू। १० 'वाऽऽमे तेन वर्चसि वाऽनिले।' स स। 'वाऽऽमेन वर्चस्यथवाऽनिले।' स मू। ११ 'वणोषणम्' स स। १२ 'त्वास्रे तथा' क ग ञ स मू। १३ 'च' स मू। १४ 'मधुरोषधसिद्धस्तु' घ च प। १५ 'वण पिबेत्।' घ.च,ञ.प.।

१ 'च सर्वेषा ब' ञ। २ 'पिबेत्' क। ३ 'क्तशूलिन।' क ग। 'क्तमूलिन।' ञ। ४ 'तथयूषैश्च' क ग ञ। 'तथशृङ्गै' घ प। ५ 'यथावयो य' ग। 'यथामय' ग ञ। ६ तेषा कु' क ग ञ। ७ 'बस्तिषु व' अ इ। 'हकल्पस्तु' आ। ८ 'फालशनविट्चयै।' क ग ञ स मू। ९ 'अभुक्ते शू' स स। 'आवृतो भुक्तदत्तामे सप्तधा व्या' स मू। १० "तैरावृत इति पद प्रत्येक वातादिषु पञ्चसु योजनीयम्। अभिभवादपीति वातादिनाऽऽवृतमार्गत्वान्न याति, तथा तेन वातादिनोत्कर्षेणाभिभूतगुणत्वाच्च न आयाति।" इति चक्र। "तै -वातादिभि सह, स्नेह आवृतोऽभिभवादधो न याति।" इति चन्द्र। "पीतद्रु -अत्र सरल। कोल-बदरम्।" इतीन्दु। ११ 'दध।' अ चन्द्र। १२ 'प्रत्येति' ट। १३ 'वादपि।' न। १४ 'राङ्कोल' ग घ प.।

**निरूहैर्निर्हरेत्सम्यक् समूत्रैः पाञ्चमूलिकैः ॥ ३२ ॥**
**ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ।**

**स०**—स्तम्भोरुसादादिभिर्वायुना स्नेहमावृतं विद्यात् । तमेवंविधं, स्नेहं—स्नेहबस्तिं, निरूहैः सम्यक् स्निग्धाम्ललवणोष्णैर्निर्हरेत् । तानेव निरूहानाह—सौवीरकसुरादिसाधितैस्तथा गोमूत्रान्वितैस्तथा पञ्चमूलनिर्वृत्तैः पञ्चमूलक्वाथयद्भिरित्यर्थः । तथा रास्ना च पीतद्रुश्च रास्नापीतद्रू, ताभ्यां साधिते तैले रास्नापीतद्रुतैले, ते विधेते येषां निरूहाणां तैः, क्वचित्पुटके रास्नातैलं क्वचिद्धरिद्रातैलं योज्यमित्यर्थः । ताभ्यामिति द्विवचननिर्देशात् पृथगेतत् तैलद्वयमुपयोगीति गम्यते । च-समुच्चये, न केवलं तं निरूहयेत्, रास्नातैलेन पीतद्रुतैलेन वा दोषाद्यनुरोधादनुवासयेच्च । सायं भुक्ते—न तु प्रातर्भुक्ते ।

**आ० र०**—वातावृतस्य लक्षणं चिकित्सितं चाह—स्तम्भोरुसदनेति । वेष्टनं—पिण्डिकोद्वेष्टनम् । पीतद्रुः—सरलः । रास्नातैलेन पीतद्रुतैलेन च संस्कृतैः । बिल्वादिपञ्चमूलयवकोलकुलत्थानां क्वाथः । ताभ्यां—रास्नापीतद्रुतैलाभ्याम् ।

**तृड्दाहरागसम्मोहवैवर्ण्यतमकज्वरैः ॥ ३३ ॥**
**विद्यात्पित्तावृतं स्वादुतिक्तैस्तं बस्तिभिर्हरेत् ।**

**स०**—तं तृड्दाहादिभिः पित्तावृतं स्नेहबस्तिं विद्यात् । स्वादुतिक्तैर्बस्तिभिर्विनिर्हरेत् ।

**आ० र०**—पित्तावृतस्य लक्षणं चिकित्सितं चाह—तृड्दाहेति । तमकः—तमःप्रवेशः ।

**तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ॥ ३४ ॥**
**सम्मूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ।**
**कषायतिक्तकटुकैः सुरामूत्रोपसाधितैः ॥ ३५ ॥**
**फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत् ।**

**स०**—तन्द्रादिभिः कफावृतं स्नेहबस्तिं विद्यात् । तं कषायकटुतिक्तैः सुरामूत्रोपसाधितैः फलतैलयुतैः साम्लैर्बस्तिभिः—निरूहैः, विनिर्हरेत् । फलानां—उष्णवीर्याणामक्षोटादीनां, तैलं फलतैलम् । केचित्तु फलं—मदनफलं, तिलतैलं च, ताभ्यां युतास्तैरिति व्याचक्षते ।

**आ० र०**—कफावृतस्य लक्षणं चिकित्सितं चाह—तन्द्रेति । फलतैलं—मदनफलतैलम् ।

**छर्दिमूर्च्छारुचिग्लानिशूलनिद्राङ्गमर्दनैः ॥ ३६ ॥**
**आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ।**
**कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ॥ ३७ ॥**
**मृदुर्विरेकः सर्वं च तत्रामविहितं हितम् ।**

**स०**—छर्द्यादिभिरामलिङ्गैर्दाहयुतैः स्नेहमत्यशनावृतं विद्यात् । कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनं हितम् । तथा मृदुभिः—अतीक्ष्णैः, विरेकः । तथा तस्मिन् सर्वमामविहितमौषधं हितम् ।

**आ० र०**—अत्यशनावृतस्य लक्षणं चिकित्सितं चाह—छर्दिमूर्च्छेति । आमः—आमाजीर्णम् । क्वाथैः कटूनामेव, चूर्णैः कटूनां लवणानां च ।

**विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः ॥ ३८ ॥**
**स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सवर्तिभिः ।**
**श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ॥३९॥**
**निर्हरेद्विधिना सम्यगुदावर्तहरेण च ।**

**स०**—विण्मूत्रादिभिर्विडावृतं स्नेहं विदित्वा, स्नेहादिभिस्तथा श्यामादिभिः सिद्धैर्निरूहैरनुवासनैश्च, तयोदावर्तहरेण विधिना, सम्यग् निर्हरेत् ।

**आ० र०**—विडावृतस्य लक्षणं चिकित्सितं चाह—विण्मूत्रानिलेति । अर्तिः—शूलम् । श्यामादिः—गणः । बिल्वादिः—पञ्चमूलम् ।

**अभुक्ते शूनपायौ वा पेयामात्राशितस्य वा ॥ ४० ॥**
**गुदे प्रणिहितः स्नेहो वेगाद्धावत्यनावृतः ।**
**ऊर्ध्वं कायं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥४१॥**
**मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।**
**तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः ॥ ४२ ॥**
**कण्ठादागच्छतः स्तम्भकण्ठग्रहविरेचनैः ।**
**छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निबर्हणम् ॥ ४३ ॥**

**स०**—अभुक्ते स्नेहबस्तिः, तथा शूनः पायुर्यस्य तस्मिन् प्रणिहितो बस्तिः, अथवा पेयामात्रमेवाशितं येन स पेयामात्राशितस्तस्य गुदे प्रणिहितः स्नेहबस्तिः, अनावृतः सन् वेगादूर्ध्वं कायं धावति । ततः कण्ठादूर्ध्वेभ्यश्च खेभ्यः एति—पतति । तत्र गोमूत्रादिसिद्धो यो यवादिमान् क्वाथस्तेन क्वाथेन सिद्धतैलैर्निरू-

---

१ 'पाञ्चमौलि' ग । २ 'तैलाभ्यामेव ताभ्यां वा सायं' आ ग. । ३ 'तु' अ । ४ 'च सुस' ग । ५ 'स्तं च विनिर्हं' आ. ग । ६ 'समूर्च्छा' अ इ ई घ न स द्व । ७ 'कषायकटुतिक्तोष्णैः सु' स च । ८ 'मूत्रैः प्रसा' आ ग । 'रागोमूत्रसा' इति क्वचित् । ९ "फलतैलं—पूर्वव्याहृतमेव ज्ञेयम् ।" इति चक्र । 'फलेन—मदनाख्येन, तैलेन च युतैः । साम्लैः—काञ्जिकादिभिर्युक्तैः ।" इति चन्द्र. । १० केचित्—चन्दनन्दनादयः । ११ 'लतन्द्राङ्ग' आ ।

१ "आमलिङ्गैरिति आमलक्षणैरालस्यादिभिः (हृ सू अ १३।२४)॥ वर्तिभिरिति फलवर्तिभिः । बिल्वादीनि—दशमूलानि, किंवा श्यामादीन्यप्यत्र कल्पोक्तानि नव गृह्यन्ते ॥ आगच्छत इत्यागमनसमय एव स्तम्भादि कर्तव्यम् । स्तम्भः—व्यजनशीतजलसेकादिना । कण्ठग्रहः—ऊर्ध्वगमनप्रतिषेधार्थं कण्ठपीडनम् ।" इति चक्र । "अत्यशनेन—अतिभोजनेन, आवृतम् । तत्र—अत्यशनावृते स्नेहे ॥ उदावर्तहरेण—अर्शोविहितेन ॥ निबर्हणं—निवारणम् ।" इति चन्द्र । २ 'विद्यादामावृतं तु तम् ।' आ । ३ 'अत्याशावृ' च. । 'अत्याश' ञ । ४ 'सबस्तिभिः' स.द्व । ५ 'वा' आ इ । ६ 'च' इ । ७ 'ऊर्ध्वकायं' आ ई.क ग ञ न स.स. । ८ 'स्निवर्तनम्' स.द्व. । ९ 'त्रादिभिश्च सि' न. ।

हमनुवासन [ च ] दद्यात् । कण्ठादागच्छत स्नेहस्य स्तम्भ-कण्ठग्रहादिभिश्छर्दिनाभि क्रियाभिश्च तन्निर्हरण कुर्यात् ।

**आ० र०**–अभुक्तदत्तशूनपायुदत्तयोर्लक्षण चिकित्सित चाह–अभुक्त इति । मात्रा–स्तोकम् । पेयाशितस्य चाभुक्त-तुल्यत्वान्न पृथगुद्देश कृत । कण्ठादेति–निर्गच्छति । ऊर्ध्वे-भ्योऽपि खेभ्य –नासानेत्रकर्णेभ्य । श्यामात्रिवृत्यवको-लकुलत्थाना मूत्रेण क्वाथ । तेषामेव कल्केन मूत्रेण च सिद्ध तैलम् । तत्र क्वाथतैलाभ्या निरूह । तैलेनानुवा-सन । स्तम्भ –उरुस्तम्भ इति प्रसिद्ध उरुस्तम्भरोग ।

**नापक्व प्रणयेत्स्नेह[1] गुदं स ह्युपलिम्पति ।**
**ततः कुर्यात्सिरुङ्मोहकण्डूशोफान्[2][3], क्रियाऽत्र च ४४**
**तीक्ष्णो बस्तिस्तथा तैलमर्कपत्ररसे शृतम् ।**

**स०**–अपक्व स्नेह न दद्यात् । यस्मात् स –अपक्व स्नेहो, गुदमुपलिम्पति । तत –उपलिप्ते[4] गुदे, रुजाभि सह मोहादीन् कुर्यात् । अत्र चिकित्सित तीक्ष्णो बस्तिस्तथाऽर्कपत्ररसे शृत तैलम् ।

**आ० र०**–आमदत्तस्य लक्षण चिकित्सित चाह–नापक्व-मिति । तैलमनुवासनार्थम् । इत्यनुवासनव्यापद ।

अथ नेत्रबस्तिशय्याप्रणेतृदोषजा व्यापद । ताश्चोक्ता सङ्ग्रहे ( क अ ७ )–"ह्रस्व दीर्घं तनु स्थूल जीर्ण शिथि-लबन्धनम् । पार्श्वच्छिद्र तथा वक्रमष्टौ नेत्राणि वर्जयेत् ॥ अप्राप्त्यतिगतिक्षोभकर्षण[5]क्षणनस्रवा । गुदपीडा गतिर्जिह्मा तेषा दोषा यथाक्रमम् ॥ मासलस्निग्धविषमजालवत्स्थूलवा-तला । छिद्र क्लिन्नश्च[6] तानष्टौ[7] बस्तीन् कर्मसु[8] वर्जयेत् ॥ ग-तिवैषम्यदौर्गन्ध्यजिह्मत्वस्रुतिदुर्ग्रहा[9] । फेनिलच्युत्यधार्यत्व[10] बस्ते स्युर्बस्तिदोषत ॥ उच्चकैस्त्यवाक्शीर्ष[11]न्युब्जसङ्कुचि तस्थितम् । उत्तान दक्षिण पार्श्व सप्त शय्या परित्यजेत् ॥ मूत्राघातोऽतिसम्प्राप्तिरप्राप्ति[12] साधु[13] नागति । आश्वागति मेरुत्कोर्प[14]स्तृप्ति पक्वाशयस्य च ॥ तद्दोषा स्युर्विघातव्य यथौपयिकमत्र[15] च । सवाता[16]तिद्रु[17]तोत्क्षिप्ततिर्यगु[18]ल्लुप्तकम्पिता ॥ अतिमन्दकबाह्यातिवेगदोषा प्रणेतृत ।" इति ।

**अनुच्छ्वास्य तु बद्धे वा[1] दत्ते[2] निःशेष एव वा ॥४५॥**
**प्रविश्य क्षुभितो[3] वायुः[4] शूलतोदकरो भवेत् ।**
**तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ॥ ४६ ॥**

**स०**–अनुच्छ्वास्य बस्तेर्वदने बद्धे सति, अथवा नि शेष दत्ते मति, प्रविश्यान्तरे वायु कुपित शूलतोदकर स्यात् । तस्मिन्नभ्यङ्गो गुदे स्वेदश्च, तथा वातहन्तॄणि भोजनानि च ।

**आ० र०**–सवातप्रणयनस्य लक्षण चिकित्सित चाह–अनुच्छ्वास्येति ।

**द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्ते[5] एव वा ।**
**स्यात् कटीगुदजङ्घोरुबस्तिस्तम्भार्तिभेदनम्[6] ॥ ४७ ॥**
**भोजनं तत्र वातघ्न स्वेदाभ्यङ्गाः सबस्तयः ।**

**स०**–शीघ्र प्रणीते निष्कृष्टे सहसोत्क्षिप्ते च कट्यादिषु स्तम्भ-पीडाभेदनानि स्यु । तत्र वातघ्नमशन स्वेदोऽभ्यङ्गश्च ।

**आ० र०**–अतिद्रुतोत्क्षिप्तयोर्लक्षण चिकित्सित चाह–द्रुतमिति । प्रणीते–प्रवेशिते । निष्कृष्टे–निष्काशिते । उत्क्षिप्ते–पृष्ठवश प्रति नानीते ।

तिर्यङ्नेत्रस्य लक्षण चिकित्सित चाह सङ्ग्रहे (क अ ७)–'तिर्यग्वल्यावृतद्वारे बद्धे वाऽपि न गच्छति । नेत्रे तदृजु निष्कृष्य सशोध्य च पुनर्नयेत् ॥" इति ।

**पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः ॥४८॥**
**उरःशिरोरुजं सादमूर्वोश्च जनयेद्बली ।**
**बस्तिः स्यात्तत्र विल्वादिफलश्यामादिमूत्रवान् ४९**

**स०**–पीड्यमाने बस्तिपुटकेऽन्तरा–म ग एव, कदाचित्तस्मिन् मुक्ते, गुदेऽनिल प्रतिहतो बलवान् उर शिरोरुजमूरुसाद च जनयेत् । तत्र बिल्वादिभिर्बस्तिर्मदनफलश्यामादिमान् स्यात् ।

**आ० र०**–उल्लुप्तस्य लक्षण चिकित्सित चाह–पीड्यमान इति । फल–मदनफलम् ।

कम्पितादीना चतुर्णा लक्षण चिकित्सित चाह सङ्ग्रहे ( क अ ७ )–"स्याद्दाहो दवथु शोफ कम्पनाभि-

---

१ 'स्नेहयेत्' अ इ । २ 'स कुर्यात्सक्थिरु' आ ग । ३ 'त्सतृण्मोह' इ ई घ च प न चन्द्र । ४ 'उल्लिप्ते' ट न । ५ 'कर्षण' ञ स स । ६ 'छिद्रक्लिन्न' ग घ च ञ । 'छिद्र क्लिन्न' प । 'क्लिन्न क्लि' स द्द. । ७ 'न्नस्रुतानष्टौ' ग । 'न्नस्रवा-नष्टौ' ञ । ८ 'कर्मणि ब' क ग । ९ 'लस्थित्य' घ च प । 'लच्युप्तधा' स मू । १० 'त्यवार्यत्व' क ञ प । 'त्यचार्यत्व' ग । 'लवाय्यत्व' घ च । ११ 'शीर्ष न्युब्ज सङ्कुन्वित स्थि' स स । 'मूर्ध्व स' ग मू । १२ 'घाताविस' क । 'घातापिस' ञ । 'घातातिं' ग । 'घातोऽन्नस' स मू । १३ 'धुतागति ' स मू । १४ 'प सुप्ति ' ग. । १५ 'वा' क । 'तु' घ प । १६ 'सघाता' क ग । 'सघाता' ञ । १७ 'तिहतो' घ प स मू । 'तिस्रुतो' स स । १८ 'गुल्लिप्त' न घ ञ.प. ।

१ "अनुच्छ्वास्य–वातमनि सार्य । अनुबद्धे–ग्रथिते ॥ उत्क्षिप्ते–पादत शय्यायामुत्क्षिप्तायाम् ॥ अन्तरा मुक्ते–शिथिलबद्धत्वात् । प्रतिहत –व्यावृत्योपरुद्ध । बिल्वादिपञ्चमूलमदनफलश्यामादिगण-युक्तो मूत्रैश्च साधितो बस्ति ।" इति चन्द्र । "निष्कृष्टे सहसेति छेद । उत्क्षेपस्त्वसहसाऽपि व्यापत्तिकर एव । सबस्तय इति वातहरबस्तियुक्ता ॥ बिल्वादि–दशमूलम् । श्यामादि–श्यामा-त्रिवृतादि विरेचनद्रव्यम् ।" इति चक्र । २ 'स्य नु ब' अ इ ई न । 'स्यानुब ' ग चन्द्र । 'स्य च ब' स.च । 'च्छ्वासानुबन्धे' स मू । ३ 'च' अ क घ । ४ 'कुपितो' स च । ५ 'नान्यथ ।' इ । ६ 'जङ्घार्तिबस्तिस्तम्भोरुवेदना । ०घ्न स्नेहा स्वेदा स' स च । ७ 'प्रति नीते' क ग' । ८ 'वृते द्वारे' क स स । ९ 'नेत्र त' ग ञ । १० 'निष्कास्य स' स मू । ११ 'ल्वादि फल' इ ई ग.ञ. । १२ 'उत्क्षिप्त' क । 'उल्लिप्त' ग.ञ । १३ 'क-म्पेना' स.स. ।

हते गुदे । कषाया मधुरा शीता सेकास्तत्र सबस्तय ॥ अतिमात्रप्रणीतेन नेत्रेण क्षणनाद्बले । स्यात्सार्तिदाहनिस्तोदर्गुरुवर्च प्रवर्तनम् ॥ तत्र सर्पि पिचु क्षीर पिच्छाबस्तिश्च शस्यते । न भावयति मन्दस्तु बाह्यश्चाशु निवर्तते ॥ स्नेहस्तत्र पुन सम्यक् प्रणेय सिद्धिमिच्छता ।" इति ।

**अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम् ।**
**तत्र बस्तिर्विरेकश्च गलपीडादि कर्म च ॥ ५० ॥**

स०—अतिप्रपीडितो बस्तिपुटक कोष्ठे तिष्ठति, गलं वाऽऽयाति । तत्र बस्तिर्विरेकश्च गलपीडादि च कर्म शस्यते ।

आ० र०—अतिवेगस्य लक्षण चिकित्सित चाह—अतिप्रपीडित इति ।

**वमनाद्यैर्विशुद्धं च क्षामदेहबलानलम् ।**
**यथाऽण्डं तरुणं पूर्णं तैलपात्रं यथा तथा ॥ ५१ ॥**
**भिषक् प्रयत्नतो रक्षेत्सर्वस्मादपचारत. ।**

स०—वमनविरेकाद्यैश्च विशुद्ध क्षामदेह क्षामबल क्षामानल च पुरुष वैद्य प्रयत्नेन सर्वस्मादपचाराद्रक्षेत् । किमिव ? यथा तरुण—अभिनव जातमण्ड, यथा च तैलपूर्ण पात्र रक्ष्यते, तथा प्रयत्नेन रक्षेत् ।

आ० र०—वमनादिशुद्धस्य विशेषतोऽपचार निषेधति—वमनाद्यैरिति ।

**दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ ॥ ५२ ॥**
**स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ।**
**अन्योन्यप्रत्यनीकानां रसाना स्निग्धरूक्षयोः ॥५३॥**
**व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ।**
**सर्वसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ॥ ५४ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां पञ्चमे कल्पसिद्धिस्थाने बस्तिव्यापत्सिद्धिर्नाम पञ्चमोऽध्यायः ॥ ५ ॥**

---

स०—तस्मिन् मधुरहृद्यानि दद्यात् । अनन्तरमम्ललवणौ रसौ, तत स्वादुतिक्तरसौ, तत कषायकटुकरसौ दद्यात् ।

अन्योन्यप्रत्यनीकाना—परस्परप्रतिपक्षाणा रसाना, तथा स्निग्धरूक्षयोरन्योन्यप्रत्यनीकयो, व्यत्यासात्—विपर्ययात्, उपयोगेन—यथास्वमुपयोगेन, यथा—मधुररसमुपयुज्य पुनरम्लाद्यन्यतम तत्प्रतिपक्ष युञ्ज्यात्, अम्लमुपयुज्य पुनर्मधुराद्यन्यतम तत्प्रतिपक्ष युञ्ज्यात्, एव स्निग्धरूक्षयोरुपयोग कुर्यात् । तथा तपुरुष वमनादिभिर्विशुद्ध, प्रकृति यथोचिता स्वा नयेत् ।

१ 'षायमधु' स द्व । २ 'मात्र प्र' ग । ३ 'श्वासार्ति' ग । ४ 'गुदवर्च ' ग ञ स च । ५ 'द्विमूच्छ' क ञ । ६ 'छन्ना याति' ग । ७ 'कर्मभिर्वमनाद्यैश्च क्षा' आ । ८ 'तु' ग । ९ 'दपवादत ' इति क्वचित् । १० "अपचारत —अपथ्यरूपादाहारविहारत ॥ भूय —पुनरपि ।" इति चन्द्र. । ११ 'तथा भू' स मू

सर्वसह —अशेषक्षम, तथा स्थिरबल, प्रकृति प्राप्त पुमान् वेद्य ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्यायां पञ्चमे कल्पसिद्धिस्थाने बस्तिव्यापत्सिद्धिर्नाम पञ्चमोऽध्याय समाप्त ॥ ५ ॥

---

आ० र०—शुद्धस्योपचारमाह—दद्यादिति । सङ्ग्रहे तु (क. अ ७)—"अत्रान्तरे त्यजेदष्टौ भाष्यादीनि विशेषत । उच्चैर्भाष्याच्छिरोरोगतिमिरोर स्वरव्यथा ॥ रक्तनिष्ठीवतमकज्वराद्यास्तत्र साधनम् ॥ अभ्यङ्गस्वेदनस्याधोभक्तस्नेहोपसेवनम् ॥ मौन विधिर्वातहरो यथास्व च विकारजित् । अत्यास्यायानयानाभ्या सन्धिमूर्धत्रिकादिरुक् । अतिचङ्क्रमणात्पादजङ्घोरुसदनादय । तेषा वातहर सर्व स्नेहस्वेदादि शस्यते ॥ अजीर्णभोजनादामविषच्छर्दिज्वरादय । तत्र मात्राशितीयोक्तो विधेयो विधिरामहा ॥ अहितान्नाद्यथादोष रोगा स्युर्भेषजानि च । हलीमकादय प्रोक्ता दिवास्वप्नात् पुरा गदा ॥ विदध्यात् कफजित्तेषु धूमरूक्षान्नलङ्घनम् । व्यवायाज्जीवितभ्रशस्तैरस्यानिलामयै ॥ गुदोऽवलुप्यत इव भ्रमतीव च चेतना । मेढ्र धूमायति मनस्तमसीव प्रवेक्ष्यते ॥ जीवनीयशृतक्षीररसपिषोरुपयोजनम् । आहारो बृहणस्तत्र वृष्यास्ते ते च बस्तय ॥ वेगरोधोर्ध्ववातत्वात् प्रागुक्ता ये सदातुरा । तेषा विबद्धे पवने सर्वदेहोपतापिनि ॥ फलवर्ति पुरा दद्यादथ बस्ति चलापहम् । निकुम्भकुम्भाश्ययुरुबूकधावनीपुनर्नवादारु महच्च पञ्चकम् । फल च मूत्रे क्थित समस्तु घृत सतैल लवणानि पञ्च ॥ निरूहित धन्वरसेन भोजयेन्निकुम्भतैलेन ततोऽनुवासयेत् । बला सरास्ना फलबिल्वचित्रकान् द्विपञ्चमूल कृतमालकात्फलम् ॥ यवान् कुलत्थाश्च पचेज्जले रस समुस्तपाठेन्द्रयवैश्च कटकवान् । सतैलसर्पिर्गुडसैन्धवो हित सदाऽऽतुराणा बलपुष्टिवर्णद ॥ तथाऽनुवास्य मधुकेन साधित बालेन बिल्वेन शताह्वयाऽथवा । सजीवनीयस्तु रसोऽनुवासने निरूहणे चालवण शिशोर्हित ॥ न चान्यदा

१ 'निष्ठीव' ञ स द्व । २ 'धोरक्तस्ने' क ग. । ३ 'वा' स मू । ४ 'वास्वापात्' घ ञ प । 'स्वप्नादुरोगदा ।' ग । ५ 'फपित्तेषु' क ग ञ । ६ 'वलिप्य' ग । 'दोविलिप्य' क ञ । ७ 'वेक्ष्यते' क ञ स.मू । ८ 'पिषा च प्रयो' ग घ ञ प । 'पसेवनम्' स स । ९ 'वात स्यात्' ग घ च ञ प । १० 'गदातुरा ' क ग घ ञ प. । ११ 'विवृद्धौ' ग । १२ 'बलावहम्' क स मू । १३ 'मस्तु तत् घृत० पञ्च च ।' स स । १४ 'फलमूलपञ्चक द्वि' क ग । १५ 'त्रक द्वि' घ ञ प । १६ 'लकट्फलम्' क ग ञ । १७ 'सर्पिर्मधुसै' क ग । १८ 'वर्धन ।' क ग । १९ 'भावित' घ च प । २० 'फलेन' स स । २१ 'वाऽलवण ' ग घ प । २२ 'शिरोर्तिनुत् ।' ग घ ञ प । २३ न चान्यदेत्यादि श्लोकार्धं सटीकसङ्ग्रहे नोपलभ्यते । २४ 'न्यदस्त्यङ्ग' ग च ।

ऽऽश्वङ्गबलाभिवर्द्धन निरूहवस्ते· शिशुवृद्धयोर्हितम् ॥ निरू-[1] हवस्तेनेव[2] स्यादन्यत् स्थविरबालयो । बलाङ्गवर्द्धन शीघ्र-माहृतो योजयेदत ॥" इति ।

इति हेमाद्रिटीकायामायुर्वेदरसायने ।
बस्तिव्यापत्प्रकरण सामस्त्येन निरूपितम् ॥ ५ ॥





## षष्ठोऽध्यायः ।

अथ भेषनकल्पो व्याख्यातुमारभ्यते । बस्तिव्यापदा ह्युत्पन्नाना सिद्धि-साधन, सद्भेपजप्रयोगात् । अपि च सर्वेषा रोगाणा या सिद्धि-प्रशमोपाय , सोऽपि सद्भेपजप्रयोगादेव । इत्याह—

**अथातो द्रव्य[3]कल्पं[4] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**स०**=भेषजस्य कल्पो–योजना, भेषजकल्प । शेष पूर्ववत् ।

**आ० र०**-भैषजकल्प व्याख्यातु प्रतिजानीते-अथेति ।

**[5]धन्वे सा[6]धारणे देशे समे सन्मृत्तिके [6]शुचौ ।**
**श्मशानचै[7]त्यायतन[8]श्वभ्रव[6]ल्मीकवर्जिते ॥ १ ॥**
**[6]मृदौ प्रदक्षिणजले कुशरोहिषसं[8]स्तृते ।**
**अफा[6]लकृष्टेऽनाक्रान्ते पादपैर्बलवत्तरैः ॥ २ ॥**
**शस्यते भेषजं जातं, युक्तं वर्णरसादिभि· ।**
**[9]जन्त्वजग्ध दवादग्धम[6]वि[10]दग्धं च वैकृतै· ॥ ३ ॥**
**भूतैश्छायातपाम्ब्वाद्यैर्यथाकालं च सेवितम् ।**
**अवगाढमहामूलमुदीचीं दिशमा[11]श्रितम् ॥ ४ ॥**

**स०**–धन्वदेशे, तथा साधारणे देशे, तथा समे-[12]अनिम्नोन्नते, तथा सन्मृत्तिके, तथा श्मशानादिवर्जिते, चैत्य-दिनचर्याध्याये (हृ सू अ २। ३३ ) उक्तम् । तथा मृदौ-सुस्पर्शे, तथा प्रदक्षिण-अनुकूल, जल यस्मिन्, तथा कुशरोहिषसस्तृते, तथाऽफालकृष्टे-[1]खिले, तथा वृक्षैर्महत्तरैरनाक्रान्ते देशे, यद्भेपज जात युक्त यथास्व वर्णरसादिभि , तद्भेपज शस्यते । तथा जन्तुभि -कीटै , अजग्ध-अभक्षित, दवेन-दावाग्निना, अदग्ध -[2]अप्लुष्ट, तथाऽविदग्ध वैकृतैर्भूतै -स्वभाव परित्यज्य [3]धर्मबाधाद्विकृतैराकाशा(पृथिव्या)दिभिर्यदनासेवित तदविदग्धम् । विकृतमेव वैकृतम् , प्रज्ञादित्वादण् । तथा छायादिभिर्यथाकाल-कालमनतिक्रम्य सेवित, यदा तस्य भेजषस्य वृद्धौ छायादीनामन्यतम वस्तुजातमुपयुज्यते तदा तेन सेवितमित्यर्थ । तथाऽवगाढ-दूर गत, महत्-पृथु, मूल यस्य तदवगाढमहामूलम् । तथोदीचीं-उत्तरा, दिशमाश्रितं-तामाश्रित्य स्थितम् ।

**आ० र०**-स च देशगुणकालकल्पनामानै पञ्चधा । तत्र देशमाह-धन्व इति । [4]धन्वे-जाङ्गले । सन्मृत्तिके-स्निग्धकृष्णसुवर्णवर्णम[5]धुररसमृत्तिके । [6]आयतन-[7]वैधस्थानं देवयजनागार च ।

गुणमाह-युक्तमिति । अवगाढ-गम्भीरम् । सङ्ग्रहे तु ( क अ ८ )-"विशेषतस्त्वश्मवती स्थिरा गुर्वी श्या[8]मा कृष्णा वा स्थूलतृणवृक्षसस्यप्रा[9]या पृथ्वी स्वगुणभूयिष्ठा । स्निग्धा शीत[10]लाऽऽसन्नोदका स्निग्धतृणसस्यकोम[11]ल-वृक्षप्राया शुक्ला चाम्बुगुणभूयिष्ठा । नाना[12]व[13]र्णा लघुपुष्पवती प्रविरलपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा । रूक्षा रासभभस्म[14]वर्णा रूक्षतनुको[15]टरवृक्षप्रायाऽल्परसप्ररोहाऽनिलगुणभूयिष्ठा । मृद्वी समा श्वभ्रवत्यव्यक्त[16]रसजला महापर्वतवृक्षा श्या[17]माऽऽकाशगुणभूयिष्ठा । तत्राम्बुपृथ्वीगुणभूयिष्ठासु भूमिषु जातानि विरेचनानि बृंहणानि च शस्यन्ते । अनलानिलाकाशगुणभूयिष्ठासु वमनानि । सर्वगुणयुक्तासूभय[18]तो भागानि । आकाश गुणभूयिष्ठासु शमनानि । एव बलवत्तमानि भवन्ति । तेषां शा[19]खापलाशमचिरप्ररूढ वर्षावसन्तयोर्ग्राह्यम् । ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढप[20]र्णानाम् । शरदि त्वक्कन्दक्षीराणि । हेमन्ते साराणि । यथर्तु पुष्पफलम् । अन्ये पुनराहु , सौम्यान्यौषधानि सौम्येष्वृतुषु, आग्नेयान्याग्नेयेषु, एवमव्यापन्नान्यापूर्णतररसवीर्याणि भवन्ति ।" इति । एतच्च "यथाकाल च सेवितम्" इत्य[21]त्र तन्त्रकारेण सङ्गृहीतम् ।

---

१ निरूहबस्तेरित्यादिश्लोक सङ्ग्रहमूलपुस्तके नोपलभ्यते । २ 'नैवान्यत् पथ्य स्थ' स स । ३ 'भेषजकल्प' अ आ इ ई सं द्व अरुण । ४ अय द्रव्यकल्पश्चरके क० १।१२ अध्याययो सू० ४ अध्याये च, सुश्रुते सू० ३६ अध्याये चि० ३१ अध्याये च, अष्टाङ्गसङ्ग्रहे क०८ अध्याये चास्ति वर्णित । ५ 'धन्वसा' अ इ ई क ख ञ न । ६ "साधारणे-मिश्रदेशे । शुचौ-शुद्धे । श्वभ्र-गर्ते । वल्मीक -पिपीलिकाकृतो मृत्समुच्चय । मृदौ-अकठिने । सस्तृते-छादिते । फाल -शस्त्रादिकृतो हलाग्र । अनाक्रान्ते-अनुपहते । अविदग्ध-अदूषितम् ।" इति चन्द्र । ७ 'त्याद्यतन' अ ग प । ८ 'सस्कृते' अ इ ख ञ । ९ 'जन्त्वजुष्ट द' ख.ञ. । १० 'विजग्ध' क ग । ११ 'मास्थितम्' क ख.ञ प. । १२ 'न निम्नो' न. ।

१ 'द्वे खिलाप्रहते समे' इत्यमर । २ 'अप्लुष्ट' ट । ३ 'धर्मधवाद्वि' ट । ४ 'धन्वनि-जा' क । 'धन्वो-जाङ्गल ।' ग घ प । ५ 'धुरमृत्ति' ख ग ञ. । ६ 'आयतन' ग.घ प. । ७ 'वध्यस्था' घ प । ८ 'मा कृशस्थूल' क ख ञ स मू । 'मा स्थूल' ग. । 'ष्णा स्थूल' घ प स स. । ९ 'या भू स्व' घ प । 'या स्व' ग.स द्व । १० 'ला समपङ्कोदका' ग । ११ 'लदलप्रा' स.मू । १२ 'वर्णाल' क.ख ञ.स.सं । १३ 'लघ्वल्पपुष्प' स स । 'लघ्वश्मवती' स मु । १४ 'र्णातनु' क ख ञ । १५ 'टरोषरप्रा' स मू । १६ 'रसजा मधुराऽमला महापर्ववृक्षा' ख ञ । १७ 'मा चाका' स स । १८ 'तोऽङ्गानि' ग । १९ 'खापल्लवपला' ख ञ । २० 'पर्णानि।' ख.ग ञ. । २१ 'त्र चकारेण' ग. ।

**[ महेन्द्ररामकृष्णानां ब्राह्मणानां गवामपि ।**
**तपसा तेजसा वाऽपि प्रशाम्यध्वं शिवाय वै ॥ १ ॥**
**मन्त्रेणानेन मतिमान् सर्वमप्यौषधं नयेत् । ]**
**अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः ।**
**गृह्णीयादौषधं सुस्थं स्थितं काले च कल्पयेत् ॥ ५ ॥**
**सक्षीरं तदसम्पत्तावनतिक्रान्तवत्सरम् ।**
**ऋते गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः ॥ ६ ॥**
**पयो बाष्कयणं ग्राह्यं विण्मूत्रं तच्च नीरुजाम् ।**
**वयोबलवतां धातुपिच्छशृङ्गखुरादिकम् ॥ ७ ॥**

स०-अथेत्यानन्तर्यमङ्गलसूचकम् । भेषजमेवंविधं विदित्वाऽनन्तरं कल्याणं-स्वस्त्ययनादि, चरितं-अनुष्ठितं, येनासौ कल्याणचरितः, तथा श्राद्धः-भेषजहरणं प्रति श्रद्धावान्, तथा शुचिः-स्नानादिना शुद्धः, तथोपोषितः-कृतोपवासः, एवंविधमौषधमेवंविधं पुमान् गृह्णीयात् । तच्च भेषजं [सुस्थं-] स्वस्थं कृत्वा, स्थितं काले सक्षीरं-आर्द्रं, कल्पयेत् । तदसम्पत्तौ तु-तथाविधस्य सक्षीरस्यौषधस्यासम्पत्तौ, अनतिक्रान्तवत्सरं भेषजं कल्पयेत् । किं सर्वं द्रव्यमनतिक्रान्तवत्सरं कल्पयेत् ? ऋते इत्यादि । गुडादीन् वर्जयित्वा परमौषधमनतिक्रान्तवत्सरं कल्पयेत् । गुडादींस्तु अतिक्रान्तवत्सरान् कल्पयेत् ।

क्षीरं बष्कयण्याः सम्बन्धि ग्राह्यम् । विट् मूत्रं च, तच्च-क्षीरं च, नीरुजं-अपगतदोषं, ग्राह्यम् । वयोबलवतां धातुपिच्छादिकं ग्राह्यम् । आदिग्रहणात् चिकित्सितोपयोगि केशनखचर्मादिकं गृह्यते । वयःशब्दोपादानात् विशिष्टं तरुणं वयो गृह्यते, न ह्यवया कश्चिदस्ति ।

**आ० र०-ग्रहणस्थापनावचारणावधिमाह-अथेति । श्राद्धः-श्रद्धावान् । सक्षीरं-आर्द्रम्, तदभावे शुष्कम् । तच्च वर्षावधि, घृतादीनि विना । धान्यं-शाल्यादि । कृष्णा-पिप्पली । बाष्कयणं,-बष्कयणी-प्रौढवत्सा, तस्या विण्मूत्रं क्षीरं च । तन्नीरुजां-अरोगाणां, तरुणानां बलिनां च ग्राह्यम् । धात्वादिकं तद्वत् । सङ्ग्रहे तु ( क अ ८)-"अथ मङ्गलाचारः कल्याणवृत्तिः शुचिः शुक्लवासाः सपूज्य देवताश्विनौ गोब्राह्मणांश्च कृतोपवासः उदङ्मुखः प्राङ्मुखो वा गृह्णीयात् । गृहीत्वा चानुरूपगुणवद्भाजनसंस्थान्यागारेषु** पूर्वोत्तरद्वारेषु निर्वातप्रवातैकदेशेषु नित्यपुष्पोपहारबलिकर्मसु, अग्निसलिलोपस्वेदधूमरजोमूषिकचतुष्पदामनभिगमनीयानि स्ववच्छन्नानि शिक्येष्वासज्य स्थापयेत् ।" इति ।

**कषाययोनयः पञ्च रसा लवणवर्जिताः ।**
**रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पना ॥८॥**
**पञ्चधैव कषायाणां पूर्वं पूर्वं बलाधिका ।**

स०-कषायस्य योनयः-आकराः, लवणवर्जिता मधुरादयः पञ्च रसाः । तेभ्य एव कषायाः-स्वरसादयः, पञ्च सम्भवन्ति । लवणस्य तु स्वरसकल्पनायोगो न सम्भवति, सदैव शुष्करूपत्वात् । कल्ककल्पनाऽपि न सम्भवति, यतो यद् द्रव्यं द्रवेण सिक्तं पिण्डीभवति न तु विलीयते तत् कल्कसंज्ञामासादयति । तथा यद् द्रव्यं क्वाथयित्वा जलादुद्ध्रियते द्रव्यावयवास्तूदकमनुप्रविशन्ति, तत्रैव शृतकल्पना । लवणस्य तु विलीनरूपत्वादेव न सम्भवति इति शृतकल्पनाया अप्यसम्भवः । एवं शीतफाण्टयोरप्यनेनैव न्यायेनासम्भव इत्युक्तं लवणवर्ज्या रसाः कषाययोनय इति । मुनिनाऽप्युक्तम् (च. सू. अ. ४।६)-["कल्पनावशतः पञ्चानां रसानां कषायसंज्ञाव्यवहार इति । लवणस्य कल्पनायोगाभावात्] मधुरकषायोऽम्लकषायस्तिक्तकषायः कटुकषायः कषायकषायश्चेति ।" इति । रसानां स्वरसादिकल्पनायोगो न सम्भवति । उक्तं चैतत् । तस्मात् गुणगुणिनोरभेदोपचारादिह रसग्रहणेन तदाश्रयाणां द्रव्याणां ग्रहणं मन्तव्यम् । रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पना पञ्चधैव कषायाणां स्वरसादीनाम् । सा च कल्पना पूर्वं पूर्वं-यथापूर्वं, बलाधिका-अधिकशक्तिः । एवं फाण्टाख्या कल्पना सबला । ततोऽप्यधिकशक्तिः शीताख्या । ततोऽप्यधिकवीर्या शृताख्या । ततोऽप्यधिकशक्तिः कल्काख्या । कल्काख्याया चूर्णाख्यायाश्च कल्पनाया अन्तर्भावादपृथग्ग्रहणम् । कल्काख्यायाश्च कल्पनाया स्वरसाख्या कल्पना अधिकशक्तिः । ननु, चूर्णादनन्तरं कल्कः क्रियते न तु कल्कादनन्तरं चूर्णम् । तस्मात् पञ्चानां कल्पनानां मध्ये चूर्णकल्पनैव निर्देष्टुं युक्ता, न तु कल्ककल्पना । युक्तमाह भवान् । किन्तु लवणस्य कषायसंज्ञाया समावेशो माभूदिति कल्पनानां मध्ये कल्क इति निर्देशः कृतो न चूर्ण इति । तस्माल्लवणे न सम्भवति कषायसंज्ञासमावेशः ।

**आ० र०-कल्पनामाह-कषाययोनय इति । द्रव्यादुद्धृतसारभागः कषायः । लवणस्य तदभावस्त्वादयोनि-**

१ [ ] अ इ. पुस्तकयोरुपलब्धोऽयं सार्द्धश्लोकः । २ 'तपसां तेजसां वा० शमाय वै' अ । ३ "सुस्थं-शोभनस्थितम् । धातवः-रक्तमांसादयः । पिच्छ-पक्षसहति ।" इति चन्द्रः । ४ 'घृतगुडक्षौद्र' अ । ५ 'ण्मूत्रे तच्च नीरुजि ।' आ । ६ 'नीरुजम्' इ न अरुण. । ७ 'पित्तशृ' आ ख ञ । 'तुपुच्छ' अ ई क ग. । ८ 'नादिशु' न । ९ 'वत्सरं क' ट । १० 'दोषपिच्छा' ट । ११ 'रणविधि' ग घ प. । 'णाविधि' क । १२ 'तच्चावधि वर्षा' ख.ञ । 'च वर्षादर्वाक् वर्षा' ग । १३ 'विण्मूत्रे क्षी' क । १४ 'अरोगिणा' क । १५ 'वृत्तः शु' स स. । १६ 'ज्य च दे' स स । १७ 'वताश्वि' क.ख ग ञ. । १८ 'स प्राङ्मुख उदङ्मुखो' स द्व. । १९ 'वतिभाजने संस्थाप्यागा' ग. । 'जनेषु सस्थाप्यागा' क.ख.ञ. । 'जने सस्थाप्यागा' सं मू । १ 'निर्वातसवा' घ प । 'वातसवा' ख ञ. । २ 'कर्मवत्सु' स.स स च । ३ 'लिलातपस्वे' क । ४ 'दानभि' क ख ग ञ । 'दावनमि' स.मू. । ५ 'स्ववश्यानि' स.मू. । 'वच्छिन्ना' क.ख ग घ ञ प. । ६ "कल्पन-उपयोगार्थं प्रकल्पनं सस्करणमिति यावत् ।" इति चक्रः । ७ 'ल्पना' इ । ८ 'पञ्च चैव' इ प । ९ 'बलावहा.' आ । 'धिका' अ इ ई ख ग ञ न.प । १० [ ] पाठोऽयं मुद्रितसटीकचरकपुस्तके नोपलभ्यते । ११ 'वात् पृथग्ग्रहणं न । क' ट.न. ।

त्वम् । ते रसाद्यो यथापूर्वं बलवत्तराः । [ तत्रान्तरे-"रस क्वाथो हिम फाण्ट कल्कश्चूर्णं विवर्तिका । लेह स्नेहोऽथ सन्धान इत्येता द्रव्यकल्पना ॥ सद्य समुद्धृतात् क्षुण्णात् पटनिष्पीडितात् स्रवेत् । द्रव्यात्तु स च निर्यासो रस स्वरस उच्यते ॥ द्विरष्टपलिके तोये क्षुण्णद्रव्यपल स्मृतम् । तुर्यशेष स निर्यूह स्मृत क्वाथ कषायक ॥ शृत कषायो निर्यूह क्वाथो यूष क्रमश्च स । कृतयूष प्रमथ्या च द्रव्यात्कालीकृता स्मृता ॥ द्विपल मानमेतस्य केचिदाहुश्चतुःपलम् ।" इति[2] । ]

**सद्यःसमुद्धृतात् क्षुण्णाद्यः स्रवेत्पटपीडितात् ॥ ९ ॥ स्वरसः स समुद्दिष्टः**

स०-सद्य -तत्क्षण, समभूमे सम्यगुद्धृत—उत्खात, अनन्तर क्षुण्ण-पिष्ट, सद्य समुद्धृतक्षुण्ण, तस्मात्पटनिष्पीडिताद्य स्रवेत् स स्वरस कल्पनाकषाय समुद्दिष्ट -सज्ञया सङ्केतित ।

आ० र०-रसलक्षणमाह-सद्य इति । यस्मिन् दिने समुद्धृत तस्मिन्नेव दिने प्रक्षाल्य क्षुण्ण पटपीडित च यद्द्रव्य तस्य रस ।

**कल्कः पिष्टो द्रवाप्लुतः ।**

**चूर्णोऽप्लुतः**

स०-द्रवेणाऽऽप्लुत पिष्ट सन् कल्क इति कल्पनाकषाय सङ्केतित । यत् द्रव्य द्रवेण अप्लुत-शुष्कमेव पिष्ट, स कल्पनाकषायश्चूर्ण इति गदित । तेन कल्कस्यैवाय भेद इति, नासौ कल्पनेति शङ्कनीयम ।

आ० र०-कल्कलक्षणमाह-कल्क इति । शुष्कं द्रव्यं द्रवेणाप्लुत्य पिष्ट-कल्क, अनाप्लुत्य-चूर्ण । सङ्ग्रहे तु ( क अ ८ )-"उपलदशनादिपिष्टस्तु कल्क । सूक्ष्मतान्तवच्युतश्चूर्ण । तस्य समस्तद्रव्यापरित्यागादाप्लुतोपयोगाच्च कल्कादभेद ।" इति । दशनपेषणे लालैव द्रव । कल्कस्य पेषणे पाने चाप्लुतत्वम् । चूर्णस्य पान एव । समस्तग्रहणेऽप्यशक्यपेषणस्य त्यागान्न कषायलक्षणाभाव ।

**शृतः क्वाथः**

स०-यत् द्रव्य द्रवेणाऽऽप्लुत्य शृत स कल्पनाकषाय क्वाथ इति कथ्यते ।

आ० र०-शृतलक्षणमाह-शृत इति । क्वथनोद्धृत शुष्क द्रव्यरस -शृत । सङ्ग्रहे तु (क अ ८)-"स तु भेद्यान्यौषधान्यणुशो भेदयित्वा छेद्यानि च छेदयित्वा प्रक्षाल्योदकेन शुचौ रूक्षायामध प्रलिप्ताया ताम्रायोमृन्मयान्यतमस्थाल्या समावाप्य बहुलपपानीयग्राहितामौषधानामाकलय्य यावता मुक्तरसता स्यात्तावदुदकमासेचयेच्छोषयेच्च । अथाप्रावधिश्रित्य महत्यासने सुखोपविष्ट सर्वत सततमवलोकयन् दर्व्या च विघट्टयन् मृदुना परित समुपगच्छताऽनलेन साधयेत् । अवतार्य च सुपरिस्रुत यथार्हस्पर्श प्रयुञ्जीत । क्षीरादिसहित च द्रव्य न सम्यङ्मुक्तरस भवतीति वारिक्काथपूर्वक क्षीराद्यैस्तदुपदेशेऽनुपदग्ध क्वाथयेत् ।" इति । तदुपदेशे-क्षीरादिक्वाथोपदेशे, वारिक्वाथ कृत्वा त क्वाथ क्षीराद्यै सह सम क्षीरादिशेष क्वाथयेत् । एव ह्यनुपदग्ध द्रव्य भवति । केवलक्षीरादिपाके तूपदग्ध स्यात् ।

**शीतो रात्रि द्रवे स्थितः १०**

स०-यत् द्रव्य द्रवे सकला रात्रि स्थित स कल्पनाकषाय शीत इत्युच्यते ।

आ० र०-शीतलक्षणमाह-शीत इति । क्वथन विना क्वाथवत्सकलरात्रिस्थापितोद्धृत -शीतः ।

**सद्योऽभिषुतपूतस्तु फाण्टः**

स०-यत् द्रव्य द्रवेऽभिषुत्य सद्य पूत क्रियते स कल्पनाकषाय फाण्ट इति सङ्केतित ।

आ० र०-फाण्टलक्षणमाह-सद्य इति । सद्य -आलोडनसमनन्तरमेव पूत -फाण्ट । अभिषुत -आलोडित । आलोडन चोष्णोदकेन । उक्त हि सङ्ग्रहे (क अ ८)-"उष्णाम्भसि क्षुण्णाभिषुतपूत फाण्ट ।" इति ।

**तन्मानकल्पने ।**

**युञ्ज्याद्व्याध्यादिबलतस्तथा च वचन मुनेः ॥ ११ ॥**
**मात्राया न व्यवस्थाऽस्ति व्याधि कोष्ठं बलं वयः ।**
**आलोच्य देशकालौ च योज्या तद्वच्च कल्पना ॥१२॥**

स०-मान च कल्पना च मानकल्पने, तेषा-स्वरसादीना,

१ 'वलवन्त ।' घ प । २ [ ] एतच्चिह्नान्तर्गत पाठो ग घ प पुस्तकेषु नोपलभ्यते । ३ 'र्णं च वर्ति' क. । ४ 'यांसमुरस स्वरसाद्रस ।' ख ञ. । ५ 'द्धृतक्षु' आ ई अरुण । ६ 'पीडनात्' अ आ ग. चन्द्र । ७ 'सञ्ज्ञया' न । ८ 'स्मिन्नेव दिने' ख ञ । ९ 'रस स्वरस उच्यते ।' क । १० 'अप्लुत—' ट न । ११ 'ल्क । शुष्कपिष्ट सूक्ष्मतान्तवपटच्युत' स.स. । १२ 'पेषणालोडनेनैव द्रव. ।' ख.घ.ञ.प. ।

१ 'तत्र भेद्या' स स । २ 'तमाया स्था' स स । ३ 'बहुलपा' स मू । ४ 'हिणामौ' ख ञ । 'हितानामौ' ग स मू । ५ 'वद्बहूदक' ग । ६ 'व्या वि' क ग । 'र्व्याऽवघट्ट' ख ञ स. स । ७ 'र्यं च परि' क स स । 'र्यं सुप' घ प । 'र्यं तमुपस्रुत' ग । ८ 'परिशृत' क घ प । ९ 'यथासस्पर्श' ग । 'स्पर्श च प्र' घ प । १० 'वारिणा क्वाथ० सह सङ्गत क्षीराद्यवशेष' ग । ११ 'रात्रौ' ख ञ । १२ 'कला रात्रिं स्था' क ख ञ. । १३ 'स्थापनादुद्ध' ग । १४ 'भिक्षुण्णपूत' क । १५ 'ति । आलो' क ख घ ञ प । १६ 'पूत फा' स स । १७ "तथेत्यादिना पूर्वोक्तस्यैवार्थस्य प्रमाणीकरणम् । मुने -आत्रेयस्य, वचन यथा,—मात्राया व्यवस्था नास्ति, इति प्रतिज्ञानियमनिरासायोच्यते । व्याधितस्य व्याध्यादिबलापेक्षया मात्रा प्रयोज्या । कल्पना—स्वरसादिपरिकल्पना ।" इति चन्द्र । १८ 'न व्यवस्थान देह दोष बलं' स.मू । 'नास्त्यवस्थान दोषमग्नि बल' अ. ।

मानकल्पने [तन्मानकल्पने]। ते व्याध्यादिबलेन युञ्ज्यात्। आदिशब्देन कोष्ठबलादीना ग्रहणम् । तत्र सम्यग्रसवीर्यादीन् दोषवातवाद्यालोच्य प्रथममनन्तर व्याध्यादिबल च, तत स्वरसादीना मानकल्पने युञ्ज्यात्, न नियम कुर्वेत्यत आह–तथा च वचन मुने । मात्राया न व्यवस्थाऽस्ति व्याधिं कोष्ठ बल वय । आलोच्य देशकालौ च योज्या तद्वच्च कल्पनेति ।

आ० र०–उक्ताना कल्पनाना वक्ष्यमाणाना च मानाना विषयभेदानाह–तन्मानेति । व्याधिबलानुसारेण या कल्पना यया मात्रया यस्योचिता ता तया तस्य युञ्ज्यात् ।

**मध्यं तु मानं निर्दिष्टं स्वरसस्य चतुष्पलम् ।**

स०–मध्यम मान–मात्रा, स्वरसस्य चतुष्पलम् ।

आ० र०–मन्दबुद्ध्यर्थं तु मध्यम मानमुपदिश्यते । तत्र रसस्याह–मध्यमिति ।

**पेष्यस्य कर्षमालोड्यं तद् द्रवस्य पलत्रये ॥ १३ ॥**

स०–पेष्यस्य–उभयरूपस्य कल्कस्य चूर्णस्य वा, कर्ष मध्यम मानम्। तच्च–पेष्यस्य कर्ष, द्रवस्य पलत्रये प्रक्षिप्यालोड्यम्।

आ० र०–पेष्यस्याह–पेष्यस्येति । कल्कचूर्णयो कर्ष तदाऽऽलोडनद्रवस्य पलत्रयम् ।

**क्वाथं द्रव्यपले कुर्यात्प्रस्थार्धं पादशेषितम् ।**

स०–क्वाथ द्रव्यपले, द्रवस्य प्रकृतत्वात् तस्य प्रस्थार्ध दत्त्वा, तच्च श्रपणेन पादशेष कुर्यात्।

आ० र०–शृतस्याह–क्वाथमिति । शृते क्वाथ्यद्रव्यस्य पल, द्रवस्य षोडशपलानि, चत्वार्यवशेष्याणि ।

**शीतं पले पलैः षड्भिः**

स०–शीत कषाय पले द्रव्यस्य, षड्भि पलैर्द्रवस्य, कुर्यात्।

आ० र०–शीतस्याह–शीतमिति । शीते द्रव्यस्य पल द्रवस्य षट् पलानि ।

**चतुर्भिस्तु ततोऽपरम् ॥ १४ ॥**

स०–तत –शीतकषायात्, अपर–फाण्टाख्य, प्रकृतत्वात् द्रव्यस्य पले चतुर्भिर्द्रवस्य पलै कुर्यात्। पञ्चविधाया कषायकल्पनाया मध्यम मानम् । अस्माच्च मानात् देशकालादीन् समीक्ष्योनाधिकभावो मात्राया स्वबुद्ध्या कल्प्य ।

आ० र०–फाण्टस्याह–चतुर्भिरिति । फाण्टे द्रव्यस्य पलं द्रवस्य चत्वारि पलानि । अनयोरनवशेष्यत्व क्वथनाभावात्, यावत्पूत तावत्पेयम् । अत्र तन्त्रान्तरोक्तो विशेष –"कर्षश्चूर्णस्य कल्कस्य गुटिकानां च सर्वश । द्रवशुक्त्याऽवलेढव्य पातव्यश्च चतुर्द्रव ॥ क्वाथेन चूर्णपान यत्तत्र क्वाथप्रधानता । प्रवर्तते न तेनात्र चूर्णापेक्षी चतुर्द्रव ॥ तेन द्विपले क्वाथे चूर्णकर्ष । मात्रा क्षौद्रघृतादीना कल्कक्वाथेषु चूर्णवत् । आदिशब्दात् गुडतैलशर्करादीनि । षोडशाष्टचतुर्भाग वातपित्तकफार्तिषु ॥ क्षौद्र कषाये दातव्य विपरीता तु शर्करा । इत्येके ॥ उत्तमा स्यात् पल मात्रा त्रिभिश्चाक्षैश्च मध्यमा । जघन्या सा पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ॥ दीप्तानल महाकाय पाययन्त्यञ्जलि जलम् । अन्ये त्वर्द्ध परित्यज्य प्रसृति तु चिकित्सका ॥ क्वाथत्यागमनिच्छन्तस्त्वष्टभागावशेषितम् । पारपर्योपदेशेन वृद्धवैद्या पलद्वयम् ॥ स्याद्भित' साधितो यूषस्त्वष्टादशगुणे जले । चतुर्दशगुणे पेया यवागू' षड्गुणे जले ॥ शृत पञ्चगुणे भक्त विलेपी च चतुर्गुणे । क्वाथ्यद्रव्याञ्जलि क्षुण्ण श्रपयित्वा जलाढके ॥ अर्द्धस्थितेन तेनात्र यवाग्वाद्युपयोजयेत् । वृद्धवैद्या पल द्रव्य ग्राहयन्त्याढकेऽम्भसि ॥ भेषजस्यातिबाहुल्यात् कदाचिद्रुचिर्भवेत् । यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते ॥ कर्षमात्र ततो द्रव्य साधयेत्प्रास्थिकेऽम्भसि । अर्धस्थित प्रयोक्तव्य पाने पेयादिसविधौ ॥ कर्षार्ध वा कणाशुण्ठ्यो कल्कद्रव्यस्य वा पलम् । विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापरान् ॥ अत्र द्वात्रिंशत्पलजले क्वाथ्यस्य कर्षार्द्ध कर्ष पल वा तीक्ष्णसौम्यातिसौम्यत्वे सति, कणाशुण्ठ्योरिति षडङ्गादीति कल्कद्रव्यस्येति पदैस्तीक्ष्णादीना ग्रहणात् यस्य कल्कोऽप्यतिसौम्यत्वात् पातु शक्यते कि पुन क्वाथस्तत्कल्कद्रव्यस्य । अपरान्–सार्धकर्षद्विकर्षादीन्, युक्त्या–तीक्ष्णाद्यवान्तरविशेषपर्यालोचनया, पाचयेत् । आढकेऽञ्जलि पल वेत्येतत् प्रस्थे पल कर्षो वेत्यनेन गतार्थमप्यरुचिर्यथा न स्यात् तथा कल्प्यमित्येवमर्थमुक्तम् । द्रव्यादष्टगुण क्षीर क्षीरात्तोय चतुर्गुणम् । क्षीरावशेष कर्तव्य क्षीरपाके त्वय विधि. ॥ न स्यान्मुक्तरस सम्यग् द्रव्य क्षीरादिभि सह । तन्निर्देशे वारिपूर्व पादवत्साधयेद्भिषक् ॥ पूर्व षोडशभाग वारि चतुर्भागावशेष साधयेत्, पश्चात्तेन वारिणा तुल्यानि क्षीरादीन्यावारिक्षयात्पचेत् । शुष्क द्रव्यमुपादाय स्वरसानामसम्भवे । वारिण्यष्टगुणे साध्य ग्राह्य पादावशेषितम् ॥ आढक द्रव्यचूर्णानांसुत सलिलाढके । अहोरात्रस्थित कुर्यात्स्वरंस स्वरसेऽसति ॥ मृदौ चतुर्गुण वारि कठिनेऽष्टगुण स्मृतम् । कठिना-

१ 'भेदमाह' घ प । २ 'मध्यमान विनि' ई । ३ 'क्वाथद्र' क ख ञ. । 'क्वाथ्यस' घ प । ४ 'त्वारि चाव' ग. । ५ 'तुर्भिश्च' अ आ इ ग घ न । ६ 'ततः परम्' ई ख ग. । ७ 'योर्मात्रावशे' ग । ८ 'क्त्वा मुले' ग. । 'क्त्वा स ले' घ.प ।

१ 'ना क्वाथस्नेहेषु' घ प । २ 'फादिषु' ख ञ । ३ 'मा च पल' क ख ञ । 'त्तमस्य पल' घ प. । ४ 'न्या स्यात्पलार्द्धेन स्नेहे क्वा' ग । ५ 'ययेत्यञ्ज' ख ञ. । ६ 'च' क ख ञ । ७ 'तु' ख ञ. । ८ 'नाथ य' ग घ प । ९ 'यदाऽप्सु' ख ञ । १० 'ने भक्तादि' घ प. । ११ 'च' ग । १२ 'शक्य कि' ग । १३ 'स्तद्रव्यम् ।' घ प । 'त्कद्रव्यम् ।' क ख ञ । १४ 'र्धकर्षादीन्' ग. । १५ 'वयवान्त' घ प । १६ 'शेष कर्तव्य क्षी' क ख.ञ । १७ 'न्निर्दिशेद्वारि' ख घ ञ प । १८ 'यात्पाचयेत्' ग । १९ 'माश्रित' ख ञ. । २० 'रस. स्व' क. । २१ 'कठिन यच्छृत द्रव्य तत्र' ख.ञ. ।

त्कठिन यत्तु तत्र षोडशिक जलम् ॥ मृद्वादिक्वाथ्यसङ्घाते मानानुक्तौ चिकित्सका । मध्यस्योभयगामित्वादिच्छन्त्यष्टगुण जलम् ॥ पादशेष स्नेहविधौ क्वाथस्तोये चतुर्गुणे । ' इति ।

**स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्धितम् ।**
**कल्कस्नेहद्रव योज्यम्**

**स०**–स्नेहपाके विधानान्ये कल्कस्नेहद्रवाणाममानोक्तौ–मानवचनस्य विशिष्टस्यानिर्देशे, चतुर्गुणविवर्धित कल्कस्नेहद्रव योज्यम् । कल्कश्च स्नेहश्च द्रवश्च तेषा समाहार कल्कस्नेहद्रवम् । तदेव कल्कात् स्नेहश्चतुर्गुण स्नेहात् द्रवश्चतुर्गुण इति बोध्यम् । पञ्चप्रभृति तु द्रव पृथक् स्नेहसम दद्यादित्यत्र योज्यमिति ।

**आ० र०–स्नेहपाके मानमाह–स्नेहपाक इति । कल्काच्चतुर्गुण स्नेह , स्नेहाच्चतुर्गुण द्रवम् ।**

**अधीते शौनक पुनः ॥ १५ ॥**
**स्नेहे सिद्ध्यति शुद्धाम्बुनि क्वाथस्वरसै. क्रमात् ।**
**कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥ १६ ॥**

**स०**–शौनकाख्यस्तु तन्त्रकृदधीते–एव पठति । स्नेह इत्यादि । स्नेह कदाचिच्छुद्धाम्बुना पच्यते कदाचित्तु क्वाथेन कदाचित्स्वरसेनेति । तै शुद्धाम्बुनि क्वाथस्वरसै स्नेहे सिद्ध्यति सति क्रमेण कल्कस्याश चतुर्थ षष्ठमष्टम योजयेदिति ।

**आ० र०–शौनकमतमाह–अधीत इति । निष्क्वाथे द्रवे कल्कात्षड्गुण स्नेह , स्वरसेऽष्टगुण स्नेह , अन्यत्र चतुर्गुण । क्षीरादिषु शुद्धाम्बुप्रक्षेपस्यावकाशत्वात् रसक्वाथयो. परस्परमन्यैर्वा सङ्करे सामान्यपरिभाषाविषयत्वात् । सङ्कीर्णे हि द्रवान्तरम् । "शणस्य कोविदारस्य वृषस्य ककुभस्य च । कल्कौघ्यत्वात्प्रशसन्ति पुष्पकल्क चतुर्थकम् ॥" इति ।**

**पृथक् स्नेहसमं दद्यात्पञ्चप्रभृति तु द्रवम् ।**

**आ० र०–विशेषान्तरमाह–पृथक् स्नेहसममिति । यत्र चतुर्भ्योऽधिकानि द्रवाणि तत्र पृथक्स्नेहसमानि, न यत्र चतुर्भ्योऽधिकानि द्रव्याणि तत्र तु परस्परसाम्येन मिलितानि स्नेहाच्चतुर्गुणानि । सङ्ग्रहेऽप्युक्तम् ( क अ ८ )–"समुदितद्रवस्य पादेन स्नेहो योज्य ।" इति । सर्वद्रवाणा युगपत्प्रक्षेप , " अथैकध्य प्रति ससृज्यौधिश्रित्य च निर्यूहवत्साधयेत् ।" इति ( क अ ८ ) सङ्ग्रहवचनात् । अनिरूपितकल्पन च भैषज्य कल्कीकुर्यात् । कल्कानुक्तौ निरूपितकल्पनमिति, "यत क्वाथस्तत कल्क केवलक्वाथभाषिते ।" इति वचनात् ।**

स्नेहपाकलक्षणमधुना लक्षयन्नाह–

**नाङ्गुलिग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता ॥ १७ ॥**
**वर्णादिसम्पच्च यदा तदैनं शीघ्रमाहरेत् ।**
**घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः ॥ १८ ॥**

**स०**–कल्कविषयेऽङ्गुलिग्राहित्व यदा न भवति, अग्नौ प्रक्षिप्ते वा स्नेहे सशब्दता–चटचटायित्व न भवति, तथा वर्णगन्धरसस्पर्शाना यदा सम्पत्–शुभत्व स्यात्, तदा–तस्मिन् काले, अश्यामलच्छायामन्त स्नेह शीघ्रमाहरेत् । अग्नित स्नेहस्य कटाहस्थितस्य स कालोऽवतरण इत्यर्थ । अन्यदपि स्नेहपाकलक्षणमस्ति—घृतस्येति । घृताख्यस्य स्नेहस्य सम्यक्पाक प्राप्तस्य फेनोपशमो यदा जायते, तैलाख्यस्य च स्नेहस्य पच्यमानस्य तदुद्भव –फेनोत्पत्ति स्यात्, तदा घृततैलयो पाको भवति ।

**आ० र०–पक्वस्नेहलक्षणमाह–नाङ्गुलिग्राहितेति । उक्त च वृन्देन ( ज्वराधिकारे श्लो २६५ )–"स्नेहकल्को यदाऽङ्गुल्या वर्तितो वर्तिवद्भवेत् । वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धि विनिर्दिशेत् ॥ शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा । गन्धवर्णरसाना च सम्पत्तौ सिद्धमादिशेत् ।" इति । घृततैलयो फेनोपशमोद्भवौ विशेषौ ।**

**लेहस्य तन्तुमत्ताऽप्सु मज्जनं सरण न च ।**

**स०**–लेहस्य पाक प्राप्तस्य तन्तुमत्ता–तन्तुप्रादुर्भाव पाक । तथाऽप्सु मज्जन पाकलक्षण सरणासरणरूपतया द्विधा सम्भवत्यत इदमाह–सरण न च । सर्वलेहस्याप्सु मज्जन भवति न तु सरण–अवयवशो गमनम्, तथाऽपि तस्य पाक सम्पन्न इति वेद्यम् ।

**आ० र०–पक्वलेहलक्षणमाह–लेहस्येति । तन्तुमत्त्वमुदकमज्जनमविसरण च । स्नेहलेहौ क्वाथभेदौ । तयोर्मान "उत्तमा स्यात्पल मात्रा" इत्यादिनोक्तम्, क्वाथ्यौषधशब्देन लेहस्यापि ग्रहणात् ।**

---

१ 'यच त' क ग. । २ 'नस्याविशिष्टविनिर्देशे' ट । ३ 'स्नेहसिद्ध समावायमित्यत्र' (?) न. । 'स्नेहसमावामपि अत्र' (?) चन्द्र । ४ 'म् । द्रव तु पञ्चप्रभृति पृथक् स्नेहसम क्षिपेत् ॥ शुष्कद्रव्य यदा न स्यात्तदा सद्य समुद्धृतम् । द्विगुण तत्प्रयोक्तव्य कुडवादि द्रव तथा ॥ नाङ्गु' अ इ क ख ग ञ. । ५ 'कमानमाह' घ प । ६ 'गुण । अत्र' घ प । ७ 'प्रतिक्षेप' क ख ञ. । ८ 'द्रवोत्तरम्' घ प । ९ 'वा' क । १० 'ल्काथत्वा' ख घ ञ प । ११ 'न तु परस्पर' घ प. । १२ 'दितस्य द्र' स. इ. । १३ 'तथै' ख ग.ञ. । 'तथैकधा प्र' क. । १४ 'धिश्रित्य' ग. ।

१ 'नमपि' घ प । २ 'कल्को भाषि' ग । 'कल्क. केवले क्वा' क. । 'कल्क ', इति परिभाषितवच' घ प. । ३ 'च' अ इ. । ४ 'ले ह्यामलकच्छायमेन स्नेह' ट । ५ 'हस्य फेनो' ट । ६ 'हस्य तदु' ट । ७ 'हस्य ल' ग । ८ 'सिद्धि' वृन्द । ९ 'ब्दस्योपरमे' वृन्द । 'परमप्राप्तौ फेनस्योपरमस्तथा' ग । १० 'सिद्धिमा' ख.ग ञ. वृन्द । ११ 'शमफेनोद्गमौ द्रवविशेषात् ।' क ख ञ । १२ "तन्तुमत्ता–तन्तुप्रादुर्भावो मृद्यमानस्याङ्गुलिभ्याम् । अप्सु मज्जन–ब्रुडनम् । न च शरण–अनेकशो गमनम् , तथाभवे एकत्र पिण्डितत्वादवस्थितिर्भवेत् ।" इति चन्द्र । १३ 'शरण' घ न चन्द्र , ट । १४ 'लेहस्य ल' क ख ञ । १५ 'विशीर्णत्व' घ प । १६ 'क्वाथायभेदौ' ख ञ । १७ 'त्तमस्य पल' ख ग.घ.ञ.प. ।

**पाकस्तु त्रिविधो मन्दश्चिक्कण खरचिक्कण ॥ १९ ॥**
**मन्दः कल्कसमे किट्टे चिक्कणो मदनोपमे ।**
**किञ्चित्सीदति कृष्णे च वर्त्य(र्ति)माने च पश्चिमः॥२०**
**दग्धोऽत ऊर्ध्व निष्कार्य स्यादामस्त्वग्निसादकृत् ।**

स०–पाकस्त्रिप्रकारो मन्दश्चिक्कण खरचिक्कणाख्य [ च ]। स्नेहपाकविधौ किट्टाख्ये वस्तुजाते कल्कसमे यथा कल्कोऽङ्गुलिनाऽवष्टभ्नाति, तथा किट्टेऽपि स्नेहपाकस्याङ्गुलिग्राहिता न भवति, स स्नेहपाको मन्द उच्यते। मदनोपमे किट्टे सत्येवमङ्गुलिग्राहिणि स्नेहपाकस्य स चिक्कण पाक । किञ्चित्–ईषत्, किट्टे सीदति सति तथा वर्णत कृष्णे च तस्मिन्, तथा वर्त्य(ति)माने–वर्तिमा(ता)गच्छति सति, पश्चिम –खरचिक्कणाख्य पाक । अत – अस्मात् खरचिक्कणात ,ऊर्ध्व–अनन्तर, दग्धो भवति स्नेह । स च निष्कार्य स्यात्–यथानिरूपितकार्यकरणो न भवेत , निर्वीर्यत्वात् । आम –ईषत्पाक स्नेह , पुनरग्निमादकृत् ।

**आ० र०–स्नेहपाकभेदानाह–पाकस्त्विति । तत्र कल्कसमे किट्टे मन्द । पाकेन स्नेहात्पृथग्भूत कल्क –किट्ट । वैवर्ण्याद्यभावात् कल्कसमत्वम् । मदनोपमे चिक्कण । मदन–मधूच्छिष्टम् । पश्चिम –खरचिक्कण । सीदति–ग्लायति । अत ऊर्ध्व–पश्चिमादूर्ध्व दग्ध , स च निष्फल । मन्दादर्वाक्–आम , स चाग्निमान्द्यकृत् ।**

**मृदुर्नस्ये, खरोऽभ्यङ्गे, पाने वस्तौ च चिक्कणः ॥२१॥**

स०–मृदु –मन्दपाक स्नेहो, नस्ये–तद्विषये, प्रयोज्य । खर –खरचिक्कण स्नेह , अभ्यङ्गे–तद्विषये, प्रयोज्य । पाने तथा बस्तौ–तद्विषये, चिक्कण प्रयोज्य ।

**आ० र०–त्रयाणा विषयभेदानाह–मृदुरिति ।**

अधुना मानसङ्ख्याया यथास्व सज्ञासविधानार्थमाह—

**शाण पाणितल मुष्टि कुडवं प्रस्थमाढकम् ।**
**द्रोण वह च क्रमशो विजानीयाच्चतुर्गुणम् ॥ २२ ॥**

स०–शाणादयो वहपर्यन्ता क्रमेण चतुर्गुणा पाणितलादिसज्ञा वेद्या ।

**आ० र०–मानभेदानाह–शाणमिति । शाणादयोऽष्टौ यथोत्तर चतुर्गुणा । शाणमान तु सङ्ग्रहेणोक्तम् (क अ ८)– "षड्ध्वंश्यो–मरीचि । ता षट्–सर्षप । तेऽष्टौ–तण्डुल । तौ–धान्यमाष । तौ–यव । अत पर चतुर्गुणवृद्ध्या अण्डिकामाषकशाणा ।" इति। वशी–वशरन्ध्रप्रविष्टरश्मिस्थ रज ।**

**द्विगुणं योजयेदार्द्र कुडवादि तथा द्रवम् ।**

स०–शुष्कार्द्रयोरेकस्मिन् योगे तुल्यपरिमाणेन निर्दिष्टयो शुष्कद्रव्यादार्द्र द्रव्य द्विगुण दत्त्वा योजयेत् । शुष्कार्द्रयोर्वा द्रव्ययोस्तुल्यपरिमाणनिर्दिष्टयो शुष्कद्रव्याभावे सत्यार्द्र द्रव्य द्विगुण कृत्वा योजयेत् । शुष्कद्रवद्रव्ययोरेकस्मिन् योगे तुल्यपरिमाणेन निर्दिष्टयो शुष्कद्रव्यात् द्रवद्रव्य कुडवादिपरिमाणसज्ञया निर्दिष्ट द्विगुण कृत्वा योजयेत् ।

**आ० र०–आर्द्रद्रवयोर्विशेषमाह–द्विगुणमिति । आर्द्र त्वौषध द्विगुण योजयेत् ,पलमित्युक्ते पलद्वयम् । कुडवादि द्रव च,कुडव इत्युक्ते कुडवद्वयम् । ' वासाकुटजकूष्माण्डशतपुष्पासहाचरा । नित्यमार्द्रा प्रयोक्तव्या मानतो द्विगुणा न ते ॥" इत्येके ।**

**पेषणालोडने वारि स्नेहपाके च निर्द्रवे ॥ २३ ॥**
**कल्पयेत्सदृशान् भागान् प्रमाण यत्र नोदितम् ।**
**कल्कीकुर्याच्च भैषज्यमनिरूपितकल्पनम् ॥ २४ ॥**
**अङ्गानुक्तौ तु मूल स्यादप्रसिद्धौ तदेव तु ।**

स०–निर्द्रवे–अनुक्तद्रवे, पेषणालोडनार्थ वारि योजयेत् । स्नेहपाके चानुक्तद्रवे वार्येव योजयेत् ।

यत्र यत्र प्रयोगे द्रव्याणा परिमाण विशिष्ट नोक्त तत्र तत्र द्रव्याणा सदृशान् भागान् कल्पयेत् ।

**आ० र०–अनुक्तज्ञानार्थमाह–पेषणालोडन इति । पेषणालोडनस्नेहपाकेष्वनुक्तद्रवेषु वारि योज्यम् । प्रमाणानुक्तो समभागत्वम् । कल्पनानुक्तौ कल्क । अङ्गानुक्तौ मूलम् । अप्रसिद्धौ तदव । यथा–हरीतकीत्युक्ते फलम् । "अनिर्दिष्टाप्रसिद्धेषु मूल ग्राह्य त्वगादिषु ।" इति (क अ ८) सङ्ग्रहवचनात् ।**

**[ षड्ध्वंशयस्तु मरीची स्यात् , षण्मरीच्यस्तु सर्षपः ।**
**तण्डुल सर्षपास्त्वष्टौ, धान्यमाषस्तु तौ, यवः ॥१॥**
**तावण्डिका चतुर्भिस्तैर्माषकः शाणकस्तथा । ]**
**द्वौ शाणौ वटक कोल बदरं द्रक्षणश्च, तौ ॥ २५ ॥**
**अक्षं पिचुः पाणितल सुवर्ण कवलग्रह ।**
**कर्षो बिडालपदक तिन्दुकः पाणिमानिका ॥ २६ ॥**
**शब्दान्यत्वमभिन्नेऽर्थे शुक्तिरष्टमिका पिचू ।**
**पलं प्रकुञ्चो बिल्व च मुष्टिराम्रं चतुर्थिका ॥ २७ ॥**
**द्वे पले प्रसृतस्तौ द्वावञ्जलिस्तौ तु मानिका ।**
**आढक भाजन कसो, द्रोण कुम्भो घटोऽर्मणम् २८**
**तुला पलशतं, तानि विंशतिर्भार उच्यते ।**

स०–द्वौ शाणौ वटक कोल बदर द्रक्षणश्चेत्यत्र शब्दान्य-

१ "कल्कसम –अतिमार्दवात् । सीदति–सङ्घात न गृह्णाति ।" इतीन्दु । २ 'वर्तमाने' इ क प स मू चन्द्र । ३ 'तु' स द्व । ४ 'वर्ति गच्छ'ट । ५ 'भवति' ट । ६ 'ग्भूतकल्क –किट्टम् ।' क। ७ "चतुष्षष्टिसङ्ख्यैर्यवै –शाणम् ।" इति चन्द्र । ८ चन्द्रनन्दनेन तु "द्वौ शाणौ० उच्यते ॥" इति चत्वार श्लोका अस्माग्रे एव पठिता व्याख्याताश्च । ९ 'शाणाद्यष्टौ' ग ।

१ 'बलाकु' घ.प । २ इद श्लोकार्ध ख ञ पुस्तकयोरुपलब्ध हेमाद्रिसम्मत च । चन्द्रनन्दनस्तु 'अङ्गानुक्तौ' इत्यत्र "अनिर्दिष्टाप्रसिद्धेषु मूल ग्राह्य त्वगादिषु ।" इति श्लोकार्ध पठति व्याख्याति च। ३ 'मू। प्रसिद्धेऽङ्गे त' ग । 'मू। प्रसिद्धेऽप्येत' घ प । ४ [ ]आ क ख ञ पुस्तकेषूपलभ्योऽय सार्धश्लोक । ५ 'षश्च तौ यव ॥ तैस्तुर्यैर्गुञ्जका माषस्तुर्याभि शाणक स्मृत ।' क ख ञ । 'व ॥ तावन्तो गदिता माषा शाणोऽय मुनिभि स्मृत ।' आ । ६ तथा–ताभिश्चतसृभिरण्डिकाभिर्माषक., तैश्चतुर्भिर्माषकै शाणक इत्यर्थ । ७ 'कोलो' क ख ञ । ८ 'ग्रहम्' क ख ञ । ९ 'तिन्दुक'ई ख ग घ ञ न प स द्व । १० 'ब्दा ह्यमी अभिन्ने'प । 'ब्दानेवमभि' इ । ११ 'सृतिस्तौ' अ.आ.इ घ.प. । १२ 'तासा वि' ई ।

त्वम्, न तु तत्त्वतो भेद । तौ द्वौ द्रक्षणावक्ष तथा पिचुस्तथा पाणितल तथा सुवर्ण तथा कवलग्रहस्तया कर्षस्तथा विडालपद तथा तिन्दुकस्तथा पाणिमानिका, इत्यत्राभिन्नेऽर्थे शब्दानेकत्वम् । तथा द्वौ पिचू शुक्तिस्तथाऽष्टमिका,इत्यत्रापि शब्दान्यत्वमर्थैक्ये सति । पल प्रकुञ्चो बिल्व च मुष्टिराम्र चतुर्थिका, इत्यत्रापि शब्दाना वैलक्षण्ये सति नार्थतो भेद । द्वे पले प्रसृत इत्युच्यते । तौ द्वौ प्रसृतावञ्जलि कथ्यते । तौ द्वावञ्जली मानिका,—अष्टौ पलानीत्येव । आढकादीना शब्दाना स्वरूपतो भिन्नाना नार्थतो भेद । तथैव द्रोणादीना शब्दानाम् । पलशत तुला निगद्यते । तानि—पलशतानि, विंशतिर्भार उच्यते । क्वाथादीना तूत्तमादिमात्रा सङ्ग्रहादवधार्या । सङ्ग्रहे त्वेव पठ्यते (क अ ८)—"क्वाथो निर्यूह । तत्र भेद्यान्यापवान्यणुशो भेदयित्वा छेद्यानि च छेदयित्वा प्रक्षाल्योदकेन शुचौ स्थाने मध्य प्रलिप्ताया ताम्रायोमृन्मयाद्यन्यतमाया स्थाल्या समावाप्य बहुलपपानीयग्राहित्वमोपधानामाकल्प्य यावता मुक्तरसता स्यात् तावदुदकमासेचयेच्छोपयेच्च । [अग्नावग्निश्रयेत् । यावन्मात्रोदकदाने तथा तदवशिष्टत्वे च तत्र नियमसामर्थ्यात् क्वाथ्यद्रव्यपरिमाणस्य । अत्रेयत्परिमाणानि द्रव्याणि, उदकमियत्प्रमाण, तदवशिष्टता चेयत्प्रमाणा, इति न नियमोक्तिरेवविधा विद्यते । किं तर्हि ? अभ्यूहनीयमेतत्सर्वमिति । अत्र विधि ।] अथाग्नावग्निश्रित्य महत्यासने सुखोपविष्ट सर्वत सततमवलोकयन् दर्व्या च विघट्टयन् मृदुना च परित समुपगच्छताऽनलेन साधयेत् । अवतार्य च सुपरिस्रुत यथार्हस्पर्श प्रयुञ्जीत । क्षीरादिसहित च द्रव्य न सम्यङ्मुक्तरस भवतीति वारिक्वाथपूर्वक क्षीराद्यैस्तदुपदेशेऽनुपदश्च क्वाथयेत् । शीतसलिलार्द्धन्तु निशापर्युषित पूत शीत कषाय । उष्णाम्भसि क्षुण्णाभिषुत पूत फाण्ट इति । तत्र सम्यग्रसवीर्यादीन्यौषधस्य समीक्ष्य व्याध्यातुरादिबलतश्च निर्यासादीना कल्पना मात्रा च सम्प्रयोजयेत् । तथा च केचिदाहु । मात्राया न व्यवस्थाऽस्ति व्याधि कोष्ठ बल वय । आलोच्य देशकालौ च भैषज्यमवचारयेत् ॥ [ एव च सर्वमभ्यूह्यात्र कर्तव्य निश्चित कृत्वोक्तेन विधिनेति । ] एतदेवमुपदिष्ट बुद्धिमता ज्ञानप्रबोधाय । यथा तु सर्वे भिषजो विज्ञास्यन्ति तथैवोपदेक्ष्यत इति । निर्यासे मध्यमा मात्रा चतुष्पलम् । कल्कचूर्णयो कर्ष पलत्रय तदालोडने । निर्यूहे भेजपलमुदकार्धप्रस्थेऽधिश्रित्य पादशेषमवतारयेत् । शीतफाण्टयोरौषधपल षड्भिश्चतुर्भिरम्बुपलैरासुतमिति ।" इति ।

तथा शाणपरिमाणस्य पाणितलवाचकस्य [ च ] किमपि परिमाण नोक्त येनासौ [ न ] परिच्छिद्यत इति न वाच्यम्, सङ्ग्रहे तत्परिमाणस्योक्तत्वात् । तत्र ह्येवमुक्तम् (स क अ ८) —"षड्वस्यो मरीची । ता षट् मरीच्य सर्षप उच्यते । अष्टौ सर्षपास्तण्डुल । तौ द्वौ तण्डुलावेको धान्यमाष । तौ द्वौ धान्यमाषौ यव । अत पर चतुर्गुणवृद्ध्याऽण्डिकामाषकशाणकर्षपलकुडवप्रस्थाढकद्रोणवहा कल्प्यन्ते । [एव चतुर्भिर्माषकै शाणस्य परिमाण परिच्छिद्यते ।] धरण तु पलस्य दशमो भाग । माषकस्य तु पर्यायो हेम । कर्षस्य षोडशिका । आढकस्य तु पर्याया कस पात्र भाजन च । द्रोणस्य पर्यायो नल्वण, तथा अर्मण, तथोन्मान, तथा घट कुम्भ कलशश्च । द्रोणद्वयस्य च शूर्प ।" इति ।

**आ० र०**—सञ्ज्ञान्तरमाह—द्वौ शाणाविति । शाणद्वयस्य वटकादयश्चतस्र सञ्ज्ञा । वटकद्वयस्याक्षादयो नव षोडशिका च । अक्षद्वयस्य शुक्त्यष्टमिके द्वे । शुक्तिद्वयस्य पलादय षट् । पलद्वयस्य प्रसृत । प्रसृतद्वयस्याञ्जलि कुडवश्च । अञ्जलिद्वयस्य मानिका । आढकादयस्तिस्र एकार्था । द्रोणादयश्चतस्र [च] । पलशत—तुला । विंशतिस्तु भार । सङ्ग्रहे तु (क अ ८) —"धरण तु पलस्य दशमो भाग । माषकस्य पर्यायो हेमो धानकश्च । पलद्वयस्याष्टमानम् । द्रोणद्वयस्य शूर्प ।" इति ।

**हिमवद्विन्ध्यशैलाभ्या प्रायो व्याप्ता वसुन्धरा ॥२९॥**
**सौम्य पथ्य च तत्राद्यमाग्नेय वैन्ध्यमौषधम् ॥२९½॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचिताया मष्टाङ्गहृदयसंहिताया पञ्चमे कल्पसिद्धिस्थाने द्रव्यकल्पो नाम षष्ठोऽध्यायः ॥ ६ ॥**

**स०**—हिमवत्पर्वतेन विन्ध्यशैलेन च बाहुल्येन वसुन्धरा व्याप्ता । तत्र—तयोर्मध्यात्, आद्य—हैमवतमौषध, सौम्य पथ्य च स्वभावाद्भवति । वैन्ध्य चौषधमाग्नेय—न तथा देहस्य सदा पथ्य, स्यादिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया पञ्चमे कल्पसिद्धिस्थाने द्रव्यकल्पो नाम षष्ठोऽध्याय समाप्त ॥ ६ ॥

**आ० र०**—शैलभेदाद्द्रव्यविशेषमाह—हिमवदिति ।
इति हेमाद्रिटीकायामायुर्वेदरसायने ।
द्रव्यकल्पप्रकरण सामस्त्येन निरूपितम् ॥ ६ ॥

१ 'तमस्था' स मू । २ 'बहुलपा' स मू । ३ 'तानामौ' स मू । *४ [ ] एतच्चिह्नान्तगत पाठ सङ्ग्रहहृदये नोपलभ्यते । ५ 'यावत्येव मात्रो' न । 'यावत्योदकमात्रदाने' ट । ६ 'मिति । अथा' ट । ७ 'र्व्याऽवघट्ट' स स । ८ 'पुतस्तु निशापर्युषितपूत शीत ।' स स । ९ 'षुतपूत फाण्ट ।' स मू । 'षुतपूत फाण्ट ।' स.स । १० 'कल्पनाना' स मू । ११ 'सश्रयेत्' स द्व । १२ "च योज्या तद्वच्च कल्पना ॥" स स । १३ 'व्य न निश्चि' न. । १४ 'इत्यल तदेव' स मू । 'इत्यलमेतदुप' स स । १५ 'प्रबोधनाय' ट न । १६–१७–१८–१९ 'सर्वभिष' 'तथोपदे' 'निर्यासस्य' 'शेषितमव' स.द्व. । २० 'षड्चतुर्भि' स.स. ।

१ 'षट् सर्षप । तेऽष्टौ तण्डुल । तौ धान्यमाष । तौ यव ।' स द्व । २ 'प्रसृतम् ।' क ख ञ । 'प्रसृति । प्रसृतिद्व' घ प । ३ 'स्र एकार्था ।' घ प । ४ "वसुन्धरा—पृथिवी । हिमवद्विन्ध्यशैलाभ्या—हिमाचलविन्ध्याचलाभ्या, व्याप्ता—उत्तरविभागे हिमवता दक्षिणविभागे विन्ध्याचलेन व्याप्तेत्यर्थ । सौम्य—शीतलम् । पथ्य—हितकारि । आग्नेय—अग्निगुणभूयिष्ठ पित्तकारि भवति । एतेन च सर्वाण्यौषधानि उत्तरदिग्भवानि सौम्यानि पथ्यानि च भवन्तीत्यर्थ ।" इति चन्द्र । ५ 'सौम्य तत्राद्यमाग्नेय वैन्ध्यमौषधमीरितम् ।' ई ।



श्रीमद्वाग्भटविरचिते

# अष्टाङ्गहृदये उत्तरस्थानम्[1]।

श्रीमदरुणदत्तविरचितया सर्वाङ्गसुन्दराख्यव्याख्यया समुल्लसितम्।

## प्रथमोऽध्यायः।

श्रीगणेशायनमः। अनन्तरमुत्तरस्थानारम्भः। यतः कायाख्यमाद्यमङ्गम्। तच्च पूर्वैः स्थानैः सर्वमुक्तम्। अधुना बालादीनामुत्तरेषामङ्गानामवसर इत्युत्तराख्यं स्थानमुच्यते। तत्रापि यथोद्देशस्तथा निर्देश इति बालाख्यमङ्गं विवक्षुराह—

**अथातो बालोपचरणीयमध्यायं[2] व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**
(गद्यसूत्रे॥ २॥)

**स०**—बालस्य-शिशोः, उपचरणं बालोपचरणम्, तस्मै हितं। शेषं पूर्ववत्। इतीत्यादिना स्वमनीषिकापरिकल्पितत्वमस्य तन्त्रस्य निराकरोति।

**जातमात्रं विशोध्योल्बाद्[3]बालं सैन्धवसर्पिषा।**
**प्रसूतिक्लेशितं चानु बलातैलेन सेचयेत्॥ १॥**
**अश्मनोर्वादनं चास्य कर्णमूले समाचरेत्।**
**अथास्य दक्षिणे कर्णे मन्त्रमुच्चारयेदिमम्॥ २॥**

**स०**—जातमात्रं-सद्य एवोद्भूतं, बालमुल्बात्-अपरापरपर्यायात्, सैन्धवयुक्तेन घृतेन विविधैः प्रकारैः शोधयित्वा पश्चात् प्रसूत्या-प्रसवेन, क्लेशितं बालं बलातैलेन सेचयेत्। पश्चात् पाषाणयोर्वादनमस्य कर्णमूले कारयेद्वैद्यः। अनन्तरमस्य दक्षिणे कर्णे इमं-वक्ष्यमाणं, मन्त्रमुच्चारयेत्।

तमेव मन्त्रमाह—

**"अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे।**
**आत्मा वै पुत्रनामासि सञ्जीव[4] शरदां[5] शतम्॥ ३॥**

१ अस्मिन्नुत्तरस्थाने हेमाद्रिप्रणीताऽऽयुर्वेदरसायनाख्या टीका न कुत्राप्युपलभ्यते। २ अयं बालोपचरणीयश्चरके शा० ८ अध्याये, सुश्रुते शा० १० अध्याये, अष्टाङ्गसङ्ग्रहे उ० १ अध्याये चास्ति वर्णितः। ३ "तथा चागमः—वेष्टितो जायते येन शिशुरुल्बः स कीर्तितः।" इति चन्द्रः। ४ 'सजीव' स स.। ५ 'शरदः' इ.।

**शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि।**
**नक्षत्राणि दिशो रात्रिरहश्च[1] त्वाऽभिरक्षतु" ॥ ४॥**

**स०**—अङ्गादित्यादि।

**स्वस्थीभूतस्य[2] नाभिं च सूत्रेण चतुरङ्गुलात्।**
**बद्ध्वोर्ध्वं वर्धयित्वा च[4] ग्रीवायामवसञ्जयेत्[5]॥ ५॥**
**नाभिं च[3] कुष्ठतैलेन सेचयेत्स्नापयेदनु[6]।**
**क्षीरिवृक्षकषायेण सर्वगन्धोदकेन वा॥ ६॥**
**कोष्णेन तप्तरजततपनीयनिमज्जनैः।**

**स०**—समाश्वस्तस्य च बालस्य नाभिं चतुरङ्गुलादूर्ध्वं सूत्रेण बद्ध्वाऽनन्तरं[7] छेदयित्वा ग्रीवायां योजयेत्। नाभिं च कुष्ठतैलेन सेचयेत्। अनु-पश्चात्, क्षीरिवृक्षकषायेण स्नापयेत्। अथवा सर्वेषां गन्धानां-चन्दनादीनां[8], जलेन स्नापयेत्। किम्भूतेन? कोष्णेन। कथम्? तप्ताभ्यां-उष्णाभ्यां, रूप्यसुवर्णाभ्यां निमज्जनैः—असकृत्सेचनैः।

**ततो दक्षिणतर्जन्या तालून्नम्यावगुण्ठयेत्॥ ७॥**
**शिरसि स्नेहपिचुना, प्राश्यं[9] चास्य प्रयोजयेत्।**
**हरेणुमात्रं[10] मेधायुर्बलार्थमभिमन्त्रितम्॥ ८॥**
**ऐन्द्रीब्राह्मीवचाशङ्खपुष्पीकल्कं घृतं मधु।**

**स०**—अनन्तरं दक्षिणहस्ततर्जन्या वैद्यस्तालु उन्नम्य शिरसि पिचुना तैलाक्तेनावगुण्ठयेत्। अस्य च-बालस्य, प्राश्य-लेह,

१ 'श्चत्वारि र' उ। २ "स्वस्थीभूतस्य-प्रत्यागतप्राणस्य प्रकृतिभूतस्य, नाभिं-नाभिनालं, सूत्रेण बध्वा तीक्ष्णेन शस्त्रेण वर्धयित्वा ग्रीवायां सूत्रेणावसञ्जयेत्-बध्नीयात्॥ अश्वत्थोदुम्बरप्लक्षवटपिप्पलसञ्ज्ञिताः। पञ्चैते क्षीरिणो वृक्षाः समाख्याता विचक्षणैः॥" इति चन्द्रः। "छिन्नशिष्टं नाभिनालं बालस्य ग्रीवायां सूत्रेणासज्जयेत् लम्बत्वपरिहाराय। कुष्ठेन युक्तं सिद्धं वा तैलं कुष्ठतैलम्। तपनीय—सुवर्णम्।" इतीन्दुः। "सर्वगन्धाः—एलादिकाः।" इति डल्हणः। ३ 'तु' इ। ४ 'तु' उ। ५ 'सज्जयेत्' इति क्वचित्। ६ 'स्नपयेः' उ ण य। ७ 'न्तरं सूत्रैकदेशं छे' ट। ८ 'चोचकदम्बादीना' ट.। ९ 'प्राशं' चन्द्रः। १० हरेणुः—कलायः।

मेधायर्थं प्रयोजयेत्। कियन्मात्रम्? हरेणुप्रमाणम्। तयाऽभिमन्त्रित–प्राङ्मन्त्रेण। किं तन्प्राश्यम्? इत्याह–ऐन्द्रीत्यादि। ऐन्द्री–इन्द्रवारुणी। ब्राह्मी–मण्डूकपर्णी।

**चामीकरवचाब्राह्मीताप्यपथ्या रजीकृताः ॥ ९ ॥**
**लिह्यान्मधुघृतोपेता हेमधात्रीरजोऽथवा।**

स०–अथवा सुवर्णादिकं सूक्ष्मचूर्णीकृत्य लिह्यात्। रजीकृता इति "अरमन" इत्यादिना सुलोप इत्वं च। हेमधात्रीचूर्णं वा मधुघृतयुक्तं लिह्यात्।

**गर्भाम्भः सैन्धववता सर्पिषा वामयेत्ततः ॥ १० ॥**

स०–ततः–अनन्तरं, गर्भाम्भः सर्पिषा सैन्धवयुक्तेन वामयेत्।

**प्राजापत्येन विधिना जातकर्माणि कारयेत्।**

स०–ततो जातकर्माणि–वेदविहितानि, प्राजापत्येन–यो वेदोक्तो विधिस्तेन[3] गृह्योक्तेन, विधिना भिषक् कारयेत्।

स्तन्यप्रवर्तनहेतुमाह—

**सिराणां हृदयस्थानां विवृतत्वात् प्रसूतितः ॥ ११ ॥**
**तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्तते।**

स०–हृदयाश्रितानां सिराणां प्रसवाद्धेतोर्यद्विवृतत्वं तस्मात्कारणात् तृतीये दिवसे कदाचिच्चतुर्थे योषितां स्तन्यं प्रवर्तते।

**प्रथमे दिवसे तस्मात्त्रिकालं[4] मधुसर्पिषी ॥ १२ ॥**
**अनन्तामिश्रिते मन्त्रपाविते प्राशयेच्छिशुम्।**

स०–यत एव दिनत्रिचतुर्मात्रं क्षीराभावः, तस्माद्धेतोः प्रथमेऽह्नि त्रीन् कालान् मधुघृते यवासकयुक्ते मन्त्रेण पाविते शिशुं प्राशयेत्[5]।

**द्वितीये लक्ष्मणासिद्धं तृतीये च घृतं, ततः ॥ १३ ॥**
**प्राङ्निषिद्धस्तनस्यास्य तत्पाणितलसम्मितम्।**
**स्तन्यानुपानं द्वौ कालौ नवनीतं प्रयोजयेत् ॥ १४ ॥**

स०–द्वितीये दिवसे तृतीये च दिवसे लक्ष्मणया सिद्धं घृतं त्रीनेव कालान् भोजयेत्। अनन्तरं तस्य–शिशोः, पाणेस्तलेन–मध्येन, सम्मितं–तत्प्रमाणं, नवनीतप्रयोगात् पूर्वं निवारितस्तनस्यास्य–बालस्य, द्वौ कालौ नवनीतं स्तन्यानुपानं प्रयोजयेत्।

**मातुरेव पिबेत्स्तन्यं तद्ध्यलं[1] देहवृद्धये।**
**स्तन्यधात्र्यावुभे कार्ये तदसम्पदि वत्सले ॥ १५ ॥**
**अव्यङ्गे[2] ब्रह्मचारिण्यौ वर्णप्रकृतितः समे।**
**नीरुजे मध्यवयसौ जीवद्वत्से न लोलुपे ॥ १६ ॥**
**हिताहारविहारेण यत्नादुपचरेच्च ते।**

स०–बालो मातुः–जनन्या एव, स्तन्यं पिबेत्। कुतः? यस्माच्च तस्याः स्तन्यमतिशयेन देहस्य वृद्धये स्यात्। तदसम्पदि–मातृस्तन्यासम्पत्तौ, द्वे स्तन्यधात्र्यौ च वत्सले–स्नेहले, कार्ये। तथा व्यङ्गरहिते, ब्रह्मचारिण्यौ–वर्जितमैथुने, वर्णेन प्रकृत्या च तुल्ये, तथा निरामये, मध्यवयस्के, जीवद्वत्से, [न लोलुपे–] लौल्यवर्जिते आदरयुक्ते, ते हितेनाहारविहारेण यत्नादुपचरेत्।

**शुक्क्रोधलङ्घनायासाः स्तन्यनाशस्य हेतवः ॥ १७ ॥**
**स्तन्यस्य सीधुवर्ज्यानि मद्यान्यानूपजा रसाः।**
**क्षीरं क्षीरिण्य ओषध्यः[3] शोकादेश्च विपर्ययः ॥ १८ ॥**

स०–शुगादीनि स्तन्यनाशस्य कारणानि। शुक्–शोकः। स्तन्यस्य मद्यानि हेतवः। किंभूतानि? सीधुवर्ज्यानि। आनूपजाश्च रसाः। तथा क्षीरवल्य ओषधयः–जीवन्त्याद्याः। शोकादिवैपरीत्यं च।

**विरुद्धाहार[4]भुक्तायाः क्षुधितायाः विचेतसः।**
**प्रदुष्टधातोर्गर्भिण्याः स्तन्यं रोगकरं शिशोः ॥ १९ ॥**

स०–तथा विरुद्ध आहारो भुक्तो यया तस्याः, तथा बुभुक्षितायाः निन्दितायाश्च, तथा प्रदुष्टदोषायाः गर्भिण्याश्च सम्बन्धि स्तन्यमुपयुक्तं बालस्य रोगहेतुः।

**स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत्।**
**ह्रस्वेन पञ्चमूलेन स्थिराभ्यां[5] वा सितायुतम् ॥ २० ॥**

स०–स्तन्यस्याभावे सति छागं पयः, गव्यं वा छागतुल्यगुणं पिबेत्। छागसमानगुणं गव्यं कथं स्यात्? तत्राह—ह्रस्वेनेत्यादि। ह्रस्वेन पञ्चमूलेन सिद्धं शालिपर्णीपृश्निपर्णीसिद्धं वा शर्करायुतं पिबेत्।

**षष्ठीं निशां विशेषेण कृतरक्षाबलिक्रियाः।**
**जागृयुर्बान्धवास्तस्य दधतः परमां मुदम् ॥ २१ ॥**

स०–अन्यदाऽपि तस्य–शिशोः, बान्धवा विहितरक्षाद्यो

१ 'ह्रीकुष्ठप' उ। २ 'ववचास' उ य। ३ 'विधिस्तगृ' य ण। ४ "मधुसर्पिरनन्तमिश्रं मन्त्रपूतं त्रिकालं पाययेत्।" इति सुश्रुतः। "अनन्तस्य–सुवर्णस्य, गुञ्जाप्रमाणेन मिश्रितम्। मधुसर्पिषश्च मानं वक्ष्यमाणं स्वपाणितलसम्मितम्। वृद्धवाग्भटे च 'अनन्तामिश्रे मधुसर्पिषी' इति पाठः। तत्र च अनन्ता–दूर्वा व्याख्याता।" इति डल्हणः। "अनन्ता–दूर्वा।" इतीन्दुः। ५ 'भोजयेत्' ट. य।

१ 'तत्परं दे' इति क्वचित्। २ "अलं–पर्याप्तम्॥ शोकादेश्च विपर्ययः–सौमनस्यं सौहित्यमनायासः इत्येतानि स्तन्यजननानि॥ विचेतसः–विगतचेतनायाः।" इति चन्द्रः। "वर्णो–ब्राह्मणादिः। मध्यं वयः–तारुण्यादूर्ध्वम्, दारुवाहिः पठति–'तरुणी स्यादवत्सला। क्लेशं न सहते वृद्धा स्तन्यं चास्या न पुष्टिकृत्॥' इति। अव्यङ्गा–सम्पूर्णाङ्गा॥ स्तन्याभावे–स्त्रीस्तन्याभावे। तद्गुणमिति पूर्वोक्तस्य स्त्रीस्तन्यस्य सर्वैराकारादिभिर्गुणैः सदृगम्।" इतीन्दुः। ३ 'क्षीरिण्यौषधयः' उ य। ४ 'हारचेष्टायाः' इ.। ५ 'मूलैः सिद्धं बृहत्याद्यैः स्थिरा' इ ई उ चन्द्र स द्ध।

निशा जागृयु । षष्ठी पुनस्तमस्विनी विशेषेण–यत्नेन, जागृयु । कि कुर्वन्त ? पर हर्ष धारयन्त ।

**दशमे दिवसे पूर्णे विधिभिः स्वकुलोचितैः[1] ।**
**कारयेत्सूतिकोत्थानं नाम बालस्य चार्चितम् ॥ २२ ॥**
**बिभ्रतोऽङ्गैर्मनोह्वालरोचनागुरुचन्दनम् ।**
**नक्षत्रदेवतायुक्तं बान्धवं वा समाक्षरम् ॥ २३ ॥**

**स०**–दशमे दिने पूर्णे सति सूतिकाया उत्थान कारयेत् । कथ कारयेत् ? स्वकुलयोग्यैर्विधानै । बालस्य नाम अर्चित–प्रशस्तमनुगत कुलजात्यादिभि । किम्भूतस्य ? अङ्गै –पाण्यादिभि, मनोह्वादीनि धारयत । किम्भूत नाम ? नक्षत्रस्य याऽसौ देवता तया युक्तम् । अथवा बान्धव–ज्ञातिपूर्वज, समवर्णं–न तु विषमाक्षरम् ।

**ततः प्रकृतिभेदोक्तरूपैरायुःपरीक्षणम् ।**
**प्रागुदक्शिरसः कुर्यात् बालस्य ज्ञानवान् भिषक् २४**
**शुचिधौतोपधानानि निर्वलीनि मृदूनि च ।**
**शय्यास्तरणवासांसि रक्षोघ्नैर्धूपितानि च ॥ २५ ॥**

**स०**–ततो–नामकरणादनन्तर, प्रकृतिभेदे–विकृतिविज्ञानीये (शा अ ५), उक्तानि यानि रूपाणि तैरायुष परीक्षण बालस्य ज्ञानवान्–सुमति, वैद्य कुर्यात् । किम्भूतस्य ? प्राक्शिरस उत्तरशिरसो वा । तथा शुच्यादिगुणयुक्तानि उपधानानि शय्यायामास्तरणार्थं वासासि कुर्यात् । तथा रक्षोघ्नैर्द्रव्यैर्धूपितानि ।

**काको विशस्तः शस्तश्च धूपने त्रिवृतान्वितः ।**

**स०**–काकश्च वस्त्रादिधूपने शस्त । किम्भूत ? विशस्त –व्यापादितो, न तु स्वय मृत । तथा त्रिवृतायुक्त ।

**जीवत्खड्गादिशृङ्गोत्थान् सदा बालः शुभान् मणीन्॥**
**धारयेदौषधीः श्रेष्ठा ब्राह्म्यैन्द्रीजीवकादिकाः ।**
**हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात्सततं वचाम् ॥२७॥**
**आयुर्मेधास्मृतिस्वास्थ्यकरीं रक्षोभिरक्षिणीम् ।**

**स०**–बाल सर्वदा शुभहेतून मणीन् बिभृयात् । किम्भूतान् ? जीवन्तश्च ते खड्गादयश्च, तेषा शृङ्गाणि, तेभ्य उत्थान येषा तान्, जीवतामेव ये गृहीता इत्यर्थ । शृङ्गग्रहणमुपलक्षणार्थम्, अत एव सर्पादिजानपि मणीन् धारयेत् । तथा, ओषधीर्ब्राह्म्यादी श्रेष्ठा –शुभा, धारयेत् । कै ? पाण्यादिभि । विशेषेण सर्वदा वचा धारयेत् । किम्भूता वचाम् ? आयुरादिकरणहेतु तथा रक्षोनिवारिणीम् ।

**षट्सप्ताष्टममासेषु नीरुजस्य शुभेऽहनि ॥ २८ ॥**
**कर्णौ हिमागमे विध्येद्धात्र्यङ्कस्थस्य सान्त्वयन् ।**

**स०**–अनन्तर षष्ठे मासि सप्तमेऽष्टमे वा बालस्य नीरुजस्य हिमागमे शुभे दिवसे कर्णौ विध्येत्, धात्र्युत्सङ्गस्थितस्य । धात्री–माता स्तनदायिनी च । कथ वि येत् ? सान्त्वयन् प्रीतिवचनादिना ।

**प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः ॥ २९ ॥**
**दक्षिणेन दधत्सूचीं पालिमन्येन पाणिना ।**
**मध्यतः कर्णपीठस्य किञ्चिद्गण्डाश्रय प्रति ॥ ३० ॥**
**जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते ।**
**धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ॥ ३१ ॥**
**विध्येद्दैवकृते छिद्रे सकृदेवर्जु लाघवात् ।**
**नोर्ध्वं न पार्श्वतो नाधः**

**स०**–कुमारस्य प्राक्–पूर्व, दक्षिण कर्ण योषितस्तु वाम वैद्यो विध्येत् । कि कुर्वन् ? दक्षिणेन हस्तेन सूची दधत्, वामेन पाणिना पालि दधत् । क्व वि येत् ? कर्णपीठस्य म यभागे किञ्चित्–मनाक्, गण्डस्थानाभिमुखम् । कीदृशस्य बालस्य ? सम्यङ् निश्चल धृतस्य । क्व विध्येत् ? दैवकृते छिद्रे । किम्भूते ? जरायुमात्रेण प्रच्छन्ने–स्थगिते । तथा रविरश्मिभिरवभासिते–उद्योतिते । तथाऽलक्तकरसेनाङ्किते–चिह्निते । कथ विध्येत् ? लाघवात् सकृत्–एकवारमेव, तथा ऋजु–सरल कृत्वा नोपरिष्टान्नाधस्तान्न पार्श्वतो विध्येत् ।

---

१ **'विधिवत् स्व'** इ उ । २ "सूतिकोत्थान–सूतास्नानोत्सवम् । मनोह्वा–मन शिला । अल–हरितालम् । रोचना–गोरोचना ॥ प्रकृतिभेदोक्तरूपै –अङ्गविभागशारीरोपदिष्टैर्लक्षणै ।" इति चन्द्र । "नक्षत्रदेवतायुक्त–नक्षत्राणा देवता भवन्ति । तद्यथा–अश्वि या अश्विनौ, भरण्या यम, कृत्तिकानामग्नि, रोहिण्या प्रजापति, मृगशिरसा मृगाङ्क, आर्द्राया रुद्र, पुनर्वसूनामदिति, पुष्यस्य बृहस्पति, आश्लेषाया सर्पा, मघाना पितर, पूर्वाफल्गुनीना भग, उत्तराफल्गुनीनामर्यमा, हस्तस्य मैत्र, चित्रायास्त्वष्टा, स्वात्या वायु, विशाखाया इन्द्राग्नी, अनूराधाया मैत्र, ज्येष्ठाया इन्द्र, मूलस्य निर्ऋति, पूर्वाषाढाया आप, उत्तराषाढाया विश्वेदेवा, श्रवणस्य विष्णु, धनिष्ठाया वसव, शतभिषजो वरुण, पूर्वाभाद्रपदानामजैकपात्, उत्तराभाद्रपदानामहिर्बुध्नि, रेवत्या पूषा, एता नक्षत्रदेवता याद्दयस्ताभिर्युक्तम् ॥ उपधान–उपशुष्कम् । वलय –सङ्कोचा । आस्तरण–शय्याच्छादनपट ।" इतीन्दु । ३ **'पवानानि'** स स । ४ वास –प्रावरणादिवस्त्रम् । ५ **'णि तेनायुष '** ट ण य । ६ **'ककौ विशस्त '** "कक –पक्षी, स च विशस्त –हिंसित ।" इति चन्द्र । **'काकोऽविशस्त '** स स । "अविशस्त –अहिसित स्वय मृत ।" तीन्दु । ७ "त्रिवृतेन–सर्पिर्मज्जावमाख्येन, अन्वित ।" इति चन्द्र ।

१ "जीवता खड्गादीना प्राणिना शृङ्गेषु गृहीतेषु तत्रस्थान् शुभान् मणीन्–मरकतपद्मरागप्रभृतीन् ॥ हिमागमे–शीतकाले ॥ लाघवात्–लघुहस्ततया ।" इति चन्द्र । "कर्णपीठस्य–कर्णाधोभागस्य । जरायु –सूतशल्क, त मात्रेण तनुना च्छन्ने । अलक्तकरसेन–यावकेन ।" इती दु । २ **'शृङ्गस्थान्'** इ चन्द्र । **'शृङ्गेषु समासक्तान् शु'** स द्व । ३ **'धारयेद्दश चैन्द्र्यादीन् जीवकर्षभकावपि । ह'** स द्व । **'धारयेच्चौष'** चन्द्र । ४ **'षधीश्रेष्ठा'** इ ण । ५ **'ष्टसु मासे'** इ । ६ **'पालीम'** इ द ण य.स द्व । "पालि कर्णलताग्रे" इति मेदिनी । ७ **'ऋजु–रपष्ट कृ'** ट ण ।

कुत इत्याह—

शिरास्तत्र हि संश्रिताः ॥ ३२ ॥

**कालिकामर्मरीरक्ताः**

**स०**–हि–यस्मात्, तत्र शिरा आश्रिता । ता एवाह–कालिकेत्यादि ।

**तद्व्यधाद्रागरुग्ज्वराः ।**
**सशोफदाहसंरम्भमन्यास्तम्भापतानकाः ॥ ३३ ॥**

**स०**–तासां च व्यधात् रागादयः स्युः ।

**तेषां यथामयं कुर्याद्विभज्याशु चिकित्सितम् ।**

**स०**–तेषां च रागादीनां यथास्वं निरूप्य चिकित्सितं कुर्यात् ।

**स्थाने व्यधान्न रुधिरं न रुग्रागादिसम्भवः ॥ ३४ ॥**

**स०**–स्थाने व्यधात् रुधिरं न भ(स्र)वति, न च रुगादीनां सम्भवः ।

**स्नेहाक्तं सूच्यनुस्यूतं सूत्रं चानु निधापयेत् ।**
**आमतैलेन सिञ्चेच्च बहला तद्वदारया ॥ ३५ ॥**
**विध्येत्पालीं हितभुजः सञ्चार्याऽथ स्थवीयसी ।**
**वर्तिस्त्र्यहात्ततो रूढं वर्धयेत शनैः शनैः ॥ ३६ ॥**

**स०**–अनु–कर्णव्यधस्य पश्चात्, सूत्रं स्नेहलिप्तसूच्याऽनुस्यूतं कर्णे निधापयेत् । आमतैलेन च सेचयेत् । बहला–घना, पाली तद्वत्–पूर्ववत्, आरया विध्येत् हिताशिनः सतः । अनन्तरं त्र्यहात् पूर्वं स्थूलतरा वर्तिः सञ्चार्या । ततो रूढं कर्णं शनैः शनैर्वर्धयेत् ।

**अथैनं जातदशनं क्रमेणापनयेत्स्तनात् ।**
**पूर्वोक्तं योजयेत्क्षीरमन्नं च लघु बृंहणम् ॥ ३७ ॥**

**स०**–अनन्तरमेनं–शिशुं, जातदन्तं सन्तं स्तनात् क्रमेणापसारयेत्–न सहसा । पूर्वोक्तं–छागादिकं, क्षीरमन्नं च लघु बृंहणं योजयेत् ।

**प्रियालमज्जमधुकमधुलाजसितोपलैः ।**
**अपस्तनस्य संयोज्यः प्रीणनो मोदकः शिशोः ॥३८॥**
**दीपनो बालबिल्वैलाशर्करालाजसक्तुभिः ।**
**सङ्ग्राही धातुकीपुष्पशर्करालाजतर्पणैः ॥ ३९ ॥**

**स०**–प्रियालादिभिर्मोदकोऽपस्तनस्य शिशोः प्रीणनो योज्यः । बालबिल्वादिभिर्दीपनो मोदको योज्यः । धातुक्यादिभिः सङ्ग्राही योज्यः ।

**रोगांश्चास्य जयेत्सौम्यैर्भेषजैरविषादकैः ।**
**अन्यत्रात्ययिकाद्व्याधेर्विरेकं सुतरां त्यजेत् ॥ ४० ॥**

**स०**–यथावस्थमस्य–शिशोः, सौम्यैरौषधैरविषादकैः–असोभकैः, आमयान् जयेत् । विरेकमतिशयेन वर्जयेदात्ययिकव्याधिमन्तरेण ।

**त्रासयेन्नाविधेयं तं त्रस्तं गृह्णन्ति हि ग्रहाः ।**

**स०**–न च तं–बालं, अविधेयं–अनायत्तं कृत्वा, त्रासयेत्–न भाययेत् । यतस्त्रस्तं बालं ग्रहा गृह्णन्ति ।

**वस्त्रवातात् परस्पर्शात् पालयेल्लङ्घनाच्च तम् ॥४१॥**

**स०**–वस्त्रवातादिभ्यश्च तं रक्षयेत् ।

**ब्राह्मीसिद्धार्थकवचासारिवाकुष्ठसैन्धवैः ।**
**सकणैः साधितं पीतं वाङ्मेधास्मृतिकृद् घृतम् ४२**
**आयुष्यं पाप्मरक्षोघ्नं भूतोन्मादनिबर्हणम् ।**

**स०**–ब्राह्म्यादिभिः कल्कीकृतैः साधितं सर्पिर्वाङ्मेधादिकृत् । आयुष्यं पाप्मादिहरं भूतोन्मादनिबर्हणं च ।

**वचेन्दुलेखामण्डूकीशङ्खपुष्पीशतावरी ॥ ४३ ॥**
**ब्रह्मसोमामृताब्राह्मीः कल्कीकृत्य पलांशिकाः ।**
**अष्टाङ्गं विपचेत्सर्पिः प्रस्थं क्षीरचतुर्गुणम् ॥ ४४ ॥**
**तत्पीतं धन्यमायुष्यं वाङ्मेधास्मृतिबुद्धिकृत् ।**

**स०**–वचादिभिः पालिकैश्चतुर्गुणक्षीरात् घृतप्रस्थमष्टाङ्गं पचेत् । अष्टावङ्गानि–वचादीनि यस्मिंस्तदष्टाङ्गम् । एतत्पीतं धन्यादिगुणम् ।

**अजाक्षीराभयाव्योषपाठोग्राशिग्रुसैन्धवैः ॥ ४५ ॥**
**सिद्धं सारस्वतं सर्पिर्वाङ्मेधास्मृतिवह्निकृत् ।**

**स०**–अजाक्षीरादिभिः सिद्धं सारस्वतं घृतं वाङ्मेधादिकरम् ।

**वचामृताशठीपथ्याशङ्खिनीवेल्लनागरैः ॥ ४६ ॥**
**अपामार्गेण च घृतं साधितं पूर्ववद्गुणैः ।**

**स०**–वचादिभिः साधितं घृतं पूर्वेण समानम् ।

---

१ "ऊर्ध्वं कालिका नाम सिरा स्थिता, पार्श्वतो मर्मरी, अधो रक्ता ॥ तद्वत्–सूचीव्यधनप्रकारेण, आरया विध्येत् । एवमुभयथा वेधः । द्विविधेऽपि वेधे त्र्यहात् कर्णे स्थवीयसी वर्तिः सञ्चार्या ।" इतीन्दुः । २ 'तद्बाधा' उ । ३ 'स्थानव्यधा' इ चन्द्र स द्व । ४ 'योऽन्या स्थ' इ । ५ 'रूढा' इ । ६ 'सिञ्चयेत्' ण । ७ 'जातदन्तं शिशुं शीते क्रमे' चन्द्र । ८ 'क्रमशोऽप' इ ई उ स द्व । ९ 'पियाल' इ ण य चन्द्र स मू,ट । १० 'स्तन्यस्य' इ ई उ य.स स । ११ "अपस्तनस्य–निवारितस्त्रीस्तन्यस्य । प्रीणनः–तर्पणः ॥ अविषादिकैः–सुखावहैः ॥ वस्त्रवातात् तथा परेषां स्पर्शात् पालयेत् ।" इति चन्द्रः । "विषादकः–तीक्ष्णम् ॥ वस्त्रपातो–मुखादिषु वस्त्रपतनम् ।" इतीन्दुः ।

१ 'विपादकैः' ई य । 'विपादिकैः' ण । 'विषादिकैः' इ उ. चन्द्र । २ 'भकैः' य । ३ 'य च त्र' ई उ य स द्व । ४'य त्रासयेत्। अविधेय–असावधानम्। त्रस्त' ट । ५'वस्त्रपातात्' ई उ स स । ६ 'खरस्पर्शात्' उ स मू । ७ 'लङ्घिताच्च' इ उ ण य चन्द्र स मू । ८ लङ्घनं–अतिक्रमणम् । "लङ्घनं तूपवासे स्यात्क्रमणे प्लवनेऽपि च ।" इति मेदिनी । ९ 'तं घृतं वा' ट । १० 'च भवेत्' ट । ११ 'वरी ।' इ ई उ ण चन्द्र । १२ ब्रह्मसोमा–'ब्राह्मया श्वेतवृद्धदारके च' इति वैद्यकशब्दसिन्धुः । 'ब्रह्मसोमवल्ली' इत्यन्ये । १३ 'ब्राह्मी क' इ उ । १४ 'शिकैः' इ ई उ । १५ 'क्षीरं च' य । १६ 'स्मृतिकृत्परम् ।' इ । 'स्मृतिवह्निकृत्' चन्द्र । १७ 'क्षीरं घृत' य । १८ "अजाक्षीरेण चतुर्गुणेन अभयादिभिः कल्कितैः सर्पिः सिद्धं सारस्वतं नाम वाङ्मेधा स्मृतिं वह्निं च करोति ।" इति चन्द्र । १९ 'ग्राशकूसे' इ । २० 'स्मृतिबुद्धिकृत्' उ । २१ 'तावरीप' इ ई उ य ।

**हेम श्वेतवचा कुष्ठमर्कपुष्पी सकाञ्चना ॥ ४७ ॥**
**हेम मत्स्याक्षकः शङ्खः कैडर्यः कनक वचा ।**
**चत्वार एते पादोक्ताः प्राशा मधुघृतप्लुता. ॥ ४८ ॥**
**वर्ष लीढा वपुर्मेधाबलवर्णकरा. शुभा. ।**

स०–हेमादिश्लोकोक्ता पादिकाश्चत्वारो योगा मधुघृताभ्या सद्रवा वर्ष लीढा वपुरादिकृत शुभाश्च ।

**वचायष्ट्याह्वसिन्धूत्थपथ्यानागरदीप्यकै. ॥ ४९ ॥**
**शुध्यते वाग्घविलीढै. सकुष्ठकणजीरकै. ॥ ४९½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचिताया-मष्टाङ्गहृदयसंहिताया षष्ठे उत्तरस्थाने बालोपचरणीयो नाम प्रथमोऽध्याय. ॥ १ ॥**

स०–वचादिभि सपिलाढैर्वाक् शस्यते । शु यत इति चिन्त्यम्, "कर्मवत्कर्मकर्ता" इत्यस्य त्वविषय ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने बालोपचरणीयो नाम प्रथमोऽध्याय समाप्त ॥ १ ॥



# द्वितीयोऽध्यायः ।

अस्मादनन्तर बालस्योपचर्यमाणस्य ये रोगास्तच्चिकित्सार्थो बालामयप्रतिषेध उच्यते—

**अथातो बालामयप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**
(गद्यसूत्रे ॥ २ ॥)

**त्रिविधः कथितो बालः क्षीरान्नोभयवर्तन. ।**
**स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्या रोगसम्भवः॥१॥**

स०–बालस्त्रिप्रकार कथितो मुनिभि । क्षीरवर्तनोऽन्नवर्तन उभयवर्तन –क्षीरान्नाभ्या यो वर्तते । ताभ्या–अन्नक्षीराभ्या, अदुष्टाभ्या स्वास्थ्य भवति । दुष्टाभ्या तु क्षीरान्नाभ्या रोगोद्भूति ।

शुद्ध क्षीर लक्षयति—

**यदद्भिरेकतां याति न च दोषैरधिष्ठितम् ।**
**तद्विशुद्धं पयो**

स०–यत् क्षीर जलेनैकता याति वातादिदोषैश्चानविष्ठितं तद्विशुद्धम् ।

दुष्टस्य लक्षणमाह—

**वाताद्दुष्टं तु प्लवतेऽम्भसि ॥ २ ॥**
**कषाय फेनिलं रूक्ष वर्चोमूत्रविबन्धकृत् ।**

स०–वातदुष्ट क्षीर जले प्लवते–तरतीव नैकता गच्छति । कषायादिगुणयुक्त च स्यात् ।

**पित्तादुष्णाम्लकटुक पीतराज्यप्सु दाहकृत् ॥ ३ ॥**

स०–पित्तादुष्ट क्षीरमुष्णाम्लकटुकम्, तथा तोये प्रक्षिप्त पीतराजि स्यात् दाहकर च ।

**कफात्सलवणं सान्द्रं जले मज्जति पिच्छिलम् ।**

स०–कफात् क्षीर दुष्ट सलवण घन च स्यात् । अप्सु च मज्जति ।

**संसृष्टलिङ्गं संसर्गात्त्रिलिङ्ग सान्निपातिकम् ॥ ४ ॥**

स०–ससर्गाद् दुष्ट क्षीर ससृष्टलिङ्ग स्यात् । सान्निपातिक क्षीर त्रिलिङ्ग स्यात् ।

**यथास्वलिङ्गास्तद्व्याधीन् जनयत्युपयोजितम् ।**

स०–तच्च क्षीरमुपयोजित बालस्य च यथास्वलिङ्गान् व्याधीन् जनयति ।

**शिशोस्तीक्ष्णमभीक्ष्णं च रोदनाल्लक्षयेद्रुजम् ॥ ५ ॥**

स०–बालस्य तीक्ष्ण–खर, अभीक्ष्ण च रुज–पीडा, रोदनाल्लक्षयेत्,–अतिरोदनेन किञ्चिद्रोदनेन च यथायोग रुज विद्यादित्यर्थ ।

**स यं स्पृशेद्भृशं देशं यत्र च स्पर्शनाक्षमः ।**
**तत्र विद्याद्रुजं**

स०–य देहदेशं स भृश स्पृशेत् यत्र च देहदेशे स्पर्शनाक्षम स्यात् तत्र देशे रुज विद्यात् ।

**मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥ ६ ॥**
**हृदि जिह्वौष्ठदशनश्वासमुष्टिनिपीडनैः ।**
**कोष्ठे विबन्धवमथुस्तनदशान्त्रकूजनैः ॥ ७ ॥**

१ 'कुष्ठ शङ्खपुष्पी' ई उ । २ "अर्कपुष्पी–पयस्या अर्कसदृशपत्रपुष्पा लतैव, श्वेतदूर्वाविशेषा केचिदाहु, वृक्षजातिमन्ये । मत्स्याक्षको–ब्राह्मी, पत्तूर इत्येके । अन्ये रक्तपुष्पमानूप मत्स्याक्षक इति लोके प्रसिद्धमाहु । कैडर्य –पर्वतनिम्ब । सवत्सर यावदेते योग प्रयोज्या, अन्ये द्वादशवर्षाण्याहु ।" इति डल्हण । "शुभा – श्रेयस्करा ॥ वाक् शुध्यते–निर्मलवाक् भवेत् ।" इति चन्द्र । ३ 'सरोचना' उ । ४ 'क फञ्जी कैडर्य' इ । 'द्रु कैडर्यं' ई उ । ५ 'प्राश्या' इ उ य । ६ 'वाग्घृतालीढै' ई उ । ७ अथ बालामयप्रतिषेधश्चरके चि० ३० अध्याये, सुश्रुते शा० १० अध्याये नि० १० अध्याये चि० १७ अध्याये च, अष्टाङ्गसङ्ग्रहे उ० २ अध्याये चास्ति वर्णित ।

१ "पय –क्षीरस्तन्यम् ॥ प्लवते–तत्र न निमज्जति उपर्येवास्ते ॥ मज्जति–अधो याति ॥ यथास्वलिङ्गान्–पृथग्दोषससर्गसन्निपातलक्षणान् ।" इति चन्द्र । २ 'ते जले ।' इ । ३ 'स्तीक्ष्णामतीक्ष्णा च' इ ई उ । 'स्तीक्ष्णामतीक्ष्णा वा' गदनि । ४ 'स्वय' इ.उ य । ५ 'क्षमम् ।' इ । ६ श स्वय भृश' ट । ७ 'पीडितै' उ. । ८ 'स्तन्यद्वेषाच्च' इति क्वचित् ।

**आध्मानपृष्ठनमनजठरोन्नमनैरपि ।**
**वस्तौ गुह्ये च विण्मूत्रसङ्गोत्रासदिगीक्षणैः ॥ ८ ॥**

स०-शिरसि पीडामक्षिनिमीलनाद्विद्यात् । विनाशहेतुमत एव जिह्वौष्ठदंशनादिभिर्हृदि पीडा विद्यात् । विबन्धादिभिरा-ध्मानादिभिश्च कोष्ठे रुज विद्यात् । बस्तौ गुह्ये च पीडा विट्-सङ्गादिभिर्विद्यात ।

**अथ धात्र्या. क्रिया कुर्याद्यथादोषं यथामयम् ।**

स०-अथ-अनन्तर, एव ज्ञात्वा धात्र्या वैद्यो यथादोष यथारोग क्रिया कुर्यात ।

**तत्र वातात्मके स्तन्ये दशमूलं त्र्यह पिबेत् ॥ ९ ॥**
**अथवाऽग्निवचापाठाकटुकाकुष्ठदीप्यकम् ।**
**सभार्गीदारुसरलवृश्चिकालीकणोषणम् ॥ १० ॥**

स०-तत्र-तेषु, वातेन दुष्टे स्तन्ये त्राणि दिनानि दशमूल पिबेत् । अथवा चित्रकादीनि कथितानि त्र्यह पिबेत् ।

**तत. पिबेदन्यतम वातव्याधिहर घृतम् ।**
**अनु चाच्छसुरामेव स्निग्धा मृदु विरेचयेत् ॥ ११ ॥**
**बस्तिकर्म ततः कुर्यात्स्वेदादींश्चानिलापहान् ।**

स०-अनन्तर वातव्याधिचिकित्सितोक्त घृत पिबेत् । पश्चा-दच्छसुरा पिबेत् । एव स्निग्धा सती मृदु विरेचयेत्-आरग्व-धेन । अनन्तर बस्तिकर्म कुर्यात् । स्वेदादींश्च मारुतापहान् । आदिशब्देनाभ्यङ्गादिग्रह ।

**रास्नाजमोदासरलदेवदारुरजोन्वितम् ॥ १२ ॥**
**बालो लिह्याद् घृत तैर्वा विपक्क ससितोपलम् ।**

स०-रास्नादिचूर्णान्वित शिशु सर्पिलिह्यात् । अथवा तै सिद्ध सशर्कर घृत लिह्यात् ।

**पित्तदुष्टेऽमृताभीरुपटोलीनिम्बचन्दनम् ॥ १३ ॥**
**धात्री कुमारश्च पिबेत् क्वाथयित्वा ससारिवम् ।**
**अथवा त्रिफलामुस्तभूनिम्बकटुरोहिणीः ॥ १४ ॥**
**सारिवादिं पटोलादिं पद्मकादि तथा गणम् ।**

स०-पित्तदुष्टे गुडूच्यादीनि क्वाथयित्वा बाल पिबेत् धात्री च । अथवा त्रिफलादीन पिबेत् । अथवा सारिवादिगण(गणा-न्यतम) पिबेत् ।

**घृतान्येभिश्च सिद्धानि पित्तघ्नं च विरेचनम् ॥१५॥**
**शीतांश्चाभ्यङ्गलेपादीन् युञ्ज्यात्**

स०-अथवा सारिवादिभिर्गणै पृथक् पृथक् सिद्धानि घृतानि लिह्यात् । विरेचनद्रव्य च पित्तघ्न कुर्या(युञ्ज्या)त् । अभ्यङ्गा-दींश्च शीतान् युञ्ज्यात् ।

**श्लेष्मात्मके पुनः ।**
**यष्ट्याह्वसैन्धवयुतं कुमार पाययेद् घृतम् ॥ १६ ॥**
**सिन्धूत्थपिप्पलीमद्वा, पिष्टै. क्षौद्रयुतैरथ ।**
**राठपुष्पै. स्तनौ लिम्पेच्छिशोश्च दशनच्छदौ ॥१७॥**
**सुखमेव वमेद्वाल.**

स०-श्लेष्मदुष्टे स्तन्ये मधुयष्टीसैन्धवयुक्त घृत बाल पाय-येत् । सैन्धवपिप्पलियुक्त घृत वा पाययेत् । मदनकुसुमैर्मा-क्षिकयुक्तै स्तनौ लिम्पेत् । बालस्य चोष्ठौ लिम्पेत् । एव कृते सति बाल सुख वमेत् ।

**तीक्ष्णैर्धात्रीं तु वामयेत् ।**

स०-धात्री तीक्ष्णैर्वमनैर्वामयेत् ।

**अथाचरितसंसर्गी मुस्तादि क्वथित पिबेत् ॥ १८ ॥**
**तद्वत्तगरपृथ्वीकासुरदारुकलिङ्गकान् ।**
**अथवाऽतिविषामुस्तषड्ग्रन्थापञ्चकोलकम् ॥ १९ ॥**

स०-अनन्तर कृते समगे सति मुस्तादि क्वथित पिबेत् । तगरादीन् वाऽतिविषादीन् वा पिबेत् ।

**स्तन्ये त्रिदोषमलिने दुर्गन्ध्याम जलोपमम् ।**
**विबद्धमच्छ विच्छिन्न फेनिल चोपवेश्यते ॥ २० ॥**
**शकृन्नानाव्यथावर्णं, मूत्र पीत सित घनम् ।**
**ज्वरारोचकतृट्छर्दिशुष्कोद्गारविजृम्भिका. ॥ २१ ॥**
**अङ्गभङ्गोऽङ्गविक्षेपः कूजन वेपथुर्भ्रम. ।**
**घ्राणाक्षिमुखपाकाद्या जायन्तेऽन्येऽपि तं गदम् २२**
**क्षीरालसकमित्याहुरत्ययं चातिदारुणम् ।**

स०-त्रिदोषदुष्टे स्तन्ये दुर्गन्ध्यादिगुण शकृदुपवेश्यते, तथा नानाव्यथावर्णम् । मूत्र च पीत सित घन-स्त्यान, च स्यात् । तथा ज्वराद्य , अन्येऽपि-एवप्रकारा रोगा , जायन्ते । त-ईदृश, गद क्षीरालसकमिति कथयन्ति । अत्यय-विनाश-हेतुम्, अत एवातिदारुणम् ।

**तत्राशु धात्रीं बाल च वमनेनोपपादयेत् ॥ २३ ॥**

स०-तत्र-क्षीरालसके, शीघ्रमेव धात्री बाल च वमनेनो-पक्रमेत् ।

**विहिताया च संसर्ग्या वचादि योजयेद्गणम् ।**
**निशादिं वाऽथवा माद्रीपाठातिक्ताघनामयान् ॥२४॥**

स०-[ विहिताया ] ससर्ग्या-पेयादिके क्रमे कृते, वचादि निशादि वा गण प्रयोजयेत् । माद्र्यादीन् वा योजयेत् ।

---

१ 'सङ्गत्रासाङ्गवीक्षणै ' गदनि । २ 'द् । जिह्वा' ट । ३ 'कोष्ठरुज' ट ण य । ४ सङ्ग्रहे त्वस्मिन् अग्निवचादियोगे शुण्ठ्यधिका पठ्यते । ५ 'व्याधिहित' इ । ६ 'रुवचान्वि' गदनि. । ७ "एभिरेव च-यथायोग पृथक् क्वाथोक्तद्रव्ये ।" इतीन्दु । ८ पित्तघ्न विरेचन-कल्पोक्तम् (अ २।२१) । ९ 'अथ सा' ण य.। १० 'वादिगणै ' य. ।

१ 'लीमुस्तापिष्टे ' ई । 'लीमद्यपिष्टै ' उ । 'लीमूर्वापिष्टै ' इति क्वचित् । 'लीयुतै पिष्टै ' गदनि । २ 'ङ्कम् ।' इ । ३ 'कोलकान् ।' य । ४ 'क्वणन' इ चन्द्र । ५ "क्षीरालसक-मिति नाम्नाऽत्ययमिति चाचाया आचक्षते ।" इतीन्दु । "अत्यय-अतिबाधकम् । अतिदारुण-दुश्चिकित्स्यतमम् ॥ माद्रीपाठातिक्ताघ-नामयान्-अतिविषापाठाकटुकामुस्तकुष्ठानि ।" इति चन्द्र ।

**पाठाशुण्ठ्यमृतातिक्ततिक्तादेवाह्वसारिवा ।**
**समुस्तमूर्वेन्द्रयवाः स्तन्यदोषहरा परम् ॥ २५ ॥**

स०-पाठादय उपयुक्ता पर स्तन्यदोषहरा । तिक्त-किराततिक्त ।

**अनुबन्धे यथाव्याधि प्रतिकुर्वीत कालवित् ।**

स०-अनुबन्धे तु सति यथारोग चिकित्सित कुर्याद्वैद्य ।

**दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम् ॥ २६ ॥**
**विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम् ।**
**अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते ॥२७॥**

स०-रोगाणा च सर्वेषामपि दन्तोद्भेदो हेतुर्जायते । विशेषेण ज्वरादीना तु हेतु सम्पद्यते ।

**पृष्ठभङ्गे बिडालाना बर्हिणां च शिखोद्गमे ।**
**दन्तोद्भेदे च बालानां न हि किञ्चिन्न दूयते ॥ २८ ॥**

स०-मार्जाराणा पृष्ठभङ्गे सति, मयूराणा च शिखोद्भवे सति, दन्तोत्थाने च शिशूना, ननेति द्वौ प्रतिषेधौ प्रकृतमर्थं गमयत , तेन सर्व वपुर्बालस्योत्तप्त भवेत् । न किञ्चिन्न दूयते,-अपि तु सर्वाण्येवाङ्गानि पीड्यन्त इत्यर्थ ।

**यथादोषं यथारोगं यथोद्रेकं यथाभयम् ।**
**विभज्य देशकालादींस्तत्र योज्यं भिषग्जितम् ॥२९॥**

स०-तत्र दोषानुसारेण तथा दोषाधिक्यानुरोधेन तथा रोगानुसारेण च देशकालसत्त्वसात्म्यप्रकृतीर्निरूप्य औषध प्रयोजयेत् ।

**त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च यत् ।**
**अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥ ३० ॥**
**सौकुमार्याल्पकायत्वात् सर्वान्नानुपसेवनात् ।**

स०-यत्-यस्मात्, त एव वातादयो दोषा , त एव रसादयो दूष्या , ज्वरादयश्च रोगा पूर्वोक्तास्त एव, तस्मात् तदेव पूर्वोक्त भैषज्यम् । अस्य तु-बालस्य, मात्रा कनीयसी । कुतोऽस्य ह्रस्वतरा मात्रा? इत्याह-सौकुमार्येत्यादि ।

**स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात् ॥ ३१ ॥**
**सद्यस्तान् वमनं तस्मात् पाययेन्मतिमान् मृदु ।**

स०-शिशव सर्वदैव स्निग्धा । कुत ? घृतक्षीरनिषेवणात् । यतश्चैव तस्मात् तान्-बालान्, सद्यो वमन मृदु धीमान् पाययेत् ।

**स्तन्यस्य तृप्तं वमयेत् क्षीरक्षीरान्नसेविनम् ॥ ३२ ॥**

स०-क्षीरसेविन तथा क्षीरान्नसेविन बाल स्तन्यस्य तृप्तं सन्त वामयेत् । स्तन्यस्य तृप्तमिति "अधिकरणवाचिनश्च" इति षष्ठी । वा(व)मयेदिति "ग्लास्नावनुवमा च" इति मित्त्वविकल्प ।

**पीतवन्तं तनुं पेयामन्नादं घृतसंयुताम् ।**

स०-अन्नाद बाल तनु-अघना, पेया ससर्पिष्का पीतवन्तं वामयेत् ।

**बस्तिं साध्ये विरेकेण, मर्शेन प्रतिमर्शनम् ॥ ३३ ॥**
**युञ्ज्याद्विरेचनादींस्तु धात्र्या एव यथोदितान् ।**

स०-विरेकेण सा ये रोगे बस्ति युञ्ज्यात् । मर्शेन साध्ये रोगे प्रतिमर्श युञ्ज्यात् । विरेचनादीन् पुनर्यथोदितान् धात्र्या एव युञ्ज्यात् ।

**मूर्वाव्योषवराकोलजम्बूत्वक्दारुसर्षपाः ॥ ३४ ॥**
**सपाठा मधुना लीढाः स्तन्यदोषहराः परम् ।**

स०-मूर्वादयो मधुना लीढा सुष्ठु स्तन्यदोषहरा ।

**दन्तपालीं समधुना चूर्णेन प्रतिसारयेत् ॥ ३५ ॥**
**पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा ।**

स०-शिशोर्दन्तपाली पिप्पल्याश्चूर्णेन समाक्षिकेण प्रतिसारयेत् । अथवा धातकीपुष्पादिकृतेन चूर्णेन प्रतिसारयेत् ।

**लावतित्तिरिवल्लूररजः पुष्परसद्रुतम् ॥ ३६ ॥**
**द्रुतं करोति बालानां दन्तकेसरवन्मुखम् ।**

स०-लावादिचूर्ण माक्षिकद्रवीकृतमुपयुक्त शिशूना शीघ्रं दन्तकेसरवन्मुख करोति । दन्ता एव केसर तत् (राणि तानि) विद्यते(न्ते) यस्मिन्निति मतुप् ।

**वचाद्विबृहतीपाठाकटुकातिविषाघनैः ॥ ३७ ॥**
**मधुरैश्च घृतं सिद्धं सिद्धं दशनजन्मनि ।**

स०-वचादिभि पक्व घृत दन्तोत्थाने सिद्धम्,-अव्याहतशक्तित्वात् ।

**रजनीदारुसरलश्रेयसीबृहतीद्वयम् ॥ ३८ ॥**
**पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ।**
**ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम् ॥ ३९ ॥**
**अतीसारज्वरश्वासकामलापाण्डुकासनुत् ।**
**बालस्य सर्वरोगेषु पूजितं बलवर्णदम् ॥ ४० ॥**

स०-रजन्यादिचूर्णं माक्षिकयुक्तेन सर्पिषा लीढं ग्रहण्या

---

१ "देवाह्व-देवदारु ॥ दन्तोद्भेदो-दन्तानामुत्पत्ति । अभिष्यन्दपोथक्यौ-चक्षूरोगौ ॥ यथादोष-वातादिकमनतिक्रम्य । यथारोग-व्याध्यनुगुण्येन । यथोद्रेक-उद्रेकमनतिक्रम्य । यथाभय-यस्माद्भय न दृश्यते ।" इति चन्द्र । २ 'दन्तोद्भवे' इति क्वचित् । ३ 'यथाबलम्' ई उ स द्व । 'यथाशयम्' य । 'यथावय' इति क्वचित् । ४ 'श्च ते ।' ई.उ.स मू । ५ 'सेवनै' इ चन्द्र ।

१ "अन्नमत्तीत्यन्नाद ॥ सिद्ध-दृष्टप्रत्यय मुनिभि । दारु-देवदारु । सरल -चीडा । श्रेयसी-हस्तिपिप्पली । शताह्वा-शतावरी ।" इति चन्द्र । "यथोचितान्-व्याध्यनुगुणान् ॥ लावतित्तिरीणा वल्लूरस्य-शुष्कमासस्य, रज -चूर्ण, पुष्परसेन-क्षौद्रेण, द्रुत-आलोडितम् । द्रुत-शीघ्रम् । केसरशब्देन मुखस्य पद्मत्व रूपितम् ।" इतीन्दु । २ 'दींश्च' ई उ । ३ 'यथोचितान्'स स । ४ 'वराङ्कोल्लज' इ । 'वचाकोल' उ गदनि । ५ 'दोषनिबर्हणा ।' इ चन्द्र गद । ६ 'लरसेन' इ । ७ 'रसप्लुतम्' इ य स मू । 'रसाप्लुतम्'उ । ८ 'सिद्धमित्याहत' ण । 'सिद्धमित्यहत' य । ९ 'रला.श्रे' इ. । १० 'ण्डुरोगनुत्' ई. ।

दीपन सुष्ठु वातस्य चानुलोमनम् । तथाऽतीसारादिजित् । बालस्य सर्वामयेषु हित बलवर्णद च ।

**समङ्गाधातकीरोध्रकुटन्नटबलाद्वयैः ।**
**महासहाक्षुद्रसहामुद्गबिल्वशलाटुभिः ॥ ४१ ॥**
**सकार्पासीफलैस्तोये साधितैः साधितं घृतम् ।**
**क्षीरमस्तुयुतं हन्ति शीघ्रं दन्तोद्भवोद्भवान् ॥४२॥**
**विविधानामयानेतद्वृद्धकाश्यपनिर्मितम् ।**

स०–समङ्गादिभि सामान्यपरिभाषया तोये साधितं घृत क्षीरमस्तुयुत पक्व दन्तोत्थान् रोगाननेकप्रकारान् हन्ति । एतच्च वृद्धकाश्यपेन निर्मितम् ।

**दन्तोद्भवेषु रोगेषु न बालमतियन्त्रयेत् ॥ ४३ ॥**
**स्वयमप्युपशाम्यन्ति जातदन्तस्य यद्गदाः ।**

स०–दन्तोद्भवेषु रोगेषु बाल नातीव यन्त्रयेत्–पथ्यभोजनादिना नातीव नियमयेत्, यथाऽन्यरोगिणम् । किम्? इत्याह– यत्–यस्मात्, स्वयमेव(मपि)–चिकित्सामन्तरेणापि, जातदन्तस्य सतो बालस्य रोगा प्रशाम्यन्ति ।

**अत्यहःस्वप्नशीताम्बुश्लैष्मिकस्तन्यसेविनः ॥ ४४ ॥**
**शिशोः कफेन रुद्धेषु स्रोतःसु रसवाहिषु ।**
**अरोचक. प्रतिश्यायो ज्वरः कासश्च जायते ॥४५॥**
**कुमारः शुष्यति ततः स्निग्धशुक्लमुखेक्षणः ।**

स०–भृश दिवास्वप्नादिसेविनोऽर्भकस्य कफेन रसवाहिषु स्रोत सु रुद्धेषु सत्सु अरोचकादय प्रादुर्भवन्ति । तत –तेषु जातेषु, कुमार शुष्यति । स्निग्ध शुक्ल वदननयनं यस्य स एवभूत सन् ।

**सैन्धवव्योषशार्ङ्गेष्टापाठागिरिकदम्बकान् ॥ ४६ ॥**
**शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत् ।**

स०–तस्यारोचकादिषु सैन्धवादीन् समधुघृतान् योजयेत् ।

**अशोकरोहिणीयुक्तं पञ्चकोलं च चूर्णितम् ॥ ४७ ॥**
**बदरीधातकीधात्रीचूर्णं वा सर्पिषा द्रुतम् ।**

स०–तथा पञ्चकोल रजीकृतमशोककटुकाभ्या युक्त योजयेत् । अथवा बदर्यादिचूर्णं सर्पिषा द्रवीकृत योजयेत् ।

**स्थिरावचाद्विबृहतीकाकोलीपिप्पलीनतैः ॥ ४८ ॥**
**निचुलोत्पलवर्षाभूभार्गीमुस्तैश्च कार्षिकैः ।**
**सिद्धं प्रस्थार्धमाज्यस्य स्रोतसां शोधनं परम् ॥४९॥**

स०–स्थिरादिभि कार्षिकैर्घृतस्य प्रस्थार्ध सिद्ध पर स्रोतसां विशोधनम् ।

**सिंहीश्वगन्धासुरसाकणागर्भं च तद्गुणम् ।**

स०–सिंह्यादिभिर्घृत पूर्वगुणम् ।

**यष्ट्याह्वपिप्पलीरोध्रपद्मकोत्पलचन्दनैः ॥ ५० ॥**
**तालीससारिवाभ्यां च साधित शोषजिद्घृतम् ।**

स०–मधुयष्टिकादिभि साधित सर्पि शोषजित् ।

**शृङ्गीमधूलिकाभार्गीपिप्पलीदेवदारुभिः ॥ ५१ ॥**
**अश्वगन्धाद्विकाकोलीरास्नर्षभकजीवकैः ।**
**शूर्पपर्णीविडङ्गैश्च कल्कितैः साधित घृतम् ॥ ५२ ॥**
**शशोत्तमाङ्गनिर्यूहे शुष्यतः पुष्टिकृत्परम् ।**

स०–शृङ्ग्यादिभि कल्कितै शशस्य शिर क्वाथेन साधितं घृतं शुष्यतो बालस्यातिपुष्टिकरम् ।

**वचावयःस्थातगरकायस्थाचोरकैः शृतम् ॥ ५३ ॥**
**बस्तमूत्रसुराभ्यां च तैलमभ्यञ्जने हितम् ।**

स०–वचादिभिश्छागमूत्रसुराभ्या च सिद्ध तैलमभ्यङ्गे हितम् ।

**लाक्षारससमं तैलप्रस्थं मस्तु चतुर्गुणम् ॥ ५४ ॥**
**अश्वगन्धानिशादारुकौन्तीकुष्ठाब्दचन्दनैः ।**
**समूर्वारोहिणीरास्नाशताह्वामधुकैः समैः ॥ ५५ ॥**
**सिद्धं लाक्षादिकं नाम तैलमभ्यञ्जनादिदम् ।**
**बल्यं ज्वरक्षयोन्मादश्वासापस्मारवातनुत् ॥ ५६ ॥**
**यक्षराक्षसभूतघ्नं गर्भिणीनां च शस्यते ।**

स०–लाक्षारसतुल्य तैलप्रस्थ मस्तुचतुर्गुणमश्वगन्धादिभि सामान्यपरिभाषोक्तप्रमाणे सिद्ध लाक्षादिकसञ्ज्ञम् । एतत्तैलमभ्यङ्गाद् बल्य ज्वरादिजित् यक्ष्मादिघ्नं गर्भिणीभ्यश्च हितम् ।

**मधुनाऽतिविषाशृङ्गीपिप्पलीर्लेहयेच्छिशुम् ॥ ५७ ॥**
**एकां वाऽतिविषां कासज्वरच्छर्दिरुपद्रुतम् ।**

स०–अतिविषादीन् मधुना कासादिपीडितं शिशु–बाल, लेहयेत् । अथवा, अतिविषामेका लेहयेत् ।

**पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा ॥ ५८ ॥**
**द्विवार्ताकीफलरसं पञ्चकोल च लेहयेत् ।**
**पिप्पलीपञ्चलवणं कृमिजित्पारिभद्रकम् ॥ ५९ ॥**
**तद्वल्लिह्यात्तथा व्योष मषीं वा रोमचर्मणाम् ।**
**लाभतः शल्यकश्वाविद्गोधर्क्षशिखिजन्मनाम् ॥६०॥**

स०–यो बाल पीत पीतं स्तन्य वमेत् त बृहतीद्वयस्य फ-

१ 'बलाह्वयै' इ स मू । 'टवटाह्वयै.' ज । २ 'क्षारमस्तुयुत' ई स स । "यवक्षारमस्तुभ्या युतम् ।" इतीन्दु । ३ 'कश्यपेन' ट ण । ४ 'दन्तोद्भेदोत्थरो' इ ई ज स द्व । ५'न्यपायिन' ई ज । ६ "तत –रसस्यालाभेन ॥ गिरिकदम्बक –भूकदम्बक ॥ अशोकरोहिण्या–कटुरोहिण्या, युक्तम् ।" इतीन्दु । ७'म्बकम् ।' चन्द्र. । ८ 'युतम्' स.मू । 'स्रुतम्' इति क्वचित् ।

१ 'शृत' ट । २ "सिंही–क्षुद्रबृहती । गभ –पाकाय कल्क ॥ मधूलिका–गुडतृण ॥ वय स्था–आमलकी । कायस्था–हरीतकी ।" इन्दु । ३ 'सपिप्पलीभ्या' स मू । ४ 'तैल प्रस्थ' ज । 'तैल तैलान्मस्तु' य । ५ 'च्छर्दिभिरर्दितम्' ज य । ६ 'पीत च वमति य स्तन्य मधु' ज । ७ 'ण विडङ्ग पा' चन्द्र. । 'वणकृमि' इति क्वचित् । ८ 'धर्क्षगिरिज' स.मू ।

लश्वरस पञ्चकोल च घृतमाक्षिकाभ्या लेहयेत् । अथवा पिप्पल्यादिक तद्वत्-पूर्ववत् मधुसर्पिषा, बालो लिह्यात् । व्योष तथा-मधुसर्पिषा, लिह्यात् । [ अथवा ] शल्यकादिजन्मना रोम्णा चर्मणा च यथालाभ मषी मधुघृताभ्या लिह्यात् ।

**खदिरार्जुनतालीसकुष्ठचन्दनजे रसे ।**
**सक्षीरं साधितं सर्पिर्वमथुं विनियच्छति ॥ ६१ ॥**

स०-खदिरादिरसे सक्षीर सर्पि पक्वमुपयुक्त वमि शमयति ।

**[ हनुमूलगतो वायुर्दन्तदेशास्थिगोचर. ।**
**यदा शिशोः प्रकुपितो नोत्तिष्ठन्ति तदा द्विजाः ॥१॥**
**रूक्षाशिनो वातिकस्य चालयत्यनिलः शिराः ।**
**हन्वाश्रयाः प्रसुप्तस्य दन्तै. शब्दं करोत्यतः ॥ २ ॥ ]**
**सदन्तो जायते यस्तु दन्ताः प्राग्यस्य चोत्तराः ।**
**कुर्वीत तस्मिन्नुत्पाते शान्तिं तं च द्विजातये ॥ ६२ ॥**
**दद्यात्सदक्षिणं बालं नैगमेषं च पूजयेत् ।**

स०-यस्तु बालो दन्तै सह जायते, यस्य वा दन्ता प्रथममुपरिष्टाद् भवन्ति, तस्मिन्-तथाविधे, उत्पाते सति शान्ति कुर्यात् । त च बाल ब्राह्मणाय सदक्षिण-ससुवर्णादिक, दद्यात् । नैगमेष च पूजयेत् ।

**तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ॥ ६३ ॥**
**तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ।**
**तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् ॥ ६४ ॥**
**तृडास्यकण्ठ्वक्षिरुजा ग्रीवादुर्धरता वमिः ।**

स०-कफो मधुराद्यैस्तालुमासे प्रकुपितस्तालुकण्टक कुर्यात् । तेन-तालुकण्टकेन, शिरसि तालुप्रदेशे निम्नता स्यात् । तथा तालुन पतन स्तनद्वेष कृच्छ्रेण स्तनपान शकृच्च द्रव स्यात् । तथा तृडाद्या स्यु ।

**तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् ॥ ६५ ॥**
**तालु तद्वत्कणाशुण्ठीगोशकृद्रससैन्धवै. ।**

स०-तत्र तालूत्क्षिप्य यवक्षारक्षौद्राभ्या प्रतिसारयेत् । तथैव कणादिभि. प्रतिसारयेत् ।

**शृङ्गबेरनिशाभृङ्गं कल्कितं वटपल्लवैः ॥ ६६ ॥**
**बध्वा गोशकृता लिप्तं कुकूले स्वेदयेत्ततः ।**
**रसेन लिम्पेत्ताल्वास्यं नेत्रे च परिषेचयेत् ॥ ६७ ॥**

स०-तथा शुण्ठ्यादिक कल्कित वटपल्लवैर्बध्वा गोशकृता लिप्त तत कुकूले स्वेदयेत् । अनन्तर रसेन च-तत स्रुतेन, तालु आस्य च लिम्पेत् । तथा नेत्रे परिषेचयेत् ।

**हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ।**
**पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात् ॥ ६८ ॥**

स०-हरीतक्यादिक माक्षिकयुक्त स्तन्येन शिशु पीत्वा तालुकण्टकाद्विमुच्यते ।

**मलोपलेपात्स्वेदाद्वा गुदे रक्तकफोद्भवः ।**
**ताम्रो व्रणोऽन्तः कण्डूमान् जायते भूर्युपद्रवः ॥ ६९ ॥**
**केचित्तं मातृकादोषं वदन्त्यन्येऽहिपूतनम् ।**
**पृष्ठारुर्गुदकुट्टं च केचिच्च तमनामिकम् ॥ ७० ॥**

स०-गुदे रक्तकफोद्भवो मलोपलेपात् स्वेदाद्वा ताम्रो व्रण कण्डूमानान्तरो बहूपद्रवो जायते । त-तथाविध, केचिन्मातृकादोष कथयन्ति । अपरे च पूतनसञ्ज्ञमित्याहु । केचित् पृष्टारुरिति, केचित् गुदकुट्टमिति, केचिच्च तमनामिकं, ब्रुवते ।

**तत्र धात्र्याः पय. शोध्यं पित्तश्लेष्महरौषधैः ।**

स०-तत्र-तस्मिन्ननेकनाम्नि रोगे, धात्र्या क्षीर शोधनीयम् । कै ? पित्तश्लेष्महृद्भिरौषधै ।

**शृतशीतं च शीताम्बुयुक्तमन्तरपानकम् ॥ ७१ ॥**
**सक्षौद्रताक्ष्र्यशैलेन व्रणं तेन च लेपयेत् ।**
**त्रिफलाबदरीप्लक्षत्वक्क्वाथपरिषेचितम् ॥ ७२ ॥**
**कासीसरोचनातुत्थमनोह्वालरसाञ्जनैः ।**
**लेपयेदम्लपिष्टैर्वा चूर्णितैर्वाऽवचूर्णयेत् ॥ ७३ ॥**
**सुश्लक्ष्णैरथवा यष्टीशङ्खसौवीरकाञ्जनैः ।**
**सारिवाशङ्खनाभिभ्यामसनस्य त्वचाऽथवा ॥ ७४ ॥**
**रागकण्डूत्कटे कुर्याद्रक्तस्रावं जलौकसा ।**
**सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके ॥ ७५ ॥**

स०-सह क्षौद्रेण वर्तते यत्तत् सक्षौद्रम्, सक्षौद्र च तत् ताक्ष्र्यशैल च, तेन युक्त शीताम्बु, अन्तर पानकं च हितम् । किम्भूतम् ? शृतशीतम् । अत्र च शीतमात्रस्य शीतत्वेनैव

---

१ अत्र 'पारिभद्रो-निम्ब । लाभत -यथालाभ एकैकस्य समुदितानां वा ।' इत्यधिक ट पुस्तके । २ "रसे-क्वाथे ।" इति चन्द्र । ३ 'रसै. स' ट ण । ४ [ ] इमौ श्लोकौ इ ड ण य. चन्द्र स मू. पुस्तकेषूपलभ्येते । ५ 'मूलाश्रितो' उ । ६ 'शान् विशोषयेत् ।' इ स मू चन्द्र. । 'शान् विशोधयेत् ।' उ. । ७ 'शान्तिकं च' उ स मू । ८ 'सैनिकेश च' "सैनिकेश-कुमारभट्टारकम् ।" इति चन्द्र । "नैगमेष च-नाम्ना वक्ष्यमाण ग्रहविशेषम् ।" इतीन्दु. । ९ 'च' य. । १० 'शाङ्गं' स मू. । 'शाकुष्ठ' स.स. ।

१ कुकूले-तुषाग्नौ । २ "तत -तस्मात्स्विन्नात ॥ तथा बालस्य सितशीत-श्वेतचन्दन, शीताम्बुना युक्तमन्तरपानक विधेयम् । तेन च-सितशीतेन श्वेतचन्दनेन क्षौद्रताक्ष्र्यशैलाभ्या युक्तेन गुदव्रण लेपयेत ।" इतीन्दु । "सितशीत-श्वेत चन्दनम् ।" इति चन्द्र । ३ 'न्येऽपि पू' ण । 'न्ये तु पू' इ चन्द्र । 'न्ये तु पौत' स स । ४ 'गुदकिट्ट' इ । 'गुदकण्डू' उ । 'गुदकुष्ठ' ण । ५ 'नामकम्' इ उ य स द्व. चन्द्र ,ट । ६ 'सितशीत' चन्द्र स स. । ७ 'क्तमुत्तर' स. मू गदनि. । ८ 'गुदकिट्टके' इ. । ९ 'शीतलमात्र' ण.य ।

लब्धत्वान्छानाम्ब्विल्यतिशयार्थम्। एव हि पित्तोपशान्तिर्भवति। अत एव च तन्महितस्य कफस्य शमनाय माक्षिकरसाञ्जनयोगोऽत्र कृत । तेन च जलेन व्रण लेपयेत्। किम्भूत व्रणम्? त्रिफलादिक्वाथेन परिषेचित सन्त कासीसादिभिरम्लपिष्टैर्वा लेपयेत्। अथवा, एतैरेव चूर्णैर्व्रणमवचूर्णयेत्। अथवा मधुकादिभि सुपिष्टैरवचूर्णयेत्। सारिवागङ्गनाभिश्यामवचूर्णयेत्। अथवा, असनत्वचा लिम्पेत्। रागकण्डूाविक्ये जलौकोभिरस्रस्राव कुर्यात्। जलौकसा "जातौ" इत्येकवचनात् तस्य प्रयोगो न दोषाय, तथा सल्लक्षस्य दृष्टत्वात्। सर्व चिकित्सित पित्तव्रणतुल्य गुदकुट्टके शस्यते।

**पाठावेल्लद्विरजनीमुस्तभार्गीपुनर्नवैः।**
**सबिल्वत्र्यूषणैः सर्पिर्वृश्चिकालीयुतैः शृतम्॥७६॥**
**लिहानो मात्रया रोगैर्मुच्यते मृत्तिकोद्भवैः।**

स०–पाठादिभि पक्व घृत मात्रया लिहन् मृत्तिकोद्भवेरामयेर्मुच्यते।

**व्याधेर्यद्यस्य भैषज्यं स्तनस्तेन प्रलेपित ।**
**स्थितो मुहूर्तं धौतोऽनु पीतस्तं तं जयेद्गदम्॥७७॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने बालामयप्रतिषेधो नाम द्वितीयोऽध्यायः॥ २॥**



स०–यस्य रोगस्य यदौषधमुक्त तेनैवौषधेन स्तन प्रलेपितो मुहूर्तमात्र–नाडिकाद्वय यावद् विधृत, स्तनोऽनु धौत पश्चात् पीतस्त त–अनियत रोग, जयेत्।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने बालामयप्रतिषेधो नाम द्वितीयोऽध्याय समाप्त ॥२॥



## तृतीयोऽध्यायः।

अस्मादनन्तर बालग्रहप्रतिषेध उच्यते, ग्रहाणामपि रोगहेतुत्वात्।

**अथातो बालग्रहप्रतिषेधं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**
(गद्यसूत्रे ॥ २ ॥)

स०–बालाना ग्रहा बालग्रहा, तेषा प्रतिषेधो यस्मिन् स बालग्रहप्रतिषेध, तम्। शेष पूर्ववत्।

**पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना।**
**मनुष्यविग्रहाः पञ्च सप्त स्त्रीविग्रहा ग्रहाः॥ १॥**

स०–पूर्व श्रीमहादेवेन कार्तिकेयस्य रक्षार्थं मनुष्यशरीरा पञ्च ग्रहा निर्मिता । स्त्रीशरीराश्च सप्तोत्पादिता ।

**स्कन्दो विशाखो मेषाख्यः श्वग्रहः पितृसंज्ञितः।**
**शकुनिः पूतना शीतपूतनाऽदृष्टिपूतना॥ २॥**
**मुखमण्डितिका तद्वद्रेवती शुष्करेवती।**

स०–स्कन्दादय पञ्च नररूपा । शकुन्यादय सप्त स्त्रीरूपा ।

**तेषां ग्रहीष्यतां रूपं प्रततं रोदनं ज्वरः॥ ३॥**

स०–तेषा–ग्रहाणा, ग्रहीष्यता पूर्वरूप प्रतत रोदन ज्वरश्च।

**सामान्यं रूपमुत्त्रासजृम्भाभ्रूक्षेपदीनताः।**
**फेनस्रावोर्ध्वदृष्ट्योष्ठदन्तदंशप्रजागराः॥ ४॥**
**रोदनं कूजनं स्तन्यविद्वेषः स्वरवैकृतम्।**
**नखैरकस्मात्परितः स्वधात्र्यङ्गविलेखनम्॥ ५॥**

स०–तेषा सामान्यं रूपमुत्रास इत्यादि स्वधात्र्यङ्गविलेखनान्तम्।

**तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः।**
**हतैकपक्षः स्तब्धाङ्गः सस्वेदो नतकन्धरः॥ ६॥**
**दन्तखादी स्तनद्वेषी त्रस्यन् रोदिति विस्वरम्।**
**वक्रवक्त्रो वमन् लालां भृशमूर्ध्वं निरीक्षते॥ ७॥**
**वसासृग्गन्धिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः।**
**चलितैकाक्षिगण्डभ्रूः संरक्तोभयलोचनः॥ ८॥**

---

१ 'तस्तत ज' "त गद–ज्वरादिक, तद्–भैषज्य, जयेत्।" इति चन्द्र । "त त–स्वविषय ज्वरादिक, जयेत्।" इतीन्दु । २ अथ बालग्रहप्रतिषेध सुश्रुते उ० २७।२८।२९।३०।३१।३२।३३।३४।३५।३६।३७ अध्यायेषु, अष्टाङ्गसङ्ग्रहे उ० ३।४।५।६ अध्यायेषु चास्ति वर्णितः, चरके तु न वर्णित ।

१ "पुरा–पूर्वस्मिन् काले, गुहस्य–कुमारभट्टारकस्य, शूलपाणिना–महेश्वरभट्टारकेण ॥ ग्रहीष्यता–ग्रहीतुमभिलष्यमाणाना, रूप–लिङ्गम्। रोदन–अश्रुविमोचनम्। भ्रुवो क्षेप–चलनम्। ऊर्ध्व–उपरि, दृष्टि–दर्शनम्। कूजन–अव्यक्तशब्दस्यानुकरणम्। अकस्मात्–निमित्त विना । परित–सर्वत ॥ त्रसन्–त्रास गच्छन्। विस्वर कृत्वा रोदिति। वमन्–छर्दयन्।" इति चन्द्र । "फेनस्रावो–मुखात्। ओष्ठयोर्दन्ताना च दश–दशनम्।" इतीन्दु । २ एतेषु द्वादशग्रहेषु मध्यात् श्वग्रहपितृसंज्ञितौ शुष्करेवती चेति त्रयो ग्रहा सुश्रुते न पठिता, शेषा नवैव तत्र वर्णिता । ३ 'मेषास्य' इ उ चन्द्र स स । ४ 'ना चान्धपूतना।' गदनि । ५ 'मण्डनिका' इ य । 'मण्डिनिका' उ ण । ६ 'भ्रूत्क्षेप' ण स मू । ७ 'विक्षिपते' इ य. । 'विक्षिप्यते' ण. । ८ 'त्रसन्' उ । ९ 'वमेल्लाला' ण य.।

**स्कन्दार्तस्तेन वैकल्यं मरणं वा भवेद्[1] ध्रुवम् ।**

स०—तत्र-तेषु ग्रहेषु मध्ये, एकलोचनस्रवणशीलस्तथा शिरो विक्षिपत इत्यादि सरक्तलोचनद्वयान्त स्कन्दगृहीतस्य लक्षणम् । तेन वैकल्य-पङ्गुत्वंकाणत्वादि, मृत्युरेव वा ध्रुव-[3]निश्चित, भवेत् ।

सम्प्रति विशाखस्य स्कन्दापस्मारापरसञ्ज्ञस्य लक्षणमाह—

**संज्ञानाशो[4] मुहुः केशलुञ्चनं कन्धरानतिः ॥ ९ ॥**
**विनम्य जृम्भमाणस्य शकृन्मूत्रप्रवर्तनम् ।**
**फेनोद्वमनमूर्ध्वेक्षा हस्तभ्रूपादनर्तनम् ॥ १० ॥**
**स्तनस्वजिह्वासन्दंशसंरम्भज्वरजागरा. ।**
**पूयशोणितगन्धश्च स्कन्दापस्मारलक्षणम् ॥ ११ ॥**

स०—सञ्ज्ञानाशादिक पूयशोणितगन्धान्त स्कन्दापस्मारलक्षणम् ।

**आध्मानं पाणिपादस्य[6] स्पन्दनं फेननिर्वमः[7] ।**
**तृण्मुष्टिबन्धातीसारस्वरदैन्यविवर्णताः ॥ १२ ॥**
**कूजनं स्तननं[8] छर्दिः कासहिध्माप्रजागरा. ।**
**ओष्ठदंशाङ्गसङ्कोचस्तम्भबस्ताभगन्धताः ॥ १३ ॥**
**ऊर्ध्वं निरीक्ष्य हसनं, मध्ये विनमनं ज्वरः ।**
**मूर्च्छैकनेत्रशोफश्च नैगमेषग्रहाकृतिः ॥ १४ ॥**

स०—मेषस्य नैगमेषापरसञ्ज्ञस्याध्मानादि एकनेत्रशोफान्त लक्षणम् ।

**कम्पो हृषितरोमत्व[12] स्वेदश्चक्षुर्निमीलनम् ।**
**बहिरायामनं जिह्वादंशोऽन्तःकण्ठकूजनम् ॥ १५ ॥**
**धावनं विट्सगन्धत्वं क्रोशनं[13] च श्ववच्छुनि ।**

स०—शुनि-श्वग्रहे, कम्प इत्यादिक क्रोशन श्ववदित्यन्त लक्षणम् ।

**रोमहर्षो मुहुस्त्रास[1] सहसा रोदनं ज्वरः ॥ १६ ॥**
**कासातिसारवमथुजृम्भातृट्शवगन्धता. ।**
**अङ्गेष्वाक्षेपविक्षेपशोषस्तम्भविवर्णता. ॥ १७ ॥**
**मुष्टिबन्ध' स्रुतिश्चाक्ष्णोर्बालस्य स्युः पितृग्रहे ।**

स०-पितृग्रहे रोमहर्ष इत्यादिक बालस्य स्युरित्यन्तं लक्षणम् ।

**स्रस्ताङ्गत्वमतीसारो जिह्वातालुगले व्रणा. ॥ १८ ॥**
**स्फोटाः सदाहरुक्पाकाः सन्धिषु स्युः पुनःपुनः ।**
**निश्यह्नि प्रविलीयन्ते पाको वक्त्रे गुदेऽपि वा ॥१९॥**
**भयं शकुनिगन्धत्वं ज्वरश्च शकुनिग्रहे ।**

स०—शकुनिग्रहे स्रस्ताङ्गत्वमित्यादिक ज्वरश्चेत्यन्त लिङ्गम् ।

**पूतनायां वमिः कम्पस्तन्द्रा रात्रौ प्रजागरः ॥ २० ॥**
**हिध्माऽऽध्मान शकृद्भेद. पिपासा मूत्रनिग्रहः ।**
**स्रस्तहृष्टाङ्गरोमत्वं काकवत्पूतिगन्धिता ॥ २१ ॥**

स०—वमि कम्प इत्यादिक काकवत्पूतिगन्धितेत्यन्तं पूतनाग्रहे लिङ्गम् ।

**शीतपूतनया कम्पो रोदनं तिर्यगीक्षणम् ।**
**तृष्णाऽन्त्रकूजोऽतीसारो वसावद्विस्रगन्धता ॥२२॥**
**पार्श्वस्यैकस्य शीतत्वमुष्णत्वमपरस्य च ।**

स०—शीतपूतनया कम्पो रोदनमित्यादिकमुष्णत्वमपरस्य चेत्येवमन्त शीतपूतनाग्रहे लिङ्गम् ।

**अन्धपूतनया छर्दिर्ज्वरः कासोऽल्पनिद्रता ॥ २३ ॥**
**वर्चसो भेदवैवर्ण्यदौर्गन्ध्यान्यङ्गशोषणम् ।**
**दृष्टेः सादातिरुक्कण्डूपोथकीजन्मशूनताः ॥ २४ ॥**
**हिध्मोद्वेगस्तनद्वेषवैवर्ण्यस्वरतीक्ष्णताः ।**
**वेपथुर्मत्स्यगन्धत्वमथवा साम्लगन्धता ॥ २५ ॥**

स०—छर्द्यादिक साम्लगन्धतेत्यन्तमन्धपूतनाया [अ]दृष्टिपूतनापरसञ्ज्ञाया लक्षणम् ।

---

१ 'वेद्ध्रुतम्' इ । २ 'त्वकारणत्वादि' ट ण य । ३ 'निश्चल' ण । ४ 'शो भवेत्केश' इ । ५ "विनम्य-अङ्गविनामं कृत्वा । ईक्षा-ईक्षणम्, ऊर्ध्वमीक्षा-ऊर्ध्वेक्षा । नर्तन-नृत्यकरणम् । सन्दश -दशनम् । सरम्भ -सवेग सकोपत्वम् ॥ चक्षुषो निमीलन-अनुद्घाटनम् । जिह्वाया दन्तैर्दशनम् । विट्सगन्धत्वं-शकृत्समानगन्धता । शुन इव क्रोशनम् ।" इति चन्द्र । "स्पन्दन-चलन, पाणिपादस्य।" इतीन्दु । ६ 'पादास्यस्प' ण । ७ 'निर्गम ' उ य । 'निर्वमि ' स स । 'न हनन श्रम' ।' चन्द्र । ८ 'श्वसन' इ । 'स्तम्भन' उ । 'स्वनन' य.सं मू गद । ९ "स्तनन ध्वनिमात्रे स्यान्मेघशब्दे च कुन्थिते ।" इति मेदिनी । १० 'स्ताङ्गगन्ध' 'हसते' गदनि । ११ "मध्ये-मध्याङ्गे ।" इति डल्हण । १२ 'हर्षित' ण य । १३ 'न श्वानव' ण गदनि. ।

१ 'मुहु श्वास' इ.ण गदनि । २ "अङ्गेषु-शरीरावयवेषु ॥ सन्धिषु-सन्धिप्रदेशेषु, [ स्फोटा. ] पुन पुन निशि स्यु., अह्नि पुन स्फोटा प्रविलीयन्ते-विलयमायान्ति । शकुनिगन्धत्व-पक्षिसमानगन्धता ॥ अल्पनिद्रता-स्वल्पस्वापत्वम् । दृष्टे -दर्शनस्य, साद -अल्पता । अतिरुक्-भृश वेदना । कण्डू -कण्डूयन चक्षुषो. । पोथक्या -चक्षुषो रोगस्य, जन्म-उत्पत्ति । शूनता-शूनत्वम् । वेपथु -कम्प ।" इति चन्द्र । "स्रस्तहृष्टयोरङ्गरोम्णोश्च यथासङ्ख्येन सम्बन्ध ।" इतीन्दु । ३ 'ल्पवह्निता' ई उ । ४ 'दृष्टिसादोऽति' इ ण । 'दृष्टे सादोऽक्षिरु' ई. । 'दृष्टिसादोऽक्षिरु' उ. स द्व । 'दृष्टिप्रसादो रु' य । ५ साद्यादिशूनतान्ता विकारा दृष्टेर्भवन्ति । ६ 'कण्डू पो' इ स स. । ७ 'नता' इ चन्द्र स द्व. । 'शून्यता' ई गदनि । ८ 'वर्ण्य स्वरतीक्ष्णता' उ.ण य.चन्द्र. । ९ 'वमथु' उ. ।

**मुखमण्डितया पाणिपादास्यरमणीयता ।**
**सिराभिरसिताभाभिराचितोदरता ज्वरः ॥ २६ ॥**
**अरोचकोऽङ्गग्लपन गोमूत्रसमगन्धता ।**

स०-मुखमण्डितताया ग्रहे पाणिपादास्यरमणीयतेत्यादिक लक्षणम् ।

**रेवत्या श्यावनीलत्वं कर्णनासाक्षिमर्दनम् ॥ २७ ॥**
**कासहिध्माक्षिविक्षेपवक्त्रवक्रत्वरक्तताः ।**
**बस्तगन्धो ज्वरः शोषः पुरीष हरित द्रवम् ॥ २८ ॥**

स०-रेवत्या-रेवतीग्रहे, श्यावनीलत्वादि लिङ्गम् ।

**जायते शुष्करेवत्यां क्रमात्सर्वाङ्गसङ्क्षय. ।**

स०-शुष्करेवत्या क्रमात्सर्वाङ्गसङ्क्षय इति लिङ्गम् ।

अधुनाऽसाध्यलक्षण वक्ति—

**केशशातोऽन्नविद्वेषः स्वरदैन्यं विवर्णता ॥ २९ ॥**
**रोदनं गृध्रगन्धत्वं दीर्घकालानुवर्तनम् ।**
**उदरे ग्रन्थयो वृत्ता यस्य नानाविधं शकृत् ॥ ३० ॥**
**जिह्वाया निम्नता मध्ये श्याव तालु च तं त्यजेत् ।**

स०-केशशात इत्यादिक श्याव तालु चेत्यन्तं यस्य बालस्य स्यात्, त न चिकित्सेत् ।

**भुञ्जानोऽन्नं बहुविधं यो बालः परिहीयते ॥ ३१ ॥**
**तृष्णागृहीतः क्षामाक्षो हन्ति तं शुष्करेवती ।**

स०-भुञ्जानोऽन्नमित्यादिलक्षण बाल शुष्करेवती हन्ति ।

त्रिभि कारणैर्ग्रहा गृह्णन्तीत्याह—

**हिंसारत्यर्चनाकाङ्क्षा ग्रहग्रहणकारणम् ॥ ३२ ॥**

स०-हिंसा च रतिश्चार्चना च, तासामाकाङ्क्षा-अभिलाष , सा ग्रहाणा ग्रहणे कारण-हेतु ।

**तत्र हिंसात्मके बालो महान् वा स्रुतनासिकः ।**
**क्षतजिह्वः क्वणेद्वाढमसुखी साश्रुलोचनः ॥ ३३ ॥**
**दुर्वर्णो हीनवचनः पूतिगन्धिश्च जायते ।**
**क्षामो मूत्रपुरीष स्व मृद्नाति न जुगुप्सते ॥ ३४ ॥**
**हस्तौ चोद्यम्य संरब्धो हन्त्यात्मान तथा परम् ।**
**तद्वच्च शस्त्रकाष्ठाद्यैरग्निं वा दीप्तमाविशेत् ॥ ३५ ॥**
**अप्सु मज्जेत्पतेत्कूपे कुर्यादन्यच्च तद्विधम् ।**
**तृड्दाहमोहान् पूयस्य छर्दनं च प्रवर्तयेत् ॥ ३६ ॥**
**रक्तं च सर्वमार्गेभ्यो रिष्टोत्पत्तिं च त त्यजेत् ।**

स०-तत्र-तेषु ग्रहेषु मध्यात्, हिसात्मके ग्रहे सति बालो महान् वा पुरुष स्रुतनासिकादिगुणो जायते । तथा क्षाम सन् इदमिद कुर्यात् । तद्विध-आत्महननादिक, अन्यदपि कुर्यात् । तृड्दाहमोहास्तथा छर्दन च पूयस्य प्रवर्तयेत् । तथा सर्वस्रोतोभ्यो रक्त च प्रवर्तयेत्, रिष्टोत्पत्ति च । त बाल नोपक्रमेत् ।

**रहःस्त्रीरतिसंलापगन्धस्रग्भूषणप्रियः ॥ ३७ ॥**
**हृष्टः शान्तश्च दुःसाध्यो रतिकामेन पीडितः ।**

स०-रह स्त्रीरत्यादिप्रियो हृष्टादिगुणो बालो रतिकामेन ग्रहेण पीडित कृच्छ्रसाध्य स्यात् ।

सम्प्रत्यर्चनाकामं ब्रूते—

**दीनः परिमृशन् वक्त्रं शुष्कौष्ठगलतालुकः ॥ ३८ ॥**
**शङ्कितं वीक्षते रौति ध्यायत्यायाति दीनताम् ।**
**अन्नमन्नाभिलाषेऽपि दत्तं नात्ति बुभुक्षते ॥ ३९ ॥**
**गृहीतं बलिकामेन तं विद्यात्सुखसाधनम् ।**

स०-दीनादिगुण सन् इदमिद करोति । तं-एवविधं, बलिकामेन गृहीत बाल सुखसाध्य विद्यात् ।

अधुनैषा चिकित्सितमाह—

**हन्तुकामं जयेद्धोमैः सिद्धमन्त्रप्रवर्तितैः ॥ ४० ॥**

---

१ 'ण्डिकया' उ य । २ 'पादस्य र' ई.ण चन्द्र । ३ "रमणीयता-शोभायमानत्वम् । असिताभाभि.-कृष्णवर्णाभि । अरोचक -अनान्नाभिनन्दता ॥ अक्ष्णोर्विक्षेप -प्रेरणम् । हरितं-शाड्वलोपमम् । इति चन्द्र । ४ 'रेवत्या' इ । ५ इन्दुस्तु 'पुरीष हरित द्रवम्' इति शुष्करवतीलक्षण वर्णयति, तदयुक्तम् । यत सुश्रुतारुणदत्तचन्द्रनन्दनादयस्तत् रेवतीलक्षणमिति वर्णयन्ति । तथा च सुश्रुत. (उ.अ.२७।११)-"रक्तास्यो हरितमलोऽतिपाण्डुदेह श्यावो वा ज्वरमुखपाकवेदनार्त । रेवत्या व्यथिततनुश्च कर्णनास मृद्नाति ध्रुवमभिपीडित कुमार ॥" इति । ६ अस्याग्रे "नानावर्णपुरीषत्वमुदरे ग्रन्थय. सिरा. ।" इति श्लोकार्ध इ ई उ ण, ब. चन्द्र. स द्व गदनि पुस्तकेषूपलभ्यते । किन्तु 'उदरे ग्रन्थयो' इत्यनेन तत् द्विरुक्त भवेत्, अतोऽयुक्तम् । ७ इन्दुचन्द्रनन्दनौ तु "उदरे ग्रन्थयो" इत्यादिग्रन्थेनासाध्यलक्षण वर्णयत । ८ 'जिह्वाया' ई.स.मू ।

१ 'क्वणेद्वाढ' उ. । 'क्वणन् बाढ' य स स । 'ह्लो वमेद्वा' इ चन्द्र । २ "बल ( बाढ ) कृत्वा बालश्छर्दिं कुर्यात् । असुखी-दु खी । दुर्वर्णो-नष्टच्छाय । हीनवचन -स्वल्प वाक् । क्षाम -क्षीणधातु । स्व-आत्मीयम् । उद्यम्य-उत्क्षिप्य ॥ शान्त -उपशमयुक्त ॥ रौति-शब्द करोति ।" इति चन्द्र । "सरब्ध.-ससरम्भ । तद्विधमित्येवप्रकार साहसम् ।" इतीन्दु । ३ 'सास्रलो' उ य चन्द्र स स । ४ 'दुर्बलो ही' स मू गदनि. । ५ 'न्धिस्तु जा' ई उ । ६ 'गृह्णाति' इ य । ७ 'चोन्नम्य' गदनि. । ८ 'सक्रुद्धो' य । ९ 'ग्नि चादीप्त' स मू गदनि । १० 'मोहा पू' उ य । ११ 'त्पत्तिश्च' ई उ.य चन्द्र । १२ 'मोहाश्च तथा' ट । 'मोहास्तथा' य । १३ 'मृशेद्वक्त्र' इ गदनि । १४ 'भीतताम्' स स । १५ 'महकामेन' इ ।

**इतरौ तु यथाकाम रतिबल्यादिदानतः ।**

स०–जिघांसुग्रह होमादिभिर्जयेत् । ननु, हिमाकामोऽसाध्यस्त त्यजेदित्युक्तम्, तत्कथ तस्य सावनमुक्तम् ? ब्रूम । असाध्यस्यापि चिकित्सा कार्यैव । तथा च सङ्ग्रहेऽभ्यधायि–"तस्मादाचरमोच्छ्वासाच्चिकित्सेत् ।" इत्यादि । अपि च मन्त्रप्रभावस्याचिन्त्यत्वात् । इतरौ तु–र[1]त्यर्चनाकामौ, यथाभिलाष रतिबल्यादिदानेन जयेत् ।

**अथ साध्यग्रहं बाल वि[2]विक्ते[3] श[2]रणे स्थितम् ॥ ४१ ॥**
**त्रि[4]रह्नः सिक्तसं[5]मृष्टे सदा सन्निहितानले ।**
**विकीर्णभू[6]ति[3]कुसुमपत्रबीजान्नसर्षपे ॥ ४२ ॥**
**रक्षोघ्नतैलज्वलितप्रदीपैँ[7]हतपाप्मनि ।**
**व्यवायमद्यपिशितनिवृत्तपरिचारके ॥ ४३ ॥**
**पुराणसर्पिषाऽभ्यक्त परिषिक्तं सुखाम्बुना ।**
**साधितेन बलानिम्बवै[3]जयन्तीनृपद्रुमैः ॥ ४४ ॥**
**[3]पारिभद्रकक[3]ट्वङ्गजम्बूवरुणकट्तृणैः ।**
**[3]कपोतवङ्कापामार्ग[8]पाटलामधुशिग्रुभिः ॥ ४५ ॥**
**[3]काकजङ्घाम[3]हाश्वेताकपित्थक्षी[9]रिपादपैः ।**
**सकदम्बकरञ्जैश्च, धूपं स्नातस्य चाचरेत् ॥ ४६ ॥**
**द्वीपिव्याघ्राहिसिंहर्क्षचर्मभिर्घृतमिश्रितैः ।**

स०–अथेति कृतमङ्गलम् । साध्यग्रह बाल विविक्ते गृहे स्थितम् । किम्भूते ? [त्रि –] त्रीन् वारान्, शोधिते सिक्ते च । त्रिरह्न इति "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे" इत्यधिकरणे षष्ठी । तथा सर्वदा निकटाग्नौ । तथा विक्षिप्तभूत्यादिके, रक्षोघ्नतैलप्रदीप्तप्रदीपहतपापे, व्यवायादिनिवृत्तपरिचारके । किम्भूतं बालम् ? पुराणघृताभ्यक्तम् । तथा स्नातमुष्णाम्बुना । किम्भूतेन जलेन ? बलादिभि साधितेन । वैजयन्ती–अरणिका । महाश्वेता–कटभी । परिषिक्त[11]स्य चास्य द्वीप्यादिचर्मादिभिर्घृतमिश्रितैर्धूपन कुर्यात् ।

**पूती[1]द[2]शा[3]ङ्गसिद्धार्थवचाभल्लातदीप्यकैः ॥ ४७ ॥**
**सकुष्ठैः [4]सघृतैर्धूप• सर्वग्रहविमोक्षणः ।**

स०–पूत्यादिभिर्धूप सर्वग्रहविमोक्षण स्यात् । पूती–पूतीकरञ्ज । "व[2]चाहिङ्गुविडङ्गानि सैन्धव गजपिप्पली । पाठा प्रतिविषा व्योष" (हृ उ अ ३७।२७) इति दशाङ्ग का[5]श्यपेन विनिर्मित ।

**सर्षपा निम्बपत्त्रा[6]णि मूलमश्वखुरा[7] वचा ॥ ४८ ॥**
**भूर्जपत्रं घृत धूपः सर्वग्रह[8]निर्वारणः ।**

स०–सर्षपादिभिर्धूपोऽशेषग्रहनिवारण । अश्वखुरा–गिरिकर्णिका ।

**[9]अनन्ताम्रास्थितग[10]रं मरिचं मधुरो गणः ॥ ४९ ॥**
**शृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत् ।**
**दशमूलरसक्षीरयुक्तं तद् ग्रहजित्परम् ॥ ५० ॥**

स०–यवासादिभि कल्कितैर्दशमूलरसक्षीरयुत घृत पचेत् । तच्च शिशो पथ्य पर ग्रहजित् ।

**रास्नाद्यंशुमतीवृ[11]द्धपञ्च[12]मूलैर्बलाघनात् ।**
**क्वाथे सर्पिः पचेत्पिष्टैः सारिवाव्योषचित्रकैः ॥ ५१ ॥**
**पाठाविडङ्गमधुकपयस्याहिङ्गुदारुभिः ।**
**सग्रन्थिकैः सेन्द्रयवैः शि[13]शोस्तत्सततं हितम् ॥ ५२ ॥**
**सर्वरोगग्रहहरं दीपनं बलै[14]र्वर्णदम् ।**

स०–रास्नादिक्वाथे सारिवादिभि कल्कै सर्पि पचेत् । तच्च शिशो सदा पथ्य सर्वरोगग्रहघ्न दीपन बलवर्णदं च ।

**सारिवासुरभिब्राह्मीशङ्खिनी[15]कुष्ठसर्षपैः ॥ ५३ ॥**
**वचाश्वगन्धासुर[16]सयुक्तैः सर्पिर्विपाचयेत् ।**
**तन्नाशयेद्ग्रहान् सर्वान् पानेनाभ्यञ्जनेन च ॥ ५४ ॥**

स०–सारिवादिभि सुरसयुक्तै सर्पिर्विपाचयेत् । तच्च पानाभ्यञ्जनाभ्या सर्वग्रहनाशनम् ।

---

१ 'त्यर्चाकामौ' ट य । २ "विविक्तौ पूतविजनौ" इति "शरण गृहरक्षित्रो" इति चामर । ३ "विविक्त–अविस्तीर्णे । अह्नि–दिवसे । वैजयन्ती–तर्कारी । पारिभद्र –पारिजातक । कट्वङ्ग –कलष (?) । कपोतवङ्का–सुवर्चला । महाश्वेता–गिरिकर्णिका ।" इति चन्द्र । "भूति –भस । पारिभद्रक –कण्टककिंशुक । कट्वङ्ग –स्योनाक । काकजङ्घा–लोमशपादिका ।" इतीन्दु । ४ 'त्रिरह्न' ई । 'त्रिरह्नि' उ चन्द्र । 'त्रिरह्ना मृष्टसंसिक्ते' स स । ५ 'संसृष्टे' इ चन्द्र । ६ 'भूरिकु' ई उ । ७ 'दीपे हत' ई । ८ 'गैमालतीमधु' ई उ । 'टलीमधु' ण चन्द्र स द्व । ९ 'क्षीरपा' इ ई उ ण य चन्द्र । १० 'कृत्वस प्रायेण इत्यधि' ट ण य• । ११ 'क्तस्य द्वीप्या' ण य• ।

१ 'पूतिवृक्षाङ्घ्रिसि' गदनि । 'पूतीकरञ्जसि' वङ्ग । २ "पूतीकार्द्वयस्य( पूतीकरञ्जस्य ) दशाङ्गी( ङ्गानि )–मूलत्वक्पत्रसारपुष्पफलशुङ्गस्वरसकण्टकक्षीराणि ।" इति चन्द्रव्याख्यान युक्तम् । अरुणदत्तव्याख्यान तु चिन्त्यम् । सुश्रुते तु (उ अ ३६।७) "सिद्धार्थकवचाहिङ्गुकुष्ठ चैवाक्षते सह । भल्लातकाजमोदाश्च हितमुद्धूपनं शिशो ॥" इति पाठ । ३ 'शाङ्गीसि' उ ण.य चन्द्र. । ४ 'साधितो धूप ' ई उ । ५ 'कश्यपेन' ट । ६ 'त्रार्कमूल' गदनि । 'णि मूत्रम' इ । ७ 'खुर व' ई.उ । 'खुराह्वचा' स. स । 'रा यवा ।' गदनि । ८ 'निबर्हण ' इ ई उ चन्द्र स द्व । ९ "अनन्ता–दीर्घमूलश्च समुद्रान्तो यवासक ।' आम्रस्यास्थि–आम्रास्थि । शृगालविन्ना—पृश्निपर्णी ।" इति चन्द्र । १० 'गरमरि' ई उ । ११ 'तीपत्रपञ्च' इ य चन्द्र । 'तीरोध्रपञ्च' ई उ । 'तीवढ्पञ्च' स स । १२ 'लवचाघ' ण । १३ 'शोस्तु सत' ई उ । १४ 'लवर्धनम्' ई उ• । १५ 'नीकृष्णस' इति क्वचित् । १६ 'रसायुक्तै ' ण य स.द्व. ।

**गोशृङ्गचर्मवालाहिनिर्मोकं वृषदंशविट् ।**
**निम्बपत्राज्यकटुकामदनं बृहतीद्वयम् ॥ ५५ ॥**
**कार्पासास्थियवच्छागरोमदेवाह्वसर्षपम् ।**
**मयूरपत्रश्रीवासं तुषकेशं सरामठम् ॥ ५६ ॥**
**मृद्भाण्डे बस्तमूत्रेण भावितं श्लक्ष्णचूर्णितम् ।**
**धूपनं च हितं सर्वभूतेषु विषमज्वरे ॥ ५७ ॥**

**स०**-गोशृङ्गादि सर्पनिर्मोकादि च मृन्मये भाण्डे छागमूत्रेण भावितं सूक्ष्मरजीकृत सर्वभूतेषु विषमज्वरे च धूपनार्थ हितम् ।

**घृतानि भूतविद्यायां वक्ष्यन्ते यानि तानि च ।**
**युञ्ज्यात्तथा बलिं होमं स्नपनं मन्त्रतन्त्रवित् ॥ ५८ ॥**

**स०**-यानि च सर्पींषि भूतविद्याया वक्ष्यन्ते तानि च युञ्ज्यात् । तथा मन्त्रा -मन्त्रहोक्ता , तन्त्राणि च, एतानि वेत्तीति मन्त्रतन्त्रवित्,-वैद्यो, बलिं होम स्नपन च युञ्ज्यात् ।

**पूतीकरञ्ज(ञ्जात्)त्वक्पत्र क्षीरिभ्यो वर्वरादपि ।**
**तुम्बीविशालारलुकशमीबिल्वकपित्थत ॥ ५९ ॥**
**उत्क्वाथ्य तोय तद्रात्रौ बालानां स्नपन शिवम् ।**

**स०**-पूतीकरञ्जत्वक् तथा पत्र क्षीरिवृक्षाद्बर्बरादिभ्यश्च तोयमुत्क्वाथ्य तद्रात्रौ बालाना स्नपन शिव स्यात् ।

**अनुबन्धान् यथाकृच्छ्रं ग्रहापायेऽप्युपद्रवान् ॥६०॥**
**बालामयनिषेधोक्तभेषजैः समुपाचरेत् ॥ ६०½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने बालग्रहप्रतिषेधो नाम तृतीयोऽध्यायः ॥ ३ ॥**

**स०**-अनुबन्धान् यथाकृच्छ्र तथा ग्रहाणामपाये-मोक्षे, च ये उपद्रवास्ताश्च बालामयप्रतिषेधाध्यायोक्तैरौषधै समुपक्रमेत् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने बालग्रहप्रतिषेधो नाम तृतीयोऽध्याय समाप्त ॥ ३ ॥

**इत्यष्टाङ्गहृदये द्वितीयं कौमारतन्त्र समाप्तम् ।**





## चतुर्थोऽध्यायः ।

अधुना भूतविज्ञानाध्यायारम्भो ग्रहसामान्यात् ।

**अथातो भूतविज्ञानीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**लक्षयेज्ज्ञानविज्ञानवाक्चेष्टाबलपौरुषम् ।**
**पुरुषेऽपौरुषं यत्र तत्र भूतग्रह वदेत् ॥ १ ॥**

**स०**-यत्र पुरुषे ज्ञानाद्यपौरुष लक्षयेत् तत्र भूतग्रह वदेत् । इति सामान्य भूतविज्ञानम् ।

**भूतस्य रूपप्रकृतिभाषागत्यादिचेष्टितैः ।**
**यस्यानुकार कुरुते तेनाविष्ट तमादिशेत् ॥ २ ॥**

**स०**-यस्य भूतस्य रूपादेरनुकार यादृश भजते तेन तं पुरुषमविष्ठित वदेत् ।

**सोऽष्टादशविधो देवदानवादिविभेदतः ।**

**स०**-स भूतोऽष्टादशप्रकारो देवादिभेदेन ।

**हेतुस्तदनुषक्तौ तु सद्यः पूर्वकृतोऽथवा ॥ ३ ॥**
**प्रज्ञापराधः, सुतरा तेन कामादिजन्मना ।**
**लुप्तधर्मव्रताचार· पूज्यानप्यतिवर्तते ॥ ४ ॥**
**तं तथा भिन्नमर्यादं पापमात्मोपघातिनम् ।**
**देवादयोऽप्यनुघ्नन्ति ग्रहाश्छिद्रप्रहारिणः ॥ ५ ॥**

**स०**-तस्य भूतस्यानुषङ्गे प्रज्ञापराध सद्य -अधुनातन , पूर्वजन्मकृतो वा हेतु । तेन-प्रज्ञापराधेन, कामक्रोधादिजेन सुतरा नष्टधर्मव्रताचार सन् पूज्यानप्यतिक्रामति । तं पुरुष तथा लुप्तधर्मव्रताचारत्वाद्भिन्नमर्याद देवादयो ग्रहा अप्यत्यन्तमर्यादातिक्रमादनु-पश्चात्, घ्नन्ति । न केवल हिंसात्मकानामक्षमा इति द्योतनार्थोऽपिशब्द । कीदृशास्ते ? छिद्रप्रहारिण । हेताविय प्रथमा, छिद्रप्रहारित्वादित्यर्थ ।

---

१ 'ङ्गलोमवा' इति क्वचित् । २ 'लास्थिनि' ई उ । ३ 'यवचारोध्रदे' इ । 'स्थिवचालोध्रदेवाह्व यवसर्षपम्' ई उ । 'स्थिवचाबिल्वरोध्रदे' इति क्वचित् । ४ 'रपिच्छश्री' उ य । ५ 'वासनस्केश' ई उ । ६ 'धूपनार्थं हि' ण । ७ 'च तानि' ट य । ८ "त्वक्पत्रमूलेभ्यस्तथा तुम्बीप्रभृतिद्रव्यात् कपित्थपर्यन्तात्तोयमुत्क्वाथ्य । शिव-श्रेयस्करम् ।" इति चन्द्र । "पूतीकरञ्जादीना त्वक्पत्र स्थाल्यामुत्क्वथितम् । क्षीरिण -वटादय । बर्बरवृक्ष -चन्दनाकार प्रसिद्ध । अरलुक -मयूरजङ्घ ।" इतीन्दु । ९ 'पत्रमूलेभ्यो' इ चन्द्र । 'पत्रक्षीरिभ्यो वेदरा' इ उ । १० 'वर्द्धरादपि' चन्द्र । ११ 'त्थकम् ।' इ उ । १२ 'ग्रहव्यापद्युप' उ. । १३ 'भैषज्यै.' ई उ ।

१ 'भूतादिवि' इ ई उ य । २ 'ज्ञान व्या' ण य चन्द्र स मू । ३ अय भूतविज्ञानीयश्चरके नि० ७ अध्याये चि० ९ अध्याये च, सुश्रुते उ० ६० अध्याये, अष्टाङ्गसङ्ग्रहे उ० ७ अध्याये चास्ति वर्णित । ४ "ज्ञान-लौकिकशब्दावबोधमात्रम् । विज्ञान-तत्रावबोध ॥ अनुकार कुरुते-सदृशकरण करोति ॥ तदनुषक्तौ-तेषा ग्रहाणामनुप्रवेशे । प्रज्ञापराध -निषिद्धाचरणम् । पूज्यान्-गुर्वादीन् । छिद्रप्रहारिण -वातारग[वे]षिण (?) ।" इति चन्द्र । "प्रज्ञापराध -सूत्रे उक्त ।" इतीन्दु । ५ 'भजेत्' ण । ६ 'त गृहीत व' ण । ७ 'पूर्व कृतो' इ । ८ 'ज्यानामतिवर्तनै ।' उ. । ९ 'काना क्षमा' ट ण. ।

छिद्रं[1] पापक्रियारम्भः पाकोऽनिष्टस्य कर्मणः ।
एकस्य शून्येऽवस्थानं श्मशानादिषु वा निशि ॥ ६ ॥
दिग्वासस्त्वं गुरोर्निन्दा रतेरविधिसेवनम् ।
अशुचेर्देवता[2]र्चादि परसूतकसङ्करः[3] ॥ ७ ॥
होममन्त्रबलीज्यानां विगुणं परिकर्म च ।
समासाद्दिनचर्यादिप्रोक्ताचारव्यतिक्रमः ॥ ८ ॥

स०—छिद्र पापक्रियारम्भ उच्यते । स चाशुभस्य कर्मण पाक —फलम् । एकस्य—अद्वितीयस्य, शून्ये स्थानेऽवस्थिति, अथवा श्मशानादिषु निश्यवस्थिति । तथा नग्नेत्यादि । [5]कि वा बहुनोदितेन ? सङ्क्षेपेण दिनचर्यादिकथितस्याचारस्य च व्यतिक्रम इति ग्रहग्रहणे हेतु ।

गृह्णन्ति शुक्लप्रतिपत्त्रयोदश्योः सुरा नरम् ।
शुक्लत्रयोदशीकृष्णद्वादश्योर्दानवा ग्रहाः[6] ॥ ९ ॥
गन्धर्वास्तु चतुर्दश्यां द्वादश्या चोरगाः पुनः ।
पञ्चम्यां, शुक्लसप्तम्येकादश्योस्तु[7] धनेश्वराः ॥ १० ॥
शुक्लाष्टपञ्चमीपौर्णमासीषु[8] ब्रह्मराक्षसाः ।
कृष्णे रक्षःपिशाचाद्या नवद्वादशपर्वसु ॥ ११ ॥
दशामावास्य[9]योरष्टनवम्योः[10] पितरोऽपरे ।
गुरुवृद्धादयः प्रायः काल सन्ध्यासु लक्षयेत् ॥ १२ ॥

स०—देवा शुक्लप्रतिपदि शुक्लत्रयोदश्या च नर गृह्णन्ति । शुक्लत्रयोदश्या कृष्णद्वादश्या च दानवा ग्रहा गृह्णन्ति । गन्धर्वाश्चतुर्दश्या द्वादश्या च । सर्पास्तु पञ्चम्याम् । शुक्लपक्षस्य सप्तम्यामेकादश्या च यक्षा गृह्णन्ति । शुक्लाष्टम्यादिषु ब्रह्मराक्षसा गृह्णन्ति । रक्ष पिशाचादय कृष्णपक्षे नवमीद्वादश्यो पर्वसु च गृह्णन्ति । दशम्यादिषु पितरो गृह्णन्ति । अपरे—अनुक्ता गुरुवृद्धादय, अष्टमीनवम्योर्गृह्णन्ति । पूर्वोक्तेष्वेव तिथिषु प्रायेण(य)—बाहुल्येन, ग्रहणकाल सन्ध्यासु—पर्वा[11]दिषु, जानीयात् ।

फुल्लपद्मोपममुखं[1] सौम्यदृष्टिमकोपनम् ।
अल्पवाक्[2]स्वेदविण्मूत्रं भोजनानभिलाषिणम् ॥ १३ ॥
देवद्विजातिपरमं शुचिं संस्कृतवादिनम् ।
मीलयन्तं चिरान्नेत्रे सुरभिं वरदायिनम् ॥ १४ ॥
शुक्लमाल्याम्बरसरिच्छैलोच्चभवनप्रियम्[3] ।
अनिद्रमप्रधृष्यं च विद्याद्देववशीकृतम् ॥ १५ ॥

स०—फुल्लपद्मोपममुखमित्यादि देवग्रहगृहीत विद्यात् ।

जिह्मदृष्टिं दुरात्मानं गुरुदेवद्विजद्विषम् ।
निर्भयं मानिनं शूरं[4] क्रोधनं व्यवसायिनम् ॥ १६ ॥
रुद्रः स्कन्दो[5] विशाखोऽहमिन्द्रोऽहमिति वादिनम् ।
सुरामासरुचिं[6] विद्यात् दैत्यग्रहगृहीतकम्[7] ॥ १७ ॥

स०—जिह्मदृष्टिमित्यादिलक्षणलक्षित दैत्यवशीकृत विद्यात् ।

स्वाचारं[8] सुरभिं हृष्टं गीतनर्तनकारिणम् ।
स्नानोद्यानरुचिं[9] रक्तवस्त्रमाल्यानुलेपनम् ॥ १८ ॥
शृङ्गारलीलाभिरतं[10] गन्धर्वाध्युषितं वदेत् ।

स०—स्वाचारमित्यादिलक्षणलक्षित गन्धर्वेण गृहीतं विद्यात् ।

रक्ताक्षं क्रोधनं स्तब्धदृष्टिं वक्रगतिं चलम् ॥ १९ ॥
श्वसन्तमनिशं[11] जिह्मालोलिनं सृक्किणीलिहम् ।
प्रियदुग्धगुडस्नानमधोवदनशायिनम् ॥ २० ॥
उरगाधिष्ठितं विद्यात्त्रस्यन्तं चातपत्रतः ।

स०—रक्ताक्षमित्यादिलक्षण छत्राच्च त्रस्यन्त सर्पाधिष्ठितं[12] विद्यात् ।

विप्लुतत्रस्तरक्ताक्षं शुभगन्धं सुतेजसम् ॥ २१ ॥
प्रियनृत्य[13]कथागीतस्नानमाल्यानुलेपनम् ।

---

1 "छिद्र—प्रवेशकारणम् । श्मशानादिषु—श्मशानचत्वरचैत्यादिषु । अशुचे—अशुद्धस्य सत । देवताराद्धि—आराधनम् । परसूतकसङ्कर—स्त्रीप्रसवसाङ्कर्यम् । होमादीनां विगुण कृत्वा प्रति(परि)-कर्म—तत्र प्रतिभङ्ग ।" इति चन्द्र । "छिद्रमिति उच्छिष्टावस्थानादिरूपमपचारम् ।" इति चक्र । 2 'ताराद्धि प' इ ई ण चन्द्र । 3 'ङ्करात् ।' इ । 4 'क्ताना च विपर्यय ।' ई उ । 5 'कि बहु' ट । 6 'नवग्रहा.' ई य, ट. । 7 'सप्तम्यामेकादश्या ध' ई उ । 8 'मीपूर्ण' इ ई उ ण य । 9 'दर्शामा' ई उ । 10 'स्ययो षष्ठीनवम्यो.' इति पाठो युक्त, 'षष्ठ्यां नवम्या चर्षय ।' इति चरके (चि० अ० ९।२८), 'षष्ठ्यां नवम्यां च गुरुवृद्धसिद्धा. ।' इति सङ्ग्रहे चोक्तत्वात् । 11 'पूर्वा' ण. ।

1 "फुल्लपद्मोपममुख—विकसितकमलसमानकान्तिवक्त्रम् । सौम्यदृष्टिं—अविकृतदर्शनम् । देवाना द्विजातीना [च] परम—तदाराधनपरम् । संस्कृतवादिन—नापशब्दभाषिणम् । मीलयन्त—निमेष कुर्वन्तम् । सुरभिं—सुरभिगन्धकायम् ॥ जिह्मदृष्टिं—कुटिलदर्शनम् । दुरात्मान—दुष्टस्वभावम् । गुर्वादीना द्विष—शत्रुभूतम् । निर्भय—भयरहितम् । मानिन—गुणैरुपगर्वितम् । शूर—धैर्ययुक्तम् ॥ स्वाचार—शोभनाचारम् ॥ रक्ताक्ष—लोहितनेत्रम् । स्तब्धदृष्टिं—निश्चलदर्शनम् । वक्रगतिं—कुटिलगमनम् । चल—अस्थिरम् । अनिश—अनवरतम् । श्वसन्त—श्वास त्यजन्तम् । सृक्किणी—ओष्ठपर्यन्त, लिहान—आस्वादयन्तम् । आतपत्रतस्त्रस्यन्त—छत्रात् त्रास गच्छन्तम् । विप्लुते—चलिते, त्रस्ते रक्ते—लोहिते, अक्षिणी—नयने, यस्य त तथाविधम् । सुतेजस—कान्तियुक्तम् ।" इति चन्द्र । 2 'स्वल्पवाक्' इ य । 3 'स्वरधर शैलो' ई उ । 4 'न क्रूर' ई उ । 5 'स्कन्द पिशाचोऽह' ई । 6 'मद्यमास' इति क्वचित् । 7 'ग्रहवशीकृतम् ।' य. । 8 'खेचर' इ । 'स्वाचारसुरभिशिष्टगीत' ई. । 9 'नरत र' इ य । 10 'रमाल्याभि' चन्द्र । 11 'भिहित' ई. । 12 'उरगाधि' ट. । 13 'यनर्तकथा' ई ।

मत्स्यमांसरुचिं हृष्टं तुष्टं[1] बलिनमव्यथम्[2] ॥ २२ ॥
चलिताग्रकरं कस्मै किं ददामीति वादिनम् ।
रहस्यभाषिणं वैद्यद्विजातिपरिभाविनम्[4] ॥ २३ ॥
अल्परोषं द्रुतगतिं विद्याद्यक्षगृहीतकम् ।

स०—विह्वलत्रस्तरक्ताक्षमित्यादिलक्षणं यक्षगृहीतं विद्यात् ।

हास्यनृत्यप्रियं रौद्रचेष्टं छिद्रप्रहारिणम् ॥ २४ ॥
आक्रोशिनं शीघ्रगतिं देवद्विजभिषग्द्विषम् ।
आत्मानं काष्ठशस्त्राद्यैर्घ्नन्तं भोःशब्दवादिनम् ॥ २५ ॥
शास्त्रवेदपठं विद्याद् गृहीतं ब्रह्मराक्षसैः ।

स०—हास्यनृत्यप्रियमित्यादिलक्षणं ब्रह्मराक्षसगृहीतं विद्यात् ।

सक्रोधदृष्टिं भ्रुकुटिमुद्वहन्तं ससंभ्रमम् ॥ २६ ॥
प्रहरन्तं प्रधावन्तं शब्दन्तं भैरवाननम् ।
अन्नाद्विनाऽपि बलिनं नष्टनिद्रं निशाचरम् ॥ २७ ॥
निर्लज्जमशुचिं शूरं क्रूरं परुषभाषिणम् ।
रोषणं रक्तमाल्यस्त्रीरक्तमद्यामिषप्रियम् ॥ २८ ॥
दृष्ट्वा च रक्तं मांसं वाऽऽलिहानं दशनच्छदौ ।
हसन्तमन्नकाले च राक्षसाधिष्ठितं वदेत् ॥ २९ ॥

स०—सक्रोधदृष्टिमित्यादिलक्षणं राक्षसाधिष्ठितं वदेत् ।

अस्वस्थचित्तं नैकत्र तिष्ठन्तं परिधाविनम् ।
उच्छिष्टनृत्यगान्धर्वहासमद्यामिषप्रियम् ॥ ३० ॥
निर्भर्त्सनाद्दीनमुखं रुदन्तमनिमित्ततः ।
नखैर्लिखन्तमात्मानं रूक्षध्वस्तवपुःस्वरम् ॥ ३१ ॥
आवेदयन्तं दुःखानि सम्बद्धाबद्धभाषिणम् ।
नष्टस्मृतिं शून्यरतिं लोलं नग्नं मलीमसम् ॥ ३२ ॥
रथ्याचैलपरीधानं तृणमालाविभूषणम् ।
आरोहन्तं च काष्ठाश्वं तथा सङ्करकूटकम् ॥ ३३ ॥
बह्वाशिनं पिशाचेन विजानीयादधिष्ठितम् ।

स०—अस्वस्थचित्तमित्यादिलक्षणं पिशाचगृहीतं विद्यात् ।

प्रेताकृतिक्रियागन्धं भीतमाहारविद्विषम् ॥ ३४ ॥
तृणच्छिदं च प्रेतेन गृहीतं नरमादिशेत् ।

स०—प्रेताकृतिक्रियागन्धमित्यादिलक्षणं प्रेतगृहीतं नरं विद्यात् ।

बहुप्रलापं कृष्णास्यं प्रविलम्बितयायिनम् ॥ ३५ ॥
शूनप्रलम्बवृषणं कूष्माण्डाधिष्ठितं वदेत् ।

स०—बहुप्रलापादिलक्षणं कूष्माण्डाधिष्ठितं वदेत् ।

गृहीत्वा काष्ठलोष्टादि भ्रमन्तं चीरवाससम् ॥ ३६ ॥
नग्नं धावन्तमुत्त्रस्तदृष्टिं तृणविभूषणम् ।
श्मशानशून्यायतनरथ्यैकद्रुमसेविनम् ॥ ३७ ॥
तिलान्नमद्यमांसेषु सततं सक्तलोचनम् ।
निषादाधिष्ठितं विद्याद् वदन्तं परुषाणि च ॥ ३८ ॥

स०—गृहीत्वा काष्ठमित्यादिलक्षणं तथा परुषाणि भाषमाणं निषादगृहीतं विद्यात् ।

याचन्तमुदकं चान्नं त्रस्तलोहितलोचनम् ।
उग्रवाक्यं च जानीयान्नरमौकिरणार्दितम् ॥ ३९ ॥

स०—याचन्तमुदकमित्यादिलक्षणमौकिरणार्दितं विद्यात् ।

गन्धमाल्यरतिं सत्यवादिनं परिवेपिनम् ।
बहुनिद्रं च जानीयाद्वेतालेन वशीकृतम् ॥ ४० ॥

स०—गन्धमाल्यरतिमित्यादिलक्षणं वेतालगृहीतं विद्यात् ।

अप्रसन्नदृशं दीनवदनं शुष्कतालुकम् ।
चलन्नयनपक्ष्माणं निद्रालुं मन्दपावकम् ॥ ४१ ॥
अपसव्यपरीधानं तिलमांसगुडप्रियम् ।
स्खलद्वाचं च जानीयात् पितृग्रहवशीकृतम् ॥ ४२ ॥

स०—अप्रसन्नदृशमित्यादिलक्षणं पितृग्रहगृहीतं विद्यात् ।

---

१ 'हृष्टतुष्ट' ण चन्द्र । २ "हृष्टतुष्ट—सन्तोषम् । अव्यथ—स्वस्थरूपम् । चलिताग्रकर—कम्पितप्रान्तहस्तम् । द्रुतगतिं—त्वरितगमनम् ॥ रौद्रचेष्ट—भैरवक्रियाकारिणम् । छिद्रप्रहारिण—सनिमित्त प्रहरणशीलम् ॥ उद्वहन्त—धारयन्तम् । ससंभ्रम—सक्षोभं कृत्वा । शब्दन्त—शब्दं कुर्वन्तम् । भैरवानन—भीषणमुखम् । अशुचिं—स्नानादिद्विषम् । क्रूर—दुष्कृतकर्माणम् । रोषण—क्रोधनम् । दशनच्छदौ—ओष्ठौ । आलिहान—आस्वादयन्तम् ॥ निर्भर्त्सनात्—आक्रोशनात् । आत्मान—स्वकायम् । रूक्षवपु—रूक्षशरीरम् । ध्वस्तस्वर—स्तब्धस्वरम् । सम्बद्धाबद्धभाषिण—युक्तायुक्तवक्तारम् । शून्यरतिं—निर्जनस्थानरतिम् । लोल—चपलम् । रथ्याचैलपरीधान—मार्गे पतितनिवा(र्गपतित)वस्त्रखण्डवसनम् । काष्ठमेवाश्व—काष्ठाश्व ,तम् ।" इति चन्द्र । "निर्भर्त्सन—सन्तर्जनम् । सङ्करकूट—अवकरनिकरम् । काष्ठमय्यश्वप्रतिकृति—काष्ठाश्व ।" इतीन्दु । ३ 'व्ययम् ।' ई उ ण । ४ 'रिवादिनम् ।' उ य । ५ 'हृतगति' उ य । ६ 'नृत्यकर' ई उ । 'नृत्तप्रिय' ण चन्द्र स स. । ७ 'गोशब्द' इ । ८ 'ब्रह्मरक्षसा ।' ई चन्द्र । ९ 'रुदन्त' इ इ उ । १० 'स्त्रीमेघरक्तामिष' इ । ११ 'रक्तमांसानि लि' उ य । १२ 'दुःखादि' इ उ.य । १३ 'ष्ठाश्मराशिं स' ई.उ । १४ 'सङ्कार' चन्द्र ।

१ 'भीरुमा' इ उ ण य । २ "प्रविलम्ब कृत्वा यायिन—गमनशीलम् ॥ भ्रमन्त—गच्छन्तम् । चीरवासस—रथ्याचैलपरीधानम् । उत्रस्तदृष्टिं—चलितदृष्टिम् । सतत—सर्वकालम् । सक्तलोचन—परिष्वक्तदृष्टिम् ॥ त्रस्तलोहितलोचन—सभयरक्तनेत्रम् । उग्रवाक्य—तीक्ष्णवचनम् ॥ गन्धमाल्यरुचिं—तदभिलाषिणम् । सत्यवादिन—सत्यप्रतिज्ञम् । परिवेपिन—सकम्पम् । बहुनिद्र—प्रभूतस्वपनम् ॥ अप्रसन्नदृश—कलुषदृष्टिम् । दीनवदन—दैन्ययुक्तमुखम् । अपसव्यपरीधान—[अ]॰ वामभागशरीरकृतवस्त्रम् । स्खलद्वाच—प्रस्खलद्वचनम् ।" इति चन्द्र । "अपसव्यं तु दक्षिणम् ।" इत्यमर । ३ 'लोहादि' ई उ । ४ 'ससक्तं रक्तलो' ई उ । 'सततं रक्त' ण. । 'सरक्त रक्त' इति क्वचित् । ५ 'कर्कोटाधिष्ठितं विन्द्यात्' ई । ६ 'धावन्त' इ । ७ 'दकं नान्नं रक्तवित्रस्तलोचनम्' इ उ य । 'दकान्नं च त्र' चन्द्र । ८ 'न्नरं मौकि' ण । 'न्नरमुत्तरुणा' ई । 'रमौत्किर' उ । ९ 'क्षणं तु नरमौत्किर' ट । 'क्षणं मौकि' ण । १० 'ल्यरत' इ ई उ य । 'ल्यरुचि' चन्द्र । ११ 'परिदेविनम्' ई । 'परिवेदिनम्' उ । १२ 'याद्वैता' इ उ य. । १३ 'च विजा' ई.उ.य. चन्द्र ।

**गुरुवृद्धर्षिसिद्धाभिशापचिन्तानुरूपतः ।**
**व्याहाराहारचेष्टाभिर्यथास्वं तद्ग्रहं वदेत् ॥ ४३ ॥**

स०-गुर्वादीना शापचिन्तानुरूपवचनादिभिर्यथायोग तद्ग्रह विद्यात् ।

**कुमारवृन्दानुगतं नग्नमुद्धतमूर्धजम् ।**
**अस्वस्थमनसं दैर्घ्यकालिकं सग्रहं त्यजेत् ॥ ४४ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया षष्ठे उत्तरस्थाने भूतविज्ञानीयो नाम चतुर्थोऽध्यायः ॥ ४ ॥**

स०-सर्वग्रहगृहीत त्यजेत् । कीदृशम् ? कुमारसमूहेनानुयात, तथा नग्नमुद्धतकेश, तथाऽस्वस्थचित्त, तथा दीर्घकालानुवर्तिन चेति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने भूतविज्ञानीयो नाम चतुर्थोऽध्याय समाप्त ॥ ४ ॥




भूतग्रहविज्ञानादनन्तर भूतस्य प्रतिषेध-चिकित्सित,उच्यते । ननु, निदानचिकित्सितपदाभ्या प्रसिद्धतराभ्या पूर्ववत्किमितीद तन्त्रकृता नोपनिबद्धम् ? इति केचिच्चोद्यमचूचुदन् । तान् सन्त्रक्ष्महे । शास्त्रकारस्यास्येदृशी प्रतिज्ञा,-सूत्रशारीरनिदानचिकित्सितकल्पोत्तराख्यै षड्भि स्थानैस्तन्त्रमिदमभिधेयमिति । तदेव यद्युत्तरे स्थानेऽपि किञ्चिन्निदानचिकित्सितपदाभ्यामभिधीयते, तत षड्स्थानकमिद तन्त्रमिति प्रतिज्ञा व्याहन्यात् । तस्मार्दय विरचनाप्रकारविशेष कृत ।

**अथातो भूतप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**भूतं जयेदहिंसेच्छं जपहोमबलिव्रतैः ।**
**तपःशीलसमाधानदानज्ञानदयादिभिः ॥ १ ॥**

स०-अहिसाकाम भूत जपादिभिर्जयेत् ।

**हिङ्गुव्योषालनेपालीलशुनार्कजटाजटाः ।**
**अजलोमी सगोलोमी भूतकेशी वचा लता ॥ २ ॥**
**कुक्कुटी सर्पगन्धाख्या तिलाः काणविकाणिके ।**
**वज्रप्रोक्ता वयःस्था च शृङ्गी मोहनवल्ल्यपि ॥ ३ ॥**
**स्रोतोजाञ्जनरक्षोघ्नं रक्षोघ्नं चान्यदौषधम् ।**
**खराश्वश्वाविदुष्ट्रर्क्षगोधानकुलशल्यकात् ॥ ४ ॥**
**द्वीपिमार्जारगोसिंहव्याघ्रसामुद्रसत्त्वतः ।**
**चर्मपित्तद्विजनखा वर्गेऽस्मिन् साधयेद्घृतम् ॥ ५ ॥**
**पुराणमथवा तैलं नवं तत्पाननस्ययोः ।**
**अभ्यङ्गे च प्रयोक्तव्यमेषां चूर्णं च धूपने ॥ ६ ॥**
**एभिश्च गुटिकां युञ्ज्यादञ्जने सावपीडने ।**
**प्रलेपे कल्कमेतेषां क्वाथं च परिषेचने ॥ ७ ॥**
**प्रयोगोऽयं ग्रहोन्मादान् सापस्माराञ्शमं नयेत् ।**

स०-हिङ्ग्वादय औषधम् । आल-हरितालम् । नेपाली-कस्तूरिका । जटा-जटामासी । अजलोमी-श्वेतदूर्वा । गोलोमी-दूर्वा । लता-प्रियङ्गु । कुक्कुटी-शितिवारक । सर्पगन्धाख्या-नाकुली । काणविषा(का)णिके-काकोलीक्षीरकाकोल्यौ । शृङ्गी-अतिविषा । मोहनवल्ली-वन्दाक । अन्यदपि रक्षोघ्न गुग्गुल्वादिकमौषधम् । तथा गर्दभतुरङ्गादिभ्यश्चर्मादय । सामुद्रसत्त्वतो-जलधिजन्तो । तदेतस्मिन्-

---

१ 'सिद्धाना शाप' ई उ । २ 'चिन्तानु' उ ण य चन्द्र ट । ३ 'विहारा' इ ई उ । ४ 'त ग्रह' ई उ य । ५ "कुमाराणा-बालाना, वृन्देन-समूहेन, अनुगत-व्याप्तम् । उद्धतमूर्धज-चलितकेशम् । अस्वस्थमनस-पीडितचित्तम् । दैर्घ्यकालिक-बहुकाल ग्रहेणाक्रान्तम् ।" इति चन्द्र । ६ 'दीर्घकालिक' स मू । ७ 'चित्कुचोद्य' ट । ८ 'य च रचना' य । ९ अय भूतप्रतिषेधश्चरके चि० ९ अध्याये, सुश्रुते उ० ६० अध्याये, अष्टाङ्गसङ्ग्रहे उ० ८ अध्याये चास्ति वर्णित ।

१ 'हिंसोत्थ' ई उ । 'हिंसेच्छु' स स । २ "अहिंसेच्छ-बलिकाम रतिकाम नासाध्य [च] ॥ अजलोमी-मेषलोचना । गोलोमी-नसक स्मृत । भूतकेशी-पुत्रजरा। कुक्कुटी-रसायनोक्तलक्षणा । सर्पगन्धा-गन्धनाकुली । वय स्था-गुडूची । शृङ्गी-कर्कटशृङ्गी । रक्षोघ्न-सर्षपा । सावपीडने-सनस्ये ।" इति चन्द्र । "नैमाली-मन शिला । अर्कजटा-अर्कमूलम् । भूतकेशी-शुक्ला निर्गुण्डी । लता-शतपुष्पा । वज्रप्रोक्ता-सुधा । वय स्था-आमलकम् । मोहनवल्ली-ब्राह्मी शिरीषश्च ।" इतीन्दु । "लशति-भिनत्ति रोगान्, इति लशुन । भूतकेशी-मासी । जटा-गन्धमासी । कुक्कुटी-कुक्कुटसदृशकन्दा महौषधि । सर्पगन्धा-वर्षासु छत्राकारा । वज्रप्रोक्ता-वज्रकन्द, स्नुहीत्यन्ये । मोहनवल्लिका-वटपत्रिका । स्रोतोञ्जन-पर्णासानद्या सिन्धुनदे वा भवति । तल्लक्षणम्-'वल्मीकशिखराकार रूपे नीलोत्पलद्युति । स्रोतोञ्जन प्रशसन्ति तच्च प्रत्यञ्जने हितम् ।' इति । नेपाली-मन शिला ।" इति डल्हण. । ३ 'माध्याल' इ । ४ 'लनैमाली' स स । ५ 'टामया ।' इति क्वचित् । ६ 'चा बला ।' चन्द्र स मू । 'चालता ।' ई उ । ७ 'न्धा च तथा का' स सु । 'ख्या तथा का' ई । ८ 'कालविका' इ । 'कालविषाणि' स मू ।' 'णविषाणि' ण । ९ 'वा' ई । १० 'लमत्स्यकात्' उ. । ११ 'गुलिका' ई उ चन्द्र स द्व । १२ 'पीडके ।' इ य ।

हिङ्ग्वादिवर्गे, घृत पुराणमथवा नव तैल पचेत्-साधयेत्। तच्च-घृत तल वा, मिद्ध पाने नस्येऽभ्यङ्गे च प्रयोज्यम्। एषा द्रव्याणा च चूर्ण धूपने प्रयोज्यम्। एभिश्चूर्णेर्गुटिकामञ्जनेऽवपीडने च युञ्ज्यात्। एतेषा च द्रव्याणा कल्क प्रलेपे क्वाथ परिषेचने च युञ्ज्यात्। अय प्रयोगो ग्रहादीन् शमयेत्।

**गजाह्वापिप्पलीमूलव्योषामलकसर्षपान् ॥ ८ ॥**
**गोधानकुलमार्जारझषपित्तप्रपेषितान्।**
**नावनाभ्यङ्गसेकेषु विदधीत ग्रहापहान् ॥ ९ ॥**

**स०**–हस्तिपिप्पल्यादीनि(न्) गोधादिपित्तपिष्टानि(न्) नस्याभ्यङ्गसेकेषु ग्रहापहान् कुर्यात्। मूल–पुष्करमूलम्। झषो–जलचरभेद।

**सिद्धार्थकवचाहिङ्गुप्रियङ्गुरजनीद्वयम्।**
**मञ्जिष्ठा श्वेतकटभी वरा श्वेताऽद्रिकर्णिका ॥ १० ॥**
**निम्बस्य पत्र बीजं तु नक्तमालशिरीषयो.।**
**सुराह्व त्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे ॥ ११ ॥**
**सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम्।**
**ग्रहान् सर्वान्निहन्त्याशु विशेषादासुरान् ग्रहान् ॥१२॥**
**कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्म च।**

**स०**–सर्षपादि गोमूत्रे चतुर्गुणे सर्पि सिद्ध सिद्धार्थकसज्ञ पाने नस्ये च योजित सर्वान् ग्रहान् द्राक् नाशयति। विशेषेणासुरग्रहान् कृत्यादींश्च। श्वेतकटभी–श्वेतगुञ्जा। श्वेताऽद्रिकर्णिका–शुक्ला गिरिकर्णिका।

**एभिरेवौषधैर्बस्तवारिणा कल्पितोऽगदः ॥ १३ ॥**
**पाननस्याञ्जनालेपस्नानोद्वर्षणयोजित.।**
**गुणैः पूर्ववदुद्दिष्टो राजद्वारे च सिद्धिकृत् ॥ १४ ॥**

**स०**–एभिरेव द्रव्यैश्छागमूत्रेण कल्पितोऽगद पानादिषु योजितो गुणै पूर्वेण तुल्य उक्तो राजद्वारे च सिद्धिकर स्यात्।

**सिद्धार्थकव्योषवचाश्वगन्धा**
**निशाद्वय हिङ्गुपलाण्डुकन्द।**
**बीजं करञ्जात्, कुसुमं शिरीषात्**
**फलं च वल्कं च कपित्थवृक्षात् ॥ १५ ॥**

**समाणिमन्थं सनत सकुष्ठं**
**स्योनाकमूल किणिही सिता च।**
**बस्तस्य मूत्रेण सुभावितं तत्**
**पित्तेन गव्येन गुडान् विदध्यात् ॥ १६ ॥**
**दुष्टव्रणोन्मादतमोनिशान्धा-**
**नुद्बन्धकान् वारिनिमग्नदेहान्।**
**दिग्धाहतान् दर्पितसर्पदष्टा-**
**स्ते साधयन्त्यञ्जननस्यलेपैः ॥ १७ ॥**

**स०**–सिद्धार्थकादि बस्तमूत्रेण सुभावित गव्येन पित्तेन गुडान्–गुडकान्, कुर्यात्। ते च–गुडका, अञ्जननस्यलेपैर्दुष्टव्रणादीन् साधयन्ति। उपजातिवृत्ते इन्द्रवज्रा च।

**कार्पासास्थिमयूरपत्रबृहतीनिर्माल्यपिण्डीतक**
**त्वङ्मासीवृषदशविट्तुषवचाकेशाहिनिर्मोककैः।**
**नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैः कृतं धूपन**
**स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नं परम् १८**

**स०**–कार्पासास्थ्यादिभि कृत धूपन स्कन्दादिघ्न पर स्यात्। निर्माल्य–महादेवसम्बन्धि। वृषदशविट्–मार्जारविष्ठा। शार्दूलविक्रीडित वृत्तम्।

**त्रिकटुकदलकुङ्कमग्रन्थिकक्षारसिही-**
**निशादारुसिद्धार्थयुग्माम्बुशक्राह्वयैः**
**सितलशुनफलत्रयोशीरतिक्तावचा-**
**तुत्थयष्टीबलालोहितैलाशिलापद्मकैः।**

---

१ 'भ्यञ्जने च' य। २ 'रशशपित्त' ई उ स स.। 'रक्तक्षपित्त' य स मू.। 'रक्तृष्यपित्त' स सु.। ३ 'का।' य। ४ 'त्रे च चतु' उ.। ५ "सर्वान्–सुरादीन्। कृत्या–आभिचारदेवता।" इतीन्दु "कृत्या–अभिचार। राजद्वारे च शस्यते इति वशीकरणत्वात्।" इति चक्र.। ६ 'पाप्मनुत्।' ई उ। 'पाप्मजित्' स द्व। ७ 'पाननस्ययोर्योजित' ट ण। ८ 'स गुणै पूर्ववद्दिष्टो' इ। ९ 'कन्दम्' ण स द्व.। १० 'वल्कश्च' ण स मू.। 'च कल्कश्च' ई.उ.। 'च पुष्प च' इ। "बल्क–त्वक्" इतीन्दु।

१ "माणिमन्थ–सैन्धवम्। स्योनाकमूल–टेण्टुकमूलम्। किणिही–गिरिकर्णिका। तम–तिमिरम्। उद्बन्धक–गलबन्धेन मृतकल्प। तद्वत् वारिनिमग्नदेह मृतकल्प एव। दर्पिता सर्पा–विषोल्बणा.॥ कार्पासस्य अस्थि–बीजम्। पत्र–पक्षम्। पिण्डीतक–मदनफलम्। तुष–धान्यस्य छदि। केशा–मानुषस्य। अहिनिर्मोक–सर्पकञ्चुक। नागेन्द्रस्य–हस्तिन, द्विज–दन्त। शृङ्ग–गोशृङ्गम्। आवेश–शरीरानुप्रवेश, त च ज्वर च यो(यत्) हन्ति॥ ग्रन्थिक–पिप्पलीमूलम्। सिद्धार्थयुग्म–गोरपीतसर्षपभेदभिन्नम्। सित–श्वेतचन्दनम्। लशुन–रसोनम्। लोहिता–मञ्जिष्ठा, लोहित–रक्तचन्दनमिति केचित्।" इति चन्द्र। "स्योनाकस्य–मयूरजङ्घस्य, मूलम्। विषलिप्तेन शस्त्रेणाहतो–दिग्धाहत॥ निर्माल्य–स्पृक्का। सिद्धार्थयुग्म–रक्तश्वेतभेदेन। सित–चन्दनम्।" इतीन्दु। २ 'कटभी' इ य स.मू.। ३ 'शाड्यमुद्व' इ ई उ य.। ४ 'द्वद्धकान्' इ ण.य स मू। ५ 'ष्टास्तान् सा' उ य। ६ 'ञ्जनपानलेपै' इ। 'ञ्जनपाननस्यै।' स मू। ७ 'रपिच्छबृ' ई। ८ 'त्वग्वाशीवृ' इ ई स द्व। ९ 'दनखवचा' इ।१० 'मौचनै।' इ ई ण स द्व। ११ 'शग्रहघ्न' य स द्व।

**दधितगरमधूकसारप्रियाह्वाविषाख्या-**
**विषातार्क्ष्यशैलैः सचव्यामयैः**
**कल्कितैर्घृतमनवमशेषमूत्रांशसिद्धं मतं**
**भूतरावाह्वयं पानतस्तद् ग्रहघ्नं परम् ॥ १९ ॥**

स०–त्रिकटुकादिभि कल्कितै पुराण सर्पिरशेषमूत्राणा–गोमूत्रादीना, अशै भागै, सिद्ध भूतरावसज्ञ मतम् । तत् पाने(नत ) पर ग्रहघ्न स्यात् । दल–तमालपत्रम् । सिद्धार्थयुग्म–पीतकृष्णभेदेन । तुत्थ–कर्पारिकातुत्थम् । शक्राह्वया –इन्द्रयवा । सितलशुन–शुक्लरसोनम् । प्रियाह्वा–कङ्गुणिका । विषाख्या–अतिविषा । विषा–काकोली । "प्रथमक इह दण्डकश्चण्डवृष्टिप्रयातो नद्वयानाप्यनाप्यरै सप्तभि । प्रतिपदमिह वृद्धिरेफवृद्ध्या स्युरर्णार्णवव्यालबीमूतलीलाकरोद्दामशङ्खादय ॥"

**नतमधुकरञ्जलाक्षापटोलीसमङ्गावचा-**
**पाटलीहिङ्गुसिद्धार्थसिहीनिशायुग्मलतारोहिणी-**
**बदरकटुफलत्रिकाकाण्डदारुकमिम्राजगन्धा-**
**मराङ्कोल्लकोशातकीशिग्रुनिम्बाम्बुदेन्द्राह्वयैः ।**
**गदशुकतरुपुष्पबीजोग्रयष्ट्यद्रिकर्णीनिकुम्भा-**
**ग्निबिल्वैः समैः कल्कितैर्मूत्रवर्गेण सिद्धं घृतं**
**विधिविनिहितमाशु सर्वैः क्रमैर्योजितं हन्ति**
**सर्वग्रहोन्मादकुष्ठज्वरास्तन्महाभूतरावं स्मृतम् २०**

स०–नतादिभिर्मूत्रवर्गेण–गोमूत्रादिमूत्रकदम्बकेन, सर्पि पक्व विधिविनिहित सर्वै क्रमै –अभ्यङ्गपानजस्यादिभि , योजितं शीघ्र सर्वान् ग्रहादीन् हन्ति । एतच्च महाभूतरावसज्ञ घृतम् । दण्डको व्यालाख्य ।

**ग्रहा गृह्णन्ति ये येषु तेषां तेषु विशेषतः ।**
**दिनेषु बलिहोमादीन् प्रयुञ्जीत चिकित्सकः ॥ २१ ॥**

स०–येषु दिनेषु ग्रहा गृह्णन्ति तेषु दिनेषु तेषा ग्रहाणा विशेषेण बलिहोमादीन् भिषक् प्रयुञ्जीत ।

**स्नानवस्त्रवसामांसमद्यक्षीरगुडादि च ।**
**रोचते यद्यदा येभ्यस्तत्तेषामाहरेत्तदा ॥ २२ ॥**

स०–स्नानवस्त्रादि यद्येभ्यो ग्रहेभ्यो रोचते तत्तेभ्यस्तस्मिन् दिने दद्यात् ।

**रत्नानि गन्धमाल्यानि बीजानि मधुसर्पिषी ।**
**भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययम् ॥२३॥**

स०–तथा रत्नादीनि तथा बीजानि–यवादीनि, मधुसर्पिषी सर्वे च भक्ष्या सर्वेषा ग्रहाणाम् । इत्यय सामान्यो विधि ।

**सुरर्षिगुरुवृद्धेभ्य· सिद्धेभ्यश्च सुरालये ।**
**दिश्युत्तरस्यां तत्रापि देवायोपहरेद्बलिम् ॥ २४ ॥**
**पश्चिमाया यथाकालं दैत्यभूताय चत्वरे ।**
**गन्धर्वाय गवां मार्गे सवस्त्राभरणं बलिम् ॥ २५ ॥**
**पितृनागग्रहे नद्या नागेभ्य· पूर्वदक्षिणे ।**
**यक्षाय यक्षायतने सरितोर्वा समागमे ॥ २६ ॥**
**चतुष्पथे राक्षसाय भीमेषु गहनेषु च ।**
**रक्षसा दक्षिणस्यां तु पूर्वस्या ब्रह्मरक्षसाम् ॥ २७ ॥**
**शून्यालये पिशाचाय पश्चिमां दिशमास्थिते ।**

स०–सुरादिभ्य पञ्चभ्य सुरालये बलि दद्यात् । तत्रापि देवायोत्तरस्या बलिमुपहरेत् । दैत्यभूताय पश्चिमायां दिशि चत्वरे बलिमुपहरेत् । गवा पथि वस्त्राभरणसहित बलि गन्धर्वायोपहरेत् । पितृनागग्रहेभ्यो नद्या बलि दद्यात् । नागेभ्य पूर्वदक्षिणदेशे बलि दद्यात् । यक्षाय यक्षप्रासादे अथवा सरितो –नद्यो , समागमे बलिमुपहरेत् । राक्षसशब्देनेह ब्रह्मराक्षसो गृह्यते । राक्षसाय चतुष्पथे भयानकेषु वनेषु च बलि दद्यात् । दक्षिणस्या तु दिशि राक्षसाना बलि दद्यात् । पूर्वस्या दिशि ब्रह्मरक्षसाम् । शून्यालये पश्चिमा दिशमास्थिते पिशाचाय बलि दद्यात् ।

**शुचिशुक्लानि माल्यानि गन्धाः क्षैरेयमोदनम् ॥२८॥**
**दधि छत्रं च धवलं देवाना बलिरिष्यते ।**

स०–शुचिशुक्लमाल्यादिक च देवाना बलिरिष्यते ।

**हिङ्गुसर्षपषड्ग्रन्थाव्योषैरर्धपलोन्मितैः ॥ २९ ॥**
**चतुर्गुणे गवां मूत्रे घृतप्रस्थं विपाचयेत् ।**
**तत्पाननावनाभ्यङ्गैर्देवग्रहविमोक्षणम् ॥ ३० ॥**

स०–हिग्वादिभिरर्धपलिकै सर्पि प्रस्थ चतुर्गुणे गोमूत्रे विपाचयेत् । तत्पानादिभिर्देवग्रहविमोक्षण स्यात् ।

---

१ "मधूकसार–मधूकपुष्प मधूकवृक्षमध्यभाग वा । प्रियाह्वा–गन्धप्रियङ्गु । आमय–कुष्ठम् । अनव–पुराणम् । अशेषाणा मूत्राणामश पृथक् घृतसमो देय । यावानशो घृतस्य तावानेवैकैकस्य मूत्रस्य । अङ्कोठ –अङ्कोल्ल· । शुकतरु –शिरीष , तस्य पुष्प बीज च । उग्रा–वचा । अद्रिकर्णी–गिरिकर्णिका । मूत्रवर्गेण–मूत्राणामष्टानां मद्यवर्गविहिताना वर्गेण । चिरविनिहित–चिर–दीर्घकाल, विनिहित–स्थापित, पुराणमित्यर्थ । सर्वै क्रमै –कल्पै पानजस्याभ्यङ्गादिभि ।" इति चन्द्र । "विषाख्या–लाङ्गुली । विषा–अतिविषा । त्रिंशद्वर्णै पूर्णपादस्त्वर्णाख्योऽय हि दण्डक । समङ्गा–मञ्जिष्ठा । लता–सारिवा शतपुष्पा च । कटु–मरिचम् । फलत्रिका–त्रिफला । अमरा–निर्गुण्डी । बीजोग्र –वश । विधिना च पात्रे निहितम् ।" इतीन्दु । २ 'टलाहि' इ.ई उ य । ३ 'हिणै' स स । ४ 'मदनकटु' ई उ चन्द्र । ५ 'न्धासुराङ्को' इ उ । 'न्धामृताकोल' ई । 'राङ्कोठको' चन्द्र । ६ 'सम' स मू । ७ 'चिरविनि' उ ण चन्द्र । 'विधिवन्निहि' ई. ।

१ 'स्नान वस्त्र वसा मासं मद्य क्षीरगुडादि वा ।' उ य । २–३ 'रक्तानि' 'भक्षाश्च' इ ई उ । ४ 'नामग्रहे' उ । ५ "यक्षायतन–यक्षदेवताक्षेत्र, यद्वा वटविटपिमूलम्, तत्र यक्षाधिवासस्य प्रसिद्धत्वात् । राक्षसयोरिति राक्षसाना ब्रह्मराक्षसाना च । सर्वत्र दिग्विभाग आतुरगृहापेक्षया ।" इतीन्दु । ६ 'राक्षसयोर्भी' स.स । ७ 'वा' ण चन्द्र स स. स सु । ८ 'श्चिमाया दिशि स्थिते' ई उ. । ९ 'माश्रिते' य । १० 'ब्रह्मराक्षसानाम् ।' ट । ११ "गन्धा –अगुर्वाद्या । क्षैरेय–क्षीरेण सस्नु(शृ)तम् ।" इति चन्द्र ।

नस्याञ्जन वचाहिङ्गुलशुन बस्तवारिणा ।

स०–वचाहिङ्गुलशुन छागमूत्रेण नस्यमञ्जन च दद्यात् ।

दैत्ये बलिर्बहुफल सोशीरकमलोत्पलः ॥ ३१ ॥

स०–दैत्यग्रहे बलिर्बहूनि फलानि यस्मिन्, तथोशीरकमलोत्पलैर्युक्तो देय ।

नागानां सुमनोलाजगुडापूपगुडौदनैः ।
पैरमान्नमधुक्षीरकृष्णमृन्नागकेसरै. ॥ ३२ ॥
वैचापद्मपुरोशीररक्तोत्पलदलैर्बलिः ।
श्वेतपत्रं च रोध्र च तगर नागसर्षपाः ॥ ३३ ॥
शीतेन वारिणा पिष्टं नावनाञ्जनयोर्हितम् ।

स०–नागाना सुमनोलाजादिभिर्बलिर्देय । श्वेतपत्रादय शीतलजलपिष्टा नस्येऽञ्जने च हिता । श्वेतपत्र–शुक्लपुण्डरीकम् ।

यक्षाणा क्षीरदध्याज्यमिश्रकौदनगुग्गुलु ॥ ३४ ॥
देवदारूत्पल पद्ममुशीर वैस्त्रकाञ्चनम् ।
हिरण्यं च बलिर्योज्यो

स०–यक्षाणा क्षीरादिभिर्बलियोज्य ।

मूत्राज्यक्षीरमेकतः ॥ ३५ ॥
सिद्धं संमोन्मित पाननावनाभ्यञ्जने हितम् ।

स०–गोमूत्रक्षीरघृत तुल्यप्रमाणमेकस्मिन् पक्क नस्याभ्यञ्जनयोर्हितम् ।

हरितकी हरिद्रे द्वे लशुनो मरिचं वचा ॥ ३६ ॥
निम्बपत्रं च बस्ताम्बुकल्कित नावनाञ्जनम् ।

स०–हरीतक्यादि छागमूत्रेण पिष्ट नावनाञ्जने हितम् ।

ब्रह्मरक्षोबलिः सिद्धं यवाना पूँर्णमाढकम् ॥ ३७ ॥
तोयस्य कुम्भः पलल छत्रं वस्त्र विलेपनम् ।

स०–पक्क यवानामाढक-पात्र, पूर्ण जलकुम्भ पलल छत्र वस्त्र प्रलेपनमिति ब्रह्मराक्षसाय बलि दद्यात् । यवाना पूर्ण सिद्धमाढक-पक्कपात्र, यवैं पूर्ण पक्कपात्रमित्यर्थ । पूरणार्थेऽत्र षष्ठी । आढकशब्दोऽत्र पात्रवाचको न तु मानवाचक । पक्कपात्र–पक्कशरावमिति ।

गायत्रीविंशतिपलक्वाथेऽर्धपलिकैः पचेत् ॥ ३८ ॥
त्र्यूषणत्रिफलाहिङ्गुपड्ग्रन्थामिशिसर्षपैः ।
सनिम्बपत्रलशुनैः कुडवान् सप्त सर्पिषः ॥ ३९ ॥
गोमूत्रे त्रिगुणेपाननस्याभ्यङ्गेषु तद्धितम् ।

स०–खदिरविंशतिपलक्वाथे त्र्यूषणादिभिरर्धपलिकैः सप्त कुडवान् घृतस्य गोमूत्रे त्रिगुणे पचेत् । तत्पानादिषु हितम् ।

रक्षसां पललं शुक्तं कुसुमं मिश्रकौदनम् ॥ ४० ॥
बलिः पक्कामर्मासानि निष्पावा रुधिरोक्षिताः ।

स०–राक्षसाना पललादयो यावन्निष्पावा लोहितसिक्ता बलिर्देय ।

नक्तमालशिरीषत्वङ्मूलपुष्पफलानि च ॥ ४१ ॥
तद्वच्च कृष्णपाटल्या बिल्वमूलं कटुत्रिकम् ।
हिंग्विन्द्रयवसिद्धार्थलशुनामलकीफलम् ॥ ४२ ॥
नावनाञ्जनयोर्योज्यो बस्तमूत्रयुतोऽगदः ।

स०–नक्तमालादिक बस्तमूत्रेर्ण युतमगदो नस्याभ्यञ्जनयोर्योज्य ।

एभिरेव घृतं सिद्धं गवां मूत्रे चतुर्गुणे ॥ ४३ ॥
रक्षोग्रहान् वारयते पानाभ्यञ्जननावनैः ।

स०–एभिरेव द्रव्यैर्घृत गोमूत्रे चतुर्गुणे सिद्ध पानादिभी रक्षोग्रहनिवारण स्यात् ।

पिशाचाना बलिः सीधुः पिण्याकः पललं दधि॥४४॥
मूलक लवण सर्पिः संभूतौदनयावकम् ।

स०–पिशाचाना सीध्वादिभिर्बलिर्देय ।

हरिद्राद्वयमञ्जिष्ठामिशिसैन्धवनागरम् ॥ ४५ ॥
हिङ्गुप्रियङ्गुत्रिकटुरसोनत्रिफला वचा ।
पाटलीश्वेतकटभीशिरीषकुसुमैर्घृतम् ॥ ४६ ॥
गोमूत्रपादिकं सिद्धं पानाभ्यञ्जनयोर्हितम् ।

स०–हरिद्राद्वयादिभिर्गोमूत्रपादिक घृत पक्क पानाभ्यञ्जनयोर्हितम् ।

बस्ताम्बुपिष्टैस्तैरेव योज्यमञ्जननावनम् ॥ ४७ ॥

स०–बस्ताम्बुपिष्टैरेतैरेव द्रव्यैर्नस्यमञ्जन च हितमुक्तम् ।

देवर्षिपितृगन्धर्वे तीक्ष्णं नस्यादि वर्जयेत् ।
सर्पिष्पानादि मृद्वस्मिन् भैषज्यमवचारयेत् ॥ ४८ ॥

स०–देवर्षिपितृगन्धर्वे तीक्ष्ण नस्यादि न योजयेत् । मृदु सर्पिष्पानादिकमौषधमत्र योज्यम् ।

ऋते पिशाचात्सर्वेषु प्रतिकूलं च नाचरेत् ।
सवैद्यमातुर घ्नन्ति क्रुद्धास्ते हि महौजसः ॥ ४९ ॥

स०–सर्वेषु च ग्रहेषु पिशाचमन्तरेण प्रतिकूल नाचरेत् । ते हि देवादयो महौजस प्रतिकूलाचरणात् क्रुद्धा सन्त वैद्यसहितमातुर घ्नन्ति ।

---

१ 'अने' ई उ । २ "गुडेन कृता अपूपा –गुडापूपा । गुडेन मिश्रित ओदन –गुडौदन । परमान्न–पायसम् । नाग–नागकेसरम् ॥ काञ्चन हिरण्य च घटिताघटितभेदभिन्न बोद्धव्यम् ।" इति चन्द्र । "नाग–नखम् ।" इति सङ्ग्रहे कैरली । ३ 'वचापाठापु' उ य । ४ 'वस्त्रचन्दनम्' इ य । 'वस्त्रकम्बलम्' उ । ५ 'पलोन्मित' इ उ य स मू । ६ 'भ्यङ्गयो' ट ण । ७ 'चूर्ण' ई उ य । ८ 'यकुम्भ च प' उ । 'स्य कुम्भ' स मू । ९ 'णे सिद्ध पानाभ्य' उ ।

१ "मिश्रकौदन–मासेन सह पक्कमोदनम् ॥ पिण्याक –तिलकल्क । पलल–मासम् । भूतौदन–मासौदनम् । आदिशब्देन नावनाभ्यङ्गादिपरिग्रह ॥ महौजस –अनिर्देश्यशक्तिविशेषा ।" इतीन्दु । "महौजस –महाप्रभावा ।" इति डल्हण । "भूतौदन–मिश्रकौदनम्, रक्तमिति केचित् । यावक-वाट्यम् ।" इति चन्द्र । २ 'दन ।' ई स मू । ३ 'मूल पुष्प फ' ई चन्द्र । 'मूले पुष्प फ' उ । ४ 'मूत्रद्रुतो' ई उ स स । 'मूत्रहतो' इ ण चन्द्र । ५ 'ण सुत' ट । 'ण हत' ण । ६ 'प्रभूतौ' ई य स मू । 'प्रागभूतौ' उ । ७ 'गरै ।' ई उ स मू । ८ 'लावचा' ई उ स स । ९ 'पाटलाश्वे' ई स.मू । 'पटोलीश्वे' इ । १० 'पक्क पर पा' ण.।

**ईश्वरं द्वादशभुजं नाथमार्यावलोकितम् ।**
**सर्वव्याधिचिकित्सा च जपन् सर्वग्रहान् जयेत् ५०**
**तथोन्मादानपस्मारानन्यं वा चित्तविप्लवम् ।**

स०—ईश्वरं द्वादशभुजं नाथमार्यावलोकितं तथा सर्वव्याधिचिकित्सितमित्यादि जपन् सर्वान् ग्रहानुन्मादादींश्च पराकरोति ।

**महाविद्यां च मायूरीं शुचिं तं श्रावयेत्सदा ॥ ५१ ॥**

स०—मायूरीं महाविद्यां तं—ग्रहगृहीतं, शुचिं सन्तं सततं श्रावयेत् ।

**भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश्च तद्गणान् ।**
**जपन् सिद्धांश्च तन्मन्त्रान् ग्रहान् सर्वानपोहति ॥५२॥**

स०—तथा स्थाणुं भूताधिपं पूजयेत् । तथा तस्य गणान् प्रमथसंज्ञान् पूजयेत् । सिद्धांश्च तन्मन्त्रान् जपन् सर्वान् ग्रहान् पराकरोति ।

**यच्चानन्तरयोः किञ्चिद्वक्ष्यतेऽध्याययोर्हितम् ।**
**यच्चोक्तमिह तत्सर्वं प्रयुञ्जीत परस्परम् ॥ ५३ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने भूतप्रतिषेधो नाम पञ्चमोऽध्यायः ॥ ५ ॥**

१ "नाथ—देवदेवेशम् । चित्तविप्लवं—चित्तविक्षोभम् ॥ शुचिं—शुद्धकायम् । तं—आतुरम् ॥ भूतेशं—भूतनाथम् । स्थाणुं—भगवन्तं महेश्वरम् ॥ परस्परं—अन्योन्यम् ।" इति चन्द्र । "नाथमायावलोकिताख्यं ध्यात्वा सर्वव्याधिचिकित्सा—विद्यां, जपन्—समाहितं पौनःपुन्येनोच्चारयन् । ईश्वरादिकं तस्यैव विशेषणम् ।" इतीन्दु । "द्वादशभुजं—द्वादशसङ्ख्यैर्भुजैर्युतम् । आर्यावलोकितं—आर्यया पार्वत्या अवलोकितमार्यासहितमित्यर्थः । नाथं—लोकैकनाथमीश्वरं महादेवं ध्यात्वा, सर्वव्याधिचिकित्सा—लक्षणया सर्वव्याधेः प्रायश्चित्तभूतं श्रीपञ्चाक्षरादिकं मन्त्रं जपन्, अन्यं वा—येनकेनापि हेतुनोत्पन्नम्, चित्तविप्लवं—बुद्धिविभ्रंशम्, जयेत्—शमयेत् ॥ महाविद्यां—बुद्धदेवताख्यां, मायूरीं—त्वरिताम् ॥ स्थाणुं—महादेवम् । तदिति स्थाणुपरामर्शः । पूजयेत्—बलिकर्मादिपूजाविशेषैः प्रसादयेत् । सिद्धान्—प्रसिद्धान् । तन्मन्त्रान्—अघोरादीन्, इति पाठ्यकारः । ग्रन्थान्तरेऽन्यथा प्रोक्तं च—'व्योमावापी महाविद्या महापाशुपतस्तथा । फेळाक्षी वज्रगान्धारी मालिनी मन्त्रसहिता ॥ तथा चिविडनासा च शूलिनी चेति कीर्तिता । तत्रैः सिद्धा महामन्त्रा ग्रहाणां निग्रहे हिता ॥' इति तान् मन्त्रान् ॥ यच्चेति चशब्देन अस्मिन्नध्याये देवदानवग्रहादीनुद्दिश्य प्रोक्तं कर्मापि परस्परं प्रयुञ्जीतेति द्योतितम् ।" इति कैरळी। २ 'कित्सं च' इ ई य स मू । 'कित्सितं ज' चन्द्र । 'कित्सन्तं ज' इति क्वचित् । ३ 'नन्यान् वा चित्तविभ्रमान् ।' ई उ. । ४ 'शुचिस्तं' इ ई उ य स द. । ५ 'यथोक्तं' इ स मू ।

स०—यदप्यनन्तरयोरध्याययोः—उन्मादापस्मारप्रतिषेधाख्ययोः, वक्ष्यति—भणिष्यति, नचात्र हितम् । यच्च, [इह—]अस्मिन्नध्याये, देवग्रहादीनां पृथक् चिकित्सितं कथितं तदपि परस्परं ग्रहाणां प्रयुञ्जीतेति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने भूतप्रतिषेधो नाम पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥





## षष्ठोऽध्यायः ।

भूतप्रतिषेधादनन्तरमुन्मादापस्मारप्रतिषेध उच्यते, चिकित्सासामान्यात् । तत्राप्यपस्मारादुन्मादस्य पूर्वमुपन्यासो बहुवक्तव्यत्वादित्याह—

**अथात उन्मादप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

स०—उन्मादस्य प्रतिषेधं[२]—चिकित्सितं, भणिष्यामः ।

**उन्मादाः षट् पृथग्दोषनिचयाधिविषोद्भवाः ।**

स०—प्रत्येकं दोषैस्त्रयः सान्निपातिक आधिजो विषजश्चेति ।

**उन्मादो नाम मनसो दोषैरुन्मार्गगैर्मदः ॥ १ ॥**

स०—उन्मादो दोषैः—वातपित्तकफैः, उन्मार्गगैः—अपथप्रस्थितैः, मनसो यो मदः स उन्मादो नाम रोग उच्यते ।

अधुना विस्तरेणोत्पत्तिक्रममुन्मादानामाह—

**शारीरमानसैर्दुष्टैरहितादन्नपानतः ।**
**विकृतासात्म्यसमलाद्विषमादुपयोगतः ॥ २ ॥**
**विषण्णस्याल्पसत्त्वस्य व्याधिवेगसमुद्भ्रमात् ।**
**क्षीणस्य चेष्टावैषम्यात् पूज्यपूजाव्यतिक्रमात् ॥ ३ ॥**
**आधिभिश्चित्तविभ्रंशाद् विषेणोपविषेण च ।**

१ अयमुन्मादप्रतिषेधश्चरके नि० ७ अध्याये चि० ९ अध्याये च, सुश्रुते उ० ६२ अध्याये, अष्टाङ्गसङ्ग्रहे उ० ९ अध्याये चास्ति वर्णितः । २ 'षेधं—चिकित्सा, तं भ' ण य । ३ 'सैर्दोषैरहि' ई उ । ४ "अहितात्—अपथ्यात् । विषण्णस्य—विषादं गतस्य । अल्पसत्त्वस्य—हीनसत्त्वस्य । व्याधिवेगस्य उद्भ्रमात्—क्षोभात् । आधिभिः—मनःपीडाभिः । चित्तविभ्रंशात्—मनोविघातात् ।" इति चन्द्र । "विषं—महाविषम् । उपविषं—स्वल्पशक्तिविषम् ।" इतीन्दु । ५ 'मलविषं' ई उ । ६ 'मुद्भवात्' इ ई उ. । 'मुत्क्रमात्' चन्द्र । ७ 'वा' इ ।

एभिर्हि हीनसत्त्वस्य हृदि दोषाः प्रदूषिताः ॥ ४ ॥
धियो विधाय कालुष्य हत्वा मार्गान् मनोवहान् ।
उन्मादं कुर्वते, तेन धीविज्ञानस्मृतिभ्रमात् ॥ ५ ॥
देहो दुःखसुखभ्रष्टो भ्रष्टसारथिवद्रथः ।
भ्रमत्यचिन्तितारम्भः

स०–शारीरमानसैर्दोषैर्दुष्टैर्यावदुपविषेण चेति । एभि –अमीभिर्हेतुभि , दोषा हृदये प्रदूषिता सन्तो हीनसत्त्वस्य पुसो बुद्धे कालुष्य कृत्वा तथा चित्तवहानि स्रोतासि हत्वोन्माद कुर्वते । तेन–उन्मादेन,देहो बुद्धिभ्रमान्नष्टसुखदु खो भ्रष्टसारथिरिव रथो भ्रमति । अचिन्तित –अनिरूपितक्रिय , आरम्भ –उद्यमो, यस्य स एवम् ।

इति सामान्यलक्षणमुन्मादस्योक्त्वा पवनादिजस्य विशिष्ट लक्षणमाह—

तत्र वातात्कृशाङ्गता ॥ ६ ॥
अस्थाने रोदनाक्रोशहसितस्मितनर्तनम् ।
गीतवादित्रवागङ्गविक्षेपास्फोटनानि च ॥ ७ ॥
असाम्ना वेणुवीणादिशब्दानुकरणं मुहुः ।
आस्यात्फेनागमोऽजस्रमटनं बहुभाषिता ॥ ८ ॥
अलङ्कारोऽनलङ्कारैरयानैर्गमनोद्यमः ।
गृद्धिरभ्यवहार्येषु तल्लाभे चावमानता ॥ ९ ॥
उत्पिण्डितारुणाक्षित्व जीर्णे चान्ने गदोद्भवः ।

स०–वातादुन्मादे सति कृशाङ्गादिलक्षण च जीर्णे चान्ने गदोद्भव इत्यन्तम् । अस्थाने–अप्रसङ्गे, रोदनादीनि । असाम्ना–औद्धत्येन, पुन पुन वेणुवीणादिवाद्यस्यानुकरणम् ।

पित्तात्सन्तर्जनं क्रोधो मुष्टिलोष्टाद्यभिद्रवः ॥ १० ॥
शीतच्छायोदकाकाङ्क्षा नग्नत्वं पीतवर्णता ।
असत्यज्वलनज्वालातारकादीपदर्शनम् ॥ ११ ॥

स०–पित्तादुन्मादे सति सन्तर्जनक्रोधादय स्यु । असत्याना ज्वलनादीना दर्शनम् ।

कफादरोचकश्छर्दिरल्पेहाहारवाक्यता ।
स्त्रीकामता रहःप्रीतिर्लालासिङ्घाणकस्रुतिः ॥ १२ ॥
बैभत्स्यं शौचविद्वेषो निद्रा श्वयथुरानने ।
उन्मादो बलवान् रात्रौ भुक्तमात्रे च जायते ॥ १३ ॥

स०–कफादुन्मादे सत्यरोचकादय स्यु । तथा रात्रौ बलवान् सद्यो भुक्ते च स्यात् ।

१ 'एभिर्विही' ण य । २ 'देही' उ य । ३ "अस्थानशब्दोऽत्राप्राप्तवचन , यत्र कर्तव्यानि रोदनादीनि तत्र न करोति ।" इति चन्द्र । ४ 'अभीक्ष्ण वे' उ य । 'आस्येन वे' इ । ५ 'द्वादिकरण' ई उ । ६ 'भाषितम्' ई । ७ 'भे वाऽव' ण चन्द्र । 'भेष्वव' ई । ८ 'उत्पीडिता' इति क्वचित् । ९ 'असाम्ना–मोघ, पुन ' ट ण । 'अभीक्ष्ण पुन ' य । १० 'ङ्क्षा नेत्रत्वक्पीत' ई । ११ 'असति ज्वलने ज्वा' चन्द्र. । १२ 'ज्वनोल्कादितार' ई.उ. ।

सर्वायतनसंस्थानसन्निपाते तदात्मकम् ।
उन्माद दारुणं विद्यात् तं भिषक् परिवर्जयेत् ॥ १४ ॥

स०–आयतनानि–निमित्तानि,सस्थानानि–लिङ्गानि, सर्वाणि त्रिदोषविषयाण्यायतनानि सस्थानानि च यस्मिन सन्निपाते । तदात्मक–त्रिदोषोत्थम् , उन्माद दारुण–मारणात्मक, विद्यात् । त–उन्माद, नोपक्रमेत् ।

अथ चित्तजमुन्माद वक्ति—

धनकान्तादिनाशेन दुःसहेनाभिषङ्गवान् ।
पाण्डुर्दीनो मुहुर्मुह्यन् हाहेति परिदेवते ॥ १५ ॥
रोदित्यकस्मान्म्रियते तद्गुणान् बहु मन्यते ।
शोकक्लिष्टमना ध्यायन् जागरूको विचेष्टते ॥ १६ ॥

स०–धनादिनाशेन दु सहेनाभिषङ्गवानुन्माद स्यात् । तेन पाण्ड्वादिक सन्निदमिद करोति । तथा शोकखिन्नचेता सन् ध्यायन् जागरणशीलो विचेष्टते ।

विषेण श्याववदनो नष्टच्छायाबलेन्द्रियः ।
वेगान्तरेऽपि सम्भ्रान्तो रक्ताक्षस्तं विवर्जयेत् ॥ १७ ॥

स०–विषेणोन्मादे श्याववदन स्यात् । त वर्जयेत्–नोपक्रमेत् ।

अथानिलज उन्मादे स्नेहपानं प्रयोजयेत् ।
पूर्वमावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥ १८ ॥

स०–अथेदृश्युन्मादलक्षणेऽवगते सति पवनजो य उन्मादस्तस्मिन् स्नेहपान पूर्व कारयेत् । आवृतवर्त्मनि त्वनिले सस्नेह मृदु शोधन पूर्व स्नेहपानात् कारयेत् ।

कफपित्तभवेऽप्यादौ वमन सविरेचनम् ।
स्निग्धस्विन्नस्य बस्तिं च शिरसः सविरेचनम् ॥ १९ ॥
तथाऽस्य शुद्धदेहस्य प्रसादं लभते मनः ।

स०–कफभवे पित्तभवे चोन्मादे स्निग्धस्विन्नस्य नरस्य यथासङ्ख्य वमन विरेचन च कारयेत् । अपिशब्दान्न केवल पवनजे स्नेहपानमादौ, यावत् कफपित्तोत्थेऽपि कार्यमिति गमयति । तथा च मुनि (?)–"उन्माद स्नेहपानेन पूर्व सर्वमुपाचरेत् ।" इति । बस्ति शिरस सविरेचन त्रिष्वप्युन्मादेषु कारयेत् । तथा च–एव, शुद्धशरीरस्य सतो मन प्रसीदति ।

१ 'पातात्तदा' उ । २ "दु सहेन–सोढुमशक्येन । मुह्यन्–मोह गच्छन् । परिदेवते–शोचति । म्रियते–विचेतनो भवेत् । तद्गुणान्–नष्टधनकान्तादिगुणान् । विचेष्टते–विकृतां चेष्टा करोति । सम्भ्रान्त –अस्थिरचित्त ।" इति चन्द्र । "अभिषङ्ग –अभिभव । वेगान्तर–अतीतानागतयोर्विषवेगयोर्मध्यम् । शोधन–वमनविरेचनाख्यम् । तथेति अनन्तरोक्तचिकित्सया । अस्येति आतुरस्य ।" इतीन्दु । ३ 'स्मात् स्रयते' य स.स । ४ 'ध्यायेत्' स.मू । ५ 'च्छायोऽबले' इ उ ण चन्द्र स स । ६ 'पित्तोद्भवे' ई उ स स स च । ७ 'बस्तीश्च' इ चन्द्र स द्व । ८ 'रसश्च विरे' इ ई उ स.द्व स.च. । ९ 'तथैव शु' ई.उ. । १० 'शब्दो न के' ट. ।

इत्थमप्यनुवृत्तौ तु तीक्ष्णं नावनमञ्जनम् ॥ २० ॥
हर्षणाश्वासनोत्रासभयताडनतर्जनम् ।
अभ्यङ्गोद्वर्तनालेपधूपान् पानं च सर्पिषः ॥ २१ ॥
युञ्ज्यात्तानि हि शुद्धस्य नयन्ति प्रकृतिं मनः ।

स०-एवमप्युपक्रान्त उन्मादेऽस्यानुबन्धे सति तीक्ष्ण नावनाञ्जन युञ्ज्यात्, हर्षणादि च । कुत ? यस्मादेतानि कृतानि शुद्धदेहस्य चित्त प्रकृतिं प्रापयन्ति ।

हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ॥ २२ ॥
सिद्धं समूत्रमुन्मादभूतापस्मारनुत्परम् ।

स०-हिङ्ग्वादिभिर्द्विपलिकैर्घृतस्याढक गोमूत्रेण सह पचेत् । तच्चोपयुक्त परममुन्मादादिजित् ।

द्वौ प्रस्थौ स्वरसाद् ब्राह्म्या घृतप्रस्थं च साधितम् २३
व्योषश्यामात्रिवृद्दन्तीशङ्खपुष्पीनृपद्रुमैः ।
ससप्तलाकृमिहरैः कल्कितैरक्षसम्मितैः ॥ २४ ॥
पलवृद्ध्या प्रयुञ्जीत परं मात्रा चतुष्पलम् ।
उन्मादकुष्ठापस्मारहरं वन्ध्यासुतप्रदम् ॥ २५ ॥
वाक्स्वरस्मृतिमेधाकृद् धन्यं ब्राह्मीघृतं स्मृतम् ।

स०-ब्राह्मीस्वरसात्प्रस्थद्वय घृतस्य प्रस्थ व्योषादिभि कार्षिकै रजीकृतै पक्व पलवृद्ध्या-पल प्रथमेऽह्नि द्विपल द्वितीयेऽह्नि त्रिपल तृतीयेऽह्नि चतुष्पल चतुर्थेऽह्नि तत पर चतुष्पलमित्येव, प्रयुञ्जीत । तच्चोन्मादादिजिद्वन्ध्यासुतप्रद वागादिकृच्छिव च ब्राह्मीघृत स्मृतम् ।

वराविशालाभद्रैलादेवदार्वेलवालुकैः ॥ २६ ॥
द्विसारिवाद्विरजनीद्विस्थिराफलिनीनतैः ।
बृहतीकुष्ठमञ्जिष्ठानागकेसरदाडिमैः ॥ २७ ॥
वेल्लतालीसपत्रैलामालतीमुकुलोत्पलैः ।
सदन्तीपद्मकहिमैः कर्षांशैः सर्पिषः पचेत् ॥ २८ ॥
प्रस्थं भूतग्रहोन्मादकासापस्मारपाप्मसु ।
पाण्डुकण्डूविषे शोषे मोहे मेहे गरे ज्वरे ॥ २९ ॥
अरेतस्यप्रजसि वा दैवोपहतचेतसि ।
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके ॥ ३० ॥

१ 'च' स मू । २ 'धूमान्' उ ण । ३ "तानि-नावनादीनि ।" इतीन्दु । "धनाय हित धन्य-प्रशस्तम् ।" इति चन्द्र । ४ 'वृद्धिम्बीश' इ.ई उ स द्व । ५ 'सातलाकृमिजित्कल्कै सर्वैस्तैरक्ष' ई उ । ६ 'लापत्रैला' ई । 'लाकौत्पला' उ । 'लारोध्रैला' स मू । 'लावडैला' स स । ७ 'तीकुमुदोत्पलै' ई उ । ८ 'रुदन्ती' चन्द्र स मू । ९ 'पाप्मजित्' ई उ । 'पाप्मनुत्' स मू । 'रसूदनम्' स स । १० 'शोफे' ई उ ण । ११ 'स्वल्पग्जसि दै' इ स स ।



बल्यं मङ्गल्यमायुष्यं कान्तिसौभाग्यपुष्टिदम् ।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ ३१ ॥

स०-वरादिभि कर्षप्रमाणैर्घृतप्रस्थ पचेत् । तच्चोपयुक्त भूतग्रहादिषु श्रेष्ठ बल्यादिगुण च । कल्याणकाख्यमेतत्सपि पुसवनेषु च वरम् । अत्र च भद्रैला-स्थूलैला ।

एभ्यो द्विसारिवादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत्सर्पिर्गृष्टिक्षीरचतुर्गुणम् ॥ ३२ ॥
वीराद्विमेदाकाकोलीकपिकच्छूविषाणिभिः ।
शूर्पपर्णीयुतैरेतन्महाकल्याणकं परम् ॥ ३३ ॥
बृंहणं सन्निपातघ्नं पूर्वस्मादधिकं गुणैः ।

स०-एभ्यो-वरादिभ्यो, मध्यादाद्यानि सप्त हित्वा, द्विसारिवादीन्येकविंशति जले षोडशगुणे स्नेहापेक्षया पचेद्यावत्स्नेहाचतुर्गुण क्वाथ । तस्मिन स्नेहचतुर्गुणे रसे सर्पिर्गृष्टिक्षीरचतुर्गुण वीरादिभि स्नेहकर्षितै पादिकै कल्कीकृतै पचेत् । एतन्महाकल्याणक नाम घृत पूर्वस्मात्-कल्याणकात्, गुणैरतिरिक्तम् । अत्र द्विसारिवादीना पाठादेवैकविंशतित्व चेत् अतद्गुणसविज्ञानोऽय बहुव्रीहिरिति कस्यचिद् भ्रान्ति स्यात् । एव च सारिवादिद्वयस्य ग्रहण न प्राप्नुयादित्येकविंशतिग्रहणम् ।

जटिला पूतना केशी चारटी मर्कटी वचा ॥ ३४ ॥
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ।
वयःस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा ॥ ३५ ॥
महापुरुषदन्ता च कायस्था नाकुलीद्वयम् ।
कटम्भरा वृश्चिकाली शालिपर्णी च तैर्घृतम् ॥ ३६ ॥
सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम् ।
महापैशाचकं नाम घृतमेतद्यथाऽमृतम् ॥ ३७ ॥
बुद्धिमेधास्मृतिकरं बालानां चाङ्गवर्धनम् ।

१ "पुसवनेष्विति पुत्रकारकयोगेषु ।" इति शिवदास । "केचित्त्वेकविंशतिपदेनैकविंशतिवारान् सर्पिस्तयैव विधया पक्तव्यमिति वदन्ति । तन्न, यतो जतूकर्णे 'क्वाथे कृमिहरान्ताना चतुष्षष्टिपले पयसि च पचेत्सर्पि' इत्यनेन उत्सगत एक एवास्य पाक उक्त । गृष्टि -एकवारप्रसूता गौ ॥ केशी-भूतकेशी । चारटी-कुम्भी, अन्ह्ययष्टिकेत्यन्ये । वय स्था-ब्राह्मी गुडूची वा । शूकरी-वाराहीकन्द इति ख्याता । छत्रा-मधुरिका, अतिच्छत्रा-शतपुष्पा, किवा छत्रातिच्छत्रे-द्रोणपुष्पीद्वयम् । पलङ्कषा-गुग्गुलु । कायस्था-सूक्ष्मैला । नाकुलीद्वय-रास्नाद्वयम् । कटम्भरा-कटभी । वृश्चिकाली-वृश्चिकपत्रीति ख्याता ।" इति चक्र । २ 'च पत्रैला-' ट ण । ३ 'जले त' स स । ४ 'क्षीरे चतुर्गुणे' उ स च । 'क्षीर चतु' इ चक्र । ५ 'वीरर्द्धिमेदा' ण चन्द्र । 'वीराद्विमाषकाकोलीस्वयगुप्तर्षभार्द्धिभि । मेदया च समैः कल्कैस्तस्यात् कल्याणक महत् ॥' स च । ६ 'स्मृतम्' ई उ । ७ 'त्रा अति' उ ण । ८ 'लीस्थिराश्वाहल्य तै' ई उ स च । *९ 'चतुर्थको' ई ण ,ट ण । 'चातुर्थको' उ । १० 'शाचिक' स च चक्र । ११ 'स्मृतिबुद्धिकर चैव बालानामङ्ग' ई उ.स.च. ।

स०–जटिलादिभिर्घृत पक्वं चातुर्थिकादिनाशनम् । जटिला–मासी । पूतना–हरीतकी । केशी–गन्धमासी । चारटी–पद्मचारिणी । मर्कटी–कपिकच्छू । जया–अरणिका । वीरा–काकोली । चोरक –चण्डा । वय स्था–धात्री । शूकरी–वृद्धदारुक । छत्रा–धान्यकम् । अतिच्छत्रा–शतपुष्पा । पलङ्कषा–लाक्षा । महापुरुषदन्ता–शतावरी । कायस्था–क्षीरकाकोली । नाकुलीद्वय–सर्पाक्षी सर्पसुगन्धा च । महापैशाचकसज्ञ चातुर्थिकादिनाशनम् । तथाऽमृततुल्य महागुणत्वात् । बुद्ध्यादिक शिशूना च सवर्धयति ।

**ब्राह्मीमैन्द्रीं विडङ्गानि व्योषं हिङ्गुं जटां मुराम् ॥३८॥**
**रास्नां विषघ्नां लशुनं विशल्यां सुरसां वचाम् ।**
**ज्योतिष्मतीं नागविन्नामनन्ता सहरीतकीम् ॥ ३९॥**
**काङ्क्षीं च हस्तिमूत्रेण पिष्ट्वा छायाविशोषिता ।**
**वर्तिर्नस्याञ्जनालेपधूपैरुन्मादसूदनी ॥ ४० ॥**

स०–ब्राह्म्यादिभिर्गजमूत्रपिष्टा वर्तिश्छायाया विशोषिता नस्यादिभिरुन्मादहृत् । विषघ्ना–अतिविषा । विशल्या–लाङ्गली । नागविन्ना–नागदन्ती । काङ्क्षी–सौराष्ट्रिका ।

**अवपीडाश्च विविधाः सर्षपाः स्नेहसंयुताः ।**
**कटुतैलेन चाभ्यङ्गो ध्मापयेच्चास्य तद्रज. ॥ ४१ ॥**
**सहिङ्गुस्तीक्ष्णधूमश्च सूत्रस्थानोदितो हितः ।**

स०–"कल्कायैरवपीडस्तु" ( हृ सू अ २०१७ ) इति कथितोऽवपीड । तेऽवपीडा सर्षपतैलयुता हिता । अभ्यङ्गश्च सर्षपतैलेन । तथाऽस्य तद्रज –सर्षपचूर्ण, घ्राणे ध्मापयेत् । तथा सूत्रस्थानोक्तस्तीक्ष्णो धूमो (अ २१।१७) हिङ्गुना सह हित ।

**शृगालशल्यकोलूकजलौकावृषबस्तजै. ॥ ४२ ॥**
**मूत्रपित्तशकृल्लोमनखचर्मभिराचरेत् ।**
**धूपधूमाञ्जनाभ्यङ्गप्रदेहपरिषेचनम् ॥ ४३ ॥**

स०–शृगालादिमूत्रादिभिर्धूपादिकमाचरेत् । अत्र जलौका–चर्मचटिका ।

**धूपयेत्सतत चैनं श्वगोमत्स्यैः सुपूतिभि. ।**
**वातश्लेष्मात्मके प्राय.**

स०–एन–चोन्मादिन, पुन पुनश्च गोमत्स्यादिभि सुष्ठु पूतिगन्धिभिर्धूपयेत् । वातश्लेष्मात्मके बाहुल्येनैष उपक्रम ।

**पैत्तिके तु प्रशस्यते ॥ ४४ ॥**
**तिक्तकं जीवनीयं च सर्पि. स्नेहश्च मिश्रकः ।**
**शीतानि चान्नपानानि मधुराणि लघूनि च ॥ ४५ ॥**

स०–पैत्तिके तून्मादे तिक्तक सर्पिर्जीवनीय च शस्यते । तथा मिश्रको–यमक स्नेह , प्रशस्यते । तथा शिशिराणि मधुराण्यन्नपानानि लघूनि च शस्यन्ते ।

**विध्येच्छिरां यथोक्तां वा तृप्तं मेद्यामिषस्य वा ।**
**निवाते शाययेदेवं मुच्यते मतिविभ्रमात् ॥ ४६ ॥**

स०–तथा शिराव्यधविधियुक्ता शिरा विध्येत् । मेदुरमासस्य तृप्त निवाते स्वापयेच्च । एव कृते सति मतिविभ्रमात् मुच्यते ।

**प्रक्षिप्यासलिले कूपे शोषयेद्वा बुभुक्षया ।**
**आश्वासयेत्सुहृत्तं वा वाक्यैर्धर्मार्थसंहितैः ॥ ४७ ॥**
**ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ।**
**बद्धं सर्षपतैलाक्त न्यसेद्वोत्तानमातपे ॥ ४८ ॥**
**कपिकच्छ्वाऽथवा तप्तैर्लोहतैलजलै. स्पृशेत् ।**
**कशाभिस्ताडयित्वा वा बद्धं श्वभ्रे विनि.क्षिपेत् ४९**
**अथवा वीतशस्त्राश्मजने सतमसे गृहे ।**
**सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ॥ ५० ॥**
**( त्रासयेच्छस्त्रहस्तैर्वा किराताराततस्करै. । )**
**अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ।**
**भापयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ॥ ५१ ॥**
**देहदु.खभयेभ्यो हि पर प्राणभयं मतम् ।**
**तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥ ५२ ॥**

स०–अथवा जलवर्जिते कूपे प्रक्षिप्य क्षुधा शोषयेत् । अथवा त–उन्मादवन्त, सुहृत् धर्मार्थयुतैर्वाक्यैराश्वासयेत्–सान्त्वयेत् । अथवाऽस्य पुत्रादेर्विनाश–विघात, त ब्रूयात् । अद्भुतानि वा त दर्शयेत् । अथवा कटुतैलेनाभ्यक्त बध्वा तमुत्तान कृत्वाऽऽतपे न्यसेत् । कपिकच्छ्वा स्पृशेत्, अथवा तप्तैर्लोहादिभि । अथवा चर्मकशाभिराहत्य बद्ध सन्तमवटे विनि क्षिपेत् । शस्त्रादिवर्जिते तमसावृते( ऽन्धकारे ) भवने वा बध्वा विनिक्षिपेत् । ननु च, एकस्य शून्यगृहे स्थितिरुन्मादस्य निदा-

१ "ऐन्द्री–इन्द्रवारुणी, सूक्ष्मेलेत्येके । जटा–गन्धमासी । मुरा–गन्धमुरा । ज्योतिष्मती–कङ्गुनिका ।" इति चन्द्र । "हिङ्गुजटा–हिङ्गुपत्री । विषघ्ना–अत्र सोमराजी कटभी च । अनन्ता–दूर्वा ॥ सुपूतिभिः–क्लिन्नगन्धै ।" इतीन्दु । "सुरा–सुराह्वम्, अन्तलोपात् । विषघ्नी–हरिद्रा, अन्ये निर्विषामाहु । विशल्या–गुडूची । सुरसा–तुलसी । अनन्ता–उत्पलसारिवा ।" इति डल्हण । २ 'मुरम्' स स । 'सुराम्' ण चन्द्र स.मु. । ३ 'विषघ्नीं' ई उ चन्द्र म मु । ४ 'नागर च अनन्ता' स सु । ५ 'काच्छीं च' इ चन्द्र । 'काम्लीं च' स स । 'सौराष्ट्रीं बस्तमूत्रेण' ई उ । ६ 'दनाशिनी' ई.उ । ७ 'हिङ्गु ती' इ स स । ८ 'जलूका' ई उ । 'जतुका' स.स. । ९ 'वृकब' इ.स ह चन्द्र. । १० 'जतूका' ण. ।

१ 'च' इ ई उ । २ "मतिविभ्रमात्–उन्मादात् ॥ बुभुक्षया–अनशनेन । इष्टविनाश–पुत्रमरणादिरूपम् । अद्भुतानि–आश्चर्यभूतानीन्द्रजालादीनि ।" इतीन्दु । ३ 'सुहृद्भिस्त वाक्यै' चन्द्र । 'येन्मुहूर्तं वा' स मू । ४ 'ष्टस्य नाश' इ उ । ५ 'न्यस्त चोत्तान' इ ण चन्द्र स स । ६ 'बध्वा' इ स स । ७ सतमसे–सर्वव्याप्यन्धकारे । ८ ( ) इ उ पुस्तकयोरुपलब्धमिद श्लोकार्धम् । ९ 'वा तस्करै शत्रुभिस्तथा ।' उ स च. । १० 'भायये' स स. । 'भीषये' स मू । 'त्रासये' स.च. । ११ 'तोऽपसृत' इ. ।

नमुक्तम्। यच्च यस्य निदान तदेव तस्य कथ चिकित्सित स्यात्? नैष दोष । तदर्थकारिभेषजत्वात्। तदर्थकारिणि हि भेषजे यदेव निदान तदेवौषधम् । यथा,—तुच्छदग्धेऽग्निप्रतपनम्, मदात्यये मद्यपानमिति। तद्वदिहाप्यवगन्तव्यम्। अथवा समुत्पाटितदंष्ट्रेण सर्पेण भीषयेत्, दान्तैर्गजादिभिर्वा। राजपुरुषा बहिर्नीत्वा त सुष्ठु यन्त्रित कृत्वा राजाज्ञया तर्जयन्तो वधेन भापयेयु । यतो देहदु खभयेभ्य सकाशात् पर—अतिशयेन, प्राणभय मतम्। तेन—भयेन, इतश्चेतश्चित्त विप्लुतमुन्मादिन शममेति।

**सिद्धा क्रिया प्रयोज्येयं देशकालाद्यपेक्षया ।**

स०—इय क्रिया देशाद्यपेक्षया सिद्धा प्रयोजनीया ।

**इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ॥ ५३ ॥**
**तस्य तत्सदृशप्राप्तिसान्त्वाश्वासैः शमं नयेत् ।**

स०—इष्टद्रव्यविनाशाद् यस्य मानसमुपहन्यते तस्य तत्सदृशा—तुल्या, प्राप्ति कार्या। तथा सान्त्वनैश्चाश्वासनैश्च शममुन्मादिन नयेत्।

**कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ॥ ५४ ॥**
**परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ।**

स०—कामादिजानुन्मादान् अन्योन्यप्रतिपक्षैरेभिरेव—कामादिभि, शम नयेत्।

**भूतानुबन्धमीक्षेत प्रोक्तलिङ्गाधिकाकृतिम् ॥ ५५ ॥**
**यद्युन्मादे ततः कुर्याद्भूतनिर्दिष्टमौषधम् ।**

स०—भूतै —देवादिभि पूर्वोक्तै, अनुबन्ध —अनुषङ्ग, तमनन्तरोक्त आगन्तावुन्मादे यदीक्षेत ततो भूतप्रतिषेधोक्तमौषध कुर्यात्। ननु, कथमीक्षण कर्तु शक्यते? इति विशेषणद्वारेण हेतुमाह—प्रोक्तलिङ्गाधिकाकृतिमिति। प्रोक्तानि पूर्व षड्विधस्योन्मादस्य यानि लिङ्गानि तेभ्योऽधिकाऽऽकृति —लक्षण, यस्य—भूतानुबन्धस्य, त तथाविधम्।

**बलिं च दद्यात्पललं यावकं सक्तुपिण्डिकाम् ॥ ५६ ॥**
**स्निग्धं मधुरमाहारं तण्डुलान् रुधिरोक्षितान् ।**
**पक्कामकानि मांसानि सुरां मैरेयमासवम् ॥ ५७ ॥**
**अतिमुक्तस्य पुष्पाणि जात्याः सहचरस्य च ।**
**चतुष्पथे गवा तीर्थे नदीनां सङ्गमेषु च ॥ ५८ ॥**

स०—तथाऽत्र भूतानुबन्धे पललयावकादि च यावत् पुष्पाणि सहचरस्य चेति बलि दद्यात्। क्व? चतुष्पथे, तथा गोतीर्थे नद्योर्वा सङ्गमे।

**निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ।**
**निजागन्तुभिरुन्मादैः सत्ववान्न स युज्यते ॥ ५९ ॥**

स०—य पुरुषो निवृत्तमद्यमासो हितभोजी प्रयत शुचि स्यात्। स सात्विको निजागन्तुभिरुन्मादैर्न युज्यते। तस्मादीदृशेन भाव्यमिति भाव ।

**प्रसाद इन्द्रियार्थाना बुद्ध्यात्ममनसां तथा ।**
**धातूनां प्रकृतिस्थत्व विगतोन्मादलक्षणम् ॥ ६० ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया षष्ठे उत्तरस्थाने उन्मादप्रतिषेधो नाम षष्ठोऽध्यायः ॥ ६ ॥**

स०—इन्द्रियार्थाना प्रसन्नत्व तथा बुद्ध्यात्ममनसा च, धातूना प्रकृतिस्थत्व चेति विगतोन्मादस्य लक्षणमिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने उन्मादप्रतिषेधो नाम षष्ठोऽध्याय समाप्त ॥ ६ ॥



## सप्तमोऽध्यायः ।

अस्मादनन्तरमपस्मारप्रतिषेध उच्यते, चिकित्सासामान्यात्।

**अथातोऽपस्मारप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

---

१ 'भीषये' द । २ 'सिद्धाः क्रिया प्रयोक्तव्या दे' ई उ । ३ "इष्टद्रव्यविनाशात्—प्रियाधनविनाशात्। तत्सदृशप्राप्त्या—प्रियालभेन धनप्राप्त्या, सान्त्वेनाश्वासेन च मन प्रसादयेत्—स्वस्थ कुर्यात् ॥ रुधिरोक्षितान्—रक्तसिक्तान्।" इति चन्द्र.। "कामज तत्प्रतिद्वन्द्वीभूतेन भयेन वा क्रोधेन वा शम नयेदित्यर्थ, एव शेषेष्वपि यथासम्भव प्रतिद्वन्द्विषु वाच्यम्।" इतीन्दु । ४ 'स्नि सा' अरुण स स । 'स्निप्रियाश्वासै प्रदर्शयेत्' ई उ । 'सै प्रसादयेत्' इ चन्द्र स सं । ५ 'नुबद्धमी' ई । ६ 'दे च तत्कुर्या' उ । 'दे तदा कु' स मू । ७ 'पक्कामाह्वानि' इ. । ८ 'सुरामै' इ.उ ण.चन्द्र स.मू. ।

१ 'मद्योऽपि हि' उ । २ 'इन्द्रियाणा प्रसन्नत्वं बु० त्वं गतोन्मादस्य लक्षणम्' ई.उ । 'प्रसादश्चेन्द्रि' स सं स. च । ३ अयमपस्मारप्रतिषेधश्चरके नि० ८ अध्याये चि० १० अध्याये च, सुश्रुते उ० ६१ अध्याये, अष्टाङ्गसङ्ग्रहे उ० १० अध्याये चास्ति वर्णित ।

**स्मृत्यपायो ह्यपस्मारः स धीसत्त्वाभिसंप्लवात्[1]।**
**जायतेऽभिहते चित्ते चिन्ताशोकभयादिभिः ॥ १ ॥**
**उन्मादवत्प्रकुपितैश्चित्तदेहगतैर्मलैः।**
**हते सत्त्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च ॥ २ ॥**
**तमो विशन् मूढमतिर्बीभत्साः कुरुते क्रियाः।**
**दन्तान् खादन् वमन् फेनं हस्तौ पादौ च विक्षिपन् ३**
**पश्यन्नसन्ति रूपाणि प्रस्खलन् पतति क्षितौ।**
**विजिह्माक्षिभ्रुवो दोषवेगेऽतीते विबुध्यते ॥ ४ ॥**
**कालान्तरेण स पुनश्चैवमेव विचेष्टते।**

**स०**–स्मृतेरपायो–विनाश ,अपस्मार उच्यते[4]। स च–स्मृतिविनाशो, बुद्ध्यादिविनाशाच्चित्ते चिन्ताद्यभिहते, तयोन्मादवच्चित्तदेहगतैर्दोषै प्रकुपितै सत्त्वे हते, हृदये व्याप्ते, तथा सज्ञावाहिषु स्रोत सु व्याप्तेषु सत्सु, जायते। तस्मिंश्च जाते सति मूढमति सन् तमो–मोह, विशन् बीभत्सा –निन्दिता , क्रिया कुरुते। न तु तमो द्रव्यविशेष इह गृह्यते, तस्य दिवाऽसम्भवात्। यदि वा तमसोऽसम्भवस्यापि दर्शन सम्भाव्यत एव, रोगस्वभावात्। अत एव वक्ष्यति,–"पश्यन्नसन्ति रूपाणि" इति। ता एव क्रिया वक्ति–दन्तानित्यादि यावद्विजिह्माक्षिभ्रुव इति। विजिह्ममक्षिभ्रुव यस्य स एवम्। अक्षिभ्रुवशब्दोऽचतुरादिनिपात। दोषवेगे चातिक्रान्ते विबुध्यते–प्रकृति याति। कालान्तरेण स –अपस्मारी, एवमेव–पूर्ववत्, करोति।

**अपस्मारश्चतुर्भेदो वाताद्यैर्निचयेन च ॥ ५ ॥**

**स०**–अपस्मारश्चतु प्रकार। कथम्? इत्याह–वातादिभि सन्निपातेन च।

**रूपमुत्पत्स्यमाने[5]ऽस्मिन् हृत्कम्पः शून्यता भ्रमः।**
**तमसो दर्शनं ध्यानं भ्रूव्युदासोऽक्षिवैकृतम् ॥ ६ ॥**
**अशब्दश्रवणं स्वेदो लालासिङ्घाणकस्रुतिः।**
**अविपाकोऽरुचिर्मूर्च्छा कुक्ष्याटोपो बलक्षयः ॥ ७ ॥**
**निद्रानाशोऽङ्गमर्दस्तृट् स्वप्ने गानं सनर्तनम्।**
**पानं तैलस्य मद्यस्य तयोरेव च मेहनम् ॥ ८ ॥**

**स०**–अस्मिन्नपस्मार उद्बुभूषति सति हृत्कम्पादय स्यु। अक्षिवैकृतमिति विकृतिशब्दात् स्वार्थे प्रज्ञादित्वादण्। स्वप्ने च गानादि स्यात्, तैलमद्ययो पान स्यात्, तथा तयोरेव–तैलमद्ययो , मेहन–मूत्रण, स्यात्।

**तत्र वातात्स्फुरत्सक्थिः प्रपतंश्च[1] मुहुर्मुहुः।**
**अपसरति[2] संज्ञा च लभते विस्वर रुदन् ॥ ९ ॥**
**उत्पिण्डिताक्षः श्वसिति फेनं वमति कम्पते।**
**आविध्यति शिरो दन्तान् दशत्याध्मातकन्धरः ॥१०॥**
**परितो विक्षिपत्यङ्गं विषमं विनताङ्गुलिः।**
**रूक्षश्यावारुणाक्षित्वङ्नखास्यः कृष्णमीक्षते ॥ ११ ॥**
**चपलं परुषं[3] रूक्षं[4] रूपं विरूपं विकृताननम्।**

**स०**–तत्र–तेषु मध्यात्, वातादपस्मारे सति स्फुरत्सक्थ्यादिकं स्यात्[5]।

**अपसरति पित्तेन मुहुः सञ्ज्ञां च विन्दति ॥ १२ ॥**
**पीतफेनाक्षिवक्त्रत्वगास्फालयति मेदिनीम्।**
**भैरवादीप्तरुषितरूपदर्शी तृषान्वितः ॥ १३ ॥**

**स०**–पित्तेनापस्मारे सति पुन पुन सञ्ज्ञा–चेतना च लभते। पीतफेनाक्षिमुखत्व स्यात्। अत्र च वक्त्रग्रहणेनैवाक्षिग्रहणे सिद्धेऽक्षिग्रहणमतिशयार्थम्। तथाऽऽस्फालयति मेदिनीमित्यादि च स्यात्।

**कफाच्चिरेण ग्रहणं चिरेणैव विबोधनम्।**
**चेष्टाऽल्पा भूयसी लाला शुक्लनेत्रनखास्यता ॥ १४ ॥**
**शुक्लाभरूपदर्शित्वं**

**स०**–कफाच्चिरेण कालेन ग्रहणम्। चिरेणैव विमोक्षण स्यात्। चेष्टाऽल्पेत्यादि च।

**सर्वलिङ्गं तु वर्जयेत्।**

**स०**–सर्वलिङ्गमपस्मार वर्जयेत्–नोपक्रमेत्।

**अथाऽऽवृतानां धीचित्तहृत्खानां[6] प्राक्प्रबोधनम् १५**
**तीक्ष्णैः कुर्यादपस्मारे कर्मभिर्वमनादिभिः।**

**स०**–अथ–एवमपस्मारस्वरूपमवगम्य, धीचित्तहृदयस्रोतसा पूर्व प्रबोधन कुर्यात्। कै? वमनादिभि तीक्ष्णै कर्मभि।

**वातिकं बस्तिभूयिष्ठैः, पैत्तं प्रायो विरेचनैः ॥ १६ ॥**
**श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत्।**

---

१ "धिय –बुद्धे , सत्त्वस्य–धैर्यस्य च, अभिसप्लवात्–विनाशात्। चित्तदेहगतैर्मलै –रजस्तमोवातादिभि।" इतीन्दु। "सप्लवात्–क्षोभात्। सत्त्वे–मनसि। विक्षिपन्–प्रेरयन्। विचेष्टते–विकृता चेष्टा करोति ॥ तमसो दर्शन–तम.प्रवेश। ध्यान–चिन्तनम्। भ्रूव्युदास –भ्रूक्षेप। अक्षिवैकृत–नेत्रयोर्विकृति।" इति चन्द्र। "सप्लवादिति विकृतिगमनात्।" इति चक्र। २ 'खादिसं' इ ई.उ चन्द्र। ३ 'च कम्पयन्।' ई.उ। ४ 'ते। इत्यपस्मारस्य निर्वचनार्थमेतद्वचनम्।स' ण.। ५ 'त्पद्यमाने' इ।

१ 'प्रतत च मु' इ स स। २ "मुहुर्मुहुरपस्सरति सज्ञां च मुहुर्मुहुर्लभते। उत्पिण्डिताक्ष –ऊर्ध्वनिर्गमनेत्र। आविध्यति–कम्पयति। आध्मातकन्धर.–आपूरितग्रीव ॥ मुहुरपस्सरति–मोह याति। सर्वलिङ्ग–सन्निपातोद्भवमपस्मार सवाकृतिं च।" इति चन्द्र। 'प्रतत–सन्ततम्। मुहुर्मुहु –प्रतिक्षणम्। शिर आविध्यति–भित्त्यादावाविद्ध करोति। मेदिनी–भुव, आस्फालयति–आहन्ति।" इतीन्दु.। "अपसरति–अपस्मारवेगयुक्तो भवति।" इति चक्र। ३ 'परमं' इ.। ४ 'रूक्ष' ई.उ स मू.। ५ 'दिक स्यात्' ट.ण.। ६ 'वगत्य धी' ण.।

स०–वातिकमपस्मार बस्तिप्रायैरुपाचरेत् । पैत्त विरेचनप्रायैरुपाचरेत् । श्लैष्मिक वमनप्रायैरुपाचरेत् ।

**सर्वत सुविशुद्धस्य सम्यगाश्वासितस्य च ॥ १७ ॥**
**अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु ।**

स०–सर्वत -अथ उपरिष्टाच्च विशुद्धस्य, तथा सम्यगाश्वासितस्य च–कृतपेयाद्यन्नसमगिकस्य च सम्यगाश्वासन सम्पद्यते । तस्यापस्मारिण , अपस्मारविशोधनाय वक्ष्यमाणानिमान् योगानाकर्णय ।

तानेवाह—

**गोमयस्वरसक्षीरदधिमूत्रैः शृतं हविः ॥ १८ ॥**
**अपस्मारज्वरोन्मादकामलान्तकरं पिबेत् ।**

स०–गोमयस्वरसादिभिर्घृत पक्वमपस्मारादिघ्न पिबेत् ।

**द्विपञ्चमूलत्रिफलाद्विनिशाकुटजत्वचः ॥ १९ ॥**
**सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ।**
**शम्याकपुष्करजटाफल्गुमूलदुरालभाः ॥ २० ॥**
**द्विपलाः सलिलद्रोणे पक्त्वा पादावशेषिते ।**
**भार्गीपाठाढकीकुम्भनिकुम्भव्योषरोहिषैः ॥ २१ ॥**
**मूर्वाभूतीकभूनिम्बश्रेयसीसारिवाद्वयैः ।**
**मदयन्त्यग्निनिचुलैरक्षांशैः सर्पिषः पचेत् ॥ २२ ॥**
**प्रस्थं तद्वद् द्रवैः पूर्वैः पञ्चगव्यमिदं महत् ।**
**ज्वरापस्मारजठरभगन्दरहरं परम् ॥ २३ ॥**
**शोफार्शःकामलापाण्डुगुल्मकासग्रहापहम् ।**

स०–द्विपञ्चमूलादीनि पृथग् द्विपलप्रमाणानि जलद्रोणे पक्त्वा पादावशेषिते क्वाथे भार्ग्यादिभि कर्षांशै कल्कीकृतैर्घृतस्य प्रस्थ तद्वत् पूर्वै –गोमयस्वरसादिभिर्द्रवै ,र्पाचयेत् । महदिद पञ्चगव्य पर ज्वरादिहरम्, शोफादिघ्न च। बहुद्रव्ययोगाच्चास्य महत्त्वम्, यथा महाकल्याणकादे ।

**ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीशृतं घृतम् ॥ २४ ॥**
**पुराणं मेध्यमुन्मादालक्ष्म्यपस्मारपाप्मजित् ।**

स०–ब्राह्म्यादिभि पुराण सर्पि पक्व मेध्यमुन्मादादिजित्।

**तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ॥ २५ ॥**
**क्षीरद्रोणे पचेत्सिद्धमपस्मारविमोक्षणम् ।**

स०–तैलप्रस्थ घृतप्रस्थ जीवनीयै रजीकृतै पलप्रमाणै क्षीरद्रोणे पचेत् । तत्सिद्धमपस्मारविमोचनम् ।

**कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे ॥ २६ ॥**
**कार्षिकैर्जीवनीयैश्च सर्पिःप्रस्थं विपाचयेत् ।**
**वातपित्तोद्भवं क्षिप्रमपस्मारं निहन्ति तत् ॥ २७ ॥**

स०–क्षीरेक्षुरसयो कंसे–आढके, तथा काश्मर्यरसेऽष्टगुणे–अष्टप्रस्थपरिमाणे,घृतादस्याष्टगुणत्वम्। जीवनायै कार्षिकैर्घृतप्रस्थ विपाचयेत् । तत् वातपित्तजमपस्मार शीघ्रमेव निहन्ति । ननु, द्वन्द्वजस्यापस्मारस्यासम्भवात् कथमुक्त वातपित्तोद्भव हन्तीति ? उच्यते । वातपित्तोत्थयोर्द्वयोरप्यपस्मारयोर्हन्तीत्येतदिहोक्तमित्यदोष ।

**तद्वत् काशविदारीक्षुकुशक्काथशृतं पयः ।**

स०–तद्वत्–पूर्ववत्, काशादिक्काथे शृत क्षीर स्यात् ।

**कूष्माण्डस्वरसे सर्पिरष्टादशगुणे शृतम् ॥ २८ ॥**
**यष्टीकल्कमपस्मारहरं धीवाक्स्वरप्रदम् ।**

स०–कूष्माण्डस्वरसेऽष्टादशगुणे मधुयष्टिकाकल्क घृतप्रस्थ पक्वमपस्मारजित् बुद्ध्यादिप्रद च ।

**कपिलानां गवां पित्तं नावने परमं हितम् ॥ २९ ॥**
**श्वशृगालबिडालानां सिंहादीनां च पूजितम् ।**

स०–कपिलाना गवा पित्त नस्ये सुष्ठु हितम्, न कृष्णाना गवाम्, अचिन्त्यत्वात्प्रभावस्य । श्वादीनामपि पित्त हितम् ।

**गोधानकुलनागानां पृषतर्क्षगवामपि ॥ ३० ॥**
**पित्तेषु साधितं तैलं नस्येऽभ्यङ्गे च शस्यते ।**

स०–गोधादीना च पित्तेषु साधित तैल नस्येऽभ्यङ्गे च शस्यते ।

**त्रिफलाव्योषपीतद्रुयवक्षारफणिज्झकैः ॥ ३१ ॥**
**श्यामापामार्गकारञ्जबीजैस्तैलं विपाचितम् ।**
**बस्तमूत्रे हितं नस्यं चूर्णं वा ध्मापयेद्भिषक् ॥ ३२ ॥**

स०–त्रिफलादिभि कल्कितैश्छागमूत्रे चतुर्गुणे साधित तैल नस्यमुन्मादापस्मारिणोर्हितम् । चूर्ण त्रिफलादेर्वा वैद्यो नासाया मध्ये ध्मापयेत् ।

---

१ 'परिशुद्धस्य' स मू । २ 'मूलीत्रि' ण । ३ 'स्योनाक' इ । ४ 'पलानि जलद्रोणे' ई स मू । ५ 'वांपूती' ई उ । ६ मदयन्ती–मल्लिका । ७ 'सभ्रमापहम्' ई. । 'सक्षयापहम्' स मू । ८ 'पचेत्' ट । ९ "ब्राह्मीरसेन घृतापेक्षया चतुर्गुणेन वचाकुष्ठशङ्खपुष्पीभि कल्कित पक्वम् ।" इति चन्द्र ।

१ 'योर्हितमित्ये' ट । २ "तद्वत्–वातपित्तोद्भवमपस्मार क्षिप्र निहन्ति ।" इति चन्द्र । ३ "नागो–हस्ती । पृषत–चित्रलो मृग । ऋक्षो–भल्लूक ।" इति डल्हण । "पीतद्रु–दार्वी । श्याह्व–बिल्वम् ।" इतीन्दु । "पीतद्रु –देवदारु ।" इति चक्र । ३ 'क्वाथे शृत' ई। 'क्वाथै शृत' उ। ४ 'क्वाथेन श्रृत' ट । ५ 'स्मार हरेद्धीवाक्' चन्द्र । ६ कपिलाना–पिङ्गलवर्णानाम् । ७ 'मूत्र' स च. । ८ 'नावन' इ ण. चन्द्र स द्व । ९ 'वृषभर्क्ष' ण चन्द्र । 'वृकचर्क' इ । १० 'साधयेत्तैल' उ चन्द्र । ११ 'नस्याभ्यङ्गेषु श' ई। १२ 'श्यामापा' ई उ स मू स च. । १३ 'विपाचयेत्' चन्द्र । 'प्रसाधितम्' ई स. द्व.।

**नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ।**
**तुण्डैः पक्षैः पुरीषैश्च धूपमस्य प्रयोजयेत् ॥ ३३ ॥**

स०–नकुलादीना यथासम्भव तुण्डादिभिरपस्मारिणो धूम (प) योजयेत् ।

**शीलयेत्तैललशुनं पयसा वा शतावरीम् ।**
**ब्राह्मीरसं कुष्ठरसं वचा वा मधुसंयुताम् ॥ ३४ ॥**

स०–तथा तैललशुन शीलयेत् । क्षीरेण वा शतावरीमद्यात् । ब्राह्मीरस वा कुष्ठरस मधुना समभ्यसेत्, वचा वा ।

**सर्म कुद्धैरपस्मारो दोषैः शारीरमानसैः ।**
**यज्जायते यतश्चैष महामर्मसमाश्रय' ॥ ३५ ॥**
**तस्माद्रसायनैरेन दुश्चिकित्स्यमुपाचरेत् ।**
**तदार्तं चाग्नितोयादेर्विषमात्पालयेत्सदा ॥ ३६ ॥**

स०–यत्–यस्मात्, अपस्मारो युगपत्प्रकोपितैः शारीरमानसैर्दोषैर्जायते, यतश्चैष महामर्माश्रय, तत एन–अपस्मार, दुश्चिकित्स्य रसायनैरुपाचरेत् । अपस्मारार्तं चाग्निजलादेर्विषमात् सदा पालयेत् ।

**मुक्तं मनो विकारेण त्वमित्थं कृतवानिति ।**
**न ब्रूयाद्विषयैरिष्टैः क्लिष्टं चेतोऽस्य बृंहयेत् ॥ ३७ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थानेऽपस्मारप्रतिषेधो नाम सप्तमोऽध्यायः ॥ ७ ॥**

स०–मनोविकारेण च मुक्त सन्त त्वमित्थ कृतवानिति न ब्रूयात् । अस्य च मन क्लिष्टमिष्टैर्विषयैरुपबृंहयेदिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थानेऽपस्मारप्रतिषेधो नाम सप्तमोऽध्याय समाप्त ॥ ७ ॥

**इत्यष्टाङ्गहृदये भूततन्त्रं तृतीयं समाप्तम् ।**







अपस्मारादनन्तर शालाक्यमुपक्रम्यते । यथैव हृदयाख्यमहामर्माश्रितैरपस्मारो जन्यते तथैव मूर्धाख्यमहामर्माश्रितैरूर्ध्वजत्रुत्था रोगा जन्यन्ते । तेषामपि च मध्ये चक्षूरोगाणा प्राधान्यात् पूर्वमुपन्यास इत्याह—

**अथातो वर्त्मरोगविज्ञानीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

स०–वर्त्मनि रोगा वर्त्मरोगा,–कृच्छ्रोन्मीलादय, तेषा विज्ञान–बोध, स विद्यते यस्मिन्निति छ, तस्य पूर्ववल्लुक् ।

**सर्वरोगनिदानोक्तैरहितैः कुपिता मलाः ।**
**अचक्षुष्यैर्विशेषेण प्राय' पित्तानुसारिण. ॥ १ ॥**
**शिराभिरूर्ध्वं प्रसृता नेत्रावयवमाश्रिताः ।**
**वर्त्म सन्धिं सितं कृष्णं दृष्टिं वा सर्वमक्षि वा ॥२॥**
**रोगान् कुर्यु'**

स०–सर्वरोगनिदाने उक्तानि–अभिहितानि यथायोग तिक्तोषणादीनि, तैराहारविहारैः प्रकुपिता मला रोगान् कुर्यु । विशेषादचक्षुष्यैराहारविहारैः कुपिता मला प्रायो–बाहुल्येन, पित्तानुसारिणस्तथा शिरादिभि करणभूताभिरूर्ध्वं जत्रुण प्रसृतास्तथा नेत्रस्य सम्बन्धिनमवयव–वक्ष्यमाण वर्त्मादिक, आश्रिता । वर्त्मेत्यादि । वाशब्द प्रत्येक युज्यते, वर्त्म वा सन्धि वा सित वाऽसित वा दृष्टि वा सकल लोचनमाश्रिता । इति सामान्येन नयनरोगाणा सम्प्राप्ति ।

**चलस्तत्र प्राप्य वर्त्माश्रयाः सिराः ।**
**सुप्तोत्थितस्य कुरुते वर्त्मस्तम्भं सवेदनम् ॥ ३ ॥**
**पांशुपूर्णाभनेत्रत्वं कृच्छ्रोन्मीलनमश्रु च ।**
**विमर्दनात् स्याच्च शम. कृच्छ्रोन्मीलं वदन्ति तत् ॥४॥**

स०–तत्र–तेषु वर्त्माद्याश्रितेषु मध्ये, वर्त्माश्रया सिरा वायु प्राप्य सुप्तोत्थितस्य नरस्य वर्त्मस्तम्भ कुरुते, रुजया सह । तथा पांशुपूर्णाभनयनत्व कृच्छ्रेणोन्मीलनमश्रु च कुरुते । विमर्दनात्–मलनाच्च, शम स्यात् । त–ईदृक्स्वरूप, कृच्छ्रोन्मीलाख्य नेत्ररोग वदन्ति ।

---

१ 'धूपमस्यै' इ । 'धूममस्य' इ ण । २ 'यनेनैन' इ । ३ 'यादिविष' उ । ४ "विषयै –शब्दादिभि ।" इतीन्दु । "इष्टै –अभिप्रेतैः हृदयाह्लादनै । बृंहयेत्–सबल कुर्यात् ।" इति चन्द्र ।

१ अय वर्त्मरोगविज्ञानीय सुश्रुते उ० ३ अध्याये, अष्टाङ्गसङ्ग्रहे उ० ११ अध्याये चास्ति वर्णित, चरके तु न वर्णित । २ "सुप्तोत्थितस्य–तत्कालत्यक्तनिद्रस्य ।" इतीन्दु । "कृच्छ्रात्–दु खेन, उन्मीलन–अक्ष्णो सङ्कोचनम् ।" इति चन्द्र ।

**चालयन् वर्त्मनी वायुर्निमेषोन्मेषणं मुहुः ।**
**करोत्यरुङ् निमेषोऽसौ**

**स०**–वायुर्वर्त्मनी चालयन् निमेषोन्मेषण पीडारहित पुन पुन करोति । असौ निमेषाख्यो रोगो ज्ञेय ।

**वर्त्म यत्तु निमील्यते ॥ ५ ॥**
**विमुक्तसन्धि[1] निश्चेष्टं हीनं वातहत हि तत् ।**

**स०**–यत्पुनर्वर्त्म विमुक्तसन्धि तथा निश्चेष्ट हीन च निमील्यते त वातहताख्य रोग वदन्ति, 'मुनय ' इति शेष ।

**[2]कृष्णाः पित्तेन बह्व्योऽन्तर्वर्त्म कुम्भीकबीजवत् ॥६॥**
**आध्मायन्ते पुनर्भिन्ना. पिटिकाः[3] कुम्भिसंज्ञिताः[4] ।**

**स०**–पित्तेन कृष्णवर्णा पिटिका बह्व्यो वर्त्मनोर्मध्ये कुम्भीकबीजतुल्यास्तथा भिन्ना सत्य पुनराध्मायन्ते, ता कुम्भीसज्ञा ।

**सदाहक्लेदनिस्तोदं रक्ताभं स्पर्शनाक्षमम् ॥ ७ ॥**
**पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशन्ति तं[5] ।**

**स०**–पित्तेन सदाहक्लेदनिस्तोद तथा रक्ताकार स्पर्शनाक्षम वर्त्म जायते, तत् पित्तोत्क्लिष्टमुशन्ति–कथयन्ति ।

**करोति कण्डूं दाहं च पित्तं पक्ष्मान्तमाश्रितम्[6] ॥८॥**
**पक्ष्मणां शातनं[7] चानु पक्ष्मशातं वदन्ति तम् ।**

**स०**–पित्त पक्ष्मान्तमास्थित कण्डू दाह च करोति । अनु–पश्चात्, पक्ष्मणा शात करोति । त पक्ष्मशात वर्णयन्ति ।

**पोथक्यः पिटिकाः श्वेताः सर्षपाभा घनाः कफात् ९**
**शोफोपदेहरुक्कण्डूपिच्छिलाश्रुसमन्विता. ।**

**स०**–कफात् पिटिका सिता सर्षपोपमा घना –निबिडा, शोफादियुता पोथकीसज्ञा ।

**कफोत्क्लिष्टं भवेद्वर्त्म स्तम्भक्लेदोपदेहवत् ॥ १० ॥**

**स०**–स्तम्भादियुत वर्त्म यद् भवेत् तत्कफोत्क्लिष्ट नाम ।

**ग्रन्थि. पाण्डुररुक्पाकः कण्डूमान् कठिनः कफात् ।**
**कोलमात्रः स लगणः किञ्चिदल्पस्ततोऽथ वा[8] ॥११॥**

**स०**–कफात् यो ग्रन्थि कोलमात्र, अथवा तत –तस्मात् कोलात्किञ्चिदल्प, पाण्डु पीडापाकरहित कण्डूमान् कठिनश्च स्यात्, स लगणाख्य ।

**रक्ता रक्तेन पिटिका[1] तत्तुल्यपिटिकाचिता ।**
**उत्सङ्गाख्या**

**स०**–रक्तेन रक्तवर्णा पिटिका तत्तुल्यपिटिकैराचिता उत्सङ्गाख्या ।

**तथोत्क्लिष्टं[2] राजिमत्स्पर्शनाक्षमम् ॥१२॥**

**स०**–तथा–उत्सङ्गवत्, उत्क्लिष्टाख्य वर्त्म । तच्च न पिटिकारूपम्, किं तर्हि ? राजियुत स्पर्शनाक्षम च स्यात् ।

**अर्शोऽधिमांसं वर्त्मान्त[3]. स्तब्धं स्निग्धं सदाहरुक् ।**
**रक्तं रक्तेन तत्स्रावि छिन्नं छिन्नं च वर्धते ॥ १३ ॥**

**स०**–अधिकमास च वर्त्माभ्यन्तरस्थितमर्शो नाम रक्तेन स्यात् । रक्त वर्णत, तथा स्तब्धतादिगुण स्यात् । तथा तत्स्रावि–तद्रक्त स्रवत्यभीक्ष्णम् । तत् पुन पुनश्छिन्नमपि वर्धते ।

**मध्ये वा वर्त्मनोऽन्ते वा कण्डूषारुग्वती स्थिरा ।**
**मुद्गमात्राऽसृजा ताम्रा पिटिकाऽञ्जननामिका ॥ १४ ॥**

**स०**–असृजा ताम्रा पिटिका मुद्गप्रमाणा वर्त्मनो मध्येऽन्ते वा कण्ड्वादिमती स्थिरा चाञ्जननामिका स्यात् ।

**दोषैर्वर्त्म बहि शूनं यदन्तः सूक्ष्मखैश्चितम् ।**
**सस्रावमन्तरुदकं बिसाभं बिसवर्त्म तत् ॥ १५ ॥**

**स०**–दोषै –वातादिभि, बहि शून यद्वर्त्म सूक्ष्मै खै –छिद्रै, अन्तराचित सस्राव च तद् बिसवर्त्म, उदकान्त स्थितसच्छिद्रबिसतुल्यत्वात् ।

**यद्वर्त्मोत्क्लिष्टमुत्क्लिष्टमकस्मान्म्लानतामियात् ।**
**रक्तदोषत्रयोत्क्लेशाद्भवत्युत्क्लिष्टवर्त्म[4] तत् ॥ १६ ॥**

**स०**–यद्वर्त्म रक्तोत्क्लेशाद्दोषत्रयोत्क्लेशाच्च उत्क्लिष्ट–उत्क्लेशितं सत्, अकस्मात्–हेतु विनैव, म्लानिमियात्–शुष्कत्व यायात्, तदुत्क्लिष्टवर्त्म स्यात् ।

**श्याववर्त्म मलैः सास्रैः श्यावं रुक्क्लेदशोफवत् ।**

**स०**–रक्तसहितैस्त्रिमलैर्यद्वर्त्म श्याव रुजा क्लेदेन शोफेन च युक्त भवति, तच्छ्याववर्त्म ।

**श्लिष्टाख्यं वर्त्मनी[5] श्लिष्टे कण्डूश्वयथुरागिणी ॥ १७ ॥**

**स०**–श्लिष्टे–एकत्र सलग्ने, वर्त्मनी कण्ड्वादियुते श्लिष्टवर्त्म नाम ।

**वर्त्मनोऽन्तः खरा रूक्षाः पिटिकाः सिकतोपमाः ।**
**सिकतावर्त्म**

**स०**–वर्त्मनो मध्ये वालुकातुल्या पिटिका. खरस्पर्शास्तथा रूक्षा, तत् सिकतावर्त्म ।

---

१ "विमुक्तसन्धि–विस्रस्तबन्धनम् ।" इतीन्दु । "कुम्भीकबीजवत्–कुमुदफलवत् ॥ पक्ष्मान्त–पक्ष्ममध्यम् । कोलमात्र –बदरप्राय ।" इति चन्द्र । "कुम्भीका–दाडिमाकारफला स्थलकुम्भी ।" इति डल्हण । २ 'पित्तेन वर्त्मनोऽन्तर्जा बह्व्य कुम्भी' इ । ३ 'पिटका ' चन्द्र स स. । 'पिडिका ' इ । 'पिडका ' ई उ । ४ 'सञ्ज्ञका ' उ । 'सञ्ज्ञिका ' स स । ५ 'तम्' इ उ चन्द्र. । ६ 'माश्रितम्' उ स द्व । ७ 'शतन' द्व ण.स सं. । 'सदनं' ई. उ.चन्द्र. । ८ 'ऽपि वा' इति कश्चित् ।

१ 'कास्तत्तु' 'ता ' 'ख्या ' इ उ चन्द्र । २ "तथा–तेनैव प्रकारेण रक्तेन ॥ अन्त –आभ्यन्तरे, सूक्ष्मैश्छिद्रैराचित–व्याप्तम् ।" इति चन्द्र । ३ 'न्तरस्थित' ट. । ४ 'शाद्भदन्त्युत्क्लि' ण । ५ 'वर्त्मनी ना' ण. ।

**कृष्णं तु कर्दमं कर्दमोपमम् ॥ १८ ॥**

स०–कर्दमसदृशं कृष्णं वर्त्म कर्दमाख्यम्।

**बहलं बहलैर्मांसैः सवर्णैश्चीयते समैः।**

स०–बहलैः–घनैः, मांसैः सवर्णैः समैः–न विषमैः, चीयते तद्बहलं नाम।

**कुकूणकः शिशोरेव दन्तोत्पत्तिनिमित्तजः ॥ १९ ॥**
**स्यात्तेन शिशुरुच्छूनताम्राक्षो वीक्षणाक्षमः।**
**सवर्त्मशूलपैच्छिल्यः कर्णनासाक्षिमर्दनः ॥ २० ॥**

स०–कुकूणकः शिशोरेव–न महतो, जायते। यतोऽसौ दन्तोत्पत्तिहेतुको भवति। तेन–कुकूणकेन, बाल उच्छूनताम्रनयनो वीक्षणाक्षमस्तथा वर्त्मशूलादिमान् कर्णादिमर्दनश्च स्यात्।

**पक्ष्मोपरोधे सङ्कोचो वर्त्मनां जायते तथा।**
**खरताऽन्तर्मुखत्वं च रोम्णामन्यानि वा पुनः ॥ २१ ॥**
**कण्टकैरिव तीक्ष्णाग्रैर्घृष्टं तैरक्षि शूयते।**
**उष्यते चानिलादिद्विड्लपाहः शान्तिरुद्धृतैः ॥ २२ ॥**

स०–पक्ष्मोपरोधे वर्त्मनां सङ्कोचो भवति। तथा खरत्वमन्तर्मुखत्वं च रोम्णाम्, अन्यानि वा रोमाणि जायन्ते। तैश्च–खरान्तर्मुखैः, अपूर्वैर्वा रोगस्वभावात्तीक्ष्णाग्रैः कण्टकैरिव घृष्टमक्षि शूयते। उष्यते चै–सान्तर्दाहस्तीव्रोष्मा स्यादित्यर्थः। तथा पवनादिद्विट्, आदिशब्देनानलातपौ गृह्येते। स्तोकान्यहान्युद्धृतैः–उत्पाटितैस्तैः, शान्तिर्भवति।

**कनीनके बहिर्वर्त्म कठिनो ग्रन्थिरुन्नतः।**
**ताम्रः पक्वोऽस्रपूयस्रुदलज्याध्मायते मुहुः ॥ २३ ॥**

स०–कनीनके वर्त्मनोर्बाह्यतः कठिन उन्नतो ग्रन्थिरलजीत्युच्यते। किम्भूतो ग्रन्थिः? ताम्रः पक्वश्चास्रस्रावी पूयस्रावी च। तथा मुहुर्मुहुः स्रुतः सन्नाध्मायते।

**वर्त्मान्तर्मांसपिण्डाभः श्वयथुर्ग्रथितोऽरुजः।**
**सास्रैः स्यादर्बुदो दोषैर्विषमो बाह्यतश्चलः ॥ २४ ॥**

स०–वर्त्मनोऽन्तरे मांसपिण्डाकृतिः श्वयथुः सरक्तैस्त्रिभिर्दोषैरर्बुदः स्यात्। किम्भूतः श्वयथुः? ग्रथितो नीरुजः। स च बाह्यतश्चलो विषमश्च स्यात्।

**चतुर्विंशतिरित्येते व्याधयो वर्त्मसंश्रयाः।**

स०–इति–अनेन प्रकारेण, चतुर्विंशतिसङ्ख्या वर्त्माश्रया रोगाः स्युः।

**आद्योऽत्र भेषजैः साध्यो द्वौ ततोऽर्शश्च वर्जयेत् २५**
**पक्ष्मोपरोधो याप्यः स्याच्छेषाञ्छस्त्रेण साधयेत्।**

स०–[अत्र–] एषु मध्यात्, आद्यः–कृच्छ्रोन्मीलनाख्यो, भेषजैः साध्यः। ततः–अनन्तरं, द्वौ–निमेषवातहतौ अर्शश्च वर्जयेत्। पक्ष्मोपरोधो यापनीयः। शेषान्–एकोनविंशतिं, शस्त्रेणोपचरेत्।

**कुट्टयेत्पक्ष्मसदनं छिन्द्यात्तेष्वपि चार्बुदम् ॥ २६ ॥**
**भिन्द्याल्लगणकुम्भीकाबिसोत्सङ्गाञ्जनालजीः।**
**पोथकीश्यावसिकताश्लिष्टोत्क्लिष्टचतुष्टयम् ॥ २७ ॥**
**सकर्दमं सबहलं विलिखेत्सकुकूणकम् ॥ २७½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने वर्त्मरोगविज्ञानीयो नाम अष्टमोऽध्यायः ॥ ८ ॥**

स०–तेष्वपि–शस्त्रसाध्येषु मध्ये, पक्ष्मसदनं कुट्टयेत् सूचीकूर्चेन। अर्बुदं च छिन्द्याद्वृद्धिपत्रादिना। लगणादीनि व्रीहिमुखादिना भिन्द्यात्। पोथक्यादयः कुकूणकान्ता एकादश विलेख्याः। उत्क्लिष्टचतुष्टयं–पित्तोत्क्लिष्टं कफोत्क्लिष्टं रक्तोत्क्लिष्टमुत्क्लिष्टवर्त्म चेति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने वर्त्मरोगविज्ञानीयो नामाष्टमोऽध्यायः समाप्तः ॥ ८ ॥



# नवमोऽध्यायः।

वर्त्मरोगविज्ञानादनन्तरं वर्त्मरोगप्रतिषेधं आरभ्यत इत्याह—

**अथातो वर्त्मरोगप्रतिषेधं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

( गद्यसूत्रे ॥ २ ॥ )

**कृच्छ्रोन्मीले पुराणाज्यं द्राक्षाकल्काम्बुसाधितम्।**
**ससितं योजयेत्स्निग्धं नस्यधूमाञ्जनादि च ॥ १ ॥**

१ 'वर्णं चीय' स मू। २ 'क्षणेऽक्षम' ई। ३ "वर्त्मशूलपैच्छिल्याभ्यां [सह] वर्तत इति स तथाविधः ॥ कनीनके–नासासमीपभागे।" इति चन्द्रः। "पक्ष्मोपरोधे–पक्ष्मोपरोधनाम्नि रोगे। कनीनके–नासानिकटे नेत्रान्ते।" इतीन्दुः। ४ 'लयकर्ण' इ ण. स.द्व। ५ 'वर्त्मनो जा' ई उ। 'वर्त्मनोर्जायते ततः' स.स। ६ 'च लोम्नाम' ण। ७ 'सूयते' ई स मू। ८ 'वाऽनिला' ई ण चन्द्र। ९ 'लाद्यैश्च अल्पा' इ। १० 'ल्पाह शा' ई.उ स.द्व.। ११ 'वा' ण। १२ सुश्रुते वर्त्मसंश्रया एकविंशतिरेव रोगा उक्ताः, इह तु चतुर्विंशतिरिति विशेषः।

१ 'न्छस्त्रौषधैर्जयेत्' स.स.। २ 'क्ष्मशदनं' ण। 'क्ष्मशतनं' स स.। ३ अयं वर्त्मरोगप्रतिषेधः सुश्रुते उ० १३।१४।१६ अध्यायेषु, अष्टाङ्गसङ्ग्रहे उ० १२ अध्याये चास्ति वर्णितः, चरके तु न वर्णितः।

स०–कृच्छ्रोन्मीले वर्त्मरोगे पुराण घृत द्राक्षाकल्काम्बुपक्व समशर्कर योजयेत् । स्निग्ध च नस्यादिकम् ।

कुम्भीकावर्त्मोपक्रममाह—

**कुम्भीकावर्त्म लिखितं सैन्धवप्रतिसारितम् ।**
**यष्टीधात्रीपटोलीनां क्वाथेन परिषेचयेत् ॥ २ ॥**

स०–कुम्भीकावर्त्म लिखित वृद्धिपत्रादिना सैन्धवलवणेन प्रतिसारित सत् मधुयष्टिकादिक्वाथेन परिषेचयेत् ।

कथ वर्त्म लेखनीयम्? इत्याह—

**निवातेऽधिष्ठितस्याप्तैः शुद्धस्योत्तानशायिनः ।**
**बहिः कोष्णाम्बुतप्तेन स्वेदितं वर्त्म वाससा ॥ ३ ॥**
**निर्भुज्य वस्त्रान्तरितं वामाङ्गुष्ठाङ्गुलीधृतम् ।**
**न स्रंसते[1] चलति वा वर्त्मैवं सर्वतस्ततः ॥ ४ ॥**
**मण्डलाग्रेण तत्तिर्यक् कृत्वा शस्त्रपदाङ्कितम् ।**
**लिखेत्तेनैव पत्रैर्वा शाकशेफालिकादिजैः[2] ॥ ५ ॥**
**फेनेन तोयराशेर्वा पिचुना प्रमृजन्नसृक् ।**
**स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत् ॥ ६ ॥**
**यथास्वमुक्तैरनु च प्रक्षाल्योष्णेन वारिणा ।**
**घृतेन[3] सिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा ॥ ७ ॥**
**ऊर्ध्वाधः कर्णयोर्दत्त्वा पिण्डीं च यवसक्तुभिः ।**
**द्वितीये[4]ऽहनि मुक्तस्य परिषेकं यथायथम् ॥ ८ ॥**
**कुर्याच्चतुर्थे नस्यादीन् मुञ्चेदेवाह्नि पञ्चमे ।**

स०–निवाते स्थाने आप्तैरधिष्ठितस्य–कृताश्रयस्य, तथा शुद्धस्य–वमनविरेचनादिना, उत्तान नित्य शेते तस्य वर्त्म वाससा कोष्णाम्बुना तप्तेन स्वेदित सन्निर्भुज्य–कुटिलीकृत्य, वस्त्रान्तरित वामाङ्गुष्ठाङ्गुलीभ्या धृतमेव न स्रसते । न वा चलति सर्वत । अनन्तर तद्वर्त्म तिर्यङ् मण्डलाग्रेण शस्त्रपदाङ्कित कृत्वा तेनैव शस्त्रेण शाकादिपत्रैर्वा समुद्रफेनेन वा लिखेत् । कि कुर्वन्? पिचुना–कर्पटादियोजितेन, रक्त प्रमृजन् । रक्ते स्थिते–अवहृति, सुलिखित तद्वर्त्म ज्ञात्वा सक्षौद्रैर्यथास्व कथितै सैन्धवादिभि प्रतिसारयेत् । पश्चाच्चोष्णेन वारिणा प्रक्षाल्य सर्पिषा सिक्तमनन्तरमभ्यक्त मधुसर्पिषा ऊर्ध्वाध कर्णयोर्यवसक्तुभि पिण्डी च दत्त्वाऽवबध्नीयात् । द्वितीये दिवसे मुक्तस्य वर्त्मनो यथास्व परिषेक कुर्यात् । चतुर्थे दिवसे नस्यादीन् कुर्यात् । पञ्चमे दिवसे मुञ्चेदेव–नान्यत्किञ्चित्कुर्यात् ।

**समं नखनिभं शोफकण्डूघर्षाद्यपीडितम् ॥ ९ ॥**
**विद्यात्सुलिखितं वर्त्म लिखेद् भूयो विपर्यये ।**

स०–सम नखसदृश शोफाद्यपीडित सुलिखित वर्त्म जानीयात् । विपर्यये–अस्माल्लक्षणाद्वैपरीत्ये सति, तद्वर्त्म पुनर्लिखेत् ।

१ 'ते न चलति वर्त्मैं' ई.उ । २ 'कादिकै' इ । 'कादिभिः' उ. । ३ 'तेनासिक्त' ण.चन्द्र. । ४ 'तृतीये' स.स. ।



**रुक्पक्ष्मवर्त्म[1]सदनस्रंसनान्यतिलेखनात् ॥ १० ॥**
**स्नेहस्वेदादिकस्तस्मिन्निष्टो वातहरः क्रमः ।**

स०–अतिलेखनाद्रुजादीनि स्यु । तस्मिन्–अतिलेखने, स्नेहस्वेदादिको वातघ्नो विधि कार्य ।

**अभ्यज्य नवनीतेन श्वेतरोध्रं प्रलेपयेत् ॥ ११ ॥**
**एरण्डमूलकल्केन पुटपाके पचेत्ततः ।**
**स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटलीकृतम् ॥ १२ ॥**
**स्त्रियाः क्षीरे छगल्या[2] वा मृदितं नेत्रसेचनम् ।**

स०–श्वेतरोध्र नवनीतेनाभ्यज्य एरण्डमूलकल्केन प्रलेपयेत् । अनन्तर पुटपाके पचेत् । स्विन्न प्रक्षालित शुष्क चूर्णित पोटलीकृत सत् युवतीक्षीरेण छगल्या वा क्षीरेण मर्दित[3] नेत्रे सेचन हितम् ।

**शालितन्डुलकल्केन लिप्तं तद्वत् परिष्कृतम् ॥ १३ ॥**
**कुर्यान्नेत्रेऽतिलिखिते मृदितं दधिमस्तुना ।**
**केवलेनापि वा सेकं मस्तुना जाङ्गलाशिनः ॥ १४ ॥**

स०–अतिलिखिते वर्त्मनि नवनीतेनाक्त श्वेतरोध्र शालितन्डुलकल्केन लिप्त बद्ध परिष्कृत–पूर्ववत्परिकल्पित पुटपाकीकृत स्विन्न प्रक्षालित शुष्क चूर्णित पोटलीकृत चेलस्थं, तत् दधिमस्तुना मृदित सेक कुर्यात् । दधिग्रहण तक्रमस्त्वादिनिवृत्त्यै । अथवा केवलेन–कल्करोध्ररहितेन, मस्तुना जाङ्गलमासाशिनो नरस्य सेक कुर्यात् । अपि [4]स्वेदनादिसमुदायविकल्पार्थं ।

**[5]पिटिकां[6] व्रीहिवक्त्रेण भित्त्वा तु कठिनोन्नतां[6] ।**
**निष्पीडयेदनु विधिः परिशेषस्तु पूर्ववत् ॥ १५ ॥**

स०–कठिनोन्नता पिटिका व्रीहिवक्त्रेण भित्त्वाऽनु निष्पीडयेत् । परिशेषो विधि –प्रलेपनक्षालनबन्धनसेचनादि, पूर्ववत्कार्य ।

**लेखने भेदने चायं क्रमः सर्वत्र वर्त्मनि ।**

स०–लेखने भेदने च एष एव क्रम सर्वत्र वर्त्मनि कार्य ।

**पित्तास्रोत्क्लिष्टयोः स्वादुस्कन्धसिद्धेन सर्पिषा ॥१६॥**
**सिराविमोक्षः स्निग्धस्य त्रिवृच्छ्रेष्ठं[7] विरेचनम् ।**
**लिखिते[8] स्रुतरक्ते च वर्त्मनि क्षालनं हितम् ॥ १७ ॥**
**[9]यष्टीकषायः, सेकस्तु क्षीरं चन्दनसाधितम् ।**

स०–पित्तोत्क्लिष्टे रक्तोत्क्लिष्टे च मधुरस्कन्धशृतेन घृतेन स्निग्धस्य पुस सिराविमोक्ष कार्य । तथा त्रिवृतात्रिफले विरेचनम् । लिखिते वर्त्मनि स्रुतलोहिते च सति मधुयष्टिकाक्वाथ क्षालन हितम् । क्षीर चन्दनसाधित तु सेको हित ।

१ 'र्त्मशतन' स.स. । २ 'छागले वा' इ.चन्द्र. । ३ 'मलित' ट । ४ 'स्वेदनपातनसमुदायो वि' ट ण । ५ पिटिका–भेदनीया लगणाद्यलज्यन्ता इत्यर्थ । ६ 'कां' 'ताम्' ई । ७ 'च्छ्रेष्ठा विरेचने' ई उ । ८ 'ते नि सृते रक्ते च' उ । ९ 'यष्टीक्वाथेन से' ई.उ. ।

**पक्ष्मणां सदने सूच्या रोमकूपान् विकुट्टयेत् ॥ १८ ॥**
**ग्राहयेद्वा जलौकोभि., पयसेक्षुरसेन वा ।**
**वमनं, नावनं सर्पिः शृतं मधुरशीतलै. ॥ १९ ॥**

स०-पक्ष्मणा सदने सति रोमकूपान्-रोममूलानि, सूच्या विकुट्टयेत् । जलौकोभिर्वा ग्राहयेत् । क्षीरेणेक्षुरसेन वा वमन हितम् । मधुरशीतलै -द्राक्षादिभि , पक्व घृत नावन हितम् ।

**सञ्चूर्ण्य पुष्पकासीसं भावयेत्सुरसारसैः ।**
**ताम्रे दशाहं परमं पक्ष्मशाते तदञ्जनम् ॥ २० ॥**

स०-पुष्पकासीस चूर्णयित्वा ताम्रपात्रे दशाह सुरसारसै -समूर्वारसै , भावयेत् । तत्-एतत्, पक्ष्मशाते श्रेष्ठमञ्जनम् ।

**पोथकीर्लिखिताः शुण्ठीसैन्धवप्रतिसारिताः ।**
**उष्णाम्बुक्षालिताः सिञ्चेत् खदिराढकिशिग्रुभिः २१**
**अप्सिद्धैर्द्विनिशाश्रेष्ठामधुकैर्वा समाक्षिकैः ।**

स०-पोथकीर्लिखिता वृद्धिपत्रादिभि , शुण्ठीसैन्धवाभ्या प्रतिसारिता , तथोष्णाम्बुना क्षालिता , जलक्वथितै खदिरादिभि सिञ्चेत् । द्विनिशादिभिर्वा जलक्वथितै समाक्षिकै सिञ्चेत् ।

**कफोत्क्लिष्टे विलिखिते सक्षौद्रैः प्रतिसारणम् ॥२२॥**
**सूक्ष्मै. सैन्धवकासीसमनोह्वाकणताक्ष्यजैः ।**
**वमनाञ्जननस्यादि सर्वं च कफजिद्धितम् ॥ २३ ॥**

स०-कफोत्क्लिष्टे वर्त्मनि शस्त्रेण विलिखिते सैन्धवादिभि सूक्ष्मरजीकृतैर्माक्षिकसहितै प्रतिसारण हितम् । तथा वमनादि हितम् । सर्व च यत्कफजित् तच्च हितम् ।

**कर्तव्यं लगणेऽप्येतदशान्तावग्निना दहेत् ।**

स०-लगणेऽपीद कार्यम् । एवमप्यशमे सति ज्वलनेन दहेत् ।

**[स्विन्नां भित्त्वा विनिष्पीड्य भिषग(ङ्गोत्सङ्गां च)-**
**ञ्जननामिकाम् ।**
**शिलैलासैन्धवनतैः सक्षौद्रैः प्रतिसारयेत् ॥ १ ॥ ]**
**कुकूणे खदिरश्रेष्ठानिम्बपत्रशृतं घृतम् ॥ २४ ॥**
**पीत्वा धात्री वमेत्कृष्णायष्टीसर्षपसैन्धवैः ।**

स०-कुकूणे खदिरादिभि पक्व घृत धात्री-स्तनदायिनी, पीत्वा कृष्णादिभिर्वमेत् ।

**अभयापिप्पलीद्राक्षाक्वाथेनैनां विरेचयेत् ॥ २५ ॥**

स०-अभयादिक्वाथेनैना-स्तनदायिनीं, विरेचयेत् ।

**मुस्ताद्विरजनीकृष्णाकल्केनालेपयेत्स्तनौ ।**
**धूपयेत्सर्षपैः साज्यैः**

स०-मुस्तादिकल्केन कुचावालेपयेत् । साज्यै. सर्षपै स्तनौ धूपयेत् ।

**शुद्धां क्वाथं च पाययेत् ॥ २६ ॥**
**पटोलमुस्तमृद्वीकागुडूचीत्रिफलोद्भवम् ।**

स०-शुद्धा च-वमनविरेचनादिना, पटोलादिक क्वाथ ता पाययेत् ।

**शिशोस्तु लिखितं वर्त्म स्रुतासृग्वाऽम्बुजन्मभिः २७**
**धात्र्यश्मन्तकजम्बूत्थपत्रक्वाथेन सेचयेत् ।**

स०-शिशो पुनर्वर्त्म लिखित जलौकाभिर्वा स्रुतरक्त धात्र्यादिपत्रक्वाथेन सेचयेत् ।

**प्रायः क्षीरघृताशित्वाद्बालाना श्लेष्मजा गदाः ॥२८॥**
**तस्माद्वमनमेवाग्रे सर्वव्याधिषु पूजितम् ।**

स०-प्रायो-बाहुल्येन, क्षीरघृतभोजनत्वाच्छिशूना कफजा रोगा स्यु । तस्माद्वमनमेव पूर्वं तेषा सर्वव्याधिषु पूजितम् ।

तदेह वमनमाह—

**सिन्धूत्थकृष्णापामार्गबीजाज्यस्तन्यमाक्षिकम् ॥ २९ ॥**
**चूर्णो वचायाः सक्षौद्रो मदनं मधुकान्वितम् ।**
**क्षीरं क्षीरान्नमन्नं च भजतः क्रमतः शिशोः ॥ ३० ॥**
**वमनं सर्वरोगेषु विशेषेण कुकूणके ।**

स०-सिन्धूत्थेत्यादि वमन दद्यात्, वचाचूर्णं सक्षौद्रो वा, मदनफल मधुयष्टीयुक्त वा । क्षीरं क्षीरान्न तथाऽन्न भजत शिशोर्यथाक्रम वमनत्रयमेतत् योज्यम् । वमन सर्वेष्वेवामयेषु शिशो श्रेष्ठम् । विशेषेण कुकूणके हितम् ।

**सप्तलारससिद्धाज्यं योज्यं चोभयशोधनम् ॥ ३१ ॥**

स०-सप्तलारसेन वा सिद्ध घृतमूर्ध्वाध शोधन हितम् ।

**द्विनिशारोध्रयष्ट्याह्वरोहिणीनिम्बपल्लवैः ।**
**कुकूणके हिता वर्तिः पिष्टैस्ताम्ररजोन्वितैः ॥ ३२ ॥**
**क्षीरक्षौद्रघृतोपेतं दग्धं वा लोहजं रजः ।**

स०-कुकूणके द्विहरिद्रादिभिस्ताम्रचूर्णयुक्तैर्जलपिष्टैर्वर्तिर्हिता । क्षीरादियुक्त दग्ध लोहोत्थ वा चूर्ण हितम् । केचित्तु समुद्रफेनचूर्ण दग्ध दुग्धमाक्षिकयुक्तमित्याहु ।

**एलारसोनकतकशङ्खोषणफणिज्जकैः ॥ ३३ ॥**
**वर्तिः कुकूणपोथक्योः सुरापिष्टैः सकट्फलैः ।**

स०-एलादिभि कट्फलयुक्तै कुकूणपोथक्यो सुरापिष्टैर्वर्तिर्हिता ।

**पक्ष्मरोधे प्रवृद्धेषु शुद्धदेहस्य रोमसु ॥ ३४ ॥**
**उत्सृज्य द्वौ भ्रुवोऽधस्ताद्भागौ भागं च पक्ष्मतः ।**
**यवमात्रं यवाकारं तिर्यक् छित्त्वाऽऽर्द्रवाससा ॥३५॥**
**अपनेयमसृक् तस्मिन्नल्पीभवति शोणिते ।**
**सीव्येत्कुटिलया सूच्या मुद्गमात्रान्तरैः पदैः ॥ ३६ ॥**
**बध्वा ललाटे पट्टं च तत्र सीवनसूत्रकम् ।**
**नातिगाढश्लथं सूच्या निक्षिपेदथ योजयेत् ॥ ३७ ॥**
**मधुसर्पिःकवलिकां न चास्मिन् बन्धमाचरेत् ।**
**न्यग्रोधादिकषायैश्च सक्षीरैः सेचयेद्रुजि ॥ ३८ ॥**

१ "सुरसाया.-तुलस्याः ।" इतीन्दु. । २ 'कीं' 'ता' 'ताम्' 'तां' इ.ई.उ. । ३ "एतत्-कफोत्क्लिष्टसाधनम् ।" इति चन्द्र । ४ [ ] श्लोकोऽय इ उ. पुस्तकयोरुपलब्ध सङ्ग्रहसम्मतश्च । किन्त्वस्य टीका अरुणदत्तकृता चन्द्रनन्दनकृता वा नोपलभ्यते । ५ 'पत्रैः शृत' उ. ।

१ 'क्रमशः' उ.ण चन्द्र. । २ 'लोध्रज' उ ।

**पञ्चमे दिवसे सूत्रमपनीयावचूर्णयेत् ।**
**गैरिकेण व्रणं युञ्ज्यात्तीक्ष्णं नस्याञ्जनादि च ॥ ३९ ॥**

स०—पक्ष्मरोधे रोमसु प्रकर्षेण वृद्धेषु शुद्धशरीरस्य नरस्य भ्रुवोऽवस्ताद्वौ भागावुत्सृज्य—विहाय, पक्ष्मतो भाग हित्वा यवमात्र—यवसंस्थान, तिर्यक् छित्त्वा क्लिन्नवस्त्रेण रक्तमपनयेत् । रक्ते चाल्पीभवति सति वक्रया सूच्या मुद्गमात्रान्तरै पदै सीव्येत् । ततो ललाटे पट्ट बध्वा तत्र च पट्टे सीवनसूत्रक नातिगाढश्लथ सूच्या विनिक्षिपेत् । अनन्तरं माक्षिकघृतकवलिका योजयेत् । न चात्र बन्ध कुर्यात् । पीडाया सत्या न्यग्रोधादिकषायै क्षीरयुतै सेचयेत् । पञ्चमे दिवसे सूत्रमपनीय व्रण गैरिकेणावचूर्णयेत् । तीक्ष्ण च नस्यादि युञ्ज्यात् ।

**दहेदशान्तौ निर्भुज्य वर्त्मदोषाश्रयां वलीम् ।**
**संदंशेनाधिकं पक्ष्म हृत्वा तस्याश्रयं दहेत् ॥ ४० ॥**
**सूच्यग्रेणाग्निवर्णेन, दाहो बाह्यालजेः पुनः ।**
**भिन्नस्य क्षारवह्निभ्यां सुच्छिन्नस्यार्बुदस्य च ॥ ४१ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने वर्त्मरोगप्रतिषेधो नाम नवमोऽध्यायः ॥ ९ ॥**

स०—एवमप्यशान्तौ वर्त्मदोषाश्रया वली निर्भुज्य दहेत् । अधिक पक्ष्म सदशेन हृत्वा तस्य पक्ष्मण आश्रय दहेत् । केन ? सूच्यग्रेणाग्निवर्णेन । बाह्यालजेस्तु भिन्नस्य दाह कार्य । अलजीशब्द पुस्यपि दृष्ट । अर्बुदस्य क्षारवह्निभ्या सुष्ठु च्छिन्नस्य दाह कार्य इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने वर्त्मरोगप्रतिषेधो नाम नवमोऽध्याय समाप्त ॥ ९ ॥



## दशमोऽध्यायः ।

वर्त्मरोगप्रतिषेधादनन्तरं स्थानानुपूर्व्या सन्धिसितासितरोगविज्ञानमारभ्यते—

**अथातः संन्धिसितासितरोगविज्ञानीयं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

स०—सन्धी च सितासितो च सन्धिसितासिता , तेषु रोगा , तेषा विज्ञानम् । शेष पूर्ववत् ।

यथोद्देशस्तथा निर्देश इति तानेव तावत्सन्धिरोगानाह—

**वायुः क्रुद्धः सिराः प्राप्य जलाभं जलवाहिनीः ।**
**अश्रु स्रावयते वर्त्मशुक्लसंन्धेः कनीनकात् ॥ १ ॥**
**तेन नेत्रं सरुग्रागशोफं स्यात्स जलास्रव. ।**

स०—पवन कुपितो जलवाहिनी सिरा प्राप्य जलाकृति अश्रु स्रावयते । कुत ? वर्त्मशुक्लसन्धे कनीनकात् । तेन—जलाभस्रावेण, नयन सरुक् सराग सशोफ च स्यात् । स च जलास्रवाख्यो रोग ।

**कफात् कफास्रवे श्वेतं पिच्छिलं बहलं स्रवेत् ॥ २ ॥**

स०—कफात् कफास्रवे सति श्वेत पिच्छिल बहल च स्रवेत् ।

**कफेन शोफस्तीक्ष्णाग्रः क्षारबुद्बुदकोपमः ।**
**पृथुमूलबलः स्निग्धः सवर्णो मृदुपिच्छिलः ॥ ३ ॥**
**महानपाक. कण्डूमानुपनाहः स नीरुजः ।**

स०—श्लेष्मणा शोफस्तीक्ष्णाग्रादिगुण । स उपनाहाख्यो नीरुज स्यात् ।

**रक्ताद् रक्तास्रवे ताम्रं बहूष्णं चाश्रु संस्रवेत् ॥ ४ ॥**

स०—रक्तेन रक्तास्रवो भवति । तस्मिश्च ताम्रवर्णमुष्ण चाश्रु सस्रवेत् ।

**वर्त्मसन्ध्याश्रया शुक्ले पिटिका दाहशूलिनी ।**
**ताम्रा मुद्गोपमा भिन्ना रक्तं स्रवति पर्वणी ॥ ५ ॥**

स०—वर्त्मसन्धिराश्रयो यस्या सा वर्त्मसन्ध्याश्रया, शुक्ले पिटिका शूलदाहवती ताम्रवर्णा मुद्गसदृशी पर्वणी भण्यते । सा च भिन्ना सती रक्त स्रवति । एषा च रक्तसमुत्थैव वेद्या, रक्तास्रवादनन्तरमस्या पाठात् रक्तस्रावित्वाच्च ।

**पूयास्रवे मलाः सास्रा वर्त्मसन्धेः कनीनकात् ।**
**स्रावयन्ति मुहु. पूयं सास्रं त्वङ्मांसपाकतः ॥ ६ ॥**

स०—पूयास्रवाख्ये दोषा रक्तसहिता वर्त्मसन्धे कनीनकात् पुन पुन पूय सास्र त्वङ्मासपाकाद्धेतो स्रावयन्ति ।

**पूयालसो व्रणः सूक्ष्मः शोफसंरम्भपूर्वकः ।**
**कनीनसन्धावाध्मायी पूयास्रावी सवेदनः ॥ ७ ॥**

स०—पूयालसो व्रण उच्यते । कीदृक् ? सूक्ष्म , तथा शोफसरम्भपूर्वक । क्वासौ स्यात् ? कनीनसन्धौ । तथाऽऽध्मायी—आनाहवान् , पूयास्रावी सरुक् च स्यात् ।

---

१ 'तीक्ष्णनस्या' इ.ई.उ स द । २ 'नानि च' इ चन्द्र.स.द. । ३ 'त्वा हुतव' ट. । ४ ''हृत्वा—उद्धृत्य । आश्रयं—स्थानम् । क्षारवह्निभ्या—क्षारेणाग्निना वा ।'' इति चन्द्र । ५ अयं सन्धिसितासितरोगविज्ञानीय सुश्रुते उ० २।४।५ अध्यायेषु, अष्टाङ्गसङ्ग्रहे उ० १३ अध्याये चास्ति वर्णित , चरके तु न वर्णित ।

१ 'सन्धिकनीनिकात्' इ । २ 'कफस्रवे' ण सं मू । 'कफश्रवे' इ उ । ३ ''तीक्ष्णाग्र.—निशितमुखः । क्षारबुद्बुदा – पच्यमाने क्षारेऽग्निसयोगादुत्पद्यन्ते ॥ आदौ शोफसरम्भौ तत स्वयं भिन्नो व्रण इति पूर्वशब्दार्थ ।'' इतीन्दु' । ''अपाक –ईषत्पाकः ।'' इति डल्हण । ४ 'वर्णमृदु' इ उ ण.चन्द्र । ५ 'रक्तस्रवे' ण.स.मू. । 'रक्त स्रवेत्ताम्र' ई.उ । ६ 'वाऽश्रु' ई ण । 'चास्र' ड. । ७ 'पूयास्रावे' ई.उ ण.चन्द्र.स द. । ८ 'सन्धिकनी' ई स.मू. । ९ 'सास्रत्व' इ.स.मू. । 'साश्रुत्व' उ ण चन्द्र. । 'सासृक् त्व' स सं । १० 'साश्रु त्व' ट ण. । 'सास्रत्व' ड. ।

**कनीनस्यान्तरलजी शोफो रुक्तोददाहवान् ।**

स०-कनीनस्यान्त शोफो रुक्तोददाहवान् अलजीत्युच्यते।

**अपाङ्गे वा कनीने वा कण्डूषापक्ष्मपोटवान् ॥ ८ ॥**
**पूयास्रावी कृमिग्रन्थिर्ग्रन्थिः कृमियुतोऽर्तिमान् ।**

स०-अपाङ्गे कनीने वा कण्ड्वादिमास्तथा पूयास्रावी ग्रन्थि-रेव कृमियुक्तोऽतिमान् कृमिग्रन्थिरुच्यते ।

**उपनाहकृमिग्रन्थिपूयालसकपर्वणीः ॥ ९ ॥**
**शस्त्रेण साधयेत्पञ्च सालजीनास्रवांस्त्यजेत् ।**

स०-उपनाहादीश्चतुर शस्त्रेण साधयेत् । आस्रवान्-ज-लास्रवादीश्चतुर , अलजी चेति पञ्च त्यजेत् ।

एव सन्धिगतान्नव रोगानाख्याय सितभागस्थान् रोगानाह—

**पित्तं कुर्यात्सिते बिन्दूनसितश्यावपीतकान् ॥१०॥**
**मलाक्तादर्शतुल्य वा सर्व शुक्कं सदाहरुक् ।**
**रोगोऽयं शुक्तिकासंज्ञः सशकृद्भेदतृड्ज्वरः ॥ ११ ॥**

स०-सिते नेत्रदेशे पित्त कर्तृ बिन्दून् कृष्णश्यावपीतान् कुर्यात् । मललेपदिग्धदर्पणसमान वा सर्व शुक्लम् । एवमुभयप्र-कारोऽप्यय सदाहरुक् शुक्तिकासञ्ज्ञो रोग , शकृद्भेदेन तृषा ज्वरेण च युक्त ।

**कफाच्छुक्ले समं श्वेतं चिरवृद्ध्यधिमांसकम् ।**
**शुक्लार्म**

स०-कफाच्छुक्लभागे सम-न तु विषमम् , तथा श्वेतवर्णम-धिमासक चिरवृद्धि, तत् शुक्लार्म ।

**शोफस्त्वरुजः सवर्णो बहलोऽमृदुः ॥१२॥**
**गुरुः स्निग्धोऽम्बुबिन्द्वाभो बलासग्रथितं स्मृतम् ।**

स०-शोफस्तु नीरुज समानवर्णो बहलादिस्तथा जलबि-न्दुसमो बलासग्रथित स्मृतम् ।

**बिन्दुभिः पिष्टधवलैरुत्सन्नैः पिष्टकं वदेत् ॥ १३ ॥**

स०-बिन्दुभि पिष्टवत्सितैरुत्सन्नै पिष्टक नामार्म वदेत् ।

**रक्तराजीततं शुक्लमुष्यते यत्सवेदनम् ।**
**अशोफाश्रूपदेहं च सिरोत्पातः स शोणितात् ॥१४॥**

स०-रक्तराजीतत शुक्ल-शुक्लभाग, उष्यते । यत्सवेदन शोफाश्रूपलेपरहित स शोणितात् सिरोत्पात ।

**उपेक्षितः सिरोत्पातो राजीस्ता एव वर्धयन् ।**
**कुर्यात्सास्रं सिराहर्ष तेनाक्ष्युद्वीक्षणाक्षमम् ॥ १५ ॥**

स०-सिरोत्पातोऽचिकित्सितस्ता एव-रक्ता एव, राजीर्वर्ध-यन् सिराहर्ष सास्र कुर्यात् । तेन-सिराहर्षेण, लोचन वीक्ष-णाक्षम स्यात् ।

**सिराजाले सिराजालं बृहद्रक्तं घनोन्नतम् ।**

स०-सिराजाले बृहत्तया रक्त घनमुन्नत च यद् भवति, तत्सिराजाल नाम ।

**शोणितार्म सम श्लक्ष्ण पद्माभमधिमासकम् ॥ १६ ॥**

स०-सम-न तु विषम, तथा श्लक्ष्ण यदधिमासक तच्छो-णितार्म ।

**नीरुक् श्लक्ष्णोऽर्जुन बिन्दुः शशलोहितलोहितः ।**

स०-नीरुज श्लक्ष्णो बिन्दु शशलोहितताम्रोऽर्जुन नाम ।

**मृद्वाशुवृद्ध्यरुङ्मासं प्रस्तारि श्यावलोहितम् ॥१७॥**
**प्रस्तार्यर्म मलैः सास्रैः**

स०-मास प्रस्तारित तथा मृदु तथा आशुवृद्धि तथा नीरुक् श्यावलोहित प्रस्तार्यर्मेत्युच्यते । तच्च त्रिभिर्दोषै सशोणितै स्यात् ।

**स्नावार्म स्नावसन्निभम् ।**

स०-स्नावसदृश तु स्नावार्मेत्युच्यते ।

**शुष्कासृक्पिण्डवच्छयावं यन्मासं बहलं पृथु ॥१८॥**
**अधिमांसार्म तद्**

स०-शुष्करक्तपिण्डवच्छयाव यन्मास तथा बहल पृथु च स्यात् , तदधिमासार्म भण्यते ।

**दाहघर्षवत्यः सिरावृताः ।**
**कृष्णासन्नाः सिरासंज्ञाः पिटिकाः सर्षपोपमाः ॥१९॥**

स०-पिटिका दाहादिमत्यस्तथा सिराचिता कृष्णभागा-सन्ना सर्षपसस्थाना सिरासञ्ज्ञा ।

सितभागोत्थानामेषा त्रयोदशाना साधन सूत्रयति—

**शुक्तिहर्षसिरोत्पातपिष्टकग्रथितार्जुनम् ।**
**साधयेदौषधैः षट्कं शेषं शस्त्रेण सप्तकम् ॥ २० ॥**
**नवोत्थं तदपि द्रव्यैः**

स०-शुक्त्यादीन् षडौषधै साधयेत् । शेषान् सप्त शस्त्रेण साधयेत् । नवोत्थितानेतानपि भेषजैरुपक्रमेत्-न केवल पूर्वोक्त षट्कमित्यर्थ ।

**अर्मोक्तं यच्च पञ्चधा ।**
**तच्छेद्यमसितप्राप्तं मांसस्नावसिरावृतम् ॥ २१ ॥**
**चर्मोद्दालवदुच्छ्रायि दृष्टिप्राप्तं च वर्जयेत् ।**

स०-यच्च पञ्चप्रकारमर्मोक्त-शुक्लार्म शोणितार्म प्रस्तार्यर्म

१ 'शुक्लमदाह' इ चन्द्र स स । २ "अदाहरुक्-दाहरु-जाभ्या रहितम् ॥ अरुज -ईषद्रुज ।" इति चन्द्र । "अरुज -अव्यथ. । अमृदु -कठिन.।" इति डल्हण.। ३ 'ग्रन्थि स स्मृत ' ई उ । 'थित स्मृत ' स.स. । *४ "तत-व्याप्तम् । उष्यते-सदाह भवति ॥ प्रस्तारि-उत्सन्नविस्तृतम् ।" इतीन्दु । ५ 'सशो-थाश्रु' ई.उ । ६ 'शिरो' इ ई.उ.चन्द्र ,ट । ७ 'त्साश्रुं' ण.स. मू । ८ 'नाक्ष वीक्ष' उ. ।

१ 'जाल सिराजाल' स स. । २ 'र्जुनो बि' स.स । ३ 'रुग्दाह' उ. । ४ 'का रुगादि' ट. । 'कास्तृडादि' ड. । ५ 'भागाना' ड. । ६ 'त्पातान् पि' उ. । ७ 'त्परोऽर्थ ' ड. ण. । ८ 'यत्तु' ई.उ.चन्द्र.स.स. । ९ 'तु' ई.उ.स द्व. ।

स्नावार्माधिमांसार्म, एतच्छेदनार्हम् । यत् कृष्णभागप्राप्त मासस्नावसिरावृत चर्मोद्दालवदुच्छ्रायि तद्वर्जयेत्—न चिकित्सेत् । यच्च दृष्टिप्राप्त तदपि वर्जयेत् ।

अथ कृष्णरोगानाह—

**पित्तं कृष्णेऽथवा दृष्टौ शुक्रं तोदाश्रुरागवत् ॥ २२ ॥**
**छित्त्वा त्वच जनयति तेन स्यात्कृष्णमण्डलम् ।**
**पक्वजम्बूनिभं किञ्चिन्निम्नं च क्षतशुक्रकम् ॥ २३ ॥**
**तत्कृच्छ्रसाध्यं, याप्य तु द्वितीयपटलव्यधात् ।**
**तत्र तोदादिबाहुल्यं सूचीविद्धाभकृष्णता ॥ २४ ॥**
**तृतीयपटलच्छेदादसाध्यं निचितं व्रणैः ।**

स०—पित्त कर्तृ कृष्णभागे दृष्टौ वा शुक्र जनयति । किम्भूतम् ? तोदाश्रुरागयुक्तम् । कि कृत्वा ? त्वच—प्रथम पटल छित्त्वा, तेन कृष्णमण्डल पक्वजम्बूसदृश निम्न च क्षतशुक्रक स्यात् । तच्च कृच्छ्रसाध्यम् ।

द्वितीयपटलव्यधात्तु याप्य स्यात् । तत्र—द्वितीयपटलव्यधे, तोदादीना बाहुल्य तथा सूचीविद्धोपमकृष्णमण्डलत्व च । तोदादिभूयस्त्वेन सेवनीविद्धोपमकृष्णमण्डलतया च द्वितीयपटलव्यधोऽनुमीयत इत्यर्थ ।

तृतीयपटलच्छेदात् व्रणैर्निचितमसाध्य क्षतशुक्रकम् ।

एव क्षतशुक्रक त्रिधाऽभिधाय शुद्धशुक्रमाचष्टे—

**शङ्खशुक्लं कफात्साध्यं नातिरुक् शुद्धशुक्रकम् ॥२५॥**

स०—शङ्खवच्छुक्ल शुद्धशुक्रकम् । तच्च कफाज्जायते । न चातिवेदनम् ।

**आताम्रपिच्छिलास्रस्रुदाताम्रपिटिकाऽतिरुक् ।**
**अजाविट्सदृशोच्छ्रायकार्ष्ण्या वर्ज्याऽसृजाऽजका ॥**

स०—आताम्र—ईषत्ताम्रवर्ण, पिच्छिल चास्र स्रवति याऽसौ आताम्रपिच्छिलास्रस्रुत् । तथा आताम्रपिटिका तथाऽतिपीडावती तथाऽजाविट्सदृशे उच्छ्रायकार्ष्ण्ये यस्या सैवम् । अजकाख्या रक्तेन स्यात् । सा च वर्ज्याऽसाध्यत्वात् ।

**सिराशुक्रं मलैः सास्रैस्तज्जुष्टं कृष्णमण्डलम् ।**
**सतोददाहताम्राभिः सिराभिरवतन्यते ॥ २७ ॥**
**अनिमित्तोष्णशीताच्छघनास्रस्रुच्च तत्त्यजेत् ।**

स०—सरक्तैर्मलै सिराशुक्र स्यात् । तेन सिराशुक्रेण जुष्ट कृष्णमण्डल सिराभिरवतन्यते । किम्भूताभि ? सतोददाहताम्राभि । अनिमित्त—अकस्मात्, अस्मिन् कदाचिदुष्णमच्छ घन वाऽस्र स्रवति । तच्च त्यजेदसाध्यत्वात् ।

१ 'दाहराग' इ चन्द्र. । २ "पटल—नेत्रत्वक् ।" इतीन्दु । ३ 'लाश्रु स्यादा' इ ई । 'लासृक् स्यादा' उ । ४ 'च्छ्राया कृष्णा व' ई । ५ अस्र—अश्रु । ६ 'नाश्रुस्रुच' चन्द्र स.मू । 'नाश्रुस्रावि त' इ । 'नाश्रु स्राव' ई उ ।

**दोषैः सास्रैः सकृत्कृष्ण नीयते शुक्ररूपताम् ॥२८॥**
**धवलाभ्रोपलिप्ताभं निष्पावार्धदलाकृति ।**
**अतितीव्ररुजारागदाहश्वयथुपीडितम् ॥ २९ ॥**
**पाकात्ययेन तच्छुक्रं वर्जयेत्तीव्रवेदनम् ।**

स०—दोषै सरक्तै सकृत्—एकहेलयैव, कृष्णमण्डल शुक्ररूपता नीयते । किम्भूतम् ? धवलाभ्रोपलिप्ताभम् । तथा निष्पावार्धदलस्येवाकृतिर्यस्य तदेवम् । तथा तीव्रवेदनारागदाहश्वयथुभि पीडितम् । तच्च शुक्र पाकात्ययेन तीव्ररुज वर्जयेत्—नोपक्रमेत् ।

**यस्य वा लिङ्गनाशोऽन्तः श्यावं यद्वा सलोहितम् ॥**
**अत्युत्सेधावगाढं वा साश्रु नाडीव्रणावृतम् ।**
**पुराणं विषमं मध्ये विच्छिन्नं यच्च शुक्रकम् ॥ ३१ ॥**

स०—यस्य च शुक्रस्य लिङ्गनाश—अन्तर्दृष्टिविनाश इत्यर्थ, यच्च श्यावमन्त, यच्च किञ्चिल्लोहितम्, तथाऽत्युन्नतमवगाढ वा, साश्रुनाडीव्रणावृत वा, तथा पुराण—वत्सरातीतम्, तथा विषमसस्थानम्, तथा मध्ये विच्छिन्न यच्च शुक्रक, तत्सर्व वर्जयेत् ।

**पञ्चेत्युक्ता गदाः कृष्णे साध्यासाध्यविभागतः॥३१½॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने सन्धिसितासितरोगविज्ञानीयो नाम दशमोऽध्यायः ॥ १० ॥**

स०—कृष्णमण्डले इति—पूर्वोक्तेन प्रकारेण, पञ्च रोगा साध्यासाध्यविभागेनोक्ता । सुखग्रहणधारणार्थ सङ्ख्योपादानमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने सन्धिसितासितरोगविज्ञानीयो नाम दशमोऽध्याय समाप्त ॥१०॥

१ 'सद्यःकृष्ण' इ उ ण चन्द्र स स । २ "सद्यःकृष्ण—कृष्णमण्डल दृष्ट्या सह ।" इति चन्द्र. । "सद्यःकृष्ण—सदृष्टिमण्डलं कृष्णम् । पाकात्ययेन—पाकस्यातिक्रान्त्या, वर्जयेत् नाम्ना तीव्रवेदनम् ॥ अवगाढो—निम्न । विषम—निम्नोन्नतम् । पञ्च गदा— क्षतशुक्रशुद्धशुक्राजकासिराशुक्रतीव्रवेदनाख्या ।" इतीन्दु । ३ 'शुना पी' ट ण । ४ 'सास्रना' इ स.स । ५ सुश्रुते सव्रणशुक्राव्रणशुक्रपाकात्ययाजकाश्चत्वार एव रोगा कृष्णमण्डले पठिता । वाग्भटेन त्वत्र सिराशुक्राख्य एकोऽधिक इति पञ्च रोगा पठिता । ६ 'ग्रहधा' ण ।




अस्मादनन्तरं सन्धिसितासितरोगप्रतिषेध उच्यते—

**अथातः सन्धिसितासितरोगप्रतिषेधं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**

( गद्यसूत्रे ॥ २ ॥ )

स०–प्रतिषिध्यते निराक्रियते चिकित्स्यत इति प्रतिषेधः,–चिकित्सा। शेषं पूर्ववत्।

जलास्रावकफास्रावयोरसाध्यत्वादुपनाहचिकित्सामाह—

**उपनाहं भिषक् स्विन्नं भिन्नं व्रीहिमुखेन च।**
**लेखयेन्मण्डलाग्रेण ततश्च प्रतिसारयेत् ॥ १ ॥**
**पिप्पलीक्षौद्रसिन्धूत्थैर्बध्नीयात्पूर्ववत्ततः।**
**पटोलपत्रामलकक्वाथेनाश्च्योतयेच्च तम् ॥ २ ॥**

स०–वैद्यो मण्डलाग्रेणोपनाहं सन्धिरोगं लेखयेत्। किम्भूतम्? स्विन्नं वर्त्मरोगप्रतिषेधोक्तेन प्रकारेण पोटलिकयोष्णोदकप्लुतयेति। तथा व्रीहिमुखेन भिन्नम्। ततः पिप्पल्यादिभिः प्रतिसारयेत्। [ततः–] अनन्तरं, पूर्ववत्–प्रक्षाल्योष्णेन वारिणा घृतेन सिक्तमभ्यक्तं मधुसर्पिषा ऊर्ध्वाधः कर्णयोश्च यवसक्तुभिः पिण्डीं दत्त्वा, बध्नीयादिति। तथा पटोलपत्रामलकक्वाथेन चाश्च्योतयेत्।

**पर्वणीं बडिशेनात्ता बाह्यसन्धित्रिभागतः।**
**वृद्धिपत्रेण वर्ध्याऽर्धे स्यादश्रुगतिरन्यथा ॥ ३ ॥**
**चिकित्सा चार्मवत्क्षौद्रसैन्धवप्रतिसारिता।**

स०–पर्वणी बाह्यसन्धित्रिभागे बडिशेन गृहीता सती वृद्धिपत्रेण वर्ध्या–छेदनीया। कुत्र भागे वर्ध्या? इत्याह–अर्धे। अतोऽन्यथा–अधिकच्छेदनात्, अश्रुगतिः स्यात्। चिकित्सा चेयमर्मवत्। तत्र चैवमुक्तम् (श्लो २०)–"सम्यक् छिन्नं मधुव्योषसैन्धवप्रतिसारितम्। उष्णेन सर्पिषा सिक्तमभ्यक्तं मधुसर्पिषा ॥ बध्नीयात्सेचयेन्मुक्त्वा तृतीयादिदिनेषु च। करञ्जबीजसिद्धेन क्षीरेण" इति।

**पूयालसे सिरां विध्येत्ततस्तमुपनाहयेत् ॥ ४ ॥**
**कुर्वीत चाक्षिपाकोक्तं सर्वं कर्म यथाविधि।**

स०–पूयालसे सिरां विध्येत्। अनन्तरमुपनाहयेत्। अक्षिपाकोक्तं चाशेषं कर्म यथाविधि कुर्वीत।

**सैन्धवार्द्रककासीसलोहताम्रैः सुचूर्णितैः ॥ ५ ॥**
**चूर्णाञ्जनं प्रयुञ्जीत सक्षौद्रैर्वा रसक्रियाम्।**

स०–सैन्धवादिभिश्चूर्णाञ्जनं प्रयुञ्जीत। सैन्धवादिभिरेव माक्षिकयुतैः रसक्रिया वा।

**कृमिग्रन्थिं करीषेण स्विन्नं भित्त्वा विलिख्य च ॥६॥**
**त्रिफलाक्षौद्रकासीससैन्धवैः प्रतिसारयेत्।**

स०–कृमिग्रन्थिं त्रिफलादिभिः प्रतिसारयेत्। किम्भूतम्? करीषेण–गोमयादिना स्विन्नम्, तथा व्रीहिमुखादिभिर्भित्त्वा विलिख्य च।

**पित्ताभिष्यन्दवच्छुक्तिं**

स०–शुक्त्याख्यं रोगं पित्ताभिष्यन्देन तुल्यमुपाचरेत्।

**बलासाह्वयपिष्टके ॥ ७ ॥**
**कफाभिष्यन्दवन्मुक्त्वा सिराव्यधमुपाचरेत्।**
**बीजपूररसाक्तं च व्योषकट्फलमञ्जनम् ॥ ८ ॥**

स०–बलासग्रथितं पिष्टकं च सिराव्यधं वर्जयित्वा कफाभिष्यन्दवदुपाचरेत्। तथा बीजपूरकरसेनाक्तं व्योषकट्फलमञ्जनं हितम्।

**जातीमुकुलसिन्धूत्थदेवदारुमहौषधैः।**
**पिष्टैः प्रसन्नया वर्तिः शोफकण्डूघ्नमञ्जनम् ॥ ९ ॥**

स०–जातीमुकुलादिभिः प्रसन्नया पिष्टैर्वर्तिः शोफकण्डूहरमञ्जनम्।

**रक्तस्यन्दवदुत्पातहर्षजालार्जुनक्रिया।**

स०–सिरोत्पातसिराहर्षसिराजालार्जुने क्रिया रक्तस्यन्द इव कार्या।

**सिरोत्पाते विशेषेण घृतमाक्षिकमञ्जनम् ॥ १० ॥**
**सिराहर्षे तु मधुना श्लक्ष्णघृष्टं रसाञ्जनम्।**
**अर्जुने शर्करामस्तुक्षौद्रैराश्च्योतनं हितम् ॥ ११ ॥**
**स्फटिकः कुङ्कुमं शङ्खो मधुकं मधुनाऽञ्जनम्।**
**मधुना चाञ्जनं शङ्खः फेनो वा सितया सह ॥ १२ ॥**

स०–सिरोत्पाते विशेषेण घृतमाक्षिकमञ्जनं हितम्। सिरा-

---

१ अथ सन्धिसितासितरोगप्रतिषेधः सुश्रुते उ० १२।१५ अध्याययोः, अष्टाङ्गसङ्ग्रहे उ० १४ अध्याये चास्ति वर्णितः, चरके तु न वर्णितः। २ 'तु' ण। ३ 'यादिलादि।' ट.। ४ 'नान्तर्बाह्य' इ उ.चन्द्र.। ५ 'दृग्गतिं' इ.चन्द्र.। 'दग्लुति' ई.। ६ 'मभ्यज्य' ट.।

१ 'स्तदुप' ई.। २ 'लातुत्थकासी' स इ। ३ 'मिष्टकौ' उ ण.त। ४ 'घ्नमौषधम्' ई उ। ५ 'टिकं कुङ्कुमं शङ्ख' इ.ई.उ.ण त.चन्द्र। ६ 'कासीसं म' ई.।

हर्षे माक्षिकेण श्लक्ष्णघृष्टं रसाञ्जनम्। अर्जुने शर्करामस्तुक्षौद्रैर्णाश्च्योतनं हितम्। स्फटिकादि माक्षिकेणाञ्जनमथवा सौवीराञ्जनं मधुना सह हितम्। शङ्खो वा समुद्रफेनो वा शर्करया सह हितं ।

**अर्मोक्तं पञ्चधा तत्र तनु धूमाविलं च यत्।**
**रक्तं दधिनिभं यच्च शुक्रवत्तस्य भेषजम् ॥ १३ ॥**

स०—अर्म पञ्चप्रकारमुक्तम्। तेषु मध्ये यत्तनु धूमवदाविलं च, तथा रक्तं—रक्तवर्णं, दधिसदृशं च यत्, तस्यार्मणः शुक्रसदृशमौषधम्।

अथार्मणः शस्त्रचिकित्सामाह—

**उत्तानस्येतरत् स्विन्नं ससिन्धूत्थेन चाञ्जितम्।**
**रसेन बीजपूरस्य निमील्याक्षि विमर्दयेत् ॥ १४ ॥**
**इत्थं संरोषिताक्षस्य प्रचले[1]ऽर्माधिमासके।**
**धृतस्य निश्चलं मूर्ध्नि वर्त्मनोश्च विशेषतः ॥ १५ ॥**
**अपाङ्गमीक्षमाणस्य वृद्धेऽर्मणि कनीनकात्।**
**वली स्याद्यत्र तत्रार्म बडिशेनावलम्बितम् ॥ १६ ॥**
**नात्यायतं मुचुण्ड्या वा सूच्या सूत्रेण वा ततः।**
**समन्तान्मण्डलाग्रेण मोचयेदथ मोक्षितम् ॥ १७ ॥**
**कनीनकमुपानीय चतुर्भागावशेषितम्।**
**छिन्द्यात्कनीनकं रक्षेद्[2]वाहिनीश्चाश्रुवाहिनीः ॥ १८ ॥**
**कनीनके[3]व्यधाद[4]श्रु नाडी[5] चाक्षिण प्रवर्तते।**
**वृद्धेऽर्मणि तथाऽपाङ्गात्पश्यतोऽस्य कनीनकम् १९**

स०—उत्तानस्य पुंसो वामदक्षिणयोरितरत्—एकमक्षि, स्विन्नं—कृतस्वेदं च, तथा बीजपूररसेन सैन्धवान्वितेनाञ्जितं निमील्य—स्थगयित्वा, विमर्दयेत्—मलयेत्। अनेन प्रकारेण संरोषिताक्षस्य सतोऽर्माधिमासे प्रचले सति मूर्ध्नि निश्चलं धृतस्य वर्त्मनोश्च विशेषेण धृतस्य कनीनकादर्मणि वृद्धे सत्यपाङ्गं पश्यतो यत्र वली स्यात् तत्रार्म बडिशेनावलम्बितं नात्यायतं—नातिदीर्घं यथाभवतितथाऽवलम्बितम्। ततः—अनन्तरं, मुचुण्ड्या सूच्या सूत्रेण वा मोचयेत्। अथ मोक्षितं च विच्छेदितं च सत् कनीनकमुपानीय चतुर्भागावशेषितं मण्डलाग्रेण छिन्द्यात्। व्यवहितानामपि [6]पदानामर्थयोग्यतावशादेव सम्बन्धोऽत्र योज्यः। कनीनकं रक्षेत्। कनीनके व्यधादश्रु नाडी चाक्षिण प्रवर्तते। अपाङ्गप्रदेशाच्चार्मणि वृद्धे तथा कनीनकं वीक्षमाणस्य छिन्द्यात्।

**सम्यक् छिन्नं मधुव्योषसैन्धवप्रतिसारितम्।**
**उष्णेन सर्पिषा सिक्तमभ्यक्तं मधुसर्पिषा ॥ २० ॥**
**बध्नीयात्सेचयेन्मुक्त्वा तृतीयादिदिनेषु च।**
**करञ्जबीजसिद्धेन क्षीरेण क्वथितैस्तथा ॥ २१ ॥**
**सक्षौद्रैर्द्विनिशारोध्रपटोलीयष्टिकिंशुकैः।**
**कु[1]रण्टमुकुलोपेतैर्मुञ्चेदेवाह्नि सप्तमे ॥ २२ ॥**

स०—सम्यक् छिन्नं मध्वादिभिः प्रतिसारितं घृतेनोष्णेन सिक्तं माक्षिकसर्पिषाऽभ्यक्तं बध्नीयात्। तृतीयादिदिनेषु च मुक्त्वा क्षीरेण करञ्जबीजसिद्धेन सेचयेत्। द्विहरिद्रादिभिश्च क्वथितैः शीतैश्च मधुयुतैः सेकं कुर्यात्। सप्तमे दिने मुञ्चेदेव।

**सम्यक् छिन्ने भवेत्स्वास्थ्यं हीनातिच्छेदजान् गदान्।**
**सेकाञ्जनप्रभृतिभिर्जयेल्लेखनबृंहणैः ॥ २३ ॥**

स०—सम्यक् छिन्नेऽर्मणि स्वास्थ्यं भवेत्। हीनातिच्छेदजान् रोगान् सेकाञ्जनाद्यैर्यथायोगं लेखनैर्बृंहणैश्च जयेत्।

**सिता[2]मनःशिलैलेयैलवणोत्तमनागरम्।**
**अर्धकर्षोन्मितं तार्क्ष्यं पलार्धं च मधु[3]द्रुतम् ॥ २४ ॥**
**अञ्जनं श्लेष्मतिमिरपिल्लशुक्रा[4]र्मशोषजित्।**

स०—सितादिभिरे[5]ककर्षोन्मितैः रसाञ्जनं द्विकर्षोन्मितं मधुद्रुतमञ्जनं श्लेष्मतिमिरादिजित्।

**त्रिफलैकतमद्रव्यत्वचं पानीयकल्किताम् ॥ २५ ॥**
**शरावपिहितां दग्ध्वा कपाले चूर्णयेत्ततः।**
**पृथक्शेषौषधरसैः पृथगेव च भाविता ॥ २६ ॥**
**सा मषी शोषिता पेष्या भूयो द्विलवणान्विता।**
**त्रीण्येतान्यञ्जनान्याह लेखनानि परं निमिः ॥ २७ ॥**

स०—त्रिफलाया एकतमस्य हरीतक्यादेर्द्रव्यस्य त्वचं पानीयकल्कितां शरावपिहितां कपाले दग्ध्वा चूर्णयेत्। तत एव त्रिफलाया पृथक् शेषौषधरसैः पृथगेव चैकैकं भाविता सा मषी शोषिता पुनः पेष्या लवणद्वययुता। त्रीण्येतान्यञ्जनानि परं लेखनानि तिमिरघ्नानि निमिर्वक्ति।

**सिराजाले सिरा यास्तु कठिना लेखनौषधैः।**
**न सिध्यन्त्यर्मवत्तासां पिटिकानां च साधनम् ॥२८॥**

स०—सिराजाले याः सिराः कठिना लेखनौषधैर्न सिध्यन्ति तासामर्मवत् चिकित्सा, पिटिकानां च।

---

१ 'प्रबले' उ । २ 'तं समुत्पाद्य सु' ई.। ३ 'रक्षन् वाहि' ई.। 'रक्ष्ये वाहि' चन्द्र.। ४ 'कवधा' ई.उ ण त चन्द्र, ट.। ५ 'दस्रुनाडी' ई.। 'धादाश्रु नाडी' उ। 'दस्रं नाडी वाऽप्युपजायते' स.सु.। "अस्र—रक्तम्। नाडीति नाडीव्रणः।" इति डल्हणः। ६ 'पदार्थयोग्य' ण त.।

१ 'कोरण्ठ' इ ण त.। २ "सिता—शर्करा। ऐलेय—हरिवालुकम्। लवणोत्तम—सैन्धवम्॥ द्विलवणान्विता—द्विगुणेन लवणेनान्विता।" इति चन्द्र। ३ 'धुस्रुतम्' ण त.। ४ 'र्मकाचजित्' ई.उ.। ५ 'लादेरेक' ट.।

**दोषानुरोधाच्छुक्रेषु स्निग्धरूक्षा वरा घृतम् ।**
**तिक्तमूर्ध्वमसृक्स्रावो रेकसेकादि चेष्यते ॥ २९ ॥**

स०–शुक्रेषु दोषवशात् कदाचित् रूक्षा कदाचित् स्निग्धा त्रिफला हिता। तथा घृत तिक्तमूर्ध्वमसृक्स्रावो रेकसेकादि चेष्यते।

**त्रिस्त्रिवृद्वारिणा पक्क क्षतशुक्रे घृत पिबेत् ।**
**सिरयाऽनु हरेद्रक्तं जलौकोभिश्च लोचनात् ॥ ३० ॥**
**सिद्धेनोत्पलकाकोलीद्राक्षायष्टिविदारिभिः ।**
**ससितेनाजपयसा सेचनं सलिलेन वा ॥ ३१ ॥**
**रागाश्रुवेदनाशान्तौ पर लेखनमञ्जनम् ।**

स०–त्रिवृत्क्काथेन त्रीन् वारान् घृत पक्क क्षतशुक्रे पिबेत्। पश्चात्सिरया रक्त हरेत्। नयनाद्वा जलौकोभिर्हरेत्। तथाऽऽजदुग्धेनोत्पलादिभि सिद्धेन सशर्करेण सेचन हितम् । अथवोत्पलादिक्कथितेन जलेन सेचयेत् । रागाश्रुवेदनाशान्तौ सत्या लेखनमञ्जन हितम् ।

**वर्तयो जातिमुकुललाक्षागैरिकचन्दनैः ॥ ३२ ॥**
**प्रसादयन्ति पित्तास्रं घ्नन्ति च क्षतशुक्रकम् ।**

स०–जातिमुकुलादिभिर्वर्तय पित्तास्र प्रसादयन्ति । क्षतशुक्र च घ्नन्ति ।

**दन्तैर्दन्तिवराहोष्ट्रगवाश्वाजखरोद्भवैः ॥ ३३ ॥**
**सशङ्खमौक्तिकाम्भोधिफेनैर्मरिचपादिकैः ।**
**क्षतशुक्रमपि व्यापि दन्तवर्तिर्निवर्तयेत् ॥ ३४ ॥**

स०–गजाद्युद्भवैर्दन्तै शङ्खमुक्ताफेनयुतैश्चतुर्थांशकमरिचै क्षतशुक्रकमपि व्यापि दन्तवर्तिरिय निवर्तयेत् । अपिशब्दाच्छुद्धशुक्रकमपि ।

**तमालपत्रं गोदन्तशङ्खफेनोऽस्थि गार्दभम् ।**
**ताम्रं च वर्तिर्मूत्रेण सर्वशुक्रकनाशिनी ॥ ३५ ॥**

स०–तमालपत्रादिभिर्वर्तिर्गोमूत्रेण सर्वशुक्रकहृत् ।

**रत्नानि दन्ताः शृङ्गाणि धातवस्त्र्यूषणं त्रुटिः ।**
**करञ्जबीजं लशुनो व्रणसादि च भेषजम् ॥ ३६ ॥**
**सव्रणाव्रणगम्भीरत्वक्स्थशुक्रघ्नमञ्जनम् ।**

स०–रत्नानि–मौक्तिकादीनि, दन्ता –गजादीनाम्, शृङ्गाणि–छागादीनाम्, धातवो–गैरिकाद्या , त्र्यूषणादीनि, तथा व्रणसादि भेषज–स्वर्णक्षीर्यादि, एतदञ्जन सव्रणाव्रणगम्भीरत्वक्स्थशुक्रहरम् ।

**निम्नमुन्नमयेत्स्नेहपाननस्यरसाञ्जनैः ॥ ३७ ॥**
**सरुजं नीरुजं तृप्तिपुटपाकेन शुक्रकम् ।**

स०–निम्न शुक्रक स्नेहपानादिभिरुन्नमयेत् । सरुज नीरुज च तर्पणपुटपाकेनोन्नमयेत् ।

**शुद्धशुक्रे निशायष्टीसारिवाशाबराम्भसा ॥ ३८ ॥**
**सेचनं रोध्रपोटल्या कोष्णाम्भोमग्नयाऽथवा ।**

स०–शुद्धशुक्रे हरिद्रादिक्काथेन सेचन हितम् । अथवा रोध्रपोटल्या कोष्णाम्बुमग्नया ।

**बृहतीमूलयष्ट्याह्वताम्रसैन्धवनागरैः ॥ ३९ ॥**
**धात्रीफलाम्बुना पिष्टैर्लेपितं ताम्रभाजनम् ।**
**यवाज्यामलकीपत्रैर्बहुशो धूपयेत्ततः ॥ ४० ॥**
**तत्र कुर्वीत गुटिकास्ता जलक्षौद्रपेषिताः ।**
**महानीला इति ख्याताः शुद्धशुक्रहरा. परम् ॥ ४१ ॥**

स०–बृहतीचूर्णादिभिरामलकजलेन पिष्टैस्ताम्रभाजन लेपित यवादिभिर्धूपयेत् । अनन्तर तत्र गुटिकास्तोयमाक्षिकपिष्टा कुर्यात् । एताश्च महानीला इति प्रथिता पर शुद्धशुक्रघ्ना ।

**स्थिरे शुक्रे घने चास्य बहुशोऽपहरेदसृक् ।**
**शिरःकायविरेकांश्च पुटपाकांश्च भूरिशः ॥ ४२ ॥**

स०–स्थिरे शुक्रे घने चातुरस्यास्य बहुशो रक्त मोक्षयेत् । शिरोविरेकादीन् पुटपाकाश्च पुन पुन कुर्यात् ।

**कुर्यान्मरिचवैदेहीशिरीषफलसैन्धवैः ।**
**हर्षणं त्रिफलाक्काथपीतेन लवणेन वा ॥ ४३ ॥**

स०–मरिचादिभिर्हर्षण कुर्यात् । त्रिफलाक्काथपीतेन सैन्धवेन वा ।

**कुर्यादञ्जनयोगौ वा श्लोकार्धगदिताविमौ ।**
**शङ्खकोलास्थिकतकद्राक्षामधुकमाक्षिकैः ॥ ४४ ॥**
**सुरादन्तार्णवमलै. शिरीषकुसुमान्वितै. ।**

स०–इमौ श्लोकार्धोक्तौ योगौ घ(ह)र्षणाय कुर्यात् । शङ्खादिभिर्माक्षिकान्तैरेको योग , सुरादिभि कुसुमान्तैरन्य ।

**धात्रीफणिज्जकरसे क्षारो लाङ्गलिकोद्भवः ॥ ४५ ॥**
**उषितः शोषितश्चूर्णः शुक्रहर्षणमञ्जनम् ।**

स०–धात्र्यादिरसे क्षारो लाङ्गलिकज उषित शोषितश्चूर्ण शुक्रहर्षणमञ्जनम् ।

**मुद्गा वा निस्तुषाः पिष्टाः शङ्खक्षौद्रसमायुताः ॥४६॥**
**सारो मधूकान्मधुमान् मज्जा वाऽक्षात्समाक्षिका ।**

---

१ 'नुबन्धा' ई । २ 'ग्धरूक्षवरा' इ । 'स्निग्धा रूक्षा' ई । ३ 'स्रावरेक' इ ई । ४ "रेकसेकादि–विरेचनाश्च्योतनमुखालेपनस्यतर्पणपुटपाकादि । व्रणसादि भेषज–व्रणाधिकारोक्तम् ।" इति चन्द्र. । ५ 'पक्त्वा' ट ण त । ६ 'त्तासृक्' ई । ७ 'ष्ट्रगोरासभसमुद्भवै.' ई. । ८ 'च बस्तमूत्रेण' इ.उ ।

१ 'वासाधिताम्भसा' इ । २ "सेचन–आश्च्योतनम् ॥ उत्तेधनार्थं शुद्धशुक्रे हर्षणम् ।" इति चन्द्र । "कोलास्थि–बदरास्थि । कतक–शशपुरीषानुकारि अम्बुप्रसादन फलम् । मधुक–यष्टीमधु । दन्तो–गोदन्त । अर्णवमल –समुद्रफेन ।" इति डल्हण । "सार –काष्ठमध्यम् ।" इतीन्दु । ३ 'घर्षण' ण त, ट । 'सर्षपत्रि' ई उ । ४ 'खरदन्ता' उ । 'क्षौद्रदन्ता' स सु । ५ 'लिकाभव ' ई । 'लिकीभव.' उ चन्द्र. । ६ 'कघर्ष' ई उ ,ट । ७ 'क्षौद्रसितायु' स.सु । ८ 'न्मधुना म' इ । 'कात्समधुर्मज्जा' ई. ।

स०–शङ्खमधुयुता मुद्रा निस्तुपा पिष्टा अथवाऽञ्जनम् । मयूकात्सारो मधुयुतोऽञ्जनम् । अथवा विभीतकान्मज्जा माक्षिकान्विता ।

**गोखराश्वोष्ट्रदशनाः शङ्खः फेनः समुद्रजः ॥ ४७ ॥**
**वर्तिरर्जुनतोयेन हृष्टशुक्रकनाशिनी ।**

स०–गवादिदन्ता शङ्ख समुद्रफेनो वा पार्थजलेन पिष्टा वर्तिर्हृष्टशुक्रहृत् ।

**उत्सन्नं वा सशल्यं वा शुक्रं वालादिभिर्लिखेत् ॥ ४८**

स०-उत्सन्न वा सशल्य वा शुक्र वालशाकपत्रादिभिर्लिखेत् ।

**सिराशुक्रे त्वदृष्टिघ्ने चिकित्सा व्रणशुक्रवत् ।**

स०–सिराशुक्रे पुनरदृष्टिघ्ने चिकित्सा व्रणशुक्र इव कार्या ।

**पुण्ड्रयष्ट्याह्वकाकोलीसिंहीलोहनिशाञ्जनम् ॥ ४९ ॥**
**कल्कित छागदुग्धेन सघृतैर्धूपितं यवैः ।**
**धात्रीपत्रैश्च पर्यायाद्वर्तिरत्राञ्जनं परम् ॥ ५० ॥**

स०–पुण्ड्रादिक छागदुग्धेन पिष्ट ससर्पिष्कैर्यवैरामलकपत्रैश्च पर्यायेण धूपिता वर्तिर्नै(र)त्राञ्जन परम् ।

**अशान्तावर्मवच्छस्त्रमजकाख्ये च योजयेत् ।**

स०–अशान्तौ सत्यामर्मवदजकाख्ये च शस्त्र प्रयोजयेत् ।

**अजकायामसाध्यायां शुक्रेऽन्यत्र च तद्विधे ॥ ५१ ॥**
**वेदनोपशमं स्नेहपानासृक्स्रावणादिभिः ।**
**कुर्याद्बीभत्सतां जेतुं शुक्रस्योत्सेधसाधनम् ॥ ५२ ॥**

स०–असाध्यायामजकाया शुक्रे चान्यत्र रोगे तत्प्रकारेऽसाध्ये वेदनोपशम स्नेहपानादिभिर्विदधीत । बीभत्सता–निन्द्यता, जेतु शुक्रस्योत्सेधसाधन कुर्यात् ।

**नालिकेरास्थिभल्लाततालवंशकरीरजम् ।**
**भस्माद्भिः स्रावयेत्ताभिर्भावयेत्करभास्थिजम् ॥५३॥**
**चूर्णं शुक्रेष्वसाध्येषु तद्वैवर्ण्यघ्नमञ्जनम् ।**
**साध्येषु साधनायालमिदमेव च शीलितम् ॥ ५४ ॥**

स०–नालिकेरास्थ्यादिज भस्म अद्भि स्रावयेत् । ताभिरद्भि करभास्थिज चूर्ण भावयेत् । तच्चूर्णमञ्जनमसाध्येषु शुक्रेषु वैवर्ण्यहरम् । शीलित चैतदेव शुक्राणा साधनायाल–श्रेष्ठम् ।

**अजकां पार्श्वतो विध्वा सूच्या विस्राव्य चोदकम् ।**
**समं प्रपीड्याङ्गुष्ठेन वसाद्रेणानु पूरयेत् ॥ ५५ ॥**
**व्रणं गोमांसचूर्णेन बद्ध बद्धं विमुच्य च ।**
**सप्तरात्राद् व्रणे रूढे कृष्णभागे समे स्थिरे ॥ ५६ ॥**
**स्नेहाञ्जन च कर्तव्यं नस्यं च क्षीरसर्पिषा ।**
**तथाऽपि पुनराध्माने भेदच्छेदादिकां क्रियाम् ॥५७॥**
**युक्त्या कुर्याद्यथा नातिच्छेदेन स्यान्निमज्जनम् ५७½**

स०–अजका पार्श्वत सूच्या वि वा जल च नि स्राव्यानन्तरमङ्गुष्ठेन सम वसाद्रेण–वसया द्रवीकृत्य, व्रण गोमांसचूर्णेन पूरयेत् । बद्ध बद्ध विमुच्य च सप्तरात्राद् व्रणे रूढे सति तथा कृष्णभागे समे स्थिरे सति स्नेहाञ्जन च कर्तव्यम् । क्षीरघृते च नस्यम् । एवमपि कृते पुनराध्माने सति भेदच्छेदादिका क्रिया युक्त्या कुर्यात् । यथाऽतिच्छेदेन दृष्टेर्निमज्जन न स्यात् ।

**नित्यं च शुक्रेषु शृतं यथास्वं**
**पाने च मर्शे च घृतं विदध्यात् ।**
**न हीयते लब्धबला तथाऽन्त-**
**स्तीक्ष्णाञ्जनैर्दृक् सततं प्रयुक्तैः ॥ ५८½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने सन्धिसितासितरोगप्रतिषेधो नामैकादशोऽध्यायः ॥ ११ ॥**

स०–शुक्रेषु च नित्य घृत यथायोग पक्व पानादौ विदध्यात् । किम्? इत्याह–तथा घृतपानसेचनेन लब्धबला दृगन्तै प्रतत प्रयुक्तैस्तीक्ष्णाञ्जनैर्न हीयते–न हानि यायादिति । उपजातिर्वृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने सन्धिसितासितरोगप्रतिषेधो नामैकादशोऽध्याय समाप्त ॥११॥



१ 'पिष्टा शु' ई । 'दुष्टशु' इति क्वचित् । २ "पुण्ड्र–प्रपुण्डरीकम् । यष्ट्याह्व–यष्टीमधु । सिंही–बृहती । लोह–अगुरु । अञ्जन–स्रोतोञ्जनम् । अत्र–सिराशुक्रे ।" इति चन्द्र । "शुक्लत्वसाधनमुत्सेधसाधन च यथायोग्य कुर्यात् ॥ अद्भि –जलै , स्रावयेत्–क्षारकर्मविधिना गालयेत् ।" इतीन्दु । ३ 'द्वर्तिर्नेत्रा' उ । ४ 'हितम्' इ,ट । ५ 'कृत्वोत्सेध' इ उ चन्द्र । 'शुक्लत्वोत्सेध' ण स द्व । ६ वंशकरीर –वंशाङ्कुर. ।

१ "वसाद्रेणेति गोमांसचूर्णविशेषणम् । बद्ध बद्ध च प्रतिदिन विमुच्य गोमांसचूर्णेन पूरयेदिति सम्बन्ध । सप्तरात्रादिति सप्तरात्राद्विमुच्य–बन्धनमपनीय, पर न बध्नीयात् । [क्षीरसर्पिषा–क्षीरोद्भूतेन सर्पिषा ।] युक्ति –दृष्ट्युपघातरक्षणी ॥ यथास्व–दोषानतिक्रमेणौषधै शृत घृतम् । मर्शे–नस्ये । तथेति घृतपाननस्याभ्यामन्तर्लब्धबला दृक् शुक्रविघाताय प्रतत–सन्तत, प्रयुक्तैरपि तीक्ष्णाञ्जनैर्न हीयते ।" इतीन्दु । "अन्तर्न हीयते–मध्ये न याति, नाल्पत्व याति ।" इति चन्द्र । २ 'स्थिते' स द्व । ३ 'सर्पिषो ' स मू । ४ 'ध्माते' इ स द्व । ५ 'युञ्ज्याद्यथा' चन्द्र. । ६ 'प्रतत' इ.ई.चन्द्र.स.स. । ७ 'न्त. प्रान्तत प्रयु' ण.त. ।

## द्वादशोऽध्यायः ।

अस्मादनन्तरं दृष्टिरोगविज्ञानमाह । तत्रापि पूर्वं तिमिरं लिलक्षयिषुराह—

**अथातो दृष्टिरोग[1]विज्ञा[2]नीयमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**सिरा[3]नुसारिणि मले प्रथमं पटलं श्रिते[4] ।**
**अव्यक्तमीक्षते[5] रूपं व्यक्तमप्यनिमित्ततः ॥ १ ॥**

स०—[ मले— ] दोषे वाताद्यन्यतमे, सिरानुसारिणि तथा प्रथमं—बाह्यं, पटलं श्रिते मत्यव्यक्तं रूपं पश्यति । व्यक्तमपि कदाचिन्निमित्तमन्तरेण पश्यति । एष तिमिराख्यो रोग इति वक्ष्यमाणेन सम्बन्धः ।

**प्राप्ते द्वितीयं पटलमभूतमपि पश्यति ।**
**भूतं तु यत्नादासन्नं दूरे[6] सूक्ष्मं च नेक्षते ॥ २ ॥**
**दूरान्तिकस्थं रूपं च विपर्यासेन मन्यते ।**
**दोषे मण्डलसंस्थाने मण्डलानीव पश्यति ॥ ३ ॥**
**द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधास्थिते ।**
**दृष्टेरभ्यन्तरगते ह्रस्व[7]वृद्धविपर्ययम् ॥ ४ ॥**
**नान्तिकस्थमधःसंस्थे दूरगं नोपरि स्थिते ।**
**पार्श्वे पश्येन्नपार्श्वस्थे तिमिराख्योऽयमामयः ॥ ५ ॥**

स०—द्वितीयं पटलं प्राप्तेऽभूतमपि पश्यति, न केवलं भूतम् । भूतं तु यत्नेन पश्यति, तच्चासन्नमेव । दूरे न च सूक्ष्मं पश्यति । दूरान्तिकस्थं च रूपं वैपरीत्येन मन्यते,—दूरस्थं निकटस्थं, निकटस्थं दूरस्थमित्यर्थः । दोषे मण्डलसंस्थाने द्वितीयपटलाश्रिते एव मण्डलानीवालोकते । दृष्टिमध्यस्थे दोषे एकमेव वस्तु द्विप्रकारं पश्यति । बहुधास्थिते दोषे एकमेव वस्तु बहुप्रकारं पश्यति । दृष्टेरभ्यन्तराश्रिते दोषे ह्रस्वं च वृद्धं च तयोर्विपर्ययं । ह्रस्वं च महान्तं, महान्तं च ह्रस्वमिति वैपरीत्येन पश्यति । अधःस्थिते दोषे समीपस्थं पदार्थं नेक्षते । उपरिष्टात्स्थिते दोषे दूरगं न पश्यति । पार्श्वस्थे दोषे पार्श्वे रूपं न पश्येत् । अयं सर्व एव तिमिरसञ्ज्ञो रोगः ।

**प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते ।**
**तेनोर्ध्वमीक्षते नाधस्तनुचैलावृतोपमम् ॥ ६ ॥**

**यथा[1] वर्णं च रज्येत दृष्टिर्हीयेत च क्रमात्[2] ।**

स०—तृतीयं पटलं स्थिते दोषे काचत्वं प्राप्नोति । तेन काचेनोर्ध्वमीक्षते न त्वधः । तच्च तनुवस्त्रच्छन्नसदृशम् । दृष्टिश्चात्र दोषानुसारेण रज्यते । यथा वातेन श्यावेत्यादि । क्रमेण च दृष्टिर्हीयते ।

**तथाऽप्युपेक्षमाणस्य चतुर्थं पटलं गतः ॥ ७ ॥**
**लिङ्गनाशं मलः कुर्वन् छादयेद्दृष्टिमण्डलम् ।**

स०—एवमप्युपेक्षमाणस्याचिकित्सितस्य तृतीयं पटलं मुक्त्वा चतुर्थपटलं गतो मलो—दोषः, लिङ्गनाशं—दृष्टिनाशं च, कुर्वन् दृष्टिमण्डलं छादयेत् ।

इति सामान्यलक्षणमुक्त्वा विशेषमाह—

**तत्र वातेन तिमिरे व्याविद्धमिव पश्यति ॥ ८ ॥**
**चलाविलारुणाभासं प्रसन्नं चेक्षते[4] मुहुः ।**
**जालानि केशान् मशकान् रश्मींश्चोपेक्षितेऽत्र च[5] ॥ ९ ॥**
**काचीभूते दृगरुणा पश्यत्यास्यमनासिकम् ।**
**चन्द्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते ॥ १० ॥**
**वृद्धः काचो दृशं कुर्याद्रजोधूमावृतामिव ।**
**स्पष्टारुणाभां[6] विस्तीर्णां सूक्ष्मां वा हतदर्शनाम् ॥ ११ ॥**
**स लिङ्गनाशो**

स०—तत्र—तिमिरेषु मध्ये, पवनेन तिमिरे सति व्याविद्धमिव पश्यति । तथा चलं धूमाविलमरुणाभासं मुहुः—पुनः—प्रसन्नं चालोकते—प्रकृतिस्थनयनेन पश्यति, पवनस्य चलरूपत्वात् । तथा जालादीनि मुहुः पश्यति । आस्यं—मुखं, अनासिकं—नासिकारहितं, पश्यति । तथा चन्द्रदीपादीनामनेकत्वं वक्रमवक्रमिव च मन्यते । वृद्धः काचो रजोधूमावृतामिव च दृष्टिं कुर्यात् । तथा स्पष्टाऽरुणाऽऽभा यस्यास्ताम् । तथा विस्तीर्णां सूक्ष्मां वा । तथा हतदर्शनाम् । स एवंभूतो लिङ्गनाशः । इति वातजास्तिमिरकाचलिङ्गनाशा उक्ताः ।

अधुना वायुसामान्यां गम्भीरां दृष्टिं व्याचष्टे—

**वाते तु सङ्कोचयति दृक्सिराः ।**
**दृग्मण्डलं विशत्यन्तर्गम्भीरा दृगसौ स्मृता ॥ १२ ॥**

स०—वाते तु दृक्सिराः सङ्कोचयति सति दृष्टिमण्डलमन्तः प्रविशति । सा गम्भीरा दृष्टिः स्मृता । 'मुनिभिः' इति शेषः ।

---

१ अथ दृष्टिरोगविज्ञानीयं सुश्रुते उ० ७ अध्याये, अष्टाङ्गसङ्ग्रहे उ० १५ अध्याये चास्ति वर्णितं, चरके तु न वर्णितम् । २ 'ज्ञानं व्या' इ ई उ ण त चन्द्र स द । ३ "मलो—वातादिभिः कृतो दोषविशेषः । सिरानुसारिणि—सिराभिः कोष्ठात् दृष्टिमनुसरति तस्मिंस्तथाविधे ।" इतीन्दुः । ४ 'गते' ई. । ५ 'क्ष्यते' इ ण । ६ 'दूरं' ई उ । ७ 'ह्रस्वं बहु वि' इ चन्द्र । 'ह्रस्वदीर्घवि' उ. । 'ह्रस्ववृद्धवि' स.स । ८ 'टस्थमन्तिकस्थं दू' ट. । ९ 'न्त वृद्धं च' ट. ।

१ 'यथादोषं च' त अरुण । २ "दृष्टेश्च यथायथा वर्णो रज्येत तथातथा दर्शनशक्तिर्हीयेत इति क्रमार्थः ॥ व्याविद्धं—आकुलम् ।" इतीन्दुः । "तथाऽपि—काचीभूतायामपि दृशि । लिङ्गनाशः—आन्ध्यम् ॥ चलं—अस्थिरम् । आविलं—अस्फुटम् । अरुणाभासं—लोहितप्रायम् । मुहुः—क्षणे क्षणे । काचीभूते—काचत्वं प्राप्ते ॥ वाते—वातोद्भूते लिङ्गनाशे ।" इति चन्द्रः । ३ 'धूमाविला' ई उ । ४ 'वीक्षते' उ. । ५ 'तु' इ. । ६ 'स्फुटारुणा' इ.ई. ।

**पित्तजे तिमिरे विद्युत्ख[1]द्योत[2]द्योतदीपितम् ।**
**शिखितित्तिरि[3]पत्राभं प्रायो नीलं च पश्यति ॥ १३ ॥**
**काचे दृक् [4]काचनीलाभा तादृगेव च पश्यति ।**
**अर्केन्दुपरिवेषाग्निमरीचीन्द्रधनूंषि च ॥ १४ ॥**

स०—पित्तोद्भवे तिमिरे विद्युदादिदीपित तथा मयूरतित्तिरिपत्राभ प्रायेण नील च पश्यति । काचे काचनीलसदृशी दृष्टि स्यात् । तादृगेव—काचनीलाभास, पश्यति । तथाऽर्केन्दुपरिवेषादीन् पश्यति ।

**भृङ्गनीला निरालोका दृक् स्निग्धा लिङ्गनाशतः ।**
**दृष्टिः पित्तेन ह्रस्वाख्या सा ह्रस्वा ह्रस्वदर्शिनी ॥ १५ ॥**

स०—लिङ्गनाशाद् दृष्टिश्च भ्रमरनीला निरालोका स्निग्धा च स्यात् । पित्तेन ह्रस्वसज्ञा दृष्टि स्यात् । सा च ह्रस्वा—ह्रस्वसस्थाना, तथा ह्रस्वदर्शिनी—अल्पदर्शिनी ।

**भवेत्पित्तविदग्धाख्या पीता पीताभ[5]दर्शना ।**

स०—पित्तविदग्धसज्ञा दृष्टि पीतवर्णा स्यात् । तथा पीताभ दर्शन यस्या सा पीताभदर्शना च ।

**कफेन तिमिरे प्रायः स्निग्धं श्वेतं च पश्यति ॥ १६ ॥**
**शङ्खेन्दुकुन्दकुसुमैः कुमुदैरिव [6]चाचितम् ।**
**काचे तु निष्प्रभेन्द्वर्कप्रदीपाद्यैरिवाचितम् ॥ १७ ॥**
**सिताभा सा च दृष्टिः स्याल्लिङ्गनाशे तु [7]लक्ष्यते ।**
**मूर्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः ॥ १८ ॥**
**बिन्दुर्जलस्येव चलः पद्मिनीपुट[8]संस्थितः ।**
**उष्णे सङ्कोचमायाति छायायां परिसर्पति ॥ १९ ॥**
**शङ्खकुन्देन्दुकुमुदस्फटिकोपम[9]शुक्लिमा ।**

स०—कफेन तिमिरे सति प्राय स्निग्ध शुक्ल चालोकते । तथा शङ्खादिभिरिवाचित पश्यति । काचे तु निष्प्रभेन्द्वर्कादिभिरिवाचित पश्यति । दृक् शुक्लाभा स्यात् लिङ्गनाशे तु दृश्यते—मूर्त कफो दृष्टिगत स्निग्धस्तथा दृष्टिविनाशनश्च । जलस्येव बिन्दुश्चल पद्मिनीपुटसस्थित । आतपे चासौ बिन्दु सङ्कुचति । छायाया प्रसरति । तथा शङ्खादिशुक्लिमा स्यात् ।

**रक्तेन तिमिरे रक्तं तमोभूतं च पश्यति ॥ २० ॥**
**काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति ।**
**लिङ्गनाशेऽपि तादृग् दृङ् निष्प्रभा हतदर्शना ॥ २१ ॥**

स०—रक्तेन तिमिरे सति रक्ताभ तथा तम इव च पश्यति । काचेन रक्ता कृष्णा वा दृष्टि स्यात् । तादृगेव—रक्त कृष्ण वा, पश्यति । लिङ्गनाशे च [1]तादृश्येव—काचवत्, दृष्टिस्तथा निष्प्रभा हतदर्शना च स्यात् ।

**संसर्गसन्निपातेषु विद्यात्सङ्कीर्णलक्षणान् ।**
**तिमिरादीनकस्माच्च [2]तैः स्याद्व्यक्ता[3]कुले[4]क्षणः ॥ २२ ॥**
**तिमिरे, शेष[5]योर्दृष्टौ चित्रो राग. प्रजायते ।**

स०—ससर्गसन्निपातेषु सङ्कीर्णलक्षणान्—व्यामिश्रलक्षणान्, तिमिरकाचलिङ्गनाशान् विद्यात् । तथाऽकस्मात्—निमित्तमन्तरेण, तै —ससर्गसन्निपातै , व्यक्त—स्पष्ट, कदाचिदाकुलमीक्षण—दर्शन, यस्य स एवभूतो नरस्तिमिरे स्यात् । शेषयो —काचलिङ्गनाशयो दृष्टौ चित्रो राग स्यात् ।

**द्योत्यते नकुलस्येव यस्य दृङ् निचिता मलैः ॥ २३ ॥**
**नकुलान्धः स तत्राह्नि चित्रं पश्यति नो निशि ।**

स०—यस्मातुरस्य नकुलस्येव दृष्टिर्दोषैर्निचिता द्योत्यते—देदीप्यते, स नकुलान्ध । तत्र—नकुलान्धे, दिवा चित्र पश्यति, न तु निशि—रजन्याम् ।

**अर्केऽस्तमस्तकन्यस्तगभस्तौ स्तम्भमागताः ॥ २४ ॥**
**स्थगयन्ति दृशं दोषा दोषान्ध. स गदोऽपरः ।**

स०—अर्केऽस्तपर्वतस्य मस्तके न्यस्ता गभस्तयो येन तस्मिन् सति स्तम्भ प्राप्ता दोषा दृश छादयन्ति । स एवभूतो दोषान्धो नाम रोग ।

दिवा कथ पश्यति? इत्यत्र युक्तिमाह—

**दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः ॥ २५ ॥**
**विलीनलीना यच्छन्ति व्यक्तमत्राह्नि दर्शनम् ।**

स०—मला अह्नि दिवाकररश्मिभि स्पृष्टास्तथा दृष्टिपथाद्भ्रष्टा विलीना सन्त , अत्र—रात्र्यन्धे, स्पष्ट दर्शन ददति । दिवाकरकरस्पृष्टा इति हेतौ प्रथमा ।

**उष्णतप्तस्य सहसा शीतवारिनिमज्जनात् ॥ २६ ॥**
**त्रिदोषैरक्तसंपृक्तो यात्यूष्मोर्ध्वं ततोऽक्षि[6]णि ।**
**दाहोषे मलिनं शुक्लमह्न्याविलदर्शनम् ॥ २७ ॥**
**रात्रावान्ध्यं च जायेत विदग्धोष्णेन सा स्मृता ।**

स०—उष्णेन तप्तस्य सहसा—झटित्येव, शिशिरजलनिमज्-

१ 'द्योतोद्योत' इ ई उ ण त स द्व । २ "विद्युत्खद्योताभ्या द्योतेन—दीप्त्या, दीपितम् । पत्राभ—पिच्छावर्णम् ॥ आचित—अन्वित व्याप्तम् ॥ शुक्लिमा—शौक्ल्यम् ।" इति चन्द्र । "परिवेषो—मण्डलम् । अग्निमरीच्यो—रश्मय ।" इतीन्दु । ३ 'रिपिच्छाभ' इति क्वचित् । ४ 'कास्यनिला' ई म स । ५ 'दर्शिनी' इ.उ । ६ 'वाऽऽचितम्' ण त । 'वाऽन्वितम्' स मू । ७ 'दृश्यते' स.द्व । ८ 'नीपत्रसं' इ । ९ 'संश्रित ' इ.चन्द्र स.स. ।

१ 'तादृगेव' ट । २ "तै —ससर्गसन्निपातैस्तिमिरे जाते, व्यक्ताकुलेक्षण स्यात्,—कदाचित् व्यक्त कदाचिदाकुल—अव्यक्तमस्फुट, ईक्षण—रूपदर्शन, प्रजायते । शेषयो —काचलिङ्गनाशयो ससर्गसन्निपातोद्भवयो । चित्र —नैकवर्ण ॥ अस्तो नाम पर्वत , तस्य मस्तके—शिखरे, न्यस्ता —क्षिप्ता , गभस्तयो येन तस्मिंस्तथाविधे दिनावसाने ।" इति चन्द्र । "दोषा—रात्रि । अपर इति सर्वदोषजसाम्येन नकुलान्धापेक्षया ॥ त्रिभिर्दोषै रक्तचतुर्थै ससृष्टो देहोष्मा, उर्ध्वं—शिरो, याति । तत —तस्मिन् याते ।" इतीन्दु । ३ 'स्याद्व्याकुले' उ । ४ 'क्षणम्' चन्द्र । ५ 'वा रूपं प' ट.ण.त. । ६ 'क्षिणी' स.द्व. ।

नान् त्रिदोषरक्तसवृक्त ऊष्मोर्ध्वमक्षिण याति । तत —ऊष्मण ऊर्ध्वगमनात्, अक्षिण दाहोषे भवत । शुक्लभागश्च मलिनो भवति । अहनि–दिने, आविल दर्शन जायते, रात्रौ चान्ध्यम् । सा दृष्टिरुष्णविदग्धाख्या ।

**भृशमम्लाशनाद्दोषैः साम्लैर्या दृष्टिराचिता ॥ २८ ॥**
**सक्लेदकण्डूकलुषा विदग्धाऽम्लेन सा स्मृता ।**

स०—अत्यन्तमम्लाशनात्—अम्लभक्षणात्, दोषे सरक्तैर्या दृष्टिराचिता क्लेदकण्डूकलुषान्विता स्यात् । सा विदग्धाम्लेति दृष्टि स्मृता ।

**शोकज्वरशिरोरोगसन्तप्तस्यानिलादयः ॥ २९ ॥**
**धूमाविलां धूमदर्शां दृशं कुर्यु. स धूमरः ।**

स०—शोकादिसन्तप्तस्य नरस्य वातादयो धूमेनेवाविला धूमदर्शना दृष्टि कुर्यु । स धूमरो नाम रोग ।

**सहसैवाल्पसत्त्वस्य पश्यतो रूपमद्भुतम् ॥ ३० ॥**
**भास्वरं भास्करादि वा वाताद्या नयनाश्रिताः ।**
**कुर्वन्ति तेज. संशोष्य दृष्टिं मुषितदर्शनाम् ॥ ३१ ॥**
**वैडूर्यवर्णां स्तिमितां प्रकृतिस्थामिवाव्यथाम् ।**
**औपसर्गिक इत्येष लिङ्गनाशो**

स०—सहसैव–अतर्कितस्य, पुसोऽल्पसत्त्वस्य रूपमद्भुतं पश्यतो भास्वर भास्करप्रकार पश्यतो वा वातादयो लोचनाश्रिता दृष्टि मुषितदर्शना वैडूर्यवर्णा स्तिमिता प्रकृतिस्थामिव पीडारहिता कुर्वन्ति । किं कृत्वा ? तेज सशोष्य । इत्येष औपसर्गिको लिङ्गनाश ।

**ऽत्र वर्जयेत् ॥ ३२ ॥**
**विना कफाल्लिङ्गनाशान् गम्भीरां ह्रस्वजामपि ।**
**षट् काचा नकुलान्ध्यश्च याप्या., शेषास्तु साधयेत्॥**
**द्वादशेति गदा दृष्टौ निर्दिष्टाः सप्तविंशतिः ॥ ३३½॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने दृष्टिरोगविज्ञानीयो नाम द्वादशोऽध्यायः ॥ १२ ॥**

स०—अत्र–एषु मध्ये, कफाद्विना लिङ्गनाशान्–वातपित्तसंसर्गसन्निपातरक्तजौपसर्गिकान् षट्, तथा गभीरा ह्रस्वजामपि दृष्टिमित्यष्टौ वर्जयेत् । षट् काचा —वातपित्तकफसंसर्गसन्निपातरक्तजा, नकुलान्ध्यश्चेति सप्त याप्या । शेषाश्च द्वादश साधयेत्, तत्र वातपित्तकफरक्तसंसर्गसन्निपातै पृथक् तिमिराणीति षट्, सप्तम कफेन च लिङ्गनाश, अष्टम पित्तविदग्धा दृष्टि, नवमो दोषान्ध, दशम उष्णविदग्धा, एकादशो विदग्धाम्ला, द्वादशो धूमर, इति । एव दृष्टिमण्डले रोगा सप्तविंशतिसङ्ख्या कथिता ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने दृष्टिरोगविज्ञानीयो नाम द्वादशोऽध्याय समाप्त ॥ १२ ॥



## त्रयोदशोऽध्यायः ।

अस्मादनन्तरं तिमिरप्रतिषेध उच्यते—

**अथातस्तिमिरप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥)

स०—ननु, दृष्टिरोगविज्ञानादनन्तरं दृष्टिरोगप्रतिषेधो ज्ञाप्य । उपपन्नमाह भवान् । किं तु दृष्टिरोगचिकित्सितस्य बहुवक्तव्यत्वात् पृथगध्यायो वक्तुं युक्त । तत्रापि क्रमप्राप्तस्तिमिरप्रतिषेध इति तिमिरप्रतिषेधारम्भ एव युक्त । काचादीना त्वल्पवक्तव्यत्वादत्रैवाभिधानम् । ततो बहुवक्तव्यत्वात् पृथगध्यायो लिङ्गनाशस्य । इति सर्वं युक्तम् ।

**तिमिरं काचतां याति काचोऽप्यान्ध्यमुपेक्षया ।**
**नेत्ररोगेष्वतो घोर तिमिर साधयेद् द्रुतम् ॥ १ ॥**

स०—तिमिरमुपेक्षया काचत्व याति । काचोऽप्युपेक्षित आन्ध्य गच्छति । अत कारणान्नेत्ररोगेषु मध्ये तिमिर दारुणं शीघ्र साधयेत् ।

**तुलां पचेत जीवन्त्या द्रोणेऽपां पादशेषिते ।**
**तत्क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत् ॥ २ ॥**

---

१ 'मता' इ उ चन्द्र । २ 'धूमदृशा' ई. । 'धूमदर्शा' स.मू. । ३ 'धूमक' ई उ । 'धूसर.' चन्द्र. । ४ "अद्भुत–आश्चर्यजननं रूप पश्यत, भास्करादेर्वा रूप भास्वर–तेजस्वि, पश्यत. । मुषितदर्शना–हृतदर्शनशक्तिम् । औपसर्गिक –आगन्तुकः ॥ शुक्रं तु यद्यपि दृष्टौ भवति तथाऽप्यसितमूलत्वात् तत्रैवोक्तम् ।" इतीन्दु । ५ 'भासुर' इ. । ६ 'लान्ध्यश्च' उ.,ट. ।'

१ 'न्ध्यश्च सप्तम एते याप्या ' त । २ अय तिमिरप्रतिषेध सुश्रुते उ० १७ अध्याये, अष्टाङ्गसङ्ग्रहे उ० १६ अध्याये चास्ति वर्णित, चरके तु न वर्णित । ३ 'न्याय्य.' ट त । 'ज्ञेय ।' ड. । ४ 'गुण क्षीर' इ इ. ।

**प्रपौण्डरीककाकोलीपिप्पलीरोध्रसैन्धवैः ।**
**शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥ ३ ॥**
**कार्षिकैर्निशि तत्पीतं तिमिरोपहरं परम् ।**

**स०**-जीवन्त्या पलशतमपा द्रोणे पादावशेषितं पचेत् । तत्क्वाथे घृतप्रस्थ द्विगुणक्षीर प्रपौण्डरीकादिभि कर्षपरिमाणै कल्कितैर्विपाचयेत् । निशि पीत तत्पर तिमिरापहम् ।

**द्राक्षाचन्दनमञ्जिष्ठाकाकोलीद्वयजीवकैः ॥ ४ ॥**
**सिताशतावरीमेदापुण्ड्राह्वमधुकोत्पलैः ।**
**पचेज्जीर्णघृतप्रस्थं समक्षीरं पिचून्मितैः ॥ ५ ॥**
**हन्ति तत्काचतिमिररक्तराजीशिरोरुजः ।**

**स०**-तथा द्राक्षादिभि पिचून्मितै -कर्षांशै , जीर्णस्य-पुराण-घृतस्य प्रस्थ समक्षीर पचेत् । तच्च काचादीन् हन्ति ।

**पटोलनिम्बकटुकादार्वीसेव्यवरावृषम् ॥ ६ ॥**
**सधन्वयासत्रायन्तीपर्पटं पालिकं पृथक् ।**
**प्रस्थमामलकानां च क्राथयेन्नल्वणेऽम्भसि ॥ ७ ॥**
**तदाढकेऽर्धपलिकैः पिष्टैः प्रस्थं घृतात्पचेत् ।**
**मुस्तभूनिम्बयष्ट्याह्वकुटजोदीच्यचन्दनैः ॥ ८ ॥**
**सपिप्पलीकैस्तत्सर्पिर्घ्राणकर्णास्यरोगजित् ।**
**विद्रधिज्वरदुष्टारुर्विसर्पापचिकुष्ठनुत् ॥ ९ ॥**
**विशेषाच्छुक्रतिमिरनक्तान्ध्योष्णाम्लदाहहृत् ।**

**स०**-पटोलादिक पर्पटान्त पृथक् पलोन्मितमामलकाना प्रस्थ नल्वणे-द्रोणेऽम्भसि, क्राथयेत् । तदाढके मुस्तादिभि सपिप्पलीकै पिष्टै -कल्कितै , अर्धपलिकैर्घृतप्रस्थ विपाचयेत् । तच्च घृत घ्राणादिरोगजित्, विद्रध्यादिरोगजित्, विशेषेण शुक्रादिघ्नम् । एतत्पटोलाद्य घृतम् ।

**त्रिफलाष्टपलं क्राथ्यं पादशेषं जलाढके ॥ १० ॥**
**तेन तुल्यपयस्केन त्रिफलापलकल्कवान् ।**
**अर्धप्रस्थो घृतात्सिद्धः सितया माक्षिकेण वा ॥ ११ ॥**
**युक्तं पिबेत्तत्तिमिरी तद्युक्तं वा वरारसम् ।**

**स०**-त्रिफलाया पलाष्टक जलाढके पादशेष क्राथ्यम् । तेन क्राथेन तुल्यक्षीरेण त्रिफलापलकल्कयुक्तो घृतार्धप्रस्थ पक्व शर्करया माक्षिकेण वा युत तत्तिमिरी पिबेत् । घृतेन वा तेन युक्त त्रिफलाक्राथ दोषदूष्यादिवशात् पिबेत् । एतच्च त्रिफलाघृतमुच्यते ।

**यष्टीमधुद्विकाकोलीव्याघ्रीकृष्णामृतोत्पलैः ॥ १२ ॥**
**पालिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत्समैः ।**
**अजाक्षीरवरावासामार्कवस्वरसैः पृथक् ॥ १३ ॥**
**महात्रैफलमित्येतत्परं दृष्टिविकारजित् ।**

**स०**-यष्ट्यादिभि पालिकै सहसिताद्राक्षैरजाक्षीरादिभि पृथक्स्वरसै समै प्रस्थप्रमाणै सपि प्रस्थ विपाचयेत् । एतन्महात्रैफल सुष्ठु दृष्टिविकारजित् ।

**त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि ॥ १४ ॥**
**यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम् ।**
**मासमेकं हिताहारः पिबन्नामलकोदकम् ॥ १५ ॥**
**सौपर्णं लभते चक्षुरित्याह भगवान्निमिः ।**

**स०**-त्रैफलेन च सर्पिषा त्रिफला यष्टीयुक्ता माक्षिकेण च परिप्लुता रात्रौ लिहानो मासमेक हिताशी सन्नामलकोदक पिबन् गारुत्मत चक्षुर्लभत इति भगवान्निमिराह ।

**ताप्यायोहेमयष्ट्याह्वसिताजीर्णाज्यमाक्षिकैः ॥ १६ ॥**
**संयोजिता यथाकामं तिमिरघ्नी वरा वरा ।**

**स०**-ताप्यादिभि सयोजिता त्रिफला यथाकाम वरा तिमिरघ्नी स्यात् ।

**सघृतं वा वराक्राथं शीलयेत्तिमिरामयी ॥ १७ ॥**
**अपूपैः सूपसक्तून् वा त्रिफलाचूर्णसंयुतान् ।**

**स०**-अथवा त्रिफलाक्राथ ससर्पिष्क तिमिररोगहरमभ्यसेत् । अपूपादीन् वा त्रिफलाचूर्णसयुतान् शीलयेत् ।

**पायसं वा वरायुक्तं शीतं समधुशर्करम् ॥ १८ ॥**
**प्रातर्भक्तस्य वा पूर्वमद्यात्पथ्यां पृथक् पृथक् ।**
**मृद्वीकाशर्कराक्षौद्रैः सततं तिमिरातुरः ॥ १९ ॥**

**स०**-पायस त्रिफलायुत वा शीत समधुशर्कर प्रातरद्यात् । भक्तस्य पूर्व वा । हरीतकी वा मृद्वीकाशर्कराक्षौद्रै पृथक् पृथक् युतामनारत तिमिरातुरोऽद्यात् ।

---

१ 'क्षाशिवादा' स मू । २ 'राणां हरं' उ । ३ 'जीर्णं घृत' ई । ४ 'तच्छुकृति' स.स । ५ 'म्भस' स.द्व । ६ 'कैर्घृतप्रस्थ विपाचयेत्' ई । ७ 'सव्योषचव्यैस्त०र्णाक्षिरोग' ई स द्व । ८ "दुष्टारूषि—पर्वण्युदीर्णमूला पिटका । नक्तान्ध्य-दोषान्ध्यम् । उष्णशब्देनोष्णविदग्धोच्यते । अम्लशब्देनाम्लविदग्धा । सकलनेत्रावयवज उष्मा-दाह ॥ तदिति घृतम् । वरारस -त्रिफलाकषाय ।" इतीन्दु । ९ 'ष्टास्त्रविस' उ.स मू । १० 'हनुत्' इ उ.ण । ११ 'शेषे' स मू ।

१ 'रनुत्' इ उ । २ "सुपर्णो-गरुड । भगवान्-ऐश्वर्यादिषड्गुणपरिपूर्णो, निमिर्नाम महर्षि ।" इतीन्दु । "वरा-त्रिफला । ताप्यादिभिर्यथाकाम-यथायोग यथेच्छ पृथक् द्वाभ्या त्रिभिश्चतुर्भि समस्तैर्वा सयोजिता । वरा-प्रधाना ।" इति चन्द्र । ३ 'पतक्रसक्तून्' इ । ४ "अथवा पायस-पयसा सस्कृतमोदन, वरया-त्रिफलया युक्त, शीत माक्षिकशर्कराभ्या युक्त तिमिरामयी शीलयेत् । तिमिरेणातुर -पीडित , पथ्या मृद्वीकादिभि पृथक् पृथक् प्रात -प्रत्युषसि, पूर्वं वा भक्तस्य, सतत-सर्वकाल, अद्यात्-भक्षयेत् ।" इति चन्द्रव्याख्यान युक्तम्, सङ्ग्रहसम्मतत्वात् । अरुणदत्तव्याख्यान तु चिन्त्यम् । ५ 'भुक्तस्य' इ.उ.स मू ।

**स्रोतोजांशाश्चतुःषष्टि ताम्रायोरूप्यकाञ्चनैः ।**
**युक्तान् प्रत्येकमेकांशैरन्धमूषोदरस्थितान् ॥ २० ॥**
**ध्मापयित्वा समावृत्तं ततस्तच्च निषेचयेत् ।**
**रसस्कन्धकषायेषु सप्तकृत्वः पृथक् पृथक् ॥ २१ ॥**
**वैडूर्यमुक्ताशङ्खाना त्रिभिर्भागैर्युतं ततः ।**
**चूर्णाञ्जनं प्रयुञ्जीत तत्सर्वतिमिरापहम् ॥ २२ ॥**

स०–स्रोतोजात् चतु षष्टिमशास्ताम्रादिभि प्रत्येकमेकाशैर्युतानन्धमूषोदरस्थितान् ध्मापयित्वा सम्यगावृत्त–आवतित शिलाया, तत –अनन्तर, मधुरादिगणक्वाथेषु तन्निषेचयेत् पृथक् पृथक् सप्तवारान् । ततो वैडूर्यमुक्ताशङ्खाना त्रिभिर्भागैर्युतमेतच्चूर्णाञ्जन सर्वतिमिरघ्न प्रयुञ्जीत ।

**मांसीत्रिजातकाय.कुङ्कुमनीलोत्पलाभयातुत्थैः ।**
**सितकाचशङ्खफेनकमरिचाञ्जनपिप्पलीमधुकैः २३**
**चन्द्रेऽश्विनीसनाथे सुचूर्णितैरञ्जयेद्युगुलमक्ष्णोः ।**
**तिमिरार्मरक्तराजीकण्डूकाचादिशममिच्छन् ॥ २४ ॥**

स०–मास्यादिभि सूक्ष्मरजीकृतैश्चन्द्रेऽश्विनीयुक्ते सत्यक्षियुग्ममञ्जयेत् तिमिरादिशान्तिमिच्छन् । आर्यै मुखचपले ।

**मरिचवरलवणभागौ भागौ द्वौ कणसमुद्रफेनाभ्याम् ।**
**सौवीरभागनवकं चित्रायां चूर्णितं कफामयजित् २५**
**[ मनोह्वातुत्थकस्तूरीमांसीमलयरोचनाः ।**
**दशकर्पूरसंयुक्तमशीतिगुणमञ्जनम् ॥ १ ॥**
**पिष्टं चित्राश्विनीपुष्ये षड्विधे तिमिरे हितम् ।**
**प्रसादनं च दृष्टेः स्याच्चक्षुषेणावभाषितम् ॥ २ ॥ ]**

स०–मरिचसैन्धवयोर्द्वौ भागौ, पिप्पलीसमुद्रफेनयोर्द्वौ भागौ, सौवीराञ्जनस्य भागा नव, एतच्चित्राया चूर्णित कफामयजित् । गीतिरार्या ।

**द्राक्षामृणालीस्वरसे क्षीरमद्यवसासु च ।**
**पृथक् दिव्याप्सु स्रोतोजं सप्तकृत्वो निषेचयेत् २६**
**तच्चूर्णितं स्थितं शङ्खे दृक्प्रसादनमञ्जनम् ।**
**शस्तं सर्वाक्षिरोगेषु विदेहपतिनिर्मितम् ॥ २७ ॥**

स०–द्राक्षादिस्वरसेषु पृथक् पृथक् दिव्यजले च स्रोतोञ्जनं सप्तकृत्वो निषेचयेत् । तच्चूर्णाकृत शङ्खे स्थित दृष्टिप्रसादकृदञ्जन सर्वाक्षिरोगेषु श्रेष्ठ विदेहपतिनिर्मितम् ।

**निर्दग्धं बादराङ्गारैस्तुत्थं चेत्थं निषेचितम् ।**
**क्रमाद्दजापयःसर्पिःक्षौद्रे तस्मात् पलद्वयम् ॥ २८ ॥**
**कार्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः ।**
**पटुरोध्रशिलापथ्याकणैलाञ्जनफेनकैः ॥ २९ ॥**
**युक्त पलेन यष्ट्याश्च मूषान्तर्ध्मातचूर्णितम् ।**
**हन्ति काचार्मनक्तान्ध्यरक्तराजीः सुशीलितः ॥३०॥**
**चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा ।**

स०–बादराङ्गारैस्तुत्य निर्दग्ध पूर्ववत् क्रमेण छागक्षीरघृतमाक्षिके निषेचित, तस्मात्–निर्दग्धाच्च तुत्थात् पलद्वय, ताप्यादिभि कार्षिकैर्यष्टीपलेन च युक्त, मूषान्तर्ध्मापित चूर्णित, काचादीन् हन्ति । सुसेवितोऽय भास्करश्चूर्णो विशेषेण तिमिर हन्ति । यथा रविरन्धकारमित्युपमाश्लेषोऽलङ्कार ।

**त्रिशद्भागा भुजङ्गस्य गन्धपाषाणपञ्चकम् ॥ ३१ ॥**
**शुल्बतालकयोर्द्वौ द्वौ वङ्गस्यैकोऽञ्जनात्त्रयम् ।**
**अन्धमूषीकृत ध्मातं पक्वं विमलमञ्जनम् ॥ ३२ ॥**
**तिमिरान्तकरं लोके द्वितीय इव भास्करः ।**

स०–भुजङ्गस्य–सीसकस्य त्रिशद्भागा , गन्धपाषाणस्य भागपञ्चक, शुल्बतालकयोर्द्वौ द्वौ भागौ, वङ्गस्य–त्रपुण एको भाग , अञ्जनाद्भागत्रयमन्धमूषाध्मात विपक्वमञ्जन द्वितीयो भास्कर इव लोके तिमिरान्तकरम् । भुजङ्गादीना शोधितानामत्र प्रयोग , न तु मारितानाम् ।

**गोमूत्रे छगणरसेऽम्लकाञ्जिके च**
**स्त्रीस्तन्ये हविषि विषे च माक्षिके च ।**
**यत्तुत्थं ज्वलितमनेकशो निषिक्तं**
**तत्कुर्याद्गरुडसमं नरस्य चक्षुः ॥ ३३ ॥**

स०–तत्तुत्थ नरस्य गरुडनयनतुल्य नयन कुर्यात् । कतमम् ? यद्दीप्त सत् गोमूत्रादिष्वनेकश –सप्तकृत्वो, निषिक्तम् । प्रहर्षिणीवृत्तम् ।

**श्रेष्ठाजलं भृङ्गरसं सविषाज्यमजापयः ।**
**यष्टीरसं च यत्सीसं सप्तकृत्वः पृथक् पृथक् ॥ ३४ ॥**
**तप्तं तप्तं पायितं तच्छलाका**
**नेत्रे युक्ता साञ्जनाऽनञ्जना वा ।**
**तैमिर्यार्मस्रावपैच्छिल्यपैल्लं**
**कण्डूं जाड्यं रक्तराजीं च हन्ति ॥ ३५ ॥**

१ "मूषा–मृन्मयी, सुवर्णादिद्रुतत्वापादनेऽधिकरणम् । तस्या अन्धत्व पिधानेनान्तर्धूमदाहाय । समावृत्त–शिलाया चूर्णितम् ।" इतीन्दु । २ 'षायेण स' स स । ३ 'त्सर्व ति' उ ण स मू । ४ 'त्रासच्चूर्णित' इ । ५ [ ] प्रथमश्लोक इ उ चन्द्र पुस्तकेषु, द्वितीयश्लोक उ पुस्तके चोपलब्ध । ६ 'दरकर्पू' इ । ७ 'धृत' इ । ८ "विदेहपतिना–जनकेन, निर्मितम् ॥ इत्थ–अनेन प्रकारेणाजापयसि सर्पिषि क्षौद्रे च सप्तकृत्व ।" इति चन्द्र । ९ 'त्थ चैव' उ. । १० 'माच्छागपय.' इ.उ. । ११ 'क्षौद्रैस्तस्मात्' स.स. ।

१ 'क्षिकैर्निषे' ट ण त । २ 'तारक' इ ई उ । ३ 'मूषागत' उ । ४ 'रापहर' ई । ५ 'गलरसे' इ उ चन्द्र । ६ छगणरसे–गोमयरसे । ७ अस्याग्रे–"तुत्थ सकास कनक सफल शङ्खशिलागैरिकमञ्जन च । नर कपालसहिकूकुडाण्ड सप्तद्विसप्तत्रिसमयोगत (?) ॥ १ ॥ भृङ्गोद्भवस्वरसभावितमाजदुग्धे मूत्रे गवा पयसि च त्रिफलाकषाये । द्राक्षारसे च परिशुद्धमिति क्रमेण सौवीरमञ्जनमिद तिमिर निहन्ति ॥ २ ॥" इति द्वौ श्लोकौ उ. पुस्तकेऽधिकौ । ८ 'गरुडतुल्य' ट ण त. । ९ 'श्रेष्ठारस' "श्रेष्ठारस–त्रि' फलाक्वाथम् ।" इति चन्द्र । १० 'यच्छीस' ई.उ.त. ।

स०—यत्सीस तप्त तप्त त्रिफलाक्काथादिक पृथक् पृथक् सप्त-कृत्व पायित तस्य सीसस्य शलाका नयने युक्ता सहाञ्जनाऽञ्जनेन रहिता वा तैमिर्यादीन् हन्ति । शालिनीवृत्तम् । द्रव्यशलाकेय-मिति प्रथिता ।

**रसेन्द्रभुजगौ तुल्यौ तयोस्तुल्यमथाञ्जनम् ।**
**ईषत्कर्पूरसंयुक्तमञ्जनं तिमिरापहम् ॥ ३६ ॥**

स०—पारदसीसकौ समाशौ, तयो सममञ्जन, षोडशाश-कर्पूरयुतमिदमञ्जन तिमिरापह भवति ।

**यो गृध्रस्तरुणरविप्रकाशगल-**
**स्तस्यास्यं समयमृतस्य गोशकृद्भिः ।**
**निर्दग्धं समधृतमञ्जनं च पेष्यं**
**योगोऽयं नयनबलं करोति गार्ध्रम् ॥ ३७ ॥**

स०—यो गृध्रस्तरुणरविप्रकाशगलस्तस्य समयमृतस्यास्य-मुख, गोशकृद्भि —गोमयकरीषै , निर्दग्ध—भस्मसात्कृत, तस्य सममञ्जन—स्रोतोज, समधृत—समभाग, पेष्य—चूर्णयितव्यम् । अय योगो नयनयो —नेत्रयो , बल गार्ध्र—गृध्रतुल्य, करोति ।

**कृष्णसर्पवदने सहविष्कं दग्धमञ्जनंनिःसृतधूमम् ।**
**चूर्णितं नलदपत्रविमिश्रं भिन्नतारमपि रक्षति चक्षुः ॥**

स०—कृष्णसर्पस्य वदने सहविष्कमञ्जनमनि सृतधूम दग्ध मासीपत्रकमिश्रित चूर्णितमुपयुक्त सत् चक्षुर्भिन्नतारमपि रक्षति । भिन्नतारमपीत्यनेन शक्त्यतिशयमस्याह । न तु भिन्न-तारस्य कथञ्चिद्रक्षण स्यात् । अन्यत्राप्येवविधो न्यायोऽयमनु-सरणीय । स्वागतावृत्तम् ।

**कृष्णसर्पं मृतं न्यस्य चतुरश्चापि वृश्चिकान् ।**
**क्षीरकुम्भे त्रिसप्ताहं क्लेदयित्वा प्रमन्थयेत् ॥ ३९ ॥**
**तत्र यन्नवनीतं स्यात्पुष्णीयात्तेन कुक्कुटम् ।**
**अन्धस्तस्य पुरीषेण प्रेक्षते ध्रुवमञ्जनात् ॥ ४० ॥**

स०—क्षीरकुम्भे मृत कृष्णसर्प न्यस्य वृश्चिकाश्च चतुरस्त्रि-सप्ताह क्लेदयित्वा विलोडयेत् । तस्मिन् यन्नवनीत भवेत्, तेन नवनीतेन कुक्कुट पुष्णीयात् । तस्य कुक्कुटस्य पुरीषेणान्धोऽ-प्यञ्जनान्निश्चितमीक्षते ।

**कृष्णसर्पवसा शङ्खः कतकात् फलमञ्जनम् ।**
**रसक्रियेयमचिरादन्धाना दर्शनप्रदा ॥ ४१ ॥**

स०—कृष्णसर्पस्य वसा शङ्ख कतकफल सौवीराञ्जनम् । इय रसक्रिया द्रागेवान्धाना दृष्टिप्रदा ।

**मरिचानि दशार्धपिचु-**
**स्ताप्यात्तुत्थात्पलं पिचुर्यष्ट्याः ।**
**क्षीरार्द्रं दग्धमञ्जन-**
**मप्रतिसाराख्यमुत्तमं तिमिरे ॥ ४२ ॥**

स०—दश मरिचानि, षट्माक्षिकादर्धकर्ष, तुत्थात्पल, मधु-यष्टिकाया कर्ष , एतत्सर्व क्षीरार्द्र पश्चाद्दग्धमप्रतिसारसज्ञम-ञ्जनमतिश्रेष्ठ तिमिरे । गीतिरार्या ।

**अक्षबीजमरिचामलकत्वक्-**
**तुत्थयष्टिमधुकैर्जलपिष्टैः ।**
**छाययैव गुटिकाः परिशुष्का**
**नाशयन्ति तिमिराण्यचिरेण ॥ ४३ ॥**

स०—अक्षबीजादिभिर्जलपिष्टैर्गुटिका छाययैव परिशुष्का —न त्वातपेन, तिमिराणि लघु नाशयन्ति । स्वागतावृत्तम् ।

**मरिचामलकजलोद्भव-**
**तुत्थाञ्जनताप्यधातुभिः क्रमवृद्धैः ।**
**षण्माक्षिक इति योग-**
**स्तिमिरार्मक्लेदकाचकण्डूहन्ता ॥ ४४ ॥**

स०—मरिचादिभि क्रमवृद्धै षण्माक्षिक इति योगस्तिमिरा-दिघ्न । षण्माक्षिक इति कोऽर्थ ? कीदृश समास ? ब्रूम । माक्षिकशब्देनादिलोपाख्यया तन्त्रयुक्त्या षट्माक्षिक इत्युच्यते । षट्पूरणो षट्माक्षिको यस्मिन्निति समास । तेनास्मिन् योगे षष्ठो षट्माक्षिक इत्यवतिष्ठते । गीतिरार्या ।

**रत्नानि रूप्यं स्फटिकं सुवर्णं**
**स्रोतोञ्जनं ताम्रमयः सशङ्खम् ।**
**कुचन्दनं लोहितगैरिकं च**
**चूर्णाञ्जनं सर्वदृगामयघ्नम् ॥ ४५ ॥**

स०—रत्नादिभिश्चूर्णाञ्जनम् । रत्नान्यत्र वज्रमरकतादीनि यथालाभ ग्राह्याणि । लोहितगैरिक—लोहित गैरिकम्, केचित्तु

१ 'क्ता साञ्जना निरञ्जना वा तिमिरादीन्' ट । २ 'रसहितम' इ उ चन्द्र । ३ 'तिमिरे वरम्' इ उ । 'नयनामृतम्' इति क्वचित् । ४ 'मन्तिर्गत' इ. उ । ५ 'योजित' उ । ६ अस्याग्रे "नागाञ्जनासालशिलार्कवङ्गैस्त्रिशाद्विपञ्चद्वयमद्विकैकै । अन्ध-[ मूषीक ] तैश्छागपयोनिषिक्तैर्दृष्टेरिद भास्करमञ्जन स्यात् (?) ॥ १ ॥ स्रोतोश्मवीर वेष्ठ्याजमोदावटच्छदै । षङ्क तिमिरजिल्लिप्ट मृल्लिप्त गोमयाग्निना (?) ॥ २ ॥ ताम्राय-स्कान्तगन्धाह्वाताक्ष्या(क्ष्यो)यच्चुछल रज (?) । लोहे भृङ्गरजो भृष्ट सप्ताह दृष्टिरोगजित् ॥ ३ ॥" इति चन्द्रनन्द-नटीकापुस्तके उपलब्धाष्टीकारहिता इमे त्रय श्लोका । ७ त्रिस-प्ताह—एकविंशतिदिनानि । ८ 'त्वाऽनु मन्थ' इ उ । 'त्वाऽथ मन्थ' इति क्वचित् ।

१ 'दश, द्विपल ताप्या' इ । २ "शीघ्र त्वरित लघु क्षिप्रमर द्रुतम् ।" इत्यमर । ३ "अय योग षण्माक्षिक इत्यनया सज्ञया मुनिनोक्त । तिमिरार्मक्लेदकाचकण्डून् हन्तीति हन्ता । तत्र मरिचस्यैको भाग , आमलकस्य द्वौ, जलोद्भवस्य—समुद्रफेनस्य त्रय , तुत्थस्य चत्वार स्रोतोञ्जनस्य पञ्च,ताप्यधातो षट् भागा ।" इति चन्द्र । ४ 'ण्डूहा ।' ई. । 'ण्डूघ्नः ।' उ ।

लोहित-कुङ्कुममाहु । एतच्चूर्णाञ्जनमशेषदृष्टिरोगहरम् । उपजातिवृत्तम् ।

**तिलतैलमक्षतैलं भृङ्गस्वरसोऽसनाच्च निर्यूहः ।**
**आयसपात्रविपक्वं करोति दृष्टेर्बलं नस्यम् ॥ ४६ ॥**

**स०**–तिलतैलमक्षतैलं च समांश मार्कवस्वरसोऽसनाच्च क्वाथश्चेत्ययस पात्रे विपक्वं दृष्टेर्बलमेतन्नस्य करोति । आर्या ।

**दोषानुरोधेन च नैकशस्तं**
**स्नेहास्रविस्रावणरेकनस्यैः ।**
**उपाचरेदञ्जनमूर्धबस्ति-**
**बस्तिक्रियातर्पणलेपसेकैः ॥ ४७ ॥**

**स०**–दोषवशाच्च स्नेहादिभिर्मुहुर्मुहुरेन–नेत्ररोगिणमुपक्रमेत् । मूर्धबस्ति –गण्डूषादिविध्युक्त ( हृ सू अ २२ ) । बस्ति –बस्तिविध्युक्त ( हृ सू अ १९ ) । उपजातिवृत्तम् ।

**सामान्यं साधनमिदम्**

**स०**–इद–अनन्तराभिहित, सामान्य चिकित्सितम् ।

**प्रतिदोषमतः शृणु ॥ ४८ ॥**

**स०**–अत –अनन्तर, प्रतिदोष साधन शृणु ।

किं तत् ? इत्याह—

**वातजे तिमिरे तत्र दशमूलाम्भसा घृतम् ।**
**क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं पिबेत्ततः ॥ ४९ ॥**
**त्रिफलापञ्चमूलानां कषायं क्षीरसंयुतम् ।**
**एरण्डतैलसंयुक्तं योजयेच्च विरेचनम् ॥ ५० ॥**

**स०**–[तत्र–] तेषु तिमिरादिषु मध्ये, वातोत्थे तिमिरे दशमूलक्वाथेन घृत क्षीरे चतुर्गुणे त्रिफलाकल्कपक्व पिबेत् । अनन्तर त्रिफलापञ्चमूलाना क्वाथ क्षीरेण सयुतमेरण्डतैलान्वित विरेचन योजयेत् ।

**समूलजालजीवन्तीतुलां द्रोणेऽम्भसः पचेत् ।**
**अष्टभागस्थिते तस्मिंस्तैलप्रस्थं पयःसमे ॥ ५१ ॥**
**बलात्रितयजीवन्तीवरीमूलैः पलोन्मितैः ।**
**यष्टीपलैश्चतुर्भिश्च लोहपात्रे विपाचयेत् ॥ ५२ ॥**
**लोहे एव स्थितं मासं नावनादूर्ध्वजत्रुजान् ।**
**वातपित्तामयान् हन्ति तद्विशेषाद्दृगाश्रयान् ॥५३॥**
**केशास्यकन्धरास्कन्धपुष्टिलावण्यकान्तिदम् ।**

**स०**–मूलजालयुताया जीवन्त्या पलशत जलद्रोणे पचेत् । तस्मिन् जलेऽष्टभागशेषे क्षीरतुल्ये तैलप्रस्थं बलात्रितयादिभि पलोन्मितैर्मधुयष्टिकापलैश्चतुर्भिर्लोहपात्रे विपाचयेत् । लोहभाण्ड एव मास स्थित तन्नस्येनोर्ध्वजत्रुजान् रोगान् हन्ति । विशेषेण दृष्ट्याश्रयान् वातपित्तरोगान् पराकरोति । केशादिषु पुष्टिलावण्यकान्तिकरम् ।

**सितैरण्डजटासिंहीफलदारुवचानतैः ॥ ५४ ॥**
**घोषया बिल्वमूलैश्च तैलं पक्वं पयोन्वितम् ।**
**नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्तिजित् ॥ ५५ ॥**

**स०**–शुक्लैरण्डमूलादिभिस्तैल सक्षीर पक्व नस्येन सर्वजत्रूर्ध्वरोगादिजित् ।

**वसाऽञ्जने च वैयाघ्री वाराही वा प्रशस्यते ।**
**गृध्राहिकुक्कुटोत्था वा मधुकेनान्विता पृथक् ॥५६॥**

**स०**–वैयाघ्री वाराही वा वसाऽञ्जने शस्यते । गृध्रसर्पकुक्कुटोत्था वा वसा पृथक् मधुयष्टिकायुता श्रेष्ठा ।

**प्रत्यञ्जने च स्रोतोजं रसक्षीरघृते क्रमात् ।**
**निषिक्तं पूर्ववद्योज्यं तिमिरघ्नमनुत्तमम् ॥ ५७ ॥**

**स०**–प्रत्यञ्जने च स्रोतोञ्जन मासरसादिषु क्रमेण तप्त तप्त सप्तकृत्व निषिक्त पूर्ववद्योज्यम् । एतच्च पर तिमिरहृत् ।

**न चेदेवं शमं याति ततस्तर्पणमाचरेत् ।**

**स०**–यद्येव तिमिर न शाम्येत् ततस्तर्पणमाचरेत्–कुर्यात् ।

**शताह्वाकुष्ठनलदकाकोलीद्वययष्टिभिः ॥ ५८ ॥**
**प्रपौण्डरीकसरलपिप्पलीदेवदारुभिः ।**
**सर्पिरष्टगुणक्षीरं पक्वं तर्पणमुत्तमम् ॥ ५९ ॥**

**स०**–शतपुष्पादिभिर्घृतमष्टगुणक्षीर पक्व श्रेष्ठ तर्पणम् ।

**मेदसस्तद्वदैणेयाद्दुग्धसिद्धात् खजाहतात् ।**
**उद्धृतं साधितं तेजो मधुकोशीरचन्दनैः ॥ ६० ॥**

१ "शृण्विति शिष्यायाचार्य कथयति ॥ तत –घृतपानादनन्तर स्निग्धलक्षणे जाते ।" इतीन्दु । "असनात्–बीजकात् ॥ त–तिमिरातुरम् । नैकश –बहून् वारान् ॥ सामान्य–सर्व तिमिराणा साधारणम् ॥ बलात्रितय–बलातिबलानागबला ।" इति चन्द्र । २ 'नस्यात्' इ उ । ३ 'संमिश्रं' उ । 'संसृष्ट' स मू । ४ 'येत वि' इ उ चन्द्र स द्व । ५ 'चने' उ । ६ 'समम् ।' इ उ. । ७ 'त्रिजातजी' ई । ८ 'लोहपात्रस्थितं' इ. उ. ।

१ 'गामया' उ चन्द्र । २ 'न्तिकृत् ।' इ ई उ । ३ 'तुल्य तै' ट । ४ "सिंही –बृहत्या फलम् । घोषा–छत्रा, बिल्वस्य मूलानि, तै कल्कित तैलम् ॥ पृथक्–प्रत्येकम् ॥ पूर्ववत्–पक्व मासरसे क्षीरे घृते च क्रमात् सप्तकृत्वो, निषिक्तम् ॥ नलद–मासी । सरल –चीडा ॥ तेज –सारम् ।" इति चन्द्र । "क्रमात् रसादिभिर्निषिक्त–भावितम् । पूर्ववदिति मधुकेनान्वित, प्रत्यञ्जन योज्यम् । तीक्ष्णाञ्जनस्य पश्चान्मृद्वञ्जन–प्रत्यञ्जनम् । न विद्यते उत्तम यस्मात् तत्–अनुत्तमम् ।" इतीन्दु । ५ 'रुनिशानतै ' स स । ६ 'शताह्वाबिल्व' ई स द्व. । ७ 'यार्तिषु ।' स द्व. । ८ 'अन च' स.स. । ९ 'घृतै. क्र' इ.स.स. । १० 'मेण निषिक्त' ट.ण त. ।

स०–तथैव कृष्णहरिणान्मेदसो दुग्धे सिद्धात् खजेनालोडितात् तेज उद्धृत्य मधुकोशीरचन्दनैः सह पक्वं तर्पणमुत्तमम् ।

**श्वाविच्छल्यकगोधानां दक्षतित्तिरिबर्हिणाम् ।**
**पृथक्पृथगनेनैव विधिना कल्पयेद्वसाम् ॥ ६१ ॥**

स०–श्वाविदादीनां पृथगनेनैव विधिना वसां कल्पयेत् ।

**प्रसादनं स्नेहनं च पुटपाकं प्रयोजयेत् ।**

स०–पुटपाकं तु प्रसादनं स्नेहनं च–तर्पणपुटपाकविध्युक्त (हृ सू अ २४।१४–१६), प्रयोजयेत् ।

**वातपीनसवच्चात्र निरूहं सानुवासनम् ॥ ६२ ॥**

स०–अत्र च–वातजे तिमिरे, वातपीनस इव निरूहमनुवासनं च प्रयोजयेत् ।

**पित्तजे तिमिरे सर्पिर्जीवनीयफलत्रयैः ।**
**विपाचितं पाययित्वा स्निग्धस्य व्यधयेत्सिराम् ६३**

स०–पित्तजे तिमिरे जीवनीयैः फलत्रिकेन च पक्वं सर्पिः पाययित्वा ततः स्निग्धस्य सतः सिरां व्यधयेत् ।

**शर्करैलात्रिवृच्चूर्णैर्मधुयुक्तैर्विरेचयेत् ।**

स०–शर्करादिभिः समाक्षिकैर्विरेचयेत् ।

**सुशीतान् सेकलेपादीन् युञ्ज्यान्नेत्रास्यमूर्धसु ॥ ६४ ॥**

स०–नेत्रास्यशिरःसु चातिशिशिरान् सेकलेपादीन् युञ्ज्यात् ।

**सारिवापद्मकोशीरमुक्ताशाबरचन्दनैः ।**
**वर्तिः शस्ताऽञ्जने, चूर्णस्तथा पत्रोत्पलाञ्जनैः ॥ ६५ ॥**
**सनागपुष्पकर्पूरयष्ट्याह्वस्वर्णगैरिकैः ।**

स०–सारिवादिभिर्वर्तिरञ्जने शस्ता । तथा पत्रादिभिश्चूर्णोऽञ्जनं शस्तम् ।

**सौवीराञ्जनतुत्थकशृङ्गीधात्रीफलस्फटिककर्पूरम् ॥**
**पञ्चांशं पञ्चांशं त्र्यंशमथैकांशमञ्जनं तिमिरघ्नम् ।**

स०–सौवीराञ्जनादिकमञ्जनं शस्तम् । कियत्कियत्प्रमाणम्? इत्याह–पञ्चांशमित्यादि । तदेव पञ्च भागाः सौवीराञ्जनस्य, पञ्चैव तुत्थकस्य, शृङ्ग्यामलकानां भागास्त्रयः, स्फटिककर्पूरस्य भाग एकः, इति स्थितम् । एवमेतदञ्जनं तिमिरहृत् कुर्यात् । गीतिरार्येयम् ।

**नस्यं चाज्यं शृतं क्षीरजीवनीयसितोत्पलैः ॥ ६७ ॥**

स०–क्षीरेण चतुर्गुणेन जीवनीयादिभिराज्य–घृतं, पक्वं नस्ये श्रेष्ठम् ।

**श्लेष्मोद्भवेऽमृताक्वाथवराकणशृतं घृतम् ।**
**विध्येत्सिरां पीतवतो दद्याच्चानु विरेचनम् ॥ ६८ ॥**
**क्वाथं पूगाभयाशुण्ठीकृष्णाकुम्भनिकुम्भजम् ।**

स०–श्लेष्मोत्थतिमिरेऽमृतादिभिः पक्वं घृतं पीतवतः सिरां विध्येत् । विरेचनं च पूगादिभिः क्वाथं दद्यात् ।

**ह्रीबेरदारुद्विनिशाकृष्णाकल्कैः पयोन्वितैः ॥ ६९ ॥**
**द्विपञ्चमूलनिर्यूहे तैलं पक्वं च नावनम् ।**

स०–ह्रीबेरादिभिः कल्कितैः पयोन्वितैर्द्विपञ्चमूलक्वाथे तैलं पक्वं नावनं हितम् ।

**शङ्खप्रियङ्गुनेपालीकटुत्रिकफलत्रिकैः ॥ ७० ॥**
**दृग्वैमल्याय विमला वर्तिः स्यात्**

स०–शङ्खादिभिर्दृग्वैमल्याय विमलाख्येयं वर्तिर्हिता स्यात् ।

**कोकिला पुनः ।**
**कृष्णलोहरजोव्योषसैन्धवत्रिफलाञ्जनैः ॥ ७१ ॥**

स०–कृष्णलोहादिभिः कोकिलाख्या वर्तिः ।

**शशगोखरसिंहोष्ट्रद्विजा लालाटमस्थि च ।**
**श्वेतगोवालमरिचशङ्खचन्दनफेनकम् ॥ ७२ ॥**
**पिष्टं स्तन्याजदुग्धाभ्यां वर्तिस्तिमिरशुक्रजित् ।**

स०–शशादिजा द्विजा –दन्ताः, एषामेव लालाट–ललाटे भवमस्थि, तथा श्वेतगोवालादीनि, स्त्रीक्षीरच्छागदुग्धाभ्यां पिष्टा वर्तिस्तिमिरशुक्रहरेत्यर्थः ।

**रक्तजे पित्तवत्सिद्धिः शीतैश्चास्रं प्रसादयेत् ॥ ७३ ॥**

स०–रक्तजे तिमिरे पित्तवदुपक्रमः । [ शीतैः –] शीतवीर्यैः शीतस्पर्शैरन्नपानौषधसेकलेपादिभिश्च, रक्तं प्रसादयेत् ।

**द्राक्षया नलदरोध्रयष्टिभिः**
**शङ्खताम्रहिमपद्मपद्मकैः ।**
**सोत्पलैश्छगलदुग्धवर्तितै-**
**रस्रजं तिमिरमाशु नश्यति ॥ ७४ ॥**

स०–द्राक्षादिभिश्छागलीदुग्धपिष्टैः शीघ्रं रक्तोत्थं तिमिरं नश्यति ।

---

१ 'विदृशल्य' इ ई । 'विष्किराक' उ । २ 'धानामृक्ष' इ उ. । ३ 'चानु' ई. । ४ 'ञ्जन चू' उ चन्द्र । ५ 'पद्मोत्पला' इ उ.स ढ । ६ 'श्चूर्णाञ्जन' ट । ७ "शृङ्गीधात्रीफल–श्रेष्ठमामलकफलम् ॥ जीवनीयगणशर्करानीलोत्पलैः ।" इति चन्द्र । ८ 'ञ्जनं तिमिरघ्नम् । कि' ट. ।

१ "अनु–पश्चात्, पूगफलहरीतकीशुण्ठीपिप्पलीत्रिवृद्दन्तीजं क्वाथं विरेचनं दद्यात् ॥" श्वेताया गोर्वाला. ।" इति चन्द्र । २ 'कौशिका' उ । ३ पित्तवत्–पित्तजतिमिरवत् । ४ अस्याग्रे "मधूकसाराञ्जनताम्रत्रिकटुकविडङ्गपौण्डरीकाणि (?) । सलवणतुत्थत्रिफलारोध्राणि नभोम्बुपिष्टानि ॥ १ ॥ वर्तिश्चतुर्दशाङ्गी नयनामयनाशनी शिलास्तम्भे । लिखिता हिताय जगतस्तिमिरापहरी विशेषेण ॥२॥ एकगुणा मागधिका द्विगुणा च हरीतकी सलिलपिष्टा । वर्तिरियं तिमिरपटलकाचकन्डूस्त्व-(ण्डूस्र)हरी (?) ॥ ३ ॥" इत्यधिकाधीकारहितास्त्रयः श्लोकाश्चन्द्रनन्दनटीकापुस्तके । ५ 'यष्टिकाशङ्ख' इ.उ. । ६ 'पत्रकैः' इ ।

**संसर्गसन्निपातोत्थे यथादोषोदयं क्रिया ।**

स०-संसर्गजे सन्निपातजे च तिमिरे यथादोषोद्रेकं चिकित्सितम् ।

**सिद्धं मधूककक्कमिञ्जिन्मरिचामरदारुभिः ॥ ७५ ॥**
**सक्षीरं नावनं तैलं पिष्टैर्लेपो मुखस्य च ।**

स०-मधूकादिभिः सक्षीरं तैलं सिद्धं नावनं हितम् । मधूकादिभिरेव जलेन पिष्टैर्मुखलेपो हितः ।

**नतनीलोत्पलानन्तायष्ट्याह्वसुनिषण्णकैः ॥ ७६ ॥**
**साधितं नावने तैलं शिरोबस्तौ च शस्यते ।**

स०-नतादिभिः साधितं तैलं नावने शिरोबस्तौ च शस्यते ।

**दद्यादुशीरनिर्यूहे चूर्णितं कणसैन्धवम् ॥ ७७ ॥**
**तत्स्रुतं[2] सघृतं भूयः पचेत्क्षौद्रं घने क्षिपेत् ।**
**शीते चास्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम् ७८**

स०-उशीरक्वाथे पिप्पलीसैन्धवं रजीकृतं दद्यात् । तच्च स्रुतं सत् घृतान्वितं पुनः पचेत् । घने चास्मिन् शीते च क्षौद्रं क्षिपेत् । एतत् सर्वोत्थे तिमिरे हितमञ्जनम् ।

**अस्थीनि मज्जपूर्णानि सत्त्वानां रात्रिचारिणाम् ।**
**स्रोतोजाञ्जनयुक्तानि[3] वहत्यम्भसि वासयेत् ॥ ७९ ॥**
**मासं विंशतिरात्रं वा ततश्चोद्धृत्य शोषयेत् ।**
**समेषशृङ्गीपुष्पाणि सयष्ट्याह्वानि तान्यनु[4] ॥ ८० ॥**
**चूर्णितान्यञ्जनं श्रेष्ठं तिमिरे सान्निपातिके ।**

स०-रात्रिचारिणां प्राणिनामस्थीनि मज्जपूर्णानि स्रोतोञ्जनयुक्तानि जले वहति मासं विंशतिर्वा निशा वासयेत् । ततःपश्चात्, उद्धृत्य शोषयेत् । तानि च मेषशृङ्गीपुष्पैर्युतानि मधूकेन च, चूर्णितानि सान्निपातिके तिमिरेऽञ्जनं श्रेष्ठम् ।

**काचेऽप्येषा क्रिया मुक्त्वा सिरां, यन्त्रनिर्पीडिताः ८१**
**आन्ध्याय स्युर्मला दद्यात्स्राव्ये त्वस्रे जलौकसः ।**

स०-काचेऽप्येषा-पूर्वोदिता क्रिया, सिरां हित्वा । सिराऽपि कस्मान्नानुमीयते ? इत्याह—यन्त्रेत्यादि । सिरोपयोगियन्त्रनिपीडिता मला आन्ध्याय यतः स्युः । स्राव्ये तु रक्ते जलौकसो दद्यात् ।

**गुडः फेनोऽञ्जनं कृष्णा मरिचं कुङ्कुमाद्रजः ॥ ८२ ॥**
**रसक्रियेयं सक्षौद्रा काचयापनमञ्जनम् ।**

स०-गुडादयो रसक्रिया क्षौद्रान्वितेयं काचयापनमञ्जनम् ।

१ 'नावन' इ ई उ । २ 'तच्छृतं' इ उ स मू । ३ 'तोञ्जनेन यु' उ । ४ 'तानि तु' उ । ५ "अनु-पश्चात् ।" इति चन्द्र । ६ 'जने श्रेष्ठानि ।' ट ण त । ७ 'सिरा यन्त्र' 'स्युस्तो द' इ.उ. । ८ 'पीडनात्' ई स द्ध. ।

**नकुलान्ध्ये त्रिदोषोत्थे तैमिर्यविहितो[1] विधिः ॥ ८३ ॥**

स०-नकुलान्ध्ये त्रिदोषजे तिमिरेविहितो विधिः कार्यः ।

**रसक्रिया घृतक्षौद्रगोमयस्वरसद्रुतैः ।**
**तार्क्ष्यगैरिकतालीसैर्निशान्ध्ये[3] हितमञ्जनम् ॥ ८४ ॥**

स०-घृतादिद्रुतै[4] रसाञ्जनादिभिर्निशान्ध्ये रसक्रिया हितमञ्जनम् ।

**दध्ना विघृष्टं मरिचं रात्र्यन्धेऽञ्जनमुत्तमम्[5] ।**

स०-दध्ना विघृष्टं मरिचं रात्र्यन्धे श्रेष्ठमञ्जनम् ।

**करञ्जिकोत्पलस्वर्णगैरिकाम्भोजकेसरैः[6] ॥ ८५ ॥**
**पिष्टैर्गोमयतोयेन वर्तिर्दौषान्ध्यनाशिनी[7] ।**

स०-करञ्जिकादिभिर्गोमयरसेन पिष्टैर्वर्तिर्नक्तान्ध्यहृत् ।

**अजामूत्रेण वा कौन्तीकृष्णास्रोतोजसैन्धवैः ॥ ८६ ॥**

स०-अजामूत्रेण पिष्टैः कौन्त्यादिभिर्वा वर्तिर्निशान्ध्यघ्नी ।

**कालानुसारीत्रिकटुत्रिफलालमनःशिलाः[8] ।**
**सफेनाश्छागदुग्धेन रात्र्यन्धे वर्तयो हिताः ॥ ८७ ॥**

स०-कालानुसार्यादयोऽजाक्षीरेण पिष्टा वर्तयो निशान्धे हिताः ।

**सन्निवेश्य यकृन्मध्ये पिप्पलीरदहन्पचेत् ।**
**ताः शुष्का मधुना घृष्टा निशान्ध्ये[10] श्रेष्ठमञ्जनम् ॥ ८८ ॥**

स०-पिप्पलीर्यकृन्मध्ये सन्निवेश्यादहन् पचेत् । ततः पिप्पल्यः शुष्का मधुघृष्टा रात्र्यन्धे परमञ्जनम् ।

**खादेच्च प्लीहयकृती माहिषे तैलसर्पिषा ।**

स०-माहिषे च प्लीहयकृती तैलसर्पिषा सह भक्षयेत् ।

**घृते सिद्धानि जीवन्त्याः पल्लवानि च भक्षयेत् ॥ ८९ ॥**
**तथाऽतिमुक्तकैरण्डशेफाल्यभीरुजानि[11][12] च ।**
**भृष्टं[13] घृतं कुम्भयोनेः पत्रैः पाने[14] च पूजितम् ॥ ९० ॥**

स०-जीवन्त्याश्च पल्लवानि सर्पिषा पक्वानि भुञ्जीत । तथा,

१ 'विधिवत् क्रिया ।' इ । २ 'मिरे विहि' ण त । ३ 'र्निशान्ध्ये' इ ई उ । ४ 'दिभिद्रुतै' ट । ५ 'रात्र्यन्धाञ्जन' इ ई उ त चन्द्र स द्ध । ६ 'कारञ्जि' ई स स । ७ 'दौषान्ध्यना' इ ई उ त चन्द्र । ८ "कालानुसारी–कृष्णसारिवा जीवन्त्याः पल्लवानि च प्रत्येकं घृतसिद्धानि निशान्धे भक्षयेत् । अभीरो–शतावर्याः । कुम्भयोने–अगस्त्यस्य ।।" इति चन्द्र । "कुम्भयोने–छत्राभिधानाया द्रोणपुष्प्याः, पत्रैर्भृष्ट–निस्तलितम् ।" इतीन्दु । ९ 'रात्र्यान्ध्ये' इति क्वचित् । १० 'निशान्ध्ये' ई । 'नक्तान्ध्ये' उ । ११ 'ण्डसोहळाभी' स स । "सोहळा–दधिशमी ज्ञेया ज्ञेया सैवापराजिता ।" इतीन्दु । १२ शेफाली–निर्गुण्डी । १३ 'सिद्धं घृ' ई. । १४ 'पानेऽति पू' इ उ. ।

अतिमुक्तकादीनि पत्राणि घृतसिद्धानि खादेत् । अगस्तिपत्रे सपि सिद्ध पाने च पूजितम् ।

**धूमराख्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा ।**
**स्निग्धं विरेचयेच्छीतैः शीतैर्दिह्याच्च सर्वतः ॥ ९१ ॥**

**स०**–अम्लपित्तोष्णैर्विदाहो–विदग्धत्व, अम्लपित्तोष्णविदाह । धूमराख्यश्चाम्लपित्तोष्णविदाहश्च तस्मिन् । तत्र धूमराख्य –"शोकज्वरादि" ( अ १२।२९ ) इत्यादिलक्षण । "भृशमम्लाशनात्" ( अ १२।२८ ) इत्यादिनाऽम्लविदग्धा । "भवेत्पित्तविदग्धाख्या" ( अ १२।१६ ) इति पित्तविदग्धा । "उष्णतप्तस्य" ( अ १२।२६ ) इत्यादिना उष्णविदग्धेति । तस्मिन् धूमराख्याम्लपित्तोष्णविदाहेऽतिपुराणसर्पिषाऽभ्यक्त स्निग्ध शीतैर्विशोधयेत् । शीतैश्च सर्वतो लेपयेत् ।

**गोशकृद्रसदुग्धाज्यैर्विपक्वं शस्यतेऽञ्जनम् ।**
**स्वर्णगैरिकतालीसचूर्णावापा रसक्रिया ॥ ९२ ॥**

**स०**–गोशकृदादिभिर्विपक्वमञ्जन शस्यते । स्वर्णगैरिकादीना चूर्णैरावापो यस्या सा, एवविधा रसक्रिया वा शस्यते ।

**मेदाशाबरकानन्तामञ्जिष्ठादार्वियष्टिभिः ।**
**क्षीराष्टांशं घृतं पक्वं सतैलं नावनं हितम् ॥ ९३ ॥**

**स०**–मेदादिभि क्षीराष्टांश घृत तैलसहित पक्व नावन हितम् ।

**तर्पणं क्षीरसर्पिः स्यादशाम्यति सिराव्यधः ।**

**स०**–क्षीरोद्भव सर्पिस्तर्पण हितम् । एवमशाम्यति सिराव्यध कार्य ।

**चिन्ताभिघातभीशोक[1]रौक्ष्यात् सोत्कटकासनात् ९४**
**विरेकनस्यवमनपुटपाकादिवि[2]भ्रमात् ।**
**विदग्धाहारवमनात् क्षुत्तृष्णादिविधारणात् ॥ ९५ ॥**
**अक्षि[3]रोगावसानाच्च पश्येत्तिमि[4]ररोगिवत् ।**

**स०**–चिन्तादिभिरतिमिरवानपि तिमिररोगीव पश्येत् ।

**यथास्वं तत्र युञ्जीत दोषादीन् वीक्ष्य भेषजम् ॥९६॥**

**स०**–[तत्र–] तस्मिश्च तिमिररोगिसदृशदर्शने, यथायोग दोषदूष्यदेशादीन् वीक्ष्यौषध प्रयुञ्जीत ।

**सूर्योपरागानलविद्युदादि-**
**विलोकनेनोपहतेक्षणस्य ।**
**सन्तर्पणं स्निग्धहिमादि कार्यं**
**तथाञ्जनं हेम घृतेन घृष्टम् ॥ ९७ ॥**

**स०**–सूर्योपरागादिविलोकनेनोपहतदर्शनस्य स्नि ग्धहिमादि सन्तर्पण कार्यम् । आदिशब्देनातिसूक्ष्मातिभासुरादिपरिग्रह । सुवर्ण च घृतेन घृष्टमञ्जन हितम् । उपजातिवृत्तम् ।

**चक्षूरक्षायां सर्वकालं मनुष्यै-**
**र्यत्नः कर्तव्यो जीविते यावदिच्छा ।**
**व्यर्थो लोकोऽयं तुल्यरात्रिदिवाना**
**पुंसामन्धानां विद्यमानेऽपि वित्ते ॥ ९८ ॥**

**स०**–नेत्ररक्षाया सदा यत्नो विधेयो यावज्जीविताभिलाषित्वम् । यस्मादन्धाना तुल्यरात्रिदिवाना पुसा विद्यमानेऽपि धने लोक एव निरर्थक स्यात् । रात्रिदिवशब्दोऽत्राचतुरादिसूत्रे निपातित । वैश्वदेवीवृत्तम् ।

**त्रिफला रुधिरस्रुतिर्विशुद्धि-**
**र्मनसो निर्वृ[1]तिरञ्जनं सनस्यम्[2] ।**
**शकुनाशनता सपादपूजा[3]**
**घृतपानं च सदैव नेत्ररक्षा ॥ ९९ ॥**

**स०**–त्रिफलादिक सदैव–सर्वकाल, नेत्ररक्षा स्यात् ।

**अहितादशनात्सदा निवृत्ति-**
**र्भृशभास्वच्चलसूक्ष्मवीक्षणाच्च ।**
**मुनिना निमिनोपदिष्टमेतत्**
**परमं रक्षणमीक्षणस्य पुंसाम् ॥ १०० ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने तिमिरप्रतिषेधो नाम त्रयोदशोऽध्यायः ॥१३॥**

**स०**–अहितादाहारात् सतत निवृत्ति, अतिभासुराद्यालोकनाच्चोपरति, इत्येतन्निमिनाम्ना मुनिना परम नृणा नयनस्य रक्षणमुदितम् । औपच्छन्दसिक(के) वृत्तम्(त्ते) ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने तिमिरप्रतिषेधो नाम त्रयोदशोऽध्याय समाप्त ॥१३॥

---

१ **'करूक्षाम्लकटुकाशनात्'** इ ई उ । **'करूक्षादुत्कट'** स मू । **'रौक्ष्यामोत्कुटिका'** स स । २ "विभ्रमात् –मिथ्यायोगात् ॥ सूर्योपरागो–ग्रहयोग । उपहतशब्देन स्वल्प उपघातो लक्ष्यते, औपसर्गिकस्य लिङ्गनाशस्यासाध्यत्वात् ।" इतीन्दु । ' अक्षिरोगावसानात्–अक्षिरोगपर्यन्तात् ।" इति चन्द्र. । ३ **'रोगवत्'** स मू । ४ **'योज्य'** स.द्व ।

१ "निर्वृति.–प्रीति । शकुनाशनता–पक्षिमांसभोजित्वम् । पादपूजा–पादयोरभ्यङ्गोद्वर्तनप्रक्षालनपादत्राणादिधारणम् ॥ निवृत्ति –उपरम ।" इति चन्द्र. । "सदैवेति घृतपानेनाभिसम्बध्यते ।" इतीन्दु. । २ **'च नस्यम्'** चन्द्र स.मू. । ३ **'शयनासनता'** इ. । **'शयनासनतोषपाद'** उ. ।


चतुर्दशोऽध्यायः ।

लिङ्गनाशस्तिमिरप्रतिषेधात्पृथगुच्यते, बहुवक्तव्यत्वात् ।

**अथातो लिङ्गनाशप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**विध्येत्सुजातं निःप्रेक्ष्यं लिङ्गनाशं कफोद्भवम् ।**
**आवर्तक्यादिभिः षड्भिर्विवर्जितमुपद्रवैः ॥ १ ॥**

स०—सुजात—सुष्ठु घनीभूतं, लिङ्गनाशं निःप्रेक्ष्य कफोद्भवं विध्येत् । शेषास्तु लिङ्गनाशा असाध्या इति न तान् विध्येत् । तथाऽऽवर्तक्यादिभिर्वक्ष्यमाणैः षड्भिरुपद्रवैर्विवर्जितम् ।

सुजातं कस्माद्विध्येत्? इत्याह—

**सोऽसञ्जातो हि विषमो दधिमस्तुनिभस्तनुः ।**
**शलाकयाऽवकृष्टोऽपि पुनरूर्ध्वं प्रपद्यते ॥ २ ॥**
**करोति वेदनां तीव्रां दृष्टिं च स्थगयेत्पुनः ।**
**श्लेष्मलैः पूर्यते चाशु सोऽन्यैः सोपद्रवश्चिरात् ॥३॥**

स०—स लिङ्गनाशो यस्मादसञ्जातो विषमो—न समसंस्थानः, तथा दधिमस्तुसदृशस्तथा तनुः—न घनः, शलाकयाऽवकृष्टोऽपि सन् पुनरूर्ध्वं प्रवर्तते । तीव्रां रुजं करोति । पुनरपि—कृतव्यधोऽपि सन् भूयोऽपि, दृष्टिमाच्छादयेत् । श्लेष्मलैराहारैराशु पूर्यते । सोऽपरैश्च—अश्लेष्मलैराहारैः, सोपद्रवै(व)श्चिरात्पूर्यते ।

**श्लैष्मिको लिङ्गनाशो हि सितत्वाच्छ्लेष्मणः सितः ।**
**तस्यान्यदोषाभिभवाद्भवत्यानीलता गदः ॥ ४ ॥**

स०—यस्माच्छ्लैष्मिको लिङ्गनाशः श्लेष्मणश्च शुक्लत्वाच्छुक्लः । तस्य—लिङ्गनाशस्य, अन्यदोषेण—वातादिना, अभिभवादानीलता भवति गदः ।

**तत्रावर्तचला दृष्टिरावर्तक्यरुणाऽसिता ।**

स०—तत्र—तेष्वावर्तक्यादिषु मध्ये, आवर्तकी दृष्टिरावर्तवच्चला, तथाऽरुणाऽसिता च स्यात् ।

**शर्कराऽर्कपयोलेशनिचितेव घनानि च ॥ ५ ॥**

स०—शर्कराऽर्कक्षीरलवनिचितेव तथाऽतिघना स्यात् ।

**राजीमती दृङ्निचिता शालिशूकाभराजिभिः ।**

स०—राजीमती दृष्टिः शालिशूकसदृशीभी राजीभिर्निचिता स्यात् ।

**विषमच्छिन्नदग्धाभा सरुक् छिन्नांशुका स्मृता ॥६॥**

स०—विषमा छिन्नदग्धाभा तथा सरुजा छिन्नांशुका दृष्टिः स्मृता ।

**दृष्टिः कांस्यसमच्छाया चन्द्रकी चन्द्रकाकृतिः ।**

स०—चन्द्रकी दृष्टिः कांस्यतुल्यच्छाया चन्द्रकाकारा स्यात् ।

**छत्राभा नैकवर्णा च छत्रकी नाम नीलिका ॥ ७ ॥**

स०—छत्राभाऽनेकवर्णा च छत्रकी नाम नीलिका स्यात् ।

**न विध्येदसिराहार्णां न तृट्पीनसकासिनाम् ।**
**नाजीर्णिभीरुवमितशिरःकर्णाक्षिशूलिनाम् ॥ ८ ॥**

स०—असिराहादीनां नराणां लिङ्गनाशं न विध्येत् ।

**अथ साधारणे काले शुद्धसम्भोजितात्मनः ।**
**देशे प्रकाशे पूर्वाह्णे भिषग्जानूच्चपीठगः ॥ ९ ॥**
**यन्त्रितस्योपविष्टस्य स्विन्नाक्षस्य मुखानिलैः ।**
**अङ्गुष्ठमृदिते नेत्रे दृष्टौ दृष्टोत्प्लुतं मलम् ॥ १० ॥**
**स्वां नासां प्रेक्षमाणस्य निष्कम्पं मूर्ध्नि धारिते ।**
**कृष्णादर्धाङ्गुलं मुक्त्वा तथाऽर्धार्धमपाङ्गतः ॥ ११ ॥**
**तर्जनीमध्यमाङ्गुष्ठैः शलाकां निश्चलं धृताम् ।**
**दैवच्छिद्रं नयेत्पार्श्वादूर्ध्वमामन्थयन्निव ॥ १२ ॥**
**सव्यं दक्षिणहस्तेन नेत्रं सव्येन चेतरत् ।**
**विध्येत्**

स०—अथेति मङ्गलार्थं । कृतमङ्गलस्य शुद्धस्य तथा सम्भोजितात्मन आतुरस्य साधारणे काले प्रकाशे देशे पूर्वाह्णे जानुतुल्यासनस्थितो वैद्य आतुरस्य यन्त्रितस्योपविष्टस्य, तथा स्विन्नेऽक्षिणी यस्य तस्य स्विन्नाक्षस्य । कैः? मुखवायुभिः । तथाऽङ्गुष्ठेन मलिते नयने सति दृष्टौ मलमुत्प्लुत—उद्गतं दृष्ट्वा, स्वां नासिकां वीक्षमाणस्य मूर्ध्नि निष्कम्पं धारिते सति कृष्णमण्डलादर्धाङ्गुलं हित्वाऽपाङ्गाच्चाङ्गुलचतुर्भागं मुक्त्वा तर्जनीमध्यमाङ्गुष्ठैः शलाका निश्चलं यथा भवति तथा धृता दैवच्छिद्रस्य पार्श्वं नयेत् ऊर्ध्वमालोडयन्निव । सव्यं नेत्रं दक्षिणकरेण, वामेन च हस्तेन दक्षिणमक्षि, विध्येत् ।

---

१ अथ लिङ्गनाशप्रतिषेधः सुश्रुते उ० १७ अध्याये, अष्टाङ्गसङ्ग्रहे उ० १७ अध्याये चास्ति वर्णितः । चरके तु न वर्णितः । २ "निःप्रेक्ष्य—हतदर्शनम् । सुजात—सुष्ठु घनीभूतं श्लेष्मपिण्डवद्दृश्यमानम् । आवर्तक्यादिभिः षड्भिः—आवर्तकीशर्करराजीमतीछिन्नांशुकाचन्द्रकीछत्रकीभिः ॥ असञ्जातः—न पाकं प्राप्तः । विषमः—निम्नोन्नतः । अवकृष्टः—व्याहतः । प्रपद्यते—याति । स च श्लेष्मलैरौषधान्नैः शीघ्रमापूर्यते । अन्यैः—वातपित्तलैः, चिरात् पूर्यते । सोपद्रवोऽपि चिरादेव पूर्यते ॥ अन्येन दोषेण—पित्तेन वातेन, अभिभवात्—आक्रमणात् ॥ आवर्तचला—आवर्तवदनवस्थिता । अरुणा—ईषल्लोहिता । सिता—श्वेता ।" इति चन्द्रः । "आनील—ईषन्नीलम् ।" इति डल्हणः । ३ 'प्रवर्तते' इ. । ४ 'द्रवैश्चि' उ । ५ 'नीलिका गदः' इ.उ.,ट.। ६ 'गदे' इति क्वचित् । ७ 'णा सिता' चन्द्र.।

१ "कांस्याभ—आपाण्डुपीतम् ।" इति डल्हणः । "नीलिका—नीलिवर्णा ॥ यन्त्रितस्य—पृष्ठतः सुखोपविष्टेन परिचारकेण हस्ताभ्यां निश्चलमवलम्बितशिरसः । उपविष्टस्य—प्रत्यादित्यमास्तरणलब्धमार्दवाया भूमौ प्रसारितचरणयुग्मस्य । मल—दोषम् । सव्य—वामम् । इतरत्—दक्षिणम् ।" इति चन्द्रः । २ 'न दृक्पी' त. । 'न च पीन' स मू । ३ 'स्वनासां' इति क्वचित् । ४ तदर्धा' इ उ. । ५ 'सने स्वि' ट. ।

सुविद्धे शब्दः स्यादरुक् चाम्बुलवस्रुतिः ॥१३॥
सान्त्वयन्नातुरं चानु नेत्रं स्तन्येन सेचयेत् ।
शलाकायास्ततोऽग्रेण निर्लिखेन्नेत्रमण्डलम् ॥ १४ ॥
अबाधमानः शनकैर्नासां प्रति नुदंस्ततः ।
उच्छिङ्घनाच्चापहरेद्दृष्टिमण्डलगं कफम् ॥ १५ ॥
स्थिरे दोषे चले वाऽपि स्वेदयेदक्षि बाह्यतः ।
अथ दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥ १६ ॥
घृताप्लुतं पिचुं दत्त्वा बद्धाक्षं शाययेत्ततः ।
विद्धादन्येन पार्श्वेन तमुत्तानं द्वयोर्व्यधे ॥ १७ ॥
निवाते शयनेऽभ्यक्तशिरःपादं हिते रतम् ।

स०–सुविद्धे सति शब्द स्यात् । तथाऽरुग् जललवस्य च स्रुति स्यात् । सान्त्वयन् रोगिणमनु–पश्चात्, नेत्र स्तन्येन सेचयेत् । तत –अनन्तर, शलाकाया अग्रेण दृष्टिमण्डल निर्लिखेत् । कथम्? अपीडयन् । तथा शनैर्नासा प्रति कफ नुदन् । तत उच्छिङ्घनाच्च दृष्टिमण्डलग कफ हरेत् । दोषे चले स्थिरे वा सत्यक्षिबाह्यतोऽपि स्वेदयेत् । अनन्तर रूपेषु–वस्तुषु, दृष्टेषु सत्सु शनै शलाकामाकर्षेत् । ततो घृताप्लुत पिचु दत्त्वा पट्टिकया बद्धाक्ष विद्धादन्येन पार्श्वेन शाययेत् । द्वयोरक्ष्णोर्व्यधे सति तमुत्तान निवाते शयनेऽभ्यक्तशिर पाद हिते रत शाययेत् ।

क्षवथुं कासमुद्गारं ष्ठीवनं पानमम्भसः ॥ १८ ॥
अधोमुखस्थितिं स्नानं दन्तधावनभक्षणम् ।
सप्ताहं नाचरेत्स्नेहपीतवच्चात्र यन्त्रणा ॥ १९ ॥

स०–क्षवथ्वादीन् सप्ताह नाचरेत् । अत्र च स्नेहपीत इव यन्त्रणा ।

शक्तितो लङ्घयेत्सेको रुजि कोष्णेन सर्पिषा ।
सव्योषामलकं वाट्यमश्नीयात्सघृतं द्रवम् ॥ २० ॥
विलेपीं वा त्र्यहाच्चास्य क्वाथैर्मुक्त्वाऽक्षि सेचयेत् ।
वातघ्नैः सप्तमे त्वह्नि सर्वथैवाक्षि मोचयेत् ॥ २१ ॥

स०–शक्त्यनुसारेण च त लङ्घयेत् । पीडाया सत्या कोष्णेन घृतेन सेको हित । तथा व्योषामलकयुक्त वाट्य द्रव सघृत त्र्यह भुञ्जीत विलेपिका वा । त्र्यहादनन्तर नयन मुक्त्वा क्वाथैर्वातघ्नै सेचयेत् । सप्तमे तु दिने सर्वथैवाक्षि मोचयेत् ।

यन्त्रणामनुरुध्येत दृष्टेराःस्थैर्यलाभतः ।
रूपाणि सूक्ष्मदीप्तानि सहसा नावलोकयेत् ॥ २२ ॥

स०–दृष्टेश्च यन्त्रणा कुर्यात् । अतिसूक्ष्मभासुरादीन् नेक्षेतेत्यर्थ । स्थैर्यलाभो यावदक्षिण स्यात् । स्थिरीभूतायामपि दृशि सूक्ष्माणि रूपाणि भासुराणि च सहसा नावलोकयेत् ।

शोफरागरुजादीनामधिमन्थस्य चोद्भवः ।
अहितैर्वेधदोषाच्च यथास्वं तानुपाचरेत् ॥ २३ ॥

स०–अहितैराचरितैस्तथा वेधदोषाच्च शोफादीनामधिमन्थस्य चोद्भूति । ताश्च यथायोगमुपक्रमेत् ।

कल्किताः सघृता दूर्वायवगैरिकसारिवाः ।
मुखालेपे प्रयोक्तव्या रुजारागोपशान्तये ॥ २४ ॥

स०–दूर्वादय कल्किता सघृता मुखालेपे प्रयोक्तव्या रुग्रागशमाय ।

ससर्षपास्तिलास्तद्वन्मातुलुङ्गरसाप्लुताः ।

स०–तिला सर्षपयुक्ता बीजपूररसाप्लुता पूर्वगुणा ।

पयस्यासारिवापत्रमञ्जिष्ठामधुयष्टिभिः ॥ २५ ॥
अजाक्षीरयुतैर्लेपः सुखोष्णः शर्मकृत्परम् ।

स०–पयस्यादिभिश्छागक्षीरान्वितै सुखोष्णो लेप पर सुखकृत् ।

रोध्रसैन्धवमृद्वीकामधुकैश्छागलं पयः ॥ २६ ॥
शृतमाश्च्योतनं योज्यं रुजारागविनाशनम् ।

स०–रोध्रादिभिरजाक्षीर शृतमाश्च्योतने योज्य रुजादिहृत् ।

मधुकोत्पलकुष्ठैर्वा द्राक्षालाक्षासितान्वितैः ॥ २७ ॥

स०–मधुकादिभिर्वा शृतमजाक्षीरमाश्च्योतन हितम् ।

वातघ्नसिद्धे पयसि शृतं सर्पिश्चतुर्गुणे ।
पद्मकादिप्रतीवापं सर्वकर्मसु शस्यते ॥ २८ ॥

स०–वातघ्नशृते क्षीरे चतुर्गुणे सर्पि पद्मकादिप्रतीवापं सर्वकर्मसु शस्यते ।

सिरां तथाऽनुपशमे स्निग्धस्विन्नस्य मोक्षयेत् ।
मन्थोक्तां च क्रियां कुर्याद्वेधे रूढेऽञ्जनं मृदु ॥ २९ ॥

स०–एवमप्यनुपशान्तौ स्निग्धस्विन्नस्य सिरा मोक्षयेत् । मन्थोक्त चोपक्रम युञ्जीत । वेधे रूढे सति मृद्वञ्जन हितम् ।

आढकीमूलमरिचहरितालरसाञ्जनैः ।
विद्धेऽक्षिण सगुडा वर्तिर्योज्या दिव्याम्बुपेषिता ॥३०॥

स०–आढक्यादिभि सगुडा वर्तिर्दिव्याम्बुपिष्टा विद्धे नयने योज्या ।

१ "सुविद्धे–सम्यग्विद्धे, शब्द स्यात्–शब्दवच्चेक्षण भवेत् । सान्त्वयन्–समाश्वासयन् । शनकै –शनैर्मन्द मन्द कृत्वा । नुदन्–प्रेरयन् । हिते–पथ्याहारविहारे ॥ यन्त्रणा स्नेहपीतवत्–'उष्णोदकोपचारी स्यात्' इत्यादिका ॥ वाट्य–यवौदनम् । द्रव–द्रवप्रायम् ।" इति चन्द्र । २ 'स्नेहदृष्टिम' इ ई.उ चन्द्र । ३ 'उच्छिङ्घना' उ स स. । 'उच्छिन्दयेत्' स मू. । ४ 'वाऽपि' उ. । ५ 'व्यधादन्येन' इ.उ. । ६ 'शिरोगात्र' उ. ।

१ 'वेध्यदो' इ । २ 'नुपक्रमेत्' ण त । ३ "पयस्या–अर्कपुष्पी, क्षीरकाकोलीत्यन्ये । पत्र–पत्रकम् ॥ सिरा–अत्र औपनासिका आपाङ्ग्या लालाट्या वा ।" इति डल्हण । "तथा–पूर्वोक्तेन, अनुपशमे सति । मृदु–अतीक्ष्णम् ।" इति चन्द्र । ४ 'क्षीरान्वितै' इ उ स मु । 'क्षीरद्रुतै' स द्व । ५ 'शैला द्राक्षा' ई.उ । ६ 'क्षारसान्वितै.' इ उ. । ७ 'यांव्यधे' उ. ।

जातीशिरीषधवमेषविषाणिपुष्प-
वैडूर्यमौक्तिकफलं पयसा सुपिष्टम् ।
आजेन ताम्रममुना प्रतनु प्रदिग्धं
सप्ताहतः पुनरिदं पयसैव पिष्टम् ॥ ३१ ॥
पिण्डाञ्जनं हितमनातपशुष्कमक्ष्णि
विद्धे प्रसादजननं बलकृच्च दृष्टेः ।

स०-जात्यादिकमजाक्षीरेण श्लक्ष्णपिष्टमेतेन च ताम्रं प्रतनु प्रदिग्धं सप्ताहात्पुनरजाक्षीरेण चैतत् पिष्टं पिण्डाञ्जनं छायाशुष्कं विद्धे नयने प्रसादनं हितम् । दृष्टेश्च बलकृत् ।

स्रोतोजविद्रुमशिलाम्बुधिफेनतीक्ष्णै-
रस्यैव तुल्यमुदितं गुणकल्पनाभिः ॥ ३२ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने लिङ्गनाशप्रतिषेधो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

स०-स्रोतोजादिभिरजाक्षीरपिष्टैः पिण्डाञ्जनं पूर्ववदिति । वसन्ततिलक(के) वृत्तम्(त्ते) ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने लिङ्गनाशप्रतिषेधो नाम चतुर्दशोऽध्यायः समाप्तः ॥ १४ ॥



## पञ्चदशोऽध्यायः ।

अधुना क्रमप्राप्तं सर्वाक्षिरोगविज्ञानं वक्ति—

अथातः सर्वाक्षिरोगविज्ञानीयं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
( गद्यसूत्रे ॥ २ ॥ )

वातेन नेत्रेऽभिष्यण्णे नासानाहोऽल्पशोफता ।
शङ्खाक्षिभ्रूललाटस्य तोदस्फुरणभेदनम् ॥ १ ॥
शुष्काल्पा दूषिका शीतमच्छं चाश्रु चला रुजः ।
निमेषोन्मेषणं कृच्छ्राज्जन्तूनामिव सर्पणम् ॥ २ ॥
अक्ष्याध्मातमिवाभाति सूक्ष्मैः शल्यैरिवाचितम् ।
स्निग्धोष्णैश्चोपशमनं सोऽभिष्यन्दः

स०-नेत्रे वातेनाभिष्यण्णे नासानाह इत्यादिना लिङ्गनिर्देशः । स्निग्धोष्णैश्चोपशमन-सुखम्, इत्युपशयनिर्देशः ।

उपेक्षितः ॥ ३ ॥
अधिमन्थो भवेत्तत्र कर्णयोर्नदनं भ्रमः ।
अरण्येव च मथ्यन्ते ललाटाक्षिभ्रुवादयः ॥ ४ ॥

स०-वातभिष्यन्दो मोहादुपेक्षितोऽधिमन्थो भवेत् । तत्र-अधिमन्थे, कर्णनादादिकं स्यात् । अरणिशब्दः पुंस्त्रीलिङ्गः ।

हताधिमन्थः सोऽपि स्यात् प्रमादात्तेन वेदनाः ।
अनेकरूपा जायन्ते व्रणो दृष्टौ च दृष्टिहा ॥ ५ ॥

स०-अधिमन्थोऽपि प्रमादादुपेक्षितो हताधिमन्थो भवेत् । तेन-हताधिमन्थेन, अनेकरूपा रुजा जायन्ते । व्रणश्च दृष्टौ दृष्टिहा स्यात् ।

मन्याक्षिशङ्खतो वायुरन्यतो वा प्रवर्तयन् ।
व्यथां तीव्रामपैच्छिल्यरागशोफं विलोचनम् ॥ ६ ॥
सङ्कोचयति पर्यश्रु सोऽन्यतोवातसंज्ञितः ।

स०-मन्यादिभ्यो वायुरन्यतो वा तीव्रां व्यथां प्रवर्तयेत् (यन्) नयनं सङ्कोचयति । किम्भूतम् ? पैच्छिल्यरागशोफरहितम् । तथा पर्यश्रु । स अन्यतोवातसंज्ञितः ।

तद्वज्जिह्मं भवेन्नेत्रमूनं वा वातपर्यये ॥ ७ ॥

स०-तद्वत्-अन्यतोवात इव, जिह्मं नेत्रमूनं-हीनं वा, वातपर्यये स्यात् ।

१ 'घाणपु' इं.चन्द्र सं द्र । २ "वैडूर्यं-मणिविशेषः । अम्बुधिफेनः-समुद्रफेनः । तीक्ष्णं-मरिचम् । अस्यैव-अनन्तरोक्तस्य योगस्य, गुणैः कल्पनया च सर्वं तुल्यम् ।" इति चन्द्र । ३ 'लार्णवफेन' इ उ स मू । 'लाप्पसिफेन' स स । ४ 'सर्वगताक्षि' सं.मू । 'सर्वगाक्षि' स स । 'सर्वगतरोग' स इ । ५ अयं सर्वाक्षिरोगविज्ञानीयश्चरके चि० २६ अध्याये, सुश्रुते उ० ६ अध्याये, अष्टाङ्गसङ्ग्रहे उं० १८ अध्याये चास्ति वर्णितः । ६ 'ज्ञानं व्या' इ.ई.उ.ण.त.चन्द्र.स.मू ।

१ "अभिष्यण्णे-सबाष्पे कृते सति । दूषिका-नेत्रमलरूपा । कृच्छ्रात्-दुःखेन । जन्तूनां-पिपीलिकादीनां, सर्पणमिव मन्यते । आध्मातं-आपूरितमिव । आचितं-व्याप्तम् । स्निग्धोष्णयोरिच्छा, ताभ्यामेवोपशमनं स्यात् ॥ अरण्येव-मन्थनकाष्ठेनेव, मथ्यन्ते-विलोड्यन्ते ॥ जिह्मं-कुटिलम् । ऊनं-स्वकीयात् प्रमाणादल्पमात्रम् ।" इति चन्द्र । "अभिष्यण्णे-आर्द्रीभूते । उपशमनं-स्वास्थ्यलाभः ।" इतीन्दु । २ 'भिष्यन्ने' इ.स.मू.,ट । 'भिष्यन्दे' ई उ.,ड. । ३ 'लाटास्यतोद' ई स द्र. । ४ 'मच्छमश्रु' ण त. । 'मल्पं चाश्रु' स सं. । ५ 'स्निग्धोष्णेच्छोप' चन्द्र । ६ 'वेदना' ट । ७ 'र्तयेत्' ण त.स.स । ८ 'द्वन्नेत्रं भवेजिह्मम्' ण.त.चन्द्र. । ९ 'न्नेत्रं शूनं वा' इ.उ.स.मू.,ट. ।

**दाहो धूमायनं शोफः श्यावता वर्त्मनो बहिः।**
**अन्तःक्लेदोऽश्रु पीतोष्ण रागः पीताभदर्शनम् ॥ ८॥**
**क्षारोक्षितक्षताक्षित्वं पित्ताभिष्यन्दलक्षणम्।**

स०—दाह इत्यादि पित्ताभिष्यन्दलक्षणम्।

**ज्वलदङ्गारकीर्णाभं यकृत्पिण्डसमप्रभम् ॥ ९॥**
**अधिमन्थे भवेन्नेत्रं**

स०—अधिमन्थे ज्वलदङ्गारकीर्णाभं यकृत्पिण्डतुल्याभं नेत्रं भवेत्।

**स्यन्दे तु कफसम्भवे।**
**जाड्यं शोफो महान् कण्डूर्निद्राऽन्नानभिनन्दनम् १०**
**सान्द्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाश्रुता।**

स०—कफजे तु स्यन्दे जाड्यादिकं स्यात्।

**अधिमन्थे नतं कृष्णमुन्नतं शुक्लमण्डलम् ॥ ११॥**
**प्रसेको नासिकाध्मानं पांशुपूर्णमिवेक्षणम्।**

स०—अधिमन्थे कृष्णमण्डलं नतं शुक्लमण्डलं चोन्नतं प्रसेकादि च स्यात्।

**रक्ताश्रुराजीदूषीकारक्तमण्डलदर्शनम् ॥ १२॥**
**रक्तस्यन्देन नयनं सपित्तस्यन्दलक्षणम्।**

स०—रक्तस्यन्देन रक्ताश्रुराज्यादिकं नयनं स्यात्। पित्तस्यन्दलक्षणं च।

**मन्थेऽक्षि ताम्रपर्यन्तमुत्पाटनसमानरुक् ॥ १३॥**
**रागेण बन्धूकनिभं ताम्यति स्पर्शनाक्षमम्।**
**असृङ्निमग्नारिष्टाभं कृष्णमग्न्याभदर्शनम् ॥ १४॥**

स०—मन्थे सति ताम्रपर्यन्तं तथोत्पाटनेन समाना रुग् यस्य तदेवंभूतं नयनं स्यात्। बन्धूकपुष्पतुल्यरागम्। तथा ताम्यति स्पर्शनाक्षमं लोहितनिमग्ननिम्बाभं कृष्णं पावकसदृशं च दर्शनं स्यात्।

**अधिमन्था यथास्वं च सर्वे स्यन्दाधिकव्यथाः।**
**शङ्खदन्तकपोलेषु कपाले चातिरुक्कराः ॥ १५॥**

स०—अधिमन्थाश्च यथास्वं सर्वे स्यन्दाधिकव्यथाः, तथा शङ्खादिष्वतिशयेन रुक्करा स्युः।

१ "धूमायन—धूमस्य निर्गमनमिव। राग —लोहितत्वम्। क्षारेणोक्षितो यः क्षतो—व्रण, तस्य तुल्यं च स्यात्॥ निद्रा स्यात्। अन्नस्यानभिनन्दन—आहारस्यानभिलाषः।" इति चन्द्रः। "असृजि—रक्ते, निमग्नं यदरिष्टफलं तेन सदृशम्।" इतीन्दुः। २ 'कासता' ण। ३ 'रक्तास्वरा' ण.चन्द्र। ४ 'काशुक्लम्' इ ई ण त चन्द्र स मू। ५ "रक्तकस्तु बन्धूको बन्धुजीवकः।" इत्यमरः। ६ असाध्ये "अरिष्टोऽत्र रक्षाबीजः।" इति ट. पुस्तकेऽधिकः पाठः।

**वातपित्तातुरं घर्षतोदभेदोपदेहवत्।**
**रूक्षदारुणवर्त्माक्षि कृच्छ्रोन्मीलननिमीलनम् ॥ १६॥**
**विकूणनविशुष्कत्वशीतेच्छाशूलपाकवत्।**
**उक्तः शुष्काक्षिपाकोऽयं**

स०—वातपित्तोत्तरं नेत्रं घर्षादिमत् स्यात्। तथा रूक्षे दारुणे च वर्त्मनी यस्मिंस्तथा कृच्छ्रादुन्मीलननिमीलने यस्मिंस्तयाऽक्षिसंकोचनेन विशुष्कत्वं तथा शीतेच्छा शूलपाकेन च युतमक्षि स्यात्। अयं शुष्काक्षिपाको नाम उक्तः।

**सशोफः स्यात्त्रिभिर्मलैः १७**
**सरक्तैस्तत्र शोफोऽतिरुग्दाहष्ठीवनादिमान्।**
**पक्वोदुम्बरसङ्काशं जायते शुक्लमण्डलम् ॥ १८॥**
**अश्रूष्णशीतविशदपिच्छिलाच्छघनं मुहुः।**

स०—त्रिभिर्मलैः—दोषैर्वातादिभिः, सरक्तैः सशोफो नाम नेत्ररोगो भवेत्। तत्र—सशोफे, शोफोऽतिरुग् दाहष्ठीवनादिमान् भवेत्। तदा शुक्लमण्डलं पक्वोदुम्बरसङ्काशं जायते। अश्रु च मुहुरुष्णं मुहुः शीतमित्यादि घनं च।

**अल्पशोफेऽल्पशोफस्तु पाकोऽन्यैर्लक्षणैस्तथा ॥१९॥**
**अक्षिपाकात्यये शोफः संरम्भः कलुषाश्रुता।**
**कफोपदिग्धमसितं सितं प्रक्लेदरागवत् ॥ २०॥**
**दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः।**

स०—पाक इति पाकशब्देनाक्षिपाकात्यय उपलक्ष्यते। आद्यन्तलोपाख्यया तन्त्रयुक्त्याऽक्षिपाकात्ययाख्यो रोगो भवति। तथा किम्भूतः? तथा—तेन प्रकारेण, अपरैः शुष्कपाकाक्षिपाकोक्तैर्लक्षणैरुपलक्षितः स्यात्। तस्मिन्नक्षिपाकात्यये शोफः संरम्भः कलुषाश्रुता भवति। तथा कृष्णमण्डलं कफोपदिग्धं स्यात्। शुक्लमण्डलं प्रक्लेदरागयुक्तं स्यात्। तथा दाहो दर्शनस्य संरोधो वेदनाश्च चलाः स्युः।

१ "अक्षि वातपित्ताभ्यामातुरं घर्षतोदादिभिर्युक्तं भवेत्॥ अल्पशोफे नाम नेत्ररोगे पाकरूपोऽल्पशोफः स्यात्। अनन्तरोक्तात् सशोफादस्य विशेषो यदल्पशोफत्वम्। तथाऽन्यैर्लक्षणैः—पूर्वोक्तैरतिरुग्दाहष्ठीवनादिमानित्यनेन तथा पक्वोदुम्बरसङ्काशादिभिः सशोफरोगस्य लक्षणैर्युक्तो भवति॥ कफेनोपदिग्ध—लिप्तम्। दर्शनस्य—दृष्टेः, संरोधः।" इति चन्द्रः। "संरम्भः—वेदनाया उद्रेकः।" इतीन्दुः। २ 'पित्तोत्तरं' त स मू अरुण। ३ 'कूणेन वि' अरुण. चन्द्र। 'नन वि' उ.स मू। ४ 'ष्कत्व शी' चन्द्र. स मू अरुण। 'ष्क च शी' उ। ५ 'सङ्कुचन वि' ट। ६ अरुणदत्तस्तु अल्पशोफाक्षिपाकात्यययोः रोगयोर्लक्षणानि एकस्यैवाक्षिपाकात्ययस्य यन्मन्यते व्याख्याति च, तदयुक्तम्। चन्द्रनन्दनेन्द्वादिभिः 'अल्पशोफे' इत्यादिग्रन्थेनाल्पशोफः, 'अक्षिपाकात्यये शोफः' इत्यादिग्रन्थेन चाक्षिपाकात्ययः, इति रोगद्वयस्य व्याख्यातत्वात् षोडशसङ्ख्यान्यूनत्वापत्तेश्च। ७ 'शोफोऽल्प' ण.त.स.सं.। ८ 'कफेन दिग्ध' उ।

अम्लोषिन लक्षयति—

**अन्नसारोऽम्लता नीतः पित्तरक्तोल्वणैर्मलैः ॥ २१ ॥**
**शिराभिर्नेत्रमारूढः करोति श्यावलोहितम् ।**
**सशोफदाहपाकाश्रु भृशं चाविलदर्शनम् ॥ २२ ॥**
**अम्लोषितोऽयम्**

**स०**—पित्तरक्तोल्वणैर्दोषैरन्नसारोऽम्लत्व नीत शिराभिर्नेत्रमारूढ सन् श्यावलोहित नयन करोति । तथा शोफादियुतम् । भृश चास्पष्टदर्शनम् । इत्ययमम्लोषित ।

**इत्युक्ता गदाः षोडश सर्वगाः ।**

**स०**—इत्येव षोडश सर्वगा रोगा उक्ता । प्रकृतत्वात् सर्वनेत्रगा इति गम्यते ।

**हताधिमन्थमेतेषु साक्षिपाकात्ययं त्यजेत् ॥ २३ ॥**

**स०**—एतेषु रोगेषु मध्ये साक्षिपाकात्यय हताधिमन्थ त्यजेत् ।

**वातोद्भूत' पञ्चरात्रेण दृष्टि**
**सप्ताहेन श्लेष्मजातोऽधिमन्थः ।**
**रक्तोत्पन्नो हन्ति तद्वत्त्रिरात्रात्**
**मिथ्याचारात् पैत्तिकः सद्य एव ॥ २४ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने सर्वाक्षिरोगविज्ञानीयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥**

**स०**—वातजोऽधिमन्थ पञ्चरात्रेण दृष्टि हन्ति । मिथ्याचारादिति सर्वत्रानुवर्तते । श्लेष्मजोऽधिमन्थ सप्तरात्रेण दृष्टि हन्ति । रक्तजश्चाधिमन्थस्त्रिरात्रेण दृष्टि हन्ति । पैत्तिकश्चाधिमन्थो मिथ्योपचारात् सद्य एव दृष्टि हन्ति । शालिनीवृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने सर्वाक्षिरोगविज्ञानीयो नाम पञ्चदशोऽध्याय समाप्त ॥ १५ ॥



१ "अन्नसार –रसाख्य. । मलै –वातादिभि ।" इति चन्द्र ।
२ वाताभिष्य दवाताधिमन्थहताधिमन्थान्यतोवातवातपर्ययपित्ताभिष्य दपित्ताधिमन्थकफाभिष्यन्दकफाधिमन्थरक्ताभिष्यन्दरक्ताधिमन्थशुष्काक्षिपाकसशोफाल्पशोफाक्षिपाकात्ययाम्लोषिता इति सर्वाक्षिगा षोडश रोगा वाग्भटाचार्येणोक्ता ,सुश्रुताचार्येण तु सप्तदशोपदिष्टा । तत्रत्यसिरोत्पातसिराप्रहर्षार्थे अत्राक्षिपाकात्यय इत्येक एव रोग पठित , शेषा सर्वे उभयत्र सदृशा एव । ३ 'मन्थ चैते' उ. ।
४ 'ष्मजश्चाधि' ई.उ ।



# षोडशोऽध्यायः ।

अधुना सर्वाक्षिरोगप्रतिषेध उपक्रम्यते—

**अथातः सर्वाक्षिरोगप्रतिषेध व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षय' ।**

( गद्यसूत्रे ॥ २ ॥ )

**प्राग्रूप एव स्यन्देषु तीक्ष्ण गण्डूषनावनम् ।**
**कारयेदुपवासं च कोपादन्यत्र वातजात् ॥ १ ॥**

**स०**—स्यन्देषु पूर्वरूपावस्थाया तीक्ष्णमेव गण्डूषादिकमुपवास च स्यन्दवन्त कारयेत्, वातोत्थ कोप मुक्त्वा ।

**दाहोपदेहरागाश्रुशोफशान्त्यै बिडालकम् ।**
**कुर्यात्सर्वत्र पत्रैलामरिचस्वर्णगैरिकैः ॥ २ ॥**
**सरसाञ्जनयष्ट्याह्वनतचन्दनसैन्धवैः ।**

**स०**—दाहादिशान्त्यै बिडालक कुर्यात् । सर्वत्र स्यन्दे पत्रैलादिभि सैन्धवान्तैर्बिडालक कुर्यात् ।

**सैन्धवं नागरं तार्क्ष्यं भृष्टं मण्डेन सर्पिषः ॥ ३ ॥**
**वातजे घृतभृष्टं वा योज्यं शाबरदेशजम् ।**
**मांसीपद्मककालीययष्ट्याह्वै' पित्तरक्तयोः ॥ ४ ॥**
**मनोह्वाफलिनीक्षौद्रै' कफे, सर्वैस्तु सर्वजे ।**

**स०**—सैन्धवादि घृतमण्डेन भृष्ट वा पवनजे घृतभृष्ट वा रोध्र योज्यम् । मास्यादिभि पित्तरक्तयोर्बिडालक कुर्यात् । मन शिलादिभि कफजे । सर्वजे तु स्यन्दे सर्वै –पूर्वोक्तैर्मिलितै , बिडालक कार्यम् ।

**सितमरिचभागमेकं चतुर्मनोह्वं द्विरष्टशाबरकम् ।**
**सञ्चूर्ण्य वस्त्रबद्धं प्रकुपितमात्रेऽवगुण्ठनं नेत्रे ॥ ५ ॥**

**स०**—चतुर्भागप्रमाणा मनोह्वा यस्मिंस्तच्चतुर्मनोह्वम् । द्वि –

१ 'सर्वगाक्षि' चन्द्र स स । २ अथ सर्वाक्षिरोगप्रतिषेधश्चरके चि० २६ अध्याये,सुश्रुते उ० ९।१०।११।१२ अध्यायेषु,अष्टाङ्गसङ्ग्रहे उ० १९।२० अध्याययोश्चास्ति वर्णित । ३ "बिडालक –बहिर्लेपो नयनस्य पक्ष्मोपरि ॥ सितमरिचस्य–शिग्रुफलस्य,भागमेकम् ।" इति चन्द्र । "अवगुण्ठन–आच्छादनचूर्णमक्षण ।" इतीन्दु । ४ अस्याग्रे "बदरीपत्रयष्ट्याह्वपथ्यामलकतुत्थकम् । अन्तर्धूम दहेत्सद्य कोपे तच्चूर्ण वातजे ॥ १ ॥" इति चन्द्रनन्दनटीकापुस्तकेऽधिकः श्लोक । ५ 'घृष्ट' इ उ ,ट । ६ 'शाबर' इ ई उ । ७ 'काकोलीयष्ट्या' ण त । ८ अस्याग्रे "धातुशुण्ठ्यभयातार्क्ष्य (क्ष्यं)बहिर्लेपोऽक्षिरोगहा ।" इति ई उ पुस्तकयोरधिक श्लोकार्धम् । "हरीतकीसैन्धवतार्क्ष्यशीलै. सगैरिकै स्वस्वकरप्रमृष्टै । बहि प्रलेप नयनस्य कुर्यात् सर्वाक्षिरोगप्रशमार्थमेतत् ॥ १ ॥" इति चन्द्रनन्दनटीकापुस्तकेऽधिकश्च श्लोक । ९ 'र्ण्यमतिप्रबद्ध' इ. । १० 'ण्ठनमिद नेत्रे' चन्द्र. ।

द्वौ वारौ, अष्टाष्टभागप्रमाण शाबरको यस्मिंस्तत् द्विरष्टशाबरकम् । तेन सितमरिचस्यैक भाग मन शिलायाश्चतुरो भागान् रोध्रस्य षोडश भागान् सञ्चूर्ण्य एतत्सूक्ष्मवस्त्रबद्ध प्रकुपितमात्रे–सद्य प्रकुपिते, नयनेऽवगुण्ठन हितम् । गीति समुखचपला ।

**आरण्याश्छगणरसे पटावबद्धाः**
**सुस्विन्ना नखवितुषीकृताः कुलत्थाः ।**
**तच्चूर्णं सकृदवचूर्णनान्निशीथे**
**नेत्राणां विधमति सद्य एव कोपम् ॥ ६ ॥**

स०–आरण्या कुलत्थाश्छगणरसे–गोशकृद्रसे, पटावबद्धा सुस्विन्नास्तथा नखैर्वितुषीकृतास्तेषा चूर्णमेकवारमेवावचूर्णनात् सद्य एव नेत्राणा कोप विधमति–जयति । प्रहर्षिणीवृत्तम् ।

**घोषाभयातुत्थकयष्टिरोध्रै-**
**र्मूर्ती सुसूक्ष्मैः श्लथवस्त्रबद्धैः ।**
**ताम्रस्थधान्याम्लनिमग्नमूर्ति-**
**र्रार्ति जयत्यक्षिणि नैकरूपाम् ॥ ७ ॥**

स०–घोषादिभि सुसूक्ष्मै श्लथवस्त्रबद्धैर्मूर्ती–पोटलिका, ताम्रस्थकाञ्जिकनिमग्नमूर्ति पीडा नानाविधा नेत्रे वारिता जयति । इन्द्रवज्रावृत्तम् ।

**षोडशभिः सलिलपलैः**
**पलं तथैकं कटङ्कटेर्याः सिद्धम् ।**
**सेकोऽष्टभागशिष्टः**
**क्षौद्रयुतः सर्वदोषकुपिते नेत्रे ॥ ८ ॥**

स०–दार्व्या पल जलपलै षोडशभि शृतमष्टभागशेष सेको मधुयुत सर्वदोषकुपिते चक्षुषि हित । आर्या गीति ।

**वातपित्तकफसन्निपातजां**
**नेत्रयोर्बहुविधामपि व्यथाम् ।**
**शीघ्रमेव जयति प्रयोजितः**
**शिग्रुपल्लवरसः समाक्षिकः ॥ ९ ॥**

स०–एकैकदोषजा सन्निपातजा वा नयनयोर्नानाविधा पीडा शीघ्रमेक एव शोभाञ्जनकरस सक्षौद्रो जयति । रथोद्धतावृत्तम् ।

**तरुणमुरुबूकपत्रं**
**मूलं च विभिद्य सिद्धमाजे क्षीरे ।**
**वाताभिष्यन्दरुजं**
**सद्यो विनिहन्ति सक्तुपिण्डिका चोष्णा १०**

स०–एरण्डस्य तरुण पत्र मूल च विभिद्य–सक्षुद्य, छागदुग्धसिद्ध वाताभिष्यन्दे पीडा सद्य एव निहन्ति । दोषादिवशात् सक्तुपिण्डी उष्णा वा रुज हन्ति । आर्या गीति ।

**आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिर्हितः ।**
**कोष्णः सहैरण्डजटाबृहतीमधुशिग्रुभिः ॥ ११ ॥**
**ह्रीबेरवक्रशार्ङ्गेष्टोदुम्बरैस्त्वक्षु साधितम् ।**
**साम्भसा पयसाऽऽजेन शूलाश्च्योतनमुत्तमम् ॥१२॥**
**मञ्जिष्ठारजनीलाक्षाद्राक्षर्द्धिमधुकोत्पलैः ।**
**क्वाथः सशर्करः शीतः सेचनं रक्तपित्तजित् ॥ १३ ॥**

स०–वातजेऽभिष्यन्दे बिल्वादिभिरेरण्डमूलादिभि मह क्वाथ कृत कोष्णो हितमाश्च्योतनम् ।

ह्रीबेरादिषु साधित सजलेनाजेन पयसा उत्तम शूलाश्च्योतन प्रसादन भवेत् । ह्रीबेर–वालकम् । वक्र–तगरम् ।

मञ्जिष्ठादिभि क्वाथ ससित शिशिर सेको रक्तपित्तघ्न ।

**कसेरुयष्ट्याह्वरजस्तान्तवे शिथिलं स्थितम् ।**
**अप्सु दिव्यासु निहितं हितं स्यन्देऽस्रपित्तजे ॥१४॥**

स०–कसेरुकादिरजो वस्त्रे शिथिल स्थित दिव्यजले क्षिप्त स्यन्दे रक्तपित्तजे हितम् ।

**पुण्ड्रयष्टीनिशामूर्ती प्लुता स्तन्ये सशर्करे ।**
**छागदुग्धेऽथवा दाहरुग्रागाश्रुनिवर्तनी ॥ १५ ॥**

स०–पुण्ड्रादिभिर्मूर्ती स्त्रीक्षीरे सशर्करे प्लुता छागदुग्धे वा दाहादिहृत् ।

**श्वेतरोध्रं समधुकं घृतभृष्टं सुचूर्णितम् ।**
**वस्त्रस्थं स्तन्यमृदितं पित्तरक्ताभिघातजित् ॥ १६ ॥**

स०–श्वेतरोध्र समधुक घृतभृष्ट सूक्ष्मरजीकृत वसनस्थ स्तन्येन मृदित पित्तादिजित् ।

**नागरत्रिफलानिम्बवासारोध्ररसः कफे ।**
**कोष्णमाश्च्योतनं**

स०–नागरादिरस श्लेष्मण्याश्च्योतन कोष्ण हितम् ।

**मिश्रैर्भेषजैः सान्निपातिके ॥ १७ ॥**

स०–सान्निपातिकेऽभिष्यन्दे मिश्रैरौषधै –एतैरेवानन्तरोक्तै, आश्च्योतन कोष्ण हितम् ।

---

१ "आरण्या कुलत्था –अक्षिभेषजाख्या । नेत्राणा कोप–अभिष्यन्दम् ।" इतीन्दु । "घोषा–शतपुष्पा ॥ तरुण–अभिनवम् । विभिद्य–उलूखले सक्षुद्य ।" इति चन्द्र । २ 'वनद्धा' उ, ट ड ण त । ३ 'व्योषा' ई उ., ट. । ४ 'ध्रै पिष्टै सु' इ उ । 'ध्रैर्गुण्डी सु' ई । ५ 'ताम्राच्छया' इ. । ६ 'षप्रकु' इ.चन्द्र. । ७ 'च विचूर्ण्य' उ ।



१ बृहतीशब्देन बृहतीद्वय ग्राह्यम्, 'बृहतीद्वयैरण्डमूलैः' इति सङ्ग्रहोक्तत्वात् । २ 'वक्रमञ्जिष्ठोदु० । साम्भश्छाग पयो वाऽपि शू' स.सु । ३ 'स्त्वक्प्रसा' उ । 'स्तक्षसा' इति क्वचित् । ४ अस्याग्रे "रोध्रामलकरसाञ्ज[न]बिम्बितिकापत्र-तुवरिकातुत्थैः । आश्च्योतनमिदमक्ष्णो प्रसह्य सद्य प्रकोपहरम् ॥ १ ॥" इति चन्द्रनन्दनटीकापुस्तकेऽधिक श्लोक । ५ 'द्राक्षाद्विमधु' उ । ६ "सेचन–आश्च्योतनम् ॥ नागरादीना रस –क्वाथ ।" इति चन्द्र । ७ 'शिथिले' इ चन्द्र । ८ 'रसा' इ. उ. । 'रसं' इति क्वचित् । ९ 'तिके मिश्रैरौषधैराश्चो' ट. ।

सर्पिः पुराणं पवने, पित्ते शर्करयाऽन्वितम्।
व्योषसिद्धं कफे पीत्वा यवक्षारावचूर्णितम् ॥ १८ ॥
स्रावयेद्रुधिरं भूयस्ततः स्निग्धं विरेचयेत्।

स०-पवने पुराणं घृतं हितम्। पित्ते शर्करया युतं घृतं हितम्। कफे व्योषसिद्धं घृतं यवक्षारावचूर्णितं पीत्वा रुधिरं स्रावयेत्। भूयः स्निग्धं ततो विरेचयेत्।

आनूपवेसवारेण शिरोवदनलेपनम् ॥ १९ ॥
उष्णेन शूले, दाहे तु पयःसर्पिर्युतैर्हिमैः[2]।

स०-आनूपवेसवारेण शिरोवदनलेपनमुष्णेन कार्यं शूले सति। दाहे तु सति क्षीरघृतान्वितं शीतैः प्रलेपः कार्यः।

तिमिरप्रतिषेधं च वीक्ष्य युञ्ज्याद्यथायथम् ॥ २० ॥

स०-तिमिरप्रतिषेधं च पर्यालोच्य यथायोगं चिकित्सितं युञ्ज्यात्।

अयमेव विधिः सर्वो मन्थादिष्वपि शस्यते।

स०-एष एव विधिरशेषेषु मन्थादिष्वपि शस्यते।

अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ २१ ॥

स०-सर्वथैवाशान्तौ मन्थे भ्रुवोरुपरि दाहयेत्।

रूप्यं रूक्षेण गोदध्ना लिम्पेन्नीलत्वमागते।
शुष्के तु मस्तुना वर्तिर्वाताक्ष्यामयनाशिनी ॥ २२ ॥

स०-रूप्यं गोदध्ना रूक्षेण लिम्पेत्। तस्मिन् दध्नि नीलत्वमागते शुष्के च मस्तुना वर्तिर्वाताक्षिरोगनाशिनी।

सुमनःकोरकाः शङ्खस्त्रिफला मधुकं बला।
पित्तरक्तापहा वर्तिः पिष्टा दिव्येन वारिणा ॥ २३ ॥

स०-सुमनःकलिकादयो वर्तिर्दिव्येन जलेन पिष्टा पित्तरक्तहृत्।

सैन्धवं त्रिफला व्योषं शङ्खनाभिः समुद्रजः।
फेनं ऐलेयकं सर्जो वर्तिः श्लेष्माक्षिरोगनुत् ॥ २४ ॥

स०-सैन्धवादिभिर्वर्तिः श्लेष्माक्षिरोगजित्।

प्रपौण्डरीकं यष्ट्याह्वं दार्वीं चाष्टपलं पचेत्।
जलद्रोणे रसे पूते पुनः पक्वे घने क्षिपेत् ॥ २५ ॥
पुष्पाञ्जनाद्दशपलं कर्षं च मरिचात्ततः।

कृतश्चूर्णोऽथवा वर्तिः सर्वाभिष्यन्दसम्भवान् ॥२६॥
हन्ति रागरुजाघर्षान् सद्यो दृष्टिं प्रसादयेत्[1]।
अयं पाशुपतो योगो रहस्यं भिषजा परम् ॥ २७ ॥

स०-प्रपौण्डरीकादिकमष्टपलं पृथग्जलद्रोणे पचेत्। रसे पूते पुनः शृते घने च पुष्पाञ्जनाद्दश पलानि, मरीचात्कर्षं च क्षिपेत्। कृतश्चूर्णोऽथवा वर्तिः सर्वाभिष्यन्दोत्थान् रागादीन् हन्ति। तथा सद्य एव दृष्टिं प्रसादयेत्। एष पाशुपताख्यो योगो भिषजा परं रहस्यम्।

शुष्काक्षिपाके हविषः पानमक्ष्णोश्च तर्पणम्।
घृतेन जीवनीयेन नस्यं तैलेन वाऽणुना[2] ॥ २८ ॥
परिषेको हितश्चात्र पयः कोष्णं ससैन्धवम्।

स०-शुष्काक्षिपाके घृतस्य पानमक्ष्णोश्च जीवनीयसिद्धेन घृतेन तर्पणं हितम्। अणुना तैलेन नस्यं हितम्। अत्र च क्षीरं कोष्णं सैन्धवयुतं परिषेको हितः।

सर्पिर्युक्तं स्तन्यपिष्टमञ्जनं च महौषधम्[3] ॥ २९ ॥
वसा वाऽऽनूपसत्त्वोत्था[4] किञ्चित्सैन्धवनागरा।

स०-नागरं स्तन्यपिष्टं घृतान्वितमञ्जनं हितम्। आनूपप्राणिजा वा वसा किञ्चित्सैन्धवशुण्ठीयुता [ अञ्जनं ] शस्यते।

घृताक्तान् दर्पणे घृष्टान् केशान् मल्लकसम्पुटे ॥३०॥
दग्ध्वाऽऽज्यपिष्टा लोहस्था सा मषी श्रेष्ठमञ्जनम्।

स०-केशान् घृताक्तान् दर्पणे घृष्टान् मल्लकसम्पुटे दग्ध्वा घृतपिष्टा लोहपात्रस्था सा मषी श्रेष्ठमञ्जनम्।

सशोफे वाऽल्पशोफे[5] च स्निग्धस्य व्यधयेत्सिराम् ३१
रेकः स्निग्धे पुनर्द्राक्षापथ्याक्वाथत्रिवृद्घृतैः।

स०-सशोफेऽल्पशोफे वा स्निग्धस्य सिरां विध्येत्। स्निग्धस्य पुनर्द्राक्षादिभिर्विरेकः।

श्वेतरोध्रं घृते भृष्टं[6] चूर्णितं तान्तवस्थितम् ॥ ३२ ॥
उष्णाम्बुना विमृदितं सेकः शूलहरः परम्।

स०-श्वेतरोध्रं घृते भृष्टं चूर्णितं वस्त्रस्थितमुष्णाम्बुना मृदितं सेकः शूलहृत्परम्।

दार्वीप्रपौण्डरीकस्य[7] क्वाथो वाऽऽश्च्योतने हितः[8]॥३३॥

स०-दार्वीप्रपौण्डरीकयोश्च क्वाथ आश्च्योतने हितः।

सन्धावांश्च[9] प्रयुञ्जीत घर्षरागाश्रुरुग्घरान् ॥ ३३½ ॥

स०-सन्धावांश्च वक्ष्यमाणान् घर्षादिहरान् प्रयुञ्जीत।

---

१ 'या युतम्' इति क्वचित्। २ "वेसवारेण-पिष्टेन मांसेन सुसंस्कृतेन। हिमैः-शीतवीर्यैर्द्रव्यैः ॥ सर्वथा-सर्वेण प्रकारेण ॥ रूक्षेण-स्नेहरहितेन ॥ समुद्राज्जातः फेनः-समुद्रजः फेनः। ऐलेयक-एलवालुकम्। सर्जः-सर्जरसः।" इति चन्द्रः। ३ 'लिप्तं नील' इ चन्द्र। 'लिप्ते नील' उ। ४ 'न क्षारका.' इ ण स स। ५ "क्षारको जालकं क्लीबे कलिका कोरकः पुमान्।" इत्यमरः। ६ सैन्धवादिवर्त्यामनुक्तद्रवत्वात् 'दिव्येन वारिणा' इति काकाक्षिगोलकन्यायेनोभयत्रापि सम्बन्धनीयम्। ७ 'फेनं. शैले' स.स.। 'न एलाढ्य स' स.मू.।

१ "प्रसादयेत्-निर्मला कुरुते ॥ तर्पणमक्ष्णोश्च जीवनीयेन घृतेन हितम्। तेनैव घृतेन नस्यं देयम्। अणुतैलेन वा नस्यं देयम्। अत्र-शुष्काक्षिपाके ॥ केशान्-नृकेशान् ॥ पुनः स्निग्धे तस्मिन् द्राक्षापथ्याक्वाथेन त्रिवृद्घृताभ्यां युक्तेन रेको हितः।" इति चन्द्रः। २ 'चाणुना' इ उ त। ३ 'स्तन्यघृष्ट' इ उ. चन्द्र। ४ 'चानूप' उ.चन्द्र। ५ 'चाल्पशोफे' इ ई उ। ६'घृतभृष्ट' उ चन्द्र। ७ 'दार्व्याः प्र' ई उ। ८ अस्याग्रे "यष्टीहिमोत्पलक्षीरैः कुर्यान्मूर्द्धस्य लेपनम्।' इति चन्द्रनन्दनटीकापुस्तकेऽधिकः श्लोकार्धम्। ९ सन्धावान्-वक्ष्यमाणान् सन्धावसञ्ज्ञकाञ्जनविशेषान्।

ताम्रं लोहे मूत्रघृष्टं प्रयुक्तं
नेत्रे सर्पिर्धूपितं वेदनाघ्नम् ।
ताम्रे घृष्टो गव्यदध्नः सरो वा
युक्तः कृष्णासैन्धवाभ्यां वरिष्ठः ॥ ३४½ ॥

स०-लोहभाण्डे ताम्रं गोमूत्रेण घृष्टं सर्पिर्धूपितं नेत्रे प्रयुक्तं पीडाहृत् । गव्यदधिसरस्ताम्रे घृष्टः कृष्णासैन्धवयुक्तो नेत्रे प्रयुक्तो वरीयान् वेदनाघ्नः सन्धाव ।

शङ्खं ताम्रे स्तन्यघृष्टं घृताक्तैः
शम्याः पत्रैर्धूपितं तद्यवैश्च ।
नेत्रे युक्तं हन्ति सन्धावसंज्ञं
क्षिप्रं घर्षं वेदनां चातितीव्राम् ॥ ३५½ ॥

स०-शङ्खं स्तन्येन ताम्रे घृष्टं शमीपत्रैर्यवैश्च घृताक्तैर्धूपितं तत्सन्धावसंज्ञं नेत्रे प्रयुक्तं शीघ्रं घर्षं वेदनामतिदारुणां च हन्ति । शालिन्यौ वृत्ते ।

उदुम्बरफलं लोहे घृष्टं स्तन्येन धूपितम् ॥ ३६ ॥
साज्यैः शमीच्छदैर्दाहशूलरागाश्रुहर्षजित्[१] ।

स०-उदुम्बरफलं लोहे स्तन्येन घृष्टं घृताक्तैः शमीपत्रैर्धूपितं दाहादिजित् ।

शिग्रुपल्लवनिर्यासः[२] सुघृष्टस्ताम्रसम्पुटे ॥ ३७ ॥
घृतेन धूपितो हन्ति शोफघर्षाश्रुवेदनाः ।

स०-शिग्रुपल्लवरसः सुघृष्टस्ताम्रसम्पुटे घृतेन धूपितः शोफादीन् हन्ति ।

तिलाम्भसा मृत्कपालं कांस्ये घृष्टं सुधूपितम् ॥ ३८
निम्बपत्रैर्घृताभ्यक्तैर्घर्षशूलाश्रुरागजित् ।

स०-मृत्कपालं तिलाम्भसा कांस्ये घृष्टं तथा निम्बपत्रैर्घृताभ्यक्तैर्धूपितं[३] घर्षादिजित् ।

सन्धावेनाञ्जिते नेत्रे विगतौषधवेदने ॥ ३९ ॥
स्तन्येनाश्च्योतनं कार्यं त्रिः परं नाञ्जयेच्च तैः ।

स०-सन्धावेन नेत्रेऽञ्जिते विगतौषधवेदने सति स्तन्येनाश्च्योतनं हितं कार्यं त्रीन् वारान् । तैश्च-सन्धावैः, परं-त्रिभ्यो वारेभ्यो, नाञ्जयेत् ।

तालीसपत्रचपलानतलोहरजोञ्जनैः[४] ॥ ४० ॥
जातीमुकुलकासीससैन्धवैर्मूत्रपेषितैः ।
ताम्रमालिप्य सप्ताहं धारयेत्पेषयेत्ततः ॥ ४१ ॥
मूत्रेणैवानु[५] गुटिकाः[६] कार्याश्छायाविशोषिताः[७] ।
ताः स्तन्यघृष्टा घर्षाश्रुशोफकण्डूविनाशनाः ॥ ४२ ॥

१ अस्याग्रे "द्विनिशात्रिफलामुस्तै प्रमदादुग्धपेषितैः ('कल्कितैः' ई)। सेकः सशर्कराक्षौद्रैरभिघातरुजापहः ॥ १ ॥ निषिक्तं तुत्थकं वारान् गोजले पञ्चविंशतिम्। स्तन्ये वा छागदुग्धे वा सद्यःकोपे तदञ्जनम् ॥ २ ॥" इति ई उ पुस्तकयोरधिकौ श्लोकौ । २ 'र्यासो घृष्टस्ताम्रस्य स' चन्द्र । ३ 'त तरसा घर्षा' ट । 'त नरस्य घ' इति क्वचित् । ४ 'रसाञ्जनैः' चन्द्र । ५ 'मूत्रेण चानु' ई.त. । ६ 'गुलिका' इ.उ चन्द्र. । ७ 'कुर्याच्छाया' इति क्वचित् ।

स०-तालीसपत्रादिभिर्मूत्रपिष्टैस्ताम्रमालिप्य सप्ताहं धारयेत् । ततः सप्ताहादूर्ध्वं गोमूत्रेणैव गुटिकाः कुर्यात् । ताश्च छायाविशोषिताः स्तन्यघृष्टा घर्षादिघ्नाः ।

व्याघ्रीत्वङ्मधुकं ताम्ररजोऽजाक्षीरकल्कितम् ।
शम्यामलकपत्राज्यधूपितं शोफरुक्प्रणुत् ॥ ४३ ॥

स०-व्याघ्र्यादिकमजाक्षीरकल्कितं शम्यामलकपत्रैर्घृतान्वितैर्धूपितं शोफरुक्प्रणुत् ।

अम्लोषिते प्रयुञ्जीत पित्ताभिष्यन्दसाधनम् ।

स०-अम्लोषिते नेत्ररोगे पित्ताभिष्यन्दचिकित्सितं कुर्यात् ।

उत्क्लिष्टाः कफपित्तास्रनिचयोत्था कुकूणकः ॥४४॥
पक्ष्मोपरोधः शुष्काक्षिपाकः पूयालसो बिसः ।
पोथक्यम्लोषितोऽल्पाख्यः स्यन्दमन्था विनाऽनिलात् ॥४५॥
एतेऽष्टादश पिल्लाख्या[१] दीर्घकालानुबन्धिनः ।

स०-उत्क्लिष्टादयोऽष्टादश रोगा इमे पिल्लाख्या दीर्घकालानुबन्धिनः ।

चिकित्सा पृथगेतेषां स्वंस्वमुक्ता

स०-एतेषां पृथक् चिकित्सा यथास्वमुक्ता ।

अथ वक्ष्यते[३] ॥ ४६ ॥
पिल्लीभूतेषु[२] सामान्यात्

स०-अथ भणिष्यते चिकित्सा पिल्लीभूतेषु सामान्येन ।

अथ पिल्लाख्यरोगिणः[७] ।
स्निग्धस्य छर्दितवतः स्निराव्यधहृतासृजः[४] ॥ ४७ ॥
विरिक्तस्य च[५] वर्त्मानु निर्लिखेदाविशुद्धितः[६] ।

स०-अथ पिल्लाख्याक्षिरोगवतः स्निग्धस्य छर्दितवतो नरस्य विद्धसिरस्य विरिक्तस्य च वर्त्म निर्लिखेदाविशुद्धेः ।

तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः ॥ ४८ ॥
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ।
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि ॥ ४९ ॥
तत्सेकेनोपदेहाश्रुकण्डूशोफांश्च नाशयेत् ।

स०-तुत्थकस्य पलं, विंशतिः श्वेतमरिचानि-सौभाञ्जनबीजानि, काञ्जिकपलैस्त्रिंशता पिष्ट्वा ताम्रे निधापयेत् । तत्सेकेन पिल्लान् बहुवर्षोत्थितानप्यपिल्लान् कुरुते । उपदेहादींश्च नाशयेत् ।

करञ्जबीजं सुरसं सुमनःकोरकाणि च ॥ ५० ॥
संक्षुद्य साधयेत्क्वाथे पूते तत्र रसक्रिया ।
अञ्जनं पिल्लभैषज्यं पक्ष्मणां च प्ररोहणम् ॥ ५१ ॥

स०-करञ्जबीजादीनि संक्षुद्य जले साधयेत् । क्वाथे पूते तत्र रसक्रिया । अञ्जनं पिल्ले औषधं पक्ष्मणां च प्ररोहणम् ।

१ 'रपेषितम्' उ । २ "एतेऽष्टादश नेत्ररोगा दीर्घकालानुबन्धिनः [सन्तः] पिल्लाख्याः-पिल्लसंज्ञाः, भवन्ति ॥ पिल्लीभूतेषु-दीर्घकालानुबन्धिषु।" इति चन्द्र । ३ 'कथ्यते' ई । ४ 'पिल्लाक्षिरो' इ उ चन्द्र. । ५ 'तु' इ ई उ । ६ 'विलिखे' इ.उ. । ७ 'लाख्यरोग' ण.त. । ८ 'नःक्षार' इ.ण.त.चन्द्र.।

**रसाञ्जनं सर्जरसो रीतिपुष्पं मनःशिला ।**
**समुद्रफेनो लवणं गैरिकं मरिचानि च ॥ ५२ ॥**
**अञ्जनं मधुना पिष्टं क्लेदकण्डूघ्नमुत्तमम् ।**

स०–रसाञ्जनादिकं मधुना पिष्टमञ्जनं परं क्लेदकण्डूहृत् ।

**अभयारसपिष्टं वा तगरं पिल्लनाशनम् ॥ ५३ ॥**
**भावितं बस्तमूत्रेण सस्नेहं देवदारु च ।**

स०–हरीतकीक्वाथपिष्टं तगरं परं पिल्लघ्नम् ।
देवदारु सस्नेहं बस्तमूत्रेण भावितं तद्वत् ।

**सैन्धवत्रिफलाकृष्णाकटुकाशङ्खनाभयः ॥ ५४ ॥**
**सताम्ररजसो वर्तिः पिल्लशुक्रकनाशिनी ।**

स०–सैन्धवादयस्ताम्ररजःसहिता वर्तिः पिल्लशुक्रहृत् ।

**पुष्पकासीसचूर्णो वा सुरसारसभावितः ॥ ५५ ॥**
**ताम्रे दशाहं तत् पैल्ल्यपक्ष्मशातजिदञ्जनम् ॥ ५५½॥**

स०–पुष्पकासीसचूर्णं सुरसारसेन दशाहं भावितस्तदञ्जनं पैल्ल्यपक्ष्मशातघ्नम् । सुरसा–मूर्वा ।

**अलं च सौवीरकमञ्जनं च**
**ताभ्यां समं ताम्ररजः सुसूक्ष्मम् ।**
**पिल्लेषु रोमाणि निषेवितोऽसौ**
**चूर्णः करोत्येकशलाकयाऽपि ॥ ५६½ ॥**

स०–हरितालं सौवीराञ्जनं [च] । ताभ्यां द्वाभ्यां तुल्यं ताम्रचूर्णं सूक्ष्मम् । एष चूर्णो निषेवित एकयाऽपि शलाकया पिल्लेषु रोमाणि करोति । उपजातिः ।

**लाक्षानिर्गुण्डीभृङ्गदार्वीरसेन**
**श्रेष्ठं कार्पासं भावितं सप्तकृत्वः ।**
**दीपः प्रज्वाल्यः सर्पिषा तत्समुत्था**
**श्रेष्ठा पिल्लानां रोपणार्थे मषी सा ॥ ५७½ ॥**

स०–लाक्षादिरसेन श्रेष्ठं कार्पासं सप्तवारान् भावितम् । तेन कार्पासेन सर्पिषा दीपः प्रज्वाल्यः । तत्समुत्था मषी पिल्लानां रोपणार्थे श्रेष्ठा । वैश्वदेवीवृत्तम् ।

**वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ॥ ५८ ॥**
**पुनःपुनर्विरेकं च नित्यमाश्च्योतनाञ्जनम् ।**
**नावनं धूमपानं च पिल्लरोगातुरो भजेत् ॥ ५९ ॥**

स०–पिल्लरोगी वर्त्मावलेखादिकं पुनःपुनर्भजेत् ।

**पूयालसे त्वशान्तेऽन्ते दाहः सूक्ष्मशलाकया ।**

स०–पूयालसे पुनरशान्ते सत्यन्ते सूक्ष्मशलाकया दाहो हितः ।

**चतुर्णवतिरित्यक्ष्णो हेतुलक्षणसाधनैः ॥ ६० ॥**
**परस्परमसङ्कीर्णाः कात्स्न्र्येन गदिता गदाः ।**

स०–इत्येवमक्ष्णश्चतुर्णवतिर्गदा लक्षणहेतुसाधनैरन्योन्यमसङ्कीर्णाः कात्स्न्र्येनोक्ताः ।

**सर्वदा च निषेवेत स्वस्थोऽपि नयनप्रियः ॥ ६१ ॥**
**पुराणयवगोधूमशालिषष्टिककोद्रवान् ।**
**मुद्गादीन् कफपित्तघ्नान् भूरिसर्पिःपरिप्लुतान् ॥ ६२ ॥**
**शाकं चैवंविधं मांसं जाङ्गलं दाडिमं सिताम् ।**
**सैन्धवं त्रिफलां द्राक्षां वारि पाने च नाभसम् ॥६३॥**
**आतपत्रं पदत्राणं विधिवद्दोषशोधनम् ।**
**वर्जयेद्वेगसंरोधमजीर्णाध्यशनानि च ॥ ६४ ॥**
**क्रोधशोकदिवास्वप्नरात्रिजागरणातपान् ।**
**विदाहि विष्टम्भकरं यच्चेहाहारभेषजम् ॥ ६५ ॥**

स०–स्वस्थोऽपि नयनवल्लभः सन् सदैव पुराणयवादिकं निषेवेत । एवंविधं कफपित्तघ्नं शाकं च । विधिर्विद्यते यस्मिंस्तच्च शोधनं–विरेचनादि, भजेत् ।

तथा वेगसरोधादिकं वर्जयेत् ।

**द्वे पादमध्ये पृथुसंनिवेशे**
**शिरे गते ते बहुधा च नेत्रे ।**
**ता म्रक्षणोद्वर्तनलेपनादीन्**
**पादप्रयुक्तान्नयने नयन्ति ॥ ६६ ॥**

स०–द्वे पादस्य मध्ये पृथुरूपे सिरे । ते च बहुधा नेत्रगते । ताः सिरा अभ्यङ्गादीन् पादप्रयुक्तान्नेत्र(त्रे) प्रापयन्ति ।

---

१ 'जातीपुष्प' उ । २ 'फेन' इ चन्द्र. । ३ 'वा' इ ई उ. । ४ "पुष्पकासीसचूर्णो वा०" इति श्लोको योगो वा "सञ्चूर्ण्य पुष्पकासीसं भावयेत्सुरसारसैः । ताम्रे दशाहं परमं पक्ष्मशाते तदञ्जनम् ॥" ( हृ उ अ ९।२० ) इत्यनेन समानार्थत्वात् द्विरुक्त एवेति प्रतिभाति । सङ्ग्रहेऽपि 'सञ्चूर्ण्य पुष्पकासीस०' इति श्लोकः वर्त्मप्रतिषेधे ( उ अ १२ ) एवोक्तः, पिल्लप्रतिषेधे ( उ अ २० ) तु पुनर्नोक्तः । किन्त्वसौ 'पैल्ल्यजित्' इत्यधिकगुणकथनात् एतयोरुभयोरपि श्लोकयोः सर्वेष्वपि प्राचीनलिखितेष्वष्टाङ्गहृदयपुस्तकेषु चन्द्रनन्दनारुणदत्तटीकापुस्तकेषु चोपलब्धत्वाच्च न निष्कासितः । ५ 'जश्च सू' चन्द्र. । ६ 'तोऽय चू' उ. । ७ 'णार्थं' इ ।

१ "पूयालसे तु पिल्लीभूते अशान्ते सर्वक्रियाणामन्ते–अवसाने ॥ सर्वदा–षड्स्वप्यृतुषु । स्वस्थोऽपि–अपिशब्दादक्षिरोगवानपि । एवंविधं च शाकं–कफपित्तघ्नं भूरिसर्पिःपरिप्लुतं च ॥ पृथुसन्निवेशे–विस्तीर्णरूपे, न तु वर्तुले । ता–पादयोश्चतस्रः सिराः । म्रक्षण–अभ्यङ्ग. ।" इतीन्दुः । २ 'न्ते तु दा' ई उ. । 'न्तेऽन्तर्दाह' स मू । ३ सुश्रुतेऽक्षिरोगाः षट्सप्तति कथिताः, इह तु चतुर्णवतिरिति विशेषः । ४ 'क्ष्णोर्हेतु' ई उ.स ह. । ५ 'नादि च' इ ई । ६ क्रोधशोकेत्यादि श्लोकार्धं इ ई ण त.चन्द्र स मू पुस्तकेषु नोपलभ्यते । ७ 'म्रनिशाजागरणानि च ।' इति क्वचित् । ८ 'दाहविष्ट' इ ई ण त स ह । ९ 'यच्चदाहार' चन्द्र । 'विहाराहार' उ । १० 'त्रिविष्टे' इ उ. । ११ 'म्रक्षणो' स.स. । १२ 'न्नयन' इ.ई उ,ण,त.चन्द्र.स.स ।

मलौष्ण्यसङ्कट्टनपीडनाद्यै-
स्ता दूषयन्ते नयनानि दुष्टाः ।
भजेत्सदा दृष्टिहितानि तस्मा-
दुपानदभ्यञ्जनधावनानि ॥ ६७ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसहितायां षष्ठे उत्तरस्थाने सर्वाक्षिरोगप्रतिषेधो नाम षोडशोऽध्यायः ॥ १६ ॥



स०—ताश्च मलौष्ण्यादिभिर्दुष्टा नयनानि दूषयन्ते । यत एव तस्माद् दृष्टिहितानि सर्वदा उपानदभ्यञ्जनादीनि भजेत् । उपजाती वृत्ते ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने सर्वाक्षिरोगप्रतिषेधो नाम षोडशोऽध्यायः समाप्तः ॥ १६ ॥



## सप्तदशोऽध्यायः ।

नयनामयादनन्तरं दूरग्रहणसाधर्म्येण कर्णरोगानाह । यथा हि चक्षुर्दूरदेशस्थमपि पश्यति तथा श्रोत्रं दूरस्थमपि शृणोतीत्याह—

अथातः कर्णरोगविज्ञानीयं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
( गद्यसूत्रे ॥ २ ॥ )

प्रतिश्यायजलक्रीडाकर्णकण्डूयनैर्मरुत् ।
मिथ्यायोगेन शब्दस्य कुपितोऽन्यैश्च कोपनैः ॥ १ ॥
प्राप्य श्रोत्रसिराः कुर्याच्छूलं स्रोतसि वेगवत् ।
अर्धावभेदकं स्तम्भं शिशिरानभिनन्दनम् ॥ २ ॥
चिराच्च पाकं पक्वं तु लसीकामल्पशः स्रवेत् ।
श्रोत्रं शून्यमकस्माच्च स्यात्सञ्चारविचारवत् ॥ ३ ॥

स०—प्रतिश्यायेत्यादिभिः शब्दस्य च मिथ्याभियोगेन पवनः कुपितोऽपरैरपि सर्वनिदानैः कुपितः श्रोत्रसिराः प्राप्य स्रोतसि—कर्णविवरे, शूलं वेगवत् कुर्यात् । तथाऽर्धावभेदकं शिरोरोगं स्तम्भं कर्णस्यैव, तथा शीतस्यानभिनन्दनं चिरेण च पाकं कुर्यात् । पक्वं तु श्रोत्रमल्पशो लसीकां स्रवेत् । अकस्माच्च शून्यं स्यात् । सञ्चारविचारवच्च—स्थगितास्थगितं च यथा, स्यात् ।

शूलं पित्तात् सदाहोषाशीतेच्छाश्वयथुज्वरम् ।
आशुपाकं प्रपक्वं च सपीतलसिकास्रुति ॥ ४ ॥
सा लसीका स्पृशेद्यद्यत्तत्तत्पाकमुपैति च ।

स०—पित्तेन शूलं दाहाद्यन्वितं स्यात् । तत्र ऊषा—प्रादेशिकः सन्तापः । दाहः—सर्वाङ्गीणस्तीव्रोष्मा सदाऽरतिमान् । तथाऽऽशुपाको यस्मिंस्तदेवम् । तथा प्रपक्वं च सपीतलसिकास्रुति स्यात् । सा च लसीका यद्यदङ्गं स्पृशेत् तत् तत् पाकं गच्छति ।

कफाच्छिरोहनुग्रीवागौरवं मन्दता रुजः ॥ ५ ॥
कण्डूः श्वयथुरुष्णेच्छा पाकाच्छ्वेतघनस्रुतिः ।

स०—कफाच्छिरआदिगौरवं जायते । रुजो मन्दत्वं कण्ड्वादि च स्यात् । पाकाच्छ्वेता घना च स्रुतिः स्यात् ।

करोति श्रवणे शूलमभिघातादिदूषितम् ॥ ६ ॥
रक्तं पित्तसमानार्ति किञ्चिद्वाऽधिकलक्षणम् ।

स०—रक्तमभिघातादिदूषितं कर्णे शूलं करोति । किम्भूतं रक्तम्? पित्तेन समा पीडा यस्मिंस्तदेवम् । किञ्चिच्चाधिकलक्षणम् ।

शूलं समुदितैर्दोषैः सशोफज्वरतीव्ररुक् ॥ ७ ॥
पर्यायादुष्णशीतेच्छं जायते श्रुतिजाड्यवत् ।
पक्वं सितासितारक्तघनपूयप्रवाहि च ॥ ८ ॥

स०—समुदितैः—सन्निपतितैर्दोषैः, शूलं शोफादियुतं जायते । तथा पर्यायेणोष्णशीतेच्छं श्रुतिजाड्ययुक्तं च । पक्वं सितासितारक्तघनं पूयं प्रवहति ।

शब्दवाहिसिरासंस्थे शृणोति पवने मुहुः ।
नादानकस्माद्विविधान् कर्णनादं वदन्ति तम् ॥ ९ ॥

स०—शब्दवाहिनीषु सिरासु गते वाते मुहुः शब्दान् विविधानकस्माच्छृणोति । तं कर्णनादं वदन्ति ।

श्लेष्मणाऽनुगतो वायुर्नादो वा समुपेक्षितः ।
उच्चैः कृच्छ्राच्छ्रुतिं कुर्याद्बधिरत्वं क्रमेण च ॥ १० ॥

स०—वायुः श्लेष्मणाऽनुगतः कर्णनादो वा समुपेक्षितः—अचिकित्सितः, कर्णे—श्रोत्रे, उच्चैः कृच्छ्राच्छ्रुतिं—श्रवणं, कुर्यात् । क्रमेण बधिरत्वं—बाधिर्यं च, कुर्यात् ।

१ 'मलोष्णस' स स । 'तलोष्णस' इ । 'मृत्लोष्टस' ई । २ "उपानहो—पादुके । धावनं—प्रक्षालनम् ।" इतीन्दुः । "अकस्मात्—हेतुं विना, श्रोत्रं शून्यं सञ्चारविचारवत्—क्षणं सवृत्तं वा भवेत् क्षणं विवृत्तम् ।" इति चन्द्रः । ३ 'ननावनानि' चन्द्र स मू । ४ अयं कर्णरोगविज्ञानीयश्चरके चि० २६ अध्याये, सुश्रुते चि० २५ अध्याये उ० २० अध्याये च, अष्टाङ्गसङ्ग्रहे उ० २१ अध्याये चास्ति वर्णितः । ५ 'पाकः' स स. ।

१ "पित्तात्—स्वहेतुतो दुष्टात्, कर्णस्रोतसि दाहादियुतं शूलं भवेत् ॥ रुजश्च—वेदनायाः, मन्दता—अल्पत्वं, स्यात् ॥ श्रुतिजाड्यवत्—श्रुतिहीनम् ॥ विविधान्—नानाप्रकारान् ।" इति चन्द्रः । "आशुपाकादिकं चार्थात् श्रोत्रविशेषणं बोद्धव्यम् ॥ श्रुतिजाड्यवत्—कर्णबाधिर्ययुक्तम् ।" इतीन्दुः । २ 'शुज्वर' ई इ.उ । ३ 'स्रुति' ई उ चन्द्र स.मू । ४ 'घना स्रुतिः' उ ण त । ५ 'वा' ई उ. ।

**वातेन शोषितः श्लेष्मा श्रोतो लिम्पेत्ततो भवेत्।**
**रुग्गौरवं पिधानं च स प्रतीनाहसंज्ञितः॥ ११॥**

स०—वातेन श्लेष्मा शोषितः श्रोतो लिम्पेत्। ततो रुग्गौरवं तस्य स्रोतसो गुरुत्वं स्यात्, स्थगनं च। स प्रतीनाहसञ्ज्ञो गदः।

**कण्डूशोफौ कफाच्छ्रोत्रे स्थिरौ तत्संज्ञया स्मृतौ।**

स०—कफात् कण्डूशोफौ कर्णे स्थिरौ तत्सञ्ज्ञौ कण्डूशोफाख्यौ भवतः।

**कफो विदग्धः पित्तेन सरुजं नीरुजं त्वपि॥ १२॥**
**घनपूतिबहुक्लेदं कुरुते पूतिकर्णकम्।**

स०—कफः पित्तेन विदग्धः सरुजं नीरुजं वा घनपूतिबहुक्लेदं पूतिकर्णकमनुगतार्थं कुरुते।

**वातादिदूषितं श्रोत्रं मांसासृक्क्लेदजा रुजम्॥ १३॥**
**खादन्तो जन्तवः कुर्युस्तीव्रां स कृमिकर्णकः।**

स०—वातादिभिः दूषितं श्रोत्रं जन्तवो भक्षयन्तो मांसादिक्लेदजा तीव्रां रुजं कुर्युः। स कृमिकर्णकाख्यः।

**श्रोत्रकण्डूयनाज्जाते क्षते स्यात्पूर्वलक्षणः॥ १४॥**
**विद्रधिः, पूर्ववच्चान्यः**

स०—श्रोत्रकण्डूयनाज्जाते क्षते पूर्वोक्तलक्षणो विद्रधिः स्यात्। निदाने ह्येवमुक्तम् ( हृ नि अ ११।२ )—"यः शोफो बहिरन्तर्वा महामूलो महारुजः। वृत्तः स्यादायतो यो वा स्मृतः षोढा स विद्रधिः॥" इति। तद्वदिह विद्रधिसामान्यात् कर्णविद्रधिरेक एवोक्तः।

**शोफोऽर्शोऽर्बुदमीरितम्।**
**तेषु रुक् पूतिकर्णत्वं बधिरत्वं च बाधते॥ १५॥**

स०—अर्शोऽर्बुदं च तदीरितमिति कर्णार्शः कर्णार्बुदमिति। तत्र ह्युक्तम् ( हृ उ अ ८।१३ )—"अर्शोऽधिमांसं वर्त्मान्तः स्तब्धं स्निग्धं सदाहरुक्। रक्तं रक्तेन तत्स्रावि छिन्नं छिन्नं विवर्धते॥" इति। अर्बुदस्य तु लक्षणम् ( हृ उ अ ८।२४ )—"वर्त्मान्तर्मांसपिण्डाभः श्वयथुर्ग्रथितोऽरुजः। सास्रैः स्यादर्बुदो दोषविषमो बाह्यतश्चलः॥" इति। तेषु—अर्शोऽर्बुदेषु, रुग् बाधते पूतिकर्णत्वं बधिरत्वं च।

**गर्भेऽनिलात्सङ्कुचिता शष्कुली कुचिकर्णकः।**

स०—वाताद्गर्भे—अभ्यन्तरे, सङ्कुचिता शष्कुली कुचिकर्णसञ्ज्ञः।

**एको नीरुगनेको वा गर्भे मांसाङ्कुरः स्थिरः॥ १६॥**
**पिप्पली पिप्पलीमानः**

स०—मांसाङ्कुरो गर्भे स्थिरः एकोऽनेको वा नीरुजः पिप्पलीत्युच्यते, कर्णपिप्पलीत्यर्थः। स च मांसाङ्कुरः पिप्पलीमानः।

**सन्निपाताद्विदारिका।**
**सवर्णः सरुजः स्तब्धः श्वयथुः, स उपेक्षितः॥१७॥**
**कटुतैलनिभं पक्वः स्रवेत् कृच्छ्रेण रोहति।**
**सङ्कोचयति रूढा च सा ध्रुवं कर्णशष्कुलीम्॥ १८॥**

स०—सन्निपातेन विदारिकाख्यः श्वयथुः स्तब्धस्तथा सवर्णः सरुजः। स उपेक्षितः सन् कटुतैलनिभं स्रवेत्। कृच्छ्रेण रोहति। सा च विदारिका रूढा सती निश्चितं कर्णशष्कुलीं सङ्कोचयति।

**सिरास्थः कुरुते वायुः पालीशोषं तदाह्वयम्।**

स०—सिरास्थो वायुः पालीशोषं तदाह्वयं—पालीशोषसञ्ज्ञं, कुरुते।

**कृशा दृढा च तन्त्रीवत् पाली वातेन तन्त्रिका॥ १९॥**

स०—वातेन पाली कृशा दृढा च तन्त्रीवत् स्यात्। सा तन्त्रिकेत्युच्यते।

**सुकुमारे चिरोत्सर्गात्सहसैव प्रवर्धिते।**
**कर्णे शोफः सरुक् पाल्यामरुणः परिपोटवान्॥ २०॥**
**परिपोटः स पवनात्**

स०—सुकुमारे कर्णे चिरोत्सर्गात् सहसैव—न तु शनैः, प्रव-

---

१ 'स्रोतो' स हृ। २ 'ततस्तद्गौरवं' ण त। ३ 'त्सञ्ज्ञितौ' इ। ४ "विदग्धः—विदाहावस्थां नीतः॥ श्रोत्रं मांसासृक्क्लेदजा जन्तवः खादन्तस्तीव्रां रुजां कुर्युः॥ क्षते—व्रणे जाते सति, पूर्वलक्षणो—निदानोक्तसंस्थानो, विद्रधिः स्यात्। पूर्ववच्चान्य इति अन्यो विद्रधिः—वातादिनिमित्तो निदानोक्तलक्षण एव, स्यात्। एष च विद्रधेरेव भेदान्तरम्, तेन सङ्ख्यायां न प्रविशति॥ कर्णेऽर्शस्तथाऽर्बुदं षोढा—षड्भिः प्रकारैः पृथग्दोषसंसर्गनिचयोक्तैः, ईरितं—प्रोक्तम्। तेषु च—अर्शोर्बुदेषु रुग्बाधते, पूतिकर्णत्वं बाधते। एवमेतौ द्वौ कर्णरोगौ भवतः।" इति चन्द्र०। "किंभूता जन्तवः? आह—वातादिभिः स्वकारणकुपितैर्दूषिते ये श्रोत्रसम्बन्धिनी मांसासृजी, तयोर्विक्लेदस्तज्जाः॥ शोफश्च यः कर्णे स नाम्ना एकोऽर्श ईरितः, द्वितीयोऽर्बुदम्। एवमेतौ द्वौ रोगावेकीकृत्य पूर्वैः सह पञ्चदश भवन्ति। तेषु च—अनन्तरोक्तेषु विद्रध्यर्शोर्बुदेषु, क्रमेण—यथासङ्ख्यं, रुगादित्रयं जायते।" इतीन्दुः। ५ 'त्वथ' इ०। 'तथा' स स०। ६ 'षितश्रोत्रमांसा' स स। ७ 'दजां रुजम्' ई ण त अरुण स मू। ८ 'श्रोत क' इ। ९ 'षोढाऽर्शो' चन्द्र०। १० 'त्व क्रमेण च' स स। 'च जायते' उ०।

१ "गर्भे—गर्भावस्थायाम्। इति चन्द्रिका हेमाद्रिरपि।" इति त पुस्तके टिप्पणी। २ 'कूचि' उ स हृ। 'कुञ्चिक' चन्द्र०। ३ 'सञ्ज्ञा' ट। ४ "गर्भे—गर्भावस्थायाम्॥ नीरुक्—पीडारहितः॥ स्तब्धः—निश्चलः॥ चिरोत्सर्गात्—बहुकालमुपेक्षणात्। प्रवर्धिते—प्रकर्षेण वृद्धिमा प्रापिते।" इति चन्द्र०। "कृच्छ्रेण रोहति—बहुकालप्रयुक्तभैषज्यसंस्कारात् रूढो भवति।" इतीन्दुः। "पूति—पूयम्।" इति डल्हणः। ५ 'स्थितः' इ०उ०। ६ 'स्रवन्' इ०ई०।

र्विते श्वयथु पाल्या सरुक् तथा लोहित परिपोटवाश्च। परिपोट –स्फुटनम्। स वातात् परिपोटसञ्ज्ञ स्यात्।

**उत्पातः पित्तशोणितात्।**
**गुर्वाभरणभाराद्यैः श्यावो रुग्दाहपाकवान्॥ २१॥**
**श्वयथुः स्फोटपिटिकारागोषाक्लेदसंयुतः।**

**स०**–पित्तशोणितात् स एवोत्पातसञ्ज्ञ। गुर्वाभरणभारादिभिर्हेतुभूतैः प्रकुपितात् पित्तशोणितात् शोफो रुगादिमान् स्फोटादिसयुत। श्यावोऽनुगतार्थ।

**पाल्यां शोफोऽनिलकफात्सर्वतो निर्व्यथः स्थिरः २२**
**स्तब्धः सवर्ण कण्डूमानुन्मन्थो गल्लिरश्च स.।**

**स०**–वातकफात् पाल्या शोफ सर्वतो निर्व्यथ स्थिर स्तब्ध समानवर्ण कण्डूयुत उन्मन्थ उच्यते। स एव गल्लिराख्य·।

**दुर्विद्धे वर्धिते कर्णे सकण्डूदाहपाकरुक्॥ २३॥**
**श्वयथु. सन्निपातोत्थः स नाम्ना दुःखवर्धनः।**

**स०**–कर्णे दुर्विद्धे सति कण्ड्वादिसयुत शोफ सन्निपातात्मको दु खवर्धनसञ्ज्ञ।

**कफासृक्कृमिजाः सूक्ष्माः सकण्डूक्लेदवेदनाः॥२४॥**
**²लेह्याख्याः पिटिकास्ता हि ³लिह्युः पालीमुपेक्षिता.।**

**स०**–कफरक्तजकृमिजा सूक्ष्मा कण्ड्वादियुता लेह्याख्या पिटिका। यस्मात्ता उपेक्षिता पाली लिह्यु।

**पिप्पली सर्वजं शूलं विदारी ⁴कुचिकर्णक'॥ २५॥**
**एषामसाध्याः, याप्यैका तन्त्रिका,ऽन्यांस्तु साधयेत्।**
**पञ्चविंशतिरित्युक्ताः कर्णरोगा विभागतः॥ २६॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने कर्णरोगविज्ञानीयो नाम सप्तदशोऽध्यायः॥ १७॥**

**स०**–पिप्पल्यादयश्चत्वारो रोगा एषा मध्येऽसाध्या। तन्त्रिका याप्या। अन्यास्तु विंशतिरोगान् साधयेत्। इति–एव प्रागुक्तेन प्रकारेण, पञ्चविंशतिरामया विभागेनोक्ता। अनेनान्यतन्त्रकृता सङ्कीर्णकर्णरोगकथन सूचयति। सङ्ख्यान च सुखस्मरणार्थमत्र कृतमिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने कर्णरोगविज्ञानीयो नाम सप्तदशोऽध्याय समाप्त॥ १७॥

१ 'गल्लिकश्च' इ उ। २ 'लिह्याख्या.' इ ई उ चन्द्र स स। ३ "लिह्यु –भक्षयेयु.।" इति चन्द्र। ४ 'कूचि' उ.स.द.।



## अष्टादशोऽध्यायः।

अस्मादनन्तरमेनचिकित्सोच्यत इत्याह—

**¹अथातः कर्णरोगप्रतिषेध व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षय.।**

(गद्यसूत्रे॥ २॥)

**कर्णशूले पवनजे पिबेद्रात्रौ रसाशित.।**
**वातघ्नसाधितं सर्पिः, कर्ण स्विन्नं च पूरयेत्॥ १॥**
**पत्राणा पृथगश्वत्थबिल्वार्कैरण्डजन्मनाम्।**
**तैलसिन्धूत्थदिग्धाना स्विन्नानां पुटपाकतः॥ २॥**
**रसैः कवोष्णैस्तद्वच्च मूलकस्यारलोरपि।**

**स०**–वातोद्भवे कर्णशूले मासरसेन भोजितो वातघ्नद्रव्यभावित घृत निशि पिबेत्।

कर्ण च स्विन्न सन्त पृथगश्वत्थादिजाना पत्राणा तैलसैन्धवदिग्धाना पुटपाकत स्विन्नाना रसै कोष्णै पूरयेत्। तथैव मूलकस्य रसेन स्योनाकस्य च रसेन पूरयेत्।

**गणे वातहरे²ऽम्लेषु मूत्रेषु च विपाचितः॥ ३॥**
**³महास्नेहो द्रुतं हन्ति सुतीव्रामपि वेदनाम्।**

**स०**–वातहरे गणेऽम्लेषु मूत्रेषु च–गोमूत्रादिषु, विपाचितो महास्नेहो द्रागेव सुदारुणामपि पीडा जयति।

**महतः पञ्चमूलस्य काष्ठात्क्षौमेण वेष्टितात्॥ ४॥**
**तैलसिक्तात्प्रदीप्ताग्रात् स्नेह. सद्यो ³रुजापहः।**

**स०**–महत पञ्चमूलस्य एकतमात् काष्ठात् क्षौमेण वेष्टितात् तैलसिक्तात् प्रज्वलितात् ग्राह्य स्नेह। स कर्णे निषिक्त सद्यो रुजाहृत्।

**योज्यश्चैवं भद्रकाष्ठात्कुष्ठात्काष्ठाच्च सारलात्॥ ५॥**

**स०**–एव–अनेनैव विधिना, देवदारुकाष्ठात् कुष्ठात् सरलकाष्ठाच्च च्युत स्नेहो–रसो, योज्य।

**वातव्याधिप्रतिश्यायविहितं हितमत्र च।**

**स०**–वातव्याधौ प्रतिश्याये च यद्विहित भेषज तच्चात्र हितम्।

**वर्जयेच्छिरसा स्नानं शीताम्भ.पानमह्न्यपि॥ ६॥**

**स०**–शिरसा सह स्नान वर्जयेत्। शीतजलपान दिवाऽपि न कार्यम्, रात्रौ तु सर्वथा वर्ज्यमेवेत्यर्थ।

**पित्तशूले सितायुक्तघृतस्निग्धं विरेचयेत्।**
**द्राक्षायष्टिशृतं स्तन्यं शस्यते कर्णपूरणम्॥ ७॥**

१ अथ कर्णरोगप्रतिषेधश्चरके चि० २६ अध्याये, सुश्रुते सू० १६ अध्याये चि० २५ अध्याये उ० २१ अध्याये च, अष्टाङ्गसङ्ग्रहे उ० २२ अध्याये चास्ति वर्णित। २ "अम्लेषु–तक्रमस्तुकाञ्जिकादिषु। महास्नेहो–सर्पिस्तैलवसामज्जाख्य॥ विरेचनद्रव्यै पित्तघ्नैर्विरेचयेत्।" इति चद्र। ३ 'जाहर' इ इ। ४ 'रस. स्ना' इ.ई.उ.चन्द्र।

स०-पित्तशूले सितान्वितघृतेन स्निग्ध विरेचयेत्। द्राक्षा-मधुकसिद्ध स्त्रीक्षीर कर्णपूरण हितम्।

**यष्ट्यनन्ताहिमोशीरकाकोलीरोध्रजीवकैः।**
**मृणालबिसमञ्जिष्ठासारिवाभिश्च साधयेत्॥ ८॥**
**यष्टीमधुरसप्रस्थक्षीरद्विप्रस्थसंयुतम्।**
**तैलस्य कुडवं नस्यपूरणाभ्यञ्जनैरिदम्॥ ९॥**
**निहन्ति शूलदाहोषाः केवलं क्षौद्रमेव वा।**

स०-यष्ट्यादिभि कल्कैर्मधुकक्राथप्रस्थेन क्षीरस्य द्विप्रस्थेन च सयुत तैलकुडव साधयेत्। नस्यकर्णपूरणाभ्यञ्जनैरिद शूला-दीन् हन्ति। केवल क्षौद्र वा।

**यष्ट्यादिभिश्च सघृतैः कर्णौ दिह्यात्समन्ततः॥ १०॥**

स०-यष्ट्यादिभि -पूर्वोक्तै, ससपिष्कै कर्णौ च परितो लिम्पेत्।

**वामयेत् पिप्पलीसिद्धसर्पि·स्निग्धं कफोद्भवे।**
**धूमनावनगण्डूषस्वेदान् कुर्यात्कफापहान्॥ ११॥**

स०-कफोत्थे पिप्पलीपक्वघृतस्निग्ध वामयेत्। धूमादींश्च कफघ्नान् विदध्यात्।

**लशुनार्द्रकशिग्रूणा¹ मुरुङ्ग्या² मूलकस्य च।**
**कदल्या· स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे॥ १२॥**

स०-लशुनादीना पृथक् पृथक् स्वरस कर्णपूरणे कोष्ण श्रेष्ठ।

**अर्काङ्कुरानम्लपिष्टांस्तैलाक्तांल्लवणान्वितान्।**
**³सन्निधाय स्नुहीकाण्डे कोरिते तच्छदा⁴वृतान्॥ १३॥**
**स्वेदयेत्पुटपाकेन स रसः शूलजित्परम्।**

स०-अर्काङ्कुरानम्लेन-काञ्जिकेन, पिष्टास्तैलेन रूक्षि(षि)-तान् लवणान्वितान् स्नुहीकाण्डे कोरिते सन्निधाय तस्या -स्नुह्या, पत्रैरावृतान् पुटपाकेन स्वेदयेत्। स रस पर शूलजित्।

**रसेन बीजपूरस्य कपित्थस्य च पूरयेत्॥ १४॥**
**सुक्तेन पूरयित्वा वा फेनेनान्⁵ववचूर्णयेत्।**

स०-तथा बीजपूरस्य रसेन कपित्थरसेन च पूरयेत्। अथवा सुक्तेन पूरयित्वा समुद्रफेनचूर्णैरवचूर्णयेत्।

**अजाविमूत्रवशात्वक्सिद्धं तैलं च पूरणम्॥ १५॥**
**सिद्धं वा सार्षपं तैलं हिङ्गुतुम्बुरुनागरैः।**

स०-अजावि⁶मूत्राभ्या वशात्वचा च सिद्ध तैल पूरण हितम्। सार्षप तैल हिङ्गुतुम्बुरशुण्ठीभि सिद्ध पूरण हितम्।

**रक्तजे पित्तवत्कार्यं सिरा चाशु विमोक्षयेत्॥ १६॥**

स०-रक्तजे कर्णशूले पित्तवत्कार्यम्। शीघ्र च सिरा विमो-क्षयेत्।

**पक्के पूयवहे कर्णे धूमगण्डूषनावनम्।**
**युञ्ज्यान्नाडीविधानं च दुष्टव्रणहरं च यत्॥ १७॥**

स०-पक्के पूयवहे कर्णे धूमादिक योज्यम्। नाडीविधान च योज्यम्। दुष्टव्रणघ्न यच्च तच्च योज्यम्।

**स्रोतः प्रमृज्य दिग्ध तु द्वौ कालौ पिचुवर्तिभिः¹।**
**पुरेण धूपयित्वा तु माक्षिकेण प्रपूरयेत्॥ १८॥**
**सुरसादिगणक्काथफाणिताक्तां² च योजयेत्।**
**पिचुवर्तिं सुसूक्ष्मैश्च तच्चूर्णैरवचूर्णयेत्॥ १९॥**

स०-पिचुवर्तिभिश्च कर्णस्रोतो दिग्ध-पूयेन, द्वौ कालौ प्र-मृज्य गुग्गुलुना धूपयित्वा ततो माक्षिकेण पूरयेत्। सुरसादि-गणक्काथकृतफाणिताक्ता पिचुवर्तिं च योजयेत्। सुसूक्ष्मैस्त-च्चूर्णै -सुरसादिरजोभि, अवचूर्णयेत् कर्णस्रोत।

**शूलक्लेदगुरुत्वाना विधिरेष निवर्तकः।**

स०-शूलादीना निवर्तको विधिरेष।

**प्रियङ्गुमधुकाम्बष्ठाधातक्युत्पलपर्णिभिः॥ २०॥**
**मञ्जिष्ठालोध्रलाक्षाभि· कपित्थस्य रसेन च।**
**पचेत्तैलं तदास्रावं निगृह्णात्याशु पूरणात्॥ २१॥**

स०-प्रियङ्ग्वादिभि कपित्थरसेन तैल पचेत्। तत्पूरणा-द्वागेवास्राव निर्हरति।

**नादबाधिर्ययोः कुर्याद् वातशूलोक्तमौषधम्।**
**श्लेष्मानुबन्धे श्लेष्माणं प्राग्जयेद्वमनादिभिः॥ २२॥**

स०-नादे बधिरत्वे च वातशूलोक्तमौषधं कुर्यात्।

श्लेष्मानुबन्धे प्राक् श्लेष्माण वमनादिभिर्जयेत्।

**एरण्डशिग्रु³वरुणमूलकात्पत्रजे रसे।**
**चतुर्गुणे पचेत्तैलं क्षीरे चाष्टगुणोन्मिते॥ २३॥**
**यष्ट्याह्वाक्षीरकाकोलीकल्कयुक्तं नि⁴हन्ति तत्।**
**नादबाधिर्यशूलानि नावनाभ्यङ्गपूरणैः॥ २४॥**

स०-एरण्डादिपत्रजे रसे चतुर्गुणे क्षीरे चाष्टगुणे यष्टिका-दिकल्कयुत तैल पचेत्। तच्च नावनादिभिर्नादादीन् हन्ति।

**पक्कं प्रतिविषाहिङ्गुमिशित्वक्स्वर्जिकोषणैः।**
**ससुक्तैः पूरणात्तैलं रुक्स्रावा⁵श्रुतिनादनुत्॥ २५॥**

स०-प्रतिविषादिभि ⁶सयुक्त तैल पक्क पूरणाद्रुजादिजित्।

---

१ "शिग्रु -मधुशिग्रु। मुरङ्गी-द्वितीय शोभाञ्जनक।" इति डल्हण। "मुरुङ्गी-मधुस्रवा।" इतीन्दु। "पश्चात् समुद्र-फेनेन त कर्णमवचूर्णयेत्।" इति चन्द्र। २ 'मुरङ्ग्या' इ उ स सु। 'सुरङ्ग्या' ण.चन्द्र.। 'भृङ्गस्य' ई। ३ 'सन्निदध्यात्' स सु। ४ 'वृते' इ चन्द्र स.सु.। ५ 'सिद्धतैलेन पूर-येत्' इ.। ६ 'विण्मूत्रा' ट.।

१ "पिचुवर्तिं -कार्पासवर्तिं।" इतीन्दु। २ 'च शील येत्' इ। 'प्रयो' ई उ। 'नियो' चन्द्र। ३ 'ग्रतरुण' इ.ई। ४ 'हिनस्ति' चन्द्र.। ५ 'स्रावश्रु' ई.उ.। ६ 'सपृक्त' ट.ड.।

कर्णनादे हितं तैलं सर्षपोत्थं च पूरणे।
स०-सर्षपोद्भव च तैल कर्णनादे हितम्।

शुष्कमूलकखण्डाना क्षारो हिङ्गु महौषधम्॥ २६॥
शतपुष्पावचाकुष्ठदारुशिग्रुरसाञ्जनम्।
सौवर्चलयवक्षारस्वर्जिकौद्भिदसैन्धवम्॥ २७॥
भूर्जग्रन्थिबिडं मुस्ता मधुसुक्तं चतुर्गुणम्।
मातुलुङ्गरसस्तद्वत् कदलीस्वरसश्च तै.॥ २८॥
पक्वं तैलं जयत्याशु सुकृच्छ्रानपि पूरणात्।
कण्डू क्लेदं च बाधिर्यपूतिकर्णत्वरुक्कृमीन्॥ २९॥
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयेषु च।

स०-शुष्कमूलकखण्डाना क्षारादीनि सामान्यपरिभाषोक्त-प्रमाणानि तथा तैलान्मध्वयुत सुक्त चतुर्गुण तथा बीजपूररस कदलीस्वरसश्च चतुर्गुण। तैरेतैस्तैल पक्व पूरणात् सुकृच्छ्रानपि कण्ड्वादीनाशु जयेत्। इद क्षारतैल मुखदन्तरोगेषु च श्रेष्ठम्।

अथ सुप्ताविव स्याता कर्णौ रक्तं हरेत्ततः॥ ३०॥
स०-यदि कर्णौ सुप्ताविव स्याता तदाऽस्र हरेत्।

सशोफक्लेदयोर्मन्दश्रुतेर्वमनमाचरेत्।
स०-कर्णयो सशोफक्लेदयोर्मन्दश्रुतेरातुरस्य वमन प्रयुञ्ज्यात्।

बाधिर्यं वर्जयेद्बालवृद्धयोश्चिरजं च यत्॥ ३१॥
स०-बाधिर्य बालवृद्धयोश्चिरजात च यत्तद्वर्जयेत्।

प्रतीनाहे परिक्लेद्य स्नेहस्वेदैर्विशोधयेत्।
कर्णशोधनकेनानु कर्णं तैलस्य पूरयेत्॥ ३२॥
ससुक्तसैन्धवमधोर्मातुलुङ्गरसस्य वा।
शोधनाद्रूक्षतोत्पत्तौ घृतमण्डस्य पूरणम्॥ ३३॥

स०-प्रतीनाहे स्नेहस्वेदै परिक्लेद्य कर्ण कर्णशोधनकेन विशोधयेत्। पश्चात्तैलस्य सुक्तादिना युक्तस्य कर्णौ(र्ण) पूरयेत्। तैलस्येति सम्बन्धमात्रे षष्ठी। मातुलुङ्गरसस्य वा सुक्तादियुक्तस्य पूरयेत्। शोधनेन रूक्षतोत्पत्तौ सत्या घृतमण्डस्य पूरण हितम्।

क्रमोऽयं मलपूर्णेऽपि कर्णे
स०-कर्णे मलेन पूर्णेऽप्यय-प्रतीनाहोक्त, क्रम कार्य।

कण्ड्वां कफापहम्।
नस्यादि, तद्वच्छोफेऽपि कटूष्णैश्चात्र लेपनम्॥३४॥
स०-कण्ड्वा तथा कफघ्न नस्यादि।
शोफेऽपि तथैवाय क्रम। कटूष्णैश्च लेपन हितम्।

कर्णस्रावोदितं कुर्यात्पूतिकृमिणकर्णयोः।
पूरणं कटुतैलेन विशेषात् कृमिकर्णके॥ ३५॥
स०-पूतिकर्णे कृमि[ण]कणे च कर्णस्रावोक्त चिकित्सित कुर्यात्। कृमिणकर्णके विशेषात्कटुतैलेन पूरण हितम्।

वमिपूर्वा हिता कर्णविद्रधौ विद्रधिक्रिया।
स०-कर्णविद्रधौ वमनपूर्वा विद्रधिक्रिया शस्ता।

पित्तोत्थकर्णशूलोक्तं कर्तव्यं क्षतविद्रधौ॥ ३६॥
स०-क्षतविद्रधौ पित्तोत्थकर्णशूलोक्त सर्व कर्तव्यम्।

अर्शोऽर्बुदेषु नासावद्
स०-अर्शोऽर्बुदेषु नासावत् चिकित्सा।

आमा कर्णविदारिका।
कर्णविद्रधिवत्साध्या यथादोषोदयेन च॥ ३७॥
स०-कर्णविदारिकाऽपक्वा कर्णविद्रधिवत् चिकित्स्या, यथादोषोदयेन च।

पालीशोषेऽनिलश्रोत्रशूलवन्नस्यलेपनम्।
स्वेदं च कुर्यात् स्विन्नां च पालीमुद्वर्तयेत्तिलैः॥३८॥
प्रियालबीजयष्ट्याह्वहयगन्धायवान्वितैः।

स०-पालीशोषे वातश्रोत्रशूल इव नस्यादि स्वेद च कुर्यात्। पाली च स्विन्ना तिलै प्रियालबीजादियुक्तैरुद्वर्तयेत्।

तत. पुष्टिकरैः स्नेहैरभ्यङ्गं नित्यमाचरेत्॥ ३९॥
स०-तत स्नेहै पुष्टिकृद्भिर्नित्य साऽभ्यक्तव्या।

शतावरीवाजिगन्धापयस्यैरण्डजीवकै.।
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत्परम्॥ ४०॥
स०-शतावर्यादिभिस्तैल सक्षीर पक्व पालीना पर पुष्टिकृत्।

कल्केन जीवनीयेन तैलं पयसि पाचितम्।
आनूपमांसक्वाथे च पालीपोषणवर्धनम्॥ ४१॥
स०-जीवन्त्यादिगणजेन कल्केन क्षीरे आनूपमासक्वाथे च तैल पाचित पालीपोषण पालीवृद्धिकृच्च।

पालीं छित्त्वाऽतिसङ्क्षीणां शेषां सन्धाय पोषयेत्।
स०-पालीमतिसङ्क्षीणा छित्त्वा शेषा सन्धाय वर्धयेत्।

१ "मधुसुक्त-माद्वीकसुक्तम्॥ तत-तत्समीपे, शिराभिर्यथादोष रक्त हरेत्॥ चिरज-वर्षगणोत्थम्॥ शोधनात्-शोध्यमानात् कफात्।" इति चन्द्र। २ 'कण्डूक्ष्वेडनबा' इ उ। 'कण्डूज्वलनबा' ई। ३ 'नपिद्रागेव कण्ड्वादीन् ज' ट। ४ 'ततो' इ उ। ५ 'तैलेन पू० न्धवेनाशु मातुलुङ्गरसेन वा० मण्डेन पू' इ उ। ६ 'नाद्रागसम्पत्तौ' ई। ७ 'तैलस्य पूरणम्' इत्येको योग। 'सुक्तादियुक्तस्य मातुलुङ्गरसस्य पूरणम्' इति द्वितीयो योग। अरुणदत्तेन तु "तैलस्य सुक्तादिना युक्तस्य कर्णं पूरयेत्" इति कृत व्याख्यान चिन्त्यम्, सङ्ग्रहे "कर्णं तैलस्य पूरयेत्, मातुलुङ्गरसस्य सशुक्तक्षौद्रसैन्धवस्य।" इत्युक्तत्वात्।

१ कण्ड्वा-कण्डूवाख्ये कर्णरोगे। शोफे-शोफाख्ये कर्णरोगे। २ "नस्यादि-नस्यधूमाहारपानादि। कफापह-कफघ्न, हितम्।" इति चन्द्र। ३ 'श्चात्र ले' इ उ चन्द्र। ४ 'मिलकर्णे' इ उ। 'मिककर्णे' ई। ५ 'वमि पूर्वं' उ चन्द्र.। ६ 'दिक कार्य स्वेदश्च। पा' ट.ड.। ७ 'क्वाथेन' इ ई.,ड.।

**याप्यैवं तन्त्रिकाख्याऽपि**

स०–याप्यैव तन्त्रिकासंज्ञा ।

**परिपोटेऽप्ययं विधिः ॥४२॥**

स०–परिपोटेऽप्येष एव विधिर्याप्याख्य ।

**उन्पाते शीतलैर्लेपो जलौकोहृतशोणिते ।**

स०–उन्पाते जलौकोभिरपनीतरक्ते शीतलैर्लेप ।

**जम्ब्वाम्रपल्लवबलायष्टीरोध्रतिलोत्पलैः ॥ ४३ ॥**
**सधान्याम्लैः समञ्जिष्ठैः सकदम्बैः ससारिवैः ।**
**सिद्धमभ्यञ्जने तैलं विसर्पोक्तघृतानि च ॥ ४४ ॥**

स०–जम्ब्वादिभि सिद्ध तैलमभ्यङ्गे हितम् । विसर्पोक्तघृतानि च हितानि ।

**उन्मन्थेऽभ्यञ्जनं तैलं गोधाकर्कवसान्वितम् ।**
**तालपत्र्यश्वगन्धार्कबाकुचीफलसैन्धवैः ॥ ४५ ॥**
**सुरसालाङ्गलीभ्यां च सिद्धं, तीक्ष्णं च नावनम् ।**

स०–उन्मन्थे तैल गोधाकर्कटवसायुक्त तालपर्ण्यादिभि सिद्धमभ्यञ्जन हितम् । तथा सुरसालाङ्गलीभ्यां च तैल सिद्ध तीक्ष्ण नावन हितम् ।

**दुर्विद्धेऽश्मन्तजम्ब्वाम्रपत्रक्राथेन सेचिताम् ॥४६॥**
**तैलेन पालीं स्वभ्यक्तां सुश्लक्ष्णैरवचूर्णयेत् ।**
**चूर्णैर्मधुकमञ्जिष्ठाप्रपौण्ड्राह्वनिशोद्भवैः ॥ ४७ ॥**
**लाक्षाविडङ्गसिद्धं च तैलमभ्यञ्जने हितम् ।**

स०–दुर्विद्धेऽश्मन्तकादिक्राथेन सेचितां पालीं तैलेन स्वभ्यक्तां मधुकादिभि सूक्ष्मरजीकृतैरवचूर्णयेत् । लाक्षाविडङ्गसिद्ध तैलमभ्यञ्जने हितम् ।

**स्विन्नां गोमयजैः पिण्डैर्बहुशः परिलेहिकाम् ॥ ४८ ॥**
**विडङ्गसारैरालिम्पेदुरभ्रीमूत्रकल्कितैः ।**
**कौटजेङ्गुदकारञ्जबीजशम्याकवल्कलैः ॥ ४९ ॥**
**अथवाऽभ्यञ्जनं तैर्वा कटुतैलं विपाचयेत् ।**
**सनिम्बपत्रमरिचमदनैर्लेहिकाव्रणे ॥ ५० ॥**

स०–परिलेहिकां गोमयजैः पिण्डैर्बहुश स्विन्नां विडङ्गसारैरुरभ्रीमूत्रकल्कितैरालिम्पेत् । कौटजादिबीजादिभिर्वाऽविमूत्रेण कल्कितैरालिम्पेत् । अथवा तैरेव–कौटजादिभि, कटुतैल निम्बादिभि सह विपाचयेत् लेहिकाव्रणे ।

**छिन्नं तु कर्णं शुद्धस्य बन्धमालोच्य यौगिकम् ।**
**शुद्धास्रं लागयेल्लग्ने सद्यश्छिन्ने विशोधनम् ॥ ५१ ॥**

स०–कर्ण तु छिन्न शुद्धरक्त शुद्धस्य यौगिक बन्धमालोच्य लागयेत् । लग्ने कर्णे सद्यश्छिन्ने विशोधन–विरेकादि ।

अथ कर्णरोगविधानमाह—

**अथ ग्रथित्वा केशान्तं कृत्वा छेदनलेखनम् ।**
**निवेश्य सन्धिं सुषमं न निम्नं न समुन्नतम् ॥ ५२ ॥**
**अभ्यज्य मधुसर्पिर्भ्यां पिचुप्लोतावगुण्ठितम् ।**
**सूत्रेणागाढशिथिलं बद्ध्वा चूर्णैरवाकिरेत् ॥ ५३ ॥**
**शोणितस्थापनैर्व्रण्यमाचारं चादिशेत्ततः ।**
**सप्ताहादामतैलाक्तं शनैरपनयेत् पिचुम् ॥ ५४ ॥**

स०–केशान्तं ग्रथित्वा छेदन लेखन च कृत्वा सन्धि सुषम निवेश्य न निम्न न चोन्नतम्, सुषममिति "सुषामादिषु च" इति षत्वम्, अभ्यज्य मधुसर्पिर्भ्यां पिचुप्लोतावगुण्ठित सूत्रेण न गाढं न च शिथिल बध्वा शोणितस्थापनै –मधुकगैरिकादिभि, अवचूर्णयेत् । ततो व्रणहितमाचारमाचरेत् । सप्ताहादूर्ध्वमामतैलेनाक्त शनै पिचुमपनयेत् । सुश्रुते(?) (सङ्ग्रहे) तूक्तम् (स उ अ २२)–"न कर्णे शोफरागादियुक्ते सन्धानमिष्यते । न घसरस्य नात्युष्णे नाविशुद्धतनोरपि ॥" इति ।

**सुरूढं जातरोमाणं श्लिष्टसन्धिं समं स्थिरम् ।**
**सुवर्ष्माणमरोगं च शनैः कर्णं विवर्धयेत् ॥ ५५ ॥**

स०–सुरूढादिगुण च कर्ण शनैर्विवर्धयेत् ।

वर्ष्मरूपमुच्यते(?)—

**जलशूकः स्वयङ्गुप्ता रजन्यौ बृहतीफलम् ।**
**अश्वगन्धाबलाहस्तिपिप्पलीगौरसर्षपाः ॥ ५६ ॥**
**मूलं कोशातकाश्वघ्नरूपिकासप्तपर्णजम् ।**
**छुच्छुन्दरी कालमृता गृहं मधुकरीकृतम् ॥ ५७ ॥**
**जतूका जलजन्मा च तथा शबरकन्दकम् ।**
**एभिः कल्कैः खरं पक्वं सतैलं माहिषं घृतम् ॥ ५८ ॥**
**हस्त्यश्वमूत्रेण परमभ्यङ्गात्कर्णवर्धनम् ।**

१ "एव–अनेन प्रकारेण नस्याभ्यङ्गादिभि ॥ उत्पाते जम्ब्वादिभि समञ्जिष्ठै सकदम्बै ससारिवै कल्कितैश्चतुर्गुणेन धान्याम्लेन तैल सिद्धमभ्यञ्जने हितम् ॥ विडङ्गसारै –विडङ्गतन्दुलै ।" इति चन्द्र । "तालपत्री–मूषकपर्णी । सरला–धूपकाष्ठ ।" इति डल्हण । २ 'अन' इ ई । ३ "उन्मन्थे तीक्ष्णै शिरोविरेक । तालपत्र्यश्वगन्धार्कसैन्धववाव्गुजबीजसुरमलाङ्गलिकाभिर्गोधाकुलीरवसायुक्त तैल विपकमभ्यञ्जनम् ।" इति सङ्ग्रहे उक्तत्वात् अत्रत्यमरुणदत्तव्याख्यानमेवमेव कृत्न चन्द्रन दनव्याख्यान चायुक्तम् । ४ 'कर्किवसा' उ ण, त चन्द्र । ५ 'पत्राश्व' ई म मू, । ६ 'चीतिल' इ उ चन्द्र । ७ 'सरलालाङ्ग' स सु । ८ 'तु' इ उ । ९ दुर्विद्धे–दु खवर्धनाख्ये कर्णरोगे । १० 'प्रपौण्ड्रा' इ ई । 'ह्यापौण्डरीकनि' उ ।

१ 'सम्यक्छिन्नं' चन्द्र । २ 'णितास्था' इ ण त चन्द्र । ३ 'वोन्नत' ण त । ४ 'दिपिचुसन्धा' ट ड ण त । ५ "घसरस–अत्यदनशीलस्य । अत्युष्णे इति देशे काले च ॥ सुवर्ष्मा–सुसार ।" इति दु । "सुवर्ष्माण–सुप्रमाणम् ॥ शबरकन्दक–रोध्र ।" इति चन्द्र । "सुवर्त्मेति शोभनच्छिद्र । स्थिर –दृढ ।" इति डल्हण । ६ 'सुचर्माण' स मू । 'सुवर्त्मा' स सु । ७ 'ण सुरोम च' उ ण त चन्द्र । 'ण सुराग' इति क्वचित् । ८ 'न्दक' ई चन्द्र ।

स०—जलशूकादिभिर्गजाश्वयोर्मूत्रे पिष्टैः सतैलं माहिषं घृतं खरपाकं पक्वमभ्यङ्गात् कर्णवर्धनम् । जलशूकः—शैवालम् । रूपिका—अर्कः । छुच्छुन्दरी—मूषिकाभेदः । सा च कालेन मृता, न तु व्यापादिता। जतूका—चर्मचटिका । जलजन्मा—जलौका। शबरकन्दको—लशुनः ।

**अथ कुर्याद्वयस्थस्य छिन्नां शुद्धस्य नासिकाम् ॥५९॥**
**छिन्द्यान्नासासमं पत्रं तत्तुल्यं च कपोलतः ।**
**त्वङ्मांसं नासिकासन्ने रक्षंस्तत्तनुतां नयेत् ॥ ६० ॥**
**सीव्येद् गण्डं ततः सूच्या सेविन्या पिचुयुक्तया ।**
**नासाच्छेदेऽथ लिखिते परीवर्त्योपरि त्वचम् ॥६१॥**
**कपोलवध्रं सन्दध्यात्सीव्येन्नासां च यत्नतः ।**
**नाडीभ्यामुत्क्षिपेदन्तः सुखोच्छ्वासप्रवृत्तये ॥ ६२ ॥**
**आमतैलेन सिक्त्वाऽनु पत्तङ्गमधुकाञ्जनैः ।**
**शोणितस्थापनैश्चान्यैः सुश्लक्ष्णैरवचूर्णयेत् ॥ ६३ ॥**
**ततो मधुघृताभ्यक्तं बध्वाऽऽचारिकमादिशेत् ।**
**ज्ञात्वाऽवस्थान्तरं कुर्यात् सद्योव्रणविधिं ततः ॥६४॥**
**छिन्द्याद्रूढेऽधिकं मांसं नासोपान्ताच्च चर्म तत् ।**
**सीव्येत्ततश्च सुश्लक्ष्णं हीनं संवर्धयेत्पुनः ॥ ६५ ॥**

स०—अथेति मङ्गले । कृतमङ्गलस्य वयस्थस्य—तरुणस्य, शुद्धस्य नासिकां छिन्नां कुर्यात्। कथम् ? इत्याह—नासातुल्यं पत्रं छिन्द्यात् । तेन—पत्रेण, तुल्यं कपोलाच्छिन्द्यात् । नासिकातुल्ये देशे त्वचं मांसं च रक्षन् तत्—पत्रं, तनुतां नयेत्। अनन्तरं सूच्या सेविन्या पिचुयुक्तया गण्डं सीव्येत् । अथ नासाच्छेदे लिखिते तत्त्वचमुपरिवर्त्य कपोलवध्रं सन्दध्यात् । नासां च यत्नेन सीव्येत्। अन्तः—मध्ये, नासिकां नाडीभ्यामुत्क्षिपेत् सुखोच्छ्वासप्रवर्तनाय । ततः आमतैलेन सिक्त्वा पत्तङ्गमधुकाञ्जनैरवचूर्णयेत् । अन्यैरपि—सिराव्यधविध्युक्तैः शोणितस्थापनैः ( हृ सू अ २७।४८), सुश्लक्ष्णैश्चूर्णैरवचूर्णयेत् । अनन्तरं माक्षिकघृताभ्यामभ्यक्तं बध्वा, आचारिकं—स्नेहविध्युक्तं, आदिशेत्। अवस्थान्तरं च ज्ञात्वा सद्योव्रणप्रतिषेधविधिं कुर्यात् । ततो रूढे सत्यधिकं मांसं तच्च नासासमीपादधिकं चर्म छिन्द्यात् । अनन्तरं सीव्येत् । ततः सुश्लक्ष्णं च कृत्वा पुनः सीव्येत् । हीनं च वर्धयेत् ।

१ "चर्मचटिका—प्रसिद्धा चर्मपक्षा । आचारिक—व्रणोक्त आचारः ।" इतीन्दुः । "पत्तङ्ग—रक्तचन्दनम् । अञ्जन—रसाञ्जनम् ।" इति डल्हणः । २ 'दे सुलिखि' इ उ स मू । ३ कपोलवध्र—कपोलचर्म । ४ 'लवध्रौ' इ । 'लवच्च' स मू । 'लबन्ध' त । ५ 'पतङ्ग' इ उ । ६ 'णितास्था' उ त । ७ 'चारमथादि' इ उ । ८ 'चर्मवत्' ई.उ.ण त चन्द्र स.मू ।

**निवेशिते यथान्यासं सद्यश्छिन्नेऽप्ययं विधिः ।**

स०—सद्यश्छिन्नेऽपि प्राणे यथान्यासं निवेशिते सत्ययमेव विधिः ।

**नाडीयोगाद्विनौष्ठस्य नासासन्धानवद्विधिः ॥ ६६ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसहितायां षष्ठे उत्तरस्थाने कर्णरोगप्रतिषेधो नामाष्टादशोऽध्यायः ॥ १८ ॥**

स०—नाडीयोगमन्तरेणौष्ठस्यापि छिन्नस्य नासासन्धानतुल्यो विधिरिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने कर्णरोगप्रतिषेधो नामाष्टादशोऽध्यायः समाप्तः ॥ १८ ॥



# एकोनविंशोऽध्यायः ।

अथ क्रमप्राप्तं नासारोगविज्ञानं बिभणिषुराह—

**अथातो नासारोगविज्ञानीयं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**अवश्यायानिलरजोभाष्यातिस्वप्नजागरैः ।**
**नीचात्युच्चोपधानेन पीतेनान्येन वारिणा ॥ १ ॥**
**अत्यम्बुपानरमणच्छर्दिबाष्पग्रहादिभिः ।**
**क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गताः २**
**जनयन्ति प्रतिश्यायं वर्धमानं क्षयप्रदम् ।**

स०—अवश्यायादिभिर्वातोल्बणा दोषाः क्रुद्धा नासायां स्त्यानतां—घनत्वं प्राप्ताः, प्रतिश्यायं जनयन्ति । किम्भूतम् ? विवर्धमानं क्षयप्रदम् ।

१ 'सद्यश्छेदेऽ' इ ई उ ण त चन्द्र स मू । २ अयं नासारोगविज्ञानीयश्चरके चि० ८।२६ अध्याययोः, सुश्रुते उ० २२।२४ अध्याययोः, अष्टाङ्गसङ्ग्रहे उ० २३ अध्याये चास्ति वर्णितः । ३ 'ज्ञानं व्या' ई उ ण त चन्द्र स मू । ४ "अवश्यायो—रात्रिकाले जलं शीतलमाकाशात् पतति । अन्येन—विजातीयेन ।" इति चन्द्रः । ५ 'वृद्धा' उ. । 'क्षुब्धा' चन्द्रः ।

**तत्र वातात्प्रतिश्याये मुखशोषो भृश क्षव. ॥ ३ ॥**
**घ्राणोपरोधनिस्तोदद्न्तशङ्खशिरोव्यथा. ।**
**कीटिका इव सर्पन्तीर्मन्यते परितो भ्रुवौ ॥ ४ ॥**
**स्वरसादश्चिरात्पाकः शिशिराच्छकफस्रुतिः ।**

स०-[तत्र-] तेषु रोगेषु वातपित्तकफाद्युत्थेषु मध्ये, वातात् प्रतिश्याये सति मुखशोषादय स्यु । भ्रुवौ परित कीटिका सर्पन्तीरिव मन्यते । भ्रुवौ परित इति "अभित परित" इति द्वितीया । स्वरसादादयश्च स्यु ।

**पित्तात्तृष्णाज्वरघ्राणपिटिकासम्भवभ्रमाः ॥ ५ ॥**
**नासाग्रपाको रूक्षोष्णताम्रपीतकफस्रुति ।**

स०-पित्तात् प्रतिश्याये सति तृष्णादयो भवन्ति । घ्राणमध्ये पिटिका घ्राणपिटिका, तासा सम्भव । नासाया अग्रे पाको नासाग्रपाक ।

**कफात्कासोऽरुचिः श्वासो वमथुर्गात्रगौरवम् ॥ ६ ॥**
**माधुर्यं वदने कण्डूः स्निग्धशुक्लकफस्रुति. ।**

स०-कफात् प्रतिश्याये सति कासादय स्यु ।

**सर्वजो लक्षणैः सर्वैरकस्माद्वृद्धिशान्तिमान् ॥ ७ ॥**

स०-त्रिदोषज प्रतिश्याय सर्वदोषलक्षणैर्युत । अकस्मात्-निमित्त विना, वृद्धिमाञ्छान्तिमाश्च ।

**दुष्ट नासासिराः प्राप्य प्रतिश्यायं करोत्यसृक् ।**
**उरसः सुप्तता ताम्रनेत्रत्वं श्वासपूतिता ॥ ८ ॥**
**कण्डू. श्रोत्राक्षिनासासु पित्तोक्तं चात्र लक्षणम् ।**

स०-रक्त दुष्ट नासासिरा प्राप्त प्रतिश्याय करोति । तस्मिन्नुरस सुप्तत्व ताम्रनयनत्वादिक पित्ताभिहित च लक्षण स्यात् ।

अथ दुष्टप्रतिश्यायलक्षणमाह—

**सर्वे एव प्रतिश्याया दुष्टतां यान्त्युपेक्षिताः ॥ ९ ॥**
**यथोक्तोपद्रवाधिक्यात्स सर्वेन्द्रियतापन. ।**
**साग्निसादज्वरश्वासकासोर.पार्श्ववेदनः ॥ १० ॥**
**कुप्यत्यकस्माद्बहुशो मुखदौर्गन्ध्यशोफकृत् ।**
**नासिकाक्लेदसशोषशुद्धिरोधकरो मुहुः ॥ ११ ॥**
**पूयोपमासितारक्तग्रथितश्लेष्मसंस्रुतिः ।**
**मूर्च्छन्ति चात्र कृमयो दीर्घस्निग्धसिताणवः॥ १२ ॥**

स०-सर्वे एव प्रतिश्याया उपेक्षिता दुष्टत्व यान्ति । स तु-दुष्टपीनसो, यथोक्तोपद्रवाणा-मुखशोषादीना, आधिक्याद्धेतो सर्वेन्द्रियतापनो-नासाचक्षुरादीना खेदक, अग्निसादादियुतश्च स्यात् । तथा सहसैव पुन पुन कुप्यति । मुखदौर्गन्ध्यादिकर, तथा नासिकाक्लेदादिकरो मुहु पूयसदृशकृष्णरक्तपिण्डितश्लेष्मस्रुति । अत्र च कृमयो मूर्च्छन्ति दीर्घा स्निग्धा श्वेता सुसूक्ष्माश्च ।

**पक्वलिङ्गानि तेष्वङ्गलाघवं क्षवथोः शमः ।**
**श्लेष्मा संचिक्कणः पीतोऽज्ञान च रसगन्धयोः॥ १३ ॥**

स०-तेषु-प्रतिश्यायेषु, पक्वलक्षणानि । तद्यथा,-अङ्गस्य-शरीरस्य लाघव स्यात्, क्षुतेश्च शम, कफ सचिक्कण पीतो, रसगन्धयोश्चाज्ञानमिति ।

भृशक्षवाख्य लक्षयितुमाह—

**तीक्ष्णाघ्राणोपयोगार्करश्मिसूत्रतृणादिभिः ।**
**वातकोपिभिरन्यैर्वा नासिकातरुणास्थनि ॥ १४ ॥**
**विघट्टितेऽनिल. क्रुद्धो रुद्ध. शृङ्गाटक व्रजेत् ।**
**निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशक्षव' ॥ १५ ॥**

स०-तीक्ष्णस्य-मरीचादे, घ्राणात्-सिहनात्, तथा रविरश्म्यादिभिर्वातकोपिभिरन्यैर्वा नासातरुणास्थनि विघट्टिते सति वायु क्रुद्धो रुद्ध शृङ्गाटक गच्छेत् । स निवृत्त सन् अत्यन्त छिक्का कुरुते । स भृशक्षव उच्यते ।

**शोषयन्नासिकास्रोत. कफं च कुरुतेऽनिलः ।**
**शूकपूर्णाभनासात्वं कृच्छ्रादुच्छ्वसनं ततः ॥ १६ ॥**
**स्मृतोऽसौ नासिकाशोषो**

स०-शोषयन्नासिकास्रोत कफ च वायु शूकपूर्णाभनासात्वं कुरुते । तत कृच्छ्रादुच्छ्वसन स्यात् । असौ नासिकाशोष स्मृत ।

**नासानाहे तु जायते ।**
**नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना ॥ १७ ॥**
**निःश्वासोच्छ्वाससंरोधात् स्रोतसी संवृते इव ।**

स०-नासानाहाख्ये रोगे जाते सति घ्राणस्य नद्धत्व-आपूरमिव, जायते । श्लेष्मणा रुद्धेन वातेन नि श्वासोच्छ्वाससरोधात् स्रोतसी सवृते इव स्याताम् ।

**पचेन्नासापुटे पित्तं त्वङ्मांसं दाहशूलवत् ॥ १८ ॥**
**स घ्राणपाकः**

स०-पित्त कर्तृ नासापुटे त्वङ्मास सदाहशूल पचेत् । स घ्राणपाकाख्य ।

१ 'कीटका इव सर्पन्ति म' उ स द्व । २ 'ज्वरो घ्राणे' उ । ३ 'कुथनस्रुति ' ई उ । 'कुथना स्रुति ' ण त चन्द्र । 'ग्धश्लक्ष्णघनस्रुति ' स मू । ४ 'पित्तोत्थ' उ । ५ 'शोषकृत्' इ ई स द्व । ६ 'थिता श्ले' उ ण । 'रक्ता ग्रन्थित' चन्द्र । ७ "अत्र च-दुष्टप्रतिश्याये कफस्रुतौ ॥ मूर्च्छन्ति-समुच्छ्राय लभन्ते ।" इतीन्दु ।

१ "सचिक्कण -सिक्थकोपम । रसगन्धयोश्चाज्ञान स्यात् ॥ व्रजन्-गच्छन्, निवृत्त -निर्गत ।" इति चन्द्र । "शृङ्गाटक-नासास्रोत ।" इतीन्दु । २ 'पीतो ज्ञान' ण स मू । ३ 'योश्च ज्ञान' ट ण । ४ 'भृशक्ष' ई, ट । ५ 'तीक्ष्णघ्रा' इ ई ण त अरुण चन्द्र । ६ 'व्रजन्' चन्द्र स द्व । ७ 'शोषयेन्ना' इ स मू । ८ 'नासत्व' ई स स, ट ड । 'भकण्ठत्व' इ. चन्द्र ।

स्रावस्तु तत्संज्ञः श्लेष्मसम्भवः।
अच्छो जलोपमोऽजस्रं विशेषान्निशि जायते ॥१९॥

स०–स्रावस्तु तत्संज्ञो–घ्राणस्रावाख्य। स च कफादेव केवलाद्भवति। अच्छो जलसदृशो नित्य स्रावो जायते, विशेषेण रात्रौ।

कफः प्रवृद्धो नासाया रुद्ध्वा स्रोतांस्यपीनसम्।
कुर्यात्सघुर्घुरश्वासं पीनसाधिकवेदनम् ॥ २० ॥
अवेरिव स्रवत्यस्य प्रक्लिन्ना तेन नासिका।
अजस्रं पिच्छिलं पीतं पक्वं सिङ्घाणकं घनम् ॥ २१ ॥

स०–कफो नासाया प्रवृद्धो रुद्ध्वा स्रोतास्यपीनस घुर्घुरश्वासयुत पीनसाधिकरुज कुर्यात्। तेन–अपीनसेन, अस्य रोगिणो मेषस्येवानवरत प्रक्लिन्ना नासिका पिच्छिलादियुक्त कफ सिङ्घाणक स्रवति।

रक्तेन नासा दग्धेव बाह्यान्तः स्पर्शनासहा।
भवेद्धूमोपमोच्छ्वासा सा दीप्तिर्दहतीव च ॥ २२ ॥

स०–रक्तेन नासा दग्धेव बाह्यतोऽन्तरतश्च स्पर्शन न सहते। तथा धूमोपमोच्छ्वासा दहतीव च। सा दीप्तिसंज्ञा रोगजाति।

तालुमूले मलैर्दुष्टैर्मारुतो मुखनासिकात्।
श्लेष्मा च पूतिर्निर्गच्छेत् पूतिनासं वदन्ति तम् २३

स०–तालुमूले दोषैर्दुष्टैर्मुखनासिकाद् वायु कफश्च पूतिर्निर्गच्छेत्, त पूतिनास वदन्ति।

निचयादभिघाताद्वा पूयासृङ् नासिका स्रवेत्।
तत्पूयरक्तमाख्यातं शिरोदाहरुजाकरम् ॥ २४ ॥

स०–सन्निपातादभिघाताद्वा नासा पूयासृक् स्रवेत्। तत्पूयरक्तसंज्ञ शिरोदाहरुजाकरमाख्यातम्।

पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयेन्मरुत्।
कफ, सं शुष्क· पुटतां प्राप्नोति पुटकं तु तत् ॥२५॥

स०–पित्तश्लेष्मावरुद्धो वायुरन्तर्नासाया शोषयेत्कफम्। स च–कफ, शुष्क[ ] पुटता प्राप्नोति। पुटक तदुच्यते।

अर्शोऽर्बुदानि विभजेद्दोषलिङ्गैर्यथायथम्।

स०–अर्शांस्यर्बुदानि च दोषलिङ्गैर्यथास्व जानीयात्।

सर्वेषु कृच्छ्रोच्छ्वसनं पीनसः प्रततं क्षुतिः ॥ २६ ॥
सानुनासिकवादित्वं पूतिनासः शिरोव्यथा।

स०–सर्वेषु–अर्श स्वर्बुदेषु च, कृच्छ्रादुच्छ्वसनम्। तथा पीनसोऽनवरत क्षव, तथा सानुनासिकभाषित, तथा पूतिनास शिरोव्यथेति स्यु।

अष्टादशानां नासामित्येषां यापयेद्दुष्टपीनसम् ॥ २७ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया षष्ठे उत्तरस्थाने नासारोगविज्ञानीयो नामैकोनविंशोऽध्याय· ॥ १९ ॥

स०–एषामष्टादशाना पीनसादीना मध्ये दुष्टपीनस यापयेदिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने नासारोगविज्ञानीयो नामैकोनविंशोऽध्याय समाप्त ॥ १९ ॥



## विंशोऽध्यायः।

अधुना नासाचिकित्साभणनावसर इत्याह—

अथातो नासारोगप्रतिषेधं व्याख्यास्याम·।
इति ह स्माहुरात्रेयादयो महर्षयः।
( गद्यसूत्रे ॥ २ ॥ )

सर्वेषु पीनसेष्वादौ निवातागारगो भजेत्।
स्नेहनस्वेदवमनधूमगण्डूषधारणम् ॥ १ ॥
वासो गुरूष्णं शिरस· सुघनं परिवेष्टनम्।
लघ्वम्ललवणं स्निग्धमुष्णं भोजनमद्रवम् ॥ २ ॥

१ 'रुद्ध स्रोत सु पीनसम्' "नासाया प्रवृद्ध स्रोत·सु रुद्ध पीनस कुर्यात्।" इति चन्द्र। २ 'स्वपीनसम्' स स। ३ "नासामल तु सिङ्घाण" इत्यमर। ४ 'न्तरे च' ट ड। ५ 'स्पर्शं न स' ड ण त। ६ पूयासृक्–पूयमिश्रित रक्तम्। *७ "स च कफ शुष्क पुटता–शुष्कत्वाच्चर्मोकृतित्व, प्राप्नोति ॥ सर्वेषु च नासारोगेषु कृच्छ्रोच्छ्वसनादि साधारण लिङ्गम्।" इतीन्दु। "सर्वेषु–अर्शोऽर्बुदेषु।" इति चन्द्र। ८ 'शुष्कपुट' उ ण त.स.मू।

१ 'सतत' ण त स मू। २ 'क्षुतम्' स स। 'क्षव' इति क्वचित्। ३ 'पूतिनासा' इ। 'पूतिर्नासा' उ, ट। ४ 'नामेतेषा' इ उ। ५ 'वर्जयेद्दु' इ। ६ 'पीनसान्' इ चन्द्र। ७ अय नासारोगप्रतिषेधश्चरके चि० ८।२६ अध्याययो, सुश्रुते उ० २३।२४ अध्याययो, अष्टाङ्गसङ्ग्रहे उ० २४ अध्याये चास्ति वर्णित। ८ 'भवेत्' इ। ९ 'ध्वम्ल ल' ई.। १० 'वर्णान्नि' इ ण त।

**धन्वमांसगुडक्षीरचणकत्रिकटूत्कटम् ।**
**यवगोधूमभूयिष्ठं दधिदाडिमसारिकम् ॥ ३ ॥**
**वालमूलकजो यूषः कुलत्थोत्थश्च पूजितः ।**
**कवोष्णं दशमूलाम्बु जीर्णां वा वारुणीं पिबेत् ॥ ४ ॥**

**स०**–पीनसेष्वखिलेष्वपि निवातवेश्मस्थितः सन् स्नेहनस्वेदनवमनधूमान् गण्डूषधारणं च सेवेत । तथा वस्त्रं गुरूष्णस्वभावं कौशेयाविकादिभिर्मूर्ध्नि परिवेष्टनं सुघनं भजेत् । तथा भोजनं लघ्वादिगुणं भजेत् । दाडिमश्रेष्ठ—दाडिमसारम् । दधिदाडिमसाधितमिति केचित् पठन्ति । बालमूलकोत्थो यूषः कुलत्थजश्च यूषः पूजितः । दशमूलाम्बु कोष्णं प्रसन्नां वा जीर्णां–पुराणां, पिबेत् ।

**जिघ्रेच्चोरकतर्कारीवचाजाज्युपकुञ्चिकाः ।**

**स०**–चोरकादीन् जिघ्रेत् ।

**व्योषतालीसचविकातिन्तिडीकाम्लवेतसम् ॥ ५ ॥**
**साग्र्यजाजि द्विपलिकं त्वगेलापत्रपादिकम् ।**
**जीर्णाद्गुडात्तुलार्धेन पक्केन वटकीकृतम् ॥ ६ ॥**
**पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ।**

**स०**–व्योषादिकं पृथक् द्विपलदघ्नं, त्वगादिकं द्विकार्षिकं, पुराणगुडेन पञ्चाशत्पलप्रमाणेन पक्केन वटकीकृतमेतत् पीनसादिहृत् परं रुच्यादिकृत् ।

**शताह्वात्वग्बला मूलं स्योनाकैरण्डबिल्वजम् ॥ ७ ॥**
**सारग्वधं पिबेद्धूमं वसाज्यमदनान्वितम् ।**
**अथवा सघृतान् सक्तून् कृत्वा मल्लकसम्पुटे ॥ ८ ॥**

**स०**–शताह्वादिकं वसादियुतं धूमं पिबेत् । मल्लकसम्पुटे वा सक्तून् ससर्पिष्कान् कृत्वा धूमं पिबेत् ।

**त्यजेत्स्नानं शुचं क्रोधं भृशं शय्यां हिमं जलम् ।**

**स०**–स्नानादीनि त्यजेत् ।

इति सामान्येन चिकित्सामभिधार्य विशेषेणाह—

**पिबेद्वातप्रतिश्याये सर्पिर्वातघ्नसाधितम् ॥ ९ ॥**
**पटुपञ्चकसिद्धं वा विदार्यादिगणेन वा ।**
**स्वेदनस्यादिकां कुर्यात् चिकित्सामर्दितोदिताम् १०**

**स०**–वातप्रतिश्याये वातघ्नैः–रास्नादिभिः, साधितं घृतं पिबेत् । सैन्धवादिभिः पञ्चभिर्लवणैर्वा सिद्धं, 'विदारिपञ्चाङ्गुल' (हृ सू अ १५।९) इत्यादिना वा सिद्धं घृतं पिबेत् । तथा, अर्दितोक्तां चिकित्सां स्वेदादिकां कुर्यात् ।

**पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ।**
**परिषेकान् प्रदेहांश्च शीतैः कुर्वीत शीतलान् ॥ ११ ॥**
**धवत्वक्त्रिफलाश्यामाश्रीपर्णीयष्टितिल्वकैः ।**
**क्षीरे दशगुणे तैलं नावनं सनिशैः पचेत् ॥ १२ ॥**

**स०**–पित्तोत्थे रक्तजे च प्रतिश्याये मधुरद्रव्यैः शृतं सर्पिः पातव्यम् । परिषेकादीन् शीतवीर्यैः शीतलान् कुर्यात् ।

धवत्वगादिभिस्तैलं क्षीरे दशगुणे हरिद्रान्वितैर्नावनं पचेत् ।

**कफजे लङ्घनं लेपः शिरसो गौरसर्षपैः ।**
**सक्षारं वा घृतं पीत्वा वमेत्, पिष्टैस्तु नावनम् ॥ १३ ॥**
**बस्ताम्बुना पटुव्योषवेल्लवत्सकजीरकैः ।**

**स०**–कफजे लङ्घनं हितम् । तथा शिरसो गौरसर्षपैर्लेपः । घृतं सयवक्षारं पीत्वा वमेत् ।

छागमूत्रेण च पिष्टैः सैन्धवादिभिर्नस्यं हितम् ।

**कटुतीक्ष्णैर्घृतैर्नस्यैः कवलैः सर्वजं जयेत् ॥ १४ ॥**

**स०**–घृतैः कटुतीक्ष्णैर्नस्यैः कवलैश्च सान्निपातिकं प्रतिश्यायं जयेत् ।

**यक्ष्मक्रिमिक्रमं कुर्वन् यापयेद्दुष्टपीनसम् ।**
**व्योषोरुबूककृमिजिद्दारुमाद्रीगदेङ्गुदम् ॥ १५ ॥**
**वार्ताकबीजं त्रिवृता सिद्धार्थः पूतिमत्स्यकः ।**
**अग्निमन्थस्य पुष्पाणि पीलुशिग्रुफलानि च ॥ १६ ॥**
**अश्वविड्रसमूत्राभ्यां हस्तिमूत्रेण चैकतः ।**
**क्षौमगर्भां कृतां वर्तिं धूमं घ्राणास्यतः पिबेत् ॥ १७ ॥**

**स०**–दुष्टपीनसं यापयेत्, यक्ष्महरं कृमिहरं च चिकित्सितं कुर्वन् ।

व्योषादिशिग्रुफलान्तानि तुरगविड्रसमूत्राभ्यां हस्तिमूत्रेण चैकतः पिष्टानि क्षौमगर्भां कृतां वर्तिं नासया मुखेन च पिबेत् ।

**क्षवथौ पुटकाख्ये च तीक्ष्णैः प्रधमनं हितम् ।**
**शुण्ठीकुष्ठकणावेल्लद्राक्षाकल्ककषायवत् ॥ १८ ॥**
**साधितं तैलमाज्यं वा नस्यं क्षवपुटप्रणुत् ।**

**स०**–क्षवथौ पुटकाख्ये च रोगे तीक्ष्णैः प्रधमनं हितम् ।

शुण्ठ्यादिकल्कक्वाथवत् तैलं घृतं वा साधितं नस्यं क्षवं पुटं च हन्ति ।

---

१ **'साधितम्'** ण । २ ''पूजितः–शस्तः । चोरकाद्याश्चूर्णीकृताः पोट्टलीकृत्य पीनसेषु जिघ्रेत् ।'' इति चन्द्रः । ३ 'दाडिमश्रेष्ठं' ट । ४ अस्याग्रे **''मनःशिलाविडङ्गालवचात्रिकटुहिङ्गुभिः । चूर्णीकृत्य समाघ्रातः प्रतिश्यायो विनश्यति ॥ १ ॥ तद्वद्घोरकवल्लीलालवाताक्ष्र्यद्विजीरकैः ।''** इति सार्द्धः श्लोकः टीकारहितश्चन्द्रनन्दनटीकापुस्तके, मनःशिलादिरेकः श्लोकः ई पुस्तके चोपलब्धः । ५ **'सिङ्केत्'** ड ण त । ६ **'तित्तिडी'** उ । ७ **'गवधां पिबेद्वर्तिं मधूच्छिष्टवसाघृतैः ।'** स च. । ८ 'यता वि' ट ।

१ **'ष्टिबिल्वकैः'** ण त चन्द्र । २ **'च'** इ । **'तु'** उ । ३ **'कुर्यात्'** इ उ ,ट ड । ४ **'माद्यम्बुदे'** इ । ५ ''माद्री–प्रतिविषा । गदः–कुष्ठम् । इङ्गुदः–तापसवृक्षः । पूतिमत्स्यः–छिन्नो मत्स्यपोतकः ।'' इति चन्द्रः । ६ तीक्ष्णैः –निम्बकटूफलकुष्ठमरिचचूर्णैः सङ्ग्रहोक्तैः ।

**नासाशोषे बलातैलं पानादौ भोजनं रसैः ॥ १९ ॥**
**स्निग्धो धूमस्तथा स्वेदो**

स०—नासाशोषे बलातैलं पाननस्यादौ हितम् । भोजनं मांसरसैर्हितम् । तथा स्निग्धो धूमः स्वेदश्च हितः ।

**नासानाहेऽप्ययं विधिः ।**

स०—नासानाहेऽप्येष एव विधिः—चिकित्सेत्यर्थः ।

**पाके दीप्तौ च पित्तघ्नं तीक्ष्णं नस्यादि संस्रुतौ ॥२०॥**

स०—नासापाके दीप्तौ च पित्तघ्नं चिकित्सितम् । संस्रुतौ—स्रावे, तीक्ष्णं नस्यादि हितम् ।

**कफपीनसवत्पूतिनासापीनसयोः क्रिया ।**
**लाक्षाकरञ्जमरिचवेल्लहिङ्गुकणागुडैः ॥ २१ ॥**
**अविमूत्रद्रुतैर्नस्यं कारयेद्वमने कृते ।**
**शिग्रुसिंहीनिकुम्भाना बीजैः सव्योषसैन्धवैः ॥ २२ ॥**
**सवेल्लसुरसैस्तैलं नावनं परमं हितम् ।**

स०—पूतिनासापीनसयोः कफपीनसवदुपक्रमः ।

लाक्षादिभिरुरभ्रमूत्रद्रुतैः कृते वमने नस्यं कारयेत् ।

शिग्र्वादीनां बीजैर्व्योषादियुतैस्तैलं पक्वं पूतिनासापीनसयोर्नस्ये हितम् ।

**पूयरक्ते नवे कुर्याद् रक्तपीनसवत् क्रमम् ॥ २३ ॥**
**अतिप्रवृद्धे नाडीवत्**

स०—पूयरक्ते नवोत्थे रक्तपीनस इव चिकित्सितं कुर्यात् ।

अतिप्रवृद्धे चास्मिन्नाडीव्रणवदुपक्रमः ।

**दग्धेष्वर्शोर्बुदेषु च ।**
**निकुम्भकुम्भसिन्धूत्थमनोह्वालकणाग्निकैः ॥ २४ ॥**
**कल्कितैर्घृतमध्वक्ता घ्राणे वर्तिं प्रवेशयेत् ।**
**शिग्र्वादि नावनं चात्र पूतिनासोदितं भजेत् २५**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने नासारोगप्रतिषेधो नाम विंशोऽध्यायः ॥ २० ॥**

स०—अर्शोर्बुदेषु च दग्धेषु निकुम्भादिभिः कल्कितैर्घृतमध्वक्ता घ्राणे वर्तिं प्रवेशयेत् । शिग्र्वादिकं च नस्यं पूतिनासोक्तं भजेदिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने नासारोगप्रतिषेधो नाम विंशोऽध्यायः समाप्तः ॥ २० ॥



## एकविंशोऽध्यायः ।

क्रमप्राप्तं मुखरोगविज्ञानमभिधित्सुराह—

**अथातो मुखरोगविज्ञानीयं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**

( गद्यसूत्रे ॥ २ ॥ )

**मात्स्यमाहिषवाराहपिशितामकमूलकम् ।**
**माषसूपदधिक्षीरसुक्तेक्षुरसफाणितम् ॥ १ ॥**
**अवाक्शय्यां च भजतो द्विषतो दन्तधावनम् ।**
**धूमच्छर्दनगण्डूषानुचितं च सिराव्यधम् ॥ २ ॥**
**क्रुद्धाः श्लेष्मोल्बणा दोषाः कुर्वन्त्यन्तर्मुखं गदान् ।**

स०—मात्स्यमाहिषवाराहपिशितादि भजतो दन्तधावनं द्विषतः—असेवमानस्य, धूमादिकं चोचितं द्विषतः, सिराव्यधं च द्विषतः, श्लेष्मोल्बणा दोषाः क्रुद्धा मुखस्यान्तरे गदान् कुर्वन्ति ।

**तत्र खण्डौष्ठ इत्युक्तो वातेनौष्ठो द्विधा कृतः ॥ ३ ॥**

स०—तेषु मुखरोगेषु मध्ये पवनादोष्ठो द्विधा कृतः खण्डौष्ठ इति गदितः ।

**ओष्ठकोपे तु पवनात् स्तब्धावोष्ठौ महारुजौ ।**
**दाल्येते परिपाट्येते परुषासितकर्कशौ ॥ ४ ॥**

स०—पवनादोष्ठकोपे त्वोष्ठौ स्तब्धौ महारुजौ दाल्येते तथा परिपाट्येते इव । तथा परुषौ कृष्णौ रूक्षौ दृश्येते ।

**पित्तात्तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ ।**
**पिटिकाभिर्बहुक्लेदावाशुपाकौ**

१ "बलातैलं—वातव्याधिविहितम् ॥ अयं विधिः—नासाशोषोक्तः ॥ संस्रुतौ—नासास्रावे पीनसे । नस्यादि—नस्यधूमगण्डूषादि ॥ नवे—उत्पन्नमात्रे । क्रमं—उपक्रमम् ॥ अश्मसु अर्बुदेषु च दग्धेषु—क्षारेणाग्निना वा ।" इति चन्द्रः । २ 'दिः शस्यते ।' इ । ३ पूतिनासापीनसयोः—पूतिनासे अपीनसे च । ४ 'क्रियाम्' ण त । ५ 'तु' चन्द्र । ६ 'मध्वाक्ता' ई ण.त ,ट.ड. ।

१ अथ मुखरोगविज्ञानीयश्चरके चि० १२।२६ अध्याययोः, सुश्रुते नि० ११।१६ अध्याययोः, अष्टाङ्गसङ्ग्रहे उ० २५ अध्याये चास्ति वर्णितः । २ 'ज्ञानं व्या' इ ई उ ण त चन्द्र स मू । ३ 'मत्स्य' इ ई उ चन्द्र ,ट ड । ४ 'रशुक्ते' ई चन्द्र स स । ५ "अवाक्शय्या—अधोमुखस्य शयनम् ।" इतीन्दुः । "अन्तर्मुखं—मुखस्याभ्यन्तरम् ।" इति चन्द्रः । "दाल्येते—द्विविधा भवत इव । परिपाट्येते—पुटपुटायेते ।" इति डल्हणः । ६ 'मुखे' इ स, मू । ७ 'भिर्महाक्ले' ण त ।

स०-पित्तेनोष्ठौ तीक्ष्णं न सहेते। पीतौ च स्याताम्। तथा च सर्षपाकृतिभिः पिटिकाभिश्चितौ बहुक्लेदौ शीघ्रपाकौ च।

**कफात्पुनः ॥ ५ ॥**
**शीतासहौ गुरू शूनौ सवर्णपिटिकाचितौ।**

स०-कफेन शीतासहौ गुरू शूनौ सवर्णैः पिटकैराचितौ स्याताम्।

**सन्निपातादनेकाभौ दुर्गन्धास्रावपिच्छिलौ ॥ ६ ॥**
**अकस्मान्म्लानसंशूनरुजौ विषमपाकिनौ।**

स०-सन्निपातादोष्ठौ नानावर्णपिटकैराचितौ दुर्गन्धस्रावपिच्छिलौ सहसैव म्लानौ कदाचित्संशूनौ सरुजौ विषमपाकिनौ वा।

**रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ७ ॥**
**खर्जूरसदृशं चात्र क्षीणे रक्तेऽर्बुदं भवेत्।**

स०-रक्तेन युक्तौ रुधिरं स्रवन्तौ रक्तप्रभा च। क्षीणे रक्ते खर्जूराकारमर्बुदमोष्ठे स्यात्।

**मांसपिण्डोपमौ मांसात्स्यातां मूर्च्छत्कृमी क्रमात् ८**

स०-मांसेन मांसपिण्डोपमावोष्ठौ। क्रमेण च मूर्च्छत्कृमी स्याताम्। मूर्च्छन्ति कृमयो ययोरिति मूर्च्छत्कृमी। तयोः कृमयो जायन्त इत्यर्थः।

**तैलाभश्वयथुक्लेदौ सकण्डू मेदसा मृदू।**

स०-मेदसा तैलाभः शोफः क्लेदश्च ययोस्तावेवम्। तथा कण्डूयुतौ मृदू चौष्ठौ स्याताम्।

**क्षतजाववदीर्येते पाट्येते चासकृत्पुनः ॥ ९ ॥**
**ग्रथितौ च पुनः स्यातां कण्डूलौ दशनच्छदौ।**

स०-क्षतजावसकृदवदीर्येते परिपाट्येते-भेद्येते इव, ग्रथितौ च पुनरोष्ठौ स्यातां सकण्डूकौ च।

**जलबुद्बुदवद्वातकफादोष्ठे जलार्बुदम् ॥ १० ॥**

स०-वातकफात् जलबुद्बुदाकारं जलार्बुदमोष्ठे स्यात्। इत्येकादश ओष्ठे।

**गण्डालजी स्थिरः शोफो गण्डे दाहज्वरान्वितः।**

स०-स्थिरः शोफो गण्डप्रदेशे दाहज्वरयुतो गण्डालजीत्युच्यते। इत्येको गण्डे।

**वाताद्दुष्णसहा दन्ताः शीतस्पर्शेऽधिकव्यथाः ॥११॥**
**दाल्यन्त इव शूलेन शीताख्यो दालनश्च सः।**

स०-वातेन दन्ता उष्णसहाः शीतस्पर्शेऽधिकव्यथाः, शूलेन दाल्यन्त इव च। असौ शीतदन्तसंज्ञो दालनश्चोक्तः।

**दन्तहर्षे प्रवाताम्लशीतभक्षाक्षमा द्विजाः ॥ १२ ॥**
**भवन्त्यम्लाशनेनेव सरुजाश्चलिता इव।**

स०-दन्तहर्षे प्रचण्डवातस्याम्लशीतभक्षस्या( स्य चा )सहा, द्विजा तथाऽम्लाशनेनेव सरुजाश्चलिता इव च स्युः।

**दन्तभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः ॥ १३ ॥**

स०-दन्तभेदे दन्तास्तोदादियुताः स्युः।

**चालश्चलद्भिर्दशनैर्भक्षणादधिकव्यथैः।**

स०-चालाख्यो रोगो दन्तैश्च चलद्भिर्भक्षणादधिकव्यथैश्च स्यात्।

**करालस्तु करालानां दशनानां समुद्भमः ॥ १४ ॥**

स०-करालानां दन्तानां समुद्भमः करालाख्यो रोगः।

**दन्तोऽधिकोऽधिदन्ताख्यः स चोक्तः खलु वर्धनः।**
**जायमानेऽतिरुग् दन्ते, जाते तत्र तु शाम्यति ॥१५॥**

स०-अधिको दन्तोऽधिदन्तसंज्ञो रोगः। वर्धनश्च स एवोक्तः। जायमाने तस्मिन् दन्तेऽतिपीडा जायते। जाते तु तस्मिन् पीडा शाम्यति।

**अधावनान्मलो दन्ते कफो वा वातशोषितः।**
**पूतिगन्धिः स्थिरीभूतः शर्करा**

स०-अधावनाद्दन्ते मलः कफो वा पवनेन शोषितः पूतिगन्धिः स्थिरीभूतः। स एवोपेक्षितः शर्करा स्यात्।

**साऽप्युपेक्षिता ॥ १६ ॥**
**शातयत्यणुशो दन्तात्कपालानि कपालिका।**

१ 'पिटका' इ चन्द्र स स। २ "अनेकाभौ-नानावर्णौ। अकस्मात्-कारण विना। विषमपाकिनौ-क्वचिद्देशे सपाकौ क्वचिदपाकौ ॥ अत्र च-ओष्ठयोः। क्षतजौ-दशनादेरोष्ठौ। दशनच्छदौ-ओष्ठौ।" इति चन्द्र। "रक्तोपसृष्टौ-रक्तार्दितावोष्ठौ। अत्र च-रक्तौष्ठकोपे, रक्ते स्रावात् क्षीणे॥ क्षतजावोष्ठौ-यौ क्षतेन कुपितौ। पुनः-तथाऽप्यचिकित्सिते॥ स्थिरः-अचल।" इतीन्दु। "मूर्च्छन्ति-भवन्ति।" इति डल्हणः। ३ 'गन्धस्राव' ई चन्द्र। 'न्धावतिपि' इ। ४ 'वर्णै पिट' ट। ५ 'च' ड। ६ 'वोष्ठौ। तयोश्च कृमयो जायन्त इत्यर्थः। क्रमेण च मूर्च्छत्कृमी स्याताम्।' ड ण त। ७ 'सकण्डू' इ उ.। ८ 'वाऽसकृत्' इ उ.ण.। ९ 'ओष्ठे। गण्डजमाह-' ट.। १० 'शोथो' स.मू.।

१ 'दुष्णासहा' स स। २ 'स्पर्शाधिक' स द्व। ३ "दाल्यन्ते-विदार्यन्ते।" इति डल्हण। [ प्रवाते अम्लशीतयोर्भक्षे-भक्षणे, चाक्षमा-अशक्ता। अत्राम्लशब्दो रसवाची। अम्लाशनेनैवेत्यत्राम्लशब्दो वृक्षाम्लवाची ॥ ] करालानां-विकटानाम्।" इतीन्दु। ४ 'भक्ष्याक्षमा' स मू। 'भक्ष्यासहा' इति क्वचित्। ५ 'शनेनैव' स द्व। ६ 'रुजश्च' ई ण त स.स। ७ 'रुग्वेदना' ई। ८ 'समुद्भव' इ स स.। 'समुद्भवे' उ.। ९ 'जायते जायमानेऽति रुग्, जाते तत्र शाम्यति ॥' इ ई.उ ण त चन्द्र स.मू.। १० "पूतिगन्धिः स्थिरीभूतश्च स नाम्ना शर्करेत्युच्यते॥ साऽपि-शर्करा, उपेक्षिता सति, अणुशः-अल्पशः, दन्तकपालानि शातयति, स कपालिका नाम रोगः।" इति चन्द्रनन्दनेन्दुव्याख्यानं युक्तम्, सुश्रुतसम्मतत्वात्। "स एवोपेक्षितः शर्करा स्यात्।" इत्यरुणदत्तव्याख्यानं त्वयुक्तम्। ११ 'गन्ध' इ उ.ण त स मू। १२ 'सोऽप्युपेक्षित।' इ ई.स मू। १३ 'दन्तकपा' ई उ.स.स.।

सु०–कपालिकाख्यो दन्तात् कपालान्यणुश –स्तोक स्तोक, शातयति ।

**श्यावः श्यावत्वमायातो रक्तपित्तानिलैर्द्विजः ॥ १७ ॥**

सु०–द्विज श्यावत्वमायातो रक्तपित्तानिलै श्यावाख्य ।

**समूलं दन्तमाश्रित्य दोषैरुल्वणमारुतैः ।**
**शोषिते मज्ज्ञि सुषिरे दन्तेऽन्नमलपूरिते ॥ १८ ॥**
**पूतित्वात्कृमय॰ सूक्ष्मा जायन्ते, जायते ततः ।**
**अहेतुतीव्रार्तिशमः ससंरम्भोऽसितश्चलः ॥ १९ ॥**
**प्रलूनः पूयरक्तस्रुत् स चोक्तः कृमिदन्तकः ।**

सु०–समूल दन्तमाश्रित्य दोषैरधिकमारुतै शोषिते मज्ज्ञि सुषिरे दन्तेऽन्नमलपूरिते पूतित्वात् कृमय सूक्ष्मा जायन्ते । ततोऽहेतु–निमित्तमन्तरेण, तीव्रार्तिशान्तिर्जायते । तथा सरम्भान्वित कृष्णश्चल प्रलूनाख्य पूयरक्तस्रावी । स च कृमिदन्तक उक्त । इति दन्ते दशैते।

**श्लेष्मरक्तेन पूतीनि वहन्त्यस्रमहेतुकम् ॥ २० ॥**
**शीर्यन्ते दन्तमांसानि मृदुक्लिन्नासितानि च ।**
**शीतादोऽसौ**

सु०–श्लेष्मरक्तेन दन्तमासानि पूतीनि रक्त निर्निमित्त वहन्ति शीर्यन्ते । किम्भूतानि ? मृदुक्लिन्नानि असितानि च । असौ शीताद कथ्यते ।

**उपकुशः पाकः पित्तासृगुद्भवः ॥२१॥**
**दन्तमांसानि दह्यन्ते रक्तान्युत्सेधवन्त्यतः ।**
**कण्डूमन्ति स्रवन्त्यस्रमाध्मायन्तेऽसृजि स्थिते॥२२॥**
**चला मन्दरुजो दन्ता पूति वक्त्रं च जायते ।**

सु०–पित्तरक्तोत्थो यो दन्तमासे पाक स उपकुशसंज्ञ । तेन दन्तमासानि दह्यन्ते रक्तवर्णानि सोत्सेधानि च । तत कण्डूयुतानि रक्त स्रवन्ति । रक्ते स्थिते सत्याध्मायन्ते । चला दन्ता मन्दरुज स्यु । पूति वक्त्र च जायते।

**दन्तयोस्त्रिषु वा शोफो बदरास्थिनिभो घनः ॥ २३ ॥**
**कफास्रात्तीव्ररुक् शीघ्रं पच्यते दन्तपुप्पुटः ।**

सु०–द्वयोर्दन्तयोस्त्रिषु वा दन्तेषु शोफो बदरास्थिसदृशो घन कफरक्तात् तीव्ररुक् शीघ्र पच्यते । स दन्तपुप्पुटसज्ञ ।

**दन्तमांसे मलैः सास्रैर्बाह्यान्तः श्वयथुर्गुरुः ॥ २४ ॥**
**सरुग्दाहः स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ।**

सु०–दन्तमासे बाह्येऽभ्यन्तरे च दोषै सरक्तैर्गुरु श्वयथु सरुग्दाह । स च भिन्न सन् पूयास्र स्रवेत् । स दन्तविद्रधि ।

**श्वयथुर्दन्तमूलेषु रुजावान् पित्तरक्तजः ॥ २५ ॥**
**लालास्रावी स सुषिरो दन्तमांसप्रशातनः ।**

सु०–दन्तमूलेषु श्वयथु पीडावान् पित्तरक्तोत्थो लालास्रावी । सुषिरसज्ञो दन्तमासप्रशातन ।

**स संनिपाताज्ज्वरवान् सपूयरुधिरस्रुतिः ॥ २६ ॥**
**महासुषिर इत्युक्तो विशीर्णद्विजबन्धनः ।**

सु०–संनिपातज्वरयुत पूयरुधिरस्रावेनान्वित महासुषिराख्य उक्त । स च विशीर्णद्विजबन्धन स्यात् ।

**दन्तान्ते कीलवच्छोफो हनुकर्णरुजाकरः ॥ २७ ॥**
**प्रतिहन्त्यभ्यवहृतिं श्लेष्मणा सोऽधिमांसकः ।**

सु०–दन्तान्ते कीलसदृश शोफो हनौ कर्णे च रुजा करोति। अभ्यवहृति प्रतिहन्ति । सोऽधिमासक श्लेष्मणा स्यात् ।

**घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ॥ २८ ॥**
**यस्मिंश्चलन्ति दन्ताश्च स विदर्भोऽभिघातजः ।**

सु०–दन्तमासेषु दन्तकाष्ठादिना घृष्टेषु महान् सरम्भो जायते। यस्मिन्सति दन्ताश्च चलन्ति । सोऽभिघातजो विदर्भाख्य ।

**दन्तमांसाश्रितान् रोगान् यः साध्यानप्युपेक्षते॥२९॥**
**अन्तस्तस्यास्रवन् दोषः सूक्ष्मां सञ्जनयेद्गतिम् ।**
**पूयं मुहुः सा स्रवति त्वङ्मांसास्थिप्रभेदिनी ॥ ३० ॥**
**ता पुनः पञ्च विज्ञेया लक्षणैः स्वैर्यथोदितैः ।**

सु०–दन्तमासाश्रितान् रोगान् साध्यानपि य उपेक्षते,तस्यान्तरेषु दोषोऽस्रवन् सूक्ष्मा गति सञ्जनयेत् । सा च गति पुन पुन पूय स्रवति । त्वङ्मासास्थीनि प्रभिनत्ति । ताश्च गतय पञ्च विज्ञेया स्वै स्वैर्वातादिजैर्लक्षणै । इति दन्तमूले त्रयोदश।

**शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता ॥ ३१ ॥**
**जिह्वा**

सु०–वातदूषिता जिह्वा शाकपत्रवत् खरा सुप्ता स्फुटिता च स्यात् ।

**पित्तात् सदाहोषा रक्तैर्मांसाङ्कुरैश्चिता ।**

सु०–पित्तात् सदाहोषा तथा रक्तैर्मासाङ्कुरैश्च चिता जिह्वा स्यात् ।

**शाल्मलीकण्टकाभैस्तु कफेन बहला गुरुः ॥ ३२ ॥**

सु०–कफेन शाल्मलीकण्टकाभै कण्टकैश्चिता बहला गुरुश्च जिह्वा स्यात् ।

---

१ 'काख्या' ण त । २ 'याता०द्विजा' स मू,ड । ३ "अहेतु–अकारणमेव तीव्रार्तिजायते, अकारणमेव तस्या शमश्च ॥ अत –उत्सेधात् । स्थिते–रुद्धे । आध्मायन्ते–परिपूर्यन्ते ।" इतीन्दु । "सरम्भ –श्वयथु ॥ शीर्यन्ते–गलन्ति ।" इति डल्हण. । ४ 'प्रभूतपूय' इ उ.चन्द्र । ५ 'पूयास्रे' ई. । ६ 'कफरक्तज.' स.मु. ।

१ "स एव–श्वयथु , सन्निपातादुत्पन्नो ज्वरवान्–ज्वरयुक्त ॥ अभ्यवहृतिं–आहारम् ॥ खरा–परुषा । सुप्ता–विचेतना ॥ बहला–घना ।" इति चन्द्र । "अस्रवन्–गूहन् । गतिं–नाडीम् । [ अस्रवन्–स्रोतोरोधादनिर्गच्छन् । दोषशब्देन पूय गृह्यते ।] स्रस्ता च निबन्धनात् भवति ।" इतीन्दु । "सरम्भोऽत्र श्वयथु. ।" इति डल्हण । २ 'सन्निपातज्वरवान्' इति ई ण त स स पुस्तकस्थ॰ पाठ ,'सन्निपातज्वरयुत ' इत्यरुणदत्तव्याख्यान चायुक्तम्, सुश्रुते ( नि अ १६।२० )–"यस्मिन् स सर्वजो व्याधिर्महाशौषिरसज्ञक. ।" इत्युक्तत्वात् । ३ 'णैरदव' उ । ४ 'च्छोथो' स मू । ५ 'वैदर्भो' इ स मु । ६ 'दश रोगा ।' ट. । ७ 'स्रस्ता स्फु' स.स. । ८ 'बहुला' इ.उ.ण.त. ।

**कफपित्तादधः शोफो जिह्वास्तम्भकृदुन्नत.।**
**मत्स्यगन्धिर्भवेत्पक्व. सोऽलसो मासशातनः ॥३३॥**

**स०**–कफपित्तात् जिह्वाया अव शोफो जिह्वास्तम्भकर उन्नत पक्वो मत्स्यगन्धिर्भवेत्। सोऽलसाख्यो मासगातन।

**प्रबन्धनेऽधो जिह्वायाः शोफो जिह्वाग्रसन्निभः।**
**साङ्कुर. कफपित्तास्रैर्लालोषास्तम्भवान् खरः ॥३४॥**
**अधिजिह्व. सरुक्कण्डूर्वाक्याहारविघातकृत्।**

**स०**–जिह्वाया प्रबन्धनेऽवस्ताजिह्वाग्रतुल्य शोफ सहाङ्कुर कफपित्तरक्तैर्लालोषास्तम्भयुत खरस्पर्शयुतोऽधिजिह्वो रुक्कण्डूभ्या युतो वाक्याहारविघात करोति।

**तादृगेवोपजिह्वस्तु जिह्वाया उपरि स्थितः ॥ ३५ ॥**

**स०**–तादृगेव–अधिजिह्वासदृश उपजिह्व, जिह्वाया उपरि स्थित। इति जिह्वाया षडेते।

**तालुमासेऽनिलाद्दुष्टे पिटिकाः सरुजः खराः।**
**बह्व्यो घना स्रावयुतास्तास्तालुपिटिकाः स्मृता ३६**

**स०**–वातात्तालुमासे दुष्टे पिटिका सरुज खरा बह्व्यो घना स्रावान्विताश्च। तास्तालुपिटिका स्मृता।

**तालुमूले कफात्सास्रात् मत्स्यबस्तिनिभो मृदु।**
**प्रलम्ब. पिच्छिलः शोफो नासयाऽऽहारमीरयन् ३७**
**कण्ठोपरोधतृट्कासवमिकृत् गलशुण्डिका।**

**स०**–तालुमूले कफाद्रक्तान्वितात् मत्स्यबस्तिसदृशो मृदु प्रलम्ब पिच्छिल शोफो नासयाऽऽहार प्रेरयन् कण्ठोपरोधादिकृत्। गलशुण्डिकाख्य।

**तालुमध्ये निरुच्छ्वासं संहतं तालुसंहतिः ॥ ३८ ॥**

**स०**–तालुमध्ये निरुच्छ्वास सहत सा तालुसहतिरित्युच्यते।

**पद्माकृतिस्तालुमध्ये रक्ताच्छ्वयथुरर्बुदम्।**

**स०**–तालुमध्ये पद्माकारो रक्ताद्दुष्टाच्छ्वयथुरर्बुदम्।

**कच्छपः कच्छपाकारश्चिरवृद्धिः कफादरुक् ॥ ३९ ॥**

**पदार्थचन्द्रिका**–कफादुष्टात् तालुदेशे य श्वयथु कच्छपाकारश्चिरवृद्धिररुक् च, स कच्छप इत्युच्यते।

**कोलाभः श्लेष्ममेदोभ्या पुप्पुटो नीरुजः स्थिर.।**

**प० च०**–श्लेष्ममेदोभ्या दुष्टाभ्या कोलाभ–कोलसदृशो, नीरुज स्थिरश्च य शोफ स्यात्, स पुप्पुट इत्युच्यते।

**पित्तेन पाकः पाकाख्यः पूयास्रावी महारुज ॥४०॥**

**प० च०**–पित्तेन दुष्टेन यस्तालुन पाक पूयास्रावी महारुज, स पाकाख्य–पाकसज्ञ।

**वातपित्तज्वरायासैस्तालुशोषस्तदाह्वयः।**

**प० च०**–वातपित्तज्वरायासै प्रतिबद्धो य शोषस्तालुशोष, स तदाह्वय–तालुशोष इत्युच्यते। इत्यष्टौ तालुरोगा।

**जिह्वाप्रबन्धजा. कण्ठे दारुणा मार्गरोधिनः ॥ ४१ ॥**
**मासाङ्कुराः शीघ्रचया रोहिणी शीघ्रकारिणी।**

**प० च०**–कण्ठे–कण्ठप्रदेशे, ये मासाङ्कुरा जिह्वाप्रबन्धजा–जिह्वामूलोत्था, दारुणा–दु सहा, कण्ठमार्गानुरोधिन शीघ्रचया–सन्वरोद्भूता, भवन्ति। सा शीघ्रकारिणी–आशुव्यापादनशीला, रोहिणीत्युच्यते।

**कण्ठास्यशोषकृद्वातात् सा हनुश्रोत्ररुक्करी ॥ ४२ ॥**

**प० च०**–सा–रोहिणी, वातात्समुत्पन्ना कण्ठास्यशोष करोति। हन्वो श्रोत्रयोश्च रुज करोति।

**पित्ताज्ज्वरोषातृण्मोहकण्ठधूमायनान्विता।**
**क्षिप्रजा क्षिप्रपाकाऽतिरागिणी स्पर्शनासहा ॥ ४३॥**

**प० च०**–पित्ताद् रोहिणी ज्वरादिभिरन्विता स्यात्। क्षिप्रजा–शीघ्रोत्थाना। शीघ्रपाका अतिरागिणी–भृशलोहिता। स्पर्शनासहा–स्पर्श न सहते।

**कफेन पिच्छिला पाण्डुः**

**प० च०**–कफेन दुष्टेन रोहिणी पिच्छिला पाण्डुरा च भवेत्।

**असृजा स्फोटकाचिता।**
**तप्ताङ्गारनिभा कर्णरुक्करी पित्तजाकृति. ॥ ४४ ॥**

**प० च०**–असृजा–रक्तेन दुष्टेन, रोहिणी स्फोटकैराचिता–समन्तात् व्याप्ता स्यात्। तप्ताङ्गारनिभा–वर्णत स्पर्शतो वा, कर्णयो रुजा करोति। पित्तजाकृति–पित्तोत्थरोहिणीलक्षणसमन्विता भवेत्।

**गम्भीरपाका निचयात् सर्वलिङ्गसमन्विता।**

**प० च०**–निचयात्–सन्निपातात्, रोहिणी गम्भीरपाका–गूढपाका, स्यात्। सर्वलिङ्गै–वातादीना सम्बन्धिभि, समन्विता–युक्ता, स्यात्।

**दोषैः कफोल्बणैः शोफः कोलवद् ग्रथितोन्नतः ४५**
**शूककण्टकवत्कण्ठे शालूको मार्गरोधन.।**

**प० च०**–दोषै–वातादिभि, कफोल्बणै–कफप्रधानै,

१ 'प्रलम्बनोऽधो' इ। २ "प्रबन्धने–मूले ॥ सहत–एकत्र पुञ्जीभूतम्।" इतीन्दु। ३ 'पिटका' ई चन्द्र स स, ट। ४ 'सरुजा.' ई स द्व। ५ 'युक्तास्ता' ई ण त। ६ 'मात्स्य' स मू। ७ 'शुण्ठिका' उ.। ८ "कफादित्यारभ्य पत्रचतुष्टये चन्द्रिका व्याख्या लिखिता मन्तव्या, अरुणदत्तव्याख्यापत्राणि चत्वारि त्रुटितानीति।" इति 'ण' पुस्तकस्थटिप्पणीतो लिखितचन्द्रनन्दनटीकापुस्तकाच्च 'कफादुष्टात्' इत्यारभ्य द्वाविंशाध्यायस्य सप्तमश्लोकपर्यन्त चन्द्रनन्दनविरचिता पदार्थचन्द्रिका व्याख्याऽत्रास्तीति ज्ञायते। सशोधनार्थमसत्समीपस्थाना ट ड ण त सज्ञकाना चतुर्णां प्राचीनलिखितोत्तरस्थानीयारुणदत्तव्याख्यापुस्तकाना मध्ये ट ण त सज्ञेषु त्रिषु पुस्तकेष्वत्र पदार्थचन्द्रिकेवोपलभ्यते। किन्तु प्राचीनतमे ड.सज्ञेऽत्र काऽपि व्याख्या नोपलभ्यते।

१ 'स्तालुपाक' ण। २ 'शोफस्ता' त चन्द्र। ३ "कण्ठे–कण्ठस्यान्तर्भागे। शीघ्रकारिणी–शीघ्रमेव स्व कर्म मारणाख्य करोति॥ ग्रथितश्चोन्नतश्च। शूकवत् कण्टकवच्च।" इतीन्दु। ४ 'साऽऽशुकारिणी' इ उ। ५ 'सा रोहिणी शीघ्रकारिणीत्युच्यते।' चन्द्र.। ६ 'पाकार्तिरा' स.मू। ७ 'भवति' ण.त.।

कण्ठे कोलवद् ग्रथितोन्नत शूककण्टकवत् मार्गरोधनो य शोफ स्यात्, स कण्ठशालूक इत्युच्यते।

**वृन्दो वृत्तोन्नतो दाहज्वरकृद् गलपार्श्वगः ॥ ४६ ॥**

**प० चं०**–कण्ठे वृत्तोन्नतो गलपार्श्वगो य शोफो भवति, दाहज्वर करोति, स नाम्ना वृन्द इत्युच्यते।

**हनुसन्ध्याश्रितः कण्ठे कार्पासीफलसन्निभः।**
**पिच्छिलो मन्दरुक् शोफ. कठिनस्तुण्डिकेरिका४७**

**प० चं०**–कण्ठप्रदेशे शोफ कार्पास्या फलसन्निभ –तदाकार, पिच्छिलो मन्दरुक् शोफ कठिनश्च। स नाम्ना तुण्डिकेरिकेत्युच्यते।

**बाह्यान्तः श्वयथुर्घोरो गलमार्गार्गलोपम.।**
**गलौघो मूर्द्धगुरुतातन्द्रालालाज्वरप्रदः ॥ ४८ ॥**

**प० चं०**–कण्ठे श्वयथुर्बाह्यान्तर्घोरो–दुस्तरो, गलमार्गार्गलोपम –स इव, जायते। मूर्द्धगुरुतादींश्च प्रददाति। स गलौघ इत्युच्यते।

**वलयं नातिरुक् शोफस्तद्वदेवायतोन्नतः।**

**प० चं०**–गले य शोफो नातिरुक् आयतोन्नत स्यात्, स व्याधिर्वलयमित्युच्यते। तद्वदेव–वलयाकृतित्वात्।

**मांसकीलो गले दोषैरेकोऽनेकोऽथवाऽल्परुक् ४९**
**कृच्छ्रोच्छ्वासाभ्यवहृति पृथुमूलो गिलायुकः।**

**प० चं०**–दोषै –वातादिभिर्दुष्टै, गले मासकील एकोऽनेको वाऽल्परुग् जातो मूले पृथु –विस्तीर्णे, कृच्छ्रात्–दु खेन, उच्छ्वासाभ्यवहृतिर्य(ती य)स्य स। तथाविधो व्याधिर्गिलायुक इत्युच्यते।

**भूरिमांसाङ्कुरवृता तीव्रतृड्ज्वरमूर्द्धरुक् ॥ ५० ॥**
**शतघ्नी निचिता वर्तिः शतघ्नीवातिरुक्करी।**

**प० चं०**–भूरिभि –प्रभूतै, मासाङ्कुरैरावृता–परिवृता, तीव्रतृड्ज्वरमूर्द्धरुग्युता वृत्ता या वर्ति सा शतघ्नी। निचयात्सञ्चय प्राप्ता शतघ्नीवच्चातिरुक्करी। स व्याधिर्नाम्ना शतघ्नीत्युच्यते। शतघ्नी–शस्त्रविशेष।

**व्याप्तसर्वगलः शीघ्रजन्मपाको महारुजः ॥ ५१ ॥**
**पूतिपूयनिभस्रावी श्वयथुर्गलविद्रधि.।**

**प० चं०**–व्याप्त सर्वगल –कण्ठो, येनेति। एवविधो य श्वयथु शीघ्रजन्मपाको महारुज पूति–दुर्गन्धि, पूयसदृश स्रवति मल, स गलविद्रधिरित्युच्यते।

**जिह्वावसाने कण्ठादावपाकं श्वयथुं मलाः ॥ ५२ ॥**
**जनयन्ति स्थिर रक्तं नीरुजं तद्गलार्बुदम्।**

**प० चं०**–जिह्वावसाने–पर्यन्ते, कण्ठादौ श्वयथुमपाक स्थिर रक्त नीरुज मला –दोषा, जनयन्ति। तद्गलार्बुद स्मृतम्।

**पवनश्लेष्ममेदोभिर्गलगण्डो भवेद्बहि.।**
**वर्धमान. स कालेन मुष्कवल्लम्बतेऽतिरुक् ॥ ५३ ॥**

**प० चं०**–दुष्टै पवनश्लेष्ममेदोभिर्गलस्य बहिर्गलगण्डो नाम व्याधिर्भवेत्। स च कालेन विवर्धमानोऽतिरुक् मुष्कवल्लम्बते।

**कृष्णोऽरुणो वा तोदाढ्यः स वातात्कृष्णराजिमान्।**
**वृद्धस्तालुगले शोषं कुर्याच्च विरसास्यताम् ॥ ५४ ॥**

**प० चं०**–स –गलगण्डो, वातात् कृष्णोऽरुणो वा तोदाढ्य कृष्णराजिमान् स्यात्। स च वृद्ध सन् तालुगले शोष विरसास्यता च कुर्यात्।

**स्थिर. सवर्णः कण्डूमान् शीतस्पर्शो गुरुः कफात्।**
**वृद्धस्तालुगले लेप कुर्याच्च मधुरास्यताम् ॥ ५५ ॥**

**प० चं०**–कफात्प्रकुपितात् गले गलगण्डो जात स्थिर समानवर्ण कण्डूमान् शीतस्पर्शो गुरुश्च भवेत्। वृद्ध सन् तालुगले लेप कुर्यात्। तथा मधुरास्यता–मधुरवक्त्रत्व च, कुर्यात्।

**मेदसः श्लेष्मवद्धानिवृद्ध्योः सोऽनुविधीयते।**
**देहं वृद्धश्च कुरुते गले शब्दं स्वरेऽल्पताम् ॥ ५६ ॥**

**प० चं०**–मेदस प्रवृद्धादुत्पन्नो गलगण्ड कफवल्लक्षणैर्भवेत्। स च देह–शरीर, हानिवृद्ध्योरनुविधीयते–अनुकरोति। तेन देहस्य वृद्धौ सोऽपि वृद्धो भवेत्, देहस्य क्षयात् क्षीण स्यात्। वृद्ध स गले शब्द कुरुते स्वरे चाल्पताम्।

**श्लेष्मरुद्धाऽनिलगतिः शुष्ककण्ठो हतस्वरः।**
**ताम्यन् प्रसक्तं श्वसिति येन स स्वरहाऽनिलात् ५७**

**प० चं०**–श्लेष्मणा दुष्टेन यदाऽनिलस्य–वायो, गति रुद्धा भवेत्। तथा स च येन व्याधिना पुरुष शुष्ककण्ठो हतस्वरश्च स्यात्। ते(ये)न च ताम्यन्–तमोगच्छन् तम प्रविशन्, प्रक-

१ "[दाह ज्वर च करोतीति दाहज्वरकृत्, दाहादिज्वर करोतीति वा।] अर्गलोपम –द्वारबन्धनसदृश ॥ तद्वदेव–बाह्यान्तर्गलमार्गार्गलोपम ॥ शतघ्न्याख्यश्चायुध –कण्टकान्विता यष्टिर्भवति।" इतीन्दु। "शतघ्नी–लोहकण्टककीलितयष्टिविशेषाम्। 'शतघ्नी च चतुस्ताला लोहकण्टकसञ्चिता। यष्टि' इति केशव।" इति रघुवशे (स १२।९५) मल्लिनाथ। "शतानि हन्तीति व्युत्पत्ति। शतघ्नी–चतुस्तालप्रमाण गदाम्। 'शतघ्नी च०यष्टि' इति केशवस्वामी। मदनादिनिघण्टौ तु 'अय कण्टकसञ्छन्ना शतघ्नी महती शिला।' इति। तन्न। शाल्मल्युपमानात्।" इति रघुवशे दर्पणटीकाया हेमाद्रिश्च। २ 'कर्पा' इ ई ण त चन्द्र, ट। ३ 'तद्वदेव–गलौघवत् शोफो नातिरुक् अथवा तद्वदेव–वलया' ट ण। ४ 'गलायु' उ। ५ 'शतघ्नीनिचितेवान्त शतघ्नी चातिरुक्करी।' इ उ। ६ 'शतघ्नीत्युच्यते। निचयात्सञ्चय प्राप्ता शतघ्नीवत् साऽतिरुक्करी। शतघ्नी–शस्त्र' ण त.।

१ "[पूतिपूयनिभास्रावी–पूतिपूयतुल्य आस्राव –आस्रवण, तेन युक्त। अत्र पूयनिभशब्देन पक्वोऽप्यन्यविद्रधिवत् पूय न स्रवति तत्तुल्य कफमेव स्रवतीत्यर्थ]। निरुक् सन् मुष्कवत्–वृषणवत्, लम्बते।" इतीन्दु। २ 'निभास्रावी' स स। ३ 'त गला' इ। ४ 'स्मृत कथयन्त्याचार्या।' ट ण त। ५ 'म्बते निरुक्' ई उ स स। 'ते गले।' स मू। ६ 'शोफ' उ.। ७ 'स्वराल्पताम्' स मू। ८ 'शब्द स्वरे वाऽल्पता कुरुते।' ण त। ९ 'म्यन्–क्षुभ्यन् (?) तम प्र' चन्द्र।

र्येण सक्त श्वास मुञ्चति । स व्याधिरनिलात्–वातात्, स्वरहा–स्वरघ्ननाम्ना, भवेत् । इति गलरोगा अष्टादश ।

**करोति वदनस्यान्तर्व्रणान् सर्वसरोऽनिलः ।**
**सञ्चारिणोऽरुणान् रूक्षानोष्ठौ ताम्रौ चलत्वचौ॥५८**
**जिह्वा शीतासहा गुर्वी स्फुटिता कण्टकाचिता ।**
**विवृणोति च कृच्छ्रेण मुखं पाको मुखस्य सः ॥५९॥**

प० चं०–अनिलो–वायु , सर्वसर –सर्वत प्रसरन् सन्, सर्वतो वदनस्यान्तर्व्रणान् सञ्चारिणोऽरुणान् रूक्षाश्च करोति । तथौष्ठौ ताम्रौ–ताम्रवर्णौ, चलत्वचौ । जिह्वा च शीतासहा–शीतस्पर्शाक्षमा, गुर्वी स्फुटिता कण्टकैराचिता स्यात् । स च मुख–वक्त्र, कृच्छ्रेण विवृणोति । स मुखस्य पाक इत्युच्यते ।

**अधः प्रतिहतो वायुरर्शोगुल्मकफादिभिः ।**
**यात्यूर्ध्वं वक्त्रदौर्गन्ध्यं कुर्वन्नूर्ध्वगुदस्तु सः ॥ ६० ॥**

प० चं०–अर्शोगुल्मकफादिभिर्वायुरध प्रतिहतो वक्त्रदौर्गन्ध्य कुर्वन्नूर्ध्व याति । स ऊर्ध्वगुद इति सञ्ज्ञित ।

**मुखस्य पित्तजे पाके दाहोषे तिक्तवक्त्रता ।**
**क्षारोक्षितक्षतसमा व्रणाः**

प० चं०–पित्तजे–पित्तोद्भवे, मुखस्य पाके दाहोषे भवत । तथा तिक्तवक्त्रता–तिक्तास्यत्व, भवेत् । व्रणाश्च क्षारेणोक्षित यत् क्षत–व्रण , तेन समाना –तत्समरुजा , भवन्ति ।

**तद्वच्च रक्तजे ॥ ६१ ॥**

प० चं०–रक्तजे पाके मुखस्यान्त पित्तजपाकवल्लक्षणानि भवन्ति ।

**कफजे मधुरास्यत्वं कण्डूमत्पिच्छिला व्रणाः ।**

प० चं०–कफजे पाके मधुरास्यत्व–मधुरमुखत्व, स्यात् । तथा कण्डूमत्पिच्छिलाश्च व्रणा भवन्ति ।

**अन्तःकपोलमाश्रित्य श्यावपाण्डु कफोऽर्बुदम्॥६२॥**
**कुर्यात्तद् घट्टितं छिन्नं मृदितं च विवर्धते ।**

प० चं०–कफो वृद्धोऽन्त कपोलमाश्रित्यार्बुद श्याव पाण्डु च कुर्यात् । तच्चार्बुद घट्टित छिन्न मृदित च पुनर्विवर्धते ।

**मुखपाको भवेत्सास्रैः सर्वैः सर्वाकृतिर्मलैः ॥ ६३ ॥**

प० चं०–मलै –वातादिभि , सर्वै –त्रिभि , सास्रै –सरक्तै , मुखस्य पाको भवेत् । स च सर्वाकृति –सर्वलक्षण , स्यात् ।

**पूत्यास्यता च तैरेव दन्तकाष्ठादिविद्विषः ।**

प० चं०–दन्तकाष्ठविद्विष पुसस्तैरेव दोषै पूत्यास्यता–पूतिवक्त्रत्व, स्यात् । [ इति सर्ववक्त्रगा अष्टौ । ]

**ओष्ठे गण्डे द्विजे मूले जिह्वायां तालुके गले ॥ ६४ ॥**
**वक्त्रे सर्वत्र चेत्युक्ताः पञ्चसप्ततिरामयाः ।**
**एकादशैको दश च त्रयोदश तथा च षट् ॥ ६५ ॥**
**अष्टावष्टादशाष्टौ च क्रमात्**

प० चं०–ओष्ठामया एकादशोक्ता । गण्डे एक । द्विजे–दन्ते, दश । दन्तमूले त्रयोदश । जिह्वाया षट् । तालुन्यष्टौ । गलेऽष्टादश । वक्त्रेऽष्टावामया । एव सर्वत्र पञ्चसप्ततिरामया आख्याता –उक्ता ।

**तेष्वनुपक्रमाः ।**
**करालो मांसरक्तौष्ठावर्बुदानि जलार्बुदा ॥ ६६ ॥**
**कच्छपस्तालुपिटिका गलौघः सुषिरो महान् ।**
**स्वरघ्नोर्ध्वगुदश्यावशतघ्नीवलयालसाः ॥ ६७ ॥**
**नाड्योष्ठकोपौ निचयात्, रक्तात्सर्वैश्च रोहिणी ।**
**दशने स्फुटिते दन्तभेदः, पक्वोपजिह्विका ॥ ६८ ॥**
**गलगण्डः स्वरभ्रंशी कृच्छ्रोच्छ्वासोऽतिवत्सरः ।**

प० चं०–ओष्ठाद्यामयेषु मध्येऽनुपक्रमा –असाध्या । करालो नाम दन्तरोग । महासुषिरो दन्तरोग । स्वरघ्नो गलरोग । ऊर्ध्वगुदो वक्त्ररोग । शतघ्नीवलयौ कण्ठरोगौ । अलसोऽधिजिह्वारोग । निचयात्–सन्निपातात्, नाडी दन्तमूलजा । ओष्ठकोप सन्निपातजोऽसाध्य । रक्तात्सन्निपातात्[च] जाता रोहिणी । दन्तभेदो दशने–दन्ते,स्फुटितेऽसाध्य । पक्वोपजिह्विकाऽसाध्या । गलगण्ड स्वरभ्रश (शी) कृच्छ्रोच्छ्वासोऽतिवत्सरोऽसाध्य ।

**याप्यस्तु हर्षो भेदश्च**

प० चं०–दन्तहर्षो दन्तभेदश्च द्वावेतौ याप्यौ ।

**शेषान् शस्त्रौषधैर्जयेत् ॥ ६९ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने मुखरोगविज्ञानीयो नामैकविंशोऽध्यायः ॥ २१ ॥**

प० चं०–शेषान् रोगान् शस्त्रौषधैर्जयेत् । यथायोगैर्वक्ष्यमाणैरिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने मुखरोगविज्ञानीयो नामैकविंशोऽध्याय समाप्त ॥ २१ ॥

---

१ 'कान्विता' स मू । २ 'च' ण.त.चन्द्र.। ३ 'ऊर्ध्वगद' ई उ ण त चन्द्र स मू.। ४ "अन्त कपोल–कपोलान्तर्भागम् । तच्च–अर्बुद, घट्टित–शाकपत्रादिनाऽवघृष्ट, छिन्न–वृद्धिपत्रादिना, मृदित–विलयनाय कृतमर्दनमपि, पुनर्वर्धते ॥ दन्तकाष्ठादिविद्विष –अननुष्ठितदन्तकाष्ठादिकस्य पुरुषस्य । आदिशब्देन अञ्जननस्यधूमगण्डूषादिपरिग्रह ।" इतीन्दु । ५ 'श्याव पाण्डु' ई.उ ण.त चन्द्र । ६ 'तत्पाटितं' ण त स मू । 'तद्व्यधितं'ई.। ७ 'पाटित'ट ण.त । ८ 'स च पाक सर्वदोषलक्षणो भवति।'ण.त.।

१ 'विद्वेषिण पु' ट । 'विद्वेषिणो नरस्य तै' ण त । २ 'एष्वनु' चन्द्र ट । ३ 'पिटका' ई चन्द्र स स. । ४ 'ऊर्ध्वगद' उ ण त चन्द्र स मू । ५ "गलगण्ड स्वरभ्रशी–स्वरहा, कृच्छ्रोच्छ्वासेन च युक्तोऽतिक्रान्तवत्सरश्च त्याज्य ।" इतीन्दु । ६ 'भ्रश ' उ.ण.त.चन्द्र ,ट । ७ 'कृच्छ्राच्छ्वासो' ई.त ।



## द्वाविंशोऽध्यायः ।

अथातो मुखरोगप्रतिषेध व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षय. ।

( गद्यसूत्रे ॥ २ ॥ )

**खण्डौष्ठस्य विलिख्यान्तौ स्यूत्वा व्रणवदाचरेत् ।**

प० चं०-खण्डौष्ठस्य-छिन्नौष्ठस्य स्निग्धस्विन्नस्य, ओष्ठप्रान्तौ विलिख्य सुश्लिष्टौ क्षौमसूत्रेण स्यूत्वा सद्योव्रणवदुपचारं कुर्यात्,-शतधौतघृताभ्यक्ता व्रणस्योपरि कवलिका दद्यात् ।

**यष्टीज्योतिष्मतीरोध्रश्रावणीसारिवोत्पलैः ॥ १ ॥**
**पटोल्या काकमाच्या च तैलमभ्यञ्जनं पचेत् ।**

प० चं०-मधुयष्ट्यादिभि कल्कितैस्तैलमभ्यञ्जन पचेत् ।

**नस्यं च तैलं वातघ्नमधुरस्कन्धसाधितम् ॥ २ ॥**

प० चं०-वातहरमधुरौषधसाधित तैलं नस्य प्रयोज्यम् ।

**महास्नेहेन वातौष्ठे सिद्धेनाक्तः पिचुर्हितः ।**
**देवधूपमधूच्छिष्टगुग्गुल्वमरदारुभिः ॥ ३ ॥**

प० चं०-सर्जरससिक्थकगुग्गुलुदेवदारुभि सिद्धेन महास्नेहेन-सर्पिर्मज्जवसातैलाख्येनाक्त , पिचुर्वातौष्ठे-वातज ओष्ठकोपे, हित ।

**यष्ट्याह्वचूर्णयुक्तेन तेनैव प्रतिसारणम् ।**

प० चं०-तेनैव-महास्नेहेन, मधुयष्टीचूर्णयुक्तेन वातौष्ठे वा प्रतिसारण हितम् ।

**नाड्योष्ठं स्वेदयेद्दुग्धसिद्धैरेरण्डपल्लवैः ॥ ४ ॥**

प०चं०-ओष्ठ-वातौष्ठ,दुग्धसिद्धैरेरण्डपल्लवैर्नाड्या स्वेदयेत् ।

**खण्डौष्ठविहितं नस्यं तस्य मूर्ध्नि च तर्पणम् ।**

प० चं०-खण्डौष्ठविहित-खण्डौष्ठोक्त, नस्य प्रयोज्यम् । तथा तस्य मूर्ध्नि तर्पण-शिरोभ्यङ्ग , कार्य ।

**पित्ताभिघातजावोष्ठौ जलौकोभिरुपाचरेत् ॥ ५ ॥**

प० चं०-पित्तजमभिघातजमो(ज चौ)ष्ठकोपं जलौकोभिरुपाचरेत्-चिकित्सेत् ताभी रक्त स्रावयेत् ।

**रोध्रसर्जरसक्षौद्रमधुकैः प्रतिसारणम् ।**

प० चं०-पित्तोत्थेऽभिघातजे चौष्ठकोपे रोध्रादिभि प्रतिसारणं हितम् ।

**गुडूचीयष्टिपत्तङ्गसिद्धमभ्यञ्जने घृतम् ॥ ६ ॥**

प० चं०-गुडूच्यादिभि कल्कितघृत सिद्धमभ्यञ्जने हितम् ।

**पित्तविद्रधिवच्चात्र क्रिया**

प० चं०-अत्र-[ए]नयो पित्ताभिघातजयो , पित्तविद्रधिवत् क्रिया-चिकित्सा, कार्या ।

**शोणितजेऽपि च ।**
**इदमेवं नवे कार्यं कर्म**

प० चं०-शोणितजे रक्तो(नवो)त्थे इदमेव-पित्तोक्त, कर्म कार्यम् ।

**ओष्ठे तु कफातुरे ॥ ७ ॥**
**पाठाक्षारमधुव्योषैर्हृतास्रे प्रतिसारणम् ।**
**धूमनावनगण्डूषाः प्रयोज्याश्च कफच्छिद. ॥ ८ ॥**

स०-कफातुर ओष्ठे हृतास्रे-हृतरक्ते, पाठादिभि प्रतिसारण हितम् । तथा धूमादय कफघ्ना हिता ।

**स्विन्नं भिन्नं विमेदस्कं दहेन्मेदोजमग्निना ।**
**प्रियङ्गुरोध्रत्रिफलामाक्षिकैः प्रतिसारयेत् ॥ ९ ॥**

स०-मेदोजमोष्ठं स्विन्न भिन्न-विदारित, विगतमेदस सन्तमग्निना दहेत् । प्रियङ्ग्वादिभि प्रतिसारयेत् ।

**सक्षौद्रा घर्षण तीक्ष्णा भिन्नशुद्धे जलार्बुदे ।**
**अवगाढेऽतिवृद्धे वा क्षारोऽग्निर्वा प्रतिक्रिया ॥१०॥**

स०-तीक्ष्णा -पिप्पलीमरिचादय , समाक्षिका भिन्नशुद्धे जलार्बुदे घर्षणम् । अवगाढेऽतिवृद्धे जलार्बुदे क्षारोऽग्निरथवा चिकित्सितम् ।

**आमाद्यवस्थास्वलजीं गण्डे शोफवदाचरेत् ।**

स०-आमाद्यवस्थास्वलजी गण्डे शोफवदुपक्रमेत् ।

**स्विन्नस्य शीतदन्तस्य पालीं विलिखितां दहेत्॥११॥**
**तैलेन, प्रतिसार्या च सक्षौद्रघनसैन्धवैः ।**
**दाडिमत्वग्वराताक्ष्र्यकान्ताजस्वश्मिनागरैः ॥ १२ ॥**
**कवलः क्षीरिणा क्वाथैरणुतैलं च नावनम् ।**

स०-शीतदन्तस्य स्विन्नस्य पाली विलिखिता तैलेन दहेत् । दाडिमत्वगादिभि क्षौद्रादियुतै प्रतिसार्या च । क्षीरिणा क्वाथै कवलो हित । नैस्यमणुतैल हितम् ।

**दन्तहर्षे तथा भेदे सर्वा वातहरा क्रिया ॥ १३ ॥**
**तिलयष्टीमधुशृतं क्षीरं गण्डूषधारणम् ।**

---

१ अथ मुखरोगप्रतिषेधश्चरके चि० १२।२६ अध्याययो, सुश्रुते चि० १८।२२ अध्याययो , अष्टाङ्गसङ्ग्रहे उ० २६ अध्याये चास्ति वर्णित । २ "ज्योतिष्मती-कङ्गुणिका ॥ पिचु.-कार्पासतुलकम् ।" इतीन्दु । ३ 'हेनाक्त ' चन्द्र । ४ 'युक्तैस्तु तैरेव' इ उ ।

१ 'व भवेत्कार्यं' इति ण त चन्द्र पुस्तकस्थ पाठोऽयुक्त , "रक्तजेऽप्यचिरोत्थिते पैत्तिकवत् प्रतिकुर्यात् ।" इति सङ्ग्रहोक्तत्वात् । २ 'त्थेऽप्योष्ठे इदमेव कर्म' ण त । ३ 'कार्यं भवेत् ।' ट ण त । ४ 'कफोत्तरे' चन्द्र । ५ 'तुरे-कफोत्थे, ओष्ठकोपे ह्' ट । ६ 'सक्षौद्रैर्घर्षण तीक्ष्णैर्भिन्न' ई उ चन्द्र । ७ "अवगाढ-गम्भीरम् । अतिवृद्ध-अतिमहत उन्नतमित्यर्थ ।" इतीन्दु । "विलिखितां-व्रीहिमुखेन शस्त्रेण ॥ सर्वा-पानान्नौषधादि ।" इति चन्द्र । ८ 'क्षारो वह्नि प्र' उ । ९ 'नस्येऽणु' ट । १० 'दन्तभेदे तथा हर्षे' उ. अरुण । ११ 'हरा. क्रिया ' इ.ई.उ ण त ।

स०-दन्तभेदे हृषे च सर्वा वातघ्नी क्रिया शस्ता। तिलयष्टीमधुयुत क्षीर गण्डूषधारणम्।

**सस्नेहं दशमूलाम्बु गण्डूषः प्रचलद्द्विजे ॥ १४ ॥**
**तुत्थरोध्रकणाश्रेष्ठापत्तङ्गपद्मघर्षणम्।**
**स्निग्धाः शीलया यथावस्थं नस्यान्नकवलादयः ॥ १५ ॥**

स०-प्रचलद्द्विजे दशमूलाम्बु सस्नेह गण्डूष । तुत्थादिभिर्घर्षणम्। स्निग्धा नस्यादयोऽवस्थावशादभ्यसनीया ।

**अधिदन्तकमालिप्त यदा क्षारेण जर्जरम्।**
**कृमिदन्तमिवोत्पाट्य तद्वच्चोपचरेत्तदा ॥ १६ ॥**
**अनवस्थितरक्ते च दग्धे व्रण इव क्रिया।**

स०-अधिदन्तक क्षारेणालिप्त यदा जर्जर स्यात्, तदा कृमिदन्त यथोत्पाट्य तथैवोपक्रमेत्। अनवस्थितरक्ते च दग्धे व्रण इव चिकित्सा कार्या।

**अहिंसन् दन्तमूलानि दन्तेभ्यः शर्करां हरेत् ॥ १७ ॥**
**क्षारचूर्णैर्मधुयुतैस्ततश्च प्रतिसारयेत्।**

स०-दन्तेभ्य शर्करा हरेत्, दन्तमूलान्यहिंसन्-अपीडयन् रक्षन्। तत -अनन्तर, शर्करा विलिख्य क्षारचूर्णैर्मधुयुतै प्रतिसारयेत्।

**कपालिकायामप्येवं हर्षोक्तं च समाचरेत् ॥ १८ ॥**

स०-कपालिकायामप्येव-एष एवोपक्रम कार्य । दन्तहर्षोक्त च समाचरेत्।

**जयेद्विस्रावणैः स्विन्नमचलं कृमिदन्तकम्।**
**स्निग्धैश्चालेपगण्डूषनस्याहारैश्चलापहै ॥ १९ ॥**
**गुडेन पूर्णं सुषिरं मधूच्छिष्टेन वा दहेत्।**
**सप्तच्छदार्कक्षीराभ्यां पूरणं कृमिशूलजित् ॥ २० ॥**

स०-कृमिदन्तक स्विन्नमचल विस्रावणैर्विस्रावयेत् (जयेत्)। तथा स्निग्धैर्वातघ्नैरालेपादिभि । गुडेन पूर्ण सुषिर मदनेन दहेद्वा। सप्तपर्णार्कक्षीराभ्या पूरण हितम्। तत् कृमिशूलजित्।

**हिङ्गुकट्फलकासीसस्वर्जिकाकुष्ठवेल्लजम्।**
**रजो रुजं जयत्याशु वस्त्रस्थं दशने धृतम् ॥ २१ ॥**

स०-हिङ्ग्वादिक चूर्ण वसनस्थित दन्ते धृत रुजाहृत्।

**गण्डूषं ग्राहयेत्तैलमेभिरेव च साधितम्।**
**क्वाथैर्वा युक्तमेरण्डद्विव्याघ्रीभूकदम्बजैः ॥ २२ ॥**

स०-एभिरेव-हिङ्ग्वादिभि, क्वाथयुक्त सिद्ध तैल गण्डूष रोगिण ग्राहयेत्। एरण्डादिजै क्वाथैर्युक्त तैल गण्डूष धारयेद्वा।

**क्रियायोगैर्बहुविधैरित्यशान्तरुज भृशम्।**
**दृढमप्युद्धरेद्दन्त पूर्व मूलाद्विमोक्षितम् ॥ २३ ॥**
**सन्दशकेन लघुना दन्तनिर्घातनेन वा।**
**तैल सयष्ट्याह्वरजो गण्डूषो मधु वा ततः ॥ २४ ॥**

स०-इति-एवमादिभि, क्रियायोगैर्बहुप्रकारै कृतैरप्युपक्रमैरशान्तपीड दन्त सुदृढमपि पूर्व मूलाद्विमोक्षित लघुना सन्दशकेन दन्तनिर्घातनेन यन्त्रेण वोद्धरेत्। अनन्तर तैल मधुयष्टीचूर्णयुत गण्डूष धारयेत्। माक्षिक वा मधुयष्टीचूर्णयुतम्।

**ततो विदारियष्ट्याह्वशृङ्गाटककसेरुभिः।**
**तैलं दशगुणक्षीरं सिद्धं युञ्जीत नावनम् ॥ २५ ॥**

स०-ततो विदार्यादिभिर्दशगुणक्षीर तैल पक्व नस्य युञ्जीत।

**कृशदुर्बलवृद्धाना वातार्तानां च नोद्धरेत्।**
**नोद्धरेच्चोत्तरं दन्त बहूपद्रवकृद्धि स. ॥ २६ ॥**
**एषामप्युद्धृतौ स्निग्धस्वादुशीतक्रमो हितः।**

स०-कृशादीना दन्त नोद्धरेत्। उत्तर च दन्त नोद्धरेत्। यस्मात्स उद्धृतो बहूपद्रवकर । एषामपि दन्तैरुद्धृते (दन्तोद्धृतौ) स्निग्धस्वादुशीतक्रमो हित ।

**विस्रावितास्रे शीतादे सक्षौद्रैः प्रतिसारणम् ॥ २७ ॥**
**मुस्तार्जुनत्वक्त्रिफलाफलिनीतार्क्ष्यनागरैः।**
**तत्क्वाथः कवलो, नस्य तैलं मधुरसाधितम् ॥ २८ ॥**

स०-विस्रावितरक्ते शीतादे मुस्तादिभि सक्षौद्रै प्रतिसारणं हितम्।

तेषा-मुस्तादीना, क्वाथ कवल ।

मधुरै साधित तैल नस्यम्।

**दन्तमांसान्युपकुशे स्विन्नान्युष्णाम्बुधारणैः।**
**मण्डलाग्रेण शाकादिपत्रैर्वा बहुशो लिखेत् ॥ २९ ॥**
**ततश्च प्रतिसार्याणि घृतमण्डमधुद्रुतैः।**
**लाक्षाप्रियङ्गुपत्तङ्गलवणोत्तमगैरिकैः ॥ ३० ॥**
**सकुष्ठशुण्ठीमरिचयष्टीमधुरसाञ्जनैः।**
**सुखोष्णो घृतमण्डोऽनु तैलं वा कवलग्रहः ॥ ३१ ॥**
**घृतं च मधुरैः सिद्धं हितं कवलनस्ययोः।**

---

१ 'तद्घ्नी क्रिया शस्ता।' ण त । २ 'सस्नेहदशमूलाम्बुगण्डूषा' इ ई उ चन्द्र । ३ 'चले द्विजे' इ उ चन्द्र । ४ 'गण्डूषकव' उ । ५ "अनवस्थितशोणित-अरुद्धशोणितम्।" इतीन्दु । "हरेत् दन्तलेखनकेन शस्त्रेण। प्रतिसारयेत्-प्रतिसारण कुर्यात् ॥ मधूच्छिष्टेन-सिक्थकेन, वा पूर्णं कुब्जशलाकया तप्तया दहेत् ॥ वस्त्रस्थ-तान्तवबद्ध, दशने धृत-दन्तस्योपरि स्थापितम्।" इति चन्द्र । "प्रतिसारयेत्-घर्षयेदित्यर्थ ॥ सुषिर-पूयकृतच्छिद्रम्।" इति डल्हण। ६ "लाक्षाचूर्णैर्मधुयुतैस्ततस्ता प्र' स सु । ७ 'मवल' इ चन्द्र । ८ 'शनैर्धृतम्' इ उ । ९ अस्याग्रे "अलक्तकं वा सिन्धूत्थं वेल्ल(श्म)धूम सहिङ्गु वा। धान्याम्लसिद्धं शेवालं कोष्णं वा दशनस्थितम् ॥ १ ॥ वराहकर्णीमूलं वा शरपुङ्खाजटाऽथवा। वर्तिर्वाऽवल्गुजफलैर्बीजपूरजटान्वितैः ॥२॥" इति चन्द्रनन्दनटीकापुस्तकेऽधिकौ श्लोकौ।

१ 'धारयेत्' इति क्वचित्। २ 'ण्डव्याघ्रीभूर्जकदम्बकैः' इति क्वचित्। ३ "इति-अनेन प्रकारेण, क्रियायोग -औषधप्रयोगै ॥ अर्जुनस्य त्वक्। फलिनी-गन्धप्रियङ्गु । तार्क्ष्य-रसाञ्जनम् ॥ मधुरै -मधुरौषधै कल्कक्वाथीकृतै।" इति चन्द्र । "उत्तर-उत्तरदन्तपाल्यामुद्धृतम्।" इतीन्दु । ४ 'मधुना तत 'इ । ५ 'धृतौ स्नि' ई त । ६ 'धुद्रुतैः' उ । ७ 'ग्रहे' उ. । ८ 'वा' ई.।

स०–उपकुशे दन्तमांसानि खिन्नान्युष्णाम्बुगण्डूषधारणेन। ततो मण्डलाग्रेण शाकादिपत्रैर्वा बहुशो लिखेत्। ततो लाक्षादिभिर्घृतमण्डमधुंद्रुतै प्रतिसारणीयानि। अनन्तरं सुखोष्णो घृतमण्डस्तैलं वा कवलग्रहः। मधुरैश्च पक्वं घृतं कवलनस्ययोर्हितम्।

**दन्तपुप्पुटके खिन्नछिन्नभिन्नविलेखिते ॥ ३२ ॥**
**यष्ट्याह्वस्वर्जिकाशुण्ठीसैन्धवैः प्रतिसारणम् ।**

स०–दन्तपुप्पुटके खिन्नछिन्नभिन्नविलिखिते यष्ट्यादिभिः प्रतिसारणम्।

**विद्रधौ कटुतीक्ष्णोष्णरूक्षैः कवललेपनम् ॥ ३३ ॥**
**घर्षणं कटुकाकुष्ठवृश्चिकालीयवोद्भवैः ।**
**रक्षेत्पाकं हिमैः पक्वः पाट्यो दाह्योऽवगाढकः ॥३४॥**

स०–विद्रधौ कट्वादिभिः कवललेपनं हितम्। कटुकादिभिर्घर्षणं हितम्। हिमैः–शीतलैः, पाकं रक्षेत्। पक्वः पाटनीयः। दाह्योऽवगाढः।

**शुषिरे छिन्नलिखिते सक्षौद्रैः प्रतिसारणम् ।**
**रोध्रमुस्तमिशिश्रेष्ठाताक्ष्यपत्तङ्गकिंशुकैः ॥ ३५ ॥**
**सकट्फलैः, कषायैश्च तेषां गण्डूष इष्यते ।**
**यष्टीरोध्रोत्पलानन्तासारिवागुरुचन्दनैः ॥ ३६ ॥**
**सगैरिकसितापुण्ड्रैः सिद्धं तैलं च नावनम् ।**

स०–सौषिरे छिन्ने लिखिते च रोध्रादिभिर्माध्वीकयुतैः प्रतिसारणम्।

तैरेव कषायैर्गण्डूषश्च स्यात्।

यष्ट्यादिभिः पक्वं तैलं नावनम्।

**छित्त्वाऽधिमांसकं चूर्णैः सक्षौद्रैः प्रतिसारयेत् ॥३७॥**
**वचातेजोवतीपाठास्वर्जिकायवशूकजैः ।**
**पटोलनिम्बत्रिफलाकषायः कवलो हितः ॥ ३८ ॥**

स०–अधिमांसकं छित्त्वा वचादिजैश्चूर्णैः सक्षौद्रैः प्रतिसारयेत्।

पटोलादिक्वाथः कवलो हितः।

**विदर्भे दन्तमूलानि मण्डलाग्रेण शोधयेत् ।**
**क्षारं युञ्ज्यात्ततो नस्यं गण्डूषादि च शीतलम् ॥३९॥**

स०–विदर्भे दन्तमूलानि मण्डलाग्रेण शोधयेत्। क्षारं युञ्जीत। ततो नस्यम्। गण्डूषादि च शीतलम्।

**संशोध्योभयतः कायं शिरश्चोपचरेत्ततः ।**
**नाडीं दन्तानुगां दन्तं समुद्धृत्याग्निना दहेत् ॥ ४० ॥**
**कुब्जा नैकगतिं पूर्णां गुडेनैः मदनेन वा ।**
**धावनं जातिमदनखदिरस्वादुकण्टकैः ॥ ४१ ॥**
**क्षीरिवृक्षाम्बुगण्डूषो, नस्यं तैलं च तत्कृतम् ।**

स०–उभयतः–ऊर्ध्वमधश्च, कायं मूर्धानं च, विरेकेण नस्यादिना च संशोध्य ततो नाडीं दन्तानुगामुपचरेत्। दन्तं समुद्धृत्याग्निना दहेत्। कुब्जां नैकगतिं पूर्णां गुडेन मदनेन वा दहेत्।

जात्यादिभिर्धावनं हितम्।

क्षीरिवृक्षाम्बुगण्डूषः।

तत्पक्वं च तैलं नस्यम्।

**कुर्याद्वातौष्ठकोपोक्तं कण्टकेष्वनिलात्मसु ॥ ४२ ॥**
**जिह्वायां**

स०–जिह्वाया वातोत्थेषु कण्टकेषु वातौष्ठकोपोक्तं चिकित्सितं कुर्यात्।

**पित्तजातेषु घृष्टेषु रुधिरे स्रुते ।**
**प्रतिसारणगण्डूषनावनं मधुरैर्हितम् ॥ ४३ ॥**

स०–जिह्वाया पित्तजातेषु कण्टकेषु घृष्टेषु रुधिरे स्रुते प्रतिसारणादि मधुरैर्हितम्।

**तीक्ष्णैः कफोत्थेष्वेवं च सर्षपत्र्यूषणादिभिः ।**

स०–कफोत्थेष्वप्येवं तीक्ष्णैः सर्षपादिभिः प्रतिसारणादि हितम्।

**नवे जिह्वालसेऽप्येवं, तं तु शस्त्रेण न स्पृशेत् ॥४४॥**

स०–नवे च जिह्वालसे एष एवोपक्रमः। किं तु शस्त्रेणैनं न स्पृशेत्। एतत् युक्त्या च पूर्वेषां शस्त्रस्पर्शनं कार्यमित्यनुजज्ञे।

**उन्नम्य जिह्वामाकृष्टां बडिशेनाधिजिह्विकाम् ।**
**छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादि च ॥ ४५ ॥**

स०–अधिजिह्विकां बडिशेनाकृष्टां मण्डलाग्रेण छेदयेत्। किं कृत्वा? उन्नम्य जिह्वाम्। तीक्ष्णोष्णैर्घर्षणादि च कार्यम्।

**उपजिह्वां परिस्राव्य यवक्षारेण घर्षयेत् ।**

स०–उपजिह्वां शस्त्रेण परिस्राव्य यवक्षारेण घर्षयेत्।

**कफघ्नैः शुण्डिका साध्या नस्यगण्डूषघर्षणैः ॥ ४६ ॥**

स०–शुण्डिका कफघ्नैर्नस्यादिभिः साधनीया।

---

१ 'धुद्रुतै' ड। २ "वृश्चिकाली–उष्ट्रधूमकः। अवगाढः–कठिनः।" इतीन्दुः। "पक्वः सन् शस्त्रेण पाट्यः। अवगाढोऽग्निना दाह्यः॥" "शीतलं–शीतवीर्यसाधितम्।" इतिचन्द्रः। ३ 'सौषिरे' त। ४ 'कषायश्च' इ उ। ५ 'मार्द्वीक' ट ण। 'भिर्मृद्वीकायुतैः' ड.। ६ 'कायाव' इ ई उ.त. चन्द्र।

१ 'न्युब्जा' उ चन्द्र, ट। २ "गुडेन मदनेन–सिक्थकेन वा, पूर्णामग्निना दहेत्। तत्कृतं–क्षीरिवृक्षसिद्धम्॥ एवं–घृष्टेषु रुधिरे स्रुते सर्षपत्र्यूषणादिभिस्तीक्ष्णरौषधैः प्रतिसारणं गण्डूषो नावनं हितम्॥ नवे–अचिरोत्थे। एवं–तीक्ष्णैरौषधैः प्रतिसारणाद्यो योज्यः।" इति चन्द्रः। ३ 'न मधुनाऽथवा' इ। ४ 'दन्तान् स' ट ड ण त। ५ 'स्थेष्वप्येव स' अरुण। ६ 'तु' इ उ। ७ 'एतदेव यु' ड।

**एर्वारुबीजप्रतिमं वृद्धायामसिरांततम्[1]।**
**अग्रं निविष्टं जिह्वाया बडिशाद्यवलम्बितम् ॥ ४७ ॥**
**छेदयेन्मण्डलाग्रेण नात्यग्रे न च मूलतः ।**
**छेदेऽस्यसृक्क्षयान्मृत्युर्हीने व्याधिर्विवर्द्धते ॥ ४८ ॥**

स०–वृद्धाया शुण्टिकाया सत्या जिह्वाया अग्रे(ग्र) निविष्ट कृष्णदीर्घकर्कटिकाबीजसदृश बडिशादिनाऽवलम्बित मण्डलाग्रेण छेदयेत् । कथम्? नातिशयेन प्रान्ते न चातिशयेन मूले । यतोऽतिच्छेदे सत्यसृक्क्षयान्मृत्यु । हीनेच्छिन्ने सति व्याधि-र्विवर्द्धते ।

**मरिचातिविषापाठावचाकुष्ठकुटन्नटैः ।**
**छिन्नाया सपटुक्षौद्रैर्घर्षणं, कवलः पुनः ॥ ४९ ॥**
**कटुकातिविषापाठानिम्बरास्नावचाम्बुभिः ।**

स०–छिन्नाया मरिचादिभि समन्वितै क्षौद्रैर्घर्षणम् । कवल कटुकादिक्काथेन ।

**सङ्घाते पुप्पुटे कूर्मे विलिख्यैवं समाचरेत् ॥ ५० ॥**

स०–[तालु]सहतौ पुप्पुटके कच्छपे [च] विलिख्यैव–अनेन क्रमेण, समाचरेत् ।

**अपक्के तालुपाके तु कासीसक्षौद्रताक्ष्र्यजैः ।**
**घर्षणं, कवलः शीतकषायमधुरौषधैः ॥ ५१ ॥**

स०–अपक्के तु तालुपाके कासीसादिभिर्घर्षणम् । शीतकषायमधुरौषधै कवल ।

**पक्केऽष्टापदवद्भिन्ने तीक्ष्णोष्णैः प्रतिसारणम् ।**
**वृषनिम्बपटोलाद्यैस्तिक्तैः कवलधारणम् ॥५२ ॥**

स०–पक्केऽष्टापदवद्भिन्ने सति तीक्ष्णोष्णै प्रतिसारण कार्यम् । अष्टापद–चतुरङ्गपीठम् ।
वृषादिभिस्तिक्तद्रव्यै कवलधारणम् ।

**तालुशोषे त्वतृष्णस्य सर्पिरुत्तरभक्तिकम् ।**
**कणाशुण्ठीशृतं पानमम्लैर्गण्डूषधारणम् ॥ ५३ ॥**
**धन्वमांसरसाः स्निग्धाः,क्षीरसर्पिश्च नावनम् ।**

स०–तालुशोषे त्वतृष्णस्य सत सर्पिरुत्तरभक्तिक योज्यम् । पिप्पलीशुण्ठीभ्या शृत जलपानम् । अम्लै –काञ्जिकादिभि , गण्डूषधारणम् । धन्वमासरसा स्निग्धा । तथा क्षीरस्य सर्पिश्च नावन हितम् ।

**कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णैर्नस्यादि कर्म च ॥५४॥**
**क्काथः पान च दार्वीत्वङ्निम्बताक्ष्र्यकलिङ्गजः ।**
**हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥ ५५ ॥**

स०–कण्ठरोगेषु सर्वेषु सिरादिभी रक्तमोक्ष । तीक्ष्णैर्द्रव्यैर्नस्यगण्डूषादि च ।
दार्वीत्वगादीना क्काथ पातव्य । हरीतक्या वा क्काथ समाक्षिक पेय ।

**श्रेष्ठाव्योषयवक्षारदार्वीद्वीपिरसाञ्जनैः ।**
**सपाठातेजिनीनिम्बैः शुक्तगोमूत्रसाधितैः ॥ ५६ ॥**
**कवलो, गुटिका वाऽत्र कल्पिता प्रतिसारणम् ।**

स०–श्रेष्ठादिभि शुक्तगोमूत्रसाधितै कवल । गुटिका वाऽत्र–अस्मिन् क्काथे, परिकल्पिता प्रतिसारणम् ।

**निचुलं कटभी मुस्तं देवदारु महौषधम् ॥ ५७ ॥**
**वचा दन्ती च मूर्वा च लेपः कोष्णोऽर्तिशोफहा ।**

स०–निचुलादिभिर्लेप कोष्णो रुजाशोफघ्न ।

**अथान्तर्बाह्यतः स्विन्नां वातरोहिणिकां लिखेत्॥५८॥**
**अङ्गुलीशस्त्रकेणाशु पटुयुक्तनखेन वा ।**
**पञ्चमूलाम्बु कवलस्तैल गण्डूषनावनम् ॥ ५९ ॥**

स०–अथेति मङ्गले। मङ्गलपूर्वक वातजा रोहिणिकामन्तर्बाह्यतश्च स्विन्नामङ्गुलिशस्त्रकेणाथवा पटुयुक्तेन नखेन शीघ्रमेव लिखेत्। पञ्चमूलक्काथ कवल । तैल गण्डूषो नस्य च ।

**विस्राव्य पित्तसम्भूतां सिताक्षौद्रप्रियङ्गुभिः ।**
**घर्षेत्सरोध्रपत्तङ्गैः कवलः क्कथितैश्च तैः ॥ ६० ॥**
**द्राक्षापरूषकक्काथो हितश्च कवलग्रहे ।**

स०–पित्तजा रोहिणी विस्राव्य–रक्त निर्हृत्य,सितादिभिर्घर्षयेत्। तैश्च–सितादिभि , क्कथितै सरोध्रादिभि कवल । द्राक्षापरूषकयो क्काथ [च] कवलो हित ।

**उपाचरेदेवमेव प्रत्याख्यायास्रसम्भवाम् ॥ ६१ ॥**

स०–रक्तजा रोहिणिका प्रत्याख्याय पित्तजामिवोपक्रमेत् ।

**सागारधूमैः कटुकैः कफजा प्रतिसारयेत् ।**
**नस्यगण्डूषयोस्तैलं साधितं च प्रशस्यते ॥ ६२ ॥**
**अपामार्गफलश्वेतादन्तीजन्तुघ्नसैन्धवैः ।**

---

१ "असिराततं–असिराभिर्व्याप्तं, अग्रमुपरि जिह्विकाया निविष्ट वडिशाद्यवलम्बित–बडिशेन मुचुण्ड्या वा गृहीतम् ॥ कुटन्नट–परिपेलव ॥ समाचरेत्–चिकित्सेत् ।" इति चन्द्र । "असिराततं–सिरारहित प्रदेशम् ॥ अष्टापदवदिति तत्कोष्ठाकृतिच्छेदनम् ।" इतीन्दु । २ 'अग्रे' अरुण । ३ 'जिह्वाया' इ उ ण त चन्द्र । ४ 'नातिमूलत ' उ. । ५ 'हीने छिन्ने' ट । ६ 'शीत क' इ उ । ७ आद्यशब्दात् सङ्ग्रहोक्त 'जातीकरवीरगुडूचीकटुकाहरिद्राद्वयवेत्राग्रकण्टकारिकाक्काथो मधुतैल च' इति ग्राह्यम् । ८ 'षे तृषार्तस्य' इ उ चन्द्र । "तालुशोषे मधुकपिप्पलीनागरसिद्ध सर्पिरुत्तरभक्तिक सतृष्ण पिबेत् ।" इति सङ्ग्रहे । "सतृष्ण –तृष्णासहित." इतीन्दु । ९ "अतृष्णस्येति पदेन तृष्णायुक्तस्य तालुशोषे औत्तरभक्तिकमपि सर्पि पान निषेधयति । तालुशोषे च 'तृष्णामूर्च्छापरीताश्च गर्भिण्यस्तालुशोषिण ।' ( च सू. अ. १३ ) इत्यादिना यद्यपि स्नेहपान निषिद्धम्, तथाऽपीह औत्तरभक्तिक सर्पिर्विशेषविधानात् कर्तव्यमेव ।" इति चरके चक्र. ।

१ "तेजिनी–तेजोवती ॥ निचुलो–नीप । कटभी–श्वेता गिरिकर्णिका ॥ पटुयुक्तेन–लवणयुक्तेन, नखेनव लिखेत् ॥ अपामार्गस्य फल–बीजम् । श्वेता–गिरिकर्णिका ।" इति चन्द्र । "रक्तजाऽसाध्योक्ता, ता प्रत्याख्याय–न सेत्स्यतीति प्रत्याख्याय, चिकित्सेत् ।" इतीन्दु. । २ 'शुक्त' चन्द्र. स स., ट ड. । ३ 'चात्र' इ.उ. चन्द्र., ट. । ४ 'मुस्ता' इ. चन्द्र. ।

स०–कटुकै –कटुवर्गोक्तै, सागारधूमै कफोत्था प्रतिसारयेत्।

अपामार्गादिभि कल्कितै साधित तैलं कफरोहिण्या नस्यगण्डूषयो श्रेष्ठम्।

**तद्वच्च वृन्दशालूकतुण्डिकेरीगिलायुषु ॥ ६३ ॥**

स०–एषैव चिकित्सा वृन्दादिषु।

**विद्रधौ स्राविते श्रेष्ठारोचनाताक्ष्र्यगैरिकैः।**
**सरोध्रपट्टपत्तङ्गकणैर्गण्डूषघर्षणे ॥ ६४ ॥**

स०–विद्रधौ शस्त्रेण स्राविते श्रेष्ठादिभिर्गण्डूषादि हितम्।

**गलगण्ड॰ पवनजः स्विन्नो नि॰स्रुतशोणितः।**
**तिलैर्बीजैश्च लट्वोमाप्रियालशणसम्भवैः ॥ ६५ ॥**
**उपनाह्यो, व्रणे रूढे प्रलेप्यश्च पुनः पुनः।**
**शिग्रुतिल्वकतर्कारीगजकृष्णापुनर्नवैः ॥ ६६ ॥**
**कालामृतार्कमूलैश्च पुष्पैश्च करहाटजैः।**
**एकैषिकान्वितैः पिष्टैः सुरया काञ्जिकेन वा ॥ ६७ ॥**
**गुडूचीनिम्बकुटजहंसपादीबलाद्वयैः।**
**साधितं पाययेत्तैलं सकृष्णादेवदारुभिः ॥ ६८ ॥**

स०–गलगण्डो वातोद्भव स्विन्नो नि स्रुतास्रस्तिलर्लट्वादिबीजैश्च उपनाह्य।

रूढे व्रणे सति प्रलेप्यश्च बहुश शिग्र्वादिभि सुरया काञ्जिकेन वा पिष्टै। एकैषिका–त्रिवृत्।

गुडूच्यादिभि सकृष्णादेवदारुभि कल्कितैर्गलगण्डिनमातुर पक्व तैल पाययेत्।

**कर्तव्यं कफजेऽप्येतत्स्वेदविम्लापने त्वति।**

स०–कफोत्थेऽप्येतत्–वातगलगण्डोक्त चिकित्सितं, कार्यम्। किन्तु स्वेदविम्लापने चात्यर्थ कार्ये।

**लेपोऽजगन्धातिविषाविशल्याः सविषाणिकाः॥६९॥**
**गुञ्जालाबुशुकाह्वाश्च पलाशक्षारकल्किताः।**

स०–कफजे गलगण्डेऽजगन्धादय पलाशक्षारनिश्चोतकल्किता लेप।

**मूत्रस्रुतं हठक्षारं पक्त्वा कोद्रवभुक् पिबेत् ॥७०॥**
**साधितं वत्सकाद्यैर्वा तैलं सपटुपञ्चकैः।**
**कफघ्नान् धूमवमननावनादींश्च शीलयेत् ॥ ७१ ॥**

स०–हठो–सिम्मिणि, तस्य क्षार गोमूत्रे स्रुत पक्त्वा क्षारन्यायेन पिबेज्जलेन, 'पेषणालोडने वारि' (हृ क अ ६।२३) इति वचनात्। किम्भूत सन्? कोद्रवभुक्। वत्सकादिभिर्वा (हृ सू अ १५।३३) तैल साधित हितम्।

कफघ्नान् धूमादीन् शीलयेत्।

**मेदोभवे सिरां विध्येत्कफघ्नं च विधिं भजेत्।**
**असनादिरजश्चैनं प्रातर्मूत्रेण पाययेत् ॥ ७२ ॥**

स०–मेदोभवे गलगण्डे सिरा विध्येत्।

कफघ्न च विधि सेवेत।

असनादिचूर्ण (हृ सू अ १५।१९) चैन प्रातर्गोमूत्रेण पाययेत्।

**अशान्तौ पाचयित्वा च सर्वान् व्रणवदाचरेत्।**

स०–अशान्तौ सत्या पाचयित्वा सर्वान् व्रणवदुपक्रमेत्।

**मुखपाकेषु सक्षौद्रा प्रयोज्या मुखधावनाः ॥ ७३ ॥**
**क्वथितास्त्रिफलापाठामृद्वीकाजातिपल्लवाः।**
**निष्ठेव्या भक्षयित्वा वा कुठेरादिर्गणोऽथवा ॥ ७४ ॥**

स०–मुखपाकेषु समाक्षिका मुखधावना क्वथितास्त्रिफलादय प्रयोज्या। अथवा त्रिफलादीन् भक्षयित्वा निष्ठेव्या–भुक्त्वा निष्ठीवेत्। कुठेरादिर्गणो वा–हरीतकवर्गोक्तो (हृ सू अ ६।१०६), भक्षयित्वा निष्ठेव्य।

**मुखपाकेऽनिलात् कृष्णापट्वेलाः प्रतिसारणम्।**
**तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ ७५ ॥**

स०–मुखपाकेऽनिलात् कृष्णादय प्रतिसारणम्।

वातघ्नै सिद्ध तैल कवले नस्ये च हितम्।

**पित्तास्रे पित्तरक्तघ्नः**

स०–पित्तास्रे पित्तरक्तघ्नो विधि।

**कफघ्नश्च कफे विधिः।**
**लिखेच्छाकादिपत्रैश्च पिटिकाः कठिनाः स्थिराः ७६**

स०–कफे च कफहृत् विधि।

पिटिका कठिना स्थिरा शाकादिपत्रैर्लिखेत्।

**यथादोषोदयं कुर्यात्सन्निपाते चिकित्सितम्।**

स०–सन्निपाते यथादोषोदय चिकित्सित कुर्यात्।

**नवेऽर्बुदे त्वसंवृद्धे छेदिते प्रतिसारणम् ॥ ७७ ॥**
**स्वर्जिकानागरक्षौद्रैः, क्वाथो गण्डूष इष्यते।**

---

१ 'टुकै सागा' ट.ड ण त। २ "तद्वत्–कफरोहिणीवत् ॥ लट्वा–कुसुम्भ।" इति चन्द्र। "लट्वा–लम्बा। काला–नीलिनी। एकैषिका–महादूर्वा, त्रिवृद्वा ॥ हसपादी–त्रिपादी ॥ विशल्या–लाङ्गली। विषाणिका–ऋषभक।" इतीन्दु। "काला–हिंस्रा। करहाट–मदनफलम्। एकैषिका–अम्बष्ठा, त्रिवृदित्येके ॥ अजगन्धा–वोविका। विषाणिका–आवर्तनिका। शुकाह्वय –चर्मकारवट ॥ हठो –जलकुम्भिका।" इति डल्हण। ३ 'रीगलायु' उ। ४ 'घधारणम्' इ.। 'घर्षणम्' चन्द्र। ५ 'विस्रुत' चन्द्र.। ६ 'तालमूलार्क' उ.। ७ 'करघाट' इ ण त चन्द्र स द्द। ८ 'क्षारकल्कि' ड.। ९ 'मूत्रशृत' उ.। 'सूत्रस्रुत' "सूत्रेण गलितम्" इति चन्द्र। १० 'यवक्षार' इ उ चन्द्र। ११ 'धूमगण्डूषान् वमनादीं' उ.।

१ "[सर्वैं] गलगण्डवृत्तियोग्यौषधैरशान्तौ सत्यां लाङ्गलीपिण्डी(ण्डे)न पाचयित्वा व्रणवदाचरेत् ॥ पित्तास्रे–तदुद्भूते मुखपाके, पित्तघ्नो रक्तघ्नश्चाय विधि ॥ कफे–कफसम्भवे मुखपाके ॥ सन्निपाते–सन्निपातोद्भवे मुखपाके।" इति चन्द्र। "पल्लव –अभिनवोत्पन्न पत्रम्।" इतीन्दु। २ 'पाटयित्वा' उ.त.। ३ सर्वान्–वातजकफजमेदोजान् गलगण्डान्। ४ 'पाके तु स' इ। ५ 'मुखपावनाः' चन्द्र। ६ 'निघृष्टव्या भक्षयित्वा कु' उ.। ७ 'दीन् भुक्त्वा' ट.ड.। ८ 'रक्तपित्तघ्न.' इति क्वचित्।

**गुडूचीनिम्बकल्कोत्थो मधुतैलसमन्वितः ॥ ७८ ॥**
**यवान्नभुक् तीक्ष्णतैलनस्याभ्यङ्गांस्तथाऽऽचरेत् ।**

स०–अर्बुदे नवोत्थेऽसवृद्धे छेदिते च प्रतिसारण खर्जिकादिभि ।
गण्डूष इष्टो गुडूचीनिम्बकल्कोद्भव क्वाथो मधुतैलयुक्त ।
तथा यवान्नभोजी तीक्ष्णतैलनस्याभ्यङ्गानाचरेत् ।

**वमिते पूतिवदने धूमस्तीक्ष्ण. सनावन. ॥ ७९ ॥**
**समङ्गाधातकीरोध्रफलिनीपद्मकैर्जलम् ।**
**धावनं वदनस्यान्तश्चूर्णितैरवचूर्णितम् ॥ ८० ॥**
**शीतादोपकुशोक्तं च नावनादि च शीलयेत् ।**

स०–पूतिमुखे वमिते सति तीक्ष्णधूमो नस्य च तीक्ष्ण प्रयोज्यम् । समङ्गादिजलेन वदनस्यान्त क्षालयेत् । एतैरेव मुखान्तर चूर्णितैरवचूर्णयेत् । शीतादोपकुशोक्त च नस्यादिकमभ्यसेत् ।

**फलत्रयव्योषकिरिराततिक्त-**
**यष्ट्याह्वसिद्धार्थकटुत्रिकाणि ।**
**मुस्ताहरिद्राद्वययावशूक-**
**वृक्षाम्लकाम्लाग्रिमवेतसाश्च ॥ ८१ ॥**
**अश्वत्थजम्ब्वाम्रधनञ्जयत्वक्**
**त्वक् चाहिमारात्खदिरस्य सारः ।**
**क्वाथेन तेषां घनतां गतेन**
**तच्चूर्णयुक्ता गुटिका विधेयाः ॥ ८२ ॥**
**ता धारिता घ्नन्ति मुखेन नित्यं**
**कण्ठौष्ठताल्वादिगदान् सुकृच्छ्रान् ।**
**विशेषतो रोहिणिकास्यशोष-**
**गन्धान् विदेहाधिपतिप्रणीताः ॥ ८३ ॥**

स०–त्रिफलादीना द्रव्याणा क्वाथेन घनत्व गतेन तच्चूर्णेन त्रिफलादिरजसाऽन्विता गुलिका कार्या । ता मुखेन नित्य धारिता कण्ठादिरोगान् दारुणानपि घ्नन्ति । विशेषेण रोहिणिकादीन् । विदेहपतिना निर्मिता एता । अम्लाग्रिमवेतस – अम्लवेतस । अत्रा[न्या]ये वृत्ते उपजाती, मध्यममिन्द्रवज्रा ।

**खदिरतुलामम्बुघटे पक्त्वा तोयेन तेन पिष्टैश्च ।**
**चन्दनजोङ्गककुङ्कुमपरिपेलववालकोशीरैः ॥ ८४ ॥**
**सुरतरुरोध्रद्राक्षामञ्जिष्ठाचोचपद्मकविडङ्गैः ।**
**स्पृक्कानतनखकट्फलसूक्ष्मैलाध्यामकैः सपत्तङ्गैः॥८५**

**तैलप्रस्थं विपचेत्**
**कर्षांशै. पाननस्यगण्डूषैस्तत् ।**
**हत्वाऽऽस्ये सर्वगदान्**
**जनयति गार्ध्रीं दृशं श्रुतिं च वाराहीम् ॥८६॥**

स०–खदिरपलशत जलद्रोणे पक्त्वा पादावशेषितेन तेन जलेन पिष्टैश्चन्दनादिभि कर्षांशैस्तैलप्रस्थ पचेत् । तच्च पाननस्यगण्डूषैरास्ये धारित सर्वान् रोगान् जित्वा गृध्रसम्बन्धिनी दृष्टिं वराहतुल्या श्रुति [च] वितनुते । आर्या(र्ये) गीति [च] ।

**उद्वर्तितं च प्रपुनाटरोध्र-**
**दार्वीभिरभ्यक्तमनेन वक्त्रम् ।**
**निर्व्यङ्गनीलीमुखदूषिकादि**
**सञ्जायते चन्द्रसमानकान्ति ॥ ८७ ॥**

स०–प्रपुन्नाटादिभिरुद्वर्तित मुख तैलेनानेनाभ्यक्त व्यङ्गादिरहित चन्द्रतुल्यकान्ति सञ्जायते । उपजाति ।

**पलशतं बाणात्तोयघटे पक्त्वा रसेऽस्मिंश्च पलार्धिकैः**
**खदिरजम्बूयष्ट्यानन्ताम्रैरहिमारनीलोत्पलान्वितैः ॥**
**तैलप्रस्थं पाचयेच्छ्लक्ष्णपिष्टै-**
**रेभिर्द्रव्यैर्धारितं तन्मुखेन ।**
**रोगान् सर्वान् हन्ति वक्त्रे विशेषा-**
**त्स्थैर्यं धत्ते दन्तपङ्क्तेश्चलायाः ॥ ८९ ॥**

स०–नीलसहचरात् पलशत जलघटे पक्त्वा तस्मिन् रसे द्विकार्षिकै खदिरादिभि कल्कितै सूक्ष्मरजीकृतैस्तैलप्रस्थ विपाचयेत् । तन्मुखेन धारित सर्वमुखरोगहृत् । विशेषेण दन्तपङ्क्तेश्चलाया स्थैर्यकृच्च । वृत्त (?) शालिनी [च] ।

**खदिरसाराद् द्वे तुले पचेद्वल्कात्तुलां चारिमेदसः ।**
**घटचतुष्के पादशेषेऽस्मिन् पूते पुनः क्वथनाद्घने ९०**
**आक्षिकं क्षिपेत्तुसूक्ष्मं रजः**
**सेव्याम्बुपत्तङ्गगैरिकम् ।**
**चन्दनद्वय(श्यामा)रोध्रपुण्ड्रा-**
**ह्वयष्ट्याह्वलाक्षाञ्जनद्वयम् ॥ ९१ ॥**
**धातकीकट्फलद्विनिशात्रिफलाचतुर्जातजोङ्गकम् ।**
**मुस्तमञ्जिष्ठान्यग्रोधप्ररोह[वचा]मासीयवासकम्९२**

१ "पूतिवदने समङ्गादिभिश्चूर्णितैरवचूर्णित जल वदनस्यान्तर्धावन–प्रक्षालन, योज्यम् ।" इति चन्द्रनन्दनव्याख्यान युक्तम्, सङ्ग्रहे 'समङ्गाधातकीपद्मलोध्रप्रियङ्गुचूर्णै. सलिलमवचूर्णित मुखधावनम् ।' इत्युक्तत्वात् । अरुणदत्तव्याख्यान तु चिन्त्यम् । २ 'चूर्णनम्' इ उ ण त । ३ "अश्वत्थादीना चतुर्णां त्वक् । अहिमार –अरिमेद । विदेहाधिपतिना–मैथिलमुनिना, प्रणीता.–प्रोक्ता. ।" इति चन्द्र. । ४ 'गुलिका' इ. ।

१ 'ण्डूषै । ह' इ चन्द्र । २ 'हन्त्यास्ये' इ उ ण. । ३ "वक्त्र–मुख, अनेन–उक्तेन तैलेन, अभ्यक्त प्रपुनाटरोध्रदार्वीभिरुद्वर्तित च सत् निर्व्यङ्ग० सञ्जायते ।" इति चन्द्र । ४ 'दूषिक च स' इ । ५ 'न्तारोध्रैरहि' ण त. । ६ 'येत्सूक्ष्मपि' उ । ७ 'तत्सुखेन' ई । ८ अस्या खदिरसारादिगुटिकाया चरके ( चि अ २६।२०६ ) 'फलिनीवचानखानि' इति त्रीणि द्रव्याण्यधिकानि । अत्र तु चरकेऽनुक्तो 'न्यग्रोधप्ररोह' इत्येक एवाधिक , इति विशेष । ९ 'ले विपचे' इ ई.उ चन्द्र. । १० 'द्वल्कलतुला' इ उ चन्द्र. । 'द्वल्कतुलां' ई । ११ 'मेदत' इ । १२ 'क्वाथना' ण त.चन्द्र , ट. । 'क्वाथयेद्घने' इ । १३ 'कार्षिक' ई. । १४ 'क च क्षिपेत्सू' उ । १५ 'सूक्ष्मरज.' इ.ई.उ. । १६ 'धातुकी' इ.ण.त ।

पद्मकैलासमङ्गाश्च शीते
तास्मिंस्तथा पालिका पृथक् ।
जातिपत्रिकां सजातीफलां सह-
(नख)लवङ्गकङ्कोल्लकाम् ॥ ९३ ॥

स्फटिकशुभ्रसुरभिकर्पूरकुडवं च तत्रावपेत्ततः ।
कारयेद्गुटिकाः सदा चैता धार्या मुखे तद्गदापहाः ॥

स०–खदिरसाराद् द्वे तुले, तुला चारिमेदसो वल्कात्, जलघटचतुष्टये पचेत् । पादावशेषिते पूतेऽस्मिन् पुन क्वथनाद् घनीभूते कार्षिकाणि सुश्लक्ष्णचूर्णानि सेव्यादीनि क्षिपेत् । अस्मिन् शीते जातीपत्रादीन् पृथक्पालिकान् क्षिपेत् । श्रेष्ठतमोज्वलकर्पूरकुडव चात्र क्षिपेत् । अनन्तर गुटिका कारयेत् । एता सदा मुखे धार्या सर्वमुखरोगहरा । [ वृत्तानि (?) पञ्च ।]

क्वाथ्यौषधव्यत्यययोजनेन
तैलं पचेत्कल्पनयाऽनयैव ।
सर्वास्यरोगोद्धृतये तदाहु-
र्दन्तस्थिरत्वे त्विदमेव मुख्यम् ॥ ९५ ॥

स०–क्वाथ्यौषधयो –खदिरसारारिमेदसो , व्यत्ययो–वेपरीत्य,–अरिमेदस -विट्खदिरवल्कलाद् द्वे तुले प्रयोज्ये, खदिरसारात्तुलाम्, अन्यत्सर्व पूर्ववद्देयमिति । तैल पचेदनयैव कल्पनया । तत्–तैल, सर्वमुखरोगघ्नम् । दन्तस्थिरकृतौ चेदमेव प्रधानमाहु । इन्द्रवज्रा ।

खदिरेणैता गुटिका
स्तैलमिदं चारिमेदसा प्रथितम् ।
अनुशीलयन् प्रतिदिनं
स्वस्थोऽपि दृढद्विजो भवति ॥ ९६ ॥

स०–खदिरेणैता गुटिकास्तैल चैतदरिमेदसा प्रथितम् । द्वयमप्येतत् प्रतिदिनमभ्यस्त स्वस्थस्यापि द्विजदार्ढ्यकृत् । आर्या ।

क्षुद्रागुडूचीसुमनःप्रवाल-
दार्वीयवासत्रिफलाकषायः ।
क्षौद्रेण युक्तः कवलग्रहोऽयं
सर्वामयान् वक्त्रगतान्निहन्ति ॥ ९७ ॥

स०–क्षुद्रादिभि कषाय क्षौद्रेण युतः कवलग्रहोऽयं सर्वमुखरोगान् हन्ति । इन्द्रवज्रा ।

पाठादार्वीत्वक्कुष्ठमुस्तासमङ्गा-
तिक्तापीताङ्गीरोध्रतेजोवतीनाम् ।

चूर्णः सक्षौद्रो दन्तमांसार्तिकण्डू-
पाकस्रावाणा नाशनो घर्षणेन ॥ ९८ ॥

स०–पाठादीना चूर्ण क्षौद्रयुतो दन्तमासार्त्यादीना घर्षणेन नाशन । वैश्वदेवी ।

गृहधूमतार्क्ष्यपाठाव्योषक्षाराग्न्ययोवरातेजोह्वैः ।
मुखदन्तगलविकारे सक्षौद्रः कालको विधार्यश्चूर्णः ॥

स०–गृहधूमादिभिश्चूर्ण समाक्षिक कालकाख्यो मुख-[दि]विकारे धार्य । आर्या गीति ।

दार्वीत्वक्सिन्धूद्भवमनःशिलायावशूकहरितालैः ।
धार्यः पीतकचूर्णो दन्तास्यगलामये समध्वाज्यः ॥ १०० ॥

स०–दार्व्यादिभि पीतकाख्यश्चूर्णो दन्ताद्यामये समधुघृतो धार्य । गीतिरार्या ।

द्विक्षारधूमकवरापञ्चपटुव्योषवेल्लगिरितार्क्ष्यैः ।
गोमूत्रेण विपक्वा गलामयघ्नी रसक्रिया एषा ॥ १०१ ॥

स०–द्विक्षारादिभिर्गोमूत्रेण विपक्वा एषा रसक्रिया गुटिका गलरोगघ्नी भवति । [ गीतिरार्या । ]

गोमूत्रक्वथनविलीनविग्रहाणां
पथ्याना जलमिशिकुष्ठभावितानाम् ।
अत्तारं नरमणवोऽपि वक्त्ररोगाः
श्रोतार नृपमिव न स्पृशन्त्यनर्थाः ॥ १०२ ॥

स०–गोमूत्रक्काथेन विलीनशरीराणा पथ्याना वालकशतपुष्पाकुष्ठैर्भाविताना भक्षयितार नर स्वल्पा अपि वक्त्ररोगा न स्पृशन्ति । अनर्था श्रोतार नृपमिवेत्युपमालङ्कार । प्रहर्षिणी ।

सप्तच्छदोशीरपटोलमुस्त-
हरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुमचन्दनैश्च
क्वाथं पिबेत्पाकहरं मुखस्य ॥ १०३ ॥

स०–सप्तच्छदादिभि क्वाथ मुखपाकहर पिबेत् ।

पटोलशुण्ठीत्रिफलाविशाला-
त्रायन्तितिक्ताद्विनिशामृतानाम् ।
पीतः कषायो मधुना निहन्ति
मुखे स्थितश्चास्यगदानशेषान् ॥ १०४ ॥

स०–पटोलादीना कषायो मधुमान् पीतो मुखे च स्थितो–गण्डूषो धारितो, मुखगदानशेषान्निहन्ति । उपजाती ।

स्वरसः क्वथितो दार्व्या घनीभूतः सगैरिकः ।
आस्यस्थ. समधुर्वक्त्रपाकनाडीव्रणापहः ॥ १०५ ॥

स०–दार्व्या रस. क्वथितो घनीभूत सगैरिकक्षौद्रो मुखस्थो वक्त्रपाकादिघ्न ।

पटोलनिम्बयष्ट्याह्वासाजात्यरिमेदसाम् ।
खदिरस्य वरायाश्च पृथगेवं प्रकल्पना ॥ १०६ ॥

१ 'पद्मकैलेयसमङ्गाश्च शीते तथा' इ ई उ चन्द्र । २ 'सलव' इ ई उ ण त । ३ 'कार्याश्चैता गुटिका धा' उ । ४ 'काश्चैता धा' इ । ५ 'क्वाथौषध' इ ई ण ,ट । ६ "व्यत्ययोजनेन–विपरीतप्रयोजनेन ॥ सर्वेषामास्यरोगाणा व्ययननिवर्तक, आहु. ॥ प्रथित–प्रसिद्धम् ॥ दार्वी–दारुहरिद्रा, तस्यास्त्वक् । पीताङ्गी–पिण्डहरिद्रा ।" इति चन्द्र. । ७ 'रोगे व्ययनत' इ ई.चन्द्र. । 'रोगप्रशमार्थमुक्त दन्त' उ. । ८ 'गुलिका' ई.चन्द्र.,ट ड । ९ 'वृद्धोऽपि' उ. । १० 'द्राक्षागुडू' इ.उ. ।

१ 'कालिको' इ । २ 'रगृहधूम' इति कचित् । ३ 'त्रेण पिबन् क्वाथ गला' उ । ४ 'मुखोत्थितांश्चाशु गदा' उ । ५ 'मुखेऽवस्थितो' ट.त । ६ "प्रकल्पना–योजना ।" इति चन्द्र. ।

स०–पटोलादीना पृथगेव प्रकल्पना कार्या ।

**खदिरायोवरापार्थमदयन्त्यहिमारकैः ।**
**गण्डूषोऽम्बुशृतैर्धार्यो दुर्बलद्विजशान्तये ॥ १०७ ॥**

स०–खदिरादिभिर्जलशृतैर्गण्डूषो द्विजदार्ढ्यकृद्धार्य । अहिमारक –अरिमेद ।

**मुखदन्तमूलगलजाः प्रायो रोगाः कफास्रभूयिष्ठाः।**
**तस्मात्तेषामसकृद् रुधिरं विस्रावयेद्दुष्टम् ॥ १०८ ॥**

स०–मुखादिगदा बाहुल्येन कफरक्तभूयिष्ठा यत, तस्माद्धेतोस्तेषा दुष्ट रुधिर पुन पुनर्विस्रावयेत् ।

**कायशिरसोर्विरेको वमनं कवलग्रहाश्च कटुतिक्ताः**
**प्रायः शस्तं तेषां कफरक्तहरं तथा कर्म ॥ १०९ ॥**

स०–कायशिरोविरेकादिक बाहुल्येन तेषा शस्तम् । कफरक्तहर च यत्कर्म तत् शस्तम् ।

**यवतृणधान्यं भक्तं विदलैः क्षारोषितैरपस्नेहाः ।**
**यूषा भक्ष्याश्च हिता यच्चान्यच्छ्लेष्मनाशाय ॥ ११० ॥**

स०–यवादयो हिता । यच्चापर श्लेष्मनाशन तच्च शस्तम् ।

**प्राणानिलपथसंस्थाः**
**श्वसितमपि निरुन्धते प्रमादवतः ।**
**कण्ठामयाश्चिकित्सित-**
**मतो द्रुतं तेषु कुर्वीत ॥ १११ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने मुखरोगप्रतिषेधो नाम द्वाविंशोऽध्यायः ॥ २२ ॥**



स०–प्राणपवनमार्गस्थिता कण्ठरोगा प्रमाद्यत श्वासमपि निरुन्धन्ति यत, अत –अस्माद्धेतो, तेषु रोगेषूपक्रम द्राग् विदधीत । आर्याश्चतस्र ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने मुखरोगप्रतिषेधो नाम द्वाविशोऽध्याय समाप्त ॥ २२ ॥

१ 'ग्रहा कटुकतिक्ता' स ड । २ 'भुक्त०स्नेहम् ।' इ. । ३ अस्याग्रे "तेषा मुखदन्तरोगाणा भक्त–भोजन, यवतृणधान्य क्षारोषितै.–क्षारोदके उषितै, विदलै.–मुद्गादिभि, कृता यूषा भक्ष्याश्च हिता. स्नेहरहिता । अन्यदपि श्लेष्मनाशाय यत् भवति तदत्र शस्तम् ।" इति ट ण त पुस्तकेष्वधिक पाठ । किन्त्वय चन्द्रनन्दनटीकान्तर्गत इति दृश्यते । ४ 'प्राग्' ड.ण.त. ।



# त्रयोविंशोऽध्यायः ।

अथ क्रमप्राप्त शिरोरोगविज्ञानमाह—

**अथातः शिरोरोगविज्ञानीयं[1] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**धूमातपतुषाराम्बुक्रीडातिस्वप्नजागरैः ।**
**उत्स्वेदाधिपुरोवातबाष्पनिग्रहरोदनैः ॥ १ ॥**
**अत्यम्बुमद्यपानेन कृमिभिर्वेगधारणैः ।**
**उपधानमृजाभ्यङ्गद्वेषाधःप्रततेक्षणैः ॥ २ ॥**
**असात्म्यगन्धदुष्टामभाष्याद्यैश्च शिरोगताः ।**
**जनयन्त्यामयान् दोषाः**

स०–धूमादिभि शिरोगता दोषा रोगान् जनयन्ति ।

**तत्र मारुतकोपतः ॥ ३ ॥**
**निस्तुद्येते भृशं शङ्खौ घाटा सम्भिद्यते तथा ।**
**भ्रुवोर्मध्यं ललाटं च पततीवातिवेदनम् ॥ ४ ॥**
**बाध्येते स्वनतः श्रोत्रे निष्कृष्येत इवाक्षिणी ।**
**घूर्णतीव शिरः सर्वं सन्धिभ्य इव मुच्यते ॥ ५ ॥**
**स्फुरत्यति सिराजालं कन्धराहनुसङ्ग्रहः ।**
**प्रकाशासहता घ्राणस्रावोऽकस्माद्व्यथाशमौ ॥ ६ ॥**
**मार्दवं मर्दनस्नेहस्वेदबन्धैश्च जायते ।**
**शिरस्तापोऽयम्**

स०–तत्र–तेषु मध्ये, वातकोपात् शङ्खनिस्तोदादय स्यु । तथा मर्दनादिभिर्मार्दव जायते । घूर्णतीवेति घूर्णस्तुदादि । अयमीदृश शिरस्ताप उच्यते ।

१ अथ शिरोरोगविज्ञानीयश्चरके सू० १७ अध्याये चि० २६ अध्याये च, सुश्रुते नि०१३ अध्याये उ०२५ अध्याये च, अष्टाङ्गसङ्ग्रहे उ० २७ अध्याये चास्ति वर्णित । २ 'ज्ञान व्या' ई उ चन्द्र । ३ "तुषारेण–अवश्यायेन । अम्बुक्रीडया–जलक्रीडया । उन्मादेन, आधिना–पि(चि)त्तपीडया । मृजाद्वेषेण–स्नानाद्यकरणेन ॥ घाटा–कृकाटिका । सम्भिद्यते–दीर्यत इव । घूर्णतीव–भ्रमतीव ।" इति चन्द्र । "उत्स्वेद –ऊर्ध्वस्वेद । वातशब्द अधिपुरोभ्या सम्बध्यते । अधिवात –अधिकवात । द्वेषशब्द उपधानादिभि । मृजा–शुद्धिरभ्यत ॥ शङ्ख –भ्रूकर्णमध्यम् । घाटा–शङ्खस्योपरि । कन्धराया –ग्रीवाया, हन्वोश्च सङ्ग्रह.–स्तब्धत्वम् ।" इतीन्दु । ४ 'उन्मादाधि' इ उ चन्द्र. । ५ 'शाम्बुभा' उ. । 'शाम्भोभा' स.मू । ६ 'मध्ये' उ.त.चन्द्र. ।

**अर्धे तु मूर्ध्नः सोऽर्धावभेदकः ॥ ७ ॥**
**पक्षात्कुप्यति मासाद्वा स्वयमेव च शाम्यति ।**
**अतिवृद्धस्तु नयनं श्रवणं वा विनाशयेत् ॥ ८ ॥**

स०-अर्धे तु शिरस, अर्धावभेदक उच्यते । स च पक्षेण[1] कुप्यति । मासेन वा कुप्यति । स्वयमेव-चिकित्सित विनैव, उपशाम्यति । अतिवृद्धस्त्वय लोचन कर्ण वा हन्यात् ।

**शिरोभितापे पित्तोत्थे शिरोधूमायनं ज्वरः ।**
**स्वेदोऽक्षिदहनं मूर्च्छा निशि शीतैश्च मार्दवम् ॥९॥**

स०-शिरोभितापे[2] पित्तोद्भवे शिरोधूमायन ज्वरादयश्च स्यु ।

**अरुचिः कफजे मूर्ध्नो गुरुस्तिमितशीतता ।**
**शिरानिस्पन्दताऽऽलस्यं रुङ्मन्दाऽह्नयधिका निशि ॥**
**तन्द्रा शूनाक्षिकूटत्वं कर्णकण्डूयनं वमिः ।**

स०-कफजे शिरोभितापेऽरुच्यादय स्यु । दिवा पीडा मन्दा भवति, विभावर्यामधिका । तथा तन्द्रादय स्यु ।

**रक्तात् पित्ताधिकरुजः**

स०-रक्तोद्भवो मूर्धताप पित्ताधिकरुज स्यात् ।

**सर्वैः स्यात्सर्वलक्षणः ॥११॥**

स०-सन्निपातेन सर्वलक्षण स्यात् ।

**सङ्कीर्णैर्भोजनैर्मूर्ध्नि क्लेदिते रुधिरामिषे ।**
**कोपिते सन्निपाते च जायन्ते मूर्ध्नि जन्तवः ॥ १२॥**
**शिरसस्ते पिबन्तोऽस्रं घोराः कुर्वन्ति वेदनाः ।**
**चित्तविभ्रंशजननीर्ज्वरैः कासो बलक्षयः ॥ १३ ॥**
**रौक्ष्यशोफव्यधच्छेददाहस्फुरणपूतिताः ।**
**कपाले तालुशिरसोः कण्डूः शोषः प्रमीलकः ॥१४॥**
**ताम्राच्छसिङ्घाणकता कर्णनादश्च जन्तुजे ।**

स०-सङ्कीर्णैराहारै शिरसि क्लेदिते रुधिरे मासे च सन्निपाते च कोपिते क्रमयो मूर्ध्नि जायन्ते । ते च मूर्ध्नो रक्त पिबन्तो दारुणा पीडा मनोविभ्रंशकारिणीर्जनयन्ति । ज्वरादयश्च स्यु । तथा कपाले तालुशिरसो कण्ड्वाद्या स्यु । तथा ताम्राच्छसिङ्घाणकत्व कर्णनादश्च कृमिजे स्यात् ।

**वातोल्बणाः शिरःकम्पं तत्संज्ञं कुर्वते मलाः ॥१५॥**

स०-वाताधिका दोषा शिर कम्प शिर कम्पाख्य कुर्वते ।

**पित्तप्रधानैर्वाताद्यैः शङ्खे शोफः सशोणितैः ।**
**तीव्रदाहरुजारागप्रलापज्वरतृड्भ्रमाः ॥ १६ ॥**
**तिक्तास्यः पीतवदनः क्षिप्रकारी स शङ्खकः ।**
**त्रिरात्राज्जीवितं हन्ति सिध्यत्यप्याशु साधितः॥१७॥**

स०-पित्ताधिकैर्दोषै सरक्तै शङ्खे शोफोऽतिदाहादयश्च स्यु । स च शङ्खकस्तिक्तास्य पीतवर्णमुख क्षिप्रकारी च स्यात् । तिक्त-तिक्तस्वादमास्य, यस्मिन् शङ्खके स । एवमन्यदपि योज्यम् । स चानुपक्रान्तस्त्रिरात्रेण जीवित हरति । शीघ्र च चिकित्सित सिध्यत्यपि । अपिशब्दात् कदाचिन्न सिध्यति ।

**पित्तानुबद्धः शङ्खाक्षिभ्रूललाटेषु मारुतः ।**
**रुजं सस्पन्दनां कुर्यादनुसूर्योदयोदयाम् ॥ १८ ॥**
**आमध्याह्नं विवर्धिष्णुः क्षुद्वतः सा विशेषतः ।**
**अव्यवस्थितशीतोष्णसुखा शाम्यत्यतः परम् ॥१९॥**
**सूर्यावर्तः स**

स०-पित्तानुबद्धो[3] मारुत शङ्खादिषु रुज सस्पन्दना कुर्यात् । किम्भूता रुजम्? अनुसूर्योदय उदयो यस्या सा ताम् । आमध्याह्न-मध्याह्न मर्यादीकृत्य वर्धनशीला, सा पीडा बुभुक्षितस्य विशेषेण । तथाऽनियतशीतोष्णसुखा । अतो-मध्याह्नात्, पर शम गच्छति । स -इत्येव, सूर्यावर्त उक्त ।

**इत्युक्ता दश रोगाः शिरोगताः ।**

स०-दशैते मूर्वगता रोगा उक्ता ।

**शिरस्येव च वक्ष्यन्ते कपाले व्याधयो नव ॥ २० ॥**

स०-शिरस्येव कपाले नव रोगा भणिष्यन्ते ।

**कपाले पवने दुष्टे गर्भस्थस्यापि जायते ।**
**सवर्णो नीरुजः शोफस्तं विद्यादुपशीर्षकम् ॥ २१ ॥**

स०-कपाले पवने दुष्टे गर्भस्थितस्यापि नीरुज शोफस्तत्सवर्ण -कायसमानवर्णो, जायते । तमुपशीर्षकाख्य रोग जानीयात् ।

**यथादोषोदयं ब्रूयात् पिटिकार्बुदविद्रधीन्[4] ।**

स०-[4]पिटिकादीन् त्रीन् यथादोषोदय ब्रूयात् ।

**कपाले क्लेदबहुलाः पित्तासृक्श्लेष्मजन्तुभिः ॥२२ ॥**
**कङ्कुसिद्धार्थकनिभाः पिटिकाः स्युररुंषिकाः ।**

स०-कपाले क्लेदबहुला पित्तासृक्श्लेष्मजन्तुभि कङ्कुसिद्धार्थकफलरूपा पिटिका अरुषिका स्यु ।

**कण्डूकेशच्युतिस्वापरौक्ष्यकृत् स्फुटनं त्वचः॥ २३॥**
**सुसूक्ष्मं कफवाताभ्यां विद्याद्दारुणकं तु तत् ।**

स०-कण्ड्वादिकृत् त्वच स्फुटन सुसूक्ष्म यत् तद्दारुणकं कफवाताभ्या विद्यात् ।

**रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥ २४ ॥**
**प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ।**
**रोमकूपान् रुणद्ध्यस्य तेनान्येषामसम्भवः ॥ २५ ॥**
**तदिन्द्रलुप्तं रुज्यां च प्राहुश्चाचेति चापरे ।**

१ 'विना, उ' ङ ण त । २ 'शिरसोऽभि' ट ण त । ३ "सर्वासा शिराणा निस्पन्दता । आलस्य-अलसत्वम् । मन्दा-अल्पा ॥ घोरा -दु सहा । शोष आस्ये । प्रमीलक -स्तैमित्यम् ।" इति चन्द्र । "अत्र च ज्वरादिक भवति, कपाले रौक्ष्यादिकम्, कण्ड्वादिक तालुशिरसो ।" इतीन्दु । ४ 'निष्पन्दता' ई स स. । ५ 'शोफे व्य०स्फुटनपू' ण त. । ६ 'शोफ ' ई उ.स.स. । 'शोफोऽप्र' इ. । ७ 'ध्यत्याशु सुखा' इ. ।

१ 'मुबन्ध ' ई ई उ स ढ । २ "सूर्योदयस्य पश्चादुदयो यस्या रुजायास्ताम् ।" इतीन्दु । ३ 'नुरुद्धो' ण त । ४ 'पिडका' ई उ । 'पिटका' चन्द्र स स ,ट । ५ 'परुक्षकृत्' ई चन्द्र । ६ 'दारुणक' स.सं. । ७ 'च' इ.उ. । ८ 'रुजा च' स स, ट. । 'रुह्या' मा.नि. मोज. कार्तिकश्च । 'तजा' इ उ. । 'तह्वाश्च' ई । 'तङ्क्षा' चन्द्र । 'रूढ्यां' इति कश्चित् ।

स०–पित्त वातेन सह मूर्च्छित रोमकूपानुगत रोमाणि प्रच्यावयति । तत श्लेष्मा रक्तसहितो रोमकूपान् रुणद्धि । तेन कारणेनास्य–इन्द्रलुप्तवत , अन्येषा रोम्णामनुत्पत्ति । तत्–एतत् ,इन्द्रलुप्त रुज्या चाचेत्यन्य आहु ।

**खलतेरपि जन्मैवं शातन तत्र तु क्रमात् ॥ २६ ॥**

स०–एव–एतत्तुल्यरूपा, खलतेरुत्पत्ति । किन्तु [तत्र–] खलतौ, क्रमेण केशाना शातो न त्विन्द्रलुप्त इव सहसा ।

**सा वातादग्निदग्धाभा, पित्तात्स्विन्नसिरावृता ।**
**कफाद्घनत्वग्वर्णाश्च यथास्वं निर्दिशेत् त्वचि ॥ २७॥**

स०–सा–खलति , वातादग्निदग्धाभा स्यात् ।
पित्तात् स्विन्नसिरावृता स्यात् ।
कफेन घनत्वक् ।
त्वचि वर्णाश्च यथादोष निर्दिशेत् ।

**दोषैः सर्वाकृतिः सर्वैरसाध्या सा नखप्रभा ।**
**दग्धाग्निनेव निर्लोमा सदाहा या च जायते ॥ २८ ॥**

स०–सर्वैर्दोषै सर्वाकृति सर्वलक्षणा खलति । नखप्रभा सा चासाध्या स्यात् । अग्निदग्धतुल्या रोमरहिता सदाहा च या जायते, साऽप्यसाध्या स्यात् ।

**शोकश्रमक्रोधकृत· शरीरोष्मा शिरोगतः ।**
**केशान् सदोष· पचति पलितं सम्भवत्यतः ॥ २९ ॥**

स०–शोकादिभिरुद्गत शरीरोष्मा मूर्ध्नि दोषै सहित केशान् पचति । अत पलित जायते ।

**तद्वातात्स्फुटितं श्यावं खर रूक्षं जलप्रभम् ।**
**पित्तात्सदाहं पीताभ,कफात् स्निग्ध विवृद्धिमत्३०**
**स्थूलं सुशुक्लं, सर्वैस्तु विद्याद्व्यामिश्रलक्षणम् ।**

स०–तच्च–पलित, वातात् स्फुटितादिगुण स्यात् ।
पित्तेन सदाह पीतवर्णम् ।
कफात् स्निग्धं विवृद्धिमत् स्थूल सुशुक्ल च ।
सर्वैस्तु दोषै सङ्कीर्णलक्षण विद्यात् ।

**शिरोरुजोद्भवं चान्यद्विवर्ण स्पर्शनासहम् ॥ ३१ ॥**

स०–शिरोरुजोत्थ चापर पलित विवर्ण स्पर्शनासह स्यात् ।

**असाध्या सन्निपातेन खलतिः पलितानि च ।**

स०–खलति सन्निपातेनासाध्या । पलितानि च सन्निपातोत्थान्यसाध्यानि । दोषै सर्वै खलतिरसाध्येति प्रागुक्तमेव । इद तु वचन स्पष्टार्थमेवेति मन्ये, तथा सन्निपातोद्भूतानि पलितान्यसाध्यानीति ।

**शरीरपरिणामोत्थान्यपेक्षन्ते रसायनम् ॥ ३२ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया षष्ठे उत्तरस्थाने शिरोरोगविज्ञानीयो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥**

स०–शरीरपरिणामोद्भवानि तु पलितानि रसायनमपेक्षन्त इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने शिरोरोगविज्ञानीयो नाम त्रयोविंशोऽध्याय समाप्त ॥ २३ ॥



## चतुर्विंशोऽध्यायः ।

अथैतच्चिकित्सित व्याख्यातुमाह—

**अथातः शिरोरोगप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**शिरोभितापेऽनिलजे वातव्याधिविधि चरेत् ।**

स०–पवनजे शिरोभितापे वातव्याधिचिकित्सित कुर्यात् ।

**घृतमक्तशिरा रात्रौ पिबेदुष्णपयोनुपः ॥ १ ॥**
**माषान् कुलत्थान् मुद्गान् वा तद्वत्खादेद्घृतान्वितान् ।**
**तैलं तिलानां कल्कं वा क्षीरेण सह पाययेत् ॥ २ ॥**
**पिण्डोपनाहस्वेदाश्च मांसधान्यकृता हिता· ।**
**वातघ्नदशमूलादिसिद्धक्षीरेण सेचनम् ॥ ३ ॥**
**स्निग्धं नस्यं तथा धूमः शिर·श्रवणतर्पणम् ।**

स०–अभ्यक्तशिरा रात्रौ घृत पिबेत् । पश्चादुष्ण क्षीर पिबेत् ।

---

१ 'शतन' इ। 'सदन' ई उ। 'शदन' ण त। २ 'सादो' ट। 'शादो' ण त.। ३ 'त्तात्स्निग्धा सि' इ। 'त्तात्स्निग्धसि' उ। 'त्तात्स्वेदसि' स स.। 'त्तात्पीतसिरा' इति कचित्। ४ "स्विन्नाभि सिराभिरावृता" इति चन्द्र । "पित्तात् सस्वेदा सिरावृता च। वर्णान् यथास्व निर्दिशेत्, तेन वातेन श्यावो वाऽरुणो वा, पित्तात् पाण्डुरारुणवर्जितोऽनेक , श्लेष्मणि श्वेत ।" इतीन्दु । ५ 'दाहोषा च' इ उ.चन्द्र. । ६ 'ज्वलत्प्रभम्' स.द्व । ७ 'सशुक्लं' इ ई.उ.सं.मू.,ट. ।

१ "शरीरपरिणामे–वार्धके ।" इतीन्दु । २ अथ शिरोरोगप्रतिषेधश्चरके चि० २६ अध्याये, सुश्रुते चि० २०।२५ अध्याययो उ० २६ अध्याये च, अष्टाङ्गसङ्ग्रहे उ० २८ अध्याये चास्ति वर्णित । ३ 'घृताभ्यक्तशिरो रात्रौ पिबेत्सर्पिः पयोनुप.' ई । ४ 'शिरो' इ., ट.त.।

माषादीन् घृतान्वितान् खादेत्, तद्वत्-उष्णपयोनुप सन् ।
तिलाना तैल कल्क वा क्षीरेण सह पाययेत् ।
पिण्डस्वेदा उपनाहस्वेदाश्च मासयुक्तैर्वाग्यै कृता हिता ।
वातहरदशमूलादिना सिद्धेन क्षीरेण सेचन हितम् ।
स्निग्ध च नस्यादिक हितम् ।

**वरणादौ गणे क्षुण्णे क्षीरमर्धोदकं पचेत् ॥ ४ ॥**
**क्षीरावशिष्टं तच्छीतं मथित्वा सारमाहरेत् ।**
**ततो मधुरकैः सिद्धं नस्यं तत् पूजितं हविः ॥ ५ ॥**

स०–वरणसैर्यकेत्यादिगणे ( हू सू अ १५।२१ ) जर्जरिते क्षीरमर्धोदक पचेत् । तत् क्षीरावशिष्ट शीतीभूत मथित्वा सारमाहरेत् । अनन्तर तद्वतं मधुरद्रव्यै पक्व नस्य श्रेष्ठम् ।

**वर्गेऽत्र पक्वं क्षीरे च पेयं सर्पिः सशर्करम् ।**

स०–अस्मिन्नेव वरणादौ वर्गे क्षीरे च घृत पक्व सशर्कर पेयम् ।

**कार्पासमज्जा त्वङ्मुस्ता सुमनःकोरकाणि च ॥ ६ ॥**
**नस्यमुष्णाम्बुपिष्टानि सर्वमूर्धरुजापहम् ।**

स०–कार्पासमज्जादीन्युष्णजलेन पिष्टानि सर्वमूर्धरुजाघ्न नस्यम् ।

**शर्कराकुङ्कुमशृतं घृतं पित्तासृगन्वये ॥ ७ ॥**

स०–शर्कराकुङ्कुमशृत सर्पि पित्तासृगुत्थे [नस्य] हितम् ।

**प्रलेपः सघृतैः कुष्ठकुटिलोत्पलचन्दनैः ।**

स०–कुष्ठादिभि सघृतै प्रलेप । कुटिल–तगरम् ।

**वातोद्रेकभयाद्रक्तं न चास्मिन्नवसेचयेत् ॥ ८ ॥**

स०–अस्मिश्च वातोद्रेकभयाल्लोहित नावसेचयेत् ।

**इत्यशान्तौ चले दाहः कफे चेष्टो यथोदितः ।**

स०–एवमप्यनुपशमे वायौ दाह इष्ट । कफे च यथोक्तमुष्णमिष्टम् ।

**अर्धावभेदकेऽप्येषा तथा दोषान्वयात्क्रिया ॥ ९ ॥**

स०–अर्धावभेदकेऽप्येषा एव क्रिया दोषान्वयात्–दोषानुरोधाच्च, यथास्व कार्या ।

**शिरीषबीजापामार्गमूलं नस्यं बिडान्वितम् ।**
**स्थिरारसो वा, लेपे तु प्रपुन्नाटोऽम्लकल्कितः ॥ १० ॥**

स०–शिरीषबीजादिभिर्नस्य स्यात् । शालिपर्णीक्काथो वा नस्यम् । प्रपुन्नाटबीजमम्लेन पिष्ट लेप ।

**सूर्यावर्तेऽपि तस्मिंस्तु सिरयाऽपहरेदसृक् ।**

स०–सूर्यावर्तेऽप्येष एवोपक्रम । तस्मिश्च सिरया रक्त स्रावयेत् ।

**शिरोभितापे पित्तोत्थे स्निग्धस्य व्यधयेत्सिराम् ११**
**शीताः शिरोमुखालेपसेकशोधनबस्तयः ।**
**जीवनीयशृते क्षीरसर्पिषी पाननस्ययोः ॥ १२ ॥**

स०–मूर्धाभितापे पित्तसम्भवे स्निग्धस्य सत सिरा मोक्षयेत् ।
तथा शिरोमुखालेपादय शीता हिता ।
जीवनीयै शृते क्षीरघृते पाननस्ययोर्हिते ।

**कर्तव्य रक्तजेऽप्येतत् प्रत्याख्याय च शङ्खके ।**

स०–रक्तजेऽप्येतच्चिकित्सित कार्यम् ।
शङ्खके च प्रत्याख्यायैष एवोपक्रम कार्य ।

**श्लेष्माभितापे जीर्णाज्यस्नेहितः कटुकैर्वमेत् ॥ १३ ॥**
**स्वेदप्रलेपनस्याद्या रूक्षतीक्ष्णोष्णभेषजैः ।**
**शस्यन्ते चोपवासोऽत्र**

स०–श्लेष्मणा शिरोभितापे पुराणघृतेन स्नेहित कटुकैर्वमेत् ।
स्वेदादयो रूक्षादिद्रव्यै शस्यन्ते । उपवासश्चात्र हित ।

**निचये मिश्रमाचरेत् ॥ १४ ॥**

स०–सन्निपाते मिश्रमाचरेत् ।

**क्रिमिजे शोणितं नस्य तेन मूर्च्छन्ति जन्तवः ।**
**मत्ताः शोणितगन्धेन निर्यान्ति घ्राणवक्त्रयोः ॥ १५ ॥**
**सुतीक्ष्णनस्यधूमाभ्यां कुर्यान्निर्हरणं ततः ।**

स०–क्रिमिजे शोणित नस्य देयम् । तेन–शोणितनस्येन, जन्तवो मूर्च्छन्ति । रक्तगन्धेन च मत्ता घ्राणेन वक्त्रेण च निर्गच्छन्ति । अनन्तर तीक्ष्णनस्यधूमाभ्या निर्हरण कुर्यात् ।

**विडङ्गस्वर्जिकादन्तीहिङ्गुगोमूत्रसाधितम् ॥ १६ ॥**
**कटुनिम्बेङ्गुदीपीलुतैलं नस्यं पृथक् पृथक् ।**

स०–विडङ्गादिभि साधित सर्षपतैल निम्बतैलमिङ्गुदीतैलं पीलुतैल वा पृथक् पृथक् नस्य हितम् ।

**अजामूत्रद्रुतं नस्यं क्रिमिजित् क्रिमिजित्परम् ॥ १७ ॥**

स०–अजामूत्रद्रुतं हिङ्गु नस्य पर क्रिमिघ्नम् ।

**पूतिमत्स्ययुतैः कुर्याद् धूमं नावनभेषजैः ।**

---

१ 'वरुणा' ई.। २ 'तस्मिन् विपक्व' इ स सु। "तस्मिन् विपक्वे क्षीरे त्विति वरुणादिगणसिद्धे क्षीरे चतुर्गुणे साधित काकोल्यादिप्रतिवाप यत् सर्पिस्तच्छर्कराप्रक्षेप पेयमिति तात्पर्यार्थ । अन्ये तु 'तस्मिन् विपक्व क्षीरे च' इति पठन्ति । तस्मिन् वरुणादिक्वाथे क्षीरे च साधित सर्पि सशर्कर पिबेदिति च व्याख्यानयन्ति ।" इति डल्हण । ३ "अष्टौ क्षीराणि क्षीरवर्गे पक्व सर्पि सशर्कर पेय–पातव्यम् ॥ घृत शर्कराकुङ्कुमाभ्या शृत–पक्व, नस्ये प्रयोज्यम् ॥ नावसेचयेत्–न निर्हरेत् । इति–अनेन क्रमेण, अशान्तौ–असिद्धौ, चले–वातजे, यथोदितो–यथोक्तो, दाह कफजे च इष्ट ॥ एषा–अनन्तरोक्ता, वातजे शिरोभितापे यथाविहिता क्रिया अर्धावभेदकेऽपीष्टा। तथा दोषान्वयात्–दोषानुबन्धादपि, यथायोग क्रिया इष्टा।" इति चन्द्र । ४ 'मुस्त' ई । ५ 'नःक्षार' इ उ ण.त चन्द्र.स स । ६ 'कफे चोष्ण यथोदितम्' इत्यरुणदत्तसम्मत पाठोऽयुक्त, चरकसङ्ग्रहाद्यसम्मतत्वात् लिखितपुस्तकेषु सर्वेष्वप्यनुपलब्धत्वाच्च । ७ 'यथादोषान्वया क्रिया' ई ण. । 'यथादोषान्वये' उ. ।

१ 'लेपोऽत्र प्र' उ । २ 'क्वाथेन वा' ट । ३ 'वर्ते तु त' इति कश्चित् । ४ 'कुयात् ।' ट । ५ 'शस्यते' इ ई चन्द्र. । ६ 'वक्त्रत.' उ । ७ "क्रिमिजित्–विडङ्गम्, अजामूत्रेण द्रुत नस्ये प्रयुक्त क्रिमिजित् स्यात् ।" इति चन्द्र । "पूतिमत्स्य –छिन्नमत्स्य. ।" इतीन्दु । ८ 'नस्ये' ण चन्द्र । ९ अस्याग्रे "पूतिमत्स्य क्रमीन् हत्वा दुर्गन्धत्वात्तु वातजे (?) ।" इति ई. चन्द्र पुस्तकयोरधिक श्लोकार्धम् ।

स०–पूतिमत्स्यान्वितैर्नस्यद्रव्यैर्धूमं कुर्यात्।

**कृमिभिः पीतरक्तत्वाद्रक्तमत्र न निर्हरेत् ॥ १८ ॥**

स०–अत्र च रक्तं न विस्रावयेत्। कुतो हेतो ? इत्याह–कृमिभिः पीतरक्तत्वात्।

**वाताभितापविहितः कम्पे दाहादिना क्रमः।**

स०–कम्पे वाताभितापोक्तो विधिर्दाहादिना।

**नवे जन्मोत्तरं जाते योजयेदुपशीर्षके ॥ १९ ॥**
**वातव्याधिक्रियां, पक्वे कर्म विद्रधिचोदितम्।**

स०–उपशीर्षके नवे जन्मोत्तरं जाते वातव्याधिचिकित्सितं कुर्यात्। पक्वे च विद्रधिविहितं कर्म कुर्यात्।

**आमपक्वे यथायोग्यं विद्रधीपिटिकार्बुदे ॥ २० ॥**

स०–आमे पक्वे च विद्रधौ पिटिकायामर्बुदे च यथास्वं कर्म कुर्यात्।

**अरुंषिका जलौकोभिर्हृतास्रा निम्बवारिणा।**
**सिक्ता प्रभूतलवणैर्लिम्पेदश्वशकृद्रसैः ॥ २१ ॥**
**पटोलनिम्बपत्रैर्वा सहरिद्रैः सुकल्कितैः।**
**गोमूत्रजीर्णपिण्याककृकवाकुमलैरपि ॥ २२ ॥**

स०–अरुषिका जलौकोभिर्निःसुतरक्ता निम्बजलेन सिक्ता वाजिशकृद्रसैः प्रभूतलवणैर्लिम्पेत्। पटोलनिम्बपत्रैर्निशान्वितैः सुपिष्टैर्वा गोमूत्रादिभिर्वा। कृकवाकुः–कुक्कुटः।

**कपालभृष्टं कुष्ठं वा चूर्णितं तैलसंयुतम्।**
**रूंषिकालेपनं कण्डूक्लेददाहार्तिनाशनम् ॥ २३ ॥**

स०–कुष्ठं चूर्णितं कपालभृष्टं तैलसयुतं रूषिकालेपनं कण्डादिहितम्।

**मालतीचित्रकाश्वघ्ननक्तमालप्रसाधितम्।**
**चाचारूंषिकयोस्तैलमभ्यङ्गः क्षुरघृष्टयोः ॥ २४ ॥**

स०–मालत्यादिप्रसाधितं तैलं चाचारूषिकयोः क्षुरघृष्टयोरभ्यङ्गः।

**अशान्तौ शिरसः शुद्धौ यतेत वमनादिभिः।**

स०–अशान्तौ सत्यां मूर्ध्नः शोधनाय वमनादिभिर्यतेत।

**विध्येच्छिरां दारुणके ललाट्यां, शीलयेन्मृजाम् २५**
**नावनं मूर्द्धबस्तिं च, लेपयेच्च समाक्षिकैः।**
**प्रियालबीजमधुककुष्ठमाषैः ससर्षपैः ॥ २६ ॥**
**लाक्षारम्याकपत्रैडगजधात्रीफलैस्तथा।**
**कोद्रूषतृणक्षारवारिप्रक्षालनं हितम् ॥ २७ ॥**

स०–दारुणके ललाट्यां शिरां विध्येत्। मृजां शुद्धिं नस्यं मूर्द्धबस्तिं च शीलयेत्। प्रियालादिभिः समाक्षिकैर्लेपयेच्च। लाक्षादिभिः क्षौद्रयुतैर्लेपः। कोद्रवतृणक्षारजलेन प्रक्षालनं हितम्।

**इन्द्रलुप्ते यथासन्नं सिरां विध्वा प्रलेपयेत्।**
**प्रच्छाय गाढं कासीसमनोह्वातुत्थकोषणैः ॥ २८ ॥**
**वैन्यामरतरुभ्यां वा गुञ्जामूलफलैस्तथा।**
**तथा लाङ्गलिकामूलैः करवीररसेन वा ॥ २९ ॥**
**सक्षौद्रक्षुद्रवार्ताकस्वरसेन रसेन वा।**
**धत्तूरकस्य पत्राणां भल्लातकरसेन वा ॥ ३० ॥**
**अथवा माक्षिकहविस्तिलपुष्पत्रिकण्टकैः।**

स०–इन्द्रलुप्ते यथासन्ने देशे सिरां विध्वा [गाढं–] सुष्ठु, प्रच्छाय–प्रच्छानं कृत्वा, कासीसादिभिर्लेपयेत्। वैन्यदेवदारुभ्यां वा लेपयेत्।

**तैलाक्ता हस्तिदन्तस्य मषी चाचौषधं परम् ॥ ३१ ॥**

स०–हस्तिदन्तमषी तैलाक्ता चाचानामौषधं परम्।

**शुक्लरोमोद्गमे तद्वन्मषी मेषविषाणजा।**

स०–सितरोमोद्गमे मेषविषाणजा मषी तैलाक्ता श्रेष्ठा।

**वर्जयेद्वारिणा सेकं यावद्रोमसमुद्भवः ॥ ३२ ॥**

स०–जलसेकं च वर्जयेत् यावद्रोमोद्भूतिः।

**खलतौ पलिते वल्यां हरिल्लोम्नि च शोधितम्।**
**नस्यवक्त्रशिरोभ्यङ्गप्रदेहैः समुपाचरेत् ॥ ३३ ॥**

स०–खलत्यादिषु शोधितमातुरं नस्यादिभिरुपाचरेत्।

**सिद्धं तैलं बृहत्याद्यैर्जीवनीयैश्च नावनम्।**
**मासं वा निम्बजं तैलं क्षीरभुङ्नावयेद्यतिः ॥ ३४ ॥**

स०–बृहत्यादिभिर्जीवनीयैश्च पक्वं तैलं नस्यं हितम्। निम्बोद्भवं वा तैलं मासं क्षीरभुङ्नावयेत्, यतिः–संयमी ब्रह्मचर्यपरः।

**नीलीशिरीषकोरण्टभृङ्गस्वरसभावितम्।**
**शेल्वक्षतिलरामाणां बीजं काकाण्डकीसमम् ॥ ३५ ॥**
**पिष्ट्वाऽऽजपयसा लोहांल्लिप्तादर्कांशुतापितात्।**
**तैलं स्रुतं क्षीरभुजो नावनात् पलितान्तकृत् ॥ ३६ ॥**

स०–नील्यादिस्वरसेन भावितं शेल्वादीनां बीजं काकाण्डकीतुल्यं छागदुग्धेन पिष्ट्वा लोहाल्लिप्तात् रविरश्मिभिस्तापितात्तैलं स्रुतं क्षीराशिनो नस्यं पलितान्तकरम्।

**क्षीरात्साहचराद् भृङ्गरजसः सौरसाद्रसात्।**
**प्रस्थैस्तैलस्य कुडवः सिद्धो यष्टीपलान्वितः ॥ ३७ ॥**
**नस्यं शैलासने भाण्डे शृङ्गे मेषस्य वा स्थितः।**

१ "जन्मोत्तरकालजातं इत्यनेन सहजस्याचिकित्स्यत्वमुक्तम्॥ चाचा–इन्द्रलुप्तः।" इतीन्दुः। अश्वघ्न–करवीरः। "क्षारवारिणा–क्षारनिश्चोतनेन।" इति चन्द्र। २ 'पिटका' ण.त.चन्द्र। 'पिडका' ई.। 'पिडिका' उ.। ३ 'भ्यङ्गे' इ.उ.। ४ 'क्षुरमृष्टयो.' ई.। ५ 'दारणके' स.स.। ६ 'मूर्ध्नि व' ण.त.। ७ 'लने' ई.।

१ 'प्रलेपनम्।' इ उ। २ 'धान्यामर' ई। 'कुटन्नटमरुभ्या' उ। वन्य–कुटन्नटम्। धान्य–कुटन्नटम्। ३ 'क्षुद्रबृहतीस्व' ई। ४ 'कफलेन' उ। ५ 'धान्य' ट.। ६ 'षी वाऽप्यौषध' उ.। 'षी वा चौ' ई.। ७ 'क्ता वा चाचा' ट.। ८ 'समुद्गम.' ई। 'मपुनर्भव' उ। ९ "हरिल्लोमा–कपिलकेश.।" इतीन्दु। १० 'लोहलिप्ता' उ.। ११ 'रात्सह' इ उ त स मू.। १२ 'रसत' ण। 'ङ्गराजत' ई। १३ 'शिलामये' इ.उ.त.। 'शैलाशने' ई.। 'शैलोद्भवे' ण.चन्द्र।

स०-क्षीरात् प्रस्थेन, सहचररसात् प्रस्थेन, भृङ्गराजरसात् प्रस्थेन, सुरसारसात् प्रस्थेन, तैलस्य कुडव पक्वो मधुयष्टीपलयुत शैले भाण्डे बीजसारस्य वा भाण्डे मेषशृङ्गे वा स्थितो नस्यम्।

**क्षीरेण श्लक्ष्णपिष्टौ वा दुग्धिकाकरवीरकौ ॥ ३८ ॥**
**उत्पाट्य पलितं देयावाशये पलितापहौ ।**

स०-दुग्धिकाकरवीरकौ क्षीरेण सूक्ष्मपिष्टौ पलितमुत्पाट्य तत्स्थाने देयौ पलितघ्नौ ।

**क्षीर प्रियाल यष्ट्याह्वं जीवनीयो गणस्तिलाः ॥ ३९ ॥**
**कृष्णा प्रलेपो वक्त्रस्य हरिल्लोमवलीहित. ।**

स०-क्षीरादयो वक्त्रस्य लेप इन्द्रलुप्तवलीषु हित ।

**तिलाः सामलकाः पद्मकिञ्जल्को मधुकं मधु ॥ ४० ॥**
**बृंहयेद्रञ्जयेच्चैतत् केशान् मूर्द्धप्रलेपनात् ।**

स०-तिलादिक शिर प्रलेपनात् केशान् रञ्जयेत् पुष्णीयाच्च।

**मांसी कुष्ठं तिलाः कृष्णाः सारिवा नीलमुत्पलम् ४१**
**क्षौद्रं च क्षीरपिष्टानि केशसवर्धनं परम् ।**

स०-मास्यादीनि क्षीरपिष्टानि पर केशसवर्धनानि ।

**अयोरजो भृङ्गरजस्त्रिफला कृष्णमृत्तिका ॥ ४२ ॥**
**स्थितमिक्षुरसे मास समूलं पलितं रजेत् ।**

स०-लोहचूर्णादिकमिक्षुरसे मास स्थित समूल पलित रजेत्।

**माषकोद्रवधान्याम्लैर्यवागूस्त्रिदिनोषिता ॥ ४३ ॥**
**लोहशुक्लोत्कटा पिष्टा बलाकामपि रञ्जयेत् ।**

स०-माषादिभिर्यवागूस्त्रिदिवसोषिता लोहशुक्लोत्कटा पिष्टा बलाकामपि रञ्जयेत् । किं पुन पलित न निहन्ति ? ।

**प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलै. ॥ ४४ ॥**
**सिद्ध धात्रीरसे तैल नस्येनाभ्यञ्जनेन च ।**
**सर्वान् मूर्धगदान् हन्ति पलितानि च शीलितम् ४५**

स०-प्रपौण्डरीकादिभिर्धात्रीरसे सिद्ध तैल नावनेनाभ्यञ्जनेन च सर्वान् शिरोरोगान् हन्ति । शीलित च पलितानि हन्ति ।

**वरीजीवन्तिनिर्यासपयोभिर्यमकं पचेत् ।**
**जीवनीयैश्च तन्नस्य सर्वजत्रूर्ध्वरोगजित् ॥ ४६ ॥**

स०-शतावरीजीवन्तिक्वाथेन क्षीरेण जीवनीयैश्च यमक पचेत् । तत् नस्येन सर्वजत्रूर्ध्वरोगजित् ।

**मयूर पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ।**
**दशमूलबलारास्नामधुकैस्त्रिपलैर्युतम् ॥ ४७ ॥**
**जले पक्त्वा घृतप्रस्थ तस्मिन् क्षीरसम पचेत् ।**
**कल्कितैर्मधुरद्रव्यै. सर्वजत्रूर्ध्वरोगजित् ॥ ४८ ॥**
**तदभ्यासीकृत पानवस्त्यभ्यञ्जननावनैः ।**

स०-मयूर पक्षादिवर्जित त्रिपलप्रमाणैर्दशमूलादिभिर्युत जले पक्त्वा तस्मिन् जले कल्कितैर्मधुरद्रव्यै क्षीरसम घृतप्रस्थ पचेत् । पानादिभिरभ्यस्त-शीलित, तत्-घृत, सर्वजत्रूर्ध्वरोग-जित् । एतन्मायूराख्य घृतम् ।

**एतेनैव कषायेण घृतप्रस्थ विपाचयेत् ॥ ४९ ॥**
**चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकै. ।**
**जीवन्तीत्रिफलामेदामृद्वीकर्द्धिपरूषकै. ॥ ५० ॥**
**समङ्गाचविकाभार्गीकाश्मरीकर्कटाह्वयैः ।**
**आत्मगुप्तामहामेदातालखर्जूरमस्तकै. ॥ ५१ ॥**
**मृणालबिसखर्जूरयष्टीमधुकजीवकै. ।**
**शतावरीविदारीक्षुबृहतीसारिवायुगै. ॥ ५२ ॥**
**मूर्वाश्वदंष्ट्रर्षभकशृङ्गाटककसेरुकै. ।**
**रास्नास्थिरातामलकीसूक्ष्मैलाशठिपौष्करै. ॥ ५३ ॥**
**पुनर्नवातवक्षीरीकाकोलीधन्वयासकैः ।**
**मधूकाक्षोटवातामपुञ्जाताभिषुकैरपि ॥ ५४ ॥**

---

१ 'हरिलोपवली' अरुण । २ "हरिल्लोमसु वलीषु च हित ।" इतीन्दु । ३ 'हयेच्च रजेच्चै' इ ण त । ४ 'मूर्ध्न प्र' इ त स.द.। ५ 'रजेत् पु' ड ण त । ६ अस्याग्रे "कृष्णमृत्तिका—कासीसम् ।" इति ट पुस्तकेऽधिकम् । ७ 'यवको' इ । ८ 'हकुष्ठोत्कटा' इ । 'लोहे सुक्तोत्कटा' उ । 'हशुक्तोत्कटा' ण त । 'लौहे शुक्तो' चन्द्र । ९ अस्याग्रे "भृङ्गरजस्त्रिफलोत्पलसारिलोहपुरीषसमन्वितका( धा'इ उ )रि । तैलमिद पच दारुणहारि लुञ्चितकेशघनस्थिरकारि ॥ १ ॥" इति इ इ उ चन्द्र पुस्तकेष्वधिको वृन्दोक्त श्लोक । १० 'लोहे शुक्तो' ट । 'लोहशुक्तोत्क' त ।११ अस्याग्रे "मधूकयष्टीकृमिजिद्धिश्वभृङ्गै शृत हवि । षड्बिन्दुदानात्('नाम्ना' उ. 'नाम' ई.) तन्नस्य सर्वमूर्धगदापहम् ॥ १ ॥" इति इ ई उ.पुस्तकेष्वधिक श्लोक. ।

१ 'र्यासै सपयोभिघृत प' उ । २ 'र्यद्घृत प' इ । ३ 'त्रशकृत्पातुण्ड' इ उ । ४ 'स्त्रिफलै' इति सङ्ग्रहचरकवृन्दचक्रदत्तेषु वङ्गसेनयोगरत्नाकरनिघण्टरत्नाकरेषु च पठित पाठोऽयुक्त, तत्तट्टीकाकारैरिन्दुचक्रपाणिश्रीकण्ठशिवदासाद्यै 'त्रिपलप्रमाणे' इत व्याख्यातत्वात् । ५ 'लै सह ।' इ उ चक्र वृन्द । ६ 'मधुरै कार्षिकै कल्कै सर्व' स च वृन्द चक्र वङ्ग योगर । ७ "मधुरैरिति जीवनीयगणोक्तैर्दशभि । जीवनीयानि हि मधुरत्वप्रकर्षादिह मधुरशब्देनोच्य ते ।" इति चरके चक्र । "मधुरैरिति जीवनीयदशकेन, अन्यान्यपि यथालाभ मधुरद्रव्याणीनि तु वैद्यप्रसारके ।" इति श्रीकण्ठ. । ८ "समङ्गा—मञ्जिष्ठा । तालस्य खजूरस्य च मस्तक—शाखापुच्छ । बिसखर्जूरेत्यत्र पद्मनालस्य खजूरफलाना च ग्रहणम् ।" इतीन्दु । ९ 'श्मरीसुरदारुभि ।' स च । १० 'रमुस्तकै' इ । ११ 'बिसशालूकशृङ्गीजीवक पद्मकै ।' स च । १२ 'तीश्रावणीयुगै.' ई । १३ 'दूर्वा'ण त । १४ 'मधुका' इ.स.द.। 'खर्जूराक्षो' स.च.।

**महामायूरमित्येतन्मायूरादधिकं गुणैः ।**
**धात्विन्द्रियस्वरभ्रंशश्वासकासार्दितापहम् ॥ ५५ ॥**
**योन्यसृक्शुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ।**

स०–एतेनैव क्वाथेन घृतप्रस्थं विपाचयेत् । चतुर्गुणेन क्षीरेणैभिः–जीवन्त्यादिभिः, कल्कैः कार्षिकैरेतन्महामायूरं मायूराद्गुणैरधिकं धात्वादिभ्रंशघ्नं च । योन्यादिदोषेषु शस्तम् । वन्ध्यासुतप्रदम् ।

**आखुभिः कुक्कुटैर्हंसैः शशैश्चेति प्रकल्पयेत् ॥ ५६ ॥**

स०–मूषिकादिभिरेव कल्पयेत् ।

**जत्रूर्ध्वजाना व्याधीनामेकत्रिंशच्छतद्वयम् ।**
**परस्परमसङ्कीर्णं विस्तरेण प्रकाशितम् ॥ ५७ ॥**

स०–जत्रूर्ध्वजाना रोगाणां शतद्वयमेकत्रिंशदधिकमन्योन्यमसङ्कीर्णं विस्तरेण प्रकाशितम् ।

**ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः ।**
**मूलप्रहारिणस्तस्माद् रोगान् शीघ्रतरं जयेत् ॥ ५८ ॥**

स०–ऊर्ध्वमूलमधःशाखं मुनयश्च यस्मात् पुरुषं जानन्ति, तस्मान्मूलप्रहारिणो रोगान् शीघ्रतरं जयेत् ।

**सर्वेन्द्रियाणि येनास्मिन् प्राणा येन च संश्रिताः ।**
**तेन तस्योत्तमाङ्गस्य रक्षायामादृतो भवेत् ॥ ५९ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने शिरोरोगप्रतिषेधो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥**

स०–यस्मादस्मिन्–उत्तमाङ्गे, सर्वेन्द्रियाणि, यतश्चात्र प्राणाः संश्रिताः, तस्मादुत्तमाङ्गस्य रक्षायां यत्नवता भाव्यमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने शिरोरोगप्रतिषेधो नाम चतुर्विंशोऽध्यायः समाप्तः ॥२४॥

**इति शालाक्यं नाम चतुर्थमूर्ध्वाङ्गमङ्गं सम्पूर्णम् ।**

१ 'अनेनैव' ट ड.ण त । २ 'कर्कटै' ण । ३ "इति–अनेनैव विधानेन, आख्वादिभिः पृथक् घृतं कल्पयेत्, पूर्वोक्त एव विषये ॥ चतुर्णवतिर्नेत्ररोगाः, पञ्चविंशतिः कर्णरोगाः, नासारोगा अष्टादश, मुखरोगाः पञ्चसप्ततिः, शिरोरोगा एकान्नविंशतिः, पूर्वैरेकीकृत्य तदेकत्रिंशदधिकं शतद्वयं भवति ।" इतीन्दुः । ४ 'त्रिंश शतं' ण स मू । ५ 'श्च यः पुरु' ट ण त । 'यः पुरुष' ड । ६ 'रक्षास्ववहितो' स मू । ७ अस्याग्रे 'नीलोत्पलं सोत्पलकुष्ठयुक्तं सपिप्पलीकं मधुकं शताह्वम् । सशृङ्गवेरं शिरसः प्रलेपः सद्यः शिरोरोगविनाशनाय ॥ १ ॥' इति इ. पुस्तकेऽधिकः श्लोकः ।



# पञ्चविंशोऽध्यायः ।

अथ क्रमप्राप्तं व्रणप्रतिषेधं व्याचिख्यासुराह—

**अथातो व्रणप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**व्रणो द्विधा निजागन्तुदुष्टशुद्धविभेदतः ।**
**निजो दोषैः शरीरोत्थैरागन्तुर्बाह्यहेतुजः ॥ १ ॥**
**दोषैरधिष्ठितो दुष्टः शुद्धस्तैरनधिष्ठितः ।**

स०–व्रणो द्विप्रकारो–निजागन्तुभेदाद् दुष्टशुद्धभेदाच्च । निजो व्रणः शारीरैर्दोषैर्भवति । आगन्तुर्बाह्यहेतूद्भवः । दोषैरधिष्ठितो दुष्टः । शुद्धो यो दोषैरनधिष्ठितः ।

**संवृतत्वं विवृतता काठिन्यं मृदुताऽति वा ॥ २ ॥**
**अत्युत्सन्नावसन्नत्वमत्यौष्ण्यमतिशीतता ।**
**रक्तत्वं पाण्डुता कार्ष्ण्यं पूतिपूयपरिस्रुतिः ॥ ३ ॥**
**पूतिमांससिरास्नायुच्छन्नतोत्सङ्गिताऽतिरुक् ।**
**संरम्भदाहश्वयथुकण्ड्वादिभिरुपद्रुतः ॥ ४ ॥**
**दीर्घकालानुबन्धश्च विद्याद्दुष्टव्रणाकृतिम् ।**

स०–संवृतत्वादिर्यो व्रणस्य दुष्टव्रणाकृतिं विद्यात् ।

**स पञ्चदशधा दोषैः सरक्तैः**

स०–स च पञ्चदशप्रकारो रक्तसहितैर्दोषैः स्यात् । तत्र पृथग् दोषैस्त्रयः, संसर्गजास्त्रयः, सन्निपातेनैकः इति [सप्त] । एवंभूता रक्तसहितैः सप्त । एवं चतुर्दश । रक्तेन केवलेनैकः इति पञ्चदश । ननु, प्रागभ्यधायि ( हृ सू अ २९।६ )–"शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् । रागो रक्ताच्च पाकः स्यात्" इत्यादि । तदिहैकदोषजत्वं द्विदोषजत्वं रक्तरहितत्वं चोच्यमानं पूर्वापरव्याहतं स्यात् । अत्रोच्यते । कासंसम्प्राप्तिवदत्र न्यायो बोध्यः । तथा ह्येकदोषजेऽपि कासे दोषान्तरस्यानुबन्धत्वमुररीकृत्य द्विदोषजानुसारेण यथोपक्रमस्तथेहापीति नात्र पूर्वापरव्याहतत्वम् ।

१ अथ व्रणप्रतिषेधश्चरके चि० २५ अध्याये, सुश्रुते सू० १८।२२।२३।२८ अध्यायेषु चि० १ अध्याये च, अष्टाङ्गसङ्ग्रहे उ० २९।३० अध्याययोश्चास्ति वर्णितः । २ 'हेतुभिः' उ । ३ 'ताऽपि च' इ ई । 'ताऽपि वा' ण त । ४ "उत्सन्न–उन्नतमांसः । अवसन्न–हीनमांसो निम्नाकारः । उत्सङ्गी–ऊर्ध्वगतिः ।" इति डल्हणः । "छन्नत्व–आवृतत्वम् । उत्सङ्गिता–बद्धपीवत्वम् । [ उत्सङ्गिता–साशयत्वं दूर्वावत्, पाकस्यान्तर्दूरगतिरित्यर्थः । ]" इतीन्दुः । ५ 'पञ्चधा पृथग्दोषैः' इ.उ. । ६ 'रक्तो र' ड.ण.त. ।

**तत्र मारुतात् ॥ ५ ॥**
**श्यावः कृष्णोऽरुणो भस्मकपोतास्थिनिभोऽपि वा ।**
**मस्तुमासपुलाकाम्बुतुल्यतन्वल्पसंस्रुतिः ॥ ६ ॥**
**निर्मांसस्तोदभेदाढ्यो रूक्षश्चटचटायते ।**

स०–तेषु मध्ये मारुतात् श्यावादिगुणो मस्त्वादितुल्यतन्वल्पविस्रावस्तथा निर्मांसादिगुणः स्यात् ।

**पित्तेन क्षिप्रजः पीतो नीलः कपिलपिङ्गलः ॥ ७ ॥**
**मूत्रकिंशुकभस्माम्बुतैलाभोष्णबहुस्रुतिः ।**
**क्षारोक्षितक्षतसमव्यथो रागोष्मपाकवान् ॥ ८ ॥**

स०–पित्तेन व्रणः क्षिप्रोद्भवः पीतादिगुणो मूत्रादिसदृशबहुस्रावः क्षारोक्षिततुल्यरुजो रागोष्मपाकवान् ।

**कफेन पाण्डुः कण्डूमान् बहुश्वेतघनस्रुतिः ।**
**स्थूलौष्ठः कठिनः स्नायुसिराजालततोऽल्परुक् ॥ ९ ॥**

स०–कफेन पाण्डुः कण्डूयुतो बहुशुक्लघनस्रावः स्थूलौष्ठः कठिनस्तथा स्नायुसिराजालततोऽल्परुजः ।

**प्रवालरक्तो रक्तेन सरक्तं पूयमुद्गिरेत् ।**
**वाजिस्थानसमो गन्धे युक्तो लिङ्गैश्च पैत्तिकैः ॥१०॥**

स०–रक्तेन विद्रुमलोहितः सरक्तं पूयं स्रवेत् । तुरगस्थानतुल्यो गन्धेन । तथा पैत्तिकैर्लिङ्गैर्युतः ।

**द्वाभ्यां त्रिभिश्च सर्वैश्च विद्याल्लक्षणसङ्करात् ।**

स०–द्वाभ्यां त्रिभिः सर्वैश्च लक्षणानां सङ्करात् संसर्गजादीन् विद्यात् ।

**जिह्वाप्रभो मृदुः श्लक्ष्णः श्यावौष्ठपिटिकः समः ११**
**किञ्चिदुन्नतमध्यो वा व्रणः शुद्धोऽनुपद्रवः ।**

स०–जिह्वाप्रभादिगुणो व्रणोऽनुपद्रवः शुद्धः स्यात् ।

**त्वगामिषसिरास्नायुसन्ध्यस्थीनि व्रणाशयाः ॥ १२ ॥**
**कोष्ठो मर्म च तान्यष्टौ दुःसाध्यान्युत्तरोत्तरम् ।**

स०–त्वगादीनि व्रणाश्रयास्तथा कोष्ठो मर्म चेत्यष्टावुत्तरोत्तरं दुःसाध्यानि ।

**सुसाध्यः सत्त्वमांसाग्निवयोबलवति व्रणः ॥ १३ ॥**
**वृत्तो दीर्घस्त्रिपुटकश्चतुरस्राकृतिश्च यः ।**
**तथा स्फिक्पायुमेढ्रौष्ठपृष्ठान्तर्वक्त्रगण्डगः ॥ १४ ॥**

स०–सत्त्वादिमति व्रणः सुसाध्यः । वृत्तादिगुणस्तथा स्फिगादिषु च सुसाध्यः ।

**कृच्छ्रसाध्योऽक्षिदशननासिकापाङ्गनाभिषु ।**
**सेवनीजठरश्रोत्रपार्श्वकक्षास्तनेषु च ॥ १५ ॥**

स०–अक्ष्यादिषु स्थितः कृच्छ्रसाध्यः ।

**फेनपूयानिलवहः शल्यवानूर्ध्वनिर्वमी ।**
**भगन्दरोऽन्तर्वदनस्तथा कट्यस्थिसंश्रितः ॥ १६ ॥**
**कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ।**
**व्रणाः कृच्छ्रेण सिध्यन्ति येषां च स्युर्व्रणे व्रणाः १७**

स०–फेनादिवहः शल्ययुक्त ऊर्ध्वनिर्वमी तथा भगन्दरोऽन्तर्मुखस्तथा कट्यस्थिसंश्रितस्तथा कुष्ठ्यादीनां व्रणाः कृच्छ्रेण सिध्यन्ति । तथा येषां व्रणे व्रणाः स्युस्ते च दुःसाध्याः ।

**नैव सिध्यन्ति वीसर्पज्वरातीसारकासिनाम् ।**
**पिपासूनामनिद्राणां श्वासिनामविपाकिनाम् ॥ १८ ॥**
**भिन्ने शिरःकपाले वा मस्तुलुङ्गस्य दर्शने ।**

स०–विसर्पज्वरादिमतां व्रणा नैव सिध्यन्ति । शिरःकपाले च भिन्ने मस्तुलुङ्गदर्शने [ वा ] व्रणो न सिध्यति ।

**स्नायुक्लेदात्सिराच्छेदाद्गाम्भीर्यात्कृमिभक्षणात् ॥१९॥**
**अस्थिभेदात्सशल्यत्वात्सविषत्वादतर्कितात् ।**
**मिथ्याबन्धादतिस्नेहाद्रौक्ष्याद्रोमादिघट्टनात् ॥ २० ॥**
**क्षोभादशुद्धकोष्ठत्वात्सौहित्यादतिकर्शनात् ।**
**मद्यपानाद्दिवास्वप्नाद्व्यवायाद्रात्रिजागरात् ॥ २१ ॥**
**व्रणो मिथ्योपचाराच्च नैव साध्योऽपि सिध्यति ।**

स०–स्नायुक्लेदादेः कारणात् साध्योऽपि व्रणो न सिध्यति ।

**कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥ २२ ॥**
**स्थिराश्चिपिटिकावन्तो रोहतीति तमादिशेत् ।**

स०–यस्य कपोतवर्णाभा प्रक्लेदवर्जिता अन्ताः, तथा चिपिटिकावन्तो–म्लानप्रायाः, तं–व्रणं, रोहतीति निर्दिशेत् ।

---

१ 'भोऽथवा' ई । २ 'पित्ताद्द्रुतिप्रभः पी' ई उ । ३ "क्षारसिक्तक्षतसमवेदनः ॥ स्थूलौ ओष्ठौ–पाली यस्य सः ॥ वाजिस्थानं–अश्वशाला ।" इतीन्दुः । "ततः–व्याप्तः ॥ उद्गिरेत्–वमेत् ॥ अपिटकः–पिटकारहितः ॥ सत्त्ववति–सात्त्विके । मासवति–मांसले । अग्निवति–दीप्ताग्नौ । वयोवति–वयःस्थे । बलवति–बलयुक्ते ॥ स्फिक् [ गः ] पायुगो मेढ्रगः ओष्ठगः पृष्ठगोऽन्तर्वक्त्रगो गण्डगश्च ।" इति चन्द्रः । ४ 'यमीरयेत्' उ । ५ 'गन्धैर्युक्तो' इ ड । 'गन्धो' ण । ६ 'वौष्ठोऽपिटकः' चन्द्रः । 'ष्ठपिडकः' इ । 'ष्ठपिटकः' ई ण त । ७ 'वता व्रणः' ई । ८ 'गण्डजः' उ. । 'गण्डयोः' ण ।

१ "विषजुष्टानां–दूषीविषजुष्टानां पुरुषाणाम् ॥ कपोतवर्णप्रतिमाः–पाण्डुधूसराः । चिपिटिकावन्त इति चर्मचे(वे)लीयुक्ताः । विशुध्यमाणत्वात् त्वचश्चर्मचे(वे)लीसम्भवः । रोहति–रोहं गच्छति । व्रणे शुष्का सूक्ष्मा श्वेता या उच्चटति सा चर्मचेली कथ्यते ।" इति डल्हणः । "विषजुष्टानां–विषक्रान्तानाम् ॥ पिपासूनां–तृष्णार्तानाम्, अनिद्राणां श्वासिनाम्, अविपाकिनां–मन्दाग्नीनाम् ॥ अतर्कितात्–अलक्षितात् ॥ स्थिराः–दृढाः ।" इति चन्द्रः । "अतर्कितात्–यथाविशेषमनधिगते । रोमादीत्यादिशब्देन तृणपांस्वादीनां ग्रहणम् ।" इतीन्दुः । २ 'षां चापि व्रणे' इ स मु । ३ 'कुष्ठिमतादीनां' ण त । ४ 'नां सनिद्राणां' ण । ५ 'विसर्प' इति ट ड ण त पुस्तकेषु नोपलभ्यते । ६ 'वास्वापाद्य' इति क्वचित् । ७ 'रोहति' इ उ ण त स मू । ८ 'राश्च पिटि' इ उ स.मू । 'राश्च पिडका' ई. । 'राश्च पिटका' स. स. । ९ 'श्च च पिटिका' ट.ड. ।

**अथात्र शोफावस्थायां यथासन्नं विशोधनम् ॥ २३ ॥**
**योज्यं शोफो हि शुद्धानां व्रणश्चाशु प्रशाम्यति ।**

स०-अत्र च-व्रणे, शोफावस्थायां सत्यां यथासन्न-ऊर्ध्व-मधो वा, शोधन-वमनं विरेचनं वा, योज्यम्। शुद्धानां हि शोफो व्रणश्च शीघ्रं शाम्यति ।

**कुर्याच्छीतोपचारं च शोफावस्थस्य सन्ततम् ॥२४॥**
**दोषाग्निरग्निवत्तेन प्रयाति सहसा शमम् ।**

स०-शोफावस्थस्य सततं शीतोपचारं कुर्यात् । तेन-शीतोपचारेण कृतेन सता, दोषाग्निरग्निरिव सहसैव शमं याति ।

**शोफे व्रणे च कठिने विवर्णे वेदनान्विते ॥ २५ ॥**
**विषयुक्ते विशेषेण जलजाद्यैर्हरेदसृक् ।**
**दुष्टास्रेऽपगते सद्यः शोफरागरुजा शमं ॥ २६ ॥**

स०-शोफे व्रणे च कठिनादिगुणे विशेषेण जलौकःप्रभृतिभिरस्रं हरेत् । यतो दुष्टरक्तेऽपनीते सद्य एव शोफादिशमं स्यात् ।

**हृते हृते च रुधिरे सुशीतैः स्पर्शवीर्ययोः ।**
**सुश्लक्ष्णैस्तदहःपिष्टैः क्षीरेक्षुस्वरसद्रवैः ॥ २७ ॥**
**शतधौतघृतोपेतैर्मुहुरन्यैरशोषिभिः ।**
**प्रतिलोमं हितो लेपः सेकाभ्यङ्गाश्च तत्कृताः ॥२८॥**

स०-पुनः पुनः स्राविते च रक्ते सति स्पर्शवीर्ययोः सुष्ठु शीतद्रव्यैः सुश्लक्ष्णैस्तस्मिन्नेवाहनि पिष्टैः -न तु पर्युषितैः, तथा क्षीरादिद्रवैः शतधौतघृतयुक्तैर्मुहुरपरैरशोषिभिर्लेपो हितः । प्रतिलोम-न त्वनुलोमम् । सेकाभ्यङ्गाश्च पूर्वोक्तैः कृता हिताः ।

**न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।**
**प्रदेहो भूरिसर्पिर्भिः शोफनिर्वापणः परम् ॥ २९ ॥**

स०-न्यग्रोधादित्वग्भिः प्रदेहो भूरिघृतः परं शोफनिर्वापणः ।

**वातोल्बणानां स्तब्धानां कठिनानां महारुजाम् ।**
**स्रुतासृजां च शोफानां व्रणानामपि चेदृशाम् ॥३०॥**
**आनूपवेसवाराद्यैः स्वेदः, सोमास्तिलाः पुनः ।**
**भृष्टा निर्वापिताः क्षीरे तत्पिष्टा दाहरुग्घराः ॥ ३१ ॥**

स०-वातोल्बणानां तथा स्तब्धानां कठिनानां तीव्ररुजां स्रुतरक्तानां शोफानां व्रणानामपि चेदृक्स्वरूपाणां कुट्टितघृतादिसंस्कृतानूपमांसाद्यैः स्वेदो हितः ।

अतसीयुक्तास्तिला भृष्टा दुग्धे निर्वापितास्तेनैव क्षीरेण पिष्टा दाहरुजाघ्ना ।

१ 'तु' ण । २ "सहसा-झटिति ॥ सद्य -तत्क्षणादेव ॥ स्तब्धाना-निश्चलानाम् । सह उमया वर्तन्त इति सोमा ।" इति चन्द्रे । ३ 'सविषे च वि' स द्व स मु । ४ 'जलौकाद्यै' ण.त.स.मु. । ५ 'रसद्रुतैः' इ ई.उ. । ६ 'सर्पिश्च' ई अरुण. ।

**स्थिरान् मन्दरुजः शोफान् स्नेहैर्वातकफापहैः ।**
**अभ्यज्य स्वेदयित्वा च वेणुनाड्या शनैः शनैः ॥३२॥**
**विम्लापनार्थं मृद्नीयात् तलेनाङ्गुष्ठकेन वा ।**
**यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥ ३३ ॥**

स०-शोफान् स्थिरानल्पपीडान् वातकफघ्नैः स्नेहैर्म्रक्षयित्वा स्वेदयित्वा च वंशनाड्या विम्लापनार्थं शनैः शनैर्मलयेत् । तलेनाङ्गुष्ठकेन वा मलयेत् । यवादिभिः सिद्धपिष्टैः प्रदेहयेत् ।

**विलीयते स चेन्नैवं ततस्तमुपनाहयेत् ।**
**अविदग्धस्तथा शान्तिं विदग्धः पाकमश्नुते ॥ ३४ ॥**

स०-एवं कृते यदि शोफो न विलीयते ततस्तमुपनाहयेत् । तथा कृते सत्यविदग्धः शोफः सन् शान्तिं प्राप्नोति । विदग्धस्तु पच्यते ।

**सकोलतिलवल्लोमा दध्यम्ला सक्तुपिण्डिका ।**
**सकिण्वकुष्ठलवणा कोष्णा शस्तोपनाहने ॥ ३५ ॥**

स०-बदरादियुता सक्तुपिण्डिकाऽम्लदधियुता किण्वाद्यन्विता कोष्णा उपनाहे श्रेष्ठा ।

**सुपक्वे पिण्डिते शोफे पीडनैरुपपीडिते ।**
**दारणं दारणार्हस्य सुकुमारस्य चेष्यते ॥ ३६ ॥**

स०-शोफे सुपक्वे ग्रथिते पीडनैर्द्रव्यैरुपपीडिते सति दारणार्हस्य सुकुमारस्य नरस्य दारणमिष्यते ।

**गुग्गुल्वतसिगोदन्तस्वर्णक्षीरीकपोतविट् ।**
**क्षारौषधानि क्षाराश्च पक्वशोफविदारणम् ॥ ३७ ॥**

स०-गुग्गुल्वादीनि, तथा क्षारौषधानि-क्षारविध्युक्तानि (हृ सू अ ३०।८), क्षाराश्च, पक्वशोफविदारणं स्यात् । गोदन्तो-हरितालम् ।

**पूयगर्भानणुद्वारान् सोत्सङ्गान्मर्मगानपि ।**
**निःस्नेहैः पीडनद्रव्यैः समन्तात्प्रतिपीडयेत् ॥ ३८ ॥**

स०-पूयगर्भान् सूक्ष्मद्वारान् सोत्सङ्गान् मर्माश्रितान् स्नेहरहितैः पीडनद्रव्यैः परितः प्रतिपीडयेत् ।

१ 'ड्या तत शनैः' स स स मु । २ "विम्लापन-विलयनम् । तलो-हस्ततल ॥ दारणार्ह -सूत्रे उक्त ।" इतीन्दु । "सिद्धपिष्टैः -आदौ सिद्धैः पश्चात् पिष्टैः ॥ अविदग्ध -पाकमप्राप्त ॥ कोल-अम्लबदरम् । वल्ला-शिम्बी । उमा-अतसी । किण्व-सुराप्रकृतिद्रव्यम् ।" इति चन्द्र । ३ 'सिद्धैः पिष्टैः' उ त । 'सिद्ध पिष्टैः' इ । 'दुग्धपिष्टैः' इतिक्वचित् । ४ 'वल्लूरदध्य' उ । ५ 'कोलादिभिर्युता' ट । ६ 'स्य दोषे पाकोद्धते हितम्' स स । 'स्य दोषपाकावृते हितम्' स मू । ७ 'क्षारश्च' ई उ. चन्द्र. । ८ 'शोफे वि' ट.ड ।

**शुष्यन्तं समुपेक्षेत प्रलेप पीडनं प्रति ।**
**न मुखे चैनमालिम्पेत् तथा दोष. प्रसिच्यते ॥३९॥**

स०–पीडन प्रति यो लेपस्त शुष्यन्त समुपेक्षेत । मुखे चैन व्रण नालिम्पेत् । तथा च–एव, दोष प्रसिच्यते–निर्याति ।

**कलाययवगोधूममाषमुद्गहरेणवः ।**
**द्रव्याणा पिच्छिलानां च त्वङ्मूलानि प्रपीडनम् ४०**

स०–कलायादय पिच्छिलाना द्रव्याणा त्वचो मूलानि च प्रपीडन स्यात् ।

**सप्तसु क्षालनाद्येषु सुरसारग्वधादिकौ ।**
**भृशं दुष्टे व्रणे योज्यौ मेहकुष्ठव्रणेषु च ॥ ४१ ॥**

स०–सप्तसु क्षालनादिषु–क्षालनमालेपो घृत तैल रसक्रिया चूर्णो वर्तिश्चेति सप्त तेषु, सुरसादिरारग्वधादिश्चेति(हृ सू अ १५) दुष्टे व्रणे भृश योज्यौ तथा मेहादिषु च ।

**अथवा क्षालनं क्वाथः पटोलीनिम्बपत्रजः ।**
**अविशुद्धे, विशुद्धे तु न्यग्रोधादित्वगुद्भव. ॥ ४२ ॥**

स०–अथवाऽविशुद्धे व्रणे पटोलीनिम्बपत्रज क्वाथ क्षालन हित ।

विशुद्धे तु व्रणे न्यग्रोधादित्वगुद्भव क्वाथ क्षालनादौ हित ।

**पटोलीतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम् ।**
**निम्बपत्राणि चालेपः सपटुर्व्रणशोधन ॥ ४३ ॥**

स०–पटोलादिभिर्लेप सैन्धवयुतो व्रणशोधन ।

**व्रणान् विशोधयेद्वर्त्या सूक्ष्मास्यान् सन्धिमर्मगान् ।**
**कृतया त्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः ॥ ४४ ॥**

स०–व्रणान् सूक्ष्ममुखान् सन्धिमर्माश्रितान् वर्त्या त्रिवृतादिभि कृतया विशोधयेत् ।

**वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ।**
**यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः ॥ ४५ ॥**

स०–वाताभिभूतान् सास्रावान् दारुणवेदनान् यवादिभिर्धूपयेत् ।

**निर्वापयेद् भृशं शीतै. पित्तरक्तविषोल्वणान् ।**

स०–पित्ता[द्य]धिकान् शीतैर्भृश निर्वापयेत् ।

**शुष्कात्पमांसे गम्भीरे व्रण उत्सादनं हितम् ॥ ४६ ॥**
**न्यग्रोधपद्मकादिभ्यामश्वगन्धाबलातिलै ।**
**अद्यान्मांसादमांसानि विधिनोपहितानि च ॥ ४७ ॥**
**मांसं मांसादमांसेन वर्धते शुद्धचेतस. ।**

स०–व्रणे शुष्कात्पमासे गम्भीर उत्सादन हित न्यग्रोधादिभि ।

तथा मासादाना प्राणिना मासानि सुष्ठु सस्कृतानि भक्षयेत् । यत शुद्धमनसो मासादमासेन पिशित वर्धते ।

**उत्सन्नमृदुमांसानां व्रणानामवसादनम् ॥ ४८ ॥**
**जातीमुकुलकासीसमनोह्वालपुराग्निकै. ।**

स०–व्रणानामुत्सन्नमृदुमासाना जातीमुकुलादिभिरवसादन हितम् ।

**उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान् ॥**
**व्रणान् सुदु.खशोध्यांश्च शोधयेत् क्षारकर्मणा ।**

स०–उत्सन्नमासादिका व्रणास्तथा ये तु सुष्ठु दुर्विशोध्यास्तान् क्षारकर्मणा विशोधयेत् ।

**स्रवन्तोऽश्मरिजा मूत्रं ये चान्ये रक्तवाहिनः ॥५०॥**
**छिन्नाश्च सन्धयो येषा यथोक्तैर्ये च शोधनै ।**
**शोध्यमाना न शुद्ध्यन्ति शोध्या. स्युस्तेऽग्निकर्मणा ५१**

स०–अश्मरिजा व्रणा मूत्र स्रवन्तो, ये चान्ये रक्तवाहिनो, येषा च सन्धयश्छिना , ये च यथोक्तै शोधनै शोध्यमाना न शुद्ध्यन्ति, तेऽग्निकर्मणा शोध्या स्यु ।

**शुद्धानां रोपणं योज्यमुत्सादाय यदीरितम् ।**

स०–यदुत्सादार्थ द्रव्य कथित तदेव शुद्धाना व्रणाना रोपण योज्यम् ।

---

१ "दोष.–पूय । प्रसिच्यते–स्वय प्रक्षरति ।" इति डल्हण । "पिच्छिलाना द्रव्याणा–गुग्गुलुप्रभृतीनाम् ॥ वातेनाभिभूतान्–आक्रान्तान् ।" इति चन्द्र । "पिच्छिलाना–शल्मल्यादीनाम् ।" इतीन्दु । २ 'तु' उ । 'वा' चन्द्र । ३ 'लेपन घृत' ट । ४ 'क्षालने' ड. । ५ 'क्षालने' इति क्वचित् । ६ 'धनम्' इ ।

१ "उत्सादन–निम्नव्रणस्योन्नतिकरणम् । मासाशिना–व्याघ्रादीनाम् । विशुद्धमनस –शोकक्रोधाद्यनभिभूतमनस इत्यर्थ । जेज्जटस्तु व्याघ्रादीना मासानि छद्मोपहितानि, एव विशुद्धमनस इति व्याख्यानयति ॥ अवसादन–उन्नतव्रणस्य निम्नत्वकरणम् ।" इति डल्हण । "मासादाना–सिंहश्येनादीनाम् । यत शुद्धचेतस –शोकादिरहितस्य, मासादमासेनावश्य व्रणे मास वर्द्धते ।" इतीन्दु । २ 'विधानोप' ई । 'विहितोप' उ । ३ 'शुद्धतेजस' इ चन्द्र स मू । ४ अस्माग्रे 'मनोह्वा मन शिला । अल–हरितालम् ।' इति ट पुस्तकेऽधिकम् । ५ 'खसाध्याश्च' इ स मू । ६ 'योजयेत्' इति क्वचित् । ७ 'क्षतवाहिन' इ । ८ 'च साधनै । साध्यमाना न सिद्ध्यन्ति साध्या' इति इ ई उ स स पुस्तकस्थ पाठो युक्त, "साधयदग्निकर्मणा" (सु चि अ० १।८९) इति सुश्रुतोक्तत्वात् । 'च शोधनै० शोध्या' इति पाठस्तु चन्दनन्दनारुणदत्तसम्मत । ९ 'ध्यास्ते चाग्नि' उ । १० 'रोपणे' इ ई.उ.त चन्द्र. ।

**अश्वगन्धा रुहा रोध्रं कट्फलं मधुयष्टिका ॥ ५२ ॥**
**समङ्गा धातकीपुष्पं परमं व्रणरोपणम् ।**

स०–अश्वगन्धादिकं व्रणरोपणं परम् ।

**अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ५३ ॥**
**कल्कं संरोहणं कुर्यात् तिलानां मधुकान्वितम् ।**

स०–अपगतपूतिमांसानां मांसस्थानां व्रणानामरोहतां तिलकल्कं समधुकं संरोहणं कुर्यात् ।

**स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजित् ॥ ५४ ॥**
**स क्षौद्रनिम्बपत्राभ्यां युक्तः संशोधनं परम् ।**
**पूर्वाभ्यां सर्पिषा चासौ युक्तः स्यादाशु रोपणः ॥ ५५ ॥**

स०–एष तिलकल्कः स्निग्धादिगुणैः सर्वरोगजित् ।

स माक्षिकनिम्बपत्राभ्यां युतस्तिलकल्कः परं संशोधनम् ।

पूर्वाभ्यां–क्षौद्रनिम्बपत्राभ्यां, सर्पिषा चासौ तिलकल्को युतः शीघ्रं संरोहणः स्यात् ।

**तिलवद्यवकल्कं तु केचिदिच्छन्ति तद्विदः ।**

स०–केचिद् व्रणस्वरूपाभिज्ञा यवकल्कं तिलकल्कवदिच्छन्ति ।

**सास्रपित्तविषागन्तुगम्भीरान् सोष्मणो व्रणान् ५६**
**क्षीररोपणभैषज्यशृतेनाज्येन रोपयेत् ।**
**रोपणौषधसिद्धेन तैलेन कफवातजान् ॥ ५७ ॥**

स०–सास्रपित्तादीन् व्रणान् क्षीरयुक्तरोपणद्रव्यपक्वेन घृतेन रोपयेत् ।

रोपणद्रव्यसिद्धेन तैलेन कफवातोत्थान् रोपयेत् ।

**काँच्छीरोध्राभयासर्जसिन्दूराञ्जनतुत्थकम् ।**
**चूर्णितं तैलमदनैर्युक्तं रोपणमुत्तमम् ॥ ५८ ॥**

स०–कांच्छ्यादिकं सूक्ष्मरजीकृतं तैलमदनैर्युक्तं श्रेष्ठं रोपणम् ।

**समानां स्थिरमांसानां त्वक्स्थानां चूर्णं इष्यते ।**

स०–समानां व्रणानां स्थिरमांसानां त्वक्स्थानां चूर्णमिष्टम् ।

**ककुभोदुम्बराश्वत्थजम्बूकट्फलरोध्रजैः ॥ ५९ ॥**
**त्वचमाशु निगृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ।**

स०–ककुभादिजैश्चूर्णैर्व्रणाश्चूर्णिताः शीघ्रमेव त्वचं निगृह्णन्ति ।

**लाक्षामनोह्वामञ्जिष्ठाहरितालनिशाद्वयैः ॥ ६० ॥**
**प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परम् ।**

स०–लाक्षादिभिर्घृतक्षौद्रसहितो लेपः परं त्वग्विशुद्धिकरः ।

**कालीयकलताम्रास्थिहेमकालारसोत्तमैः ॥ ६१ ॥**
**लेपः सगोमयरसः सवर्णकरणः परम् ।**

स०–कालीयकादिभिर्लेपः सगोशकृद्रसः परं सवर्णकरणः ।

**दग्धो वारणदन्तोऽन्तर्धूमं तैलं रसाञ्जनम् ॥ ६२ ॥**
**रोमसञ्जननो लेपस्तद्वत्तैलपरिप्लुता ।**
**चतुष्पान्नखरोमास्थित्वक्शृङ्गखुरजा मषी ॥ ६३ ॥**

स०–वारणदन्तोऽन्तर्धूमं दग्धस्तैलं रसाञ्जनं च लेपो रोमोद्भवकरः ।

तथैव तैलपरिप्लुता चतुष्पान्नखादिजा मषी पूर्वगुणा ।

**व्रणिनः शस्त्रकर्मोक्तं पथ्यापथ्यान्नमादिशेत् ।**

स०–व्रणिनः शस्त्रकर्मविधिकथितं ( हृ. सू. अ. २९।३४ ) पथ्यापथ्यान्नमादिशेत् ।

**द्वे पञ्चमूले वर्गश्च वातघ्नो वातिके हितः ॥ ६४ ॥**
**न्यग्रोधपद्मकाद्यौ तु तद्वत्पित्तप्रदूषिते ।**
**आरग्वधादिः श्लेष्मघ्नः कफे, मिश्रास्तु मिश्रजे ॥ ६५ ॥**

स०–द्वे पञ्चमूले तथा वर्गो वातघ्नो वाताधिके हितः ।

तथा पैत्तिके न्यग्रोधादिपद्मकादी ( हृ. सू. अ. १५।४१ अ. १५।१२ ) हितौ ।

श्लैष्मिक आरग्वधादिः (हृ. सू. अ. १५।१७) कफघ्नो हितः ।

मिश्रे तु मिश्र उपक्रमो हितः ।

**एभिः प्रक्षालनं लेपो घृतं तैलं रसक्रिया ।**
**चूर्णो वर्तिश्च संयोज्या व्रणे सप्त यथायथम् ॥ ६६ ॥**

स०–एभिः–पूर्वोक्तैः, प्रक्षालनादयः सप्त व्रणे सति यथास्वं योज्याः ।

१ "रुहा–वृक्षरुहा ।" इति चक्र । "केचिदाचार्यास्तद्विदो–धान्वन्तरायाः ॥ काञ्छी–सौराष्ट्री मृत् । सर्जः –सर्जरसः । अञ्जन–सौवीराञ्जनम् ॥ स्थिरमांसानां–सममांसानां समत्वेन स्थितानाम् ।' इति चन्द्र । २ 'कल्क० न्वितः ।' इ । ३ 'रोहणे' उ । ४ 'षायैरेष सर्व' ई । ५ 'धनं परम्' इ ई स स । ६ 'स्यादपि रो' इ उ । ७ 'काङ्क्षीरो' उ । 'काक्षीरो' इति क्वचित् । ८ 'काङ्क्ष्यादिकं' ट । ९ 'चूर्णमिष्यते' ई.त चन्द्र । १० 'निगृह्णाति० र्णितो व्रण ' उ

१ 'क्षौद्रैस्त्व' चन्द्र । २ 'कालेयक' स स । ३ "कालेयक–दार्वी । लता–दूर्वा प्रियङ्गुश्च । हेम–पद्मकम्, नागकेशरमिति जर्जट । रसोत्तम –पारदम् । काला–शारिवेति जर्जट ।" इतीन्दु । "काला–मञ्जिष्ठा कालानुसारिवा वा । रसोत्तम –पारदो घृतं वेति चक्र, सहकाररसो वेति जिनदास । गोमयरस पेषणार्थम् । ' इति श्रीकण्ठ । "कालीयक–कालीयाकाष्ठम् ।" इति शिवदास । "कालीयक–पीतचन्दनम् ।" इति राजनिघण्टौ । "द्वे पञ्चमूले–दशमूलम् । वातघ्न –वीरतरादिर्विदार्यादिश्च । तद्वत्–हित । श्लेष्मघ्न –अर्कादिर्मुष्ककाद्यसनादिसुरसादिमुस्तादिवत्सकादिवर्गाणामन्यतमो वर्ग । मिश्रजे–द्विदोषजे त्रिदोषजे च व्रणे, मिश्रा एव वर्गा हिता ।' इति चन्द्र । ४ 'रणो भवेत् ।' चन्द्र । ५ 'धूमस्तैलं' इ चन्द्र स मू । ६ 'मोद्गमकर ' त । ७ 'व्रणिना' इ, ट. । ८ 'क्तयत्पथ्या पथ्यमा' इ उ त । ९ 'मिश्रस्तु' त अरुण । १० 'मिश्रके' इ उ । 'मिश्रिते' स.मू. । ११ 'ऌनालेपघृततैलरसक्रिया.' ई.ण.चन्द्र.।

जातीनिम्बपटोलपत्रकटुकादार्वीनिशासारिवा-
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजान्वितैः ।
सर्पिः साध्यमनेन सूक्ष्मवदना मर्माश्रिताः क्लेदिनो
गम्भीराः सरुजो व्रणाः सगतयः शुध्यन्ति रोहन्ति च ॥ ६७ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भट
विरचितायामष्टाङ्गहृदयसंहितायां षष्ठे
उत्तरस्थाने व्रणप्रतिषेधो नाम
पञ्चविंशोऽध्यायः ॥२५॥

स०—जात्यादिभिः सर्पिः साध्यम् । अभय-उशीरमत्र । अनेन सर्पिषा सूक्ष्ममुखा मर्मस्थादयश्च व्रणाः शुध्यन्ति रोहन्ति चेति । शार्दूलविक्रीडितं वृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदय-टीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने व्रणप्रति-षेधो नाम पञ्चविंशोऽध्यायः समाप्तः ॥ २५ ॥



## षड्विंशोऽध्यायः ।

व्रणप्रक्रमात् सद्योव्रणप्रतिषेधं व्याचिख्यासुराह—

**अथातः सद्योव्रणप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥)

सद्योव्रणा ये सहसा सम्भवन्त्यभिघाततः ।
अनन्तैरपि तैरङ्गमुच्यते जुष्टमष्टधा ॥ १ ॥

स०—अभिघातान्महसैव ये सद्योव्रणा जायन्ते, असङ्ख्यै-रपि तैर्व्रणैः शरीरं जुष्टमष्टधा कथ्यते ।

तानेवाष्टौ प्रकारानाह—

घृष्टावकृत्तविच्छिन्नप्रविलम्बितपातितम् ।
विद्धं भिन्नं विदलितं

स०—घृष्टेत्यादि ।

अथैषामेव लक्षणान्याह—

तत्र घृष्टं लसीकया ॥ २ ॥
रक्तलेशेन वा युक्तं सप्लोषं छेदनात् स्रवेत् ।
अवगाढं ततः कृत्तं, विच्छिन्नं स्यात्ततोऽपि च ॥३॥
प्रविलम्बि ससशेषेऽस्थ्नि, पतितं पातितं तनोः ।
सूक्ष्मास्यशल्यविद्धं तु विद्धं कोष्ठविवर्जितम् ॥ ४ ॥
भिन्नमन्यद्विदलितं मज्जरक्तपरिप्लुतम् ।
प्रहारपीडनोत्पेषात् सहास्थ्ना पृथुतां गतम् ॥ ५ ॥

स०—तेषु मध्ये घृष्टं लसीकया रक्तलेशेन वा युक्तं स्रवेत्, छेदनात् सप्लोषम् ।

तस्मादवगाढमवकृत्तं स्यात् ।
ततोऽप्यवगाढतरं विच्छिन्नं स्यात् ।
प्रविलम्बि सशेषास्थि यत् ।
पतितं यच्छरीरात् तत् पातितं स्यात् ।
सूक्ष्ममुखशल्यविद्धं यत्तत् विद्धं कथ्यते कोष्ठविवर्जितम् ।
अन्यत् कोष्ठे यद्विद्धं तद्भिन्नमुच्यते ।
विदलितं तद् गद्यते यन्मज्जरक्तपरिप्लुतं प्रहारादिभिः स-हास्थ्ना पृथुतां गतम् ।

**सद्यः सद्योव्रणं सिञ्चेदथ यष्ट्याह्वसर्पिषा ।**
**तीव्रव्यथं कवोष्णेन बलातैलेन वा पुनः ॥ ६ ॥**

स०—अथ एव व्रणस्वरूपतां ज्ञात्वा, सद्य एवेति सद्योव्रणं तीव्रव्यथं मधुयष्टीघृतेन कोष्णेन सिञ्चेत् । बलातैलेन (हृ. शा. अ २।४७) वा कोष्णेन पुनः पुनः सिञ्चेत् ।

**क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च ।**
**कषायशीतमधुराः स्निग्धा लेपादयो हिताः ॥ ७ ॥**

स०—क्षतोष्मणश्च शान्तये तत्कालनिर्गतस्य च कषायादयो लेपाद्याः शस्यन्ते ।

---

१ "जात्यादीनां त्रयाणां पत्रम् । नक्ताह्वबीज—करञ्जबीजम् । गतिः—नाडी ।" इति शिवदासः । "क्लेदिनः—सास्रावाः । सगतयो—गतियुक्ताः ।" इति चन्द्रः । २ 'बीजैस्तथा ।' उ । 'बीजैः समैः' चक्र वृ । ३ 'सिद्धम' इ चक्र वृ । ४ 'स्रा-विणो' उ त चक्र वृ । ५ 'सगतिकाः' इ उ चक्र वृ । ६ अस्याग्रे—"साधितं स्वरसे तैलं काकमाच्याश्चतुर्गुणे । गति-भाजामपि हितं ('वरं' ई उ ) व्रणानां रोपणं परम् ॥ १ ॥ इति श्लोकः "प्रपौण्डरीकमधुक" इति सङ्ग्रहस्य साधश्लोकश्चेति सार्धौ द्वौ श्लोकौ इ ई उ त पुस्तकेष्वधिकौ । ७ अयं सद्योव्रणप्रतिषेधश्चरके चि० २५ अध्याये, सुश्रुते चि० २ अध्याये, अष्टाङ्गसङ्ग्रहे उ० ३१ अध्याये चास्ति वर्णितः ।

१ "अभिघातात् ये व्रणाः सहसा सम्भवन्ति—जायन्ते, ते सद्योव्रणा इत्युच्यन्ते । अनन्तैः—सुबह्वाकृतिभिः । जुष्ट—अधि ष्ठितम् ॥ सप्लोष—सदाहम् । निग्रहार्थ—वारणार्थम् ।" इति चन्द्रः । २ 'म्बिनिपा' ई उ चन्द्र । ३ 'सशेषास्थि' ई उ । ४ 'डनोत्पातैः स' उ । 'डनात्तेषां स' ई । ५ 'त्कालवि' स स. । ६ 'ण उपशान्तये' ट ड. ।

**सद्योव्रणेष्वायतेषु सन्धानार्थं विशेषतः ।**
**मधुसर्पिश्च युञ्जीत पित्तघ्नीश्च हिमाः क्रियाः ॥ ८ ॥**

स०–सद्योव्रणेष्वायतेषु सन्धानार्थं विशेषेण माक्षिकं सघृतं युञ्जीत । तथा पित्तघ्नीश्च शीता क्रिया हिता ।

**ससंरम्भेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ।**
**उपवासो हितं भुक्तं प्रततं रक्तमोक्षणम् ॥ ९ ॥**

स०–ससंरम्भेषु व्रणेषूर्ध्वमधश्च शोधनं कार्यम् । तथोपवासो विधातव्यः । अवस्थावशात् पूर्वोक्तं भोजनं हितम् । तथा प्रततं रक्तस्रावणं हितम् ।

**घृष्टे विदलिते चैष सुतरामिष्यते विधिः ।**
**तयोर्ह्यल्पं स्रवत्यस्रं पाकस्तेनाशु जायते ॥ १० ॥**

स०–घृष्टे विदलिते च एषा पूर्वोक्ता चिकित्सा इष्यते । यस्मात्तयोः–घृष्टविदलितयोः, अस्रमल्पं स्रवति । तेन च कारणेन तयोराशु शीघ्रं पाको जायते ।

**अत्यर्थमस्रं स्रवति प्रायशोऽन्यत्र विक्षते ।**
**ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥ ११ ॥**
**स्नेहपानपरीषेकस्वेदलेपोपनाहनम् ।**
**स्नेहवस्तिं च कुर्वीत वातघ्नौषधसाधितम् ॥ १२ ॥**

स०–अन्यत्र विक्षते बाहुल्येन बहु रक्तं स्रवति । न च पाकं याति । अनन्तरमत्यन्तरक्तस्रावात् पवने कुपितेऽतिरुजाकरे सति स्नेहपानादिकं स्नेहबस्तिं च वातहरौषधसाधितं कुर्वीत ।

**इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः ।**
**सप्ताहाद्गतवेगे तु पूर्वोक्तं विधिमाचरेत् ॥ १३ ॥**

स०–इति–एवं, साप्ताहिकः सद्योव्रणहितो विधिरुक्तः । सप्ताहेन निर्वृत्त इति "प्राग्वहतेष्ठक्" इति ठक् । सप्ताहादूर्ध्वं गतक्षोभे सति पूर्वोक्तं विधिं–व्रणप्रतिषेधोक्तं, कुर्यात् ।

**प्रायः सामान्यकर्मेदं**

स०–प्रायो बाहुल्येन सद्योव्रणे एतत्सामान्यं कर्म ।

**वक्ष्यते तु पृथक्पृथक् ।**

स०–पृथक्पृथग् विशेषेण कर्म भणिष्यते ।

**घृष्टे रुजं निगृह्याशु व्रणे चूर्णानि योजयेत् ॥ १४ ॥**

स०–घृष्टे व्रणे पीडां प्रागुपशमय्य चूर्णानि योजयेत् ।

**कल्कादीन्यवकृत्ते तु**

स०–अवकृत्ते पुनर्व्रणे कल्कादीनि योजयेत् ।

**विच्छिन्नप्रविलम्बिनोः ।**
**सीवनं विधिनोक्तेन बन्धनं चानु पीडनम् ॥ १५ ॥**

स०–विच्छिन्ने प्रविलम्बिनि च व्रणे सीवनं पूर्वोक्तेन विधानेन, तथा बन्धनं पीडनं च पश्चाद् योजयेत् ।

**असाध्यं स्फुटितं नेत्रमदीर्णं लम्बते तु यत् ।**
**सन्निवेश्य यथास्थानमव्याविद्धसिरं भिषक् ॥ १६ ॥**
**पीडयेत् पाणिना पद्मपलाशान्तरितेन तत् ।**
**ततोऽस्य सेचने नस्ये तर्पणे च हितं हविः ॥ १७ ॥**
**विपक्वमाजं यष्ट्याह्वजीवकर्षभकोत्पलैः ।**
**सपयस्कैः परं तद्धि सर्वनेत्राभिघातजित् ॥ १८ ॥**

स०–स्फुटितं लोचनमसाध्यम् ।

अस्फुटितं तु यन्नेत्रमविदीर्णं लम्बते, तत् स्वे स्थाने सन्निवेश्याव्याविद्धसिरं पद्मपत्रान्तरितेन हस्तेन पीडयेत् ।

अनन्तरमस्यातुरस्य घृतं छागं सक्षीरैर्यष्ट्यादिभिः कल्कैः पक्वं सेचनादौ हितम् । यतस्तद् घृतं परं सर्वनेत्राभिघातजित् ।

**गलपीडाऽवसन्नेऽक्षिण वमनोत्कासनक्षवाः ।**
**प्राणायामोऽथवा कार्यः क्रिया च क्षतनेत्रवत् ॥ १९ ॥**

स०–गलपीडनमवसन्ने नेत्रे वमनादयः कार्याः, प्राणायामो वा । तथा क्षतनेत्रक्रिया चात्र हिता ।

**कर्णे स्थानाच्च्युते स्यूते स्रोतस्तैलेन पूरयेत् ।**

स०–कर्णे स्थानाद् भ्रष्टे स्यूते सति तैलेन स्रोतः पूरयेत् ।

**कृकाटिकायां छिन्नायां निर्गच्छत्यपि मारुते ॥ २० ॥**
**समं निवेश्य बध्नीयात् स्यूत्वा शीघ्रं निरन्तरम् ।**

---

१ "आयतेषु–दीर्घेषु ॥ अन्यत्र विक्षते–अवकृत्तविच्छिन्नादौ विधाय ।" इति चन्द्र । "हितं–पथ्यम् । भक्तं–भोजनम् ॥ एष –शोधनादिकः । तेन हेतुना सुतशिष्टेनास्रेण ।" इतीन्दुः । २ 'सर्पि मधु' उ चन्द्र स द्व । ३ 'व्रणेषूपहतेषु' ट ड । ४ 'पित्तहिताश्च' ट.ड । ५ 'तं भक्तं' स द्व । 'हितस्तत्र प्र' ई । ६ 'वमति' उ । ७ अन्यत्र विक्षते–घृष्टविदलिताभ्यामन्यस्मिन् क्षतरोगे इत्यर्थः । ८ 'त्र च क्षते' ई । ९ 'स्नेहैर्बस्ति० धितैः ।' उ. । १० 'सप्ताहिक' इ उ ण त चन्द्र. स.द्व., ट.ड. । ११ 'गते क्षोभे' त. । १२ 'चूर्णं यो' ट.ड. ।

१ 'चाशु' उ त । २ "[विच्छिन्नप्रविलम्बिप्रसङ्गात् नयनयोर्विच्छिन्नस्यासाध्यत्वं,प्रविलम्बिनः स्थापनोपायं च,दर्शयति,–असाध्यमिति ।] नेत्रं तु यत् प्रहारेण स्फुटितं मध्येन तदसाध्यम् । यत्तु नेत्रमुदीर्णं–स्थानात् परिभ्रष्टं सत् लम्बते, तन्नेत्रं यथापूर्वस्थानं सन्निवेश्याव्याविद्धसिरं कृत्वा भिषक् पद्मपत्रव्यवहितेन पाणिना पीडयेत ।" इतीन्दुः । "अव्याविद्धसिर–अनाकुलितसिरम् ।" इति डल्हणः । ३ 'त्रमुदीर्णं' इति इ उ त स स पुस्तकस्थः पाठोऽयुक्तः, "अभिन्नं लम्बते तु यत्" इति सुश्रुतोक्तत्वात् । ४ 'स्थानं सूच्या विध्येत्सिरां भि' उ । ५ 'पद्मपत्रव्यवहितेन' स द्व । ६ 'णे कथितं ह' चन्द्र । ७ "अवसन्ने–अन्तर्गते, अक्षिण–नेत्रे, गलपीडं कार्यं ।" इति चन्द्रः । "गलपीडनेनात्यवसन्नेऽक्षिण वमनादयो योज्याः ।" इतीन्दुव्याख्यानं त्वयुक्तम्, "प्राणोपरोधवमनक्षुतकण्ठरोधैरुन्नम्यमाशु नयनं यदतिप्रविष्टम् ।" इति सुश्रुतोक्तत्वात् (सु उ. अ १९।७)। ८ 'पीडोऽव' चन्द्र। ९ 'नोत्क्लेशन' इति क्वचित्। १० 'स्थानच्युते' इ उ चन्द्र स मू । ११ 'स्रोत' त स द्व, ट.ण. । १२ 'समा' उ.चन्द्र ।

**आजेन सर्पिषा चात्र परिषेकः प्रशस्यते ॥ २१ ॥**
**उत्तानोऽन्नानि भुञ्जीत, शयीत च सुयन्त्रितः ।**

स०—कृकाटिकाया छिन्नाया वातेऽपि निर्याते सति समं स्थापयित्वा स्यूत्वा च निरन्तर शीघ्र बध्नीयात् ।

अत्राजेन घृतेन च परिषेक श्रेष्ठ । उत्तान॰ सन् भोजन भुञ्जीत । सुयन्त्रितश्च स्वप्यात् ।

**घातं शाखासु तिर्यक्स्थं गात्रे सम्यङ्निवेशिते॥२२॥**
**स्यूत्वा वेल्लितबन्धेन बध्नीयाद्घनवाससा ।**
**चर्मणा गोष्फणाबन्धः कार्यश्चासङ्गते व्रणे ॥ २३ ॥**

स०—शाखासु हतमातुर तिर्यक्स्थित शरीरे सम्यक्स्थापिते स्यूत्वा वेल्लितबन्धेन घनेन वाससा बध्नीयात् । असङ्गते व्रणे चर्मणा गोष्फणाबन्धो विधेय ।

**पादौ विलम्बिमुष्कस्य प्रोक्ष्य नेत्रं च वारिणा ।**
**प्रवेश्य वृषणौ सीव्येत् सेवन्या तुन्नसञ्ज्ञया ॥ २४ ॥**
**कार्यश्च गोष्फणाबन्धः कट्यामावेश्य पट्टकम् ।**
**स्नेहसेक न कुर्वीत तत्र क्लिद्यति हि व्रण॰ ॥ २५ ॥**

स०—विलम्बिमुष्कस्य पादौ नेत्रे च वारिणा प्रोक्ष्य वृषणौ प्रवेश्य सीव्येत् । कथम् ? तुन्नसञ्ज्ञया सेवन्या । तथा कट्या पट्टकमासज्य गोष्फणाबन्ध कुर्यात् । स्नेहसेक न कुर्वीत । यत स्नेहसेके सत्यस्मिन् व्रण क्लिद्यति ।

**कालानुसार्यगुर्वेलाजातीचन्दनपर्पटैः ।**
**शिलादार्व्यमृतातुत्थै॰ सिद्धं तैलं च रोपणम् ॥ २६ ॥**

स०—कालानुसार्यादिभि कल्कितै पक्व तैल वृषणयो रोपणम् ।

**छिन्नां निःशेषत॰ शाखां दग्ध्वा तैलेन युक्तितः ।**
**बध्नीयात् कोशबन्धेन ततो व्रणवदाचरेत् ॥ २७ ॥**

स०—नि शेषेण छिन्ना शाखा दग्ध्वा तैलेन युक्त्या कोशबन्धेन बध्नीयात् । अनन्तर व्रणमिवाचरेत् ।

**कार्या शल्याहृते विद्धे भङ्गाद्विदलिते क्रिया ।**

स०—विद्धे शल्याहृते सति भङ्गाद्विदलिते क्रिया कार्या ।

**शिरसोऽपहृते शल्ये वालवर्तिं प्रवेशयेत् ॥ २८ ॥**
**मस्तुलुङ्गस्रुते॰ क्रुद्धो हन्यादेनं चलोऽन्यथा ।**
**व्रणे रोहति चैकैकं शनैरपनयेत्कचम् ॥ २९ ॥**

स०—शिरस शल्ये निपतिते सति वालवर्ति प्रवेशयेत् । अन्यथा—वालवर्तेरप्रवेशात्, मस्तुलुङ्गस्रावाद्वायु क्रुद्ध एन—व्रणिन, हन्यात् ।

व्रणे रोहति सत्येकैक कच शनैर्नयेत् ।

आचरमोच्छ्वासादातुर समुपाचरेदिति वचनान्मस्तुलुङ्गस्रुता॰ वायुपक्रमसाह—

**मस्तुलुङ्गस्रुतौ खादेन्मस्तिष्कानन्यजीवजान् ।**

स०—मस्तुलुङ्गस्य—मज्जाख्यस्य, स्रुतावन्यजीवजान् मस्तिष्कान् खादेत् ।

**शल्ये हृतेऽङ्गादन्यस्मात्स्नेहवर्तिं निधापयेत् ॥ ३० ॥**

स०—अङ्गादन्यस्माच्छल्ये हृते सति तत्र व्रणे स्नेहवर्तिं निधापयेत् ।

**दूरावगाढा॰ सूक्ष्मास्या ये व्रणाः स्रुतशोणिताः ।**
**सेचयेच्चक्रतैलेन सूक्ष्मनेत्रार्पितेन तान् ॥ ३१ ॥**

स०—ये व्रणा दूरावगाढादिगुणास्ताश्चक्रतैलेन—कोल्हकाद्युद्भवेन तैलेन, सेचयेत् । किम्भूतेन ? सूक्ष्मनेत्रेणार्पितेन—क्षिप्तेन ।

**भिन्ने कोष्ठेऽसृजा पूर्णे मूर्च्छाहृत्पार्श्ववेदनाः ।**
**ज्वरो दाहस्तृडाध्मानं भक्तस्यानभिनन्दनम् ॥ ३२ ॥**
**सङ्गो विण्मूत्रमरुतां श्वासः स्वेदोऽक्षिरक्तता ।**
**लोहगन्धित्वमास्यस्य स्याद् गात्रे च विगन्धता॥३३॥**

स०—भिन्ने कोष्ठे रक्तेन पूर्णे सति मूर्च्छाद्या स्यु ।

**आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि ।**
**आध्मानेनातिमात्रेण शूलेन च विशस्यते ॥ ३४ ॥**

स०—आमाशयस्थे रुधिरे रक्तमुद्वमत्यप्याध्मानेनातिमात्रेण शूलेन च विशस्यते—व्यापद्यते ।

**पक्वाशयस्थे रुधिरे सशूलं गौरवं भवेत् ।**
**नाभेरधस्ताच्छीतत्वं खेभ्यो रक्तस्य चागमः ॥ ३५ ॥**

१ 'षा तत्र' इ । २ "अत्र—बद्धाया कृकाटिकायाम् ॥ शाखासु—बाह्वोर्जङ्घयोश्च । घात—क्षतम् ॥ तत्र—तयोर्व्रणयो ॥ कालानुसारी—कृष्णसारिवा ॥ शाखा—बाहु जङ्घा वा ।" इति चन्द्र । "कालानुसारी—तगरम् । शिला—मन शिला ।" इति डल्हणेन्दू । ३ 'श्वासगते' इ.स मू । 'श्वासगते' ई उ । ४ 'सीवन्या' उ स स ,ट. । ५ 'पिचुयुक्तया' उ ,ट ड. । ६ 'त तेन क्लि' उ स स.स.सु. । ७ 'क्लिद्यन्ति हि व्रणा' इ उ । ८ 'पद्मकै' इ उ स.मू स.सु । ९ 'युक्तिभि' चन्द्र । १० भङ्गात्—भङ्गरोगोक्तात् ।

१ 'वाल' स.स स सु । २ "वालवर्तिमिति केशरचितवर्तिं व्रणमुखपिधानार्थं निरवशेषेण प्रवेशयेत् ॥ चक्रतैलेनेति तिलतैलपीडनोपकरणकाष्ठेभ्योऽणुतैलन्यायेन गृहीत तैल—चक्रतैलम्, सद्य.-पीडनोद्धृतमात्र वा ।" इति डल्हण । "मस्तुलुङ्गस्रुते—मस्तिष्कस्य स्रावात् । कच—केशम् । अपनयेत्—निर्हरेत् ॥ अन्यजीवजान्—अन्यप्राणिसम्बन्धिन ॥ सङ्ग—अप्रवृत्ति । विगन्धता—दुर्गन्धत्वम् ॥ विशस्यते—पीड्यते ।" इति चन्द्र । "मस्तुलुङ्ग—कपालमज्जा ॥ नेत्र—नाडीयन्त्रम् ।" इतीन्दु । ३ 'लुङ्गे स्रुते' स मू । 'ङ्गस्रुते' इ । ४ अन्यस्मात्—शिरोव्यतिरिक्तात् । ५ 'तद्व्रणे' त. । ६ 'न सद्यस्केन कोल्हककाष्ठोद्भवेन' ट । 'कोल्हकाद्यु' ड.त. । ७ 'विगन्धिता' स.ड. । ८ 'विशिष्यते' उ. । 'विनश्यति' इ.स.मू ।

स०—पक्वाशयस्थे लोहिते शूलसहितं गौरवं भवेत्। नाभे-रधोभागे शैत्यम्। छिद्रेभ्यो रुधिरस्यैवागमनम्।

**अभिन्नोऽप्याशयः सूक्ष्मैः स्रोतोभिरभिपूर्यते।**
**असृजा स्यन्दमानेन पार्श्वे मूत्रेण बस्तिवत्॥ ३६॥**

स०—आशयोऽभिन्नोऽपि सूक्ष्मैः स्रोतोभिर्लोहितेन स्यन्द-मानेनाभिपूर्यते। पार्श्वे मूत्रेण बस्तिरिव।

**तत्रान्तर्लोहितं शीतपादोच्छ्वासकराननम्।**
**रक्ताक्षं पाण्डुवदनमानद्धं च विवर्जयेत्॥ ३७॥**

स०—तेषु मध्येऽन्तर्लोहितं व्रणिनं शीतपादं शीतोच्छ्वासं शिशिरकरं शीतवक्त्रं लोहिताक्षं पाण्डुवदनमानद्धं च वर्जयेत्।

**आमाशयस्थे वमनं हितं, पक्वाशयाश्रिते।**
**विरेचनं निरूहं च निःस्नेहोष्णैर्विशोधनैः॥ ३८॥**

स०—आमाशयस्थे रक्ते वमनं हितम्।

पक्वाशयगते विरेचनं निरूहं च विगतस्नेहैरुष्णैश्च विशोधनै-र्हितम्।

**यवकोलकुलत्थानां रसैः स्नेहविवर्जितैः।**
**भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम्॥ ३९॥**

स०—यवादीनां रसैः स्नेहरहितैरन्नं भक्षयेत्। पेयां सैन्धवान्वितां वा पिबेत्।

**अतिनिःस्रुतरक्तस्तु भिन्नकोष्ठः पिबेदसृक्।**

स०—अतिनिःस्रुतलोहितो भिन्नकोष्ठो रुधिरं पिबेत्।

**क्लिष्टच्छिन्नान्त्रभेदेन कोष्ठभेदो द्विधा स्मृतः॥ ४०॥**
**मूर्च्छादयोऽल्पाः प्रथमे, द्वितीये त्वतिबाधकाः।**
**क्लिष्टान्त्रः संशयी देही छिन्नान्त्रो नैव जीवति॥४१॥**

स०—क्लिन्नान्त्रभेदेन भिन्नान्त्रभेदेन च कोष्ठभेदो द्विप्रकार उक्तः। प्रथमे-क्लिन्नान्त्राख्ये, मूर्च्छादयोऽल्पा—किञ्चिदेव, स्युः। द्वितीये-भिन्नान्त्राख्ये, अतिशयेन बाधकाः स्युः।

क्लिन्नान्त्रो देही संशयी स्याद् जीवने। भिन्नान्त्रो न जातु जीवति।

**यथास्वं मार्गमापन्ना यस्य विण्मूत्रमारुताः।**
**व्युपद्रवः स भिन्नेऽपि कोष्ठे जीवत्यसंशयम्॥४२॥**

स०—यस्य विण्मूत्रमारुता यथायथं मार्गं प्राप्ताः, विगतोपद्रवश्च स नरो भिन्नकोष्ठोऽपि सन् जीवति।

**अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं न त्वतोऽन्यथा।**
**उत्पङ्गिलशिरोग्रस्तं तदप्येके वदन्ति तु॥ ४३॥**

स०—अन्त्रमभिन्नं निष्क्रान्तं प्रवेशनीयमन्तरे। न त्वतोऽन्यथा—भिन्नमित्यर्थः। अन्ये त्वेवमाचक्षते,—उत्पङ्गिलशिरसा—मत्कोटशीर्षेण, ग्रस्तं भिन्नमप्यन्त्रं प्रवेश्यम्।

**प्रक्षाल्य पयसा दिग्धं तृणशोणितपांसुभिः।**
**प्रवेशयेत्कृत्तनखो घृतेनाक्तं शनैः शनैः॥ ४४॥**

स०—अन्त्रं निष्क्रान्तं तृणादिभिर्दिग्धं पयसा प्रक्षाल्य सर्पिषाऽभ्यक्तं कृत्तनखः शनैः शनैः प्रवेशयेत्।

**क्षीरेणार्द्रीकृतं शुष्कं भूरिसर्पिःपरिप्लुतम्।**
**अङ्गुल्या प्रमृशेत्कण्ठं जलेनोद्वेजयेदपि॥ ४५॥**
**तथाऽन्त्राणि विशन्त्यन्तस्तत्कालं पीडयन्ति च।**

स०—शुष्कमन्त्रं क्षीरेणार्द्रीकृतं बहुघृतपरिप्लुतमङ्गुल्या गलं प्रमृशेत्, जलेनोद्वेजयेत्। तथा—एवं, अन्त्राण्यन्तः प्रविशन्ति तत्कालं च पीडयन्ति।

**व्रणसौक्ष्म्याद्बहुत्वाद्वा कोष्ठमन्त्रमनाविशत्॥ ४६॥**
**तत्प्रमाणेन जठरं पाटयित्वा प्रवेशयेत्।**

---

१ 'पार्श्वैर्मूत्रेण' स स। २ "अन्तर्लोहित—कोष्ठमध्यपतितरुधिरमित्यर्थः। आनद्ध—स्वमार्गादप्रवर्तमानदोषमलम्।" इति डल्हणः। "अन्तर्लोहित—भिन्नकोष्ठम्।" इतीन्दुः। "आनद्ध—पूरितम्। असृक्—रक्तं, छागादीनां सम्बन्धि॥ अतिबाधकाः मूर्च्छादयो जायन्ते। संशयी—कदाचित् जीवति न वा।" इति चन्द्रः। ३ 'याश्रये' ण चन्द्र। 'शयस्थिते' त। ४ "निःस्नेहोष्णैः—रूक्षशीतैः" इति चन्द्रनन्दनव्याख्यानं "स्नेहोष्णरहितैः" इतीन्दुव्याख्यानं चायुक्तम्, 'आस्थापनं च निःस्नेहं कार्यमुष्णैर्विशोधनैः।' (सु चि.अ २।५३) इति सुश्रुतोक्तेः। ५ 'धनम्' इ उ। ६ 'संयुतम्' ई ण चन्द्र.। ७ 'निःसृत' उ त स.द्व ,ट.। ८ 'क्लिन्नभिन्ना' अरुण.। 'क्लिष्टच्छिन्ना' चन्द्र। ९ मूर्च्छादयः—प्रागुक्ता (श्लो. ३२)। १० 'क्लिन्नान्त्र.' अरुण। 'क्लिष्टान्त्र.' चन्द्र.। ११ 'संशये' ई स.स.। १२ 'भिन्नान्त्रो' अरुण.।

१ "व्युपद्रवः—मूर्च्छाद्युपद्रवरहितः॥ प्रमृशेत्—परामृशेत्। तं चोद्वेजयेत् जलाभ्युक्षणेन। तत्कालं च—प्रवेशितमात्रमात्र, पीडयेत्—आन्त्रावयवानां यथा स्वस्थानप्राप्तये।" इतीन्दुः। "पिपीलिकाशिरोग्रस्तमित्यनेन पिपीलिकावदनसन्दशसहितेऽन्त्रे तासां कबन्धच्छेदः कार्यं इति व्याख्यानयन्ति। गयी तु 'अलाङ्गुलशिरोग्रस्तं' इति पठति, तत्र अलाङ्गुलः—स्थूलपिपीलिका॥ अभिमृशेत्—स्पृशेत्। उद्वेजयेत्—त्रासयेत्। स्वां कलां—स्वकीयां कलां पञ्चमीं मलधरां ताम्।" इति डल्हणः। २ 'न्त्रमान्त्रं' स स। ३ 'उरोगल' इ चन्द्र स मू.। 'उरोङ्गिल' ई। 'उलुङ्गिल' स स। 'पुपुङ्गल' उ। 'वयङ्गिल' ड। 'पिपीलिकाशिरो' स सु। ४ 'तत्' स मू.। ५ 'त्कृत्तनखो' स मू.। ६ 'ल्याऽभिमृशे' स.सु। ७ 'येच्च तम्।' स स.। ८ 'न्तः स्वां कलां पी' स सु। ९ 'पीडयेत' उ स.स., ड.। १० 'वा' उ. चन्द्र.। ११ 'शेत्—पीडयेत्, ज' ट.।

**यथास्थानं[1] स्थिते सम्यगन्त्रे सीव्येदनु व्रणम् ॥ ४७ ॥**
**स्थानादपेतमादत्ते[2] जीवितं कुपितं[3] च[4] तत्[5] ।**
**वेष्टयित्वाऽनु पट्टेन[6] घृतेन परिषेचयेत् ॥ ४८ ॥**
**पाययेत्[7] तत कोष्णं चित्रातैल[8]युतं पयः ।**
**मृदुक्रियार्थं शकृतो वायोश्चाध प्रवृत्तये ॥ ४९ ॥**
**अनुवर्तेत वर्ष च यथोक्ता[9] व्रणयन्त्रणाम् ।**

**स०**–व्रणसूक्ष्मत्वादन्त्रस्य बहुत्वात् [वा] कोष्ठमनाविशदन्त्र जठर तत्प्रमाणेन पाटयित्वा प्रवेशयेत् ।

यथास्थान स्थिते सम्यगन्त्रे सति पश्चाद् व्रण सीव्येत् ।

स्थानाच्युतमन्त्र जीवित हरति । कुपित च तत्–अन्त्र, पट्टेन वेष्टयित्वा पश्चाद्घृतेन परिषेचयेत् ।

अनन्तर चित्रातैलान्वित कोष्ण क्षीर पिबेत् । शकृतो मृदूकरणाय पवमानस्य च प्रवर्तनाय ।

यथोक्ता च व्रणयन्त्रणा सवत्सर यावदनुवर्तेत ।

**उदरान्मेदसो वर्तिं निर्गतां भस्मना मृदा ॥ ५० ॥**
**अवकीर्य कषायैर्वा[11] श्लक्ष्णैर्मूलैस्ततः समम् ।**
**दृढं बध्वा च सूत्रेण वर्द्धयेत्कुशलो भिषक् ॥ ५१ ॥**
**तीक्ष्णेनाग्निप्रतप्तेन शस्त्रेण सकृदेव तु ।**
**स्यादन्यथा रुगाटोपो मृत्युर्वा छिद्यमानया ॥ ५२ ॥**
**सक्षौद्रे च[12] व्रणे बद्धे सुजीर्णे[13]ऽन्ने घृतं पिबेत् ।**
**क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः शृतम् ॥ ५३ ॥**
**रुग्दाहजित्सयष्ट्याह्वैः परं पूर्वोदितो विधिः ।**
**मेदोग्रन्थ्युदितं[14] तत्र[15] तैलमभ्यञ्जने हितम् ॥ ५४ ॥**

**स०**–जठरान्मेदसो वर्तिं निर्गता भस्मना वा मृदाऽवकीर्याथवा श्लक्ष्णचूर्णैः कषायैर्मूलैरवकीर्य ततो मूलेन सम दृढ च कृत्वा सूत्रेण बध्वा तीक्ष्णेन वह्निप्रतप्तेन शस्त्रेण कुशलो वैद्य सकृदेव वर्द्धयेत् ।

अन्यथा छिन्नया रुजाऽऽटोपो मृत्युर्वा स्यात् । ततो व्रणे समाक्षिके बद्धेऽन्ने च सुजीर्णे सति घृत पिबेत् । अथवा शर्करादिभि शृत दुग्ध पिबेत् । तच्च घृत क्षीर वा रुजादाहहृत् । अनन्तर पूर्वोक्तो विधि ।

तत्र मेदोग्रन्थिषु कथित तैलमभ्यञ्जने हितम् ।

**तालीसं पद्मकं मांसीहरेण्वगुरुचन्दनम् ।**
**हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः ॥ ५५ ॥**
**पक्कं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम् ।**

**स०**–तालीसादिभि कल्किते पक्व तैल सद्योव्रणेषु रोपण परमुक्तम् ।

**गूढ[1]प्रहाराभिहते पतिते विषमोच्चकैः[2] ॥ ५६ ॥**
**कार्यं वातास्रजित् तृप्तिमर्दना[4]भ्यञ्जनादिकम् ।**

**स०**–गूढप्रहारेणाभिहते, तथा विषम पतिते, तथोच्चकै पतिते च, वातरक्तहरादिक कार्यम् ।

**विश्लिष्टदेहं मथितं क्षीणं मर्माहतं[5] हतम् ॥ ५७ ॥**
**वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशिनम् ॥ ५७½ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने सद्योव्रणप्रतिषेधो नाम षड्विंशोऽध्यायः ॥ २६ ॥**

**स०**–विश्लिष्टदेहादिक नर तैलद्रोण्या मासरसाशिन वासयेदिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने सद्योव्रणप्रतिषेधो नाम षड्विंशोऽध्याय समाप्त ॥ २६ ॥

---

१ 'स्थानस्थिते' इ ई उ स द्व । २ "अपेत–अपगतम् । गुम्फित–व्याकुलित परस्परमतिक्रान्तमित्यर्थं । चित्रातैल–एरण्डतैलम् ॥ कषाया –सर्जकार्जुनादय । चित्रा–एरण्ड , दन्तीत्यन्ये ।" इति डल्हण । "तत्–अन्त्र, स्थानादपेत तत कुपित सत् जीवितमादत्ते–नाशयति । चित्रातैलयुत–दन्तीतैलमिश्रितम् ।" इति चन्द्र । "तच्च–प्रवेशितमात्र, गुपित–रक्षित कृत्वा । पट्टेन–वस्त्रखण्डेन । चित्रा–द्रवन्ती, तस्या स्नुत तैलम् ॥ कषायैर्वा–मसूरादिभि , मूलेऽवकीर्य [ मूले–मूलप्रदेशे । सूत्रेण–क्षौमादिकृतेन । ] वर्द्धयेत्–छिन्द्यात् । सकृदित्येकेनैव यत्नेन ।" इतीन्दु । ३ 'त्ते प्राणान् गुम्फितमेव वा ।' स सु । ४ 'गुपित' स स । ५ 'च यत्' इ उ । ६ अस्याग्रे "चूर्णैर्यथोक्तै सन्धान कृत्वा क्षौद्रघृतप्लुतै । तत कवलिका दत्त्वा वेष्टयेदनुपूर्वश ॥१॥" इति ई उ पुस्तकयोरधिक श्लोक । ७ 'येत्त' इति क्वचित् । ८ 'चित्रतैल' ई स मू । ९ 'थोक्त व्रणयन्त्रणम्' चन्द्र । १० 'पवनस्य' ट ड । ११ 'मूले तत ' ई स द्व. । 'क्ष्णैश्चूर्णैस्तत ' उ । १२ 'तु' इ.उ. । १३ 'जीर्णान्नो' इ.उ. । १४ "मेदोग्रन्थ्युदित" इत्युक्त तैल हृदये मेदोग्रन्थिचिकित्सायां ( उ अ २१ श्लो ५–६ ) पठित नोपलभ्यते । किन्त्वनेनैव ग्रन्थकारेण सङ्ग्रहे मेदोग्रन्थिचिकित्सायां ( उ अ. ३५ )–"गुञ्जादिकरञ्जतापसवृक्षवशावलेखमूत्रसिद्ध तैलमभ्यङ्ग ।" इति यदुक्तम्, तदेवात्र ग्राह्यम् । १५ 'चात्र' इ.उ स.स. ।

१ 'मूढ' इ ई स स । २ "मूढेन–अदृश्यत्वग्भेदादिना, प्रहारेणाभिहते ॥ हत–अभिहतम् । [मथित–अस्थ्ना सहावचूर्णितम् ।]" इतीन्दु । "मथित–बलीयसा विलोडितम् । हत–वेगवता द्रव्येण दण्डमुष्ट्यादिभिर्वा । वासयेत्–स्थापयेत् ।" इति डल्हण । ३ 'कुर्याद्वातासृगुक्त हि मर्द' उ. । ४ 'भ्यङ्गशोधनम्' इ ई उ. स मू. । 'भ्यङ्गसेचनम्' स स. । ५ 'मर्महत' स.स. । 'मर्माहताहतम्' 'मर्माहत च तम्' इति क्वचित् ।



## सप्तविंशोऽध्यायः ।

अस्मादनन्तर क्रमप्राप्तो भङ्गप्रतिषेध शस्यते—

**अथातो भङ्गप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**पातघातादिभिर्द्वेधा भङ्गोऽस्थ्नां सन्ध्यसन्धितः ।**
**प्रसारणाकुञ्चनयोरशक्तिः सन्धिमुक्तता ॥ १ ॥**
**इतरस्मिन् भृश शोफः सर्वावस्थास्वतिव्यथा ।**
**अशक्तिश्चेष्टितेऽल्पेऽपि पीड्यमाने सशब्दता ॥ २ ॥**
**समासादिति भङ्गस्य लक्षणं, बहुधा तु तत् ।**
**भिद्यते भङ्गभेदेन**

स०–पातादिभिरस्थ्ना भङ्ग । स च द्वेधा–द्विप्रकार, सन्धीना भङ्गोऽसन्धेर्वा । सन्धिभङ्गे प्रसारण आकुञ्चने चाशक्ति सन्धिमुक्तता च ।

इतरस्मिन्–असन्धिभङ्गे, अतिशोफ, सर्वास्ववस्थास्वतिशयेन रुजा, अल्पेऽपि चेष्टितेऽशक्ति, पीड्यमाने च सशब्दता, स्यात् । इति सङ्क्षेपेण भङ्गस्य लक्षणमुक्तम् ।

तच्च भङ्गभेदेनानेकधा भिद्यते ।

**तस्य सर्वस्य साधनम् ॥ ३ ॥**
**यथा स्यादुपयोगाय तथा तदुपदेक्ष्यते ।**

स०–तस्य–भङ्गस्य, सर्वस्य साधन–चिकित्सित, यथोपयोगाय स्यात् तथोपदेक्ष्यते ।

**प्राज्याणुदारि यत्त्वस्थि स्पर्शे शब्दं करोति यत् ॥४॥**
**यत्रास्थिलेशः प्रविशेन्मध्यमस्थ्नो विदारितः ।**
**भग्नं यच्चाभिघातेन किञ्चिदेवावशेषितम् ॥ ५ ॥**
**उन्नम्यमानं क्षतवद्यच्च मज्जनि मज्जति ।**
**तद्दुःसाध्यं कृशाशक्तवातलाल्पाशिनामपि ॥ ६ ॥**

स०–प्राज्याश्च तेऽणवश्च प्राज्याणव,–प्रभूतसूक्ष्मा । तैर्दारा –दारणानि, विद्यन्ते यत्रास्थनि तत् । प्रभूताणुदारि यदस्थि तद्दु साध्यम् । यच्चास्थि स्पर्शे–स्पर्शने सति, शब्द करोति तच्च दु साध्यम् । यत्रास्थिलेशो दारित –पाटित, अस्थ्ना मध्य प्रविशेत् तच्च दु साध्यम् । यच्चाभिघातेन भग्नम् । किम्भूतम्? किञ्चिदेवावशेषित भवेत्, तच्च दु साध्यम् । यच्चोन्नम्यमान क्षतसम स्यात्, तच्च दु साध्यम् । तथा यन्मज्जनि मज्जति, तथा कृशादीनामपि यत्, तच्च दु साध्यम् ।

**भिन्न कपाल यत् कट्यां सन्धिमुक्त च्युतं च यत् ।**
**जघन प्रति पिष्टं च भग्न यत्तद्विवर्जयेत् ॥ ७ ॥**

स०–कट्या–कटिप्रदेशे, यत्कपाल भिन्न विदारित यच्च सन्धिविमुक्त यच्च सन्धेश्च्युत यच्च जघन प्रति पिष्ट भग्न च यत् तद्विवर्जयेत्–परिहरेत् ।

**असंश्लिष्टकपाल च ललाटं चूर्णितं तथा ।**
**यच्च भग्न भवेच्छङ्खशिरःपृष्ठस्तनान्तरे ॥ ८ ॥**

स०–ललाटमसश्लिष्टकपाल–भिन्न, चूर्णित च नोपक्रमेत् । शङ्खशिर पृष्ठस्तनाना मध्ये यच्छिन्न भवेत्, तच्च वर्जयेत् ।

**सम्यग्यमितमप्यस्थि दुर्न्यासाद्दुर्निबन्धनात् ।**
**सङ्क्षोभादपि यद्गच्छेद्विक्रियां तद्विवर्जयेत् ॥ ९ ॥**
**आदितो यच्च दुर्जातमस्थिसन्धिरथापि वा ।**

स०–तथाऽस्थि सम्यगुद्धृतमपि दुर्न्यासादिना यद् विक्रिया गच्छेत्, तच्च वर्जयेत् ।

आदित –प्रथममेव, यच्चास्थि दुर्जातं–असम्यगुत्पन्न स्यात्, तच्च दु साध्यम् । अथवाऽस्थिसन्धियों दुर्जात स्यात्, स च दु साध्य । दुर्जातं च दुर्जातश्च दुर्जातम् । "नपुसकमनपुसकेन" इत्येकशेष ।

**तरुणास्थीनि भुज्यन्ते, भज्यन्ते नलकानि तु ॥ १० ॥**
**कपालानि विभिद्यन्ते, स्फुटन्त्यन्यानि भूयसा ।**

स०–तथा तरुणास्थीनि–नासाकर्णाक्षिकोषाणि, भुज्यन्ते–कुटिलीक्रियन्ते । तथा नलकानि भङ्ग यान्ति । कपालानि च विदार्यन्ते । अन्यानि चास्थीनि बाहुल्येन स्फुटन्ति । एतत्सर्व दु साध्यम् ।

**अथावनतमुन्नम्यमुन्नतं चावपीडयेत् ॥ ११ ॥**
**आञ्छेदतिक्षिप्तमधोगतं चोपरि वर्तयेत् ।**

---

१ अथ भङ्गप्रतिषेधश्चरके चि० २५ अध्याये, सुश्रुते नि० १५ अध्याये चि० ३ अध्याये च, अष्टाङ्गसङ्ग्रहे उ० ३२ अध्याये चास्ति वर्णित. । २ 'ङ्गोऽस्थ्न.' इ. ई. । ३ 'सन्धिग.' ई. । ४ 'व्यथ.' ई उ. । ५ 'यच्चास्थि' ई.उ. । ६ 'यदभि' इ. । 'यद्वाऽभि' ई. ।

१ 'कट्या.' इ उ. । २ 'असश्लिष्ट कपाल तु ललाटे चूर्णित च यत् । भग्न स्तनान्तरे शङ्खे पृष्ठे मूर्ध्नि च वर्जयेत् ॥' स सु । ३ "शिर शङ्खस्य पृष्ठस्तनस्य चान्तरे–मध्ये ॥ सम्यक्–शास्त्रोक्तविधानेन, नियमितमपि । विक्रिया–विकारम् ॥ [ विक्रिया–उन्नतावनतत्वाद्ययथापूर्वसस्थिति. । ] भङ्गो–द्विधाभवनम् । विभेद –छिद्रणम् । स्फुटन–दलनम् ॥ [ तरुणास्थीनि–नासादिगतानि मृदुस्थीनि । नलकानि–कोपरजङ्घादिगतानि । कपालानि–शिर कटीकपालादिगतानि । अन्यानि–पृष्ठवशपर्शुकाग्रादीनि । ] अधिक्षिप्त–स्थानान्तरगतम् । आञ्छेत्–आकर्षेत् । तथा, अधोगतमाञ्छनादिभिरुपरि वर्तयेत् ।" इतीन्दु । "विभिद्यन्ते–खण्डशो भिद्यन्ते । स्फुटन्ति–विशीर्यन्ते ।" इति चन्द्र । "अतिक्षिप्त–अतिप्रेरितम् ।" इति डल्हण । ४ 'भादाऽपि' स सु । ५ 'तच्च वर्ज' इ उ.स सु. । ६ 'यच्चास्थि' ट । ७ 'नम्यन्ते' ई.स मू स सु । ८ 'च' इ.उ त । ९ 'लास्थीनि भि' ई. । १० 'मुन्नाम्य' स स । ११ 'दविक्षिप्त' इ.उ. । 'दुत्क्षिप्त' स.मू. । 'दधिक्षिप्त' स.स. ।

**आञ्छनोत्पीडनोन्नामचर्मसङ्क्षेपबन्धनैः ॥ १२ ॥**

स०—अथ—एषा भङ्गस्थिति ज्ञात्वा, अवनतमस्थ्युन्नमनीयम् । उन्नत चास्थ्यवपीडयेत् । अतिक्षिप्तमस्थ्याञ्छेत् । अवस्ताद्गत चोपरि वर्तयेत् ।

**सन्धीन् शरीरगान् सर्वान् चलानप्यचलानपि ।**
**इत्येतैः स्थापनोपायैः सम्यक् संस्थाप्य निश्चलम् ॥ १३**
**पट्टैः प्रभूतसर्पिर्भिर्वेष्टयित्वा सुखैस्ततः ।**
**कदम्बोदुम्बराश्वत्थसर्जार्जुनपलाशजैः ॥ १४ ॥**
**वंशोद्भवैर्वा पृथुभिस्तनुभिः सुनिवेशितैः ।**
**सुश्लक्ष्णैः संप्रतिस्तम्भैर्वल्कलैः शाकलैरपि ॥ १५ ॥**
**कुशाह्वयैः समं बन्धं पट्टस्योपरि योजयेत् ।**

स०—इति—एवप्रकारै ,एतै —आञ्छनादिभि स्थापनोपायै , सर्वाञ्छरीरगान् सन्धीश्चलानचलाश्च निश्चल सस्थाप्य वस्त्रखण्डजै पट्टैर्बहुसर्पिष्कै सुखावहैर्वेष्टयित्वाऽनन्तर कदम्बादिजैर्वल्कलैर्वंशोत्थैर्वा शकलै —खण्डै , विस्तीर्णैस्तथा तनुभि —न तु स्थूलै ,सुनिवेशितैस्तथा कोमलैस्तथा प्रतिस्तम्भयुक्तै कुशासज्ञै सम बन्ध पट्टस्योपरि कुर्यात् ।

**शिथिलेन हि बन्धेन सन्धिस्थैर्यं न जायते ॥ १६ ॥**
**गाढेनाति रुजादाहपाकश्वयथुसम्भवः ।**

स०—श्लथेन बन्धेन सन्धे स्थैर्यं न सम्पद्यते । अतिगाढेन तु बन्धेन रुजाद्युद्भव ।

**त्र्यहात्र्यहादृतौ घर्मे सप्ताहान्मोक्षयेद्धिमे ॥ १७ ॥**
**साधारणे तु पञ्चाहाद् भङ्गदोषवशेन वा ।**

स०—उष्णे ऋतौ त्र्यहात्र्यहान्मोक्षयेत् । शीते च ऋतौ सप्ताहान्मोक्षयेत् । साधारणे—शरद्वसन्ताख्ये, पञ्चाहान्मोक्षयेत् । अथवा भङ्गवशेन दोषवशेन मोक्षयेत् ।

**न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ॥ १८ ॥**
**तं पञ्चमूलपक्वेन पयसा तु सवेदनम् ।**

स०—ततो न्यग्रोधादिगणद्रव्यकषायेण शीतेन सेचयेत् भग्नसन्धीन् । त—सरुज, पञ्चमूलशृतेन क्षीरेण सेचयेत् ।

**सुखोष्णं वाऽवचार्यं स्याच्चक्रतैलं विजानता ॥ १९ ॥**
**विभज्य देशं कालं च वातघ्नौषधसंयुतम् ।**

स०—अवस्थादिविशेष विज्ञाय चक्रतैल वातघ्नौषधसयुत सुखोष्ण विजानता वैद्येन वाऽवचारणीयम् ।

**प्रततं सेकलेपांश्च विदध्याद् भृशशीतलान् ॥ २० ॥**

स०—प्रतत सेकादींश्च सुशीतलान् कुर्यात् ।

**गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ।**
**प्रातः प्रातः पिबेद्भग्नः शीतलं लाक्षया युतम् ॥२१॥**

स०—भग्नो नरो गृष्टिक्षीर घृतसहित मधुरद्रव्यसाधित शीतल लाक्षया युक्त प्रात पिबेत् ।

**सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः ।**
**कषायैः प्रतिसार्योऽथ शेषो भङ्गोदितः क्रमः ॥२२॥**

स०—सव्रणस्य भग्नस्य व्रणो मधुघृतोत्तरै कषायै प्रतिसारणीय । अथ शेष क्रमो भङ्गकथितो विधेयः ।

**लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ।**
**सन्दधीत व्रणान् वैद्यो बन्धनैश्चोपपादयेत् ॥ २३ ॥**

स०—व्रणमासानि लम्बानि मधुघृतेनालिप्य व्रणान् वैद्य सन्दध्यात् । कृतसन्धानाश्च तान् यथास्व बन्धैर्योजयेत् ।

**तान् समान् सुस्थिताञ्ज्ञात्वा फलिनीरोध्रकट्फलैः ।**
**समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ॥ २४ ॥**
**धातकीरोध्रचूर्णैर्वा, रोहन्त्याशु तथा व्रणाः ।**

स०—तान्—व्रणान्, सुस्थितान् समाश्च विदित्वा फलिन्यादिभी रजीकृतैरवचूर्णयेत् । धातकीरोध्रयोश्चूर्णेन वा ।

तथा—एव कृते सति, व्रणा द्रागेव रोहन्ति ।

**इति भङ्ग उपक्रान्तः**

स०—इति—अनेन प्रकारेण, भङ्गश्चिकित्सित' ।

**स्थिरधातोर्ऋतौ हिमे ॥ २५ ॥**
**मांसलस्याल्पदोषस्य सुसाध्यो, दारुणोऽन्यथा ।**

स०—शीततौ स्थिरधातोस्तथा मासलस्य स्तोकदोषस्य व्रण सुखसाध्य ।

अन्यथा—अतो विपर्ययेण, दारुण —कृच्छ्रसाध्योऽसाध्यो वा ।

**पूर्वमध्यान्तवयसामेकद्वित्रिगुणैः क्रमात् ॥ २६ ॥**
**मासैः स्थैर्यं भवेत्सन्धेर्यथोक्तं भजतां विधिम् ।**

स०—यथोक्त विधि कुर्वता पूर्वमध्यान्तवयसामेकद्वित्रिगुणैर्मासैर्यथाक्रम सन्धे स्थैर्य जायते ।

**कटीजङ्घोरुभग्नानां कपाटशयनं हितम् ॥ २७ ॥**
**यन्त्रणार्थं तथा कीलाः पञ्च कार्या निबन्धनाः ।**
**जङ्घोर्वोः पार्श्वयोर्द्वौ द्वौ तल एकश्च कीलकः ॥ २८॥**

---

१ "चर्मसङ्क्षेपबन्धन—देहचर्मण सङ्कोच कृत्वाऽवबन्धनम् ॥ सम—नातिशिथिलगाढम् ॥ ऋतुशब्द कालपर्याय । अथवा भङ्गाधिष्ठातृदोषवशेन मोक्षयेत् । वाते श्लेष्मणि च चिरात्, पित्ते रक्ते च शीघ्रमित्यर्थ ।" इतीन्दु । २ 'श्चलान्' इ. । ३ 'सुप्रति' इ ई ण त.चन्द्र स मू । ४ 'तिष्टम्भै' स स । ५ 'सन्धेः स्थैर्यं' ण । ६ 'नापि' उ.स सु. । ७ 'भग्नदोष' इ स सु. । 'भङ्गे दोष' ई.। ८ 'पञ्चमूलविपक्वेन' इ. । ९ पञ्चमूलमत्र ह्रस्व ग्राह्यम्, डल्हणोक्तत्वात् । १० 'ष्णमव' ई. । 'ष्ण चाव' स इ. । ११ 'ज्य काल दोष च दोषघ्नौ' स सु. । 'देशकालौ च' इ.त. । १२ 'धसाधितम्' इ ई.स.मू ।

१ "कषायै —कषायरसाप्रतैरौषधै ॥ कवाटशयन—काष्ठचलनशय्या ।" इति चन्द्र । "कषायै —कषायद्रव्यचूर्णै. ॥ कवाट—स्थिर काष्ठपट्टम् । यन्त्रणार्थं—अचलनाय । निबन्धना —नियमनाधारभूता ॥ इतीन्दु. । "कषायोऽत्र न्यग्रोधादिकल्क ।" इति डल्हण । २ 'सार्यो वा' चन्द्र । ३ 'सुसाधो' ई उ. स स । ४ 'भजतो' ई.चन्द्र.स.मू । ५ 'कवाट' चन्द्र.स स. । ६ 'जङ्घोरुपार्श्वे' स.स. ।

**श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ।**

स०–कट्यादिभग्नाना कपाटे स्थितिर्हिता । यन्त्रणार्थं च कीला–कीलका, पञ्च स्थिरस्थितिहेतव कार्या । तेपा च स्था नान्याह–जङ्घोर्वोर्द्वौ द्वौ कीलकौ, तल एक कीलक, श्रोण्या भग्नस्य पृष्ठवंशे तु भग्नस्य पार्श्वयोर्द्वौ द्वावेक इति। अत एवाह–श्रोण्या वेत्यादि । वक्रस्या(क्षस्य)क्षकयोश्च भग्नस्य पञ्चैव कीलका योज्या । विशेषस्त्वतो नोपरिष्टात् कीलको योज्यो युक्तिवशात् ।

**विमोक्षे भग्नसन्धीनां विधिमेवं समाचरेत् ॥ २९ ॥**

स०–भग्नसन्धीना विमोक्ष एवप्रकार विधि समाचरेत् ।

**सन्धींश्चिरविमुक्तांस्तु स्निग्धस्विन्नान् मृदूकृतान् ।**
**उक्तैर्विधानैर्बुद्ध्या च यथास्वं स्थानमानयेत् ॥ ३० ॥**

स०–चिरविमुक्तास्तु सन्धीन् पूर्वं स्निग्धान् पश्चात् स्विन्नान् मृदूकृतान् यथोक्तैर्विधानैर्बुद्ध्या च विशेषेण यथात्मीय स्थान प्रापयेत् ।

**असन्धिभग्ने रूढे तु विषमोल्वणसाधिते ।**
**आपोथ्य भङ्गं यमयेत्ततो भग्नवदाचरेत् ॥ ३१ ॥**

स०–असन्धौ भग्ने रूढे च विषमोल्बणसाधिते सति भङ्गमापोथ्य–भङ्क्त्वा, पश्चाद्भङ्ग यमयेत् । अनन्तर भग्नवदाचरेत् ।

**भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ।**
**पक्वमांससिरास्नायु. सन्धिः श्लेषं न गच्छति ॥३२॥**

स०–भग्न यथा पाक न प्राप्नोति तथा वैद्यो यत्न कुर्यात् । यत सन्धि पक्वमाससिरास्नायु सन् श्लेष न याति ।

**वातव्याधिविनिर्दिष्टान् स्नेहान् भग्नस्य योजयेत् ।**
**चतुष्प्रयोगान् बल्यांश्च बस्तिकर्म च शीलयेत् ॥३३॥**

स०–वातव्याधिकथितान् स्नेहान् (चि अ २१।६६) चतुष्प्रयोगान्–पाननस्याभ्यङ्गानुवासनै , बल्यान्–बलाय हितान्, भग्नस्य योजयेत् । तथा बस्तिकर्म–"प्राक् स्नेह एक पञ्चान्ते" (हृ सू अ १९।६३) इत्यादिनोक्त, अभ्यसेत् ।

**शाल्याज्यरसदुग्धाद्यैः पौष्टिकैरविदाहिभिः ।**
**मात्रयोपचरेद्भग्न सन्धिसंश्लेषकारिभिः ॥ ३४ ॥**

स०–भग्न नर मात्रया शाल्यादिभि पुष्टिकृद्भि सन्धिसश्लेषकारिभिरविदाहिभिरुपक्रमेत् ।

**ग्लानिर्न शस्यते तस्य, सन्धिविश्लेषकृद्धि सा ।**

स०–तस्य–भग्नस्य, ग्लानिर्न शस्यते । यत सा–ग्लानि, सन्धिविश्लेष कुरुते ।

**लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।**
**व्यायामं च न सेवेत भग्नो रूक्षं च भोजनम् ॥ ३५ ॥**

स०–भग्नो लवणादिक रूक्ष चाहार न सेवेत ।

**कृष्णांस्तिलान् विरजसो दृढवस्त्रबद्धान्**
**सप्त क्षपा वहति वारिणि वासयेत ।**
**संशोषयेदनुदिनं प्रविसार्य चैतान्**
**क्षीरे तथैव मधुकक्वथिते च तोये ॥ ३६ ॥**
**पुनरपि पीतपयस्कां-**
**स्तान् पूर्ववदेव शोषितान् बाढम् ।**
**विगततुषानरजस्कान्**
**सञ्चूर्ण्य सुचूर्णितैर्युञ्ज्यात् ॥ ३७ ॥**
**नलदवालकलोहितयष्टिका-**
**नखमिशिप्लवकुष्ठबलात्रयैः ।**
**अगुरुकुङ्कुमचन्दनसारिवा-**
**सरलसर्जरसामरदारुभिः ॥ ३८ ॥**
**पद्मकादिगणोपेतैस्तिलपिष्टं ततश्च तत् ।**
**समस्तगन्धभैषज्यसिद्धदुग्धेन पीडयेत् ॥ ३९ ॥**
**शैलेयरास्नांशुमतीकसेरु-**
**कालानुसारीनतपत्ररोध्रैः ।**
**सक्षीरशुक्लैः सपयः सदूर्वै-**
**स्तैलं पचेत्तन्नलदादिभिश्च ॥ ४० ॥**
**गन्धतैलमिदमुत्तममस्थि-**
**स्थैर्यकृज्जयति चाशु विकारान् ।**

१ 'वक्षस्यसक' उ। 'वक्रस्याक्ष' ण चन्द्र स मू । २ "अक्षकौ–दोर्वक्षोमूलम् ॥ चिरविमुक्ता –ये विमुक्ता सन्तो बहुकालमुपेक्षिता । बुध्येति यथौपयिक विकल्पनेन ॥ श्लेष–अन्योन्यसश्लेषम् ।" इतीन्दु । "वक्ष –उर । अक्षक –अससन्धेरुपरिभाग ॥ समयेत्–सम कुर्यादित्यर्थ ।" इति डल्हण । "विषममुल्बण च कृत्वा साधिते–चिकित्सिते, भङ्गमापोथ्य–सङ्क्षुद्य, बध्नीयात्॥ वातव्याधिविनिर्दिष्टान्–सहचरतैलादिकान् ।" इति चन्द्र । ३ 'मेन' उ स स.स हु । ४ 'मुक्तांश्च' इ स.मू । ५ 'स्निग्धान् स्वि' स.हु.। ६ 'धानैर्युक्त्या' इ.उ । ७ 'वा' उ । ८ 'च' इ ई उ.। ९ 'साधनै' उ । 'णसंहिते' स हु । १० 'समयेत्' स.हु । ११ 'भङ्गो' उ स.स.।

१ 'शालिक्षीररसाज्याद्यै' स द्व । २ 'च भेषजम्' स स । ३ "विरजसो–निर्मला । वारिणि वहति–नदीतोये । प्रतिसार्य–उत्क्षिप्य । नलद–मांसी । लोहितयष्टिका–मञ्जिष्ठा । प्लव – परिपेलव । समस्तगन्धभैषज्यानि–गणे ब(प)लादिके (सू अ १५। ४३ ) पठितानि । शैलेय–शिलापुष्पम् ।" इति चन्द्र । "तिलाना दिवा शोषण रात्रौ वासनमिति सप्तरात्रम् । सर्जो–देवधूप । रसो–निर्यास । क्षीरशुक्ला–क्षीरविदारी । शैलेय–शिलाजतु ।" इतीन्दु । ४ 'प्रतिसार्य' ण त.चन्द्र स द्व । 'प्रविभाव्य' इति क्वचित् । ५ 'चैनान्' स स । ६ 'विचूर्णितै' उ स स । ७ 'तम्' इ.ई उ चन्द्र । ८ 'त्वक्क्षीर' इ । ९ 'क्षीरयुक्तै' इ उ.ण चन्द्र.। १० 'पयसा स' इ उ । 'सपयस्कदू' स मू.।

वातपित्तजनितानतिवीर्यान्[1]
व्यापिनोऽपि विविधैरुपयोगैः ॥ ४१ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने भङ्गप्रतिषेधो नाम सप्तविंशोऽध्यायः ॥ २७ ॥

स०—कृष्णान् तिलान् वहति—अस्थिरे जले, सप्तरात्रीर्विगतरेणूस्तथा दृढवसनसंयतान् वासयेत् । एतांश्च प्रविरलान् विकीर्य प्रतिदिनं संशोषयेत् । तथैव—पूर्वोक्तेन प्रकारेण, क्षीरे स्थिताननुदिनं प्रतिसार्य शोषितान् सप्त रात्रीरेव मधुयष्टीक्वथिते च जले वासयेद्विशोषयेच्च । वसन्ततिलकावृत्तम् । पुनरपि च पीतक्षीरांस्तांस्तिलान् पूर्ववदेवातिशयेन शोषितानपगततुषांस्तथा विरजस्सञ्चूर्ण्य नलदाद्यैः सुचूर्णितैर्योजयेत् । आर्या । तानेवाह—नलदेत्यादि । औपच्छन्दसिकम् । पद्मकादीत्यादि । किम्भूतैर्नलदादिभिः ? पद्मकादिगणसहितैः सुचूर्णितैर्योजयित्वा चैतत् तिलपिष्टं सकलचोरकादिगन्धद्रव्यसिद्धेन क्षीरेण सह पीडयेत् । ततस्तत्तैलं सैर्यका( शैलेया )दिभिर्नलदादिभिश्च कल्कीकृतैर्दुग्धसहितैः पचेत् । इन्द्रवज्रा । एतत् गन्धतैलमतिवीर्यमस्थिस्थिरत्वकृदामयांश्च पवनपित्तोत्थानतिवीर्यान् व्यापिनोऽप्याशु जयति विविधैः—पाननस्यादिभिः, उपयोगैः । स्वागता ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने भङ्गप्रतिषेधो नाम सप्तविंशोऽध्यायः समाप्तः ॥ २७ ॥



## अष्टाविंशोऽध्यायः ।

व्रणसामान्याद् भगन्दरप्रतिषेधमाचष्टे—

**अथातो भगन्दरप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

हस्त्यश्वपृष्ठगमनकठिनोत्कटकासनैः[1] ।
अर्शोनिदानाभिहितैरपरैश्च निषेवितैः ॥ १ ॥
अनिष्टादृष्टपाकेन सद्यो वा साधुगर्हणैः ।
प्रायेण पिटिकापूर्वो योऽङ्गुले द्व्यङ्गुलेऽपि वा ॥ २ ॥
पायोर्व्रणोऽन्तर्बाह्यो वा दुष्टासृङ्मांसगो भवेत् ।
बस्तिमूत्राशयाभ्यासगतत्वात्स्यन्दनात्मकः ॥ ३ ॥
भगन्दरः सः

स०—हस्त्यश्वादिगमनादिभिरर्शोनिदानोक्तैरपरैरपि निषेवितैरशुभपुराकृतकर्मविपाकेन सद्यो वा साधुनिन्दाभिः पायोरङ्गुले द्व्यङ्गुले वा यो व्रणोऽन्तर्बाह्यो वा बाहुल्येन पिटिकापूर्वो दुष्टरक्तमांसगो बस्तिमूत्राशयसमीपगतत्वात् स्यन्दनस्वभावः स भगन्दरः स्यात् ।

सर्वांश्च दारयत्यक्रियावतः ।
भगबस्तिगुदांस्तेषु दीर्यमाणेषु भूरिभिः ॥ ४ ॥
वातमूत्रशकृच्छुक्रं खैः सूक्ष्मैर्वमति क्रमात् ।

स०—भगादीन् सर्वान् दारयति, क्रियारहितस्य पुंसः । तेषु—भगादिषु, शीर्यमाणेषु खैः—छिद्रैः, सूक्ष्मैर्बहुभिः क्रमेण वातादीन् वमति ।

**दोषैः पृथग्युतैः सर्वैरागन्तुः सोऽष्टमः स्मृतः ॥५॥**

स०—भगन्दराख्यो व्रणो दोषैः पृथक् त्रिधा । युक्तैश्च दोषैस्त्रिधा । सर्वैरेकः । आगन्तुरष्टमो गदितः ।

**अपक्वं पिटिकामाहुः पाकप्राप्तं भगन्दरम् ।**

स०—अपक्वं शोफं पिटिकां कथयन्ति । पक्वं शोफं भगन्दरमाहुः ।

**गूढमूलां ससंरम्भां रुगाढ्यां रूढकोपिनीम् ॥ ६ ॥**
**भगन्दरकरीं विद्यात् पिटिकां न त्वतोऽन्यथा ।**

स०—पिटिकां गूढमूलादिगुणां भगन्दरकरीं विद्यात् । अतोऽन्यथा—विपर्ययेण, पिटिकामात्रां विजानीयात् ।

---

१ 'वीर्यं' ई ई उ स स ,ट । 'वीर्यव्यापि' चन्द्र । २ "भगन्दरोऽन्तर्वेदन ' ( हृ उ अ २५।१६ ) इति तत्स्वरूपप्रदर्शनम्, तदर्थमध्यायारम्भः ।" इति चन्द्र । ३ अयं भगन्दरप्रतिषेधः सुश्रुते नि०४ अध्याये, चि०८ अध्याये च, अष्टाङ्गसङ्ग्रहे उ०३३ अध्याये चास्ति वर्णितः, चरके तु न वर्णितः । ४ 'न्दरविज्ञानप्रति' स.मू. ।

१ 'त्कटुका' उ त । २ 'अनिष्टदिष्ट' ई उ स द्व. । ३ "अनिष्टस्य—पापरूपस्य, [ अदृष्टस्य— ] प्राक्तनस्य कर्मणः, पाकेन—फलप्राप्त्या । स्यन्दनात्मकः—स्रावस्वभावः । सर्वो भगन्दरो, अक्रियावतः—चिकित्सामकुर्वतः पुंसो, भगबस्तिगुदान् दारयति ।" इति चन्द्र. । "यच्च किञ्चित् दिनचर्यादावनिष्टमिति दिष्टं—उक्तं, तस्य पाकेन—फलपरिणामेन । सः—भगन्दरः । अक्रियावतः—अपथ्यशीलिनः । सर्वान्—सकलान् । [ भगादिदेशदरणात् भगन्दराख्योऽस्य । उक्तं च भोजे—'भगं परि समन्ताच्च गुदं बस्तिं तथैव च । भगवद्दारयेद्यस्मात् तस्माज्ज्ञेयो भगन्दरः ॥' इति । वात—अधोवातम्, मारुतस्य सूक्ष्मस्रोतोगामित्वात् पूर्वं वातं वहति ।] तं च रोगविशेषमपक्वभूमिकास्थमाचार्याः पिटकामाहुः ।" इतीन्दुः । ४ 'पिटका' ई चन्द्र स स. । ५ 'पायौ व्र' इ उ त चन्द्र स.मू. । ६ 'भ्याशग' स द्व । ७ "अभ्यासोऽभ्यसनेऽन्तिके ।" इति मेदिनी । ८ 'सर्वैश्च' इ ई चन्द्र । 'सर्वस्य' उ. । ९ 'वातं मूत्रं' स.स । १० 'न्तुश्चाष्टमः' इ.चन्द्र. ।

**तत्र श्यावाऽरुणा तोदभेदस्फुरणरुक्करी ॥ ७ ॥**
**पिटिका[1] मारुतात्**

**स०**–तेषु मध्याच्छ्यावादिगुणा पिटिका पवनात् स्यात् ।

**पित्तादुष्ट्रग्रीवावदुच्छ्रिता ।**
**रागिणी[2] तनु[3]रूष्माढ्या ज्वरधूमायनान्विता ॥ ८ ॥**

**स०**–पित्तात् पिटिकोष्ट्रग्रीवेवोच्छ्रिता रागादिगुणान्विता च स्यात् ।

**स्थिरा स्निग्धा महामूला पाण्डुः कण्डुमती कफात् ।**

**स०**–कफात् पिटिका स्थिरादिगु[4]णा स्यात् ।

**श्यावा[5] ताम्रा सदाहोषा घोररुग् वातपित्तजा ॥ ९ ॥**

**स०**–वातपित्तोत्था पिटिका श्यावादिगुणा स्यात् ।

**पाण्डुरा किञ्चिदाश्यावा कृच्छ्रपाका कफानिलात् ।**

**स०**–श्लेष्मपवनात् पिटिका पाण्डुरादिगुणा स्यात् । कफपित्तजस्तु भगन्दर "अर्श स(दुर्ना)माश्रित्य" ( श्लो १५ ) इत्यारभ्याग्रे प्रतिपादयिष्यति । तेनेह त[6]त्पिटिका तन्त्रकृता नाभिहिता ।

**पादाङ्गुष्ठसमा सर्वैर्दोषैर्नानाविधव्यथा ॥ १० ॥**
**शूलारोचकतृड्दाहज्वरच्छर्दिरुपद्रुता ।**

**स०**–सर्वैर्दोषै पादाङ्गुष्ठतुल्या नानाविधव्यथा शूलादिभिरुपद्रुता पिटिका स्यात् ।

**व्रणतां याति ता[9]ः पक्वाः प्रमादात्**

**स०**–ताश्च पिटिका प्रमादात्-अयत्नात्, पक्वा सद्यो व्रणता यान्ति ।

**तत्र वातजा ॥ ११ ॥**
**चीयतेऽणुमुखैश्छिद्रैः शतपोनर्कवत् क्रमात् ।**
**अच्छं स्रवद्भिरास्रावमजस्रं फेनसंयुतम् ॥ १२ ॥**
**शतपोनकसंज्ञोऽयम्**

**स०**–तेषु मध्याद्वातजा पिटिका शतपोनकवत्-तितउवत्, सूक्ष्मद्वारैश्छिद्रै क्रमेण चीयते । किं कुर्वाणै ? अच्छ–तनु, आस्राव सह फेनमनवरत स्रवद्भि । अय शतपोनकसज्ञो भगन्दर ।

**उष्ट्रग्रीवस्तु पित्तजः ।**

**स०**–पित्तजस्तु भगन्दर उष्ट्रग्रीवाख्य ।

**बहुपिच्छापरिस्रावी परिस्रावी कफोद्भवः ॥ १३ ॥**

**स०**–कफोत्थो भगन्दरो बहुपिच्छापरिस्रावी स्यात् । स च परिस्रावी कथ्यते ।

---

१ 'पिटका' ई चन्द्र स स. । २ "रागिणी–लोहिता । तनु –तन्वी ॥ ता –सर्वा पिटका । प्रमादात्–प्रमत्तत्वेन चिकित्सा विना ।" इति चन्द्र. । ३ 'तनुसूक्ष्मा च' इ त.। ४ 'गुणान्विता' ट। ५ 'श्यावताम्रा' इ ई ण. चन्द्र । 'श्यावाऽऽताम्रा' स स. । ६ 'तत्कृता पिटिका' ट । ७ 'दीर्यते' इ चन्द्र. । ८ 'कवक्रवत् ।' इ.ई.उ. । ९ "चालनी तितउ पुमान् ।" इत्यमरः ।

**वातपित्तात्परिक्षेपी परिक्षिप्य[1] गुद गतिः ।**
**जायते परितस्तत्र प्राकार परिखेव[2] च ॥ १४ ॥**

**स०**–वातपित्तात् परिक्षेपीत्युच्यते । तत्र गुद परिक्षिप्य गति पुरप्राकार परित परिखेव च जायते ।

**ऋजुर्वातकफादृज्व्या गुदो गत्याऽत्र[3] दीर्यते ।**

**स०**–वातकफाद ऋजुसज्ञो भगन्दर । तत्र ऋज्व्या गत्या गुदो दीर्यते ।

**कफपित्ते तु पूर्वोत्थं[4] दुर्नामाश्रित्य कुप्यतः ॥ १५ ॥**
**अर्शोमूले ततः शोफः कण्डूदाहादिमान् भवेत् ।**
**स शीघ्रं पक्वभिन्नोऽस्य क्लेदयन्मूलमर्शसः ॥ १६ ॥**
**स्रवत्यजस्रं गतिभिरयमर्शोभगन्दरः ।**

**स०**–पूर्वोत्थ दुर्नाम समाश्रित्य कफपित्ते यदा कुप्यत , तत –तत्कोपात्, अर्शोमूले शोफ कण्ड्वादिमान् स्यात् । स –शोफ , पक्वभिन्नोऽस्य–अर्शसो, मूलमाश्वेव क्लेदयन् गतिभिरजस्र स्रवति । स शोफोऽर्शोभगन्दर उच्यते ।

**सर्वजः शम्बुकावर्तः शम्बु[5]कावर्तसन्निभः ॥ १७ ॥**
**गतयो दारयन्त्यस्मिन् रुग्वेगैर्दारुणैर्गुदम् ।**

**स०**–सन्निपातोत्थ शम्बुकावर्तसज्ञ शम्बुकावर्तसम स्यात् । अस्मिन्–सर्वजे भगन्दरे, रुग्वेगैस्तीव्रैर्गतयो गुद दारयन्ति ।

**अस्थिलेशोऽभ्यवहृतो मांसगृद्ध्या यदा गुदम् ॥ १८ ॥**
**क्षि[6]णोति तिर्यङ्निर्गच्छन्नुन्मार्गं[7] क्षततो गतिः ।**
**स्या[8]त्ततः पूयदीर्णायां मांसकोथेन तत्र च ॥ १९ ॥**
**जायन्ते कृमयस्त[9]स्य खादन्तः परितो गुदम् ।**
**विदारयन्ति नचिरादुन्मार्गी क्षतजश्च[10] सः ॥ २० ॥**

**स०**–अस्थिलवो मासगार्ध्येन भुक्तो यदा तिर्यक्–उन्मार्ग, निर्गच्छन् गुद क्षिणोति, तदा क्षताद्गति स्यात् । तत पूयदीर्णाया गतौ मासकोथेन च तस्मिन् कृमयो भवन्ति । ते च कृमय तस्य–भगन्दरिणो, गुद भक्षयन्त परितो विदारयन्ति शीघ्रमेव । असावुन्मार्गी क्षतजश्चोच्यते ।

---

१ "गुद परिक्षिप्य–मण्डलाकृत्या, गति –नाडी,जायते । प्राकारस्य परित परिखा–बहिर्निकटे खाता ॥ पूर्वोत्थ–स्वकारणै प्रथमसुत्पन्नम् ॥ शम्बुको नामावर्तयुक्तो मत्स्यविशेष ॥ मासगृध्या–मासलोभेन । क्षिणोति–हिनस्ति ।" इतीन्दु । "शम्बूका –शङ्खा ।" इति डल्हण. । २ 'कारपरिखेव' इ.उ त चन्द्र । ३ 'त्या तु दी' उ चन्द्र स मू । 'त्या नु दी' इ ण.त. । 'त्याऽवदी' स स। ४ 'पूर्वोक्तं' इ ई उ । ५ 'शम्बूका' इ त., ट । ६ 'क्षणोति' इ उ ण स मू । ७ 'गं च ततो' स स. । ८ 'स्यात्तदा' इ ई उ स द्व । ९ 'यस्तेभ्य.' उ. । 'यस्तेऽस्य' स.स । १० 'जस्तु स ' ई. ।

**तेषु रुग्दाहकण्ड्वादीन् विद्याद् व्रणनिषेधतः ।**

स०–तेषु–भगन्दरेषु, व्रणनिषेधतो–व्रणप्रतिषेधात्, रुगादीन् विद्यात् ।

**षट् कृच्छ्रसाधनास्तेषां, निचयक्षतजौ त्यजेत् ॥ २१ ॥**
**प्रवाहिणीं वलीं प्राप्तं सेवनीं वा समाश्रितम् ।**

स०–तेषां मध्यात् कृच्छ्रसाधना षट्–एकदोषजा द्विदोषजाश्च । सन्निपातजं क्षतजं च त्यजेत् । प्रवाहिणीं वलीं प्राप्तं यद्भगन्दरं तत्त्यजेत् । तथा सेवनीमाश्रित्य यज्जातं तच्च वर्जयेत् ।

**अथास्य पिटिकामेव तथा यत्नादुपाचरेत् ॥ २२ ॥**
**शुद्ध्यसृक्स्नुतिसेकाद्यैर्यथा पाकं न गच्छति ।**

स०–अथास्य–भगन्दरस्य, पिटिकामेव–पिटिकावस्थामेव, यत्नं कृत्वा शुद्ध्यादिभिस्तथोपक्रमेत् यथा पाकं न प्राप्नोति ।

**पाके पुनरुपस्निग्धं स्वेदितं चावगाहतः ॥ २३ ॥**
**यन्त्रयित्वाऽर्शसमिव पश्येत्सम्यग्भगन्दरम् ।**
**अर्वाचीनं पराचीनमन्तर्मुखबहिर्मुखम् ॥ २४ ॥**

स०–पाके तु सत्युपस्निग्धमवगाहेन च स्वेदितं ततोऽर्शसमिव यन्त्रयित्वा सुष्ठु भगन्दरं पश्येत्–अवाङ्मुखं पराङ्मुखं वा, अन्तर्मुखं बहिर्मुखं वा, इत्येवं सुष्ठु निरूप्य । अर्वाचीनमिति "विभाषाञ्चेरदिक्स्त्रियाम्" इति स्वार्थे खः ।

**अथान्तर्मुखमेषित्वा सम्यक् शस्त्रेण पाटयेत् ।**
**बहिर्मुखं च निःशेषं ततः क्षारेण साधयेत् ॥ २५ ॥**
**अग्निना वा भिषक् साधु क्षारेणैवोष्ट्रकन्धरम् ।**

स०–अनन्तरमन्तर्मुखमेषिण्या एषित्वा सम्यक् शस्त्रेण पाटयेत् । बहिर्मुखं च भगन्दरं निःशेषं पाटयित्वा ततः क्षारेण साधयेत् ज्वलनेन वा । उष्ट्रकन्धरं–उष्ट्रग्रीवं, क्षारेणैव साधु कृत्वा वैद्यः साधयेत्–न त्वग्निना ।

**नाडीरेकान्तराः कृत्वा पाटयेच्छतपोनकम् ॥ २६ ॥**
**तासु रूढासु शेषाश्च, मृत्युर्दीर्णे गुदेऽन्यथा ।**

स०–शतपोनकाख्यमेकान्तरा नाडीः कृत्वा पाटयेत् । तासु रूढासु शेषा अपि नाडीः पाटयेत् ।

अन्यथा–एकहेलयैव, गुदे पाटिते सति मृत्युः स्यात् ।

**परिक्षेपिणि चाप्येवं नाड्युक्तैः क्षारसूत्रकैः ॥ २७ ॥**

स०–परिक्षेपिणि च भगन्दरे नाडीकथितैः क्षारसूत्रकैरेव–क्रमात्, साधयेत् ।

१ 'व्रणविभक्ति' ई.स.स । २ "[ निचयक्षतजौ–शम्बुकावर्तोन्मार्गिणौ । ] पराचीनं–अन्तर्भवम् । बहिर्मुखं–बहिर्द्वारम् । अन्तर्मुखं–गुदनाड्यन्तर्गतमुखम् ।" इतीन्दुः । "अन्यथा–एकवारं पाटितासु, गुदे दीर्णे सति मृत्युः स्यात् ।" इति चन्द्रः । ३ 'अवाचीनं' त.स.सु । ४ 'हेन स्वेदेन स्वे ट.। ५ 'च' ट.त.। ६ 'नाडीमेकान्तरं' इ.उ.। ७ 'नके ।' इ.ई.उ.स.द्व.।



**अर्शोभगन्दरे पूर्वमर्शांसि प्रतिसाधयेत् ।**

स०–अर्शोभगन्दरे पूर्वमर्शांसि प्रतिसाधयेत्–उपचरेत् ।

**त्यक्त्वोपचर्यः क्षतजः शल्यं शल्यवतस्ततः ॥ २८ ॥**
**आहरेच्च तथा दद्यात् कृमिघ्नं लेपभोजनम् ।**
**पिण्डनाड्यादयः स्वेदाः सुस्निग्धा रुजि पूजिताः २९**

स०–क्षतजो भगन्दरस्त्यक्त्वा–प्रत्याख्याय, चिकित्स्यः । अनन्तरं शल्यवतः–सशल्यस्य, शल्यमाहरेत् । तथा कृमिघ्नं लेपं भोजनं च दद्यात् । पीडायां च सत्यां पिण्डस्वेदादयः सुस्निग्धा हिताः ।

**सर्वत्र च बहुच्छिद्रे छेदानालोच्य योजयेत् ।**
**गोतीर्थसर्वतोभद्रदललाङ्गललाङ्गलान् ॥ ३० ॥**

स०–बहुच्छिद्रे च भगन्दरे सर्वत्रैवालोच्य चतुरश्छेदान् गोतीर्थकादिकान् कुर्यात् । तानेव छेदानाह–गोतीर्थेत्यादि ।

**पार्श्वे गतेन शस्त्रेण छेदो गोतीर्थको मतः ।**
**सर्वतः सर्वतोभद्रः, पार्श्वच्छेदोऽर्धलाङ्गलः ॥ ३१ ॥**
**पार्श्वद्वये लाङ्गलकः**

स०–शस्त्रेण पार्श्वे गतेन यश्छेदः स गोतीर्थकाख्यः, स च काव्यगतगोमूत्रिकाकारः । सर्वतो यश्छेदः स सर्वतोभद्राख्यः, स च सर्वतोभद्रकाव्याकारः । य एकस्मिन् पार्श्वे छेदः, स च दललाङ्गलकाख्यः,–कुठाररहितहलाकारः । पार्श्वद्वये यश्छेदः स लाङ्गलकाख्यः,–सम्पूर्णहलाकारः ।

**समस्तांश्चाग्निना दहेत् ।**
**आस्रावमार्गान्निःशेषं नैव विकुरुते पुनः ॥ ३२ ॥**

स०–व्रणान् सर्वांश्चास्रावमार्गान् निःशेषं कृत्वाऽग्निना दहेत् । एवं कृते सति पुनर्विकारं व्रणो न याति ।

१ 'सारयेत्' इ.ई.उ.चन्द्र । २ 'क्षतजे' चन्द्र । ३ 'रेच्चत्तथा' इ । 'रेत्तु तथा' ई । 'रेत तथा' उ.ण.चन्द्र. । ४ 'सर्वत्रापि' इ । ५ 'गोतीर्थं सर्वतोभद्रमर्द्धलाङ्गललाङ्गलौ ।' स.स । ६ "लाङ्गलं हलमुच्यते । अर्धलाङ्गलमिव अर्धलाङ्गलम् । सर्वतोभद्रस्त्वासनविशेषः पर्यङ्किकाकारो मण्डलाकारसदृशो वा । गोतीर्थको–गच्छतो गोर्मूत्रगतिसदृशः । अथवा गोतीर्थं–गोयोनिरुच्यते, तदाकारो गोतीर्थकः । अथवा गोतीर्थं–निपानं, येन गावः पिबन्ति, तत्खुराङ्कितवत् छेदविशेषः कर्तव्यः ।" इति डल्हणः । "पार्श्वेन यत्रागच्छति शस्त्रं स गोतीर्थकः । यत्र तु सर्वदिशमागच्छति शस्त्रं स सर्वतोभद्रः । एकस्य पार्श्वस्य यः छेदः सोऽर्द्धलाङ्गलः । पार्श्वद्वये तु छेदो लाङ्गलकः ।" इतीन्दुः । ७ 'पार्श्वगतेन' इ.ई.स.स । 'पार्श्वगतेन' उ.चन्द्र, ट.ड । ८ 'कुठाररहित' ड. । ९ 'निःशेषान्नैव' चन्द्र.स.मू. ।

यतेत कोष्ठशुद्धौ[1] च भिषक् तस्यान्तराऽन्तरा ।

स०—तस्य—भगन्दरिण , कोष्ठशुद्धौ चान्तराऽन्तरा वैद्यो यतेत ।

लेपो व्रणे बिडालास्थि त्रिफलारसकल्कितम्[2] ॥ ३३ ॥

स०—मार्जारास्थि त्रिफलारसकल्कित व्रणे लेपो हित ।

ज्योतिष्मतीमलयुलाङ्गलिशेलुपाठा-[3]
कुम्भाग्निसर्ज(र्जि)[4]करवीरवचासुधार्कैः ।
अभ्यञ्जनाय विपचेत भगन्दराणा
तैलं वदन्ति परमं हितमेतदेषाम्[5] ॥ ३४ ॥

स०—ज्योतिष्मत्यादिभिरभ्यञ्जनार्थ तैल पचेत् । भगन्दराणामेतेषामेतत् परम—अतिशयेन, हित गदन्ति । वसन्ततिलकावृत्तम् ।

वक्ष्यमाण च मधुकादि द्रुतविलम्बितम् ।

मधुकरोध्रकणात्रुटिरेणुका-
द्विरजनीफलिनीपटुसारिवाः ।
कमलकेसरपद्मकधातकी-
मदनसर्जरसामयरोदिकाः[6][7] ॥ ३५ ॥

सबीजपूरच्छदनैरेभिस्तैल विपाचितम् ।
भगन्दरापचीकुष्ठमधुमेहव्रणापहम् ॥ ३६ ॥

स०—मधुकादिभिरेतै सबीजपूरपत्रैस्तैल विपाचित भगन्दरादिघ्नम् ।

मधुतैलयुता विडङ्गसार-
त्रिफलामागधिकाकणाश्च[8] लीढा॰ ।
कृमिकुष्ठभगन्दरप्रमेह-
क्षतनाडीव्रणरोपणा[9] भवन्ति ॥ ३७ ॥

स०—विडङ्गसारादयो माक्षिकतैलयुक्ता लीढा कृम्यादिव्रणरोपणा स्यु । मागधिकाकणा —पिप्पलीतण्डुला । औपच्छन्दसिक वृत्तम् ।

अमृतात्रुटिवेल्लवत्सकं
कलिपथ्यामलकानि[3] गुग्गुलुः ।
क्रमवृद्धमिदं मधुद्रुतं[10]
पिटिकास्थौल्यभगन्दरान्[11] जयेत् ॥ ३८ ॥

स०—अमृतादिकमिद क्रमेण भागवृद्ध्या वृद्ध मधुना द्रुत पिटिकादीन्[11] जयेत् । वैतालीयम् ।

मागधिकाग्निकलिङ्गविडङ्गै-[1]
र्बिल्वघृतै॰ सवरापलषट्कैः ।
गुग्गुलुना सदृशेन समेतै॰
क्षौद्रयुतैः सकलामयनाशः ॥ ३९ ॥

स०—मागधिकादिकैर्बिल्वघृतै —पृथक् पलमितै , त्रिफलापलषट्कसहितै सर्वैस्तुल्येन गुग्गुलुना युतैर्मधुसमेतैर्मिश्रितैर्मात्रया भक्षितै (?) समस्तव्याधिहरण स्यात् ।

गुग्गुलुपञ्चपलं पलिकांशा
मागधिका त्रिफला च पृथक्स्यात् ।
त्वक्त्रुटिकर्षयुतं[2] मधुलीढं
कुष्ठभगन्दरगुल्मगतिघ्नम् ॥ ४० ॥

स०—गुग्गुलुपलानि पञ्च, पिप्पल्यादय पलाशिका , त्वगेलयो पृथक् कर्षम् । तदेतन्मधुलीढ कुष्ठादिघ्नम् । स्वायम्भुवाख्यो गुग्गुलुरेष प्रसिद्ध । दोधकं(के) वृत्तम्(त्ते) ।

शृङ्गबेररजोयुक्तं तदेव च सुभावितम्[2] ।
क्वाथेन दशमूलस्य विशेषाद्वातरोगजित् ॥ ४१ ॥

स०—तदेव—गुग्गुल्वादिक द्रव्य, शुण्ठीचूर्णयुत दशमूलक्वाथेन सुभावित विशेषेण वातरोगजित् ।

उत्तमाखदिरसारजं रजः
शीलयन्नसनवारिभावितम्[3] ।
हन्ति तुल्यमहिषाक्षमाक्षिकं[4]
कुष्ठमेहपिटिकाभगन्दरान् ॥ ४२ ॥

स०—त्रिफलादिरजोऽसनक्वाथेन भावित तुल्यमहिषाख्य(क्ष)माक्षिक शीलयन् कुष्ठादीन् हन्ति । रो नरौ लगयुता रथोद्धता ।

भगन्दरेष्वेष विशेष उक्तः
शेषाणि तु व्यञ्जनसाधनानि ।
व्रणाधिकारात् परिशीलनाच्च
सम्यग्विदित्वौपयिकं[5] विदध्यात् ॥ ४३ ॥

स०—भगन्दरेषु सर्वेष्वयमुपक्रमविशेषोऽभिहित । शेषाणि तु व्रणानि प्रकटसाधनानि । तेषु व्रणाविकारात् परिशीलनाच्च सम्यग्विदित्वोपक्रमं यथायोग्य कुर्यात् । उपजाति ।

---

१ 'छशुध्यै च' उ स सं । 'छसंशुद्धौ भि' चन्द्र । २ 'लिकतः' इ.ई चन्द्र । ३ "ज्योतिष्मती—काकादनी । मलयु —सोमराजी फल्गुर्वा । कुम्भ —त्रिवृत् ॥ कलि —बिभीतकम् ।" इति चन्द्र । ४ अत्र 'सर्जि' इति पाठो युक्त इति प्रतिभाति, सङ्ग्रहे सुश्रुते चास्मिन् विष्यन्दनाख्ये तैले 'स्वर्जिका' इति 'सुवर्चिका' इति च पठितत्वात् । ५ 'तदेव ॥' ण । ६ मदन—मधूच्छिष्टम् । रोदिका—लज्जालु । ७ 'रोध्रका ' ई उ ण.त. । 'रोहिका' इति क्वचित् । ८ 'धिकोषणा' उ.स स । ९ 'रोहणा' ण त । १० 'मधुप्लुत' उ.स स. । ११ 'पिटका' ई चन्द्र.स.स ,ट ड. ।

१ 'ङ्गैस्तुल्यघृतै.' चन्द्र । २ "त्वचोऽर्द्धकर्ष , सूक्ष्मैलाना चार्द्धकर्ष॰ । [सुभावित—पुन पुन पेषणशोषणादिना समारोपिततद्वीर्यम् । वातप्रधानकुष्ठादिहरमित्यर्थ ॥ शेषाणि—अत्रानुक्तानि । व्यञ्जनानि—दोषलिङ्गानि । साधनानि—उपक्रमविशेषाणि । ]" इतीन्दु । "असनवारिणा—बीजकसारक्वाथेन । तुल्यमहिषाक्ष—समगुग्गुलु ॥ विदित्वा—बुध्वा । औपयिक—योग्य सर्वमौषधादिकम् ।" इति चन्द्र । ३ 'लयेदनलवारि' ट । 'येदसन' चन्द्र । ४ 'षाख्यमा' ण । ५ 'वौषधिकं' इति क्वचित् ।

अश्वपृष्ठगमनं चलरोधं
मद्यमैथुनमजीर्णमसात्म्यम्।
साहसानि विविधानि च रूढे
वत्सरं परिहरेदधिकं वा ॥ ४४ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने भगन्दरप्रतिषेधो नामाष्टाविंशोऽध्यायः ॥ २८ ॥

स०-भगन्दरे व्रणे रूढेऽपि तुरगपृष्ठगमनादिकं वर्षं यावदधिकं वा परिहरेदिति। स्वागतावृत्तम्।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने भगन्दरप्रतिषेधो नामाष्टाविंशोऽध्यायः समाप्तः ॥ २८ ॥





## एकोनत्रिंशोऽध्यायः।

ग्रन्थ्यादिविज्ञानमुच्यते—

अथातो ग्रन्थ्यर्बुदश्लीपदापचीनाडीविज्ञानीयं व्याख्यास्यामः।

इति ह स्माहुरात्रेयादयो महर्षयः।

(गद्यसूत्रे ॥ २ ॥)

कफप्रधानाः कुर्वन्ति मेदोमांसास्रगा मलाः।
वृत्तोन्नतं यं श्वयथुं स ग्रन्थिर्ग्रथनात्स्मृतः ॥ १ ॥

स०-मेदोमांसरक्तस्थिता कफप्रधाना दोषा वृत्तोन्नतं यं श्वयथुं कुर्वन्ति, स ग्रथनाद् ग्रन्थिः स्मृतः।

दोषास्रमांसमेदोऽस्थिसिराव्रणभवा नव।
ते

स०-ते च-ग्रन्थयो, दोषाद्यात्मकत्वात् नवसङ्ख्याः स्युः।

तत्र वातादायामतोदभेदान्वितोऽसितः ॥ २ ॥
स्थानात्स्थानान्तरगतिरकस्माद्धानिवृद्धिमान्।
मृदुर्बस्तिरिवानद्धो विभिन्नोऽच्छं स्रवत्यसृक् ॥ ३ ॥

स०-तेषु मध्ये वातादायामादिगुणः श्वयथुः स्यात्। स च विभिन्नो लोहितमच्छं स्रवति।

पित्तात्सदाहः पीताभो रक्तो वा, पच्यते द्रुतम्।
भिन्नोऽस्रमुष्णं स्रवति

स०-पित्तेन दाहयुतः पीतच्छविरथवा रक्तः। शोफः शीघ्रं पच्यते। भिन्नः स उष्णमसृक् स्रवति।

श्लेष्मणा नीरुजो घनः ॥ ४ ॥
शीतः सवर्णः कण्डूमान्, पक्वः पूयं स्रवेद्घनम्।

स०-कफेन नीरुजो घनः शोफः शीतस्पर्शः शरीरसमानवर्णः कण्डूयुतश्च स्यात्। स पक्वः पूयं घनं स्रवेत्।

दोषैर्दुष्टेऽसृजि ग्रन्थिर्भवेन्मूर्च्छत्सु जन्तुषु ॥ ५ ॥
सिरामांसं च संश्रित्य सस्वापः पित्तलक्षणः।

स०-दोषैर्दुष्टे लोहिते सति ग्रन्थिर्भवेत्। जन्तुषु-कृमिषु, वृद्धिं गच्छत्सु सिरामांसं च संश्रित्य स्वापान्वितः शोफः पित्तसमानलक्षणः स्यात्।

मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत् ॥ ६ ॥
स्निग्धं महान्तं कठिनं सिरानद्धं कफाकृतिम्।

स०-मांसलैराहारैर्मांसं दूषितं ग्रन्थिं स्निग्धादिगुणयुक्तं कफाकारं करोति।

प्रवृद्धं मेदुरैर्मेदो नीतं मांसेऽथवा त्वचि ॥ ७ ॥
वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुं चलम्।
श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम् ॥ ८ ॥
स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत्।

स०-मेदुरैर्भोजनैर्मेदः प्रवृद्धं वायुना मांसे नीतमथवा त्वचि नीतं मेदोग्रन्थिं भृशं स्निग्धादिगुणं श्लेष्मसमानाकारं तथा शरीरक्षयवृद्धिभ्यां क्षयोदयौ यस्य तं तादृशं करोति। स च ग्रन्थिर्भिन्नः सन् घनं ताम्रमसितं सितं च मेदः स्रवति।

अस्थिभङ्गाभिघाताभ्यामुन्नतावनतं तु यत् ॥ ९ ॥
सोऽस्थिग्रन्थिः

स०-अस्थिभङ्गेनाभिघातेन वाऽस्थ्युन्नतमवनतं वा यत् स्यात्, सोऽस्थिग्रन्थिः।

---

१ "चलानां-वेगानां, रोधम्। साहसानि-अनालोचितात्मबलान्युत्पतनादीनि।" इतीन्दुः। "चलस्य-वायोः, रोधम्।" इति चन्द्रः। २ 'च' उ,ङ.। ३ अथ ग्रन्थ्यादिविज्ञानीयश्चरके चि० १२ अध्याये, सुश्रुते नि० १०।११।१२ अध्यायेषु, अष्टाङ्गसङ्ग्रहे उ० ३४ अध्याये चास्ति वर्णितः। ४ 'ज्ञानव्या' ई ई उ ण त.चन्द्र.स.मू.। ५ 'ग्रन्थनात्' ई उ त ण.चन्द्र.स.मू.।

१ 'षास्रक्मांस' स.स.। २ 'घन-सान्द्र, स' ट। ३ "मूर्च्छत्सु-जायमानेषु।" इति चन्द्रः। "मूर्च्छत्सु-उच्छ्रायमाप्नुवत्सु।" इतीन्दुः। ४ 'पैत्त' स द.। ५ 'द पूय ताम्रासित' ई.उ.। ६ 'भग्नाभि' ई.।

**पदातेस्तु सहसाऽम्भोवगाहनात् ।**
**व्यायामाद्वा प्रतान्तस्य सिराजालं सशोणितम् ॥ १० ॥**
**वायुः सम्पीड्य सङ्कोच्य वक्रीकृत्य विशोष्य च ।**
**निःस्फुरं नीरुजं ग्रन्थिं कुरुते स सिराह्वयः ॥ ११ ॥**

स०-पदाते सहसैव जलावगाहाद्व्यायामाद्वा प्रतान्तस्य-ग्लानस्य, पवन क्रुद्ध सरक्तं सिराजाल सम्पीड्य तथा सङ्कोच्य वक्रीकृत्य विशोष्य च नि ष्फुर नीरुज ग्रन्थि कुरुते स सिरासज्ञ । नि ष्फुरमिति "स्फुरतिस्फुलत्यो" इत्यादिना षत्वम् ।

**अरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः ।**
**सार्द्रे वा बन्धरहिते गात्रेऽश्माभिहतेऽथवा ॥ १२ ॥**
**वातोऽस्रमस्रुतं दुष्टं संशोष्य ग्रथितं व्रणम् ।**
**कुर्यात्सदाहः कण्डूमान् व्रणग्रन्थिरयं स्मृतः ॥ १३ ॥**

स०-अरूढे व्रणे तथा रूढमात्रे-सद्योरूढे व्रणे, सर्वरसाशिनो नरस्याथवा सार्द्रे व्रणे बन्धरहिते शरीरेऽश्माभिहते वा वातो रक्तमस्रुत दुष्ट सशोष्य ग्रथित व्रण कुर्यात् । दाहादियुत एष व्रणग्रन्थि स्मृतो मुनिभि ।

**साध्या दोषास्रमेदोजाः, न तु स्थूलखराश्चलाः ।**
**मर्मकण्ठोदरस्थाश्च**

स०-दोषास्रमेदोजा ग्रन्थय साध्याः । न पुन स्थूला, खराश्चलास्तथा मर्मस्था कण्ठस्था उदरस्थाश्च ग्रन्थय साध्या ।

**महत्तु ग्रन्थितोऽर्बुदम् ॥ १४ ॥**
**तल्लक्षणं च मेदोन्तैः षोढा दोषादिभिस्तु तत् ।**
**प्रायो मेदःकफाढ्यत्वात्स्थिरत्वाच्च न पच्यते ॥ १५ ॥**

स०-ग्रन्थेर्यन्महत् तदर्बुदम् । तस्य चार्बुदस्य लक्षणं षट्प्रकारम् । कथम् ? दोषैस्त्रीणि, रक्तमासमेदोभिस्त्रीणीति । तच्च-अर्बुदं, मेद कफबाहुल्यात् स्थिरत्वाच्च प्राय पचनं न याति ।

**सिरास्थं शोणितं दोषः सङ्कोच्यान्तः प्रपीड्य च ।**
**पाचयेत तदानद्धं सास्रावं मांसपिण्डितम् ॥ १६ ॥**
**मांसाङ्कुरैश्चितं याति वृद्धिं चाशु स्रवेत्ततः ।**
**अजस्रं दुष्टरुधिरं भूरि तच्छोणितार्बुदम् ॥ १७ ॥**

स०-सिरास्थितं रक्त दोषो-वाताद्यन्यतम, सङ्कोच्यान्त-अभ्यन्तरे, च प्रपीड्य पाचयेत् । तत्पक्क च सदानद्ध सास्राव मासपिण्डित मासाङ्कुरैश्चित वृद्धि गच्छति । वृद्ध च सदाशु सतत दुष्ट रुधिर प्रभूत स्रवति । तत्-एवविध, शोणितार्बुदं गद्यते । मासार्बुदमेदोर्बुदयोश्च लक्षण तद्ग्रन्थिलक्षणेनैवोक्तप्रायत्वान्नेहोक्तम् ।

**तेष्वसृङ्मांसजे वर्ज्ये, चत्वार्यन्यानि साधयेत् ।**

स०-तेषु-षड्स्वर्बुदेषु मध्ये, शोणितमासजे द्वे अर्बुदे नोपक्रमेत् । अपराणि चत्वारि साधयेत् ।

**प्रस्थिता वङ्क्षणोर्वादिमधःकायं कफोल्बणाः ॥ १८ ॥**
**दोषा मांसास्रगाः पादौ कालेनाश्रित्य कुर्वते ।**
**शनैःशनैर्घनं शोफं श्लीपदं तत्प्रचक्षते ॥ १९ ॥**

स०-अधःकाय वङ्क्षणोरुप्रभृति दोषा गता कफोल्बणा मांसलोहितगा कालेन पादौ समाश्रित्य निबिड श्वयथु शनैःशनैर्विदधति । तदेतच्छ्लीपद प्रचक्षते ।

**परिपोटयुतं कृष्णमनिमित्तरुजं खरम् ।**
**रूक्षं च वातात्**

स०-श्लीपद वातात् परिपोटेन युक्त कृष्णवर्णमहेतुपीड खरं रूक्ष च स्यात् ।

**पित्तात्तु पीतं दाहज्वरान्वितम् ॥ २० ॥**

स०-पित्तात् पीत दाहज्वरयुत च स्यात् ।

**कफाद्गुरु स्निग्धमरुक् चितं मांसाङ्कुरैर्बृहत् ।**

स०-कफेन गुरु स्निग्ध रुजारहित मासाङ्कुरैश्चित महच्च स्यात् ।

**तत्त्यजेद्वत्सरातीतं सुमहत् सुपरिस्रुति ॥ २१ ॥**

स०-तत्-श्लीपदं, वर्षातिक्रान्त सुमहत् सुपरिस्रावं च त्यजेत् ।

**पाणिनासौष्ठकर्णेषु वदन्त्येके तु पादवत् ।**
**श्लीपदं जायते तच्च देशेऽनूपे भृशं भृशम् ॥ २२ ॥**

स०-पाण्यादिष्वपि पादवच्छ्लीपद जायत इत्येके वदन्ति । तच्चानूपदेशेऽतिशयेन रोगस्वभावाज्जायते ।

**मेदस्थाः कण्ठमन्याक्षकक्षावङ्क्षणगा मलाः ।**

---

१ 'प्रपीड्य' इ । २ "सर्वरसाशिन -सर्वान्नीनस्य पुस ॥ अनु-पश्चात् ।" इति चन्द्र । "[ सर्वरसाशिन -व्रणविरुद्धाम्लादिरसनिषेविण , अपथ्यसेविन इत्यर्थ ।] दोषास्रमेदोजा पञ्च साध्या । एत एव स्थूलत्वादिगुणा मर्मादिस्थाश्च न साध्या इति सम्बन्ध । [ चला -निपीडनात् स्थानान्तरयायिन । चशब्द समुच्चये, अनुक्तानामन्येषा चिकित्साकथनात् याप्यत्व सूचितम् । अनुक्तसाधनत्वादस्थिग्रन्थेरसाध्यत्व च । ]" इतीन्दु । ३ 'वायु प्रकुपित क्षिप्र प्राप्य मर्माश्रित व्रणम् ।' इ. । ४ 'स्थूला खरा' इ त. । ५ 'महास्तु' उ इन्दु । ६ 'च्यार्बु प्र' ई.उ त चन्द्र.स द्व । ७ 'वा' उ ण. । ८ 'सस्राव मासपिण्डताम्' चन्द्र. । ९ 'वृद्धं' चन्द्र. ।

१ "अन्यानि चत्वारि-दोषमेदोभवानि ॥ [आदिशब्देन जङ्घागुल्फादिपरिग्रह ॥ सपरिस्रुति-परिस्रुत्युपेतम् ॥ अनूपे-जलप्राये देशे । भृश भ्रमात्-अनवरत चङ्क्रमणात् ।]" इतीन्दु । "परिपोटेन-त्वग्भेदेन, युतम् । अनिमित्तरुज-कारण विना वेदनाभिर्युतम् ॥ गुरु-भारिकम् । बृहत्-स्थूलम् ॥ भृश भृश-पुन पुन ।" इति चन्द्र । २ 'त प्रच' स स. । ३ 'चक्ष्यते' ण त. । ४ 'च श्लीपद वातात्, पित्ताद्दाह' ई उ । ५ 'त्ताच' इ । ६ 'रैर्महत्' इ त । ७ 'सपरि' स स । ८ "स्रवतीव च निर्भरे ।" इत्यमर । ९ 'वदन्त्यन्ये' ई उ स.स. । १० 'भृश नृणाम्' स मू. । 'भृश भ्रमात्' स.स । ११ 'न्याक्षिक' इ.चन्द्र ।

**सवर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकृतीन् २३**
**अवगाढान् बहून् गण्डाश्चिरपाकांश्च कुर्वते ।**
**पच्यन्तेऽल्परुजंस्तेऽन्ये स्रवन्त्यन्येऽतिकण्डुराः २४**
**नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः ।**
**गण्डमालाऽपची चेयं दूर्वेव क्षयवृद्धिभाक् ॥ २५ ॥**

स०—मेदस्था कण्ठादिगा दोषा सवर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकारानवगाढान् बहून् गण्डाश्चिरपाकाश्च कुर्वते ।

ते च—गण्डा, स्तोकपीडा पच्यन्ते । अन्ये च स्रवन्ति । अपरे चातिकण्डुरा, कण्डु रान्ति ददत इति कण्डुरा । नश्यन्त्यन्ये । अन्ये जायन्ते दीर्घकालानुबन्धिन । इय—ईदृशी, गण्डमाला अपची चोच्यते । दूर्वेव क्षयवृद्धिभाक् ।

**तां त्यजेत्सज्वरच्छर्दिपार्श्वरुक्कासपीनसाम् ।**

स०—ता—गण्डमाला, ज्वरादियुतां त्यजेत् ।

अथ नाडीविज्ञानमाह—

**अभेदात्पक्वशोफस्य व्रणे चापथ्यसेविनः ॥ २६ ॥**
**अनुप्रविश्य मांसादीन् दूरं पूयोऽभिधावति ।**
**गतिः सा दूरगमनान्नाडी नाडीव संस्रुतेः ॥ २७ ॥**
**नाड्येकाऽनृजुरन्येषा सैवानेकगतिर्गतिः ।**

स०—पक्वशोफस्याभेदनादपथ्यसेविनश्च पुसो व्रणे पूयो मासादीननुप्रविश्य दूर व्रजति । सा दूरगमनात् गतिरित्युच्यते। नाडीव सस्रुतेर्नाडीत्युच्यते । अन्येषा तु तन्त्रकृता मत एका नाड्यनृजु—वक्रा, नाडीत्युच्यते । सैव नाड्यनेकगतिर्गतिरित्युच्यत इति ।

**सा दोषैः पृथगेकस्थैः शल्यहेतुश्च पञ्चमी ॥ २८ ॥**

स०—सा—नाडी, पृथग्दोषैस्त्रिसङ्ख्या, सन्निपातेन चतुर्थी, पञ्चमी शल्यहेतु ।

**वातात् सरुक्सूक्ष्ममुखी विवर्णा फेनिलोद्गमा ।**
**स्रवत्यभ्यधिकं रात्रौ**

स०—वातात् सरुजादिगुणा ।

**पित्तात्तृड्ज्वरदाहकृत् ॥ २९ ॥**
**पीतोष्णपूतिपूयस्रुद्दिवा चाति निषिञ्चति ।**

स०—पित्तात्तृडादिकृत् । पीतोष्णपूतिपूयस्रावी । दिवसे चातिशयेन स्रवति ।

**घनपिच्छिलसंस्रावा कण्डूला कठिना कफात् ॥ ३० ॥**
**निशि चाभ्यधिकक्लेदा**

स०—कफात् घनपिच्छिलस्रावा कण्डूमती कठिना निशि चाभ्यधिकक्लेदा स्यात् ।

**सर्वैः सर्वाकृति त्यजेत् ।**

स०—सर्वैर्दोषै सर्वाकारा, ता च त्यजेत् ।

**अन्तःस्थितं शल्यमनाहृतं तु**
**करोति नाडीं वहते च साऽस्य ।**
**फेनानुविद्धं तनुमल्पमुष्णं**
**सास्रं च पूयं सरुजं च नित्यम् ॥ ३१ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहिताया षष्ठे उत्तरस्थाने ग्रन्थ्यर्बुदश्लीपदापचीनाडीविज्ञानीयं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥**

स०—अन्तरे स्थित शल्यमनाकृष्ट सन्नाडीं करोति । अस्य च—शल्यवत पुस, सा—नाडी, फेनिल तन्वादिगुण च पूयं नित्यमेव सरुजं वहत इति । उपजातिवृत्तम् ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठ उत्तरस्थाने ग्रन्थ्यर्बुदश्लीपदापचीनाडीविज्ञानीय नाम एकोनत्रिंशोऽध्याय समाप्त ॥ २९ ॥



## त्रिंशोऽध्यायः ।

अधुना ग्रन्थ्यादीना चिकित्सित बिभणिषुराह—

**अथातो ग्रन्थ्यर्बुदश्लीपदापचीनाडीप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**ग्रन्थिष्वामेषु कर्तव्या यथास्वं शोफवत् क्रिया ।**

स०—आमेषु—अपक्वेषु, ग्रन्थिषु यथास्व शोफेष्विव क्रिया—चिकित्सितम् ।

१ 'जस्त्वन्ये' उ स मू । २ 'कण्डुलाः' इ । ३ "इय गण्डमाला अपची च सज्ञाद्वय स्यात् । यथा दूर्वा क्षय याति पुनर्वृद्धिमेव गण्डमाला ॥ अनृजु—अस्पष्टा ॥ पीतमुष्ण पूतियुक्त पूय स्रवति । दिवा च पूत्यादिदोषमति निषिञ्चति ।" इति चन्द्र । "[नाडीव सस्रुते—यथा तोयगर्भया नाड्या तोय स्रवति, तथाऽविच्छिन्नधारया पूयवहनात् नाडीति चोच्यते । एका—अद्वितीया ।]" इतीन्दु । ४ 'र्दिकासरुक्श्वासपी' इति क्वचित् । ५ 'वाऽपथ्य' ई उ चन्द्र । ६ 'दोषै पृथक् समस्तैश्च श' उ । ७ 'ना भवति ।' ट । ८ 'पूय तु दिवा' उ. । 'पूयाश्च दिवा' ई. । 'पूयासुर्दिवा' ण त. ।

१ 'कृतिस्त्यजेत्' इ चन्द्र । २ "('साऽऽस्यात्' इति पाठ । सा—नाडी, आस्यात्—व्रणमुखात्, वहते—स्रवति ।)" इतीन्दु । ३ 'मच्छमुष्ण' चन्द्र । ४ अयं ग्रन्थ्यादिप्रतिषेधश्चरके चि० १२ अध्याये, सुश्रुते चि० १७।१८।१९ अध्यायेषु, अष्टाङ्गसङ्ग्रहे उ० ३५ अध्याये, चास्ति वर्णित ।

**बृहतीचित्रकव्याघ्रीकणासिद्धेन सर्पिषा ॥ १ ॥**
**स्नेहयेच्छुद्धिकाम च, तीक्ष्णै० शुद्धस्य लेपनम् ।**

**स०**–बृहत्यादिभि सिद्धेन सर्पिषा शुद्धिकाम नरं स्नेहयेत्। तत शुद्धस्य–कृतवमनविरेकस्य सत, तीक्ष्णैर्द्रव्यैर्लेपन कार्यम् ।

**संस्वेद्य बहुशो ग्रन्थि विमृद्नीयात् पुनः पुनः ॥ २ ॥**

**स०**–ग्रन्थि सम्यक् स्वेदयित्वाऽङ्गुष्ठादिभि पुन पुनर्विमृद्नीयात् ।

**एष वाते विशेषेण क्रमः, पित्तास्रजे पुनः ।**
**जलौकसो हिमं सर्वं, कफजे वातिको विधिः ॥ ३ ॥**

**स०**–एष क्रमो विशेषेण वाते कार्य ।

पित्तास्रजे ग्रन्थौ जलौकस । सर्वदा शीत प्रलेपादिक हितम् ।

कफजे ग्रन्थौ वातोद्भवग्रन्थिविहित क्रम ।

**तथाऽप्यपक्कं छित्त्वैनं स्थिते रक्तेऽग्निना दहेत् ।**
**साध्वशेषं, सशेषो हि पुनराप्यायते ध्रुवम् ॥ ४ ॥**

**स०**–एवमप्यपक्कमेन ग्रन्थि साधु यथा भवत्यशेष च तथा छित्त्वा स्थिते रक्ते सत्यग्निना दहेत् ।

शेष कस्मान्न क्रियते? इत्याह–सशेष इति । यस्मात् सशेषो ग्रन्थिर्निश्चयेनैव पुनराप्यायते–वृद्धि याति ।

**मांसव्रणोद्भवौ ग्रन्थी यापयेदेवमेव च ।**

**स०**–मासव्रणोद्भवौ ग्रन्थी एवमेव यापयेत् ।

**कार्य मेदोभवेऽप्येतत्तप्तैः फालादिभिश्च तम् ॥ ५ ॥**
**प्रमृद्यात्तिलदिग्धेन छन्नं द्विगुणवाससा ।**
**शस्त्रेण पाटयित्वा वा दहेन्मेदसि सूद्धृते ॥ ६ ॥**

**स०**–मेदोजेऽप्येतत् कार्यम् । तं च-मेदोद्भवं ग्रन्थि, तिलकल्कदिग्धेन द्विगुणवाससा छन्न सन्त तप्तै फालादिभिरुपस्पृशेत् ।

अथवा शस्त्रेण पाटयित्वा मेदसि नि शेषमुद्धृते सत्यग्निना दहेत् ।

**सिराग्रन्थौ नवे पेयं तैलं साहचरं, तथा ।**
**उपनाहोऽनिलहरैर्बस्तिकर्म सिराव्यधः ॥ ७ ॥**

**स०**–सिराग्रन्थौ च नवे साहचर तैल पेयम् ।

तथा वातघ्नैरुपनाहो हितो बस्तिकर्म सिराव्यधश्च ।

---

१ 'हितम्' ट । २ "सर्व–प्रलेपपरिषेकान्नपानौषधम्, हिम–शीतल स्पर्शवीर्याभ्याम्, प्रयोज्यम् ॥ साधु–शोभन कृत्वा, पुनरानह्यते–पुनरापूर्यते ॥ एवमेव–अनन्तरोक्तेन क्रियाक्रमेण प्रयोज्यमानेन सता, यापयेत् ।" इति चन्द्र । "फालो–लोह दल ।" इतीन्दु । ३ 'रानह्यते द्रुतम्' चन्द्र । ४ 'पाटये' इ.उ ण.त स मू.,ट । ५ 'प्रमृज्यात्ति' इ.ई उ.चन्द्र.स.स । ६ 'तूद्धृते' इ.ई.उ.।

**अर्बुदे ग्रन्थिवत् कुर्यात् यथास्व सुतरा हितम् ।**
**[ अजाशकृच्छिग्रुमूललाक्षासुरस(लवणक्षार)–**
**काञ्जिकैः ।**
**वस्त्रबद्धैरुपस्वेद्य मर्दयित्वा प्रलेपयेत् ॥ १ ॥**
**उपोदकापत्रपिण्ड्या छदैराच्छादितं घनम् ।**
**निवेश्य पट्टं बध्नीयाच्छाम्यत्येवं नवार्बुदम् ॥ २ ॥**
**जीर्णे चार्कच्छदसुधासामुद्रगुडकाञ्जिकैः ।**
**प्रच्छाने पिण्डिका बद्धा ग्रन्थ्यर्बुदविलायनी ॥ ३ ॥]**

**स०**–अर्बुदे ग्रन्थाविव सर्व यथायोगं सुतरा हित कुर्यात् ।

**श्लीपदेऽनिलजे विध्येत् स्निग्धस्विन्नोपनाहिते ॥ ८ ॥**
**सिरामुपरि गुल्फस्य द्व्यङ्गुले, पाययेच्च तम् ।**
**मासमेरण्डजं तैल गोमूत्रेण समन्वितम् ॥ ९ ॥**
**जीर्णे जीर्णान्नमश्नीयाच्छुण्ठीशृतपयोन्वितम् ।**
**त्रैवृतं वा पिबेदेवमशान्तावग्निना दहेत् ॥ १० ॥**

**स०**–श्लीपदे वातोत्थे स्निग्धे स्विन्न उपनाहिते च गुल्फस्य द्व्यङ्गुल उपरि सिरा विध्येत् ।

त च–श्लीपदिन, मासमेरण्डोद्भव तैल गोमूत्रयुत पाययेत् । जीर्णे चैरण्डतैले पुराणमन्न शाल्योदन शुण्ठीशृतेन क्षीरेण सहाश्नीयात् । त्रैवृत वा पिबेत् ।

एवमप्यशान्तौ वह्निना दहेत् । तथा गुल्फस्याधस्तात्सिरां मोक्षयेत् ।

**गुल्फस्याधः सिरामोक्षः पैत्ते सर्वं च पित्तजित् ।**

**स०**–पैत्ते तु श्लीपदे सर्व पित्तजिच्चिकित्सितं हितम् ।

**सिरामङ्गुष्ठके विध्वा कफजे शीलयेद्यवान् ॥ ११ ॥**
**सक्षौद्राणि कषायाणि वर्द्धमानास्तथाऽभयाः ।**
**लिम्पेत्सर्षपवार्ताकिमूलाभ्यां धन्वयाऽथवा ॥ १२ ॥**

**स०**–कफजे तु सिरामङ्गुष्ठके विध्वा यवान्नं शीलयेत् ।

---

१ हित–चिकित्सितम् । २ [ ] इ ई उ चन्द्र पुस्तकेषूपलब्धा इमे त्रय श्लोका । ३ 'क्षारससका' ई उ । ४ 'कार्कपिण्याकच्छदै' इ । ५ 'जीर्णार्द्रार्के' ई उ चन्द्र । ६ 'सामुद्र तुल्यकाम्बुभि' ।' ई चन्द्र । ७ 'प्रच्छन्ने पिडका' ई । 'प्रच्छानैर्पिण्डिका' चन्द्र । ८ 'बध्वा ग्रन्थ्यर्बुदविलायनम्' ई चन्द्र । ९ गुल्फस्याध सिरामोक्ष पैत्त एव श्लीपदे युक्त, न वातजे। वातजे तु गुल्फस्योपरि सिरामोक्षस्योक्तत्वात् सुश्रुतसङ्ग्रहाद्यसम्मतत्वाच्चात्रत्यमरुणदत्तव्याख्यानमयुक्तम् । १० "पैत्ते श्लीपदे सिरामोक्षो गुल्फस्याध कार्य । तथा सर्व–पानाहारभेषज, पित्तजित् प्रयोज्यम् ॥ अभया पिप्पलीवद्वर्द्धमाना शीलयेत् ।" इति चन्द्र. । ११ 'धान्यया' इ ण.त चन्द्र. ।

कषायगुणयुक्तानि द्रव्याणि माक्षिकान्वितानि हितानि। तथा वर्धमाना द्वित्र्यादिक्रमेण हरीतक्यो हिता ।

सर्षपैर्वार्ताकीमूलेन च लिम्पेत् । वान्य(वन्व)या-यवासकया वा, निशुंण्ठ्या लिम्पेत् ।

**ऊर्ध्वाधःशोधनं पेयमपच्यां साधितं घृतम् ।**
**दन्तीद्रवन्तीत्रिवृताजालिनीदेवदालिभिः ॥ १३ ॥**
**शीलयेत्कफमेदोघ्नं धूमगण्डूषनावनम् ।**
**सिरयाऽपहरेद्रक्तं, पिबेन्मूत्रेण तार्क्ष्यजम् ॥ १४ ॥**
**[ पलमर्द्धपलं वाऽपि कर्षं वाऽप्युष्णवारिणा ।**
**काञ्चनारत्वचं पीत्वा गण्डमालां व्यपोहति ॥ १ ॥ ]**

**स०**–अपच्यामूर्ध्वाध शोधन दन्त्यादिभि साधित घृत पातव्यम् ।

तथा कफमेदोहर धूमादिकमभ्यसेत् ।

सिरया रक्त हरेत् ।

रसाञ्जन गोमूत्रेणालोडितं पिबेत् ।

**ग्रन्थीनपक्वानालिम्पेन्नाकुलीपटुनागरैः ।**
**स्विन्नान् लवणपोटल्या कठिनाननु मर्दयेत् ॥ १५ ॥**

**स०**–आमान् ग्रन्थीन्नाकुल्यादिभिरालिम्पेत् ।

कठिनान् ग्रन्थींल्लवणपोटल्या स्विन्नान् पश्चादङ्गुष्ठादिना मर्दयेत् ।

**शमीमूलकशिग्रूणां बीजैः सयवसर्षपैः ।**
**लेपः पिष्टोऽम्लतक्रेण ग्रन्थिगण्डविलायनः ॥ १६ ॥**
**[ क्षुण्णानि निम्बपत्राणि क्षिप्तैर्भल्लातकैः सह ।**
**शरावसम्पुटे दग्ध्वा सार्धं सिद्धार्थकैः समैः ॥ १ ॥**
**एतच्छागाम्बुना पिष्टं गण्डमालाप्रलेपनम् । ]**

**स०**–शम्यादिभिरम्लतक्रपिष्टैर्लेपो ग्रन्थ्यादिविम्लाप-(लाय)न ।

**पाकोन्मुखान् स्रुतास्रस्य पित्तश्लेष्महरैर्जयेत् ।**
**अपक्वानेव वोद्धृत्य क्षाराग्निभ्यामुपाचरेत् ॥ १७ ॥**

**स०**–पाकोन्मुखान् ग्रन्थीन् स्रुतरक्तस्य पित्तश्लेष्मघ्नैर्द्रव्यैर्जयेत्।

अथवाऽपक्वानेव ग्रन्थीनुद्धृत्य क्षाराग्निभ्यामुपक्रमेत् ।

**काकादनीलाङ्गलिकानहिकोत्तुण्डिकीफलैः ।**
**जीमूतबीजकर्कोटीविशालाकृतवेधनैः ॥ १८ ॥**
**पाठान्वितैः पलार्धांशैर्विषकर्षयुतैः पचेत् ।**
**प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ॥ १९ ॥**
**अनेन माला गण्डानां चिरजा पूयवाहिनी ।**
**सिध्यत्यसाध्यकल्पाऽपि पानाभ्यञ्जननावनैः ॥ २० ॥**

**स०**–काकादन्यादिभि कल्कैर्द्विकर्षोन्मितैर्विषकर्षयुतै कर-ञ्जतैलस्य प्रस्थ निर्गुण्डीस्वरसस्याढके पचेत् । तेन (अनेन) तैलेन गण्डमाला चिरोत्था पूयवाहिनी चासाध्यप्रायाऽपि पानादिभि- सिध्यति ।

**तैलं लाङ्गलिकीकन्दकल्कपादं चतुर्गुणे ।**
**निर्गुण्डीस्वरसे पक्वं नस्याद्यैरपचीप्रणुत् ॥ २१ ॥**

**स०**–लाङ्गलिकीकन्दकल्कपाद निर्गुण्डीस्वरसे चतुर्गुणे तैलं पक्व नस्याद्यैरपचीजित् । लाङ्गलिकीकन्दकल्क पादो यस्मिंस्तैले तदेवम् ।

**भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्धनैः ।**
**मनःशिलालनलदविशालाकरवीरकैः ॥ २२ ॥**
**गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन च ।**
**ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम् ॥ २३ ॥**
**प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ।**
**पानाद्यैः शीलितं कुष्ठदुष्टनाडीव्रणापचीः ॥ २४ ॥**

**स०**–भद्रश्रीदार्वादिभि पलिकैर्गोमूत्रपिष्टैर्विषस्य चार्धपलेन युक्तैर्ब्राह्मीरसादिभि सयुत सर्षपतैलप्रस्थ पक्व पानाद्यैरभ्यस्त कुष्ठादीन् शीघ्रमेव हन्ति ।

**वचाहरीतकीलाक्षाकटुरोहिणिचन्दनैः ।**
**तैलं प्रसाधितं पीतं समूलामपचीं जयेत् ॥ २५ ॥**

**स०**–वचाहरीतक्यादिभि कल्कितैस्तैल पक्व पीत निर्मूलामपची कुर्यात् ।

**शरपुङ्खोद्भवं मूलं पिष्टं तन्दुलवारिणा ।**
**नस्याल्लेपाच्च दुष्टारुरपचीविषजन्तुजित् ॥ २६ ॥**

**स०**–शरपुङ्खामूल तन्दुलजलेन पिष्ट नस्येन लेपनेन च दुष्टारु प्रभृतीन् हन्ति ।

१ 'सर्षपमूलेन वार्ताकीमूलेन' ण त । २ 'निशुन्ध्या' ट.ड. । "निशुण्ठ्या–मूलरहितया ।" इति त-पुस्तके टिप्पणी । ३ "ऊर्ध्वाध शोधन–उभयानुलोमनम् ।" इति चन्द्र । "नाकुली–सर्पसुगन्धा ।" इतीन्दु । ४ [ ] इ ई उ चन्द्र. पुस्तकेषूपलब्धोऽय श्लोक । ५ 'वोष्णेन वारिणा' ई उ । ६ 'भि कल्कितै साधित' ट । ७ 'ग्रूथबीज.' इ । 'ग्रमाबीजै' ई. । ८ [ ] इ ई उ ट ण त चन्द्र पुस्तकेषूपलब्धोऽय सार्द्ध श्लोक । ९ 'जीर्णानि निम्ब' ण । १० 'क्षिप्तैर्भ' ई उ ण । 'क्षिप्रैर्भ' चन्द्र । 'क्षुण्णैर्भ' गदनि. । ११ 'लाविले' चन्द्र. । १२ 'चोद्धृत्य' इ.उ.ण.त. ।

१ "काकादनी–ज्योतिष्मती । नहिका–शुकनाशा । उत्तैण्डुकी–काकतिक्ता ॥ कल्कस्य पादे–तैलापेक्षया चतुर्थभागे ॥ भद्र–श्वेतचन्दनम् । पानाद्यै –पानाभ्यञ्जननावनै ।" इति चन्द्र । २ 'नलिको' इति क्वचित्, स स. । ३ 'तुण्डकी' इ.ई स. द्व । 'कोत्तैण्डुकी' चन्द्र. । ४ 'पथ्यान्वितै.' ण. । ५ 'वाऽसाध्य' ट ड । ६ 'पादे' चन्द्र. । ७ 'त् । पादमिति पाठे लाङ्ग' ण । ८ 'लमदनवि' उ. । ९ 'कुष्ठं दु' ई.ण.त.चन्द्र. ।

**मूलैरुत्तमकारण्याः पीलुपर्ण्याः सहाचरात् ।**
**सरोध्राभययष्ट्याह्वशताह्वाद्वीपिदारुभिः ॥ २७ ॥**
**तैलं क्षीरसमं सिद्धं नस्येऽभ्यङ्गे च पूजितम् ।**

स०–उत्तमकारण्यादीना मूलैस्तैल क्षीरतुल्य सिद्ध नस्येऽभ्यङ्गे च हितम् । उत्तमैवोत्तमकेति "अन्यतरस्याम्" इति ह्रस्व । उत्तमका चासावरणिश्च(णी च) उत्तमकारणीत्यर्थ । उत्तमकारणी–करम्भ (म्भा) ।

**गोव्यजाश्वखुरा दग्धाः कटुतैलेन लेपनम् ॥ २८ ॥**
**ऐङ्गुदेन तु कृष्णाहिर्वायसो वा स्वयं मृतः ।**

स०–गवादीना खुरा दग्धा कटुतैलेन विमिश्रितेन लेपो हित ।

कृष्णसर्पो दग्ध इङ्गुदीतैलेन, काको वा स्वय मृत इङ्गुदीतैलेन, लेपन हितम् ।

**इत्यशान्तौ गदस्यान्यपार्श्वेजङ्घासमाश्रितम् ॥ २९ ॥**
**बस्तेरूर्ध्वमधस्ताद्वा मेदो हृत्वाऽग्निना दहेत् ।**

स०–एवमप्यशान्तौ सत्या रोगस्यापरपार्श्वजङ्घासमाश्रित बस्तेरूर्ध्वमधस्ताद्वा मेदो हृत्वा ज्वलनेन दहेत् ।

**स्थितस्योर्ध्वं पदं मित्वा तन्मानेन च पार्ष्णितः ३०**
**तत ऊर्ध्वं हरेद् ग्रन्थीनित्याह भगवान्निमिः ।**

स०–स्थितस्य पुस ऊर्ध्व पद मित्वा तन्मानेन पार्ष्णिप्रदेशात् तावन्मात्र मित्वा तत ऊर्ध्व ग्रन्थीन् हरेत्, इति निमिमुनि प्राज्याशयो वदतीति ।

**पार्ष्णिं प्रति द्वादश चाङ्गुलानि**
**मुक्त्वेन्द्रबस्तिं च गदान्यपार्श्वे ।**
**विदार्य मत्स्याण्डनिभानि मध्या-**
**ज्जालानि कर्षेदिति सुश्रुतोक्तिः ॥ ३१ ॥**

स०–पार्ष्णि लक्षीकृत्य द्वादशाङ्गुलानि मित्त्वा इन्द्रबस्ति मुक्त्वा गदस्यापरपार्श्वे विदार्य मध्यान्मत्स्याण्डसदृशानि जालानि कर्षेत्, एव सुश्रुतस्य वचनम् । उपजातिवृत्तम् ।

**आ गुल्फकर्णात्सुमितस्य जन्तो-**
**स्तस्याष्टभागं खुडकाद्विभज्य ।**
**घ्राणार्जवेऽधः सुरराजबस्ते-**
**र्भित्त्वाऽक्षमात्रं त्वपरे वदन्ति ॥ ३२ ॥**

स०–गुल्फान्त यावत् कर्णादारभ्य प्राणिन सुष्ठु मितस्य कर्णाना ह्रस्वलम्बत्वेनानियतस्थानत्वात् स्थाननियम करोति । घ्राणार्जव इति । एतदुक्त भवति । नासाग्रात् कर्ण प्रति सूत्रत्वे सति सुमितस्य कर्णाद् गुल्फ यावन्न त्वेवमेव, तथा तस्य नरस्य खुडकाद् गुल्फादष्टभाग विभज्य–त्यक्त्वा, इन्द्रबस्तेरधस्ताद्भित्त्वाऽक्षमात्र कर्षेत्, इत्यपरे वदन्ति । इन्द्रवज्रावृत्तम् ।

**उपनाह्यानिलान्नाडीं पाटिता साधु लेपयेत् ।**
**प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः ससैन्धवैः ॥ ३३ ॥**

स०–वातान्नाडीमुपनाह्य पाटयित्वा साधु कृत्वाऽपामार्गादिभिर्लेपयेत् ।

**पैत्तीं तु तिलमञ्जिष्ठानागदन्तीनिशाह्वयैः ।**

स०–पैत्ती तु पाटिता सतीं तिलादिभि प्रदेहयेत् ।

**श्लैष्मिकीं तिलसौराष्ट्रीनिकुम्भारिष्टसैन्धवैः ॥ ३४ ॥**

स०–श्लैष्मिकीं च पाटिता तिलसौराष्ट्र्यादिभि प्रदेहयेत् ।

---

१ "उत्तमवारुणीपीलुपर्णीसहाचरेभ्यो मूले सरोध्रादिभि कल्कीकृतै. ॥ गदस्यान्यपार्श्वे–वामपार्श्वे रुजाया दक्षिणजङ्घासमाश्रितम् ॥ ऊर्ध्व स्थितस्य पुस' पद मित्वा,तन्मानेन च–पदप्रमाणेन, पार्ष्णितो जङ्घां मित्वा ।" इति चन्द्र । २ 'त्तरवारुण्या.' उ ण त ,ट । 'त्तरवारिण्या.' इ । 'त्तमवारुण्या.' चन्द्र । ३ 'त्तमारणी' द त. । ४ 'त्तमारणी' ट ण. । ५ 'गोगजाश्व' इ उ. । ६ 'गदे चान्य' उ. । ७ 'पार्श्वे ज' इ ई.चन्द्र. । ८ 'पार्श्व च' ट.ण.त. । ९ "पार्ष्णि.–गुल्फस्य पश्चाद्भाग । जङ्घामध्ये द्व्यङ्गुलमिन्द्रबस्ति , जेज्जटाचार्यस्तु अर्धाङ्गुलमाह ।" इति डल्हण । १० 'द्वे दश० मित्वेन्द्र' स.सु. ।

१ आ खुल(ड)कात् गुल्फकर्णात् गुल्फो कर्णाविव यस्य स तथा । खुल(ड)को–जङ्घापादयो. सन्धि । सुरराजबस्ते –इन्द्रबस्ते , अष्टभाग जङ्घायाश्चरणहीनाया विशत्यङ्गुलाया अष्टमो भाग सार्धमङ्गुलद्वय हित्वा, यद्यपि द्व्यङ्गुल इन्द्रबस्तिस्तथाऽपि तदुपघातपरिहारार्थं सार्धमेवाङ्गुलद्वय श्रे(हे)यम् । अन्ये तु अक्षिमात्रमेव द्व्यङ्गुल नेत्रप्रमाण हित्वेति वदन्ति । घोणर्जुवेध इति गुल्फकर्णस्य खुलकस्य, घोणा नासा इव घोणा, यथोत्तरीयकण्डरा, तस्या ऋजु –अवक्रो, वेधो–व्यध । गूढपदभङ्गटिप्पनेऽन्यथा व्याख्यातम् । आगुल्फकर्णादिति आङत्राभिविधौ न मर्यादायाम्, गुल्फकर्णावभिव्याप्य, सुमितस्य–सुनिश्चित मितस्य, तस्य प्रमाणस्य षट्सप्तत्यङ्गुलमितस्याष्टमभाग सार्धनवाङ्गुलमात्र,खुलकात्–पार्ष्णिभागात् द्व्यङ्गुलप्रमाणात्, विभज्य पृथक्कृत्य, घोणा–नासा, तस्या ऋजु यथा भवति तथाऽवक्रो, वेध. कर्तव्य । अक्षिमात्र–अङ्गुलद्वयप्रमाणम् ।" इति डल्हण । "जन्तो –पुरुषस्य, आ गुल्फकर्णादङ्गुलै सुमितस्य सतस्तस्य खुडकात् पार्ष्णितोऽष्टभाग विभज्य सुरराजबस्तेर्मर्मणोऽध. नासार्जवे भागेऽक्षमात्र शस्त्रेण भित्त्वा–विदार्य, मेद आकर्षेत् ।" इति चन्द्र । २ 'घोणार्जवे' इ.ई. । 'घोणर्जुवेध ' स.सु । ३ 'स्तेर्हित्वाऽक्षिमात्र' स.सु । ४ 'मात्रामपरे' ई.उ. । ५ 'तिलयष्ट्याह्वनि' वृन्द.चक्र.गदनि. ।

**शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ।**

स०—शल्यजा गतिं छिन्नां शोधितां च तिलमध्वाज्यैर्लेपयेत् ।

**अशस्त्रकृत्यामेषिण्या भित्त्वाऽन्ते सम्यगेषिताम् ३५**
**क्षारपीतेन सूत्रेण बहुशो दारयेद् गतिम् ।**

स०—शस्त्रेण छेदनानर्हां गतिं सम्यगेषितामेषिण्या भित्त्वाऽन्ते क्षारयुक्तेन सूत्रेण पुनःपुनर्दारयेत् ।

**व्रणेषु दुष्टसूक्ष्मास्यगम्भीरादिषु साधनम् ॥ ३६ ॥**
**या वर्त्यो यानि तैलानि तन्नाडीष्वपि शस्यते ।**

स०—दुष्टेषु सूक्ष्ममुखेषु गम्भीरादिषु व्रणेषु यत्साधनं कथितं, या वर्तयः उक्ताः, यानि तैलानि, तत्—एतच्चिकित्सितं, नाडीष्वपि युज्यते ।

**पिष्टं चञ्चुफलं लेपान्नाडीव्रणहरं परम् ॥ ३७ ॥**

स०—चञ्चोः फलं पिष्टं लेपेन परं नाडीव्रणहृत् ।

**घोण्टाफलत्वक् लवणं सलाक्षं**
**बूकस्य पत्रं वनितापयश्च ।**
**स्नुगर्कदुग्धान्वित एष कल्को**
**वर्तीकृतो हन्त्यचिरेण नाडीम् ॥ ३८ ॥**

स०—घोण्टाफलादिकं स्त्रीक्षीरस्नुगर्कदुग्धयुत एष कल्को वर्तीकृतो द्रागेव नाडीं हन्ति । इन्द्रवज्रावृत्तम् ।

**सामुद्रसौवर्चलसिन्धुजन्म-**
**सुपक्वघोण्टाफलवेश्मधूमाः ।**
**आम्रातगायत्रिजपल्लवाश्च**
**कटंकटेर्यावथ चेतकी च ॥ ३९ ॥**
**कल्केऽभ्यङ्गे चूर्णे**
**वर्त्यां चैतेषु शील्यमानेषु ।**
**अगतिरिव नश्यति गति-**
**श्चपला चपलेषु भूतिरिव ॥ ४० ॥**

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठ उत्तरस्थाने ग्रन्थ्यर्बुदश्लीपदापचीनाडीप्रतिषेधो नाम त्रिंशोऽध्यायः ॥ ३० ॥

स०—समुद्रलवणादिकं कल्केऽभ्यङ्गे चूर्णे वर्त्यां चामीष्वभ्यस्यमानेष्वविद्यमानगतिरिव गतिः शीघ्रं नश्यति । चपला चपलेषु नरेषु भूतिः—वित्तं, यथेति । उपजातिरार्या च ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठ उत्तरस्थाने ग्रन्थ्यर्बुदश्लीपदापचीनाडीप्रतिषेधो नाम त्रिंशोऽध्यायः समाप्तः ॥ ३० ॥



## एकत्रिंशोऽध्यायः ।

क्षुद्ररोगविज्ञानं क्रमप्राप्तमाचिख्यासुराह—

**अथातः क्षुद्ररोगविज्ञानीयं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसंनिभा ।**
**पिटिका कफवाताभ्यां बालानामजगल्लिका ॥ १ ॥**

स०—बालानां कफवाताभ्यां स्निग्धादिगुणयुक्ता पिटिकाऽजगल्लिकाख्या स्यात् ।

**यवप्रख्या यवप्रख्या ताभ्यां मांसाश्रिता घना ।**

स०—ताभ्यां—वातकफाभ्यां, यवप्रख्या—यवसंज्ञा । सा यवप्रख्या—यवाकारा, मांसाश्रिता घना कठिना च ।

१ "छिन्नशोधितां—पाटयित्वोद्धृतशल्याम् ॥ साधनं—चिकित्सितम् ॥ घोण्टायाः फलस्य त्वक्, सलाक्षं लवणं, पत्रं बूकस्य, वनितायाः—स्त्रियाः पयः ॥ कटंकटेर्यौ—हरिद्राद्वयम् । चेतकी—काङ्गुणी । यथा, अगतिः—अशरणः पुमान्, नश्यति—विनाशं प्राप्नोति। यथा वा, चपलेषु नरेषु भूतिः—समृद्धिः, चपला सती नश्यति ।" इति चन्द्र । २ 'पूरयेद्' ई उ । ३ 'कल्पयेत् ।' स. स । ४ 'लवणानि लाक्षा पूगीफलं चालवणं च पत्रम् । स्नु' स सु चक्र. । 'त्वङ्मदनात् फलानि पूगस्य च त्वग्लवणं च मुख्यम् । स्नु' वृन्द. गदनि.। ५ 'सुक्रस्य' ई. । 'वृषस्य' उ । ६ 'केतकी' उ. । 'दीलिका च' ई. । ७ 'सेव्यमानेषु' ण.त. ।

१ "[क्षुद्रशब्दः स्वल्पाधमक्रूरपर्यायवाची। 'क्षुद्रः स्वल्पेऽधमे क्रूरे' इति वैजयन्ती। उक्तधर्मयुक्ता रोगाः क्षुद्ररोगाः । उक्तं च—'मन्दवेगा महावेगा व्याधयोऽल्परुजोऽरुजः । ये महान्तोऽल्पकाश्चैव क्षुद्ररोगास्तु ते स्मृताः ॥' इति। अत्रापि स्वल्पाः—मश(ष)व्यङ्गतिलकालकादयः । अधमाः—रुद्धगुदशर्करार्बुदकुनखादयः । क्रूराः—मसूरिकाविस्फोटाग्निरोहिण्यादयः । ] बालानां प्रायः इति बोद्धव्यम् ।" इतीन्दुः । २ अयं क्षुद्ररोगविज्ञानीयश्चरके चि० १२ अध्याये सू० १८ अध्याये च, सुश्रुते नि० १३ अध्याये, अष्टाङ्गसङ्ग्रहे उ० ३६ अध्याये चास्ति वर्णितः । ३ 'ज्ञानं व्या' ण त चन्द्र स.मू. । ४ 'ग्धा' 'भा' 'काः' इ उ स.स. । ५ 'सन्निभा' त चन्द्र । ६ 'पिडका' ई.चन्द्र स.सं. । ७ 'यवाकारा' इ.ई.स.मू. ।

**अवक्त्रा चालजी वृत्ता स्तोकपूया घनोन्नता ॥ २ ॥**
**ग्रन्थयः पञ्च वा षड्वा कच्छपी कच्छपोन्नताः ।**

स०-ग्रन्थय पञ्च वा षड्वा, किम्भूता ? असुखास्तथाऽलजीव वृत्ता -वर्तुला , स्तोकपूया घना उन्नताश्च कच्छपीत्युच्यते । सा च कच्छपोन्नता स्यात् ।

**कर्णस्योर्ध्वं समन्ताद्वा पिटिका कठिनोग्ररुक् ॥ ३ ॥**
**शालूकाभा पनसिका**

स०-कर्णस्योपरिष्टात् परितो वा पिटिका कठिना तीव्ररुजा शालूकनिभा पनसिकासज्ञा ।

**शोफस्त्वल्परुजः स्थिरः ।**
**हनुसन्धिसमुद्भूतस्ताभ्यां पाषाणगर्दभ ॥ ४ ॥**

स०-शोफोऽल्परुज स्थिरो हनुसन्धिसमाश्रितो वातकफाभ्या पाषाणगर्दभ ।

**शाल्मलीकण्टकाकारा• पिटिकाः सरुजो घनाः ।**
**मेदोगर्भा मुखे यूना ताभ्या च मुखदूषिकाः ॥ ५ ॥**

स०-वातकफाभ्या शाल्मलीकण्टकसदृशा पिटिका रुजान्विता घना मेदोगर्भास्तरुणाना मुखे स्यु ।ताँश्च मुखदूषिका ।

**ते पद्मकण्टका ज्ञेया यै• पद्ममिव कण्टकैः ।**
**चीयते नीरुजै• श्वेतैः शरीर कफवातजैः ॥ ६ ॥**

स०-पद्मकण्टकसज्ञास्ते वेद्या , यै कण्टकैर्नीरुजै श्वेतवर्णैर्वातकफजै पद्ममिव शरीर चीयते ।

**पित्तेन पिटिका वृत्ता पक्वोदुम्बरसन्निभा ।**
**महादाहज्वरकरी विवृता विवृतानना ॥ ७ ॥**

स०-पित्तेन या पिटिका वर्तुला पक्वोदुम्बरफलनिभा महादाहज्वरकृच्च, सा विवृताख्या विवृतमुखा स्यात् ।

**गात्रेष्वन्तश्च वक्त्रस्य दाहज्वररुजान्विताः ।**
**मसूरमात्रास्तद्वर्णास्तत्संज्ञाः पिटिका घनाः ॥ ८ ॥**

स०-गात्रेषु-अवयवेषु, वक्त्रस्य चान्तरे दाहादियुता मसूरप्रमाणास्तद्वर्णास्तत्सज्ञा मसूरिका घना पिटिका ।

**ततः कष्टतराः स्फोटा विस्फोटाख्या महारुजाः ।**

स०-ताभ्यो मसूरिकाभ्यो दारुणतमा स्फोटा महारुजा विस्फोटसज्ञा ।

**या पद्मकर्णिकाकारा पिटिका पिटिकाचिता ॥ ९ ॥**
**सा विद्धा वातपित्ताभ्या**

स०-पद्मकर्णिकानिभा या पिटिका पिटकैराचिता, सा वातपित्ताभ्या विद्धाख्या स्यात् ।

**ताभ्यामेव च गर्दभी ।**
**मण्डला विपुलोत्सन्ना सरागपिटिकाचिता ॥ १० ॥**

स०-ताभ्यामेव-वातपित्ताभ्या, गर्दभीसज्ञा मण्डलाकारा विस्तीर्णा तथोत्सन्ना सरागपिटकैराचिता ।

**कक्षेति कक्षासन्नेषु प्रायो देशेषु साऽनिलात् ।**
**पित्ताद्भवन्ति पिटिका• सूक्ष्मा लाजोपमा घनाः ११**

स०-कक्षानिकटेषु प्रदेशेषु सा गर्दभी कक्षेत्युच्यते । सा च वातात् स्यात् ।

तस्यामेव पित्तेन सूक्ष्मा पिटिका लाजाकारा घना कक्षासञ्ज्ञा एव स्यु ।

**तादृशी महती त्वेका गन्धनामेति कीर्तिता ।**

स०-तादृशी-लाजसदृशी, महती पिटिकैका गन्धनामेति स्मृता ।

**घर्मस्वेदपरीतेऽङ्गे पिटिकाः सरुजो घनाः ॥ १२ ॥**
**राजिकावर्णसंस्थानप्रमाणा राजिकाह्वयाः ।**

स०-घर्मस्वेदयुक्ते शरीरे पिटिका रुजायुता घना राजिकावर्णा राजिकाकारा राजिकाप्रमाणा राजिकासञ्ज्ञा ।

**दोषैः पित्तोल्बणैर्मन्दैर्विसर्पति विसर्पवत् ॥ १३ ॥**
**शोफोऽपाकस्तनुस्ताम्रो ज्वरकृज्जालगर्दभ• ।**

स०-पित्ताधिकैर्दोषैर्मन्दैर्य शोफो विसर्प इव विसर्पति, तथाऽपाकस्तनुस्ताम्रवर्णो ज्वरकारी च, स जालगर्दभ स्यात् ।

**मलैः पित्तोल्बणै• स्फोटा ज्वरिणो मासदारणाः १४**

---

१ "अवक्त्रा-मुखेन रहिता,वृत्ता-वर्तुला,स्तोकपूया घनोन्नता च या,सा नाम्नाऽलजीत्युच्यते॥ पञ्च वा ग्रन्थय षड्वा ग्रन्थय• कच्छपोन्नता भवन्ति, सा कच्छपीत्युच्यते ।" इति चन्दनन्दनव्याख्यानमेव युक्तम्, सुश्रुतसम्मतत्वात् । तथा च सुश्रुत (नि अ १३। ६-८)-"धनामवक्त्रा पिडकामुन्नता परिमण्डलाम् । अन्धालजीमल्पपूया ता विद्यात्कफवातजाम् ॥ ग्रन्थय पञ्च वा षड्वा दारुणा कच्छपोन्नता । कफानिलाभ्यामुद्भूता विद्यात्ता कच्छपीमिति ॥" इति । अत एव चात्रत्य "ग्रन्थय पञ्च वा० कच्छपीत्युच्यते ।" इत्यरुणदत्तव्याख्यान "सैव (यवप्रख्यैव) अवक्त्रा सतीत्यलजीत्युच्यते॥ वृत्तत्वादिगुणा पञ्च वा षड्वा कच्छपवदुन्नता ग्रन्थयो नाम्ना कच्छपी ।" इतीन्दुव्याख्यान चायुक्तम् । २ 'क्त्राश्चालजीवृत्ता ० न्नता ।' अरुण । 'क्त्रा त्वलजी, वृत्ता ०न्नता ।' स स• । ३ 'पोन्नता' इ ई.त अरुण स मू । ४ 'पिटका' ई चन्द्र.स स । ५ शालूक-पद्मकन्द । ६ 'दूषका.' ई. । ७ 'ते च मुखदूषका:' ट.ण.त । ८ 'म्बरनिभा' ण.त. ।

१ "पद्मकर्णिकाकारा-अग्रे महती तनुमूला ॥ तादृशीति कक्षासन्नेषु सानिलात् पित्तात्॥ राजिका –रक्तसर्षपा ॥ विसर्पति–व्याप्नोति ।" इतीन्दु । "तादृशीति पित्तोद्भवा लाजोपमा च ॥ मन्दै –मन्दगतिभि ।" इति चन्द्र । २ 'पिटका' ई चन्द्र स स । ३ 'विद्धा स्यात्' ण त. । ४ इन्दुस्तु "ताभ्यामेव च गर्दभी ।" इत्यनेन गर्दभी, "मण्डला०चिता ।" इत्यनेन मण्डला, "कक्ष्येति० घना ।" इत्यनेन च कक्ष्या वर्णयति । ५ 'कक्ष्येति' स स । ६ कक्षासन्नेषु–बाहुपार्श्वांसादिषु । ७ चन्द्रन दनस्तु "या पित्तोद्भवा लाजोपमा सूक्ष्मा घनाश्च ता लाजा इत्युक्ता ।" इति लाजा वर्णयति, किन्तु सुश्रुतादिभिररुणदत्तेन्द्वादिभिश्च टीकाकारैः कैश्चिदपि न ता वर्णिता , अतोऽयुक्त तत् । ८ 'जालोपमा' उ । ९ 'लाजाकारा' ट.। १० 'दारिणः' इ.चन्द्र । 'दारुणाः' उ ण.।

**कक्षाभागेषु जायन्ते येऽग्न्याभा: साऽग्निरोहिणी ।**
**पञ्चाहात्सप्तरात्राद्वा पक्षाद्वा हन्ति जीवितम् ॥ १५ ॥**

**स०**—पित्तोल्बणैर्मलैर्ज्वरवतो मांसदारणा स्फोटा कक्षाप्रदेशेषु येऽग्निसदृशा जायन्ते, साऽग्निरोहिणीत्युच्यते । पञ्चाहेन सप्तरात्रेण पक्षेण वा जीवित हन्ति ।

**त्रिलिङ्गा पिटिका वृत्ता जत्रूर्ध्वमिरिवेल्लिका ।**

**स०**—त्रिदोषलक्षणा पिटिका वर्तुला जत्रुण ऊर्ध्वमिरिवेल्लिकाख्या ।

**विदारीकन्दकठिना विदारी कक्षवङ्क्षणे ॥ १६ ॥**

**स०**—विदारीकन्दवत् कठिना कक्षाया वङ्क्षणे च विदारी स्यात् । कक्षा च वङ्क्षण च कक्षावङ्क्षण तस्मिन् । "पाण्यो" (?) इत्यादिना ह्रस्व ।

**मेदोनिलकफैर्ग्रन्थिः स्नायुमांससिराश्रयैः ।**
**भिन्नो वसाज्यमध्वाभं स्रवेत्तत्रोल्बणोऽनिलः ॥१७॥**
**मांसं विशोष्य ग्रथितां शर्करामुपपादयेत् ।**
**दुर्गन्धं रुधिरं क्लिन्नं नानावर्णं ततो मलाः ॥ १८ ॥**
**तां स्रावयन्ति निचितां विद्यात्तच्छर्करार्बुदम् ।**

**स०**—मेद पवनकफै स्नायुमाससिराश्रयैर्ग्रन्थि स्यात् । स च भिन्नो वसाघृतमधुनिभ स्रवेत् । तस्मिन् पवनोऽधिको मांसं विशोष्य ग्रथिता शर्करा कुर्यात् । ततो दोषास्ता–शर्करां, निचिता दुर्गन्ध लोहित क्लिन्न विविधवर्ण स्रावयन्ति । तत्–एवविध, शर्करार्बुद विद्यात् ।

**पाणिपादतले सन्धौ जत्रूर्ध्वं वोपचीयते ॥ १९ ॥**
**वल्मीकवच्छनैर्ग्रन्थिस्तद्वद्बह्वणुभिर्मुखैः ।**
**रुग्दाहकण्डूक्लेदाढ्यैर्वल्मीकोऽसौ समस्तजः ॥२०॥**

**स०**—पाणितले पादतले सन्धौ जत्रूर्ध्वं वा ग्रन्थिर्वल्मीक इव शनैरुपचीयते । तद्वत्–वल्मीकवत्, बहूनि च तान्यणूनि च, तैर्भूरिसूक्ष्मैर्वदनैरुपलक्षितो रुग्दाहकण्डूक्लेदबहुलो वल्मीकाख्योऽसौ त्रिदोषज ।

**शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ।**
**ग्रन्थिः कीलवदुत्सन्नो जायते कदरं तु तत् ॥ २१ ॥**

**स०**—शर्करादिभिरुन्मथिते पादे कण्टकादिभिर्वा क्षते कीलसदृशो ग्रन्थिरुत्सन्नो जायते, तत्कदर नाम ।

**वेगसन्धारणाद्वायुरपानोऽपानसंश्रयम् ।**
**अणूकरोति बाह्यान्तर्मार्गमस्य ततः शकृत् ॥ २२ ॥**

**कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः ।**

**स०**—अपानाख्यो वायुर्वेगसन्धारणादपानाश्रय मार्गं बाह्यान्तरणूकरोति । ततोऽस्य–आतुरस्य, कृच्छ्रेण शकृन्निर्याति । अय रोगो रुद्धगुदो मत ।

**कुर्यात्पित्तानिलं पाकं नखमांसे सरुग्ज्वरम् ॥ २३ ॥**
**चिप्यमक्षतरोगं च विद्यादुपनखं च तम् ।**

**स०**—पित्तानिल कर्तृ नखमासे सरुग्ज्वर पाक कुर्यात् । त चिप्यं तथाऽक्षतरोगमुपनख च विद्यात् ।

**कृष्णोऽभिघाताद्रूक्षश्च खरश्च कुनखो नखः ॥ २४ ॥**

**स०**—अभिघातात् कृष्णवर्णो रूक्षश्च खरश्च नख कुनखाख्य ।

**दुष्टकर्दमसंस्पर्शात् कण्डूक्लेदान्वितान्तराः ।**
**अङ्गुल्योऽलसमित्याहुस्**

**स०**—दुष्टकर्दमसस्पर्शात् कण्डूक्लेदयुतान्तरा अङ्गुल्योऽलसमिति वदन्ति ।

**तिलाभांस्तिलकालकान् ॥२५॥**
**कृष्णानवेदनांस्त्वक्स्थान्**

**स०**—तिलसदृशान् कृष्णवर्णानरुजास्त्वक्स्थांस्तिलकालकानाहु ।

**मषांस्तानेव चोन्नतान् ।**

**स०**—तानेव तिलकालकानुन्नतान् मषानाहु ।

**मषेभ्यस्तून्नततरांश्चर्मकीलान् सितासितान् ॥ २६ ॥**

**स०**—मषेभ्य सकाशादुन्नततरान् वर्णत सितासितान् चर्मकीलास्तानाहु ।

**तथाविधो जतुमणिः सहजो लोहितस्तु सः ।**

**स०**—तत्प्रमाणो जतुमणि सहजो लोहितवर्णश्चासौ स्यात् ।

**कृष्णं सितं वा सहजं मण्डलं लाञ्छनं समम् ॥ २७ ॥**

**स०**—शुक्ल कृष्ण वा सहज मण्डलाकार शरीरसम लाञ्छनमाहु ।

**शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु ।**
**श्यामलं मण्डलं व्यङ्गं, वक्त्रादन्यत्र नीलिका ॥ २८ ॥**
**परुषं परुषस्पर्शं व्यङ्गं श्यावं च मारुतात् ।**
**पित्तात्ताम्रान्तमानीलं, श्वेतान्तं कण्डुमत्कफात् २९**

१ 'कक्ष्याभा' स सं. । २ 'पिडका' ई.चन्द्र स स । ३ "तत्र–तेषु मध्ये । उपपादयेत्–जनयेत् ।" इति चन्द्र । "तत्र–स्रावयुक्ते ग्रन्थौ । उल्बण –प्रासबल. । ग्रथिता–कठिनाम् । निचिता –वृद्धा. सन्त ॥ बहुभिरणुभिश्च रुग्दाहाद्याढ्यैर्मुखैरुपलक्षित ॥ शर्करया–शिलाखण्डिकया । [वेगसन्धारणात्–अधोवातपुरीषादिवेगधारणात् । बाह्यान्तर्मार्गं–वलीत्रितयमित्यर्थ ।]" इतीन्दु । ४ 'दुर्गन्धि' ई.उ सं द्द । ५ 'तत सिरा.। स्रवन्ति सहसा रक्त' स सु. । ६ 'निचितां' ई उ चन्द्र.स स. । ७ 'चोपची' ई.उ.स.मू. । ८ 'दाढ्यो व' अरुण. । ९ 'संश्रय.' उ. ।

१ 'तत्' ई उ.,ट. । २ 'मसा' इ । 'मशां' चन्द्र स.सं । 'माषां' ण । ३ 'मसेभ्य ' इ । 'मशेभ्य ' चन्द्र.स सं. । ४ 'सरुजो' इति सङ्ग्रहद्वयस्थ पाठ इन्दुसम्मतोऽप्ययुक्त, "नीरुज सममुत्सन्न मण्डल कफरक्तजम् । सहज रक्तमीषच्च श्लक्ष्ण जतुमणिं विदु ॥" इति सुश्रुतोक्ते (नि अ.१३।४१), एव माधवचरकोक्तेश्च । ५ "तदेव वक्त्रादन्यत्र देशे स्थित नीलिकेति नाम लभते । सा च स्वरूपाविशेषान्न रोगान्तरम् ।" इतीन्दु । ६ 'ताम्रं तथा नीलं' ई.उ. । ७ 'श्वेताभ' उ. ।

**रक्ताद्रक्तान्तमाताम्रं सौषं[2] चिमिचिमायते ।**

स०—वातपित्ताच्छोकादिक्रुद्धात् तनु श्यामवर्ण मण्डलाकार मुखे व्यङ्ग वदन्ति । मुखादन्यत्र नीलिका ।

परुषच्छविस्तथा परुषस्पर्श श्यामवर्ण च व्यङ्ग वातात् स्यात् ।

पित्तेन ताम्रान्त किञ्चिन्नीलम् ।

कफेन श्वेतान्त सकण्डु च स्यात् ।

रक्ताद्रक्तान्त किञ्चित्ताम्रसोषयुत चिमिचिमायते च ।

**वायुनोदीरित[2]. श्लेष्मा त्वचं प्राप्य विशुष्यति ॥३०॥**
**ततस्त्वग्जायते पाण्डुः क्रमेण च विचेतना ।**
**अल्पकण्डूर्[3]विक्लेदा सा प्रसुप्तिः प्रसुप्तितः[2] ॥ ३१ ॥**

स०—पवनेन कफ प्रेरितस्त्वच प्राप्य विशुष्यति । अनन्तर त्वक् पाण्डु क्रमेण च विचेतना अल्पकण्डूर्विक्लेदरहिता च जायते । सा प्रसुप्तित प्रसुप्ति स्यात् ।

**[2]असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ।**
**मण्डलान्यतिकण्डूनि रागवन्ति बहूनि च ॥ ३२ ॥**
**उत्कोठः**

स०—असम्यग्वमनेन प्रेरितपित्तश्लेष्मान्ननिग्रहैर्मण्डलान्यतिशयकण्डूनि लोहितानि बहूनि च उत्कोठ स्यात् ।

**सोऽनु[4]बद्ध[2]स्तु कोठ इत्यभिधीयते ।**

स०—स एवानुबद्ध कोठ इत्युच्यते ।

**प्रोक्ताः षट्त्रिंशदित्येते[5] क्षुद्ररोगा विभागशः ॥३३॥**
**[ [6]यान्[7]विज्ञाय मुह्येत चिकित्सायां चिकित्सकः । ]**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने क्षुद्ररोगविज्ञानीयं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥**

१ 'सोष' स द्व. । 'मुख चि' इ उ । २ "सह ऊषेण—खेदारतिमता प्रादेशिकेन दाहेन, वर्तत इति सोषम् ॥ उदीरत —स्थानात् क्षिप्त । प्रसुप्तित —अचैतन्याद्धेतो । [यदा यदा पवनोदीरितेन त्वग्गतेन शुष्केण श्लेष्मणा त्वक् पूर्यते, तदा तदा निरवकाशतया तत्र रक्तादिवहनाभावात् चेतनाहानि स्यात्, इति क्रमार्थ ।]" इतीन्दु । "सौष—सदाहम् । सर्षपकल्कलिप्तमिव चिमिचिमायते ॥ असम्यग्वमनेन यान्युदीर्णानि—प्रेरितानि, पित्तश्लेष्मान्नानि तेषा निग्रहै । शरीरे मण्डलानि—चक्रकमलादीनि । अनुबद्ध —अनुषङ्गवान् ।" इति चन्द्र । ३ 'रपक्लेदा' इ. । ४ 'नुबन्धस्तु' ई.उ.स द्व । ५ एते—अजगल्लिका[1]यवप्रख्या[2]लजी[3]कच्छपी[4]पनसिका[5]पाषाणगर्दभ[6]मुखदूषिका[7]पद्मकण्टक[8]विवृता[9]मसूरिका[10]विस्फोट[11]विद्धा[12]गर्दभी[13]कक्षा[14]गन्धनामा[15]राजिका[16]जालगर्दभा[17]ग्निरोहिणी[18]रिवेल्लिका[19]विदारी[20]शर्करार्बुद[21]वल्मीक[22]कदर[23]रुद्धगुद[24]चिप्प[25]कुनख[26]अलस[27]तिलकालक[28]मष[29]चर्मकील[30]जतुमणि[31]लाञ्छन[32]व्यङ्ग[33]प्रसुप्त्यु[34]त्कोठ[35]कोठसञ्ज्ञा[36] षट्त्रिंशत् । ६ [ ] श्लोकार्द्धमिद इ पुस्तके सङ्ग्रहपुस्तके चोपलभ्यते । ७ 'यान् विज्ञाय न सम्मुह्येच्चिकि' स.द्व. ।

स०—इति—अनेन प्रकारेण, षट्त्रिंशत् क्षुद्ररोगा विभागेनोक्ता इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने क्षुद्ररोगविज्ञानीय नामैकत्रिंशोऽध्याय समाप्त ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ।

अथैषा चिकित्सित विवक्षुराह—

**अथातः क्षुद्ररोगप्रतिषेधं[1] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**

( गद्यसूत्रे ॥ २ ॥ )

**विस्रा[2]वयेज्जलौकोभिरपक्वामजगल्लिकाम् ।**

स०—अजगल्लिकामपक्वा जलजन्मभिर्विस्रावयेत् ।

**स्वेदयित्वा यवप्रख्यां विलयाय प्रलेपयेत् ॥ १ ॥**
**दारुकुष्ठमनोह्वालैः**

स०—यवप्रख्या स्वेदयित्वा विलायनार्थं प्रलेपयेद्दार्वादिभि ।

**इत्यापाषाणगर्दभात् ।**
**विधिस्तां[3]श्चाचरेत्पक्वान् व्रणवत्साजगल्लिकान् ॥ २ ॥**

स०—पाषाणगर्दभ यावदेष विधि । तेन ग्रन्थि(अलजी)-कच्छपशालूक(पनसिका)पाषाणगर्दभाना पूर्वोक्त कार्यमित्यवतिष्ठते । तांश्च पक्वान् अजगल्लिका च व्रणवदुपक्रमेत् ।

**रोध्रकुस्तुम्बरुवचाः[4] प्रलेपो मुखदूषिके ।**
**वटपल्लवयुक्ता वा नारिकेलोत्थशुक्तयः ॥ ३ ॥**
**अशान्तौ वमनं नस्यं ललाटे च सिराव्यधः ।**

स०—मुखदूषिके रोध्रादय प्रलेप, वटपल्लवयुक्ता नारिकेलशुक्तयो वा ।

एवमप्यनुपशमे वमनं नस्य च हितम् । ललाटे च सिरामोक्ष. ।

**निम्बाम्बुवान्तो निम्बाम्बुसाधितं पद्मकण्टके ॥ ४ ॥**
**पिबेत्क्षौद्रान्वितं सर्पिर्निम्बारग्वधलेपनम्[5] ।**

१ अथ क्षुद्ररोगप्रतिषेधश्चरके चि० १२ अध्याये, सुश्रुते चि० २०।२५ अध्याययो , अष्टाङ्गसङ्ग्रहे उ० ३७ अध्याये चास्ति वर्णित । २ "विस्रावयेत्—रक्तरहिता कुर्यात् ।" इति चन्द्र । ३ तान्—यवप्रख्यादीन् पञ्च । ४ 'चाप्रलेपो' इ ई.ण.त.चन्द्र. । ५ 'लेपन.' ई. चन्द्र. ।

स०-पद्मकण्टके निम्बाम्बुना कृतवमनो निम्बक्काथपक्व घृत सक्षौद्र पिबेत् ।

निम्बकर्णिकाराभ्या लेप ।

**विवृतादींस्तु जालान्तांश्चिकित्सेत्सेरिवेल्लिकान् ।**
**पित्तवीसर्पवत्तद्वत् प्रत्याख्यायाग्निरोहिणीम् ॥ ५ ॥**

स०-विवृतादीन् जालान्तानिरिवेल्लिका च पित्तविसर्पमिव चिकित्सेत् । अग्निरोहिणी च प्रत्याख्याय चिकित्सेत् ।

**विलङ्घनं रक्तविमोक्षणं च**
**विरूक्षणं कायविशोधनं च ।**
**धात्रीप्रयोगान् शिशिरप्रदेहान्**
**कुर्यात्सदा जालकगर्दभस्य ॥ ६ ॥**

स०-जालकगर्दभस्य लङ्घनादि यथावस्थ सदा कुर्यात् ।

**विदारिकां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ।**

स०-विदारिका रक्ते स्रुते कफग्रन्थिमिव चिकित्सेत् ।

**मेदोर्बुदक्रियां कुर्यात्सुतरां शर्करार्बुदे ॥ ७ ॥**

स०-शर्करार्बुदे सुष्ठु मेदोर्बुदक्रिया कुर्यात् ।

**प्रवृद्धं सुबहुच्छिद्रं सशोफं मर्मणि स्थितम् ।**
**वल्मीकं हस्तपादे च वर्जयेद्**

स०-वल्मीक प्रवृद्धादिगुण हस्तपादे जात च वर्जयेत् ।

**इतरत्पुनः ॥ ८ ॥**

**शुद्धस्यास्रे हृते लिम्पेत् सपद्मारेवतामृतैः ।**
**श्यामाकुलत्थिकामूलदन्तीपललसक्तुभिः ॥ ९ ॥**

स०-इतरत् पुनर्वल्मीक शुद्धस्य रक्ते हृते श्यामादिभि-सलवणकर्णिकारगुडूचीभिर्लिम्पेत् ।

**पक्वे तु दुष्टमांसानि गतीः सर्वाश्च शोधयेत् ।**
**शस्त्रेण सम्यगनु च क्षारेण ज्वलनेन वा ॥ १० ॥**

स०-पक्वे तु [वल्मीके] दुष्टमासानि सर्वाश्च गती शोधयेत् । केन? शस्त्रेण । कथम्? सम्यक् । पश्चात् क्षारेणाग्निना च (वा) ।

**शस्त्रेणोत्कृत्य निःशेषं स्नेहेन कदरं दहेत् ।**

स०-कदर शस्त्रेण नि शेषमुत्कृत्य स्नेहेन दहेत् ।

**निरुद्धमणिवत्कार्यं रुद्धपायोश्चिकित्सितम् ॥ ११ ॥**

स०-रुद्धगुदे चिकित्सितं निरुद्धमणिसदृश कार्यम् ।

**चिप्यं शुद्ध्या जितोष्माणं साधयेच्छस्त्रकर्मणा ।**

स०-चिप्य शुद्ध्या-विरेकादिकया, जितोष्माण सन्त शस्त्रकर्मणा साधयेत् ।

**दुष्टं कुनखमप्येवं**

स०-कुनख दुष्टमप्येवमेव साधयेत् ।

**चरणावलसे पुनः ॥ १२ ॥**

**धान्याम्लसिक्तौ कासीसपटोलीरोचनातिलैः ।**
**सनिम्बपत्रैरालिम्पेद्**

स०-अलसे तु चरणौ काञ्जिकसिक्तौ कासीसादिभि सनिम्बपत्रैरालिम्पेत् ।

**दहेत्तु तिलकालकान् ॥ १३ ॥**

**मषांश्च सूर्यकान्तेन क्षारेण यदि वाऽग्निना ।**

स०-तिलकालकान् मषाश्च सूर्यकान्तादिभिर्दहेत् ।

**तद्वदुत्कृत्य शस्त्रेण चर्मकीलजतूमणी ॥ १४ ॥**

स०-चर्मकीलजतूमणी शस्त्रेणोद्धृ(त्कृ)त्य तथैव सूर्यकान्तादिभिर्दहेत् ।

**लाञ्छनादित्रये कुर्याद्यथासन्नं सिराव्यधम् ।**
**लेपयेत्क्षीरपिष्टैश्च क्षीरिवृक्षत्वगङ्कुरैः ॥ १५ ॥**

स०-लाञ्छनादिषु त्रिषु-लाञ्छनव्यङ्गनीलिकासु, यथासन्न सिरा विध्येत् । क्षीरिवृक्षाणा त्वगिभरङ्कुरैश्च क्षीरपिष्टैर्लेपयेत् ।

**व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ।**
**लेपः सनवनीता वा श्वेताश्वखुरजा मषी ॥ १६ ॥**

स०-व्यङ्गादिषु चाय लेपोऽर्जुनवल्क क्षीरपिष्ट वा । म-

१ 'क्वाथे पक्व' ट ङ । २ "जालान्तान्-जालगर्दभान्तान् ॥ इतरत्-पूर्वोक्तादन्यथास्थित वल्मीकम् ।" इति चन्द्र । "प्रत्याख्याय-न सिध्यतीत्युक्त्वा ॥ श्यामा-त्रिवृत् । कुलत्थिका-द्वितीया त्रिवृत् । दन्ती-नागदन्ती ।" इतीन्दु । "पलल-तिलपिष्टि ।" इति डल्हण । ३ 'चिकित्सेदिरिवेल्लिकाम्' ई. । ४ तद्वत्-पित्तवीसर्पवत् । ५ 'विरेचन' इ. । ६ 'धात्रीप्रदेहान् शिशिरप्रयोगान्' इ उ. । ७ 'ग्रन्थिविसर्पमिव' ट.ङ. । ८ 'तर पुन' ई. । ९ 'द्वारवधामृतै.' इति क्वचित् ।

१ 'णोद्धृत्य' उ । २ "नि शेष-व्यपगतपाषाणम् ॥ शुद्ध्या-वमनादिकया ॥ एव-अनन्तरोक्तेन क्रमेण ॥ न्यच्छादित्रितये-न्यच्छव्यङ्गनीलिकासु ॥ व्यङ्गेषु वाऽर्जुनत्वक् लेपे योज्या । अथवा मञ्जिष्ठा समाक्षिका लेप ।" इति चन्द्र । "[ स्नेहेन-अग्निसन्तापादाहयोग्येन । ] निरुद्धमणि -गुह्यरोगे वक्ष्यते । [ उत्कृत्य-छित्वा ।] [ श्वेता-श्वेतवचा । अश्वखुर -कृष्णशङ्खपुष्पी । श्लक्ष्णपिष्टाश्वखुरप्रलिप्तसशुष्कतान्तवक्रताज्यसिक्तप्रज्वलितवर्त्युद्भवया मष्या लेप । न तु शङ्खपुष्पीमेव दग्ध्वोत्पन्नया । अश्वखुरेण कृता मषीति वा । ]" इतीन्दु । "श्वेता-श्वेतापराजिता, अश्वखुर -अश्वस्य घोटकस्य खुर , तयोर्मसी-भस्म । अन्ये तु धवलघोटकखुरमसीमाहु ।" इति शिवदास । ३ 'माषाश्च' ई. 'मसाश्च' उ. चन्द्र । 'मशाश्च' स स । ४ 'न्यच्छादित्रितये' ई चन्द्र. । "न्यच्छ लोका लाञ्छनमिति वदन्ति ।" इति डल्हण । ५ व्यङ्गेषु-वातजपित्तजकफजरक्तजेष्वपीत्यर्थ । "व्यङ्गादिषु" इत्यरुणदत्तव्याख्यानमयुक्तम् । ६ 'वाऽर्जुन' चन्द्र. । ७ 'मशी' उ. । 'मसी' चक्र. । ८ 'माक्षिकपिष्ट' ण.त.।

जिष्ठा माक्षिकसहिता वा । श्वेताश्वखुरजा मषी सनवनीता वा ।

**रक्तचन्दनमञ्जिष्ठाकुष्ठरोध्रप्रियङ्गवः**
**वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ १७ ॥**

स०–रक्तचन्दनादयो व्यङ्गहरा मुखकान्तिकरा 'लेपा' इति प्रकृतत्वाद् गम्यते ।

**द्वे जीरके कृष्णतिलाः सर्षपाः पयसा सह ।**
**पिष्टाः कुर्वन्ति वक्त्रेन्दुमपास्तव्यङ्गलाञ्छनम् ॥ १८ ॥**
**क्षीरपिष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषाः ।**
**मसूराः क्षीरपिष्टा वा तीक्ष्णाः शाल्मलिकण्टकाः १९**
**सगुडः कोलमज्जा वा शशासृक्क्षौद्रकल्कितः ।**
**सप्ताहं मातुलुङ्गस्थं कुष्ठं वा मधुनाऽन्वितम् ॥ २० ॥**
**पिष्टा वा छागपयसा सक्षौद्रा मौशली[1] जटा ।**
**गोरस्थि मुशलीमूलयुक्तं वा साज्यमाक्षिकम् ॥ २१ ॥**

स०–जीरकद्वयादयो लेपे प्रयुक्ता पयसा पिष्टा वक्त्रचन्द्र निरस्तव्यङ्गलाञ्छन विदधति । वक्त्रमेवेन्दु , व्यङ्गमेव लाञ्छन-मिति रूपकालङ्कार ।

मसूरा भृष्टा निस्तुषाश्च क्षीरपिष्टा सर्पिर्माक्षिकान्विता लेप ।

शाल्मलीकण्टकास्तीक्ष्णा क्षीरपिष्टा वा लेप ।

कोलस्य–अम्लबदरस्य, मज्जा शशासृक्क्षौद्रपिष्टो गुडा-न्वितो लेप ।

सप्ताह बीजपूरस्यान्तरस्थितं कुष्ठं माक्षिकयुतं वा लेप ।

मौशली जटा–शाल्मलीमूलं, छगलीक्षीरपिष्ट सक्षौद्र वा लेप ।

गव्यमस्थि तालपत्रीमूलान्वित सघृतमाक्षिक वा लेप ।

**जम्ब्वाम्रपल्लवा मस्तु हरिद्रे द्वे नवो गुडः ।**
**लेपः सवर्णकृत् पिष्टं स्वरसेन च तिन्दुकम् ॥ २२ ॥**

स०–जम्ब्वाम्रपल्लवादिको लेप सवर्णकर । तिन्दुक च स्व-रसेन पिष्ट लेप सवर्णकर ।

**उत्पलमुत्पलकुष्ठं प्रियङ्गुकालीयकं बदरमज्जा ।**
**इदमुद्वर्तनमास्यं करोति शतपत्रसंकाशम् ॥ २३ ॥**

स०–उत्पलादिकमेतदुद्वर्तन पद्मसदृश मुखं विधत्ते । आर्या ।

**एभिरेवौषधैः पिष्टैर्मुखाभ्यङ्गाय साधयेत् ।**
**यथादोषर्तुकान् स्नेहान् मधुकक्वाथसंयुतैः ॥ २४ ॥**

स०–एभिरेव–पूर्वोदितै , पिष्टैर्मधुकक्वाथान्वितैर्मुखाभ्यङ्गार्थ यथादोष यथर्तु स्नेहान् पाचयेत् ।

**यवान् सर्जरसं रोध्रमुशीरं मदनं मधु ।**
**घृतं गुडं च गोमूत्रे पचेदादर्विलेपनात् ॥ २५ ॥**

**तदभ्यङ्गान्निहन्त्याशु नीलिकाव्यङ्गदूषिकान् ।**
**मुखं करोति पद्माभं पादौ पद्मदलोपमौ ॥ २६ ॥**

स०–यवादीन् दर्वीलेप यावद् गोमूत्रे पाचयेत् । एतदभ्य-ङ्गाद् द्रागेव नीलिकादीन् हन्ति । वक्त्र शतपत्रसदृश करोति । चरणौ पङ्कजपत्रतुल्यौ विदधाति ।

**कुङ्कुमोशीरकालीयलाक्षायष्ट्याह्वचन्दनम् ।**
**न्यग्रोधपादांस्तरुणान् पद्मकं पद्मकेसरम् ॥ २७ ॥**
**सनीलोत्पलमञ्जिष्ठं पालिकं ससिलाढके ।**
**पक्त्वा पादावशेषेण तेन पिष्टैश्च कार्षिकैः ॥ २८ ॥**
**लाक्षापत्तङ्गमञ्जिष्ठायष्टीमधुककुङ्कुमैः ।**
**अजाक्षीरं द्विगुणितं तैलस्य कुडवं पचेत् ॥ २९ ॥**
**नीलिकापलितव्यङ्गवलीतिलकदूषिकान् ।**
**हन्ति तन्नस्यमभ्यस्तं मुखोपचयवर्णकृत् ॥ ३० ॥**

स०–कुङ्कुमादिक सनीलोत्पलमञ्जिष्ठ पलप्रमाण जलाढके पक्त्वा तेन पादावशेषेण लाक्षादिभिश्च पिष्टै कार्षिकैस्तैलस्य कुडव छागीक्षीर द्विकुडव पचेत् । तत्–तैल, नस्य शीलित नीलिकादीन् हन्ति । मुखोपचयकर वर्णकर च ।

**मञ्जिष्ठा शबरोद्भवस्तुवरिका लाक्षा हरिद्राद्वयं**
**नेपाली हरितालकुङ्कुमगदा गोरोचना गैरिकम् ।**
**पत्रं पाण्डु वटस्य चन्दनयुगं कालीयकं पारदं**
**पत्तङ्गं कनकत्वचं कमलजं बीजं तथा केसरम् ॥ ३१ ॥**
**सिक्थं तुत्थं पद्मकाद्यो वसाऽऽज्यं**
**मज्जा क्षीरं क्षीरिवृक्षाम्बु चाग्नौ ।**
**सिद्धं सिद्धं व्यङ्गनील्यादिनाशे**
**वक्त्रे छायामैन्दवीं चाशु धत्ते ॥ ३२ ॥**

स०–कनकस्य त्वक्–कनकत्वक्, ता कनकत्वचम् । मञ्जि-ष्ठादीनि वसा घृत मज्जा गोक्षीर क्षीरिवृक्षक्वाथ एतदग्नौ पक्व व्यङ्गादिनाशे सिद्ध–अव्याहतशक्ति । मुखस्य कान्ति चान्द्रमसीं शीघ्र करोति । शार्दूलविक्रीडितशालिन्यौ वृत्ते ।

**मार्कवस्वरसक्षीरतोयानीष्टानि नावने ।**

स०–नावने–नस्ये, मार्कवस्वरसादीनि ।

---

१ 'धुकान्वितम्' ई उ । २ 'मौशली' इ.चन्द्र. । ३ 'स्वि मुशली–तालपत्री, तस्या मूलेनान्वित' ट । ४ "उत्पल–नीलोत्पलम् । उत्पलकुष्ठ–विशिष्ट नीलवर्ण यत् कुष्ठम् । का-लीयक–पीतचन्दनम् ।" इति चन्द्र । ५ 'लपत्र तगरं प्रि' ण.त. । ६ 'पत्रकाकारम्' ई. । ७ 'चन्दन' ण त. ।

१ "[ पूर्वोक्त व्यङ्गनीलिकयोरपृथक्त्व तु सङ्ख्याना षट्त्रिं-शत्वापादनायैव । अत्र नीलिकाग्रहण स्थानभेदजनितसंज्ञान्त-रतया चिकित्सान्तरभ्रान्तिपरिहारार्थम् । ]" इतीन्दु । २ 'दूष-कान्' ण त. । ३ 'क्षीरद्विगु' ई उ । ४ 'छागक्षीर' ट । 'छागं क्षीर' त । ५ "नेपाली–मन शिला । गदः–कुष्ठम् । पाण्डुव-टस्य–शुक्लवटस्य, पत्रम् । कनकस्य–नागकेशरस्य, त्वचम् । सिद्धं–पक्वम् । सिद्ध–प्रसिद्धम् ।" इति चन्द्र । ६ 'गद' चन्द्र. । ७ वटस्य पाण्डु–पक्वत्वेन पाण्डुरवर्णं, पत्रमित्यर्थो युक्त , गदनि-ग्रहेऽसिन्नेव चिकित्सिते तत्तद्योगे 'पीतानि वटपत्राणि' 'परिणत-वटपत्र' इत्युक्तत्वात् । "पाण्डुवटस्य–शुक्लवटस्य" इति चन्द्रनन्दन-व्याख्यान त्वयुक्तमिव प्रतिभाति । ८ 'तोयपिष्टानि' इ ण. ।

**प्रसुप्तौ वातकुष्ठोक्तं कुर्याद्दाहं च वह्निना ॥ ३३ ॥**

स०–प्रसुप्तौ वातकुष्ठविहितं कुर्यात् । वह्निना च दहेत् ।

**उत्कोठे कफपित्तोक्तं**

स०–उत्कोठे कफपित्तविहितं कार्यम् ।

**कोठे सर्वं च कौष्ठिकम् ॥३३½॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने क्षुद्ररोगप्रतिषेधो नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥**

स०–कोठे च सर्वं कुष्ठोक्तमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने क्षुद्ररोगप्रतिषेधो नाम द्वात्रिंशोऽध्यायः समाप्तः ॥ ३२ ॥



## त्रयस्त्रिंशोऽध्यायः ।

अथ क्रमप्राप्तं गुह्यरोगं व्याचिख्यासुराह—

**अथातो गुह्यरोगविज्ञानीयं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा ।**
**दोषाध्युषितसङ्कीर्णमलिनाणुरजःपथाम् ॥ १ ॥**
**अन्ययोनिमनिच्छन्तीमगम्यां नवसूतिकाम् ।**
**दूषितं स्पृशतस्तोयं रतान्तेष्वपि नैव वा ॥ २ ॥**
**विवर्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः ।**
**मुष्टिदन्तनखोत्पीडाविषवच्छूकपातनैः ॥ ३ ॥**
**वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनैः ।**
**दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान् ॥ ४ ॥**

जनयन्त्युपदंशादीन्

स०–वनितासम्भोगान्निवृत्तस्य सहसा–अकस्मादेव, स्त्रीव्यवायं भजतः । केचित् करादिनैव व्यवायाभासं कुर्वन्ति तन्निवृत्त्यै स्त्रीग्रहणम् । अथवेति वक्ष्यमाणगुणा स्त्रियं सेवमानस्य । किम्भूताम् ? वाताद्यधिष्ठितास्तथा सङ्कीर्णः–सङ्कटो, मलिनोऽणुः–सूक्ष्मो, रजोमार्गो यस्यास्तां तथाविधां स्त्रियम् । तथाऽन्ययोनिं–महिष्यादिम् । तथाऽनभिलषन्तीम् । तथाऽगम्यां–भगिन्यादिम् । तथा नवप्रसूताम् । तथा दूषितं सविषजन्त्वादिभिर्जलं स्पृशतो, रतान्तेष्वपि नैव वा जलं स्पृशतः । विवर्धयितुमिच्छया तीक्ष्णान् प्रलेपसेकादीन् वा प्रकृतत्वात् गुह्ये प्रयच्छतः । तथा मुष्ट्यादिपातनैस्तथा वेगरोधनेन तथा दीर्घातिखरस्पर्शनेन च यानि विघट्टनानि, तैरेव दोषा दुष्टा गुह्यं प्राप्तास्त्रयोविंशतिं वक्ष्यमाणान् उपदंशादीन् कुर्वन्ति ।

**उपदंशोऽत्र पञ्चधा ।**
**पृथग्दोषैः सरुधिरैः समस्तैश्च**

स०–अत्र–एषु मध्ये, उपदंशः पञ्चप्रकारः । कथम् ? इत्याह–दोषैः पृथक् त्रयः, रक्तेन चतुर्थः, सन्निपातेन पञ्चमः ।

**अत्र मारुतात् ॥ ५ ॥**
**मेढ्रे शोफो रुजश्चित्राः स्तम्भस्त्वक्परिपोटनम् ।**

स०–एषां मध्ये वातेनोपदंशे मेढ्रे शोफो भवति । दारुणा पीडा स्तम्भस्तथा त्वचः परिपोटनम् ।

**पक्वोदुम्बरसङ्काशः पित्तेन श्वयथुर्ज्वरः ॥ ६ ॥**

स०–पित्तेन श्वयथुः पक्वोदुम्बरफलनिभो ज्वरश्च स्यात् ।

**श्लेष्मणा कठिनः स्निग्धः कण्डूमान् शीतलो गुरुः ।**

स०–श्लेष्मणा श्वयथुः कठिनादिगुणः स्यात् ।

**शोणितेनासितस्फोटसम्भवोऽस्रस्रुतिर्ज्वरः ॥ ७ ॥**

स०–लोहितेन कृष्णस्फोटसम्भवादयः स्युः ।

**सर्वजे सर्वलिङ्गत्वं श्वयथुर्मुष्कयोरपि ।**
**तीव्रा रुगाशुपचनं दरणं कृमिसम्भवः ॥ ८ ॥**

स०–सर्वदोषजे सर्वलिङ्गत्वं श्वयथुश्च मुष्कयोः स्यात् । तीव्रा रुक् शीघ्रपाकादिश्च ।

**याप्यो रक्तोद्भवस्तेषां मृत्यवे सन्निपातजः ।**

स०–एतेषां मध्ये रक्तजो याप्यः । सन्निपातोत्थो मृत्युहेतुः ।

**जायन्ते कुपितैर्दोषैर्गुह्यासृक्पिशिताश्रयैः ॥ ९ ॥**
**अन्तर्बहिर्वा मेढ्रस्य कण्डूला मांसकीलकाः ।**
**पिच्छिलास्रस्रवा योनौ तद्वच्च छत्रसन्निभाः ॥१०॥**
**तेऽर्शांस्युपेक्षया घ्नन्ति मेढ्रपुंस्त्वं भगार्तवम् ।**

१ "कफपित्तोक्त–कफपित्तकुष्ठोक्तम् ॥ पुंसः व्यवायनिवृत्तस्य–मैथुनाद्विरतस्य, सहसा–झटिति, स्त्रियं भजतः सतः । रजःपथा–योनिम् ।" इति चन्द्रः । "सहसा निवृत्तिः सहसा सेवनं च दोषकोपहेतुः । सङ्कीर्णं–केनचित् बीभत्सेन मिश्रितम् । विवर्द्धयिषया–शेफः वर्द्धयितुमिच्छया । [ स्पर्शमिति कामातपत्रसञ्ज्ञितस्त्वग्विशेषः ।]" इतीन्दुः । २ अथ गुह्यरोगविज्ञानीयश्चरके चि० ३० अध्याये, सुश्रुते नि० १२।१३।१४ अध्यायेषु च० ३८ अध्याये च, अष्टाङ्गसङ्ग्रहे उ० ३८ अध्याये चास्ति वर्णितः । ३ 'ज्ञान व्या' ई उ ण त. चन्द्र स मू । ४ 'स्त्री व्यवा' इति इ चन्द्र पुस्तकस्य पाठो युक्ततरः । ५ 'वल्लूक' ण । ६ 'खरशष्पादिघ' इ. । 'खरशष्पवि' स.स.। 'स्पर्शादिघ' उ ।

१ 'यन्त्यवदंशा' इ.ण त चन्द्र । 'यन्त्यपदंशा' स स । २ 'याभ्यास' ट । ३ 'योनिविघ' ट. । ४ 'अवदंशो' ई ण त. चन्द्र.,ट । 'अपदंशो' स स । ५ 'मेढ्रशोफो' इ ण त चन्द्र. स स । ६ 'दारणं' त स मू । ७ "उपेक्षया–चिकित्सां विना ।" इति चन्द्र । "ते च पुरुषे जाता उपेक्षिताः सन्तो मेढ्रं पुंस्त्वं च नाशयन्ति, स्त्रियास्तद्वत् भगमार्तवं च ।" इतीन्दुः । ८ 'मेढ्रं पुंसो भगा' इ । 'पुंस्त्वभगा' उ.ण त.स ह ।

**स०**–दोषैर्गुह्यरक्तमासाश्रयैः कुद्धैर्मेढ्स्यान्तर्बहिर्वा कण्डूला मासकीलका –शङ्कवो, जायन्ते। तथा पिच्छिलरक्तस्राविण । तथैव योनौ छत्रसदृशा स्यु । ते मासकीला अर्शांसि गद्यन्ते। उपेक्षिताश्च मेढ्रे जाता पुस्त्व घ्नन्ति। भगे जाता आर्तव घ्नन्ति।

**गुह्यस्य वहिरन्तर्वा पिटिकाः कफरक्तजाः॥ ११ ॥**
**सर्षपामानसंस्थाना घनाः सर्षपिका स्मृताः।**

**स०**–गुह्यस्य बाह्यतोऽन्तरे वा कफरक्तजा पिटिका सर्षपप्रमाणा सर्षपाकारा घना सर्षपिका स्मृता ।

**पिटिका बहवो दीर्घा दीर्यन्ते मध्यतश्च याः॥ १२ ॥**
**सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षवान्।**

**स०**–पिटिका बहवो दीर्घा मध्ये च या दीर्यन्ते, सोऽवमन्थो वेदनारोमाञ्चवान् कफरक्ताभ्या स्यात्।

**कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽऽशुजा॥**

**स०**–जाम्बवास्थिरूपा कुम्भीका रक्तपित्तोद्भवा शीघ्रोत्पत्तिश्च।

**अलजीं मेहवद्विद्याद्**

**स०**–अलजी प्रमेहे यथा, तथाऽस्मिन्नपि विद्यात्।

**उत्तमां पित्तरक्तजाम्।**
**पिटिकां माषमुद्गाभां**

**स०**–उत्तमाख्या पित्तरक्तजा मेढ्रपिटिका माषसमा मुद्गाभा विद्यात्।

**पिटिका पिटिकाचिता॥१४॥**
**कर्णिका पुष्करस्येव ज्ञेया पुष्करिकेति सा।**

**स०**–पिटिकाचिता या पिटिका स्यात्, तथा पद्मकर्णिकाकारा पुष्करकर्कटाभा, ता पुष्करिकेति विद्यात्।

**पाणिभ्यां भृशसंव्यूढे संव्यूढपिटिका भवेत्॥१५॥**

**स०**–हस्ताभ्यामतिशयेन सव्यूढे–घृष्टे सति, सव्यूढपिटिकाख्या स्यात्।

**मृदितं मृदितं वस्त्रसंरब्धं वातकोपतः।**

**स०**–मृदित–मलित, वस्त्रसरब्ध–वाससा क्षोभित, वातकोपान्मृदित स्यात्।

**विषमा कठिना भुग्ना वायुनाऽष्ठीलिका स्मृता॥१६॥**

**स०**–या पिटिका विषमा समुन्नता तथा कठिना कुटिला च पवनेनाष्ठीलिका गदिता।

**विमर्दनादिदुष्टेन वायुना चर्म मेढ्रजम्।**
**निवर्तते सरुग्दाहं क्वचित्पाकं च गच्छति ॥ १७ ॥**
**पिण्डितं ग्रन्थितं चर्म तत्प्रलम्बमधो मणेः।**
**निवृत्तसंज्ञं सकफं कण्डूकाठिन्यवत्तु तत्॥ १८ ॥**

**स०**–वायुना विमर्दनादिदुष्टेन मेढज चर्म सरुग्दाह निवर्तते। क्वचित्–कदाचित्, पाकमपि याति। तत्–चर्म, मणेरध पिण्डित ग्रन्थित प्रलम्ब च स्यात्। तत्सकफ–कफेन तु सह, कण्डूकाठिन्ययुत निवृत्तसञ्ज स्यात्।

**दुरूढं स्फुटितं चर्म निर्दिष्टमवपाटिका।**

**स०**–कृच्छ्रेण रोहति यच्च दु स्फुटित चर्म, तत् कथितमवपाटिका।

**वातेन दूषितं चर्म मणौ सक्तं रुणद्धि चेत्॥ १९ ॥**
**स्रोतो मूत्रं ततोऽभ्येति मन्दधारमवेदनम्।**
**मणेर्विकाशरोधश्च स निरुद्धमणिर्गदः॥ २० ॥**

**स०**–वातेन चर्म दूषित मणौ सक्त चेत् स्रोतो रुणद्धि। ततो मन्दधारमरुज मूत्रमेति। मणेश्च विकाशरोध । स एवविधो रोगो निरुद्धमणिसञ्ज ।

**लिङ्गं शूकैरिवापूर्णं ग्रथिताख्यं कफोद्भवम्।**

**स०**–लिङ्ग शूकैराकीर्णमिव स्यात्, तद् ग्रथितसञ्ज कफजम्।

**शूकदूषितरक्तोत्था स्पर्शहानिस्तदाह्वया॥ २१ ॥**

**स०**–शूकदूषितरक्तोद्भवा स्पर्शहानि, सा स्पर्शहानिसञ्ज्ञा।

**छिद्रैरणुमुखैर्यत्तु मेहनं सर्वतश्चितम्।**
**वातशोणितकोपेन तं विद्याच्छतपोनकम्॥ २२ ॥**

**स०**–यत्पुनर्मेढ्र छिद्रै सूक्ष्ममुखै सर्वत –परित, चित वातशोणितकोपात्, त शतपोनक विद्यात्।

**पित्तासृग्भ्यां त्वचः पाकस्त्वक्पाको ज्वरदाहवान्।**

**स०**–पित्तरक्ताभ्या त्वच पाको ज्वरदाहान्वितस्त्वक्पाकाख्य ।

**मांसपाकः सर्वजः सर्ववेदनो मासशातनः॥ २३ ॥**

**स०**–सर्वदोषोत्थो मासपाकाख्य सर्ववेदनो मासशातन ।

---

१ 'पिट' ई.चन्द्र स स । २ 'हर्षकृत्' स सु.। ३ 'भाऽशुभा' ई उ स मू स.सु। ४ "आशुजा–शीघ्रोदया॥ वस्तु–लिङ्गम्, मृदित–हस्तेन, वातकोपात् सरब्ध–सरुक् क्षुब्ध, मृदितमिति सज्ञितम्।" इति चन्द्र । "अशुभा–कृष्णेत्यर्थ. ॥ सरब्ध–सशोफम् ।" इति डल्हण । "मेहवत्–शराविकादिपठितालजीवत् लक्षणै ॥ [ हर्षणार्थं हस्ताभ्या मर्दित यद्वस्तु–मेढ्राख्य, तत् वातकोपत –मर्दनस्यैवातियोगात् कारणान्तराद्वा कुपिताद्वातात्, सरब्ध–हृष्टमेव सदा वर्तते चेत्, मृदित–मृदिताख्यो रोग । ]" इतीन्दु.। 'रक्तपित्तजाम्' इ ई.उ.स द्द स सु। ६ 'समूढे समूढ' स सु। ७ 'तं पीडित' स.सु.। ८ 'वस्तु स' ण त.चन्द्र.स स.। 'यत्तु सं' उ.स.सु.।

१ 'न' चन्द्र.स मू । २ "पिण्डित–सङ्कुचितम्। कुथित–क्लिन्नम्॥ मेढ्रभव चर्म दुष्ट कृत्वोढ–मर्दित, स्फुटित सत् ॥ शूकै –किशारुभि ॥ [ सर्ववेदन –छेदभेदतोदस्फुरणव्यासव्यधस्रसस्वापाद्यखिलवेदनान्वित ।]" इतीन्दु। "शूकै –केशारुकै।" इति चन्द्र । "शूक –सजन्तुजलमल, लिङ्गवृद्धिकरो योगो वा ।" इति डल्हण । ३ 'कुथित' स.स.। ४ 'तच्च प्रविलम्ब' इ. । 'मे विप्रलम्ब' उ. । ५ चन्द्रनन्दनस्तु सकफमित्यारभ्यावपाटिकेत्यन्तमवपाटिकालक्षण मन्यते। तद्यथा–"तत्–चर्म, सकफ कण्डूकाठिन्यवत्–ताभ्या युक्त, दुरूढ स्फुटित च यत्तदवपाटिकेति निर्दिष्टम्।" इति। ६ 'दु सह' इ । 'विरूढ' स मू । ७ 'तत्' उ सं.मू । ८ 'कासरोध्र' चन्द्र. स.द्द.। ९ 'वाकीर्ण' स.स.।

**सरागैरसितैः स्फोटैः पिटिका[1]भिश्च पीडितम् ।**
**मेहनं वेदना चोग्रा तं विद्यादसृगर्बुदम् ॥ २४ ॥**

**स०**–ईषल्लोहितै कृष्णै स्फोटै पिटिका[1]भिश्च पीडित लिङ्ग वेदनाश्च दारुणा , त–एवविध, रक्तार्बुद जानीयात् ।

**मांसार्बुदं प्रागुदितं**

**स०**–मांसार्बुद पूर्वमुक्त ग्रन्थ्यादिरोगविज्ञानीये[2](उ अ २९)। तच्च त्रिदोषजम् ।

**विद्रधिश्च त्रिदोषजः ।**

**स०**–विद्रधिश्च त्रिदोषज । स उक्तो विद्रध्यादिनिदाने ( नि अ ११।९ ) ।

**कृष्णानि भूत्वा मांसानि विशीर्यन्ते समन्ततः॥२५॥**
**पक्वानि सन्निपातेन तान् विद्यात्तिलकालकान् ।**

**स०**–लिङ्गे कृष्णानि मांसानि भूत्वा परितो विशीर्यन्ते पक्वानि सन्निपातेन । तान्–एवप्रकारान् , तिलकालकान् विद्यात् ।

**मांसोत्थमर्बुदं पाकं विद्रधिं तिलकालकान् ॥ २६ ॥**
**चतुरो वर्जयेदेषां[3] शेषांश्छीघ्रमुपाचरेत् ।**

**स०**–एषा मध्ये मांसार्बुदादीश्चतुरस्त्यजेत्–नोपक्रमेत् । शेषान्–षोडश रोगान् , शीघ्रमुपक्रमेत् ।

**विंशतिर्व्यापदो योने[4]र्जायन्ते दुष्टभोजनात् ॥ २७ ॥**

**स०**–योनेर्व्यापदो विंशतिर्दुष्टाहाराद्भवन्ति ।

**विषमस्थाङ्गशयनभृशमैथुनसेवनैः ।**
**दुष्टार्तवादपद्रव्यैर्बीजदोषेण दैवतः ॥ २८ ॥**
**योनौ क्रुद्धोऽनिलः कुर्याद् रुक्तोदायामसुप्ततः ।**
**पिपीलिकासृप्तिमिव स्तम्भं कर्कशता[5] स्वनम् ॥२९॥**
**फेनिलारुणकृष्णाल्पतनुरूक्षार्तवस्रुतिम् ।**
**स्रंसं वङ्क्षणपार्श्वादौ[1] व्यथां गुल्मं क्रमेण च ॥ ३० ॥**
**तांस्तांश्च स्वान् गदान्[3] व्यापद्वातिकी नाम सा स्मृता ।**

**स०**–विषमस्थाङ्गशयनादिभिर्योनौ पवन कुपितो रुजादीन् कुर्यात् । तथा पिपीलिकोपसर्पणमिव स्तम्भ कर्कशता स्वन, तथा फेनिलादिगुणार्तवस्रुति, तथा वङ्क्षणादौ भ्रंश[2] रुजा, क्रमेण च गुल्म कुर्यात् । तांस्तांश्च–अनेकविधान् , रोगान् कुर्यात् । सा–एवविधा, व्यापत् वातिकी स्मृता ।

**सैवातिचरणा शोफसंयुक्ताऽतिव्यवायतः ॥ ३१ ॥**

**स०**–सैवातिचरणा श्वयथुयुताऽतिव्यवायात् स्यात् ।

**मैथुनादतिबालायाः पृष्ठजङ्घोरुवङ्क्षणम् ।**
**रुजन् सन्दूषयेद्योनिं वायुः प्राक्चरणेति सा ॥३२॥**

**स०**–मैथुनादतिबालाया पवन पृष्ठजङ्घोरुवङ्क्षण पीडयन् योनि सन्दूषयेत् । प्राक्चरणेति सा स्यात् ।

**वेगोदावर्तना[5]द्योनिं प्रपीडयति मारुतः ।**
**सा[6] फेनिलं रजः कृच्छ्रादुदावृत्तं[7] विमुञ्चति ॥ ३३ ॥**
**इयं व्यापदुदावृत्ता[8]**

**स०**–वेगोदावर्तनेन मारुतो योनि प्रकर्षेण पीडयति । तत सा–योनि , फेनिल[9] रज कृच्छ्रादुदावृत्त विसृजति । एषा व्यापदुदावृत्ताख्या ।

**जातघ्नी तु यदाऽनिलः ।**
**जातं जातं सुतं हन्ति रौक्ष्याद्दुष्टार्तवोद्भवम् ॥३४॥**

**स०**–यदा तु वायु सुतमुत्पन्नमुत्पन्न रौक्ष्याद्दुष्टार्तवज हन्ति, तदा जातघ्नी स्यात् ।

**अत्याशिताया विषमं स्थितायाः सुरते मरुत् ।**
**अन्नेनोत्पीडितो योनेः स्थितः स्रोतसि वक्रयेत् ३५**
**सास्थिमांसं मुखं तीव्र[10]रुज[11]मन्तर्मुखीति सा ।**

**स०**–अतिसुहिताया विषम स्थिताया निधुवने पवनोऽन्नेनोत्पीडितो योने सम्बन्धिनि स्रोतसि स्थितो मुख योनेरेव वक्रीकुर्यात् , अस्थिमांसेन सह दारुणपीड, साऽन्तर्मुखीत्युच्यते ।

**वातलाहारसेविन्यां जनन्यां कुपितोऽनिलः ॥ ३६ ॥**
**स्त्रियो योनिमणुद्वारां कुर्यात्सूचीमुखीति सा ।**

**स०**–वातलाहारसेविन्या मातरि वायु कुपित स्त्रियो गर्भस्थाया सूक्ष्मद्वारा योनि कुर्यात् । सूचीमुखी सा स्यात् ।

---

१ 'पिटका' ई चन्द्र स स ,ड । २ 'ध्यादिविज्ञानीये ।' ण त । ३ उपदशानामर्शसा च साध्यासाध्यत्वस्योक्तत्वात् एषामिति सर्षपिकावमन्थकुम्भीकालजीयुत्तमापुष्करिकासव्यूढपिटिकामृदितांष्ठीलिकानिवृत्तावपाटिकानिरुद्धमणिग्रथितस्पर्शहानिशतपोनकत्वक्पाकमांसपाकासृगर्बुदमांसार्बुदविद्रधितिलकालकानामेकविंशतिसङ्ख्याकानामित्यर्थ । शेषान्–अवशिष्टान् सप्तदश । "शेषान्–षोडश" इत्यरुणदत्तचन्द्रनन्दनादिकृत व्याख्यान न सङ्गतम् । ४ "योनेः–स्त्रीगुह्यस्य । [ उपद्रव्यैरिति पाठ । उपद्रव्यै –लोहादिकृतैरुपलिङ्गै । उपलिङ्गसुरत देशान्तरेषु प्रसिद्धम् । उक्त च रतिरहस्ये–'विमृद्यमाना कृतकध्वजेन द्रवन्ति हृष्यन्ति दृढप्रहारै । स्त्रीराज्यजा कोसलजाश्च नार्य प्रचण्डकण्डूतिभगा भवन्ति ॥' इति ।] दैव–अन्यजन्मकृत कर्म । इति योनिव्यापदामविशेषेण हेतुरुक्त । [ स्वन–योनिमुखादप्यधो वातस्वननिर्गमनम् । ]" इतीन्दु । चन्द्रनन्दनोऽपि दुष्टभोजनादारभ्य दैवत इत्यन्त योनिव्यापदा सामान्य निदानमिति व्याख्याति । अरुणदत्तव्याख्यान तु न समञ्जसम् । ५ 'कागतिमिव' उ. ।

१ 'ऊरुवङ्क्ष' इ । 'भृश व' उ. । 'भ्रश व' स स. । २ "भ्रशो–योनिभ्रश । वेगोदावर्तनात्–अधोवातादिवेगधारणनिमित्तादूर्ध्वमुद्गमात् । सा पीडिता सती, उदावृत्त–बद्ध, फेनिल–फेनयुक्त, रजो–रक्त, कृच्छ्राद्विमुञ्चति ।" इतीन्दु । "उदावृत्तमिति ऊर्ध्वं नीतम् ।" इति चक्र । ३ 'स्ताश्च स्वगदा' इ स मू । 'स्वान् स्वान् स्वान् ग' उ । ४ 'भृश रुजा' ट ड. । ५ 'वेगेनाव' चन्द्र । ६ 'सफेनिल' चन्द्र । ७ 'दावर्त' इ.ई.चन्द्र ,ड. । 'दावर्त्य' उ । ८ 'दावर्ता' इ उ. । ९ 'सफेनिल' ट ण. । 'सकफफेनिल' ट ड । १० 'पत्तिरुदा' ण.त. । ११ 'रुजं वक्रमुखी' इ. ।

वेगरोधादृतौ वायुर्दुष्टो विण्मूत्रसङ्ग्रहम् ॥ ३७ ॥
करोति योनेः शोषं च शुष्काख्या साऽतिवेदना ।

स०-ऋतौ वेगधारणाद्वायुर्दुष्टो विण्मूत्रसङ्ग्रहं करोति। योने शोषं च करोति । सा शुष्कसञ्ज्ञाऽतिरुजा स्यात् ।

षड्हात् सप्तरात्राद्वा शुक्रं गर्भाशयान्मरुत् ॥ ३८ ॥
वमेत्सरुङ् नीरुजो वा यस्याः सा वामिनी मता ।

स०-षड्हेनाथवा सप्ताहेन गर्भाशयाद्वायु सरुजो नीरुजो वा यस्या शुक्रं वमेत्, सा वामिनी गदिता ।

योनौ वातोपतप्तायां स्त्रीगर्भे बीजदोषतः ॥ ३९ ॥
नृद्वेषिण्यस्तनी च स्यात् षण्ढसंज्ञाऽनुपक्रमा ।

स०-वातोपतप्ताया योनौ स्त्रीगर्भे बीजदोषान्नरद्वेषिणी स्तनरहिता च स्त्री स्यात् । सा षण्टसञ्ज्ञाऽनुपक्रमा ।

दुष्टो विष्टभ्य योन्यास्यं गर्भकोष्ठं च मारुतः ॥ ४० ॥
कुरुते विवृतां स्रस्तां वातिकीमिव दुःखिताम् ।
उत्सन्नमांसां तामाहुर्महायोनिं महारुजाम् ॥ ४१ ॥

स०-पवनो दुष्टो योन्यास्य विष्टभ्य गर्भकोष्ठं च विवृतमुखी भ्रष्टां वातिकीमिव सुदुःखामुत्सृष्टपिशितां प्रकृतत्वायोनिं कुरुते। ता महारुजा महायोनिं वदन्ति ।

यथास्वैर्दूषणैर्दुष्टं पित्तं योनिमुपाश्रितम् ।
करोति दाहपाकोषापूतिगन्धिज्वरान्विताम् ॥ ४२ ॥
भृशोष्णभूरिकुणपनीलपीतासितार्तवाम् ।
सा व्यापत् पैत्तिकी

स०-यथायोगं दूषणै -सर्वरोगनिदानाद्युक्तैः, दुष्टं पित्तं योनौ स्थितं योनिं दाहाद्यन्विता करोति, तथा भृशोष्णादिगुणयुतार्तवाम् । सा पैत्तिकी व्यापत् ।

रक्तयोन्याख्याऽसृगतिस्रुतेः ॥ ४३ ॥

स०-रक्तयोन्याख्या रक्तस्यातिस्रुते स्यात् ।

कफोऽभिष्यन्दिभिः क्रुद्धः कुर्याद्योनिमवेदनाम् ।
शीतलां कण्डुलां पाण्डुपिच्छिलां तद्विधस्रुतिम् ४४
सा व्यापच्छ्लैष्मिकी

स०-श्लेष्माऽभिष्यन्दकरणहेतुभि कुपितो योनिं पीडारहिता शीतलादिगुणा तथा तद्विधा-पाण्डुपिच्छिला, स्रुतिर्यस्यास्ता तथाविधा कुर्यात् । सा-एवंविधा, व्यापत् श्लैष्मिकी स्यात् ।

वातपित्ताभ्यां क्षीयते रजः ।
सदाहकार्श्यवैवर्ण्यं यस्याः सा लोहितक्षया ॥ ४५ ॥

स०-यस्या वातपित्ताभ्यां रज क्षीयते दाहकार्श्यवैवर्ण्ययुत, सा लोहितक्षयाख्या ।

पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।
पित्तयुक्तेन मरुता योनिर्भवति दूषिता ॥ ४६ ॥
शूना स्पर्शासहा सार्तिर्नीलपीतास्रवाहिनी ।
बस्तिकुक्षिगुरुत्वातिसारारोचककारिणी ॥ ४७ ॥
श्रोणिवङ्क्षणरुक्तोदज्वरकृत् सा परिप्लुता ।

स०-पित्तलाया स्त्रिया नरसयोगे क्षवथूद्गारधारणात् पित्तान्वितेन वायुना योनिर्दूषिता शूनादिगुणा बस्त्यादिगुरुत्वादिविधायिनी तथा श्रोण्यादितोदकरी स्यात् । सा परिप्लुताख्या ।

वातश्लेष्मामयव्याप्ता श्वेतपिच्छिलवाहिनी ॥ ४८ ॥
उपप्लुता स्मृता योनिर्

स०-वातश्लेष्मरोगेण व्याप्ता शुक्लपिच्छिलस्राविणी योनिरुपप्लुता स्यात् ।

विप्लुताख्या त्वधावनात् ।
सञ्जातजन्तुः कण्डूला कण्ड्वा चातिरतिप्रिया ॥ ४९ ॥

स०-अक्षालनात्तु योनिं सम्भूतकृमिं कण्डूयुता, कण्ड्वा च हेतुना सुतरां सुरताभिलाषिणी विप्लुताख्या ।

अकालवाहनाद्वायुः श्लेष्मरक्तविमूर्च्छितः ।
कर्णिकां जनयेद्योनौ रजोमार्गनिरोधिनीम् ॥ ५० ॥
सा कर्णिनी

स०-मरुदकालवाहनात् कफरक्तमिश्रितो योनौ कर्णिकां रजोमार्गनिरोधिनीं कुर्यात् । सा कर्णिनी गद्यते ।

त्रिभिर्दोषैर्योनिगर्भाशयाश्रितैः ।
यथास्वोपद्रवकरैर्व्यापत्सा सान्निपातिकी ॥ ५१ ॥

स०-त्रिभिर्दोषैर्योनिगर्भाशयाश्रितैर्यथायोगमुपद्रवकारिभिर्या व्यापत् सा सान्निपातिकी स्यात् ।

इति योनिगदा नारी यैः शुक्रं न प्रतीच्छति ।
ततो गर्भं न गृह्णाति रोगांश्चाप्नोति दारुणान् ॥ ५२ ॥
असृग्दरार्शोगुल्मादीनाबाधांश्चानिलादिभिः ॥ ५२½ ॥

१ ऋतौ-ऋतुकाले, व्यवायकाले इत्यर्थः । २ 'योनिशोषं' स स । ३ "[योनिशोष-योनिद्वारे द्रवाभावम् ।] यस्यां व्यापदि ॥ [विष्टभ्य-स्तम्भयित्वा । विवृता-न कदाचिदपि सवरणयुक्ताम् । स्रस्ता-स्थानाचलिता बहिर्भि स्रुतामित्यर्थः ।] अभिष्यन्दिभि -स्रोतोमालिन्यकरैराहारै ।" इतीन्दु । "यस्या नार्याम् ॥ दुःखिता-सवेदनाम् ।" इति चन्द्र । ४ 'यस्या' इ त च द्र स स । 'ह्यस्या' ण. । ५ 'मुत्सर्गेपि' त ड । ६ 'गन्धज्व' उ.त.चन्द्र.स.द्र. । 'गन्धां ज्व' ई. ।

१ 'यस्या' इ त चन्द्र स द्व । २ "यस्या-नार्याम् ।" इति चन्द्र. । "यस्या व्यापदि ।" इतीन्दु । ३ 'सयोगात्' ट.ण त । ४ "अकालवाहनात्-अप्राप्तामन्वीरणात् । [ अकालवाहनात्-वेगोदीरणात् । काश्चित् रतान्ते कामाम्बु छलाद्धश्चयितु प्रियान् मूत्र सृजन्त्यकाले वा मदनाम्भेव, तत् द्वय अकालवाहनस्यार्थं इति व्याचष्ट सारकृत् । द्वेधाऽप्यनिच्छासुरते द्रुतिभाव प्रतीयते । योनौ-गर्भाशयद्वारमुखे । कर्णिका-पद्मकर्णिकातुल्य मांसाङ्कुरमित्यर्थः ।]" इतीन्दु. । "अकाले वाहमानाया इति अप्राप्ते गर्भनिष्क्रमणकाले प्रवाहणं कुर्वन्त्याः ।" इति चक्र. । *५ 'बाधांश्चा' 'बाधा -पी' ण.त.चन्द्र. ।

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने गुह्यरोगविज्ञानीयो नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥**

**स०**—इति समाप्तौ। एवं योनिरोगाः 'कथिताः' इति शेषः । यैरामयैर्योनिः शुक्रं न प्रतीच्छति। ततो गर्भं नादत्ते। रोगांश्च दारुणानसृग्दरादीनश्नुते। वातपित्तकफैश्चाबाधान्-पीडाविशेषान्, प्राप्नोति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठ उत्तरस्थाने गुह्यरोगविज्ञानीयो नाम त्रयस्त्रिंशोऽध्यायः समाप्तः ॥ ३३ ॥



## चतुस्त्रिंशोऽध्यायः ।

अथैतच्चिकित्सां[1] ब्रूते—

**अथातो गुह्यरोगप्रतिषेधं[2] व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**मेढ्रमध्ये सिरां विध्येदुपदंशे[3] नवोत्थिते ।**
**शीतां कुर्यात् क्रियां शुद्धिं विरेकेण विशेषतः ॥ १ ॥**
**तिलकल्कघृतक्षौद्रैर्लेपः पक्वे तु पाटिते ।**

**स०**—उपदंशेऽचिरोद्भूते लिङ्गस्य मध्ये सिरां मोक्षयेत्। शिशिरां च चिकित्सां लेपसेकादिभिः कुर्यात्। विशेषेण विरेचनेन शुद्धिं विदधीत। पक्वे पाटिते च तिलकल्काज्यमधुभिर्लेपः ।

**जम्ब्वाम्रसुमनोनीपश्वेतकाम्बोजिकाङ्कुरान्[4][5] ॥ २ ॥**
**शल्लकीबदरीबिल्वपलाशतिनिशोद्भवाः ।**
**त्वचः क्षीरिद्रुमाणां च त्रिफलां च पचेज्जले ॥ ३ ॥**
**स क्वाथः क्षालनं,[6] तेन पक्वं तैलं च रोपणम् ।**

**स०**—जम्ब्वाद्यङ्कुरान् शल्लक्यादीनां त्वचः क्षीरिवृक्षाणां च त्वचस्त्रिफलां च जले पचेत्। स क्वाथः क्षालनं हितम्।

तेन च क्वाथेन तैलं पक्वं रोपणं स्यात्।

**तुत्थगैरिकलोध्रैलामनोह्वालरसाञ्जनैः ॥ ४ ॥**
**हरेणुपुष्पकासीससौराष्ट्रीलवणोत्तमैः ।**
**लेपः क्षौद्रयुतैः सूक्ष्मैरुपदंशव्रणापहः[1] ॥ ५ ॥**

**स०**—तुत्थादिभिर्माक्षिकद्रुतैः सूक्ष्मीकृतैर्लेप उपदंशव्रणहरः ।

**कपाले त्रिफला दग्धा सघृता रोपणं[2] परम् ।**

**स०**—कर्परे त्रिफला दग्धा घृतान्विता परं रोपणम् ।

**सामान्यं साधनमिदं**

**स०**—सामान्यमेतत् साधनम् ।

**प्रतिदोषं तु शोफवत् ॥ ६ ॥**

**स०**—प्रतिदोषं तु शोफतुल्यं चिकित्सितं ज्ञेयम् ।

**न च याति यथा पाकं प्रयतेत तथा भृशम् ।**
**पक्वः स्नायुसिरामांसैः प्रायो नश्यति हि ध्वजः ॥ ७ ॥**

**स०**—यथा च पाकं न याति तथाऽतियत्नः कार्यः। यतः पक्वे स्नाय्वादिभिः प्रायेण मेढ्रो नश्यति ।

**अर्शसां[3] छिन्नदग्धानां क्रिया कार्योपदंशवत्[4] ।**

**स०**—अर्शसां छिन्नानां दग्धानां चोपदंशतुल्या क्रिया कार्या।

**सर्षपा लिखिताः[5] सूक्ष्मैः कषायैरवचूर्णयेत् ॥ ८ ॥**
**तैरेवाभ्यञ्जनं तैलं साधयेद् व्रणरोपणम् ।**

**स०**—सर्षपिका शस्त्रेण लिखिता कषायद्रव्यैर्जम्ब्वादिभिः पूर्वोक्तैः सूक्ष्मचूर्णैरवचूर्णयेत्।

तैरेव कषायैस्तैलं पचेत्। तदभ्यञ्जनं व्रणरोपणं स्यात्।

**क्रियेयमवमन्थेऽपि रक्तं स्राव्यं तथोभयोः ॥ ९ ॥**

**स०**—एतच्चिकित्सितमवमन्थेऽपि कार्यम् । तथैत(थोभ)यो:—सर्षपावमन्थयोः, अस्रं स्राव्यम्।

**कुम्भीकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ।**
**तिन्दुकत्रिफलारोध्रैर्लेपस्तैलं च रोपणम् ॥ १० ॥**

**स०**—कुम्भीकायां लोहितं मोक्षयेत् ।

पक्वायां तु व्रणे शोधिते सति तिन्दुकादिभिर्लेपः ।

तिन्दुकादिभिरेव सिद्धं तैलं रोपणं स्यात्।

**अलज्यां स्रुतरक्तायामयमेव क्रियाक्रमः ।**

**स०**—अलज्यां स्रुतशोणितायामेष एवोपक्रमः ।

**उत्तमाख्यां तु पिटिकां[6] सञ्छिद्य बडिशोद्धृताम् ११**
**कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् ।**

---

१ 'कित्सित' ट.। २ अयं गुह्यरोगप्रतिषेधश्चरके चि० ३० अध्याये, सुश्रुते चि० १९।२०।२१ अध्यायेषु उ० ३८ अध्याये च, अष्टाङ्गसङ्ग्रहे उ० ३९ अध्याये चास्ति वर्णितः । ३ 'ध्येदवदंशे' ई ण त चन्द्र ,ट । ४ 'नोनिम्बश्वे' स सु । ५ "नीपो-भूमिकदम्बः । श्वेतकाम्बोजिकाख्यः -श्वेतपाकी शिखण्डिका च ।" इतीन्दुः । "श्वेतः -श्वेतस्यन्दः । काम्बोजिका-कूविका, गयी तु माषपर्णीमाह। तिनिशः-स्यन्दनः ।" इति डल्हणः । ६ 'क्षालने' इ ई.उ. ।

१ 'रवदंश' ई ण त चन्द्र ,ट । 'रपदंश' स स । २ 'रोपणी' स द्व.। ३ अर्शसां-मेढ्रार्शसामित्यर्थः । ४ 'कार्यावदंश' ई ण त चन्द्र, ट । ५ 'पा लिखितां' इ उ.। 'पीं लिखितां' वृ.चक्र.गदनि.। ६ 'पिटकां' ई चन्द्र. ।

स०-उत्तमाख्या पिटिका बडिशोद्धृता सम्यक् छेदयित्वा कषायाणा कल्कैश्चूर्णे क्षौद्रयुक्तैरुपक्रमेत्।

**क्रम· पित्तविसर्पोक्त· पुष्करव्यूढयोर्हितः ॥ १२ ॥**

स०-पुष्करिकाया सव्यूढे च पित्तविसर्पविहित चिकित्सित हितम्।

**त्वक्पाके स्पर्शहान्यां च सेचयेद्**

स०-त्वक्पाकस्पर्शहान्यो सेचनम्।

**मृदितं पुन·।**

**बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ १३ ॥**

स०-मृदित नाम लिङ्गरोग वक्ष्यमाणेन (श्लो ४२) बलातैलेन सेचयेत्। तथा मधुरैर्द्रव्यै कल्कितै सुखोष्णैर्घृतस्निग्धैरुपनाहश्च कार्य।

**अष्ठीलिका हृते रक्ते श्लेष्मग्रन्थिवदाचरेत्।**

स०-अष्ठीलिका रक्ते हृते कफग्रन्थिमिवोपक्रमेत्।

**निवृत्त सर्पिषाऽभ्यज्य स्वेदयित्वोपनाहयेत् ॥ १४ ॥**
**त्रिरात्र पञ्चरात्रं वा सुस्निग्धैः शाल्वलादिभिः।**
**स्वेदयित्वा ततो भूयः स्निग्धं चर्म समानयेत् ॥ १५ ॥**
**मणि प्रपीड्य शनकैः प्रविष्टे चोपनाहनम्।**
**मणौ पुन·पुनः स्निग्ध भोजनं चात्र शस्यते ॥ १६ ॥**

स०-निवृत्तसज्ञ लिङ्गरोग घृतेनाभ्यज्य स्वेदयित्वा चोपनाहयेत् त्रिरात्र पञ्चरात्र वा सुस्निग्धै शाल्वलादिभि। ततो भूय स्वेदयित्वा स्निग्ध चर्म मणि समानयेत्। किं कृत्वा? मणि शनै प्रपीड्य। प्रविष्टे मणौ चोपनाह पुन पुन कुर्यात्। भोजन चात्र स्निग्ध हितम्।

**अयमेव प्रयोज्य स्यादवपाट्यामपि क्रम·।**

स०-अयमेव क्रमोऽवपाटिकाया योज्य स्यात्।

**नाडीमुभयतोद्वारां निरुद्धे जतुना स्तृताम् ॥ १७ ॥**
**स्नेहाक्तां स्रोतसि न्यस्य सिञ्चेत्स्नेहैश्चलापहैः।**
**त्र्यहात्र्यहात्स्थूलतरां न्यस्य नाडीं विवर्धयेत् ॥ १८ ॥**
**स्रोतोद्वारमसिद्धौ तु विद्वान् शस्त्रेण पाटयेत्।**
**सेवनी वर्जयन् युञ्ज्यात् सद्य·क्षतविधिं तत· ॥ १९ ॥**

स०-निरुद्धे-निरुद्धाख्ये निरुद्धमणौ, नाडी द्विद्वारा जतुना स्तृता लिप्ता स्नेहाक्ता लिङ्गे न्यस्य लिङ्ग बलातैलादिभि स्नेहै सिञ्चेत्। त्र्यहात्र्यहात् स्थूलतरा नाडी क्षिप्त्वा स्रोतोद्वार वृद्धिं नयेत्।

एवमप्यसिद्धौ धीमान् वैद्य सेवनी परिहरन् शस्त्रेण पाटयेत्। तत-पाटनादनन्तर, सद्य क्षतविधान युञ्ज्यात्।

**ग्रन्थितं स्वेदित नाड्या स्निग्धोष्णैरुपनाहयेत्।**

स०-ग्रन्थितसज्ञ नाड्या स्वेदित स्निग्धोष्णैरुपनाहयेत्।

**लिम्पेत्कषायैः सक्षौद्रैर्लिखित्वा शतपोनकम् ॥ २० ॥**

स०-शतपोनक लिङ्गरोग लिखित्वा कषायद्रव्यचूर्णै समाक्षिकैर्लिम्पेत्।

**रक्तविद्रधिवत्कार्या चिकित्सा शोणितार्बुदे।**

स०-शोणितार्बुदे रक्तविद्रधिवच्चिकित्सा कर्तव्या।

**व्रणोपचारं सर्वेषु यथावस्थं प्रयोजयेत् ॥ २१ ॥**

स०-सर्वेषु लिङ्गरोगेषु यथावस्थ-अवस्थावशात्, व्रणोपचारान्-अन्त शुद्धिकषायलेपघृततैलरसक्रियाचूर्णाश्छोधनरोपणान्, प्रयोजयेत्।

**योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित्।**
**स्नेहनस्वेदबस्त्यादि वातजासु विशेषतः ॥ २२ ॥**

स०-योनिव्यापत्सु विषये प्रायेण पवनविजयि चिकित्सितं युक्तम्। स्नेहनादि वातोत्थासु व्यापत्तिषु विशेषेण शस्यते।

**न हि वातादृते योनिर्वनितानां प्रदुष्यति।**
**अतो जित्वा तमन्यस्य कुर्याद्दोषस्य भेषजम् ॥ २३ ॥**

स०-यतो वातमन्तरेण योषितो योनिर्न दुष्यति। तस्मात्-मारुत, जित्वा परस्य दोषस्यौषध कुर्यात्।

**पाययेत(त्तां) बलातैल मिश्रकं सुकुमारकम्।**
**स्निग्धस्विन्नां तथा योनिं दु·स्थितां स्थापयेत्समां २४**
**पाणिना नमयेज्जिह्मां संवृतां व्यधयेत् पुनः।**
**प्रवेशयेन्निःसृतां च विवृतां परिवर्तयेत् ॥ २५ ॥**
**स्थानापवृत्ता योनिर्हि शल्यभूता स्त्रियो मता।**

१ 'क्रम पित्तविसर्पोक्त' इति त्वक्पाके स्पर्शहान्या चेत्यन्तेन, तथा 'सेचयेत्' इति 'मृदित पुन। बलातैलेन कोष्णेन' इत्यनेन च सम्बन्धनीयम्, "पुष्करिकासव्यूढास्पर्शहानित्वक्पाकेषु पित्तविसर्पोक्तो विधि। मृदित कोष्णेन बलातैलेन परिषेचयेत्।" इति सङ्ग्रहोक्ते। अत्रत्यमरुणदत्तव्याख्यान त्वसमञ्जसम्। २ 'हानौ वा से' चन्द्र। ३ "बलातैल-शारीरोक्तम् (हृ शा अ २।४७)।" इतीन्दु। ४ 'स्रुते' ट ण त। ५ 'समाहरेत्' इ उ। ६ 'स्निग्ध-घृतेनाभ्यक्त, चर्म' ट। ७ 'श्रिताम्' इ चन्द्र.,ट.। 'कृताम्' ई उ। ८ चलापहै.-वातघ्नैः। ९ 'वा' ई.उ.। १० 'कुर्यात्' उ.।

१ 'अतोऽजित्वा तमन्यस्य(च) न कुर्याद्दोषभेषजम्।।'उ। २ 'पाययेत्ता' इत्यरुणदत्तचन्द्रनन्दनसम्मत पाठ। 'पायचेच्च' इ। 'पाययेद्वा' इ उ। ३ "[ तथा-तद्वत्, दु स्थिता-स्थानभ्रंशादिषमा योनिं, समा-यथास्थान, स्थापयेत्। जिह्मा-कुटिला, पाणिना-योन्यन्तर्गततुल्याग्रेण हस्तेन, नमयेत्। अत्र नमनकथनेनोन्नमनस्याशक्यत्वादुन्नतप्रदेशस्य नमनैव निम्नसौन्नत्यजनन चोद्यते। सवृता-सवरणादणुभूता,पुन प्रथयेत्-अङ्गुल्यग्रेण प्रसारयेत्। नि सृतां-बहिर्निर्गता, प्रवेशयेत्-हस्ताग्रेण मन्द मन्द प्रपीड्यान्तरावेशयेत्। विवृता-विचित्रकर्मणोऽनिलस्य वैगुण्येन विवरणात् वेणुनाल्याकारेण स्थिता, परिवर्तयेत्-परित शनैर्गृहीत्वा सवृणुयात्।]" इतीन्दु। "जिह्मामिति वक्राम्। विवृतामिति विवृतमुखीम्।" इति चक्र। ४ 'णिना नाम' चन्द्र स. च ,ड। 'णिनोन्नम' स मू ,ट.। ५ 'प्रथयेत्' स स। 'वर्धयेत्' स च.। 'व्यासयेत्' इति क्वचित्। ६ 'पवर्ता' ई.। ७ 'स्त्रिया.' स.स.स.च.।

स०-ता-स्त्रिय,बलातैल (चि अ २१।७३),मिश्रकाख्य (चि अ १४।८९) वा, सुकुमारकाह्वय (चि अ १३।४१), पाययेत् ।

तथा योनि स्त्रिया स्त्रिग्धा च दु स्थिता समा स्थापयेत् । जिह्मा-कुटिला योनि, हस्तेन नर्मयेत् । सवृता तु व्यधयत्-प्रसारयेदित्यर्थ । नि सृता च प्रवेशयेत् । विवृता तु सती परिवर्तयेत् । यत स्थानाद् भ्रष्टा योनि स्त्रिय शल्यरूपा भवेत् ।

**कर्मभिर्वमनाद्यैश्च मृदुभिर्योजयेत्स्त्रियम् ॥ २६ ॥**
**सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते ।**
**वस्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम् ॥ २७ ॥**

स०-वमनादीनि च कर्माणि मृदूनि-अखराणि, स्त्री(स्त्रिया) कारयितव्या[नि]। सर्वत -अध उपरिष्टाच्च, विशुद्धाया नार्या परिशिष्ट कर्म-वस्त्यादिक, क्रियते ।

**काश्मर्यत्रिफलाद्राक्षाकासमर्दनिशाद्वयैः ।**
**गुडूचीसैर्यकाभीरुशुकनासापुनर्नवै· ॥ २८ ॥**
**परूषकैश्च विपचेत्प्रस्थमक्षसमैर्घृतात् ।**
**योनिवातविकारघ्नं तत्पीतं गर्भदं परम् ॥ २९ ॥**

स०-काश्मर्यादिभि कल्किते कार्षिकैर्घृतात्प्रस्थ पचेत् । तत्-घृत, पीत योनिवातविकारहर सुष्ठु गर्भद च ।

**वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम् ।**
**अजमोदायवक्षारशर्कराचित्रकान्वितम् ॥ ३० ॥**
**पिष्ट्वा प्रसन्नयाऽऽलोड्य खादेत्तद्धृतभर्जितम् ।**
**योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥ ३१ ॥**

स०-वचादिक पिष्ट्वा प्रसन्नयाऽऽलोड्य घृतभर्जित खादेत् योनिपार्श्वार्त्यादिशान्तये ।

**वृषकं मातुलुङ्गस्य मूलानि मदयन्तिकाम् ।**
**पिबेन्मद्यै· सलवणैस्तथा कृष्णोपकुञ्चिके ॥ ३२ ॥**

स०-वृषकादीनि मद्यै सलवणै पिबेत् । तथा पिप्पली-स्थूलजीरके वा मद्यै सलवणै पिबेत् ।

**रास्नाश्वदंष्ट्रावृषकैः शृतं शूलहर पयः ।**

स०-रास्नादिभि शृत पय शूलघ्नम् ।

**गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम् ॥ ३३ ॥**

स०-गुडूच्यादिभि क्वाथै परिषेचन सुखोष्ण हितम्, अक्कतत्वाद्योने ।

**नतवार्ताकिनीकुष्ठसैन्धवामरदारुभिः ।**
**तैलात्प्रसाधिताद्धार्यः पिचुर्योनौ रुजापहः ॥ ३४ ॥**

स०-नतादिभिस्तैलात् पक्वात् पिचुर्योनौ धृतो रुजाघ्न ।

**पित्तलाना तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।**
**शीताः पित्तजितः कार्याः स्नेहनार्थं घृतानि च ३५**

स०-पित्तलाना च योनीना शीतादिका क्रिया सेकाद्या कार्या । स्नेहनार्थ घृतानि च देयानि ।

**शतावरीमूलतुलाचतुष्कात् क्षुण्णपीडितात् ।**
**रसेन क्षीरतुल्येन पाचयेत घृताढकम् ॥ ३६ ॥**
**जीवनीयै· शतावर्या मृद्वीकाभि· परूषकैः ।**
**पिष्टैः प्रियालैश्चाक्षांशैर्द्विबलामधुकान्वितैः ॥ ३७ ॥**
**सिद्धशीते तु मधुन पिप्पल्याश्च पलाष्टकम् ।**
**शर्कराया दशपलं क्षिपेल्लिह्यात्पिचुं ततः ॥ ३८ ॥**
**योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परम् ।**
**क्षतं क्षयमसृक्पित्त कासं श्वासं हलीमकम् ॥ ३९ ॥**
**कामला वातरुधिर विसर्प हृच्छिरोग्रहम् ।**
**अपस्मारार्दितायाममदोन्मादाश्च नाशयेत् ॥ ४० ॥**

स०-शतावरीमूलतुलाचतुष्टयात् क्षुण्णपीडिताद् रसेन दुग्धसमेन सर्पिष आढक पचेज्जीवनीयादिभि कर्षांशै कल्कीकृतै । पक्वे शीते च माक्षिकपलाष्टक, कणाष्टपल, सितापलानि च दश, क्षिपेत् । तस्माच्च कर्षमात्र लिह्यात् योन्यादिदोषघ्न वृष्यादिगुण च ।

**एवमेव पयःसर्पिर्जीवनीयोपसाधितम् ।**
**गर्भदं पित्तजाना च रोगाणां परमं हितम् ॥ ४१ ॥**

स०-अनेनैव क्रमेण क्षीर सर्पिर्वा जीवनीयै पक्व गर्भप्रद पित्तजाना च रोगाणा पर हितम् ।

**बलाद्रोणद्वयक्वाथे घृततैलाढकं पचेत् ।**
**क्षीरे चतुर्गुणे कृष्णाकाकनासासितान्वितैः ॥ ४२ ॥**
**जीवन्तीक्षीरकाकोलीस्थिरावीरर्धिजीवकैः ।**
**पयस्याश्रावणीमुद्गपीलुमाषाख्यपर्णिभिः ॥ ४३ ॥**
**वातपित्तामयान् हत्वा पानाद् गर्भं दधाति तत् ।**

१ "सर्वत इति ऊर्ध्वमध शिरसि च ।" इतीन्दु । "उपकुञ्चिका-कृष्णजीरकम् । वृषको-वासकमूलम् ॥ वार्ताकिनी-भूकण्टकारी, गोष्ठवार्ताकुरित्यन्ये ।" इति शिवदास । २ 'तस्तु विशु' ण । ३ 'चीगैरिका' चन्द्र. । ४ 'चेदक्षै· प्रस्थसम घृतम् ।' इ । ५ 'घृतम्' उ चन्द्र । ६ 'शोर्तिनिवृ' उ । ७ 'वृषस्य मा' चन्द्र. । ८ 'ञ्चिका' उ. ।

१ 'च' उ । २ क्षुण्णपीडितरसार्थ शतावरीमूलान्यत्रार्द्राणि ग्राह्याणि । ३ 'पियालै' इ ण त चन्द्र । ४ 'शैर्मधुकर्द्धिबलान्वितै' ण त चन्द्र । 'शैर्मधुकार्द्धपलान्वितै' स ह । "शैर्द्वियष्टिमधुकैर्भिषक् ।" स च । ५ "तत -तस्मात् । पिचु-कर्षम् ।" इति चन्द्र । ६ 'क्षतक्षय' इ ण । ७ 'उन्मादारत्यपस्मारान् वातपित्तात्मकान् जयेत् ।' स च । ८ 'यामान् मदो' चन्द्र । ९ 'कणापलाष्टक' ट । १० "एवमेवेति शतावरीविधानेन । पय सर्पि -क्षीरोद्भव घृतम् ।" इतीन्दु· । "जीवनीयोपसाधित पयसा सर्पिरेव-एवविध, ज्ञेयम् ॥ तत्-घृततैलम् । दधाति-जनयति ।" इति चन्द्र । "क्षीरोत्थित सर्पि -क्षीरसर्पि । जीवनीयान्यत्र कल्क ॥ पयस्या-अर्कपुष्पी । पीलुपर्णी-मोरटा, केचिन्मूर्वामाहु ।" इति चक्र । ११ 'क्षीरसर्पि० पित्तलाना च योनीना स्याद्भिषग्जितम् ॥' स च । १२ 'क्षीर सर्पिर्वा' इत्यरुणदत्तव्याख्यानमयुक्तम्, चरकचक्रेन्द्वाद्यसम्मतत्वात् । १३ 'र्धिजीरकै' इ ण त चन्द्र । 'वीराद्धिजी' ई.उ. । १४ 'षाखुकर्णि' उ. । १५ 'ददाति' इ ई उ ।

स०-बलाया द्रोणद्वयस्य कषाये घृततैलयोराढकं पचेत्। क्षीरे चतुराढके कृष्णादिभि कल्कितै सामान्यपरिभाषयोक्तप्रमाणै । तत्-घृत, पानेन वातपित्तरोगान् हत्वा गर्भं धत्ते ।मुद्गादीना पर्ण्यो प्रत्येकं सम्बन्ध ,-मुद्गपर्णा पीलुपर्णा माषपर्णाति ।

**रक्तयोन्यामसृग्वर्णैरनुबन्धमवेक्ष्य च ॥ ४४ ॥**
**यथादोषोदयं युञ्ज्याद् रक्तस्थापनमौषधम् ।**

स०-रक्तयोन्या लोहित वर्णैर्लक्षयित्वाऽनुबन्ध च यथादोषोदय, रक्तस्थापन भेषज प्रयुञ्जीत ।

**पाठां जम्ब्वाम्रयोरस्थि शिलोद्भेदं रसाञ्जनम् ॥ ४५॥**
**अम्बष्ठां शाल्मलीपिच्छां समङ्गां वत्सकत्वचम् ।**
**बाह्लीकबिल्वातिविषारोध्रतोयदगैरिकम् ॥ ४६ ॥**
**शुण्ठीमधूकमाचीकरक्तचन्दनकट्फलम् ।**
**कट्वङ्गवत्सकानन्ताधातकीमधुकार्जुनम् ॥ ४७ ॥**
**पुष्ये गृहीत्वा सञ्चूर्ण्य सक्षौद्रं तन्दुलाम्भसा ।**
**पिबेदर्शःस्वतीसारे रक्तं यश्चोपवेश्यते ॥ ४८ ॥**

---

१ "रक्तयोन्या योनिव्यापदि । असृग्वर्णै -सिराव्यधोक्तैर्लिङ्गै (सू अ. २७) ॥ शिलोद्भेद-शिलाजतु । अम्बष्ठा-मयूरशिखा । शाल्मलीपिच्छा-मोचरस । समङ्गा-रक्तमण्डिका । बाह्लीक-कुङ्कुमम् । अनन्ता-दुरालभा । अञ्जन-सोवीरम् ।" इति चन्द्र । "अम्बष्ठा-साहस्री, सैव बहुमूलिका । समङ्गा-मञ्जिष्ठा । [ शिलोद्भेद -पाषाणभेद । माचीक-उत्तरापथे प्रसिद्धमेव । अनन्ता-उत्पलसारिवा ।]" इतीन्दु । "अम्बष्ठा-पाठाभेद । पुष्यनक्षत्रोद्धरण चात्राहृष्टद्रव्योपकारक ज्ञेयम् ।" इति चक्र. । "अम्बष्ठा दक्षिणे ख्याता गृह्णन्त्यन्ये च लक्ष्मणाम् । मृद्वीकास्थाने 'माचीक' इति पाठान्तरे माचीक-देवदारु ।" इति वृन्दटीकाया श्रीकण्ठ । "पद्मकेशर-पद्मकिञ्जल्कम् ।" इति चक्रटीकाया शिवदास । २ अस्याग्रे "मञ्जिष्ठागुरु ('मधु' उ ) कट्फलमुस्तप्रियङ्गुमिसिकुष्ठै । कट्वङ्गकुटजशाबरककुभत्वङ्मधुकपद्मकमधूकै ॥ १ ॥ कुङ्कुमबिल्वातिविषामाक्षीकरसाञ्जनै सकिञ्जल्कै । पिष्टैर्घृत विपक्व द्विगुणाजाक्षीरसयुक्तम् ॥२॥ स्त्रीणामपत्यजनन योनिरुजादोषजित्सदा युञ्ज्यात् । उत्तरबस्तिषु सर्पिर्योज्य कल्याणक नाम ॥ ३ ॥" इति त्रय श्लोका ई उ चन्द्र पुस्तकेष्वधिका. । ३ हृदयसङ्ग्रहचरकोक्तवत्सकत्वक्स्थाने वङ्गवृन्दचक्रयोगरत्नाकरा 'पद्मकेसरम्' इति पठन्ति । ४ 'त्वचाम्' ई ई. । ५ 'मधुक' ई ई उ ण त च द्र स मू । ६ हृदयसङ्ग्रहस्थयोर्मधूकमाचीकयो स्थाने चरके वङ्गवृन्दचक्रयोगरत्नाकरेषु च मरिचमृद्वीकयो पाठ । ७ 'मार्द्वीक' ई. । 'मार्द्वीका' उ । 'माध्वीक' चन्द्र । 'मृद्वीका' इति क्वचित् । ८ 'धातुकी' ई ई स स. । ९ 'धुकार्जनम्' ई उ चन्द्र. । १० 'लाम्बुना' ई.ई.उ.स.सं. ।

**दोषा जन्तुकृता ये च बालाना तांश्च नाशयेत् ।**
**योनिदोष रजोदोष श्यावश्वेतारुणासितम् ॥ ४९ ॥**
**चूर्णं पुष्यानुग नाम हितमात्रेयपूजितम् ।**

स०-पाठादिक पुष्ये गृहीत्वा सञ्चूर्ण्य क्षौद्रान्वित तन्दुलाम्भसा पिबेत् अर्शोविषयादिषु । ये च दोषा जन्तुकृता बालाना, तांश्च योनिदोषादीन् हन्ति । पुष्यानुगसञ्ज्ञमेतच्चूर्णं हितमात्रेयपूजित च ।

**योन्या बलासदुष्टाया सर्वं रूक्षोष्णमौषधम् ॥ ५० ॥**

स०-योन्या बलासेन दुष्टाया सर्वमेव रूक्षोष्ण हितम् ।

**धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ।**
**जम्ब्वाम्रसारकासीसरोध्रकट्फलतिन्दुकैः ॥ ५१ ॥**
**सौराष्ट्रिकादाडिमत्वगुदुम्बरशलाटुभि. ।**
**अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ॥ ५२ ॥**
**तैलप्रस्थं तदभ्यङ्गपिचुबस्तिषु योजयेत् ।**
**तेन शूनोन्नता स्तब्धा पिच्छिला स्राविणी तथा ५३**
**विप्लुतोपप्लुता योनिः सिध्येत्सस्फोटशूलिनी ।**

स०-धातक्यादिभि कार्षिकैश्छागमूत्रे द्विगुणे, क्षीरे च द्विगुणे, तैलप्रस्थ पचेत् । तत्तैलमभ्यङ्गादिषु योज्यम् । अनेन तैलेन शूनादिगुणा योनि सिध्यति ।

**यवान्नमभयारिष्टं सीधु तैलं च शीलयेत् ॥ ५४ ॥**
**पिप्पल्ययोरजःपथ्याप्रयोगांश्च समाक्षिकान् ।**

स०-तथा यवान्नादिक शीलयेत् । पिप्पल्यादिप्रयोगाश्च क्षौद्रान्वितानभ्यसेत् ।

**कासीसं त्रिफला काङ्क्षी साम्रजम्ब्वस्थि धातुकी ५५**
**पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ।**

स०-कासीसादिकश्चूर्णो माक्षिकान्वित पैच्छिल्ये विशदत्वकृत् ।

**पलाशधातकीजम्बूसमङ्गामोचसर्जजः ॥ ५६ ॥**
**दुर्गन्धे पिच्छिले क्लेदे स्तम्भनश्चूर्ण इष्यते ।**
**आरग्वधादिवर्गस्य कषायः परिषेचनम् ॥ ५७ ॥**

स०-पलाशादिजश्चूर्णो दुर्गन्धादिषु स्तम्भनमिष्यते ।

आरग्वधादिवर्गक्वाथो ( हृ सू अ १५।१७ ) दुर्गन्धादौ परिषेक ।

---

१ 'दन्तकृता' ई ई उ । 'दोषागन्तुकृता' इति चरकवङ्गवृन्दचक्रोक्त पाठोऽशुद्ध । २ "हित-पथ्यम् ।" इति चन्द्र । "['शूना उन्नता इति अन्तर्मुखी सूचीमुखी चोच्यते । अथवा दोषारब्धत्व शूनोन्नतत्वम् ।' इति जर्जट ।] काङ्क्षी-सौराष्ट्री । आम्रजम्बुनो फलास्थि ।" इतीन्दु । ३ 'ज्येष्ठाम्भसा' ण त । 'श्रेष्ठाम्भसा' ड । ४ 'धातुक्या' ई स मू ,ड. । ५ 'शूनोत्तानोन्नता' ई त स द्र । ६ सुप्ता पि' स मू । ७ 'ध्येत स्फो' ई । ८ 'शीधु' स स । ९ 'काच्छी' ई ई चन्द्र । १० 'समङ्गाऽस्थि' स.च. । ११ 'धातुकी' ई.ई.ण.त. । १२ 'चने ।' ई ।

**स्तब्धानां कर्कशाना च कार्य मार्दवकारकम्।**
**धारणं वेसवारस्य कृसरापायसस्य च ॥ ५८ ॥**

स०–स्तब्धानां खरस्पर्शाना च योनीना मृदुत्वकर वेसवारादिधारण विधेयम्। वेसवार –कुट्टितखिन्नसरक्तमासविशेष । कृसरा च पायस च कृसरापायसम्।

**दुर्गन्धानां कषायः स्यात्तैलं वा कल्क एव वा।**
**चूर्णो वा सर्वगन्धानां पूतिगन्धा(न्ध्य)पकर्षणः ५९**

स०–दुर्गन्धाना योनीना सर्वगन्धद्रव्याणा कषाय –क्वाथो, हित । तत्पक्व तैलं तत्कल्क एव वा। अथवा सर्वगन्धाना चूर्ण पूतिगन्धा(न्ध्य)पहः।

**श्लेष्मलानां कटुप्रायाः समूत्रा बस्तयो हिताः।**
**पित्ते समधुकक्षीरा वाते तैलाम्लसंयुता. ॥ ६० ॥**

स०–श्लेष्मलाना योनीना कटुप्राया गोमूत्रयुताश्च बस्तयो हिता'। पित्ते मधुयष्टीक्षीरयुक्ता बस्तय । वाते तैलाम्लयुता बस्तयो हिता ।

**सन्निपातसमुत्थायाः कर्म साधारणं हितम्।**

स०–सन्निपातोत्थाया साधारण कर्म हितम्।

**एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः ॥ ६१ ॥**
**अदुष्टे प्राकृते बीजे जीवोपक्रमणे सति।**

स०–एव-अनेन प्रकारेण, योनिषु विशुद्धासु सतीषु स्त्रियो गर्भ लभन्ते। प्राकृते बीजेऽदुष्टे सति तथा जीवस्योपक्रमणे क्षेपे सति।

**पञ्चकर्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम् ॥ ६२ ॥**
**परीक्ष्य वर्णैर्दोषाणा दुष्ट तद्घ्नैरुपाचरेत्।**

स०–नरस्य पञ्चभि कर्मभि शुद्धस्य, इन्द्रिय–शुक्रं, दोषाणा वर्णैर्दुष्ट परीक्ष्य तद्घ्नै –दोषघ्नै, उपक्रमेत्।

**मञ्जिष्ठाकुष्ठतगरत्रिफलाशर्करावचाः ॥ ६३ ॥**
**द्वे निशे मधुकं मेदां दीप्यकं कटुरोहिणीम्।**
**पयस्याहिङ्गुकाकोलीवाजिगन्धाशतावरी. ॥ ६४ ॥**
**पिष्ट्वाऽक्षांशा घृतप्रस्थ पचेत्क्षीरचतुर्गुणम्।**
**योनिशुक्रप्रदोषेषु तत्सर्वेषु प्रशस्यते ॥ ६५ ॥**
**आयुष्य पौष्टिकं मेध्यं धन्यं पुंसवनं परम्।**
**फलसर्पिरिति ख्यात पुष्पे पीतं फलाय यत् ॥ ६६ ॥**
**म्रियमाणप्रजानां च गर्भिणीना च पूजितम्।**
**एतत्परं च बालाना ग्रहघ्नं देहवर्धनम् ॥ ६७ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने गुह्यरोगप्रतिषेधो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥**

स०–मञ्जिष्ठादिभि कार्षिकै पिष्टैर्घृतप्रस्थ क्षीरचतुर्गुण पचेत्। तद्घृत सर्वेषु योनिशुक्रप्रदोषेषु शस्यते। आयुष्यादिगुण पर पुसवन म्रियमाणगर्भाणा गर्भिणीना च हितम्। फलसर्पिरिति नाम्ना प्रसिद्धम्। कुत ? यस्मात् पुष्पे–आर्तवसमये, पीतं फलाय जायते। तथा पर बालाना ग्रहघ्न शरीरवृद्धिकर चेति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठ उत्तरस्थाने गुह्यरोगप्रतिषेधो नाम चतुस्त्रिंशोऽध्याय समाप्त ॥ ३४ ॥

**इति शल्यतन्त्रं नाम पञ्चममङ्गं समाप्तम्।**

---

१ "[ स्तब्धाना–पुसङ्गमाद्यसमर्थानाम् ॥ बस्तयो–उत्तरबस्तय ।] अदुष्टे–अदुष्टत्वभावे सति । बीजस्य चात्मन, उपक्रमे–आचरति सति। [बीजे–आर्तवाख्ये। अदुष्टे–वाताद्यदूषिते। बीजोपक्रमणे–आर्तवसामर्थ्यकरै पूर्वोक्तैस्तैलेन नारी पित्तलैर्माषैश्वेत्याद्युपक्रमैरुपक्रान्ते सति।] [अदुष्टे बीजे प्राकृते–प्रकृतिमापन्ने, किमवश्य गर्भसम्भव ? इत्युच्यते–जीवोपक्रमणे सति। बीजशब्देन द्वयमङ्गीकृत शुक्र शोणित च। जीवश्चात्र कर्मपुरुष उक्त। शारीरेष्वस्ति च सत्त्वमापपादिक यज्जीवरपृक् शरीरेणाभिसम्बध्नातीत्यादि। ततश्च सामग्रीजनकम्। 'न ह्येको वर्तते भावो वर्तते नाप्यहेतुक.।' इत्याम्नानात्। इति जेज्जट।]" इतीन्दु'। "कर्कशाना–कठिनानाम्। बीजे–शुक्रशोणिताख्ये। प्राकृते–प्रकृतिभवे। जीवस्य–आत्मन, उपक्रमे सति।" इति चन्द्र। "प्राकृते बीजे इति सहजगुणसम्पन्ने शुक्रशोणितबीजे अदुष्टे सति, एवभूतससर्गे जीवोपक्रमगे सत्येव गर्भं योषितो विन्दन्ति। जीवोपक्रमण पूर्वकर्मप्रेरितात् सुयोगाद्भवति।" इति चक्र। २ 'वा' स स। ३ 'स्यात्तैवर. कल्क' स च। ४ 'ता उत्तरब' ट। ५ 'त्थाया' ई उ.चन्द्र। ६ अस्याग्रे "चन्दनोनतयो( ? )क्षीरतिक्तापद्मभकेसरै (रम्)। कुटजत्वक्फल मुस्त जम्ब्वाम्रास्थि रसाञ्जनम् ॥ १ ॥ पद्मकोत्पलबिल्वाब्दकट्फलैसाधिता (?) लिशा। धातक्यतिविषामासीपाठामोचरसोदकम् ॥ २ ॥ मधूक मधुकानन्तासारिमै (वा)दाडिम[त्व] चम्। मृत्लोध्रार्जुनशैलेयसमङ्गा नागरा समा ॥ ३ ॥ चूर्णं श्रेष्ठाम्बुना पीत हन्ति लोहितमेहिनम्। मूर्च्छातृष्णाज्वरार्ताय रक्तातीसारमेहिनाम् ॥ ४ ॥ स्त्रीणामसृग्दर याति गर्भसस्थापन परम्।" इति सार्धचत्वार श्लोका उ पुस्तकेऽधिका। ७ 'गर्भो भवति योषिताम्।' उ.। ८ 'बीजोप' स.स.।

१ 'बीजस्यो' ट ड। २ अस्याग्रे "रस शिरीषपत्राणा कल्क च षडह पिबेत्। क्षीरोपनाशिना (?) योषिद्दतुस्नाता सुतार्थिनी ॥ १ ॥" इति इ पुस्तकेऽधिक. श्लोक। ३ 'मेदा' 'प्यक.' 'हिणी।' 'वरी।' इ ई उ ण त स ह्न.। ४ 'क्षाश घृ' स स.। 'क्षाशैर्घृत' इ उ ण त अरुण.चन्द्र.स मू। ५ 'त्क्षीर चतु' इ ण. त। 'त्क्षीरे चतुर्गुणे' उ.। ६ 'षु च श' ण.त.। ७ "फलाय–प्रजाख्याय।" इतीन्दु.।

# पञ्चत्रिंशोऽध्यायः।

अधुना विषतन्त्रमुच्यते, सद्य प्राणहारित्वेन तुल्यसाधर्म्यात्।

**अथातो विषप्रतिषेधं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

(गद्यसूत्रे ॥ २ ॥)

तत्र विषस्य प्रागुत्पत्तिदर्शनार्थमाह—

**मथ्यमाने जलनिधावमृतार्थं सुरासुरैः।**
**जात. प्रागमृतोत्पत्तेः पुरुषो घोरदर्शन. ॥ १ ॥**
**दीप्ततेजाश्चतुर्दंष्ट्रो हरिकेशोऽनलेक्षण.।**
**जगद्विषण्णं त दृष्ट्वा तेनासौ विषसंज्ञितः ॥ २ ॥**
**हुंकृतो ब्रह्मणा मूर्तो तत. स्थावरजङ्गमे।**
**सोऽध्यतिष्ठन्निज रूपमुज्झित्वा वञ्चनात्मकम् ॥ ३ ॥**

**स०**—समुद्रे सुरासुरैरमृतार्थं विलोड्यमानेऽमृतोत्पत्ते पूर्वं पुरुषो दारुणदृष्टि समिद्धधामा चतुर्दंष्ट्रो हरिवर्णकचो दहनतुल्यनेत्रो जात । त पुरुप दृष्ट्वा भुवन विषाद गतम्। अत एवासौ जगद्विषदनात् विषसज्ञ । ब्रह्मण हुंकृतस्तु सन्नसौ वञ्चनस्वभाव स्व रूप हित्वा स्थावरजङ्गमाख्ये मूर्ती अधितस्थौ। पुरुषरूपी तिष्ठेदसौ ततो ब्रह्मा शाप दद्यात्।

**स्थिरमत्युल्वणं वीर्ये यत्कन्देषु प्रतिष्ठितम्।**
**कालकूटेन्द्रवत्साख्यशृङ्गीहालाहलादिकम् ॥ ४ ॥**

**स०**—यद्विष स्थिर—स्थावर, कन्देषु प्रतिष्ठित वीर्ये अत्युल्बण तत् कालकूटादिभेदभिन्नम्। फलादिष्वपि तद् भवति, किन्तु कन्दे वीर्यातिकृत्। आदिशब्देन सङ्ग्रहोक्ता भेदा गृह्यन्ते। यथा (स उ अ ४० )—"कालकूट वत्सनाभ सौंकुक वालक कर्दमक वैराट मुस्तक शृङ्गी पुण्डरीक महाविष हालाहल मर्कटक कर्कटं कौशपुष्पकमिन्द्रायुव तथा तैलम्।" इति(त्यादि) भेदा प्रकीर्तिता । एषा तु लक्षण तत्रोक्तम्। तदिह विस्तरतरग्रन्थशङ्कया नोक्तम्।

**सर्पलूतादिदंष्ट्रासु दारुणं जङ्गमं विषम्।**

**स०**—सर्पादिदंष्ट्रासु तु यद्व्यवस्थित तज्जङ्गमम्। तच्च दारुणम्। दंष्ट्रेत्युपलक्षणार्थम्, नखविषाणमूत्रादीनामपि पुरो विषत्वेन वक्ष्यमाणत्वात्।

**स्थावरं जङ्गमं चेति विषं प्रोक्तमकृत्रिमम् ॥ ५ ॥**

**स०**—स्थावर जङ्गम चेति द्विप्रकार विषमकृत्रिमम्।

**कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः।**
**हन्ति योगवशेनाशु चिराच्चिरतराच्च तत् ॥ ६ ॥**
**शोफपाण्डूदरोन्मादद्दुर्नामादीन् करोति वा।**

**स०**—गरसज्ञ तु कृत्रिमम्। यस्मात्तत् क्रियते । अत एव विविधानि वक्ष्यमाणान्यौषधानि यस्मिंस्तदेवम्। तच्च योगवशाच्छीघ्र हन्ति। तथा विविधयोगवशाच्चिराच्चिर हन्ति। शोफादींश्च विधत्ते।

अथ विषगुणान्निर्दिशति—

**तीक्ष्णोष्णरूक्षविशदं व्यवाय्याशुकरं लघु ॥ ७ ॥**
**विकाषि सूक्ष्ममव्यक्तरसं विषमपाकि च।**

**स०**—तत्सर्वं विष तीक्ष्णादिगुणं स्यात् । गुणनिर्देशनादस्य रौक्ष्याद्वातमुष्णत्वात् पित्त करोतीति ज्ञाप्यते । ननु, रौक्ष्यादिभिर्गुणैर्वायो कोपो न युज्यते, रौक्ष्यादीना गुणत्वाद्वायोश्च द्रव्यत्वात्। ब्रूम । वायोर्ये रौक्ष्यादयो गुणास्तेषामेव विपस्थै रौक्ष्यादिभिर्गुणैर्वृद्धि क्रियते। ते च वायोरात्मभूता, तन्नाशे वायोर्नाश स्यात्, यथा तन्तुनाशे पटनाश । तस्माद्युक्त पवनस्य रौक्ष्यादिभिर्गुणै प्रकोप । एव पित्तेऽपि योज्यम्। कटूम्लादिकथनेऽपि विपस्याव्यक्तरसत्वम्, अनेकरससम्भवादेकस्यापि च व्यक्तस्यानुपलब्धे । व्यवायित्व चास्य प्रागेवाखिलकायस्य व्याप्ते । तथा अपाकि,—विषस्य हि मन्त्रतन्त्राभ्यामन्तरेण पाकाभावात्, पक्वेऽप्यन्ने विषस्यापक्वस्यैवोपलब्धे । अत एव शमितमपि किञ्चित्कारण प्राप्य पुन कुप्यति ।

१ अथ विषप्रतिषेधश्चरके चि० २३ अध्याये, सुश्रुते क० २ अध्याये, अष्टाङ्गसङ्ग्रहे उ० ४० अध्याये चास्ति वर्णित । २ 'दर्शयन्नाह' ण । ३ 'हरित्केशो' उ चन्द्र । ४ "हरिकेश इति पिङ्गलकेश ।" इति चक्र । "हुंकृत —तिरस्कृत । स —विषसज्ञक पुरुष । वञ्चनात्मक —विघ्नकारी मरणात्मक ।" इति चन्द्र । ५ 'सञ्ज्ञक.' इ उ चन्द्र । ६ 'मूर्तौस्तत स्थावरजङ्गमा ।' इ ण.त चन्द्र.। 'मूर्तस्तत.० ङ्गमम्।' उ. । 'मूर्तस्तत.० ङ्गमात्।' ई.। ७ 'त्मक ।' इ चन्द्र । ८ 'कृत सन्न' ट.। ९ 'वीर्यं' उ । १० 'शाकुक मालकर्दमे वैराटि मु' ट ड. ण त । ११ 'कुशपुष्प' स.द्व.स.च.।

१ "कृत्रिम—कारणेन निवृ(र्वृ)त्तम्।" इति चन्द्र । "तच्च—कृत्रिम,सयोगवशात् आशु वा हन्ति चिराद्वा चिरतराद्वा । अथवा तन्न हन्ति, अपि तु शोफादीन् करोति ।" इतीन्दु । तीक्ष्ण—राजिकामरिचादिवत्। सूक्ष्म—सूक्ष्ममार्गानुप्रवेशि । आशु—शीघ्र प्रहणनकारि । व्यवायि—सकल देह व्याप्य पश्चात् पाकायायि । विकाशि—प्रसर्पदपसर्पद्धातुबन्धशैथिल्यकारि । विशद—अपिच्छिलम्। लघु—लघुगुणयुक्तम् । अपाकीति आहारवदुदरानलेन पक्तुमशक्यम्।" इति डल्हण । "विकासित्वादिति हिंसनशीलत्वात्। विपूर्वश्च हि कसतिर्हिंसार्थे।" इति चक्र । २ 'च' ण.अरुण । ३ 'विकासि' इ चन्द्र स.च । 'विकाशि' उ.स मू स सु । ४ 'रसैर्युक्तमपा' चन्द्र । ५ 'कटूम्लोष्णादि' ट ण त । ६ कटूम्लादिकथनमनेनैव ग्रन्थकारेण सर्पविषप्रतिषेधे (उ अ ३६।२) कृतम्। तद्यथा—"विशेषाद्रूक्षकटुकमम्लोष्ण स्वादुशीतलम्।" इति । ७ 'कथनमपि' ट । 'कथनेन वि' ड.।

**ओजसो विपरीतं तत् तीक्ष्णाद्यैरन्वितं गुणैः ॥ ८ ॥**
**वातपित्तोत्तरं नृणां सद्यो हरति जीवितम् ।**

स०–तथा विषमोजसो विपरीतं तीक्ष्णादिभिर्दशभिर्गुणैर्युक्तम्। तीक्ष्णाद्यैरन्वितमिति हेतौ प्रथमा । तीक्ष्णादिगुणयुक्तत्वादोजसो विपरीतमित्यर्थः । तथा वातपित्तोत्तरं नराणां द्रागेव जीवितं हरति ।

कुत [1] इत्याह—

**विषं हि देहं सम्प्राप्य प्राग् दूषयति शोणितम् ॥ ९ ॥**
**कफपित्तानिलांश्चानु [2] समं [3] दोषान् [4] सहाशयान् ।**
**ततो हृदयमास्थाय [5] देहोच्छेदाय कल्पते ॥ १० ॥**

स०–यस्माद्विषं शरीरं प्राप्य पूर्वं रक्तं सर्वशरीरगतं दूषयति, पश्चात् कफपित्तवातानाशयसहितान् दूषयति । अनन्तरं कफादिभिः सममेव हृदयमाश्रित्य शरीरनाशाय सम्पद्यते । ननु, विषस्य तीक्ष्णादिभिर्गुणैर्युगपत् त्रिदोषकोपित्वाद्रक्तकोपित्वाच्च पूर्वं शोणितं दूषयति पश्चात्त्रीन् दोषानिति यदुक्तं तदयुक्तमिव दृश्यते । अत्र भणामः । विषप्रभावेण रक्तमाकृष्टं पूर्वं सह तेन संयुक्तं विषेण दूष्यते, ततो युगपदेव दोषत्रयकोपः, ततो दोषैः शोणितेन सह हृदयं व्याप्य सर्वस्रोतांसि बद्ध्वा देहोच्छेदाय प्रवर्तत इति न किञ्चिदत्रानुपपन्नम् ।

**स्थावरस्योपयुक्तस्य [6] वेगे पूर्वे प्रजायते ।**
**जिह्वायाः श्यावता स्तम्भो मूर्च्छा त्रासः क्लमो वमिः ॥**

स०–स्थावरस्य विषस्योपयुक्तस्य प्रथमे वेगे रसनाश्यावतादि जायते ।

**द्वितीये वेपथुः स्वेदो दाहः कण्ठे च वेदना [7] ।**
**विषं चामाशयं प्राप्तं कुरुते हृदि वेदनाम् ॥ १२ ॥**

स०– द्वितीये वेगे वेपथ्वादयः । विषं चामाशयं प्राप्तं हृदये वेदनां विधत्ते ।

**तालुशोषस्तृतीये तु शूलं चामाशये भृशम् ।**
**[8] दुर्बले हरिते [9] शूने जायेते चास्य लोचने ॥ १३ ॥**

१ 'तु ती' चन्द्र । २ "अनु–पश्चात्, समदोष सहाश्रय–वातपित्तकफाशयान्, दूषयति । आस्थाय–सन्ताप्य, देहच्छेदाय–शरीरविघाताय, कल्पते–सम्पद्यते ॥ पूर्वे–प्रथम, वेग स्यात् । ततो जिह्वाया श्यावता, स्तम्भो गात्रस्य, मूर्च्छा–मोहभ्रमा ।" इति चन्द्र । "समदोष–अन्यूनाविक्यान्यतमविकारान् कृत्वा, सहाशयान् कफादीन् दूषयति । [ समदोष–तुल्यदोष, समबलदोषमित्यर्थ ॥ कण्ठे वेदना –अन्नाभ्यवहरणासहत्वादिकम् । चशब्दात् पूर्वोक्ता जिह्वाश्यावतादयश्च । ]" इतीन्दु । ३ 'समदोष' ई उ चन्द्र स स. । ४ 'सहायवत्' इ उ । 'सहाश्रयम्' चन्द्र । ५ 'देहच्छेदाय' चन्द्र । ६ 'स्य पूर्वे वेगेऽथ जा' स स । 'स्य वेगे पूर्वं प्र' ण चन्द्र । 'पूर्वे च जा' ई उ । ७ 'वेदना.' स स । ८ 'दुर्वर्णे' ई उ. । ९ 'शून्ये' ई. ।



**[1] पक्वाशयगते तोद [2] हिध्माकासान्त्रकूजनम् ।**

स०–तृतीये च वेगे तालुशोषः । आमाशयेऽतिरुजा स्यात् । नेत्रे चास्य दुर्बलादिगुणे भवतः । पक्वाशयगते तोदादयः स्युः ।

**चतुर्थे जायते वेगे शिरसश्चातिगौरवम् ॥ १४ ॥**

स०–चतुर्थे वेगे मूर्ध्नोऽतिगुरुत्वं जायते । चशब्दात् पूर्वोक्ता रसनाश्यावतादयः स्युः । एवमग्रेऽपि चशब्दार्थो बोध्यः ।

**कफप्रसेको वैवर्ण्यं पर्वभेदश्च पञ्चमे ।**
**[5] सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥ १५ ॥**

स०–पञ्चमे वेगे कफप्रसेकादि । सर्वदोषाणां प्रकोपः । पूर्वोक्ताश्च । पक्वाशये व्यथा च ।

**षष्ठे संज्ञाप्रणाशश्च [7] सुभृशं चातिसार्यते ।**

स०–षष्ठे वेगे चेतनायाः प्रणाशोऽतिशयेनातिसारश्च ।

**स्कन्धपृष्ठकटीभङ्गो भवेन्मृत्युश्च सप्तमे ॥ १६ ॥**

स०–सप्तमे स्कन्धादिभङ्गः, सप्तानां धातूनां दूषणान्मृत्युश्च स्यात् ।

**प्रथमे विषवेगे [8] तु वान्तं शीताम्बुसेचितम् ।**
**सर्पिर्मधुभ्यां संयुक्तमगदं पाययेद् द्रुतम् ॥ १७ ॥**

स०–प्रथमे विषवेगे तु कृतवमनं शिशिरजलसेचितं शीघ्रमेवागदं सघृतमाक्षिकं पाययेत् ।

**द्वितीये पूर्ववद्वान्तं विरिक्तं चानु पाययेत् ।**

स०–द्वितीये विषवेगे पूर्ववत्–शीताम्बुसेचितं, वान्तं विरिक्तं चानु–पश्चात्, अगदं पाययेत् ।

**तृतीयेऽगदपानं [9] तु हितं नस्यं तथाऽञ्जनम् ॥ १८ ॥**

स०–तृतीये वेगेऽगदपानं नस्यमञ्जनं च हितम् ।

**चतुर्थे स्नेहसंयुक्तमगदं [11] प्रतियोजयेत् ।**

स०–चतुर्थे वेगे स्नेहसयुतमगदं प्रतियोजयेत् ।

**पञ्चमे मधुकक्वाथमाक्षिकाभ्यां युतं हितम् ॥ १९ ॥**

स०–पञ्चमे वेगे मधुयष्टिकाक्वाथमाक्षिकाभ्यां युक्तमगदं हितम् ।

**षष्ठेऽतिसारवत्सिद्धिर्**

स०–षष्ठे वेगेऽतिसारतुल्या चिकित्सा ।

१ इन्दुस्तु 'पक्वाशयगते तोदहिध्माकासान्त्रकूजनम् ।' इत्यपि चतुर्थवेगस्य लक्षणं मन्यते । २ 'तोदो हि' ण त स सु । ३ 'कासोऽन्त्र' स सु । ४ 'बोद्धव्य' ट । ५ चन्द्रनन्दनस्तु 'सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ।' इत्यपि षष्ठवेगस्य लक्षणं मन्यते । ६ 'शयव्यथा च' ण त । ७ 'सम्भृश' स स । ८ 'वेगेऽथ वा' ई उ स स । ९ "[ अगद–विषघ्नौषधम् । ]" इतीन्दु । "स्नेहोऽत्र गव्यं घृतम्, विषघ्नत्वात्तस्य । स्नेहग्रहणेन पूर्वप्रस्तुतं मधु निवर्तते ।" इति डल्हण । "अगदपानं हितम् ।" इति चन्द्र । १० 'च' स.द्व. । ११ 'प्रतिभोज' स.स. ।

अवपीडस्तु सप्तमे ।
मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशितं क्षिपेत् ॥ २० ॥

स०–सप्तमे वेगेऽवपीडो–रोगानुत्पादनीयोक्तो ( हृ सू अ ४।६ ), देय ।

अथवा मस्तके काकपद कृत्वा सरक्त पिशित न्यसेत् ।

कोशातक्यग्निकः पाठा सूर्यवल्यमृताभयाः ।
शेलुः शिरीषः किणिही हरिद्रे क्षौद्रसाह्वया ॥ २१ ॥
पुनर्नवे त्रिकटुकं बृहत्यौ सारिवे बला ।
एषां यवागूं निर्यूहे शीतां सघृतमाक्षिकाम् ॥ २२ ॥
युञ्ज्याद्वेगान्तरे सर्वविषघ्नीं कृतकर्मणः ।

स०–कोशातक्यादीना क्वाथे यवागू सिद्धा शीता ससर्पिष्कमाक्षिका युञ्ज्यात् । सूर्यवल्ली–करवीरकाकारपुष्पी । क्षौद्रसाह्वय–वटमाक्षिकम् । वेगान्तरे–वेगमध्ये, सर्वविषघ्नीम् । कृत कर्म यस्य तस्यैव कार्यम् ।

तद्वन्मधूकमधुकपद्मकेसरचन्दनैः ॥ २३ ॥

स०–मधूकादिक्वाथे पेया शीता सघृतमाक्षिका युञ्ज्यात् ।

अञ्जनं तगरं कुष्ठं हरितालं मनःशिला ।
फलिनी त्रिकटु स्पृक्का नागपुष्पं सकेसरम् ॥ २४ ॥
हरेणुर्मधुकं मांसी रोचना काकमालिका ।
श्रीवेष्टकं सर्जरसः शताह्वा कुङ्कुमं बला ॥ २५ ॥
तमालपत्रतालीसभूर्जोशीरनिशाद्वयम् ।
कन्योपवासिनी स्नाता शुक्लवासा मधुद्रुतैः ॥ २६ ॥
द्विजानभ्यर्च्य तैः पुष्ये कल्पयेदगदोत्तमम् ।
वैद्यश्चात्र तदा मन्त्रं प्रयतात्मा पठेदिमम् ॥ २७ ॥
"नमः पुरुषसिंहाय नमो नारायणाय च ।
यथाऽसौ नाभिजानाति रणे कृष्णपराजयम् ॥ २८ ॥
एतेन सत्यवाक्येन अगदो मे प्रसिद्ध्यतु ।
नमो वैडूर्यमाते हुलुहुलु रक्ष मां सर्वविषेभ्यः ॥ २९ ॥
गौरि गान्धारि चाण्डालि मातङ्गि स्वाहा ।"
पिष्टे च द्वितीयो मन्त्रः–
"हरिमायि स्वाहा ॥ ३० ॥"
अशेषविषवेतालग्रहकार्मणपाप्मसु ।
मरकव्याधिदुर्भिक्षयुद्धाशनिभयेषु च ॥ ३१ ॥
पाननस्याञ्जनालेपमणिबन्धादियोजितः ।
एष चन्द्रोदयो नाम शान्तिस्वस्त्ययनं परम् ॥३२॥
[ वासवो वृत्रमवधीत्समालिप्तः किलामुना । ]

स०–अञ्जनादीनि द्रव्याणि । कन्या कृतोपवासा स्नाता शुक्लवस्त्रा तै –पूर्वोक्तैर्द्रव्यै , माक्षिकसिक्तै पुष्यनक्षत्रे विप्रान् पूजयित्वाऽनन्तरमगदवरमिम कल्पयेत् । वैद्यश्च समीपस्थो मन्त्र नम इत्यादिक पठेत् । पिष्टे चागदे द्वितीयो मन्त्रो हरिमाय्यादिकोऽत्र योज्य । निखिलेपु विषादिषु पानादिमणिबन्धादियोजितोऽय चन्द्रोदयो नामागद पर शान्त(न्ति) स्वस्त्ययनम् ।

जीर्णं विषघ्नौषधिभिर्हतं वा
दावाग्निवातातपशोषितं वा ।
स्वभावतो वा न गुणैः सुयुक्तं
दूषीविषाख्यां विषमभ्युपैति ॥ ३३ ॥
वीर्याल्पभावादविभाव्यमेतत्
कफावृतं वर्षगणानुबन्धि ।
तेनार्दितो भिन्नपुरीषवर्णो
दुष्टास्त्ररोगी तृडरोचकार्तः ॥ ३४ ॥
मूर्च्छन् वमन् गद्गदवाक् विमुह्यन्
भवेच्च दूष्योदरलिङ्गजुष्टः ।

१ "अवपीड –नस्यविशेष । शस्त्रेण काकपद कृत्वा–काकपदसदृश छेद दत्त्वा ।" इति चन्द्र । "अवपीड –कल्कादिनस्यम् ॥ अग्निक –चित्रको भल्लातक च ।" इतीन्दु । "अग्निक –अजमोद , मोरट इत्यन्ये । सूर्यवल्ली–पटोलसदृश पत्रा, यस्या पत्ररसेनाक्त मास स्विन्नमिव भवति, अन्ये सूर्यावर्तमाहु । पुनर्नवे–सितपीतपुष्पे ।" इति डल्हण । २ 'पीडश्च' उ स सु । ३ अत्रावपीडशब्देन 'कल्काद्यैरवपीडस्तु' इति नस्यविन्युक्त ( हृ सू अ.२०।७ ) अवपीडसज्ञक नस्य ग्राह्यम्, इन्दुचन्द्रनन्दनाभ्यां तथैव व्याख्यातत्वात् सप्तमवेगार्तपुरुषाय रोगानुत्पादनीयोक्तमवपीड दातुमशक्यत्वात् चरके ( चि अ.२३।६८ ) मृतकल्पस्य पुरुषस्य नस्याञ्जनविधानाच्च । अरुण दत्तव्याख्यान त्वसमञ्जसम् । ४ कोशातक्यादिनिर्यूहे हृदयसङ्ग्रहपठितयो क्षौद्रसाह्वयाबृहत्यो स्थाने सुश्रुतो गिर्याह्वाहरेणू पठति । "गिर्याह्वा–श्वेतस्यन्द ।" इति डल्हण । ५ 'ऽभया ।' इ ई उ चन्द्र. । ६ 'ह्वयम्' अरुण । ७ 'नवा' चन्द्र । 'नवौ' स स । ८ 'बले' ई उ स द्व । 'बला' चन्द्र । ९ 'कालमा' ई उ. । 'कालमञ्जिका' चन्द्र. । 'कोमलाक्षिका' सं.मू. । १० 'पत्र तालीस भूर्जोशीर नि' ई.उ ।

१ 'मधुद्रुतै' इ ई उ चन्द्र । २ 'र्च्य पुष्यर्क्षे क' चन्द्र । ३ 'श्चाशु' चन्द्र । 'त्र सदा' स मू । ४ 'कृष्ण प' इ उ चन्द्र स मू । ५ 'हुलुकुलु' ई उ । 'हरहर रक्ष' स मू । ६ 'चण्डालि' ण त चन्द्र । ७ 'ॐ हरि' ण त स मू । 'हारितमायि' ई उ । ८ "कार्मण –परद्रोहार्थो मन्त्रादियोग ।" इति चक्र । "कार्मण–वशीकरणम् ।" इतीन्दु । ९ 'शान्ति. स्व' इ ण त ,ट ड । १० [ ] श्लोकार्धमिद इ ई उ चन्द्र स मू पुस्तकेषूपलब्धम् । ११ 'लिप्तोऽमुना किल ।' ई उ स मू । १२ 'वा सुगुणैर्न यु' ण । 'वा स्वगुणैर्न यु' त । १३ 'षाख्य' ई उ चन्द्र म मू । १४ 'वाच्च निपातयेत्तत्' स सु । १५ दूष्योदर–सन्निपातोदरम् ।

आमाशयस्थे कफवातरोगी
पक्वाशयस्थेऽनिलपित्तरोगी ॥ ३५ ॥
भवेन्नरो ध्वस्तशिरोरुहाङ्गो
विलूनपक्षः स यथा विहङ्गः ।
स्थितं रसादिष्वथवा विचित्रान्
करोति धातुप्रभवान् विकारान् ॥ ३६ ॥

स०–यद्विष पुराण, विषघ्नौषधिभिर्वा हतवीर्य, यद्वा दावाग्नीत्यादिभि शोषित, स्वभावेनैव वा गुणैर्न सुष्ठु युक्त, तद् दूषीविपसञ्ज्ञामुपैति । तथा वीर्यस्याल्पत्वादेतदविभाव्य–अलक्ष्यम् । तथा कफेनावृत वर्षवृन्द च नतस्थायि । तेन–दूषीविषेण, पीडितो भिन्नपुरीषवर्णादिक स्यात् । तथा मूर्च्छा गच्छन् वमन्नस्फुटवाक् तथा विमुह्यन् तथा दूष्येनोपलक्षित उदरे यानि लिङ्गानि ( ह नि अ १२।२० ), तै सेवितश्च भवेत् ।

आमाशयस्थे दूषीविषे कफवातरोगी स्यात्

पक्वाशयस्थे दूषीविषेऽनिलपित्तरोगी स्यात् । उपजातय ।

ध्वस्ता कचा शरीर च यस्य स ध्वस्तशिरोरुहाङ्गो विलूनपक्ष पक्षीव भवेत् ।

रसादिषु च स्थित नानाविधान् धातुप्रभवान् विकारान् करोति । उपेन्द्रवज्रावृत्तम् ।

प्राग्वाताजीर्णशीताभ्रदिवास्वप्नाहिताशनैः ।
दुष्टं दूषयते धातूनतो[1] दूषीविषं स्मृतम् ॥ ३७ ॥

स०–तच्च पुरोवातादिभिर्दुष्ट सद्धातून् दूषयति यत , ततोऽपि हेतोर्दूषीविष स्मृतम् ।

दूषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितम् ।
दूषीविषारिमगदं लेहयेन्मधुनाऽऽप्लुतम् ॥ ३८ ॥

स०–दूषीविषपीडित नर सुस्विन्नमूर्ध्वमधस्ताच्च शोधित सन्त दूषीविषारि–वक्ष्यमाण, माक्षिकेणाप्लुतमगद लेहयेत् ।

तमेवाह—

पिप्पल्यो[2] ध्यामकं मासी रोध्रमेला सुवर्चिका ।
कुटन्नटं नतं कुष्ठं यष्टी चन्दनगैरिकम् ॥ ३९ ॥
दूषीविषारिर्नाम्नाऽयं न चान्यत्रापि[3] वार्यते ।

स०–पिप्पल्यादिकोऽयमगदो नाम्ना दूषीविषारि. । न चान्यस्मिन्नपि वार्यते । किन्तु विशेषेण प्रयुज्यते ।

विषदिग्धेन विद्धस्तु प्रताम्यति मुहुर्मुहुः ॥ ४० ॥
विवर्णभावं भजते विषादं चाशु गच्छति ।
कीटैरिवावृतं चास्य गात्रं चिमिचिमायते ॥ ४१ ॥

श्रोणिपृष्ठशिरःस्कन्धसन्धयः स्युः सवेदनाः ।
कृष्णदुष्टास्रविस्रावी तृण्मूर्च्छाज्वरदाहवान् ॥ ४२ ॥
दृष्टिकालुष्यवमथुश्वासकासकरः क्षणात् ।
आरक्तपीतपर्यन्तः श्यावमध्योऽतिरुग्व्रण. ॥ ४३ ॥
शूयते[1] पच्यते सद्यो गत्वा मांसं च कृष्णताम् ।
प्रक्लिन्नं शीर्यतेऽभीक्ष्णं सपिच्छिलपरिस्रवम् ॥४४॥

स०–विपदिग्धेन–विपलिप्तेन शस्त्रेण, विद्धो नर पुन पुन प्रताम्यति । तथा वैवर्ण्य प्रयाति । द्रागेव विषादमेति । अस्य च–विषदिग्धेन विद्धस्य, शरीर कीटैरिव व्याप्त चिमिचिमायते । श्रोण्यादयश्चास्य सरुजा स्यु । कृष्ण दुष्ट च रक्त क्षरति । तृडादियुत क्षणेनैव च दृष्टिकालुष्यादिकृत् स्यात् । तथा व्रण ईपद्रक्तपर्यन्त श्यावमध्यो महारुज स्यात् । तथा शूयते पाक याति । तेषा सद्य एव च मास कृष्णता गत्वा प्रक्लिन्न सद्दीर्यते नित्यमेव पिच्छिलयुत परिस्रव कुर्यात् ।

कुर्याद्मर्मविद्धस्य हृदयावरणं[2] द्रुतम् ।

स०–अमर्मविद्धस्य हृदयावरण द्रुत विदधीत ।

शल्यमाकृष्य तप्तेन लोहेनानु दहेद्व्रणम् ॥ ४५ ॥
अथवा मुष्ककश्वेतासोमत्वक्ताम्रवल्लितः ।
शिरीषाद् गृध्रनख्याश्च क्षारेण प्रतिसारयेत् ॥ ४६ ॥
शुकनासाप्रतिविषाव्याघ्रीमूलैश्च लेपयेत् ।

स०–शल्यमाकृष्य तप्तेन लोहेन व्रण पश्चाद्दहेत् ।

अथवा मुष्ककादिक्षारेण प्रतिसारयेत् । शुकनासादिभिश्च लेपयेत् व्रणम् ।

कीटदष्टचिकित्सां च कुर्यात्तस्य यथार्हतः ॥ ४७ ॥

स०–तस्य च–दिग्धफलविद्धस्य, कीटदष्टचिकित्सित यथायोग कुर्यात् ।

व्रणे तु पूतिपिशिते क्रिया पित्तविसर्पवत् ।

स०–व्रणे च पूतिमासे पित्तविसर्प इव चिकित्सा कार्या ।

सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वा[3]ऽरातिचोदिताः[4] ॥४८॥
गरमाहारसम्पृक्तं यच्छन्त्यासन्नवर्तिनः ।

स०–नानाकान्ता योषित पत्ये सौभाग्यार्थ राज्ञश्च( राज्ञे वा ) निकटवर्तिनो नराश्चारातिप्रेरिता गरयुक्त भोजन ददति ।

नानाप्राण्यङ्गशमल[5]विरुद्धौषधिभस्मनाम् ॥ ४९ ॥
विषाणां चाल्पवीर्याणां[6] योगो गर इति स्मृतः ।

स०–नानाप्रकारप्राण्यङ्गशकृता तथा विरुद्धौषधिभस्मना विषाणा च[7] स्तोकवीर्याणा यो योग , स गर इति स्मृत ।

---

१ 'धातुं ततो' ई उ । २ सुश्रुते तु ( क अ २।५१ )–''पिप्पल्यो ध्यामक मासी शाबर परिपेलवम् । सुवर्चिका ससूक्ष्मैला तोय कनकगैरिकम् ॥ नाम्ना दूषीविषारिस्तु न चान्यत्रापि वार्यते ।'' इति दूषीविषारेर्भेषजनवकात्मक पाठ , इह तु द्वादशौषधात्मक इति विशेष । ३ ''अन्यत्रापि–स्थावरजङ्गमयोस्तीक्ष्णयोरपीत्यर्थ. ।'' इति डल्हण. ।

१ 'सूयते' उ । २ हृदयावरणं–''मधुसर्पिर्मज्जपयोगैरिकमथ गोमयरस वा । इक्षु सुपक्वमथवा काक निष्पीड्य तद्रस वरणम् ॥'' इत्यादि चरकोक्त ( चि अ.२३।४६ ) हृदयरक्षाकरमौषधम् । ३ 'चाराति' इ.त. चन्द्र । ४ ''अरातिचोदिता –धूर्तप्रेरिता. शत्रुप्रेरिता वा ।'' इति चन्द्र । ५ 'ङ्गसमल' इ.ई.उ.चन्द्र. । ६ 'मन्दवीर्याणा' ई.उ.स.मू. । ७ 'वा' ट. ।

तेन पाण्डुः कृशोऽल्पाग्निः कासश्वासज्वरार्दितः ५०
वायुना प्रतिलोमेन स्वप्नचिन्तापरायणः ।
महोदरयकृत्प्लीही दीनवाग्दुर्बलोऽलसः ॥ ५१ ॥
शोफवान् सतताध्मातः शुष्कपादकरः क्षयी ।
स्वप्ने गोमायुमार्जारनकुलव्यालवानरान् ॥ ५२ ॥
प्रायः पश्यति शुष्कांश्च वनस्पतिजलाशयान् ॥
मन्यते कृष्णमात्मानं गौरो, गौरं च कालकः ॥ ५३ ॥
विकर्णनासानयनं पश्येत्तद्विहतेन्द्रियः ।

स०—तेन गरेण पाण्ड्वादिगुणः कासादिपीडितश्च स्यात् । वातेन प्रतिलोमेन युक्तस्तथा स्वप्नचिन्तापरः स्यात् । तथा बृहज्जठरयकृत्प्लीहवान् दीनवागादिगुणश्च स्यात् । स्वप्ने शृगालादीन् पश्यति । प्रायेण शुष्कवृक्षोदपानानि लोकते । आत्मानं च गौरः सन् कृष्णं मन्यते । कृष्णश्च गौरं मन्यते । तेन—गरविषेण, विहतेन्द्रियः सन् विकर्णघ्राणचक्षुषं पश्येत् ।

एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुपद्रवैः ॥ ५४ ॥
गरार्तो नाशमाप्नोति कश्चित्सद्योऽचिकित्सितः ।

स०—एतैः—उक्तैरुपद्रवैः, अपरैश्चानुक्तैर्दारुणैः क्लिष्टः सन् गरपीडितः कश्चिदचिकित्सितः सद्य एव नाशमश्नुते ।

गरार्तो वान्तवान् भुक्त्वा तत्पथ्यं पानभोजनम् ५५
शुद्धहृच्छीलयेद्धेम सूत्रस्थानविधेः स्मरन् ।

स०—गरातुरः कृतवमनः सन् तत्—पूर्वोक्तं, पथ्यं पानभोजनं भुक्त्वा शुद्धहृदयः सुवर्णं शीलयेत् । किं कुर्वन् ? सूत्रस्थानोक्तविधेः—"शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ।" (हृ सू अ ७।२८) इति स्मरन् । विधेः स्मरन्नित्यत्र "अधीगर्थ-" इत्यादिना विधिशब्दात् कर्मणि षष्ठी ।

शर्कराक्षौद्रसंयुक्तं चूर्णं ताप्यसुवर्णयोः ॥ ५६ ॥
लेहः प्रशमयत्युग्रं सर्वयोगकृतं विषम् ।

स०—माक्षीकधातुकाञ्चनयोश्चूर्णं शर्करामाक्षिकान्वितं लेहो दारुणं गरयोगजं विषं हन्ति ।

मूर्वामृतानतकणापटोलीचव्यचित्रकान् ॥ ५७ ॥
वचामुस्तविडङ्गानि तक्रकोष्णाम्बुमस्तुभिः ।
पिबेद्रसेन वाऽम्लेन गरोपहतपावकः ॥ ५८ ॥

स०—मूर्वादीनि तक्रादिभिरम्लेन वा—बीजपूररसादिरसेन, गरोपहताग्निः पुमान् पिबेत् ।

पारावतामिषशठीपुष्कराह्वशृतं हिमम् ।
गरतृष्णारुजाकासश्वासहिध्माज्वरापहम् ॥ ५९ ॥

स०—पारावतामिषादिभिः शृतं शीतं जलं गरतृष्णादिघ्नम् ।

विषप्रकृतिकालान्नदोषदूष्यादिसङ्गमे ।
विषसङ्कटमुद्दिष्टं शतस्यैकोऽत्र जीवति ॥ ६० ॥

स०—विषप्रकृत्यादियोगे सति विषसङ्कटं कथितम् । [ अत्र— ] अस्मिंश्च विषसङ्कटे, विपार्तः शतमध्य एको जीवेत् । तत्र विषप्रकृतिः—पित्तप्रकृतिः । कालो—वर्षाः । विषान्नं—सर्षपादि । विषदोषः—पित्तम् । दूष्यं—रक्तम् । आदिशब्देन सात्म्यादीनां ग्रहणम् ।

क्षुत्तृष्णाघर्मदौर्बल्यक्रोधशोकभयश्रमैः ।
अजीर्णवर्चोद्रवतापित्तमारुतवृद्धिभिः ॥ ६१ ॥
तिलपुष्पफलाघ्राणभूवाष्पघनगर्जितैः ।
हस्तिमूषिकवादित्रनिःस्वनैर्विषसङ्कटैः ॥ ६२ ॥
पुरोवातोत्पलामोदमदनैर्वर्धते विषम् ।

स०—क्षुधादिभिर्विषं वृद्धिमेति ।

वर्षासु चाम्बुयोनित्वात्सक्लेदं गुडवद्गतम् ॥ ६३ ॥
विसर्पति घनापाये, तदगस्त्यो हिनस्ति च ।
प्रयाति मन्दवीर्यत्वं विषं तस्माद्घनात्यये ॥ ६४ ॥

स०—प्रावृषि च जलप्रभवत्वाद्विषं सक्लेदं गुडवद् याति । विसर्पति—प्रसरति, घनापाये—विगतवर्षासमये । तत्—विषं, अगस्त्यो हिनस्ति—अल्पशक्ति करोति । तस्माद्घनात्यये—शरत्समये, मन्दवीर्यत्वं प्रयाति ।

इति प्रकृतिसात्म्यर्तुस्थानवेगबलाबलम् ।
आलोच्य निपुणं बुद्ध्या कर्मानन्तरमाचरेत् ॥ ६५ ॥

स०—इति—एवं पूर्वोक्तेन प्रकारेण, प्रकृत्यादिकं बुद्ध्वा—यत्नेन निरूप्य, ततः कर्म कुर्यात् ।

---

१ 'मेहोदर' इ स मू । २ 'हीनवा' इ इ उ । ३ 'श्येत्तु विह' इ उ. । ४ 'नान्यालो' ट । ५ 'वान्तिमान्' स मू । ६ 'विधि' इ उ । ७ 'युक्तश्चूर्णस्ताप्य' स स । ८ "ताप्यसुवर्णयोश्चूर्णं शर्करया क्षौद्रेण च संयोजितो लेहः उग्र—उत्कृष्टवीर्यं, योगकृतं सर्वं विषं प्रशमयति—नाशयति । अत्र सर्वशब्देन गरस्य नानात्वं द्योत्यते ॥ अम्लेन—काञ्जिकाद्यम्लद्रव्येण, मांसरसेन च पिबेत् ।" इतीन्दुः । ९ 'सर्वं योग' स स. । १० 'चाम्लेन' इ.ई.उ.स.द. ।

१ 'राह्व शृतं' इ ई उ ण त. । २ अस्याग्रे "त्र्यूषणं पञ्चलवणं मञ्जिष्ठा रजनीद्वयम् । सूक्ष्मैला त्रिवृता पत्रं विडङ्गानीन्द्रवारुणीम् ॥ १ ॥ मधुकं चेति सक्षौद्रं गोविषाणे निधापयेत् । तस्मादुष्णाम्बुना मात्रां प्राग्भक्तं योजयेत्तथा ॥ २ ॥ विषं भुक्तं जरां याति निर्विषेऽपि न दोषकृत् । लाक्षाप्रियङ्गुमञ्जिष्ठा समृणालहरेणुका ॥ ३ ॥ सयष्ट्याह्वा मधुयुता बस्तपित्तेन कल्पिता । निखनेद्गोविषाणस्था सप्तरात्रं महीतले ॥ ४ ॥ तत्र कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत् । सस्पृष्टं सविषं तेन सद्यो भवति निर्विषम् ॥ ५ ॥" इति इ पुस्तकेऽधिका पञ्च श्लोकाः । ३ "विषादीनामर्थात् सदृशानां सङ्गमे—एकत्र सन्निपाते, विषसङ्कटमुद्दिष्टम् । [ आदिशब्देनान्यदपि तत्सदृशगुणं क्षुत्पिपासाद्यपतर्पणं च गृह्यते ॥ ] मदन—हर्षः । [ तिलपुष्पफलाघ्राण—तिलस्य पुष्पफलयोराघ्राणम्, तिलपुष्पस्य मदनफलस्य चेति केचित् । उत्पलस्यामोदः—उत्पलामोदः । मदनेन—कामवृद्ध्या । अम्बुयोनित्वात्—सागरोद्भवतया । ]" इतीन्दुः । ४ 'मध्ये यथैको' ट.ड. । ५ 'गर्जनैः' इ. । ६ 'वाऽम्बु' इ.ण. ।

श्लेष्मिकं वमनैरुष्णरूक्षतीक्ष्णैः प्रलेपनैः ।
कषायकटुतिक्तैश्च भोजनैः शमयेद्विषम् ॥ ६६ ॥

स०–श्लैष्मिक विष वमनैरुष्णादिगुणै प्रलेपैश्चेद्दृशैर्भोजनैश्च कषायादिगुणै शान्ति नयेत् ।

पैत्तिकं स्रंसनैः सेकप्रदेहैर्भृशशीतलैः ।
कषायतिक्तमधुरैर्घृतयुक्तैश्च भोजनैः ॥ ६७ ॥

स०–पैत्तिक विष विरेचनैस्तथाऽतिशीतलै सेकै प्रलेपैश्च तथा भोजनै कषायतिक्तमधुरैराज्ययुतैश्च शमयेत् ।

वातात्मकं जयेत्स्वादुस्निग्धाम्ललवणान्वितैः ।
सघृतैर्भोजनैर्लेपैस्तथैव पिशिताशनै ॥ ६८ ॥

स०–वातिक मधुरादियुक्तै ससर्पिष्कैर्भोजनैर्लेपैर्मांसभोजनैश्च जयेत् ।

नाघृतं स्रंसनं शस्तं प्रलेपो भोज्यमौषधम् ।

स०–विषे स्रसन–विरेचन, प्रलेपो वा भोज्यमौषध वा नाघृत शस्तम् । कि तर्हि ? सर्वमेव तत् सघृत शस्तम् ।

सर्वेषु सर्वावस्थेषु विषेषु न घृतोपमम् ॥ ६९ ॥
विद्यते भेषजं किञ्चिद्विशेषात् प्रबलेऽनिले ।

स०–सर्वेषु विषेषु सर्वावस्थेषु च घृततुल्य नान्यदौषध किमप्यस्ति । विशेषेण च वातेऽतिरिक्ते ।

अयत्नाच्छ्लेष्मगं साध्यं, यत्नात् पित्ताशयाश्रयम् ७०
सुदुःसाध्यमसाध्यं वा वाताशयगतं विषम् ॥ ७०½ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने विषप्रतिषेधो नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

स०–कफगतं विषमल्पयत्नेन साध्यम् ।
पित्ताशयाश्रय यत्नेन साध्यम् ।
वाताशयाश्रितं सुष्ठु दु खेन साध्यतेऽसाध्य वा स्यादिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने विषप्रतिषेधो नाम पञ्चत्रिंशोऽध्याय समाप्त ॥ ३५ ॥



१ 'हैर्भूरिशी' स मू । २ 'णायुतै' ण चन्द्र । ३ 'बलानिले' स स । ४ 'वाताधिके।' ट । ५ 'च्छ्लैष्मिक' उ. 'च्छ्लेष्मकं' ण त । ६ 'याश्रितम्' उ.स द्व । ७ अस्याग्रे "जतुसर्जरसोशीरसर्षपपत्रवालकैः । सवेल्लारु( 'लुपु' उ )-ष्करपुरै कुसुमैरर्जुनस्य च ॥ १ ॥ धूपो वासगृहे हन्ति विष स्थावरजङ्गमम् । न तत्र कीटा सविषा नोन्दुरा न सरीसृपाः ॥ २ ॥ न कृत्याः कार्मणाद्याश्च धूपोऽय यत्र दह्यते ।" इति इ.उ. पुस्तकयोरधिकौ सार्द्धौ द्वौ श्लोकौ ।



# षट्त्रिंशोऽध्यायः ।

विषप्रक्रमात् सर्पविषप्रतिषेध विवक्षुराह—

अथातः सर्पविषप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
( गद्यसूत्रे ॥ २ ॥ )

दर्वीकरा मण्डलिनो राजीमन्तश्च पन्नगाः ।
त्रिधा समासतो भौमा., भिद्यन्ते ते त्वनेकधा ॥ १ ॥
व्यासतो योनिभेदेन नोच्यन्तेऽनुपयोगिन ।

स०–दर्वीकरादिभेदेन भुजङ्गा सङ्क्षेपेण त्रिप्रकारा भौमा । ते तु योनिभेदेन विस्तरतोऽनेकधा भिद्यन्ते । विशेषाश्चेहानुपयोगिनो यत , ततो न निगद्यन्ते ।

विशेषाद्रूक्षकटुकमम्लोष्णं स्वादुशीतलम् ॥ २ ॥
विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् ।

स०–दर्वीकरमण्डलिराजीमन्तस्तेषा विष रूक्षादिगुणं क्रमेण च वातपित्तकफाना कोपन स्यात् । यद्यपि विष रूक्षादिगुणम्, तथाऽप्यतिशयार्थं पुनरिह गुणकथनम् । विशेषाच्च विष ह्युष्णमेव कथित न शीतलम् ।

तारुण्यमध्यवृद्धत्वे वृष्टिशीतातपेषु च ॥ ३ ॥
विषोल्बणा भवन्त्येते व्यन्तरा ऋतुसन्धिषु ।

स०–एते च–दर्वीकरादय , तारुण्यादिषु यथाक्रम वृष्ट्यादिषु च विषोल्बणा भवन्ति । वृष्टिशब्देनेह श्रावणादयश्चत्वारो मासा गृहीता । एव शीतातपाद्याश्चत्वारो मासा गृहीता । व्यन्तरा –विजातय , ऋतुसन्धिषु विषाधिका स्यु । ऋतुसन्धि –प्रागुक्त ( हृ सू अ ३।५८ ) ।

रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ॥ ४ ॥
फणिनः शीघ्रगतयः सर्पा दर्वीकराः स्मृताः ।

१ अथ सर्पविषप्रतिषेधश्चरके चि० २३ अध्याये, सुश्रुते क० ३।४।५।६ अध्यायेषु, अष्टाङ्गसङ्ग्रहे उ० ४१।४२ अध्याययोश्चास्ति वर्णित । २ 'योगत' इ ई उ चन्द्र स द्व. । ३ "दर्वीकराणा विष विशेषात् रूक्षकटुक वातकोपकर च । मण्डलिना विष विशेषादम्लोष्ण पित्तकोपकर च । राजीमता विष विशेषात् स्वादुशीतल कफकोपन च ।" इति चन्द्र । "विष च यद्यप्यव्यक्तरसयु(मु)क्त, तथाऽपीह कटुकादिरसाभिधानमनुरसाभिप्रायेण ज्ञेयम् । यथा,–आतपे कटुकत्व, तद्वदिहापि । किंवा, अव्यक्तरसतायामेव मनाक् कटुकादीनामधिकत्वं ज्ञेयम्।" इति चक्र । "[विषस्य तीक्ष्णादिगुणयोगे सत्यपि विशेषकथनमत्र रूक्षादीनां द्वयानामेतेषामाधिक्यस्य द्योतनार्थम् ।]" इतीन्दुः। ४ 'राजीमता विष' ट. । ५ 'विशेष च विष' ड. । 'विशेषतोऽत्युष्ण' ण. । ६ 'मताः' ई.उ. ।

स०-रथाङ्गादिधारिण फणावन्तो द्रुतगतयो भुजङ्गा दर्वाकरा इति मुनिभि स्मृता ।

**ज्ञेया मण्डलिनोऽभोगा मण्डलैर्विविधैश्चिताः ॥ ५ ॥**
**प्रांशवो मन्दगमनाः**

स०-अभोगा -अल्पभोगा , तथा नानाप्रकारैर्मण्डलैश्चिता प्रांशवोऽशीघ्रगतयो मण्डलिनो वेद्या ।

**राजीमन्तस्तु राजिभिः ।**
**स्निग्धा विचित्रवर्णाभिस्तिर्यगूर्ध्वं च चित्रिता ॥६॥**

स०-स्निग्धाभा नानाप्रकाराभिस्तिर्यगूर्ध्वगराजिभिर्विचित्रिता राजीमन्तो वेद्या ।

विजातयोऽधुनोच्यन्ते—

**गोधासुतस्तु गौधेरो विषे दर्वीकरैः समः ।**
**चतुष्पाद्**

स०-गोधापुत्रो गौधेर । ननु, गौधेर इति नाम्नैव गोधासुत प्रत्यपादि । तथा च "गोधाया ढ्रक्" इत्यपत्यार्थव्युत्पादितोऽयम् । सत्यमाह भवान् । यादृच्छिकनामशङ्कानिरासाय त्वेतत् । स च दर्वाकरैर्विषेण तुल्य , तैरेव जातत्वात् । चतुष्पात्-चतुष्पादोऽसौ ।

**व्यन्तरान् विद्यादेतेषामेव सङ्करात् ७**
**व्यामिश्रलक्षणास्ते हि सन्निपातप्रकोपनाः ।**

स०-व्यन्तराश्चैतेषामेव सङ्करेण जानीयात् । यतश्च ते सङ्कीर्णलक्षणा । तस्मात् सन्निपातप्रकोपना स्यु ।

**आहारार्थं भयात् पादस्पर्शादतिविषात् क्रुधः ॥ ८ ॥**
**पापवृत्तितया वैराद्देवर्षियमचोदनात् ।**
**दशन्ति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरम् ॥ ९ ॥**

स०-आहारादिभि कारणैर्भुजङ्गा दशन्ति । तेषु यथोत्तर विषस्याधिक्य कथितम् ।

**आदिष्टात् कारणं ज्ञात्वा प्रतिकुर्याद्यथायथम् ।**

स०-आदिष्टात् सर्पात् हेतु विदित्वा यथास्व चिकित्सेत् ।

**व्यन्तरः पापशीलत्वान्मार्गमाश्रित्य तिष्ठति ॥ १० ॥**

स०-व्यन्तरो भुजङ्गम पापस्वभावत्वाद्वर्त्म आश्रित्यास्ते ।

**यत्र लालापरिक्लेदमात्र गात्रे प्रदृश्यते ।**
**न तु दंष्ट्राकृतं दशं तत्तुण्डाहतमादिशेत् ॥ ११ ॥**
**एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम् ।**
**दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं, त्रीणि तानि तु ॥ १२ ॥**
**मासच्छेदादविच्छिन्नरक्तवाहीनि दष्टकम् ।**
**दंष्ट्रापदानि चत्वारि तद्वद्दष्टनिपीडितम् ॥ १३ ॥**
**निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमं वदेत् ।**

स०-यस्मिन् काये लालापरिक्लेदमात्र उपलभ्यते, न पुनर्दंष्ट्राकृत दशम् । तत्-एवभूत, तुण्डाहत कथयन्ति ।

एकं दंष्ट्रापद द्वे वा दंष्ट्रापदे रक्तवर्जिते तद् व्यालीढसञ्ज्ञम् ।

द्वे दंष्ट्रापदे सशोणिते व्यालुप्त विद्यात् ।

त्रीणि तु दंष्ट्रापदानि मासच्छेदात् सन्ततास्रवाहीनि दष्टकमादिशेत् ।

दंष्ट्रापदानि चत्वारि तद्वत्-दष्टकमिव, दष्टनिपीडित स्यात् । एषु मध्ये द्वयमादिकथित निर्विष वदेत् । पश्चिम-दष्टनिपीडिताख्य, असाध्य वदेत् । व्यालुप्तदष्टक तु कृच्छ्रसाध्यमित्यर्थादवगम्यते ।

**विषं नाहेयमप्राप्य रक्तं दूषयते वपुः ॥ १४ ॥**
**रक्तमण्वपि तु प्राप्तं वर्धते तैलमम्बुवत् ।**

स०-सर्पज विष न शोणितमप्राप्य शरीर दूषयते, अपि तु प्राप्य । किन्तु रक्त स्तोकमपि प्राप्य विष वर्धते । यथा तैल जल प्राप्य प्रसरति तथैव । आहेयमिति "दृतिकुक्षि" इत्यादिना भवार्थे ढञ् ।

**भीरोस्तु सर्पसंस्पर्शाद्भयेन कुपितोऽनिलः ॥ १५ ॥**
**कदाचित्कुरुते शोफं सर्पाङ्गाभिहतं तु तत् ।**

स०-भीरो -सभयस्य पुस , सर्पसस्पर्शाद्धेतोर्यद्भय तेन वायु क्रुद्ध कदाचिच्छोफ विधत्ते । तत् सर्पाङ्गाभिहत स्यात् ।

**दुर्गान्धकारे विद्धस्य केनचिद्दंष्ट्रशङ्कया ॥ १६ ॥**
**विषोद्वेगो ज्वरश्छर्दिर्मूर्च्छा दाहोऽपि वा भवेत् ।**
**ग्लानिर्मोहोऽतिसारो वा तच्छङ्काविषमुच्यते ॥ १७॥**

---

१ 'नो भोगे' स मू । २ "अभोगा -फणरहिता । प्रांशवो-दीर्घाकृतय ॥" [ गोधाया दर्वीकरेणोत्पादित इति द्योत्यते । दर्वीकर इत्युपलक्षण मण्डलिराजिलयोरप्येवमूह्यम् ॥ ] सङ्करात्-स्त्रीपुसमिश्रीभावात् । आविष्टात्-आशु मन्त्रेणाहूतात् सर्पात् दशेषु दशकान्यतम कारण ज्ञात्वा यथायथ प्रतीकारमौषधमन्त्रादिक कुर्याद्वा न वा ॥ आवृत्य-रुद्ध्वा ।" इतीन्दु । "एतेषा-दर्वीकरमण्डलिराजीमताम् ।' इति चन्द्र । ३ 'न्तश्च' चन्द्र । ४ 'ग्धाभिर्बहुवर्णा' इ. । 'ग्धाभिश्चित्र' स मू । ५ 'र्ध्वं विचि' इ. । ६ 'ग्धाभिर्नाना' ट । ७ 'गौधेयो' ई उ । ८ 'त्यार्थे प्रतिपादि' ट । ९ 'वृत्ततया' इ ई स.स । १० 'मनोद' इ ण. चन्द्र.स मू. । ११ 'आविष्टात्' ई.उ.चन्द्र स.स. । १२ 'मावृत्य' इ.ई.उ.चन्द्र.स.स. ।

१ 'गात्रेषु ह' इ उ चन्द्र स मू । २ 'ष्ट्राक्षत दशे' इ त चन्द्र । 'ष्ट्राक्षत दश' ई । ३ 'त तुण्डा' ई चन्द्र । ४ 'च' इ स मू । ५ "तद्वत्-मासच्छेदादविच्छिन्नरक्तवाहीनि । पश्चिम दश-दष्टनिपीडितम् ।" इति चन्द्र । "अत्र-तुण्डाहतादिपञ्चके । आद्य द्वय-तुण्डाहत व्यालीढ च । पश्चिम तु द्वय-दष्टक दष्टनिपीडित च । पारिशेष्यात् व्यालुप्त सविष साध्य च ॥ केनचित्-कण्टकादिना ।" इतीन्दु । "केनचिदिति निर्विषेणापि । विषशङ्कया विषोद्वेगादिति विषशङ्कयैव विषप्रादुर्भावादित्यर्थ । शङ्का चेय प्रभावादेव विषजनिका ।" इति चक्र । ६ 'मप्याद्य' स मू । ७ 'स्मिन् सति काये' ट.ड । ८ 'तत्प्राप्त' इ चन्द्र । ९ 'लबिन्दुवत्' चन्द्र स.स । १० 'भीरो सर्पाङ्गस' स.स । ११ 'दुर्गेऽन्ध' इ । 'दुरन्ध० न्चिद्विषशङ्कया' स च. । १२ 'विषोद्वेको' इ चन्द्र. स.मू । 'विषोद्वेगाज्ज्वर' र.स.च. । 'विषवेगाज्ज्वर' उ. ।

स०-दुर्गान्धकारे केनचित्प्राणिना विद्धस्य दष्टशङ्कया विषोद्वेगादयः स्युः, तच्छङ्काविषं निगद्यते ।

**तुद्यते सविषो दंश. कण्डूशोफरुजान्वितः ।**
**दह्यते ग्रथितः किञ्चिद्विपरीतस्तु निर्विष. ॥ १८ ॥**

स०-सविषो दंशो व्यथ्यते, कण्ड्वादियुतो दह्यते, जालकवत् किञ्चित् ग्रथितः ।

अस्माद्विपरीतश्च निर्विषः स्यात् ।

**पूर्वे दर्वीकृतां वेगे दुष्टं श्यावीभवत्यसृक् ।**
**श्यावता तेन वक्त्रादौ सर्पन्तीव च कीटकाः ॥ १९ ॥**
**द्वितीये ग्रन्थयो वेगे, तृतीये मूर्ध्नि गौरवम् ।**
**दृग्रोधो दंशविक्लेदश्चतुर्थे ष्ठीवनं वमिः ॥ २० ॥**
**सन्धिविश्लेषणं तन्द्रा पञ्चमे पर्वभेदनम् ।**
**दाहो हिध्मा च, षष्ठे तु हृत्पीडा गात्रगौरवम् ॥ २१ ॥**
**मूर्च्छा विपाकोऽतीसारः, प्राप्य शुक्रं तु सप्तमे ।**
**स्कन्धपृष्ठकटीभङ्गः सर्वचेष्टानिवर्तनम् ॥ २२ ॥**

स०-दर्वीकराणां प्रथमे विषवेगे श्याववर्णं दुष्टं च रक्तं स्यात् । तेन च-तादृशा रक्तेन, मुखनयनादौ श्यावता स्यात् । कीटकाश्च गात्रे सर्पन्तीव ।

द्वितीये विषवेगे ग्रन्थयः स्युः ।
तृतीये शिरोगुरुत्वादयः स्युः ।
चतुर्थे ष्ठीवनादयः ।
पञ्चमे सन्धिविश्लेषणं तन्द्रा पर्वभेदनं दाहो हिक्का च ।
षष्ठे च वेगे हृदयपीडाद्याः ।

सप्तमे शुक्रं प्राप्य स्कन्धादिभङ्गः सर्वचेष्टानिवर्तनं स्यात् ।

**अथ मण्डलिदष्टस्य दुष्टं पीतीभवत्यसृक् ।**
**तेन पीताङ्गता दाहो, द्वितीये श्वयथूद्भवः ॥ २३ ॥**
**तृतीये दंशविक्लेदः स्वेदस्तृष्णा च जायते ।**
**चतुर्थे ज्वर्यते, दाहः पञ्चमे सर्वगात्रगः ॥ २४ ॥**

स०-मण्डलिना दष्टस्य प्रथमे वेगे रक्तं दुष्टं पीतीभवति । तेन च रक्तेन पीताङ्गता दाहश्च ।

द्वितीये श्वयथूद्भूतिः ।
तृतीये दंशविक्लेदादयः ।
चतुर्थे वेगे ज्वरो दाहः ।
पञ्चमे सर्वशरीरगतो दाहः ।

**दष्टस्य राजिलैर्दुष्टं पाण्डुतां याति शोणितम् ।**
**पाण्डुता तेन गात्राणां, द्वितीये गुरुताऽति च ॥ २५ ॥**
**तृतीये दंशविक्लेदो नासिकाक्षिमुखस्रवाः ।**
**चतुर्थे गरिमा मूर्ध्नो मन्यास्तम्भश्च, पञ्चमे ॥ २६ ॥**
**गात्रभङ्गो ज्वरः शीतः**

स०-राजिमता दष्टस्य रक्तं दुष्टं पाण्डुतां गच्छति । तेन हेतुना गात्राणां पाण्डुता ।

द्वितीये वेगेऽतिगात्रगुरुत्वम् ।
तृतीये दंशविक्लेदादयः ।
चतुर्थे मूर्ध्नो गरिमादयः ।
पञ्चमे गात्रभङ्गादयः ।

**शेषयोः पूर्ववद्वदेत् ।**

स०-शेषयोः-षष्ठसप्तमयोर्लक्षणं, पूर्ववत्-दर्वीकरवत्, वदेत् ।

**कुर्यात्पञ्चसु वेगेषु चिकित्सां, न ततः परम् ॥२७॥**

स०-पञ्चसु वेगेषु चिकित्सितं कुर्यात् । न तु तस्मात्परम्, असाध्यत्वात् ।

**जलाप्लुता रतिक्षीणा भीता नकुलनिर्जिताः ।**
**शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः ॥ २८ ॥**
**तूर्णं देशान्तरायाता विमुक्तविषकञ्चुकाः ।**
**कुशौषधीकण्टकवद्ये चरन्ति च काननम् ॥ २९ ॥**
**देशं च दिव्याध्युषितं सर्पास्तेऽल्पविषा मताः ।**

स०-जलाप्लुतादयः सर्पा अल्पविषा ज्ञेयाः । दिव्याध्युषितो देशो-यत्र देवताः कृतसन्निधाना, तं देशं चरन्ति । [ "श्मशानचैत्यवल्मीकयज्ञाश्रयसुरालये । चतुष्पथे जलस्थाने जीर्णोद्यानेषु कोठरे ॥ क्षीरद्रुमे निम्बतरौ निर्झरे गिरिगह्वरे । चक्रवज्रगदाकुन्तत्रिशूलाङ्कजटाधराः ॥ रक्तास्यनयना ये च ते स्युराशीविषोपमाः । न तेषु कालनियमो न च वेगेष्वनुक्रमः ॥ मन्त्रतन्त्रबलाच्चापि प्रसह्य विनिवर्तनम् ।" वृद्धवाग्भटात् । ] (स उ अ ४१)

१ 'विषजो द' इ । २ 'श्यावं भ' इ ई उ । ३ 'ता नेत्रवक्त्रा' ई । ४ 'मूर्द्धगौ' ई उ स द्व । ५ 'दृग्बाधा' इ । ६ 'ष्ठेवन' त । ७ 'च' ण त स मू । ८ 'च' इ । ९ 'पीत भ' इ ई । १० 'प्रजायते' इ । *११ "चतुर्थे वेगे ज्वरो दाहः । पञ्चमे सर्वशरीरगतो दाहः ।" इत्यरुणदत्तव्याख्यानमयुक्तम्, "चतुर्थे कोष्ठमनु प्रविश्य ज्वरमापादयति । पञ्चमे परिदाहं सर्वगात्रेषु करोति ।" इति सुश्रुतोक्तत्वात् ( क अ ४।३९ ), 'चतुर्थे वेगे नरो ज्वर्यते । पञ्चमे वेगे सर्वगात्रगो दाहः स्यात् ।' 'चतुर्थे ज्वरः । पञ्चमे सर्वगात्रगो दाहः ।' इति चन्द्रनन्दनेन्दुभ्यां व्याख्यातत्वाच्च ।

१ 'वाक्यसङ्गो' स स, स मु । २ शेषयोः-मण्डलिदष्टस्य राजिलदष्टस्य च षष्ठसप्तमयोर्वेगयोर्लक्षणानीत्यर्थः । ३ 'वद्भवेत्' इ । ४ "ततः परं-षष्ठसप्तमयोः ।" इति चन्द्रः । "दिव्याध्युषितं देशं-यत्र विषघ्नी विद्या य(म)न्त्रादिस्था प्रतिवसति ।" इतीन्दुः । ५ 'ष्णापरिपी' स मू । ६ 'विद्याध्युषितं' इ ई उ स स । ७ [ ] एतच्चिह्नान्तर्गतः पाठः ट पुस्तके नोपलभ्यते । ८ 'श्मसुरा' स.मू । ९ 'याने तु को' सं.मू । १० 'तेषां' स.द्व.।

**श्मशानचितिचैत्यादौ पञ्चमीपक्षसन्धिषु ॥ ३० ॥**
**अष्टमीनवमीसन्ध्यामध्यरात्रिदिनेषु च ।**
**याम्याग्नेयमघाश्लेषाविशाखापूर्वनैर्ऋते ॥ ३१ ॥**
**नैर्ऋताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् ।**

**स०**–श्मशानादिषु दष्ट मर्मसु च दष्ट त्यजेत् । याम्य–भरणी । आग्नेय–कृत्तिका । नैर्ऋत–मूलम् । नैर्ऋताख्यो मुहूर्तो–सन्ध्योदय एव ।

**दष्टमात्र· सिताास्याक्षः शीर्यमाणशिरोरुहः ॥ ३२ ॥**
**स्तब्धजिह्वो मुहुर्मूर्च्छन् शीतोच्छ्वासो न जीवति ।**

**स०**–य शुक्लमुखनयन पतत्कच स्तब्धरसन पुन पुनर्मूर्च्छन् शीतोच्छ्वास , स न जीवति । [''वेर्पथुर्वेदनास्तीव्रा ग्रीवाभङ्गोऽक्षिरक्तता । मूर्च्छा गलग्रहश्छर्दि प्रेतगजस्य किङ्करा ॥ जाम्बवप्रतिमो दश कूर्मपृष्ठवदुन्नत । रक्त खेभ्य समस्तेभ्यो वर्तते न तु दशत ॥ रोमहर्षो न शिशिरै श्वयथुर्लोहितोऽसित । हृष्टमेहनता वक्रवक्त्रत्व यस्य त त्यजेत् ॥'' वृद्धवाग्भटात् । ] (स उ अ ४१)

**हिध्मा श्वासो वमिः कासो दष्टमात्रस्य देहिन·॥३३॥**
**जायन्ते युगपद्यस्य स हृच्छूली न जीवति ।**

**स०**– यस्य देहिन एककालमेव हिध्मादयो हृच्छूल च स्यात्, स न जीवति ।

**फेनं वमति नि·संज्ञः श्यावपादकराननः ॥ ३४ ॥**
**नासावसादो भङ्गोऽङ्गे विड्भेदः श्लथसन्धिता ।**
**विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य च ॥ ३५ ॥**
**भवन्त्येतानि रूपाणि सम्प्राप्ते जीवितक्षये ।**

**स०**–यश्च फेन वमति निश्चेतन श्यावपादादिस्तथा नासावसादादयश्च, यस्य पुसो विषपीतस्य तथा दष्टमात्रस्य विषलिप्तकेनाभिहतस्य च सामान्येनैतानि रूपाणि तस्य जीवितक्षये सम्प्राप्ते स्यु । विषपीतस्येत्याहिताग्निषूक्तत्वात् परनिपात ।

**न नस्यैश्चेतना तीक्ष्णैर्न क्षतात् क्षतजागम· ॥ ३६ ॥**
**दण्डाहतस्य नो राजिः प्रयातस्य यमान्तिकम् ।**

**स०**–तीक्ष्णैर्नस्यैर्न चेतना–न चैतन्यम् । तथा क्षताच्छिन्नाद्रक्तागमो न भवति । तथा दण्डेन–लगुडेन, आहतस्य राजि – लेखा, न भवति । यमसमीप प्रयातस्य–गमिष्यतो नरस्य । प्रयातस्येति ''वर्तमानसामीप्ये वर्तमानवद्वा'' इति भविष्यति क्त ।

**अतोऽन्यथा तु त्वरया प्रदीप्तागारवद्भिषक् ॥ ३७ ॥**
**रक्षन् कण्ठगतान् प्राणान् विषमाशु शमं नयेत् ।**

**स०**–अतोऽन्यथा–साध्यत्वे सति, त्वरया–सद्यो द्रागेव, कण्ठगतान् प्राणान् ज्वलितगृहमिव रक्षन् विष शीघ्र शान्ति नयेत् ।

**मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः ॥ ३८ ॥**
**देहं प्रक्रमते धातून् रुधिरादीन् प्रदूषयन् ।**

**स०**–शरीरिणो दष्टस्य दशे मात्राशततुल्यकाल विष स्थित्वा देह प्रक्रमते रुधिरादीन् धातून् दूषयत् । प्रक्रमत इति ''प्रोपाभ्याम्'' इति तङ् ।

**एतस्मिन्नन्तरे कर्म दंशस्योत्कर्तनादिकम् ॥ ३९ ॥**
**कुर्याच्छीघ्रं यथा देहे विषवल्ली न रोहति ।**

**स०**–अस्मिन्नन्तरे–अवसरे, दशस्योत्कर्तनादिक कर्म चपल विदधीत, यथा विषवल्ली काये न रोहति । विष वल्लीवेति ''उपमित व्याघ्रादिभि '' इति समास ।

**दष्टमात्रो दशेदाशु तमेव पवनाशिनम् ॥ ४० ॥**
**लोष्टं महीं वा दशनैश्छित्त्वा चानु ससम्भ्रमम् ।**
**निष्ठीवेन समालिम्पेद्दंशं कर्णमलेन वा ॥ ४१ ॥**

**स०**–दष्टमात्र पुरुषस्तमेव सर्प–दष्टार, शीघ्रमेव खादेत् (दशेत्) । अथवा लोष्ट धरणी दशनैश्छित्त्वा पश्चाच्च झटिति निष्ठीवेन दशमालिम्पेत् । कर्णमलेन वाऽऽलिम्पेत् ।

**दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले ।**
**क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित् ॥ ४२ ॥**
**अम्बुवत् सेतुबन्धेन बन्धेन स्तभ्यते विषम् ।**
**न वहन्ति सिराश्चास्य विषं बन्धाभिपीडिताः ॥ ४३ ॥**

**स०**–दशस्योपरिष्टाच्चतुरङ्गुलेऽरिष्टा क्षौमादिभिर्वेणिकया सिद्धैश्च मन्त्रैरुपलक्षितो मन्त्रज्ञो बध्नीयात् ।

बन्धेन हि विष स्तभ्यते । जल यथा सेतुबन्धेन । अस्य च–दष्टस्य, सिरा विष बन्धनपीडिता न वहन्ति ।

---

१ ''चिति –याज्ञिकानामग्निचयनस्थानम् । पक्षसन्धी–अमावास्यापौर्णमास्यौ । नैर्ऋताख्यो–द्वादशो मुहूर्त ।'' इतीन्दु ''चैत्यो–ग्रामदेवताश्रयो महातरु ।'' इति चक्र । ''सर्पादिदष्टस्य । विषलिप्तेन काण्डादिनाऽभिहतस्य ।'' इति चन्द्र । २ **'दष्टमात्रस्तु ताम्राक्ष'** ई उ । **'दष्टमात्रे'** स स । ३ **'शीतोच्छ्वासी'** ई उ । ४ [ ] पाठोऽय ट पुस्तके नोपलभ्यते । ५ 'ना तीव्रा' ण त । ६ 'रोम्णा न शीतलैर्हर्ष श्व' स स । ७ 'हितासित ' स द्व । ८ **'रुक् वाऽङ्गे'** ई उ. । ९ **'णि प्राप्ते जीवितसक्षये'** चन्द्र । १० **'राजी'** इ.ई.उ.ण.त.चन्द्र । ११ **'याति स यमा'** उ. ।

१ **'षयेत्'** इ ण चन्द्र स मू । २ 'शत तुल्य' ण त । 'शत गतस्य तुल्य' ट । ३ ''एतस्मिन्नन्तरे–मात्राणा शतस्य मध्ये ॥ सिद्धैर्मन्त्रैर्मन्त्रिताम् । अपर–दर्वीकरराजीमतोर्दशम् ।'' इति चन्द्र । ''तदप्राप्तौ लोष्ट दशेत् भूमिं वा ॥ अरिष्टेति मन्त्रसूत्रवेणिकाया नाम ॥ तच्चो( त चो )द्धरेत्, यत्(य) मर्मणि सन्धौ वा न गतम् । मर्मगे दशे उद्धृते आतुरो मृत्यु प्राप्नुयात् । सन्धिस्थे तूद्धृते विकलाङ्गता प्राप्नुयात् ॥ उल्मुकेन–ज्वलत्काष्ठेन ।'' इतीन्दु । ४ **'नाशनम्'** इ चन्द्र स मू । ५ **'चाशु'** ण । **'वाऽनु'** स स । ६ **'रास्तस्य'** इ चन्द्र. । ७ **'बन्धनपी'** ई उ.अरुण । **'बन्धादिपी'** इ. ।

**निष्पीड्यानूद्धरेद्दंशं [1]मर्मसन्ध्यगतं तथा ।**
**न जायते विषा[2]द्वेगो बीजनाशादिवाङ्कुरः ॥ ४४ ॥**

स०–अनु–पश्चात्, निष्पीड्य दंशमुद्धरेत् मर्मसन्धि वर्जयित्वा। तथा–एव कृते सति, विषवेगो न जायते। यथा–अङ्कुरो बीजनाशात् ।

**दंशं मण्डलिनां मुक्त्वा पित्तलत्वादथापर[3]म् ।**
**प्रतप्तैर्हेमलोहाद्यैर्दहेदाशूल्[3]मुकेन वा ॥ ४५ ॥**
**करोति भस्मसात्सद्यो वह्निः किं ना[3]म तु क्षतम् ।**

स०–मण्डलिना च दंश पित्तलत्वाद्धेतोर्मुक्त्वा, अथापर दंश हेमादिभि प्रतप्तै शीघ्र दहेदुल्मुकेन वा । यतोऽग्नि सद्य एव भस्मता सर्वमेव वस्तु नयति । क्षत तु कियन्मात्रम् ।

**आचूषेत् पूर्णवक्त्रो वा मृद्भस्मागदगोमयैः ॥ ४६ ॥**
**प्रच्छायान्तररिष्टाया मांसलं तु विशेषतः ।**
**अङ्गं सहैव दंशेन लेपयेदगदैर्मुहुः ॥ ४७ ॥**
**चन्दनोशीरयुक्तेन सलिलेन च सेचयेत् ।**

स०–अथवा पित्तलप्राय स्यात् तदा मृदादिभि पूर्णवदनोऽरिष्टामध्य प्रच्छाय-प्रच्छान कृत्वा, आचूषेत् । मासल तु स्थान विशेषेण प्रच्छायाचूषेत् । तथा दंशेन सार्धमङ्गमगदेन पुन पुनर्लेपयेत् । चन्दनोशीरान्वितेनोदकेन सेचयेच्च शरीरम् ।

**विषे प्रविसृते विध्येत्सिरां सा परमा क्रिया ॥ ४८ ॥**
**रक्ते निर्ह्रियमाणे हि कृत्स्नं निर्ह्रियते विषम् ।**

स०–विषे प्रविसृते सति सिरा विध्येत् । सा हि उत्तमा क्रिया । यतोऽस्यासृजि निर्ह्रियमाणे विष सर्वमेव निर्ह्रियते, तदाश्रितत्वात् ।

**दुर्ग[4]न्धं सविषं रक्तमग्नौ चटचटायते ॥ ४९ ॥**
**यथादोषं विशुद्धं च पूर्ववल्लक्षयेदसृक् ।**

स०–सविष शोणित दुर्गन्ध स्यात् । वह्नौ च क्षिप्त चटचटायते ।

विशुद्धं च रक्त दोषानुसारेण पूर्ववत्–सिराव्यधविध्युक्तेन (हृ सू अ २७) लक्षणेन, विद्यात् ।

**सिरास्वदृश्यमानासु योज्याः शृङ्गजलौकसः ॥ ५० ॥**

स०–सिरासु तु शोफादिनाऽनुपलभ्यमानासु शृङ्ग जलौकसो वा युञ्ज्यात् ।

**शोणितं स्रुतशेषं च प्रविलीनं विषोष्मणा ।**
**लेपसेकैः सुबहुशः स्तम्भयेद्भृशशीतलैः ॥ ५१ ॥**

स०–स्रुतशेषं च लोहितं विषोष्मणा प्रविलीन लेपादिभि पुन पुनरुपयुक्तैरतिशीतलै स्तम्भयेत् ।

**अ[1]स्कन्ने विषवेगाद्धि मूर्च्छायमदहृद्द्रवाः ।**
**भवन्ति तान् जयेच्छीतै[2]र्वीजेच्चारोमहर्षतः ॥ ५२ ॥**

स०–अस्कन्ने–अप्रुतेऽस्त्याने, हि रक्ते विषवेगेन मूर्च्छाद्या भवन्ति । ताश्च शीतैर्लेपादिभिर्जयेत् । तथा रोमाञ्चो यावच्छीतेन स्यात् तावद्वीजेच्च ।

**स्कन्ने तु रुधिरे सद्यो विषवेगः प्रशाम्यति ।**

स०–अस्रे तु स्कन्ने सति विषवेग शीघ्रमेव प्रशाम्यति ।

**विषं कर्षति तीक्ष्णत्वाद् हृदयं तस्य गुप्तये ॥ ५३ ॥**
**पिबेद्धृतं घृतक्षौद्रमगदं वा घृताप्लुतम् ।**
**हृदयावरणे चास्य श्लेष्मा हृद्युपचीयते ॥ ५४ ॥**

स०–विष तीक्ष्णादियोगाद् हृदय कर्षति । तस्य–हृदयस्य, गुप्तये–रक्षणाय, घृत घृतक्षौद्रमगद वा पिबेत् घृताप्लुतम् । अस्य–पुरुषस्य, हृदयावरणे सति श्लेष्मा हृदये चय याति ।

**प्रवृत्तगौरवोत्क्लेशहृल्लासं वामयेत्तं[3]तः ।**
**द्रवैः काञ्जिककौलत्थतैलमद्यादिवर्जितैः ॥ ५५ ॥**
**वमनैर्विषहृद्भिश्च नैवं व्याप्नोति तद्वपुः ।**

स०–प्रवृत्ता –सञ्जाता , गौरवोत्क्लेशहृल्लासा यस्य स एवभूतस्त द्रवै काञ्जिकादिरहितैर्वमनैर्वामयेत् विषहरैश्च वामयेत् । एव कृते सति तस्य–विषार्तस्य, शरीर विष न व्याप्नोति ।

**भुजङ्गदोषप्रकृतिस्थानवेगविशेषतः ॥ ५६ ॥**
**सुसूक्ष्मं सम्यगालोच्य विशिष्टा [4]चाचरेत्क्रियाम् ।**

स०–भुजङ्गदोषादिक सुसूक्ष्मया बुद्ध्या सम्यगालोच्य विशिष्टा क्रिया समाचरेत् ।

**सिन्दु[5]वारितमूलानि श्वेता च गिरिकर्णिका ॥ ५७ ॥**
**पानं दर्वीकरैर्दष्टे नस्यं म[6]धु सर्[7]पाकलम् ।**

स०–सिन्दुवारितमूलादिक जलान्वित दर्वीकरैर्दष्टे पान नस्य माक्षिक कुष्ठसहित हितम् ।

**कृष्णसर्पेण दष्टस्य लिम्पेद्दंशं हृतेऽसृजि ॥ ५८ ॥**
**चारटीनाकुलीभ्यां वा तीक्ष्णमूलविषेण वा ।**
**[8]पानं च क्षौद्रमञ्जिष्ठागृहधूमयुतं घृतम् ॥ ५९ ॥**

स०–कृष्णभुजङ्गदष्टस्य रक्ते हृते सति दश गुञ्जानाकुलीभ्या

---

१ 'ष्पीड्य चोद्धृ' इ.चन्द्र स द्व । २ 'विषावेगो' इ त स द्व । 'विषोद्वेगो' वृन्द । ३ 'म न क्षणात्' इ ई उ ण.त.स स । 'म न क्षणम्' चन्द्र । ४ 'दुर्गन्धि' इ ई.उ. ।

१ "अस्कन्ने–प्रविलीनरूपे ॥ तत इत्युपचिते श्लेष्मणि ॥ सिन्दुवारको–निगुण्डी । श्वेता–श्वेतवचा । पाकल–कुष्ठम् ॥ चारटी–पद्मचारिणी । नाकुली–सर्पसुगन्धा । तीक्ष्ण य मूलविष–वत्सनाभादि ।" इतीन्दु । "तत्–विषम् ।" इतीन्दुचन्द्रौ । "श्वेता चेति गिरिकर्णिकाविशेषणम्, तेन श्वेताऽपराजिता गृह्यते । केचिद्गिरिकर्णिका स्यन्दनामाहु ।" इति चक्र । "सवालक-(पाकल)–सकुष्ठम् ।" इति चन्द्र । २ 'वींजयेद्रोम' उ । ३ 'रणेनास्य' ई उ स स । ४ 'वाऽऽचरे' ण त । ५ 'वारकमू' स स ,ट । 'वारस्य मूल च श्वे' स.च । ६ 'स्य समधु पा' इ स च । 'स्य समधु वालकम्' ई उ । 'धु सवालकम्' चन्द्र. । ७ 'पाने सनस्ये मा' ट. । ८ 'पाने च' ई उ. ।

लिम्पेत् । तीक्ष्णेन मूलविषेण वा लिम्पेत् ।

क्षौद्रादियुत च सपि पानम् ।

**तन्दुलीयककाश्मर्यकिणिहीगिरिकर्णिकाः ।**
**मातुलुङ्गी सिता शेलुं पाननस्याञ्जनैर्हितः ॥ ६० ॥**
**अगदः फणिना घोरे विषे राजीमतामपि ।**

स०–तन्दुलीयकादिक पानादिभिरगद फणिना राजीमता च दारुणे विषे हित ।

**समा: सुगन्धामृद्वीकाश्वेताख्यागैजदन्तिकाः॥ ६१॥**
**अर्धांशं सौरसं पत्रं कपित्थं बिल्वदाडिमम् ।**
**सक्षौद्रो मण्डलिविषे विशेषादगदो हितः ॥ ६२ ॥**

स०–सुगन्धादय समा –समभागा , अर्धभागेन सुरसपत्रादिकमिति समाक्षिको मण्डलिनो विषे विशेषेणागदो हित ।

**पञ्चवल्कवरायष्टीनागपुष्पैलवालुकम् ।**
**जीवकर्षभकौ शीतं सिता पद्मकमुत्पलम् ॥ ६३ ॥**
**सक्षौद्रो हिमवान्नाम हन्ति मण्डलिना विषम् ।**
**लेपाच्छ्वयथुवीसर्पविस्फोटज्वरदाहहा ॥ ६४ ॥**

स०–पञ्चवल्कादिको माक्षिकयुतो हिमवान्नामागदो मण्डलिविष लेपेन हन्ति, शोफादिहा च । शिरीषपिप्पलवटप्लक्षवेतसाना पञ्चाना त्वक्–पञ्चवल्कमुच्यते ।

**काश्मर्य वटशुङ्गानि जीवकर्षभकौ सिता ।**
**मंजिष्ठा मधुकं चेति दष्टो मण्डलिना पिबेत्॥ ६५॥**

स०–काश्मर्यादिक मण्डलिदष्टो नर पिबेत् ।

**वंशत्वग्बीजकटुकापाटलीबीजनागरम् ।**
**शिरीषबीजातिविषे मूलं गोवेधुकं वचा॥ ६६ ॥**
**पिष्टो गोवारिणाऽष्टाङ्गो हन्ति गोनसजं विषम् ।**

स०–वशत्वगादिकोऽष्टाङ्गोऽगदो गोमूत्रपिष्टो गोनसविष हन्ति । वशस्य त्वग्बीजे ।

**कटुकातिविषाकुष्ठगृहधूमहरेणुकाः ॥ ६७ ॥**
**सक्षौद्रव्योषतगरा घ्नन्ति राजीमतां विषम् ।**

स०–कटुकादयो राजीमता विष घ्नन्ति ।

**निखनेत्काण्डचित्राया दशं यामद्वय भुवि ॥ ६८ ॥**
**उद्धृत्य प्रेच्छितं सर्पिर्धान्यमृद्धया प्रलेपयेत् ।**
**पिबेत्पुराणं च घृतं वराचूर्णावचूर्णितम् ॥ ६९ ॥**
**जीर्णे विरिक्तो भुञ्जीत यवान्नं सूपसंस्कृतम् ।**

स०–काण्डचित्राया –सर्पविशेषस्य, दश यामद्वय भुवि निखनेत् । तत उद्धृत्य प्रेच्छित सर्पिर्धान्यमृद्धया प्रलेपयेत् । धान्यस्य मृद् धान्यमृत् । तथा पुराण घृत त्रिफलाचूर्णयुत पिबेत् । जीर्णे विरिक्तो यवान्न शाल्यादिक सूपेन सस्कृतमद्यात् ।

**करवीरार्ककुसुममूलाङ्गलिकाकणाः ॥ ७० ॥**
**कल्कयेदारनालेन पाठामरिचसंयुताः ।**
**एष व्यन्तरदष्टानामगदः सार्वकार्मिकः ॥ ७१ ॥**

स०–करवीरार्कयो कुसुममूल लाङ्गलिकादीश्च काञ्जिकेन कल्कयेत् । एषोऽगद सार्वकार्मिको व्यन्तरदष्टाना हित । सार्वकार्मिक इति "अनुशतिकादित्वात्(दीना च)"[इति] उभयपदवृद्धि ।

**शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ।**
**भावितं सर्पदष्टाना पाननस्याञ्जने हितम् ॥ ७२ ॥**

स०–शिरीषकुसुमरसे सप्तवासराणि सितमरिच भावितं भुजङ्गदष्टाना पानादौ हितम् ।

**द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतुष्पलम् ।**
**अपि तक्षकदष्टानां पानमेतत्सुखप्रदम् ॥ ७३ ॥**

स०–तगरकुष्ठयोर्द्वे पले घृतमाक्षिकयोश्चत्वारि पलानि । तक्षकेणापि दष्टाना तत्पीत शर्मदम् ।

**अथ दर्वीकृता वेगे पूर्वे विस्राव्य शोणितम् ।**
**अगदं मधुसर्पिर्भ्यां संयुक्तं त्वरितं पिबेत् ॥ ७४ ॥**

स०–दर्वीकृता च प्रथमे वेगे पूर्व रक्त विस्राव्यानन्तर मधुघृतयुतमगद शीघ्रमेव पिबेत् ।

**द्वितीये वमन कृत्वा तद्वदेवागदं पिबेत् ।**

स०–द्वितीये वेगे वमन विधाय तथैवागद पिबेत् ।

**विषापहे प्रयुञ्जीत तृतीयेऽञ्जननावने ॥ ७५ ॥**

स०–तृतीये वेगे विषघ्नमञ्जनादि दद्यात् ।

**पिबेच्चतुर्थे पूर्वोक्ता यवागू वमने कृते ।**

स०–चतुर्थे वेगे कृतवमन पूर्वोक्ता यवागू पिबेत् ।

---

१ 'लुङ्गे शिफा' इ । २ 'सेलु' ई ण त चन्द्र स मू । ३ "सुगन्धा–गन्धनाकुली । गजकर्णिका–कुमारी सल्लकी वा । सुरस –तुलसी ॥ शीत–चन्दनम् । सिता–श्वेतवचा कटभी वा॥ [ सल्लकीझिंझिणीजम्बूधवशरमलिकात्वच । पञ्चवल्कलसञ्ज्ञोऽय मुनिभि परिकीर्तित ॥] गोनसा –घर्मतप्ताना गवा नासिकोद्भवा. ।" इतीन्दु । "नगवृत्तिका–शल्लकी । श्वेता–श्वेतस्यन्द । केचित्तु 'सुगन्धा नगमृत्तिका' इति पठन्ति । तत्रायमर्थ ,–शोभनगन्धवती पर्वतस्य मृत्तिका । पर्वतमृत्तिकाया सामान्यतो विषहरत्वात् ।" इति डल्हण । ४ 'गजवृत्तिका' ई । 'गजमृत्तिका' चन्द्र स मू । 'गजकर्णिका' स स । 'नगवृत्तिका' स मु । ५ 'वचायष्टी' इ उ । 'बलायष्टी' चन्द्र । ६ 'भकोशीर' इ चन्द्र । ७ 'टशृङ्गाणि' उ स स । ८ 'सिताम् । मञ्जिष्ठा' स स । ९ 'टलाबीज' इ ई उ चन्द्र । १० 'श्रीवेष्टक' चन्द्र । ११ 'वचाम्' इ चन्द्र.स स ।

१ दश–दष्टप्रदेशम् । २ 'प्रस्थित' ई उ ण । ३ "[ प्रच्छित–सूत्रोदितविधानेन प्रच्छान कृत्वा । सूप –तक्रादिभि सिद्ध उपदशविशेष ॥ अगद –औषधयोग । सार्वकार्मिक –सर्वकर्मोपयोगी, पाननस्याञ्जनालेपादौ हित इत्यर्थ ॥ सित मरिच–शिग्रुबीजम्, मरिचावान्तरजातिर्वा ।" इतीन्दु । ४ 'चूर्णविचू' ई उ । ५ 'विरिक्ते' चन्द्र.। ६ 'मूल लाङ्गलिका कणा' इ चन्द्र । ७ 'पाननस्याञ्जनैर्हितम्' इ । 'नस्यपानाञ्जने' स मू स च । 'पाने नस्येऽञ्जने' इति क्वचित् । ८ 'वक्रकु' स स । ९ 'क्षौद्रचतु' ई ण त.चन्द्र स मू स च । १० 'तार्क्षक' ई. । ११ 'विषापहै' इ त.चन्द्र.।

**षष्ठपञ्चमयोः शीतैर्दिग्धं सिक्तमभीक्ष्णशः ॥ ७६ ॥**
**पाययेद्वमनं तीक्ष्णं यवागूं[1] च विषापहैः।**

स०-षष्ठपञ्चमयोर्वेगयोः पुरुषं शिशिरैर्मुहुर्लिप्तं सिक्तं च तीक्ष्णं वमनं पाययेत्। यवागूं च विषघ्नैः कृतां पाययेत्।

**अगदं सप्तमे तीक्ष्णं युञ्ज्यादञ्जननस्ययोः ॥ ७७ ॥**
**कृत्वाऽवगाढं शस्त्रेण मूर्ध्नि काकपदं ततः।**
**मांसं सरुधिरं तस्य चर्म वा तत्र निक्षिपेत् ॥ ७८ ॥**

स०-सप्तमे वेगे तीक्ष्णमगदमञ्जने नस्ये च युञ्ज्यात्। ततः शस्त्रेण काकपदमवगाढं मूर्ध्नि विधाय ततस्तस्य-दष्टस्य, तस्मिन् काकपदे मांसं सशोणितं न्यसेत्, अथवा चर्म निक्षिपेत्।

**तृतीये वमितः[2] पेया वेगे मण्डलिनां पिबेत्।**

स०-तृतीये मण्डलिनां वेगे वमितः पेयां पिबेत्।

**अतीक्ष्णमगदं षष्ठे गणं वा पद्मकादिकम् ॥ ७९ ॥**

स०-षष्ठेऽतीक्ष्णमगदं पद्मकादिं वा गणं (हृ सू अ १५। १२) योजयेत्।

**आद्येऽवगाढं प्रच्छाय वेगे दष्टस्य राजिलैः।**
**अलाबुना हरेद्रक्तं पूर्ववच्चागदं पिबेत् ॥ ८० ॥**

स०-राजीमता प्रथमे वेगेऽतिशयेन प्रच्छायालाबुना रक्तं हरेत्। पूर्ववच्चागदं पिबेत्।

**षष्ठेऽञ्जनं तीक्ष्णतममवपीडं च योजयेत्।**

स०-षष्ठेऽञ्जनमतितीक्ष्णं योजयेदवपीडं च।

ननु, अत्र केचिद्वेगा नोदिता एव। तेषु किं विधेयम्? इत्याह—

**अनुक्तेषु च वेगेषु क्रियां दर्वीकरोदिताम् ॥ ८१ ॥**

स०-अकथितेषु दर्वीकरोक्ता क्रिया योजयेत्।

**गर्भिणीबालवृद्धेषु[3] मृदुं[4], विध्येत्सिरां न च।**

स०-गर्भिण्यादिषु मृदु क्रिया योजयेत्। सिरा च न व्यधयेत्।

**त्वङ्नलोहा निशे वक्रं[6] रसः[5] शार्दूलजो नखः ॥ ८२ ॥**
**तमालः केसरं शीतं पीतं तन्दुलवारिणा।**
**हन्ति सर्वविषाण्येतद्वज्रं[7] वज्रमिवासुरान् ॥ ८३ ॥**

स०-त्वगादिकमिदं ज्येष्ठाम्भसा पीतं सर्वाणि विषाणि हन्ति। वज्रिवज्रमिवासुरानित्युपमालङ्कारः।

**बिल्वस्य मूलं सुरसस्य पुष्पं**
**फलं करञ्जस्य नतं सुराह्वम्।**
**फलत्रिकं[1] व्योपनिशाद्वयं च**
**वस्तस्य मूत्रेण सुसूक्ष्मपिष्टम् ॥ ८४ ॥**
**भुजङ्गलूतोन्दुरु[2]वृश्चिकाद्यै-**
**र्विसूचिका[3]जीर्णगरज्वरैश्च।**
**आर्तान्नरान् भूतविधर्षिताश्च[4]**
**स्वस्थीकरोत्यञ्जनपाननस्यैः ॥ ८५ ॥**

स०-बिल्वमूलादिकं छागमूत्रेण सुश्लक्ष्णपिष्टमञ्जनादिभिर्भुजङ्गादिभिरार्तान् पुरुषान् भूतोपद्रुताश्च स्वस्थयति। उपजातिवृत्ते।

**प्रलेपाद्यैश्च निःशेषं दंशादप्युद्धरेद्विषम्।**
**भूयो वेगाय जायेत शेषं दूषीविषाय[5] वा[6] ॥ ८६ ॥**

स०-दंशादपि-किं पुनः कायात्, सर्वं विषमुद्धरेत्। शेषं हि विषं पुनर्वेगाय सम्पद्यते, दूषीविषाय वा।

**विषापायेऽनिलं क्रुद्धं स्नेहादिभिरुपाचरेत्।**
**तैलमद्यकुलत्थाम्लवर्ज्यैः पवननाशनैः ॥ ८७ ॥**
**पित्तं पित्तज्वरहरैः कषायस्नेहबस्तिभिः।**
**समाक्षिकेण वर्गेण कफमारग्वधादिना ॥ ८८ ॥**

स०-विषापगमे सति वायुं कुपितं स्नेहादिभिरुपक्रमेत्, तैलादिवर्जितैर्वातनाशनैः।

पित्तं पित्तज्वरहरैः क्वाथैः स्नेहबस्तिभिश्चोपक्रमेत्।

आरग्वधादिगणेन (हृ सू अ १५।१७) समाक्षिकेण कफमुपाचरेत्।

**सिता वैगन्धिको[7][8] द्राक्षा पयस्या मधुकं मधु।**
**पानं समन्त्रपूताम्बु प्रोक्षणं सान्त्वहर्षणम् ॥ ८९ ॥**
**सर्पाङ्गाभिहते युञ्ज्यात्तथा शङ्काविषार्दिते।**

स०-सितादिकं मन्त्रपूतजलेन सहितं पानम्। प्रोक्षणं प्रकृतत्वान्मन्त्रपूतजलेन वेगगोऽङ्गशश्च। तथा सान्त्वनहर्षणं सर्पाङ्गाभिहते युञ्ज्यात्, शङ्काविषपीडिते च युञ्ज्यात्।

**कर्केतनं मरकतं वज्रं वारणमौक्तिकम् ॥ ९० ॥**
**वैडूर्यं[9] गर्दभमणिं पिचुकं[10] विषमूषिकाम्[11]।**

---

१ 'च यथोदिताम्' स द्व। २ 'वामितः' इ स स.। ३ 'गुर्विणी' चन्द्र। ४ 'मृदु' इ ई उ ण स.स। ५ "[मृदु-अतीक्ष्णमञ्जनादिकम्।] वक्र-तगरम्। शीत-चन्दनम्। त्वगादिचूर्णं नाम्ना वज्रम्॥ सुरसपुष्प-सुरसमञ्जरी।" इतीन्दु। "वज्र-वज्राभिधानम्।" इति चन्द्र। ६ 'वक्र' इ ई उ.स.मू। ७ 'द्वज्रिवज्रमि' अरुण. स.मू। 'तच्छक्रवज्रमि' उ।

१ 'फलत्रय' इ स स गदनि। २ 'न्दुरुवृ' स द्व। ३ 'विशूचिका' इ.उ ण त। 'विषूचिका' चन्द्र स स.। ४ 'विमर्दिताश्च' चन्द्र. गदनि। ५ 'दूषीविषं यथा' चन्द्र। ६ 'च' ई उ। ७ 'वैगन्धको' ई उ। ८ "[वैगन्धिक.-त्रिजातकश्चतुर्जातको वा। इति जर्ज्जटः।] कर्केतनादीनि केचिन्मणयः, कानिचिदौषधानि, वीर्यवन्ति विषाणीत्येतत् सर्वं विषशान्त्यर्थं धारयेत्। [कर्केतन-माणिक्यम्। वारणस्य मस्तकोद्भूतमौक्तिक-वारणमौक्तिकम्। गर्दभमणि-धूम्रवर्णरत्नविशेषः। पिचुका-रत्नपुष्पेति काचिदौषधिः। विषमुष्टिका-तन्नामधेया परमौषधिः।]" इतीन्दु। "वैगन्धिको-गन्धक एव शोधितः॥ पिचुको मणिः-उत्तरापथे प्रसिद्धः। विषमूषिका-विषमणिः। कर्केतनमणिः-पद्मरागः।" इति चक्र। ९ 'डूर्यंग' चन्द्र। १० 'पिचुका' स.स.। ११ 'षमुष्टिकाम्' स स। 'षदूषि' इ।

**हिमवद्गिरिसम्भूता सोमराजीं पुनर्नवाम् ॥ ९१ ॥**
**तथा द्रोणीं महाद्रोणीं मानसीं सर्पजं मणिम् ।**
**विषाणि विषशान्त्यर्थं वीर्यवन्ति च धारयेत् ॥ ९२ ॥**

स०-कर्केतनादीनि विषाणि च वीर्यवन्ति विषशान्त्यर्थं धारयेत् ।

**छत्री झर्झरपाणिश्च चरेद्रात्रौ विशेषतः ।**
**तच्छायाशब्दवित्रस्ताः प्रणश्यन्ति भुजङ्गमाः ॥ ९३ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने सर्पविषप्रतिषेधो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥**

स०-छत्रवान् झर्झरहस्तश्च चरेत्, विशेषेण रात्रौ । तयोः-छत्रझर्झरयोः, यथासङ्ख्यं छायाशब्दाभ्यां वित्रस्ताः सर्पाः प्रणश्यन्ति, तस्मादेवमाचरणीयमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठे उत्तरस्थाने सर्पविषप्रतिषेधो नाम षट्त्रिंशोऽध्यायः समाप्तः ॥३६॥



## सप्तत्रिंशोऽध्यायः ।

विषप्रक्रमात् कीटलूतादिचिकित्सितं वक्ति—

**अथातः कीटलूतादिविषप्रतिषेधं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**
( गद्यसूत्रे ॥ २ ॥ )

**सर्पाणामेव विण्मूत्रशुक्राण्डशवकोथजाः ।**
**दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्विधाः ॥ १ ॥**

स०-सर्पाणां-पूर्वोक्तानां, विण्मूत्रादिजाः कीटा दोषैः पृथग्युक्तास्त्रिप्रकाराः समुदितैश्च युक्ता इति चतुःप्रकाराः स्युः ।

**दष्टस्य कीटैर्वायव्यैर्दंशस्तोदरुजोल्बणः ।**

स०-तेषु मध्ये वायव्यैः-वातलैः कीटैः, दष्टस्य दंशस्तोदरुजाधिको भवेत् ।

**आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान् ॥ २ ॥**
**पक्वपीलुफलप्रख्यः खर्जूरसदृशोऽथवा ।**

स०-आग्नेयैः कीटैर्दष्टस्य दंशोऽल्पस्रावादिमान् स्यात् । पक्वपीलुफलनिभः खर्जूरसदृशो वा स्यात् ।

**कफाधिकैर्मन्दरुजः पक्वोदुम्बरसन्निभः ॥ ३ ॥**

स०-कफाधिकैः कीटैर्दष्टस्य दंशो मन्दरुजः पक्वोदुम्बरसदृशः ।

**स्रावाढ्यः सर्वलिङ्गस्तु विवर्ज्यः सान्निपातिकैः ।**

स०-सान्निपातिकैः-त्रिदोषाधिकैः कीटैः, दष्टस्य दंशः स्रुत्याधिकः सर्वलिङ्गः । स च वर्ज्यो-नोपक्रमणीयः ।

**वेगाश्च सर्पवच्छोफो वर्धिष्णुर्विस्त्ररक्तता ॥ ४ ॥**
**शिरोक्षिगौरवं मूर्च्छा भ्रमः श्वासोऽतिवेदना ।**

स०-वेगाश्च सर्पवत्कीटेषु स्युः । तथा श्वयथुर्वर्धनस्वभावो विस्रशोणितत्वं च मूर्धनेत्रगुरुत्वं मूर्च्छाद्याश्च स्युः ।

**सर्वेषां कर्णिका शोफो ज्वरः कण्डूररोचकः ॥ ५ ॥**

स०-कर्णिकाद्याश्च सर्वेषां दंशानां स्युः ।

**वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् ।**
**ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥ ६ ॥**

१ "[हिमवद्गिरिसम्भूता-श्वेतवचा । हिमवदिरिसम्भूता-सोमराजीति केचित् । द्रोणी-वैकुण्ठम् । महाद्रोणी-श्वेतवैकुण्ठम् । मानसी-मण्डूकपर्णी, ब्राह्मीति केचित् । सर्पफणोद्भूतो मणिः-सर्पजमणिः ॥] झर्झर-झणझणायमानं लोहमयं कण्टकाकारम् । प्रणश्यन्ति-अदर्शनं यान्ति।" इतीन्दुः । "धारयेत् हस्तपादशिरोग्रीवाभिः ।" इति चन्द्रः । "छत्रीत्यादौ छत्री दिवा, रात्रौ झर्झरपाणिश्चरेत् इति ब्रुवन्ति । अन्ये तूभयत्राप्युभयं ब्रुवते ।" इति चक्रः । २ 'ण' 'ण' ई स स । ३ 'जर्झर' ई. । 'जर्जर' उ । 'झर्जर' ण । ४ 'त्रौ तथा दिवा ।' स च । 'त्रौ च सर्वदा ।' इति कचित् । ५ 'विद्ववन्ति' ई उ । ६ अस्याग्रे "वारिगुञ्जाफलोशीरं नेत्रयोर्विषदुष्टयोः । अञ्जनं वारिणा पिष्टं गारुडं गारुडोपमम् ॥ १ ॥" इति ई.उ पुस्तकयोरधिकः श्लोकः । ७ 'जर्जरि' ण त । ८ 'विषोपक्र' ट. । ९ अयं कीटलूतादिविषप्रतिषेधश्चरके चि० २३ अध्याये, सुश्रुते क० ८ अध्याये, अष्टाङ्गसङ्ग्रहे उ० ४३।४४। ४५ अध्यायेषु चास्ति वर्णितः ।

१ वायव्याः कीटाः-कुम्भीनसादयोऽष्टादश, आग्नेयाः कीटाः-कौण्डिन्यकादयश्चतुर्विंशतिः, कफाधिकाः कीटाः-विश्वम्भरादयः सौम्यसञ्ज्ञास्त्रयोदश, सान्निपातिकाः कीटाः-तुङ्गनासादयो सङ्कीर्णसञ्ज्ञा द्वादश, इत्येते सङ्ग्रहात् सुश्रुताच्चावगन्तव्याः । २ 'यव्यै. कीटै' ट । ३ 'फादिकै' स स । ४ चन्द्रनन्दनेन्दू मन्दरुज इत्यादि स्रावाढ्य इत्यन्तं कफाधिककीटदष्टलक्षणं मन्येते । तथा च चन्द्रनन्दनः सर्वलिङ्ग इत्यादि अतिवेदनेत्यन्तं सान्निपातिककीटदष्टलक्षणं मन्यते तत् युक्तमेव, "तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् । तास्ताश्च वेदनास्तीव्रा रोगा वै सान्निपातिकाः ॥" इति सुश्रुतोक्तत्वात् (क अ ८।१७) । अत्रत्यमरुणदत्तव्याख्यानं तु चिन्त्यम् । ५ 'स्तु दंशः स्यात्सान्नि' स द । ६ 'तिक.' इ. । ७ "कीटेषु विषवेगाः सर्पवद्विज्ञेयाः वातादिविशेषेण । अत्र तु शोफो वर्द्धिष्णुर्विस्ररक्ततादिकं च ॥ कर्णिकाकारा पिटकोक्ता क्षुद्ररोगे (हृ उ अ ३१।९) ॥ [कर्णिकाकारं किञ्चिदुत्सन्नो दंशव्रणः-कर्णिकाशोफः, तद्विधो मांसाङ्कुरो वा ।]" इतीन्दुः । ८ 'वेदना.' ई उ । ९ 'पश्चाच्च' इ ।

**दंशः सद्योऽतिरुक् श्यावस्तुद्यते स्फुटतीव च ।**

स०–वृश्चिकस्य तीक्ष्णं विषं भवति । तच्च प्रथममग्निरिव दहति । उपरिष्टादाश्वेवारोहति । पश्चाच्च दंशे तिष्ठति । दंशो वृश्चिकसम्बन्धी सद्योऽतिरुगादिः स्यात् । तुद्यते स्फुटतीव च । तुद्यत इति कर्मकर्तरि तङ् ।

**ते गवादिशकृत्कोथाद्दिग्धदष्टादिकोथतः ॥ ७ ॥**
**सर्पकोथाच्च सम्भूता मन्दमध्यमहाविषाः ।**

स०–ते–वृश्चिकाः, गवादिशकृत्कोथात्, विषदिग्धदष्टादिकोथात्, सर्पकोथाच्च सम्भूता यथासङ्ख्यं मन्दविषा मध्यविषा महाविषाश्च स्युः ।

**मन्दाः पीताः सिताः श्यावा रूक्षाः कर्बुरमेचकाः ॥८॥**
**रोमशा बहुपर्वाणो लोहिताः पाण्डुरोदराः ।**

स०–मन्दविषाः कीटाः पीतादिगुणाः । रोमशा इति "लोमादि" इत्यादिना शः ।

**धूम्रोदरास्त्रिपर्वाणो मध्यास्तु कपिलारुणाः ॥ ९ ॥**
**पिशङ्गाः शबलाश्चित्राः शोणिताभा**

स०–मध्यविषास्तु कपिलादिगुणाः ।

**महाविषाः ।**

**अग्न्याभा द्व्येकपर्वाणो रक्तासितसितोदराः ॥ १० ॥**

स०–महाविषाः दर्भदूर्वासदृशाः द्विपर्वाण एकपर्वाणो वा । रक्तोदराः केचित्कृष्णोदराः केचित्सितोदराश्च ।

**तैर्दष्टः शूनरसनः स्तब्धगात्रो ज्वरार्दितः ।**
**खैर्वमन् शोणितं कृष्णमिन्द्रियार्थानसंविदन् ॥ ११ ॥**
**स्विद्यन् मूर्च्छन् विशुष्कास्यो विह्वलो वेदनातुरः ।**
**विशीर्यमाणमांसश्च प्रायशो विजहात्यसून् ॥ १२ ॥**

स०–तैः–महाविषैः, दष्टः सन् शूनजिह्वादिः स्यात् । तथेदमिदं कुर्वन्नीदृशः सन् प्रायशो जीवितं त्यजति ।

**उच्चिटिङ्गस्तु वक्रेण दशत्यभ्यधिकव्यथः ।**
**साध्यतो वृश्चिकात् स्तम्भं शेफसो हृष्टरोमताम् १३**

**करोति सेकमङ्गानां दंशः शीताम्बुनेव च ।**
**उष्ट्रधूमः स एवोक्तो रात्रिचाराच्च रात्रिकः ॥ १४ ॥**

स०–उच्चिटिङ्गाख्यो वृश्चिको वक्रेण दशति । साध्याद्वृश्चिकादतिरिक्तव्यथः । तथा स्तम्भं करोति मेढ्रस्य । तथा हृष्टरोमता–रोमहर्षं, करोति । तथा दंशश्च शिशिरजलेनेव सेकमङ्गानां वितनोति । स एवोष्ट्रधूमकः कथितः । रात्रिचरणाच्च रात्रिकः स एवोक्तः ।

**वातपित्तोत्तराः कीटाः, श्लैष्मिकाः कणभोन्दुराः ।**
**प्रायो वातोल्बणविषा वृश्चिकाः सोष्ट्रधूमकाः ॥१५॥**

स०–कीटा वातपित्ताधिकाः । कणभोन्दुराः श्लेष्मोल्बणाः । प्रायेण वृश्चिका वातोल्बणविषा उष्ट्रधूमकाश्च ।

**यस्य यस्यैव दोषस्य लिङ्गाधिक्यं प्रतर्कयेत् ।**
**तस्य तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम् ॥ १६ ॥**

स०–यस्य यस्यैव दोषस्य लिङ्गाधिक्यं ज्ञायते, तस्य तस्य दोषस्य भेषजैर्विपरीतगुणैः क्रियां विदधीत ।

**हृत्पीडोर्ध्वानिलस्तम्भः शिरायामोऽस्थिपर्वरुक् ।**
**घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ॥ १७ ॥**

स०–वातिके विषे हृत्पीडादयः स्युः ।

**संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता ।**
**मांसावदरणं शोफो रक्तपीतश्च पैत्तिके ॥ १८ ॥**

स०–पित्तोल्बणे संज्ञानाशादयः स्युः ।

**छर्द्यरोचकहृल्लासप्रसेकोत्क्लेशपीनसैः ।**
**सशैत्यमुखमाधुर्यैर्विद्याच्छ्लेष्माधिकं विषम् ॥ १९ ॥**

स०–कफाधिकं विषं छर्द्यादिभिर्जानीयात् ।

**पिण्याकेन व्रणालेपस्तैलाभ्यङ्गश्च वातिके ।**
**स्वेदो नाडीपुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥ २० ॥**

स०–वातिके विषे पिण्याकेन व्रणलेपो योज्यः, तैलाभ्यङ्गश्च नाड्यादिभिश्च स्वेदो बृंहणश्च विधिः स्मृतः ।

**पैत्तिकं स्तम्भयेत्सेकैः प्रदेहैश्चातिशीतलैः ।**

स०–पित्ताधिकं विषं सेकादिभिरतिशिशिरैः स्तम्भयेत् ।

**लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥ २१ ॥**

स०–श्लैष्मिकं लेखनाद्यैर्जयेत् ।

**कीटानां त्रिप्रकाराणां त्रैविध्येन क्रिया हिता ।**
**स्वेदालेपनसेकांस्तु कोष्णान् प्रायोऽवचारयेत् ॥२२॥**
**अन्यत्र मूर्च्छितादंशपाकतः कोथतोऽथवा ।**

स०–कीटानां त्रिविधानां यथास्वं त्रिविधैव चिकित्सा हिता । स्वेदादींश्च प्रायेण कोष्णान् कुर्यात् । मूर्च्छितं नरं दंशपाकं च

१ 'पश्चाद्दंशे' ट । २ "कोथ –क्लेद ॥ [मन्दा –मन्दविषा गवादिशकृत्कोथजा वृश्चिकाः । कर्बुरा –नानावर्णाः । मेचका –कृष्णवर्णाः । बहुपर्वाणः –बहुसन्ध्युपेतपुच्छाः । ] [ज्वरार्दित –तीव्रज्वरयुक्तः । खैः –रोमकूपैः, कृष्णवर्णं रक्तमुद्वमन् । इन्द्रियार्थानसंविदन्–श्रोत्रादीन्द्रियाणां शब्दादिविषयानविजानन् ।]" इतीन्दुः । ३ 'वृश्चिकाः' इति ट ण त पुस्तकेषु नोपलभ्यते । ४ 'रूक्षकर्बु' इ ई त स मू । ५ 'कीटाः' इत्यरुणदत्तव्याख्यानमसमञ्जसम्, 'मन्दमध्यमहाविषा वृश्चिकाः' इति पूर्वश्लोके पठितत्वात् । ६ "[पिशङ्गादि सितोदरान्तं महाविषवृश्चिकलक्षणम्, इति केचित् ।]" इति यदुक्तं सङ्ग्रहटीकायां, तद्युक्तमेव, "श्वेतश्चित्रः श्यामलो लोहिताभो रक्तः श्वेतो रक्तनीलोदरौ च । पीतोऽरक्तो नीलपीतोऽपरस्तु रक्तो नीलो नीलशुक्लस्तथा च ॥" इत्यादि सुश्रुतोक्तत्वात् । ७ अग्न्याभा –वह्निसदृशवर्णाः । ८ 'उच्चिटङ्कस्तु' इ. । ९ 'सोऽधमो वृ' इ. ।

१ 'दंशे' ई उ । २ 'यत्र० तत्र' स सं. । ३ 'प्रवर्तयेत्' ई । ४ 'रक्त पीत' ई उ । 'रक्तपित्त' स स. । ५ 'व्रणे लेप' स मू । ६ "त्रैविध्येन–वातादिचिकित्साप्रकारेण ।" इतीन्दुः । ७ 'हिता' ई उ । ८ 'कवोष्णान् प्रविचारयेत्' इ । ९ 'तोऽपि वा' स.इ. ।

वर्जयित्वा तथा दशकोथं च हित्वा ।

**नृकेशाः सर्षपाः पीता गुडो जीर्णश्च धूपनम् ॥२३॥**
**विषदंशस्य सर्वस्य काश्यपः परमब्रवीत् ।**

स०–नरकचादयो धूपनं सर्वस्य विषदंशस्य परं हितमिति भगवान् काश्यपोऽवादीत् ।

**विपन्नं च विधिं सर्वं कुर्यात्संशोधनानि च ॥ २४ ॥**

स०–तथा विपन्नं विधिं सकलं विदध्यात् । संशोधनानि च कुर्यात् ।

**साधयेत्सर्पवद्दष्टान् विषोग्रैः कीटवृश्चिकैः ।**

स०–विषोग्रैः कीटवृश्चिकैर्दष्टान् सर्पवत्साधयेत् ।

**तन्दुलीयकतुल्यांशां त्रिवृतां सर्पिषा पिबेत् ॥ २५ ॥**
**याति कीटविषैः कम्पं न कैलास इवानिलैः ।**

स०–त्रिवृतां तन्दुलीयकसमां घृतेन नरः पिबेत् । एवं कीटविषैश्च कम्पं–क्षोभं, न याति । कैलास इव वायुभिः ।

**क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ॥ २६ ॥**

स०–शुद्धे सति क्षीरिवृक्षत्वगालेपः कीटविषघ्नः ।

**मुक्तालेपो वरः शोफतोददाहज्वरप्रणुत् ।**

स०–मौक्तिकलेपः श्रेष्ठः शोफादिघ्नः ।

**वचा हिङ्गु विडङ्गानि सैन्धवं गजपिप्पली ॥ २७ ॥**
**पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितम् ।**
**दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ॥ २८ ॥**

स०–वचादिकदशद्रव्यनिर्मितत्वात् दशाङ्गमगदं काश्यपेन निर्मितं पीत्वा सर्वं कीटविषं हन्ति ।

**सद्यो वृश्चिकजं दंशं चक्रतैलेन सेचयेत् ।**
**विदारिगन्धासिद्धेन कवोष्णेनेतरेण वा ॥ २९ ॥**
**लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः ।**
**सिञ्चेत्कोष्णारनालेन सक्षीरलवणेन वा ॥ ३० ॥**

स०–वृश्चिकोत्थं दंशं सद्य एव चक्रतैलेन सेचयेत् । शालिपर्णीसिद्धेन वा इतरेण–चक्रतैलेन, कोष्णेन वा सेचयेत् । सैन्धवान्वितेन वाऽऽज्येन मुहुर्मुहुः सिञ्चेत् । कवोष्णेन काञ्जिकेन दुग्धसैन्धवान्वितेन वा सिञ्चेत् ।

**उपनाहो घृते भृष्टः कल्कोऽजाज्याः ससैन्धवः ।**

स०–जीरककल्कः सैन्धवयुक्तो घृतेन भृष्ट उपनाहः स्यात् ।

**आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ॥ ३१ ॥**
**रजनीसैन्धवव्योषशिरीषफलपुष्पजैः ।**

स०–आ-समन्ततो, दंशं स्वेदितं प्रच्छाय चूर्णैः रजन्यादिजैर्घर्षयेत् ।

**मातुलुङ्गाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ॥ ३२ ॥**
**लेपः सुखोष्णश्च हितः पिण्याको गोमयोऽपि वा ।**

स०–बीजपूराम्लगोमूत्रपिष्टं सुरसापुष्पं लेपः स्यात् । तथा सुखोष्णः पिण्याको गोमयो वा लेपो हितः ।

**पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करम् ॥ ३३ ॥**

स०–पाने हैयंगवीनं क्षौद्रयुक्तं, दुग्धं वा प्रभूतसितं,हितम् ।

**पारापतशकृत् पथ्या तगरं विश्वभेषजम् ।**
**बीजपूररसोन्मिश्रः परमो वृश्चिकागदः ॥ ३४ ॥**

स०–पारापतशकृतादिभिः फलपूररससयुक्तः श्रेष्ठो वृश्चिकागदः ।

**सशैवलोष्ट्रदंष्ट्रा च हन्ति वृश्चिकजं विषम् ।**

स०–करभदंष्ट्रा शैवालयुता वृश्चिकविषघ्नी । ["ससैन्धवोष्ट्रदंष्ट्रा च हन्ति वृश्चिकजं विषम् । मनोह्वा सैन्धवं हिङ्गु मालती पल्लवानि च ॥ गोशकृद्रसपिष्टेयं गुलिका वृश्चिकार्दिते । लशुनो मरिचं हिङ्गु सुरसं विश्वभेषजम् ॥ अर्कक्षीरेण गुटिका वृश्चिकार्दितशङ्करी ।" वृद्धवाग्भटात् (स उ अ ४३ ) । ]

**हिङ्गुना हरितालेन मातुलुङ्गरसेन च ॥ ३५ ॥**
**लेपाञ्जनाभ्यां गुटिका परमं वृश्चिकापहा ।**

स०–हिङ्गुहरिताले सबीजपूररसे लेपाञ्जनाभ्यां गुलिका परं वृश्चिकविषहृत् ।

**करञ्जार्जुनशेलूनां कटभ्याः कुटजस्य च ॥ ३६ ॥**
**शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनम् ।**

स०–करञ्जादीनां पुष्पाणि मस्तुना दंशलेपः ।

**यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः ॥ ३७ ॥**
**तस्य पथ्यानिशाकृष्णामञ्जिष्ठातिविषोषणम् ।**
**सालाबुवृन्तं वार्ताकरसपिष्टं प्रलेपनम् ॥ ३८ ॥**

---

१ 'कश्यप' इ । २ 'पिबन्' स स. । ३ "शुद्धं इति वान्तविरिक्ते ॥ चक्रादेव गृहीतं तैलमाम–चक्रतैलं तेन, अथवा विदारिगन्धया–सालपर्ण्या सिद्धेन, इषदुष्णेनेतरेण–तिलतैलेन, वृश्चिकजं दंशं सद्यः सेचयेत् ॥ उपनाहो–दंशे बन्धः ॥ [प्रतिसारयेत्–अवकिरेत् । ]" इतीन्दुः । "चक्रतैलं–चक्रपीडितं तिलतैलम् ॥ प्रतिसारणं–घर्षणम्, तच्च दुष्टरक्तप्रवर्तनार्थम् ।" इति डल्हणः । ४ 'गणसिद्धेन' स सु । ५ 'सक्षारल' इ । ६ "इतरेण–चक्रतैलेन" इत्यरुणदत्तव्याख्यानमयुक्तम् । ७ 'नाहे' इ. । ८ 'घृतभृष्ट.' इ ई. । ९ 'प्रच्छितं' स सु. ।

१ "मातुलुङ्गाम्ल–बीजपूरकरसः । सुरसाग्रज–तुलसीपल्लवम्, मल्लिकाकुसुममिति केचित् ॥ बहुवातस्य सर्पिः पानं मधुयुतं, बहुपित्तस्य क्षीरं बहुशर्करं चेति योगद्वयम् ।" इति डल्हणः । "अथवा क्षीरं मधुसर्पिर्भ्यां युतं भूरिशर्करं पाने हितम् ।" इति चन्द्रः । २ 'लुङ्गं तु गोमूत्र' इति त पुस्तके पाठान्तरम् । ३ 'पिष्टं ससुरसार्जक' इ । ४ 'गोमयेन वा' इ ट । ५ 'रावत' उ स द्व । ६ 'न्मिश्र वरोऽयं वृ' स स । 'न्मिश्र परमो' स मू । ७ 'श्चिकेऽगद.' इ । 'श्चिकोऽगद' उ.ण । ८ 'कापहोऽगद' ट । ९ 'ससैन्धवोष्ट्र' इ स मू । १० [ ] एतच्चिह्नान्तर्गतः पाठः ट पुस्तके नोपलभ्यते । ११ 'वा' ई उ. । १२ 'शलाटुवृन्त' उ ।

स०-यो नरो मुह्यत्यादीन् विधत्ते, तथा दारुणपीड , तस्य पथ्यादिक वार्ताकरसपिष्ट प्रलेपन कार्यम् ।

[1]सर्वत्र चोग्रालिविषे पाययेद्[2]दधिसर्पिषी ।
विध्येत्सिरां विदध्याच्च वमनाञ्जननावनम् ।
उष्णस्निग्धाम्लमधुरं भोजनं चानिलापहम् ॥ ३९ ॥

स०-सर्वस्मिन् सुदारुणे वृश्चिकविषे दधिसर्पिषी पाययेत् । सिरा च विध्येत् ।

वमनादिक च कुर्यात् ।

उष्णगुणादिक च भोजन वातघ्नं हितम् ।

नागरं गृहकपोतपुरीषं
बीजपूरकर[3]सो हरितालम् ।
सैन्धवं च विनिहन्त्यगदोऽयं
लेपतोऽलिकुलजं विषमाशु ॥ ४० ॥

स०-नागरादिकमयमगदो लेपेन वृश्चिकविष शीघ्र पराकरोति । स्वागतावृत्तम् ।

अन्ते वृश्चिकदष्टानां समुदीर्णे भृशं विषे ।
विषेणालेपयेद्दंशमुच्चिटिङ्गेऽप्ययं विधिः ॥ ४१ ॥

स०-वृश्चिकदष्टानामन्ते भृश समुदीर्णे विषे विषेण दशमालेपयेत् ।

उच्चिटिङ्गसञ्ज्ञेऽप्येषैव चिकित्सा ।

नागपुरीषच्छत्रं रोहिषमूलं च शेलुतोयेन ।
कुर्याद्[4]गुटिकां लेपादियमलिविषनाशनी श्रेष्ठा ॥ ४२ ॥

स०-गजपुरीषच्छत्र कत्तृणमूल च श्लेष्मातकजलेन गुटिका विदधीत । एषा च लेपेन पर वृश्चिकविषघ्नी । [आर्या]

अर्कस्य दुग्धेन शिरीषबीजं
त्रिर्भावितं पिप्पलिचूर्णमिश्रम् ।
एषोऽगदो हन्ति विषाणि कीट-
भुजङ्गलूतो[5]न्दुरवृश्चिकानाम् ॥ ४३ ॥

स०-अर्कक्षीरेण शिरीषबीज त्रीन् वारान् भावित पिप्पलीरजोयुतमगद कीटादीना विषाणि हन्ति ।

शिरीष[6]पुष्पं सकरञ्जबीजं
काश्मीरजं कुष्ठमनःशिले च ।
एषोऽगदो रात्रिकवृश्चिकानां
संक्रान्तिकारी कथितो जिनेन ॥ ४४ ॥

स०-शिरीषकुसुमादिकमेषोऽगदो रात्रिकवृश्चिकाना विषक्रान्तिकृद् भगवता जिनेनोक्त । उपजातिवृत्ते ।

कीटेभ्यो दारुणतरा लूताः षोडश ता जगुः ।
अष्टाविंशतिरित्येके ततोऽप्यन्ये तु भूयसीः ॥ ४५ ॥
सहस्ररश्म्यनुचरा वदन्त्यन्ये सहस्रशः ।
बहूपद्रवरूपा तु लूतैकैव विषात्मिका ॥ ४६ ॥

स०-कीटेभ्योऽपि घोरा लूता । ताश्च मुनय षोडशसख्या अध्यगीपन् । अन्ये अष्टाविंशतिर्लूता इत्यवोचन् । ततोऽप्यपरे बहुतरा आचख्यु । अन्ये तु रवेरनुचरा सहस्रशो वदन्ति । इति नानामतमुक्त्वा स्वमत युक्त्या सर्वमतानुग्राहि वक्ति । अनेकोपद्र[1]वस्वभावत्वेनैकैव लूता विषात्मिका ।

रूपाणि नामतस्तस्या दुर्ज्ञेयान्यतिसङ्करात् ।
नास्ति स्थानव्यवस्था च दोषतोऽतः प्रचक्षते ॥ ४७ ॥

स०-नाम्ना यानि रूपाणि, तानि तस्या अतिसङ्कराद्धेतोर्दुर्ज्ञानानि । स्थानव्यवस्थाऽपि नास्ति । तस्माद्दोषवशेन भणिष्यते ।

कृच्छ्रसाध्या पृथग्दोषैरसाध्या निचयेन सा ।

स०-पृथग्दोषैर्लूता कृच्छ्रसाध्या, सन्निपातेन चासाध्या ।

तद्दंशः पैत्तिको दाहतृट्स्फोटज्वरमोहवान् ॥ ४८ ॥
भृ[2]शोष्मा रक्तपीताभः क्लेदी द्राक्षाफलोपमः ।

स०-तस्या दश पैत्तिको दाहादिमान् भृशोष्मा पीतरक्ताभ क्लेदवान् द्राक्षाफलाकार स्यात् ।

श्लैष्मिकः कठिनः पाण्डुः परूषकफलाकृतिः ॥ ४९ ॥
निद्रां शीतज्वरं कासं कण्डूं च कुरुते भृशम् ।

स०-श्लैष्मिको लूतादश कठिन पाण्डुवर्ण परूषकफलनिभो निद्रादीनतिशयेन करोति ।

वातिकः परुषः श्यावः पर्वभे[3]दज्वरप्रदः ॥ ५० ॥

स०-वातिको दश परुषस्पर्श श्यावस्तथा पर्वभेदज्वरकृत् ।

तद्विभागं यथास्वं च दोषलिङ्गैर्विभावयेत् ।

स०-तासा विभाग दोषाणा लक्षणैर्यथायोग लक्षयेत् ।

[4]असाध्यायां तु हृन्मोहश्वासहिध्माशि[5]रोग्रहाः ॥ ५१ ॥
श्वेत[6]पीतासितारक्ताः पिटिकाः श्वयथूद्भवः ।
वेपथुर्वमथुर्दाहस्तृडान्ध्यं वक्त्र[7]नासता ॥ ५२ ॥
श्यावौष्ठवक्त्रदन्तत्वं पृष्ठग्रीवावभञ्जनम् ।
पक्वजम्बूसवर्णं च दंशात्स्रवति शोणितम् ॥ ५३ ॥

स०-असाध्याया लूताया हृन्मोहाद्या स्यु । श्वेतादिगुणा पिटिकास्तथा श्वयथ्वाद्याश्च । दशाद् रक्त पक्वजम्बूनिभ स्रवति ।

सर्वाऽपि सर्वजा प्रायो व्यपदेशस्तु भूयसा ।

स०-सर्वा च लूता त्रिदोषजैव । बाहुल्येन तु व्यपदेश ।

---

१ "सर्वत्रेति सर्वविकारेषु ॥ गृहकपोतस्य-पारावतस्य, पुरीषम् । अलिकुलज-वृश्चिकसमूहजम् ॥ अन्त इति अनन्तरोक्ताया क्रियायामसिद्धायाम् । विषेण-स्थावरेण ।" इतीन्दु । "अलिकुलज-भ्रमरोत्थम् ।" इति चन्द्र । २ 'येन्मधुसर्पिषी' स स । ३ 'रसैर्हरि' स.मू । ४ 'द्गुलिका' इ । ५ 'न्दुरुवृ' स द्व । ६ 'षबीज स' इ ई उ ।

१ 'द्रवत्वस्वभावेनैकैव' ट । २ 'शोष्मरक्त' इ ई.उ । ३ 'भेदातिरुक्कर' स मू । 'भेदादिरुक्कर' स स । ४ 'प्राणान्तिकीषु' स द्व. । ५ 'शिरोरुजा' ण त । ६ 'श्वेतपीतासितारक्तपिटिकाश्वयथूद्भव' इ ई उ ण । 'श्वेतासिता पीतरक्ताः पिटका·' स स । 'श्वेता. पीता सिता रक्ता' स मू । ७ 'नासिका' इ. ।

**तीक्ष्णमध्यावरत्वेन सा त्रिधा हन्त्युपेक्षिता[1] ॥ ५४ ॥**
**सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ।**

स०—सा च लूता तीक्ष्णादिभेदेन त्रिप्रकारा । उपेक्षिता च सती यथासङ्ख्यं सप्ताहेन दशाहेन पक्षेण च हन्ति ।

**लूतादंशश्च[3] सर्वोऽपि दद्रुमण्डलसन्निभः ॥ ५५ ॥**
**सितोऽसितोऽरुणः पीतः श्यावो वा मृदुरुन्नतः ।**
**मध्ये कृष्णोऽथवा श्यावः पर्यन्ते जालकावृतः ॥ ५६ ॥**
**विसर्पवांश्छोफयुतस्तप्यते बहुवेदनः ।**
**ज्वराशुपाकविक्लेदकोथावदरणान्वितः ॥ ५७ ॥**
**क्लेदेन यत्स्पृशत्यङ्गं तत्रापि कुरुते व्रणम् ।**

स०—सर्वश्च लूतादंशो दद्रुमण्डलाकार सितादिवर्णो मृदुरुन्नतो मध्ये कृष्णवर्ण श्याववर्णो वा परितो जालकवृतो विसर्पादिमान् स्यात् । तथा तप्यतेऽनेकरुज । तथा ज्वरादियुत । तथा च दश क्लेदेन यद्यदङ्ग स्पृशेत् तत्र तत्र च व्रण विदधाति ।

**श्वासदंष्ट्राशकृन्मूत्रशुक्रलालानखार्तवैः ॥ ५८ ॥**
**अष्टाभिरुद्वमत्येषा[6] विषं वक्त्राद्विशेषतः[7] ।**

स०—श्वासादिभिरष्टाभिरेषा लूता विषमुद्वमति । वक्त्रेण विशेषेण ।

**लूता नाभेर्दशत्यूर्ध्वमूर्ध्व[8] चाधश्च[10] कीटकाः[11] ॥ ५९ ॥**
**तद्दूषितं[12] च वस्त्रादि देहे पृक्तं विकारकृत् ।**

स०—नाभेरूर्ध्व लूता दशति । ऊर्ध्वमधस्ताच्च कीटा दशन्ति । दशतीति "दशसञ्जस्वञ्जा शपि" इति नलोप ।

तया—लूतया दूषित, वस्त्रासनादि शरीरे लग्न विकारकृत् ।

**दिनार्धं लक्ष्यते नैव दंशो लूताविषोद्भवः ॥ ६० ॥**
**सूचीव्यधवदाभाति[13] ततोऽसौ प्रथमेऽहनि ।**
**अव्यक्तवर्णः प्रचलः किञ्चित्कण्डूरुजान्वित. ॥ ६१ ॥**

स०—लूताविषजो दशो दिनार्ध न लक्ष्यत एव ।

तत—अनन्तर, असौ—दश, प्रथमे दिने सूचीव्यधतुल्य आभाति । अव्यक्तवर्ण प्रकर्षेण चलो मनाक्कण्डूरुग्युतश्च ।

**द्वितीयेऽभ्युन्नतोऽन्तेषु[14][12] पिटिकैरिव[15] वाऽऽचितः[16] ।**
**व्यक्तवर्णो नतो मध्ये कण्डूमान् ग्रन्थिसन्निभः ॥ ६२ ॥**

स०—द्वितीयेऽहन्यभ्युन्नतोऽन्तेषु पिटिकैरिव[15] वाऽऽचितो व्यक्तवर्णो मध्ये नत सकण्डूर्ग्रन्थिनिभ ।

**तृतीये सज्वरो रोमहर्षकृद्रक्तमण्डलः ।**
**शरावरूपस्तोदाढ्यो रोमकूपेषु सास्रवः[1] ॥ ६३ ॥**

स०—तृतीयेऽहनि ज्वरान्वितो रोमाञ्चकृद्रक्तमण्डल शरावाकारोऽतिकव्यथो रोमकूपेषु स्रावयान् ।

**महाश्चतुर्थे श्वयथुस्तापश्वासभ्रमप्रद. ।**

स०—चतुर्थे वासरे महाश्छोफस्तापादिकृत् ।

**विकारान् कुरुते तांस्तान् पञ्चमे विषकोपजान् ॥ ६४ ॥**

स०—पञ्चमे दिने तांस्तान्—पूर्वोक्तान्, विषकोपजान् विकारान् विधत्ते ।

**षष्ठे व्याप्नोति[2] मर्माणि**

स०—षष्ठे दिने मर्माण्यश्नुते ।

**सप्तमे हन्ति जीवितम् ।**

स०—सप्तमे दिवसे जीवित हन्ति ।

**इति[4] तीक्ष्णं विषं, मध्यं हीन च विभजेदतः[4] ॥ ६५ ॥**

स०—इति—एवरूप, तीक्ष्ण विषम् ।

मध्य हीन वाऽतो निरूप्य लक्षयेत् ।

**एकविंशतिरात्रेण विषं शाम्यति सर्वथा ।**

स०—सर्वथा एकविंशतिरात्रेण विष शम याति ।

**अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत् ॥ ६६ ॥**
**दहेच्च जाम्बवौष्ठाद्यैर्न तु पित्तोत्तर दहेत् ।**

स०—अथेति मङ्गले । कृतमङ्गलस्य लूतादष्टस्य, आ—समन्तात्, दश क्षिप्र शस्त्रेणोद्धरेत् । जाम्बवौष्ठादिभिश्च दहेत्, पित्ताधिक वर्जयित्वा ।

**कर्कशं भिन्नरोमाणं मर्मसन्ध्यादिसंश्रितम् ॥ ६७ ॥**
**प्रसृतं सर्वतो दंशं न छिन्दीत दहेन्न च ।**

स०—कर्कशादिगुण दश न छिन्द्यात् न च दहेत् ।

**लेपयेद्दग्धमगदैर्मधुसैन्धवसंयुतैः ॥ ६८ ॥**
**सुशीतैः सेचयेच्चानु कषायैः क्षीरिवृक्षजैः ।**

स०—दग्ध दशमगदैर्माक्षिकसैन्धवान्वितैर्लेपयेत् । पश्चात् क्षीरिवृक्षजै कषायैरतिशिशिरै सेचयेच्च ।

**सर्वतोऽपहरेद्रक्तं शृङ्गाद्यैः सिरयाऽपि वा ॥ ६९ ॥**
**सेकलेपास्ततः[4] शीता बोधिश्लेष्मातकाक्षकैः[10][4] ।**

१ 'पेक्षया' ई उ । २ 'दश. सामान्यतस्तासा दद्रु' स. द्व । ३ 'शस्तु स' इ.ई उ । ४ 'सितासितो' इ ई उ । ५ 'श्यावपर्यन्तो' स मू । ६ 'मन्त्येता' इ.ई उ स.द्व । ७ 'वक्त्रैर्विषे' इ ण त स मू । ८ 'शन्त्यूर्ध्वं' ई.उ स द्व. । ९ 'ध्वंमधश्च विषकीटका ' उ. । १० 'वाऽधश्च' ण त । ११ 'कीटक.' इ. । १२ "तद्दूषित—तया लूतया, तै कीटैश्च दूषितम् ॥ अन्तेष्वभ्युन्नत. पिटकैरिवाचित —व्याप्त. ।" इति चन्द्र । १३ 'चीविद्धव' इ. । १४ 'येऽस्युन्न' ई उ स स । १५ 'पिटकै' ई.ण.त स स. । १६ 'चाचित.' इ.ई स.द्व. ।

१ 'सस्रव ' ई । २ 'प्राप्नोति' इ । ३ 'विषमित्यतितीक्ष्णानामितरे विभ' स स । ४ "इति—अनन्तरोक्तेन प्रकारेण, तीक्ष्ण विष व्याख्यातम् । अत एव मध्यविष हीनविष च विभजेत्—विभाग नयेत् ॥ सवत —सर्वस्माद्दशात् । तत —अनन्तर नि सृते रक्ते, शीता सेकलेपा योज्या ॥ बोधिवृक्षादिभिरगद पद्मकाह्वयोऽशेषलूताकीटानां सार्वकार्मिको ज्ञेय । बोधि —अश्वत्थ ।" इति चन्द्र । "[ आदिशब्देन क्षारविधावुक्ता सिरास्राव्यादयो गृह्यन्ते । सर्वत प्रसृत—देहे सर्वतो व्याप्तम् ॥ अक्षक —बिभीतक ।" इतीन्दु । ५ 'न च वा' ण त । ६ 'तिवासरेण' ट । ७ 'स्र दश शस्त्रेण चोद्धरेत्' उ । ८ 'न्न वा' ई.उ । 'हेत वा' स स । ९ 'सेका लेपा' ण त. । १० 'काक्षिकै.' इ. । 'काक्षजै.' ई उ ।

स०-सर्वतो रक्तं विस्रावयेच्छृङ्गादिभिः । अनन्तरं सेका लेपाश्च शिशिरा हिता पिप्पलादिभिः ।

**फलिनीद्विनिशाक्षौद्रसर्पिर्भिः पद्मकाह्वयः ॥ ७० ॥**
**अशेषलूताकीटानामगदः सार्वकार्मिकः ।**

स०-फलिन्यादिकोऽयं पद्मकसञ्ज्ञोऽगदः सार्वकार्मिकः । अशेषक्रियासु (?) लूताकीटानां हितः ।

**हरिद्राद्वयपत्तङ्गमञ्जिष्ठानतकेसरैः ॥ ७१ ॥**
**सक्षौद्रसर्पिः पूर्वस्मादधिकश्चम्पकाह्वयः ।**

स०-हरिद्राद्वयादिभिः क्षौद्रघृतान्वितश्चम्पकनामाऽगदः पूर्वस्मादधिकः ।

**तद्वद्गोमयनिष्पीडशर्कराघृतमाक्षिकैः ॥ ७२ ॥**

स०-गोशकृन्निष्पीडादिभिरगदस्तद्वत्-पूर्वगुणः ।

**अपामार्गमनोह्वालदार्वीध्यामकगैरिकैः ।**
**नतैलाकुष्ठमरिचयष्ट्याह्वघृतमाक्षिकैः ॥ ७३ ॥**
**अगदो मन्दरो नाम तथाऽन्यो गन्धमादनः ।**
**नतरोध्रवचाकट्वीपाठैलापत्रकुङ्कुमैः ॥ ७४ ॥**

स०-अपामार्गादिभिरगदो मन्दरो नाम ।

अन्यश्च-वक्ष्यमाणो नतादि (दिभिः), गन्धमादनो नाम ।

**विषघ्नं बहुदोषेषु प्रयुञ्जीत विशोधनम् ।**

स०-बहुदोषेषु नरेषु विषघ्नं विशोधनं प्रयुञ्जीत ।

**यष्ट्याह्वमदनाङ्कोल्लजालिनीसिन्दुवारिकाः ॥ ७५ ॥**
**कफे ज्येष्ठाम्बुना पीत्वा विषमाशु समुद्वमेत् ।**
**शिरीषपत्रत्वङ्मूलफलं वाऽङ्कोल्लमूलवत् ॥ ७६ ॥**

स०-कफे यष्ट्याह्वादीनि तन्दुलोदकेन पीत्वा विषं क्षिप्रमुद्वमेत् ।

अथवा शिरीषपत्रादिकमङ्कोल्लमूलयुतं ज्येष्ठाम्भसा पीत्वोद्वमेत् ।

**विरेचयेच्च त्रिफलानीलिनीत्रिवृतादिभिः ।**

स०-त्रिफलादिभिर्विरेचयेच्च ।

**निवृत्ते दाहशोफादौ कर्णिकां पातयेद् व्रणात् ॥ ७७ ॥**

स०-दाहादावुपशान्ते सति व्रणात् कर्णिकां पातयेत् ।

**कुसुम्भपुष्पं गोदन्तः स्वर्णक्षीरी कपोतविट् ।**
**त्रिवृता सैन्धवं दन्ती कर्णिकापातनं, तथा ॥ ७८ ॥**
**मूलमुत्तरवारुण्या वंशनिर्लेखसंयुतम् ।**
**तद्वच्च सैन्धवं कुष्ठं दन्तीकटुकदौग्धिकम् ॥ ७९ ॥**
**राजकोशातकीमूलं, किण्वो वा मथितोद्भवः ।**

स०-कुसुम्भकुसुमादिकं दन्तीपर्यन्तं कर्णिकायाः पातनं वरम् ।

उत्तमारणीमूलं वंशनिर्लेखनयुक्तं वा ।

सैन्धवादिकं पूर्वगुणम् ।

तक्रजो वा किण्वः-उपरिष्टात् फेनाभः, पूर्वगुणः ।

**कर्णिकापातसमये बृंहयेच्च विषापहैः ॥ ८० ॥**

स०-कर्णिकापातनकाले च विषघ्नैर्बृंहयेत् ।

**स्नेहकार्यमशेषं च सर्पिषैव समाचरेत् ।**
**विषस्य वृद्धये तैलमग्नेरिव तृणोलुपम् ॥ ८१ ॥**

स०-लूतायामशेषं स्नेहने यत्कार्य-कर्तुं योग्यं, तद् घृतेनैव कुर्यात् । यतस्तैलं विषस्य वृद्धये, तृणोलुपमिव वह्नेः ।

**ह्रीबेरवैकङ्कतगोपकन्या-**
**मुस्ताशमीचन्दनटिण्डुकानि ।**
**शैवालनीलोत्पलवक्रयष्टी-**
**त्वङ्नाकुलीपद्मकराठमध्यम् ॥ ८२ ॥**
**रजनीघनसर्पलोचना-**
**कणशुण्ठीकणमूलचित्रकाः ।**
**वरुणागुरुबिल्वपाटली-**
**पिचुमन्दामयशेलुकेसरम् ॥ ८३ ॥**
**बिल्वचन्दननतोत्पलशुण्ठी-**
**पिप्पलीनिचुलवेतसकुष्ठम् ।**
**शुक्तिशाकवरपाटलिभार्गी-**
**सिन्दुवारकरघाटवराङ्गम् ॥ ८४ ॥**

---

१ "फलिनी-गन्धप्रियङ्गुः ॥ गोमयनिष्पीडादिभिर्गैरिकान्तैरगदस्तद्वदिति लूताकीटानां सार्वकार्मिकः । गोमयनिष्पीडः-गोमयरसः ॥ नतैलादिभिर्मन्दरो नामागदस्त[था-त]द्वद्विज्ञेयः ।" इति चन्द्रः । "[ व्रणात्-व्रणमुखात्, कर्णिका-दशस्थाने कर्णिकावदुत्पन्नं मांसाङ्कुरं, पातयेत्-अपनयेत् ॥]" इतीन्दुः । २ 'शाश्रेष्ठास' इ उ. । ३ 'ष्पीडाश' इ ण त । ४ अस्याग्रे "मञ्जिष्ठाश्लेष्मान्तकरजनीसुवहाशिरीषपालिन्द्यः । सैलाचन्दनकनकाः ससिन्दुवारा विषं घ्नन्ति ॥ १ ॥" इति त पुस्तकेऽधिकः श्लोकः । ५ 'षघ्नैर्बहु' इ । ६ 'रितान्' इ उ. । 'रितम्' ई. । ७ 'चाङ्कोल्ल' ई ण. । ८ 'लाफलिनी' उ । ९ 'पुष्पगोदन्तस्वर्ण' इ.ई उ. ।

१ 'न परम्' ई उ । २ 'तथा ॥ हरिद्रा गुग्गुलु किण्वं वंशलेख कपोतविट् । तद्वच्च' स ढ । ३ "तथेति कर्णिकापातनम् । वंशलेख:-वंशतनुवल्क. ।" इतीन्दुः । "वंशस्य निर्लेखेन-त्वचा, संयुतम् । सैन्धवादि तद्वच्च-कर्णिकापातनं ज्ञेयम् । तद्वत् राजकोशातक्या मूलं कर्णिकापातनम् । तक्रोत्पन्नो घनो भागः-किण्वः ॥ गोपकन्या-उत्पलसारिवा । सर्पलोचना-सहदेवी सर्पाक्षी रक्तशङ्खपुष्पी । कणमूलं-पिप्पलीमूलम् । आमयः-कुष्ठम् । शाकवरा-जीवन्ती । करघाटो-मदनः अपामार्गो वा । वराङ्गं-त्वक् ।" इति चन्द्रः । ४ 'किट्टो' ई. । 'किण्णो' ण त.चन्द्र । ५ 'येत' ई उ स.स. । 'येत्तं' स मू । ६ 'षमावर्द्धयेत्तैल' इ उ. । ७ 'तृणोलपम्' ई उ.स स । ८ तृणोलुपः-कोमलं शुष्कं च तृणम्, बल्वजादितृणं वा । "उलपा बल्वजाः प्रोक्ता" इति विश्वहलायुधौ । "उलपा उशीरतृणानि" इति क्षीरस्वामी । ९ 'स्नेहेन' ट । १० 'नतिन्दुकानि' इ. । 'नदुण्टुकानि' ई उ । ११ 'पाटला' ई. । १२ 'शावलकपा' उ. । १३ 'करहाट' उ. ।

**पित्तकफानिललूताः पानाञ्जननस्यलेपसेकेन ।**
**अगदवरा वृत्तस्थाः कुगतीरिव वारयन्त्येते ॥ ८५ ॥**

स०–ह्रीबेरादिकमिन्द्रवज्रावृत्तम् ।

रजन्यादिकं वैतालीयं वृत्तम् ।

विल्वादिकं स्वागतावृत्तम् ।

एते त्रयोऽगदवरा वृत्तस्था पित्तश्लेष्मानिललूता क्रमात् पानादिभि कुगतीरिव वारयन्ति । आर्या ।

**रोध्रं सेव्यं पद्मकं पद्मरेणुः**
**कालीयाख्यं चन्दनं यच्च रक्तम् ।**
**कान्तापुष्पं दुग्धिनीका मृणालं**
**लूताः सर्वा घ्नन्ति सर्वक्रियाभिः ॥ ८६ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने कीटलूतादिविषप्रतिषेधो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥**

स०–रोध्रादीनि सर्वाभि –पानादिभि क्रियाभि , सर्वा लूता घ्नन्ति । शालिनी ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठ उत्तरस्थाने कीटलूतादिविषप्रतिषेधो नाम सप्तत्रिंशोऽध्याय समाप्त ॥३७॥



## अष्टत्रिंशोऽध्यायः ।

विषचिकित्साप्रक्रमात् मूषिकालर्कविषमुपक्रमते—

**अथातो मूषिकालर्कविषप्रतिषेध व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

( गद्यसूत्रे ॥ २ ॥ )

**लालनश्चपलः पुत्रो हसिरश्चिक्किरोऽजिरः ।**
**कषायदन्तः कुलकः कोकिलः कपिलोऽसितः ॥ १ ॥**
**अरुणः शबलः श्वेतः कपोतः पलितोन्दुरः ।**
**छुच्छुन्दरो रसालाख्यो दशाष्टौ चेति मूषिकाः ॥ २ ॥**

स०–लालनादिभेदेन दशाष्टाधिका इत्यष्टादश मूषिका भवन्ति ।

**शुक्रं पतति यत्रैषां शुक्रदिग्धैः स्पृशन्ति वा ।**
**यदङ्गमङ्गैस्तत्रास्रे दूषिते पाण्डुतां गते ॥ ३ ॥**
**ग्रन्थयः श्वयथुः कोठो मण्डलानि भ्रमोऽरुचिः ।**
**शीतज्वरोऽतिरुक्सादो वेपथुः पर्वभेदनम् ॥ ४ ॥**
**रोमहर्षः स्रुतिर्मूर्च्छा दीर्घकालानुबन्धनम् ।**
**श्लेष्मानुबद्धबह्वाखुपोतकच्छर्दनं सतृट् ॥ ५ ॥**

स०–एषा मूषिकाणा यत्र शुक्र पतति, शुक्रदिग्धैरङ्गैर्वा यदङ्ग स्पृशन्ति, तस्मिन्नङ्गे रक्ते दूषिते पाण्डुत्व याति सति ग्रन्थ्यादय स्यु । तथा तत्प्रभावात् कफानुगतबहुमूषिकपोतकवमन सतृट् स्यात् ।

**व्यवाय्याखुविषं कृच्छ्रं भूयो भूयश्च कुप्यति ।**

स०–आखुविष व्यवायि–सकलशरीरव्यापनशील, तथा कृच्छ्र–कृच्छ्रसाध्य, पुन पुनश्च कुप्यति ।

**मूर्च्छाङ्गशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ॥ ६ ॥**
**शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यलक्षणम् ।**

स०–मूर्च्छादयोऽसाध्यलक्षणम् ।

**शूनवस्तिं विवर्णौष्ठमाख्वाभैर्ग्रन्थिभिश्चितम् ॥ ७ ॥**
**छुच्छुन्दरसगन्धं च वर्जयेदाखुदूषितम् ।**

स०–शूनबस्ति विवर्णाधर मूषिकनिभैर्ग्रन्थिभिर्व्याप्त छुच्छुन्दरगन्धतुल्यगन्धं च मूषिकविषदूषित नोपक्रमेत् ।

**शुनः श्लेष्मोल्बणा दोषाः संज्ञां संज्ञावहाश्रिताः ॥८॥**
**मुष्णन्तः कुर्वते क्षोभं धातूनामतिदारुणम् ।**
**लालावानन्धबधिरः सर्वतः सोऽभिधावति ॥ ९ ॥**
**स्रस्तपुच्छहनुस्कन्धः शिरोदुःखी नताननः ।**

स०–शुन –सारमेयस्य, श्लेष्माधिका दोषा सञ्ज्ञावहानि स्रोतास्याश्रिता सञ्ज्ञामपहरन्तो धातूनामतिघोर क्षोभ कुर्वन्ति । स –श्वा, लालायुतोऽन्धबधिरो ध्वस्तपुच्छहनुस्कन्ध शिरोदु खी नतमुख सर्वतो धावति ।

---

१ "यथा वृत्तस्था –सुशीला पुरुषा , कुगतीर्वारयन्ति ॥ कान्ता–प्रियङ्गु ।" इति चन्द्र । २ 'कुमती' इ ,ण। ३ 'दारय' ई उ. । ४ 'त्रयो योगा वृ' ट. । ५ 'मुच्यते' ट । ६ अथ मूषिकालर्कविषप्रतिषेधश्चरके चि० २३ अध्याये, सुश्रुते क० ७ अध्याये, अष्टाङ्गसङ्ग्रहे उ० ४६ अध्याये चास्ति वर्णित । ७ "अलर्क –उन्मत्तकुक्कुर ।" इति डल्हण. । "अलर्क.–रोगित श्वा ।" इति चन्द्र ।

१ 'श्चिकिरोऽजिन ' स स । 'रश्चक्किरोऽजन ' इ । 'रोऽजर.' ई । 'श्चिकिलोऽजिर.' च । २ 'न्दुरु ' ई उ स स । ३ 'चुच्छुन्दरो' स स । ४ 'बलासाख्यो' इ ई । 'रलासाख्यो' स मू । 'रसालाक्षो' ण. । ५ 'दश चाष्टौ च मू' इ. । ६ 'कोथो' ण त. । ७ 'नुबन्धव' ण त । 'नुविद्ध' चन्द्र स स. । ८ "[ सकृत्–एकवारमेव, श्लेष्मणाऽनुबद्धानां बहूनामाखुकपोतानां–मूषिकबालाकारमासखण्डाना, छर्दन च स्यात् ।] सर्वतो विना प्रयोजनमभिधावति ।" इतीन्दु । ९ 'सकृत्' स.स. । १० 'चुच्छुन्दुरुस' स.स. ।

**दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक् ॥ १० ॥**
**हृच्छिरोरुग्ज्वरस्तम्भतृष्णामूर्च्छोद्भवोऽनु च ।**

स०—तेन-शुना, विदष्टस्य दंश सुप्त—अचेतन, कृष्ण रक्त स्रवति । पश्चाद् हृत्पीडाद्युद्भूति स्यात् ।

**अनेनान्येऽपि बोद्धव्या व्याला दंष्ट्राप्रहारिणः ॥ ११ ॥**
**शृगालाश्वतराश्वर्क्षद्वीपिव्याघ्रवृकादयः ।**

स०—अनेन—दशादिस्वरूपेण, अपरे व्याला—दुष्टा, दंष्ट्राप्रहारिण शृगालादय एव वेद्या ।

**कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः ॥ १२ ॥**
**विदाहरागरुक्पाकशोफग्रन्थिविकुञ्चनम् ।**
**दंशावदरणं स्फोटाः कर्णिका मण्डलानि च ॥ १३ ॥**
**सर्वत्र सविषे लिङ्गं, विपरीतं तु निर्विषे ।**

स०—सर्वत्रैव सविषे दशे कण्ड्वादयो लिङ्गम् ।

निर्विषे च दशेऽतो विपरीत लक्षण विद्यात् ।

**दष्टो येन तु तच्चेष्टारुतं कुर्वन् विनश्यति ॥ १४ ॥**
**पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु ।**

स०—येन प्राणिना दष्टस्तच्चेष्टारुत कुर्वन् म्रियते । तमेव-दष्टार, आदर्शकादिषु सहसा पश्यन् विनश्यति ।

**योऽद्भ्यस्त्रस्येददष्टोऽपि शब्दसंस्पर्शदर्शनैः ॥ १५ ॥**
**जलसन्त्रासनामानं दष्टं तमपि वर्जयेत् ।**

स०—यो जलेभ्योऽदष्टोऽपि सन्त्रस्येत् शब्दसस्पर्शदर्शनैर्हेतुभि, त जलसन्त्राससज्ञ दष्ट वर्जयेत् ।

**आखुना दष्टमात्रस्य दंशं काण्डेन दाहयेत् ॥ १६ ॥**
**दर्पणेनाथवा, तीव्ररुजा स्यात्कर्णिकाऽन्यथा ।**

स०—आखुना दष्टमात्रस्य नरस्य सतो दश काण्डेन दाहयेत् । दर्पणेन वा दाहयेत् ।

अन्यथा—एवमदग्धे सति, कर्णिका दारुणपीडा स्यात् ।

**दग्धं विस्रावयेद्दंशं प्रच्छितं च प्रलेपयेत् ॥ १७ ॥**
**शिरीषरजनीवक्रकुङ्कुमामृतवल्लिभिः ।**

स०—दश दग्ध प्रच्छित विस्रावयेत् । शिरीषबीजादिभि प्रलेपयेच्च ।

**अगारधूममञ्जिष्ठारजनीलवणोत्तमैः ॥ १८ ॥**
**लेपो जयत्याखुविषं कर्णिकायाश्च पातनः ।**

स०—अगारधूमादिको लेपो ह्यय मूषिकविष हन्ति । कर्णिका च पातयति ।

**ततोऽम्लैः क्षालयित्वाऽनु तोयैरनु च लेपयेत् १९**
**पालिन्दीश्वेतकटभीविल्वमूलगुडूचिभिः ।**
**अन्यैश्च विषशोफघ्नैः सिरा वा मोक्षयेद्द्रुतम् ॥ २० ॥**

स०—अनन्तरमम्लै क्षालयित्वाऽनु जलै क्षालयेत् । पश्चात् पालिन्द्यादिभिरपरैश्च विषघ्नै श्वयथुघ्नैश्च लेपयेत् । अथवा शीघ्र सिरा व्यधयेत् । पालिन्दी—मालविका त्रिवृत् ।

**छर्दनं नीलिनीक्वाथैः शुकाख्याङ्कोल्लयोरपि ।**

स०—नीलिनीक्वाथेन छर्दन कार्यम् । शुकाख्याङ्कोल्लयोश्च क्वाथेन वमनम् । शुकाख्य—शिरीष ।

**कोशातक्याः शुकाख्यायाः फलं जीमूतकस्य च २१**
**मदनस्य च सञ्चूर्ण्य दध्ना पीत्वा विषं वमेत् ।**

स०—कोशातक्यादीना फलानि सञ्चूर्ण्य दध्ना पीत्वा विष वमेत् ।

**वचामदनजीमूतकुष्ठं वा मूत्रपेषितम् ॥ २२ ॥**
**पूर्वकल्पेन पातव्यं सर्वोन्दुरविषापहम् ।**

स०—वचादि वा गोमूत्रेण सञ्चूर्ण्य पूर्वकल्पेन—दध्ना, पीत्वा सर्वोन्दुरविष हन्ति ।

**विरेचनं त्रिवृन्नीलीत्रिफलाकल्क इष्यते ॥ २३ ॥**

स०—विरेचन त्रिवृतादिकल्क इष्यते ।

**शिरोविरेचने सारः शिरीषस्य फलानि च ।**

स०—शिरोविरेचने शिरीषस्य सार फल च योज्यम् ।

**अञ्जनं गोमयरसो व्योषसूक्ष्मरजोन्वितः ॥ २४ ॥**

स०—गोमयरसश्चूर्णीकृतत्रिकटुकान्वितोऽञ्जनम् ।

**कपित्थगोमयरसो मधुमानवलेहनम् ।**

स०—कपित्थगोमयरस समाक्षिकोऽवलेहनम् ।

**तन्दुलीयकमूलेन सिद्धं पाने हितं घृतम् ॥ २५ ॥**
**द्विनिशाकटभीरक्तायष्ट्याह्वैर्वाऽमृतान्वितैः ।**
**आस्फोतमूलसिद्धं वा, पञ्चकापित्थमेव वा ॥ २६ ॥**

स०—तन्दुलीयकमूलेन पक्व सर्पि पाने हितम् ।

द्विनिशादिभिर्वा सावित घृत पाने हितम् ।

अथवाऽर्कमूलेन सिद्ध घृत पाने हितम् ।

अथवा पञ्चकापित्थसिद्ध सपि पाने हितम् । कपित्थस्येमानि

---

१ "तेन—लालादियुक्तेन शुना । हृदि शिरसि च रुक् स्यात् । तथा ज्वरादयश्च भवन्ति । अनु च मूर्च्छोद्भव ॥ अश्वतरो—वेगसर ॥ निस्तोद—अतिपीडा ॥ दश दग्ध्वा जलौक प्रभृतिभिर्विस्रावयेत् ।" इति चन्द्र । "व्याला—क्षुद्रा ॥ दग्ध दश—दशव्रण, विस्रावयेत् । प्रच्छित चेति वक्ष्यमाणत्वात् विस्रावण प्रच्छानेन ।" इतीन्दु । "कर्णिका—कमलमध्यबीजकोशाकृति ।" इति डल्हण । २ 'रुक् ज्वर. स्तम्भस्तृष्णा मू' चन्द्र. । ३ 'स्तम्भस्तृष्णा' ण त स.मू । ४ 'व्यालदंष्ट्रा' ई. उ । ५ 'ऽदस्पर्शनिद' ई उ । ६ 'दग्ध्वा' इ ई चन्द्र. स.मू स सु गदनि । ७ 'प्रच्छिन्न' इ । ८ 'नीकुङ्कु' स.सु. । ९ 'ङ्कुमैरमृतायुतै.' स.सु गदनि. ।

१ "पिष्टैरनु' इ. । २ "अन्यैश्च विषघ्नै शोफघ्नैश्च—हरिद्रादिभि, लेपयेत् ।" इतीन्दु । "शुकाख्य—चर्मकारवट ।" इति डल्हण । ३ 'मोचयेत्' इ. । ४ 'जालिनी' स स.स सु गदनि. । ५ 'ङ्कोठयो' स.सु.गदनि. । ६ 'कोशवत्या.' इ ई.उ स स । ७ 'न्दुरुवि' स स. । ८ 'चने' 'अने' 'हने' इ.ई.उ.चन्द्र स.द्र स सु । ९ 'वृद्दन्तीत्रि' स.सु. ।

कापित्थानि,-मूलत्वक्पत्रपुष्पफलानि पञ्च, पञ्च च तानि कापित्थानि च, तै सिद्ध पञ्चकापित्थम् ।

**सिन्दुवार नतं शिग्रुबिल्वमूलं पुनर्नवा ।**
**वचाश्वदंष्ट्राजीमूतमेषां क्वाथं समाक्षिकम् ॥ २७ ॥**
**पिबेच्छाल्योदनं दध्ना भुञ्जानो मूषिकार्दितः ।**

स०-सिन्दुवारादीना क्वाथ समाक्षिक पिबेत् । मूषिकविषपीडितो दध्ना शाल्योदन भुञ्जान ।

**तक्रेण शरपुङ्खाया बीजं सञ्चूर्ण्य वा पिबेत् ॥ २८ ॥**

स०-अथवा शरपुङ्खाया बीज सञ्चूर्ण्य मथितेन पिबेत् ।

**अङ्कोल्लमूलकल्को वा बस्तमूत्रेण कल्कितः ।**
**पानालेपनयोर्युक्तः सर्वाखुविषनाशनः ॥ २९ ॥**

स०-अङ्कोलमूलकल्को वा छागमूत्रेण पिष्ट पानलेपनयो र्युक्त सर्वाखुविषहा ।

**कपित्थमध्यतिलकतिलाङ्कोल्लजटाः पिबेत् ।**
**गवां मूत्रेण, पयसा मञ्जरीं तिलकस्य वा ॥ ३० ॥**

स०-कपित्थबीजादिक गोमूत्रेण पिबेत् ।
क्षीरेण वा तिलकमञ्जरी पिबेत् ।

**अथवा सैर्यकान्मूलं सक्षौद्रं तन्दुलाम्बुना ।**

स०-सैर्यकमूल वा समाक्षिक ज्येष्ठाम्भसा पिबेत् ।

**कटुकालाबुविन्यस्तं पीतं वाऽम्बु निशोषितम् ॥३१॥**

स०-अथवा कटुकालाबुनि जल निक्षिप्त रात्रिस्थित पीत मूषिकविषनाशन स्यात् ।

**सिन्दुवारस्य मूलानि बिडालास्थि विषं नतम् ।**
**जलपिष्टोऽगदो हन्ति नस्याद्यैराखुजं विषम् ॥ ३२॥**

स०-सिन्दुवारमूलादिको जलपिष्टोऽगदो नस्याद्यैर्मूषिकविष हन्ति ।

**सशेषं मूषिकविषं प्रकुप्यत्यभ्रदर्शने ।**
**यथायथं वा कालेषु दोषाणां वृद्धिहेतुषु ॥ ३३ ॥**

स०-मूषिकविष किञ्चिच्छेष जलदोन्नतौ कुप्यति । अथवा वातादीना यथास्व कालेषु वृद्धिकारणेषु प्रकुप्यति ।

**तत्र सर्वे यथावस्थं प्रयोज्याः स्युरुपक्रमाः ।**
**यथास्वं ये च निर्दिष्टास्तथा दूषीविषापहाः ॥ ३४ ॥**

स०-तत्रावस्थावशादुपक्रमा सर्वे यथायोग प्रयोज्या स्यु । ये च दूषीविषघ्ना निर्दिष्टास्ते च प्रयोज्या ।

**दंशं त्वलर्कदष्टस्य दग्धमुष्णेन सर्पिषा ।**
**प्रदिह्यादगदैस्तैस्तैः पुराणं च घृतं पिबेत् ॥ ३५ ॥**

स०-अलर्कदष्टस्य दशमुष्णेन घृतेन दग्धमगदैस्तैस्तै - पूर्वोक्तै , लेपयेत् । पुराण च सर्पि पिबेत् ।

**अर्कक्षीरयुतं चास्य योज्यमाशु विरेचनम् ।**

स०-अर्कक्षीरान्वित चास्य विरेचन क्षिप्रं योज्यम् ।

**अङ्कोल्लोत्तरमूलाम्बु त्रिपलं सहविःपलम् ॥ ३६ ॥**
**पिबेत्सधत्तूरफला श्वेता वाऽपि पुनर्नवाम् ।**

स०-अङ्कोलोत्तरमूलजल पलत्रयमात्रं सघृतपल पिबेत् ।
धत्तूरफलयुता श्वेता वा पुनर्नवा जलेन पिबेत् ।

**ऐकध्यं पललं तैलं रूपिकायाः पयो गुडः ॥ ३७ ॥**
**भिनत्ति विषमालर्कं घनवृन्दमिवानिलः ।**

स०-भृष्टतिलचूर्ण, तैल, रूषिकाया -अर्कस्य क्षीरं, गुड , एकत्र मिश्रित प्रकृतत्वाज्जलेन पीत विषमालर्क भिनत्ति । पयोदौघमिव वायु ।

**समन्त्रं सौषधीरत्नं स्नपनं च प्रयोजयेत् ॥ ३८ ॥**

स०-मन्त्रान्वितमौषधीरत्नयुत स्नपन च कारयेत् । ["अष्टोत्तरशत वारान् सिद्धमन्त्राभिमन्त्रितै । अष्टोत्तरशतोन्मानै पुष्पमालावगुण्ठितै ॥ गोचर्ममात्रके लिप्ते ज्वलितेऽग्नौ कुशास्तृते । स्थण्डिले सरितस्तीरे स्नान वाऽस्य चतुष्पथे ॥ अलर्काधिपते यक्ष सारमेयगणाधिप । अलर्कजुष्टमेतन्मे निर्विष कुरु मा चिरात् ॥ स्वाहेति मन्त्रोऽलर्कार्तौ सर्वकर्मसु शस्यते ।" इति वृद्धवाग्भटात् ( स उ अ ४६ )।]

**चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तपरिक्षतम् ।**
**शूयते पच्यते रागज्वरस्रावरुजान्वितम् ॥ ३९ ॥**

स०-चतुष्पाद्भि -दन्त्यश्वप्रभृतिभि प्राणिभि , द्विपाद्भि - मनुष्यमयूरकुक्कुटादिभि , वा नखपरिक्षत दन्तपरिक्षत च शूयते पच्यते च रागाद्यन्वितम् ।

**सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपादिका ।**
**रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥ ४० ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने मूषिकालर्कविषप्रतिषेधो नाम षट्त्रिंशोऽध्यायः ॥ ३८ ॥**

१ 'वारनत' इ ण त स मू । २ 'नवम्' इ स द्व । ३ 'पानलेप' इ ई उ.स द्व । ४ 'सर्वेन्दुरुविषापह.' स स । ५ 'ध्यतिलक ई. । 'ध्य तिलक' उ. । ६ 'जटा' इ । ७ 'अरीस्तिल' ई. । ८ 'पिबेद्वाऽम्बु' इ ई.चन्द्र. । 'पिबेचाम्बु' उ । ९ 'मूषक' ई उ.ण. । १० "दोषाणां वृद्धिहेतुषु कालेषु-आयुष्कामीयोक्तेषु ॥ पुराण-पञ्चसवत्सरातीतम् ।" इतीन्दु. ।

१ 'वाऽस्य' ण । २ "अङ्कोल्लस्य यदुत्तरविभागस्थित मूल स्यात्, तस्याम्बु त्रिपलम् ।" इति चन्द्र । ३ 'चापि' उ. । ४ 'रूषिका' इ । 'रूयिका' इति क्वचित् । ५ [ ] एतच्चिन्हान्तर्गत पाठ ट.ड पुस्तकयोर्नोपलभ्यते । ६ 'ज्वलिताग्नौ' स द्व । ७ 'अलर्काधि' स मु. । ८ 'पतेर्यक्ष' ई उ. । ९ 'आलर्क विषमे' ई उ. । १० 'ष्टमेत मे' स स । ११ 'रुताच्चिरात्' ई.उ । १२ 'लर्कान्ते' ई.उ ण.त. चन्द्र. । १३ 'ज्वरास्राव' इ ई. । १४ 'न्वित दश्मम् ।' ट.ड. ।

स०-खदिरादिभिर्लेपो नखदन्तविषघ्न इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठ उत्तरस्थाने मूषिकालर्कविषप्रतिषेधो नामाष्टत्रिंशोऽध्याय समाप्त ॥ ३८ ॥



## इति विषतन्त्रं नाम षष्ठमङ्गं समाप्तम् ।



## एकोनचत्वारिंशोऽध्यायः ।

अधुना पूर्वोक्तहेतुसम्बन्ध रसायनाध्याय जिगदिषुराह—

**अथातो रसायनविधिमध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ।**

(गद्यसूत्रे ॥ २ ॥)

**दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।**
**प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥ १ ॥**
**वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ।**
**लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ २ ॥**

स०-दीर्घायु प्रभृतीन् रसायनादधिगच्छति । कस्मादेतानि रसायनाल्लभ्यन्ते? इत्याह-लाभोपाय इति । यस्मात् श्रेष्ठाना रसरुधिरादीना यो लाभोपाय , स रसायनमुच्यते ।

**पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः ।**
**स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥ ३ ॥**

स०-तत्-रसायन, जितात्मन पुरुषस्याद्ये वयसि-अतिबाल्यातिक्रान्तमात्रे, अथवा मध्यमे वयसि प्रयोज्यम् । कीदृशस्य पुस ? स्निग्धेत्यादि । स्निग्धादिगुणयुक्तस्य,तथा सर्वथा-अध उपरिष्टाच्च शुद्धस्य ।

**अविशुद्धे शरीरे हि युक्तो रासायनो विधिः ।**
**वाजीकरो वा मलिने वस्त्रे रङ्ग इवाफलः ॥ ४ ॥**

स०-यस्मादविशुद्धे शरीरे रासायनो विधिरुपयुक्तो वाजीकरो वोपयुक्तो निष्फल स्यात् । यथा मलिने वस्त्रे रङ्ग । मलिन हि वस्त्र न रज्यते ।

**रसायनानां द्विविधं प्रयोगमृषयो विदुः ।**
**कुटीप्रावेशिकं मुख्यं वातातपिकमन्यथा ॥ ५ ॥**

स०-मुनयो रसायनाना प्रयोग द्विप्रकार जानन्ति । तत्र मुख्य कुटीप्रवेशनिर्वृत्तम् । वातातपिकमन्यथा-अमुख्यमित्यर्थ ।

**पुरे प्राप्योपकरणे हर्म्यनिर्वातनिर्भये ।**
**दिश्युदीच्यां शुभे देशे त्रिगर्भां सूक्ष्मलोचनाम् ॥ ६ ॥**
**धूमातपरजोव्यालस्त्रीमूर्खाद्यविलङ्घिताम् ।**
**सज्जवैद्योपकरणां सुमृष्टां कारयेत्कुटीम् ॥ ७ ॥**

स०-क्व तत्कुर्वीत ? पुरे, प्राप्योपकरणीये, हर्म्य-धवलगृह, निवात निर्भय च यस्मिन् तस्मिन्, तथोदीच्या दिशि, शुभे-दुर्भिक्षमरकादिरहिते, कुटी त्रिगर्भा कारयेत् । प्रथममेक गृहम्, तस्याभ्यन्तरे द्वितीयम्, तस्याभ्यन्तरे तृतीयम्, एव त्रिगर्भा । त्रयो गर्भा -अन्तराणि, यस्या इति कृत्वा । तथा सूक्ष्मगवाक्षाम् । तथा धूमादिभिरविलङ्घिता-अनाक्रान्ताम् । तथा प्रगुणानि वैद्योपकरणानि-भेषजादीनि, यस्या ता तथाविधाम् । सुमृष्टा-उपलेपनादिकरणेन शुद्धाम् ।

**अथ पुण्येऽह्नि सम्पूज्य पूज्यांस्तां प्रविशेच्छुचिः ।**
**तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः ॥ ८ ॥**
**ब्रह्मचारी धृतियुतः श्रद्दधानो जितेन्द्रियः ।**
**दानशीलदयासत्यव्रतधर्मपरायणः ॥ ९ ॥**
**देवतानुस्मृतौ युक्तो युक्तस्वप्नप्रजागरः ।**
**प्रियौषधः पेशलवाँगारमेत रसायनम् ॥ १० ॥**

स०-अथ-कृतमङ्गल , शुभे दिवसे शुचि पूज्यान्-गुरुमित्रादीन्, सम्पूज्य ता-पूर्वोपवर्णितां कुटी, प्रविशेत् । तस्या कुट्या कृतसन्निवेश सशोधनै शुद्ध । सुखी-अरोग । एतच्च बाहुल्येनोक्तम् । शिलाजतुच्यवनप्राशादीना व्याधिष्वप्यनुज्ञात-

---

१ "एव तावद्विस्तरेण व्याधिनिर्घातनमौषधमाख्याय स्वस्थस्योर्जस्कर कथयति । प्रधानत्वाद्रसायनमेव वाजीकरणात् पूर्वमुपदिशति । तस्मादुत्कृष्ट रसायन वाजीकरणात् ॥ रसायनात् सम्यगासेवितात् । शस्ताना-गुणवता, लाभे-प्राप्तौ, उपाय ॥ सर्वथा-सर्वप्रकार च वमनादिभि पञ्चभि कर्मभि , विशुद्धस्य ।" इति चन्द्र । "रसादिधातूनामयन-आप्यायनम्, अथवा भेषजाश्रिताना रसवीर्यविपाकप्रभावपरमायुबलवीर्याणा वय स्थैर्यकराणामयन लाभोपायो रसायनम्, वर्धक स्थापकमप्राप्तप्रापक वेत्यर्थ ।" इति डल्हण । २ अथ रसायनविधिश्चरके चि० १ अध्याये चतुर्षु पादेषु, सुश्रुते चि० ६।१०।१३।२७।२८।२९।३० अध्यायेषु, अष्टाङ्गसङ्ग्रहे उ०४९ अध्याये चास्ति वर्णित । ३ 'यनाध्याय' ई उ ण त.चन्द्र.स मू. । ४ 'सप्तानां' इ ई.उ.स.मू. । ५ 'राग' ई.उ.स.स. ।

१ 'निर्वाते निर्भये धर्म्ये('हर्म्ये' उ ण त ) प्राप्योपकरणे पुरे ।' इ ई.उ.ण त चन्द्र गदनि. । २ "पुरे-नगरे । धर्म्ये-धर्मादनपेते । प्राप्योपकरणे-लभ्यौषधादिके । ऐशान्यां दिशि । त्रिगर्भां-त्रिभित्तिम् । सूक्ष्मलोचना-सूक्ष्मछिद्राम् । कुटी-गृहम् । सज्जवैद्यां सज्जोपकरणां च ॥ पूज्यान्-देवगुरुविप्रान् यथार्हान् । सुखी-स्वस्थ , कायवाङ्मानसैर्दुःखैरपरामृष्ट । देवतानामनुस्मृतौ-अनुसरणे, युक्त ।" इति चन्द्र । ३ 'धर्म्ये' इति 'दिश्यैशान्या' इति च पाठो युक्त , इ ई उ गदनि. पुस्तकेषूपलब्धत्वात् चन्द्रनन्दनपठितत्वात् 'धार्मिके' इति सङ्ग्रहे 'पूर्वोत्तरस्यां' इति सङ्ग्रहचरकयोश्चोक्तत्वाच्च । अतश्चारुणदत्तपठितपाठो न मनोरम । ४ 'दिश्यैशान्या' इ.ई.उ चन्द्र गदनि. । ५ 'प्रशस्ता' ई उ. । ६ 'स्मृतियुतो' सं मू । ७ 'वाक् प्रार' ण.त. । ८ 'रुविप्रादीन्' ट. । ९ 'घृतद्राङ्' ट. । १० 'ज्ञात्वात्' ण. ।

त्वात् । तथा च वक्ष्यति (श्लो १४२)–"न सोऽस्ति रोगो भुवि साध्यरूपो जत्वश्मज य न जयेत्प्रसह्य ।" इति । तथा (श्लो ३९)–"इत्येष च्यवनप्राशो य प्राश्य च्यवनो मुनि । जराजर्जरितोऽप्यासीन्नारीनयननन्दन ॥कास श्वास क्षय शोफ० वैस्वर्य च व्यपोहति ॥" इति । पुनर्जातबल इति प्रकृतिबलेन यो बलवान्नासीत्तस्य सशोधनेन बलहीनत्वेन पुनर्जातबलो बृंहणाहारादिना यदा, स तदा रसायनमारभेतेत्यर्थ । असञ्जातबलो ह्युत्कृष्टवीर्याणा रसायनाना वीर्य सोढु न क्षमत इति पुनर्जातबल इत्युक्तम् । ब्रह्मचारीत्युक्त निवृत्तस्त्रीसङ्गपरम् । तथा जातसन्तोष । श्रद्धालुरलोलुपश्च । तथा दानरत दयादितत्पर । तथा देवताभक्त । युक्तौ स्वप्नप्रजागरौ यस्य स एवम् । तथा भेषजानुरागवान् मधुरवचन ।

एवंविधेन विशेषणकलापेन युक्तस्य कायवाङ्मनोविशुद्धस्य रसायने च यत्पूर्व करणीय तदाह—

**हरीतकीमामलकं सैन्धवं नागरं वचाम् ।**
**हरिद्रां पिप्पलीं वेल्लं गुडं चोष्णाम्बुना पिबेत् ॥ ११ ॥**
**स्निग्धस्विन्नो[1] नरः पूर्वं, तेन साधु विरिच्यते[2] ।**

**स०**–हरीतक्यादिक योगमुष्णजलेन प्राक् स्निग्धस्विन्नो नर पिबेत् । तेन योगेन सम्यग् विरिच्यते ।

**ततः शुद्धशरीराय कृतसंसर्जनाय च ॥ १२ ॥**
**त्रिरात्रं पञ्चरात्रं वा सप्ताहं वा घृतान्वितम् ।**
**दद्याद्यावकमाशुद्धेः[3] पुराणशकृतोऽथवा ॥ १३ ॥**

**स०**–अनन्तर, शुद्धदेहाय कृतपेयादिकक्रमाय च त्रिरात्र[4] पञ्चरात्र वा सप्ताह वा सर्पिर्युत यावक दद्यात् । अथवा पुराणशकृत शुद्धि यावत् तावद्यावक ससर्पिष्क दद्यात् । त्रिविधमलापेक्षया त्रिविध परिज्ञानम्,–हीनपुरीषस्य त्रिरात्रम्, मध्यपुरीषस्य पञ्चरात्रम्, उत्कृष्टपुरीषस्य सप्तरात्रमिति । तथा हि [मध्य]बहुवर्चस्कस्य पञ्चरात्रेण सप्तरात्रेण वा मल शुद्ध्यति, अल्पमलस्य त्रिरात्रेणैव, इति त्रिविध परिज्ञान युक्तम् । बहुतरमलस्य बहुतरैरेवाहोभि शुद्धि स्यादित्युक्तवान्[5] 'आशुद्धे पुराणशकृतोऽथवा' इति ।

**इत्थं संस्कृतकोष्ठस्य रसायनमुपाहरेत्[6] ।**
**यस्य यद्यौगिकं पश्येत्सर्वमालोच्य सात्म्यवित् ॥१४॥**

**स०**–एव सस्कृतकोष्ठस्य नरस्य यस्य यद्रसायन यौगिकमुपलभ्यते, सात्म्यज्ञो भिषक् सर्वमालोच्य तस्य तद्रसायनमुपाहरेत् । [[7]"हरणात् सर्वरोगाणा याऽसावुक्ता हरीतकी । पथ्यत्वात्सर्वधातूना पथ्या, शिवतया शिवा ॥ यस्माद्विजयते व्याधीन् समग्रान् विजया तत । अभय सर्वरोगेभ्यो भवत्वायुश्च शाश्वतम् ॥ यत शीलयतामेना तेनेयमभया स्मृता । नवा वृत्ता घना स्निग्धा गुवा मज्जति चाप्सु या ॥ बालस्य सा प्रयोक्तव्या नवनीतसमन्विता । वाते ससर्पिर्लवणा पित्ते सगुडशर्करा ॥ कफे सपिप्पलीक्षौद्रा सवदा सा प्रशस्यते ।" इति वृद्धवाग्भटात् (स उ अ ४९) ।]

**पथ्यासहस्रं त्रिगुणधात्रीफलसमन्वितम् ।**
**पञ्चानां पञ्चमूलानां सार्धं पलशतद्वयम् ॥ १५ ॥**
**जले दशगुणे पक्त्वा दशभागस्थिते रसे[1] ।**
**आपोथ्य कृत्वा व्यस्थीनि विजयामलकान्यथ ॥ १६ ॥**
**विनीय तस्मिन्निर्यूहे योजयेत्कुडवांशकम् ।**
**त्वगेलामुस्तरजनीपिप्पल्यगुरुचन्दनम् ॥ १७ ॥**
**मण्डूकपर्णीकनकशङ्खपुष्पीवचाप्लवम् ।**
**यष्ट्याह्वयं विडङ्गं च चूर्णितं तुलयाऽधिकम् ॥ १८ ॥**
**सितोपलार्धभारं च पात्राणि त्रीणि सर्पिषः ।**
**द्वे च तैलात् पचेत्सर्वं तदग्नौ लेहतां गतम् ॥ १९ ॥**
**अवतीर्णं हिमं युञ्ज्याद्विंशैः क्षौद्रशतैस्त्रिभिः ।**
**ततः खजेन मथितं निदध्याद् घृतभाजने ॥ २० ॥**
**या नोपरुन्ध्यादाहारमेकं[2] मात्राऽस्य सा स्मृता ।**
**षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते ॥ २१ ॥**
**वैखानसा वालखिल्यास्तथा[3] चान्ये तपोधनाः ।**
**ब्रह्मणा विहितं धन्यमिदं प्राश्य रसायनम् ॥ २२ ॥**
**तन्द्राश्रमक्लमवलीपलितामयवर्जिताः ।**
**मेधास्मृतिबलोपेता बभूवुरमितायुषः ॥ २३ ॥**

**स०**–अभयाना सहस्रमामलकसहस्रत्रितययुतम् । तथा पञ्चाना पञ्चमूलाना पलशतद्वय सार्व सलिले दशगुणे पक्त्वा दशाशस्थिते रस आपोथ्य–मृदित्वा, हरीतक्यामलकानि व्यस्थीनि कृत्वा तस्मिन् क्वाथे प्रक्षिप्य कुडवप्रमाण त्वगेलादिक चूर्णित योजयेत् । कनक–नागकेसरम् । व्यस्थीनीति "नपुसकमनपुसकेन" इत्येकशेष । पलशतेनाधिक शर्कराया अर्धभारम्, घृतस्य त्रीण्याढकानि, द्वे चाढके तैलात्, तत्सर्व वह्नौ पचेत् । तच्च लेहता गतमवतीर्ण शीत क्षौद्रशतैस्त्रिभिर्विंशत्याधिकैर्युञ्जीत । विंशैरिति 'विंशते पूरणे' इति पूरणेऽर्थे डिभि । 'विंशतेर्डित्' इति टिलोपे विंशशब्द । अनन्तर खजेनालोडित घृतभाण्डे निदध्यात् । या–मात्रा, एकमाहार–सायतन, नोपरुन्ध्यात् साऽस्य रसायनस्य मात्रा स्मृता । आहारमेकमिति वचनाच्च प्रथमाहारकालस्य रसायनमात्रयाऽवश्यमुपरोध कार्य इति वेदयति । अस्मिंश्च लेहे जीर्णे षष्टिक क्षीरेण सह भोजनमिष्टम् । वैखानसादयो ब्रह्मणा निर्मितमेतदुपयुज्य रसायन तन्द्रादिवर्जिता मेधादियुता अमितजीविताश्चाभूवन् । धन्यमिति

---

१ 'स्निग्ध स्विन्नो' इ उ ण त चन्द्र स मू । २ 'विशुध्यति' इ ई.उ. । ३ "यावक–यवान्नम् ।" इतीन्दु । "उपाहरेत्–योजयेत् । यौगिक–योगार्हम् । सर्व–दोषदूष्यादिकम् ।" इति चन्द्र । ४ 'त्र वा पञ्च' ट. । ५ 'त्कत्वात्' ण.त. । ६ 'मुपाचरेत्' स मू. । ७ [ ] एतच्चिह्नान्तर्गत. पाठो ण.त.पुस्तकयोरेवोपलभ्यते ।

१ "रसे–क्वाथे । तत –त्रिरात्रादूर्ध्वम्, आहारानुपरोधिनीं मात्रा प्रत्यहमुपयोजयेत्, यथा आहार नोपरुन्ध्यात् ।" इति चन्द्र । २ 'मेका' इ. । ३ 'वालिखिल्या' इ.ई.ण.त.चन्द्र ।

वनाय हितम् । ननु, रसायनस्य वनार्जनोपायत्वाभावात् कथ वन्यत्वम् ? अत्र ब्रूम । कार्ये कारणोपचारादेवमुक्तम् । तथा हि रसायनमिदमामयघ्नत्वादारोग्ये च सति मेधास्मृत्यादियुक्तस्य वनायोद्यम कुर्वतोऽवश्य वनसम्प[म्प्रा]त्तिरिति युक्तमेव । ननु, आमयवर्जिता इत्यनेनैवोक्तार्थत्वात् तन्द्रादिग्रहणमवाच्यमेव । अत्राचक्ष्महे । आमयवर्जिते स्वास्थ्यानुवृत्तिकरणसामर्थ्यमस्य रसायनस्यावादीत्तन्त्रकृत् । तन्द्रादिग्रहण च रोगनाशेऽप्यस्य ज्यायस्त्वमिति प्रतिपादनार्थम् । [“[1]अभयामलकबिभीतकपञ्चात्मकपञ्चमूलनिर्यूहे । वल्लीपलाशकरसे द्विगुणे क्षीरेऽष्टगुणे च विपचेत ॥ घृतस्य कुम्भ मधुक मधूक काकोलियुग्म च बला स्वगुप्ताम् । सक्षीरशुक्लामृषभ सजीव सुखाम्बुपस्तच्च पिबेद्गुणाढ्यम् ॥ (स उ अ ४९)”]

अभयामलकसहस्रं नि[2]रामयं पिप्पलीसहस्रयुतम् ।
तरुणपलाशक्षारद्रवीकृत स्थापयेद्भाण्डे ॥ २४ ॥
उपयुक्ते च[3] क्षारे छायासंशुष्कचूर्णितं योज्यम् ।
पादांशेन सितायाश्चतुर्गुणाभ्यां मधुघृताभ्याम् २५
तद्घृतकुम्भे भूमौ नि[4]धाय षण्माससंस्थमुद्धृत्य ।
प्राह्णे प्राश्य यथानलमुचिताहारो भवेत्सततम् ॥ २६ ॥
इत्युप[6]युज्याशेषं वर्षशतमनामयो जरारहितः ।
जीवति ब[5]लपुष्टिवपुःस्मृतिमेधाद्यन्वितो विशेषेण ॥

स०-अभयामलकाना सहस्र दृढ कणासहस्रान्वितमजीर्णपलाशक्षारद्रवीकृत भाजने स्थापयेत् । क्षारे चोपयुक्ते सति छायाया शुष्क चूर्णित च शर्करायाश्चतुर्थांशेन चतुर्गुणाभ्या घृतमाक्षिकाभ्या योज्यम् । एतद्घृतकुम्भे निधाय भूमौ षण्मासस्थित समुद्धृत्य पूर्वाह्णे[7] यथाग्नि भुक्त्वा सात्म्याहार सदा स्यात् । तिस्र आर्या ।

एवमेतत्सर्वमुपयुज्य सवत्सरशत नीरोगो जरारहितो जीवति । विशेषेण बलादियुत । गीतिरार्या ।

नीरुजार्द्रपलाशस्य छिन्ने शिरसि त[8]त्क्षतम् ।
अन्तर्द्विहस्तं गम्भीर पूर्यमामलकैर्नवैः ॥ २८ ॥
आमूलं वेष्टितं दर्भैः पद्मिनीपङ्कलेपितम् ।
आदीप्य गोमयैर्वन्यैर्निर्वाते स्वेदयेत्ततः ॥ २९ ॥
स्विन्नानि तान्यामलकानि तृप्त्या
खादेन्नरः क्षौद्रघृतान्वितानि ।
क्षीरं शृतं चानु पिबेत्प्रकामं
तेनैव वर्तेत च मासमेकम् ॥ ३० ॥
वर्ज्यानि वर्ज्यानि च तत्र यत्नात्
[1]स्पृश्यं च शीताम्बु न पाणिनाऽपि ।
एकादशाहेऽस्य ततो व्यतीते
पतन्ति केशा दशना नखाश्च ॥ ३१ ॥
अथाल्पकैरेव दिनैः सुरूपः
स्त्रीष्वक्षयः कुञ्जरतुल्यवीर्यः ।
विशिष्टमेधाबलबुद्धिसत्त्वो
भवत्यसौ वर्षसहस्रजीवी ॥ ३२ ॥

स०-नीरुजो-जन्त्वादिभिरनुपद्रुतो, य पलाशस्तस्य शिरसि छिन्नेऽन्तर्द्विहस्तमात्र तत्क्षत-सुषिरीकृत, गम्भीर नवैरामलकै[2] पूरणीयम् । पूर्ण यावद्दर्भैर्वेष्टित पद्मिनीकर्दमेन लेपित तत आरण्यैर्गोमयैरादीप्य निवाते स्वेदयेत् । तानि चामलकानि स्विन्नानि क्षौद्रघृतयुतानि तृप्त्या पुरुष खादेत् । पश्चाद्दुग्ध क्वथित बहु पिबेत् । तेनैव च दुग्धेन मासमेक वर्तेत । इन्द्रवज्रा ।

रसायनविधौ यान्युक्तानि क्षारादीनि वर्ज्यानि तानि परिहर्तव्यानि यत्नेन । हस्तेनापि शिशिर जल न[3] स्पर्शयितव्यम् । ततोऽस्य रसायनविधातुरेकादशेऽह्नि व्यतिक्रान्ते केशादय पतन्ति । ततोऽल्पकैरेव दिनै रूपवास्तरुणीविषय अक्षयशक्तिर्गजसमानसामर्थ्य उत्कृष्टमेधादिरसौ भवति । वर्षसहस्रजीवी च । उपजाती वृत्ते ।

दशमूलबलामुस्तजीवकर्षभकोत्पलम् ।
पर्ण्यौ पिप्पली शृङ्गी मेदा तामलकी त्रुटिः ॥ ३३ ॥
जीवन्ती जोङ्गकं द्राक्षा पौष्करं चन्दनं शठी ।
पुनर्न[4]वर्द्धिकाकोलीकाकनासामृता[6]द्वयम्[5] ॥ ३४ ॥
विदारी वृषमूलं च तदैकध्यं पलोन्मितम् ।
जलद्रोणे पचेत्पञ्च धात्रीफलशतानि च ॥ ३५ ॥
पादशे[7]षे रसं तस्माद्व्यस्थीन्यामलकानि च ।
गृहीत्वा भर्जयेत्तैलघृताद् द्वादशभिः पलैः ॥ ३६ ॥
मत्स्यण्डिकातुलार्धेन युक्तं तल्लेहवत् पचेत् ।
स्नेहार्धं म[8]धु सिद्धे तु[9] तवक्षीर्याश्चतुष्पलम् ॥ ३७ ॥
पिप्पल्या द्वि[10]पलं दद्याच्चतुर्जातं कर्णा[11]र्धितम् ।
अतोऽवलेहयेन्मात्रां कुटीस्थः[12] पथ्यभोजनः ॥ ३८ ॥
इत्येष च्यवनप्राशो यं प्राश्य च्यवनो मुनिः ।
जराजर्जरितोऽप्यासीन्नारीनयननन्दनः[13] ॥ ३९ ॥

---

१ [ ] एतच्चिह्नान्तर्गत पाठो ण त पुस्तकयोरेवोपलभ्यते । २ “निरामय-निर्दोष आपूर्णरसवीर्यम् ।” इति चन्द्र । ३ ‘च क्वाथे’ इ चन्द्र । ४ ‘निखाय’ इ त ण । ५ ‘थाबल’ इ ई.उ । ६ ‘पयोज्या’ ई उ.। ७ ‘ह्ले प्राश्य यथा’ ट । ८ ‘तक्षितम्’ इ.ई.।

१ ‘स्पृशेन्न शीताम्बु च पा’ ई उ । २ ‘लिप्त तत् आ’ ट. । ३ ‘न छोप्तव्यम्’ ट.ण त. । ४ ‘नैवाद्धिकाको’ इ ई.उ स द्व. । ५ ‘ताह्वया.’ ण त. । ‘ताह्वयम्’ स.मू । ६ “अमृताद्वय-गुडूची हरीतकी च ॥ मत्स्यण्डिका-अधिकेन गुडपाकेन कृता शर्करा । मात्रा-स्तोक, कुटीस्थ पथ्यभोजिन च पुरुषमवलेहयेत् ।” इतीन्दु । ७ ‘शेषे रसे तस्मिन् व्यस्थी’ इ । ८ ‘मधुनः शीते तव’ उ स स.। ९ ‘च’ स मू । १० ‘द्वे पले’ स द्व । ११ ‘णार्धिकम्’ इ स स.। ‘णार्धकम्’ ई उ । १२ ‘टीस्थ पथ्य-भोजिनम्’ इ ई उ स स. । १३ ‘नन्दक.’ स.मू ।

**कासं श्वासं ज्वरं शोषं हृद्रोगं वातशोणितम् ।**
**मूत्रशुक्राश्रयान् दोषान् वैस्वर्यं च व्यपोहति ॥ ४० ॥**
**बालवृद्धक्षतक्षीणकृशानामङ्गवर्धनः ।**
**मेधां स्मृतिं कान्तिमनामयत्व-**
**मायुःप्रकर्षं पवनानुलोम्यम् ।**
**स्त्रीषु प्रहर्षं बलमिन्द्रियाणा-**
**मग्नेश्च कुर्याद्विधिनोपयुक्तः ॥ ४१ ॥**

स०–दशमूलादिकं पलोन्मितमेकैकं तोयद्रोणे आमलकशतानि पञ्च पचेत् । तस्माच्चतुर्थांशं रसं विगतास्थीनि चामलकान्यादाय तैलघृतयोः प्रत्येकं द्वादशभिः पलैर्भर्जयेत् । शर्करातुलार्धेनान्वितं तदेतत्सर्वं लेहमिव पचेत् । स्नेहस्यार्धं पक्वे शीते मधु तथा तवक्षीरीचतुष्पलं कणाद्विपलं कणार्धेन चतुर्जातं च दद्यात् । अतो–लेहात्, मात्रां कुटीस्थितः पथ्यान्यश्नन्नवलेहयेत् । इति–एवं प्रकारं, अयं च्यवनप्राशाख्यो लेहः । य–लेहं, प्राश्य च्यवनसंज्ञो मुनिर्जराक्रान्तोऽपि तरुणीलोचनरञ्जनः आसीत् । अयं लेहः कासादीन् व्यपोहति । "उपसर्गादस्यत्यूह्योर्वा वचनम् ( वेति वाच्यम् )" इति तङ् । बालादीनामङ्गवृद्धिकृत् । मेधादींश्च विदध्यात् विधिना रसायनोक्तेनोपयुक्तोऽयम् । इन्द्रवज्रावृत्तम् ।

**मधुकेन तवक्षीर्या पिप्पल्या सिन्धुजन्मना ।**
**पृथग्लोहैः सुवर्णेन वचया मधुसर्पिषा ॥ ४२ ॥**
**सितया वा समा युक्ता समायुक्ता रसायनम् ।**
**त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिबुद्धिदा ॥ ४३ ॥**

स०–मधुकेन समा–तुल्या, युक्ता त्रिफला तथा समैः–सर्वैः, युक्ता–उपयुक्ता, रसायनं सर्वरोगघ्नी मेधादिदा च स्यात् । तवक्षीर्यादीनां प्रत्येकं त्रिफलाङ्गत्वेन रसायनानि निरूप्याणि । सिन्धुजन्मना–सैन्धवेन, लोहाः–रूप्यं ताम्रं सीसं त्रपु अयः इति पञ्च, तैः सुवर्णेन च, पृथग्युक्ता वरा रसायनमिति योज्यम् । मधुसर्पिषेत्येकवचननिर्देशाद् द्वाभ्यामपि युगपद्योग एकं रसायनं वेद्यम् ।

**मण्डूकपर्ण्याः स्वरसं यथाग्नि**
**क्षीरेण यष्टीमधुकस्य चूर्णम् ।**
**रसं गुडूच्याः सहमूलपुष्प्याः**
**कल्कं प्रयुञ्जीत च शङ्खपुष्प्याः ॥ ४४ ॥**

**आयुष्प्रदान्यामयनाशनानि**
**बलाग्निवर्णस्वरवर्धनानि ।**
**मेध्यानि चैतानि रसायनानि**
**मेध्या विशेषेण तु शङ्खपुष्पी ॥ ४५ ॥**

स०–मण्डूकपर्णीस्वरसं प्रयुञ्जीत, अग्निबलापेक्षया । दुग्धेन मधुयष्टीचूर्णं युञ्जीत । तथा गुडूच्या रसं प्रयुञ्जीत । तथा सह मूलपुष्पाभ्यां वर्तते सहमूलपुष्पी, तस्याः शङ्खपुष्प्याश्च कल्कं प्रयुञ्जीत । इत्येतानि रसायनान्यायुष्प्रदानि रोगघ्नानि बलादिवर्धनानि मेधायै हितानि च । अतिशयेन शङ्खपुष्पी मेध्या । उपजाती वृत्ते ।

**नलदं कटुरोहिणी पयस्या**
**मधुकं चन्दनसारिवोग्रगन्धाः ।**
**त्रिफला कटुकत्रयं हरिद्रे**
**सपटोलं लवणं च तैः सुपिष्टैः ॥ ४६ ॥**
**त्रिगुणेन रसेन शङ्खपुष्प्याः**
**सपयस्कं घृतनल्वणं विपक्वम् ।**
**उपयुज्य भवेज्जडोऽपि वाग्मी**
**श्रुतधारी प्रतिभानवानरोगः ॥ ४७ ॥**

स०–नलदादिभिः सुपिष्टैः सामान्यपरिभाषोक्तप्रमाणात्त्रिगुणेन शङ्खपुष्पीरसेन घृतस्याढकं(स्य द्रोणं) क्षीरसहितं विपक्वं प्राश्य जडोऽपि नरो वाग्मी श्रुतधरः सप्रतिभो निरामयश्च स्यात् । औपच्छन्दसिके वृत्ते ।

**पेष्यैर्मृणालबिसकेसरपत्रबीजैः**
**सिद्धं सहेमशकलं पयसा च सर्पिः ।**
**पञ्चारविन्दमिति तत्प्रथितं पृथिव्यां**
**प्रभ्रष्टपौरुषबलप्रतिभैर्निषेव्यम् ॥ ४८ ॥**

स०–मृणालादिभिः कल्कैः सुवर्णशकलान्वितं हैयंगवीनं सक्षीरं पक्वं पञ्चारविन्दमिति पञ्चारविन्दानि यस्मिन्निति समासः, एवमग्रेऽपि कार्यं । एतद्भृतं नष्टशुक्रादिभिर्निषेवितव्यम्, एतन्निषेवणे नैतानि स्युरित्यर्थः ।

**यन्नालकन्ददलकेसरवद्विपक्वं**
**नीलोत्पलस्य तदपि प्रथितं द्वितीयम् ।**
**सर्पिश्चतुष्कुवलयं सहिरण्यपत्रं**
**मेध्यं गवामपि भवेत् किमु मानुषाणाम् ४९**

स०–यद्घृतं नीलोत्पलस्य नालादिमत् काञ्चनशकलान्वितं सक्षीरं विपक्वं तदपि चतुष्कुवलयं प्रसिद्धम् । गवामपि–जडानामपि, एतन्मेध्यम् । किं पुनर्मानुषाणाम् ? । तेषां समेधानामतिशयेनेत्यर्थः । वसन्ततिलके वृत्ते ।

**ब्राह्मीवचासैन्धवशङ्खपुष्पी-**

१ 'पथ्यमश्न' ट । २ 'जरां गतो' ट । ३ "त्रिफला मधुकादिना लोहादिना वा पृथक् समायुक्ता–सयुक्ता, समा–सवत्सरं, युक्ता–प्रयुक्ता, रसायनं सर्वरोगघ्नी मेधादिदा च भवति ॥ मण्डूकपर्णी–ब्रह्मसुवर्चला । सहमूलपुष्प्या गुडूच्या रसमेव । शङ्खपुष्प्या –सुपुष्प्या कल्कम् ।" इतीन्दु । "समूलपुष्प्या इति गुडूच्या शङ्खपुष्प्या वा विशेषणम् ।" इति श्रीकण्ठशिवदासौ । ४ 'याऽथ समायुक्ता रौप्ययुक्ता रसायनी' ड. । ५ 'लायोगत्वेन रसायनं निरूप्यम् ।' ट । ६ 'च्यास्तु समूल' स.च वृ गदनि.चक्र. ।

१ 'च' इ ई उ स च. । २ 'श्रुतिधारी' इ ई उ. । ३ 'नरोगी' ई उ. । ४ 'श्रुतिधर' ट. । ५ 'ति सर्पिरुदारवीर्यं प्र' ई उ ।

मत्स्याक्षकब्रह्मसुवर्चलैन्द्र्यः ।
वैदेहिका च त्रियवाः पृथक्स्यु-
र्यवौ सुवर्णस्य तिलो विषस्य ॥ ५० ॥
सर्पिषश्च पलमेकत एत-
द्योजयेत्परिणते च घृताढ्यम् ।
भोजनं समधु वत्सरमेवं
शीलयन्नधिकधीस्मृतिमेधः ॥ ५१ ॥

अतिक्रान्तजराव्याधितन्द्रालस्यश्रमक्लमः ।
जीवत्यब्दशतं पूर्णं श्रीतेजःकान्तिदीप्तिमान् ॥ ५२ ॥

विशेषतः कुष्ठकिलासगुल्म-
विषज्वरोन्मादगरोदराणि ।
अथर्वमन्त्रादिकृताश्च कृत्याः
शाम्यन्त्यनेनातिबलाश्च वाताः ॥ ५३ ॥

स०-ब्राह्म्यादयस्त्रियवप्रमाणा पृथक् स्यु । मत्स्याक्षक - पत्तूर । सुवर्णस्य यवौ द्वौ । तिल एको विषस्य । घृतस्य च पलम् । एतदेकतो योजयेत् । जीर्णे चास्मिन् भेषजे बहुघृत भोजन समाक्षिक योजयेत् । एव वर्ष शीलयन् विपुलबुद्ध्यादिक स्यात् । उपजातिस्वागते वृत्ते ।

जरादिरहित पूर्णलक्ष्म्यादिको वर्षशत जीवति । विशेषेण कुष्ठादयोऽनेन शाम्यन्ति, अतिबला वाताश्च । उपजाति ।

शरन्मुखे नागबला पुष्ययोगे समुद्धरेत् ।
अक्षमात्रं ततो मूलाच्चूर्णितात्पयसा पिबेत् ॥ ५४ ॥
लिह्यान्मधुघृताभ्यां वा क्षीरवृत्तिरनन्नभुक् ।
एवं वर्षप्रयोगेण जीवेद्वर्षशतं बली ॥ ५५ ॥

स०-शरदादौ पुष्यनक्षत्रे नागबलामूल समुद्धरेत् । तस्मान्मूलाच्चूर्णितादक्षमात्र-कर्षमात्र, दुग्धेन पिबेत्, माक्षिकाज्याभ्या वा लिह्यात्, क्षीरवर्तनोऽनन्नाशी । एव वर्षप्रयोगेण बलवान् सन् वर्षशतं जीवेत् ।

फलोन्मुखो गोक्षुरकः समूल-
श्छायाविशुष्कः सुविचूर्णिताङ्गः ।
सुभावितः स्वेन रसेन तस्मा
न्मात्रां परां प्रासृतिकीं पिबेद्यः ॥ ५६ ॥
क्षीरेण तेनैव च शालिमश्नन्
जीर्णे भवेत्स द्वितुलोपयोगात् ।
शक्तः सुरूपः सुभगः शतायुः
कामी ककुद्मानिव गोकुलस्थः ॥ ५७ ॥

स०- गोक्षुरक फलाभिमुखो मूलयुतश्छायाविशुष्क श्लक्ष्णचूर्णित स्वरसेन सुभावित । तस्मात्-गोक्षुरकात्, मात्रा प्रासृतिकीं परा य क्षीरेण पिबेत्, परिणते तस्मिन् दुग्धेनैव च शालीन् भक्षयेत्, स पुरुष पलशतद्वयोपयोगात् शक्त्यादिगुण स्यात् । उपजातीन्द्रवज्रावृत्ते ।

वाराहीकन्दमार्द्रार्द्रं क्षीरेण क्षीरप· पिबेत् ।
मासं निरन्नो मासं च क्षीरान्नादो जरा जयेत् ॥ ५८ ॥

स०-वाराह्या -वृद्धदारकस्य, मूलमत्यार्द्र दुग्धेन मास पिबेत् । जीर्णेऽपि क्षीरपो निरन्न स्यात् । अपर च मास क्षीरान्नाशी सन् जरा जयति ।

तत्कन्दश्लक्ष्णचूर्णं वा स्वरसेन सुभावितम् ।
घृतक्षौद्रद्रुत लिह्यात्त-पक्व वा घृत पिबेत् ॥ ५९ ॥

स०-तस्या -वाराह्या , मूल श्लक्ष्णचूर्ण वा स्वरसेन सुष्ठु भावित घृतमाक्षिकाप्लुत लिह्यात् । तेन वा मूलकल्केन पक्व घृत पिबेत् पूर्वगुणम् ।

तद्वद्विदार्यतिबलाबलामधुकवायसीः ।
श्रेयसीश्रेयसीयुक्तापथ्याधात्रीस्थिरामृताः ॥ ६० ॥
मण्डूकीशङ्खकुसुमावाजिगन्धाशतावरीः ।
उपयुञ्जीत मेधाधीवयःस्थैर्यबलप्रदाः ॥ ६१ ॥

स०-विदार्यादीश्च पृथक् पृथक् तद्वत्-वृद्धदारकवत् सर्पिर्दुग्ध(मधु)युतान्, मेधाद्यावहानुपयुञ्जीत । ततश्चोपयुक्ता वय स्थैर्यादिप्रदा स्यु ।

यथास्वं चित्रकः पुष्पैर्ज्ञेयः पीतसितासितैः ।
यथोत्तर स गुणवान् विधिना च रसायनम् ॥ ६२ ॥

स०-चित्रको यथायोग पुष्पै पीतै शुक्लै कृष्णैश्च यथोत्तर गुणवान् वेदितव्य । विधिना च प्रयुक्तो रसायन स्यात् ।

छायाशुष्कं ततो मूलं मासं चूर्णीकृतं लिहन् ।
सर्पिषा मधुसर्पिर्भ्यां पिबन् वा पयसा यतिः ॥ ६३ ॥
अम्भसा वा हितान्नाशी शतं जीवति नीरुजः ।
मेधावी बलवान् कान्तो वपुष्मान् दीप्तपावकः ॥ ६४ ॥

स०-तस्माच्चित्रकात् मूल छायाशुष्क मास चूर्णीकृत घृतेन मधुघृताभ्या वा लिह्यात् । पयसा वा ब्रह्मचारी पिबेत् । पानीयेन वा हितान्नभोजन सन् पिबेत् । सुखी मेधावान् बलवान् रमणीयो वपुष्मान् दीप्ताग्नि समा शत जीवति ।

तैलेन लीढो मासेन वातान् हन्ति सुदुस्तरान् ।
मूत्रेण श्वित्रकुष्ठानि पीतस्तक्रेण पायुजान् ॥ ६५ ॥

स०-तैलेन लीढश्चित्रको मासेन दारुणान् वातान् जयति । गोमूत्रेण पीत श्वित्रकुष्ठानि हन्ति । तक्रेण पीतोऽर्शांसि जयेत् ।

---

१ 'स्मृतिवेष.' इ । २ 'न्तिमूर्तिमान्' ई उ । ३ "ब्राह्म्यादिका. पिप्पल्यन्ता ।" इति चन्द्र । ४ 'मूल चूर्णित प' उ. । ५ 'पर' इ ई उ । ६ ककुद्मान्-महाककुद्वृषभ ।

१ "आर्द्रार्द्र-अत्यर्थ सक्षीरम् ॥ वायसी-काकमाची । श्रेयसी-हस्तिपिप्पली । श्रेयसी-रास्ना । मण्डूकी-मण्डूकपर्णी । शङ्खकुसुमा-शङ्खपुष्पी । विदार्यादिका पृथगुपयुञ्जीत । ताश्च धीमेधावय स्थैर्यबलप्रदा भवन्ति ।" इति चन्द्र । २ 'द्रुत' इ ई उ. । ३ 'जीवन्तीश्रेयसीयुक्ता' ई.उ । ४ 'त धीमेधावय.' ई उ. चन्द्र. । 'त मेधावी वय ' इ.ण.त. । ५ 'सुदारुणान्' इ. ।

**भल्लातकानि पुष्टानि धान्यराशौ निधापयेत् ।**
**ग्रीष्मे संगृह्य हेमन्ते स्वादुस्निग्धहिमैर्वपुः ॥ ६६ ॥**
**संस्कृत्य तान्यष्टगुणे सलिलेऽष्टौ विपाचयेत् ।**
**अष्टांशशिष्टं तत्क्वाथं सक्षीरं शीतलं पिबेत् ॥ ६७ ॥**
**वर्धयेत्प्रत्यहं चानु तत्रैकैकमरुष्करम् ।**
**सप्तरात्रत्रयं यावत् त्रीणि त्रीणि ततः परम् ॥६८॥**
**आचत्वारिंशतस्तानि ह्रासयेद्वृद्धिवत्ततः ।**
**सहस्रमुपयुञ्जीत सप्ताहैरिति सप्तभिः ॥ ६९ ॥**
**यन्त्रितात्मा घृतक्षीरशालिषष्टिकभोजनः ।**
**तद्वत्त्रिगुणितं कालं प्रयोगान्तेऽपि चाचरेत् ॥ ७० ॥**
**आशिषो लभतेऽपूर्वा वह्नेर्दीप्तिं विशेषतः ।**
**प्रमेहकृमिकुष्ठार्शोमेदोदोषविवर्जितः ॥ ७१ ॥**

स०-भल्लातकानि सुनिष्पन्नानि ग्रीष्मे सगृह्य धान्यराशौ निधापयेत् । हेमन्ते मधुरस्निग्धशीतलैः संस्कृतशरीरस्तान्यष्टावष्टगुणे जले क्वाथयेत् । तत्क्वाथमष्टांशशेषं क्षीरसहितं शीतं पिबेत् । पश्चात्तस्मिन् प्रतिदिनं चैकैकं भल्लातकं वर्धयेत्—अविकीकृत्य क्वाथयेदित्यर्थः । सप्तरात्रत्रयं यावत् । सप्तरात्रत्रयात् परतस्त्रीणि त्रीण्यरुष्कराणि चत्वारिंशतं यावद्वर्धयेत् । अनन्तरं तानि—अरुष्कराणि, वृद्धिवद्ध्रासयेत् । इति—एवं, सप्तभिः सप्ताहैः सहस्रमुपयुञ्जीत । यन्त्रितात्मा पुरुषो घृतक्षीरशालिषष्टिकभोजनः । तथैव च भल्लातकप्रयोगान्ते एकविंशतिसप्ताहान् घृतक्षीरशालिषष्टिकभोजनं कुर्यात् । एवं कृतभल्लातकप्रयोगोऽपूर्वाः—अभिलषिता दयिताः, आशिषो लभते, तथा विशेषेण वह्निपाटवम् । प्रमेहादिवर्जितश्च स्यात् ।

**पिष्टस्वेदनमरुजैः पूर्णं भल्लातकैर्विजर्जरितैः ।**
**भूमिनिखाते कुम्भे प्रतिष्ठितं कृष्णमृल्लिप्तम् ॥ ७२ ॥**
**परिवारितं समन्तात्पचेत्ततो गोमयाग्निना मृदुना ।**
**तत्स्वरसो यश्च्यवते गृह्णीयात्तं दिनेऽन्यस्मिन् ॥७३॥**
**अमुमुपयुज्य स्वरसं मध्वष्टमभागिकं द्विगुणसर्पिः ।**
**पूर्वविधियन्त्रितात्मा प्राप्नोति गुणान् स तानेव॥७४॥**

स०-पिष्टं शालिचूर्णं स्वेद्यतेऽस्मिन्निति पिष्टस्वेदनं,—भाण्डम् । तदरुजैः—दृढैः, भल्लातकैस्तथा विजर्जरितैः पूर्णं सत् कृतच्छिद्रं भूमिनिखाते कुम्भे प्रतिष्ठितं कृष्णमृत्तिकया लिप्तमनन्तरं गोमयाग्निना मृदुना परिवारितं पचेत् । तत्स्वरसो यस्तत्र धरानिखाते कुम्भे पतेत्, तमन्यस्मिन्नहनि गृह्णीयात् । अमुं—पूर्वोक्तं, स्वरसं माक्षिकाष्टमभागं द्विगुणघृतं पूर्वविधिना यन्त्रितात्मा सन्नुपयुज्य, तानेव—पूर्वोक्तान्, गुणान् प्राप्नोति । आर्यास्तिस्रः, मध्यमाऽत्र मुखचपला ।

**पुष्टानि पाकेन परिच्युतानि**
**भल्लातकान्याढकसम्मितानि ।**
**घृष्टेष्टिकाचूर्णकणैर्जलेन**
**प्रक्षाल्य संशोष्य च मारुतेन ॥ ७५ ॥**
**जर्जराणि विपचेज्जलकुम्भे**
**पादशेषघृतगालितशीतम् ।**
**तद्रसं पुनरपि श्रपयेत**
**क्षीरकुम्भसहितं चरणस्थे ॥ ७६ ॥**
**सर्पिः पक्वं तत्र तुल्यप्रमाणं**
**युञ्ज्यात्स्वेच्छं शर्करायाः रजोभिः ।**
**एकीभूतं तत्खजक्षोभणेन**
**स्थाप्यं धान्ये सप्तरात्रं सुगुप्तम् ॥ ७७ ॥**
**तममृतरसपाकं यः प्रगे प्राशमश्नन्**
**अनु पिबति यथेष्टं वारि दुग्धं रसं वा ।**
**स्मृतिमतिबलमेधासत्त्वसारैरुपेतः**
**कनकनिचयगौरः सोऽश्नुते दीर्घमायुः ॥ ७८ ॥**

स०-सुनिष्पन्नानि भल्लातकानि पाकेन परिच्युतान्याढकसंम्मितानि इष्टिकाचूर्णकणैर्घृष्टानि जलेन प्रक्षाल्य, मारुतेन संशोष्य—न त्वातपे, ततो जर्जराणि जलद्रोणे विपचेत् । पादशेषघृतगालितं शीतं च तद्रसं पुनरपि क्षीरद्रोणसहितं पचेत् । [ तत्र— ] तस्मिन् पादशेषस्थे, तुल्यप्रमाणं सर्पिः पक्वं शर्कराचूर्णेन युतं यथेच्छं प्रकृत्यादिवशाद्युञ्जीत । तच्च खजलोडनेनैकीभूतं धान्यमध्ये सप्तरात्रं सुगुप्तं स्थाप्यम् । इन्द्रवज्राख्यागताशालिन्यो वृत्तानि ।

तममृतरसतुल्यपाकं यः पूर्वाह्णे प्राशं—लेहं, भक्षयन् पश्चाद्यथेष्टं जलं क्षीरं मांसरसं वा पिबति, स स्मृत्यादियुतः सुवर्णौघगौरो दीर्घमायुः प्राप्नोति । मालिनी ।

**द्रोणेऽम्भसो व्रणकृतां त्रिशतांद्विपक्वात्**
**क्वाथाढके पलसमैस्तिलतैलपात्रम् ।**

१ 'हिमैः पुनः' इ गदनि । २ 'तं क्वाथं' इ. चन्द्र. । ३ 'साहैरपि' इ । ४ "यन्त्रितात्मा—जितेन्द्रियः सन् । पूर्वा आशिषः—चित्रकरसायनोक्ता 'नीरुजो जीवति' इत्यादिकाः, लभते । विशेषात् पुनर्भल्लातकरसायनात् प्रमेहादिवर्जितो वह्नेर्दीप्तिं लभते ॥ अरुजैः—निर्दोषैः । विजर्जरितैः—चूर्णितैः । च्यवते—निर्याति ।" इति चन्द्रः । ५ 'न्तेऽप्युपाचरेत्' उ. । ६ 'तेऽपूर्वा' चन्द्र गदनि. । ७ 'तकैः सुजर्जैः' ई.उ. । ८ 'स्तद्द्रोमया' इ.ई.उ. । ९ 'युञ्ज्यात्स्वरसं' ई. उ. ।

१ "संशोष्य च मारुतेनेत्यातपपरिहाराय । तेनेति क्षीरेण तुल्यं सर्पिः ।" इति इ । "तेन—क्वाथेन, तुल्यप्रमाणं सर्पिः ।" इति चन्द्र । २ 'पचेत्कलशेऽपा' स.मू. । ३ 'षमवतारितं' उ । ४ 'तच्छेषम्' चन्द्र । 'तच्छीते' इति क्वचित् । ५ 'तं रसं' ई उ । ६ 'गस्थम्' इ.ई.उ चन्द्र. । ७ 'तेनं' इ ण त चन्द्र. स द्व. गदनि. । ८ 'ञ्ज्यात्प्रस्थं' इ स. मू. । 'ञ्ज्यात्स्वच्छं' ई उ. । ९ 'तं खज' इ. चन्द्र. । 'तद्वज' गदनि. । १० 'निकषगौर.' स.द्व. । ११ 'सङ्ख्यानि' ण.त । १२ 'तं रसं' इति क्वचित् । १३ 'पिबेत्' द. । १४ 'तानि पक्त्वा' इ.उ.चन्द्र.गदनि. ।

तिक्ताविषाढ्यवचागिरिजन्मताक्ष्यैः
सिद्धं परं निखिलकुष्ठनिबर्हणाय ॥ ७९ ॥

स०-जलद्रोणे व्रणकृता भल्लातकाना शतत्रयाद्विपक्कात् क्वाथस्याढकेऽवशिष्टे तिलतैलाढक तिक्तादिभि पालिकै कल्कितै पक्व नि शेषकुष्ठनिषूदनाय पर-श्रेष्ठम्। वसन्ततिलकम्।

सहामलकशुक्तिभिर्दधिसरेण तैलेन वा
गुडेन पयसा घृतेन यवसक्तुभिर्वा सह।
तिलेन सह माक्षिकेण पललेन सूपेन वा
वपुष्करमरुष्करं परममेध्यमायुष्करम् ॥ ८० ॥

स०-आमलकत्वगादिभिरेकादशभि सह प्रत्येक भल्लातकमुपयुक्त प्रशस्तशरीरकरणकारणम्। तथा पर-अतिशयेन, मेध्यमायुष्प्रद च स्यात्। पृथ्वीवृत्तम्।

भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥ ८१ ॥

स०-भल्लातकानि तीक्ष्णानि सुनिष्पन्नानि दहनतुल्यानि तानि यथाविधि प्रयुक्तान्यमृततुल्यानि भवन्ति।

कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन।
यं न भल्लातकं हन्याच्छीघ्रमग्निबलप्रदम् ॥ ८२ ॥

स०-श्लेष्मोत्थो रोग स नास्ति, विबन्धश्च स कश्चिदपि न विद्यते, य-रोग विबन्ध वा, भल्लातक द्रुततर पटुतरदहनकर न हन्यात्।

वातातपविधानेऽपि विशेषेण विवर्जयेत्।
कुलत्थदधिशुक्तानि तैलाभ्यङ्गाग्निसेवनम् ॥ ८३ ॥

स०-वातातपविधावपि भल्लातकस्य कुलत्थादीनि विशेषेण वर्जयेत्।

वृक्षास्तुवरका नाम पश्चिमार्णवतीरजाः।
वीचीतरङ्गविक्षोभमारुतोद्धूतपल्लवाः ॥ ८४ ॥
तेभ्यः फलान्याददीत सुपक्वान्यम्बुदागमे।
मज्ज्ञः फलेभ्यश्चादाय शोषयित्वाऽवचूर्ण्य च ॥८५॥
तिलवत् पीडयेद् द्रोण्यां, क्काथयेद्वा कुसुम्भवत्।
तत्तैलं संभृतं भूयः पचेदासलिलक्षयात् ॥ ८६ ॥
अवतार्य करीषे च पक्षमात्रं निधापयेत्।
स्निग्धस्विन्नो हृतमलः पक्षादुद्धृत्य तत्ततः ॥ ८७ ॥
चतुर्थभक्तान्तरितः प्रातः पाणितलं पिबेत्।
मन्त्रेणानेन पूतस्य तैलस्य दिवसे शुभे ॥ ८८ ॥
"मज्जसार महावीर्य सर्वान् धातून् विशोधय।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः ॥ ८९ ॥"
तेनास्योर्ध्वमधस्ताच्च दोषा यान्त्यसकृत्ततः।
सायमस्नेहलवणां यवागूं शीतलां पिबेत् ॥ ९० ॥
पञ्चाहानि पिबेत्तैलमित्थं वर्ज्यान् विवर्जयन्।
पक्षं मुद्गरसान्नाशी सर्वकुष्ठैर्विमुच्यते ॥ ९१ ॥

स०-तुवरसञ्ज्ञा वृक्षास्तुवरका पश्चिमसमुद्रतटोद्भूता। वीचीत्यादिना विशेषणेन तोयनिधिनिकटतरत्व प्रतिपादयति। तेभ्यो वृक्षेभ्यो जलदागमे सुपक्वानि फलानि गृह्णीयात्। फलेभ्योऽपि मज्ज्ञो गृहीत्वा शोषयित्वा सुष्ठु चूर्णयित्वा च तिलवद् द्रोण्या पीडयेत्। कुसुम्भवद्वा क्काथयेत्। तच्च तैल सिद्ध पुन पचेत्तोयक्षय यावत्। पक्व चावतार्य करीषे मासार्ध निधापयेत्। यन्त्रपीडित तु प्रकृत्यैव निस्तोय तैल तदक्कथितमेव निधापयेत्। तत-पक्षादनन्तर, तैलमुद्धृत्य स्निग्धस्विन्नो हृतदोषो मन्त्रेणानेन मज्जसारेत्यादिना पवित्रितस्य तैलस्य शुभदिवसे चतुर्थेन भक्तेनान्तरितोऽहर्मुखे कर्प पिबेत्। तेन तैलेनास्य पुस ऊर्ध्वमधश्च पुन पुनर्दोषा यान्ति। अनन्तरमपराह्णेऽस्नेहलवणा यवागू शिशिरा पिबेत्। इत्थ-अनेन प्रकारेण, परिहार्यान् परिहरन् पञ्च दिवसानि तैल पिबेत्। पक्ष मुद्गरसान्नभोजन सर्वकुष्ठैर्विमुच्यते।

तदेव खदिरक्काथे त्रिगुणे साधु साधितम्।
निहितं पूर्ववत्पक्षं पिबेन्मासं सुयन्त्रितः ॥ ९२ ॥
तेनाभ्यक्तशरीरश्च कुर्वन्नाहारमीरितम्।
[भिन्नस्वरं रक्तनेत्रं शीर्णाङ्गं कृमिभक्षितम्।]
अनेनाशु प्रयोगेण साधयेत्कुष्ठिनं नरम् ॥ ९३ ॥

स०-तदेवं-तुवरास्थितैल, खदिरक्काथेन त्रिगुणेन सम्यक्पक्व पूर्ववत्-करीषे पक्ष निहित, मास सुयन्त्रित पिबेत्। तेन च तैलेनाभ्यक्तशरीरो भोजन पूर्वोक्त मुद्गरसान्न विदध्यात्। एतेन प्रयोगेण शीघ्र कुष्ठवन्तं पुरुषमुपक्रमेत्।

सर्पिर्मधुयुतं पीतं तदेव खदिराद्विना।
पक्षं मासरसाहार करोति द्विशतायुषम् ॥ ९४ ॥

स०-तदेवं-तुवरास्थितैल, खदिरमन्तरेण घृतमधुयुत पक्ष पीत सन्मासरसाहार नर द्विशतायुष विधत्ते।

१ 'क्कानिशाढ्य' इ.चन्द्र। २ "विषाढ्य-विषाऽतिविषा च। गिरिजन्म-शिलाजतु। ताक्ष्यं-वह्नमाक्षिकम् ॥ आमलकशुक्तय - आमलकदलानि।" इतीन्दु। "वपुष्कर-कान्तिमद्देहम् ॥ पाकीनि-पाचनशीलानि। पाकक्रियानिर्वर्तनात् अग्निसमानि।" इति चन्द्र। "अग्निसमानीति दाहस्फोटकर्तृतया।" इति चक्र.। ३ 'वचाग्नि' इ चन्द्र गदनि.। ४ 'गिरिजातता' ई.। ५ 'निषूदनाय' स.स.। ६ 'कल्पितानि' इ चन्द्र.। ७ 'प्र वह्निबल' ई उ.। 'प्र मेधाग्निवर्धनम्' स च.। ८ 'भल्लातके' ट.। ९ "वीचीतरङ्ग इत्यादि ऊर्मिपरम्पराविक्षेपपवनोत्कम्पितपल्लवा।" इति डल्हण। १० 'मज्जा' ई.। 'मज्जाः' इति क्वचित्। ११ 'त्वा विचूर्ण्य' इ ई उ.स.सु.। 'त्वाऽवचूर्णयेत्' स.मू.। १२ 'संस्रुत' ण.। 'सघृत' इ.चन्द्र.। 'संहृत' इति क्वचित्।

१ 'यत्नवान्' उ स स। 'त तत' स मू। २ 'मज्जासार' इ ण त स मू। ३ 'च्युत' चन्द्र। ४ 'कृत्सकृत्' उ। ५ 'वर्ज्यानि वर्जयेत्' ई उ ण चन्द्र.स स.। ६ [ ] श्लोकार्धमिद इ. चन्द्र पुस्तकयो सङ्ग्रहसुश्रुतयोश्चोपलभ्यते। ७ 'भग्नस्वर' इ.। ८ 'कृमिभिश्चितम्' चन्द्र। ९ 'व तैल' ट.ड। १० 'पक्व' ई.चन्द्र.। 'पक्वमास' उ.। 'पक्षिमास' स सु.।

**तदेव नस्ये पञ्चाशद्दिवसानुपयोजितम् ।**
**[ वलीपलितनिर्मुक्त स्थिरस्मृतिकचद्विजम् । ]**[1]
**वपुष्मत श्रुतधर करोति त्रिशतायुषम् ॥ ९५ ॥**[2]

स०–तदेव तैल नस्ये पञ्चाशद्वासरान् सेवित वरशरीर श्रुतधरं त्रिवर्षशतायुष पुरुष करोति ।

**पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ।**
**रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ९६ ॥**[3]

स०–पञ्च पिप्पलीरथवा सप्ताष्टौ वा दश वा माक्षिकसर्पिर्भ्यां रसायनगुणमभिलष्य वर्षमेक प्रयोजयेत् ।

**तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाऽग्रे भोजनस्य च ।**[4]
**पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥ ९७ ॥**
**प्रयोज्या मधुसम्मिश्रा रसायनगुणैषिणा ।**

स०–पलाशक्षारभाविता पिप्पल्य सर्पिषा भर्जिता माक्षिकान्वितास्तिस्र पूर्वाह्णे, तिस्रो भुक्त्वा, तिस्रो भोजनस्याग्रे, प्रयोज्या रसायनगुण कामयमानेन ।

**क्रमवृद्ध्या दशाहानि दशपैप्पलिकं दिनम् ॥ ९८ ॥**[6][7][8]
**वर्धयेत्पयसा सार्धं तथैवापनयेत्पुनः ।**
**जीर्णौषधश्च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥ ९९ ॥**
**पिप्पलीना सहस्रस्य प्रयोगोऽयं रसायनम् ।**
**पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ॥ १०० ॥**[9]
**[ शीतीकृता हीनबलैर्वीक्ष्य दोषामयान् प्रति । ]**[10][11]

स०–दश दिनानि दशपैप्पलिक दिन क्रमवृद्ध्या क्षीरेण सह योजयेत्,[12] वर्धमाना दश पिप्पली प्रयोजयेदित्यर्थ । तथैव दशपैप्पलिक दिन पयसा सहापनयेत् । परिणतभेषजश्च षष्टिक दुग्धघृतेनाद्यात् । अय–एवप्रकार, सहस्रपिप्पलीना प्रयोगो रसायन स्यात् । ता –पिप्पल्य, पिष्टा सत्यो बलवद्भिर्नरै पातव्या, मध्यबलैर्नरै क्वथिता पेया ।

१ [ ] श्लोकार्धमिद ण त पुस्तकयो सङ्ग्रहे चोपलभ्यते । २ 'श्रुतिधर' ई उ चन्द्र स मू, ड । ३ 'मासमेक' ई उ । ४ " [तिस्रस्तिस्रस्तु पूर्वाह्णे इत्यत्र न ह्येकस्य प्रयोक्तुरय क्रम । किं तर्हि ? प्रयोक्तॄन् भिन्नानपेक्ष्य दोषादिवशात् केनचित् पूर्वाह्णे, केनचित् भुक्त्वा, केनचित् भोजनस्याग्रे, इति । अत्र कफप्रकृतिना पूर्वाह्णे उत्कृष्टदोषादिषु व्याधिषु, मध्येष्वग्रे भोजनस्य, अल्पेषु भुक्त्वा, इति जर्जट ।] [ पयसा सार्धमित्यस्यायमभिप्राय ,– क्षीरस्यापि वृद्धिं हानिं च । शीतीकृता हीनबले –शीतकषायकल्पनयेत्यर्थ. । इति जर्ज्जट. ।]" इतीन्दु । "क्षारमिति क्षारोदकम् । भाविता इति सप्ताहम् ।" इति शिवदास । ५ अग्रे–पूर्वम् । ६ 'तु' ई उ. । ७ 'दशवृध्या' सं मू गदनि. । ८ 'दशपिप्प' स.च । ९ 'सेव्या.' स च. । १० [ ] श्लोकार्धमिद ई उ.ण त.चन्द्र पुस्तकेषु सङ्ग्रहचरकगदनिग्रहेषु चोपलभ्यते । ११ 'ह्रस्वबलैर्योज्या दो' स स स च । 'क्षीणबलैर्वीक्ष्य दोषान् प्रयोजयेत्' ण.त.चन्द्र सं.मू. गदनि. । १२ 'सह भोज' ट ड. ।

**तद्वच्च छागदुग्धेन द्वे सहस्रे प्रयोजयेत् ।**

स०–तद्वच्चेति अनेनैव क्रमेण छागक्षीरेण सह द्वे सहस्रे प्रयोजयेत् ।

**एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ॥ १०१ ॥**[1]
**यक्ष्ममेहग्रहण्यर्शःपाण्डुत्वविषमज्वरान् ।**
**घ्नन्ति शोफं वमिं हिध्मां प्लीहानं वातशोणितम् ॥ १०२ ॥**

स०–एभि –पूर्वोक्तै प्रयोगै, पिप्पल्य उपयुक्ता कासादींश्छोफादींश्च जयन्ति ।

**बिल्वार्धमात्रेण च पिप्पलीनां**
**पात्रं प्रलिम्पेदयसो निशायाम् ।**
**प्रातः पिबेत्तत्सलिलाञ्जलिभ्यां**
**वर्षं यथेष्टाशनपानचेष्टः ॥ १०३ ॥**

स०–पिप्पलीकर्षद्वयमात्रेण निशाया लोहपात्र लिम्पेत् । तच्च जलाञ्जलियुगेन प्रात पिबेत् सवत्सर स्वेच्छाभोजनपानक्रिय । एतच्च रसायन पूर्वगुणम् । इन्द्रवज्रा वृत्तम् ।

**शुण्ठीविडङ्गत्रिफलागुडूची**
**यष्टीहरिद्रातिबलाबलाश्च ।**
**मुस्ताग्निरा(ह्वा)गुरुचित्रकाश्च**[2]
**सौगन्धिक पङ्कजमुत्पलानि ॥ १०४ ॥**
**धवाश्वकर्णासनबालपत्र-**
**सारास्तथा पिप्पलिवत् प्रयोज्याः ।**[3]
**लोहोपलिप्ताः पृथगेव जीवे-**[4]
**त्समाः शतं व्याधिजराविमुक्तः ॥ १०५ ॥**

स०–शुण्ठ्यादीन् पृथगेव पिप्पलीरिव लोहोपलिप्तानुपयुज्य वर्षशत रोगजरारहितो जीवति ।

**क्षीराञ्जलिभ्यां च रसायनानि**
**युक्तान्यमून्यायसलेपनानि ।**
**कुर्वन्ति पूर्वोक्तगुणप्रकर्ष-**
**मायुःप्रकर्षं द्विगुणं ततश्च ॥ १०६ ॥**

स०–अमूनि–पूर्वोक्तानि रसायनानि, लोहलेपनानि क्षीराञ्जलिभ्या–दुग्धपलाष्टकेन, उपयुक्तानि पूर्वोक्तगुणातिशयमायुःप्रकर्ष च ततो द्विगुण विदधति । आद्यन्ते इन्द्रवज्राख्ये, मध्यम तूपजाति ।

**असनखदिरयूषैर्भावितां सोमराजीं**
**मधुघृतशिखिपथ्यालोहचूर्णैरुपेताम् ।**[5]
**शरदमवलिहानः पारिणामान् विकारां-**
**स्त्यजति मितहिताशी तद्वदाहारजातान् ॥ १०७ ॥**

१ "एभिरिति चतुर्भि प्रयोगै । यूषशब्दो निर्यूहवाचक । शिखी–चित्रक " इतीन्दु । "पारिणामान्–वार्धक्यजान् ।" इति चन्द्र । २ 'स्ताशताह्वा' ई । ३ 'प्रयुञ्ज्या.' ई. । ४ 'लोहप्रलेपात्' ई उ । 'लोहोपलेपात्' चन्द्र. । ५ 'तगदपथ्या' चन्द्र. ।

स०-असनादि[1]क्वाथेन भाविता बाकुची माक्षिकादिभिर्युक्ता वर्षमवलिहन् पारिणामान्-वय परिणतिजान्, विकारान् जहाति। तथा हितमितभोजन आहारजान् विकारास्त्यजति । मालिनी ।

**तीव्रेण कुष्ठेन परीतमूर्ति-**
**र्यः सोमराजीं नि[2]यमेन खादेत् ।**
**संवत्सर कृष्णतिलद्वितीयां**
**स सोमराजीं वपुषाऽतिशेते ॥ १०८ ॥**

स०-दारुणेन कुष्ठेन व्याप्तदेहो य शशाङ्कलेखा कृष्णतिलयुता नियमेन वत्सर भक्षयेत्, स चन्द्रकान्ति शरीरेण जयेत्। उपजाति ।

**ये सोमराज्या वितुषीकृताया-**
**श्चूर्णैरुपेतात् पयसः सुजातात् ।**
**उद्धृत्य सारं मधुना लिहन्ति**
**तक्रं तदेवानु पिबन्ति चान्ते ॥ १०९ ॥**
**कुष्ठिनः [3]शीर्यमाणाङ्गास्ते जाताङ्गुलिनासिकाः ।**
**भान्ति वृक्षा इव पुनः प्ररूढनवपल्लवाः ॥ ११० ॥**

स०-ये पुरुषा वितुषीकृताया इन्दुराज्याश्चूर्णैर्युक्तात् क्षीरात् सुजातात् सारं-नवनीताख्यं, उद्धृत्य माक्षिकेण सह लिहन्ति, पश्चात् तदेव तक्र च ये पिबन्ति, ते कुष्ठवन्त शीर्यमाणशरीरा समुद्भूताङ्गुलिघ्राणा शोभन्ते। तरव इव भूय सञ्जातप्रत्यग्रपल्लवा । इन्द्रवज्रा ।

**[ [4]शीत[5]वातहिमदग्धतनूनां**
**स्तब्ध[6]भग्नकुटिलव्यथितास्थ्नाम् ।**
**भे[7]षजस्य पवनोपहतानां**
**वक्ष्यते विधिरतो लशुनस्य ॥ १ ॥ ]**

अथ ल[8]शुनकल्पमाचष्टे—

**राहो[9]रमृतचौर्येण लूनाद्ये पतिता गलात् ।**
**अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥ १११ ॥**
**द्विजा नाश्नन्ति तमतो दैत्यदेहसमुद्भवम् ।**
**साक्षा[10]दमृतसम्भू[11]तेर्ग्रामणीः स रसायनम् ॥ ११२ ॥**

स०-स्वर्भानोरमृतापहरणापराधेन कण्ठाच्छिन्नाद्येऽमृतस्य बिन्दवो धरित्र्या पतितास्ते लशुनत्व प्राप्ता । य(अ)त -अस्माद्धेतो, दैत्यदेहोत्थ लशुनमतो द्विजा न भक्षयन्ति ।

साक्षा[12]च्चामृतसम्भूतत्वाद्धेतोरसौ रसोनो रसा[1]यन ग्रामणी - श्रेष्ठ ।

**शीलयेल्लशुनं शीते, वस[2]न्तेऽपि कफोल्बणः ।**
**घनोदयेऽपि वातार्तः, सदा वा ग्रीष्मलीलया ॥११३॥**
**स्निग्धशुद्धतनुः शीतमधुरोपस्कृताशयः ।**
**तदुत्तंसावतंसाभ्यां चर्चितानुचराजिरः ॥ ११४ ॥**

स०-शीते-हेमन्तशिशिरयो, लशुन शीलयेत्। कफाधिको वसन्तेऽपि शीलयेत्। वातोत्तरो वर्षास्वपि शीलयेत्। सर्वदैव वा वातार्तो ग्रीष्मर्तुचर्याचरणेन शीलयेत्। कीदृश सन्? स्निग्धा शुद्धा च तनुर्यस्य स एवम् । तथा शीतलैर्मधुरैश्चोपस्कृत -सस्कृत, आशयो यस्य स एवम्। तथा तस्य-लशुनस्य, शेखरकर्णपूराभ्या मण्डिता अनुचरा -सेवका, अङ्गणे यस्य स तथा।

**तस्य कन्दान् वसन्तान्ते हिमवच्छकदे[3]शजान् ।**
**अपनीतत्वचो रात्रौ ति[4]मयेन्मदिरादिभिः ॥ ११५ ॥**
**तत्कल्कस्वरसं प्रात' शुचितान्तवपीडितम् ।**
**मदिरायाः सु[5]रूढायास्त्रिभागेन समन्वितम् ॥ ११६ ॥**
**मद्यस्यान्यस्य तक्रस्य मस्तुनः काञ्जिकस्य वा ।**
**त[6]त्काल एव वा युक्तं युक्तमालोच्य मात्रया ॥ ११७ ॥**
**तै[7]लसर्पिर्वसामज्जक्षीरमांसरसैः पृथक् ।**
**क्वाथेन वा यथाव्याधि रसं केवलमेव वा ॥ ११८ ॥**
**पिबेद्गण्डूषमात्रं प्राक् कण्ठनाडीविशुद्धये ।**

स०-तस्य-लशुनस्य, कन्दान् वसन्तऋतुजास्तथा हिमवद्देशोजाश्छकदेशजान् वा उद्धृतत्वचो रात्रौ मदिराबीजपूररसादिभिस्तिमयेत्-क्लेदयेत्। तत्कल्कस्य स्वरस धौतवस्त्रपीडित मदिराया सुरूढायास्त्रिभागेन युत, मद्यादेर्वा त्रिभागेन युत, अथवा तस्मिन्नेव काले सुरादिभिर्युत, मात्रया-देशकालातुराद्यपेक्षिण्या, आलोच्य-निरूप्य, तैलादिभिर्वा पृथक् युक्त यदि वा क्वाथेन यथाव्याधिवशाद्युक्त, केवलमेव वा रस, प्राक्-पूर्व, गण्डूषमात्र पिबेत् गलनाडीविशोधनाय ।

**प्र[8]ततं स्वे[9]दनं चा[10]नु वेदनायां प्रशस्यते ॥ ११९ ॥**
**शीताम्बुसेकः सहसा वमिमूर्च्छाययोर्मुखे ।**

स०-वेदनाया सत्या सतत स्वेदन श्रेष्ठम् ।

---

१ 'क्वाथे भा' ण.त । २ "नियमेन-जितेन्द्रियत्वेन । अतिशेते-अभिभवति ।" इति चन्द्र । "वपुषा-कान्त्या ।" इतीन्दु । ३ 'कुथ्यमानाङ्गा' इ ण त चन्द्र । ४ [ ] श्लोकोऽय इ उ ण त पुस्तकेषु सङ्ग्रहद्वये चोपलब्धोऽपि अरुणदत्तचन्द्रनन्दनादिभिर्हृदयटीकाकारैर्न स्वीकृत । ५ 'तवर्षहिमदिग्ध' स मू गदनि । ६ 'तपरिदग्ध' उ । ७ 'ब्धभुग्न' इ । ८ 'भेषजं च प' उ. । ९ 'शुनादिकल्प' ट ण त. । १० 'रच्युतचक्रेण' इ स मू गदनि. । ११ 'क्षात्वमृतसम्भूत ग्रामीणकर' गदनि. । १२ 'म्भूतेरल्पाम्ले.स' स मू ।

१ 'क्षाद्वाऽमृत' ण त. । २ 'घनानां ग्रा' ट. । ३ 'सन्ते च क' उ.स द्व । ४ 'नीय त्व' उ.चन्द्र । ५ 'तीमये' इ ण त. चन्द्र । 'पेषये' उ । "आर्द्रं सान्द्र क्लिन्न तिमित स्तिमित समुन्नमुत्त च ।" इत्यमर. । ६ "तिमयेत्-अभिषुणुयात् ।" इतीन्दु । "सुरूढाया -सुजाताया । तत्काल एव-वापनकाल एव ॥ उपयुक्ते रसोनस्वरसे वेदनायामुपसञ्जाताया पश्चात् प्रतत स्वेदनं शस्यते।" इति चन्द्र । ७ 'स्य तैलस्य' इति इ उ ण त. चन्द्र. स मू पुस्तकस्थ पाठ 'तैलसर्पिवसा०' इत्यनेन द्विरुक्तत्वादयुक्त । ८ 'क्षीरसर्पिर्वसामज्जधन्वमां' इ.ई.उ. । ९ 'मांसै. पृथक् पृथक्' ई.उ. । १० 'चात्र' ई.उ. ।

तथा वमौ मूर्च्छायें च सहसा-झटित्येव, शीतलजलसेको मुखे शस्यते ।

**शेषं पिबेत् क्लमापाये स्थिरतां गत ओजसि ॥ १२० ॥**

**स०**-शेष रस क्लान्तेरपगम ओजसि स्थैर्य प्राप्ते सति पिबेत् ।

**विदाहपरिहाराय पर शीतानुलेपनः ।**
**धारयेत्साम्बुकणिका मुक्ताकर्पूरमालिकाः ॥ १२१ ॥**

**स०**-विदाहोपशान्तयेऽतिशीतानुलेपन स्यात् । तथा मुक्तामालिका कर्पूरमालिकाश्च सजलकणा धारयेत् ।

**कुडवोऽस्य परा मात्रा तदर्धं केवलस्य तु ।**
**पलं पिष्टस्य तन्मज्ज्ञः सभक्तं प्राक् च शीलयेत् १२२**

**स०**-अस्योत्तमा मात्रा सुरासहितस्य कुडव । केवलस्य तु रसस्य कुडवार्धं पर मात्रा । तन्मज्ज्ञ पिष्टस्य पल परा मात्रा । सभक्त प्राक् चाहारात् तच्छीलयेत् ।

**जीर्णशाल्योदनं जीर्णे शङ्खकुन्देन्दुपाण्डुरम् ।**
**भुञ्जीत यूषैः पयसा रसैर्वा धन्वचारिणाम् ॥ १२३ ॥**

**स०**-पुराणशालिभक्त परिणते शङ्खादिवत् सित यूषादिभि सात्म्यादिवशात् भुञ्जीत ।

**मद्यमेकं पिबेत्तत्र तृट्प्रबन्धे जलान्वितम् ।**
**अमद्यपस्त्वारनालं फलाम्बु परिसिक्थकाम् ॥१२४॥**

**स०**-तत्र च तृषि जाताया केवल मद्य जलयुत पिबेत् । अमद्यपस्तु नरो धान्याम्लादीनि पिबेत् । परिसिक्थिका-सट्टकविशेष , किट्टिरिति क्वचित्प्रसिद्धा ।

**तत्कल्कं वा समघृतं घृतपात्रे खजाहतम् ।**
**स्थितं दशाहादश्नीयात्तद्वद्वा वसया समम् ॥ १२५ ॥**

**स०**-अथवा तस्य-लशुनस्य, कल्क तुल्यघृत खजेनालोडित घृतभाण्डे स्थित दशाहादूर्ध्व भुञ्जीत । तथैव वसया सह स्थित दशाहादूर्ध्व भुञ्जीत ।

**विकञ्चुकप्राज्यरसोनगर्भान्**
**सशूल्यमासान् विविधोपदंशान् ।**
**निर्मर्दकान् वा घृतशुक्तयुक्तान्**
**प्रकाममद्याल्लघु तुच्छमश्नन् ॥ १२६ ॥**

**स०**-विकञ्चुको-विगतत्वग्, य प्राज्य -प्रभूतो लशुन , स गर्भो येषा तांस्तथाविधान्, तथा सहशूल्यमासेन सशूल्यमासान्, तथा नानाविधरुचकान्, ईदृशान् वा निमर्दकान् घृतशुक्तकान्वितान्, यथेच्छ लघु तथा तुच्छ-अल्प, भुञ्जान । उपेन्द्रवज्रावृत्तम् ।

**पित्तरक्तविनिर्मुक्तसमस्तावरणावृते ।**
**शुद्धे वा विद्यते वायौ न द्रव्य लशुनात्परम् ॥ १२७ ॥**

**स०**-वाते लशुनात्परमन्यद द्रव्य न विद्यते । किम्भूते ? पित्तरक्तविहीनसकलावरणावृते । शुद्धे-केवले वा, पवनेऽपर द्रव्य न विद्यते ।

**प्रियाम्बुगुडदुग्धस्य मांसमद्याम्लविद्विषः ।**
**अतितिक्षोरजीर्णे च रसोनो व्यापदे ध्रुवम् ॥ १२८ ॥**

**स०**-लशुन प्रियजलादेर्नरस्य, मासादिद्वेषिण , तथाऽजीर्णमतितिक्षो , निश्चयेन व्यापत्तये स्यात् ।

**पित्तकोपभयादन्ते युञ्ज्यान्मृदु विरेचनम् ।**
**रसायनगुणानेव परिपूर्णान् समश्नुते ॥ १२९ ॥**

**स०**-लशुनप्रयोगान्ते च पित्तकोपभयात् मृदु-अतीक्ष्ण विरेचन च कारयेत् । एव-अनेन प्रकारेण युक्ते रसोने, रसायनगुणान् परिपूर्णान् प्राप्नोति । [ "आमाम्बुपानेक्षुविकारमत्स्ययानाध्ववातातपभाष्यचिन्ता । स्वप्न दिवा जागरण निशासु पिष्ट व्यवाय दधि चात्र नेच्छेत् ॥ पाण्डूदरोर क्षतशोफतृष्णापानात्ययच्छर्दिविषव्रणेषु । पैत्ते विकारेऽक्षिगदेऽतिसारे क्षामे शरीरे च स वर्जनीय ॥" इति वृद्धवाग्भटात् । रसोनस्योपरि एतानि विरुद्धानि । ]

अधुना शिलाजतुकल्प ब्रूते—

**ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमन्ति यत् ।**
**हेमादिषड्धातुरसं प्रोच्यते तच्छिलाजतु ॥ १३० ॥**

**स०**-ग्रीष्मे ऋतौ गिरयो रवितप्ता जतुतुल्य यत् वमन्ति-क्षरन्ति, सुवर्णादयश्च ते षड्धातवश्च तेषा रस, तत् शिलाजतु गद्यते ।

**सर्वं च तिक्तकटुकं नात्युष्णं कटु पाकतः ।**
**छेदनं च विशेषेण लौहं तत्र प्रशस्यते ॥ १३१ ॥**

**स०**-सर्व-षड्धातुजमपि, गिरिज तिक्तकटुक न चातिशयेनोष्ण पाके कटुक छेदन च विशेषेण । तत्र मध्ये लौह शिलाज प्रशस्यते ।

**गोमूत्रगन्धि कृष्णं गुग्गुल्वाभं विशर्करं मृत्स्नम् ।**
**स्निग्धमनम्लकषायं मृदु गुरु च शिलाजतु श्रेष्ठम् ॥**

**स०**-गोमूत्रगन्ध्यादिगुणं शिलाजतु वर स्यात् ।

१ 'णिका मुक्ता कर्पूरमालिकाम्' इ । 'णिका मुक्ताकर्पूरमालिकाम्' चन्द्र. । २ 'स्वत्र' इ । 'त्तत्तु' स स । ३ "तत्र-रसोनप्रयोगे, एकमेव मद्य पिबेत् । तन्मद्य तृट्प्रबन्धे जलान्वित पिबेत् । फलाम्बु-बीजपूररस । परिसिक्थका-द्राक्षा, अथवा पेया वा ।" इति चन्द्रः । ४ 'तृविबन्धे' इ. । 'तृ[प्र]वृद्धे' उ. । ५ 'सिक्थकाम्' त स स. । 'सिरिथका' ण. । 'सिक्थिकम्' चन्द्र । 'सिरिथकम्' स मू । 'रिषेन्वितम्' इ. । ६ 'पयसा' इ ई उ. । ७ 'विमर्दे' इ.उ.चन्द्र.स.मू. । ८ 'तुरथम' उ. ।

१ 'मुँक्ते सम' चन्द्र स मू गदनि । २ 'हीने सक' ड । ३ 'द्यादिवि' इ । ४ 'अतिरूक्षैरजीर्णे च' उ । 'अतितीक्ष्णैरजीर्णे च रसोनाद्व्यापदो ध्रुवम्' गदनि । 'अतिलिक्षो' ण त चन्द्र । ५ "अतिल(ति)क्षो -त्वक्तुमनिच्छो ।" इति चन्द्र. । "विशर्कर-विगतशिलाचूर्णम् ।" इतीन्दु । ६ 'प्रयुक्तो रसोनो रसा' ट. ड. । ७ [ ] एतच्चिह्नान्तर्गत पाठ. ट.ड.पुस्तकयोर्नोपलभ्यते ।

व्याधिव्याधितसात्म्यं
समनुसरन् भावयेदयःपात्रे ।
प्राक् केवलजलधौतं
शुष्कं क्वाथैस्ततो भाव्यम् ॥ १३३ ॥

स०-व्याधिश्च व्याधितश्च तयो सात्म्यं-उपशय, समनुसरन् लोहपात्रे गिरिज भावयेत् । कथम्? इत्याह-पूर्व केवलजलेन धौत तत शुष्क सत् क्वाथैर्भावनीयम् ।

समगिरिजमष्टगुणिते निःक्वाथ्यं भावनौषधं तोये ।
तन्निर्यूहेऽष्टांशे पूतोष्णे प्रक्षिपेद् गिरिजम् ॥ १३४ ॥
तत्समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः ।
स्वैः स्वैरेवं क्वाथैर्भाव्य वारान् भवेत्सप्त ॥ १३५ ॥

स०-सम गिरिज यस्मिन् भावनौषधे तदेवमष्टगुणे जले नि क्वाथ्यम् । तत्क्वाथेऽष्टांशशेषे पूतोष्णे सति शिलाजतु प्रक्षिपेत् । तत्समरसता प्राप्त शुष्क पुना रसे प्रक्षिपेत् । एव स्वै स्वै क्वाथै सप्त वारान् भावनीयम् । आर्याश्चतस्र ।

अथ स्निग्धस्य शुद्धस्य घृतं तिक्तकसाधितम् ।
त्र्यहं युञ्जीत गिरिजमेकैकेन तथा त्र्यहम् ॥ १३६ ॥
फलत्रयस्य यूषेण पटोल्या मधुकस्य च ।
योगं योग्यं ततस्तस्य कालापेक्षं प्रयोजयेत् ॥ १३७ ॥
शिलाजमेवं देहस्य भवत्यत्युपकारकम् ।
गुणान् समग्रान् कुरुते सहसा व्यापदं न च ॥ १३८ ॥

स०- अथ गिरिजमेव भावयित्वा स्निग्धस्य शुद्धस्य च नरस्य तिक्तकसाधित घृत दिवसत्रयमुपयुञ्जीत । ननु, यदि स्निग्धशुद्ध एवासौ, तत्किमिति पुन सर्पिर्युज्यते? ब्रूम । कृतघृतस्य शिलाजतुविधान सुतरा शस्तम् । तथा चोक्तम्- "यथा हि कवची शस्त्र परेभ्य सहतेऽधिकम् । तथा स्नेहाधिके गात्रे सेव्यमान शिलाजतु ॥" इत्यादि । तथा एकैकेन-वक्ष्यमाणेन सह, शैलजं त्र्यहमुपयुञ्ज्यात् । त्रिफलाया क्वाथेन त्र्यह, पटोल्याश्च क्वाथेन त्र्यह, मधुयष्ट्याश्च क्वाथेन त्रिदिवसम् । अनन्तर योग्य योग कालादीनपेक्ष्य प्रयोजयेत् । एव-अनेन विधिना, गिरिज युक्त शरीरस्योपकारकतर स्यात् । सकलान् गुणान् विधत्ते । अकस्मादेव च व्यापदं न करोति ।

एकत्रिसप्तसप्ताहं कर्षमर्धपलं पलम् ।
हीनमध्योत्तमो योगः शिलाजस्य क्रमान्मतः ॥ १३९ ॥

स०-एक सप्ताह त्रिसप्ताह सप्तसप्ताहमिति कालयोग, कर्षमर्धपलं पलमिति मात्रायोग, इति द्वयेऽप्यत्र यथाक्रम हीनमध्योत्तमत्वम् । एकश्च त्रयश्च सप्त च तेषा सप्ताहमिति समास । मुनिनाऽप्युक्तम् (च चि अ १ पा ३।५४)- "प्रयोग सप्तसप्ताहास्त्रय एकश्च कालत । निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा ॥ पलमर्धपल कर्ष मात्रा तस्य त्रिधा मता ।" इति ।

संस्कृतं संस्कृते देहे प्रयुक्तं गिरिजाह्वयम् ।
युक्तं व्यस्तैः समस्तैर्वा ताम्रायोरूप्यहेमभिः ॥ १४० ॥
क्षीरेणालोडितं कुर्याच्छीघ्रं रासायनं फलम् ।
कुलत्थान् काकमाचीं च कपोतांश्च सदा त्यजेत् ॥ १४१ ॥

स०-संस्कृत-पवनादिहरैर्द्रव्यैर्भावित, संस्कृते देहे-स्नेहनशोधनै कृतसंस्कारे शरीरे, शिलाजतु प्रयुक्त ताम्रादिभि समुदितैर्व्यस्तैर्वा युक्त दुग्धेनालोडित क्षिप्रमेव रसायनफल विदध्यात् । कुलत्थादीनि कृततत्प्रयोग सदैव जह्यात् । खरनादे काकमाचीकपोतौ न वर्जितौ । तद्वचनं हि-"शुष्कामिष विरूढ पिष्ट शुक्त विदाहि गुरु चान्यत् । पानाशनं कुलत्थान् विशेषतो वर्जयेच्चात्र ॥" इत्यादि । मुनिनाऽपि नैतौ वर्जितौ । तथा च तद्ग्रन्थ (च चि अ १ पा ३।६२)-"शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च । वर्जयेत्सर्वकालेषु कुलत्थांश्च सदा त्यजेत् ॥" इति । विदाह्यादिवर्जन रसायनकालाद् द्विगुण काल विधेयम् । कुलत्थाश्च यावज्जीवमित्येके । अन्ये तु वदन्ति सदाशब्देन संवत्सर उच्यते । यतो य एते षड् ऋतव । एतावानेव कालो, न षड्ऋतुव्यतिरिक्तोऽन्य कालोऽस्तीति तेषामयमभिप्राय । ननु, विदाहिगुर्वादिभ्य किमिति कुलत्थानामधिक परिहार इष्यते? ब्रूम । पाषाणभेदे कुलत्थानामधिकतरस्वभावत्वात् । तथा हि-सन्तप्तकुलत्थजलेनाप्लुताना पाषाणाना पाषाणहन्तृभि सुखेनैव विदारण दृष्टम् । शिलाजतु च गिरिजमित्युक्तम् । अत शिलाजतुप्रयोगात् तन्मयमेव शरीर सम्पद्यते । तेन तस्य कुलत्था बाधाविधायिन, इति परिहारस्तेषामधिक कृत ।

न सोऽस्ति रोगो भुवि साध्यरूपो
जत्वश्मजं यं न जयेत् प्रसह्य ।
तत् कालयोगैर्विधिवत् प्रयुक्तं
स्वस्थस्य चोर्जां विपुलां दधाति ॥ १४२ ॥

स०-अत्र भूलोकग्रहण सकलभूलोकपरिग्रहार्थम् । अन्यथा कश्चिदेव देशो गृह्येत, न त्वशेषो भूलोक । रूपग्रहणेन साध्यसविकल्पोऽपि गृह्यते, तेन कृच्छ्रसाध्योऽपि गृह्यते । रूप-

१ "तस्य-भावनौषधस्य, निर्यूहे-क्वाथे ।" इति चन्द्र । "तिक्तकै -सूत्रोक्तैरौषधै , साधित घृतं त्र्यह युञ्जीत । ततोऽनन्तर फलत्रयादीना त्रयाणामेकैकस्य यूषेण-क्वाथेन, युक्त गिरिज क्रमेण त्र्यह युञ्जीत । एव द्वादशाहानि संस्कार ।" इतीन्दु. । २ 'गधविशुद्धस्य' ई उ. । ३ 'योगयोग्य' त स.द. । 'योगे योज्य' उ. । ४ 'क्ष तु योज' इ. । ५ 'पदश्च न' स स. । ६ 'करोति' ड. । ७ 'एकसप्ताह' ट. ।

१ 'परो' स च । २ 'विदधीत' ट ड. । ३ 'खरनादे' ट.ड. । ४ 'काल तु कुलत्थान् परिवर्जयेत्' स.च. । ५ 'यामभिप्राय.' ट. । ६ 'स्वभावात्' ट ड ण त. । ७ 'तन्मयमिव' ट. । ८ 'हारश्चैषा' ट. । ९ "भुवि-भूमौ मर्त्यलोके । प्रसह्य-अभिभूय । दधाति-जनयति ।" इति चन्द्र. । १० 'न हरेत्' उ । ११ 'विधिभि.' स च. । १२ 'ददाति' ई.उ. स.च. । १३ 'पि मद्यादिभेदेन भिन्न इह गृह्यते । रूप' ण.त. ।

पदमन्तरेण तु सुखसाध्य एव केवलो गृह्येत । प्रसह्येत्यनेन [1]शीघ्रतर निश्चित च रोगजय करोतीति गमयति । तदय भाव ,–कुष्ठघ्नानि मूत्रकृच्छ्रहराणि वा यथौषधानि तेषा शमयति, तत क्षिप्रतर निश्चित च रोगजय करोति गिरिजमिति । न स रोगो साध्यरूपो विद्यते, य शिलाजतु प्रसह्य न जयेत् । गिरिज कालयोगेन च विधिना प्रयुक्त नीरुजस्य पुरुषस्य महतीमूर्जा च करोति । उपजाति । अत एव सङ्ग्रहे जगाद (उ अ ४९)–"ज्वरी ज्वरघ्नाम्बुदपर्पटादे[2] क्राथेन रक्ती मधुयष्टिकाया । शोषी रसै क्रव्यभुगामिपोत्थैर्मायूरमासै पयसा च कार्श्ये ॥ मध्वम्बुना मेदसि सप्रवृद्धे[3] क्षीरेण पर्याकुलबुद्धि[4]सत्त्व । पाण्डौ[5] सशोफे जठरे सकृच्छ्रे पिबेच्छिलाज महिषीजलेन ॥ अश्म वीरतराद्येन कुष्ठ खदिरवारिणा । विष विषघ्नैरगदैर्हन्त्येव तद्यथामयम्[6] ॥ शैलजत्रिकटुक्षौद्रक्षौद्रवातून् निषेवते । क्षीरोदनाशी यो जीर्णे यक्ष्मणा न[6] स बाध्यते ॥ सुभाविता सारजलैस्तुला[7] पीत्वा शिलोद्भवात् । साराम्बुनैव भुञ्जान शालीन्[8] जाङ्गलजै रसै ॥ अपोह्य मधुमेहाख्यमन्तक रोगसङ्करम् । वपुर्वर्णबलोपेत शत जीवत्यनामय ॥ अमरमन्दिरमन्दरसम्भवात्[9] पलशत गिरिजादुपयोजय[10] । यदि जरामयदु खविवर्जिता[11] सुचिरमिच्छसि जीवितसन्ततिम्[4] ॥ दशगुणमु[12]पयुङ्क्ते[13] य शत शैलजाताल्लघुहितमितभोजी वर्जयन् वर्जनीयान् । सततसमनुषक्तान् वर्जितान् वैद्यवृन्दैर्विधमति स गदौघान्नेक्षते चायुषोऽन्तम् ॥" इति । शिवगुटिका चात्रैवोक्ता (स उ अ ४९) । यथा–"शिलाह्वात् षोडशपल त्रिस्त्रिरेकत्र भावयेत् । वराया दशमूलस्य गुडूच्या कर्कटस्य च ॥ बलाया मधुयष्ट्याश्च रसे गव्ये च वारिणि । क्षीरे सकृत् क्रमेणैव सप्तकृत्वस्तथा पुन ॥ काकोलियुग्मघनपुष्करवह्निरास्नामेदायुगर्द्धिचविकागजपिप्पलीनाम् । पाठाद्विजीरकनि[14]कुम्भविदारियुग्मवीरावरीमधुफलाशुमतीद्वयानाम् ॥ पलिकानामब्द्रोणे[15] सिद्धाना पादशेषिते क्वाथे । भावितमित्थ गिरिज द्विपलैश्चूर्णीकृतैर्युञ्ज्यात् ॥ कर्कटशृङ्गीधात्रीव्योषैस्तालीसपत्रकुडवेन । चूर्णपलेन विदार्या[16]स्त्वक्क्षीर्या कर्षयुग्मेन ॥ कुडवेन[1] चतुर्जातात्तैलघृतक्षौद्रशर्कराभिश्च । द्विपलादि[2]द्विगुणाभि[3] कुर्याद्गुलिकास्ततोऽक्षसमा[4] ॥ ता शुष्का[5] नवकुम्भे जातीपुष्पाधिवासिते स्थाप्या । तासामेका खादेत् प्रतिदिनमनुपानमत्रेष्टम्[2] ॥ क्षीररसदाडिमाम्भोमार्द्वीकसुरासवान्यतमम् । जीर्णेऽन्न लघु भोज्य यूषपय पिशितनिर्यूहै[2] ॥ सप्ताहमात्रमेव सर्वान्नीन क्रमाद्भवेत्परत । भक्तस्यान्ते प्राग्वा गुलिका न विरुध्यते चैषा[6] ॥ निरपाया भूरिफला परिहारसुखोपयोजिता जयति । प्रबलमपि वातशोणितमूरुस्तम्भ ज्वर दीर्घम् ॥ भगमूत्रशुक्रदोषप्लीहयकृद्रक्तपाण्डुहृद्रोगान् । वर्ध्मवमिगुल्मपीनसहिध्माकासारुचिश्वासान् ॥ विद्रधिमुदर कुष्ठ श्वित्र षाण्ढ्य क्षय मद मूर्च्छाम् । उन्मादमपस्मारं मुखनेत्रशिरोगदास्तास्तान् ॥ आनाहमतीसार हलीमक कामला[8]ग्रहणिरोगान् । ग्रन्थ्यर्बुदान् सपिटकान्[10] भगन्दर गण्डमाला च ॥ अतिकार्श्यमतिस्थौल्य स्वेद[11]मपि श्लीपद गुदे कीलान् । दष्ट्राविष[12] समूल गरप्रयोगान् सुघोराश्च ॥ अभिचारमरातिकृत दु स्वप्न भौतिकीं[13] तथा बाधाम् । पाप्मालक्ष्मी चेयं गुलिका[14] शमयेच्छिवा नाम ॥ वृष्याऽऽयुष्या वन्या कान्तियश[15] श्रीविबोधनी मेध्या । कुरुते नृप[16]वल्लभता जय[17] विवादे च वक्रस्था ॥ जित[18]खलतिवली [19]पलित जीवयति सुख शतद्वय शरदाम् । वर्षद्वयप्रयोगाद्वर्षशतचतुष्टय जीवेत् ॥" [ इति । ] खरनादे तूक्तम्–"कनकाद्रजतात्ताम्रादयस सीसात्तथा त्रपुण । गिरिविवरनि सृतं तत्कायस्निग्धातिमृदुमृत्स्नम् ॥ जत्वाभ च शिलाजतु विद्यादेतज्जडात्मक गिरिजम् । सरक्तपीतवर्णं सतिक्तमधुर रसे कटुविपाकि ॥ शीत कनकशिलाजतु विशेषत श्लेष्मपित्तघ्नम् ॥ श्वेत च तिक्तमधुर पाचनवल्लेखन शीतम् । किञ्चिल्लवण विद्या(रूप्या)द्विशेषतो वातपित्तघ्नम् ॥ शितिकण्ठतुल्यवर्ण तीक्ष्णोष्ण लेखनं विपाककटु । किञ्चिल्लवण ताम्रात्मक स्मृत कफकृ[20](ह)द्विशेषेण ॥ गुग्गुलुकाभ स्निग्ध तिक्त लवण सर विशदतीक्ष्णम् ॥ कटुपाकि नातिशीत त्रिमलघ्न त्वायस श्रेष्ठम् ॥ खाकरसमानवर्णे सीसत्रपुसम्भवे शिलाजतुनी ॥ अल्पान्तरकर्मगुणे कृष्णायसजाच्छि-

---

१ 'क्षिप्रतर' ण त । २ 'टादिक्वाथेन' ण त.स मू । ३ 'सप्रदुष्टे' ट । ४ "पर्याकुल–एकरूप, बुद्धि सत्व च यस्य स क्षीरेण । सत्व–मन । यथामयमिति रोगस्वरूपानतिक्रमेण । सारगणा–असनादिसारा । जीवितसन्तर्ति–आयुष समूहम् । शैलजातात्–गिरिजात्, दशगुण–सहस्रम् । विधमति–नाशयति ॥ जीवकद्वय–जीवन्ती जीवक च । विदारियुग्म–विदारी क्षीरविदारी च । मधुफला–द्राक्षा।" इतीन्दु । "सारगणै –शालसारादिभि ।" इति डल्हण । ५ 'पाण्ड्वामयार्तावुदरे सशोफे पि' स द्व । ६ 'न च बा' ट । ७ 'सारगणैस्तु' स स. । ८ 'शालिं' स द्व. । ९ 'वाच्छत पल' स स. । 'वाद्दशपल' स.मू । १० 'योजयेत्' ट । ११ 'जित सुचिरजीवितमिच्छसि सन्ततम्' ट. । १२ 'शतगुण' ट. । १३ 'युक्त' स मू. । १४ 'द्विजीरक' ण त. । १५ 'मपां द्रोणे' ट । १६ 'र्यास्त्वक्षीर्या.' ण.त. । 'र्या. क्षीरविदार्याश्च क' स मू ।

१ 'द्विपलेन चतु' स द्व । २ "द्विपलादेर्द्विगुणत्वम् । तेन तैल द्विपल, ततो द्विगुण घृत चत्वारि पलानि, ततो द्विगुण क्षौद्रमष्टौ पलानि, ततो द्विगुणा शर्करा षोडश पलानि । अत्र च–गुलिकाया, दोषाद्यपेक्ष क्षीरादीनामन्यतममनुपानमिष्टम् । पिशितनिर्यूहो–मांसरस ।" इतीन्दु । ३ 'लाभिर्द्विगु' ण.त स मू । ४ 'कार्या गुलि' स.स । 'र्याद्गुटिका' ट. । ५ 'शुष्के' स मू । ६ 'सैषा' स स । ७ 'जाड्य' स स. । 'साध्य' ट ड. । ८ 'मूत्राक्षिगदान् सुबहुरूपान् ।' ट ड. । ९ 'मला ग्रहणिरोगम् । ग्रन्थ्यर्बुद सपिंडक भग' ट ड । १० 'पिटिका' स मू । 'पिटका' स स. । ११ 'दमति' ट ड. । 'दमथ' स स. । १२ 'शमयति विष' ट. । १३ 'तिकास्तथा बाधान् ।' ट.ड । १४ 'गुटिका' ण त । १५ 'यश कीर्तिवर्धिनी' ट ड. । १६ 'जनवल्लभ' ट ड. । १७ 'जयति वि' ण त । १८ 'विजितखलतिवलिप' स मू । १९ 'पलिता' स.द्व । २० 'कफवृद्धिदोषेण ।' ण त ड. ।

लाजतुन ॥ गोमूत्रगन्धमसितं गुग्गुलुकाभ विशर्कर मृत्स्नम् । स्निग्धमनम्लकषाय शिलोद्भव सर्वकर्मण्यम् ॥" इत्यत्र गुरुमृदुगुणौ नोक्तौ । तथोक्तम्–"सस्नेहलवणभावाद्वातघ्न पित्तनुत् सरत्वात्तत् । रसपाकयो कटुत्वात्तैक्ष्ण्याच्च श्लेष्ममेदोघ्नम् ॥ कटुतीक्ष्णत्वाद्दीपनमग्नेरुद्दीपनान्मलान् पचति । तिक्तत्वाद्रक्तघ्न कटुतैक्ष्ण्यौष्ण्यात् कृमिघ्न च ॥ शोभनभावाद्वृष्य स्निग्धत्वात् पौष्टिक च बल्य च । आयुष्य च विषघ्न मङ्गल्यममृतान्वयत्वाच्च ॥ शोधनभावात् स्रोतोवात्विन्द्रियबुद्धिशोधन वर्ण्यम् । पुत्र्य च वृष्यभावान्मेध्य योनिस्वभावाच्च ॥" इत्यादि । तथा–"भावितमन्यैर्द्रव्यैर्वीर्योत्कर्षाद्विशेपकर्मण्यम् । तत् स्यात्तस्माद्भाव्य वातादिहरौषधकषायै ॥ 'रास्नादशमूलबलापुनर्नवैरण्डशुण्ठिमधुकानाम् । क्वाथेन भावित तद्विशेषतो वातरोगघ्नम् ॥ द्राक्षा[1]भीरुपटोली[2]त्रायन्तिगुडूचिजीवनीयानाम् । क्वाथेन[3] भावित तद्विशेषत पित्तरोगघ्नम् ॥ त्रिफलावचाविडङ्गकरञ्जघनमुख्यपञ्चमूलानाम्[4] । सहपञ्चकोलकाना क्वाथेन कफामये भाव्यम् ॥ लघुपञ्चमूलशुण्ठीद्राक्षाकाश्मर्यवाजिगन्धानाम् । सगुडू[5]चिशरबलाना रसेन पित्तानिलगदेपु ॥ घनकुष्ठवचात्रिफलासुरदारुविडङ्गपञ्चकोलानाम् । रजनीमरिचातिवि[6]षायुक्ताना वातकफजेपु ॥ पाठापटोलनिम्बत्रिफलाघनकु[7]टजसप्तपर्णानाम् । त्रायन्त्यमृतातिविपासहिताना पित्तकफजेपु (स उ अ ४९) ॥' त्रिमलेषु यथा दोष योगानेतान् विकल्प्य भाव्य स्यात् । प्राक्केवलजलधौत शुष्क क्वाथैस्ततो भाव्यम् ॥ गिरिज चतुर्गुणजल क्वाथ्य स्याद्भावनौषध तत्र । चतुर्थशेषे [8]क्वाथे पूतोष्णे प्रक्षिपेद्गिरिजम् ॥" इति । अत्र चतुर्गुणजलस्यौषधस्य क्वाथेन सुकरराता न तथा स्यादिति वाग्भटोक्तमेवाष्टगुणजलक्वाथेन कार्यमिति मन्यामहे । तयोक्तम्–"सलिलविशुद्धाद्गिरिजात् पिबेदरोग फलत्रिकरसेन । मात्रा क्रमाभिवृद्धा त्र्यह पटोलस्य च रसेन ॥ मूत्रेण गवा तद्वत् त्र्यह कषायेण मधुकस्य ।" इति । "रोगान्वितेपु गिरिज जलशुद्ध भावित कषायैश्च । दोपव्याधिबलातुरकालापेक्षी प्रयुञ्जीत ॥ जीर्णौषध सुखोदकपरिषिक्तो मासरसपयोयूषै । रक्तादिपष्टिकौदनमनवमरोगो गदी वा[9]ऽद्यात् ॥ व्याध्यातुरदोषबल दृष्ट्वा तस्य त्रिधा प्रयोग स्यात् । श्रेष्ठस्त्रिषष्टिरात्र मासो मध्यस्त्रिसप्तरात्रमवर ॥ पानावगाहयो स्याद्दिव्य शैलो[10]द्भव कौपम् ।" मुनिस्त्वस्य चतुर्धा[11]तुजत्वमेव सगिरते । तथा च तद्ग्रन्थ (च चि अ १ पा २।४८)–"अनम्ल च कषाय च कटुपाके शिलाजतु । नात्यु[12]ष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भव ॥ हेम्न[13] सरजतात्ताम्राद्वर कृष्णायसादपि ।" इति ।

१ 'क्षामधुकप' ड । २ 'पटोलत्रा' ट स स । ३ 'निर्यूहेण सुभिन्न शस्त पित्तामये सुतराम् ॥ क्रिमिजिद्वचाफलत्रयकरञ्ज' स द्व । ४ 'मूलीनाम्' ट । ५ 'डूच्चिरसव' ण त । ६ 'षासहिताना' स मू । ७ 'कुष्ठसप्त' इति क्वचित् । ८ 'क्वाथे पादाशे पू' ट ण त । ९ 'चाद्यात्' ट त. । १० 'शैलाश्रय' ट. । ११ 'धातु कमेव' ट. । १२ 'अत्युष्णशीत' ट ण त. । १३ 'हेम्नश्च रजतात्ताम्राद्वरात्' स.च. ।



सङ्ग्रहे च गुग्गुलुकल्पोऽभिहित । यथा (उ अ ४९)–"दानवेन्द्रविजितान् पुरा सुरान् भ्रष्टकान्तिधृ[1]तिशौर्यतेजस । वीक्ष्य विष्णुरमृत किलासृजद्गुग्गुलु बलवपुर्जयप्रदम् ॥ अघ्रापयत सुरगणा किल धूपमुख्यान् हित्वा[2] वरागुरुतुरुष्कहिमेन्दुद[3]र्पान् । निर्दह्यमानवपुषोऽपि शिखां[4] पिबन्तो गन्धेन यस्य[5] मुदिता दधति प्रसादम् ॥ स[6] योगवाही स शिवं स[7] सार्व सर्वर्तुसेव्य सुखशीलनीय । हर्ता[8] जरापाप्ममलामयाना कर्ताऽग्निमेधास्मृतिपाटवानाम् ॥ गन्धोत्कट स दाहे स्निग्धद्रवपिच्छिलो विगतशल्य । महिषाख्य पुष्परागस्फ[9]टिकासितनीरुदं[10]च्छाय ॥ य पद्मरागरागो य कनकच्छेदपाटलो यो वा । जयतीन्द्रनीलममल भग्नो[11][12]ऽप्यतिकान्तिमत्त्वेन ॥ श्रेष्ठं[13] प्रयोगोऽस्य तुला पलान्नैवाधिक पिबेत् । आत्रेयमुनिगीतश्च मन्त्रोऽयं[14] कर्मसिद्धिकृत् ॥ 'भगवान् पुण्डरीकाक्षो देवाश्च सपुरन्दरा । आ[15]ज्ञापयन्ति सम्यक्त्वा प्रभाव चादिशन्ति ते[16] ॥ जरामरणदु खेभ्यो यथा तेऽभ्यु[17]त्थिता सुरा । उपयोक्तुस्तथैवास्य भव त्व हि म[18]हाबल ॥' इति । पञ्चमूलस्य महत क्वाथेन हितभोजि[19]ना । गुग्गुलु शीलितो हन्ति सर्वान् वातकफामयान् ॥ लघीयसोऽपि तद्वच्च सुखोष्णेन जलेन वा । मस्तुधान्याम्लमद्यैर्वा वचा[20]दे सलिलेन वा ॥ वरणादेस्तु बा[21]धिर्य दन्तकर्णशिरोरुज । स्वरभेदोदरश्वासवर्ध्मान्तर्गुल्मविद्र[22]धीन् ॥ वातपित्तास्रगेगेषु बृहणार्थिनि चेष्यते । क्वाथेन वाजिगन्धाया जीवनीयगणस्य वा ॥ क्वाथेनोत्पलमृद्वीकारक्तचन्दनजन्मना । वातपित्त निहन्त्येष पद्मकादिगणस्य वा ॥ चव्यकुष्ठविडङ्गाना यवान्या नागरस्य वा । प्रसा[23]रण्याश्च तोयेन गुग्गुलु कफवातजित् ॥ त्र्यू[24]षणाग्निघनवेल्लव[25]राभिर्भक्षयन् स[26]मधृत महिषाक्षम् । आशु हन्ति कफमारुतमेदोदोषजान् बलवतोऽपि विकारान् ॥ पटोलनिम्बत्रिफलागुडूचीगायत्रिरात्रिद्व[27]यबीजकानाम् । क्वाथै पृथक् प[28]थ्यपरस्य हन्ति मासेन घोरान् कफपित्तरोगान् ॥

१ 'धृतिधैर्य' स द्व । २ 'मुक्त्वा ट । ३ दर्प –कस्तूरी । ४ "शिखा–धूमलेखाम् । शिन –श्रेयस्कर । सर्वेभ्यो हित –सार्व ।" इतीन्दु । ५ 'तस्य' स मृ । ६ 'सयोगवाही' ण.त. स.मू । ७ 'स शार्व ' ण त स मू । ८ 'हन्ता' ण.त स.द्व । ९ 'षाक्ष.' स स । १० 'स्फटिकाभो नी' ट । 'स्फटिकसित' स मू । ११ 'नीरुजच्छा' ट ण त । 'नीरजच्छा' स मू. । १२ 'भासाऽप्यति' ट । 'भग्नेऽप्यति' स मू । १३ 'ज्येष्ठ ' ण त स मू । १४ 'य सर्वकर्मकृत्' ण त स मू । १५ 'आख्याप' ट. । १६ 'हि' ट । १७ 'भ्युद्धृता ' ट । १८ 'महाबल ।' स स. । १९ 'भोजनात्' स मू । २० 'चादिसलि' ट. । २१ 'धिर्यदन्त' स स. । २२ 'विद्रधौ ।' ट । २३ 'सारिण्या' स.स. । २४ "त्र्यूषणादीना समाना नवसङ्ख्यानामेको भाग, द्वितीयो गुग्गुलो, इत्येतत् भक्षयन् बलवतोऽपि कफादिजान् विकारान् आशु हन्ति ॥ बिल्वधृतै –प्रत्येक पलप्रमाणै. ।" इतीन्दु । २५ 'वरीभि' ट.। २६ 'समघृत' ट.स मू । २७ 'यजीरका' ट. । २८ 'पथ्यवसस्य' स.मू ।

विशेषाच्छोफवीसर्पदुष्टव्रणभगन्दरान् । शुक्रार्तवमनोदोषप्रमेहश्वित्रपाण्डुता ॥ पटोलारिष्टनिर्यूहपिष्टस्तुल्यरसाञ्जन । गलरोगापचीव्यङ्गग्रन्थिस्थौल्यक्रिमिप्रणुत् ॥ शिलाजतुसम पीत पयसा वातशोणितम् । निवर्तयत्यतिबल क्षीरमासघृताशिन ॥ रसेन पयसा मूत्रैर्वातपित्तकफापह । ब्राह्मीमण्डूकशङ्खाना पृथङ् मेवादिक्रद्रसै ॥ मागधिकाग्निविडङ्गकलिङ्गैर्बिल्वघृतै सैवचापलषट्कै । गुग्गुलुना सदृशेन समेतै क्षौद्रयुतै सकलामयनाश ॥ पिबेत्पलशत योऽस्य विधिना नियतो यति । नाकालमृत्योर्न व्याधेर्न तस्य जरसो भयम् ॥ कल्पयेदौषधै स्वै स्वैर्व्याधिषु व्याधिनाशनै । शिलाजतुविधान च गुग्गुलो सर्वमिष्यते ॥ गुणनिधिरपि कुर्यात् सोऽतिमात्रोपयुक्तस्तिमिरवदनशोषक्लीबताकार्श्यमेहान् । शमलशिथिलभाव देहरौक्ष्य च तस्माद्रजनिचरनिषेवी स्यान्न रोगेष्वमीषु ॥" [ इति । ]

**कुटीप्रवेशः क्षणिनां परिच्छदवता हितः ।**
**अतोऽन्यथा तु ये तेषा सौर्यमारुतिको विधिः १४३**

**स०**– क्षणिना–व्यापारकरण प्रति स्वतन्त्राणाम्, तथा परिच्छदवता–सपरिवाराणाम्, कुटीप्रवेशलक्षणो विधिर्हित । अत –अस्मात्, येऽन्यथा–परतन्त्रा परिवाररहिता , तेषा सौर्यमारुतिको विधिर्हित ।

**वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।**
**सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधका ॥१४४॥**

**स०**–अत –अस्माच्च हेतो , ये वातातपसहा योगास्ते विशेषेण वक्ष्यन्ते । तथा ये न दु खावहा , भ्रंशेऽपि–व्यापत्तावपि, शरीरस्य न पीडाकृत ।

**शीतोदकं पय. क्षौद्रं घृतमेकैकशो द्विशः ।**
**त्रिशः समस्तमथवा प्राक् पीतं स्थापयेद्वयः॥ १४५॥**

**स०**–शिशिरजलादिकमेकैकशो द्विशस्त्रिशो वा प्राग्भोजनात् पीत वय स्थापयेत्। तेन शीताम्भो वा, क्षीर वा, मधु–माक्षिक वा, सर्पिर्वा, पीतमथवा शीताम्भ पयसी, शीतजलक्षौद्रे, शीतदलघृते, इत्येव यथासम्भव द्वे सयुक्ते प्राक्पीतेऽथवा त्रीणि सयुक्तानि पीतानि समस्त वा चतुष्टयमित्येवमवतिष्ठते।

**गुडेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।**
**द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशत सुखी ॥ १४६ ॥**

**स०**–गुडादिना प्रत्येक द्वे द्वे हरीतक्यौ सर्वदा भक्षयन् समाशत सुख जीवेत् ।

**हरीतकी सर्पिषि सम्प्रताप्य**
**समश्नतस्तत् पिबतो घृत च ।**
**भवेच्चिरस्थायि बलं शरीरे**
**सकृत् कृत साधु यथा कृतज्ञे ॥ १४७ ॥**

**स०**–घृते हरीतकीं सम्यक् तापयित्वा भक्षयतस्तच्च घृत पिबतो देहेऽतिदृढ बल स्थिरतर भवेत् । यथा कृतज्ञे नरे सकृत्–एकवार, शोभन कृत चिरस्थायि भवेत् । उपेन्द्रवज्रा ।

**धात्रीरसक्षौद्रसिताघृतानि**
**हिताशनाना लिहता नराणाम् ।**
**प्रणाशमायान्ति जराविकारा**
**ग्रन्था विशाला इव दुर्गृहीताः ॥ १४८ ॥**

**स०**–आमलकस्वरसमाक्षिकशर्कराघृतानि नराणा हिताशनाना लिहता जराविकारा प्रणाशमायान्ति । यथा विशाला ग्रन्था दु पठिता प्रणाश यान्ति ।

**धात्रीकृमिघ्नासनसारचूर्ण**
**सतैलसर्पिर्मधुलोहरेणु ।**
**निषेवमाणस्य भवेन्नरस्य**
**तारुण्यलावण्यमविप्रणष्टम् ॥ १४९ ॥**

**स०**–धात्र्यादिकमासेवमानस्य नरस्य यौवनादिक प्रणष्टमैश्यविप्रणष्ट भवति ।

**लौहं रजो वेल्लभवं च सर्पिः-**
**क्षौद्रद्रुत स्थापितमब्दमात्रम् ।**
**समुद्गके बीजकसारकृते**
**लिहन् बली जीवति कृष्णकेशः ॥ १५० ॥**

१ 'पित्तशोणि' ट ड । २ 'मण्डूकिश' स मू । ३ 'सबलापल' ट ड.। 'सवरापल' स स । ४ "नियत –नियतेन्द्रिय । यति –ब्रह्मचारी ॥ रजनिचरो–गुग्गुलु । शमलशिथिलभाव –द्रुतपुरीषत्वम् ।" इतीन्दु । ५ 'यदि ।' ट ड । ६ 'मृत्युर्न व्याधिर्न' ण त स.मू । ७ 'धिष्वामयनाशनै ' स मू । ८ 'न तु गुग्गुलौ' स मू । ९ 'मोहान्' स स. । १० 'रोगिष्व' ड.ण त । ११ 'क्षमिणा' इ स मू । 'क्षीणाना' ई उ , ड। १२ "क्षणिना–अन्यप्रयोजनरहितानाम् । परिच्छद –अनेकविधमुपकरणम् । [ 'क्षमिणा–कृतक्षमाणाम्, न पुत्रदारकुटुम्बधनपर्येषणापर्याकुलानामित्यर्थ ।' इति जर्जट । ] स्थापयेत्–जीर्णत्वाद्रक्षेत् ।" इतीन्दु । "क्षणिनामिति कृतक्षणानाम् । सूर्यमारुतसेवयाऽपि क्रियत इति सौर्यमारुतिक ।" इति चक्र । १३ 'सूर्यमारुतिको' इ ई उ ण त चन्द्र स मू , ट । १४ 'परिचारा' ट । १५ "शीतोदकपय क्षौद्रसर्पिषामेकशश्चत्वार प्रयोगा , द्विश षट्, त्रिशश्चत्वार , चतुर्भिरेक , एव पञ्चदश प्रयोगा । मानाविरुद्धानामेषा विषमाणामुपयोग कार्य इति ज्ञेयम् । शीतोदक समपित्तवातकफप्रकृतौ, पय पुनरधिकपित्तप्रकृतावेव, क्षौद्र कफप्रकृता, सर्पि पुनरधिकवातप्रकृतौ, अत्रैवैकद्वित्रिचतुर्द्रव्यसयोगा हिताहितविभागमवेक्ष्य वातादिदोषभेदप्रकृतिषु स्वबुद्ध्या विभजनीया ।" इति डल्हण । "प्रागिति प्रात । आजस्रिकाश्चैते प्रयोगा ।" इति श्रीकण्ठ ।

१ 'शीतलजल' ट. । २ 'भक्षयेत् । सवत्सरशत' ड.। ३ 'समश्नुते चेत्' उ । ४ 'स्थायिबल शरीर' उ चन्द्र । ५ 'कृतज्ञा ' उ । ६ 'घृतेन ह' ट ड । ७ 'दृढबलो बुद्धि स्थिरतरा भ' ट ड । ८ 'ताशिना वै लि' उ । ९ 'मपि प्र' इ ई.स.स. । 'मतिप्रतिष्ठम्' उ । १० 'मपि भवति ।' ट.ड.। ११ 'लोह' इ ई ण त । 'लोहाद्रजो' उ । १२ "सर्पि क्षौद्राभ्या द्रुत–द्रवीकृतम् । बीजकसारकृते–असनसारसम्पादिते ।" इति चन्द्र । १३ 'सामुद्गके' ण.त. । १४ 'सारलिप्ते' इ उ. ।

स०–लोहचूर्णादिकं समुद्गके–सम्पुटे, बीजसारमये वर्षमात्रं स्थापितं लिहन् बली–बलसहितः, कालकचो जीवति।

**विडङ्गभल्लातकनागराणि**
**येऽश्नन्ति सर्पिर्मधुसंयुतानि।**
**जरानदीं रोगतरङ्गिणीं ते।**
**लावण्ययुक्ताः पुरुषास्तरन्ति॥ १५१॥**

स०–विडङ्गादीनि ये पुरुषा मध्वाज्ययुतानि खादन्ति, ते जरानदी गदकल्लोलवतीं लावण्यवन्तस्तरन्ति–निरामया जीवन्तीत्यर्थः। उपजातयः।

**खदिरासनयूषभाविताया-**
**स्त्रिफलाया घृतमाक्षिकप्लुतायाः।**
**नियमेन नरा निषेवितारो**
**यदि जीवन्त्यरुजः किमत्र चित्रम्॥ १५२॥**

स०–खदिरबीजसारयूषभाविता त्रिफला घृतमधुयुता नियमेन ये खादन्ति, ते निरामया निश्चयेन भवन्ति, इत्यत्र नास्ति संदेहः। औपच्छन्दसिकम्।

**बीजकस्य रसमङ्गुलिहार्यं**
**शर्करां मधु घृतं त्रिफलां च।**
**शीलयत्सु पुरुषेषु जरत्ता**
**स्वागताऽपि विनिवर्तत एव॥ १५३॥**

स०–बीजसारस्य रसमङ्गुलिहार्यमतिघनं शर्करादिकं च शीलयन्नरो जराभावं सुष्ठ्वागतमप्यपाकुरुते। स्वागताख्यं चेदं वृत्तमिति श्लेषलेशः। तल्लक्षणं च–"स्वागता रनुभगैर्गुरुकान्ता।" इति।

**पुनर्नवस्यार्धपलं नवस्य**
**पिष्टं पिबेद्यः पयसाऽर्धमासम्।**
**मासद्वयं तत्रिगुणं समा वा**
**जीर्णोऽपि भूयः स पुनर्नवः स्यात्॥ १५४॥**

स०–पुनर्नवस्य प्रत्यग्रस्य कर्षद्वयं पिष्टं मासार्धं, मासद्वयं, तत्रिगुणं–षण्मासान्, वर्षं वा, देशपुरुषाद्यपेक्षया यः पयसा पिबेत्, स पुरुषो जीर्णशरीरोऽपि पुनर्नवो भवेत्।

**मूर्वाबृहत्यंशुमतीबलाना-**
**मुशीरपाठासनसारिवाणाम्।**
**कालानुसार्यागुरुचन्दनानां**
**वदन्ति पौनर्नवमेव कल्पम्॥ १५५॥**

स०–मूर्वादीनां कल्पनां पुनर्नवासदृशीं कथयन्ति।

**शतावरीकल्ककषायसिद्धं**
**ये सर्पिरश्नन्ति सिताद्वितीयम्।**
**तान् जीविताध्वानमभिप्रपन्ना-**
**न्न विप्रलुम्पन्ति विकारचौराः॥ १५६॥**

स०–शतावरीकल्कक्वाथाभ्यां पक्वं घृतं शर्करासहितं ये खादन्ति, तान् जीवितमार्गमभिप्रपन्नान् विकारचौरा न छिन्दन्ति। जीविताध्वानमिति विकारचौरा इति समासरूपकम्। तस्य हि लक्षणम्–"उपसर्जनोपमेयं कृत्वा समासमेतयोरुभयोः। यत्र प्रयुज्यते तद्रूपकमन्यत्समासोक्तम्॥" इति।

**पीताऽश्वगन्धा पयसाऽर्धमासं**
**घृतेन तैलेन सुखाम्बुना वा।**
**कृशस्य पुष्टिं वपुषो विधत्ते**
**बालस्य सस्यस्य यथा सुवृष्टिः॥ १५७॥**

स०–अश्वगन्धाऽर्धमासं पयसा घृताद्यन्यतमेन वा पीता कृशस्य वपुषः पुष्टिं करोति। यथा बालस्य सस्यस्य शोभना वृष्टिः।

**दिने दिने कृष्णतिलप्रकुञ्चं**
**समश्नता शीतजलानुपानम्।**
**पोषः शरीरस्य भवत्यनल्पो**
**दृढीभवन्त्यामरणाच्च दन्ताः॥ १५८॥**

स०–अनुदिनं कृष्णतिलपलं शिशिरजलानुपानं भक्षयता शरीरस्य पुष्टिर्महती स्यात्। मरणान्तं वयश्च द्विजा दृढाः स्युः।

**चूर्णं श्वदंष्ट्रामलकामृतानां**
**लिहन् ससर्पिर्मधुभागमिश्रम्।**
**वृषः स्थिरः शान्तविकारदुःखः**
**समाः शतं जीवति कृष्णकेशः॥ १५९॥**

स०–गोक्षुरकादीनां चूर्णं घृतमाक्षिकमिश्रं लिहन् वृषादिगुणान्वितो वर्षशतं कृष्णकचो जीवति। षडुपजातयः।

**सार्धं तिलैरामलकानि कृष्णै-**
**रक्षाणि संक्षुद्य हरीतकीर्वा।**
**येऽद्युर्मयूरा इव ते मनुष्या**
**रम्यं परीणाममवाप्नुवन्ति॥ १६०॥**

स०–कृष्णतिलैः सह धात्रीफलानि संक्षुद्य बिभीतकानि हरीतकीर्वा ये नरा भक्षयेयुः, ते शिखिन इव रमणीयं वयःपरिणामं प्राप्नुवन्ति,–दर्शनीया भवन्तीत्यर्थः। इन्द्रवज्रावृत्तम्।

**शिलाजतुक्षौद्रविडङ्गसर्पि-**
**र्लोहाभयापारदताप्यभक्षः।**

---

१ 'क्षिकान्विता' ई। २ 'न्त्यजरा.' उ स सं। ३ 'संशय' ड.। ४ 'करामधुयुत' उ चन्द्र.। 'करामधुघृत' ण त स.द.। ५ 'ल पल वा पि' स स.। ६ "मूर्वादीनां चन्दनपर्यन्तानां पृथक् अनन्तरोक्तं पौनर्नवमेव कल्पं वदन्ति।" इति चन्द्र।

१ 'सुसूक्ष्मपिष्टा।' इ ई उ। 'घृताम्बुना' सं मू। २ 'वृक्षस्य' उ.। ३ 'यथाऽम्बुवृष्टिः' उ स मू। ४ 'समश्नत' चन्द्र. स स। ५ 'धुना प्रयुक्तम्' उ.। 'भागयुक्तम्' इ.ई.स द। ६ "स्थिर –दृढशरीर.।" इति चन्द्र। ७ 'समाशत' सं.मू.।

आपूर्यते दुर्बलदेहधातु-
त्रिपञ्चरात्रेण यथा शशाङ्कः ॥ १६१ ॥

स०–शिलाजत्वादिभक्षोऽर्धमासेन दुर्बलशरीरधातुरापूर्यते। इन्दुरिवेत्युपमा।

ये मासमेकं स्वरसं पिबन्ति
दिने दिने भृङ्गरजःसमुत्थम्।
क्षीराशिनस्ते बलवीर्ययुक्ताः
समाः शतं जीवितमाप्नुवन्ति ॥ १६२ ॥

स०–ये मार्कवस्वरसमनुदिन मास यावत् पिबन्ति दुग्धभोजना सन्त, ते बलवीर्ययुता वर्षशत जीवितमश्नुवते।

मासं वचामप्युपसेवमाना
क्षीरेण तैलेन घृतेन वाऽपि।
भवन्ति रक्षोभिरधृष्यरूपा
मेधाविनो निर्मलमृष्टवाक्याः ॥ १६३ ॥

स०–वचा च मास क्षीराद्यन्यतमेनोपयुञ्जाना राक्षसैरनुपद्रुतरूपा मेधावन्तो ज्वलदुज्ज्वलवचनाश्च स्यु। मेधाविन इति "अस्मायामेधास्रज" इति विनि। उपजातय।

मण्डूकपर्णीमपि भक्षयन्तो
भृष्टां घृते मासमनन्नभक्षाः।
जीवन्ति कालं विपुलं प्रगल्भा-
स्तारुण्यलावण्यगुणोदयस्थाः ॥ १६४ ॥

स०–मण्डूकपर्णीं घृतेन पक्वा खादन्तो मासमनन्नाशिनो महान्त कालं जीवन्ति प्रागल्भ्यादिगुणयुक्ता। इन्द्रवज्रावृत्तम्।

लाङ्गलीत्रिफलालोहपलपञ्चाशता कृतम्।
मार्कवस्वरसे षष्ट्या गुलिकाना शतत्रयम् ॥ १६५ ॥

छायाविशुष्कं गुलिकार्धमद्यात्
पूर्वं समस्तामपि तां क्रमेण।
भजेद्विरिक्तः क्रमशश्च मण्डं
पेयां विलेपीं रसकौदनं च ॥ १६६ ॥

सर्पिःस्निग्धं मासमेकं यतात्मा
मासादूर्ध्वं सर्वथा स्वैरवृत्तिः।
वर्ज्यं यत्नात्सर्वकालं त्वजीर्णं
वर्षेणैवं योगमेवोपयुञ्ज्यात् ॥ १६७ ॥

भवति विगतरोगो योऽप्यसाध्यामयार्तः
प्रबलपुरुषकारः शोभते योऽपि वृद्धः।
उपचितपृथुगात्रश्रोत्रनेत्रादियुक्त-
स्तरुण इव समानां पञ्च जीवेच्छतानि ॥ १६८ ॥

स०–लाङ्गल्यादीना पलपञ्चाशता भृङ्गस्वरसेन कृत षष्ठ्याऽधिक गुलिकाना शतत्रय छायाविशुष्कम्। ततो गुलिकाया अर्ध पूर्वमद्यात्। क्रमेण ता समस्तामपि भुञ्जीत। ततो विरिक्त क्रमेण मण्डादीनद्यात्। उपजातिर्वृत्तम्।

मासमेक सर्पि स्निग्धमन्न जितात्मा भुञ्जीत। मासादनन्तर यथेष्टभोजन स्यात्। सर्वदा तु यत्नेनाजीर्णं वर्ज्यम्। एव–अनेन प्रकारेण, वर्षेण सर्वा गुलिका उपयुञ्ज्यात्। [ शालिनीवृत्तम्। ]

कृतोपयोगो नीरोगो योऽप्यसाध्यरोगार्तो, वृद्धोऽपि प्रकृष्टपुरुषकारवान् जायते। पुष्टविस्तीर्णशरीर प्रशस्तनयनकर्णादिमास्तरुण इव पञ्च वर्षशतानि जीवति। [ मालिनीवृत्तम्। ]

गायत्रीशिखिशिशिपासनशिवा-
वेल्लाक्षकारुष्करान्
पिष्ट्वाऽष्टादशसंगुणेऽम्भसि धृतान्
खण्डैः सहायोमयैः।
पात्रे लोहमये त्र्यहं रविकरै-
रालोडयन् पाचये-
दग्नौ चानु मृदौ सलोहशकलं
पादस्थितं तत्पचेत् ॥ १६९ ॥

पूतस्यांशः क्षीरतोंऽशस्तथांऽशौ
भार्ङ्गीनिर्यासाद् द्वौ वरायास्त्रयोंऽशाः।
अंशाश्चत्वारश्चेह हैयङ्गवीना-
देकीकृत्यैतत्साधयेत्कृष्णलोहे ॥ १७० ॥

विमलखण्डसितामधुभिः पृथक्
युतमयुक्तमिदं यदि वा घृतम्।
स्वरुचिभोजनपानविचेष्टितो
भवति ना पलशः परिशीलयन् ॥ १७१ ॥

१ 'समाशत' ई। २ "अधृष्यरूपा–अनभिभूतदेहा।" इति चन्द्र। ३ 'र्णीं परिभ' उ। ४ 'भक्ष्या' उ.। ५ 'शत. कृतात्' इ ई.उ.। 'शतीकृतम्' इति क्वचित्। ६ 'पिष्टात्' इ ई.। 'पिष्ट्वा' उ चन्द्र। ७ 'गुटिका' इ ई उ.। ८ 'शतत्रयात्' इ ई। ९ 'शुष्कात्' इ.ई। १० 'सर्वश' ई। ११ 'युञ्ज्य ॥' इ.ई.।

१ 'ण ता समा समस्ता अपि' ट त.। २ 'भोजी स्यात्' ट। ३ "गायत्री–खदिर। शिखी–चित्रक। शिवा–हरीतकी। अरुष्कर–भल्लातकम्। पलश–पल पलम्। परिशीलयन्–अभ्यस्यमान।" इति चन्द्र.। "एतान्यष्टावौषधानि समानि पिष्ट्वा, एतेभ्यो मानेन षोडशगुणेऽम्भस्यौषधसमैश्च शकलैर्धृतानि त्र्यहमादित्यतापेनालोलयन्–चालयन्, पाचयेत्। पिवर्या–शतावर्या। पलश इति यथासामर्थ्य मात्रा।" इतीन्दु। ४ 'ष्कर० धृत' ई चन्द्र। ५ 'पिष्ट्वाऽष्टौ दशषड्गुणे' ई स.स। ६ 'मलै' इ उ.। ७ 'लोहकृते' इ ई उ. चन्द्र स द्व.। ८ 'लोडयेत्' ई उ चन्द्र। 'लोलयन्' स स। ९ 'भार्गीनिर्यासा' इ उ स मू। १० 'पिवर्यास्त्र' स स.। ११ 'रश्चैव' ई उ। 'रस्तत्र' स.स.। १२ "तत्तु हैयङ्गवीन यत् ह्योगोदोहोद्भव घृतम्।" इत्यमर। १३ 'विमलया सितया मधुनाऽथवा यु' ई.स.द्व.। १४ 'लयेत्' उ.।

**श्रीमान्निर्धूतपाप्मा वनमहिषबलो**
**वाजिवेगः स्थिराङ्गः**
**केशैर्भृङ्गाङ्ग[1]नीलैर्मधुसुरभिमुखो**
**नैकयोषिन्निषेवी ।**
**वाङ्मेधा[2]धीसमृद्धः सुपटुहुतवहो**
**मासमात्रोपयोगाद्**
**धत्तेऽसौ नारसिंहं वपुरनलशिखा-**
**तप्तचामीकराभम् ॥ १७२ ॥**

**अत्तारं नारसिंहस्य[3] व्याधयो न स्पृशन्त्यपि ।**
**चक्रोज्ज्वलभुजं[4] भीता नारसिंहमिवासुराः ॥ १७३ ॥**

**स०**—गायत्र्यादीन् पिष्ट्वाऽष्टादशगुणे जले लौहैः शकलैः सह धृतानायसे भाजने त्रीणि दिनानि दिनकरकरैराशोषयन् पाचयेत् । पश्चादतीक्ष्णे वह्नौ लोहशकलैः सह पादस्थितं तत् पचेत् । शार्दूलविक्रीडितम् ।

पूतस्यास्य भागः, क्षीरादशः, भृङ्गराजक्वाथादशौ द्वौ, तथा वरायाश्चाशास्त्रयः, घृतादशाश्चत्वारः, एतत्सर्वं मेलयित्वा कृष्णलोहे पचेत् । वैश्वदेवीवृत्तम् ।

उज्ज्वलखण्डशर्करामाक्षिकैः पृथग्युतमयुतं वा घृतमेतदात्मेच्छया कृताहारपानविहारो नरः पलं पलमश्नन् श्रीमदादियुतो भवेत् । द्रुतविलम्बितवृत्तम् ।

श्रीमान्निर्धूतपाप्मा भवेत् । तथा वनमहिषतुल्यबलः, वाजिनः—अश्वस्य, वेगेन समः, स्थिराङ्गः—दृढशरीरः, तथा केशैर्भ्रमरकृष्णैरुपलक्षितो भवेत्, तथा मधुवत्सुरभिमुखः स्यात्, तथा बहुस्त्रीगमनसामर्थ्ययुक्तः स्यात्, तथा वाङ्मेधादिभिः समृद्धः, तथा सुष्ठु पटुः—तीक्ष्णो, हुतवहः—अग्निः, यस्य स तथाविधो, मासमात्रोपयोगात्—स्यात् । असौ—अस्य घृतस्योपयोक्ता, नरसिंहसदृशं शरीरमतिदार्ढ्ययोगात् तथा वह्निशिखासन्तप्तसुवर्णकान्ति धारयेदिति । स्रग्धरावृत्तम् ।

नरसिंहाख्यस्य हविषो भोक्तारं रोगा न स्पृशन्त्येव,—आसतां तावद्बाधयः । यथा नारसिंहं रूपं चक्रोज्ज्वलभुजं प्रवेष्टुं दैत्या भीत्या(ताः) स्प्रष्टुमशक्ताः, इत्युपमा ।

**भृङ्गप्रवालानमुनैव भृष्टान्**
**घृतेन यः खादति यन्त्रितात्मा ।**
**विशुद्धकोष्ठोऽसनसारसिद्ध-**
**दुग्धानुपस्तत्कृतभोजनार्थः ॥ १७४ ॥**
**मासोपयोगात् स सुखी जीवत्यब्दशतत्रयम्[5] ।**
**गृह्णाति सकृदप्युक्तमविलुप्तस्मृतीन्द्रियः ॥ १७५ ॥**

**स०**—मार्कवपल्लवानेतेनैव सर्पिषा भृष्टान् योऽश्नाति [नि]यतः शुद्धकोष्ठः सन् । बीजकसारसिद्धक्षीरानुपः, तेनैव—असनसारसिद्धेन दुग्धेन, कृतभोजनार्थं—तद्वृत्तिरित्यर्थः । स—पुरुषो, मासोपयोगात् सुखी—नीरोगो, वर्षशते द्वे जीवति । तथैकवारमपि कथितं गृह्णाति । कीदृक्[1] सन् ? अविलुप्तानि स्मृतीन्द्रियाणि यस्य स एवम् ।

**अनेनैव च कल्पेन यस्तैलमुपयोजयेत् ।**
**तानेवाप्नोति स गुणान् कृष्णकेशश्च जायते ॥ १७६ ॥**

**स०**—अनेनैव विधानेन यः पुरुषस्तैलमुपयोजयेत्, स तानेव—पूर्वोक्तान् गुणान्, प्राप्नोति । कृष्णकचश्च सम्पद्यते ।

**उक्तानि शक्यानि फलान्वितानि**
**युगानुरूपाणि रसायनानि ।**
**महानुशंसान्यपि[2] चापराणि**
**प्राप्त्यादिकष्टानि न कीर्तितानि ॥ १७७ ॥**

**स०**—रसायनानि यानि शक्यानि फलयुक्तानि युगानुरूपाणि च तान्युक्तानि । अपराणि चाशक्यानि यानि महाफलान्यपि तानि न कथितानि । उपजातिः ।

**रसायनविधिभ्रंशाज्जायेरन्[3] व्याधयो यदि ।**
**यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥ १७८ ॥**

**स०**—रसायनस्य विधिभ्रंशात्—व्यपायात्[4], यदि रोगा भवेयुः, ततो रसायनं विहाय तेषां यथायोगं सर्वमौषधं कार्यम् ।

**सत्यवादिनमक्रोधमध्यात्मप्रवणेन्द्रियम्[5] ।**
**शान्तं सद्वृत्तनिरतं विद्यान्नित्यरसायनम् ॥ १७९ ॥**

**स०**—सत्यभाषिणं, तथा क्रोधरहितं, तथाऽध्यात्मप्रवणानि—योगप्रवणानि, इन्द्रियाणि यस्य तं, तथा शमयुक्तं, तथा सद्वृत्तनिरतं, स्थितमेवंभूतं नरं नित्यरसायनं जानीयात् ।

**गुणैरेभिः[6] समुदितः सेवते यो रसायनम् ।**
**स निर्वृत्तात्मा[7] दीर्घायुः परत्रेह च मोदते ॥ १८० ॥**

**स०**—एभिः—सत्यवचनादिभिर्गुणैः, संयुक्तः पुरुषो रसायनं सेवते यः, स पुरुषो निवृत्तचित्तो दीर्घायुश्च सन्निह मोदतेऽन्यजन्मनि च ।

**शास्त्रानुसारिणी चर्या चित्तज्ञाः पार्श्ववर्तिनः ।**
**बुद्धिरस्खलिताऽर्थेषु परिपूर्णं रसायनम् ॥ १८१ ॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने रसायनविधिर्नाम एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥**

---

१ 'ङ्गातिनीलैः' ई । २ 'धावी स' इ ई उ । ३ "अस्य नारसिंहस्य—नारायणप्रयोगस्य, अत्तारं नरं व्याधयो भीता न स्पृशन्त्यपि ।" इति चन्द्र । ४ 'भुजा भीता' इ. । ५ 'भृङ्गराजका' ट. । ६ 'शतद्वयम्' अरुण. ।

१ 'कीदृशः' ट. । २ 'नुभावान्यपि' ई । 'नुशंस्यान्यपि' चन्द्र. । ३ "विधिभ्रंशात्—असम्यक्करणात् ॥ परत्रेह च मोदते—द्वयोर्लोकयोः सहर्षो भवेत् ।" इति चन्द्र । ४ 'अपायात्' ण त । ५ 'प्रगुणानि' त. । ६ 'रेतैः समुदितैः' उ. । ७ 'निर्वृतात्मा' ई स स. ।

स०-चेष्टा शास्त्रानुसारिणी, पार्श्वासीनाश्च चित्तविद्, अर्थेषु-विषयेषु, बुद्धिरस्खलिता, इत्येतत् परिपूर्णं रसायनमिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षष्ठ उत्तरस्थाने रसायनविधिर्नाम एकोनचत्वारिंशोऽध्यायः समाप्तः ॥ ३९ ॥



## इति रसायनाख्यं सप्तममङ्गं समाप्तम्।



## चत्वारिंशोऽध्यायः।

अथ क्रमप्राप्तं वाजीकरणाध्यायं ब्रूते—

**अथातो वाजीकरणविधिमध्यायं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

(गद्यसूत्रे ॥ २ ॥)

स०-वाजीव येन समर्थः क्रियते, तद्वाजीकरणम्, तस्याध्यायः। शेषमायुष्कामीयवद्योज्यम्।

**वाजीकरणमन्विच्छेत्सततं विषयी पुमान्।**

स०-विषयी यः पुरुषः, स सततं वाजीकरणमौषधमन्विच्छेत्। पुंग्रहणं स्त्रीषण्ढादिनिवृत्त्यर्थम्, अन्यथा यथा पञ्चकर्माणि ऋतुविधानादि च सामान्योक्तत्वात् स्त्र्यादीनामपि प्रसज्जति, तथेदमपि विज्ञायते, तस्मात्तद्व्यवच्छेदार्थं पुंग्रहणम्। सततग्रहणेनैतद्द्योतयति,-यथा रसायनमुपयुक्तं चिरकालमनुवर्तते न तथा वाजीकरणमिति। अपि तु यस्मिन्नेवाह्नि प्रयुज्यते तस्मिन्नेव कार्यकरणसमर्थं प्रायेण स्यादिति सततम्-अनवरतं, वाजीकरणमन्विच्छेदित्युक्तम्।

वाजीकरणेन कोऽर्थः स्यात्? इत्याह—

**तुष्टिः पुष्टिरपत्यं च गुणवत्तत्र संश्रितम् ॥ १ ॥**
**अपत्यसन्तानकरं यत्सद्यः संप्रहर्षणम्।**

स०-तत्र वाजीकरणे तुष्ट्यादि संश्रितम्। अपत्यं किम्भूतम्? गुणवत्, न तु दुरपत्यं कुलाङ्गाररूपम्। यतोऽपत्य[ना]सन्तानकरम्-अविच्छेदस्थितिकरं च, यच्च सद्यः-शीघ्रमेव, संप्रहर्षणं वाजीकरणम्।

**वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः ॥ २ ॥**
**भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते।**
**तद्वाजीकरणं तद्धि देहस्योर्जस्करं परम् ॥ ३ ॥**

स०-येन वाजीकरणेन तुरङ्ग इवाप्रतिहतसामर्थ्यस्तरुणीं सगच्छति, तथा येन योषितामतिवल्लभः स्यात्, तथा येनोपचयं प्राप्नोति, तद्वाजीकरणमुच्यते। तद्धि शरीरस्योर्जस्करमतिशयेन।

ननु, वाजीकरणमुपायहेतुर्विषयाणामिहैव बन्धनदर्शनात्। उक्तं च तन्त्रान्तरे-"कोशकारो यथैवांशूनुपादत्ते बन्धवहान्" इत्यादि। तस्मान्नार्थो वाजीकरणेनेत्याह—

**धर्म्यं यशस्यमायुष्यं लोकद्वयरसायनम्।**
**अनुमोदामहे ब्रह्मचर्यमेकान्तनिर्मलम् ॥ ४ ॥**

स०-यतो धर्मादनपेतं-धर्म्यं, ब्रह्मचर्यं तदनुमोदामहे। तथा यशस्यादिहेतु। तथा लोकद्वये-इहलोके परलोके च, रसायनमिव रसायनं, सदोपकारकत्वात्। तथा एकान्तेन-सर्वथा, निर्मलम्। यतो ब्रह्मचर्यम्। न तु ब्रह्मचर्यवत् स्वदारादि(रे)षु पुत्राद्यर्थमेव निर्मलम्। अतो हेतोस्तदनुमोदामहे। किन्त्वाभ्युदयिकं मार्गमाश्रित्य वाजीकरणोपदेशः। द्विविधो हि मार्गः,-नैःश्रेयसिक आभ्युदयिकश्च। तत्र नैःश्रेयसिकं मार्गं समनुसृत्य ब्रह्मचर्योपदेशश्च कोशकारदृष्टान्तश्च क्लेशनाशकृच्च। आभ्युदयिकं च मार्गमाश्रित्यायमुपदेश इत्यत्राह।

**अल्पसत्त्वस्य तु क्लेशैर्बाध्यमानस्य रागिणः।**
**शरीरक्षयरक्षार्थं वाजीकरणमुच्यते ॥ ५ ॥**

स०-स्तोकसत्त्वस्य पुंसः क्लेशैर्विषयोत्थैः पीड्यमानस्य रागिणः-कामिनः, शरीरक्षयरक्षार्थं वाजीकरणमुच्यते। अनेन शास्त्रकृता, अपरैश्च तन्त्रकारैः।

**कल्यस्योदग्रवयसो वाजीकरणसेविनः।**
**सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते ॥ ६ ॥**

स०-कल्प(ल्य)स्य-समर्थस्य, तथा यौवनस्थस्य, वाजी-

१ अथ वाजीकरणविधिश्चरके चि० २ अध्याये चतुष्पादेषु, सुश्रुते चि० २६ अध्याये, अष्टाङ्गसङ्ग्रहे उ० ५० अध्याये चास्ति वर्णितः। २ 'रणमध्या' इ ई स मु। 'रणव्या' उ चन्द्र। 'रणाध्याय' ण त। ३ "अन्विच्छेदिति रसायनात् महाफलात् तदपेक्षयाऽल्पफलं वाजीकरणं पश्चादिच्छेत्।" इति चक्र। "अविच्छेत्-आश्रयेत।" इति चन्द्र। "विषयी-विषयेषु शब्दादिषु देहचित्तोपयोगिषु हेतुषु सक्तः। [ 'पुरुषग्रहणं बालात्यन्तवृद्धनिरासार्थम्। न पुनः स्त्रीषण्ढव्युदासार्थम्, तेषां वाजीकरणाप्राप्तेः।' इति जर्जटः।]" इतीन्दुः।

१ "अन्ये तु वाजः-शुक्रम्, सोऽस्यास्तीति वाजी, अवाजी वाजी क्रियते येन तद्वाजीकरणमित्याहुः। किंवा वाजी-मैथुनम्। उक्तं हि हारीते-'वाजो नाम प्रकाशत्वात् तच्च मैथुनसंज्ञितम्। वाजीकरणसंज्ञाभिः पुंस्त्वमेव प्रचक्षते॥'" इति शिवदासः। "उपचीयते-वृद्धिमायाति। ऊर्जस्करं-बलप्रापकं कान्तिदं च॥ धन्यं-प्रशस्यम्। यशस्यं-कीर्तिदम्। आयुष्यम्-आयुषो हितम्। निर्मलं-शुद्धम्॥ कल्यस्य-स्वस्थस्य।" इति चन्द्र। "वार्तो निरामयः कल्यः" इत्यमरः। २ 'हस्योजस्करं' उ स द्व। ३ 'लभो भवति' ट.। ४ 'धन्यं' चन्द्र। ५ 'यशसुखावहम्' इ उ। 'यहितावहम्' ई। ६ 'स्य चोत्क्लेशै' इ. चन्द्र। 'स्य च क्लेशै' उ। ७ 'रोगिण' ई उ.चन्द्र.। ८ 'कल्पस्यो' इ उ.ण.त., ट ड.। ९ 'निवारित.' स मु.।

करण सतत कुर्वत , तस्य सर्वेष्वेव ऋतुषु दिने दिने व्यवायो-मैथुन, न निषिध्यते ।

**अथ स्निग्धविशुद्धानां निरूहान् सानुवासनान् ।**
**घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान् ॥ ७ ॥**
**योगविद्योजयेत्पूर्व क्षीरमांसरसाशिनाम् ।**
**ततो वाजीकरान् योगान् शुक्रापत्यबलप्रदान् ॥ ८ ॥**

**स०**–अथ–कृतमङ्गलस्य, स्निग्धस्य तथा विशुद्धस्य तथा क्षीराद्याशिनो योगवित्–वैद्य , प्राक् निरूहान् सानुवासनान् घृतादिसयुक्तान् कारयेत् । तत –अनन्तर, वाजीकरान् योगान् योजयेत् । किम्भूतान् ? शुक्रादिप्रदान् ।

**अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः ।**
**यथैकश्चैकशाखश्च निरपत्यस्तथा नरः ॥ ९ ॥**

**स०**–अच्छायत्वादिभिर्गुणैर्युक्तोऽर्थिना यथा तरुरनाश्रयणीय , तथा तादृशो मानवो निरपत्य इति । एकवचनेनैव एकार्थस्य लब्धत्वादेकग्रहण केवलार्थप्रतिपत्त्यर्थम् । एक –केवलो मा धवीलतादिरहित ।

**स्खलद्गमनमव्यक्तवचनं धूलिधूसरम् ।**
**अपि लालाविलमुखं हृदयाह्लादकारकम् ॥ १० ॥**
**अपत्यं तुल्यतां केन दर्शनस्पर्शनादिषु ।**
**किं पुनर्यद्यशोधर्ममानश्रीकुलवर्धनम् ॥ ११ ॥**

**स०**–स्खलद्गमनादिकमपत्य केन पदार्थेन दर्शनादिषु समानम् । कि पुनर्यद्यशआदिवर्धनात् तस्य केन तुल्यता भवेत् ? । अपत्यशब्दस्य पुस्त्वमत्र चिन्त्यम्(?) । तत्किल नितरा सुखप्रदमित्यर्थ ।

**शुद्धकाये यथाशक्ति वृष्ययोगान् प्रयोजयेत् ।**

**स०**–शुद्धशरीरे पुरुषे यथाग्निबल वृष्ययोगान् प्रयोजयेत् ।

तानेवाह—

**शरेक्षुकुशकाशानां विदार्या वीरणस्य च ॥ १२ ॥**
**मूलानि कण्टकार्याश्च जीवकर्षभकौ बलाम् ।**
**मेदे द्वे द्वे च काकोल्यौ शूर्पपर्ण्यौ शतावरीम् ॥ १३ ॥**
**अश्वगन्धामतिबलामात्मगुप्तां पुनर्नवाम् ।**
**वीरां पयस्यां जीवन्तीमृद्धिं रास्नां त्रिकण्टकम् ॥ १४ ॥**
**मधुकं शालिपर्णीं च भागांस्त्रिपलिकान् पृथक् ।**
**माषाणामाढकं चैतद् द्विद्रोणे साधयेदपाम् ॥ १५ ॥**
**रसेनाढकशेषेण पचेत्तेन घृताढकम् ।**
**दत्त्वा विदारीधात्रीक्षुरसानामाढकाढकम् ॥ १६ ॥**
**घृताच्चतुर्गुणं क्षीरं पेष्याणीमानि चावपेत् ।**
**वीरां स्वगुप्तां काकोल्यौ यष्टीं फल्गूनि पिप्पलीम् ।**
**द्राक्षां विदारीं खर्जूरं मधुकानि शतावरीम् ।**
**तत्सिद्धपूतं चूर्णस्य पृथक् प्रस्थेन योजयेत् ॥ १८ ॥**
**शर्करायास्तुगायाश्च पिप्पल्याः कुडवेन च ।**
**मरिचस्य प्रकुञ्चेन पृथगर्धपलोन्मितैः ॥ १९ ॥**
**त्वगेलाकेसरैः श्लक्ष्णैः क्षौद्रद्विकुडवेन च ।**
**पलमात्रं ततः खादेत् प्रत्यहं रसदुग्धभुक् ॥ २० ॥**
**तेनारोहति वाजीव कुलिङ्ग इव हृष्यति ।**

**स०**–शरादीना मूलानि कण्टकार्याश्च, तथा जीवकादीन्, त्रिपलिकान् भागान् पृथक्, माषाणामाढक च, एतत्सर्व जलद्रोणद्वये पाचयेत् । तेन रसेनाढकशेषेण घृताढक दत्त्वा विदार्यादिरसादीना च पृथक्पृथगाढक दत्त्वा क्षीराढकचतुष्टय च दत्त्वा पचेत् । वीरादीन् कल्कान् सामान्यपरिभाषोक्तप्रमाणान्निक्षिपेत् । तत्–घृत, पक्व पूत पृथक् शर्करातुगयोश्चूर्णप्रस्थेन कणाया पलचतुष्टयेन मरिचपलेन च योजयेत् । त्वगादिभि श्लक्ष्णै पृथगर्धपलोन्मितै क्षौद्रस्य कुडवयुगलेन योजयेत् । ततो मिश्रितात् पलमात्रं प्रतिदिनं भक्षयेत्, मासरसक्षीरभोजी सन् । तेनोपयुक्तेन तुरङ्ग इवारोहति । चटक इव हृष्यति ।

**विदारीपिप्पलीशालिप्रियालेक्षुरकाद्रजः ॥ २१ ॥**
**पृथक् स्वगुप्तामूलाच्च कुडवांशं तथा मधु ।**
**तुलार्धं शर्कराचूर्णात् प्रस्थार्धं नवसर्पिषः ॥ २२ ॥**
**सोऽक्षमात्रमतः खादेत् यस्य रामाशतं गृहे ।**

**स०**–विदार्यादीना चूर्ण कपिकच्छुमूलाच्च चूर्ण पृथक् कुडवमात्र, माक्षिकस्य च कुडव , शर्करापलानि पञ्चाशत्, प्रस्थार्घघृतस्य पलानि षोडश, अत –सयोजितात्, कर्षमात्र स खादेत् यस्य भवने कान्ताशतमस्ति ।

**सात्मगुप्ताफलान् क्षीरे गोधूमान् साधितान् हिमान् ।**
**माषान् वा सघृतक्षौद्रान् खादन् गृष्टिपयोऽनुपः ।**
**जागर्ति रात्रिं सकलामखिन्नः खेदयन् स्त्रियः ॥ २४ ॥**

**स०**–गोधूमान् सकपिकच्छुफलान् दुग्धे साधितान् हिमान् माषान् वा घृतमाक्षिकान्वितान् खादन् गृष्टिक्षीरमनु पिबेद्य , स सर्वा रात्रिमखिन्नो रामा रमयन् जयति(जागर्ति) ।

१ 'लविवर्धनान्' ण त स च । २ 'प्राक्–पूर्वोक्त, नि' ट ड । ३ "अच्छाय –छायया विहीन । पूतिकुसुम –दुर्गन्धिपुष्प । एकशाखश्च–न बह्वीभि शाखाभिर्निवृत । निरपत्य –सन्तानरहित ॥ स्खलद्गमन–प्रस्खलद्गति । अव्यक्तवचन–अपरिस्फुटवाक् । धूल्या धूसर–धूलिप्रलिप्ताङ्गम् । लालाविलमुखमपि हृदयाह्लादकारिण दर्शनस्पर्शनादिषु तस्य केन तुल्यता स्यात् । कि पुनर्यो यशआदिवर्धनात् तस्य केन तुल्यतोपमीयते ॥ यथाशक्ति–शक्त्यनतिक्रमेण ।" इति चन्द्र । "शर.–काण्डेक्षु । वीरण–उशीरम् । वीरा–क्षीरविदारी । पयस्या–क्षीरिका ।" इतीन्दु । ४ 'कारिणम्' चन्द्र । ५ 'तुल्यता' अरुण । ६ 'पुनर्यो यशो' उ चन्द्र । ७ 'वर्धनात्' अरुण. । 'वर्धन.' इति क्वचित् । ८ 'शुद्धे काये' इ इ उ. । ९ 'वृष्यप्रयोगान्' ट.त. ।

१ "तेन रसेन–क्वाथेन । क्षाद्राद्विकुडवेन–द्रवत्वात् षोडशभि पलै । मधु कुडवाश–अष्टौ पलानि ॥ अत –अस्माद्वृष्ययोगात् ।" इति चन्द्र । २ 'यष्टिक गजपिप्पलीम्' उ । 'फल्गु द्विपिप्पलीम्' स स । ३ 'क्षौद्राद्विकु' ण त स मृ । ४ 'मधुदुग्ध' उ । ५ 'ना कण्टकारीपर्यन्तानां मूलानि, तथा जीवकादीनि, त्रि' ण त । ६ 'ढक विदा' ण त. । ७ 'लिप्रिया' उ । ८ 'कान्ताशत' इ. । ९ 'खादेत्' । गृ' ट.ड ।

**वस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ।**
**यः खादेत्ससितान् गच्छेत्स स्त्रीशतमपूर्ववत् ॥२५॥**

स०–छागलाण्डपक्के क्षीरे तिलानसकृद्भावितान् सशर्करान् य खादेत्, स कान्ताशतमपूर्व इव याति ।

**चूर्णं विदार्या बहुशः स्वरसेनैव भावितम् ।**
**क्षौद्रसर्पिर्युतं लीढ्वा प्रमदाशतमृच्छति ॥ २६ ॥**

स०–शृगालिकायाश्चूर्णं विदारीस्वरसेनैव बहुशो भावित मधुघृतयुक्त लीढ्वा रामाशत याति ।

**कृष्णाधात्रीफलरजः स्वरसेन सुभावितम् ।**
**शर्करामधुसर्पिर्भिर्लीढ्वा योऽनु पयः पिबेत् ॥ २७ ॥**
**स नरोऽशीतिवर्षोऽपि युवेव परिहृष्यति ।**

स०–कृष्णामलकचूर्णं धात्रीस्वरसेन सुभावित शर्कराक्षौद्रघृतैर्लीढ्वा योऽनु क्षीर पिबेत्, स पुरुषोऽशीतिवर्षोऽपि तरुण इव हृष्यति ।

**कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ॥ २८ ॥**
**पयोऽनुपान यो लिह्यान्नित्यवेगः स ना भवेत् ।**

स०–मधुयष्टिकाचूर्णस्य कर्ष घृतक्षौद्रयुत क्षीरानुपान यो लेढि, सोऽप्रणष्टवेग पुरुष स्यात् ।

**कुलीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत् २९**
**सिताघृतपयोन्नाशी स नारीषु वृषायते ।**

स०–कर्कटशृङ्ग्या कल्क क्षीरेणालोड्य य पिबेच्छर्करासर्पि क्षीरान्नभुक्, स रामासु वृषायते ।

**यः पयस्यां पयःसिद्धां खादेन्मधुघृतान्विताम् ॥३०॥**
**पिबेद्बाष्कयण चानु क्षीरं न क्षयमेति सः ।**

स०–क्षीरकाकोली क्षीरसिद्धा माक्षिकघृतयुता य खादेत्, बष्कयणीक्षीरमनु य पिबेत्, स शुक्रक्षय न याति ।

**स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ॥ ३१ ॥**
**धारोष्णेन नरः पीत्वा पयसा रासभायते ।**

स०–कपिकच्छ्विक्षुरकबीजचूर्णं शर्करासहितं धारोष्णेन क्षीरेण पीत्वा नरो बालेय इवाचरति ।

**उच्चटाचूर्णमप्येवं शतावर्याश्च योजयेत् ॥ ३२ ॥**

स०–उच्चटाया शतावर्याश्च चूर्णमेवमेव योजयेत् ।

**चन्द्रशुभ्रं दधिसरं ससिताषष्टिकौदनम् ।**
**पटे सुमार्जितं भुक्त्वा वृद्धोऽपि तरुणायते ॥ ३३ ॥**

स०–दध्न सर शशिधवल शर्कराषष्टिकौदनयुक्त वस्त्रेण सुभावि(मार्जि)त भुक्त्वा वृद्धोऽपि तरुण इवाचरति ।

**श्वदंष्ट्रेक्षुरमाषात्मगुप्ताबीजशतावरीः ।**
**पिबन् क्षीरेण जीर्णोऽपि गच्छति प्रमदाशतम् ॥३४॥**

स०–श्वदंष्ट्रादीन् क्षीरेण पिबन् वृद्धोऽपि रामाशत याति ।

**यत्किञ्चिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् ।**
**मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते ॥ ३५ ॥**

स०–यत्किञ्चिद्वस्तु मधुरादिगुण चित्तहर्षजनन च, तत्सर्वमपि वृष्य कथ्यते ।

**द्रव्यैरेवंविधैस्तस्माद्दर्पितः प्रमदा व्रजेत् ।**
**आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥ ३६ ॥**

स०–तस्मादेवप्रकारैर्द्रव्यै कृतदर्प शत ललनाना यायात् । न केवल वृष्यद्रव्यैर्दर्पितो यावदात्मवेगेन चोदीर्ण –प्रेरित । न तु वाजीकरणं मे युक्तमिति योषित गच्छेत् । स्त्रीगुणै –लावण्यकौमल्यादिभि , कृतप्रहर्ष सन् ।

**सेव्याः सर्वेन्द्रियसुखा धर्मकल्पद्रुमाङ्कुराः ।**
**विषयातिशयाः पञ्च शराः कुसुमधन्वनः ॥ ३७ ॥**

स०–तथा विषयातिशया –मनोहरा शब्दस्पर्शरूपरसगन्धा , सेवनीया । किम्भूता ? सर्वेन्द्रियाणा सुखहेतव , तथा धर्म एव कल्पवृक्षेऽङ्कुरा इवाङ्कुरा । तथा पुष्पचापस्य पञ्चशिलीमुखा इति वाक्यरूपकम् ।

**इष्टा ह्येकैकशोऽप्यर्था हर्षप्रीतिकराः परम् ।**
**किं पुनः स्त्रीशरीरे ये सङ्घातेन प्रतिष्ठिताः ॥ ३८ ॥**

स०–यस्मादेकैकशोऽपि–व्यस्ता अपि, अर्था –शब्दादय सेव्यमाना , पर हर्षप्रीत्युत्पादका । किमुत स्त्रिया शरीरे ये समुदायेन व्यवस्थिता ।

१ 'तान् बहुशस्तिलान्' इ ई उ । २ "असकृत्–पुन पुन ॥ समाशक–तुल्यमात्र(न)म् ॥ वृषायते–वृष इवाचरति ॥ बाष्कयण–वर्षप्रसूताया गो क्षीरम् ।" इति चन्द्र । "असकृदिति सप्तधा ।" इति श्रीकण्ठशिवदासौ । "अपूर्ववदिति अकृतपूर्वस्त्रीसङ्गमवत् ।" इति शिवदास । "कृष्णाफलाना धात्रीफलाना च चूर्णं, स्वरसेन–कृष्णाधात्रीफलरसेन ॥ स्वयगुप्तेक्षुरकयो –अध्यण्डकोकिलाक्षयो ।" इतीन्दु । ३ 'र्या सुकृत स्व' चक्र वृ । ४ 'प्रमदा दश गच्छति' इ ई उ चन्द्र स द्व. । 'दश गच्छेन्नरोऽङ्गना ' वृ । 'शत गच्छेद्वराङ्गना. ' चक्र । ५ 'कृष्णधात्री' ई चन्द्र । ६ 'समाशकम्' चन्द्र स च । ७ 'स नरोऽप्रनष्टवेग स्यात्' ट. । ८ 'ष्कयिण' ई. । ९ 'ण पिबेत् । स बाले' ट ड. ।

१ "मार्जितमिति सुघृष्टम् ॥ भावित इति वचनात् प्रयोगेण शरीरभावनाया सत्या स्त्रीसेवा सम्भवतीति दर्शयति । आत्मवेगेनेति सङ्कल्पजातेनात्मवेगेन ।" इति चक्र । "भावित –कृतसस्कार । आत्मवेगेनोदीर्ण –उद्भटचेता कृत ॥ कुसुमधन्वन –कामस्य ॥ एकैकश –एकमेक कृत्वा । इष्टा –मनोहरा ।" इति चन्द्र. । "आत्मवेगेन च–पुरुषसद्भावकृतेन, उदीर्ण –उत्सिक्त ।" इतीन्दु । २ 'दनैर्युक्त' ट ड । ३ 'पिबेत्' ई चन्द्र । ४ 'पीत्वा' ड ण त । ५ 'स्साद्भावित ' इ ई उ चन्द्र. स द्व स च. । ६ 'रणमुपयुक्त' ट । ७ 'धन्विन.' इ ई उ. । ८ 'शरीरेषु स' ई उ. ।

नामापि यस्या हृदयोत्सवाय
यां पश्यतां तृप्तिरनाप्तपूर्वा ।
सर्वेन्द्रियाकर्षणपाशभूता
कान्तानुवृत्तिव्रतदीक्षिता या ॥ ३९ ॥
कलाविलासाङ्गवयोविभूषा
शुचिः सलज्जा रहसि प्रगल्भा ।
प्रियंवदा तुल्यमनःशया या
सा स्त्री वृषत्वाय पर नरस्य ॥ ४० ॥

स०–यस्या स्त्रिया नामापि हृदयोत्सवाय । या स्त्रियमालोकयतामनाप्तपूर्वा तृप्ति स्यात् । तथा याऽशेषाणा करणानामाकर्षणपाश । तथा कान्तस्य–भर्तु, अनुवर्तनं तदेव व्रत तत्र या दीक्षिता । इन्द्रवज्रावृत्तम् । तथा कलादय एव विभूषा यस्या सैवम । तथा शुचि –अन्तर्बहिश्च, लज्जान्विता, रहसि–सुरते, प्रौढा । तथा सौम्यवचना । तथा तुल्य –समो, मन -शयो–मनसिजो, यस्या सैव या, सा स्त्री–वामलोचना, पर–अतिशयेन, पुसो वृषत्वाय कल्पते । उपजाति ।

आचरेच्च सकलां रतिचर्या
कामसूत्रविहितामनवद्याम् ।
देशकालबलशक्त्यनुरोधा-
द्वैद्यतन्त्रसमयोक्त्यविरुद्धाम् ॥ ४१ ॥

स०–तथा कामसूत्रे विहिता या सकला रतिचर्या तामगर्ह्या देशादिवशादाचरेत् । तथा वैद्यकशास्त्राचारेऽविरुद्धाम् । स्वागतावृत्तम् ।

अभ्यञ्जनोद्वर्तनसेकगन्ध-
स्रक्चित्रवस्त्राभरणप्रकाराः ।
गान्धर्वकाव्यादिकथाप्रवीणाः
समस्वभावा वशगा वयस्याः ॥ ४२ ॥
दीर्घिका स्वभवनान्तनिविष्टा
पद्मरेणुमधुमत्तविहङ्गा ।
नीलसानुगिरीकूटनितम्बे
काननानि पुरकण्ठगतानि ॥ ४३ ॥
दृष्टिसुखा विविधा तरुजातिः
श्रोत्रसुखः कलकोकिलनादः ।
अङ्गसुखर्तुवशेन विभूषा
चित्तसुखः सकलः परिवारः ॥ ४४ ॥
ताम्बूलमच्छमदिरा
कान्ता कान्ता निशा शशाङ्काङ्का ।
यद्यच्च किञ्चिदिष्टं
मनसो वाजीकरं तत्तत् ॥ ४५ ॥

स०–तथाऽभ्यञ्जनादि वाजीकरणमिति वक्ष्यमाणेन सम्बन्ध । गीतादिकुशलास्तुल्यस्वभावा वशगा सहाया । तथा दीर्घिका–क्रीडापुष्करिणी, स्वगृहसमीपे कृता । पद्मरेणुमधुभ्या मत्ता विहङ्गा यस्या सैवम् । हरितसमभूभाग यत्पर्वतशृङ्ग, तस्य नितम्ब, तत्र च यानि काननानि, तानि पुरसमीपभूतानि । उपजातिस्वागते वृत्ते ।

दृष्टिसुखकारिणी तथा नानाप्रकारा महीरुहजाति । कलकण्ठकूजित श्रवणसुखकारि । अङ्गे सुखानुरोधेन ऋत्वनुरोधेन च भूषणम् । तथा सकल परिवारो मन सुखहेतु । तथा ताम्बूलादिक वाजीकरणम् । न च केवल ताम्बूलादिकम्, अपि तु यद्यच्च किञ्चिच्चेतस प्रिय तत्तत् वाजीकरणम् । दोधकमुद्गीतिरार्या ।

मधु मुखमिव सोत्पलं प्रियायाः
कलरणना परिवादिनी प्रियेव ।
कुसुमचयमनोरमा च शय्या
किसलयिनी लतिकेव पुष्पिताग्रा ॥ ४६ ॥
देशे शरीरे च न काचिदर्ति-
रर्थेषु नाल्पोऽपि मनोविघातः ।
वाजीकराः सन्निहिताश्च योगाः
कामस्य कामं परिपूरयन्ति ॥ ४७ ॥

स०–तथा मार्द्वीक सजलज दयितावदनमिव । परिवादिनी–वीणा, मधुरक्वणना वल्लभेव । पुष्पनिकररमणीया शय्या पल्लववती कुसुमप्रधाना लतेव । पुष्पिताग्रेति वृत्तनामश्लेष । देश इत्यादि । एते पदार्था कामस्य काम–इच्छा पूरयन्ति, काममुत्पादयन्तीत्यर्थ । पुष्पिताग्रेन्द्रवज्रे वृत्ते ।

अधुनाऽग्र्यसङ्ग्रहमाह—

**मुस्तापर्पटकं ज्वरे, तृषि जलं मृद्भृष्टलोष्टोद्भवं, लाजाश्छर्दिषु, बस्तिजेषु गिरिजं, मेहेषु धात्रीनिशे । पाण्डौ श्रेष्ठमयोऽभयाऽनिलकफे, प्लीहामये पिप्पली, सन्धाने कृमिजा, विषे शुकतरुर्मेदोनिले गुग्गुलुः ४८**

१ "हृदयोत्सवाय–वृषत्वाय । कला च विलासश्चाङ्गानि च वयश्च, तान्येव विभूषा–मण्डन, यस्या. सा कलाविलासाङ्गवयोविभूषा । प्रियवदा–प्रियभाषिणी ॥ अनवद्यां–निर्दोषामपापरूपाम् । पुरकण्ठगतानि–गृहसन्निकृष्टानि । तरुजाति –वृक्षाणां विकारा ।" इति चन्द्र । २ 'पश्यतस्तु' इ.उ । ३ 'मन.स्वभावा' उ । ४ 'कामशास्त्रवि' ण. त.चन्द्र. । ५ 'स्रगन्नव' इति क्वचित् । ६ 'गन्धर्वकन्यादि' चन्द्र. । ७ 'का:' 'ष्टा.' 'ङ्गा.' इ ई.उ.ण त चन्द्र. । ८ 'नितम्बा.' इ ई.उ. । ९ 'सुखा.' 'नादा.' उ. ।

१ 'खर्तु विशेषवि' उ । २ "कान्ता–नारी, सा च कान्ता–प्रिया । गिरिज–शिलाजतु ।" इति चन्द्र. । ३ 'न्ता' 'शा.' 'ङ्का:' ई.उ. । ४ 'कर हि तत्' उ. । ५ 'तच्च' ट.ण.त. । ६ 'प्रियवादिनी' इ. । ७ 'मनोहरा' इ ई.उ.चन्द्र. । ८ 'रे न कदाचिदर्ति' इ. । ९ 'मनोभिघात.' ई. । १० 'करेण रम' ट. ।

वृषोऽस्रपित्ते, कुटजोऽतिसारे,
भल्लातकोऽर्शःसु, गरेषु हेम ।
स्थूलेषु तार्क्ष्यं, क्रिमिषु क्रमिघ्नं,
शोषे सुरा च्छागपयोऽथ मांसम् ॥ ४९ ॥
अक्ष्यामयेषु त्रिफला, गुडूची
वातास्ररोगे, मथितं ग्रहण्याम् ।
कुष्ठेषु सेव्यः खदिरस्य सारः,
सर्वेषु रोगेषु शिलाह्वयं च ॥ ५० ॥

उन्मादं घृतमनवं, शोकं मद्यं, व्यपस्मृतिं ब्राह्मी ।
निद्रानाशं क्षीरं जयति, रसाला प्रतिश्यायम् ॥ ५१ ॥
मांसं कार्श्यं, लशुनः प्रभञ्जनं, स्तब्धगात्रता स्वेदः ।
गुडमञ्जर्याः खपुरो नस्यात् स्कन्धांसबाहुरुजम् ५२
नवनीतखण्डमर्दितमौष्ट्रं मूत्रं पयश्च हन्त्युदरम् ।
नस्यं मूर्धविकारान्, विद्रधिमचिरोत्थमस्रविस्रावः ॥
नस्यं कवलो मुखजान्, नस्याञ्जनतर्पणानि नेत्ररुजः ।
वृद्धत्वं क्षीरघृते, मूर्च्छां शीताम्बुमारुतच्छायाः ५४
समशुक्तार्द्रकमात्रा मन्दे वह्नौ, श्रमे सुरा स्नानम् ।
दुःखसहत्वे स्थैर्ये व्यायामो, गोक्षुरुर्हितः कृच्छ्रे ॥५५॥
कासे निदिग्धिका, पार्श्वशूले पुष्करजा जटा ।
वयसः स्थापने धात्री, त्रिफला गुग्गुलुर्व्रणे ॥ ५६ ॥

वस्तिर्वातविकारान्,
पैत्तान् रेकः, कफोद्भवान् वमनम् ।
क्षौद्रं जयति बलासं,
सर्पिः पित्तं, समीरणं तैलम् ॥ ५७ ॥

इत्यग्र्यं यत्प्रोक्तं रोगाणामौषधं शमायालम् ।
तद्देशकालबलतो विकल्पनीयं यथायोगम् ॥ ५८ ॥

स०–मुक्तापर्पटकं ज्वरे श्रेष्ठं–रोगोपशमनहेतुः । एवं शेषे-ष्वपि योज्यम् । सन्धाने–उरःसन्धाने, क्रमिजा–लाक्षा, श्रेष्ठा । शुकतरुः–शिरीषः । शार्दूलविक्रीडितं वृत्तम् ।

वृषादयो रक्तपित्तादिषु श्रेष्ठाः । उपजातिः ।

अक्ष्यामयादिषु त्रिफलादीनि सेव्यानि । इन्द्रवज्रा ।

अनवं–पुराणं, सर्पिः कर्तृभूतमुन्मादं जयति । व्यपस्मृतिः–अपस्मारं, ब्राह्मी जयति । एवं क्षीरादयो निद्रानाशादीन् जयन्तीति योज्यम् । गुडमञ्जरी–काला शाल्मली, तस्याः खपुरो–निर्यासो, नस्येन स्कन्धादिजां रुजं हन्ति । नवनीत-युक्तं खण्डमर्दितम् । औष्ट्रं पयो मूत्रं च जठरं पराकरोति । औष्ट्रमिति चिन्त्यम् । उष्ट्राद्वुञि प्राप्ते केचित्तु तस्येदमिति विव-क्षया अण्प्रत्ययं कार्यं इत्याहुः । नस्यादयो मूर्धविकारादीन् जहतीति सम्बन्धः । ननु, वृद्धत्वं क्षीरघृते हत इत्यनुपपन्नम् । तथा हि–"एकरसाभ्यासो दौर्बल्यकराणाम् ।" (च. सू. अ. २५) इत्युक्तम् । दौर्बल्यकरणं च कथं वृद्धत्वहृत् स्यात् ? ब्रूमः । उत्सर्गत्वात्तस्य वचस, अपवादरूपं त्विदं वचनम् । तस्मात् क्षीरघृतादन्यत्रैकरसाभ्यासस्य दौर्बल्यकरणत्वं वेद्यम् । गीतयस्तिस्रः (पञ्च) ।

कासेत्यादि । [ वस्तिरित्यादि । ] आर्या ।

इति–उक्तेन प्रकारेण, यच्छ्रेष्ठमौषधमुक्तम्, तद् रोगाणां शमाय–शान्त्यै, अलं–समर्थम् । तच्च–अग्र्यं, देशादीनां बलेन यथास्वं कल्पनीयम् । जघनचपलाऽऽर्या । एतच्च यथास्वं चिकित्सितेषु कथितं सङ्क्षेपतया पुनः कथितम् । शास्त्रं हि व्यासेन समासेन च विमतयो विरुन्धते । तस्मात् पूर्वं व्यासेनोपदेशः, इदं(अयं) तु समासेनेत्यवबुध्यस्व ।

इत्यात्रेयादागमय्यार्थसूत्रं
तत्सूक्तानां पेशलानामतृप्तः ।
भेडादीनां सम्मतो भक्तिनम्रः
पप्रच्छेदं संशयानोऽग्निवेशः ॥ ५९ ॥

स०–आत्रेयात्–भगवतः पुनर्वसोः, इति–उक्तेन प्रका-रेण, अर्थसूत्रं–अभिधेयतत्त्वं च, आगमय्य–अवबुध्य, अग्निवेशः संशयानो–न तु शास्त्रावबोधाहङ्कृतः, इदं–वक्ष्यमाणं, पप्रच्छ । किम्भूतः ? तस्य–आत्रेयस्य मुनेः, सूक्तानि–सुभा-षितानि, युक्तियुक्तार्थप्रतिपादनात्तेषां सूक्तानां मधुराणामतृप्तः–साकाङ्क्षः । तथा च किम्भूतः ? भेडजातूकर्ण्यादीनां पुनर्वसु-शिष्याणां सम्मतः । तथा भक्तिनम्रो–न तु ज्ञानोद्धतः सन्, स पप्रच्छ । शालिनीवृत्तम् ।

किं पृष्टवान् ? इत्याह—

दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिणः ।
द्रव्योपस्थातृसम्पन्ना वृद्धवैद्यमतानुगाः ॥ ६० ॥
क्षीयमाणामयप्राणा विपरीतास्तथाऽपरे ।
हिताहितविभागस्य फलं तस्मादनिश्चितम् ॥ ६१ ॥

१ 'तमर्शःसु' ई ई उ चन्द्र । २ "तार्क्ष्यं–रसाञ्जनम् । मथितं–तक्रम् । गुडमञ्जर्याः–जिङ्गिण्याः, ऊर्ध्वविकारान्–शिरो-विकारान् । अचिरोत्थं–प्रथमोद्भूतम् । मुखगदान्–मुखरोगान्, नस्यं केवलं हन्ति । श्रमे सुरापानं हितम् ।" इति चन्द्र । *३ 'विसस्मृतिं' इ ण त.चन्द्र., ट । ४ 'नस्य' चन्द्र । ५ 'मौष्ट्रीमूत्रं' उ । *६ 'चोर्ध्वंवि' इ उ चन्द्र । 'मूर्ध्नि वि' ई, ट । ७ 'कवल' ई.उ.ण. त. । 'केवलं' चन्द्र । ८ 'मु-खगदान्' ई उ.चन्द्र. । ९ 'समसुक्ता' इ.ई उ । 'शुष्का-र्द्रकं' चन्द्र । १० 'सुरापानम्' चन्द्र । ११ 'सहत्वं स्थौल्ये व्या' इ.उ । 'सहत्वं स्थै' चन्द्र. । १२ 'कापानं, पार्श्वशूले च पौष्करम्' चन्द्र । १३ 'वयःसंस्थापने' इ उ. चन्द्र. ।

१ 'जयन्तीति' ट.ड. । २ 'त्यस्य कारणं' ण त । ३ 'दाग-मादर्थं' इ ई. । ४ "आगमय्य–गृहीत्वा । अर्थसूक्ष्मं–सूक्ष्मार्थम् । पेशलानां–सुखोपगमनीयानां बह्वर्थानाम् । सम्मतः–पूज्यः ॥ हिताहितविभागस्य फलमनिश्चितं–हितेनापि युक्तेन तदेव क्रियते, अहितेनापि तदेव । फलं–प्राणरक्षालक्षणम् ।" इति चन्द्र । ५ 'र्थसूक्ष्मं' इ.ई उ चन्द्र । ६ 'त्सूक्तीनां' उ. ।

**किं शास्ति शास्त्रमस्मिन्**
**इति कल्पयतोऽग्निवेशमुख्यस्य ।**
**शिष्यगणस्य पुनर्वसु-**
**राचख्यौ कार्त्स्न्यतस्तत्त्वम् ॥ ६२ ॥**

स०–भगवन्-पुनर्वसो, केचिन्नरा आत्मवन्तो हिताहारविहारा अपि रोगिण प्रत्यक्षानुमानाद्यैरुपलभ्यन्ते । आत्मवन्तोऽपीत्यपिशब्दादनात्मवन्तोऽपि । कदाचित् शेषपादत्रयविकलत्वेन रोगित्व स्यात्, नेत्याह–द्रव्योपस्थातृसम्पन्ना वृद्धवैद्यमतानुगा इति । तथाऽऽमयाश्च प्राणाश्चामयप्राणा , क्षीयमाणा आमयप्राणा येषा त एवम्, केचिद्रोगाद्विमुच्यमाना केचिच्च म्रियमाणा इत्यर्थ । विपरीतास्तथाऽपर इति अनात्मवन्तो द्रव्योपस्थातृविकला वृद्धवैद्यमताननुसारिणश्चैवंभावा दृश्यन्ते । तस्मात्–अनन्तरोक्तात्कारणात्, हिताहितविभागस्य तन्त्रोक्त फलमनिश्चित–अनैकान्तिकम् । अनिश्चितफलत्वाच्च कारणात् शास्त्र–आयुर्वेदाख्य, कि शास्ति ? न–किञ्चिच्छिक्षयतीति । अतश्चैतदारम्भो निष्फल काकदन्तपरीक्षाशास्त्रवत् ।

इति विकल्पयत शिष्यगणस्य–जातूकर्ण्यभेडादे , भगवान् पुनर्वसुस्तत्त्व–परमार्थ, कार्त्स्न्येन–सामस्त्येन, जगाद । किम्भूतस्य शिष्यगणस्य ? अग्निवेशो मुख्य –प्रधानो, यस्य तस्येति ।

किं तदुक्तवान् ? इत्याह—

**न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हति ।**
**विनाऽपि क्रियया स्वास्थ्य गच्छतां षोडशांशया ६३**

स०–चिकित्सा–चतुष्पात्षोडशगुणयुक्ता, अचिकित्सा–हिताहितविभागापरामर्शे यत्किञ्चनकारिता, सा तुल्या भवितु नार्हति । केषाम् ? क्रिया विना स्वास्थ्यमपि गच्छताम् । अपिशब्दो भिन्नक्रम , स्वास्थ्यमपीऽत्यतोऽनन्तर द्रष्टव्य । किम्भूतया क्रियया ? षोडशांशया । तदय भाव ,–षोडशभागया चिकित्सया विना यत्र रोगोपशान्ति स्यात्, तत्रापि चिकित्सया क्षिप्रतर तत्साधन चिकित्सा विशिष्टा । तथा चिकित्सासाध्याना रोहिणिकादीना चिकित्सामन्तरेण शान्तिर्नास्ति । तदेवमपि चिकित्सया तुल्याऽचिकित्सा न भवितुमर्हतीति ।

**आतङ्कपङ्कमग्नाना हस्तालम्बो भिषग्जितम् ।**
**जीवितं म्रियमाणानां सर्वेषामेव नौषधात् ॥ ६४ ॥**

स०–तस्मादातङ्क एव पङ्को दुरुत्तरत्वात्तस्मिन् मग्नाना–तन्नाना, भिषग्जितं–तदुपदेशकशास्त्र, उपचारादेवमुक्तम् । तद्भिषग्जित हस्तालम्बो–हस्तालम्बतुल्यम् । म्रियमाणाना सर्वेषामेवासाध्यानामपि भेषजाज्जीवित न च भवति ।

**न ह्युपायमपेक्षन्ते सर्वे रोगा, न चान्यथा ।**
**उपायसाध्याः सिध्यन्ति, नाहेतुर्हेतुमान् यतः ॥६५॥**

स०–यस्मात् सर्वे रोगा –असाध्या अपि, उपायं–चतुष्पादलक्षण चिकित्सित, नापेक्षन्ते, असाध्यरोगाणा चिकित्सानिरपेक्षत्वात् । ये चोपायसाध्या रोगा –रोहिण्यादय , तेऽन्यथा–चिकित्सामन्तरेण, नैव सिध्यन्ति । यतो योऽहेतु स हेतुमान्न भवति । अपि तु निर्युक्तिक एवाय हेतुवाद , यैश्चिकित्साख्येन हेतुना विनैव रोगोपशान्तिर्दृश्यत इति ।

**यदुक्तं सर्वसम्पत्तियुक्तयाऽपि चिकित्सया ।**
**मृत्युर्भवति, तन्नैवं नोपायेऽस्त्यनुपायता ॥ ६६ ॥**

स०–यत्तूक्त 'सर्वसम्पत्तियुक्तयाऽपि चिकित्सया मृत्युर्भवति । दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिण । यावत्क्षीयमाणामयप्राणा ' इत्यादि । तदेव न भवति, यथा त्व वदसि । यस्मान्न उपायेऽनुपायताऽस्ति । यो हि यस्य यया युक्त्योपाय प्रथित , स न कदाचित्तस्यानुपाय । यथा,–घटस्य मृद्दण्डचक्रादिसामग्रीविशेषो न कदाचिदनुपायो भवितुमर्हति । तस्माच्चतुष्पाच्चिकित्सासाध्यस्य रोगस्योपाय एव चिकित्सा, न त्वनुपाय ।

**अपि चोपाययुक्तस्य धीमतो जातुचित् क्रिया ।**
**न सिध्येद्दैववैगुण्यान्न त्वियं षोडशात्मिका ॥ ६७ ॥**

स०–धीमत –प्राज्ञस्य नरस्य, उपाययुक्तस्यापि दैवापराधात् इय षोडशात्मिका क्रिया कदाचिन्न सिध्यति । त(य)स्मादायुपरीक्ष्य साध्यासाध्यविभागज्ञो ज्ञानपूर्व चिकित्सायां वैद्य प्रवर्तते तस्माद्दैववैगुण्यम् । विमलविपुलमत्या सम्यक् परिच्छेदाच्चिकित्साया रोगविषये प्रवृत्ताया सिद्धिरेव स्यान्नासिद्धि । यस्माद्यो यत्रोपाय , स तत्रानुपायो न भवति । मुनिनाऽप्युक्तम् (च सू अ १०।७)–"साध्यासाध्यविभागज्ञो ज्ञानपूर्व चिकित्सक । काले चारभते कर्म यत्तत्साधयति ध्रुवम् ॥" इति ।

एतदेव प्रतिपादयन्नाह—

**कस्यासिद्धोऽग्नितोयादिः स्वेदस्तम्भादिकर्मणि ।**
**न प्रीणनं कर्षणं वा कस्य क्षीर गवेधुकम् ॥ ६८ ॥**
**कस्य माषात्मगुप्तादौ वृष्यत्वे नास्ति निश्चयः ।**
**विण्मूत्रकरणाक्षेपौ कस्य संशयितौ यवे ॥ ६९ ॥**
**विषं कस्य जरां याति मन्त्रतन्त्रविवर्जितम् ।**
**कः प्राप्तः कल्यतां पथ्यादृते रोहिणिकादिषु ॥ ७० ॥**

---

१ "पुनर्वसु –आत्रेयो महामुनि । तत्त्व–अविपरीत सत्यरूपम् । आचख्यौ–आख्यातवान् ॥ अचिकित्सा–चतुर्भि पादै षोडशभिर्गुणैर्विमुक्ता ।" इति चन्द्र । २ 'राचख्ये' ई । ३ 'कर्णभे' ट.ण. । ४ 'रिकिञ्चिन्नरका' ट. । 'रकिञ्च नरका' ण.त. । ५ 'षधम्' उ. । ६ 'मेव साध्या' ट.ड. ।

१ 'नोऽहेतुर्हेतुमांस्तत.' इ ई । २ 'यश्चिकित्सा' ड । ३ 'पायेष्वनु' उ । ४ 'अप्येवोपाय' ण त । ५ 'सिद्धिर्दैव' ई । ६ 'न्नत्विय' इ ण । ७ 'पि कदाचिद्दैवापराधात् क्रिया सिद्धिं न याति । इत्येव षोडशात्मिका चिकित्साक्रिया न कदाचित् सिध्यति ।' ट ड. । ८ 'गुण्ये' ट ड । ९ 'परिच्छिद्य चि' ण त । १० 'कालेनार' ट.ड.ण त. । ११ 'धयते' ट.ण.त. । १२ 'कर्शन' इ ई ण.त. । १३ 'क्षीरगवे' उ ण.त. । १४'साद्यैर्वृष' उ. । 'वृषत्वे' इ ई. । १५ 'कल्पतां' इ.उ.ण.त. ।

स०-कस्य पुरुषस्य वह्नि खेदकर्मणि[1], स्तम्भनकर्मणि च तोयं, न सिद्धम्। आदिशब्दान्मूर्च्छापगमादौ शीतानिलादि। अपि तु सर्वस्यैव सिद्धोऽन्वयव्यतिरेकात्। एवं यावद्रोहिणिकादिष्विति व्याख्येयम्। एवं निश्चितफला चिकित्सेति स्थितम्।

**अपि चाकालमरणं सर्वसिद्धान्तनिश्चितम्।**
**महताऽपि प्रयत्नेन वार्यतां कथमन्यथा॥ ७१॥**

स०-न केवलं पूर्वोक्ताद्धेतोश्चिकित्सातन्त्रं सफलम्। यतश्चाकालमरणं सर्वसिद्धान्तनिश्चितम्। तदन्यथा-चिकित्साशास्त्रमन्तरेण, परमेणापि यत्नेन कथं-केन प्रकारेण, निवार्यताम्? न केनचिदित्यर्थः।

न चाकालमृत्युरक्षैव प्रयोजनमस्य तन्त्रस्येत्याह—

**चन्दनाद्यपि दाहादौ रूढमागमपूर्वकम्।**
**शास्त्रादेव गतं सिद्धिं ज्वरे लङ्घनबृंहणम्॥ ७२॥**

स०-दाहादौ विषये चन्दनादि चागमपूर्वकमेव[3] लोकरूढम्, न त्वेवमेव। तथा शास्त्रादेव-चिकित्साख्यात्, सकललोकप्रसिद्धं[4] ज्वरे लङ्घनबृंहणं भक्तच्छेदक्षीरादि सिद्धिमुपगतम्, नान्यस्मात्।

**चतुष्पाद्गुणसंपन्ने[5] सम्यगालोच्य योजिते।**
**मा कृथा व्याधिनिर्घाते[6] विचिकित्सां चिकित्सिते॥ ७३॥**

स०-तस्माच्चतुष्पादा[ना] ये गुणा-आयुष्कामीयोक्ता (हृ सू अ १।२७), तैः सम्पन्ने-युक्ते, तथा सुष्ठु निरूप्य देशकालादीन् योजिते चिकित्सिते, व्याधिनिर्घातं[7] प्रति विचिकित्सा-संशयं, मा कृथाः।

**एतद्धि मृत्युपाशानामकाण्डे छेदनं दृढम्।**
**रोगोत्रासितभीतानां रक्षासूत्रमसूत्रकम्॥ ७४॥**

स०-यतश्चाकाण्डे-अकाले, मृत्युपाशाः-ज्वरादयस्तेषां, एतत्-चिकित्साशास्त्रं, दृढं-सारं, छेदनम्। तथा समुत्पन्नेभ्यो[8] ज्वरादिभ्यस्त्रस्तानां शङ्कया भीतानां सूत्ररहितं रक्षासूत्रकम्, तत्कार्यकरणादित्यर्थः। तस्मादध्येतव्यं चिकित्साशास्त्रम्।

**एतत्तदमृतं[9] साक्षाज्जगदायासवर्जितम्[10]।**
**याति हालाहलत्वं तु[11] सद्यो दुर्भाजनस्थितम्॥ ७५॥**

स०-तथैतत्-चिकित्साशास्त्रं, तत्-सकललोकप्रसिद्धं, साक्षात्-स्वरूपेण, अमृतं मृत्युजये, तै(य)त्[12] लोकप्रसिद्धं जगतः-सुरासुररूपस्य, आयासादुत्पन्नं क्षीरोदमथनकाले, तेन वर्जितमिदम्। अमृतमपि दुर्भाजनस्थितं सद्यः-शीघ्रमेव, विषत्वं याति।

तदेव दुर्भाजनं[13] दर्शयति—

**अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान्।**
**त्यजेद्दूराद्[14] भिषक्पाशान् पाशान् वैवस्वतानिव॥ ७६॥**

स०-अज्ञातः शास्त्रसद्भावः-परमार्थो, यैस्तांस्तथाविधान् भिषक्पाशान् दूरतस्त्यजेत्। तथा शास्त्रमात्रपरायणान्-शास्त्रपाठमात्रशरणान्। अत एव विषसामान्यतः शास्त्रपाठमात्रत्वेन निषिद्धम्। तथा शास्त्रपरमार्थानवबोधाच्च विषत्वम्। कानिव? वैवस्वतान्-यमसम्बन्धिनः, पाशान् यथा। इति तावदसम्पूर्णान्।

सम्यग्भिषजं श्लाघमानो ब्रूते—

**भिषजां साधुवृत्तानां भद्रमागमशालिनाम्[1][2]।**
**अभ्यस्तकर्मणां भद्रं भद्रं भद्राभिलाषिणाम्॥ ७७॥**

स०-सुवैद्यानां[4] सच्चरितानामिह लोकेऽन्यत्र च सदैव भद्रम्। किंविधानाम्? आगमेन-ग्रन्थतोऽर्थतः, श्लाघितुं शील येषां तेषाम्। ईदृशा अप्यनभ्यस्तकर्माणो न श्लाघार्हाः स्युरित्याह,-अभ्यस्त-असंकृत्तैललेहादिपाकाद्यनुवासननिरूहादियोजनं[5] च, [कर्म] यैस्तेषां लोकद्वयेऽपि भद्रम्। सर्वसत्त्वानां पुत्रमित्रादिरूपेण भद्रमिव[6] हितं सुखं चाभिलषन्ति-इच्छन्ति ये, तेषामपि भद्रं-शस्तम्।

अधुनाऽष्टाङ्गहृदयाख्यस्य सङ्ग्रहात् पृथक्करणे प्रयोजनमाह—

**इति तन्त्रगुणैर्युक्तं तन्त्रदोषैर्विवर्जितम्[7]।**
**चिकित्साशास्त्रमखिलं व्याप्य[8] यत् परितः स्थितम्॥ ७८॥**
**विपुलामलविज्ञान[9]महामुनिमतानुगम्।**
**महासागरगंभीर[10]सङ्ग्रहार्थोपलक्षणम्[11]॥ ७९॥**
**अष्टाङ्गवैद्यकमहोदधिमन्थनेन**
**योऽष्टाङ्गसङ्ग्रहमहामृतराशिराप्तः[12]।**
**तस्मादनल्पफलमल्पसमुद्यमानां**
**प्रीत्यर्थमेतदुदितं[13] पृथगेव तन्त्रम्॥ ८०॥**

स०-तन्त्र्यते-धार्यते शरीरमनेनेति तन्त्रम्, तस्य गुणास्तन्त्रगुणाः,-यैस्तन्त्रमलङ्क्रियते तन्त्रयुक्त्यादयः, तैरेवंप्रकारैर्युक्तम्। तथा चोक्तं सङ्ग्रहे (उ अ ५०)-"अलङ्कृतं युक्तिपदैः सद्रत्नैरिव काञ्चनम्। षट्त्रिंशताऽर्थदुर्गेषु भिषजां सङ्क्रमैरिव॥ तत्राधिकरणं[1] योगो[2] हेत्वर्थो[3]ऽर्थः[4] पदस्य च[5]। प्रदेशो[6]द्देशनिर्देश[7]वाक्यशेषाः[8] प्रयोजनम्[9]॥ उपदेशा[10]पदेशाति[11]देशार्था[12]पत्ति[13]निर्णयाः[14]। प्रसङ्गै[15]कान्त[16]नैकान्ता[17] सापवर्गो[18] विपर्ययः[19]॥ पूर्वपक्ष[20]विधाना[21]नुमत[22]व्याख्यान[23]संशयाः[24]। अतीता[25]नागता[26]पेक्षा[27]स्वसञ्ज्ञो[28]ह्य[14]समुच्चयाः[29]॥ निदर्शनं[30] निर्वचनं[31][15] नियोगो[32]ऽथ विकल्पनम्[33]। प्रत्युत्सार[34]स्तथोद्धार[35] सम्भव[36]स्तन्त्रयुक्तयः॥" इति।

१ 'स्वेदनक' ट.। २ 'फलं चिकित्सितमेवेति' ट.ड.। ३ 'दिक्मागम' ट.। ४ 'प्रसिद्धे' ड। ५ 'सपूर्णे' उ। ६ 'निर्घाते' इ.ई उ.। ७ 'व्याधिविघातं' ड.। ८ 'भ्योऽपि ज्व' ण त। ९ 'एतद्धेदामृतं' इ। १० 'गत्यायास' ण.त.। ११ 'च' ण त.। १२ 'तदपि लो' ण त.। १३ 'जनभव शास्त्रपाठ दर्श' ट.। १४ 'विवर्जयेद्भिष' ई.।

१ 'बहुधागम' इ ई उ। २ 'मशीलिनाम्' उ.। ३ 'णां सिद्धिर्भद्रं' उ.। ४ 'सद्वैद्यानां' ट ड.। ५ 'सकृद्धृततैल' ट.। ६ 'भद्रमेव' ट ड। ७ 'दोषविव' उ ण त.। ८ 'व्यापय्य प' ई उ.। ९ 'विज्ञान' इ ई.उ। १० 'गम्भीर' ई उ। ११ 'लक्षकम्' उ.। १२ 'मृतसारतुल्यः।' ई.। १३ 'मेवमुदितं' उ.। १४ 'सञ्ज्ञोत्पत्तिनिश्रया.' ट.ड.। १५ 'चनमभियोगो' स.मू।

तत्र १ **अधिकरणं नाम,**–यदधिकृत्य प्रवर्तते शास्त्र स्थानमध्याय प्रकरण[1] वाक्य वा । तत्र शास्त्राधिकरण–यदधिकृत्य शास्त्र प्रवर्तते । यथा–अष्टावङ्गान्यधिकृत्य हृदयाख्य सर्वं शास्त्र प्रवृत्तम् । यथोक्तम् ( हृ सू अ १।५ )–"कायबाल" इत्यादि । स्थानाधिकरणं यथा ( हृ सू अ. ३०।५३ ) –"अत्रार्था सूत्रिता सूक्ष्मा प्रतन्यन्ते हि सर्वत ।" इति । अध्यायोऽपि यदधिकृत्य प्रवर्तते तदध्यायाधिकरणम् । यथा ( हृ सू अ २ )–"अथातो दिनचर्याध्याय व्याख्यास्याम ।" इति । प्रकरण यदधिकृत्य प्रवर्तते तत् प्रकरणाधिकरणम् । यथा ( हृ शा अ ३।१८ )–"दश मूलसिरा हृत्स्थास्ता सर्व सर्वतो वपु ।" इत्यादि यावत् "इत्यवेध्यविभागार्थ प्रत्यङ्ग वर्णिता सिरा ।" इत्यादि । एव वाक्यमपि यदधिकृत्य प्रवर्तते तद्वाक्याधिकरण वेद्यम् ।

२ **योगो नाम,**–योजना, उद्देशनिर्देशयो सूत्रभाष्ययोर्वा । यथा ( हृ शा अ ३ )–"अथातोऽङ्गविभाग शारीरं व्याख्यास्याम ।" इत्युद्दिश्याङ्गानि विभजते–"शिरोऽन्तराधिर्द्वौ बाहू सक्थिनी च समासत । षडङ्गम्" इत्यादि । युक्तिर्वा योग , प्रतिज्ञा हेतुर्दृष्टान्त उपनयो निगमनमिति पञ्चविध । यथा–अग्नि शरीरस्थितेर्मूलमिति प्रतिज्ञा । अग्निपक्काहारे सति[2] तत्स्थितेरिति हेतु , "तत्राग्निर्हेतुराहाराच्च ह्यपक्वाद्रसादय ।" ( हृ शा अ ३।५४ ) इति वचनात् । यथा–शाल्यङ्कुरस्य बीजमिति दृष्टान्त । उपनयो यथा–चिकित्साशास्त्रस्य प्रयोजनत्वसाधनाय बहुधा दृष्टान्तोपनय कृतवास्तन्त्रकृत्, "कस्यासिद्धोऽग्नितोयादि" ( हृ उ अ ४०।६८ ) इत्यादय । तस्मात् सप्रयोजनमेव चिकित्साशास्त्र प्रत्यक्षफलत्वादित्युपनय । तस्मादारम्भणीयमिति प्रमाणपदोपदर्शनमुखेन निगमनम् । यथोक्तम् (हृ उ अ ४०।७३)-"चतुष्पाद्गुणसम्पन्ने सम्यगालोच्य योजिते । मा कृथा व्याधिनिर्घात[4] विचिकित्सा चिकित्सिते ॥" साध्यव्याधिचिकित्साया सशयानुपपत्त्या प्रतिपादितया प्रमाणफलोपसहारकरणम् ।

३ **हेत्वर्थो नाम,**–यदन्यप्रस्तावोक्तमन्यत्रापि तथैवोपपद्यते । यथा ( हृ शा अ ३।२० )–"तत्रैकैक च शाखाया शत तस्मिन्न वेधयेत् । सिरा[5] जालन्धरा नाम तिस्रश्चाभ्यन्तराश्रिता ॥" इत्यादि । तथा (हृ शा अ ३।३४)–"अवेध्या सङ्कीर्णा ग्रथिता क्षुद्रा" इत्यादि । तदेतेभ्यो विशेषवचनेभ्योऽनुमीयते शेषा वेध्या इति । अन्यथैतानि वचासि निरर्थकानि स्युरिति ।

४ **पदार्थो नाम,**–पदेनार्थो गम्यते । यथा–द्रव्यमिति पदम्, तस्यार्थो भूजलादि । गुण इति पदम्, तस्यार्थो गुर्वादि ।

५ **प्रदेशो नाम,**–येषामर्थानामतिबहुत्वात् साकल्येनाभिधानस्याशक्यत्वात् स्तोकमुच्यते । यथोक्तम् ( हृ सू अ ५।८४ )–"इति द्रवैकदेशोऽय यथास्थूलमुदाहृत ।" इति ।

६ **उद्देशो नाम,**–सङ्क्षेपाभिधानम् । यथा ( हृ सू अ १।६ )–"वायु पित्त कफश्चेति त्रयो दोषा समासत ।" इत्यादि ।

७ **निर्देशो नाम,**–तस्यैव विस्तारोक्ति । यथोक्तम् ( हृ सू अ १।११ )–"तत्र रूक्षो लघु शीत खर सूक्ष्मश्चलोऽनिल ।" इति ।

८ **वाक्यशेषो नाम,**–यस्मिन् सूत्रे लाघविकेनार्थोऽगम्यमानमनुक्तपूरणार्थमध्याह्रियते[1] । यथा ( हृ शा अ ३।३ )–"तत्र खात् खानि देहेऽस्मिन्" 'भवन्ति' इति वाक्यशेष । "आप्या जिह्वारसक्लेदा" ( हृ शा अ. ३।४ ) इत्युत्तरत्र भवार्थे तद्धितश्रवणात् ।

९ **प्रयोजन नाम,**–यदर्थं शास्त्रादि प्रवर्तते । यथा ( हृ उ अ ४०।६४)–"आतङ्कपङ्कमग्नाना हस्तालम्बो भिषग्जितम् ।" इति । अनेन प्रयोजनेन चिकित्साशास्त्रमध्येयमित्यादि ।

१० **उपदेशो नाम,**–आप्तवचनम् । यथा ( हृ सू अ १७।२९ )–"स्नेहक्लिन्ना कोष्ठगा धातुगा वा स्रोतोलीना ये च शाखास्थिसस्था । दोषा स्वेदैस्ते द्रवीकृत्य कोष्ठ नीता सम्यक्शुद्धिभिर्निर्ह्रियन्ते ॥" इत्यादि ।

११ **अपदेशो नाम,**–यदाचार्य किञ्चिदर्थ प्रतिज्ञाय हेतुमुपदिशति । यथा ( हृ उ अ ४०।६४ )–"जीवितं म्रियमाणाना सर्वेषामेव नौषधात् ।" इति प्रतिज्ञाय हेतुमाह ( हृ उ अ ४०।६५ )-"न ह्युपायमपेक्षन्ते सर्वे रोगा" सर्वरोगाणामुपायापेक्षाभावात् ।

१२ **अतिदेशो नाम,**–यत् किञ्चिदेवार्थजातमुक्त्वाऽनुक्तार्थसाधनाय एवमन्यदपि प्रत्येतव्यमिति परिभाषाया स्थापयति । यथोक्तं कणरोगप्रतिषेधे ( हृ उ अ १८।४ )–"महत पञ्चमूलस्य काष्ठात् क्षौमेण वेष्टितात् । तैलसिक्तात्प्रदीप्ताग्रात् स्नेह सद्यो रुजापह ॥ योज्यश्चैव भद्रकाष्ठात् कुष्ठात् काष्ठाच्च सारलात् ।" इत्यादि ।

१३ **अर्थापत्तिर्नाम,**–योऽन्येनार्थेनोक्तेन ततोऽपरोऽप्यर्थो गदित इव ज्ञायते । यथा ( हृ सू अ ५।३१ )–"नैवाद्यान्निशि नैवोष्णम्" इत्युक्तम्, न तूक्त दिवा भुञ्जीतेति । एतच्चार्थापत्त्या गम्यते । [ ननु, ] क पुनरर्थ ? का चास्यापत्ति ? ब्रूम । दध्यभ्यवहारोऽर्थस्तत्र तन्त्रकृता 'नैवाद्यान्निशि' इति कालो निषिद्धो न तु दधिभक्षणम् । ततो योऽयमप्रतिषिद्धोऽर्थ , स आपद्यते दिवा दधिभोजनार्थं , रात्रिप्रतिषेधे दिनव्यतिरेकेण कालान्तराभावात् । सर्वथा अनभ्यवहरणीयस्याहारप्रस्तावे प्रतिषेधानुपपत्ते । एवमन्यत्रापि व्याख्येयम् ।

१४ **निर्णयो नाम,**–यन्निवारितस्यार्थस्य प्रतिष्ठापनम् । यथा ( हृ उ. अ ४०।६० )–"दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिण. ।" इत्यादिना चिकित्साशास्त्रफलं प्रति सशयकरणे पश्चान्निर्णयार्थमुक्तम्[3] । यथा ( हृ उ अ ४०।६३ )

१ 'रण नाम वाक्य' ट ड. । २ 'सर्वशास्त्र' ण । ३ 'सति हि त' ट.ड. । ४ 'निर्घाते' ट.ड. । ५ 'सिरा जालन्धरा' ट.ड. ।

१ 'नुक्त पूर' ट ण.त. । २ 'आद्याद्य स्नेहो रु' ट.ण त । ३ 'मुत्तरम् ।' ट.चन्द्र. ।

–"न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हति ।" इत्यादि ।

**१५ प्रसङ्गो नाम,**–पूर्वाभिहितस्यार्थस्य केनचित् सम्बन्धान्तरेण पुनरभिधानम् । यथोक्त सिराव्यधविधौ ( हृ सू अ २७।२ )–"लोहित प्रवदेच्छुद्ध तनोस्तेनैव च स्थिति ।" इत्युक्त्वा पुन शारीरे शुद्धार्तवप्रसङ्गेनोक्तम् ( हृ शा अ १। १ )–"शुद्धे शुक्रार्तवे सत्त्व स्वकर्मक्लेशचोदित । गर्भ सम्पद्यते युक्तिवशादग्निरिवारणौ ॥" इति । न च पुनरुक्तता तस्य । यस्मात् सिराव्यधे शरीरप्रभवत्वमेव रक्तस्योक्तम्, न तु क्रमो वर्णित । शारीरे तु ययाऽऽनुपूर्व्या शरीरहेतु स्यात् तद्विस्तरेणोक्तम् । यथा ( हृ शा अ १।२ )–"बीजात्मकैर्महाभूते सूक्ष्मै सत्त्वानुगैश्च स । मातुश्चाहाररसजै क्रमात् कुक्षौ विवर्धते ॥" इति ।

**१६ एकान्तो नाम,**–य एकमेव पक्षमव्यभिचारेण श्रयति मान्यम् । तद्यथा ( हृ सू अ ४।३१ )–"ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवा । रागद्वेषभयाद्याश्च ते स्युरागन्तवो गदा ॥" इति ।

**१७ नैकान्तो नाम,**–अन्यतरपक्षानवधारणात् । यथा ( हृ उ अ ४०।६४ )–"जीवित म्रियमाणाना सर्वेषामेव नौषधात् ।" एकान्तेन ( हृ उ अ ४०।६५ )–"न ह्युपायेमपेक्षन्ते सर्वे रोगा " इत्यादि ।

**१८ अपवर्गो नाम,**–साकल्येनोत्सृष्टस्य यत्पुनस्तदेकदेशापकर्षणम् । यथा ( हृ सू अ २७।४ )–"शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदा । सम्यक् साध्या न सिद्ध्यन्ति ते च रक्तप्रकोपजा ॥ तेषु स्रावयितु रक्तमुद्रिक्त व्यधयेत्सिराम् ।" इत्युत्सर्गमभिधाय एकदेशेऽपवाद वक्ति ( हृ सू अ २७।६ ) –"न तूनषोडशातीतसप्तत्यब्दस्रुतासृजाम् ।" इत्यादि ।

**१९ विपर्ययो नाम,**–यथोपदिष्टविपर्ययेण लक्षणादिकरणम् । यथोक्तम् ( हृ सू अ १६।३० )–"वातानुलोम्य दीप्तोऽग्निर्वर्च स्निग्धमसहतम् । स्नेहोद्वेग क्लम सम्यक् स्निग्धे, रूक्षे विपर्यय ॥" इति ।

**२० पूर्वपक्षो नाम,**–प्रतिज्ञातार्थसदूषणं वाक्यम् । यथा हिताहितविभाग प्रश्नाचिख्यासन्नाह । यथा ( हृ उ अ ४०। ६० )–"दृश्यन्ते भगवन् केचित्" इत्यारभ्य यावत् "हिताहितविभागस्य फल तस्मादनिश्चितम् ।" इत्यादि ।

**२१ विधानं नाम,**–यत्प्रकरणानुपूर्व विधानमीक्ष्यते[५] ।

**२२ अनुमतं नाम,** (हृ सू अ ९–१०)–"उष्ण शीत द्विधैवान्ये वीर्यमाचक्षतेऽपि च । नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ॥" इत्यादिना ह्यनुमतम्, न विघात· कृत ।

**२३ व्याख्यानं नाम,**–यन्मादृशेभ्यो विशिष्टतरबुद्धिगम्यम् । यथा ( हृ शा अ १।३७ )–"सप्ताहात् कललीभवेत् ।" (हृ. शा अ १।४९ )–"द्वितीये मासि कललात् घन पेश्यथवार्बुदम् । पुस्त्रीक्लीबा क्रमात्" इति । न ह्यत्र गर्भस्यावर्तमाना भावा शक्या विज्ञातु योगिदृष्टि मुक्त्वा ।

**२४ संशयो नाम,**–साकाङ्क्षत्वमनिश्चितवस्तुविज्ञानम् । यथा ( हृ शा अ ५।१२८ )–"सशय प्राप्तमात्रेयो जीवित तस्य मन्यते ।" इत्यादि ।

**२५ अतीतापेक्षण नाम,**–यदतिक्रान्तमपेक्ष्य प्रस्तुतस्य साधनमुच्यते । यथोक्त हृद्रोगचिकित्सिते ( हृ चि अ ६। ३९ )–"रास्नाजीवक" इत्यादि यावत् "महास्नेह विपाचयेत् ॥" इति । अत्र च न ज्ञायते कतमो महास्नेह इति । तदेतदतिक्रान्तमपेक्ष्य प्रसाध्यते स्नेहविधियुक्तम्[१] । यथा ( हृ सू अ १६।४ )–"द्वाभ्या त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ।" इत्यपेक्ष्य व्याख्यायते[२] ।

**२६ [अनागतापेक्षा नाम,–]** .... ........ ....

**२७ स्वसंज्ञा नाम,**–या तन्त्रकारै स्वतन्त्रसव्यवहारार्थ प्रणीता सती परतन्त्रेषु न व्यवहरति । यथा ( हृ सू अ १२। ४४ )–"शाखा रक्तादयस्त्वक् च" इति ।

**२८ ऊह्य नाम,**–यदप्रतिबद्ध ग्रन्थे स्वय प्रज्ञया तर्कयित्वा[३] योज्यम् । यथोक्तम् ( हृ सू अ १५।४६ )–"त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभत । युञ्ज्यात्तद्विधमन्यच्च द्रव्य जह्यादयौगिकम् ॥" [ इति ।]

**२९ समुच्चयो नाम,**–यथा ( हृ सू अ १८।२९ )– "पेया विलेपीमकृतं कृत च यूषं रस" च समुच्चिनोति, तथा– "त्रीनुभय तथैकम् । क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्ध ॥" इति ।

**३० निदर्शनं नाम,**–यन्निदर्शयितव्यं सूक्ष्ममप्यर्थ स्वबमैसादृश्यात् स्पष्टीकरोत्यादर्श इव मुखविधुम् । यथोक्तम् ( हृ सू अ १९।८४ )–"यथा कुसुम्भादियुतात्तोयाद्राग हरेत्पट. । तथा द्रवीकृताद्देहाद्वस्तिर्निर्हरते मलान् ॥" इत्यादि ।

**३१ निर्वचनं नाम,**–निर्णयार्थ वचन निरुक्तम् । यथोक्त विषविधाने ( हृ उ अ ३५।१ )–"मथ्यमाने जलनिधावमृतार्थ सुरासुरै ।" यावत् "जगद्विषण्ण त दृष्ट्वा तेनासौ विषसज्ञित ॥" इति । विषस्य निर्वचन जगद्विषदनाद्विषमिति ।

**३२ नियोगो नाम,**–यो यस्यानुष्ठेय । यथा ( हृ सू अ १६।२६ )–"उष्णोदकोपचारी स्यात्" इत्यादि ।

**३३ विकल्पो नाम,**–विविधं कल्पनम्, इद कार्यमिद[४] वा

१ 'हितार्थस्य' ट । २ 'शनोदित.' ट । ३ 'प्रतिचि' ट । 'प्रतिविख्या' ण त. । ४ 'माचक्ष्व' ट त । 'नमवे' ण । ५ अस्याग्रे "वृथैव परिमोचित स्थलमिद च मूढात्मना ।" इति कचिदधिक. पाठ. ।

१ 'स्नेहैर्विपा' ट ण त । २ अस्याग्रे यथाक्रम वर्ण्यमान अनागतापेक्षाया व्याख्यान लिखितमुद्रितेषु केषुचिदपि हृदयटीकापुस्तकेषु नोपलभ्यते । किन्त्वत्र "तथैनदपि चिन्तयेन्मनसि गूढबुद्ध्या ।" इति पाठ. क्वचित् दृश्यते । ३ 'सामर्थ्यात्' ट. । ४ 'मिदमकार्य च ।' ट ।

कार्यम्। यथोक्त पूर्वरूपदर्शने ज्वरादौ [ वा ] हित लध्वशनमपतर्पण वा ।

**३४ प्रत्युत्सारो नाम,**–यत्रोपपत्तिं दर्शयन्त परस्परमतानि निवारयन्ति । तद्यथा ( हृ शा अ ३।१६ )–"अस्था शतानि षष्ठिश्च त्रीणि दन्तनखै सह । धन्वन्तरिस्तु त्रीण्याह, सन्धीना च शतद्वयम् ॥ दशोत्तर, सहस्रे द्वे निजगाद त्रिनन्दन ।" इति पूर्वमतात् षष्टि प्रत्युत्सारयति । धन्वन्तरेरपि मत दशोत्तर सन्धिशतद्वयमिति पुनर्वसु प्रत्युत्सारयति सन्धिसहस्रद्वय सा त्रयन्।

**३५ उद्धारो नाम,**–शास्त्रारम्भप्रत्याख्यानादिचोद्यस्य समाधानम्। तद्यथा ( हृ उ अ ४०।६० )–"दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिण ।" यावत् "हिताहितविभागस्य फल तस्मादनिश्चितम् ।" इति कृते चोद्ये ( हृ उ अ ४०।६३ )–"न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हति ।" इति परिहार ।

**३६ सम्भवो नाम,**–उपपत्तिर्यस्मिन्नुपपद्यते अनुपदिष्टे । यथा ( हृ सू अ २६।४७ )–"दुष्टरक्तापगमनात् सद्यो रागरुजा शम ।" इत्युक्तम् । प्रच्छानालाबुजलौकाशृङ्गसिराव्यधैर्यथासम्भव रक्तमपनीयते । यथोक्तम् ( हृ सू अ २६।५३ )–"प्रच्छानेनैकदेशस्थ ग्रथित जलजन्मभि । हरेच्छृङ्गादिभि सुप्तमसृग्व्यापि सिराव्यधै ॥" इति। एवमन्यत्रापि सम्भवार्थो योज्य ।

व्याख्या अपि तन्त्रस्य गुण । ताभिरपि तन्त्रमलङ्क्रियते । ताश्च पञ्चदशप्रकारा । तद्यथा,–पिण्डपदपदार्थाधिकरणप्रकरणार्थकृच्छ्रफलोचितकन्यासप्रयोजनानुलोमप्रतिलोमातिसूत्रसमस्तव्याख्या ।

तत्र **१ पिण्डव्याख्या नाम,**–सङ्क्षेपतया सूत्ररूपेणाव्यायादीना व्याख्या । यथा ( हृ शा अ ५।४ )–"रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु । अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्तत ॥ विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ।" इत्यनेन सूत्रेण सकलरिष्टाध्यायसमास उक्त ।

**२ पदव्याख्या नाम,**–यत्पदाना छेद कृत्वोच्चारणम् । यथा ( हृ सू अ १ )–"अथ अत आयुष्कामीयं अध्याय वि आ ख्यास्याम ।" इति सप्तपद सूत्र पूर्व व्याख्यातम् ।

**३ पदार्थव्याख्या नाम,**–तेषामेव पदाना विवरणम् । यथा–अथशब्द आनन्तर्ये अधिकारे वा, अत शब्दो हेतावित्यादि ।

**४ अधिकरणव्याख्या नाम,**–यद्वस्तुप्रकृतमारभ्य तदनुषङ्गेण व्याख्यानमारभ्यते । यथा ( हृ सू अ २ )–"अथातो दिनचर्याध्याय व्याख्यास्याम ।" इति प्रस्तुत्य "ब्राह्मे मुहूर्ते उत्तिष्ठेत्स्वस्थो रक्षार्थमायुष ।" इत्यादिना सैव दिनचर्या विवृत्य व्याख्यायते सविस्तरा ।

**५ प्रकरणव्याख्या नाम,**–यस्मिन्नर्थे सूत्रे वा प्रकृतेनाप्रकृत साध्यते, यथा–त्रिलवणाद्ये चूर्णे गुणानुक्त्वाऽभयाख्ये एवमाह 'समान पूर्वेण' इति । तत्र समानगुणता व्याख्याता ।

**६ अर्थव्याख्या नाम,**–यत्र प्रकरणे सूत्रे वा स्वभावस्योपवर्णन क्रियते । तद्यथा,–प्रकृतिरुच्यते स्वभाव । स पुनराहारौषधद्रव्याणा स्वाभाविको गुर्वादिगुणयोग । तद्यथा,–मापमुद्गयो सूकरैणयोश्च ।

**७ कृच्छ्रव्याख्या नाम,**–यत्र लेशत उक्तानामविस्पष्टाना प्रकरणे सूत्रे वा अर्थाना यत्नत उद्भावन क्रियते । तद्यथा ( हृ सू अ २।३० )–"अनुयायात्प्रतिपद सर्वधर्मेषु म यमाम् ।" इति लेशतो ब्रुवाण शास्त्रकार सर्वेषु हेतुलिङ्गौषधादिषु मध्यमा प्रतिपदाश्रयणीयेति सूचयति ।

**८ फलव्याख्या नाम,**–यत्र वस्तुनि बहुष्वनिश्चितार्थेष्वेकीयमतेषु प्रस्तुतेषु वस्तुसारभूत स्वमत स्वमर्थमुपनिक्षिप्यैकीयमतानि तस्मिन्नेव स्वमतेऽन्तर्भाव नयति । यथा–निरूहमात्रापुटकादिष्वियत्ताया साध्याया च निश्चितानि महर्षिभिर्बहूनि मतानि प्रशस्तानि । यथा–"द्वादशप्रसृतो निरूह कार्य" इत्येके। "मात्रा त्रिपलिका कुर्यात् स्नेहमाक्षिकयो पृथक् ।" ( हृ सू अ १९।४४ ) इत्याद्यन्ये। तदेतानि मतानि दोषौषधबलापेक्षया स्वमतान्तर्भावितानि प्रमाणानि च । यथोक्तम् ( हृ सू अ १९।६२ )–"दोषौषधादिबलत सर्वमेतत्प्रमाणयेत् ।" अन्योन्यविरुद्धमपि "सम्यङ्निरूढलिङ्ग तु नासम्भाव्य निवर्तयेत् ॥" इति ।

**९ उचितकव्याख्या नाम,**–यस्मिन् सूत्रे निदर्शनभूतान्युदाहरणानि तन्त्रान्त समाकृष्यार्थ शस्यते । यथा–पृथिव्यादिषु च महाभूतसञ्ज्ञा स्थापिता, रसादिषु च धातुसञ्ज्ञा निवेशिता । "रसासृङ्मांसमेदोस्थिमज्जशुक्राणि धातव ।" ( हृ. सू अ १।१३ ) इति । पुनरुच्यते ( हृ शा अ ३।६५ )–"परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा ।" इति । अत्र किं धातोर्ग्रहणेन भूतान्यपि धातुशब्दवाच्यानि भवन्ति ? इति ।

**१० न्यासव्याख्या नाम,**–यस्मिन्नधिकारे वर्तमाने तेनाधिकारणार्थेन सहित सम्बन्धमभिवीक्ष्यान्यस्यार्थो विनिक्षिप्यते । यथा ( हृ उ अ ४०।६० )–"दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिण ।" इति हिताहितविभागस्य फलं प्रति संशयमभिवीक्ष्य "न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हति ।" ( हृ उ. अ ४०।६३ ) इत्यादिना उत्तरं दत्त्वा तेनैव प्रसङ्गेनान्योऽर्थो निक्षिप्यते । यथा ( हृ. उ अ. ४०। ७५ )–"एतत्तदमृत साक्षाज्जगदायासवर्जितम् । याति हाला-

१ 'षष्टीनि' ट ण त । २ 'प्रच्छन्नाला' ट त. । ३ 'काज शृङ्ग' ण त । ४ 'प्रच्छन्नेनैक' ट.त. । ५ 'तदिह' ट.ण.त. । ६ 'कृतिमा' ट ड ।

१ 'विस्फुटाना' ट. । २ 'श्चितस्वादर्थे' ट.ड. । ३ 'भूत स्वमर्थ' ट ड । ४ 'समर्थ' ण । ५ 'षधानां बला' ट.ड. । ६ 'मतेऽन्तर्भा' ण त । ७ 'उचितव्याख्या' ट ड । ८ 'तत्रान्तरत' ट । ९ 'स्तम्भा धातु' ड. । १० 'धिकारेणार्थेन' ट.ड । ११ 'गत्यायास' ट ण.त. ।

हलत्व तु सद्यो दुर्भोजनस्थितम् ॥" इति । एवमन्येषामप्यर्थाना सम्बन्धमवधार्य व्याख्याऽर्थाहा कल्पनीया ।

**११ प्रयोजनव्याख्या नाम,**–यत्सूत्रमभिधीयमान स्वार्थस्य निष्पत्तौ निमित्तभावमुपैति । यथा–उक्तोऽङ्गविभागेऽनेकधा सिराविस्तर । न च तेन सिराविस्तरेणोक्तेन किञ्चिदिहोपकारो दृश्यते । यदि प्रकरणावसरे प्रयोजनमिद ब्रूयात् "इत्यवेध्यविभागार्थं प्रत्यङ्ग वर्णिता सिरा ।" ( हृ शा अ ३।३३ ) एतदर्थ सिराविवरण प्रवृत्तम् । कश्चिदय वैद्यो वेध्यावेध्यविभाग सिराणा जानीयादिति ।

**१२ आनुलोम्यं नाम,**–येन ..... .... ...

तत्र १–२ **प्रधानकल्पना** द्विधा,–प्रधानस्य कल्पना प्रधानेन वा कल्पना प्रधानकल्पना । **प्रधानस्य कल्पना** यथा–सर्पि स्नेहनम्, क्षीर जीवनम्, मधु सन्धानकृत्, इत्यत्र मध्ये प्रकृष्टगुणत्वात् सर्पि क्षीरे स्नेहनजीवने कल्प्येते, न तु तैलतोयादिष्वपि स्नेहनजीवनत्व नास्तीति । माक्षिक च सन्धाने प्रधानत्वात् सन्धानकृदित्युक्तम्, न तु सिक्थकमधुयष्टिकादिष्वपि सन्धानकृत्त्व नास्तीति । **प्रधानेन तु कल्पना** यथा–क्षीरदधितक्रमस्तुनवनीतक्षीरघृतपुराणघृतकिलाटपीयूपकूचीकामोरणादिवर्ग सर्व क्षीरवर्ग इत्युक्त, क्षीरप्राधान्यात् । प्रधानेन कल्पनाव्यपदेश इत्येकोऽर्थ ।

**३ गुणकल्पना नाम,**–येन धर्मेणोपेतोऽर्थ प्रयुज्यमान समर्थो भवति, तेन धर्मेण युक्तस्य तस्यासावगुणोऽपि गुर्वादिष्वपाठाद्गुण इति कल्प्यते । यथोक्तम् ( हृ सू. अ १।२६ )–"भिषक् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् । चिकित्सितस्य निर्दिष्ट प्रत्येकं तच्चतुर्गुणम् ॥" इत्यादि । दक्षत्वादिचतुर्गुणनिर्देश सर्वथा प्रशसागुण इति गम्यते ।

**४ लेशकल्पना नाम,**–अनुपदिष्टस्य विधे कण्ठपाठेन यत्किञ्चित्सूत्रावयवान्तरमाश्रित्यार्थ कल्प्यते । यथा–नात्र शास्त्रे कालमृत्योरकालमृत्योर्वा किञ्चिल्लक्षण प्रणीतम् । तत्तु लेशतोऽनुमीयते । कथमिति, यदा हि कालनियतमायु क्षय प्राप्त भवति, तदा रिष्टमुत्पद्यते, न विषमापरिहारेण म्रियमाणे नरे । उक्त हि ( हृ शा. अ ५।६० )–"भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये । वशगा सर्व एवैते विज्ञेया समवर्तिन ॥" इति । अत्र विकृतिविज्ञानीये गुरुमित्रद्विषश्चेति[10] चशब्दोऽस्माच्छ्लोकात् पूर्वकाणि यानि चोत्तराणि तानि सर्वाण्येव समुच्चिनोति । समवर्ती हि कालो मृत्युरिष्ट, इतरस्त्वसमवर्ती । अत एव चाचष्टे तन्त्रान्तरे–"कालमृत्योरेव रिष्टानि नाकालमृत्यो ।" इति स्वाभिप्रायप्रकाशनार्थ तन्त्रकार शकटोदाहरण दत्तवान् । यथा–सम एव वाह्यमान स्वप्रमाणक्षये भङ्गपूर्वरूपाण्याप्नोति । तथा नियतायुष स्वप्रमाणक्षये रिष्टसम्भव । यथा च–स एवातिभारक्रान्तत्वाद्विषमपथाश्रितत्वादकालेऽपि क्षयमाप्नोति । तथा अनियतायुषो रिष्टोत्पत्तिमन्तरेण मृत्यु । यदि पुनरनियतायुषोऽपि रिष्टोत्पत्तिपूर्व मरण कल्प्येत, तदा वार्षिके षाण्मासिके वाऽरिष्टे समुत्पन्ने शुभहेतुयोगान्न मृत्यु स्यात् । अनियतायुषो हि सम्यगुपचाराज्जीवितानुवृत्ति । विषमहेत्वपरिहारान्मृत्यु । अत एवानियतायुषमधिकृत्य रसायनान्युपदिष्टानि । तद्योगादय बहून्यपि वर्षाणि जीवेत् । नियतायुषस्तु कालमृत्युवर्षशतात् परेण जीवित न निर्दिष्टम् । यथोक्त शारीरे ( हृ शा अ ५।१३२ )–"मरण प्राणिना दृष्टमायु पुण्योभयक्षयात् । तयोरप्यक्षयाद दृष्ट विषमापरिहारिणाम् ॥" इति । तस्मादविशेषोक्तावपि नियतायुष एवारिष्टोत्पत्तिपूर्व मरणमिति निश्चितम् । तथा च "ऋतुचर्याध्याय व्याख्यास्याम ।" ( हृ. सू. अ ३ ) इति प्रतिज्ञाया षड्ऋतुविशेषे प्रतिपत्तिर्भवति । न तु "ऋतुस्तु द्वादश निशा" ( हृ शा अ १।२६ ) अस्य ऋतोरिति ।

**५ विद्याकल्पना नाम,**–यथा सर्वविद्यानुगतार्थनिर्देशे शास्त्रकारस्य सर्वविद्यास्थानानुप्रवेश इह शास्त्रे हित इति वचनाद्विनाऽपीष्यते । तत्र "आर्द्रसन्तानता त्याग" ( हृ सू अ २। ४५ ) इत्यादिना वाक्येन बुद्धिवचनविषय अध्यात्मविद्यामङ्गह इड्यते । "अर्चयेद्देवगोविप्र" ( हृ सू अ २।२३ ) इत्यादिना धर्मशास्त्रोपदेशसङ्ग्रह । तथा "जगद्विपण्ण त दृष्ट्वा तेनासो विषसञ्ज्ञित ।" ( हृ उ अ ३५।२ ) इत्यादिना पदव्युत्पादनान्निरुक्तकरणाच्च शब्दविद्याया निरुक्तेश्चोपसङ्ग्रह । "सावकेऽहनि" ( हृ शा अ १। ७३ ) सूतिका गृह प्रवेशयेत् । तथा–"भरणीकृत्तिकाश्लेषापूर्वाद्रापितृनैर्ऋते ।" इति ज्योतिशास्त्रोपरोध । विचित्रभूपितशास्त्रस्योत्प्रेक्षणीयम् ।

**६ भक्ष्यकल्पना नाम,**–"एतत्तदमृत साक्षात्" ( हृ उ अ ४०।७५ ) इत्यादि ।

**७ आज्ञाकल्पना नाम,**–यस्यानुष्ठाने हेतु सम्यगवन्तु न शक्य, केवलमाप्तवचन प्रमाणीकृत्यानुष्ठीयते । यथा–"न छिन्द्यात्तृणम्, न भुव लिखेत् ।" इति । न ह्यत्र हेतुर्वक्तु शक्यते, एतदनुष्ठेयमिति ।

इय सप्तविधा कल्पना विशत्याश्रया भवति । यथा–१ आदिलोप, २ मध्यलोप, ३ अन्तलोप, ४ उभयपदलोप, ५ आदिमध्यान्तलोप, ६ वर्णोपजननम्, ७ ऋपिक्लिष्टम्, ८ तन्त्रशीलम्, ९ तन्त्रसञ्ज्ञा, १० प्राकृतम्, ११ समानतन्त्रप्रत्यय, १२ परतन्त्रप्रत्यय, १३ हेतुहेतुकधर्म, १४ कार्य-

१ 'च' ण. । 'हि' ड. । २ 'ख्याऽर्हा' ट ड । ३ 'रण प्रयुक्त प्रवृ' ट ड. । ४ अस्याग्रे यथाक्रम वर्ण्यमानोऽनुलोमप्रतिलोमातिसूत्रसमस्तव्याख्यादीनां विवरणात्मको ग्रन्थो लिखितमुद्रितेषु केषुचिदपि हृदयटीकापुस्तकेषु नोपलभ्यते । ५ 'न्धानप्रधा' ट.ड.ण. । ६ 'ण प्रयुक्तस्तथाऽसाव' ट.ड । ७ 'त्वादिगुण' ण.त. । ८ 'भवतीति' ट.ड. । ९ 'माणेन ।' ट ड. । १० 'ति योऽय च' ण.त ।

१ 'सङ्कटो' ड. । 'सङ्कटेनोदा' ट ण त । २ 'समय एव' ट । ३ 'शुभयोगहेतुत्वान्न' ट. । ४ 'काले मृत्युर्वर्षे' ट. । ५ 'प्यक्षये' ट । ६ 'विभवकल्पना' ण त. । ७ 'शास्त्रेऽभिहित' ट । ८ 'शक्यते' ट. । ९ 'आदिपदलोप' ट. । १० 'शीली' ट.ड ।

कारणधर्म, १५ आद्यन्तविपर्यय, १६ शब्दान्तरम्, १७ प्रत्यय, १८ उपनय, १९ सम्भव, २० विभव, [ इति । ]

तत्र १ **आदिलोपो [ नाम ]**,–यथा ( हृ सू अ ६।३२)–"बृंहण प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रस ।" इत्यत्र मासशब्दलोपेन । तथा च (हृ नि अ १।१४)–"धारणोदीरण-निशा" इत्यादौ धारण–वेगधारणम्, उदीरण–वेगोदीरणमिति ।

२ **मध्यलोपो [ नाम ]**,–यथा (हृ सू अ ५)–"द्रवद्रव्य-विज्ञानीयमध्याय व्याख्यास्याम ।" इत्यत्र द्रवद्रव्यस्वरूप-विज्ञानीयो द्रवद्रव्यविज्ञानीय इत्युक्त, अनन्तर "अन्नस्वरूप-विज्ञानीय" ( हृ सू अ ६ ) इत्यत्र स्वरूपशब्दश्रवणात् ।

३ **अन्तलोपो नाम**,–यथा ( हृ शा अ ३।३७ )–"कफ पुन । गोर्थ स्निग्धा शिरा शीता वहन्ते" इत्यत्रास्रश-ब्दस्य लोपो द्रष्टव्य, पूर्वत्रास्रशब्दस्य प्रकृतत्वात् । यथोक्तम् ( हृ शा अ ३।३६ )–"तत्र श्यावारुणा सूक्ष्मा पूर्णरिक्ता क्षणात् सिरा । प्रस्पन्दिन्यश्च वातास्रम्" इति । एवमिहापि कफास्र वहन्त इत्यनुमेयम्, तुल्यजातीयत्वात् ।

४ **उभयपदलोपो [नाम]**,–यथा (हृ शा अ ३।५७)–"आदौ षड्समप्यन्न मधुरीभूतमीरयेत् ।" इति वचने 'मध्ये' "विदाहादम्लता तत ॥ पित्तमामाशयात्कुर्याच्च्यवमान च्युत पुन ।" 'अन्ते' "अग्निना शोषित पक्व पिण्डित कटु मारुतम् ॥" इति । आदिशब्दश्रवणात् मध्यान्तशब्दावत्र लुप्तनिर्दिष्टौ द्रष्टव्यौ ।

५ **आदिमध्यान्तलोपो [ नाम ]**,–यथा ( हृ शा अ ३।५५)–"अन्न कालेऽभ्यवहृत" आदौ, "कोष्ठ प्राणानि-लाहृतम् ।" मध्ये, अन्ते च "द्रवै" इत्यादि ।

६ **वर्णोपजननं नाम**,–यत्रानुक्तो ग्रन्थे वर्ण आचार्येण पश्चाद् व्याख्याकाल उपजन्यार्थोऽभिधीयते । [ यथा ] ( हृ शा अ ३।३ )–"तत्र खात्खानि देहेऽस्मिन् श्रोत्र शब्दो विविक्तता ।" तथा–"वातात्स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तय ॥" 'भवन्ति' इति वर्णत्रयमुपजन्य व्याख्या करणीया । "आप्या जिह्वारसक्लेदा घ्राणगन्धास्थि पार्थिवम् ।" इति द्वयोर्भूतयो र्भवार्थे तद्धितप्रत्ययश्रवणात् । वाक्यशेषोऽप्ययमेवप्राय एव ।

७ **ऋषिक्लिष्टं नाम**,–यदृषी ऋषिपुत्रो वाऽसमाहितचित्ततयाऽशक्त्या वा किञ्चित्पदजातम्(जातं)भ्रष्टमुच्चारितवान् तथैव तल्लोके प्रयुज्यते । यथा–'रोम लोम' इत्यादि ।

८ **तन्त्रशीलं नाम**,–या तन्त्रकाराणा प्रकृति स्वभाव इत्यर्थ । यथा–किञ्चिच्छिष्यानुग्रहार्थं विस्तीर्णं सङ्क्षिपन्ति, यथा ( हृ शा अ ३।१६ )–"अस्थ्ना शतानि षष्टिश्च त्रीणि दन्त नखैः सह ।" इति न तान्यङ्गुलिहस्तपादमणिबन्धादिविभागेन विस्तारितानि । किञ्चिद्विस्तारयन्ति, यथा–तत्रैवाङ्गविभागे सिरा विस्तारिता ( हृ शा अ ३।३३ )–"इत्यवेध्यविभागार्थं प्रत्यङ्ग वर्णिता सिरा ।" इति वचनादिति ।

९ **तन्त्रसंज्ञा नाम**,–यत्कस्मिंश्चिदर्थे मध्ये व्याख्यायमाने स्वतन्त्रसिद्धोदाहरण तत्प्रमाणार्थमुच्यते । यथा–नवज्वरे कषाया अपक्वेषु दोषेषु वर्जनीया उक्ता, ( हृ चि अ १।३९ )–"तत पक्वेषु दोषेषु लङ्घनाद्यै प्रशस्यते । कषायो दोषशेषस्य पाचन शमनोऽथवा ॥" इति विशेषवचनात्तत्र स्वरसादे पञ्च-विधस्य कषायस्य प्रतिषेध प्रसक्त । तत स्वतन्त्रसञ्ज्ञया विशेष प्रतिषिध्यते ( हृ चि अ १।४० )–"तिक्त पित्ते विशेषेण प्रयोज्य, कटुक कफे ।" इत्यादि । तस्मात् स्वतन्त्र-सञ्ज्ञया तिक्तकटुकषायौ निषिद्धौ पञ्चविधया स्वरसादिकल्पनया ।

१० **प्राकृतं नाम**,–"ऊषकस्तुत्थकं हिङ्गु कासीसद्वयसैन्ध-वम् ।" ( हृ सू अ १५।२३ ) इत्यौषधाधिकारात् सैन्धव-लवणम्, न त्वश्वादिकम् ।

११ **समानतन्त्रप्रत्ययो नाम**,–यत्साध्यस्य कस्यचिद-र्थस्य साधनायानुपलभ्यमाने स्वतन्त्रात् प्रत्यये समानेभ्यस्त-न्त्रेभ्य प्रत्यय इति । उदाहरण यथा ( हृ सू अ. २।३१ )–"नीचलोमनखश्मश्रु" इत्याचारेषूक्तम् । इयद्भिरियद्भिर्दिनै-केशनखश्मश्रूण्यवतार्य नीचलोमादिना भवितव्यमिति नोक्तम् । ततो व्याख्याकारा क्षारपाणिप्रभृतय प्रसिद्ध्या दशरात्रेण केशादीना संहरणमिति निश्चिन्वन्ति । मुनिस्त्ववादीत् ( च सू अ ८।१८ )–"त्रि पक्षस्य केशश्मश्रुलोमनखान् संहारयेत् ।" इति ।

१२ **परतन्त्रप्रत्ययो नाम**,–यस्यार्थस्य प्रसिद्धितो न स्वकीयमुदाहरण शक्यमभिधातु नाप्यन्येभ्यो भिषक्तन्त्रेभ्य । ततस्तस्मिन् द्वये परतन्त्रादुदाहरण कल्प्यते । यथा ( हृ सू अ १।१९)–"कालार्थकर्मणा योगो हीनमिथ्यातिमात्रक । सम्य-ग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥" इत्युक्तम् । योगस्य च लक्षण नोक्त तन्त्रे अन्यत्र वा भिषक्कृतन्त्रे । तत्र बौद्धतन्त्र-प्रत्ययेन निश्चीयते–"स्वहेतुभ्य शीतोष्णादिलक्षणेन कालस्यो-त्पत्तिरेव योग ।" इति ।

१३ **हेतुहेतुकधर्मो नाम**,–यो हेतुहेतुकेन धर्मो ज्ञायते । यथा–पित्तातिसारिण पित्तलातिसेवनात् पित्तमुद्रिक्त रक्ताति-साराय न चिरादस्य भविष्यतीत्यनुमीयते, समर्थस्य हेतो स्वकार्यस्याव्यभिचारात् ।

१४ **कार्यकारणधर्मो नाम**,–यत्र कार्यसञ्ज्ञया कारणं निर्दिश्यते कारणसञ्ज्ञया वा कार्य, तत्र कार्यसञ्ज्ञया तावत्कारण निर्दिश्यते । यथा–दोषा अपि रोगशब्द लभन्ते । तत्र दोषा कारणम्, "सर्वेषामेव रोगाणा निदान कुपिता मला ।" ( हृ नि अ १।१२ ) इति वचनात् । स चेदानी दोषो रोग इति व्यपदिश्यमान कारणे दोषे कार्य रोग उपचरितो भवति । एवं कार्य कारणसञ्ज्ञया निर्दिश्यते ।

१ 'मध्यमपदलोपो' ट । २ 'तमय भ्रष्ट' ट । ३ 'रित तथै' ट ड ण त । ४ 'शीली' ट ड. । ५ 'षष्टीनि' ड ण त । ६ 'पाणिबन्धा' ड.ण त. । ७ 'वचनात् ।' ट. ।

१ 'न हयवस्त्रादिकम्' ट.ड । २ 'स्वतन्त्राप्रत्यये' ण त । ३ 'निप्रसि' ड ण.त । ४ 'सिद्धा द' ड. । ५ 'सहरेत्' ण त. । ६ 'योगा० त्रका' ण.त. । ७ 'त्युक्तयोगस्य ल' ड. ।

१५ **आद्यन्तविपर्ययो नाम,**–यथा–अन्नस्वरूपविज्ञान ग्रासमुज्झित्वा पानमेव प्रथममुक्त द्रवद्रव्यविज्ञान कुर्वता, तोयादीना पश्चाना वर्गाणामत्पवक्तव्यत्वात् । समुद्रोपमतया शास्त्रस्यानुपूर्वसुखावगाहनार्थम्, पूर्व ह्यल्प सुखेनावगाह्यते पश्चाद्प्रभूतमिति न्यायात् ।

१६ **शब्दान्यत्वं नाम,**–यदर्थं पर्यायशब्द वर्णयन्ति शास्त्रकृत । यथा ( हृ नि अ १।१ )–"रोग पाप्मा ज्वरो व्याधिर्विकारो दु खमामय । यक्ष्मातङ्कगदाबाधा शब्दा पर्यायवाचिन ॥" इत्यादि ।

१७ **प्रत्ययधर्मौ नाम,**–यो न च हेतुर्हेतुधर्मोपपत्तिमात्रेण च केनचिद्धेतुत्वेन व्यपदिश्यते । यथा–देवदानवगन्धर्वाद्युन्मादापस्मारादिविचित्रग्रहविकारा उक्ता । यथोक्तम् ( हृ उ अ ४।१३ )–"फुल्लपद्मोपममुख सौम्यदृष्टिमकोपनम् ।" यावत् "अनिद्रमप्रधृष्य च विद्याद्देववशीकृतम् ॥" इत्यादि । न चैते परमार्थतो हेतव , किं तर्हि ? प्रज्ञापराध । तथा चोक्तम् ( हृ उ अ ४।३ )–"हेतुस्तदनुषक्तो तु सद्य पूर्वकृतोऽथवा । प्रज्ञापराध सुतराम्" इति ।

१८ **उपनयो नाम,**–सूत्रहेतुप्रस्तावेन यत्रान्यत्प्रकरणमुपनीयते । यथा–मात्राशितीये आहारमात्रालक्षणप्रस्तावे अति मात्रभोजननिमित्ताया विसूचिकायाश्चिकित्सा उपनीता । मात्राया हि विभज्यमानायामवश्यमूनातिमात्रेऽपि विभजनीये तदपेक्षया मात्राया सम्यक् प्रतिपादनसौकर्यात् तत्प्रस्तावेन च विसूचिकायाश्चिकित्सा ।

१९ **सम्भवो नाम,**–यत्सूत्रं प्रकरणं वा विधीयमानमर्थस्य व्यापकत्वात् सकलेन शास्त्रेण व्याख्यायते । यथा ( हृ सू अ १।५ )–"कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषान् । अष्टावङ्गानि तस्याहुश्चिकित्सा येषु सश्रिता ॥" इति । एतान्यष्टावङ्गानि सकलेन शास्त्रेणोपदिश्यन्त इत्याचार्य प्रतिजानीते ।

२० भङ्ग्या ' **विभवकल्पनाया**श्चास्याय विशेषं । अय व्याख्याया विभवो भवति । स तु विनेव व्याख्याया पठ्यमान एवेति ।

सप्तदश ताच्छील्यादी[ नी ]त्युक्तम् । तद्यथा–१ ताच्छील्यम्, २ अवयव, ३ विकार, ४ सामीप्यम्, ५ भूयस्त्वम्, ६ प्रकार, ७ गुणिगुणविभव, ८ ससक्तता, ९ तद्धर्मता, १० स्थानम्, ११ तादर्थ्यम्, १२ साहचर्यम्, १३ कर्म, १४ गुणनिमित्तता, १५ चेष्टानिमित्तता, १६ मूलसज्ञा, १७ तात्स्थ्यम्, इति ।

तत्र १ **ताच्छील्यं नाम,**–यत्केनचिदेव धर्मसादृश्येन युक्तो भावस्ताच्छील्यमुच्यते । यथा ( हृ नि अ १५।१५ )–"सर्वाङ्गसश्रयस्तोदभेदस्फुरणभञ्जनम् । स्तम्भनाक्षेपणस्वापसन्ध्याकुञ्चनकम्पनम् ॥ कुपितोऽनिल करोति ।" इत्यन्ते न चाङ्गानि स्वपन्ति । किं तर्हि ? देवदत्त स्वपिति । तद्धर्मसादृश्यादङ्गानि स्वापशब्देनोच्यन्ते । तद्यथा–"पुरुष सुप्तो न किञ्चिद्वेदयते । न चेतयते । तथाऽङ्गमपि यत्किञ्चिन्न वेदयते नखतोदादि । तत्सुप्तमिव सुप्तमित्युच्यते ।" [ इति । ]

२ **अवयवो नाम,**–यत्रैकदेशोदाहरणे क्रियमाणेऽनुक्तोऽन्योऽपि तज्जातीयकोऽर्थो लभ्यते । यथा ( हृ चि अ १।३ ) –"लङ्घनै क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति । स्वास्थ्यं क्षुत्तृड्रुचि पक्तिर्बलमोजश्च जायते ॥" इत्यनेनैकदेशोदाहरणेन लङ्घनेन दोषक्षपणेन लाघवे सति स्वास्थ्याद्युत्पत्ति । तत्प्रतिपक्षेण त्वलङ्घनेन दोषक्षपणे न जाते सत्यस्वास्थ्यादयोऽनुक्ता अपि लभ्यन्ते ।

३ **विकारो नाम,**–विपरीतक्रिया । यथा–विकारसञ्ज्ञया प्रकृतिरपि लभ्यते । प्रकृतिसञ्ज्ञया च विकार । तत्र विकारसञ्ज्ञया च प्रकृतिर्यथा ( हृ सू अ ६।११४ )–"पुष्पे पत्रे फले नाले कन्दे च गुरुता क्रमात् ।" [इति] शाकमविकृत्योक्तम् । अत्र प्रकृति पाठाशूकाः(षा)दीना पत्रादीनि । तानि हि पाकेन विक्रियमाणानि चावस्थान्तर प्रतिपद्यमानानि शाकसज्ञा लभन्ते । तदय शास्त्रकारस्तेषा विकारसज्ञा, यवादिमण्डादिसज्ञाया यवादिक चोक्तवान् ।

४ **[सामीप्यं नाम,–]** ........ ..........

५ **भूयस्त्वं नाम,**–यदेकस्मिन् वर्तमानमाधिक्येन क्वचिल्लभ्यते । यथा तन्त्रे ( च सू अ २६।४२ )–"अम्लो भक्त रोचयति" इत्युक्तम्, न च मधुरादिरपि न रोचयतीति । कस्यचिच्चाम्लविद्वेषिणोऽम्लो रसो भक्तविद्वेषमेव कुर्यात् । तत्र भूयस्त्वमाश्रित्येदमुक्तम्–'अम्लो रोचयति ।' कदाचित् कस्यचिद्वा नामौ रोचयेन्न तावता तन्न रोचनम् ।

६ **प्रकारो नाम,**–यो यस्य समानधर्मा स तस्य प्रकार । यथा–"कण्ठमेरण्डनालेन स्पृशन् वमेत् ।" इत्युक्तम् । न च तत्प्रकाराणा सुवर्चलाशतपुष्पादिनालाना न ग्रहणम् ।

७ **गुणिगुणविभवो नाम,**–क्वचित् गुणीनि गुणशब्देनोक्तानि । यस्मादाह ( हृ शा अ ३।६० )–"पार्थिवा पार्थिवानेव" इति । न हि पार्थिवा गुणा सन्ति केचित्, ये पच्येरन् । गुणश्च गुणिवद्यथा ( हृ उ अ ३९।२३ )–"मेधास्मृतिबलोपेता बभूवुरमितायुष ।" इति । अत्रायुर्गुणोपेतममितत्वम् । नायुष परिमाणगुण आयुर्गुणेनैव शक्य ।

८ **संसक्तता नाम,**–यदेकस्य बहुभि सम्बन्ध । यथा–विद्यमानेष्वपि तत्रान्येषु सम्बन्धेषु तस्यैव व्यपदेश क्रियते । यथा–मधुरस्कन्धनिर्देशेन माक्षिकादयो गुणिता कषायादिरसोपेता अपि मधुरप्रायत्वान्मधुरससक्ततया ।

---

१ 'वादय उन्मादापस्मारादिषु विचि' ट. । २ 'विशूचि' ट ण त । ३ 'वश्य न्यूना' ट । ४ 'शेषो ह्यय' ट. । ५ 'इवेति' ट । ६ 'त्यादि चेत्यु' ट.ण. ।

१ 'तत्सुप्तमित्युच्यते' ट ण । २ अस्याग्रे यथाक्रम वर्ण्यमान सामीप्यस्य व्याख्यान लिखितमुद्रितेषु केषुचिदपि हृदयटीकापुस्तकेषु नोपलभ्यते । ३ 'नमधिको क्व' ट. । ४ 'गुणिन.' ट. ।

९ तद्धर्मता नाम,–येन तथाभूतं सत्तद्धर्मतामासाद्य दर्शनात्तामेवाख्या लभते । यथा ( हृ उ अ ४०।७६ )–"विवर्जयेद्भिषकपाशान् पाशान् वैवस्वतानिव ।" इति । मारणधर्मो हि वैवस्वतपाशेन समानो दृष्ट इत्यतस्तेऽपि तथैवोक्ता ।

१० स्थानं नाम,–यत्र स्थानिना स्थान स्थानेन वा स्थानी व्यपदिश्यते । तत्र स्थानिना स्थान यथा–कर्णनाद श्रोत्ररोग इत्युक्त । न च श्रोत्रेन्द्रियस्यास्तिनाद , किं तर्हि ? तदधिष्ठानस्य कर्णस्य । तस्मादय श्रोत्रेण स्थानिना कर्णमधिष्ठानमुक्तवान् । स्थानेन स्थानी यथा–जिह्वा रस गृह्णाति । तत्र न जिह्वा रस गृह्णाति, किं तर्हि ? रसना ।

११ तादर्थ्यं नाम,–यत्प्रयोजनार्थं प्रवर्तते यो भावस्तेनैव व्यपदिश्यते । यथा ( हृ सू अ १५।१ )–"मदनमधुकफलम्बा" इत्यादीनि छर्दनानि,–छर्दनप्रयोजनानीत्यर्थ ।

१२ साहचर्यं नाम,–यो येन नित्य सम्बन्ध उपलभ्यते, स तस्मात् सम्बन्धात्तमेव सम्बन्धिशब्द लभते । यथा–'मश्यमानाद् धूम दृष्ट्वा ज्वलद्धासुर वह्निद्रव्यमवश्यमभ्युत्थितो वह्निरित्येव ।'

१३ कर्म नाम,–यत्र कर्मकर्मेति चोपचर्यते । यथोच्यते–"मुनय प्रशमं जग्मु ।" न चाग्रामस्थानीय कश्चित्प्रशमोऽस्ति । किं तर्हि ? इन्द्रियाणा विषयेभ्य केवल शक्तिनियमः प्रशम । अथ च गति –कर्मविषयेभ्यस्त्विन्द्रियाणा क्रियानिवृत्ति. । तदेव च कर्मेत्युक्तम् ।

१४ गुणनिमित्तं नाम,–यत्कस्य विभूति प्रशसादिका ख्याप्यते । "धर्म्यं यशस्यमायुष्य लोकद्वयपरायणम् । अनुमोदामहे ब्रह्मचर्यमेकान्तनिर्मलम् ॥" ( हृ उ अ ४०।४ ) इति ब्रह्मचर्यस्य प्रशंसाविभूति ख्याप्यते । ब्रह्मचर्यस्य हीमे गुणा , नाब्रह्मचर्यस्येति ।

१५ चेष्टानिमित्तं नाम,–यस्मिन्नाममात्र कस्यचित् क्रियया भवति भावस्य । नात्र प्रस्पन्दक्रियेष्टा । यथा–"दीपवदस्य ज्ञान ज्वलति ।" इत्युच्यते । न च ज्ञानस्य प्रदीपस्येवार्चीषि सन्ति ऊर्ध्वगामीनि, दीपवद्वा सन्निकृष्टानि द्रव्यान्तराणि दहन्ति । रूप वा स्पर्शं वा तैलादिकोपादानम् । किन्तु प्रकाशक्रियामात्र परिगृह्य ज्वलतीति प्रशंसाकर्मणि क्रोधभयशोकलोभहर्षेर्ष्यामोहादिभिरुपहतं विज्ञान मलोपहतदर्पणवदप्रकाशवृत्ति भवेत् ।

१६ मूलसंज्ञा नाम,–या लोकेऽन्यस्मिन्नर्थे प्रसिद्धा तन्त्रे चान्यस्मिन् [ अर्थे ] निवेशिता । यथा ( हृ नि अ १।२ ) –"निदान पूर्वरूपाणि रूपाण्युपशयस्तथा । सम्प्राप्तिश्च" इति । रूप च लोके नीलपीतलोहितादि प्रसिद्धम्, स्वशास्त्रे सञ्ज्ञया तु रूप-लिङ्ग लक्षणमिति ।

१७ तात्स्थ्यं नाम,–यदन्यस्यैवार्थस्य तत्स्थत्वादन्यस्यैव कल्प्यते । तद्यथा ( हृ नि अ १०।२३ )–"बस्तिमेहनयो. शूलम्" इति । तत्र पुसस्थेन कारणेन बस्तिमेहनयोरिति कल्प्यते । चैतन्याभावे बस्तिमेहनयो सतोरपि शूलाभावात् तत्प्रदेशस्थितत्वात्तयोरित्युपचर्यते ।

तथा तन्त्रदोषै पञ्चदशभिरप्रसिद्धशब्दादिभिर्विवर्जितम् । [ तद्यथा– ] १ अप्रसिद्धशब्दम्, २ दु प्रणीतम्, ३ असङ्गतार्थम्, ४ असुखारोहि, ५ विरुद्धम्, ६ अतिविस्तृतम्, ७ अतिसक्षिप्तम्, ८ अप्रयोजनम्, ९ भिन्नक्रमम्, १० सदिग्धम्, ११ पुनरुक्तम्, १२ नि प्रमाणकम्, १३ असमाप्तार्थम्, १४ अपा(न)र्थकम्, १५ व्याहतम्, [ इति ] ।

तत्र १ अप्रसिद्धशब्दं नाम,–यल्लोके नातीव प्रसिद्धम् । यथा–"उदक्यागमनलक्षणमसुखानाम् ।" इति । यथा वा–"आचारस्यासिपाणिवारेष्वकुशलयोगता ।" इति । अस्यार्थ ,–अंकुनाम वृक्ष , तस्य शलमिति ।

२ दुःप्रणीतं नाम,–सूत्रभाष्यप्रयोजनरहितम् ।

३ असङ्गतार्थं नाम,–यत्सूत्रेणासम्बद्धम् ।

४ असुखारोहि पदं नाम,–यत्पदसन्निवेशस्य विषमतया दु खेनोच्चार्यते, चर्करीतादिप्रायम् । यथा–"वातर्यरिप्रदम् ।" इति ।

५ विरुद्धं नाम,–यद् दृष्टान्तसिद्धान्तसमयैर्विरुद्धम् । यथा कश्चिद्वदेन्नित्य पुरुषोऽकृतकत्वादिति हेतु, घट इति **दृष्टान्तविरुद्धम्** । तथा–मधुराम्ललवणा कफ शमयन्ति, कटुतिक्तकषाया वात जयन्ति, इति वैद्यक**सिद्धान्तविरुद्ध**मेतत् । **समयविरुद्धं नाम**,–यथा–य. समय पूर्वाचार्यैस्तत्त्वदर्शिभि कृतस्त व्युत्क्रम्यागच्छति । यथा–"न लोष्टं विमृद्नीयात्, न तृण छिन्द्यात्," इति । एतत् तत्त्वदर्शिभिरुक्तत्वाल्लोष्टमर्दनादि न क्रियते । न तु हेतुरत्रास्ति ।

६ अतिविस्तृतं नाम,–यथा–मधुरादिस्कन्ध ब्रुवन् यावन्ति मधुराणि जगति सन्ति मधुरप्रायाणि मधुरप्रभवाणि तान्यशेषाणि यद्यभिदधाति, तदाऽतिविस्तृतत्व स्यात् ।

७ अतिसंक्षिप्तं नाम,–यथा–योगशतकप्रायम् । यथा वा–हेतुलिङ्गौषधोद्देश एव क्रियते, न तु तदवबोधकवाक्यानामिति शेष ।

८ अप्रयोजनं नाम,–यथा ( हृ सू. अ. २।४८ )–"इत्याचार समासेन" इत्येतावद्यदि वदेत्, न तु ब्रूयात्

१ 'त्यजेद्दूराद्भिष' इति युक्ततर पाठान्तरम् । २ 'यत. स्था' चन्द्र । ३ 'रित्येवम् ।' ट ण । ४ 'नियमन' ट चन्द्र. । ५ 'त्त कर्म । य' ण त चन्द्र । 'नाम । पयायतकस्य' ट. । ६ 'यशु खावहम्' ट । 'यरसायनम्' इति युक्ततम पाठान्तरम् । ७ 'चर्यमलन्त' ट चन्द्र । ८ 'न ब्रह्मचर्यमेति ।' ण त । ९ 'स्पर्शो वा' ण.त. । १० 'साख्याकर्म । क्रो' ट. चन्द्र. ।

१ 'ज्ञयाऽनुरूप' ट ड ण चन्द्र । २ 'लिङ्गल' ड ण त चन्द्र । ३ 'तन्त्र दो' ट । ४ 'णतम्' ड । ५ 'रजस्वलागमनमलक्ष्मीमुखानाम्' स.स स.च. । ६ 'अकुर्नाम' ट.ड. । ७ 'सूत्रे' ट. ।

"य प्राप्नोति समाचरन्। आयुरारोग्यमैश्वर्यम्" इत्यादि, तदा न कश्चिदनुतिष्ठेदिति।

९ **भिन्नक्रमं नाम,**–पूर्वं येनानुक्रमेणोक्त न तेनैव निर्दिश्यते प्रयोजनान्तरासम्भवेऽपि। यथा–वातपित्तकफानुद्दिश्य "तत्र रूक्षो लघु" (हृ सू अ १।११) इत्यादौ वातगुणनिर्देशमकृत्वैव पित्तस्य विदधीत। एव क्रमो भिन्नो भवेत्।

१० **सदिग्ध नाम,**–यथा–'किमकालमृत्युरस्ति उत नास्ति?' इत्युभयत्र हेत्वाभासपरिग्रहात् सशय।

११ **पुनरुक्तं नाम,**–योऽर्थ उक्तोऽपि पुनरुच्यते।

१२ **निःप्रमाणं नाम,**–यथा (हृ चि अ १।४६)– "पाक्य शीतकषाय वा मुस्तापर्पटकम्" इति। •••

१३ **[असमाप्तार्थ नाम,–]** • • •अत्र तावदुच्यते। परतोऽपि चेदित्येतत्तत समाप्तार्थत्वान्न ज्ञायते किमनेनै कार्यमिति।

१४ **अनर्थकं नाम,**–यदन्यार्थेनापि पदेनापगताभिधेयम्।

१५ **व्याहतं नाम,**–यथा–पूर्वया वाक्ययुक्त्याऽपरा व्याहन्यते, अपरया पूर्वा वा। यथा–"अनास्थाप्या मेहिन" (हृ सू अ १९।४) इत्युक्त्वा पुनरास्थापनमनुजज्ञे। मुस्तादेर्निरूहे पपाठ (हृ क अ ४।४०)–"वातासृक्शोफमेहार्शोगुल्मविण्मूत्रसङ्ग्रहम्।" इत्यादि। तदत्र विधिप्रतिषेधयो परस्परविरोधाद्व्याहतत्वम्। अत्र समाधानार्थं विपुलमतय एवमभिदधु,–प्रमेहिणमास्थाप्यनिषेधाद्बस्तिकल्पे पुनरनुज्ञानात् तन्त्रकृतोऽभिप्रायविशेष ईदृगनुमीयते,–मेहिनो वातस्य प्रबलत्वेन बस्तिमन्तरेण नान्यस्तथाविध उपक्रमोऽस्ति, तस्मात्तस्यावस्थातुरवशाद्योज्यो बस्ति। यदाऽऽर्तमेहिनो दृश्यते पवनस्याल्पत्वे (त्व), तदोपक्रमान्तरेणैव चिकित्सितु शक्य इति, तदा बस्तिर्न योज्य इति प्रतिपादयितुमेवविधो विन्यास कृत।

इति–पूर्वोक्तै, तन्त्रगुणै–तन्त्रयुक्त्याख्यैर्युक्तम्, तन्त्रदोषै–अप्रसिद्धशब्दादिभिर्वर्जितम्, अल्पसमुद्यमाना–स्तोकव्यायामाना, प्रीत्यर्थं पृथगेवेद तन्त्रमुक्तम्। किम्भूतम्? चिकित्साशास्त्र,–शतसहस्र ब्रह्मप्रोक्तमग्निवेशादिप्रणीत वा, व्याप्य परित–समन्तात्, स्थितम्। न चैतत् स्वमनीषानिरूपितमित्याह–विपुलेत्यादि। विपुल–विस्तीर्ण समस्तवस्तुविषय, अमलं–निर्मलमविपर्यस्त, विज्ञान येषा महामुनीना–आत्रेयादीना, त एवम्। ते च ते विपुलामलविज्ञानमहामुनयश्च। तेषा मत–अभिप्राय, तदनु गच्छति–अनुवर्तते, यत्तत् विपुलामलविज्ञानमहामुनिमतानुगम्। ननु, सङ्ग्रहेणैव महामुनिमत सङ्गृहीतम्। तत्किमनेन? इत्याह–महासागर इव गम्भीरो य सङ्ग्रहाख्यस्तस्योपलक्षण–उपाय[न]भूतमेतत्। तस्मात् पृथगेतत् तन्त्रमुदितम्। अष्टावङ्गानि यस्य तदेवम्, अष्टाङ्ग च तद्वैद्यक च, तदेव महोदधिरष्टाङ्गवैद्यकमहोदधि, तस्य मन्थनमिव मन्थन–पाठश्रवणचिन्तनादिभिर्विक्षोभणात्, तेन करणभूतेन। योऽष्टाङ्गसङ्ग्रह एव महानमृतराशिरास। तस्मात्–अष्टाङ्गसङ्ग्रहमहामृतराशे सकाशात्, पृथगेतत्तन्त्रमुदितम्। कीदृशम्? अनल्प फल–आयुरारोग्यैश्वर्यसुखादिक यस्य तदेव, महाफलमित्यर्थ। तदय भाव,–तन्त्रस्यास्याल्पत्वात् पाठादिषु स्वल्प एवायामो भवति महच्च फल यत स्यात्, ततोऽयमादरणीय इत्यर्थ। वसन्ततिलक वृत्तम्।

**इदमागमसिद्धत्वात्प्रत्यक्षफलदर्शनात्।**
**मन्त्रवत्संप्रयोक्तव्य न मीमांस्यं कथञ्चन ॥ ८१ ॥**

**स०**–इद–अनन्तराभिहित तन्त्र, मन्त्रवदाचरित सम्प्रयोक्तव्यम्। न कथञ्चिदपि मीमास्यम्,–किमिद स्याद्वा नवेति सशयो न कार्य इत्यर्थ। कस्मात्? सुविशुद्धज्ञानेभ्यो महामुनिभ्य आगमेन शुद्धत्वात्, तथा प्रत्यक्षफलस्य–ज्वरचिकित्सादिकस्य, दर्शनात्।

**दीर्घजीवितमारोग्यं धर्ममर्थं सुखं यशः।**
**पाठावबोधानुष्ठानैरधिगच्छत्यतो ध्रुवम् ॥ ८२ ॥**

**स०**–अत–अष्टाङ्गहृदयाख्यात्तन्त्रात्, पाठावबोधानुष्ठानै–रोगिचिकित्सालक्षणेन, ध्रुव–अवश्य, दीर्घजीवितादीन् प्राप्नोति।

न च तानेव प्राप्नोति। किं तर्हि? परमपीत्याह—

**एतत्पठन् सङ्ग्रहबोधशक्तः**
**स्वभ्यस्तकर्मा भिषगप्रकम्प्यः।**
**आकम्पयत्यन्यविशालतन्त्र-**
**कृताभियोगान् यदि तन्न चित्रम् ॥ ८३ ॥**

**स०**–एतत्–अनन्तरोक्तमष्टाङ्गहृदयाख्य तन्त्र, अधीयान (पठन्)–कण्ठे दधत्, सङ्ग्रहबोधशक्त–एतद्ग्रन्थार्थविशेष[ा]शेषवस्त्ववबोधार्थम्। तस्मात् स्वभ्यस्तकर्मा अत एव पाठावबोधे। स्वभ्यस्तकर्मा–तस्य गुणशतयोगादष्टाङ्गहृदयस्य व्याख्यानामन्येषा भेषजकर्मजेन सत्स्वभ्यस्तकर्मणा चिकित्सक, अक्षोभ्य सन्, अन्येषु–चरकादिषु, विशालतन्त्रेषु विहिताभियोगान् वैद्यान् यदि कम्पयति–क्षोभयति, तन्नाश्चर्यम्। उपजातिर्वृत्तम्।

---

१ 'किं प्रमाण' ड ण त। २ अस्याग्रे पर्याप्त **नि प्रमाणासमाप्तार्थयोर्व्याख्यान** लिखितमुद्रितेषु केषुचिदपि हृदयटीकापुस्तकेषु नोपलभ्यते। ३ 'न कारणेन कार्यं' ट.। ४ 'यथा' ण त.। ५ 'सद्योहमेहा' इति पाठान्तरम्। ६ 'शक्यत इति' ट.। ७ 'व्यापद्य' ण त.।

१ 'तन्त्रस्यादप' ण त। २ 'मद्युद्धत्वात्' इत्यरुणदत्तसम्मत पाठ। ३ 'कदाचन' इ इ उ। ४ 'दीर्घ' उ ट। ५ 'रोगिचिकि' ण त.। ६ 'य. कम्प' ई। ७ 'विशेष शे' ट त.। ८ 'तथा' ट.। ९ 'बोधस्वभ्यस्तकर्मणां तस्य' ट.। १० 'व्याख्याता। अन्ये' ण.त।

यथा चाक्रम्पयन्तेऽपरे भिषजस्तथा दर्शयन्नाह—

**यदि चरकमधीते तद् ध्रुवं सुश्रुतादि-**
**प्रणिगदितगदानां नाममात्रेऽपि वाह्यः।**
**अथ चरकविहीनः प्रक्रियायामखिन्नः**
**किमिव खलु करोतु व्याधितानां वराकः ८४**

**स०**–यदि केवल चरक पठति ततस्तस्मात् सुश्रुतादिप्रणिगदिताना–वर्त्मसन्धिसितादिजाना रोगाणा, ध्रुव सञ्ज्ञामात्रावबोधेऽपि बाह्य। किन्तु हेतुलक्षणोपक्रमेणानभिज्ञ इत्यपिशब्दार्थ। अथ चरकविहीन केवल सुश्रुतपाठसाध्यप्रक्रियाया–दोषदूष्यकालबलशरीरसत्त्वसात्म्यादिलक्षणाया, अखिन्न सन् व्याधिताना–कासश्वासाद्यभिभूताना, किमिव वराक–अल्पधी, विदधातु? न किञ्चिद्विधातु शक्त इत्यर्थ। इह तु चरकोक्तप्रक्रियाया प्रतिपादनात् सुश्रुतोक्तामयाभिधानाच्च तदध्येता रोगचिकित्साया प्रवर्तमानो रोगशान्ति ध्रुव विदधात्येव। मालिनीवृत्तम्।

अथैव मन्यसे यद्यपि तत्र तन्त्रमेतद्गुणम्, तथाऽप्यार्षतन्त्राध्ययने समाधानातिशय इति। तत इदमाह—

**अभिनिवेशवशादभियुज्यते**
**सुभणितेऽपि न यो दृढमूढकः।**
**पठतु यत्नपरः पुरुषायुषं**
**स खलु वैद्यकमाद्यमनिर्विदः॥ ८५॥**

**स०**–अभिनिवेशो–वस्तुपक्षपात, तस्य वश–सामर्थ्य, तस्मात्। अन्यत्र गुणदोषावभियोक्ता शोभनोक्तेऽपि तन्त्रे यो नाभियुज्यते–ऋषिप्रणीते प्रीतिं करोति, स नर आदौ भवमाद्य,–प्रथमप्रणीत ब्रह्मोक्त शतसाहस्र, वैद्यक यत्नपरस्तथा अनिर्वेद सन् पुरुषायुषं–वर्षशत, पठतु। किलास्मिन् काले हीयमानबुद्धिमेधाजीवितस्य पुरुषस्य श्रवणचिन्तनावबोधानुष्ठानानि सुदूरोत्सारितान्येवेत्यर्थ। पुरुषायुषमित्यचतुरादिसूत्रे निपातितम्। [ द्रुतविलम्बित वृत्तम्। ]

अथैव मन्यसे वक्तृत्वविशेषादवश्यमेवार्थातिशयो भवति। तस्मादाद्येषु सुकृतेष्वेवाभियोगो युक्तो, न त्विदानींतनकविकृतेष्विति, तदेतन्न वाच्यम्। कुत? इत्याह—

**वाते पित्ते श्लेष्मशान्तौ च पथ्यं**
**तैलं सर्पिर्माक्षिकं च क्रमेण।**
**एतद् ब्रह्मा भाषतां ब्रह्मजो वा**
**का निर्मन्त्रे वक्तृभेदोक्तिशक्तिः॥ ८६॥**

**स०**–वाते तैल पथ्य, पित्ते घृत पथ्यं, श्लेष्मशान्तौ माक्षिकं पथ्य, यथाक्रमम्। इत्येव भगवान् ब्रह्मा भाषताम्, ब्रह्मजो वा–सनत्कुमारादि, भणतु। निर्मन्त्रे–अशब्दस्वभावे तैलादिके स्वाकारत उत्पन्ने, वातादिशमनशक्तेर्वक्तृविशेषोक्त्या शक्तिर्न काचिदित्यर्थ। शालिनीवृत्तम्।

तदेवोपसहरन् स्पष्टयति—

**अभिधातृवशात् किंवा द्रव्यशक्तिर्विशिष्यते।**
**अतो मत्सरमुत्सृज्य माध्यस्थ्यमवलम्ब्यताम्॥८७॥**

**स०**–वक्तृवशात् किं तैलादेर्द्रव्यस्य शक्तिर्विशिष्यते? अपि तु न कश्चिदेव विशेष उत्पद्यते। यत स्वभावहेतुभ्य एव एतच्छक्तियुक्ताश्चोत्पन्ना। अतो–विधातृवशाद् द्रव्यशक्तिविशेषलक्षणाद्धेतो, मत्सरमुत्सृज्य–विद्वेष विहाय, माध्यस्थ्यमाश्रीयताम्। मध्यस्थो हि पुरुष कालबुद्ध्याद्यनुरूपमिदमेव शास्त्रमुपकारक मम, न त्वतोऽपर शास्त्रमुपकारक बुद्ध्या परामर्शाध्येष्यते, न त्वज्ञानाभिनिवेशाग्रहमेतीत्यर्थ।

ननु, किमस्माकमुपकारकत्वादिद्वारेण ऋषिप्रणीतमेव तन्त्रमनुरागवशादध्येष्यम्? इत्याशङ्क्याह—

**ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ।**
**भेडाद्याः किं न पठ्यन्ते तस्माद्ग्राह्यं सुभाषितम्॥८८॥**

**स०**–यदि ऋषिप्रणीते प्रीतिस्ततश्चरकसुश्रुताख्यौ हित्वा भेडजातूकर्ण्यादिमुनिप्रणीतानि शास्त्राणि किमिति न पठ्यन्ते सर्वेणैव वैद्यवृन्देन। अपि तु सुभाषितप्रियतया चरकसुश्रुतौ बाहुल्येन यथा पठ्येते, न तथा भेडादय। तस्मात्स्थितमेतत् सुभाषित ग्राह्यम्, न तु मुनिप्रणीतमेव तन्त्रम्। अतश्चरकसुश्रुतवदनार्षमपीद गुणवत्त्वान्मतिमद्भिर्ग्राह्यमेव।

**हृदयमिव हृदयमेतत्सर्वायुर्वेदवाङ्मयपयोधेः।**
**कृत्वा यच्छुभमाप्तं शुभमस्तु परं ततो जगतः॥८९॥**

**इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां षष्ठे उत्तरस्थाने वाजीकरणविधिर्नाम चत्वारिंशोऽध्यायः॥ ४०॥**



१ 'प्रतिग' ई। २ 'मात्रेण' उ। ३ किमिह' इ ई उ ण त। ४ 'वयवेऽपि' ट ण त। ५ 'विदध्यात्' ड। ६ 'तु। अपि तु न' ट.। ७ 'द्विधातु' ण त। ८ 'तथैव' ण त.। ९ 'तदिदमाह' ट ड.। १० 'इत्यत आह' ट.।

१ 'भाषते' इ उ ण.त। २ 'कदाचि' ट ड। ३ 'धातुवैशात् किञ्चिद्द्रव्य' उ.। ४ 'अतोऽभिधा' ण त.। ५ 'कारकबुध्या' ट। ६ 'दध्येतव्यम्?' ट.। ७ 'कर्णादि' ण.। ८ 'द्वा' ण.।

स०-एतत्-हृदयाख्य तन्त्र, हृदयमिव। कस्य ? सर्वायुर्वेदवाङ्मयपयोधे। यथा हृदय शरीरस्यैकदेशमपि दशभिर्मूलसिराभि सकल काय व्याप्नोति, तथेदमपि षड्भि स्थानै सकलमष्टाङ्गायुर्वेदवाङ्मय व्याप्य स्थितमिति साधर्म्यात्। तदेवमीदृश हृदय कृत्वा-विधाय, यत्कल्याण पर-श्रेष्ठं, प्राप्त [ तत - ] तस्माच्छुभात्, जगत -भुवनस्य, मङ्गल भवत्विति। आर्या।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकाया सर्वाङ्गसुन्दराख्याया षष्ठे उत्तरस्थाने वाजीकरणविधिर्नाम चत्वारिंशोऽध्याय समाप्त ॥ ४० ॥

## इति वाजीकरणमष्टममङ्गं समाप्तम्।

## समाप्तं चेदं षष्ठमुत्तरस्थानम्।



विक्रय्यमुद्रितग्रन्थाः ।

वाग्भटविरचितं

# अष्टाङ्गहृदयम् । ( मूलमात्रम् )

पारिभाषिककोष-पाठान्तरैरुपबृंहितम् । मूल्यम् रू. १।।। प्रे. व्य. रू. ।।·

---

अग्निवेशकृता चरकदृढबलाभ्यां प्रतिसंस्कृता

# चरकसंहिता ।

चक्रपाणिदत्तविरचितया आयुर्वेददीपिकाव्याख्यया समलङ्कृता ।

मूल्यम् रू. ८ प्रे. व्य. रू. १।

---

# चरकसंहिता ( मूलमात्रा )

मूल्यम् रू ३ प्रे. व्य. रू. ।।·

---

श्रीमहर्षिसुश्रुतप्रणीता

# सुश्रुतसंहिता ।

वैद्यवर-श्रीडल्हणाचार्यविरचितया निबन्धसङ्ग्रहाख्यव्याख्यया
निदानस्थानस्य श्रीगयदासविरचितया न्यायचन्द्रिका-
ख्यपञ्जिकाव्याख्यया च समुल्लसिता ।

अयं ग्रन्थो भगवतो धन्वन्तरेरुपदेशानुगुण महर्षिश्रीसुश्रुतप्रणीतोऽखिलायुर्वेदनिबन्धेषु मूर्धन्यमणित्वेन वरीवर्ति । निबन्धकृद्धार्दप्रकाशनाय वैद्यवर-डल्हणाचार्यरचिता व्याख्यापि सर्वाङ्गसुन्दरत्वेन विराजते । परं च सप्रति निदानस्थानस्य गयदासप्रणीतपञ्जिकाव्याख्यया च समलङ्कृतोऽयं सर्वाङ्गसुन्दरो ग्रन्थः सर्वेषा सुखाव-बोधकः स्यात् । मूल्यम् रू. १० प्रे. व्य. रू. १।।

---

श्रीमन्माधवकरविरचितम्

# माधवनिदानम् ।

निदानस्यैव चिकित्साप्रधानाङ्गत्वेनायुर्वेदे परिगणनात् 'निदाने माधवः प्रोक्तः' इति सर्वसंमतत्वाच्च ग्रन्थोऽयं सुप्रसिद्ध एवास्ति । अस्मिन् प्राय' सर्वेषां रोगाणा निदान-पूर्वरूप-रूप-उपशय-संप्राप्ति-उपद्रवसाध्या-साध्यविचारादिविषयजातं यथावत् प्रतिपादितमस्ति ।

मूल्यम् रू. २।· प्रे. व्य. रू. ।।·

---

## योगरत्नाकरः ।

ग्रन्थोऽयं नात्यर्वाचीनोऽखिलभिषग्गणमान्योऽप्यस्ति । अत्र सर्वेषा रोगाणा निदानपूर्विका चिकित्सा सप्रमाणा प्रतिपादितास्ति । तथा विविध-रसायन-कषायाऽऽसवा-ऽरिष्टा-ऽवलेह-गुटिका-पाकादीनां प्रक्रिया-प्रमाणा-ऽनुपानादिप्रपञ्चोऽपि कृतोऽस्तीत्ययं ग्रन्थ आयुर्वेदीयानामतीवोपयोगीत्यवश्य सग्राह्य ।

मूल्यम् रू २॥ प्रे व्य रू. ॥•

---

श्रीमत्पण्डितदामोदरसूनु-शार्ङ्गधराचार्यविरचिता

## शार्ङ्गधरसंहिता ।

भिषग्वर-आढमल्लविरचितदीपिका-पण्डितकाशिरामवैद्यविरचितगूढार्थदीपिकाभ्या टीकाभ्यां सवलिता ।

मूल्यम् रू. ५ प्रे. व्य. रू ॥।

---

## शार्ङ्गधरसंहिता ( मूलमात्रा )

**अञ्जननिदानसहिता ।** मूल्यम् रू. १ प्रे. व्य रू. ।•

---

## द्रव्यगुणसंग्रहः ।

**अत्र नानाविधौषधीनां गुणागुणविवेचनं सम्यक्कृतमस्ति ।**

मूल्यम् १२ आणकाः । प्रे. व्य. रू. ।•

---

## पातञ्जलव्याकरणमहाभाष्यम् ।

**( तृतीयाध्यायात्मकं विधिप्रकरणरूपं तृतीयखण्डम् )**

एतद्व्याख्यानभूत उपाध्यायकैयटप्रणीतो भाष्यप्रदीप., तद्व्याख्यानभूतो नागेशभट्टविरचितो भाष्यप्रदीपोद्द्योत इत्येतद्व्याख्याद्वयसमलङ्कृतमेतत् खण्ड वाचकमहोदयेभ्यः सप्रति समुपह्रियते तच्चावश्य सग्राह्यमित्यनुनीयते च, येनाग्रिमाशस्य झटिति प्रकाशनेऽतीव सौकर्यं स्यात् । मूल्यम् रू. ३ प्रे. व्य रू ॥•

प्राप्तिस्थानम्—**पाण्डुरङ्ग जावजी,**

निर्णयसागरमुद्रणालयाध्यक्षः,

मुबई न. २